*Advaita Grantha Ratna Manjusha Ratna–23—*




**Shri Sureshvaracharya's**

**Brihadaranyakopanishad–**

# BHASHYAVARTIKAM

**VOLUME–1**

( I & II Chapters )

*With the Commentary*

***SHASTRAPRAKASHIKA***

*of*

**Shri Aanandagiri Aacharya**

*Adorned with*

Brihadaranyakopanishad text

Under directions from

*Shri Swami Maheshananda Giri Maharaj*

Mahamandaleshvar Pontiff of Dakshinamurti Peetha

Edited with introduction notes, etc.

*by*

Panditaraja Shastraratnakara etc.

**SHRI S. SUBRAHMANYA SHASTRI M. A.**

**Mahesh Research Institute**

अद्वैतग्रन्थरत्नमञ्जूषायाः २३ रत्नम्—




बृहदारण्यकोपनिषदा सह

श्रीमच्छङ्करभगवत्पादाचार्यशिष्यपदवाक्यप्रमाणपारावारपारीण—

श्रीमत्सुरेश्वराचार्य—

विरचितं

काण्वशाखीय—

# बृहदारण्यकोपनिषद्भाष्यवार्तिकम्

खण्डः—१

( प्रथमद्वितीयाध्यायात्मकम् )

सर्वतन्त्रस्वतन्त्र—

श्रीमदानन्दगिर्याचार्य—

प्रणीत—

शास्त्रप्रकाशिका—

टीकासमलङ्कृतं

*श्रीदक्षिणामूर्तिपीठाधीश्वराचार्यमहामण्डलेश्वर—*

**श्रीमन्महेशानन्दगिरिमहाराजानां**

निर्देशेन

*पण्डितराजशास्त्ररत्नाकरादिपदभाजा*

श्री एस० सुब्रह्मण्यशास्त्रिणा

महेश – अनुसन्धान – संस्थान – निदेशकेन

पाठभेदटिप्पण्यादिभिः संशोध्य

सम्पादितम्

**महेश-अनुसन्धान-संस्थानम्**

## निदेशिका

श्रीमत्परमहंसपरिव्राजकाचार्य-पदवाक्यप्रमाणपारावारपारीण-शमदमोपरतितितिक्षासमाधानश्रद्धाचरणनिष्ठ-ब्रह्मविद्वरिष्ठ-यतिचक्रवर्तित्वाद्यनाद्यनवच्छिन्नगुरुपरम्पराप्राप्तब्रह्मात्मैक्यज्ञानवैभवानुभवप्रद्योतितान्तः-करण-वेदान्तमार्गप्रवर्तक-श्रीकाशीक्षेत्रस्थितश्रीकेवलाद्वैतव्याख्यानसिंहासन-दक्षिणामूर्तिपीठाधीश्वर-शङ्करधर्मसंस्थापनाचार्य-श्रीशङ्करभगवत्पादारविन्दोपासक-तोटकाचार्यानन्दगिरि-परम्पराप्राप्त-महामण्डलेश्वरस्थानवैभव-सर्वतन्त्रस्वतन्त्र-अनन्तश्रीविभूषित-नृसिंहगिरिस्वामि-करकमल-सञ्जात-श्रीदक्षिणामूर्ति-निरञ्जनपीठाचार्य-**महेशानन्दगिरि**महामण्डलेश्वरस्वामिभिः

क्रियन्ते नारायणस्मृतयः

वेदान्तमञ्जूषायाः त्रयोविंशं रत्नं प्रकाश्यत इति ज्ञात्वा हर्षिता वयम्। घोरेऽस्मिन् कलौ श्रीशङ्कर-भगवत्पूज्यपादप्रदर्शितं मार्गं विहाय नान्यमुपायं शान्तिकरमुत्पश्यामः। मुमुक्षूणां कृते तु पूर्वमपि नासीद्ब्रह्म-ज्ञानादृते किमप्युपायान्तरम्। वैदिककर्मणा तु आपेक्षिकी शान्तिरासीदपि। अधुना तु द्रव्यादेरनुपलभ्यता, वर्णाश्रमादिसाङ्कर्यादधिकारिणोऽप्यनुपलभ्यता जरीजागर्ति। तस्माद्भाष्यकारप्रदर्शितं विधुराधिकरणमनुसृत्य पुरुषमात्रसम्बन्धिभिर्जपोपवासदेवताराधनादिभिरन्तःकरणस्यापि संशुद्धिः सम्भवति। तदनुकूलस्तोत्रदेवमन्दिरा-दीनामपि सौलभ्यं कृतं शङ्करभगवत्पूज्यपादैः, तदनुसारिभिश्च दशनामसम्प्रदायाचार्यैस्तत्र तत्र तदा तदा। एवं बहिरङ्गं संसाध्य निर्गतनिखिलकल्मषान्तःकरणैस्तु बाह्याभ्यन्तरिकालिङ्गसलिङ्गपारिव्राज्यं गृहीत्वा सभाष्यं सवार्तिकं प्रस्थानत्रयं श्रोतव्यम्। संशयविप्रतिपत्तिनिवारणाय प्रकरणग्रन्थानां लघुचन्द्रिकापर्यन्तानां विचारणं विधेयम्। कृते चित्तैकाग्र्येण श्रवणमनने पर्याप्ते ब्रह्मवेदने। प्रारब्धदोषतो नानुभूयते जीवमुक्ति-श्चेज्जीवन्मुक्तिमिच्छता प्रबलदोषनिवृत्त्यै संयमाभ्यासादिकमेकान्तसेवनादिकं च कार्यम्। अल्पदोषनिवृत्त्यै तु वेदान्तपाठनं शिष्यबोधायेति। तत्र च शिष्यसन्देहनिवृत्तियत्नजनितेनापूर्वेण जीवन्मुक्तेर्लाभो भविता। अयमेव राजमार्गः श्रेयस्करः शान्तिप्राप्त्यै।

किन्तु ग्रन्थानामभावे कथं पठनं पाठनं वा सिद्ध्येदिति भृशं चिन्तयन्तः खिन्ना वयं भगवन्तं भूतभावनं शङ्करं प्रार्थितवन्तः। भिक्षुभिरस्माभिर्द्रव्यानर्हैर्न ताद‍ृशी चिन्ता कार्येति श्रीदक्षिणामूर्तिना **विष्णुदासमेहताख्यः** कश्चिच्छ्रेष्ठिप्रवरः प्रेरितः। तन्मुखात् सर्वं प्रकाशनं स्वकीयद्रव्येण करिष्यामीति प्रतिज्ञां श्रुत्वा निश्चिन्ता अभूम। पारिव्राज्यधर्ममनुसरद्भिर्नैकत्र स्थातव्यमस्माभिः। सम्पादनं तु नैवं भवेदिति कृत्वा पण्डितराजादि-विरुदान्विता एकविंशतिविक्रमशताब्दे वेदान्तज्ञाने मार्तण्डवदुद्भासिताः शास्त्रिप्रवराः **श्रीसुब्रह्मण्यशास्त्रिणो**ऽस्य सम्पादने संयोजिताः। अल्पीयसैव कालेन महता श्रमेण सत्यपि वार्धक्ये श्रीशङ्करानुरागमात्रेण कृतसङ्कल्पाः त्रयोविंशं रत्नं प्रकटयन्तीति प्रमोदान्वितास्सञ्जाता वयमपि। प्रार्थये शङ्करं यच्छास्त्रिसुब्रह्मण्यमहोदयाः जीवन्मुक्तिसुखं सम्प्राप्नुयुरिति।

विशेषोऽयमस्मिन् ग्रन्थरत्ने—सर्वतन्त्रस्वतन्त्राणां भगवत्पादशिष्येषु प्रधानानां श्रीमत्सुरेश्वराचार्याणां कृतिषूत्तमस्य वेदान्तेषु सारतमस्य सकलवेदार्थानां न्यायपूर्वकनिर्धारणात्मकस्य वार्तिकामृतमित्यन्वर्थनाम-धेयस्य महाग्रन्थस्य श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकस्य श्रीमदानन्दगिरिटीकायुतस्य षडध्यायात्मकस्य प्रथमखण्डात्मकत्वेन प्रथमद्वितीयाध्यायौ सन्दृब्धौ। वार्तिककाराणां व्याख्यासरणिः विस्तृताऽपि सरला। श्रीमदानन्दगिर्याचार्याणां टीका शास्त्रप्रकाशिका प्रभाकरमीमांसान्यायबहुलाऽपि सरला सर्वत्रैव विद्वन्मनांसि समाकर्षन्ती परवादान् धुन्वन्ती दरीदृश्यते। अस्य ग्रन्थरत्नस्य गाम्भीर्यं पूर्वपुण्यपुञ्जेनैवानुभवितुं शक्यते। वेदान्ते श्रद्धालवः समेऽपीमं सटीकवार्तिकामृतमास्वाद्य "अत्र ब्रह्मसमश्नुत" इति प्रकृतोपनिषत्सूचितरीत्या श्रीसुरेश्वराचार्यवदेव जीवन्त एवामृता भूयासुरित्याशास्महे।

एषां समेषां ग्रन्थानां आङ्गलहिन्दीभाषानुवादोऽपि प्रकाशयिष्यते सत्वरमेव। तेनासंस्कृतज्ञा अपि श्रवणमननादिसिद्धिं कृत्वा प्राप्स्यन्ति शान्तिं ज्ञानं च।

ग्रन्थप्रकाशने **शारदानन्द**शास्त्रिमहोदया अस्मदन्तेवासिनो बहुश्रमं कृतवन्तः। तत्सर्वं 'भक्तिं मयि परां कृत्वा मामेवैष्यती'ति शास्त्रेण ब्रह्मानुभूतेरुपायत्वेन तैरनुष्ठितोऽपि पाठकानधमर्णीकरोति।

उमारमणं रमारमणं च प्रार्थये यत्समेषां बुद्धौ स्फुरतु ब्रह्मात्मैक्यम्। येषां गृहे च शाङ्करवचनरूपा ग्रन्थाः स्थिता मन्ये तेषां गृहाद्भूतग्रहपिशाचगदाकालमृत्युशान्त्यभावादीनि च निर्गच्छेयुरिति।

वैक्रमाब्दे एकोनचत्वारिंशदुत्तरद्विसहस्रतमे श्रीशङ्कराविर्भावपर्वणि। **—नारायणस्मृतयः**

# PREFACE

Vedānta is based mainly on the mystic thoughts of the Upaniṣads, made intellectually comprehensive and impeccable by Śaṅkara and Sureśwara. Though Advaita had been taught from the dawn of human civilization, it was only Śaṅkara who made it the foundation and structure of neo-Hinduism as the post-Buddhist Hinduism is called by Western writers. The complexity of Vedic Karma had been the main cause of Buddhist success, rather than its supposed new message. Buddha taught the Upaniṣadic message in the local dialect as he understood it, just as much as Nānaka, Kabīra did in the later centuries. Being a difficult topic, the later followers, cut off from the personal touch of the Great master and not having the traditional lore available to them, mis-construed the message in a natural way. Just as snow-ball gathers both momentum and mass as it moves along a slope, so also a mistake, for ignorance is the basic stuff of everything psychological as well as material. Śaṅkara saw through this, and hence in reviving the message of the Upaniṣads he followed the middle path of presenting a logical approach in the language of the day viz. Classical Sanskrit, but presenting it as a commentary on the original so that any misconstruction in future is avoided. History is a living proof that the message has survived a dozen centuries or more in its pristine purity. Śaṅkara and Sureśwara also gave us a new orientation to the Karma which was the foundation of Vedic Karma, but without the complex ritual attached to it. They made Karma intellectually comprehensible and morally impeccable. Thus a superficial reader sees an antagonism between Vedic Karma and Jñāna in the writings of Śaṅkara and Sureśwara, specially the latter who has exhausted the incompatibility of the two in his present Vārtika, but a serious reader perceives the goal to which Sureśwara is driving the aspirant. He establishes Karma as the foundation for Jñāna, and shows its utter inefficacy if it does not serve this purpose. To Sureśwara it is the psychosis of the identity of Brahman with the soul and the world that is the summum bonum of life and the intent as well as the content of the Veda.

Sureśwara was the fittest person to bring out this unanimity, for he was master of both the Mīmāṁsās. As the disciple of Kumārila Bhaṭṭa, the rejuvenator of the Pūrva Mīmāṁsā or the science of the Karma portion of the Vedas, he had extensively commented on it in his life as a householder, and was considered a great authority of Mīmāṁsā in his own right. He is still one of the greatest authority quoted in that branch. On entering the monkhood he had the opportunity of lapping the thoughts flowing from the lips of the great rejuvenator of Uttara Mīmāṁsā or the science of the Knowledge portion of the Vedas, the great Śaṅkara himself. His is regarded as the

last word in that branch. Thus he has the right to interpret the connection between the two seemingly conflicting branches of the Vedic lore. Undoubtedly what he says is in the same line as Manu, Yājñavalkya, Vyāsa and of course Bhagawān Śrī Kṛṣṇa. But he says it in such a logical way that the later writers seem to echo his thoughts without making any major contribution in its content. One must remember that it is Advaita which has brought in its fold such great mīmāṁsakas as Vācaspati, Pārtha Sārathi, Madhava and Appaya. This is mainly due to the presentation of its philosophy by Sureśwara, following the footsteps of Śaṅkara.

Tradition maintains that Maṇḍana had to be converted to Advaita through Śastrārtha or dialogue, since he was an addict to rituals. But once converted he was equally true to Advaita, never wavering in his extensive writings even a millimetre from his master in the tenets of philosophy. This shows that the Śāstrārtha was not of the type as indulged in later times as mere intellectual gymnastics, but it was to discover the truth. Even so some people doubted his honesty, and put obstacles in his commenting on the Brahmasūtrabhāṣya. But his Bṛhadāraṇyakavārtika which is half the size of Valmīki's Rāmāyaṇa, extending as it does to 12,000 verses, without any narration, but solid spiritual theology, has been the most authoritative interpretation of the Great Master Śaṅkara, and there is no doubt that it has not left untouched any branch of Vedic philosophy. Though printed in the last century, it has been long out of print. Thus the present edition needs no apology. Fortunately another annotation has been published in the mean time and it has been utilized wherever it shed new light, but since Ānanda Giri is far more comprehensive and enlightening, apart from being exhaustive and voluminous, it was not thought necessary to include Vidyāsāgarī in toto. **Panditaraj S. Subrahmanya Shastri** has given copious notes wherever Giri was elusive, apart from throwing new light on various topics. We are sure this edition will be a must for every student of Advaita philosophy. It has been a privilege for **Mahesh Research Institute** of Vedānta to publish the present edition's 1st. volume containing the Sambandha Vārtika and the Vārtika on the 1st. and 2nd. chapters of Bṛhadāraṇyaka Upaniṣad. The 2nd. volume containing the rest will follow soon. It contains the text of Upaniṣad and Vārtika, giving reference to the exact Bhāṣya passages referred by Vārtika, an innovation not found in the earlier editions, to facilitate the cross references, the authoritative comments of Ānanda Giri, and notes from Nyāyakalpalatikā or Vidyāsāgarī along with those of the editor. The Vārtika is often referred as Bṛhad Vārtika for not only in size but in the scope it is really magnum, not leaving anything out which is of value to a spiritual seeker.

According to the ancient tradition 'उक्तानुक्तदुरुक्तार्थचिन्ता यत्र प्रवर्तते। तं ग्रन्थं वार्तिकं प्राहुर्वार्तिकार्थविचारकाः ॥ Vārtika is a commentary that repeats all that is said in the text in its own words, adds all that is left out by the text on any topic and points out the

difficulties and inconsistancies etc. of the text and resolves them harmoniously with the text, giving an alternative interpretation if necessary. The present work justifies the definition completely. The purport of Bhāṣya is explained scrupulously and brilliantly. In यथा ह वै पदेन (बृ. 1-4-7), अथातो नेति नेति (बृ. 2-3-6), विज्ञाय प्रज्ञां कुर्वीत (बृ. 4-4-21) etc. he adds to the information given by Bhāṣya, and also gives several alternative interpretations. There are innumerable instances of this even in the first volume. Sambandha Vārtika can be sighted in toto for this.

Sureśwara regarded Śaṅkara as God Himself, and venerated his Guru with the highest reverence, hence the question of finding fault with the Bhāṣya was as distant from his mind as could possibly be. Hence Ānanda Giri reads 'द्विरुक्त' in place of 'दुरुक्त'. Sureśwara says that he had nothing but faith in his master as his guide in writing this work 'श्रद्धामात्रबलेन वार्तिकं कृतम्'. But in spite of all this he has intellectual honesty and courage of conviction to disregard his personal devotion in search of Truth. But such topics, where he differs, are of minor importance as far as the spiritual structure is concerned, and are generally extension of the master's thought, or trials towards a more rational interpretation of the same concept. Certainly Sureśwara was a liberal and catholic interpreter of Śaṅkara, as compared to some others of the later times. One must remember that the traditional biographers of Śaṅkara have recorded that Vārtika was ordered to be written by him, heard in toto and approved by him. So the question of heterodoxy or heresy is out of question. Śaṅkara if anything approved of the alternative innovations of his great disciple. The greatness lies in discovering the greatness of others as much as inducting it in them. It was for nothing that Śaṅkara tried so hard to convert Maṇḍana into Sureśwara. Vedānta certainly would have been poorer if he had not entered the order.

Maṇḍana was born in Māhiṣmatī on the banks of Narmadā. Even to this day a temple dedicated to Śiva called Maṇḍaneśwara Mahādeva exists there. After his conversion as Sureśwara he was appointed as the organizer of the Southern movement of Advaita with Śṛṅgagiri as its headquarters. He was also in that capacity associated intimately with the planning of Kāñcīpuram as the city of Śrī Vidyā. Kāmākṣī, Viṣṇu and Ekamreśwara are the three legs of the city which is Hinduism in a nutshell. Hence both Śṛṅgerī and Kāñchī are in a direct spiritual lineage to the great Master. Being senior in age to Śaṅkara he might have been born in the middle of the Seventh century. Apart from Vārtikāmṛta as Bṛhadāraṇyaka Vārtika is often referred to, he wrote Taittirīyavārtika, Dakṣiṇāmūrtivārtika and Pañcīkaraṇa Vārtika, He also wrote one independent treatise Naiṣkarmya Siddhi which is one of the best introductions to Vedānta. As Maṇḍana he wrote mīmāṁsā works and a commentary on the Yājñavalkya Smṛti. But Vārtikāmṛta is undoubtedly his magnum-opus, and richly deserves the name of nectar for it gives the aspirant the immortality here and now.

Ānanda Giri must have stayed in Purī for a long time for in many of his invocations he mentions Śrī Jagannātha. Here also he mentions 'पुरुषोत्तमो विजयते नीलाद्रिचूडामणिः' ।

Vidyāsāgara was a native of Gokarṇamaṭha which is Śivakṣetra on the West Coast. He belongs to 14th century and was associated with king Kāmadeva.

*SWAMI MAHESHANAND GIRI*

Mahamandaleshwar

## उपोद्घातः

ॐ नमो ब्रह्मादिभ्यो ब्रह्मविद्यासम्प्रदायकर्तृभ्यो वंशऋषिभ्यो नमो गुरुभ्यः

वार्तिकामृतसंज्ञेन ग्रन्थेन सुधियां ददौ ।
योऽमृतत्वं नमामस्तं सुरेश्वरसुधानिधिम् ॥

बृहदारण्यकोपनिषद् षडध्यायीरूपा काण्वशाखायां "उषा वा अश्वस्ये" त्यारभ्य प्रवर्तते, माध्यन्दिनशाखायां तु "द्वया ह प्राजापत्या" इत्यारभ्य प्रवर्तते। भगवत्पादैस्तु काण्वशाखीयपाठमाश्रित्यैव भाष्यं व्यरचि। माध्यन्दिनपाठे "उषा वे"ति ब्राह्मणं, तथा "नैवेह किञ्चने"ति ब्राह्मणञ्च अत्रैव दशमकाण्डे गते। अश्वमेधाङ्गभूताश्वोपास्तेः "नैवेह" इत्यादिना अश्वमेधाङ्गभूताग्नौ हिरण्यगर्भोपास्तेश्च वर्णनेन विषयाधिक्यात् काण्वशाखीयोपनिषदेव भगवत्पादैः व्याख्यानाय स्वीकृतेति वक्तुं पार्यते। तत्रादौ कर्मकाण्डेन सहोपनिषदः सम्बन्धो वक्तव्यः। पूर्वकाण्डेऽश्वमेधान्तानि कर्माण्युक्तानि। तेषां फलं स्वर्गमारभ्य ब्रह्मलोकान्तम्। ब्रह्मलोकश्च अश्वमेधस्यैकस्यैव कर्मणः फलं, तदुक्तम्—"अश्वेनैव मेध्येन प्रजापतेस्सायुज्यं सलोकतामाप्नोती"ति "योऽश्वमेधेन यजते देवानामेवायनेनैति" इति च देवायनशब्दितोत्तरायणमार्गं ब्रह्मलोकप्रापकं दर्शयति। उत्तरायणमार्गश्च अहंग्रहोपासकानामेवेत्युत्सर्गः। अयं तु तस्यापवादः वाचनिक इति विवेकः। अश्वमेधोपयोगिनोऽश्वस्यावयवेषु कालादिदृष्टिरत्र विधीयते। सा च दृष्टिः अश्वमेधानधिकृतानां ब्राह्मणादीनां ब्रह्मलोकप्रापिका इत्येष विशेषः।

यद्यपि ब्रह्मलोकान्तं फलं कर्मणा सम्प्राप्येत, तथापीदं फलं संसारान्तर्गतमेव, अश्वमेधादिना च ब्रह्मलोकं गन्तॄणां कर्तृत्वभोक्तृत्वकारणीभूताज्ञानानिवृत्तेः पुनः संसारस्स्यादेव। यदि ब्रह्मलोके ब्रह्मणा सह वेदान्तविचारमकृत्वा केवलं भोगमात्रेण कालं यापयेयुः तदा भुवं प्रति निवर्तेयुः। भगवद्गीतासु तत्र गतानामपि "आ ब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन" इति ब्रह्मलोकेन सहैव लोकानां पुनरावर्त्तिहेतुत्वोक्तेः। "अपुनर्मारमेव गच्छति" ( तै० ब्रा० ३-९ ) "ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते" इत्यादिकं तु दीर्घकालस्थितिमपेक्ष्य। "इमं मानवमावर्तं नावर्तन्ते" इत्यत्र अस्मिन् मन्वन्तरे पुनरावृत्त्यभावमात्रनिर्देशात्। येषूपासनेषु ब्रह्मलोकं गतानां परब्रह्मप्राप्तिर्वाचनिकी भवति यथा—प्रश्नोपनिषदि पञ्चमस्य प्रणवोपास्तिप्रश्नस्य समाधानप्रसंगे "यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत" इत्यारभ्य "स सामभिरुन्नीयते ब्रह्मलोकं स एतस्मात् परात्परं पुरिशयं पुरुषमीक्षते" इति। यथा वा उपकोसलविद्यायां "ब्रह्मलोकमभिसम्पद्यते न स पुनरावर्तते" इति तत्रैवापुनरावृत्तिः स्वीकार्या न तु सर्वत्र। तथा च आत्यन्तिकसंसारनिवृत्तौ अपेक्षितं यत् ब्रह्मात्मसाक्षात्काररूपं ज्ञानं तत्प्रतिपादनार्था उपनिषदिदानीमारभ्यते। तथा च पूर्वोत्तरकाण्डयोरभ्युदयनिःश्रेयससाधनप्रतिपादकत्वेन भेदेऽपि अभ्युदयनिःश्रेयसयोरुभयोरपि पुरुषाभिलषितत्त्वेनैकत्वात् तयोः तत्साधकत्वेन एककार्यकत्वं सम्बन्धः। तथा कर्मकाण्डोपदिष्टानां कर्मणां फलाभिसन्धिं परित्यज्य कृतानां बुद्धिशुद्धिद्वारा ब्रह्मसाक्षात्कारहेतुत्वात् हेतुहेतुमद्भावः संगतिः।

श्रीमद्भाष्यकाराणामनुज्ञया आज्ञया च श्रीमत्सुरेश्वराचार्याः आचार्याणां शिष्येषु प्रधानभूतेषु अन्यतमाः आचार्यकैङ्कर्यरूपेणेमां वार्तिकरचनामङ्गीचक्रुः। वार्तिकं नाम—

उक्तानुक्तदुरुक्तादिचिन्ता यत्र प्रवर्तते।
तं ग्रन्थं वार्तिकं प्राहुः वार्तिकज्ञा मनीषिणः॥

इति प्राचीनश्लोकोक्त्या भाष्यव्याख्यानरूपत्वेऽपि भाष्यगतदुरुक्तचिन्तामपि करोति। महामण्डलेश्वरश्रीमन्महेशानन्दगिरिपादाः, अत्र दुरुक्तिः न दुष्टोक्तिः अपितु दुःखेन या उक्तिः, क्वचित् दुरवगाह्या उक्तिः इति व्याकुर्वन्ति भाष्योक्तिषु दुष्टत्वाभावात् वार्तिककृतां भाष्यकारेषु ईश्वरभावनाकरणात्। अत एवोक्तं तैः "ईश्वरो

गुरुरात्मेति मूर्तित्रयविभागिने" इति दक्षिणामूर्तिवार्तिके भाष्यकाराणां भगवदवतारत्वेन सर्वज्ञत्वात् स्वगुरुत्वाच्च तदुक्तौ दोषोद्भावनमयुक्तं साहसमेव च। तथापि सुरेश्वराचार्यैः पञ्चसु स्थलेषु दोषोद्भावनमिव कृतं दृश्यते। केवलं स्वग्रन्थस्य वार्त्तिकत्वरक्षणाय दुःखेनैव।

अत्र—१. प्रथमाध्यायस्य पञ्चमब्राह्मणे "कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिरित्येतत्सर्वं मन एव" इति वाक्यव्याख्यानावसरे भाष्ये—"कामः स्त्रीव्यतिकराभिलाषः" इति व्याख्यातम्। तत्र वार्तिककारैः—"विषयाभिलाषः कामः स्यात् न विशेषेऽस्ति कारणम्" इति। आनन्दगिरीये च स्त्रीव्यतिकराभिलाषः इति भाष्ये विशेषोक्तिरयुक्तेत्याह–विषयेति। अत्र कामशब्दस्य सामान्येन सर्वविधेच्छापरत्वं युक्तं तस्य विशेषपरत्वोक्तिरयुक्तेति। अत्रेदं चिन्तनीयं—छान्दोग्ये सप्तमे—"आहारशुद्धौ सत्त्वशुद्धिः" इति वाक्यविवरणे भाष्यकारैः आहारः ज्ञानेन्द्रियकर्मेन्द्रियैः आह्रियमाणः सर्वोऽप्याहार एव न तु भुज्यमानान्नमात्रमाहार इति निरूपितम्। नरेन्द्रपुरीमहाभागाः तद्वाक्यविवरणप्रसङ्गे भास्करीयं भुज्यमानान्नमात्रपरतया तद्व्याख्यानं दूषयित्वा "रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन्" इति भगवद्गीतैकवाक्यत्वात् भगवत्पादीयमेव विवरणं युक्तमिति साटोपं समर्थयन्ते। तद्वदत्र कामपदस्य सर्वेच्छापरत्वं नहि भाष्यकृतामविदितम्। नापि इतरेच्छानां मनोव्यतिरिक्तेन्द्रिय-धर्मत्वं तैरिष्यते। अतो भाष्यकारैः स्त्रीव्यतिकराभिलाषमात्रपरतया तद्व्याख्यानं संसारमूलत्वेन तत्प्राधान्यादिति भावेनेति विवेक्तव्यम्। वस्तुतस्तु छान्दोग्यभाष्ये कामः स्त्रीव्यतिकराद्यभिलाषः इत्युक्तत्वात् अत्रापि कामशब्दार्थः स एव भाष्याभिप्रेतः इत्यभिप्रायकं वार्तिकम्। अतो न कोप्यत्र विसंवादः।

२. "पुत्रेणैवायं लोको जय्यो नान्येन कर्मणा, कर्मणा पितृलोको विद्यया देवलोकः" इति वाक्यविवरणे भाष्यम्—कर्मणा अग्निहोत्रादिलक्षणेव केवलेन पितृलोको जेतव्यः न पुत्रेण नापि विद्यया, विद्यया देवलोको न पुत्रेण नापि कर्मणा इति।

अत्र वार्तिकम्—

विद्यया देवलोकाप्तिः श्रुतत्वादेव कारणात्।
नैवकाराभिसंबन्धात् एवेत्यत्र न संगतिः॥
पुत्रस्यैवावधृतये एवकारो भवेदयम्।
पितृदेवलोकसंप्राप्तिः श्रुतेहान्यैश्च साधनैः॥ (१-५-२५६)

अत्रानन्दगिरिः—नहि पितृलोकजयः नित्यादिकर्मनियतः "संकल्पादेव तु तच्छ्रुतेरि"ति न्यायविरोधात्। नापि विद्ययैव देवलोकजयः "संन्यासात् ब्रह्मणः स्थानं" इत्यादिस्मृतिविरोधात्, हेत्वन्तरायत्तत्वसम्भवात् एवकारं प्रक्षिप्य वाक्ययोर्व्याख्या न युक्तेत्यर्थः। अत्रापीदं भाति—दहरोपासनफलं हि "स यदि पितृलोककामो भवति संकल्पादेवास्य पितरस्समुत्तिष्ठन्ति" इति वचनबोधितम्। तत्र च पितैव लोकः पितृलोकः लोकत्वं च आलोकनाभिभाषणादिसाधनत्वात्। ततश्च ब्रह्मलोके स्थितः यदि पूर्वानुभूतान् पितॄन् द्रष्टुमिच्छति तदा संकल्पादेव तेषां दर्शनं भवति। ते च केवलं मानसा एव न तु पार्थिवशरीरादिरूपाः "मानसानि वै ब्रह्मलोके शरीराणि" इति वचनात्। कर्मणा प्राप्यस्तु पितृलोकः स्थूलः स्थूलशब्दस्पर्शादिसंयुक्त इति वैषम्यम्। अयं च नित्यादिकर्मणैव प्राप्यः न तु विद्यया।

ब्रह्मलोकप्राप्तिश्च संन्यासमात्रेणेति वक्तुं न शक्यते "न च संन्यसनादेव सिद्धिं समधिगच्छति" इति भगवद्वचनविरोधात्।

विद्यया तदारोहन्ति यत्र कामाः परागताः।
न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः॥ इति स्मृतेश्च,

यद्युच्यते—विद्यया ब्रह्मलोक इत्युत्सर्गः पञ्चाग्निविद्यया संन्यासेन शिवपूजादिना च तत्प्राप्तिः वाचनिकीति, तदापि भाष्यकारैः उत्सर्गपक्षेण व्याख्यातमिति न एवकारानुपपत्तिः। अत्र च वार्तिककृद्भिः भाष्याभिप्रायदुरवगाह इति मत्वा एवं व्याख्यातम्।

भाष्यकारैः "कर्मणा पितृलोको विद्यया देवलोक" इत्युभयत्रापि नञनुकर्षणं तैत्तिरीये—"श्रद्धया देयम्

अश्रद्धया अदेयमि"त्युक्त्वा "श्रिया देयं ह्रिया देयं भिया देयमि"त्यादिश्रुतिवाक्येष्वपि अश्रिया अदेयं अह्रिया अदेयं अभिया अदेयं" इत्यादिवाक्यकल्पनस्योपलक्षणत्ववदेवात्राप्युपलक्षणत्वमभिप्रेयते।

३. मैत्रेयीब्राह्मणे—"स यथाऽऽर्द्रैधाग्नेरभ्याहितस्य पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदस्सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि" इति खण्डविवरणे भाष्यम्–इतिहासः—उर्वशीपुरूरवसोः, संवादादिः। पुराणम्, "असद्वा इदमग्र आसीदि"त्यादि इत्यादिना सर्वं वैदिकं मन्त्रब्राह्मणजातमुदाहरति। न तु भारतं विष्णुपुराणं इत्यादीन् अनादिसिद्धवेदप्रतिपादितत्वं ऐदंयुगीयानां भारतादीनां कथं स्यादिति।

वार्तिककारास्तु—लोकसिद्धपुराणेतिहासादिकमेव निःश्वसितवत् ब्रह्मणः संभूतमिति व्याख्येयमित्याहुः तदुक्तम्—

"लोकप्रसिद्धिमुल्लङ्घ्य यतोऽन्याय्योऽन्यथाग्रहः।
कारणत्वं प्रमाणेन यस्य साक्षाद्विनिश्चितम्॥
अपि तत्कार्यकर्तृत्वे तदेवाभ्युपगम्यते।"

इत्यादिना परस्यैव व्यासादिरूपेण पुराणादिकारणत्वादिदमेवग्राह्यमित्याहुः। अत्रेदं भाति—भारत-पुराणादीनां पौरुषेयत्वेन यत्र प्रत्यक्षवेदविरोधस्तत् त्याज्यमिति मीमांसकमर्यादा। यद्येषां साक्षाद्ब्रह्मनिर्मितत्वं तदा श्रीकृष्णेन गीतासु "तस्माच्छास्त्रं प्रमाणं ते" इत्युक्तं कथमुपपद्येत। मीमांसायां वेदप्रामाण्योपपादकं "वेदांश्चैके सन्निकर्षं पुरुषाख्या" इत्यधिकरणमुक्त्वा "धर्मस्य शब्दमूलत्वात्"इति स्मृत्यधिकरणे स्मृतीनां भारतादीनां च वेदमूलकतया प्रामाण्योक्तिः न संगच्छेत। अपि च ईश्वरस्य सर्वप्रेरकत्वात् पौरुषेयग्रन्थानां बौद्धग्रन्थानां च निःश्वसितत्वापत्तिः बुद्धस्य दशावतारान्तर्गतत्वेन व्यासादिवत् अवतारपुरुषत्वाच्च। न च वेदविरुद्धत्वात्तदप्रामाण्यम्। वेदाविरुद्धाहिंसादावपि बौद्धोक्तत्वेनाप्रामाण्यस्य भट्टैरुक्तत्वात्। अतः भाष्यस्य दुरवगाहत्वात् प्रौढिवाद एवायं तत्र भवतो वार्तिकारस्येति ज्ञेयम्।

४. षष्ठाध्यायतृतीयब्राह्मणारम्भे "जनकं ह वैदेहं याज्ञवल्क्यो जगाम स मेने न वदिष्य इति तस्य ह जन-कस्य वैदेहस्याग्निहोत्रे समूदाते याज्ञवल्क्यो वरं ददौ स ह कामप्रश्नमेव वव्रे तं हास्मै ददौ तं ह सम्राडेव पूर्वः पप्रच्छ" इति श्रूयते। अत्र याज्ञवल्क्यो मेने अद्य राज्ञा न संवदिष्ये इति परन्तु अग्निहोत्रविषयप्रस्तावकाले जनकाय ऋषिः कामप्रश्नवरं ददौ तद्बलात् अविवक्षुं याज्ञवल्क्यं वरदानबलेन सम्राडेव पूर्वं पप्रच्छ इति भाष्यकाराणां व्याख्याप्रकारः। वार्तिककारास्तु सं एनेन वदिष्य इति पदं छित्वा संवादाय सज्जीबभूव। राजापि वरदानात् पूर्वं पप्रच्छेति। एवं विलिख्य वार्तिकाचार्याः स्वीयव्याख्यानमेव सुष्ठु न तु भाष्मकारीयमित्याहुः।

राजैव पूर्वं पप्रच्छेत्येतस्माद्गम्यते शुभा।
लिङ्गात् व्याख्योत्तरा पूर्वा न साध्वीत्यप्रमाणतः॥

अत्र यद्यपि व्याख्याद्वयेऽपि न विरोधः राज्ञः प्रथमं ऋषेरभ्यनुज्ञां विना प्रश्नः उभयत्र न विरुद्धः वरदान-बलात्। एवं स्थिते महर्षेः एनेन संवदिष्ये इति संकल्पः किमर्थः तादृशसंकल्पं विनापि वरदानबलादेव राज्ञा पृष्टं सर्वं ऋषिणा वक्तव्यमेव। तद्बलादेव संवदिष्ये इति संकल्पः अर्थप्राप्तः न वक्तव्यः श्रुत्या।

भाष्यकारविवरणरीतौ तु महर्षिः संवादं न करिष्य इति संकल्पं कृत्वापि यदवोचत् तत् वरदानमूलकं इत्यर्थपुष्टिर्वर्तत इति भाष्यकारीयव्याख्यापि शोभना प्रतिभाति।

५. क्वचित्तु भाष्यकाराभिप्रायं अदूषयित्वैव स्वयं तद्भिन्नं व्याख्यानं दृश्यते यथा तृतीयाध्याये कहोलप्रश्ने "ब्राह्मणा व्युत्थाय भिक्षाचर्यं चरन्ति" इत्यत्र भाष्यम् "ब्राह्मणानामेवाधिकारो व्युत्थाने अतो ब्राह्मणग्रहणमि"ति।

वार्तिके तु "ब्रह्मचर्यादेव प्रव्रजेत् यदहरेव विरजेत् तदहरेव प्रव्रजेदि"ति च संन्यासविधौ ब्राह्मणग्रहणा-भावात् संन्यासे त्रैवर्णिकाधिकारः। अतः ब्राह्मणग्रहणं उक्तश्रुतौ वर्णत्रयोपलक्षणमित्युक्तम्। अत एव ब्रह्मज्ञानसम्पन्नः यः स ब्राह्मण इत्युक्तिः "यो वा को वा तत्त्वनिष्ठश्चेत् स ब्राह्मण" इत्यर्थे संगच्छते। आचार्यैरपि ब्रह्मवित् चण्डालोऽपि गुरुरित्युक्तम्।

एवमन्यत्र भाष्ये दृश्यमानव्याख्यानपोषकतया वार्तिककाराः लिखन्ति यथा "विज्ञाय प्रज्ञां कुर्वीत" इत्यत्र अष्टव्याख्यानभेदान् प्रदर्शयन्ति ।

अत्र भाष्यारम्भे उपनिषदां पूर्वकाण्डेन सम्बन्धः कथ्यते । इमं सम्बन्धग्रन्थं उपक्रमस्थं व्याख्यातुकामाः वार्तिकाराः ये दृष्टानुश्रविकविषयवितृष्णाः सन्तः इमं ग्रन्थं निश्चयेन शीलयन्ति तेषां अनर्थमूलाया अविद्याया निहन्तृत्वेन ब्रह्मप्रापकत्वेन वा प्रवृत्तिहेतुरागादिनिवर्तकत्वेन वा उपनिषदिति ब्रह्मविद्यायां उपनिषच्छब्दः । तादर्थ्येन ग्रन्थेऽपि प्रयुज्यते इति व्याचख्युः । अस्यां साधनचतुष्टयसंम्पन्नस्य मुमुक्षोः संन्यासिनः एवाधिकारो मुख्यः इतरेषां गौणः । विषयस्तु जीवब्रह्मैक्यं फलं च अविद्यानिवृत्त्युपलक्षितः पूर्णानन्दरूपो मोक्षः ।

## प्रथमाध्यायः

अत्र सम्बन्धग्रन्थे सकलाद्वैतशास्त्रोपयोगिनोऽर्था एव विस्तरशो विचारिताः तथाहि—

१. गृहस्थः शरीराद्यभिमानवान् अहमस्य कर्मणः कर्ता तत्फलस्य च भोक्तेति निश्चितबुद्धिः कर्माधिकारी । मुमुक्षुः त्यक्ताशेषकर्मा कर्तृत्वादिकमात्मनः नास्तीति शास्त्रान्निश्चितबुद्धिः ज्ञानेऽधिकारीति विशेषः इत्यधिकारिभेदः शास्त्रस्य ।

२. नित्यकर्मानुष्ठानस्यापि स्वर्गादिफलजनकत्वमस्तीत्युपगमात् न नित्यानां मोक्षफलम् ।

३. एकस्मिन्नेव जन्मनि निषिद्धकाम्ययोस्त्यागात् विहितानुष्ठानात् प्रारब्धकर्मणां भोगेन क्षयात् सञ्चितानां नित्यानुष्ठानक्लेशादेव क्षये एकस्मिन्नेव जन्मनि मुक्तिः प्राप्तुं शक्येति पक्षस्य विस्तरेण दूषणम् ।

४. आत्मज्ञानमपि कर्माङ्गमिति पक्षस्य निरासः, आत्मनः अकर्तृत्वाभोक्तृत्वादिगुणवतः कर्मविरुद्धत्वात् । आत्मज्ञानस्य कर्मानङ्गत्वेऽपि कर्तृत्वादिस्वाभाविकधर्मेषु निश्चयवन्तमादाय शास्त्रप्रामाण्योपपत्तिः ।

५. कैवल्यं ज्ञानैकसाध्यं तत्र क्रियाणां निष्कामेन क्रियमाणानां विविदिषायामुपयोगः । "तरति शोकमात्मवित्" इति ब्राह्मणम् ।

६. ज्ञानकर्मसमुच्चयस्त्वसम्भावितः तत्त्वज्ञानिनोऽसङ्गाद्वितीयत्वनिश्चयात् ।

७. सर्वस्यापि वेदस्य "आम्नायस्य क्रियार्थत्वादि"त्युक्तेः कर्मपरत्वमिति शङ्कानिरासः ।

८. प्राभाकराभिमतस्य 'नियोगः विध्यर्थं' इति पक्षस्य नियोगस्वरूपखण्डनेन तस्य विध्यर्थत्वखण्डनेन च निराकरणम् ।

९. भावनाया वाक्यार्थत्वनिरासः लिङः इष्टसाधनत्वार्थकत्वस्य समर्थनं च ।

१०. सिद्धं ब्रह्म मानान्तरवेद्यमिति पक्षनिरासः ।

११. तत्त्वज्ञानोत्तरं मानसं तत्त्वज्ञानावृत्तिरूपं प्रसङ्ख्यानं मोक्षसाधनमिति पक्षस्य ब्रह्मसिद्धिकाराहृतस्य खण्डनम् ।

१२. प्रसंख्यानविधिपक्षे वेदातान्तानां नियोगानिष्ठत्वं अद्वयब्रह्मासिद्धिप्रसङ्गश्च ।

१३. चतुष्पात्प्रमाणं—शब्दः, युक्तिः, प्रमाणं, आत्मा चेति पादाः —इति पक्षनिरासः ।

१४. शास्त्रस्य युक्त्यनपेक्षता ।

१५. नियोगो वा भावना वा न लिङर्थः अपितु इष्टसाधनत्वमेव तथेति सिद्धान्तः।

१६. वाक्येनैव ब्रह्मानुभवः साध्यः ।

१७. भेदस्य प्रत्यक्षानुमानादिना न साधयितुं शक्यता ।

१८. यथार्थानुभवे सर्वत्र ब्रह्मण एवाज्ञातस्य विषयता ।

१९. सुखस्वरूपविचारः —सुखं न दुःखनिवृत्तिः अपि तु भावरूप आत्मैव सुखम् ।

२०. ज्ञानमेवाज्ञाननिवर्तकं ब्रह्मस्वरूपं तु स्वप्रकाशत्वात् स्वयमेवानन्दरूपतया प्रकाशते मुक्तस्येति च ।

प्रथमाध्यायप्रतिपाद्या विषयाः—प्रथममश्वब्राह्मणम् । तत्राश्वस्याङ्गेषु शिरआदिषु उषःकालादिरूपत्वम् अश्वमेधकर्तारं यजमानं कालादिरूपमश्वं चयननिर्मितमग्निम्, अर्कशब्दितं प्रजापतिं मृत्युशब्दवाच्यं सूत्रात्मानं च एकीकृत्य अहमेवेतित्युपासनात् ब्राह्मणः क्षत्रियो वैश्यो वा अश्वमेधानधिकार्यपि अश्वमेधफलं

सूत्रात्मभावं प्रतिपद्यते। अत्रैव द्वितीयकण्डिकायां विशेषमहिमप्रापकौ सौवर्णराजतौ ग्रहौ गृहीत्वा ताभ्यां होमः कथ्यते।

अश्वमेधब्राह्मणम्—अत्रादौ अग्नेरुत्पत्तिरुच्यते "नैवेह किञ्चनाग्र आसीत्" इत्यादिना। अत्र प्रसङ्गात् बौद्धाभिमतः असत एव सदुत्पत्तिवादः आचार्यैः सयुक्तिकं खण्ड्यते। उत्पत्तेः पूर्वमपि कार्यं सदेव उत्पत्तिः केवलमभिव्यक्तिः। अभिव्यक्तिश्च न सती नाप्यसती अपितु अनिर्वचनीयेति सिद्धान्तप्रदर्शनम्। "नैवेह किञ्चने" त्यनेन स्वाविद्याद्वारेण जगत्कारणं ब्रह्मैवोच्यते इति वार्तिकाभिप्रायः।

अश्वमेधोपासनं च वार्तिके अश्वमेधाख्यः क्रतुः आदित्य एव अश्वावयवेषु उषात्वादिकल्पनात्। तस्य संवत्सर आत्मा अङ्गभूतः चित्याग्निः सोऽप्यादित्यः। उभयमपि प्राणरूपा देवतैव स च उपासितुरात्मैव तं, सोऽहमितिभावयन् मृत्युं तरति। अत्रासत्कारणवादनिरासेन ध्वंसप्रागभावात्यन्तान्योन्याभावानां न्यायवाद्यभिमतानां निरासः।

तृतीयब्राह्मणम्—उपासनेन मृत्योरात्मभावप्राप्तिरेव फलम्। उपासनप्रकारश्च ब्राह्मणान्ते भाष्योक्तः अहमस्मि प्राणः विषयासङ्गैरासुरैः पाप्मभिरधर्षणीयः विशुद्धः वागादिपञ्चकं मदाश्रयत्वादग्न्यादिरूपं विषयासङ्गरूपपाप्मवियुक्तं सर्वभूतेषु मदाश्रयान्नाद्योपयोगबन्धनं आत्मा चाहं सर्वभूतानां इत्यादिरूपेणोपासनं कार्यम्। उपास्यहिरण्यगर्भात्मभावप्राप्तिः फलम्। उपासनं च "देवो भूत्वा देवानप्येती"त्युक्तरीत्या अत्रैव हिरण्यगर्भतादात्म्याभिमानाभिव्यक्त्यन्तं कर्तव्यमेव।

चतुर्थब्राह्मणम्—"आत्मैवेदमग्र आसीत् पुरुषविध" इत्युक्तेः आत्माऽत्र प्रजापतिरेव न तु मुख्यात्मा ब्रह्मशब्दोऽत्र गौणः तस्य भयारत्यादयः संसारिधर्माः श्रूयन्ते। अत्र वार्तिककारैः उत्तरत्र "स एष इह प्रविष्ट" इत्यत्र। तच्छब्दपरामर्शोपयोगितया आत्मशब्दः परमात्मपर इत्यपि पक्षान्तरमुक्तम् न तु तत्र निर्भरः प्रदर्शितः भयारत्याद्यनन्वयात्। उत्तरत्र च स पक्षस्त्यक्तः।

वाक्योत्थवृत्तिप्रतिबिम्बितचैतन्यमेवाज्ञाननिवर्तकं न तु केवलं चैतन्यम् तस्याज्ञानसाधकत्वात् आत्मनः अनुभवरूपत्वात्, अनुभवस्य च साक्षित्वात् तत्र जन्मादेः कल्पितत्वमेव। अत एव चैतन्यमेव परमार्थः- कार्यकारणभावनिराकरणम् अनिर्वचनीयख्यातिदाढर्यार्थं ख्यात्यन्तरनिराकरणम् च।

आत्मेत्येवोपासीत—इत्यत्र न विधौ तात्पर्यम्।

उपासनमत्र ज्ञानं न ध्यानम्। आत्मानं पश्येत् इत्यत्रापि न विधिः, अत्रैव "अनेन ह्येतत्सर्वं वेद" इति सर्ववेदनफलश्रुतेश्च। चैतन्यस्वरूपे ब्रह्मणि अविद्याऽङ्गीकर्तव्या न तावता ब्रह्मणः सर्वज्ञत्वक्षतिः स्वप्रकाशे अज्ञानेनावरणासंभवात् तस्यावरणे चित्वेन प्रकाशोऽपि न स्यात्। 'अहं ब्रह्मास्मि' इति श्रुत्यर्थस्य विवरणम्।

सर्वेषामेव शास्त्राणामात्मैकत्वबोधपरत्वं भाष्यकाराः आहुः यथा "यदर्थः सर्वशास्त्रारम्भ" इति "स एष इह प्रविष्ट" इति प्रवेशवाक्योपोद्घाततया। तथाहि—यद्यपि वैशेषिकन्यायशास्त्राणां स्वस्वप्रतिपाद्येऽर्थे विरोधः तथापि रागादिध्वस्तिद्वारा तत्वज्ञानफले न विवादः किमु वक्तव्यं कामशास्त्रस्यापि कामे प्रवृत्तस्य दुःखप्रदर्शनद्वारा वैराग्यपरता तत्रैव सूचिता। अनित्यदुःखशून्यत्वं प्रपञ्चस्य प्रदर्शयन् बुद्धोऽपि निवृत्तिद्वारा तत्त्वज्ञानस्यैव सम्पाद्यत्वमाह। एवं सृष्टिप्रक्रियासु न श्रुतेस्तात्पर्यं प्रतिशाखं वैरूप्यात् "इदं सर्वमसृजत" "आत्मन आकाशः सम्भूतः" "तत्तेजोऽसृजत" "तन्नामरूपाभ्यामेव व्याक्रियत" इत्यादिना। सृष्टिः कल्पिता न वास्तवी। तदुक्तिश्च आत्मज्ञानाय। तदुक्तं श्रुतौ "तदस्य रूपं प्रतिचक्षणाय" इति। इदं च वार्तिककाराः स्पष्टं वदन्ति—

यया यया भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि। सा सैव प्रक्रियेह स्यात् साध्वी सा चानवस्थिता॥ इति।

सैद्धान्तिकी प्रक्रियापि खण्डनीयैव व्यावहारिकत्वेन मिथ्यात्वात् इत्युक्तं भगवता श्रीहर्षेण—

"अभीष्टसिद्धावपि खण्डनानामखण्डि राज्ञामिव नैवमाज्ञा।
तत्तानि कस्मान्न यथा वदेव सैद्धान्तिकेऽप्यध्वनि योजयध्वम्॥" इति।

एतेनाद्वैतप्रक्रियाखण्डनेनाद्वैतं निरस्तमिति भ्रान्ताः विमतस्थाः प्रत्युक्ताः। ब्रह्मैव हि अद्वैतं तच्च आत्मेव। तत्खण्डनं तस्य कथंकारं शक्यते साक्षिणः अनपलापात्। अस्मिन् ब्राह्मणे "अहं ब्रह्मास्मी"ति महावाक्यं भेददर्शिनः पशुभावः सप्तान्नसर्गः कामादीनां मनोधर्मत्वम्। मुमुर्षोः सम्प्रतिकर्मेत्यादयः उपदिश्यन्ते। अन्तिमब्राह्मणे च सर्वः संसारः नामरूपकर्मान्तर्गतः नात्मा। इह च वैराग्यार्थं पठ्यते इत्युक्तम्।

## द्वितीयोऽध्यायः

प्रथमाध्याये "आत्मेत्येवोपासीत" इति विद्यासूत्रं समुपस्थाप्य तद्व्याख्यानरूपं चतुर्थाध्यायान्तं इति व्याचख्यौ वार्तिककारः। "अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः" इत्यविद्यासूत्रं तस्य सप्तान्नब्राह्मणेन विवरणं कृत्वा पुनर्विद्यासूत्रार्थमेव विवृणोति द्वितीयेनाध्यायेन। अत एव वार्तिककृतः चतुर्थाध्यायान्तं विद्यासूत्रविवरणमित्याहुः। तत्रादौ गार्ग्यजातशत्रुसंवादे "आत्मा ब्रह्मे"ति राजा अजातशत्रुः काश्यः गार्ग्यं मन्दब्रह्मविदं बोधयति। तथाहि—सुषुप्तिकाले जीवः हृदयाकाशे शेते इत्यवोचत् काश्यः। स च ब्रह्मैव "अथ हैतत्पुरुषः स्वपिति नामे"त्युक्तेः स्वस्वरूपेऽवतिष्ठत इत्यवगतं; "स्वाप्ययादि"ति न्यायाच्च। तेन जीवस्य स्वाभाविकं शुद्धत्वं निर्णीतम्। पुनः जाग्रति "एतस्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वाणि भूतानि व्युच्चरन्ति" इत्युक्त्या जीवादेव सर्वं वस्तुजातमुद्गच्छतीत्युक्तेः जीव एव ब्रह्मेति न्यरूपि।

द्वितीये शिशुब्राह्मणे प्राणसम्बद्धाः काश्चनोपनिषदः ध्यानार्थमुपदिश्यन्ते।

तृतीयं मूर्तामूर्तब्राह्मणम्—"प्राणा वै सत्यं तेषामेष सत्यं" इति प्रथमब्राह्मणान्ते प्राणकारणीभूतानि पञ्च भूतानि सत्यमित्युक्तम् तेषां सत्यत्वं अधिष्ठानसत्यत्वापेक्षयेति वक्तुं एषः सत्यमित्युक्तं तत्र प्राणानां सत्यत्वं पञ्चभूतात्मकत्वरूपमेत्र मूर्तामूर्तब्राह्मणे व्युत्पाद्यते। सत् पृथिव्यादित्रिकम्। त्यत् वाय्वाकाशौ मूर्तरसः आदित्यः अमूर्तरसः आदित्यान्तर्वर्तिपुरुषः समष्टिप्राणो हिरण्यगर्भः अधिदैवतम्। अध्यात्मं मूर्तरसः चक्षुः अमूर्तरसः चक्षुषि सन्निहितः लिङ्गात्मा तस्य च वासनामयं स्वप्ने दृश्यमानं रूपमुक्त्वा "अथात आदेश" इत्यनेन सत्यस्य सत्यं ब्रह्म उपदिशति। "नेति नेति" इति वीप्सा–तेन इदं इति यद्यत् गृह्यते तत्सर्वं न भवतीत्यर्थः। एवं च निर्गुणं ब्रह्मात्र प्रतिपादितम्। अत्र वार्तिके 'नेति नेति'त्यस्य विधिरूपेण व्याख्यापि दृश्यते। "न निषेधो निषेध्यार्थो लक्षणार्थपरत्वतः। ब्रह्मणो मान्तरासिद्धेः शून्यतैव प्रसज्यते" इत्यनेन निषेधपक्षं प्रदूष्य स्वयं व्याख्यामाह वार्तिककारः—नेतीत्यत्र न इत्यनेन अवाच्यस्याभावस्य साक्षी प्रत्यगात्मा उच्यते इति इत्यनेन प्रकृतं ब्रह्मोच्यते इति इदं वाक्यं महावाक्यमेवेत्यर्थः नेति नेति इति तस्यैवावृत्तिः।

चतुर्थं मैत्रेयीब्राह्मणम्—मैत्रेय्यै याज्ञवल्क्यः अमृतत्वसाधनमात्मज्ञानमुपदिशति। आदौ आत्मा सर्वेषां प्रियः तत्प्रीत्यैव तदनुबन्धिषु प्रीतिः तत्प्रियत्वं आनन्दरूपतयेत्युक्त्वा आत्मनः श्रवणमंननादि विधाय आत्मविज्ञानेन सर्वज्ञत्वमपि भविष्यतीत्युवाच। तत्कथमितिशङ्कायां सामान्यज्ञाने सति तद्गतविशेषा बुध्यन्ते यथा दुन्दुभ्यादिध्वनौ दृष्टान्ते। अपि च प्रपञ्चोत्पत्तिलयावपि आत्मनि भवत इत्यतः आत्मनः उपादानत्वम्। तस्मादेव प्रपञ्चोत्पत्तिः तस्य सुषुप्तावपि न नाशः अपितु वृत्तिज्ञाननाश एव। स च द्वितीयाभावविशिष्ट इत्युक्तम्। तेन इदं सर्वं यदयमात्मा इत्यनेनात्मनः सर्वात्मत्वं जीवाभेदश्च सिद्ध्यति।

पञ्चमं मधुब्राह्मणम्—पूर्वं "इदं सर्वं यदयमात्मा" इत्यत्रोक्तसर्वात्मकत्वे आत्मैकसामान्यत्वं आत्मैकोद्भवत्वं तत्रैव लयश्च हेतुरुक्तः तत्र को हेतुः इति प्रश्ने यत् परस्परोपकार्योपकारकं तत् एकप्रभवं एकलयं एकसामान्यात्मकं च दृष्टम् पृथिव्यादि तथेदमिति निगमनात् उक्तार्थसिद्धिः।

**भर्तृप्रपञ्चमतम्**—भर्तृप्रपञ्चा नाम विद्वांसः भगवत्पादेभ्यः पूर्वमेव बृहदारण्यकोपनिषदः भाष्यं व्यरचयन्। भगवत्पादानां स्थितिकालेऽपि प्रचारस्तस्याभूत् वार्तिककारसमयेऽपि तद्ग्रन्थस्य पठनपाठनादिकमन्ववर्तत इति "इति श्रीमन्महाभर्तृप्रपञ्चस्य महीयसः। व्याख्यामधीयते धीराः न्यायागमबहिष्कृताम्" इति ( अ० ४-४-४१२ ) वार्तिकादवगच्छामः। ते च प्रपञ्चस्य ब्रह्मणस्सकाशात् भेदाभेदवादिनः भगवत्पादादर्वाचीनस्य भास्करभाष्यस्य मार्गदर्शिन इत्युन्नीयते। तन्मतमिदानीं संक्षेपेण प्रदर्श्यते। तथाहि—

मैत्रेयीब्राह्मणान्ते "यत्र हि द्वैतमिव भवति" इत्युक्त्वा "यत्र त्वस्य सर्वमात्मैवाभूत्" इति कथनाच्च द्वैताद्वैतात्मकं ब्रह्मेत्युक्तम् भवति। अतः द्वैतस्य स्वानुभवात् सत्यत्वं अद्वैतस्य च श्रुतिवशात्सत्यत्वमिष्टमित्यतः कर्मकाण्डप्रामाण्याविघातः। अन्यथा द्वैतमिथ्यात्वे द्वैतमवलम्ब्य प्रवृत्तस्य तस्याप्रामाण्यापातः। इदमेवोच्यते "पूर्णमद" इति मन्त्रेण। अदः ब्रह्म इदं कार्यं जगदपि पूर्णं पूर्णब्रह्माभिन्नं "यद्यतो नातिरेकेण वर्तते तत्तदेवेति निश्चितिः" इति च वार्तिकम्। ब्रह्मप्रपञ्चयोः एकरूपतया स्थितौ कथं कार्यकारणभावः इति चेदुच्यते— "पूर्णात् पूर्णमुदच्यत" इति। यस्मात् द्वैतं अद्वैतादुद्रिच्यते तस्मात् तत् ब्रह्मणो नातिरिच्यते। "पूर्णस्य पूर्णमादाय" इत्यनेन फलावस्थायां आत्मन्यवस्थाद्वयस्य अविभागेनावस्थानदर्शनात् द्वैताद्वैतात्मकमेवात्मवस्तु इति प्रदर्शयन्ति। न च प्रलयावस्थायामद्वैतावस्थैवास्ति कुतो द्वैतं इति शङ्कनीयम्। यतः यथा समुद्रात्मनि ऊर्म्यादिविभागेऽपि जलात्मना एकरूपोऽपि सदा वर्तत एव, स्थूलसूक्ष्मरूपाभ्यां तथा पूर्णवस्तुनः अवस्थाद्वयं सर्वदाऽस्त्येवेति।

तथा "तदेतत्त्रयं सदेकमयमात्मात्मा एकः सन्नेतत्त्रयं" इत्यत्र नामादित्रयस्य नामरूपकर्माख्यस्य भिन्नाभिन्नत्वमनुमेयम्। तथा विमतं भिन्नाभिन्नं वस्तुत्वात् नामादिवत् इत्यनुमानम्। अपि च गोषु गोत्वमभिन्नं व्यक्तयस्तु भिन्नाः इति सामान्यविशेषयोः भेदाभेदः सिद्धः भेदोऽभेदश्चोभयमपि पारमार्थिकं प्रपञ्चस्यापि ब्रह्मवदेव पारमार्थिकत्वात्। जीवः न साक्षादेव ब्रह्म अपि तु ब्रह्मणो विकारः। अत एव तस्य विज्ञानमय इति नाम। मयड्विकारे। "तत्सृष्ट्वा तदेवानुप्राविशदि"ति विकारात्मना प्राविशदित्यर्थकम्। अत एव जीवब्रह्मणोः भेदाभेदौ सर्वत्र भेदाभेदाङ्गीकारात् येनान्यस्तेन संसारी कर्माधिकृत उच्यते। अनन्यपक्षेऽहं ब्रह्मेत्युक्तेः ब्रह्म प्रपत्स्यते। उपाधिद्वयविशिष्टं जीवमनूद्य तत्त्वमस्यादिवाक्यात्तस्य ब्रह्मत्वमुच्यते। अभयप्रतिष्ठा फलम्। प्रवेशादौ तु न तात्पर्यम्। यथा क्षितेरूषरो विकारः यथा वा पुरुषशरीरस्य केशनखादिकं विकारः तथा जीवः परस्यैकदेशो विकारः "तद्यथा रथनाभौ च रथनेमौ च अराः सर्वे समर्पिताः एवमेवास्मिन्नात्मनि सर्वाणि भूतानि सर्वे देवाः सर्वे लोकाः सर्व एत आत्मानः समर्पिताः" इति मधुब्राह्मणवाक्यं च तेषामभिप्रायं स्पष्टं ब्रूत इति वदन्ति।

अयमर्थः न तावदयमात्मा परस्माद्भिद्यते तत्त्वमसीत्यादिश्रुतेः। ब्रह्म चक्रनाभिस्थानीयं पञ्चभूतात्मको देहः चक्रनेमिस्थानीयः देवतादिजगत् आत्मनि भूतेषु चार्पितम् इत्येवं सदा ध्यायेत्।

एवं ध्यायन् परमात्मानं ज्ञानिनामयनं प्रत्यक्तया निश्चित्य स्थितः आज्ञानाद्ध्येयो भवति। ब्रह्माख्यं चक्रं हृदयस्थितमपि सर्वैः नानुभूयते—अज्ञानादित्याहुः अविद्या च ब्रह्मणस्सकाशात् जीवस्य परिच्छेदापादिका। परस्यैव विकारः यथा भूमेः ऊषरभागः सा च परमात्मैकदेशं जीवमेवाश्रयते। सा च अविद्या स्वाश्रयस्य जीवस्य विकारं मिथ्याज्ञानं च जनयति।

मोक्षो द्विविधः अस्मिन्नेव शरीरे साक्षात्कृतब्रह्मा मुक्त इत्युच्यते। तस्य शरीरपातोत्तरं ब्रह्मणि लयो मुख्यो मोक्षः। प्रथमं नित्यकर्मसमुच्चितात् हिरण्यगर्भोपासनात् कर्मासिंगादिलक्षणमृत्युक्षयः। ततः अयमुपासकः नाममात्रावशिष्टः अन्तरालावस्थः जायते। हिरण्यगर्भोपासनरूपकर्मसमुच्चितात् ततः जीवब्रह्माभेदोपासनात् ब्रह्मणि लीयते इत्याहुः। एवमद्वैतमप्यभ्युपगम्य भेदाभेदं वदतः भर्तृप्रपञ्चाचार्यस्य मतं भाष्ये तत्र तत्र संग्रहेणाचार्यैः दूषितमेव। वार्तिककृतस्तु विशिष्य तद्वाक्यान्येवाहृत्य सम्यगेव खण्डयन्तीत्ययं विशेषः। एतन्मतखण्डनं तत्र तत्र वार्तिकटीकयोः पाठकैः अवधारणीयम्।

यथा भगवत्पादाः जीवन्मुक्तास्सन्तः जीवन्मुक्तिसुखमन्वभूवन् तथा वार्तिककारा अपि। तथा हि ब्रह्मसूत्रभाष्ये "अनारब्धकार्ये एव तु पूर्वे तदवधेः" इति चातुर्थिकसूत्रे ( ब्र. सू. ४।१।१५ ) भाष्यकाराः "अपि च नैवात्र विवदितव्यं ब्रह्मविदा कञ्चित् कालं शरीरं ध्रियते न वा ध्रियत इति। कथं हि एकस्य स्वहृदयप्रत्ययं ब्रह्मवेदनं देहधारणं चापरेण प्रतिक्षेप्तुं शक्यते" इत्यादिवाक्येनात्मनः ब्रह्मापरोक्ष्यं सूचयन्ति। वाचस्पतिमिश्रा अपि—तदेवं मध्यस्थात् प्रति प्रतिपाद्य ये भाष्यकारमाप्तं मन्यन्ते तान्प्रत्याह इति वाक्यमिदं अवतारयन्ति। अत्रापि चतुर्थाध्यायान्ते "सर्वदा समैकरसं अविक्रियं अजमजरमभयमात्मतत्त्वं ब्रह्मैव स्म"इत्यादि च।

एवमेव वार्तिककारा अपि ब्रह्मनिष्ठाः स्ववचनेनैव स्वस्य ब्रह्मानुभवं सूचयन्ति।

तथाहि—मम तावदिदं बुद्धौ भवद्भ्यो यन्न रोचते।
प्रत्यक्प्रवणया दृष्ट्या संसारो नात्मनीक्ष्यते॥
उक्तार्थे संशयश्चेत्स्यात् प्रत्यग्दृष्ट्या समीक्ष्यताम्।
स्वप्नेभबुद्धिर्नष्टेऽपि स्वप्न आभाति जागरे॥
यथैवं मोहजं द्वैतं नष्टे मोहेपि साम्प्रतम्।
जगन्ननर्ति मय्येवं कार्यकारणवस्त्विदम्॥
दिग्विभागोऽविभागेऽपि व्योम्नि यद्वत्प्रकल्पितः।
प्रध्वस्ताशेषभेदेऽपि मयि भिन्नधियस्तया॥

इत्यादौ। एतेषां वार्तिकं जगन्मिथ्यात्वजीवब्रह्मैक्यादिवैदान्तिकपदार्थानां हृदयंगमया युक्तिपरिपुष्टया शैल्या निरूपयत् इतरान् अद्वैतग्रन्थानतिशेते। अत एवाहुः साम्प्रदायिकाः—वार्तिकं पठित्वा जीवन्मुक्तो भविष्यति। अतः सर्वसंगपरित्यागिनः परमहंसा एवात्राधिकारिण इति।

याज्ञवल्क्यस्य स्वभार्यां मैत्रेयीं प्रति ब्रह्मोपदेशः यः श्रुतावनुक्रान्तः सः "कान्तासम्मिततयोपदेशयुजे" इति काव्यप्रकाशोक्तरीत्या शान्तिरसभरितः प्रियां प्रति प्रियस्य भाषणमिव हृदयंगमो वर्तते यद्यपि याज्ञवल्क्यो जीवन्मुक्तः सर्वतो विरक्तः पारिव्राज्याय प्रस्थितः। काश्यस्याजातशत्रोरुपदेशश्च "व्येव त्वा ज्ञपयिष्यामि" इति "बोधयिष्याम्येवे"ति प्रतिज्ञापूर्वकं प्रवृत्ततया गार्ग्यस्याज्ञानमपि तिरस्कृत्य सान्त्ववचनेन गुरुणा मन्दशिष्याय तत्त्वबोधनरीतिं ज्ञापयति।

वार्तिकटीकाकृतः श्रीमदानन्दगिरिपादाः इमे समेषां भाष्याणां भाष्यकृद्विरचितप्रकरणानां च टीका-रचनेन सुप्रसिद्धाः। इमे चाश्रमान्तरे जनार्दननाम्ना प्रसिद्धाः प्रकटार्थकाराणां श्रीमदनुभूतिस्वरूपाचार्याणां शिष्या इत्यात्मानं वर्णयन्ति स्वकृततत्त्वालोके। एते च स्वकृतटीकाग्रन्थे नीलाचलनायकं श्रीजगन्नाथं स्तुवन्ति अत्र मंगलाचरणे द्वितीयश्लोके—

"श्रीपुरुषोत्तमो विजयते नीलाद्रिचूडामणिः" इति। तेनेमे तद्देशाभिजना इति वक्तुं पार्यते। श्रीमदानन्द-पूर्णविद्यासागरन्यायकल्पलतिकव्याख्या तु अतिसंक्षिप्ता प्रायेण आनन्दगिरीयामेव टीकामनुसरति। क्वचिदेव तु विशेषो दृश्यते। सोऽप्यत्र टिप्पण्यामुद्धृत्य प्रादर्शि।

**वार्तिककाराणां व्याख्याशैली**—वार्तिककाराः भाष्योक्तानर्थान् प्रायेण स्वीकृत्य दृढीकृत्य च बहुषु प्रदेशेषु स्वयमर्थान्तराणि प्रदर्शयन्ति यथा "विज्ञाय प्रज्ञां कुर्वीत" इति एतद्वाक्यं ब्रह्मसिद्धिकारैरपि ध्यान-विधिपरतया व्याख्यातं; विवरणकारादिभिश्च शतशः ध्यानविधिः खण्डितः। एतेऽपि ध्यानविधिर्नास्ति लब्ध साक्षात्कारस्येति निश्चिक्युः। अपि च "निदिध्यासितव्यः" इत्यत्रापि न ध्यानविधिः तस्मिन्नेव वाक्ये "दर्शनेन श्रवणेन विज्ञानेन" इत्यत्र प्रकृतनिदिध्यासनस्य विज्ञानपदेनानुवादात् इत्यूचुः। तदुक्तं—"अपरायत्तबोधो हि निदिध्यासनमुच्यते" इति।

भगवत्पादशिष्याणां समेषामसाधारणी गुरुभक्तिः। वेदान्तेषु श्रद्धा शमदमादिसाधनसम्पत्तिश्च सर्वेषां तत्तद्ग्रन्थमुखेन दृश्यते।

पद्मपादाः—नमाम्यभोगिपरिवारसंपदं निरस्तभूतिमनुमार्धविग्रहम्।
अनुग्रमुन्मृदितकाललाञ्छनं विनाविनायकमपूर्वशङ्करम्॥

तोटकाचार्याः—येषां धीसूर्यदीप्त्या प्रतिहतमभवन्नाशमेकान्ततो मे
ध्वान्तं स्वान्तस्य हेतुः जननमरणसन्तानदोलाधिरूढेः।
येषां पादौ प्रपन्नाः श्रुतिशमविनयैः भूषिताः शिष्यसङ्घाः
सद्योमुक्ताः स्थितास्तान् यतिवरमहितान् यावदायुर्नमामि॥

भगवत्पादानां सान्निध्यात् सर्वेऽपि जीवन्मुक्तिपदं प्राप्य अन्ते विदेहकैवल्यमापुः इति। इष्टसिद्धिकारैः वार्तिककारीयत्वेनोल्लिखिता इमे श्लोकाः वार्तिके न दृश्यन्ते।

नेहात्मविन्मदन्योऽस्ति न मत्तोऽज्ञोऽस्ति कश्चन।
इत्यजानन् विजानाति यस्स ब्रह्मविदुत्तमः ।।
स्वयमेव त्ववस्तुत्वादविद्यायाः परात्मधीः।
मृतमारणवल्लज्जन्ती स्वाभावमपि निर्दहेत् ।।
भावाभावविभागं सा नेति नेत्यात्मवह्निना।
प्लुष्ट्वाऽपास्ततमस्तज्जविकल्पात्मा न कं विशेत् ।।

इत्थमतिगम्भीरविषयनिबन्धनस्य दुरूहस्य वार्तिकस्य आनन्दगिर्याचार्योपज्ञा टीकाऽत्र न्यवेशि। मुद्रित-पूर्वापीयं टीका नेदानीमुपलभ्यते। आनन्दगिरीणां व्याख्यानरीतिः सुप्रसिद्धा सरला मूलार्थावबोधनाय पण्डितैः समादृता च। स्वपक्षस्थापनाय वार्तिकोद्धृतानां मीमांसाधिकरणानां प्रभाकरपक्षानुसारित्वात् दुरवगाहता-मालक्ष्य श्रीमदानन्दगिरिभिः अतिविशदया शैल्या तेषामुपपादनं सर्वान् विदुषः अधमर्णयति। आनन्दपूर्णविद्या-सागरटीकाप्यन्यत्र मुद्र्यमाणा वर्तते। सा तु संक्षिप्ता सरला च। टीकयोः व्याख्याप्रकारः प्रायः सुसदृश एव। यत्र तु क्वचिद्भेदो विद्यासागरीये उपलभ्यते सोप्यत्र टिप्पण्यामुद्धृत्य प्रकाशितः।

महदिदं प्रमोदस्थानं पण्डितानां यत् आचार्यश्रीमच्छङ्करभगवत्पादीयसिद्धान्तप्रचारणबद्धदीक्षैर्वेदान्त-ग्रन्थानां मुद्रणादिना संरक्षणकुतूहलैः स्वयमपि वेदान्तशास्त्रनदीष्णैर्महामण्डलेश्वरैः काशीदक्षिणामूर्तिपीठाध्यक्षैः **श्रीमहेशानन्दगिरिमहाराजैः** स्थापितेन महेशानुसन्धानसंस्थानेन प्रकाशिते बृहदारण्यकोपनिषत्सहितसुरेश्वरा-चार्यवार्तिके प्रथमद्वितीयाध्यायात्मकः प्रथमो भाग इदानीं मुद्राप्य पण्डितानां पुरतः समुपस्थाप्यत इति।

अत्र ग्रन्थसंशोधनादिकठिनतरेऽस्मिन् समारम्भे अखर्वेण श्रमेण श्रद्धया बहूपकृतवतां **श्रीशारदानन्दशास्त्रि**-महोदयानां तथा **श्रीवंशपतिद्विवेदिशास्त्रि**महोदयानां च कार्तज्ञ्यं प्रकाश्य तेषां सप्रमोदं धन्यवादान् समर्पयामि।

तथा आनन्दकाननमुद्रणालयस्य प्रभवः संस्कृतैकानुरागिणः **श्रीविश्वम्भरनाथद्विवेदिमहोदयाः** सोद्योगं विशेषपरिश्रमपुरस्सरमल्पीयसैव कालेनेदं मुद्रितवन्तः। तेभ्यो बहुशो धन्यवादा भवन्त्विति।

अद्वैतग्रन्थसद्रत्नमञ्जूषान्तर्गतं शुभम्।
सटीकवार्तिकोद्दीप्तं भाष्यरत्नं सतां मुदे ।।

**श्रीमत्सुरेश्वराचार्यसंन्यासपर्व**
**चैत्रशुक्लरामनवमी**
**वि० २०३९**

**विदुषां वंशवदः**
**पण्डितराजः एस० सुब्रह्मण्यशास्त्री**
**महेशानुसन्धानसंस्थाननिदेशकः**

# विषयविन्यासः

## अथ प्रथमोऽध्यायः

## अथ द्वितीयोऽध्यायः

•

ॐ

श्रीमत्सुरेश्वराचार्यविरचितं

# बृहदारण्यकोपनिषद्भाष्यवार्तिकम्

श्रीमदानन्दगिर्याचार्यविरचित-

## शास्त्रप्रकाशिकाटीका-

समुल्लसितम्

## प्रथमाध्याये प्रथमं ब्राह्मणम्

### सम्बन्धभाष्यवार्तिकम्

**स्वाविद्याविभवप्रसूतविपुलद्वैतप्रपञ्चाहितस्पष्टभ्रान्तितिरोहितात्ममतयो यं भागशो मन्वते ।**
**निर्भागं सकलाभिधानमननव्यापारदूरस्थितं वन्दे नन्दितविश्वमव्ययमजं भक्त्या तमेकं विभुम् ॥१॥**

### शास्त्रप्रकाशिका

[1]स्वाज्ञानोद्भूतभूतप्रमुखबहुमुखद्वैतदेहद्वयोद्यन्मातृत्वादिप्रपञ्चप्रचयपरिचयप्राप्तसंसारयन्त्रम् ।
नेत्यभ्यासप्रसूतप्रबलमतिबलप्रास्तमोहप्रभावप्रोत्थप्रत्यर्थिसार्थद्युतिकथमकथं धाम कामं प्रपद्ये ॥ १ ॥

[2]कारुण्यामृतवारिपूरलहरीदूरीकृतस्वाश्रितस्वान्तध्वान्तनिरन्तरान्तररजोराशिर्यशः शेवधिः ।
भास्वद्भानुसहस्रभानुगहनोऽवज्ञाततिग्मद्युतिर्देवः श्रीपुरुषोत्तमो विजयते नीलाद्रिचूडामणिः ॥ २ ॥

[3]त्वङ्गत्तुङ्गभुजङ्गसङ्गगहनप्रत्युद्यदङ्गद्युतिभ्रश्यद्विश्वदिगन्तरालबहुलप्रौढान्धकाराङ्कुरः ।
सोमः सोमकलाकलापकलितो लावण्यकारुण्यभूर्भूयान्नो निरवद्यबोधविधये देवो भवानीपतिः ॥ ३ ॥

बन्धूकबन्धुरुचये रचये नमस्यां हेरम्बनाम वहते महते गजाय ।
प्रत्यूहभङ्गविधये निधये गुणानां शोभामतीव भजते सृजते जगन्ति ॥ ४ ॥

मातर्नतोऽस्मि भवतीमथ चाऽर्थये त्वां[4] चेतः सरस्वति ! सुरेश्वरवार्तिके मे ।
वाचा सहैव सदनुग्रहसम्प्रसन्नमेकाग्रमस्तु परिहाय पराञ्चमर्थम् ॥ ५ ॥

---

१. स्वाश्रिताज्ञानजन्यपञ्चभूतप्रमुखं द्वैतं तद्गतं देहद्वयं सूक्ष्मस्थूलरूपं तेन निमित्तेन प्राप्तः प्रमातृत्वादिप्रपञ्चप्रचयपरिचयः तेन संसारयन्त्रं प्राप्तः जीवरूपं प्राप्तः आत्मा स एव धाम। तच्च ''नेति नेति'' इत्यभ्यासश्रुतिबलात् प्राप्ता या मतिः साक्षात्कारः तद्बलेन प्रास्ता निरस्ता मोहप्रभावेणोत्पन्ना या वैरिसमूहस्यानात्मनः प्रकाशस्य कथा येन तत्। अकथं वाङ्मनसागोचरं प्रपद्ये शरणं गतोऽस्मि। अत्र प्रपत्तिः अभेदध्यानमेव निर्गुणे नमस्कार्यत्वाद्यसम्भवात् ।

२. अयं श्लोकः जगन्नाथक्षेत्रस्थश्रीविष्णुपरः पुरुषोत्तमः कारुण्याख्यामृतवारिपूरलहर्या येन स्वाश्रितानामज्ञानं आन्तरः रजोगुणश्च दूरीकृतौ, यश्च प्रकाशमानसूर्यसहस्रकिरणैः गहनः अप्रकाश्यः। अत एव येन सूर्योऽप्यवज्ञातः न्यक्कृतः सः विजयते ।

३. श्रीभवानीपतिः शिवः स्तूयते—यः स्वशरीरे विहरतां सर्पाणां प्रकाशेन बहुलीभवदङ्गद्युत्या प्रपञ्चगतान्धकारं निवर्तयति, यश्च चन्द्रकलाभूषणः लावण्यस्य कारुण्यं प्रकाशयति अतिलावण्ययुक्तमस्य लीलाशरीरमित्यथः। ''ईश्वरात् ज्ञानमिच्छेत्'' इति स्मृतिमनुसृत्य शिवं ज्ञानं प्रार्थयते। वार्तिकद्वितीयश्लोके सतां मुमुक्षूणां शान्तये मोक्षार्थमित्यर्थः। यद्यपि तत्र सतां इति साधनचतुष्टयसम्पन्नानामित्यर्थो युक्तः तथापि तत्र पूर्वपूर्वस्योत्तरोत्तरकारणत्वात् मुमुक्षुत्वमेवाधिकार इति न्यायकल्पलतिका। युक्तं चैतत् अत एव सूत्रमुक्तावलौ पूर्वेषां कुलालपितृवत् अन्यथासिद्धिरुक्ता ।

४. ''अथ वार्थये त्वामि''ति पाठः ।

नापेक्षापूरणाशक्तेः प्रयोगसमवायिता । पदानां सपदार्थानां वाक्याद्व्यवहृतिर्यतः ॥६४॥
वाक्यार्थायैव वाक्यं हि सर्वदैव प्रयुज्यते । व्यवहारेषु वृद्धानां सम्बन्धस्तत्र गृह्यते ॥६५॥
भागान्तरप्रवेशेन भागत्यागेन च स्फुटम् । वाक्यवाक्यार्थयोर्भेदे पदार्थानां निमित्तता ॥६६॥
यद्भागस्याऽऽगमाद्योऽर्थभागः स्यादधिकः क्वचित् । तस्य भागस्य भागोऽसौ निमित्तं स्यान्न तु प्रमा६७॥
अत एव सभागत्वं वाक्यवाक्यार्थयोर्मतम् । वाचकत्वेऽपि वाक्यस्य संसृष्टार्थाभिधानतः ॥६८॥
ततश्चैवं समूहस्य वाचकत्वमवस्थितम् । भागवत्त्वं च संसिद्धं वाक्यवाक्यार्थयोरतः ॥६९॥
एवं च लोकतः सिद्धो वाक्यार्थः स्याच्छ्रुतावपि । लौकिका एव शब्दार्था न्यायेनोक्ताः श्रुतौ यतः ॥७०॥

हस्तमिन्द्रमालिखन्ति पाशहस्तं वरुणमिति हि प्रसिद्धं स्वर्गोऽपि सुखविशेषो लोकविशेषो वा लोकादेवावगम्यतेऽतो यथा स्वर्गापूर्वादिषु लोकसिद्धेषु तच्छब्दानां शक्तिधीर्ज्ञातशक्तिपदसंहतिरूपवाक्याच्च विशिष्टार्थदृष्टिरेवमात्माद्यर्थे लोकसिद्धेऽपि तदेकरस्यस्वरूपो वाक्यादेव सिध्यतीत्यर्थः । अपिशब्दौ दृष्टान्तदार्ष्टान्तिकनिविष्टौ श्लिष्टार्थौ ॥८६३॥

पदार्थेतरवाक्यार्थाभावात्तद्धियश्च पदेभ्यः संभवात्कृतं वाक्येनेत्याशङ्क्याऽऽह—नापेक्षेति । एकैकस्य पदस्य पदान्तरानपेक्षस्य तदर्थस्य च मध्यमवृद्धप्रवर्तकानाकाङ्क्षज्ञानोत्पादासामर्थ्यात्तदुत्पत्तये न प्रयुज्यमानताऽतो वाक्यार्थमितये वाक्यं प्रयोक्तव्यमित्यर्थः । किंच वाक्यादेवार्थं बुद्ध्वा मध्यमवृद्धस्य प्रवृत्तिदर्शनात्तदपेक्षितमित्याह—वाक्यादिति ॥८६४॥

ननु पदानि पदार्थान्प्रत्याययन्ति तेभ्यः सांनिध्यादियुक्तेभ्यो वाक्यार्थधीर्न वाक्यादित्याशङ्क्याह—वाक्यार्थायेति । वाक्यमेव व्युत्पत्त्यवस्थायां व्युत्पन्नावस्थायां च वाक्यार्थप्रतिपत्त्यर्थं प्रयुज्यते । नहि कदाचिदपि पदार्था वाक्यार्थप्रत्यायका अप्रमाणत्वाद्वाक्यार्थधियश्चाशाब्दत्वप्रसङ्गादित्युक्तमित्यर्थः । किंच वृद्धानां व्यवहारेषु वाक्यार्थज्ञाने विवक्षितेऽस्य पदस्यास्मिन्नर्थे शक्तिरिति गृह्यते संबन्धग्रहश्च विशिष्टार्थदृष्टावुपयुज्यतेऽतो वाक्यार्थप्रतिपत्त्यर्थमेव प्रयोग इत्याह—व्यावहारेष्विति ॥८६५॥

संबन्धग्रहोपायमावापोद्वापं दर्शयति—भागान्तरेति । अनुमानादेः शक्तिग्रहोपायत्वेऽपि ततो विशेषासिद्धेरावापादिना च तत्सिद्धेरनेन स्पष्टं शक्तिज्ञानमित्याह—स्फुटमिति । संबन्धो गृह्यत इति पूर्वेण संबन्धः । आवापोद्वापयोः शक्तिग्रहोपक्षयाद्वाक्यभेदस्तदर्थभेदश्च कथमित्याशङ्क्य सत्यावापादौ पदभेदाद्वाक्यभेदः पदार्थभेदाद्वाक्यार्थभेदश्चेत्याह—वाक्येति । वाक्यभेदे पदानां वाक्यार्थभेदे च पदार्थानां निमित्ततेति योजना ॥८६६॥

ननु यस्य पदस्याऽऽवेशाद्वाक्यं भिद्यते तत्पदं स्वार्थे मानं न वा? आद्ये तद्वत्पदान्तराणामपि प्रामाण्याद्वाक्यानुपयोगो द्वितीये तस्याप्रमाणस्य न भेदकत्वमत आह—यद्भागस्येति । क्वचिद्वाक्ये यस्य पदस्य प्रवेशाद्यः पदार्थोऽधिकः स्यात्तस्य पदार्थस्य तत्पदं स्मारकं "पदमभ्यधिकाभावात्स्मारकान्न विशिष्यत" इति न्यायान्न तु प्रमाणं तथाऽपि भेदकं पदार्थवदन्यथा सांकर्यादिति भावः ॥८६७॥

पदपदार्थयोरिव वाक्यवाक्यार्थयोरपि वाच्यवाचकभावात्पदतदर्थवद्वाक्यतदर्थयोः सभागत्वासंभवात्पदस्य तदर्थे शक्तिधीवद्वाक्यस्यापि स्वार्थे तत्प्रसङ्गात्पदवद्वाक्यमपि न मानमित्याशङ्क्याऽऽह—अत एवेति । अतःशब्दार्थं स्पष्टयति—वाचकत्वेऽपीति । वाक्यस्य वाचकत्वेऽपि संसृष्टार्थविशेषवाचकत्वाद्धेतोर्वाक्यतदर्थयोः सभागत्वमतो वाक्यभागस्य पदस्य वाक्यार्थभागे पदार्थे संगतिराकृत्युपाधौ पदसंगतेः सुग्रहत्वात्, न तु पदसमुदायस्य वाक्यस्य पदार्थसमुदाये वाक्यार्थे सा युक्ता [1]विशेषे तद्ग्रहासंभवस्योक्तत्वादित्यर्थः ॥८६८॥

पदस्यैव स्वार्थे योग्यान्विते शक्तिधीर्न वाक्यस्येति स्थिते फलितमाह—ततश्चेति । यतो वाक्यतदर्थयोरुक्तनीत्या भागवत्त्वमेवं पदस्यैव स्वार्थे योग्यान्विते शक्तिश्च स्थिता ततः समूहस्य वाक्यस्य वाचकत्वं प्रामाण्यं प्राप्तमज्ञातविषयत्वान्न पदवदप्रमाणतेत्यर्थः ॥८६९॥

लोके योग्यान्वितेऽर्थे पदसामर्थ्येऽपि वेदे कथं त्वदिष्टाखण्डार्थसिद्धिस्तत्राऽऽह—एवं चेति । व्यवहारतो

१. विशेषे अभिनववाक्ये संगतिग्रहासम्भवादबोधकत्वापत्तिः इत्युक्तमेव ।

नृविवक्षाव्यवायेन लोके शङ्का भवेदपि । वेदे त्वपौरुषेयत्वात्साक्षात्स्वार्थे प्रमाणता ।।७१।।
न च कार्यपरत्वेऽपि पदानां संहतिः स्थिता । अन्यत्रावगमो न स्यात्सम्बन्धज्ञानवर्जनात् ।।७२।।
यथा च कार्ये तात्पर्यं कार्यं चापि न विद्यते । पूर्वमेव तथाऽस्माभिर्युक्तिभिः संप्रसाधितम् ।।७३।।

शब्दार्थसम्बन्धस्य सांकेतिकत्वपक्षः तन्निरासश्च

अनादिवृद्धव्यवहृद्व्युत्पत्त्यैव च तत्स्थितेः । शब्दस्यार्थेन सम्बन्ध आदिमत्ता न शङ्क्यते ।।७४।।
प्रथमश्रवणे यत्र न शब्दार्थावधारणम् । तत्राव्युत्पन्नता हेतुः शब्दानां न त्वशक्तिता ।।७५।।

योग्यान्विते शक्तिग्रहे सति गृहीत[1]शक्तिपदसंहतिवशाद्वाक्यार्थः संसर्गः संसृष्टो वा लौकिकवाक्येषु यः सिद्धः स वेदेऽपि स्या"दविशिष्टस्तु वाक्यार्थ" इति न्यायेन लोकवेदयोः शब्दतदर्थानामविशेषान्न्यायस्तु प्रागेवानुक्रान्तत्वान्नेहानुक्रम्यतेऽतो वेदान्तेष्वपि पदानि योग्यान्विते ज्ञातशक्तीनि लक्षणयाऽखण्डमर्थं बोधयन्तीत्यर्थः ।।८७०।।

अथोभयत्र वाक्यार्थाविशेषे लौकिकवाक्यार्थवदितरस्यापि मानान्तरगोचरत्वाद्वेदस्यानपेक्षतालक्षणप्रामाण्यक्षतिरत आह—नृविवक्षेति । लोके पुरुषविवक्षासंबन्धात्तस्याश्च शब्दार्थधीहेतोरनियमाद्दृष्टेऽर्थे शब्दस्यामानत्वमपि शङ्क्येत वेदे त्वपौरुषेये विवक्षाव्यवधानाभावात्तद्द्वारकदोषाभावात्स्वार्थे मानत्वं साक्षादनपेक्षं सिध्यतीत्यर्थः ।।८७१।।

वेदस्यानपेक्षमानत्वेऽपि नाखण्डार्थता संसृष्टकार्यपरत्वादित्याशङ्क्याऽऽह—न चेति । वेदस्य कार्यपरत्वे त्वदिष्टेऽपि पदसंहतिस्तत्परत्वेन न स्थिता पदानां योग्यान्विते शक्तेरुक्तत्वाज्ज्ञातशक्तिपदसमुदायस्य कार्यपरत्वानियमात्कार्यवदकार्येऽपि वाक्यप्रवृत्तेरुक्तत्वाल्लक्षणया च तेषामखण्डार्थत्वस्य दर्शितत्वादिति भावः । अन्वितकार्ये वा तदन्वितस्वार्थे वा कार्यपरपदार्थान्विते वा कार्यान्वयान्वयिनि वा शक्तिनियमात्कार्यपरता वाक्यस्येति चेन्नेत्याह—अन्यत्रेति । अन्विते कार्ये शक्तिनियमे नामपदेभ्यः स्वार्थधीर्न स्यात्तेषां तेषु शक्त्यग्रहात्, कार्यान्विते[2] शक्तिनियमे पुत्रजन्मादिवाक्ये पुत्रादिपदेभ्यस्तदर्थेषु न प्रतिपत्तिस्तेषु कार्यान्वितेषु तेषां संबन्धाग्रहात, कार्यपदात्तदर्थे च नावगमः कार्यस्य कार्यान्वयाभावात्, तत्र तस्य संगत्ययोगात्, कार्यपरपदार्थे शक्तिनियमेऽपि तत्परत्वस्य तच्छेषत्वाव्यतिरेकादुक्तदोषतादवस्थ्यं, कार्यान्वयान्वयिनि शक्तिनियमेऽपि कार्यस्येतरस्य द्वयोर्वा शक्तिप्रतियोगित्वप्राप्तेरुक्तदोषतेति भावः ।।८७२।।

इतश्च न कार्यपरता वेदस्येत्याह—यथेति ।।८७३।।

कार्यवादिनि निराकृते केचिदाहुः शब्दार्थसंबन्धस्य साङ्केतिकत्वादकार्यपरत्वेऽपि शब्दस्यानपेक्षमानत्वासिद्धिरिति तान्प्रत्याह—अनादीति । उक्तव्यवहारनिमित्तव्युत्पत्तिशब्दितशक्तिरूपेण शब्दार्थसंबन्धस्यौत्प[3]त्तिकसूत्रे स्थितत्वात्तस्मिन्नादिमत्ता संकेतत्वेन न शङ्कनीया तद्वेदस्य सङ्केतद्वारा न सापेक्षतेत्यर्थः ।।८७४।।

ननु शब्दानां शक्तिसंबन्धे गवादिशब्दश्राविणां सर्वेषामेव कुतो नार्थधीः शब्दशक्तेः सर्वान्प्रत्यविशेषान्न

१. आत्मादिपदानां लोके संसृष्टार्थज्ञातशक्तीनां वेदे सामानाधिकरण्यविशेषणविशेष्यभावविरोधपरिस्फुरणैर्भागत्यागलक्षणया "सोऽयं" इत्यादिवत् लोकतः वृद्धव्यवहारसामर्थ्यादेव सिद्धः, न्या० क०। इदं च संक्षेपशारीरके स्पष्टमुक्तम्—"सामानाधिकरण्यमत्र भवति प्राथम्यभागन्वयः पश्चादेव विशेषणेतरतया पश्चाद्विरोधोद्भवः" इत्यत्र। तत्त्वमसीत्यादौ प्रथमतः तत्त्वंपदयोः सामानाधिकरण्यबुद्धिः ततो विशेषणविशेष्यभावबुद्धिस्ततस्तदर्थयोर्विरोधबुद्धिस्ततो भागत्यागलक्षणयाऽखण्डार्थज्ञानमित्यर्थः।

२. कार्यान्वयान्वयिनि—अयं पक्षस्तत्त्वप्रदीपिकायामुद्भाव्य निराकृतः। कार्यस्येतरस्य—कार्यभिन्नस्य घटादेः, द्वयोर्वा कार्यसिद्धयोः शक्तिप्रसङ्ग इत्यर्थः।

३. औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः, तस्य ज्ञानमुपदेशः अव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात्। औत्पत्तिकः स्वाभाविको नित्य इत्यर्थः। अनपेक्षत्वात्—लोके पौरुषेयवाक्येषु प्रामाण्याय तज्जन्यप्रत्ययसदृशप्रत्ययान्तरं समीचीनमपेक्ष्य प्रामाण्यं दृष्टम्। आप्तोक्तिषु आप्तत्वनिश्चयापेक्षं प्रामाण्यं वेदे तु करणदोषादिरूपमप्रामाण्यकारणं नास्ति, अनादित्वात् स्वत एव निरपेक्षं प्रामाण्यमित्यर्थः।

चक्षुर्दृष्टपि बाह्यं हि न प्रकाशं विनाऽर्थदृक् । नैतावताऽस्य सामर्थ्यं हन्यतेऽन्यस्य वा भवेत् ॥७६॥
व्युत्पत्त्या न च सम्बन्धः क्रियते ह्यर्थशब्दयोः । अवस्थिते हि सम्बन्धे वृद्धेभ्योऽसौ [1]प्रजायते ॥७७॥
सम्बन्धकरणाशक्तेस्तत्कर्तुश्चास्मृतेरपि । तद्विना व्यवहाराच्च सिद्धा सम्बन्धनित्यता ॥७८॥
जीर्णकूपादिवत्कर्तुर्यदप्यस्मरणं न तत् । अभावगमकं नापि सम्बन्धेनास्य तुल्यता ॥७९॥
क्वचिज्ज्ञातेषु दूरादिकारणे संशयोऽपि च । नात्यन्तानुपलब्धेषु त्वभावोऽतोऽस्य निश्चितः ॥८०॥
सन्निकृष्टार्थसंसृष्टस्वार्थमात्राभिधानतः । तस्मात्सिद्धोऽत्र वाक्यार्थो लोके वेदे प्रमाणवान् ॥८१॥

चाव्युत्पन्नानां शब्दार्थधीरतस्तयोः संकेतसंबन्धोऽत आह—प्रथमेति । अव्युत्पन्नानां शब्दश्रवणे ततोऽर्थानवधारणं शब्दानामज्ञातशक्तित्वान्न शक्त्यतिरिक्तसंकेताख्यसंबन्धाज्ञानादित्यर्थः ॥८७५॥

संबन्धग्रहे सत्येव शब्दार्थधीश्चेद्बुद्धिसामर्थ्यं शब्दस्य हीयेत संबन्धग्रहस्यैव वा तत्स्यात्तस्यैव प्राप्ताप्राप्तविवेकेन तद्धेतुत्वादित्याशङ्क्याऽऽह—चक्षुरिति । यथा चक्षुर्दृष्टिशक्तियुक्तमपि बाह्यदीपादिप्रकाशं विना न रूपादिदृष्टौ व्याप्रियते न च दीपाद्यपेक्षामात्रेणास्य दृष्टिशक्तिहतिर्नापि दीपादेः सा भवत्येवं शब्दस्य संबन्धग्रहापेक्षया बोधकत्वेऽपि न बुद्धिशक्तिहानिर्नापि सा संबन्धग्रहस्येत्यर्थः ॥८७६॥

किंच संकेतपक्षे स व्युत्पत्त्या क्रियते वा केनचिदसर्वज्ञेन वा सर्वज्ञेनेश्वरेण वा? नाऽऽद्य इत्याह—व्युत्पत्त्येति । संबन्धग्रहान्न संकेतोत्पत्तिरित्यत्र हेतुमाह—अवस्थिते हीति । शब्दार्थसंबन्धे स्थिते [1]वृद्धव्यवहारवशादसौ व्युत्पत्तिरुत्पद्यते ततः सा पराचीना न प्राचीनं संबन्धमुत्पादयेदित्यर्थः ॥८७७॥

न द्वितीय इत्याह—संबन्धेति । न ह्यसर्वज्ञः शब्दार्थसंबन्धं कर्तुमीष्टे तत्संबन्धस्यानन्तत्वात्तन्न तत्कृतः संकेत इत्यर्थः । न तृतीय इत्याह—तत्कर्तुरिति । संबन्धकर्तुरीश्वरस्याननुभवादस्मरणाच्च न सर्वज्ञकृतोऽपि स न युक्तः । नहि संकेतकर्तरीश्वरे मानमस्त्यनुमानागमयोर[2]तटस्थेश्वरगामित्वादिति भावः । पक्षत्रयसाधारणं दोषमाह—तद्विनेति । अनेनायं संबन्धः कृत इति कर्तृस्मरणमन्तरेण शाब्दव्यवहारदृष्टेश्च न तत्कृतः स इत्यर्थः । विमतः संबन्धो नित्योऽस्मर्यमाणकर्तृकत्वादात्मवदिति फलितमाह—सिद्धेति ॥८७८॥

जीर्णकूपादिष्वनैकान्त्यमाशङ्क्याऽऽह—जीर्णेति । तत्र सत्येव कर्तर्यस्मरणं न तस्याभावगमकं संप्रदायविच्छेदादपि तदुपपत्तेरिह तु यत्कर्तुरस्मरणं न तत्तद्वत्कर्त्रभावगमकं संप्रदायाविच्छेदविशेषिकर्त्रस्मरणस्य तदभावाव्यभिचारादित्यर्थः । किंच शब्दार्थसंबन्धेन जीर्णकूपादेर्न तुल्यता संबन्धस्यानन्ततया दुष्करत्वादन्यस्याल्पत्वेन सुकरत्वादतोऽसंभावितकर्तृकत्वेनापि तन्नित्यत्वमनुमेयमित्याह—नापीति ॥८७९॥

योग्यानुपलब्ध्या कर्तुरभावनिश्चयाच्च संबन्धनित्यतेत्याह—क्वचिदिति । लोके क्वचिद्देशे काले च सामान्यदृष्टेष्वर्थेषु दूरान्धकारादिहेतोर्विशेषाग्रहे च स्थाणुः पुमान्वेत्यादिः संशयो दृष्टो नात्यन्तमदृष्टेषु [3]साधारणग्रहहेत्वभावादिह तु संबन्धकर्तुः सर्वथाऽनुपलम्भान्न तत्संशयोऽपि तन्निश्चयस्तु कुतस्त्योऽतो योग्यानुपलम्भादस्याभावनिश्चयाद्युक्ता संबन्धनित्यतेत्यर्थः ॥८८०॥

संबन्धस्य संकेतत्वं निरस्य शक्तित्वं व्यवस्थाप्य योग्यान्विते शक्तिमुपेत्येष्टेऽर्थे शब्दप्रामाण्यमुपसंहरति—संनिकृष्टेति । संनिधानादिमताऽर्थेन संसृष्टस्य स्वार्थमात्रस्य कार्याकार्योदासीनस्य पदैरभिधानात्पदार्थसंसर्गः संसृष्टपदार्थो वा वाक्यार्थो लोकवेदयोः सिद्ध इति योजना । समानाधिकरणे पञ्चम्यौ । एवमुत्सर्गे स्थिते वेदान्तेषु तात्पर्यमालोच्याखण्डार्थतासिद्धिरित्यर्थः ॥८८१॥

---

१. असौ प्रजायते—अत्रासावित्यनेन शब्दार्थसम्बन्धो गृह्यते इत्यभिप्रेत्य प्रजायते ज्ञायत इत्यर्थः, इति ।

२. अतटस्थेश्वरगामित्वात् तटस्थेश्वरसाधकत्वाभावादित्यर्थः। ईश्वरानुमानं न्यायशास्त्रोक्तं तटस्थेश्वरसाधनाय। तच्च बहुशो बहुभिर्ब्रह्मसूत्रभाष्यटीकादौ खण्डितम्। श्रौतेश्वरस्तु न तटस्थो न केवलनिमित्तम्, अपितु अभिन्ननिमित्तोपादानम् ।

३. साधारणग्रहः साधारणधर्मवद्धर्मिज्ञानं, तच्च संशयहेतुः । न्यायकल्पलतायां स्वभावोऽतोऽस्य निश्चित इति पाठं गृहीत्वा "शब्दस्यार्थबोधनसामर्थ्यं स्वभाव" इति व्याख्यातम् ।

### वेदान्तानां सिद्धे प्रामाण्यनिर्धारणम्

**अतोऽवबोधकत्वेन दुष्टकारणवर्जनात् । अबाधाच्च प्रमाणत्वं वस्तुन्यक्षादिवच्छ्रुतेः ॥८८२॥**
**पुरुषार्थोपदेष्टृत्वाद्यद्वत्कार्ये प्रमाणता । तथैकात्म्ये विशेषाद्वा पुमर्थातिशयत्वतः ॥८८३॥**
**पुमानिष्टस्य सम्प्राप्तिमनिष्टस्य च वर्जनम् । इच्छन्नपेक्षते योग्यमुपायमपि तत्परः ॥८८४॥**
**ग्रामादि किंचिदप्राप्तं प्राप्तुमिष्टमिहेच्छति । हेमादि विस्मृतं किंचित्करस्थमपि लिप्सते ॥८८५॥**
**परिहार्यं तथाऽनिष्टं कण्टकादि जिहासति । रज्ज्वां सर्पादि किंचिच्च त्यक्तमेव जिहासति ॥८८६॥**
**नियतोपायसाध्यत्वादवाप्यपरिहार्ययोः । विधितः प्रतिषेधाच्च साधनापेक्षता भवेत् ॥८८७॥**

### तत्त्वज्ञानस्यैवानर्थनिवर्तकता

**अज्ञानान्तरितत्वेन संप्राप्तत्यक्तयोः पुनः । याथात्म्यज्ञानतो नान्यत्पुरुषार्थाय कल्पते ॥८८८॥**
**अशेषानर्थविच्छेदं वाञ्छतः श्रुतितः श्रुतेः । त्वं ब्रह्मेति हताशेषक्लेशो मोहप्रहाणतः ॥८८९॥**
**वेदस्य सिद्धे प्रामाण्ये ह्यज्ञातार्थविबोधतः । कार्ये यथा प्रमाणत्वमैकात्म्येऽप्येवमिष्यताम् ॥८९०॥**

**किंच** वस्तुनि शब्दस्यामानत्वमबोधकत्वाद्वा सांशयिकत्वाद्वा विपर्ययहेतुत्वाद्वा पुमर्थाभावाद्वेति विकल्प्य **त्रयं क्रमेण निरस्यति**—अत इत्यादिना। **अतः** श्रुतेरिति संबन्धः। **अस्यास्तत्त्वमस्यादिश्रुतेरधिकृतं प्रति बोधकत्वादपौरुषेयत्वाच्च तदुत्थबोधस्यादुष्टकारणकत्वेन** संशयविपर्ययातिरेकाद्बाधकाभावेन **बाधानुपलब्धेश्च विपर्ययत्वायोगाद्युक्तमस्या वस्तुनि** चक्षुरादिवत्प्रामाण्यमित्यर्थः ॥८८२॥

**चतुर्थं प्रत्याह**—पुरुषार्थेति। **कार्यसाम्यमैक्यस्योपेत्य** शब्दस्योभयत्र प्रामाण्याविशेषमुक्त्वैक्ये श्रुतेस्तत्त्वा**वेदनं प्रामाण्यमित्यतिशयमाह**—विशेषाद्वेति। **अबाधितपुमर्थत्वादात्मनो मेयस्योक्तविशेषे** हेतुमाह—पुमर्थेति। **निरतिशयपुरुषार्थमज्ञातं ज्ञापयतस्तत्त्वमादेस्तात्त्विकमानतेति भावः** ॥८८३॥

**प्रतीचो वाक्यार्थीभूतस्य पुमर्थातिशयत्वं विशदीकर्तुं** तद्द्वैविध्यमाह—पुमानिति। **इष्टलक्षणं फलमित्युपगमात्फलत्वं तयोः साधयति**—इच्छन्निति। **साधनाधीनं साध्यमिति न्यायं सूचयति**—अपेक्षत इति। **योग्यमुपेयोत्पादनशक्तमित्यर्थः**। तत्परः फले तद्धेतौ च तात्पर्यवानिति यावत् ॥८८४॥

**तर्हि द्विविधस्यापि पुमर्थस्य** साधनसाध्यत्वेनानित्यत्वादात्मनि पुमर्थातिशयासिद्धिरित्याशङ्क्येष्टप्राप्तिं **भिनत्ति**—ग्रामादीति। इहेति व्यवहारभूमिरुच्यते ॥८८५॥

**अनिष्टनिवृत्तिमपि विभजते**—परिहार्यमिति ॥८८६॥

**अप्राप्तस्यापरिहृतस्य च प्राप्तिपरिहारयोरुपायमाह**—नियतेति। **अप्राप्तप्राप्तेरपरिहृतपरिहारस्य च शास्त्रान्वयव्यतिरेकसिद्धोपायसाध्यत्वाद्विधिनिषेधाभ्यामन्वयव्यतिरेकाभ्यां च साधनभेदं ज्ञात्वा तदनुष्ठानेन प्रेप्सितमप्राप्तं प्राप्नोत्यपरिहृतं च परिजिहीर्षितं परिहरतीत्यर्थः** ॥८८७॥

**अवशिष्टयोराप्तिपरिहारयोरुपायमाह**—अज्ञानेति। **प्राप्तस्य त्यक्तस्य चाज्ञानाच्छन्नत्वेन प्रेप्साजिहासयोर्भावे तत्त्वज्ञानमेव पुरुषार्थाय तयोराप्तिपरिहाराय समर्थो भवतीत्यर्थः** ॥८८८॥

**एवं विभागेऽपि कथं वेदान्तवेद्ये पुमर्थातिशयत्वसिद्धिस्तत्राऽऽह**—अशेषेति। **मोक्षमाणस्य तत्त्वमादिवाक्यात्त्वं ब्रह्मेति ब्रह्मात्मत्वे ज्ञाते ज्ञातब्रह्मप्राप्तिनिरस्तसमस्तक्लेशो भवति तद्धेतोर्मोहस्याभावादतोऽनतिशयाबाधितपुमर्थे ब्रह्मात्मनि युक्तं तात्त्विकमानत्वं वेदान्तानामित्यर्थः** ॥८८९॥

**इतश्च तस्मिन्मानत्वं तेषामित्याह**—वेदस्येति। **अज्ञातार्थबोधित्वाद्वेदस्य मानत्वे स्थिते कार्यवाक्यानामज्ञातकार्यबोधिनां स्वार्थे मानत्ववदैक्यवाक्यानामप्यज्ञातं तद्बोधयतां तस्मिन्मानत्वमनधिगतगन्तृत्वाविशेषादित्यसकृदुक्तमित्यर्थः** ॥८९०॥

कार्याद्यदि तु मानत्वं मानत्वात्कार्यनिष्ठता । अन्योन्याश्रयतैवं स्यादेकस्यासिद्धितोऽन्यतः ॥९१॥
औदासीन्यान्निषेधेषु न लभ्येत प्रमाणता । औदासीन्यं निवृत्तिर्हि स्वरूपालम्बनं च तत् ॥९२॥
सोऽरोदीत्यादिवाक्यानां कार्यवैशात्प्रमाणता । अपुमर्थोपदेष्टृत्वात्तच्च नात्रेत्यकारणम् ॥९३॥

तत्त्वमस्यादिमहावाक्यस्य मिथ्यात्वादप्रामाण्यनिरासः

न चैकात्म्याभ्युपायस्य मिथ्यात्वमिह शङ्क्यते । उपेयाप्तौ कृतार्थत्वादुपायं प्रत्यनीक्षणात् ॥९४॥
ऐकात्म्यप्रतिपत्तेः प्राङ्न मिथ्या हेत्वभावतः । पुरुषार्थावसायित्वाच्चाप्यूर्ध्वमनपेक्षतः ॥९५॥
उपेयबोधनं मुक्त्वा मितेर्नान्याऽस्ति सत्यता । सत्यादप्यनुपायत्वाद्घटान्नाग्निर्हि गम्यते ॥९६॥

ननु तत्त्वमादिवाक्यं स्वार्थे मानमबुद्धबोधित्वात्कार्यवाक्यवदित्ययुक्तं वाक्यप्रामाण्ये कार्यनिष्ठत्वस्य प्रयोजकत्वात्तत्राऽऽह—कार्यादिति । कार्यनिष्ठत्वाद्यदि वेदस्य मानत्वमेवं सत्यन्योन्याश्रयता, वेदस्य मानत्वात्कार्यनिष्ठता ततो मानतेति तयोरेकस्याप्यन्यतोऽसिद्धेरित्यर्थः । कार्यनिष्ठत्वं वेदप्रामाण्ये न प्रयोजकं व्यतिरेकासिद्धेरिति तुशब्दार्थः ॥८९१॥

ननु विमतं न स्वार्थे मानमकार्यनिष्ठवाक्यत्वात्संमतवदिति व्यतिरेकसिद्धिमाशङ्क्याऽऽह—औदासीन्यादिति । न हन्तव्यो न पिबेदित्यादिनिषेधेषु कार्यविलक्षणमौदासीन्यमर्थः । कार्यमेव वेदार्थश्चेत्तेष्वमानता । स्वीक्रियते च तेषामपि मानत्वमतो व्यभिचारो हेतोरित्यर्थः । औदासीन्यस्यैव कार्यत्वात्तन्निष्ठनिषेधेषु न व्यभिचार इत्याशङ्क्याऽऽह—औदासीन्यमिति । प्राप्तक्रियानिवृत्तिरौदासीन्यं न कार्यमित्यर्थः । निवृत्तिरेव तर्हि कार्यं नेत्याह—स्वरूपेति । वस्त्वेव निवृत्तिर्नहि कूटस्थाद्वयादन्या साऽस्त्यन्यत्वेऽपि तस्या न कार्यतेति कुतो निषेधानां तन्निष्ठतेत्यर्थः ॥८९२॥

प्राप्तक्रियानिवृत्त्युपलक्षितस्वास्थ्याप्रच्युतिरूपौदासीन्याकार्यावसायिनामपि निषेधानां प्रामाण्यवदैक्यवाक्यानामपि स्वार्थे तदित्युक्तम् । ननु तत्त्वमादिवाक्यं कार्यशेषे मानं विधिशून्यवेदवाक्यत्वात्संमतवदित्याशङ्क्य स्वार्थे पुमर्थराहित्यमुपाधिरित्युक्तमेव स्मारयति—सोऽरोदीदिति । साधनव्याप्तिं निराह—तच्चेति । नहि तत्त्वमादावपुमर्थोपदेष्टृत्वं तदर्थस्यैक्यस्य परानन्दतया पुरुषार्थत्वोक्तेरित्यर्थः । सोपाधित्वादुक्तं साधनमगमकमिति फलितमाह—इत्यकारणमिति ॥८९३॥

विधिविधुरवेदवाक्यत्वानुमानायोगेऽपि तत्त्वमादिवाक्यजा धीर्न प्रमा मिथ्याकारणकत्वाद्धूमाभासोत्थज्ञानवदित्याशङ्क्याऽऽह—न चेति । तत्त्वज्ञानोपायस्य श्रुत्यादेर्मिथ्यात्वं तज्जन्ये ज्ञाने प्रमात्वाभावे न प्रयोजकत्वेनाऽऽशङ्क्यते तत्र प्रमाफलराहित्यस्योपाधित्वादित्यर्थः । साधनव्याप्तिमाशङ्क्याऽऽह—उपेयेति । उपेयस्य ज्ञानस्याऽऽप्तौ मुक्तिफलतया पुरुषस्य कृतार्थत्वादुपायं श्रुत्यादिं प्रत्यन्वेषणाभावादप्रयोजको हेतुरित्यर्थः ॥८९४॥

किंचोपायस्य मिथ्यात्वं ज्ञातममानत्वहेतुः स्वरूपेण वा ? तज्ज्ञानमपि वस्तुज्ञानात्प्रागूर्ध्वं वेति विकल्प्याऽऽद्यं दूषयति—ऐकात्म्येति । वाच्यार्थज्ञानात्प्रागुपायो न मिथ्येति तत्प्रतीतौ गमकाभावादतो हेत्वसिद्धिरित्यर्थः । द्वितीयं दूषयति—पुरुषार्थेति । तत्त्वज्ञानादूर्ध्वमुपायमिथ्यात्वं ज्ञातमपि नोपेये ज्ञाने प्रमात्वं विहन्ति तत्फलस्य मोक्षस्याऽऽप्तत्वेन मानापेक्षाभावादुक्तोपाधितादवस्थ्यादित्यर्थः ॥८९५॥

किंचोपायस्य मिथ्यात्वे तज्जा धीर्न प्रमेति वदता मिथ्याभूतस्योपायत्वं नेति वा विवक्ष्यते सत्यस्योपायत्वमिति वा? नाऽऽद्यो मिथ्याभूतस्यापि प्रतिबिम्बादेरुपायतोपगमाद् द्वितीये तूपायस्य सत्यत्वं कार्यकरत्वं वा बाधवैधुर्यं वा तत्राऽऽद्यमुपेत्य द्वितीयं दूषयति—उपेयेति । मितिशब्देन तदुपायः श्रुत्यादिर्लक्ष्यते तस्योपेयबोधनस्वरूपं कार्यकरत्वमिष्टमेवातस्तादृशसत्यत्वशून्योपायजन्यत्वं विमते ज्ञाने नास्तीत्यसिद्धिः । कार्यकरत्वं विना नोपायस्य बाधवैधुर्यरूपा सत्यताऽस्ति नेह नानेत्यादिबाधस्य स्पष्टत्वात्तथा च तथाविधसत्त्वताहीनहेतुजन्यत्वहेतावुक्तोपाधिसत्त्वमिति भावः । किंच सत्यत्वमुपायत्वे न प्रयोजकं न हि सत्यादपि घटादग्निर्गम्यते तस्य सत्यत्वेऽपि तज्ज्ञानोपायत्वाभावादित्याह—सत्यादिति ॥८९६॥

धूमाभासात्तु बाष्पादेर्यदग्निर्नावगम्यते । हेतुस्तत्रानुपायत्वमसत्यत्वं पुनर्न तु ॥९७॥
धूमवत्परमार्थत्वमुपायत्वान्न लभ्यते । वेदान्तानां तथैकात्म्यश्रुतिबाधः स्फुटो भवेत् ॥९८॥
बाष्पवन्नापि मिथ्यात्वादनुपायत्वमिष्यते । ऐकात्म्याबोधबाधेन सिद्धा तूपायसत्यता ॥९९॥
श्रुतेरैकात्म्यसंवित्तौ चरितार्थत्वतो मितेः । वृथोपायपरीक्षा स्यादुत्तीर्णस्य प्लवे यथा ॥९००॥
बाह्येष्वर्थेष्वनात्मत्वात्पुनः शङ्का भवेदपि । अत्राऽऽत्मत्वादुपेयस्य का शङ्का मानतां प्रति ॥ १ ॥

तत्त्वमादेरखण्डार्थता

अन्यत्रेव न चाप्यत्र वाक्यार्थो भेदलक्षणः । संसर्गलक्षणो वापि ब्रह्मात्माऽभेदतो भवेत् ॥ २ ॥
ब्रह्मणोऽनात्मतारूपमब्रह्मत्वं तथाऽऽत्मनः । अज्ञानलक्षणं शास्त्राज्ज्ञानं हन्ति समुत्पतत् ॥ ३ ॥
नेहान्यत्राऽऽत्मनो ब्रह्म तथाऽऽत्मा ब्रह्मणोऽन्यतः । तादात्म्यमनयोस्तस्मान्नीलोत्पलविलक्षणम् ॥ ४ ॥
अब्रह्मानात्मते यद्वदत्राज्ञाननिबन्धने । आत्मताब्रह्मते नैवमन्यस्मादित्यतः स्वतः ॥ ५ ॥

विमतं न मानमसत्यत्वाद्धूमाभासवदिति स्वरूपेणोपायमिथ्यात्वमप्रमात्वे प्रयोजकमिति द्वितीयं पक्षमाशङ्क्याव्यभिचरितसंबन्धराहित्यस्योपाधित्वान्मैवमित्याह—धूमेति ॥८९७॥

तर्हि श्रुत्याद्यपि सत्यमुपायत्वाद्धूमवदित्याशङ्क्याऽऽह—धूमवदिति । तत्र हेतुमाह—तथेति । श्रुत्यादेः सत्यत्वे सतीति यावत् ॥८९८॥

विमतमुपेयेनाव्यभिचरितसंबन्धरहितमसत्यत्वाद्बाष्पवदिति धूमाभासादित्यत्रोक्तोपाधेः साधनव्याप्तिमाशङ्क्याऽऽह—बाष्पवदिति । तत्र हेत्वसिद्धिं हेतुमाह—ऐकात्म्येति । कार्यकरत्वाख्यसत्यत्वस्येष्टत्वाद्धेत्वसिद्धिः परमार्थसत्यताभावस्य धूमादावपि भावादनैकान्तिकतेति भावः [ बोधाबाधेन ] ॥८९९॥

ऐकात्म्यबोधित्वे सत्युपायस्य सत्यत्वं तस्मिन्सति तद्बोधित्वमित्यन्योन्याश्रयत्वमाशङ्क्योदासीनश्रुत्यादेर्वस्तुप्रमितौ पुरुषस्य कृतार्थत्वादुपायान्वेषणवैयर्थ्यान्मितेरूर्ध्वं तदुपायबाधेऽप्यविरोधान्नान्योन्याश्रयतेत्याह—श्रुतेरिति । प्रमितौ सत्यामुपायान्वेषणं वृथेत्यत्र दृष्टान्तमाह—उत्तीर्णस्येति ॥९००॥

इतश्च श्रुत्यादेः सत्यत्वाभावेऽपि नाबोधकत्वमित्याह—बाह्येष्विति । अनात्मस्वध्यक्षादिसिद्धेष्वपि तथा न वेति मातुः शङ्का संभाव्यते तेषामनात्मत्वाच्छ्रुत्यादिमेयेऽर्थे तस्याऽऽत्मत्वादुपायमिथ्यात्वेऽपि स्वरूपबोधिनो मानत्वाभावं प्रत्याशङ्कैव नोत्तिष्ठेदित्यर्थः । यद्वा श्रुत्यादेर्मिथ्यात्वशङ्कैव नास्तीत्याह—बाह्येष्विति । वह्न्यादिषूपायस्यानात्मत्वान्मिथ्यात्वशङ्काऽपि स्यादैकात्म्ये तु श्रुत्याद्युपायस्याऽऽत्ममात्रत्वात्तदमानत्वं मिथ्यात्वं प्रत्याशङ्काऽपि नोदेत्यतः श्रुत्यादेः स्वरूपेण सत्यत्वात्कल्पितभेदाच्चोपायत्वादुपपन्नं ब्रह्मात्मनि वेदान्तप्रामाण्यमिति भावः ॥९०१॥

तर्हि तस्य परेष्टवाक्यार्थत्वप्रसङ्गादखण्डत्वहानिरित्याशङ्क्याऽऽह—अन्यत्रेति । गामानयेत्यत्र क्रियाकारकसंबन्धभेदो वाक्यार्थो नीलमुत्पलमित्यत्र समानविभक्तिपदोक्तपदार्थसंसर्गो वाक्यार्थो नैवं तत्त्वमादौ तत्त्वमर्थयोरैक्यार्थत्वादित्यर्थः ॥९०२॥

ब्रह्मात्मानौ नाभिन्नौ मिथो विरुद्धत्वाच्छीतोष्णवदित्यनुमानात्कथमखण्डतेत्याशङ्क्य प्रामाणिकविरुद्धत्वस्यासिद्धत्वादितरस्य बिम्बप्रतिबिम्बयोरनैकान्त्यान्नैवमित्याह—ब्रह्मण इति । अब्रह्मत्वादेरज्ञानकृतत्वे फलितमाह—शास्त्रादिति ॥९०३॥

ब्रह्मात्मनोरभेदवद्भेदस्यापि भावान्नीलोत्पलयोरिव संसर्गोऽत्र वाक्यार्थः स्यादिति चेन्नेत्याह—नेहेति । शास्त्रमिहेत्युच्यते । प्रतीचो ब्रह्मान्यच्चेद्घटवदब्रह्म स्यात्सोऽपि ब्रह्मणोऽन्यश्चेत्तद्वदनात्मा स्यात्तस्मान्नीलोत्पलयोर्भेदसहाभेदवत्तयोर्न तादात्म्यं किंत्वैकरस्यमित्यर्थः ॥९०४॥

ब्रह्मणोऽनात्मत्वमात्मनश्चाब्रह्मत्वमाविद्यमितिवदात्मत्वं ब्रह्मणो ब्रह्मत्वं चाऽऽत्मनोऽज्ञानकृतं किं न

नाम्नोरेवं च संबन्ध ऐकात्म्यात्स्यात्क्रियां विना । षष्ठीं च न क्रियाषष्ठ्योर्विना भेदात्प्रवर्तनम् ॥ ६ ॥
महत्ता यद्वदाकाशे घटाकाशव्यपेक्षया । पराक्त्वापेक्षया तद्वत्प्रत्यक्ता नाऽऽत्मनीक्ष्यते ॥ ७ ॥
प्रत्यक्त्वमद्वितीयत्वं बोधवन्नान्यबन्धनम् । अपारार्थ्यान्न बोधो हि स्यादबोधनिरासतः ॥ ८ ॥
आत्माऽपि सदिदं ब्रह्म मोहात्पारोक्ष्यदूषितम् । ब्रह्मापि संस्तथैवाऽऽत्मा सद्वितीयतयेक्ष्यते ॥ ९ ॥
आत्मा ब्रह्मेति पारोक्ष्यसद्वितीयत्वबाधनात् । पुमर्थे निष्ठितं शास्त्रमिति सिद्धं समीहितम् ॥१०॥

कर्मकाण्डप्रत्यक्षाभ्यां बाधात् समन्वयाक्षेपः

ननु भेदाश्रितैर्वाक्यैर्विधायकनिषेधकैः । अक्षादिभिश्च नैकात्म्यं बाधितत्वात्प्रमाणवत् ॥११॥
न चाप्यैकात्म्यशास्त्रस्य तैर्विकल्पसमुच्चयौ । प्रामाण्ये नापि बाध्यत्वं तेषां तेन कथंचन ॥१२॥
विरुद्धमानभावेऽपि न हि वस्तु विकल्प्यते । भेदाभेदौ न त्र स्यातां विरोधाद्युगपत्क्वचित् ॥१३॥

स्यादित्याशङ्क्याऽऽह–अब्रह्मेति । अत्रेत्यात्मादिनिर्देशः । अन्यस्मादित्यज्ञानोक्तिः । भेदस्यान्योन्याश्रयादिदुष्टत्वात्कल्पितत्वं नाभेदस्येति मत्वाऽऽत्मनो ब्रह्मत्वं ब्रह्मणश्चाऽऽत्मत्वं स्वाभाविकमिति फलितमाह—इत्यत इति ॥९०५॥

ब्रह्मात्मनोर्भेदलेशाभावे षष्ठीगुणक्रियादिप्रवृत्तिनिमित्ताभावात्तत्त्वंपदयोरैक्ये न प्रवृत्तिरित्याशङ्क्याऽऽह—नाम्नोरिति । भेदगन्धस्याप्यभावे सति क्रियाद्यतिरेकेणैव तयोरेकार्थप्रवृत्तौ हेतुमाह—ऐकात्म्यादिति । पदार्थस्यैकरस्यात्तस्मिन्भेदस्य दुर्निरूपत्वादित्यर्थः । एकरसेऽपि कथं निमित्ताभावे शब्दप्रवृत्तिरित्याशङ्क्य लक्षणयेति मत्वाऽऽह—न क्रियेति ॥९०६॥

प्रत्यग्ब्रह्मणोर्भेदाभावेऽपि प्रत्यगनात्मनोः स वाच्यः प्रत्यक्त्वस्य पराग्रूपापेक्षत्वात्तन्नाखण्डतेति शङ्कते—महत्तेति । न प्रत्यक्त्वमात्मनि पराक्त्वापेक्षं किंतु स्वाभाविकमिति समाधत्ते—नाऽऽत्मनीति । तत्र विद्वदनुभवं प्रमाणयति—ईक्ष्यत इति ॥९०७॥

तथाऽपि द्वयापेक्षत्वादद्वयस्य वस्तुनो नाखण्डतेत्याशङ्क्याऽऽह—प्रत्यक्त्वमिति । "प्रत्यक्ताऽस्य स्वतो रूपं निष्क्रियाकारताफलमि"ति न्यायेन सामानाधिकरण्यं, अज्ञानहानिमपेक्ष्य ब्रह्मणि बोधोक्तेर्दृष्टान्तस्य साध्यशून्यतेत्याशङ्क्याऽऽह—अपारार्थ्यादिति । प्रज्ञानं ब्रह्मेत्यादिश्रुतेर्बोधस्य स्वरूपत्वान्नासौ जडपर्युदासेन ब्रह्मण्युच्यते तथाऽद्वयत्वमपि तस्य पूर्णतापर्यायमनन्यापेक्षं रूपमिति सिद्धा ब्रह्मणोऽखण्डतेत्यर्थः ॥९०८॥

वेदान्तानामखण्डैकरसे ब्रह्मात्मनि समन्वयमुपसंहरति—आत्माऽपीत्यादिना ॥९०९॥

ब्रह्मणि परोक्षत्वस्याऽऽत्मनि सद्वयत्वस्य च प्रतीतौ कथमभेदबोधनमत आह—आत्मेति । ब्रह्मण्यात्मसंबन्धात्पारोक्ष्यस्याऽऽत्मनि च ब्रह्मसंबन्धात्सद्वयत्वस्य निरासात्परानन्दतया परमपुरुषार्थे वाक्यमैक्ये तात्पर्येण पर्यवसितमित्यर्थः । समन्वये सिद्धे वाक्यीयैक्यज्ञानादेव मुक्तिरिति फलितमाह—इति सिद्धमिति ॥९१०॥

उक्तं समन्वयमसहमानश्चोदयति—नन्विति । विधिनिषेधवाक्यान्यध्यक्षादीनि च भेदविषयाणि तैरैक्यस्य बाधितत्वान्न तस्य वेदान्तगम्यतेत्यर्थः ॥९११॥

वेदान्तानामप्यविशेषात्प्रामाण्ये तैरध्यक्षादिभिर्विकल्पः समुच्चयो वा वेदान्तानां प्रामाण्यं स्यादतो वेदान्तवेद्यं वाऽध्यक्षादिगम्यं वा द्वयमपि वा वस्त्वित्याशङ्क्याऽऽह—न चेति । षोडशिग्रहणाग्रहणवत्प्रामाण्यं शास्त्रस्येतरेषां चेति न विकल्पः । षड्यागवत्तस्य तेषां च मानतेति न समुच्चयोऽपीत्यर्थः । अस्तु तर्हि शास्त्रेणान्येषां बाध्यता नेत्याह—नापीति ॥९१२॥

तुल्यबलविरुद्धमानसत्त्वे किमिति विकल्पो न भवतीत्याशङ्क्याऽऽह—विरुद्धेति । क्रियायामेव विकल्पो न वस्तुनि, प्रामाण्यं च वस्तुत्वान्न विकल्पार्हमन्यथा तद्द्वारा वस्तुन्यपि तत्प्रसङ्गात्तस्य चायोगादित्यर्थः । समुच्चये च भेदाभेदौ स्यातां न च क्वचिदपि युगपत्तौ युक्तौ भावाभावयोरेकत्र विरोधादन्यथा तद्वार्तानवकाशादिति मत्वा प्रामाण्यसमुच्चयं प्रत्याह—भेदाभेदाविति ॥९१३॥

भिन्नाभिन्नं न वो वस्तु येन मानाविरोधिता । नेह नानेति भेदानां निषेधात् क्व नु भेदधीः ॥१४॥
वर्णादिग्रहणोपायो नापीहाक्षादि बाध्यते । संस्काराय च यच्छास्त्रमात्मज्ञानोपकारकम् ॥१५॥
उपचारार्थतः शास्त्रं सावकाशं जपेऽथवा । अक्षादेरकृतार्थत्वात्कथं स्यात्तेन बाधनम् ॥१६॥

कर्मकाण्डप्रत्यक्षाभ्यां विरोधस्य परिहारः

उच्यते लोकतः सिद्धं भेदमाश्रित्य चोदना । प्रवृत्ता पुरुषार्थाय न तु भेदावबुद्धये ॥१७॥
भेदस्य चापुमर्थत्वात्तादर्थ्ये स्यादमानता । पुमर्थत्वेन चास्येष्टं प्रामाण्यं वेदवादिभिः ॥१८॥
वस्तुस्वरूपसंस्पर्शिचक्षुरादिभ्य उत्थितम् । भेदस्पृङ्नाक्षजाद्येवं न तेनैकात्म्यबाधनम् ॥१९॥
प्रमेयविषयं मानं वस्तुनश्च प्रमेयता । न च भेदस्य वस्तुत्वं वस्तुतत्त्वानपेक्षणात् ॥२०॥

प्रत्यक्षस्य निषेधकत्वनिरासः

लब्धे हि भूतलेऽलब्धो घटस्तत्र निषिध्यते । मानान्तरेण विज्ञातो नाज्ञातः शून्यताश्रितः ॥२१॥

ऐकात्म्यवादिनां भेदाभेदाङ्गीकारे सिद्धान्तविरोधदोषान्तरमाह—भिन्नेति । भिन्नाभिन्नार्थाभ्युपगमेनोभयविध-मानानां मानत्वादविरोधिता वाच्या सा च तदभावादेव निरस्तेत्याह—येनेति । किंच तादृग्वस्तु त्वया नोपेयमुपेत-श्रुतिविरोधादित्याह—नेहेति ॥९१४॥

शास्त्रस्याध्यक्षादीनां च विकल्पसमुच्चयौ प्रत्यादिश्य नापि बाध्यत्वमित्यत्र हेतुमाह—वर्णादीति । प्रत्यक्षादि तावद्वर्णपदवाक्यादिग्रहोपायो न च शास्त्रेण तद्बाधो युक्तस्तथा सति हेत्वभावाद्वस्तुनि ज्ञानासिद्धेर्मोक्षा-भावप्रसङ्गादित्यर्थः । ऐक्यशास्त्रेण कर्मशास्त्रस्याबाधे हेतुमाह—संस्कारायेति । यत्कर्मकाण्डं स्वार्थानुष्ठानद्वारा बुद्धिशुद्धये भवदात्मज्ञानस्य परम्परयोत्पादकं तद्बाधे कर्माभावाज्ज्ञानाभावस्तस्मात्कर्मकाण्डमध्यक्षादि चाबाध्यमित्यर्थः ॥९१५॥

का तर्हि वेदान्तानां गतिस्तामाह—उपचारेति । ग्रामीणप्रधानपुंसोऽद्वयत्वोपचारवदुपचरितं ब्रह्माद्वैत-माश्रित्य शास्त्रं चरितार्थमित्यर्थः । गत्यन्तरमाह—जप इति । किंच सावकाशनिरवकाशयोर्निरवकाशं बलवदिति न्यायाद्द्वैतमानानामृते द्वैतादनवकाशानां दर्शितरीत्या सावकाशेन शास्त्रेण न बाध्यतेत्याह—अक्षादेरिति ॥९१६॥

द्वैतग्राहिमानविरोधान्न वेदान्तानामेकरसे ब्रह्मणि प्रामाण्यमिति प्राप्ते सिद्धान्तयति—उच्यत इति । तत्राऽऽदौ कर्मकाण्डविरोधं निरस्यति—लोकत इति । कर्मकाण्डं हि लौकिकं कर्त्रादिभेदमादायाभ्युदयार्थं प्रवृत्तं न भेदं प्रतिपादयितुं तस्यापूर्वत्वाभावात्तत्रातात्पर्यादित्यर्थः ॥९१७॥

भेदे शास्त्रस्यातात्पर्ये हेत्वन्तरमाह—भेदस्येति । "द्वितीयाद्वै भयमि"ति श्रुतेर्भेदस्यानर्थत्वात्तन्निष्ठत्वे कर्मकाण्डस्याप्रामाण्यं स्यादित्यर्थः । किंच शास्त्रस्य पुमर्थापूर्वार्थनिष्ठत्वेन प्रामाण्यमिष्टं तद्विरोधस्ते कर्मशास्त्रस्य भेदनिष्ठत्वे स्यादित्याह—पुमर्थत्वेनेति ॥९१८॥

कर्मकाण्डाविरोधेऽपि वेदान्तानामध्यक्षादिविरोधे कः समाधि?तत्र प्रत्यक्षं विधायकमेव वा निषेधकमेव वा विधिनिषेधव्यापारं वेति विकल्प्याऽऽद्यमादत्ते—वस्त्विति । उत्थितं ज्ञानमिति शेषः । विधिमात्रव्यापारत्वे-ऽध्यक्षस्य भेदाविषयत्वात्तेन वस्तुविषयवाक्यस्य न बाधनमित्याह—भेदेति ॥९१९॥

प्रत्यक्षं भेदमपि वस्तुवत्किं न स्पृशेदित्याशङ्क्याऽऽह—प्रमेयेति । मानयोग्यत्वमपि भेदस्य किं न स्यात्तत्राऽऽह—वस्तुनश्चेति । वस्तुत्वमपि तस्यास्त्येवेति चेन्नेत्याह—न चेति । तत्र हेतुमाह—वस्त्विति । वस्तु-स्वरूपस्य निरपेक्षत्वाद्धर्म्यादिसापेक्षभेदस्य सर्पादिवत्कल्पितत्वान्न वस्तुतेत्यर्थः ॥९२०॥

निषेधकमेवाध्यक्षमिति पक्षं प्रत्याह—लब्धे हीति । दृष्टे धर्मिण्यदृष्टस्यैव प्रतियोगिनो निषेधो नेदमिति वा नेदमिहेति वा । नहि प्रमितो निषेध्यः प्रमाणविरोधान्न चाज्ञातोऽज्ञातसर्वनिषेधप्रसङ्गात्तन्न निषेधकमेवाध्यक्ष-मित्यर्थः ॥९२१॥

व्यञ्जकस्य समायोगो वस्तुनो वस्तुनैव हि । नाभावेन निरात्मत्वाद्व्यावृत्त्या वा मितेर्भवेत्।।२२।।
नातो वस्तुनि संभेदो वस्तुनोऽभेदरूपतः । न प्रमाणाद्बहिर्वस्तु न मानं वस्तुनो बहिः ।।२३।।
नाभावयोर्मिथो योगोऽवस्तुत्वाभेदतस्तयोः । अभावभावयोस्तद्वद्भावरूपेषु का भिदा ।।२४।।
अनित्यत्वस्य धर्मस्य घटादेर्धर्मिणस्तयोः । संयोगः समवायो वा तादात्म्यं वेह संगतिः ।।२५।।
आधाराधेययोगेषु घटोऽत्रेति यथा मतिः । नाभावभावयोगेषु मितेर्धीः कस्यचित्तथा ।।२६।।
नहि भावातिरेकेण भावाभावः प्रमाणभाक् । भावात्मनाऽप्यतोऽभावो व्यवहाराय कल्पते ।।२७।।
अथाभावोऽपि वस्त्वेव नास्तीति मितिजन्मतः । द्वयोर्भावैकरूपत्वात्काऽतिशीतिर्मितेस्तयोः ।।२८।।
विश्वं सदेव यस्येष्टं तस्याभावः कुतो मितेः । न च भावातिरेकेण भाववत्सिद्धिमश्नुते ।।२९।।

किंच निषेधोऽभावो भेदो वा । न तावदभावेऽध्यक्षस्य प्रवृत्तिरित्याह—व्यञ्जकस्येति । प्रत्यक्षस्य वस्तुत्वाद्वस्तुनैव योगोनाभावेनावस्तुना, तस्य निःस्वभावत्वादाधारत्वायोगात् । न चाध्यक्षासंबद्धस्य तद्वेद्यताऽतिप्रसङ्गादिति भावः । द्वितीयेऽपि व्यावृत्त्याख्यभेदेन मितेरध्यक्षस्य न योगो भेदस्याप्यवस्तुत्वादतो न तस्यापि प्रत्यक्षतेत्याह—व्यावृत्त्येति ।।९२२।।

भेदाभावयोरवस्तुत्वेन मानायोग्यत्वे फलितमाह—नात इति । अवस्तुत्वाद्भेदाभावयोर्वस्तुनि स्पर्शाभावान्नोऽस्माकमभेदरूपतो वस्त्वभेदरूपमद्वयं भवतीत्यर्थः । यद्वा वस्तुनि भेदाद्यस्पर्शे हेतुमाह—वस्तुन इति । तस्य स्वारस्येनाभेदस्वाभाव्यादित्यर्थः । अथवा तत्र भेदादिस्पर्शे तदेकरूपतायोगादित्यर्थः । भेदाभावयोरन्यत्रावस्तुत्वेऽपि न वस्त्वद्वयं मानमेयभेदादित्याशङ्क्याऽऽह—नेति । अद्वये तद्भेदोऽपि वास्तवो नास्तीत्यर्थः ।।९२३।।

वस्तुनि भेदाभावौ निरस्य भेदनिरासे हेत्वन्तरमुच्यते तत्र भेदस्य धर्मिप्रतियोगिनावभावौ वा भावाभावौ वा भावावेव वा ? नाऽऽद्यो न ह्यभावयोर्मिथो भेदोऽवस्तुत्वाविशेषादित्याह—नाभावयोरिति । योगशब्देन भेदो लक्ष्यते । द्वितीयं निरस्यति—अभावेति । तद्वदिति । न मिथो भेदोऽभावस्यानाधारत्वादित्यर्थः । तृतीयं निराह—भावेति । नहि भावेषु भेदो भेदकाभावान्न तावद्भावत्वं भेदकं प्रतियोगिनो भावत्वेन धर्म्यद्वैतापातान्नाप्यभावत्वं तस्यावस्तुत्वाद्धर्मिणोऽवस्तुत्वेन प्रतियोग्यद्वैतापत्तेश्चेति भावः ।।९२४।।

भेदनिरासेनार्थादभावं निरस्याभावनिरासेनार्थाद्भेदं निरस्यति—अनित्यत्वस्येति । अनित्यत्वशब्देनाभावो गृह्यते । भावाभावयोः सम्बन्धोऽस्ति न वा ? न चेदनादिरनन्तो भावः स्यादभावश्च स्वतन्त्रः स्यादस्ति चेत्सोऽपि संयोगादीनामन्यतमो व्यवहारभूमौ संबन्धान्तराभावादित्यर्थः ।।९२५।।

अस्तु तयोस्तेषामन्यतमः संबन्धः का हानिरित्याशङ्क्य त्रिविधमपि संबन्धं मानाभावेन दूषयति—आधारेति । भूतलादेर्घटादेश्च संयोगादिषु सत्सु घटोऽत्रेति सम्यग्धीवद्भावाभावयोस्तेषु न कस्यचिदपि मानाद्धीरुदेतीत्यर्थः ।।९२६।।

इतश्च न तयोस्त्रेधाऽपि योगः अभावो हि भावाद्भिन्नोऽभिन्नो वा? नाऽऽद्य इत्याह—न हीति । अभावस्य भावातिरेकेऽभावान्तराभ्युपगमादनवस्थानादिति भावः । न द्वितीय इत्याह—भावात्मनेति । भावाभावो न प्रमाणभागिति पूर्वेण संबन्धः । न तावदभावस्य भावान्तर्भावस्तदद्वैतापातान्नापि भावस्याभावान्तर्भावोऽभावाद्वैतप्रसङ्गादिति भावः । भावाद्भेदाभेदाभ्यामभावो दुर्भणश्चेत्कथं तद्व्यवहारस्तत्राऽऽह—अत इति ।।९२७।।

भाववदभावोऽपि न कल्पितो बोध्यत्वादिति शङ्कते—अथेति । अभावस्यापि वस्तुत्वे भावाभावयोर्वस्तुत्वेनैकरूप्याद्भेदकाभावाद्भावाभावमानतो भेदासिद्धेस्तयोर्न संगतिरिति दूषयति—द्वयोरिति ।।९२८।।

किंचाभावः सन्नसन्वा? आद्ये सर्वस्य सन्मात्रत्वादितराभावोऽविद्यमानः स्यादतो न तस्य भावेन वास्तवी संगतिरित्याह—विश्वमिति । कल्पान्तरं निराह—न चेति । यथा भावो भावादन्यत्वेन न सिध्यति भेदकाभावादेवमभावोऽपि भावादसतो भेदासंभवात्प्रामाणिकप्रतीत्यनुपपत्तेश्चातः सदद्वैतान्न संबन्ध इत्यर्थः ।।९२९।।

अभावयोगं भावश्चेत्सहते नीलयोगवत् । अविरोधादभावेन न भावापह्नुतिर्भवेत् ॥३०॥
योगोऽयं वस्तुनोर्दृष्टः पृथक्सिद्धौ परस्परम् । मेषयोर्मल्लयोर्यद्वन्न भावाभावयोस्तथा ॥३१॥
न योगोऽभावयोर्दृष्टो वन्ध्यासूनुखपुष्पयोः । न भावाभावयोरेवं विरोधादितरेतरम् ॥३२॥
क्षितिदेशे घटाभावो घटवन्न प्रमीयते । योगो वा समवायो वा नाभावक्षितिदेशयोः ॥३३॥
सदात्मतैवं सर्वस्य नाभावात्मकता सतः ॥३४॥
अप्यभावात्मकत्वेऽपि सतोऽभावात्मकत्वतः । कुतो भेदावकाशः स्याद्भेदेऽसति कुतो युतिः ॥३५॥
यावत्किंचिज्जगत्यस्मिन्भेदकं वस्तु लक्ष्यते । अनापन्नादिमध्यान्तं सदेव तदितीष्यते ॥३६॥
सदेवेदमिति स्पष्टं सन्मूला इति चापरम् । श्रुत्योदाहारि नः साक्षात्सदैकात्म्यावबुद्धये ॥३७॥

अभावस्य योग्यानुलम्भगम्यत्वनिरासः

मानाभावस्य मानत्वं मेयाभावस्य मेयता । न्यायं न सहतेऽतीव यथा तदधुनोच्यते ॥३८॥
बोधकं यदबुद्धस्य तन्मानमिति हि स्थितिः । न च प्रमाणतास्तित्वमीदृक्तस्मान्न युज्यते ॥३९॥
मेयाभावः प्रमाणानां यद्यभावेन गम्यते । प्रमाणानामभावस्य गमकः को भविष्यति ॥४०॥

तयोस्त्रिधाऽपि संबन्धे दोषान्तरमाह—अभावेति । यथोत्पलं नीलेन समवायं सहते तथाऽभावेन संबन्धं भावो मृष्यति चेदविरोधाद्भावस्याभावेनानिरासाद्भावोऽनाद्यनन्तः स्यादिति भावः ॥९३०॥

भावाभावयोस्त्रेधाऽप्यसंबन्धे युक्त्यन्तरमाह—योगोऽयमिति । वस्तुनोर्भेदेन सिद्धावयं मिथो योगो दृष्टो यथा मेषादौ न तथाऽनयोः पृथक्सिद्धिरिति योगासिद्धिरित्यर्थः ॥९३१॥

इतश्चाभावस्य भावेन त्रिधाऽपि न संबन्धोऽस्तीत्याह—न योग इति । असतोरसंबन्धवन्न सदसतोरपि संबन्धो मिथो विरोधादित्यर्थः ॥९३२॥

किंच भूतले घटश्चक्षुःसंयोगाद्भाति न तथा तत्राभावस्तस्यासंप्रयोगात्संयुक्तविशेषणत्वादेरतिप्रसङ्गित्वादतो नाभावस्य भूतले संयोगादीत्याधाराधेययोगेष्वित्यत्रोक्तं प्रपञ्चयति—क्षितीति । योगशब्दः संयोगतादात्म्यविषयः ॥९३३॥

किंच भावाभावयोस्तादात्म्येऽभावस्य भावान्तर्भावो वा भावस्याभावान्तर्भावो वा ? आद्ये सदद्वैतापत्तिरित्याह—सदात्मतेति । न द्वितीय इत्याह—नाभावेति । मिथो विरोधादित्यर्थः । भावस्याभावान्तर्भावमुपेत्यापि दोषमाह—अपीति । विरोधे सत्यपीत्याद्यस्यापेरर्थः । भावस्याभावात्मत्वेऽप्यभावमात्रशेषान्न तयोर्भेदः स्यात्तदभावे च न संबन्धत्रयमतो भावस्याभावत्वं नोपेयमित्यर्थः ॥९३४-९३५॥

भावयोर्धर्मिप्रतियोगिनोर्मिथोयोगवद्भावाभावयोरपि स्यादित्याशङ्क्याऽऽह—यावदिति । भेदकत्वेनेष्टस्य सर्वस्यादिमध्यावसानहीनसन्मात्रतया दृष्टान्तासिद्धेरचोद्यमेतदिति भावः ॥९३६॥

सर्वस्य सन्मात्रत्वे मानमाह—सदेवेति । स्पष्टमिति श्रुतत्वाभिप्रायेणोक्तमपरमिति श्रुतार्थापत्तित्वविवक्षयेति विवेक्तव्यम् । वाक्यद्वयोदाहरणतात्पर्यमाह—साक्षादिति ॥९३७॥

अभावस्य भावेन संबन्धं निरस्याभावस्याध्यक्षत्वं प्राधान्येन प्रत्युक्तमिदानीं मतान्तरमनुवदन्नेव तस्य न्यायविरुद्धत्वं प्रतिजानीते—मानेति ॥९३८॥

मानाभावस्य मानलक्षणाभावान्मानत्वासंभवं वक्तुं तल्लक्षणमाह—बोधकमिति । तदनाक्रान्तत्वं मानाभावस्याऽऽह—न चेति । नहि मेयाभावस्याबुद्धत्वमसत्त्वान्नाप्यत एव मानाभावस्य बोधकतेत्यर्थः । लक्षणाभावे फलितमाह—तस्मादिति । मानतेति शेषः ॥९३९॥

किंचामितो वा मानाभावो मेयाभावं मिनोति मितो वा । नाऽऽद्यः । सभातो निर्गतदेवदत्तस्य तस्याम-

नाक्षादिपञ्चकं तस्य बोधकं सत्समन्वयात् । नयतस्तदभावो वा मेयत्वे[1]नैव तत्स्थितेः ॥४१॥
नीलादिवदभावस्य यद्यक्षादिविशेषणम् । [2]विशेषणेन तद्व्याप्तेस्तदभावः कुतो मितेः ॥४२॥
अथाविशेषणोऽभावो भवद्भिरभिधीयते । मेयाभावस्य मानत्वमविशेषात्प्रसज्यते ॥४३॥

घटाद्यभावनिरासः

घटाद्यभाव इत्युक्तिर्न सम्यगिति मे मतिः । पदानामसमर्थत्वाद्विरोधाद्वस्तुनोर्मिथः ॥४४॥
भावाभावाख्यपदयोः सामर्थ्ये चेत्समासता । घटादिनाऽनपेक्षत्वान्न[3] समासः प्रसिध्यति ॥४५॥
भावस्याभाव इत्यत्र षष्ठ्यर्थः कतमो मतः । न कश्चिदपि सम्बन्धो नीरूपस्यासदात्मनः ॥४६॥
वस्त्वन्तरमभावश्चे[4]दन्यदन्यद्भवेत्कथम् । अन्योऽपि चेद्भवेदन्योऽविरोधो नीलवद्भवेत् ॥४७॥

भावसंदेहासंभवप्रसङ्गादिति मत्वा द्वितीयमादत्ते—मेयेति। प्रमाणानामभावेन मितेनेति शेषः। मितस्य मानाभावस्य मानत्वे तत्प्रमापकं मानपञ्चकं तदभावो वेति विकल्पयति—प्रामाणानामिति ॥९४०॥

नाऽऽद्य इत्याह—नाक्षादीति। न द्वितीय इत्याह—नयत इति। मानपञ्चकस्याभावस्तस्यैव नयतो न्यायतो न बोधको मानमेयत्वस्य भेदापेक्षत्वादित्यर्थः ॥९४१॥

किंचाभावः सविशेषणो निर्विशेषणो वा ? आद्ये मानं मेयं वा विशेषणम्, आद्यमनुवदति—नीलादिवदिति। यथोत्पलादेर्नीलादि विशेषणं दृष्टं तथा प्रमाणमभावस्य विशेषणं चेदित्यनुवादार्थः। तर्हि नीलादिनोत्पलादेर्वैशिष्ट्यवदक्षादिना विशेषणेनाभावस्य वैशिष्ट्याद्विशिष्टोऽभावो नाक्षादिविषयस्तस्यांशतः स्वविषयत्वापत्तेर्नापि विशिष्टाभावो मानाभावविषयस्तस्य विषयत्वात्, अक्षादेश्च विशेषणत्वे विशेषणेन विशेष्यस्य संबन्धनियमात्तस्य च निरस्तत्वादक्षाद्यभावो न प्रामाणिकः स्यादित्याह—विशेषणेनेति ॥९४२॥

कल्पान्तरमाह—अथेति। तर्हि मानाभावस्य मानत्वं मेयाभावस्य मेयतेति विभागासिद्धिरित्याह—मेयेति। अविशेषादभावगतविशेषानभ्युपगमादित्यर्थः ॥९४३॥

मेयमभावस्य विशेषणमिति पक्षं प्रत्याह—घटादीति। भावाभावपदयोरन्योन्यान्वये सामर्थ्याभावादिति हेतुमाह—पदानामिति। कुतस्तदसामर्थ्यं तत्राऽऽह—विरोधादिति। भावाभावयोर्वस्त्ववस्तुत्वेन मिथोयोगविरोधात्तत्पदानां संसर्गासामर्थ्यमित्यर्थः ॥९४४॥

भावाभावयोर्विरोधेऽपि तत्पदयोस्तमःप्रकाशपदयोरिव समाससंभवाद्घटाद्यभाव इत्युक्तिर्युक्तेत्याशङ्क्याऽऽह—भावेति। समर्थः पदविधिरिति स्मृतेर्घटादिना पदेन पदान्तरस्य सामर्थ्ये सत्येव समासश्चेत्तर्हि भावाभावपदयोर्न समासस्तदर्थयोर्मिथो विरोधित्वेनानपेक्षत्वाद्दृष्टान्तेऽपि तुल्यत्वादनुपपत्तेरित्यर्थः ॥९४५॥

मा तर्हि समासो भूद्भावस्याभाव इति व्यासेनापि विशेषणविशेष्यत्वं निर्वक्ष्यति नेत्याह—भावस्येति। षष्ठी शेष इति स्मरणात्तदर्थः संबन्धः इत्याशङ्क्याऽऽह—न कश्चिदिति। नीरूपत्वं निःस्वभावत्वं तत्र हेतुरसदात्मन इति ॥९४६॥

वस्त्वन्तरस्याभावो वस्त्वन्तरमिति स्थितेर्निःस्वभावत्वमसिद्धमिति शङ्कते—वस्त्वन्तरमिति। घटोऽस्तीत्युक्ते घटास्तित्वयोरेकत्ववन्न सोऽस्तीत्युक्तेऽपि घटनास्तित्वयोरैक्यं वाच्यं तथा च घटाभावस्य पटत्वे घटः

---

१. मेयत्वेन प्रमाणाभावस्य स्थितेर्न तस्य मानत्वं मानमेयभावस्य भिन्नवृत्तित्वनियमात्। तदाह—**नयत इति** न्यायादित्यर्थः। न यत इति भिन्ने पदे ( न्या० )

२. विशेष्येणैकबुद्धिवेद्यस्य विशेषणत्वात् तेन विशेष्यस्य सम्बन्धत्वात् प्रतियोगिनि प्रत्यक्षादौ विशेषणे सति तदभावो न सम्भवति। (न्या० क०)

३. घटाभाव इति समासो न स्यात्, असामर्थ्यात् सामर्थ्याभावश्च भावस्य सात्मकत्वात्, अभावस्य च निरात्मकत्वादित्यर्थः। (न्या० क०)

४. **अन्यदन्यद्भवेत्कथम्**—घटाभावो घटादन्यः पटोऽपि घटाभावात्। तयोरभेदो न युक्त इत्यर्थः।

**संगतावविरोधी चेन्न सम्बन्धिनिवृत्तिकृत् । न सम्बन्धिग्रहाभावे सम्बन्धोऽयं प्रसिध्यति ॥४८॥**

**प्रत्यक्षेण भेदो न सिद्ध्यतीति निरूपणम्ः**

**सम्बन्धिविरहेऽसिद्धौ षष्ठ्यर्थत्वं न सिध्यति । विरोधाद्युगपन्नापि विधानप्रतिषेधनम् ॥४९॥**

**क्षणिकत्वाद्धियां नापि स्थायिधर्मः क्रमो भवेत् । [1]अनीलाभावपृष्ठेन नापि नीलस्य वेदनम् ॥५०॥**

**नह्यदृश्यनिषेधः स्याद्घटादेरिव भूतले । नान्याभावविशिष्टत्वं कृत्स्नाभावगतौ भवेत् ॥५१॥**

**अन्याभावस्य भावत्वे स्यादभावः खपुष्पवत् । भावान्तरमभावश्चेत्सिद्धं वस्तु ततः स्वतः ॥५२॥**

**तद्ग्राहीणि च मानानि व्यावृत्तिः केन गम्यते । [2]चित्रेऽपि विषये चित्रमेकं वस्त्वेकमानतः ॥५३॥**

पट इत्युक्तं स्यान्न चैतद्युक्तमन्यस्य स्थितस्य नष्टस्य वाऽन्यभावायोगादित्याह—अन्यदिति । यद्वा घटविशेषिताभावस्य पटत्वे विशेषणस्यापि घटस्य पटेऽन्तर्भावाद्यथोक्तं दूषणं द्रष्टव्यम् । विपक्षे नीलस्योत्पलात्मत्ववदन्यस्यान्यात्मत्वाविरोधादद्वैतापत्तिरित्याह—अन्योऽपीति ॥९४७॥

अभावस्य भावेन तादात्म्यविरोधेऽपि संबन्धान्तराविरोधादुपपत्तिः षष्ठ्यर्थस्येति शङ्कते—संगताविति । संबन्धस्य निरस्तत्वान्नैवमित्याह—नेति । किंच येनाभावः संबध्यते तं निरुणद्धि न वा? न चेद्भावाभावयोरविरोधाद्विरोधः सर्वत्र न स्यान्निरुणद्धि चेत्संगतावपि विरोधितेत्याह—संबन्धीति । किंचाभावः सप्रतियोगिको निष्प्रतियोगिको वा? आद्ये सति प्रतियोगिन्यभावयोगोऽसति वा? नाऽऽद्यो विरोधात् नेतरः संबन्धिनोऽसत्त्वे तदग्रहे तत्राभावस्य संबन्धासिद्धेरित्याह—न संबन्धीति ॥९४८॥

निष्प्रतियोगिकत्वपक्षे स्वातन्त्र्यमभावस्य स्याद्धर्मिसंबन्धस्यापास्तत्वादिति मत्वाऽऽह—संबन्धीति । प्रतियोगी संबन्धी तस्याभावे धर्मिसंबन्धस्य चासिद्धौ षष्ठ्यर्थत्वं संबन्धत्वं नाभावस्येत्यक्षरार्थः । निषेधकमेव प्रत्यक्षमित्यत्र निषेधार्थं तन्मानं च निराकार्षीद्यत्तु विधिनिषेधव्यापारं तदिति तत्रापि युगपद्वा विधिर्निषेधश्च विधिपूर्वको वा विषेधस्तत्पूर्वको वा विधिर्नाऽऽद्य इत्याह—विरोधादिति ॥९४९॥

न द्वितीय इत्याह—क्षणिकत्वादिति । द्वित्रिक्षणावस्थानेऽपि धियां जन्मातिरिक्तव्यापारासत्त्वमित्यपिशब्दार्थः । न तृतीय इत्याह—अनीलेति ॥९५०॥

पीतादिनिषेधमुखेन न नीलस्य धीरित्यत्र हेतुमाह—नहीति । दर्शनयोग्यस्य घटादेरनुपलम्भे निषेधो भूतलादौ दृष्टो न त्वयोग्यस्याण्वादेरेवमयोग्यस्य निषेधायोगादनीलमित्ययमेव न निषेधस्तदभावे तन्निषेधो द्वितीयो न स्यात्कुतस्तन्मुखेन नीलविधिर्न च विना तद्विधिमनीलमिति निषेधः । प्रतियोगिधियं विना निषेधाप्रतीतेरतश्च[3]क्रकापत्तेर्न निषेधपूर्वो विधिरित्यर्थः । किंचानीलस्य पीतादेरभावो नीलस्य विशेषणं स्वरूपं वा? नाऽऽद्य इत्याह—नान्येति । सर्वस्यानीलस्य पीतादेस्तदभावस्य चावगतौ सत्यां नीलस्यान्याभावेन विशिष्टत्वं नान्यथा विशेषणादृष्टौ विशिष्टादृष्टेरतो नीलमालोचयतस्तदितरसर्वभावाभावदृष्टिप्रसङ्गात्तस्याश्चानीश्वराणामयोगान्नीलविधिरेव न स्यादित्यर्थः ॥९५१॥

न द्वितीय इत्याह—अन्येति । पीताद्यभावस्य नीलरूपत्वे नीलस्याभावान्तर्भावो वा तस्य नीलान्तर्भावो वा? आद्ये नभोनलिनवन्नीलं तुच्छं स्यात् । द्वितीये त्वभावस्तद्वदविद्यमानः स्यादित्यर्थः । अभावस्य तुच्छत्वं परिहर्तुं परिहृतमेव चोद्यमनुद्रवति—भावान्तरमिति । तत्किं भावोऽभावो वोभयथाऽपि भेदाभावयोरभावात्ताभ्यामस्पृष्टं वस्तु स्वतःसिद्धमित्याह—सिद्धमिति ॥९५२॥

ननु भेदाभावयोरपि मानसिद्धत्वात्कथं वस्तु तदस्पृष्टं तत्राऽऽह—तद्ग्राहीणीति । व्यावृत्तिर्भेदोऽभावो वा

---

१. अनीलं पीतादि तदभावपृष्ठेन—तदभावज्ञानपूर्वकं नीलादिज्ञानमित्यर्थः ।

२. चित्रस्य वस्तुत्वात् सद्रूपस्यैकत्वात् एकमानतः—सदित्येकरूपप्रत्ययात् सद्रूपेण भेदाभावोपगमे न सदद्वैतविरोधः । (न्या० क०)

३. चक्रकमिति—प्रथमं नीलज्ञानं ततः प्रतियोगिज्ञानसम्पत्त्या अनीलज्ञानं ततोऽनीलज्ञानपूर्वकं नीलज्ञानं ततो निषेधपूर्वकविधिज्ञानमिति चक्रकम् ।

प्रत्येकं नीलपीतादिग्रहणे चित्रता कुतः । वस्तुनो भेदरूपत्वे वस्त्वभावः प्रसज्यते ॥५४॥
अन्यधर्मे[1] त्वभिन्नं स्यात्स्वतो वस्तु प्रमाश्रयम् । भिन्नाभिन्नं विरुद्धत्वान्नैकमानस्य गोचरः ॥५५॥
वस्त्वात्मनाऽविरोधश्चेद्वस्त्वेव विषयस्ततः ।
सत्यं वस्तु कथं भिन्द्यात्पुंव्यपेक्षाविनिर्मितः । भेदः पुत्रादिभावे तु जन्यत्वं वस्तुकल्पितम्[2] ॥५६॥

कार्यभेदात् भेदसिद्धिशङ्का तन्निरासौ

दाहपाकप्रकाशादिभेदेऽप्यग्नेरभिन्नता । कार्यतोऽपि न भेदः स्याद्वस्त्वभेदव्यवस्थितेः ॥५७॥

नोभयथाऽपि सा मेयेत्युक्तमतो मानान्यपि भेदाभावानागन्धितवस्तुप्रकाशकान्येवेत्यर्थः । ननु प्रत्यक्षेण चित्रे चेत्यमाने व्यावृत्तिरपि तेन चेत्यतेऽन्यथा चित्रस्य चित्रत्वानुपपत्तेरतो व्यावृत्तिः केनेत्याक्षेपोऽनवकाशस्तत्राऽऽह—चित्रेऽपीति । नहि तत्रैकस्मात्प्रत्यक्षाद्व्यावृत्तिर्भाति चित्रस्य वस्तुत्वात्तस्य चैकत्वाद्वस्तुनोऽन्यत्र चेद्व्यावृत्तिरवस्तु स्यादित्यर्थः ॥९५३॥

चित्रस्यैकत्वे चित्रत्वानुपपत्ति"रेकं च तच्च चित्रं चेत्येतच्चित्रतरं महदि"ति न्यायादित्याशङ्क्यापिना सूचितमरुचिहेतुमाह—प्रत्येकमिति । तत्किमेकैकं मिलितं वा? नाऽऽद्यो नीलपीताद्येकैकग्रहे चित्रत्वाग्रहात्, नेतरो मिलितस्य समुदायात्मनो नीलपीतादिभ्यो भेदाभेदाभ्यां दुर्भणत्वादतश्चित्रस्यावस्तुत्वात्तद्गतत्वेन व्यावृत्तिग्रहे साऽपि न वस्तु स्यादित्यर्थः । नीलादिवस्तुस्वरूपत्वाद्व्यावृत्तेर्वस्तुग्राहि मानं तामपि गोचरयति तन्न व्यावृत्तेरवस्तुत्वमप्रामाणिकत्वं चेत्याशङ्क्याऽऽह—वस्तुन इति । तस्य भेदेऽन्तर्भावो वा भेदस्य वस्तुन्यन्तर्भावो वा? नाऽऽद्यो भेदस्य विदारणात्मत्वात्तदात्मनो वस्तुनः शून्यतापातान्न द्वितीयो भेदस्य वस्तुनोऽनर्थान्तरत्वे सदद्वैतापत्तेरिति भावः ॥९५४॥

ननु भेदः स्वभावो मा भूद्धर्मस्तु भविष्यति नेत्याह—अन्यधर्मे त्विति । स हि वस्तुनोऽवस्तुनो वा धर्मः? नाऽऽद्यो धर्मस्यापि वस्तुत्वे धर्मिणो भेदासिद्धेरवस्तुत्वे वस्त्वद्वैतापत्तेर्नेतरो भेदस्यावस्तुधर्मत्वे वस्त्वस्पर्शात्स्वतस्तदद्वयं प्रामाणिकं स्यादित्यर्थः । आश्रयशब्दो विषयवाची भावप्रधानो बहुव्रीहिसमासान्तः । वस्तुनो भिन्नाभिन्नत्वान्नाद्वयत्वमिति मतान्तरमाशङ्क्याऽऽह—भिन्नाभिन्नमिति ॥९५५॥

वस्तुरूपेण भेदाभेदयोरविरोधान्मानविषयत्वं शङ्कते—वस्त्विति । येन रूपेण तयोरविरोधस्तदेव मेयं न भेदाभेदावित्याह—वस्त्वेवेति । यद्यपि वस्त्वेव मेयं तथाऽपि भेदस्य मेयत्वं वस्तुरूपत्वान्न चैवं वस्त्वभावः स्वापेक्षया वस्तुनो भेदत्वानभ्युपगमादन्यापेक्षयैव तद्रूपत्वादित्याशङ्क्याऽऽह—सत्यमिति । स्वहेत्वासादितरूपमवितथमनपेक्षं वस्तु चेद्भेदः स तर्हि सापेक्षः सन्वस्तुनि तदभिन्नो भेदव्यवहारं नाऽऽदध्यात्सापेक्षनिरपेक्षयोर्भिन्नत्वात्पुंधर्मश्चापेक्षा नाचेतनेषु युक्ता । यदि तद्धर्मेणापेक्षया निर्मितो भेदो न तर्हि सत्यं वस्तु स्यादपेक्षाकृतस्य सर्पवत्कल्पितत्वादित्यर्थः । आपेक्षिकत्वात्कल्पितो भेदः सर्पवदित्यत्र पित्रादौ व्यभिचारमाशङ्क्याऽऽह—पुत्रादीति । पुत्रस्य भावो जन्म पितुर्भावस्तदुपादानं तन्निमित्तं वा तस्मिन्सति पुत्रदेहस्य कर्मकारकत्वं पितृदेहस्य कर्तृकारकत्वं तदुभयमापेक्षिकत्वाद्वस्तुनि देहविशेषे कल्पितमिति कुतो व्यभिचारः? यत्तु वस्तुदेहद्वयमकल्पितं तदनपेक्षमेव, पुत्रोत्पत्तेः प्रागपि पितृदेहस्य भावात्पुत्रदेहस्य च पितृसंबन्धात्पूर्वमनुशयिरूपेण सत्त्वादिति भावः ॥९५६॥

प्रत्यक्षाभावमानाभ्यां भेदसिद्धिरुद्धृता । इदानीं विमतं भिन्नं भिन्नकार्यत्वान्मृदादिवदित्यनुमानाद्वा, कार्यभेदो हेतुभेदं विनाऽनुपपन्नस्तद्भेदं कल्पयतीत्यर्थापत्तेर्वा जगद्धेतुभेदः सिध्यतीत्याशङ्क्यानुमाने व्यभिचारमर्थापत्तौ चान्यथोपपत्तिमाह—दाहेति । एकस्मिन्नेवाग्नौ भिन्नकार्यत्वस्य दृष्टत्वान्न मानद्वयाद्धेतुभेदः कार्यभेदेऽपि जगद्धेतोरभेदेन स्थितेरग्निवदुपपत्तेरिति फलितमाह—कार्यतोऽपीति । कार्यभेदेऽप्यरुचिमपिना सूचयति ॥९५७॥

---

१. भेदे अन्यधर्मे प्रतियोग्यन्तरापेक्षरूपे इतरापेक्षस्य स्फटिकलौहित्यवत् कल्पितत्वात् वस्तुस्वरूपमद्वैतं स्यादित्यर्थः । (न्या० क०)

२. वस्तुकल्पितम्—वस्तुनि पितृपुत्रदेहादौ जन्यत्वं जनकत्वं च कल्पितम् । अतो न व्यभिचारः ।

**विभिन्नकार्यकर्त्रीणां शक्तीनां यद्वदाश्रयः । न विरुद्धोऽग्निरेकोऽपि तद्वत्कार्येऽपि किं न ते ।।५८।।**

**घटाभावे घटः सिध्येत्पटाभावे पटस्तथा । अन्योन्याभावदृष्टेः स्यादन्योन्याश्रयता तव ।।५९।।**

पृथक्त्वं गुणः प्रत्यक्षः तेन भेदसिद्धिनिरासौ

**प्रत्यक्षत्वं पृथक्त्वस्य गुणत्वाद्यैरपीष्यते । तेषामपि गुणे मानं नीलवन्न त्ववस्तुनि ।।६०।।**

**अथ वस्तु पृथक्त्वेन विशिष्टं गम्यते तदा । शुक्लो गौरितिवन्मानं वस्तुन्येव न भेदगम् ।।६१।।**

**अभेदेनैव वर्तेत पृथक्ता यदि वस्तुषु । वस्त्वेव तत्ततोऽन्या चेदपृथग्वस्तु तर्हि ते ।।६२।।**

**भावाभावपृथक्ताऽपि यद्यभिन्ना ततोऽपृथक् । भावाभावविभिन्ना चेत्पृथक्ता न परस्परम् ।।६३।।**

पृथक्त्वस्य सापेक्षत्वनिरपेक्षत्वाभ्यां भेदकत्वनिरासः

**अन्यापेक्षं पृथक्त्वं चेत्स्वयं तर्ह्यपृथग्घटः । द्विधर्मत्वेऽपि वस्त्वेतदेकं स्यादुत्पलादिवत् ।।६४।।**

ननु दहनादिशक्तयो दहने भिद्यन्ते तत्र कारणभेदादेव कार्यभेदस्ततकुतो भिन्नकार्यत्वहेतोर्व्यभिचारः कुतश्चार्थापत्तेरन्यथाऽप्युपपत्तिस्तत्राह—विभिन्नेति । न तावच्छक्तीनामेव कारणत्वं तासां केवलानां तद्भावादृष्टेरग्नेरपि तद्भावे व्यभिचारादितादवस्थ्यं तासामेव कारणत्वेऽपि वह्नेरेकस्यानेकशक्त्याश्रयत्ववद्भिन्नेऽपि कार्ये कारणमेकमेव किं न स्यादतोऽनुमानादेर्व्यभिचारादिदुष्टत्वादसाधकतेति भावः ।।९५८।।

कार्ये भेदाभावावङ्गीकृत्य कारणे तदुभयमपास्तम् । संप्रति कार्येऽपि तन्नास्तीत्याह—घटेति । घटस्याभावः पटस्तस्मिन्पटे घटो नेत्येवं घटाभावतया निष्पन्ने तदभावतया घटो निष्पद्येत पटस्य वाऽभावो घटस्तस्मिन्घटे पटो नेत्येवं पटाभावतया जाते घटाभावतया पटः सिध्येदित्यक्षरार्थः । यद्वा घट एव पटस्याभावस्तस्मिन्नुत्पन्ने सत्यघटः पटो घटाभावत्वेन सिध्यति । पट एव घटस्याभावस्तस्मिन्सिद्धे सत्यपटो घटः पटाभावत्वेन सिध्यतीत्यर्थः । उभयत्र फलितं दोषमाह—अन्योन्येति । घटपटयोरन्योन्यमभावरूपेण दृष्टेरिष्टत्वात्तत्पक्षे घटसिद्धौ पटसिद्धिः पटसिद्धौ च घटसिद्धिरित्यन्योन्याश्रयान्न किंचिदपि सिध्येदतो भेदाभावयोरभावादद्वयं वस्तु स्यादित्यर्थः ।।९५९।।

मीमांसकादिपक्षे भेदाभावयोरसिद्धिमुक्त्वा वैशेषिकादिपक्षेऽपि भेदासिद्धिं वक्तुमारभते—प्रत्यक्षत्वमिति । पृथक्त्वं भेदस्तस्य गुणत्वेन वस्तुत्वात्प्रत्यक्षत्वं यैरपीष्टं तन्मतेऽपि नीलादिष्विव प्रत्यक्षं गुणे मानं तस्य वस्तुत्वात्संप्रयोगयोग्यत्वाद्भेदस्तु न गुणो गुणेऽपि भावादतो नावस्तुनि भेदे तस्य मानतेत्यर्थः ।।९६०।।

पृथक्त्वाख्यभेदस्य नावस्तुत्वं वस्तुविशेषणत्वाद्रूपवदिति शङ्कते—अथेति । गुणादिषु च तथाविधभेदस्यैकार्थसमवायोपाधिकृतत्वादध्यक्षतेति भावः । अभावेऽपि व्यभिचारं मत्वा दोषान्तरमाह—तदेति । तस्मिन्पक्षे यथा शुक्लो गौरिति धीः शुक्ले गव्येव वस्तुनि मानं तथा भिन्नो घट इत्यपि भिन्नवस्तुन्येव मानं न भेदे तस्य वस्तुविशेषणत्वेऽप्यभाववदवस्तुत्वोपपत्तेरतोऽप्रयोजको हेतुः । संभवति च भेदस्य मुख्यत्वे किमित्यौपचारिकत्वमित्यर्थः ।।९६१।।

शुक्लो गौरिति ज्ञानं गवि मानं भवद्विशेषणे शौक्ल्येऽपि मानं तथा भिन्नो घट इत्यपि धीर्घटवद्भेदेऽपि मानमित्याशङ्क्य पृथक्त्वभेदस्य वस्तुन्यभेदो भेदो वेति विकल्प्याऽऽद्यमादत्ते—अभेदेनेति । तर्हि वस्त्वद्वैतापातस्तदतिरिक्तपृथक्त्वाभावादित्याह—वस्त्वेवेति । द्वितीयमनुभाष्य दूषयति—तत इति । पृथक्ता वस्तुनोऽन्या चेत्तर्हि वस्त्वपृथक्स्यात्तस्यावस्तुनो निष्कृष्टत्वात्संबन्धस्य च भेदाभेदाभ्यां दुर्वचत्वादित्यर्थः ।।९६२।।

किंच भावाभावयोः पृथक्त्वमस्ति न वा? आद्यमनुवदति—भावेति । साऽपि ताभ्यामभिन्ना भिन्ना वेति विकल्पयति—अपीति । तत्राऽऽद्यं गृह्णाति—यदीति । तदा भेदाभावाद्भावाभावयोर्न कुतश्चिद्व्यावृत्तिरिति वस्त्वद्वैतं स्यादित्याह—तत इति । कल्पान्तरमादायापास्यति—भावेति । पृथक्ताया भावाभावाभ्यां भेदे तस्यास्ताभ्यां संबन्धस्य दुःसाध्यत्वात्तयोर्मिथोऽभेदाभावादद्वैतमेव स्याद्भावाभावयोर्न पृथक्तेत्यत्रापि तदेवेति भावः ।।९६३।।

किंच घटस्य पृथक्त्वं स्वापेक्षमन्यापेक्षं वा? आद्ये घटस्य शून्यतेति मन्वानो द्वितीयमनुवदति—अन्यापेक्षमिति । तर्हि घटः स्वयमपृथगद्वितीयः स्यादन्यापेक्षानिमितस्य सर्ववन्मिथ्यात्वादित्याह—स्वयमिति । घटः स्वरूपेण

क्रियाकाले गुणीभावात्क्रियासिद्धावसंभवात् । कर्तुः प्रमेयता न स्यादहंबुद्ध्या कथंचन ॥६२॥
संविद्रूपे प्रमेये च संविदन्या फलं भवेत् । न च संविद्द्वयाभासो नानुमेयं फलं क्वचित् ॥६३॥
घटाद्याकारसंविद्वच्छुद्धायामपि संविदि । संविद्विशिष्टा संवित्स्यान्न चासावात्मनीक्ष्यते ॥६४॥
प्रमातरि च मेये स्यात्फलं कस्येति भण्यताम् । न मातुस्तस्य मेयत्वान्नापि मेये फलं क्वचित् ॥६५॥
जडत्वात्तत्र मेयस्य फलं मातरि चेन्मतम् । मेयतो जडताऽत्रापि संविच्चेन्न प्रमाणजा ॥६६॥
धर्मत्वेनाप्यहंबुद्धेर्न भेदो धर्मिणाऽऽत्मना । रूपं द्रव्यात्मनो नान्यद्रसादेस्तद्विभिद्यते ॥६७॥
द्रव्यादि चाऽऽत्मनो रूपं प्रमेयं यदुदीरितम् । घटवत्तदहंबुद्धेः प्रत्यग्वृत्तेर्न गोचरः ॥६८॥

किंचाऽऽत्ममात्रस्याहंधीग्राह्यत्वं कर्तृत्वेन क्रियामारूढस्य वा ? नाऽऽद्यो मोक्षादावपि प्रसङ्गात्तत्र तदभावान्नेति चेत्तर्हि तत्र यथा प्रथा तथाऽन्यत्रापि स्यान्न च तत्र तत्प्रथैव नास्तीति वाच्यं तद्दृष्टेरविपरिलोपश्रवणात् न द्वितीय इत्याह—क्रियेति । अस्यार्थः—कर्तुरात्मनोऽहंधीरूपक्रियाकाले वा तत्प्राक्काले वा तदुत्तरकाले वा तत्कर्मत्वं ? नाऽऽद्यः । क्रियां प्रति कर्तुर्गुणभूतत्वात्क्रियासिद्धौ सत्यां तां प्रति कर्मत्वायोगात्कर्मणः प्रधानत्वादेकस्यैकामेव क्रियां प्रति युगपद्गुणप्रधानत्वासंभवात् । नेतरौ क्रियासिद्धिप्रागुत्तरकालयोस्तदभावात्कर्तुरसंभवात्तस्मात्तस्याहंबुद्ध्या न मेयतेति कर्तुरहंधीकर्मत्वे तस्याः स्वकर्मत्वमपि स्यात्तद्विशिष्टस्यैव कर्तृत्वादिति मत्वा कथंचनेत्युक्तम् ॥१०६२॥

किंचाहंधीग्राह्यत्वमसंविदात्मनः संविदात्मनो वा? तत्राऽऽद्यमङ्गीकृत्य द्वितीयं दूषयति—संविदिति । अस्तु मेयभूतप्रत्यगात्मसंविदोऽन्या संवित्फलं का हानिरत आह—न चेति । संविदात्मनि संविदन्तरस्याननुभवेऽपि व्यवहारलिङ्गेन तदनुमेयमित्याशङ्क्यानौपाधिके स्वप्रकाशे तस्मिन्नानुमानमित्याह—नेति । फलस्य स्वतःस्फुरणात्फलान्तराभावादात्मन्यनात्मनि वा नानुमेयं तदा व्यवहारस्त्वात्मनः संविद्रूपत्वादपि सिध्यतीत्यर्थः ॥१०६३॥

आद्यपादत्रयार्थं दृष्टान्तेन स्पष्टयति—घटादीति । संविदात्मनि संविदाकारसंवित्प्रसङ्गस्येष्टत्वमाशङ्क्याऽऽह—न चेति ॥१०६४॥

आत्मनि संविदन्तराभावादमेयत्वमुक्त्वा फलाभावप्रसङ्गाच्चैवमिति विवक्षुराक्षिपति—प्रमातरीति । मातुरेव फलित्वात्कथं तदभावस्तत्राऽऽह—न मातुरिति । मेयत्वेऽपि फलित्वं किं न स्यान्मेये घटादौ तस्येष्टत्वादित्याशङ्क्याऽऽह—नापीति । फलं प्रकाशोऽप्रकाशो वा? आद्ये नाप्रकाशस्य प्रकाशाश्रयत्वम् । द्वितीये तेन घटादौ नाधकमाचरितमिति जगदान्ध्यमिति भावः ॥१०६५॥

घटादेर्मेयस्य जाड्यात्तत्र फलाभावो युक्तो मातरि मेयेऽपि तदभावात्फलमिति शङ्कते—जडत्वादिति । मातर्यपि मेयत्वे तस्मादेव घटवज्जाड्यात्तद्वदेव न फलितेति दूषयति—मेयत इति । आत्मनो घटादिवैलक्षण्यार्थं संवित्त्वेष्टेर्न जडतेति शङ्कते—संविच्चेदिति । तर्हि नाऽऽत्मनि मानजा संविदन्या कल्प्या संविद्द्वयादृष्टेरुक्तत्वादित्याह—नेति ॥१०६६॥

किंचाहंधियोऽनात्मधर्मत्वमात्मधर्मत्वं वा? नाऽऽद्योऽनभ्युपगमाद्भूतचैतन्यवादापाताच्च । द्वितीये धर्मिणोऽभेदे न धर्मधर्मित्वं न चैकत्र तत्त्वमिति मन्वानो भेदपक्षे दोषमाह—धर्मत्वेनेति[1] । भेदे गवाश्ववद्धर्मधर्मित्वासिद्धिरिति भावः । अहंबुद्धेर्धर्मत्वेनाङ्गीकारेऽपि तस्या धर्मिणाऽऽत्मना भेदो नेति योजना । धर्मस्य धर्मिणो भेदाभावे दृष्टान्तमाह—रूपमिति । अन्यथा न रूपरूपितेत्यर्थः । रूपं भिद्यमानं भातीति चेत्सत्यं धर्मान्तराद्धर्म्यन्तराच्चेत्याह—रसादेरिति । एवमहंज्ञानस्याऽऽत्मधर्मत्वेनेष्टस्य भेदेऽभेदे च तद्ग्राहित्वमभेदे विषयविषयित्वायोगाद्भेदे च संबन्धासिद्धेरिति भावः ॥१०६७॥

आत्मनो द्रव्यबोधरूपत्वाद्द्रव्यरूपेण मेयत्वं बोधरूपेण मातृत्वमित्येकस्यैव ग्राह्यग्राहकात्मकस्याहंधिया सिद्धिरिति केचित्तान्प्रत्याह—द्रव्यादीति । द्रव्यं बोधश्चाऽऽत्मनो रूपं तत्र यद्द्रव्यं मेयमुक्तं तदहंबुद्धेर्न गोचरः

१. भाट्टमते धर्मधर्मिणोरभेदाच्च नाहंधीगम्य आत्मेत्याह—धर्मत्वेनेति । (न्या० क०)

अस्मत्प्रत्ययसंभिन्नं प्रत्यक्कर्तरि वेदनम् । ज्ञानस्य यदुपन्यस्तं विशेषस्तत्र नेक्ष्यते ॥६९॥
ज्ञानबोधेन[1] नैवाऽऽत्मा मितो नाप्यात्मसंविदा । ज्ञानं न च द्वयं भेदादभेदेऽनुभवः स्वतः ॥७०॥

अहंरूपस्यानात्मत्वनिरूपणम्

किं प्रमाणमहंरूपमुताऽऽत्मैवेति कथ्यताम् । प्रत्यक्षत्वान्न[2] तन्मानं नाऽऽत्मा स्वार्थजडत्वतः ॥७१॥
न चाप्यात्मन्यविज्ञातेऽहंबुद्धेः सिद्धता तव । येनाऽऽत्मा स्यादहंबुद्धेरनुमेया[3] हि सा स्थिता ॥७२॥

प्रतीच्याश्रये वृत्तिराश्रितत्वेन तस्या यतोऽभीष्टा, अतो न सा प्रत्यग्विषया । एतदात्मनिष्ठमहमिति ज्ञानं नैतदात्मविषयमेतदात्मनिष्ठसाक्षात्कारत्वात् तादृग्घटसाक्षात्कारवदन्यथा घटवदनात्मतेति भावः ॥१०६८॥

यत्तु ग्राह्यग्राहकस्याऽऽत्मनोऽहंधीग्राह्यत्वं तत्राऽऽह—अस्मदिति । अस्यार्थः—एकस्य ग्राह्यग्राहकत्वविरोधेन क्षणिकज्ञानस्याऽऽत्मत्वं त्वया निरस्यते स दोषस्तेऽपि तुल्यो यद्धि प्रतीचि ज्ञानस्य कर्तर्यहंरूषितं ज्ञानं मानत्वेन त्वयोक्तं तत्र बौद्धान्न ते विशेष एकस्य ग्राह्यग्राहकत्वायोगस्य तुल्यत्वादतो बौद्धात्ते विशेषो वाञ्छितश्चेदात्मा नाहंधीगम्य इत्येष्टव्यमिति ॥१०६९॥

इतश्च द्विरूपस्याऽऽत्मनो नाहंधीवेद्यतेत्याह—ज्ञानेति । ज्ञानं बोधांशस्तस्य बोधः स्फुरणं तेनैवाऽऽत्मा द्रव्यांशो न स्फुरितस्तयोरंशयोर्मिथो भेदाद्बोधांशस्फुरणस्यैवांशान्तरस्फुरणत्वे द्रव्यस्य बोधादभेदः स्यान्नापि द्रव्यांशस्याऽऽत्मनः स्फुरणेन बोधांशस्य स्फुरणं तस्य द्रव्यादभेदापत्तेरतः स्फुरणभेदान्मानभेदे द्विरूपात्मनो नैकयाऽहंधिया सिद्धिरित्यर्थः । द्रव्यबोधाख्यमेकमेवाऽऽत्मरूपं तत्राहंधीकृतमेकं स्फुरणमित्यङ्गीकारे नानुपपत्तिरित्याशङ्क्याऽऽह—न चेति । न हि द्रव्यं बोधश्चेत्युभयमात्मरूपं मिथो व्यावृत्तयोरात्मत्वे तस्यापि भेदापत्तेरित्यर्थः । ऐकरूप्येऽप्यात्मनो नाहंबुद्धिं विना सिद्धिस्तत्कुतो बौद्धाद्विशेषस्तवापीत्याशङ्क्याऽऽह—अभेद इति ॥१०७०॥

प्रकारान्तरेणाहंधीगम्यत्वमात्मनो निराकर्तुं विकल्पयति—किमिति । न तावत्तदहंरूपं मानं तस्य रागादिवत्प्रत्यक्षत्वान्मानस्य चानुमेयत्वं वदता तदनभ्युपगमादित्याद्यं प्रत्याह—प्रत्यक्षत्वादिति । नाप्यहंरूपमात्मैव पारतन्त्र्यापारतन्त्र्याभ्यां जाड्याजाड्याभ्यां च भेदादिति द्वितीयं निराह—नाऽऽत्मेति ॥१०७१॥

किंचाहंधियो मानत्वेऽप्युभयांशस्याऽऽत्मनो न तन्मेयता तस्मिन्नदृष्टे नाहंधीदृष्टिस्तददृष्टौ नाऽऽत्मधीरिति ज्ञप्तावन्योन्याश्रयत्वापत्तेरित्याह—न चेति । अक्षादिवदज्ञातैवाहंधीरात्मानं साधयतीति चेन्नेत्याह—येनेति । येनाज्ञाताहंबुद्धेरात्मसाधकत्वेनाऽऽत्मा तद्विषयः स्यान्न तथा बुद्धेरबुद्धायाः साधकत्वं प्रकाशो बुद्धिरिति न्यायाद्दीपवज्ज्ञाने सत्येव तस्याः साधकत्वसंभवादिति भावः । तथाऽप्यात्मनः सत्तामात्रेण बुद्धिसाधकत्वान्नान्योन्याश्रयतेत्याशङ्क्याऽऽह—अनुमेयेति । सा हि बुद्धिरनुमेया त्वयाऽऽस्थिता "न, अनाकारामेव बुद्धिमनुमिमीमहे" इति स्थितेरहंबुद्ध्यनुमाने चाऽऽत्मसंविल्लिङ्गं ततो लिङ्गज्ञाने तद्विशिष्टात्मनोऽपि तद्ध्रौव्यादात्मनि ज्ञातेऽहंधीस्ततश्चाऽऽत्मधीरिति व्यक्तैवान्योन्याश्रयतेत्यर्थः[4] । आत्मनोऽहंधियः सिद्धिरित्यत्राऽऽत्मप्रमितेरहंप्रत्ययोत्पत्तेश्चान्योन्याश्रयत्वमुक्तमिह तु द्वयोरपि प्रतीतावेव तदुच्यत इति विशेषः ॥१०७२॥

---

१. ज्ञानबोधेन—बोधांशानुभवेन आत्मा द्रव्यांशो मितः; नाप्यात्मसंविदा ज्ञानं बोधांशः मितः आकारभेदात् । ततश्चोभयरूपस्यात्मनः नाहंप्रत्ययेन सिद्धिः । न च द्वयं आत्मनो भेदापत्तेः अभेदे स्वप्रकाशतेत्यर्थः ।

२. **प्रत्यक्षत्वान्न तन्मानमिति**—भट्टमते ज्ञानमनुमेयं अहंप्रत्ययस्य च प्रत्यक्षत्वं दृश्यते । अतः तस्य नात्मसद्भावे मानत्वम् । अहमर्थो नात्मा परार्थत्वात् जडत्वाच्चेत्यर्थः ।

३. मितया अहंबुद्ध्या आत्मसिद्धिः, आत्मना मितेन अहंप्रत्ययसिद्धिः इतीतरेतराश्रयः । ननु चक्षुरादिवदज्ञातस्यैवाहंप्रत्ययस्यात्मसाधकत्वात् नायं दोष इत्यत आह—**अनुमेया हीति** । अहंधीः प्रकाशमानैव साधिका जडप्रकाशत्वे सति साधकत्वात् आलोकादिवत् इत्यनुमेया यस्मात् अतो दुर्वारम् इतरेतराश्रयत्वमित्यर्थः (न्या० )

४. अहंधीः प्रकाशमानैव साधिका जडप्रकाशत्वे सति साधकत्वात् इत्यनुमेया यस्मादतो दुर्वारमितरेतराश्रयत्वम् ।

## आत्मनोंऽशद्वयनिराकरणम्

निरंशस्य न चाप्यंशकल्पनाऽप्युपपद्यते । स्वात्मतन्त्रे च विषये मानबोधः सदा भवेत् ।।७३।।
अज्ञातत्वं विना मानं नाहंप्रत्यय आत्मनः । अज्ञातत्वमतो वाच्यमात्मनोऽत्र घटादिवत् ।।७४।।
[1]तस्याप्यनुभवात्सिद्धिर्यद्युच्येत घटादिवत् । सिद्ध आत्मा पृथङ्मातुर्नो चेन्माता न सिध्यति ।।७५।।
[2]प्रमाणसंप्लवोऽप्युक्तो दूरादेव निर्वर्तितः । अन्यत्रापि हि माननां नैव संप्लव इष्यते ।।७६।।
अज्ञातावगमे यद्वत्प्रमातर्यर्पितं फलम् । न मेये पूर्वमानेन तद्वन्मानान्तरैरपि ।।७७।।
अतोऽनधिगतावेशात्सर्वेषां संप्लवः कुतः । मान्तरैरवबुद्धेऽपि ज्ञातेऽप्यज्ञाततोऽन्यतः ।।७८।।

आत्मनोंऽशद्वयमाश्रित्याहंधीगम्यत्वायोगमुक्त्वा तदेवांशद्वयं न युक्तमित्याह—निरंशस्येति । अपिद्वयाद्दृष्टत्वकल्प्यत्वयोरनुपपत्तिः सूच्यते । न तावदात्मनोंऽशद्वयं दृष्टं नापि कल्पयितुं शक्यं कल्पकाभावान्निष्कलादिश्रुत्या च निरंशत्ववित्तेरित्यर्थः । किंचाऽऽत्मैवाहंधियो हेतुरन्योऽपि वा? आद्यं प्रत्याह—स्वात्मेति । आत्ममात्रस्याहंधीहेतुत्वे सामग्र्याः सदा भावात्कार्यस्यापि मानाख्यबोधस्याहंप्रत्ययस्य सदा प्रसक्तेः स्वापाद्यसिद्धिरित्यर्थः । कारणान्तरमपि सदाऽस्ति मनःसंयोगादीत्युक्तदोषतादवस्थ्यं चकारार्थः ॥१०७३॥

मातुरात्मत्वाङ्गीकारेणाहंधीग्राह्यत्वं तस्य निरस्तमस्तु वा मातुरहंधीगम्यत्वं नासावात्मा तन्नाऽऽत्मनस्तद्ग्राह्यतेत्याह—अज्ञातत्वमिति । आत्मनो मातुरज्ञातत्वं विना तत्राहंधीर्न मानमतो मातरि मानप्रवृत्त्यर्थमज्ञातत्वं वाच्यं तच्च स्वतः परतो वा सिध्यति?नाऽऽद्योऽनभ्युपगमाद्द्वितीयेऽपि मानाद्वा मातुर्वा नित्यानुभवाद्वा तत्सिद्धिः?नाऽऽद्योऽनवस्थानान्मानादनिवृत्त्यापत्तेश्च । न द्वितीयो घटवन्मेयस्य मातुरसाधकत्वादित्यर्थः ॥१०७४॥

तृतीयमालम्बते—तस्येति । ज्ञातत्वस्यैवेतिदृष्टान्तार्थोऽपिशब्दः । तर्हि मातुः सकाशाद्घटादेरिवाऽऽत्मनस्तदज्ञातत्वादिसाधकस्यान्यत्वान्मातुरहंधीवेद्यत्वेऽपि नाऽऽत्मनस्तद्वेद्यतेत्याह—घटादिवदिति । मातुरज्ञातत्वादिसाधकसाक्ष्यनभ्युपगमे तत्र मानाप्रवृत्तेर्नासौ सिध्येदिति विपक्षे दोषमाह—नो चेदिति ॥१०७५॥

वार्तिककारमतेऽहंप्रत्ययगम्यत्वमात्मनो निरस्तं शब्दादिधीविषयत्वेन शब्दादिस्वप्रकाशत्वेन स्वरूपमाश्रयत्वेनाऽऽत्मानं च साधयतीति सर्वाऽर्थधीरात्मनि मानमिति गुरुमतमाशङ्क्याऽऽह—प्रमाणेति । योऽपि मानानां शब्दादिज्ञानानामेकत्राऽऽत्मन्यावेशो गुरुमतानुसारिभिरुक्तः सोऽपि दूरतो वारितोऽहंज्ञानस्याऽऽत्मनि संभावितमानत्वस्याप्युक्तनीत्या तन्मानत्वे प्रत्युक्ते शब्दादिधियां तन्मानत्वसंभावनामात्रस्यैवाभावात्तासु चाऽऽत्मनो भानेऽर्थवत्तत्कर्मत्वं तत्र भासमानत्वस्यैव तल्लक्षणत्वादित्यर्थः । आत्मन्यध्यक्षानुमानश्रुतीनां मानत्वान्नास्य वेदैकवेद्यतेति तार्किकास्तान्प्रत्याह—अन्यत्रेति । तार्किकमतेऽपि नाऽऽत्मनि मानानां संभूय समावेशोऽभ्युपगन्तुं शक्यते योऽहंधियोऽप्युक्तन्यायान्न विषयः स कथमनुमानादेर्विषयः स्यान्न शब्दादिष्वपि संप्लवो दूरादेव प्रतिदेहं भिन्नेष्वात्मसु शब्दादिहीनत्वात्ततोऽपि दवीयान्ब्रह्मात्मनीत्यर्थः ॥१०७६॥

कथं शब्दादिषु संप्लवासत्त्वं स किं पूर्वोत्तरमानानामेकस्मिन्नर्थे फलहेतुत्वेनाऽऽवेशाद्वा तन्मात्राद्वा?नाऽऽद्य इत्याह—अज्ञातेति । अज्ञातस्य ज्ञाने क्रियमाणे पूर्वप्रमाणेन मातरि फलमर्पितं न मेये भूतचैतन्यवादानभ्युपगमादेवमुत्तरैरपि मानैर्मात्राश्रितमेव फलमर्प्यते पूर्वस्मात्तेषामविशेषादित्यर्थः ॥१०७७॥

मानानां मातृस्थफलहेतुत्वेऽपि किं ते जातं तदाह—अत इति । मेये मानानां फलानर्थकत्वात्पूर्ववदुत्तरेषामपि शुद्धे वस्तुन्यज्ञाते प्रवेशादेकस्मिन्मेये फलहेतुत्वेनाप्रवेशान्न संप्लवशङ्केत्यर्थः । कल्पान्तरं निराह—मान्तरैरिति । आद्यमानदृष्टेऽर्थे मानान्तरैर्ज्ञातेऽपि न संप्लवः शक्यशङ्कोऽज्ञातात्पूर्वमानार्थाज्ज्ञातत्वविशिष्टस्योत्तरमानार्थस्यान्यत्वात्तदुत्तरेष्वपि मानेषूक्तविषयभेदस्य सुवचत्वात्तन्न द्वितीयेऽपि संप्लवोऽस्तीत्यर्थः ॥१०७८॥

---

१. तस्यापि—आत्मनः अज्ञातत्वस्यापि ।

२. प्रमाणेति । अनात्मन्यपि तत्तत्कालोपलक्षितप्रमेयाकारभेदात् प्रमाणसंप्लवो यदा नेष्यते तदा प्रतीचि तत्तदर्थोपधानेन तत्तत्प्रत्ययवेद्ये प्रमाणसंप्लवो दूरनिरस्त इत्यर्थः । (न्या०)

**अथाप्यवगमो मेये तथाऽपि स्यान्न संप्लवः । पूर्वोऽनधिगते वृत्तः प्रत्ययोऽधिगते परः ॥७९॥**
**पूर्वेण निश्चिते चेत्स्यान्नोत्तरस्य प्रमाणता । तथा संदेह एकस्मादन्यस्माद्धि विनिश्चयः ॥८०॥**
**निःसामान्यविशेषेषु नातः संप्लव इष्यते । यथाऽन्यत्र तथेहापि वेदान्तेषु[1]अभ्युपेयताम् ॥८१॥**
**[2]यतो मानानि सिध्यन्ति जाग्रदादित्रयं तथा । भावाभावविभागश्च स ब्रह्मास्मीति बोध्यते ॥८२॥**
**[3]यतोऽसिद्धानि सिध्यन्ति भावाभावौ यदाश्रयौ । योऽनन्यार्थो यदर्थं च सर्वं योऽनन्यदृक्सदा ॥८३॥**
**प्रमेयादित्रयं यस्मात्परस्परविलक्षणम् । आत्मानं लभते सत्यः सोऽध्यक्षोऽत्राभ्युपेयताम् ॥८४॥**

फलस्य मातृस्थत्वेन मेये मानानामसंप्लवमुक्त्वा मेयस्थत्वेऽपि न संप्लवस्तेषामित्याह—अथापीति । अपिशब्दाभ्यामवगमस्य प्रकाशात्मनोऽर्थे संभवोऽभ्युपगमवादत्वं चास्य द्योत्यते कथमत्र संप्लवराहित्यं तत्राऽऽह—पूर्व इति ॥१०७९॥

विशेषणभेदेऽपि विशेष्याभेदाद्दुर्वारा संप्लुतिरिति चेत्तथाऽपि पूर्वमाननिश्चितेऽर्थे मानान्तरस्य मानत्वममानत्वं वा? आद्ये न संप्लवोऽर्थाकारभेदादेव तन्निरासादिति मत्वा द्वितीयमनुवदति—पूर्वेणेति । तथा सत्येकस्मादुत्तरमानतः संदेहशब्दितोऽनुवादः स्यादन्यस्माच्चार्थ्यमानादर्थे निश्चयोऽतो न संप्लव इत्याह—तथेति ॥१०८०॥

शब्दादिष्वसंप्लवेऽपि प्रतिदेहं भिन्नेष्वात्मसु स स्यादित्याशङ्क्याऽऽह—निःसामान्येति । यतो दर्शितविधया सामान्यविशेषवत्सु संभावितसंप्लवेष्वपि शब्दादिषु स निरस्तोऽतो निर्गतसामान्यविशेषेषु चिन्मात्रेष्वात्मस्वसौ दूरोत्सारितस्तेषु स्वप्रकाशचिन्मूर्तिष्वेकस्यापि मानस्याप्रवेशादौपनिषदत्वस्य चानन्तरमेव वेदनात् चैवमात्मभेदस्तस्य प्रातिभासिकत्वेऽप्यवस्तुत्वादित्यर्थः । तथापि ब्रह्मात्मनि संप्लवादौपनिषदत्वहानिरित्याशङ्क्य संप्लवनिरासस्य प्रकृतोपयोगमाह—यथेति । शब्दादिष्वात्मसु वाऽसंप्लवाद्वेदान्तेषु प्रतिपाद्यब्रह्मात्मन्यपि तदभावोऽभ्युपेयस्तत्र मानान्तरवार्तामात्रस्याप्यभावात्तत्प्रवेशस्य च तस्मिन्नपास्तत्वादतो वेदान्तानामेव तत्र मानतेति तदौपनिषदत्वसिद्धिरित्यर्थः ॥१०८१॥

ननु ब्रह्मात्मनि मानान्तरागोचरे कुतो वेदान्तमानता तत्पृष्ठेन तु मानानीत्यादौ प्रत्यक्षादीनां नित्यानुभवब्रह्मात्मविषयत्वस्योक्तत्वादित्याशङ्क्योपाधिद्वारा मानान्तराणां तद्विषयत्वस्य तत्रोक्तत्वात्केवलं ब्रह्म वेदान्तैकवेद्यमिति मत्वाऽऽह—यत इति । जाड्यादध्यक्षादीनां स्वतोऽसिद्धेर्यद्भासानि स्फुरन्ति नासौ तेषां विषयो दीपभास्यरूपादेस्तदभासित्वादित्यर्थः । मानान्तरागोचरत्वेऽपि प्रतीचो न ब्रह्मत्वमवस्थावत्त्वलब्धीनब्रह्मैक्यविरोधादित्याशङ्क्य तस्यावस्थासाक्षित्वान्न तद्वत्तेत्याह—जाग्रदादीति । यतः सिध्यन्तीत्यन्वयार्थं तथेत्युक्तम् । तथाऽपि सद्वयस्य नाद्वयब्रह्मैक्यमित्याशङ्क्य कल्पितद्वैतसाधकस्य वास्तवाद्वयत्वमविरुद्धमित्याह—भावेति । पूर्ववदन्वयार्थश्चकारः त्वमर्थं शुद्धमनूद्य स ब्रह्मेति तदर्थत्वं तस्य बोध्यते वाक्येनाहं ब्रह्मास्मीत्यादिनेति वाक्यार्थमाह—स ब्रह्मेति ॥१०८२॥

त्वमर्थोक्तिद्वारा वाक्यार्थमुक्त्वा तदर्थोक्तिद्वाराऽपि तं कथयति—यत इति । स्वतः सत्तास्फूर्तिहीनानि जडानि यत्प्रसादात्ते लभन्ते तानि च लब्धात्मकानि भावाभावरूपाणि यत्र तिष्ठन्ति यश्च सुखलक्षणाक्रान्ततया सुखत्वेन शास्त्रे कथ्यते योऽपि सदास्फुरद्रूपतया साधकान्तरं नापेक्षते तेन परात्मना साक्ष्यैक्यं वाक्यप्रबोध्यमित्यर्थः ॥१०८३॥

उक्तलक्षणः साक्ष्येव नास्ति कथं तस्य ब्रह्मत्वं बोध्यते तत्राऽऽह—प्रमेयेति । मात्रादित्रयं कर्त्रादित्रयं भोक्त्रादित्रयं च मिथो विलक्षणं यतः सत्त्वादश्नुते यश्च स्वसत्तादौ नान्यदपेक्षतेऽबाधितकूटस्थसत्संविद्रूपत्वात्स

---

१. वेदान्तेषु—वेदान्तप्रतिपाद्यब्रह्मात्मनीत्यर्थः ।

२. **यतो मानानि**—आत्मनोऽवस्थात्रयविशिष्टस्य ब्रह्मत्वं न सम्भवति इत्यत्राह—**यत इति।** अवस्थात्रयसाक्षित्वात् आत्मनः साक्षित्वमुपपन्नमित्यर्थः—(न्या०)

३. **यतोऽसिद्धानि**—त्वमर्थोक्तिद्वारा वाक्यार्थमुक्त्वा तदर्थोक्तिद्वारापि तं कथयति—**यत इति**—(न्या०)

असंकुचितचित्पद्मः प्राज्ञे स्वप्नप्रबोधवत् । तथा प्रफुल्लबोधाब्जः प्राज्ञवत्स्वप्नबोधयोः ॥८५॥
साक्ष्यसंबन्धतः साक्षी न स्वतः साक्षिताऽऽत्मनः । प्रत्यङ्मात्रैकदृष्टित्वाद्धियां वाचामगोचरः ॥८६॥
अस्मत्पक्षे हि कर्तव्यमविद्यामात्रकल्पितम् । तदभावान्न संसारो भूतो भावी न वर्तते ॥८७॥
स्वाभाविक्यप्यविद्येयमनुभूत्याऽवभासिता । तमः सूर्योदयेनेवज्ञानेनोत्कृत्य नाश्यते ॥८८॥
अनादिकालमज्ञानं ज्ञानेनाऽऽदिमता क्षणात् । दृश्यते नाश्यमानं हि न चास्याऽऽवृत्तिरीक्ष्यते ॥८९॥
एवंभूतोऽप्ययं प्रत्यक्स्वात्मानुभवसंश्रयात् । व्युत्पत्तेः प्रागविज्ञातः सर्वाज्ञानादिसाक्ष्यपि ॥९०॥
तत्त्वमस्यादितस्तस्मादागमादेव नान्यतः । ऐकात्म्यवस्तुनः साक्षाद्व्युत्पत्तिरविचालिनी ॥९१॥

सर्वथाप्यस्त्यात्मेति[2] भाष्यार्थविवरणम्

तस्यास्य कर्मकाण्डेन संबन्ध इति यः पुरा । प्रश्नस्तन्निर्णयार्थाय सर्वथेत्यादिरुत्तरः ॥९२॥

कूटस्थो बोधोऽत्र साक्ष्ये साक्षी तस्य निराकर्तुमशक्यत्वान्नहि तन्निरासे मात्रादिभावाभावसिद्धिर्विमतमेतद्ग्राह्कैन्द्रियकज्ञानातिरिक्तास्मदीयप्रत्यक्षग्राह्यं प्रत्यक्षत्वात्कुम्भवदिति च प्रयोगोपपत्तेरिति भावः ॥१०८४॥

तथाऽपि स्वापे बोधमूर्तिः साक्षी नास्ति तत्र तदननुभवादित्याशङ्क्य जागरादौ स्फुटानुभववत्तत्रापि स वक्तव्यो नहि द्रष्टुरित्यादिश्रुतेरात्मनस्तत्र सवितृसंनिधौ सरोजवत्प्रकटितानुभवत्वदृष्टेरित्याह—असंकुचितेति । तर्हि जागरादाविव स्वापेऽपि सविशेषः स्यादित्याशङ्क्याऽऽह—तथेति । स्वापे बोधसत्त्ववत्तस्याविशेषत्वमपि मन्तव्यं मात्राऽसंसर्गस्त्वस्येति श्रुतेरतः स्वापवदवस्थाद्वयेऽपि विषयेषु वस्तुतोऽप्रसारितप्रबोधः प्रत्यगात्माऽसङ्गो हीत्यादिश्रुतेरित्यर्थः ॥१०८५॥

साक्षित्वाद्बोधस्य सविशेषत्वं लौकिकवदित्याशङ्क्य स्वतोऽन्यतो वा साक्षितेति विकल्प्याऽऽद्यमसिद्ध्या दूषयति—साक्ष्येति । अन्यतः साक्षित्वे न सविशेषत्वं न ह्यविद्याकृतं तद्वास्तवं निर्विशेषत्वं निहन्तीति द्रष्टव्यम् । तथाऽपि वागादिविषयत्वाद्बोधस्य सविशेषत्वं घटादिवदित्याशङ्क्यासिद्धिमाह—प्रत्यगिति ॥१०८६॥

नन्वनुभवात्मा सविशेषः कर्तृत्वात् राजवन्न चासिद्धिः साक्ष्यसंबन्धतः साक्षीति वदता संबन्धादिकर्तृत्वाङ्गीकारात्तत्राऽऽह—अस्मदिति । कर्तृत्वादिसम्बन्धस्य कल्पितत्वे मोक्षशास्त्रं प्रमाणयति—तदभावादिति । सर्वकल्पनाहेतोरज्ञानस्य ज्ञानाद्ध्वस्तेस्तद्धेतुको बन्धः सर्वदा ध्वस्तो भवतीत्यर्थः ॥१०८७॥

नन्वज्ञातमनादित्वादनुभवमात्रसिद्धत्वाच्चाऽऽत्मवन्न निवर्तत इत्याशङ्क्यानादिभावत्वमुपाधिरिति[3] मत्वाऽऽह—स्वाभाविकीति[1] । अवभासितेत्यत्रापि पूर्वोऽपिः संबध्यते । उत्कृत्याऽऽत्मनः सकाशादुत्कृष्यावयवशः शिथिलीकृत्येति यावत् ॥१०८८॥

विद्वदनुभवविरुद्धं चानुमानमित्याह—अनादीति । ज्ञानप्रागभावे चानैकान्त्यं प्रसिद्धमिति हिशब्दार्थः । अज्ञानध्वंस्यपि ज्ञानमावृत्त्यपेक्षमित्येके । तथा च क्षणादित्ययुक्तमित्याशङ्क्याऽऽह—न चेति । ॥१०८९॥

शुक्त्यादिज्ञानस्याऽऽवृत्त्यनपेक्षस्याज्ञानध्वंसित्वेऽपि नाऽऽत्मन्येवं स्वप्रकाशे तस्मिन्नज्ञानायोगात्प्रमाणाप्रवृत्तेरिति चेन्नेत्याह—एवमिति । सर्वबुद्धितद्वृत्तिसाक्षित्वादात्मा स्वप्रकाशोऽपि प्राक्तत्त्वज्ञानोत्पत्तेः स्वानुभवादज्ञातः सिद्धोऽतस्तत्र मानप्रवृत्तिरपि युक्तेत्यर्थः ॥१०९०॥

आत्मनि मानोत्थाज्ज्ञानादज्ञानतत्कार्यध्वंसेऽपि मानमध्यक्षादि स्यादित्याशङ्क्याऽऽह—तत्त्वमिति । यस्माद्वाक्यादहं ब्रह्मेति ज्ञानात्प्रागविज्ञातं वस्तु तस्मात्तत्त्वमादेरागमादेव तस्यापरोक्षप्रमितिर्मानान्तरस्यानौपाधिकेऽस्मिन्नप्रवृत्तेरुक्तत्वात्सा च प्रमितिः सहेतुसर्वबन्धध्वंसित्वेनापुनरावृत्तिफलत्वाददितिदृढेत्यर्थः ॥१०९१॥

न चासतीत्यादेरनुमेयश्चाऽऽत्मेत्यन्तस्य भाष्यस्य तात्पर्यं व्याख्याय सर्वथेत्यादिभाष्यतात्पर्यमाह—

---

१. **स्वाभाविकीति** । अनादित्वं प्रागभावे व्यभिचरतीति—(न्या०)

२. पृष्ठः–६, पंक्तिः–२

३. अनादिभावत्वमुपाधिरिति—न च साधनवति अज्ञानरूपे पक्षेऽनादिभावत्वं वर्तत इति साधनाव्यापकत्वं नास्तीति शङ्क्यम् । अविद्याया भावाभावविलक्षणत्वात्—इति बोध्यम् ।

**कर्मभिरेव मोक्षः इति पूर्वपक्षः**

**ननु सिद्धे यथोक्तार्थे नाऽऽरम्भे हेतुरीक्ष्यते । कृत्स्नप्रयोजनावाप्तेः पूर्वोक्तैरेव कर्मभिः ॥९३॥**

**अज्ञाननिवृत्तये ज्ञानमिति समाधानाय न त्वात्मन इतिभाष्यम्**

**नैतदेवं सुखेप्सायां जिहासायाश्च दुःखतः । निदानस्यानिषिद्धत्वात्पूर्वोक्तैः कर्मभिः पुरा ॥९४॥**
**निःशेषाह्लादसंप्राप्तिः सर्वानर्थनुतिस्तथा । सर्वेषां प्राणिनामेतत्स्वत इष्टं प्रयोजनम् ॥९५॥**
**आत्मनस्तत्त्वमेतच्च सिद्धं चैतन्यवद्यतः । अथैष यो वै भूमेतिश्रुतिमानानुभूतितः ॥९६॥**
**स्वर्गशब्दाभिधश्चायं पुमर्थो यो यथोदितः । स्वर्गमित्यादिभिर्वाक्यैस्त्रय्यन्तेष्वपि गीयते ॥९७॥**

तस्येति । तस्येत्यादिभाष्येण काण्डयोर्नियतपौर्वापर्यकृतं संबन्धं प्रतिज्ञाय तदर्थमेव सिद्धेऽर्थे वेदान्तप्रामाण्यं सर्वोऽपीत्यादिना प्रसाध्य विद्याधिकारिसौलभ्यं च प्रामाण्योपयोगित्वेन सर्वपुरुषाणामित्यादिनोक्त्वा परकीयकार्ये च वेदप्रामाण्यं दृष्टविषयेत्यादिना निराकृत्य न चासतीत्यादिना परैरपि सिद्धेऽर्थे वेदप्रामाण्यस्यैष्टव्यत्वाद्युक्तं वेदान्तानां स्वार्थनिष्ठत्वमिति प्रतिष्ठाप्य पूर्वत्र कः संबन्धः काण्डयोरिति योऽन्तर्गर्भितः प्रश्नस्तस्य कर्मभिः शुद्धबुद्धेर्वैराग्यादिद्वारा ज्ञानोत्पत्तिः संबन्ध इति निर्णयः कर्तव्यस्तदर्थं सर्वथाऽपीत्यादिभाष्यमित्यर्थः ॥१०९२॥

पुमर्थोपायविशेषार्थिनस्तज्ज्ञापनार्थं कर्मकाण्डमारब्धं चेत्तत्रोक्तकर्मभिरेवाभीष्टपुमर्थसिद्धेर्वेदान्तारम्भवैयर्थ्यान्न संबन्धोक्तिः सावकाशेति शङ्कते—नन्विति । इष्टानिष्टाप्तिहानिहेतुविशेषार्थिनस्तज्ज्ञापनाय कर्मकाण्डारम्भो यथोक्तोऽर्थस्तस्मिन्सिद्धे सति वेदान्तारम्भे हेत्वदृष्टेस्तदारम्भो वृथेत्यक्षरार्थः । पूर्णपुरुषार्थलाभार्थं तदारम्भमाशङ्क्याऽऽह—कृत्स्नेति । कर्मकाण्डोक्तकर्मभिरेव पूर्णपुरुषार्थलाभादनारभ्यं ज्ञानकाण्डमित्यर्थः ॥१०९३॥

न त्वात्मन इत्यादिभाष्यमुत्तरत्वेन व्याचष्टे—नैतदिति । सुखं मे स्याद्दुःखं मा भूदिति सुखदुःखाप्तिहानीच्छाहेतुरात्माज्ञानं तस्य कर्मकाण्डोक्तकर्मभिरेव पूर्वमनिषिद्धत्वात्तद्धानार्थं ज्ञानसिद्धये वेदान्तारम्भो युक्तो नहि कर्माण्यज्ञानाविरोधीन्यज्ञानं साक्षादेव क्षपयन्ति । अतो वाच्यः संबन्धोऽपि काण्डयोरित्यर्थः ॥१०९४॥

ननु कथं सुखाप्त्यादाविच्छा नहि विना हेतुं कार्यमस्ति न च तत्राज्ञानमेव हेतुः कर्मादेरपि संभवात्तत्राऽऽह—निःशेषेति ॥१०९५॥

दर्शितफलाभिलाषित्वस्याशेषजनसाधारण्येऽपि न तत्र प्रत्यगज्ञानं हेतुरन्यस्य शङ्कितत्वादित्याशङ्क्याऽऽह—आत्मन इति । सर्वेष्टमुभयविधं फलमात्मनः स्वरूपत्वेन चैतन्यवन्नित्याप्तं न चाऽऽप्ते स्वारस्येनेच्छा तेन तत्राज्ञानमेवोपादानं कर्मादि निमित्तमिति भावः । फलस्य हेत्वधीनत्वात्कथं तदात्मनस्तत्त्वमित्याशङ्क्य साध्यत्वमौपचारिकमिति मत्वोक्तं फलमात्मनस्तत्त्वमित्यत्र मानमाह—अथेति । अथैष एव परम आनन्द एषोऽस्य परम आनन्द एष ह्येवाऽऽनन्दयाति यो वै भूमा तत्सुखमित्यादिश्रुतेः सुखमात्मा[1] परप्रेमास्पदत्वाद्घटवदित्यनुमानात्सौषुप्तानुभवतश्चाऽऽत्मनो द्विविधं फलं स्वरूपसिद्धमित्यर्थः ॥१०९६॥

स्वर्गशब्दोऽप्यात्मनो वाचकस्तस्य यथोक्तफलत्वं गमयतीत्याह—स्वर्गेति । यो हि प्रत्यगात्मा स्वप्रकाशत्वाद्द्वयत्वाद्युक्तं रूपमनतिक्रम्य स्थितः स स्वर्गशब्दवाच्यत्वादुभयविधफलस्वभाव इत्यर्थः । स्वर्गकामादिवाक्ये स्वर्गशब्दस्यार्थान्तरे प्रयोगवदात्मनि प्रयोगो न भाति तत्कुतोऽस्य स्वर्गशब्दवाच्यतेत्याशङ्क्याऽऽह—स्वर्गमिति । स्वर्गं लोकमित ऊर्ध्वं विमुक्ताअहरहर्वा एवंवित्स्वर्गं लोकमेत्यनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठतीत्यादिवाक्यैर्वेदान्तेष्वात्मा स्वर्गशब्देनानतिशयपुमर्थो विवक्षितस्तदन्यत्रेवाऽऽत्मन्यपि प्रयोगदर्शनादात्मनि प्रयोगादृष्टिरसिद्धेत्यर्थः ॥१०९७॥

१. सुखमात्मा—इत्यनुमाने घटदृष्टान्तः व्यतिरेकदृष्टान्ततया ।

स्वर्गरूपमोक्षस्य कर्मैव साधनमिति पूर्वपक्षः

स्वर्गं पुमर्थमुद्दिश्य सर्वप्राणभृतामियम् । वाङ्मनःकायचेष्टा स्याद्याऽपि तत्साधनोपगा ॥९८॥

उक्तशंकापरिहारः

उत्पत्त्याद्यर्थनिष्ठानां सर्वेषामपि कर्मणाम् । स्वर्गे नैवाधिकारोऽस्ति तस्य सिद्धत्वतः स्वतः ॥९९॥

स्वात्मसाध्यातिरेकेण सर्वमेव हि साधनम् । नालं साध्यान्तरायेह किम्वसाध्यार्थसिद्धये ॥११००॥

यथोक्तपुरुषार्थस्य यद्यप्याप्तस्वभावता । आत्मस्वभावतो नाऽऽप्तिस्तथाऽप्यज्ञानहेतुतः ॥ १ ॥

अविद्याव्यवधानस्य नाऽऽत्मज्ञानातिरेकतः । प्रध्वस्तिः कर्मभिः कर्तुं शक्या तेषाममानतः ॥ २ ॥

व्यञ्जकं विरहय्यान्यत्साधनं कारकात्मकम् । तदभिव्यक्तये नालं स्वतःसिद्धस्य वस्तुनः ॥ ३ ॥

कर्मभिर्नापनीतोऽतः प्रत्यङ्मोहोऽप्रमाणतः ॥ ४ ॥

यावद्धि तन्नापनीयते इति भाष्यार्थः

यावच्च सम्यग्विज्ञानवह्निनाऽसौ न दह्यते । न तावत्किंचिदप्याप्तं सुखं दुःखविवर्जितम् ॥ ५ ॥

नालं विमुक्तये काम्यं यदि नाम तथाऽपि तु । पुंसो वैराग्यहेतुत्वादुपकार्येव तन्मतम् ॥ ६ ॥

द्विविधोऽपि पुमर्थः स्वर्गश्चेत्कर्मभिरेव तत्सिद्धिः स्वर्गोद्देशेन यागादिविधानादतो नार्थो वेदान्तारम्भेणेत्याशङ्क्यते—स्वर्गमिति । सर्वेषामप्यधिकृतानामुक्तं स्वर्गमुद्दिश्य त्रिविधप्रवृत्तिदर्शनात्प्रवृत्तिसाध्यापूर्ववशादेव तत्सिद्धेर्नार्थो वेदान्तारम्भेणेत्यर्थः । मोक्षहेतुज्ञानयोगिश्रवणादिचेष्टया ज्ञानद्वारा मोक्षार्थं वेदान्तारम्भमाशङ्क्य तयाऽपि स्वर्गस्यैव सिद्धेस्तस्य मोक्षत्वात्तस्य च कर्मभिरेव लाभान्न वेदान्तारम्भोऽर्थवानित्याह—याऽपीति ॥१०९८॥

उत्पत्त्याप्तिविकृतिसंस्कृतीनामन्यतमहेतवः सर्वाणि कर्माणि तेषां कूटस्थनित्यानतिशयानन्दात्मनि स्वर्गे न व्यापारस्तस्य स्वतःसिद्धत्वेनासाध्यत्वात्स्वर्गाभासे तु व्यापारस्तेषामिति परिहरति—उत्पत्त्यादीति ॥१०९९॥

मुख्यस्वर्गस्यासाध्यत्वं कैमुतिकन्यायेनाऽऽह—स्वात्मेति । इहेति साध्यसाधनव्यवहारभूमिरुक्ता । साधनं हि सर्वमेव स्वसाध्यमर्थं साधयति न तु तदतिरेकेण साध्यान्तरसिद्धये प्रभवत्यसाध्यस्य पुनरर्थस्य मुख्यस्वर्गस्य सिद्धये साधनमशक्तमिति किमु वक्तव्यमित्यर्थः ॥११००॥

कर्मासाध्यत्वेऽपि यथोक्तपुमर्थात्मकस्वर्गस्याऽऽत्मत्वेनाऽऽप्तत्वाद्धेत्वनपेक्षत्वात्कृतं वेदान्तारम्भेणेत्याशङ्क्याऽऽह—यथोक्तेति ॥११०१॥

अज्ञानादुक्तपुमर्थानाप्तावपि कर्मभिरेव तन्निवृत्तेरलं वेदान्तारम्भेणेति चेन्नेत्याह—अविद्येति । कर्मणामतद्ध्वंसकत्वे हेतुमाह—तेषामिति ॥११०२॥

अमानत्वेऽपि कर्मणां वस्तुव्यञ्जकत्वादालोकवदज्ञानतमोनिवर्तकत्वमित्याशङ्क्य हेत्वसिद्धिमाह—व्यञ्जकमिति । कारकात्मकं कर्म हित्वाऽन्यत्साधनमक्षादिव्यञ्जकं कर्मणि व्यञ्जकत्वादृष्टेरित्यक्षरार्थः । हन्ताक्षादिरेवाऽऽत्मानं व्यञ्जयंस्तदज्ञानं निरसिष्यत्युपनिषदारम्भस्तु वृथेत्याशङ्क्याऽऽह—तदिति । अक्षादि सर्वनामार्थः । नहि तद्वस्तुनोऽभिव्यक्तये शक्तं तस्य स्वतःसिद्धस्य तत्साधकतया तदनपेक्षत्वादित्यर्थः ॥११०३॥

कर्मणामक्षादीनां चाऽऽत्माव्यञ्जकत्वे तदज्ञानानिवर्तकत्वं फलतीत्याह—कर्मभिरिति । अक्षादीनामुपलक्षणमेतत् । अतःशब्दार्थमाह—अप्रमाणत इति । प्रमाणत्वेऽपि न चक्षुषेत्यादिश्रुतेरक्षादीनामतद्गोचरत्वादित्यर्थः । तर्हि माऽज्ञानं निवर्तिष्ट सत्येव तस्मिन्कर्मणा मोक्षः स्यादित्याशङ्क्य यावद्धीत्यादिभाष्यतात्पर्यमाह—यावच्चेति । तत्त्वज्ञानादज्ञाननिवृत्त्यभावे सुखप्राप्तिर्दुःखोच्छित्तिश्चेत्येवंलक्षणो मोक्षो न सिध्यत्यज्ञाननिवृत्त्यनतिरेकात्तस्येत्यर्थः ॥११०४–११०५॥

कर्मणामज्ञानाध्वंसित्वेन साक्षान्मोक्षाहेतुत्वे तेषामत्यन्तानुपयोगो मुक्तावित्यननुष्ठेयतेत्याशङ्क्याऽऽह—

### काम्यस्यापि वैराग्यहेतुता

असह्यदुःखफलतः स्वकार्यविनिवृत्तिकृत् । विरक्तिहेतुतः कर्म प्रतिषिद्धं यथा तथा ॥ ७ ॥
अपि काम्यं कृतं सर्वं दुःखात्मकफलत्वतः । आविरिञ्च्यात्स्वकार्येभ्यः स्यादेव निर्निवृत्तये ॥ ८ ॥
इत्युक्तप्रतिपत्त्यर्थमाजगामोत्तरं वचः । एकवाक्यत्वमेवं च वेदस्य स्यादसंशयम् ॥ ९ ॥

### कर्मफलरागद्वेषादीति भाष्यार्थः

दक्षिणोदगधोगत्या प्रत्यगज्ञानमूढधीः । बम्भ्रमीत्यनिशं दुःखी पुमान्कर्मपुरःसरः ॥१०॥
काम्यैर्दक्षिणमन्वेति ज्ञानयुक्तैस्तथोत्तरम् । निषिद्धैश्चाप्यधोजन्म कर्मसंभारसंभृतः ॥११॥
धर्माधर्मांशसाम्ये च मनुष्यत्वं प्रपद्यते । ब्रह्माद्या स्थावरान्तैवं प्रत्यगज्ञानहेतुजा ।
नामरूपेहचित्राऽऽद्या स्वप्नमायेन्द्रजालवत् ॥१२॥
धर्माधर्माद्युपादानसाधना नश्वरी गतिः ॥१३॥
व्याकृतं नामरूपाभ्यां यद्यपीदं श्रुतौ श्रुतम् । आत्मतत्त्वानभिव्यक्तेर्नाभिव्यक्तं तदुच्यते ॥१४॥

नालमिति। काम्यशब्देन नित्यादेरपि ग्रहः। एतावान्वै काम इति श्रुतेः। कर्मणां साक्षान्मोक्षाहेतुत्वेऽपि चित्तशुद्ध्यादिद्वारा तदुपयोगितेत्यर्थः ॥११०६॥

ननु तत्तद्विध्युद्देशस्थं फलं हित्वा कथं कर्मणां वैराग्यहेतुतेत्याशङ्क्याऽऽह—असह्येति। यथा निषिद्धं हननादिकर्म श्वसूकराद्यात्मरूपसुदुःसहफलत्वान्निषेधशास्त्रार्थज्ञानवतस्ततो वैराग्यहेतुतया स्वयमननुष्ठीयमानं स्वफलात्पुंसो निवर्तकं तथा काम्यादिकमपि कर्म गर्भवासादिदुःखफलत्वात्तस्य पुंसो हिरण्यगर्भान्तफलेभ्यो वैराग्यहेतुत्वेन ससाधनकर्मत्यागद्वारा श्रवणादिपूर्वं सम्यग्ज्ञानमापाद्य मोक्षे पर्यवस्यतीत्यर्थः ॥११०७–११०८॥

सम्यग्धीरेव साक्षान्मोक्षहेतुर्न कर्म प्रनाड्या तु तदुपयोगीत्युक्तार्थपरं यावद्धीत्यादिभाष्यमिति निगमयति—इत्युक्तेति। कर्मणां शुद्ध्यादिद्वारा ज्ञानहेतुत्वं तस्यैव मुक्तिहेतुतेत्येवं संबन्धे सति काण्डयोरेकवाक्यत्वसिद्धिर्विधान्तरेण तदयोगस्योक्तत्वान्न चैकवाक्यत्वसंभवे तत्त्यागो युक्तोऽतस्तयोरेकवाक्यत्वार्थमुक्ता संगतिरुपेयेत्युक्तसंबन्धे प्रापकान्तरमाह—एकवाक्यत्वमिति ॥११०९॥

कर्मकाण्डस्य वैराग्यद्वारा मोक्षे प्रवेशं प्रदर्श्य वैराग्यार्थं कर्मफलं प्रपञ्चयन्कर्मफलरागद्वेषादीत्यादिभाष्यार्थमाह—दक्षिणेति। स्वाज्ञानादविवेकी कर्म करोति तेन त्रिविधगत्या सदा संतप्तमनाः संसरतीत्यर्थः ॥१११०॥

उक्तामेव गतिं विभजमानस्तत्र केवलमित्यादिभाष्यार्थमाह—काम्यैरिति। केवलैरिष्टादिभिरिति यावत्। दक्षिणं धूमाद्युपलक्षितं पितॄणां पन्थानमित्यर्थः। उत्तरमर्चिराद्युपलक्षितं देवयानमध्वानमित्यर्थः। अन्वेतीत्यन्वयार्थं तथेत्युक्तम्। चकारः समुच्चयार्थः। पूर्ववदन्वयार्थोऽपिशब्दः। कर्मसंभारसंभृत इत्यस्य सर्वत्र संबन्धः ॥११११॥

साम्ये चेत्यादिभाष्यं व्याचष्टे—धर्मेति। त्रिविधमपि कर्मफलं वैराग्यार्थं संक्षेपेणोपसंहर्तुमेवमित्यादिभाष्यं तद्विभजते—ब्रह्माद्येति। एषा हि संसारगतिरुक्तरीत्या निष्कृष्यमाणा ब्रह्माद्या स्थावरान्ता; सैवोत्कृष्यमाणा स्थावराद्या ब्रह्मान्ता सा च सर्वा स्वाविद्याजन्या नामादिभिर्विचित्रितत्वात्संप्रतिपन्नवदित्यर्थः। ईहनमीहश्चेष्टा कर्मेति यावत्। स्वयमेव तर्हि संसारगतिरज्ञानजत्वाद्गन्धर्वनगरवन्नङ्क्ष्यतीत्याशङ्क्य विशिनष्टि—आद्येति। तस्या नानाविधत्वं दर्शयन्नज्ञानजत्वे दृष्टान्तमाह—स्वप्नेति। ॥२११२॥

धर्माधर्मसाधनकृतेत्यस्यार्थमाह—धर्मेति। उपादानमनुष्ठानं साधनशब्दो निमित्तपरः। त्रिविधं कर्मफलमनर्थरूपमेवाविद्याकृतत्वादित्युक्तं तत्रैव हेत्वन्तरमाह—नश्वरीति। ननु संसारगतेराविद्यत्वमयुक्तं प्रत्यक्षादिसिद्धत्वा"त्तन्नामरूपाभ्यामेव व्याक्रियते"ति श्रुतौ च नामरूपात्मना जगतो व्यक्तिश्रवणान्न च प्रामाणिकस्याऽऽविद्यत्वोपपत्तिरित्याशङ्क्य तदेवेदमित्यादिभाष्यतात्पर्यमाह—व्याकृतमिति। प्रत्यक्षादिगम्यत्वमित्य-

अविद्यातिमिरोच्छित्तौ नानाविष्कृतमण्वपि । कार्यकारणवद्वस्तु नानपास्तं तमोऽप्यतः ॥१५॥
यत एवमतः प्रत्यग्याथात्म्यप्रतिपत्तये । प्रारब्धेयं प्रयत्नेन वेदान्तोपनिषत्परा ॥१६॥

अश्वमेधोपासनस्य आरम्भे कथमयुक्तमिति शङ्का

यथोक्तफलसिद्ध्यर्थमारब्धोपनिषद्यदि । ब्रह्म वा इदमित्यादि कस्मान्नाऽऽरभ्यतेऽधुना ॥१७॥
येषामनधिकारोऽत्र ह्यश्वमेधक्रतौ भवेत् । इत एव तु विज्ञानात्तेषां तत्फलकीर्तनम् ॥१८॥
कर्मगोचरतैवात्र विज्ञानस्यापि चेन्मतम् । विकल्पश्रवणान्मैवं कर्मणा विद्ययाऽथवा ॥१९॥
यजते योऽश्वमेधेन यश्चैवं वेद तं क्रतुम् । फलं तुल्यं तयोर्युक्तं कर्मिणो विदुषस्तथा ॥२०॥
उपास्तेरपि कर्मत्वादश्वमेधक्रतोरिव । नातो धियोऽर्थवादत्वं तद्विधेर्नितरां न च ॥२१॥

नुज्ञायते। यद्यपीत्युक्तत्वात्तथाऽपीति वक्तव्यम्। जगतः स्वरूपमात्मा तत्राध्यस्तत्वात्तस्मादात्मतत्त्वेऽनभिव्यक्ते प्रत्यक्षादिना श्रुत्या च व्यक्तमिव दृश्यमानमपि तदव्यक्तमेवेति न तस्याऽऽविद्यत्वक्षतिरित्यर्थः ॥१११३–१११४॥

आत्मन्यव्यक्ते न कस्यचिद्व्यक्तिरित्युक्त्वा तस्मिन्व्यक्ते सर्वं व्यक्तं भवतीत्याह—अविद्येति। आत्मज्ञानात्तदज्ञानध्वस्तावपि न समस्तवस्तुव्यक्तिस्तदावरणस्य तमसः सत्त्वादित्याशङ्क्याऽऽत्माज्ञानस्यैव तमस्त्वान्मैवमित्याह—नेत्यादिना। आत्मज्ञानमतः शब्दार्थः ॥१११५॥

यस्मादात्मनि ज्ञाते सर्वपुरुषार्थसमाप्तिरज्ञाते सर्वानर्थाप्ति"रिह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिरि"ति श्रुतेस्तस्मादात्मज्ञानार्थत्वेन साधनचतुष्टयसंपन्नमधिकारिणमधिकृत्य वेदान्तारम्भः संभवतीत्येतस्माद्विरक्तस्येत्यादिभाष्यार्थमाह—यत इति। प्रारम्भस्य प्रयत्नो नामाधिकार्यादिसाहित्यम्। परेत्युषा वा अश्वस्येत्याद्या व्याचिख्यासितेति यावत्। अस्योपनिषत्पदस्य ब्रह्मविद्यार्थत्वव्यासेधार्थं वेदान्तविशेषणम् ॥१११६॥

एवमुपनिषदारम्भे समर्थिते "सत्युषा वा अश्वस्ये"त्यारभ्य तदारम्भमाक्षिपति—यथोक्तेति। ब्रह्मज्ञानं यथोक्तं फलं तदर्थमेवोपनिषदारब्धा चे"द्ब्रह्म वा इदमग्र आसीदि"त्यारब्धव्यं तस्मादारभ्य ब्रह्मज्ञानोक्तेः। उषा वा अश्वस्येत्यारभ्योपनिषदारम्भस्तु न युक्तः साक्षादत्र ब्रह्मविद्यानुक्तेरित्यर्थः ॥१११७॥

अस्मादारभ्योपनिषदारम्भेऽभीष्टं फलमभिधित्समानः प्रथममश्वमेधोपासनफलवाचिनोऽस्य त्वित्यादिभाष्यस्यार्थमाह—येषामिति। अश्वमेधानधिकारिणां ब्राह्मणादीनां तत्फलार्थिनामस्मादेवोपासनात्तदाप्तिरिति मत्वा श्रुतौ तदुपासनोक्तिरित्यर्थः ॥१११८॥

कर्मविषयत्वमित्यादिचोद्यभाष्यं विभजते—कर्मेति। अश्वमेधे यदुपासनं तस्याप्यश्वादिवत्तच्छेषत्वेन पुरुषार्थत्वान्न पृथक्फलत्वमङ्गेषु स्वतन्त्रफलाभावादित्यर्थः। क्रत्वर्थमिदं ज्ञानं न पुमर्थमित्ययुक्तमश्वमेधेन कर्मणा तदुपास्त्या वा फलमिति विकल्पश्रुतेरतस्तुल्यफलत्वात्फलवत्त्वं विद्याकर्मणोः सममिति भाष्यस्थं नञर्थं वदन्नुत्तरमाह—विकल्पेति ॥१११९॥

"सर्वं पाप्मानं तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेदे"ति भाष्योक्तां विकल्पश्रुतिमुदाहरति—यजत इति। एवमित्यनुष्ठानक्रमपरामर्शः। तमित्यश्वमेधोक्तिः। सति विकल्पश्रवणे फलितमाह—फलमिति ॥११२०॥

उपास्तिफलश्रुतेरर्थवादत्वमाशङ्क्य विद्याप्रकरणे चेत्यादिभाष्येण परिहरति—उपास्तेरिति। अश्वमेधवदुपास्तेरपि कर्मत्वाद्विहितत्वाच्च फलश्रुतेर्नार्थवादतेत्यर्थः। धियः फलश्रुतेरित्यध्याहारः। न च य एवं वेदेति विहितस्याप्युपासनस्य प्रयाजादिसाम्यं विकल्पश्रुत्या क्रतुतुल्यत्वदृष्टेरित्यतःशब्दार्थः। तद्विधेस्तस्या उपास्तेर्य एवं वेदेति विधानादिति यावत्। हेतुद्वयकृतो विनिश्चयो नितरामित्युक्तः ॥११२१॥

एतावदेव चेदत्र भवतैवं विवक्षितम् ॥२२॥
प्रयोजनं तत्सुकरं विध्युद्देशेऽपि भाषितुम् । विद्याप्रकरणे तस्य त्वाम्नायः किमितीर्यताम् ॥२३॥
सोऽपि ज्ञानेन संयुक्तो हयमेधो महाक्रतुः । संसारफल एवेति प्रवृत्त्यङ्गतयोच्यते ॥२४॥
प्रत्यग्बोधातिरेकेण साधनान्तरनिःस्पृहाः । निर्ज्ञाताशेषकर्मोत्थफलफल्गुत्वबुद्धयः ॥२५॥
मुमुक्षवः प्रवर्तेरन्कथं नामाऽऽत्मवेदने ॥२६॥
संसारफलता काममस्तु काम्यस्य कर्मणः । नित्यानामफलत्वात्तु मुक्तिरेवास्तु तत्फलम् ॥२७॥
न ह्युत्सर्गेण सर्वेषां फलवत्त्वस्य संभवात् । कर्मणा पितृलोकादि नित्यानामेव तत्फलम् ॥२८॥
फलवत्त्वे हि नित्यानां काम्यत्वमिति चेन्मतम् । नैवं शुद्धिप्रमाणत्वाद्भोगनिष्ठस्य काम्यता ॥२९॥
काम्येऽपि शुद्धिरस्त्येव भोगसिद्धयर्थमेव सा । विड्वराहादिदेहेन न ह्यैन्द्रं भुज्यते फलम् ॥३०॥

उक्तमश्वमेधोपासनं न क्रत्वर्थं किंतु पुरुषार्थं तत्र चाधिकारोऽश्वमेधक्रत्वनधिकारिणामपीत्येतावदेव चेदिष्टमेवं सत्यस्मिन्नुपासने कर्मप्रकरणस्थेऽपि त्वदिष्टं सर्वं सुकरमेव वक्तुमतोऽत्र विद्याप्रकरणे नास्याध्ययनं युक्तमिति चोदयति—एतावदिति ॥११२२–११२३॥

सर्वेषां चेत्यादिभाष्येणोत्तरमाह—उच्यत इति । उच्यतेऽशेषयज्ञानां क्रतुराडेष उच्यते । सर्वप्रायश्चित्तत्वं सर्वभेषजत्वं सर्वपापनिवर्तकत्वमित्यादिविभूतिश्रुते"र्ब्रह्महत्याश्वमेधाभ्यां न परं पुण्यपापयोरि"ति स्मृतेश्चास्य क्रतुमुख्यत्वमवधेयमित्यर्थः । अश्वमेधस्य पुण्यकर्मश्रेष्ठत्वेऽपि प्रकृते किमायातं तदाह—सोऽपीति । उपास्तियुक्तस्याश्वमेधस्य महत्त्वे तस्यैव मोक्षहेतुत्वमन्यथा महत्त्वानुपपत्तेरित्याशङ्क्याऽऽह—संसारेति । "अशनाया हि मृत्युः" "स वै नैव रेमे" "सोऽबिभे"दिति भयारत्यादिश्रवणादुपास्तियुक्तक्रतुफलस्य सूत्रस्य बन्धमध्यपातित्वाद्विशिष्टोऽपि क्रतुर्न मुक्तये पर्याप्नोति महत्त्वं च क्रत्वन्तरापेक्षया फलातिरेकादिति भावः । तथाऽपि किमिति विद्यारम्भे बन्धफलत्वमस्योच्यते तत्राऽऽह—प्रवृत्तीति ॥११२४॥

कथमस्य बन्धफलत्वकथनं विद्यायां मुमुक्षुप्रवृत्तावुपयुज्यते तत्राऽऽह—प्रत्यगिति । ननु स्वर्गादिष्वभिलाषसंभवात्तद्धेतुषु वैदिककर्मस्वपि स्पृहाराहित्यायोगात्कथं साधनान्तरनिःस्पृहत्वं तत्राऽऽह—निर्ज्ञातेति ॥११२५॥

तर्हि स्वर्गादाविव मोक्षेऽपि न स्पृहा वैदिकफलत्वाविशेषात्कुतो विद्यायां प्रवृत्तिस्तत्राऽऽह—मुमुक्षव इति । निश्चयेन ज्ञातानामशेषवैदिककर्मणां यानि फलानि तेषां फल्गुत्वमल्पीयस्त्वं तद्विषया बुद्धिर्येषां विवेकिनामनुमानागमाभ्यामुत्पद्यते ते यदा क्रतुप्रधानस्याश्वमेधस्योपासनसहितस्यापि संसारफलत्वं तदा स्वल्पीयसामग्निहोत्रादीनां किं वाच्यं संसारफलत्वमित्यभिसंधायास्मिन्कर्मराशौ बन्धहेतावनभिलाषिणः सन्तः साधनचतुष्टयविशिष्टा ज्ञानमपेक्षमाणास्तदुपाये श्रवणादावेव सर्वकर्मसंन्यासपूर्वके कथं प्रवर्तेरन्नित्याशयवती श्रुतिरुपासनां विद्यारम्भेऽभिदधौ । तेनोषा वा अश्वस्येत्यारभ्योपनिषदारम्भः संभाव्यतेऽस्य विशिष्टाधिकारिसमर्पकत्वादिति भावः । उक्ते सर्वकर्मणां बन्धफलत्वे नित्यनैमित्तिकानां न तत्फलत्वं तेषां विध्युद्देशे फलाश्रुतेर्मुक्तिफलत्वभावादिति चोदयति—संसारेति ॥११२६–११२७॥

न सर्वकर्मेत्यादिभाष्यतात्पर्योक्त्या परिहरति—न हीति । एतावान्वै काम इति सर्वकर्मणामविशेषेण फलश्रवणात् पश्चादेश्च काम्यफलत्वश्रुतेः कर्मणा पितृलोक इति श्रुतं फलं नित्यादिकर्मणामस्त्वतस्तेषां न मोक्षफलत्वाशङ्केत्यर्थः । पितृलोकादीत्यादिपदेन तद्यथाऽऽम्रस्मृतिप्रसिद्धं फलं गृह्यते ॥११२८॥

नित्यादेरपि फलवत्त्वे चित्रादिवत्काम्यत्वादकरणे प्रत्यवायो न स्यादिति शङ्कते—फलवत्त्वे हीति । तद्वत्त्वमात्रेण न सांकर्यमित्याह—नैवमिति । फलवत्त्वेऽपि पापक्षयप्रधानं नित्यादि भोगप्रधानं काम्यमिति विभागः । नित्याद्यकरणं तु पूर्वसंचितदुरितद्योतीति भावः ॥११२९॥

शुद्धिप्रधानत्वादिति वदता काम्येऽप्यानुषङ्गिकी साऽभ्युपगताऽन्यथा प्रधानपदविरोधात्तदाह—काम्येऽपीति । साऽपि नित्यादिनिमित्तशुद्धिवद्विद्योपयोगिनीत्याशङ्क्याऽऽह—भोगेति । एवकारो भोगप्रतिबन्धकत्व-

नित्येषु शुद्धेः प्राधान्याद्भोगोऽप्यप्रतिबन्धकः । भोगं भङ्गुरमीक्षन्ते बुद्धिशुद्ध्यनुरोधतः ।।३१।।
तमेतमित्यतश्चोच्चैर्वेदानुवचनादिना । विरक्ताः सर्वसंसाराज्जिज्ञासन्ते परं पदम् ।।३२।।
आरादेवोपकुर्वन्ति नित्यान्यात्मविशुद्धितः । आत्माज्ञानाविरोधित्वात्साक्षान्न त्वात्मबोधवत् ।।३३।।
त्यक्त्वा कर्माण्यतोऽसङ्गाः प्रत्यक्प्रवणबुद्धयः । अपास्तरागादिमला ईक्षन्ते ज्ञं स्वमात्मनि ।।३४।।
अतोऽशेषमहानर्थहेत्वात्माज्ञानहानिकृत् । प्रत्यग्याथात्म्यविज्ञानभास्करोदयहेतवे ।
आरब्धेयं प्रयत्नेन वेदान्तोपनिषत्परा ।।३५।।
शतानि दश चैकं च चत्वारिंशत्तथाऽष्ट च । श्लोकाः संबन्धभाष्येऽस्मिन्संख्याताः सख्ययाऽखिलाः ।।३६

## इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके सम्बन्धवार्तिकम्

व्यावृत्त्यर्थः । शुद्धेर्भोगार्थत्वमनुभवेन साधयति—विडिति । नहि वराहादिदेहे बुद्धिशुद्धिरस्त्यतो न तेन पुमानिन्द्रादिभोगमनुभवति । दैवेन तु देहेन प्रकृष्टशुद्धिमता तदुपभोगभागितेत्यर्थः । "यद्वा विविदिषार्थत्वमि"त्यत्रोक्तं न प्रस्मर्तव्यम् ।।११३०।।

नित्यादिकर्मणां पापक्षयात्फलान्तरोपगमे तद्भोगस्य शुद्धिप्रतिबन्धकत्वान्न सा ज्ञानमुत्पादयेदित्याशङ्क्याऽऽह—नित्येष्विति । तेषु पितृलोकादिभोगो भवन्नपि शुद्धेर्न प्रतिबन्धकस्तस्यास्तत्र प्राधान्यात्सा हि प्रधानं सती भोगमनुगुणीकरोतीत्यर्थः । ननु नित्यादिषु शुद्धिभोगयोरविशेषोऽस्तु शुद्धेः प्राधान्ये हेत्वदृष्टेरतो न तत्र शुद्धिर्भोगं भोगश्च शुद्धिं प्रतिबध्नीयात्तत्राऽऽह—भोगमिति । शुद्धिर्विवेकद्वारा भोगवैतृष्ण्यहेतुरित्यर्थः ।।११३१।।

ननु विरक्तानां स्वदेहधारणेऽपि निःस्पृहाणां श्रवणादिष्वप्रवृत्तेर्न विद्योत्पद्येतातो निःश्रेयसार्थिना वैराग्यं त्याज्यमत आह—तमिति । विविदिषावाक्यतात्पर्यतो विहितवेदानुवचनादिकर्मभिः शुद्धबुद्धेर्विवेकद्वारा सर्वतो विरक्तस्य स्वदेहादावप्यात्यन्तिकीमास्थामनास्थातुः शमादिसहितस्य मुमुक्षोर्ब्रह्म जिज्ञासोर्बाह्यार्थवैमुख्यद्वारेण श्रवणाद्युपस्थापयद्वैराग्यं मृग्यमित्यर्थः । नित्यादेः शुद्धिहेतुत्वमतःशब्दार्थः ।।११३२।।

दर्शितपरिपाट्या ब्रह्मविचारकारणत्वं कर्मणां वैराग्योपहारेणेष्टं चेन्मुक्तिहेतुत्वमेव तेषां किं नेष्यते तत्राऽऽह—आरादिति । आत्मशब्देन मनो गृह्यते । नित्यादीनामज्ञानप्रक्षयलक्षणे मोक्षे साक्षाज्ज्ञानवदुपकारित्वाभावे हेतुमाह—आत्मेति ।।११३३।।

यतो बुद्धिशुद्धिद्वारा प्रणाड्या कर्मणां मोक्षोपायत्वं न साक्षाज्ज्ञानवदतः शुद्धधियः ससाधनसर्वकर्मत्यागपूर्वके श्रवणादावधिकार इति फलितमाह—त्यक्त्वेति । कर्मत्यागे हेतुर्वैराग्यमिति सूचयति—असङ्गा इति । ये त्वन्तरेण वैराग्यं कर्मत्यजस्तद्विमुखा ज्ञानं चाप्राप्यान्तराले तिष्ठन्ति ते सर्वपुरुषार्थबहिर्भूताः शिष्टैः स्प्रष्टुमप्ययोग्या इति भावः । विरक्तानां संन्यासिनां विद्योपायश्रवणादिषु यत्नाधेयां निष्ठामाह—प्रत्यगिति । तेषामेव समाधिसाधनसंपन्नतामाह—अपास्तेति । उक्तलक्षणमुमुक्षूणां स्वमहिमप्रतिष्ठकूटस्थप्रत्यक्तत्वसाक्षात्काराधिकारो न बहिर्मुखाणामिति गमयति—ईक्षन्त इति ।।११३४।।

यतस्तत्त्वज्ञानमेव केवलं कैवल्यहेतुरतस्तादर्थ्येनोपनिषदारम्भः संभवतीत्यतोऽस्मादित्यादिभाष्यं व्याख्यास्यन्नुपसंहरति—अत इति । वेदान्तार्थस्य विनोपदेशं दुर्दर्शत्वं दर्शयितुमुपनिषत्पर्यायस्तेषु प्रयुज्यते । नन्वतिरोहितार्था वेदान्ता नोपदेशमपेक्षेरन् । नैवमतिगहनार्थत्वेन तेषां व्याख्यानसापेक्षत्वादित्याह—परेति ।।११३५–११३६।।

संबन्धवार्तिकमहाम्बुधिरेष तीर्णः सत्संप्रदायपदवीकृतसेतुबन्धः ।
सत्तर्कमानलहरीगहनावगाहपूर्णेन पुण्यनिचयेन पुराचितेन ।।१।।

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां संबन्धवार्तिकम्

ॐ उषा वा अश्वस्य मेध्यस्य शिरः । सूर्यश्चक्षुर्वातः प्राणो व्यात्तमग्निर्वैश्वानरः सम्वत्सर आत्माऽश्वस्य मेध्यस्य । द्यौः पृष्ठमन्तरिक्षमुदरं पृथिवी पाजस्यं दिशः पार्श्वे अवान्तरदिशः पर्शव ऋतवोऽङ्गानि मासाश्चार्धमासाश्च पर्वाण्यहोरात्राणि प्रतिष्ठा नक्षत्राण्यस्थीनि नभो माँसानि । ऊवध्यँ सिकताः सिन्धवो गुदा यकृच्च क्लोमानश्च पर्वता ओषधयश्च वनस्पतयश्च लोमान्युद्यन्पूर्वार्धो निम्लोचञ्जघनार्धो यद्विजृम्भते तद्विद्योतते यद्विधूनुते तत्स्तनयति यन्मेहति तद्वर्षति वागेवास्य वाक् ॥१॥

तत्राश्वविषयं तावदादौ दर्शनमुच्यते । प्राजापत्यत्वहेतोश्चाप्यश्वनामाङ्कितत्वतः ॥ १ ॥
अश्वस्य यच्छिरः साक्षात्तदुषा इति चिन्तयेत् । हरेरवयवेष्वेवं योज्याः कालादिदृष्टयः ॥ २ ॥
संस्कार्यत्वात्पशोरेवं दृष्टीरङ्गेषु योजयेत् । कालादावमखाङ्गत्वान्नाश्वदृष्टिर्विधित्स्यते ॥ ३ ॥
सत्स्वश्वादिषु कालादिदृष्टीरङ्गेषु योजयेत् । असत्स्वात्मानमेवाश्वं कल्पयित्वा नियोजयेत् ॥ ४ ॥
कर्तारमश्वमग्निं च चित्यं सर्वं प्रजापतिम् । अश्वमेधफलं चार्कं वेत्ति मृत्युं यथोदितम् ॥ ५ ॥

वियदादिजगज्जालं जातमज्ञानतो यतः । तदस्मि नामरूपेहाविरहि ब्रह्म निर्भयम् ॥१॥

एवमुपनिषदारम्भे स्थिते प्राथमिकब्राह्मणयोरवान्तरतात्पर्यमाह—तत्रेति । आदौ ब्राह्मणाभ्यामश्वमेधोपासनमुच्यते । तत्राप्याद्येनाश्वमेधविषयं ग्रहविषयं च दर्शनं द्वितीयेनाग्निविषयमिति भेदः । नन्वश्वमेधस्याङ्गबाहुल्ये कस्मादश्वाख्याङ्गविषयमेवोपासनमुच्यते तत्राऽऽह—प्राजापत्यत्वेति । अश्वस्य प्रजापतिदेवताकत्वादश्वमेधक्रतोश्चाश्वनाम्ना व्यावर्तितत्वात्तत्प्राधान्यादितराङ्गत्यागेनाश्वदर्शनमेवाऽऽदावुक्तमित्यर्थः ॥१॥

ब्राह्मणतात्पर्यं संक्षिप्याक्षराणि व्याकुर्वन्नुषा वा अश्वस्य शिर इत्यस्यार्थमाह—अश्वस्येति । आश्वमेधिकाश्वशिरस्युषसो मुहूर्तविशेषस्य दृष्टिः कार्येत्यर्थः । साक्षादित्यभेदेन दृष्टिमाचष्टे । सूर्यश्चक्षुरित्यादेरर्थं संक्षिपति—हरेरिति । अश्वस्य शिरस्युषसो दृष्टिवत्तस्यैव शरीरे सूर्यश्चक्षुरित्यादिषु संवत्सरादित्यादिदृष्टयः कार्या इत्यर्थः ॥२॥

कालादिदृष्टिरश्वाङ्गेषु किमिति क्षिप्यतेऽश्वाङ्गदृष्टिरेव तेषु किं न स्यादित्याशङ्क्याऽऽह—संस्कार्यत्वादिति । एवमिति श्रुतिभाष्ययोरुक्तं क्रममाह । आदित्यादिमतयश्चाङ्ग उपपत्तेरिति न्यायेन व्यावर्त्यमाह—कालादाविति ॥३॥

येषामश्वमेधे नाधिकारस्तेषामस्मादेव ज्ञानात्तत्फलप्राप्तिरित्युक्तत्वादश्वमेधानधिकृतानामेव प्रकृतोपास्तिरित्याशङ्क्याऽऽह—सत्स्विति । अङ्गेष्वश्वावयवेषु शिरःप्रभृतिषु योजयेदश्वमेधाधिकारीति शेषः । आत्मशब्दो देहविषयः । नियोजयेदश्वमेधानधिकारी स्वावयवेषु कालादिदृष्टीरिति योजना ॥४॥

अश्वग्रहाग्नीनामुपासनान्यत्रोच्यन्ते तानि मिथो भिन्नानीति वाक्यभेदमाशङ्क्याऽऽह—कर्तारमिति । अश्वमेधे यजमानमश्वं च कालादिदृष्ट्यास्पदं चित्यं चाग्निमर्कशब्दितं प्रजापतिं मृत्युशब्दवाच्यं सूत्राख्याश्वमेधफलं च यथोदितं सर्वदेवतात्मकं सर्वं प्रजापतिं यो वेत्ति स क्रतोरकर्ता ब्राह्मणो वैश्यश्च क्षत्रियश्च शास्त्रार्थे विवेकी

१. प्राजापत्यत्वहेतोः—"अश्वस्तूपरो गोमृगः ते प्राजापत्याः" इत्यनेन प्रजापतिदेवताकयागे द्रव्यतया अश्वविधानादित्यर्थः ।

२. अङ्गेषु दृष्टीः विधत्ते—न तु सूर्ये चक्षुर्दृष्टिः अङ्गानामुपासनया संस्कार्यत्वात् सूर्यादीनां यागानङ्गत्वात् । तदुक्तं—आदित्यादिमतयश्चाङ्ग उपपत्तेः इति ( ब्र० सू० ४-१-६ ) उद्गीथे आदित्यदृष्टिः कर्तव्या न विपरीतमित्यर्थः ।

अकर्ता[1]ऽप्यश्वमेधस्य ब्राह्मणश्चेह बुद्धिमान् । क्रत्वात्मा मृत्युरस्मीति तादात्म्यं सोऽधिगच्छति ॥ ६ ॥

अहर्वा अश्वं पुरस्तान्महिमाऽन्वजायत तस्य पूर्वे समुद्रे योनी रात्रिरेनं पश्चान्महिमाऽन्वजायत तस्यापरे समुद्रे योनिरेतौ वा अश्वं महिमानावभितः सम्बभूवतुः । हयो भूत्वा देवानवहद्वाजी गन्धर्वानर्वाऽसुरानश्वो मनुष्यान्समुद्र एवास्य बन्धुः समुद्रो योनिः ॥२॥

इति प्रथमाध्यास्य प्रथमं ब्राह्मणं समाप्तम् ॥१॥

द्वितीयकण्डिकावार्तिकम्

अश्वसंज्ञपनात्पूर्वं तथोर्ध्वं चापि हाटक— । राजतात्मकपात्राभ्यां गृह्येते तत्र यौ ग्रहौ ॥
महिमाख्यौ तयोरेतदहर्वा इति दर्शनम् ॥ ७ ॥
व्यत्ययेनावबोद्धव्या प्रथमार्थे च सप्तमी ॥ ८ ॥
समुद्र ईश्वरो ज्ञेयो योनिः कारणमुच्यते । सर्वस्य जगतो यस्मादीश एवेह कारणम् ॥ ९ ॥

इति बृहदारण्यकोपनिषद्भाष्यवार्तिके प्रथमं ब्राह्मणम्

नैवेह किञ्चिनाग्र आसीन्मृत्युनैवेदमावृतमासीदशनायया । अशनाया हि मृत्युस्तन्मनोऽकुरुताऽऽत्मन्वी स्यामिति । सोऽर्चन्नचरत्तस्यार्चत आपोऽजायन्तार्चते वै मे कमभूदिति तदेवार्कस्यार्कत्वं कँ ह वा अस्मै भवति य एवमेतदर्कस्यार्कत्वं वेद ॥१॥

क्रतुतद्धेतुफलात्मा मृत्युरेवाहमिति जानन्मृत्युतादात्म्यं सौत्रं पदमधिरोहति । तथा चेदमेकं फलमेकमेवोपासनमिति वाक्याभेद इत्यर्थः ॥५–६॥

अश्वविषयं दर्शनमुक्त्वाऽहरित्यादेरर्थमाह—अश्वेति । इत्थंभावे तृतीया । ग्रहो हवनीयद्रव्ययुक्तपात्रविशेषः । तयोर्ग्रहो मन्त्रसंस्कृतयोरुपादानम् । तत्रेत्यश्वमेधोक्तिः ॥७॥

पूर्वे समुद्र इत्यादौ सप्तमीचतुष्टयस्यार्थाभावमाशङ्क्याऽऽह—व्यत्ययेनेति । समुद्र एवास्येत्यादौ समुद्रशब्दार्थं भाष्योक्तमाह—समुद्र इति । समुत्पद्य भूतानि द्रवन्त्यस्मिन्निति व्युत्पत्त्याऽतिगम्भीरस्येश्वरस्य समुद्रशब्दतेत्यर्थः । समुद्रो योनिरित्यत्र योनिशब्दार्थमाह—योनिरिति । बन्धुशब्दस्याप्ययमेवार्थः । तत्र योनित्वमुत्पादकत्वं बन्धुत्वं स्थापकत्वं समुद्रता विलापकत्वमिति भेदः । प्रधानादिकारणमाशङ्क्य श्रुतिविरोधेन निरस्यति—सर्वस्येति । शास्त्रमिहशब्दार्थः तस्मान्न प्रधानादिशङ्केति शेषः । परस्य सर्वकारणतया श्रौतत्वादश्वेऽपीश्वरकारणत्वदृष्टिः कार्येति भावः ॥८–९॥

इति बृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायामश्वमेधोपासनब्राह्मणं प्रथमम् ॥१॥

---

१. अश्वमेधस्य सार्वभौमक्षत्रियाधिकारिकत्वात् तदतिरिक्तैः स्वशरीरमेवाश्वं प्रकल्प्य तत्र दृष्टिविधानमित्यर्थः । अश्वमेधे "अश्वस्तूपरो गोमृगस्ते प्राजापत्याः" इत्युक्तत्वेन प्रजापतये देया अश्वादयः । अश्वमेधस्य सोमयागत्वात् आग्रयणोक्थ्यग्रहग्रहणमध्यकाले महिमाख्यौ द्वौ ग्रहौ महत्वकामस्य विहितौ । तदुक्तं—यःकामयेत महान् अन्नादः स्यामिति स एतौ महिमानौ गृह्णीत—इति । तयोरेकः सौवर्णः अपरः राजतः तयोर्यथाक्रममश्वस्य पुरस्तात्पश्चाच्च स्थापनं, वपाहोमात्पूर्वं सौवर्णस्य होमस्ततः परं राजतस्येति विशेषः श्रौतसूत्रेषु ।

अथाग्नेरुच्यते[1] जन्म हयमेधोपयोगिनः । तद्दर्शनविधित्सायै स्तुत्यर्थोत्पत्तिरिष्यते ॥ १ ॥

घटभाष्यवार्तिकम् । कार्यकारणयोर्द्वयोरपि सृष्टेः प्रागसत्त्वपूर्वपक्षः

नामवद्रूपवच्चेह कारणं यावदीक्ष्यते । नाभूत्तत्प्राक्समुत्पत्तेः प्राणाद्युत्पत्तिसंश्रवात् ॥ २ ॥

कार्यमुत्पत्तिमत्त्वाच्चेत्प्रागुत्पत्तेर्निषिध्यते । कारणस्य त्वनुत्पत्तेरनिषेधस्तथा सति ॥ ३ ॥

तथा चानुपलब्धेश्च कार्यस्यैवास्तु नास्तिता । कारणस्य न नास्तित्वमुक्तहेत्वोरसंभवात् ॥ ४ ॥

सर्वस्यानुपलब्धेस्तु मैवं वोचो यतः श्रुतिः । नैवेह किंचनेत्याह कारणेतरनिह्नुतिम् ॥ ५ ॥

सिद्धान्तः

नैवं यतः श्रुतिः साक्षात्सत्त्वमेवावदत्स्वयम् । कार्यकारणयोः स्पष्टं मृत्युनैवेति सादरा ॥ ६ ॥

मृत्युना कारणेनेदं कार्यं सर्वं समावृतम् । इति नावक्ष्यद्यद्येतदुभयं नाभवत्पुरा ॥ ७ ॥

प्राणपिण्डादिकार्याणां समुद्रः परमेश्वरः । बन्धुः कारणमात्मोक्तो मृत्युरत्र स एव तु ॥ ८ ॥

अश्वादिदर्शनोक्त्यनन्तरमग्निदर्शनं वक्तुं ब्राह्मणान्तरमवतारयति—अथेति । नैवेहेत्यादावग्निदर्शनोक्तिर्नास्तीति चेत्सत्यं तत्राग्नेर्जन्म वक्तुं भूमिका क्रियत इत्याह—अग्नेरिति । वायोरग्निरित्यादौ सिद्धं तज्जन्मेति चेत्सत्यं तद्विशेषस्यात्र जन्मोक्तिरित्याह—हयमेधेति । दर्शने विधित्सिते किं जन्मोक्त्येति चेत्तत्राऽऽह—तद्दर्शनेति । अग्निदर्शनस्य विधातुमिष्टस्य विध्यर्थमुपास्याग्निस्तुतिफला तदुत्पत्तिरिष्टा शुद्धजन्मत्वादुत्कृष्टत्वेनायमुपास्यो राजादिवदित्यर्थः ॥१॥

तात्पर्यमुक्त्वा नैवेत्यादिवाक्याक्षराणि पूर्वपक्षानुगुण्येन योजयति—नामवदिति । इह संसारमण्डले कारणं कार्यं वा त्र्यात्मकं यत्किंचिद्दृश्यते तत्प्रागुत्पत्तेर्नैवाभूदिति वाक्यप्रामाण्यादेष्टव्यमित्यर्थः । कार्यस्य प्रागसत्त्वे हेत्वन्तरमाह—प्राणादीति । प्राणः सूक्ष्मः प्रपञ्चः । आदिशब्दः स्थूलप्रपञ्चार्थः । तस्योत्पत्तिरेतस्माज्जायते प्राण इत्यादौ श्रूयते । तथाच विमतं प्रागसदुत्पद्यमानत्वाद्यन्नैवं तन्नैवं यथा परेष्टं ब्रह्मेत्यर्थः ॥२॥

सिद्धसाध्यत्वेनासत्कार्यवादी दूषयति—कार्यमिति । कार्यस्य प्रागसत्त्वमिष्टमेव न च कारणस्य तथात्वं तस्य प्रागसत्त्वमुत्पत्तिमत्त्वाद्वा प्रागनुपलब्धेर्वा? नाऽऽद्यो हेत्वसिद्धेरिति भावः ॥३॥

द्वितीयं निराह—तथा चेति । उत्पत्तिमत्त्वेन कार्यस्यैव प्रागसत्त्ववत्प्रागनुपलब्धेरपि तस्यैवासत्त्वं कारणस्य तदाऽनुपलब्धेरसिद्धत्वात्प्रागपि घटाद्युत्पत्तेर्मृदाद्युपलम्भादित्यर्थः ॥४॥

सिद्धसाध्यतयाऽनुमाने कारणस्य च हेत्वभावादसत्त्वे दूषिते शून्यवाद्याह—सर्वस्येति । कार्यस्य प्रागसत्त्वेऽपि कारणस्य सत्त्वमित्ययुक्तं कार्यवत्तत्कारणस्यापि प्रागनुपलब्धेरविशेषादतः सर्वस्य प्रागसत्त्वं विमतं प्रागसद्योग्यत्वे सति तदाऽनुपलब्धत्वात्संमतवदित्यर्थः । असिद्धिनिरासार्थस्तुशब्दः । मृदादेरप्यभावावसानाच्छ्रुतावपि प्रागसत्त्वं कार्यकारणयोरुक्तमित्याह—यत इति ॥५॥

कार्यवत्कारणस्यापि प्रागसत्त्वे प्राप्ते सिद्धान्तयति—नैवमिति । नैवेत्यादिश्रुतिरव्यक्तनामरूपार्थविषया न प्रागसत्त्वं कार्यकारणयोराहेत्यर्थः । किंच यां श्रुतिमाश्रित्यासत्त्वं तयोरुच्यते सा स्वयमेवानन्तरवाक्यसहिता तयोः सत्त्वं ब्रूते । सा च तत्र तात्पर्यवत्यतात्पर्यहेत्वभावादतो यथा साक्षादध्यक्षेऽर्थे नाविश्वासस्तथा श्रौतं कार्यादिसत्त्वमतिस्पष्टत्वान्नाविश्वासार्हमित्याह—यत इति ॥६॥

यदि हीत्यादि श्रुतिविवरणभाष्यं[2] विवृणोति—मृत्युनेति । अत्र पूर्वार्धेन श्रुत्यक्षराणि व्याख्यातान्युत्तरार्धेनाभीष्टो वाक्यार्थ उक्तः । येनाऽऽव्रियते यच्चाऽऽव्रियते तदुभयं वक्ति च श्रुतिस्तस्मात्तत्प्रागपि सदेवेति शेषः ॥७॥

मृत्युना कारणेनेत्ययुक्तं मृत्युशब्दस्यार्थान्तरे रूढेरित्याशङ्क्याऽऽह—प्राणेति । सूत्रविराजोः समष्ट्योर्व्य-

१. अग्नेः चित्याग्नौ उपास्यस्य हिरण्यगर्भस्येत्यर्थः ।

२. सर्वत्र आनन्दाश्रमसंस्करणस्य पृष्ठपंक्तिसंख्या ग्राह्या–२१-५

ज्ञानमात्रसतत्त्वं यद्ब्रह्माज्ञातसतत्त्वकम् । मृत्युर्जनिमतः साक्षात्तत्र कार्याप्ययत्वतः ॥ ९ ॥
सद्बीजं सत्प्रतिष्ठं च सदायतनमेव च । प्रत्यक्षमेव सत्सिद्धं सदन्यस्याप्रसिद्धितः ॥१०॥

असतोऽप्रसिद्धिः

असत्सदतिरेकेण यदि वाऽव्यतिरेकतः । व्यतिरेके[1] सदेवासदसद्वा तत्किमुच्यते ॥११॥
नेह सद्व्यतिरेकेण स्वमहिम्ना प्रसिध्यति । सर्वस्य सदपेक्षत्वात्सत्तु नान्यदपेक्षते ॥१२॥
मतमव्यतिरेकेण सतोऽसत्सत्तदिष्यताम् । कुतोऽदो लभतेऽसत्त्वं यत्सदात्मनि निष्ठितम् ॥१३॥
अन्योन्यव्यतिरेकित्वान्नान्योन्यात्मकता तयोः । विरोधित्वाच्च नान्योन्यं संबन्धस्तापशीतवत्॥१४॥
स्फुरताऽपि सतो नान्यदभिधातुं घटादिवत् । शक्यते नाभिधानेन ह्यसद्वस्तु निरुच्यते ॥१५॥

ष्टीनां च कार्यान्तराणां जन्मादिहेतुरीश्वरः समुद्र एवास्य बन्धुरित्यादौ समुद्रपदेनोक्तः स एवास्मिन्वाक्ये मृत्युर्नान्यस्तस्य सर्वकार्यसंहर्तृत्वायोगाद्रूढेरवहेयत्वादित्यर्थः ॥८॥

कूटस्थचिद्धातोरीश्वरस्य कारणत्वायोगात्तस्यापि न मृत्युतेत्याशङ्क्याऽऽह—ज्ञानेति । साक्षादितिपदं सर्वत्र संबध्यते तत्र तत्र प्रमाणसत्त्वं च तदर्थः । मायावशाद्ब्रह्मणो जगद्धेतोर्मृत्युत्वे युक्तिमाह—तत्रेति ॥९॥

श्रुत्या कार्यकारणयोः सत्त्वमुक्त्वा तत्रैवाध्यक्षं दर्शयति—सद्बीजमिति । सकलमपि जगदुत्पत्तिस्थितिलयेषु सत्त्वाक्रान्तं सर्वस्य स्वानुभवसमधिगतमित्यर्थः । असतोऽप्रसिद्धेश्च न प्रागसत्वं कार्यादेरित्युपपत्तिमाह—सदन्यस्येति ॥१०॥

कथमप्रसिद्धिरिति चेत्तदर्थमसत्सतो भिन्नमभिन्नं वेति विकल्पयति—असदिति । भेदपक्षे दोषमाह—व्यतिरेक इति । भेदश्चेदसदपि सदेव स्याद्भेदधर्मित्वाद्घटवदित्यर्थः । असत्सदिति वदतो व्याहतिमाशङ्क्य भेदपक्षे नास्त्यसदित्यापादनावसानान्नैवमित्याह—असद्वेति ॥११॥

भेदपक्षमुपेत्य दोषमुक्त्वा तस्यैवानुत्थानमाह—नेहेति । सतः स्वतो भेदेन स्वसामर्थ्यादेव न किंचिज्जगति सत्तास्फूर्ती लभते सर्वस्य स्वरूपभूतसत्तापेक्षामन्तरेणासिद्धेरतः सदद्वैतमित्यर्थः । असदपोहत्वान्न सदप्यनपेक्षमिति कुतः सदद्वैतमित्याशङ्क्याऽऽह—सत्त्विति । नासदपोहः सत्त्वमन्योन्याश्रयात्[2] इति भावः ॥१२॥

कल्पान्तरमालम्बते—मतमिति । तर्हि सदभिन्नत्वादसदपि सदेव स्यादिति सदद्वैततादवस्थ्यमित्याह—सदिति । तदेवोपपादयति—कुत इति । तद्धि सदात्मनि निष्ठितं सदभिन्नमसदसत्त्वमेव नाऽऽप्नोति सद्वदित्यर्थः ॥१३॥

अभेदपक्षमुपेत्य दोषमुक्त्वा तस्यैवानुत्थानमाह—अन्योन्येति । न हि सदसतोस्तादात्म्यं सापेक्षत्वानपेक्षत्वाभ्यां मिथोभिन्नत्वदृष्टेरित्यर्थः । तयोरतादात्म्येऽपि संबन्धान्न सतोऽनाद्यनन्ततेत्याशङ्क्याऽऽह—विरोधित्वादिति ॥१४॥

असंबन्धे स्वतन्त्रे तर्हि सदसती स्तामतो न सदद्वैतमित्याशङ्क्याऽऽह—स्फुरतेति । सुशिक्षितेनापि घटादि न सतोऽन्यदुच्यते तुच्छत्वप्रसङ्गात्तद्वदसदपि न सतोऽन्यद्वक्तुं शक्यं सत्येव शब्दप्रत्ययप्रवृत्तेरित्यर्थः । ननु सतोऽन्यदसत्प्रसिद्धं अस्तिनास्तिशब्दधियोर्विषयभेदादिति; तत्र किमसत्तुच्छं किंवा वस्तुनोऽतिशयो नाऽऽद्य इत्याह—नेति । न ह्यसदभिधानेन निश्चित्योच्यते निःस्वरूपत्वाद्वस्त्वेव हि वाच्यं नास्तिशब्दप्रत्यययोरपि निःस्वरूपगोचरत्वमनिष्टमित्यर्थः ॥१५॥

---

१. व्यतिरेक इति—भेदपक्षे असदपि सदेव भेदाश्रयत्वात् । अपि चासतः सत्त्वेऽसच्छब्दस्य तज्ज्ञानस्य वा किमालम्बनं ? वदेत्यर्थः ( न्या० )

२. अन्योन्याश्रयादिति—असतः सद्भिन्नत्वं सतश्चासद्भिन्नत्वमित्युक्तौ ज्ञप्तावन्योन्याश्रय इत्यर्थः ।

वस्तुनोऽतिशयः कश्चिदभाववचसोच्यते । तस्य तेनाभिसंव्याप्तेर्न कथंचिदपह्नुतिः ॥१६॥

ध्वंसनिरासः

क्रिया वा तत्फलं वा स्यादभावो नाऽऽत्महेतुहा । यो यतो लभते सत्तां निरुणद्धि स तं कथम् ॥१७॥
न नाशो हन्ति नष्टारं गन्तारमिव तद्गतिः । यो यतो लिप्सते सिद्धिं स तं हन्ति कथं वद ॥१८॥
विज्ञानाव्यतिरेकी चेदभावः स्यात्सहेतुकः । ध्वंसादव्यतिरेकेऽपि धियो नित्यत्वमापतेत्[1] ॥१९॥
अतोऽभावत्वसिद्ध्यर्थमभावेनाप्यपेक्ष्यते । स्वहेतुसिद्धिः कार्योऽर्थो न दृष्टः कारणं विना ॥२०॥
धर्म्यसिद्धिः प्रतिज्ञायां हेतुश्चानाश्रयो भवेत् । न चास्ति कश्चिद्दृष्टान्तः सर्वशून्यत्ववादिनः ॥२१॥

शून्यवाद्युक्तदोषस्य विज्ञानवादेऽपि प्रसङ्गः

विज्ञानमात्रं यस्यापि जगदेतच्चराचरम् । प्रतिज्ञाहेतुदृष्टान्तैर्ज्ञानं तेनापि दूष्यते ॥२२॥

द्वितीयमालम्बते—वस्तुन इति । तत्र वाच्यत्वमसतः सिध्यति न वस्त्वभावोऽतिशयस्य तद्वता वस्तुना व्याप्तेरिति परिहरति—तस्येति ॥१६॥

अविशेषेणासन्निरस्य तद्विशेषं ध्वंसं निरस्यति—क्रियेति । ध्वंसो हि क्रिया वा तत्फलं वा? नोभयथाऽपि स्वहेतुं निवर्तयतीति यावत् । कथं नाशस्य स्वहेत्वनिवर्तकत्वं तदाह—यो यत इति । नाशस्य क्रियात्वे तत्फलत्वे च घटो हेतुरिति न तस्यासौ निवर्तको न हि घटस्य मृदादिनिवर्तकता दृष्टेत्यर्थः ॥१७॥

किंच नाशस्य क्रियात्वे तत्फलत्वे च न स्वहेतुनिवर्तकत्वं क्रियात्वात्तत्फलत्वाच्च गतिवत्तत्फलवच्चेत्याह—न नाश इति । अग्निवद्ब्रह्मधीवच्च स्वहेतुध्वंसित्वं नाशस्य किं न स्यादिति चेन्नेत्याह—यो यत इति । अग्न्यादिविलक्षणो हि नाशो घटाभावेऽपि स्थितेर्न हि काष्ठाद्यभावेऽग्निरज्ञानाभावे च ब्रह्मधीस्तिष्ठति । अतो घटस्योपादानत्वे नाशो न तन्निवर्तयेत्स्वस्थितिहेतुत्वेन तदपेक्षत्वान्न च घटस्य नाशनिमित्तत्वेन तन्निवर्त्यत्वं कुलालादेरपि घटनिवर्त्यत्वप्रसङ्गाच्छब्दादेः स्वहेतुनिवर्तकत्वं तु प्रक्रियामात्रमिति[2] भावः ॥१८॥

तार्किकमते ध्वंसं निरस्य विज्ञानवादिमतमनुवदति—विज्ञानेति । तत्र किमभावस्य विज्ञानेऽन्तर्भावस्तस्याभावे वा ? नाऽऽद्यो विज्ञानवदभावस्यापि हेतुमत्तया क्षणिकत्वापत्तेरित्याह—अभाव इति । उभयत्राभावपदं संबध्यते । द्वितीयमनूद्य दूषयति—ध्वंसादिति ॥१९॥

मा तर्हि तार्किकयोगाचारमते भूतां माध्यमिकसिद्धान्तेन तु सर्वस्य ध्वंससिद्धिरित्याशङ्क्यानुभवविरोधान्मैवमित्याह—अत इति । किंच सर्वाभावः कार्योऽकार्यो वा?आद्ये तद्धेतुसिद्धेः सर्वाभावासिद्धिरित्याह—अभावत्वेति । घटादिनेवेति दृष्टान्तार्थोऽपिशब्दः । अभावेनाभावत्वस्य स्वरूपस्य सिद्ध्यर्थं स्वहेतुसद्भावोऽपेक्षित इत्यत्र हेतुमाह—कार्य इति । यत्कार्यं तद्धेत्वपेक्षं यथा घटोऽभावस्यापि कार्यत्वे हेत्वपेक्षत्वान्न सर्वशून्यता हेतोः सत्त्वादन्यथा तदसिद्धिर्विना हेतुं कार्यायोगात्तदुभयतः पाशा[3] रज्जुरिति भावः ॥२०॥

अकार्योऽपि सर्वाभावोऽध्यक्षेणानुमानेन वा साध्यते?नाऽऽद्यस्तस्य सर्वसत्त्वविषयत्वात्, नेतरस्तदनिर्देशादित्याशयेनाऽऽह—धर्मीति ॥२१॥

शून्यवादिन्युक्तमनुमानायोगं विज्ञानवादिन्यतिदिशति—विज्ञानेति । यत्प्रकाशते तत्प्रकाशाभिन्नं यथा ज्ञानं प्रकाशते चेदमित्यनुमानाज्ज्ञानमात्रत्वं विज्ञानवादिना सर्वस्योच्यते । न च तस्य धर्म्यादि मिथो व्यावृत्तं सिध्यत्यतिरिक्तस्य ज्ञानादनिष्टत्वात् । न च कल्पनया तत्सिद्धिः, कल्पकाभावात् न चाविद्या तथा, तस्या निराश्रयत्वा-

---

१. नित्यत्वमापतेदिति—ध्वंसस्य नित्यत्वादित्यर्थः ।

२. प्रक्रियामात्रमिति—सा च प्रक्रिया नास्मत्सम्मता वर्णात्मकशब्दस्याकाशादिवन्नित्यत्वात् ।

३. उभयतः पाशेति—हेतुसत्त्वे तदसत्त्वे च सर्वाभावस्यासिद्धिरित्यर्थः ।

**मानाभेदाच्च मेयस्य नाज्ञातार्थः प्रसिध्यति । तादात्म्येऽपि न चेज्ज्ञातो मानात्कोऽतिशयो मतः ॥२३॥**
**अज्ञाताधिगमं कुर्वन्मानं स्यात्सर्ववादिनाम् । न चेच्छुक्तितमोजस्य ज्ञानस्यापि प्रमाणता ॥२४॥**
**विज्ञानाव्यतिरेकित्वादसिद्धादेस्तथैव च । प्रामाण्यवत्प्रसङ्गः स्यादप्रमात्वेऽपि ते ध्रुवम् ॥२५॥**

अद्वैतवादे कार्यकारणयोः सत्त्वे सिद्धान्तभंगशंका समाधानं च

**अजमेकं स्वतःसिद्धं प्रत्यग्रूपमनन्यदृक् । वस्त्वेवं चेदिहाभीष्टं किमर्थं साध्यतेऽपरम् ॥२६॥**
**एवंभूतात्मसिद्ध्यर्थं कारणादि प्रसाध्यते । उपायः सोऽवताराय तथा तज्ज्ञैश्च सूत्रितम् ॥२७॥**
**कारणादिनिषेधेन न चाद्वैतमभीप्सितम् । ऐकात्म्यबोधमात्रेण निषेधस्याप्यपह्नवात् ॥२८॥**
**सत्तत्त्वकमिदं सर्वमिति संसाध्य यत्नतः । तस्यापि संविन्मात्रेण पूर्णतैवोच्यते सतः ॥२९॥**

योगाज्ज्ञानस्यस्वरसभङ्गुरस्यातदाश्रयत्वात्तस्याश्च ज्ञानादभेदे क्षणिकत्वाद्भेदे चावस्तुत्वेनाकल्पकत्वादतोऽनुमानामानता तुल्येत्यर्थः ॥२२॥

न केवलमनुमानस्यैव विज्ञानवादे मानत्वायोगः किन्त्वध्यक्षस्याप्यज्ञातार्थाभावादित्याह—मानेति । तथाऽपि मेयांशस्याज्ञाततेति शङ्कते—तादात्म्येऽपीति । तर्हि मानाद्वस्तुनि कोऽतिशयोऽज्ञातत्वध्वस्तिर्वा ज्ञातत्वोत्पत्तिर्वेति विकल्पयति—मानादिति ॥२३॥

नाऽऽद्यो मानाभेदेऽपि वस्तुन्यज्ञातत्वोपगमादिति मन्वानो द्वितीयं दूषयति—अज्ञातेति । वस्तुन्यज्ञाते सत्यज्ञातत्वनिरासद्वारा ज्ञातत्वमुत्पादयन्मानमिति सर्वसंमतं तथाचाज्ञातत्वं मानाभिन्नेऽप्यर्थेऽस्ति चेत्कथं तस्मिन्नधिगमं कुर्वतोऽपि मानस्य मानता-कथं च तदधिगमे हेतुतेत्यर्थः । अज्ञातज्ञापकं मानमिति न कुलधर्मो ज्ञापकं तदित्यत्रादोषादिति शङ्कते—न चेदिति । ज्ञापकत्वमात्रेण मानत्वेऽतिप्रसङ्गमाह—शुक्तीति । न च तस्य ज्ञापकत्वमेव नेति युक्तमज्ञातत्वप्रसङ्गान्न च तदपि प्रमाणमेव प्रमाणाप्रमाणविभागाभावापातादस्मन्मते च स्वतः सर्वज्ञानानां प्रामाण्येऽपि क्वचित्परतोऽप्र.माण्यादिति भावः ॥२४॥

विज्ञानवादे मानाभासस्यापि विज्ञानवन्मानत्वापत्तिरिति दोषान्तरमाह—विज्ञानेति । वतिः स्वरूपार्थः । तत्र हि विज्ञानं मानं तदभेदादसिद्धविरुद्धादेरपि तथैव मानता व्यतिरेके राद्धान्तहानिर्बाह्यार्थोपगमादित्यर्थः ॥२५॥

अद्वैतवादेऽपि कार्यकारणयोः सत्त्वे सिद्धान्तहानिरिति चोदयति—अजमिति । वस्तुनोऽकार्यत्वात्कार्यस्य सत्त्वसाधनमसदित्यर्थः । अद्वयत्वाच्च तस्य न कार्यादेः सत्त्वमित्याह—एकमिति । साधकापेक्षत्वान्नैकत्वमित्याशङ्क्याऽऽह—स्वत इति । उत्पादके ज्ञापके वा वस्तुनोऽपेक्षा? नाऽऽद्योऽजत्वान्नेतरः स्वप्रकाशत्वादित्यर्थः । आत्मत्वाच्च वस्तुनो नानात्मकार्यादिसत्त्वमित्याह—प्रत्यगिति । स्वप्रभत्वमुक्तं व्यनक्ति—अनन्येति । यथोक्तं वस्तु केनेष्टमत आह—वस्त्विति । इहेत्यद्वैतपक्षोक्तिः । अपरमिति कार्याद्युच्यते । किमर्थमित्याक्षेपे वस्तुविरोधो हेतुः ॥२६॥

कार्यकारणतदभावविलक्षणप्रत्यग्ब्रह्मसिद्धये कारणादेरतुच्छत्वं साधयतो न सिद्धान्तहानिरिति परिहरति—एवमिति । तर्हीष्टं वस्त्वेवोच्यतां किं कारणादिकथयेत्याशङ्क्याऽऽह—उपाय इति । तत्त्वज्ञानसिद्धये कारणादि हेतुरित्यत्र मृल्लोहविस्फुलिङ्गैरित्यादिवृद्धवाक्यमुदाहरति—तथेति ॥२७॥

कारणाद्यभावविलक्षणत्वं ब्रह्मणोऽसिद्धं तस्याद्वयत्वात्कारणादिद्वयनिषेधात्मत्वादित्याशङ्क्याऽऽह—कारणादीति । अद्वयत्वं तर्हि कथमिति तत्राऽऽह—ऐकात्म्येति । उभयत्रापीत्थंभावे तृतीया । कारणादिनिषेधे पृथग्विद्यमाने कथमैक्यस्फुरणरूपेणाद्वयत्वं तत्राऽऽह—निषेधस्यापीति । कार्यादेरिव तन्निषेधस्यापि तत्त्वज्ञानाद्वस्तुमात्रत्वेनापह्नवाच्चिदेकरसत्वेनाद्वयत्वमविरुद्धमित्यर्थः ॥२८॥

तर्हि कार्यकारणयोः सत्त्वे साध्ये कथं वस्तुनश्चिन्मात्रतया पूर्णत्वमन्यथा तयोः सत्त्वसाधनमस्थाने

१. मृल्लोहेति—मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदिताऽन्यथा । इत्यादिः । अवताराय = ब्रह्मज्ञानोत्पत्तये ।

अनुमेयत्वाच्चेत्यादिभाष्यतात्पर्यम्

सदेवाऽऽगमतः[1] सर्वं प्रत्यक्षाच्च सदीक्ष्यते। अनुमानाच्च सत्सर्वं यथा तदधुनोच्यते ॥३०॥
अनुमेयं च सत्पूर्वं कारणं कार्यमेव च। जगत्प्रसूतेस्तच्चेह प्रयोगेण प्रदर्श्यते ॥३१॥

कारणस्य सत्त्वानुमानम्

विवादगोचरापन्नं सत्कारणमिदं भवेत्। कार्यात्मकं मनोऽबादि[2] कार्यत्वात्कटकुम्भवत् ॥३२॥
हेतुमज्जनिमत्सर्वं कार्यत्वात्पटकुम्भवत्। वियदादि च नः कार्यं तदप्येवं प्रतीयताम् ॥३३॥

कारणासत्त्वानुमानेन शङ्का

असत्कारणकं कार्यं तद्विनाश्यास्य जन्मतः। सर्वं स्वहेतुमुन्मूल्य जायतेऽङ्कुरकुम्भवत् ॥३४॥

स्यादित्याशङ्क्य घट[3]विचारतात्पर्यमाह—सतत्त्वकमिति। कार्यं कारणं च सर्वमिदं सन्मात्रमिति परपक्षप्रतिक्षेपमुखेन प्रसाध्य तस्यापि सतः संविन्मात्रतया पूर्णत्वमेवात्र विचार्यं निर्धार्यते। तथा च वस्तुनोऽद्वितीयत्वमविरुद्धमित्यर्थः ॥२९॥

मृत्युनैवेत्याद्यागमात् सद्बीजमित्याद्यध्यक्षात्सर्वस्य कारणादेः सत्त्वमुक्तमनुवदति—सदेवेति। अनुमेयत्वाच्चेत्यादेराविचारसमाप्तेर्भाष्य[4]स्य तात्पर्यमाह—अनुमानादिति ॥३०॥

अनुमीयते हीत्यादिविवरणभाष्यार्थमाह— अनुमेयं चेति। जगत्प्रसूतेः पूर्वमिति संबन्धः। कथमनुमानं तदाह—तच्चेति ॥३१॥

कार्यकारणयोः सत्त्वानुमानं प्रतिज्ञाय कारणसत्त्वे कार्यस्य[5] हीत्यादिभाष्योक्तमनुमानमाह—विवादेति। भागे सिद्धसाध्यतामुद्धर्तुं विवादेति विशेषणं इदमिति व्याकृतजगदुक्तिः। तन्मनोऽकुरुतेत्यादिवाक्यशेषान्मनोऽबादीत्युक्तम्। कार्यात्मकमित्यसिद्धिमुद्धर्तुं विशेष्यते ॥३२॥

कार्यत्वेऽपि तस्य कारणापेक्षा मा भूत्स्वभाववादसंभवात्तत्कथं कारणसत्त्वानुमेति तत्राऽऽह—हेतुमदिति। स्वभाववादस्तूपरिष्टान्निराकरिष्यते। ननु प्रथमानुमाने हेतोर्भागासिद्धिराशङ्क्यते। न च कार्यात्मकमिति विशेषणात्तस्यैव धर्मित्वाददोषः, त्वन्मते वियदादेरपि कार्यत्वात्परमते च भागासिद्धिशङ्कासमुन्मेषात्तत्राऽऽह—वियदादिति। तस्य कार्यत्वे किं मानं तदभावे स्यादन्यतरस्य भागासिद्धिस्तत्राऽऽह—तदपीति। कार्यत्वमपि वियदादेर्विभक्तत्वाद्यनुमानादागमाच्च निश्चेतव्यमित्यर्थः। यद्वा चकारसूचिताभ्यामनुमानागमाभ्यां कार्यत्वे तस्य सिद्धे फलितमाह—तदपीति। वियदाद्यपि कार्यत्वाद्घटवत्सकारणकं ज्ञेयमित्यर्थः ॥३३॥

जगज्जनेः प्राक्कारणस्य सत्त्वेऽनुमिते प्रत्यनुमानं शङ्कते—असदिति। विमतमसत्कारणकं कार्यत्वादङ्कुरवदित्यत्र दृष्टान्तस्य साध्यवैकल्यमाशङ्क्याऽऽह—तद्विनाश्येति। बीजमुपमृद्यैवाङ्कुरोदयदर्शनात्तस्यासत्कारणतेत्यर्थः। तथाऽपि जगति स्वहेतूपमर्देन जन्मादर्शनात्कार्यत्वेऽपि मा भूदसत्कारणकत्वं तत्राऽऽह—सर्वमिति। विमतं स्वहेतूपमर्देनोत्पद्यते कार्यत्वात्संमतवदित्यर्थः ॥३४॥

---

१. आगमतः—"सदेवसोम्येदमग्र आसीदेकमेवाद्वितीयमि"त्यागमात् 'मृत्युनैवे"ति प्रकृतवाक्याच्च। प्रत्यक्षं च सन् घट इत्यादि।

२. आदिपदेन "आपोऽजायन्ते"ति श्रुतिसंग्रहः। असिद्धिं—नित्यस्यापि पक्षान्तर्गतत्वे कार्यत्वहेतोरसिद्धिः स्यात् तामुद्धर्तुं कार्यात्मकमिति। विवादेति दृष्टान्ते सिद्धसाधनवारणाय ( न्या० )

विभक्तत्वाद्यनुमानात्–विमतं कार्यं विभक्तत्वात् घटवत्–इत्यनुमानं यावद्विकारं तु विभागो लोकवत्–इति ब्रह्मसूत्रोक्तम् ( २-३-७ )

आगमः "तस्माद्वाएतस्मादात्मन आकाशः सम्भूत" इत्यादिः। फलितमिति—निगमनवाक्यमित्यर्थः।

३. घटविचारः घटमधिकृत्य कारणसत्त्वासत्त्वविचारः।   ४. २१-९   ५. २१-१०

## कार्यस्यानुत्पन्नत्वेन कार्यानाशकता

स्वकारणं चेदुत्साद्य कार्यं सर्वं प्रजायते । तत्कारणविनाशाय तत्सूतेः प्राक्क्व ईर्यताम् ॥३५॥
स्वहेतूच्छित्तयेऽलं चेदजातमपि सद्यदि । द्वयमप्यभ्युपेतं स्यान्न ह्यसद्धन्यतेऽसता ॥३६॥
विनाशस्यापि कार्यत्वात्सोऽपि सत्कारणो मम । न चेत्कार्यो विनाशः स्यान्नाशोऽकार्येण नेष्यते ॥३७॥
स्वकारणविनाशाय सिद्धं वाऽसिद्धमेव वा । अङ्कुरादि मतं कार्यं नोभयत्रापि युज्यते ॥३८॥
सिद्धं चेत्कारणासिद्धमुपमर्दं विनैव तु । उत्पन्नेन च तन्नाश उत्पन्नत्वादनर्थकः ॥३९॥
उपमृद्नाति चेत्कार्यमथासिद्धं स्वकारणम् । तत्कारणं कथं तत्स्यान्न चेत्तस्मात्प्रजायते ॥४०॥
उपमर्दोऽपि कार्यत्वात्किं न हन्यात्स्वकारणम् । हन्तर्यसति हानोक्तिर्लक्ष्यते शिशुवक्तृका ॥४१॥
नंष्टृतन्त्रो विनाशोऽपि गन्तृतन्त्रा गतिर्यथा । नास्तीह कश्चिद्धात्वर्थो यः स्वहेतुं विनाशयेत् ॥४२॥

प्रत्यनुमाने दृष्टान्तस्य साध्यवैकल्यं वक्तुं नानुपमृद्य प्रादुर्भावादिति[1] परोक्तेरर्थमनुवदति—स्वकारणमिति । प्राक्कार्योत्पत्तेस्तस्य न स्वकारणनिवर्तकत्वमनुत्पन्नत्वेनालब्धात्मकत्वादिति दूषयति—तत्कारणेति ॥३५॥

विपक्षे दोषमनुभाषते—स्वहेत्विति । चेच्छब्दो वेदाश्चेत्प्रमाणमितिवत् । अथवा कार्यमजातमेव यदि स्वहेतुमुच्छेत्तुमलं तच्च सदेव चेदिति योजना । तर्हि कार्यं कारणं च प्रागुत्पत्तेः सदेष्टव्यमसतो निवर्त्यनिवर्तकत्वायोगादित्याह—द्वयमिति ॥३६॥

किंच कारणोपमर्दः कार्योऽकार्यो वा? आद्ये तस्यापि पक्षतुल्यतया सदेव कारणमनुमेयं तेन सत्यपि तस्मिन्कारणस्य सत्त्वान्न कार्यस्यासत्कारणत्वं कारणोपमर्दे व्यभिचारान्न च सोऽपि स्वहेतुमुपमृद्यैव भवत्यनवस्थानादित्याह—विनाशस्येति । घटादिदृष्टान्तार्थावपिशब्दौ । द्वितीयमादत्ते—न चेदिति । अकार्येण नाशेन नाशो न पिण्डादेरेष्टुं शक्यते नाशस्याकार्यत्वे नित्यत्वात्पिण्डादेः सत्त्वप्रसङ्गाभावात्तत्पूर्वकनाशस्यापि दुर्वचत्वादित्याह—नाश इति । अथवा नाशस्य कृतकत्वाभ्युपगमादकार्यात्मना नासाविष्यते स्वाभ्युपगमविरोधादित्यर्थः ॥३७॥

स्वकारणं चेदुत्साद्येत्यादौ कार्यं कारणं न नाशयतीत्युक्तं तदेव विकल्प्य प्रपञ्चयितुं प्रक्रमते—स्वकारणेति । कार्यस्य सिद्धत्वेऽसिद्धत्वे च न स्वकारणनाशकतेति प्रतिजानीते—नेति ॥३८॥

सिद्धत्वपक्षमनूद्य तत्र स्वकारणानिवर्तकत्वमुपपादयति—सिद्धं चेदिति । यदि सिद्धं कार्यं स्वकारणमुपमृद्नीयान्न तर्हि तदन्तरेण कारणं सेद्धुमर्हति तथाच कारणोपमर्दं विना कारणादेव सिद्धं तदेष्टव्यमित्यर्थः । कारणोपमर्दादृते सिद्धेन कार्येण कारणमुपमृद्यतामिति चेन्नेत्याह—उत्पन्नेनेति । कार्योत्पत्तये कारणनाशस्त्वयेष्यते तच्चेदविरोधेनोत्पन्नं व्यर्थं तेन कारणनाशकल्पनमित्यर्थः ॥३९॥

असिद्धत्वपक्षमनुवदति—उपमृद्नातीति । अनुत्पन्नस्य कार्यस्योपमर्दकत्वे तत्तावन्न वस्तुमात्रमुपमृद्नात्यतिप्रसङ्गान्नापि स्वकारणं ततो जन्म विना तत्कारणत्वायोगादतोऽनुत्पन्नस्योपमर्दकत्वे न स्वकारणोपमर्दकत्वमित्याह—तत्कारणमिति ॥४०॥

कार्यस्य सिद्धस्यासिद्धस्य वा न स्वहेतूमर्दित्वमित्युपपाद्य हेतूपमर्दस्यापि कार्यस्याकार्यस्य वा न स्वहेतूपमर्दित्वमित्युक्तं व्यक्तीकर्तुं प्रसङ्गमाह । उपमर्दोऽपीति । हेतूपमर्देन कार्यजन्म चेदुपमर्दस्यापि कार्यत्वात्स्वहेतुपिण्डाद्युपमर्दित्वं स्यादित्यर्थः । अस्तूपमर्दस्य स्वहेतुनाशकत्वं स तर्हि सन्नसन्वा तन्नाशयेदसंश्चेत्तत्राऽऽह—हन्तरीति । न हि कर्तारमन्तरेण क्रिया सिध्यति व्याघातादित्यर्थः ॥४१॥

संश्चेत्तत्राऽऽह—नंष्ट्रिति । यथा गतिर्गन्तृतन्त्रा न गन्तारं निवर्तयति तथा नाशः सन्नपि नंष्टृतन्त्रो न स्वहेतुं निवर्तयेदविशेषादित्यर्थः । गतेः स्वहेत्वनिवर्तकत्वेऽपि नाशस्य तन्निवर्तकत्वमिति विभागमाशङ्क्याऽऽह—नास्तीति । विमतो न स्वहेतुनाशको धात्वर्थत्वाद्गतिवदित्यर्थः ॥४२॥

१. न्यायसूत्रम् ४-१-१४ अनुपमृद्य-कारणं अविनाश्य अनुत्पत्तेः कार्यस्येत्यर्थः ।

नाशव्याप्तं कार्यं न कारणमुपमर्दयेत

निर्हेतुनाशसंव्याप्तेर्न स्यात्कुम्भजनिर्मृदः । न बीजादग्निसंव्याप्तादङ्कुरोद्भूतिरीक्ष्यते ॥४३॥

पिण्डस्य घटकारणत्वाभावः

घटादेः कारणं पिण्ड इति नाभ्युपगम्यते । मृदेव कारणं यस्मात्पिण्डादेरवगम्यते ॥४४॥

यदेव कारणं मानैरिह साक्षाद्विनिश्चितम् । तदेवोत्तरकार्येषु न कार्यं कारणं मितेः ॥४५॥

विनाशोऽतिशयः कश्चिद्यदि पिण्डादिवन्मतः । प्रत्यक्षात्तद्द्वयं सत्स्यान्नो चेदस्तु ध्रुवो घटः ॥४६॥

नाशस्वरूपस्य विकल्प्य खण्डनम्

क्रिया वा तत्फलं वा स्याद्वस्त्वन्तरमथापि वा । नाशोऽथ वा न किंचित्स्यात्सत्त्वं नैवमपोह्यते ॥४७॥

क्रियाऽप्यस्ति फलं चास्ति तद्वद्वस्त्वन्तरं च सत् । अथ नाशोऽपि नैवास्ति तं विना सदिदं जगत् ॥४८॥

सन्नेव नाशोऽपीष्टश्चेत्सत्सता न विरुध्यते । ऐकात्म्येऽपि विरोधश्चेन्नाशो नाशेऽपि शङ्क्यते ॥४९॥

कार्यस्योपमर्दस्य वा न स्वहेतुनाशकतेत्युक्तम् । किंच मृदादिहेतुः स्थायी क्षणिको वा? आद्ये सिद्धान्तहानिं मत्वा द्वितीयं प्रत्याह—निर्हेत्विति । क्षणिकत्वे मृदादेः स्वारसिकनाशव्याप्तत्वान्न ततो घटादिजन्म युज्यते। नाशोपक्षीणस्य जननव्यापारायोगादित्यर्थः । नाशव्याप्तात्कारणात्कार्यानुत्पत्तौ दृष्टान्तमाह—न बीजादिति ॥४३॥

स्वकारणं चेदित्यादिना[1] मृदादेरित्यादिभाष्यस्थनञर्थ उक्तः । इदानीं मृदो न कुम्भादिहेतुत्वं किंतु पिण्डस्येत्याशङ्क्य मृदादेरित्यादिभाष्यं व्याचष्टे—घटादेरिति । तत्र हेतुमाह—मृदेवेति ॥४४॥

मृदादेरेव हेतुत्वं न पिण्डादेरित्येतदुपपादयति—यदेवेति । मानैरन्वयव्यतिरेकानुसंधानप्रत्ययैरित्यर्थः । इहेति पिण्डादेराद्यकार्यस्योक्तिः । तत्र मृदादेर्हेतुत्वे प्रत्यक्षं प्रमाणयति—साक्षादिति । उत्तरकार्याणि घटादीनि। पिण्डादौ मृदादि कारणं घटादौ पिण्डादीति व्यवस्थामाशङ्क्याऽऽह—नेति । न हि पिण्डादि घटादिकारणं मानतः सिध्यत्यनन्वयादनवस्थानाच्चेत्यर्थः[2] ॥४५॥

कार्यस्याकारणत्वे मृदादेरप्यकारणत्वं तस्य नाशित्वेन कार्यत्वादिति चेत्तत्र नाशो मृदादेरतिशयोऽन्यो वेति विकल्प्याऽऽद्यमादत्ते—विनाश इति । तदा नाशो नाशीति द्वयमपि सदेव स्यात्प्रत्यक्षस्य तस्यासत्त्वायोगादित्याह—प्रत्यक्षादिति । अतिशयो हि नाऽऽश्रयं विना युक्तस्तस्य च नाशनाम्नो नाशाभावात्तदाश्रयस्य नाशिनो मृदादेस्तस्मिन्सत्यपि सत्त्वं प्रत्यक्षं च मृदादि नासद्भवतीत्यर्थः। न मृदादेरतिशयो नाशः किं त्वन्यस्तस्मादिति कल्पान्तरमाह—नो चेदिति । तर्हि नाशास्पृष्टत्वात्कूटस्थो मृदादिरित्याह—अस्त्विति । नहि तस्य मृदादिना संबन्धः सिध्यति भावाभावयोः संबन्धस्य निरस्तत्वाद्घटादेरपि कार्यस्यातिशयत्वेनार्थान्तरत्वेन वा नाशस्य दुर्निरूपत्वं मत्वा घटग्रहणम् ॥४६॥

किंच नाशो वस्तुनः क्रिया वा फलं वा वस्त्वन्तरं वा न वा किंचिच्चतुर्धाऽपि तत्सत्त्वं दुर्वारमित्याह—क्रियेति ॥४७॥

कथं पक्षचतुष्टयेऽपि तत्सत्त्वं तदाह—क्रियाऽपीति । क्रिया चेन्नाशस्तस्यास्तदाश्रयस्य च सत्त्वान्न वस्त्वसत्त्वं फलत्वेन तस्य फलिनश्च सत्त्वाद्वस्त्वन्तरत्वे मृदादेस्तदस्पृष्टत्वान्नाशस्य तुच्छत्वे तत्सत्त्वं सुप्रसिद्धमित्यर्थः ॥४८॥

न नाशस्य तुच्छत्वं नास्तिव्यवहारविषयत्वान्नापि क्रियादिरूपतोक्तदोषादिति शङ्कते—सन्निति । तर्हि तस्य वस्तुमात्रत्वाद्वस्तुनि च भेदकाभावेन भेदाभावस्योक्तत्वादेकत्वविरोधासिद्धेर्न तेन निरस्यते वस्तुसत्तेत्याह—सदिति । नाशस्य वस्त्वैक्येऽपि स्वभावविरोधस्ते नास्तीति शङ्कते—ऐकात्म्येऽपीति । तर्हि नाशेऽपि नाशः शङ्कितुं शक्यते स्वेनैव स्वस्य नाश्यमानत्वादतो नाशासिद्धेर्वस्तु कूटस्थं स्यादित्याह—नाश इति ॥४९॥

---

१. २२-२ ।

२. **अनन्वयात्**—पिण्डादेः घटाद्यननुगतत्वात् । **अनवस्थानात्** अननुगतस्य कारणत्वे पिण्डस्याप्यन्यत् तस्याप्यन्यत् कारणं स्यादित्यनवस्था ।

पिण्डादेः न घटकारणता । मृदेव तु कारणम्

पिण्डादिना विनाऽपीदं मृदादेः केवलादपि । घटाद्युत्पद्यमानं तु कार्यं दृष्टमतो ध्रुवम् ॥५०॥
मृदाद्येव ततो ग्राह्यं कारणं ह्यन्वयान्मृदः । कार्यमेव तु पिण्डादि तस्य कार्येष्वनन्वयात् ॥५१॥
विरुद्धा[1]नेककार्याणां युगपज्जन्म नेष्यते । एकस्मात्कारणात्तस्मात्पिण्डाभावे घटोद्भवः ॥५२॥
पिण्डादिव्यतिरेकेण कारणानुपलब्धितः । असत्त्वं चेन्मृदादेः स्यान्न मानानुपपत्तितः ॥५३॥
पिण्डादिव्यतिरेकेण यदि मानं भवेत्ततः । मृदादि कारणं लब्धं न मानं स्यान्मृदा विना ॥५४॥
पिण्डादिव्यतिरेकेण पिण्डादाविव चेत्प्रमा । सिद्धं कारणमेवं स्यान्न मा मेयं विना यतः ॥५५॥
असाधारणरूपेषु व्यावृत्तेष्वितरेतरम् । बहुष्वेकं यदाभाति प्रत्यक्षं कारणं तु तत् ॥५६॥

अनुवृत्तस्य न कारणता अनुवृत्तिज्ञानं भ्रान्तिः तेन तदसिद्धेः

सादृश्यादन्वयभ्रान्तिस्तन्निवृत्तावपीति चेत् । नैवं पिण्डस्थदृष्टानां घटादावपि दर्शनात् ॥५७॥

भ्रान्तिरसिद्धा प्रत्यभिज्ञानात्

प्रत्यभिज्ञायमानेऽर्थे तदेवेदमिति ध्रुवे । लिङ्गमाभासतामेति प्रत्यक्षार्थविरुद्धमित् ॥५८॥

मृदादेर्नाशस्य दुर्निरूपत्वान्न तस्य कार्यत्वेनाकारणतेत्युक्तं तर्हि पिण्डादेरपि नाशस्य दुर्निरूपत्वात्कार्यत्वासिद्धौ करणत्वसिद्धिरित्याशङ्क्य पिण्डादौ नाशदृष्टिवन्मृदादौ तदभावान्नैवमिति मत्वाऽसत्यपीत्यादिभा[2]ष्यं व्याचष्टे—पिण्डादिनेति । अतो मृदादेरिति संबन्धः । द्वितीयोऽपिरवधारणार्थः । पिण्डाद्यवस्थाविशेषेण विनाऽपि केवलादेवानुयायिनो मृदादेः सकाशाद्घटादिकार्यमुत्पद्यमानं दृष्टमिति योजना । तस्मान्नेत्यादिभाष्यार्थमाह—ध्रुवमित्यादिना । पूर्वोक्ता दृष्टिस्ततःशब्देन परामृश्यते । हिशब्दसूचितं हेतुमभिनयति—अन्वयादिति ॥५०॥५१॥

मृदाद्येव घटादिकारणं चेत्किमिति पिण्डादौ सत्येव ततो घटानुत्पत्तिरित्याशङ्क्य सर्वं हि कारणमित्यादिभा[3]ष्यं योजयति—विरुद्धेति ॥५२॥

अनुयायिमृदादेर्मानाभावेनाभावान्न कारणतेति शङ्कते—पिण्डादीति । मृद्घटः सुवर्णं कुण्डलमित्यादितादात्म्यप्रत्ययस्य पिण्डादतिरिक्तमृदाद्यभावेऽनुपपत्तेरनुगतं मृदाद्युपेयमिति परिहरति—न मानेति ॥५३॥

सामानाधिकरण्यादेकत्वप्रत्यये सत्यपि कथमनुगतमृदादिसिद्धिरित्याशङ्क्याऽऽह—पिण्डेति । व्यावृत्तं पिण्डादि हित्वा यद्यनुवृत्तमृदादिविषयं मानं स्यात्ततो व्यावृत्तादन्यन्मृदाद्यनुवृत्तं कारणं लब्धं मानस्य मेयं विनाऽयोगादिति योजना ॥५४॥

अनुवृत्तमृदादेर्व्यावृत्तपिण्डादितो भेदाभेदाभ्यां दुर्भणत्वान्मानस्य व्यावृत्तविषयत्वोपपत्तेर्नेष्टकारणसिद्धिरित्याशङ्क्याऽऽह—पिण्डादीति । पिण्डादाविव मृदादावपि प्रमा चेदेवं सति पिण्डादिवत्तदतिरेकेण मृदादिकमनुवृत्तं सिद्धं स्यान्न हि मानं मेयं विना युक्तमन्यथा पिण्डादेरप्यपलापापाताद्युक्तं चैतद्व्यावृत्तस्यानुवृत्तेऽन्तर्भावादित्यर्थः ॥५५॥

भा[4]ष्यस्थं दर्शनं मृदादिप्रमाणं वार्तिकाभ्यामुक्तं प्रत्यक्षत्वेन व्याकरोति—असाधारणेति । यद्वा किं तदनुवृत्तं कारणमित्याशङ्क्य प्रत्यभिज्ञया तत्स्वरूपमाह—असाधारणेति ॥५६॥

एकस्यानेकेष्वन्वयदृष्टिर्भ्रान्तिरन्वयाभावेऽपि सादृश्यात्तद्दृष्टिरिति शङ्कते—सादृश्यादिति । अन्वयदृष्टेर्न भ्रान्तितेत्याह—नैवमिति । तत्र हेतुमाह—पिण्डस्थेति । मृदाद्यवयवानामिति शेषः ॥५७॥

यत्सत्तत्क्षणिकं यथा दीपः सन्तश्चेमे भा[5]वा इत्यनुमानात्सर्वार्थानां क्षणिकत्वसिद्धेरन्वयदृष्टिः सादृश्याद्भ्रा-

१. विरुद्धेति—तादात्म्येन घटोत्पत्तौ तादात्म्येन पिण्डस्य प्रतिबन्धकत्वमित्यर्थः ।
२. २--३ । ३. २२-६ । ४. २३-४ ।
५. विमता भावाः क्षणिकाः अर्थक्रियाकारित्वात् इत्यनुमाने तात्पर्यम् सदित्यस्यार्थक्रियाकारि इत्यर्थात् । अर्थक्रियाकारित्वमस्तु क्षणिकत्वं मास्तु इति चेन्न स्थिरस्य कार्यजनकत्वे सर्वं कार्यमेकक्षणे कुर्यात् समर्थस्य विलम्बायोगात् । तथा न दृश्यते । अतो भिन्नत्वान्न पूर्वोक्तापादनसंभव इत्यर्थः ।

**विरुद्धाव्यभिचारित्वं[1] न च प्रत्यक्षलिङ्गयोः । प्रत्यक्षापाश्रयान्नित्यं नानपेक्षं तदक्षवत् ॥५९॥**
**विरुद्धाव्यभिचारित्वं समानबलयोर्यतः । दृष्टं सर्वत्र लोकेऽस्मिन्न तु सिंहशृगालयोः ॥६०॥**
**क्षणिकत्वे च भावानां प्रत्यभिज्ञाद्यसंभवः । न ह्यन्यदृष्टं वस्त्वन्यैः प्रत्यभिज्ञायते क्वचित् ॥६१॥**

प्रत्यभिज्ञायाः अप्रमाणत्वशंकानिरासौ

**क्षणिकं चेदिदं सर्वं प्रत्यभिज्ञाप्रमाणकम् । अन्यतद्बुद्ध्यपेक्षत्वं तद्बुद्धेर्वः प्रसज्यते ॥६२॥**
**इदं क्षणिकमित्येतत्क्षणिकत्वे न सिध्यति । इदंक्षणिकताबुद्ध्योर्भिन्नाधिकरणत्वतः ॥६३॥**

न्तिरित्याशङ्क्याऽऽह—प्रत्यभिज्ञायमान इति । प्रत्यभिज्ञाविरोधिलिङ्गस्यागमकत्वे हेतुमाह—प्रत्यक्षेति । प्रत्यभिज्ञासिद्धस्थाय्यर्थविरुद्धक्षणिकार्थबोधि लिङ्गमनुष्णतानुमानवन्न मानमित्यर्थः ॥५८॥

प्रत्यक्षात्कारणैक्यं गम्यतेऽनुमानात्तद्भेदोऽतो द्वयोर्विरुद्धात्वस्याव्यभिचारित्वान्नाध्यक्षेणानुमानबाधो वैपरीत्यस्यापि संभवादित्याशङ्क्याऽऽह—विरुद्धेति । तत्र हेतुमाह—प्रत्यक्षेति । अनुमानस्य नियमेन प्रत्यक्षोपजीवित्वं व्यतिरेकद्वारा दर्शयति—नेति । प्रत्यक्षमनुमानानपेक्षं न तथाऽनुमानं तदनपेक्षं तत्सिद्धव्याप्त्युपजीवित्वादतः प्रत्यक्षस्योपजीव्यत्वाद्बलवत्तेत्यर्थः ॥५९॥

प्रत्यक्षस्य प्राबल्येऽपि प्रकृताध्यक्षानुमानयोस्तुल्यत्वादस्ति विरुद्धाव्यभिचारित्वं न हि प्रत्यभिज्ञोपजीविक्षणिकत्वानुमानमित्याशङ्क्याऽऽह—विरुद्धेति । लोके हि तुल्यबलयोरेव विरुद्धाव्यभिचारित्वं न तु सिंहशृगालवदतुल्यबलयोस्तदुपलब्धमतः प्रत्यभिज्ञानमुपजीव्यक्षणिकत्वानुमानाप्रवृत्तावप्युपजीव्यजातीयत्वात्तस्य प्राबल्यादुपजीवकजातीयमुक्तानुमानं दुर्बलं तद्बाध्यमिति भावः ॥६०॥

प्रत्यभिज्ञादिभिर्मृदादीनां स्थायित्वमुक्त्वा क्षणिकत्वे तेषामभिज्ञाप्रत्यभिज्ञान्वयव्यतिरेकाणामनुपपत्तिमाह—क्षणिकत्वे चेति । आदिशब्देन स एव तु कर्मानुस्मृतिशब्दविधिभ्यः[2] इत्यधिकरणोक्ताः शेषकर्मानुष्ठानादयो गृह्यन्ते । क्षणिकेष्वेव भावेषु संतानैक्यात्प्रत्यभिज्ञाद्युपपत्तिमाशङ्क्य तस्यावस्तुत्वान्नैवमिति मत्वाऽऽह—न हीति । क्वचिद्देशे काले वेति यावत् । तस्मादनन्यथासिद्धप्रत्यभिज्ञादिसिद्धं स्थायित्वं सर्वस्येति भावः ॥६१॥

प्रत्यभिज्ञा स्वार्थे स्वतो न मानं बुद्ध्यन्तरसंवादादेव बुद्धीनां मानत्वस्य बौद्धैरिष्टत्वान्न च बुद्ध्यन्तरं स्थायित्वसाधकमस्तीति प्रत्यभिज्ञायमानस्यापि क्षणिकतेति शङ्कते—क्षणिकमिति । उत्तरमाह—अन्येति । क्षणिकत्वबुद्धेरपि स्वार्थे स्वतोमानत्वाभावात्तादृग्बुद्ध्यन्तरापेक्षायां तस्यापि तथात्वेनानवस्थानाद्बुद्धेः स्वतःप्रामाण्यमुपेयम् । तथा च प्रत्यभिज्ञानं सर्वं तथैवाबाधात्तदिदंबुद्ध्योश्च बुद्ध्यन्तरापेक्षया प्रामाण्ये तस्यापि तदपेक्षत्वेनानवस्थायां तेनेदं सदृशमिति बुद्धेरप्रामाण्यादैक्यबुद्धेरवसानत्वमशक्यशङ्कमित्यर्थः ॥६२॥

किंचेदं क्षणिकमितिबुद्ध्योरेकाश्रयत्वं भिन्नाश्रयत्वं वा? आद्ये न क्षणिकता क्षणद्वयवर्तिन्यां बुद्ध्योरेकाश्रयत्वात्तयोरयौगपद्यादाश्रयस्य क्षणद्वयस्थानप्रसङ्गादित्याह—इदमिति । एकाश्रयं बुद्धिद्वयमेतदित्युच्यते । द्वितीये क्षणिकत्वविशिष्टार्थज्ञानं नैकस्यापि स्यादित्याह—इदंक्षणिकतेति । ॥६३॥

---

१. **विरुद्धाव्यभिचारित्वं**—विरुद्धाव्यभिचारलक्षणमुक्तं न्यायभूषणे—एकत्र धर्मिणि तुल्यलक्षणयोः हेत्वोः सन्निपातः विरुद्धाव्यभिचारी—यथा शब्दोऽनित्यः सामान्यवत्त्वे सति बाह्येन्द्रियग्राह्यत्वात् । शब्दो नित्यः श्रावणत्वात् शब्दत्ववत् । विरुद्धसाध्यद्वयाव्यभिचारिहेतुद्वयं एकत्र विरुद्धाव्यभिचारी । यद्यपि उभयोर्हेत्वोः नाव्यभिचारित्वं तथापि प्रतिपत्त्रभिप्रायेणेदम्, इदं चानुमानद्वयप्रयोग एव भवेत् । तच्च तुल्यबलयोः न तु प्रबलदुर्बलयोः । प्रकृते च व्याप्तिपक्षधर्मताज्ञानविषये प्रत्यक्षापेक्षत्वात् अनुमानं दुर्बलं प्रत्यक्षं तु अनपेक्षं प्रबलमित्यर्थः ।

२. ब्र० सू० ३-२.९ ।

अज्ञातं[1] ज्ञायते यस्य तथाऽजातं च जायते । प्रत्यभिज्ञामृते तस्य प्रतिज्ञार्थो न सिध्यति ॥६४॥
अनवस्था[2] च दुर्वारा ह्यविश्वासश्च जायते । मृषात्वात्सर्वबुद्धीनां न क्वचिन्निश्चितिर्भवेत् ॥६५॥
संबन्धानुपपत्तिश्च तदिदंज्ञानयोर्ध्रुवम् । संबन्धकर्तर्यसति न च सादृश्यसंश्रयात् ॥६६॥
ध्वंसिनोरिव सादृश्यं स्थायिनोरपि नेष्यते । ग्राहकेऽसति तद्भिन्ने बुद्धीनां चैकरूपतः ॥६७॥
नाशभेदविरुद्धार्थप्रमेये च व्यवस्थिते । प्रत्यर्थिनि हि प्रत्यक्षे तद्विरुद्धः कुतो[3]ऽमितेः ॥६८॥
अनुत्पन्नोत्पित्सूत्पन्नोऽनष्टो नाशादिकृत्तथा । एवमष्टक्षणावस्थो भावोऽवश्यं त्वयेष्यते ॥६९॥
अन्योन्याविषयत्वे तु कुतः सादृश्यधीरियम् । सदृशार्थं विनैवेयं क्लृप्ता सादृश्यधीर्यदि ॥७०॥

बुद्धीनामनाधारत्वादाधारविकल्पेन दोषोक्तिरयुक्तेति चेन्न प्रत्यभिज्ञया तदाधारस्यैकस्य सिद्धेरित्यभिप्रेत्य प्रत्यभिज्ञाप्रामाण्यं परमतेऽपि संमतमिति साधयति—अज्ञातमिति ॥६४॥

अज्ञातस्य ज्ञानमजातस्य जन्मेति नास्मत्प्रतिज्ञेति चेत्तत्राऽऽह—अनवस्था चेति । ज्ञातं ज्ञायते जातं च जायते चेदनवस्था स्यादेवेत्यर्थः । किंच प्रत्यभिज्ञानस्यामानत्वं स्वतः परतो वा? आद्ये क्षणिकत्वबुद्धयाऽपि न स्वार्थनिश्चयस्तत्रापि स्वारस्येनामानत्वात्परतोऽमानत्वे च तद्बुद्धेः सैवानवस्थेत्याह—अविश्वासश्चेति । कल्पान्तरं प्रत्याह—मृषात्वादिति । परतश्चेत्प्रत्यभिज्ञाप्रामाण्यं तदा स्वतस्तस्या मानतया स्थाय्यर्थसिद्धिः । स्वतश्चेत्सा नार्थं निश्चाययेत्तदा सर्वधियां स्वतोऽनिश्चायकत्वादनवस्थानान्न क्वचिदपि बुद्धेर्निश्चयोऽतः सर्वं क्षणिकमित्येतदपि न सेत्स्यतीत्यर्थः । मृषात्वं स्वतोऽनिश्चायकत्वम् ॥६५॥

किंच तदिदंबुद्धयोः संबन्धोऽस्ति न वा? नाऽऽद्यः स्थाय्यर्थातिरेकेण तदयोगात्तदुपगमापत्तेरित्याह—संबन्धेति । असति संबन्धे बुद्धयोः सादृश्यात्तद्धीरिति द्वितीयमाशङ्क्याऽऽह—न चेति ॥६६॥

कथं सादृश्यात्संबन्धासिद्धिरिति सादृश्यस्यापि स्थायिग्राहकाधीनत्वात्तं विनाऽसिद्धेरित्याह—ध्वंसिनोरिति । सदृशाभ्यां भिन्ने तयोस्तन्निष्ठसादृश्यस्य च ग्रहीतर्यसति क्षणिकयोः स्थायिनोर्वा न सादृश्यसिद्धिस्तादृग्ग्राहकोपगमे क्षणिकत्वक्षतिरित्यर्थः । तद्भित्तेरिति पाठे सत्यपि ग्राहके तस्य प्रतिक्षणं भिन्नत्वात्क्षणद्वयग्राहिणोऽभावान्न तत्सादृश्यधीरित्यर्थः । बुद्धीनां सादृश्यमाश्रित्योक्तं तदेव नास्तीत्याह—बुद्धीनां चेति । भेदे सत्यैक्यमानं सादृश्यगमकमिह प्रकाशैकरस्याद्भेदं विना तज्ज्ञानान्न सादृश्यं युक्तमित्यर्थः ॥६७॥

ऐक्यबुद्धेर्भ्रान्तित्वभङ्गेन भावेषु क्षणिकत्वमभाङ्क्षीत्तत्रैव हेत्वन्तरमाह—नाशेति । भावेष्वविकल्पकेऽध्यक्षे भेदादिविरुद्धसन्मात्रविषये क्षणिकत्वप्रत्यर्थिनि स्थिते सति तस्मात्प्रत्यक्षाद्विरुद्धस्वरसनाशादिर्न युक्तो मानाभावादित्यर्थः । अमितेरिति च्छेदः ॥६८॥

इतश्च भावानां न क्षणिकतेत्याह—अनुत्पन्नेति । स्वतोऽनुत्पन्नः सन्नुत्पित्सुरुत्पद्यमानः समुत्पन्नोऽनष्टो निनङ्क्षुर्नंष्टा नष्टो भवतीत्यष्टक्षणावस्थत्वात्तस्य न क्षणिकतेत्यर्थः ॥६९॥

न तदिदंबुद्धयोरित्यादिभाष्ये[4] नञर्थमुक्त्वेतरभागस्यार्थमाह—अन्योन्येति । न तावदनयोरन्यो ग्राहको यस्तयोः सादृश्यं पश्येदनभ्युपगमात् । अन्योन्यविषयत्वं तु स्वसंवेद्यत्वहतमतः सादृश्यधीरयुक्ता द्वयोस्तत्सादृश्यस्य च ग्राहकाभावादित्यर्थः । यत्र सत्येवार्थे धीस्तत्रैव ग्राहकापेक्षा नान्यत्रेति शङ्कते—सदृशेति ॥७०॥

---

१. पूर्वमज्ञातमिदानीं ज्ञायते—पूर्वमजातमिदानीं जायत इति बुद्धिद्वयं प्रत्यभिज्ञामपेक्षते पूर्वाज्ञानस्य इदानीं ज्ञानस्य च ग्राहकापेक्षत्वात् ।

२. अनवस्थेति—ज्ञातं ज्ञायत इत्यादौ पूर्वज्ञानापेक्षा । पूर्वमपि ज्ञातमेवज्ञायत इति तत्पूर्वज्ञानापेक्षेत्येवमनवस्था । अविसंवादिज्ञानं प्रमा । अर्थक्रियास्थितिश्चाविसंवाद इत्युक्तत्वात् कथं तद्धीनप्रत्यभिज्ञाप्रामाण्यं तत्राह—अनवस्थेति । अर्थक्रियाज्ञानस्याप्यर्थक्रियाज्ञानान्तरापेक्षत्वादनवस्थेत्यर्थः ( न्या० ) ।

३. कुतोमितेः कस्मात् प्रमाणात्-पा० ( न्या० ) ।

४. २३-१० ।

सादृश्यज्ञानस्य निरालंबनत्वे दोषः

मृगाम्बुधीवन्मिथ्यात्वं स्यादेवं तदिदंधियोः । असद्विषयतैवेह सर्वासामपि चेद्धियाम् ॥७१॥
नैवं बुद्धेरपि तथा ह्यसद्विषयता भवेत् । अस्त्वेवं सर्वबुद्धीनां मृषात्वमिति चेन्मतम् ॥७२॥

कारणस्य प्राक् सत्त्वनिर्णयः

नैवं स्यात्सर्वबुद्धीनां मृषात्वे मित्यसंभवात् । कारणस्यास्तिता तस्मात्सिद्धा कार्योद्भवात्पुरा ॥७३॥

अभिव्यज्यमानं कार्यं पूर्वमेव सत्

कार्यस्यापि यथाऽस्तित्वं तथेदानीं प्रपञ्च्यते । सत्त्वपूर्वमिदं कार्यं तमोन्तस्थघटादिवत् ॥
तस्याभिव्यक्तिधर्मत्वादन्यथा स्यान्नृशृङ्गवत् ॥७४॥
सत्यामपि च सामग्र्यां वन्ध्यापुत्राद्यसत्त्वतः । विज्ञानालम्बनत्वं नो न कदाचित्प्रपद्यते ॥७५॥

कार्यस्य सदासत्वे सदोपलंभप्रसङ्गः

सर्वं सदेव चेदिष्टमुपलभ्येत ते सदा । सामग्र्यां घटवत्सत्यां सर्वं सद्वादिनो ध्रुवम् ॥७६॥

समाधिः

न विद्यमानमात्रेण ह्यभिव्यक्तिरपीष्यते । सदेव वस्त्वभिव्यक्तं तथाऽव्यक्तं च लक्ष्यते ॥७७॥

बाह्यार्थवादिनं प्रत्याह—मृगेति । सादृश्यज्ञानस्य निरालम्बनत्वे मरुमरीचिकोदकज्ञानवत्तदिदंज्ञानयोरपि निरालम्बत्वेनामानत्वं स्यादित्यर्थः । विज्ञानवाद्याह—असदिति ॥७१॥

तथा सत्यनालम्बनं क्षणिकं विज्ञानमित्यस्यापि ज्ञानस्यासद्विषयतया विज्ञानवादासिद्धिरित्याह—नैवमिति । शून्यवादी शङ्कते—अस्त्विति ॥७२॥

सर्वा धीरसद्विषयेत्येषा धीरसद्विषया स्यात्तश्च सर्वबुद्धेरसद्विषयत्वासिद्धिरित्याह—नैवं स्यादिति । यद्वा सर्वासां धियामसत्त्वे बोधकबुद्धेरपि तथात्वात्तदसत्त्वासिद्धेर्न शून्यवाद इत्याह—नैवमिति । परपक्षासंभवात्प्रत्यभिज्ञया स्थायिहेतुसिद्धिरिति स्थापयता प्रत्यनुमाने दृष्टान्तस्य साध्यविकलतोक्तेदानीं कारणसत्त्वानुमानमुपसंहरति—कारणस्येति ॥७३॥

कार्यकारणयोर्द्वयोरपि प्रागुत्पत्तेः सत्त्वमनुमेयमिति प्रतिज्ञाय कारणास्तित्वानुमानं प्रपञ्चितमथ कार्यास्तित्वमनुमातुं कार्यस्य चेत्यादिभाष्यतात्पर्यमाह—कार्यस्येति । कथं प्रागुत्पत्तेः कार्यस्य सत्त्वमित्याशङ्क्यानुमानं रचयति—सत्त्वेति । इदमित्यभिव्यज्यमानमुच्यते । अभिव्यक्तिधर्मत्वादभिव्यज्यमानत्वादिति यावत् अभिव्यक्तेर्वा सत्त्वपूर्वकत्वं संमताभिव्यक्तवदभिव्यक्तत्वादनुमेयम् सत्त्वं विनाऽपि व्यज्यमानत्वोपपत्तेरप्रयोजकत्वमाशङ्क्यापरोक्षव्यक्त्यनुपपत्तिरसत्त्वे बाधिकेत्याह—अन्यथेति । घटादेरसत्त्वे वैकल्पिकव्यक्तावपि नरविषाणवन्नापरोक्षव्यक्तिः स्यादस्ति च तस्य तादृशी व्यक्तिस्तेनासत्त्वमयुक्तमित्यर्थः ॥७४॥

नृशृङ्गस्य सामग्र्यभावादपरोक्षव्यक्त्यभावो नासत्त्वादित्याशङ्क्य कार्यस्यापि तुच्छत्वे सामग्र्यभावस्य तुल्यतेत्यभिप्रेत्याऽऽह—सत्यामिति । न हि वन्ध्यापुत्रादि आलोकादिज्ञापकसामग्रीसत्त्वेऽपि कदाचिदस्माकमपरोक्षी भवत्यत्यन्तासत्त्वात्कार्यस्य त्वपरोक्षज्ञानालम्बनत्वान्नासत्त्वमिति भावः ॥७५॥

प्रकृतेऽनुमाने कार्यस्य सदोपलब्धिप्रसङ्गं पक्षबाधकं शङ्कते—सर्वमिति । वर्तमानवदतीतमागामि च घटादि सदेव चेदुपलब्धिसामग्र्यां सत्यां वर्तमानवत्प्रागजनेर्नाशाच्चोर्ध्वमुपलभ्येत न चैवं; न च सर्वदा कार्योपलब्धिसामग्रीराहित्यं तत्कारणस्यैव तत्सामग्रीत्वात्कारणस्य च प्रागुत्पत्तेरपि सत्त्वस्य साधितत्वात्तस्मादयुक्तं कार्यस्य सदासत्त्वमित्यर्थः ॥७६॥

विद्यमानत्वमात्रं सामग्रीसत्त्वं वा कार्यस्य सदोपलब्धिप्रसञ्जकं ? नाऽऽद्य इत्याह—नेत्यादिना । अर्थक्रियावदित्यपेरर्थः । तत्र सर्वसंमतिद्योतनार्थो हिशब्दः । सत्तामात्रेण व्यक्त्यनुपगमे स्वानुभवं हेतुमाह—सदेवेति ॥७७॥

१. २४-५

अङ्गीकर्तव्यमेतच्च भवद्भिरविशङ्कितैः । न चेद्वः सर्वसिद्धान्तो नश्येत्सैकतकूपवत् ॥७८॥
प्रमाणव्यतिरेकेण प्रमेयोऽर्थो भवन्भवेत् । मानादव्यतिरेके हि मानमेयौ न सिध्यतः ॥७९॥
कारणस्यापि नास्तित्वं कार्यासत्त्वे प्रसज्यते । न हि कार्यमनाश्रित्य कारणं जगतीक्ष्यते ॥८०॥
सत्तामात्रेण किं कार्यं समवाय्यादिकारणम् । साधयेद्व्यापृतं वेदं तथाऽपीष्टं न सिध्यति ॥८१॥

सत्तामात्रेण कारणत्रयस्य कार्यकरत्वे दोषाः

सत्तामात्रेण चेत्कुर्यात्कारणत्रितयं तदा । कार्योत्पत्तिस्थितिलयाः प्राप्नुयुर्युगपत्सदा ॥८२॥
अविशेषाच्च सत्तायाः सर्वतः सर्वसंभवः । सर्व एव न संसिध्येद्व्यवहारश्च लौकिकः ॥८३॥
त्रीण्येव कारणानीति निष्फलाऽवधृतिर्भवेत् । यथा त्रयं तथा सर्वं सत्तया किं न कारणम् ॥८४॥

व्यापारविशिष्टत्वेन तेषां कारणत्वे दोषाः

संभूय कार्यं कुर्याच्चेत्कारणत्रितयं तदा । मेलनस्यापि कार्यत्वात्कथं तत्स्यात्त्रयं विना ॥८५॥

अभिव्यक्तिसामग्रीसत्त्वमभिव्यक्तिसाधकं न तु सतस्तत्सामग्रीनियमो वर्तमानघटादावदृष्टेरनेन कारणसत्त्वमेव तत्सत्त्वमिति प्रत्युक्तं वर्तमानघटे तत्सत्त्वेऽपि व्यञ्जकसत्त्वानियमादतः सतोऽप्यव्यज्यमानत्वं स्थायिवादिभिरेष्टव्यमित्याह—अङ्गीकर्तव्यमिति । सच्चेद्व्यज्यमानमेवेति नियमे क्षणमात्रवृत्तित्वाद्व्यक्तेर्ज्ञप्तिरूपायास्तत्समकालस्य वस्तुनोऽपि क्षणिकत्वापातात् क्षणिकवादिनां सर्वं स्थायीति सिद्धान्तस्य हानिरित्याह—न चेदिति ॥७८॥

क्षणिकं ज्ञानमात्रं सत्त्वमित्युपगमाद्योगाचारमते क्षणिकत्वं वस्तुनो नानिष्टमित्याशङ्क्य ज्ञानस्य ज्ञेयेऽन्तर्भावस्तस्य ज्ञाने वेति विकल्प्याऽऽद्ये दोषमाह—प्रमाणेति । मानस्य मेयाद्भेदेनावस्थाने मेयसिद्धिः, अन्यथा विषयाभावात्तदपेक्षविषयस्याप्यभावः स्यादित्यर्थः । भवन्निति व्यवहारयोग्यतामापद्यमानत्वमुच्यते । द्वितीयं दूषयति—मानादिति । मेयोऽर्थो मानाभिन्नश्चेन्मानमेयभेदासिद्धिर्मेयस्य मानात्मना समाप्तत्वान्मेयासिद्धौ च तदपेक्षमानासिद्धेः शून्यतेत्यर्थः ॥७९॥

विज्ञानवादासंभवेऽपि स्थायिवादे कार्यस्य प्रागुत्पत्तेरनुपलम्भोऽसत्त्वाद्वा सामग्र्यभावाद्वेति संशयान्न सोऽपि सिध्येदित्याशङ्क्य सामग्र्यभावादेव कार्यस्य प्रागनुपलब्धिरन्यथा कारणस्यापि प्रागसत्त्वापत्तेस्तत्सत्त्वस्य च साधितत्वादित्याह—कारणस्येति । कार्यस्यासत्त्वे किमिति कारणस्यासत्त्वं तत्राऽऽह—न हीति । कार्यकारणयोरन्योन्यसंबन्धत्वस्य लोकसिद्धत्वादेकाभावेऽन्याभावः स्यादित्यर्थः ॥८०॥

कार्याभावेऽपि समवाय्यसमवायिनिमित्तकारणत्रितयं तिष्ठति न हि घटो नास्तीति मृदवयवानां तेषां मिथः संयोगो वा कुलालादिर्वा नास्तीत्यारम्भवादमाशङ्क्याऽऽह—सत्तेति । कारणत्रितयमव्यापृतं व्यापृतं वा कार्यं कुर्यान्नोभयथाऽपि कार्यकारणत्वसिद्धिरित्यर्थः ॥८१॥

तदेव साधयितुमाद्यमनुवदति—सत्तामात्रेणेति । तत्र कार्योत्पत्तिकाले तस्य स्थितिलयौ स्यातां त्रितयस्य तदा सत्त्वात्तन्मात्रेण च कार्यकरत्वादेवं स्थितिकाले जनिलयौ लयकाले च स्थितिजनी प्रसज्येयातामित्यव्यवस्थामाह—तदेति । यदा त्रितयं तदा सदैव जन्मादीनां प्रसक्तिरित्यव्यवस्थान्तरमाह—सदेति ॥८२॥

सत्तामात्रेण त्रितयस्य कार्यकरत्वे सर्वत्र सत्त्वस्य विशेषाभावात्कार्यकारणनियमासिद्धिरिति दोषान्तरमाह—अविशेषादिति । भवतु सर्वं सर्वस्य कारणं तथाऽपि कार्यकारणत्वं सिध्यत्येव नेत्याह—सर्व इति । घटार्थिनो मृदाद्यादाननियमायोगो वैदिकश्च व्यवहारो व्यवस्थामनास्थातुर्न स्यादित्यर्थः ॥८३॥

त्रितयस्य सत्तामात्रेण कार्यकरत्वे दोषान्तरमाह—त्रीणीति । अवधारणवैफल्यमुपपादयति—यथेति ॥८४॥

कल्पान्तरमनुवदति—संभूयेति । व्यापाराविष्टं भूत्वेत्यर्थः । तस्य तदाविष्टत्वमकार्यं कार्यं वा? आद्ये तस्य सदा भावात्कार्यमपि सदा स्याद्द्वितीये तस्यापि कार्यत्वात् त्रितयमस्ति न वा? न चेत्कार्यस्यैव तदभावेऽपि जन्म स्यादिति मत्वाऽऽह—तदेति ॥८५॥

कारणत्रितयेनाथ एकैकस्य प्रसिध्यति । तस्य तस्य तथैवेति साऽनवस्था प्रसज्यते ॥८६॥

वस्तुनः सदसत्त्वाय ह्यभिव्यक्त्येकहेतुतः । ऐश्वर्यं न प्रमाणस्य[1] सत्त्वं वस्तुबलाद्यतः ॥८७॥

प्रागभिव्यक्तेः कारणस्यैव कार्यावरकत्वम्

द्वैविध्यादावृतेः कार्यं नेक्ष्यते तेन संवृतम् । लब्धात्मकस्य कुड्यादि प्राक्सूतेः कारणावृतिः ॥८८॥

मृदात्मनोपसंश्लिष्टं कार्यं कारणतामितम् । कारणत्वाद्धि तत्स्थं तत्तदृते कारणं कथम् ॥८९॥

यदि कारणसंस्थं सत्तन्निमित्तं च कारणम् । व्यवधानान्तराभावात्किमर्थं नोपलभ्यते ॥९०॥

कार्यान्तरेण संस्थानान्मृदादेर्नोपलभ्यते । सदात्मनोपलब्धिस्तु न कदाचन हीयते ॥९१॥

नष्टोत्पन्नसदभावशब्दप्रत्ययभेदधीः । अभिव्यक्तितिरोभूतिद्वैविध्यापेक्षयैव तु ॥९२॥

एकैकस्य हेतोर्व्यापाराविष्टत्वं त्रितयेन सिध्यतीति कल्पान्तरमाह—कारणेति । विवक्षितो हि संधिर्भवतीति मन्यते । अथो इति पाठश्चेदप्यर्थलाभान्न वक्तव्यमस्ति । तस्य तस्य त्रितयस्य व्यापाराविष्टत्वं परेण सव्यापारेण त्रितयेनेत्यनवस्थानादारम्भवादासंभवात्प्रागुत्पत्तेः सदेव कार्यमिति मत्वाऽऽह—तस्येति । क्षणिकत्ववादिनि प्रस्तुतामनवस्थां सेति परामृशति ॥८६॥

यदुपलभ्यते तदेव सदिति नियमात्प्रागुत्पत्तेरनुपलब्धं न सदित्याशङ्क्यानुपलब्धेरन्यथासिद्धेरुक्तत्वान्नैवमित्याह—वस्तुन इति । यस्य सत्त्वायासत्त्वाय वा मानस्य न सामर्थ्यं तस्य तद्व्यक्तिमात्रहेतुत्वात्सत्त्वादि वस्तुनः स्वरूपवशान्निजसिद्धं सत्त्वं न हि यदुपलभ्यते तदेव सदिति शक्यं नियन्तुमनुपलब्धस्यापि निध्यादेः सत्त्वस्वीकारादतो नाव्यक्त्या कार्यस्य प्रागुत्पत्तेरसत्त्वशङ्केत्यर्थः ॥८७॥

न[2] द्विविधत्वादित्यादिभाष्ये नञर्थमुक्त्वा विद्यमानस्य प्रागनुपलब्धिनिमित्तं द्विविधत्वादित्यादिभाष्योक्तं दर्शयति—द्वैविध्यादिति । तेन द्विविधेनाऽऽवरणेनेति यावत् । उत्पन्नस्य कुड्याद्यावरणमनुत्पन्नस्य कारणमित्यावरणद्वैविध्यमाह—लब्धेति ॥८८॥

प्रागुत्पत्तेर्यदि कारणं कार्यमावृणोति तर्हि तयोर्भेदो घटकुड्यवदित्याशङ्क्याऽऽह—मृदात्मनेति । मृदादिकारणरूपेण व्याप्तं घटादिकार्यं स्वनामरूपतिरोधानेन प्राक्कारणतां गतमिति कार्यस्य कारणमावरणं न कुड्यादिवदिति नास्ति भेदस्तयोरित्यर्थः । कार्यस्य स्वकारणस्थत्वे तेन व्याप्तिर्न च कार्यं कारणस्थं पूर्वोत्तरक्षणवर्तिनोस्तयोराधाराधेयत्वायोगादिति चेन्नेत्याह—कारणत्वादिति । कारणत्वादेव मृदादेर्घटादिकार्यं तन्निष्ठमित्यत्र हिशब्दसूचितं हेतुमाह—तदृत इति । कार्यं विना कारणत्वायोगात्तस्य तदपेक्षत्वादित्यर्थः । पूर्वक्षणवर्तित्वेऽपि कारणस्यानन्तरक्षणवर्ति कार्यं तत्स्थमेव कार्यकारणयोरुभयोरपि स्थायित्वाभ्युपगमादन्यथा मिथोऽसंबन्धयोस्तद्भावस्यैवासंभवादिति भावः ॥८९॥

यदि कार्यं कारणस्थं तच्च द्वयं सदेव, कार्यव्यक्तिनिमित्तं च कारणं तदा कारणेतराव्यवधानात्तस्य च व्यञ्जकत्वात्प्रागपि कार्यं दृश्येतान्यथा तदसत्तेति प्रागुक्तबाधकतादवस्थ्यमिति शङ्कते—यदीति ॥९०॥

किं घटादेः स्वाकारविशेषेणोपलम्भः साध्यते किंवा सदात्मनेति विकल्प्याऽऽद्यं दूषयति—कार्यान्तरेणेति । मृदादिकारणस्य पिण्डादिरूपेण प्रागवस्थायामवस्थानात्तेन संवृतत्वाद्घटादिकार्यमाकारविशेषेण नोपलभ्यते विरुद्धानेककार्याणामपर्यायमेकस्मादुत्पत्तेरपास्तत्वादित्यर्थः । द्वितीये त्विष्टापत्तिरित्याह—सदात्मनेति ॥९१॥

प्राक्कार्यास्तित्वे सदा तदुपलब्धिप्रसङ्गं पक्षबाधकं निराकृत्य घटो नष्टो घटो नास्तीत्यादिप्रयोगप्रत्ययभेदानुपपत्तिं बाधकान्तरमाशङ्क्याऽऽह—नष्टेति । पिण्डाद्यावरणभङ्गेनाभिव्यक्तावुत्पत्तिव्यवहारो दीपादिना तमोनिरासेन व्यक्तावस्तिव्यवहारः कपालादिना तिरोभावे नष्टव्यवहारः पिण्डादिना तिरोभावे नास्तिव्यवहार इति भेदः ॥९२॥

१. प्रमाणस्य ऐश्वर्यं =सामर्थ्यं सदसत्त्वाय न भवति तस्य तत्प्रकाशमात्रहेतुत्वात् ।

२. २५-८ ।

कुड्याद्यावरणं दृष्टं भिन्नदेशं सदाऽऽवृतात् । कुम्भाद्यभिन्नदेशस्थं पिण्डाद्यावरणं कथम् ॥९३॥
नैवं पयोघृतादीनामेकदेशत्वदर्शनात् ॥९४॥
अनावरणता चेत्स्यात्कपालादेर्घटात्मनि । अन्तर्भावान्न साध्वेतद्विभक्तानां भवेद्यतः ॥९५॥

यदि पूर्वं आवरणं घटादेरस्ति तदा तद्भङ्गे यत्नेःकार्यः न घटोत्पत्तौ इति शंकासमाधाने

आवृतत्वमथ मतं भङ्ग एव प्रसज्यते । यत्नो न तु घटोत्पत्तौ नैवमप्युपपद्यते ॥९६॥
न हि लोकेऽस्ति नियमो घटाभिव्यक्तिहेतुकः । अनेकसाधना यस्मादभिव्यक्तिरिहेक्ष्यते ॥९७॥
दीपेनान्यो मथा चान्यस्तथा चक्रादिना परः । अभिव्यक्तिं प्रयात्यर्थः पुरा सन्नेव सर्वदा ॥९८॥
तमोविनाशनायैव प्रदीपोऽपीति चेन्मतम् । नष्टे तमसि कुम्भोऽपि स्वयमेवोपलभ्यते ॥९९॥
किमेवं भवतः सिद्धं यदि नाम तमोहृतिः । सदेव व्यज्यते सर्वमिति नैवापनुद्यते ॥१००॥

अभिव्यक्तिरेव मानफलं अज्ञाननिवृत्तिः पश्चादिति साधनम्

अज्ञातत्वापमार्ष्ट्यर्थमुपादित्सन्ति मानिनः । मानानि मानसंबन्धादज्ञातत्वं च नश्यति ॥ १ ॥
यतः सति क्रियाभेदे किं पूर्वमिति चोदना । क्रियाभेदे न च न्याय्यं ध्वान्तनाशः क्रियाफलम् ॥ २ ॥

पिण्डादि न घटाद्यावरणं तेन समानदेशत्वाद्यद्यस्याऽऽवरणं न तत्तेन समानदेशं यथा कुड्यादि घटाद्यावरणं न तेन तुल्यदेशमिति शङ्कते—कुड्यादीति ॥९३॥

किमिदं समानदेशत्वं किमेकाश्रयत्वं किं वैककारणकत्वमाद्यं विरुद्धत्वेन दूषयति—नैवमिति । क्षीरनीरयोर्घृततैलयोश्च तुल्याश्रयप्रविष्टयोरेव परस्परमावृतत्वदर्शनाद्धेतोर्विरुद्धतया नानुमानोत्थानमित्यर्थः । द्वितीयमुत्थापयति—अनावरणतेति । घटस्याऽऽत्मा तत्कारणं मृदुच्यते तत्रान्तर्भावस्तस्यां कपालादेः स्थितिरस्मात्तुल्यदेशत्वाद्घटवत्तस्य कपालादि नाऽऽवरणमित्यर्थः । घटावस्थमृन्मात्रवृत्तिकपालादेर्घटानावरणत्वमिष्टमेवेति सिद्धसाध्यताऽव्यक्तघटावस्थमृद्वृत्तिकपालादेरनावरणत्वसाधने हेत्वसिद्धिर्घटस्य कपालादेश्च स्वाश्रयमृदवयवभेदादिति समाधत्ते—न साध्विति । विद्यमानस्यैवाऽऽवृतत्वादनुपलब्धिश्चेदावरणतिरस्कारे यत्नः स्यान्न घटादेरुत्पत्तौ तदुत्पत्तौ च घटाद्यर्थी यततेऽतोऽनुभवविरोधः सत्कार्यवादिन इति शङ्कते—अथेति । घटव्यक्तिमुद्देश्यां हेतूकृत्याऽऽवरणभङ्गादेव सेति न नियमो लोकेऽस्तीत्युत्तरमाह—नैवमिति । घटाभिव्यक्तिहेतुत इति पाठे घटाभिव्यक्तिहेतोरावरणभङ्गत्वेन नियमो नास्तीत्यर्थः । अनियमे हेतुमाह—अनेकेति । इहेति लोकोक्तिः ॥९४-९५-९६-९७॥

व्यक्तेरनेकसाधनत्वमुदाहरति—दीपेनेति । घटादिस्तमसाऽऽवृतो दीपेन व्यज्यते दध्याद्यावृतो नवनीतादिर्मथा, पिण्डाद्यावृतस्तु शरावादिश्चक्रादिनेति भेदः । व्यक्तिभेदवत्सत्त्वेऽपि भेदमाशङ्क्याऽऽह—पुरेति । साधनभेदाद्व्यक्तिभेदेऽपि व्यक्त्यपेक्षया पूर्वं सन्नेवार्थो व्यज्यते न तत्सत्त्वे भेदोऽस्तीत्येर्थः ॥९८॥

दीपेनान्यो व्यक्तिं यातीत्यत्र चोदयति—तम इति । मथ्यादेरपि दध्यादिप्रतिबन्धनिवर्तकत्वमेवेत्यपेरर्थः । दीपस्तमस्तिरयति चेत्कथं कुम्भोपलब्धिरत आह—नष्ट इति । नवनीतादेरपि दध्यादिनाशे स्वयमेवोपलब्धिरिति वक्तुमपिशब्दः ॥९९॥

दीपोत्पत्तियत्नेन तमो नाश्यते चेदेवमस्तु नाम नैतावता त्वदिष्टं प्रागभिव्यक्तेरसत्त्वं सिध्यतीत्याह—किमेवमिति । भवतोऽपि सिद्धान्तासिद्धिरिति नेत्याह—सदेवेति ॥१००॥

किंचाऽऽवरणभङ्गार्थं नाभिव्यञ्जकव्यापारः किं त्वर्थप्रकाशनार्थं तद्भङ्गस्त्वर्थादिति वक्तुमादौ सामान्यन्यायमाह—अज्ञातत्वेति । मानिनः प्रामाणिका इति यावत् । अज्ञाननिवृत्तिद्वारेति दर्शयितुं चकारः ॥१०१॥

नन्वज्ञाने सति मानप्रवृत्तिस्तन्निवृतौ वा? आद्ये विरोधाभावान्न तेनाज्ञानहानिर्द्वितीये मानवैयर्थ्यमतो मानं पूर्वं पश्चादज्ञाननाशो विपरीतं वेति निश्चयासिद्धिरित्याशङ्क्य साधारणमर्थमाह—यत इति । क्रिययोर्भेदे पौर्वापर्यविचार एककर्तृकयोस्तयोः यौगपद्यायोगात्क्रियैक्ये नासौ सावकाशः क्रियातत्फलयोः पौर्वापर्यस्य व्यवस्थित-

ज्ञातुर्ज्ञानाभिनिष्पत्तिर्निष्पन्नं मेयमेति सत् । मेयाभिसंगतं तच्च मेयाभत्वं प्रपद्यते ॥ ३ ॥
व्यवधानं तमो यस्माद्घटोऽयमिति संविदः । प्रकाशवद्घटं च्र्ते कुतस्तत्तमसो ह्रुतिः ॥ ४ ॥
प्रमाणव्यापृतेर्ज्ञातोऽज्ञातोऽज्ञातत्वहानिकृत् । घटोऽवगत इत्येतत्ततः संपद्यते फलम् ॥ ५ ॥
यद्यावरणभङ्गाय यत्नः स्याद्घटवित्तये । कार्यान्तरं भवेद्भङ्गात्तेनाप्यावृतता घटे ॥ ६ ॥
व्यवधानान्तरं तस्मादन्यदप्यापतेत्तदा । अतो नियत एवात्र व्यापारः फलवान्भवेत् ॥ ७ ॥

कार्यस्य प्राक्सत्त्वे अनुमानान्तरम्

अतीतैष्यद्घटज्ञानं सद्घटालम्बनं भवेत् । घटज्ञानत्वतः साक्षादिहत्यघटबोधवत् ॥ ८ ॥
अतीतोऽनागतोऽर्थोऽसन्यदि वाऽभ्युपगम्यते । अतीतानागतज्ञानं मिथ्येशस्य प्रसज्यते ॥ ९ ॥
प्रत्यक्षं नापि चेशस्य केनचित्प्रतिहन्यते । अपविद्धातिशीत्येव[१] तज्ज्ञानं केन हन्यते ॥१०॥

त्वादतो मानाज्ञाननाशयोर्न पौर्वापर्यं चोदनीयमित्यर्थः । तत्र दृष्टान्तमाह—ध्वान्तेति । तमोनाशो दीपादिप्रकाशफलं तत्र पौर्वापर्यं सर्वैरिष्टं तथा प्रकृतेऽपि सिद्धमित्यर्थः ॥१०२॥

दार्ष्टान्तिके पौर्वापर्यं साधयति—ज्ञातुरिति । साभासबुद्ध्याश्रयं ज्ञानमादावुत्पद्यते तच्च विषयं स्पृष्ट्वा तदाकारं भजते तदाकारधीरेव तदावरणं नाशयतीत्यर्थः ॥१०३॥

उक्तरूपबुद्धिपरिणामादेव च घटादिसंविदुत्पत्तौ किमज्ञानध्वंसेनेत्याशङ्क्याऽऽह—व्यवधानमिति । अज्ञानं तमस्तस्मिन्सति न घटसंविदिति शेषः । तन्निवृत्तिरेव तर्हि ज्ञानात्प्राची किं न स्यादित्याशङ्क्य दृष्टान्तमाह—प्रकाशवदिति । प्रकाशव्याप्तं घटमृते तदावृतितमोहानेरदृष्टेस्तत्र प्रकाशप्राथम्यं तमोहानेश्च पाश्चात्यं दृष्टमित्यर्थः ॥१०४॥

दार्ष्टान्तिकमाह—प्रमाणेति । घटस्तावत्पूर्वमज्ञातो बुद्धिवृत्त्या बाह्येन्द्रियद्वारा व्याप्यते तद्व्याप्तश्च स्वगताज्ञानध्वस्तिविशिष्टः प्राकट्यभागी ततश्चाऽऽदानादिव्यवहारसिद्धिरित्यर्थः ॥१०५॥

व्यञ्जकव्यापारस्यार्थप्रकाशार्थत्वादावृतिहानिरर्थादिति स्थिते तद्ध्वस्तावेव च यत्नो नेति सिद्धेऽर्थे हेत्वन्तरमाह—यदीति । घटावगत्यर्थमावृतिभङ्गस्तदर्थं यत्नश्चेत्तर्हि पिण्डाद्यावृतिभङ्गादपि विदलचूर्णादिकार्यान्तरसंभवात्तेनाऽऽवृते घटे न व्यक्तिः स्यादित्यर्थः ॥१०६॥

विदलादेरपि भङ्गे तद्व्यक्तिरिति चेन्नेत्याह—व्यवधानान्तरमिति । तस्माद्विदलादेरिति यावत् । तदा तद्भङ्गावस्थायामित्यर्थः । पूर्वेण सजातीयं विजातीयं वेत्यन्तरशब्दार्थः । आवृतिभङ्गे चेद्यत्नस्तदा यावच्छून्यं तद्भावात्तद्भङ्गापेक्षायां घटाव्यक्तिरेव स्यादिति भावः । आवृतिभङ्गार्थे यत्ने घटानुपलब्धिर्यतो दर्शिताऽतस्तदुपलब्ध्यर्थत्वेन नियतः सन्यत्नः सफलः स्यादित्युपसंहरति—अत इति । अत्रेति प्रयतितोच्यते ॥१०७॥

उत्पत्तेः पूर्वं सदपि कार्यमावृतत्वाददृष्टमित्येतत्प्रसङ्गेनाऽऽगतं चोद्यमपोद्य प्रकृतमभिव्यक्तिलिङ्गकमनुमानमुपसंहृतम् । इदानीमतीतानागतप्रत्ययभेदाच्चेत्यादिभाष्यविवक्षितमनुमानमाह—अतीतेति । विमतं सदालम्बनं घटज्ञानत्वाद्वर्तमानघटज्ञानवदित्यर्थः । किं चैष्यद्घटार्था प्रवृत्तिर्लोके दृष्टा न चात्यन्तासति सा युक्ता योगिनां ईशस्य च अतीतादिविषयं प्रत्यक्षज्ञानमिष्टं तच्च विद्यमानोपलम्भनम् । अतो घटस्यं सदा सत्त्वमित्याह—साक्षादिति ॥१०८॥

उक्तेऽनुमाने विपक्षमनूद्य बाधकमाह—अतीत इत्यादिना । प्रत्यक्षं तावदैश्वरं ज्ञानं तच्चेदतीतादिविषयमसदालम्बनं तर्हि तस्मिन्नंशे प्रामाण्यमपजह्यादयथार्थत्वादित्यर्थः ॥१०९॥

प्रसङ्गस्येष्टत्वमाशङ्क्याऽऽह—प्रत्यक्षमिति । अप्रतिघातं साधयति—अपविद्धेति । अधिकबलं हि बाधकं न चानतिशयादैशज्ञानादधिकबलं ज्ञानं दृष्टमतो बाधकाभावान्न तन्मिथ्येत्यर्थः ॥११०॥

१. अपविद्धेति—अपविद्धा अतिशीतिः अधिकबलं मान्तरं यस्मात् इति विग्रहः ( न्या० ) । २. ८५.५

घटसत्त्वे पुरोत्पत्तेरनुमा च प्रदर्शिता । तस्मात्सदेव कार्यं स्यात्प्रागुत्पत्तेरपि ध्रुवम् ॥११॥

भूतभाविघटनिषेधासंभवनिरूपणम्

एष्यद्घटनिषेधे च विरोधोऽपि प्रसज्यते । भविष्यति न भाव्यर्थो वर्तमाननिषेधवत् ॥१२॥
गृह्यमाणो घटो नासन्निति यद्वद्विरुध्यते । अतीतैष्यन्मितघटप्रतिषेधस्तथाविधः ॥१३॥
प्रागभावादयोऽभावाः सन्तः स्युरतिरेकिणः । व्यपदेशाद्घटेनैषामन्योन्याभाववद्ध्रुवम् ॥१४॥
एवं च सति संबन्धो न भावाभावयोर्मिथः । विरोधाद्भावयोर्यद्वदेकत्वान्नाप्यभावयोः ॥१५॥
असतश्च न संबन्धोऽकारकत्वात्कथंचन । संबन्धश्च क्रियात्मत्वान्न सिध्येत्कारकं विना ॥१६॥
प्रागभावो घटस्येति घट एवोच्यते यदि । घट एव घटस्येति व्यपदेशो न युज्यते ॥१७॥

तस्य सम्यक्त्वेऽपि प्रागसद्घटविषयत्वं किं न स्यादित्याशङ्क्याऽऽह—घटेति । उक्तोपपत्तिसमुच्चयार्थश्चकारः । उक्तमानफलमाह—तस्मादिति । अपिना वर्तमानकार्यं दृष्टान्त्यते ॥१११॥

किं चातीतस्य भविष्यतश्च घटस्य कारकव्यापारदशायामसत्त्वमिति कोऽर्थः ? किं तस्यातीतत्वादि तदा नास्ति किंवा नार्थक्रियासामर्थ्यं सत्त्वम् ? आद्ये व्याहतिरित्याह—एष्यदिति । अतीतघटनिषेधसमुच्चयार्थश्चकारः । ईश्वरादिप्रत्यक्षस्याप्रामाण्यप्रसक्त्या सह विरोधं समुच्चेतुमपीत्युक्तम् । एष्यतो गतस्य च घटस्य भविष्यत्वादिरूपसत्त्वस्य कारकव्यापारकाले निषेधश्चेद्व्याहतिरित्युक्त्वा तामेव स्फुटयति—भविष्यतीति । भविष्यत्यभूदिति च घटस्य वर्तमानकाले भविष्यत्वादिरूपसत्त्वमुच्यते तच्चेत्तदैव निषिध्यते तदा भविष्यति न भविष्यत्यभून्नाभूदिति व्याहतिरित्यर्थः ॥११२॥

वर्तमाननिषेधवदित्युक्तं दृष्टान्तं स्पष्टयति—गृह्यमाण इति । एष न वर्तते किं त्वसन्निति विरुध्यते यद्वदिति योजना । नो सन्निति पाठे व्यक्तैव योजना । वर्तमानो घटो न वर्तत इत्युक्ते व्यक्ता हि व्याहतिरित्यर्थः । दार्ष्टान्तिकं विवृणोति—अतीतेति । अतीतस्य भविष्यतश्चातीतत्वादिरूपेणाधुना मितस्य घटस्य तत्रैव तेनाऽऽकारेण निषेधो वर्तमानघटनिषेधवद्व्याहतः । द्वितीये त्वथ प्रागुत्पत्तेरित्यादिभाष्योक्तं[1] द्रष्टव्यमिति भावः ॥११३॥

किंच प्रागभावादयो घटाद्भिद्यन्ते तेन व्यपदिश्यमानत्वात्तदन्योन्याभाववत्ते च सन्तो भिन्नत्वात्पटवदित्यनुमानद्वयमाह—प्रागिति । न चाऽऽद्ये प्रयोगे दृष्टान्तस्य साध्यवैकल्यं घटान्योन्याभावस्य पटाद्यात्मनो घटादन्यत्वाभावे घटस्य पटाद्यात्मत्वप्रसङ्गात्, न चान्योन्याभावस्यान्यत्वेऽनवस्था, स्वरूपभेदाङ्गीकाराद्द्वितीयानुमाने च स्वरूपसत्त्वोक्त्या न व्याघातः स्वरूपभेदाच्च हेतुसिद्धिरिति भावः । तेषां घटादन्यत्वात्तस्यानाद्यनन्तत्वमद्वयत्वं सर्वात्मत्वं च प्राप्तमित्यन्यत्वानुमानफलमाह—ध्रुवमिति ॥११४॥

अन्यत्वेऽपि तेषां घटसंबन्धात्कुतोऽस्योक्तरूपतेत्याशङ्क्य द्वितीयानुमानफलमाह—एवं चेति । अभावानां सत्त्वेऽभावस्यैव भावान्न भावाभावयोर्मिथः संगतिरित्यर्थः । विरोधादित्यभावस्यैवासत्त्वादिति यावत् । संबन्धाभावे दृष्टान्तो भावयोरिति । यथाऽभावयोर्भावयोर्वैक्यान्न मिथो योगो न हि भावेऽभावे वा कश्चिदाकारो भेदकस्तथा भावाभावयोरप्युक्तन्यायेनैक्यान्नासावित्यर्थः ॥११५॥

अभावस्य संबन्धाभावे हेत्वन्तरमाह—असतश्चेति । असत्त्वादेवाभावस्य कारणत्वायोगान्न भावेन संयोगादीनामन्यतमोऽपि संबन्धः सिध्यतीत्यर्थः । नन्वभावस्याकारकत्वेऽपि संबन्धो युक्तः क्रियैव कारकापेक्षा, संबन्धस्तु न क्रियेति नेत्याह—संबन्धश्चेति । न हि क्रियापूर्वः संबन्धो लाघवात्तदात्मत्वाद्धात्वर्थत्वाच्च योगस्य क्रियात्वसंभवादिति भावः ॥११६॥

भावाभावयोः संबन्धस्य प्रसिद्धत्वात्कथं स निरस्यते ? तत्र वक्तव्यं घटप्रागभावादिर्घटस्ततोऽन्यो वेति तत्राऽऽद्यमनुवदति–प्रागिति । प्रागभावग्रहणमभावान्तरोपलक्षणार्थम् । व्यपदेशानुपपत्त्या दूषयति–घट इति ॥११७॥

१. २९.४

**न चासत्त्वं घटस्यैवं प्रागभावो घटो न च । अवध्यवधिमद्भेदे प्रागभावोऽपि सिध्यति ॥१८॥**
**अथ प्रकल्प्य संबन्धं घटस्येत्यभिधीयते । क्लृप्तस्यैव ह्यभावस्य व्यपदेशः प्रसज्यते ॥१९॥**
**अर्थान्तरमभावश्चेदुक्तं संस्मर्तुमर्हसि । शशशृङ्गादिकल्पस्य घटस्य स न युज्यते ॥२०॥**

पराभिमतजन्मनो निराकरणम्

**स्वहेतुसत्तासंबन्धः संबन्धस्य सदाश्रयात् । अथास्त्वयुतसिद्धानां नासतोऽयुतसिद्धता ॥२१॥**
**न भावाभावयोर्योगो नापि चायमभावयोः । सतोरेव यतो योगः सिद्धं कार्यमतः सदा ॥२२॥**

"मृत्युनैवेदमावृतमि"त्यत्र मृत्युशब्दार्थः

**द्वैतैकत्वात्मकं रूपं वैराजं कार्यमात्मनः । समुद्र एव ह्यस्येति विराट्कारणमब्रवीत् ॥२३॥**
**संभूय कार्यभूतानि भूतयोनिं यतो विभुम् । जन्मस्थितिलयान्यान्ति समुद्रस्तेन विश्वकृत् ॥२४॥**

किंच प्रागभावादेर्घटान्तर्भावो घटस्य तस्मिन्नन्तर्भावो वा? आद्ये तस्य नासत्त्वमित्याह—न चेति । एवमित्यभावस्य घटाद्यन्तर्भावे सतीति यावत् । द्वितीयं प्रत्याह—प्रागभाव इति । प्रागभावग्रहणमिहापि पूर्ववत् । घटो न च स्वरूपमिति शेषः । उभयत्र हेतुमाह—अवधीति । अवधिर्घटोऽवधिमानभावः । अपिना ध्वंसादिग्रहः ॥११८॥

प्रागभावादेर्घटत्वेऽपि संबन्धं कल्पयित्वा स घटस्येत्युक्तिश्चैतन्यं पुरुषस्येतिवदिति व्यपदेशोपपत्तिं चोदयति—अथेति । संबन्धस्य कल्पितत्वे संबन्ध्यभावोऽपि कल्पितः स्यादित्याह—क्लृप्तस्येति । यत्र संबन्धं कल्पयित्वा व्यपदेशस्तत्र न वास्तवो भेदो यथा राहुशिरसोस्तथा चात्रापि संबन्धे कल्पिते तथात्वाद्भेदस्य वास्तवत्वं संबन्धिनोरन्यतरस्य स्यान्न चाभावस्तथा सापेक्षत्वादतो घटो वास्तव इत्यर्थः ॥११९॥

कल्पान्तरमाह—अर्थान्तरमिति । व्यतिरेके सदेवासदसद्वा तत्किमित्यादिना दूषितमेतदित्याह—उक्तमिति । व्यतिरेकादिविकल्पेनाभावं निरस्यासत्कार्यवादे दोषान्तरमाह—शशेति ॥१२०॥

स्वहेतुसंबन्धः सत्तासंबन्धो वा जन्मेति तार्किकाः । न च प्रागुत्पत्तेरसतः संबन्धस्तस्य सतोर्वृत्तेर्न च कार्यस्यात्यन्तासत्त्वाभावान्न शशविषाणसादृश्यं; तस्य प्रागसतोऽत्यन्तासतो विशेषासिद्धेरित्यर्थः। असतोऽपृथक्सिद्धस्य कारणसंबन्धं शङ्कयति—अथेति । परिहरति—नेत्यादिना ॥१२१॥

भावभूतयोरित्यादिभाष्यं[1] व्याकुर्वन्नुक्तं विवृणोति—न भावेति । सतोरेवायुतसिद्धत्वेन संबन्धदर्शनाद्भावाभावयोरभावयोर्वा नायुतसिद्धपूर्वकः संबन्धः सिध्यतीत्यर्थः । कार्यसत्त्वे साधनमुपसंहरति—सिद्धमिति । कार्यसत्त्वे साधकसद्भावादसत्त्वे च दोषस्योक्तत्वादित्यतःशब्दार्थः । सदेति वर्तमानकालवद्भूतभविष्यत्कालयोरपीत्यर्थः॥१२२॥

"नैवेहे"त्यत्र सर्वस्य प्रागुत्पत्तेरसत्त्वाशङ्कां "मृत्युने"त्यादिवाक्यव्याख्यानेन निरस्यता मृत्युशब्देन "समुद्र एवास्ये"त्यादौ समुद्रशब्दितः परमात्मोच्यत इत्युक्तं संप्रति समुद्रशब्दस्यार्थान्तरे रूढेर्न परविषयतेत्याशङ्क्याऽऽह—द्वैतेति । नानारसं वैराजं रूपं परस्याऽऽत्मनः कार्यमिति श्रुतिस्मृतिप्रसिद्ध"मग्निर्मूर्धे"त्यादिश्रुता"वप एव ससर्जे"त्यादिस्मृतौ च परस्यैव सूत्रद्वारा विराडात्मस्रष्टृत्वमतिस्पष्टमित्यर्थः । तथाऽपि कथं समुद्रशब्दस्य परविषयत्वं तत्राऽऽह—समुद्र इति । समुद्र एवास्येत्यादौ समुद्रशब्देन विराडात्मकारणं समुद्रं श्रुतिरुक्तवती तस्माद्विराट्कारणत्वलिङ्गात्प्रसिद्धसमुद्रादर्थान्तरत्वादस्य समुद्रस्य सिद्धं परमात्मत्वमित्यर्थः ॥१२३॥

अथापि परस्मिन्न समुद्रशब्दस्य रूढिरन्यत्र तद्भावान्नापि योगस्तदनवगमाद्योगाच्च रूढेर्बलीयस्त्वादित्याशङ्क्याऽऽह—संभूयेति । कार्यत्वेन स्थितानि वियदादिवस्तूनि मिलित्वा जन्मादीनि द्रवन्ति सन्ति भूतानां योनिमनवच्छिन्नमीशमदृश्यत्वादिगुणं यतो यान्ति तेन परः समुद्रो युक्तो भूतयोनिना संभूय ततो भूतान्युद्गच्छन्ति तस्मिन्नेव द्रवन्तीति व्युत्पत्तेः । रूढियोगापहारन्यायस्तु प्रकृते रूढ्यसंभवात्त्याज्य इति भावः ॥१२४॥

१. ३१-७

कूटस्थस्याज्ञानद्वारा जगत्कारणता

तत्समुद्रं परं ब्रह्म संविन्मात्रसतत्त्वकम् । अविज्ञातात्मयाथात्म्यं हेतुत्वेनेह शब्द्यते ॥१२५॥
इदं जगदुपादानं सर्वशक्त्यजमव्ययम् । स्वात्मैकाज्ञानवृत्तेन ग्रसिष्णु प्रभविष्णु च ॥१२६॥
स्वाभासवर्त्मनैवैतत्स्वात्माज्ञानजभूमिषु । इतं बहुत्वमेकं सद्वियद्यद्वद्घटादिषु ॥१२७॥

ब्रह्मणः सर्वकारणत्वं सर्वात्मत्वमपि मायिकम्

अकारणं सदज्ञानात्कारणत्वं यथैत्यजम् । सर्वकारकतामेवं क्रियातत्फलतामपि ॥१२८॥
साध्यसाधनतां तस्मादज्ञानैकव्यपाश्रयाम् । उच्चैरनूद्य तत्तत्त्वं वेदान्ताः प्रत्यपीपदन् ॥१२९॥
अकारणमकार्यं सत्कार्यकारणतामगात् । मोहादेव ततः शास्त्रं तदुच्छित्तौ प्रवर्तते ॥१३०॥

अव्याकृतं कारणमिति वक्ष्यति कथं ब्रह्म कारणमित्यस्योत्तरम्

आपीताशेषसंसारं[1] शुद्धसंस्कारसंश्रयम् । अव्याकृतमिदं ब्रह्म ह्यन्तर्यामीति चोच्यते ॥१३१॥

परस्य समुद्रत्वेऽपि कूटस्थसंविदेकरसस्य कथं कारणवाचिमृत्युशब्दतेत्याशङ्क्याऽऽह—तत्समुद्रमिति । मृत्युनैवेतिवाक्यमिहशब्दार्थः । कूटस्थचिन्मात्रमपि ब्रह्माज्ञानद्वारा जगत्कारणत्वान्मृत्युशब्दमर्हतीत्यर्थः ॥१२५॥

केचिदज्ञानं विना ब्रह्मैव जगदाकारेण परिणमते क्षीरमिव दध्याकारेणेति कल्पयन्ति तान्प्रत्याह—इदमिति । ब्रह्म सर्वत्रोत्पत्त्यादावात्माविद्याख्यशक्तियुक्तं सज्जगतो निदानं न हि निरवयवस्याक्रियस्य कार्त्स्न्यैकदेशाभ्यां परिणामः संभवतीत्यर्थः । परिणामवादायोगेऽपि विवर्तवादं फलितमाह—स्वात्मेति । स्वस्याऽऽत्मनि यदेकं दण्डायमानमज्ञानं तस्य वृत्तं परिणामित्वं तेनेदमपि ब्रह्म कदाचिज्जगतो ग्रसनशीलं कदाचित्तदाकारेण प्रभवनशीलमित्यर्थः ॥१२६॥

जीवानां मिथो ब्रह्मणश्च भेदवत्कारणत्वमपि तस्य वास्तवमस्तु नाऽऽविद्यमित्याशङ्क्याऽऽह—स्वाभासेति । स्वस्य ब्रह्मणो यस्मिन्नाभासस्तदज्ञानं तथा तदनुसारेणैव स्वाश्रयविषयाज्ञानजदेहादिष्वेतद्ब्रह्मैकमेव वस्तुतः सूत्रं विराडित्यादिना बहुत्वं गतं यथा व्योम घटाद्युपाधिषु नानात्वं गच्छति तद्वदतो भेदस्याऽऽविद्यत्वात्कारणत्वमपि तथेत्यर्थः ॥१२७॥

"सर्वं खल्विदं ब्रह्मे"ति श्रुतेर्ब्रह्मणः सर्वात्मकत्ववत्सर्वकारणत्वमपि वास्तवमित्याशङ्क्याऽऽह—अकारणमिति । कूटस्थं ब्रह्म वस्तुतो न कारणं "तदेतद्ब्रह्मापूर्वमि"त्यादिश्रुतेः तथाऽपि मायया तत्त्वं प्रतिपद्यते । "तस्माद्वा एतस्मादात्मन आकाशः संभूत" इत्यादिश्रौतकारणत्वस्य "मायां तु प्रकृतिमि"त्यादिश्रुतौ मायानिर्वाह्यत्वश्रुतेरतो ब्रह्मणः कारणत्ववत्तत्कृतं सर्वात्मत्वमपि मायिकमेवेत्यर्थः ॥१२८॥

सृष्ट्यादिश्रुतिदृष्टत्वात्कार्यकारणभावस्य ब्रह्मवद्वस्तुत्वमाशङ्क्याऽऽह—साध्येति । उक्तन्यायेनानाद्यज्ञानमात्रनिमित्तां कार्यकारणतां सृष्ट्यादिवाक्यैरनूद्य कल्पितकार्यादेः स्वरूपं प्रत्यग्ब्रह्म "सबाह्याभ्यन्तरो ह्यजः" "तत्त्वमसी"त्यादयो वेदान्तास्तात्पर्येण प्रतिपादयितुं प्रवृत्ता न सृष्ट्यादिप्रपञ्चस्तेषु विवक्षितस्तस्यापूर्वत्वाभावादफलत्वाच्चेत्यर्थः ॥१२९॥

उक्तेऽर्थे नैवेहेत्यादिवाक्यस्य तात्पर्यमाह—अकारणमिति । निष्प्रपञ्चस्य ब्रह्मणः स्वाविद्याद्वारा जगदात्मत्वं तत्कारणत्वं च नैवेहेत्यादिनोच्यते । न च स्तुत्यर्थोत्पत्तिरित्युक्तिविरोधस्तदवान्तरतात्पर्यमेतन्महातात्पर्यमिति विभागादिति भावः । कार्यकारणत्वस्य मोहनिमित्तत्वे सहेतुबन्धध्वस्तौ हेतुभूतज्ञानार्थत्वेन शास्त्रारम्भोऽपि सिध्यतीत्युक्तेऽर्थापत्तिमाह—तत इति ॥१३०॥

अव्याकृतादि जगत्कारणं "तद्धेदमि"त्यादौ श्रूयते तत्कथं ब्रह्म तत्कारणमित्याशङ्क्याऽऽह—आपीतेति ।

---

१. आपीताशेषसंसारं—स्वस्मिन् उपसंहृतसर्वस्थूलसूक्ष्मप्रपञ्चं शुद्धसंस्काराश्रयं संस्कारमात्राश्रयं न तु तत्कार्याश्रयम् ।

**अज्ञानानुपमर्देन व्याकृतिर्याऽस्य जायते । स्वप्नविज्ञानवन्नासौ सत्यमेयव्यपाश्रया ।।१३२।।**
**सम्यग्ज्ञानसमुत्पत्तौ हेतुत्वं तु निगच्छति । निद्रां हत्वा यतः स्वप्नज्ञानादपि विबुध्यते ।।१३३।।**

असत्यादपि सत्यज्ञानोत्पत्तिसमर्थनम्

**उपेयप्रतिपत्त्यैव प्रमाणानां प्रमाणता । वस्तुस्थित्या न सत्यत्वमिति पूर्वमवादिषम् ।।१३४।।**

मृत्युशब्दस्य मायार्थत्वम्

**नामरूपादिना येयमविद्या प्रथतेऽसती । माया तस्याः परं सौक्ष्म्यं मृत्युनैवेति भण्यते ।।१३५।।**
**मृत्युर्वै तम इत्येवमाप एवेदमित्यपि । अविद्या प्रथते मौली व्यक्ताव्यक्तात्मनाऽनिशम् ।।१३६।।**
**एतेभ्योऽसौ समुत्थाय स्वाभासानात्मजन्मना । याति क्षेत्रज्ञतामीशः कूटस्थोऽपि ह्यविद्यया ।।१३७।।**

स्वस्मिन्नुपसंहृतसर्वप्रपञ्चमिति यावत् । मुक्त्यालम्बनं ब्रह्म व्यावर्तयति—संस्कारेति । संश्रयशब्दो भावप्रधानः संस्कारस्य संश्रयः संश्रयणं स्वस्मिन्निति वा । संसारदशातो विशेषमाह—शुद्धेति । केवलसंस्काराश्रयत्वं साधयितुमाद्यं विशेषणम् । उपाधिप्रधानमव्याकृतमुपहितप्रधानस्त्वन्तर्यामीति भेदः ।।१३१।।

नन्वज्ञातब्रह्मकार्यत्वेनावस्तुत्वं जगतो न युक्तं प्रामाणिकत्वाद्ब्रह्मवदत आह—अज्ञानेति । व्याकृतिरभिव्यक्तिः । अस्येति जगदुक्तिः । प्रत्यगज्ञाने स्थिते प्रत्यक्षादिना या जगतो व्यक्तिः सा न वस्तुविषया । न हि सत्यामेव निद्रायां प्रवृत्तस्वप्नज्ञानं वस्तु गोचरयति । तथा जागरेऽपि स्थितेऽज्ञानेऽध्यक्षादिना व्यक्त्याभासो भवतीत्यर्थः ।।१३२।।

स्वप्नवज्जाग्रतोऽपि मिथ्यात्वे श्रुत्यादेरपि मिथ्यात्वात्कथं ततो ब्रह्मधीरित्याशङ्क्याऽऽह—सम्यगिति । निगच्छत्यसत्यमपि श्रुत्यादीति शेषः । असत्यस्यापि श्रुत्यादेस्तत्त्वधीहेतुत्वे दृष्टान्तमाह—निद्रामिति । असत्यादपीत्यपेरर्थः । न च तस्य स्वरूपस्य सत्यत्वं विषयासत्त्वे तदयोगाज्ज्ञायतेऽर्थोऽनेनेति व्युत्पत्तेरतः स्वप्ने ज्ञानादसत्यादेव व्याघ्रादिविषयान्निद्रानिरोधेन सम्यग्बोधोदयवत्प्रकृतेऽप्यसत्येनैव श्रुत्यादिना सम्यग्धीरित्यर्थः ।।१३३।।

ननु श्रुत्यादेः सम्यग्धीहेतोः सत्यत्वमपि धूमादिवत्संभावितमित्याशङ्क्यो"पेयबोधनं मुक्त्वे"त्यादिनोक्तं स्मारयति—उपेयेति । प्रमाणानां प्रमाकरणश्रुतीनामिति यावत् । तेषां च विषयसत्यत्वेऽपि न स्वरूपसत्यत्वं न च तेनैव तदनुमेयं प्रपञ्चमिथ्यात्वावेदकागमविरोधादित्याह—वस्त्विति ।।१३४।।

मृत्युशब्दार्थोक्तिप्रसङ्गप्राप्तं चोद्यमपोह्य प्रकृतं मृत्युशब्दार्थमेव विवेचयति—नामेति । कर्माऽऽदिशब्देन गृह्यते । न केवलं कार्यलिङ्गकानुमानगम्यैवाविद्या अपि त्वनुभवसिद्धाऽपीत्याह—इयमिति । तर्हि प्रामाणिकत्वाद्वस्तुत्वं नेत्याह—असतीति । तत्त्वतो मानागम्यत्वादित्यर्थः । ये केचिदविद्यामाययोर्भेदमाहुस्तन्निरासार्थं मायेत्युक्तम् । अप्रामाणिकं हि तयोर्नानात्वम् । अव्यक्तनामरूपमध्यक्षाद्ययोग्यमपञ्चीकृतमहाभूतावस्थातिरिक्तं मायारूपं मृत्युशब्दितमित्याह—तस्या इति ।।१३५।।

ननु[1] "मृत्युर्वै तमो ज्योतिरमृतमि"त्यत्र स्वाभाविके ज्ञानकर्मणी मृत्युशब्देनोच्येते । न च तयोरस्ति कारणत्वं कार्यत्वादपां च सप्तमे कारणत्वं वक्ष्यते तत्कथं साभासं प्रत्यगज्ञानं कारणवाचिमृत्युशब्दवाच्यमत आह—मृत्युरिति । उद्गीथाधिकारे हि व्यक्तशब्दितस्वाभाविकज्ञानकर्मात्मना प्रथमाना मूलाविद्यैव मृत्युशब्दव्याख्यानेन तमःशब्देनोच्यते । सप्तमे चाव्यक्तशब्दितप्रकृत्यात्मना प्रकाशमाना सैवाविद्याऽप्शब्देन विवक्ष्यतेऽतः सदा दृश्यद्वैतात्मना तस्या भावादविरुद्धं साभासायास्तस्या मृत्युशब्दत्वमित्यर्थः ।।१३६।।

व्यक्ताव्यक्तयोरविद्याविवर्तत्वेन प्रत्यङ्मात्रत्वमस्तु न तु क्षेत्रज्ञस्य तन्मात्रत्वं तदविद्याविवर्तत्वाभावादतोऽद्वैतहानिरित्याशङ्क्याऽऽह—एतेभ्य इति । कार्यकारणाकारेण परिणतेभ्यो भूतेभ्यो व्यज्यमानेभ्यः साम्येन

१. मृत्युर्वै तमोज्योतिरमृतमिति—"अथातः पवमानानामि"त्यत्र तृतीयब्राह्मणे उच्यते । "आप एवेदमग्र आसुः" इति सप्तमाध्याये इत्यर्थः ।

आपो ह्यणुतराः सत्यमसृजन्तेति हि श्रुतिः । क्रियाविज्ञानशक्त्यात्मा सोऽपि ब्रह्मासृजत्परः ॥३८॥
विराड्ब्रह्माथ ससृजे मनुं देवं प्रजापतिम् । मनुर्देवान्मनुष्यांश्च स्थास्नु कृत्स्नं चरिष्णु च ॥३९॥
साध्यसाधनवत्कृत्स्नकार्यरूपविवक्षया । श्रुतिः प्रववृते सेयं नैवेहेतीह यत्नतः ॥४०॥
अशनायापिपासाभ्यां मृत्यो रूपं प्रचक्षते । प्राणस्य तत्र संवर्गाद्वागाद्यध्यात्मदैवयोः ॥४१॥
एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापश्च पृथ्वी विश्वस्य धारिणी ॥४२॥
सृष्टिमेतां समुद्दिश्य तन्मनोऽकुरुतेति या । श्रुतिः प्रवृत्ता निर्वक्तुं यावदव्याकृतं परा ॥४३॥
यद्वा विराजमुद्दिश्य संकल्पमकरोन्मनः । आत्मन्वी स्यामिति तथा साकूतः सृष्टिकारणः ॥४४॥
स्वविभूतीक्षणं सृष्टौ विभोरर्चनमुच्यते । आपोऽजायन्त इति च सर्वभूतोपलक्षणम् ॥४५॥

व्यक्तिमनुभूय निर्विकारोऽपि परः स्वप्रतिबिम्बस्यानात्मवत्प्रतिपन्नस्य जन्मद्वारा जीवतामेति । न च प्रतिबिम्बो वस्तुतो बिम्बादर्थान्तरमेकरूपनिर्भासनादतोऽविद्यया परस्यैवाविकृतस्य जीवत्वान्नाद्वैतहानिरित्यर्थः ॥१३७॥

ननु श्रुतौ भाष्ये च सूत्रकर्तृका सृष्टिरुक्ता मृत्योः स्रष्टुरशनायादिमत्त्वोक्तेस्तत्कथं सा मूलकारणादुच्यते त्वयेत्याशङ्क्य तस्मादेवात्र सृष्टिरिष्टा न सूत्रादिति वक्तुं वाक्यान्तरसिद्धां सृष्टिपद्धतिमाचष्टे—आप इति । अपां भूतान्तरसहितानामपञ्चीकृतत्वादतिसूक्ष्मत्वं तासां मायात्मत्वात्ततोऽपि सौक्ष्म्यं ता मायात्मिकाः सत्यमपञ्चीकृतपञ्चभूतात्मकं सूत्रमसृजन्न चात्राविश्वासः श्रुत्युक्तत्वादित्यर्थः । हिरण्यगर्भस्तर्हि कीदृगित्यपेक्षायामाह—क्रियेति । तस्य विराजं प्रति स्रष्टृत्वमाचष्टे—सोऽपीति । हिरण्यगर्भोऽपि परस्य ब्रह्मणो विकारतया परः सन्ब्रह्म विराडात्मकं सृष्टवानित्यर्थः ॥१३८॥

विराजो मनुस्रष्टृत्वमाह—विराडिति । मनुसृष्टिकारणीभूतज्ञानकर्मवासनाभिव्यक्त्यानन्तर्यमथशब्दार्थः । तस्य वक्ष्यमाणसृष्टिदृष्टिशक्तिं द्योतयति—देवमिति । अमानवीं सृष्टिं शिष्ट्वा मानवीमाह—मनुरिति ॥१३९॥

मूलकारणविषयतयोक्तसामर्मिकश्रुत्या प्रकृतश्रुतेरेकवाक्यत्वमाह—साध्येति । इहेति प्रकरणोक्तिः । यत्नो मूलकारणे श्रुतेस्तात्पर्यं न हि कृत्स्नं कार्यमवान्तरकारणाद्युक्तमतो मूलकारणमेवात्र मृत्युशब्दितमित्यर्थः ॥१४०॥

तर्हि कथमशनाययेत्यादिवाक्यशेषो न हि मूलकारणस्याशनायादिमत्त्वमशनायापिपासे प्राणस्येति स्थितेरित्याशङ्क्य परस्य सूत्रात्मत्वं प्राप्तस्य सर्वसंहर्तृत्वान्मृत्युत्वे सति वाक्यशेषोपपत्तिरिति मत्वाऽऽह—अशनायेति । प्राणस्य मृत्योरिति संबन्धः । कथं तस्य मृत्युत्वमित्याशङ्क्योपपत्तिमाह—तत्रेति । तस्मिन् प्राणे वायौ वागादीनामध्यात्ममग्न्यादीनां चाधिदैवं संहरणात्तस्य मृत्युतेत्यर्थः ॥१४१॥

मूलकारणादत्र सृष्टिरिष्टा चेदाकाशाद्या सा वाच्या । तथा च "तन्मनोऽकुरुते"तिवाक्यशेषानुपपत्तिरित्याशङ्क्याऽऽदावाथर्वणीं सृष्टिमनुक्रामति—एतस्मादिति । सर्वज्ञत्वादिरूपात्परस्मादात्मनः सकाशादिति यावत् ॥१४२॥

वाक्यशेषविरोधमधुना धुनीते—सृष्टिमिति । या "तन्मनोऽकुरुते"त्याद्या "तद्धेदं तर्ह्यव्याकृतमि"त्यन्ता परा श्रुतिः सा सर्वस्य कार्यस्य मूलकारणतः सृष्टिं श्रुत्यन्तरसिद्धामुद्दिश्यात्रापि तामेव निश्चित्य वक्तुं प्रवृत्ता तस्य मूलकारणस्येक्षणव्यापारस्तन्मनोऽकुरुतेत्युच्यते तन्न वाक्यशेषविरोध इत्यर्थः ॥१४३॥

तन्मूलकारणं मनःशब्दितेक्षणव्यापारमकरोदिति वाक्यार्थमुक्त्वा तदिति मनसो निर्देश इत्यादिभाष्यमनुसृत्य मृत्युर्मूलकारणात्मा सूत्रत्वं प्राप्तो विराडात्मसृष्टिमुद्दिश्य मनःशब्दितं संकल्पं कृतवानित्यर्थान्तरमाह—यद्वेति । केनाभिप्रायेण मनोऽकरोदित्यपेक्षायामाह—आत्मन्वीति । संकल्परूपे मनसि सृष्टे स्रष्टा हिरण्यगर्भो विराट्सृष्टिमुद्दिश्यानेनाऽऽत्मवानहं स्यामिति साकूतः साभिप्रायः संवृत्त इत्यर्थः । सृष्टेः कारणं ब्रह्मास्य कारणं स्वरूपमिति वा सूत्रात्मा तथोक्तः ॥१४४॥

अभिप्रायवतोऽपि नाशक्तस्य स्रष्टृतेत्याशङ्क्य सोऽर्चन्नित्यस्यार्थमाह—स्वविभूतीति । सूत्रात्मनः सृष्टिविषये शक्तोऽस्मीति स्वसामर्थ्यालोचनमर्चनमित्यर्थः । नन्वीक्षिता नापामेव स्रष्टा किंतु वियदादीनामपि । तत्कथं

१. सृष्टिकारणः विग्रहमाह—सृष्टेरिति । सृष्टेः स्वरूपं यस्येति सृष्टिकारण इत्यर्थः ।

[1]विद्योत्पत्तिप्रधानत्वात्सृष्टिर्वा न विवक्ष्यते । तथा च प्रतिवेदान्तं सृष्टिर्नानाविधेक्ष्यते ॥४६॥
अर्चतो मे यतो जज्ञे कमम्भः सुखकृत्ततः । अर्काभिधोऽथ संवृत्तः प्राणो मृत्युः प्रजापतिः ॥४७॥
उपासनमतोऽस्यापि नाग्नेरेवेति निश्चितिः । अर्कनामाभिसंबन्धो नोपासनमृते यतः ॥४८॥

मू०—आपो वा अर्कस्तद्यदपाँ शर आसीत्तत्समहन्यत । सा पृथिव्यभवत्तस्यामश्राम्यत्तस्य श्रान्तस्य तप्तस्य तेजोरसो निरवर्ततागिनः ॥२॥

यदि वाऽग्नेरिदं नाम तस्य प्रकरणित्वतः । आपो वा अर्क इति तु चित्यनामार्थमेव तत् ॥४९॥
शर आसीदिति गिरा शक्त्यवस्था विवक्ष्यते । सा पृथिव्यभवच्चेति विराजो जन्मशब्दनम् ॥५०॥
तपोऽप्सु तप्यमानासु ह्यण्डं जज्ञे हिरण्मयम् । इति श्रुतिर्जगादार्थं यथैवेह प्रपञ्च्यते ॥५१॥
एवं व्यष्टिसमष्ट्यात्मा वैराजं देहमात्मनः । प्राचीक्लृपदथेदानीं सृष्टिस्तस्य विवक्ष्यते ॥५२॥

तस्येत्यादावपामेव ग्रहणमित्याशङ्क्याऽऽह—आप इति। यथाश्रुतप्रतीकग्रहो विवक्षित इत्यविवक्षितः संधिः। सर्वशब्देनाऽऽकाशादित्रयं गृह्यते। तथाच भा[2]ष्यमत्राऽऽकाशप्रभृतीनां त्रयाणामुत्पत्त्यनन्तरमिति वक्तव्यमिति। भूतशब्देनात्र पञ्चीकृतानि भूतानि गृह्यन्ते ॥१४५॥

समनन्तरं विराजः सर्गनिर्देशात्सृष्टेर्विवक्षितत्वमुपेत्यापां ग्रहणमुपलक्षणमित्युक्तं संप्रति सैवाविवक्षिता विद्यानिष्ठत्वादुपनिषदामित्याह—विद्येति। सृष्टेरविवक्षितत्वे हेत्वन्तरमाह—तथाचेति। आकाशाद्या तैत्तिरीयके सृष्टिरुक्ता, छान्दोग्ये तेजआद्या, प्राणाद्या त्वाथर्वणे, सा पुनरैतरेयके क्रमशून्येति विप्रतिपन्ना सर्वेषु वेदान्तेषु सृष्टिर्दृष्टा तथाच नासौ विवक्षितेत्यर्थः ॥१४६॥

अर्चत इत्यादेरर्थमाह—अर्चत इति। अर्चनात्सुखहेत्वम्भःसंबन्धाच्चार्कनामा प्रजापतिरित्यर्थः। यथा मृत्युरीश्वरः सूत्रात्मा जातस्तथा तद्रूपेणार्कशब्दवाच्योऽभूदित्याह—अथेति ॥१४७॥

किमर्थं सूत्रस्यार्कनामनिर्वचनमित्याशङ्क्याऽऽह—उपासनमिति। अपूर्वसंज्ञायोगस्य फलान्तराभावात् तन्नाम्नः सूत्रस्याप्युपासनमत्रेष्टमित्यर्थः। उक्तमर्थं व्यतिरेकद्वारा स्फोरयति—अर्केति ॥१४८॥

अग्निप्राधान्यार्थं पक्षान्तरमाह—यदि वेति। "आपो वा अर्क" इत्यपामर्कत्वश्रवणात्कथमग्नेरर्कत्वमत आह—आप इति। भूतान्तरसहितानामपां सूत्ररूपाणामर्कत्वश्रवणं चित्याग्नेरर्कनाम्नोऽर्थप्रतिपत्त्यर्थं स हि विराट्पूर्वोक्तास्वप्सु वक्ष्यमाणरीत्या प्रतिष्ठितोऽतोऽर्चनात्कसंबन्धाच्चार्कश्चित्योऽग्निरित्यर्थः ॥१४९॥

तद्यदपामित्यत्र शरशब्दार्थमाह—शर इति। शर आसीदित्यत्र शरगिरा कारणस्य सूत्रभूतस्य शक्तिमदुच्छूनावस्था विवक्षितेत्यर्थः। तत्समहन्यतेत्यादेरर्थमाह—सेति। स्थूलप्रपञ्चात्मकविराजः सूक्ष्मप्रपञ्चात्मकसूत्रादुत्पत्तिरत्रेष्टेत्यर्थः ॥१५०॥

ता[3]भ्योऽद्भ्योऽण्डमभिनिर्वृत्तमिति भाष्योक्तेऽर्थे वाक्यान्तरमुदाहरति—तप इति। अप्सु भूतान्तरसहितासु तपस्तप्यमानासु सूत्ररूपासु संकल्पं कुर्वतीषु ज्योतिर्मयं वैराजं शरीरं ताभ्यो निर्वृत्तं न चेदमौत्प्रेक्षिकं श्रौतत्वादित्याह—इति श्रुतिरिति। "आपो हि वा इदमग्र आसुः सलिलमेव ता अकामयन्त कथं नु प्रजायेमहीति ता अश्राम्यंस्तास्तपोऽतप्यन्त तासु तपस्तप्यमानासु तास्वन्तर्हिरण्यमण्डं संबभूवे"ति शातपथो श्रुतिस्तया प्रकृतश्रुतेरेकवाक्यत्वमाह—यथेति। प्रकृते प्रकरणे विराजः सूत्रादुत्पत्तिरूपोऽर्थो यथा विव्रियते तथैवेममर्थं शातपथश्रुतिरपि जगादेति योजना ॥१५१॥

स्थूलदेहसृष्टिमादिष्टामनुवदति—एवमिति। नानारसः सूत्रात्मा स्वस्य स्थूलदेहमुक्तरीत्या सृष्टवानित्यर्थः। तस्यामश्राम्यदित्यादेस्तात्पर्यमाह—अथेति। स्थूलसृष्ट्यनन्तरं तेन सृष्टेन स्रष्टुः सूत्रात्मनः सृष्टिसंबन्धः परिच्छेदो विवक्ष्यतेऽनन्तरवाक्येनेत्यर्थः ॥१५२॥

---

१. विद्योत्पत्तीति—वार्तिकत्वसिध्यर्थमाक्षिपतीति अवतरति ( न्या० ) दुरुक्तिचिन्तारूपत्वाद्वार्तिकस्येत्यर्थः।
२. ३२.१०     ३. ३४.१

श्रान्तस्येति तु देहस्य कर्मायोग्यत्वमुच्यते । श्रमहेतुरतस्तापस्तप्तस्येत्यभिशब्द्यते ।।५३।।
भास्वज्ज्ञानं भवेत्तेजो रसः प्राणो विवक्षितः । क्रियाविज्ञानशक्तित्वात्प्रकृतस्य प्रजापतेः ।।५४।।
अनवच्छिन्नवपुषः पिण्डावच्छेदहेतुतः । खस्य कुम्भादिनेवासोर्निरवर्तत शब्दनम् ।।५५।।
नामरूपादिमद्देहसंबन्धात्तद्विधर्मकः । अरूपोऽपि हि सूत्रात्मा लक्ष्यते रूपवानिव ।।५६।।
सूक्ष्मस्थूलशरीराभ्यां चिदाभाभ्यामविद्यया । संवृतः परमेशोऽपि त्रैलोक्यात्माग्निरुच्यते ।।५७।।
अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् । महान्तं विभुमात्मानं मत्वा धीरो न शोचति ।।५८।।
विराड्देहावनद्धोऽसुरध्यात्माद्याधिगः खवत् । व्यष्टितामेति तद्धीनः समष्टित्वेन तिष्ठति ।।५९।।
उर्व्यामुत्पादितायां तु श्रमात्तापात्प्रजापतेः । निरवर्ततेवास्याऽऽत्मा परिच्छेदाभिमानतः ।।६०।।
स्थूलदेहपरिच्छिन्नः स एवाऽऽद्यः प्रजापतिः । अग्निरेष यतस्तस्मादुपास्योऽयं प्रयत्नतः ।।६१।।
स वै शरीरी प्रथमः स वै पुरुष उच्यते । आदिकर्ता स भूतानां ब्रह्माऽग्रे समवर्तत ।।६२।।

तस्येत्यादौ पदयोरपुनरुक्तमर्थमाह—श्रान्तस्येत्यादिना । यतः श्रमहेतुस्तापोऽतस्तप्तस्येति पृथक्तापशब्द इति योजना ।।१५३।।

तेजो रस इति पदयोरर्थमाह—भास्वदिति । ज्ञानस्य भास्वत्त्वमप्रतिहतप्रकाशत्वम् । तयोरुक्तार्थत्वे युक्तिमाह—क्रियेति । प्रकृतो हि कारणत्वेन प्रजापतिः सूत्रात्मा तस्य शक्तिद्वयरूपत्वात्तत्कार्यस्य विराजो युक्त-मुक्तरूपत्वमित्यर्थः ।।१५४।।

निरवर्ततेत्यस्यार्थमाह—अनवच्छिन्नेति । असोरनवच्छिन्नवपुष इति संबन्धः । यथाऽऽकाशस्य कुम्भा-दिनाऽवच्छेदस्तथा सूत्रस्य ज्ञानक्रियात्मनः स्थूलदेहावच्छेदार्थं निरवर्ततेत्युक्तमित्यर्थः ।।१५५।।

सूत्रस्य स्थूलदेहावच्छेदफलमाह—नामेति । तद्विधर्मकत्वं व्याकरोति—अरूपोऽपीति । अपिशब्दादना-माऽपीत्यर्थः । रूपवानिवेत्यत्र नामवानिवेत्यपि द्रष्टव्यम् ।।१५६।।

अग्निशब्दार्थमाह—सूक्ष्मेति । अपिरवधारणार्थः । पर एवाविद्याकृताभ्यां देहाभ्यामावृतस्त्रैलोक्यशरीरः सन्नग्निरिति व्यपदेशभागिव भवतीत्यर्थः ।।१५७।।

देहद्वयावच्छिन्नः पर एवेत्यत्र मानमाह—अशरीरमिति । सापेक्षं महत्वं निरस्यति—विभुमिति । यद्वा स्वयमेव विविधं भवतीति व्युत्पत्त्या विभुत्वं सर्वात्मत्वम् ।।१५८।।

परस्य देहद्वयावच्छेदेऽपि सूत्रस्य स्वतो व्यष्टित्वमस्तु विराडात्मत्ववदतो न तयोर्विशेष इत्या-शङ्क्याऽऽह—विराडिति । यथा खल्वाकाशं कूपकुम्भाद्यवच्छिन्नं विशेषभावमनुभवति स्वभावतस्त्वनवच्छिन्नम-वतिष्ठते तथैवासुशब्दितः सूत्रात्मा वैराजं देहमुत्पाद्य तेनावच्छिन्नः सन्नध्यात्ममधिभूतमधिदैवमित्युपाधिभेदेषु प्रविष्टो व्यष्टितामश्नुते विराडवच्छेदद्वारेण । अध्यात्माद्युपाधिसंबन्धहीनस्तु समष्टित्वेन वर्तते तेन सूत्रस्य सूक्ष्म-समष्टित्वं विराजः स्थूलसमष्टितेत्यर्थः ।।१५९।।

पूर्वं विराजः सृष्टिरुक्ता संप्रति तस्यामश्राम्यदित्यादेरर्थमनुवदति—उर्व्यामिति । विराड्युत्पादिते महत्कार्यं कृत्वा श्रमात्खिन्नस्य प्रजापतेरात्मा विराड्देहावच्छेदाभिमानविशिष्टो निर्वृत्तो लौकिकवदित्यर्थः ।।१६०।।

तेजं एव रस इत्यादेर्भाष्यस्य तात्पर्यं वदन्ननुवादफलमाह—स्थूलेति । यस्मादाद्यः सूत्रात्मा प्रजापतिरेव विराड्देहावच्छिन्नः सन्नेष चित्योऽग्निरिष्यते तस्मादयमग्निरादरेण निरन्तरतया दीर्घकालमुपासितव्य इत्यर्थः ।।१६१।।

सूत्रात्मैव स्थूलदेहावच्छिन्न इत्यत्र पुराणवाक्यं प्रमाणयति—स वा इति । सर्वनामभिः सूत्रात्मा परामृश्यते स एव विराड्भावमापन्नः शरीरीत्यादिभिरुच्यते । भूतानां व्यष्टीनामग्रे व्यष्टिसृष्टेः पूर्वमित्यर्थः ।।१६२।।

---
१. ३४.४

मू०-स त्रेधाऽऽत्मानं व्यकुरुताऽऽदित्यं तृतीयं वायुं तृतीयँ स एष प्राणस्त्रेधा विहितः । तस्य प्राची दिक्शिरोऽसौ चासौ चेर्मौ । अथास्य प्रतीची दिक्पुच्छमसौ चासौ च सक्थ्यौ दक्षिणा चोदीची च पार्श्वे द्यौः पृष्ठमन्तरिक्षमुदरमियमुरः स एषोऽप्सु प्रतिष्ठितो यत्र क्व चैति तदेव प्रतितिष्ठत्येवं विद्वान् ॥३॥

अनुपाख्यतनुः सोऽयं व्यवहारप्रसिद्धये । आत्मानं व्यभजत्स्थूलैस्त्रिधा वाय्वग्निभानुभिः ॥६३॥

त्रेधाभावकर्ता विराडिति पूर्वपक्षः

स्वरूपानुपमर्देन स विराड्देवतात्मभिः । उपासनादिसिद्ध्यर्थमात्मानं व्यभजत्स्वयम् ॥६४॥

हिरण्यगर्भ इति सिद्धान्तः

मूलात्मैव त्रिधाऽऽत्मानमभिनत्स प्रजापतिः । इत्यस्य प्रतिपत्त्यर्थं स एष इति भण्यते ॥६५॥
तस्य प्रथमजस्याग्नेर्विराजोऽर्कस्य वाजिवत् । दर्शनस्य विधानार्थं तस्य प्राचीति कीर्त्यते ॥६६॥
यस्मात्कारणमुल्लङ्घ्य कार्यं नान्यत्र वर्तते । अप्सु कारणभूतासु तस्मादग्निः प्रतिष्ठितः ॥६७॥
अप्प्रतिष्ठागुणं देवमुपास्ते योऽनिशं नरः । यत्र क्व चैति तत्रासौ प्रतिष्ठां लभते शुभाम् ॥६८॥

मू०-सोऽकामयत द्वितीयो म आत्मा जायेतेति स मनसा वाचं मिथुनँ समभवदशनाया मृत्युस्तद्यद्रेत आसीत्स सम्वत्सरोऽभवत् । न ह पुरा ततः सम्वत्सर आस तमेतावन्तं कालमबिभः । यावान्सम्वत्सरस्तमेतावतः कालस्य परस्तादसृजत । तं जातमभिव्याददात्स भाणकरोत्सैव वागभवत् ॥४॥

योऽबादिपरिपाट्यैवं विराजमसृजत्स्वयम् । कीदृग्व्यापारसंयुक्तः सोऽस्राक्षीदिति भण्यते ॥६९॥
अत्तृसर्गोऽथवोक्तः प्रागन्नसर्गोऽधुनोच्यते । अशनायावतो यस्मान्नास्त्यन्नविरहात्स्थितिः ॥७०॥

स त्रेधेत्यादेर्भाष्योक्तमर्थमाह—अनुपाख्येति । अपञ्चीकृतमहाभूतदेहत्वाद्व्यवहर्तुमयोग्यत्वं प्रजापतेरनुपाख्यतनुत्वम् । उपास्त्यादिर्व्यवहारः ॥१६३॥

कोऽस्य त्रेधाभावस्य कर्ता प्रजापतिर्विराडात्मा वा हिरण्यगर्भो वेति वीक्षायां पूर्वपक्षमाह—स्वरूपेति । आदिपदेनाभिधानं तत्प्रयुक्तार्थक्रिया च गृह्यते ॥१६४॥

त्रिधाभावकर्ता विराडिति पूर्वपक्षे सिद्धान्तमाह—मूलात्मेति । किमत्र प्रमाणं तदाह—इत्यस्येति । विराजस्त्रेधाभावकर्तृत्वे वाक्यशेषानर्थक्यं स्यादित्यर्थः ॥१६५॥

तस्य प्राचीत्यादेरर्थमाह—तस्येति । अनेन वाक्येन कीर्त्यते काललोकदेवतात्मत्वमग्नेरिति शेषः ॥१६६॥

स एषोऽप्सु प्रतिष्ठित इत्यस्यार्थमाह—यस्मादिति । अप्सु भूतान्तरसहितासु कारणभूतासु सूत्ररूपास्विति यावत् । अग्निरिति पार्थिवो विराडुच्यते ॥१६७॥

यत्र क्व चेत्यादिफलोक्तिं व्याचष्टे—अप्प्रतिष्ठेति । शुभामगर्हितां परलोकाविरोधिनीमित्येतत् ॥१६८॥

सोऽकामयतेत्यादिग्रन्थस्य पूर्वग्रन्थेन भाष्योक्तं संबन्धमाह—योऽबादीति । आदिपदेन पृथिवीग्रहः । यो मृत्युरपञ्चीकृतप्रपञ्चात्मा पञ्चीकृतभूतपञ्चकतत्कार्यसृष्टिक्रमेण तदात्मकं विराजं ससर्ज स केन व्यापारेण युक्तस्तं सृष्टवानित्याकाङ्क्षायामसावुच्यतेऽनन्तरग्रन्थेनेत्यर्थः ॥१६९॥

उद्भाष्यं संबन्धान्तरमाह—अत्त्रिति । तेजोरसो निरवर्ततानिग्निरित्यत्रात्तुः सर्ग उक्त संप्रत्यन्नसर्ग उच्यत इति साधीयसी संगतिरित्यर्थः । किमर्थमन्नसर्गवचनमित्याशङ्क्यात्तुः स्थित्यर्थमित्याह—अशनायावत इति । अत्र हि विराजः सृष्टिः स्पष्टीक्रियते । अन्नं विराडिति च श्रुतेः । कनीयोऽन्नं करिष्य इति च वक्ष्यते ततोऽप्यमपि संबन्धो युक्त इति भावः ॥१७०॥

त्रेधा व्यभजदात्मानमित्येतद्वा प्रदर्श्यते । अग्निप्राणौ पुरैवोक्तावथ संवत्सरोद्भवः ॥७१॥
मनसा ज्ञाननिर्देशस्त्रयी वागिति भण्यते । सर्गक्रमं स वेदोक्तं ज्ञानेनाऽऽलोचयत्प्रभुः ॥७२॥
ज्ञानेनाप्रतिघेनासौ वेदोक्तां सृष्टिपद्धतिम् । समन्वालोचयच्छंभुः सिसृक्षुर्विविधं जगत् ॥७३॥
आलोच्यालोचकयोर्हि योगो मिथुनमुच्यते । प्रसिद्धं मिथुनं चात्र न कथंचन युज्यते ॥७४॥
अनन्तराग्निसंबन्धप्रसङ्गविनिवृत्तये । अशनायेति हि प्राह मूलकारणसंगतिम् ॥७५॥
जगतः प्रक्रियाबीजं यदवैषीत्पुरा गृही । द्वैतैकत्वात्मकं ज्ञानं कर्म च ज्ञानसंभृतम् ॥
भावना च तयोरेतत्त्रयं रेतोऽभिधीयते ॥७६॥
सृष्ट्यालोचनहेत्वेतत्सृष्टावाविरभूद्विभोः । तद्भावभाव्यपः सृष्ट्वा रेतोबीजेन स प्रभुः ॥७७॥
सर्वलोकैकबीजेन गर्भ्यण्डेन बभूव ह । अप एव ससर्जाऽऽदौ तासु वीर्यमवासृजत् ॥७८॥
तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । इत्येवं मनुनाऽप्युक्तः श्रौतोऽयं सर्गविस्तरः ॥७९॥

संबन्धान्तरमाह—त्रेधेति । नन्वादित्यं तृतीयमित्यादिना प्रागेव प्रजापतेस्त्रेधात्मत्वमुक्तं तत्कथं तदुक्त्यर्थमुत्तरं वाक्यं तत्राऽऽह—अग्नीति । निरवर्ततानिरित्यग्निरुक्तो वायुं तृतीयमिति च वायुः । यद्यप्यादित्यं तृतीयमित्यादित्योऽप्युक्तस्तथाऽपि तस्य संवत्सरात्मनो जन्मोक्त्यर्थमुत्तराश्रुतिरित्यर्थः ॥१७१॥

संबन्धमनेकधोक्त्वा स मनसेत्यादेरर्थमाह—मनसेति । मनसेति ज्ञाननिर्देशो वागिति त्रयी भण्यत इति योजना । पदार्थमुक्त्वा वाक्यार्थमाह—सर्गेति । स प्रभुरिति सूत्रात्मोक्तिः । ज्ञानेनाप्रतिहतेन सत्त्वपरिणामाभिव्यक्तेन चैतन्येनेति यावत् ॥१७२॥

नन्वीश्वरो वैदिकीं सृष्टिं ज्ञानेनाऽऽलोचयितुं नालं पुरुषत्वादस्मदादिवदित्याशङ्क्य प्रतिहतज्ञानत्वमुपाधिरित्याह—ज्ञानेनेति । अथास्य सिसृक्षा स्वार्थाऽन्यार्था वा ? नाऽऽद्यः आप्तकामत्वान्नेतरोऽन्याभावादित्याशङ्क्य कल्पितानां प्राणिनां कर्मफलभोगार्थं तत्सिसृक्षेति मत्वाऽऽह—शंभुरिति ॥१७३॥

मिथुनं समभवदित्यत्र मिथुनशब्दार्थमाह—आलोच्येति । आलोच्यो वेदोक्तसृष्टिक्रम आलोचकं तु मनःशब्दितं ज्ञानं तयोर्योगो विषयविषयित्वं तदत्र श्रुतिप्रसिद्धं मिथुनमित्यर्थः । प्रसिद्धमेव मिथुनमत्र किं न स्यादित्याशङ्क्य स्त्रीपुंसयोरप्रस्तुतत्वान्नैवमित्याह—प्रसिद्धमिति । अत्रेत्यध्यात्मप्रकरणोक्तिः ॥१७४॥

अशनाया मृत्युरित्यत्राशनायाग्रहणस्य तात्पर्यमाह—अनन्तरेति । अशनायेति च्छान्दसं मृत्युविशेषणम् । अशनायालक्षितो मृत्युरिति पुनरुक्तिर्मूलकारणेन सूत्रेण संगतिं स मनसेत्यत्र सर्वनाम्नः सूचयति । तथा चानन्तरप्रकृतेनाग्निना विराजा तस्य संबन्धप्रसक्तिनिवृत्तिः फलतीत्यर्थः ॥१७५॥

तद्यद्रेत आसीदित्यत्र रेतःशब्दार्थमाह—जगत इति । प्रक्रिया सृष्टिः । पुरेति साधकावस्थोक्तिः । किं तज्जगतः सृष्टिबीजं यजमानेन संचितं तदाह—द्वैतेति । उपास्यस्य नानात्वात्तदुपास्तिरपि तथा ज्ञानसंभृतं ज्ञानेन समुच्चितमिति यावत् ॥१७६॥

ज्ञानकर्मणी तयोर्भावनेत्येतत्त्रयं जन्मान्तरे संचितं सत्तामात्रेण वा दृष्टं वा सृष्टिकारणम् ? आद्ये मनसा त्रय्यालोचनमकिंचित्करं द्वितीये कदा तद्दृष्टिरित्याशङ्क्याऽऽह—सृष्टीति । सृष्टेरालोचनं हेतुं कृत्वा ज्ञानादित्रयं जन्मान्तरार्जितं सृष्टिकाले फलावस्थस्य प्रजापतेराविर्भूतमित्यर्थः । व्यक्तस्य रेतसो ज्ञानादित्रयस्य कार्यमाह—तद्भावेति । आविर्भूतज्ञानादियुक्तस्तेनैव पञ्चीकृतानि भूतानि सृष्ट्वा तेषु प्रविश्य स्थावरजङ्गमात्रहेतुनाऽण्डेन गर्भवानभूत्प्रजापतिरित्यर्थः । हेतिनिपातो हिरण्यगर्भः समवर्ततेत्यादौ यथोक्तस्य गर्भस्य प्रसिद्धत्वद्योतनार्थः । उक्तेऽर्थे स्मृतिं प्रमाणयति—अप इति । आदावित्यण्डसर्गात्प्रागिति यावत् । अप्शब्देन भूतान्तराण्यपि लक्ष्यन्ते स्थूलानि भूतान्यादौ सृष्टवान्प्रजापतिरित्यर्थः । ततो ज्ञानादिद्वारा भूतेषु प्रवेशं तस्याऽऽह—तास्विति ॥१७७–१७८॥

प्रविष्टस्याण्डेन गर्भित्वं ब्रूते—तदण्डमिति । हैमं ज्योतिर्मयमिति यावत् । तत्र दृष्टान्तः—सहस्रेति । उक्तस्मृत्या सहैकवाक्यत्वं प्रकृतश्रुतेराह—इत्येवमिति ॥१७९॥

आपो ह वा इति तथा ह्ययमेव क्रमः श्रुतौ । ज्ञानकर्मादिबीजस्य गर्भ एवं प्रजापतेः ॥८०॥
स संवत्सरोऽभवदिति परिमाणोऽयमुच्यते । अशनायादिमत्त्वात्स स्वभावबलचोदितः ॥८१॥
सृष्ट्वाऽऽद्यं घस्मरः पुत्रं तमभिव्याददात्क्षुधा । भिनत्ति सर्वमर्यादां नान्वयाद्यप्यपेक्षते ॥८२॥
अस्य दग्धोदरस्यार्थे को न कुर्यादसांप्रतम् ॥८३॥
अन्न एव यतो वृत्तिरत्तुरन्नाद एव च । अन्नस्य युक्तमेवातस्तमभिव्याददादिति ॥८४॥
जन्मान्तरसमभ्यस्तविद्याकर्मादिहेतुतः । जन्यकर्मप्रयुक्तः सञ्शिशुर्भाणित्यथाकरोत् ॥८५॥
यथोक्तहेतुवशगः स्वभावप्रहितोऽप्यसुः । कुमारोत्थरवत्रस्तः स्वभावं चिच्छिदे भयात् ॥८६॥
अत्यन्तमपि शूराणां स्वस्वभावैकहेतुतः । तित्तिरादिसमुत्पाते[1] वेपथुर्जायते भयात् ॥८७॥

मू०—स ऐक्षत यदि वा इममभिमँ स्ये कनीयोऽन्नं करिष्य इति । स तया वाचा तेनाऽऽत्मनेदँ सर्वमसृजत यदिदं किञ्चर्चो यजूँषि सामानि छन्दाँसि यज्ञान्प्रजाः पशून् । स यद्यदेवासृजत तत्तदत्तुमध्रियत सर्वं वा अत्तीति तददितेरदितित्वँ सर्वस्यैतस्यात्ता भवति सर्वमस्यान्नं भवति य एवमेतददितेरदितित्वं वेद ॥५॥

श्रुतिस्मृत्युक्तसृष्टिक्रमे श्रुत्यन्तरमपि मानमित्याह—आप इति । यथाऽस्मिन्वाक्ये मनुवाक्ये च क्रमः सृष्टेः श्रुतस्तथाऽयमेवा''ऽऽपोह वा इदमग्र आसुः सलिलमेवे''त्यादिपूर्वोक्तशतपथश्रुतावपि क्रमः श्रुत इति योजना । सृष्टिक्रममुक्त्वा प्रजापतेर्गर्भं निगमयति—ज्ञानेति ॥१८०॥

कियन्तं कालमण्डेन स गर्भी बभूवेत्यपेक्षायामाह—स इति । स प्रजापतिः संवत्सरनिर्माता तदात्माऽऽदित्यो निर्वृत्तो न हि तस्मात्पूर्वं संवत्सरो नामाऽऽदित्योदयाधीनत्वात्तन्निश्चयस्य । स च संवत्सरो यावानिह प्रसिद्धस्तावन्तं कालमण्डेन गर्भवानासीदिति परिमाणसहितो गर्भोऽभिधीयतेतं च विराडात्मकं संवत्सरादूर्ध्वं सृष्टवानित्यर्थः । परिच्छिन्नं मानमस्येति व्युत्पत्त्या गर्भस्तथा । तं जातमित्यादेरर्थमाह—अशनायेति । मृत्युर्हि ग्रसनशीलस्तेनैव हिंसास्वभावेन चोदितः क्षुत्पिपासायुक्तत्वाज्ज्येष्ठं पुत्रं सृष्ट्वा तमत्तुमभिमुखत्वेन मुखं विदारितवानित्यर्थः । पुत्रमत्तुं प्रवृत्तस्य स्रष्टुर्मर्यादाभङ्गः स्यादित्याशङ्क्याऽऽह—क्षुधेति । अशनायाद्युपद्रुतो मर्यादां भिन्दानोऽपि स्वात्मानं च परं च दृष्ट्वैवाशने प्रवर्ततेत्याशङ्क्याऽऽह—नान्वयेति । आदिपदेनाभोज्यादिग्रहः । मर्यादाभेत्तृत्ववदित्यपेरर्थः ॥१८१-१८२॥

नन्वविवेकिनामेवं प्रवृत्तावपि न विवेकिनामित्याशङ्क्याऽऽह—अस्येति । विवेकिनामपि पश्वादिभिरविशेषो व्यवहारदशायामिति भावः । क्षुत्पिपासापीडितः पुत्रमपि भक्षयति किं पुनरन्यन्न करोतीत्याक्रोशमुक्त्वा प्राणस्य स्वपुत्रभक्षणे प्रवृत्तिर्युक्तेत्याह—अन्न इति । अत्तुरन्नाधीनत्वमध्यक्षमन्नस्याप्यत्त्रधीनत्वं युक्तं तस्य स्वार्थमन्नसृष्टेरतोऽत्तुरन्नं सृष्ट्वा तदत्तुं मुखविदारणमुचितमित्यर्थः ॥१८३-१८४॥

स भाणकरोदित्यस्य सहेतुकमर्थमाह—जन्मान्तरेति । आदिपदं वासनार्थम् । जनिष्यमाणप्राणिकर्मणश्च तत्र हेतुत्वमाह—जन्येति । असंस्कृतशब्दकरणे हेत्वन्तरमाह—शिशुरिति । व्यादितास्यमन्तकमन्तिके दृष्ट्वा भीत्यनन्तरमित्याह—अथेति ॥१८५॥

तथाऽपि किमिति मृत्युः पशुमिव व्याघ्रो न तं भक्षितवानित्याशङ्क्याऽऽह—यथोक्तेति । हेतुशब्दो जन्यकर्मार्थः । स्वभावो हिंस्रत्वम् । असुः प्राणो मृत्युरिति यावत् । स कुमारकृतरवेण त्रस्तः सन्भयादेव स्वभावमजहत्तद्भक्षणादुपरतवानित्यर्थः ॥१८६॥

सर्वसंहर्तुरतिशूरस्य प्रजापतेः शिशुशब्दश्रुतिमात्रात्कथं त्रासः स्यात्तत्राऽऽह—अत्यन्तमिति । स्वस्वभावो नाम प्रकृतिस्वभावः ॥१८७॥

१. तित्तिरिः अल्पपरिमाणः पक्षी तत्पतनेऽपि शूराणां भीतिर्जायते—सा च मरणभयात्—मरणं च प्रतिजन्म अनुभूतम् ।

एवं स शिशुसंरावसंलब्धालोचनक्षणः[1] । ऐक्षतेह न कामार्तः कश्चिदालोचने क्षमः ।।८८।।
मन्यतिश्चाभिपूर्वोऽयं हिंसार्थः स्यात्प्रसिद्धितः । यदीममभिहिंसिष्ये कनीयोऽन्नं भवेद्ध्रुवम् ।।८९।।
कारणादल्पमेव स्यात्तद्व्याप्तेरदितिर्यतः । अन्नमल्पं ततोऽप्यल्पात्कनीयोऽन्नं भवेदतः ।।९०।।
लोकेऽपीदं सुप्रसिद्धमाङ्गनाबालपण्डितम् । जग्धनिःशेषबीजस्य तत्फलं नाऽऽप्यतेऽण्वपि ।।९१।।
कुमारवक्त्रोद्गतया वाचर्गादीन्ससर्ज सः । पश्वादींश्च कुमारेण ह्यात्मनाऽजीजनज्जगत् ।।९२।।
स्रष्टृत्त्रोः कार्यभक्ष्याभ्यामन्योन्याव्यतिरेकतः । स्रष्टृत्वात्स सृजत्येव खाद्यतेऽन्नं सदाऽऽद्यतः ।।९३।।
सर्वमत्ति यतः सृष्टं तस्माददितिरुच्यते । नामज्ञस्तमुपासीनः सर्वस्यात्ताऽदितिर्भवेत् ।।९४।।

स ऐक्षतेत्यस्यार्थमाह—एवमिति । शिशोः संरावेण संलब्धो भाविन्यालोचने क्षणो येनेति बहुव्रीहिः । प्रजापतेः सर्वज्ञत्वादीक्षणं स्वतः संभवति किं निमित्तविशेषोक्त्येत्याशङ्क्याशनायावानपीति भाष्ये[2] विवक्षितमाह—इहेति । तथाऽपि प्रजापतेरतिनिपुणत्वादुक्तनिमित्तवशादीक्षितवानिति शेषः ।।१८८।।

अभिपूर्वो[3] मन्यतिरित्यादिभाष्यार्थमाह—मन्यतिश्चेति । तत्र 'रुद्रोऽस्य पशूनभिमन्येत' 'नास्य रुद्रः पशूनभिमन्यते' 'पशून्नाभिमंस्यत इति' 'ततो वै रुद्रः पशून्नाभ्यमन्यते'त्यादिश्रुतिप्रसिद्धिं प्रमाणयति—प्रसिद्धित इति । पदार्थमुक्त्वा वाक्यार्थमाह—यदीति ।।१८९।।

कथं विराजो हिंसनेऽन्नस्य कनीयस्त्वं तत्राऽऽह—कारणादिति । सूत्रात्कारणाद्वैराजं शरीरमन्नबीजत्वादन्नशब्दितमल्पं सूत्रेण तस्य व्याप्तत्वात्तस्यापि हिंसने कुतोऽन्नसमृद्धिरित्यर्थः । अन्नस्याल्पत्वे हेत्वन्तरमाह—अदितिरिति । यतः सूत्रमदितिर्द्यौरदितिरन्तरिक्षमित्यादावदितिरिति प्रसिद्धमतस्तेन प्रतिक्षणं भक्ष्यमाणमन्नमल्पं युक्तमित्यर्थः । तथाऽपि विराजो भक्षणे किमित्यन्नस्याल्पत्वं तत्राऽऽह—ततोऽपीति । हेत्वभावे फलाभावोऽतःशब्दार्थः । अन्नबीजस्य विराजो भक्षणे कुतोऽन्नसमृद्धिर्न हि हेत्वभावे कार्यं संभवतीति भावः ।।१९०।।

कुलालाभावे घटवद्विराडभावेऽपि स्यादन्नमित्याशङ्क्याऽऽह—लोकेऽपीति । यद्यप्युत्पन्नो घटो निमित्ताभावेऽपि तिष्ठति तथाऽपि तदभावे न जायते न चोपादानं विना भावकार्यसंभवो न हि बीजमङ्कुरकारणं भक्षितवता तत्कारणोऽङ्कुरो लभ्यतेऽतो विराडभावे जन्माभावादन्नस्य समृद्धिर्दूरनिरस्तेत्यर्थः ।।१९१।।

स[4] तयेत्यादेरर्थमाह—कुमारेति । स हि स्वकीयकुमारमुखनिर्गतया वाचा वेदादीनात्मना च कुमारेण पश्वादीनर्थानजीजनदेवं वाच्यवाचकरूपं जगद्विराजा तद्वक्त्रोत्थया वाचा चोत्पादितवान्प्रजापतिर्न हि हेतुभूतयोक्तत्रय्यैव त्रय्याः सृष्टिर्न चाव्यक्ता त्रयी तद्व्यक्तिहेतुः तयेत्यनन्तरप्रकृतकुमारमुखनिर्गतवाग्ग्रहणसंभवे क्लिष्टकल्पनानवकाशादिति भावः ।।१९२।।

तर्हि प्रजापतेः स्रष्टृत्वमेव नात्तृत्वमन्यथाऽन्नवृद्ध्यसिद्धेस्तत्कुतोऽस्यादितित्वं तत्राऽऽह—स्रष्ट्रिति । स्रष्टा कार्यं तच्च तमपेक्षतेऽत्ता भक्ष्यं तच्च तमपेक्षतेऽतः स्रष्टा कार्यं सृजत्येव स्रष्टृत्वादन्यथा तदसिद्धेरत्ता चान्नं सदैवाद्यते तस्याऽऽद्यत्वेनैव स्थितेरित्यर्थः ।।१९३।।

स्रष्टुरदितित्वमुपपाद्य सर्वमित्यादेरर्थमाह—सर्वमिति । सर्वस्येत्यादि व्याचष्टे—नामेति । यथोपासनं हि फलं तथाच प्रजापतिमदितिनामानमात्मत्वेन ध्यायन्ध्येयात्माऽदितिर्भूत्वा तत्तदत्तृरूपमापन्नः सर्वस्यात्ता स्यादित्यर्थः ।।१९४।।

---

१. आलोचने क्षणः निर्व्यापारस्थितिः यस्येत्यर्थः भवता क्षणः कर्तव्यः इत्यादाविवायमेवार्थः न तु क्षणः कालः ।
२. ३८.९ ३. ३९.१
४. "स तया वाचा तेनात्मनेदं सर्वमसृजत" इति श्रुतेः भाष्यं तयैव त्रय्या वाचा सूक्ष्मया पूर्वोक्तया तेनैवात्मना मनसा मिथुनीभावं आलोचनमुपगम्य स्थावरादीन् ऋगादीन् कर्माङ्गभावेनोपयोगिनः स्थूलान् असृजत-इति । अत्र तु "तया वाचा" इत्यत्र तच्छब्देन त्रयीग्रहणं क्लिष्टमित्यनुसन्धाय तया कुमारनिर्गतया वाचा वेदादीन्; आत्मना कुमारेण पश्वादीन् असृजत इति वार्तिककृता व्याख्यातम् ।

सर्वात्तृत्वेन सिद्धेऽर्थे सर्वान्नोक्तिः किमीर्यते । अन्नमेव भवेदन्नं नान्नमन्नस्य कुत्रचित् ।।९५।।
प्राणात्माऽत्तैव सोऽवश्यमुपासनबलाद्भवेत् । य एवमभिधानज्ञ उपासीतादिति सदा ।।९६।।

मू०—सोऽकामयत भूयसा यज्ञेन भूयो यजेयेति। सोऽश्राम्यत्स तपोऽतप्यत तस्य श्रान्तस्य तप्तस्य यशोवीर्यमुदक्रामत् । प्राणा वै यशो वीर्यं तत्प्राणेषूत्क्रान्तेषु शरीरँ् श्वयितुमध्रियत तस्य शरीर एव मन आसीत् ।।६।।

अश्वाश्वमेधनाम्नोऽथ कारणप्रतिपत्तये । सोऽकामयत इत्यादिः परो ग्रन्थोऽवतार्यते ।।९७।।
यज्ञेन भूयसा यक्ष्य इत्येवं स प्रजापतिः । अश्वमेधो भवेद्भूयान् भूयोदक्षिणको हि सः ।।९८।।
यजेय भूयोऽपीत्येवमकामयत भावितः । क्रत्वात्मेत्यभिमानेद्धः पूर्वजन्मन्यभूत्प्रभुः ।।९९।।
पूर्वजन्माभिनिर्वृत्तप्रयोगापेक्षयोच्यते । भूयो यजेयेति वचः सदा तद्भावभावनात् ।।२००।।
क्रत्वात्मैवाभिसंपन्नो द्वैतैकत्वात्मकः प्रभुः । इह तत्फलतां यातो भूयोवाग्युज्यते ततः ।। १ ।।

सर्वमत्तीत्यनेनैव सर्वस्यान्नत्वसिद्धेः सर्वमस्यान्नमिति पुनरुक्तिरिति शङ्कते—सर्वेति । अन्नमन्नमेवास्य सदा न कदाचित्तदस्यात्तृ भवतीति वक्तुं सर्वमस्यान्नमित्युक्तिरित्याह—अन्नमिति ॥१९५॥

य एवमित्यादिवाक्यं व्याकरोति—प्राणेति । उपासितुरुपास्यदेवताभावे प्रतिबन्धकाभावं दर्शयति—अवश्यमिति । उपासनस्य बलं भावनाप्रकर्षस्तदर्थमेव सदेत्युक्तम् ॥१९६॥

अथोपास्तिविधौ सफले सति समाप्तिरेव ब्राह्मणस्योचिता किमुत्तरग्रन्थेनेत्याशङ्क्याऽऽह—अश्वेति । संधिरविवक्षितः । अप्प्रतिष्ठितत्वमदितित्वमितिगुणवतः प्रजापतेरुपासनोक्त्यनन्तरं तस्यैवाश्वादिनामप्रवृत्तिनिमित्तप्रतिपत्त्यर्थमुत्तरो ग्रन्थः । स चावतार्यते तात्पर्योक्त्या भाष्यकृतेत्यर्थः ॥१९७॥

संगतिमुक्त्वा श्रुत्यक्षराणि योजयति—यज्ञेनेति । अकामयतेति शेषः । कोऽसौ यज्ञो भूयानिति तमाह—अश्वमेध इति । तस्य भूयस्त्वे हेतुमाह—भूय इति । प्राच्यादिदिक्चतुष्टयस्याध्वर्युप्रभृतिभ्यश्चतुर्भ्यो भूम्यवच्छिन्नस्य चावशिष्टस्य धनस्य सदस्येभ्यो दक्षिणात्वेन देयतायास्तत्राऽऽपस्तम्बादिभिः[1] स्मृतत्वादित्यर्थः ॥१९८॥

तेन यक्ष्यमाणस्याननुष्ठिताश्वमेधस्य प्रजापतेर्भूयःशब्दोक्तिः कथमित्याशङ्क्याऽऽह—यजेयेति । भावितत्वं भूयःशब्दप्रयोगकारणं साधयति—क्रत्वात्मेति । बाह्यस्याऽऽन्तरस्य च क्रतोरात्मा हिरण्यगर्भोऽस्मीत्यभिमानातिरेकात्तत्तद्रूपेण भानविषयो यजमानावस्थायां प्रजापतिरासीदित्यर्थः ॥१९९॥

अथातीते जन्मनि यजमानोऽश्वमेधस्य कर्ताऽभूदधुना हिरण्यगर्भो भूयो यजेयेत्याह तथाच कर्तृभेदाद्भूयःशब्दासामञ्जस्यमित्याशङ्क्याऽऽह—पूर्वेति । साधकसमये समुत्थक्रत्वनुष्ठानापेक्षया भूयो यजेयेत्युच्यते तेन तस्याश्वमेधवासनाविशिष्टस्य कल्पादौ ज्ञानकर्मफलत्वेन वृत्तस्य भूयोगीरुचिता कर्तृभोक्त्रोरैक्येन साधकफलावस्थयोर्यजमानसूत्रयोर्भेदाभावादित्यर्थः । उक्तमेव स्फुटयति—सदेत्यादिना । साधकावस्थायां दीर्घकालमादरेण निरन्तरतया

---

१. "प्राचीं होत्रे ददौ राजा" इति अश्वमेधदक्षिणात्वेन चतुर्णां दिशां चतुर्भ्यो महर्त्विग्भ्यः स्वगणान्तर्गतेतरऋत्विक्सहितेभ्यः देयत्वं कल्पसूत्रकारैः आपस्तम्बादिभिरुक्तम् । तथापि सर्वस्वदक्षिणा कथं देया यजमानस्य यावज्जीवं वृत्तिः तत्र कर्तव्ययागाद्यर्थं धनं चावश्यकमिति विमृश्य पूर्वमीमांसाषष्ठाध्यायषष्ठपादे "अशेषत्वात्तदन्तः स्यादि"त्यधिकरणे—इदं मे भक्षार्थमिदं मे दक्षिणार्थं इदं मे यज्ञार्थं इति स्वीयं धनं त्रेधा विभज्य दक्षिणार्थस्यैव सर्वस्य दानं निर्णीतम् । राज्ञः प्रागादिदिशां दानं तत्तद्देशपरिपालकत्वमात्रस्य समर्पणं न तु तत्तदेशस्वत्वस्यापि तत्तद्देशभागानां तत्तद्देशवासिजनैः क्रयादिना स्वीकृतत्वात् तत्र राज्ञः स्वत्वाभावात् । परिपालनं तदर्थतया करग्रहणं च यद्राज्ञो वर्तते तदेव देयमित्यर्थः । तदुक्तं जैमिनिना—"स भूमिस्स्यात् सर्वान् प्रत्यविशिष्टत्वात्" ( ६-७-३ ) ।

कारणप्रवणं सर्वं कार्यं दृष्टं जगत्यपि । प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥ २ ॥
यशोवीर्यैकहेतुत्वात्प्राणा यश इहेष्यताम् । यशः प्रकाशरूपेण वीर्यं तद्बलहेतुतः ॥ ३ ॥
उदक्रामद्यशो वीर्यं विराजः श्रमकर्शितात् । लिङ्गात्मेह यशो वीर्यमुभयं हि तदुद्भवम् ॥ ४ ॥
पूर्वदेहेऽभिषङ्गोऽभूदपविद्धतनोरपि । सङ्गत्यागो ह्यसंभाव्यो विनैकात्म्यावबोधनात् ॥ ५ ॥

मू०—सोऽकामयत मेध्यं म इदं स्यादात्मन्व्यनेन स्यामिति । ततोऽश्वः समभवद्यदश्वत्तन्मेध्यमभूदिति तदेवाश्वमेधस्याश्वमेधत्वम् । एष ह वा अश्वमेधं वेद य एनमेवं वेद । तमनवरुध्यैवामन्यत । तं संवत्सरस्य परस्तादात्मन आलभत । पशून्देवताभ्यः प्रत्यौहत् । तस्मात्सर्वदेवत्यं प्रोक्षितं प्राजापत्यमालभन्त एष ह वा अश्वमेधो य एष तपति तस्य संवत्सर आत्माऽयमग्निरर्कस्तस्येमे लोका आत्मानस्तावेतावर्काश्वमेधौ । सो पुनरेकैव देवता भवति मृत्युरेवापपुनर्मृत्युं जयति नैनं मृत्युराप्नोति मृत्युरस्याऽऽत्मा भवत्येतासां देवतानामेको भवति ॥७॥

इति प्रथमाध्यायस्य द्वितीयं ब्राह्मणम् ॥२॥

जातदेहाभिषङ्गः संस्तादात्म्यप्रतिपित्सया । मेध्यमित्यादिकं कामं सोऽकामयत कामुकः ॥ ६ ॥
अपविद्धयशोवीर्यं शरीरं कवियोगतः । यतोऽश्वयदतोऽश्वोऽसुः संवृत्तः स प्रजापतिः ॥ ७ ॥

हिरण्यगर्भोऽस्मीतिभावनावशादुभयविधकत्वात्मा प्रजापतिरेव समष्टिव्यष्ट्यात्मा संपन्नः सन्नेतत्कल्पादौ क्रतुफलतां यतो यातस्ततो भूयःशब्दो युक्तिमानित्यर्थः ॥२००-२०१॥

ननु तस्येश्वरस्य कथं दुःखात्मकक्रत्वनुष्ठानेच्छा न हि सुखी दुःखं भोक्तुमर्थयते तत्राऽऽह—कारणेति । सर्वमपि कार्यं व्यवहारभूमौ प्रकृतितन्त्रं दृष्टं तथाच सूत्रस्यापि प्रकृतिवशात्क्रत्वनुष्ठानेच्छा । कर्ता हि भोक्तृफलावस्थस्य प्रकृतिः । स च क्रतुमन्वतिष्ठदतस्तद्वशात्फलभूतस्यापि प्रजापतेस्तदनुष्ठानेच्छेत्यर्थः । सर्वं कार्यं प्रकृतितन्त्रमित्यत्र भगवद्वाक्यं प्रमाणयति—प्रकृतिमिति । ज्ञानवानपि प्रकृत्यनुरूपं चेष्टते सर्वाणि हि भूतानि तत्तन्त्राणि परनिमित्तो निग्रहो न प्रकृतिप्रवृत्तेर्निवारक इत्यर्थः ॥२०२॥

प्राणा वै यशो वीर्यमित्यत्र प्राणानां यशस्त्वं वीर्यत्वं चोक्तं तत्र हेतुमाह—यश इति । द्वितीयो यशः—शब्दो वीर्यस्याप्युपलक्षणम् । इहेति वाक्यं देहो वा गृह्यते । यशोवीर्यशब्दयोरर्थविशेषमाह—यश इति । प्रकाशो नाम ख्यातिस्तद्धेतुत्वाकारेण प्राणानां यशस्त्वं न हि पुमानसत्सु प्राणेषु यशस्वी । अस्ति च देहे तेषां बलहेतुत्वं न हि तेषूत्क्रान्तेषु देहे बलं दृष्टमतो यशोवीर्यत्वं तेषां युक्तमित्यर्थः ॥२०३॥

तदेवमित्यादिभाष्यं विभजते—उदक्रामदिति । कथं बहूनां प्राणानां यशोवीर्यत्वं न हि तेषां प्रत्येकं तद्भावः कस्यचिद्भावेऽपीतरेषामभावे देहे ख्यातिबलयोरनुपलम्भात् । नापि मिलितानां तथात्वमेकस्याप्यभावे तदभावप्रसङ्गादिति । तत्र श्रुतिभाष्ययोरभिप्रायमाह—लिङ्गात्मेति । इहेति स्थूलदेहोक्तिः । लिङ्गात्मनि यशोवीर्यशब्दयोर्वृद्धप्रयोगाभावान्नैवमित्याशङ्क्याऽऽह—उभयं हीति । यशश्च वीर्यं चेत्युभयं लिङ्गात्मनः सकाशादुद्भवति तदभावे तदयोगात्तस्माद्युक्तं लिङ्गात्मनस्तथात्वमित्यर्थः ॥२०४॥

तस्येत्यादिभाष्यार्थमाह—पूर्वेति । ननु प्रजापतेर्देहान्निर्गतस्यापि किमिति तस्मिन्नेवाऽऽसक्तिरासीन्न हि बुद्धिपूर्वकारी दुःखायतनाय देहाय स्पृहयति तत्राऽऽह—सङ्गेति । "रसवर्जमि"त्याद्या स्मृतिरत्रानुगुणेति द्योतयितुं हिशब्दः ॥२०५॥

स तस्मिन्नित्यादिभाष्यं योजयति—जातेति । तद्देहासक्तिरेवोक्तकामनायां हेतुरिति वक्तुं कामुक इत्युक्तम् ॥२०६॥

ननु प्रजापतेरश्वादिनामनिर्वचनार्थमुपक्रान्तं तदकृत्वा कथमन्यदाचरितमत आह—अपविद्धेति । कस्य

१. ४१-७ २. ४२.१

व्यपेतसद्यशोवीर्यममेध्यं मेध्यतामगात् । तत्प्रवेशाद्यतोऽतोऽयमश्वमेधोऽभवत्प्रभुः ।। ८ ।।
अश्वाश्वमेधावेवं च प्राजापत्यात्मनाऽञ्जसा । अभिष्टुतौ कथं नाम भवेतामिति भण्यते ।। ९ ।।

अश्वस्याग्नेश्चैकमुपासनम्

काललोकादिवपुषस्त्वश्वस्याग्नेश्च सांप्रतम् । समस्योपासनं वाच्यमित्यर्थो ग्रन्थ उत्तरः ।।१०।।
विधायकपदाभावादसंगानं परस्परम् । पदानामिति मा प्रापदित्यर्थेयं परा श्रुतिः ।।११।।
एष एवं यथातत्त्वमश्वमेधं विवेद यः । वक्ष्यमाणेन रूपेण वेद विद्यादतस्तथा ।।१२।।
आत्मानमश्वं संकल्प्य काललोकादिधर्मिणम् । तथाविधशरीरः सन्सर्वलोकपितामहः ।।१३।।
यजेयमश्वमेधेन भूयोऽपीत्यभ्यमन्यत । भूर्लोकाद्यात्मकं सोऽश्वमात्मानं निरवग्रहम् ।।१४।।
यावदब्दं मुमोचाश्वं स्वच्छन्दं मुक्तबन्धनम् । ततः संवत्सरादूर्ध्वं तं चाप्यालभताऽऽत्मने ।।१५।।
स्वात्मावयवभूताभ्यो देवताभ्यो यथायथम् । ग्राम्यारण्यान्पशून्प्रादादन्याभ्यः स प्रजापतिः ।।१६।।

प्राणस्य शरीराद्वियोगादिदं शरीरं यशोवीर्यशून्यमश्वयदुच्छूनतां यतो गतवदतोऽश्वस्तस्मिन्प्रविष्टः प्रजापतिरित्यर्थः । देहस्याश्वत्वेऽपि न प्रजापतेरश्वत्वमित्याशङ्क्य तत्तादात्म्यादश्वत्वं तस्यापीत्याह—अश्वोऽसुरिति । अश्वस्य प्रजापतित्वेन स्तुतत्वात्तस्योपास्यत्वं फलितमिति भावः ।।२०७।।

अश्वनामनिर्वचनेऽपि कथमश्वमेधनामनिर्वचनमित्याशङ्क्याऽऽह—व्यपेतेति । व्यपेते सती यशोवीर्ये यस्मादिति विग्रहः । शरीरं हि प्राणवियोगादश्वयत्तत्प्रवेशाच्च मेध्यमित्यश्वमेधसंज्ञामर्हति प्रजापतेरश्वमेधत्वं देहतादात्म्यादित्यर्थः ।।२०८।।

उक्तरीत्या तस्याश्वत्वादिनिर्देशस्य फलमाह—अश्वेति । भण्यते प्रजापतेरश्वत्वमश्वमेधत्वं चेति शेषः ।।२०९।।

ननु क्रत्वङ्गस्याश्वस्याश्वमेधक्रत्वात्मनश्चाग्नेरुक्तरीत्या स्तुतत्वात्तदुपास्तेश्च पूर्वमेवोक्तत्वादेष ह वा अश्वमेधमित्यादि किमर्थं तत्राऽऽह—कालेति । आदिपदं देवतार्थम् । इदं च विशेषणमुभयत्र संबध्यते । अश्वोपासनमुषा वा इत्यादिनोक्तमुक्तं चाग्न्युपासनं नैवेत्यादिना तदुभयं न मिथो भिन्नं किं त्वेकमेवेति वक्तुमुत्तरवाक्यमित्यर्थः ।।२१०।।

कथमुक्तोपास्त्योरेकत्वं तत्राऽऽह—विधायकेति । पूर्वत्र विधिपदाभावात्पदानां मिथोऽसंगतिरिति प्राप्तं तन्मा भूदित्येवमर्थं विधिपदसहितमुत्तरं वाक्यं प्रवृत्तं यद्यपि पूर्वत्रादितित्वं वेदेति विधिः श्रुतस्तथाऽपि स गुणोपास्तिविधिर्न प्रधानविधिरत्र त्वश्वमेधं वेदेति प्रधानविधिरिति भावः ।।२११।।

उत्तरवाक्यतात्पर्यमुक्त्वा तदक्षराणि योजयति—एष इति । एवंशब्दात्प्रसिद्धार्थत्वे भाति कुतो विधिरित्याशङ्क्याभीष्टं विधिमाह—विद्यादिति । तस्यैवाश्वमेधवेदित्वादित्यतःशब्दार्थः वक्ष्यमाणप्रकारार्थस्तथाशब्दः ।।२१२।।

अस्य विधेर्भूमिकां करोति—आत्मानमिति । आत्मशब्दः शरीरविषयः । अश्वमेधं विशिनष्टि—कालेति । आदिपदेन देवताग्रहः । आत्मशब्दार्थं निश्चेतुं प्रजापतिं विशिनष्टि—तथेति । काललोकदेवतादृष्ट्या दृष्टस्याश्वस्य प्रजापतिदेहत्वं युक्तं तस्य सर्वहेतुत्वेन सर्वेण तादात्म्यसंभवादित्याह—सर्वेति ।।२१३।।

प्रजापतेः स्वदेहस्याश्वत्वकल्पनं किमर्थमित्यपेक्षायामाह—यजेयमिति । स्वकीयसंकल्पानुगुणत्वेन स्वदेहस्याश्वत्वं कल्पितमित्यर्थः । ननु तस्य देवतात्मनो देवतान्तराभावात्कर्मानधिकारात्कथं भूयो यजेयेत्याशंसनं; नैवमुपास्तिविध्यर्थमस्यार्थवादत्वादिति मत्वा तमित्यादेरर्थमाह—भूरिति । निरवग्रहत्वं निरङ्कुशत्वमप्रतिबद्धत्वम् । तत्र हेतुर्मुक्तेति । स्वच्छन्दत्वं स्वेच्छाचारित्वमप्रतिबद्धत्वफलम् । द्विरश्वशब्दस्तत्प्राधान्यद्योती । तदनन्तरं किं कृतवानित्युक्ते तं संवत्सरस्येत्यादेरर्थमाह—तत इति ।।२१४-२१५।।

पशूनित्यादि व्याचष्टे—स्वात्मेति । स हि प्रजापतिः स्वात्मनोऽवयवभूता या देवतास्ताभ्योऽन्यादिभ्यो

**यतोऽकरोद्विराडेवं तस्मादेवेह याज्ञिकाः । प्रोक्षितं सर्वदेवत्यं प्राजापत्यं तुरंगमम् ॥१७॥**
**आलभन्ते यतस्तस्माद्यथाव्याख्याततत्त्ववित् । कुर्यादेवं यथोक्तार्थं मृत्युत्वप्रतिपित्सया ॥१८॥**

"एष ह वा" इत्यादेः अश्वमेधोपासनफलत्वकथनपरता

**कर्मोपासनमुक्त्वाऽथ तत्फलोपदिदिक्षया । एष वा इति यत्नेन ह्याजगामोत्तरा श्रुतिः ॥१९॥**
**दर्शनाद्यभिनिर्वृत्तो यस्त्वेवं हयसाधनः । प्रत्यक्षं फलरूपेण स एष इति दर्श्यते ॥२०॥**
**अश्वमेधक्रियापूर्वपरिणामैकवर्त्मना । अश्वमेधो रविः साक्षादुषा इत्यादिनोदितः ॥२१॥**
**तस्य संवत्सर आत्मा तस्याऽऽदित्यैकहेतुतः । तस्य क्रत्वात्मनश्चित्यो योऽङ्गभूतः पुरोदितः ॥२२॥**
**फलात्मकः स एवैष पार्थिवोऽग्निः प्रदर्श्यते । आत्मान एते तस्यापि त्रयो लोका यथोदिताः ॥२३॥**
**क्रतुतत्साधनात्मानावादित्याग्नी यथोदितौ । निर्वृत्तात्माधिकारौ तावेकैवासौ भवेदमुः ॥२४॥**

यथायथं येन येन प्रकारेण शास्त्रे कथ्यते तेन तेन प्रकारेण ग्राम्यानजादीनारण्यांश्च गवयादीन्पशून्दत्तवानिति योजना ॥२१६॥

पुराकल्पमुपास्तिविधेरुक्त्वा क्रतुविधेरपि तस्य तुल्यतां मत्वा तस्मादित्यादि व्याचष्टे—यत इति। प्रोक्षितं मन्त्रपूतजलसंस्कृतमिति यावत्। इहेति यज्ञभूमिरुक्ता। सर्वदेवत्यमित्यत्र हेतुमाह—प्राजापत्यमिति। उपास्तिविधेर्भूमिकां कृत्वा तद्विधिमुपसंहरति—यत इति। यस्मादेवमुपासितवान्प्रजापतिस्तस्मादन्योऽप्येवमुपासीतेति योजना। यस्य कस्यचिदुपास्त्यधिकारं वारयति—यथेति। सोऽपि विरक्तो मुमुक्षुश्चेन्नात्राधिकारीति सूचयति—मृत्युत्वेति। न हि सौत्रात्पदाद्विरक्तस्य तस्मिन्नहंग्रहोपास्त्यधिकारस्ततप्रजापतित्वार्थी चेदित्थमुपासीतेत्यर्थः ॥२१७-२१८॥

नन्वश्वमेधोपासनमत्र विधित्सितं तस्य च विधिरतिक्रान्तस्तत्किमुत्तरेण वाक्येनेत्यत आह—कर्मेति। उपायोपदेशानन्तरमुपेयोपदेशस्यावसरं प्रत्ययसूचितं स्फोरयति—अथेति। फलोपदेशमन्तरेणाऽऽकाङ्क्षानुपशान्तेरितिहेतुद्योतनार्थो हिशब्दः। फलोक्तेरभूतार्थवादत्वव्यासेधार्थं यत्नेनेत्युक्तम् ॥२१९॥

अश्वमेधोपासनफलं वक्तुमुत्तरं वाक्यमिति तात्पर्यमुक्त्वाऽक्षराणि व्याचष्टे—दर्शनादीति। यो दर्शनेन मनसा संपादितः पूर्वोक्ताश्वाग्निसाधनोऽश्वमेधो यश्च कायेन निष्पादितो बाह्याश्वादिहेतुकः क्रतुः स द्विप्रकारोऽपि फलरूपेण स्थितः सवितैव स चैष इति प्रत्यक्षं प्रदर्श्यत इत्यर्थः ॥२२०॥

कथमादित्यस्योभयविधाश्वमेधत्वं न हि तस्य मनोदेहनिर्वर्त्यक्रियात्वं तत्राऽऽह—अश्वेति। उभयी तावदश्वमेधक्रिया मानसी कायिकी च तदनुष्ठानाद्योऽपूर्वात्मा परिणामस्तद्द्वारा सवितैव मानसोऽश्वमेधो यः पूर्वमुषा वा इत्यादिनाऽनुक्रान्तः। कायिकश्च स एव यं साक्षादश्वादिभिर्निर्वर्तयति। "अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठत" इति स्मृतेरित्यर्थः ॥२२१॥

कोऽसौ क्रतुफलात्मकः सविता मण्डलं वा देवता वेति संदेहे द्वितीयं परिगृह्य तस्येत्यादि व्याचष्टे—तस्येति। कथमादित्यस्याऽऽत्मा संवत्सरः स हि कालेन परिच्छिन्नो न तदभिन्नो भवति तत्राऽऽह—तस्येति। आदित्योदयास्तमयाभ्यामहोरात्रादिद्वारा संवत्सरव्यवस्था तेन तन्निर्मातुस्तस्य युक्तं तत्तादात्म्यमित्यर्थः। क्रतोरादित्यत्वमुक्त्वा तदङ्गस्याग्नेस्तद्वक्तुमयमग्निरर्क इति वाक्यं तस्यार्थमाह—तस्येति। योऽयं पार्थिवश्चित्योऽग्निः क्रत्वङ्गभूतस्तेजोरसो निरवर्ततताग्निरित्यत्रोक्तः स एव फलात्मकोऽर्कः सवितैवेति प्रदर्श्यते प्रकृतेन वाक्येनेत्यर्थः। यद्वाऽर्कशब्देनाग्निरेवोक्तः स सवितैवेति वाक्यार्थः। ननु पूर्वोक्तस्यैवाग्नेरादित्यत्वं कस्मान्नियम्यतेऽन्यश्चित्योऽग्निरन्यश्चाग्निरादित्यः किं न स्यादित्याशङ्क्य तस्येत्यादिवाक्यं योजयति—आत्मान इति। यथोदितत्वं चित्याग्निरूपेण प्रागुक्तत्वं तस्य प्राचीत्यादिना लोकात्मत्वं चित्याग्नेरुक्तं तदिहाप्युच्यते तत्तस्यैव आदित्यत्वमत्रेष्टमित्यर्थः ॥२२२-२२३॥

नन्वादित्यः क्रतुरुक्तस्तद्धेतुश्चाग्निस्तत्कथं तयोः साध्यसाधनयोरैक्यमित्याशङ्क्य तावित्यादेरर्थमाह—

**अशनायावती योक्ता मृत्युः सर्वान्नघस्मरा । सैवाऽऽत्मा विदुषः साक्षादात्मा स्यादजरोऽमरः ॥२५॥**
**नैनमाध्यात्मिको मृत्युस्तन्मृत्युत्वादवाप्नुयात् । सकृन्मृत्वाऽसुदेहेन मुच्यते सर्वबन्धनात् ॥२६॥**
**अग्न्यादिभेदभिन्नानां देवतानामशेषतः । आत्माऽभिन्नो भवत्येष यथोक्तोपासनाद्बुधः ॥२७॥**

**इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके द्वितीयमग्निब्राह्मणम् ॥२॥**

## अथ प्रथमाध्याये तृतीयं ब्राह्मणम्

**उत्तरब्राह्मणस्य पूर्वेण संबन्धः**

**शास्त्रोक्तज्ञानयुक्तानां कर्मणां ज्ञानतस्तथा । सर्वत्र वेदशास्त्रेऽस्मिन्मृत्युभावः फलं श्रुतम् ॥ १ ॥**
**आध्यात्मिकपरिच्छेदव्यावृत्तिर्यत्समाश्रयात् । स मृत्युर्मृत्युशब्देन फलभूतोऽत्र भण्यते ॥ २ ॥**
**या त्वश्वमेधगत्युक्तिः सोपलक्षणसिद्धये । कर्मज्ञानान्तराणां स्यान्नाश्वमेधगृहीतये ॥ ३ ॥**

क्रत्विति । क्रतोरात्मा सविता तत्फलत्वात्क्रतुसाधनात्मा चित्योऽग्निस्तावुक्तविभागावुत्पादितोपासनादिस्वव्यापारौ सन्तावेकैव प्राणाख्या देवतेति तयोरैक्योक्तिरित्यर्थः ॥२२४॥

अपपुनर्मृत्युमित्यादेरर्थमाह—अशनायावतीति । अशनाया हि मृत्युरित्यशनायापिपासावती सर्वस्थूलप्रपञ्चसंहर्त्री या मृत्युशब्दिता प्राणाख्या देवतोपास्योक्ता सैवोपासितुरात्मा तत्क्रतुन्यायादित्यर्थः । अशनायादिमती देवता चेदुपासितुरात्मा तर्हि क्षुत्पिपासादितः सुदुःखी स्यात्तन्नार्थोऽनर्थकरेणोपासनेनेत्याशङ्क्याऽऽह—साक्षादिति । मृत्योर्हि साक्षादात्मा निरुपाधिको जरादिवर्जितः स चेदुपासितुरात्मा कथं सर्वोपद्रवरहितो न स्यादशनायादिना चोपलक्षणेन तस्य संहर्तृत्वमेवेष्टमिति भावः ॥२२५॥

यद्यपि विदुषो मृत्युरात्मा तथाऽपि तस्य देहसंबन्धादाध्यात्मिकमृत्युसंबन्धः स्यादित्याशङ्क्य नैनमित्यादेरर्थमाह—नैन मति । तर्हि विदुषः शरीरमविनाशि तिष्ठेत्ततस्तस्य शरीरत्वव्याहतिरित्याशङ्क्य मृत्युरस्येत्यादेरर्थमाह—सकृदिति । प्राणात्मना स्थितो विद्वान्वर्तमानं देहमारब्धकर्मान्ते जहाति ततश्च तस्य सर्वसंबन्धविनिर्मोको भवति न पुनर्मरणार्थं देहं गृह्णातीत्यर्थः ॥२२६॥

ननु विदुषः सर्वसंबन्धविनिर्मोको न युक्तोऽग्न्यादिदेवताप्रेष्यत्वादित्याशङ्क्यैतासामित्यादेरर्थमाह—अग्न्यादीति ॥२२७॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां द्वितीयमग्निब्राह्मणम् ॥२॥

ज्ञानसमुच्चितकर्मबलान्मृत्युजयं ब्रुवता मुक्तेरुक्तत्वादनर्थिका सम्यग्धीरित्याशङ्क्य वृत्तं कीर्तयति—शास्त्रेति । शास्त्रे तत्र तत्र यान्युपासनान्युक्तानि तैः समुच्चितानि यानि कर्माणि तेषां केवलस्य चास्मिन्ननन्तरव्याख्याते वेदरूपे हितोपदेशपरे ग्रन्थे सर्वत्र चान्यत्रोपास्तिप्रकरणे मृत्युत्वं फलमुक्तं गौणी हि सा मुक्तिरशनायादिसंबन्धादात्यन्तिकी तु मुक्तिः सम्यग्ज्ञानादेवेति तदर्थवत्त्वेत्यर्थः ॥१॥

वक्ष्यमाणमृत्युव्यावृत्त्यर्थं मृत्य्वात्मभाव इति भाष्ये मृत्युशब्दार्थमाह—आध्यात्मिकेति । यस्य सूत्रस्याऽऽत्मत्वेन सदा ध्यानाद्देहसंबन्धाधीनपरिच्छेदाभिमाननिवृत्तिस्तदात्मतादात्म्येन ध्यायतः परिच्छेदाभिमानसंहर्तृफलत्वेन स्थितो मृत्युरस्येत्यादिवाक्ये प्रस्तुतभाष्ये च मृत्युशब्देनोच्यते तद्वक्ष्यमाणमृत्योर्नात्र प्रस्तावोऽस्तीत्यर्थः ॥२॥

अश्वमेधोपासनस्य साश्वमेधस्य केवलस्य वा फलत्वेन मृत्युप्राप्तिरुक्ता नोपास्त्यन्तराणां कर्मान्तराणां चेत्याशङ्क्याऽऽह—या त्विति । अश्वमेधोपास्तिफलोक्तिरुपास्त्यन्तराणां केवलानां समुच्चितानां च फलोपलक्षणार्था नाश्वमेधोपास्तिफलमात्रग्रहार्था सर्वस्मात्फलवदुपायराशेर्वैराग्यस्येष्टत्वादित्यर्थः ॥३॥

---

१. ४६-२।

अल्पीयःफलसंप्राप्तिरल्पीयोज्ञानकर्मतः । अल्पत्वमभिभूतेः स्यात्तयोरासुरपाप्मभिः ॥ ४ ॥
कुतस्तस्याभिभूतस्य रागाद्यासुरपाप्मभिः । उद्भूतिः कर्मणोऽत्यर्थं ज्ञानस्य च निगद्यताम् ॥ ५ ॥
मृत्युं साक्षादवाप्नोति ज्ञानयुक्तेन कर्मणा । इत्येतद्बहुशोऽश्रावि पूर्वग्रन्थेषु चाऽऽगमैः ॥ ६ ॥
तज्ज्ञानोत्पत्तिविघ्नापध्वस्तिकृज्ज्ञानलब्धये । उद्गीथदेवतावाप्त्यै प्रारब्धेहोत्तरा श्रुतिः ॥ ७ ॥
ननु मृत्योरतिक्रान्तेरुद्गीथज्ञानकर्मणोः । फलस्य संश्रवान्नातो मृत्युप्राप्तिस्तयोः फलम् ॥ ८ ॥
नाग्न्यादिदेवतात्मत्वतत्फलावगमाच्छ्रुतेः । स्वाभाविकासङ्गमृत्योरतिक्रान्तिः पृथक्फलम् ॥ ९ ॥

आख्यायिकायाः श्रौतार्थकथनम्

कोऽसौ स्वाभाविकः पाप्मा तस्योद्भूतिस्तथा कुतः । तस्मान्निवृत्तिः केन स्यात्कथं वेत्येतदुच्यते ॥१०॥

ज्ञानयुक्तानां कर्मणां सूत्राप्तिफलत्वे कथं पितृलोकाद्याप्तिर्न ह्येकमेव साधनं ब्रह्मलोकं पितृलोकादि च प्रापयति तत्कर्मणा पितृलोको विद्यया देवलोक इत्यादिविरुद्धमित्याशङ्क्याऽऽह—अल्पीय इति। महत्तराभ्यां ज्ञानकर्मभ्यां समुच्चिताभ्यां केवलाद्वा तथाविधज्ञानाद्ब्रह्मलोकस्ताभ्यामेवाल्पीयोभ्यां पितृलोकादीति व्यवस्थायां न श्रुतिविरोधोऽस्तीत्यर्थः। ननु ज्ञानकर्मणोरल्पत्वं नाम न्यूनफलत्वं वा परिच्छिन्नविषयत्वं वा? नाऽऽद्यः परस्पराश्रयान्नेतरः सूत्राद्युपासनस्यापि तथात्वेन पितृलोकादिफलत्वप्रसङ्गादत आह—अल्पत्वमिति। तयोर्ज्ञानकर्मणोरल्पत्वमासुरपाप्मभिरभिभूतेः स्यात्तेन तदभिभूतत्वमेव तदल्पत्वमिति योजना ॥४॥

सूत्रान्तो ज्ञानकर्मणोः फलोत्कर्षस्तयो रागाद्युपहतयोः पितृलोकादि फलमित्ययुक्तं प्राणाद्युपासनेष्वपि तदभिभवसंभवादनभिभूतज्ञानकर्माभावादिति शङ्कते—कुत इति। तयोरुद्भवकारणस्य दुर्भणत्वात्ताभ्यामुद्भूताभ्यां दुर्लभा सूत्राप्तिरिति भावः ॥५॥

तयोरुद्भवकारणमुपास्या प्राणदेवतेति वक्तुं विस्तरेणानूदितं संगृह्णाति—मृत्युमिति। उपास्तिसमुच्चितकर्मणा केवलोपास्त्या वा सूत्रमात्मत्वेनाऽऽप्नोतीत्येतत्पूर्वग्रन्थेषु मृत्युरस्याऽऽत्मेत्यादिषु श्रुतमन्यैश्चोपास्तिप्रकरणस्थैर्वाक्यैरेतदसकृत्प्रतिपन्नमित्यर्थः ॥६॥

अथ पूर्वोत्तरब्राह्मणयोः संगतिमाह—तज्ज्ञानेति। तस्य सूत्रभावस्य साधनं ज्ञानं कर्म च तयोरुत्पत्तौ प्रतिबन्धको रागादिस्तदपध्वस्तिकारणं यज्ज्ञानादि तत्प्राप्त्यर्थं तद्विषयोद्गीथदेवता प्राणाख्या ग्राह्या। तादर्थ्येनास्यामुपनिषदि द्वया हेत्याद्या श्रुतिरारब्धा। भवति हि प्राणो मन्त्रप्रकाश्योऽनुस्त्रियमाणो यथोक्तप्रतिबन्धध्वस्तिहेतुरिति भावः ॥७॥

ज्ञानकर्मणोरुद्भावकस्य प्राणस्य स्वरूपनिरूपणार्थं ब्राह्मणारम्भमुक्त्वा यथोक्तं संबन्धमाक्षिपति—नन्विति। मृत्युमतिक्रान्तो दीप्यत इति मृत्योरतिक्रमस्य वक्ष्यमाणोद्गीथज्ञानकर्मफलस्य श्रवणात्पूर्वत्र च मृत्योरात्मभावस्य तत्फलस्योक्तत्वान्नानयोर्मृत्युप्राप्तिः फलं पूर्वयोस्तु तदिति फलभेदात्पूर्वोत्तरयोस्तयोर्विषयभेदादुक्तयोर्वक्ष्यमाणयोरनन्तर्भावान्न पूर्वज्ञानकर्मोद्भावकप्रकाशनार्थमिदं ब्राह्मणमित्यर्थः ॥८॥

अग्न्यादिदेवतात्मभावस्योद्गीथज्ञानकर्मफलस्य वक्ष्यमाणत्वात्पूर्वत्र चैतासां देवतानामित्यस्यैवोक्तत्वात्पूर्वोत्तरज्ञानकर्मफलभेदाभावादेकविषयत्वात्तयोरुद्भावकप्रकाशनार्थं ब्राह्मणमुक्तमिति परिहरति—नाग्न्यादीति। एतासां देवतानामेको भवतीति पूर्वा सोऽग्निरभवदित्याद्या चोत्तरा श्रुतिः श्रुतिशब्देन गृह्यते। कथं तर्हि मृत्युमतिक्रान्तो दीप्यत इति श्रुतिस्तत्राऽऽह—स्वाभाविकेति। पृथगित्यत्र मृत्युभावादिति शेषः। अवान्तरफलविषयमेतद्वाक्यं परमफलं तु सूत्रत्वमिति भावः ॥९॥

ज्ञानकर्मणोर्मृत्युत्वमुत्तमं फलमुक्त्वा तयोरप्रतिबद्धयोरेव तदिति मत्वा प्रतिबन्धध्वंसि प्राणदेवताध्यानादि वक्तुं ब्राह्मणमिति तदर्थं चोक्त्वाऽऽख्यायिकायाः श्रौतमर्थं वक्तुं भाष्यस्थं प्रश्नमनुवदति—कोऽसाविति। तत्र प्रथमप्रश्नस्य स्वाभाविकपाप्मस्वरूपं विषयो द्वितीयस्य तदुत्पादकं तृतीयस्य तन्निवर्तकं चतुर्थस्य तन्निवृत्त्युपकरणमिति विवेक्तव्यम्। प्रश्नचतुष्टयमनूद्योत्तरं प्रतिजानीते—इत्येतदिति ॥१०॥

**यथोक्तार्थप्रसिद्ध्यर्थं श्रुतिराख्यायिकात्मिका । द्वया हेत्येवमाद्येयं प्रचक्राम परीक्षितुम् ॥११॥**
**प्राजापत्यं पदं यो यो ह्यधिकारी परीप्सति । तन्निर्धार्यानया श्रुत्या परमाप्नोत्युपासनात् ॥१२॥**

**द्वया ह प्राजापत्या देवाश्चासुराश्च ततः कानीयसा एव देवा ज्यायसा असुरास्त एषु लोकेष्वस्पर्धन्त ते ह देवा ऊचुर्हन्तासुरान्यज्ञ उद्गीथेनात्ययामेति ॥१॥**

**पूर्वजन्मनि यद्वृत्तं वर्तमानप्रजापतेः । तदवद्योतको हेति निपातोऽत्र प्रयुज्यते ॥१३॥**
**भविष्यद्वृत्तिमाश्रित्य यजमानः प्रजापतिः । इहाभिधीयतेऽन्यस्तु न कश्चित्सप्रयोजनः ॥१४॥**
**ज्ञानकर्मोपदेशो हि नरं प्रत्येव सर्वथा । सर्वः श्रौतो यतस्तस्मात्स एवेहाभिधीयते ॥१५॥**
**तत्कर्मज्ञानजत्वाच्च तत्प्राणाः शुद्ध्यशुद्धिजाः । प्राजापत्या इहोच्यन्ते वागाद्युक्तेश्च लिङ्गतः ॥१६॥**
**उद्गीथोपास्तिसंबन्धाद्द्वया हेत्यादिकस्य च । उपास्यार्थविशुद्ध्यर्था प्रवृत्ताऽऽख्यायिका ततः ॥१७॥**
**अभ्यारोहजपस्येह प्राण एवास्तु देवता । कस्माद्वागादयो नेति तत्परीक्षाऽत ईर्यते ॥१८॥**

इयं हि द्वया हेत्याद्या श्रुतिराख्यायिकारूपा यथोक्तबुभुत्सितस्वाभाविकपाप्मादिचतुष्टयज्ञानद्वारा प्राणयाथात्म्यं निरूपयितुं प्रकान्तेत्युत्तरमेव स्फोरयति—यथोक्तेति ॥११॥

किं तन्निरूपणमुद्गीथोपास्तेरेवोपकरोति किंवा सर्वप्राणोपास्तीनामिति वीक्षायां द्वितीयं गृह्णाति—प्राजापत्यमिति । यो यः सौत्रं स्थानमाप्तुमिच्छति स स तदुपायमन्वेषमाणोऽनया श्रुत्या शुद्ध्यादिगुणकं प्राणं निश्चित्य तत्र तत्रोक्ततत्तद्गुणकस्य तस्योपासनात्तत्पदमाप्नोत्यतोऽयं विचारः सर्वप्राणोपास्त्युपकारीत्यर्थः । अन्यपर्युदासार्थमधिकारीत्युक्तम् ॥१२॥

ब्राह्मणाख्यायिकयोरर्थमुक्त्वाऽक्षराणि व्याकुर्वन्निपातार्थमाह—पूर्वेति । वर्तमानप्रजापतेरेतत्कल्पादौ फलरूपेणाभिनिर्वृत्तस्य हिरण्यगर्भस्येति यावत् । निपातानां द्योतकत्वमेव न वाचकत्वमिति वक्तुमवद्योतकपदम् । प्रथमवाक्यं सप्तम्यर्थः ॥१३॥

प्राजापत्या इत्यत्र प्रकृत्यर्थमाह—भविष्यदिति । इहेति तद्धितान्तपदोक्तिः । हिरण्यगर्भस्यैव प्रजापतिशब्देनोपादानमिह किं न स्यादित्याशङ्क्याऽऽह—अन्यस्त्विति ॥१४॥

यद्यपि प्रयोजनेन सह तादात्म्येन स वर्तते तथाऽपि तस्यैव फलभूतस्य किमित्यत्र न प्रकृत्यर्थतेति तत्राऽऽह—ज्ञानेति । अत्र हि प्राजापत्यानां देवासुराणां संग्रामोक्तिद्वारा प्रजापतेर्ज्ञानकर्मणी कर्तव्ये कथ्येते ज्ञानाद्युपदेशश्च सर्वो गुणप्रधानत्वेन समप्रधानत्वेन वा सर्वप्रकारोऽपि श्रुतिस्मृतिगतो मनुष्यत्वाद्यभिमानवन्तं प्रत्येव युक्तः शास्त्रस्य तदधिकारत्वात्तस्माद्यजमानोऽत्र प्रजापतिरित्यर्थः ॥१५॥

प्रत्ययार्थमन्यत्राप्रसङ्गार्थं कथयति—तत्कर्मेति । चकारोऽवधारणार्थः प्राणशब्दादुपरि संबध्यते । तस्य यजमानस्य शास्त्रीये स्वाभाविके च ये ज्ञानकर्मणी ताभ्यां जन्यत्वात्तदुपाधिभूता वागादय एव प्राजापत्याः प्रकृते वाक्ये विवक्ष्यन्ते ते च शुद्धिशब्दितशास्त्रीयज्ञानकर्मजा देवा अशुद्धिशब्दितस्वाभाविकज्ञानकर्मजाश्चासुरा न त्विन्द्रादीनां विरोचनादीनां चात्र प्रसक्तिरित्यर्थः । ननु यजमानसंबन्धिनां देहान्तर्वर्तिनाड्यादीनामनेकेषां संभवात्किमिति वागादीनामेवात्र ग्रहणमित्याशङ्क्य वाक्यशेषादित्याह—वागादीति । चकारः शङ्कानिरासार्थः ॥१६॥

ब्राह्मणतात्पर्यमाख्यायिकाश्रुत्यर्थं चोक्त्वा द्वया ह प्राजापत्या इत्यक्षराणि व्याख्यातानि । इदानीमाख्यायिकायाः स्वार्थनिष्ठत्वमाशङ्क्य तात्त्विकं तात्पर्यमाह—उद्गीथेति । द्वया हेत्यादेरुद्गीथोपास्त्यन्वयान्न स्वार्थनिष्ठतेत्यर्थः । तन्निष्ठत्वाभावादुपास्यं विविच्य वक्तुमाख्यायिकेति फलितमाह—उपास्येति ॥१७॥

कथं तच्छुद्धिरत आह—अभ्यारोहेति । इह ब्राह्मणे योऽभ्यारोह[1]नामा जपो वक्ष्यते तस्योद्गीथोपास्तेश्च

१. अभ्यारोहजपः—मनुष्यभावं परित्यज्य देवभावं प्रत्यारोहणफलकः मन्त्रजपः ।

अन्वयव्यतिरेकाभ्यां प्राणप्राधान्यसिद्धये । प्रवृत्ताऽऽख्यायिका यत्नाद्वागादीन्द्रियनिन्दया ॥१९॥
शास्त्रस्वभावजज्ञानकर्मसंस्कारहेतुतः । देवासुरत्वं प्राणानां विरुद्धोपाधिकारणात् ॥२०॥
सहस्रादिर्यथा भेदः प्राणस्यैकस्य शब्द्यते । भूयोऽधिकारभेदेन वागादीनां तथा भिदा ॥२१॥
सहजं सर्वभूतानां वृत्तमासुरमिष्यते । यत्नाधेयं यती दैवं ज्यायांसः स्युस्ततोऽसुराः ॥२२॥
इह वागादयः शब्दा देवतार्थाभिधायकाः । मर्त्यत्वान्न तु गृह्यन्ते करणस्थानगोचराः ॥२३॥
देवतैकात्म्यमेवेह दैवज्ञानक्रियाफलम् । अध्यात्मादिपरिच्छेद आसुरत्वान्न गृह्यते ॥२४॥
हिंसाभिप्रवणं चेतः प्रायेण श्रेयसामपि । भूयांसोऽतोऽसुरा देवाः कनीयांसोऽतियत्नजाः ॥२५॥
धर्माधर्मैकसाध्यत्वाद्ब्रह्मादेः स्थावरावधेः । अस्पर्धन्त ततोऽन्योन्यं दैतेया विबुधैः सह ॥२६॥

प्राण एव देवताऽस्तु वागादयो नेति कस्मादिति चोदिते तस्या देवतायाः परीक्षा प्रकृताख्यायिकया क्रियत इत्यर्थः । प्रकृताख्यायिकाविषयोऽतःशब्दः ॥१८॥

परीक्षाफलमाह—अन्वयेति । सति प्राणे वागादिव्यापारो नान्यथेत्यन्वयव्यतिरेकाभ्यां वागादीनामासुरपाप्मविद्धत्वेन निन्दया च तद्वैधविधुरस्य प्राणस्य संघातविधारकस्य प्राधान्यधीद्वारोपास्यत्वसिद्ध्यर्थं तात्पर्येणाऽऽख्यायिका प्रवृत्ता तेनोपास्यः प्राणो वागादयो नेति ज्ञानं परीक्षाफलमेषैव चोपास्यशुद्धिरित्यर्थः ॥१९॥

आख्यायिकायास्तात्त्विकं तात्पर्यमुक्त्वा देवाश्चासुराश्चेति यजमानप्राणानां देवासुरत्वं कथमित्याशङ्क्याऽऽह—शास्त्रेति । शास्त्रजे स्वभावजे च ये ज्ञानकर्मणी तयोः संस्कारैर्वागादीनां संस्कृतत्वाद्धेतोः शास्त्रीयज्ञानादिसंस्कृतत्वमितरज्ञानादिसंस्कृतत्वं चेति विरुद्धोपाधिसंबन्धरूपकारणाद्यजमानप्राणानां देवत्वमसुरत्वं चेत्यर्थः ॥२०॥

वागादीनामुपाधितो द्वैविध्यं श्रौतदृष्टान्तेनाऽऽह—सहस्रादिरिति । बहुधाधिकारस्थानोपाधिविशेषेणैकस्यैव सूत्रात्मनः षडधिकत्रिशताधिकत्रिसहस्रसंख्याको[1] भेदः "कति देवा याज्ञवल्क्ये"त्यादावुच्यते । तथा वागादीनां स्वाभाविकेतरज्ञानादिसंस्कृतत्वोपाधितो द्वैविध्यमित्यर्थः ॥२१॥

तत इत्यादिवाक्ययोस्तात्पर्यमाह—सहजमिति । शरीराभिमानद्वारा हिंसानृताद्यासुरं वृत्तं; दैवं पुनरहिंसासत्यवदनादीति विवेकः । देवाश्चाल्पीयांसः स्युरिति द्रष्टव्यम् ॥२२॥

वागादिशब्दैरिन्द्रियाण्युक्त्वा तेषां देवताविषयत्वमाह—इहेति । ब्राह्मणमिहेत्युक्तम् । प्रसिद्धानामिन्द्रियाणामेव कुतस्तच्छब्दैर्नोक्तिरित्याशङ्क्याऽऽह—मर्त्यत्वादिति । करणानां स्थानानि गोलकाख्यानि तद्गताः प्राणा एव न वागादिशब्दास्तेषां नाशित्वादित्यर्थः ॥२३॥

नाशित्वेऽपि तेषामेव ग्रहणं किं न स्यादित्याशङ्क्याऽऽह—देवतेति । वागाद्युपास्तिसहितक्रियाफलमग्न्यादिदेवतात्मत्वमस्मिन्ब्राह्मणे वक्ष्यते । अतश्चाध्यात्मे देहे यो वागादीनां परिच्छेदः करणशब्दितः स नात्र गृह्यते तस्याऽऽसुरत्वात् । किं त्वाध्यात्मिकवागादिद्वाराऽऽधिदैविकाग्न्यादिषु तच्छब्दाः पर्यवस्यन्तीत्यर्थः ॥२४॥

वागादीन्द्रियाण्येव तच्छब्दैरुपेत्य स्वाभाविकी हीत्यादिभाष्यं विवृणोति—हिंसेति । नियमं निरसितुं प्रायेणेत्युक्तम् । किं पुनरश्रेयसामिति वक्तुमपिशब्दः । मनसो हिंसाप्रवणत्वे स्वाभाविकज्ञानादिवृत्तिभूयस्त्वात्तद्विशिष्टप्राणानां भूयस्त्वमिति फलितमसुरबाहुल्यमाह—भूयांस इति । शास्त्रीयज्ञानादेरल्पत्वात्तद्विशिष्टप्राणानामपि तथात्वाद्देवानामल्पतेति फलान्तरमाह—देवा इति । अतियत्नजा इत्यत्यन्तयत्नसाध्यज्ञानकर्मलभ्या इत्यर्थः ॥२५॥

त एष्वित्यादेरर्थमाह—धर्मेति । सर्वस्यापि भोगस्थानस्य धर्मेणाधर्मेण ताभ्यां च साध्यत्वात्तस्मिन्निमित्ते ततः स्वाभाविकेतरज्ञानकर्मवशादसुरा देवैस्ते चासुरैर्मिथः संघर्षं चक्रुरित्यर्थः ॥२६॥

---

१. सहस्रादिभेदः प्राणस्य-शाकल्यब्राह्मणे याज्ञवल्क्यः सूत्रात्मनः ३३०६ भेदाः प्राणस्येत्युक्तवान् । "त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति" इत्यनेन । भूयोऽधिकारभेदेनअष्टौ वसवः एकादशरुद्राः इत्यादिः अधिकारभेदः ।

आसुरेभ्योऽधिकारेभ्यो व्युत्थाप्येह प्रजापतिम् । दैवीर्भूमीर्नयामैनमिति देवचिकीर्षितम् ॥२७॥
दैवेभ्य एनमाच्छिद्य कामक्रोधादिसाधनाः । आनयामाऽऽसुरीर्भूमीरिति दैतेयनिश्चितिः ॥२८॥
यत्नायत्नसमुत्थाभ्यां वृत्तिभ्यां देवदानवाः । दैव्यासुरीभ्यामन्योन्यमस्पर्धन्त विरोधतः ॥२९॥
भूयो बलेन ते देवा आसुरेण निराश्रयाः । अर्द्यमाना न शरणं लेभिरेऽल्पत्वकारणात् ॥३०॥
अनीक्षमाणास्ते शर्म संभूयोचुः परस्परम् । क्रियतामविचारेण हन्तेत्यनुमतौ पदम् ॥३१॥
अस्मज्जिगीषूनसुराञ्जित्वोद्गात्रात्मसंश्रयात् । अतिलङ्घ्याऽऽसुरं भावं देवतात्मानमाप्नुमः ॥३२॥
उद्गीथदेवतावाप्तिर्ज्ञानकर्मसमुच्चयात् । अभ्यारोहजपः कर्म ज्ञानं त्विह परीक्ष्यते ॥३३॥

"द्वया हे"त्यादि नार्थवादः अपितु ज्ञाननिरूपणपरम्

विधिशेषार्थवादत्वान्नेदं ज्ञाननिरूपणम् । इति चेन्नैतदेवं स्यादेवं वेदेति तद्विधेः ॥३४॥
उद्गीथविधिशेषश्चेदुद्गीथप्रकृतौ श्रवात् । नातत्प्रकरणान्न्याय्यमितोऽन्यत्र च तद्विधेः ॥३५॥
विद्याप्रकरणत्वाच्च नेहोद्गीथो विधीयते । जपस्य चाप्यनित्यत्वात्स्यादेवंवित्प्रयोज्यता ॥३६॥

देवानामसुरैः स्पर्धां कुर्वतामभिप्रायमाह—आसुरेभ्य इति । व्यवहारमार्गे स्थितं यजमानं स्वाभाविकज्ञानकर्मभ्यो विमुखीकृत्य शास्त्रीयज्ञानकर्मणी प्रापयामेति देवानां विवक्षितमित्यर्थः ॥२७॥

असुराणामभिप्रायमाह—दैवेभ्य इति । शास्त्रीयज्ञानादिभ्यो यजमानं पृथक्कृत्य कामादिवशादितरज्ञानादीनि तमानयामेति दैत्यविवक्षितमित्यर्थः ॥२८॥

देवानां[1] चेत्यादिभाष्यतात्पर्यमाह—यत्नेति । कदाचिद्दैवी शास्त्रीयज्ञानाद्या वृत्तिरुद्भवत्यासुरी चेतराऽभिभूयते । कदाचिदासुरी स्वाभाविकज्ञानाद्या वृत्तिरुद्भवति दैवी चेतराऽभिभूयते सेयं देवासुरस्पर्धेत्यर्थः । देवानामसुराणां च परस्परस्पर्धाकारणीभूतवृत्तिद्वयस्य मिथो विरोधादशक्या तदीयस्पर्धा समाधातुमित्याह—विरोधत इति ॥२९॥

तं[2] एवमित्यादिभाष्यार्थमाह—भूय इति । पीड्यमानत्वे हेतुमाह—निराश्रया इति । शरणं शर्माऽऽश्रयं वा । अर्द्यमानत्वे हेत्वन्तरमाह—अल्पत्वेति ॥३०॥

ते हेत्यादेरर्थमाह—अनीक्षमाणा इति । हन्तेति पदमनुमत्यर्थम् । तत्रानुमतिस्वरूपमाह—क्रियतामिति ॥३१॥

किं तत्कर्तव्यमित्यपेक्षायामाह—अस्मदिति । उद्गीथेनेत्यस्यार्थमाह—उद्गात्रिति । उद्गातुरात्मा प्राणस्तदाश्रयेणेत्यर्थः । असुराञ्जित्वेत्येतदेव दर्शयन्नुपसर्गार्थमाह—अतिलङ्घ्येति । अयामेत्यस्यार्थमाह—देवतेति ॥३२॥

उद्गात्रात्मप्राणाश्रयणं केनोपायेनेत्याशङ्क्याऽऽह—उद्गीथेति । किं तत्कर्म किंवा ज्ञानं तदाह-अभ्यारोहेति ॥३३॥

द्वया हेत्यादि न ज्ञाननिरूपणपरं विधिशेषत्वेनार्थवादत्वात्तत्कुतोऽत्र ज्ञानपरीक्षेत्याक्षिपति—विधीति । उपास्तिविधेः श्रवणात्तत्परं वाक्यमिति परिहरति—नैतदिति ॥३४॥

यत्तु विधिशेषत्वादर्थवादतेति तत्र किमुद्गीथविधिशेषता जपविधिशेषता वेति विकल्प्याऽऽद्यमनुवदति—उद्गीथेति । औद्गात्रस्य कर्मणः प्रकृतौ प्रस्तावसंनिधौ पुराकल्पस्य द्वया हेत्यादिना श्रवणात्तद्विधिशेषोऽर्थवादोऽयमिति कुतो ज्ञाननिरूपणेत्यर्थः । नास्योद्गीथविधिशेषत्वं न्याय्यं तत्प्रकरणत्वाभावात्कर्मप्रकरणे चोद्गीथस्य विधानादिति समाधत्ते—नेत्यादिना ॥३५॥

नन्वत्रैवोद्गीथविधिः किं न स्यादुद्गायेत्यादिदर्शनादत आह—विद्येति । इहेति प्रकरणोक्तिः । न चोद्गायेत्युद्गीथविधिस्तदनुवादेन वागादिनिन्दया मुख्यप्राणपरिग्रहार्थत्वादिति चकारार्थः । जपविधिशेषत्वेनार्थवादत्वं प्रत्याह-

१. देवानां चासुराणां च वृत्त्युद्भवाभिभवौ स्पर्धा ४८-७ ।    २. ४८-१४ ।

उदारफलवद्यस्मादपि ज्ञानमिह श्रुतम् । तद्धैतदित्यतो ज्ञानं फलवत्त्वाद्विधित्सितम् ।।३७।।
शुद्धचशुद्धचुक्तितश्चेह प्राणोपासा विवक्षिता । वागादिनिन्दया मुख्यप्राणोपासा न चेदिह ।।३८।।
विधित्सिताऽथ तन्निन्दा स्तुतिश्चानस्य किंफला। अतोऽर्थवादाद्धि विधिर्लिङ्गादत्रानुमीयते ।।३९।।
प्राणस्वरूपापत्तिश्च यतोपासाफलं श्रुतम् । उपासनमतोऽनस्य विधित्सितमितीक्ष्यताम् ।।४०।।
उपासनमसोः काममस्तु सूक्तोपपत्तितः । शुद्धचादिगुणवत्ता तु न मानादुपपद्यते ।।४१।।
गुणवत्ताऽप्यसोरस्तु यथाऽस्योपासनं तथा । प्रामाणिक्युभयत्रापि प्राप्तिर्यस्मादिहेक्ष्यते ।।४२।।

जपस्येति । अनावश्यको हि जपः प्राणविदा तस्याननुष्ठेयत्वसंभवादसत्यपि जपे विदुषो विद्यया फलसिद्धेरुपासनं त्वावश्यकं तद्विना जपमात्रादुत्कृष्टफलासिद्धेस्ततो जप:यानित्यस्य नित्यवच्छ्रुतोपासनाऽप्रयोजकत्वान्नित्यानित्यसंयोगायोगान्न तत्परवाक्यस्य जपविधिशेषतेत्यर्थः। यद्वा प्राणविज्ञानवताऽनुसंधेयो जपो न तद्विज्ञानात्प्रागस्ति तन्नासौ पश्चाद्भावी प्रागेव सिद्धं विज्ञानं प्रयोजयति। न हि प्रयाजादि दर्शपूर्णमासप्रयोजकं तत्प्रयोज्यत्वादेवं प्राणवित्प्रयोज्यो जपो न ज्ञानप्रयोजकस्तस्य प्रयोजकत्वेन प्रागेव सिद्धेस्तथा च नास्य तद्विधिशेषतेत्यर्थः ।।३६।।

किंचेह प्रकरणे तद्धैतदित्यतो वाक्यादुत्कृष्टफलविशिष्टं प्राणविज्ञानं यस्माच्छ्रुतं तस्मात्फलवत्त्वादपि तद्विषयं ज्ञानं विधातुमिष्टमिति द्वया हेत्यादि तत्परमेव न विध्यन्तरपरमित्याह—उदारेति ।।३७।।

प्राणोपास्तेर्विवक्षितत्वे हेत्वन्तरमाह –शुद्धेति । प्राणस्य शुद्धिरशुद्धिश्च वागादीनामित्युक्तिवशादस्मिन्प्रकरणे प्राणोपास्तिरभिप्रेता शुद्धचशुद्धिवचनमन्यथा वृथा स्यादित्यर्थः। उक्तमेव व्यक्तीकुर्वन्नहीत्यादिभाष्यं विवृणोति--वागादीति। इहेति पूर्ववत्। अथशब्दस्तर्हीत्यर्थे। तन्निन्दा वागादिनिन्दा। प्राणविषयोऽनशब्दः। यद्धि स्तूयते तद्विधीयत इति न्यायमाश्रित्य फलितमाह--अत इति। वागादीनामशुद्धत्वेन निन्दा प्राणस्य शुद्धत्वेन स्तुतिरित्येवमर्थादर्थवादात्कल्पकात्प्राणोपासने कल्प्यते विधिरित्यर्थः। अर्थवादलिङ्गकं विधिकल्पनमन्यत्रापि प्रसिद्धमिति वक्तुं हिशब्दः। प्रकरणमेव सप्तम्यर्थः ।।३८–३९।।

इतश्च विधित्सितं प्राणोपासनमित्याह—प्राणेति। यत उपासाफलमिति वक्तव्येऽन्यथावचनं छान्दसत्वद्योतनार्थम्। ततः सोऽपामितिवत्संधिः। मृत्युमतिक्रान्तो दीप्यत इत्यादिश्रुतेर्वागाद्युपासनस्याग्न्याद्यात्मत्वं फलं प्राणस्वरूपापत्तिनिमित्तमतो विधित्सिता तदुपास्तिरित्यर्थः उदारफलवदित्यत्र प्राणोपास्तेः सूत्रात्मत्वं फलमुक्तमिह तु तत्कृतं वागाद्युपास्तेरग्न्याद्यात्मत्वमुपासितुर्वागादीनामुच्यत इति विशेषः। एवं प्राणोपास्तेर्विधित्सितत्वात्तद्विधिशेषो द्वया हेत्यादिरित्युपसंहरति—उपासनमिति ।।४०।।

उपदिष्टादुष्टोपपत्तिवशात्प्राणस्योपासनं यद्यस्ति तदस्तु काममित्यङ्गीकरोति—उपासनमिति। शुद्धचादिगुणवती तु प्राणदेवता नास्ति प्रमाणाभावात्। उपास्तिविधिपरत्वेन श्रुतेरुक्तदेवतायामतात्पर्यात्। उक्तं हि—अपि[1] वा शब्दपूर्वत्वाद्यज्ञकर्म प्रधानं स्याद्गुणत्वे देवताश्रुतिरिति। तदाह—शुद्धचादीति ।।४१।।

देवता[2]धिकरणन्यायेन परिहरति—गुणवत्ताऽपीति। यथा प्राणस्योपास्तिः शास्त्रदृष्टत्वादिष्टा तथाऽस्य गुणसंबन्धोऽपि श्रुतत्वादेष्टव्यः। उपास्तावुपास्ये गुणवति च प्राणे प्रामाणिकप्राप्तेरविशेषान्मन्त्रार्थवादेतिहासपुराणलोकप्रसिद्धिभ्यो विग्रहा[3]दिपञ्चकविशिष्टदेवतादृष्टेर्न तत्प्रत्याख्यानं संभवतीति भावः। इहेति श्रुतिरुक्ता सा च विधिपरत्वेऽपि संवादविसंवादयोरभावे द्वारार्थे मानतामनुभवति ।।४२।।

---

१. अपि वेति—पूर्वमीमांसायां नवमाध्याये देवताधिकरणसिद्धान्तसूत्रमिदम्। पूर्वपक्षे यागादिप्रयोजकत्वं देवतानां तत्पूजार्थत्वाद्यागस्य। इदं तु सिद्धान्तसूत्रम् तदर्थश्च यदुक्तं देवता प्रयोजयेदिति। तन्न। यज्ञकर्म प्रधानं। यजतेर्जातमपूर्वं शब्दपूर्वत्वात्। शब्दश्च यागात्फलमाह न देवतायाः देवता तु यागे गुणभूतेत्यर्थः, देवतोद्देशपूर्वकद्रव्यत्यागं च देवतोद्देशः विशेषणम्। देवतोद्देशः देवताशब्दप्रयोगः।

२. देवताधिकरणन्यायः प्रमाणान्तरविरोधप्राप्त्योः अभावे अर्थवादानां स्वार्थे प्रामाण्यं देवताविग्रहादौ।

३. विग्रहादिपञ्चकम्—विग्रहो हविषां भोगः ऐश्वर्यं च प्रसन्नता। फलप्रदानमित्येतत्पञ्चकं विग्रहादिकम्।

ननु स्तुत्यर्थतैवास्य शुद्धयादेरवगम्यते । उपासाविधिशेषत्वादर्थवादोऽत ईक्ष्यताम् ।।४३।।
प्रामाणिकोऽभिसंबन्धो यस्मात्प्राणस्य गम्यते । किंबलं समुपाश्रित्य शुद्धयादेरर्थवादता ।।४४।।
नहि मानं विहायेह साध्यसाधननिश्चितौ । चक्षुरन्यत्प्रपश्यामो यद्बलात्स्यादयं मृषा ।।४५।।
आसन्यत्वादयोऽनस्य न च योषाग्निवद्यतः । तेषां प्रत्यक्षतः सिद्धेरतः शुद्धयादिमानसुः ।।४६।।
अक्षाद्यविषया ये तु गुणा आगमतो मताः । मानाविरोधात्केनैषां शुद्धयादीनां मृषार्थता ।।४७।।
श्रोत्रादिवत्प्रमाणानामसाधारणमेयता । तन्मेयप्रथने मानं न किंचिदनुभूतितः ।।४८।।

[1]ननु स्याच्छ्रुतत्वादिति भाष्यं व्याख्याय न स्यादित्यादिपूर्वपक्षं विभजते—नन्विति । शुद्धयादिवादस्य स्तुत्यर्थत्वे फलितमाह—अर्थवाद इति ।।४३।।

शुद्धयादिवादस्यार्थवादत्वेऽपि नाभूतार्थवादतेति परिहरति—प्रामाणिक इति । प्राणस्य शुद्ध्यादिसंबन्धोऽर्थवादसिद्धोऽपि यस्मादविद्यमानोऽपि न भवति तस्मात्तद्वादस्याभूतार्थवादत्वमनिमित्तकमित्यर्थः ।।४४।।

आर्थवादिकोऽपि शुद्ध्यादिसंबन्धो मिथ्या गुणगुणिभावस्य मानान्तरासिद्धत्वादतस्तद्वादस्याभूतार्थवादतेत्याशङ्क्याऽऽह—न हीति । शास्त्रीये व्यवहारे गुणगुणित्वनिश्चये श्रुतिं हित्वा नान्यन्मानमस्ति यस्य संभावितस्याभावबलादस्यायं शुद्ध्यादिसंबन्धो मिथ्योच्येत न तथाऽत्र मानान्तरं संभाव्यते । नहि श्रौतेऽर्थे तदभावादभूतार्थता श्रुतेर्युक्ताऽतिप्रसङ्गादिति भावः ।।४५।।

किंच विमताः[2] शुद्धत्वादयो न मिथ्या प्राणगुणत्वादासन्यत्वादिवदित्याह—आसन्यत्वादय इति । [3]योषितोऽग्नित्ववत्प्राणस्याऽऽसन्यत्वादयो यतो मिथ्या न भवन्त्यतस्तस्य शुद्धत्वादयोऽपि तथैव न मिथ्या स्युरिति योजना । न च योषितोऽग्नित्वं शास्त्रगम्यत्वादमिथ्येति युक्तं ध्यानार्थमारोपाङ्गीकारात् । साध्यवैकल्यं परिहरति—तेषामिति । अनुमानफलमाह—अत इति । यतःशब्दोऽत्रापि संबध्यते ।।४६।।

मानान्तराविसंवादित्वमुपाधिरित्याशङ्क्य साधनव्याप्तिमाह—अक्षादीति । ये प्राणस्य शुद्ध्यादयो गुणास्ते यदि श्रुता न तर्हि मृषा मानान्तराविरोधाच्छ्रुतिमात्रगम्येषु तस्यायोग्यत्वान्न च तन्मृषात्वे हेत्वन्तरमस्तीत्यर्थः । अथवा योषितोऽग्नित्वमध्यक्षविरोधादसदिष्टम् । ये तु प्राणस्याऽऽगमतोऽवगताः शुद्धत्वादयो गुणा न ते प्रत्यक्षादिविषयाः श्रुतिसिद्धेऽर्थे तदनवकाशादतस्तेषामविरोधान्नासत्यतेत्यर्थः ।।४७।।

नन्वासन्यत्वादिवत्प्राणगुणत्वाविशेषान्मानान्तरयोग्यत्वं शुद्धत्वादीनामनुमीयते । तथा च तत्संवादविसंवादाभ्यां श्रुतेस्तेषु न प्रामाण्यमित्याशङ्क्याऽऽह—श्रोत्रादिवदिति । यथेन्द्रियाणां शब्दादिविषयव्यवस्था तथा सर्वमानानामसाधारणार्थवत्ता स्वीकर्तव्या मानान्तरसिद्धे मानान्तरस्याकिंचित्करत्वादतः शाब्दशुद्ध्यादिष्वक्षादेरनवकाशान्न तद्विसंवादाद्याशङ्केत्यर्थः । ननु मानमेययोः संबन्धोऽस्ति न वा ? न चेन्मानमेयत्वायोगोऽतिप्रसङ्गादस्ति चेद्गम्यते न वा? न चेत्तदस्तित्वमनिमित्तं स्याद्गम्यते चेत्तेनैव मानेनान्येन वा?नाऽऽद्योंऽशतः स्वग्रहापत्तेर्द्वितीये संबन्धग्राहिणा संबन्धिनोरपि ग्रहान्नासाधारणमेयता मानानामत आह—तन्मेयेति । मानमेययोः संबन्धस्तच्छब्दार्थः । स एव मेय[4]स्तस्य प्रथनं स्फूर्तिस्तस्य साक्ष्य[5]नुभवादन्यन्न मानमस्तीति यावत् ।।४८।।

---

१. ननु स्यात् श्रुतत्वात्—न स्यादुपास्यत्वे स्तुत्यर्थतोपपत्तेः—( भा० ४५ ) चक्षुः प्रमाणम् ।
२. विमताः शुद्धयादयो न मिथ्या प्राणगुणत्वात् आसन्यत्ववत् इत्यनुमाने प्रत्यक्षाद्यविरुद्धत्वं उपाधिः दृष्टान्ते साध्यव्यापकत्वं पक्षे साधनाव्यापकत्वं चेति चेन्न शुद्धत्वादीनां प्रत्यक्षाविरुद्धत्वेन साधनव्यापकत्वात् ।
३. योषाग्निवत्—"योषा वा गौतमाग्निः" इति पञ्चाग्निविद्यायां योषा अग्नित्वेन ध्यातव्येत्युक्तम् । आसन्यत्वं आस्यान्तर्गतत्वम् ।
४. तन्मेयप्रथने मानस्य मेयेन सम्बन्धे इति—न्या० ।
५. अनुभूतितः = साक्ष्यनुभवात् अन्यत् न किञ्चिन्मानमस्तीत्यर्थः ।

मृषात्वानिरुक्तेः प्राणगतशुद्ध्यादेः सत्यता

**परमार्थातिरेकाद्वाऽभेदाद्वा परमार्थतः । वस्तुनः स्यान्मृषात्मत्वं नैवमप्युपपद्यते ॥४९॥**
**लभते व्यतिरेकं चेत्परमार्थात्ततोऽपरम् । स्वमहिम्नैव तत्सिद्धेः किमिव स्यान्मृषार्थता ॥५०॥**
**परमार्थात्मकत्वे तु न किंचिद्वितथं क्वचित् । असत्यस्याप्यसत्यत्वं परमार्थसदात्मना ॥५१॥**
**सत्यासत्यविभागोऽयमविभागात्मवस्तुनि । प्रत्यगज्ञानहेतूत्थस्तद्बोधादेव तद्धतिः ॥५२॥**
**स्वाभासफलकारूढस्तदज्ञानजभूमिषु । तत्स्थोऽपि तदसंबद्ध ईश्वराद्यात्मतां गतः ॥५३॥**
**तदज्ञानं तदुत्थं च जगत्कृत्स्नं तदात्मकम् । यतोऽतस्तदनूद्याऽऽह ह्यात्मैवेति श्रुतिः स्फुटम् ॥५४॥**
**ऐकात्म्यमेव मानानां सर्वेषां मेयमिष्यते । यथा तथा प्रवक्ष्याम उदर्केऽप्युपपत्तिभिः ॥५५॥**
**मिथ्येतिप्रत्ययोत्पत्तिस्तथा कारणदोषतः । बाध्यज्ञानस्य हेतुः स्यान्नातोऽन्यद्बाध्यकारणम् ॥५६॥**

किंच परस्य मिथ्याशब्दार्थानिरुक्तेः प्राणगतशुद्ध्यादेर्न मृषात्वमिति वक्तुं विकल्प्य दूषयति—परमार्थेति । यन्मृषात्वं वस्तुनोऽभिमतं तत्परमार्थाद्भिन्नमभिन्नं वा?नोभयथापि संभवति । न हि परमार्थादर्थान्तरस्य सत्त्वं तद्भेदे मानाभावान्न च मृषात्वेनेष्टस्य तस्मादभिन्नत्वं व्याघातादिति भावः । इदानीं पक्षद्वयाङ्गीकारेऽपि मृषात्वानुपपत्तिरित्याह—नैवमिति । यद्वा कल्पद्वयं दर्शयित्वा दोषमुभयत्रापि संभावयति—नैवमिति ॥४९॥

भेदपक्षेऽनुपपत्तिं दर्शयितुमनुवदति—लभत इति । अपरं मृषात्वेनेष्टमिति यावत् । तत्किं स्फुरति न वा? न चेन्न तदस्तित्वं निश्चायकाभावात्स्फुरति चेत्स्वतः परतो वा? न परतः संबन्धानिरूपणात्स्वतश्चेन्न मृषात्वमात्मवदित्याह—स्वमहिम्नेति ॥५०॥

कल्पान्तरमनुभाष्य दूषयति—परमार्थेति । भेदपक्षस्योत्थानमेव नास्तीत्याह—असत्येति । परमार्थात्सदात्मनोऽतिरेके तुच्छत्वप्रसङ्गादसत्यस्यापि स्वरूपं सद्रूपत्वात्मना वाच्यमतो भेदपक्षानुपपत्तेः सदद्वैतमित्यर्थः ॥५१॥

सत्यानृते मिथुनीकृत्येति वदतस्तवापि सत्यासत्यविभागादनवसरनिरस्तौ विकल्पदोषावित्याशङ्क्याऽऽह—सत्येति । प्रतीचि विभागस्याज्ञानकृतत्वे प्रत्यग्ज्ञानात्तदज्ञानध्वस्तौ तत्कृतविभागध्वस्तिरिति फलितमाह—तद्बोधादिति ॥५२॥

ननु तवेश्वरोऽस्ति न वा? नास्ति चेन्नास्तिकत्वमनुमानादिविरोधश्चास्ति चेत्तस्य वैदिकत्वेन वस्तुत्वादीशितव्यप्रपञ्चस्यापि तथात्वेनाकल्पितत्वात्कथं प्रत्यग्ज्ञानादज्ञानध्वस्तौ द्वैतध्वस्तिस्तत्राऽऽह—स्वाभासेति । प्रत्यगज्ञानजेषु सर्वद्वैताकाराज्ञानपरिणामेषु स्वस्याऽऽभासस्तस्मिन्फलके समारूढः साक्षित्वेश्वरत्वकारणत्वान्तर्यामित्वरूपतामात्मा गच्छति । स च प्रपञ्चस्थोऽपि वस्तुतोऽपि न तेन संबध्यतेऽसङ्गागमविरोधात्तस्मादीश्वरादि कल्पितम् । उक्तं हि—अविद्याकृतनामरूपोपाध्यनुरोधीश्वरो भवतीति । तथा च तद्बोधादेव तद्धतिरित्यविरुद्धमित्यर्थः ॥५३॥

सेश्वरस्य जगतोऽज्ञानशरीरत्वे श्रुतिं प्रमाणयति—तदज्ञानमिति । कार्यस्य कारणस्य च सर्वस्य द्वैतस्य प्रतीचि कल्पितत्वेन तन्मात्रत्वादिदं सर्वमिति तदनुवादेनाऽऽत्मैवाद्वयं वस्तु निःसंदिग्धमाह श्रुतिरतः सेश्वरं जगदाविद्यमित्यर्थः ॥५४॥

द्वैतस्याऽऽविद्यत्वे विषयाभावात्प्रत्यक्षाद्यमानतेत्याशङ्क्य तात्त्विकमानत्वाभावेऽपि व्यावहारिकमानत्वोपपत्तिरिति मत्वा परिहारान्तरमाह—ऐकात्म्यमिति । तदेवासंमतमित्याशङ्क्योक्तवक्ष्यमाणयुक्तितः संमतिरित्याह—यथेति । उदर्कशब्दो व्याकृतप्रकरणविषयः । अपिशब्दस्तु संबन्धग्रन्थे यथोक्तार्थस्योक्तत्वद्योतनार्थः ॥५५॥

नन्वैकात्म्यधीर्मानममानं वा ? आद्ये तद्धेतुमात्रादिद्वैतस्य सत्यता, द्वितीयेऽपि बाधकाभावात्तस्य सत्यतैव । तथा चोभयथाऽपि द्वैतविषयमेवाध्यक्षादि मानमत आह—मिथ्येतीति । सा हि बाध्यज्ञानस्य ज्ञप्तिहेतुः कारणदोषश्च तदुत्पादको रजतादिबोधे द्वयोरपि दर्शनादतश्चोभयस्मान्नान्यो बाध्यज्ञानस्य ज्ञापको जनको वाऽस्तीत्यर्थः ॥५६॥

**न चेहोभयमप्यस्ति कुतो मिथ्येति भण्यते । मितेर्मेये समाप्तत्वान्मिथ्यात्वं न मितेर्भवेत् ॥५७॥**

प्रत्यगात्मैव सत्यः तदवगमान्मुक्तिः इत्यर्थान्तरम्

**तस्मादविपरीतार्थज्ञानाच्छ्रेयो ह्यवाप्यते । विपरीतार्थतायास्तु न हेतुर्जगतीक्ष्यते ॥५८॥**

**वस्तुनिष्ठैव मा यस्मान्न तदज्ञानजाश्रया । तस्मात्तन्मोहविध्वस्तौ ध्वस्तिः स्यान्मोहजस्य च ॥५९॥**

**न चैवं सति मानानां द्व्यर्थता स्यात्कथंचन । यथाभूतार्थबोधित्वमेवमेव मितेर्भवेत् ॥६०॥**

**ईश्वरादिविकल्पानां प्रत्यग्वस्त्वविकल्पितम् । विषयो न मृषाबुद्धिः परमार्थं विना यतः ॥६१॥**

नाविपरीतार्थेति[1] भाष्यस्य प्रकरणाविरुद्धमर्थान्तरम्

**यावत्किंचिन्मितेः प्राप्तं न तन्मिथ्या मितत्वतः । मिथ्येति ग्राहयच्छास्त्रमनर्थार्थं यतो भवेत् ॥६२॥**

सामान्यन्यायमुक्त्वैकात्म्यज्ञाने मिथ्येतिधीजन्मादेरभावात्तन्मिथ्यात्वासिद्धेर्युक्तं प्रामाण्यमित्याह—न चेति । किं चैकात्म्यधियो मिथ्यात्वं स्वरूपतो विषयतो वा?नाऽऽद्योऽभ्युपगमान्न चैवमप्रामाण्यं विषयसत्यतया तत्सिद्धेर्नेतरो मितेरैक्यबोधस्य मेये परमार्थसत्ये पर्यवसानादित्याह—मितेरिति । इतश्चाद्वैतबोधस्य विषयतो न मिथ्यात्वं बाधकाद्धि तद्धीर्नचेह बलवती बाधकधीरस्तीत्याह—मिथ्यात्वमिति ॥५७॥

परेष्टमिथ्यार्थस्य दुर्वचत्वात्प्राणस्य शुद्ध्यादिसंबन्धो न मिथ्येति वदता प्रत्यग्व्यतिरिक्तं सर्वं तदज्ञानजमित्युक्तम् । इदानीं तदुपजीव्य प्रत्यगात्मैव सत्यस्तदज्ञानाद्बन्धस्तज्ज्ञानान्मुक्तिरित्यस्मिन्नर्थे "नाविपरीते"त्यादिभाष्यमवतारय'ति—तस्मादिति । सम्यग्बोधाधीना श्रेयोवाप्तिरिति स्थाण्वादौ प्रसिद्धमिति वक्तुं हिशब्दः । विसंधिपाठस्त्वफलत्वादुपेक्षितः । कथं प्रत्यग्ज्ञानस्याविपरीतार्थतेत्याशङ्क्य स्वरूपतो मिथ्यात्वेऽपि विषयतस्तदभावस्योक्तत्वादिति मत्वाऽऽह—विपरीतेति ॥५८॥

ननु प्रत्यग्धीरपि विपरीतार्था शाब्दज्ञानस्य संसृष्टपरोक्षार्थत्वात्तयोश्च त्वत्पक्षे प्रत्यगज्ञानविलसितत्वाभ्युपगमात्तत्राऽऽह—वस्तुनिष्ठेति । असंसृष्टापरोक्षं वस्त्वेकमेवाद्वितीयं यत्साक्षादित्यादिश्रुतेस्तन्निष्ठैव प्रमा वाक्यादुदेति यथाविषयमुत्पत्तेर्न वस्त्वज्ञानजसंसृष्टादिविषया तस्याज्ञानात्मकस्य प्रमाविषयत्वायोगादतो युक्ता वाक्यीयप्रत्यग्धियोऽविपरीतार्थतेत्यर्थः । परोक्षादेरज्ञानजस्य मेयत्वाभावे ज्ञानादज्ञानध्वस्तौ तज्जस्य तस्यापि ध्वस्तेरपरोक्षमेकरसं वस्तु सिध्यति तत्र वाक्यीयज्ञानस्य विपरीतार्थशङ्कैव नास्तीति फलितमाह—तस्मादिति ॥५९॥

ननु यन्मानं प्रतीचि सकार्याज्ञानध्वंसि तत्प्रत्यञ्चं बोधयत्युत न?आद्ये तस्य स्याद्विकारता द्वितीये निवर्तकत्वायोगो न हि तमगोचरयन्मानं तत्राज्ञानं तज्जं च निरसितुं पारयति तत्राऽऽह—न चेति । संविदेकरसे मानप्रवृत्तिरिति स्वीकारे बोधकत्वं निवर्तकत्वं चेति न तद्विकारता बोधस्य, वस्तुनि स्वारसिकत्वान्निवृत्तेरेव तदाधेयत्वाज्जडे तु मानप्रवृत्तौ स्यादेव द्व्यर्थता तस्य स्वतोऽसिद्धेरतः संविदात्मन्येव सर्वमानप्रवृत्तिरित्यर्थः । इतश्च मानानां तद्विषयत्वं तथा सति यथाभूतार्थविषयत्वलाभादितरस्य कल्पितत्वादित्याह—यथेति ॥६०॥

ननु जगदीशो जीवश्चेति प्रपञ्चस्य कल्पितत्वे शून्यवादो भ्रमाधिष्ठानाभावात्तत्राऽऽह—ईश्वरादीति । विषयोऽधिष्ठानम् तस्याधिष्ठानत्वयोग्यतामाह—अविकल्पितमिति । उक्तेऽर्थे युक्तिमाह—नेत्यादिना । न च शून्यमेवपारमार्थिकमविकल्पितमधिष्ठानमारोप्यस्य तदनुवेधाभावादतः सत्यत्वमेव तथेत्यर्थः ॥६१॥

नाविपरीतार्थेत्यादिभाष्यस्यान्तर्गर्भितप्रत्यगात्मसंबन्धार्थोक्तिद्वारा प्राणसंबन्धिशुद्ध्यादिगुणस्य परेष्टमिथ्यात्वासिद्धिरुक्ता तस्यैव भाष्यस्य प्रकरणाविरुद्धमर्थान्तरमाह—यावदिति । शास्त्रसिद्धं प्राणस्य शुद्ध्यादि न तन्मिथ्या हेत्वभावादित्यर्थः । प्राणस्य सत्यमेव शुद्ध्यादीत्यत्र हेत्वन्तरमाह—मिथ्येति । यदि मिथ्येति निश्चितं प्राणस्य शास्त्रं बोधयेत्तदा वस्तुतोविद्यमानतद्विशिष्टतत्प्रतिपत्तेरनर्थः स्याल्लोके विपरीतार्थधियोऽनर्थदृष्टेरतः शास्त्रं मिथ्याशुद्ध्यादिबोध्यनर्थार्थं स्यान्न चैतदिष्टं तेन शास्त्रोयं शुद्ध्यादि सत्यमेव न च योषाग्नित्ववदिदमपि मिथ्येति युक्तं तद्वदत्र द्वारार्थे विरोधाभावस्योक्तत्वादित्यर्थः ॥६२॥

---

[1] १. २. ५०-६ ।

**नाम्नि ब्रह्मेति दृष्टं चेन्न भेदप्रतिपत्तितः । प्रतिमावद्धि नामादौ ज्ञाते ब्रह्मेति धीरियम् ॥६३॥**
**यथा निर्ज्ञातभेदे हि विष्णुधीरुपलात्मनि । विधीयते तथा नाम्नि ब्रह्मबुद्धिर्विधीयते ॥६४॥**
**अज्ञातरज्जुतत्त्वो हि रज्जुं सर्पधियेक्षते । नामादौ तु यतो नैवं तस्मादसदिदं वचः ॥६५॥**

नास्ति ब्रह्म उपासनं तु असत एवेति शङ्कासमाधाने

**ब्रह्म नैवेह वस्त्वस्ति दृष्टिरेवेति चेन्मतम् । नर्गादिषु सतामेव सत्सु दृष्टिसमन्वयात् ॥६६॥**
**गौणस्य मुख्यापेक्षत्वान्मुख्यं ब्रह्म विना न सत् । गौणं ब्रह्म यथा गौणो वह्निर्मुख्याग्निपूर्वकः ॥६७॥**
**न चासद्विषया काचिद्बुद्धिर्जगति वीक्ष्यते । सर्वार्थव्यभिचारेऽपि संविदव्यभिचारिणी ॥६८॥**
**न चापीहाऽऽगमाभासोऽचोदनालक्षणत्वतः । क्रियार्थैरविशिष्टत्वाद्विद्यार्थोक्तेः परात्मनि ॥६९॥**

शास्त्राद्यथार्थप्रतिपत्तेरेव श्रेयोवाप्तिरित्यत्र व्यभिचारं चोदयति—नाम्नीति । नाम ब्रह्मेत्युपासीतेति श्रुतेरब्रह्मण्येव नाम्नि ब्रह्मेति ज्ञानस्यातस्मिंस्तद्बुद्धित्वेन मिथ्याभूतस्य यावन्नाम्नो गतमित्यादिना श्रुतफलस्य दृष्टत्वादागमाद्यथार्थप्रतिपत्तेरेव फलमित्ययुक्तमित्यर्थः । न तन्मिथ्याज्ञानमित्याह—नेति । ब्रह्मणो नाम्नो भेदधीद्वारा तत्र ब्रह्मदृष्टेरिति हेतुमाह—भेदेति । उक्तेऽर्थे न प्रतिमावदित्यादिभाष्यं योजयति—प्रतिमावद्धीति ॥६३॥

दृष्टान्तं व्याचष्टे—यथेति । निर्ज्ञातभेदे विष्णोः सकाशादिति शेषः । दार्ष्टान्तिकमाह—तथेति । नाम्नि ब्रह्मणो निर्ज्ञातभेदे दृष्टे सतीति यावत् ॥६४॥

नाम्नि ब्रह्मदृष्टेर्भेदधीपूर्वकत्वेऽपि मिथ्यादृष्टित्वमतस्मिंस्तद्बुद्धित्वादित्याशङ्क्याऽऽह—अज्ञातेति । यो हि रज्जुं रज्जुतया न जानाति स तां सर्पतया प्रतिपद्यते नामादौ तु तदात्मना नाज्ञानमस्ति तस्य ब्रह्मणो भेदेन प्रथनादित्यर्थः । यस्मादेवं तस्मादविवेकपूर्वकाभेदधियो मिथ्यात्वान्नाम्नि ब्रह्मदृष्टेर्विवेकपूर्वकत्वात्तन्मिथ्यात्वोक्तिरयुक्तेत्याह—तस्मादिति ॥६५॥

ननु विवेकस्य धर्मिप्रतियोगिनौ वाच्यौ । न चासतस्तथात्वं न च ब्रह्मास्ति यस्य धर्मित्वं प्रतियोगित्वं वा मानाभावादुपनिषदां तु वेदोषरत्वेनामानत्वादतो विवेकपूर्वकत्वायोगान्नामादौ ब्रह्मदृष्टे रज्जुसर्पदृष्टेरिव मिथ्यात्वमिति मन्वानश्चोदयति—ब्रह्मेति । इह नामादौ ब्रह्मदृष्टिरेवाऽऽरोप्यतां ब्रह्म तु नास्ति वस्तु मानाभावादित्यक्षरार्थः । "सत्यं ज्ञानमनन्तं" ब्रह्म "विज्ञानमानन्दं ब्रह्म" "प्रज्ञानं ब्रह्म"त्यादिश्रुतिशताधिगतं ब्रह्म नास्तीत्यशक्यं वक्तुं तन्मानत्वस्य संबन्धग्रन्थे साधितत्वात्तस्मादस्त्येव ब्रह्म 'सदेव सोम्येदम्' 'अस्तीत्येवोपलब्धव्यः' "असन्नेव स भवति असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुरि"ति परिहरति—नेति । किंच ब्रह्मदृष्टिः सत्यार्था शास्त्रीयदृष्टित्वादियमेवर्गग्निः सामेतिदृष्टिवदित्याह—ऋगादिष्विति । ऋगादिषु सत्सु सतां पृथिव्यादीनामारोपदर्शनान्नामादावपि सत्येव सतो ब्रह्मणो दृष्टिरारोपणीयेत्यर्थः ॥६६॥

ब्रह्मास्तित्वे हेत्वन्तरपरं मुख्यापेक्षत्वाच्चेत्यादिभाष्यं[1] गौणमुख्याधिकरणन्यायेन व्याचष्टे—गौणस्येति ॥६७॥

विमता बुद्धिः सालम्बना बुद्धित्वाद्घटबुद्धिवदित्यनुमानाच्च ब्रह्मास्तीत्याह—न चेति । किंच सर्वस्य मात्राद्यर्थस्य व्यभिचारेऽपि चिद्वस्तु, भावाभावसाधकमव्यभिचार्यस्ति तत्कथं कूटस्थं संविदेकरसं ब्रह्म नास्तीत्याह—सर्वार्थेति ॥६८॥

ननु वेदान्तेभ्यो न ब्रह्मप्रमितिस्तेषां विधिवैधुर्येणाप्रामाण्यान्नहि वाक्यं किंचिद्विध्यस्पृष्टं मानमतो नास्ति ब्रह्मेति संबन्धग्रन्थमबुध्यमानस्य चोद्यं निरस्यति—न चेति । चकारोऽवधारणार्थः ब्रह्मात्मनि तत्त्वमादि

---

१. मुख्यापेक्षत्वाच्च गौणत्वस्य । गौणमुख्याधिकरणं ३-२-१ अर्थाभिधानसंयोगात् इत्यधिकरणम्, तत्र "बर्हिर्देवसदनं दामि" इति मन्त्रः बर्हिश्शब्दार्थस्य मुख्यस्य दर्भस्य लवने विनियुज्यते उत बर्हिश्शब्दस्य यो गौणार्थः उलपराजिः तृणविशेषः तदीयलवनेऽपीति सन्देहे उलपराजितृणस्यापि यज्ञाङ्गत्वेन लवितव्यत्वात् तल्लवनेऽपि स्यादिति प्राप्ते मुख्ये दर्भलवन एव मन्त्रः तस्य शीघ्रोपस्थितत्वेन मन्त्रस्य चरितार्थत्वात् गौणप्रतीक्षाभावात् इति, एवं प्रकृते गौणब्रह्मणः मुख्यब्रह्मपूर्वकत्वात् तदेव ग्राह्यम् । २. ५३-१ ।

कर्म वाक्येभ्यः कर्मवत् वेदान्तेभ्यो ब्रह्मावगमः

ज्योतिष्टोमादिका यद्वद्विशिष्टानेकसाधना । एवंक्रमप्रयुक्ताङ्गा तथा चैवंफला क्रिया ॥७०॥
अन्यप्रमाणाविषया वाक्यादेवावगम्यते । यथा तथेहापूर्वादिवस्तूक्तेरेव गम्यते ॥७१॥
न च वाक्याद्विपर्यस्ता यदि वा संशयात्मिका । बुद्धिरुत्पद्यतेऽस्माकं यथाभूतार्थबोधिनः ॥७२॥
कार्याभावादयुक्तं चेन्नोक्तिबुद्धेस्तथार्थतः ।
भावनार्थस्य नैवेह भाव्यर्थत्वात्तथार्थता । किंतु मानार्पितत्वात्सा यथाभूतार्थतेष्यते ॥७३॥
नापि तद्विषणायाश्च कार्यत्वात्स्यात्तथार्थता । प्रमाणाभिजनादेव यथाभूतार्थता धियः ॥७४॥
अन्योन्याश्रयतादोषः कार्यप्रामाण्यवादिनः ॥७५॥
प्रमाणाधिगतौ सत्यां पुंसो मेयानुरोधतः । अनुष्ठेयोऽननुष्ठेय इति पश्चान्मतिर्भवेत् ॥७६॥

विधिशून्यत्वादागमाभासो न मानमित्यपि नैव युक्तमित्यत्र क्रियार्थैश्चेदित्यादिभाष्योक्तं हेतुमाह—क्रियार्थैरिति[1] ॥६९॥

सिद्धसाध्यार्थत्वेन वैषम्यादविशिष्टत्वमनिष्टमित्याशङ्क्य विवक्षितमविशेषमाह—ज्योतिष्टोमादिकेति । क्रियेति संबन्धः । क्रियेत्यपूर्वं विवक्ष्यते । यद्वदित्यस्य तथा चेत्यत्र संबन्धः । विशिष्टत्वं स्वरूपोपकारित्वं फलोपकारित्वं च । पञ्चमोक्तं प्रकारं परामृष्टुमेवमित्यादिष्टम् । विध्युद्देशतो विश्वजिन्न्यायादिना च सिद्धमधिकारं परामृशति—एवंफलेति ॥७०॥

अपूर्वाधिकरणन्यायं[2] सूचयति—अन्येति । दृष्टान्तमनूद्य दार्ष्टान्तिकमाह—यथेति । इहशब्दो मोक्षप्रकरणं वदन्नुक्तेरित्यनेन संबध्यते । अपूर्वमनपरमनन्तरमित्यादिविशेषितं वस्तु ब्रह्मेति यावत् ॥७१॥

ननु बुद्ध्युत्पत्तेरविशेषादनुत्पत्तिरूपाप्रामाण्यं तत्त्वमादेर्मा भूद्विपर्यासरूपं संशयरूपं वा स्यादिति नेत्याह—न चेति । अधिकारिणामेकरूपाबाधितबुद्ध्युत्पत्तेरिति हेतुमाह—अस्माकमिति ॥७२॥

न चापीहाऽऽगमाभास इत्यत्रोक्तमेव चोद्यसमाधिभ्यां वक्तुं तत्त्वमादिवाक्येषु नियोगाभावादयुक्ता मानतेति चोदयति—कार्येति । विद्यार्थानां क्रियार्थैर्वाक्यैर्वैधर्म्यं दूषयति—नोक्तेति । वाक्योत्थबुद्धेर्यथार्थत्वान्नियोगाभावेऽपि वाक्यप्रामाण्यमविरुद्धं 'नहि तन्निष्ठत्वं[3] तत्प्रयोजकं' स्वर्गकामः सिकतां भक्षयेदित्यादौ व्यभिचारात्किं त्वज्ञातज्ञापकत्वं तस्य सर्वत्राव्यभिचारादित्यर्थः । अनुष्ठेयापेक्षामन्तरेण वस्तुनि शब्दधियोस्तथार्थत्वं कथमित्याशङ्क्य तयोर्विषयतथात्वार्थं तदपेक्षा स्वप्रामाण्यार्थं वेति विकल्प्याऽऽद्यं दूषयति—भावनेति । इहेति कर्मकाण्डोक्तिः । प्रयोगप्रत्ययविषयस्य कर्तव्यार्थस्य तथार्थत्वं न कर्तव्यतापेक्षं किंतु मानगम्यत्वादन्यथा विप्रलम्भकवाक्येऽपि तथात्वापत्तेरित्यर्थः ॥७३॥

द्वितीयं दूषयति—नापीति । उक्तिसमुच्चयार्थश्चकारः । कार्यत्वात्तद्विषयत्वादिति यावत् । तथार्थता प्रमाणतेत्यर्थः । यथाभूतार्थताऽपि तथैव । धीग्रहणमुक्त्युपलक्षणम् । कर्तव्यार्थविषयप्रयोगादेर्नानुष्ठेयविषयत्वान्मानत्वं किंतु प्रमाकरणत्वात्तज्जन्यत्वाच्च, अन्यथोक्तातिप्रसक्तितादवस्थ्यादतोऽनुष्ठेयत्वं मानत्वेऽनुपयुक्तमित्यर्थः ॥७४॥

किंच कार्यनिष्ठत्वेन प्रामाण्ये तन्निष्ठत्वे प्रामाण्यं तस्मिन्सति तन्निष्ठतेत्यन्योन्याश्रयादज्ञातज्ञापकत्वमेव प्रामाण्यमतो यागादेरिष्टोपायत्वस्य मानान्तरायोग्यत्वात्तदेव विधिकाण्डमेयमिति मत्वाऽऽह—अन्योन्येति । कुतस्तर्हि कार्याकार्यधीरित्याशङ्क्य मानसी सेति संबन्धग्रन्थोक्तं स्मारयति—प्रमाणेति ॥७५–७६॥

---

१. क्रियार्थैरिति-क्रियार्थैश्चाविशेषाद्विद्यार्थानाम् ५३-३ ।

२. अपूर्वमुच्यते इति प्रभाकरमतरीत्या नियोगविशेष्यकशाब्दबोधाभिप्रायम् ।
पञ्चमोक्तः प्रकारः क्रम इत्यर्थः । विध्युद्देशत इति प्रत्यक्षपठितफलवत्कर्म परम् विश्वजिदिति यत्र फलं विश्वजिन्न्यायेन कल्पनीयं तत्परम् ।

३. तन्निष्ठत्वं प्रतिपाद्यर्थपरत्वं तत्प्रयोजकं प्रामाण्यप्रयोजकं "स्वर्गकामः सिकतां भक्षयेदि"त्यत्र सिकताभक्षणपरत्वेऽपि तत्र प्रामाण्याभावात् ।

एकरूपं यतो मानं विरुद्धानेकरूपिणाम् । भानुवद्बोधकं दृष्टं नातोऽनुष्ठेयतो मितिः ॥७७॥

ब्रह्मणः पदार्थत्वं वाक्यार्थत्वं वा नेति शङ्कासमाधाने

नन्ववाक्यप्रमाणत्वमननुष्ठानतो भवेत् । पदानां संहतिर्यस्मान्न दृष्टेह क्रियां विना ॥७८॥
पदार्थत्वे च तत्सिद्धिर्लिङ्गप्रत्यक्षसंश्रयात् । आगमैकप्रमाणत्वान्न पदार्थत्वमिष्यते ॥७९॥
अस्यस्मीत्यभ्युपेतत्वान्नैवमप्युपपद्यते । अस्ति मेरुर्यथा वर्णचतुष्टयविशेषणः ॥८०॥
अकार्येऽपि हि मेर्वादावस्ति मेरुरिति श्रुतेः । सम्यग्धीर्जायते यद्वत्तथा तत्त्वमसीत्यतः ॥८१॥
मेर्वादिज्ञानवच्चेत्स्यान्निष्फलत्वादमानता । नैवं तत्फलसाक्षात्त्वाज्ज्ञानोद्भूतेरनन्तरम् ॥८२॥
भिद्यते हृदयग्रन्थिर्ब्रह्माप्येतीति च श्रुतेः । न चार्थवादतैतस्यां जुह्वामिव फलश्रुतेः ॥८३॥

किं चाध्यक्षं विरुद्धानेकाकारवतां कुम्भादीनां बोधकं मानं दृष्टं तथा वेदवाक्यमपि सिद्धसाध्ययोरेकरूपं दृश्यते तदज्ञातज्ञापकत्वाविशेषादुभयत्र तत्प्रामाण्यमविशिष्टमित्याह—एकरूपमिति । ननु प्रेप्साजिहासे शास्त्राज्जायेते तत्तस्य कारकत्वान्न क्वचिदपि मानतेत्यत आह—भानुवदिति । किंच विमतं परेष्टकार्यादन्यत्रैव मानं मानत्वाच्चक्षुरादिवदिति विवक्षन्नाह—नात इति ॥७७॥

तत्र कार्यवादी ब्रह्म वाक्यगम्यं पदगम्यं वेति विकल्प्य दूषयति—नन्विति । नाऽऽद्य इत्याह—अवाक्येति । कार्यस्यैव वाक्यगम्यत्वाद्ब्रह्मणोऽकार्यत्वान्न तद्गम्यतेत्यर्थः । ब्रह्मणोऽकार्यत्वेऽपि वाक्यार्थत्वं किं न स्यादत आह—पदानामिति । ब्रह्मणश्चेदकार्यत्वं तदा तद्विषयवेदान्तेषु क्रियापदाभावात्पदसंहत्ययोगाद्वाक्यासिद्धेर्न तस्य तदर्थतेत्यर्थः । लोकवेदयोर्न क्रियापदमन्तरेण यस्मात्पदानां मिथः संहतिर्दृष्टा तस्माद्वेदान्तेषु क्रियापदशून्येषु नास्ति पदसंहतिरिति योजना ॥७८॥

द्वितीयं प्रत्याह—पदार्थत्वे चेति । किंच पदार्थत्वं ब्रह्मणो ब्रुवतः सिद्धान्तहानिरित्याह—आगमेति । ब्रह्मवादी ब्रह्म वाक्यीयमित्यङ्गीकारात्पदार्थत्वकृतदोषाभावो न च क्रियापदाभावात्पदासंहतिर्वेदान्तेष्वपि प्रतिपाद्यानुगुणक्रियापदोपगमादिति परिहरति—असीति । यद्वा वाक्यार्थत्वमङ्गीकृत्य पदार्थत्वमनङ्गीकारपरास्तमिति दूषयति—आगमेति । क्रियापदं विना पदसंहत्यभावाद्वाक्यासिद्धेस्तद्गम्यत्वमपि निरस्तमित्याशङ्क्याऽऽह—असीति । कार्यास्पृष्टेऽर्थे वाक्यमानत्वं भाष्योक्तं दृष्टान्तेन स्पष्टयति—अस्तीत्यादिना । यथा कार्यसंबन्धं विनैव वस्तुनि वाक्यं मानं तथोच्यते दृष्टान्तेनेति यावत् । शुक्लकृष्णलोहितमिश्रलक्षणं वर्णचतुष्टयं यत्तच्च मेरावेकस्मिन्दिग्भेदेन द्रष्टव्यम् । रूपचतुष्टयविशिष्टो मेरुरस्तीत्यस्मिन्प्रयोगे मेरावकार्येऽप्यस्ति मेरुरिति शब्दाद्यथा सम्यग्धीर्भवति यथा च सौवर्णराजतपक्षाभ्यां सुपर्णगतिविहंगमोऽस्त्यद्भुतदर्शनो द्वीपान्तरेऽस्तीति प्रयोगे विशिष्टे पतत्रिण्यकार्येऽप्यस्ति पक्षीति शब्दादुत्पद्यते सम्यग्ज्ञानं तथा तत्त्वमसिवाक्यात्कार्यासंबन्धेऽपि ब्रह्मणि सम्यग्ज्ञानोत्पत्तिरित्यर्थः ॥७९–८०–८१॥

विमतमफलं सिद्धार्थज्ञानत्वात्संमतवदित्यनुमानात्तत्त्वमादेः सिद्धार्थस्याफलत्वादमानतेत्याशङ्क्ते—मेर्वादीति । विद्वदनुभवविरोधेनानुमानं धुनीते—नैवमिति । वाक्यीयज्ञानोदयानन्तरं तत्फलस्य शोकादिविमोकस्य प्रत्यक्षत्वात्तद्विरुद्धमनुमानं नोदयतीत्यर्थः ॥८२॥

तत्र विवदमानं प्रति श्रुतिविरोधमाह—भिद्यत इति । फलश्रुतेरर्थवादत्वेनामानत्वादनुमानाबाधकतेत्याशङ्क्याऽऽह—न चेति । ब्रह्मधीः सप्तम्यर्थः षष्ठीपाठे तु तत्फलश्रुतिरेवोच्यते । पर्णमयीत्वाधिकरणन्यायेन जुह्वां[1] फलश्रुतेरर्थवादत्वं युक्तम् । ब्रह्मधियोऽन्यशेषत्वप्रापकाभावात्तत्फलश्रुतिर्नार्थवादः शारीरकानारम्भप्रसङ्गादित्यर्थः ॥८३॥

१. जुह्वामिति—“यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति” इति वाक्ये पर्णतायाः पापश्लोकश्रवणाभावः न फलं द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात् इतिसूत्रेण तस्य क्रतुप्रकरणगतत्वेन क्रत्वङ्गत्वात् न फलार्थत्वं दध्नस्तु संयोगभेदात् उभयार्थत्वमिति विशेषः ।

निषेधवाक्यवत् अक्रियार्थस्यापि तत्त्वमादेः प्रामाण्यम्

निषिद्धानिष्टसंबन्धो वाक्यादेवावगम्यते । न चानुष्ठेयता तस्य मनागप्युपपद्यते ॥८४॥
निषेधसंस्कृतधियो निषिद्धविषये न च । पलाण्ड्वादावकरणादन्या धीर्जायते श्रुतेः ॥८५॥
यथा निषेधवाक्येभ्यो नान्याऽकरणतो मतिः । तत्त्वमस्यादिवाक्येभ्यस्तद्वदेवेति निश्चयः ॥८६॥
मृगतोये प्रवृत्तस्य तृडार्तस्योषरेक्षणात् । तमोध्वस्तौ निवृत्तिः स्यात्तथाऽऽत्मज्ञानतोऽपि नः ॥८७॥
तस्मान्निषेधशास्त्रस्य यथाभूतार्थनिष्ठता । पुंव्यापारस्य गन्धोऽपि नतत्रास्तीति निश्चयः ॥८८॥
आत्मयाथात्म्यविज्ञाननिष्ठता तद्वदीक्ष्यताम् । तत्त्वमस्यादिवाक्यानां नानुष्ठानं मनागपि ॥८९॥
कलञ्जभक्षणस्येव ननु न श्रौतकर्मणः । अज्ञानहेत्वनर्थार्थकारिता गम्यते मितेः ॥९०॥
नैवमज्ञानहेतुत्वानर्थार्थत्वेन तुल्यता । कलञ्जभक्षणेनातस्तन्निवृत्तौ निवर्तते ॥९१॥
शास्त्रमात्रनिमित्तत्वान्नित्यानां नैवमिष्यते । मिथ्याज्ञानादिहेतुत्वं काम्यानामिव चेन्मतम् ॥९२॥

तत्त्वमादिवाक्योत्थज्ञानस्य श्रुत्यनुभवाभ्यां फलवत्त्वदृष्टेर्युक्ता कार्यास्पृष्टे स्वार्थे मानता तत्त्वमादेरित्युक्तम् । संप्रति शास्त्रस्य कार्यपरत्वानियमे हेत्वन्तरमाह—निषिद्धेति । हननादेरनिष्टफलसंबन्धो 'न हन्यादि'त्यादिवेदादेव ज्ञायते । न च तस्य कार्यता शङ्कितुमपि शक्यते । नहि निषेधगम्यं निषिद्धानिष्टसंबन्धं तत्संस्कृतोऽनुतिष्ठत्यतो निषेधवाक्यानां कार्यानपेक्षाणामपि मानत्वात्कार्यपरत्वानियमः शास्त्रस्येत्यर्थः ॥८४॥

अहननादि कार्यमिति विधिपरत्वमेव निषेधवाक्यानामपि किं न स्यादित्याशङ्क्याऽऽह—निषेधेति । पलाण्डुशब्दो लशुनविशेषवाची । निषेधवाक्यानामपि कार्यार्थत्वे विधिनिषेधभेदभङ्गान्नञश्च स्वसंबन्ध्यभावबोधने मुख्यस्यार्थान्तरे वृत्तौ लक्षणापातान्निषिद्धविषये रागादिना प्रवृत्तस्य निषेधशास्त्रार्थधीसंस्कृतस्य निषेधश्रुतेरकरणात्प्रसक्तक्रियानिवृत्त्युपलक्षितादौदासीन्यादन्या धीरनुष्ठेयविषया नोदेतीत्यर्थः ॥८५॥

दृष्टान्तं विवक्षितमनूद्य दार्ष्टान्तिकमाह—यथेति । "न हन्यात्" "न पिबेदि"त्यादिवाक्येभ्योऽकार्यमकरणमेव मीयते न तु कार्यविषया तेभ्यो मतिर्भवति तथैव वेदान्तेभ्योऽप्यकार्ये ब्रह्मणि प्रमितिसंभवात्तेषां कार्यास्पर्शित्वमित्यर्थः ॥८६॥

तत्त्वमादेर्वाक्याज्ज्ञानमज्ञानध्वंसि सर्वव्यवहारोपरमात्मकं भवतीत्यत्र लोकसिद्धं दृष्टान्तमाह—मृगेति । पिपासापरवशस्य मरुभूमिप्रतिफलितमरीचिषु नीरपूरमारोप्य तस्मिन्प्रवृत्तस्य मरुभूमिरेषेति तत्त्वबोधात्तदज्ञाननिवृत्तौ समारोपनिवृत्तिस्तस्मिन्निवृत्ते प्रवृत्तेरुपशान्तिरुपलब्धेत्यर्थः । उक्तदृष्टान्तवशादात्माज्ञानात्कर्तृत्वाद्यभिमानद्वारा कर्मसु प्रवृत्तस्य वाक्योत्थात्मज्ञानात्तदज्ञाननिवृत्तौ सर्वप्रवृत्त्युपशान्तिरित्यस्माकं प्रत्यक्षमित्याह-तथेति ॥८७॥

दृष्टान्तमुपसंहरति—तस्मादिति । दार्ष्टान्तिकमुपसंहरति—आत्मेति । भ्रान्तिप्राप्तहिंसादिनिरासेन निवृत्तिनिष्ठतया निषेधवाक्यमानत्ववत्तत्त्वमादेरपि प्रत्यगज्ञानोत्थकर्तृत्वाद्यशेषविशेषनिवर्तकत्वेन मानत्वोपपत्तिरिति वार्तिकद्वयार्थः ॥८८–८९॥

दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमुत्थापयति—कलञ्जेति । यथा कलञ्जभक्षणादेरज्ञानकृतत्वादनर्थफलत्वाच्च "न कलञ्जं भक्षयेदि"त्यादिनिषेधवाक्यानामनिष्टोपायताधीद्वारा निवृत्तिनिष्ठत्वेन प्रामाण्यं युक्तं तथा श्रौतकर्मणो नाज्ञानकृतत्वमनर्थार्थत्वं वा । तद्धि शास्त्रप्रयुक्तमतस्तत्त्वमादेस्तत्त्वज्ञानं जनयतोऽपि श्रौतकर्मानिवर्तकत्वान्न निवर्तकत्वेन प्रामाण्यमित्यर्थः ॥९०॥

यथा कलञ्जभक्षणाद्यज्ञानकृतमनर्थफलं च तथा श्रौतमपि कर्म प्रत्यगज्ञानकृतकर्तृत्वादिजन्यत्वात्तज्जन्यदेहग्रहस्य चानर्थत्वादतो वाक्योत्थज्ञानादज्ञानध्वस्तौ तज्जन्यकर्मध्वस्तेर्निवर्तकत्वेन निषेधवत्तत्त्वमादिवाक्यस्य मानत्वोपपत्तिरित्युत्तरमाह—नैवमिति । श्रौतकर्मण इत्यत्रापि संबध्यते ॥९१॥

काम्यकर्मणामज्ञानहेतुत्वानर्थार्थत्वेऽपि नित्यानां शास्त्रमात्रकृतानुष्ठानत्वान्नाज्ञानकृतत्वमनर्थकरत्वं वा प्रत्यवायाख्यानर्थध्वंसित्वादिति विशेषं शङ्कते—शास्त्रेति । अज्ञानकृतत्ववदनर्थफलमेवंशब्दार्थः । आदिपदेन रागादिग्रहः । काम्यकर्मणामज्ञानकृतत्वादिति वैधर्म्यदृष्टान्तव्याजेनाङ्गीकरोति—काम्यानामिति ॥९२॥

नाविद्यारागद्वेषादिदोषदुष्टस्य तद्विधेः । स्वर्गादिकामिनो यद्वदग्निहोत्रविधिस्तथा ॥९३॥
मोहकामादिदुष्टस्य नित्यं कर्म विधीयते । न स्वतः काम्यनित्यत्वविवेकोऽस्तीह कर्मणः ॥९४॥
कर्तृस्थेन हि स्वर्गादिकामदोषेण काम्यता । अतो नान्येन काम्यत्वं कर्मणः स्यात्कथंचन ॥९५॥

ज्ञानकर्मणोरधिकारिभेदः

आविरिञ्चाद्विरक्तस्य तद्विविक्तात्मकामिनः । मोक्षे पुंसोऽधिकारः स्यान्न कामापहृतात्मनः ॥९६॥
पराचः कामानित्येवं कामानित्यपरं तथा । योऽकाम इति तद्वच्च श्रुतिः कामनिषेधनी ॥९७॥
अविद्याया न चोच्छित्तौ ज्ञानादन्यदपेक्ष्यते । ज्ञानोत्पत्तौ न चैवान्यच्छमादिभ्यो ह्यपेक्ष्यते ॥९८॥
शमाद्युत्पत्तये नान्यद्बुद्धिशुद्धेरपेक्ष्यते । बुद्धिशुद्धौ च नित्यादिकर्मभ्यो नान्यदिष्यते ॥९९॥
आत्माज्ञानैकहेतुत्वाद्वाङ्मनःकायकर्मणाम् । आत्मज्ञानेन तद्बाधात्कर्मापेक्षा कुतो भवेत् ॥१००॥
यदज्ञानात्प्रवृत्तिर्या तज्ज्ञानात्सा कुतो भवेत् । प्रत्यग्ज्ञानोद्भवे तस्मात्समाप्तिः सर्वकर्मणाम् ॥ १ ॥
न चोच्छिन्नात्ममोहस्य सदैवाऽऽत्मधियः स्थितेः । प्रतीच्यवसरोऽस्तीह वाङ्मनःकायकर्मणाम् ॥ २ ॥

नित्यानां शास्त्रमात्रकृतानुष्ठानत्वमसिद्धमिति परिहरति—नाविद्येति । तच्छब्दो नित्यकर्मविषयः । यथेत्यादिभाष्यं व्याकुर्वन्नुक्तमेव प्रपञ्चयति—स्वर्गादीति । किंच काम्यानां दुष्टत्वं ब्रुवता नित्यानामपि तदिष्टमुत्पत्तिविनियोगप्रयोगाधिकारविधिरूपे विशेषाभावादित्याह—न स्वत इति । इहेति शास्त्रोक्तिः ॥९३–९४॥

कथं तर्हि काम्यनित्यविभागस्तत्राऽऽह—कर्तृस्थेनेति । नित्यता चेति शेषः । स्वर्गकामः पशुकाम इति विशेषार्थिनः काम्यविधिरिष्टं मे स्याद्दुःखं मा भूदित्यविशेषकामप्रेरिताविशेषितप्रवृत्तेः पुंसो नित्यविधिरिति विभागः । कामनाप्रयुक्तं काम्यं जीवनप्रयुक्तं नित्यमिति विभागमाशङ्क्याऽऽह—अत इति । काम्यत्वं नित्यत्वं चेति द्रष्टव्यम् । उक्तप्रकारात्प्रकारान्तरेण काम्यनित्यविभागो न सिध्यति तुल्यं हि नित्यस्यापि कामनाधीनत्वम् । "यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितमि"ति स्मृतेः । न च जीवनकृतं नित्यं सत्यपि तस्मिन्कदाचित्तदभावात्तस्मिन्सत्येव तत्सत्त्वं तु काम्येऽपि तुल्यमिति भावः ॥९५॥

रागादिदुष्टस्य कर्माधिकारे तथाविधस्यैव मुमुक्षोर्ज्ञानाधिकारोऽपीति न विशेषो ज्ञानकर्मणोरित्याशङ्क्याऽऽह—आविरिञ्चादिति । आ च स्थाणोः संसारादिति शेषः । अनित्यसंसारविषयस्तच्छब्दः । मोक्षशब्दस्तदुपायज्ञानविषयः । साधनचतुष्टयविशिष्टो हि मोक्षोपाये ज्ञानेऽधिक्रियते न रागादिमानथशब्दोपात्तन्यायविरोधादित्यर्थः ॥९६॥

विरक्तस्य ज्ञानाधिकारे मानमाह—पराच इति । "पराचः कामाननुयन्ति बालास्ते मृत्योर्यन्ति विततस्य पाशमि"त्येवंप्रकारकं वाक्यं "कामान्यः कामयते मन्यमानः स कामभिर्जायते तत्र तत्रे"त्यपरमपि वाक्यं पूर्ववन्निन्दाद्वारा कामनिषेधकमुक्तवाक्यवद्"योऽकाम"इति च श्रुतिः साक्षादेव तन्निषेधेन कामाद्यनुपद्रुतस्य श्रेयोमार्गे सम्यग्ज्ञानेऽधिकारं सूचयतीत्यर्थः ॥९७॥

कथं कर्मफलाद्विरक्तस्य मोक्षाधिकारस्तस्यापि तत्फलत्वादन्यथा कर्मणामुत्तमफलानन्वयः स्यादित्याशङ्क्य क्रममुपन्यस्यति—अविद्याया इति । शमादीनां ज्ञानोत्पत्त्युपकरणत्वं श्रुतिप्रसिद्धमिति हिशब्दार्थः ॥९८–९९॥ परंपरयाऽपि कर्मणां मोक्षोपयोगश्चेत्किमिति साक्षादेव नेष्यते तत्राऽऽह—आत्मेति । त्रिविधस्यापि कर्मणोऽज्ञानजन्यत्वाज्ज्ञानादज्ञाननिवृत्तौ तदुत्थस्य कर्मणोऽपि निवृत्तेर्ज्ञानिनो मोक्षे तदपेक्षा न युक्तेत्यर्थः ॥१००॥

ज्ञानिनो ध्वस्ताज्ञानस्यापि कर्मदृष्टेर्मोक्षे तदपेक्षेत्याशङ्क्य तस्य बाधितानुवृत्त्या तद्दृष्टिरित्याशयेनाऽऽह—यदज्ञानादिति । तज्ज्ञानादूर्ध्वमिति शेषः । योगारूढस्य तस्यैव शमः कारणमितिवचनात्कर्मोपशमो ज्ञानपरिपाके हेतुर्न कर्मेति मत्वा फलितमाह—प्रत्यगिति । ज्ञानादूर्ध्वं कर्मासंभवस्तच्छब्दार्थः ॥१०१॥

उत्पन्नधियोऽपि तन्नाशादूर्ध्वं कर्म भविष्यतीत्याशङ्क्याऽऽह—न चेति । स्थितेः प्रवाहरूपेणेति शेषः । इह प्रतीच्यात्मधियः सदैव स्थितेरिति संबन्धः ॥१०२॥

**कर्मणोऽवसरश्चेत्स्यात्त्वद्भिक्षावसरो यथा । नाऽऽत्मवस्तुनिमित्तत्वात्सम्यग्बुद्धेः सदा स्थितेः ॥ ३ ॥**
**न वस्त्ववसरापेक्षं स्वतःसिद्धत्वकारणात् । क्रियैवावसरापेक्षा तस्याः कारकतन्त्रतः ॥ ४ ॥**
**सम्यग्ज्ञानशिखिप्लुष्टं कुतोऽज्ञानं पुनर्भवेत् । शुद्धदोषोद्भवत्वाच्च न तु कर्मैवमिष्यते ॥ ५ ॥**
**क्षुधादिदोषहेत्वेव त्वस्मद्भुज्यादि नो मतम् । नियतानेकहेतुत्वान्नातो भुजिसमा क्रिया ॥ ६ ॥**
**दोषहेतावपि तथा कालादिनियमस्तथा । भवद्भिक्षाटनादौ स्यादिति चेन्नैतदेव तु ॥ ७ ॥**
**नैवायं नियमोऽस्माकं परिसंख्या हि सा यतः । क्रियाप्रयोक्त्री नाप्येषा तस्माद्विषममुच्यते ॥ ८ ॥**

विदुषो भिक्षाटनादिवत्कर्मावसरः स्यादिति शङ्कते—कर्मण इति । न च विदुषस्तदवसरोऽपि नास्ति देहधारणदर्शनाज्जीवन्मुक्तिशास्त्राच्चेति भावः । दृष्टान्तासंमत्या परिहरति—नेति । तत्र हेतुरात्मेति । प्रवाहात्मना सदा सम्यग्बुद्धिस्थितेरात्मवस्तुनिमित्तत्वादिति योजना । न हि सत्यामेवाकर्तृभोक्तृब्रह्मात्मविद्यायां भिक्षाटनादेरवकाशस्तथाऽपि दग्धपटवद्बाधितानुवृत्त्या तद्भानाज्जीवन्मुक्तिरविरुद्धेति भावः ॥१०३॥

ननु ब्रह्मणो वस्तुत्वात्कालातिरिक्तस्य घटवत्कालसंबन्धात्तदात्मनो विदुषोऽपि तत्संबन्धः स्यात्तथा च तथैव कर्मसंबन्धोऽपि भवेत्तत्राऽऽह—न वस्त्विति । वस्तुनो हि कालापेक्षा जन्मनि वा ज्ञप्तौ वा न युक्ता नित्यत्वात्स्वप्रकाशत्वाच्चेत्यर्थः । कस्य तर्हि कालापेक्षा स्यात्तत्राऽऽह—क्रियेति । कार्यमात्रं क्रियाशब्देन गृह्यते ॥१०४॥

ज्ञानिनो दग्धाज्ञानस्य न कर्मावसरोऽस्तीत्युक्तमिदानीमज्ञानस्य ज्ञानादध्वस्तस्यापि पुनरुद्भवाज्ज्ञानिनोऽपि कर्मावकाशमाशङ्क्याऽऽह—सम्यगिति । न हि नष्टमेवाज्ञानं पुनर्भवति विरोधान्नापि तज्जातीयं हेत्वभावान्न चाज्ञानं हेतुर्नष्टत्वान्न चानष्टं तद्धेतुस्तद्भावे तदुत्पत्तेर्वैयर्थ्यादनिर्मोक्षप्रसङ्गाच्च । न चाऽऽत्मैव तद्धेतुरुक्तदोषतादवस्थ्यात् न चाज्ञानभेदो मानाभावात्प्रतीतेरेकत्वेऽपि संभवादतो नष्टाज्ञानस्य ज्ञानिनो न कर्मेति भावः । यत्तु तस्य भिक्षाटनादिवदग्निहोत्रादि स्यादिति तत्र भिक्षाटनाद्यपरोक्षज्ञानवतो वा परोक्षज्ञानवतो वा? नाऽऽद्योऽनभ्युपगमात्तस्य बाधितानुवृत्तिमात्रं भिक्षाटनादीत्यादिष्टम् । द्वितीयं दूषयति—शुद्धेति । परोक्षज्ञानिनो मूलाज्ञानादागमानपेक्षक्षुत्पिपासादिदोषमात्रकृतत्वाद्भवत्येव भिक्षाटनादिक्रियेत्यर्थः । अग्निहोत्रादि तु न दोषमात्रकृतं शास्त्रनिमित्तत्वादिति विशेषमाह—न त्विति ॥१०५॥

उक्तमेव प्रपञ्चयति—क्षुधादीति । शास्त्रनिमित्तकालाद्यपेक्षत्वादित्यादिभाष्यं[1] व्याचष्टे—नियतेति ॥१०६॥

भिक्षाटनादेर्दोषहेतुत्वेऽपि "चातुर्वर्ण्यं चरेद्भैक्ष"मेककालं चरेद्भैक्षं "यतीनां च चतुर्गुणमि"त्यादिनियमवद्विदुषोऽग्निहोत्रादिनियमोऽपि स्यादिति चोदयति—दोषेति । दोषहेतावपि त्वद्भिक्षाशौचादौ यथा कालवर्णसंख्यानियमस्तथाऽग्निहोत्रादिनियमोऽपि स्यादिति योजना । विदुषो भिक्षाटनाद्येवासिद्धं तन्नियमवदग्निहोत्रादिनियतिस्तु दूरनिरस्तेत्याह—नैतदिति । ॥१०७॥

कुतो विदुषस्तदसिद्धिः सति नियमविधाविति तत्राऽऽह—नैवेति । "एककालं चरेदि"त्यादि नैवास्माकं नियमो ब्रह्मविदां युज्यतेऽतिक्रान्तविधित्वान्नैतावता यथेष्टचेष्टा यतोऽधर्माधीनाऽविवेककृता हि सा । न च तौ विदुषो विद्येते । तदविद्यावस्थायामप्यसती यथेष्टचेष्टा विद्यादशायां कुतः संभवति संस्कारस्याप्यभावाद्बाधितानुवृत्तेश्चाग्निहोत्रादेस्त्वनाभासत्वान्न बाधितानुवृत्तिरिति भावः । किं चाविदुषां विविदिषूणामेव विधिस्तेषामपि नायं नियमविधिः प्रसिद्धपरिसंख्याविधित्वोपगमादित्याह—परिसंख्येति । साऽपि क्रियामाक्षिपन्ती ब्रह्मविद्यां प्रतिक्षिपेदन्यथा तथैवाग्निहोत्रादिक्रियाऽपि स्यादित्याशङ्क्याऽऽह—क्रियेति । सा खल्वन्यनिवृत्तिं प्रयोजयन्ती न प्रयोजयति क्रियामिति कुतो विद्याविरोधः कुतश्च विदुषोऽग्निहोत्रादिप्रसक्तिरित्यर्थः । विधेर्भावार्थविषयत्वनियमादस्ति क्रियाक्षेपकत्वमित्याशङ्क्य विद्याविरुद्धतदाक्षेपकत्वाभावमभिप्रेत्याऽऽह—तस्मादिति । भिक्षादेः शुद्धदोषकृतत्वात्कर्मणोऽतथात्वाद्वैषम्यमित्यर्थः ॥१०८॥

---

१. शास्त्रनिमित्तकालाद्यपेक्षत्वाच्च नित्यानामनियतत्वानुपपत्तिः । ( भा० )

नातोऽपवादकृत्सा स्यादैकात्म्यज्ञानजन्मनः । सर्वकर्माधिकाराणां निषेधायाऽऽत्मधीभवः ॥ ९ ॥
निषेधविधिवत्तस्मात्प्रत्यग्याथात्म्यधीविधिः । प्रत्यङ्मोहैकहेतुत्वाद्वाङ्मनःकायकर्मणाम् ॥१०॥
तस्माद्वस्त्वेकनिष्ठस्य प्रामाण्यं वचसो ध्रुवम् । प्रतिषेधविधेर्यद्वदुभयोरविशेषतः ॥११॥
स्वाभाविकैकदोषोत्थो व्यवहार इहाऽऽसुरः । शास्त्रैकहेतुर्दैवः स्यात्तयोः स्पर्धा विरोधतः ॥१२॥
प्राकृतासङ्गविज्ञानकार्ये ह्यधिकृतिः स्वतः । सुरद्विषां सुराणां तु शास्त्रोत्थज्ञानदीपितः ॥
कर्मज्ञानाधिकारः स्यात्संग्रामस्तद्विरोधतः ॥१३॥
उत्कर्षो मानुषादूर्ध्वं पुंसः केवलधर्मतः । अधोभावस्त्वधर्मात्स्याद्द्वाभ्यां मानुष्यसंभवः ॥१४॥
आग्रजस्थाणुपर्यन्तशरीरग्रहणान्यतः । लोकेष्विति श्रुतिर्वक्ति विरोधस्तन्निबन्धनः ॥१५॥
अधोलोकफलेष्वेव प्राकृतज्ञानकर्मसु । यत्नादासञ्जनीयोऽयं पितेत्यसुरनिश्चयः ॥१६॥

विविदिषूणां परिसंख्येष्यते चेत्तदर्थानुष्ठाननिष्ठानां तेषां विद्यार्थप्रवृत्त्यनुपपत्तेः सा नोपपद्येतेत्याशङ्क्याऽऽह—नात इति । यस्मादन्यनिवृत्तिफला परिसंख्या न विरुद्धक्रियाप्रयोक्त्री तस्मान्नाऽऽत्मधियो बाधिका किं त्वनुग्राहिकैव भोजनादिहीनस्य वा यथेष्टचेष्टारसिकस्य वा तदनुत्पत्तेरित्यर्थः । कर्मसु रागादिमतोऽधिकाराद्विरक्तस्य ज्ञानाधिकाराज्ज्ञानिनो हेत्वभावादेव कर्मायोगात्तस्य भिक्षाद्यतुल्यत्वात्तत्त्वमादेः सर्वव्यवहारोपरमधीहेतोर्निवर्तकत्वेन प्रामाण्यं प्रतिपाद्यावान्तरप्रमेयमुपसंहरति—सर्वकर्मेति । अधिकाराः प्रवृत्तयो वा तद्धेतवो वा ब्राह्मणाद्यभिमाना वा विधिपुरुषसंबन्धा वा फलानि वा । पूर्वार्धोक्तं तत्पदेन परामृशति । विधिः सम्यग्धीहेतुवाक्यं तन्निवर्तकत्वेन मानमिति शेषः । आत्मधियः सर्वकर्मध्वंसित्वे हेतुमाह—प्रत्यगिति ॥१०९–११०॥

परमप्रकृतमुपसंहरति—तस्मादिति । निषेधवाक्ये तत्त्वमादौ च भ्रान्तप्रवृत्तिनिरासेनाकार्यशेषवस्त्ववसानाविशेषादित्याह—उभयोरिति । एतेन तत्पदपरामृष्टो हेतुः स्पष्टीकृतः ॥१११॥

तदनेन विचारेण शुद्धे सिद्धे ब्रह्मात्मनि वेदान्तमानत्वं सिद्धं-सिद्धं चान्यपराणामपि मन्त्रादीनां मानान्तरसंवादाद्यभावे श्रुतेऽर्थे मानत्वं ततश्च प्राणदेवतायाः शुद्ध्यादिगुणवत्याः सिद्धेस्तदुपास्तेश्च साधितत्वात्तत्परमेव द्वया हेत्यादिवाक्यं सिद्धमिति ज्ञानमिह परीक्ष्यमाणमित्येतत्प्रसङ्गागतं विचारं परिसमाप्य "ते ह वाचमि"त्यादि व्याचिख्यासुः सुखवित्तये देवाश्चासुराश्चेत्यादिवाक्यार्थमुक्तमेव सोपस्कारमनुवदति-स्वाभाविकेत्यादिना कर्तृत्वादीत्येतदन्तेन संदर्भेण । इह यजमानदेहस्थवागादिषु स्वभावशब्दिता प्रकृतिस्तत्प्रसूतशास्त्रानपेक्षितरागादिदोषजन्योयो ज्ञानकर्मात्मको व्यापारोऽसावासुरस्तेष्वेव शास्त्रप्रधानो ज्ञानादिव्यवहारो दैवस्तयोर्मिथो विरोधाद्देवानामसुराणां च स्पर्धेत्यर्थः ॥११२॥

उभयेषामेकरूपव्यवहारसंभवे कुतस्तद्विरोधेन स्पर्धेत्याशङ्क्याऽऽह—प्राकृतेति । प्रकृतिरविद्या ततो विषयासङ्गाज्ज्ञानं कर्म च तत्र स्वतोऽसुराणां प्रसिद्धाऽधिकृतिशब्दिता प्रवृत्तिः अन्येषां शास्त्रीयविवेकप्रकाशितकर्मादावधिकारोऽतस्तयोर्विरोधात्तेषां संघर्षोऽभूदित्यर्थः ॥११३॥

अधिकृतैर्देवानां जये पराजये चासुराणां यतितव्यमिति शिष्यशिक्षार्थमाह—उत्कर्ष इति । यदा देवजयोऽसुरपराजयश्च तदा देवशब्दितवागाद्युपहितयजमानस्य धर्मप्राधान्यादा मानुषादा च प्रजापतेरुत्कर्षो भवति असुरजये देवपराजये चासुरवागाद्युपहितस्याधर्मवशादा मानुषादा च स्थाणोर्निकर्षः स्याद्देवासुरसाम्ये तदुपहितस्य धर्माधर्मसाम्यात्ताभ्यां मनुष्यत्वमतो देवजयेऽसुरपराजये चाधिकृतैर्यतितव्यमित्यर्थः ॥११४॥

उक्तेऽर्थे श्रुतिसंवादमाह—आग्रजेति । यतो धर्मादिफलानि पूर्वोक्तानि श्रुत्यभिप्रेतान्यतो लोकेष्वित्यत्र प्रातिपदिकश्रुतिराप्रजापतेरा च स्थाणोर्देहग्रहणानि कर्मफलानि जन्मान्याह । सप्तमीश्रुतिस्तूक्तफलनिमित्तो मिथो विरोधो देवादीनां तत्र स्पर्धेति ब्रवीतीत्यर्थः ॥११५॥

देवैः स्पर्धां कुर्वतामसुराणामभिप्रायमाह—अधोलोकेति । देवताभिमुखस्यापि पितुः स्वकीयासङ्गपाप्मभिस्ततो विमुखीकरणं यत्नः । असुरैः स्पर्धमानानां देवानामाशयमाह—प्राकृतेति । अविद्याकृतविषयासक्तितो

**प्राकृतासङ्गतो मुक्त्वा पिताऽयं दैवसाधनैः । उत्क्रष्टव्यो यथाशक्ति विबुधानां चिकीर्षितम् ॥११७॥**
**नरप्रजापतितनावेवं देवासुरा मिथः । स्वस्वभावानुरोधेन तेऽस्पर्धन्त स्ववृत्तिभिः ॥११८॥**
**यदोद्भवति शास्त्रोत्था दैवी वृत्तिस्तदाऽऽसुरी । व्येति यस्मात्तमोऽशेषं देवानां स जयः स्मृतः ॥११९॥**
**आसुरी तु यदा सेना कामक्रोधपुरःसरा । जायते ह्यजयस्तेषामसुराणां जयस्तु सः ॥१२०॥**
**स्वाभाविकत्वादासुर्या भूयस्या सेनयाऽर्दिताः । न शर्म लेभिरे देवाः स्वात्मत्राणासमीक्षणात् ॥१२१॥**
**स्वभूमेश्च्याव्यमानानां सुराणामसुरैस्तदा । प्रादुरासीन्मतिः साध्वी दैतेयभयनाशिनी ॥१२२॥**
**उद्गीथं समुपाश्रित्य ज्योतिष्टोमक्रताविह । तिरस्कृत्याऽऽसुरं दैवं भावं यामोऽधुना वयम् ॥१२३॥**

वागादिगतत्वेन सर्वव्यवहारोक्तेः तात्पर्यम्

**कर्तृत्वादीह यत्सिद्धं वागादिद्वारमीक्ष्यते । आत्मनस्तदविद्योत्थं निरविद्ये निषेधतः ॥१२४॥**
**लौकिको वैदिकः सर्वो व्यवहारश्च वक्ष्यते । अन्नत्रयाधिकारे[1] हि मनआदावनात्मनि ॥१२५॥**

विश्लेषमापाद्येति यावत् । दैवसाधनानि शमदमब्रह्मचर्यादीनि । उत्क्रष्टव्यो मनुष्यत्वादारभ्य [आ] प्रजापतित्वप्राप्तेरिति शेषः । यथाशक्ति ज्ञानकर्मशक्तिमनतिक्रम्येति यावत् ॥११६–११७॥

देवासुरस्पर्धामुक्तां निगमयति—नरेति । फलावस्थप्रजापतिव्यावृत्त्यर्थं विशेषणम् । एवंशब्दो यथोक्ताभिप्रायपरामर्शार्थः । सात्त्विकतामसस्वरूपानुसारेण शमादीनां कामादीनां च स्ववृत्तीनामुद्भवाभिभवाभ्यां देवासुरस्पर्धा प्रवृत्तेत्यर्थः ॥११८॥

कथं तर्हि जयो देवानां पराजयोऽसुराणामिति तत्राऽऽह—यदेति । शास्त्रीयज्ञानकर्मणोरुद्भवावस्थायां स्वाभाविकज्ञानकर्मणोः साकल्येनाभिभवो यतो भवति ततः शास्त्रीयज्ञानाद्युद्भवो देवानां जयोऽशास्त्रीयज्ञानाद्यभिभवश्च पराजयोऽसुराणामित्यर्थः ॥११९॥

कथं तर्हि देवानां पराजयो जयोऽसुराणामिति तत्राऽऽह—आसुरी त्विति । करणवर्गः स्वाभाविकज्ञानादिप्रधानोऽत्राऽऽसुरी सेनेत्युच्यते । तेषां देवानामिति यावत् । स्वाभाविकज्ञानादिद्वारा कामादिप्रसरः सर्वनामार्थः । पूर्वोक्तजयादेर्वक्ष्यमाणजयादौ विशेषार्थस्तुशब्दः । द्वितीयस्त्ववधारणे ॥१२०॥

अस्पर्धन्तेत्येतदन्तं वाक्यार्थमनूद्य ते हेत्यादिवाक्यतात्पर्यं वक्तुं भूमिकां करोति—स्वाभाविकत्वादिति । भूयस्त्वे स्वाभाविकत्वं तच्च देवानामल्पीयसामर्दितत्वे हेतुः । सुखालाभे हेत्वन्तरमाह—स्वात्मेति ॥१२१॥

ते हेत्यादिवाक्यतात्पर्यमाह—स्वभूमेरिति । तामसैर्रागादिभिः शास्त्रीयज्ञानादेश्च्याव्यमानानां सात्त्विकवागादीनां तस्यामापदवस्थायां श्रेयोहेतुर्बुद्धिरासीदतस्ते परस्परमूचुरित्यर्थः । साधुत्वे हेतुर्दैतेयेति । असुरनिमित्तभयध्वस्तिहेतुरित्यर्थः ॥१२२॥

तामेव मतिं व्याचक्षाणो हन्तेत्यादेस्तात्पर्यमाह—उद्गीथमिति । उद्गीथदेवताश्रयणस्याऽऽसुरभावतिरस्कारे दैवभावाप्तौ चाविलम्बितकारणत्वं वक्तुमधुनेत्युक्तम् ॥१२३॥

वृत्तमनूद्य ते ह वाचमित्यादेरर्थवादस्य वागादिगतत्वेन सर्वव्यवहारं वदतस्तात्पर्यमाह—कर्तृत्वादीति । इहाऽऽत्मनि यत्कर्तृत्वादि दृष्टं तदस्य वागाद्युपाधिकं तस्याविद्यान्वयव्यतिरेकवतस्तज्जस्याविद्याशून्ये नित्यमुक्ते परस्मिन्नयोगान्नेति नेत्यादिना तत्र सर्वविशेषनिषेधादतोऽविद्याकार्यवागाद्युपाधिद्वारा प्रतीच्यारोपितं तदित्यर्थः ॥१२४॥

वाक्यशेषादपि परस्मिन्नात्मनि नास्ति कर्तृत्वादीत्याह—लौकिकेति । नास्त्यात्मनि वास्तवं कर्तृत्वादीत्यत्र विद्वत्प्रसिद्धिद्योतनार्थो हिशब्दः । आदिशब्देन वाक्प्राणौ गृह्येते ॥१२५॥

---

१. अन्नत्रयाधिकारः त्रीण्यात्मनेऽकुरुत इति कण्डिका । तत्र सर्वो व्यवहारः मनोवाक्प्राणसंश्रित इत्युक्तम् ।

[1]भूतेहानुविधायित्वात्क्षेत्रज्ञस्य तमस्विनः । कूटस्थात्मातिरेकेण रूपमन्यन्न लक्ष्यते ॥१२६॥

ते ह वाचमूचुस्त्वं न उद्गायेति तथेति तेभ्यो वागुदगायत् । यो वाचि भोगस्तं देवेभ्य आगायद्यत्कल्याणं वदति तदात्मने । ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन्स यः स पाप्मा यदेवेदमप्रतिरूपं वदति स एव स पाप्मा ॥२॥

औद्गात्रकर्मणि वाचो नियोजनं तस्याः आसुरपाप्मवेधश्च

एवं ताः संप्रधार्योचुरुद्गीथं साधनं परम् । तत्परीक्षां प्रयत्नेन चक्रुः संभूय देवताः ॥१२७॥
वाचं संभावयामासुरियं ह्युद्गीथकर्मणि । अत्यर्थं व्यापृता दृष्टा वाचमूचुस्ततः सुराः ॥१२८॥
त्वं न उद्गाय उद्गानं त्वत्प्रधानं भवत्विदम् । उद्गीथ इति चोद्गानं कर्मैवेहाभिधीयते ॥१२९॥
स्तोत्रेणास्याभिसंबन्धाद्भक्तिमात्रं न तु क्वचित् । वागभिमानिनी चेह वाक्शब्देनाग्निरुच्यते ॥१३०॥
विषयोऽध्येषणाया हि चेतनावान्यतो मतः । उपासिक्रियया योगो देवताया इहेष्यते ॥१३१॥

तत्रेश्वरे तदभावेऽपि जीवे तद्दृष्टेस्तदेष्टव्यमित्याशङ्क्याऽऽह—भूतेति । परस्याविकृतस्य तमोवच्छिन्नस्य जीवतां गतस्य ध्यायतीव लेलायतीवेति श्रुतेर्बुद्ध्यादिचेष्टानुसारित्वाद्युक्ता तत्र कर्तृत्वादिधीरित्यर्थः । तर्हि कर्तृत्वादिमानेकस्तद्रहितश्चान्य इति द्वैतमित्याशङ्क्याऽऽह—कूटस्थेति । परस्मिन्नेव प्रतीचि विशिष्टद्वारा स्वाविद्यारोपितं कर्तृत्वादीत्युक्तमिति भावः ॥१२६॥

अर्थवादरूपाख्यायिकातात्पर्यमुक्त्वा ते होचुरिति भागस्यार्थमाह—एवमिति । हन्तासुरानित्युक्तक्रमेणोद्गीथं श्रेयोहेतुं निश्चित्य वागादयो देवता मिथः कथां चक्रुरित्यर्थः । कोऽयमुद्गीथो नाम तत्राऽऽह—तत्परीक्षामिति । प्रयत्नोऽन्वयव्यतिरेकाख्यो व्यापारः ॥१२७॥

परीक्षाप्रकारमेव प्रकटयन्वाचमूचुरित्यस्यार्थमाह—वाचमिति । उद्गीथत्वेन तत्संभावनानिमित्तमाह—इयं हीति । संभावनाफलमाह—वाचमूचुरिति ॥१२८॥

किमूचुरित्यपेक्षायामुत्तरं वाक्यमवतार्य तस्यार्थमाह—त्वमिति । प्रतीकग्रहणे व्यग्रतया संधिर्न कृतः । उद्गीथपरीक्षां प्रक्रम्य कथमौद्गात्रे कर्मणि वाङ्नियुज्यते । उद्गीथे हि भक्तिविशेषे सा नियोक्तव्येत्याशङ्क्याऽऽह—उद्गीथ इति । इहशब्देन हन्तेत्यादिवाक्योक्तिः ॥१२९॥

उक्तेऽर्थे हेतुमाह—स्तोत्रेणेति । अस्यार्थः—उद्गीथेनात्ययाम त्वं न उद्गायेत्यादौ चोदितस्योद्गीथस्य प्रकरणित्वा"दथातः पवमानानामि"ति पवमानाख्यस्तोत्रेणास्य सम्बन्धप्रतीतेस्तत्र चोद्गीथभक्तेरनवकाशा"त्स यत्र प्रस्तुयात्तदेतानि जपेदि"ति चोद्गीथभक्तिमतिक्रम्योद्गानमात्रसंबन्धित्वेनाङ्गभूतजपकर्मविधानादत्राप्युद्गीथशब्देन भक्तिमात्रं न विवक्षितमिति । किंचास्मिन्प्रकरणे क्वचिदपि वाक्ये भक्तिमात्रमुद्गीथपदेन नोच्यते तन्मात्रस्यानुपास्यत्वादुद्गीथोपासनस्य चात्र विवक्षितत्वात् । न चोद्गानस्यापि नोपास्यत्वमित्यविवक्षितत्वं, तदनुवादेन तद्देवतोपासनस्येष्टत्वात् । न चोद्गीथो नाम सामावयवो भक्तिविशेषो नोद्गानमिति भाष्यविरोधस्तत्र प्रकरणाविरुद्धार्थानुवादेन प्राणस्योद्गीथत्वविधानादित्याह—भक्तिमात्रमिति । ननु चेतनस्यैव भृत्यादेश्चेतनेन राजादिना नियोगदर्शनादचेतनेन चक्षुरादिना कथमचेतनाया वाचो नियोग इत्याशङ्क्येह वागादयः शब्दा इत्यत्रोक्तं स्मारयति—वागिति । इहशब्दस्ते ह वाचमित्यादिवाक्यविषयः । अथ ह प्राणमूचुरित्यादिपर्यायेष्वपि प्राणादिशब्दानां देवतावाचित्वं चशब्देन समुच्चीयते । तामेव विशिनष्टि—अग्निरिति । "अग्निर्वाग्भूत्वा मुखं प्राविशदि"ति श्रुतेरग्निरेव वागभिमानिनी देवता सा चात्र ग्राह्या प्रसिद्धचसंभवस्य वक्ष्यमाणत्वादित्यर्थः ॥१३०॥

ये तु देवतामचेतनामाचक्षते तान्प्रत्याह—विषय इति । लोकेऽध्येषणाविषयश्चेतनश्चैत्रो दृष्टो वाक्चोद्गाये-

---

१. भूतेहा—प्राणादीनां चेष्टा तदनुविधायित्वं ध्यायतीवेत्यादिनोक्तम् ।

अतोऽपि देवतैवेह वाक्शब्देनाभिधीयते । तद्भूतेः पुरुषार्थत्वाद्देवता हीश्वरा परा ।।३२।।
सैवातः प्रतिपत्तव्या सर्वासु ध्यानभूमिषु । न त्विह प्रतिपत्तव्याः करणस्थानगोचराः ।।३३।।
पारार्थ्याचेतनत्वाभ्यां मर्त्यत्वाच्चापि कारणात् ।।३४।।
एवं वागादयः शब्दा देवतार्थाभिधायिनः । सर्वत्र प्रतिपत्तव्या यत्रोपास्ता विवक्षिता ।।३५।।
जपमन्त्राभिधेयेयं वागित्येवं विनिश्चिताः । उपासांचक्रिरे देवा एषैवोद्गीथदेवता ।।३६।।
देवाभ्युदय उद्गानं देवेभ्योऽर्थाय वागियम् । यथाशक्त्युदगायत्तं यो भोगो वाङ्निबन्धनः ।।३७।।
येन भोगेन वाग्देवांश्चक्षुरादीनहर्निशम् । साक्षादवति तं भोगमुदगायदशेषतः ।।३८।।
पवमानेषु सोद्गात्री याजमानं यथाविधि । फलमुद्गाय शेषेषु ह्यु दगायदथाऽऽत्मने ।।३९।।

त्यध्येषणाविषयोऽतश्चेतनत्वं वाग्देवताया निश्चितमित्यर्थः । चेतनस्याध्येषणाविषयत्वे लौकिकपरीक्षकादिप्रतिपत्तिं वक्तुं हिशब्दः । वाचो देवतात्वे हेत्वन्तरमाह—उपासीति । उपास्तिप्रकरणमिहशब्दार्थः ।।१३१।।

उक्तहेतुफलमाह—अतोऽपीति । अध्येषणाविषयत्वसमुच्चयार्थोऽपिशब्दः । इहशब्दस्तु पूर्ववत्प्रस्तुतवाक्यविषयः । वागुपास्तेरग्निभावस्य फलत्वाच्च वाक्शब्देन तद्ग्रहणमित्याह—तद्भूतेरिति । कथं तद्भावस्य पुमर्थतेत्याशङ्क्य देवताया निरतिशयैश्वर्यशालित्वादित्याह—देवतेति ।।१३२।।

ते ह वाचमित्यादिपर्यायोक्तन्यायादथ ह प्राणमित्याद्युत्तरपर्यायेष्वपि देवतैव प्राणादिशब्दवाच्येत्याह—सैवेति । वागादिशब्दैरिन्द्रियाणामेव रूढिवशाद्ग्रहणं किं न स्यादित्याशङ्क्याऽऽह—न त्विति । इहेति प्रकृता ध्यानभूमयो गृह्यन्ते ।।१३३।।

तत्र हेतूनाह—पारार्थ्येति । अनीश्वरत्वादिसंग्रहार्थोऽपिशब्दः । अस्मिन्प्रकरणे वागादिपदानां देवतार्थत्वमुक्त्वा समानार्थे प्रकरणान्तरेऽपि[1] तुल्यमेतदिति न्यायं संस्मरति—एवमिति । अतिप्रसक्तिं वारयति—यत्रेति ।।१३४-१३५।।

वाग्देवतानिर्वर्त्यमौद्गात्रं कर्मेति भाष्ये वाचि देवताशब्दं प्रयुञ्जानस्य भाष्यकृतो मतमुक्तम् । वाग्देवताया नोपास्यत्वं जपमन्त्राप्रकाश्यत्वादित्याशङ्क्याऽऽह—जपेति । असतो मा सद्गमयेत्यादिमन्त्रैरियमेव वागभिधेया । एषैव चोद्गीथदेवतेतिनिश्चयवन्तो देवा वाचमुद्गातृबुद्ध्योपासितवन्त इत्यर्थः ।।१३६।।

तथेत्यादिवाक्यतात्पर्यमाह—देवेति । देवानामभ्युदये विवक्षिते तदुपायस्तावदुद्गानमतः स्वशक्तिमनुसृत्यैषा वागर्थिभ्यो देवेभ्योऽर्थायोद्गानं कृतवतीत्यर्थः । यो वाचीत्यादेरर्थमाह—तमिति ।।१३७।।

कोऽसौ वाङ्निबन्धनो भोगो यः साधारणः सर्वेषां प्राणानामित्याशङ्क्याऽऽह—येनेति । उपकारो भोगः । वाग्देवताभिवदनप्रयुक्तमुपकारमशेषकार्यकरणसाधारणमुदगायदित्यर्थः । उद्गीथदेवताधीनं संघातस्य सदा जीवनमिति द्योतयति—अहर्निशमिति । तज्जीवनस्य तदधीनत्वं प्रत्यक्षमिति वक्तुं साक्षादित्युक्तम् ।।१३८।।

किमिदमुद्गानं याजमानमेव किंवाऽऽर्त्विज्यमपि? नाऽऽद्यः "अथाऽऽत्मनेऽन्नाद्यमागायदि"त्येतद्विरोधात् । द्वितीये तु केषु स्तोत्रेषु याजमानमुद्गानं केषु चाऽऽर्त्विज्यमिति बुभुत्सायामाह—पवमानेष्विति । यथाविधि लक्षणशास्त्रमनतिक्रम्येति यावत् । ज्योतिष्टोमे द्वादश स्तोत्राणि तत्र पवमानाख्येषु त्रिषु याजमानमेवोद्गानं कर्मफलस्योत्सर्गतो यजमानगामित्वात्परिशिष्टेषु नवसु स्तोत्रेष्वार्त्विज्यमपि । तत्रोद्गातुः फलसंबन्धस्याऽऽत्मनेऽन्नाद्यमागायदिति वाचनिकत्वादित्यर्थः । उक्तहेतुद्योतनार्थो हिशब्दः । यथा यजमानार्थमुदगायत्तथा स्वार्थमपीत्यथशब्दार्थः ।।१३९।।

---

१. प्रकरणान्तरे "सा ह वागुवाच यद्वा अहं वसिष्ठास्मि इत्यादौ । त्रिषु पवमानेषु—बहिष्पवमानं, माध्यन्दिनपवमानं आर्भवपवमानं इत्येतेषु । परिशिष्टानि नव स्तोत्राणि—चत्वार्याज्यस्तोत्राणि चत्वारि पृष्ठस्तोत्राणि यज्ञायज्ञीयं इति नव ।

स्तोत्रेषु परिशिष्टेषु वागागायदथाऽऽत्मने । यत्कल्याणं वदत्येषा ह्यात्मने तदचीक्लृपत् ॥१४०॥
यथाशास्त्रं यथायोगं वर्णदोषविवर्जितम् । वर्णोच्चारणसामर्थ्यं ममैवास्तु तदीदृशम् ॥१४१॥
कल्याणवदनोत्थं यत्कृत्स्नं देवेभ्य एव तत् । फलं वदनमात्रं तु वाच एव न दैविकम् ॥१४२॥
तमस्युत्सार्यमाणे तु वाचोद्गात्रा सुरद्विषाम् । स्वाधिकाराच्च्याव्यमानास्ते विदुर्देवहृद्गतम् ॥१४३॥
अनेन वाचोद्गात्रा नो बलं ध्वान्तं तु देवताः । ज्योतिषा स्वेन निर्जित्य यास्यन्त्यग्न्यादिरूपताम् ॥१४४॥
महन्नो भयमायातमिति बुबुधिरेऽसुराः । कर्मण्यनुचिते तेषां प्रहीणमनसां तदा ॥
वदनादावभिष्वङ्ग आत्मसंभावनादभूत् ॥१४५॥
यत्कल्याणमिति च्छिद्राद्विदुः सुरचिकीर्षितम् । अनेन वै न उद्गात्रा वाचाऽत्येष्यन्ति स्वं वपुः ॥१४६॥

यदुक्तं शेषेष्वित्यादि तदेव स्फुटयते—स्तोत्रेष्विति । याजमानस्योद्गानस्य त्रिषु स्तोत्रेषु कृतत्वादिति हिशब्दार्थः । अवशिष्टेषु स्तोत्रेषु स्वार्थगानस्यावसरं दर्शयितुमथेत्युक्तम् । एवं विभागमुक्त्वा किं तदात्मार्थमागीतमित्यपेक्षायामाह—यदिति । नवसु स्तोत्रेषु कल्याणवदनं कार्यमृत्विगर्थमागीतमित्यर्थः । उक्तकार्यस्य करणान्तरेष्वसंभवप्रसिद्ध्यर्थो हिशब्दः ॥१४०॥

कीदृशं कल्याणवदनं तदाह—यथेति । व्याकरणादिलक्षणशास्त्रोक्तक्रमेण तालवादिस्थानसंबन्धानुरोधेन चातिद्रुतत्वादिदोषहीनं यथा भवति तथा वर्णानामुच्चारणे सामर्थ्यं कल्याणवदनं तदार्त्विज्यमेवेत्यर्थः ॥१४१॥

कथं तर्हि पवमानेषु याजमानमेवोद्गानमुक्तं तस्योक्तरूपवदनानुप्रवेशादित्याशङ्क्योक्तं याजमानमुद्गानं व्यनक्ति—कल्याणेति । यथोक्तवदनोत्थं कार्यं पवमानेषु याजमानमेव नाऽऽर्त्विज्यं वचनाभावादित्यर्थः । आर्त्विज्यमुद्गानं निगमयति—वदनमात्रमिति । यथा वदनमात्रेण तद्विशेषेण चोत्पन्नं कार्यं पवमानेषूत्सर्गतो याजमानमेवेत्युक्तं तथा वदनात्मकं सर्वमपि कार्यं स्तोत्रान्तरेष्वार्त्विज्यमेव न याजमानमित्यर्थः । अथवा याजमानमार्त्विज्यं च विभज्योक्तमागानमनेन वार्तिकेन निगम्यते । यद्धि कल्याणाकल्याणवदनजनितं कार्यं तदशेषमपि देवतार्थं याजमानमेव न पुनरार्त्विज्यम् । यत्तु कल्याणाकल्याणवदनं तदार्त्विज्यमेव न याजमानमिति योजनीयम् । यथाश्रुतग्रहेऽपि न विरोधोऽस्तीति नातीव प्रयतितव्यम् ॥१४२॥

ते विदुरित्यस्यार्थमाह—तमसीति । यदा वागुदगायत्तदोद्गात्रा वाग्रूपेणोपास्यमानेनासुराणामविवेकपूर्वके बले कामक्रोधादौ निरस्यमाने तदपचयलिङ्गेन स्वविषयस्वाभाविकज्ञानकर्मभ्यश्च्याव्यमाना देवद्विषो देवाभिप्रायं ज्ञातवन्त इत्यर्थः । पराभिप्रायप्रतिपत्तिप्रारम्भार्थस्तुशब्दः ॥१४३॥

किं तद्देवहृद्गतं यदसुरैरवगतं तदाह—अनेनेति । ध्वान्तं तत्पूर्वकं कामादि । ज्योतिः शास्त्रीयं ज्ञानादि ॥१४४॥

असुरबलनिरासेन वागादिदेवतानामग्न्यादिरूपत्वे हीनबलानामसुराणां स्वरूपहानिः स्यादतो देवपराभवे यतितव्यमित्यसुराशयमाविष्करोति—महदिति । असुरा इति च्छेदः । रागाद्यपचयलिङ्गेनासुराणां सुराशयधियं प्रदर्श्य श्रुत्युक्तलिङ्गेनापि तेषां तद्धियं वक्तुं पातनिकां करोति—कर्मणीति । स्वेतरदेवैरौद्गात्रे कर्मणि नियुक्तानां वागादीनां स्वात्मनि संभावनावशादन्वयव्यतिरेकाकुशलानामसुरसंनिधावेवायोग्ये[१] कल्याणवदनादावासक्तिर्जाता तस्य चायोग्यत्वं स्वमात्रसंबन्धितेत्यर्थः ॥१४५॥

संप्रति श्रुत्युक्तमसुराणां सुराभिप्रायज्ञानलिङ्गमाह—यदिति । यत्कल्याणं वदति तदात्मार्थमित्यत्र कल्याणवदनासङ्गरूपाद्देवताच्छिद्रादसुरावकाशादसुराः सुराभिप्रायं विदुरित्यर्थः । तदेव सुरचिकीर्षितविषयमसुराणां विज्ञानं दर्शयति—अनेनेति । वाचोद्गात्राऽस्मानतीत्य स्वं वपुरग्न्याद्यात्मत्वमेष्यन्तीति संबन्धः ॥१४६॥

१. अयोग्ये कल्याणवदनादौ=अहमेव कल्याणवचनं वदामि इत्यहंकारपूर्वकवदने ।

**इति ज्ञात्वा ह्यभिद्रुत्य स्वैरासङ्गशरोर्मिभिः । विविधुस्तानथोद्गातॄंस्ते विद्धास्तत्यजुः क्रियाः ॥४७॥**
**नानादन्यस्य सामर्थ्यं विद्यतेऽसुरनाशने ॥४८॥**
**अनेनाप्रतिरूपेण वचसा कार्यशायिना । पाप्मादिदोषसंपर्कः कारणस्थोऽनुमीयते ॥४९॥**
**व्युत्थायाऽऽख्यायिकारूपाच्छ्रुतिः स्ववपुषाऽधुना । आचष्टे कारणे वृत्तं कार्यगेणासुरात्मना ॥५०॥**
**दृष्टेनाप्रतिरूपेण कार्यगेणानुमीयते । कारणे पाप्मवेधोऽभूद्यो वाचि प्राक्प्रजापतेः ॥५१॥**
**स यो वाच्यसुरैः क्षिप्तः पाप्मा कार्ये स दृश्यते । प्रमाविरोधि यद्वाक्यं तत्तत्कार्यसमाश्रयम् ॥५२॥**
**स एव स इति ह्युक्तिः कार्यकारणसंस्थयोः । प्रजासु साक्षाद्यः पाप्मा यश्च तत्कारणाश्रयः ॥५३॥**

आसुरं ज्ञानमनूद्य तमभिद्रुत्येत्यादेरर्थमाह—इति ज्ञात्वेति । ज्ञानस्याभिगमननिदानत्वसाधनार्थो हिशब्दः । प्रणादिष्वपि सममासुरासङ्गपाप्मपीडनमिति मत्वा तानित्युक्तम् । आसङ्गपाप्मवेधस्य वैदिकानुष्ठानत्यागे हेतुत्वमथेत्युक्तम् । आसुरासङ्गग्रस्तानां वागादीनां वैदिकज्ञानकर्मभ्यो वैमुख्यं फलितमाह—ते विद्धा इति ॥१४७॥

वागादिदेवतानामुपास्यमानानामसुरनाशकत्वसंभवात्कथं तासां पाप्मविद्धतया शास्त्रीयज्ञानादिवैमुख्यमित्याशङ्क्याऽऽह—नेत्यादिना । नहि मुख्यप्राणादन्यस्य वागादेरसुरनिरासे सामर्थ्यमस्ति परिच्छेदाभिमानवत्त्वेनासुरपक्षनिवेशादित्यर्थः । तथाऽपि प्राजापत्यासु प्रजासु न पाप्मवेधो युक्तः कारणे तदभावादन्यथाऽऽकस्मिकत्वापत्तेरित्याशङ्क्याऽऽह—अनेनेति । प्राजापत्यप्रजावर्गगतेनानुभूयमानेनासत्यासभ्यवादादिना लिङ्गेनानुमिततद्गतपापादिना कारणात्मकप्रजापतिस्थोऽपि पापादिसंबन्धोऽनुमीयते । विमतं पापादिपूर्वकं प्रतिकूलधीविषयत्वाद्दुःखवत्, तच्च कारणपूर्वकं कार्यत्वाद्घटवत् । न च प्रजागतं दुरितादि विना हेत्वन्तरादेव स्यात्कारणानुविधायित्वात्कार्यस्येत्यर्थः ॥१४८–१४९॥

आनुमानिकेऽपि दर्शितेऽर्थे श्रुतिसंवादाभावादविश्वासमाशङ्क्य 'स य' इत्यादिवाक्यमवतारयति—व्युत्थायेति । वाग्देवताया नोपास्यतेति निश्चित्यार्थवादभावाद्वैमुख्यनोत्थिता श्रुतिः स्वेनैव विद्यमानवादित्वात्मना सौत्रं पापादि तत्कार्यं प्रजासु दृष्टानृताद्यनुमितं तद्गतासुरासङ्गपाप्मलिङ्गेनाऽऽहेत्यर्थः । उक्तेऽर्थे श्रुत्यनुसारिणो विश्वासोत्पादनविवक्षायामित्येतदधुनेत्युक्तम् ॥१५०॥

नन्वनृतादिकार्यस्याध्यक्षत्वात्प्रजासु पाप्मवेधः कल्प्यते । सूत्रे तु कल्पकाभावान्न तत्कल्पना । न च कार्यत्वानुमानं कल्पकं कार्यस्य कारणमात्रादेव सिद्धेर्न च कारणानुविधायित्वात्कार्यस्य तत्रापि पापादिसिद्धिस्तत्कारणे परस्मिन्नपि प्रसङ्गादत आह—दृष्टेनेति । पूर्वकल्पयजमानावस्थस्य प्रजापतेर्वाचि प्राप्मवेधो योऽभूत्स कार्यगतानुमितपापलिङ्गेन तत्र कल्प्यते । न च तत्कारणेऽपि परस्मिन्प्रसङ्गोऽपापविद्धमिति श्रुतेः । न च "न ह वै देवान्पापं गच्छती"तिश्रुतेर्न सूत्रेऽपि पापवेधस्तस्य फलावस्थस्यापापत्वेऽपि यजमानावस्थस्य तद्भावात् "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ती"तिश्रुतेरिति भावः ॥१५१॥

"स य" इत्यादि व्याख्यातुं भूमिकामारचय्य व्याचष्टे—स य इति । यः स पाप्मा प्रजापतेर्वाचि प्रागसुरैरुपक्षिप्तः स तत्कार्ये प्रजावर्गे लिङ्गेनानृतादिना गम्यत इत्यर्थः । यदेवेदमित्यादि व्याकुर्वन् प्रजावर्गे गम्यमानं पाप्मानमेव स्फुटयति—प्रमेति । नानृतं वदेदित्यादिनिषेधशास्त्रविरुद्धं यदसत्यवादादि तत्तस्य प्रजापतेः कार्यभूतप्रजानिष्ठं दृष्टं तेनानुमितः स पाप्मेत्यर्थः ॥१५२॥

"स एव स पाप्मे"त्यस्यार्थमाह—स एवेति । तयोर्लोकवेदप्रसिद्धत्वद्योतनार्थो हिशब्दः । तावेव पाप्मानौ विशिनष्टि—प्रजास्विति । यः प्रजास्वसत्यादिना पाप्मा स्पष्टो दृष्टो यश्चासौ तासां हेतुभूतसूत्रवाङ्निष्ठः स एव सः । तथा चाऽऽद्यसकाराभ्यां कारणस्थं पाप्मानमनूद्य तस्यैव कार्यस्थत्वमुच्यते । उत्तराभ्यां तु कार्यस्थं पाप्मानमनूद्य तस्यैव कारणस्थत्वं विवक्षितमिति भावः ॥१५३॥

अथ ह प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्यः प्राण उदगायद्यः प्राणे भोगस्तं देवेभ्य आगायद्यत्कल्याणं जिघ्रति तदात्मने। ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन्स यः स पाप्मा यदेवेदमप्रतिरूपं जिघ्रति स एव स पाप्मा ॥३॥

अथ ह चक्षुरूचुस्त्वं न उद्गायेति तथेति तेभ्यश्चक्षुरुदगायत्। यश्चक्षुषि भोगस्तं देवेभ्य आगायद्यत्कल्याणं पश्यति तदात्मने। ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन्स यः स पाप्मा यदेवेदमप्रतिरूपं पश्यति स एव स पाप्मा ॥४॥

अथ ह श्रोत्रमूचुस्त्वं न उद्गायेति तथेति तेभ्यः श्रोत्रमुदगायद्यः श्रोत्रे भोगस्तं देवेभ्य आगायद्यत्कल्याणँ शृणोति तदात्मने। ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन्स यः स पाप्मा यदेवेदमप्रतिरूपँ शृणोति स एव स पाप्मा ॥५॥

अथ ह मन ऊचुस्त्वं न उद्गायेति तथेति तेभ्यो मन उदगायद्यो मनसि भोगस्तं देवेभ्य आगायद्यत्कल्याणँ संकल्पयति तदात्मने। ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन्स यः स पाप्मा यदेवेदमप्रतिरूपँ संकल्पयति स एव स पाप्मैवमु खल्वेता देवताः पाप्मभिरुपासृजन्नेवमेनाः पाप्मनाऽविध्यन् ॥६॥

"अथ ह प्राणमूचुरि"त्यादिपर्यायचतुष्टयार्थनिरूपणम्

**घ्राणं चक्षुस्तथा श्रोत्रं मनश्चैवमनुक्रमात्। वव्रुर्देवा यथा वाणीं विद्धाः सर्वे तथाऽसुरैः ॥१५४॥**
**कर्मेन्द्रियाणां सर्वेषां वागेवात्रोपलक्षणम्। चक्षुःश्रोत्रे धीन्द्रियाणां मनो बुद्धेस्तथैव च ॥१५५॥**
**कृत्स्नं जगदनादाय नैकस्यापीष्यते क्रिया। प्राणस्य किमु वक्तव्यं कृत्स्नाध्यात्मेन्द्रियग्रहः ॥१५६॥**

वाग्देवताया जपमन्त्रप्रकाश्यत्वमुपास्यत्वं च नेति निर्धार्याथ ह प्राणमित्यादिपर्यायचतुष्टयस्य तात्पर्यमाह—घ्राणमिति। अनुक्रमात्पाठक्रमानुसारेणेत्यर्थः। तथा वाग्देवतावदिति यावत् ॥१५४॥

उक्तेन्द्रियैरनुक्तेन्द्रियाण्युपलक्षणीयानीत्याह—कर्मेति। अत्रेति प्रकृतः संदर्भो गृह्यते। चक्षुःश्रोत्रे घ्राणसहिते उक्तत्वाविशेषात्। धीन्द्रियाणामिति त्वग्जिह्वयोरेव वृत्तिभेदाद्बहूक्तिः। वागादि दृष्टान्तयितुं तथैवेत्युक्तम्। चकारस्त्वनुक्तचित्ताहंकारसमुच्चयार्थः ॥१५५॥

किमित्युक्तेन्द्रियैरनुक्तेन्द्रियाण्युपलक्ष्यन्ते उक्तानामेव यथाश्रुति ग्रहणं किं न स्यात्तत्राऽऽह—कृत्स्नमिति। एकस्यापि हेतोः सर्वजगदुपसंग्रहं विना स्वकार्यकर्तृत्वं न प्रामाणिक"मियं पृथिवी सर्वेषां भूतानां मध्वि"तिश्रुतौ सर्वस्य सर्वत्र कारणताया वक्ष्यमाणत्वादेवं सत्येकस्येन्द्रियस्य स्वव्यापारकर्तृत्वे सर्वाध्यात्मिकेन्द्रियग्रहो नान्यथा कर्तृत्वमिति किं वक्तव्यं स्वकार्ये सर्वापेक्षस्य तस्याऽऽध्यात्मिकसर्वेन्द्रियापेक्षाया दुर्निवारत्वात्तद्युक्तमुपलक्षणमित्यर्थः ॥१५६॥

१. मधुब्राह्मणे—"इयं पृथ्वी सर्वेषां भूतानां मधु" इत्यत्र मधु कार्यमित्यर्थः। तेन सर्वं सर्वभूतकार्यमित्यर्थः।

यद्यपीदं जगत्कृत्स्नं गृह्यते संहतत्वतः । तथाऽपि चोदितोऽत्रार्थ उपास्यो नाऽऽगतोऽर्थतः ॥५७॥
कल्याणेतररूपेण परिशिष्टेष्वपीक्ष्यते । विभाग आसुरो वेधस्तेन तेष्वनुमीयते ॥५८॥
अतस्तदर्थमाहेयमेवम्विति पुनः श्रुतिः । यथा वागादयो विद्धास्तद्वज्ज्ञेयास्त्वगादयः ॥५९॥
सिद्धान्वागादिदृष्टान्तान्पुरस्कृत्यात उच्यते । एवम्वित्युक्तशेषाणां पाप्मविद्धत्वसिद्धये ॥६०॥
अविध्यन्निति योऽर्थोऽस्य तद्व्याख्यानाय यत्यते । स्वैः स्वैस्तानिन्द्रियासङ्गैः पाप्मभिस्त उपासृजन् ॥६१॥
यत्संसर्गं पुरा चक्रुरविध्यंस्तदिहोच्यते । या विद्धा देवतास्तासां प्रक्रियासंहृतिः पृथक् ॥६२॥
आसङ्गपाप्मभिर्विद्धा यस्माद्वागादयोऽसुरैः । वर्जनीयास्ततस्ताः स्युर्नोपास्याः श्रेय ईप्सुभिः ॥६३॥

अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविव्यत्सन्स यथाश्मानमृत्वा लोष्टो विध्वँ्सेतैवँ् हैव विध्वँ् समाना विष्वञ्चो विनेशुस्ततो देवा अभवन् परासुरा भवत्यात्मना परास्य द्विषन्भ्रातृव्यो भवति य एवं वेद ॥७॥

एकस्य व्यापारहेतुत्वेन सर्वजगदादाने वागादिवदत्रोपात्तं सर्वं जगदुपास्यं स्यादन्यथा वागादेरपि नोपास्यत्वमविशेषादित्याशङ्क्याऽऽह—यद्यपीति । वागादिव्यापारे सहकारित्वेन संबद्धत्वादशेषजगद्ग्रहेऽपि योऽत्र प्रकरणे वागादिरुपास्यत्वेनोच्यते तस्यैवोपास्यत्वं कार्योत्पत्त्यनुपपत्त्या लब्धस्य प्रपञ्चस्य नोपास्यत्वं यश्चार्थादर्थो[1] न स चोदनार्थ इति न्यायादित्यर्थः ॥१५७॥

उक्तैरनुक्तोपलक्षणं साधितम् । ननु वागादिषूक्तेषु पाप्मवेधो ज्ञातो न च शिष्टेषु त्वगादिषु सोऽस्ति कल्पकाभावात्तत्कथमादिष्टैः शिष्टोपलक्षणं तत्राऽऽह—कल्याणेति । यस्मादनुक्तेष्वपि त्वगादिषु कल्याणस्पर्शनं तत्कृतं कार्यमित्यादिरूपेण कार्यभेदो दृष्टस्तस्मात्तेष्वपि पूर्वोक्तेष्विवाऽऽसुरपाप्मवेधः कल्प्यते न्यायसाम्यात्तद्युक्तमुपलक्षणमित्यर्थः ॥१५८॥

एवमित्यादिवाक्यमुक्तेऽर्थेऽवतारयति—अत इति । यतस्त्वगादिष्वपि पाप्मवेधोऽस्त्यतः स चासावर्थश्च तदर्थस्तं पाप्मवेधं त्वगादिष्वेषा श्रुतिर्वागादिषु सिद्धन्यायमुपजीव्याऽऽहेत्यर्थः । न्यायसिद्धस्यार्थस्य श्रुत्या कथनं न्यायस्य समूलत्वसिद्ध्यर्थमित्यभिप्रेत्य पुनरित्युक्तां श्रुतिं व्याचष्टे—यथेति ॥१५९॥

वागादिवत्त्वगादीनां पाप्मविद्धत्वे किं प्रापकमित्याशङ्क्य कल्याणेतररूपेणेत्यत्रोक्तं स्मारयति—सिद्धानिति । अतः सत्सु दृष्टान्तेष्वनुमानसंभवादिति यावत् । उक्तशेषाणामुक्तेभ्यो वागादिभ्यः शेषास्त्वगादयोऽनुक्तास्तेषामित्यर्थः । विमतं पाप्मानुविद्धं तत्कार्यवत्त्वाद्वागादिवदिति भावः ॥१६०॥

पाप्मभिरुपासृजन्पाप्मनाऽविध्यन्नित्यनयोरस्ति पौनरुक्त्यमित्याशङ्क्याऽऽह—अविध्यन्निति । व्याख्यानव्याख्येयभावादपौनरुक्त्यमित्यर्थः । व्याख्यानवाक्यस्यार्थमाह—स्वैः स्वैरिति । कल्याणस्पर्शनं ममैवेत्यादिप्रकारैरित्यर्थः । तानिति त्वगादिदेवानां कर्मत्वोक्तिः प्रथमया त्वसुराणां कर्तृत्ववचनमिति विवेक्तव्यम् ॥१६१॥

व्याख्येयवाक्यस्यार्थमाह—यदिति । पूर्ववाक्ये वागादिषु पापसंसर्गमसुराश्चक्रुरिति यत्तदेवोत्तरवाक्ये पाप्मनाऽविध्यन्नित्युच्यत इति योजना । एवमेता देवता इति व्यर्थमेवमु खल्वेता इत्यनेन गतत्वादित्याशङ्क्याऽऽह—या इति । या वागादिदेवता दर्शितन्यायेन पाप्मना विद्धास्तासां प्राणप्रकरणात्पृथगेव प्रक्रियायाः प्रकरणस्योपसंहृतिरेवमित्यादिना क्रियते तन्नास्य वैयर्थ्यमित्यर्थः ॥१६२॥

उपसंहृतप्रकरणस्य तात्पर्यमाह—आसङ्गेति । वागादीनां स्वप्राधान्येन नोपास्यतेति भावः ॥१६३॥

---

१. यश्चार्थात् वेदप्रतिपादितार्थात् अन्यथानुपपत्त्या सिद्धं, यथा व्रीह्यादिसिद्ध्यर्थं कृष्यादि । तन्न वेदविहितं तथा प्रकृतेऽपि अविहितमनुपास्यमित्यर्थः ।

मुख्यप्राणं प्रति प्रार्थना, असुरविनाशः देवजयश्च

एवं निराशाः पूर्वासु देवतास्वसुरार्दनात् । पारिशेष्यादथाऽऽजग्मुर्मध्यमं प्राणमादरात् ।।६४।।
अथेत्यनन्तरोक्तिः स्यात्तथाऽभिनयवृत्तये । इममित्यप्रसिद्धत्वात्प्राणस्येह त्वगादिवत् ।।६५।।
अस्ति यस्मादसुर्नित्यमासन्योऽयमतो मतः । वागादिभ्यो विभागार्थं विशेषणमसोरिदम् ।।६६।।
जपमन्त्राभिधेयोऽत्र पारिशेष्यात्प्रतीयताम् । उद्गीथदेवता प्राण इत्यभूत्सुरनिश्चयः ।।६७।।
मन्त्रप्रयोगे सर्वेषां संनिधौ तत्प्रकाशितम्[1] । भारमुत्सहते वोढुं योऽनो यामस्तमाश्रयम् ।।६८।।
परीक्षमाणास्ते त्राणं यथोक्ताख्यानवर्त्मना । क्रमेणाऽऽसेदुरासन्यं प्राणं पाप्मपराभवात् ।।६९।।
श्रेयोर्थिनां मनुष्याणामुपास्यप्रतिपत्तये । इयमाख्यायिका चक्षुर्नान्यथोपास्यनिश्चितिः ।।७०।।
यः प्राणे भोग इति न पूर्ववद्भण्यतेऽत्र किम् । वागादीनामिव यतो नासोर्भोगो विशिष्यते ।।७१।।
अकृत्स्नभोगतो युक्तं वागादिषु विशेषणम् । सर्वस्यैवासुभोगत्वात्किं कुतोऽत्र विशिष्यते ।।७२।।

वृत्तमनूद्याथ हेममित्याद्युत्तरं वाक्यमादत्ते—एवमिति । जपमन्त्रप्रकाश्यत्वे ध्येयत्वे च नैराश्यमुक्तन्यायेन तासामसुरार्दनादप्राधान्यनिश्चयादिति हेतुः । प्रसक्तदेवतानिषेधाद्देवतान्तरस्य चाप्रसङ्गादित्यागतिहेतुं वदन्नपेक्षितं निक्षिप्याथशब्दमवतारयति—पारिशेष्यादिति ।।१६४।।

वागादिषु नैराश्यानन्तर्यमथशब्दार्थमाह—अथेति । इममित्यस्यार्थमाह—तथेति । विवक्षितार्थद्योतको देहतदवयवव्यापारविशेषोऽभिनयः । प्राणान्तरेष्वभिनयाभावादिहापि तद्वैयर्थ्यमित्याशङ्क्याऽऽह—अप्रसिद्धत्वादिति । इहेति देहोक्तिः । नहि देहे प्राणस्य करणग्रामवदायतनविशेषे प्रसिद्धिरतस्तदभिनयार्थवत्तेत्यर्थः ।।१६५।।

आसन्यमित्यस्यार्थोक्तिपूर्वकं फलमाह—अस्तीति ।।१६६।।

केनाभिप्रायेण वागादयो मुख्यं प्राणमुपजग्मुरित्यपेक्षायामाह—जपेति । अत्रेति निर्धारणार्था सप्तमी । प्राणानां मध्ये प्राणो मुख्यो जपमन्त्रप्रकाश्य इति प्रतीयतामन्यस्य तदयोगादसावेव चोद्गीथदेवतेति सुराणां निश्चयोऽभूदिति योजना । तत्प्रकाश्योद्गीथदेवतावशादसुरनिरासं देवा निश्चितवन्तः । न च प्राणानां मध्येऽन्यतमस्य तदुभयमस्ति तस्मात्पारिशेष्यान्मुख्यप्राणो मन्त्रप्रकाश्य उद्गीथदेवता चेति देवानां निश्चयोऽभूत्तेन तमुपजग्मुरित्यर्थः ।।१६७।।

कथं मन्त्रप्रकाश्योद्गीथदेवतात्वं प्राणस्य सिद्धमित्याशङ्क्य मन्त्रार्थस्य तत्र पूर्णत्वादित्याह—मन्त्रेति । अन इति च्छेदः ।।१६८।।

वागादीनां मुख्यप्राणवदाश्रयानपेक्षत्वमाशङ्क्याह—परीक्षमाण इति । परीक्षाप्रकारमाह—यथोक्तेति । रक्षकपरीक्षायां हेतुमाह—पाप्मेति । परीक्षापर्यवसानमाह—आसेदुरिति ।।१६९।।

यथोक्ताख्यानवर्त्मनेत्ययुक्तं श्रुतेरुपाख्याने तात्पर्याभावात्तत्प्रणयनानुपपत्तेरित्याशङ्क्योपास्यं निश्चेतुमाख्यायिका श्रुत्या प्रणीतेत्याह—श्रेयोर्थिनामिति । देवतोपास्त्यधिकारो मनुष्याणामेवेति वक्तुं मनुष्यग्रहणम् । उक्तमर्थं व्यतिरेकद्वारा दर्शयति—नान्यथेति ।।१७०।।

पूर्वत्र वागादौ यो वाचि भोग इत्यादिवदत्रापि प्राणे यो भोग इति वाच्यं प्रकरणवशादिति शङ्कते—यः प्राण इति । लिङ्गेन प्रकरणभङ्गं मन्वानः समाधत्ते—वागादीनामिति । नहि प्राणस्य विशिष्टो भोगोऽस्ति तेन तस्य विशेषणानुपपत्तेः सदपि प्रकरणमनुपपत्त्या बाधितमकिंचित्करमित्यर्थः ।।१७१।।

तर्हि तेषामपि प्राणवद्विशेषणानुपपत्तिरित्याशङ्क्य दृष्टान्तं स्पष्टयति—अकृत्स्नेति । वाचो हि वचनमेव भोगो न दर्शनादिश्चक्षुषो दर्शनमेव च न वदनादिरित्येवमशेषस्य वागादिभोगत्वाभावात्प्रातिस्विकं भोगमादाय यो वाचीत्यादिवचनमित्यर्थः । अस्तु तर्हि वागादिवत्प्राणेऽपि विशेषणमकृत्स्नभोगत्वाविशेषादित्याशङ्क्य

१. तत्प्रकाशितं भारं असतो मा सद्गमयेत्यस्यार्थः ।

**अभिसंधिर[1]विव्यत्सन्नित्यभूत्सुरविद्विषाम् । अनिष्ठितक्रियारम्भोऽविव्यत्सन्निति भण्यते ॥७३॥**
**विव्यत्सोद्देशमात्रेण प्राणो हन्ता सुरद्विषाम् । इत्यर्थप्रतिपत्त्यर्थमीदृग्दृष्टान्त उच्यते ॥७४॥**
**बिभित्सायै यथा वेगा[2]ल्लोष्टः क्षिप्तोऽश्मनोऽन्तिकात् । नश्येत्स्ववेगाच्छतधा ह्याखणाश्मसमागमात् ७५॥**
**अप्रधृष्यं तथा प्राणमृत्वा नेशुः सहस्रधा । दैत्यास्तन्नाशतो देवा देवा एवाभवन्सदा ॥७६॥**
**अत एव मनुष्यत्वहेतवोऽप्यसुराः समम् । विनेशुर्विष्वग्गतयो लोष्टः क्षिप्तो यथाऽश्मनि ॥७७॥**
**प्राणस्वभावसंपत्तेः प्राणवद्देवता अपि । देवा एवाभवन्दैत्यकृत्स्नपाप्मविनाशतः ॥७८॥**
**वागादीन्द्रियसंघातो यजमानो यथा पुरा । प्राणात्मभावाद्धत्वाऽऽगो वैराजं रूपमाप्तवान् ॥७९॥**
**तथा यस्तमुपासीत यथोक्ताख्यानवर्त्मना । विराजैवाऽऽत्मना हत्वा पापं भवति सोऽचिरात् ॥८०॥**

दार्ष्टान्तिकं स्फुटयति—सर्वस्येति । दर्शनश्रवणादेरिति यावत् । किमिति कार्यं कुत इति हेतुश्चाऽऽक्षिप्यते । प्राणः सप्तम्यर्थः । उक्तं च—अप्रसिद्धत्वात्प्राणस्येह त्वगादिवदिति ॥१७२॥

तमभिद्रुत्येत्यादौ क्रियापदं व्याकरोति—अभिसंधिरिति । अविव्यत्सन्नित्यनेनासुराणां प्राणताडनेच्छा जातेत्युच्यत इत्यर्थः । तदेव स्फुटयति—अनिष्ठितेति । अनिष्पन्नक्रिया पापसंसर्गहेतुरूपा तदारम्भस्तदिच्छा साऽत्राऽऽख्यातवाच्येत्यर्थः ॥१७३॥

स यथेत्यादौ सशब्दार्थमाह—विव्यत्सेति । प्राणताडनेच्छोदयमात्रेण प्राणोऽसुराणां हन्तेत्यस्यार्थस्य प्रतिपत्त्यर्थं वक्ष्यमाणप्रकारो दृष्टान्तः कथ्यत इत्यर्थः ॥१७४॥

यथेत्यादेरर्थमाह—बिभित्साया इति । अश्मनो भेदनेच्छया तदर्थं तत्समीपे स्थित्वा तस्मिन्नतिवेगक्षिप्तस्य पांसुपिण्डस्य स्वगतवेगवशेनानेकधा नाशे हेतुमाह—आखणेति । दुर्भेद्यशिलासंबन्धादित्यर्थः । उक्तार्थस्य लौकिकत्वं वक्तुं हिशब्दः ॥१७५॥

एवं हेत्यादिदार्ष्टान्तिकं व्याचष्टे—अप्रधृष्यमिति । अधर्षणीयमतिगम्भीरमगोचरमसुराणामिति यावत् । ततो देवा अभवन्नित्यस्यार्थमाह—तन्नाशत इति । सदा देवा एव वागादयो देवताप्रतिबन्धकासुराणां मुख्यप्राणतो नाशात्परिच्छेदाभिमानं हित्वा देवा एवाभवन्निति यावत् ॥१७६॥

विष्वञ्च इत्यस्यार्थं दर्शयन्दार्ष्टान्तिकं दृष्टान्तेन सह विवृणोति—अत इति । प्राणस्याधृष्यत्वादेव तत्ताडनेच्छामात्रेणासुरा मनुष्यत्वस्य स्थावरत्वादेश्च हेतवो देवत्वप्रतिबन्धकाः सर्वेऽपि युगपन्नानागतयो नष्टा दुर्भेद्यशिलाक्षिप्तपांसुपिण्डवदित्यर्थः ॥१७७॥

तत इत्यादेरुक्तमेवार्थं विवृणोति—प्राणेति । वागाद्युपाधिकस्य यजमानस्य प्राणेऽहंग्रहोपासनात्तत्स्वरूपाप्तेः सर्वस्य परिच्छेदाभिमानरूपस्य पाप्मनो नाशात्प्राणवद्वागादयः सदा देवतात्मानः सन्तोऽध्यात्मपरिच्छेदाभिमानप्रतिबन्धनिवृत्तावग्न्यादिदेवतात्वं भजन्तीत्यर्थः ॥१७८॥

भवत्यात्मनेत्यस्यार्थं वक्तुं यथेत्यादिभाष्यतात्पर्यमाह—वागादीति । आध्यात्मिकपिण्डमात्रपरिच्छिन्नात्माभिमानाख्यं दुरितमागो विवक्षितम् । पुरेत्युपासनपरिपाकावस्थाकथनम् ॥१७९॥

तथेत्यादिभाष्यं व्याकुर्वन्वाक्यं योजयति—तथेति । पूर्वयजमानवदपोह्य वागादीनादाय प्राणं तदुपासनात्परिच्छिन्नाभिमानं हित्वा विराडात्मनोपासको भवतीत्यर्थः । प्रतिबन्धके पापेऽपयाते विराड्भावस्य न क्षेपोऽस्तीति विवक्षित्वोक्तमचिरादिति ॥१८०॥

---

१. अविव्यत्सन्—तमभिद्रुत्य पाप्मनाऽविव्यत्सन् ।
२. यथाऽश्मानमृत्वा लोष्टो विध्वंसेत इति बृहदारण्यकपाठः । छान्दोग्ये तु यथाऽश्मानमाखणमृत्वा विध्वंसेत् इति । तत्र न शक्यते खनितुं भेत्तुं कुद्दालकादिभिः इत्यखणः स एवाखणः इत्यर्थः ।

जीवा विट् उपास्योऽत्र देवताविग्रहः सदा । प्राणो हिरण्यगर्भात्मा यावत्तदभिमानिता ॥८१॥
भावनोपचयाद्धत्वा परिच्छेदं स्वमासुरम् । देवतात्मानमेत्याशु सदा तद्भावभावितः ॥८२॥
तत्तमोमात्रविध्वंसान्नतु प्राणादिराप्यते । कार्यत्वात्कारणं मुक्त्वा न हि तत्कार्यसंभवः ॥८३॥
देवो[1] भूत्वेह देवोऽसौ भावनोपचयाद्भवेत् । पुंव्यापारोद्भवत्वं नः श्रुत्याऽपि प्रतिपादितम् ॥८४॥
ब्रह्मैवाप्येति ब्रह्मैव प्रागप्यासीद्यतोऽद्वयम् । तन्मोहमात्रविध्वंसादित्यपि श्रुतिशासनम् ॥८५॥
स्वतःसिद्धौ तदन्येषां श्रुतिकोपः प्रसज्यते । अतोऽन्यदार्तं तद्वच्चाप्येकमेवेति च श्रुतिः ॥८६॥
नाव्याकृतादेः संसिद्धौ परमात्मातिरेकतः । ब्रह्मवन्मानमस्तीह तथाऽनिर्मोक्षताऽऽपतेत् ॥८७॥

ननु विराजो नोपास्यत्वमचेतनत्वादतो न तद्भावः फलं तत्राऽऽह—जीवेति । अस्मिन्प्रकरणे देवताविग्रहो विराडात्मा क्रियाशक्तिप्राधान्येन प्राणो ज्ञानशक्तिप्राधान्येन च हिरण्यगर्भश्चैतन्याभासविशिष्टः सन्नैरन्तर्यादिभिरुपास्यो न तूपाधिरेवेत्युक्तं फलं युक्तमित्यर्थः । उपास्तेरवधिमाह—यावदिति । मनुष्योऽहमितिवत्तस्मिन्देवतात्मन्यहंभावस्याभिमानस्य भावो यावत्तावदुपास्तिरित्यर्थः ॥१८१॥

परप्राप्तिवत्प्राणाप्तिरपि ज्ञानमात्रादित्याशङ्क्याऽऽह—भावनेति । शास्त्रादुपास्यं निश्चित्य तत्र भावनामुपचिनोति ततः स्वसंबद्धमासुरं परिच्छेदाभिमानमाशु हत्वा सदा तस्मिन्नेव देवतात्मनि भावेन संस्कृतस्तमेव गच्छति "तं तमेवैति कौन्तेय" त्यादिस्मृतेरित्यर्थः ॥१८२॥

परस्मिन्प्रतीचि शास्त्रीयज्ञानात्तदज्ञानध्वंसमात्रेण तत्प्राप्तिवत्तस्मिन्प्राणादौ शास्त्रोत्थज्ञानात्तदज्ञानमात्रध्वस्तेर्न तत्प्राप्तिरिति व्यावर्त्यमाह—तत्तम इति । तत्र हेतुमाह—कार्यत्वादिति । प्राणात्मत्वस्य कार्यत्वात्कारणं विनाऽयोगादुपास्तेरुक्तकर्मणश्च तद्धेतुत्वान्न ज्ञानमात्रात्प्राप्तिरित्यर्थः ॥१८३॥

प्राणाद्यात्मत्वस्य ज्ञानमात्रानायत्तत्वे श्रुतिरपि मानमित्याह—देव इति । इहैव देहे भावनाप्रकर्षाद्देवभावमनुभूय देहपातादूर्ध्वमुपास्यो देवः स्यादित्यनया श्रुत्या पुंव्यापारसाध्यत्वमस्मान्प्रति प्राणादिभावस्योक्तमित्यर्थः । अपिशब्दो यथोक्तां स्मृतिमनुकर्षति ॥१८४॥

तर्हि प्राणादिभाववत्परात्मभावोऽपि न ज्ञानमात्रादित्याशङ्क्याऽऽह—ब्रह्मैवेति । ब्रह्मण्येकीभावात्प्रागपि वस्तुतो ब्रह्मैव सञ्जीवो मोहादब्रह्मवद्दृष्टो वाक्योत्थज्ञानात्तन्मात्रनिरासादद्वयं ब्रह्मैवाऽऽप्नोतीतिश्रुतेर्ब्रह्माप्तिर्धीमात्रायत्ता सिद्धेत्यर्थः । जीवस्य ब्रह्मणोऽर्थान्तरत्वं निरसितुमद्वयमित्युक्तम् । अपिशब्दाद्विमुक्तश्चेत्यादिवाक्यान्तरं गृहीतम् ॥१८५॥

ब्रह्मभाववत्प्राणादिभावस्यापि स्वतःसिद्धेर्ज्ञानमात्रायत्तता युक्तेत्याशङ्क्याऽऽह—स्वत इति । तच्छब्देन ब्रह्मोच्यते । अतःशब्देनान्तर्यामिणोऽक्षरस्य वा निर्देशः । उक्तवाक्यवन्नेह नानेति प्राणादिद्वैतनिषेधकवाक्यस्य व्याकोपमाह—तद्वदिति । चकारेण मृत्योः स मृत्युमित्यादिद्वैतदृष्टिनिन्दानुपपत्तिं समुच्चिनोति । 'एको देवः सर्वभूतेषु' 'एक एव तु भूतात्मा' इत्यादिश्रुतिस्मृतिविरोधार्थोऽपिशब्दः । श्रुत्यन्तरविरोधमाह—एकमिति ॥१८६॥

अव्याकृतादेर्नित्यसिद्धत्वे मानविरोधमुक्त्वा मानाभावमाह—नेत्यादिना । "अस्तीत्येवोपलब्धव्यः" "सदेव सोम्येदमि" त्यादि ब्रह्मणः स्वातन्त्र्येण सिद्धौ मानं दृष्टं न तथाऽव्याकृतसूत्रादेरनपेक्षत्वेन सिद्धौ मानमस्तीत्यर्थः । इहेति पूर्वसप्तम्या संबध्यते । किंचाव्याकृतादेरकल्पितत्वं वा कल्पितत्वं वा? आद्ये सदा संसारः स्यादित्याह—तथेति ॥१८७॥

---

१. देवो भूत्वा देवानप्येति (बृ० ६-१-२) भावनाप्रकर्षात् । इहैव देवभावमापद्य शरीरपातानन्तरं देवानप्येति इत्यर्थः ।

२. तदन्येषां ब्रह्मभिन्नानां स्वतस्सिद्धौ ब्रह्मवत् ज्ञानमात्रात् प्राणादिभावसिद्धौ अङ्गीक्रियमाणायां श्रुतिकोपः 'नेह नानास्ति' इत्यादि श्रुतिविरोधः प्राणादेरपि निषेधात् ।

अथाऽऽत्माविद्याऽव्यक्तादिरूपेण प्रथते तदा । तन्निवृत्तौ निवृत्तिः स्यान्निवृत्तिः केवलात्मता ॥८८॥
प्राणस्येव पराभूतो द्विषन्पाप्माऽऽसुरोऽखिलः ।
उपासीनस्य तं प्राणं कृत्स्नो नश्येत्तथाऽऽसुरः । द्विषंश्चाप्यद्विषच्छत्रुरासुरादन्य इष्यते ॥८९॥
नित्यविघ्नकृदेवैष प्राणाभावासुरो मतः । अतो विशेष्यते श्रुत्या द्विषन्भ्रातृव्यरूपया ॥९०॥
उक्तासुरपराभूतौ नान्योऽरिरवशिष्यते । य एवं वेदेति विधिः फलोक्तेरर्थवादतः ॥९१॥
आनुषङ्गिफलोक्त्या वा तदुपासा विमुक्तये । आत्मविद्याधिकारेऽस्मिंस्तदुपासाविधानतः ॥९२॥
आत्मविद्योपकारित्वं तस्माद्वाक्याच्च गम्यते ॥९३॥

ते होचुः क्व नु सोऽभूद्यो न इत्थमसक्तेत्ययमास्येऽन्तरिति सोऽयास्य आङ्गिरसोऽङ्गाना ँ ् हि रसः ॥८॥

द्वितीयमुत्थापयति—अथेति । तत्र ज्ञानादज्ञानध्वस्तौ चाव्याकृतादेस्तद्विलासस्य ध्वस्तिः स्यादिति स्वपक्षसिद्धिमाह—तदेति । तथाऽपि तन्निवृत्तिरात्मनो भिन्नाऽभिन्ना वा?आद्ये द्वैतापत्तिर्द्वितीये भावाभावयोरेकत्वानुपपत्तिरित्याशङ्क्याऽऽह—निवृत्तिरिति । वाक्ययोरथबुद्धिवृत्त्युपलक्षितचिदतिरेकेण कल्पिताव्याकृतादिभावाभावयोर्न सत्त्वं कल्पितसर्पस्य रज्ज्वतिरिक्तसत्त्वासत्त्वादृष्टेरित्यर्थः ॥१८८॥

प्राणभावस्य परात्मभावाद्वैषम्यमापाद्य पराऽस्येत्यादिवाक्यस्यार्थमाह—प्राणस्येति । द्विषन्निति विशेषणस्यार्थवत्त्वं वक्तुमासुरपाप्मेतरशत्रोर्द्वैविध्यमाह—द्विषन्निति । शत्रुशब्दः सापत्नविषयः ॥१८९॥

आसुरे तु शत्रौ न द्वैविध्यमित्याह—नित्येति । यस्मादासुरः शत्रुर्द्विषन्नेव तस्माद्द्विषन्भ्रातृव्य इत्येवंरूपया श्रुत्या भ्रातृव्यः सापत्नः शत्रुर्द्विषन्निति विशेष्यते तद्विशेषणमर्थवदित्यर्थः ॥१९०॥

यथोक्तशत्रुनिराकरणेऽपि प्रतिबन्धान्तरसंभवान्न प्राणात्मतेत्याशङ्क्याऽऽह—उक्तेति । यदाग्नेयोऽष्टाकपाल इतिवद्य[1] एवं वेदेति प्रसिद्धार्थोपबन्धेऽपि विधिपरं वाक्यमतश्चैवं विद्यादिति विवक्षितमित्याह—य एवमिति । विधेर्विवक्षितत्वे हेतुमाह—फलोक्तेरिति । पूर्वोक्तार्थवादवशात्फलस्योच्यमानत्वात्तद्वचनस्य च स्तुतित्वाद्विधिं[2] विना च तदयोगादत्र सूत्राप्तिफलत्वेन विधीयते तदुपास्तिरित्यर्थः ॥१९१॥

यद्वा मोक्षफलत्वेन तदुपास्तिरत्र विधीयते । सूत्रभावस्तु फलार्थे बीजावापे छायागन्धादिवदानुषङ्गिकं फलमित्याह—आनुषङ्गीति । सूत्रोपास्तिस्तत्प्राप्तिद्वारा क्रममुक्तिफलेत्यत्र मानमाह—आत्मेति ॥१९२॥

आत्मविद्याप्रकरणे सूत्रोपास्तिविधेस्तस्या मुक्तिफलं चेदात्मविद्यैव मुक्तिहेतुरिति नियमासिद्धिरित्याशङ्क्याऽऽह—आत्मविद्येति । सैव मुक्तिहेतुस्तदुत्पत्त्युपकारित्वमुपासनस्य प्रकरणादित्यर्थः । "[3]उक्तोपनिषत्क इतो

---

१. य एवं वेदेति विधिः—यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां च भवति इत्यत्र यच्छब्दोपबन्धात् तस्य च प्राप्तत्वद्योतकत्वेन विधित्वप्रतिबन्धकत्वं यद्यपि, तथापि अग्निदेवतायाः अष्टाकपालपुरोडाशस्य च सम्बन्धः अप्राप्तः अतो विधिरङ्गीकृतो मीमांसकैः तद्गुणाश्च विधीयेरन् अविभागाद्विधानार्थे न चेदन्येनशिष्टा इति जैमिनिसूत्रात् । तद्वत्—इत्यर्थः ।

यच्छब्दयोगः प्राथम्यमित्युद्देश्यस्य लक्षणम् ।
तद्वृत्तमेवकारश्च स्यादुपादेयलक्षणम् ॥ इति न्यायात् ।

य एवं वेदेति न विधिः प्राप्तत्वात् इत्याशङ्क्याह—(न्या)द्विषन् इति विशेषणं अद्विषतां व्यावृत्यर्थं यथा भरतो भ्रातृव्यः—(भाष्ये) ।

२. अर्थवादेन फलोक्तेः यत् स्तुत्यं तद्विधेयं इति न्यायात् अत्र वेदनं विधीयते ।

३. उक्तोपनिषत्कः इति उपासनादियुक्तत्वं सूचितं इतो विमुच्यमान इति मोक्षाधिकारिता सूच्यते—जनकं प्रति याज्ञवल्क्यवचनमिदम् ।

अथायास्याङ्गिरोद्रूभिर्[1]विशिष्टमसुकर्मकम् । उपासनं विधास्यामीत्यारब्धैषोत्तरा श्रुतिः ॥९४॥
अनुवादाद्विधिर्ज्यायाननुवादे वृथा श्रमः । पुरुषार्थाभिसंबन्धादतो विधिरिहाऽऽश्रितः ॥९५॥
श्रूयते फलसंबन्धो यासूपासासु तास्विह । दध्नेन्द्रियादिवज्ज्ञेयो विधिर्गुणसमाश्रयः ॥९६॥
प्रधानफलसंबन्धो यत्र तु स्याच्छ्रुतेर्मुखात् । विशिष्टः स विधिर्ज्ञेयो यथाऽऽग्नेयादयस्तथा ॥९७॥

ते होचुरिति कण्डिकाविवरणम्

अत्राप्राग्न्यादिरूपास्ते प्राणालिङ्गनसंश्रयात् । कृतोपकारं स्मृत्वोचुः प्राणा वागादयस्तदा ॥९८॥
अनन्ताग्न्यादिभावेन यो नः सञ्जितवानसुः । क्व न्वसौ वर्तते ह्यात्मा योऽस्मच्छत्रुविनाशकृत् ॥९९॥
वितर्कयन्तस्ते प्राणा उक्त्वैवं प्रत्यगात्मसु । कुर्वाणमुपकारं तं ददृशुः प्रागिवाऽऽदरात् ॥२००॥
लोकेऽपि हि विचार्यार्थमथ संविदते जनाः । यथा वागादयस्तद्वद्विजज्ञुः प्राणमात्मनि ॥ १ ॥

विमुच्यमानः क्व गमिष्यसी"ति वाक्याच्च क्रममुक्तिफलत्वं सूत्रोपास्तेर्गम्यते । अतो ब्रह्मविद्याद्वारा मोक्षे पर्यवसिता प्रकृतोपास्तिरित्याह—वाक्याच्चेति । फलवत्प्रधानोपास्तेरुक्तत्वात्ते होचुरित्याद्युत्तरवाक्यं गुणोपास्तिविधिपरमित्याशङ्क्य तस्य तात्पर्यमाह—अथेति । सफलप्राणोपासनोक्त्यानन्तर्यमथशब्दार्थः । ते होचुरित्यारभ्याथाऽऽत्मनेऽन्नाद्यमित्यस्मात्प्राक्तनं वाक्यमुत्तरा श्रुतिरित्युच्यते ॥१९३-१९४॥

प्राणस्याऽऽङ्गिरसत्वादेर्लोकसिद्धत्वेनानूद्यत्वान्नोपास्यकोटिप्रविष्टतया विधेयतेत्याशङ्क्याऽऽह—अनुवादादिति । अनुवादस्यायुक्तत्वे हेतुमाह—अनुवाद इति । तत्पक्षे गुणवादस्य निष्फलत्वान्नानुवादो युक्त इत्यर्थः । विधेर्ज्यायस्त्वे हेतुमाह—पुरुषार्थेति । अनुवादस्यायुक्तत्वाद्विधेश्चोपपन्नत्वादाङ्गिरसत्वादिगुणकप्राणकर्मकोपास्तेर्विधेयत्वाद्गुणानामप्युपास्यकोटिनिविष्टतया विधेयोपास्तिकर्मतेति फलितमाह—अत इति ॥१९५॥

उपास्यतया गुणानां विधेयत्वे गुणविधिरेव किं न स्यादित्याशङ्क्याऽऽह—श्रूयत इति । दध्नेन्द्रियकामस्य जुहुयादित्यत्र प्रधानाग्निहोत्रस्य स्वर्गफलात्फलान्तरस्येन्द्रियपाटवस्य श्रुतत्वात्प्रधानानुवादेन गुणविधिरिति संबन्धग्रन्थे बोधितं तथेहोपास्तिप्रकरणे यासु गुणोपास्तिषु प्रधानफलात्फलान्तरं श्रूयते तासु गुणाश्रयो विधिर्यथा "भर्ता श्रेष्ठः पुरो गन्ते"त्यादिषु । न चायास्यादिषु प्रधानफलात्फलान्तरं श्रुतमतो नात्र गुणविधिरित्यर्थः ॥१९६॥

अयास्याङ्गिरसादिषु तर्हि कीदृशो विधिस्तत्राऽऽह—प्रधानेति । यथाऽऽग्नेयोऽष्टाकपालोऽग्नीषोमीयमेकादशकपालमुपांशुयाजमन्तरा यजतीत्यादावेकैकत्र प्रधानदर्शादिफलात्फलान्तरस्य विवक्षितस्याश्रुतेराग्नेयादयो विशिष्टविधिविधेयाः स्वीक्रियन्ते तथा यासूपासासु प्रधानफलात्फलान्तरसंबन्धः श्रुतिवाक्यान्न प्रतीयते तत्र विशिष्टविधिरयास्यादिषु च फलान्तराश्रुतेस्तद्विशिष्टप्राणकर्मकोपास्तिविधिरित्यर्थः ॥१९७॥

यद्यपि फलान्तरसंबन्धमन्तरेण प्रधानफलसंबन्धिनोऽपि कस्यचिद्गुणस्य(विधि)विधेयत्वमिष्टं तथाऽप्युपासनाधिकारे यथोक्तो विभागः संभवतीत्यभिप्रेत्योत्तरसंदर्भस्य विभागेन तात्पर्यमुक्त्वा ते होचुरित्यक्षराणि योजयति—अत्रापेति । तेषामग्न्यादिरूपत्वाप्तौ हेतुमाह—प्राणेति । प्राणस्य मुख्यस्याऽऽलिङ्गनं प्रधानत्वेनाऽऽश्रयणं तस्मादेव संश्रयादवष्टम्भादिति यावत् । कृतो देवतात्वप्रापणरूप उपकारो येन तं प्राणं स्मृत्वा फलावस्थायामन्योन्यमुक्तवन्त इत्याह—कृतेति ॥१९८॥

किमूचुरित्यपेक्षायां क्वेत्यादेरर्थमाह—अनन्तेति । स्वरूपत्वाद्वागादीनां देवतात्वप्रतिबन्धकपरिच्छेदाभिमानध्वंसित्वाच्च तस्यानुस्मरणं युक्तमित्याह—आत्मेत्यादिना । उक्तहेत्ववद्योती हिशब्दः ॥१९९॥

नुशब्देतिशब्दयोरयंशब्दस्य चार्थमाह—वितर्कयन्त इति । प्रागिति फलावस्थायाः पूर्वमित्यर्थः । आदरस्तूपकारे दर्शने द्वयोर्वा द्रष्टव्यः ॥२००॥

कृतोपकारं प्राणं स्मृत्वा फलावस्था वागादयः स्वात्मन्येव विचारयन्तो दृष्टवन्तस्तमित्युक्त्वा तत्रैव लोकानुसारं दर्शयति—लोकेऽपीति । वेदसंग्रहार्थोऽपिशब्दः । द्विविधप्रसिद्धेरविगीतत्वं हिशब्दार्थः । विचारफलमर्थसंवेदनं स्फुटयितुमथेत्युक्तम् । उक्तं दृष्टान्तीकृत्य दार्ष्टान्तिकमाह—यथेति । आत्मा कार्यकरणसंघातः ॥२०१॥

---

१. अयास्यः अङ्गिराः, दूः इत्यादिगुणविशिष्टेत्यर्थः ।

सामान्योक्तावास्य इति तद्विशेषणमुच्यते । अन्तरित्यन्यथा मा भूत्प्रसङ्गः प्राणनिश्चितौ ॥ २ ॥
त्वगादयोऽपि सन्त्यास्ये यतोऽतस्तद्विशेषणम् । विशिनष्टि ततः प्राणमास्यान्तर्बिलचारिणम् ॥ ३ ॥
आस्यपर्यन्तशायीनि त्वगादीनि न मध्यतः । प्राणस्तु मध्य आस्यस्य तस्मादन्तर्विशेषणम् ॥ ४ ॥
सर्वेन्द्रियाणामथवा प्राण आत्मेति कथ्यते । अयमास्येऽन्तरित्येवमरनाभिनिदर्शनात् ॥ ५ ॥
अयमास्येऽन्तरित्येवं प्राणं दृष्ट्वा यतः पुरा । व्याजह्रुरमरास्तस्मात्प्राण आयास्यसंज्ञितः ॥ ६ ॥
अङ्गानां करणानां च रसः सारो यतस्ततः । प्राण आङ्गिरसः प्रोक्तस्तद्विद्भिस्तद्गुणाश्रयात् ॥ ७ ॥
कथमाङ्गिरसः प्राण इत्यस्य प्रतिपत्तये । अन्वयव्यतिरेकाभ्यामुपरिष्टात्प्रवक्ष्यते ॥ ८ ॥

मू.—सा वा एषा देवता दूर्नाम । दूरँ ह्यस्या मृत्युर्दूरँ ह वा अस्मान्मृत्युर्भवति य एवं वेद ॥९॥

तथाऽन्योऽपि गुणोऽनस्य दूरिति प्रतिपाद्यते । उदारफलसिद्ध्यर्थं सा वा एषेत्यतः श्रुतिः ॥ ९ ॥

आस्येऽन्तरित्यत्रान्तरितिविशेषणस्य तात्पर्यमाह—सामान्येति । निश्चये विवक्षिते प्राणस्याऽऽस्ये वर्तत इत्यविशेषेणोक्तौ त्वगादावपि प्राणत्वप्रसङ्गस्तत्र वृत्तेरविशेषात्तन्मा भूदित्यास्यगतप्राणस्यान्तरिति विशेषणं युक्तमित्यर्थः ॥२०२॥

आस्ये प्राण इत्युक्ते विशेषणाभावे कथं त्वगादौ प्रसक्तिस्तत्राऽऽह—त्वगादयोऽपीति । तेषामप्यास्ये भावात्सामान्योक्तौ तत्रापि यतः प्रसक्तिरतस्तदन्तरिति विशेषणं तेभ्यो मुखान्तराकाशस्थं प्राणं व्यावर्तयतीत्यर्थः ॥२०३॥

कथं प्राणस्योक्ताद्विशेषणात्तेभ्यो व्यावृत्तिस्तेषामप्यास्यान्तर्भावस्योक्तत्वादित्याशङ्क्याऽऽह—आस्येति । त्वचस्तावदनुभवसिद्धमास्यपर्यन्तत्वं वाग्जिह्वयोस्तदन्तस्थत्वेऽपि न व्याप्त्या मध्यस्थतेति भावः । कथं प्राणस्य मध्यस्थत्वं तदाह—प्राणस्त्विति । मुखनासिकाकाशमध्ये प्राणो वर्तते नैवं त्वगादयोऽतोऽन्तर्विशेषणं तेभ्यो व्यावर्तयति तमित्यर्थः ॥२०४॥

अन्तःशब्दस्यार्थान्तरमाह—सर्वेति । उक्तवाक्यस्थान्तःशब्देनावसानवाचिना वागादीनामात्मा प्राण इत्युच्यते तत्रैव तेषामवसानात्तदितरस्वरूपाभावात् "प्राणं तर्हि वागप्येती"त्यादिश्रुतेरित्यर्थः । कथं तेषां तदितरस्वरूपाभावेन तत्रावसानं तत्राऽऽह—एवमिति । नेम्याश्रयाणामराणां रथनाभ्यर्पितत्वदृष्टान्तादखिलस्यापि भूतभौतिकप्रपञ्चस्य प्राणेऽर्पितत्वमुक्तार्थानुसारेण श्रुतौ दर्शितमित्यर्थः ॥२०५॥

सोऽयास्य इत्यस्यार्थमाह—अयमिति । व्याहरणस्य पूर्वकल्पीययजमानसंबन्धं सूचयति—पुरेति । तत्कर्तृत्वं वागादीनां फलावस्थायामित्याह—अमरा इति ॥२०६॥

अङ्गानां हि रस इति हेतुमादौ व्याकरोति—अङ्गानामिति । आङ्गिरस इति प्रतिज्ञां व्याचष्टे—तत इति । तत्रैव प्राणविदामनुभवं प्रमाणयति—तद्विद्भिरिति । अङ्गकरणसारत्वं प्राणगुणमाश्रित्य तस्याऽऽङ्गिरसत्वमिति हेत्वर्थमेव संक्षिप्याऽऽह—तद्गुणेति ॥२०७॥

प्राणस्य नाऽऽङ्गिरसत्वमङ्गरसत्वासिद्धेर्वागादीनामन्यतमस्य तत्सारत्वसंभवादित्याह—कथमिति । तस्याऽऽङ्गिरसत्वाख्यप्रतिज्ञातार्थसिद्धयेऽङ्गरसत्वं हेतूकृतमन्वयव्यतिरेकाभ्यामग्रे स्पष्टीकरिष्यत इत्याह—अन्वेति ॥२०८॥

ननु सिद्धे प्राणस्योपास्यत्वे गुणा वाच्या न च तत्सिद्धं शुद्धेरसिद्धेर्नहि तस्याशुद्धवागादिसंबन्धिनः शवस्पृष्टे तत्स्पृष्टस्येव सा सिद्धेत्याशङ्क्य सा वा एषेत्यादेस्तात्पर्यमाह—तथेति । आयास्यत्वादिपूर्वोक्तगुणवदिति यावत् । अस्य हि गुणस्योक्तौ प्राणस्योपास्यत्वं सिध्यत्यासङ्गपाप्माविद्धतयोक्तशुद्धिदाढर्यादिति भावः । किं चोक्ते

**उपास्तिक्रमसिद्धयर्थं क्रमभङ्गोऽयमिष्यते । यतोऽतोऽङ्गिरसं त्यक्त्वा दूरित्येवाभिधीयते ॥२१०॥**
**विशिष्टोपास्तिरेवेयं प्रधानफलकीर्तनात् । नायं गुणविधिर्ज्ञेयस्तत्फलस्याश्रुतत्वतः ॥२११॥**
**क्रियायां गुणभूतोऽर्थो देवतेत्युपदिश्यते । अस्त्युपासिक्रियायोगो देवताऽतोऽन उच्यते ॥२१२॥**
**दूरमेवंविदः पाप्मा कथमध्यवसीयते । एवंवित्त्वविरोधित्वाद्दूरं पाप्मा भवेदतः ॥२१३॥**
**विषयेन्द्रियसंबन्धजो हि पाप्माऽऽसुरो यतः । श्रौतानन्तादहंमानात्परिच्छिन्नो विरुध्यते ॥२१४॥**
**चक्षुरादिपरिच्छेदः प्राकृतज्ञानहेतुतः । युक्तोऽध्यात्मैकरूपस्य बाधः शास्त्राभिमानतः ॥२१५॥**

दूर्गुणे तद्विशिष्टप्राणोपास्तेरुत्कृष्टं फलं पापहानिः सेत्स्यत्यतस्तस्य गुणस्य प्रतिपाद्यतेत्याह—उदारेति । गुणस्य वाच्यत्वमतःशब्देनोक्त्वा तत्र श्रुतिमवतारयति—सा वा इति ॥२०९॥

ननु प्राणस्याऽऽङ्गिरसत्वमादावुक्तमनन्तरं च "सा वा एषे"त्यादिना दूर्गुणत्वं तत्र प्रथमश्रुतमुपरिष्टात्प्रतिपादयिष्यति चरमश्रुतं दूरं हीत्यादिश्रुतिरादावेव प्रतिपादयति । तत्र क्रमभङ्गे किं कारणं तत्राऽऽह—उपास्तीति । आदौ दूर्गुणो ध्येयोऽनन्तरमाङ्गिरसत्वमित्युपास्तिक्रमसिद्धयर्थं पाठक्रमभङ्गोऽङ्गीकृतः, पाठक्रमादर्थक्रमस्य बलवत्त्वात्, न ह्यनुक्ते दूर्गुणे प्राणस्य शुद्धिसिद्धिर्न चाशुद्धस्योपास्यत्वम् । तस्मादग्निहोत्रहोमयवागूपाकक्रमवत्पाठक्रमातिक्रम इत्यर्थः । श्रौतक्रमभङ्गेनार्थक्रमोपादाने फलितमाह—यत इति ॥२१०॥

तथाऽपि दध्यादिवत्फलविशेषसंबन्धाद्गुणविधिरेवायं न विशिष्टविधिरित्याशङ्क्याऽऽह—विशिष्टेति । प्राणोपास्तेः पापहानिः देवताभावश्चेति द्विविधं फलम् । तत्र पापहानेस्तत्फलस्यैवात्र श्रवणादिति हेतुमाह—प्रधानेति । गुणविधित्वाभावे नायमितिप्रतिज्ञापूर्वकं हेतुमाह—तत्फलस्येति । प्रधानफलात्फलान्तरस्याश्रुतेर्दध्यादिवैषम्यादित्यर्थः ॥२११॥

दूर्गुणविशिष्टप्राणोपास्तिरिह विवक्षितेत्युपपाद्यैषा देवतेति प्राणे देवताशब्दप्रयोगात्तद्देवतात्वं दृष्टं कथं निर्वहतीत्याशङ्क्याऽऽह—क्रियायामिति । यागादौ कर्त्रतिरेकेण चेतनो गुणोऽग्न्यादिर्देवतेत्यर्थः । तथाऽपि कथं प्राणस्य तत्त्वं तत्राऽऽह—अस्तीति । न च तस्य कर्मत्वान्न गुणतेति युक्तं गुणशब्देन कारकस्य विवक्षितत्वात्तथा च प्राणस्य कर्त्रतिरिक्तचेतनत्वे सति क्रियायां कारकत्वाद्देवतात्वं युक्तमित्याह—देवतेति ॥२१२॥

नित्याद्यनुष्ठानात्पापहानिर्धर्मात्पापक्षयश्रुतेर्नं चेदमुपासनं नित्यं नैमित्तिकं वा देवतात्मत्वकामिनो विधानात्तत्र पापमेवंविदो दूरे भवतीत्याक्षिपति—दूरमिति । फलोक्तिव्याख्यया परिहरति—एवमिति । नहि नित्याद्यनुष्ठानादेव पापक्षयो नियतस्तीर्थस्नानादेरपि तत्प्रसिद्धेः । तस्मादेवंवित्त्वेन पाप्मनो विरोधित्वादेवंविदः सकाशाद्दूरे भवत्येवासावित्यर्थः ॥२१३॥

उक्तमेव व्यनक्ति—विषयेति । विषयेष्विन्द्रियाणां सम्बन्धात्पाप्मा परिच्छिन्नोऽभिमानो जातः । स यतः शास्त्रानपेक्षःस्वाभाविकः समुल्लसत्यतः शास्त्रोत्थादपरिच्छिन्ने प्राणात्मन्यहंमानाद्विरुध्यते परिच्छिन्नापरिच्छिन्नाभिमानयोर्विरोधस्य प्रसिद्धत्वादित्यर्थः ॥२१४॥

नन्वभिमानयोर्विरोधित्वाविशेषाद्बाध्यबाधकत्वव्यवस्थाऽयोगाद्द्वयोरपि मिथो बाधः स्यात्तत्राऽऽह—

१. तस्मादिति—"अग्निहोत्रं जुहोति" "यवागूं पचति" इति श्रूयते । तत्र पाठक्रमात् प्रथममग्निहोत्रं ततः यवागूपाक इति वा प्रथमं पाकः ततो होम इति वा न नियमः इति प्राप्ते सिद्धान्तः प्रथमं पाकः ततो होम इति अन्यथा होमानन्तरं यवागूपाके पाकस्यादृष्टार्थत्वापत्तेः होमस्य द्रव्यसापेक्षत्वाच्चेति । निर्णीतं पञ्चमप्रथमे ।

२. दध्यादिवैषम्यात्—"दध्नेन्द्रियकामस्य जुहुयात्" इत्यनेन दध्नः इन्द्रियं फलं, अग्निहोत्रस्य तु स्वर्गः फलमिति फले वैषम्यादित्यर्थः ।

३. क्रियायां गुणेभूतं इति देवतादर्शनं द्रव्यत्यागा योगः तत्र देवता गुणः ।

**परिस्पन्दात्मिका वृत्तिः श्रोत्रादिष्वपि विद्यते । प्राणस्यार्थेन्द्रियाणां तु शब्दाद्यर्थावलेहिनी ।।१६।।
शब्दादिग्राहिणी वृत्तिः स्वैरासङ्गात्मपाप्मभिः । दूषिता न परिस्पन्दो दूरं मृत्युरसोस्ततः ।।१७।।
मृत्युर्दूरं यथा प्राणात्तदात्मत्वात्तथाऽऽसुरः । तद्विदश्च भवेन्मृत्युर्दूरमित्युपदिश्यते ।।१८।।**

**मू.—सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमपहत्य यत्राऽऽसां दिशामन्तस्तद्गमयांचकार । तदासां पाप्मनो विन्यदधात्तस्मान्न जनमियान्नान्तमियान्नेत्पाप्मानं मृत्युमन्ववायानीति ।।१०।।**

**दिशामन्त इह ग्राह्यो मध्यदेशोपलक्षितः । अनन्ताकाशदेशत्वान्नाञ्जसाऽन्तो दिशां यतः ।।१९।।
श्रुतिस्मृतिसदाचारसंस्कृताशयवज्जनम् । अवधीकृत्यान्तत्वोक्तेर्नतु दोषो मनागपि ।।२०।।
मध्यदेशावधिस्तस्माद्दिगन्त इति गृह्यते ।**

चक्षुरादीति । **प्राकृताज्ज्ञानात्कर्मणश्च यश्चक्षुरादौ परिच्छेदोऽभिमानविशेषो वृत्तस्तस्याध्यात्मैकरूपस्य पिण्डमात्रे स्थितस्य शास्त्रोत्थादपरिच्छिन्नप्राणाभिमानाद्बाधो युक्त इति योजना** ।।२१५।।

प्राणस्य पापासंबन्धे तदभिमानिनस्तदात्मकस्यापि पापासम्बन्धसिद्धिः **न च प्राणस्य तदसम्बन्धोऽसिद्धः, प्राणत्वादितरप्राणवत्तत्सम्बन्धानुमानादित्याशङ्क्याऽऽह**—परिस्पन्देति । प्राणस्य **चलनरूपा वृत्तिरपरिच्छिन्ना सर्वदेहव्यापिनीति न पापदूषितेत्यर्थः** । प्राणान्तरवृत्तिरपि **तथैवेत्याशङ्क्ते**—अथेति । **तुशब्देन शङ्कां व्यावर्तयन्नाह**—इन्द्रियाणां त्विति । **वागादीनां शब्दादिग्राहिणी वृत्तिस्तन्मात्रं गोचरयति । नहि वाचा दर्शनं चक्षुषा वा वदनं तथा च परिच्छिन्नैव तद्वृत्तिरित्यर्थः । तथाऽपि पाप्मस्पर्शास्पर्शयोरुभयत्र तुल्यतेत्याशङ्क्य परिच्छेदस्य पाप्मफलत्वात्तद्दूषिता परिच्छिन्ना वागादिवृत्तिरित्याह**—स्वैरिति । **धर्मफलत्वादपरिच्छेदस्य प्राणवृत्तिरपरिच्छिन्ना न पापदूषितेत्याह**—नेति । **एवमनुमानासंभवे प्राणस्य पापसम्बन्धाभावं फलितमाह**—दूरमिति ।।२१६–२१७।।

**पापासम्बन्धं प्राणस्योक्त्वा तद्विदोऽपि तं निगमयति**—मृत्युरिति । **यथा पूर्वोक्तन्यायात्प्राणादासङ्गरूपो मृत्युर्दूरे भवति तथा तद्विदोऽप्यसौ दूरे स्याद्विदुषः सदा तद्भावनया तदात्मत्वादतो दूरमित्यादिफलोक्तिरविरुद्धेत्यर्थः** ।।२१८।।

**सा वा एषेत्यादेरपहत्येत्यन्तस्य स्पष्टतां दृष्ट्वा यत्राऽऽसामित्यादौ दिशामन्त इत्यस्यार्थमाह**—दिशामिति । **इह वाक्ये दिक्शब्देन मध्यदेशो[1] गृह्यते । तेनोपलक्षितो व्यावर्तितस्तदन्तस्तद्व्यतिरिक्तो देश इत्यर्थः । प्राच्यादीनां दिशामवसानमेव दिगन्तपदवाच्यं किं न गृह्यते तत्राऽऽह**—अनन्तेति । **अतः पूर्वोक्त एव दिशामन्त इति शेषः** ।।२१९।।

**आर्यावर्तः[2] पुण्यभूमिर्मध्यं विन्ध्यहिमागयोरितिप्रसिद्धमध्यदेशस्य मध्यदेशशब्देन ग्रहे तदितरदेशमात्रस्य पापीयस्त्वं प्रामाणिकप्रसिद्धिविरुद्धमित्याशङ्क्याऽऽह**—श्रुतीति । **शास्त्रप्रसिद्धानिन्दिताचारसंस्कृतमनोजनो मध्यदेशः प्रसिद्धस्यापि तदधिष्ठितत्वेन मध्यदेशत्वात्तत्राप्यन्त्यजाधिष्ठितदेशस्य पापीयस्त्वस्वीकारादतस्तज्जनं तदधिष्ठितं च देशमवधिं कृत्वा तदितरजनस्य तदध्युषितदेशस्य चान्तत्वोक्तेर्मध्यदेशादन्यो देशो दिशामन्त इत्युक्ते कुतो विरोध इत्यर्थः** ।।२२०।।

---

१. मध्यदेशः आर्यावर्तः पुण्यभूमिर्मध्यं विन्ध्यहिमागयोरित्युक्तेः विन्ध्यहिमालयमध्यदेश इत्यर्थः ।

२. "विन्ध्यस्य दक्षिणे भागे कलौ वासः प्रशस्यते ।
तत्र वेदाश्च यज्ञाश्च यत्र गोदावरी नदी ।।"
इति स्मृत्यन्तरविरोधमाशङ्क्याह—श्रुतीति—( न्या० )

प्रात्यन्तिकजनोद्देशः पापीयोजनसंश्रयात् । वर्ज्यतेऽतः प्रयत्नेन तद्विद्भिरधुनातनैः ।।२२१।।
तेषु प्रत्यन्तदेशेषु तन्निवासिषु चाऽऽसुरान् । यतो विन्यदधात्प्राणस्तस्मात्तद्वर्जयेद्द्वयम् ।।२२२।।
जनो विशिष्टो देशेन देशो जनविशेषितः । पाप्मोपस्पृष्टमुभयं शिष्टास्तद्वर्जयन्त्यतः ।।२२३।।
समाहारोऽथवा भेदो नेदित्येतत्पदं भवेत् । अनीप्सितानिवृत्तिः स्यात्समाहारेऽविवक्षिते ।।२२४।।
इत्थं न चेदहं कुर्यां प्रतिषेधश्रुतीरितम् । अन्ववायानि पाप्मानं प्रतिषेधातिलङ्घनात् ।।२२५।।
इति भेदविवक्षायां व्याख्या कार्या पदद्वये । माङर्थस्तु तथाऽभेदे व्याख्येयः प्रतिषेधकृत् ।।२२६।।
सामान्यविषयश्चायं निषेधो नानविद्रतः । बलवत्प्रक्रियातो हि वाक्यं सामान्यमात्रगम् ।।२२७।।

मू.—सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमपहत्याथैना मृत्युमत्यवहत् ।।११।।

तर्हि मध्यदेशशब्दस्यानेकार्थतेत्याशङ्क्याऽऽह—मध्येति । यस्मादुक्तो विशिष्टो जनो मध्यदेशस्तदधिष्ठित-देशस्तूपचारात्तस्मात्तदितरो जनस्तदाश्रयो देशश्चास्मिन्वाक्ये दिगन्तो ग्राह्य इत्यर्थः । यथोक्तस्य दिगन्तत्वेऽपि किमायातमित्याशङ्क्य तस्य विशिष्टैस्त्याज्यत्वमित्याह—प्रात्यन्तिकेति । प्रत्यन्तो दर्शितो मध्यदेशातिरिक्तो म्लेच्छदेशस्तन्निवासिना जनेनोद्दिश्यते स्वनिवासत्वेनाधिष्ठीयते यो देशः स प्रचुरपापवतां दुर्जनानामाश्रयत्वा-द्विवेकिभिर्वर्तमानैरपि शिष्टैः सर्वात्मना त्यज्यते किं पुनः पूर्वैरित्यर्थः । अतःशब्दस्य पूर्वपञ्चम्या संबन्धः ।।२२१।।

उक्तेऽर्थे हेतुत्वेन तदासामित्यादि योजयति—तेष्विति । आसुरान्पाप्मन इति शेषः ।।२२२।।

द्वयमित्यस्यैवार्थं विशदयति—जन इति । तस्य त्याज्यत्वे पूर्वोक्तं हेतुं स्मारयति—पाप्मेति । पाप-स्पृष्टत्वात्तदुभयं विशिष्टा यतो वर्जयन्त्यतोऽन्यैरपि यत्नेन त्याज्यमित्याह—शिष्टा इति ।।२२३।।

नेदित्यादेरर्थं वक्तुं विभागमाह—समाहार इति । पदद्वयपक्षे विवक्षितमर्थमाह—अनीप्सितेति । यदा पदमखण्डमविवक्षितं नञ्पदमित्पदं चेति पदद्वयमिष्टं तथा सत्यनीप्सितस्यानिष्टस्यानिवृत्तिर्वाक्यार्थः स्यादि-त्यर्थः ।।२२४।।

तत्र वाक्यं योजयति—इत्थमिति । "तस्मान्न जनमि"त्यादिनिषेधवाक्योक्तं निषेधश्रुत्यनुसारेण यदि न पालयेयं तदा निषेधातिक्रमात्पापमनुगच्छेयं तच्चानिष्टमिति निषेधवाक्यार्थपालनं कार्यमित्यर्थः ।।२२५।।

भेदविवक्षायां पदद्वये सत्येव निषेधवाक्यसंबन्धेनास्य वाक्यस्य व्याख्येति निगमयति—इति भेदेति । अखण्डपक्षे तु माङर्थो निषेधको नेच्छब्दो व्याख्येयस्तथा सति मा पाप्मानमनुगतः स्यामिति मत्वा निषेधवाक्यार्थं रक्षेदित्याह—माङर्थस्त्विति ।।२२६।।

प्राणोपास्तिप्रकरणे निषेधश्रुतेस्तेनैवायं निषेधोऽनुष्ठेयो न सर्वैरित्याशङ्क्याऽऽह—सामान्येति । अन-वित्प्राणवित्, तदुपासितेति यावत् । प्रकरणात्प्राणविद्विषये निषेधे गम्यमाने कथं तस्मान्न जनमित्यादिवाक्यात्तस्य सामान्यविषयतेत्याशङ्क्य श्रुतिलिङ्गादिसूत्रे प्रकरणाद्वाक्यस्य बलवत्त्वनिश्चयादित्याह—बलवदिति । अस्यार्थः—श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात् । अत्र वाक्यप्रकरणयोर्विरोधोदाहरणं—दर्शपौर्णमासयोः सूक्तवाकनिगदे सन्ति पौर्णमास्यमावास्यादेवतावाचीनि पदानि "अग्नीषोमाविदं हविरजुषेता-मिन्द्राग्नी इदं हविरजुषेतामि"त्यादीनि । तत्र किमेष मन्त्रवर्णः पौर्णमास्याममावास्यायां च द्विः प्रयोक्तव्यः किंवा यस्य येनैकवाक्यता स तत्रेति संशये वाक्यप्रकरणयोस्तुल्यबलत्वाद्वाक्यादात्मीयस्य प्रयोगः प्रकरणाच्चेतरस्येति कृत्स्नस्यैव मन्त्रस्योभयत्र प्रयोग इति पूर्वपक्षे शाब्दैकवाक्यभावस्य शीघ्रभावित्वात्प्राकरणिकविनियोगस्य काल्पनिकत्वेन विप्रकृष्टत्वाद्वाक्यस्य बलीयस्त्वान्न प्रकरणादुभयत्र विनियोग इति तृतीये स्थितम् । तथाच प्रकृतेऽपि प्रकरणात् वाक्यस्य बलीयस्त्वात्ततो निषेधस्य सामान्याधिकृतमात्रविषयता युक्तेति ।।२२७।।

१. प्रकरणं प्राणोपासकस्य, वाक्यं सर्वस्य तयोः समवाये परस्य प्रकरणस्य दौर्बल्यं दर्शपूर्णमासप्रकरणे मलवद्वाससो व्रतकलापविधानवत् ( न्या० )

मू.—स वै वाचमेव प्रथमामत्यवहत्। सा यदा मृत्युमत्यमुच्यत सोऽग्निरभवत्। सोऽयमग्निः परेण मृत्युमतिक्रान्तो दीप्यते ॥१२॥

अथ प्राणमत्यवहत्। स यदा मृत्युमत्यमुच्यत स वायुरभवत्। सोऽयं वायुः परेण मृत्युमतिक्रान्तः पवते ॥१३॥

अथ चक्षुरत्यवहत्। तद्यदा मृत्युमत्यमुच्यत स आदित्योऽभवत्। सोऽसावादित्यः परेण मृत्युमतिक्रान्तस्तपति ॥१४॥

अथ श्रोत्रमत्यवहत्। तद्यदा मृत्युमत्यमुच्यत ता दिशोऽभवँस्ता इमा दिशः परेण मृत्युमतिक्रान्ताः ॥१५॥

अथ मनोऽत्यवहत्। तद्यदा मृत्युमत्यमुच्यत स चन्द्रमा अभवत्। सोऽसौ चन्द्रः परेण मृत्युमतिक्रान्तो भात्येवँ ह वा एनमेषा देवता मृत्युमतिवहति य एवं वेद ॥१६॥

वागादीनामग्न्यादिभावफलम्

आसुरेणावरुद्धांस्तान्वागादीन्हतपाप्मनः । देवत्वं प्रापयत्प्राणः कथमित्येतदुच्यते ॥२८॥
ज्ञानतोऽज्ञानहानिः स्याद्देवत्वं भावनाबलात्। आनन्तर्ये क्रियाद्वित्वादथशब्दो भवेद्ध्रुवम् ॥२९॥
मृत्युमत्यवहत्प्राणः सामान्योक्तेर्विशेषतः। विशिष्टदेवतावाप्तिर्वागादीनां प्रपञ्च्यते ॥३०॥
नेदीयसी यतोऽन्येभ्यो वागेवोद्गीथकर्मणि। प्राणस्य तेन सोद्गातुः प्रथमेत्यभिधीयते ॥३१॥
वागाद्यग्न्याद्यवाप्त्यैवं पाप्मनोऽपास्य सर्वतः। वैराजं पदमेत्येवं यजमानः सुभावितः ॥३२॥
कल्याणासङ्गसंबन्धाद्वागाद्यधर्मकारणम् । त्यक्त्वाऽनं मुख्यमात्मानमाश्रयेन्मृत्युवर्जितम् ॥३३॥

प्राणोपास्तेरुक्तं पापक्षयफलमङ्गीकृत्याग्न्यादिदेवताप्तिफलमाक्षिपति—आसुरेणेति। वागादिषु स्थितेषु नष्टेषु च तेषां देवत्वप्रापणं प्राणस्याशक्यमिति भावः। स्थितेष्वेव तेषु वस्तुतो देवतात्मसु परिच्छेदाभिमानप्रतिबन्धध्वस्तिमात्रेण देवत्वप्रापणं प्राणस्य संभवतीत्येतदनन्तरग्रन्थेनोच्यत इत्याह—एतदुच्यत इति ॥२२८॥

अथेत्याद्यवतारितं वाक्यं व्याकरोति—ज्ञानत इति। ध्येयज्ञानात्तदज्ञाननाशस्ततस्तस्मिन्भावनाप्रकर्षाद्ध्येयदेवताभावः। एवं ज्ञानभावनाक्रिययोर्भेदाज्ज्ञानानन्तर्येऽर्थे प्रयुक्तोऽथशब्दः। ततो भावनासामर्थ्यादुपासकोपाधिभूतवागादिदेवता मृत्युमतीत्याग्न्यादिभावमुपासकात्मा भवन्प्राणो नीतवानित्यर्थः। उक्तेऽर्थे निश्चयो ध्रुवमित्युच्यते ॥२२९॥

पूर्ववाक्येनैव वागादीनामग्न्यादिभावस्योक्तत्वादुत्तरवाक्यवैयर्थ्यमित्याशङ्क्यार्थभेदमाह—मृत्युमिति। वागादिदेवता मृत्युं पाप्मानमतीत्याग्न्यादिभावं प्राणः प्रापयति स्मेति सामान्येन तासां देवताभावस्योक्तत्वाद्वाचोऽग्नित्वं प्राणस्य वायुत्वमित्यादिविशेषणविशिष्टदेवतारूपताऽनन्तरग्रन्थेन विव्रियत इत्यर्थः ॥२३०॥

स वै वाचमेव प्रथमामित्यत्र वाचः प्राथम्यं प्राधान्यं तत्कथमित्याशङ्क्याऽऽह—नेदीयसीति। औद्गात्रे कर्मणि साधकतमत्वेन प्राणस्योद्गातुरत्यन्तसंनिहितत्वात्करणान्तरेभ्यो वाचः प्राधान्यमित्यर्थः ॥२३१॥

वागादीनामग्न्याद्यात्मावप्युपासकस्य किमायातं नहि तदेव तस्य फलमित्याशङ्क्याऽऽह—वागादीति। देवतात्वप्रतिबन्धकान्पाप्मनः सर्वान्निरस्योक्तवर्त्मना वागादीनामुपासकोपाधिभूतानामग्न्याद्याप्त्यैव सोऽपि सदा प्राणमात्मत्वेन ध्यायन्भावनाबलाद्वैराजं प्राणाख्यं पदं पूर्वयजमानवदाप्नोतीत्यर्थः ॥२३२॥

प्रकरणार्थं संक्षिपति—कल्याणेति। अधर्मस्य कारणं, स वा कारणमस्येति तथोक्तम्। मुख्यप्राणाश्रयणं तस्मिन्विशेषणत्रयविशिष्टं ध्यानं, तत्र हेतुमाह—मृत्युवर्जितमिति ॥२३३॥

वागाद्यैः पञ्चभिर्युक्तं विराजं साधिभौतिकम् । हित्वाऽध्यात्मपरिच्छेदं ततस्तं प्रतिपद्यते ॥३४॥
साधिभूताधिदैवं च नामरूपक्रियात्मकः । सूत्रं प्राणोऽङ्गिराः सत्यमृक्सामेत्यन उच्यते ॥३५॥
तमेकं सर्वभूतेषु ज्ञानकर्मफलाश्रयम् । आस्वभावात्मविज्ञानाद्युपास्ते यः स तं व्रजेत् ॥३६॥

मू.—अथात्मनेऽन्नाद्यमागायद्यद्धि किंचान्नमद्यतेऽनेनैव तदद्यते । इह प्रतितिष्ठति ॥१७॥

मुख्यप्राणस्य स्वात्मने आगानम्

उक्तमभ्युदयार्थं यद्वागादीनामथाधुना । आगानमवशिष्टेषु स्तोत्रेषूद्गातुरुच्यते ॥३७॥
सामान्यभोज्यविषयस्त्वन्नशब्दो यतस्ततः । आद्यमित्युच्यते तस्य विशेषणतया वचः ॥३८॥
यत आदाविदं वृत्तमन्नागानमनात्मनि । तस्मात्तत्कार्यभूतासु प्रजास्वद्यापि दृश्यते ॥३९॥
यद्धि किंचेति सर्वार्थमेवेत्यत्रावधारणम् । प्राणेनैव तु तत्सर्वं लोकोऽन्नं ह्यत्ति सर्वदा ॥४०॥
अन्नोपकारः सर्वेषामविशिष्टः समीक्ष्यते ॥४१॥
अथावधारणं कस्मादनेनैवेति भण्यते । प्राणद्वारक एवैषामुपकारो न तु स्वतः ॥४२॥

वागादीनपास्य मुख्यं प्राणमाश्रयेदित्युक्तत्वात्तेषां सर्वथाऽनुपास्यत्वप्राप्तावुक्तं वागाद्यैरिति । पञ्चभिरिति तेषामेव पाठापेक्षयोक्तं त्वगादिभिरित्यपि द्रष्टव्यम् । मुख्यप्राणस्य मृत्युवर्जितत्वार्थं विशिनष्टि—विराजमित्यादिना । साध्यात्मिकमित्यपि द्रष्टव्यम् । सर्वजगदात्मकमिति यावत् । आश्रयेदिति संबन्धः । अपरिच्छिन्नप्राणध्याने फलं "तं यथा यथे"त्यादिश्रुतिसिद्धमाह—तत इति ॥२३४॥

तस्यापि वागादिवत्परिच्छिन्नत्वात्कथं तदुपासितुरपरिच्छिन्नफलामिरित्याशङ्क्य प्राणस्यापरिच्छिन्नत्वं विराजमित्यादौ सूचितं साधयति—साधिभूतेति। नपुंसकं सूत्रेणाध्याहृतप्रपञ्चेन च पुमान्संबध्यते। अध्यात्माधिदैवाधिभूतसहितं त्र्यात्मकं जगत्प्राणोऽभिधीयते श्रुतावित्यर्थः । तत्र क्रियात्मत्वं पदद्वयेनाऽऽह—सूत्रमिति। रूप-रूपत्वं पदाभ्यामाह—अङ्गिरा इति। नामात्मत्वमाह—ऋगिति। ऋक्सामयोर्ग्रहणं यजुषामुपलक्षणम् ॥२३५॥

प्राणस्यापरिच्छेदमुक्त्वा तदुपासितुस्तत्प्राप्तेरपरिच्छिन्नता युक्तेति फलितमाह—तमेकमिति। आश्रयशब्दः स्वरूपवाची तात्पर्यावसानभूमिविषयो वा। स्वभावे प्राणात्मन्यहमस्मीत्यभिमानज्ञानाविर्भावपर्यन्तमित्युपास्तेरवधिमाह—आस्वभावेति ॥२३६॥

अथाऽऽत्मनेऽन्नाद्यमित्यादेर्वृत्तमनूद्य तात्पर्यमाह—उक्तमित्यादिना। वागाद्युपाधिकस्य यजमानस्य यदभ्युदयार्थमागानं तत्त्रिषु पवमानेषूक्तमित्यनुवादार्थः। अधुनेत्यथशब्दार्थः। नवसु स्तोत्रेष्वागानसाध्यं फलमार्त्विज्यमेव वचनादित्याह—आगानमिति ॥२३७॥

अन्नाद्यशब्दयोरेकार्थतया पुनरुक्तिमाशङ्क्यार्थभेदमाह—सामान्येति। तस्यैव संस्कृतत्वं विशेषणेन विवक्षितम् ॥२३८॥

न केवलं प्रजापतावन्नस्वीकारे श्रुतिरेव मानं किंतु कार्यभूतप्राणिष्वन्नस्वीकारं दृष्ट्वा कारणेऽपि तदनुमेयं कारणानुसारित्वात्कार्यस्येत्याह—यत इति। अनात्मनि प्राणात्मनीत्यर्थः। दृश्यते स्वार्थमन्नस्वीकरणमिति शेषः ॥२३९॥

यद्धीत्यादिवाक्यस्थपदानि व्याचष्टे—यद्धीति। वाक्यार्थमाह—प्राणेनेति। प्राणद्वारकमेवान्नात्तृत्वं लोकस्यान्वयव्यतिरेकसिद्धमिति हिशब्दार्थः ॥२४०॥

इह प्रतितिष्ठतीत्यस्य शङ्कामाह—अन्नेति। प्राणेनैवाद्यते सर्वमन्नमित्यवधारणमयुक्तं वागादीनामप्यन्ननिमित्तोपकारदृष्टेरिति चोद्यं दूषयति—भण्यत इति ॥२४१–२४२॥

कथं तद्द्वारकस्तेषामुपकार इतीर्यते ।
ननु दूरिति हि प्राण उक्तो वागादिवत्कथम् । आत्मार्थान्नाद्यसंगीतेर्विद्धो नाऽऽसुरपाप्मभिः ॥४३॥
स्थितिमात्राभिसंबन्धान्नायं दोष इहेष्यते ॥४४॥
असावन्नं स्थितं यस्माद्देहं प्राणानवत्यतः । यत्नाच्छ्रुतिरतो वक्ति त्विहान्नं प्रतितिष्ठति ॥४५॥
स्थितिमात्रं ह्यसोरन्नं यद्वाऽऽसङ्गो न शङ्क्यते ।
भर्ता श्रेष्ठः पुरो गन्ता ह्यन्नादोऽधिपतिस्तथा । इत्यादिगुणविध्यर्थं परो ग्रन्थोऽवतार्यते ॥४६॥

मू.—ते देवा अब्रुवन्नेतावद्वा इदँ सर्वं यदन्नं तदात्मन आगासीरनु नोऽस्मिन्नन्न आभजस्वेति ते वै माभिसंविशतेति तथेति तँ समन्तं परिण्यविशन्त । तस्माद्यदनेनान्नमत्ति तेनैतास्तृप्यन्त्येवँ ह वा एनँ स्वा अभिसंविशन्ति भर्ता स्वानाँ श्रेष्ठः पुर एता भवत्यन्नादोऽधिपतिर्य एवं वेद य उ हैवंविदँ स्वेषु प्रति प्रतिर्बुभूषति न हैवालं भार्येभ्यो भवत्यथ य एवैतमनु भवति यो वैतमनु भार्यान् बुभूर्षति स हैवालं भार्येभ्यो भवति ॥१८॥

प्राणेनेतरेषामन्नविभजनम्

अयं गुणविधिर्ज्ञेयः प्रत्येकं तत्फलश्रुतेः ॥४७॥
जग्धमन्नं यतो देहलिङ्गभावेन याति नः । परिणामं व्रजत्तस्मादेतावदिति भण्यते ॥४८॥
त्वयैवाऽऽत्मार्थमागीते त्वय्येवान्नमतोऽखिलम् । वयं चान्नमृते स्थातुं नालं क्षणमपीश्वर ॥४९॥

वागादीनामन्नकृतोपकारो न प्राणद्वारको नियामकाभावादिति शङ्कते—कथमिति । तत्र नियामकत्वेन अनन्तरवाक्यमादत्ते—इतीर्यत इति । तस्यैव शङ्कान्तरमाह—नन्विति । यथा वागादयः स्वार्थागानादासङ्गपाप्मविद्धास्तथा प्राणोऽपि स्वार्थमन्नाद्यागानात्कथमासुरपाप्माविद्धः । न चास्तु तस्यापि तद्वेधो, दूरित्युक्तत्वादित्यर्थः ॥२४३॥

इह प्राणे पाप्मवेधो दोषो नोद्भाव्यः सर्वसाधारणस्थित्यर्थतया तेनान्नस्वीकारात्प्राणस्थित्यधीना हि वागादिस्थितिरित्यात्मविशेषणमिति मत्वा परिहरति—स्थितीति । वागादीनामन्ननिमित्तोपकारस्य प्राणद्वारकत्वाद्युक्तमवधारणमित्याद्ये पक्षे वाक्यं योजयति—असाविति । असाविहशब्दार्थे, प्राणे स्थितं सदन्नं स्थूलं देहमितरांश्च प्राणान्पालयति तस्मादिहेत्याद्या श्रुतिरन्नं प्राणे प्रतिष्ठितमिति तात्पर्येण वक्ति तद्वागादीनां प्राणसंबन्ध्यन्नाधीनस्थितित्वादवधारणमित्यर्थः ॥२४४-२४५॥

सर्वसाधारणस्थित्यर्थान्नयोगात्प्राणस्य पाप्मवेधो नेत्यस्मिन्द्वितीये पक्षे वाक्यं विभजते—स्थितीति । इहान्ने देहाकारपरिणते प्राणस्तिष्ठति तदनुसारिणश्च वागादयः स्थितिभाजोऽतः स्थित्यर्थं प्राणस्यान्नमिति तस्मिन्न पाप्मवेध इत्यर्थः । ननु विधिप्रभेदस्य प्रागेवोक्तत्वात्किमुत्तरग्रन्थेनेत्याशङ्क्याऽऽह—भर्तेति । ध्येये प्राणे यथोक्तगुणानां श्रुतिवशादपि प्रतिपत्त्यर्थो हिशब्दः । आदिपदेन स्वसुवर्णादिग्रहः । परो ग्रन्थः—ते देवा अब्रुवन्नित्यादिरथातः पवमानानामित्यतः प्राक्तनः ॥२४६॥

तत्र "ते देवा" इत्यादेः "सोऽयास्य" इत्यतः प्राक्तनस्य तात्पर्यमाह—अयमिति । तत्र हेतुः प्रत्येकमिति । एकैकस्मिन्गुणे विध्यनुकूलस्य प्रधानफलातिरिक्तस्य फलस्य दध्यादाविव श्रवणादिति हेत्वर्थः । अक्षराणि व्याकुर्वन्नेतावदित्यादेरर्थमाह—जग्धमिति । अस्माकं हि भुक्तमन्नं कालादिना पाकं गच्छद्देहद्वयस्थापकत्वेन तिष्ठति । तस्माद्देहद्वयस्थितिकरमेवान्नं नान्यदस्तीत्यर्थः ॥२४७-२४८॥

तदात्मन आगासीरित्यस्यार्थमाह—त्वयेति । आत्मार्थमेव यथा तथाऽन्नागाने त्वया कृते त्वय्येव स्थितिकरं

सन्तर्प्यातः स्वमात्मानमन्नेनास्मानपीश्वर । आभाजयस्व क्षुधितांश्छान्दसत्वाण्णिचोऽश्रवः ॥५०॥

मामृतेऽन्नं न वः शक्तं पोष्टुं क्षणमपि क्वचित् । अन्नार्थिनोऽतो मां सर्वेऽप्यभिसंविशताऽऽशु वै ॥५१॥

प्राणभुक्तान्नेन सकलेन्द्रियतर्पणोपपत्तिः

तेनैता देवताः सर्वास्तृप्यन्त्यन्नेन सर्वशः । इत्यर्थस्य कुतः सिद्धिरिति चेदुच्यते यतः ॥५२॥

त्रिधा जग्धं भवत्यन्नं परिणामविशेषतः । स्थवीयान्मध्यमोऽणीयानित्येवं कालतोऽग्नितः ॥५३॥

स्थवीयान्यात्यधोभागो रसादिक्रमशोऽपरः । स्थूलं ह्युपचिनोतीमं कुड्यं मृत्स्नेव सर्वदा ॥५४॥

यस्त्वणीयान् रसः सूक्ष्मः स ऊर्गमृतमुच्यते । नाडीः सूक्ष्माः प्रविश्यासौ देवताः प्रीणयत्यथ ॥५५॥

स्वाम्यर्थ एव चोत्तम्भस्तृप्तिरापूर उच्यते । ततस्तु या सुखोद्भूतिर्विज्ञानात्मन एव सा ॥५६॥

तदखिलं स्यादतोऽस्माकं तद्धेत्वन्नासिद्धिरित्यर्थः । मा भूद्भवतामन्नमथ च स्थितिरात्मवदित्याशङ्क्याऽऽह—वयं चेति । पादप्रसारणन्यायं[1] वारयति- -क्षणमपीति । स्वामिनि भृत्येनाऽऽत्मीयाऽऽपन्निवेद्येति लौकिकन्यायं सूचयति—ईश्वरेति ॥२४९॥

"अनु नोऽस्मिन्नि"त्यादेरर्थमाह—संतर्प्येति । अन्नं विनाऽवस्थातुमशक्यत्वमतः शब्दार्थः । स्वयमेव भवन्तो भागमन्नस्य भजन्तामित्याशङ्क्य स्वामितन्त्रत्वादस्माकं नैवमित्याह—ईश्वरेति । अनुग्राह्यतां द्योतयति—क्षुधितानिति । आभजस्वेति श्रूयमाणे कथमन्यथार्थकथनमिति तत्राऽऽह—छान्दसत्वादिति ॥२५०॥

"ते वै माऽभिसंविशते"त्यस्यार्थमाह—मामिति । किमुवक्तव्यत्वन्यायं वक्तुं क्षणमपीत्युक्तम् । क्वचिदिति देहोक्तिः । स्वातन्त्र्येणान्नस्य वागादिपोषकत्वासम्भवोऽतःशब्दार्थः । संवेशनस्य विचारानपेक्षत्वमाशुशब्देनोच्यते । वैशब्दोऽवधारणे । त्यक्तप्राणस्यान्नबलाद्वागादिस्थित्यनुपलब्धेरन्नार्थिनां तेषां प्राणं परिवेष्ट्यावस्थानमित्यर्थः ॥२५१॥

तथेत्यादेः स्पष्टत्वात्तेनेत्यत्र शङ्कते—तेनेति । प्राणद्वारा लोकेन यदन्नं भुक्तं तेन सर्वा देवता वागाद्याः सदा तृप्यन्तीत्ययुक्तम् । न हि चैत्रे भुक्तवति मैत्रस्तृप्यतीत्यर्थः । श्रुतिभाष्याभ्यां बहिरेव समाधत्ते—उच्यत इति । यस्मात्प्रकाराद्युक्तार्थसिद्धिः स प्रकार उच्यत इति योजना ॥२५२॥

"अन्नमशितं त्रेधे"त्यादिश्रुत्यन्तरमनुसरन्भुक्तिप्रकारं प्रकटयति—त्रिधेति । त्रैविध्ये हेतुमाह—परिणामेति । त्रैविध्यमुदाहरति—स्थवीयानिति । पाकहेतुमाह—कालत इति ॥२५३॥

उक्तानां भुक्तान्नभागानां विनियोगविशेषं प्रकृतोपयोगित्वेन वदन्नादौ स्थवीयसो भागस्य पुरीषत्वेनाधोगतिमाह—स्थवीयानिति । मध्यमो भागस्त्वगादिक्रमेण स्थूलदेहोपचयं करोतीत्याह—रसादीति । स्थूलदेहस्यान्नोपचितत्वे प्रसिद्धिं प्रमाणयितुं हिशब्दः । कश्च स्थूलो देह इत्यपेक्षायां प्रत्यक्षतया तस्य सुज्ञानत्वमाह—इममिति । सर्वदेति क्रियापदेन सम्बध्यते । उपचये दृष्टान्तमाह—कुड्यमिति । प्रशस्ता संस्कृता मृन्मृत्स्नोच्यते ॥२५४॥

तृतीयान्नभागरूपमाह—यस्त्विति । श्रुतिस्मृतिष्वमृतादिशब्दितस्याणीयसो भागस्य कार्यमाह—नाडीरिति । देवताशब्देन वागादयो गृह्यन्ते । न केवलं द्वासप्ततिसहस्रनाडीप्रवेशमात्रं किन्त्वसौ प्रविश्य देवताप्रीतिमपि करोतीत्यपिशब्दार्थेऽथशब्दो व्याख्येयः ॥२५५॥

अणिष्ठो रसो नाडीरनुप्रविश्य करणसमुदायं प्रीणयतीत्युक्तम् । इदानीमन्नरसेनाऽऽत्मनोऽपि प्रीतिदर्शनात् तद्वत्तस्य भौतिकत्वापत्तिरित्याशङ्क्याऽऽह—स्वामीति । कार्यकरणसंघातोऽत्र स्वामी तस्यार्थस्तावदन्ननिमित्त उत्तम्भः स्थितिरपतनं तुष्ट्युपचयौ च तन्निमित्तौ तदर्थावेव नाऽऽत्मनोऽन्नरसविकारनिमित्तं किंचित्कार्यं तत्कुतोऽस्य भौतिकत्वमित्यर्थः । अन्नप्रयुक्तमुत्तम्भादि कार्यकरणसंघातस्य चेत्तत्प्रयुक्तं सुखमपि तस्यैवेति

१. पादप्रसारणन्यायः—भिक्षुपादप्रसरणन्यायः । यथा भिक्षुकस्य पादप्रसारणमात्रपर्याप्ते गृहप्रदेशे दत्ते सः कृत्स्नं गृहं व्याप्नोति तथा न वयं कुर्म इत्यर्थः ।

ता एता देवताः सप्तदश ज्ञानक्रियात्मिकाः । सोऽयं सप्तदशग्रामो भोक्तुः करणलक्षणः ॥५७॥
बुद्धीन्द्रियाणि पञ्चैव तथा कर्मेन्द्रियाण्यपि । वायवः पञ्च बुद्धिश्च मनः सप्तदशं विदुः ॥५८॥
अपास्ताध्यात्मरूपाणां देवतानां समाश्रयः । भूतपञ्चकमेवेदं साधारण्याद्भवेत्सदा ॥५९॥
पयोम्भोवदिदं लिङ्गं नानारूपैः समन्वितम् । आविर्भावतिरोभावैः कारणात्मनि वर्तते ॥६०॥
कूटस्थबोधतन्मोहचिदाभासैकमात्रया । जाग्रत्स्वप्नावयं पीत्वा ह्यास्ते प्राणात्मना प्रभुः ॥६१॥
अपास्ताशेषबाह्यार्थस्तज्जवासनयाऽश्रितः । अध्वस्तप्रत्यगज्ञानो विरिञ्चः पर उच्यते ॥६२॥
जाग्रत्काले विशेषेण स्थित्वा हृदयसद्मनि । द्वासप्ततिसहस्राणि नाडीर्व्याप्यावतिष्ठते ॥६३॥
स एष परमात्मैव स्वात्ममोहसहायवान् । प्राणात्मना करोत्येष पश्यत्यग्न्यात्मना तथा ॥६४॥

तच्चैतन्यापत्तिः सुखस्य चेतनधर्मत्वादित्याशङ्क्याऽऽह—ततस्त्विति । अन्नोपयोगस्तत्प्रयुक्तोत्तम्भादिर्वा तच्छब्दार्थः अन्यस्याचेतनत्वेन सुखाद्यतनत्वायोगादित्यर्थः ॥२५६॥

अणिष्ठो रसो नाडीषु प्रविश्य यासां देवतानां प्रीतिमादधाति तासां रूपमाह—ता इति । सप्तदशसंख्याककरणग्रामस्य चेतनस्येव स्वातन्त्र्यमाशङ्क्याह—सोऽयमिति ॥२५७॥

तमेव सप्तदशसंख्याकं करणग्रामं भोक्तृशेषभूतं परिगणयति—बुद्धीति । त्वक्चक्षुःश्रोत्रजिह्वाघ्राणानि पञ्च बुद्ध्यर्थानि, वाक्पाणिपादपायूपस्थानि पञ्च कर्मेन्द्रियाणि, प्राणापानव्यानोदानसमाना वायवो, मनो बुद्धिरित्यन्तःकरणद्वयमिति सप्तदशको ग्रामो लिङ्गशरीरमित्युच्यते । इदं च लिङ्गशरीरं विवेकिनामेव शक्यज्ञानमित्याह—विदुरिति ॥२५८॥

देवताशब्देन करणग्रामग्रहे तस्य स्थूलदेहस्थत्वात्तन्नाशे निराश्रयस्यानवस्थानान्मुक्तिरित्याशङ्क्याऽऽह—अपास्तेति । स्थूलदेहनाशे निरस्तदेहाश्रयाणां वागादीनामपञ्चीकृतं भूतपञ्चकमेवाऽऽधारः स्यात्तस्य सर्वकार्यसाधारणत्वेन सर्वदा सर्वाश्रयत्वादित्यर्थः ॥२५९॥

भूतपञ्चकस्यापि कार्यत्वेन नाशित्वात्कथं तदाधारत्वं करणग्रामस्येत्याशङ्क्य मूलकारणमेव तर्हि तदाश्रय इत्याह—पयोम्भोवदिति । यथा पयसोऽम्भसश्च दध्यादिना हिमादिना च नानारूपत्वमेवमिदं सप्तदशकं लिङ्गं समष्टिव्यष्ट्यात्मकं नानाविधाकारोपेतं कालभेदेन व्यक्त्यव्यक्तिभ्यां मूलकारणे तिष्ठतीत्यर्थः ॥२६०॥

लिङ्गस्य मूलकारणस्थत्वेऽपि नाऽऽत्माधारत्वं प्रधानादेस्तथात्वान्नहि कूटस्थस्यात्मनस्तद्युक्तमित्याशङ्क्याऽऽह—कूटस्थेति । निर्विकारस्य चिदात्मनस्तादृगनिर्वाच्यो यो मोहस्तेन चिदाभासो यस्यां मोहशब्दितायामविद्यायां सा तथा, सा चैका दण्डायमानत्वेनानवच्छिन्ना सा च मीयमानशब्दादिनिदानतया तदात्मिका । तया स्थानद्वयं तद्गतकार्यं चोपसंहृत्यायमीशः स्वापे कारणात्मना वर्ततेऽतः साभासाविद्यावशादस्य कूटस्थस्यापि करणाधारता । न हि प्रधानादेः सा युक्ता तस्याचेतनस्य काष्ठादिसमत्वाच्चेतनतन्त्रत्वे चाज्ञानस्यैव संज्ञान्तरेण स्वीकारादिति भावः ॥२६१॥

परस्याविद्यया कारणात्मनाऽवस्थानेऽपि सूत्रस्यार्थान्तरत्वान्नाद्वैतमित्याशङ्क्याऽऽह—अपास्तेति । उपसंहृतसर्वानात्मवर्गस्य पुनरनात्मसर्जनं कथमित्याशङ्क्याऽऽह—तज्जेति । कार्यजनितसंस्कारयुक्तत्वं मुक्तस्यैव निरस्तबाह्यावस्थस्यापि न युक्तमित्याशङ्क्याऽऽह—अध्वस्तेति । उक्तरूपः परः सूत्रात्मेत्याह—विरिञ्च इति । उच्यते श्रुतिस्मृत्योरिति शेषः ॥२६२॥

सूत्ररूपेण परस्यैवावस्थानेऽपि विराजस्ततोऽन्यत्वादद्वैतासिद्धितादवस्थ्यमित्याशङ्क्याऽऽह—जाग्रदिति । यद्यपि जाग्रदभिमानी विश्वः शरीरे सर्वत्र वर्तते तथाऽपि हृदयदेशमन्यभिव्यक्तेस्तत्र विशेषेण स्थित्वा देहस्थमुख्यनाडीर्द्विसहस्राधिकसप्ततिसहस्रसंख्याका व्याप्य जाग्रत्काले स्थूलानर्थान्भुञ्जानोऽवतिष्ठते ततः स्थूलाभिमानी विश्वादिव्यपदेशः सन्परमात्मैव विराडात्मना तिष्ठतीति नाद्वैतहानिरित्यर्थः ॥२६३॥

तथाऽपि कर्तुर्ज्ञातुश्च परस्मादर्थान्तरत्वात्कुतोऽद्वैतमित्याशङ्क्याऽऽह—स एष इति । कारणत्वेन सूत्रत्वेन

इन्द्राग्नी ताविमावुक्तौ प्राण इन्द्रस्तयोर्मतः । प्रकाशकत्वाद्वागग्निरेवमेकः प्रजापतिः ॥६५॥
अत्त्राद्यभेदतो द्वौ वा यदि वाऽध्यर्ध उच्यते । यदि वाऽयं त्रयस्त्रिंशद्द्वासप्ततिरथापि वा ॥६६॥
अनन्तभेदभिन्नो वा एक एवान उच्यते । सर्वोऽप्येष विकल्पश्च पुनरेकैकशस्तथा ॥६७॥
देवासुरादिभेदेन जातिरूपक्रियागुणैः । एकैकोऽनन्ततां याति पुनरेकात्मतामतः ॥६८॥
समस्तव्यस्ततैवेह प्रत्यगज्ञानभूमिका । न त्वपास्तसमस्तान्ध्ये नेति नेति परात्मनि ॥६९॥
सर्वेणैव विकल्पेन यथोक्तेनावतिष्ठते । यथाधिकारं सर्वत्र परो जगति सर्वथा ॥७०॥
न हि कृत्स्नमनादाय जगदेतन्मनागपि । क्रियायै कारकं किंचित्तस्मात्सर्वात्मनेहते ॥७१॥

च प्रकृतो विराडात्मत्वेन च संनिहितः परमात्मैव प्राणरूपेण कर्ताऽग्निरूपेण ज्ञातेत्यर्थः । एकस्यैव परस्य कथं नानारूपत्वमेकत्वनानात्वयोर्विरोधादित्याशङ्क्य विशिनष्टि—स्वात्मेति ॥२६४॥

या काचिद्बलकृतिरिन्द्रकर्मैव तदित्युपगमादिन्द्रात्मना करोतीति वाच्ये प्राणात्मनेत्ययुक्तं वागादिद्वारा दृष्टिशक्तिप्रसिद्धेरग्न्यात्मना पश्यतीति चाश्लिष्टमित्याशङ्क्याऽऽह—इन्द्रेति । यावुक्तौ प्राणाग्नी ताविमाविन्द्राग्नी मन्तव्याविति योजना । अत्राग्निर्वागादिकरणग्रामः कथं प्राणाग्निपदप्रयोगे सतीन्द्रस्य करणग्रामस्य च ग्रहणं नहि घटपदात्पटं प्रतियन्ति तत्राऽऽह—प्राण इति । प्राणाग्न्योर्मध्ये प्राणोऽत्रेन्द्रः स च क्रियाशक्तिमद्भागः प्राणस्य बलवत्त्वात्तस्येन्द्रदेवताकत्वात्स इन्द्र इति वक्ष्यमाणत्वाच्चाग्निर्वागादिकरणग्रामो ज्ञानशक्तिमद्भागोऽग्नेर्वागादेश्च प्रकाशकत्वाविशेषादित्यर्थः । उक्तनीत्या क्रियाशक्तिमद्रूपेण कर्ता ज्ञानशक्तिमद्रूपेण ज्ञातेत्येकः परमात्मैव सूत्रदेहमापन्नः सन्कर्त्राद्यात्मना तिष्ठतीति न द्वैतप्रसक्तिरित्याह—एवमिति ॥२६५॥

तथाऽप्यत्त्रादिभेदस्य सत्त्वान्नाद्वैतमित्याशङ्क्य परस्यैव प्राणदेहस्य तद्रूपेणावस्थानमाह—अत्त्राद्येति । तथाऽपि कथमद्वैतमध्यर्धादिभेदानां श्रुतिस्मृतिप्रसिद्धेरित्याशङ्क्याऽऽह—यदि वेति । अध्यर्धमग्रे[1] व्युत्पादयिष्यति त्रयस्त्रिंशदित्यष्टौ वसव एकादश रुद्रा द्वादशाऽऽदित्या इन्द्रः प्रजापतिश्चेति प्राणस्य विभूतिरित्यर्थः । त्रयस्त्रिंशतो देवानामेवावान्तरभेदेन प्रकृतनाडीसंख्यामनुरुध्य द्वासप्ततिरित्युक्तम् ॥२६६॥

किमवान्तरसंख्यानिवेशेनासंख्यभेदवान्प्राण इत्याह—अनन्तेति । वस्तुतस्तु तस्यैक्यमित्याह—एक इति । संधौ त्वनादरः । प्राणे दर्शितं न्यायं सर्वेषु तद्भेदेष्वतिदिशति—सर्वोऽपीति । एष प्राणस्योक्तो भेदः सर्वोऽपि प्रत्येकं पुनः पुनरनन्तभेदभिन्नः स्यात्प्राणवदित्यर्थः । पुनःशब्दस्याभ्यासं द्योतयितुं चशब्दः ॥२६७॥

कथमेकैकस्यानन्तभेदभिन्नता तत्राऽऽह—देवेति । आदिशब्दो जात्यन्तरसंग्रहार्थः । कथं तर्हि प्राणस्यैकत्वं तदाह—पुनरिति । एकात्मतां यातीति संबन्धः । परस्यैव तत्तद्रूपेणावस्थानात्तदद्वयत्वमविरुद्धमित्युपसंहरति—अत इति ॥२६८॥

समस्तव्यस्तात्मकं ब्रह्मेति केचित्कथं तदैकरस्यमित्याशङ्क्याऽऽह—समस्तेति । प्रत्यगज्ञानाश्रिता समस्तव्यस्तता नानारसता प्राणात्मन्येवेत्यक्षरार्थः । ननु वास्तवी समस्तव्यस्तता परस्मिन्नेव किं न स्यात्तत्राऽऽह—न त्विति । नहि परस्मिन्नात्मनि नेति नेत्यस्थूलमित्यादिशास्त्रप्रत्युदस्ताविद्यातत्कार्ये समस्तव्यस्तता । न च सा वस्तुतोऽस्ति प्रज्ञानघनत्वावधारणविरोधादित्यर्थः ॥२६९॥

तर्हि सूत्रस्य परस्य च सर्वात्मत्वाद्द्वौ सर्वात्मानौ स्यातामित्याशङ्क्याऽऽह—सर्वेणेति । सर्वत्र जगति तत्तदधिकारस्थानमनतिक्रम्य परात्मैवोक्तानुक्तसर्वविशेषात्मना तिष्ठतीत्यतस्तस्यैव सर्वप्रकारेण स्थितिरिति कुतः सर्वात्मद्वयमित्यर्थः ॥२७०॥

परस्य सर्वरूपेणावस्थाने हेतुमाह—न हीति । कर्त्रादीनां मध्ये किंचिदपि कारकमेतज्जगदशेषमपि सहायत्वेनानादाय स्वव्यापारसंपादनाय नेहते । न हि वस्त्वन्तरे परिपन्थिनि वस्तुनः स्वव्यापारनिर्माणसंभवोऽतः

1. अध्यर्धः वायौ सति सर्वमृध्नोति तेन वायुरूपो हिरण्यगर्भः अध्यर्ध उक्तः अधि अर्धं यत्र स अध्यर्धः प्राण एको जगदर्धमित्यर्थः ( न्या० ) ।

**कारणात्मा जगत्कृत्स्नं श्रौतदर्शनसाधनः । यतः प्रागकरोत्कर्म तत्कार्येऽपि तथा ततः ॥७२॥**
**एकापूर्वप्रयुक्तत्वात्समस्तव्यस्तरूपिणाम् । सर्वः सर्वमुपादाय सर्वत्रातः प्रवर्तते ॥७३॥**
**अध्यात्माद्यधिभूताधिदैवतं सर्वदाऽखिलम् । सर्वं सर्वक्रियाः कुर्यादेकापूर्वप्रयुक्तितः ॥७४॥**
**यतः प्रजापतिः पूर्वमेतस्मिन्दर्शने स्थितः । यज्ञेन कर्मणाऽस्राक्षीज्जगदेतच्चराचरम् ॥७५॥**

प्रजापतेः पूर्वजन्मन्युपासनप्रकारनिरूपणम्

**नाड्योऽस्य रश्मयोऽनन्ता हृदयं मण्डलं रवेः । अहोरात्राणि तावच्च शतसंवत्सरायुषः ॥७६॥**
**एतया संपदा पूर्वं यजमानेन तद्विदा । अग्नयोऽर्काश्चिता आसन्षट्त्रिंशत्सहस्रशः ॥७७॥**
**एकैकस्मिन्परिस्पन्दः एवं सर्वाऽपि देवता । एका चानेकरूपा च ह्यध्यात्मादिविभागतः ॥७८॥**
**विभ्वी सर्वगताऽनन्ता समाप्ता च प्रतिक्रियम् । प्रतिद्रव्यफलं कृत्स्ना खण्डादौ गोत्ववत्स्थिता ॥७९॥**

सर्वत्र सर्वस्य कारणत्वात्परस्य मूलकारणस्य सर्वापेक्षया सर्वस्वकीयकार्यनिर्मातृत्वमेष्टव्यं न च तस्मादुपादानादुपादेयमन्यद्युक्तमारम्भणाधिकरणविरोधात्तस्मात्परः स्वकार्यनिर्माणे सर्वात्मना चेष्टत इत्यर्थः ॥२७१॥

सर्वं सर्वस्य कार्यं कारणं चेत्यत्रैव हेत्वन्तरमाह—कारणात्मेति । श्रौतं दर्शनं ध्यानं कर्म च तेन सर्वपदार्थपाद्येन हेतुना सहितः सूत्रात्मा सर्वं कर्म क्रियमाणं जगत्सर्वं सर्गादौ यस्मात्कृतवांस्तस्मात्तस्य कार्यवर्गे प्रजावर्गेऽपि तथा सर्वापेक्षया स्वकार्यनिर्माणं युक्तं कारणानुरूपत्वात्कार्यस्येत्यर्थः ॥२७२॥

सर्वं सर्वस्य कार्यं कारणं चेत्यत्रानुमानमाह—एकेति । एकस्य सूत्रस्यापूर्वं यजमानदशायामर्जितमदृष्टं तेन कृतत्वादनुवृत्तव्यावृत्तरूपसर्वविकाराणां सर्वो हेतुः स्वातिरिक्तं सर्वं सहकारित्वेन स्वीकृत्यैव सर्वत्र कार्ये प्रवर्तत उक्तहेतुवशादित्यक्षरार्थः । विमतं मिलित्वैव स्वकार्यं करोत्येकापूर्वप्रयुक्तत्वाद्धस्तादिवदिति भावः ॥२७३॥

तदेव व्यनक्ति—अध्यात्मेति । आदिपदेनाध्यात्ममावान्तरभेदग्रहः अध्यात्ममादिर्यस्याधिभूताधिदैवतस्य तत्तथेति वा । अखिलमादायेति शेषः सर्वमिति कर्तृनिर्देशः । सर्वदेत्यादाने करणं च संबध्यते ॥२७४॥

एकापूर्वप्रयुक्तत्वहेतोरसिद्धिमाशङ्क्य श्रुतिसिद्धत्वमभिप्रेत्याऽऽह—यत इति । पूर्वमिति साधकावस्थोच्यतेऽतो हेतुसिद्धिरिति शेषः ॥२७५॥

किं तद्दर्शनं तदाह—नाड्य इति । अस्य यजमानस्यानन्ता नाड्यो रश्मयश्चानन्तास्तासु रश्मिदृष्टिः कार्याऽऽनन्त्यसामान्यात्तस्यैव हृदये सवितृमण्डलदृष्टिरेकत्वसाम्याच्छतसंख्याकसंवत्सरपरिमितायूरूपे तस्य यजमानस्य यावन्ति षट्त्रिंशत्सहस्राण्यहोरात्राणि तावत्य इष्टका इत्येतया संपदा संख्यासामान्ययोगेन तत्सामान्यविदा यजमानेन पूर्वस्मिन्कल्पेऽग्न्यर्कशब्दितेष्टकाः षट्त्रिंशत्सहस्रसंख्याकास्तावत्संख्याकाहोरात्रेषु चिता दृष्टाः । अतो यजमानाहोरात्रेष्विष्टकादृष्टिः । तथा चोक्तं ध्यानमभ्यस्यन्यजमानः स्वकर्म प्राणिकर्म चानुसरन्स्वफलभूतं जगत्सृष्टवानित्यर्थः ॥२७६–२७७॥

परस्य सर्वरूपेणावस्थानमुपपाद्य तस्य प्राणात्मनः सर्वात्मत्वमुपसंहरति—एकैकस्मिन्निति । उक्तनीत्या सर्वं सर्वस्य कारणं कार्यं चेति स्थिते परा प्राणाख्या देवता सर्वात्मिका सती सर्वत्र व्यापारेष्वेकैकत्रैव संनिहितेत्यर्थः । प्राणावयवभूतदेवतानामपि तद्वदेकैकस्मिन्व्यापारे संनिधिरपेरर्थः । प्राणदेवतायाः स्वरूपेणैकत्वमाह—एका चेति । अध्यात्मादिभेदेनानेकत्वमाह—अनेकरूपेति । चकारौ मिथो यथोक्तयोः समुच्चयार्थौ । परोपाधिकमनेकत्वमाकाशादौ प्रसिद्धमिति हिशब्दार्थः ॥२७८॥

सैव विविधकार्याकारेण भवतीत्याह—विभ्वीति । स्वकार्येषु सर्वत्र संनिहितत्वमाह—सर्वगतेति । विशिष्टायास्तस्या ब्रह्मज्ञानं विना नाशाभावादुपलक्षितायाश्च ब्रह्मतया तदभावादानन्त्यमित्याह—अनन्तेति । क्रियाकारकफलेष्वेकैकत्र समाप्यवृत्तिमाह—समाप्तेति । एकस्य कथमनेकत्र युगपत्कार्त्स्न्येन वृत्तिस्तत्राऽऽह—खण्डादाविति ॥२७९॥

एष प्रजापतेरुक्तो महिमा तद्वदेव तु । यजमानोऽपि तादात्म्यात्तथैव भवति ध्रुवम् ॥८०॥

"एवं ह वे"ति फलश्रुत्यर्थः

गुणोपास्तिफलोक्त्यर्थमेवं हेति श्रुतिः परा । यथोक्तार्थमुपासीनं प्रति प्रववृतेऽधुना ॥८१॥

वागादयोऽभिसंविष्टा जीवनार्थमनं यथा । ज्ञातयोऽभिविशन्त्येवं तद्विदं जीवनार्थिनः ८२॥

भर्ता च संनिविष्टानां श्रेष्ठश्च गुणतो भवेत् । यथोक्तगुणवैफल्यं पुर एता न चेद्भवेत् ॥८३॥

सर्वमेतद्वृथैव स्यान्न चेद्दीप्ताग्निमान्भवेत् । अन्नाद इत्यतो वक्ति साफल्यप्रतिपत्तये ॥८४॥

द्विषत्सु स्वेषु च न चेदाधिपत्यं तथाऽपि च । प्रोक्तवैफल्यमाशङ्क्य ह्याहाधिपतितां फलम्॥८५॥

उपासकज्ञातीनामपि फलम्

प्राण आत्मेत्युपासीनो यथोक्तं फलमश्नुते । तज्ज्ञातयोऽपि फलिनो यथा वागादयस्तथा ॥८६॥

प्राणसंस्पर्धिनो यद्वद्विनेशुरसुरास्तथा । प्राणविद्द्विषः सर्वे नालं भार्येभ्य एव च ॥८७॥

उद्बुभूषति यो द्वेषात्स्वेषु प्राणविदं प्रति । प्रतिस्पर्धी न सोऽलं स्याद्भरणाय कथंचन ॥८८॥

किमिति सूत्रस्यैषा विभूतिरुक्तेति चोदिते स्तुत्यर्थत्वेनेत्याह—एष इति । तथाऽपि किमुपासितुरायातमिति तदाह—तद्वदिति । उक्तमहिमोपेतत्वेनैव प्राणमुपासीनोऽपि तदात्मत्वोपासनात्प्राणवद्विभूतिमानवश्यं भवति "तं यथे"त्यादिश्रुतेरित्यर्थः ॥२८०॥

तेनैता देवतास्तृप्यन्तीत्येतद्व्याख्याय वागाद्याश्रयणमुपासीनं प्रति भर्तृत्वादिगुणोपास्तिफलं वक्तुमेवं हेत्याद्या श्रुतिः फलोक्त्यवसरे प्रवृत्तेत्युत्तरश्रुतिमवतारयति—गुणेति ॥२८१॥

तद्गताक्षराणि व्याचष्टे—वागादय इत्यादिना । वागादीनां प्राणवदर्थिनां ज्ञातीनां प्राणविदाश्रयणीयो भवतीत्यर्थः ॥२८२॥

ज्ञातयो यद्यपि प्राणविदमाश्रयन्ति तथाऽपि नासौ तान्पालयितुमलमुपायाभावादित्याशङ्क्याऽऽह—भर्ता चेति । विद्यासामर्थ्यादस्य भरणसामर्थ्यं भरणीयेषूपस्थितं भवतीत्यर्थः । भर्तृत्वश्रेष्ठत्वयोरैक्यमाशङ्क्य विशेषमाह—श्रेष्ठश्चेति । क्षत्रिये श्रोत्रिये च तयोर्भेददृष्टिरतिस्पष्टेत्यर्थः । सति भर्तृत्वादौ पुरोगन्तृत्वमकिंचित्करमिति पुर एता भवतीत्यनर्थकमिति चेन्नेत्याह—यथेति । अग्रगण्यत्वाभावे ज्ञातिषु भर्तृत्वादि नास्य फलवत् । न हि प्रबलेषु दुर्जनेषु दुर्बलः सज्जनो भर्ता गुणाधिकोऽपि सुखी भवतीति भावः ॥२८३॥

तथाऽपि सति पुरोगन्तृत्वादौ कृतमन्नादत्वेनेति तत्कीर्तनं वृथेति चेन्नेत्याह—सर्वमिति । दीप्ताग्नित्वाभावे भर्तृत्वादि सदपि व्यर्थं स्यान्न हि व्याधितो मन्दाग्निरुक्तगुणोऽपि निर्वृणोतीत्यर्थः ॥२८४॥

तथाऽपि किमित्याधिपत्यमुच्यते पुरोगन्तृत्वेनैव सिद्धेरित्याशङ्क्याऽऽह—द्विषत्स्विति । न हि पुरोगन्तृत्वेनाऽऽधिपत्यस्य गतार्थत्वं पुरोहितस्य पुरोगन्तृत्वेऽपि राजन्येवाऽऽधिपत्याधिगमादिति भावः । अधिष्ठाय पालयितृत्वाभावे दीप्ताग्नित्वादेर्वैयर्थ्यं प्रसिद्धमिति हिशब्दार्थः ॥२८५॥

कस्यैतत्फलमित्यपेक्षायामाह—प्राण इति । प्राणविद्यासामर्थ्यलब्धं फलान्तरमाह– तज्ज्ञातयोऽपीति । फलिनो भवेयुरिति शेषः ॥२८६॥

"य उ हैवंविदमि"त्यादिवाक्यतात्पर्यमाह—प्राणेति । सर्वे नश्यन्तीति शेषः । किं च तद्द्वेष्टा भरणीयेभ्यो भर्तुं न शक्नोति । न हि विदुषि द्वेषोपहतचेता निःश्रीको रक्ष्येषु रक्षां विधातुमलमित्याह—नालमिति । अत एवोक्तं—ब्राह्मणेभ्यो वेदविद्भ्यो दिवे दिवे नमस्कुर्यान्नाश्लीलं कीर्तयेदिति ॥२८७॥

तदेव स्पष्टयन्नक्षराणि व्याकरोति—उद्बुभूषतीति । ज्ञातिषु मध्ये प्राणोपासकं प्रति यो द्वेषाद्भवितुमिच्छति स प्रतिस्पर्धी भवन् भरणीयानां भरणाय न कथंचिदपि शक्तः स्यान्न हि महत्सु द्वेषं कुर्वन्निर्वृतो भवतीत्यर्थः ॥२८८॥

नासौ श्रेष्ठः पुरोगन्ता नान्नादोऽसुरवद्भवेत् । न च ज्ञातिष्वधिपतिः स्पर्धमानोऽनवेदिना ॥८९॥

मू.—सोऽयास्य आङ्गिरसोऽङ्गानाँ हि रसः प्राणो वा अङ्गानाँ रसः प्राणो हि वा अङ्गानाँ रसस्तस्माद्यस्मात्कस्माच्चाङ्गात्प्राण उत्क्रामति तदेव तच्छुष्यत्येष हि वा अङ्गानाँ रसः ॥१९॥

### व्यवहितेन सम्बन्धकथनम्

सोऽयास्याङ्गिरसः प्रोक्तस्तत्रायास्यो यथा तथा। निर्णीतः प्रागथेदानीमाङ्गिरस्त्वविनिर्णयः ॥९०॥
पूर्वोक्तस्यानुवादोऽयं सोऽयास्येत्याद्युपक्रमः । श्रुत्याऽऽङ्गिरस्त्वसिद्ध्यर्थमुच्यते न्यायपूर्वकम् ॥९१॥
सिद्धोऽङ्गानां रसः प्राणः प्राणोऽङ्गानां रसः कथम् । हीति हेतावतः प्राह तद्व्याख्यानाय चोत्तरः ॥९२॥

### प्राणस्याङ्गिरसत्वनिर्वचनम्

यस्मात्कस्माच्चिदङ्गाद्धि प्राण उत्क्रामतीह नुः । नीरसं सत्तदेवाङ्गमाशु शुष्यति तत्र च ॥९३॥
यत एवमिदं दृष्टमन्वयव्यतिरेकतः । तस्मादाङ्गिरसः प्राणो ज्ञेय आत्मेति पण्डितैः ॥९४॥

मू.—एष उ एव बृहस्पतिर्वाग्वै बृहती तस्या एष पतिस्तस्माद् बृहस्पतिः ॥२०॥

मू.—एष उ एव ब्रह्मणस्पतिर्वाग्वै ब्रह्म तस्या एष पतिस्तस्माद् ब्रह्मणस्पतिः ॥२१॥

### प्राणस्य बृहस्पतित्वं ब्रह्मणस्पतित्वं च

कार्यस्य रूपभूतस्य कर्मणः करणस्य च । न केवलं प्राण आत्मा नाम्नोऽप्यात्मेति भण्यते ॥९५॥

भर्तृत्वाभाववचनं श्रेष्ठत्वाद्यभावोपलक्षणं प्राणविदः श्रैष्ठ्यादेरुक्तत्वात्तद्द्वेष्टुस्तदभावस्य युक्तत्वादित्याह—नासाविति ॥२८९॥

"सोऽयास्य आङ्गिरस" इत्याद्यनन्तरश्रुतेरन्तरश्रुत्या संगत्यभावमाशङ्क्य व्यवहितेन संबन्धमाह—सोऽयास्येति ॥२९०॥

यन्निर्णेतव्यं तदेव वाच्यं किमित्युक्तस्य पुनरुक्तिरित्याशङ्क्याऽऽह—पूर्वोक्तस्येति । "सोऽयास्य" इत्यादिरुपक्रमोऽङ्गानां हि रस इत्यन्तो यथोक्तस्यायमनुवादः श्रुत्योच्यते न्यायपूर्वकं प्राणस्याऽऽङ्गिरसत्वसिद्ध्यर्थमिति योजना ॥२९१॥

तमेव न्यायं दर्शयितुं प्राणो वा अङ्गानां रस इत्यस्यार्थोक्तिपूर्वकं पृच्छति—सिद्ध इति । प्राणस्याऽऽङ्गिरसत्वप्रसिद्धिरसिद्धेति प्रष्टुराशयः । प्राणो हीत्यादिवाक्ये हिशब्देन परिहरति—हीति हेताविति । आङ्गिरसत्वप्रसिद्धेः साध्यत्वादित्यतःशब्दार्थः । तमेव हेतुं हिशब्दार्थं प्रसिद्धिसाधकं प्रकटीकर्तुं तस्मादित्यादिवाक्यमित्याह—तद्व्याख्यानायेति ॥२९२॥

उत्तरग्रन्थं व्याकरोति—यस्मादिति । इहेति व्यवहारदशोक्तिर्देहोक्तिर्वा । नुरिति कार्यकारणसंघातस्य पुंसो व्यवहर्तुरिति यावत् । तत्र तस्यां प्राणोत्क्रमणावस्थायामित्यर्थः । चकारोऽवधारणार्थः सन्नाशुशब्देन संबध्यते । उक्तार्थस्यानुभवानुसारित्वं हिशब्दार्थः ॥२९३॥

एष हीत्यादिवाक्यं पूर्ववाक्यस्थतस्माच्छब्दसहितमुपसंहारपरतया विभजते—यत इति । प्राणस्याऽऽङ्गिरसत्वमिदमोच्यते । सति प्राणेऽधिष्ठातरि हस्ताद्यङ्गं रसवदन्यथा नीरसमित्यन्वयव्यतिरेकौ दर्शनोपायौ दर्शयति—अन्वयव्यतिरेकत इति । तत्फलमाह—तस्मादिति । किं तस्यैतावतेत्यपेक्षायां कार्यकरणात्मत्वमित्याह—ज्ञेय इति । उक्तान्वयव्यतिरेककौशलं पाण्डित्यम् । प्राणस्य कार्यकरणस्वरूपत्वेन प्राधान्याद्वागादि हित्वा तेनोपास्यतेति भावः ॥२९४॥

"एष उ एव बृहस्पतिरि"त्यादिवाक्यतात्पर्यमाह—कार्यस्येति । शरीरं हि प्रत्यक्षतो रूप्यमाणं रूपात्मकं

एवं सर्वात्मकत्वेन स्तुवत्प्राणं प्रयत्नतः । आदरं कुरुते शास्त्रमुपास्यत्वाय देहिनाम् ।।९६।।

बृहस्पत्यादिधर्मैः प्राणोपासनविधिः

बृहस्पत्यादिभिर्धर्मैरसोरन्यदुपासनम् । विशिष्टमभिधित्स्वाह शास्त्रं पूर्ववदेव च ।।९७।।
वाग्व्यापृततमा दृष्टा यत उद्गीथकर्मणि । देवता सैव न प्राण इत्याशङ्क्येदमुच्यते ।।९८।।
कौष्ठ्याग्निप्रेरितो वायुर्नानास्थानसमाहतः । वर्णतामेति येनातः प्राण एव बृहस्पतिः ।।९९।।
यजुर्ब्रह्मेति श्रवणादन्ते साम्नो ग्रहादपि । ऋग्यजुःसामनिर्देशः क्रमेणेति प्रतीयते ।।३००।।

मू.—एष उ एव साम वाग्वै सामैष सा चामश्चेति तत्साम्नः सामत्वम् । यद्वेव समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण तस्माद्वेव सामाश्नुते साम्नः सायुज्यँ सलोकतां य एवमेतत्साम वेद ।।२२।।

प्राणस्य सामत्वनिरूपणम्

सेति वाचोऽभिधानं स्यादमः प्राणाभिधा तथा । सामोभयं समुदितं गुणप्राधान्यरूपतः ।। १ ।।

करणजातं च ज्ञानक्रियाशक्तिमत्कर्मभूतं तयोरात्मा प्राण इत्युक्त्वा नामराशेरपि तथेति वक्तुमुत्तरकण्डिकाचतुष्टयमित्यर्थः ।।२९५।।

किमिति प्राणस्याऽऽत्मत्वेन सर्वात्मत्वसंकीर्तनमित्याशङ्क्याऽऽह—एवमिति । स्तुत्यादरयोस्तुल्यगोचरयोर्विवक्षितं फलमाह—उपास्यत्वायेति ।।२९६।।

प्राणस्य रूपकर्मात्मत्वमुक्त्वा नामात्मत्वं वक्तुमुत्तरो ग्रन्थश्चेद्बृहस्पतिरित्यादिविशेषोक्तिरनर्थिकेत्याशङ्क्य तात्पर्यान्तरमाह—बृहस्पत्यादिभिरिति । यथा पूर्वमयास्यत्वादिभिर्गुणैर्विशिष्टं प्राणकर्मकमुपासनमुक्तं तथा बृहस्पत्यादिधर्मकं तद्ध्यानं विधातुमिच्छच्छास्त्रं गुणविशेषमाचष्टे। न चैष गुणविधिस्तत्फलाश्रुतेर्विशिष्टविधिस्तु स्या "दश्नुते साम्नः सायुज्यमिति" प्रधानफलोक्तेरित्यर्थः ।।२९७।।

ननु सामोपासकस्य प्रधानफलसंबन्धः श्रुतो न बृहस्पत्याद्युपासकं प्रति किंचिदुक्तं तत्र कथमसौ विशिष्टविधिरित्याशङ्क्य मध्यदीपन्यायेन तृतीयकण्डिकास्थं फलमुभयतः संबद्धं मन्वानो विधान्तरेणोत्तरग्रन्थमवतारयति—वागिति । वाचः प्राणेऽन्तर्भावात्प्राण एवोद्गीथदेवतेति वक्तुं वाक्यमित्यर्थः ।।२९८।।

कथं वाचस्तस्मिन्नन्तर्भावो न ह्यन्यस्यान्यत्रान्तर्भाव इत्याशङ्क्येन्द्रियस्य देवताया वा तदात्मत्वाक्षेपे वक्ष्यमाणं परिहारमभिप्रेत्य शब्दस्य तदात्मत्वाक्षेपं परिहरन्नेष उ एव बृहस्पतिरिति वाक्यं व्याकरोति—कौष्ठ्येति । कोष्ठनिष्ठेनाग्निना प्रेरितस्तद्गतो वायुरूर्ध्वं गच्छन्कण्ठादिभिरभिहन्यमानः ककारादिवर्णतया व्यज्यते । वर्णात्मिका च वागिष्टा देवताधिकरणे "किमात्मकं पुनःशब्दमभिप्रेत्ये"त्यादिना भाष्यकृता तथा निर्णीतत्वाद्युक्तं तस्याः प्राणेऽन्तर्भूतत्वमित्यर्थः। बृहती वाक्तस्याः प्राणो निर्वर्तयिता पालयिता चेति स बृहस्पतिर्ऋक्च वागात्मिकाऽतः स ऋक्पतिरित्याह—प्राण इति ।।२९९।।

बृहस्पतिशब्देन किमिति देवपुरोहितो नोच्यते "बृहस्पतिर्देवानां पुरोहित आसीदि"ति श्रुतेस्तत्राऽऽह—यजुरिति । ब्रह्मणस्पतिरित्युत्तरवाक्ये ब्रह्मेति यजुः श्रुतं तत्र प्राणो यजुष्पतिरित्यवगमात्पूर्वत्रापि बृहस्पतिरिति स एवर्क्पतिरुक्त इत्यर्थः। उत्तरवाक्ये ब्रह्मशब्दस्य यजुर्विषयत्वं संदिग्धमित्याशङ्क्य संदिग्धे तु वाक्यशेषादिति न्यायेनाऽऽह—अन्त इति । वाक्यशेषे प्राणस्य सामात्मत्वोक्तेरुपक्रमेऽपि तस्य यजुरादिरूपता विवक्षिता—सामान्यवचनेन विशेषापेक्षिणोपक्रमो वाक्यस्य निगमनवशेनेति न्यायादित्यर्थः। किं चर्गादिशब्दानां श्रुतिष्वेवं क्रमदृष्टेर्बृहतीब्रह्मशब्दाभ्यामृग्यजुषयोर्ग्रहणमित्याह—ऋगिति । अतो बृहस्पतिर्ऋक्पतिर्ब्रह्मणस्पतिर्यजुष्पतिरिति भातीत्याह—इति प्रतीयत इति ।।३००।।

एष उ एव सामेत्यत्र सामपदं व्याचष्टे—सेतीति । "केन मे पौंस्नानी"त्यादिश्रुत्यन्तराद्वाक्प्राणवाचकौ

एकार्थवृत्तिता यस्मात्तेनैकवचनं कृतम् । शब्दयोः सामयोस्तस्मात्प्राणः सामाभिधीयते ॥ २ ॥
इतरस्यापि सामत्वं प्राणनिर्वर्त्यतो मतम् । प्राण एव ततः साम युक्तो वागुपसर्जनः ॥ ३ ॥
निःशेषभूतसाम्याद्वा साम प्राणोऽभिधीयते । प्रत्यगज्ञानहेतुत्वात्तज्जस्याऽऽनन्त्यमुच्यते ॥ ४ ॥
अतिसूक्ष्मशरीरा हि पुत्तिका प्लुषिरुच्यते । पुत्तिकादिशरीरेण समः प्राणस्तदाश्रयात् ॥ ५ ॥
मशकेभविराड्देहैः समः प्राणो यथोदितः । तथा हैरण्यगर्भेण लिङ्गात्मा सम एव तु ॥ ६ ॥

समोऽनेन सर्वेणेत्यस्य अर्थान्तरकथनम्

वाग्वात्मनि समाप्तत्वात्करणानामशेषतः । सर्वदेहसमत्वं स्यात्प्राणिकर्मानुरूपतः ॥ ७ ॥
प्रतिप्राणिपरिच्छेदो ज्ञानकर्मानुरोधतः । धर्माधर्मानपेक्षः सन्नानन्त्येनावतिष्ठते ॥ ८ ॥

प्राणसायुज्यफलप्राप्तिः

साम्न आप्नोति सायुज्यमैकात्म्यं प्राणरूपताम् । समानलोकताऽनेन सालोक्यमिति शब्द्यते ॥ ९ ॥

सामशब्दावित्यर्थः । तथाऽपि कस्य समस्तसामशब्दवाच्यत्वं तदाह—सामेति । वाक्च प्राणश्चोभयं मिलितं समस्तसामशब्दवाच्यमतो वागुपसर्जनः प्राणः सामशब्दितो न प्रसिद्धं सामेत्यर्थः । तयोः सामत्वे कथं सामेत्येकवचनमर्थभेदादित्याशङ्क्य वाक्प्राणयोर्गुणप्रधानत्वमेकवचनकरणे कारणमित्याह—गुणेति । तयोर्गुणप्रधानत्वाद्द्वयोः सामशब्दयोरेकस्मिन्प्राणे वागुपसर्जने यतो वृत्तिभावोऽतः कृतमेकवचनमविरुद्धं तेन वागुपसर्जनः प्राणः समस्तसामशब्दार्थ इत्यर्थः ॥३०१–३०२॥

ननु "गीतिषु सामाख्ये"तिन्यायाद्विशिष्टा काचिद्गीतिः सामेत्युच्यते । प्रगीते हि मन्त्रवाक्ये सामशब्दो वृद्धैरिष्यतेऽतो वागुपसर्जनस्य प्राणस्य सामत्वायोगात्प्रसिद्धस्यैव साम्नः सामत्वमित्याशङ्क्य तत्साम्नः सामत्वमित्यार्थमाह—इतरस्येति । ननु सामशब्दस्य शब्दार्थात्मकमर्थद्वयमुक्तं न चैकस्य सति संभवेऽनेकार्थत्वं न्याय्यमत आह—प्राण इति । प्रसिद्धसाम्नः सामत्वस्य प्राणाधीनत्वं ततःशब्दार्थः । सामशब्दस्य मुख्यार्थे भेदाभावादर्थान्तरस्य गौणत्वान्मञ्चादिशब्देषु गौणमुख्यार्थभेदस्य दृष्टत्वान्नात्र किंचिदवद्यमिति भावः ॥३०३॥

यद्वेत्यादिवाक्यतात्पर्यमाह—निःशेषेति । सर्वसमत्वेन प्राणस्याऽऽनन्त्यमयुक्तं "सत्यं ज्ञानमनन्तमि"त्यादिश्रुतेर्ब्रह्मणोऽनन्तत्वान्न हि द्वयोरानन्त्यं मुख्यमित्याशङ्क्याऽऽह—प्रत्यगिति । अज्ञानजस्य प्राणस्य आनन्त्यमापेक्षिकं धर्मिवद्धर्मस्यापि तज्जत्वात्तन्नानुपपत्तिरित्यर्थः ॥३०४॥

प्लुषिशब्दार्थोक्तिपूर्वकमुत्तरवाक्यैः सह प्लुषिवाक्यस्यार्थमाह—अतिसूक्ष्मेति । तस्य कालविशेषे लोकप्रसिद्धयर्थो हिशब्दः । कथं तस्य तत्तद्देहसमत्वं तदाह—तदाश्रयादिति । तत्र तत्र समाप्यवृत्तेरिति यावत् ॥३०५॥

समो मशकेनेत्यादिवाक्यत्रयार्थं दृष्टान्तत्वेनानुवदति—मशकेति । उदितः प्राणो मशकादिदेहैः समो यथेति योजना । समोऽनेन सर्वेणेत्यर्थं दार्ष्टान्तिकमाह—तथेति । प्राणो नाम सूत्रात्मा तस्य तेनैव साम्यं कथमित्याशङ्क्य विशेषमाह—लिङ्गात्मेति । क्रियाशक्तिमतो ज्ञानशक्तिमता साम्यमिति भावः ॥३०६॥

समोऽनेन सर्वेणेत्यस्यार्थान्तरमाह—वाग्वात्मनीति । प्राणिकृतकर्मानुसारेण सर्वदेहपरिच्छिन्नस्य प्राणस्य तत्तत्परिच्छेदकसमष्टिव्यष्टिसमस्तदेहसमत्वं समोऽनेन सर्वेणेत्युच्यते न च करणग्रामस्यैव प्राणिकर्मणा देहपरिच्छेदो न प्राणस्येति वाच्यं सर्वेषां करणानां प्राणे समाप्तेरितरकरणग्रामाभावादित्यर्थः ॥३०७॥

प्राणिकर्ममात्रं प्राणस्य सर्वदेहपरिच्छेदे न हेतु"र्यथाकर्म यथाश्रुतमि"तिश्रुतेर्ज्ञानस्यापि हेतुत्वादित्याशङ्क्याङ्गीकरोति—प्रतिप्राणीति । लिङ्गात्मनो द्वयवशात्प्रतिदेहं परिच्छेदवदपरिच्छेदस्यापि कर्मकार्यत्वान्नास्य किंचिदपि स्वाभाविकं रूपमस्तीत्याशङ्क्याऽऽह—धर्मेति । आपेक्षिकमानन्त्यमस्य यावद्द्रव्यभावीत्यर्थः ॥३०८॥

अश्नुत इत्यादिफलोक्तिं व्याचष्टे—साम्न इति । सायुज्यशब्दार्थमाह—ऐकात्म्यमिति । प्रसिद्धसाम-

विकल्पासंश्रवाद्विद्वानश्नुतेऽतः फलद्वयम् । वैचित्र्याद्भावनादेर्वा त्रिविधं फलमुच्यते ॥१०॥
भूयोल्पीयःफलत्वं चेत्तुल्यसाधनयोर्न तत् । योगैश्वर्यात्समा सिद्धिः कालादेरीश्वराद्यतः ॥११॥

अद्वैतेऽपि हेतुवैचित्र्यात्फलभेदोपपत्तिः

एकमेव जगद्बीजमीशाभिप्रायहेतुतः । भूरिनानाप्रभेदेन प्रत्यात्मं व्यवतिष्ठते ॥१२॥
कुर्यान्मेरावणुधियमणौ मेरुधियं तथा । सर्वत्राप्रतिघात्येव प्रत्यगज्ञो महेश्वरः ॥१३॥
अतत्त्वज्ञस्य तमसो रज्ज्वज्ञानोरगादिवत् । अष्टावस्थाप्रभेदेन मिथ्याज्ञानं प्रजायते ॥१४॥
प्रत्यगज्ञानविध्वस्तौ रज्ज्वज्ञानहताविव । तत्कल्पितनिवृत्तिः स्यादष्टावस्थस्य बोधतः ॥१५॥
अनात्मवस्तु सकलं प्रत्यगज्ञानहेतुजम् । यथा तथोत्तरत्रापि युक्तिभिश्चाभिधास्यते ॥१६॥

मू.—एष उ वा उद्गीथः प्राणो वा उत्प्राणेन हीदँ सर्वमुत्तब्धं वागेव गीथा उच्च गीथा चेति स उद्गीथः ॥२३॥

तादात्म्यं व्यावर्तयितुमैकात्म्यमाचष्टे—प्राणरूपतामिति । सलोकतामित्यस्यार्थमाह—समानेति । अनेन प्राणेन सूत्रात्मना सहेत्यर्थः । सार्ष्टिसहितं सालोक्यं सायुज्यं चेत्येतत्फलमुपासको लभते ॥३०९॥

एकरूपाऽप्युपास्तिः शास्त्रप्रामाण्यात्फलत्रयहेतुर्विकल्पस्याश्रुतत्वादिति शङ्कते—विकल्पेति । एकीकृत्य सार्ष्टिसालोक्ये यथाश्रुति फलद्वयमित्युक्तम् । त्रिविधफलं ध्यानादितारतम्यादेव न तस्मादेकरूपादिति स्वपक्षं वदन्वाशब्देन शङ्कामपनुदति—वैचित्र्यादिति ॥३१०॥

तदेव स्फुटयितुमादौ शङ्कामनुवदति—भूय इति । ज्ञानकर्मणी गृहीत्वा द्विवचनम् । तन्निराकरणं प्रतिजानीते—न तदिति । तत्र हेतुः—योगेति । योगो ज्ञानकर्मणी तदैश्वर्यमतिशय ईश्वरः कालादिः सूत्रात्मा काऽस्याऽऽदिरिति वा कालश्चासावादिश्चेति वा तदधीनात्तस्मात्तुल्यं फलं तेन सायुज्यं ज्ञानकर्मोत्कर्षात्सालोक्यमधमज्ञानकर्मभ्यां सार्ष्टिर्मध्यमाभ्यामतो हेतुवैचित्र्यात्फलवैचित्र्यमित्यर्थः ॥३११॥

अद्वैतिमते नैतद्युक्तं वस्तुतो हेत्वादिभेदाभावादित्याशङ्क्याऽऽह—एकमिति । यद्यपि जगत्कारणमनाद्यनिर्वाच्यमव्याकृतादिशब्दितमेकं तथाऽपि तदीशस्य तस्मिन्नभिप्रायश्चिदाभासस्तदनुसारेण बहुविधहेतुभेदेन नानाविधफलभेदेन च प्रतिजीवं भात्यतो वस्तुतो वस्त्वभेदेऽपि कल्पितभेदादद्वैतवादेऽपि हेतुवैचित्र्यादिसिद्धिरित्यर्थः ॥३१२॥

प्रत्यगज्ञानं साभासमपि कथमविद्यमानभेदमावेदयेदित्याशङ्क्याऽऽह—कुर्यादिति । अघटमानघटनपटीयस्त्वेन प्रसिद्धं मायाशब्दितमज्ञानं तस्य साभासस्य न क्वचिदपि प्रतिहतिरित्यर्थः । अज्ञानमुपसर्जनीकृत्य चिदात्मप्रधान्येन निर्देशस्तदस्वातन्त्र्यज्ञापनार्थमित्यर्थः ॥३१३॥

केचित्तु द्वैतस्य नाज्ञानजत्वं पिण्डो जातिर्विराट्सूत्रं दैवमव्याकृतमन्तर्यामी साक्षीत्यष्टावस्थस्य तस्य वस्तुत्वादित्याहुस्तान्प्रत्याह—अतत्त्वेति । रज्ज्वज्ञानाद्भुजंगादिभ्रमवदात्माज्ञस्य स्वाज्ञानादुक्ताष्टावस्थाभेदेन भ्रान्तिर्भवति "यत्र[1] वाअन्यदिव स्यादि"त्यादिश्रुतेस्तज्जगदज्ञानजमेवेत्यर्थः ॥३१४॥

तत्र मानान्तरमाह—प्रत्यगिति । सति रज्ज्वज्ञाने सर्पादि कल्प्यते रज्जुरेवेति ज्ञानात्तदज्ञानध्वस्तौ तज्जसर्पादिध्वस्तिर्दृष्टा, तथा प्रत्यगज्ञाने सति अष्टावस्थं जगत् कल्प्यते, तत्त्वज्ञानात् तदज्ञानध्वस्तौ तदपि ध्वंसते नहि ध्वस्ताविद्यो मुक्तौ द्वैतं पश्यत्यनिर्मोक्षापातादतोऽन्वयव्यतिरेकाभ्यां जगदज्ञानजम् । विमतमज्ञानजं तदन्वयव्यतिरेकवत्त्वाद्रज्जुसर्पवदित्यनुमानादित्यर्थः ॥३१५॥

किंच सर्वमनात्मजातं प्रत्यगज्ञानजमिति संबन्धग्रन्थे श्रुतियुक्तिभ्यामुक्तं तद्वदिमत्यादावपि ताभ्यामेव तद्वक्ष्यत इत्याह—अनात्मेति ॥३१६॥

१. यत्रेति यत्र वाअन्यदिव स्यात् तत्रान्योऽन्यत् पश्येत् ( बृ० ४.३ ) ।

प्राणस्योद्गीथत्वम्

**औद्गात्रमेव चोद्गीथो भक्तिर्वा काचिदिष्यताम् । प्रसिद्धेरिति चेन्मैवमुद्गीथो ह्यसुरेव तु ।।१७।।**
**उपसर्ग उदित्येष स चात्यन्तक्रियाश्रितः । संयोज्य क्रिययाऽतस्तं व्याचष्टे श्रुतिरञ्जसा ।।१८।।**
**उत्तब्धं विधृतं यस्मात्प्राणेन जगदित्वरम् । उत्प्राणोऽतः प्रसिद्धस्तु गुणाद्गुद्गीथ उच्यते ।।१९।।**
**अनया गीयते यस्माद्गीथा वाक्तेन भण्यते । उच्च गीथा च तद्योगादुद्गीथ इति शब्द्यते ।।२०।।**

**मू.—तद्धापि ब्रह्मदत्तश्चैकितानेयो राजानं भक्षयन्नुवाचायं त्यस्य राजा मूर्धानं विपातयताद्यदितोऽयास्य आङ्गिरसोऽन्येनोदगायदिति वाचा च ह्येव स प्राणेनचोदगायदिति ।।२४।।**

**उद्गाता नैमिषीयाणामयास्योपासनादभूत् । अयास्यनामा सोऽगायद्वाचा प्राणप्रधानया ।।२१।।**
**बृहस्पत्यादिभिर्धर्मैरुपास्यौ[1]नमनो भवेत् । भावनोत्कर्षतोऽतोऽयं विचारस्तं प्रतीष्यते ।।२२।।**

अद्वैतमतेऽपि हेतुवैचित्र्यात्फलवैचित्र्यमुपपा"द्यैष उ वा उद्गीथ" इत्यत्र पूर्वपक्षयति—औद्गात्रमिति । "हन्तासुरानि"त्यत्रोद्गीथशब्दस्यौद्गात्रे कर्मणि प्रयुक्तत्वात्प्रस्तावादिशब्दवच्च भक्तिविशेषे रूढेरित्याह—प्रसिद्धेरिति । उद्गीथो नाम सामावयवो भक्तिविशेषो नोद्गानमित्यत्र नञ्पदस्योभयत्र संबन्धं मत्वा सिद्धान्तयति—मैवमिति । सामाधिकारा[2]दिति भाष्ये सामशब्दितप्राणस्य प्रकृतत्वादिति हेतुर्विवक्षितः स च हिशब्दार्थः ।।३१७।।

कथमुद्गीथशब्दस्य प्राणे वृत्तिर्न तावद्रूढ्या तस्य तस्मिन्वृद्धप्रयोगादृष्टेर्नापि योगादवयववृत्तेरप्रतीतेरित्याशङ्क्य योगपक्षं स्वीकर्तुमुद्गीथशब्दावयवस्वरूपमाह—उपसर्ग इति । तस्योत्कृष्टक्रियावाचित्वमाह—स चेति । उच्छब्दस्य तद्वाचित्वे फलितमाह—संयोज्येति । यस्मादयं क्रियावाची तस्मात्तमुपसर्गवाच्यया क्रियया वाचकत्वेन योजयित्वा क्रियाशक्तिमन्तं प्राणमुच्छब्देन श्रुतिः साक्षादाहेत्यर्थः ।।३१८।।

कथं तस्य क्रियावाचिनोऽपि प्राणे वृत्तिरत आह—उत्तब्धमिति । जगतो धारयित्रपेक्षां सूचयति—इत्वरमिति । गत्वरं नाशशीलमित्यर्थः । प्रसिद्धेरुद्गीथो भक्तिरित्युक्तम् । तथाच रूढेर्योगात्प्राबल्यात्कथमुद्गीथशब्दस्य योगात्प्राणविषयतेत्याशङ्क्याऽऽह—प्रसिद्धस्त्विति । उद्गीथशब्दितप्राणनिर्वर्त्यतयोपचाराद्भक्तेस्तत्त्वसंभवे तत्रापि न शक्तिः कल्पनागौरवादित्यर्थः ।।३१९।।

प्राणस्योच्छब्दत्वेऽपि गीथशब्दत्वाभावात्कथमुद्गीथतेत्याशङ्क्य गीथशब्दार्थमाह—अनयेति । तथाऽपि कथं प्राणस्योद्गीथत्वं तदाह—उच्चेति । उच्च गीथा चेत्युद्गीथः प्राण उच्छब्दार्थस्योत्तम्भकत्वस्य गीथाशब्दार्थस्य च वाचस्तस्मिन्नुपसर्जनत्वेन संबन्धादित्यर्थः ।।३२०।।

उद्गीथदेवता प्राणो न वागादिरित्युक्तार्थदार्ढ्यार्थं तद्धापीत्यादि तस्य तात्पर्यमाह—उद्गातेति । पूर्वेषां नैमिषारण्यवासिनां विश्वसृजामृषीणां सत्रे बहुयजमानके कर्मण्युद्गाता योऽभूत्स चायास्यप्राणस्यात्मत्वेनोपासनात्तद्रूपस्तन्नामा संवृत्तः स वागुपसर्जनं प्राणमुद्गीथदेवतात्वेनोपेत्य प्राणोपसर्जनभूतया वाचौद्गात्रं कर्म कृतवांस्तस्मादौद्गात्रस्य प्राणो देवतेत्येषोऽर्थो विचार्य निर्धार्यतेऽनन्तरवाक्येनेत्यर्थः ।।३२१।।

या काऽपि देवतौद्गात्रस्यास्तु किं विचारपूर्वेण तन्निर्धारणेनेत्याशङ्क्याऽऽह—बृहस्पत्यादिभिरिति । यथोक्तगुणकं प्राणमुपास्योपास्त्यतिशयकृततदात्मत्वसाक्षात्कारात्स भवतीति यतः शास्त्रार्थोऽतस्तमुपास्यं प्राणं प्रति विचारः क्रियते शास्त्रार्थदार्ढ्यार्थमित्यर्थः ।।३२२।।

---

१. उपास्य अनं अनो भवेदिति च्छेदः ।
२. ८४.२ ।

हृदयेनाभिसंबन्धाद्देवताऽत्र प्रजापतिः । उद्गीथदेवतेहास्तु सविता वा मनःश्रितः ।।३२३।।
वागीश्वरत्वादिन्द्रो वा यदि वा वर्णदेवता । पदवाक्यस्वरस्थाननादादिविषयाऽपि वा ।।३२४।।
एवं विप्रतिपन्नेषु नानावादिषु निश्चितः । प्राणप्रधानया वाचा ह्ययास्योऽगायदित्यतः ।
ब्रह्मदत्तश्चकारोच्चैः शपथं वादिनः प्रति ।।३२५।।

ब्रह्मदत्तकृतशपथप्रकारः

यदितोऽनप्रधानाया वाचो ह्यन्येन केनचित् । देवान्तरेण सोऽगायदयास्यः प्राणविग्रहः ।।३२६।।
सर्वप्रमाणभूतोऽभूदुद्गाता सत्रिणां पुरा । विसंवादस्त्वभूत्तेषामुद्दिश्योद्गीथदेवताम् ।।३२७।।
उद्गाता नैमिषीयाणां मदभ्युपगताद्यदि । प्राणवाग्द्वयतोऽन्येन देवेनासौ प्रयत्नवान् ।।३२८।।

विचारस्तर्हि किंमूलः स्यादित्याशङ्क्य तन्मूलां विप्रतिपत्तिमाह—हृदयेनेति । अत्रौद्गात्रे प्रजापतिर्देवता अस्तु तस्य चन्द्रात्मनो मनोद्वारा हृदयेन संबन्धा"च्चन्द्रमा मनो भूत्वा हृदयं प्राविशदि"ति श्रुतेरौद्गात्रस्य चोक्त'स्त्वं न उद्गाये'ति मनःसंबन्धोऽतः प्रजापतिर्देवतेत्येकः पक्षः । पक्षान्तरमाह—उद्गीथेति । मनस्तदधिष्ठितं, चक्षुस्तदाश्रयः सविता "आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्" इतिश्रुतेरस्ति चौद्गात्रस्य तत्र संबन्धस्त्वं न उद्गायेत्युक्तेस्तस्मादिह यज्ञे सवितैवोद्गीथदेवतेत्यर्थः । यद्वा यथाश्रुतोऽर्थो ब्रह्मादित्ययोर्बुद्धिसंबन्धात्तत्राधिदेवता"त्वाद्धियो यो नः प्रचोदयादि"ति च श्रुतेरुद्गानस्य च हृदयसंबन्धादहृदयस्य तदनुपपत्तेरिति "मनःश्रितश्चन्द्रमाश्चन्द्रमा मनसो जात" इति श्रुतेरिति कल्पान्तरम् । यद्वा सवितुर्मनःसंबन्धस्यान्नाधिकारे वक्ष्यमाणत्वादेकस्यैव पक्षस्योपन्यासः ।।३२३।।

विप्रतिपत्त्यन्तरमाह—वागीश्वरत्वादिति । बलस्येन्द्रो देवता वाक्च तन्निर्वर्त्या तेनेन्द्रस्य बलद्वारा वाङ्नियन्तृत्वादुद्गानस्य च वागात्मत्वात्तत्रेन्द्रो देवतेत्यर्थः । वर्णसंबन्धादुद्गानस्य तदभिमानिनी वा देवतोद्गीथदेवतेत्याह—यदि वेति । पदाद्यभिमानिनी देवता तथोद्गानस्य पदादिसम्बन्धादिति विप्रतिपत्त्यन्तराण्याह—पदेति । उदात्तादिः स्वरः स्थानं कण्ठादि नादो ध्वनिः । आदिपदेन सूक्तप्रकरणकाण्डादिग्रहः प्रयत्नश्च तेन गृहीतः ।।३२४।।

विप्रतिपत्तीरुपसंहृत्य तन्निमित्ते विचारे निर्णयप्रकारमाह—एवमिति । ब्रह्मदत्तो नाम कश्चिदृषिःयस्मिन्कर्मण्युद्गाताऽऽसीत्तत्राऽऽगतेषु दिदृक्षया प्रतिजिघृक्षया वा बहुषु वादिषु दर्शितरीत्या विरुद्धं प्रतिपन्नेषु सत्सु प्राणोपसर्जनया वाचा पूर्वेषां सत्त्रिणामुद्गाता कृतवानौद्गात्रमिति यतः स निश्चितवानतो वादिनो विप्रतिपन्नान्प्रति पूर्वोद्गातारमाप्तत्वेनाऽऽदाय सभायामेव शपथं चकार शपथक्रियया च वागुपसर्जनः प्राणो देवतोद्गानस्येति समर्थितवानित्यर्थः । पूर्वोद्गातुराप्तत्वप्रसिद्धयर्थो हिशब्दः । उच्चैरिति शपथस्य स्पष्टतोच्यते ।।३२५।।

शपथक्रियामेव दर्शयति—यदिति । मदुपेतप्राणप्रधानवाग्देवतातोऽन्येन सवित्रादिना देवतान्तरेण प्राणोपास्त्या तत्क्रतुन्यायात्तद्भूतः पूर्वोद्गातोदगायच्चेत्तदा वागुपसर्जनः प्राण उद्गीथदेवतेति मिथ्यावादिनो मे मूर्धानमयं सोमो विपातयत्वित्यर्थः । स्वाभ्युपगमदृढताद्योतको हिशब्दः ।।३२६।।

ननु किमित्ययास्यः साक्षीक्रियते कस्यचिदन्यस्यैवात्र साक्षीकारणं किं न स्यादत आह—सर्वेति । पूर्वस्मिन्काले ये सत्त्रिणो नैमिषीया विश्वसृजस्तेषां सत्रे योऽभूदुद्गाता स विद्वदग्रणीः सर्वेषामाप्तत्वादत्र साक्षीकृत इत्यर्थः । तथाऽपि कथं ब्रह्मदत्तस्य शपथप्रसक्तिरित्याशङ्क्योक्तं प्रसङ्गं स्मारयति—विसंवादस्त्विति । ब्रह्मदत्तोद्गातृके यज्ञे समागतानामृषीणामुद्गीथदेवतानिश्चयाभावात्तामुद्दिश्योक्तरीत्या विप्रतिपत्तिरासीत्तत्र आप्तप्रामाण्यं मत्वा ब्रह्मदत्तः शपथद्वारेष्टदेवतां निरधारयदित्यर्थः ।।३२७।।

यदितोऽनप्रधानाया वाचो हीत्यत्रोक्तमनूद्य यदितोऽयास्य इत्यादिश्रुत्यक्षराणि योजयति—उद्गातेति पूर्वोद्गातुरपरीक्षकत्वं वारयति—प्रयत्नवानिति । साक्षादिति प्रत्यक्षं यथा भवतां तथेति यावत् । मिथ्या-

१. सवितुः मनस्सम्बन्धस्येति । अथैतस्य मनसो द्यौः शरीरं ज्योतीरूपमसावादित्यः ( १.५.१२ ) ।

उदगायत्तदा सोमो भक्ष्यमाणः शिरो मम । मिथ्याभिवादिनः साक्षाद्विपातयतु सत्वरः ॥२९॥
श्रुतिः समर्थयामास वाचेति शपथक्रियाम् । शपथस्यापि मानत्वमस्मादेव तु कारणात् ॥३०॥
वाचः प्राणस्य च यत उद्गीथे व्यापृतिः स्फुटा । प्राधान्येन तदन्येषां न तथा लक्ष्यते सदा ॥३१॥
आकृत्यर्थाभिसंबन्धादभिधानस्य न श्रुतेः । ब्रह्मदत्ताभिसंबन्धादनित्यत्वं प्रसज्यते ॥३२॥

मू.—तस्य हैतस्य साम्नो यः स्वं वेद भवति हास्य स्वं तस्य वै स्वर एव स्वं तस्मादार्त्विज्यं करिष्यन्वाचि स्वरमिच्छेत । तया वाचा स्वरसम्पन्नयार्त्विज्यं कुर्यात्तस्माद्यज्ञे स्वरवन्तं दिदृक्षन्त एव । अथो यस्य स्वं भवति । भवति हास्य स्वं य एवमेतत्साम्नः स्वं वेद ॥२५॥

भिवादिनः सापराधस्य ते कालान्तरे मूर्धा पतिष्यति तत्कथमस्माकं यथायथं गच्छतां प्रत्यक्षयोग्यमित्याशङ्क्याऽऽह—सत्वर इति ॥३२८–३२९॥

आख्यायिकार्थस्यैव वाचेत्यादिनोक्तेः पौनरुक्त्यमित्याशङ्क्याऽऽह—श्रुतिरिति । वागुपसर्जनः प्राणो देवतोद्गीथस्येत्यत्र या शपथक्रिया कृता तां वाचेत्यादिश्रुतिरर्थवादत्वाद्द्व्युत्थाय समर्थितवती स्वमुखेनेति न पौनरुक्त्यमित्यर्थः । ननु शपथस्य स्वयमेव मानत्वान्न श्रुतेरपेक्षा नहि मानं मानान्तरमपेक्षते तत्राऽऽह—शपथस्येति । तस्य हि स्मृत्याचारयोरन्यतरस्य वेदमूलत्वादेव मानत्वं स्थितं हि "धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात्" [ जै० सू० १ । ३ । १ ] इत्यत्र "अपि वा कर्तृसामान्यात्प्रमाणमनुमानं स्यात्" [ जै० सू० १ । ३ । २ ] इति सिद्धान्ते स्मृतीनां तन्मूलकत्वेन मानत्वं स्थितं च "अनुमानव्यवस्थानात्तत्संयुक्तं प्रमाणं स्यात्" [ जै० सू० १ । ३ १५ ] इत्यत्र "अपि वा सर्वधर्मः स्यात्तन्न्यायत्वाद्विधानस्य" [ जै० सू० १ । ३ । १६ ] इति सिद्धान्ते शिष्टाचारस्यापि तन्मूलत्वेन प्रामाण्यमतो युक्ता शपथस्यापि द्वयोरन्यतरस्य स्वार्थसमर्थनार्थं श्रुत्यपेक्षेत्यर्थः ॥ ३३० ॥

वागुपसर्जनः प्राणो देवतेत्येतन्न केवलं शपथसाध्यं यौक्तिकं चेत्याह—वाच इति । अतो वागुपसर्जनः प्राणो देवतोद्गानस्येति शेषः । सदेत्यस्य व्यापृतिरित्यनेन सम्बन्धः । ननु रसनमनसोरपि स्फुटा तत्र व्यापृतिरिति चेन्नेत्याह—प्राधान्येनेति । वागादेरन्येषां रसनादीनां वागाद्युपसर्जनत्वेन व्यापारेऽपि न वागादिवदुद्गाने स्वप्रधानत्वेन व्यापृतिरालक्ष्यते तस्माद्युक्तं वागुपसर्जनप्राणस्यैवोद्गीथदेवतात्वमित्यर्थः ॥३३१॥

ननु ब्रह्मदत्तादेः शरीरित्वेनास्मदादिवदनित्यत्वात्तद्विषयवेदवाक्यस्य लौकिकवाक्यवदनित्यतया सापेक्षत्वेनाप्रामाण्यादौत्पत्तिकसूत्रविरोधः स्यादित्याशङ्क्याऽऽकृत्यधिकरणन्यायेनाऽऽह—आकृतीति । "आकृतिस्तु क्रियार्थत्वात्" [ जै० सू० १ । ३ । ३३ ] इत्यत्र श्येनादिशब्दानामाकृतिवाचित्वं समर्थितम् । यदाहुः—"श्येनचितं चिन्वीतेति चयनमाकृतौ संभवति यद्याकृत्यर्थः श्येनशब्द इत्यर्थः" । उक्तं च तत्र टीकायां पारिशेष्याच्छ्येनमिव चितमग्निस्थलं चयनेन भावयेदिति वाक्यार्थः । ततश्च यया कयाचिच्छ्येनव्यक्त्या सदृशस्याग्नेश्चेतुमशक्यत्वात्सर्वव्यक्तिसादृश्यासंभवादतीतानागतव्यक्तिसादृश्यानुपपत्तेश्च श्येनाकृतिसादृश्यसंपत्तिसंभवादाकृतिः शब्दार्थ इति

१. धर्मस्य शब्दमूलत्वमुक्तं "चोदनालक्षणोऽर्थो धर्म"इति । अतः अशब्दं वेदशब्दरहितं अनुमानं स्मृतिः प्रमाणं प्रत्यनपेक्षमित्यर्थः । अपि वा कर्तृसामान्यात् इति । अपि वेति सिद्धान्तारम्भः प्रमाणं स्मृतिः कर्तृसामान्यात् स्मृतिवैदिकपदार्थयोः कर्तारः एकरूपा एव, अतो वेदसंयोगस्त्रैवर्णिकानाम् ।

२. अनुमानव्यवस्थानात्—अनुमानात् स्मृतेराचाराणां च प्रामाण्यमिष्यते तेनैव व्यवस्थितानि प्रमाणानि इति आचारप्रामाण्योक्तिः ( १.३.१५ ) ।

३. अपि वा सर्वधर्मः स्यात् तन्न्यायत्वाद्विधानस्य ( १.३.१६ ) होलाकाद्याचारः सर्वधर्मो विधानस्य शब्दस्येत्यर्थः । आचाराणां प्रामाण्योक्तेः ब्रह्मदत्तशब्दस्यापि प्रामाण्यमित्यर्थः ।

उद्गीथदेवतामेवं परीक्ष्याथाधुना श्रुतिः । स्वादिधर्माभिसंबन्धं प्रचक्राम प्रभाषितुम् ॥३३॥
याजमानमिदं ज्ञानं स्वादेः प्राग्यत्समीरितम् । पञ्चमाद्युक्तिदृष्ट्याऽस्य ह्येकवाक्यत्वहेतुतः ॥३४॥
स्वसुवर्णप्रतिष्ठाधीरुद्गातुरिति गम्यते । ऋत्विङ्नामाभिसंबन्धान्न त्वसौ यजमानगा ॥३५॥
एष एवंविदुद्गातेत्यमुतो लिङ्गतो भवेत् । उद्गातुरपि विज्ञानं दृष्टार्थत्वाच्च कारणात् ॥३६॥
कर्त्राश्रितं स्वं विज्ञेयं माधुर्यादीह सामनि । यतस्तद्धनवत्तस्मात्स्वरार्थं यत्नमाचरेत् ॥३७॥
धनवन्तं यथा यत्नाद्दिदृक्षन्तीह संघशः । तथा यत्नात्समीक्षन्ते स्वरसंपत्समन्वितम् ॥३८॥
बाह्यवित्तेन संबन्धमुक्त्वाऽथान्तर्धनात्मना । संबन्धं वक्तुकामेयं प्रचक्रामोत्तरा श्रुतिः ॥३९॥

मू.—तस्य हैतस्य साम्नो यः सुवर्णं वेद भवति हास्य सुवर्णम् तस्य वै स्वर एव सुवर्णम् भवति हास्य सुवर्णं य एवमेतत्साम्नः सुवर्णं वेद ॥२६॥

तस्य हैतस्य साम्नो यः प्रतिष्ठां वेद प्रति ह तिष्ठति । तस्य वै वागेव प्रतिष्ठा । वाचि हि खल्वेष एतत्प्राणः प्रतिष्ठितो गीयतेऽन्न इत्यु हैक आहुः ॥२७॥

निश्चीयत इति तथेहापि ब्रह्मदत्तादिपदस्याऽऽकृतिवाचित्वाद्व्यक्तिवाचकत्वकृतमनित्यत्वं न वेदस्येति कथमौत्पत्तिकसूत्रविरोध[1] इत्यर्थः ॥३३२॥

व्याख्याताख्यायिकार्थमनूद्य तस्य हैतस्येत्यादिवाक्यत्रयतात्पर्यमाह—उद्गीथेति । औद्गात्रस्य कर्मणो वागुपसर्जनः प्राणो देवता तस्याः स्वसुवर्णप्रतिष्ठागुणविधानार्थमुत्तरं कण्डिकात्रयमित्यर्थः ॥३३३॥

अथास्यादिगुणज्ञानवदिदमपि स्वादिज्ञानं याजमानमित्याशङ्कां निरसितुं विभजते—याजमानमिति । स्वसुवर्णप्रतिष्ठागुणोक्तेः पूर्वं यदयास्यादिगुणकप्राणोपासनमुक्तं तद्यजमानगामिफलकमुद्गातुर्यजमानेन क्रीतत्वादतो वचनाभावे याजमानमेवोत्सर्गतो यथोक्तं ज्ञानमित्यर्थः । तत्रैव हेत्वन्तरमाह—पञ्चमेति । पञ्चमाध्यायादौ ब्राह्मणे "केन यजमानो मृत्योराप्तिमतिमुच्यत" इत्याद्युक्तयाजमानज्ञानेनास्य ज्ञानस्य "ते ह वाचमूचुरि"त्यादिवत्तत्रापि "वाग्वै यज्ञस्य होते"त्यादिना वागादिश्रुतेरेकवाक्यत्वदृष्टेः पाञ्चमिकज्ञानवत्तार्तीयमपीदं याजमानमेवेत्यर्थः । पञ्चमोक्तज्ञानस्य याजमानत्वे सम्प्रतिपत्त्यर्थो हिशब्दः ॥३३४॥

तर्हि स्वादिज्ञानमपि पाञ्चमिकयाजमानज्ञानैकवाक्यत्वात्तथैवेत्याशङ्क्याऽऽह—स्वसुवर्णेति । तत्र हेतुमाह—ऋत्विगिति । तस्मादार्त्विज्यं करिष्यन्निति गुणत्रयस्यौद्गात्रकर्मसंबन्धदृष्टेरित्यर्थः । ऋत्विग्गतमपि यथा पूर्वोक्तं ज्ञानं याजमानं तथेदमपीत्याशङ्क्याऽऽह—न त्विति । स्वादिधीर्न यजमानगामिफला मानाभावादित्यर्थः ॥३३५॥

उद्गातुरपि परकर्मणि प्रविष्टस्य स्वादिज्ञानित्वे नास्ति मानमित्याशङ्क्याऽऽह—एष इति । तस्य सदपि ज्ञानमफलमित्याशङ्क्याऽऽह—दृष्टार्थत्वादिति । परकर्मस्थस्यापि फलवज्ज्ञानं वचनादेष्टव्यम् । स्वादिज्ञानवतश्च तत्फले धनादिलाभेऽध्यक्षे तन्निरासायोगादित्यर्थः ॥३३६॥

विज्ञानं विभज्य साम्नः स्वमित्यस्यार्थमह—कर्त्रिति । उद्गातृकण्ठनिष्ठमाधुर्यमिह प्राणे सामशब्दिते स्वं भूषणं ज्ञेयमिति योजना । माधुर्यादीत्यादिशब्दो व्यक्तिभेदाभिप्रायः । तस्मादार्त्विज्यमित्यादेरर्थमाह—यत इति । तत्साम सौस्वर्योपेतं धनवद्भूषितमृद्धिमद्यतो लक्ष्यतेऽतो वाङ्निष्ठस्वरार्थं दन्तधावनादि कार्यमित्यर्थः ॥३३७॥

अथो यस्येत्यादि दृष्टान्तत्वेन व्याचष्टे—धनवन्तमिति । यत्नस्तत्परत्वम् । इहशब्दो व्यवहारदशाविषयः । तस्मादित्यादि दार्ष्टान्तिकं व्याकरोति—तथेति । अथोशब्दो यथार्थः । तस्माच्छब्दस्तथार्थः ॥३३८॥

तस्य हैतस्य साम्नो यः सुवर्णमित्यादि वृत्तानुवादपूर्वकं तात्पर्येण बध्नाति—बाह्येति । अथशब्दोऽप्यर्थः तृतीयासंबन्धी ॥३३९॥

१. औत्पत्तिकसूत्रविरोधः—औत्पत्तिकस्तुशब्दस्यार्थेन सम्बन्धः इत्यनेन शब्दार्थसम्बन्धस्य नित्यत्वमुक्तम् । यदि ब्रह्मदत्तशब्दः व्यक्तिवाची तदा अनित्यः सम्बन्धः स्यात् अतो ब्रह्मदत्ताकृतिवाचित्वं तस्येत्यर्थः ।

कण्डिकयोरर्थसंग्रहः

बाह्योऽस्य धर्मः सौस्वर्यं सौवर्ण्यं त्वान्तरं धनम् । तदन्तरतमोऽनस्य प्रतिष्ठागुण उच्यते ॥४०॥
जिह्वामूलीयकादीनि ह्यष्टौ स्थानानि वागिह । गानप्रतिष्ठाहेतुत्वाद्धीति हेतुवचस्तथा ॥४१॥
अन्नप्रतिष्ठमागानमेक आहुर्विपश्चितः । अनिषेधाद्द्वयोरेका प्रतिष्ठेहावसीयताम् ॥४२॥
अन्नस्य परिणामेऽनः स्थितो गीतित्वमेति हि । अन्नप्रतिष्ठा देहोऽतः श्रुत्येह प्रतिपाद्यते ॥४३॥
उपासनं विकल्पेन वागन्नाख्यप्रतिष्ठयोः । वाक्प्रतिष्ठमुपासीत यदि वाऽन्नप्रतिष्ठितम् ॥४४॥

अथातः पवमानानामेवाभ्यारोहः स वै खलु प्रस्तोता साम प्रस्तौति स यत्र प्रस्तुयात्तदेतानि जपेत् । असतो मा सद्गमय, तमसो मा ज्योतिर्गमय, मृत्योर्माऽमृतं गमयेति । स यदाहासतो मा सद्गमयेति । मृत्युर्वा असत्सदमृतं मृत्योर्माऽमृतं गमयामृतं मा कुर्वित्येवैतदाह । तमसो मा ज्योतिर्गमयेति । मृत्युर्वै तमो ज्योतिरमृतं मृत्योर्माऽमृतं गमयामृतं मा कुर्वित्येवैतदाह । मृत्योर्मामृतं गमयेति । नात्र तिरोहितमिवास्ति । अथ यानीतराणि स्तोत्राणि तेष्वात्मनेऽन्नाद्यमागायेत्तस्माद्‌ तेषु वरं वृणीत । यं कामं कामयेत तँ स एष एवंविदुद्गातात्मने वा यजमानाय वा यं कामं कामयते तमागायति । तद्धैतल्लोकजिदेव न हैवालोक्यताया आशास्ति य एवमेतत्साम वेद ॥२८॥

अभ्यारोहजपस्य मन्त्रार्थस्य च निरूपणम्

यदर्थमतियत्नेन महिमाऽनस्य कीर्तितः । अभ्यारोहजपः सोऽथ प्राप्तावसर उच्यते ॥४५॥
यथोक्तज्ञानवत्तायामिदं कर्म विधित्स्यते । कार्त्स्न्येन तस्य चोक्तत्वादतस्तदभिधीयते ॥४६॥

किं तद्बाह्यं धनं तदाह—बाह्योऽस्येति । किं तर्हि तदान्तरं तदाह—सौवर्ण्यमिति । कण्ठनिष्ठं माधुर्यं बाह्यं धनं लाक्षणिकं वर्णज्ञानपूर्वकं तदुच्चारणमान्तरं सौस्वर्यस्य ध्वनिगतत्वाद्बाह्यत्वं सौवर्ण्यस्य वर्णस्थत्वाद् आन्तरत्वमिति भेदः । प्रतिष्ठागुणस्य ताभ्यां विशेषमाह—तदन्तरतम इति । ताभ्यामन्तरङ्गं प्राणस्य प्रतिष्ठागुणः स चोच्यतेऽनस्येत्यादिनेत्यर्थः ॥३४०॥

तस्य वै वागेवेत्यत्र वागित्यस्यार्थमाह—जिह्वेति । तेषां वर्णस्थानत्वप्रसिद्धद्यर्थो हिशब्दः । आदिपदादुरःशिरःकण्ठदन्तोष्ठनासिकाताल्वूनि गृह्यन्ते । इहेति प्रकृतवाक्योक्तिः । तेषामादाने हेतुमाह—गानेति । उक्तहेतुसमर्थनार्थं वाचि हीत्यादिवाक्यमित्याह—हीतीति । वाक्यप्रोक्तस्थानानां प्राणप्रतिष्ठाहेतुत्वानुसारेण गीतिभावमापाद्यमानस्य तस्योक्तस्थानप्रतिष्ठत्वप्रसिद्धिरूपहेतूक्तिर्वाचीत्यादिवाक्यमतोऽस्य वाक्प्रतिष्ठतेत्यर्थः ॥३४१॥

अन्न इत्याद्येकीयमतोक्तेरर्थमाह—अन्नेति । का तर्हि प्रतिष्ठाऽस्य युक्ता न हि प्रतिष्ठाद्वयमेकस्येति तत्राऽऽह—अनिषेधादिति । इहेति प्राणोक्तिः ॥३४२॥

ननु व्रीह्याद्यन्नं प्राणस्य न प्रतिष्ठा नहि तत्प्रतिष्ठः स दृश्यते तत्राऽऽह—अन्नस्येति । अन्नमशितमित्यादिश्रौतक्रमेणान्नविकारो देहस्तत्र स्थितः प्राणो गीतित्वं यतो गच्छत्यतः स प्राणप्रतिष्ठोच्यते पक्षान्तरोक्तिश्रुत्येत्यर्थः ॥३४३ ।

प्रतिष्ठोक्तिफलमाह—उपासनमिति । विकल्पमेव विशदयति—वागिति ॥३४४॥

अथातः पवमानानामित्यादिवाक्यस्य प्रसङ्गं करोति—यदर्थमिति । यस्य प्राणोपासनस्य शेषिणः शेषत्वेन जपविध्यर्थमनेकगुणतत्फलोक्तिद्वारा प्राणस्य ध्यानाख्यो महिमोक्तः सोऽभ्यारोहनामा तच्छेषो जपोऽनन्तरग्रन्थेन उच्यत इत्यर्थः । तत्राथशब्दमादाय व्याकरोति—अथेति ॥३४५॥

अतःशब्दार्थमाह—यथोक्तेति ॥३४६॥

एवं विद्वत्प्रयोज्यत्वादत एव न सूत्रितम् । नित्यकर्मैव सूत्रेषु तेन विद्वत्प्रयोज्यता ॥४७॥
उद्गीथलिङ्गसंयोगाद्गानमात्रेऽस्य शक्तितः । नियमोऽस्यैवकारेण पवमानेषु कथ्यते ॥४८॥
ततोऽपि कालसंकोचं स वा इत्यादिनाऽवदत् । प्रस्तोता प्रस्तुयाद्यत्र तदैतानि जपेदिति ॥४९॥
एतानीति च निर्देशाद्यजूंषीत्यवगम्यते । श्रुतावेव च दृष्टत्वात्स्वरः शातपथो जपे ॥५०॥
जपकर्माभिधा चेयमभ्यारोह इतीष्यते । यौगिकी चाभिधा ज्ञेया क्रियायोगस्य संभवात् ॥५१॥
हित्वाऽध्यात्मपरिच्छेदं दैवं बीजमतः परम् । अभ्यारोहत्यनेनातो ह्यभ्यारोहो जपः स्मृतः ॥५२॥
तिरोहितार्थरूपत्वान्मन्त्राणां न नृधीगतिः । मन्त्रार्थं स्वयमेवातो व्याचष्टे श्रुतिरञ्जसा ॥५३॥
पूर्वं पदार्थान्व्याख्याय पश्चाद्वाक्यार्थमब्रवीत् । फलं पश्चाद्यथोक्तस्येत्येष व्याख्याक्रमः श्रुतेः ॥५४॥
यत्स्यात्स्वाभाविकं ज्ञानं यच्च कर्म स्वभावजम् । तदधःपातहेतुत्वान्मन्त्रेऽसदिति भण्यते ॥५५॥

ननु मन्त्रजपस्य न कर्मत्वं तत्सूत्रयद्भिर्बौधायनादिभिरस्यासूत्रितत्वात्तत्राऽऽह—एवमिति । पूर्वोक्तप्रकारेण प्राणविज्ञानवता जपकर्मणोऽनुष्ठेयत्वमेवातःशब्देन परामृश्यते । जपकर्मणोऽपि नित्यत्वमाशङ्क्याऽऽह—तेनेति । येन विद्वत्प्रयोज्यता तेन तस्यानित्यतेति यावत् ॥३४७॥

पवमानानामेवेत्यस्यार्थमाह—उद्गीथेति । उद्गीथेनात्ययाम त्वं न उद्गायेति च प्रकरणादुद्गीथेन जपकर्मणः संबन्धलिङ्गादस्य गानमात्रकाले प्रसक्तेः पवमानकाले नियमोऽवध्रियत इत्यर्थः ॥३४८॥

स वै खल्वित्यादिवाक्यतात्पर्यमाह—ततोऽपीति । कालसंकोचमेव स्फोरयति—प्रस्तोतेति ॥३४९॥

यजुर्मन्त्राणामनियतपादाक्षरत्वादसतो मा सद्गमयेत्यारभ्यैको वा द्वौ वा मन्त्रावित्याशङ्क्याऽऽह—एतानीति चेति । एतेषां याजुषमन्त्रत्वे मान्त्रेण स्वरेण भौषिक[1]ग्रन्थोक्तेन भाव्यमित्याशङ्क्याऽऽह—श्रुताविति । शातपथोत्पन्नत्वात्तदीयो लक्षणग्रन्थोक्तस्वरो मन्त्राणां प्रयोक्तव्यो न मान्त्रो विवक्षितत्वादुच्चैः साम्नेत्यादौ स्वरविवक्षायां तृतीयादर्शनादिह त्वेतानीति द्वितीयानिर्देशान्न मान्त्रस्वरो विवक्षितः । न च "गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः" [ जै० सू० ३।३।९ ] इति न्यायेन शातपथानामपि मन्त्राणां तदीयस्वराभावो, विनियोगस्यापि तत्रैव दृष्टत्वेन वैषम्याद्गुणमुख्यव्यतिक्रमाधिकरणे त्वन्यत्रोत्पत्तिरन्यत्र विनियोग इत्युपत्तिर्विनियोगेन वाध्यते विनियोगस्यानुष्ठापकत्वेन प्रधानत्वादुत्पत्तेस्तच्छेषत्वात् । यथाऽऽहुः—

गुणं स्वरूपतो धर्मः प्रधान द्वारतोऽपरः । यत्र स्यात् तत्र विज्ञेयं गुणधर्मस्य बाधनम् ॥ इति

उक्तं च—"प्रधानविधिनिबन्धनो गुणो गुणविधिनिबन्धनं गुणं बाधते" इति । तस्माद्ब्राह्मणोत्पन्ना मन्त्रास्तत्रैव विनियुज्यमानास्तदीयस्वरभाजो न मान्त्रस्वर इति भावः ॥३५०॥

अभ्यारोहमुपक्रम्य जपकर्म विधीयमानं प्रक्रमाननुगुणमित्याशङ्क्याऽऽह—जपेति । अभ्यारोहशब्दस्य न तत्र रूढिर्वृद्धप्रयोगाभावादित्याशङ्क्याऽऽह—यौगिकी चेति ॥३५१॥

क्रियायां जपकर्मणि योगस्य संभवमेव साधयति—हित्वेति । दैवरूपाप्तौ हेतुमाह—बीजमिति । अतोऽध्यात्मपरिच्छेदादिति यावत् । अतःशब्दो योगसम्भवपरामर्शी । प्रक्रमानुगुण्यं जपकर्मणो द्योतयितुं हिशब्दः । ततो न साङ्केतिकीयमभिधेति शेषः ॥३५२॥

स यदाहेत्यादिब्राह्मणतात्पर्यमाह—तिरोहितेति ॥३५४॥

ब्राह्मणे दृष्टां पुनरुक्तिं प्रत्याह—पूर्वमिति । फलं तात्पर्यं यथाश्रुतं वा । इममेव हि श्रौतं क्रममनतिक्रामन्तो व्याचक्षते ॥३५४॥

"असतो मा सद्गमये"त्यादिमन्त्रस्थासच्छब्दार्थमाह—यत्स्यादिति ॥३५५॥

---

१. भाषिकग्रन्थः वाजसनेयकशाखायां स्वरविधायको ग्रन्थः ।

**सद्देवभावहेतुत्वाच्छास्त्रीये ज्ञानकर्मणी । सत्पदेनाभिधीयेते मन्त्रेऽस्मिन्प्राग्यथोदिते ॥५६॥**
**असन्मृत्युस्तयोर्ज्ञेयः पूर्वयोर्मृत्युहेतुतः । अमृतं मृत्युघातित्वाच्छास्त्रीये ज्ञानकर्मणी ॥५७॥**
**आसुरज्ञानकर्मभ्यां मां व्युत्थाप्याथ तज्जितेः । गमयाऽऽशु ततो दैवे शास्त्रीये ज्ञानकर्मणी ॥५८॥**
**मन्त्रार्थे यत्नमाहाथ ह्यमृतं मामिति श्रुतिः । द्वितीयमन्त्रानुक्तिः स्यात्तमसो मेत्युदीरणम् ॥५९॥**
**आपेक्षिकत्वान्मृत्युः स्याच्छास्त्रीये ज्ञानकर्मणी । स्वार्थं फलमपेक्ष्यैते परार्थत्वात्तमो मते ॥६०॥**
**साधनात्तमसो मां त्वं ज्योतिः साध्यं नयामृतम् । फलाप्त्यैव तमोध्वंसादमृतं मेत्यतोऽवदत् ॥६१॥**
**पूर्वयोर्मन्त्रयोर्योऽर्थो विस्तरेणोदितः पुनः । मन्त्रेण स तृतीयेन संक्षेपेणाभिधीयते ॥६२॥**
**प्रसङ्गमुत्तरे मन्त्रे पूर्वयोरिव वीक्ष्य हि । तिरोहितार्थतामाह नात्रेत्यादिवचः श्रुतिः ॥६३॥**
**यथाप्रार्थितमागाय याजमानं फलं परम् । त्रिष्वेव पवमानेषु यथा वागादिभिः पुरा ॥६४॥**

पवमानेभ्यः इतरस्तोत्रेषु ऋत्विजां प्रार्थितफलाय गानम्

**अथ यानीतराणीति ह्युद्गाताऽऽगाद्यमात्मने । आगायेद्वचनात्कर्तुः कामयोगोऽपि गम्यते ॥६५॥**

तस्मिन्नेव मन्त्रे सच्छब्दार्थमाह—सदिति । कर्मकाण्डोक्तमग्निहोत्रादि कर्म ज्ञानमुषा वा इत्यादिनोक्तं ते शास्त्रदृष्टे सतो देवत्वस्य हेतुत्वादत्र सच्छब्दिते इत्यर्थः ॥३५६॥

मृत्युर्वा असदित्यस्यार्थमाह—असदिति । तयोः शास्त्रीयाशास्त्रीययोर्मध्ये ये तावदशास्त्रीये ज्ञानकर्मणी तयोः पूर्वोक्तयोर्मृत्युहेतुत्वादसच्छब्दिताशास्त्रीयकर्मादि मृत्युरित्यर्थः । सदमृतमित्यस्यार्थमाह—अमृतमिति । ताभ्यां हि मर्त्यत्वं हित्वा देवत्वद्वारा पुमान्मुच्यतेऽतो युक्ता तयोरमृततेत्यर्थः ॥३५७॥

मृत्योर्माऽमृतं गमयेतिवाक्यार्थोक्तेरर्थमाह—आसुरेति । अथेत्यवधारणे । देवत्वप्रतिबन्धकस्वाभाविककर्मादिध्वस्तेरेवेत्यर्थः । ततःशब्दः पञ्चम्या संबध्यते ॥३५८॥

अमृतं मेत्यादितात्पर्योक्तेस्तात्पर्यमाह—मन्त्रार्थ इति । अथशब्दः पदार्थाद्युक्त्यानन्तर्यार्थः । दर्शितनीत्या प्रथममन्त्रार्थः प्रसिद्ध इति प्रकटयितुं हिशब्दः । उक्तमन्त्रस्य पुनरुक्तिरनर्थिकेत्याशङ्क्याऽऽह—द्वितीयेति । अनुवादस्य व्याख्यानार्थत्वान्न वैयर्थ्यमिति भावः ॥३५९॥

मृत्युर्वै तम इत्यत्र मृत्युशब्दार्थमाह—आपेक्षिकत्वादिति । सातिशयविनाशिफलत्वादिति यावत् । तयोस्तमस्त्वमाह—स्वार्थमिति । स्वस्य शास्त्रीयकर्मादेः शेषिफलमपेक्ष्य शेषत्वात्स्वतन्त्रप्रकाशत्वाभावात्तमस्त्वमित्यर्थः ॥३६०॥

मृत्योर्माऽमृतं गमयेतिवाक्यार्थव्याख्यां विभजते—साधनादिति । अमृतं मेत्यादितात्पर्योक्तेरर्थमाह—फलेति । देवताभावेन तद्धेतुज्ञानादिध्वंसात्फलरूपमेव मां स्थापयेति तात्पर्यमाहेत्यर्थः । अतःशब्दस्य तमोध्वंसादित्यनेन सम्बन्धः ॥३६१॥

तृतीयमन्त्रस्य पूर्वाभ्यां पुनरुक्तिं परिहरति—पूर्वयोरिति । अत एव हि संग्रहविवरणरूपं ग्रन्थमारचयन्ति शास्त्रकृतः ॥३६२॥

नात्रेत्यादिवाक्याभिप्रायमाह—प्रसङ्गमिति । पूर्वयोर्मन्त्रयोस्तिरोहितार्थतां दृष्ट्वा यथा व्याख्या कृता तथाऽत्रापि तत्प्रसङ्गमाशङ्क्य श्रुतिर्नात्रेति वाक्यमाहेत्यर्थः । मन्त्रविवरणप्रकरणस्पष्टार्थत्वं बाधकमिति वक्तुं हीत्युक्तम् । अत एव व्याख्यातारः स्पष्टार्थतां कस्यचिद्व्याख्येयस्य वदन्ति ॥३६३॥

अथेत्याद्यवतारयन्वृत्तं कीर्तयति—अथेति । यथा पुरा वागादिभिर्यजमानप्रार्थितमनतिक्रम्य तदर्थं त्रिषु स्तोत्रेष्वागानं कृत्वाऽवशिष्टेषु स्वार्थमागीतं तथोद्गात्राऽपीत्यर्थः ॥३६४॥

अथ यानीत्यादि व्याचष्टे—अथेति । पवमानेषु यजमानफलागानादनन्तरं यानीतराणि स्तोत्राणि तेष्वा-

१. "तमसो मा ज्योतिर्गमये"त्यस्य अज्ञानतमसो मां ज्ञानात्मकं ज्योतिः प्रापयेत्यर्थो भाष्ये । अत्र तु शास्त्रीये-ज्ञानकर्मणी तमः इमे स्वार्थं ब्रह्मभावमपेक्ष्य तम उच्येते ब्रह्मभावशेषत्वात् ।

कस्मादात्मन आगायेदिति हेतुरिहोच्यते । यस्मात्स एष एवंविदुद्गाताऽतोऽन एव सः ॥६६॥
अतोऽलमात्मने कामानागातुं स्वामिने तथा । यस्मादीश्वर उद्गाता कामावाप्तावतः शुभम् ॥६७॥
तस्मात्तेषु वरं कामं यजमानो यथारुचि । नवसूद्गीयमानेषु तं वृणीताविचारयन् ॥६८॥
प्रयोगानुगमे चैतद्दर्शनं येन चोद्यते ॥६९॥
तस्मात्स्याद्देवतावाप्तिर्ज्ञानिकर्मसमुच्चयात् । तस्मान्न काचिदाशङ्का कर्मिणं प्रति विद्यते ॥७०॥

कर्मरहितस्य उपासनामात्रादपि प्राणभावप्राप्तिः

कर्महीनेऽपि विदुषि स्यान्न वेत्यतिशङ्क्यते । तदाशङ्कापनुत्त्यर्थं तद्धैतदिति हि श्रुतिः ॥७१॥
इहैव देवभूतत्वादाशङ्का किंनिबन्धना ।
जपकर्मानिबोधाभ्यां लोकप्राप्तौ हि शङ्क्यते । ज्ञानादेव भवेन्नेति तद्धैतदिति हि श्रुतिः ॥७२॥
जीवतो देवभूतस्य भावनोपचयात्कुतः । देवावाप्तौ भवेच्छङ्का मनुष्यस्य तदाप्तिवत् ॥७३॥
कर्मिणोऽपि हि देवाप्तिर्ज्ञानादेव न कर्मणः । समुच्चयात्तु तत्प्राप्तावागमादेव निश्चितिः ॥७४॥

त्मनेऽन्नाद्यमागायेदिति वाक्यात्कर्तुरपि यजमानवत्फलयोगो गम्यतेऽतो याजमानं पवमानेषूद्गानमार्त्विज्यमन्यत्रेत्यर्थः । आगानस्य द्वैविध्यप्रसिद्ध्यर्थो हिशब्दः ॥३६५॥

प्रगीतमन्त्रसाध्यगुणबुद्धिःस्तोत्रम् । "अर्थाच्चे"ति न्यायेन पाठक्रममनादृत्य कर्तुः कामसंयोगे वचनानुग्राहकं न्यायं दर्शयितुं "स एष" इत्यादिवाक्यसाकाङ्क्षाद्वारोत्थापयति—कस्मादिति । परकर्मस्थस्य स्वार्थमागानमयुक्तमिति शङ्कार्थः । उद्गातुरात्मार्थमागानं सम्भवतीत्यत्र हेतुपरमुत्तरं वाक्यमित्याह—हेतुरिति । तद्व्याचष्टे—यस्मादिति ॥३६६॥

विद्यासामर्थ्यादेवंविदः प्राणत्वेऽपि कथं स्वार्थमागानमित्याशङ्क्याऽऽत्मने वेत्यादेरर्थमाह—अत इति । प्राणात्मत्वादिति यावत् । "तस्मादु तेष्वि"त्यादेरर्थमाह—यस्मादिति । तेषु नवस्विति सम्बन्धः । अतोऽस्मादुद्गातुरित्यर्थः । शुभमित्यनिन्दितत्वेन वरस्य परलोकपथ्यता कथ्यते । उद्गातुः स्वपरार्थफलागाने शक्तेरुक्तत्वात्ततो वरप्रार्थनायां न विचारावसरोऽस्तीत्याह—अविचारयन्निति । ॥३६७-३६८॥

एवं तावदित्याद्यनुवादभाष्यतात्पर्यमाह—प्रयोगेति । ज्योतिष्टोमानुष्ठानानुसारिप्रकरणस्थमुद्गीथमादाय प्राणदर्शनविधानात्तस्य जपकर्मणश्च समुच्चयात्तादात्म्यापत्तिरुक्तेत्यर्थः । कर्मणो ज्ञानसहकारिणः सत्त्वे फलितमाह—तस्मादिति । आशङ्का देवताप्राविति शेषः ॥३६९-३७०॥

समुच्चयात्फलाप्तेरसंदेहवज्ज्ञानादपि तदाप्तौ सन्देहो नास्तीत्याशङ्क्याऽऽह—कर्मेति । विद्याबलमतिक्रम्य शङ्का क्रियत इति यावत् । दृष्टं हि बीजादेः सहकारिहीनस्याकिंचित्करत्वमिति भावः । उत्तरत्वेनोत्तरं वाक्यमादत्ते—तदाशङ्केति । ॥३७१॥

विवक्षितमाशङ्कापनोदनप्रकारं हिशब्दद्योतितं प्रकटयति—इहैवेति । जीवदवस्था सप्तम्यर्थः । किंशब्दस्य प्रश्नार्थतां मन्वानः शङ्कते-जपेति । अभ्यारोहाख्यजपरूपं कर्म प्राणोपास्तिश्च ताभ्यां समुच्चिताभ्यां लोकाप्तावुक्तायां कर्महीनेऽपि विदुषि केवलज्ञानादेव लोकाप्तिः स्यान्न वेति शङ्क्यते समुच्चयस्य फलहेतुत्वात्केवलज्ञानवति पुंसि तदभावादित्यर्थः । शङ्काकारणं निरसितुं श्रुतिमुत्थापयति—तद्धेति ॥३७२॥

हिशब्दसूचितं परिहारं स्फोरयति—जीवत इति । मनुष्यस्य देवताप्तौ शङ्का युक्ता न तथा देवस्य तदाप्तौ नहि मनुष्यस्य मनुष्याप्तिः शङ्क्यते तथा देवस्यापि तदाप्तिर्न शङ्कार्हाऽऽप्तत्वादित्यर्थः ॥३७३॥

शङ्काभागमेव विभजते—कर्मिणोऽपीति । कर्मवतोऽपि विदुषो न कर्ममात्राज्ज्ञानमात्राद्वा देवाप्तिः किंतु समुच्चयात्तथा च केवलज्ञानवति शङ्का दुर्वारेत्यर्थः । श्रुतिमेवाऽऽश्रित्य विधान्तरेण परिहरति—तत्प्राप्ताविति । नहि समुच्चयाद्देवत्वे निश्चायकमागमातिरिक्तमस्ति तथा तत्प्रामाण्यात्केवलादपि तत्प्राप्तिरेष्टव्येत्यर्थः ॥३७४॥

तद्वैतत्प्राणविज्ञानं यथाव्याख्यातरूपकम् । भवेल्लोकजिदेवेह कर्मशून्यमपि ध्रुवम् ॥७५॥
न हैवालोक्यतायै नुरस्याऽऽशाऽपीह विद्यते । इहैव लोकभूतत्वादप्राप्तेऽर्थे हि शङ्क्यते ॥७६॥
इहैवाऽऽसुरभावस्य प्राणोऽस्मीत्यभिमानतः । प्रध्वस्तत्वात्कुतः शङ्का तन्मूलासंभवाद्भवेत् ॥७७॥

ज्ञानकर्मसमुच्चयफलं कस्येति विचारः

इदमत्र विचिन्त्यं स्याज्ज्ञानकर्मसमुच्चयात् । देवभावः किमुद्गातुर्यजमानस्य वाऽथ किम् ॥७८॥
न समुच्चय उद्गातुः कर्माभावादिहेष्यते । परकर्मप्रवेशात्स्यादुद्गाता न स्वकर्मणि ॥७९॥
क्रियायोगाच्च तन्नाम्नो ज्ञानाभ्यासोऽपि दुर्लभः । साक्षात्कृतिश्च संतत्या संततिश्च न विद्यते ॥८०॥
न च धीजन्ममात्रेण परमात्मप्रबोधवत् । संभाव्यो देवभावोऽस्य देवो भूत्वेति च श्रुतेः ॥८१॥
उद्गातुर्विदुषो नापि परकीयेन कर्मणा । समुच्चयप्रसिद्धिः स्यात्तयोर्भिन्नाश्रयत्वतः ॥८२॥

उक्तेऽर्थे श्रुत्यक्षराणि योजयति—तद्वैतदिति । तदेतच्छब्दार्थौ विशेषणाभ्यामुच्येते । इहेति कर्मशून्येऽपि विदुषीति यावत् । एवकारार्थमाह—ध्रुवमिति ॥३७५॥

न हैवेत्यादेरर्थमाह—न हेति । विदुषः पुरुषस्य प्रामाणिकव्यवहारे फलराहित्याय मनोरथोऽपि नास्तीत्यर्थः । विद्वानपि सहकार्यभावादफलः स्यादित्याशङ्क्याऽऽह—इहैवेति । भावनावशाज्जीवदवस्थायामेव देवभावेऽपि शङ्का किं न स्यादित्याशङ्क्याऽऽह—अप्राप्त इति ॥३७६॥

नन्वपरिच्छिन्नदेवताभावो वर्तमाने देहे न प्राप्तुं पार्यते परिच्छेदाभिमानप्रतिबन्धात्तत्राऽऽह—इहेति । शङ्कामूलमासुरः परिच्छेदाभिमानस्तस्यासंभवादिति यावत् ॥३७७॥

कर्मसमुच्चितादुपासनात्केवलाच्च देवाप्तिरुक्ता तत्रोभयत्र फलित्वमेकस्यायुक्तमिति मत्वा फलिनं निश्चेतुं विचारयति—इदमिति । तत्राऽऽदौ समुच्चयफलिनि विचारं दर्शयति—ज्ञानेति । स्वसुवर्णादिज्ञानादुद्गातृगामिफलोपगमादयास्यादिगुणकप्राणज्ञानाद्याजमानफलाङ्गीकारा"दात्मने यजमानाय वे"त्यादिश्रुतेश्च समुच्चितात्प्राणध्यानात्कस्य फलमिति चिन्ताऽवतरतीत्यर्थः । विचारान्तरं सूचयति—अथेति । केवलोपास्तेरुद्गातुर्वा यजमानस्य वाऽन्यस्य वा कस्यचिद्देवभाव इत्येतदाह—किमिति ॥३७८॥

उद्गातुः समुच्चयाद्देवभावपक्षं दूषयति—नेत्यादिना । इहेत्युद्गीथप्रकरणस्य फलत्वस्य चोक्तिः । ननु कर्मणि प्रविष्टस्य कथं कर्माभाव उपास्तेश्चासौ कर्ता तद्युक्तमुद्गातुः समुच्चयात्फलमिति तत्र किं तस्योपास्तिस्तदीयेन कर्मणा समुच्चीयते याजमानेन वा ? नाऽऽद्य इत्याह—परेति ॥३७९॥

उद्गातुर्ज्ञानमुपेत्य कर्माभावमुक्त्वा ज्ञानमपि तस्य नास्तीत्याह—क्रियेति । उद्गानक्रियायोगादुद्गातृसंज्ञस्यर्त्विजः स्वकीयक्रियानुपपत्तेस्तत्काले कर्तव्यज्ञानाभ्यासासिद्धेस्तदधीनदेवतासाक्षात्कारो न स्यादित्यर्थः । ननु विनाऽपि ज्ञानाभ्यासेन यथाशास्त्रमुद्गानानुष्ठानाद्देवतासाक्षात्कारो भविष्यति नेत्याह—साक्षात्कृतिरिति । कर्मानुष्ठानाद्वस्तुसाक्षात्कारस्यादृष्टत्वादभ्यासाच्चाभ्यस्यमानसाक्षात्कारस्य क्वचिद्दृष्टत्वादित्यर्थः । अस्तु तर्हि ज्ञानसंतत्या देवतासाक्षात्कृतिर्मैवमुद्गातुः स्वीयकर्माभावात्तत्काले कर्तव्यज्ञानसंतत्यनुपपत्तेरुक्तत्वादित्याह—संततिश्चेति ॥३८०॥

ननु ज्ञानमात्रादेव ब्रह्मभाववद्देवभावोऽपि स्यात्किमभ्यासेनेत्याशङ्क्योक्तं स्मारयति—न चेति । ज्ञानमात्रादभ्यासं विना न देवभावो मानाभावादित्युक्त्वा मानविरोधाच्च तथेत्याह—देव इति ॥३८१॥

उद्गातुर्ज्ञानभावाभावयोः स्वीयकर्माभावान्न तेन समुच्चयस्तज्ज्ञानस्येत्युक्तम् । अथ द्वितीयमाशङ्क्याऽऽह—उद्गातुरिति । यद्यपि विद्वानुद्गाता तथाऽपि तस्य यजमानगामिना कर्मणा न स्वकीयविद्यायाः समुच्चयः सिध्यति कर्मणो याजमानत्वाद्विद्यायाश्चोद्गातृस्थत्वाद्भिन्नाधारयोस्तयोः समुच्चयस्य दुर्वचत्वादित्यर्थः ॥३८२॥

यजमानस्य कर्मास्ति ज्ञानं तूद्गातृसंश्रयम् । समुच्चयोऽतस्तस्यापि भिन्नाधिष्ठानतो न च ॥८३॥
मतं तद्याजमानं स्याज्ज्ञानं यत्प्रागुदीरितम् । स्वयमेव कृतार्थत्वात्काऽपेक्षाऽस्यर्त्विजं प्रति ॥८४॥
कर्मण्युद्गात्रपेक्षावज्ज्ञानेऽपीति मतं यदि । उद्गातुरपि तत्तुल्यं नोद्गातर्ते क्रियां यतः ॥८५॥
याजमानं यथा कर्म ह्याश्रित्य फलवद्भवेत् । अन्नाद्यागानमुद्गातुस्तज्ज्ञानं तद्वदाश्रितम् ॥८६॥
समुच्चयाच्चेदुभयोरुद्गातृयजमानयोः । देवभावः किमर्थेयं तद्धैतदिति हि श्रुतिः ॥८७॥
सर्वाश्रमाणां तर्हीदं सामान्येनाभिधीयते । तद्धैतदिति सिद्धत्वादुद्गातृयजमानयोः ॥८८॥
देवभावेन विज्ञानं संस्करोत्येव तद्धियम् । परार्थमपि सत्कस्मादनपेक्षं न सिद्धये ॥८९॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके तृतीयमुद्गीथब्राह्मणम् ॥३॥

समुच्चयादुद्गातुर्देवाप्तिरिति पक्षं निरस्य यजमानस्य ततस्तद्भावपक्षं निरस्यति—यजमानस्येति । यजमानस्यापि ज्ञानकर्मणोः समुच्चयो देवभावप्राप्तिहेतुरनुष्ठेयो नास्तीत्यत्रातःशब्दपरामृष्टं पूर्वार्धोपदिष्टं हेतुमेव स्पष्टयति—भिन्नेति ॥३८३॥

उभयोः समुच्चयाद्देवभावे पूर्ववादिना निरस्ते सिद्धान्ती यजमानस्य ततस्तद्भावं साधयति—मतमिति । यत्पूर्वं प्राणोपासनमुक्तं तद्याजमानमिष्टमुद्गातुर्यजमानेन क्रीतत्वात्कर्म च यजमानस्योभयसंमतमतः समुच्चयाद्देवत्वं तस्य युक्तमित्यर्थः । असमुच्चयवादी शङ्कते—स्वयमिति । कर्मवज्ज्ञानमपि याजमानं चेत्तर्हि तस्योभयत्र स्वयमेव शक्तेरुद्गातारं प्रति नापेक्षा स्याद्दृश्यते च तदपेक्षा तस्मादौद्गात्रमेवोपासनमिति न समुच्चयाद्देवत्वं यजमानस्येत्यर्थः ॥३८४॥

सिद्धान्ती समुच्चयं साधयति—कर्मणीति । यदि कर्मणि याजमाने निष्पत्त्यर्थमुद्गात्रपेक्षेति मतं तर्हि तद्वदेव ज्ञानेऽपि याजमाने जन्मार्थमितरापेक्षा तथा च समुच्चयाद्यजमानस्य देवत्वमित्यर्थः । संप्रत्युद्गातुरपि समुच्चयाद्देवत्वं साधयति—उद्गातुरिति । यथोद्गातारं विना ज्योतिष्टोमादिक्रिया न सिध्यति तथा तां विना नोद्गाताऽपि सिध्येत्क्रियारूढस्य तद्भावादतो यजमानवदुद्गातुरपि कर्म कल्प्यं ज्ञानं तु तुल्यं क्रीतत्वेऽप्युद्गातुस्तदाश्रयत्वात्तस्मात्तस्यापि समुच्चयाद्देवत्वं युक्तमित्यर्थः ॥३८५॥

यत्तु भिन्नाधिष्ठानत्वान्न समुच्चयो ज्ञानकर्मणोरिति तत्राऽऽह—याजमानमिति । यथा यजमानस्वामिकं कर्माऽऽश्रित्य तेन समुच्चितं सदुद्गातुरन्नाद्यागानं फलं साधयति तथा तदीयज्ञानमाश्रित्य तेन समुच्चितमितरत्कर्म फलं साधयति यजमानकर्माश्रितं तेन समुच्चितमितरज्ज्ञानमपि स्वफलं साधयेदतो भिन्नाधिकरणयोरपि ज्ञानकर्मणोः समुच्चयादुभयोर्देवभावः संभवतीत्यर्थः । उद्गातृयजमानसंबन्धवत्तदीयज्ञानकर्मणोरपि संबन्धोपपत्त्यर्थो हिशब्दः ॥३८६॥

द्वयोः समुच्चयाद्देवाप्तिं सिद्धान्तिना समर्थितां पूर्ववाद्यनुवदति—समुच्चयादिति । केवलज्ञानाद्देवाप्तिरुद्गातृयजमानयोर्वाऽन्यस्य वा ? नाऽऽद्यस्तयोः समुच्चयाधिकारित्वान्नेतरस्तस्याप्रस्तुतत्वादिति मत्वाऽऽह—किमर्थेति ॥३८७॥

कर्मशून्यानां सर्वेषां त्रैवर्णिकानां केवलज्ञानाद्देवाप्तिरित्युत्तरमाह—सर्वेति । प्रकृतवाक्यप्रामाण्यात्केवलज्ञानात्फलमिष्टं चेत्तर्हि तेन सर्वाधिकृतानां कर्मिणामविशेषेणेदं ज्ञानं फलवदुच्यत इत्यर्थः । प्रकृतयोरेव द्वयोरिदं ज्ञानं किं न स्यादित्याशङ्क्याऽऽह—सिद्धत्वादिति । तयोः समुच्चयाधिकारित्वस्य स्थितत्वान्न केवलज्ञानेऽधिकारितेत्यर्थः ॥३८८॥

केवलज्ञानस्य देवत्वाप्तिहेतुत्वमयुक्तं समुच्चितस्यैव तद्दृष्टेरित्याशङ्क्य कैमुतिकं न्यायमाह—देवेति । उद्गीथज्ञानमुद्गातृकर्तृकं यजमानस्वामिकमपि कर्तारं देवभावेन योजयति किमुतानपेक्षं कर्तृस्वामिकमेव सदुपासनं कर्तुर्देवभावमापादयतीत्यतो ज्ञानं केवलमपि कस्मान्न तद्भावलाभाय भवेदित्युपपन्नं केवलस्यापि ज्ञानस्य देवाप्तिफलत्वमित्यर्थः ॥३८९॥

इति बृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां तृतीयमुद्गीथब्राह्मणम् ॥३॥

## अथ प्रथमाध्याये चतुर्थं ब्राह्मणम्

मू.—आत्मैवेदमग्र आसीत्पुरुषविधः। सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत्सोऽहमस्मीत्यग्रे व्याहरत्ततोऽहंनामाभवत्तस्मादप्येतर्ह्यामन्त्रितोऽहमयमित्येवाग्र उक्त्वाथान्यन्नाम प्रब्रूते यदस्य भवति। स यत्पूर्वोऽस्मात्सर्वस्मात्सर्वान्पाप्मन औषत्तस्मात्पुरुष ओषति ह वै स तं योऽस्मात्पूर्वो बुभूषति य एवं वेद ॥१॥

ज्ञानकर्मफलं चैतत्कर्मकाण्डप्रचोदितम्। आत्मैवेत्यादिशास्त्रेण सृष्ट्यादौ कर्तृतोच्यते ॥ १ ॥
जगदुत्पत्तिसंहारस्थित्यादौ जगदात्मनः। क्रियाधीफलभूतस्य स्वातन्त्र्यमुपवर्ण्यते ॥ २ ॥
स्तुत्याऽनया च वेदोक्तक्रियाज्ञानस्तुतिर्भवेत्। कृता विवक्षितं त्वत्र सर्वमप्येतदीरितम् ॥ ३ ॥
वैदिकं साधनं ज्ञेयं ज्ञानकर्मात्मकं पुरा। महानर्थफलायैव न मोक्षायेति निश्चितिः ॥ ४ ॥
वैदिकं साधनं सर्वमविद्योत्थत्वकारणात्।
तीव्रानर्थफलायेति ब्रह्मविद्याधिकारतः। विवक्षितोऽर्थो यत्नेन तद्वैराग्यविधित्सया ॥ ५ ॥
यतोऽविरक्तः संसारान्नाऽऽत्मज्ञानाय कल्पते। तदेतदात्मतत्त्वं हि पदनीयमितीरणात् ॥ ६ ॥
पुत्रादिभ्यस्तथा प्रेयानिति वक्ष्यति सादरम् ॥ ७ ॥

पूर्वोत्तरयोर्ब्राह्मणयोः सम्बन्धं वक्तुं वृत्तमनुवदति—ज्ञानेति। ज्ञानस्य समुच्चितस्य केवलस्य च फलमेतत्सूत्रात्मिरूपं ज्ञानकर्मविषये पूर्वस्मिन्ब्राह्मणे प्रकाशितमित्यर्थः। इदानी"मात्मैवेदमि"त्यादेरापाततस्तात्पर्यमाह—आत्मेति। समुच्चयादिफलभूतस्य प्रजापतेर्जगत्सृष्ट्यादौ स्वातन्त्र्य"मात्मैवे"त्यादिना "तद्धेदमि"त्यतःप्राक्तनग्रन्थेनोच्यत इत्यर्थः ॥१॥

स्वातन्त्र्योपवर्णनफलं वक्तुमुत्तरार्धर्थमनुद्रवति—जगदिति। आदिपदेन नियमनादिग्रहः। उपवर्ण्यते प्रकृतेन शास्त्रेणेति शेषः ॥२॥

प्रजापतेः स्वातन्त्र्योक्तिफलमाह—स्तुत्येति। फलातिशयो हेत्वतिशयापेक्षोऽन्यथाऽऽकस्मिकत्वापातादतो ज्ञानकर्मफलभूतसूत्रविभूतिरुच्यमाना हेत्वोस्तयोर्महत्त्वं द्योतयतीत्यर्थः। आपातिकं तात्पर्यमुक्त्वा परमतात्पर्यमाह—विवक्षितं त्विति। यत्पूर्वसंदर्भे कर्मकाण्डे वा ज्ञानं कर्म चेति साधनं वेदप्रमाणकमुक्तं तत्सर्वमपि गर्भवासादिसंसारार्थमेव न मोक्षार्थमिति निश्चितिरिति यत्तदत्राऽऽत्मैवेत्यादौ विवक्षितं ज्ञेयमिति योजना। संसारादधिकानर्थाभावविवक्षया महत्त्वविशेषणम् ॥३–४॥

ननु ज्ञानकर्मणोर्न संसारफलत्वं नहि वैदिकं ध्यानं कर्म वाऽनर्थफलं ब्रह्मज्ञानेऽपि तत्प्रसङ्गादित्याशङ्क्य आह—वैदिकमिति। वेदोक्तमपि सर्वं ज्ञानकर्मात्मकं साधनं कर्ताऽहमित्यादिमिथ्याज्ञानजत्वात्तत्फलभोगस्य च देहाद्यपेक्षत्वादनर्थार्थमिति तात्पर्येणात्रेष्टोऽर्थस्तस्य ब्रह्मविद्याप्रकरणत्वात्प्राधान्येनोपास्त्यादेरत्राविवक्षितत्वाद्ब्रह्मविद्यायास्त्वविद्योत्थत्वेऽपि परमपुरुषार्थहेतुत्वं श्रुत्यादिसिद्धमितरस्य तदाभासहेतुतेत्यर्थः। संसारस्य सर्वानर्थापेक्षया दुश्चिकित्सत्वविवक्षया तीव्रत्वविशेषणम्। वैदिकोपास्त्यादेरनर्थफलत्वोक्तिः परमपुरुषार्थहेतुब्रह्मविद्याप्रकरणे विफलेत्याशङ्क्याऽऽह—तद्वैराग्येति। "तस्माज्जुगुप्सेते"तिश्रुतेरनर्थरूपात्कर्मादिफलात्ससाधनाद्विद्याधिकृतस्य वैराग्यविधानेच्छया विद्याप्रकरणे तदनर्थफलत्वोक्तिरित्यर्थः ॥५॥

विद्याप्रकरणे विद्यैव निगद्यतां किं वैराग्योक्त्येत्याशङ्क्याऽऽह—यत इति। अविरक्त इति च्छेदः। अतो वैराग्यमधिकारिविशेषणं वाच्यमिति शेषः। कर्मज्ञानफलाद्वैराग्ये ब्रह्मज्ञानफलादपि स्यादविशेषादित्याशङ्क्य आह—तदेतदिति। आत्मनोऽन्यत्रापुरुषार्थे पदनीयत्वयोग्यत्वाभावो हिशब्दार्थः। आगमविरोधादनुमानानुदयान्न ब्रह्मधीफले वैराग्यमित्यर्थः ॥६॥

आत्मतत्त्वस्यापुरुषार्थस्य कथं पदनीयत्वमत आह—पुत्रादिभ्य इति। तथेत्यात्मतत्त्वस्य पदनीयत्वा-

वेदोक्तं निखिलं पुंसः सत्त्वशुद्धिफलं स्मृतम् । कर्म ध्यानादिकं यत्नाच्छ्रेयोऽर्थिभिरनुष्ठितम् ॥ ८ ॥
सम्यक्संशुद्धधिषणः संसारं वेत्ति तत्त्वतः । दृष्टसंसारतत्त्वश्च वैराग्यं संसृतेर्व्रजेत् ॥ ९ ॥
आविरिञ्चाद्विरक्तो हि संसारान्निविवृत्सति । न चोक्तज्ञानकर्मभ्यः सा निवृत्तिः प्रसिध्यति ॥१०॥
वाङ्मनःकायकर्मभ्यस्तत्साध्यकटुकत्वतः । व्युत्थायानर्थ[1]निःसारसाधनान्यनुमार्गति ॥११॥
नित्यान्यपि च कर्माणि तत्संस्कारफलाश्रयात् । परित्यजति सर्वाणि कृत्स्नसंसारदोषदृक् ॥१२॥
संसारवह्निजं दुःखं संभावयति ना परम् । भूयो दुःखं किमन्यत्स्यान्नित्यानुष्ठानहानितः ॥१३॥
मुक्ते[2][मृत्यो]र्बिभ्यत इत्यादि तथाच श्रुतिशासनम् । तन्मूला च स्मृतिः साक्षाद्वेदानित्यादिका स्फुटा
अविज्ञातं परं तत्त्वं जनिमत्कारणं श्रुतौ । आन्त्यात्कार्यात्तदेव स्यात्सर्वकार्यविशेषणम् ॥१५॥

नुसारेणेति यावत् । तथाच तस्य परमानन्दतया परमपुरुषार्थत्वात्कुतो ब्रह्मधीफले वैराग्यमित्यर्थः । ज्ञानकर्मणोरपि ब्रह्मधीवन्नानर्थफलत्वमन्यथा कर्मकाण्डस्यानर्थनिष्ठत्वेनाप्रामाण्यापातादित्याशङ्क्य प्रनाड्या तस्य मोक्षार्थत्वात् नैवमित्याह—वेदेति । आदिशब्देन तद्वासना गृह्यते । यत्नः शास्त्रानुसारित्वम् । श्रेयोर्थिभिर्विना फलविशेषाभिलाषं श्रेयोमात्रमिच्छद्भिरिति यावत् । अनुष्ठितमीश्वरार्पणबुद्ध्येति शेषः । स्मृतं श्रुतं वेत्यर्थः । "येन केनचन यजेते"त्यादिभिः श्रूयते । "यस्यैते चत्वारिंशत्संस्कारा"इत्यादि च स्मर्यते । सत्त्वमन्तःकरणं यस्य शुद्धिस्तदीयरागादिविगमः ॥७-८॥

किमर्था मुमुक्षोर्बुद्धिशुद्धिस्तत्राऽऽह—सम्यगिति । पुनः समिति विशेषणं शुद्धेरतिदृढत्वसिद्ध्यर्थम् । शुद्धिर्विवेकहेतुस्तस्य च वैराग्यं फलमित्याह—दृष्टेति ॥९॥

तत्फलं शमादिद्वारा मुमुक्षुतेत्याह—आविरिञ्चादिति । आ चावीचेरिति शेषः । कर्मादिनैव संसारध्वस्तेर्विद्यावैयर्थ्यात्सर्वमेतदफलमित्याशङ्क्याऽऽह—न चेति । "नान्यः पन्थाः" "नास्त्यकृतः कृतेन" इत्यादिश्रुतेरित्यर्थः ॥१०॥

किं तर्हि मुक्तिसाधनमित्याशङ्क्य संन्यासपूर्वकश्रवणादिजन्यं सम्यग्ज्ञानमित्याह—वागिति । त्रिविधकर्मफलस्यानित्यत्वादिदोषवत्त्वेनासारत्वात्तेभ्यो व्युत्थायानर्थे संसारे निःसारे ध्वस्तिहेतुसम्यग्ज्ञानार्थं कर्माणि संन्यस्योक्तोऽधिकारी श्रवणादीनि पुनः पुनरावर्तयत्यतः सम्यग्ज्ञानान्मुक्तिरित्यर्थः ॥११॥

काम्यनिषिद्धवर्जनेऽपि कुतो मुमुक्षोर्नित्यादित्यागो हेत्वभावादित्याशङ्क्याऽऽह—नित्यान्यपीति । नित्याद्यनुष्ठानकृतसंस्काररूपफलावष्टम्भात्संसारदोषदर्शिनो नित्यादित्यागसिद्धिरित्यर्थः ॥१२॥

"अकुर्वन्विहितं कर्मे"त्यादिस्मृतेर्नित्यादित्यागे प्रत्यवायात्तत्यागायोग इत्याशङ्क्याऽऽह—संसारेति । शुद्धधीर्विरक्तोऽधिकारी नेत्युच्यते । स च नित्यादिकृतदेहादिग्रहप्रयुक्तं दुःखमात्यन्तिकं कुम्भीपाकसमं मन्यते । तथा च नित्याद्यकरणात्पुनरुक्ताद्दुःखादन्यदधिकं दुःखं न किंचिद्भवत्यतस्तत्करणाकरणयोर्दुःखस्य तुल्यत्वादखिलदुःखोत्खातिसम्यग्धीसिद्धये श्रवणादि चिकीर्षुरुक्तोऽधिकारी काम्यादिवन्नित्याद्यपि त्यजति । स्मृतिरविरक्तामुमुक्षुविषयेत्यर्थः ॥१३॥

विरक्तस्य कर्मत्यागे श्रुतिस्मृती प्रमाणयति—मुक्तेरिति । प्रामाण्यार्थं तन्मूलेत्युक्तम् । प्रत्यक्षवदबाध्यार्थबोधित्वेन प्रामाण्यमाह—साक्षादिति । असंदिग्धबोधित्वेनापि तदाह—स्फुटेति ॥१४॥

वैदिकस्य कर्मादेः संसारफलत्वात्ततो विरक्तोऽधिकारी वक्ष्यमाणविद्यायामित्यश्वमेधाधिकारे दर्शितमेव अवान्तरलयानन्तरभाविसर्गोपदेशद्वारा दर्शयितुमव्याकृतवाक्यात्प्राक्तनं वाक्यमित्यात्मैवेत्यादेर्विवक्षितमर्थमुक्त्वा अवान्तरलयान्तरं प्रजापतेः सकाशादुच्यमानाऽपि सृष्टिर्ब्रह्मकर्तृकैवेति वक्तुमज्ञातं ब्रह्मैव सर्वजगत्कारणमित्याह—

१. अनर्थनिस्सारेति—अनर्थरूपात् संसारान्निस्सरणोपायान्, अनु पश्चादन्वेषते ( न्या० ) ।
२. मुक्तेर्बिभ्यत इति मृत्योर्बिभ्यत इति पाठः समीचीनः । "देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्यां प्राविशन्" ( छा०१.४.२ ) इति श्रुतेश्च "वेदानिमं च लोकं चामुं च परित्यज्ये"ति स्मृतिः ।

तेन तेनाऽऽत्मकार्येण स्वात्माभासतमोवधिः । विशिष्टः ससृजे विष्णुस्तेजोबन्नादि मायया ॥१६॥
अविद्ययाऽस्य स्रष्टृत्वं कूटस्थस्यापि सर्वदा । यथावस्तुधियः[1] सूतेः प्राङ्नित्यं तेन तन्मतम् ॥१७॥
ज्ञानकर्मादितन्त्रं सत्सूत्रं जज्ञे ततो विभोः । ज्ञानक्रियाशक्तिमद्यद्यत्रेदं जगदाहितम् ॥१८॥
विराडपि ततो जातस्त्रैलोक्यात्मकदेहवान् । यथोक्तज्ञानकर्मभ्यां मनोर्जन्म ततोऽपि च ॥१९॥
या महाप्रलयात्सृष्टिः सा विरिञ्चस्य वक्ष्यते । आन्तरप्रलयाद्या तु विराजोऽधीयमुच्यते ॥२०॥
स वै शरीरी प्रथमः स वै पुरुष उच्यते । आदिकर्ता स भूतानां ब्रह्माऽग्रे समवर्तत ॥२१॥

उद्भाष्यमात्मपदेन परमात्मानं गृहीत्वा व्याख्यानान्तरम्

प्रत्यग्भूतः परार्थेभ्यो योऽनन्यानुभवं प्रति । प्रथते स इहाऽऽत्मेति जगत्यस्मिन्निगद्यते ॥२२॥

अविज्ञातमिति । श्रुतौ यज्जनिमतो जगतः कारणं श्रुतं तदज्ञानशबलं परमेव तत्त्वमिति योजना । यद्यपि परिशुद्धं ब्रह्म जगतो मूलकारणं तथाऽपि तत्राज्ञानं द्वारीभवति । अन्यथा कूटस्थासङ्गाद्वयस्य तदयोगादिति भावः । परस्य मूलकारणत्वेऽपि सूत्राद्यवान्तरकारणमित्याशङ्क्याऽऽह—आन्त्यादिति । अन्त्यं कार्यं पृथिवी तत्पर्यन्तं सर्वस्य कार्यस्य व्यावर्तकं कारणं सूत्राद्यात्मना परमेव ब्रह्मेत्यर्थः ॥१५॥

कथं निर्विकारस्य परस्य कारणतेत्याशङ्क्याविज्ञातमिति सूचितं विशदयति—तेनेति । स्वात्मनश्चिद्धातोराभासो यत्र तेन तमसाऽवधिशब्दितोपाधिनोपहितः परः सूत्राद्यात्मना स्वकार्येण विशिष्टो भूतभौतिकं जगदुत्पादितवानित्यर्थः । ब्रह्मा स्रष्टा पालयिता विष्णुरीशः संहर्तेत्यर्थभेदं परिहर्तुं विष्णुरित्युक्तम् । उपाधिभूततमसो जगज्जनिप्रयोजकत्वं सूचयति—माययेति ॥१६॥

निर्विकारस्यापि परस्य मायाधीनकारणत्वमुक्तमथ कारणत्वान्मृदादिवन्निर्विकारत्वासिद्धिरित्याशङ्क्य हेतोरन्यथासिद्धेरागमबाधाच्च नैवमित्याह—अविद्ययेति । कौटस्थ्यवत्कारणत्वस्यापि सदा सत्त्वात्किमविद्ययेत्याशङ्क्याऽऽह—यथेति । अन्वयव्यतिरेकाभ्यां "मायां तु प्रकृतिमि"त्यागमाच्चाविद्याधीना स्रष्टृतेत्यर्थः । जगत्कारणं नित्यं चेन्नाविद्याधीनमनित्यं चेदनवस्था प्रसिद्धिविरोधश्चेत्याशङ्क्याऽऽह—नित्यमिति । अनादित्वेन कारणं नित्यमिष्टं न त्वनन्तत्वेनान्यथा विद्यावैफल्यादित्यर्थः ॥१७॥

अज्ञातं ब्रह्म कारणमित्यत्र क्रमं दर्शयति—ज्ञानेति । आदिपदं वासनार्थम् । ततो विभोरित्यव्याकृताद्ब्रह्मणः सकाशादिति यावत् । किं तत्सूत्रं तदाह—ज्ञानक्रियेति । अपञ्चीकृतपञ्चमहाभूततत्कार्यात्मकं लिङ्गं सूत्रं तच्च क्रियाशक्तिमत्प्राणाख्यं ज्ञानशक्तिमच्च हिरण्यगर्भाख्यमित्यर्थः । तत्र सूत्रे कार्यलिङ्गकमनुमानमाह—यत्रेति । न हीदमनाधारं सिध्यति । न च सूत्रादन्यदस्याऽऽधारो "वायुना वै गौतम सूत्रेणे"त्यादिश्रुतेरतो दृश्यस्थूलकार्याश्रयं सूत्रमित्यर्थः ॥१८॥

अज्ञातात्परस्मात्सूत्रोपाधेर्विराडुत्पत्तिमाह—विराडपीति । कोऽसौ विराडित्यपेक्षायां पञ्चीकृतपञ्चमहाभूततत्कार्यात्मक इत्याह—त्रैलोक्येति । तदुत्पत्तौ निमित्तमाह—यथोक्तेति । विराजा स्थितात्परस्मान्मनोरुत्पत्तिमाह—मनोरिति । ततः परस्मान्मनूपाधेः सर्वेयं मानवी सृष्टिरित्याह—ततोऽपीति । सर्वसृष्टौ ज्ञानकर्मणोर्निमित्तत्वमविशिष्टमिति वक्तुं चशब्दः ॥१९॥

कुत्र सूत्रसृष्टिर्मूलकारणादुच्यते तद्धेदमित्यादावित्याह—येति । महाप्रलयादनन्तरमिति शेषः । विरिञ्चस्य शक्तिद्वयवतः सूत्रस्येत्यर्थः । यद्यपि सूत्राद्विराजः सृष्टिरश्वमेधब्राह्मणे व्याख्याता तथाऽपि विराजो मन्वादिसृष्टिः कुत्रोच्यते तत्राऽऽह—आन्तरेति । अवान्तरप्रलयादधि परस्ताद्या विराजो मन्वादिसृष्टिः सेय"मिममेवाऽऽत्मानं द्वेधाऽपातयदि"त्यत्रोच्यत इत्यर्थः ॥२०॥

मन्वादिस्रष्टरि विराजि पौराणिकसंमतिमाह—स वा इति । स्थूला व्यष्टयो भूतशब्देन गृह्यन्ते । अग्रे व्यष्टीभूतस्थूलपिण्डसर्गात्पूर्वमिति यावत् ॥२१॥

भाष्यानुसारेणाऽऽत्मेत्यादिवाक्यतात्पर्यमुक्त्वोद्भाष्यमेव परात्मपरत्वेन वाक्यं व्याकुर्वन्नात्मशब्दार्थमाह—

---

१. यथावस्तुधिय इति । सूतेः सृष्टे प्राक् यथावस्तु वस्त्वनतिक्रम्य धीमतः कूटस्थस्य स्रष्टृत्वम् ।

आत्माभासैकसंसिद्धेस्तदज्ञानसमुद्भवम् । आत्मैव भण्यते मोहात्तदात्माव्यतिरेकतः ॥२३॥
एवेत्यवधृतावेतदात्मीयार्थनिषेधकृत् । मन्वादि जन्मनः पूर्वमात्मैवेदमभूज्जगत् ॥२४॥
अध्यात्मादिविभागे स्यादात्मात्मीयादिभेदधीः । तस्मिन्नसति सा न स्यादपेक्षाविरहाद्विभोः ॥२५॥
मिथोपास्तव्यपेक्षं हि नामरूपादिमज्जगत् । प्रत्यङ्मात्रप्रमाणं स्यात्पराङ्वेति चित्रताम् ॥२६॥

## प्रसंगात् अद्वैतज्ञानान्मोक्षः भेदज्ञानात् संसारभयम्

अपामार्गलतेवायं विरुद्धफलदो भवः । प्रत्यग्दृशां विमोक्षाय संसाराय पराग्दृशाम् ॥२७॥
व्याकृताव्याकृतं विश्वं प्रत्यक्प्रत्ययमात्रकम् । मोहोत्थाहमितिज्ञानाद्भयारत्यादिमद्भवेत् ॥२८॥

प्रत्यगिति । अस्मिञ्जगति परार्थेभ्यः कार्यकारणेभ्यः प्रत्यग्भूतः स्वभावानुभवमपेक्ष्यैव प्रतिभूतं यः प्रथते स कार्यकारणहीनः स्वप्रकाशोऽत्राऽऽत्मशब्देनोच्यते । "आत्मा वा इदमेक एवाग्र आसीदि"तिवद् "आत्मगृहीतिरितरवदुत्तरादि"[1]ति न्यायादित्यर्थः ॥२२॥

भूतात्मा चेन्द्रियात्मा चेत्यादौ भूतादावप्यात्मशब्दात्तदेवात्र किं न ग्राह्यमित्याशङ्क्याऽऽह—आत्माभासेति । आत्माज्ञानोद्भूतं भूतादि जाड्यान्न स्वतः सिध्यत्यतश्चिदाभासेनैकेनैव तत्सिद्धेस्तदात्मन्यध्यस्तमात्मेत्युच्यते कल्पितस्याधिष्ठानमन्तरेण सत्तास्फूर्त्योरभावात्तद्भूताद्यात्माभासत्वान्नात्राऽऽत्मशब्दः । न हि संभवति मुख्ये गौणार्थो ग्राह्य इत्यर्थः । अथाऽऽत्मशब्दार्थस्य कार्यकारणवैलक्षण्ये परिच्छेदः स्यान्नेत्याह—मोहादिति । कार्यादिरात्मनः सकाशान्मोहादेवातिरेकाद्वस्तुतस्तदात्मैवेति नास्ति परिच्छेद इत्यर्थः ॥२३॥

एवशब्दार्थं वदन्नवधृतिस्वरूपमाह—एवेतीति । परिशिष्टपदत्रयार्थं वदन्वाक्यार्थमाह—मन्वादीति । इदं मन्वादि जगदिति सम्बन्धः । आदिशब्देनाऽऽकाशादिग्रहः ॥२४॥

प्रागवस्थायामज्ञातात्ममात्रत्वेऽपि ज्ञेयस्य जगतो न तज्ज्ञानाभावो ब्रह्मणः सर्वज्ञत्वादतोऽवधारणानुपपत्तिरित्याशङ्क्याऽऽह—अध्यात्मादीति । आदिपदमधिभूताधिदैवसंग्रहार्थं द्वितीयं च तदन्यान्यदीयमिति भेदधियं संग्रहीतुम् । सत्येवार्थे ज्ञानं, निरालम्बनज्ञानायोगादतो ज्ञेयवज्ज्ञानमपि प्राङ्नान्यदस्तीत्यर्थः । कथं तर्हि तदा ब्रह्म सर्वज्ञं न हि कांचिदवस्थामास्थाय तत्तथोच्यते तत्राऽऽह—अपेक्षेति । असत्यर्थे तज्ज्ञानापेक्षाभावादीश्वरस्य विद्यमानसर्वार्थाप्रतिबन्धज्ञानात्सर्वज्ञतेत्यर्थः ॥२५॥

प्रागवस्थायां ज्ञानज्ञेययोरभावे जगदभावनिष्ठं स्यादिति शून्यवादमाशङ्क्याऽऽह—मिथ इति । इदं ज्ञानमिदं ज्ञेयमित्यादिनाऽन्योन्यमपेक्षाशून्यं नामरूपकर्मात्मकं जगत्प्रत्यङ्मात्ररूपत्वेन प्रागुत्पत्तेस्तत्परिमाणं तन्निष्ठमेव स्यात्तन्नाभावनिष्ठतेत्यर्थः । सदनुवेधेनाधिगतस्य जगतो नाभावनिष्ठतेति वक्तुं हीत्युक्तम् । प्रपञ्चस्याऽऽत्ममात्रत्वे तस्यैकरूप्यात्तस्यापि तथात्वमेकस्यानेकरूपत्वायोगादित्याशङ्क्य सर्गकाले प्रतीचो भेदेन पराक्त्वमासाद्य नानात्वमित्याह—पराङिति ॥२६॥

आत्ममात्रत्वेन प्रपञ्चस्यैकरूप्ये तद्भेदेन नानात्वे च फलितमर्थं दृष्टान्तेनाऽऽह—अपामार्गेति । सा खल्वानुलोम्येनाऽऽलभ्यमाना मृदुस्पर्शतया दुःखाभावहेतुः प्रातिलोम्येन स्पृश्यमाना तु कर्कशत्वेन दुःखहेतुरेवमेव संसारो विरुद्धफलनिबन्धमित्यर्थः । संसारस्य विरुद्धफलत्वमेव स्फुटयति—प्रत्यगिति । ये संसारं प्रत्यङ्मात्रतया पश्यन्तस्ततो भेदेन तदभावं मन्यन्ते तेषामनर्थध्वस्तये स स्यान्नहि प्रत्यङ्मात्रतया दृष्टः संसारस्तद्भेदमलभमानोऽनर्थमाधातुमलम् । ये तु प्रतीचः सकाशात्पराञ्चं स्वातन्त्र्येण लब्धसत्ताकं प्रपञ्चं पश्यन्ति तेषां सोऽनर्थाय भवति । "द्वितीयाद्वै भयं भवती"ति वक्ष्यमाणत्वादित्यर्थः ॥२७॥

उक्तरीत्या बन्धमोक्षहेतौ तस्मिन्किं मानं ? साक्षिप्रत्यक्षमित्याह—व्याकृतेति । प्रतीचो भेदेन व्यक्तनामरूपं

---

१. आत्मगृहीतिः—आत्मा वा इदमित्यत्र शुद्धस्य ब्रह्मणो ग्रहणं वाच्यम् इतरवत् "तस्माद्वा एतस्मादात्मन आकाशः सम्भूत" इत्यत्र विद्यमानात्मशब्दवत्, कुतः उत्तरात् उत्तरत्र जगत्सृष्टिवचनात् ( ३-३ ) ।

अहंममेतिविज्ञानं विद्यया ध्वंसितं यदा । तदाऽद्वये दृशौ दृष्टे न भयादि तमोहृतेः ॥२९॥
इदं धीनामगम्यं यच्चित्रं सत्प्रथते हिरुक् । मन्वादि सृष्टेस्तत्पूर्वमात्मैवाभूदिदं जगत् ॥३०॥

शुद्धात्मनः पुरुषविधत्वप्राप्तिनिरूपणम्

एतावद्वास्तवं वृत्तं मोहोत्थं भण्यतेऽधुना । कोशपञ्चकतां यातः प्रत्यगज्ञानतो यतः ॥३१॥
स एष परमोऽप्यात्मा कामाविद्याद्युपप्लवात् । संवृत्तः पुरुषाकार इत्यनुक्रोशतीव नः ॥३२॥
आनन्दाद्यन्नपर्यन्तान्कारणेतररूपिणः ।
पुरुषादिप्रकारांस्तान्प्रत्यक्त्वानलक्षयत् । पुरुषविध इत्युक्त्या ह्यूर्ध्वं चैवं प्रवक्ष्यते ॥३३॥
वाङ्मनःप्राणकोशांस्त्रीन्विराडन्नमयः स्वयम् । तद्धेदमिति चाऽऽनन्दो नैवेहेति तथोच्यते ॥३४॥
अग्निर्मूर्धेति च तथा मन्त्रेणापि प्रकाशितः । सामानाधिकरण्यं च तद्धेदमिति युक्तिमत् ॥३५॥

जगदनर्थहेतुतया दृष्टं तन्मात्रत्वेनोपलब्धमव्यक्तनामरूपं तदेवानर्थनिर्बाहि स्वसाक्षिकमित्यर्थः । पराक्त्वेन दृष्टस्य जगतोऽनर्थहेतुत्वं समर्थयते—मोहेति । तदुत्थे द्वैतेऽहमिति वा ममेति वा ज्ञानात्तदेव ज्ञानद्वयगम्यं भयादिहेतुर्भवतीत्यर्थः ॥२८॥

प्रत्यङ्मात्रतया दृष्टस्य मोक्षहेतुत्वं साधयति—अहमिति । यदा सर्वस्य प्रत्यक्त्वविद्ययाऽपरोक्षयाऽऽगमादिकृतया द्विविधा मिथ्याधीरपनीता तदा दृगात्मन्यद्वये साक्षात्कृते मूलाज्ञानध्वस्तेर्भयारत्याद्यनवकाशमित्यर्थः ॥२९॥

आत्मैवेत्यादिवाक्यव्याख्यानप्रसङ्गप्राप्तं परिसमाप्य प्रकृतवाक्यव्याख्यामुपसंहरति—इदमिति । हिरुगात्मनः सकाशात्पृथगित्यर्थः । मन्वादिशब्दस्य पूर्ववदन्वयः ॥३०॥

उक्तवक्ष्यमाणयोर्विशेषार्थमुक्तमनुवदति—एतावदिति । कथं तर्हि तस्याखण्डैकरसस्य पुरुषविधत्वं तत्राऽऽह—मोहेति । मोहवशात्परस्य पुरुषप्रकारत्वमुक्तं व्यक्तीकरोति—कोशेति । कार्यकारणनिर्मुक्तः स्वप्रकाशः परः प्रत्यगाश्रयविषयाज्ञानादविद्यास्मिताद्युपद्रवादन्नमयादिकोशपञ्चकत्वं यतो यातोऽतः स पुरुषाकारो जात इत्यस्मान्मुमुक्षून्दृष्ट्वा पुरुषविधश्रुतिरस्येयमवस्था कथमित्यनुक्रोशमिव करोति तन्नास्य वास्तवी पुरुषविधतेत्यर्थः ॥३१-३२॥

पुरुषविधशब्दात्तत्प्रकारमात्रे भाति कथं कोशपञ्चकग्रहणमित्याशङ्क्य लक्षणयेत्याह—आनन्दादीति । आनन्दमयः कारणरूपी, अन्ये चत्वारः कार्यरूपिणः कारणरूपिणश्चेति भेदः । पुरुषादीत्यादिपदं स्त्रीनपुंसकार्थम् । आनन्दमयादीनां पृथक्पृथगात्मत्वात् पुरुषत्वमेव न तद्विधतेत्याशङ्क्याऽऽह—प्रत्यगिति । प्रत्यगेव तत्त्वमेषां तत्र कल्पितानां कोशानां तानिति यावत् । कोशपञ्चकलक्षकत्वे पुरुषविधोक्तेर्योग्यतां वक्तुं हिशब्दः । नन्वत्र कोशपञ्चकं न श्रूयते न च श्रुत्यन्तरस्थमिह लक्ष्यते प्रत्यासत्यभावात्तत्राऽऽह—ऊर्ध्वं चेति । श्रुत्यन्तरं दृष्टांतयितुं चशब्दः । प्रवक्ष्यते कोशपञ्चकमिति शेषः ॥३३॥

कथमुत्तरत्र कोशपञ्चकोक्तिर्न हि तैत्तिरीयकवदत्र तद्वाचकशब्दोऽस्ति तत्राऽऽह—वागिति । मनोवाचं प्राणमिति कोशत्रयमन्नाधिकारे वक्ष्यते । वाक्शब्देन विज्ञानमयो गृह्यते । त्रीन्प्रवक्ष्यतीति शेषः । पुरुषविधशब्देनान्नमयकोशोक्तिरित्याह—विराडिति । यद्वा यः स्वयं मन्वादिस्रष्टृत्वेन विराडात्मा स्थितः सोऽनुवीक्ष्येत्यादौ वक्ष्यत इत्याह—विराडिति । "तद्धेदमि"त्युत्तरत्र "नैवेह किंचने"ति पूर्वत्र चाऽऽनन्दमयकोशोक्तिर्विवक्षितेत्याह—तद्धेति ॥३४॥

अन्नमयं विराजमधिकृत्य सृष्टिरनन्तरं वाच्येति विशेषतस्तत्र मन्त्रसंवादं दर्शयति—अग्निरिति । विराडात्मविषयवाक्यान्तरं समुच्चेतुं चशब्दः । यथोक्तवैराजरूपानुरोधस्तथाशब्दार्थः । पुरुषविधशब्दादिने-

पृथिव्याद्यक्षरान्तश्च प्रश्नो वाचक्नवस्तथा ।।३६।।

विराजमेवात्मशब्दार्थं यथाश्रुतं गृहीत्वा व्याख्या

प्रत्यग्दृष्ट्यनुविद्धाहंप्रत्ययैकप्रमाणकः । सोऽनुवीक्ष्याऽऽत्ममोहोत्थदृष्ट्याऽविद्योत्थरूपकम् ।।३७।।
यदभ्यस्तं पुराऽस्याभूदहमेवेदमित्यदः । दर्शनं तदपेक्ष्यायमनुशब्दः प्रयुज्यते ।।३८।।
अहमेवेदमस्मीति दर्शनं यत्सुभावितम् । तत्फलं यत्तदन्वीक्ष्य नाऽऽत्मनोऽन्यद्ददर्श सः ।।३९।।
तस्मादर्थान्तरासूतेरेकपिण्डात्ममात्रतः । नापश्यदपरं किंचित्सोऽहमित्यभ्यधादथ ।।४०।।
त्रैलोक्यात्मकदेहात्मा नापश्यदपरं पृथक् । भिन्नार्थानभिसंबन्धात्प्रतीच्येवास्य धीरभूत् ।।४१।।
सशब्दं दर्शनं यादृक्प्रागभ्यस्तं तथैव सः । व्याजहार फलावस्थो ह्यहमित्यात्मवाचकम् ।।४२।।
उपासनार्थं नामास्य तस्योपनिषदित्यतः[1] । अतोऽहमित्यनेनैव ह्यात्मनाऽऽत्मानमभ्यधात् ।।४३।।

वेत्यपेरर्थः । प्रकाशितो विराडिति शेषः परस्यैव स्वाज्ञानात्कारणेतररूपकोशपञ्चकव्याप्त्या पुरुषविधत्वमित्यत्र वाक्यशेषानुगुण्यमाह—सामानाधिकरण्यं चेति । अज्ञातपरवाचकतच्छब्दस्य कोशपञ्चकात्मकजगद्वाचकेदंशब्दस्य च सामानाधिकरण्यं परस्यैव कोशपञ्चकत्वं सूचयति । भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे प्रवृत्तिः सामानाधिकरण्यमिति स्थितेरित्यर्थः ।।३५।।

परस्यैव कोशपञ्चकत्वे पाञ्चमिकं सर्वस्य जगतोऽक्षरे पर्यवसानविषयं प्रश्नमनुकूलयति—पृथिव्यादीति । वाचक्नवी गार्गी तया कृतो वाचक्नवः । तथा परस्य कोशपञ्चकत्वानुरोधेनेति यावत् । नहि परस्याक्षरस्य कोशपञ्चकात्मकजगद्रूपत्वाभावे तस्य तस्मिन्नवसानं युक्तमिति भावः । "आत्मैवे"त्यादि "पुरुषविध" इत्यन्तं स्वमतेन व्याख्याय भाष्योक्तं विराजमेवाऽऽत्मशब्देन गृहीत्वा पूर्वं देहान्तरोत्पत्तेः सर्वं तद्भेदजातं तन्मात्रमासीत्स च पुरुषप्रकारः शिरःपाण्यादिमानित्येवं वाक्यार्थमादायोत्तरमादत्ते—प्रत्यगिति । आत्मचैतन्यव्याप्ताहंधीमात्रगम्यो विराडात्मा प्रत्यगविद्याकृतं प्रपञ्चं मोहोत्थया दृष्ट्याऽनुवीक्ष्य नाऽऽत्मनोऽन्यदपश्यदित्यर्थः ।।३६–३७।।

अथायमनुशब्दः सामीप्यं पाश्चात्यं वा ब्रूते नोभयथाऽपि युक्तः संनिहितप्रकृतान्वययोग्याद्दृष्टेस्तत्राऽऽह—यदिति । त्रैलोक्यात्मकमिदं वैराजं रूपमहमिति यद्दर्शनमस्य यजमानदशायामभ्यस्तं तदपेक्षोऽनुशब्दः प्रयुक्तोऽतो न तद्वैयर्थ्यं पाश्चात्यवाचित्वादित्यर्थः ।।३८।।

ननु यथोक्तं दर्शनं यजमानावस्थमास्थाय नानुशब्दो युक्त ईक्षणशब्देनापि तस्यैवोक्तेर्नहि तदपेक्षं तस्यैव पाश्चात्यं तत्राऽऽह—अहमेवेति । तस्य दर्शनस्य यत्फलं तदन्वीक्ष्येत्यत्रेक्षणमित्यर्थः । नान्यदित्याद्यादत्ते—नेति ।।३९।।

तद्व्याचष्टे—तस्मादिति । विराड्देहाद्देहान्तरस्यानुत्पत्तेरात्मीयं पिण्डमात्रं स दृष्टवांस्ततोऽन्यत्स्वतन्त्रं परतन्त्रं वा न किंचिदित्यर्थः । अपरमपश्यन्विराडात्मा किं कृतवानित्यपेक्षायामाह—सोऽहमिति । स्वव्यतिरिक्तादर्शनानन्तर्यमथशब्दार्थः ।।४०।।

तद्व्याख्यातुं पूर्ववाक्यार्थमनुवदति—त्रैलोक्येति । अपरं स्वतन्त्रं परतन्त्रं वेत्यर्थः । तत्र हेतुमाह—भिन्नेति । स्वदेहातिरिक्तेनासंनिकर्षात्तस्मिन्विराजो न धीश्चेत्कुत्र तर्हि तस्य धीरिति तत्राऽऽह—प्रतीचीति ।।४१।।

कथं प्रतीचि स्वदेहे तस्य धीरासीदित्याशङ्क्य सोऽहमित्यादि व्याचष्टे—सशब्दमिति । प्राग्यजमानावस्थायामिति यावत् । यजमानावस्थस्य फलावस्थस्य च प्रजापतेरेकत्वं हेतुं कर्तुं हिशब्दः ।।४२।।

प्रजापतेरहमिति नाम किमर्थं कथ्यते साधारणं हीदं सर्वेषामिति तत्राऽऽह—उपासनार्थमिति । तत्र श्रुतिं प्रमाणयति—तस्येति । तस्याऽऽध्यात्मिकस्य चाक्षुषस्य पुरुषस्याहमिति रहस्यं नामेत्यतो वाक्यादहंनामत्वं प्रजापतेर्ध्यानार्थमिष्टमित्यर्थः । नामान्तरेषु सत्सु किमित्येतेनैवाऽऽत्मानमुक्तवानित्याशङ्क्याऽऽह—अत इति ।

१. तस्योपनिषदिति—पञ्चमे "तस्योपनिषदहमिति" इत्याध्यात्मिकपुरुषोपासनेऽहमित्यनुसन्धानं विहितम् ।

**अहमित्यभ्यधादग्रे यस्मादात्मानमात्मना । अहंनामाभवत्तस्माद्विराडेष प्रजापतिः ॥४४॥**
**तत्कार्यगेण लिङ्गेन ज्ञापयन्कारणाभिधाम् । तस्मादपीति वक्त्येतां प्रसिद्धिं लोकसाक्षिकीम् ॥४५॥**
**यथोक्तमहिमः कस्मात्संवृत्तः पुरुषो विराट् । इतिहेतूपदेशाय स यदित्यादि भण्यते ॥४६॥**
**मिथो जिगीषतां पुंसां ज्ञानकर्मादिसाधनैः । पुरा देवात्मतां योऽगात्प्लुष्टास्तेनेतरे जिताः ॥४७॥**
**वैराजपदसंप्रेत्सोर्यजमानमहाजनात् । एनांस्यौषद्यतोऽग्रेऽतः संवृत्तः पुरुषाभिधः ॥४८॥**
**औषत्स्वान्पाप्मनः पूर्वं ज्ञानाद्यतिशयाग्निना । वैराजपदलिप्सुभ्यस्तेनासौ पुरुषाभिधः ॥४९॥**
**यथोक्तोपासनफलं वक्ष्यामीत्युत्तरं वचः । ओषतीत्यादिकं ज्ञेयं वेदोपासीत यः सदा ॥५०॥**
**योऽसावतीन्द्रियोऽग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः । सर्वभूतमयोऽचिन्त्य स एव स्वयमुद्बभौ ॥५१॥**
**पुरुषोऽस्मीत्युपास्त्यर्थं पुरुषार्थोऽयमुच्यते । ओषतीत्युक्तितः साक्षाद्गुणोपास्तिफलश्रवात् ॥५२॥**

उक्तादुपास्त्यर्थत्वादिति यावत् । आत्मनेत्यात्मवाचिनाऽहंशब्देनेत्यर्थः । तस्याऽऽत्मवाचित्वप्रसिद्ध्यर्थो हिशब्दः ॥४३॥

ततोऽहंनामाभवदित्यस्यार्थमाह—अहमिति । अहमित्यात्मनेति संबन्धः ॥४४॥

प्रजापतिरहमित्यग्रे व्याजहार ततोऽहंनामाभूदित्यत्र किं मानमित्याशङ्क्य तस्मादित्यादिवाक्यतात्पर्यमाह—तदिति । प्रजापतिकार्यभूतप्रजावर्गगतेनाहमिति व्याहरणेन प्रथमप्रवृत्तेन लिङ्गेन कारणेऽपि तस्मिन्नहमित्यभिधानं तस्मादित्यादिना ज्ञापयन्वेदस्तस्याहंनामत्वे लोकप्रसिद्धिं च प्रमाणयतीत्यर्थः ॥४५॥

विराजः सर्वात्मत्वस्य दर्शितत्वात्पुरुषत्वानियमा"त्स वै पुरुष" इतिस्मृतिविरोध इति शङ्कते—यथेति । नकारलोपं वैकल्पिकं मन्यते । विराजः पुरुषत्वे हेतूक्त्यर्थमुत्तरवाक्यमित्याह—इतिहेत्विति ॥४६॥

तस्यार्थं संक्षिपति—मिथ इति । अहमहमिकया प्राथम्येन प्रजापतित्वप्रेप्सूनां मध्ये प्रथमत एव ज्ञानादिहेत्वतिशयाद्यस्तद्भावं गतवांस्तेनेतरे दग्धवज्जिता भवन्ति तस्मात्पूर्वमौषदिति पुरुषो विराडित्यर्थः ॥४७॥

तस्मात्पुरुष इत्यस्यार्थमाह—वैराजेति ॥४८॥

एनसां प्रजापतित्वप्रतिबन्धकानां दाहे हेतुमनुवदन्विराजो यौगिकं पुरुषत्वमित्युक्तं निगमयति—औषदिति ॥४९॥

किमिति नामान्तरेषु सत्सु पुरुषनामनिरुक्तिरित्याशङ्क्य तन्नाम्नस्तस्योपास्त्यर्थमिति मत्वाऽऽह—यथोक्तेति । पुरुषगुणकविराडुपासको मन्दोपासकान्फललिप्सून्निजित्याऽऽदावेव ध्यानाद्यतिशयात्प्रजापतिर्भवतीति वाक्यार्थं विवक्षन्नाह—वेदेति ॥५०॥

येन प्रजापत्यात्मना विद्वानवतिष्ठते तत्र मानवीं स्मृतिं प्रमाणयति—योऽसाविति । ज्ञानेन्द्रियाविषयत्वमतीन्द्रियत्वम् । कर्मेन्द्रियाविषयत्वमग्राह्यत्वम् । उभयत्र हेतुः सूक्ष्म इति । परमाणुतुल्यत्वं पराकर्तुं व्याकरोति—अव्यक्त इति । तस्यासत्त्वमित्याशङ्क्याऽऽह—सनातन इति । तदेव सर्वात्मत्वेन साधयति—सर्वेति । अन्तःकरणाविषयत्वमाह—अचिन्त्य इति । उक्तरूपः परो न विराडित्याशङ्क्याऽऽह—स एवेति । पर एव स्वयमेवाव्याकृतसूत्रद्वारा विराड्भावेनोद्भूत इत्यर्थः ॥५१॥

वागादौ धेन्वादिधीवत्पुरुषगुणे विराजि धीर्नहि तेन ध्यातुस्तादात्म्यमन्यस्यान्यत्वायोगादित्याशङ्क्याऽऽह—पुरुष इति । पुरुषगुणे विराज्यहंग्रहोपास्तिरिष्टेत्यत्र पुरुषनिरुक्तिं प्रमाणयति—इत्युपास्त्यर्थमिति । फलान्तरादृष्टेर्ध्यानार्थपुरुषनामनिर्वचनेऽपि कथं तद्गुणे विराज्यहंग्रहोपास्तिरित्याशङ्क्याऽऽह—ओषतीति । साक्षात्सूत्रभावस्य पुरुषगुणविराडुपास्तिफलस्य यथोक्तवाक्यतः श्रुतेस्तत्क्रतुन्यायेन विराज्यहंग्रहोपास्तिसिद्धिरित्यर्थः ॥५२॥

विराट्पुरुषेऽहंग्रहोपास्तिविधिरिति तात्पर्यम्

अभिष्टुतं प्रयत्नेन फलं यज्ज्ञानकर्मणोः । एवंमहिममप्येतत्संसारं नात्यवर्तत ॥५३॥

मू.—सोऽबिभेत्तस्मादेकाकी बिभेति । स हायमीक्षांचक्रे यन्मदन्यन्नास्ति कस्मान्नु बिभेमीति । तत एवास्य भयं वीयाय कस्माद्ध्यभेष्यद्द्वितीयाद्वै भयं भवति ॥२॥

प्रत्यग्याथात्म्यविज्ञानविरहादन्यसाधनः । यावत्किंचित्फलं नादः सर्वानर्थनिवृत्तये ॥५४॥
निरस्तातिशयं कर्म ज्ञानं चाऽऽप्यापि बालवत् । यतोऽबिभेदविद्यावानतोऽसावस्मदादिवत् ॥५५॥
न ह्यविद्यामनादाय वस्तुयाथात्म्यसंश्रयात् । कश्चिद्धि भेत्यबिभेच्च तेनाविद्वान्प्रजापतिः ॥५६॥
प्रत्यग्याथात्म्यविद्यैव निःशेषपुरुषार्थकृत् । इत्येतत्प्रतिपत्त्यर्थं विराट्स्थानस्य कुत्सनम् ॥५७॥
यतोऽबिभेद्विराट्पूर्वमेकाक्यस्मीति मूढवत् । तस्मात्तत्कार्यभूतोऽज्ञ एकाक्यद्य बिभेति ना ॥५८॥
एवं भयाभिभूतः स ईक्षांचक्रेऽथ लोकवत् । भयाहेतु यथातत्त्वदर्शनं कृतवान्विभुः ॥५९॥
स्रजीव कल्पिताहिर्ना तत्त्रासादाकुलेन्द्रियः । आलोचयेद्यथातत्त्वं भीध्वस्तौ तद्वदीश्वरः ॥६०॥
आलोचयन्यथातत्त्वमपास्तध्वान्ततद्भवम्[1] । अनन्यानुभवं साक्षाद्ददर्शैकात्म्यमात्मनि ॥६१॥
प्रत्यग्याथात्म्यविज्ञानशिखिप्लुष्टमहत्तमाः । आप्ताऽशेषपुमर्थोऽथ सोऽमन्यत ततो विराट् ॥६२॥

ज्ञानकर्मफलं सौत्रं पदमुत्कृष्टत्वान्मुक्तिरित्युच्यते तदन्यमुक्त्यभावात्तद्धेतुसम्यग्धीसिद्धये प्रवृत्तिरनर्थिकेत्याशङ्क्य सोऽबिभेदित्यस्य तात्पर्यमाह—अभिष्टुतमिति । ज्ञानकर्मफलं त्रैलोक्यात्मकसूत्रत्वमुत्कृष्टमपि संसारान्तर्भूतमेव न कैवल्यमिति वक्तुमुत्तरवाक्यमित्यर्थः ॥५३॥

ताभ्यामाप्तसूत्रत्वादशेषानर्थध्वस्तेर्न सौत्रं फलं संसारान्तर्गतमित्याशङ्क्याऽऽह—प्रत्यगिति । तत्त्वज्ञानं विना हेत्वन्तराधीनं सौत्रं फलं नानर्थसार्थध्वंसार्थं भयारत्यादिदृष्टेरित्यर्थः ॥५४॥

ज्ञानकर्मफलस्य प्रजापतेर्न भयादि युक्तं तद्धेत्वविद्याभावादित्याशङ्क्याऽऽह—निरस्तेति । उत्कृष्टे कर्मज्ञाने लब्ध्वा तत्फलभूतोऽपि मूढवद्यतो विराड्भीतवानतो भयादिकार्यदृष्ट्या सोऽविद्यावान्कल्प्यते संमतमूढवत् । तस्य च विद्यमानाऽपि विद्याऽऽरब्धकर्मप्रतिबन्धान्न सर्वात्मनाऽविद्यां निवर्तयत्यधुनातनजीवन्मुक्तवदिति भावः ॥५५॥

विराजो भयहेतुरविद्याऽस्तीत्यन्वयमुखेनोक्त्वा व्यतिरेकमुखेनाऽऽह—न हीति । मा तर्हि तस्य भयं भूत्तत्राऽऽह—अबिभेच्चेति । अन्वयव्यतिरेकसिद्धमर्थं निगमयति—तेनेति ॥५६॥

कर्मज्ञानफलभूतो विराडुत्कृष्टत्वेन प्रागुक्तोऽधुना निन्द्यते तत्कथं पङ्कप्रक्षालनन्यायो नावतरेदित्याशङ्क्याऽऽह—प्रत्यगिति ॥५७॥

तस्मादेकाकी बिभेतीत्यस्यार्थमाह—यत इति । कार्यगतेन भयलिङ्गेन कारणे प्रजापतौ तदनुमेयमिति भावः ॥५८॥

स हायमित्यादेरर्थमाह—एवमिति । किं तदीक्षणमिति विवक्षित्वा पृच्छति—अथेति । परिहरति—भयेति । भयध्वस्तिहेतुभूतं तत्त्वज्ञानं प्रजापतिः संपादितवानित्यर्थः ॥५९॥

लोकवदिति दृष्टान्तं सदार्ष्टान्तिकं स्पष्टयति—स्रजीति ॥६०॥

आलोचनफलमाह—आलोचयन्निति । दर्शनस्यापरोक्षत्वद्योतनार्थं साक्षादित्युक्तम् ॥६१॥

ऐक्यसाक्षात्कारफलमाह—प्रत्यगिति । अथशब्दो यदार्थे । ततःशब्दस्तदार्थे । अमन्यताऽऽत्मानं कृतार्थमिति शेषः ॥६२॥

---

१. अपास्तध्वान्ततद्भवम् निरस्ताज्ञानतत्कार्यम् अनन्यानुभवं स्वप्रकाशम् ।

देहेन्द्रियमनोबुद्धिभावाभावादिसाक्षिणम् । प्रत्यञ्चं मदिति प्राह तद्दृष्ट्या नेक्षते द्वयम् ॥६३॥
प्रतीच्येव यदेहाऽऽत्मा प्रत्यगात्मानमीक्षते । अन्वयव्यतिरेकाभ्यां ब्रह्मास्मीति तदेक्षते ॥६४॥
प्रत्यग्दृष्ट्या तदज्ञानतज्जं नैवेक्षते स्वतः । ब्रह्मप्रतीचोरैकात्म्यात्तद्दूरीकृत्य गर्जति ॥६५॥
प्रत्यक्तां मदिति प्राह त्वन्यन्नास्तीति चैकताम् । कस्मादिति च हेतूक्तिर्भीत्याचिक्षिप्सया परम् ॥६६॥
प्रत्यक्ता ब्रह्मणो यस्माद्ब्रह्मता चाऽऽत्मनः स्वतः । एवं सति कुतो मे भीरिति विद्वांस्त्रपायते ॥६७॥
ब्रह्मविद्यामृते नान्यद्भयहेतुविनाशकृत् । संभाव्यमिति नः प्राह तत एवेति च श्रुतिः ॥६८॥
प्रत्यगज्ञानमेवैकं भीतिहेतुर्भवेद्यदि । तत एवेति वचनं तदेवं स्यात्समञ्जसम् ॥६९॥
कस्माद्ध्यभेष्यदिति च पूर्वोक्तार्थसमर्थनम् । श्रुत्याऽकारि कुतो भीतिर्ध्वस्ताज्ञानतदुद्भवे ॥७०॥

प्रजापतेः एकत्वदर्शनहेतुविचारः

प्रजापतेराविरभूत्कुत एकत्वदर्शनम् । शास्त्राचार्यादितद्धेतोरसत्त्वात्तदसंभवः ॥७१॥
अन्यानपेक्षं तदभूदिति चेन्नैवमिष्यते । अस्मदादेरपि तथा प्रसङ्गः स्यान्न चेक्ष्यते ॥७२॥
मतं जन्मान्तराभ्याससंस्कारोत्थमिदं यदि । नैरर्थक्यप्रसक्तिः स्यात्सम्यग्ज्ञानस्य सर्वतः ॥७३॥

यन्मदन्यन्नास्तीत्यत्र मच्छब्दार्थमाह—देहेति । आदिपदेन तद्गुणादिग्रहः । वाक्यार्थान्वयित्वमर्थस्य मच्छब्दार्थस्य ज्ञानफलमाह—तद्दृष्ट्येति ॥६३॥

वाक्यार्थज्ञानादेव तद्द्वैतदृष्टिध्वस्तेरलं पदार्थधियेत्याशङ्क्य तां विना वाक्यार्थज्ञानायोगान्मैवमित्याह—प्रतीचीति । इहेति परिशोधनावस्थोक्तिः । आत्मेत्यधिकारिणो निर्देशः ॥६४॥

मदन्यन्नास्तीतिभागस्य तात्पर्यमाह—प्रत्यग्दृष्ट्येति । तत्त्वज्ञानात्तदज्ञानतत्कार्यादृष्टौ हेतुमाह—स्वत इति । उक्तेऽर्थे वाक्यमवतारयति—तदिति । ऐक्यमङ्गीकृत्य भयहेत्वभावमनुवदन्यन्मदन्यन्नास्तीति विराडाहेत्यर्थः ॥६५॥

तत्र वाक्यं योजयति—प्रत्यक्तामिति । परमित्यस्य केवलवाचिनः प्रत्यक्तामित्यादौ प्रत्येकं संबन्धः । उत्तरवाक्येन भयाक्षेपेच्छया प्रत्यग्ब्रह्मणोरैक्याद्द्वितीयाभावं हेतुं ब्रूते यदित्यादिवाक्यमित्यर्थः । यद्वा परमुत्तरं वाक्यं भीत्याक्षेपार्थं प्रवृत्तमित्यर्थः ॥६६॥

कस्मादित्यादेस्तात्पर्यमुक्तहेत्वनुवादपूर्वकमाह—प्रत्यक्तेति । तस्माद्द्वितीयाभावादभावो भयहेतोरिति शेषः । भयहेत्वभावे फलितमाह—एवमिति । लज्जावानिव भवतीत्यर्थः ॥६७॥

तत एवेत्यादेरर्थमाह—ब्रह्मेति । अस्मिन्नर्थे विद्वदनुभवसमुच्चयार्थश्चकारः ॥६८॥

किं तद्भीतिकारणं तदाह—प्रत्यगिति । अत्र हि प्रत्यग्ज्ञानाद्धेतुध्वस्त्या भीतिध्वस्तिरुच्यते न च ज्ञानमज्ञानादन्यध्वंसि तद्भयहेतुरज्ञानमेवेत्यर्थः ॥६९॥

पूर्वेणोत्तरस्य पौनरुक्त्यमाशङ्क्य विदुषो हेत्वभावान्न भयमित्युक्तसमर्थनार्थमुत्तरमित्याह—कस्मादिति । समर्थनप्रकारं श्रौतमभिनयति—कुत इति । विदुषीति शेषः ॥७०॥

प्रजापतेर्ब्रह्मात्मैक्यज्ञानाद्भीतिध्वस्तिरुक्ता । इदानीं तस्य तज्ज्ञानं हेत्वभावादयुक्तमित्याक्षिपति—प्रजापतेरिति । यस्मादस्माकमैक्यधीस्तस्मादेव कस्यापि स्यादित्याशङ्क्याऽऽह—शास्त्रेति । अस्यार्थः—न तावत्तस्य शास्त्रश्रवणमाचार्याभावान्नापि संन्यासोऽमनुष्यत्वेन शास्त्रानधिकारान्मनुष्याधिकारं हि शास्त्रं "हृद्यपेक्षया तु मनुष्याधिकारत्वादि"ति न्यायान्नापि शमादि ऐश्वर्यासक्तत्वात्तस्मादस्मासु प्रसिद्धशास्त्रादिविद्याहेत्वभावात् प्रजापतेरैक्यधीरयुक्तेति ॥७१॥

अन्यस्मिन्नाचार्यादावनपेक्षमेव तदैक्यज्ञानं तस्य जातमिति सिद्धान्ती शङ्कते—अन्यानपेक्षमिति । कादाचित्कस्य कारणानपेक्षत्वमसिद्धमित्याह—नैवमिति । विपक्षे दोषमाह—अस्मदादेरिति । प्रसङ्गस्यानिष्टावसायितामाह—न चेति ॥७२॥

प्रजापतेर्यजमानावस्थायामाचार्यस्य सत्त्वाच्छ्रवणाद्यावृत्तेरैक्यज्ञानोदयात्तत्संस्कारोत्थं तथाविधमेव

दग्धाशेषान्तरायस्य विराजोऽपि महत्तमः । नाधाक्षीदात्मविद्या नः काऽऽशाऽविद्यापनुत्तये ॥७४॥
अन्त्य एव तमोघाती प्रत्ययश्चेन्मतं यदि । स्यादनैकान्तिको हेतुरन्यान्त्येष्वसमीक्षणात् ॥७५॥
नान्त्योऽविद्यापनुद्बोध इति सर्वत्र गम्यताम् । ऐकात्म्यवस्तुबोधित्वादुपान्त्यप्रत्ययो यथा ॥७६॥

### सिद्धान्तनिरूपणम्

स्याद्वा सत्साधनोत्पत्तेर्लोकवज्ज्ञानमात्मनः । यथेह कार्यकरणैः पुण्यकर्मोद्भवैर्नृणाम् ॥७७॥
प्रज्ञा मेधा स्मृतिः स्थैर्यं ज्ञानादाववसीयते । वैशारद्यं तथैव स्याद्विराजोऽपि महाधियः ॥७८॥
ज्ञानमप्रतिघं यस्य वैराग्यं च जगत्पतेः । ऐश्वर्यं चैव धर्मश्च सहसिद्धमिति स्मृतिः ॥७९॥
सहैव सिद्धं चेज्ज्ञानं भीतिहेतोरसंभवः । ध्वान्तापध्वंसिरविणा न तमः सह जायते ॥८०॥

तज्ज्ञानं फलावस्थायामपि निरपेक्षमस्तीति शङ्कते—मतमिति । अतिप्रसक्त्या दूषयति—नैरर्थक्येति । सर्वतः सर्वेष्वस्मदादिष्वपीति यावत् ॥७३॥

कथं तस्य नैरर्थक्यमज्ञानध्वंसित्वेनार्थवत्त्वादित्याशङ्क्याऽऽह—दग्धेति । विद्याप्रतिबन्धविधुरस्यैव विराजो जन्मान्तरे सत्यपि विद्या यद्यविद्यां संसारहेतुं नादहत्तर्हि बहुप्रतिबन्धवतामस्माकं तद्वशात्तद्दाहार्थमाशाऽपि न युक्ता तस्मान्न जन्मातरे तस्यैक्यज्ञानं जातमित्यर्थः ॥७४॥

नन्वस्मिन्नेव जन्मनि तस्यैक्यधीरनपेक्षा प्रजायते—"ज्ञानमप्रतिघं यस्ये"तिस्मृतेः । न च तदुत्पत्त्यनन्तरमेव सहेतुं बन्धं निरुणद्धि भयारत्यादिफलेनाऽऽरब्धकर्मणा प्रतिबन्धादतो मरणकालीनं ज्ञानमज्ञानध्वंसीति चोदयति—अन्त्य इति । एवकारश्चेच्छब्दार्थानुवादी । प्रवृत्तफलस्य कर्मणः स्वोपपादकाज्ञानलेशध्वंसिज्ञानशक्तिप्रतिबन्धकत्वेऽपि जन्मान्तरादिसर्वसंसारहेत्वज्ञानध्वंसिज्ञानसामर्थ्यप्रतिबन्धकत्वे मानाभावान्मध्ये जातं ज्ञानमनिवर्तकमित्यशक्यं वक्तुमन्त्यस्य च ज्ञानस्य निवर्तकत्वे किमन्त्यत्वं हेतुः किंवा ज्ञानत्वमाहोस्विदैक्यज्ञानत्वमिति विकल्प्याऽऽद्ये दोषमाह—स्यादिति । प्रजापतेरन्त्यमैक्यज्ञानमज्ञानध्वंसीत्यत्रान्त्यत्वं हेतुरज्ञानध्वंसित्वेनानियतोऽन्यस्य यजमानस्यास्मदादीनां चान्त्येषु ज्ञानेषु तद्ध्वंसादृष्टेरित्यर्थः ॥७५॥

द्वितीयं दूषयति—नान्त्य इति । अस्मासु प्रजापतौ च नान्त्यं ज्ञानं ज्ञानत्वादज्ञानध्वंसि पूर्वज्ञानेषु बन्धहेत्वज्ञानध्वंसित्वादृष्टेर्ज्ञानत्वहेतोरनैकान्त्यादित्यर्थः । तृतीयं प्रत्याह—ऐकात्म्येति । प्रजापतेरन्त्यमैक्यज्ञानं तथात्वादज्ञानध्वंसीत्ययुक्तमुपान्त्यतादृग्ज्ञानवदन्त्येऽपि तदयोगादुपान्त्यहेतोरनैकान्त्यादित्यर्थः ॥७६॥

प्रजापतेरैक्यधीरयुक्तेति पूर्वपक्षे सिद्धान्तयति—स्याद्वेति । वाशब्दः पक्षव्यावृत्त्यर्थः । प्रजापतेः सुप्तप्रबुद्धवत्प्रकृष्टादृष्टोत्थकार्यकारणवत्त्वात्पूर्वकल्पीयपदपदार्थवाक्यस्मरणवतः स्मृतिविपरिवर्तिवाक्याद्विचार्यमाणाद्ब्रदृष्टसहकृतात्तत्त्वज्ञानं स्याल्लोके विशिष्टादृष्टोत्कृष्टकार्यकरणानां प्रज्ञाद्यतिशयदर्शनात्तेन च ज्ञानेन जन्मान्तरादिहेत्वविद्याक्षयेऽप्यारब्धं कर्म तज्जं च भयारत्याद्यविद्यालेशतो भविष्यतीति भावः । लोकवदित्येतद्व्याचष्टे—यथेति । इहेति व्यवहारभूमिरुक्ता । कार्यकरणैर्युक्तानामिति शेषः । यथोक्तकार्यकरणवन्तो मनुष्या न संभवन्तीति शङ्कां निवारयति—नृणामिति । स्याद्वेत्यादिनोक्तं दार्ष्टान्तिकमाह—ज्ञानादाविति । उक्तदृष्टान्तात्प्रजापतेरपि निरतिशयज्ञानकर्मवासनावतस्तज्जकार्यकरणयुक्तस्य ज्ञानवैराग्यादौ वैशारद्यं गम्यतेऽतस्तस्य ब्रह्मास्मीति ज्ञानमप्याचार्याद्यपेक्षां विना स्मर्यमाणवाक्यादेव स्यादित्यर्थः ॥७७–७८॥

तस्य ज्ञानादिवैशारद्ये पौराणिकीं स्मृतिमुदाहरति—ज्ञानमिति । अप्रतिघमप्रतिबद्धं निरङ्कुशमित्येतत्प्रत्येकं संबध्यते । यस्यैतच्चतुष्टयं सहसिद्धं स निरवर्ततेति संबन्धः ॥७९॥

सहसिद्धत्वस्मृतेः "सोऽबिभेदि"त्यादिश्रुतिविरुद्धत्वादप्रामाण्यमिति विरोधाधिकरणन्यायेन[1] शङ्कते—सहैवेति । सत्येव सहजे ज्ञाने स्वहेतोर्भयाद्यपि स्यादिति चेन्नेत्याह—ध्वान्तेति ॥८०॥

१. विरोधाधिकरणम्—विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम् ( १.३.२ ) स्मृतेः श्रुतिविरोधे प्रामाण्यं प्रत्यनक्षेत्वमवगन्तव्यम् । असति विरोधे हि अनुमानं स्मृतिः प्रमाणमित्यर्थः ।

**नैवमन्योपदेशार्थप्रतिषेधपरत्वतः । सहसिद्धगिरस्तस्मान्नैष दोषः प्रसज्यते ॥८१॥**
**श्रद्धातात्पर्यशुश्रूषाप्रणिपातादि साधनम् । विद्याजन्मैकहेतूनां वैफल्यं चेन्न तद्यतः ॥८२॥**
**गुणवद्दोषवद्रूपविकल्पितसमुच्चितम् । विद्याजन्मैकहेतुत्वाल्लोकवत्स्यात्समञ्जसम् ॥८३॥**
**रूपादिज्ञानसंभूतौ तद्धेतूनामनेकधा । विकल्पो दृश्यते लोके तथेहापीति निश्चितिः ॥८४॥**
**गुणवद्दोषवत्त्वं च तथैव च समुच्चयः । प्रबोधोत्पत्तिहेतूनां दृष्टो बोधादिकार्यकृत् ॥८५॥**
**वृषदंशादयो रात्रौ नेत्रगोचरसंगति- । मात्रेण रूपं वीक्षन्ते नापेक्षन्ते ततोऽपरम् ॥८६॥**
**अतीतानागताद्यर्थज्ञानोत्पत्तौ च हेतुताम् । योगिनां मन एव स्यादस्माकं सर्व एव तु ॥८७॥**
**दोषवद्गुणवत्त्वेन विकल्पोऽनेकधा पुनः । मातृमानप्रमेयाणां गुणवद्दोषवत्त्वतः ॥८८॥**
**नातिक्रान्तभवे त्वासीद्ब्रह्मविद्या प्रजापतेः । इत्येतद्गम्यतेऽविद्याभयारत्यादिमत्त्वतः ॥८९॥**

श्रुतिस्मृत्योर्विरोधं समाधत्ते—नैवमिति। विरोधे चाप्रामाण्यं परस्परव्याघातादित्याचार्याः। न चात्र सर्ववेष्टनस्मृतेः स्पृष्ट्वोद्गानश्रुतेश्च मिथोविरोधवद्विरोधोऽस्तीत्याह—अन्येति। अन्येनाऽऽचार्येणोपदेशो यः क्रियमाणस्तस्यार्थस्य निषेधपरत्वात्सहसिद्धवाक्यस्य तज्ज्ञानात्प्राक्प्रजापतेर्भयाद्युपपत्तिरूर्ध्वं चाज्ञानलेशादतो न विरोधोऽस्तीत्यर्थः ॥८१॥

ज्ञानोत्पत्तेराचार्याद्यनपेक्षत्वे श्रद्धादिसाधनविधानानर्थक्यादनेकश्रुतिस्मृतिविरोधः स्यादिति शङ्कते—श्रद्धेति। आदिपदेन शमादिग्रहः। पुरुषभेदेनार्थवत्त्वं चाविशेषश्रुत्यादिविरुद्धमिति भावः। चोदितं विरोधं धुनीते—न तदिति। श्रद्धादिविध्यानर्थक्याभावे हेतुमाह—यत इति ॥८२॥

तमेव व्यनक्ति—गुणवदिति। गुणवत्त्वं दोषवत्त्वमित्यनेन रूपेण युक्तानां श्रद्धादीनां विकल्पितानां समुच्चितानां च विद्याजन्मन्येकस्मिन्नुपयुक्तत्वात्तात्पर्यादिविधानं स्यादर्थवल्लोके रूपादिज्ञाने निमित्तविकल्पादिदृष्टेरित्यर्थः। श्रद्धादिषु गुणवत्त्वमुत्कर्षो दोषवत्त्वं निकर्ष इति भेदः ॥८३॥

लोकवदित्युक्तं विवृणोति—रूपादीति। तद्धेतूनां रूपादिधीहेतूनामालोकादीनामिति यावत्। इहेत्यैकात्म्यज्ञानोक्तिः ॥८४॥

न केवलं विकल्प एव तद्धेतूनां दृष्टः किंतु गुणवत्त्वादयोऽपीत्याह—गुणवदिति। रूपादिधीकार्यानुरोधी च समुच्चयादिरित्याह—बोधादीति। आदिपदं व्यवहारार्थम् ॥८५॥

तत्रोदितानुदितहोमवद्व्यवस्थितं विकल्पमुदाहरति—वृषदंशादय इति। आदिशब्देन मार्जारवदन्येऽपि रात्रिचरा गृह्यन्ते कथमन्यथाऽन्धकारमध्यवर्तिनस्ते मूषकादि गृह्णीयुरित्यर्थः ॥८६॥

विकल्पार्थं विधान्तरमाह—अतीतेति। हेतुतां गतमिति शेषः। ते हि योगजनितप्रकृष्टादृष्टवशाद्युक्तावस्थायां मनोमात्रेण करतलामलकवदशेषमपि पश्यन्तीत्यर्थः। कथं तर्हि समुच्चयस्तत्राऽऽह—अस्माकमिति ॥८७॥

विकल्पसमुच्चयावुक्तौ विधान्तरेण विकल्पं प्रपञ्चयति—दोषवदिति। मात्रादीनां धीहेतूनां दोषवत्त्वगुणवत्त्वाभ्यां कथमनेकधा निमित्तविकल्पस्तत्राऽऽह—मात्रिति। माता ज्ञानपरिणामी साभासान्तःकरणाख्यस्तस्य गुणवत्त्वं प्रकृष्टप्रज्ञत्वादि। वैपरीत्यं दोषवत्त्वं, मानं चक्षुरादि, तस्य दोषस्तिमिरादिःतदभावो गुणो, मेयदोषो दूरत्वादिस्तत्र गुणः संनिकर्षादिरेवं निमित्तानां विकल्पसमुच्चयसंभवात्। प्रजापतेः श्रद्धाद्यतिरेकेण ज्ञानोदयेऽपि न तद्वैयर्थ्यम्। अस्माकं ज्ञानहेतुत्वाद्वेदान्ततात्पर्यादिज्ञानं सर्वेषामेव ज्ञानसाधनम्। आचार्यादिषु विकल्पसमुच्चयौ। न चात्र नियामकाभावो "यो ब्रह्माणं विदधाती"ति श्रुतौ प्रजापतिबुद्धावीश्वरानुग्रहादाजन्मतो वेदाविर्भावोक्तेरिति भावः ॥८८॥

यत्तु तस्य यजमानावस्थायां ज्ञानं न जातमिति तदङ्गीकरोति—नेत्यादिना। अङ्गीकारे हेतुमाह—इत्येतदिति ॥८९॥

१. सर्ववेष्टनस्मृतेः "औदुम्बरी सर्वा वेष्टितव्ये"ति स्मृतेः। स्पृष्ट्वेति। "औदुम्बरीं स्पृष्ट्वोद्गायेदि"ति श्रुतेः।

विद्यायां चेन्न मोक्षोऽभूत्कस्याऽऽशा नो वृथा भवेत् । मोक्षे भयश्रुतेर्नार्थस्तत्र को मोह इत्यतः ॥९०॥

केवलं विराडैक्यज्ञानात् भयध्वस्तिरिति पूर्वपक्षः

एकाकिनो विराजो वाऽविद्यासंवीतचेतसः । पूर्वजन्मोत्थसंस्काराद्भयमाविरभूदिह ॥९१॥
भयप्रध्वंसिनं हेतुमीक्षांचक्रेऽथ जातभीः । मत्तो यन्नान्यदस्तीति ह्यथ कस्माद्बिभेम्यहम् ॥९२॥
एक एवाहमस्मीह द्वितीयाद्धि भयोत्थितिः । द्वितीयो न मदन्योऽस्ति कस्माद्धेतोर्भयं मम ॥९३॥
तत एव विराडैक्यविज्ञानादेव तद्भयम् । वीयाय न परज्ञानादतोऽरतिरपीष्यते ॥९४॥
एकाक्यस्मीतिविज्ञानात्त्रैलोक्यात्मैकगोचरात् । अगाद्भयं यतोऽतोऽभूदरतिस्तस्य कामिनः ॥९५॥
सम्यग्विज्ञानविध्वस्तावविद्यायाः कुतोऽरतिः । ध्वस्तान्ध्यस्यापि सा चेत्स्यादनिर्मोक्षः प्रसज्यते ॥९६॥

यत्पुनरन्त्यं ज्ञानमज्ञानध्वंसीति परिचोद्य परास्तं तदनुमोदते—विद्यायामिति । "ब्रह्म वेद" इत्यादिश्रुतेर्विद्याकालैव मुक्तिः । कस्य प्रजापतेश्चेद्विद्यायां सत्यामपि सा नाभूत्तदा यत्र मनोरथोऽपि वृथाऽस्माकं स्यात् "तत्र को मोह" इत्यादिवाक्याद्विद्यासामर्थ्याद्भयाद्यभावश्रुतेश्च नार्थः स्यात् । अतः "स्याद्वा सत्साधनोत्पत्तेरि"त्यत्रोक्तमुपेयमित्यर्थः । यद्वा यदि विद्यायां विद्यमानायामेव प्रजापतेर्मोक्षो नाऽऽसीत्तर्हि कस्य मोक्षविषयो मनोरथो वृथा न स्यात् । नहि प्रजापतेर्विद्या मुक्तये न पर्याप्ता सैवास्माकं तद्धेतुरिति श्रद्धातुं शक्यमिति पूर्वार्धस्यार्थः उत्तरार्धस्य पूर्ववदेवार्थः ॥९०॥

वेदान्ततात्पर्यज्ञानमननिदिध्यासनसाधनात्प्रणिपाताद्यनपेक्षाज्जन्मान्तरीयतदपेक्षादैक्यज्ञानाद्विराजो भयध्वस्तिरुक्ता । इदानीं केवलविराडैक्यज्ञानाद्भीतिध्वस्तिरिति पूर्वपक्षयन्नादौ सोऽबिभेदित्यस्य तात्पर्यमाह—एकाकिन इति । वाशब्दः सिद्धान्तव्यावृत्त्यर्थः । नन्वेकाकित्वं भयध्वस्तिहेतुर्द्वितीयाद्धि भयोत्थितिस्तत्कथमेकाकिनो विराजो भीतिस्तत्राऽऽह—अविद्येति । साऽपि न केवला भीतिहेतुः सुप्तावदृष्टेरित्याशङ्क्याऽऽह—पूर्वेति । यजमानकालीनभयजनितवासनासहायानुसारादिति यावत् । इहेति फलावस्थोक्तिः ॥९१॥

स हायमित्यादेरर्थमाह—भयेति । ईक्षाकारणं पृच्छति—अथेति । "आर्तो जिज्ञासुरि"ति स्मृतेरार्तिरपि कदाचिदालोचने हेतुरिति मत्वाऽऽह—जातभीरिति । यन्मदन्यदित्यादेरर्थमाह—मत्तो यदिति । यन्मत्तोऽन्यन्मे भयकारणं तदन्यद्यस्मान्नास्ति तस्मादहं कस्माद्धेतोर्बिभेमीति योजना । इतिपदमीक्षासमाप्त्यर्थम् । अथशब्दस्तस्मादर्थे ॥९२॥

कस्माद्धीत्यादिवाक्यं व्याकरोति—एक इति । अहंशब्दस्त्रैलोक्यात्मा जीवाविष्टो देहः इहेति संसारमण्डलोक्तिः । तथाऽपि कथं भीतिराहित्यं तत्राऽऽह—द्वितीयादिति । चोरादिदर्शने भयजन्म प्रसिद्धमिति हिशब्दार्थः । तर्हि तद्धेतुर्द्वितीयोऽपि कल्प्यतां नेत्याह—द्वितीय इति । प्रतीतिर्हि प्रत्येतव्ये मानं न च द्वितीयो भात्यतो हेत्वभावान्न भीतिरिति निगमयति—कस्मादिति ॥९३॥

तत एवेत्यादेरर्थमाह—तत इति । सिद्धान्ते परात्मैक्यज्ञानं तत्पदेन परामृष्टं तन्निराचष्टे—नेति । तत्र हेतुः—अत इति । भयविगमेऽपि प्रजापतेररतिरिच्छेत्यादि दृश्यते परज्ञाने च तदयोगो निमित्ताभावादतो न तस्य तज्ज्ञानाद्भीतिध्वस्तिरित्यर्थः ॥९४॥

कथं पुनर्ध्वस्तभीतेस्तस्यारतिरित्याशङ्क्योक्तमनुवदति—एकाकीति । अद्वैतज्ञानं व्यावर्तयति—त्रैलोक्येति । यस्मादेकाकित्वज्ञानाद्भयमपगतं तस्मादेतस्यारतिरासीदित्याह—यत इति । ननु भीतिनिवर्तकमैक्यज्ञानमरतिमपि निवर्तयेन्नतु तामुपजनयेदत आह—कामिन इति । असहायमेकाकित्वज्ञानं भीतिध्वंसि कामसहितमरतिहेतुरिति भावः ॥९५॥

परज्ञानाद्भीतिध्वस्तावपि कामुकस्यारतिः स्यादित्याशङ्क्याऽऽह—सम्यगिति । ज्ञानिनो ध्वस्ताज्ञानस्य न कामोऽपि युक्तो हेत्वभावात्तत्कथमरतिरित्यर्थः । विपक्षे दोषमाह—ध्वस्तेति । निवृत्ताविद्यस्यापि यद्यरतिरस्ति तथा सत्यनर्थत्वात्तस्य मुक्तेरनुपपत्तिः स्यादित्यर्थः ॥९६॥

नाविद्याघातिविज्ञानाद्भयध्वस्तिरभूद्विभोः । अरत्युद्भूतिलिङ्गेन ह्ययमर्थोऽवसीयते ॥९७॥
न चेहावसरोऽस्त्यस्य सम्यग्ज्ञानस्य कश्चन । पिण्डसृष्टौ प्रवृत्तायां नाकस्माज्ज्ञानगीः शुभा ॥९८॥
प्रक्रियानुचितं वस्तु सुसाध्वपि समीरितम् । अकालकुसुमानीव नैव प्रीतिकरं सताम् ॥९९॥
मिथुनारतिमोहादेः प्रत्यग्याथात्म्यवेदिनः । आगमैस्तु निषिद्धत्वात्कुतस्तस्येह संभवः ॥१००॥
आत्मक्रीड आत्मरतिक्रियावानिति चाऽऽगमः । तथाऽऽत्ममिथुन इति यस्त्वात्मरतिरित्यपि ॥ १ ॥
कार्यकारणसंबन्धः साविद्यस्यैव युक्तिमान् । अपूर्वानपराद्युक्तेर्न ध्वस्तान्ध्यस्य युज्यते ॥ २ ॥

तत्त्वज्ञानमेव भ्रमनिवृत्तिकारणमिति सिद्धान्तः

अप्युत्पन्नात्मबोधानामधिकारासमाप्तितः । अरत्यादि यथा दृष्टं तथैव स्यात्प्रजापतेः ॥ ३ ॥
अप्रविष्टस्वभावस्य सशब्देन परिग्रहात् । स एष इत्यत्र वाक्ये नैवाऽऽकस्मिकशब्दनम् ॥ ४ ॥

मू.—स वै नैव रेमे तस्मादेकाकी न रमते स द्वितीयमैच्छत् । स हैतावानास यथा स्त्रीपुमांसौ संपरिष्वक्तौ स इममेवात्मानं द्वेधाऽपातयत्ततः पतिश्च पत्नी चाभवतां तस्मादिदमर्धबृगलमिव स्व इति ह स्माऽऽह याज्ञवल्क्यस्तस्मादयमाकाशः स्त्रिया पूर्यत एव तांसमभवत्ततो मनुष्या अजायन्त ॥३॥

प्रजापतेर्भीतिध्वस्तिर्न परैक्यज्ञानादिति फलितं निगमयति—नाविद्येति । उक्तेऽर्थे पूर्वोक्तमेव श्रौतं लिङ्गं स्मारयति—अरतीति । परदर्शनराहित्यमरतिमतां प्राणभृतां प्रसिद्धमिति हिशब्दार्थः ॥९७॥

इतश्च न परज्ञानाद्विराजो भीतिध्वस्तिरित्याह—न चेति । विराजो मन्वादिसर्गाधिकारे परज्ञानस्य निरवकाशत्वं स्फोरयति—पिण्डेति । पिण्डशब्देन मन्वादिदेहो गृह्यते । अकस्मात्प्रकरणविच्छेदं विनेत्यर्थः ॥९८॥

विराट्प्रकरणेऽपि परज्ञानं विशिष्टफलत्वादुपदिश्यतामित्याशङ्क्याऽऽह—प्रक्रियेति । अथात्र परैक्यज्ञानं भीतिध्वंसीति भाष्यकृतोक्तं तत्कथं भवान्नानुमन्यते ? तत्राऽऽह—समीरितमिति । भाष्यकारोक्तं विशिष्टफलमपि परैक्यज्ञानमनवसरदुस्थं विदुषां न हृदयंगममित्यत्र दृष्टान्तमाह—अकालेति ॥९९॥

अरत्युद्भूतिलिङ्गाद्विराट्प्रकारणाच्च परधियोऽनवकाशत्वमुक्तं तत्रैव लिङ्गान्तरमाह—मिथुनेति । आदिशब्देन द्वितीयेच्छादिग्रहः । इहेति प्रजापतिसृष्टिप्रकरणोक्तिः । तस्येति प्रकृतविद्वदुक्तिः ॥१००॥

परज्ञानवतो मैथुनादिदुर्व्यापारवारकश्रुतिस्मृतिरूपागमानुदाहरति—आत्मेति । आत्मन्येव क्रीडा यस्य न त्वनात्मनि पुत्रादाविति तथोच्यते रतिरेव क्रिया तद्वानिति क्रियान्तरं निरस्यते । "किमिच्छन्कस्य कामाये"त्यादिवाक्यं संग्रहीतुं चशब्दः । तथेत्युक्तागमानुसारेणेति यावत् । आत्मन्येव मिथुनं न द्वितीये वस्तुनीति यथोक्तम् । स्मृतेरर्थस्तु वक्ष्यते ॥१०१॥

विराड्ज्ञानमेवात्र भयध्वंसि न परज्ञानमित्यत्र लिङ्गान्तरमाह—कार्येति ॥१०२॥

एवं पूर्वपक्षयित्वा सिद्धान्तमाह—अप्युत्पन्नेति । वसिष्ठवामदेवादीनामुत्पन्नसम्यग्ज्ञानानामपि स्वाधिकारसमाप्तिपर्यन्तमविद्यालेशादरत्यादिदर्शना प्रजापतेरपि समुत्पन्नसम्यग्बोधस्यैव यावदधिकारमबोधलेशेनारत्यादिसंभवात्परज्ञानादेव तस्य भयनिवृत्तिः "यावदधिकारमवस्थितिराधिकारिकाणामि"ति न्यायादित्यर्थः ॥१०३॥

यत्तु प्रक्रियानुचितमित्यादि तत्राऽऽह—अप्रविष्टेति । स एष इह प्रविष्ट इति वाक्ये सशब्देनाऽऽत्मैवेदमग्र

१. यावदधिकारमवस्थितिराधिकारिकाणाम् ( ब्र० ३.३.३२ ) अधिकारिकाणां जगतः परिपालने नियुक्तानां विराट्पुरुषसूर्यचन्द्रेन्द्रवसिष्ठादीनामधिकारसमाप्तिपर्यन्तमवस्थितिः अभ्युपगन्तव्या, अधिकारतन्त्रत्वात् । स्थितेः । जीवन्मुक्तानां "तस्य तावदेव चिरं" इत्यादिना प्रारब्धकर्मानुभवस्योक्तत्वात् वसिष्ठादीनां बहुजन्मप्रापकप्रारब्धकर्मसम्भवात् ।

असंतोषाक्षमाहेतोश्चेतसो याऽनवस्थितिः । सा विध्वस्तात्मोहस्याप्यरतिः संबभूव ह ।। ५ ।।
यतोऽरतिग्रहग्रस्तधिषणोऽभूत्प्रजापतिः । एकाकी तेन तत्सृष्टावेको न रमते नरः ।। ६ ।।
श्रौत्याऽनया प्रसिद्धया तु कार्यलिङ्गैश्च कारणम् । सदाऽनुमिन्वते सांख्यास्तथा चान्येऽपि वादिनः ।। ७ ।।
अरत्यपनुनुत्सुः सन्स द्वितीयं यथारुचि । विराडैच्छदृतेऽविद्यां नेच्छेशस्योपपद्यते ।। ८ ।।
सोऽरत्यतिग्रहाविष्टस्तदपध्वस्तये विराट् । संसक्तजायापुम्मानो यावांस्तावान्बभूव ह ।। ९ ।।
स्त्रीपुमांसौ परिष्वक्तौ यावन्मानौ बभूवतुः । स तावत्परिमाणोऽभूद्योगेन परमेश्वरः ।।१०।।
इच्छामात्रमरत्युत्थं पुंस्यलब्धस्थिति स्त्रियम् । प्रयुङ्क्ते योग्यतस्तस्यास्तदलब्ध्वाऽरतिः प्रभोः ।।११।।
उपस्थिते च मनसि तस्य योषिदभूत्क्रतोः । सत्यसंकल्पहेतोः स स्त्रीसक्त इव चाभवत् ।।१२।।

आसीद्यन्मदन्यन्नास्तीत्यत्रोक्तब्रह्मणोऽप्रविष्टस्वभावस्य परामर्शः । न ह्यप्रकृतं सर्वनाम्ना शक्यं परामष्टुम् । न चान्यत्र ब्रह्म प्रस्तुतं तद्धेदमिति च संनिहितमेषशब्देनानुकृष्यते । न चाव्याकृतवाक्येऽपि तच्छब्देन प्रकृतत्वं विना कारणतया ब्रह्मपरामर्शोऽतो यन्मदन्यदित्यादौ न प्रक्रयानुचितस्य परस्योक्तिः । न च विराजोऽपि परं परिहृत्य स्रष्टृत्वादि श्लिष्टमिति भावः ।।१०४।।

भयभाजो विराजः संसारित्वं जीवन्मुक्तस्येव दर्शयता परज्ञानादेव भयध्वस्तिरुक्ता । संप्रति तस्य संसारित्वे हेत्वन्तरं वद"न्स वै नैव रेमे" इत्यत्रारतिं व्याकरोति—असंतोषेति । अवधारणार्थो हशब्दः । अविद्यालेशवशादरतिराधुनिकजीवन्मुक्तेष्वपि प्रसिद्धेत्येतदर्थो वा । इष्टाप्राप्तिकृतो मानसो विषादोऽसंतोषस्तस्मादक्षमा कातरताऽन्तश्चित्तस्य याऽनवस्थितिररतिरनुल्लासरूपा स्वानुभवसिद्धा सा पूर्वोक्तपरज्ञानध्वस्तमोहस्यापि विराजो मोहलेशाज्जातैवेत्यर्थः ।।१०५।।

तस्मादित्यादेरर्थमाह—यत इति । नरशब्देनाविद्वान्मनुष्यत्वाद्यभिमानवानुच्यते ।।१०६।।

कार्यस्थारतिः कारणस्थारतेर्लिङ्गमित्यनुमानप्रक्रियां सूचयन्तीं श्रुतिमाश्रित्य कारणं कार्यलिङ्गकानुमानैकगम्यमिति वादिभ्रान्तिरिति तद्भ्रान्तिमूलं प्रसङ्गाज्ज्ञापयति—श्रौत्येति । परिमितत्वादिलिङ्गसमुच्चयार्थश्चकारः । सदेति नित्यानुमेयत्वद्योतनम् । न च सांख्यग्रहणं परिसंख्यार्थमिति मत्वाऽऽह—तथा चेति । स्वभाववादिव्यतिरिक्तसर्ववादिपरिग्रहार्थोऽपिशब्दः ।।१०७।।

स द्वितीयमैच्छदित्यस्यार्थमाह—अरतीति । कीदृशी द्वितीयस्येच्छाविषयतेति शङ्कित्वोक्तं यथारुचीति । परज्ञानवतो विराजोऽविद्याभावात्कथमिच्छेत्याशङ्क्याऽऽह—ऋत इति । प्राग्ज्ञानोत्पत्तेरज्ञानस्य सत्त्वादूर्ध्वं च तल्लेशादिच्छा तस्य युक्तेति भावः ।।१०८।।

स हैतावानासेत्यस्यार्थमाह—सोऽरतीति । स हि विराडरतिरूपातिविषमग्रहाविष्टस्तद्ध्वस्त्यर्थं स्त्रीपिण्डसंपिण्डितमात्मपिण्डं कल्पयन्सम्यक्सक्तयोर्दंपत्योरेकीभूतयोर्यत्परिमाणः पिण्डस्तत्परिमाणपिण्डवानात्मीयसंकल्पमात्रादासीदित्यर्थः । मिथःसंपृक्तदंपतिपिण्डपरिमाणस्य लोकप्रसिद्धत्वार्थो हशब्दः ।।१०९।।

यथेत्यादिवाक्यं व्याचष्टे—स्त्रीपुमांसाविति । तावत्परिमाणत्वे हेतुमाह—योगेनेति । ध्यानकर्मतद्वासनासहितसंकल्पसामर्थ्यादित्यर्थः ।।११०।।

"स द्वितीयमैच्छदि"ति द्वितीयमात्रस्येष्टत्वश्रुतेस्तस्य कथं स्त्रीत्वं कथं वा दृष्टान्ते स्त्रीग्रहणमित्याशङ्क्याऽऽह—इच्छेति । एकाकित्वादरतिस्ततो द्वितीयेच्छा तन्मात्रं स्त्रीविशेषणादृते द्वितीयमात्रविषयं, तदरत्यपनोदासमर्थं पुंस्यनवस्थं द्वितीयत्वेन स्त्रियमुपस्थापयति तदलाभाद्धि प्रजापतेररतिस्तस्मादरत्यपघाते स्त्रियो योग्यत्वात्सैव तदिच्छाकर्मात एव दृष्टान्तेऽपि स्त्रीग्रहणमित्यर्थः ।।१११।।

स्त्रीसंबन्धादेवारतिध्वस्तिरिति तद्ग्रहश्चेत्तस्या जन्म किमर्थं नोच्यते तत्राऽऽह—उपस्थिते चेति । विराजः सत्यसंकल्पकत्वात्क्रतोः संकल्पान्मनसि योषिदाविरासीत्सा च बहिरुपस्थिता योषिदिवार्थक्रियासमर्थेत्यर्थः ।

मिथुनद्वारिका याऽस्य सृष्टिः सैवाधुनोच्यते । यतोऽसाविममेवाथ द्विधाऽऽत्मानमपातयत् ॥११३॥
इममेवेत्यवधृतेर्न विराजो द्विधाऽभिधा । यः स्त्रीपुंस्परिमाणोऽभूत्स एवातो द्विधाकृतः ॥११४॥
पातनादेव निर्वृत्तेः पतिपत्न्यौ जगत्यपि । योषिद्विदलवद्भाति पुंसः शुक्त्यादिभागवत् ॥११५॥
स्त्र्याकाङ्क्षो हि तु भागोऽयं पुमाकाशस्ततः स्त्रिया । सम्यगापूर्यते व्योम शुक्तिसंपुटवद्ध्रुवम् ॥११६॥
विराजमसृजद्ब्रह्मा सोऽसृजत्पुरुषं विराट् । पुरुषं तं मनुं विद्धि यस्येयं मानवी प्रजा ॥११७॥
तां स्त्रियं मैथुनेनाथ मनुः समभवत्तदा । स्वकर्मभिर्नियुक्तः संस्तथा चोत्पाद्यकर्मभिः ॥११८॥

मू.—सो हेयमीक्षांचक्रे कथं नु माऽऽत्मन एव जनयित्वा संभवति हन्त तिरोऽसानीति सा गौरभवदृषभ इतरस्ताँ समेवाभवत्ततो गावोऽजायन्त वडवेतराभवदश्ववृष इतरो गर्दभीतरा गर्दभ इतरस्ताँ समेवाभवत्तत एकशफमजायताजेतरा भवद्बस्त इतरोऽविरितरा मेष इतरस्ताँ समेवाभवत्ततोऽजावयोऽजायन्तैवमेव यदिदं किंच मिथुनमा पिपीलिकाभ्यस्तत्सर्वमसृजत ॥४॥

भूरिजात्यभिसम्बन्धो जन्यकर्मवशात्स्त्रियाः । मनोश्चैवं ससर्जेदमापिपीलिकमात्मनः ॥११९॥
द्वन्द्वयुक्तं जगत्यस्मिन्यावत्किंचित्समीक्ष्यते । तदस्राक्षीन्मनुः सर्वं स्त्रीपुंद्वंद्वप्रयोगतः ॥१२०॥

मू.—सोऽवेदहं वाव सृष्टिरस्म्यहँ हीद ँ सर्वमसृक्षीति ततः सृष्टिरभवत्सृष्ट्याँ हास्यैतस्यां भवति य एवं वेद ॥५॥

स मनसा स्त्रियं सृष्ट्वा तस्यां लौकिकवदासक्तोऽभूदिति स्त्रीनिष्पत्तिफलमाह—स इति । फलपर्यन्तत्वं सक्तेर्वक्तुं चशब्दः ॥११२॥

मनसा स्त्रीसृष्टिवद्वक्ष्यमाणा मनुष्यादिसृष्टिरपि स्यादिति स्त्रीसृष्टिरुत्तरसृष्टौ नोपयुक्तेत्याशङ्क्य 'स इममि''त्यादिवाक्यतात्पर्यमाह—मिथुनेति । कायिकसृष्ट्यनन्तरं मानसवाचिकसृष्टिद्वयं स्पष्टीभविष्यतीत्यथशब्दार्थः । अतःशब्दपर्यायो वाऽथशब्दः ॥११३॥

ननु द्वेधाभावो विराजो वा संसक्तस्त्रीपुंमानस्य पिण्डस्य वा?आद्ये सशब्देन विराड्ग्रहविरोधस्तस्य कर्मत्वाद्द्वितीये त्वात्मशब्दानुपपत्तिस्तत्राऽऽह—इममिति । अतः सशब्देन कर्तृतया विराड्ग्रहणमविरुद्धमिति शेषः । कस्य तर्हि द्विधाकरणं तत्राऽऽह—य इति । पिण्डो विशेष्यते । विराजो द्विधाकरणाभावोऽतःशब्दार्थः । न च तत्राऽऽत्मशब्दायोगस्तस्यापि विराडाकारत्वादिति भावः ॥११४॥

तत इत्यादेरर्थमाह—पातनादिति । "अर्धो वा एष आत्मनो यत्पत्नी"तिश्रुत्यन्तरमपिना सूचयति । तस्मादिदमित्यादेरर्थमाह—योषिदिति । विदलं भागः आदिशब्दाद्वेण्वादिग्रहः ॥११५॥

तस्मादयमित्यादेरर्थमाह—स्त्र्याकाङ्क्षो हीति । पुंस्त्रीभागयोर्मिथःसापेक्षत्वप्रसिद्धद्यर्थो हिशब्दः । व्योमेति पुमाकाशोक्तिः । शुक्तिभागयोः संपुटीकरणात्संपूर्णतावत्पुंसः स्त्रिया नित्यमेव संपुटिततया पूर्णतेत्याह—शुक्तीति ॥११६॥

ननु मनुशतरूपाभ्यां मनुष्यादिसृष्टिर्वक्ष्यते । न च तयोः सृष्टिमशिष्ट्वा ताभ्यामन्यसृष्टिर्वक्तुं युक्तेति तत्राऽऽह—विराजमिति । स्रष्टा हि पुरुषो न सृज्यकोटिमनुविशेदित्याशङ्क्याऽऽह—पुरुषमिति । द्वेधाऽपातयदित्यत्र द्वेधापातनव्याजेन मनुशतरूपयोः सृष्टिरुक्तेति भावः ॥११७॥

तां समभवदित्यस्यार्थमाह—तामिति । यदा सशतरूपो मनुरासीदित्यथशब्दार्थः । कथं पुनर्मन्वात्मा प्रजापतिर्दुहितृगमने प्राकृतैरपि निन्दिते धर्मविदामग्रणीर्विस्रब्धं प्रववृते तत्राऽऽह—स्वकर्मभिरिति ॥११८॥

सा गौरित्यादेस्तात्पर्यमाह— भूरीति । एवमित्यादेरर्थमाह—एवमिति ॥११९॥

तदेव विवृणोति—द्वन्द्वेति । न केवलमुक्तानां गवादीनामेवात्र सृष्टिरिष्टा किंतु सर्वस्यैव स्त्रीपुंद्वंद्वस्येति वक्तुमेवमित्यादि वाक्यमित्यर्थः ॥१२०॥

मनोः सशतरूपस्य पिण्डसृष्टिरिहोदिता । सोमाग्नीन्द्रादिका याऽपि साऽप्युक्तवदपेक्ष्य सः ॥२१॥
जगत्सृष्ट्वाऽऽत्मनः साक्षाज्ज्ञानकर्मादिसाधनः । अवेत्सृष्टं जगत्स्रष्टा ह्यहं वावाखिलं जगत् ॥२२॥
अहं वाव जगत्सृष्टं यतोऽसृक्ष्यहमेव तत् । सृष्टिनामा मनुर्जात एतस्मादेव कारणात् ॥२३॥
यथा मनुरिदं सृष्टमहमस्मीत्यबुध्यत । एवमन्योऽपि यो वेद सृष्टिकृत्स्यादसावपि ॥२४॥

मू.—अथेत्यभ्यमन्थत्स मुखाच्च योनेर्हस्ताभ्यां चाग्निमसृजत तस्मादेतदुभयमलोमकमन्तरतोऽलोमका हि योनिरन्तरतः । तद्यदिदमाहुरमुं यजामुं यजेत्येकैकं देवमेतस्यैव सा विसृष्टिरेष उ ह्येव सर्वे देवाः । अथ यत्किंचेदमार्द्रं तद्रेतसोऽसृजत तदु सोम एतावद्वा इदँ सर्वमन्नं चैवान्नादश्च सोम एवान्नमग्निरन्नादः सैषा ब्रह्मणोऽतिसृष्टिः । यच्छ्रेयसो देवानसृजताथ यन्मर्त्यः सन्नमृतानसृजत तस्मादतिसृष्टिरतिसृष्ट्याँ हास्यैतस्यां भवति य एवं वेद ॥६॥

सृष्टानामथ भूतानामग्न्यादिप्रमुखा इमाः । अनुग्रहीत्रीर्वक्ष्यामीत्यतः प्रववृते श्रुतिः ॥२५॥
भेदादधिकृतेरेषामग्न्यादीनामनेकधा । भेदो वर्णेषु सर्वेषु ब्रह्मक्षत्रादिलक्षणः ॥२६॥
अनुग्राहकदेवानां सर्गोऽयं प्रस्तुतो महान् । तत्राग्नेरुदितोत्पत्तिर्न त्विन्द्रादेरिहोच्यते ॥२७॥
अविद्याधिकृतौ तेषां सृष्टिरूर्ध्वं प्रवक्ष्यते । कर्माधिकृतिसम्बन्धप्रतिपत्त्यर्थमेव तु ॥२८॥

सोऽवेदित्यादि व्याकर्तुं वृत्तं कीर्तयति—मनोरिति । इहेति पूर्वसृष्टिप्रकरणोक्तिः । मन्वादेर्यः पिण्डस्तस्य विराजः सकाशान्मनुष्यादेश्च मन्वादिपिण्डादुक्ता सृष्टिरित्यनुवादार्थः । कथं सृष्टिं पूर्णामसृष्ट्वा सृष्टिरस्मीति स्रष्टा निर्धारयतीत्याशङ्क्योत्तरवाक्यमवतारयति—सोमेति । या वक्ष्यमाणाऽनुग्राहकसृष्टिः साऽप्युक्तानुग्राह्यसृष्टिवदुक्तेति विराण्मन्यतेऽतस्तामपेक्ष्य सृष्टिरस्मीत्यवधारितवानित्यर्थः ॥१२१॥

कथं सृष्टिरस्मीत्यवधारणं कर्तृक्रिययोरैक्यायोगादित्याशङ्क्य सोऽवेदित्यादेरर्थं स्फुटयति—जगदिति । सृष्टस्य स्रष्टुरवान्तरविशेषत्वं हिशब्दार्थः ॥१२२॥

अहं हीत्यादिहेतुं व्याचष्टे—अहमिति । न हि सृष्टं स्रष्टुरर्थान्तरीभवति तस्यैव तत्तदात्मनाऽवस्थानादित्यर्थः । ततः सृष्टिरभवदित्यस्यार्थमाह—सृष्टीति । सृष्टिशब्देन स्रष्टुरुक्तेरित्येतच्छब्दार्थः ॥१२३॥

किमर्थमित्थं स्रष्टुर्विभूतिरुच्यत इत्याशङ्क्य सृष्ट्यामित्यादि व्याचष्टे—यथेति ॥१२४॥

अथेत्यभ्यमन्थदित्याद्युत्थापयति—सृष्टानामिति । अनुग्राह्यब्राह्मणादिसृष्ट्यनन्तरमनुग्राहकाग्न्यादिसृष्टिं वक्तुमुत्तरवाक्यमित्यर्थः ॥१२५॥

ननु ब्राह्मणादिवर्णात्मनाऽग्न्यादिदेवतानामेव स्थितेर्वक्ष्यमाणत्वात्कथमेकस्यैवानुग्राह्यत्वमनुग्राहकत्वं चेत्यत आह–भेदादिति । अग्न्यादीनामधिकृतेरध्यात्माधिदैवभेदेनानेकधा भेदादेकैकदेवतायाश्चानेकधाभावस्य शाकल्यब्राह्मणे[1] वक्ष्यमाणत्वाद्वर्णेष्वपि ब्राह्मणादिरूपस्तेषामेव भेदोऽतः कल्पितभेदादेकस्यैवानुग्राह्यानुग्राहकत्वसिद्धिरित्यर्थः ॥१२६॥

अनुग्राहकसर्गे प्रस्तुते तदेकदेशवादिन्याः श्रुतेरभिप्रायं ज्ञातुं पृच्छति—अनुग्राहकेति । अनवच्छिन्नदेवताविषयत्वादनुग्राह्यसृष्ट्यपेक्षयोत्कृष्टत्वाच्चास्य महत्त्वं "सोऽग्निमसृजते"त्यग्नेरेव सृष्टिरुक्ता तद्रेतसोऽसृजतेति चन्द्रस्य द्रवात्मनः सोमस्य न तु प्रक्रमानुसारेणेन्द्रादेः सोक्तेत्याह—तत्रेति ॥१२७॥

इन्द्रादीनां स्रष्टव्यत्वाभावादत्र नोक्ता सृष्टिरित्याशङ्क्य तेषामप्यविद्याप्रकरणे कर्मसंनिधौ सा वक्ष्यते । तत्र किमभिप्रेतमित्याह—अविद्येति । अत्रेन्द्रादिसृष्टेरनुक्तौ तत्रोक्तौ च श्रुतेरभिप्रायमाह—कर्मेति । अविद्याधिकारे कर्माम्नानवत्कर्मसंनिधौ देवसर्गाम्नानं तेषामाविद्यककर्मसु संप्रदानत्वेनाधिकृतानां तत्रैवाङ्गता न विद्यायामिति वक्तुमित्यर्थः ॥१२८॥

---

१. शाकल्यब्राह्मणे—"स होवाच महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवा" इत्यारभ्य "कतम एको देव इति प्राण इति" इत्यन्तेनानेकधाभाव एकतयोक्तः ।

तं सर्गमुक्तवत्सर्वमपेक्ष्येहोपसंहृतिः । अविद्वद्देवताभित्तिप्रतिषेधाय सांप्रतम् ॥१२९॥
गुणोत्पत्तिक्रियारूपस्तुतिनामाद्युपाधिभिः । बिभित्सन्ति स्वतोऽभिन्नां देवतां मूढदृष्टयः ॥१३०॥
यदिदं कर्मिणः प्राहुः कर्मभूमावमेधसः । अमुमग्निममुं सोमं यजेति यजिसंश्रवात् ॥१३१॥
यजेति लिङ्गान्निन्दैषा कर्मिणामेव गम्यते । न तु विध्वस्तमोहानां प्रत्यङ्मात्रैकशायिनाम् ॥१३२॥

इन्द्रादिसर्गो वक्ष्यते चेदेष उ ह्येव सर्वे देवा इत्युपसंहारोऽयुक्तो देवसृष्टेः साकल्येनानुक्तत्वादित्याशङ्क्याऽऽह—तमिति। वक्ष्यमाणमपि सर्गमुक्तवद्विवक्षित्वाऽत्र स्रष्टुः सर्वदेवतात्मत्वोपसंहारः कृतोऽन्यथा सर्वशब्दायोगादुक्तेन वक्ष्यमाणोपलक्षणे चाविरोधादित्यर्थः। तद्यदिदमित्याद्यवतारयति—अविद्वदिति। अविदुषां परस्यामेकस्यामेव हि देवतायां या भेदधीस्तन्निषेधायाधुना तद्यदिदमित्यादि प्रवृत्तमिति योजना ॥१२९॥

कथं पुनर्देवताभेदप्रतिपत्तिः आत्मारूपा हि देवता न भेत्तुं युक्तेत्याशङ्क्य पूर्वपक्षयति—गुणेति। अग्नीन्द्रादिषु[1] नानागुणवत्सु वैश्वदेव्यामिक्षा[2] वाजिभ्यो वाजिनमितिवद्युक्तो भेदो याजुर्वैदिकाधानस्य[3] (सामवैदिकाधानस्य) सामवैदिकवारवन्तीयादेश्च भेदवदुत्पत्तिभेदादपि तेषु भेदः, पटकलशशकटादिवदर्थक्रियाभेदाच्चात्र[4] भेदोऽग्नीषोमीयमेकादशकपालं द्वादशकपालमितिवत्[5], वज्रहस्तत्वादिरूपभेदादपि भेदः काठकं कालापकमितिवन्नामभेदाच्च तद्भेदः स्तुतिश्च स्तुत्यान्भिनत्त्यन्यथा[6] तद्भेदवैयर्थ्यात्तथा च क्रतुषु स्तुतिभेदात्तद्भेदः। आदिशब्देन धर्मविशेषपुनरुक्त्यादयो[7] गृह्यन्ते। तस्मात्कर्मभेदवत्तदन्तर्भूतदेवताभेद इत्यर्थः। स्वतोभेदरहितपरदेवताभेदनेच्छायां हेतुमाह—मूढेति ॥१३०॥

उक्तेऽर्थे पूर्वपक्षवाक्याक्षराणि योजयति—यदिदमिति। देवतास्वरूपधीवैधुर्यममेधस्त्वम्। नन्वाहुरिति क्रियापदं कर्तृमात्रमपेक्षते तद्विद्याप्रकरणत्वाद्विदुषामेव तत्र कर्तृत्वं न कर्मिणामिति नेत्याह—यजिसंश्रवादिति ॥१३१॥

नन्वस्मिन्वाक्ये देवताभेदानुवादमात्रं गम्यते न कर्मिनिन्दा। न च ते निन्दितुं शक्यन्ते श्रेयोमार्गे प्रवृत्तत्वात्। यथाऽऽहुः[8]—"यो यागमनुतिष्ठति तं धार्मिकइति हि समाचक्षत" इति। अन्यथा विदुषामपि निन्दा स्यात्तन्नायं पूर्वपक्षस्तत्राऽऽह—यजेतीति। यद्यपि कर्मणि श्रेयोमार्गे प्रवृत्तान्यो हि पुरुषान्निःश्रेयसेन संयुनक्ति स धर्मस्तथाऽपि तेषामेषा निन्दैव भेदानुवादव्याजेन सूच्यते। "अमुमग्निं यजामुमिन्द्रं यजे"ति हि वदन्तो देवतां भिन्दानास्ते दृश्यन्ते। तथाच योऽन्यथा सन्तमात्मानमित्यादिन्यायादन्यथाज्ञानलिङ्गान्निन्दायोग्यास्ते भवन्तीत्यर्थः। यत्तु विदुषामपि निन्दा स्यादिति तत्राऽऽह—न त्विति। निन्दायोग्यतेति शेषः। मोहध्वंसे हेतुमाह—प्रत्यगिति ॥१३२॥

---

१. अग्नीन्द्रादिषु—अग्नेः अग्नये पावकाय अग्नये शुचये इत्यादौ पावकत्वादिगुण उक्तः इन्द्रस्य तु इन्द्राय राज्ञे इत्यादौ राजत्वादिः गुण उक्तः इति तयोर्भेदः। वज्रहस्तत्वादिश्च गुणः।

२. वैश्वदेव्यामिक्षा—विश्वेदेवदेवताकामिक्षाद्रव्यको यागः वाजिभ्यो वाजिनं इति वाक्यविहितवाजिदेवताकवाजिन द्रव्यकयागाद्भिन्नः गुणभेदात्।

३. याजुर्वैदिकमेवाधानं तस्याङ्गत्वेन वारवन्तीयसामगानं विहितं तच्च सामवेदे उत्पन्नं, तयोरङ्गाङ्गिभावेऽपि उत्पत्तिभेदाद्भेदः।

४. पटकलशादीनां अर्थक्रियाभेदाद्भेदः।

५. एकादशद्वादशकपालयोर्गुणयोर्भेदे कर्मभेदः, काठकं यजुर्वेदशाखाभेदः तथा कापालकम्। तद्भेदात्कर्मभेदः।

६. स्तुतिश्च वायुर्वै क्षेपिष्ठा देवता इति वायव्यं श्वेतमालभेतेत्यत्र। वायवे नियुत्वत आलभेतेत्यत्र तु "वायुर्वा इमाः प्रजा नस्योता नेनीयते—इत्यादिः। स्तुतिभेदात् स्तुत्यभेदः।

७. धर्मविशेषः—कारीरिवाक्याध्ययने तैत्तिरीयाणां भूमौ भोजनं नापरेषाम्। एकमेवाग्निहोत्रं भिन्नशाखासु विहितत्वात् भिन्नमन्यथा पुनर्वचनमनर्थकमिति।

८. यथाहुः—आचार्यशबरस्वामिनः—"योन्यथासन्तमात्मानमन्यथा प्रतिपद्यते।
किं तेन न कृतं पापं चोरेणात्मापहारिणा॥" इति श्लोकशेषः।

**यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः । आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥३३॥**
**उत्पन्नैकात्म्ययाथात्म्यभास्वद्विज्ञानभास्कर—। संप्लुष्टाविद्याबहुलतमसां कर्मनिह्नुतिम् ॥३४॥**
**सर्वकर्माधिकाराणां निषेधं प्रत्यपीपदत् । पुराणः शाश्वतो विष्णुः प्रपन्नाय किरीटिने ॥३५॥**
**मिथो भिन्नं यदाहुस्त एकैकं देवमध्वरे । तदसत्प्रतिपत्तव्यं यतोऽभिन्नैव देवता ॥३६॥**
**भेदग्राहि न नो मानं घटादावपि विद्यते । किमु निःशेषभिन्नार्थव्यापिन्यात्मन्यसौ मयि ॥३७॥**
**नाभावरादिवद्विश्वमध्यात्मादिविभागवत् । ओतप्रोतात्मना तस्थौ विराट्सूत्रादिवस्तुषु ॥३८॥**
**विविधाऽस्यैव सा सृष्टिरिति हेतुसमीरणम् । कारणं न विहायेह कार्यमन्यत्र वर्तते ॥३९॥**
**यत एवमतो देवाः सर्वेऽपि स्युः प्रजापतिः । तस्यां तस्यामधिकृतौ तत्तद्रूपं प्रपद्यते ॥४०॥**
**एक एव तु विश्वात्मा मायया मोहयञ्जगत् । एकतां बहुतामेति कुम्भवन्मणिसंश्रयात् ॥४१॥**

"न हि कश्चित्क्षणमपी,'त्यादिस्मृतेर्ज्ञानिनामपि कर्मित्वान्निन्दा स्यादित्याशङ्क्य तेषामकर्मित्वे भगवद्वाक्यमेव प्रमाणयति—यस्त्विति । उल्लासो मानसी रतिः, तदनन्तरभावि सुखं तृप्तिः, सैव प्रकृष्टा संतुष्टिरित्यवान्तरभेदः ॥१३३॥

अथात्र मुक्तस्य कर्माभावो वर्ण्यते विदुषस्तदभावस्तु कथमित्याशङ्क्योक्तवाक्यतात्पर्यमाह—उत्पन्नेति । कर्मनिह्नुतिं प्रत्यपीपददिति संबन्धः ॥१३४॥

तामेव व्याचष्टे—सर्वेति । अधिकारपदेन प्रवृत्त्यादिग्रहः न च भगवदुक्ते वस्तुन्यविश्वासोऽधिकारलक्षणविशिष्टाय प्रतिपादितत्वादित्याह—प्रपन्नायेति[1] । अनाद्यनन्तो व्यापनशीलश्च भगवानिति वक्तुं वैशिष्ट्यमाह—पुराण इति ॥१३५॥

तद्यदिदमित्यादिना पूर्वपक्षानुवादद्वारा कर्मिणां निन्दा न विदुषामित्युक्तमिदानीं तन्नेत्यादिभाष्यं व्याकुर्वन्निन्दाफलं निषेधं दर्शयति—मिथ इति । "विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत्सर्वो ह्येष रुद्रः" इतिश्रुतेःआत्मैव देवताः सर्वा इति स्मृतेः"एकं वा संयोगरूपचोदनाख्याविशेषादिति"न्यायाच्चाऽऽत्मत्वेन देवतैक्यादितिहेतुमाह—यत इति ॥१३६॥

आत्मन्यपि प्रतिदेहं भेदात्कथं तदभेदेन देवतैक्यमित्याशङ्क्याऽऽह—भेदग्राहीति । हिरण्यगर्भेऽसौ प्राणस्यापि स्वरूपभूते सर्वप्रत्यगात्मनि भेदग्राहि मानं नेति किं वाच्यमित्यर्थः ॥१३७॥

श्रुत्यन्तरावष्टम्भेनापि देवताभेदाभावं साधयति—नाभाविति । यथा रथस्य नाभावराः समर्पितास्तेषु नेमिरर्पितस्तथाऽध्यात्माधिभूताधिदैवभिन्नमशेषमपि जगद्दीर्घतन्तुवत्तिर्यक्तन्तुवच्च विराट्सूत्राव्याकृतात्मसु स्थितम् । भौतिकं हि सर्वं भूतव्यतिरेकेण नास्ति । तान्यपि पञ्चीकृतान्यपञ्चीकृतातिरेकेण न सन्ति । तान्यपि नाव्याकृताद्भेदेन विद्यन्ते । तदपि न प्रत्यगतिरेकेणास्त्यतो न क्वचिद्भेदसिद्धिरित्यर्थः ॥१३८॥

श्रुतियुक्तिभ्यां देवताभेदं निरस्यैतस्यैव सा विसृष्टिरित्यस्यार्थमाह—विविधेति । या सृष्टिरग्न्याद्या नाना प्रस्तुता सा प्रकृतस्य स्रष्टुरेवेति योजना । एष उ ह्येवेत्युत्तरवाक्यार्थे हेतुरनेनोच्यत इति तात्पर्यमाह—इति हेत्विति । स्रष्टुः सर्वदेवताहेतुत्वमत्र दृष्टं कथमेतत्तस्य सर्वदेवतात्मकत्वे कारणमित्याशङ्क्याऽऽह—कारणमिति ॥१३९॥

हेतुवाक्यार्थमुक्त्वा प्रतिज्ञामादत्ते—यत इति । सर्वस्य जगतो देवादिरूपस्य प्रजापतिकार्यत्वात्कारणादन्यत्र च तदयोगात्तन्मात्रं सर्वं जगदित्यर्थः । प्रतिज्ञां विभजते—तस्यामिति ॥१४०॥

एकस्य नानारूपत्वं विरुद्धमित्याशङ्क्याऽऽह—एक इति । विश्वात्मा विराडुक्तो विश्वस्याऽऽत्मा

---

१. प्रपन्नमिति—"शाधि मा त्वां प्रपन्नमि"त्युक्त्वा उपसन्नायेत्यर्थः ।
२. १०८.९

अभिन्न एव भूतात्मा प्रतिभूतसमाश्रितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥४२॥
अत्र विप्रतिपद्यन्ते तदन्यात्मनिषेधिनः । हिरण्यगर्भ एवाऽऽत्मा यः परात्मेति गीयते ॥४३॥
संसार्येवेह स इति तथाऽन्येऽपि प्रचक्षते । पक्षयोरनयोः श्रेयान्कः पक्ष इति चिन्त्यते ॥४४॥
विरिञ्च एव तु परो मन्त्रब्राह्मणवाक्यतः । इन्द्रमित्यादिमन्त्रोक्तिरेष[1] ब्रह्मेति च श्रुतिः ॥४५॥
एतमेके वदन्त्यग्निं योऽसाविति स्मृतेरपि । संसार्येव स विज्ञेयः श्रुतिमन्त्रस्मृतीरणात् ॥४६॥
पाप्मदाहारतिभीतिमर्त्यत्वादिश्रुतेर्मितेः । हिरण्यगर्भमिति च स्मार्तान्यपि वचांसि नः ॥४७॥
ब्रह्मा[2] विश्वसृजो धर्म इति कर्मफलात्मता । स्मृत्याऽप्यभाणि बहुशः कस्य संसारिरूपता ॥४८॥

तदस्याऽऽत्मेति वा निरुक्तेः स वस्तुतोऽद्वयवस्त्वात्माऽपि मायया जगन्मोहयन्समष्टिव्यष्टितां याति । यथा कुम्भो नीललोहितादिमणिसंपर्कात्तत्तद्रूपो दृश्यते तथेत्यर्थः ॥१४१॥

उक्तमर्थं स्मृत्या समर्थयते—अभिन्न इति । भूतानामात्मा वस्तुवृत्त्यैकोऽपि सन्नेकधा सर्वेषु भूतेषु खण्डादौ गोत्ववत्समाप्य वर्तमानो बहुधा दृश्यते यथा तत्तज्जलपात्रेष्वेकधैकःप्रतिबिम्बितश्चन्द्रो बहुधा गम्यते तथेति स्मृत्यर्थः ॥१४२॥

अग्न्यादयो देवाः सर्वेऽपि प्रजापतिरेवेत्युक्तम् । संप्रति तत्स्वरूपनिर्दिधारयिषया तत्र विप्रतिपत्तिं दर्शयति—अत्रेति । सिद्धान्तेऽपि प्रजापतेः संसारित्वस्यासंसारित्वस्य च स्वीकारात्कुतो विप्रतिपत्तिरित्याशङ्क्य विप्रतिपत्तारः संसारित्वं तस्येच्छन्तोऽसंसारित्वं वारयन्ति । असंसारित्वं चेच्छन्तः संसारित्वं वारयन्तीति विशेषमाह—तदन्येति । विप्रतिपत्तिस्वरूपमाह—हिरण्यगर्भ इति ॥१४३॥

यः खल्वात्मा सूत्राख्यः श्रुतिस्मृत्योर्गीयते स परात्मैवेत्युक्त्वा पक्षान्तरमाह—संसारीति । इहेति श्रुतिस्मृत्युक्तिः । कतरस्तर्हि पक्षः स्वीकार्य इत्याशङ्क्य विचार्य निर्धार्यमित्याह—पक्षयोरिति ॥१४४॥

पूर्वपक्षं गृह्णाति—विरिञ्च इति । पर एवेति संबन्धः । तुशब्दस्तत्संसारित्वव्यावृत्त्यर्थः । सूत्रात्मा परात्मैवेत्यत्र मानमाह—मन्त्रेति ॥१४५॥

तत्रैव स्मृतिद्वयमुदाहरति—एतमित्यादिना । मन्त्रब्राह्मणस्मृतिषु परस्य सर्वदेवात्मत्वदृष्टेरत्र च सूत्रस्य तत्प्रतीतेस्तस्य परत्वमिति भावः । पूर्वपक्षान्तरमाह—संसार्येवेति । तत्र मानमाह—श्रुतीति ॥१४६॥

तामेव श्रुतिं दर्शयति—पाप्मेति । आदिपदाद्द्वितीयेच्छाद्युच्यते । उक्तश्रुत्याख्यमितेः सकाशाद्दृष्टं प्रजापतेः संसारित्वमसंसारिणि पाप्मदाहादिप्रसङ्गाभावादित्यर्थः । तस्य संसारित्वे मन्त्रमपि दर्शयति—हिरण्यगर्भमिति । न हि "पश्यत जायमानमि"त्याद्यसंसारिणि संभवतीति भावः । स्मृतिवचनान्यपि तस्य संसारित्वमस्मान्प्रति दर्शयन्तीत्याह—स्मार्तानीति ॥१४७॥

तान्येव संगृह्णाति—ब्रह्मेति । विराड्ब्रह्मेत्युच्यते । विश्वसृजो मन्वादयः । धर्मस्तदभिमानिनी देवता यमः । महान्प्रकृतेराद्यो विकारः । सूत्रमव्यक्तमविद्याकर्मसंस्कारा इत्यत्र वक्ष्यमाणप्रकृतिरिति भेदः । कर्मफलात्मतेत्यस्यार्थं स्फुटयति—संसारिरूपेति । कस्य प्रजापतेरित्यर्थः । सूत्रस्य विराड्भूतस्य मन्वादिभावं चाऽऽप्नस्य संसारित्वं स्मृत्योक्तम् । न हि कर्मविपाकप्रक्रियास्था स्मृतिरसंसारिणमाह तत्प्रजापतेः संसारित्वे स्मृतेस्तात्पर्यमस्तीत्याह—बहुश इति ॥१४८॥

---

१. इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् ।
एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥ ऋ० सं० १.१६४.४६
एष ब्रह्मैष इन्द्रः । ऐ० उ० अन्ते
एतमेके । मनु० १२.१२३, योऽसावतीन्द्रियः । मनु० १.७
२. ब्रह्मा विश्वसृजो धर्मः महानव्यक्तमेव च ।
उत्तमां सात्विकीमेतां गतिमाहुर्मनीषिणः ॥

मिथोविरुद्धवादित्वाद्द्वयोरागमयोरपि । अप्रामाण्यप्रसक्तिश्चेन्न क्लृप्त्यन्तरसंश्रयात् ॥४९॥
प्रत्यगज्ञानजाऽनेकविविधोपाधिसंगतेः । विरुद्धार्थत्ववचसां स्यादेकत्रापि संभवः ॥५०॥
अपास्ताविद्यातज्जत्वादस्थूलाद्युक्तिगोचरः । स्वाभासाविद्योपाधिः सन्साक्ष्यन्तर्यामितां व्रजेत् ॥५१॥
तथा हिरण्यगर्भत्वं बुद्ध्युपाधिः स एव तु । तमःसत्त्वरजोयोगाद्याति क्षेत्रज्ञतामजः ॥५२॥
अभिन्नबुद्ध्याऽभिन्नत्वं भिन्नधीभिश्च भिन्नताम् । एति चित्स्वतमोहेतोर्न किंचिदपि दुःस्थितम् ॥५३॥
अशनायावदुत्पत्तेरुत्पन्नाः प्राणिनोऽखिलाः । अत्तारोऽतोऽन्नविरहान्नालं स्थानाय संहताः ॥५४॥
तस्मात्सोमान्नसृष्ट्यर्थं परो ग्रन्थोऽवतार्यते ।
यत्किंचेदं जगत्यस्मिन्नार्द्रं वस्तूपलक्ष्यते । रेतसस्तत्ससर्जेश उत्पन्नस्थितयेऽशनम् ॥५५॥
जगत्कारणरूपिण्य आपो रेतोभिधा इह । सोम एवेत्यवधृतेरग्नीषोमव्यवस्थितिः ॥५६॥
नानाक्रियाभिसंबन्धादग्निः सोमश्च गम्यताम् ॥५७॥

एवं पूर्वपक्षयित्वा सिद्धान्तयितुं प्रसङ्गमाह—मिथ इति। स्वतोऽसंसारित्वेऽपि सूत्रस्य संसारित्वमौपाधिकमिति विधान्तरसिद्धेर्द्विविधागमाविरोध इति सिद्धान्तमाह—नेति ॥१४९॥

कथं संसारित्वासंसारित्वविरुद्धार्थवाक्यानामेकत्र प्रामाण्यमित्याशङ्क्य संग्रहवाक्यं विवृणोति—प्रत्यगिति। संसारितेति शेषः। स्वतस्त्वसंसारितेत्यङ्गीकृते फलितमाह—विरुद्धेति। विरुद्धार्थत्वेन प्रतीयमानोदाहृतवाक्यानामिति यावत् ॥१५०॥

तेषामेकस्मिन्नात्मनि संभवमेव साधयन्नादावसंसारित्ववाक्यानामुपपत्तिमाह—अपास्तेति। तत्रैव सविशेषवाक्यानामपि संभवमाह—स्वाभासेति। चिदाभासविशिष्टाविद्योपाधेः साक्षित्वं तस्यैव मायातत्कार्यनियन्तृत्वेनान्तर्यामितेति भेदः ॥१५१॥

तस्यैव मायामयापञ्चीकृतभूतपञ्चकारब्धसमष्टिबुद्ध्युपाधित्वेन ज्ञानशक्तिमतो हिरण्यगर्भत्वमाह—तथेति। व्रजेदिति पूर्वेण संबन्धः। तस्यैव समष्टिप्राणोपाधेः क्रियाशक्तिमतः सूत्रत्वं तस्यैव पञ्चीकृतभूतपञ्चकारब्धसमष्ट्युपाधेर्विराट्त्वं तस्यैव प्राकृतभूतारब्धसात्त्विकराजसतामसव्यष्टिबुद्ध्युपाधिसंबन्धान्नानाजीवरूपतेत्यभिप्रेत्याऽऽह—तम इति ॥१५२॥

विरुद्धार्थवचसामेकत्र संभवमुपसंहरति—अभिन्नेति ॥१५३॥

सर्वदेवतात्मकस्य प्रजापतेः स्वतोऽसंसारित्वं कल्पनया संसारितेति प्रसाध्याथेत्यादिनाऽन्नसर्गोक्तौ हेतुमाह—अशनायावदिति। अशनायावानत्ता प्रजापतिस्तस्मादुत्पत्तेरुत्पन्नाः सर्वेऽपि प्राणिनो हेत्वनुसारादशनायावन्तोऽत्तारो यतो भान्त्यतो न ते विनाऽन्नं स्थातुं पारयन्ति तथा चात्तृसर्गानन्तरमन्नसर्गोक्तिर्युक्तेत्यर्थः ॥१५४॥

अन्नसर्गोक्तौ हेतुमुक्त्वा तत्सृष्टिवाक्यमवतारयति—तस्मादिति। तदक्षराणि योजयति—यत्किंचेति। अन्नसृष्टिमुपक्रम्य कथमर्थान्तरसृष्टिरुच्यते तत्राऽऽह—उत्पन्नेति ॥१५५॥

ता अन्नमसृजन्तेतिश्रुतेः रेतसोऽन्नसृष्टिरयुक्तेत्याशङ्क्याऽऽह—जगदिति। तद्रेतसोऽसृजतेति वाक्यमिहशब्दार्थः। सोम एवान्नमग्निरन्नाद इत्यत्रावधारणस्य विवक्षितमर्थमाह—सोम इति। यदद्यते तदन्नं सोम एव यश्चात्ता सोऽन्नादोऽग्निरेवेत्यवधारणादग्नीषोमात्मकं जगदित्येतन्निश्चितमित्यर्थः ॥१५६॥

अन्नस्य सोमत्वेन न नियमोऽग्नेरपि जलादिना संहारान्न चात्तुरग्नित्वेन नियमो वा सोमस्यापि कदाचिदिज्यमानत्वेनात्तृत्वादित्याशङ्क्याऽऽह—नानेति। अग्निरपि हवःक्रियया कर्मत्वेन संबध्यमानः सोमः। सोऽपि संहारक्रियया कर्तृत्वेन संबद्धोऽग्निरित्यवधारणसिद्धिरित्यर्थः। यथाश्रुतमवधारणमवधीर्य कुतो विधान्तरेण

**सोम एवेति तं विद्याद्यग्निरपि हूयते । सोमोऽप्यग्निरिति ज्ञेयो यदि तत्रापि हूयते ॥५८॥**
**द्वेधा भिन्नं जगत्सर्वमन्नमन्नाद एव च । अन्नं चराचरं कृत्स्नमन्नादः प्राण उच्यते ॥५९॥**
**फलाभिधित्सयेदानीं देवसृष्टिविदः श्रुतिः । प्रवर्ततेऽथ सैषेति तत्स्तुतिस्तावदुच्यते ॥६०॥**
**अनुग्राहकदेवानां या सृष्टिरुदिता पुरा । अतिसृष्टिरनुग्राह्यसृष्टेः सा स्यात्प्रजापतेः ॥६१॥**
**अश्रेयोभ्योऽनुग्राह्येभ्यः ससर्ज श्रेयसः सुरान् । यतोऽतिसृष्टिस्तेनेयं यैषेहाग्न्यादिरीरिता ॥६२॥**
**मर्त्यो वा यजमानः सन्नस्राक्षीदमृतान्सुरान् । अतिसृष्टिरतः प्रोक्ता साऽतिसाध्वीति निश्चिता ॥६३॥**
**प्रजापतिरिवैतस्यां सृष्टौ स्यात्सर्गकृन्नरः । यथोक्तसृष्टिविद्यः स्यात्तस्यैतत्फलमीरितम् ॥६४॥**

सप्तमकण्डिकाया अवतारिका

**अविद्यापटसंवीतचक्षुषामियदेव तु । वैदिकं साधनं ज्ञेयं ज्ञानकर्मस्वभावकम् ॥६५॥**
**कर्त्रादिकारकापेक्षं विरिञ्चान्तफलप्रदम् । व्याकृतं तदशेषेण श्रुत्या व्याख्यायि यत्पुरा ॥६६॥**

तद्व्याख्येत्याशङ्कयार्थबलाद्धोत्यादिभाष्यं विभजते—सोम इति । अग्निरपि संहार्यश्चेत्सोम एव सोऽपि संहर्ता चेदग्निरेवेत्यवधारणं युक्तमित्यर्थः ॥१५७–१५८॥

अग्नीषोमात्मना स्थितं जगदित्युक्तमुपसंहरति—द्वेधेति । प्रजापतेः सर्वात्मत्वमुपक्रम्य कथं जगतो द्वेधाविभक्तस्योपसंहार इत्याशङ्कय तस्य सूत्रे पर्यवसानात्तस्मिन्नात्मबुद्धयोपासकस्य सर्वदोषराहित्यरूपं फलमत्र विवक्षितमित्याह—अन्नमिति ॥१५९॥

सैषेत्यादिवाक्यतात्पर्यमाह—फलेति । अनुग्राहकदेवसृष्टयुपासकस्य फलोक्त्यर्थमतिसृष्टयामित्यादिवाक्यं तस्मात्प्राक्तनं सैषेत्यादि देवसृष्टिस्तुत्यर्थमिति भेदः । अथेदानीमिति संबन्धः । फलोक्तेरुच्चानन्तरं स्तुतेरवसरे सतीति यावत् । देवसृष्टिविदः फलाभिधित्सया तावदतिसृष्टयामित्याद्या श्रुतिः प्रवर्तते । अथेदानीं सैषेत्यादिश्रुत्या देवसृष्टेः स्तुतिरिष्यत इति योजना ॥१६०॥

सैषेत्यादिवाक्यस्थाक्षराणि व्याचष्टे—अनुग्राहकेति ॥१६१॥

तच्छ्रेयसो देवानित्यादिहेतुवाक्यं व्याकरोति—अश्रेयोभ्य इति । न क्रियया पञ्चम्याः संबन्धोऽपि तु द्वितीययेति विवेक्तव्यम् । इहेति पूर्वसंदर्भोक्तिः अग्न्यादिरिति तत्सृष्टिरुक्ता ॥१६२॥

अथ यन्मर्त्यः सन्नित्यादेरर्थमाह—मर्त्यो वेति । वाशब्दो देवसृष्टेरतिसृष्टित्वे हेत्वन्तरार्थः । एतेनाथशब्दो व्याख्यातः । देवसृष्टेरतिसृष्टित्वोक्तिः स्तुतिरिति निगमयति सेति ॥१६३॥

अतिसृष्टयामित्यादि व्याचष्टे—प्रजापतिरिति । देवादिस्रष्टा तदात्मा प्रजापतिरहमेवेत्युपासितुस्तद्भावापत्त्या तत्स्रष्टृत्वं फलमित्यर्थः ॥१६४॥

पूर्वोत्तरग्रन्थयोः संबन्धार्थं वृत्तं कीर्तयति—अविद्येत्यादिना । अज्ञानच्छन्नचित्तानां ज्ञानादि वेदोक्तं साधनं कर्त्रादिवशाज्जायमानं मनुष्यादिसूत्रान्तफलं यदिषे त्वेत्यादिश्रुत्या कर्मकाण्डे व्याख्यातमुषा वा अश्वस्येत्यादिश्रुत्या वा पूर्वत्र व्याकृतं तदशेषमियदेव ज्ञेयं यद्व्याकृतं संसारात्मकं जगदित्युक्तमित्यर्थः । अज्ञानां पुमर्थस्य साधनमित्युक्ते मुक्तिसाधनं पुरः स्फुरति तन्निरस्यति—ज्ञानेति । एकरूपस्य मोक्षस्यानेकरूपं न साधनं भवतीति भावः । तस्यानुपादेयत्वशङ्कां वारयति—वैदिकमिति ॥१६५॥

मोक्षसाधनं मानवस्तुतन्त्रं तत्त्वज्ञानमिदं तु कारकसाध्यमतो न तद्धेतुरित्याह—कर्त्रादीति । किंच विरिञ्चावसानमेवास्य फलं न च तदेव कैवल्यं भयारत्यादिश्रुतेरतोऽपि नेदं तत्साधनमित्याह—विरिञ्चेति । किंच मोक्षो व्याकृतादर्थान्तर"मन्यदेव तद्विदितादि"तिश्रुतेरिदं तु नामरूपं व्याकृतमतो व्याकृतस्यैव हेतुर्न मुक्तेरित्याह—व्याकृतमिति । वैदिकत्वं साधयति—श्रुत्येति ॥१६६॥

---

१. ११७.४ ।

मू.—तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियतासौ नामाऽयमिदँ रूप इति तदिदमप्येतर्हि नामरूपाभ्यामेव व्याक्रियतेऽसौ नामाऽयमिदँ रूप इति स एष इह प्रविष्टः । आ नखाग्रेभ्यो यथा क्षुरः क्षुरधानेऽवहितः स्याद्विश्वंभरो वा विश्वंभरकुलाये तं न पश्यन्ति । अकृत्स्नो हि स प्राणन्नेव प्राणो नाम भवति । वदन्वाक्पश्यँश्चक्षुः शृण्वञ्श्रोत्रं मन्वानो मनस्तान्यस्यैतानि कर्मनामान्येव । स योऽत एकैकमुपास्ते न स वेदाकृत्स्नो ह्येषोऽत एकैकेन भवत्यात्मेत्येवोपासीतात्र ह्येते सर्व एकं भवन्ति । तदेतत्पदनीयमस्य सर्वस्य यदयमात्मानेन ह्येतत्सर्वं वेद । यथा ह वै पदेनानुविन्देदेवं कीर्तिँ श्लोकं विन्दते य एवं वेद ॥७॥

अथैतस्य यथोक्तस्य साध्यसाधनरूपिणः ।
जगतो व्याकृतस्याभूद्बीजावस्थाऽविनश्वरी । तन्निर्दिदिक्षया यत्नात्प्रवृत्तैषा परा श्रुतिः ॥१६७॥
संसृत्यनर्थस्य यतो निदानं सैव नापरम् । यतो मूलमनर्थानामात्माज्ञानं जगत्यपि ॥१६८॥
तद्ध्वंसादेव निःशेषपुमर्थाप्तिरतो भवेत् । जिहासितस्यानर्थस्य हेतुः स्यात्सशरीरता ॥१६९॥
न वै शरीरस्येति श्रुतेरध्यवसीयते । धर्माधर्मौ च देहस्य योनिरित्यागमाश्रयात् ॥१७०॥
विहितं प्रतिषिद्धं च कर्म मूलं तयोरपि । न ह्यक्रियस्य संबन्धो धर्मेणास्तीतरेण वा ॥१७१॥

इदानीमव्याकृतकण्डिकामवतारयन्प्रवेशवाक्यात्प्राक्तनतद्धेदमित्यादेस्तात्पर्यमाह—अथेति । ज्ञानकर्मफलोक्त्यानन्तर्यमथशब्दार्थः । उक्तं फलं परामृशति—एतस्येति । संसारत्वेनोक्तं रूपमनतिक्रम्य स्थितस्येत्याह—यथेति । तस्य फलोपायरूपद्वयोपेतस्य जगतो नामादिना व्याकृतस्य व्याकरणात्पूर्वं या बीजावस्था साभासप्रत्यगविद्या विद्यां विना नाशरहिता तस्या निर्देशेच्छया व्याख्येयत्वेन प्रस्तुता तद्धेदमित्याद्योत्तरा श्रुतिस्तात्पर्येण प्रवृत्तेत्याह—साध्येत्यादिना । विनश्वरीति वा छेदः । अस्ति हि तस्या विद्यया विनष्टुं शीलमिति । बीजावस्थाया निर्देष्टुमिष्टत्वमेव न साक्षान्निर्देश्यत्वमनिर्वाच्यत्वादिति वक्तुं निर्दिदिक्षयेत्युक्तम् । साभासप्रत्यगविद्याख्यबीजावस्थोक्तिद्वारा नित्यशुद्धबुद्धमुक्तस्वभावः परमात्मैव प्रत्यग्भूतो ज्ञो ज्ञानं चेति निश्चेतुं प्रवेशवाक्यात्प्राचीनं वाक्यमिति मत्वाऽऽह—यत्नादिति ॥१६७॥

यज्ज्ञाने पुमर्थाप्तिस्तदेव वाच्यं किमिति प्रत्यगविद्योच्यते तत्राऽऽह—संसृतीति । संसाराख्यमातृत्वाद्यनर्थस्य प्रत्यगविद्यैव मूलं नाप्रमाणकं प्रधानाद्यतस्तद्ध्वस्तौ पुमर्थसिद्धेर्युक्ता तदुक्तिरित्यर्थः । आत्माज्ञानस्यानर्थमूलत्वं कथं सिद्धमिति तत्राऽऽह—यतइति । अहमेवंविधोऽस्मीत्यात्मानमज्ञात्वा मौढ्यातिरेकात्परदारादौ प्रवर्तमानोऽनर्थमाप्नुवन्दृश्यतेऽतो लोके प्रत्यगज्ञानमनर्थमूलं निश्चितमित्यर्थः । अन्वयव्यतिरेकाभ्या''मविद्यायामन्तरे वर्तमानाः स्वयंमि''त्यादिशास्त्रं समुच्चेतुमपिशब्दः ॥१६८॥

स्वाज्ञानस्यानर्थमूलत्वे फलितमाह—तद्ध्वंसादिति । तस्यानर्थमूलतया लोकवेदसिद्धत्वमतःशब्दार्थः । तच्चेदनर्थमूलं तर्हि स्वापप्रलययोरपि तद्भावान्मातृत्वादिरनर्थः स्यादित्याशङ्क्याऽऽह—जिहासितस्येति । प्रत्यङ्मोहो देहाभिमानद्वाराऽनर्थहेतुर्न साक्षादित्यर्थः ॥१६९॥

देहाभिमानस्यानर्थहेतुत्वे मानमाह—नेत्यादिना । तर्हि प्रत्यङ्मोहादेव देहाभिमानोऽपि स्वापादौ स्यान्नेत्याह—धर्मेति । योनिरित्यवसीयत इति संबन्धः । धर्मादेस्तद्योनित्वे यथाकर्म यथाश्रुतमित्यादिवाक्यं प्रमाणयति—आगमेति ॥१७०॥

ननु धर्मादेरपि स्वापादौ भावात्तत्कृतं सदेहत्वमपि तथा स्यादित्याशङ्क्याऽऽह—विहितमिति । अपूर्व-

नाकारकस्य जगति क्रियया संगतिस्तथा ॥७२॥
तद्भावभावहेतुत्वात्कारकत्वस्य कारणम् । रागद्वेषौ न तौ मुक्त्वा जगत्यन्यत्प्रवर्तकम् ॥७३॥
स यथाकाम इत्युक्त्वा क्रत्वादेः प्रसवं श्रुतिः । कामाभावे च तद्धानिं योऽकामश्चेति चावदत् ॥७४॥
साध्वसाध्विति चाध्यासौ मूलं विद्यात्तयोरपि । रागद्वेषौ यतो दृष्टौ नैवर्ते साध्वसाधुनी ॥७५॥
अन्तरेण प्रमेयार्थं नापि ते साध्वसाधुनी । साध्वसाध्विति वा ज्ञानं ज्ञातमेयस्य जायते ॥७६॥
प्रमातृत्वादिसंबन्धो नासदात्मकवस्तुनि । नञ्घटाद्यर्थविज्ञानं सत्येव जगतीष्यते ॥७७॥
प्रत्यग्याथात्म्यसंमोहमृते सत्त्वं न कुत्रचित् । प्रत्यग्याथात्म्यसंबुद्धौ न सत्तन्नासदुच्यते ॥७८॥
असाधारणमज्ञानं प्रतीच्येव यतः स्थितम् । एतत्प्रमेयमेवातः प्रमाणं नान्यदिष्यते ॥७९॥
एवं प्रमेयसिद्ध्यर्थं प्रवृत्तैषोत्तरा श्रुतिः ।
क्रियाकारकरूपेऽस्मिन्व्यवहारे तमोन्वयात् । अक्रियाकारकं वस्तु पारोक्ष्यान्नैव लभ्यते ॥८०॥

स्यानुष्ठानं हेतुरित्यत्र हेतुमाह—न हीति । निष्क्रियस्य धर्मादियोगे मुक्तस्यापि स्यात्स्वापादौ सदपि धर्माद्यकिंचित्करमहंकाराभादव्यक्तेरन्यथा स्वापाद्यभावाच्चोद्यानवकाशादिति भावः ॥१७१॥

क्रियायास्तर्हि किं कारणं तदाह—नाकारकस्येति । तथेत्यक्रियस्य धर्माद्ययोगवदित्यर्थः । कारकत्वं क्रियाहेतुरित्यत्र हेतुमाह—तद्भावेति । तस्य भावे क्रियाभावादन्यथा चाभावात्कारकत्वस्य तद्धेतुत्वनिश्चयादित्यर्थः । तस्य हेतुमाह—कारकत्वस्येति । तत्रान्वयव्यतिरेकौ प्रमाणयति—न ताविति ॥१७२-१७३॥

रागादेः प्रवर्तकत्वे श्रुतिरपि मानमित्याह—स यथेति । "स यथाकामो भवति तत्क्रतुर्भवती"त्याद्या श्रुतिः संकल्पक्रियादे रागादिवशादुत्पत्तिमुक्त्वा "योऽकाम आप्तकाम" इत्याद्या च तदभावे संकल्पादेरसत्त्वमुक्तवती । चकाराभ्यां कामबन्धनमेवेद"मात्मक्रीड" "आत्मरतिक्रियावा" "न्यस्त्वात्मरतिरेव स्यादि"त्यादिश्रुतिस्मृतिभ्यां कामादिभावाभावाभ्यां प्रवृत्तिभावाभावौ विवक्षितावित्यर्थः ॥१७४॥

रागद्वेषयोर्निदानमाह—साध्विति । तत्रान्वयव्यतिरेकौ सूचयति—रागद्वेषाविति ॥१७५॥

शोभनाशोभनाध्यासयोर्ज्ञातोऽर्थो हेतुरिति वदन्नादौ व्यतिरेकमाह—अन्तरेणेति । अन्वयमाह—साध्विति ॥१७६॥

ज्ञातत्वस्य हेतुमाह—प्रमातृत्वेति । ज्ञातत्वं हि मातृत्वादिसंबन्धस्तस्यासत्यसंभवो नरविषाणादावदृष्टेरतस्तत्र सत्त्वं हेतुरित्यर्थः । तदेतदनुभवेन साधयति—नञ्घटेति । भावाभावज्ञानं सत्येव लोके दृष्टं नासति तद्धीर्न हि तुच्छे ज्ञानं संगच्छतेऽतः सत्त्वं ज्ञातत्वहेतुरित्यर्थः ॥१७७॥

सत्त्वासत्त्वयोः किं कारणं तदाह—प्रत्यगिति । सत्त्वमसत्त्वं चेति च्छेदः । कुत्रचिद्देशे काले वस्तुनि वेत्यर्थः । प्रतीचोऽपि सत्त्वान्न तदज्ञानकृतमित्याशङ्क्य वस्तुतः सदपि प्रत्यग्वस्तु ज्ञानादूर्ध्वं सदसदिति च न व्यवह्रियतेऽतो व्यावहारिकं सत्त्वमाविद्यमेवेत्याह—प्रत्यग्याथात्म्येति ॥१७८॥

प्रत्यगज्ञानस्यानर्थहेतुत्वं प्रणाड्योक्तं तत्र प्रत्यगितिविशेषणं त्यक्त्वाऽज्ञानं तद्धेतुरिति वाच्यं तथाच आत्मानात्मसाधारणाज्ञानस्य तद्धेतुत्वसिद्धिरित्याशङ्क्याऽऽह—असाधारणमिति । आत्मानात्मनोर्न साधारणमज्ञानं किं त्वात्मनोऽसाधारणं प्रतीच्येवाऽऽश्रये विषये च स्थितत्वादहमज्ञो मां न जानामीत्यनुभवादनात्मनि चाज्ञानात्मके तदयोगादित्यर्थः । प्रतीचोऽन्यत्रापि प्रमाणप्रवृत्तेरज्ञातत्वमेष्टव्यमज्ञानोपलक्षिते तत्प्रवृत्तेस्तत्कथमात्मैवाज्ञात इत्याशङ्क्याऽऽह—एतदिति । न ह्यज्ञानात्मकेऽनात्मन्यज्ञातत्वमेकत्र विषयविषयित्वायोगात्तस्मादेतस्मिन्प्रतीच्यज्ञाते मेये बोधकमेव मानं नानात्मबोधकं तदस्तीत्यर्थः ॥१७९॥

आत्मैवज्ञातो मेय इति प्रतिज्ञामात्रमित्याशङ्क्याऽऽह—एवमिति । आत्मैवाज्ञातश्चेत्तत्रैवाध्यक्षादेरपि वृत्तेस्तस्य तद्गम्यत्वात्कृतं वेदान्तश्रवणेनेत्याशङ्क्याऽऽह—क्रियेति । व्यवहारे व्यवह्रियमाणं जगत्तस्मिक्रियादि-

तद्ध्यदृष्टं सदज्ञानकार्यं स्रगिव पन्नगम् । सर्वं बिभर्त्यसक्तं सदसक्तमिति च स्मृतेः ॥८१॥

अपूर्वाद्यात्मकं[१] वस्तु यत्र साक्षात्प्रसिध्यति । तत्कात्स्‍र्न्याल्लभ्यते तत्र व्यवहारो न मोहजः ॥८२॥

यथासिद्धानुवादेन पूर्वं नो ह्यभ्यधात्स्फुटम् ॥८३॥

पदानीह तदर्थांश्च प्रसिद्धानेव लोकतः । आदाय कर्मशास्त्रं तन्निषेधविधिबोधकृत् ॥८४॥

इतः परं वस्तुतत्त्वपरीक्षणकृतक्षणा[२] । श्रुतिः प्रवृत्ताऽतस्तावत्प्रमेयोऽर्थोऽत्र चिन्त्यते ॥८५॥

अव्याकृतकण्डिकायाः संक्षिप्ततात्पर्यम्

संसाराख्यमहाव्याधेः किं मूलमिति चिन्त्यते । तद्ध्वस्तये चिकित्सेयं तदा फलवती भवेत् ॥८६॥

रूपे कारणस्य तमसोऽनुगतेस्तद्विलक्षणस्य वस्तुनस्तदावृतत्वेन पारोक्ष्यान्न तत्प्रत्यक्षादिना लक्ष्यते "पराञ्चि खानी"त्यादिश्रुतेरतो विशिष्टस्यैव तद्विषयत्वं केवलस्याऽऽगममात्रगम्यतेत्यर्थः ॥१८०॥

जगति दृष्टेऽपि प्रत्यङ्न दृश्यते चेदद्वैतहानिरित्याशङ्क्याऽऽह—तद्धीति । प्रत्यग्वस्तु प्रत्यक्षाद्यदृष्टमज्ञातं सदज्ञानं तत्कार्यं च सर्वं सर्पमिव माला धारयति । अतो द्वितीयस्य कल्पितत्वेनावस्तुत्वान्न वस्त्वद्वैतहानिरित्यर्थः । प्रतीचो द्वैतास्पदत्वे कथमसंगतत्वमित्याशङ्क्य संबन्धस्यापि संबन्धिवत्कल्पितत्वादित्याह—असक्तं सदिति । वस्तुनः सङ्गाभावे कथमाश्रयत्वमित्याशङ्क्याऽऽह—असक्तमिति चेति । "असक्तं सर्वभृच्चैव निर्गुणं भोक्तृ चे"ति वदता भगवता वास्तवं सङ्गमन्तरेण सर्वाश्रयत्वं प्रतीचो दर्शितमित्यर्थः ॥१८१॥

अज्ञातात्माश्रयं जगदित्ययुक्तं ज्ञातात्मन्यपि कर्तृत्वादिदृष्टेरित्याशङ्क्याऽऽह—अपूर्वादीति । यत्र विद्यावस्थायां कार्यकारणनिर्मुक्तमेकरसं वस्त्वसंसृष्टापरोक्षत्वेनासंभावनादितिरस्कारेण स्फुरति तत्र व्यवहारः कर्तृत्वादिरज्ञानतो न लभ्यते तदा तस्याप्रतिबन्धेन पूर्णत्वाद्दृश्यमानं तु कर्तृत्वादि बाधितानुवृत्तिमात्रं तस्मादज्ञातात्माश्रयं जगदित्यर्थः ॥१८२॥

यथोक्तं वस्तूषा वा अश्वस्येत्यादिनोक्तं तत्किमुत्तरग्रन्थेनेत्याशङ्क्याऽऽह—यथेति । लौकिकपदार्थानुवादेन पूर्वग्रन्थे ध्येयत्वेन सूत्रात्मनाऽऽत्मवस्तु श्रुतिरुक्तवती न हि तत्र तत्त्वं स्पष्टमादिष्टमतोऽनन्तरग्रन्थोऽर्थवानित्यर्थः । नन्वेवमपि कर्मकाण्डे यथोक्तात्मनः सिद्धत्वाद्गतार्थमुत्तरं वाक्यमनर्थकं नेत्याह—पदानीति । इहेति व्युत्पत्तिदशोक्तिः । लोकतो वृद्धव्यवहारवशादित्यर्थः । लोकसिद्धपदपदार्थाङ्गीकारेणेदमिष्टसाधनमितरदिष्टमित्येतावन्मात्रे कर्मकाण्डे प्रवृत्तं न वस्तुपरमित्यर्थः ॥१८३–१८४॥

तस्य वस्तुपरत्वाभावे लब्धमर्थमाह—इत इति । कर्मशास्त्रात्परस्तादुपनिषदात्मा श्रुतिर्वस्तुस्वरूपनिरूपणार्थं लब्धावसरा सती प्रवृत्ता कर्मकाण्डनिर्वर्तितकर्मजातशोधितधिषणो हि प्रत्यक्प्रवणस्तद्विविदिषामालम्बते तमधिकृत्य चोपनिषदुपावर्तते यस्मादित्थमुत्तरग्रन्थारम्भस्तस्मात्तद्धेदमित्यादौ प्रथममज्ञातार्थो निरूप्यते तदधीनत्वादुपनिषत्प्रामाण्यस्येत्यर्थः ॥१८५॥

ननु पुरुषार्थे निरूपयितव्ये किमित्यज्ञानं निरूप्यते न हि तदेव तथा सदा पुमर्थसिद्धेर्ज्ञानवैफल्यादत आह—संसारेति । कतिपयजनवर्तिज्वरादेरशेषव्यापिनः संसारस्य विशेषार्थं महत्त्वविशेषणम् । चिन्ताफलमाह—तद्ध्वस्तय इति । संसारव्याधिनिरासार्थं श्रवणादिरूपा चिकित्सा मुमुक्षुभिः क्रियमाणा निदाननिश्चये तेन सह तस्य निरसितुं शक्यत्वात्फलवती न हि निदानवेदनं विना चिकित्सितुं युक्तम्—उक्तं हि—

"स्मृतिमान्युक्तिहेतुज्ञो मतिमान्प्रतिपत्तिमान् । भिषगौषधसंयोगैश्चिकित्सां कर्तुमर्हति" । इति ।

सुश्रुतश्चाऽऽह—"संचयं च प्रकोपं च प्रसरं स्थानसंश्रयम् । व्यक्तिभेदं च यो वेत्ति दोषाणां स भवेद्भिषक्" इति ॥ तस्मान्निदानज्ञानपूर्विका चिकित्सा फलवतीत्यर्थः ॥१८६॥

---

१. अपूर्वमनपरमबाह्यमिति श्रुत्युक्तरीत्येत्यादिः ।

२. क्षणः निर्व्यापारस्थितिः ।

ऊर्ध्वमूल इति यथा मन्त्रवर्णोऽपि विद्यते । गीतास्वपि तथैवैतदूर्ध्वमूलमितीरणम् ॥८७॥
अशेषानर्थमूलस्य प्रत्यगज्ञानरूपिणः । ध्वस्तौ ध्वस्तिरनर्थानां पुमर्थश्च समाप्यते ॥८८॥
निरस्तातिशयानन्दरूपता प्रत्यगात्मनः । अथैष यो वै भूमेति श्रुत्यैव प्रतिपाद्यते ॥८९॥
स्वत आनन्दयाथात्म्यात्कुतो दुःखेन संप्लुतिः । तथापि निह्नुते शास्त्रं न लिप्यत इतीरणात् ॥९०॥

श्रुतिगतपदव्याख्या

अज्ञातात्मैकसंसिद्धबीजावस्थमिदं जगत् । तदित्यनेनाभ्यधायि परोक्षार्थाभिधायिना ॥९१॥
अव्याकृतस्य जगतो भूतकालाभिसंगतेः । सुखावबुद्धये हेति निपातोऽत्र प्रयुज्यते ॥९२॥
नामरूपादिविकृतं पराङ्मानैकगोचरः । सहस्रभेदवत्साक्षादिदमा जगदुच्यते ॥९३॥

तदिदं पदयोः सामानाधिकरण्यफलम्

सामानाधिकरण्यस्य तदिदंपदयोः श्रुतेः । कार्यकारणयोर्नित्यमभेदोऽध्यवसीयते ॥९४॥
न क्रियाकार्यविरहे कारणं सिध्यति क्वचित् । निष्क्रियं कारणं चेत्स्यात्तद्वन्नित्यं फलोत्थितिः ॥९५॥

ननु संसारस्य मूलमेव नास्ति स्वभाववादात्प्रधानाद्येव वा तन्मूलं नाज्ञातं ब्रह्मेत्याशङ्क्य श्रुतिस्मृतिभ्यां परिहरति—ऊर्ध्वमूल इति । अस्ति हि संसारस्य मूलं "नेदममूलं भविष्यती"तिश्रुतेस्तच्च यथाऽज्ञातं ब्रह्मैव तथा काठकश्रुतिरित्यर्थः । तथैव मन्त्रवर्णानुसारेणेत्येतत् ॥१८७॥

अज्ञातं ब्रह्म न बन्धहेतुर्निवृत्तेऽप्यज्ञाने तद्दृष्टेरित्याशङ्क्य ज्ञानादूर्ध्वं बन्धधीर्बाधितानुवृत्तिरित्युक्त्वान्मैवमित्याह—अशेषेति । न केवलमनर्थध्वस्तिरेवाज्ञानध्वस्तिद्वारा ज्ञानफलं किं त्वानन्दाप्तिरपीत्याह—पुमर्थश्चेति ॥१८८॥

ज्ञानादज्ञानध्वस्त्याऽनर्थध्वस्तावनुपद्रुतात्मनाऽवस्थानमेवाऽऽत्मनो लभ्यते न सुखमित्याशङ्क्याऽऽह—निरस्तेति । "अथैष एव परम आनन्द" "एषोऽस्य परम आनन्द" "एष ह्येवाऽऽनन्दयाति" "यो वै भूमा तत्सुखमि"त्यादिवाक्यमत्र प्रमाणयति—अथेति ॥१८९॥

आत्मनः सुखत्वे दुःखमपि तत्र स्यात्तस्य तदविनाभावादित्याशङ्क्य वैषयिकसुखस्य दुःखाविनाभावेऽपि स्वरूपसुखस्य नैवमित्याह—स्वत इति । आत्मनि दुःखाभावेऽपि तन्निवारकवाक्यस्य का गतिर्न हि प्रसङ्गाभावे तत्र तन्निवारणं युक्तमित्याशङ्क्याऽऽह—तथाऽपीति । वस्तुतो दुःखायोगेऽपि भ्रान्तिप्राप्तं तदादाय "न लिप्यते लोकदुःखेने"त्यादि शास्त्रं निषेधति । न हि मितं निषेध्यं मितिविरोधादित्यर्थः ॥१९०॥

तद्धेत्यादिग्रन्थतात्पर्यमुक्त्वा प्रासङ्गिकीं चोद्योत्तरपरंपरां च दर्शयित्वा श्रुत्यक्षराणि व्याचिख्यासुः तत्पदार्थमाह—अज्ञातेति । तदात्मनैकेन[ब] सती या बीजावस्था साभासप्रत्यगविद्या तद्रूपं जगत्परोक्षं तदभिधायि-सर्वनाम्ना तत्पदेनोक्तमित्यर्थः ॥१९१॥

कथं जगतो यथोक्तस्य परोक्षत्वं तत्राऽऽह—अव्याकृतस्येति । परोक्षतेति शेषः । निपातार्थमाह—सुखेति । परोक्षस्य जगतः सुखधीरैतिह्याधीना तेनात्र हशब्द इत्यर्थः ॥१९२॥

इदंशब्दार्थमाह—नामेति । आदिपदं कर्मार्थम् । तस्मिन्निदंशब्दप्रवृत्तिनिमित्तमाह—परागिति । एकशब्दः शास्त्रनैरपेक्ष्यार्थः । तादृश्यप्यनुमेयादौ नेदंशब्दप्रवृत्तिरिति विशिनष्टि—साक्षादिति ॥१९३॥

पदद्वयसामानाधिकरण्यफलमाह—सामानाधिकरण्यस्येति । तदिदंशब्दयोः सामानाधिकरण्यस्य कार्यकारणश्रवणात्तयोर्भेदो निरस्त इत्यर्थः ॥१९४॥

तयोर्वस्तुत्वं केचिदाहुस्तन्न द्वयोरपि कल्पितत्वात्कारणं हि निष्क्रियं सक्रियं वा ? नाऽऽद्यः क्रियारूपकार्याभावे क्वचिदपि कार्ये कारणस्यासिद्धेरित्याह—न क्रियेति । विपक्षे दोषमाह—निष्क्रियमिति । तद्वत्कारणवदित्यर्थः ॥१९५॥

**तयोश्च युगपद्भावे न स्यात्कारणनिश्चितिः । क्रियान्तरप्रसक्तेश्च तत्कार्यत्वेऽनवस्थितिः ।।१९६।।**
**कार्यं चाक्रियमाणं सन्न कार्यत्वं समश्नुते । अकर्तृकं चेत्कार्यं स्यात्कारणं कार्यतां व्रजेत् ।।१९७।।**
**कारणत्वात्सदन्यस्य[1] कार्यत्वाच्च सतस्तथा । अन्योन्याव्यतिरेकाच्च कुतो नाशादिसंभवः ।।१९८।।**

निरन्वयनाशनिराकरणम्

**क्रिया वा तत्फलं वा स्यात्कारकं वा न किंचन । निरन्वयोऽयं नाशः स्यादेषामन्यतमोऽपि न ।।१९९।।**
**क्रियायाः फलरूपेण ध्वस्तिर्नावस्थितेर्भवेत् । तेन तेन विशेषेण कारणं प्रथते सदा ।।२००।।**
**यथा जन्मादिकर्तृत्वाद्बीजं नैव विनश्यति । नाशेऽपि तस्य नंष्टृत्वान्न नंष्टुः स्याद्विनाशिता ।। १ ।।**
**एवं चेन्न सतो नाशो नोत्पत्तिरसतस्तथा । अव्याकृताभिधानाच्च कार्यस्य स्यात्कदाचन ।। २ ।।**

न द्वितीयः, क्रियातद्वतोर्यौगपद्यं क्रमो वा ? आद्ये न तयोः शृङ्गयोरिव तद्भावो निश्चायकाभावादित्याह—तयोश्चेति । प्रथमं कारणं पश्चात्क्रियेति क्रमश्चेत्तत्राऽऽह—क्रियान्तरेति । कार्यस्य कारणादुत्पत्तौ क्रियापेक्षावत्तस्याश्च पूर्वसिद्धात्तस्मादुत्पत्तौ क्रियान्तरापेक्षयाऽनवस्था । न च प्रथमं क्रिया पश्चात्कारणमिति क्रमस्तस्यापि कार्यत्वे कारणान्तरापेक्षयाऽनवस्थानादकार्यत्वे क्रियाकालेऽपि तद्भावात्क्रमायोगात् । न च सा निराश्रया, गमिवत् । प्राथम्येऽपि कार्यत्वे क्रियान्तरप्रसक्तेरनवस्था न क्रिया क्रियान्तरमुत्पादयति न चाकार्या साऽस्तीति भावः ।।१९६।।

कार्यस्य क्रियापेक्षायामपि न तस्यास्तदपेक्षा स्वयंक्रियात्वादित्याशङ्क्य तस्याः कार्यत्वमकार्यत्वं वा ? कार्यत्वे क्रियाव्याप्यत्वाभावे व्याहतिरित्याह—कार्यं चेति । अकार्यत्वे सदा सा स्यादिति चार्थः । सक्रियस्य कारणत्वं निरस्याऽऽद्ये दोषान्तरमाह—अकर्तृकमिति । कार्यं कर्तृस्थक्रियाव्याप्यं न चेत्तदा कारणमेव कार्यत्वं गच्छेत्तस्यैव तत्क्रियाव्याप्यत्वराहित्यादित्यर्थः ।।१९७।।

निरूप्यमाणे कार्यकारणयोरयोगश्चेत्तयोस्तुच्छत्वेन कल्पितत्वमित्याशङ्क्याऽऽह—कारणत्वादिति । कारणं तुच्छव्यावृत्तं कारणत्वात्तुच्छस्य तदयोगात्कार्यं च तथा तद्व्यावृत्तमतुच्छस्यैव कार्यत्वात्तुच्छस्य तदनुपपत्तेरित्यर्थः । अन्यस्येति वदन्कार्यकारणयोर्वास्तवं भेदमिच्छतीत्याशङ्क्याऽऽह—अन्योन्येति । न हि तयोर्गवाश्ववद्भेदे तद्भावो नापि वास्तवस्तयोरभेद एकस्मिन्नेव तत्प्रसङ्गादतो द्वयमपि कल्पितमित्यर्थः । किंच जन्मनाशादिविकाराणां वस्तुनो भेदाभेदाभ्यां दुर्भणत्वात्कूटस्थे तस्मिन्कल्पितत्वमेव तयोरित्याह—कुत इति ।।१९८।।

कार्यस्य वैशेषिकादयो निरन्वयं नाशमिच्छन्ति तत्कथं तदसंभवस्तत्राऽऽह—क्रिया वेति । न किंचनेति तुच्छतोक्तिः । पक्षचतुष्टयेऽपि दोषं संभावयति—एषामिति ।।१९९।।

निरन्वयनाशस्य क्रियात्वपक्षे दोषं स्फुटयति—क्रियाया इति । तस्याः फलात्मना स्थितेर्नाभीष्टा ध्वस्तिः स्यादिति योजना । पक्षान्तरेष्वपि संभावितं दोषं स्फुटयति—तेनेति । मूलकारणमेव क्रियाकारकफलात्मना निर्विशेषसदाकारेण च प्रकाशते तन्न कदाचिदपि निरन्वयनाशसिद्धिरित्यर्थः ।।२००।।

तदभावं दृष्टान्तेन स्पष्टयति—यथेति । आदिशब्दः स्थित्यर्थः । बीजस्य नाशेऽपि जन्मादाविव कर्तृत्वान्न निरन्वयनाशिताऽन्यथा कर्त्रभावान्नाशासिद्धिरिति दार्ष्टान्तिकमाह—नाशेऽपीति ।।२०१।।

तदिदंपदयोः सामानाधिकरण्यश्रुतेः कार्यकारणभेदनिरासद्वारा तत्कल्पितत्वे तात्पर्यमुक्त्वा तयोः कल्पितत्वे फलमाह—एवमिति । कार्यकारणयोर्जन्मनाशयोश्च दुर्निरूपत्वं चेत्तर्हि न सतो नाशः सत्त्वे त्यक्तेऽत्यक्ते च तदयोगान्न चासौ सतो भिद्यते नैःस्वाभाव्यापत्तेर्नापि न भिद्यते सन्मात्रत्वप्रसङ्गादेतेनासतो

---

१. अन्यस्य कार्यस्य कारणत्वात् कारणं सत् तुच्छस्य तत्त्वायोगात् । कार्यत्वाच्च कार्यं सत् = असद्भिन्नं तथा च सदसद्विलक्षणम् ।

तत्त्वबोधातिरेकेण न नाशोऽन्यो यथा तथा । महताऽतिप्रयत्नेन ह्युदर्केऽपि प्रवक्ष्यते ।। ३ ।।

अव्याकृतपदार्थः

नामरूपाद्यभिव्यक्तेः प्राक्तनः काल उच्यते । तर्हीति ह्यनभिव्यक्तमव्याकृतगिरोच्यते ।। ४ ।।
अविद्याकर्मसंस्कारास्तेज्ञोपृक्ष्मासूत्रसंश्रयाः । खे लीनास्त्वस्तितामात्रा अव्यक्ताख्याः सहाऽऽत्मना ।।५।।
कार्यकारणभेदेन प्रपञ्चो यः पुरोदितः । यश्चोर्ध्वं वक्ष्यते तस्मात्परस्तादेतदुच्यते ।। ६ ।।
प्रथते वैश्वरूपेण यतोऽविद्यैव सर्वथा । अविद्यामात्रयाथात्म्यादतस्तद्धेदमुच्यते ।। ७ ।।
मा भूद्व्याकृतधीः पुंसां नामरूपात्मवस्तुनि । ऐकात्म्यव्यक्तितोऽन्यत्र तस्मादेवेति गीरियम् ।। ८ ।।
सामानाधिकरण्योक्तिर्व्यक्तस्याव्यक्तसिद्धये । न हि कात्स्न्यर्मभिव्यक्तेर्व्यक्तस्याकात्स्न्यर्दर्शनात् ।। ९ ।।

जन्मादि प्रत्युक्तमिति भावः। तत्रैव हेत्वन्तरमाह—अव्याकृतेति। इदमेव कार्यमव्याकृतमित्युक्ते न तस्य सतो नाशो लयेऽप्यव्यक्तस्य स्थितेर्नापि तस्य कदाचिदप्यसतो जनिरव्यक्तव्यक्तेरेव तत्त्वादित्यर्थः ।।२०२।।

ननु निरन्वयनाशस्त्वयाऽपीष्यते ब्रह्मविद्यया सनिदानबन्धस्य सर्वात्मना ध्वंसाश्रयणात्तत्कथं स दूष्यते तत्राऽऽह—तत्त्वेति। स्वरूपज्ञप्तिरेव समूलबन्धध्वस्तिर्न ततोऽतिरेकेण यथा तथा महता यत्नेन प्रागुक्तमुत्तरत्रापि वक्ष्यते। तस्मादस्मन्मते वस्त्वतिरेकी निरन्वयो नाशो नास्तीत्यर्थः ।।२०३।।

तद्धेदमितिपदानि व्याख्याय तर्ह्यव्याकृतमिति पदे व्याचष्टे—नामेति। यथोक्तकालस्य लोकवेदप्रसिद्धचर्थो हिशब्दः ।।२०४।।

किं तदनभिव्यक्तं न तावदभिव्यक्त्यभावस्तस्य[1] कारणत्वायोगान्नापि तदन्यत्तद्विरोधि वा तस्य कार्यत्वेनोक्तदोषादित्याशङ्क्याऽऽह—अविद्येति। अस्यार्थः—अविद्या मिथ्याज्ञानमहंग्रहश्च। कर्म धर्माधर्मौ। संस्कारा नानारूपकार्यवासनाः। सूत्रं वायुर्वायुर्वै गौतम तत्सूत्रमितिश्रुतेस्ते चाविद्यादयो भूतचतुष्टयालम्बनाः पुनराकाशमप्यालम्बन्ते ते चापञ्चीकृतपञ्चमहाभूताश्रिता मूलकारणात्मना स्थितिं लभन्ते। ते च साभासप्रत्यगविद्यारूपा भोक्त्रा सहाव्यक्तशब्दा भवन्तीति ।।२०५।।

तन्नामरूपाभ्यामित्यादिवाक्यतात्पर्यमाह—कार्येति[2]। उक्तवक्ष्यमाणप्रपञ्चादुपरिष्टात्तमाश्रित्य तदित्याद्युच्यते। तत्र नामरूपशब्दाभ्यामाकाशादि गृह्यते न प्रसिद्धे नामरूपे न च तद्व्याकरणमृते मूलकारणादिति तद्ग्रहणमत्र युक्तमित्यर्थः ।।२०६।।

कार्यकारणयोर्नित्यमभेद इत्युक्त्वा कार्यकारणभेदेनेति वदतो व्याहतिरित्याशङ्क्याऽऽह—प्रथत इति। वैश्वरूपेण कार्यं कारणमित्यनेकाकारेणेत्यर्थः। सर्वदा त्रिष्वपि कालेष्विति यावत्। कार्यकारणयोराविद्यत्वादुक्तसामानाधिकरण्यात्तयोरभेदोपपत्तिर्भेदेन चानुवादस्तद्रूपेणाविद्याया भानादिन्द्रो मायाभिरित्यादिश्रुतेस्तन्न व्याहतिरित्यर्थः ।।२०७।।

तदित्यादिवाक्यस्थमेवशब्दं व्याकरोति—मा भूदिति। आत्मव्यक्तिं विना जगद्व्यक्तमिति पुंसां भ्रान्तिरूपा धीर्मा भूदिति यस्मान्मन्यते श्रुतिस्तस्मान्नामरूपाभ्यामेव जगदभिव्यक्तं न स्वरूपेण प्रत्यगात्मनेति वदन्ती नामाद्यात्मना तद्व्यक्तमप्यव्यक्तमेव रज्जुरिव सर्परूपेणेत्यभिप्रायेणैवकारं प्रयुङ्क्त इत्यर्थः ।।२०८।।

इतश्च जगद्व्यक्तमिव न व्यक्तमेवेत्याह—सामानाधिकरण्येति। इदं तदिति सामानाधिकरण्यमवधारणाभिप्रायमुपोद्बलयतीत्यर्थः। अव्यक्तेति भावप्रधानोक्तिः। आत्मव्यक्तिं विना जगतः साक्षाद्व्यक्तत्वाभावे हेत्वन्तरमाह—न हीति। व्यक्ते जगति व्यक्तेरपूर्णत्वे हेतुमाह—व्यक्तस्येति[3]। आत्मैव वस्तु न जगदिति तदुपलब्धौ नोपलभ्यते। अतो यावद्ब्रह्म प्रत्यङ्न मीयते तावज्जगदव्यक्तमेवेत्यर्थः ।।२०९।।

---

१. तस्य—अभावस्य कारणत्वायोगः "नासतो विद्यते भावः" इति गीतासु भगवदुक्तेरित्यर्थः।

२. तस्मात् परस्तादिति—उक्तवक्ष्यमाणप्रपञ्चसृष्टेरूर्ध्वं नामरूपव्याकरणं ज्ञेयमित्यर्थः। आकाशादि सृष्टिमाश्रित्यैव नामरूपव्याकरणसम्भवादित्यर्थः।

३. अकात्स्न्यर्दर्शनात् स्वीयेन कृत्स्नस्वरूपेण ब्रह्मरूपेणादर्शनात्।

अव्याकृते मानाभावशंका

प्रमात्रादिनिषेधेन श्रुत्याऽव्याकृतमुच्यते । तद्वित्तिसाधनाभावात्कथं तदवगम्यते ॥१०॥

नित्यानुभवेन तद्भानं मानात्

विधूताशेषसंबन्धमनन्यानुभवात्मकम् । कूटस्थसंविन्मात्रैकं ब्रह्मास्मीतिस्वभावकम् ॥११॥

अतिरोहितसंवित्कं सदानस्तमितोदितम् । निःसामान्यविशेषं तत्प्रत्यगात्मैकनिष्ठितम् ॥१२॥

स्वतोऽवबुद्धं तद्यस्मान्निरविद्यमतः सदा । संगतिर्निरविद्यस्य नाविद्याहेतुजैर्मलैः ॥१३॥

एवंस्वभावमप्येतदविज्ञातं स्वभावतः । तमोवृत्तमपेक्ष्यैतन्न तु यद्वास्तवं स्वतः ॥१४॥

अज्ञातत्वस्य नित्यानुभवसिद्धता

स्वानुभूत्यनुसारेण यथोक्तोऽर्थोऽवसीयताम् । मानहेत्वतिवर्तित्वान्नेह मात्रादिसंभवः ॥१५॥

तस्मिन्ननपहतध्वान्तेऽप्यविद्या स्वानुभूतितः । स्वानुभूतिर्न वेद्मीति प्रागैकात्म्यप्रबोधतः ॥१६॥

ज्ञातात्मतत्त्वो जानाति त्रिकालं तदसंभवम् । अन्यतः संगतिः सेयमविचारितसिद्धिका ॥१७॥

तद्धेत्यादावव्याकृते प्रकृते मानमस्ति न वेति विकल्प्याऽऽद्यं दूषयन्नाशङ्कते—प्रमात्रादीति । न हि तत्र मानमस्तीति वक्तुं शक्यं प्रकृतश्रुतिविरोधादिति भावः । द्वितीयं निरस्यति—तद्वित्तीति । यदि तत्र नास्ति मानं तदा तदसिद्धिः साधकाभावादित्यर्थः ॥२१०॥

नित्यानुभवादव्याकृतावगतिर्न मानादिति वक्तुमनुभवं निरूपयति—विधूतेति । तस्य ज्ञानेनाप्यसंबन्धादसिद्धिमाशङ्क्याऽऽह—अनन्येति । भेदस्यानुभवे कल्पितत्वं तद्विशेषणवाचकानन्यशब्देन विवक्ष्यते तथाऽपि तस्य जन्मादिविक्रियावतो वस्तुरूपत्वे तस्यापि तथात्वमित्याशङ्क्याऽऽह—कूटस्थेति । द्रव्यबोधात्मकं वस्त्विति मतं निरस्यति—मात्रेति । संविदि भेदभानात्तस्य वस्तुत्वे वस्त्वपि भिन्नं स्यादिति नेत्याह—एकमिति अनन्यपदसूचितमत्र व्यक्तीक्रियते । औपाधिकी तत्र भेदधीर्न वास्तवीत्यर्थः । उक्तविधत्वेऽपि ब्रह्मणो जीवस्य किमायातं तदाह—अस्मीति ॥२११॥

संविद्रूपमपि प्रत्यग्ब्रह्म न स्वप्रकाशं संविदो वेद्यत्वादित्याशङ्क्याऽऽह—अतिरोहितेति । न हि सा वेद्या घटवदसंवित्त्वापत्तेरनवस्थानाच्चेति भावः । उक्तं कौटस्थ्यं व्यनक्ति—सदेति । दीपादिषूदयास्तमयदृष्टेर्वस्तुत्वादत्रापि तौ स्यातामित्याशङ्क्याऽऽह—निःसामान्येति । सामान्यविशेषयोरन्यतरत्वमप्यस्यापि वेद्यत्वादवधेयमित्याशङ्क्याऽऽह—प्रत्यगिति ॥२१२॥

नेदं स्वमहिमप्रतिष्ठं वस्तुत्वाद्धटवदित्याशङ्क्याऽऽह—स्वत इति । नित्यबुद्धत्वेन नित्यशुद्धत्वमाह—यस्मादिति । तद्धेतूकृत्य नित्यमुक्तत्वमाह—संगतिरिति ॥२१३॥

उक्तरूपवस्तुनस्तथैव प्रथा स्यादित्याशङ्क्यऽऽह—एवमिति । अज्ञातत्वं स्वभावत इत्युक्तं हेतुं व्याकरोति—तम इति । एतदविज्ञातमिति सम्बन्धः । स्वतो यद्वस्तुरूपं तदपेक्ष्य नाज्ञातत्वं नित्यत्वापत्तेरित्याह—न त्विति ॥२१४॥

यथोक्तब्रह्मणोऽज्ञातस्याव्याकृतशब्दत्वेऽपि कथं तत्प्रथेत्याशङ्क्याऽऽह—स्वानुभूतीति । अज्ञातं प्रत्यग्वस्त्वविद्याकर्मेत्यादावुक्तमव्याकृतं तच्चोक्तानुभवात्सिध्यतीत्यर्थः । अनुभवगम्यत्वे घटवन्मेयत्वमाशङ्क्य व्यक्तशब्दाद्यभावान्नैवमित्याह—मानेति । इहेत्यज्ञातप्रत्यगुक्तिः ॥२१५॥

प्रतीचि संविदेकरसे नाज्ञातत्वमज्ञत्वं वेत्याशङ्क्याऽऽह—तस्मिन्निति । कथं ध्वस्ताविद्ये तदनुभूतिस्तत्राऽऽह—स्वानुभूतिरिति । अज्ञत्वादनुभूतेर्निरङ्कुशत्वं वारयति—प्रागिति ॥२१६॥

प्रतीचि स्वप्रकाशेऽप्यविद्या चेत्कुतस्तद्ध्वस्तिर्न च वाक्यीयादैक्यबोधात् तद्वतोऽपि नित्यानुभवादज्ञत्वादिधीसंभवादित्याशङ्क्याऽऽह—ज्ञातेति । वाक्यीयज्ञानादज्ञानध्वस्तिरात्यन्तिकी तस्य तद्विरोधित्वात्स्वरूपज्ञानस्य

स्वभावव्यतिरेकाभ्यां ध्वान्तसिद्धेरसंभवात् ।
न चेत्प्रमाणतः सिद्धिरस्याव्याकृतरूपिणः । न चैकात्म्यस्वभावेन कुतस्तन्मानगोचरः ॥१८॥
तद्धेदमित्यनेनोक्तिर्व्याकृताव्याकृतात्मनोः । प्रमाणयोग्यतैवोक्ता न त्वैकात्म्यमितात्मता ॥१९॥
अव्याकृतमविज्ञातं प्रमाणाविषयं मतम् । प्रमाणानभिसंबद्धं प्रमाणाच्चेति साहसम् ॥२०॥

अविज्ञातत्वस्य स्वरूपानुभवसिद्धत्वाभावे सर्वव्यवहारासिद्धिः

अविज्ञातार्थगन्तॄणि प्रमाणानीतिवादिनाम् । सर्वेषामभ्युपेतोऽर्थः कुतोऽसाविति चिन्त्यते ॥२१॥
ज्ञातो वाऽर्थोऽथवाऽज्ञात उभयं वा न चोभयम् । प्रमाणानां प्रमेयः स्यात्सर्वमेतद्विचार्यते ॥२२॥
मेयमानत्वसंभित्तौ न पश्यामोऽत्र साधनम् । ज्ञातस्याव्यतिरेकित्वादज्ञातस्याप्यमानतः ॥२३॥
जगत्यर्थो हि यः कश्चिज्ज्ञात एव स बुद्धिवत् । मानादेव स विज्ञात इत्येतत्स्यात्कुतोऽमितेः ॥२४॥

तत्साधकत्वादित्यर्थः । आत्मनोऽज्ञानतज्जाभ्यां योगोऽस्ति न वा?अस्ति चेदसङ्गत्वश्रुतिविरोधो, नास्ति चेदज्ञत्वाद्यसिद्धिरित्याशङ्क्याऽऽह—अन्यत इति ॥२१७॥

अविचारितसिद्धिकत्वं साधयति—स्वभावेति । न हि वस्तुत्वेनाज्ञानादिसिद्धिरबाधापत्तेर्नापि तद्भेदेन सिद्धिरवस्तुनि भेदानुपपत्तेरित्यर्थः । तत्त्वान्यत्वाभ्यामज्ञानस्य सकार्यस्यामेयत्वेऽपि स्वरूपेण तन्मेयमित्याशङ्क्याऽऽह—न चेदिति । आत्मसंबन्धिनोऽज्ञानादेस्ततो भेदेनाभेदेन वा मानतः सिद्धिर्नास्ति चेत्तर्हि तस्य मेयत्वोक्तिरनर्थिवती प्रामाणिकमनिर्वाच्यं चेति व्याघातादित्यर्थः । अस्येत्यात्मसंबन्धोक्तिः । अव्याकृतरूपिणोऽज्ञानादेरात्मनः सकाशाद्भेदेनेति शेषः ॥२१८॥

तद्धेदमितिवाक्यगम्यमव्याकृतं कथं न मेयमित्याशङ्क्याऽऽह—तद्धेति । अनेन वाक्येन जगतो द्विरूपस्यास्ति तावदुक्तिस्तथा चाज्ञातता तस्यानुभवसिद्धाऽनूदिता तन्नैकात्म्यवदव्याकृतस्य मेयता वाक्यस्य तत्रातात्पर्यादित्यर्थः ॥२१९॥

तस्यामेयत्वे हेत्वन्तरमाह—अव्याकृतमिति । तस्य व्याख्यानमविज्ञातमिति । प्रमाणस्य विषयोऽवकाशो यत्र नास्ति तत्तथोक्तम् । प्रमाणाविषयत्वं साधयति—प्रमाणेति । प्रमाणाच्च मतं ज्ञातमिति सम्बन्धः । न हि तन्मीयते माननिरस्यत्वादिति भावः ॥२२०॥

परात्मैव प्रत्यग्भूतोऽज्ञानस्याऽऽश्रयो विषयश्च स्वरूपानुभवाच्चाज्ञातत्वादेः सिद्धिर्न मानादिति स्वपक्षमुक्त्वा परपक्षे सर्वव्यवहारासिद्धिरिति वक्तुमुभयसिद्धमर्थमाह—अविज्ञातेति । स च कुतः स्फुरति स्वतो वा परतो वा परतश्चेन्मानाद्वा साक्षिणो वेति विचार्य निर्धार्यमित्याह—कुत इति ॥२२१॥

न तावदाद्योऽज्ञातत्वस्याऽऽवाभ्यां स्वप्रकाशत्वानुपगमादज्ञातार्थस्यामेयत्वापत्तेश्च । यदि स साक्षिणा सिध्यति तदाऽस्मन्मतमेवेति मन्वानो मानगम्यत्वपक्षे विचारान्तरं दर्शयति—ज्ञातो वेति । अज्ञातः सन्योऽर्थो मानविषयः स स्वप्रकाशो वा सांख्यवज्जडो वा तार्किकवज्ज्ञानज्ञेयात्मको वा योगाचारवत्, यद्वा वस्तुतो नाज्ञातो नापि ज्ञातोऽज्ञानादज्ञातो ज्ञातो ज्ञानादिति संभावनोपनीतं कल्पान्तरं सर्वमेतदयुक्तमिति विचार्य निर्धार्यतेऽतो मानादज्ञातोऽर्थो न स्फुरतीत्यर्थः ॥२२२॥

वैशेषिकादिपक्षस्यायुक्तत्वमादौ दर्शयति—मेयेति । जडस्याज्ञाततया मेयत्वे मानमिदमिदं मेयमिति तयोर्भेददृष्टौ नास्ति मानमित्यर्थः । विषयविषयिभावेन भेदोऽनुभूयते तयोरित्याशङ्क्य ज्ञातरूपेणाज्ञातरूपेण वा विषयत्वं ? नाऽऽद्यस्तस्य प्रकाशरूपस्य तादृङ्मानाद्भेदे मानाभावादित्याह—ज्ञातस्येति । नेतरोऽज्ञातरूपस्य प्राङ्मानप्रवृत्तेरदृष्टत्वान्मानान्तरदृष्टौ तस्य माननिरस्यत्वान्नाज्ञातं रूपमस्ति मानाभावादित्याह—अज्ञातस्येति ॥२२३॥

ज्ञातरूपस्य मानादभेदेन कथमसत्त्वं तत्राऽऽह—जगतीति । व्यवहारभूमौ व्यवह्रियमाणो योऽर्थः स

मानातिरेकासंसिद्धेर्मेय एव तथा न किम् । न हि दीपान्तराद्दीपो भारूपत्वं प्रपद्यते ॥२५॥
ज्ञातरूपातिरेकेण नान्यद्रूपं समीक्ष्यते । एवं चेन्मानतो मेयो विज्ञात इति का प्रमा ॥२६॥
न चापर उपायोऽस्ति मेयसद्भावसिद्धिकृत् । मानेभ्यस्तत्फलासूतेरन्धकारप्रनृत्तवत्॥२७॥
स्वत एव प्रसिद्धश्चेत्प्रमेयोऽर्थस्तथाऽपि न । अनन्यायत्तसंसिद्धेर्मेयत्वं किंनिबन्धनम् ॥२८॥
निःसाधनो न साध्योऽस्ति नासाध्यं साधनं क्वचित् । तुल्यशक्तिमतां नापि[1] मिथोपेक्षाऽस्ति कुत्रचित्
नासिद्धयोः स्वतोऽपेक्षा सिद्धयोश्चापि नेष्यते । नापेक्ष्यापेक्षकत्वं हि लोकेऽप्यतिशयं विना ॥३०॥

सर्वोऽपि प्रकाशाव्यभिचारी यथा धीः स्वसत्तायां तदव्यभिचारिणी तथा सोऽपि यावद्व्यवहारं ज्ञानादव्यतिरेकी व्यवह्रियमाणत्वादित्यर्थः । व्यवहारस्य प्रकाशाविनाभावो हिशब्दार्थः । ननु धीः स्वतो ज्ञाताऽन्यथाऽनवस्थानादर्थस्य तु ज्ञातता मानादन्यथा तद्वैफल्यादत आह—मानादिति ॥२२४॥

अर्थस्य ज्ञातत्वानुपपत्तिरत्र मानमित्याशङ्क्याऽऽह—मानेति । मानादर्थस्य भेदे मानाभावादसिद्धोऽतोऽर्थः स्वयमेव मानवत्प्रकाशरूपोऽस्तु कुतस्तज्ज्ञातत्वानुपपत्तिरित्यर्थः । ननु स्वप्रकाशात्माऽपि मानादेव सिध्यति चक्षुरपेक्षया दीपसिद्धिदृष्टेस्तत्राऽऽह—न हीति । यथा प्रकाशरूपोऽर्थो न प्रकाशरूपं मानमपेक्ष्य सिध्यतीति शेषः ॥२२५॥

ज्ञातस्याव्यतिरेकित्वादित्येतत्प्रपञ्चितम् । यत्तु नाज्ञातं रूपमस्ति मानाभावादिति तन्न घटज्ञातत्वमानस्य तदज्ञातत्वेऽपि मानत्वादित्याशङ्क्याज्ञातस्याप्यमानत इत्येतद्विवृणोति—ज्ञातरूपेति । न तावद्विषयस्य ज्ञातत्वमानं स्वकाले तत्राज्ञातत्वं साधयति ज्ञातत्वसाधनोपक्षयात्कालान्रे चासत्वान्न च ज्ञातरूपातिरेकि रूपं वस्तुनोऽस्ति योग्यानुपलम्भादित्यर्थः । वैशेषिकादिपक्षे मानमेयभेदासिद्धिमुपसंहरति—एवं चेदिति । ज्ञातरूपस्य मानाद्भेदाभावोऽज्ञातरूपस्य चासत्वमित्येवं स्थितं चेन्मानान्मेयधीर्न प्रतिज्ञातुं शक्या मानाभावादतो न तद्भेदधीरित्यर्थः ॥२२६॥

ननु मानाज्जडासिद्धौ विनाऽपि तदपेक्षां तत्सिद्धिस्तद्व्यवहारदर्शनादन्यथा तदयोगात्तत्राऽऽह—न चेति । मानेभ्योऽपर इति सम्बन्धः । जडस्य स्वतःसिद्ध्ययोगादित्यर्थः । स्वतो मानतो वा जडासिद्धौ फलितमाह—तत्फलेति । तस्मान्मानतः स्वतो वा जडपरिच्छित्तिफलासिद्धेस्तमसि नृत्यवत्तत्र सर्वव्यवहारानुपपत्तिरित्यर्थः ॥२२७॥

द्वितीयं दूषयित्वाऽऽद्यमनुवदति—स्वत इति । तत्रापि मानमेयविभागासिद्धिस्तुल्येति दूषयति—तथाऽपीति । त्वत्पक्षवन्मत्पक्षेऽपि स्यादित्याशङ्क्याऽऽह—अनन्येति । मत्पक्षे वस्तुनः स्वप्रकाशत्वान्न मानजस्फूर्त्याधारत्वेन मेयत्वं तदधीनाज्ञाननिवृत्तिफलवत्तया तथात्वं, मानमपि तदज्ञानध्वंसि न स्फूर्तिजनकं, न चैवं ते संभवत्यज्ञानतत्संबन्धयोर्वस्तुत्वादवस्तुत्वे पक्षाभेदात् । न च प्रधानस्यावेवाज्ञानतद्योगावात्मन्यारोपितौ तस्याज्ञानेतरस्य दुर्वचत्वादिति भावः ॥२२८॥

किञ्च मानमेययोर्मिथोऽनपेक्षत्वं सापेक्षत्वं वा?नाऽऽद्य इत्याह—निःसाधन इति । न मेयो मानानपेक्षो मानव्याप्यस्य मेयत्वात् मानमपि न मेयानपेक्षं निरालम्बनत्वायोगादतस्तयोर्न मिथोऽनपेक्षतेत्यर्थः । द्वितीये मेयवन्मानमपि स्वप्रकाशं न वा?न चेदनवस्था स्वप्रकाशं चेत्तत्राऽऽह—तुल्येति । न हि दीपयोर्मिथोपेक्षा दृष्टेति भावः ॥२२९॥

किञ्च मानमेययोरसिद्धयोरपेक्षा सिद्धयोर्वा?सिद्धासिद्धयोर्वा?नाऽऽद्य इत्याह—नेति । स्वतोऽसतोरस्फुरतोश्च न मिथोऽपेक्षा वन्ध्यासूनुखपुष्पवदित्यर्थः । न द्वितीय इत्याह—सिद्धयोश्चेति । स्वतः सतोः स्फुरतोश्च मिथो नापेक्षा तत्फलाभावादित्यर्थः । पक्षद्वयेऽपि साधारणं दोषमाह—नापेक्ष्येति । सत्यतिशये तद्भावस्य प्रसिद्ध्यर्थो हिशब्दः । शास्त्रसंग्रहार्थस्त्वपिशब्दः ॥२३०॥

---

१. अपिशब्दात् स्वतोऽसिद्धत्वे मानान्तरात् "सिद्धौ अनवस्था । अत्यन्तासिद्धौ" असत्वमित्यर्थः ( न्या० ) ।

**नापि सिद्धः स्वतोऽसिद्धं नृश्रृङ्गवदपेक्षते । तथाऽसिद्धः स्वतः सिद्धं नात्यन्ताभावरूपतः ॥३१॥**
**अपेक्षते चेत्सिद्धोऽसौ नासिद्धोऽपेक्षितुं क्षमः । येनातोऽज्ञानतः सिद्धिं स्वतःसिद्धोऽप्यपेक्षते ॥३२॥**
**विश्वेश्वरोऽपि प्राहैतत्प्रपन्नाय किरीटिने । भावाभावत्वमज्ञानादतद्वत्येव कल्पितम् ॥३३॥**
**नासतो विद्यते भावो नाभावो विद्यते सतः । उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥३४॥**
**ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते । तथा न जायत इति विध्वस्ताशेषकल्पनम् ॥३५॥**
**वासुदेवः सर्वमिति प्रत्यक्षश्रुतिपूर्वकम् । अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥३६॥**
**सत्यज्ञानादिरूपस्य प्रत्यगात्मन एव च । कारणत्वं सुविस्पष्टं श्रुतौ हि बहुशः श्रुतम् ॥३७॥**

तृतीये सिद्धस्यापेक्षकत्वमितरस्यापेक्ष्यत्वमिति वा विपरीतं वेत्याद्यं निरस्यति—नापीति । द्वितीयं निराह—तथेति । उभयत्र स्वतःशब्दस्योभयतः संबन्धः ॥२३१॥

असिद्धो नापेक्षतेऽसिद्धत्वान्नरविषाणवदित्यत्र विपक्षे दोषमाह—अपेक्षते चेदिति । अपेक्षाकर्तुरतुच्छत्वं साधयति—नेति । सिद्धयोरसिद्धयोः सिद्धासिद्धयोर्वा नापेक्षेति सिद्धे फलितमाह—येनेति । उक्तन्यायात्कस्यचित्कस्मिंश्चिदपि येन नापेक्षा तेनाज्ञानकृतत्वात्तस्याः स्वतःसिद्धोऽप्यात्मा स्वाज्ञानेनाज्ञातत्वाज्ज्ञानतः[1] सिद्धिमपेक्षतेऽतः स्वतोपेक्षाभावात्सापेक्षं सर्वं सर्पवत्कल्पितमिति भावः ॥२३२॥

सापेक्षस्य कल्पितत्वं भगवतोऽपि संमतमित्याह—विश्वेश्वरोऽपीति । एतच्छब्दार्थमेव कथयति—भावेति । अतद्वतीति भावाभावविभागरहिते वस्तुनीत्यर्थः ॥२३३॥

भगवद्वाक्यमुदाहरति—नासत इति । असतो जन्माभावः सतो नाशाभावश्च कथमिति तत्राऽऽह—उभयोरिति । सत्सदेव नासत् । असदप्यसदेव न सदिति सदसतोर्निर्णयो विद्वद्भिर्दृष्टस्तस्मादेकत्र भावाभावत्वमाविद्यमित्यर्थः ॥२३४॥

सदसत्त्वं वस्तुनि कल्पितमित्यत्र वाक्यान्तरमाह—ज्ञेयमिति । तत्प्रवचनफलमाह—यदिति । न सत्तन्नासदुच्यत इत्येतदुत्तरार्धगतमत्रोपजीव्यम् । सत्त्वादिवद्वस्तुनि जन्माद्यपि कल्पितमित्यत्र भगवद्वाक्यं दर्शयति—तथेति[2] । विध्वस्ताशेषकल्पनमाहेति सम्बन्धः ॥२३५॥

सर्वस्याऽऽत्मनि कल्पितत्वस्मृतिरमूला न मानमित्याशङ्क्य वाक्यान्तरमुदाहरति—वासुदेव[3] इति । ऐतदात्म्यमिदं सर्वमित्याद्या प्रत्यक्षा श्रुतिः । सर्वजगत्कारणत्वस्याऽऽत्मनि कल्पितत्वमपि भगवतो मतमित्याह—अहमिति[4] । प्रभवत्यस्मादिति प्रभवो हेतुर्न च तस्य निमित्तत्वमेव प्रलीयतेऽस्मिन्निति तस्यैव तद्धेतुत्वान्निमित्ते च तदभावादिति द्वयमत्र विवक्षितम् ॥२३६॥

आत्मनः सर्वकारणत्ववादिभगवद्वाक्यमूलभूतां श्रुतिमाह—सत्येति । ब्रह्मविदाप्नोतीति सूत्रितब्रह्मणः सत्यं ज्ञानमनन्तमिति लक्षितस्य यो वेद निहितं गुहायामिति प्रत्यक्त्वेनोक्तस्याऽऽत्मन आकाशः संभूत इदं सर्वमसृजत यतो वा इमानि भूतानीत्यादौ कारणत्वं श्रुतं न च श्रुतेः शङ्कनीयत्वं निर्दोषत्वान्न च तदपह्नोतुं

---

१. ज्ञानतः तत्त्वज्ञानेन शुद्धात्मा सिद्धिमपेक्षते । स्वतस्तु अपेक्षाभावात् सापेक्षं स्वसिद्धौ सापेक्षं अज्ञानतत्कार्यं सर्वं पराधीनसिद्धिकत्वात् मिथ्येत्यर्थः । न चात्मा स्वसिद्धौ ज्ञानमेपक्षत इति वाच्यं आत्मा स्थिरः स्वप्रकाशः अज्ञाननिवृत्तिः ज्ञानमपेक्षते ज्ञानाधीनेत्यर्थः न तु आत्मनः अपेक्षा । न्यायकल्पलतिका तु कस्यचिदपि कस्मिंश्चिदपि अपेक्षा न युक्ता येन अतः स्वतःसिद्धः जानतः सिद्धिं नापेक्षत इति दकारोऽनुसञ्जनीयः—इत्याह ।

२. तथा न जायते किञ्चिज्जायमानं समन्ततः इति गौडपादीयं वाक्यमुदाहरति तथेति ।

३. वासुदेवः सर्वमिति बाधायां सामानाधिकरण्यं तेन ब्रह्मातिरिक्तस्य मिथ्यात्वसिद्धिः ।

४. अहं कृत्स्नस्येति—प्रभवः प्रलयश्चेति अभिन्ननिमित्तोपादानत्वोक्तिः तेन मृत्तिकेत्येव सत्यमित्यादिरीत्या प्रपञ्चमिथ्यात्वसिद्धिः ।

अज्ञातात्मातिरेकेण ब्रुवतः कारणं तथा । सम्यग्ज्ञानान्न मुक्तिः स्यान्न ज्ञानं वस्तुनुत्क्वचित् ॥३८॥
कर्मभ्योऽपि न मुक्तिः स्यात्कर्मापि न हि वस्तुनुत् । तस्यानित्यफलोत्पत्तौ प्रभविष्णुत्वकारणात् ॥३९॥
कूर्मलोमादिवच्चेत्स्यादबुद्धत्वं तथाऽपि वः । स्वतः सर्वज्ञतैव स्यान्न वस्त्वज्ञातमस्ति हि ॥४०॥
न च मानात्प्रसिद्धिः स्यात्कूर्मलोमादिवस्तुनः ॥४१॥
ज्ञातार्थव्यतिरेकेण मानानां मानता यतः । मेयार्थापह्नुतिश्च स्यान्नाज्ञातमिति जल्पतः ॥४२॥
ततश्च वेदसिद्धान्तसंत्यागः कारणादृते ।

योगाचारमतनिरासः

न भिद्यते प्रमेयोऽर्थो मानाद्येषां च वादिनाम् । तेषां दुःशकमत्यन्तमबुद्धार्थावबोधनम् ॥४३॥

शक्यं तत्र संशयाद्यभावान्न चासकृदुक्तं प्रत्याख्यानमर्हतीति भावः । अन्यत्रापि श्रुतिस्मृतिषु प्रसिद्धमेतदिति वक्तुं हीत्युक्तम् ॥२३७॥

केचित्तु श्रुतिस्मृतिप्रसिद्धमपि कारणमुपेक्ष्य प्रधानादि तदाहुस्तान्प्रत्याह—अज्ञातेति । तथा श्रुतिस्मृतिविरोधवदित्यर्थः । प्रधानादिवादे सम्यग्ज्ञानादमुक्तिं साधयति—नेति । परमते कार्यकारणयोर्वस्तुत्वाज्ज्ञानादध्वस्तेरमुक्तिर्न हि सतोस्तयोर्मुक्तिरनर्थरूपत्वात्तयोरित्यर्थः ॥२३८॥

ज्ञानान्मोक्षो मा भूत्कर्मभ्यस्तु भविष्यति प्रायश्चित्तेन सतो दुरितस्य निबर्हणादिति नेत्याह—कर्मभ्योऽपीति । तत्र हेतुः—कर्मापीति । ज्ञानं दृष्टान्तयितुमपिशब्दः । प्रायश्चित्तस्य वस्तुभूतदोषध्वंसित्वेऽपि न सर्वबन्धध्वंसि कर्मैकमस्ति मानाभावादित्यर्थः । इतोऽपि न कर्माधीना मुक्तिरित्याह—तस्येति । कर्म खल्वनित्यं फलमुत्पादयितुमलं, मोक्षश्च नित्यं फलं तथाच न कर्म तत्र कारणमित्यर्थः ॥२३९॥

प्रधानादिवदज्ञातस्य प्रतीचोऽपि न कारणत्वमज्ञातत्वे मानाङ्गीकारेऽपराद्धान्तादन्यथा तस्यासत्त्वादनुभवसिद्धेश्च प्रक्रियामात्रत्वादिति शङ्कते—कूर्मेति । प्रतीच्यज्ञातत्वस्यानुभवसिद्धेरनुभवस्य च सर्वसाधकस्य प्रागेव साधितत्वादनवकाशं चोद्यमित्यरुच्या परिहरति—तथाऽपीति । स्वतो हेत्वपेक्षामन्तरेणेत्यर्थः । तत्र हेतुर्नेति । अज्ञातत्वस्यात्यन्तासत्त्वे मदीयहार्दे[1]ऽपि ते धीः स्यादित्यर्थः ॥२४०॥

यत्तु कूर्मलोमादिवदिति तत्र तदज्ञातं ज्ञातं वा?नाऽऽद्योऽदृष्टस्य दृष्टान्तत्वायोगाज्ज्ञातं चेत्प्रमाणाद्भ्रान्त्या वा?आद्यं प्रत्याह—न चेति । प्रामाणिकत्वे कूर्मक्षीरादेरतुच्छत्वापत्त्या दृष्टान्तस्य साध्यविकलतेति भावः । भ्रान्त्या चेदज्ञातत्वमुपेयमज्ञातस्य तद्धेतुतायाः शुक्त्यादौ व्यक्तत्वादिति द्रष्टव्यम् । इतश्चाज्ञातत्वमुपेयमित्याह—ज्ञातेति । यतो ज्ञातमर्थं हित्वाऽज्ञातेऽर्थे मानानां मानत्वमिष्टमन्यथाऽनवस्थानादतो नास्त्यज्ञातमिति वदतां मेयापह्नुतिश्चकारान्मातृमानफलापह्नवस्तस्मात्तदेष्टव्यमित्यर्थः ॥२४१-२४२॥

मानमेयमातृफलापह्नवे किं स्यात्तदाह—ततश्चेति । मानाद्यपलापे वेदैकगम्यं धर्मादीति वैदिको व्यवहारो विना हेतुं त्यज्येत चकारात्प्रत्यक्षादिगम्या रूपादयोऽपि त्यज्येरन्नतो मानप्रवृत्त्यर्थमज्ञातत्वं मन्तव्यमित्यर्थः । मेयस्य स्वप्रकाशत्वपक्षं निराकुर्वता प्रासङ्गिकः स्वपक्षोऽपि विश्वेश्वरोऽपीत्यादिनोक्तः (२३३) । संप्रति योगाचारमतमनुवदति—नेत्यादिना । येषां चेति चकारस्य तेषामित्यत्र सम्बन्धः । स चापिपर्यायः । तन्मतेऽपि मानमेयव्यवहारासिद्धिरित्यभिसंधाय दूषयति—तेषामिति । मेयोऽर्थो बोधैकरसान्मानान्नातिरिच्यते चेन्मानवदर्थस्याज्ञातत्वाभावान्नाज्ञातज्ञापकं मानं, न च ज्ञातस्यैव ज्ञापकं वैयर्थ्यादित्यर्थः । मानान्मेयस्य भेदे मानमेयभावः शङ्क्यते तदभेदे तदाशङ्कैव नेति वक्तुमत्यन्तमित्युक्तम् ॥२४३॥

---

१. मदीयहार्दे—हृद्गताभिप्रायविशेषे ।

२. ज्ञानस्य मानमेयत्वे तस्य ज्ञानं मानान्तरादवगन्तव्यं मानान्तरं च ज्ञानमेव गोचरयेत् तदर्थं च मानान्तरमित्यनवस्था ।

ज्ञानमेयप्रभेदेऽपि मानस्य स्वार्थरूपिणः । बौद्धराद्धान्तसक्तिः स्यात्स्वार्थस्य क्षणिकत्वतः ॥४४॥
स्वार्थं प्रत्येव संसिद्धेः परार्थस्येह वस्तुनः । स्वप्नादिवदनात्मार्थो मृषा स्यात्क्षणिकोऽपि वा ॥४५॥
न च सौगतसिद्धान्तस्तत्सिद्धौ मित्यभावतः । मेयमानैकतोऽभावादज्ञातत्वस्य तत्क्षणे ॥४६॥
अथाभ्युपेयतेऽज्ञातः प्रमेयाव्यतिरेकतः । एकत्रापि प्रमाणत्वप्रसिद्धचर्थं क्षणात्मनि ॥४७॥
मानात्मकेऽपि मेयेऽर्थे यद्यबुद्धत्वमिष्यते । अज्ञातत्वापनुन्मानात्किमन्यदिति कथ्यताम् ॥४८॥
स्वतो वा परतो वेदमज्ञातत्वं भवद्भवेत् । स्वतश्चेत्तत्समोवत्स्याज्ज्ञातत्वं रज्जुसर्पवत् ॥४९॥

अस्तु तर्हि मानमेयभेदस्ततो व्यवहारसिद्धिरिति केचित्तान्प्रत्याह—ज्ञानेति । तद्भेदपक्षेऽपि प्राङ्मानप्रवृत्तेरज्ञातार्थस्य ज्ञातत्वानुपगमे[1] संवेदनस्य स्वविषयाकारस्य क्षणिकत्वात्तस्य च स्वसमकालार्थसाधकत्वात्पूर्वोत्तरकालयोरर्थसत्त्वे मानाभावात्तद्वेद्यस्यापि क्षणिकत्वप्रसक्तेस्तदविषयस्य चानिष्टेस्तव स्थायिवादिनोऽपि बौद्धसिद्धान्तःस्यादित्यर्थः ॥२४४॥

ज्ञानवज्ज्ञेयस्यापि सिद्धेर्नैवमित्याशङ्क्याऽऽह—स्वार्थमिति । लोके मेयस्यार्थस्य मानमपेक्ष्यैव सिद्धेरन्यथा चासिद्धेरर्थो ज्ञाने कल्पितः स्यात्स्वप्नादावेवं दर्शनादतो यः प्रत्ययः स निरालम्बनो यथा स्वप्नादिप्रत्ययः प्रत्ययश्चायमित्यनुमानाद्विज्ञानवादापत्तिरिति भावः । उपलब्धिबलान्मानमेयभेदोपगमान्न तद्वाद इत्याशङ्क्याऽऽह—क्षणिकोऽपीति । न तावन्मेयोऽर्थः स्वतः सिध्यति जडत्वान्मानात्तत्सिद्धावुक्त[2]न्यायात्क्षणिकः स्यादतः सौत्रान्तिकवैभाषिकपक्षप्राप्तिरित्यर्थः । ज्ञानज्ञेयभेदं स्थायित्वं चेच्छतोऽपीत्यपेरर्थः । सिद्धान्तिनो विज्ञानवादे नाऽऽस्थेति वक्तुं वाशब्दः ॥२४५॥

भवतु बौद्धसिद्धान्तः का हानिस्तत्राऽऽह—न चेति । विज्ञानवादो बाह्यार्थवादश्च न युक्तौ तन्मूलमानाभावाद्भ्रान्तिमूलत्वादुक्तं च स[3]मुदाय उभयहेतुकेऽपि तदप्राप्तिरिति' नाभाव उपलब्धेरिति चातस्तन्मतमसंगतमित्यर्थः । योगाचारमते न शक्यमबुद्धबोधनमित्युक्तं निगमयति—मेयेति । तयोरेकत्वान्मानकाले चाज्ञातत्वायोगादन्यथा तद्वैयर्थ्याद्विज्ञानवादे नाज्ञातज्ञापनमित्यर्थः ॥२४६॥

विज्ञानवाद्याह—अथेति । एकस्मिन्नपि ज्ञानक्षणे मानमेयभावार्थं मेयाभिन्नत्वेनाज्ञातत्वमिष्टमतोऽज्ञातज्ञापनसिद्धिरित्यर्थः ॥२४७॥

मानरूपेऽपि नीलाद्यर्थे यद्यज्ञातत्वं तदा न मानात्तद्ध्वस्तिरविरोधाद्विरोधे वा तदात्मके मेये तदनवकाशादप्रसक्तप्रतिषेधायोगान्न चान्यत्तद्ध्वंस्यनभ्युपगमादन्यथा मानवैफल्यादिति दूषयति—मानात्मकेऽपीति ॥२४८॥

ज्ञातो वाऽर्थोऽथवाऽज्ञात उभयं वेति पक्षेषु साधारणं दोषं वक्तुं विकल्पयति—स्वतो वेति । मेयेऽर्थे भवदज्ञातत्वं स्वाभाविकमौपाधिकं वेति विकल्पार्थः । तत्राऽऽद्यमनूद्य दूषयति—स्वतश्चेदिति । वस्तुनो यद्यज्ञातत्वं स्वाभाविकं तदा सदैवाज्ञानोपेतं तदायत्तज्ञातत्वं तु सर्पवदत्र कल्पितं स्यात्तथा चा[4]ऽऽद्यस्य मानादनिवृत्तेरित[5]रस्य च ततो निवृत्तेस्तद्वैयर्थ्यं स्यादित्यर्थः ॥२४९॥

१. ज्ञातत्वानुपगमे साक्षिसिद्धत्वानुपगमे ।
२. उक्तन्यायात्—अज्ञातार्थस्य साक्षिसिद्धत्वानुपगमे संवेदनस्य स्वविषयाकारस्य क्षणिकत्वादिति पूर्वश्लोकोक्तन्यायेन ।
३. बौद्धराद्धान्तदूषणार्थं सूत्रं समुदायेति । २-२-१८ समुदायः भूतसंहतिः पञ्चस्कन्धी वा तस्मिन् उभयहेतुकेऽपि समुदायेऽभ्युपगम्यमाने तदप्राप्तिः समुदायाभावानुपपत्तिः समुदायिनामचेतनत्वात् नाभाव उपलब्धेः— २-२-२८ । बाह्यार्थस्य नाभावः अध्यवसातुं शक्यते—उपलब्धेः प्रतिप्रत्ययं घटकुट्याद्युपलब्धेरित्यर्थः ।
४. आद्यस्य अज्ञातत्वस्य ।
५. इतरस्य ज्ञातत्वस्य ।

अथान्यतस्तदज्ञातं किंरूपं वस्त्ववतीर्यताम् । मानादवगतं तच्चेन्मैवमव्यतिरेकतः ॥५०॥
अन्वयव्यतिरेकाभ्यां यथोक्तोऽर्थः प्रसिध्यति । ताभ्यां विना कुतोऽज्ञायि त्वेवं रूपमितीर्यताम् ॥५१॥
न चेह वास्तवं रूपं तदध्यासेन बाध्यते । रज्जुसर्पधिया लोके न रज्जुरितिधीह्नुतिः ॥५२॥
स्वसंवित्तित्वमात्रे च न तमःसंभवः क्वचित् । तथाऽभ्युपगमे तस्य नापनुत्तिः कुतश्चन ॥५३॥
दुर्बलानां विरुद्धानां बलवद्भिरपाक्रिया । विरुद्धैरेव दृष्टा सा तदैकात्म्ये कथं भवेत् ॥५४॥
बाध्यबाधकयोर्योगः स्वशक्त्यनपहारतः । योऽन्यथा संगतिं ब्रूते चर्मवद्वेष्टयेत्स खम् ॥५५॥
न च जाड्यातिरेकेण ह्यविद्या काचिदिष्यते । अविद्यां गमयित्वेति श्रुतितोऽप्यवसीयताम् ॥५६॥

न चोभयमिति चतुर्थेन सह द्वितीयमुत्थापयति— अथेति । अज्ञानादज्ञातं वस्तु ज्ञानाच्च ज्ञातं न स्वतो ज्ञातमज्ञातं वेत्यर्थः । अज्ञातत्वस्याज्ञानकृतत्वे कल्पितत्वमिति द्वितीये दोषं मत्वा चतुर्थं दूषयति—किंरूपमिति । उभयं परतश्चेत्तर्हि वस्तुनो द्वयातिरिक्तं रूपं वाच्यं तच्च न संभवतीत्यर्थः । पावकादौ प्रमितमौष्ण्यादि रूपमतः वस्तुनो द्वयातिरिक्तरूपाभावासिद्धिरिति शङ्कते—मानादिति । प्रमितिरसिद्धेत्याह—मैवमिति । अन्वयव्यतिरेकयोरसंभवान्मानानुपपत्तेरिति हेतुमाह—अव्यतिरेकत इति ॥२५०॥

कथं तदसंभवेन मानानुपपत्तिस्तत्राऽऽह—अन्वयेति । प्राङ् मानप्रवृत्तेर्यद्यज्ञाततया वस्तु सिद्धं तदेदानीं ज्ञातं पूर्वमज्ञातमित्यन्वयव्यतिरेकसंभवात्ताभ्यां वा तत्पूर्वकमानान्तराद्वा ज्ञातौष्ण्यादि वस्तुरूपमित्ययमर्थः सिध्यति । प्राक्चेदज्ञातं वस्तु साधकाभावादसिद्धं तदोक्तान्वयाद्ययोगान्मानान्तरज्ञातमुष्णत्वादि वस्तुरूपमिति दुर्ज्ञानं ज्ञापकाभावादतो ज्ञातत्वादेरन्यकृतत्वात्कल्पिततेति भावः ॥२५१॥

तर्हि तेनैव ज्ञातत्वेनाज्ञातत्वं तथाविधमेव बाध्यताम् । दृष्टं हि भवन्नये कल्पितस्यैव कल्पितबाधकत्वं तत्राऽऽह—न चेति । इहेति व्यवहारमार्गोक्तिः । ज्ञातत्ववदज्ञातत्वस्यापि कल्पितत्वे पक्षभेदासिद्धिरन्यतरस्याकल्पितत्वे चाज्ञातत्वं चेदकल्पितं तदा कल्पितेनेतरेण न तद्बाधो न हि कल्पितसर्पज्ञानमकल्पितां रज्जुधियं बाधते नापि ज्ञातत्वमकल्पितं तस्य कादाचित्कत्वेन सर्पवत्कल्पितत्वध्रौव्यादित्यर्थः । कल्पितेनाकल्पितस्याबाधे दृष्टान्तमाह—रज्ज्विति ॥३५२॥

चतुरोऽपि पक्षान्दूषयित्वा योगाचारादिपक्षे दोषान्तरमाह—स्वसंवित्तीति । स्वप्रकाशरूपे तत्त्वे न कदाचिदज्ञानं युक्तं दूरतस्त्वज्ञातत्वमित्यर्थः । तत्राप्यज्ञातत्वोपगमे दोषमाह—तथेति । न हि स्वप्रकाशेऽपि वृत्तिरूपज्ञानमज्ञानध्वंसि त्वयेष्यते । आगन्तुकज्ञानेतरज्ञानानुपगमात्तस्य च ज्ञानान्तराविषयत्वात् । किंच स्वप्रकाशस्याज्ञानसंबन्धो वास्तवश्चेन्न तस्य मानादन्यतो वा ध्वस्तिः । अवास्तवश्चेन्न तस्य स्वरूपज्ञानाद्ध्वस्तिस्तदनभ्युपगमान्नित्यनिवृत्तिप्रसङ्गाच्चेति भावः ॥२५३॥

अस्तु तर्हि कादाचित्कज्ञानादवास्तवाज्ञानसंबन्धध्वस्तिरित्याशङ्क्याऽऽह—दुर्बलानामिति । दृश्यते हि रजतभुजंगादिविभ्रमधियां शुक्तिरज्ज्वादिसम्यग्धिया बाध्यत्वमिति भावः । सामान्यन्यायस्य प्रकृतेऽनुपपत्तिमाह—सेति । कादाचित्कज्ञानाधीनाज्ञानसंबन्धापाक्रियेति यावत् । प्रकाशमात्रे वस्तुनि कादाचित्कज्ञानानुपगमान्न तत्राज्ञानसंबन्धस्तेन निरस्यते न हि ज्ञाने ज्ञानान्तरमिष्टमित्यर्थः ॥२५४॥

तर्हि मा भूदज्ञातत्वस्य ज्ञानाद्ध्वस्तिरित्याशङ्क्य ज्ञाताज्ञातत्वयोश्च स्वशक्त्या प्रकाशतमसोरिव निवर्त्यनिवर्तकत्वेन संगतिरस्तीत्याह—बाध्येति । यथोक्तसंगतिमुक्त्वा विधान्तरेण तत्संगतिमिच्छन्तं प्रत्याह—योऽन्यथेति । हठो ह्यप्रसिद्धकल्पनेति भावः ॥२५५॥

कथं विधान्तरेण संगतेरप्रसिद्धिरसंभावना चेति तत्राऽऽह—न चेति । न तावज्जाड्यादविद्याऽतिरिच्यते विद्या वाऽज्ञाड्यादप्यतिरिक्ता तद्विद्याविद्ययोर्जडाजडत्वेन विरोधान्निवर्त्यनिवर्तकत्वे विद्ययाऽविद्याध्वस्तावज्ञातत्व-

१. तदैकात्म्ये ज्ञानाज्ञातत्वयोरभेदे ( न्या० )। ज्ञाने अज्ञानसम्बन्धो न निरमितुं शक्यते ज्ञाने ज्ञानान्तरानुपगमात् ( टी० )।

अज्ञातं न यथा मानान्मिथ्याधीसंशयौ तथा । न्यायः पुरोदितः सर्वो यस्मादस्ति तयोरपि ।।५७।।
अपि सर्वप्रमाणानामज्ञातत्वादिसिद्धये । नेक्ष्यतेऽन्यतमं मानं स्वतःसिद्धं न चापि तत् ।।५८।।
न तावदिह संभाव्यं प्रत्यक्षं तदसंभवात् । विषयेन्द्रियसंबन्धविरहात्तदसंभवः ।।५९।।
न च दुःखादिधीवत्स्याज्ज्ञातस्यैवानुभूतितः । प्रत्यक्षार्थवदेवैषा मिथ्याधीरनुभूयते ।।६०।।
प्रत्यक्षादिफलं ज्ञानं कथं तस्य प्रमेयता । माफलं न च मेयस्थं क्रियाफलवदिष्यते ।।६१।।
अपि मानाभिसंबन्धो मेयार्थेनैव युक्तिमान् । माफलस्य तु मात्रैव ह्यतोऽन्यत्र वृथा श्रमः ।।६२।।

स्यापि ध्वस्तेर्न संगत्यन्तरमिति भावः। अविद्याया जाड्यातिरेकिरूपान्तराभावप्रसिद्ध्यर्थो हिशब्दः। जाड्याविद्ययोरैक्ये मानमाह—अविद्यामिति। पूर्वदेहे त्यक्ते प्राग्देहान्तरप्राप्तेर्या स्तिमितता जडता तामविद्यां प्राप्याचेतनं कृत्वाऽऽत्मानमुपसंहरतीति वक्ष्यमाणश्रुतेर्जाड्यमेवाविद्येत्यर्थः ।।२५६।।

अज्ञातार्थस्य स्वतो मानतो वा सिद्ध्ययोगात्साक्षिवेद्यत्वानङ्गीकारात्परमते मानानां नाज्ञातज्ञापकतेत्युक्त्वा मानागम्यत्वेनोक्ताज्ञातत्वदृष्टान्तेन संशयादेरपि तदगम्यत्वं निरस्यति—अज्ञातमिति। मानादधिगतमिति शेषः। तेन संशयादेः समत्वे हेतुमाह—न्याय इति। मेयस्य माननिवर्त्यत्वायोगादिति न्यायः ।।२५७।।

अज्ञातं न यथा मानादित्ययुक्तं सर्वमानानामज्ञातत्वादिसाधकत्वात्तानि हि विषये ज्ञातत्वमुत्पादयन्ति प्रागवस्थमज्ञातत्वं ज्ञापयन्ति न हि तादृगर्थं विना मानप्रवृत्तिरित्याशङ्क्याऽऽह—अपीति। निर्धारणे षष्ठी। अन्यतममपीति संबन्धः। अस्तु तर्हि स्वप्रकाशमज्ञातत्वादि नेत्याह—स्वत इति। अनात्मत्वादित्यर्थः। तन्नासदपीति चार्थः ।।२५८।।

स्वतःसिद्धत्वासिद्धत्वयोरभावेऽपि कथं तत्साधकमानानीक्षणमित्याशङ्क्य किं तत्र प्रत्यक्षं मानमनुमानं वेति विकल्प्याऽऽद्यं दूषयति—न तावदिति। अज्ञातत्वादौ प्रत्यक्षं न शङ्कनीयमित्यर्थः। तत्किं बाह्येन्द्रियजन्यं मनोजन्यं वा? नाऽऽद्य इत्याह—तदसंभवादिति। बाह्येन्द्रियजाध्यक्षस्याज्ञातत्वादिसाधकस्यासंभवं साधयति—विषयेति। अज्ञातत्वादेश्चक्षुरादेश्चासंप्रयोगान्न तत्संप्रयोगजाध्यक्षसिद्धिरित्यर्थः ।।२५९।।

कल्पान्तरं निरस्यति—न चेति। न हि दुःखाद्यपि मानसम[1]नुभवसिद्धत्वादित्यर्थः। पक्षान्तरं प्रत्याह—ज्ञातस्येति। अनुभूतिर्हि मानफलं ततो ज्ञातस्यैवानुमेयत्वं नाज्ञातत्वादेस्तद्व्याप्तलिङ्गाभावादित्यर्थः। ज्ञातस्यानुमेयत्वमङ्गीकृत्योक्ताङ्गीकारवादं त्यजति—प्रत्यक्षेति। चक्षुरादिना रूपादिवन्मिथ्याधीः सम्यग्धीर्ज्ञातत्वमज्ञातत्वमित्यादेरापरोक्ष्यान्नानुमेयत्वं तदनुपयोगादित्यर्थः ।।२६०।।

ज्ञातत्वस्यामेयत्वे युक्त्यन्तरमाह—प्रत्यक्षादीति। ज्ञानशब्देन ज्ञातत्वं लक्ष्यते। तस्य मानफलत्वादमानत्ववदमेयत्वमपि स्यादन्यथा मानत्वमपि किं न स्यात्तस्य च मेयत्वे ज्ञातत्वान्तरमेष्टव्यमित्यनवस्थेति भावः। मानफलस्य मेयाश्रितत्वाद्रूपादिवन्मेयत्वं न चानवस्था ज्ञातत्वे ज्ञातत्वान्तरानङ्गीकारेऽपि मानकृतव्यवहारविषयतया मेयत्वोपपत्तेरित्याशङ्क्याऽऽह—माफलमिति। छिदिफलस्य द्वैधीभावस्य दारुनिष्ठत्ववन्न मानफलस्य ज्ञातत्वस्यार्थनिष्ठत्वं तस्याप्रकाशत्वेऽर्थादविशेषादकिंचित्करत्वात्प्रकाशत्वे ज्ञानवदर्थनिष्ठत्वायोगात्। न च ज्ञातत्वेऽज्ञातत्वाभावे मेयत्वं न हि मानाधीनव्यवहारविषयता मेयता सर्वस्यापि तथात्वेन त्वन्मते सांकर्यप्रसङ्गादित्यर्थः ।।२६१।।

किंच मानस्य विषयिभावो मेयेनैव न फलेन तस्य मेयताया निरस्तत्वादित्याह—अपीति। मानस्य मेयेनैव संबन्धेऽपि फलस्य तेन विषयतया स भविष्यति न च तस्यामेयत्वमसिद्धिप्रसङ्गान्न हि तस्य स्वतःसिद्धिरनात्मत्वान्न च कादाचित्कस्याऽऽत्मतेत्याशङ्क्याह—[3]माफलस्येति। मात्रैव संबन्धो न मेयादिनेति शेषः। फलस्य

१. अनुभवसिद्धत्वात् साक्षिभास्यत्वात्।
२. सांकर्यं ज्ञातत्वाज्ञातत्वयोरेकत्र प्रसङ्गः।
३. घटः स्फुरतीति व्यवहारः स्फुरणजनकज्ञानविषयत्वात् अन्यथा भूतचैतन्यवादेन मोक्षसाधनाननुष्ठानप्रसंगात्। अतोऽन्यत्रेति मेये माफलस्वीकारे देहात्मवादापत्तेः। ( न्या० )

**माफलस्य तु मेयत्वे प्राप्नोतीहानवस्थितिः । प्रमाफलाभिसम्बन्धः किंमान इति कथ्यताम् ॥६३॥**
**इहापि चानवस्थेति नानुमाऽतोऽत्र युज्यते । न च रागादिसंसिद्धौ मानव्यापार ईक्ष्यते ॥६४॥**
**रागादेर्नापि चाभावो भावात्तदनुभूतितः । न च कश्चित्फले भेदो मेयमानप्रमातृषु ॥६५॥**
**मानकार्यं फलं चेत्स्यान्न स्यात्तन्मातृमानयोः । तदभावे च माभावात्कुतस्तत्स्यात्प्रमां विना ॥६६॥**
**प्रमात्रादेरभावे च नाप्यभावः प्रमेष्यते । सुषुप्ते मातृपूर्वत्वात्सर्वमाव्यापृतेरिह ॥६७॥**

मेयेन संबन्धो निरस्तः । न च तस्य मानेन विषयतया संबन्धः मेयान्तर्भावात्फलत्वायोगादतस्तस्य मानादौ संगतिरित्युक्त्यायासो वृथैव मात्राश्रितस्य स्वाश्रयेण सहानुभवसिद्धत्वादित्यर्थः । मेयत्वादिना सह फलसंबन्धस्य निरस्तत्वद्योतनार्थो हिशब्दः ॥२६२॥

मेयसंबन्धिमानं फलेनापि संबध्यते तस्यापि वस्तुत्वेन मेयत्वशङ्कावकाशादित्याशङ्क्याऽऽह—माफलस्येति । इहेति मानभूमिग्रहः । फले[1] फले च तन्मालेत्यादिन्यायादित्यर्थः । अनवस्थाया मूलक्षयकरीत्वेन दोषत्वं विशदयितुं तुशब्दः । प्रमातत्फलयोर्हेतुहेतुमद्भावसंबन्धस्य मेयत्ववत्फलस्यापि स्यादित्याशङ्क्याऽऽह—प्रमेति । न हि संबन्धवत्फलस्य मेयत्वमनवस्थितेः न च सोऽपि मेयस्तद्ग्राहिमानाभावादित्यर्थः ॥२६३॥

फलाख्यकार्यलिङ्गात्तस्य कारणभूतमानादिसंबन्धोऽनुमीयतामित्याशङ्क्याऽऽह—इहापीति । फलस्येव तस्यानुमेयत्वेऽपि प्राप्नोत्यनवस्था तत्रान्यफलसंबन्धापत्तेरतः संबन्धे फलवन्नानुमेयता युक्तेत्यर्थः । फलदृष्टान्तार्थमपिकारः । चकारोऽवधारणार्थः सन्क्रियापदेन संबध्यते । मा भूत्प्रमातत्फलयोः संबन्धवज्ज्ञा[2]तत्वादेर्मेयत्वं रागादिवत्तु स्यान्नेत्याह—न चेति ॥२६४॥

तस्यामेयत्वे स्वप्रकाशत्वानिष्टेरसत्त्वमिति नेत्याह—रागादेरिति । मानागम्यत्वेऽपीत्यपेरर्थः । चकारोऽवधारणार्थो नञा संबध्यते । तस्य रागादेरनुभवादेव सत्त्वोपपत्तेर्नासत्त्वमित्यर्थः । यद्वा तादृगर्थेन तच्छब्देनानुभूतेर्नित्यत्वमुच्यते । अथ यथोक्तानुभूतिर्जडा अजडा वा? नाऽऽद्यो घटवदसाधकत्वान्न हि दीपस्यापि स्वतःसाधकत्वं; नेतरो विभक्तत्वेन कार्यत्वात्तत्राऽऽह—न[3] चेति । न हि नभोवदुपाधिं विना फले स्वतो भेदो मात्रादिकृता तु तद्धीरतो न तत्र कार्यत्वं तद्युक्तमनुभूतेरजाड्यमित्यर्थः ॥२६५॥

फलस्य मानकार्यत्वप्रसिद्धेर्जडतेति शङ्कते—मानेति । तत्कार्यत्वे वेदनस्य न तन्मानमातृमेयसाधकं स्यान्मा[4]नकार्यत्वात्तत्कार्यसंस्कारवत्ततः साधकाभावान्मात्रादेरसत्तेति दूषयति—न स्यादिति । अस्तु मात्रादीनामसत्त्वमिति शून्यवादी मन्यते तं प्रत्याह—तदभावे चेति । तेषां त्रयाणामभावे साधकाभावादिष्टं शून्यत्वमपि न सिध्येन्न हि तत्स्वप्रकाशमित्यर्थः । मानाभावादिति वदता तदभावः स्वीकृतः स्यादित्याशङ्क्याह—कुत इति । मानाभावाख्यमपि वस्तु त्वन्मते न सिध्यति साधकाभावान्मम तु मानाद्यभावः साक्षिसिद्ध इति भावः । यद्वा मातृमेययोरभावेऽपि साधकानपेक्षान्मानादेव व्यवहारः स्यादित्याशङ्क्याऽऽह—तदभावे चेति । तयोरभावे विषयाश्रयशून्यमानाभावान्न तत्कृतो व्यवहार इत्यर्थः । अथवा माननिमित्तव्यवहाराभावेऽपि तत्फलनिमित्तः स्यादित्याशङ्क्याऽऽह—कुत इति । मानं विना फलासिद्धेर्न तत्कृतो व्यवहार इत्यर्थः ॥२६६॥

रागादेर्नित्यानुभववेद्यत्वेनामेयत्वेऽपि मात्राद्यभाववदज्ञातत्वादेर्मेयतेत्याशङ्क्याऽऽह—प्रमात्रादेरिति ।

---

१. फले फले चेति फलस्यापि फलाङ्गीकारे तत्प्रमाफलस्वीकारापत्त्याऽनवस्था । माफलं प्रमाफलं व्यवहारः ।

२. ज्ञातत्वादेरिति—मीमांसकाः प्रत्यक्षज्ञानेन घटादौ ज्ञातता जन्यते तया ज्ञानमनुमीयत इति संगिरन्ते तस्या अपि सद्भावे मानाभावादेव न मानफलत्वं मानं चक्षुरादि मेयः घटादिः फलं तु व्यवहारादिः अन्यस्य फलत्वे ज्ञानजन्यरागादेरपि प्रमाणफलता स्यादित्यर्थः । तत्रान्यफलेति फले व्यवहारे अन्यफलेत्यर्थः ।

३. फलं प्रकाशः स्फुरणं वृत्त्यभिव्यक्तं चैतन्यं तत्र न भेदः । विभक्तत्वेन—यद्विभक्तं तत् विकारः यावद्विकारं तु विभागो लोकवदिति सूत्रोक्तन्यायादित्यर्थः । तन्निराकरोति—न फले भेद इति ।

४. मानकार्यं संवेदनं मानसाधकं स्यात् न तु मातृमेयसाधकं तदकार्यत्वात् । तत्संस्कारवत्—संवेदनसंस्कारवत् संवेदनसंस्कारो यथा संवेदनसाधकः साधकाभावे तयोस्तुच्छता ।

**न प्रत्यक्षानुमानाभ्यामतोऽर्थापत्तितोऽपि न । न हि दृष्टं श्रुतं वर्ते साऽर्थापत्तिः प्रसिध्यति ॥६८॥**
**सादृश्यासंभवाच्चेह नोपमानस्य संभवः । मिथ्याज्ञानादिसंसिद्धौ न चाभावोऽपि शङ्कयते ॥६९॥**
**अत्यन्तापूर्वदृष्टेऽर्थे प्राङ्नाद्राक्षमिमं नगम् । प्रत्यभिज्ञायते साक्षाददृष्टपूर्वो यथा तथा ॥७०॥**
**न च मात्रादिसद्भावस्तस्यात्यन्तमदृष्टतः । न प्रमाणान्न चाभावात्प्रत्यभिज्ञात इष्यते ॥७१॥**
**तस्मात्प्रमाप्रमाभासाप्रमाणानामशेषतः । स्वार्था[1]नन्यप्रमाणात्स्यात्प्रसिद्धिस्तमसस्तथा ॥७२॥**
**आ[2]न्तरं मेयमाश्रित्य स्वतःसिद्धमनन्यमम् । भावाभावादिमद्विश्वं सर्वमेतत्प्रसिध्यति ॥७३॥**

तत्राभावो मानमन्यद्वा? न तावत्स्वापे मात्राद्यभावे[3] मात्रादिविषयमानानुदयो मानं लोके मानव्यापारस्य मात्रपेक्ष्यत्वात्तदभावेऽभावादित्यर्थः । अपिस्तावदर्थः । चकारः स्वापेनावस्थान्तरसमुच्चये ॥२६७॥

द्वितीये प्रत्यक्षमनुमानमर्थापत्तिरुपमानं वा तत्र मानमिति विकल्प्याऽऽद्यौ दूषयति—नेति । मात्राद्यभावो मीयत इति शेषः । तयोरपि मातृपूर्वत्वात्तदभावे प्रवृत्त्ययोगादित्याह—अत इति । उक्तहेतुना तृतीयं निराह—अर्थापत्तितोऽपीति । सा द्विविधा दृष्टश्रुतभेदात्तत्राऽऽद्या दृष्टमपेक्षते यथा जीवतो मैत्रस्य गृहान्तरसत्त्वं दृष्टमपेक्ष्य बहिःसत्त्वं कल्प्यते । द्वितीया श्रुतमाकाङ्क्षति यथा पीनो मैत्रो न भुङ्क्ते दिवेति श्रुतं वाक्यैकदेशमपेक्ष्य भुङ्क्ते रात्रावित्येकदेशान्तरं कल्प्यते तद्दृष्टादिसापेक्षार्थापत्तेस्तदभावे न प्रवृत्तिरित्याह—न हीति ॥२६८॥

न चतुर्थ इत्याह—सादृश्येति । उपमानासंभवस्य मानान्तरासंभवेन समुच्चयार्थश्चकारः । सादृश्यकारणकमुपमानं तदभावान्मात्राद्यभावे न प्रमाणीभवतीत्यर्थः । मात्राद्यभाववदज्ञातत्वादेर्मानतः सिद्धिं निरस्य भावमानादभावमानाद्वा तत्सिद्धिरिति विकल्प्याऽऽद्यस्य निरस्तत्वाद्द्वितीयं निरस्यति—मिथ्येति । मात्राद्यभावसिद्धिदृष्टान्तार्थश्चकारः । भावमानवदित्यपेरर्थः । न हि योग्यानुपलब्धिर्मिथ्याज्ञानादावभावातिरिक्ते संभवतीति भावः ॥२६९॥

अज्ञातत्वादेर्भावाभावमानासिद्धत्वे कथं सिद्धिस्तत्र गूढाभिसंधिः सन्नाह—अत्यन्तेति । अर्थे नगादावत्यन्तापूर्वे दृष्टे प्रागिमं न दृष्टवानिति परामृश्य दृष्टपूर्ववददृष्टपूर्वोऽपि साक्षाज्ज्ञायते तस्मादज्ञातत्वादि प्रत्यभिज्ञासिद्धमित्यर्थः ॥२७०॥

तर्हि प्रत्यभिज्ञातत्वादज्ञातत्वादेर्मानसिद्धता नेत्याह—न चेति । न तावदिदानीं दृश्यमाने नगादौ पूर्वं प्रवृत्तो मात्रादिस्तस्यात्यन्तमदृष्टत्वादतो वृत्तानुभवाभावात्तज्जसंस्काराभावादुक्तप्रत्यभिज्ञायोगान्नाज्ञातत्वादेर्मेयतेत्यर्थः । तर्हि प्रत्यभिज्ञयाऽज्ञातत्वादिसिद्धिवाचोयुक्ती रिक्तेत्याशङ्क्य स्वाभिप्रायमाह—नेति । भावमानादभावमानाद्वा नाज्ञातत्वादिप्रत्यभिज्ञा किंत्वनुभवादेवेत्यर्थः । तत्र प्रसिद्धप्रत्यभिज्ञाया योग्यत्वाभावादनुभवोऽतः शब्दार्थः ॥२७१॥

अज्ञातत्वादेरमेयत्वादनुभवादेव तद्धीरित्युपसंहरति—तस्मादिति । स्वतन्त्रप्रत्यक्प्रमाणं साक्ष्यनुभवाख्यं तस्मात्प्रमादेस्तद्धेत्वज्ञानस्य च सिद्धिरित्यर्थः ॥२७२॥

मानादिसाधकमानस्यापि मानान्तरापेक्षत्वादनवस्थेत्याशङ्क्याऽऽह—आन्तरमिति । साधकत्वादेव साक्षिणि मानत्वोक्तिर्न तत्र मुख्या मानतेत्यर्थः । तर्हि मेयत्वादेव तस्य मानापेक्षेति नेत्याह—स्वतःसिद्धमिति । तदेव कथं संविद्रूपत्वादित्याह—अनन्यमिति । उक्तलक्षणे साक्षिणि मानत्वोक्तौ हेतुं व्यनक्ति—भावेति । भावाभावौ जन्मनाशौ । आदिशब्देन परिणामादिग्रहः । विश्वं मात्रादि ॥२७३॥

---

१. स्वार्थः अनन्यप्रमाणः साक्षी तेन प्रसिद्धिः प्रमादीनाम् ।

२. आत्मनो नाज्ञातत्वादिसाधकत्वं मेयत्वात् घटवदित्यत आह—**आन्तरमिति** । स्वतःसिद्धमिति जडत्वमुपाधिरित्यर्थः ( न्या० ) ।

३. **मात्राद्यभाववदिति**—सुषुप्तौ मात्राद्यभावात् प्रमेष्यते न च मानाभावरूपं प्रमाणं प्रमात्रभावसाधकम् । मानव्यापारे प्रमात्रपेक्षणात् ।

### मिथ्याज्ञानस्यानुभवसिद्धत्वे हेतूक्तिः

**मेयार्थानभिसम्बन्धान्न यथावस्तुधीरियम्[1] । ज्ञातत्वात्तदभावोऽपि प्रात्यक्ष्यान्नेष्यते स्मृतिः ॥७४॥**
**इदं[2] रजतमित्येवंरूपं वस्तु न कुत्रचित् । न शुक्तौ रजतज्ञानं नेदंता रजतेऽस्ति नः ॥७५॥**
**तदन्यत्र द्वयाभावात्साक्ष्यादावपि नेष्यते । न चेहार्थावबोधोऽस्ति मिथ्याज्ञानत्वकारणात् ॥७६॥**
**मिथ्याज्ञानादिसंसिद्धौ क उपाय इतीर्यताम् । सम्यग्धीतोऽथ तत्सिद्धिर्न तस्या मेयसंगतेः ॥७७॥**
**मेयप्रमामृते कार्यं मानानां नान्यदिष्यते । न च सत्त्वादिमात्रेण रूप्यादिमितिसंभवः ॥७८॥**
**तस्यासाधारणात्मोत्थविज्ञानविषयत्वतः । तस्माद्रजतसंस्कारसंस्कृतात्स्वान्ततः स्मृतिः ॥७९॥**

अथ जगतः साक्षिवेद्यत्वं साधयितुं मिथ्याज्ञानस्यानुभवसिद्धत्वे हेतुमाह—मेयेति । मिथ्याधीर्नार्थानुसारिणी तदबोधित्वादतो वस्तुधियो न तत्सिद्धिरित्यर्थः । तर्हि साधकाभावान्नास्त्येव सेत्याशङ्क्यानुभवसिद्धत्वान्नैवमित्याह—ज्ञातत्वादिति । नेष्यत इति संबन्धः । मिथ्याधीर्नामाविवेकोत्था स्मृतिः सा च स्वतः सिध्यतीत्यख्यातिमतं प्रत्याचष्टे—प्रात्यक्ष्यादिति । अपरोक्षानुभवत्वान्न रजतधीः स्मृतिः पुरोवर्तिकुम्भोपलम्भवदित्यर्थः ॥२७४॥

देशान्तरादिवर्तिरूप्यात्मना पुरःस्थितशुक्तिभानमेव मिथ्याधीः सा च फललिङ्गेत्यन्यथाख्यातिमतमाशङ्क्याऽऽह—इदमिति । इदंरूपस्य पुरोदेशे देशान्तरादौ च रूप्यस्य सत्त्वेऽपि विशिष्टं रूपमिह दृष्टं न क्वचिदस्ति । न हि तदिहास्ति बाधधीविरोधात् । नान्यत्र साधाकाभावात् । न चेदमसदेवापरोक्षत्वात् तस्माद्विशिष्टदृष्टिरनिर्वचनीयख्यातिः सा च साक्षिवेद्येति भावः । कथं विशिष्टरूपस्य सर्वत्रासत्त्वं तत्किं शुक्तिदेशे रजतदेशे वा ताभ्यामन्यत्र वा ? नाऽऽद्यः शुक्ताविदमो भावेऽपि रजतस्याभावान्मानाभावाद्बाधधीविरोधाच्चेत्याह—न शुक्ताविति । नेतरो रूप्यदेशे तद्रूपस्य भावेऽपि न तत्रेदंताऽस्ति न हि रजते देशान्तरस्थेऽस्माकमिदंत्वं भातीत्याह—नेति ॥२७५॥

न तृतीयो घटादिदेशे रजतस्येदंतायाश्चाभावाद्विशिष्टरूपासिद्धेरित्याह—तदन्यत्रेति । साक्षिणि मातरि वा विशिष्टं रूपं तस्य प्रतिभामात्रदेहत्वात्तस्याश्च तदन्यतरस्थत्वादित्येके बुद्धावित्यपरे तान्प्रत्याह—साक्ष्यादाविति । मानाभावादिति शेषः । अनिर्वचनीयख्यातित्वेनोक्तमिथ्याधियो मेयार्थानभिसंबन्धादित्यत्रोक्तं स्वरूपमनुवदति—न चेति । मिथ्याज्ञानं सप्तम्यर्थः ॥२७६॥

तस्यानुभवसिद्धतां सिषाधयिषुः साधकान्तरमाक्षिपति—मिथ्येति । पृष्टं मत्वोपायमाह—सम्यगिति । न सा तत्साधिका तस्या मेयार्थसंबन्धेन तत्रैव प्रमाहेतुत्वादित्याह—नेति ॥२७७॥

मिथ्याज्ञानादेरपि मेयत्वात्तत्संबद्धा सम्यग्धीस्तत्र प्रमां करिष्यतीति चेन्नेत्याह—मेयेति । न मिथ्याज्ञानादेरपि मेयत्वमज्ञानकार्यस्य तद्वदज्ञातत्वायोगात् । न च मेये प्रमां विना मानानामन्यत्फलमतोऽज्ञानकार्यस्य तस्य न सम्यग्धीतः सिद्धिरित्यर्थः । ननु नाज्ञानं मिथ्याधीहेतुः किंतु सत्त्वादिसादृश्यं सदृशदर्शनोद्बुद्धसंस्कारकारिता हि रजतादिधीस्तत्राऽऽह—न चेति । शुक्तिज्ञानात्तदज्ञाने ध्वस्ते सत्यपि सत्त्वादिसादृश्ये रूप्यज्ञानाभावादन्वयव्यतिरेकाभ्यां शुक्त्यज्ञानमेव तद्धेतुरित्यर्थः ॥२७८॥

मिथ्याधियः सत्त्वादिविषयत्वेन याथार्थ्यान्नाज्ञानकार्यता सर्वे प्रत्यया यथार्थाः प्रत्ययत्वात्संमतवदित्य-

---

१. इयं = इदं रजतमिति भ्रान्तिरित्यर्थः सा न यथावस्तु जायमानधीः । नापि तादृशभ्रमाभावः ज्ञायमानत्वात् । अख्यातिमतं प्रभाकरस्य तन्मते इदं रजतमिति ज्ञाने रजतांशस्य स्मृतिरेव । तदपि न, रजतं पश्यामीत्यनुभवात् तमस्यपि अज्ञानेऽपि, मेयं वस्तु ज्ञानज्ञात्रतिरिक्तप्रमाणप्रमेयं वस्तु मिथ्याज्ञान इव ( ज्ञानेऽपि ) नास्ति अतः अज्ञानं प्रमात्रादिसहितं साक्षिवेद्यम् इत्यर्थः ।

२. अविविक्तम् ।

प्रथतेऽविकृतात्मैकनित्यदृष्टेः परात्मनः ॥८०॥

प्रमात्रा सह अज्ञानस्यानुभववेद्यत्वम्

ज्ञानज्ञात्रतिरेकेण तमस्यपि न[1] विद्यते । मेयं वस्तु ततोऽज्ञानं प्रत्यक्षं सप्रमातृकम् ॥८१॥
न हि संविदनारूढः प्रमात्रादिः प्रसिध्यति । संविन्मात्रैकयाथात्म्यात्प्रमात्रादेरनात्मनः ॥८२॥
ज्ञातोऽयमर्थोऽज्ञातो वा धीरियं कर्तृ[2]संश्रया । स्मृतिः सा न यथावस्तु तेनासावप्रमोदिता ॥८३॥
न हि वस्त्वनुरोध्येतज्ज्ञाताज्ञातत्वलक्षणम् । रूपं वस्त्वपरिज्ञानसमुत्थं ज्ञातृसंश्रयम् ॥८४॥

नुमानादित्याशङ्क्याऽऽह—तस्येति । रूप्यादिज्ञानस्यासाधारणाकारेण रूप्यादिनोत्पन्नसम्यग्धीतुल्यविषयत्वान्न सत्त्वादिसादृश्यमात्रं विषयो न च सर्वप्रत्यययाथार्थ्यानुमानम् ।

"स्वीकारे[3] विभ्रमाणां स्यात्स्वीयसिद्धान्तबाधना । अनभ्युपगमे तेषामाश्रयासिद्धिरुद्धता" ॥ ( त. प्र. )

इति न्यायादित्यर्थः । रूप्यादेश्चासाधारणाकारोत्थज्ञानं प्रति विषयत्वान्न सत्त्वादेरेव तद्विषयतेति केचित्सर्वथाऽपि मिथ्याज्ञानस्यायथार्थत्वात्कारणान्तरायोगादज्ञानकार्यतेति फलितमाह—तस्मादिति । पूर्वानुभूतरजतसंस्कारसहितान्तःकरणापन्नप्रत्यगज्ञानाद्रजतभ्रान्तिः सा च संस्कारजन्यतया स्मृति[4]रित्युच्यते । न खल्वदृष्टरजतः शुक्तिमुपलभमानो रजतभ्रम्यतः संस्कारो भ्रान्त्युपयोगीत्यर्थः ॥२७९॥

मिथ्याज्ञानस्योत्पादकमुक्त्वा ज्ञापकं निगमयति—प्रथत इति । या निर्विकाररूपा भेदहीना नित्यसिद्धा दृष्टिस्तत्स्वरूपात्परस्मान्मिथ्याधीर्भातीत्यर्थः । अज्ञानवत्तत्कार्यमिथ्याज्ञानादेरपि साधकान्तरं किं न स्यादित्याशङ्क्य तमसस्तथेत्युक्तमनुसृत्य दृष्टान्तं दूषयति—ज्ञानेति । करणव्युत्पत्तेरन्तःकरणं ज्ञानं तस्य ज्ञाता कूटस्थानुभवस्तदतिरेकेण यन्मानं तेन व्याप्यं रूपं मिथ्याज्ञानादाविवाज्ञानेऽपि नास्ति तद्दृष्टान्ताभावादज्ञानं मात्रादिसहितं कूटस्थानुभवसिद्धमित्यर्थः ॥२८०-२८१॥

अज्ञानस्याज्ञोऽस्मीत्यनुभवाद्यथोक्तानुभवसिद्धत्वेऽपि कथं मात्रादेस्तत्सिद्धतेत्याशङ्क्याऽऽह—न हीति । जडत्वान्मात्रादेः संविदमनपेक्ष्य स्वातन्त्र्येण प्रसिद्धिरयुक्तेत्यर्थः । कूटस्थानुभवेऽध्यस्तस्यैव मात्रादेः सिद्धिरित्यत्र हेतुमाह—संविदिति । मात्रपदेन नानारसत्वव्यावृत्तिः । एकरसा संविदेवैकं याथात्म्यं सत्त्वं स्फूर्तिश्च मात्रादेर्जडस्यानात्मनस्तदयोगादतस्तस्य संविदि कल्पितस्यैव स्फूर्तिरित्यर्थः ॥२८२॥

ज्ञाताज्ञातभेदस्य प्रामाणिकत्वेनाकल्पितत्ववदकल्पितत्वं मात्रादेरपीत्याशङ्क्याऽऽह—ज्ञातोऽयमिति । स्मृतिर्भ्रान्तिरिति यावत् । माता मानं प्रति कर्ता न चाक्रियेऽध्यासं विना कर्तृत्वमतोऽध्यस्तमातृविकारत्वादस्या द्विविधाया धियो भ्रान्तितेत्याह—कर्त्रिति । भ्रान्तित्वे हेत्वन्तरमाह—सा नेति । ज्ञात्रादिभेदस्याप्रामाणिकत्वेन कल्पितत्वान्न तद्वन्मात्रादेरकल्पिततेति फलितमाह—तेनेति । कल्पितमात्राश्रयत्वं वस्त्वननुसारित्वं च तच्छब्दार्थः । असाविति ज्ञात्रादिभेदधीरुक्ता ॥२८३॥

ज्ञातत्वादेर्वस्त्वनुसारित्वात्तद्धियोऽपि तदनुसारितया मानतेत्याशङ्क्याऽऽह—न हीति । तस्य वस्त्वनुरोधित्वाभावे हेतुमाह—वस्त्विति । प्रत्यगज्ञानकृतत्वादित्यर्थः । ज्ञातत्वादेरवस्त्वनुसारित्वात्तज्ज्ञानमपि ज्ञातृनिष्ठमवस्त्वनुसारि न प्रमेत्याह—ज्ञात्रिति ॥२८४॥

---

१. न विद्यते । तमसि अज्ञानेऽपि मानव्याप्यं रूपं न विद्यते तस्मादज्ञानं प्रमात्रा सह साक्षिवेद्यम् ।

२. कर्तृसंश्रयाधीः स्मृतिः भ्रान्तिरित्यर्थः । भ्रान्तेः संस्कारजत्वेन स्मृतितुल्यत्वात् ।

३. स्वीकार इति—अख्यातिखण्डने तत्त्वप्रदीपिकोक्तसिद्धान्तसंग्रहश्लोकोऽयम् ।
इदं रजतमिति ज्ञानं पक्षश्चेत् विभ्रमाभ्युपगमात् सिद्धान्तविरोधः, अनभ्युपगमे आश्रयासिद्धिः विशिष्टज्ञानस्य तन्मते अप्रसिद्धेः । रजतप्रकारकज्ञाने इदं विशेष्यकत्वाभावात् ।

४. स्मृतिरित्युच्यते—इति गौण्या वृत्त्येत्यर्थः अत एव अध्यासलक्षणभाष्यं—स्मृतिरूपः परत्र पूर्वदृष्टावभासः इति । स्मृतिरूपः स्मृतिसदृशः इति व्याख्या ।

ज्ञाताज्ञातविभागोऽतः स्वतःसिद्धात्ममातृकः । संविदा ज्ञाततासिद्धिर्मितेरपि न मात्मना ॥८५॥

वस्त्वज्ञातं समुद्दिश्य तत्प्रमित्सन्ति मानिनः । ज्ञातत्वकार्यतश्चातः सिद्धं तत्फलतोऽथवा ॥८६॥

यतोऽज्ञातत्वसंसिद्धिर्ज्ञाततत्वस्यापि चाञ्जसा । तत एव च मानत्वं संविदर्ते न तत्त्रयम् ॥८७॥

षष्ठगोचरवन्नेदमज्ञातत्वं[1] समीक्ष्यते । न च प्रत्यक्षवत्सिद्धं स्वानुभूतिसमाश्रयात् ॥८८॥

प्रमात्रादिविविक्तार्थमनुभूयोत्थितस्ततः । नावेदिषमिति प्राह स्वानुभूत्यनुसारतः ॥८९॥

स्वापे अज्ञानविशिष्टानुभवः

प्रमात्राद्युत्थितेः पूर्वं चिदन्यानन्वयात्तमो—। विशेषणा चिदेवैका स्वानुभूत्यैव गम्यते ॥९०॥

आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् । अप्रतर्क्यमविज्ञेयमित्येतत्स्वानुभूतितः ॥९१॥

ज्ञाततादिभेदे मानाभावे कथं तद्धीरित्याशङ्क्याऽऽह ज्ञातेति । मानगम्यत्वायोगान्मेयगतो ज्ञातोऽज्ञातश्चेतिभेदः स्वप्रकाशात्माधीनाधिगतिरित्यर्थः । ज्ञेयगतज्ञातत्वादेरपि ज्ञानगतज्ञातत्वादिवन्मेयतामाशङ्क्याऽऽह— संविदेति । न हि मानेन ज्ञातस्य ज्ञातत्वादिधीरनवस्थानादतोऽनुभवात्तत्सिद्धिवदितरस्यापीत्यर्थः ॥२८५॥

अज्ञातत्वस्यानुभवसिद्धत्वे हेत्वन्तरं वक्तुं प्रामाणिकसंमतमर्थमाह—वस्त्विति । अज्ञातं वस्तु मेयमिति वदता साधकमज्ञाततत्वस्य वाच्यमतो ज्ञानकार्यज्ज्ञातत्वात्तत्सिद्धिस्तत्फलाद्व्यवहाराद्वा?नाऽऽद्यो ज्ञातत्वकाले स्वयमभावान्नेतरस्तस्य ज्ञातत्वसाधकत्वेऽपीतरासाधकत्वात्तस्मादनुभवादेव तत्सिद्धिरिति मत्वाऽऽह—ज्ञातत्वेति । उक्तकल्पद्वयदूषणद्योतनार्थश्चकारः ॥२८६॥

ज्ञातत्वसाधकमेवाज्ञातत्वस्यापि साधकं तस्य तत्पूर्वकत्वादित्याशङ्क्याऽऽह—यत इति । यस्मादनुभवादज्ञातत्वसिद्धिस्तस्मादेव ज्ञातत्वस्यापि साक्षात्सिद्धिरतो ज्ञातत्वसाधकमेवाज्ञातत्वसाधकमित्युपगमे द्वयोरप्यनुभवसिद्धतैव स्यादित्यर्थः। एतेनाऽऽद्यश्चकारोऽपिपर्यायतया नीतः। मानत्वसाधकमेवाज्ञातत्वादिसाधकं किमनुभवेनेत्याशङ्क्याऽऽह—मानत्वमिति । प्रस्तुतानुभवादेव सिध्यतीति शेषः। अत एव द्वितीयश्चकारः। ज्ञातत्वमज्ञातत्वं मानत्वं चानुभवेन विना न सिध्यतीत्युपसंहरति—संविदेति ॥२८७॥

यदस्ति तन्मेयमिति नियमादज्ञातत्वस्यामेयत्वे तुच्छतेत्याशङ्क्य प्रकारान्तरेण प्रत्याह—षष्ठेति । अपरोक्षत्वमसत्त्वाभावे हेतुमाह—समीक्ष्यत इति । तर्हि प्रत्यक्षसिद्धघटवदज्ञाततत्वस्य मेयत्वं नेत्याह—न चेति । कथं तर्हि समीक्ष्यत इत्युक्तं तत्राऽऽह—स्वानुभूतीति ॥२८८॥

मानं विना स्वानुभवादेव तत्सिद्धिरसिद्धेत्याशङ्क्याऽऽह—प्रमात्रादीति । मात्राद्यस्पृष्टमज्ञानं स्वापे स्वानुभवादनुभूयोत्थितस्तस्मादेवानुभवान्नावेदिषमिति सिद्धं तत्परामृशत्यतः स्वापे तदनुभवमात्रसिद्धमित्यर्थः ॥२८९॥

जागरितादाविव स्वापेऽपि मात्रादियुक्तमेवाज्ञानं कुतो न भायादित्याशङ्क्याऽऽह—प्रमात्रादीति । स्वापे मात्राद्यभावादज्ञानजेन तेन चितोऽन्वयाभावात्तत्राज्ञानमात्रविशिष्टा चित्तिष्ठत्यतश्चिदेव मात्राद्यस्पृष्टाऽज्ञानविशिष्टा स्वापे दृष्टेत्यर्थः । तद्भानहेत्वभावात्कुतः स्वापे तद्धीरित्याशङ्क्य प्रागुक्तं स्मारयन्नाह—स्वानुभूत्यति ॥२९०॥

अज्ञातत्वस्यानुभवमात्रगम्यत्वं तद्गमकमनुवचनविरुद्धमित्याशङ्क्याऽऽह—आसीदिति । प्रागवस्थस्य जगतोऽप्रत्यक्षत्वमाह—अप्रज्ञातमिति । अनुमानाविषयत्वमाह—अलक्षणमिति । साधकबाधकतर्काग्राह्यत्वमाह—अप्रतर्क्यमिति । शिष्टसर्वमानागोचरत्वमाह—अविज्ञेयमिति । एतद्वाक्यं स्वानुभवसिद्धानुवादित्वात्प्रकृताविरुद्धमित्याह—इत्येतदिति ॥२९१॥

---

१. षष्ठगोचरवत् षष्ठप्रमाणमनुपलब्धिः तेन ज्ञेयः अभावः तद्वत् नाज्ञातत्वासिद्धिः नापि घटादिवत् प्रत्यक्षं, अतः साक्षिवेद्यतेत्यर्थः ।

२. अनवस्थानात्—ज्ञानं मानाद्भवति ज्ञातस्य तु मानान्तरेण ज्ञानं चेत् तज्ज्ञानस्य मानान्तरापेक्षापत्तिः एवं तत्रापीत्यनवस्था ।

**प्रथते यः स्वयं साक्षादज्ञातत्वादिभूमिषु । स प्रमेयः स्वयंज्योतिः प्राक्प्रसिद्धेः प्रमातृतः ॥९२॥**
**एष एवानवगतः स्वतोऽवगततत्त्वकः । एतावन्मात्रसंव्याप्तेरज्ञानादेः पुरा मितेः ॥९३॥**
**यथेह घटविज्ञाने घटाकारोऽनुभूयते । ज्ञातृतत्साक्षिणौ चैवं नाज्ञाने साक्षिणोऽपरम् ॥९४॥**
**अज्ञातत्वं न मानेभ्यो ज्ञातत्वं तत्कृतं यतः । तैरप्यज्ञातता चेत्स्यात्काऽतिशीतिर्मितेर्भवेत् ॥९५॥**
**स्वानुभूत्यैव संसिद्धेर्नाज्ञातः खरशृङ्गवत् । संवित्तेरप्यसंबोधात्स्यात्तन्मानव्यपेक्षिता ॥९६॥**
**प्रत्यक्षकुम्भवत्साक्षात्सुषुप्तेऽनन्यबोधगम् । आत्मा ह्यात्मानमैकात्म्यादात्मना वेत्त्यकारकः ॥९७॥**
**पराक्प्रवणया दृष्ट्या धीस्थो ज्ञो ज्ञानमात्मनि । व्योमकाष्ण्यादिवत्तज्जं संभावयति न स्वतः ॥९८॥**

अज्ञातत्वादेरमेयत्वे मानानां विषयाभावादमानतेत्याशङ्क्याज्ञातत्वोपलक्षितप्रतीचो विषयत्वान्मैवमित्याह—प्रथत इति । स्वयंप्रथमानत्वे प्रत्यक्संविद्रूपत्वं हेतुमाह—साक्षादिति । कथमस्य मुक्त्यालम्बनस्याध्यक्षादिविषयत्वं तत्राऽऽह—अज्ञातत्वादीति । आदिशब्देन संदिग्धत्वविपर्यस्तत्वे गृह्येते । तद्विषयेष्वात्मनो मेयत्वोक्तेः पूर्वोक्तस्वप्रकाशत्वविरोधमाशङ्क्याऽऽह—स्वयमिति । अज्ञातोपाधौ मेयत्वेऽपि स्वतःप्रकाशत्वमविरुद्धमित्यर्थः । उक्तरूपे वस्तुनि ज्ञातत्वे सत्यज्ञातत्वध्वस्तेरविषयता मानानामित्याशङ्क्य तत्त्वज्ञानात्प्रागेव मातृत्वादिव्यवहारादूर्ध्वं विषयासत्त्वमदूषणमित्याह—प्रागिति । यद्वा मात्रादिविभागात्प्रागेव प्रत्यक्प्रथनात्तस्य तत्साधकत्वेन स्वतःसिद्धतेति स्वयंज्योतिष्ट्वे हेत्वन्तरमाह—प्रागिति ॥२९२॥

स्वयंप्रथमानस्यज्ञातत्वायोगान्न मानविषयता न हि ज्ञातस्यैव तद्विषयत्वमनवस्थानादित्याशङ्क्याऽऽह—एष इति । एवकारोऽनात्मनोऽप्यात्मवदज्ञातत्वादिव्यावृत्त्यर्थः । अज्ञातत्वं तस्य न स्वरूपमित्याह—अवगतेति । अनुभवविरोधं धुनीते—स्वत इति । स्वप्रकाशस्याप्यज्ञातत्वमज्ञानवशादिति साधयति—एतावदिति । सम्यग्ज्ञानात्पूर्वमज्ञानादेश्चिन्मात्रव्याप्तेस्तत्र कल्पितत्वेन सिद्धेरज्ञानादज्ञातत्वं तस्य युक्तमित्यर्थः ॥२९३॥

आत्मनोऽज्ञातत्वेन मेयत्वमुक्त्वाऽज्ञातत्वस्य विना मेयत्वमनुभवसिद्धत्वे युक्त्यन्तरमाह—यथेति । यद्वाऽज्ञातश्चेदात्मा मेयोऽज्ञानस्यापि तद्विषयत्वं स्याद्दण्डिन्यानीयमाने दण्डानयनदर्शनादित्याशङ्क्याऽऽह—यथेति । घटमहं जानामीत्यत्र यथा घटमातृसाक्षिणोऽनुभूयन्ते नैवं सुप्तावज्ञानभाने वेद्यमज्ञानं साक्षिणं च साधकं मुक्त्वा साधकान्तरं स्फुरति जागरादौ ज्ञातृस्फुरणेऽपि सज्ञातृकस्याज्ञानस्य साक्षिसिद्धता मेयत्वस्य माननिर्वर्त्यत्वादज्ञातत्वाभावाच्चासंभवादित्यर्थः ॥२९४॥

अज्ञानस्याज्ञातत्वादेश्चामेयत्वमुक्तं तत्राज्ञातत्वस्य मानाधीनस्फुरणत्वाभावेऽपि तदधीनजन्मत्वादस्ति मानापेक्षेत्याशङ्क्याऽऽह—अज्ञातत्वमिति । न मानेभ्यो भवतीति शेषः । विपक्षे दोषमाह—तैरिति । किं मानैरज्ञाततैव क्रियते किंवा ज्ञाततापि?आद्ये मानवैफल्यं प्रागेव तत्सिद्धेर्द्वितीये त्वज्ञातत्वस्य ज्ञातत्वादव्यतिरेकः स्यान्मानकार्यत्वात्तद्वदित्यर्थः ॥२९५॥

अज्ञातत्वस्य मानादुत्पत्तिप्रतिपत्त्योरभावे तुच्छत्वादज्ञातार्थाभावान्निर्विषयमानाप्रवृत्तेः सर्वव्यवहारहानिरित्याशङ्क्यासकृदुक्तमेव परिहारमाह—स्वानुभूत्येति । ननु सर्वस्यैव जडस्यानुभवसिद्धत्वान्न मानापेक्षा नापि साक्ष्यनुभवस्य तदपेक्षा सर्वसाधकत्वादन्यथाऽनवस्थानादतो मानवैयर्थ्यतादवस्थ्यं तत्राऽऽह—संवित्तेरिति । अनुभवस्य सर्वसाधकत्वेऽप्यज्ञातत्वात्तन्निवृत्त्यर्थं तस्मिन्नात्मनि प्रवृत्तमाने व्यपेक्षिता स्यादिति योजना ॥२९६॥

अनुभवस्य ज्ञातत्वे जाड्यादसाधकत्वं शुक्तिवदित्याशङ्क्याऽऽह—प्रत्यक्षेति । यथा चैत्रोऽध्यक्षेण कुम्भमुपलभते तथाऽऽत्मा स्वापेऽद्वये बोधे स्वे महिम्नि स्थितमात्मानमपरोक्षतया वेत्ति तत्कुतोऽस्य जाड्यमित्यर्थः । आत्मनो वेत्तृत्वे कर्मकरणादिकारकभेदादद्वैतहानिस्तस्य च कर्तृत्वान्न कौटस्थ्यमित्याशङ्क्याऽऽह—आत्मानमिति । अनन्यबोधगमित्याधारान्तरस्य निरासः । आत्मेति कर्त्रन्तरस्याऽऽत्मानमिति कर्मान्तरस्याऽऽत्मनेति करणान्तरस्य । अकारक इति तत्त्वतः कर्तृत्वाद्यभावोक्तिरात्मनः स्वरूपं जानतः कारकभेदाभावं स्फुटयितुं सुषुप्तग्रहः । तस्य वेदितृत्वप्रसिद्ध्यर्थो हिशब्दः कारकभेदाभावे हेतुः—ऐकात्म्यादिति ॥२९७॥

अजडानुभवस्याज्ञाततया मेयस्याज्ञाततादिसाधकत्वे वस्तुत्वमज्ञातत्वादेः स्यादनुभवसिद्धत्वात्तद्वदित्या-

नैवाज्ञानं मृषाज्ञानं संशयज्ञानमीक्ष्यते । प्रत्यक्प्रवणया दृष्ट्या जाग्रत्स्वप्नसुषुप्तिषु ॥९९॥

सुप्तोत्थितस्य एतावन्तं कालं नाज्ञासिषमिति न स्मृतिः

न सुषुप्तगविज्ञानं[1] नाज्ञासिषमिति स्मृतिः । कालाद्यव्यवधानत्वान्न ह्यात्मस्थमतीतभाक् ॥३००॥
न भूतकालस्पृक्प्रत्यङ्न चाऽऽगामिस्पृगीक्ष्यते । स्वार्थदेशः परार्थोऽर्थो[2] विकल्पस्तेन स स्मृतः ॥ १ ॥
न हि प्रत्यक्षविज्ञानादतीतत्वं समीक्ष्यते । न चानागतता मेये मिथ्याज्ञानमतो भवेत् ॥ २ ॥
यत्तत्त्वकं स्याद्यद्वस्तु न तत्तदतिवर्तते । नाज्ञातरज्जुजः सर्पो रज्जुमुल्लङ्घ्य वर्तते ॥ ३ ॥
तस्मात्त्रिसृष्ववस्थासु ह्यागमापायिनीष्वजः । स्वतोऽलुप्तदृशा यस्मादात्माऽऽत्मानं सदेक्षते ॥ ४ ॥

शङ्क्याऽऽह—परागिति । आत्मा तावदनादिसिद्धाज्ञानेनैक्याध्यासमापद्यते "देवात्मशक्तिं स्वगुणैर्निगूढा"मितिश्रुतेः ततस्तत्कार्यान्तःकरणे प्राप्तैक्याध्यासो बहिर्मुखया दृष्ट्या स्वस्मिन्नज्ञानं तत्कार्यं च संभावयति न त्वात्मस्वरूपानुसारेण तत्र तत्संभवो यथा बाला व्योम्नि कार्ष्ण्याद्यारोपयन्ति तद्वदित्यर्थः ॥२९८॥

पराग्दृष्टिवत्प्रत्यग्दृष्ट्याऽपि प्रतीच्यज्ञानादिसंभावना किं न स्यान्नेत्याह—नैवेति । आत्मानुसारिदृष्ट्या तस्मिन्न कदाचिदज्ञानादिसंभवोऽनिर्मोक्षापत्तेरित्यर्थः ॥२९९॥

ननु प्रत्यग्दृष्ट्या तत्राज्ञानाद्यसत्त्वेऽप्यज्ञानस्य विनाऽनुभवं ज्ञेयत्वमेष्टव्यमुत्थितस्य न किंचिदवेदिषमिति-सौषुप्ताज्ञानपरामर्शान्न चासौ संस्कारं विना युक्तो न चानुभवस्तमाधत्ते नित्यत्वादतः सौषुप्ताज्ञानस्यानुभवादृते ज्ञेयत्वं नेत्याह—नेत्यादिना । स्मृतिः परामर्शः । उत्थितस्य नावेदिषमिति परामर्शः स्वापकालीनाज्ञानविषयकादाचित्कानुभवोपनायको नेत्यत्र हेतुमाह—कालादीति । आत्मनो देशकालव्यवधानाभावात्तद्गताज्ञानस्यापि न तत्संबन्धस्तथा च नाज्ञासिषमित्यज्ञानं पूर्वकालश्च साक्षिण्यध्यस्तौ तेनैव दृश्येते तन्नात्र संस्कारापेक्षेत्यर्थः ॥३००॥

कथमात्मनः कालाद्यसंबन्धस्तत्राऽऽह—नेति । "अन्यत्र भूताच्च भव्याच्चे"तिश्रुतेरित्यर्थः । देशादेः सर्वस्य प्रत्यक्त्वेन स्वरूपत्वाच्च न तत्संबन्धस्तस्येत्याह—प्रत्यङ् इति । तर्हि तयोर्विना संबन्धं स्थितेरद्वैतहानिर्नेत्याह—स्वार्थेति । सर्वोऽपि जडो रज्ज्वां भुजंगवदजडे वर्ततेऽतः स शब्दज्ञानानुपाती वस्तुशून्यो वृद्धैरिष्टस्तत्र कुतोऽद्वैतहानिरित्यर्थः ॥३०१॥

कालाद्यकल्पितं प्रत्यक्षादिसिद्धत्वादित्याशङ्क्याऽऽह—न हीति । प्रत्यक्षस्य वर्तमानमात्रग्राहित्वान्नातीतत्वादिग्राहित्वं न चानुमानात्तत्सिद्धिस्तस्यापि वर्तमानस्यावर्तमानाविषयत्वात्समसमययोरेव विषयविषयित्वसंभवात्तस्मादतीतत्वादि कल्पितमिति दृष्टान्त दितरत्रापि जडे तत्सिद्धिरित्यर्थः ॥३०२॥

कल्पितमधिष्ठानाद्भिन्नमित्यद्वैतहतिमाशङ्क्याऽऽह—यत्तत्त्वकमिति । कल्पितस्याधिष्ठानमेव तत्त्वमतो न तत्ततो भिन्नमित्यत्र दृष्टान्तमाह—नाज्ञातेति ॥३०३॥

कल्पिताधिष्ठानयोरैक्ये कल्पितवदितरस्यापि कार्यत्वेन मृषात्वात्तुच्छख्यातिः स्यादित्याशङ्क्याऽऽह—तस्मादिति । आरोप्यस्याधिष्ठानाद्भेदेन सत्त्वाभावेऽप्यधिष्ठानस्य स्वातन्त्र्येण सत्त्वान्न तुच्छख्यातिरित्यर्थः । यस्मादात्मा स्वतो निर्विकारेण स्वरूपबोधेन सदैवाऽऽत्मानमनुभवति तस्मादसौ कूटस्थोऽवस्थासु त्रिसृष्वपीति योजना । अवस्थानामागमापायित्वमात्मनश्च निर्विकारत्वं प्रमाणप्रसिद्धमिति हिशब्दार्थः ॥३०४॥

---

१. सुप्तोत्थितस्य न किञ्चिदवेदिषमिति स्मृतिः न सुषुप्तिगस्य अज्ञानस्यात्मनो वा विज्ञानं भवितुमर्हति संस्काराभावात् आत्मनः तद्गताज्ञानस्यापि च कालव्यवधानाभावात् न तदूर्ध्वं सरूपसंस्कारसम्भवः, अतो न किञ्चिदवेदिषमिति उत्थितः स्मृतिः अज्ञानं पूर्वकालश्चेत्युभयं साक्षिणि विषयीकरोतीत्यर्थ. ।

२. परार्थोऽर्थः परार्थः आत्माधीनोऽर्थ जडः पदार्थः स्वार्थं अनन्यार्थं परं ब्रह्म आश्रितः अतः अर्थः न स्वतन्त्रः तेन सः न किंचिदवेदिमिति विकल्प एव ।

देहान्तरेष्वपि तथा ह्यन्योन्यव्यभिचारतः । प्रत्यक्प्रत्यय एवैकः सर्वत्राव्यभिचारवान् ॥ ५ ॥
चैतन्यमात्ररूपं सत्प्रथतेऽज्ञानमात्मनि । प्रत्यक्कूटस्थनिष्ठत्वात्तद्बाध्यं कारणेतरत् ॥ ६ ॥

अज्ञानस्यान्तःकरणादिनिष्ठत्वनिरासः

नैवं तत्स्यात्स्वकार्येषु तेषां ताद्रूप्यहेतुतः[1] । जडस्वभावतो नान्यद्रूपं कार्येषु गम्यते ॥ ७ ॥
एवं चेत्कोऽनयोर्भेदः कार्यकारणयोर्मितेः । अन्वयव्यतिरेकाभ्यां न जाड्यमतिवर्तते ॥ ८ ॥
कार्यकारणरूपाभ्यामतद्वृत्त्यात्त्विका[2] ततः । आत्माविद्यैव सर्वत्र प्रथते स्वात्मसाक्षिका ॥ ९ ॥
नैवाऽऽत्मना स्वभावेन स्वात्मानं लभते जडः । यतोऽतः स्वार्थदेशः स स्वार्थश्चानन्यसिद्धिकः ॥१०॥
स्वतो बुद्धे कुतोऽविद्या तामृते संसृतिः कुतः । इतिबुद्धात्मतत्त्वस्य गीरियं न तमस्विनः ॥११॥
यथोच्छिन्नात्ममोहस्य निह्नोतुरपि निह्नुतिः । एवं प्रागात्मसंबोधादद्वयैकात्म्यनिह्नुतिः ॥१२॥

ननु नाऽऽत्मा कूटस्थो मनोवत्प्रतिदेहं भिन्नत्वाद्विक्रियावत्त्वप्रतीतेस्तत्राऽऽह—देहान्तरेष्विति । यथैकस्मिन्देहे वादिभ्यामात्मैकोऽभ्युपगतस्तथा सर्वदेहेष्वभ्युपेयस्तस्य सर्वत्राव्यभिचाराद्देहादेर्मिथो व्यभिचारादात्मभेदे च मानाभावात्तस्मादात्मा प्रत्यक् चिद्धातुरद्वयः सन्कूटस्थ एवेत्यर्थः । प्रतिदेहमात्मभेदे मानाभावद्योतको हिशब्दः ॥३०५॥

देहादेर्व्यभिचारोक्त्या सहेतुसर्वद्वैतस्य सर्पवन्मिथ्यात्वमुक्त्वा तत्रैव हेत्वन्तरोक्तिपूर्वकं फलमाह—चैतन्येति । आत्मन्यज्ञानं ज्ञानं च चैतन्येतररूपहीनं भाति तस्मिन्कूटस्थे रज्जौ भुजंगवत्तस्य स्थितत्वात्तस्माद्वाक्यीयात्तज्ज्ञानात्तत्कल्पितं सकार्यं कारणं बाध्यमित्यर्थः ॥३०६॥

अज्ञानं न प्रत्यक्कूटस्थनिष्ठमन्तःकरणादिनिष्ठत्वादित्याशङ्क्याऽऽह—नैवमिति । प्रतीचीवान्तःकरणादिषु न स्यादज्ञानमित्यत्र हेतुमाह—तेषामिति । अन्तःकरणादीनामज्ञानरूपत्वमनुभवेन साधयति—जडेति ॥३०७॥

अज्ञानकार्याणामज्ञानमात्रत्वे कार्यकारणभेदो मानतो नास्तीति सिद्धमित्यार्थिकमर्थमाह—एवं चेदेति । यत्तु जडस्वभावादित्यादिना कार्यकारणभेदनिराकरणकारणमुक्तं तदुपपादयति—अन्वयेति । सत्येवाज्ञाने कार्यदृष्टेरसति चादृष्टेर्बुद्ध्यादिकार्यं जाड्यमज्ञानमतिलिङ्घ्य न स्वतन्त्रं तिष्ठतीत्यर्थः ॥३०८॥

बुद्ध्यादिकारणमज्ञानमेवेति न नियमो वादिविवादादित्याशङ्क्याऽऽह—कार्येति । स्वानुभवसिद्धाऽविद्यैव लोके सर्वत्र कार्यरूपेण कारणरूपेण च प्रकाशते सा चोभयनिर्मुक्तात्माख्यपरमार्थस्वरूपोपेता तदद्वैतमेव शिष्टमित्यर्थः । ततःशब्दः कार्यकारणयो रूपान्तरासंभवपरामर्शी ॥३०९॥

अविद्यातिरेकेण तयो रूपान्तरं कुतो न संभवतीत्याशङ्क्याऽऽह—नैवेति । जडो हि स्वेनाऽऽत्मना सत्तां स्फूर्तिं च न लभते जाड्याद्रजतादिवत्तेनासावजडे प्रतीचि कल्पितो जडत्वाद्देहात्मत्ववदित्यर्थः । कथमजडस्याऽऽत्मनः स्वार्थत्वं तस्याप्यधिष्ठानारोप्ययोरन्यतरत्वादधिष्ठानान्तरसापेक्षत्वादित्याशङ्क्याऽऽह—स्वार्थश्चेति । आरोप्यवदितरस्य स्वरूपेण बाध्यत्वाभावान्नाधिष्ठानान्तरापेक्षेत्यर्थः ॥३१०॥

स्वप्रकाशे प्रतीच्यज्ञानादेर्विरोधान्न तस्याधिष्ठानत्वं न हि केवलं तथेत्याशङ्क्य विरोधोक्तिरात्मविदोऽन्यस्य वेति विकल्प्याऽऽद्यमङ्गीकरोति—स्वत इति । विद्वद्दृष्ट्याऽऽत्मन्यविद्यातत्कार्ययोरभावात्तस्याधिष्ठानत्वराहित्यमिष्टमेवेति भावः । द्वितीयं दूषयति—नेति । अविद्यादशायां स्वरूपास्फूर्तेरविदुषो नैवं विरोधोक्तिरित्यविद्वद्दृष्ट्या प्रतीच्यविद्यातत्कार्ययोर्भावात्तदधिष्ठानत्वमनपवादमिति भावः ॥३११॥

स्वप्रकाशत्वादज्ञानकालेऽप्यद्वयानन्दस्फूर्तेर्न विकल्पावकाश इत्याशङ्क्याऽऽह—यथेति । विदुषो निरस्ताविद्यस्याविद्याध्वंसिज्ञानस्य मातुर्वा निह्नवो यथा विद्यावशादिष्टस्तथा प्राग्ज्ञानोत्पत्तेरद्वयानन्दात्मनो निह्नुतिरसत्कल्पना युक्तैवाज्ञानबलादित्यर्थः ॥३१२॥

१. ताद्रूप्यहेतुतः जडानामज्ञानरूपत्वात्, तद्रूपत्वं तत्कार्यत्वात् ।
२. अतद्वृत्त्यात्त्विका उभयरहिततत्त्वस्वरूपा ।

काकोलूकनिशेवायं संसारोऽज्ञात्मवेदिनोः । या निशा सर्वभूतानामित्यवोचत्स्वयं हरिः ॥१३॥
तस्मान्न वास्तवं रूपं तद्ध्वान्ताद्यपनोदकृत् । तस्मिन्सत्येव मोहादि व्युत्पत्तेः प्रागभूद्यतः ॥१४॥
प्रमाणारूढमेवैतद्धन्त्यविद्याद्यशेषतः । ब्रह्मविद्भिरतो यत्नात्प्रमाणमिह संश्रितम् ॥१५॥
उताविद्वानिति तथा प्रश्नपूर्वं स्वयं श्रुतिः । निर्णेनेक्ति स्फुटं वस्तु यथोक्तेनैव वर्त्मना ॥१६॥
आत्मासाधारणार्थोत्थरूपमात्रसमाश्रयात् । तन्मानमपि मानत्वं लभते न तु केवलम् ॥१७॥

विद्वद्दृष्ट्या मात्रादेरविद्वद्दृष्ट्या च तत्त्वस्यासत्त्वमित्यत्र दृष्टान्तरमाह—काकेति । या काकादीनां प्रसिद्धा निशा तस्यामुलूको जागर्तीति तद्दृष्ट्या साऽपलप्यते यदा च काकादयो जाग्रति तदा नक्तंदृशो निशेति काकादिदृष्ट्या साऽपह्नूयते यथेत्यर्थः । एवमज्ञस्यायं मात्रादिः संसारो यदा विवर्तते तदा तद्दृष्ट्या तत्त्वस्यासत्कल्पना यदा विदुषस्तत्त्वानुभवस्तदा तद्दृष्ट्या मात्रादेरसत्त्वमिति दार्ष्टान्तिकमाह—अयमिति । तत्र भगवद्वाक्यं प्रमाणयति—या निशेति । या सर्वेषां प्राणिनां ब्रह्मावस्था निशेव वर्तते न हि तत्र सर्वे जाग्रति तस्यामज्ञैरपह्नूयमानायां विद्वाञ्जागर्तीति तद्दृष्ट्या मात्राद्यभावो यस्यां चाविद्यावस्थायां सर्वे संसरन्तस्तत्त्वं निह्नुवते सा विदुषो निरस्ताविद्यस्य निशा तस्य संसारासंभवात्तदविद्वद्दृष्ट्या तत्त्वस्य विद्वद्दृष्ट्या च मात्रादेरसत्तेति विभागं भगवानूचिवानित्यर्थः ॥३१३॥

यद्यपि वस्तुयाथात्म्यमज्ञानदशायां तद्वशान्न स्फुरति तथाऽपि स्वप्रकाशे चेदज्ञानं तर्हि निवर्तकाभावान्न तन्निवर्तेत प्रकाशस्य स्वाश्रितानिवर्तकत्वादित्याशङ्क्य स्वरूपज्ञानस्यानिवर्तकत्वं प्रमाणज्ञानस्य वेति विकल्प्याऽऽद्यमङ्गी करोति—तस्मादिति । तच्छब्दार्थमेव स्फुटयति—तस्मिन्निति । व्युत्पत्तिः प्रमाणज्ञानम् ॥३१४॥

कल्पान्तरं निरस्यति—प्रमाणेति । प्रमाणज्ञानस्य स्वतोऽनिवर्तकत्वेऽपि दृगात्मद्वारा तत्सिद्धिरित्यर्थः । एतदेव वस्तु वाक्योत्थबुद्धिवृत्त्यारूढमज्ञानं तज्जं चाशेषं निवर्तयतीति बुद्धीद्धो बोधो बोधेद्धा वा बुद्धिरबोधादिध्वंसिनीति पक्षद्वयं तद्गमकमाह—ब्रह्मविद्भिरिति । उक्तरीत्या प्रमाणज्ञानस्याज्ञानध्वंसित्वादेव वेदान्तानां ब्रह्मणि प्रामाण्यं विद्वद्भिराश्रितम्, उक्तं हि—सिद्धं तु निवर्तकत्वादिति । पराक्रान्तं चात्र समन्वयसूत्रमारभ्याऽध्यायसमाप्तेः सूत्रभाष्यकारप्रभृतिभिरन्यथा स्वप्रकाशे तत्प्रामाण्यासिद्धेरित्यर्थः ॥३१५॥

न केवलमर्थापत्तिरेवात्र मानं किंतु श्रुतिरपि पक्षद्वयमुपोद्बलयतीत्याह—उतेति । "अथातोऽनुप्रश्ना उताविद्वानमुं लोकं प्रेत्य"इत्यादिना ब्रह्मणो विद्वदविद्वत्साधारण्यादविद्वानपि तत्प्राप्नोति किंवा विद्वानेव तत्प्राप्तिश्च स्यान्न वेतिप्रश्नपूर्वकं सोऽकामयतेत्यादिना ब्रह्मास्तित्वसाधनद्वारा "यदा ह्येवैष एतस्मिन्नि"त्याद्या श्रुतिस्तज्ज्ञानादुक्तपक्षद्वयानुसारेण फलं स्फुटं निर्धारयतीत्यर्थः । तथेत्यस्य व्याख्या यथेत्यादि ॥३१६॥

कथं वाक्योत्थबुद्ध्यारूढं वस्तु स्वाज्ञानादिध्वंसीति विशेषणं ? चक्षुरादिजन्यज्ञानारूढं तथा किं न स्यात्तत्राऽऽह—आत्मेति । आत्मन्येवैकस्मिन्नुत्पन्नं वाक्याद्यज्ज्ञानं तन्मात्रावष्टम्भात्तद्गताज्ञानादिनिवर्तनेन मानत्वं भजते ज्ञानान्तरं त्वाकारान्तरं गृह्णन्नाऽऽत्मनि मानं किंतु घटादाविति विशेषणमर्थवदित्यर्थः । तन्मानमिति वाक्योत्थज्ञानोक्तिः । अपिः संभवानार्थः । तस्याऽऽत्मनि मानतायां तस्मिन्नसाधारणेऽर्थे समुत्पन्नत्वेन तदाकारमात्रोद्ग्राहित्वं हेतुः । न तु केवलमिति वृत्त्यन्तरनिरासः । पराञ्चि खानीत्यादिश्रुतेरिति विभागः । यद्वा बुद्धीद्धबोधस्याज्ञानध्वंसित्वं किमिति कल्प्यते बोधस्यैव केवलस्य किं न स्यात्सर्वसाधकस्य मानत्वेऽनपेक्षत्वादित्याशङ्क्याऽऽह—आत्मेति । यद्यपि बोधाख्यं स्वरूपचैतन्यं सर्वसाधकत्वेन मानं तथाऽप्यात्मनोऽसाधारणोऽर्थः सच्चिदानन्दाद्वयप्रत्यग्भावस्तदाकारत्वेन वाक्योत्थबुद्धिवृत्तिरूपं यज्ज्ञानं तावन्मात्रसहायादेव तत्स्वगताज्ञानतत्कार्यध्वंसित्वरूपं मानत्वमश्नुते न केवलं वाक्यीयवृत्त्यनपेक्षं चैतन्यमुक्तरूपं मानत्वमाप्नोति तत्साधकस्य

१. सिद्धं तु निवर्तकत्वात्—द्रविडाचार्यवाक्यम् । ब्रह्मणि पदानां व्युत्पत्त्यभावेऽपि सिद्धमेव शास्त्रस्य प्रामाण्यं अभावबोधने व्युत्पन्ननञ्संसृष्टस्थूलादिव्युत्पन्नपदैः स्वाभाविकद्वैताभावबोधनेनाध्यस्तनिवर्तकत्वादित्यर्थः ( मा० आ० ) ।

तावन्मात्रैकयाथात्म्यप्रत्यगात्मत्वकारणात् । पराक्षिवव न भेदोऽत्रमात्रादेः प्रत्यगात्मनि ।।१८।।
स्वचिदाभासवन्मोहपृष्ठेनैवैति कर्तृताम् । कूटस्थोऽपि स्वतः प्रत्यङ्नाऽऽत्मवृत्तव्यपेक्षया ।।१९।।

अनुभवस्य कार्यत्ववादिनिराकरणम्

सर्वधीविक्रियासाक्षिण्येवं सिद्धे स्वतो दृशौ । कार्यं येऽनुभवं प्राहुर्वाच्यं तैः कार्यसाधनम् ।।२०।।
न जायतेऽज इत्यादि विज्ञानघन इत्यपि । कृत्स्नपुंविक्रियोत्सारि वाक्यं कस्मादुपेक्ष्यते ।।२१।।
प्रमात्राद्युत्थितेः पूर्वं कारकं दुर्लभं मितेः । तदभावात्क्रियाभावस्तामृते कार्यता कुतः ।।२२।।
एतच्चानुभवादेव भवताऽप्यभ्युपेयते । कारकव्यापृतिस्तत्र निपुणेनापि नेक्ष्यते ।।२३।।
अकुर्वत्कारणं चेत्स्यात्तद्वत्कार्यं सदा भवेत् । कार्येतरानवसितिः संभूतौ युगपत्तयोः ।।२४।।

तन्निवर्तकत्वायोगादित्यर्थः । यद्वा किमिति बोधेद्धा बुद्धिः सकार्यमज्ञानं निरस्यति वाक्योत्था बुद्धिरेव तन्निरस्यतु मानत्वेन स्वफले स्वयमेव शक्तेरित्याशङ्क्याऽऽह—आत्मेति । यद्यपि वाक्यीयं ज्ञानं मानं तथाऽप्यात्मनोऽसाधारणोऽर्थो यो व्याख्यातस्तदात्मना व्यक्तं यद्रूपं तात्त्विकं तन्मात्रावष्टम्भादेवैतज्ज्ञानमज्ञानादिध्वंसित्वात्मकं मानत्वं लभते न तु वृत्तिज्ञानं केवलमुक्तमानत्वमश्नुवीत जडत्य तस्य वस्तुबलं विना तदयोगादित्यर्थः ।।३१७।।

ननु वाक्याज्ज्ञानोत्पत्तिकाले मात्रादिभेदोऽस्ति न वा? आद्ये वाक्योत्थमपि ज्ञानमाकारान्तरं गृह्णद्घटादिधीसदृशं स्याद्द्वितीये न तदुपत्तिर्हेत्वभावात्तत्राऽऽह—तावन्मात्रेति । शब्दादिषु मात्रादिभेदवन्न प्रतीचि तद्भेदस्तत्र हि ज्ञानोत्पत्तिकालवत्कालान्तरेऽपि सोऽस्त्यत्र तु ज्ञानोदये सन्नपि स नोर्ध्वमस्ति तज्जन्मनान्तरीयकत्वेन बाधितस्य मात्रादिजगन्मात्रस्य यदेकं याथात्म्यं प्रत्यग्वस्तु तद्रूपेणावसानादित्यर्थः ।।३१८।।

ज्ञानोत्पत्तेरूर्ध्वं मात्रादिर्बाधितः सन्प्रत्यगेव स्यादित्युक्तम् । इदानीं तज्ज्ञानस्य प्रत्यगात्माऽन्यो वा कर्ता ? आद्ये कौटस्थ्यहानिर्द्वितीयेऽद्वैतहानिरित्याशङ्क्याऽऽदौ द्वितीयं दोषं निरस्यति—स्वचिदिति । आद्यं दोषं धुनीते—कूटस्थोऽपीति । स्वकीयचिदाभाससहितमोहद्वारा कर्तुर्न तात्त्विककौटस्थ्यहानिरिति भावः । आत्मा चेत्कर्ता तर्हि स्वतोऽस्तु किं मोहेन मा च कूटस्थत्वं भूदिति नेत्याह—नेति । न हि श्रुतिस्मृतिशतसमधिगतासङ्गाद्वितीयकूटस्थप्रत्यगर्थस्य मोहमपहाय कर्तृत्वं शक्यशङ्कमित्यर्थः ।।३१९।।

बुद्धीद्धो बोधो बोधेद्धा वा बुद्धिरज्ञानध्वंसिनीति वदता संवेदनं न कार्यं किंतु कूटस्थमित्युक्तम् । इदानीं वृत्तानुवादेन पक्षान्तरमनुभाष्य दूषयति—सर्वेति । अतिरोहितसंवित्कमित्यादि प्रागुक्तं परामृशति—एवमिति । समष्टिव्यष्ट्यात्मकसमस्तबुद्धितद्विकारसाधके दृगात्मनि स्वतो विकारविरहिणि विधूताशेषसंबन्धमित्यादिपूर्वोक्तन्यायेन सिद्धे सत्युपाध्यनुसंधानं विनैव कार्यमनुभवं ये प्रतिपद्यन्ते तैस्तस्य कार्यत्वे मानं वक्तव्यं न च तद्वक्तुं शक्यमित्यर्थः ।।३२०।।

अनुभवस्य कार्यत्वे न केवलं मानाभावो मानविरोधश्चेत्याह—न जायत इति । दर्शितश्रुतिस्मृतिवचसो विवक्षितमाह—कृत्स्नेति । तस्य चादोषत्वादनुपेक्षणीयत्वमाह—कस्मादिति ।।३२१।।

ननु वाक्यं कूटस्थत्वं प्रतीचो वददपि नानुभवस्य कार्यत्वे विरुध्यते मैवं तस्याऽऽत्माव्यतिरेकादिति मन्वानस्तदकार्यत्वे युक्त्यन्तरमाह—प्रमात्रादीति । न तावदनुभवस्य स्वापे कारकमस्ति तदा मात्राद्यभावात्ततस्तन्निर्वर्त्यक्रियाभावात्तद्व्याप्यकार्यत्वासिद्धिरित्यर्थः ।।३२२।।

अनुभूतिरेव स्वापे नास्ति कथमकार्यत्वं साध्यते तत्राऽऽह—एतच्चेति । सुषुप्तमनुभवादेवाऽऽवाभ्यामभ्युपेयते तत्साधकमानान्तराभावात्तत्र तत्सत्त्वे विवाद इत्यर्थः । प्रमात्रादिविभागवदिति चशब्दार्थः । तत्रोभयसंमत्यर्थोऽपिशब्दः । सौषुप्तश्चेत्तदनुभवोऽस्ति कारकमपि तत्र स्यात्कार्येण तत्कल्पनादित्याशङ्क्याऽऽह—कारकेति । न हि स्वापे मात्रादिव्यापारः सूक्ष्मदृशाऽपि दृश्यते न चानुभवानुपपत्त्या तत्सिद्धिस्तस्याकार्यत्वेनाप्युपपत्तेरित्यर्थः ।।३२३।।

तस्य कार्यत्वं कदाचिदेवोपलब्धेर्घटवन्न ह्यसौ सदोपलभ्यते कार्यान्तरानुपलब्धिप्रसङ्गादित्याशङ्क्य

**विरुद्धानेककार्याणामेकस्मादेव कारणात् । अकुर्वतः प्रसक्तिः स्यादकुर्वत्त्वाविशेषतः ॥२५॥**
**अथ कुर्वदभीष्टं तत्तत्कार्यं तर्हि भण्यताम् । अकार्यं कारकमिति सुप्तोन्मत्तप्रभाषितम् ॥२६॥**
**मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् । इति श्रीमत्सुरेशस्य वाक्यमेवं समञ्जसम् ॥२७॥**
**प्रमेये त्र क्रियायां च प्रमाणेऽथ प्रमातरि । तच्छक्त्युपाधिहेतुत्वाज्जायमानेव चिद्ध्रुवा ॥२८॥**
**यथा सद्व्यतिरेकेण न किंचिद्वस्तु सिध्यति । तद्वदव्यतिरेकेण घटाभावाद्यसंभवात् ॥२९॥**
**न हि सद्व्यतिरेकेण त्वसद्वस्त्वपि सिध्यति । तस्यापि सदपेक्षत्वात्किमन्यत्स्यात्सता विना ॥३०॥**
**यथैवं संविदर्तेऽसन्नैति संभावनामपि । सदप्यभावरूपं वा तद्वदव्यतिरेकतः ॥३१॥**

तत्कार्यत्वं निराकर्तुं कार्यकारणभावमेव निराचिकीर्षुरकुर्वत्कारणं कुर्वद्वेति विकल्प्याऽऽद्यमनूद्य दूषयति—अकुर्वदिति । तदपि कारणं नित्यमनित्यं वा ? आद्ये कारणवत्कार्यमपि नित्यं स्यादविशेषादित्यर्थः । द्वितीये तयोर्यौगपद्यं क्रमो वा ? आद्ये दोषमाह—कार्येति । न हि युगपदुत्पन्नयोः शृङ्गयोस्तद्धीरित्यर्थः ॥३२४॥

क्रमपक्षेऽपि कार्यमाद्यं पश्चात्कारणमिति न क्रमोऽनिष्टत्वात्कारणमाद्यं पश्चात्कार्यमित्यत्र दोषमाह—विरुद्धेति । ननु तानि विरुद्धत्वादेव नैकस्मादुत्पत्तुमुचितानीत्याशङ्क्य कारणस्याकुर्वत्त्वेन सर्वत्राविशेषादविशिष्टमुत्पादकत्वमनुत्पादकत्वं वा स्यादित्याह—अकुर्वत्त्वेति ॥३२५॥

कल्पान्तरमुत्थापयति—अथेति । कुर्वत्त्वं नित्यं कार्यं वा? आद्ये कार्यमपि सदा स्यात् । द्वितीयं निरस्यति—तत्कार्यमिति । तत्कार्यं यस्य कारणस्य तत्तथेति । कार्यं वक्तव्यमिति यावत् । कार्यत्वे तस्य हेत्वन्तरापेक्षायामनवस्थेति भावः । कुर्वत्त्वस्य कार्यत्वकृतामनवस्थामुक्त्वा तदाधारस्यापि कार्यत्वनिमित्तां तामभिप्रेत्याऽऽह—अकार्यमिति । क्रियां कुर्वत्कारणं कारकमिति न्यायात्क्रियोपरक्तस्य कारकत्वात्तस्याश्च कादाचित्कत्वात्तद्विशिष्टमपि तथेति कारकं न कार्यमित्यबुद्धिपूर्वकमतोऽनवस्थानात्कार्यकारणत्वं कल्पितमित्यर्थः । निष्क्रियं कारणं चेत्स्यादित्यत्र क्रियाद्वारा कार्यकारणभावस्य कल्पितत्वमुक्तमिह तु कारणमेव पुरस्कृत्य तदुक्तिरित्यपौनरुक्त्यम् ॥३२६॥

तत्र भगवद्वाक्यं प्रमाणयति—मयेति । एवमिति कार्यकारणत्वे कल्पिते सतीत्यर्थः ॥३२७॥

उक्तरीत्या कार्यकारणभावस्य दुर्वचत्वादनुभवस्याकार्यत्वे कथं तत्कार्यत्वप्रसिद्धिस्तत्राऽऽह—प्रमेये चेति । कूटस्थनित्याऽप्यनुभूतिर्मेयादिनिमित्तत्वाज्ज्ञानोपाधिरूपहेतोर्जायमानेव भातीत्यर्थः । क्रियाशब्दो मानमेयसंनिकर्षविषयः । अथशब्दस्तथापर्यायः समुच्चायार्थः ॥३२८॥

तर्हि मात्रादेर्निमित्तत्वाच्चितो नैमित्तिकत्वात्तयोर्भेदादद्वैतहानिरभेदे निमित्तनैमित्तिकत्वानुपपत्तिरित्याशङ्क्याऽऽह—यथेति । तथा घटविचारे दर्शितमिति शेषः । निमित्तनैमित्तिकभावस्तु कल्पितभेदादिति मन्यते । मात्रादेश्चितो न भेदश्चेदभेदः स्यान्मिथोविरोधिविधान्तराभावादतश्चितः सप्रपञ्चतेत्याशङ्क्याऽऽह—तद्वदिति । व्यतिरेकवदव्यतिरेकेणापि न सत्त्वं कस्यचिदिति सम्बन्धः । अभेदे सन्मात्रपरिशेषाद्घटतदभावादेरसंभवादिति हेतुमाह—घटेति ॥३२९॥

मात्रादेः सतो भेदाभेदासंभवेन कल्पितत्वमुक्त्वा भेदासंभवे हेत्वन्तरमाह—न हीति । सदसतोर्विरोधादसतः सतो भेदप्राप्तिं दर्शयति—अपीति । तुशब्दोऽवधारणे । सतो भेदेनासन्न सिध्यत्येवेत्यत्र हेतुं हिशब्दोक्तमाह—तस्यापीति । अपिनोक्तं कैमुतिकन्यायमाह—किमन्यदिति । घटादि सता विना न स्यादिति किं वाच्यं तस्य सदतिरेके तुच्छत्वापत्तेरित्यर्थः ॥३३०॥

सदसतोर्मिथो भेदाभेदौ निरस्य तयोः संविदस्तौ निरस्यति—यथेति । यथा संविदा विना सदसद्वा भावोऽभावो वा न संभवति जडत्वान्न हि जडोऽर्थस्तामतिक्रम्य सिद्ध्यति । न च तत्संबन्धात्तत्सिद्धिः संबन्धस्य दुर्वचत्वात्तथा भावरूपमभावरूपं वा संविदः सकाशादव्यतिरेकेण न लभ्यतेऽन्यतरपरिशेषादेवं चिदेकरसं सन्मात्रं वस्तु सिद्धमित्यर्थः ॥३३१॥

### अविद्यातत्कार्ययोः कल्पितत्वनिगमनम्

अविद्या वाऽथ तत्कार्यं नाभेदान्नातिरेकतः । सिद्धायते यतोऽतः स्यादविचारितसिद्धिकम् ॥३२॥
नीलोत्[1]पलदलाभं खं द्विरेफोदरवत्तमः । अविचारितसिद्धयेवं तमस्तज्जं च वीक्ष्यताम् ॥३३॥
स्वमहिम्ना न संसिध्येत्स्वतोऽनवगतात्मकम् । भावाभावौ न वस्त्वेति प्रत्याख्यानं यदात्मना ॥३४॥

### अनुभवस्य जन्मादेः कल्पितत्वनिगमनम्

तस्मादजायमानैव जायमानेव लक्ष्यते । अनुभूतिस्तदज्ञानहेतूत्थानात्मजन्मना ॥३५॥
तद्विनाशेऽपि तत्साक्ष्याद्विनश्यन्तीव लक्ष्यते । यतोऽतः कार्यतां तस्या नेश्वरोऽपि प्रसाधयेत् ॥३६॥
स्वात्मसाक्षिकतां मुक्त्वा भावाभावात्मवस्तुनः । यतोऽसिद्धिरतः प्रत्यङ्निरस्ताखिलविक्रियः ॥३७॥
कार्यं सर्वं यतो दृष्टं प्रागभावपुरःसरम् । तस्यापि संवित्साक्षित्वात्प्रागभावो न संविदः ॥३८॥
[2]प्रमात्राद्यतिरेकेण ह्यसंविदितरूपकम् । मेयं सिद्धमिहैवैतन्न वेदादन्यतः क्वचित् ॥३९॥

का तर्हि भातो जगतो गतिरनिर्वाच्यतेत्याह—अविद्येति ॥३३२॥

द्वैतस्याविचारितसिद्धिकत्वे दृष्टान्तमाह—नीलेति । ये पुनराकाशमपि रूपवच्चाक्षुषमाहुस्तान्प्रत्याह—द्विरेफेति । आकाशालोकाभावयोर्नीरूपत्वात् नैल्यं कल्पितमित्याह—अविचारितेति । दार्ष्टान्तिकमाह—एवमिति ॥३३३॥

अविद्यादेरविचारितसिद्धत्वे हेत्वन्तरमाह—स्वमहिम्नेति । जडस्य स्वतोऽसिद्धेरजडे कल्पितस्य सिद्धिरित्यर्थः । इतरेतराध्यासाज्जडवदजडस्यापि कल्पितत्वेन बाधान्नैरात्म्यमित्याशङ्क्याऽऽह—भावेति । आत्मा जन्मनाशौ न स्पृशति यस्मात्तेन तदुभयं निराकृतं तत्साक्षित्वादन्योन्याध्यासेऽपि जडवच्चितः स्वरूपानध्यासान्न नैरात्म्यमिति भावः ॥३३४॥

वस्तुनि जन्मादि कल्पितमित्युपसंहरति—तस्मादिति । चिदज्ञानजन्यबुद्धिवृत्तिजन्मवशाच्चिति जन्मधीरित्यर्थः ॥३३५॥

उपाधिनाशादेव तत्र नाशधीरपीत्याह—तद्विनाशेऽपीति । स्वतस्तस्या जन्माद्यभावे फलितमाह—यत इति ॥३३६॥

जन्मनाशाभावे विकारान्तराणि सन्तीति न कूटस्थतेत्याशङ्क्याऽऽह—स्वात्मेति । सर्वविक्रियासाक्षिणो न काऽपि विक्रियेत्यर्थः ॥३३७॥

संविदो जन्माभावे हेत्वन्तरमाह—कार्यमिति । अतः संविदोऽपि कार्यत्वे प्रागभाववत्त्वं वक्तव्यमिति शेषः । अस्तु तर्हि संविदोऽपि प्रागभाववत्त्वं नेत्याह—तस्येति । संविन्न जायते प्रागभावहीनत्वात्संमतवदित्यर्थः ॥३३८॥

कूटस्थां संविदमुक्त्वा तत्रैवाज्ञातत्वमित्याह—प्रमात्रादिति । इह संविद्येव कूटस्थायां सिद्धं विद्यमानमसंविदितरूपमज्ञातत्वं मात्राद्यतिरेकेण मेयं ज्ञेयमिति योजना । अज्ञातत्वस्य मात्राद्यनपेक्षितत्वं साधितमिति हिशब्दार्थः । कथं तर्हि तज्ज्ञातव्यं तदाह—एतदिति । वेदनं वेदोऽनुभवस्तस्मादन्यतस्तं वर्जयित्वा क्वचिन्माने सत्येव तदज्ञातत्वं न सिध्यति किं त्वनुभवादेवेत्यर्थः । यद्वा संविद्येवाज्ञातत्वमित्युक्तमिदानीमेवकारार्थमाह—एतदिति । अनुभवं हित्वाऽन्यत्र कुत्रचिदाश्रये नैदतज्ञातत्वमित्यर्थः । यद्वा यत्रैतदज्ञातत्वं तस्मिन्ननुभवे किं मानं

---

१. आकाशं अरूपं अचाक्षुषं च स्पर्शरहितद्रव्यत्वात् आत्मवदिति भाट्टं प्रति साध्यं—(न्या०) तन्मते आकाशस्य रूपवत्त्वं चाक्षुषत्वं चाङ्गीकृतं न निराकरणायेत्यर्थः । तार्किकं प्रत्याह—भावरूपे तमसि नैल्यमारोपितमित्यर्थः ( न्या० ) ।

२. प्रमात्रादिरहितमैकात्म्यं न्यायेन सिद्धमपि असंविदितरूपकं अनिवृत्ताज्ञानम् । वेदवाक्यादन्यतो न क्वापि तदज्ञाननिवृत्तिः ( न्या० ) ।

वस्तुवृत्तमतेक्ष्यैतन्न स्वतः परतस्तमः । तज्जं वा तत्तमोऽपेक्ष्य ह्य[1]व्याकृतगिरोच्यते ॥४०॥
चिदाभासं तमो ज्ञेयं नाज्ञासिषमितीक्षणात् । जगज्जनिस्थितिलया एवंभूते परात्मनि ॥४१॥
तमःप्रधानः क्षेत्राणां चित्प्रधानश्चिदात्मनाम् । परः कारणतामेति [2]भावनाज्ञानकर्मभिः ॥४२॥
यावत्कार्यगतं किंचिद्भावनादि समीक्ष्यते । तमसा बीजभूतं तद्व्यज्यते संस्कृतेः पुनः ॥४३॥
तमो नियामकं यस्मात्स्वकार्याणां तदन्वयात् । ऊर्ध्वं व्यक्तेः पुरा चैव तदेवातो नियामकम् ॥४४॥

तदाह—नेति। वेदवाक्यमेव तत्र मानं तद्विहायान्यस्मिन्कस्मिंश्चिन्माने तर्के वा सति नैतदनुभवतत्त्वं सिध्यतीत्यर्थः ॥३३९॥

ननु यस्यानुभवो विषयस्तदज्ञानं वस्त्ववस्तु वा ? वस्तु चेत्तत्कृतस्यापि वस्तुत्वादद्वैतहानिरवस्तु चेदनुभवस्यातद्विषयत्वादमेयत्वं तत्राऽऽह—वस्तुवृत्तमिति। अज्ञानं तज्जं चाद्वयं स्वप्रकाशं वस्तुरूपमपेक्ष्याभेदेन भेदेन वा न सिध्यति जडाजडयोरभेदस्य विरुद्धत्वाद्भेदस्य च स्वरूपत्वधर्मत्वाभ्यां दुर्निरूपत्वात्। न चाविद्यादेः स्वतःसिद्धिरात्मातिरेके तदयोगादनतिरेकस्य निरस्तत्वात् नापि परतः, संबन्धानिरूपणादतोऽज्ञानाद्यनिर्वाच्यमिति भावः। अव्याकृतशब्दिततमसो नानिर्वाच्यता वाच्यत्वव्याघातादित्याशङ्क्याऽऽह—तत्तम इति। नावाच्यत्वमनिर्वाच्यत्वं किंतु दुर्निरूपत्वमत्र प्रस्तुतं वस्तु दुर्निरूपत्वं तमोऽपेक्ष्याव्याकृतशब्देनोच्यते न हि स्वतः परतो वा तन्निरूपयितुं शक्यमित्युक्तमित्यर्थः ॥३४०॥

अज्ञानस्य द्विधाऽप्यसिद्धावसिद्धिरेव न हि विधान्तरेण तत्सिद्धिरतस्कथं तदपेक्षया परस्या[3]व्याकृतशब्दतेत्याशङ्क्याऽऽह—चिदाभासमिति। चितो यस्मिन्नाभासस्तत्तमस्तत्प्रसादादेव ज्ञातव्यमनिर्वाच्यस्यान्यथा ज्ञानायोगादित्यर्थः। आभासवशात्तमःसिद्धिरित्यत्रानुभवं प्रमाणयति—नेति। किमिति यथोक्ततमोवैशिष्ट्येन परस्याव्याकृतशब्दत्वं तत्राऽऽह—जगदिति। परस्मिन्नज्ञानविशिष्टे तदपेक्षे वा जगज्जन्मादि न शुद्धे ब्रह्मणि अज्ञाने वेति वक्तुं तस्मिन्नव्याकृतपदमित्यर्थः ॥३४१॥

परस्य करणत्वे कार्ये जगति चेतनाचेतनविभागभानं कथमित्याशङ्क्य कारणेऽपि विभागमाह—तम इति। परस्य कारणत्वं चेत्कथमुच्चावचप्रपञ्चसृष्टिस्तस्य रागादिदोषराहित्यादित्याशङ्क्य वैषम्यनैर्घृण्ये न सापेक्षत्वादिति न्यायेनाऽऽह—भावनेति ॥३४२॥

कर्माद्यपेक्षया कारणत्वे प्रलये तदस्ति न वा?अस्ति चेद्व्यक्तमव्यक्तं वा?आद्ये सर्वलयासिद्धिर्द्वितीये तत्किं परस्य सत्तयोपकरणं व्यक्तं वा?प्रथमे प्रलयेऽपि कार्यं स्याद्द्वितीये तद्व्यक्त्यर्थं हेत्वन्वेषणायामनवस्था। नास्ति चेत्तदपेक्षस्य न कारणत्वमित्याशङ्क्याऽऽह—यावदिति। कार्यगतं तद्विषयमिति यावत्। समीक्ष्यते यथाकर्म यथाश्रुतमित्यादिशास्त्रेणेति शेषः। ईश्वरेच्छादिवशादुद्बुद्धकर्मादिसंस्कारादज्ञानात्मना प्रागव्याकृतमपि कर्मादि व्यज्यते व्यक्तं च स्रष्टुरुपकरणमित्यर्थः ॥३४३॥

यथोक्तसंस्कारात्कर्मादिव्यक्तिश्चेत्तदिच्छादि किमिति कदाचिदेव तमुद्बोधयत्यत आह—तम इति। सर्वं कर्मादि लये साभासाज्ञानात्मकं चेत्कथं प्रतिपुरुषव्यवस्थया तद्व्यक्तिस्तत्राऽऽह—यस्मादिति। प्राग्व्यक्तेर्नाशादूर्ध्वं मध्ये चाज्ञानकार्याणां तेन व्याप्तेर्यस्मान्न स्वातन्त्र्यं तस्मात्तदेवाज्ञानं स्वकार्यकर्मादेर्व्यवस्थया व्यक्तौ नियामकमित्यर्थः ॥३४४॥

---

१. अव्याकृतगिरा—"तद्धेदं तर्ह्यव्याकृतमासीदि"तिश्रुतिगतया।

२. भावना—जन्मान्तरीयवासना, ज्ञानं विहितं निषिद्धं च, कर्म सुकृतदुष्कृते—अपेक्ष्य प्रपञ्चं सृजतः न वैषम्यनैर्घृण्ये। तथा च सूत्रम्—वैषम्यनैर्घृण्ये न सापेक्षत्वात्, तथाहि दर्शयति श्रुतिः—"एष ह्येव साधु कर्म कारयति", "यथाकर्म यथाश्रुतमि"त्यादि।

३. अव्याकृतपदेन चिदाभासं तम उच्यते।

नियम्यं कार्यमापेक्ष्य नियन्तैष तमोऽवधिः[1] । तेष्वेव चित्स्वभावः सन्साक्षितां प्रतिपद्यते ॥४५॥
निगीर्णं[2] सज्जलूकादि दुष्टं देशं यथाऽऽश्रयेत् । भावनाज्ञानकर्माणि तथा यान्ति तमस्विनम् ॥४६॥
उत्पत्तिस्थितिनाशेषु कारणं नातिवर्तते । कार्यं सर्वं यथा लोके तथेहाप्यवसीयताम् ॥४७॥
कार्येष्वपि च सर्वेषु कर्तृत्वं यत्समीक्ष्यते । अस्यैव तद्विजानीयादतः सर्वकृदुच्यते ॥४८॥

तेजआदिरूपेण स्थितः परमात्मैव सर्वत्र कारणम्

तत्तेज ऐक्षत इति तेजोदेहं सदेव तु । उत्तरोत्तरकार्याणां श्रुत्या स्रष्टृतयोच्यते ॥४९॥
तथा संवर्गविद्यायामप्राणः[3] प्राणतां गतः । अध्यात्ममधिदैवं च प्राणवायुतयोदितः ॥५०॥
नाभोपक्रममाशान्तमरनाभिनिदर्शनात् । ओतप्रोतं जगत्सर्वं प्राण[4] एवोपदिश्यते ॥५१॥

तर्हि परस्य नियामकत्वाङ्गीकारविरोधः स्यादित्याशङ्क्याऽऽह—नियम्यमिति । किमिति नियन्तृत्वं परस्य तमोद्वारकमिष्टं स्वाभाविकं साक्षित्ववत्किं न स्यादित्याशङ्क्य तदप्याविद्यमित्याह—तेष्विति । तमस्तत्कार्येष्विति यावत् ॥३४५॥

तस्य नियन्तृत्वादेराविद्यत्वेऽपि लये ब्रह्मभूतं कर्मादि मुक्तं त्यक्त्वा किमित्यज्ञमेवाऽऽश्रयतीत्याशङ्क्याऽऽह—निगीर्णमिति । उक्तं हि—

'संपृक्ताद्दुष्टशुद्धास्राज्जलूका दुष्टशोणितम् । आदत्ते प्रथमं हंसः क्षीरं क्षीरोदकादिव"इति । आदिपदादौषधभेदोक्तिः ॥३४६॥

किं चाज्ञस्य कर्मादि कारणत्वात्तमतिक्रम्य तत्कार्यं तं मुक्तं नाऽऽश्रयतीति दृष्टान्तान्तरेणाऽऽह—उत्पत्तीति । भावनादिरिहेत्युच्यते । भुक्ताभुक्तभेदस्तु स्वप्नवत्प्रातीतिको न वास्तवो "ब्रह्म वा इदमि"त्यादिशेषविरोधा[5]"त्तद्यो यो देवानामि"त्यत्राप्यात्विद्यभेदस्यैवाधिकारिवैलक्षण्यार्थमनुवादादिति द्रष्टव्यम् ॥३४७॥

भावनादीनामज्ञाश्रयत्वेऽपि तेषां कारणत्वे ब्रह्मणः सर्वकर्तृत्वहानिरकारणत्वे नोपकरणतेत्याशङ्क्याऽऽह—कार्येष्विति ॥३४८॥

तत्तत्कार्यात्मना स्थित्वा ब्रह्मैव कारणमित्यत्र पराभिध्यानादित्यादिन्यायेन[6] मानमाह—तत्तेज इति । विसंधिकरणं श्रुत्यनुसारार्थम् । इतिशब्देन श्रुत्येत्यस्य संबन्धः ॥३४९॥

यथा सर्गाधिकारे सतस्तेजोबन्नता, अन्यथेक्षितृत्वायोगात्तथा संवर्गविद्याप्रकरणे प्राणत्वमप्राणस्यैव परस्येष्टं न हि तस्मादन्यस्योपास्यतया फलदत्वं फलमत उपपत्तेरिति-न्यायादित्याह—तथेति । अप्राणस्य प्राणतापत्तिमेव वदन्नवायोः वायुत्वापत्तिमपि द्योतयति—अध्यात्ममिति ॥३५०॥

भूमविद्यायामपि परस्य सर्वात्मत्वं दृष्टमिति भूमाधिकरणन्यायेनाऽऽह—नामेति । अराणां नाभावर्पणवदशेषं जगत्प्राणद्वारा परस्मिन्नर्पितमिति दर्शितमित्यर्थः ॥३५१॥

---

१ तमोऽवधिः तमोद्वारेत्यर्थः ।
२. निगीर्णम्=पदार्थान्तरमिश्रितम् ।
३. अप्राणः=ब्रह्म । "अप्राणो ह्यमनाः" इति श्रुतेः ।
४. प्राण एव=प्राणद्वारा ब्रह्मण्येव नामोपक्रमं आशान्तं ब्रह्मण्येव प्राणद्वारा समर्पितम् ।
५. शेषविरोधात्=वाक्यशेषविरोधात् ।
६. तदभिध्यानादेव तु तल्लिङ्गात्सः इत्यधिकरणेन ब्रह्मैव तेन तेनाकारेण विद्यमानं तत्तत्कार्यं करोतीति निर्णीतम्, पराभिध्यानात्तु तिरोहितं इत्यधिकरणे इदानीं जीवस्य तिरोहितं सर्वकर्तृत्वादि परस्याभिध्यानात् कस्यचिदाविर्भवतीत्युक्तम् ।

तथैवाऽऽकाशशब्देन तत्र तत्रैष एव तु । [1]तदेतत्सत्यमिति च सबीजः पर उच्यते ।।५२।।
[2]प्राणो ह्येष सर्वभूतैरिति चाऽऽथर्वणे वचः । प्राणबन्धनं सोम्येति सर्वकारणमुच्यते ।।५३।।
एष स्वकार्यं संश्रित्य नानाभेदान्प्रपद्यते । स्वोत्सृष्टतोयधाराद्यैर्वैश्वरूप्यं रविर्यथा ।।५४।।
प्राणभूतादिजन्मैव जन्माऽऽत्मन इहोच्यते । वियतोऽजन्मनो जन्म यथा कुम्भादिजन्मना ।।५५।।
एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । नाव्याकृतं परादन्यदागमादवगम्यते ।।५६।।

निस्सामान्यविशेषस्य ब्रह्मणः सामान्यं कल्पितम्

स्वकार्याण्येव संश्रित्य मृदसाधारणा यथा । सामान्यरूपतामेति स्वकार्यैः कारणं तथा ।।५७।।

परस्य प्राणादिरूपत्ववदाकाशरूपत्वमप्य"स्य लोकस्य का गतिरित्याकाश इति होवाचे"त्यादा[3]वाकाशस्तल्लिङ्गादितिन्यायेनोक्तमित्याह—तथेति । भूतपञ्चकबीजसहितस्य परस्य सत्यशब्देन निर्देशं दर्शयति—तदेतदिति । एतस्माज्जायत इत्यानि परस्मात्सृष्टेः प्रकृतत्वादित्यर्थः ।।३५२।।

तत्रैव वाक्यान्तरमाह—प्राणो हीति । न हि प्राणस्य स्वतः सर्वात्मकत्वं कार्यत्वात् । परस्तु तद्भावमापन्नस्तथेतिभावः । परस्य प्राणरूपत्वे वाक्यान्तरमाह—प्राणेति । मनःसाभासमन्तःकरणं जीवशब्दितं प्राणे परस्मिन्बद्धमभिन्नमिति वदता वेदेन प्राणशब्देन सर्वकारणं ब्रह्मोक्तमित्यर्थः । एवं परस्य तत्तद्रूपेणावस्थानात्सर्वकारणतेति निगमयति—सर्वेति ।।३५३।।

तस्य सर्वकारणत्वे सर्वस्माद्भेदो मृद्वत्कारणत्वादित्याशङ्क्य वास्तवः स न साध्योऽप्रसिद्धविशेषणत्वादितरसाधने सिद्धसाध्यतेत्याह—एष इति । औपाधिकभेदे दृष्टान्तमाह—स्वोत्सृष्टेति । आदित्याज्जायते वृष्टिरिति स्मृतेरादित्योत्सृष्टा वृष्टिधारा । आदिपदाद्दर्पणादिग्रहः ।।३५४।।

आत्मनो भेदो वास्तवो जन्मवदित्याशङ्क्य [4]चराचरव्यपाश्रयस्तु स्यादितिन्यायेन साध्यवैकल्यमाह—प्राणेति । आदिशब्दोऽतिरिक्तभौतिकोपाधिविषयः । इहशब्दो लोकशास्त्रविषयः । औपाधिके जन्मनि दृष्टान्तमाह—वियत इति । अजन्मन इति च्छेदः ।।३५५।।

भेदजन्मनोरौपाधिकत्वेऽपि न परस्य कारणत्वमव्याकृतस्य तद्भावादित्याशङ्क्याऽऽह—एतस्मादिति । उक्तागमात्परस्य कारणत्वावगमादव्याकृतस्य कारणत्वे न तस्माद्भेदस्तत्तमोऽपेक्ष्य ह्यव्याकृतगिरोच्यत इति चोक्तमित्यर्थः ।।३५६।।

ब्रह्मणः सन्मात्रसामान्यत्वेन विशेषापेक्षायामव्याकृतस्य विशेषत्वादन्यत्वमित्याशङ्क्याऽऽह—स्वकार्याणीति । यथा स्वभावतः साधारणताहीनाऽपि मृद्घटादिकार्याण्यपेक्ष्य साधारणतां गच्छत्यतोऽस्याः साधारणता सापेक्षत्वात्कल्पिता तथा ब्रह्मापि स्वकार्यापेक्षया सामान्यत्वं गच्छतीति तस्य तत्कल्पितं तत्कुतो विशेषत्वेनाव्याकृतस्यान्यतेत्यर्थः ।।३५७।।

---

१. "तदेतत्सत्यं यथा सुदीप्यात्" इत्यारभ्य "तथाक्षरात् सम्भवतीह विश्वमि"त्युक्तं सत्यं साभासाज्ञानयुक्तं परं ब्रह्मेत्यर्थः ।

२. "प्राणो ह्येष" इत्यत्रापि प्राणः ब्रह्मैव न मुख्यः प्राणः तस्य कार्यत्वात् सर्वात्मकत्वायोगात् । प्राणबन्धनं प्राणे ब्रह्मणि मनो जीवः बद्धः लीनः इत्यर्थः ।

३. आकाशस्तल्लिङ्गात्—"अस्य लोकस्य का गतिरिति आकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशेव समुत्पद्यन्ते"—इत्यादिना सर्वभूतोत्पत्तिलयाधिष्ठानत्वोक्तेः तल्लिङ्गात् ब्रह्मलिङ्गादित्यर्थः ।

४. चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात्—इति व्याससूत्रम् । जीवस्य जन्मप्रलयौ न स्तः ब्रह्माभेदे न नित्यत्वात् न जीवो म्रियते इति श्रुतेः । कृतहानादेः अनित्यत्वे प्रसक्तेश्च जीवो जातो मृतः इत्यादिव्यपदेशः शरीरव्यपाश्रयः अत एव भाक्तः गौणः शरीरोत्पत्तिनाशकाल एवोत्पत्तिनाशव्यपदेशात् इत्यर्थः ।

तदेतन्नित्यमज्ञानं तज्जकालाद्यनाप्लुतेः । सर्वकालानुवर्त्येव लोके नित्यमितीर्यते ॥५८॥
नित्यस्यानुच्छित्तिरिति चोद्यस्यापि न संभवः । नित्याज्ञानसमुच्छित्तौ यतः प्रामाण्यमाश्रितम् ॥५९॥
प्रमान्तरैरविज्ञातं प्रमेयं वस्तु भण्यते । तत्तत्त्वमात्रगं तत्स्थ[1]ध्वान्ततनुन्मानमुच्यते ॥६०॥
आगन्तु चेदिहाज्ञानमनिर्मोक्षः प्रसज्यते । पुरेवानागतं भूयो नैष्यतीत्यत्र का प्रमा ॥६१॥
कार्यकारणरूपेण द्वयोरव्यतिरेकतः । गुणप्रधानरूपेण कार्यकारणगीरियम् ॥६२॥
न कारणं विना कार्यं न कार्यं कारणं विना । अन्योन्यापेक्षतः सिद्धेर्विनाऽन्योन्यं न तद्द्वयम् ॥६३॥
भावनाज्ञानकर्मादि कार्योत्पत्तेः प्रयोजकम् । तद्भूतौ तदभिव्यक्तेस्तत्स्वापेऽव्याकृतात्मता ॥६४॥
स्वकर्तुरुपभोगार्थं कर्माव्याकृतरूपकम् । व्यक्तीभूतं प्रयुङ्क्ते क्ष्माबग्न्यन्तं साधनत्रयम् ॥६५॥

यदपेक्षं ब्रह्माव्याकृतशब्दं तन्मिथ्याज्ञानमन्यद्वा?आद्ये तद्विशिष्टस्य ब्रह्मणः कारणत्वं वदता कार्यस्य [2]तदिष्टं स्याद्द्वितीये तस्याप्रसिद्धेर्ब्रह्मणोऽपि न कारणतेत्याशङ्क्याऽऽह—तदेतदिति । अज्ञानजत्वात्कालादेस्तस्य तेनापरिच्छेदादिति हेतुमाह—तज्जेति । कालापरिच्छेदेऽपि कुतो नित्यत्वं तत्राऽऽह—सर्वेति । मिथ्याज्ञानादिहेतोरनाद्यज्ञानस्य कार्यकल्प्यत्वात्तद्विशिष्टब्रह्मणो युक्ता कारणतेति समुदायार्थः ॥३५८॥

अनादि चेदज्ञानं नोच्छिद्येताऽऽत्मवदित्याशङ्क्य प्रागभावे व्यभिचारं मत्वाऽऽह—नित्यस्येति । [3]अभावेतरानादित्वं हेतुरित्याशङ्क्य सर्वमानवैफल्यप्रसङ्गपक्षबाधकतर्कहतेरप्रयोजकतेत्याह—नित्येति ॥३५९॥

अनाद्यज्ञानध्वंसित्वेन मानानां मानत्वे किं तन्मानमेयमित्याशङ्क्य व्यावहारिकमानमेयस्य व्यवहारसिद्धत्वात्तत्त्वावेदकमानविषयमाह—प्रमान्तरैरिति । किं तर्हि मानमित्याशङ्क्य व्यावहारिकमानानां सिद्धत्वात्तत्त्वावेदकं मानमाह—तत्तत्त्वेति । मेयगताज्ञानमुपलक्षणं न विशेषणत्वेन मेयान्तर्भूतमिति मात्रपदम् । मानफलमुक्तं स्मारयति—तत्स्थेति ॥३६०॥

अनाद्यज्ञाननिवृत्तिर्मानफलमित्युक्त्वाऽनादित्वासिद्धौ दोषमाह—आगन्तु चेदिति । इहेत्यात्मोक्तिः । प्रसङ्गं प्रकटयति—पुरेति । यथा मुक्तेरर्वागविद्यमानमज्ञानं प्रादुर्भवति तथा तदूर्ध्वमपि तत्प्रादुर्भविष्यतीति शङ्काया निवारकाभावादज्ञानावृत्तिलक्षणमोक्षासिद्धिरतोऽज्ञानस्यानादित्वाद्ब्रह्मणस्तद्विशिष्टस्य कारणत्वमेव जगतस्तु कार्यत्वमेवेति व्यवस्थेत्यर्थः ॥३६१॥

अथैवं व्यवस्थायामद्वैतासिद्धिर्भेदं विना व्यवस्थायोगात्तत्राऽऽह—कार्येति । ब्रह्मजगतोरुपादानोपादेयत्वादभेदो मृद्घटवदित्यर्थः । एकत्र कार्यकारणत्वायोगात्तद्भेदो घटकुलालवदित्याशङ्क्याऽऽह—गुणेति । रज्जुसर्पवदेकत्रैव स्वातन्त्र्यपारतन्त्र्यात्मना कार्यकारणव्यवहारः कल्पित इत्यर्थः ॥३६२॥

तर्हि कारणस्य स्वतन्त्रत्वाद्ब्रह्मवद्वस्तुत्वं नेत्याह—कारणमिति । तत्र हेतुमाह—अन्योन्येति । सापेक्षत्वफलमाह—विनेति । लोकदृष्ट्या कारणस्य स्वातन्त्र्यं घटाद्यभावेऽपि मृदादिस्थितिदृष्टेर्वस्तुवृत्त्या तदपि सापेक्षत्वात्कार्यवत्कल्पितमिति भावः ॥३६३॥

कारणस्य वस्तुतोऽस्वातन्त्र्ये हेत्वन्तरमाह—भावनेति । आदिशब्देन यत्नादिग्रहः तस्य प्रयोजकत्वे हेतुमाह—तद्भूताविति । भावनादिव्यक्तौ कार्योत्पत्तेरन्यथा चानुत्पत्तेस्तत्तदुत्पत्तिप्रयोजकमतस्तदपेक्षं कारणं न स्वतन्त्रमित्यर्थः ॥३६४॥

भावनादि किमर्थं जगज्जनयति तत्राऽऽह—स्वकर्तुरिति । तर्हि केन क्रमेण तत्तज्जनयतीत्याकाङ्क्षायां क्रमं दर्शयति—कर्मेति । कर्मग्रहो भावनादेरुपलक्षणम् । तद्व्यक्तीभावे हेतुर्वक्ष्यते ॥३६५॥

---

१. तत्स्थाज्ञाननिवर्तकमित्यर्थः ।

२. तदिष्टं कारणत्वमिष्टम् । कालापरिच्छिन्नमज्ञानं तद्विशिष्टं ब्रह्म कारणमित्यर्थः ।

३. अभावेतरेति—अज्ञानं नित्यं अभावेतरत्वे सत्यनादित्वात् इति चेन्न—तथा सति मानवैफल्यप्रसङ्गः प्रतिकूलतर्कः पक्षबाधकः साध्यविशिष्टपक्षबाधक इत्यर्थः ।

वाय्वाकाशौ समाश्रित्य पूर्वेषां साधनात्मता । त्रयाणामप्यतस्तानि वाय्वाकाशौ प्रयुञ्जते ॥६६॥
प्रयोजकप्रयोज्यत्वं कर्मसाधनयोर्भवेत् । स्वस्वामिभोगसिद्ध्यर्थमेवं व्याकृततेष्यते ॥६७॥
व्यक्तिर्नियतकालैव जगतोऽव्यक्तरूपिणः । अन्तर्यामिकृता चैषा नान्यः संभाव्यते प्रभोः ॥६८॥
वायोरिव प्रवृत्तिः स्यात्तथा चैवोपसंहृतिः । निर्निमित्तात्तथैवेशाज्जगज्जन्मस्थितिक्षयाः ॥६९॥
न प्रयोज्यो यदा भोगः स्वाम्यर्थः कर्मणस्तदा । हित्वा कर्माखिला व्यक्तीरविशेषात्मतां व्रजेत् ॥७०॥

अज्ञानोपहितस्यैव कारणता

अस्य द्वैतेन्द्रजालस्य यदुपादानकारणम् । अज्ञानं तदुपाश्रित्य ब्रह्म कारणमुच्यते ॥७१॥
अज्ञानमात्रोपाधित्वादविद्यामुषितात्मभिः । कौटस्थ्यान्निर्द्वयोऽप्यात्मा साक्षीत्यध्यस्यते जडैः ॥७२॥
ज्योतिषामपि तज्ज्योतिरसद्धीपरिमोषणात् । तमोरूपमिवाऽऽभाति भानुर्नक्तंदृशामिव ॥७३॥

यदि कर्मादि पृथिव्यादित्रयं जनयति तर्हि वाय्वाकाशयोरुत्पत्तौ किं प्रयोजकं तदाह—वाय्वाकाशाविति । पृथिव्यादीनामनन्तरोक्तानां त्रयाणां भोगोपायतया साधनशब्दितानां वाय्वादिद्वाराऽऽत्मलाभो भोगोपायत्वं चातस्तानि कर्मादीनि प्रागेव वाय्वाद्युत्पाद्य पृथिव्यादीन्युत्पादयन्तीत्यर्थः ॥३६६॥

कर्मादेः साधनशब्दितभूतपञ्चकस्य चोक्तं संबन्धं निगमयति—प्रयोजकेति । स्वकर्तुरुपभोगार्थमित्युक्तं सृष्टेरवान्तरं फलमुपसंहरति—स्वस्वामीति ॥३६७॥

कर्मादिना जगज्जन्म चेत्तस्य सदाभावात्सदा जगज्जायेत न हि सत्यां सामग्र्यां कार्यक्षेप इत्याशङ्क्याऽऽह—व्यक्तिरिति । जगच्छब्देन कर्मादि गृह्यते । किंकृता नियता व्यक्तिरित्याशङ्क्य यावत्कार्यगतं किंचिदित्यत्र सूचितं व्यनक्ति—अन्तर्यामीति । ईश्वरोऽपि किमिति कदाचिदेव व्यनक्ति न सदेत्यत आह—नान्य इति । न हि तस्यान्यो नियन्ताऽस्त्यनीश्वरत्वप्रसङ्गादित्यर्थः ॥३६८॥

जगद्व्यक्तिरीश्वरकृता चेत्तर्हि सशरीरत्वं लौकिकेश्वरवत्तस्य स्यादित्याशङ्क्याऽऽह—वायोरिति । निमित्तं शरीरं यथा वायोरशरीरात्प्रवृत्त्यादिकार्यं भवति हि लोकस्य बलवदनिलप्रेरितस्यावशस्यापि प्रवृत्त्यादि तथेश्वरादप्यशरीराज्जगज्जन्माद्यविरुद्धं न तस्य कार्यं कारणं चेत्यादिश्रुतेरित्यर्थः ॥३६९॥

स्रष्टुरीश्वरस्य देहाद्यनपेक्षत्ववत्कर्माद्यनपेक्षता किं न स्यादित्याशङ्क्याऽऽह—नेत्यादिना । कर्माद्यनपेक्षस्येश्वरस्य न जन्मादिहेतुता रागादिमत्त्वप्रसङ्गादतो यदा कर्मादिवशात्कर्त्रर्थो भोगो नाऽऽपाद्यते तदा तत्सर्वां व्यक्तिं त्यक्त्वा जगता सह कारणतामेति तदा च लयो न सृष्टिरित्यर्थः ॥३७०॥

कर्माद्यपेक्षस्यापि देहानपेक्षस्यैव स्रष्टुः कारणत्वे देहवदज्ञानमपि नापेक्ष्यमित्याशङ्क्याऽऽह—अस्येति । प्रतिपन्नस्य द्वैतस्येन्द्रजालवदविचारितरमणीयस्याभावेतरकार्यत्वेनोपादानापेक्षस्यानुरूपमुपादानमज्ञानमिति तदुपादाय ब्रह्म "तत्कारणमि"[1]ति श्रुतिस्मृत्यनुसारिभिरभ्युपेयं न हि कूटस्थासङ्गाद्वयं ब्रह्म जगदाकारेणाज्ञानमनादाय परिणामि भवति न च तस्याकारणत्वं श्रुतिस्मृतिवादेषु तत्कारणत्वोक्तेरित्यर्थः ॥३७१॥

कारणत्ववत्साक्षित्वमपि स्वाज्ञानकृतमित्युक्तमेव प्रसङ्गात्प्रकटयति—अज्ञानेति । आत्मा कूटस्थत्वात्सर्वप्रकारद्वैतसंगतिरहितोऽप्यविद्यातिरस्कृतात्मभिरविवेकिभिः साक्षीति कल्प्यते साक्षित्वस्याज्ञानमात्रकृतत्वादित्यर्थः । मात्रशब्देन बुद्ध्युपाधिकमातृत्वव्यावृत्तिः ॥३७२॥

साक्षिणः स्वप्रकाशत्वात्तस्य ब्रह्मत्वमप्यात्मत्वात्स्वप्रकाशमतो ब्रह्मानुभवः सदा स्यादित्याशङ्क्याऽऽह—ज्योतिषामिति । तद्देवा ज्योतिषां ज्योतिरित्यादिश्रुतेरादित्यादीनामपि प्रकाशकं ब्रह्म यद्यपि स्वप्रकाशं तथाऽप्यनधिकृतानामशुद्धबुद्धीनां बुद्ध्यशुद्धेरस्वप्रकाशमसदिव भात्युलूकानामिव सवितेत्यर्थः ॥३७३॥

१. "तत्कारणं सांख्ययोगाभिपन्नं" इति श्वे० उ० ।

मोहतत्कार्यनीडं यत्कूटस्थाभासरूपकम् । ज्ञानं तदविनाभूतः परः साक्षीति भण्यते ॥७४॥
इदं तत्सर्ववेदेषु यथाभूतार्थवित्तये[1] । सदेवेत्यादिभिर्वाक्यैः कारणं ब्रह्म गीयते ॥७५॥
सर्वज्ञः सर्वशक्तिश्च सर्वात्मा सर्वगो ध्रुवः । जगज्जनिस्थितिध्वंसहेतुरेष सदेश्वरः ॥७६॥
यः पृथिव्यामितीशोऽसावन्तर्यामी जगद्गुरुः । हरिर्ब्रह्मा पिनाकीति बहुधैकोऽपि गीयते ॥७७॥

ब्रह्मणः साक्षित्वं न युक्तमिति पूर्वपक्षः

कूटस्थस्य न साक्षित्वं द्वितीयासंगतेर्भवेत् । नाशिनोऽपि न साक्षित्वं नाशेनाव्यतिरेकतः ॥७८॥

परस्मादन्यस्यैव तर्हि साक्षिता मोहमाहात्म्यादन्यत्रापि तद्योगादित्याशङ्क्याऽऽह—मोहेति । अज्ञाने तत्कार्ये च स्थितं यच्चिदाभासात्मकं ज्ञानं तेन तादात्म्यं गतः परः साक्षीत्युच्यतेऽन्यस्य चेतनस्याभावादतो नाज्ञानमात्रात्साक्षित्वं किंत्वाभासेनापि भाव्यमित्यर्थः ॥३७४॥

परस्यैवाज्ञानात्साक्षित्वेऽपि कथं तस्यैव तद्वशात्कारणत्वं मानाभावादित्याशङ्क्याऽऽह—इदमिति । कार्यलिङ्गकं प्रत्यग्भूतं ब्रह्म विश्वस्य कारणं सर्ववेदेषु सदेव सोम्येदमित्यादिवाक्यैर्गीयत इति योजना । किमर्थं कारणत्वं ब्रह्मणो वाक्यैरुच्यते तदाह—यथेति । उपायः सोऽवतारायेतिन्यायादकार्यकारणप्रत्यगात्मसाक्षात्कारार्थमित्यर्थः ॥३७५॥

ननु प्रेक्षावत्प्रवृत्तेर्ज्ञानपूर्वकत्वाद्ब्रह्मणः सर्वकारणत्वे सर्वत्राप्रतिबद्धं ज्ञानं वाच्यं न च तदस्ति मानाभावात्तत्राऽऽह—सर्वज्ञ इति । यः सर्वज्ञः सर्वविदितिश्रुतेः शास्त्रयोनित्वाधिकरणन्यायाच्चेति[2] शेषः । दृक्शक्तिमतोऽपि पुरुषस्य प्रवृत्तिशक्तिहीनत्वं सांख्यैरुक्तमत आह—सर्वशक्तिरिति । पराऽस्य शक्तिरितिश्रुतेः । न च सर्वशक्तित्वेनैव सर्वज्ञत्वं प्रधाने सर्वशक्तिमत्यपि तदनिष्टेरयस्कान्ते प्रवृत्तिशक्तिमत्यपि दृक्शक्तेरदृष्टत्वाच्चेत्यर्थः । एवंविधमपीश्वरं तटस्थं वदन्ति केचित्तान्प्रत्याह—सर्वात्मेति । एतेन सर्वमूर्तसंयोगित्वं सर्वगतत्वं निरस्तमिति मत्वाऽऽह—सर्वग इति । सर्वत्राधिष्ठानत्वेन संनिहित इत्यर्थः । यद्वा मध्यमपरिमाणं पुरुषमाहुरार्हतास्तान्प्रत्युक्तम्—सर्वग इति । तस्य परिणामित्वमाश्रयन्ते स्वयूथ्यास्तान्प्रत्याह—ध्रुव इति । हैरण्यगर्भास्तु हिरण्यगर्भमुक्तलक्षणमाहुस्तन्न तस्य जगन्मध्यपातित्वश्रुतेरित्याशयेनाऽऽह—जगदिति । यद्वा मीमांसका यथोक्तमीश्वरं न मृष्यन्ति तन्न कार्यलिङ्गादनेकश्रुतिस्मृतिवादैश्च तत्सिद्धेरित्याह—जगदिति । सदाशब्दो विशेषणेषु प्रत्येकं संबध्यते ॥३७६॥

कथं श्रुत्यवष्टम्भेनेश्वरस्य कारणत्वं मूर्तित्रयस्येतिहासादौ सर्गस्थितिलयेषु यथायोगं कर्तृत्वश्रुतेरत आह—यः पृथिव्यामिति । प्रकृतो हीश्वरः स्वरूपेणैकोऽपि मूर्तित्रयात्मना बहुधोच्यते पृथिव्यादौ तस्यैवान्तर्यामित्वेन स्थितिश्रुतेर्न च तद्विरोधे पुराणादिप्रामाण्यं सापेक्षत्वेन दौर्बल्यादिति भावः । स पूर्वेषां गुरुरितिन्यायेनान्तर्यामीत्यस्य व्याख्या जगद्गुरुरिति ॥३७७॥

परस्यैव तत्तद्रूपेण स्थितस्य सर्वकारणत्वेऽपि कुतस्तस्य साक्षित्वं स हि मातुरन्योऽनन्यो वेति विकल्प्याऽऽद्ये पूर्ववादी दोषमाह—कूटस्थस्येति । परिणामिनो मातुरन्यस्य कूटस्थत्वात्तस्य विकारविरहिणः साक्ष्यासंबन्धान्न साक्षिता युक्तेत्यर्थः । मातुरपि परिणामित्वान्नाशादिमतो न साक्षित्वं साक्ष्यकोटिनिवेशादिति द्वितीयं दूषयति । नाशिनोऽपीति । परिणामित्वेऽपि हेमादिवदनाशादिसंभवे कथं मातुर्नाशादिमत्त्वं तदाह—नाशेनेति । परिणामस्य नाशादिना व्याप्तेरुदाहरणस्य चासंप्रतिपत्तेरित्यर्थः ॥३७८॥

---

१. यथाभूतार्थः शुद्धं ब्रह्म तज्ज्ञानायेत्यर्थः ।

२. शास्त्रयोनित्वन्यायः यः यद्ग्रन्थकर्ता स तत्प्रतिपाद्यार्थाधिकज्ञानवान् यथा पाणिनिः इति व्यासेः वेदप्रतिपाद्यार्थाधिकार्थज्ञानं परस्मिन् वेदकर्तरि सिध्यति । अधिकं कियदिति परिच्छेदे कारणाभावात् सर्वज्ञमित्यर्थः ।

तत्र सिद्धान्तः

अज्ञानमात्रहेतौ तु सर्वमेतत्समञ्जसम् । कर्तृत्वाद्यन्यथाज्ञानहेतुत्वादात्मरूपिणः ॥७९॥
प्रत्यग्रूपस्य स्थास्नुत्वाज्ज्ञातुर्मोहेन चान्वयात् । कूटस्थस्यापि साक्षित्वमागमापायिनं प्रति ॥८०॥
आत्मात्मवत्त्वसंबन्ध आत्मात्माज्ञानयोर्मतः । परोऽविवेको भूतानामात्माविद्येति कथ्यते ॥८१॥
ईशादिविषयान्तं यत्तदविद्याविजृम्भितम् । मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ॥
इति वेदशिरःसूक्तिस्तथा चोद्घुष्यते स्फुटा ॥८२॥
दैवी ह्येषा गुणमयी मम मायेति च स्मृतिः । वैष्णवी खल्वियं मायेत्यपि लोकेऽपि गीयते ॥८३॥

तन्नामरूपाभ्यामित्यादिना मिथ्याज्ञाननिरूपणम् ।

मानान्तरानधिगतं मेयं तावन्निरूपितम् । स्वानुभूत्यनुसारेण प्रत्यङ्मात्रसतत्त्वकम् ॥८४॥
एतन्निदानमधुना मिथ्याज्ञानं निरूप्यते । यतो बिभ्यति भूतानि संसारानर्थलक्षणात् ॥८५॥

आविद्ये जगति तद्वशात्परस्य साक्षित्वकारणत्वान्तर्यामित्वाद्युपपन्नमिति सिद्धान्तयति—अज्ञानेति । जगति परिणामिकारणं नाविद्यातिरिक्तमस्तीति वक्तुं मात्रपदम् । पूर्वपक्षनिवृत्त्यर्थस्तुशब्दः । परस्य साक्षित्वादावपि न कर्तृत्वादि युक्तं निष्क्रियत्वश्रुतेरित्याशङ्क्याऽऽह—कर्तृत्वादीति । ज्ञातुर्ज्ञानपरिणामिनश्चित्तस्याऽऽत्मन्यध्यासादनात्मनोऽध्यात्मरूपमापन्नस्य कर्तृत्वादि तच्च प्रतीचः कल्प्यते परिणाम्यैक्याध्यासस्यान्यथाज्ञानस्य हेतोः सत्त्वादित्यर्थः । कूटस्थस्याऽऽविद्यं साक्षित्वाद्युक्तं निगमयति—स्थास्नुत्वादिति । कूटस्थस्य स्थास्नुत्वात्स्वतः सर्वविक्रियाहीनत्वान्मोहसंबन्धद्वारा जडवर्गं प्रति साक्षित्वादिकमित्यर्थः । स्वतस्तदयोगमपिना सूचयति ॥३७९–३८०॥

कस्तर्हि संबन्धो मोहकूटस्थयोरित्याध्यासिकतादात्म्यमित्याह—आत्मेति । अविद्याया विद्याभावानतिरिक्तायाः साक्षित्वादौ कथं साधकत्वमित्याशङ्क्याज्ञानस्वरूपमाह—पर इति । कारणत्वं परशब्दार्थः । भवनयोग्यसर्वपदार्थानां हेतुर्विवेकनिवर्त्या प्रत्यगविद्या सा चाऽऽत्मन्येवेत्यर्थः ॥३८१॥

कथमवधारणमीश्वरादेरपि तत्संभवादित्याशङ्क्याऽऽह—ईशादीति । एतेन पारमार्थिकत्वमैश्वर्यस्य पराकृतं तत्र श्रुतिं प्रमाणयति—मायां त्विति । ननु दर्शिता श्रुतिरीश्वराधीना मायाख्या जगत्प्रकृतिरित्येतावन्मात्रं ब्रूते न पुनरीश्वरस्य शब्दादिवदविद्याविलसितत्वं तत्राऽऽह—तथा चेति । ईश्वरस्योक्ताविद्याविजृम्भितत्वानुरोधेन मायिनामिति स्फुटा श्रुतिरुच्यमाना तस्य मायाविशिष्टतां वदन्ती शुद्धतां वारयत्यतोऽशुद्धजगन्निवेशी सन्नसौ कल्पितः स्यादित्यर्थः ॥३८२॥

तत्रैव स्मृतिमाह—दैवी हीति । मायाया दुरत्ययत्वं प्रत्यात्मप्रसिद्धमिति हिशब्दार्थः । तत्र च मम मायेति वदता भगवता मायामीश्वरस्य दर्शयता तद्विशिष्टस्य तस्य कल्पितत्वं सूचितम् । अघटमानं विश्वं पश्यन्तो वदन्ति लौकिका एषा भगवन्मायैवेत्यतो लोकप्रसिद्धिरप्यत्र मानमेवेत्याह—वैष्णवीति । एकोऽपिरवधारणेऽपरः समुच्चये । लौकिका हि वैष्णवीति मायां विष्णुना विशिंषन्तो विष्णोरीश्वरस्य मायावैशिष्ट्यमाचक्षाणास्तस्य कल्पितत्वं मन्यन्ते स्वरूपेणाकल्पितत्वेऽपि संसृष्टाकारेण कल्पितत्वमीश्वरस्य जीववदभ्युपेयमिति भावः ॥३८३॥

प्रमाणप्रवृत्तेः प्राक्प्रतिपन्नस्यैवाज्ञातत्वस्य तत्प्रवृत्तिप्रयोजकत्वात्तत्साधकस्य च स्वप्रकाशानुभवादन्यस्याभावात्तस्य च स्वाध्यस्तसाधकत्वात्तादृगनुभवस्यैवाज्ञातत्वं मेयत्वं वस्तुता चेति साधितम् । इदानीं वृत्तं कीर्तयति—मानान्तरेति । प्रत्यङ्मात्रं वस्त्वज्ञाज्ञातं च न चाज्ञमतत्वादि मानगम्यं तन्निवर्त्यत्वात्स्वरूपानुभवानुसारात्तत्सिद्धिस्तच्च प्रत्यग्वस्त्वपूर्वत्वाद्वेदान्तमेयमित्येतत्तद्धेत्यादौ निर्धारितमित्यर्थः ॥३८४॥

तन्नामरूपाभ्यामित्यादिवाक्यस्य कार्यकारणभेदेनेत्यत्रोक्तमेव तात्पर्यमक्षरार्थोक्त्यर्थं विवृणोति—एतदिति । कर्मव्युत्पत्त्या ज्ञानशब्दो विषयमपि विषयीकरोत्येतदज्ञानं वस्तु निदानं यस्य तन्मिथ्याभूतं ज्ञानं ज्ञेयं च तदित्यादिना निरूप्यत इति योजना । कारणनिरूपणानन्तरं कार्यनिरूपणेति संगतिं सूचयति—अधुनेति ।

**यदेव नित्यमज्ञानं मिथ्याज्ञानं तदेव तु । कारणेतररूपेण तयोरव्यभिचारतः ॥८६॥**

सृष्टेः निर्निमित्तत्वकथनम्

**हेत्वन्तरानपेक्षं सत्तदव्याकृतरूपकम् । व्याकृतां स्वयमेवेति निमित्तं नास्त्यसंहृतम् ॥८७॥**
**सुषुप्तादुत्थितो राज्ञः स्वयमेव यथा तथा । जग्धाशेषजगन्मूर्तरव्यक्ताद्व्याकृतिर्मुहुः ॥८८॥**
**अनिश्चिता यथा रज्जुरिति न्यायोपबृंहितम् । स्फुटार्थं गौडपादीयं वचोऽर्थेऽत्रैव गीयते ॥८९॥**

तद्धेदमित्यादिवाक्यस्य विवरणम्

**तदिदं नामरूपाभ्यामनामकमरूपकम् । एवं व्याक्रियताज्ञानहेतुमात्रव्यपाश्रयात् ॥९०॥**
**अभिधानाकृतिर्नामशब्देनेहाभिधीयते । अभिधेयाकृतिस्तद्वद्रूपमित्युपदिश्यते ॥९१॥**
**एवं द्वाभ्यां प्रकाराभ्यामीशो व्याकृतजन्मनाम् । व्यवहाराय पर्याप्तो न त्वव्यक्तात्मना यतः ॥९२॥**

ननु संसाराख्यमहाव्याधेः किं मूलमिति चिन्त्यत इत्युपक्रम्य तच्चिन्तां कृत्वा संसारे निरूप्ये मिथ्याज्ञाननिरूपणं प्रक्रमाननुगुणमिति नेत्याह—यत इति । तन्मिथ्याज्ञानमिति संबन्धः । अज्ञातात्मविवर्तो जगदिति निरूपयितुमुत्तरं वाक्यमित्यर्थः ॥३८५॥

अज्ञानं कारणं मिथ्याज्ञानं कार्यमित्यत्र फलितमाह—यदिति । नित्यमित्यनादित्वमुच्यते । तत्र हेतुमाह—कारणेति । मिथ्याज्ञानस्याज्ञानेनान्वयव्यतिरेकवत्त्वात्तयोः कार्यकारणभावात्कार्यस्य चोपादानाद्भेदा-योगादज्ञानात्मनो बन्धस्य सम्यग्ज्ञाननिरस्यत्वसिद्धिरित्यर्थः ॥३८६॥

अज्ञातं वस्तु बन्धहेतुश्चेत्तर्हि दोषादिना सहकारिणा भाव्यमज्ञातशुक्त्यादे रजतादिहेतुत्वे काचादि-सहकारिदृष्टेरित्याशङ्क्याऽऽह—हेत्वन्तरेति । स्वव्यतिरिक्तहेतुनिरपेक्षं स्वयमेवाव्याकृतं सर्गकाले कार्यत्वमापद्यते दृष्टान्तवदत्रातिरिक्तहेत्वयोगादित्यर्थः । कर्मादेर्निमित्तस्योक्तत्वात्कुतो हेत्वन्तरानपेक्षतेत्याशङ्क्य लोकदृष्ट्या तथोक्तं वस्तुतस्तु कर्मादेरपि संहृतत्वान्नाव्याकृतातिरेकेण निमित्ततेत्याह—निमित्तमिति । अविद्याकर्मसंस्कारा इत्यत्र चोक्तं न प्रस्मर्तव्यमिति भावः ॥३८७॥

अज्ञातप्रत्यग्धातोर्बाह्यनिमित्तानपेक्षस्य स्रष्टृत्वे दृष्टान्तमाह—सुषुप्तादिति । यद्यपि सुषुप्तो राजा स्तुतिगी-तादि निमित्तं प्रतिलभ्य प्रतिबुध्यते तथाऽपि कदाचिदन्तरेण बाह्यं हेतुं स्वयमेव प्रतिबुध्यमानो दृश्यते । तथा च दृष्टान्तसिद्धिः । मुहुरिति व्याकृतेरभ्यासं दर्शयन्ननादित्वं संसारस्य सूचयति ॥३८८॥

प्रत्यगज्ञानविवर्तो जगदित्यत्र संप्रदायविदां वाक्यं प्रमाणयति—अनिश्चितेति । अन्धकारे विकल्पिता ।
सर्पधारादिभिर्भावैस्तद्वदात्मा विकल्पितः" इति पादत्रयम् । न चैतदमानमुपकरणन्यायवत्त्वादित्याह—न्यायेति । सत्त्वासत्त्वादिनाऽनात्मनो दुर्निरूपत्वं न्यायः । असंदिग्धाबाधितार्थत्वाच्चैतन्मानमित्याह—स्फुटेति । विशिष्टपुरुषदृष्टत्वाच्चेत्याह—गौडेति । अज्ञातात्मविकारो जगदित्युक्तोऽर्थः सप्तम्योरर्थः ॥३८९॥

तदित्यादिवाक्यस्य तात्पर्यमुक्त्वा तदक्षराणि व्याकरोति—तदिदमिति । प्रकृतमज्ञातं वस्तु नामरूपाभ्यां व्याक्रियतेत्ययुक्तं प्रागेव तयोः सिद्धेरित्याशङ्क्याऽऽह—अनामकमिति । अशब्दमित्यादिश्रुतेरिति शेषः । व्याकरण-स्यानुभवानुसारितामाह—एवमिति । तत्र प्रधानं कारणमाह—अज्ञानेति । प्रत्यगज्ञानेतरस्वतन्त्रहेतुनिरासार्थं मात्रपदम् ॥३९०॥

समुदायार्थमुक्त्वाऽवयवार्थं विवक्षुर्नामप्रातिपदिकार्थमाह—अभिधानेति । अस्मिन्वाक्ये नामप्रातिपदिकार्थो नामसामान्यमिति यावत् । रूपप्रातिपदिकार्थमाह—अभिधेयेति । यथा वाचकसामान्यं नामशब्दार्थस्तथा रूपशब्दार्थो वाच्यसामान्यमिति यावत् ॥३९१॥

उक्तप्रातिपदिकार्थद्वयानुवादेन विभक्त्यर्थमित्थंभावं कथयति—एवमिति । किमर्थमिदं व्याकरणमित्या-शङ्क्य व्यवहारार्थमित्याह—ईश इति । व्याकृतजन्मना विना स्वरूपेणापि तस्य व्यवहारयोग्यत्वमाशङ्क्याऽऽह—न त्विति । ईश्वरो हि नाव्यक्तात्मना व्यवहाराय पर्याप्तो लयाभावप्रसङ्गादतो व्याकृतिरर्थवतीत्यर्थः ॥३९२॥

नाम्नः सामान्यमात्रस्य त्वसाविति समीरणम् । विशेषनाम्ना संयोज्य देवदत्तादिनोच्यते ।।९३।।
तद्वद्रूपस्य सामान्यं रूपमित्युपदिश्यते । तदुपात्तविशेषं सच्छुक्लकृष्णादिनोच्यते ।।९४।।
एवेत्यवधृतावेतदात्मवृत्तव्यपेक्षया । आत्माविद्यासमुत्थाभ्यामेव व्याक्रियते परः ।।९५।।
न तु विध्वस्तनिःशेषप्रत्यगज्ञानतद्भव— । सामान्यभेदैकात्म्याख्यतदनन्यप्रमात्मना ।।९६।।
आदावव्याकृतं तत्त्वं नामरूपक्रियात्मना । स्वयं तद्व्याकृतिमगाद्यथैतर्हि तथैव तत् ।।९७।।
नामरूपाभ्यामेवेति न समुच्चयनिश्चितौ । समस्तव्यस्तरूपाभ्यां लोकेऽपि व्याकृतिर्यतः ।।९८।।
जातितो बधिरस्येह व्यक्तिः स्याद्रूपमात्रजा । जात्यन्धादेश्च नाम्नैव तथा चोभयथाऽप्यसौ ।।९९।।
अज्ञातात्मैकहेतूनां मिथोपेक्षात्मनां श्रुतौ । नेयत्तास्तीह तत्त्वानामानन्त्यान्न क्रमस्तथा ।।४००।।
प्रक्रियानियमो नापि पुंव्युत्पत्तिप्रधानतः । प्रतिश्रुतिविगीतिश्च प्रक्रियाणां समीक्ष्यते ।। १ ।।

सृष्टिक्रमादिषु विप्रतिपत्तेः फलकथनम्

यया यया भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि । सा सैव प्रक्रियेह स्यात्साध्वी सा चानवस्थिता ।। २ ।।

असौनामाऽयमित्यत्रासावित्यस्यार्थमाह—नाम्न इति । देवदत्तो यज्ञदत्त इति वेत्यादिभाष्यं विभजते—विशेषेति। नामसामान्यं देवदत्तादिना विशेषनाम्ना संयोज्य सामान्यविशेषवानर्थः प्रकृतभाष्येणोच्यत इत्यर्थः ।।३९३।।

इदंरूप इत्यत्रेदंशब्दार्थमाह—तद्वदिति । यथाऽसौ नामेत्यत्रासाविति नामसामान्यमुक्तं तथाऽत्रापि यद्रूपमिति रूपसामान्यं तदिदमित्युच्यत इति योजना । इदं शुक्लमित्यादिभाष्यं व्याचष्टे—तदिति । रूपसामान्यं विशेषनिष्ठं शुक्लकृष्णादिना संयोज्य सामान्यविशेषात्मकरूपमुच्यते भाष्येणेत्यर्थः ।।३९४।।

मा भूद्व्याकृतधीरित्यत्रोक्तमेवकारार्थमक्षरव्याख्यावसरे प्रपञ्चयति—एवेति । किमपेक्ष्यावधारणं तदाह—आत्मेति । अवधारणमेव स्फोरयति—आत्माविद्येति ।।३९५।।

आत्मवृत्तव्यपेक्षयेत्युक्तं व्यनक्ति—न त्विति । तस्माद्भवो येषां ते येतद्भवाः सामान्यं च भेदाश्च सामान्यभेदास्तद्भवाश्च ते सामान्यभेदाश्च निःशेषं प्रत्यगज्ञानं निःशेषाश्च तज्जाः सामान्यविशेषा विध्वस्ता यस्मिंस्तदैकात्म्यं श्रुतिषु प्रसिद्धं तेन तादृशेनानन्या प्रमा नित्यानुभवरूपा तद्रूपेण परो न व्याक्रियत इति योजना ।।३९६।।

तदिदमपीत्यादेरर्थमाह—आदाविति । वर्तमाने काले सुषुप्तावव्याकृतं तत्त्वं जागरादौ व्याक्रियमाणं दृष्टमतः सर्गादावपि पूर्वमव्याकृतस्य व्याकरणं दृष्टानुसारात्कल्प्यमित्यर्थः ।।३९७।।

नामरूपाभ्यां समुच्चिताभ्यामेव व्याकरणं न त्वेकैकेनेत्येतदर्थमवधारणमिति केचित्तान्प्रत्याह—नामरूपाभ्यामिति । अपिशब्दस्तृतीयया सम्बध्यते ।।३९८।।

व्यस्तेन रूपमात्रेण व्याकरणमुदाहरति—जातित इति । इहेति प्रकृतलोकोक्तिः । नाममात्रेण व्याकरणं दर्शयति—जात्यन्धेति । आदिपदेन नैमित्तिकान्धोक्तिः । समुच्चयमाह—तथेति । उभयथेति नाम्ना रूपेण चेत्यर्थः । असाविति व्यक्तिरुक्ता तत्र चोदाहरणमस्मदादयः ।।३९९।।

समस्ताभ्यां व्यस्ताभ्यां च नामरूपाभ्यां व्याकरणेऽपि व्याक्रियमाणसंख्याक्रमौ वाच्यावित्याशङ्क्याऽऽह—अज्ञातेति । सृज्यमानानां हेतुद्वारकं कल्पितत्वमुक्त्वा स्वरूपतोऽपि तदाह—मिथ इति । तेषां तत्त्वानामानन्त्यादिह श्रुतौ नेयत्ताऽस्त्यत्यत एव न क्रमश्चेति योजना ।।४००।।

किंच सर्वत्र सृष्टिप्रकरणे सृष्टेरविवक्षितत्वान्न सृज्यमानसंख्याद्यन्वेष्यमित्याह—प्रक्रियेति । किमर्थं तर्हि सृष्टिसंकीर्तनं तदाह—पुंव्युत्पत्तीति । पुंसो व्युत्पत्तिर्ज्ञानं तत्परत्वात्सृष्ट्यादिश्रुतेस्तादर्थ्येन तद्विधानमित्यर्थः । सृष्टेरविवक्षितत्वे हेत्वन्तरमाह—प्रतिश्रुतीति । क्वचिदाकाशादिका सृष्टिः क्वचिदग्न्यादिका क्वचिदक्रमैवेति विप्रतिपत्तिः ।।४०१।।

एवं सृष्टिविप्रतिपत्तौ कीदृशी सृष्टिरेष्टव्येत्याशङ्क्याऽऽह—ययेति । इहेति श्रौतमार्गोक्तिः । साध्वीति फलवत्त्वकथनम् । व्यवस्थिता तर्हि सेत्याशङ्क्याधिकारिबुद्धितारतम्यान्नैवमित्याह—सा चेति ।।४०२।।

उद्भूतिस्थितिहानीनां न क्वचित्संभवो यथा । मुख्यां वृत्तिं समाश्रित्य तथोदर्केऽपि वक्ष्यते ॥ ३ ॥
न जायते जन्यते वा नापि हन्ति न हन्यते । तमःसंवृतदृष्टीनां षड्विकारादिवीक्षणम् ॥ ४ ॥

यदर्थः सर्वशास्त्रारम्भ इत्यादिभाष्यार्थवर्णनम्

यदर्थं सर्वशास्त्राणां प्रवृत्तिरतिविस्तरा । आत्मज्ञानावतारार्थः सर्वशास्त्रसमुद्यमः ॥ ५ ॥
विरोधः सर्वशास्त्राणां स्वाभिधेयव्यपेक्षया । निवृत्त्यर्थेऽविरोधित्वादत एतत्समीरितम् ॥ ६ ॥
स्वत एव यतः पुंसां प्रवृत्तिः स्वार्थसिद्धये । तत्रानुवादि शास्त्रं स्यान्निवृत्तावेव तन्मितिः ॥ ७ ॥
अपि वात्स्यामनादीनां शास्त्राणामुक्तहेतुतः । प्रामाण्यमविरुद्धं स्यादैकात्म्यज्ञानजन्मने ॥ ८ ॥

वात्स्यायनतन्त्रस्यापि निवृत्तिपरता

प्रवर्तमानः पुरुषः शास्त्रोद्दीपितवर्त्मना । प्रवृत्तिविषयं दुष्टं दृष्ट्वाऽतो विनिवर्तते ॥ ९ ॥

सृष्ट्यादेरवस्तुत्वे वक्ष्यमाणामपि युक्तिं स्मारयति—उद्भूतीति । क्वचिदिति समस्तवस्तूक्तिः । मुख्यां वास्तवीमिति यावत् । अस्मिन्नेवार्थे पूर्वोक्तन्यायमपिना समुच्चिनोति ॥४०३॥

सर्गादेरवस्तुत्वे फलितमाह—नेत्यादिना । कर्तृकर्मणी जन्मविनाशयोर्न चेदुपपद्येते जन्मादिधीस्तर्हि कथमिति तत्राऽऽह—तम इति । आदिपदेनानात्मवर्गः सर्वो गृह्यते ॥४०४॥

तद्धेत्यत्र मूलकारणमुक्त्वा तदित्यादिना तत्कार्यमुक्तमिति व्याख्यातम् । इदानीं प्रवेशवाक्यस्थसशब्दापेक्षितमाचक्षाणो भाष्यकारो यदर्थं सर्वशास्त्रारम्भ इति यदाह तदवतारयति—यदर्थमिति । श्रौतेन सशब्देन यच्छब्दः संबध्यते । वैदिकावैदिकदर्शनसंग्रहार्थः सर्वशब्दः । प्रवृत्तिरारम्भस्तस्याश्चातिविस्तरत्वमाक्षेपसमाधानाभ्यामुपपादनं तस्यार्थमाह—आत्मेति ॥४०५॥

सर्वशास्त्रारम्भस्याऽऽत्मज्ञानोदयार्थत्वे मिथोविरोधः शास्त्राणां न स्यादित्याशङ्क्याऽऽह—विरोध इति । वैशेषिकनैयायिकादिशास्त्राणां यद्यपि स्वशब्दशक्तिदृष्टषट्पदार्थषोडशपदार्थाद्यपेक्षया विरोधधोस्तथाऽपि रागादिध्वस्तिद्वारा तत्त्वधीसंज्ञेऽर्थे विना विरोधं तात्पर्याद्युक्तं प्रत्यग्याथात्म्यज्ञानार्थत्वं तस्मादेतद्भाष्यं युक्तमित्यर्थः ॥४०६॥

शास्त्रान्तराणामन्यार्थत्वेन प्रस्थितानां कुतो निवृत्तिद्वारा तत्त्वज्ञानार्थतेत्याशङ्क्य स्वर्गादिबोधित्वेन तदुपायबोधित्वेन वा तेषां प्रवृत्तिरिति विकल्प्याऽऽद्ये दोषमाह—स्वत इति । बुद्धिपूर्वकारिणां स्वर्गादिसिद्धये शास्त्रापेक्षामन्तरेण प्रवृत्तिरिच्छारूपा यतोऽधिगताऽतस्तत्रैव बोधकत्वेन प्रवृत्तिशास्त्रमनुवादकमप्रमाणकं स्यादिति स्वर्गादावतात्पर्यान्न तत्र शास्त्रप्रवृत्तिरित्यर्थः । द्वितीयं प्रत्याह—निवृत्ताविति । स्वर्गादेः पुमर्थाभासत्वात्तद्धेतुत्वबोधने शास्त्रस्यापर्यवसानाद्रागादिनिवृत्तिद्वारा सर्वसंसाररहिते प्रतीच्येव तन्मानतेत्यर्थः ॥४०७॥

किंच साक्षादेव सर्वशास्त्राणां प्रामाण्यं प्रतीच्येवैष्टव्यमित्याह—अपीति । यदि तेषां प्रामाण्यं तर्हि प्रत्यग्ज्ञानजन्मार्थत्वेनैव तदविरुद्धं तस्यैवाज्ञातत्वोक्त्या तादृग्विषयाभावे प्रामाण्याभासस्योक्तत्वात् । यद्यप्रामाण्यमेव तेषां तदोपेक्ष्यत्वान्न तत्समन्वयनिरूपणेत्यर्थः ॥४०८॥

वात्स्यायनादिशास्त्रेभ्यः शब्दशक्त्या दृश्यमानस्त्रीभोगादिषु प्रसक्तस्य ततो निवृत्तिहेत्वभावात्कथं प्रतीचि पर्यवसानं तेषामित्याशङ्क्याऽऽह—प्रवर्तमान इति । वात्स्यायनादिशास्त्रप्रकाशितमार्गेण स्त्रीभोगादौ प्रवर्तमानस्तद्विषयं दुःखभेदसंभेदादिना दुःखमवलोक्य प्रवृत्तिविषयादतः स्त्रीभोगादेर्निवृत्तो विरक्तः सन्नात्मज्ञानेऽवतरेदिति योजना । कामशास्त्रे नन्दकेश्वरादिभिरनेकधा कृते कामो धर्माविरुद्धोऽवान्तरफलम् । यथाऽऽह—

"किं स्यात्परत्रेत्याशङ्का कार्ये यस्मिन्न जायते । न चार्थघ्नं सुखं चेति शिष्टास्तस्मिन्व्यवस्थिताः ॥
त्रिवर्गसाधकं यत्स्याद्द्वयोर्वैकस्य साधकम् । कार्यं तदपि कुर्वीत न चैकार्थं द्विबाधकम्" इति ॥

१. ११६–३
२. किं स्यादिति—यस्मिन् कार्ये परत्र किं स्यात्, न च सुखमर्थघ्नं तत्र शिष्टाव्यवस्थिताः पूर्वः पूर्वः धर्मः तदनन्तरमर्थः ततः कामः ।

अनित्यदुःखशून्यत्वं पदार्थानां ब्रुवन्स्फुटम् । बुद्धोऽपि रागाद्युच्छित्तौ यतते नाऽऽत्मनिह्नुतौ ।।१०।।
त्याग एव हि सर्वेषां मोक्षसाधनमुत्तमम् । त्यजतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक्परं पदम् ।।११।।

प्रकृतभाष्यस्य व्याख्यान्तरम्

एकवाक्यत्वतो यद्वा ऐकात्म्यज्ञानजन्मने । वेदशास्त्रस्य कृत्स्नस्य तथा पूर्वमवादिषम् ।।१२।।
प्रमाणानि च शास्त्राणि तत्प्रामाण्यं न चान्यतः । अज्ञातात्मावबोधित्वात्तथा पूर्वमवादिषम् ।।१३।।
यस्मिंश्चाविद्ययाऽध्यासः संसारानर्थलक्षणः । स्वाभाविक्या कृतो मिथ्या शुक्त्यादौ रजतादिवत् ।।१४।।

न कामस्तत्र परमफलम् । उक्तं हि—तेषां समवाये पूर्वः पूर्वो गरीयानिति ।
"धर्ममर्थं च कामं च प्रत्ययं लोकमेव च । पश्यन्नेतस्य तत्त्वज्ञो न च रागात्प्रवर्तते" ।। इति च
तत्तु वैराग्यद्वारा प्राप्ततत्त्वज्ञानस्य कैवल्यम् । यथाऽऽह—
"एवमर्थं च कामं च धर्मं चाप्याचरन्नरः । इहामुत्र च निःशल्यमत्यन्तं सुखमश्नुते" ।। इति
"तदेतत्कुशलो विद्वान्धर्मार्थाववलोकयन् । नातिरागात्मकः कामी प्रयुञ्जानः प्रसिध्यति" ।। इति च

न च साधारणसांप्रयोगिककन्यासंप्रयुक्तकभार्याधिकारिकपारदारिकवैशिकौपनिषदिकाद्यधिकरणेष्वर्थान्तरप्रतिपादनान्न यथोक्तार्थतेति वाच्यं तत्रार्थान्तरोपदेशस्य वैराग्यार्थत्वात् । यथाऽऽह—

"अधिकारवशादुक्ता ये चात्राऽऽचारवर्जिताः । तदनन्तरमत्रैव ते प्रयत्नान्निवारिताः" ।। इति
तदेवं शास्त्रान्तराण्यपि कामशास्त्रवत्परमसुखे ब्रह्मणि पर्यवस्यन्तीति भावः ।।४०९।।

वैशेषिकादिशास्त्राणामज्ञातात्मज्ञानार्थत्वेऽपि कथं वैनाशिकशास्त्रस्य तदर्थता तस्य नैरात्म्यपरत्वात् "नैरात्म्यमार्गमधिगम्य भवन्ति मुक्तास्तस्मादसावतिशयेन विचार्यतेऽत्र" इत्युक्तत्वादित्याशङ्क्याऽऽह—अनित्येति । स्फुटमित्यस्योभयतः संबन्धः । पदार्थानामनित्यत्वाद्युक्त्या तद्वैराग्यद्वारा प्रत्यग्ज्ञाने वैनाशिकदर्शनं पर्यवसितम् । यथाऽऽह—सर्वज्ञवचनार्थो नाम क्षणिकनैरात्म्यादिचातुरार्थ्यसत्यतत्त्वपरिज्ञानेन सकलसंसारदुःखनिवृत्त्याख्यः परमपुरुषार्थ इति । अतो न तद्दर्शनं नैरात्म्यसाधकं तत्प्रतिपादकाभावेन तदसिद्धेरित्यर्थः ।।४१०।।

सर्वेषामपि शास्त्राणां रागादिध्वस्तिद्वारा सम्यग्धीफले मुक्तौ स्थितिरित्येतदेव साधयितुं रागादित्यागो ज्ञानहेतुरित्यत्र मनमाह—त्याग इति । सर्वेषां रागादीनामिति यावत् । संबन्धग्रन्थे व्याख्यातमेतत् ।।४११।।

यथोक्तन्यायेन सर्वशास्त्राणामात्मज्ञानार्थत्वे मुमुक्षूणां क्षपणकादिपक्षेष्वपि यदृच्छया प्रवृत्तिः स्यात्तथाचाविचार्य यत्किंचित्प्रपद्यमानो निःश्रेयसात्प्रतिहन्येतानर्थं चर्च्छेदिति भाष्यासंगतिरित्याशङ्क्य प्रकृतभाष्यस्यार्थान्तरमाह—एकेति । कल्पान्तरप्रकटीकरणव्यग्रतया संधिर्न कृतः । सर्वस्य वेदरूपशास्त्रस्यैकवाक्यत्वादैक्यज्ञानजन्मार्थमारम्भ इत्यर्थः । कथमेकवाक्यत्वं तदाह—तथेति ।।४१२।।

किंच प्रमाणस्याज्ञातज्ञापकत्वात्प्रतीचोऽन्यस्याज्ञातत्वाभावाद्वेदाख्यशास्त्राणां च प्रमाणत्वात्तत्रैव तत्प्रामाण्यमित्याह—प्रमाणानीति । कथमज्ञातज्ञापकत्वं प्रामाण्यं कथं वा प्रतीचोऽन्यस्याज्ञातत्वराहित्यं तदाह—तथेति ।।४१३।।

पूर्वभाष्यावष्टम्भेन सर्वशास्त्राणां ब्रह्मात्मनि समन्वये साधिते विरोधसमाध्यर्थं यस्मिन्नित्यादिभाष्यं तस्य तात्पर्यमाह—यस्मिश्चेति । अध्यासस्य चतुर्विधख्यातीनामन्यतमत्वं वारयति—अविद्ययेति । अर्थाध्यासं संगृह्णाति—संसारेति । तस्य हेयत्वद्योतनार्थमनर्थपदम् । न चाऽऽपातिकमस्यानर्थत्वं किंतु निरूपणायां स्फुरतीति वक्तुं लक्षणविशेषणम् । अविद्याया मिथ्याज्ञानत्वेन सादित्वादनाद्यध्यासहेतुत्वासिद्धिर्न च मिथ्याज्ञानस्यैव तद्धेतुत्वमेकत्र तदभावादित्याशङ्क्याऽऽह—स्वाभाविक्येति । अविद्याया विद्याप्रागभावत्वादनादित्वेऽपि नाध्यासोपादानतेत्याशङ्क्याऽऽह—मिथ्येति । उभयविधाध्यासस्याभावेतरत्वात्तदुपादानाज्ञानस्यापि नाभावत्वमुपादानान्तराभावादिति भावः । आत्मन्यनात्माध्यासे दृष्टान्तः शुक्त्यादाविति ।।४१४।।

आत्मनि अनात्माध्यासासंभवः समाधिश्च

ननु सामान्यविज्ञानविशेषाज्ञानसंश्रयात् । जातरूप्यस्मृतेर्लोके मिथ्याज्ञानं प्रसिध्यति ।।१५।।
यत्राध्यासो यदध्यस्तं भेदसिद्धौ तयोर्मृषा । ज्ञानं जगति संसिद्धं सा चैकात्म्येऽतिदुर्लभा ।।१६।।
समस्तव्यस्तमैकात्म्यं येषां चापास्तभेदकम् । चोद्यमेतत्समानं स्यादुभयोरपि पक्षयोः ।।१७।।
न नः परिहृतेनार्थश्चोद्येनानेन कश्चन । प्रत्यङ्मोहैकहेतुत्वात्सर्वानर्थमृषामतेः ।।१८।।
अज्ञानमेव बाध्यं नो मानस्येह यतस्ततः । तच्चोद्यपरिहारोऽतः क्रियते नाफलत्वतः ।।१९।।
मिथ्याज्ञानातिरेकेण नान्यदज्ञानमिष्यते । येषां तान्प्रति चोद्यं स्यान्न त्वज्ञातात्मवादिनाम् ।।२०।।

अज्ञानस्य अध्यासहेतुत्वे आक्षेपः

नन्वज्ञानमवस्तुत्वात्कथं संसारकारणम् । मिथ्याज्ञानस्य वस्तुत्वात्तदेवास्त्विह कारणम् ।।२१।।
तथाच युक्तिमद्यत्नान्महद्भिरपि भाषितम् । अप्रामाण्यं पुनस्त्रेधेत्यत एतत्सुसंस्थितम् ।।२२।।

वैषम्यं शङ्कते—नन्विति। दृष्टान्ते कारणत्रयमस्ति दार्ष्टान्तिके तन्न दृष्टमात्मनो निःसामान्यविशेषत्वादनात्मनश्च साक्षिप्रत्यक्षत्वेन स्मृत्ययोगादित्यर्थः ।।४१५।।

किंच भेदाग्रहोऽध्यासव्यापकस्तदभावान्नाऽऽत्मन्यनात्माध्यास इत्याह—यत्रेति। अधिष्ठानारोप्ययोर्भेदे सति तदग्रहाद्भ्रान्तिर्दृष्टा । ऐकात्म्ये भेदसिद्धेर्दौर्लभ्यात्तदग्रहव्यापकाभावाद्व्याप्याध्यासासिद्धिरित्यर्थः ।।४१६।।

भेदाभेदवादे भेदाग्रहान्मिथ्याज्ञानोपपत्तिरित्याशङ्क्याऽऽह—समस्तेति। न हि भेदाभेदवादे सत्यपि भेदे तदग्रहसंभवो वस्तुग्रहे तन्मात्रस्याभेदवद्भेदस्यापि ग्रहप्रसङ्गात्, न च तौ वस्तुधर्मौ धर्मधर्मिभावस्य दुर्भणत्वात् तस्मादत्यन्ताभेदवादे भेदाभेदवादे च व्यापकाभावस्य तुल्यत्वाद्भ्रान्त्यनुपपत्तिश्चोद्यसाम्यमित्यर्थः ।।४१७।।

मायावादे कारणत्रयाभावान्न भ्रान्तिरिति चोद्यस्यानवकाशत्वान्न तेन तत्परिहार्यमिति सिद्धान्तयति—न न इति। कथं त्वत्पक्षे चोद्यस्यानवकाशत्वं तदाह—प्रत्यगिति। या हि सर्वानर्थरूपा मिथ्याबुद्धिस्तस्यास्तदधिष्ठाननिष्ठसाक्षिचैतन्याज्ञानस्यैव निरपेक्षकारणत्वान्न कारणत्रयाभावकृतचोद्यमस्मन्मतेऽवतरतीत्यर्थः ।।४१८।।

किंच भ्रमो माननिरस्यो न वा ? न चेद्बाधधीविरोधः। माननिरस्यश्चेत्तत्राऽऽह—अज्ञानमिति। इहेति मानभूमिरुक्ता। ततो माननिरस्यत्वाद्भ्रमस्याज्ञानत्वात्क्लृप्तकारणराहित्यात्तद्विषयचोद्यस्यानवकाशत्वात्तत्परिहारो न क्रियतेऽप्राप्तपरिहारस्याप्रयोजनत्वादित्याह—तदिति। अतःशब्दोऽप्राप्तपरामर्शी ।।४१९।।

कैस्तर्हीदं चोद्यं परिहर्तव्यं तदाह—मिथ्येति। येषां मिथ्याज्ञानातिरेकेणानाद्यनिर्वाच्यमज्ञानं नास्ति तान्प्रति कारणत्रयाभावे कुतोऽध्यास इति चोद्यावकाशात्तैस्तत्परिहार्यमित्यर्थः। अस्मत्पक्षे चोद्यस्यानवकाशादपरिहार्यतेति निगमयति—न त्विति। अज्ञातात्मविवर्तो जगदिति वदतामस्माकं मते यथोक्तचोद्यस्य निरवकाशत्वान्नैव परिहर्तव्यतेत्यर्थः ४२०।।

अज्ञानजत्वादध्यासस्य क्लृप्तकारणाभावे चोद्यस्यानवकाशादपरिहार्यत्वमुक्तमिदानीमज्ञानं नाध्यासहेतुरवस्तुत्वान्नभोनलिनवदिति शङ्कते—नन्विति। किं तर्हि संसारकारणं न हि कारणमन्तरेण कार्यं युक्तं तदाह—मिथ्याज्ञानस्येति। इहेति प्रकृतसंसारग्रहणम् ।।४२१।।

अज्ञानादन्यत् मिथ्याज्ञानं वस्तुभूतमसिद्धं यत्कारणमित्याशङ्क्याऽऽह—तथेति। अज्ञानं न कारणमवस्तुत्वान्मिथ्याज्ञानं तु वस्तुत्वात्कारणमित्येतदनुसारेणास्माभिरिव भट्टपादैरुक्तं न च तदमानं लोकसिद्धविभागविषयत्वेन युक्तिमत्त्वान्न चायमनास्थावादस्तात्पर्येणोक्तत्वान्न च महतां वचोऽप्रमाणं मन्वादिवचःस्वपि तत्प्रसङ्गादिति भावः। तदेव चोदनासूत्रस्थमाप्तवाक्यम्—

"अप्रामाण्यं त्रिधा भिन्नं मिथ्यात्वाज्ञानसंशयैः। वस्तुत्वाद्द्विविधस्यात्र संभवो दुष्टकारणात् ।।
अविज्ञाने तु दोषाणां व्यापारो नैव विद्यते। कारणाभावतस्त्वेवं तत्सिद्धं नस्त्वदुक्तिवत्[1] ।।" इति

१. त्वदुक्तिवत् = त्वन्मते यथा ।

### सिद्धान्तिनो विकल्पाः

किं भोः सदपि मानेन वस्तु साक्षान्निरस्यते । तस्मिन्निरस्ते किं शेषं यस्मिन्मानस्य मानता ।।२३।।
व्यञ्जकत्वात्प्रमाणानां मेयाभिव्यक्तितोऽपरम् । कार्यान्तरं न संभाव्यं नितरां वस्त्वपाक्रिया ।।२४।।
मिथ्याज्ञानं कथं वस्तु न हि मिथ्येति वस्तु सत् । मिथ्या तद्वस्तु चेत्युक्तिर्महतामेव शोभते ।।२५।।
स्वतोऽपि यदि सा वस्तु रज्ज्वां सर्पादिका मतिः । रज्ज्वात्मना तथाऽपीयमवस्त्वेवात्र बाध्यते ।।२६।।

### अज्ञानसाधनम्

मिथ्याज्ञानस्य कार्यत्वात्किं तत्कारणमुच्यताम् । अकारणं सत्कार्यं चेड्डिम्भकैरपि हस्यते ।।२७।।
रागादिकारणं चेत्स्यात्कार्यं सत्कारणं कथम् । अवस्त्वपि च वस्त्वेव वस्तुरूपात्तदन्यतः ।।२८।।

एवंरूपं संक्षिपति—अप्रामाण्यमिति । अज्ञानं मिथ्याधीः संशयधीरिति त्रिधा भिन्नमप्रमाणरूपमित्यज्ञानादिभेदे दर्शिते फलितमाह—अत इति । अज्ञानस्य ज्ञानानुत्पादकत्वान्न संसारहेतुता स्वापादावदृष्टत्वाद् इतरयोस्तु युक्तं तद्धेतुत्वं तयोरनर्थहेतुताया रज्जुसर्पभ्रान्त्यादौ दृष्टत्वादतो मिथ्याधीः संसारहेतुर्नाज्ञानमित्येतत्सिद्धं पूर्वं च मिथ्याज्ञानमुत्तरस्य हेतुरित्यर्थः ।।४२२।।

मिथ्याज्ञानादि माननिरस्यं न वेति सिद्धान्ती विकल्पयति—किमिति । आद्यमनुवदति—सदपीति । प्रत्यक्षादिसिद्धं सदपि वस्तु मानेन निरस्यते चेत्तेन सर्वस्यैव निरासप्रसङ्गान्निरस्ते सर्वस्मिन्नवशिष्टाभावान्निर्विषयस्य मानतैव न स्यादित्याह—तस्मिन्निति ।।४२३।।

मानस्य वस्त्वनिवर्तकत्वे हेत्वन्तरमाह—व्यञ्जकत्वादिति । अपरं निकृष्टमुत्कृष्टं वेत्यर्थः । न त्वपरशब्दोऽन्यविषयोऽन्तरशब्देन पुनरुक्तेरिति द्रष्टव्यम् । मिथ्याज्ञानादेर्मानानिवर्त्यत्वे तद्वैफल्यमग्रहनिवृत्तिमात्रस्याकिंचित्करत्वादिति द्वितीयो बहिरेव निरस्यः । मेयाभिव्यक्तिव्यतिरिक्तकार्याभावे मानस्य वस्तुनिरासित्वं दूरनिरस्तमित्याह—नितरामिति । न संभाव्येति संबन्धः ।।४२४।।

मिथ्याज्ञानस्य वस्तुत्वमुपेत्योक्तं तदेवासिद्धमित्याह—मिथ्येति । मिथ्या चेन्न वस्तु वस्तु चेन्न मिथ्येत्यत्र हेतुमाह—न हीति । यद्वस्तुसदिष्टं न तन्मिथ्यात्वं गच्छति यत्तु मिथ्या न तद्वस्तु सद्भवति तयोर्मिथो विरोधादित्यर्थः । ननु मिथ्याज्ञानस्य वस्तुत्वं वस्तुत्वात् द्विविधस्यात्र संभवो दुष्टकारणादित्युक्तं तत्राऽऽह—मिथ्येति । न हि व्याहतव्याहरणं महतामुद्भावयितुमुचितमिति भावः ।।४२५।।

रज्जुसर्पज्ञानादेः स्वरूपतो वस्तुत्वान्माननिवर्त्यत्वाच्च वस्तुतोऽपि तन्निरस्यतेत्याशङ्क्याऽऽह—स्वतोऽपीति । यद्यपि सर्पादिमतिः सर्पादिश्च रज्ज्वां दृश्यमानः स्वतो वस्तु तथाऽपि रज्ज्वात्मना सर्पादिस्तन्मतिश्चावस्त्वेवात्र रज्जौ बाधदृष्टेर्न च तदुभयमन्यत्राबाधादस्ति तत्राप्राप्तेरतो न वस्तु बाध्यमित्यर्थः ।।४२६।।

किंच मिथ्याज्ञानं कार्यमकार्यं वा ? आद्ये तद्धेतुत्वेनानाद्यज्ञानसिद्धिरिति मत्वाऽऽह—मिथ्येति । कार्यत्वेऽपि तस्य न त्वदिष्टमज्ञानं कारणमित्याशङ्क्य तर्हि तदनपेक्षं तत्सापेक्षं वेति विकल्पयति—किं तदिति । आद्यं दूषयति—अकारणमिति । डिम्भकैर्बालकैरिति यावत् । किमुत प्रामाणिकैरितिकैमुतिकन्यायार्थोऽपिशब्दः ।।४२७।।

द्वितीयमाश्रित्य शङ्कते—रागादीति । तदपि कार्यमकार्यं वेति विकल्प्याऽऽद्यं प्रत्याह—कार्यमिति । तस्य मूलकारणत्वासिद्धिरित्यर्थः । न चाकार्यं तत्प्रामाणिकं न च कारणदोषस्य निमित्तत्वेऽपि समवायित्वं, अद्रव्यत्वादनभ्युपगमाच्चातो मिथ्याज्ञानस्य कार्यत्वे तद्धेतुत्वेनानाद्यज्ञानसिद्धेः अकार्यत्वे तस्यैव तद्भावाद्भ्रमोपादानमनाद्यज्ञानं दुर्वारमिति भावः । यत्त्ववस्तुत्वात्तस्य न कारणतेति तत्राऽऽह—अवस्त्विति । तद्धि तुच्छत्वं वा वस्तुनोऽन्यत्वं वा वस्तुत्वानधिकरणत्वं वा ? नाऽऽद्योऽसिद्धेर्यदपि वस्तुरूपात्तस्याज्ञानस्यान्यत्वात्तदवस्तूपपद्यते तथाऽपि वस्त्वेवापरोक्षतया तुच्छव्यावृत्तेः द्वितीये वस्त्वन्तरे व्यभिचारः । तृतीये त्वसिद्धिर्वस्तुत्वानधिकरणत्वस्य तुच्छत्वानतिरेकात् । तस्यचाऽसिद्धेरुक्तेः । न चैवमाद्यतृतीययोः पुनरुक्तिः ब्रह्मणो वस्तुत्वानधिकरणस्यैवातुच्छत्वात् । परं प्रति च तदनतिरेकवचनान्न च तं प्रत्येव पौनरुक्त्यं संभावनोपनीतपक्षपराकरणाविरोधात् । न च ब्रह्मान्यत्वमेवाज्ञानस्यावस्तुत्वं तस्मिन्ननिर्वाच्ये तदसिद्धेरिति भावः ।।४२८।।

उपात्तमेयरूपत्वं मानानां सत्यतोच्यते । तद्बलेनैव मेयस्थं घ्नन्ति मोहादि नान्यतः ।।२९।।
तद्विपर्ययतो मिथ्या सर्वं मोहादि भण्यते । वस्त्वसाधारणं रूपं मोहादेर्न प्रमीयते ।।३०।।
न च वस्तुसतत्त्वं तद्बाधात्तस्य प्रमाणतः । मेयप्रबोधनं मुक्त्वा न मितेः सत्यताऽन्यतः ।।३१।।
कारकाणां हि सत्यत्वं स्वकार्यापेक्षयेष्यते । इतोऽन्यथा तत्सत्यत्वं निष्फलं न च लभ्यते ।।३२।।

मोहादेर्मिथ्यात्वे प्रमाणान्तरम्

यद्वस्तु स्वात्मनैवास्ति तत्परार्थं न बोधवत् । पारार्थ्येनैव सद्यच्च तत्परस्माद्बिरुङ्न सत् ।।३३।।
सर्वमन्यानपेक्षं सदीक्ष्यमाणं स्वमात्रया । स्वात्मरूपात्पृथग्रूपं न वस्तूत्प्रेक्ष्यतेऽण्वपि ।।३४।।
आत्मनैव स्वभावेन वस्त्वात्मानं बिभर्ति हि । नाऽऽत्मनो विद्यतेऽपेक्षा वस्तुनोऽन्यसमाश्रया ।।३५।।
तस्मादविद्यासंभूतं नानात्वं प्रत्यगात्मनि । ब्रह्मास्मीति हि तद्ध्वंसान्न क्वचिद्भेदधीर्यतः ।।३६।।

अथाज्ञानादि सत्यं तुच्छव्यावृत्तत्वादात्मवदित्यनुमीयते तत्र मानवन्मेयवद्वा सत्यतेति विकल्प्याऽऽद्यं दूषयितुं मानसत्यतारूपमाह—उपात्तेति । विषयीकृतमेयाकारभजनमेव न मानसत्यता किंतु मेयगताज्ञानादिनिवर्तनमपीत्याशङ्क्याऽऽह—तद्बलेनेति । स्वातन्त्र्येण मानानामलब्धात्मनां मेयस्थमोहाद्यध्वंसित्वान्मेयमनुरुध्यैव तद्ध्वंसित्वात्तदाकारभजनमेव सत्यतेत्यर्थः ।।४२९।।

मोहादेरपि तथाविधसत्यतामाशङ्क्याऽऽह—तद्विपर्ययत इति । मानविपर्ययमेव मोहादौ साधयति—वस्त्विति । न हि मोहादिना मानादिवद्वस्तुनोऽसाधारणरूपं मीयते तस्यामानत्वादतो मानवन्न तस्य सत्यतेत्यर्थः ।।४३०।।

मेयवन्मोहादेः सत्यतेति पक्षं प्रत्याह—न चेति । तन्मोहादि वस्तुवत्सतत्त्वं सत्यं न चेति योजना । अबाध्यत्वं हि तस्य सत्यत्वं तन्न मोहादावस्ति माननिरस्यत्वादित्याह—बाधादिति । मानस्य मेयबोधनं विना स्वरूपेण सत्यत्ववन्मोहादेरपि स्यादित्याशङ्क्य दृष्टान्तं दूषयति—मेयेति ।।४३१।।

मेयवन्मानवद्वा सत्यत्वाभावेऽपि कारकवदज्ञानादेः सत्यत्वमित्याशङ्क्य तदर्थक्रियाकारित्वं वा परमार्थत्वं वेति विकल्प्याऽऽद्यमङ्गीकरोति—कारकाणामिति । तथाविधं सत्यत्वमज्ञानादेरपीष्टमिति शेषः । दृष्टान्तदार्ष्टान्तिकयोरुक्तसत्यतायामुभयसंप्रतिपत्त्यर्थो हिशब्दः । द्वितीयं प्रत्याह—इतोऽन्यथेति ।।४३२।।

प्रयोजनप्रमाणयोरभावात्परमार्थसत्यत्वं मोहादेर्नेत्युक्त्वा तत्रैव हेत्वन्तरं वक्तुं भूमिकां करोति—यदिति । स्वेनैव रूपेण विद्यमानं यद्वस्तु तन्न परतन्त्रं यथा चिदात्मेत्यर्थः । तथाऽपि मोहादौ किमायातं तदाह—पारार्थ्येनेति । यन्मोहादि परतन्त्रत्वेनैवास्ति तत्परस्मात्पृथङ्न वर्तते यथा रज्जुसर्पादि । तथा च विमतं मिथ्या जडत्वात्संमतवदित्यनुमातुं शक्यमित्यर्थः ।।४३३।।

मोहादिद्वैतस्य कल्पितत्वे हेत्वन्तरमाह—सर्वमिति । घटः सन्पटः सन्घटः स्फुरति पटः स्फुरतीत्यादिना स्वरूपतावन्मात्रतया नित्यसद्रूपतया संविदा दृश्यमानं सर्वं घटादि स्वप्रकाशस्फुरणात्मकं सदेव संपद्यते तद्घटादि संविन्मात्रे कल्पितमित्यर्थः । तस्य सदनुभवात्पृथक्त्वं पृथगुपलब्धेरित्याशङ्क्याऽऽह—स्वात्मेति । स्वात्मनः सतो रूपाच्चितोऽन्यदल्पमपि न वस्तु सदस्त्यन्यस्य नभोनलिनकल्पत्वाच्चितोऽन्यच्च नेक्ष्यते जडत्वात्स्वतोऽदृष्टेश्चिता संबन्धस्य दुर्वचनत्वादतः सच्चिदात्मनि कल्पितं जगच्चकास्तीत्यर्थः ।।४३४।।

आत्मनोऽपि वस्तुत्वादितरवत्कल्पितत्वान्न तत्कल्पनाधिष्ठानतेत्याशङ्क्याऽऽह—आत्मनेति । स्वभावेनेत्यकल्पिताकारेणेत्यर्थः । आत्मनः स्वमहिमप्रतिष्ठत्वं श्रौतमिति हिशब्दार्थः । सोऽपि वस्तुत्वादनात्मवदपेक्षतेऽधिष्ठानमित्याशङ्क्याह—नेति । न हि स्वमहिमप्रतिष्ठोऽन्यापेक्षो युक्तो न च वस्तुत्वमात्मानात्मसाधारणमनात्मवस्तुताग्राहिमानाभावादात्मनि तस्य स्वरूपत्वादित्यर्थः ।।४३५।।

आत्मनोऽकल्पितत्वेनाधिष्ठानत्वसंभवे फलितमाह—तस्मादिति । अन्वयव्यतिरेकाभ्यामाविद्यमात्मनि द्वैतमित्यर्थः । बाध्यत्वाच्च तस्य कल्पितत्वमित्याह—ब्रह्मेति । इतिशब्देनैक्यज्ञानोक्तिः । तस्याज्ञाननिवर्तकत्व-

तत्त्वज्ञानेन मिथ्याज्ञानस्य बाधः

मित्युत्पत्तावनुत्पत्ति[1]र्विरोधाद्बाध्यते यतः । तद्बाधे नाप्यपेक्षाऽस्ति मिथ्याधीबाधनं प्रति ॥३७॥
मिथ्याधियोऽपि बाध्यत्वमज्ञानैकसमन्वयात् । मूलध्वस्तौ हतं तच्चेन्मिथ्याधीः किं करोति नः ॥३८॥
मेयरूपानुरोधित्वं मिथ्यासंशययोर्यदि । सम्यग्ज्ञानात्तयोर्भेदो गम्यतां केन हेतुना ॥३९॥
अज्ञानं संशयत्वान्नो मिथ्याज्ञानात्तथैव च । तयोस्तत्त्वविवक्षायामज्ञानं तत्त्वमुच्यते ॥४०॥
अज्ञात एव यद्यत्र ज्ञाते तस्मिन्न तद्भवेत् । सर्वत्रासिद्धिरूपत्वान्मिथ्याज्ञानमिदं मतम् ॥४१॥
मिथ्याज्ञानस्य वस्तुत्वं येनैव स्यात्सदात्मना । अज्ञानस्यापि तेनैव सत्यत्वं केन वार्यते ॥४२॥
रज्जुसर्पो यथा रज्ज्वा सात्मकः प्राग्विवेकतः । अवस्तु सन्नपि ह्येष इति पूज्यैरपीरितम् ॥४३॥
स्वतस्तु सत्यता साक्षान्नोभयोरपि विद्यते । अविचारितसिद्धित्वान्न स्वतः परतोऽपि ते ॥४४॥

प्रसिद्ध्यर्थो हिशब्दः । ब्रह्मात्मैक्यज्ञानात्तदज्ञानध्वस्तौ तत्कार्यभेदतद्धियोर्ध्वंसाद्भेदस्तद्धीर्वा न क्वचिदपि स्तामतोऽद्वयं प्रत्यङ्मात्रं शिष्टमित्यर्थः ॥४३६॥

तत्त्वज्ञानादज्ञानबाधेऽपि मिथ्याज्ञानस्य न बाधस्तस्याज्ञानत्वानङ्गीकारादतो भेदज्ञानमबाध्यमित्याशङ्क्याह—मितीति । तत्त्वज्ञानोत्पत्तौ तदनुत्पत्तिरूपमज्ञानं बाध्यते तयोर्विरोधादतस्तस्याज्ञानस्य बाधे सति मिथ्याज्ञानबाधं प्रति पृथगपेक्षा नैवास्तीत्यर्थः ॥४३७॥

मिथ्याधियो बाधो नापेक्षितश्चेदबाधितैव सा स्यादित्याशङ्क्याऽऽह—मिथ्येति । अज्ञाने बाधिते मिथ्याज्ञानमप्ययत्नतो बाध्यते तत्कार्यत्वात्तत्तादात्म्यादित्यर्थः । ज्ञानादज्ञानध्वस्तौ मिथ्याधियोऽपि ध्वस्तिं वदता तस्या वस्तुत्वं निरस्तम् । अथ संसारहेतुत्वं निरस्यति—मूलेति । मिथ्याज्ञानं तदित्युच्यते । न तावत्सा सती संसारहेतुस्तदा तन्मूलाज्ञानस्यैव तद्धेतुत्वसंभवान्निगमनभाष्ये च कर्तृभोक्तृत्वप्रवर्तक इत्यध्यासस्य मूलाज्ञानद्वारैव तद्धेतुत्वमुक्तं तदभावे तस्यैवाभावान्नाप्यसती तद्धेतुरसत्त्वादेवार्थक्रियाकारित्वाभावादिति भावः ॥४३८॥

किंच यस्य मिथ्याज्ञानादेः संसारहेतुत्वं स यथार्थोऽयथार्थो वा ? नाऽऽद्य इत्याह—मेयेति । तयोर्यथार्थत्वे सम्यग्धीसंकरः स्यादित्यर्थः ॥४३९॥

न द्वितीय इत्याह—अज्ञानमिति । मिथ्यासंशयधियोरयथार्थत्वं चेदज्ञानत्वमेव स्यात् । तथा हि—"अस्मिन्विषयेऽस्माकं संशयस्य सत्त्वादज्ञानमस्ति, तथैव विषयान्तरे मिथ्याज्ञानस्य सत्त्वादज्ञानं वर्तते" एवं लोकव्यवहारात्तयोरज्ञानमेव तत्त्वं निश्चितम् । अतस्तत्स्वरूपविवक्षायामज्ञानमेव तद्विवेकिभिरुच्यते । तथाच तयोः संसारहेतुत्वेऽप्यज्ञानस्यैव तद्धेतुतेत्यर्थः ॥४४०॥

तयोरज्ञानत्वे हेत्वन्तरमाह—अज्ञात इति । यस्मिन्नज्ञाते सत्येव यन्मिथ्याज्ञानादि जायते तस्मिन्ज्ञाते तन्न स्यात्तस्मादज्ञाते वस्तुनि मिथ्याज्ञानादेर्भावाज्ज्ञाते चाभावात्तदज्ञानशरीरमतोऽन्वयव्यतिरेकविरोधान्नेदमज्ञानादर्थान्तरं प्रकारान्तरेण सर्वत्रासत्त्वादित्यर्थः ॥४४१॥

किंच तस्याधिष्ठानरूपेण स्वरूपेण वा वस्तुतेति विकल्प्याऽऽद्ये तद्रूपेण तत्त्वमज्ञानस्यापि तुल्यमित्याह—मिथ्याज्ञानस्येति ॥४४२॥

अज्ञानादेः सर्वस्य प्रत्यग्रूपेण वस्तुत्वे भाष्यकारोक्तिं प्रमाणयति—रज्जुसर्प इति । कूटस्थेनाऽऽत्मना तथेति चतुर्थपादः । एष इति द्वैतप्रपञ्चोक्तिः । प्राग्विवेकत इत्युभयत्र संबध्यते ॥४४३॥

मिथ्याज्ञानादेरज्ञानदशायामधिष्ठानात्मना वस्तुत्वमुपेत्य स्वरूपेण वस्तुत्वपक्षं प्रत्याह—स्वत इति । उभयोर्मिथ्याधीसंशययोरिति यावत् । अज्ञानमपिना समुच्चितम् । तुशब्दोऽवधारणार्थः क्रियापदानन्तरनिवेशी । साक्षान्मानवशादिति यावत् । अज्ञानादेः स्वरूपेण वस्तुता न प्रामाणिकीत्यत्र हेतुमाह—अविचारितेति । तदेव

---

१. अनुत्पत्तिशब्देन अनाद्यज्ञानं विवक्षितं न तु ज्ञानप्रागभावमात्रं तन्निवृत्तेः मिथ्याज्ञानबाधप्रयोजकत्वाभावात्—( न्या० ) । २. तदनुत्पत्तिः मिथ्याज्ञानानुत्पत्तिः ।

तदेवानुप्रविश्येति तत्त्वं यत्पारमार्थिकम् । सच्च त्यच्चादिकां भित्तिं[1] मोहात्प्रापदिति श्रुतिः ॥४५॥

सामान्यादित्रयस्य भ्रमहेतुत्वनिरासः

न चापि त्रयसद्भावे मिथ्याज्ञानं जगत्यपि । मोहमात्रप्रयुक्तत्वान्न सामान्यात्स्मृतेश्च तत् ॥४६॥

सामान्यान्तरनिर्मुक्तं[2] तथाऽसाधारणैरपि । असामान्यत्वमेवैति शौक्ल्यमन्यानपेक्षतः ॥४७॥

न चेदं स्मरणाज्जातं नापि सामान्यहेतुजम् । शुक्लस्य गृह्यमाणत्वात्पुरोदेशावलम्बिनः ॥४८॥

एवं प्रत्यक्ष एतस्मिञ्शुक्तिकोदरवर्तिनि । तद्विरुद्धमभूज्ज्ञानं रजताभमबोधजम् ॥४९॥

परमते भ्रान्त्यसंभवनिरूपणम्

अप्रत्यक्षं[3] मतं येषां ज्ञानं तान्प्रति भण्यते । इदं रजतमित्येतज्ज्ञानं शुक्तौ कुतोऽन्वभूत् ॥५०॥

कथं तदाह—नेति । अज्ञानसहिते संशयमिथ्याज्ञाने द्वितीयया निर्दिश्येते । न हि तत्प्रत्यग्रूपेण सिध्यति विरोधादैक्यायोगान्नापि भेदेन तस्य धर्मत्वेन स्वरूपत्वेन च दुर्वचत्वान्न च तत्स्वतः स्फुरति जडत्वान्नापि परतोऽसम्बन्धादतस्तदविचारितससास्फूर्तिकमित्यर्थः ॥४४४॥

अज्ञानादि प्रतीचो भिन्नं तस्य स्वरूपेण वस्तुत्वादन्यस्य तदभावात्तत्कथमविचारितसिद्धित्वमित्याशङ्क्याऽऽह—तदेवेति । "तत्सृष्ट्वा तदेवानुप्राविशत्तदनुप्रविश्य सच्च त्यच्चाभवदि"त्याद्या श्रुतिर्यत्पारमार्थिकं तत्त्वं तदेव सच्च त्यच्चेत्यादिकां भित्तिमज्ञानात्प्राप्नवदित्याहेति योजना । तथा च परस्यैव तेन तेनाऽऽत्मनाऽवस्थानात्पृथक्प्रथनमविचारितरमणीयमिति भावः ॥४४५॥

अनाद्यज्ञानस्य संसारहेतुत्वं साधितम् । यत्तु सामान्यज्ञानाद्विशेषाज्ञानात्तदारोप्यस्मृतेश्च लोके मिथ्याज्ञानमिति तत्राऽऽह—न चेति । लोके सर्वत्रापि मिथ्याज्ञानं त्रयसद्भावे सिध्यतीति नैव प्रतिज्ञातुं शक्यमिति योजना । संसारभ्रमस्याज्ञानजत्ववद्रजतादिभ्रमस्यापि तन्मात्रजत्वसंभवादित्याह—मोहेति । उक्तदृष्टान्तद्योती पूर्वोऽपिशब्दः । चकारस्त्ववधारणे व्याख्यातः । सामान्यग्रहादारोप्यस्मृतेश्च मिथ्याधीर्दृष्टा तत्कथमज्ञानमात्रजत्वं तत्राऽऽह—नेति । मिथ्याज्ञानं तच्छब्दार्थः ॥४४६॥

गृह्यमाणसामान्यस्य भ्रान्तिहेतुत्वाभावं साधयति—सामान्यान्तरेति । अस्यार्थः । पुरोवर्ति शुक्लं द्रव्यं शुक्तित्वाद्यपेक्षया सामान्यान्तरैः सत्त्वजडत्वादिभिः रजतभ्रान्तिहेतुत्वेन गृह्यमाणैर्निर्मुक्तं, यथेष्टं पुरोवर्तिनां ज्ञातानामपि तेषां चाकचक्यादीनां धर्माणां भ्रमाहेतुत्वात्तथा शुक्तित्वादिभिरसाधारणैरपि तन्निर्मुक्तं तेषामपि भ्रमहेतुत्वेनाग्रहात् । तच्च पुरोवर्ति शुक्लं द्रव्यं गृह्यमाणं स्वयमेव सामान्यभावमेति तस्यान्यापेक्षाभावेन असामान्यत्वात्, न च सादृश्यधीर्भ्रान्तिहेतुः पीतशङ्खादिभ्रान्तिषु व्यभिचारात् । क्वचिदारोप्यरूप्यादिसंस्कारोद्बोधने सादृश्यस्योपयुक्तत्वेऽपि तदुद्बोधनस्य दृष्टयादिकृतत्वे सादृश्योपयोगानवगमादिति ॥४४७॥

आरोप्यस्मृतेर्भ्रमाहेतुत्वमनुभवपूर्वकं साधयति—न चेति । यथा सामान्याद्गृह्यमाणाद्धेतोर्न भ्रान्तिजन्मेत्युक्तं तथा नाऽऽरोप्यस्मरणादपि तज्जातमिति योजना । तत्र हेतुमाह—शुक्लस्येति । पुरोवर्तिशुक्लद्रव्यस्य रूप्यारोपविषयतया गृह्यमाणत्वादिति हेत्वर्थः ॥४४८॥

इदंग्रहस्य रूप्यस्मृतेश्च भ्रमाहेतुत्वे फलितमाह—एवमिति । साधारणग्रहणादेर्भ्रान्त्यहेतुत्वे सति शुक्त्यवच्छिन्ने प्रत्यक्चैतन्ये साक्षिण्यवस्थिताज्ञानजं रजताकारं ज्ञानमेष्टव्यं तच्च ज्ञानविरुद्धत्वेन तन्निरस्यत्वात्तदज्ञानजं युक्तमित्यर्थः ॥४४९॥

स्वपक्षे भ्रान्तिमुक्त्वा परपक्षे तदसंभवमभिधातुं पृच्छति—अप्रत्यक्षमिति । येषां भ्रान्तिज्ञानं स्वानुभवसिद्धानाद्यज्ञानाजन्यमिष्टं तान्प्रति चोद्यते शुक्ताविदं रजतमिति ज्ञानं सामान्याद्वा रजताद्वा द्वाभ्यां वा कुतो जातमिति वाच्यमिति योजना ॥४५०॥

---

१. भित्तिः = भेदः ।

२. निर्मुक्तं प्रतीयत इत्यर्थः ।

३. अप्रत्यक्षं = प्रत्यक्षं अज्ञानं कारणं न विद्यते यस्य तत् अप्रत्यक्षं ( न्या० ) ।

**विशिष्टाकृतिदेशेहाकालधर्मं प्रतीयते । शुक्तिकाज्ञानतो नर्ते वस्त्वीदृक्साध्यतेऽन्यतः ॥५१॥**
**असाधारणधर्मोत्थो न साधारणकारणः । रजतं शुक्तिकेत्यादिव्यपदेशोऽप्रसिद्धितः ॥५२॥**
**न चेह राजता धर्माः कुतो ज्ञानं तदाकृति । न ह्याकारमनालिङ्ग्य ज्ञानमाकारवत्क्वचित् ॥५३॥**
**शुक्तिकानुविधायित्वान्नेदं स्मर्तव्यसंश्रयम् । अनालिङ्गितबाह्यार्था बुद्धावेव स्मृतिर्यतः ॥५४॥**
**धर्मादिहेतुकं येऽपि परिणामं प्रचक्षते । सम्यग्ज्ञानेऽपि तुल्यत्वादनाश्वासस्तथा सति ॥५५॥**
**भूतकालोपलब्धोऽर्थः स्मृतेश्चेद्गोचरो मतः । नासौ भूतात्मनाऽज्ञायि भूतज्ञानमनाश्रयम् ॥५६॥**
**स्वोत्पत्तिव्यतिरेकेण ज्ञानकालोऽपि नेष्यते । अगत्वरं सद्विज्ञानं भूतार्थं ढौकते कथम् ॥५७॥**

तत्राऽऽद्यं दूषयति—विशिष्टेति । आकृती रजतत्वजातिर्देशस्तु पुरोवर्तिभूप्रदेश ईहा रजतोचिता चेष्टा कालो वर्तमानो धर्मस्त्रिकोणत्वादिरेतैर्विशिष्टैरुपेतं रजतं भ्रान्तौ भातं सत्यरजतसदृशं शुक्त्यज्ञानादन्यतः सामान्यमात्रान्न सिध्यति किंतु तदेव तत्कारणं; सामान्यान्तरनिर्मुक्तमित्यत्र सामान्यग्रहस्य हेतुत्वं निरस्तमिह तु सामान्यस्यैव निरस्यत इत्यपौनरुक्त्यमिति भावः ॥४५१॥

असाधारणरूपेण रूप्यमाणेऽपि तत्कारणं सामान्यमेव किं न स्यादित्याशङ्क्य विषयत्वेन विधान्तरेण वा तस्य कारणतेति विकल्प्याऽऽद्यं प्रत्याह—असाधारणेति । प्रत्ययो विशेष्यते विशेषाकारोत्थमिथ्याज्ञानस्य सामान्यं विषयत्वेन न कारणं विशेषज्ञाने सामान्यस्य विषयत्वाप्रसिद्धेरित्याह—अप्रसिद्धित इति । न द्वितीयो, न हि रजतं शुक्तिकेति वा सर्पो रज्जुरिति वा व्यपदेशोऽस्ति । तद्वन्न प्रकारान्तरेण सामान्यस्य रूप्यधीहेतुत्वं न हि तस्य कर्तृत्वादिसंभवोऽप्रसिद्धेरिति मत्वाऽऽह—रजतमिति । अत्रापि-पूर्वार्धान्नञनुषङ्गः ॥४५२॥

कल्पान्तरं निरस्यति—न चेति । देशान्तरस्थस्य रूप्यस्य तद्धर्माणां च वलयकरणयोग्यत्वादीनां पुरोदेशेऽसत्त्वान्न भ्रान्तिज्ञानस्य तदाकारत्वमतो देशान्तरस्थरूप्यस्य न विषयत्वेन भ्रान्तिहेतुत्वं नापि प्रकारान्तरेणाप्रसिद्धेरित्यर्थः । एतेन तृतीयोऽपि प्रत्युक्तः । पुरोवर्तिसाधारणाकारस्य देशान्तरस्थरूप्याकारस्य च विशिष्टज्ञाने विषयत्वेन विधान्तरेण वा हेतुत्वायोगात् । ननु निराकारमेव भ्रान्तिज्ञानं न तत्सामान्यं विशेषं वाऽऽलिङ्गतेऽन्यथा भ्रान्तित्वायोगात्तत्राऽऽह—न हीति । आकारमनालम्ब्य क्वचिदपि भ्रान्तावभ्रान्तौ वा ज्ञानं नोपपद्यते सर्वं हि ज्ञानमाकारवद्दृश्यते तदत्रैव विशिष्टं रूप्यमज्ञानजमेष्टव्यमित्यर्थः ॥४५३॥

रूप्यधियः स्मृतित्वेनाप्रात्यक्ष्यान्न पुरोवर्त्यालम्बनं किंतु तटस्थं रूप्यमित्याशङ्क्याऽऽह—शुक्तिकेति । शुक्तीदमंशात्मना रूप्यस्य प्रतीतेस्तज्ज्ञानस्य पुरोवर्त्यनुसारित्वान्नेदं स्मर्यमाणं गोचरयत्यतो न स्मृती रूप्यधीरित्यर्थः । रूप्यधियोऽस्मृतित्वे हेत्वन्तरमाह—अनालिङ्गितेति । अतो रूप्यधीर्न स्मृतिर्बाह्यार्थवत्त्वादिति शेषः । कथं तर्हि स पितेत्यादिस्मृतावर्थवत्त्वप्रतीतिरित्याशङ्क्य बाह्यार्थाभावेऽपि प्रागनुभूतपित्रादिवासनात्मकबुद्धावेव तत्परिणामतया तदवस्थितेरित्याह—बुद्धाविति ॥४५४॥

नन्वस्मृतिरपि सा नाज्ञानजा शुक्तेरेव वस्तुतो रूप्याकारेणादृष्टादिवशात्तज्ज्ञानात्मना चाऽऽत्मनो बुद्धेर्वा तद्वशादेव परिणामादत आह—धर्मादीति । यथोक्ते परिणामे सति तन्मते सर्वत्र तस्य तुल्यत्वाद्भ्रान्ताविव सम्यग्ज्ञानेऽप्यरूप्यस्य रूप्यात्मना धीरूप्यस्य वेति संशयान्न क्वचिदर्थनिश्चयः स्यादित्यर्थः ॥४५५॥

निरस्ते परिणामवादिन्यनालिङ्गितबाह्यार्था स्मृतिरित्यत्र चोदयति—भूतेति । अतो रूप्यधियो बाह्यार्थवत्त्वेऽपि स्मृतित्वसिद्धिरिति शेषः । असावर्थो भूतात्मना पूर्वं न ज्ञातो न चानुभवमतिक्रम्य स्मृतिरतो भूतार्थस्मरणं युक्त्यवष्टम्भशून्यमिति परिहरति—नासाविति ॥४५६॥

स्मृतेर्भूतार्थत्वेऽपि भ्रान्तेस्तदभावात्तत्र वर्तमानतया रूप्यादिदृष्टेस्तस्या न स्मृतितेति मन्वानः स्मृतेर्भ्रान्तेश्च न भूतार्थतेत्यत्र हेत्वन्तरमाह—स्वोत्पत्तीति । न हि क्षणिकस्य ज्ञानस्योत्पत्तिक्षणेतरक्षणे सत्त्वं क्षणिकत्वविरोधादतोऽपि वर्तमानं ज्ञानं न भूतार्थं स्यादित्यर्थः । उत्पत्त्यवस्थायामेव ज्ञानं गत्वा कालान्तरस्थमर्थं स्पृशतीत्या-

अविलुप्तार्थविज्ञानो यद्यात्माऽभ्युपगम्यते । सर्वेषां सर्वविज्ञानात्सर्वज्ञत्वं भवेद्ध्रुवम् ॥५८॥
आश्रिताश्रयसंबन्धः कार्यकारणयोः स्मृतः । वर्तमानात्मगं ज्ञानमतीतार्थं स्पृशेत्कथम् ॥५९॥
सम्यग्ज्ञानेऽपि चास्त्येतत्त्रयं यद्भ्रुवतेरितम् । प्रत्यभिज्ञाय तदिदमज्ञातं वस्त्ववैति हि ॥६०॥
तथा सति मृषाज्ञानं सर्वत्रैव प्रसज्यते । मुक्त्वैकं प्रत्यगात्मानं न तत्रास्ति त्रयं यतः ॥६१॥

भ्रान्तेरज्ञानजत्वे मानम्

यस्मिन्सत्येव यत्कार्यं न भवेदेव चासति । तत्स्वकार्ये स्वतन्त्रत्वादुच्यते कारणं बुधैः ॥६२॥
स्वत आकारवत्किंचित्परतश्चापि दृश्यते । शुक्तिमृत्स्फटिकाद्येवं ज्ञानं किं नाभ्युपेयते ॥६३॥

शङ्कयाऽऽह—अगत्वरमिति । न च तर्कशास्त्रे शब्दवदर्थस्याऽऽगमनं कालान्तरस्थत्वविरोधात्सर्वत्र च गमनानभ्युपगमादिति भावः ॥४५७॥

न हि द्रष्टुरित्यादिश्रुत्या ज्ञानस्य क्षणिकत्वासिद्धिमाशङ्कयाऽऽह—अविलुप्तेति । स्वरूपज्ञानस्य नित्यत्वेऽपि विषयज्ञानस्य न नित्यत्वमतिप्रसङ्गादित्याह—सर्वेषामिति ॥४५८॥

अथ स्थिरमपि ज्ञानमात्मनोऽन्यत्र स्थास्यति तत्कथमात्मनः सर्वज्ञत्वं तत्राऽऽह—आश्रितेति । न तावत्ते स्वतन्त्रं नित्यं ज्ञानमस्ति । न च तस्याऽऽत्मनोऽर्थान्तरमाश्रयः कार्यकारणयोरिव ज्ञानात्मनोराश्रिताश्रयसंबन्धस्य प्रसिद्धत्वादतो ज्ञानस्य नित्यत्वायोगात्तस्य क्षणिकत्वादि दुर्वारमित्यर्थः । तस्य क्षणिकत्वमात्मनिष्ठत्वं चेति स्थिते फलितमाह—वर्तमानेति ॥४५९॥

रूप्यधियः स्मृतित्वासंभवान्न देशान्तरस्थं रूप्यं तद्धेतुरित्युक्त्वा सामान्यादित्रयजन्यं ज्ञानं भ्रान्तिरेवेति वा सामान्यादित्रयजन्यैवेति वा विवक्षितमिति विकल्प्याऽऽद्यं प्रत्याह—सम्यगिति । कथमिति चेद्यत्राज्ञातं ज्ञायते तत्र ज्ञाताज्ञातयोः सामान्यरूपं गम्यते विशेषाग्रहश्च संभाव्यते न हि केनचिदपि ज्ञानेन सर्वात्मनाऽर्थो गृह्यते स्मृतिश्च तत्रास्ति तदज्ञातं वस्तु ज्ञायते मयेति प्रत्यभिज्ञायेदं वस्तु लोको यतोऽवगच्छतीति त्रयं सम्यग्ज्ञाने संपादयति—प्रत्यभिज्ञायेति ॥४६०॥

भवतु सम्यग्ज्ञाने त्रयं किं तावतेत्यत आह—तथेति । कारणत्रयजन्यं मिथ्याज्ञानमेवेत्यभ्युपगमादित्यर्थः । ज्ञानमात्रस्य मिथ्यात्वमिष्टमेवेति शून्यवादी मन्यते तं प्रत्याह—मुक्त्वेति । प्रत्यगात्मनः सामान्यविशेषभावविनिर्मुक्तत्वान्नित्यापरोक्षत्वाच्च तस्मिन्कारणत्रयस्य निरवकाशत्वादित्याह—न तत्रेति ॥४६१॥

द्वितीयं दूषयति—यस्मिन्निति । स्वतन्त्रत्वं समर्थत्वमज्ञाने सत्येव भ्रान्तिदृष्टेरसति चादृष्टेस्तदेव तत्कारणमन्वयव्यतिरेकवतो लोके कारणत्वप्रसिद्धेः सामान्यादित्रयस्य भ्रमानुविधायित्वं पुनरग्रे निराकरिष्यति निराकृतं च पुरस्तादित्यर्थः ॥४६२॥

भवतु भ्रान्तेरज्ञानजत्वं तथाऽपि रूप्यज्ञानमाकारवन्न वा ? आद्ये स्वतो वा परतो वा ? प्रथमे विषयाकारभजनायोगो, न खल्वाकारवत्याकारान्तरमर्थ्यते अर्थेनैव[1] विशेषो हीत्यादिन्यायविरोधश्च । परतश्चेत्स्वतो निराकारता । द्वितीयेऽपि न विषयाकारभजनमाकाररराहित्यस्वरूपविरोधादतो न सालम्बना भ्रान्तिरित्याशङ्कयाऽऽह—स्वत इति । चकारोऽवधारणार्थः स्वतःशब्देन संबध्यते । तत्र दृष्टान्तमाह—शुक्तीति । यथा स्वतः शुक्तिराकारवत्येव रूप्याकारं गृह्णाति मृदप्याकारवती स्वतो घटाद्याकारं भजते स्फटिकोऽपि स्वभावेनाऽऽकारवानेवालक्तकाद्याकारं धारयतीत्यर्थः । अनेकान्दृष्टान्तान्प्रतिपत्तिसौकर्यार्थं प्रदर्श्य दार्ष्टान्तिकमाह—एवमिति । उक्तदृष्टान्तानुसारेण स्वतो ज्ञानस्याऽऽकारवत्त्वेऽपि विषयाकारभजनसंभवान्न भ्रान्तेर्निरालम्बनतेत्यर्थः ॥४६३॥

---

१. अर्थेनैवेति—"अर्थेनैव विशेषो हि निराकारतयाधियामि"ति उदयनाचार्यवाक्यम् । ज्ञानवैलक्षण्यं विषयभेदप्रयुक्तं स्वतो ज्ञानस्य निराकारत्वात् साकारवादाङ्गीकारे विषयविलोपप्रसङ्गात् ।

नापि[1] व्यभिचरेज्ज्ञानं यदि स्मर्तव्यपृष्ठगम् । साक्षाद्वस्त्वेकनिष्ठत्वाद्यथेयं शुक्तिकामतिः ।।६४।।
न च प्रत्यक्षविज्ञानात्स्मृतेर्भेदं लभेमहि । प्रध्वंसात्[2]तस्य चार्थस्य नातोऽर्थस्पर्शिनी स्मृतिः ।।६५।।

मिथ्याज्ञानेतराज्ञाने प्रमाणनिरूपणम्

किं त्वेतदिति जिज्ञासोर्निषिद्धेऽप्यन्यथाग्रहे । तावतो व्यवधानत्वाद्[3]बुभुत्सा च न युज्यते ।।६६।।
शुक्तिकेयमिति ह्युक्ते यथार्थं प्रतिपद्यते । रजताद्यन्यथाज्ञानप्रतिषेधादृतेऽपि हि ।।६७।।
नीलोत्पलदलाभं खं सामान्येतरवर्जितम् । न पश्येयुस्त्रयासत्त्वान्न हि तच्चाक्षुषं यतः ।।६८।।
दिग्विभागादिवद्व्योम्न प्राग्यानं च रवौ तथा । स्वप्ने नानाप्रपञ्चाढ्यं मिथ्याज्ञानमृते त्रयात् ।।६९।।

तर्हि तस्याः सालम्बनत्वाद्घटादिधीवद्याथार्थ्यादभ्रान्ततेत्याशङ्क्याऽऽह—नापीति। स्मर्तव्यो रूप्यादिरर्थस्तं विषयीकृत्य सम्यग्रजतधीवद्भ्रान्तिज्ञानं स्थितं चेत्तर्हि प्रामाण्यं न व्यभिचरेदबाधितासंदिग्धापरोक्षवस्तुविषयत्वाच्छुक्तिज्ञानवदतो भ्रान्तेरमानत्वाद्याथार्थ्यायोगात्कल्पितविषयत्वेन सालम्बनतेत्यर्थः ।।४६४।।

भ्रान्तेरपि मानत्वाङ्गीकाराद्मानत्वासिद्धिमाशङ्क्याऽऽह—न चेति। स्मृतिशब्दो भ्रान्तिविषयः। तस्या मानत्वे मानभ्रान्तिभेदासिद्धिरुत्सर्गतो ज्ञानमात्रप्रामाण्येऽपि बाधादिना क्वचिदप्रामाण्यमिति विभागसिद्धिरित्यर्थः। इतश्चायथार्था भ्रान्तिरित्याह—प्रध्वंसादिति। भ्रान्त्यर्थस्य ज्ञानेन नाशान्न सा वस्तु विषयीकरोत्यतस्तस्या युक्तमयथार्थत्वमित्यर्थः ।।४६५।।

भ्रान्तेरयथार्थत्वसमर्थनेनाज्ञानकार्यत्वं निर्धार्य तदर्थमेव मिथ्याज्ञानेतराज्ञाने हेत्वन्तरमाह—किं त्विति। आप्तोक्त्यादिना रूप्यसर्पादिमिथ्याज्ञाने निषिद्धेऽप्यधिष्ठानसाक्षात्कारात्पूर्वं किमेतदिति ज्ञातुमिच्छतो या बुभुत्सा सा वस्तुव्यवधीभूताज्ञानानुपगमे नैव युज्यते मिथ्याज्ञानमात्रं हि वस्तुनो व्यवधानमिष्टं तस्य निषिद्धत्वादतो वस्तुव्यवधानमनाद्यज्ञानं बुभुत्सानिदानमुपेयमित्यर्थः ।।४६६।।

इतश्चास्ति मिथ्याज्ञानेतरदज्ञानमित्याह—शुक्तिकेति। इयं शुक्ती रज्जुरेषेत्यादौ प्रयोगे रूप्यसर्पाद्यन्यथाधीनिषेधं विनाऽपि श्रोता शुक्त्यादितत्त्वं वेत्तीति व्यवहारभूमावधिगतं तन्नान्तरीयकत्वेन तदज्ञानध्वस्त्या तद्धीर्निवर्तते तन्निवृत्तिश्च प्रतिषेधधियाऽनूद्यते। मिथ्याज्ञानेतराज्ञानाभावे तु शुक्त्यादौ मिथ्याज्ञानोदयं विना सम्यग्ज्ञानं जायमानमनर्थकं स्यात्तस्य व्यवधायकाभावे स्वसत्तायां प्रकाशाव्यभिचारादतोऽस्त्यनाद्यज्ञानमित्यर्थः ।।४६७।।

अज्ञानस्य मिथ्याधियोऽर्थान्तरत्वेऽपि न तद्धेतुत्वं सामान्यादित्रयस्यैवान्वयव्यतिरेकाभ्यां तथात्वादित्याशङ्क्य व्यतिरेकाभावमाह—नीलेति। त्रयस्य भ्रान्तिहेतुत्वे नीलोत्पलदलसदृशमाकाशं बाला नाऽऽकलयेयुराकाशस्य सामान्यविशेषशून्यत्वात्कारणत्रयाभावादिति योजना। नभो नीलमिति धीस्तर्हि न भ्रान्तिरित्याशङ्क्याऽऽह—न हीति। अचाक्षुषे नीरूपे द्रव्ये चाक्षुषधीर्भ्रान्तिरेवातस्मिंस्तद्धीत्वादित्यर्थः ।।४६८।।

त्रयं विना भ्रान्तिदृष्टेर्न तत्करणमित्यत्रैव दृष्टान्तान्तराण्याह—दिगिति। आदिपदेन तलमलिनताद्युक्तिः। दृश्यते हि नभसि सामान्यविशेषभावविरहिणि प्राची प्रतीचीत्यादिदिग्विभागो दिशो व्योम्नो वस्त्वन्तरत्वे मानाभावात् तत्रैव धूमतुषारादिधीश्च निश्चिता। सवितरि च प्रतीचीं दिशमारभ्य प्राचीदिशं प्रति गच्छतीति धीरस्ति। स्वप्ने च विविधप्रपञ्चसहिता मिथ्याधीरुपलभ्यते। न च तत्र सर्वत्र कारणत्रयं सुसंपादमतो व्यतिरेकाभावान्न तस्य भ्रमहेतुतेत्यर्थः ।।४६९।।

---

१. सिंहावलोकनन्यायेन पुनरपि स्मृतेरर्थवत्त्वं दूषयति—नापीति—( न्या० ) पूर्वमेव दूषितं स्मृतेरर्थवत्त्वं पुनर्दूषयतीत्यर्थः। नापि ज्ञानमर्थं व्यभिचरेदित्यर्थः। यदि स्मर्तव्यपृष्ठगं स्मर्तव्यविषयगं तदा प्रामाण्यं न व्यभिचरेत्। अतः तदप्रामाण्यस्य व्यवस्थितत्वात् तस्या निर्विषयत्वं कल्पितविषयत्वमेष्टव्यमित्यर्थः। अनधिगतार्थत्वाभावादप्रामाण्यम् ( न्या० )।

२. नष्टार्थे स्मृतिदर्शनाच्च न सार्थत्वं तस्या इत्याह—प्रध्वंसादिति ( न्या० )।

३. व्यवधानं वस्तुनः सकाशात् ज्ञानस्य भेदकमज्ञानमित्यर्थः।

यत एतमतो ग्राह्यं शुक्तिकाज्ञानमेव तु । रजताद्यन्यथाज्ञानकारणं युक्तिगौरवात् ।।७०।।
कर्मज्ञानादिहेतुत्वान्नियमस्य यथा तव । सामान्याद्यविशेषेऽपि नियमोऽप्येवमिष्यताम् ।।७१।।
भूरिसामान्यविज्ञानाच्छौक्ल्यमेव करोति किम् । सदप्यन्यदुदास्ते किं स्वाश्रयग्रहणं प्रति ।।७२।।
अनेकार्थाभिसंबन्धाच्छौक्ल्यस्य रजते च कः । पक्षपातो विना हेतुं बलाकाज्ञानकृन्न किम् ।।७३।।
स्वाकारमात्रनिष्पत्तेर्नालं कार्यान्तराय हि । सामान्यं वा विशेषो वा नातः स्याद्राजती स्मृतिः ।।७४।।
न ह्यसंनिहितं बोद्धुर्वस्तु बुद्धौ करोति हि । ज्ञानमाकारवल्लोके सर्वाकारप्रसक्तितः ।।७५।।

पदार्थान्तरसद्भावापेक्षस्य जगतोऽपि रज्जुसर्पवत् कल्पितत्वम्

पदार्थान्तरसद्भावमपेक्ष्यान्यस्य वस्तुनः । यस्य सिद्धिर्मृषा तत्स्याद्रज्जुसर्पद्विचन्द्रवत् ।।७६।।
प्रमात्रादीह यत्किंचित्प्रत्यगज्ञानहेतुजम् । अन्योन्यापेक्षसिद्धित्वान्मिथ्या तदपि पूर्ववत् ।।७७।।
आत्मन्यध्यासरूपोऽयं संसारः प्रतिपादितः । अध्यासश्च विना हेतुं न लोक उपपद्यते ।।७८।।

त्रयस्य कारणत्वासंभवे पूर्वोक्तमज्ञानकारणत्वं सिद्धमित्युसंहरति—यत इति । अतो युक्तिगौरवादिति संबन्धः । युक्तिस्तु न सामान्यात्स्मृतेश्चेत्यादावुक्ता ।।४७०।।

शुक्त्यज्ञानस्य भ्रान्तिहेतुत्वे किमिति तत्र रूप्यभ्रान्तिरेवार्थान्तरभ्रान्तिः[1] किं न स्यादज्ञानस्य तुल्यत्वादित्याशङ्क्याऽऽह—कर्मेति । ज्ञानशब्देन पूर्वानुभवो रजतादिविषयस्तद्वासना चाऽऽदिशब्देन गृह्यते । यथा ते त्रयस्याविशेषेऽपि शुक्तौ रूप्यधीरेव न हस्त्यादिधीरिति नियमस्तस्यादृष्टादिकृतत्वादेवं परस्य सर्वत्राज्ञानाविशेषेऽपि कर्मादिवशान्नियमो भ्रान्तेरित्यर्थः ।।४७१।।

परपक्षेऽपि कर्मादिहेतुको नियमो भ्रान्तेरित्येतत्साधयति—भूरीति । नानासामान्यं शुक्तिस्थं गृह्णाति तत्र शौक्ल्यमेव किमिति रूप्यभ्रान्तिं जनयति वस्तुत्वादि गृह्यमाणं सदपि किमिति स्वाश्रयग्रहं प्रति न प्रभवत्यतो धर्मादिरेव नियमे हेतुरित्यर्थः ।।४७२।।

वस्तुत्वादित्यागेन शौक्ल्यस्यैव स्वाश्रयग्रहे व्यापारे तस्य पुरोवर्तिरजतसादृश्यात्मनो रजतपक्षपातितया विनाऽप्यदृष्टादिना नियमसिद्धिरित्याशङ्क्याऽऽह—अनेकेति । अनेकैरर्थै रूप्यबलाकादिभिः सदृशैः शौक्ल्यस्य संबन्धात्तस्य रूप्यपक्षपाते हेत्वभावाद्बलाकाज्ञानमेव किमिति शुक्तौ शौक्ल्यं न करोति तस्मात्परस्य कर्मादिना नियमवत्पक्षान्तरेऽपीत्यर्थः ।।४७३।।

इतश्च त्रयं न रूप्यादिभ्रान्तिहेतुरित्याह—स्वाकारेति । सामान्यादेः स्वविज्ञानमात्रहेतुत्वाद्रूप्यादिविशिष्टज्ञानार्थमसामर्थ्यात्तद्वशान्न रूप्यादिभ्रान्तिरित्यर्थः ।।४७३।।

त्रयस्य भ्रमाहेतुत्वमुक्त्वा देशान्तरस्थरूप्यस्य तदहेतुत्वे हेत्वन्तरमाह—न हीति । लोके हि बोद्धुरसंनिहितं वस्तु बुद्धौ स्वाकारवद्विज्ञानं नैव जनयति तस्यासन्निहिताकारत्वे सर्वाकारत्वप्रसङ्गादतो न देशान्तरस्थरूप्यस्यैव भ्रान्तिहेतुतेत्यर्थः ।।४७५।।

शुक्त्याद्यवच्छिन्नचिदात्मस्थाज्ञानविलसितं रूप्यादीति दृष्टान्तं प्रसाध्य दार्ष्टान्तिकमाह—पदार्थेति । उत्पादकं ज्ञापकं च पदार्थान्तरं विवक्षितं सापेक्षत्वाज्जगदपि सर्पादिवत् कल्पितमित्यर्थः ।।४७६।।

कथं तस्य सापेक्षत्वं तदाह—प्रमात्रादीति । यत्किंचिदिह व्यवहारभूमौ मात्रादि तदप्यज्ञानजं मिथ्यैवान्योन्यापेक्षया सिद्धत्वान्न हि मिथोऽपेक्षामन्तरेण मातृमानादि सिध्यति पूर्वोक्तसर्पादिवदिति योजना ।।४७७।।

लोके मिथ्याज्ञानस्याज्ञानकार्यत्वात्प्रतीचि प्रपञ्चाध्यासस्तथेति प्रसाध्य वृत्तमनुद्रवति—आत्मनीति । भाष्यान्तरमवतारयितुं भूमिकामाह—अध्यासश्चेति । कार्यत्वाद्घटवदितिहेतुदृष्टान्तौ वक्तुं चशब्दः ।।४७८।।

१. अर्थान्तरभ्रान्तिः हस्त्यादिभ्रान्तिः ।

भाष्यव्याख्यारम्भः

तस्माद्धेतूपदेशाय यः कारणमितीर्यते । यस्मिन्नविद्ययेत्येवं ननु कारणमीरितम् ।।७९।।
प्रधानवादमाशङ्क्य यस्माद्भूयोऽपि भण्यते । अज्ञात आत्मा जगतः कारणं न गुणत्रयम् ।।८०।।
श्रुतितो युक्तितश्चापि स्वयमेव प्रवक्ष्यति । उदर्क इममेवार्थं नातोऽन्यत्कारणं ततः ।।८१।।
यदात्मके नामरूपे इत्यज्ञानात्मता तयोः । भण्यतेऽतोऽप्रमाणत्वं शुक्तिकारजतादिवत् ।।८२।।
न कारणातिवर्त्यस्ति कार्यं जगति कुत्रचित् । स्वकारणाविशिष्टत्वे सलिलादितिहेतुगीः ।।८३।।
वस्तुवृत्तं न पर्याप्तं तदज्ञानापनुत्तये । अनुपात्तप्रमाणं सदित्यर्थप्रतिपत्तये ।।८४।।
स्वतो बुद्धमिदं यस्मादतः शुद्धमसद्द्वयम् । द्वितीयसंगतिर्यस्माल्लोकेऽशुद्धेः प्रयोजिका ।।८५।।
यथोक्ततत्त्वे नाविद्यामृते स्याद्द्वयसंगतिः । अतोऽशुद्धिनिषेधोक्तिस्तदविद्यानिषेधतः ।।८६।।
ईश्वराव्याकृतप्राणविराड्भूतेन्द्रियादिकम् । नाविद्योपाश्रयं मुक्त्वा संभाव्यं प्रत्यगात्मनि ।।८७।।

तात्पर्यफलोक्तिपूर्वकं तदवतारयति—तस्मादिति । कार्यस्य कारणमन्तरेणासंभवादिति यावत् । पुनरुक्तिं चोदयति—यस्मिन्निति ।।४७९।।

परिहरति—प्रधानेति । यस्मिन्नविद्ययेति कारणस्योक्तत्वेऽपि निमित्तोपादानभेदं सांख्यवादमाशङ्क्योक्तमेव कारणं तद्भेदनिरासार्थं यस्मात्पुनरुच्यते तस्मान्न पुनरुक्तिदूषणमित्यर्थः । प्रधानवादनिराकरणं कथमिति तदाह—अज्ञात इति ।।४८०।।

उत्तरपक्षस्य पूर्वपक्षनिरासस्य च कथं प्रतिज्ञामात्रात्सिद्धिस्तत्राऽऽह—श्रुतित इति । अपिनोक्तत्वमस्यार्थस्य सूचयति । स्वयमिति भाष्यकारोक्तिः । "आत्मन आकाशः संभूत" "एतस्माज्जायते प्राणो" "यः सर्वज्ञः सर्वविदि"त्यादिश्रुतेः परिच्छिन्नस्य कार्यत्वान्मूलकारणत्वायोगादज्ञातं ब्रह्मैव कारणं न प्रधानादीति तत्र तत्रोक्तं वक्ष्यते च मधुब्राह्मणादावतो न प्रधानवाद इत्यर्थः। कारणान्तरायोगादज्ञातं ब्रह्मैव तथेति निगमयति—नात इति । अज्ञातं ब्रह्म पञ्चम्यर्थः। ततोऽन्यदिति संबन्धः ।।४८१।।

यदात्मके इत्यादिभाष्यतात्पर्यमाह—यदात्मके इति । तयोर्नामरूपयोरिति यावत् । नामरूपात्मकद्वैतस्याविद्यादेहोक्तिफलमाह—अत इति । अप्रमाणत्वमप्रामाणिकत्वं बाध्यतेति यावत् ।।४८२।।

सलिलादिवदित्यादिदृष्टान्तभाष्यतात्पर्यमाह—नेत्यादिना । हेतुर्दृष्टान्तः साधकत्वाविशेषात् । न हि लोके कार्यं हेतुमतिक्रमते तन्नामरूपद्वैतस्याज्ञातब्रह्मात्ममात्रत्वे सलिलादिवेत्यादिदृष्टान्तोक्तिः । यथा फेनादि जलोत्थं तन्मात्रमेवमज्ञातब्रह्मोत्थं जगद्ब्रह्ममात्रमित्यर्थः ।।४८३।।

यश्चेत्यादिभाष्यतात्पर्यमाह—वस्त्विति । नित्यशुद्धत्वादिलक्षणमपि वस्तुरूपं वाक्योत्थबुद्धिवृत्त्यनारूढं स्वगताज्ञानध्वंसार्थं न समर्थं केवलस्य वस्तुनस्तत्साधकत्वाद्वाक्यीयबुद्ध्यारूढमेव तत्स्वाज्ञानध्वस्तये शक्तमिति वक्तुं यश्चेत्यादिभाष्यमित्यर्थः ।।४८४।।

तत्र भाष्यं योजयति—स्वत इति । बोधैकरसत्वं शुद्धत्वे हेतुरित्युक्त्वा हेत्वन्तरमाह—असदिति । अतोऽद्वयमिति पाठे तु शुद्धत्वादेवाद्वयत्वं द्वितीयसंबन्धाभावस्य शुद्धत्वसाधकत्वादित्यर्थः । द्वितीयासंबन्धस्य शुद्धत्वहेतुत्वं व्यतिरेकमुखेन साधयति—द्वितीयेति । तस्माददद्वितीयत्वादुक्तं वस्तु सिद्धमिति शेषः । तादृश्यपि प्रतीच्यज्ञानादिदृष्टेर्वाक्यीयबुद्ध्यारूढमेवाऽऽत्मतत्त्वं तन्निवर्तकं न केवलमिति भावः ।।४८५।।

ननु द्वितीयासंबन्धान्न प्रतीचः शुद्धत्वमध्यक्षादिसिद्धद्वैतद्रष्टृत्वेनाऽऽत्मनस्तत्संबन्धात्तत्राऽऽह—यथोक्तेति । अविद्यासंबन्धाधीनद्वयसंबन्धादात्मन्यशुद्धिप्रसक्तिरतःशब्दार्थः । तदविद्येत्यत्र तच्छब्दो यथोक्तवस्तुविषयः । द्वैततद्योगयोराविद्यत्वादात्मनो वास्तवो शुद्धिरित्यर्थः ।।४८६।।

ईश्वराद्यष्टावस्थं जगत्पारमार्थिकमिति कैश्चिदिष्टत्वात्कथं द्वैतस्य मिथ्यात्वमित्याशङ्क्याऽऽह—ईश्वरेति ।

---

१. ११६-४
२. अष्टावस्थं जगत् पारमार्थिकमिति भर्तृप्रपञ्चः । अष्टावस्थाश्च अव्याकृतम् ईश्वरः प्राणः विराट् पञ्चभूतानि शरीर-इन्द्रिय-विषयाः–(न्या.), आनन्दगिरीये–अन्तर्यामी साक्षी अव्याकृतं प्राणः विराट् देवता व्यक्तिः जातिः इत्यष्टौ ।

प्रत्यग्याथात्म्यदृष्ट्या तन्निपुणोऽपि न वीक्षते । न च प्रत्यग्धियं मुक्त्वा पराग्बुद्धिर्मितिर्भवेत् ॥८८॥
पराञ्चि खानीत्येतच्च साटोपमभिधीयते । प्रत्यङ्मानैकमेयत्वं वेदान्तेष्वात्मवस्तुनः ॥८९॥
इतो विरुद्धमानत्वं स्वतोऽपास्तद्वयात्मनः । शक्यं वैश्वानरवरात्प्रवक्तुं न तु मानतः ॥९०॥
नित्यशुद्धश्च बुद्धश्च यस्मादात्मा परः स्वतः । मुक्तश्चातोऽवसेयोऽसौ सद्वेदान्तोक्तिमानिना ॥९१॥
एवंभूतोऽप्यसंबुद्धस्वात्मतत्त्वो महेश्वरः । आपेदे कारणात्मत्वं नामरूपादिसर्जने ॥९२॥

स एष इह प्रविष्ट इत्यादि-श्रुतिविवरणम्

स एष इत्यनेनापि सुविरुद्धात्मतां ब्रुवन् । विरुद्धवस्तुसंसृष्टिं ब्रूतेऽज्ञानैककारणम् ॥९३॥
व्याकुर्वन्निति वाक्येन स्वतो ज्ञोऽपि तमोन्वयात् । ब्रह्मादिस्तम्बपर्यन्तं कार्यं प्राविशदुच्यते ॥९४॥
स्वानुभूत्यनुरोधेन योऽज्ञातार्थः पुरोदितः । प्रकृतार्थावलेहित्वात्सर्वनाम्ना स उच्यते ॥९५॥
परामृश्य स इत्येवमव्याकृतसतत्त्वकम् । तथारूपः स्वकार्यस्थः प्रात्यक्ष्यादेव उच्यते ॥९६॥

अन्तर्यामिसाक्षिणावीश्वरशब्दितौ । भूतशब्देन भवनयोग्या व्यक्तयो गृह्यन्ते इन्द्रियशब्देन देवतोच्यते । आदिपदेन जातिरुक्ता ॥४८७॥

प्रत्यगज्ञानजमेव द्वैतमिति प्रतिज्ञातेऽर्थे हेतुमाह—प्रत्यगिति । तथाऽपि पराग्दृष्ट्या दृष्टत्वाद्द्वैतस्य सत्यत्वमित्याशङ्क्याऽऽह—न चेति ॥४८८॥

आत्मनोऽपि तर्हि पराग्बुद्धिबोध्यत्वान्मिथ्यात्वं स हि सर्वप्रत्ययवेद्योऽभ्युपेयते । नेत्याह—पराञ्चीति । एतत्प्रत्यग्दृष्टिरूपमानमात्रगम्यत्वमात्मनो वेदान्तेषु "पराञ्चि"त्यादिश्रुत्या सतात्पर्यमुच्यते न हि तस्य सोपाधिकस्य सर्वप्रत्ययवेद्यत्वेऽपि निरुपाधिकस्य तथात्वमिति योजना ॥४८९॥

प्रत्यङ्मानं हित्वा पराङ्मानगम्यतामपि केचित्प्रतीचो वदन्ति तान्प्रत्याह—इत इति । प्रत्यङ्मानादिति यावत् । विरुद्धमानत्वं पराङ्मानगम्यत्वमिति यावत् । विषयस्वरूपोक्त्या तस्मिन्पराङ्मानप्रवृत्तेरयोग्यतामाह—स्वत इति । अनुदिनमाराधितदेवताप्रसादादीदृग्वचनं भर्तृप्रपञ्चानां न प्रमाणादित्युपहसति—शक्यमिति ॥४९०॥

आत्मनो नित्यशुद्धत्वादि प्रतिपाद्य नित्यमुक्तत्वं प्रतिपादयति—नित्येति । "न लिप्यते लोकदुःखेने"त्यादिवाक्यमत्र मानत्वेन सूचयति—सदिति । सतीं दोषरहितामपौरुषेयीं वेदान्तोक्तिं मानत्वेन स्वीकुर्वता वादिनेति यावत् ॥४९१॥

यथोक्तस्य परस्य कारणत्वानुपपत्तेः श्रुतिस्मृतिविरोधमाशङ्क्याऽऽह—एवमिति । स्रष्टुः संहर्तुश्चाभेदमभिप्रेत्य महेश्वरग्रहणम् ॥४९२॥

नामरूपादिसर्जनस्याऽऽविद्यत्वमुक्तं तत्र श्रौतं पदद्वयं गमकमिति भाष्योक्तपदद्वयतात्पर्यमाह—स एष इति । स पर एव जीवस्तयोरद्वयत्वसद्वयत्वादिनाऽत्यन्तं विरुद्धयोरपि सामानाधिकरण्यादिनैकत्वं ब्रुवन्भाष्यकारो वेदो वा प्रतिपाद्यैक्यविरुद्धसृष्ट्यादिद्वैतमज्ञानजत्वेन मिथ्याभूतं सूचयति । अन्यथा तयोरैक्यायोगात्सामानाधिकरण्यादिविरोधादतो नामरूपादिसर्जनस्याऽऽविद्यत्वं पदद्वयगम्यमित्यर्थः ॥४९३॥

अव्याकृते आत्मभूते नामरूपे व्याकुर्वन्नित्यादिभाष्यमपि नामरूपादिसर्जनस्याऽविद्यत्वं गमयतीत्याह—व्याकुर्वन्निति । आत्मा स्वतो नित्यशुद्धत्वादिरूपोऽपि स्वाविद्यावष्टम्भात्कार्यं सृष्ट्वा प्रविष्टस्तस्मिन्निति भाष्येणोच्यते तद्भाष्यमप्युक्तेऽर्थे मानमित्यर्थः ॥४९४॥

वार्तिकाभ्यां प्रवेशवाक्यतात्पर्यं भाष्योक्तमुक्त्वा सशब्दार्थमाह—स्वानुभूतीति । पुरेत्यव्याकृतवाक्योक्तिः । अज्ञातस्य प्रतीचः सशब्देनोपादाने हेतुमाह—प्रकृतेति ॥४९५॥

सशब्देन पारोक्ष्यं प्रतीचो दर्शयित्वा कथमापरोक्ष्यमेषशब्देनोच्यते तत्राऽऽह—परामृश्येति । अव्याकृतस्य

१. वैश्वानरवरात् = भर्तृप्रपञ्चः नित्याग्निहोत्रीति गम्यते ।
२ पुरोदितः—"तद्धेदं तर्ह्यव्याकृतमि"त्यनेन पूर्वमुक्तः । ३. ११६-७

विरुद्धरूपयोरेवं निर्द्वयद्वयरूपतः । स एष इति निर्देशः कथं स्यात्कृष्णसर्पवत् ।।९७।।
कारणान्नान्यतः कार्यं तथा कार्याच्च कारणम् । इत्युक्तन्यायहेतुत्वान्न विरोधोऽत्र कश्चन ।।९८।।
अज्ञातवस्तुतत्त्वस्य दुष्करं नास्ति किंचन । नीलीकृतं नभः पश्येच्चक्षुषा नीलवस्त्रवत् ।।९९।।
योग्यायोग्यव्यपेक्षेयं मानव्यवहृतौ भवेत् । कल्पनामात्रनिष्पत्तेर्नापेक्षाऽज्ञानभूमिषु ।।५००।।

स एष इत्युक्तैक्यहेतुः प्रविष्ट इति

इत्युक्तप्रतिपत्त्यर्थं हेतुरेषोऽभिधीयते । प्रविष्ट इत्यनेनात्र स्वाभासैकतमोन्वयात् ।। १ ।।
ब्रह्मादावित्यनेनापि जनिमत्सर्वमुच्यते । कृत्स्नसंसारधर्मार्थं देहेष्विति च भण्यते ।। २ ।।
ब्रह्मादिस्तम्बपर्यन्तं देहेष्विति तथोच्यते । क्रियाफलाभिसंबन्धो देहेष्वेवेति नाऽऽत्मनि ।। ३ ।।
प्रत्यङ्मोहमरुद्बुद्धिचक्षुर्देहादिरूपिणाम् । प्रविष्टवचसैकात्म्यं गुणप्राधान्यमुच्यते ।। ४ ।।

सतत्त्वकं पारमार्थिकमविकृतमात्मानमिति यावत् । तथारूप इत्यज्ञात इत्येतत् । स्वकार्यस्थो बुद्धिस्थः प्रत्यगात्मेति यावत् । तस्यैषशब्देनोक्तौ हेतुमाह—प्रात्यक्ष्यादिति ।।४९६।।

पदद्वयसामानाधिकरण्यादुक्तमैक्यमाक्षिपति—विरुद्धेति । निर्द्वयसद्वयरूपतो विरुद्धरूपयोस्तत्त्वमर्थयोः स एष इत्येवं सामानाधिकरण्यादेकत्वनिर्देशः कथं स्यादित्यन्वयः न हि चैत्रस्य कृष्णसर्पेणैक्यव्यपदेशो युक्तस्तथा परेण जीवस्याशक्यमैक्यं वक्तुं विरोधाविशेषादित्याह—कृष्णेति ।।४९७।।

कार्यकारणयोर्मिथःसापेक्षत्वेन कल्पितत्वमित्युक्तन्यायस्याविरोधे हेतुत्वात्प्रकृतैक्यविरोधो नेति परिहरति—कारणादिति । द्वैतस्याविद्यातो भानाद्वस्तुतो विरोधासिद्धेः सामानाधिकरण्यलब्धमैक्यमविरुद्धमित्यर्थः ।।४९८।।

अज्ञानादपि कथं प्रामाणिकैक्यविरुद्धकार्यकारणात्मकद्वैतधीरित्याशङ्क्य कुर्यान्मेरावणुधियमित्यत्रोक्तं[1] स्मारयति—अज्ञातेति । तत्र दृष्टान्तमाह—नीलीकृतमिति ।।४९९।।

अज्ञानाधीनेऽपि भ्रमे कथं चक्षुरयोग्यस्य नभसश्चक्षुषा दर्शनमित्याशङ्क्याह—योग्येति । अथवा नीलं वासो योग्यत्वाच्चक्षुषोपलब्धुं शक्यते नभस्तु नीलीकृतं चक्षुरयोग्यत्वान्न तेन द्रष्टुं शक्यमित्याशङ्क्याऽऽह—योग्येति । आविद्यव्यवहारेषु योग्यायोग्यविभागापेक्षा नास्तीत्यत्र हेतुमाह—कल्पनेति । अज्ञानभूमयो विभ्रमास्तेषु न योग्यायोग्यविभागापेक्षा तेषां कल्पनामात्रेण निष्पन्नानां प्रतिभासमात्रदेहत्वादित्यर्थः ।।५००।।

ऐक्यविरुद्धाकारस्याऽऽविद्यत्वादविरुद्धं तदिति पदद्वयेनोक्त्वा प्रविष्टपदस्यार्थमाह—इत्युक्तेति । इतिना पदद्वयसामानाधिकरण्योक्तिस्तेनोक्तमैक्यं तन्निश्चयार्थमपेक्षितो हेतुः प्रविष्टशब्देनोच्यत इत्यर्थः । परस्य प्रवेशश्चेत्प्रविष्टस्य जीवत्वात्तेन तदैक्यं युक्तं न तु परस्य प्रवेशस्तस्यासङ्गत्वादित्याशङ्क्याऽऽह—अत्रेति । सृष्टे कार्ये प्रत्यगाभासं यदखण्डं तमस्तत्संबन्धात्प्रवेश इत्यर्थः ।।५०१।।

इहशब्दार्थं भाष्योक्तं वदन्ब्रह्मादिस्तम्बपर्यन्तेष्वित्यस्यार्थमाह—ब्रह्मादाविति । सर्वमपीत्यपिशब्दस्य संबन्धः । इहशब्दार्थतया जनिमन्मात्रस्येष्टत्वात्तस्यैकवचनेनापि वक्तुं शक्यत्वाद्बहूक्तिरविवक्षितेति मत्वा ब्रह्मादावित्युक्तम् । जनिमन्मात्रमिहशब्दार्थश्चेद्देहेष्विति विशेषणं किमर्थमित्याशङ्क्याऽऽह—कृत्स्नेति । सर्वस्य संसाराश्रयस्योपाधेर्ग्रहार्थं देहपदमित्यर्थः ।।५०२।।

कर्मफलाश्रयेष्वशनायादिमत्स्विति भागस्यार्थमाह—ब्रह्मादीति । देहेष्वेव क्रियादिसंबन्धो नाऽऽत्मनीति यथा तथा ब्रह्मादिस्तम्बपर्यन्तेष्वित्यादिभाष्ये[2] कर्मफलेष्वित्याद्युच्यत इति योजना ।।५०३।।

प्रवेशवाक्यस्थप्रविष्टशब्दस्यैक्यहेतुमर्थमुक्त्वा तस्यैवार्थान्तरमाह—प्रत्यङ्ङिति । प्रत्यङ्मोहः परस्योपाधिः । मरुत्प्राणः सूत्रोपाधिः । बुद्धिरन्तःकरणं हिरण्यगर्भोपाधिः । चक्षुःशब्देन सर्वाणीन्द्रियाणि लक्ष्यन्ते । स्थूलो देहः स च सर्वो विराडुपाधिः । आदिशब्देनास्मदादीनामुपाधयो व्यष्टयः कर्मादि चोच्यन्ते । एतद्रूपिणाम्

१. वा० १–३–३१३ २. ११६-७

न ढौकते पराचीनं प्रत्यक्त्वासङ्गतः परः । नेहाज्ञानमनादाय ह्यात्माऽनात्मानमीक्षते ॥ ५ ॥
स्थाण्वज्ञानमनादाय न चोरादीक्षणं यथा । आत्माज्ञामनादाय तद्वन्नानात्मवीक्षणम् ॥ ६ ॥
येनान्वितोऽयं संसारी सुषुप्ते कर्मणः क्षयात् । तत्स्वाभाव्याविशेषः स्यात्तत्कार्यत्वाद्धटादिवत् ॥ ७ ॥
स्वात्माभासप्रवेशो यः प्रत्यङ्मोहनिबन्धनः । तज्जेष्वपि स एव स्यान्मरुद्बुद्ध्यादिरूपिषु ॥ ८ ॥

सूत्रादीनां स्वरूपनिरूपणम्

पयोम्भोवत्सूत्ररूपं क्रियाविज्ञानशक्तिमत् । कर्तृस्थभावकं स्थास्नु चलं कर्मस्थभावकम् ॥ ९ ॥
बुद्ध्यात्मनो[1]ऽभिनिर्वृत्तिर्व्यवसायात्मनस्ततः । हिरण्यगर्भं यं प्राहुरुपादानं जगद्धियाम् ॥१०॥

उपहितानामीशादीनां सर्वोपाधिविधुरेण ब्रह्मणैक्यं प्रविष्टशब्दार्थः । तच्चैक्यं रज्जुसर्पयोरिव गुणप्राधान्यरूपं तस्मादुपहितं सर्वमुपाधिहीने कल्पितत्वात्तन्मात्रमित्यर्थः ॥५०४॥

ननूपहितानां पराभेदश्चेत्तस्योपाधियोगादसङ्गत्वहानिस्तदयोगे च नोपहिताभेदस्तत्राऽऽह—न ढौकत इति । सर्वप्रत्यक्त्वेन भेदाभावात्तत्कल्पनेऽपि वस्तुतः सङ्गाभावस्य श्रौतत्वाद्वास्तवमसङ्गत्वमविरुद्धमित्यर्थः । परस्य पराचीनासंबन्धे साक्षित्वासिद्धिरित्याशङ्क्याऽऽह—नेति । इहेत्यज्ञं प्रत्यञ्चमाह । [2]श्रौतं वा मतम् । साक्षित्वस्याविद्याकृतत्वं विद्वत्प्रसिद्धमिति वक्तुं हिशब्दः ॥५०५॥

अज्ञानतो विश्वसाक्षित्वं दृष्टान्तेन स्पष्टयति—स्थाण्विति ॥५०६॥

ईशादिभिरुपहितैरभिन्नस्यापि परस्यासङ्गत्वं साक्षित्वं च प्रसाध्याभेदे हेत्वन्तरमाह—येनेति । स्वापे व्यक्तभोगहेतुकर्माभावाद्विक्षेपहीनः सन्नेष संसारी सति संपद्येत्यादिश्रुतेर्येनाज्ञातब्रह्मणा तादात्म्यं गतस्तस्य कारणब्रह्मणो यत्स्वाभाव्यमप्रपञ्चत्वं तदविशेषस्तन्मात्रो भवेदयमीशादिस्तस्मिन्नध्यस्तत्वाद्यथा घटो मृद्विकारस्तदात्मकस्तद्वदित्यर्थः ॥५०७॥

प्रविष्टशब्दस्य ब्रह्मात्मैक्यमर्थः समर्थितः । इदानीं तस्यार्थो नैक्यमर्थान्तरे रूढेरित्याशङ्क्याऽऽह—स्वात्मेति । यो हि प्रत्यङ्मोहकृतस्तस्मिन्मोहे प्रत्यगाभासाख्यः प्रवेशः स एव प्रत्यगज्ञानजन्येष्वपि सर्वेषूपाधिषु प्रवेशः प्रवेशान्तरस्यापरिच्छिन्ने परस्मिन्नयोगान्न चाऽऽभासस्याऽऽभासिनोऽन्यत्र सत्त्वमित्यैक्ये प्रविष्टशब्दः पर्यवस्यतीत्यर्थः ॥५०८॥

मरुद्बुद्ध्यादिरूपिष्विति प्रवेशाधिकरणान्युक्तानि तेषां स्वरूपमाह—पयोम्भोवदित्यादिना । व्यतिकीर्णक्षीरनीरवन्मायोपाधिकारणं नानारूपं तस्य सर्वकार्यात्मकत्वात्तस्मादुत्पन्नं सूत्रमपञ्चीकृतभूतात्मकं क्रियाप्रधानज्ञानोपसर्जनशक्तियुक्तमित्यर्थः । कारणस्यावान्तरविशेषमाह—कर्तृस्थेति । कर्तृरूपेण जनकत्वेन स्थितं यत्स्वरूपं सूत्रकारणं तदुद्भवनिमित्तं स्थास्न्वविचलमनादित्वादित्यर्थः । कार्यस्य सूत्रस्यावान्तरविशेषमाह—चलमिति । कर्मरूपेण जन्यत्वेन स्थितं यत्कार्यरूपं सूत्रं तच्चलमाद्यन्तवदित्यर्थः ॥५०९॥

क्रियोपसर्जनज्ञानशक्तिकहिरण्यगर्भस्य परस्मादुत्पत्तिमनुवदन्नवान्तरं स्वरूपमाह—बुद्ध्यात्मन इति । तमेव विशिनष्टि—व्यवसायात्मन इति । सूत्रं व्यवर्तयति—तत इति । अज्ञातात्परस्मादित्यर्थः । ततो बुद्ध्यात्मोत्पत्तावपि हिरण्यगर्भस्य किमायातं तदाह—हिरण्यगर्भमिति । तत्र श्रुतिस्मृती प्रमाणयति—प्राहुरिति । तस्मिन्नेव [3]कार्यलिङ्गकमनुमानं सूचयति—उपादानमिति ॥५१०॥

---

१. हिरण्यगर्भो न जन्मवान् स्थूलोपाधिहीनचैतन्यत्वात् ब्रह्मवत् इत्याशङ्क्य हिरण्यगर्भं पश्यत जायमानं इतिवचनविरोधमाह—बुद्ध्यात्मन इति—( न्या० ) ।
२. श्रौतं वा मतं आह इह पदं इत्यर्थः । श्रौतमते अज्ञानमनायाय आत्मा नेक्षतेऽन्यत् ।
३. कार्यलिङ्गकमनुमानम्—व्यष्टिबुद्धयः सकारणकाः कार्यत्वाद्धटवदित्यादि ।

वैराजं स्थानमासाद्य क्ष्मादिदेशविभागवान् । देवताकरणो[1] देव एष एवोच्यते विराट् ।।११।।
तथा च मन्त्रवर्णोऽत्र ह्यग्निर्मूर्धेति दृश्यते । तदुपादानमात्राः स्युर्देवताः स्वाभिमानजाः ।।१२।।
आधिभौतिकभूतानां तथैवाध्यात्मरूपिणाम् । पूर्वोक्तानां परिच्छेदो ह्यविद्याकामकर्मभिः ।।१३।।
सूत्रादिस्थाणुपर्यन्तं जगत्सृष्ट्वाऽऽत्ममायया । स्वाभासैकसहायात्मा तदेव प्राविशद्धरिः ।।१४।।

व्यक्तस्य परात्मनः प्रवेशे अव्याकृतसृष्टिविरोधशङ्कासमाधिः

ननु व्याक्रियतेत्युक्तं स्वयमेव जगत्पुरा । कर्मकर्त्रुक्तितोऽकस्मात्कथं कर्ताऽभिधीयते ।।१५।।
परात्मनः प्रवेशोऽपि न्याय्यं संगच्छते न च । नेहासौ प्रकृतो यस्मादतो नासौ प्रवेशभाक् ।।१६।।
नैष दोषः परस्यापि ह्यव्यक्तजगदात्मना । विवक्षितत्वादाक्षिप्तनियन्त्राद्यभिधीयते ।।१७।।
इदंशब्दाभिधानेन ह्येकाधिकरणश्रवात् । अव्याकृतपदस्यातो यथोक्तोऽर्थोऽत्र युज्यते ।।१८।।

विराजः स्वरूपमाह—वैराजमिति । परमात्मैव सूत्रादिहेतुर्मायावी सूक्ष्मः पृथिव्यादिपञ्चकाद्देशविभागवान्वैराजं स्थूलप्रपञ्चात्मकं स्थानं प्राप्य विराडुच्यते स चाग्निसूर्याद्यवयववानित्यर्थः ।।५११।।

उक्ते विराजि पूर्वोक्तमेव मानं स्मारयति—तथा चेति । "द्यांमूर्धानमस्य विप्रा वदन्ती"त्याद्या स्मृतिरपि दर्शिते विराजि यथोक्तश्रुतिमूला भवति मानमिति वक्तुं हिशब्दः । विराजः सकाशादुत्पत्तिमनुवदन्निन्द्रादिदेवतास्वरूपं संगृह्णाति—तदुपादानेति । इन्द्रोऽहमित्याद्यभिमानित्वेन साधकावस्थायां पुमानवस्थितस्तेन तद्वासनाऽपि देवतासु फलभूतासु हेतुरित्याह—स्वाभिमानजा इति ५१२।।

भवन्त्वेवंविधानि प्रवेशाधिकरणानि तेषु प्रविष्टं चैतन्यमेकमनेकं वा ? आद्ये जीवभेदव्यवहारायोगाद् द्वितीये त्वद्वैतहतिरित्याशङ्क्याऽऽह—आधिभौतिकेति । तथैवेत्याधिदैविकभूतसमुच्चयार्थः । पूर्वोक्तानां प्रत्यङ्मोहमरुद्बुद्धीत्यादावुक्तानामिति यावत् । तत्तदुपाधिषु प्रविष्टचैतन्यस्यैक्येऽपि जीवभेदव्यवहारोऽविद्यादिवशादित्यर्थः । अविद्यादेरविद्यमानपरिच्छेदपरिनिर्माणनिपुणताद्योतनार्थो हिशब्दः ।।५१३।।

प्रवेशवाक्यार्थमुपसंहरति—सूत्रादीति । एकः स्वाभासः सहायोऽस्य स स्वाभासैकसहायः स चासावात्मा च स्वसृष्टं जगत्प्राविशदिति योजना । सृष्टौ प्रवेशे च साधारणं हेतुमाह—आत्मेति । प्रविष्टस्य तत्र तत्र पालयितृत्वं सूचयति—हरिरिति ।।५१४।।

व्यक्तस्रष्टा परमात्मा सृष्टौ प्रविष्टस्तस्मिन्नित्युक्तमाक्षिपति—नन्विति । पुरा तन्नामरूपाभ्यामित्यत्रेति यावत् । तत्र स्वयमेव जगतो व्याक्रियेत्येतदवद्योती शब्दो नास्तीत्याशङ्क्याऽऽह—कर्मेति । कर्मकर्तरि लकारदर्शनाज्जगतः स्वयमेव व्याक्रियेत्येवं सति स्रष्टुरभावान्न तस्य प्रवेष्टृत्वमित्याह—अकस्मादिति ।।५१५।।

परस्याप्रवेशे हेत्वन्तरमाह—परात्मन इति । यद्यपि परमात्मा जगतः स्रष्टा वेदान्तेष्वधिगतस्तथाऽपि नैव तस्य प्रवेशो न्यायमनुसरतीत्यर्थः । कथं न्यायासंगतिस्तत्राऽऽह—नेहेति । अव्याकृतस्य कारणत्वेनास्मिन्प्रकरणे प्रकृतत्वात्कारणत्वेनाकारणत्वेन च परस्याप्रकृतत्वान्न तस्य प्रवेशसिद्धिरित्यर्थः ।।५१६।।

परस्य प्रकृतत्वं दर्शयन्पूर्वापरविरोधं समाधत्ते—नेत्यादिना । अव्याकृतवदित्यपेरर्थः । परस्य जगद्धेतुत्वेन तत्प्रवेष्टृत्वेन च सर्वोपनिषत्प्रसिद्धत्वार्थो हिशब्दः । व्याक्रियतेति कर्मकर्तृत्वप्रयोगाज्जगत्कर्तुरविवक्षितत्वमुक्तमित्याशङ्क्याऽऽह—आक्षिप्तेति । जगद्व्याकरणस्य नियन्त्राद्यतिरेकणायोगात्तद्युक्तं जगदव्याकृतशब्देनोच्यते मुच्यते वत्सः स्वयमेवेतिवत्कर्मकर्तरि लकारस्तु व्याकरणसौकर्यापेक्षयोक्तोऽतोऽस्ति परस्य प्रकृतत्वमिति न पूर्वापरविरोध इत्यर्थः ।।५१७।।

अव्याकृतशब्दस्य नियन्त्रादियुक्तजगद्वाचित्वे हेत्वन्तरमाह—इदंशब्देति । अतःशब्दस्य पञ्चम्या संबन्धः । यथोक्तोऽर्थो नियन्त्रादिसाहित्यम् । अत्रेत्यव्याकृतजगदुक्तिः । सामानाधिकरण्यस्याभिन्नार्थवृत्तित्व-

१. देवताधिकरण अग्निसूर्यादयः यस्य करणानि "अग्निर्मूर्द्धा चक्षुषी चन्द्रसूर्यौ" इत्यादिश्रुतेः ।

**इदं जगन्नियन्त्रादिविभिन्नानेकरूपवत् । यथाऽधुना निश्चिनुमः प्रागप्येतदभूत्तथा ॥१९॥**
**नामरूपाद्यभिव्यक्तेः प्राग्व्यक्तापह्नवेऽप्यभूत् । अव्यक्ताध्यक्ष एकाकी व्यक्तं यत्साक्षिकं जगत् ॥२०॥**
**जगज्जनिस्थितिध्वंसनृत्तसाक्ष्यतिरेकतः । शिष्टस्येह प्रवेश्यत्वात्पर एवाऽऽविशेदतः ॥२१॥**
**विवक्षातश्च शब्दानां प्रयोगो जगतीक्ष्यते । यथा ग्रामादिशब्दानां तथेहाप्यवसीयताम् ॥२२॥**
**निवासश्च निवासी च तथा चोभयमुच्यते । ग्रामशब्देन लोकेऽस्मिंस्तथेहापि जगद्गिरा ॥२३॥**
**क्वचिदात्मैव निर्देश्योऽनात्मैव क्वचिदुच्यते । तथोभयविवक्षाऽपि व्याकृताव्याकृतोक्तितः ॥२४॥**
**यत्र नाशादिमद्वस्तु प्राधान्येन विवक्ष्यते । तत्रानात्मैव वाच्योऽर्थः प्रत्यगात्मोपसर्जनः ॥२५॥**
**अस्थूलोऽजोऽजरः शुद्धो यत्र चाप्यभिधीयते । प्रत्यगात्मविवक्षैव तत्र ज्ञेयाभिधानतः ॥२६॥**
**अव्यक्तं व्याकृतं विश्वं यत्र चाप्यभिधीयते । आत्मानात्मद्वयार्थैव विवक्षा तत्र गम्यते ॥२७॥**

अव्याकृतशब्देन परस्यागानेऽपि न दोषः

**यन्मदन्यदिति चोक्तेः परस्य प्रकृतत्वतः । सशब्देन परामर्शः परस्येह भवेदतः ॥२८॥**

प्रसिद्धचर्थो हिशब्दः । इदंशब्देन व्यक्तजगदभिधानेनाव्याकृतपदस्याव्यक्तजगदभिधानस्य सामानाधिकरण्यश्रवणादस्मादस्मिञ्जगति सर्वत्रैव नियन्त्रादिसाहित्यमुचितमिति योजना ॥५१८॥

कथमुक्तसामानाधिकरण्यमात्रादव्याकृतस्य जगतो नियन्त्रादियुक्तत्वं तत्राऽऽह—इदमिति । आदिपदेन करणोपकरणादिग्रहणम् । इदमा च दृश्यमानं घटादि परामृश्यते । दृष्टानुसारिणी कल्पनेति भावः ॥५१९॥

अव्याकृते जगति नियन्त्रादियुक्ते साधकवैधुर्यमाशङ्क्याऽऽह—नामेति । नामरूपाभ्यां व्यक्तं जगद्येन साक्षिणा नियन्त्रादियुक्तमनुभूयते स एव तदुत्पत्तेः पूर्वं तदपह्नवादूर्ध्वं च तद्व्यक्ताव्यक्तसाधको न च तस्यान्यसाधकापेक्षैकाकित्वात्स्वप्रकाशत्वाच्चेत्यर्थः ॥५२०॥

परस्य प्रकृतत्वोक्त्या तस्यैव प्रवेशमुक्त्वा तत्रैव हेत्वन्तरमाह—जगदिति । साक्षिणो भेदेन श्रुतं दृष्टं वा यदवशिष्टं तस्य सर्वस्य प्रवेशविषयान्तर्भावात्परात्मैव जगति प्रवेष्टा तन्न भेदशङ्केत्यर्थः ॥५२१॥

अव्याकृतवाक्ये परस्य न प्रकृतत्वमेकस्याव्याकृतशब्दस्यानेकार्थत्वाभावादित्याशङ्क्याऽऽह—विवक्षातश्चेति । शक्त्यनुरोधं दृष्टान्तयितुं चशब्दः । ईक्षणमेव दृष्टान्तनिष्ठतया दर्शयति—यथेति । ग्रामपटादिशब्दवदव्याकृतशब्देऽप्यनेकार्थतेति दार्ष्टान्तिकमाह—तथेति ॥५२२॥

कथं ग्रामशब्दस्यानेकार्थत्वं तत्राऽऽह—निवासश्चेति । ग्रामः शून्यो ग्रामो गतो ग्रामं न प्रविशेदित्युदाहरणानि । जगदव्याकृतशब्दयोरेकार्थत्वमादायोक्तमेव दार्ष्टान्तिकमादत्ते—तथेति । इहेति शास्त्रोक्तिः । जगद्गिराऽनेकार्थविवक्षेति शेषः ॥५२३॥

दार्ष्टान्तिकं प्रपञ्चयति—क्वचिदिति । उभयविवक्षायामुदाहरणमाह—व्याकृतेति । व्याकृतमेव जगदव्याकृतमित्युक्तेरित्यर्थः ॥५२४॥

कुत्रानात्मैव जगच्छब्देनोच्यते तत्राऽऽह—यत्रेति । जगदुत्पत्तिनाशादिमदित्यादिप्रयोगे जगच्छब्देनानात्मैव प्राधान्येनोच्यते तस्मिन्प्रत्यगुपसर्जनीभवत्यन्यथा जन्माद्ययोगादित्यर्थः ॥५२५॥

कुत्र प्राधन्येनाऽऽत्मैव जगच्छब्देनोच्यते तत्राऽऽह—अस्थूल इति । यत्र निषेध्यत्वेन स्थूलादि जगत्कथ्यते तत्र प्रत्यगात्मैव निषेध्यार्पणद्वारा तच्छब्देन विवक्ष्यते निषेधमात्रे तदपर्यवसानस्य वक्ष्यमाणत्वादित्यर्थः ॥५२६॥

उभयविवक्षया जगच्छब्दप्रयोगस्तर्हि क्वेत्याशङ्क्य तद्धेदमित्यादावित्याह—अव्यक्तमिति । व्याकृताव्याकृतोक्तित इत्येतदेवात्र व्यक्तीकृतमिति न पौनरुक्त्यम् ॥५२७॥

अव्याकृतवाक्ये परस्य प्रकृतत्वात्तस्य प्रवेशवाक्ये सशब्देन परामर्श उक्तः । यदि तस्य तत्र प्रकृतत्वं नेष्टं तथाऽपि यन्मदन्यन्नास्तीत्यत्र प्रकृतत्वात्तस्यात्र सशब्देन परामर्शात्तस्यैव स्रष्टुः सृष्टे जगति प्रवेशो युक्त इत्याह—

### प्रवेशस्य बहुधा विकल्प्य खण्डनम्

**अव्यावृत्ताननुगतयाथात्म्यादात्मवस्तुनः । ननु प्रवेशस्तस्येह कथं श्रुत्योपदिश्यते ॥२९॥**
**अप्रविष्टं यतो वेश्म परिच्छिन्नेन शक्यते । प्रवेष्टुं पुरुषेणैवं न खेनैतद्विधर्मतः ॥३०॥**
**सर्वगाणामपि यथा भूतानां परिणामतः । सर्पादीनां प्रवेशः स्यादुपलादौ मतं यदि ॥३१॥**
**युतसिद्धनिवृत्त्यर्थं सहजोक्त्याऽभिधीयते । अश्मनः परिणामत्वात्सर्पादेः परिपाकतः ॥३२॥**
**दृश्यतेऽन्तस्थतोयानां बहिष्ठः परिपाकतः । परिणामः पदार्थानां क्रिमिसर्पादिलक्षणः ॥३३॥**
**नैवं यस्मादनापन्नधर्मान्तर इहोच्यते । कार्ये प्रविष्टः स्रष्टैव पुमान्वेश्मेव तत्कृतम् ॥३४॥**
**यथा भुक्त्वैति नगरं भुज्येतिक्रिययोर्नरः । अविशिष्टो भवेत्कर्ता भिन्नकालस्थयोस्तथा ॥३५॥**
**सृष्ट्वेदं सकलं विश्वं पश्चात्तत्प्राविशद्विभुः । अनुपात्तान्यधर्मः सन्न तु पाषाणसर्पवत् ॥३६॥**
**न चानवच्छिन्नतनोर्निर्विभागात्मवस्तुनः । पूर्वस्थानवियोगेन स्थानान्तरसमागमः ॥३७॥**

यदित्यादिना । इहेति प्रवेशवाक्योक्तिः । परस्य सर्वनाम्ना परामर्शे तस्यैव सृष्टे जगति प्रवेशः सिध्यतीति फलितमाह—अत इति ॥५२८॥

प्रकारान्तरेण तस्य प्रवेशमाक्षिपति—अव्यावृत्तेति । इहेति बुद्ध्यादिनिर्देशः ॥५२९॥

कथमिति सूचितानुपपत्तिमेव स्पष्टयति—अप्रविष्टमिति । पुरुषवदाकाशेन वेश्म न प्रवेष्टुं शक्यं तस्यापरिच्छिन्नत्वेन तद्वैलक्षण्यादतो न पूर्णस्य क्वचित्प्रवेशसिद्धिरित्याह—एवमिति ॥५३०॥

निदर्शनवशादाशङ्कते—सर्वगाणामिति । यथा पृथिव्यादिभूतानां सर्वकार्यव्यापिनामपि परिणामवशात् प्राप्तसर्पकृमिकीटादिभावानां तेनैव सर्पाद्याकारेण पाषाणदार्वादौ प्रवेशस्तथा परस्य सर्वगतस्यापि जीवाख्यपरिणामद्वारा बुद्धौ प्रवेशः स्यादिति यदि मतमिति शङ्कार्थः ॥५३१॥

पृथिव्यादीनां सर्पाद्यात्मना पाषाणादौ प्रवेशो न युक्तः पाषाणे सहजोऽन्तस्थः सर्प इति भाष्यविरोधादित्याशङ्क्य सहजशब्दार्थमाह—युतेति । पाषाणाद्बाह्यः सर्पादिस्तस्मात्पृथगेव सिद्धस्तत्र प्रविष्ट इति शङ्कापोहार्थं सहजशब्देनोक्त इत्यर्थः । पाषाणादौ सर्पादेः सहजत्वे हेतुमाह—अश्मन इति । सर्पमण्डूकादेरश्मादिरूपेण स्थितभूतपञ्चकपरिणामत्वात्तत्र सहजत्वमित्यर्थः । कथमश्माद्यात्मकभूतपञ्चकस्य सर्पादिरूपेण परिणामस्तत्राऽऽह—परिपाकत इति ॥५३२॥

कालादिपाकवशात्पृथिव्यादिपञ्चकस्य सर्पादिपरिणाममनुभवेन साधयति—दृश्यत इति । अस्मदुदरेषु पाषाणादिषु चान्तःस्थानि यानि तोयोपलक्षितानि भूतानि पदार्थशब्दितानि तेषां पाकवशात्परिणामः सर्पादिलक्षणो बहिष्ठो लक्ष्यतेऽतस्तद्रूपेणाश्मादावपरिच्छिन्नभूतानुप्रवेशवदपरिच्छिन्नस्यापि परस्य जीवाकारेण बुद्ध्यादौ प्रवेशसिद्धिरित्यर्थः ॥५३३॥

पूर्ववाद्याह—नैवमिति । यथा देवदत्तोऽनेकशिल्पपर्यवदातः स्वकृतं वेश्म प्रविशति तथैव स्रष्टा सृष्टे कार्ये बुद्ध्यादावप्राप्तपरिणामविशेषः सन्प्रविष्टोऽस्तीति तत्सृष्ट्वेत्यादिश्रुत्या यस्मादुच्यते तस्मान्नोपदिष्टदृष्टान्तवशादाशङ्का सावकाशेत्यर्थः ॥५३४॥

ननु तक्ष्णा सृष्टे वेश्मनि ततोऽन्यस्यापि प्रवेशो दृश्यते तथा परेण सृष्टे जगत्यन्यस्य प्रवेशो भविष्यति नेत्याह—यथेति । चैत्रो भुक्त्वा नगरं व्रजतीत्यत्र भोजनव्रजनक्रिययोरव्यवहितपूर्वोत्तरकालवर्तिन्योरेकश्चैत्रो यथा कर्ता स्वीकृतस्तथा विश्वमशेषं तदेवानापन्नविकारः स्रष्टा प्राविशदिति श्रवणान्न स्रष्टुरन्यस्य प्रवेष्टृत्वमित्यर्थः । स्रष्टू रूपान्तरमनापन्नस्यैव कार्ये प्रवेशश्रवणात्पाषाणे सर्पाकारस्य भूतस्यानुप्रवेशवत्परस्यानुप्रवेशो नेति व्यावर्त्यमाह—न त्विति ॥५३५–५३६॥

अस्तु तर्हि परस्य मार्जारादिवत्पूर्वस्थानत्यागेन स्थानान्तरसंयोगात्मा प्रवेशो नेत्याह—न चेति । अपरिच्छिन्नत्वान्निरवयवत्वाच्चाऽऽत्मनो न प्रसिद्धप्रवेशसिद्धिरित्यर्थः ॥५३७॥

---

१. ११८-१६ ।

मतं प्रवेशश्रवणादस्तु सावयवः परः । इति चेन्नैतदेवं स्यादागमोक्तिविरोधतः ॥३८॥
दिव्यो ह्यमूर्तः पुरुषो नेति नेतीति चासकृत् । गीर्मनोगम्यधर्माणां सर्वेषामात्मनि ह्नुतेः ॥३९॥
रविबिम्बादिवर्त्तर्हि प्रवेशोऽस्तु परात्मनः । नैतन्न्याय्यमसद्भावात्तत्संयोगवियोगयोः ॥४०॥
संयोगश्च वियोगश्च यस्य येनेह वीक्ष्यते । प्रतिबिम्बप्रवेशोऽयं तत्र न त्विह युज्यते ॥४१॥
गुणप्रवेशवद्द्रव्य इति चेन्नानपाश्रयात् । द्रव्यैकपरतन्त्राणां गुणानामेव युक्तिमान् ॥४२॥
तादृक्प्रवेशो नेशस्य स्वातन्त्र्यादुपपद्यते । एष सर्वेश्वर इति स्वातन्त्र्यं श्रूयतेऽसकृत् ॥४३॥
बीजवत्स्यात्प्रवेशश्चेन्नैवमप्युपपद्यते । जन्मादिविक्रियाधर्मप्रसक्तेरात्मवस्तुनः ॥४४॥
स्थूलादिविक्रियाषट्कप्रतिषेधश्रुतेर्न च । प्रवेशो ब्रह्मणोऽयुक्तः फले बीजादिवत्सदा ॥४५॥
ननु पाषाणसर्पेण पुनरुक्तमिदं कथम् । फले बीजवदित्युक्तं नैष दोषो भवेत्कुतः ॥४६॥
भागभाग्यभिसंबन्धः ख्यातो बीजफलात्मनोः । आधाराधेयसंबन्धस्तत्राश्मोरगयोः स्फुटः ॥४७॥

प्रवेशश्रुतिवशान्निरवयवत्वं त्याज्यमिति शङ्कते—मतमिति । श्रुतिविरोधान्न सावयवत्वं परस्येति परिहरति—नैतदिति ॥५३८॥

आगममुदाहरति—दिव्यो हीति । द्योतनात्मकस्य चिदेकरसत्वात् । अमूर्तत्वं निरवयवत्वम् । पुरुषत्वं पूर्णत्वम् । सर्वविशेषनिषेधश्रुतिमत्रानुकूलयति—नेतीति । अस्यामुपनिषदि बहुषु देशेषु निषेधाभ्यासं सूचयति—असकृदिति । वीप्साश्रुतेरर्थमाह—गीरिति । न परस्य सावयवत्वादिसंभावनेति शेषः ॥५३९॥

प्रकारान्तरेण प्रवेशोपपत्तिं शङ्कते—रवीति । तस्य परस्य केनचित्संयोगाद्यभावान्न प्रतिबिम्बोपपत्तिरित्याह—नैतदिति ॥५४०॥

तदेव विभजते—संयोगश्चेति । प्रथममिहेति पदं लोकव्यवहारं गोचरयति । द्वितीयं त्वात्मानमधिकरोति । तत्रेति संयोगादिप्रतियोगिनो जलादेरुक्तिः । तस्याऽऽदित्यादेरिति द्रष्टव्यम् । आदित्यादौ जलादिना संयोगादिसंभवात्प्रतिबिम्बाख्यप्रवेशसिद्धेरात्मन्यसङ्गेऽनवच्छिन्ने संयोगाद्यभावान्न प्रतिबिम्बरूपः प्रवेशः इत्यर्थः ॥५४१॥

प्रकारान्तरेण प्रवेशं चोदयति—गुणेति । यथा द्रव्ये गुणस्य प्रवेश एवं परस्यापि कार्ये प्रवेश इत्यर्थः । दूषयति—नेति । गुणापेक्षया परस्य वैलक्षण्यं हेतुमाह—अनपाश्रयादिति । वैलक्षण्यं प्रकटयति—द्रव्येति । द्रव्ये प्रवेश इति शेषः ॥५४२॥

दार्ष्टान्तिकेऽनुपपत्तिमाह—तादृगिति । न हि कारणं कार्यतन्त्रं वैपरीत्यादतो द्रव्ये गुणवदीश्वरस्य प्रवेशो न कार्ये युक्तः स्वतन्त्रतया गुणवैधर्म्यादित्यर्थः । कथं स्वातन्त्र्यं तदाह—एष इति । तत्र श्रुतेस्तात्पर्यं सूचयति—असकृदिति ॥५४३॥

प्रकारान्तरेण प्रवेशमुपन्यस्य निरस्यति—बीजवदिति । फले बीजस्य प्रवेशवत्कार्ये परस्य प्रवेशो न युक्त इत्यत्र हेतुमाह—जन्मादीति ॥५४४॥

आत्मनो विक्रियावत्त्वे का क्षतिस्तत्राऽऽह—स्थूलादीति । स्थूलादेरस्त्यादिविक्रियाषट्कस्य च निषेधश्रुतेर्नाऽऽत्मनो विकारितेति योजना । आत्मनो विकारित्वाभावे फलितमाह—प्रवेश इति । अयुक्त इति च्छेदः । सदाशब्दश्चात्र योजनीयः । आदिपदं बीजातिरिक्तफलप्रविष्टसर्वसंग्रहार्थम् । अथवा स्थूलादिद्वैतजन्मादिविक्रियाषट्कस्य फले बीजवत्प्रवेशे ब्रह्मण्यपि प्रसक्तस्य श्रुतिस्मृत्योर्निषेधश्रुतेः सदादर्शनान्नैव ब्रह्मणस्तथा प्रवेशो युक्त इति हेत्वन्तरमाह—स्थूलादीति ॥५४५॥

फलबीजदृष्टान्तस्य पाषाणसर्पदृष्टान्तेन पुनरुक्तिं शङ्कते—नन्विति । पुनरुक्त्यभावं प्रतिजानीते—नेति । अर्थविशेषाभावे दुर्वारा सेत्याक्षिपति—कुत इति ॥५४६॥

अर्थविशेषं वदन्नुत्तरमाह—भागेति । बीजफलयोरवयवावयवित्वं पाषाणसर्पयोराधाराधेयतेति न पुनरुक्तिरित्यर्थः । तत्रेति निर्धारणे सप्तमी ॥५४७॥

परस्मादन्य एवेह संसारी प्राविशज्जगत् । परिच्छिन्नस्य लोकेऽपि प्रवेश उपपद्यते ॥४८॥

प्रवेशश्रुत्युपपत्तिप्रतिज्ञा

स्रष्टृप्रवेष्ट्रोरेकत्वान्नैवमप्युपपद्यते । सृष्ट्वा जगत्सृष्टिमनु तदेव प्राविशच्छ्रुतेः ॥४९॥
पर एव प्रविष्टश्चेत्प्रविष्टानामनेकतः । तदनन्यत्वतः प्रापन्महेशस्याप्यनेकता ॥५०॥
नैष दोषो यतो नेह भेदेनेशस्य संगतिः । आत्मत्वरूपतस्तस्य ह्यात्मा चाभेदसंगतेः ॥५१॥
अनन्यत्वं प्रविष्टैः स्यान्नानात्वमिति दुर्भणम् । बहूनामेकयोगित्वादेकत्वं किं न चोद्यते ॥५२॥
न च नानात्वकृल्लोके संयोगोऽभेदकारणात् । तथाऽऽगमविरोधश्च बहुत्वं चेत्परात्मनः ॥५३॥
एको देवो बहुधेतिमन्त्रब्राह्मणयुक्तितः । वियद्वदेकलस्तस्मादीश्वरोऽभ्युपगम्यताम् ॥५४॥

परस्य प्रवेशाभ्युपगमे दोषकथनम्

आस्तां तावत्प्रवेशोऽयं न्याय्योऽन्याय्यो यथा तथा । दोषान्तरमिह प्राप्तं तत्तावत्प्रविचार्यते ॥५५॥
संसारित्वात्प्रविष्टानां परस्य तदभेदतः । संसारित्वं प्रसक्तं चेन्न क्षुदाद्यत्ययश्रुतेः ॥५६॥

परस्य सर्वप्रकारप्रवेशासंभवे प्रवेशश्रुतेरालम्बनं वाच्यमित्याशङ्क्य पूर्वपक्षमुपसंहरति—परस्मादिति । इह श्रुतौ यो जगत्प्राविशदित्युक्तः स परस्मादन्यः संसार्येवेति योजना । किंच परस्मादन्यस्य प्रवेशो लोके युक्त्यनुसारीत्याह—परिच्छिन्नस्येति । न च श्रुतिविरोधः परस्यैव जीवभावमापन्नस्य प्रवेशवादित्वादिति भावः ॥५४८॥

एवं पूर्वपक्षे सिद्धान्तमाह—स्रष्ट्रिति । जगतो हि परः स्रष्टेति वेदान्तमर्यादा स्रष्टैव च प्रवेष्टा "तत्सृष्ट्वा तदेवानुप्राविशदि"त्येककर्तृकत्वश्रुतेरतः परस्मादन्यस्य प्रवेशो नैव युक्तः । अपिरवधारणार्थ इति योजना ॥५४९॥

परस्य प्रवेशे तस्य नानात्वप्रसक्तिरित्यनिष्टापत्तिं शङ्कते—पर इति । प्रविष्टानामनेकत्वेऽपि कथमीशस्यानेकत्वमित्याशङ्क्य प्रविष्टैरभेदादित्याह—तदनन्यत्वत इति ॥५५०॥

प्रविष्टेषु परस्य भेदेन न संयोगादिसंबन्ध आत्मत्वेन तत्स्वरूपत्वान्न चाऽऽत्मत्वेऽपि भेदेन संगतिरभेदेनैकात्म्यसंगतेरेवाऽऽत्मत्वसंभवादतो न परस्यानेकतेति परिहरति—नेत्यादिना । आत्मत्वं नाम निरुपचरितस्वरूपत्वं तदैकात्म्यसंगतेराक्षेपकमिति प्रसिद्धमिति वक्तुं हिशब्दः ॥५५१॥

परस्य प्रविष्टैरभेदेऽपि नानात्वमनेकाभिन्नत्वादित्याशङ्क्याऽऽह—अनन्यत्वमिति । प्रविष्टैरनन्यस्य तैरेवान्यत्वे विरुद्धेऽपि बहुभिरभेदात्तद्वन्नानात्वे कः समाधिरित्याशङ्क्याऽऽह—बहूनामिति । एकस्य बहुभिः अभेदादनेकत्वं चेद्बहूनामेकस्मादभेदादेकत्वं किं न स्यादित्यर्थः ॥५५२॥

परः स्वगतभेदवाननेकाभिन्नत्वात्तद्वदित्यत्रानेके तत्त्वतः स्वगतभेदहीना एकाभिन्नत्वादेकवदिति प्रत्यनुमानमुक्त्वाऽभिन्नत्वस्य भेदसाधकत्वे लोकविरोधमाह—न चेति । यथा संयोगोऽभेदकस्तथा नाभेदो नानात्वकारी दृष्टस्तस्याभेदकत्वादेव तद्विरोधित्वादित्यर्थः । भेदसाधनस्यानुमानेन लोकप्रसिद्ध्या च विरोधवदागमेनापि सोऽस्तीत्याह—तथेति ॥५५३॥

भाष्योक्तमन्त्रब्राह्मणाभ्यां नानात्वस्य दुर्निरूपत्वं युक्तेश्च न तत्परस्येति प्रतिज्ञातं विरोधमेव स्फुटयति—एक इति । नानात्वायोगे फलितमाह—वियद्वदिति । परः स्वगततात्त्विकभेदहीनो मेयत्वादाकाशवदित्यर्थः ॥५५४॥

परस्य प्रवेशे नानात्वप्रसङ्गं प्रत्याख्याय दोषान्तरं चोदयति—आस्तामिति । युक्तोऽयुक्तो वा येन केनापि प्रकारेण प्रवेशोऽस्तु श्रुतिवशादिति योजना । श्रुत्यवष्टम्भेन संक्षिप्तः प्रवेशः प्रपञ्चयितव्यः पश्चादिति तावच्छब्दः । अनेकत्वदोषाभावेऽपि परस्य प्रवेशपक्षे दोषान्तरं प्राप्नोति तच्च निराकर्तुं शक्यमशक्यं वेति विचार्याशक्यमिति निर्धार्योच्यत इत्याह—दोषान्तरमिति । तस्यापि निरासो भावीति तावच्छब्दः ॥५५५॥

तदेव दर्शयति—संसारित्वादिति । परः संसारी तदभिन्नत्वात्तद्वदित्यनुमानं दूषयति—नेत्यादिना । "योऽशनापिपासे शोकं मोहं जरां मृत्युमत्येती"त्यशनायादिशून्यत्वं परस्य श्रूयते तत्कुतोऽस्य संसारित्वं श्रुतिविरोधादित्यर्थः ॥५५६॥

सुखिदुःखित्वमोहादिदर्शनान्नेति चेन्मतम् । नैवं वेदान्तवाक्येषु न लिप्यत इति श्रुतेः ॥५५७॥
ननु प्रत्यक्षमानेन साक्षाद्दुःखादिदर्शने । प्रत्यक्षबाधसिद्ध्यर्थं न न्याय्योक्तिपरंपरा ॥५५८॥
नोपाध्याश्रयजनितविशेषविषयत्वतः । प्रत्यक्षाभासतासिद्धेस्तेन नोक्तिविरोधिता ॥५५९॥
दुःखी यदि भवेदात्मा कः साक्षी दुःखिनो भवेत् । दुःखिनः साक्षिताऽयुक्ता साक्षिणो दुःखिता तथा ॥५६०॥

साक्षिणो दुःखाद्यसंसृष्टता

नर्ते स्याद्विक्रियां दुःखी साक्षिता का विकारिणः । धीविक्रियासहस्राणां साक्ष्यतोऽहमविक्रियः ॥५६१॥
सुखदुःखादिसंबद्धां यथा दण्डेन दण्डिनम् । राधको वीक्षते बुद्धिं साक्षी तद्वदसंहतः ॥५६२॥
शरीरेन्द्रियसंघात आत्मत्वेन गतां धियम् । नित्यात्मज्योतिषा दीप्तां विशिंषन्ति सुखादयः ॥५६३॥
पराञ्च्येव तु सर्वाणि प्रत्यक्षादीनि नाऽऽत्मनि । प्रतीच्येव प्रवृत्तं तत्सदसीति वचोऽञ्जसा ॥५६४॥
विज्ञातारमरे केन न दृष्टेरिति च स्फुटम् । अन्यदेवेति वाक्याच्च प्रत्यक्षं नाऽऽत्मगोचरम् ॥५६५॥
किंतु बुद्ध्याद्युपाधौ तदात्मच्छायैककर्मकम् । तथा दुःख्यहमित्यादौ प्रत्यक्षमुपचारतः ॥५६६॥

अनुभवमनुसृत्य शङ्कते—सुखीति । न क्षुदादिवैधुर्यं परस्येति शेषः । उक्तमेव समाधिमाह—नैवमिति ॥५५७॥

आगमो हि परस्यासंसारित्वे त्वयोच्यते स चाध्यक्षविरुद्धो न स्वार्थे मानं न च वैपरीत्यं ज्येष्ठत्वेन बलवत्त्वादिति शङ्कते—नन्विति ॥५५८॥

उपाधिरन्तःकरणं तदाश्रयत्वेन जनितो विशेषश्चिदाभासस्तद्गतदुःखादिविषयत्वात्प्रत्यक्षस्याऽऽभासत्वसिद्धिस्तेनाऽऽत्मन्यसंसारित्वागमस्य न विरोधस्तथा चाऽऽगमात्स्वार्थे धीरिति परस्य नास्ति संसारितेति परिहरति—नोपाधीति ॥५५९॥

किमित्याभासद्वारा चैतन्ये दुःखित्वं कल्प्यते साक्षादेव किं न स्यादित्याशङ्क्याऽऽह—दुःखीति । दुःख्येव कश्चिद्दुःखिनः साक्षीत्याशङ्क्याऽऽह—दुःखिन इति । तथेत्ययुक्तेति यावत् ॥५६०॥

दुःखित्वसाक्षित्वयोरेकत्रायोगे हेतुमाह—नेति । परिणामित्वं विना न दुःखितेत्यर्थः । परिणामित्वेऽपि साक्षित्वमाशङ्क्याऽऽह—साक्षितेति । तस्य जाड्यादसाक्षितेत्यर्थः । विकारिणोऽसाक्षित्वे फलितमाह—धीविक्रियेति । प्रत्यगात्मा निर्विकारो बुद्धितद्वृत्तिसाक्षीत्युक्तम् ॥५६१॥

तदानीं तस्य साक्ष्येण योगश्चेदसङ्गत्वहानिरयोगश्चेदसाक्षितेत्याशङ्क्याह—सुखेति । राधकः साधको द्रष्टेति यावत् । यथा द्रष्टा दण्डेन युक्तं मैत्रमीक्षमाणो न स्वयं दण्डी तथा सुखादिमतीं बुद्धिमसंहतः सन्पश्यन्साक्षी न सुखादिना युज्यतेऽतो वस्तुतोऽसङ्गस्य कल्पितसंबन्धात्साक्षितेत्यर्थः ॥५६२॥

सुखादिमती बुद्धिरेव नाऽऽत्मेत्युपपादयति—शरीरेति । देहादावात्मत्वेन स्थितां साभासां बुद्धिं सुखादयो व्यावर्तयन्ति । तद्बौद्धसुखादिविषयमध्यक्षमिति न चितः संसारितेत्यर्थः । सुखादीनां चेतनधर्मत्वप्रसिद्धेर्बुद्धिस्थत्वमयुक्तमिति चेन्नेत्याह—नित्येति । आत्मचैतन्यव्याप्तबुद्धिधर्मत्वादात्मधर्मत्वप्रसिद्धिरित्यर्थः ॥५६३॥

प्रत्यक्षादीनामनात्मविषयत्वादात्माविषयत्वाच्चाऽऽगमस्य भिन्नविषयतया मिथो विरोधो नेत्यत्र श्रुतिं प्रमाणयति—पराञ्चीति । पराञ्चि खानीतिश्रुतेरनात्मविषयाणि प्रत्यक्षादीनि नाऽऽत्मविषयाणि नान्तरात्मन्निति विशेषणात् । सदसीत्यादिवचस्त्वसंसारित्वप्रतिपादकमात्मन्येव तात्पर्येण प्रवृत्तमतो न मिथो विरोध इत्यर्थः ॥५६४॥

प्रत्यक्षादेरात्माविषयत्वं भाष्योक्तश्रुत्याऽप्याह—विज्ञातारमिति । स्फुटमात्मनो दृष्टिविषयत्वनिषेधादिति शेषः । प्रत्यक्षमित्यनुमानादेरुपलक्षणम् ॥५६५॥

सुख्यहमित्याद्यध्यक्षस्य तर्हि को विषयस्तत्र नोपाध्याश्रयेत्यादावुक्तं स्मारयति—किं त्विति । देहद्वयरूपोपाधावात्माभासोदयात्तन्मात्राश्रितं सुखादि विषयीकृत्याध्यक्षं चरितार्थीभवतीत्यर्थः । भिन्नविषयत्वादविरोधे

सामानाधिकरण्यस्य तथैवेहोपचारतः । अयं दुःख्यहमस्मीति विषयेण तदीक्षणात् ॥६७॥
नासिकाग्रे महद्दुःखं पादाङ्गुष्ठाग्र एव च । देहावयवदुःखादेः प्रात्यक्ष्यान्नाऽऽत्मदुःखिता ॥६८॥
प्रतीचि चेद्भवेद्दुःखं व्यापि चैतन्यवद्भवेत् । द्रष्टृस्थत्वान्न कर्मस्थं द्रष्ट्रा दृश्येत बोधवत् ॥६९॥

सुखादेरात्माश्रयत्वशङ्कापरिहारौ

स्वात्मनस्त्वेव कामाय ह्यात्मार्थत्वश्रुतेर्भवेत् । आत्मैकविषयं सौख्यमिति चेन्मन्यसे न हि ॥७०॥
यत्र वा अन्यदित्युक्तेरविद्याविषयं तु तत् । दुःखित्वं नाऽऽत्मनि ज्ञेयं यत्र त्वस्येति निह्नुतेः ॥७१॥
मम तावदिदं बुद्धौ भवद्वचो यन्न रोचते । प्रत्यक्प्रवणया दृष्ट्या संसारो नाऽऽत्मनीक्ष्यते ॥७२॥

तार्किकमतेनात्मनः संसारित्वशंका परिहारश्च

मतं तार्किकसमयविरोधश्चेत्प्रसज्यते । इच्छाद्वेषादिमानात्मा यतस्तैरभ्युपेयते ॥७३॥
नैवं निःशेषतर्कैश्चेदविरोधोऽभ्युपेयते । सिद्धान्तो दुःस्थितोऽत्यर्थं तदा वः प्राप्नुयाद्ध्रुवम् ॥७४॥

हेत्वन्तरमाह—तथेति । तदेव स्फुटयते—दुःखीति । यथा ब्राह्मणोऽहमित्याद्यध्यक्षं कल्पिततादात्म्यविषयं तथा दुःख्यहमित्यादौ यत्प्रत्यक्षं तदपि मिथ्याज्ञानमेवोपचारशब्देन विषयस्य मिथ्यात्वोक्तेरित्यर्थः ॥५६६॥

प्रकृताध्यक्षस्य मिथ्यात्वे हेतुं साधयति—सामानाधिकरण्यस्येति । ब्राह्मणोऽहमित्यैक्यस्य मिथ्यात्वात् तद्विषयाध्यक्षस्य मिथ्याज्ञानत्ववद्दुःखिन्यात्मनि च यत्सामानाधिकरण्यमैक्यमध्यक्षविषयस्तस्योपचारतो मिथ्यात्वाद्विषयिणोऽपि तस्य मिथ्याज्ञानतेत्यर्थः । विषयस्य मिथ्यात्वमेव कथमित्याशङ्क्याऽऽह—अयमिति । विषयिणो विषयेणैक्यभानाद्रूप्यादिवदैक्यस्य मिथ्यात्वं, न चान्यस्यान्यात्मत्वममिथ्येत्यर्थः ॥५६७॥

आत्मनो दुःखित्वाभावे हेत्वन्तरमाह—नासिकेति । दुःखादावित्यादिपदेन सुखादि गृह्यते ॥५६८॥

किं दुःखमात्मनि व्याप्यवृत्ति प्रदेशवृत्ति वा ? प्रथमे देहाद्बहिरपि तद्धीः स्यात् । न च तद्धेत्वभावान्नेति वाच्यं तथा सति तद्व्याप्यवृत्तित्वस्याप्रामाणिकत्वात्तस्य स्वसत्तायां प्रतीत्यव्यभिचारित्वात् । न द्वितीयः सर्वगतस्य प्रतीचो वास्तवप्रदेशाभावात्कल्पितप्रदेशाश्रितं दुःखमपि तथेति मत्वाऽऽह—प्रतीचीति । दुःखादेरात्मधर्मत्वे दोषान्तरमाह—द्रष्टृस्थत्वादिति । द्रष्टरि स्थितत्वात्कर्मत्वेन स्थितं सद्दुःखादि तेनैव द्रष्ट्रा न दृश्येत स्वगतग्रहे स्वस्यापि ग्रहप्रसङ्गाद्यथा बोधो न कर्मत्वेन गृह्यतेऽनवस्थानात्तद्वत् । अस्ति च दुःखादेरात्मदृश्यत्वमतो न तद्धर्मतेत्यर्थः ॥५६९॥

सुखादेरात्माश्रयत्वं श्रुतेराशङ्कते—स्वात्मनस्त्विति । सुखं तावदात्माश्रय"मात्मनस्तु कामाये"ति सुखसाधनस्याऽऽत्मार्थत्वश्रुतेस्ततस्तदविनाभूतं दुःखमपि तत्रैवेत्यात्मनि संसारित्वं श्रौतमित्यर्थः । श्रुतेरनुभवानुसारित्वद्योतनार्थो हिशब्दः । आत्मन्याविद्यसंसारित्वानुवादेन परानन्दत्वप्रतिपादकमात्मनस्तु कामायेत्यादिवाक्यमिति मत्वाऽऽह— न हीति ॥५७०॥

तदाविद्यसंसारानुवादीत्यत्र गमकमाह—यत्रेति । आत्मनि संसारित्वस्याप्रतिपाद्यत्वं व्यावर्त्यमाह—दुःखित्वमिति । तत्रापि गमकमाह—यत्र त्विति ॥५७१॥

विद्वत्प्रत्यक्षविरोधाच्च नाऽऽत्मनः संसारितेत्याह—ममेति । यदनर्थात्मकं दुःखादि भवतां स्वार्थं नेष्टं तदिदं विदुषां तावत्साभासायां बुद्धावनुभूयते तन्न तदात्मस्थमनुभवविरोधादित्यर्थः । आत्मस्थत्वेनापि तस्यानुभवोऽस्तीति चेन्नेत्याह—प्रत्यगिति ॥५७२॥

आत्मनः संसारित्वं तर्कशास्त्रप्रामाण्यादिति शङ्कते—मतमिति । कथमात्मनोऽसंसारित्वे तद्विरोधस्तत्राऽऽह—इच्छेति । इच्छादयः क्वचिदाश्रिता गुणत्वाद्रूपवदित्यनुमानात्पारिशेष्यात्तेषामात्माश्रयत्वात्तेषामेव च बहुलानर्थात्मतया संसारत्वादात्मनोऽसंसारित्वे तन्मतविरोधः स्यात् । न च प्रामाणिकसमयविरोधे तत्त्वव्यवस्थेत्यर्थः ॥५७३॥

किमात्मनोऽसंसारित्वे कतिपयतर्काविरोधोऽपेक्षितः किंवा सर्वतर्काविरोधः? आद्ये श्रौततर्काविरोधस्य

न च तार्किकयुक्त्याऽपि प्रतीचीहासुखात्मता । यतोऽवगम्यते तस्मान्निर्भीतिः सुखमास्यताम् ॥७५॥
पराक्प्रत्ययगम्येन दुःखेन स्याद्विशेषणम् । न प्रत्यङ्मात्ररूपस्य विरोधादुष्णशीतवत् ॥७६॥
प्रत्यक्षाविषयत्वं च प्रतीचः प्रागवादिषम् । तच्छायापाश्रयाद्यस्मात्प्रत्यक्षस्यापि मानता ॥७७॥
यो यतो लिप्सते नासावकिंचित्को ह्यनर्थिने । भिक्षां दातुमलं तद्वज्ज्ञेयं स्वार्थपरार्थयोः ॥७८॥

शब्दाकाशयोरिव दुःखात्मनोः गुणगुणिभावशंकानिरासौ

प्रत्यक्षमन्तरेणापि भवेद्दुःखविशेषणः । वियच्छब्दगुणं यद्वत्प्रत्यक्चेन्नैवमिष्यते ॥७९॥
एकमानानधिगतेर्न सुखग्राहिणाऽऽत्मनः । नित्यानुमितरूपस्य गृहीतिः स्यान्मनागपि ॥८०॥
एकत्वादात्मनश्चैवं विषयीकरणे सति । असंभवात्तदन्यस्य द्रष्टृभावः प्रसज्यते ॥८१॥
विषयित्वमथैकस्य विषयत्वं च दीपवत् । मतं चेन्नैतदेवं स्याद्युगपद्भूत्यसंभवात् ॥८२॥

प्रस्तुतेऽपि सत्त्वात्तदसंसारितेत्याह—नैवमिति । कल्पान्तरमनूद्य दूषयति—निःशेषेति । तत्र तार्किकसिद्धान्तोऽपि न सिध्यति न हि तत्र सर्वतर्काविरोधो मिथो वैदिकतर्कैश्च विरोधादतस्तर्कशास्त्राणाममानत्वात्तद्विरोधो न समाधिमर्हतीत्यर्थः ॥५७४॥

ननु तर्कशास्त्राणामात्मनः संसारित्वे विवादाभावात्तस्मिन्नंशे मानत्वात्तदुक्ताबाधितयुक्त्या तत्संसारित्वसिद्धिस्तथाच तदसंसारित्वं युक्तिभयान्मुमुक्षुभिरुपगन्तुमशक्यं नेत्याह—न चेति । इच्छादीनां मनोधर्मतया परिशेष्यासिद्धेरुक्तत्वात्तदीययुक्त्याऽपि प्रतीचः संसारित्वानवगमात्तदसंसारित्वं मुमुक्षुभिर्निर्भयैरभ्युपगतुं शक्यमित्यर्थः ॥५७५॥

तार्किकयुक्तीनामनाभासत्वात्तद्बलात्तत्संसारित्वदृष्टेस्तमसंसारिणं निश्चित्य मुमुक्षुभिरभयैः स्थातुमशक्यमित्याशङ्क्याऽऽह—परागिति । पराक्प्रतीचोर्मिथो विरोधाद्विशेषणविशेष्यत्वायोगे दृष्टान्तमाह—उष्णेति ॥५७६॥

आत्मनोऽपि प्रत्यक्षत्वाद्दुःखेन विशेष्यत्वमित्याशङ्क्याऽऽह—प्रत्यक्षेति । "मात्रादिविषयं मानं प्रत्यगात्मनि साक्षिणि । न व्यापारयितुं शक्यम्" इत्यादावित्यर्थः । किंचाऽऽत्माभासावष्टम्भात्प्रत्यक्षस्य तत्त्वसिद्धिर्जडस्य स्वतोऽसिद्धेरतो न तेनाऽऽत्मसिद्धिरित्याह—तच्छायेति ॥५७७॥

आत्मप्रकाश्याध्यक्षेणाऽऽत्मा प्रकाश्यो नेत्येतद्दृष्टान्तेनाऽऽह—यो यत इति । लिप्सते भिक्षामिति संबन्धः । भिक्षुकस्य भिक्षां दातुमसामर्थ्ये हेतुः—अकिंचित्को हीति । तत्रैव हेत्वन्तरम्—अनर्थिन इति । न हि धनवते निराकाङ्क्षाय भिक्षुको भिक्षां क्षमो दातुमित्यर्थः । दार्ष्टान्तिकमाह—तद्वदिति । आत्मन्यजडेऽनपेक्षे च जडे सापेक्षे च स्वरूपमुक्तदृष्टान्तेन ज्ञेयम् । न हि चित्प्रकाश्यं जडं प्रत्यक्षं तत्प्रकाशकमित्यर्थः ॥५७८॥

प्रत्यक्षाविषयत्वोक्त्या प्रतीचस्तद्विषयदुःखाविशेष्यत्वमयुक्तं प्रत्यक्षाप्रत्यक्षयोः शब्दाकाशयोरिव दुःखात्मनोरपि गुणगुणित्वसंभवादिति शङ्कते—प्रत्यक्षमिति । दृष्टान्तेऽपि गुणगुणित्वं चेदेकमानग्राह्यत्वमन्यथा न तद्भावोऽतो न दृष्टान्ताद्दुःखात्मनोर्गुणगुणितेत्याह—नैवमिति । अस्तु तर्हि सुखादिमानेनाऽऽत्मनोऽपि ग्रहणमित्याशङ्क्य सांख्यानां वैशेषिकादीनां वा चोद्यमिति विकल्प्याऽऽद्यं दूषयति—न सुखेति ॥५७९–५८०॥

द्वितीयं प्रत्याह—एकत्वादिति । यथा सुखादि प्रत्यक्षं ते तथाऽऽत्मनोऽपि तेन विषयीकारे सत्येकस्मिन्देहे तदैक्यसंमतेरात्मान्तरस्य तत्रायोगादेकत्र भोक्तृद्वयानिष्टेः पुरुषान्तरस्यान्यं प्रत्यप्रत्यक्षत्वाद्द्रष्टृभावादात्मदृश्यत्वासिद्धिरित्यर्थः ॥५८१॥

कुतो द्रष्टृभावः एकस्यैवोभयभावादिति शङ्कते—विषयित्वमिति । एकत्रैव द्रष्टृदृश्यत्वमदृष्टमित्याशङ्क्याऽऽह—दीपवदिति । तस्य स्वगततमोनिरासेन विषयविषयित्ववदेकस्यैवाऽऽत्मनो द्रष्टृदृश्यत्वसिद्धिरित्यर्थः । एकस्याऽऽत्मनो विषयविषयित्वं कार्त्स्न्येनांशाभ्यां वा ? आद्येऽपि युगपत्क्रमेण वा ? नाऽऽद्य इत्याह—नैतदिति । क्रियायां गुणत्वं कर्तृत्वं तत्र प्राधान्यं कर्मत्वमतो युगपदेकक्रियां प्रत्येकस्य साकल्येन न गुणप्रधानतेत्यर्थः । न द्वितीयः एकभावेऽन्याभावादिति द्रष्टव्यम् ॥५८२॥

न व्यनक्ति प्रदीपोऽपि स्वतो भास्वररूपतः । विषयत्वाच्च पुंबुद्धेर्न दीपस्योभयात्मता ॥८३॥
प्रतीचश्च निरंशत्वान्न दीपेन सधर्मता । ग्राह्यग्राहकतैतेन विज्ञानस्याप्यपोदिता ॥८४॥
तथा गुणगुणित्वेन ह्यक्षलिङ्गाधिगम्ययोः । दुःखात्मनोर्मिथोयोगे नानुमानप्रमाणता ॥८५॥
नित्यमक्षजगम्यत्वाद्दुःखस्योत्पलनीलवत् । रूपाद्यक्षजगम्यैश्च सामानाधिकरण्यतः ॥८६॥
दुःखस्याऽऽत्मनि संयोगजत्वाभ्युपगमेऽपि च । सभागविक्रियानित्यत्वादिदोषः प्रसज्यते ॥८७॥

आत्मनः संयोगित्वे निर्विकारत्वापत्तिः

नाविकृत्य हि संयोगि गुणो[1] द्रव्यं कदाचन । उपयन्नपयन्वेह लोके दृष्टः प्रमाणतः ॥८८॥
न चानवयवं वस्तु क्वचिदप्युपलभ्यते । विक्रियामाप्नुवन्नापि नित्यं ध्वंसिगुणाश्रयम् ॥८९॥

यथादृष्टान्तं प्रतिपत्तेर्विकल्पाद्यनवकाशमित्याशङ्क्य दृष्टान्तं विघटयति—नेत्यादिना । न हि दीपो दीपं प्रकाशयति प्रकाशैकरसत्वादतो न तस्यैकरसस्यैव विषयविषयितेत्यर्थः । अस्तु तर्हि तस्य स्वप्रकाशता त्वदिष्टाऽऽत्मवन्नेत्याह—विषयत्वादिति । पुंबुद्धिः स्वरूपस्फुरणं तद्व्याप्यत्वाद्दीपस्य न स्वप्रकाशतेत्यर्थः । दृष्टान्ताभावं निगमयति—नेति ॥५८३॥

कल्पान्तरं प्रत्याह—प्रतीचश्चेति । आत्मनो द्रव्यांशेन विषयत्वं बोधांशेन विषयित्वमित्येतच्चकारनिरस्यम् । किंच दीपस्य जाड्यान्न तेनाजडप्रकाशस्याऽऽत्मनः समतेत्याह—न दीपेनेति । ननु विज्ञानवादिनो युगपदेकस्य विज्ञानस्य साकल्येन ग्राह्यग्राहकत्वमुपयन्ति तथा त्वदात्मनोऽपि स्यात्तत्राऽऽह—ग्राह्येति । एकस्योभयत्वनिरासेनेत्यर्थः ॥५८४॥

ननु मा भूत्प्रत्यक्षेण दुःखात्मनोर्गुणगुणित्वधीरनुमानात्तु स्याद्दुःखं क्वचिदाश्रितं गुणत्वाद्रूपवदित्याश्रये सिद्धे परिशेषादात्मनस्तदाश्रयत्वात्तत्राऽऽह—तथेति । दुःखात्मनोरक्षलिङ्गगम्ययोर्गुणगुणित्वेन मिथो योगे प्रत्यक्षवदनुमानस्य न मानतेत्यन्वयः । न हि मिथो विरुद्धयोर्गुणगुणित्वमनुमेयं दुःखादेश्च साभासबुद्धिस्थत्वात्पारिशेष्यासिद्धिरुद्धृतेत्यर्थः ॥५८५॥

आत्मनो दुःखवत्प्रत्यक्षत्वपक्षे दोषान्तरमाह—नित्यमिति । दुःखं नाऽऽत्मधर्मो वेद्यत्वाद्रूपवदित्यर्थः । तस्याऽऽत्माधर्मत्वे हेत्वन्तरमाह—रूपादीति । यत्र रूपादिमति देहे दाहच्छेदादि दृष्टं तत्रैव तत्कृतदुःखाद्युपलम्भान्नाऽऽत्मनस्तद्वत्त्वमित्यर्थः ॥५८६॥

यस्त्वात्ममनःसंयोगादात्मनि बुद्ध्यादयो नव वैशेषिका गुणा भवन्तीति तद्दूषयति—दुःखस्येति । संयोगित्वाद्घटवत्सावयवत्वं ततो विक्रियावत्त्वानात्मत्वादिप्रसक्तिरित्यर्थः ॥५८७॥

प्रसङ्गस्य प्रशिथिलमूलत्वमाशङ्क्याऽऽह—नेत्यादिना । यत्संयोगि तत्सावयवं सक्रियादि च घटादि दृष्टमात्मनोऽपि संयोगित्वे ते स्यातामित्यर्थः ॥५८८॥

दुःखाद्यात्मनो विक्रियेति भाट्टस्थितेस्तस्य सक्रियत्वं तेषामिष्टमित्याशङ्क्याऽऽह—न चेति । आत्मा न परिणामी निरवयवत्वान्नभोवदिति भावः । किं चाऽऽत्मा न गुणी नित्यत्वात्सामान्यवदिति वैशेषिकादिवादे दोषान्तरमाह—नापीति । तदाश्रयत्वानधिकरणमिति यावत् । न[2] चाद्रव्यत्वमुपाधिर्व्यतिरेकव्याप्तावनित्यत्वस्योपाधित्वान्न[3] च तद्व्यतिरेकेण पूर्वोक्तोपाध्यवतारस्तदा परस्परोपाधितया द्वयोरप्यतल्लक्षणत्वादिति भावः ॥५८९॥

---

१. गुणः स्वाश्रयद्रव्यमविकृत्य उपयन्नपयन् वा न दृष्टः इत्यन्वयः ।

२. न चाद्रव्यत्वमिति—सामान्यादौ साध्यव्यापकत्वात् पक्षे आत्मनि नित्यत्वसत्वात् अद्रव्यत्वाभावादित्यर्थः । व्यतिरेकव्याप्ताविति—साध्योपाध्योः व्यतिरेकव्याप्तावित्यर्थः । यत्र द्रव्यत्वं तत्र गुणित्वमिति साध्योपाध्योः व्यतिरेकव्याप्तिः । तत्र अनित्यत्वमुपाधिः । यत्र गुणित्वं तत्रानित्यत्वं घटादौ यत्र द्रव्यत्वं तत्रानित्यत्वं नास्ति आत्मनि व्यभिचारादित्यर्थः ।

३. न च तद्व्यतिरेकेण अनित्यत्वव्यतिरेकेण पूर्वोक्तोपाधिः अद्रव्यत्वं तस्यावतारः प्राप्तिः ।

आकाशस्य च नित्यत्वं नेष्टमागमवादिभिः । तत्कार्यश्रवणान्नापि दृष्टान्तोऽस्ति ततोऽपरः ॥९०॥

परिणामिनोऽपि नित्यत्वशंकापरिहारौ

विक्रियावदपि द्रव्यं तत्प्रत्ययसमन्वयात् । नित्यमेवेति चेन्नैवमन्यथात्वातिरेकतः ॥९१॥
अनित्यत्वं क्वचिन्नास्ति यथाऽन्येषां प्रवादिनाम् । सन्नेवाभावरूपोऽपि त्विष्टः शून्यत्ववादिनाम् ॥९२॥
संवित्प्रमाणसत्त्वेन विना वस्तु न लौकिकम् । प्रमाणवादिभिर्दृष्टमनन्यायत्तसिद्धिकम् ॥९३॥
भागान्यथात्वाद्द्रव्यस्य नानित्यत्वं क्वचिन्मितम् । निर्भागत्वात्प्रतीचस्तत्कया युक्त्योपपद्यते ॥९४॥
अथ सावयवत्वेऽपि नित्यं स्यात्कुलिशादिवत् । संयोगपूर्वतो नैवं तद्विभागावसानतः ॥९५॥
वज्रादेरविभागश्चेत्तस्यासंयोगपूर्वतः । नानुमेयत्वतोऽस्त्येव तस्यावयवसंयुतिः ॥९६॥
न हि सावयवं किंचिद्दृतेऽवयवसंयुतिम् । घटादिवद्यतो दृष्टमतोऽदुःखित्वमात्मनः ॥९७॥

शास्त्रारम्भान्यथानुपपत्त्यापि आत्मा संसारीति शंकानिरासः

निर्दुःखित्वे परस्येष्टे तदन्यस्याप्यभावतः । कस्य दुःखनिवृत्त्यर्थं प्रारब्धोपनिषत्त्वया ॥९८॥

आकाशे व्यभिचारमाशङ्क्याऽऽह—आकाशस्येति । अण्वादिषु व्यभिचारमाशङ्क्याऽऽह—नापीति । न तावदणवः सन्ति त्र्यणुकेतरसत्त्वे मानाभावाद्दिशश्चाऽऽकाशेऽन्तर्भवन्त्यनन्ताकाशदेशत्वादिति ह्युक्तम् । कालस्तु "सर्वे निमेषा जज्ञिरे" इत्यादिश्रुतेरुत्पत्तिमानतो न क्वचिद्व्यभिचार इति भावः ॥५९०॥

यस्मिन्विक्रियमाणेऽपि तदेवेदमिति धीर्न विहन्यते तत्परिणामिनित्यमिति केचित्तत्कुतो विक्रियावत्त्वादनित्यतेति शङ्कते—विक्रियावदिति । परिहरति—नैवमिति । विक्रियां वदतो द्रव्यस्यावयवान्यथात्वं वाच्यं तदेवानित्यत्वमत्यन्ताभावस्य घटविचारे निरस्तत्वादित्यर्थः । अन्येषां शून्यवादिनामिति यावत् । तेषामनित्यत्वशब्दार्थोऽत्यन्ताभावः स किमिति त्वया नेष्यते तत्र प्रकारान्तरेण दूषणमाह—सन्नेवेति । स मानसिद्धो न वा ? आद्ये घटवत्सत्त्वापत्तिः द्वितीये च स्वप्रकाशो न वा ? न चेत्तदसत्त्वे सर्वसत्त्वापत्तिरित्यर्थः । सर्वशून्यवादिनामिष्टो योऽभावरूपोऽर्थः सोऽपि सन्नेवेति योजना । उक्तविकल्पद्योती तुशब्दः । घटादि दृष्टान्तयितुमपिशब्दः ॥५९१–५९२॥

अत्यन्ताभावस्य स्वप्रकाशत्वं प्रत्याह—संविदिति । संविदेव प्रमाणं साधकत्वात्तत्स्वरूपस्यैव स्वप्रभत्वं तद्व्यतिरेकेण लौकिकं वैदिकं वा न किंचिदपि स्वप्रकाशं प्रामाणिकैर्दृष्टमतोऽत्यन्ताभावस्य स्वप्रभत्वे संविदभेदात्तदद्वैततेति भावः ॥५९३॥

परेष्टात्यन्ताभावस्य दुर्निरूपत्वे सत्यवयवान्यथात्वमेव सावयवस्यानित्यतेत्युपसंहरति—भागेति । अन्यदित्यध्याहारः । अस्तु तर्हि तादृगनित्यत्वमात्मनोऽपीत्याशङ्क्याऽऽह—निर्भागत्वादिति । भागान्यथात्वरूपानित्यत्वस्य निरवयवे प्रतीच्ययोगान्न तस्य विक्रियावत्त्वमित्यर्थः ॥५९४॥

असिद्धं निर्भागत्वमिति बुध्यमानः स्याद्वादी शङ्कते—अथेति । अवयवसंयोगपूर्वकत्वाद्वज्रादेः संयोगस्य विभागान्तत्वात्तस्य विनाशित्वमावश्यकं तत्कुतो दृष्टान्तसिद्धिरिति परिहरति—संयोगेति ॥५९५॥

अवयवसंयोगपूर्वकत्वस्य वज्रादेरप्रमाणिकत्वात्तद्विभागाभावान्न नाशितेति दृष्टान्तसिद्धिं शङ्कते—वज्रादेरिति । विमतमवयवसंयोगपूर्वकं सावयवत्वाद्घटवदित्याह—नेत्यादिना ॥५९६॥

सावयवत्वेऽप्युक्तसंयोगपूर्वकत्वाभावे किं बाधकमिति चेत्सावयवत्वानुपपत्तिरित्याह—न हीति । यत्सावयवं तदुक्तसंयोगपूर्वकमिति व्याप्तिभूमिमाह—घटादिवदिति । यतः सावयवस्यानित्यत्वादि दुर्वारमतोऽवयवकल्पनायोगादात्मनो मनःसंयोगानुपपत्तेस्तस्मिन्दुःखाद्युत्पत्तिहेत्वभावादसंसारितेति फलितमाह—अत इति ॥५९७॥

आत्मनोऽनर्थध्वस्त्यर्थं शास्त्रारम्भान्यथानुपपत्त्या तत्संसारित्वं मन्तव्यमिति शङ्कते—निर्दुःखित्व इति । जीवात्मनो दुःखनिवृत्त्यर्थं शास्त्रमारम्यमित्याशङ्क्य "नान्योऽतोऽस्ति द्रष्टे"त्यादिश्रुतिमनुसरन्नाह—तदन्यस्येति । बुद्धिगतदुःखनिवृत्त्यर्थं शास्त्रमित्याशङ्क्याचैतन्यात्तस्या दुःखित्वायोगान्नैवमिति मत्वाऽऽह—कस्येति ॥५९८॥

प्रत्यगज्ञानहेतूत्थदुःखित्वमतिविभ्रम— । ध्वंसमात्रस्य सिद्ध्यर्थमारब्धोपनिषन्मया ।।९९।।
नवसंख्येयमात्रेक्षी दशमो विभ्रमाद्यथा । न वेत्ति दशमोऽस्मीति स्वीक्षमाणोऽपि तान्नव ।।६००।।
निःशेषानात्मदृक्तद्वदनिर्ज्ञातात्मतत्त्वकः । न वेत्त्यैकात्म्यमस्मीति वीक्षमाणोऽप्यनात्मनः ।। १ ।।
दशमोऽसीतिवाक्योत्थसम्यग्ज्ञानानलार्चिषा । प्लुष्ट्वाऽऽत्मदशमाज्ञानं दशमोऽस्मीति वीक्षते ।। २ ।।
यथा तत्त्वमसीत्यादिवाक्योत्थज्ञानवह्निना । प्लुष्ट्वेहाऽऽत्मतमस्तज्जं तथैकात्म्यं प्रपद्यते ।। ३ ।।
प्रत्यगज्ञानहेतूत्थशास्त्राचार्यादिसाधनः । तद्विरुद्धमथैकात्म्यं प्रत्यपद्यत मायया ।। ४ ।।

शास्त्राचार्यादिकल्पनावत् प्रवेशकल्पना ज्ञानाय

शास्त्राचार्यादयो यद्वन्मोहोत्थत्वान्न वस्तुतः । प्रवेशोऽप्यस्य तादृक्स्यादैकात्म्यप्रतिपत्तये ।। ५ ।।
व्याकृताव्याकृतावस्थे जगतोऽस्य स्वभावतः । अनूद्य लोकतो दृष्टे तद्याथात्म्यं प्रबोध्यते ।। ६ ।।
यत एवमतोऽपास्तरागद्वेषादिधीमलः । उदारधिषणः प्राह भाष्यकृन्न्यायवद्वचः ।। ७ ।।
अप्रविष्टस्वभावस्य दिग्देशाद्यनभिप्लुतेः । प्रवेशो व्याकृते क्लृप्तो जलपात्रार्कबिम्बवत् ।। ८ ।।

आविद्यमात्मस्थमनर्थभ्रमं निरसितुं तदारम्भः संभवतीति समाधत्ते—प्रत्यगिति । न कश्चिदपि वास्तवं दुःखमुपेत्य तद्ध्वंसार्थं शास्त्रमिति वक्तुं मात्रपदम् ।।५९९।।

परस्यैवाविद्याकृतसंसारित्वभ्रान्तिध्वंसार्थं शास्त्रमित्येतद्दृष्टान्तेन साधयन्नादौ तस्याविद्यावत्त्वे दृष्टान्तमाह—नवेति । वस्तुतो दशमो माणवको नवसंख्याकानेव माणवकानुपलभमानस्तद्दर्शनापहृतदशमदृष्टिर्नष्टोऽसाविति भ्रान्त्या स्वस्य दशमत्वं न पश्यतीत्यर्थः । दशमत्वधीप्राप्तिमाह—स्वीक्षमाणोऽपीति । स्वातिरिक्तान्पश्यन् स्वज्ञानं प्राप्तमपि न लभतेऽज्ञानसामर्थ्यादित्यर्थः ।।६००।।

दार्ष्टान्तिकमाह—निःशेषेति । उक्तदृष्टान्तानुसारेणानिर्ज्ञातात्मयाथात्म्यो मुमुक्षुः सर्वानात्मद्रष्टा स्वातिरिक्तानहंकारादीन्साक्षात्कुर्वन्नपि ब्रह्मात्मकत्वमस्मीत्यनेन प्रकारेण न वेत्तीत्यन्वयः ।।६०१।।

परस्याविद्यां दृष्टान्तेनोक्त्वा विद्यया तद्ध्वंसे दृष्टान्तमाह—दशम इति । आप्तवाक्योत्थसम्यग्ज्ञानाग्निना स्वकीयदशमत्वाज्ञानं दग्ध्वा दशमोऽस्मीति दशमत्वमात्मनोऽनुभवन्माणवको यथा निर्वृणोतीत्यर्थः । दृष्टान्तस्थमर्थं दार्ष्टान्तिके योजयति—तत्त्वमिति । इहेति जीवदवस्थोक्तिः ।।६०२-६०३।।

उक्तमर्थं सोपस्कारमुपसंहरति—प्रत्यगिति । आदिपदेन ब्रह्मविद्याहेतवोऽनुक्ताः सर्वे गृह्यन्ते । अज्ञानकृतशास्त्राचार्यादिद्वारोत्पन्नया मायया ब्रह्मविद्यया तत्कार्यविरुद्धमैक्यं यदा पुमान्प्रतिपन्नवांस्तदैव तस्य सर्वानर्थध्वस्तिरित्यर्थः ।।६०४।।

परस्य प्रवेशे संसारित्वशङ्कामुक्तरीत्या परिहृत्य तत्प्रवेशं स्रष्टृप्रवेष्ट्रोरेकत्वादित्यत्र शास्त्रावष्टम्भेनोक्तं युक्त्या व्यक्तीकर्तुमारभते—शास्त्रेति । शास्त्रादिवत्प्रवेशस्यापि कल्पितत्वान्न तमाश्रित्य काचिदाशङ्केति भावः । अविद्याकृतप्रवेशकल्पनाप्रयोजनमाह—ऐकात्म्येति ।।६०५।।

ननु च प्रकृतश्रुतिषु व्याकृताव्याकृतं जगदुच्यते न त्वैक्यं प्रतिपाद्यते तत्कथं तत्प्रतिपत्त्यर्थं प्रवेशकल्पनेत्याशङ्क्याऽऽह—व्याकृतेति । स्वभावतः शास्त्रं विना दृष्टे लोकतो लौकैरिति संबन्धः । तद्याथात्म्यं तस्य जगतस्तत्त्वं प्रत्यक्चैतन्यमित्यर्थः ।।६०६।।

द्वैतानुवादेनाद्वैते प्रतिपाद्ये तद्धीशेषत्वेन प्रवेशकल्पनोचितेति मन्वानो भाष्यमवतारयति—यत इति । ज्ञानप्रतिबन्धकवैधुर्यं भाष्यकृतो दर्शयन्वैशिष्ट्यमाचष्टे—अपास्तेति । उदारमुत्कृष्टमकार्यकारणं ब्रह्म तस्मिन्नेव सदा धिषणा यस्य स तथेति विशेषान्तरोक्तिः । प्रामाण्यं वचसः सूचयति—न्यायवदिति ।।६०७।।

किं तद्वचनं यत्कर्तृद्वारोपकरणद्वारा वाऽदोषतया मानं तदाह—अप्रविष्टेति । त्रिधाऽनवच्छिन्नत्वात्परस्य वस्तुतोऽप्रविष्टरूपस्य जगति श्रौतो यः प्रवेशः स जलपात्रे सवितृबिम्बस्य प्रतिबिम्बभाववत्कल्पित इति जलसूर्यादिप्रतिबिम्बवदित्यादिनोक्तमित्यर्थः ।।६०८।।

### बिम्बात्मना प्रवेशे युक्तयः

बिम्बात्मना प्रवेशस्य ननु दूषणमीरितम् । विप्रकृष्टचाद्यभावोक्त्या भूयः कस्मात्स आश्रितः ।। ९ ।।
संभवाद्विप्रकृष्टचादेरदुष्टो दूषितः पुरा । कथं तदिति चेदत्र युक्तिलेशोऽभिधीयते ।।१०।।
निर्धूताशेषनानात्वतद्धेतुरविभागवान् । अनन्यसाक्षिकः प्रत्यङ्ङासीन्नामादिजन्मतः ।।११।।
द्रष्ट्रादिरूपतस्तावद्व्यतिरेकोऽभवत्पुरा । नामादिजन्मनि द्रष्टेत्यादिरूपान्वयोऽप्यभूत् ।।१२।।
अप्पात्रोत्थापितात्द्भानोर्दिवि भानुर्यथेक्ष्यते । सुषुप्तस्थस्तथा धीस्थात्कर्तृभोक्तृत्वलक्षणात् ।।१३।।
दृष्टृश्रोत्रादिरूपश्च यश्च द्रष्ट्रादिसाक्ष्यपि । बुद्धितत्कारणोपाधी क्षेत्रज्ञेश्वरसंज्ञकौ ।।१४।।
स्वप्ननिद्रायुतावाद्यौ प्राज्ञस्त्वस्वप्ननिद्रया । इत्यादिस्थानभेदोऽपि वेदान्तोक्तौ विनिश्चितः ।।१५।।
जिघ्राणीममहं गन्धमिति यो वेत्त्यविक्रियः । तद्भावाभावसाक्ष्यात्मा ह्येतच्च श्रुतिमस्तके ।।१६।।

वस्त्वन्तरेण विप्रकृष्टानुपपत्तेरित्यत्रोक्तं स्मारयति—बिम्बेति । वस्त्वन्तरेण ब्रह्मणोऽद्वितीयस्यासङ्गस्य विप्रकृष्टेः संनिकृष्टेश्चाभावोक्तेर्न तस्य प्रतिबिम्बाख्यप्रवेशसिद्धिरित्युक्तमित्यर्थः । दूषितस्याऽऽश्रयणमयुक्तमित्याह—भूय इति ।।६०९।।

प्रतिबिम्बपक्षदूषणमस्थाने संभ्रान्तिरिति परिहरति—संभवादिति । ब्रह्मणो वस्त्वन्तरेण विप्रकृष्टचादेः संभवाददुष्ट एव प्रतिबिम्बप्रवेशस्त्वया दूषितस्तेनासौ दोषाभास इति योजना । अनवच्छिन्नाद्वयचिद्धातोर्वस्त्वन्तरेण विप्रकर्षादेरयोगान्नादुष्टताऽस्य पक्षस्येति शङ्कते—कथमेति । वस्त्वन्तरकल्पनया कल्पितं विप्रकर्षाद्यादाय प्रतिबिम्बपक्षं साधयति—अत्रेति । आत्मप्रवेशश्चेत्यादिभाष्यमत्रेत्युक्तम् । प्रवेशपक्षो वा सप्तम्यर्थः ।।६१०।।

तमेव युक्तिलेशं वदन्नादौ प्रतिबिम्बस्थानीयाज्जीवाद्ब्रह्मणो बिम्बस्थानीयस्याभेदं साधयति—निर्धूतेति । तस्य नानात्वस्य हेतुर्धर्मिग्रहादिः । निर्धूतमशेषं नानात्वं तद्धेतुश्च यत्र स तथा । केवलभेदस्य सहेतोरभावेऽप्यभेदसहितस्य तस्य सत्त्वमाशङ्क्याऽऽह—अविभागवानिति । प्रकाश्यप्रकाशात्मकत्वेन भेदमाशङ्क्याऽऽह—अनन्येति । आत्मानात्मत्वेन भेदं शङ्कित्वाऽऽह—प्रत्यङ्ङिति । द्रष्टृदृश्यादिभावेन तमाशङ्क्याऽऽह—नामादीति । जगत्सर्गात्पूर्वं द्रष्ट्रादिरूपतस्तस्य व्यतिरेकोऽसत्त्वमतो निर्विशेषं प्रत्यङ्मात्रं तावत्प्रागवस्थायामासीदित्यर्थः । द्रष्ट्रादेस्तर्हि प्रतीचोऽर्थान्तरत्वा"न्नान्योऽतोऽस्ति द्रष्टे"त्यादिश्रुतिविरोधोऽन्यथा प्राक्काले द्रष्ट्रादिव्यतिरेकासिद्धिरात्मभावे तदभिन्नद्रष्ट्रादेरपि भावादित्याशङ्क्याऽऽह—नामादीति । जगत्सर्गे बुद्धिस्थप्रतिबिम्बद्वारा चक्षुरादिकरणकदर्शनादिशब्दितरूपाद्याकारधीवृत्तीरनुभवन्नात्मैव द्रष्टा श्रोतेत्यादिदशामाविशतीत्यर्थः ।।६११–६१२।।

सर्गात्पूर्वमेकरसमेव ब्रह्मोत्तरकालं जीवत्वं बुद्ध्यादिसंबन्धात्प्राप्नोतीत्युक्तम् । इदानीं तयोर्वस्तुतो भेदं निरसितुं दृष्टान्तेन स्थानभेदमाह—अप्पात्रेति । पञ्चमीभ्यामन्यशब्दो ध्वनितः । दार्ष्टान्तिकेऽपि क्रियापदमनुषज्यते यद्वा प्रतिबिम्बस्य बिम्बाविनाभूतत्वेन तल्लिङ्गत्वादुदकपात्रप्रतिबिम्बितादादित्यादाकाशस्थः सविता यथा गम्यते तथा बुद्धिप्रतिबिम्बितादवस्थाद्वयगतात्कर्त्रादिरूपात्कार्योपाधेरात्मनः सुषुप्तस्थः कारणोपाधिः परोऽधिगम्यते तस्य तदपेक्षत्वादित्यर्थः ।।६१३।।

तर्हि स्थानभेदान्नामभेदाच्च वस्तुतस्तयोर्भेदो घटपटवदित्याशङ्क्याऽऽह—दृष्टृति । प्रमातुर्बुद्ध्युपाधिकस्य क्षेत्रज्ञसंज्ञकस्य प्रमातृसाक्षिणश्च कारणोपाधिकस्येश्वरसंज्ञकस्यौपाधिकभेदादेव स्थानादिभेद इत्यर्थः ।।६१४।।

स्थानभेदे श्रुतिं प्रमाणयति—स्वप्नेति । जाग्रत्स्वप्नाभिमानिनौ विश्वतैजसावाद्यावन्यथाग्रहाग्रहग्रस्तौ केवलाग्रहगृहीतस्तु स्वापाभिमानी प्राज्ञ इत्यर्थः । दर्शितश्रुतेरर्थं संगृह्णाति—इत्यादीति । आदिपदेन हृदयादित्यमण्डलादिस्थानोक्तिः । स्थानभेदवद्वस्तुतो वस्तुभेदाभावोऽपि निश्चितो वेदान्तेष्वित्यपेरर्थः ।।६१५।।

प्रतिबिम्बस्थानीये जीवे सत्यपि बिम्बस्थानीयो नास्ति परो मानाभावादिति केचित्तान्प्रत्याह—जिघ्राणीति । इमं गन्धमहं जिघ्राणीति गन्धधीकर्तृत्वेन स्थितं मातारमक्रियः सन्यो वेत्ति स तस्य भावाभावयोः साक्षी परोऽस्ति शास्त्रप्रामाण्यादित्यर्थः । एतच्छब्देन यथोक्तं परमात्मतत्त्वं परामृश्यते । तन्निरासे श्रुतिविरोधश्चकारार्थः । जगदपि तदनवधारणे नियन्तृरहितं भिन्नमर्यादमनवस्थितमापतेदिति हिशब्दार्थः ।।६१६।।

अर्थान्तरनिरासार्थं दूषणं चोदितं पुरा । तदभावाददुष्टत्वात्प्रवेशो मुखबिम्बवत् ॥१७॥
दर्पणाभिहता दृष्टिः पर्यावृत्य स्वमाननम् । व्याप्नुवन्त्यविभागेन भ्रान्तिं नो जनयेद्यथा ॥१८॥
इहापि कारणोपाधिः केवलोऽप्यविवेकतः । बुद्ध्यादिकार्यगैर्धर्मैः प्रतिबिम्बवदीक्ष्यते ॥१९॥
यथोक्तार्थप्रसिद्ध्यर्थं वचांसि सुबहून्यपि । त्रय्यन्तेषूपपद्यन्ते तत्सृष्ट्वेत्यादिकानि च ॥२०॥
दिग्देशकालशून्यस्य प्रवेशो बिलसर्पवत् । न त्वाञ्जसः परस्यास्ति तेनाविद्याप्रकल्पितः ॥२१॥
अग्निः सूर्यो मरुद्यद्वत्प्रविष्टो भुवनं तथा । अप्रविष्टस्वभावोऽपि कार्यमात्माऽविशज्जगत् ॥२२॥

कल्पितजगज्जन्मादिप्रवेशानां प्रयोजननिर्देशः

प्रत्यग्याथात्म्यदृक्सिद्धिहेतुत्वाच्च भवेदिदम् । जगज्जनिस्थितिध्वंसप्रवेशानां प्रयोजनम् ॥२३॥
तद्दृष्टेः पुरुषार्थत्वश्रवणादसकृच्छ्रुतौ । ब्रह्म वेदेत्येवमादौ क्लृप्ताः सृष्ट्यादयस्ततः ॥२४॥

एकरसस्य परस्याविद्यया सृष्टे कार्ये प्रतिबिम्बरूपेण कल्पिते प्रवेशे निर्दुष्टे किमिति तत्र दूषणं चोदितमित्यत्राऽऽह—अर्थान्तरेति । ब्रह्मातिरिक्तप्रतिबिम्बाधारनिरासेन प्रतिबिम्बाख्यप्रवेशप्रत्याख्यानार्थं वस्त्वन्तरेण संनिकर्षाद्यभावदूषणं शङ्कितमित्यर्थः । कथं तर्हि प्रतिबिम्बपक्षसिद्धिस्तत्राऽऽह—तदभावादिति । अर्थान्तरनिरासाभावाद्ब्रह्मातिरिक्तकल्पितप्रतिबिम्बाधारसंभवात्तेन संनिकर्षादियोगात्प्रतिबिम्बपक्षस्यादुष्टत्वान्मुखस्य दर्पणादौ प्रतिबिम्बवद्ब्रह्मणः सृष्टे कार्ये प्रतिबिम्बाख्यः प्रवेशः सिध्यतीत्यर्थः ॥६१७॥

मुखबिम्बवदित्युक्तं दृष्टान्तं व्याचष्टे—दर्पणेति । बाह्यार्थग्रहार्थं प्रवृत्ता दृष्टिः संनिकृष्टेन दर्पणेन तेजस्विना प्रतिहता व्यावृत्य ग्रीवास्थमेवाऽऽननमविभागेन व्याप्नुवन्ती भ्रान्तिमस्माकं विभागेन जनयेदिति योजना ॥६१८॥

दार्ष्टान्तिकं विभजते—इहापीति । स्वपक्षः सप्तम्यर्थः । वस्तुतोऽविद्यातज्जसंबन्धवैधुर्यमाह—केवल इति । तथाऽप्यनाद्यविद्याबलादेव तद्योगं दर्शयति—कारणेति । ततो बुद्ध्यादिसृष्ट्या तदैक्याध्यासात्तत्कर्तृत्वादिधर्मैर्विशिष्टोऽकेवलो दृश्यत इत्याह—अविवेकत इति[1] । यथा मुखं स्वतः श्यामतादिहीनमुपाधियोगात्प्रतिबिम्बद्वारा श्यामतातिशयशालीव दृश्यते तथेत्याह—प्रतिबिम्बवदिति—॥६१९॥

यथोक्तप्रवेशसिद्ध्यर्थं वेदान्तेषु वाक्यान्यपि बहूनि युक्तिसहितानि सन्ति तानि च भाष्ये दर्शितानीत्याह—यथोक्तेति ॥६२०॥

स्वाभिप्रेतं प्रवेशं प्रतिपाद्य परेष्टं निराचष्टे—दिगिति । न हि परस्य परिपूर्णस्य पराकृतपरिच्छेदस्य बिले सर्पवत्कार्ये प्रवेशो वास्तवोऽस्तीत्यर्थः । स्वपक्षं निगमयति—तेनेति । पराभिमतप्रवेशासंभवेनेति यावत् । प्रवेश इति पूर्वेण संबन्धः ॥६२१॥

कल्पितप्रतिबिम्बाख्यप्रवेशे भाष्योक्तवाक्यातिरेकेण वाक्यान्तराण्यपि सन्तीत्याह—अग्निरिति । "अग्निर्यथैको भुवनं प्रविष्टः" "सूर्यो यथा सर्वलोकस्य चक्षुर्वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूवे"ति दृष्टान्तश्रुतयः । "एकस्तथा सर्वभूतान्तरात्मे"त्यादिदार्ष्टान्तिकश्रुतेरर्थमाह—तथेति ॥६२२॥

ननु वस्तुतोऽविद्यमानं प्रवेशाद्याविद्यं किमिति कल्प्यते ? तत्र पूर्वोक्तमेव स्मारयन्नाह—प्रत्यगिति । तत्त्वज्ञानोत्पत्त्यर्थत्वात्प्रवेशादीनामिदमेव ज्ञानफलमित्यर्थः ॥६२३॥

कथं प्रवेशादीनां तादर्थ्यं स्वरूपे पर्यवसानं किं न स्यादत आह—तद्दृष्टेरिति । प्रवेशादिश्रुतीनां स्वार्थे विफलत्वेनापर्यवसानात्तत्त्वदृष्टेश्च फलवत्त्वश्रवणात्फलवत्संनिधावफलं तदङ्गमितिन्यायेन[2] युक्तं तासां तादर्थ्य—

१. अविवेकेतः=प्रतिबिम्बोपाध्योरभेदाध्यासादित्यर्थः । धर्म्यध्यासस्य धर्माध्यासे हेतुत्वात् ।

२. फलवत्सन्निधौ अफलं यच्छ्रूयते तत् तदङ्गं ज्ञातव्यं यथा दर्शपूर्णमासयागप्रकरणे श्रुतं व्रीहिप्रोक्षणादि तद्वत् ब्रह्मसाक्षात्कारस्य मोक्षफलस्य सन्निधौ श्रुतं ब्रह्मणः जगदुत्पत्त्यादिहेतुत्वं सृष्टेषु प्रवेशश्च स्वयमफलं सत् तत्त्वज्ञाने साधनमित्यर्थः ।

युक्त्या नैवोपपद्यन्ते जगत्सृष्ट्यादयो यतः । प्रत्यगज्ञानमात्रोत्था जगत्सृष्ट्यादयस्ततः ।।२५।।
नासतो जन्मना योगः सतः सत्त्वान्न चेष्यते । कूटस्थे विक्रिया नास्ति तस्मादज्ञानतो जनिः ।।२६।।
तथा रूपं[1] रूपमिति मन्त्रवर्णोऽपि चाऽऽत्मनः । याथात्म्यदर्शनायैव सृष्ट्यादि प्रत्यपीपदत् ।।२७।।
व्याप्तिः प्रवेशशब्देन भण्यते कारणात्मनः । बुद्ध्यादिकार्यविषया व्यापिव्याप्यत्वमेतयोः ।।२८।।

व्यापिव्याप्यत्वं न केवलमात्मबुद्ध्योः असंभवि अपितु कुत्राप्यसंभवि

असाधारणतो न स्यात्कालदिग्देशभिन्नयोः । मिथोऽसंगतितो व्याप्तिर्हिमवद्विन्ध्ययोरिव ।।२९।।
मिथोऽविभिन्नयोर्नासौ नापि सैकात्म्य इष्यते । भिन्नसामान्ययोस्तद्वत्तदसाधारणात्मनः ।।३०।।
कार्यकारणयोरेवं भिन्नाभिन्नविकल्पतः । वस्तुवृत्तेन संव्याप्तिर्न युक्त्येहोपपद्यते ।।३१।।

मित्यर्थः । तत्त्वज्ञानस्य फलवत्त्वे श्रुतेस्तात्पर्यलिङ्गमभ्यासं सूचयति—असकृदिति । तासां स्वार्थापर्यवसाने फलितमाह—क्लृप्ता इति ।।६२४।।

तेषां कल्पितत्वे हेत्वन्तरमाह—युक्त्येति । सृष्ट्यादयो हि सक्रियस्याविक्रियस्य वा? नाऽऽद्योऽनवस्थानान्नेतरः सदा प्रसङ्गात् । न च ते स्वतो, हेत्वन्वेषणवैयर्थ्यप्रसङ्गात् । नापि परतस्तस्य तत्कारणस्वाभाव्ये च प्राचीनदोषात् तदस्वाभाव्ये कदाचिदपि तदभावापाताद्धेत्वन्तरापेक्षया तस्य तत्कर्तृत्वे चानवस्थानादित्यादिन्यायासहिष्णवोऽतः स्वाज्ञानकल्पिता एवेत्यर्थः ।।६२५।।

इतश्च कल्पिता सृष्टिरित्याह—नासत इति । न तावदसज्जायतेऽसत्त्वान्नरविषाणवन्नापि सत्सत्त्वादात्मवन्नापि जन्म नास्ति दृश्यमानत्वादतस्तत्कल्पितमित्यर्थः । नाशादीनामपि कल्पितत्वं साधयति—कूटस्थ इति । न हि निर्विकारे विक्रिया व्याघातान्न च सविकारेऽनवस्थितेरुक्तत्वादतः स्वाज्ञानादेव जनिवन्नाशाद्यपीत्यर्थः ।।६२६।।

सृष्ट्यादेरात्मज्ञानार्थत्वे दर्शितन्यायस्य प्रापकमाह—तथेति । फलवत्संनिधावित्यादिन्यायवदिति यावत् । "तदस्य रूपं प्रतिचक्षणाये"ति श्रवणादित्यर्थः ।।६२७।।

प्रवेशादेरन्यार्थत्वेन मिथ्यात्वे मिथ्याप्रवेशस्यानियमाद्ब्रह्मणोऽन्यस्यासौ किं न स्यादित्याशङ्क्याऽऽह—व्याप्तिरिति । न हि कारणादन्यस्य कार्ये व्याप्तिर्मुख्या कारणत्वं च परस्यैवेति स्थितिस्तथा च कल्पितोऽपि प्रवेशस्तस्यैवेत्यर्थः । ब्रह्मणो बुद्ध्यादौ व्याप्तिः संयोगः समवायस्तादात्म्यं वा? नाऽऽद्यौ युतसिद्धिप्रसङ्गात् नेतरः समवायानभ्युपगमाच्चेत्यादिन्यायविरोधात् नान्त्यो भिन्नयोरभिन्नयोर्वा तदयोगादित्याशङ्क्याऽऽत्रिधं तादात्म्यं गृहीत्वाऽऽह—व्यापीति ।।६२८।।

किं चान्यत्रापि व्याप्तिर्भिन्नयोरभिन्नयोर्वा भिन्नाभिन्नयोर्वा? नाऽऽद्य इत्याह—असाधारणत इति । कालादिवशाद्भिन्नयोरसाधारणतो व्यावृत्तत्वेन स्थितत्वान्न व्याप्तिर्हिमवद्विन्ध्ययोरिव मिथोऽसंगतेरिति योजना ।।६२९।।

अत्यन्तभेदे न व्याप्तिरित्युक्त्वा कल्पान्तरं निरस्यति—मिथ इति । यथा मिथोऽत्यन्तं भिन्नयोर्विन्ध्यहिमवतोर्न व्याप्तिस्तथाऽत्यन्तमभिन्नयोरपि न सा युक्ता । न चेष्टा न ह्येकस्मिन्नेव धूमेऽग्नौ वा व्याप्तिरित्यर्थः । अपिना तृतीयं प्रत्याह । न हि भिन्नाभिन्नयोर्व्याप्तिरेकत्र तदयोगादिति भावः । किंच सा जातिव्यक्त्योर्वा कार्यकारणयोर्वा तद्विलक्षणयोर्वा? नाऽऽद्य इत्याह—भिन्नेति । भिन्नशब्दो व्यक्तिविषयः । तद्वदिति हिमवद्विन्ध्ययोरिव न व्याप्तिरित्यर्थः । तत्र हेतुः—तदसाधारणेति । तयोर्जातिव्यक्त्योरत्यन्तभिन्नयोरसाधारणात्मना स्थितेर्न व्याप्तिर्यद्यत्यन्ताभिन्ने ते तदा तयोरसाधारणात्मनैकरूपेण परिशेषान्न व्याप्तिर्भेदाभेदौ चैकत्रायुक्तावित्यर्थः ।।६३०।।

द्वितीयं प्रत्याह—कार्येति । जातिव्यक्त्योरुक्तन्यायेन तयोरपि न व्याप्तिरित्यर्थः । तृतीयं निराह—

१. "रूपं रूपं प्रतिरूपो बभूव" इत्युक्त्वा "तदस्य रूपं प्रतिचक्षणाय"—इति मधुब्राह्मणान्ते उक्तम् । रूपं रूपं प्रति प्रतिरूपः रूपान्तरं बभूव ब्रह्म किमर्थमित्याह—तदस्यात्मनो रूपं प्रतिचक्षणाय प्रख्यापनाय । नामरूपव्याकरणादेवास्य प्रज्ञानघनं रूपं ज्ञायत इत्यर्थः ।

**यत्र कार्त्स्न्येन वृत्तिः स्याद्रज्जुसर्पादिवद्द्वयोः । व्याप्तिर्मुख्याऽस्तु तत्रैव तथाऽऽत्मानात्मनोरपि ॥३२॥**

**तमसैव यथा सर्पं स्रक्प्रविष्टा न तु स्वतः । प्रत्यगज्ञानहेतूत्थमात्मैवं मायया जगत् ॥३३॥**

उत्तरवाक्यं आनखाग्रेभ्यो यथाक्षुरः इति तदर्थविवरणम्

**कया मर्यादया कार्यं मायावी माययाऽविशत् । आनखाग्रेभ्य इत्युक्त्या मर्यादाऽतोऽस्य भण्यते ॥३४॥**

**नखाग्रावधिका यस्मात्संवित्पुंसोऽभिजायते । अतः सामान्यवृत्त्याऽऽत्मा प्राविशद्देहमीश्वरः ॥३५॥**

**दृष्टान्ताभ्यामिमां वृत्तिं व्याचष्टे प्रत्यगात्मनः । कृत्स्नकारणतत्कार्यवृत्त्युपाधिसमाश्रयात् ॥३६॥**

**मिथो विभक्ता एकत्र क्षुरधाने यथा क्षुराः । क्षुरधानाद्विभज्यन्ते तथाऽऽत्मा नाडिभेदतः ॥३७॥**

**ओतप्रोतात्मना तस्थुरर्वाग्या भूमयोऽक्षरात् । तत्तद्भूमिपरिच्छेदात्क्षेत्रज्ञः पर एव सन् ॥३८॥**

**सूक्ष्मताव्यापिते ज्ञेये भूम्यादेर्यावदक्षरम् । पूर्वपूर्वप्रहाणेन तन्निष्ठा वियदात्मना ॥३९॥**

भिन्नेति । इहेति व्यवहारभूमिरुक्ता । जातिव्यक्तिभ्यां कार्यकारणाभ्यां च विलक्षणयोरपि भिन्नयोरभिन्नयोर्भिन्नाभिन्नयोश्च वस्तुतो व्याप्तिरयुक्तेत्यर्थः ॥६३१॥

भिन्नयोरभिन्नयोर्भिन्नाभिन्नयोर्वा न व्याप्तिश्चेत्कथमात्मनोऽनात्मविषयोक्ता व्याप्तिः स्यादित्याशङ्क्याऽऽह—यत्रेति । द्वयोर्मध्ये यस्मिन्नेकस्मिन्नपरस्य तादात्म्येन वृत्तिस्तस्मिन्नन्यस्य सा वृत्तिर्मुख्या व्याप्तिर्यथा रज्जुसर्पयोः सर्पस्य रज्जौ वृत्तिस्तथाऽऽत्मानात्मनोरप्यात्मनि कल्पितस्यानात्मनो वृत्तिर्मुख्याऽस्तु तस्मात्कल्पिताकल्पितयोः कल्पिततादात्म्याख्या मुख्या व्याप्तिरित्यर्थः ॥६३२॥

दृष्टान्तावष्टम्भेन प्रवेशविचारमुपसंहरति—तमसेति । स्वाज्ञानादेव स्रजो भुजगे प्रवेशो न वस्तुतोऽस्तीति स्रगतिरिक्तसर्पासत्त्ववत्प्रतीचोऽपि स्वाज्ञानोत्थे जगति तद्वशादेव प्रवेशो न परमार्थत इति प्रत्यगात्मैव वस्तु न तु जगदिति स्थितमित्यर्थः ॥६३३॥

प्रवेशवाक्यं मुख्यार्थं परश्च प्रवेशयोग्यो मायावशादित्युक्तम् । इदानीमाकाङ्क्षापूर्वकमुत्तरं पदमवतार्य व्याचष्टे—कयेति । अतः काङ्क्षितत्वादिति यावत् । अस्य प्रवेशस्येत्यर्थः ॥६३४॥

किमिति प्रवेशस्येयमेव मर्यादा मर्यादान्तरं किं न स्यात्तत्राऽऽह—नखेति । चैतन्यं हि देहे पुरुषस्य नखाग्रपर्यन्तं प्रस्फुरत्यतो दृष्टानुसारित्वादुक्तमर्यादायाः सामान्यवृत्त्या विशेषवृत्त्या चाविकृतः परो मायया स्रष्टा सृष्टं देहं प्रविष्टः स चाऽऽत्मेत्यर्थः ॥६३५॥

यथेत्यादिदृष्टान्तद्वयमवतारयति—दृष्टान्ताभ्यामिति । इमामुभयीमिति यावत् । कथमसङ्गस्याऽऽत्मनो द्वयी वृत्तिस्तत्राऽऽह—कृत्स्नेति । कृत्स्नस्य द्वैतस्य मूलकारणमज्ञानं तस्य कार्यं वियदादि तत्रोभयत्र वृत्तिराभासस्तद्रूपोपाध्यवष्टम्भादसङ्गस्यापि मायामयी द्वयी वृत्तिस्तं दृष्टान्तद्वयेन दर्शयत्युत्तरं वाक्यद्वयमित्यर्थः ॥६३६॥

तत्राऽऽद्यदृष्टान्तव्याख्यानेन प्रतीचो विशेषवृत्तिं विशदयति—मिथ इति । एकस्मिन्नापितोपस्करणपात्रे क्षिप्ताः क्षुरा मूर्तानामेकदेशत्वविरोधाद्भिन्नदेशयुक्ता विशेषवृत्तिभाजोऽन्योन्यं क्षुरधानाच्च भिद्यन्ते तथाऽऽत्मा चक्षुरादिनाडीविशेषयोगाद्देहे द्रष्टा श्रोतेत्यादिविशेषव्याप्तिमान्मिथो देहाच्च भिद्यत इत्यर्थः ॥६३७॥

विशेषवृत्तेरौपाधिकत्वोक्त्या सामान्यवृत्तेरपि तुल्यत्वादौपाधिकत्वमुक्तम् । इदानीं देहे वृत्तिद्वयस्यौपाधिकत्वे क्षेत्रज्ञत्वस्याऽऽर्थिकमौपाधिकत्वमित्याह—ओतेति । अक्षरादज्ञाताद्ब्रह्मणोऽधस्तात्पृथिव्याद्या या विकारभूमयो दीर्घतन्तुवदोतात्मना तिर्यक्तन्तुवत्प्रोतात्मना च तस्मिन्नेवाक्षरे स्थिता "एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चे"त्यादिश्रुतेःताभिस्ताभिः समष्टिव्यष्टिभूताभिर्भूमिभिरवच्छेदादनवच्छिन्नः सन्परात्मैव जीवो भवत्यतो जीवत्वमौपाधिकमित्यर्थः ॥६३८॥

जीवत्वादेरौपाधिकत्वे सत्युपाधेर्वस्तुत्वेऽद्वैतहानिरवस्तुत्वे तस्यावस्तुत्वापत्तिरुपाधेरवस्तुत्वादौपाधिक-

१. आत्मा व्यापी बुद्ध्यादिः व्याप्यः एकोऽकल्पितः अन्यः कल्पितः तयोः सम्बन्धः कल्पितं तादात्म्यम् ।

विश्वंभरोऽग्निर्विज्ञेयो विश्वस्य भरणादिह । दारु कृत्स्नमभिव्याप्य यथाऽग्निर्दारुणि स्थितः ॥४०
संव्याप्य तद्वदखिलं देहमात्मा व्यवस्थितः । तस्थावसंव्याप्य यथा क्षुरधानं क्षुरस्तथा ॥४१
श्रोत्रादिनाडीमध्यस्थ आत्माऽव्याप्य तनुं स्थितः । वृत्ती द्वे प्राप्नुतेऽतद्वान्स्वप्नजाग्रदवस्थयोः ॥४२
सामान्यमात्रवृत्तिं स सुषुप्ते प्रतिपद्यते । प्रत्यग्याथात्म्यसंमोहान्न[1] त्वसौ परमार्थतः ॥४३
महासत्ता वियज्ज्ञेयं कृत्स्नार्वाग्भूमिसंप्लुतेः । व्यक्तयोऽन्त्या विशेषाः स्युस्तदसाधारणत्वतः ॥४४
सामान्यानि विशेषाश्च तन्मध्यपतितानि च । सामान्यात्मविशेषत्वं तदुपाधिरगात्परः ॥४५
श्रोत्रत्वगादिनाडिस्थं शब्दाद्यालोचनादिभिः । चेष्टितं नामरूपाभ्यां देहेऽमुष्योपलभ्यते ॥४६

त्वायोग इत्याशङ्क्याऽऽह—सूक्ष्मतेति । पृथिव्यादेरक्षरान्तस्य पूर्वपूर्वत्यागेनोत्तरोत्तरस्य सूक्ष्मत्वादि ज्ञेयं कार्यापेक्षय कारणस्य तद्भावात्तस्य चाक्षरात्मनाऽवसानात्‌वियच्छब्देनाक्षरपरिग्रहात्तत्पर्यायस्याऽऽकाशशब्दस्य तस्मिन्प्रयं गदर्शनात् इतरस्य सर्वस्य सापेक्षकत्वेन कल्पितत्वान्निरपेक्षमक्षरमेवाकल्पितमित्यद्वैतसिद्धिः । न चोपाधेरवस्तुत जीवत्वादेरौपाधिकत्वायोगः कल्पितोपाधेरतादृग्जीवत्वाद्यविरोधादिति भावः ॥६३९॥

आद्यं दृष्टान्तं व्याकुर्वताऽऽत्मनो देहे विशेषवृत्तिं स्फुटीकृत्य तदौपाधिकत्वोक्त्या जीवत्वमपि तथेत्युक्तम् इदानीं द्वितीयदृष्टान्तस्थं विश्वंभरशब्दार्थमाह—विश्वमिति । ननु नायं शब्दोऽग्निं गोचरयति तत्र रूढ्यभावावि त्याशङ्क्य महाभूतत्वेन जाठरत्वेन वा विश्वभर्तृत्वमग्नेरित्याह—विश्वस्येति । इहेति प्रकृतवाक्योक्तिः । दृष्टान्तं विवक्षितमंशमाह—दार्विति ॥६४०॥

दार्ष्टान्तिकमाह—संव्याप्येति । देहे सामान्यव्याप्तिमात्मनो दृष्टान्तेनोक्त्वा पूर्वोक्तनाडीस्फुटीकाराः विशेषव्याप्तिं दृष्टान्तेन सहानुवदति—तस्थाविति । अव्याप्येति च्छेदः । श्रोता द्रष्टेत्यादिविशेषरूपेणेति शेषः उक्तवृत्त्योरवस्थाभेदेनावान्तरभेदमाह—वृत्ती इति । अव्यावृत्ताननुगतत्वाद्वस्तुतो वृत्तिद्वयहीनोऽपि स्वाविद्यय तद्द्वयमवस्थाद्वये प्राप्नोतीत्यर्थः । अतद्वानिति च्छेदः ॥६४१–६४२॥

तर्हि तथैवावस्थान्तरेऽपि वृत्तिद्वयं स्यादित्याशङ्क्य स्वापे सामान्यवृत्तिरेवेत्याह—सामान्येति असङ्गस्याऽऽत्मनोऽवस्थात्रयेण वृत्तिद्वयेन च योगे हेतुमाह—प्रत्यगिति । अवस्थात्रये यथोक्ता वृत्तिरस्य वास्तवं न संभवत्युक्तासङ्गत्वविरोधादिति व्यावर्त्यमाह—न त्विति ॥६४३॥

अध्यात्मं वृत्तिद्वयमुक्त्वा देहाद्बहिरपि विभज्य तद्दर्शयितुं पदार्थान्विभजते—महासत्तेति । वियदक्षर "मृचो अक्षरे परमे व्योमन्नि"ति व्योमशब्दस्य वियत्पर्यायस्याक्षरे प्रयोगात्तच्चाक्षरं महासत्ता सामान्यमात्रमिति ज्ञेयमित्यर्थः । महासत्तेति ज्ञेयमक्षरमित्यत्र हेतुमाह—कृत्स्नेति । सर्वास्वक्षरादर्वाक्षु विकारभूमिष्वक्षरस्य व्याप्तेस्तस्य सामान्यमात्रतेत्यर्थः । अन्त्यविशेषाणामत्यन्तव्यावृत्तेर्व्यक्तित्वमेवेत्याह—व्यक्तय इति । यद्यपि वैशेषिकपरिभाषासिद्धा न सन्त्यन्त्या विशेषास्तथाऽपि विशेषव्यवहारपरिसमाप्तिभूमितया तेषामेषितव्यत्वात्तेषु व्यक्तित्वं नियन्तुमुचितमिति भावः ॥६४४॥

पृथिव्यादीनामुभयथात्वमाह—सामान्यानीति । सन्तु पदार्था यथोक्तविभागभाजः प्रस्तुते किं जातं तदाह—सामान्यात्मेति । अव्याकृतोपाधिः सामान्यात्मत्वमन्त्यविशेषोपाधिर्विशेषात्मत्वं पृथिव्याद्युपाधिरुभयात्मत्वं परो गतवानित्यर्थः ॥६४५॥

देहाद्बहिरपि वस्तुषु वृत्तिद्वयमुक्त्वा प्रतीचो देहे विशेषवृत्तिं प्रागुक्तामनुभवेन साधयन्नाह—श्रोत्रेति । नामरूपाभ्यां बीजभूताभ्यां शब्दस्पर्शादिज्ञानेन गत्युक्त्यादिक्रियया चाऽऽपादितं श्रोत्रादीन्द्रियोपाधिगतं द्रष्टृत्व-श्रोतृत्वादिरूपममुष्य मैत्रस्य देहे दृश्यते तस्मादात्मनो देहे विशेषवृत्तिरनुभवसिद्धेत्यर्थः ॥६४६॥

---

१. न त्वसाविति—अतद्वतः तद्वत्वं व्याहतं अत आह—न त्वसाविति ( न्या० ) ।

**तं न पश्यन्तीत्यस्य तात्पर्यम्**

**असाधारणसामान्यरूपाभ्यामीक्ष्यमीक्षते । सर्वमानैः प्रसिद्धत्वादतो व्युत्थाप्यते ततः ॥४७॥**

**अयं मेयः प्रमाताऽहं मानमेतदितीक्षणे । मिथ्याज्ञाने जनस्तुष्टः स्वप्नमायेन्द्रजालवत् ॥४८॥**

**यतो मिथ्यावबोधोऽयमतस्तदपनुत्तये । न पश्यन्ति तमित्याह ये पश्यन्ति यथोदितम् ॥४९॥**

**वस्त्वज्ञानैकनिष्ठत्वान्मिथ्याधीर्न हि वस्तुनि । न पश्यन्तीत्यतो युक्तं नेक्षन्ते वस्तु तत्परम् ॥५०॥**

**यद्यप्यत्राभिमानोऽस्ति निष्क्रियाकारकात्मनि । पश्यामीत्ययथार्थत्वान्मिथ्याधीरेव सा मता ॥५१॥**

**नन्वप्राप्तनिषेधोऽयं न पश्यन्तीति भण्यते । नैवं सृष्ट्यादिवाक्यानां प्रत्यग्बोधैकहेतुतः ॥५२॥**

**मन्त्रोऽप्याहेममेवार्थं रूपं रूपमिति स्फुटम् । तद्दर्शनात्समस्तस्य पुरुषार्थस्य सिद्धितः ॥५३॥**

**पश्यन्तोऽपि न पश्यन्ति विरुद्धं कथमुच्यते । मेयासंस्पर्शिदृष्टित्वान्न पश्यन्तीति भण्यते ॥५४॥**

**सदेवेत्यादिवाक्येभ्यः कृत्स्नं वस्तु यतोऽद्वयम् । संभवस्तद्विरुद्धस्य कुतोऽकृत्स्नस्य वस्तुनः ॥५५॥**

दृष्टान्तयोरभिप्रायमुक्त्वा तं न पश्यन्तीति वाक्यमवतारयितुं जगतो द्विरूपत्वं प्रत्यक्षादिसिद्धमिति भूमिकां करोति—असाधारणेति । दृश्यं जगदेव द्विरूपं तत्रैव तद्भावदृष्टेरित्यर्थः । उक्तमुपजीव्य वाक्यतात्पर्यमाह—सर्वेति । द्विरूपस्य जगतोऽध्यक्षादिसिद्धत्वादात्मनश्चातथात्वात्ततो द्व्यात्मकादात्मा पृथक्क्रियते तं नेत्यादिवाक्येनेत्यर्थः अतःशब्दस्येत्यर्थः ॥६४७॥

जगतस्तर्हि मेयत्वात्तज्ज्ञाने लोकस्य तुष्टिदृष्टेश्च वस्तुत्वेनाद्वैतहानिरत आह—अयमिति । मात्रादिज्ञानस्य स्वप्नादिधीवद्भ्रान्तित्वान्नाद्वैतहानिः सर्वमानप्रसिद्धता तु व्यवहारदृष्ट्येत्यर्थः । दार्ष्टान्तिकस्य बहुरूपत्वं दर्शयितुमनेकदृष्टान्तग्रहणम् ॥६४८॥

मात्रादिभेदधियो भ्रान्तित्वे फलितमाह—यत इति । सामान्यविशेषाभ्यां द्विरूपं मात्रादिभेदभाजमात्मानं ये पश्यन्ति ते तं नोपलभन्ते तस्य तद्वैलक्षण्यादिति मिथ्याधीध्वंसार्थमाह श्रुतिरित्यर्थः ॥६४९॥

सामान्यविशेषयोरप्यात्माभिन्नत्वेन वस्तुत्वान्न तद्धीर्मिथ्याधीः संमतात्मधीवदित्याशङ्क्याऽऽह—वस्त्विति । सामान्यादेरात्माज्ञानमात्रस्थत्वेनावस्तुत्वात्तद्धीर्मिथ्याधीरेव न वस्तुविषयत्वेन सम्यग्धीर्न हि वस्तुनि चिदेकताने सामान्यविशेषभावसंभवस्तेनोभयरूपमात्मानं पश्यन्तोऽपि न तं पश्यन्तीति युक्तमेवेत्यर्थः । तं न पश्यन्तीत्यात्मनश्चाक्षुषत्वमेव निषिध्यते तदिष्टमेव "न चक्षुषे"त्यादिश्रुतेः न तस्य विशेषनिषेधान्निरस्यते ज्ञेयतेत्याशङ्क्य व्याचष्टे—नेति । प्राणनादिना विशिष्टमात्मनं पश्यन्तोऽपि तमप्रपञ्चं न जानन्तीत्यर्थः ॥६५०॥

पश्यामि शृणोमीत्याद्यबाधितात्मदृष्ट्याऽभिमानात्कथं यथोक्तनिषेधसिद्धिरित्याशङ्क्याऽऽह—यद्यपीति । आत्मनि पश्यामीत्यादिरभिमानो यद्यप्यस्ति तथाऽपि सा मिथ्याधीरेवायथार्थत्वात् । न च कूटस्थे द्रष्टृत्वाद्यधिकृत्य प्रवृत्तिः । इष्यते चायथार्थाया धियो मिथ्यात्वं, न च सर्वविशेषनिषेधश्रुतौ सत्यां द्रष्टृत्वाद्यभिमानस्याबाधितत्वमित्यर्थः ॥६५१॥

मिथ्याज्ञानध्वंसार्थं निषेधवाक्यमित्युक्ते निषेधमाक्षिपति—नन्विति । तन्नामरूपाभ्यामिति प्रकृतः सर्गः, स एष इहेति प्रवेशश्च तस्याऽऽत्मज्ञानशेषत्वात्तदपि प्रकृतमेवेति परिहरति—नैवमिति ॥६५२॥

सृष्ट्यादेर्ज्ञानार्थत्वे मानमुक्तमेव स्मारयति—मन्त्रोऽपीति । इत्युपक्रम्य तदस्य रूपं प्रतिचक्षणायेति स्फुटमेवेममर्थं मन्त्रोऽप्याहेति योजना । न केवलं तद्वशादेव सृष्ट्यादेर्ज्ञानार्थत्वं किंतु फलवत्संनिधावित्यादिन्यायाच्चेत्युक्तमर्थान्तरमाह—तद्दर्शनादिति । समस्तस्य परिपूर्णस्येति यावत् ॥६५३॥

सृष्ट्यादिवाक्यैरात्मज्ञानस्य प्राप्तत्वादप्राप्तनिषेधाभावेऽपि नैव युक्तो व्याघातादिति शङ्कते—पश्यन्तोऽपीति । व्याघातं परिहरति—मेयेति । आत्मनः सामान्याद्यात्मना दर्शनस्य वस्त्वननुसारित्वेन भ्रान्तित्वात्सम्यग्दृष्ट्यभावविवक्षया निषेधो युक्त इत्यर्थः ॥६५४॥

कथमात्मनः सामान्याद्यात्मना दृष्टेरवस्त्वनुसारित्वेन भ्रान्तित्वं तत्राऽऽह—सदिति । द्वैताभावोपलक्षितत्वेन

आत्मनः श्रौतपूर्णत्वोपपादनम्

अव्यावृत्ताननुगतं प्रत्यग्वस्तु स्वतो मितेः । तद्विरुद्धेह या दृष्टिर्मिथ्यारूपा न साऽन्यथा ॥५६॥
आत्माऽनात्मानमाप्नोति यतः प्रत्यक्तयाऽखिलम् । तदन्यानवशिष्टत्वादकृत्स्नः स्यादतोऽन्यथा ॥५७॥
अनात्मा नाऽऽत्मरूपेण प्रत्यक्त्वात्सिद्धिमर्हति । प्रत्यङ्मात्रैकयाथात्म्यात्कुतस्तद्व्यतिरेकतः ॥५८॥
देशतः कालतो रूपाद्वस्त्ववस्थादितोऽपि च । व्यभिचारोऽस्य संसिद्धस्तद्विरुद्धात्मसाक्षिकः ॥५९॥

अकृत्स्नो हि स प्राणन्नेव प्राणो नाम भवति इत्यस्यार्थः

प्रतिज्ञार्थस्य सिद्ध्यर्थं न पश्यन्तीति भण्यते । अकृत्स्नो हीति हेतूक्तिः साऽपि चैवं समर्थ्यते ॥६०॥
तदकृत्स्नत्वसंसिद्ध्यै प्राणन्नेवेत्युदीरणम् । अन्योन्यव्यभिचारित्वं प्राणादेरीक्ष्यते यतः ॥६१॥
यस्मिन्दृष्टेऽप्यदृष्टोऽर्थः स तदन्यश्च शिष्यते । तथाऽदृष्टेऽपि दृष्टः स्यादकृत्स्नस्तादृगुच्यते ॥६२॥
आविष्करिष्यन्हेत्वर्थमकृत्स्नत्वप्रसिद्धये । न ह्यसौ कृत्स्नतामेति चक्षुःश्रोत्रादिसंहतः ॥६३॥

कृत्स्नत्वं साधयति—यत इति । त्रिविधपरिच्छेदहीने वस्तुन्यागमसिद्धे फलितमाह—संभव इति । परिच्छिन्नस्यावस्तुत्वे तद्दृष्टिरसम्यग्दृष्टिरेवेति भावः ॥६५५॥

आत्मनः श्रौतं पूर्णत्वं युक्त्यनुभवाभ्यां व्यनक्ति—अव्यावृत्तेति । प्रत्यग्वस्तु स्वतो निःसामान्यविशेषं विदुषामैकरस्येन स्फूर्तेः सामान्यादेश्च स्वतः परतो वाऽप्रमितेरित्यर्थः । वस्तुमितिविरुद्धत्वाच्चाऽऽत्मनि सामान्यादिधीर्मिथ्येत्याह—तद्विरुद्धेति । सामान्यादिदृष्टिरात्मन्यन्यथा सम्यग्दृष्टिर्नेति व्यावर्त्यमाह—न सेति ॥६५६॥

पूर्णत्वे प्रतीचो हेत्वन्तरमाह—आत्मेति । यतोऽखिलमनात्मानमात्मा व्याप्नोत्यात्मनस्तत्र सर्वत्र प्रत्यक्त्वादतस्तस्मादात्मनोऽन्यस्य तेनाव्याप्तस्याभावात्स पूर्णः स्याद्यद्यात्माव्याप्तमपि किंचिद्भवेद्भवेदकृत्स्नस्तदात्मा । न च तदस्त्यात्माव्याप्तस्य निःस्वरूपत्वादतो युक्ता पूर्णतेत्यर्थः ॥६५७॥

आत्मनो मानयुक्तिभ्यां पूर्णत्वमुक्त्वा परिच्छिन्नस्याऽऽविद्यत्वे युक्त्यन्तरमाह—अनात्मेति । द्वैतमात्मनोऽभेदेन भेदेन वा सिध्यति?नाऽऽद्यः, प्रत्यङ्मात्रपरिशेषप्रसङ्गान्नेतरः प्रत्यगितरस्वरूपाभावादतः प्रतीचि कल्पितत्वेनैव तत्सिद्धिरित्यर्थः ॥६५८॥

कल्पितत्वेऽनात्मनो हेत्वन्तरमाह—देशत इति । एकस्मिन्देशे काले च सदेवान्यत्र नास्ति यदेकस्य रूपं तन्नान्यस्य भवति यदैकस्य जन्मावस्था तदाऽन्यस्य नाशावस्था । एवं देशादिवशाद्गुणक्रियादिवशाच्चानाऽऽत्मनो व्यभिचारः सिद्धो न च तत्र साधकाभावोऽव्यभिचारिसाक्ष्यनुभवसिद्धत्वादित्यर्थः ॥६५९॥

तं न पश्यन्तीत्यस्यार्थमुक्त्वाऽनन्तरवाक्यं पातयति—प्रतिज्ञेति । तं न पश्यन्तीति प्रतिज्ञा तदर्थसिद्ध्यर्थमकृत्स्नो हीति हेतूक्तिर्भण्यत इति योजना । साऽपि हेतूक्तिर्वक्ष्यमाणनीत्या प्राणन्नेवेत्यादिना साध्यत इत्याह—साऽपीति । हेतुसमर्थनस्याऽऽवश्यकत्वं सूचयितुं चशब्दः ॥६६०॥

चतुर्थपादार्थं प्रपञ्चयति—तदिति । हेतुवाक्यार्थस्याकृत्स्नत्वस्य सिद्ध्यर्थं प्राणन्नेवेत्यादिवाक्यमित्यर्थः । ननु तेन प्राणनादिकर्तोच्यते न त्वकात्स्न्यं तदुपनायकशब्दाभावादत आह—अन्योन्येति । प्राणनदर्शनादिकर्तुर्मिथो व्यभिचारित्वं यतो दृश्यते न हि पूर्णं क्वचिद्व्यभिचरत्यतस्तस्याकृत्स्नतेत्यर्थः ॥६६१॥

अकृत्स्नो हीत्यादेस्तान्यस्येत्यस्मात्प्राक्तनस्य संदर्भस्य तात्पर्यमुक्त्वाऽकृत्स्नशब्दार्थमाह—यस्मिन्निति । यस्मिन्घटादौ दृष्टेऽप्यदृष्टः सोऽर्थोऽस्ति सावयवत्वात्ततोऽन्यश्च पटादिरदृष्टः शिष्यते तथा पटादौ स्वगतविशेषे चादृष्टेऽपि यो घटादिर्दृष्टः स्यात्स दर्शितप्रकारोऽकृत्स्नशब्दित इत्यर्थः ॥६६२॥

उक्तमकृत्स्नत्वं प्राणनादिकर्तरि कथं सिध्यति तदभावे द्रष्ट्रादिदर्शनेऽपि कथमात्मनो दर्शनमित्याशङ्क्य तदकृत्स्नत्वसिद्ध्यर्थमित्यत्रोक्तमनुवदति—आविष्करिष्यन्निति । प्राणनादिकर्तुरात्मनोऽकृत्स्नत्वसिद्ध्यर्थमकृत्स्नो हीति हेतुवाक्यार्थं प्राणन्नेवेत्यादिना प्रकटीकरिष्यन्वेदः प्रवृत्त इत्यर्थः । दर्शनादिकर्तुरपि कृत्स्नत्वमात्मत्वादन्यथा

परस्परानभिव्याप्तेर्नामरूपक्रियात्मनाम् । व्यभिचारादकृत्स्नत्वं स्यादनात्मैकरूपिणाम् ॥६४॥
असंहतः संहतः सन्प्रत्यङ्मोहैकहेतुतः । प्राणनादिक्रियाः कुर्वन्प्राण इत्यभिधीयते ॥६५॥
तस्मिंश्च[1] प्राणने वायोर्व्यापारः करणात्मना । उत्सृज्यमानः कर्मत्वं विज्ञानात्मन एति सः ॥६६॥
साक्षादात्मोत्सृजन्वायुं तस्मिन्प्राणनकर्मणि । अपेतकारकग्रामः प्रतीच्यैवानुभूयते ॥६७॥
कर्त्रादिकारकाण्यस्मिन्नसाधारणरूपतः । अतद्धर्मक आभान्ति ह्यागमापायसाक्षिणि ॥६८॥
साक्षिरूपं स्वतःसिद्धं तेनैष्वव्यभिचारतः । कर्त्रादि तु तमोन्तस्य रूपं धर्माद्यपेक्षया[2] ॥६९॥
अनित्यहेतुतोऽनित्यं तेन कर्त्रादि लक्ष्यते । निर्हेतु प्रत्यगज्ञानं लक्ष्यते तेन नित्यवत् ॥७०॥

तत्कर्तृत्वायोगादित्याशङ्क्याऽऽह—न हीति। दर्शनादिकर्ता नैव पूर्णत्वं गच्छति चक्षुरादिभिः संहतत्वादित्यर्थः ॥६६३॥

संहतस्याकार्त्स्न्यं साधयति—परस्परेति। नामाद्यात्मनामनात्ममात्राणां प्राणनादिकृतामन्योन्याप्तेर्व्यभिचारादुक्ताकृत्स्नत्वं स्यादिति योजना ॥६६४॥

प्रतीचो निर्विकारस्य प्राणनादिकर्तृत्वायोगात्तत्कर्तृत्वेन तस्य प्राणादिसंज्ञाऽलाभात्प्राणनक्रियामेव कुर्वन्प्राणो नामेत्यादिभाष्यमयुक्तमित्याशङ्क्याऽऽह—असंहत इति। प्रत्यगात्मा वस्तुतोऽसंहतोऽपि मोहवशात्प्राणादिभिः संहतः सन्प्राणनादिचेष्टाः कुर्वन्प्राणादिशब्दवाच्यो भवतीति योजना। प्राण इत्यत्राऽऽदिशब्दो द्रष्टव्यः ॥६६५॥

मोहवशात्कर्तृत्वेऽपि प्राणने करणत्वं कर्मत्वं वा कस्य स्यात्। न हि कर्तुरेव तद्भावो भेदप्रसिद्धेरित्याशङ्क्याऽऽह—तस्मिंश्चेति ॥६६६॥

यदि प्राणने वायोरेवाऽऽध्यात्मिकस्य साधकतमत्वेन करणत्वं क्रियाव्याप्यत्वेन कर्मत्वं च तर्हि कर्तृत्वमपि क्रियाश्रयत्वेन तस्यैव किं न स्यादित्याशङ्क्याऽऽह—साक्षादिति। तस्मिन्प्राणनाख्ये कर्मणि वायुमुत्सृजन्नात्मा साक्षादनुभूयते प्रतीच्यैवेति संबन्धः। तेनाऽऽत्मैव तत्र कर्तृत्वमनुभवति न वायुस्तस्य कारकान्तरत्वादित्यर्थः। तर्हि कर्तृत्वादेर्वास्तवत्वं नेत्याह—अपेतेति ॥६६७॥

अवास्तवत्वं कर्तृत्वादेः साधयति—कर्त्रादीति। सर्वाणि कारकाणि क्रियाकारकादिभेदशून्ये प्रतीचि सर्वसाक्षिणि रज्जौ भुजंगवद्भान्ति तद्भानं च भ्रान्तिर्मिथोव्यावृत्तत्वेन व्यभिचारित्वादित्यर्थः। कारकाणां जडत्वेन साक्षिणमनपेक्ष्य स्वतोभानासंभवो हिशब्दार्थः ॥६६८॥

साक्षिणोऽपि तत्तद्धर्मविशिष्टस्य व्यभिचारित्वेन कल्पितत्वान्न तत्र कर्त्रादिकल्पनेत्याशङ्क्याऽऽह—साक्षीति। साक्षिणश्चिन्मात्रस्य कौटस्थ्यान्न कर्त्रादिसादृश्यमतो व्यभिचारिष्वव्यभिचारित्वेन तन्मात्रस्याकल्पितत्वात्तस्याधिष्ठानता युक्तेत्यर्थः। कर्त्रादेः साक्षिण्यध्यासे फलितमाह—कर्त्रादीति। साक्षिरूपाद्विशेषार्थस्तुशब्दः। अज्ञानतत्कार्यबुद्ध्योपहितप्रत्यग्वस्तुनो रूपं कर्त्रादीत्यर्थः। यथोक्तप्रतीचो नित्यत्वात्तद्रूपत्वे कर्त्रादेरपि नित्यतेत्याशङ्क्याऽऽह—धर्मादीति ॥६६९॥

कर्मकृतत्वं कर्त्रादिरूपस्य कथमिति तत्राऽऽह—अनित्येति। तेन साक्षिणा कर्त्रादिरूपमनित्यं लक्ष्यते तच्चानित्यत्वमनित्यधर्मादिकृतत्वादन्यथा चाकर्तृत्वाद्यनुभवविरोधात् अनुभूयते हि विदुषा प्रतीच्यकर्तृत्वादीत्यर्थः। कर्त्रादेरनित्यत्वे तदुपादानाज्ञानमपि तदभेदादनित्यं सन्नोपादानं स्यादित्याशङ्क्याऽऽह—निर्हेत्विति। यद्यपि ज्ञाननिरस्यत्वादज्ञानं न नित्यं तथाऽपि तेनैव साक्षिणा नित्यवल्लक्ष्यते निर्हेतुत्वे सत्यभावेतरत्वादात्मवदित्यनुमानादनित्योपादानत्वाच्च तन्नित्यमनित्यस्य तदयोगादिति भावः ॥६७०॥

---

१. अज्ञानात् कर्तृत्वेऽपि किं तत्र करणं कर्म वा स्यात् तत्राह—**तस्मिन्निति**। प्राणनक्रियायां वायोः साधकतमत्वात् करणत्वं, क्रियाव्याप्यत्वात् कर्मत्व उत्सृज्यमानः व्याप्यमानः ( न्या० )।

२. धर्माद्यपेक्षया—अज्ञानतत्कार्यबुद्ध्युपहितचैतन्यस्य धर्मादिकृतं कर्तृत्वादीत्यर्थः ( न्या० )।

प्रत्यगज्ञानमात्रैकनीडत्वान्नान्यरूपता । क्रियाकारकरूपाणां नित्यानित्यमतिः कुतः ॥७१॥
अतस्तद्व्यभिचारेण नामरूपक्रियात्मनाम् । अकृत्स्नव्यपदेशेन मिथ्याज्ञानत्वमुच्यते[1] ॥७२॥
अज्ञातायां यथा रज्ज्वां तदध्यस्तैकरूपिणाम् । व्यभिचारः स्रगादीनां प्रतीच्येवमनात्मनाम् ॥७३॥

तस्य प्राणभावस्य प्राथम्ये हेतुः

प्राणाग्नयः पुरा बुद्धेः सुप्तेष्वन्येषु जाग्रति । अतस्तद्विषया तावत्कर्तृतेहोच्यते प्रभोः ॥७४॥
नामतो रूपतश्चैवं प्राणनादिषु कर्मसु । लक्ष्यतेऽविद्यया तद्वान्रज्जुः सर्पादिभिर्यथा ॥७५॥
प्राणन्नेवेत्यवधृतेस्तदर्थान्तररूपतः । प्राणाद्यकृत्स्नतासिद्ध्यै व्यभिचारः प्रदर्श्यते ॥७६॥
कर्मैतदेव कुर्वाणः काले चात्रैव भण्यते । अत्रैव च क्रियायोगे तद्रूपाह्वः स इष्यते ॥७७॥
तद्वानसमकालं तु प्राणनादिक्रियोत्थितेः ।
प्रागूर्ध्वं च तदन्येषु प्राणासंभवहेतुतः । न तन्नामा न तद्रूपस्तदन्यत्र च कर्मणि ॥७८॥

कर्त्रादेरनित्यत्वेऽपि गगनादेर्नित्यत्वान्नाज्ञानकार्यतेत्यद्वैतहानिमाशङ्क्याऽऽह—प्रत्यगिति। क्रियाकारकाद्यात्मकसर्वार्थानामात्माज्ञानमात्रेऽनपेक्षाधारे स्थितत्वादज्ञानादन्यरूपता नास्त्यतो गगनादेर्नित्यता कर्त्रादेरनित्यतेति विभागेन न प्रमेत्यर्थः ॥६७१॥

यतो विभक्तस्य नित्यत्वादि दुर्निरूपमतः प्रतीचि त्रयात्मकस्य कर्त्रादेराकाशादेश्च व्यभिचारादकृत्स्नवाक्येन तस्य मिथ्याधीविषयत्वं कथ्यत इति फलितमाह—अत इति ॥६७२॥

प्रतीचि कर्त्रादीनामुक्तं व्यभिचारं मिथ्यात्वार्थं दृष्टान्ते स्पष्टयति—अज्ञातायामिति। या हि रज्जू रज्जुरित्यज्ञाता तस्यां तस्याज्ञानस्य तज्जस्य च तेनाध्यस्ततया तदेकस्वभावानां स्रगादीनां च यथा व्यभिचारोऽनुभूयते तथाऽऽत्मन्यज्ञाते तदज्ञानस्य तत्कृतानां च कर्त्रादीनां व्यभिचारान्मिथ्यात्वमित्यर्थः ॥६७३॥

प्राणन्नेवेत्यादिवाक्यादित्थं हेत्वर्थः समर्थितः। संप्रति किमिति प्रथमं प्राणनकर्तृत्वं प्रतीचः श्रुत्योच्यते वदनाद्यन्यतमकर्तृत्वमेवाऽऽदौ किं नोक्तमित्याशङ्क्य प्राणन्नेवेत्यादिप्रथमप्रवृत्तवाक्यतात्पर्यमाह—प्राणाग्नय इति। प्राणानामग्नित्वं श्रुत्युक्तमाहुत्याधारत्वात्तदाधारत्वं च प्राणाग्निहोत्राधिकारेऽधिगन्तव्यम्। बुद्धेः पुरा सुषुप्ताविति यावत्। इहेत्युदाहृतवाक्योक्तिः। प्रभोः करणस्वामिनो जीवस्येत्येतत्। सुषुप्त्यवस्थायां वागादिकरणग्रामोपसंहारेऽपि प्राणस्यानुपसंहृतस्य व्यापारात्तद्व्यापारस्यावस्थात्रयव्यापित्वात्तद्विषयकर्तृत्वमस्मिन्वाक्ये प्रथममात्मनो दर्शितमित्यर्थः ॥६७४॥

श्रुत्या चेत्प्राणनादिकर्तृत्वं प्रतीचो वर्ण्यते तर्हि श्रौतत्वात्तस्य वस्तुत्वं ब्रह्मवदित्याशङ्क्याऽऽह—नामत इति। यथा रज्जुरविद्यया सर्पधारादिमती लक्ष्यते तथाऽऽत्मा स्वाविद्यया प्राणाद्यध्यासात्प्राणनादिषु सत्सु नामरूपाभ्यामतद्वानपि तद्वानिव भातीत्यर्थः ॥६७५॥

प्राणन्प्राणो नामेत्यादिवाक्ये किमेवकारेणेत्याशङ्क्याऽऽह—प्राणन्निति। तस्मात्प्राणनकर्तुरर्थान्तररूपतो दर्शनादिकर्तुः सकाशादस्य व्यावृत्तिरवधृतेरुच्यते। तथाच प्राणो द्रष्टा श्रोतेत्यादेरकृत्स्नत्वसिद्ध्यर्थं मिथो व्यभिचारो दर्शितो भवतीत्यर्थः ॥६७६॥

प्राणादेर्मिथो व्यभिचारेऽपि प्रतीचि तदभावाच्चैतन्यवदकल्पितत्वमित्याशङ्क्याऽऽह—कर्मेति। प्राणनादिव्यापारं कुर्वन्नेवाऽऽत्मा तद्व्यापारोत्पत्तिदशायामेव प्राणनादिसंबन्धे च निमित्ते सत्येव तन्नामा तद्रूपश्चोच्यते तथा व्यापारान्तरं कुर्वन्कालान्तरे संबन्धान्तरे च तत्तन्नामरूपवानिष्टः। यथाऽऽहुः—स खलु प्राणन्नेवैतदेव कर्म कुर्वन्नेवास्मिन्नेव काल एतस्यैव कर्मणो योगात्प्राणो नाम भवतीति। अतो व्यभिचारो वस्तुन्यपि प्राणादेरस्तीत्यर्थः ॥६७७॥

उक्तमेव व्यतिरेकद्वारा स्फोरयति—तद्वानिति। यदुक्तं तद्वानसमकालं त्विति तदेव स्फुटयते—

१. मिथ्याज्ञानत्वं तादृशधीविषयत्वम्।

प्राणनादिव्यापारानन्तरं वदनादेः कथने तात्पर्यम्

प्राणनानन्तरं यस्मात्क्रियाशक्तेः समुद्भवः । वदन्वागित्यतः प्राह क्रमयोगानुरोधतः ।।७९।।
वक्तीति वाग्भवेदात्मा ह्युच्यते वाग्भवेद्ध्वनिः । तथोच्यतेऽनयेत्यस्मात्करणं वागुदाहृता ।।८०।।
पश्यंश्चक्षुस्तथा द्रष्टा शृण्वञ्श्रोत्रं तथैव च । त्रिधा त्रिधा व्यवच्छिन्न एवं सर्वत्र लक्षयेत् ।।८१।।
चक्षुरालोचनायैव संशयं कुरुते मनः । बुद्धिरध्यवसानाय साक्षी क्षेत्रज्ञ उच्यते ।।८२।।
यैव ज्ञानविकासेषु साक्षिता सैव नान्यथा । क्रियाशक्तिविकासेषु ह्यन्योन्यव्यभिचारिषु ।।८३।।
निरस्तावयवे व्योम्नि मिथोभिन्नप्रदेशिनाम् । न संभाव्या यथा सिद्धिः प्रतीच्येवं तमोवताम् ।।८४।।
प्राणन्वदन्नित्युक्तानि नामरूपाणि यानि तु । कर्मजान्येव तान्यस्य न तु चैतन्यवत्स्वतः ।।८५।।
अन्योन्यापेक्षसंसिद्धेरन्योन्यव्यभिचारतः । अपराधीनसंसिद्धौ भानाविव तमो भवेत् ।।८६।।

प्राणनादीति । यथोक्तप्राणनादिक्रियादिव्यक्तेः प्राक्तन्नाशादूर्ध्वं च न प्राणादिनामा प्रत्यगात्मा नापि तद्रूपस्तस्मात्प्राणनकर्तुरन्येषु दर्शनादिकर्तृषु प्राणनासंभवान्न ते प्राणनादिक्रियाव्यक्तेः प्राक्तन्नामरूपवन्तः प्राणादन्यत्र च व्यापारे तुल्यो न्यायो द्रष्टुरन्यत्र दर्शनायोगान्न द्रष्टृनामरूपत्वमेवं श्रोत्रादौ द्रष्टव्यमतो वस्तुनि प्राणादीनां व्यभिचारादकात्स्न्यात्कल्पितेति भावः ।।६७८।।

किमिति प्राणनकर्तृत्वोक्त्यनन्तरं कर्मेन्द्रियव्यापारकर्तृत्वमुच्यते ज्ञानेन्द्रियव्यापारकर्तृत्वमेव कस्मान्नोपन्यस्यते तत्राऽऽह—प्राणनेति । समुद्भवो वदनादिव्यापारः । क्रमस्य योगः संभवः । प्राह कर्मेन्द्रियव्यापारकर्तृत्वमिति शेषः । यद्यपि प्राणनानन्तरमेव दर्शनादिव्यापारोऽपि दृश्यते तथाऽपि वदनादिक्रियायाश्चलनात्मकप्राणाश्रितत्वाद्युक्तमानन्तर्यमिति भावः ।।६७९।।

यद्यपि श्रुतौ प्राणनादिकर्तृत्वेनैवाऽऽत्मनो व्यवच्छेदः श्रुतस्तथाऽपि प्रतीन्द्रियव्यापारं कर्तृत्ववत्कर्मत्वेन करणत्वेन च व्यवच्छेदो द्रष्टव्य इत्याह—वक्तीत्यादिना । ध्वनौ वाक्शब्दस्य रूढिद्योतको हिशब्दः । अस्माद्व्युत्पादनादिति यावत् ।।६८०।।

वदन्वागित्यत्रोक्तन्यायं वाक्यान्तरेष्वतिदिशति—पश्यन्निति । तत्र हि चष्ट इति चक्षुःशब्देन द्रष्टोच्यते दृश्यत इति कर्म तथा दृश्यतेऽनेनेति करणमिति विभागः । शृण्वञ्श्रोत्रमित्यत्रापि श्रोत्रशब्देन शृणोतीति श्रोतोक्तः श्रूयत इति कर्म श्रूयतेऽनेनेति करणमिति विवेक्तव्यम् । त्वगादिष्वपि यथोक्तन्यायं योजयति—एवमिति ।।६८१।।

इन्द्रियादिसंबन्धादात्मनोऽनेकधात्वमुक्त्वेन्द्रियादेरसाधारणं व्यापारमाह—चक्षुरिति । चक्षुःशब्देन दशेन्द्रियाणि गृह्यन्ते । आलोचनशब्देन दर्शनादयो वचनादयश्च दश व्यापाराः । संशयः संकल्पस्याप्युपलक्षणम् । जीवस्यासाधारणं व्यापारमाह—साक्षीति । आत्मनो वस्तुतो न कर्तृत्वादीति भावः ।।६८२।।

प्रतीन्द्रियव्यापारं साक्षिभेदमाशङ्क्याऽऽह—यैवेति । अन्योन्यव्यभिचारिष्विति सप्तमी सप्तमीभ्यां संबध्यते । ज्ञानशब्देन तच्छक्तिरुक्ता । उभयत्र विकासशब्दो विकारविषयः । नान्यथा प्रकारभेदवती न भवतीति यावत् । भेदस्यापि साक्षिणो भेदकाभावान्न वास्तवो भेदोऽस्तीति भावः । एकेनैव साक्षिणा तत्प्रयुक्तव्यापारसिद्धौ तद्भेदकल्पने गौरवमिति दर्शयितुं हिशब्दः ।।६८३।।

प्राणन्नेवेत्यादिहेतुसमर्थनवाक्यतात्पर्यमुपसंहरति—निरस्तेति । आकाशे निष्प्रदेशे परस्परव्यावृत्तप्रदेशविशेषजुषां धूमतुषारादीनां सद्भावो न शक्यते यथा प्रतीच्यसङ्गोदासीने नाज्ञानतज्जसंभावनेत्यर्थः ।।६८४।।

तान्यस्येत्यादिवाक्यस्यार्थमाह—प्राणन्निति । अनामरूपत्वमेवास्य स्वाभाविकमिति वक्तुं तुशब्दः । एवकारार्थमाह—न त्विति ।।६८५।।

उक्तानां प्राणादिनामरूपाणां प्राणनादिनिमित्तत्वेऽपि पाचकादिवत्प्रतीचि वस्तुतेति चेन्नेत्याह—अन्योन्येति । नाम्नो रूपापेक्षस्य तस्य चान्यापेक्षस्य सिद्धे रूपस्यानामत्वान्नाम्नश्चारूपत्वान्मिथो व्यभिचारादादित्ये तमोवत्प्रतीचि चिदेकरसे नामरूपमसंभावितत्वात्कल्पितमित्यर्थः ।।६८६।।

यत एवमविद्योत्थं प्राणाद्यस्यातदात्मनः । नामरूपमतस्ताभ्यां पश्यन्नपि न पश्यति ॥८७॥
तत्रैवं सति यो द्रष्टा प्राणनादिक्रियं परम् । उपास्त इति जानाति न स्वभावादुपासनम् ॥८८॥
न यतो युगपत्कृत्स्नवस्तुज्ञानं क्रमेण वा । अस्त्येकैकमतोऽनूक्तिः प्राप्ता दृष्टिरनूद्यते ॥८९॥
नानेकदृष्टिविध्यर्थमेकैकोपास्तिकुत्सनम् । मृत्योः स मृत्युमित्येवं तद्दृष्टिरपि कुत्स्यते ॥९०॥

अत्र ऐकात्म्यदर्शनमेव विधेयम्

सर्वं एकमिति ह्युक्तेरिहाप्यैकात्म्यदर्शनम् । विधीयते यतो नातः समस्तव्यस्तदर्शनम् ॥९१॥
समस्तव्यस्ततां तस्मान्मानान्तरमितत्वतः । अनूद्यापूर्वमैकात्म्यं विधेयमुपपत्तिमत् ॥९२॥

समस्तव्यस्तदर्शनमत्र विधेयमिति भर्तृप्रपञ्चमतं तन्निरासश्च

समुद्रतरुगोपिण्डदृष्टान्तैः परमात्मनः । व्याचक्षते बलात्केचित्समस्तव्यस्तदर्शनम् ॥९३॥
नानावयवसंभेदभिन्नार्थश्चेन्नगादिवत् । सिद्धः कुतश्चिन्मानात्स्यादनुवादस्तथा सति ॥९४॥

नामरूपस्य कल्पितत्वे फलितमाह—यत इति। सापेक्षत्वाद्व्यभिचाराच्चेत्येवंशब्दार्थः। अतदात्मनो नामरूपहीनस्येति यावत्। इत्थंभावे तृतीया। पश्यन्द्रष्टाऽऽत्मानमिति शेषः ॥६८७॥

"स योऽत"इत्यादेरर्थमाह—तत्रेति। तस्मिन्नात्मन्युक्तन्यायेन पूर्णे तदन्यस्य च सर्वस्य तत्रैव कल्पितत्वे सति यो याथात्म्येनाद्रष्टा सन्प्राणनाद्यन्यतमविशिष्टं केवलमात्मानमुपास्ते स न वेदेति संबन्धः। उपास्त इत्यस्यार्थमाह—इति जानातीति। उपास्त इत्यनेन स्वभावाज्जानातीत्येतदुच्यते। न हि विहितमुपासनमुत्तरत्र निन्दादृष्टेरित्यर्थः ॥६८८॥

अस्तु तर्हि स्वाभाविकज्ञानस्य विधायकमिदं वाक्यं नेत्याह—न यत इति। क्रमाक्रमाभ्यां न कस्यचिदसर्वज्ञस्य सर्ववस्तुज्ञानं किंत्वेकैकं क्रमभावि कतिपयपदार्थज्ञानमेव सर्वस्यास्ति तस्य च प्राप्तत्वादनूक्तिर्यतः संभाविताऽतः सा लोकतः प्राप्ता स्वाभाविकी दृष्टिः प्रकृतवाक्येनानूद्यते न तु विधीयतेऽप्राप्तांशाभावादित्यर्थः ॥६८९॥

न स वेदेत्येकैकोपास्तिनिन्दनादनेकदृष्टिरनुज्ञाता तथाच समस्तव्यस्तदृष्टिविधायकमिदं वाक्यमित्याशङ्क्याऽऽह—नानेकेति। अनेकदृष्टेरपि निन्दितत्वादिति हेतुमाह—मृत्योरिति ॥६९०॥

न केवलं श्रुत्यन्तरविरोधादेव समस्तव्यस्तदृष्ट्यसिद्धिः किंतु वाक्यशेषविरोधादपीत्याह—सर्वं इति। ऐकात्म्यदर्शनविधायकवाक्यान्तराणां समस्तव्यस्तदर्शनपरिपन्थिनां भूयस्त्वमभिप्रेत्य हिशब्दः ॥६९१॥

"अत्र ह्येते सर्वं एकं भवन्ती"ति वाक्यमपि समस्तव्यस्तदृष्टिपरमिति चेन्नेत्याह—समस्तेति। घटः सन्नित्यादिश्रुतीतरमानेन समस्तव्यस्ततायाः दृष्टत्वान्न तस्या यस्माद्वाक्यगम्यत्वमपूर्वत्वाभावात्तस्मात्तमनूद्यापूर्वं यन्निर्विशेषैकरसं वस्तु द्वैतमिथ्यात्वसाधकयुक्त्युपबृंहितं तदेवात्र प्रतिपाद्यं "प्रसिद्धमनूद्याप्रसिद्धं विधेयमि"ति न्यायादित्यर्थः ॥६९२॥

विशेषाणां ह्यविशेष एकता भवति यथा समुद्रे समुद्रोर्मीणामिति वदद्भिर्भर्तृप्रपञ्चैः समस्तव्यस्तदृष्टिपरत्वमस्य वाक्यस्योक्तं तदुत्थापयति—समुद्रेति। तरङ्गशाखाखण्डादिविशेषाणां समुद्रतरुगोष्वेकतावत्प्राणादेः सर्वस्य परस्मिन्नेकत्वात्तस्यापि समुद्रादिवन्नानारसत्वमत्र हीत्यादौ विवक्षितमित्यर्थः। बलादिति श्रुत्यक्षरबाह्यत्वोक्तिः ॥६९३॥

किं समस्तव्यस्तात्मकं वस्तु प्रतिपाद्यत्वेनात्रोच्यते किंवोपास्यत्वेनेति विकल्प्याऽऽद्यं दूषयति—नानेति। नानाविधैरवयवैः प्राणादिभिः संभेदः संबन्धस्तेन विशिष्टो नानारसः परः। विमतं समस्तव्यस्तात्मकमुपादानत्वात्तरुसमुद्रादिवदित्यनुमानाद्दृष्टश्चेत्तथा सति वाक्यं तत्रानुवादो न मानं, न चेदनुमानादेषोऽर्थो दृष्टो दृष्टान्तोक्तिस्त्वदीया वृथा स्यादित्यर्थः ॥६९४॥

निःशेषभेदसामान्यदृष्ट्यावृत्तिरुपासनम् । विधित्सितं चेत्तादृक्षं कल्पकोट्याऽपि दुःशकम् ॥९५॥
प्रत्यग्दृष्टेर्हि विषयः स्यादात्मेत्यनुभूतितः । तदबोधमृते तत्र कुतः पिण्डादिदर्शनम् ॥९६॥
तं परादादिति तथा प्रतीच्यज्ञानकल्पितम् । मिथ्याज्ञानापनुत्त्यर्थमात्मैवेत्यब्रवीच्छ्रुतिः ॥९७॥
पराञ्चीत्यपवादाच्च न पिण्डादीक्षणं श्रुतेः । प्रत्यग्दृष्ट्या विरुद्धत्वान्न परागर्थदर्शनम् ॥९८॥
अनन्यमेयतन्मानमातृ वस्त्वविभागवत् । अमेयमानमात्रैकं तदात्मेति प्रचक्षते ॥९९॥
संसारदर्शनाभ्यासात्तन्मुक्तिं ये प्रचक्षते । नाकार्यं विद्यते तेषां वैश्वानरवराश्रयात् ॥७००॥
वयं तु वरहीनत्वाच्चर्मवद्वेष्टितुं वियत् । न शक्नुमो विना युक्तीरतो न श्रद्दधामहे ॥ १ ॥
उक्तं च वक्ष्यमाणं च समस्तव्यस्ततां प्रति । श्रुत्यक्षरानुरोधेन दूषणं दूषितात्मनाम् ॥ २ ॥
नादूषितात्मभिर्यस्मात्प्रतीचोऽन्यन्मनागपि । प्रत्यग्दृष्ट्येक्षितुं शक्यं वस्तु स्वप्नदृशा यथा ॥ ३ ॥

द्वितीयमनूद्य दूषयति—निःशेषेति । भेदा विशेषाः सर्वेषां विशेषाणां सामान्यानां चैकवस्त्वात्मनामात्मतादात्म्येन दृष्टेरावृत्तिरूपमुपासनमस्मिन्वाक्ये विधातुमिष्टं चेत्तथाविधमुपासनं पुमायुषाऽपि दुष्करं तेषामानन्त्यात्कात्स्न्र्येनानुसंधानासिद्धेरतोऽविध्यात्मकस्य वस्तुनो द्विधोक्त्यसंभवात्तद्दृष्टिर्भ्रान्तिरित्यर्थः ॥६९५॥

तत्रैव हेत्वन्तरमाह—प्रत्यगिति । अहंप्रत्ययस्य स्वरूपचैतन्यस्य वाऽऽत्मेत्ययमर्थो विषयः स्यात्तत्र तस्यानुभवात्तस्य तथाविधानुभवे सर्वसंप्रतिपत्त्यर्थो हिशब्दः । तस्यानुभवसिद्धस्याज्ञानं विना तस्मिन्नात्मनि न देहादेर्दर्शनं मुक्तावभावादतोऽन्वयव्यतिरेकाभ्यामाविद्यमात्मनि देहादिदर्शनं भ्रान्तमित्यर्थः ॥६९६॥

इतश्च समस्तव्यस्तदर्शनं भ्रान्तमित्याह—तमिति । "ब्रह्म तं परादाद्योऽन्यत्राऽऽत्मनो ब्रह्म वेदे"त्याद्या श्रुतिर्नानात्वदृष्टिं निन्दति । तथाऽऽत्मन्याविद्यभेदधीनिषेधार्थं"मात्मैवेदमग्र आसी:दात्मैवेदं सर्वमि"त्याद्या चाऽऽत्ममात्रत्वं सर्वस्योक्तवती तत्कुतः समस्तव्यस्तदृष्टिरित्यर्थः । अथवा[1] "ब्रह्म तं परादा"दिति प्रकम्य प्रत्यगात्मनि कल्पितब्रह्मक्षत्रादिभेददर्शनापवादार्थं"मिदं सर्वं यदयमात्मे"तिश्रुतिरुक्तवती । तथाच समस्तव्यस्तदृष्टिरयुक्तैवेत्यर्थः ॥६९७॥

तस्या विवक्षितत्वाभावे हेत्वन्तरमाह—पराञ्चीति । "पराञ्चि खानी"त्यादिश्रुतेर्भेददृष्टेर्निन्दितत्वान्न विशेषदृष्टिस्तन्न समस्तव्यस्तदृष्टिरित्यर्थः । आत्मानात्मदृष्ट्योर्मिथो विरुद्धत्वेनैकत्रायोगाच्च न समस्तव्यस्तदृष्टिरित्याह—प्रत्यगिति । न हि प्रत्यक्प्रवणया दृष्ट्या पराचोऽर्थस्य दर्शनं नापि पराक्प्रवणया दृष्ट्या प्रतीचो दर्शनमुपपद्यते तयोर्मिथो विरुद्धत्वात्तथाच कथं समस्तव्यस्तदर्शनमित्यर्थः ॥६९८॥

तत्रैव हेत्वन्तरमाह—अनन्येति । अन्यन्मेयमस्य नास्तीत्यनन्यमेयं तदेव स्वरूपं मानं मातृ चेति तन्मानमातृ, अनन्यमेयं च तत्तन्मानमातृ चेति विग्रहः । तस्य कल्पनामात्राधिष्ठानत्वेन सत्यतामाह—वस्त्विति । तस्य चैकरस्यं श्रुत्यधिगतमित्याह—अविभागवदिति । उक्तानुवादेन तत्र विद्वत्प्रसिद्धिं प्रमाणयति—अमेयेति । तथाच कथं तस्य समस्तव्यस्तत्वं विद्वत्प्रसिद्धिविरोधादिति शेषः ॥६९९॥

किंच परपक्षे मोक्षानुपपत्तिरित्याह—संसारेति । नानारसार्थदृष्टिर्हि संसारदर्शनं तदभ्यासादेव ततो मोक्षमिच्छतां देवताप्रसादाच्चर्मवदाकाशमपि वेष्टितुमस्ति शक्तिरित्यर्थः ॥७००॥

किंच देवताप्रसादोऽस्तीति वाङ्मात्रान्नाशक्यार्थानुष्ठानमित्याशयेनाऽऽह—वयं त्विति । समस्तव्यस्तदृष्टिर्नानयुक्तिहीनत्वादश्रद्धेयेत्याह—विनेति ॥७०१॥

परपक्षासंभवमुपसंहरति—उक्तं चेति । दूषणोक्तेः समूलत्वेन दृढत्वं सूचयति—श्रुतीति । दूषितात्मनामशुद्धबुद्धीनामसम्यग्दृशामिति यावत् ॥७०२॥

ननु समस्तव्यस्तदर्शिनस्तत्त्वदर्शिनस्ते कथं दूषितात्मानस्तत्राऽऽह—नेत्यादिना । यथा स्वप्नद्रष्ट्रा

१. वाक्यभेदेन उत्तरार्धं व्याख्याय एकवाक्यतया व्याचष्टे—अथवेति ।

प्राणन्नेवेत्यस्य विवरणम्

प्राणन्वदन्निति द्वाभ्यां क्रियाशक्तिसमुद्भवः । पश्यञ्शृण्वन्निति तथा ज्ञानशक्त्युद्भवः कृतः ॥ ४ ॥
नामरूपातिरेकेण न ज्ञेयं वस्तु विद्यते । उपलब्धौ तयोरुक्ते कारणे श्रोत्रचक्षुषी ॥ ५ ॥
नामरूपप्रकाश्या च क्रिया प्राणात्मिका तथा । नामाभिव्यक्तिकृद्वाक्स्यादेवं सर्वत्र योजना ॥ ६ ॥
श्रोत्रादिकरणैर्यद्यत्प्रथते तत्तदुच्यते । रूपं व्याक्रियते यत्तु तन्नामेत्युपदिश्यते ॥ ७ ॥
ज्ञानशक्तिविकासानां मनः साधारणं मतम् । क्रियाशक्त्युद्भवानां च करणं तत्त्रिकालदृक् ॥ ८ ॥
प्राणनादिकृतां मध्य एकैकं यः समीक्षते । न स जानात्यकृत्स्नत्वात्पूर्णं वस्तु यतः स्वतः ॥ ९ ॥
यावदेवमयं वेद प्राणितीत्यादिकर्तृकम् । अक्रियाकारकं वस्तु न तावद्वेद तत्त्वतः ॥१०॥

प्रत्यग्दृष्ट्या नान्यद्द्रष्टुं शक्यमेवं सम्यग्दर्शिभिरात्मनोऽन्यदीषन्मात्रमपि स्वरूपदृष्ट्या न शक्यं द्रष्टुमतः समस्तव्यस्तदृष्टिर्भ्रान्तिरित्यर्थः ॥७०३॥

परमतं प्रसङ्गागतं प्रत्याख्याय श्रुतिव्याख्यामेवानुवर्तयन्प्राणन्नेव प्राणो वदन्वागित्याभ्यामित्यादिभाष्यं विभजते—प्राणन्निति । पदद्वयोपात्तप्राणनवदनाभ्यामनुक्तकर्मेन्द्रियव्यापारोपलक्षणमित्यर्थः । समुद्भवः कृत इति संबन्धः । कृतो लक्षित इति यावत् । समुद्भवो गमनादिव्यापारः । दर्शनश्रवणाभ्यामुक्ताभ्यामनुक्तज्ञानेन्द्रियव्यापाराणामुपलक्ष्यत्वमाह—पश्यन्निति । वदन्नित्यादौ प्रकृतिभागोक्तवदनादिव्यापारेणानुक्तहस्तादिव्यापारस्य लक्ष्यत्ववदित्याह—तथेति । उद्भवः स्पर्शनादिव्यापारः ॥७०४॥

अथोक्तबुद्धीन्द्रियव्यापाराभ्यामनुक्ततद्व्यापारमुपलक्ष्याऽऽत्मनः स्प्रष्टृत्वादिपरिच्छेदो नापदेष्टुं शक्यते संबन्धं विनोपलक्षणायोगादत आह—नामरूपेति । प्रकाश्यप्रकाशकातिरेकेण न किंचिज्ज्ञेयमस्ति ते च चक्षुःश्रोत्राभ्यां त्वगादिभिश्च दृश्येते । तस्मादेकार्थत्वरूपसंबन्धादुपलक्षणसंभवादात्मनः स्प्रष्टृत्वादिपरिच्छेदसिद्धिरित्यर्थः ॥७०५॥

उक्तकर्मेन्द्रियप्राणव्यापाराभ्यामनुक्तपादादिव्यापारोपलक्षणादात्मनो न गन्तृत्वादिपरिच्छेदो विना संबन्धमुपलक्षणासिद्धेरित्याशङ्क्याऽऽह—नामेति । सर्वा क्रिया नामरूपव्यङ्ग्या प्राणाश्रया च तथा सति प्राणाश्रयनामविषयोच्चारणक्रियाव्यञ्जकत्वं वाचो हस्तादीनां तदाश्रयादानादिव्यञ्जकता तस्मादेकाश्रयक्रियाव्यञ्जकत्वयोगादुपलक्षणसंभवादात्मनो गन्तृत्वादिपरिच्छित्तिरित्यर्थः । वाचि प्राणाश्रयक्रियाव्यञ्जकत्ववत्करादावपि तदाश्रयतद्व्यञ्जकत्वयोजना कार्येत्याह—एवमिति ॥७०६॥

नामरूपशब्दाभ्यां प्रसिद्धार्थग्रहान्न प्रकाश्यप्रकाशकमात्रग्रहस्तथाच चक्षुरादेस्त्वगादेश्च नोक्तैकार्थत्वसंगतिरित्याशङ्क्याऽऽह—श्रोत्रादीति । शक्तिद्वयोद्भवोक्त्या समस्तसंसारस्य प्रतीच्यध्यासस्यात्र विवक्षितत्वान्न प्रसिद्धनामरूपग्रहोऽत्र युक्तोऽतो नामरूपविषयत्वादित्यादिभाष्ये नामरूपशब्दाभ्यां प्रकाश्यप्रकाशकमात्रोक्तेर्यथोक्तसंबधसिद्धिरित्यर्थः ॥७०७॥

"मन्वानो मन" इत्यस्य तात्पर्यमाह—ज्ञानेति । विकासोद्भवशब्दाभ्यां दृष्ट्यादयो वदनादयश्चोच्यन्ते । साधारणं करणमिति संबन्धः । मनसः साधारणत्वं साधयति—तदिति । अत्र च भाष्यानुसारेण व्युत्पत्तित्रयमाश्रित्य कर्तृत्वादित्रयमात्मनो द्रष्टव्यम् ॥७०८॥

तान्यस्येत्यादिवाक्यस्य प्रागेव व्याख्यातत्वा"त्स योऽत" इत्यादेरर्थमनुवदति—प्राणनादीति । विशिष्टस्य पूर्णताभावाद्वस्तुनश्च स्वतस्तथात्वाद्विशिष्टात्मदर्शी नाऽऽत्मविदित्यर्थः ॥७०९॥

यः समीक्षते न स जानातीति व्याहतिमाशङ्क्याऽऽह—यावदिति । अयं जनो यावत्प्राणनादिकर्तारमात्मानं वेद न तावत्तत्त्वतो वेत्ति यतो वस्त्वक्रियाकारकमिति योजना । एवमिति प्रसिद्धप्रकारोक्तिः ॥७१०॥

आत्मेत्येवोपासीत इत्यस्य अवतरणम्

अव्याकृतेऽनभिव्यक्तेर्न चेत्तत्त्वमीक्ष्यते । व्यक्तौ च हेतुकार्याभ्यां कथं तर्हीक्ष्यतां परम् ।।११।।
कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ । प्राज्ञः कारणबद्धस्तु द्वौ तु तुर्ये न सिध्यतः ।।१२।।
विस्फारिताक्षो जानाति शब्दाद्येव न तत्परम् । आपीतकरणग्रामः शब्दाद्यपि न वेत्ति हि ।।१३।।
कथं पश्यंस्तमात्मानं साक्षाद्वेदेति चोदिते । आत्मेत्येवेति नो वक्ति चोद्यहेतुनिवृत्तये ।।१४।।

आत्मेत्येवोपासीत इत्यस्य विवरणम्

अतिरोहितरूपं यज्जगत्यव्याकृते तथा । तत्साक्षित्वाच्च तद्व्यक्तौ यदक्षैर्व्यज्यते न च ।।१५।।
प्रत्यक्तया यः प्रथते स्वयंज्योतिःस्वभावकः । मातृमानक्रियामेयविभागैर्न विभज्यते ।।१६।।
जिघ्राणीममहं गन्धमिति यो वेत्त्यविक्रियः । स आत्मा तत्परं ज्योतिः शिरसीदं वचः श्रुतेः ।।१७।।
अभिधाज्ञानगम्यत्वनिषेधायेतिशब्दनम् । यतो वाचो निवर्तन्त इति च श्रुतिशासनम् ।।१८।।
व्याकृताव्याकृतात्मत्वनिराकरणसिद्धये । एवेत्याहान्यदेवेति तथा चोच्चैः श्रुतीरणम् ।।१९।।

स्वतो वस्तु पूर्णमप्रपञ्चमित्युक्तं तच्चेन्न स्फुरेन्नास्त्येव तर्हि । स्फुरेच्चेत्किं स्वापे स्फुरति जागरादौ वा? नाऽऽद्य इत्याह—अव्याकृत इति । स्वापविषयोऽव्याकृतशब्दः । अनभिव्यक्तेरज्ञानेन प्रतिबन्धादित्यर्थः । द्वितीयं दूषयति—व्यक्तौ चेति । जागरस्वापयोरिति यावत् । हेतुकार्याभ्यां प्रतिबन्धादिति संबन्धः । अवस्थात्रये तत्परं तत्त्वं नेक्ष्यते चेत्कथं तर्हि तदीक्ष्यतामित्याक्षेपो न हि स्थानान्तरमस्ति यत्रैतदीक्षितुं क्षममिति भावः ।।७११।।

अज्ञानेन स्वापे जागरादावज्ञानतज्जाभ्यां प्रतिबद्धं तत्त्वमित्यत्र मानमाह—कार्येति । न च तुरीये तत्त्वधीस्तत्र कार्यकारणसंबन्धाभावादन्यतरसंबन्धं विना च धियोऽनुत्पत्तेरिति मत्वाऽऽह—द्वौ त्विति । कार्यकारण-रूपावुपाधी द्विवचनविषयौ ।।७१२।।

अवस्थात्रयेऽपि तत्त्वज्ञानाभावे हेत्वन्तरमाह—विस्फारितेति । जागरादौ तत्त्वविरुद्धार्थज्ञानात्स्वापे च ज्ञानमात्रस्यैवाभावाद्दुर्लभा तत्त्वधीरिति भावः ।।७१३।।

चोद्यमुपसंहरति—कथमिति । न तावदात्मानं सविशेषमुपलभमानस्तं साक्षाद्वेद "न स वेदे"ति निन्दितत्वान्नापि निर्विशेषं पश्यन्नात्मानं यथावद्बुध्यतेऽवस्थात्रयेऽपि तद्दृष्टययोगस्योक्तत्वादित्यर्थः । चोद्यानुवादपूर्वक-मुत्तरमवतारयति—इति चोदित इति । अज्ञानं चोद्ये हेतुस्तन्निवृत्त्यर्थमिदं वाक्यमिति तात्पर्यमाह—चोद्येति ।।७१४।।

यदुक्तमव्याकृतेऽनभिव्यक्तेरित्यादि तन्निराकुर्वन्नात्मशब्दार्थमाह—अतिरोहितेति । जगत्यव्यक्ते यत्तथा नाव्यक्तमतिरोहितरूपत्वात् यच्चाध्यक्षादिभिस्तस्य व्यक्तौ तैर्न व्यज्यते व्यक्ताव्यक्तस्य जगतोऽध्यक्षादीनां च साक्षित्वात्स आत्मेत्युत्तरत्र संबन्धः । न चेति चकारस्तथेत्यत्र नञः संबन्धार्थः ।।७१५।।

तर्हि जगदात्मनोर्भेदाद्द्वैतहानिर्नेत्याह—प्रत्यक्तयेति । घटादिवज्ज्ञानकर्मत्वं वारयति—स्वयमिति । कल्पितमात्रादिप्रत्यक्त्वे फलितमाह—मात्रिति । मानमेव क्रिया यद्वा क्रियापदेन कर्तृकरणभोक्त्रादित्रयं च लक्ष्यते । यद्वा मानस्योत्पत्तौ हेतुः क्रिया । न विभज्यते वस्तुत इति शेषः । तत्रापि स आत्मेत्येव संबन्धः ।।७१६।।

यदुक्तं विस्फारिताक्षो जानातीत्यादि तन्न अद्वयं स्वप्रभमात्मतत्त्वं यतः श्रौतमिति मत्वाऽऽह—जिघ्राणीति । भवतु मातृसाक्ष्यात्मा ब्रह्मणस्तु किमायातं तत्राऽऽह—तदिति । अथ यो वेदेदं जिघ्राणीति स आत्मेत्यादिवाक्यं मातृसाक्षिण्यात्मनि मानमुक्त्वाऽऽत्मैव ब्रह्मेत्यत्र तत्त्वमादिवाक्यं प्रमाणयति—शिरसीति ।।७१७।।

इतिशब्दार्थमाह—अभिधेति । प्रकृतं प्रकारमितिशब्दो गोचरयेत् । न च वाङ्मनसाविषयत्वमात्मनोऽस्ति प्रस्तुतमित्याशङ्क्य श्रुत्यन्तरसिद्धप्रकारपरामर्शित्वं तस्य दर्शयति—यत इति ।।७१८।।

कथमात्मादिशब्दधीभ्यां गम्यमानस्याऽऽत्मनो वाङ्मनसातीतत्वमित्याशङ्क्यावधारणार्थमाह—व्याकृ-

उपेति सामीप्यवचस्तन्निष्ठा प्रत्यगात्मनि । कार्यकारणभूताभ्यां प्रत्यङ्नेदीय ईक्ष्यते ॥२०॥
व्याकृताव्याकृतात्मभ्यां यो भिन्नोऽज्ञानहेतुतः । प्रत्यक्तत्त्वधिया हत्वा तावुपैत्यात्ममात्रताम् ॥२१॥
व्युत्थाय कारणात्कार्यात्तत्त्वज्ञानवर्त्मना । उपेत्य कूटस्थमजमासीतापरिणामवान् ॥२२॥
व्यक्ताव्यक्तविभागोऽयं सिध्येदात्मन्यतद्वति । अहोरात्रविभागोऽयं भानौ तद्रहिते यथा ॥२३॥
आत्मानात्मविभागोऽपि नायमात्मस्पृगीक्ष्यते । अज्ञातात्मैकसाक्षित्वादज्ञानोत्थं न वस्तुगम् ॥२४॥
अनात्मसिद्धिवन्न स्यादात्मसिद्धिरनात्मनः । आत्मनोऽनात्मसिद्धिश्च नैव स्यादात्मसिद्धिवत् ॥२५॥
आत्मनो व्यतिरेकेण नैःस्वाभाव्यादनात्मनः । तथैवाव्यतिरेकेण रज्जुसर्पखपुष्पवत् ॥२६॥
तस्मान्नानात्मनोऽस्त्यात्मा नाप्यनात्माऽऽत्मनः स्वतः । आत्मनस्तु स्वतः सिद्धिरात्मसिद्धेरनन्यतः २७॥

तेति । कार्यकारणान्यतरोपहितस्यैव शब्दधीगम्यत्वं न निरुपाधिकस्य चिद्धातोरिति भावः । अकार्यकारणं तत्त्वमित्यत्र श्रुत्यन्तरं संवादयति—अन्यदिति । तात्पर्यमुच्चैरित्युच्यते ॥७१९॥

उपेत्युपसर्गस्य वाच्यमर्थमाह—उपेतीति । सामीप्यस्य प्रतीचि पर्यवसानं वदन्नुपसर्गलक्ष्यमर्थमाह—तन्निष्ठेति । कार्यकारणयोरपि सामीप्यमस्ति बुद्ध्यादेरज्ञानस्य चाऽऽत्मना संनिधानात्तत्कथं सामीप्यस्य प्रतीचि निष्ठेत्याशङ्क्याऽऽह—कार्येति । प्रतीचो नेदीयस्त्वमत्यन्तसंनिकृष्टत्वं तत्र मानमाह—ईक्ष्यत इति ॥७२०॥

कार्यकारणाभ्यां पृथक्करणात्प्रतीचः सद्वयत्वमाशङ्क्योपसर्गार्थं निगमयति—व्याकृतेति । यो हि कार्यकारणाभ्यामज्ञानाद्भिन्नः स वाक्योत्थज्ञानादज्ञानध्वंसद्वारा तदात्मकौ कार्यकारणात्मानावुपाधी निरस्य सच्चिदानन्दैकरसतां प्राप्नोतीत्यर्थः ॥७२१॥

कूटस्थे प्रतीच्यासनादिव्यवहारायोगात्कथमासीतेत्युक्तं तत्राऽऽह—व्युत्थायेति । कार्यकारणस्वरूपप्रत्यग्याथात्म्यधिया ताभ्यां व्युत्थाय ते शिथिलीकृत्याकार्यकारणात्मानमुपेत्याविकारः सन्नासीत तदिदं स्वरूपावस्थानमासनं न त्वस्मिन्नात्मनि काचिद्विक्रियेत्यर्थः ॥७२२॥

अक्षरव्याख्यानद्वारा कार्यकारणविलक्षणमद्वयं तत्त्वं वाङ्मनसातीतं कूटस्थमिति स्थापितम् । इदानीं कार्यकारणविभागभानं कथमित्याशङ्क्य दृष्टान्तेनाज्ञानकृतमिति ब्रुवन्नात्मदृष्ट्यनुसारेण कूटस्थमद्वयं तत्त्वं तत्र कल्पितमनात्मजातमिति प्रतिपादयति—व्यक्तेत्यादिना । यथाऽऽदित्ये प्रकाशैकस्वभावे दर्शनादर्शनाभ्यामहोरात्रविभागस्तद्धीनेऽपि कल्प्यते तथाऽऽत्मनि चिदेकताने कार्यकारणविभागस्तद्विभागशून्येऽपि तदविद्यया कल्प्यते वस्तुतस्तु कूटस्थोऽद्वयश्चाऽऽत्मेत्यर्थः ॥७२३॥

नन्वात्मानात्मविभागोऽस्ति न वा? नाऽऽद्योऽद्वैतहानात् । नेतरो विरुद्धयोरैक्यायोगादत आह—आत्मेति । कार्यकारणविभागवदित्यपेरर्थः । आत्मस्पर्शित्वे मानाभावं हेतुमाह—नेति । अयमित्यापरोक्ष्यं तर्हि कथं विभागस्योक्तं तत्राऽऽह—अज्ञातेति । आत्मनि स्पर्शित्वाभावस्तर्हि द्वैतस्य न स्यादित्याशङ्क्याऽऽह—अज्ञानेति ॥७२४॥

आत्मापेक्षया सिध्यन्ननात्मा कल्पितश्चेदनात्मश्रुत्याद्यपेक्षया सिध्यन्नात्माऽपि कल्पितो युक्तस्तस्यापि साक्ष्यन्तरमधिष्ठानान्तरं च वाच्यमित्यनवस्थेत्याशङ्क्याऽऽह—अनात्मेति । व्यवहारदशायामनात्मनो जडस्याजडात्मप्रसादात्सिद्धिवदनात्मप्रसादान्नाऽऽत्मसिद्धिस्तस्य स्वप्रकाशत्वादतः स्वतः स्फुरतश्चिद्धातोरज्ञाननिर्तकस्वाकारधीपरिणतिभेदस्य श्रुत्यादिजन्यत्वेऽपि न तत्कल्पितत्वशङ्केत्यर्थः । अनात्माऽपि न कल्पित आत्मसिद्धत्वादात्मवदित्याशङ्क्याऽऽह—आत्मन इति । यथा स्वप्रकाशचिदात्मत्वेनाऽऽत्मनः स्फूर्तिरेवमात्मनः सकाशादनात्मनो न वस्तुतः स्फुरणं तस्यासङ्गस्यानात्मासंबन्धादतः स कल्पितः सन्नात्मनि स्फुरति रज्ज्वां सर्पवदित्यर्थः ॥७२५॥

तस्य कल्पितत्वे हेत्वन्तरमाह—आत्मन इति । आत्मनो भेदेनानात्मनः स्वरूपाभावादभेदेनापि प्रत्यङ्मात्रस्यावशेषात्स्वातन्त्र्येण स्वरूपाभावात्खपुष्पवदसन्नेव स स्यान्न चापरोक्षस्यासत्त्वमतः सर्पवत्कल्पितते-त्यर्थः ॥७२६॥

अथ न स कल्पित आत्मसंबन्धित्वात्तद्वदित्याशङ्क्य हेत्वसिद्धिमाह—तस्मादिति । भेदाभेदाभ्यामनात्मनो

**मोक्षकाले आत्मनो निर्विशेषत्वेऽपि अज्ञानाभावो विशेषणम्**

**यावानात्मनि वेदाऽऽत्मा प्रतीच्यात्मानमात्मना । निरस्ताज्ञानतत्कार्यं पश्येत्तद्वदनात्मसु ॥२८॥**
**बुद्ध्यादेर्विषयान्तस्य निरस्तस्याऽऽत्मनो बहिः । अनात्मवस्तुनः प्रत्यङ्ङात्मा ह्यात्मीयतो भवेत् ॥२९॥**
**तद्याथात्म्यात्महेतुभ्यामनात्मार्थसमागमे । अव्यावृत्ताननुगतसंगती रज्जुसर्पवत् ॥३०॥**
**प्रतीचोऽव्यतिरेकेण तदन्यद्वस्तु सिध्यति । प्रतीचा तस्य जग्धत्वात्क्वानात्मा सिध्यतामयम् ॥३१॥**
**सहतेऽनात्मतां नाऽऽत्माऽनात्मा तद्विरहे कुतः । वस्त्वात्मना न चेत्सिध्येत्कुतः सिध्येदनात्मना ॥३२॥**
**स्वात्मन्येव सदन्यत्र सर्ववस्तु प्रसिध्यति । तत्र चेत्तदसत्सत्स्यात्कथमन्यत्र निष्प्रमम् ॥३३॥**
**मातृत्वकञ्चुको यद्वदात्माऽनात्मानमीक्षते । दृष्टिमात्रैकरूपत्वान्न तथाऽऽत्मानमीक्षते ॥३४॥**

नैःस्वाभाव्यं तच्छब्दार्थः । कल्पितेऽपि संबन्धे वस्तुतः स नास्तीति वक्तुं स्वत इत्युक्तम् । आत्मानात्मनोरसंबन्धे कथं तयोः सिद्धिरित्याशङ्क्योक्तं सिद्धिप्रकारं परामृशति—आत्मनस्त्विति । आत्मस्वरूपस्फूर्तेरारोपिततादात्म्यादनात्मनः सत्ता स्फूर्तिश्चेत्याह—आत्मसिद्धेरिति । यद्वाऽऽत्मनः स्वतःसिद्धत्वे हेतुरनेनोच्यते । आत्मस्फुरणस्याऽऽत्ममात्रत्वादिति हेत्वर्थः । अनात्मसिद्धिस्तु तस्मिन्कल्पिततादात्म्यादित्युक्तमेव ॥७२७॥

नन्वात्मा बन्धमोक्षयोरेकरूपो न वा ? आद्ये तयोरविशेषान्न कश्चिदपि मोक्षायोत्तिष्ठेद्द्वितीये सविशेषत्वादनात्मवदात्मनो न स्वतःसिद्धिस्तत्राऽऽह—यावानिति । यद्वदित्येतत् । यथा मोक्षे स्वमहिमस्थमात्मानमविद्यातज्जनिर्मुक्तं निर्विशेषं स्वेनैव रूपेण स्वयं वेत्ति न तत्र कर्त्रादिभेदस्तथा संसारेऽपि देहादिष्वनात्मस्वात्मानमस्थूलादिश्रुतेर्निर्विशेषं पश्येन्न चैवं बन्धमोक्षयोरविशेषो ज्ञानभावाभावाभ्यां विशेषात्, न चैवंविधं सविशेषत्वमस्वतःसिद्धत्वे हेतुरनात्मत्वोपाधेरित्यर्थः ॥७२८॥

नन्वनात्मस्वात्मानं पश्येदिति भेदोक्तेरद्वैतहानिस्तत्राऽऽह—बुद्ध्यादेरिति । दृश्यत्वजडत्वादिहेतुभ्यस्तस्याऽऽत्मनो बहिर्भावेन निरसनमुचितमिति दर्शयितुं हीत्युक्तम् । तस्य प्रत्यङ्ङात्मेत्यत्र हेतुमाह—आत्मीयत इति । आत्मीयत्वादनात्मनः प्रतीचस्तत्स्वरूपत्वं यथा रज्जोरात्मीयः सर्पस्तया सात्मकस्तथाऽनात्मा प्रत्यगात्मीयस्तेन सात्मक इत्यर्थः ॥७२९॥

नन्वात्मात्मीयत्वसंबन्धो वास्तवोऽवास्तवो वा ? नाऽऽद्योऽसङ्गागमविरोधात् । नेतरस्तत्प्रापकाभावादत आह—तद्याथात्म्येति । आत्मा तावदनात्मनः स्वरूपमारोपितस्याधिष्ठानातिरिक्तस्वरूपाभावात्स च चेतनः सन्नाधिष्ठानान्तरमन्वेषते । ताभ्यां हेतुभ्यामनात्मनोऽर्थस्याऽऽत्मानं प्रत्यागमने निःसामान्यविशेषस्याऽऽत्मनस्तेन स्वस्वामित्वादिसंगतिरारोपितैव, रज्जुसर्पयोस्तथा संगतिदृष्टेः, तथा च संबन्धत्रमेवाऽऽत्मात्मीयत्वसंबन्धस्यावास्तवत्वसाधकमित्यर्थः ॥७३०॥

तयोः संगतिरेवाऽऽरोपिता न त्वात्मानात्मानौ दूरस्थतरुवदित्याशङ्क्याऽऽह—प्रतीच इति । प्रतीचः सकाशादन्यदनात्मवस्तु तस्मादभेदेन भेदेन वा सिध्येदाद्ये तस्याऽऽत्मना ग्रस्तत्वान्न क्वचित्सिद्धिर्द्वितीयेऽपि तदसिद्धिर्निःस्वरूपत्वादतः संबन्धवत्स्वरूपेणाप्यनात्मा संसृष्टरूपेणाऽऽत्मा कल्पित इत्यर्थः ॥७३१॥

आत्मानात्मरूपसंबन्धयोः कल्पितत्वे हेत्वन्तरमाह—सहत इति । जडाजडत्वेन मिथोविरोधादित्यर्थः । तर्हि न्यायायातमन्यत्वं नेत्याह—अनात्मेति । आत्मनः सकाशादनात्मनो भेदाभेदयोरनुपपत्तिमुक्तामनूद्य तामिदानीमुपपादयति—वस्त्विति । अनात्मरूपं विरोधान्नाऽऽत्मरूपेण सिध्येच्चेन्न तदात्मरूपेणापि सिध्येदात्मनोऽन्यत्र तत्सत्त्वाभावादित्यर्थः ॥७३२॥

उक्तमर्थं दृष्टान्तेनाऽऽह—स्वात्मनीति । यथा घटादिर्मृदादिरूपे सदेवान्यत्र देशादौ सिध्यति तत्राविद्यमानं तु न क्वचित्सिध्येन्मानाभावान्नान्यत्र कारणात्कार्यमित्यादिन्यायाच्च तथा जगदपि ब्रह्मण्यन्यत्र चासत्त्वात्कल्पितमित्यर्थः ॥७३३॥

आत्माऽपि कल्पितो ज्ञेयत्वात्संमतवदित्याशङ्क्याऽऽह—मातृत्वेति । आत्मा हि मातृत्वोपहितोऽनात्मानं पश्यन्नपि नाऽऽत्मानं पश्यति तस्य नित्यदृष्टिरूपत्वेनादृश्यत्वादिति ज्ञेयत्वासिद्धिरित्यर्थः ॥७३४॥

कर्तृत्वप्रतिषेधार्थं द्रष्टुर्दृष्टेरितिश्रुतिः । दृष्टिरेव तु यो द्रष्टेत्याह दृष्टिविशेषणम् ॥३५॥

शब्दवृत्तमपेक्ष्य आत्मनोऽद्वयत्वादिनिरूपणम्

प्रतीचो वस्तुनस्तावद्वस्तुवृत्तं यथोदितम् । शब्दवृत्तमथेदानीं यथावदभिधीयते ॥३६॥
यच्चाऽऽप्नोति यदादत्ते यच्चात्ति विषयानिह । यच्चास्य संततो भावस्तस्मादात्मेति कथ्यते ॥३७॥
यस्मादर्थे तु विज्ञेया यच्छब्दाः सर्व एव तु । समुच्चये चशब्दाश्च तथा सर्वत्र योजयेत् ॥३८॥
व्याप्नोत्यनवशेषेण सर्पादीन्स्रगिवाखिलान् । प्रत्यक्तयाऽनात्मनोऽतः प्रत्यगात्मेति भण्यते ॥३९॥
सावशेषात्मनोऽकृत्स्नान्निःशेषात्मतया यतः । आत्माऽनात्मन आप्नोति तेनाऽऽत्मेत्यभिधीयते ॥४०॥
स्वचिदाभासमोहेन तद्बुत्थानखिलान्यतः । आदत्तेऽनात्मनः प्राज्ञे ततश्चाऽऽत्मेति तं विदुः ॥४१॥
पर आत्मनि सर्वेऽपि संप्रतिष्ठन्त एकले । पृथिव्याद्या अनात्मान इति चाऽऽथर्वणे वचः ॥४२॥
स्वात्माभासाः पराचीना धीवृत्तीर्विषयोन्मुखाः । प्रत्यगत्ति यतोऽतोऽसावात्मेत्युक्तो मनीषिभिः ॥४३॥
विश्वो हि स्थूलभुङ्नित्यं तैजसः प्रविविक्तभुक् । आनन्दभुक्तथा प्राज्ञ इति चाऽऽगमशासनम् ॥४४॥
अव्यावृत्ताननुगतः पूर्णः स्वात्मन्यवस्थितः । यतोऽस्य संततो भावस्तस्माच्चाऽऽत्मेति शब्द्यते ॥४५॥

आत्मा न मातृत्वोपहितः किंतु स्वयमेव माता नान्योऽतोऽस्ति द्रष्टेतिश्रुतेरित्याशङ्क्याऽऽह—कर्तृत्वेति । न हि द्रष्टुर्दृष्टेरित्यादिश्रुतिर्यो द्रष्टा स दृष्टिरेव तस्या विपरिलोपो नेति समानाधिकरणया षष्ठ्या दृष्टिं द्रष्टुर्विशेषणं दर्शनकर्तृत्वं निषेद्धुमाहेति योजना । तथा च निषेधश्रुत्या चेतनान्तरनिषेधस्य विवक्षितत्वादात्मनो दृष्टिकर्तृत्वस्योक्तश्रुतिविरोधेनायोगादात्मा मातृत्वोपहितो न मातेत्यर्थः ॥७३५॥

व्यक्ताव्यक्तविभागोऽयमित्यारभ्योक्तमनुवदति—प्रतीच इति । वस्तुवृत्तपरमार्थमात्मरूपपेक्ष्य प्रत्यग्वस्तुनोऽद्वयकूटस्थचिदेकतानत्वमनात्मनः सर्पवत्कल्पितत्वमित्येतद्यथा तथा तावदुक्तमित्यर्थः । आत्मेतिशब्दवृत्तमपेक्ष्याऽऽत्मनोऽद्वयत्वादि यथा तथा यथावदुच्यतेऽनन्तरसंदर्भेणेत्याह—शब्देति ॥७३६॥

किं तदात्मशब्दवृत्तमित्यपेक्षायां तदर्थं व्यासवाक्यमुदाहरति—यच्चेति ॥७३७॥

तद्व्याकुर्वन्यच्छब्दचतुष्टयस्य चशब्दत्रयस्य चार्थमाह—यस्मादिति । प्रथमस्तुशब्दोऽवधारणार्थो द्वितीयस्तत्रार्थान्तरासंभवं हेतुं वक्तुमिति विवेक्तव्यम् ॥७३८॥

यच्चाऽऽप्नोति तस्मादात्मेत्यस्यार्थमाह—व्याप्नोतीति ॥७३९॥

आत्मवदनात्मनामपि व्यापकत्वान्नाऽऽत्मनस्तेषु व्याप्तिरित्याशङ्क्याऽऽह—सावशेषेति । सावशेषात्मत्वमेव साधयितुं विशिनष्टि—अकृत्स्नानिति । कृत्स्नत्वेऽनात्मत्वमेव न स्यादिति भावः ॥७४०॥

यदादत्ते तस्मादात्मेत्यस्यार्थमाह—स्वचिदिति । स्वकीयचिदाभासवता मोहेन तस्मादेव मोहादुत्पन्नानशेषाननात्मनो यस्मादादत्ते तस्मात्तमात्मेति विदुरिति योजना । आदत्ते स्वात्मन्येव संहरतीति यावत् । प्राज्ञे स्वापादावित्यर्थः ॥७४१॥

तत्र श्रुत्यन्तरं संवादयति—पर इति । संप्रतिष्ठन्ते लीयन्त इति यावत् ॥ ७४२ ॥

यच्चात्तीत्यादेरर्थमाह—स्वात्मेति । पराचीना इत्यस्य व्याख्या विषयोन्मुखा इति । अत्ति साक्षात्करोतीत्यर्थः ॥७४३॥

अत्रापि श्रुतिं पठति—विश्वो हीति । बाह्येन्द्रियोपनीतत्वं विषयाणां स्थौल्यं वासनामात्रोपस्थापितत्वं प्रविविक्तत्वमिति भेदः । आनन्दशब्देन कारणकोशो गृह्यते तं भुङ्क्ते पश्यतीत्यानन्दभुगुच्यते सौषुप्तः पुरुषः ॥७४४॥

यच्चास्येत्यादेरर्थमाह—अव्यावृत्तेति । अत्र पूर्वपूर्वं उत्तरोत्तरस्य हेतुः ॥७४५॥

---

१. सावशेषः आत्मा येषां ते तान् ।

२. अनात्मा गगनादि आत्मानं न व्याप्नोति परिच्छिन्नत्वात् ।

तद्विष्णोरिति मन्त्रोऽपि विष्णोस्तत्परमं पदम् । चक्षुर्वदाततं व्योम्नि व्याचष्टे प्रत्यगात्मनि ॥४६॥
नानुत्पन्नमतो ज्ञानं नानपास्तं तथा तमः । यथोक्तैकात्म्यसंदृष्टावतः कात्स्न्यं ममाऽऽत्मनः ॥४७॥
द्रष्टृदर्शनदृश्यानां प्रत्यक्त्त्वं यतस्ततः । तद्दृष्टावखिलं दृष्टं रज्जुसर्पादिवद्भवेत् ॥४८॥
स्रगज्ञानैकहेतूनां स्रग्धिया ज्ञातता यथा । प्रत्यङ्मोहजवस्तूनां प्रतीच्यवगते तथा ॥४९॥

अत्र ह्येते इति श्रुतिवाक्यं योजयति

अत्र ज्ञाते यतः सर्वं ऐकात्म्यं यान्त्यशेषतः । प्राणादयोऽत आत्मैव द्रष्टव्यः सर्वदर्शनात् ॥५०॥

आत्मेत्येवेतिवाक्यस्य विधिपरत्वनिराकरणम्

केचिद्व्याचक्षतेऽपूर्वं विधिमेतं महाधियः । नियमं त्वपरे धीराः परिसंख्यामथापरे ॥५१॥
नापूर्वविधिरित्येष कदाचिदपि गृह्यते । सर्वदैव तु तत्प्राप्तेस्तथा नान्योऽपि कश्चन ॥५२॥
पुंव्यापारानधीनत्वान्नेह संभाव्यते विधिः । स्वव्यापारैकविषयः सर्व एव यतो विधिः ॥५३॥
संस्थेम्नेऽस्यैव चार्थस्य पूर्वपक्षोक्तिपूर्वकः । भाष्यकृद्भिः कृतो यत्नः स आविष्क्रियतेऽधुना ॥५४॥

भाष्यार्थनिरूपणम्

यथा कार्यानपेक्षस्य प्रामाण्यं वचसः स्फुटम् । ऐकात्म्यवस्तुनिष्ठस्य तथा पूर्वमवादिषम् ॥५५॥

तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम्" इतिमन्त्रमत्र प्रमाणयति—तद्विष्णोरितीति । परममकार्यकारणमिति यावत् । आकाशे यथा चक्षुः सर्वतो विप्रसृतं तथा परस्य रूपं प्रतीच्येव व्याप्तमप्रत्यगर्थाभावादिति मन्त्रो वदतीत्यर्थः ॥७४६॥

आत्मशब्दतदर्थवृत्तवशादद्वयं कूटस्थं प्रत्यग्वस्त्वनात्मजातं तत्रैव कल्पितमिति सिद्धे फलितमाह—नानुत्पन्नमिति । यथोक्तात्मनः सम्यग्दृष्टावनुत्पन्नं ज्ञानं नास्त्यतः सर्वस्यात्ममात्रत्वात् अस्मात्ज्ञानादनिरस्तमज्ञानमपि नास्ति अस्य ज्ञानस्य पूर्णात्मविषयत्वात्तस्मादात्मनि ज्ञाते सर्वस्य ज्ञातत्वादज्ञानस्य च दग्धत्वात्प्रतीचः पूर्णपुमर्थताऽपि सिद्धैवेत्यर्थः ॥७४७॥

उक्तमर्थं दृष्टान्तेनाऽऽह—द्रष्टृति । तद्दृष्टाविति प्रत्यक्त्वं तच्छब्दार्थः ॥७४८॥

दृष्टान्तं स्पष्टयति—स्रगिति । दार्ष्टान्तिकं स्फोरयति—प्रत्यगिति ॥७४९॥

पूर्ववाक्योक्तेऽर्थे हेतुत्वेनात्र हीत्यादिवाक्यं योजयति—अत्रेति । तस्मादात्मैव मुमुक्षुणा ज्ञातव्यो नानात्मेति सिद्धमित्याह—अत इति । आत्मदर्शनात्सर्वदर्शनसंभवाद्द्रष्टव्यस्यानवशेषादिति हेतुमाह—सर्वदर्शनादिति ॥७५०॥

आत्मेत्येवोपासीतेतिवाक्यं विधिस्पर्शं विना विवक्षितेऽर्थे व्याख्यातम् । इदानीमत्र शङ्कितं विधिं निरसितुं पक्षत्रयमाह—केचिदिति । अत्रोदाहरणानि प्रागेवोक्तानि । तथाशब्दपर्यायोऽथशब्दः ॥७५१॥

तन्निराकरोति—नेत्यादिना । अपूर्वविधिवन्नियमः परिसंख्या वा कश्चिदपि विधिर्न गृह्यत इति संबन्धः । तत्र हेतुः—सर्वदेति । आत्मधियः सदा भावात्तत्प्राप्तेर्वक्ष्यमाणत्वान्न तत्र विधित्रयं न हि सिद्धेऽर्थे विधिः साध्ये तन्नियमादित्यर्थः ॥७५२॥

किंच ब्रह्मणि तज्ज्ञाने वा त्रिविधो विधिरयुक्तो ब्रह्मणः सदाभावात्तज्ज्ञानस्य च मानवस्तुतन्त्रत्वादित्याह—पुंव्यापारेति । प्रयत्नानधीनेऽपि कादाचित्के ज्ञाने कुतो न विधिस्तत्राऽऽह—स्वव्यापारेति । यतो यत्नसाध्यधात्वर्थमात्रविषयस्त्रिविधोऽपि विधिरतो ज्ञाने मानवस्तुमात्रतन्त्रे न सोऽस्तीत्यर्थः ॥७५३॥

वस्तुनि तज्ज्ञाने वा विध्यसंभवस्योक्तन्यायेन सिद्धत्वात्किमुत्तरेण विधिविचारेणेत्याशङ्क्याऽऽह—संस्थेम्न इति । उत्तरो विचाररूपो ग्रन्थो ज्ञानविध्यसंभवं द्रढयितुमित्यर्थः ॥७५४॥

ननु ब्रह्मणि तज्ज्ञाने च सर्वप्रकारविध्यसंभवस्य संबन्धग्रन्थे सिद्धत्वादत्रापि तस्यैवोक्तौ पुनरुक्तिरित्याशङ्क्य

लिङ्प्रत्ययश्रुतेरत्र भ्रान्तिः समुपजायते । यजेतेत्यादिसामान्याद्विध्यर्थोऽतो विचार्यते ॥५६॥
सिद्धान्तोपक्रमः पूर्वं पूर्वपक्षः प्रदर्श्यते । सम्यङ्निर्ज्ञातसिद्धान्तो यतो वेत्ति बलाबलम् ॥५७॥
नापूर्वविधिरेष स्यात्पक्षेप्राप्तत्वकारणात् । पक्षे प्राप्तिर्विचारान्ते वक्ष्यते कारणाश्रयात् ॥५८॥
नित्यप्राप्तिमिहाऽऽचष्टे विध्यर्थापनुनुत्सया । अप्राप्तांशानुपात्येव सर्वं एव विधिर्यतः ॥५९॥
पाक्षिक्युपासनप्राप्तिर्नित्या वेति च लिङ्गतः । विवक्षिता भाष्यकृतो नित्यप्राप्तिरितीक्ष्यते ॥६०॥
यत्साक्षादितिवाक्योत्थप्रत्यग्याथात्म्यलेहिना । ज्ञानेन तमसो दाहात्कुतो विध्यर्थसंभवः ॥६१॥

ज्ञाने विध्यनपेक्षा

कारकाण्युपमृद्नाति विद्या बुद्धिमिवोषरे । कारकत्वमविद्योत्थं स्वतश्चाकारकात्मता ॥६२॥

संबन्धोक्तमनुवदति—यथेति । कार्यासंस्पर्शिनां वेदान्तवचसां कार्यगिरामिवाकार्ये शुद्धे वस्तुनि मानत्वमतिस्फुटमस्तीत्येतावन्मात्रं संबन्धग्रन्थे समधिगतमित्यर्थः ॥७५५॥

उत्तरस्यापुनरुक्तमर्थमाह—लिङ्प्रत्ययेति । आत्मेत्येवोपासीतेत्यत्र विधायकपदश्रवणाद्यजेतेत्यादिना सादृश्यात्तत्र यागादौ विधिवदिहापि वस्तुनि तज्ज्ञाने वा विधिरिति भ्रान्तौ प्राप्तायां विधिपदस्यार्थोऽपूर्वो नियमोऽन्यो वेति विचार्य निरस्यतेऽतो भ्रान्तिनिवृत्त्या वाक्यस्य वस्तुपरत्वं निश्चेतव्यमित्यर्थः ॥७५६॥

ननु पुनरुक्त्यभावेऽपि प्राप्तिपूर्वकत्वान्निषेधस्य पूर्वं पूर्वपक्षं प्रापय्य पश्चादुत्तरपक्षो वाच्यस्तत्र यथोक्तक्रमातिक्रमे भाष्यकारस्य को हेतुरिति पृच्छति—सिद्धान्तेति । प्रदर्श्यते पश्चादिति शेषः । पूर्वोत्तरपक्षयोर्व्यत्यासे भाष्यकृतोऽभिप्रायमाह—सम्यगिति । पुरुषो हि समधिगतसिद्धान्तः सन्पूर्वोत्तरपक्षयोर्बलाबलमाकलयितुमलं तेनाऽऽदौ सिद्धान्तवचनमविरुद्धमित्यर्थः ॥७५७॥

भाष्यकाराभिप्रायमुक्त्वा भाष्योक्तमुत्तरपक्षमादत्ते—नापूर्वेति । कथमात्मज्ञानस्य पक्षे प्राप्तिर्न हि तत्प्रतिपक्षत्वेन तुल्यबलस्यानात्मज्ञानस्य प्रसक्तिस्तत्राऽऽह—पक्ष इति । प्रारब्धकर्मवशात्क्षुत्पिपासादिदोषोद्भवादात्मनो विस्मरणमनात्मनः स्मरणं च संभावितमिति वदन्भाष्यकृज्ज्ञानस्य पक्षे प्राप्तिं विचारावसाने वक्ष्यतीत्यर्थः ॥५५८॥

यत्साक्षादित्यादिप्राप्तत्वादित्यन्तस्य भाष्यस्य तात्पर्यमाह—नित्येति । ज्ञाने विधित्रयनिरासेच्छया तस्य नित्यप्राप्तिमत्र भाष्यकारो ब्रवीतीत्यर्थः । नित्यप्राप्तत्वेऽपि ज्ञानस्य कथं विधित्रयायोगस्तत्राऽऽह—अप्राप्तेति । अपिशब्दपर्यायः सर्व एवेत्येवकारः । अतो नित्यप्राप्ते ज्ञाने न कश्चिदपि विधिरिति शेषः ॥७५९॥

यत्साक्षादित्यादौ भाष्ये ज्ञानस्य नित्यप्राप्तिर्विवक्षितेति कुतो गम्यते तत्राऽऽह—पाक्षिकीति । तिष्ठतु तावदित्यादौ भाष्ये नित्या वेतिप्रयोगसामर्थ्यादेव पूर्वभाष्येण ज्ञानस्य नित्यप्राप्तिर्विवक्षितेति भातीत्यर्थः ॥७६०॥

तात्पर्यमुक्त्वा यत्साक्षादित्यादिभाष्यं[1] योजयति—यदित्यादिना । अधीतस्वाध्यायस्य समधिगतशब्दापेक्षितन्यायवतो यत्साक्षादित्यादिवाक्योत्थप्रत्यगवगाहिज्ञानेनाज्ञानबाधनान्न विध्यर्थः सिध्यति । परोक्षमपि ज्ञानमज्ञानं शिथिलयद्विध्यर्थप्रवृत्तिमपि प्रतिबध्नातीत्यर्थः ॥७६१॥

नन्वज्ञाने नष्टेऽपि कर्त्रादिकारकसद्भावाद्विधिः स्यान्न हि विद्वदविदुषोर्व्यवहारे विशेषः । पश्वादिभिश्चा-[2]विशेषादितिन्यायादित्याशङ्क्य तस्यामित्यादि[3]भाष्यार्थमाह—कारकाणीति । अविद्यामेव विद्या निवर्तयति विरोधान्न कारकाणीत्याशङ्क्याऽऽह—कारकत्वमिति । विदुषि कर्तृत्वादिधीरविद्यालेशकृतेति भावः । अस्तु तादृक्कर्तृत्वादिवशाद्विधिर्नेत्याह—स्वतश्चेति । बाधितानुवृत्तिमात्रान्न बिधिरबाधिताभिमानपूर्वत्वात्तस्येति भावः ॥७६२॥

---

१. १३१–१

२. पश्वादिभिश्चविशेषात्, विवेकिनां पण्डितानामिति शेषः । हानोपादानादौ पश्वादिसादृश्यं गम्यते । तेन अज्ञानपूर्वकः एव प्रमाणप्रमेयव्यवहारः सर्वेषामित्यर्थः ( ब्र० सू० भा० १.१.१ ) । ३. १३१–५ ।

यदज्ञानात्प्रवृत्तिर्या तज्ज्ञाने सति सा कुतः । न हीहापास्तनिद्रोऽपि सुप्तवत्स्वप्नमीक्षते ।।६३।।
यद्धि यस्य स्वतो रूपं न तत्प्राप्तावपेक्षते । क्रियां मोहनिमित्तत्वादपेक्षा कर्त्रपह्नवे ।।६४।।
न च संमोहविध्वस्तौ यथावस्त्ववबोधतः । समर्थमन्यत्पश्यामः क्रियाकारकरूपकम् ।।६५।।
स्वाध्यायाधीतिविधिना ज्योतिष्टोमादिबोधवत् । सदा प्राप्ताऽऽत्मविद्याऽपि नातो विधिरिहेष्यते ।।६६।।
देहेन्द्रियमनोबुद्धिसर्वव्यापारभासिनः । लिङ्गतश्चावसेयत्वान्न संभाव्यो विधिस्ततः ।।६७।।
तथाऽहंप्रत्ययात्साक्षादात्मयाथात्म्यनिश्चितेः । असंभवादसंप्राप्तेः कुतो विधिरिहेष्यते ।।६८।।
नन्विहाऽऽत्मार्थसंदृष्टावहंप्रत्ययगम्यता । पाक्षिकीति ततोऽप्राप्तेर्भवेन्नैयमिको विधिः ।।६९।।

आत्मोपासनविधिशङ्का

पाक्षिकी तावदत्राऽऽस्तामैकात्म्यार्थावलेहिनः । ज्ञानस्य प्राप्तिर्नित्या वेत्यस्त्वपूर्वो विधिः स्फुटः ।।७०।।
एकार्थोल्लेखिवृत्तीनामातादात्म्याभिमानतः । आम्रेडनं हि शब्दार्थः सर्वत्रोपासनश्रुतेः ।।७१।।

इतश्च विदुषो न वैधी प्रवृत्तिरित्याह—यदज्ञानादिति । प्रत्यगज्ञानात्प्रवृत्तिः प्रत्यग्ज्ञाने हेत्वभावादयुक्तेत्यत्र दृष्टान्तमाह—न हीति । यथा लोके सुप्तो जनो निद्रादूषितमनाः स्वप्नानुच्चावचानुपलभते न तथा जागरिते निद्रारहितः स्वस्थचेताः स्वप्नान्यथा पश्यति तद्वदज्ञानात्प्रवृत्तिः सति ज्ञाने न युक्तेत्यर्थः ।।७६३।।

ज्ञानार्थत्वेनाज्ञस्य क्रियावज्ज्ञानिनोऽपि तत्सहायत्वेन तत्स्वीकाराज्ज्ञाने विध्यभावेऽपि तस्यामसौ स्यादित्याशङ्क्य सा किं ब्रह्मप्राप्त्यर्था मोहापोहार्था वेति विकल्प्याऽऽद्यं दूषयति—यद्धीति । आत्मस्वरूपत्वाद्ब्रह्मणस्तत्प्राप्तौ क्रियापेक्षाभावान्न तत्प्राप्तिहेतुक्रियायां विधिरित्यर्थः । आत्मनो ब्रह्म स्वाभाविकं रूपं चेत्कथं तदप्राप्तिधीस्तत्राऽऽह—मोहेति । अप्राप्तेरिति शेषः । कुत्र तर्हि त्वन्मते क्रियापेक्षा तत्राऽऽह—अपेक्षेति । कर्तृत्वादेः सोपादानस्यापह्नवो येन तस्मिञ्ज्ञाने शुद्धिद्वारोत्पत्तौ क्रियापेक्षेत्यर्थः ।।७६४।।

कल्पान्तरं निराह—न चेति । ।।७६५।।

उत्पन्ने ज्ञाने तेनाज्ञानदाहात्प्रवृत्त्ययोगान्न विधिर्न वाऽनुत्पन्ने तस्मिन्विधिर्विषयाभावान्न च ज्ञानसहायत्वेन क्रियायां विधिस्तत्सहायत्वासंभवादित्युक्तम् । इदानीं शाब्दे ज्ञाने ज्ञानान्तरे वा विधिरिति विकल्प्याऽऽद्यं प्रत्याह—स्वाध्यायेति । सदा स्वविषयविधिं विनेति यावत् । विधितोऽधीतस्वाध्यायस्याधिगतपदपदार्थसंबन्धस्य शब्दादेव कर्मज्ञानवद्ब्रह्मज्ञानस्य विधिमन्तरेण प्राप्तेर्न शाब्दे ज्ञाने विधिरित्यर्थः ।।७६६।।

किंच संसारिणोऽसंसारिणो वाऽऽत्मनो ज्ञानं विधेयम् ? आद्येऽपि स नित्यानुमेयः प्रत्यक्षो वेति विकल्प्याऽऽद्यं प्रत्याह—देहेति । देहादिचेष्टा प्रयत्नवत्पूर्विका विशिष्टचेष्टात्वाद्रथादिचेष्टावदित्यनुमानाद्देहादिव्यापारलिङ्गेन तदनुपपत्तेश्च संसार्यात्मनिश्चयान्न तज्ज्ञाने विधिरित्यर्थः । ततस्तत्रेति यावत् ।।७६७।।

द्वितीयं दूषयति—तथेति । प्रत्यक्षत्वे सतीत्येतत् । इहेति संसार्यात्मधीग्रहः । अहंप्रत्ययेनाऽऽत्मनः संसारिणो याथात्म्यस्य प्रमातृताप्रमुखस्य कर्तृत्वादिरूपस्य तत्प्रत्यक्षत्वपक्षे निश्चितत्वात्तज्ज्ञानस्याप्राप्त्यभावान्न तत्र विधिरित्यर्थः ।।७६८।।

असंसार्यात्मधीर्विधेयेति पक्षमुत्थापयति—नन्विति । अहमिति संसार्यात्मार्थज्ञानस्य सदाप्राप्तत्वेऽप्यहं ब्रह्मेत्यहंप्रत्ययेन प्रत्यक्षतयाऽपहतपाप्मादिगुणस्यासंसारिणोऽद्वयस्य ब्रह्मणो ग्रहणं पाक्षिकं क्षुधादिदोषोद्भवकालानियमात्तद्विस्मरणसंभवात्तस्मादुपासीतेत्यसंसार्यात्मधीविषयो नियमविधिरित्यर्थः ।।७६९।।

तादृग्ज्ञानं विधेयमित्येतदङ्गीकृत्यापूर्वविधिवाद्याह—पाक्षिकीति । ऐकात्म्यावगाहिनो ज्ञानस्य पाक्षिकी नित्या वा प्राप्तिरित्येतत्तावदास्तामत्रैकात्म्यज्ञाने यः स्फुटो विधिरसावपूर्वोऽस्त्विति संबन्धः ।।७७०।।

आत्मज्ञाने विधेरपूर्वत्वसाधनायोपासनशब्दार्थमाह—एकार्थेति । आम्रेडनमावर्तनम् । सर्वत्र सर्वेष्वाम्नायदेशेष्विति यावत् । शब्दार्थो वाक्यार्थः । मर्यादामावृत्तेरादर्शयति—आतादात्म्येति । विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययप्रवाहकरणमुपासनमुपास्यसाक्षात्कारावसानमित्युपासकसंमतमिति हिशब्दार्थः ।।७७१।।

न पश्यन्तीत्यतो लिङ्गाज्ज्ञानमेव विधित्सितम् । न तूपासनमिति चेन्मैवमैकार्थ्यकारणात् ।।७२।।

ज्ञानोपासनयोरैकार्थ्यशंका

सर्वत्रैकार्थता दृष्टा वेदोपासनशब्दयोः । यथाऽन्यत्र तथेहापि कस्मान्नाध्यवसीयते ।।७३।।
रश्मींस्त्वं पर्यावर्तयादिति चाऽऽवर्तनात्मकः । विधिः श्रुतः श्रुतौ स्पष्टस्ततश्च फलसंगतिः ।।७४।।
देवो भूत्वेति देवांश्च सदा तद्भावभावितः । देवप्राप्तिं श्रुतिः प्राह भावनाबलसंश्रयात् ।।७५।।
स योऽत इत्युपक्रम्य ह्युपासनगिरैव तु । अन्त आत्मेत्युपासीत तथैवोपासनश्रुतेः ।।७६।।
प्रवृत्तौ चोपसंहारे तथैवोपासनश्रुतेः । वेदेत्युपासनार्थत्वमस्याप्यभ्युपगम्यते ।।७७।।
तथैतत्सर्वं वेदेति यत्र यत्र श्रुतिर्भवेत् । अभ्यासस्य तदाऽप्राप्तेरपूर्वविधिरिष्यते ।।७८।।
वस्तुस्वरूपान्वाख्याने न च कश्चित्प्रवर्तते । तज्ज्ञानजन्ममात्राच्च पुरुषार्थोऽपि नेष्यते ।।७९।।

सत्यपि विधौ ज्ञानस्य प्रकृतत्वात्तस्यैव विधेयत्वादुपासनशब्दार्थोक्तिरनुपयुक्तेति सिद्धान्ती शङ्कते— नेत्यादिना । ज्ञाननिषेधसामर्थ्यात्प्रतियोगित्वेन ज्ञानस्य प्रकृतत्वादिति यावत् । ज्ञानोपासनशब्दयोरैकार्थ्यान्नैतदित्याह—मैवमिति ।।७७२।।

ऐकार्थ्यं समर्थयते—सर्वत्रेति । दूरं ह वा अस्मान्मृत्युर्भवति य एवं वेदेत्यादौ ज्ञानवाचिवेदशब्दस्य तदावृत्तिवाचकोपासनशब्दस्य च यथैकार्थ्यं दृष्टं तथाऽत्रापि प्रकरणे तयोरेकार्थत्वं निवारकाभावादित्यर्थः ।।७७३।।

अत्रोपासने विधिदार्ढ्यार्थमन्यत्रापि तस्मिन्दृश्यते विधिरित्याह—रश्मीनिति । पर्यावर्तयादिति च्छान्दसत्वयोगात्पर्यावर्तयेति वक्तव्यम् । विधेः स्पष्टत्वं मुखतस्तच्छब्दोपात्तत्वम् । न चोपासनविधेर्वैफल्यमित्याह—ततश्चेति । बह्वो वै ते पुत्रा भविष्यन्तीति हि श्रुतमित्यर्थः ।।७७४।।

उपासनात्फलमित्यत्र श्रुतिस्मृती प्रमाणयति—देव इति । उपास्ये परस्मिन्नपि सोपाधिके तुल्यं भावनातस्तद्भावापत्तिफलमिति वक्तुं चशब्दः । सदेत्यादिना स्मृतेरन्त्यं पादमादत्ते । तयोरर्थं संगृह्णाति—देवप्राप्तिमिति । श्रुतिग्रहणं स्मृतेरुपलक्षणम् । अथवा प्राचीनचकारोऽत्र संबद्धमानः स्मृतिमनुकर्षति । भावनाबलमुपास्यसाक्षात्कारस्तदवष्टम्भादित्येतत् ।।७७५।।

उपासने सफलविधिसत्त्वमुक्त्वा ज्ञानोपासनशब्दयोरैकार्थ्ये युक्त्यन्तरमाह—स य इति । "स योऽत एकैकमुपास्त" इत्युपासनशब्देनोपक्रम्यान्ते चाऽऽत्मेत्येवोपासीतेत्युपसंहारेऽपि यथोपक्रमं तच्छब्दश्रवणात्तयोरुपास्तिविषयतेत्यर्थः । उपक्रमोपसंहारयोरैकरूप्ये सत्येकार्थतया वाक्यैक्यमुपांशुयाजमन्तरा यजतीत्यादौ प्रसिद्धमिति हिशब्दार्थः ।।७७६।।

तयोस्तद्विषयत्वेऽपि मध्ये न स वेदेति वेदशब्दादुपास्तेरर्थान्तरमेव कुतो नोच्यते तत्राऽऽह—प्रवृत्तौ चेति । तथैवेत्यैकरूप्यमुच्यते । प्रक्रमादिना वेदशब्दस्यापि मध्यस्थस्योपासनार्थत्वमन्यथा वाक्यभेदान्न च सति सम्भवे वाक्यं भेत्तुं युक्तमित्यर्थः ।।७७७।।

अनेन ह्येतदित्यादौ वेदशब्दस्यार्थान्तरविषयत्ववन्न स वेदेत्यत्रापि किं न स्यादित्याशङ्क्याऽऽह—तथेति । यत्र यत्रैतत्सर्वं वेदाऽऽत्मानमेवावेदित्यादौ वेदशब्दः श्रुतस्तत्र तत्र तथा तस्योपास्तिरेवार्थ इत्यर्थः । वेदोपास्तिशब्दयोरैक्यार्थ्येऽपि किं स्यादित्याशङ्क्याऽऽह—अभ्यासस्येति । ज्ञानोपास्त्योरैक्ये सत्यैक्यज्ञानस्य सर्वथैवाप्राप्तेस्तदभिन्नोपासनस्यापि तथात्वात्तस्मिन्नपूर्वविधिः स्यादित्यर्थः ।।७७८।।

इतश्च तस्मिन्नेष्टव्यो विधिरित्याह—वस्त्विति । सप्तद्वीपा वसुमतीत्यादिवस्तुस्वरूपमात्रकथने बुद्धिपूर्वकारिणो न प्रवृत्तिरालक्ष्यतेऽतः प्रवर्तको विधिरुपेय इति शेषः । ज्ञानफलरागस्य प्रवर्तकत्वाद्व्यर्थो विधिरित्या-

१. उपांशुयाजमन्तरायजति—इत्यत्रैव यागविधिः न तु विष्णुरूपांशु यष्टव्य इत्यादौ विधिप्रत्ययदेवतयोः सत्वेऽपि जामितादोषप्राप्तितत्परिहारयोः उपक्रमोपसंहारयोः कीर्तनादेकवाक्यताप्रतीतेरित्यर्थः ।

यादृक्कर्मविधे रूपमात्मध्यानविधेरपि । तादृगेव विशेषोऽत्र न मनागपि गम्यते ॥८०॥
कुतोऽविशेष इति चेदत आह यथा तथा । मानस्येव क्रिया यस्मादविशिष्टोभयोरपि ॥८१॥
वषट्करिष्यंस्तां ध्यायेदिति यद्वद्विधीयते । मानस्येव क्रिया तद्वदात्मार्थोपासनेष्वपि ॥८२॥
भावनांशत्रयं यस्मादुपासनविधावपि । संभाव्यतेऽतो विज्ञेयो यजेतेत्यादिवद्विधिः ॥८३॥
स्वाध्यायस्य विधिर्ब्रूते लिङाद्यात्मानमेव च । विधिप्रशस्तज्ञानाभ्यां कुरुध्वं पुंस्प्रवर्तनम् ॥८४॥
करणांशो विधिज्ञानं किमंशः पुंस्प्रवर्तनम् । इतिकर्तव्यता चात्र ह्यर्थवादप्रशंसनम् ॥८५॥
प्रवृत्तस्य ततः पुंसः करणं याग इष्यते । स्वर्गादिश्च किमंशः स्यात्प्रयाजादिस्तथा परः ॥८६॥
यथा तत्र तथेहापि शास्त्रेणैव समर्प्यते । अंशत्रयमतो युक्तमपूर्वविधिरेव तु ॥८७॥

शङ्क्याऽऽह—तज्ज्ञानेति । तच्छब्देन विध्यस्पृष्टं वस्तूच्यते । विधिनिरपेक्षत्वं मात्रशब्दार्थः । न स्वतन्त्रं ज्ञानं फलवत्तस्मिन्सत्यपि फलानुपलब्धेरिति चकारार्थः । अपिरवधारणार्थः ॥७७९॥

आत्मोपास्तिर्विधेयेत्यत्र हेत्वन्तरमाह—यादृगिति । विधिद्वयं सप्तम्यर्थः ॥७८०॥

[1]यथेत्यादिभाष्यमाकाङ्क्षापूर्वकमवतारयति—कुत इति । कर्मात्मज्ञानविध्योः शब्दानुसारेणाविशेषो यथा तथा यथेत्यादिभाष्येणाऽऽह भाष्यकृदित्यर्थः । मानसक्रियात्वाच्चेत्यादिभाष्यमनुसृत्यार्थतोऽप्यविशेषमाह—मानसीति । कर्मज्ञानविध्योरुभयोरपि मानसी क्रिया विषयभूता यस्मादविशिष्टा तस्माद्वषट्करिष्यन्नित्यादौ यथा मानसी क्रिया विधीयते तथाऽऽत्मोपास्तिवाक्येष्वपि सैव विधेयेति योजना ॥७८१-७८२॥

शब्दतश्चाऽऽत्मोपासने विधिरस्तीत्याह—भावनेति । यथा यजेतेत्यादौ भावनारूपो विधिरंशत्रयसंभवादिष्टस्तथोपासीतेत्यत्रापि भावनापेक्षितमंशत्रयं यतः संभवत्यतो विधेयमात्मोपासनमित्यर्थः ॥७८३॥

कथमत्रांशत्रयोपपत्तिरित्याशङ्क्य तदर्थं शब्दभावनास्वरूपमाह—स्वाध्यायस्येति । अस्यार्थः । स्वाध्यायोऽध्येतव्य इति विधिः स तु स्वविषयस्वाध्यायात्मकं लिङादिशब्दमाह । चकारेणाध्येतव्य इति तव्यप्रत्ययं लिङादावन्तर्भावयति प्रेरणाधर्मकलिङादिस्वरूपज्ञानादर्थवादज्ञानाच्चाधिकृतानां पुंसां प्रयत्नरूपां प्रवृत्तिं कुरुध्वमिति । तथा च व्युत्पन्नस्याधिकारिणो लिङादिश्रवणे स्वास्थ्यात्प्रच्युतिरूपा या प्रवृत्तिस्तद्धेतुः प्रेरणाख्यो लिङादिव्यापारस्तद्वाच्या शब्दभावना सा खल्वाख्यातत्वसामान्यादर्थभावनावाचिना लिङादिना विशेषेणोच्यते । उक्तं हि—"अभिधाभावनामाहुरन्यामेव लिङादयः । अर्थात्मभावना त्वन्या सर्वाख्यातेषु गम्यते ॥" इति ।

लिङादिशब्द एव वा शब्दभावना—यथाऽऽहुः—

"किमाद्यपेक्षितैः पूर्णः समर्थः प्रत्ययो विधौ । तेन प्रवर्तकं वाक्यं शास्त्रेऽस्मिञ्चोदनोच्यते" इति ॥७८४॥

सा चांशत्रयवतीति संक्षिप्योक्तमंशत्रयं विवेचयति—करणेति । प्रेरणाधर्मकं लिङादिपदं विधिस्तज्ज्ञानं शब्दभावनायाः करणांशस्तदुक्तं स्वज्ञानकरणक इति । न च संबन्धबोधः करणमित्युक्तिविरोधो हस्तेन शरेण विद्ध इतिवदुभयोरपि करणत्वाविरोधात् । भाव्यांशस्तु पुरुषप्रवृत्तिरूपार्थभावना । अस्याश्चेतिकर्तव्यतांशः पूर्णाहुत्या सर्वान्कामानाप्नोतीत्याद्यर्थवादज्ञानमित्यर्थः । उक्तमंशत्रयं प्राच्यां मीमांसायां प्रसिद्धमितिवक्तुं हीत्युक्तम् । प्रागुक्ता शब्दभावना सप्तम्या परामृश्यते ॥७८५॥

अर्थभावनाया यथा हीत्यादिभाष्योक्तमंशत्रयमाह—प्रवृत्तस्येति । ततः शब्दभावनायाः सकाशात्प्रवृत्तस्य स्वास्थ्यात्प्रच्युतस्य या प्रयत्नरूपा प्रवृत्तिस्तस्या अर्थभावनाया इत्यर्थः । चोदनाप्रयुक्तपुंस्प्रवृत्तेः समानपदोपात्तधात्वर्थं हित्वा भाव्यान्तरमयुक्तमेकपदोपादानश्रुतिविरोधादिति चेन्न; तस्यापुमर्थस्य भाव्यत्वानुपपत्तेरित्याह—करणमिति । ननु पदान्तरोपात्तं पुरुषविशेषणं च स्वर्गादि कथं भाव्यतामनुभवेदिति चेत्सत्यं तथाऽपि पुरुषार्थत्वात्तस्य तद्भावः संभवतीत्याह—स्वर्गादिश्चेति ॥७८६॥

भवत्वेवं कर्मविधावंशत्रयमात्मज्ञाने तु किं जातं तदाह—यथेति । यागादाविवांशत्रये सत्युपासीतेत्यत्रापूर्वरूपो विधिरिति युक्तमेवेति फलितमाह—अत इति । तुशब्दो विध्यन्तरव्यावृत्त्यर्थः ॥७८७॥

१. १३२-२ २. १३२-९ ।

किमंश आत्मा विज्ञेयः करणांशस्तथा मनः । इतिकर्तव्यता त्यागब्रह्मचर्यादिसाधनम् ॥८८॥
कृत्स्नप्रकरणार्थस्य ज्योतिष्टोमादिगामिनः । विध्युद्देशतया यद्वदुपयोगस्तथैव च ॥८९॥
उपासाविध्यपेक्षस्य प्रक्रियापतितस्य च । आत्मार्थोपासनविधिदेशे तद्विनियोक्ष्यते ॥९०॥
अत्रास्थूलादिवाक्यानामुपास्यार्थसमर्पणे । उपयोगः फलं मोक्षस्तमसो वस्त्वपह्नुतिः ॥९१॥

मुक्तिफलं ज्ञानान्तरं विधेयमिति पक्षः

संप्रदायविदस्त्वन्ये यथावच्छास्त्रचक्षुषा । व्याचक्षते महात्मानो यथा तदभिधीयते ॥९२॥
विधिशून्यस्य वाक्यस्य न प्रामाण्यं किलेष्यते । नियोगानुप्रवेशेन यतो वस्त्ववबोध्यते ॥९३॥
नानुवादस्वरूपस्य निरस्तविधिकस्य हि । सापेक्षस्येह वचसः प्रामाण्यमुपपद्यते ॥९४॥
क्रियैव ननु सर्वत्र तत्र तत्र विधीयते । स्वव्यापारे हि विधिना नियोक्तुं शक्यते यतः ॥९५॥

कथमंशत्रयमत्र शास्त्रेणार्पितं तद्विविच्य दर्शयति—किमंश इति । आत्मनो मुक्तिरूपेण साध्यत्वमुपेत्य किमंशत्वं द्रष्टव्यम् । तथेति यागादिवदित्येतत् । काम्यप्रतिषिद्धवर्जनं त्यागः ब्रह्मचर्यं सर्वथा मैथुनवर्जनमष्टविधम् । आदिशब्दः शमादिविषयः ॥७८८॥

विधियुक्तानां वेदान्तानां कार्यपरत्वेऽपि तद्धीनानां तेषां वस्तुपरतेत्याशङ्क्याऽऽह—कृत्स्नेत्यादिना । प्रकरणमेवार्थः । विध्युद्देशतया ज्योतिष्टोमादिविषयप्रधानविधिशेषतयेतियावत् सर्ववाक्यस्योपासनविधिशेषत्वेनोपयोग इति शेषः । ज्योतिष्टोमादिविषयस्य समस्तस्यैव प्रकरणस्य ज्योतिष्टोमादिविधिशेषतया विनियोगवदुपास्तिविध्यपेक्षितस्य तत्प्रकरणस्थस्य सर्वस्यैव वाक्यस्योपास्तिविधिशेषत्वेनैव विनियोग इत्यर्थः । विधिप्रकरणस्थं वाक्यं विधिमतिक्रम्य नार्हति वस्तु गोचरयितुमिति वक्तुं प्रथमश्चकारो द्वितीयस्तु समुच्चयार्थः । विधिहीनमपि सर्ववेदान्तवाक्यमात्मोपास्तिविधौ विनियुज्यते शेषत्वेनेति निगमयति—आत्मार्थेति ॥७८९-७९०॥

अस्थूलादिवाक्यानामारोपितद्वैतनिषेधेनाद्वयं वस्तु समर्पयतां कथमुपास्तिविधिशेषत्वेनोपयोग इत्याशङ्क्याऽऽह—अत्रेति । सप्तमीद्वयं मिथः संबध्यते प्रथमा निर्धारणे वा । मध्ये वेदान्तानामित्यर्थः—"ब्रह्म वेद ब्रह्मैव भवति" "तरति शोकमात्मविदि"त्यादीनां फलार्पकत्वेनोपास्तिविध्युपयोगं विवक्षन्नाह—फलमिति । मोक्षो ब्रह्माप्तिः ॥७९१॥

शाब्दमात्मज्ञानमुपासनाख्यं मुक्तिफलं विधीयते वेदान्तेष्विति पक्षमुक्त्वा ज्ञानान्तरं विधेयमिति पक्षमुद्भावयति—संप्रदायेति । शाब्दज्ञानविधिवादिभ्योऽन्ये यथावत्संप्रदायविदस्तस्मादेव महात्मानो विज्ञायेत्यादिशास्त्रदृष्ट्यनुसारेण यथा वेदान्तेषु विधिं व्याचक्षते तथा तद्व्याख्यानमुच्यत इति योजना । संप्रदायविदो महात्मान इति चोपहासार्थं न हि वेदान्तेषु विधिमिच्छन्तः संप्रदायं विदन्ति न च ते महानुभावास्तेषु तदभ्युपगमस्य तदप्रामाण्यपर्यवसानादिति द्रष्टव्यम् ॥७९२॥

तदीयं व्याख्यानमेव विभावयन्नादौ वेदान्तेषु विधेरुपेयत्वमाह—विधीति । तत्र ब्रह्मविदामसंमतिं सूचयति—किलेति । ननु विधिहीनमपि वचनमज्ञातं वस्तु ज्ञापयत्किमिति न मानं तत्राऽऽह—नियोगेति । यतो भूतं वस्तु नियोगशेषत्वेनैव बोध्यते भूतं भव्यायोपदिश्यत इति न्यायादतो नास्ति वचसो विध्यस्पृष्टे वस्तुनि मानतेत्यर्थः ॥८९३॥

ननु वेदान्ता नियोगानुप्रवेशादृते सिद्धमर्थं बोधयन्तो विधिवाक्यवत्प्रमाणं नेत्याह—नेत्यादिना । विधिहीनस्य सिद्धार्थस्य वचसो मानान्तरयोग्यविषयस्य सापेक्षत्वादनुवादसदृशस्य वस्तुनि प्रामाण्यायोगादेष्टव्यो वेदान्तेषु विधिरित्यर्थः । सुरसरित्तीरे सन्ति फलानीत्यादेः सिद्धार्थस्य वचसो दृष्टं सापेक्षत्वमित्यादेष्टुं हिशब्दः ॥७९४॥

विधेयधात्वर्थाभावान्न तेषु विधिरिति शङ्कते—क्रियेति । सर्वत्रेति विधिकाण्डोक्तिः । तत्र तत्रेति विधिवाक्यं परामृश्यते । वस्तुन्यपि क्वचिद्विधिसंभवात्कुतोऽवधारणं तत्राऽऽह—स्वव्यापारे हीति । पुंव्यापारसाध्ये

द्रव्यस्वरूपेऽसाध्यत्वाद्विधिः कथमिहेष्यते । न हि सिद्धस्य साध्यत्वं निपुणेनापि गम्यते ।।९६।।
न चाऽऽत्मविषयं ज्ञानं वेदान्तेषु विधीयते । तस्य विध्यन्तरात्सिद्धेर्वेदान्तस्यानुवादता ।।९७।।
स्वाध्यायाधीतिविधिना ज्योतिष्टोमादिबोधवत् । वेदान्तार्थावबोधोऽपि तेनैवेह समापितः ।।९८।।
स्यादेतत्फलसंबन्धो नियोगविरहाद्यदि । प्रत्यग्ज्ञानस्य लभ्येत न त्वसौ लभ्यते तथा ।।९९।।
पुमर्थकारिता बुद्धेर्नियोगादेव लभ्यते । नातस्तन्निरपेक्षस्य प्रामाण्यं वचसो भवेत् ।।८००।।
नैकात्म्यवस्तुसंव्याप्तिव्यतिरेकेण किंचन । फलं स्यादात्मबोधस्य यथा कर्मफलं तथा ।। १ ।।

ज्ञानान्तरे विधिरिति द्वितीयपूर्वपक्षः

अत्रोच्यतेऽन्यदेवेदं विज्ञानान्तरमात्मगम् । विधीयते सहोपायं वेदान्तोक्तिप्रबोधतः ।। २ ।।
न हि वाक्यसमुत्थेन ब्रह्मावाक्यार्थरूपकम् । विज्ञानेन परिच्छेत्तुं शक्यते कर्मवत् क्वचित् ।। ३ ।।

धात्वर्थे विधिना पुंसो नियोक्तुं शक्यत्वादपुंस्तन्त्रे वस्तुनि नास्ति विधिरित्यर्थः । दध्यादौ प्रसिद्धोऽपि विधिर्व्यापाराविष्टे तस्मिन्प्रविष्टो न परिशुद्धे तस्मिन्निति वक्तुं हीत्युक्तम् ।।७९५।।

कटः कर्तव्यः इतिवत् "आत्मा द्रष्टव्यः" इतिश्रुतेरात्मनो विधेयत्वमाशङ्क्याऽऽह—द्रव्येति । असाध्यत्वं वस्तुनः साधयति—न हीति । साध्यत्वापर्यवसानादिति भावः ।।७९६।।

आत्मनोऽविधेयत्वेऽपि तज्ज्ञानमाज्यावेक्षणवद्विधेयमिति नेत्याह—न चेति । तत्र हेतुः—तस्येति । विध्यन्तरसिद्धे चाऽऽत्मज्ञाने तेषां न तत्प्रतिपादकताऽनुवादप्रसङ्गादतोऽपूर्वत्वाभावान्न तत्र विधिरित्याह—वेदान्तस्येति ।।७९७।।

किं तद्विध्यन्तरं तदाह—स्वाध्यायेति । इहेत्यधिकृतमुमुक्षुग्रहः । समापितः समर्पित इति यावत् ।।७९८।।

वेदान्तेषु वस्तुनि तज्ज्ञाने वा न विधिरिति चोदिते पूर्ववादी गूढाभिसंधिराह—स्यादेतदिति । नियोगादृते ज्ञानस्य फलसंबन्धो लभ्येत चेत्तदा वेदान्तेषु विधिवैधुर्यमित्येतद्युक्तम् । न च तं विना ज्ञानस्य तत्संबन्धलाभोऽतो ज्ञाने स्वीकर्तव्यो विधिरित्यर्थः ।।७९९।।

नियोगं विना फलसंबन्धो ज्ञानस्य किं न स्यान्नायं सर्पो रज्जुरित्यत्र तथा दृष्टेरित्याशङ्क्याऽऽह—पुमर्थेति । राजा गच्छतीत्यादौ वस्तुधीमात्रात्पुमर्थादृष्टेर्न सर्पो रज्जुरित्यत्रापि मा भैषीरितिनियोगाङ्गीकारादित्यर्थः । नियोगसंबन्धं विना पुरुषार्थहेतुत्वे ज्ञानस्यापुमर्थत्वमेवास्तु का हानिरत आह—नात इति । ज्ञानस्य स्वतोऽपुरुषार्थत्वमतःशब्दार्थः । तन्निरपेक्षस्येति तच्छब्दो नियोगार्थः । न हि किमपि वचनं फलविकलं भवति मानमिति भावः ।।८००।।

आत्मधियो नियोगाधीनफलाभावेऽपि वस्तुज्ञातताख्य[1]फलसंभवाद्युक्तमात्मनि वेदान्तप्रामाण्यमित्यज्ञातपराभिसंधिः शङ्कते—नैकात्म्येति । तत्र वैधर्म्यदृष्टान्तमाह—यथेति । कर्मणो हि फलमुत्पत्त्यादीनामन्यतमं ज्ञेयाभिव्याप्त्यतिरिक्तमभ्युपगतं न तथा ज्ञानस्येत्यर्थः ।।८०१।।

शाब्दे ज्ञाने ज्ञानान्तरे वा विधिरित्यत्र द्वितीयमवलम्ब्य पूर्ववादी स्वाभिप्रायमाह—अत्रेति । वेदान्तोक्तिजनितप्रबोधतोऽन्यदेवेति संबन्धः । विज्ञानान्तरमित्यन्तरशब्दात्तस्य शाब्दज्ञानवैजात्यं विवक्ष्यते । विषयस्य ज्ञातता प्रकाशोऽप्रकाशो वा? आद्ये ज्ञानाभेदः । द्वितीये ज्ञानकृतस्याप्रकाशस्याकिंचित्करत्वमतो विषयज्ञाततातिरिक्तं मोक्षाख्यं फलं नियोगाधीनमस्ति तदुपेतं ज्ञानान्तरमात्मविषयं मननादिसहितं वेदान्तेषु विधेयमित्यर्थः ।।८०२।।

वाक्यीयज्ञानेनैव ब्रह्मणः सिद्धत्वात्किं वैधज्ञानान्तरेणेत्याशङ्क्याऽऽह—न हीति । तत्र वैधर्म्यदृष्टान्तमाह—कर्मवदिति । क्वचिद्देशे काले पुंसि वेत्यर्थः ।।८०३।।

---

१. वस्तुज्ञाततेति विषयगतज्ञाततेत्यर्थः । भट्टमते ज्ञानमतीन्द्रियं ज्ञानेन विषये ज्ञातताख्यः पदार्थो जन्यते । तेन ज्ञानमनुमीयते—इत्याहुः तस्यानुवादोऽयम् ।

नानापदार्थसंसृष्टरूपं शब्दात्प्रजायते । विज्ञानं तेनावाक्यार्थरूपं नैव च गम्यते ।। ४ ।।
शब्दस्वभाव एवैष संसृष्टार्थावबोधनम् । ब्रह्मासंसृष्टरूपत्वात्तेनातो नावगम्यते ।। ५ ।।
वाक्यं चातीन्द्रियार्थेषु प्रमाणमिति निश्चितम् । तस्याप्यविषयत्वात्तद्विज्ञानान्तरगोचरः ।। ६ ।।
न चेद्वाक्योत्थविज्ञानपरिच्छेद्यं तदिष्यते । नाऽऽम्नायार्थो भवेत्तर्हि नैवं वेदार्थ एव हि ।। ७ ।।
अपि चाधीयतेऽत्रार्थे वेदवाक्यान्यनेकशः । प्रज्ञां कुर्वीत विज्ञायेत्येवमादीनि यत्नतः ।। ८ ।।

मोक्षाय शाब्दज्ञानं अन्यद्वा न विधेयमिति सिद्धान्तः

मुमुक्षुपुरुषार्थस्य मोहमात्रान्तरायतः । ज्ञानात्कार्यान्तराभावान्नैतत्साध्वभिधीयते ।। ९ ।।
विधेर्हि तत्र साफल्यं यत्र वाक्योत्थबोधतः । व्यतिरेकादनुष्ठेयः पदार्थः कश्चिदिष्यते ।।१०।।
यथाऽग्निहोत्रयाथात्म्यविज्ञानव्यतिरेकतः । प्रयोगात्मा पृथक्तादृङ्नेह कश्चिदपीक्ष्यते ।।११।।
उत्पत्त्यादौ हि साध्येऽर्थे पुंव्यापृतिरपेक्ष्यते । उत्पत्त्यादिविरुद्धत्वान्मुक्तेर्नान्यव्यपेक्षिता ।।१२।।
उत्पत्त्यादि स्वतो नो चेत्किं मुक्तौ कर्मणः फलम् । उत्पत्त्यादि स्वतश्चेत्स्यात्किं मुक्तौ कर्मणा वद ।।१३।।

वाक्योत्थज्ञानाद्ब्रह्मणोऽपरिच्छेदे हेतुमाह—नानेति ।।८०४।।

ननु शब्दस्य मानत्वाद्यथाविषयमसंसृष्टापरोक्षबोधित्वमेष्टव्यमन्यथाऽमानत्वापत्तेरिति तत्राऽऽह—शब्देति । बहिरङ्गार्थानुसारादन्तरङ्गस्वरूपानुसरणमुचितमिति भावः । शब्दस्य संसृष्टपरोक्षबोधित्वे फलितमाह—ब्रह्मेति । तेन शाब्देन ज्ञानेनेति यावत् ।।८०५।।

ब्रह्म शाब्दज्ञानगम्यमतीन्द्रियत्वाद्धर्मवदित्याशङ्क्याऽऽह—वाक्यं चेति । यद्यप्यतीन्द्रियेषु धर्मादिषु वाक्यं मानं ब्रह्म चातीन्द्रियं तथाऽपि तस्यासंसृष्टापरोक्षस्य वाक्याविषयत्वाज्ज्ञानान्तरगोचरता । तेन चाविद्यानिवृत्तिर्न शाब्दज्ञानेनेत्यर्थः । तदित्यसंसृष्टापरोक्षं ब्रह्मोच्यते ।।८०६।।

ब्रह्मणो वेदागम्यत्वे तदर्थत्वायोगादौपनिषदत्वविशेषणमनवकाशमिति शङ्कते—न चेदिति । वेदविहितोपायजन्यज्ञानगम्यत्वाद्वेदार्थतेत्यौपनिषदत्वमविरुद्धमित्याह—नैवमिति ।।८०७।।

ज्ञानान्तरं वेदान्तेषु विधेयमित्यत्र मानमाह—अपि चेति । तात्पर्यलिङ्गाभ्यासं दर्शयति—अनेकश इति । अध्येतॄणां विधिवाक्येष्वनास्थां व्युदस्यति—यत्नत इति ।।८०८।।

वेदान्तेषु शाब्दज्ञानं ज्ञानान्तरं वा मुक्तिफलं विधेयमिति प्राप्ते सिद्धान्तमाह—मुमुक्ष्विति । तस्येष्टं पुमर्थरूपं यत्कैवल्यं ब्रह्म तस्य तत्स्वरूपत्वादज्ञानमात्रव्यवहितत्वाज्ज्ञानादेव तन्निवृत्तेस्तस्य च वाक्यजन्यत्वेन विध्यनधीनत्वादनुष्ठेयाभावाद्विध्यसिद्धेर्वेदान्तेषु तदुक्तिरयुक्तेत्यर्थः ।।८०९।।

ज्ञानात्कार्यान्तराभावेऽपि तदेव विधेयमित्याशङ्क्याऽऽह—विधेरिति । वाक्योत्थज्ञानातिरिक्तस्यैव यागादेर्विधेयत्वं न तस्यैवेत्यर्थः । तत्र विधिवादिनां संप्रतिपत्त्यर्थो हिशब्दः ।।८१०।।

उक्तमर्थं दृष्टान्तेन साधयति—यथेति । दार्ष्टान्तिके व्यतिरेकमाह—पृथगिति । तादृगिति प्रयोगसादृश्योक्तिः । इहेत्यस्थूलादिवाक्योत्थज्ञानमुच्यते ।।८११।।

तदेव पृथक्त्वस्य प्रतियोगि कर्तव्यं तद्विनाऽभ्यासादिरूपपुरुषव्यापारादृष्टेस्तद्विषयो विधिः स्यादित्याशङ्क्याऽऽह—उत्पत्त्यादाविति । ज्ञानेतरपुरुषव्यापारे [1]चतुर्विधक्रियाफलविलक्षणमोक्षस्यापेक्षाभावाद्वेदान्तेषु न सोऽर्थवानित्यर्थः । नित्यनिरतिशयकूटस्थात्मस्वाभाव्यान्मुक्तेश्चतुर्विधक्रियाफलविलक्षणत्वमतिव्यक्तमिति वक्तुं हिशब्दः ।।८१२।।

मुक्तेरपि स्वर्गवत्कर्मसाध्यत्वादस्ति कर्मापेक्षेत्याशङ्क्य स्वतो मुक्तेरुत्पत्त्यादि नास्त्युतास्तीति विकल्प्य क्रमेण दूषयति—उत्पत्त्यादीति ।।८१३।।

---

१. चतुर्विधेति—उत्पत्त्याप्तिविकृतिसंस्कृतिरूपं चतुर्विधक्रियाफलं तद्विलक्षणं च ब्रह्म ।

उत्पत्त्यादौ तु यच्छक्तं हेतुमात्रमपेक्षते । तस्य कर्मव्यपेक्षा स्यान्नान्यथा तदपेक्षते ॥१४॥
प्रवृत्त्या स्वात्मसिद्ध्यर्थं कारकं सदपेक्षते । कारकाणां क्रियापेक्षा नोभयापेक्षिताऽऽत्मनि ॥१५॥
संभावितात्मकर्तृत्वो ब्राह्मण्याद्यधिकारवान् । विधिश्रुतेः प्रवर्तेत न तु प्लुष्टतदन्वयः ॥१६॥
अपूर्वानपराबाह्यं ब्रह्मास्मीति विजानतः । कारकत्वं न संभाव्यं तन्मोहविरहात्क्वचित् ॥१७॥
आत्मनो ब्रह्मता यत्र ब्रह्मणोऽप्यात्मता स्वतः । तत्त्वमस्यादिवाक्योत्थबोधाच्चेत्किमितीहते ॥१८॥
अब्रह्मानात्मविज्ञानमोहोत्थध्वंसहेतुतः । प्रत्यग्याथात्म्यबोधस्य कुतोऽमूढः प्रवर्तते ॥१९॥
तत्र को मोह इत्येवं मन्त्रवर्णोऽपि नो जगौ । संसारासंभवं साक्षादेकत्वमनुपश्यतः ॥२०॥
बाध्यबाधकभावाच्च प्रत्यङ्मोहप्रबोधयोः । सहावस्थानताभावात्प्रवृत्तेः स्यादसंभवः ॥२१॥

वाक्यजनितेति भाष्योक्तचोद्यविवरणं

मतं[1] वाक्योत्थविज्ञानमात्राच्चेन्न निराकृतिः । अब्रह्मानात्मविषयमोहस्येति न तत्तथा ॥२२॥
तत्त्वमस्यादिवाक्यानां तावन्मात्रावबोधनात् । अर्थान्तरं न संभाव्यं वाक्यवाक्यार्थवेदिना ॥२३॥
अस्थूलाद्यर्थशंसीनि द्रष्टव्यादिविधेर्यदि[2] । समर्पयेयुर्विषयमित्येतदपि नेष्यते ॥२४॥

स्वर्गादेरपि तर्हि दर्शितरीत्या कर्मापेक्षा मोक्षवन्न स्यादिति चेन्नेत्याह—उत्पत्त्यादाविति । तत्र स्वर्गाद्युदाहरणे तत्राशक्तत्वेन कर्मापेक्षा नित्ये तदनुपलम्भादित्याह—नान्यथेति । मुक्तेरुत्पत्त्यादावशक्तत्वान्नास्ति कर्मापेक्षेति भावः ॥८१४॥

किंच क्रियाकारकयोरेवान्योन्यापेक्षाऽऽत्मनि नोभयापेक्षोभयविलक्षणत्वादित्याह—प्रवृत्त्येति ॥८१५॥

वेदान्तेषु विधेयाभावान्न विधिरित्युक्त्वाऽधिकार्यभावाच्च न तेषु विधिरित्याह—संभावितेति । अज्ञः सन्नात्मन्यारोपितकर्तृत्वादिर्ब्राह्मण्याद्यभिमानभागी विधिना प्रेर्यो भवति न पुनर्विद्वान्निरस्तकर्तृत्वादिरपाकृतसर्वाभिमानो नियोज्यतां गच्छतीत्यर्थः ॥८१६॥

विदुषोऽपि कर्तृत्वादिद्वारा भिक्षाटनादिवद्वैधी प्रवृत्तिः स्यादित्याशङ्क्याऽऽह—अपूर्वेति । कारकत्वे करणीभूतो मोहस्तन्मोहः । क्वचित्कर्मणीति यावत् । भिक्षाटनादिप्रवृत्तिस्तु यादृच्छिकी नियताऽपि सा मोहलेशादविरुद्धेति भावः ॥८१७॥

विदुषो न क्वचिदपि कारकत्वं हेत्वभावादित्युक्तम् । इतश्च विदुषो न वैधी प्रवृत्तिरित्याह—आत्मन इति । चेच्छब्दो निश्चयार्थः । यत्र यस्यां विद्यावस्थायामिति यावत् । किमितिशब्दात्पूर्वं तत्रेति वक्तव्यम् । ब्रह्मात्मनोरन्योन्यमैक्यं पश्यतो न प्रवृत्तिस्तत्फलाभावादित्यर्थः ॥८१८॥

प्रवृत्त्यभावे विदुषो हेत्वन्तरमाह—अब्रह्मेति । अमूढ इति च्छेदः । अब्रह्मेत्यात्मनो ब्रह्मणश्चानात्मेति ज्ञानमेव मोहोत्थं तद्ध्वंसे[3] हेतुत्वात्तत्त्वज्ञानस्य ज्ञानवतो हेत्वभावादित्यर्थः ॥८१९॥

ज्ञानादज्ञानादिविध्वस्तौ मानमाह—तत्रेति ॥८२०॥

ज्ञानिनः प्रवृत्त्यसंभवे हेत्वन्तरमाह—बाध्येति । न हि मोहादृते प्रवृत्तिर्न च मोहो ज्ञानेन सह स्थातुमर्हति तन्निवर्त्यत्वादतोऽपि न विदुषोऽस्ति प्रवृत्तिरित्यर्थः । भिक्षाटनादिस्तु बाधितानुवृत्तिमात्रमित्यसकृदुक्तमिति भावः ॥८२१॥

वाक्यजनितेत्यादिभाष्योक्तं चोद्यमनुद्रवति—मतमिति । अतो विधिना भाव्यमिति शेषः । परिहरति—नेति । ब्रह्मात्मैक्यधीपरत्वाद्वेदान्तानां तदुत्थधियस्तदविद्यातज्जध्वंसित्वसिद्धेर्न विध्यपेक्षेत्यर्थः ॥८२२–८२३॥

द्रष्टव्यविधेरित्यादिभाष्यस्थं चोद्यमुत्थापयति—अस्थूलेति । वचनानि विशेष्यन्ते । विधिशब्देन तद्विषयं

१. वाक्यजनितविज्ञानमात्रात् नाब्रह्मानात्मज्ञाननिवृत्तिरिति चेत्—इतिभाष्यं ( १३५ ) तदर्थमाह—मतमिति ।
२. 'द्रष्टव्यविधिर्विषयसमर्पकाण्येतानीति चेत्' इति भाष्यस्थचोद्यं ( पु १३५ ) विवृणोति—अस्थूलेति ।
३. प्रवृत्तिं प्रति मोहः कारणं प्रवर्तनालक्षणा दोषाः इत्युक्तेः । स च ध्वस्तः तत्र कुतः प्रवृत्तिः ।

**मुक्त्यन्तरायसंमोहविध्वंस्यैकात्म्यबोधतः । न तदर्थान्तराभावादिति पूर्वमवादिषम् ।।२५।।**

ज्ञानोत्पत्त्यर्थं विध्यपेक्षेति शंकापरिहारौ

**प्रत्यग्याथात्म्यव्याख्यानमात्रेणैव विना विधिम् । न प्रवर्तेत वाक्यार्थसंबोधायेति चेन्मतम् ।।२६।।**
**नाऽऽत्मयाथात्म्यसंबोधिवाक्यश्रवणमात्रतः । प्रत्यक्तत्त्वधियः सूतेः किमन्यद्विधिनेष्यते ।।२८।।**
**अन्तरेण विधिं वाक्यश्रवणायापि नेहते । इति ब्रुवाणं प्रब्रूयादनिष्टं श्रूयते कुतः ।।२९।।**
**अनवस्थाप्रसक्तिश्च तत्र तत्र प्रसङ्गतः । विध्यन्तरस्येति ततो यथोक्तोऽर्थोऽवसीयताम् ।।२९।।**
**यथाऽऽत्मवादिवाक्यार्थश्रुतये न प्रवर्तते । विधिवाक्यमृते तद्वद्विध्यर्थश्रवणेऽपि न ।।३०।।**
**मतं वाक्योत्थविज्ञानस्मृतिसंतानता यदि । केवलोक्तिश्रवोद्भूतज्ञानादर्थान्तरं स्फुटम् ।।३१।।**
**नैवं साक्षाद्यथावस्तुबोधस्यैवेह संभवात् । नित्यं संनिहिते तस्मिंस्तत्स्मृत्या किं प्रयोजनम् ।।३२।।**

ज्ञानमुच्यते। तेन न स्वातन्त्र्यं तेषामिति शेषः। वेदान्तानां विध्यपेक्षितार्थसमर्पकत्वेन तच्छेषत्वं शङ्कितं प्रत्याह—इत्येतदिति ।।८२४।।

कुतो नेष्यते तत्राऽऽह—मुक्तीति। मोक्षव्यवधिभूततमोनिवर्तकतत्त्वज्ञानादर्थान्तरस्यानुष्ठेयस्याभावाद्वेदान्तेषु न तद्विधिरिति सिद्धान्तोपक्रमे दर्शितमतस्तेषां न तत्परत्वमित्यर्थः ।।८२५।।

तेषां विधिपरत्वाभावमुपश्रुत्य विधिवादी चोदयति—प्रत्यगिति। वस्तुकथनमात्रेणैव विधिं विना प्रेक्षावतोऽप्रवृत्तेर्वाक्यार्थज्ञानोत्पत्त्यर्थं प्रवर्तको विधिरेष्टव्य इत्यर्थः ।।८२६।।

वाक्यार्थज्ञानोत्पत्त्यर्थं विधिरिष्यमाणस्तज्ज्ञाने वा वाक्यश्रवणे वा तदर्थज्ञानस्मृतिसंताने वा चित्तवृत्तिनिरोधे वेति विकल्प्याऽऽद्यं दूषयति—नाऽऽत्मेति। अनुष्ठितसाधनस्याधिकारिणो निरस्तप्रतिबन्धस्य वाक्यश्रवणमात्राज्ज्ञानोत्पत्तेर्न तत्रार्थवान्विधिरित्यर्थः। ज्ञानस्य जन्मैव विधिफलं तच्चेद्वाक्यश्रवणतः सिद्धं विध्यानर्थक्यं तर्हि व्यक्तमित्याह—किमन्यदिति ।।८२७।।

द्वितीयं शङ्कते—अन्तरेणेति। यागाद्यनुष्ठानाय विध्यतिरेकेणाप्रवृत्तिवद्वाक्यश्रवणायापि तं विना न प्रवर्तते तद्यागादाविव वाक्यश्रवणे विधिरित्यर्थः। विध्यधीनं वाक्यश्रवणमिति वदन्तं प्रत्याह—इति ब्रुवाणमिति। अनिष्टार्थवादिवाक्यस्यासत्यादिलक्षणस्य विधिं विना श्रवणवत्तत्त्वमादेरपि तस्मादृते श्रवणमविरुद्धमित्यर्थः ।।८२८।।

सर्वस्यापि वाक्यस्य विधेः श्रवणमिति पक्षे दोषान्तरमाह—अनवस्थेति। विधेश्चेद्वाक्यश्रवणं तर्हि तद्वाक्यश्रवणमपि विध्यन्तरादिति तत्र तत्प्रसङ्गादनवस्था। न च तत्त्वमादिश्रवणप्रयोजको विधिरात्मनोऽपि तत्प्रयुङ्क्ते। स खल्वध्ययनविधिरन्यो वा? आद्ये तदपेक्षया श्रुततत्त्वमादेः स्वार्थबोधित्वं कर्मवाक्यवदिति तद्वाक्ययोः स्वार्थनिष्ठत्वाविशेषः। द्वितीये तस्याप्रमाणत्वात्तदीयस्वपरनिर्वाहकत्वं दूरोत्सारितमधिगन्तव्यविधेः श्रवणविधेश्चाध्ययनविधेरविशेषस्तन्न विध्यन्तरायत्तं श्रवणमिति भावः। यतो न विध्यन्तरायत्तं श्रवणमतोऽनपेक्षाद्वाक्यादेव श्रुतादैक्यधीरित्याह—इति तत इति ।।८२९।।

उक्तामनवस्थां विवृणोति—यथेति। उभयत्रार्थशब्दो [1]वाक्यविषयः ।।८३०।।

तृतीयमुत्थापयति—मतमिति। वाक्यजन्यज्ञानस्य स्मृतिसंततिर्विधेयेति यदि मतमिति योजना। तत्र हेतुमाह—केवलेति। वाक्यश्रवणमात्रात्तदुत्थज्ञानमात्राच्च स्मृतिसंततेरर्थान्तरत्वादुक्तदोषाभावात्तस्याः स्फुटं विधेयतेत्यर्थः ।।८३१।।

तद्दूषयति—नैवमिति। तस्मिन्निह प्रत्यग्भूते ब्रह्मणि यत्साक्षादित्यपरोक्षैकरसे प्रत्यक्तया सदा संनिहिते वाक्यीयज्ञाननाशेऽपि वस्तुवृत्तमनुसृत्य साक्षाद्बोधसंभवादात्मनि स्मृतेरफलत्वान्न तत्संततिर्विधेयेत्यर्थः ।।८३२।।

---

१. वाक्यविषय इति—वाक्यार्थश्रुतये इत्यत्र विध्यर्थश्रवणे इत्यत्र च अर्थशब्देन वाक्यं ग्राह्यं तदैव वाक्यश्रवणस्य विध्यधीनत्वेऽनवस्थोपपत्तेः।

अपि पाशुपतास्त्रेण विद्धश्चेन्न[1] ममार यः । निष्फलेषुवितुन्नाङ्गो नङ्क्ष्यतीत्यतिदुष्करम् ॥३३॥
अपि प्रत्यक्तमो नित्यं भास्वच्चैतन्यबिम्बितम् । बुद्धितद्वृत्तयश्चैवं तप्तायोविस्फुलिङ्गवत् ॥३४॥
प्रागप्यनात्मसंपातात्प्रतीचैवाऽऽप्तमेयकम् । जन्मनैवाखिलं ज्ञानं फलवत्किमपेक्षते ॥३५॥
मात्रादिव्यवधानेन यथाऽन्यत्र मितेः फलम् । फलतोऽवगतेरेव न तथेहाऽऽत्मदर्शने ॥३६॥
खपूर्ण एव सन्कुम्भो द्रव्यैर्नानाविधैर्युतिम् । वियोगं वा यथा गच्छेच्चैतन्येद्धास्तथा धियः ॥३७॥
तस्मादावृत्तिपक्षेऽपि स्वतस्तत्सिद्धितो विधिः । नापूर्वः कश्चिदत्र स्यादत एवापरोऽपि न ॥३८॥
अशब्दाद्यात्मकं साक्षान्निचाय्याऽऽत्मानमेकलम् । मुच्यते मृत्युतो विद्वानिति नैगमिकं वचः ॥३९॥
आत्मन्यवगते साक्षात्प्रमाणार्थसमाप्तितः । किमन्यत्स्मृतिसंतानात्प्रार्थ्यते निष्प्रमाणकम् ॥४०॥

वाक्योत्थज्ञानोपसर्जनस्वरूपज्ञानाद्वा तदुपसर्जनवाक्यीयज्ञानाद्वाऽज्ञानतज्जाध्वस्तेस्तदर्थं स्मृतिसंततिर्विधेयेति चेन्नेत्याह—अपीति । चेच्छब्दोऽवधारणे क्रियापदादुपरि संबध्यते इषोर्निष्फलत्वं पत्रराहित्येन वेगहीनत्वं नैशित्यराहित्यं वा लोहशून्यत्वं वा । वितुन्नत्वमङ्गस्य व्यथितत्वम् । प्रवृद्धे हि युद्धे प्रवृत्तशत्रुमप्रधृष्यमालक्ष्य प्रयुक्ते पाशुपतास्त्रे तेन विद्धोऽपि यो नैव प्राणानजहात्स पुनः शराभासेन ताडितः सन्नपहास्यति प्राणानित्यसंभावितमिदं तथा न प्रमाणज्ञानादज्ञानादिध्वस्तिः किंतु तदीयस्मृतिसंतानादमानादिति दुःसंपादमिति भावः ॥८३३॥

किंचा[2]संसार्यात्मज्ञानस्मृतिसंतानो विधेयः संसार्यात्मज्ञानस्मृतिसंतानो वा? नाऽऽद्यस्तस्य विधिविरोधादिति मत्वा द्वितीयं दूषयितुं सर्वस्य चैतन्यव्याप्तिं साधयति—अपीति । अपिशब्दो दर्शितविकल्पद्योतकः । प्रत्यगाश्रयविषयमनाद्यनिर्वाच्यमज्ञानं जगन्मूलकारणं सदैवापरोक्षचैतन्यव्याप्तमित्यर्थः । कारणवत्कार्याणां बुद्ध्यादीनामपि तद्व्याप्तिमाह—बुद्धीति । तयोश्चैतन्यव्याप्तौ क्रमेण दृष्टान्तमाह—तप्तेति ॥८३४॥

बुद्ध्यादीनामुक्तचैतन्यव्याप्तौ स्मृत्यनपेक्षत्वं फलतीत्याह—प्रागपीति । सर्वमपि बुद्धिवृत्तिरूपं ज्ञानमनात्माकारभजनात्प्रागपि जन्ममात्रात्प्रत्यगात्मनैव सालम्बनमपरोक्षं सन्नाऽऽत्मस्मरणापेक्षमनात्माकारभजनादूर्ध्वमपि सविषयं प्रत्यक्चैतन्यव्याप्तमेव नान्यापेक्षमित्यर्थः ॥८३५॥

आत्मज्ञाने विशेषमाह—मात्रादीति । अन्यत्र स्तम्भादावनात्मनि मातृमेयादिव्यवधानेन मानफलं स्फुरणं सिध्यति नैवाऽऽत्मज्ञाने तद्व्यवधानेन तत्सिद्धिः स्वरूपावगतेरेव फलत्वादित्यर्थः ॥८३६॥

विषयसंबन्धात्पूर्वं बुद्धितद्वृत्तीनां चैतन्यव्याप्तावपि नोर्ध्वं तद्व्याप्तिर्विषयसंबन्धेनैवानाकाङ्क्षत्वादित्याशङ्क्याऽऽह—खेति । यथा कुम्भो नभोव्याप्त एव दध्यादिभिः संयोगविभागावनुभवति न हि नभसा कदाचिदव्याप्तः सन्कुम्भः संभवति तस्यापि तथैवाव्यापकत्वप्रसङ्गात्तथा बुद्धयस्तद्वृत्तयश्च स्वचैतन्यव्याप्ताः सदैव विषयैः सह संयोगविभागौ प्रतिपद्यन्ते । न हि क्वचिदपि चिदव्याप्तं किंचिदस्तीत्यर्थः ॥८३७॥

सर्वस्य सर्वदाऽपरोक्षचैतन्यव्याप्तत्वेऽपि प्रकृते किं जातं तदाह—तस्मादिति । उक्तन्यायेन सर्वस्यापरोक्षचिद्व्याप्तेर्वस्तुज्ञानस्मृतिसंततिर्विधेयेति पक्षेऽपि विधिं विना तस्याः सिद्धेर्न तत्रापूर्वो विधिः । प्राप्तत्वादेव न तत्र नियमादिविधिरपि सर्वस्यैव विधेरप्राप्तांशानुपातितया विचारारम्भे दर्शितत्वादित्यर्थः ॥८३८॥

इतश्च स्मृतिसंततिर्न विधेयेत्याह—अशब्देति । निर्विशेषमेकरसमात्मानमपरोक्षतया निश्चित्य तद्बलादनर्थराशेः सहेतोर्निवर्तते विद्वानिति वाक्योत्थज्ञानादेव पुमर्थसिद्धिरित्यशब्दमस्पर्शमित्यादिवाक्याद्गम्यते । तत्कुतः स्मृतिसंततिर्विधेयेत्यर्थः ॥८३९॥

आत्मन्यपरोक्षीकृते मानफलस्याज्ञानादिध्वस्तेः सिद्धत्वेऽपि फलान्तरलिप्सया स्मृतिसंततिर्विधीयतामित्याशङ्क्य दृष्टमदृष्टं वा फलान्तरमिति विकल्प्याऽऽद्यमप्रामाणिकत्वेन दूषयति—आत्मनीति ॥८४०॥

१. चेच्छब्दः वेदाश्चेत्प्रमाणमितिवत् अवधारणार्थे । नैव ममारेत्यर्थः ।
२. असंसार्यात्मज्ञानं न विधेयं अशनायाद्यतीतब्रह्मज्ञाने विध्यसंभवात् ।

भविष्यत्कालसंबन्धि फलं चेह न नाकवत् । तज्ज्ञानजन्मकालत्वादग्निजन्मोत्थकार्यवत् ।।४१।।

स्मृतिसन्ततेरविधेयतानिरूपणं

अविधिश्चार्थतः प्राप्तेस्तज्ज्ञानस्मृतिसंततेः । बोधाच्च ध्वस्तसंमोहः स्मृतिं नैव व्यपेक्षते ।।४२।।
सम्यग्ज्ञानाग्निनिर्दग्धे प्रत्यङ्मोहे सबान्धवे । यथावस्तुस्मृतिं मुक्त्वा स्मृतिर्नान्याऽवशिष्यते ।।४३।।
प्रमाननुविधानाच्च न स्मृतिर्बाधिकाऽपरा । बाध्यत्वेनैव माबुद्धेर्निष्ठिताऽभूदनात्मधीः ।।४४।।
बाध्यं तमो मितेः कृत्स्नं तज्जं चाप्यतिदुर्बलम् । मानं बाधकमेवाऽऽसीत्स्मृतिरप्यनयोस्तथा ।।४५।।
न स्मृतिर्विस्मृतिर्वेह संभाव्येतापि केनचित् । सकृद्विभातो ह्येवैष रवौ रात्र्यहनी यथा ।।४६।।
अनर्थहेतुदाहित्वाद्यथोक्तात्मस्मृतेरतः । आत्मस्मृतेः स्वतः प्राप्तिरितरस्यास्तु बाध्यता ।।४७।।

चित्ततद्वृत्तिनिरोधविधिशंका तत्परिहारश्च

निरोधस्तर्हि पूर्वोक्तान्मतमर्थान्तरं यदि । तन्त्रान्तरेषु तस्यापि कार्यत्वेन श्रुतत्वतः ।।४८।।

ज्ञानस्य यागादिवददृष्टफलत्वात्तदीयस्मृतिसंततिर्विधेयेति द्वितीयमाशङ्क्याऽऽह—भविष्यदिति । इहेति ज्ञानोक्तिः । वैधर्म्यदृष्टान्तो नाकवदिति । अग्निहोत्रादौ भविष्यत्कालसंबन्धि स्वर्गाख्यं फलमवगतं नैवमात्मज्ञाने संभवतीत्यर्थः । तस्य मोक्षाख्यफलस्य विद्वान्न बिभेतीत्यादिश्रुतेर्ज्ञानजन्मना तुल्यकालत्वादिति हेतुमाह—तज्ज्ञानेति । तत्र दृष्टान्तमाह—अग्नीति । यथाऽग्निजन्मसमकालमेधसां भस्मीभावस्तथा ज्ञानोदयसमकालं कैवल्यमित्यर्थः ।।८४१।।

संततेरविधेयत्वे हेत्वन्तरमाह—अविधिश्चेति । ब्रह्मविदो विषयान्तराभावादात्मज्ञानस्मृतिसंततेरर्थप्राप्तेर्न तत्र विधिरित्यर्थः । तत्रैव हेत्वन्तरमाह—बोधाच्चेति । तेन सा न विधेयेति शेषः ।।८४२।।

ज्ञानादज्ञानादिदाहेऽप्यनात्मस्मृत्यपोहार्थं ब्रह्मविदः स्मृतिसंतत्यपेक्षेति सा विधेयेत्याशङ्क्याऽऽह—सम्यगिति । आत्मज्ञानाग्निना निरवशेषतो दग्धे सत्यात्माज्ञाने सकार्ये वस्त्वनुसारिणीं स्मृतिमपहायानात्मस्मृतेरनवशेषान्न तन्निवृत्तये स्मृतिसंततिविधिरित्यर्थः ।।८४३।।

ब्रह्मविदोऽनात्मस्मृत्यङ्गीकारेऽपि न तया ब्रह्मस्मृतिर्बाध्येत्याह—प्रमेति । अपराऽनात्मविषयेति यावत् । पराङिति पाठान्तरम् । कथं प्रमाननुविधानमात्मस्मृतेरिति तत्राऽऽह—बाध्यत्वेनेति । द्वैतधीरद्वैतधियो बाध्यत्वेनैव स्थिता तेन तत्संस्कारजस्मृतेः प्रमाननुविधानमित्यर्थः ।।८४४।।

द्वैतज्ञानमेवाद्वैतधीबाधकं किं न स्यादित्याशङ्क्य द्वैततद्धियोराविद्यत्वादद्वैतधियश्च विषयद्वारा बलवत्त्वान्नैवमित्याह—बाध्यमिति । अज्ञानं तत्कार्यं च सर्वं प्रमित्यपेक्षया दुर्बलत्वात्तद्बाध्यं, मानं पुनर्बलवत्त्वेन बाधकमेवेति रज्ज्वादिज्ञाने निर्धारितं प्रदीपेनैव हि तमो निवर्त्यते न विपरीतं तद्वदद्वैतधियैव द्वैतं तद्धीश्च सह कारणेन निराकरणीयेत्यर्थः । तथाऽपि द्वैतस्मृतिरद्वैतस्मृतिबाधिकेत्याशङ्क्य बाध्यधीसंस्कारजत्वाद्द्वैतस्मृतिर्बाध्यैव बाधकधीसंस्कारोत्थत्वादद्वैतस्मृतिर्बाधिकैवेत्याह—स्मृतिरिति ।।८४५।।

आत्मनि स्मृतिमुपेत्य दोषमुक्त्वा न तत्र स्मृतिरेवेत्याह—न स्मृतिरिति । संभावनाभावे निश्चयो दूरादिति वक्तुमपिशब्दः । तत्र हेतुः—सकृदिति । प्रत्यगात्मा सदैवापरोक्षचिद्रूपो यस्मादित्यर्थः । आत्मनि स्मरणविस्मरणयोः संभावनाऽपि नेत्यत्र दृष्टान्तमाह—रवाविति । नोदेता नास्तमेतेत्यादिश्रुतेर्दृष्टान्तसिद्धिः ।।८४६।।

प्रतीचि स्मृतिमुपेत्यैव तत्संततेरविधेयत्वे हेत्वन्तरमाह—अनर्थेति । आत्मावगतौ वाक्यजायामन्यस्य वस्तुनोऽनर्थहेतुत्वेनावगमादात्मनश्च तद्विलक्षणत्वात्परमपुरुषार्थरूपे तत्र स्मृतेरनर्थतद्धेतुदाहित्वादनात्मधीतत्संस्कारजस्मृतीनामात्मावगत्यनन्तरमभावात्पारिशेष्यादात्मैकज्ञानस्मृतेरर्थतो विधिं विना प्राप्तिरनात्मस्मृतिश्च तया बाध्येति न स्मृतिसंततिर्विधेयेति भावः ।।८४७।।

चतुर्थमुत्थापयति—निरोध इति । यदि वाक्यार्थज्ञानादेरविधेयत्वं तर्हि चित्ततद्वृत्तिनिरोधो मुक्तिसाधनत्वेन विधीयतां तस्य पूर्वोक्तज्ञानादेरर्थान्तरत्वादित्यर्थः । निरोधस्य मुक्तिहेतुत्वेन विधेयत्वे योगशास्त्रं

न मुक्तिसाधनत्वेन तस्यानधिगमाच्छ्रुतेः । प्रत्यग्बोधात्परं नान्यन्मुक्तेरस्तीह साधनम् ॥४९॥
अननुष्ठेयरूपत्वात्तत्सिद्धिश्चाऽऽत्मबोधतः । प्रत्यग्ज्ञाने निरुध्यन्ते चित्ततद्वृत्तयो यतः ॥५०॥
अभ्युपेत्यैतदस्माभिरुच्यते संभवादिति । सम्यग्ज्ञानातिरेकेण न त्वन्यन्मुक्तिसाधनम् ॥५१॥
श्रुतौ स्मृतौ वा संभाव्यं ताभ्यां नान्यस्य मानता । प्रत्यग्याथात्म्यनिर्णीतौ तार्किकोक्तात्मवस्तुवत् ॥५२॥

वेदान्तेषु अंशत्रयवती भावना निरस्यते

सर्वाकाङ्क्षैकहेतोश्च प्रत्यग्विज्ञानहानतः । न भावनेह संभाव्या मोहे सत्येव सा यतः ॥५३॥
मानान्तरानधिगतोक्त्यर्थाधिगम एव नः । विधिर्यतो नियोगोऽपि नैव स्यादनृतन्त्रतः ॥५४॥
नियोज्यतद्विषययोर्यत्र भेदोऽवसीयते । विषयः स नियोगस्य नाऽऽत्मज्ञाने त्वभेदतः ॥५५॥

संवादयति—नन्त्रेति । तस्यापीत्यपिशब्दः सप्तम्या संबध्यते । "अथ योगानुशासनमि"ति निःश्रेयसहेतुः समाधिः सूत्रितस्तस्य लक्षणमुक्तं "योगश्चित्तवृत्तिनिरोध" इति । तन्निरोधावस्थायां चाऽऽत्मनः स्वरूपप्रतिष्ठत्वं कैवल्यमाख्यातं "तदा द्रष्टुः स्वरूपेऽवस्थानमि"ति । भाष्यकारश्च "ताः पुनर्निरोद्धव्या" इत्युक्त्वा पादान्ते व्याजहार "यस्मात्ते संस्काराश्चित्तस्याधिकारविरोधिनोऽनवस्थितिहेतवो भवन्ति तस्मादवसिताधिकारं सह कैवल्यभागीयैः संस्कारैश्चित्तं विनिवर्तते तस्मिन्विनिवृत्ते पुरुषः स्वरूपमात्रप्रतिष्ठः शुद्धः केवलो मुक्त इत्युच्यत" इति । एवं योगशास्त्रे मुक्तिहेतुत्वेनेष्टो निरोधविधिरित्यर्थः ॥८४८॥

योगशास्त्रादपि बलवतीं श्रुतिमाश्रित्योत्तरमाह—न मुक्तीति । तदेव प्रपञ्चयति—प्रत्यगिति । परमुत्कृष्टमिति यावत् । इहेति शास्त्रोक्तिः । तमेव विदित्वेत्यादिश्रुतेर्ज्ञानमेव केवलं कैवल्यसाधनं न निरोधः श्रुतिविरोधे योगशास्त्रस्यानवकाशत्वादित्यर्थः ॥८४९॥

चित्तवृत्तिनिरोधस्य मुक्तिहेतुत्वेऽपि न विधेयतेत्याह—अननुष्ठेयेति । न तावद्यथाकथंचिच्चित्ततद्वृत्तिनिरोधोऽनुष्ठेयः सर्वस्यापि तत्संभवाद्विधितोऽननुष्ठेयत्वात् । नापि सर्वात्मना तन्निरोधो विधेयो ज्ञानादेव तत्सिद्धेरतो न निरोधे विधिरित्यर्थः । ज्ञानस्याऽऽत्यन्तिकनिरोधसाधनत्वं साधयति—प्रत्यगिति । अतो मोक्षहेतुत्वे तस्योपेतेऽपि न विधेयत्वं विधिं विना तत्सिद्धेरिति शेषः ॥८५०॥

"नान्यः पन्था विद्यते" "ज्ञानादेव तु कैवल्यमि"त्यादिशास्त्रमनुसरन्नुपेत्यवादं त्यक्तुं भूमिकां करोति—अभ्युपेत्येति । निरोधस्य मुक्तिहेतुत्वमुपेत्य विधिं विना ज्ञानादेव संभवान्न विधेयतेत्युक्तमित्यर्थः । कस्मादयमभ्युपगमवादः किमित्ययमेव सिद्धान्तो न स्यादित्याशङ्क्याऽऽह—सम्यगिति । निरोधस्य मुक्तिहेतुत्वं "तदा द्रष्टुः स्वरूपेऽवस्थानमि"त्यादौ योगशास्त्रे प्रसिद्धमिति चेन्नेत्याह—ताभ्यामिति । तत्र वैधर्म्यदृष्टान्तमाह—तार्किकेति । यथा तार्किकैरीश्वरादौ स्वतन्त्रमनुमानादि मानमिष्टं नैवं वैदिकैरिष्यतेऽतो योगशास्त्रमपि श्रुत्यादिविरोधे न प्रमाणम् "एतेन योगः प्रत्युक्त" इति न्यायादिति भावः ॥८५१-८५२॥

वेदान्तेषु विधेयत्वं निरोधादेर्निरस्तम् । यत्तु तेष्वंशत्रयवती भावनाऽस्तीति तन्निरस्यति—सर्वेति । किं केन कथमित्याकाङ्क्षासु निरपेक्षहेतुरज्ञानं तस्य वाक्योत्थप्रत्यग्ज्ञानेन हानान्नांशत्रयवती भावना वेदान्तेषु संभाव्यते मोहे सत्येवाऽऽकाङ्क्षाद्वारा तादृश्या भावनायाः संभवादतो न तेषु विधिरित्यर्थः ॥८५३॥

भावनाभावेऽपि वेदान्तेषु नियोगोऽस्त्येव तदभावे वाक्योत्थज्ञाने प्रवृत्त्यनुपपत्तेरित्याशङ्क्याऽऽह—मानान्तरेति । अज्ञातवाक्यार्थज्ञापनमेवास्माकं विधिर्नाप्रवृत्तप्रवर्तनं गरलमभ्यवहरेत्यादौ व्यभिचारादतोऽबुद्धबोधिषूपनिषद्वाक्येषु भावनावन्नियोगोऽपि नास्तीत्यर्थः । किंच नाऽऽत्मज्ञाने नियोगस्तस्यापुंस्तन्त्रत्वान्नियोगस्य च तत्तन्त्रविषयत्वादित्याह—अनृतन्त्रत इति ॥८५४॥

आत्मज्ञाने नियोगासंभवे हेत्वन्तरमाह—नियोज्येति । यत्र साधयिता साधनं साध्यमिति भेदधीस्तत्र नियोगो यथा यागादावात्मज्ञाने तु नासौ युक्तस्तज्जन्ममात्रेण सर्वभेदध्वस्तेरित्यर्थः ॥८५५॥

शब्दो लिङ्गादिशून्योऽपि ह्यविज्ञातार्थबोधकः । विधिर्भवति सामर्थ्याज्ज्ञाते ह्यर्थेऽनुवादता ॥५६॥

शास्त्रेण ब्रह्मबोधनप्रकारः

यतो वाचोऽभिधानानि प्रयुक्तान्युपलब्धये । सर्वाण्यनभिधायैव निवर्तन्तेऽवबोध्य च ॥५७॥
उदपादि च यच्छब्दैर्ज्ञानमाकारवद्धियः । स्वतोबुद्धं तदप्राप्य नाम्ना सह निवर्तते ॥५८॥
माहात्म्यमेतच्छब्दस्य यदविद्यां निरस्यति । सुषुप्त इव निद्राया दुर्बलत्वाच्च बाधते ॥५९॥
दुर्बलत्वादविद्याया आत्मत्वाद्बोधरूपिणः । शब्दशक्तेरचिन्त्यत्वाद्विद्मस्तं मोहहानतः ॥६०॥
अगृहीत्वैव संबन्धमभिधानाभिधेययोः । हित्वा निद्रां प्रबुध्यन्ते सुषुप्ते बोधिताः परैः ॥६१॥

विधायकपदसहितवाक्यस्यैवाबुद्धबोधित्वेन विधित्वादज्ञातं ब्रह्म ज्ञापयतां वेदान्तानामपि तत्पदसाहित्यापत्तेरनुप्रवेशो नियोगस्येत्याशङ्क्याऽऽह—शब्द इति । विधिविधुरोऽपि शब्दः स्वशक्तिवशादितरशब्दवदज्ञातज्ञापकः सन्विधिः स्यादित्यर्थः । अज्ञातज्ञापनमप्रवृत्तप्रवर्तनमिति विधिद्वैविध्यमभ्युपेयतामभिमतमेतदिति वदितुं हिशब्दः । ज्ञापको विधिरिति वाच्ये किमज्ञातविशेषणेनेत्याशङ्क्याऽऽह—ज्ञाते हीति । तस्मादनुवादत्वशङ्कामपवदितुं विशेषणमर्थवदित्यर्थः ॥८५६॥

अबुद्धबोधनस्य विधित्वेऽपि नासौ ब्रह्मणि युक्तस्तस्य यतो वाचो निवर्तन्त इति शब्दागोचरत्वश्रुतेस्तद्ब्रह्म नोपनिषद्गम्यमित्याशङ्क्याऽऽह—यत इति । वाच इत्यस्य व्याख्यानमभिधानानीति । यतो निवर्तन्ते तद्ब्रह्माऽऽनन्दरूपं विद्वान्न बिभेतीति संबन्धः । यदि ब्रह्मप्रतिपत्त्यर्थं प्रवृत्तानि वचनानि तत्र वचनप्रवृत्तिमकृत्वैव निवर्तेरन्कथं तर्हि तदौपनिषदमित्याशङ्क्य लक्षणया तदवबोधं संपाद्यैव ततस्तेषां निवृत्तेर्युक्तमौपनिषदत्वं तस्येत्याह—अवबोध्येति । समन्वयसूत्रे चास्योपपादितत्वादत्राबुद्धबोधनं विधिः संभवतीति भावः ॥८५७॥

शब्दोत्थधीविषयत्ववद्ब्रह्मणः शब्दविषयत्वमपि किं न स्यादित्याशङ्क्याऽऽह—उदपादीति । अन्तःकरणस्य यत्परिणामरूपं ज्ञानं ब्रह्मात्मैक्याकारं तत्त्वमादिशब्दैरुत्पादितं तद्ब्रह्माविषयीकृत्य स्वहेतुशब्देन सह ततो निवर्तते । अप्राप्य मनसा सहेति हि श्रूयते तस्य स्वतो बोधैकरसस्य विषयत्वायोग्यत्वात्तस्मादविषयत्वेनैव शब्दतदुत्थधियोः ब्रह्म स्फुरतीत्यर्थः ॥८५८॥

ननु ब्रह्मणि शब्दो गृहीतसंबन्धो न वा? नाद्योऽविषयत्वानुपपत्तेर्नेतरः शब्दप्रमाणकत्वायोगान्न च तस्मिन् मानान्तरमिष्टमतस्तज्ज्ञानासंभवात्तदज्ञानाध्वस्तिस्तत्राऽऽह—माहात्म्यमिति । यथा सुषुप्तः शब्दश्रवणे तात्कालिकसंबन्धबोधं विना निद्रायाः सकाशात्प्रबुध्यते तत्र शब्दस्तदातनसंबन्धज्ञानानपेक्षस्तस्य बोधमाधाय निद्रां निरस्यति तथा तत्त्वमादिशब्दस्य शबले ज्ञातशक्तेः प्रतिपाद्येऽर्थे शक्तिध्यनपेक्षस्यैव लक्षणया ज्ञानं जनयतो महिमैष यदनर्थहेत्वज्ञाननिरासित्वमतो युक्तमविषयस्यैव ब्रह्मणः शास्त्रप्रमाणकत्वमित्यर्थः । ब्रह्मणि वाक्याज्ज्ञातेऽपि कथं तत्तस्मिन्नज्ञानं निवर्तयति वैपरीत्यस्यापि संभवादित्याशङ्क्य बाध्यं तमो मितेरित्यत्रोक्तमेव व्यक्तीकर्तुमाह—दुर्बलत्वाच्चेति ॥८५९॥

विद्यायाः सकाशादविद्याया दौर्बल्यं कथमिति तत्राऽऽह—दुर्बलत्वादिति । अविद्यादौर्बल्यस्य शुक्त्यादौ सिद्धत्वाद्बलवती विद्या दुर्बलामविद्यां स्वविरुद्धां बाधत एवेत्यर्थः । किंचाजडस्फुरणस्याऽऽत्मत्वात्तत्राविद्या दुःस्थत्वान्निमित्तमात्रादपगच्छति किमुत विद्यायामुदितायामित्याह—आत्मत्वादिति । किंच बोध्येऽर्थे ज्ञातशक्तिरेव शब्दो बोधमादधातीति न नियमः शब्दशक्तेर्मन्त्रादिशक्तिवद्दुर्ज्ञानत्वादित्याह—शब्देति । कथं तर्हि शब्दात्प्रत्यग्ब्रह्मधीस्तत्राऽऽह—विद्म इति । तं परं प्रत्यञ्चं मोहशब्दितविरुद्धांशनिरासद्वारा लक्षणया शब्दाज्जानीमोऽतो ब्रह्म शास्त्रप्रमाणकमित्यर्थः ॥८६०॥

दृष्टान्तं प्रपञ्चयति—अगृहीत्वेति । उत्तिष्ठ मैत्रेति पार्श्वस्थैर्बोध्यमानाः सुप्ता जनाः शब्दार्थयोस्तदा संबन्धमज्ञात्वैव निद्रां हित्वा बुध्यमाना भवन्तीत्यर्थः ॥८६१॥

**जाग्रद्वन्न यतः शब्दं सुषुप्ते वेत्ति कश्चन । ध्वस्तेऽतो ज्ञानतोऽज्ञाने ब्रह्मास्मीति भवेत्फलम् ॥६२॥**
**अविद्याघातिनः शब्दाद्याऽहं ब्रह्मेति धीर्भवेत् । नश्यत्यविद्यया सार्धं हत्वा रोगमिवौषधम् ॥६३॥**
**अवशिष्टं स्वतोबुद्धं शुद्धं मुक्तमतो भवेत् । नातः स्याद्भावनापेक्षा नापि मानान्तरं प्रति ॥६४॥**
**क्रियाप्रभेदविरहाज्ज्ञानं वा निखिलं तमः । हन्त्यात्मलाभमात्रेण न तदन्या तमोन्हुतिः ॥६५॥**
**क्रियातत्फलयोर्भेदान्न भेदः क्रिययोरतः । प्रत्यग्ध्वान्तमतो ज्ञानं स्वात्मलब्ध्यैव हन्ति तत् ॥६६॥**
**निष्पन्नोऽपि कुठारादिः प्रयोगविरहाद्यथा । द्वैधीभावाय नैवालं तथा नैव प्रमाणधीः ॥६७॥**

आत्मबोधने मानान्तरानपेक्षत्वम्

**अलौकिकत्वाद्बोध्यस्य स्वतश्चावगमात्मनः । बोध्ये हि लौकिकेऽपेक्षा परतोऽवगतौ[1] तथा ॥६८॥**

अगृहीत्वेत्यत्र हेतुमाह—जाग्रद्वदिति । यथा जागरे ज्ञातशक्तिकं शब्दं व्युत्पन्नो वेत्ति नैवं स्वापे तत्तत्राज्ञातशक्तिः शब्दो बोधक इत्यर्थः । दार्ष्टान्तिकं निगमयति—ध्वस्त इति । अतो दृष्टान्तवशात्प्रतिपाद्येऽर्थे संबन्धबुद्ध्यनपेक्षादेव शब्दाल्लक्षणयोत्पन्नज्ञानादज्ञाने ध्वस्ते प्रतिबन्धाभावाद्ब्रह्मात्मैक्यं फलं सिध्यतीत्यर्थः ॥८६२॥

नन्वज्ञाननिवर्तकं ज्ञानं निवर्तते न वा? आद्ये निवर्तकान्तरसत्त्वेऽनवस्था तदभावे निर्हेतुनाशापत्तिर्द्वितीये तद्धेत्वज्ञानस्थितेरमुक्तिरत आह—अविद्येति । सा खल्वविद्यां नाशयन्ती स्वयमपि नश्यति स्वपरविरोधित्वादित्यर्थः । एकत्र निवर्त्यनिवर्तकत्वे दृष्टान्तमाह—हत्वेति । अजीर्णतादिरोगविगमार्थं प्रयुक्तमौषधं कषायपानादि रोगं विगमय्य स्वयमपि विगच्छति पयः पयो जरयति स्वयमपि जीर्यत इति हि प्रसिद्धम् । तथा विद्याऽपि निवर्तयन्त्यविद्यां स्वयमपि निवृत्ता भवतीत्यर्थः ॥८६३॥

अथाविद्यातत्कार्यनिवृत्तौ किंचिदवशिष्टं न वा? आद्ये तन्मानं वाच्यम् । द्वितीये शून्यवादापत्तिरत आह—अवशिष्टमिति । अतः सनिदानसंसारध्वस्तेरेवंविधं तत्त्वमवशिष्टं भवेदिति संबन्धः । तदवशेषे फलितमाह—नात इति । भावनाशब्दो नियोगस्याप्युपलक्षणम् । स्वतोबुद्धत्वकृतं फलान्तरमाह—नापीति । यथोक्तस्य वस्तुनोऽवशिष्टत्वान्न तस्य विध्यर्थं प्रत्यपेक्षा स्वतोबुद्धत्वाच्च न तस्य मानान्तरं प्रत्यपेक्षा युक्ता विध्यर्थस्य मानान्तरस्य च तस्मिन्नकिंचित्करत्वादित्यर्थः ॥८६४॥

उक्तवस्तुनो भावनाद्यनपेक्षत्वेऽपि तज्ज्ञानं तदपेक्षमेवाज्ञानध्वंसीत्याशङ्क्याऽऽह—क्रियेति । वाशब्दोऽवधारणे । ज्ञानजन्ममात्रेण सर्वक्रियाकारकफलभेदध्वस्तेर्भावनाद्यपेक्षायोगादनपेक्षमेव ज्ञानमखिलमज्ञानं निवर्तयतीत्यर्थः । ननु तद्ध्वस्तिरात्माऽर्थान्तरं वा? आद्ये तस्याः सदातनत्वं द्वितीये सद्वितीयत्वं तत्राऽऽह—न तदन्येति । तच्छब्देन वाक्योत्थज्ञानोपलक्षित आत्मोच्यते ॥८६५॥

ज्ञानादज्ञानध्वस्तिश्चेत्क्रिययोस्तयोर्वाच्यं पौर्वापर्यं स्थितिगतिवदित्याशङ्क्य घटविचारोक्तं स्मारयति—क्रियेति । ज्ञानं क्रिया तत्फलमज्ञानध्वस्तिस्तयोश्चाऽऽदौ क्रिया पश्चात्फलमिति भेदस्य च्छिदिद्वैधीभावयोः सिद्धत्वाद्द्वयोरपि क्रियात्वानिष्टेरिदं पूर्वमिदं पश्चादिति भेदो न वाच्योऽतश्च किं पूर्वमिति चोद्यमनवकाशमित्यर्थः । चोद्याभावे फलितं निगमयति—प्रत्यगिति । तदिति ज्ञानस्य प्रत्यगाकारत्वोक्तिः । तथाच तदज्ञानध्वस्तिसामर्थ्यमस्य द्योत्यते ॥८६६॥

स्वरूपलाभमात्राज्ज्ञानमज्ञानध्वंसीति वैधर्म्यदृष्टान्तेन साधयति—निष्पन्नोऽपीति । विद्यमानोऽपि कुठारादिरनुष्ठानमन्तरेण काष्ठादौ द्वैधीभावादिसिद्धये न पर्याप्नोति न तथा प्रमाणजनितज्ञानमुत्पत्तिमात्रेणाज्ञाननिवर्तकत्वादित्यर्थः ॥८६७॥

"नातः स्याद्भावनापेक्षे"त्यत्र वाक्योत्थधियो भावनादौ मानान्तरे वाऽनपेक्षत्वमुक्त्वा भावनाद्यनपेक्षत्वं प्रसाध्य मानान्तरानपेक्षत्वं साधयति—अलौकिकत्वादिति । ब्रह्मणो मानान्तरायोग्यत्वादनपेक्ष्य प्रकाशमानत्वाच्च

१. "तर्हि धर्मादेरपि मानान्तरापेक्षा स्यात्" अत्राह—परत इति । रूपादिमतो मानान्तरयोग्यस्य तदपेक्षा, अतो जडत्वेऽपि नादृष्टादेः मानान्तरापेक्षेत्यर्थः—( न्या० )

**नद्यास्तीरे फलानीव प्रत्यक्षाद्यनपेक्षतः । किमिवेहान्यमानेषु तवापेक्षाऽभिधाश्रुतेः ॥६९॥**
**प्रमाता च प्रमाणं च प्रमेयो निश्चितिस्तथा । यत्सांनिध्यात्प्रसिध्यन्ति तत्सिद्धौ किमपेक्षते ॥७०॥**
**जाग्रत्स्वप्नसुषुप्तेषु घटोऽयमिति संविदः । व्यवधानं न चेहास्ति तद्भावाभावसाक्षितः ॥७१॥**
**इदमेवमिदं नैवमिति बुद्धिर्विभागभाक् । अनात्मिकाऽऽत्मवत्यत्र येनासौ किमपेक्षते ॥७२॥**
**कर्त्रादिव्यापृतेः पूर्वमसंकीर्णमुपाधिभिः । अविक्षिप्तमसंसुप्तं ह्यनुभवन्किमपेक्षते ॥७३॥**
**प्रमाणमप्रमाणं च प्रमाभासस्तथैव च । कुर्वन्त्येव प्रमां यत्र तदसंभावना कुतः ॥७४॥**

तदाकारा वाक्यजा धीरनपेक्षैवाविद्यां निरस्यतीत्यर्थः । ब्रह्म मानान्तरानपेक्षं चेत्कुत्र तदपेक्षेति तत्राऽऽह—बोध्ये हीति । लोकप्रसिद्धे जडेऽर्थे मानमनपेक्ष्य भावनाभावादिति हिशब्दार्थः । जडे तदपेक्षा चेदज्ञानादेरपि तदपेक्षया सिद्धान्तहानिरित्याशङ्क्याऽऽह—परत इति । रूपादिमत्त्वेन मानान्तरादवगतियोग्ये तदपेक्षा न चाविद्यादेर्जाड्येऽपि तथा तद्योग्यता तत्र तत्र तदपेक्षाव्यवहारोऽतस्तत्कार्ये तदपेक्षायामपि मुखतस्तन्निरस्यायामविद्यायां न मानापेक्षेति भावः । यद्वा यद्बोध्यं लौकिकमन्याधीनावगतित्वेनास्वप्रकाशं तस्मिन् मानान्तरापेक्षेत्यर्थः । तथाशब्दः समुच्चये॥८६८॥

आत्मनो मानान्तरायोग्यत्वं व्यतिरेकदृष्टान्तेन स्पष्टयति—नद्या इति । यथा नद्यास्तीरे फलानि सन्तीति वाक्यस्य मूलप्रमाणापेक्षा नरविरचितवचनस्य तदपेक्षया मानत्वाभ्युपगमान्न तथा तत्त्वमादिश्रुतेरिहाऽऽत्मनि प्रवृत्ताया मानान्तरापेक्षा तवापि युक्ता स्वप्रकाशस्याऽऽत्मनोऽध्यक्षाद्यपेक्षाभावात् । अतस्तत्त्वमादि मानान्तरसापेक्षं सिद्धार्थवाक्यत्वान्नदीतीरफलसत्तावाक्यवदिति नानुमेयं मानान्तरयोग्यार्थत्वोपाधेरित्यर्थः ॥८६९॥

साधनव्याप्तिमाशङ्क्य[1] सर्वसाधकस्याऽऽत्मनो मानान्तरायोग्यत्वान्नैवमित्याह—प्रमातेति । विमतं मानाद्यनपेक्षं तत्साधकत्वात् यत् यत्साधकं तत्तदनपेक्षं यथा घटसाधको दीपस्तदपेक्षो न भवतीत्यर्थः ॥८७०॥

ननु परमात्मा मानान्तरमपेक्षते व्यवहितत्वादग्न्यादिवदित्याशङ्क्यासिद्धिमाह—जाग्रदिति । तथा घटादिविशेषितायाः संविदो देशादिव्यवधानं विशेषणस्यानात्मत्वेनाऽऽगमापायित्वान्न तथेहावस्थात्रयेऽपि परस्मिन्प्रतीचि व्यवधानमस्ति तद्भावाभावयोः साक्षित्वेन सदा स्फूर्तेरित्यर्थः ॥८७१॥

किंचाऽऽत्मा नाध्यक्षादिविषयस्तत्स्वरूपत्वात्तद्वदित्याह—इदमिति । अत्र व्यवहारभूमाविति यावत् । घटादि पृथुबुध्नोदराकारत्वादियुक्तं न तथा पटादीतिविभागभागिनी व्यवहारावस्थायां या बुद्धिः सा स्वतः स्वरूपविरहिण्यपि येनाऽऽत्मना स्वरूपवती लक्ष्यते तस्याऽऽत्मनो मानादिस्वरूपत्वान्नास्ति तदपेक्षेत्यर्थः ॥८७२॥

किंचाऽऽत्मा न तद्विषयस्तस्मात्प्रागेव सिद्धत्वाद्यस्मात्प्रागेव सिद्धं न तत्तस्य विषयो यथा कुम्भदृष्टेः प्राग्दृष्टः स्तम्भो न तद्विषय इत्याह—कर्त्रादीति । मातृमेयादिव्यापृतिर्ज्ञानं ततः पूर्वं सुषुप्ताविति यावत् । आत्मनः स्वदृष्टावुपाध्यपेक्षावदध्यक्षाद्यपेक्षाऽपि स्यादित्याशङ्क्याऽऽह—असंकीर्णमिति । कथमुपाध्यसंबन्धः स्वापे निश्चितस्तत्राऽऽह—अविक्षिप्तमिति । विक्षेपादृष्ट्या तत्र तदसंबन्धधीरित्यर्थः । कार्योपाध्यसंबन्धेऽपि कारणोपाधिसंबन्धोऽस्तीति चेत्तत्राऽऽह—असंसुप्तमिति । न हि कार्यकारणाभ्यामात्मतत्त्वं तत्त्वतो युज्यतेऽन्यदेव तद्विदितादित्यादिश्रुतेर्न च तत्राज्ञानसंबन्धः सन्नपि कार्यं करोतीत्यर्थः । तादृगात्मनि मानमाह—अनुभवन्निति । उत्थितस्य परामर्शादुक्तानुभवसिद्धिरिति हिशब्दार्थः । तस्याध्यक्षाद्यनपेक्षत्वं फलितमाह—किमिति ॥८७३॥

अनुभवादात्ममात्रसिद्धावपि यथोक्तात्मनो मानहीनत्वेनासंभावितत्वमाशङ्क्याऽऽह—प्रमाणमिति । कार्यत्वदृश्यत्वाभ्यामेतानि यस्मिन्कारणे द्रष्टरि प्रमां कुर्वन्ति कार्यस्य कारणापेक्षकत्वात् दृश्यस्य च द्रष्टारमन्तरेणायोगात्तस्य स्वप्रकाशस्य नासंभावनेत्यर्थः ॥८७४॥

---

१. साधनव्याप्तिमिति—यत्र मानान्तरसापेक्षत्वं तत्र मान्तरयोग्यत्वमिति साध्यव्यापकता उपाधेः । यत्र सिद्धार्थवाक्यत्वं तत्र मान्तरयोग्यार्थत्वमिति साधनव्यापकत्वं न भवति वेदान्तवाक्ये व्यभिचारात् ब्रह्मणो मानान्तरायोग्यत्वात् ।

**प्रामाण्यमेतत्पृष्ठेन कस्मान्नास्त्यभिधाश्रुतेः । नियोगस्यापि मानत्वं नानपेक्ष्य प्रमामिमाम् ॥७५॥**

'आत्मानं पश्येत्' इति ज्ञानविधिरिति शंकापरिहारौ

**पश्येदात्मानमित्यादि वाक्यं यत्स्याद्विधायकम् । ज्ञानकर्तव्यतायां तन्नियोज्यपुरुषं प्रति ॥७६॥**

**स्वव्यापारेऽनपेक्ष्यैव वस्तुवृत्तं वचो यतः । नियुङ्क्ते पुरुषं तस्माद्वस्तुवृत्तं सुदुर्लभम् ॥७७॥**

**स्वशक्त्यननुरूपं चेत्कार्यं वाक्यशतैरपि । नियुक्तोऽपि न तत्कर्तुमलं शक्ये स हीश्वरः ॥७८॥**

**अभिधाश्रुतिश्चेत्तत्सिद्धौ व्यायच्छेत प्रयत्नतः । विधिवर्त्मानुगामित्वान्नार्थस्पृक्साऽस्वतन्त्रतः ॥७९॥**

**स्वमांसान्यपि खादन्ति नियोगानतिलङ्घिनः । जहत्यपि प्रियान्प्राणाञ्शक्यत्वादेव नान्यतः ॥८०॥**

**अशक्ये विनियुक्तोऽपि कृष्णलाञ्श्रपयेदिति । सर्वात्मनाऽप्यसौ कुर्वन्कुर्यात्तस्करकन्दुवत् ॥८१॥**

परस्याऽऽत्मनोऽध्यक्षाद्यविषयत्वे तत्त्वमादिविषयत्वमपि न स्यादविशेषादित्याशङ्क्याऽऽह—प्रामाण्यमिति । अनुभवरूपोक्तात्मन्यविद्यातज्जध्वस्तिद्वारा तत्त्वमादेर्मानत्वं मानान्तरस्य तु तदविद्याद्यध्वंसित्वान्न तत्र मानतेति भावः । ननु नियोगवादिना नियोगस्य वाक्यार्थे मानत्वमिष्टं न चोक्तोऽनुभवस्तद्विषयोऽतस्तस्यावाक्यार्थत्वान्मानान्तरायोग्यत्वेनापदार्थत्वाच्च न सोऽस्ति तत्राऽऽह—नियोगस्येति । मानत्वेऽपि तस्य जडत्वादजडबोधमनपेक्ष्य तत्त्वायोगादुक्तोऽनुभवो नियोगाविषयोऽपि तत्साधकत्वेनोपेयस्तद्द्वादिनाऽपीत्यर्थः । अथवा नियोगवादिना नियोगस्य वाक्यार्थे मानत्वमिच्छता साधकत्वेन तस्य यथोक्तानुभवाभ्युपगमध्रौव्यान्न तस्मिन्विवदितव्यमित्याह—नियोगस्येति ॥८७५॥

भवत्वनुभवो मानान्तरायोग्यः संश्च तथाऽपि ज्ञाने नियोगोऽस्त्यात्मन्येवाऽऽत्मानं पश्येदितिश्रुतेस्तथाच वस्तुनस्तदपेक्षा दुर्वारित्याशङ्क्याऽऽह—पश्येदिति । यद्येतन्नियोगपरं तर्हि ज्ञानकर्तव्यतायां पुरुषं नियोज्य निराकाङ्क्षं सन्नियोज्यं पुरुषं प्रति वा नियोगबोधनेन चरितार्थं सन्न वस्तु बोधयेदतो वस्त्वसिद्धिरित्यर्थः ॥८७६॥

नियोगपरमपि वाक्यं तद्बोधयिष्यति कुल्याप्रणयनन्यायेनैकस्य वाक्यस्योभयार्थत्वसंभवादित्याशङ्क्याऽऽह—स्वव्यापार इति । पुरुषप्रयत्नार्हे भावार्थ इति यावत् । योषिदग्न्यादिवाक्यवन्नियोगनिष्ठवाक्यस्य वस्त्वनपेक्षत्वान्न ततस्तत्सिद्धिरित्यर्थः ॥८७७॥

ज्ञाने विधिमुपेत्य वस्त्वसिद्धिरुक्ता । इदानीं तत्र विधिरेव नास्तीत्याह—स्वशक्तीति । यदि पुरुषशक्त्ययोग्यं किंचित्कार्यमुच्यते तदा तत्र भूयोभिर्विधिभिर्नियुक्तोऽपि न स तत्कर्तुं शक्नोत्ययोग्यत्वाद्योग्ये विषये पुंसः सामर्थ्यान्न च तज्ज्ञानं पुंस्तन्त्रमतो न तत्र वैधी प्रवृत्तिरित्यर्थः ॥८७८॥

ज्ञाने विधिश्चेद्वस्त्वसिद्धिर्नापि तत्र विधिरित्युक्तं तत्र वस्त्वसिद्धिं परिहरति—अभिधेति । नियोगपरत्वाज्ज्ञानविधिवाक्याद्वस्त्वसिद्धावपि तत्त्वमादिवाक्यं तत्सिद्धौ तात्पर्येण व्याप्रियेतेत्यर्थः । अभिधाश्रुतिर्न वस्तुसाधिका विध्यपेक्षितार्पकत्वेनास्वातन्त्र्यादिति दूषयति—विधीति ॥८७९॥

ज्ञाने विध्युपगमे वस्त्वसिद्धिमुपपाद्य तत्र विध्यसंभवमशक्यत्वहेतुनोक्तं व्यनक्ति—स्वमांसानीति । नियोगरागिणां नियोगवशात्प्राणत्यागादावपि प्रवृत्तिः संभवति तस्य शक्यत्वान्नाशक्येऽर्थे ततोऽपि प्रवृत्तिरस्तीत्यर्थः ॥८८०॥

अशक्ये नियोगादप्रवृत्तिरित्येतद्दृष्टान्तेनाऽऽह—अशक्य इति । कृष्णला हैमा माषाः पाषाणा वा क्षुद्राः कृष्णस्वभावास्तान्पचेदिति सर्वात्मना पाकायोग्ये कृष्णलचरौ नियुक्तो न तं कुर्यादशक्यत्वात् । उक्तं हि—कृष्णलेष्वर्थलोपादपाकः स्यादिति । प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्काम इत्यत्र कृष्णलेषु पाकः कार्यो वा नेति संशये पचतेर्विक्लित्तिफलविषयत्वेन प्रयोगदर्शनात्कृष्णलेषु तदयोगादग्निना सिञ्चेदितिवद्विध्यनुपपत्तेर्न कार्यः पाक इति प्राप्ते चैत्रः पचतीति हेतुव्यापारे प्रयोगात्तस्यैव पचत्यर्थत्वात्कृष्णलेष्वपि तद्योगात्कर्तृव्यापारद्वारा

ज्ञानस्य वस्तुतन्त्रत्वान्नोपासनसमुत्थितिः । न चाऽऽवृत्त्या प्रमोत्पत्तिं प्रमाणानि प्रकुर्वते ॥८२॥
नार्थस्पृग्भावना चेत्स्याद्ब्रह्मधीजन्मने न सा । शुक्तिकाज्ञानसंभूतौ न स्वभ्यस्ताऽपि रूप्यधीः ॥८३॥
द्रष्टव्यश्चेद्भवेदात्मा स्यान्नियोगस्तथाऽऽत्मनि । निषेधाद्दर्शनस्येह न नियोगोऽस्त्यतः परे ॥८४॥
मनुते यन्न मनसा मतं येन मनः सदा । ब्रह्म विद्धि तदेव त्वं न त्विदं यदुपासते ॥८५॥
शृङ्गग्राहिकया श्रुत्या ब्रह्मताऽपोदिता स्फुटम् । उपास्यत्वैकदोषेण नियोगोऽतोऽत्र नेष्यते ॥८६॥
ज्ञाताज्ञातापनिह्नुत्या ज्ञातृभावादिसाक्षिणः । ब्रह्म विद्धि तदेवेति ब्रह्मता च समर्पिता ॥८७॥
वाक्यार्थज्ञानकाले यः पदार्थो नैव विद्यते । कर्तव्यः कारकापेक्षो विधेयः स न संशयः ॥८८॥
विपरीतस्ततो यस्तु वाक्यादेव च गम्यते । नित्योऽकर्मप्रयुक्तः स न विधेयः कथंचन ॥८९॥
यथावस्तु हि या बुद्धिः सम्यग्ज्ञानं तदेव नः । पौरुषायासमात्रोत्थमज्ञानं रजतादिवत् ॥९०॥

फलस्य तद्विषयत्वात्प्रथमप्रतीतव्यापारवाचिताया युक्तत्वाद्वचनाददृष्टार्थतया पाकः कार्यं इति 'स्याद्वा प्रत्यक्षशिष्टत्वात्प्रदानवत्' [ पू०मी० १०.२.२ ] इति दशमे राद्धान्तितम् । तत्र यद्यपि संतापमात्रं कृष्णलेष्वपि शक्यं कर्तुं तथाऽपि विक्लित्तिप्रधानः पचतेरर्थ इति न्यायेन संतापजन्यां तामेव तेषु कुर्वन्नायासमात्रभागी स्याद्यथा लोके तस्करः सन्कन्दुरपूपादिपक्तृषु स्वयमपि प्रविश्य तत्कर्म कुर्वन्नशक्यकारित्वादायासमात्रभाग्भवत्येवमशक्यत्वाज्ज्ञानेऽपि न वैधी प्रवृत्तिरित्यर्थः ॥८८१॥

ज्ञाने विध्ययोगेऽपि तदावृत्तिरूपोपास्तौ सोऽस्तु ततो विहितोपास्तेर्ज्ञानान्तरमुत्पाद्यमित्युक्तमिति चेन्नेत्याह–ज्ञानस्येति । प्रत्यक्षादिष्वदृष्टत्वान्न ज्ञानावृत्तिरूपोपास्त्या प्रमात्मकज्ञानान्तरोत्पत्तिरित्याह—न चेति ॥८८२॥

किंचोपास्तिरर्थस्पर्शिनी न वा?आद्ये ततोऽर्थसिद्धेर्व्यर्थं ज्ञानान्तरमिति मत्वा कल्पान्तरं निरस्यति—नार्थेति । यद्यपि सा नार्थस्पर्शिनी तथाऽपि ब्रह्मधियमाधास्यत्यभ्यासस्यैवंस्वाभाव्यात्स हि स्वविषयेऽतिशयमादधातीत्याशङ्क्याऽऽह—शुक्तिकेति । शुक्तौ रूप्यधीरादरेण निरन्तरं दीर्घकालमभ्यस्ता न शुक्तिकायां सम्यग्ज्ञानोत्पत्तौ हेतुर्भवति तथाऽऽत्मोपास्तिरपि न सम्यग्धियमाधातुमलमित्यर्थः ॥८८३॥

ज्ञाने तदावृत्तौ वा विध्यभावेऽपि तद्विषये स भविष्यति द्रष्टव्यश्रुतेरित्याशङ्क्य द्रव्यस्वरूपेऽसाध्यत्वादित्यत्रोक्तं हृदि कृत्वा दोषान्तरमाह—द्रष्टव्यश्चेदिति । आत्मनो दृष्टिविषयत्वे नियोगविषयत्वमेष्टुं शक्यं दृष्टस्यैव नियोगविषयत्वादिति भावः । आत्मनो द्रष्टव्यत्वं श्रौतमित्याशङ्क्याऽऽह—निषेधादिति । इहाऽऽत्मनि दृष्ट्युपास्त्योर्निषेधादुभयतः परे तस्मिन्न नियोगः द्रष्टव्यश्रुतिस्तु दर्शनार्हत्वं वदन्ती नाऽऽत्मनस्तत्कर्मतामाहेत्यर्थः ॥८८४॥

तस्य तदविषयत्वे श्रुतिं प्रमाणयति—मनुत इति ॥८८५॥

श्रुतेस्तात्पर्यमाह—शृङ्गेति । यथा गोमण्डलस्थां गां शृङ्गं गृहीत्वा विशेषतो दर्शयत्येषा बहुक्षीरेति तथा स्फुटं वस्तुप्रदर्शनपरया श्रुत्या ब्रह्मतोपास्यस्य वारितेति यावत् । उपास्यस्य ब्रह्मत्वापवादे हेतुमाह—उपास्यत्वेति । आत्मनो दृष्ट्याद्यविषयत्वे फलितमाह—नियोग इति । अत्रेत्यात्मोच्यते ॥८८६॥

ज्ञानोपास्तिविषयस्याब्रह्मत्वमुक्त्वा तद्विपरीतस्य ब्रह्मत्वार्पणाच्च न तत्र विधिरित्याह—ज्ञातेति । अन्यदेव तद्विदितादित्यादिना ज्ञाताज्ञातात्मकं कार्यकारणरूपमारोपितं जगदपाकृत्य तेनैवाप्रपञ्चस्य ज्ञातृभावाभावसाक्षिणस्त्वंपदलक्ष्यस्य तदेव त्वं ब्रह्म विद्धीति यतो ब्रह्मता दर्शिताऽतो निरवकाशो विधिरित्यर्थः ॥८८७॥

ज्ञानज्ञेययोरविधेयत्वे कस्य विधेयत्वं तदाह—वाक्यार्थेति । तुच्छव्यावृत्त्यर्थं विशिनष्टि—कर्तव्य इति । कृतियोग्यत्वं साधयति—कारकेति । तस्य विधेयत्वे प्रतिबन्धकाभावं सूचयति—न संशय इति ॥८८८॥

तर्हि यागादिवद्वाक्यगम्यत्वाद्ब्रह्मण्यपि विधिः स्यादित्याशङ्क्याऽऽह—विपरीत इति । तस्य प्रामाणिकत्वमाह—वाक्यादिति । एवकारार्थं मानान्तरागम्यत्वं स्फोरयितुं चशब्दः । वैपरीत्यं साधयति—नित्य इति । नित्यत्वे हेतुमाह—अकर्मेति । तस्य स्वरूपेण संसृष्टस्वरूपेण वा न विधेयत्वमित्याह—स नेति ॥८८९॥

ज्ञानोपास्त्योरात्मनि च विधिं निरस्य ज्ञानविधिपक्षे दोषान्तरं वक्तुं भूमिकामाह—यथेति । वस्त्वनुसारि

वस्तुमात्रानुरोधित्वात्सम्यग्ज्ञानस्य दुष्करम् । नियोगानुप्रवेशेन वस्तुतत्त्वावबोधनम् ।।९१।।
अभिधेयं न यद्वस्तुप्रत्ययश्च न ढौकते । नियुक्तोऽपि नियोगेन तादृङ्नैवेक्षितुं क्षमः ।।९२।।
अपि मानान्तरप्राप्तं वस्तुबोधं निवर्तयेत् । नियोगार्थानुरोधेन यदि वस्त्ववबोध्यते ।।९३।।
मानान्तरोत्थविज्ञानप्राप्तावेव नियुज्यते । नियोगादेव तद्बुद्धौ नियोगत्वं भवेद्यतः ।।९४।।

असंसृष्टापरोक्षब्रह्मध्यानविधिरितिपक्षः तन्निरासश्च

भाव्यतेऽसन्नपीहार्थस्तस्यान्यत्र प्रसिद्धितः । ब्रह्मणस्त्वप्रसिद्धत्वात्क्रियतेऽसूत्रकः पटः ।।९५।।
क्रियतेऽलौकिकोऽप्यर्थः पदार्थान्वियरूपतः । अवाक्यार्थात्मकं ब्रह्म तेनादो दुष्करं मतम् ।।९६।।
अवाक्यार्थात्मकं ब्रह्म कुतोऽज्ञायीति कथ्यताम् । वाक्यातिरेकि तन्मानं नान्यत्किंचित्त्वयेष्यते ।।९७।।
अथान्यदपि तन्मानं भवताऽभ्युपगम्यते । तावतैव कृतार्थत्वाद्व्यर्थं ध्यानादिचेष्टितम् ।।९८।।

ज्ञानं प्रमेत्यर्थः । ज्ञानस्य सम्यक्त्वे वस्त्वनुसारित्वं हेतुरिति वक्तुं हिशब्दः । ऋते तदनुसाराद्विधेर्ज्ञानापादने तदप्रमात्वं स्यादित्याह—पौरुषेति । पुरुषसंबन्ध्यायासो यत्नस्तन्मात्राद्विधेरुत्पन्नं ज्ञानं रजतादिधीवन्मिथ्याधीरित्यर्थः ।।८९०।।

सम्यग्धियो विधिं विना वस्त्वनुसारित्वे तद्धेतोर्वाक्यस्य नियोगद्वारा वस्तुबोधकत्वं दुष्करत्वाद्दुरुपपादमिति फलितमाह—वस्त्विति ।।८९१।।

इतश्च ब्रह्मधीर्न विधेयेत्याह—अभिधेयमिति । शब्दज्ञानागम्ये ब्रह्मणि नियोगाधीनधीविषयत्वमपि नास्तीत्यर्थः ।।८९२।।

किंच विध्यधीनाद्बोधाद्वस्तुसिद्धिपक्षे मान्तरसमर्पितं विधत्ते विधिरिति पक्षक्षतिरित्याह—अपीति । नियोगानुसारेण वस्तुबोधश्चेद्विधीतरमानप्राप्तो यस्तद्बोधस्तं तेन प्राप्तं विधत्ते लिङादिरिति पक्षं स नियोगो निवर्तयेदित्यक्षरार्थः ।।८९३।।

नियोगाधीनज्ञानाद्वस्तुसिद्धिपक्षे दोषान्तरमाह—मानान्तरेति । विध्यन्यमानजन्यज्ञानेन धात्वर्थप्राप्तावेव तत्र विधिना पुरुषो नियुज्यते यदि नियोगादेव तस्य ब्रह्मात्मलक्षणार्थस्य सिद्धिस्तदा तस्यां सिद्धायां नियोगस्य नियोगभावे ज्ञाते तत्प्रवृत्तेस्ततश्च तद्बुद्धिर्नियोगादेव तद्बुद्धेरिष्टत्वादित्यन्योन्याश्रयोऽतो दृष्टस्य नियोगविषयतेति मतहतिरित्यर्थः । नियोगतो वस्तुसिद्धिमभ्युपेत्य पक्षासिद्धिमुक्त्वा ततो वस्तुसिद्धिरेव नेत्येतदिहोक्तमिति विवेक्तव्यम् ।।८९४।।

प्रमाणज्ञानस्याविधेयत्वेऽपि तद्विषयासंसृष्टापरोक्षब्रह्मगोचरध्यानस्य योषितोऽग्नित्वध्यानवद्विधेयत्वान्नियोगानुप्रवेशो वेदान्तेष्वित्याशङ्क्य ज्ञानस्य वस्तुतन्त्रत्वादित्यादिनोक्तं मन्वानो दोषान्तरमाह—भाव्यतेऽसन्निति । योषित्यसन्नपि वह्निरारोप्य भाव्यते तस्यान्यत्र स्वरूपेण प्रत्यक्षत्वाद्ब्रह्मणस्त्वसंसृष्टापरोक्षस्य त्वन्मते शब्दादसिद्धेर्मानान्तरस्य च तत्रायोगात्तद्ध्यानस्यासूत्रपटवदनुपपत्तेरविधेयतेत्यर्थः ।।८९५।।

उक्तलक्षणब्रह्मणः स्वर्गादिवदलौकिकत्वेऽपि शास्त्रीयत्वात्तद्ध्यानं विधेयमित्याशङ्क्याऽऽह—क्रियत इति । अलौकिकोऽपि नियोगादिः कर्तुं ज्ञातुं च शक्यते तस्य संसृष्टपदार्थरूपत्वाद्ब्रह्म तु न संसृष्टरूपमन्यासंसर्गात्तेनास्य शास्त्रादृष्टत्वेनादो ध्यानं दुरनुष्ठेयत्वादविधेयमित्यर्थः ।।७९६।।

किंचावाक्यार्थात्मकं ब्रह्म तवास्ति न वा ? नास्ति चेत्कुतस्तद्ध्यानमस्ति चेत्तज्ज्ञातमज्ञातं वा? अज्ञातं चेत्तद्ध्यानासिद्धिर्ज्ञाते तत्संभवाज्ज्ञातं चेद्वाक्यादन्यस्माद्वेति पृच्छति—अवाक्यार्थेति । अन्यस्मादिति पक्षमनङ्गीकारेण निरस्यति—वाक्येति । त्वयेत्युपलक्षणं मयेत्यपि द्रष्टव्यम् । तस्मादपि ज्ञातत्वपक्षस्तथेत्याह—अन्यदिति । वाक्यादतिरेकि किंचित्तस्मिन्नवाक्यार्थब्रह्मणि मानं त्वया नेष्यतेऽन्यद्वाक्यमपि न तन्मानमिष्टमिति योजना ।।८९७।।

अनङ्गीकारासिद्धिं चोदयति—अथेति । अपिना वाक्यमनुकृष्यते । दूषयति—तावतेति । वाक्येन मानान्तरेण वा ब्रह्मधीसिद्धेर्विधिना ध्यानमननाद्यनुष्ठानवैयर्थ्यमित्यर्थः ।।८९८।।

निदिध्यासनशब्देन सम्यग्ज्ञानं विवक्षितम् । उक्तानुवचने तस्य विज्ञानेनेतिनिर्णयात् ।।९९।।
ब्रह्म संसर्गरूपं चेद्वाक्यादध्यवसीयते । तावन्मात्रप्रमाणत्वात्तादृगेवास्तु तन्मितेः ।।९००।।
यादृक्तद्गम्यते मानात्तत्तादृङ्नेति गीः कुतः । अमानात्कल्प्यते यादृक्तत्तथैवेति साहसम् ।। १ ।।
घटाकाशो महाकाश एवमाद्युक्तितोऽपि नः । असंसृष्टार्थबोधः स्याद्यथैवं सदसीत्यतः ।। २ ।।
विज्ञाय प्रज्ञामित्यस्य न चार्थोऽयं विवक्षितः । यथा तथाऽतियत्नेन तत्रैवैतत्प्रवक्ष्यते ।। ३ ।।

तत्त्वमादिवाक्यं न मानं सिद्धबोधित्वादित्याक्षेपः समाधानं च

स्वरूपानूक्तिमात्रत्वादप्रमाण्यं मतं यदि । तत्त्वमस्यादिवाक्यानां सोऽरोदीदितिवाक्यवत् ।। ४ ।।
प्रामाण्यहेतुसद्भावान्नाप्रामाण्यमिहेष्यते । फलवन्निश्रितज्ञानजन्म प्रामाण्यकारणम् ।। ५ ।।
तादृग्यत्रास्ति तन्मानं नास्ति यत्र न तन्मितिः । तत्त्वमस्यादिवाक्यार्थश्रवणानन्तरं न किम् ।। ६ ।।

ननु द्रष्टव्य इति साक्षात्कारमनूद्य निदिध्यासितव्य इति तत्साधनं विधीयते तत्कथं ध्यानानुष्ठानवैयर्थ्यं तत्राऽऽह—निदिध्यासनेति । तत्र हेतुमाह—उक्तेति । द्रष्टव्यादिवाक्योक्तदर्शनाद्यनुवादवाक्ये दर्शनेनेत्यादौ विज्ञानेनेति निदिध्यासनस्य स्थानप्रमाणादनुवादात्तस्य सम्यग्ज्ञानत्वनिश्चयाच्चतुर्थे चास्यार्थस्य विस्तरशो वक्ष्यमाणत्वादित्यर्थः ।।८९९।।

किंच ब्रह्म संसृष्टरूपमसंसृष्टरूपं वा वाक्यादवगम्यत इति विकल्प्याऽऽद्यं प्रत्याह—ब्रह्मेति । वाक्यस्यैव ब्रह्मणि मानत्वात्ततः संसृष्टावगमे संसृष्टरूपमेव मानात्तदेष्टव्यमिति कुतोऽसंसृष्टब्रह्मध्यानमित्यर्थः ।।९००।।

वाक्यात्संसृष्टदृष्टावपि न ब्रह्म तथा ध्यानानुरोधादसंसृष्टमेव तद्भविष्यतीत्याशङ्क्याऽऽह—यादृगिति । संसृष्टं परोक्षं च ब्रह्म वाक्यादधिगतं तथाऽपि तत्तथा नेत्ययुक्तं प्रमाणविरोधादसंसृष्टमपरोक्षं च ब्रह्म ध्यानात्कल्प्यते तत्तथैवेति चायुक्तमप्रमाणोपनीतस्य वस्तुत्वायोगादित्यर्थः ।।९०१।।

द्वितीयं दृष्टान्तेनाङ्गीकरोति—घटेति । अपिर्दार्ष्टान्तिके योज्यः । अतो नावकाशो ध्यानविधेरिति शेषः ।।९०२।।

विज्ञाय प्रज्ञामित्यत्रासंसृष्टात्मध्यानविधानात्कथं तदनवकाशमित्याशङ्क्याऽऽह–विज्ञायेति । अयमिति ध्यानविधिरुक्तः । तत्रैव षष्ठे तद्व्याख्यानदशायामिति यावत् । विध्यसंभवेऽपेक्षितन्यायजातमेतदिति परामृश्यते ।।९०३।।

वेदान्तेषु विधिनिरासेनाऽऽत्मस्वरूपमात्रावसायित्वमुक्तम् । संप्रति न ते स्वार्थे मानं सिद्धार्थवाक्यत्वात्सोऽरोदीदित्यादिवदित्यनुमानेन शङ्कते—स्वरूपेति ।।९०४।।

फलवन्निश्चितज्ञानाजनकत्वमुपाधिरिति मन्वानः समाधत्ते—प्रामाण्येति । इहेति धर्मीकृतवाक्योक्तिः । किं तत्प्रामाण्यकारणं तदाह—फलवदिति । सोऽरोदीदित्यादेः स्वार्थे वैफल्येनाप्रामाण्यमिति वक्तुं फलवदित्युक्तम् । योषा वाव गौतमाग्निरित्यस्य योषित्यग्नित्वानिश्चायकत्वात्तत्राप्रामाण्यमिति सूचयति—निश्चितेति । हुंफडादिशब्दानां ज्ञानानुत्पादकत्वान्न स्वार्थे मानतेत्याह—ज्ञानेति ।।९०५।।

प्रामाण्यहेतुमुक्त्वा व्यवस्थामाह—तादृगिति । सामान्यन्यायं प्रकृते योजयन्पृच्छति—तत्त्वमिति ।

१. स्थानप्रमाणादिति—श्रुतिलिङ्गवाक्यप्रकरणानन्तरं क्रमाख्यं प्रमाणं मीमांसका मन्यन्ते । तथाहि—दर्शपूर्णमासयोः उपांशुयाजक्रमे "दब्धिर्नामासी"ति मन्त्रः श्रूयते । स किमुपांशुयाजाङ्गमुत नेति सन्देहे उच्यते स्थानसामान्यात् कर्मणां मन्त्राणां च क्रमेण समाम्नातानां यस्य कर्मणः क्रमे यो मन्त्रः समाम्नातः तस्मिन्नवगते स्थानसामान्यात् तत्कर्म उपतिष्ठते । कर्मोपलब्धौ मन्त्रः । एवं समानस्थानाम्नानात् तन्नूनं सम्बन्धार्थमिति निश्चयात् दब्धिमन्त्रस्य उपांशुयाजस्थानत्वात् तदङ्गत्वनिर्णयः । एवं "द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्युक्त्वा दर्शनेन श्रवणेन मननेन विज्ञानेनेदं सर्वं विदितमित्यनुवादे निदिध्यासनस्थाने विज्ञानशब्देन तदनुवादात् निदिध्यासनं न ध्यानं अपि तु ज्ञानमित्यर्थः ।

फलवन्निश्चितज्ञानजन्म साक्षात्समीक्ष्यते । तस्मिन्सत्यप्रमाणत्वं किमिवेहोच्यते त्वया ॥ ७ ॥
सोऽरोदीदिति वाक्येभ्यो निश्चितं फलवच्च किम् । जायते यदि विज्ञानं प्रामाण्यं केन वार्यते ॥ ८ ॥
अथ नैतदमानत्वं काममस्तु न वार्यते । फलवन्निश्चितज्ञानजनकस्य किमागतम् ॥ ९ ॥
अथैतस्याप्रमाणत्वं मानत्वं क्वेति भण्यताम् । यत्राप्यभीष्टं मानत्वं तत्राप्येत्यप्रमाणता ॥१०॥
नरप्रवृत्तिसद्भावान्ननु तस्य प्रमाणता । ज्योतिष्टोमादिवाक्यस्य ब्रह्मास्मीत्यत्र तन्न तु ॥११॥
प्रामाण्यहेतुसद्भावान्नैतत्सध्वभिधीयते । हेतुश्चाभिहितोऽस्माभिः प्रवृत्तिर्न तु कारणम् ॥१२॥
अलंकारोऽयमस्माकं यदशेषप्रवर्तन— । बीजप्रध्वंसकृज्ज्ञानफलवज्जन्मकारिता ॥१३॥

उक्तानुवादेन विध्यभावे युक्त्यन्तरोक्तिः

यथोक्तेन विचारेण विधित्रयनिषेधनम् । कृतं तन्नित्यसंप्राप्तिहेतूक्त्याऽनवशेषतः ॥१४॥
तमेवेति च वाक्यस्य विध्यसंभवमब्रुवम् । स्वरसेनैव संप्राप्तेस्तथाऽऽत्मोपासनस्य च ॥१५॥

किं समीक्ष्यते किंवा नेति प्रश्नार्थः । ईदृग्ज्ञानजन्म तत्त्वमादिषु नेक्ष्यते चेद्विद्वदनुभवफलश्रुतिविरोधः स्यादिति मत्वा पक्षान्तरं प्रत्याह—तस्मिन्निति ॥९०६–९०७॥

किमिवेत्युदाहरणं पृच्छ्यते तच्च सोऽरोदीदित्यादि दर्शितमित्याशङ्क्याऽऽह—सोऽरोदीदिति । किं जायते ज्ञानं किंवा नेति विकल्पार्थः । तत्राऽऽद्यमनूद्य दूषयति—जायत इति । तथाच दृष्टान्तस्य साध्यविकलतेति भावः ॥९०८॥

द्वितीयमनुभाष्य दूषयति—अथेति । उक्तोपाधिसत्त्वान्नानुमेति भावः । साधनव्याप्तिमाशङ्क्याऽऽह—फलवदिति । विमतं स्वार्थे मानं फलवन्निश्चितज्ञानजनकत्वाद्दर्शादिवाक्यवदिति भावः ॥९०९॥

विपक्षमनुभाष्यातिप्रसङ्गमाह—अथेति । मानत्वं न क्वापीत्युक्तं प्रकटयति—यत्रापीति । तत्त्वमादिवाक्यस्योक्तज्ञानजनकस्याप्यमानत्वे विधिवाक्यमप्यमानं स्यादित्यर्थः ॥९१०॥

न तस्योक्तहेतोर्मानत्वं किन्तु प्रवर्तकधीजनकत्वादित्युपाधिं शङ्कते—नरेति । वाक्यत्वे सति प्रमाणत्वे प्रवर्तकज्ञानजनकत्वं प्रयोजकमित्यर्थः । साधनव्याप्तिं धुनीते—ब्रह्मेति ॥९११॥

विमतममानं वाक्यत्वे सति प्रवर्तकज्ञानाजनकत्वाज्जरद्गवादिवाक्यवदित्यभीष्टं व्यतिरेकं निराचष्टे—प्रामाण्येति । विमतं मानं तत्कारणवत्त्वात्संमतवदित्यत्रासिद्धिमाशङ्क्याऽऽह—हेतुश्चेति । फलवन्निश्चितज्ञानजनकत्वं प्रामाण्यप्रयोजकं दर्शितमिति यावत् । चकारोऽवधारणे । प्रवर्तकधीजनकत्वस्य प्रामाण्ये प्रयोजकत्वं प्रत्यादिशति—प्रवृत्तिरिति । निषेधवाक्येष्वप्रामाण्यप्रसङ्गात् । न च निवर्तकधीजनकत्वमपि प्रयोजकमेकैकत्रोभयकारणत्वाभावेनाप्रामाण्यान्न च प्रयोजकप्रतिनियमस्तदनुगमाभावे प्रयोज्याननुगमादिति भावः ॥९१२॥

यदुक्तं ब्रह्मास्मीत्यत्र न प्रवर्तकधीजनकतेति तत्राऽऽह—अलंकारोऽयमिति । वेदान्तानामिति शेषः । ये वेदान्तानामुपयन्ति मानत्वमेष तेषामलंकारो यदशेषस्य प्रवर्तनस्य कारणीभूतमिथ्याज्ञानरागादिध्वंसित्वादेव ज्ञानस्य फलवत्त्वं तथाविधज्ञानजनकत्वमन्यथा विधिशेषतया वस्तुनि प्रामाण्यासिद्धिरित्यर्थः ॥९१३॥

तेषां यथोक्तधीजनकत्वाद्विध्युक्तिवन्मानतेत्युक्त्वा नापूर्वविधिरित्येष कदाचिदपीत्यादिविधिविचारेणोक्तमनुवदति—यथोक्तेनेति । तस्य ज्ञानस्य नियमेन प्राप्तिहेतुरूपवचनेनापूर्वादिविधित्रयस्य निषेधनमनवशेषतो विधिविचारेण कृतमिति संबन्धः ॥९१४॥

विज्ञाय प्रज्ञामित्यस्य न चेत्यत्रोक्तमनुवदति—तमिति । "तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत"त्यस्य ज्ञानान्तरविषयो विधिरर्थत्वेन शङ्क्यते तस्यासंभवं तद्वाक्यव्याख्यावसरे वक्ष्यामीत्यवोचमित्यर्थः । ब्रह्मविषयशाब्दज्ञानस्य तदावृत्तिरूपोपास्तेर्वा विधिरर्थोऽस्येत्याशङ्क्याऽऽह—स्वरसेनेति । विधिं विनैवाऽऽत्मविषयशाब्दज्ञानस्य तदुपास्तेश्च प्राप्तेर्ज्ञानान्तरस्येव विध्यसंभवं "नाऽऽत्मयाथात्म्यसंबन्धी"त्यादिना "नैवं साक्षाद्यथावस्तुबोधस्ये"त्यादिना चाब्रुवमतो नोपास्त्यादिविधिरपि विज्ञायेत्यादेरर्थ इत्यर्थः ॥९१५॥

आत्मानमनुपास्येह नानात्मानं जनोऽपि हि । उपास्ते तेन तत्प्राप्तिर्नित्यैवेत्यभिधीयते ॥१६॥
अहंप्रत्ययगम्यत्वे ह्यभ्युपेतेऽपि चाऽऽत्मनः । अनात्मप्रत्ययोत्पत्तिरहंप्रत्ययपूर्विका ॥१७॥
आत्माऽऽत्मानं सदोपास्ते तत्प्रत्ययसमन्वयात् । निःशेषानात्मबुद्धीनां नित्यप्राप्तमुपासनम् ॥१८॥
विज्ञानकारणत्वेऽपि ह्यभ्युपेतेऽन्तरात्मनः । नित्योपासनसंप्राप्तिस्तज्ज्ञानानां तदन्वयात् ॥१९॥
अभ्युपेतेऽपि च विधौ न प्रवृत्तिरिहेष्यते । सर्वमात्मेति संदृष्टे न प्रवृत्तिरहेतुतः ॥२०॥

विज्ञाय प्रज्ञां कुर्वीत इत्यत्र नियमविधिरिति भाष्यार्थः

नियमार्थो विधिरयमिति भाष्यकृतो वचः । अभ्युपेत्यापि वक्ष्यामीत्येवमेतत्समञ्जसम् ॥२१॥
न कश्चिदपि संभाव्यो यथोक्तन्यायगौरवात् । विधिर्यतोऽभ्युपगमान्नियमोक्तिरियं ततः ॥२२॥
दर्शनं क्रियमाणं हि कर्माऽऽश्रित्य प्रसिध्यति । आत्माऽऽनात्मा च तत्कर्म तदन्यस्याप्रसिद्धितः ॥२३॥
यथा तण्डुलनिष्पत्तिरवघाताद्यपेक्षया । सिध्येद्दर्शननिष्पत्तिस्तद्वदात्माद्यपेक्षया ॥२४॥
अवघातस्य पाक्षिक्यां प्राप्तौ यद्वन्नियम्यते । अवहन्यादिति तथा ह्यात्मोपास्तिर्नियम्यते ॥२५॥

अधिकविवक्षया वृत्तं वार्तिकाभ्यामनूद्य विवक्षितमधिकमाह—आत्मानमिति । लोकश्च तदनुसारिवादिवर्गश्चाहमित्यात्मानमननुसंधायानात्मानं न व्यवहारभूमावनुसंधत्ते । हिशब्दो यस्मादर्थस्तत्तस्मादर्थः । तस्मादात्मोपास्तिप्राप्तेर्नित्यत्वान्न तत्र विधिरित्यर्थः ॥९१६॥

किंचाऽऽत्मोपास्तेर्विधेयत्वमिच्छता किं तस्य ज्ञानकर्मत्वमिष्टं तदाश्रयत्वं वेति विकल्प्याऽऽद्ये विध्यसिद्धिमाह—अहमिति । तत्र लौकिकपरीक्षकप्रसिद्धचनुरोधार्थो हिशब्दः । आत्मनोऽहंधीग्राह्यत्वे कर्मकर्तृविरोधं समुच्चेतुमपि चेत्युक्तम् । तथा चाऽऽत्मोपास्तेर्नित्यप्राप्तेर्भाट्टादिमते न विधिरिति शेषः ॥९१७॥

अनात्मधियोऽहंधीपूर्वत्वेऽपि कथमात्मोपास्तेर्नित्यप्राप्तिस्तत्राऽऽह—आत्मेति । सर्वानात्मधियामात्मधीसंबन्धादात्मानमात्मा सदाऽनुसंधत्ते तेन सदा प्राप्तमात्मोपासनमिति योजना ॥९१८॥

कल्पान्तरं दूषयति—विज्ञानेति । विषयज्ञानाश्रयत्वेनाऽऽत्मनो दर्शनं गुरुमतानुसारिसंमतमिति वक्तुं हिशब्दः । अनात्मज्ञानानामात्मज्ञानपूर्वकत्वादित्याह—तज्ज्ञानानामिति । यद्यप्यनात्मज्ञानान्यात्मानमाश्रयत्वेन प्रकाशयन्ति तथाऽपि तत्प्रकाशपूर्वकत्वं तेषामेष्टव्यम् । अहमिति ज्ञानं सविषयं निर्विषयं वा? आद्ये तद्बलादात्मनि दृष्टे पश्चादनात्मज्ञानानीति न तैस्तत्प्रकाशः, तेषामात्मप्रकाशत्वेऽनात्मज्ञानत्वायोगात् द्वितीये जानातेः सकर्मकत्वनियमो न स्यादतो न गुरुमतेऽप्यात्मोपास्तिर्विधेयेति भावः ॥९१९॥

वाक्यार्थज्ञानविधिपक्षे दोषान्तरमाह—अभ्युपेतेऽपीति । इहेति वाक्यार्थज्ञानोक्तिः । तत्र विधाविष्टेऽपि न तत्फलं प्रवृत्तिः सिध्यतीत्यर्थः । तत्र हेतुः—सर्वमिति । ज्ञानादज्ञानध्वस्तौ तज्जरागादिध्वस्तेः सर्वमात्मैवेति ज्ञाने सति न प्रवृत्तिरित्यर्थः ॥९२०॥

आत्मोपास्तौ वाक्यार्थज्ञाने च विध्यभावे विज्ञायेत्यत्र कथं भाष्यकृतो नियमविध्यङ्गीकारस्तत्राऽऽह—नियमेति । विधिमभ्युपेत्यापि वेदान्तानां वस्तुपरत्वं वक्ष्यामीत्येवं विवक्षित्वा पक्षे प्राप्तस्य नियमविध्यर्थतेत्येतद्भाष्यं युक्तमतोऽभ्युपगमवादो नियमविध्युक्तिरित्यर्थः ॥९२१॥

साक्षादेव भाष्यकृता विवक्षितो नियमविधिरिति किं नेष्यते तत्राऽऽह—न कश्चिदिति । आत्मधियो नित्यप्राप्तत्वप्रापकन्यायस्य बलीयस्त्वादित्याह—यथोक्तेति ॥९२२॥

भाष्योपेतनियमविधिप्रकारं वक्तुं भूमिकामाह—दर्शनमिति । निरालम्बनज्ञानायोगादिति हिशब्दार्थः । किं तत्कर्म तद्विभजते—आत्मेति । कर्मद्वैविध्यनियमे हेतुमाह—तदन्यस्येति ॥९२३॥

उक्तमर्थं दृष्टान्तेनाऽऽह—यथेति ॥९२४॥

भूमिकामारचय्य प्रकृतनियमविधिप्रकारं दृष्टान्तेनाऽऽह—अवघातस्येति । नखविदलनादिनाऽपि तण्डुलनिष्पादनसंभवादवघातस्य पाक्षिकी प्राप्तिस्तत्र चावहन्यादिति नियमः । ये यत्र क्रियमाणाः प्रयोजनवन्तस्ते तत्र

**अनात्मोपासनप्राप्तौ ध्यायेदात्मानमित्यतः । अनात्मोपास्तेः सामर्थ्यान्निवृत्तिर्न तु शब्दतः ॥२६॥**

आत्मोपास्तेः नित्यप्राप्तिः अतो न नियमः

**यद्यात्मोपासनाऽप्राप्तिः क्वचित्संभाव्यतेऽञ्जसा । अवघातादिवत्कामं नियमोऽस्तु तथा सति ॥२७॥**

**प्रत्यगर्थमनालिङ्ग्य न पराग्वर्ति किंचन । विज्ञानं जायते यस्मादात्मोपास्तिः सदा ततः ॥२८॥**

**प्रागप्यनात्मसंबन्धाज्जन्मनैवाऽऽत्मकर्मकम् । विज्ञानं निखिलं यस्मान्नित्यप्राप्तिरतो भवेत् ॥२९॥**

**उपास्यार्थातिरेकेण न चोपासनकृद्धिरुक् । संभाव्यो नियमविधिरतो नाऽऽत्मन्यभेदतः ॥३०॥**

आत्मोपास्तौ न कोऽपि विधिरिति भाष्यभावः

**उक्तं च न्यायमापेक्ष्य नियमोऽत्यन्तदुर्लभः । विधेर्दौर्बल्यसिद्ध्यर्थमतो भाष्यकृदुक्तवान् ॥३१॥**

**मुक्तेष्वादिवदित्यादि यच्च किंचित्समीरितम् । तस्याप्यसंभवः स्पष्ट उपरिष्टात्प्रवक्ष्यते ॥३२॥**

कर्तव्याः अवघातादयश्चाऽऽज्यादावनुपकारकत्वान्न तत्र करणीयाः अतस्तेषामवघातादीनां फलद्वारा व्रीह्यादिष्वेव संबन्धो नियतः । उक्तं हि—तेषामर्थेन संबन्ध इति[1] । तथेहापि व्यवस्थेत्यर्थः । भूयःसु प्रदेशेषु नियमविधेरभ्युपगतत्वं द्योतयितुं हिशब्दः ॥९२५॥

नियमविधिस्वरूपमभिनयति—अनात्मेति । तत्फलमाह—अत इति । अस्मान्नियमसामर्थ्यादनात्मोपास्तेर्निवृत्तिरिति यावत् । अथाऽऽत्मोपास्तिविधिरनात्मोपास्तिनिवृत्तिश्चेत्यर्थद्वयमेकस्यैव शब्दस्य कथं युक्तं तत्राऽऽह—न त्विति । आत्मोपास्तिः श्रुत्या कार्यतयोच्यतेऽर्थाच्चानात्मोपास्तिर्व्यावर्तते । न च सा शाब्दी "यश्चार्थादर्थो न स चोदनार्थ" इति न्यायादित्यर्थः । दर्शितन्यायपरामर्शार्थस्तुशब्दः ॥९२६॥

नियमविधेरुपेत्यवादत्वं द्योतयितुमात्मोपास्तेर्नित्यप्राप्तिदर्शनेनाप्राप्तिं दूषयति—यदीति । क्वचिद्देशादाविति यावत् । अञ्जसा प्रमाणनिबन्धनेनेत्यर्थः ॥९२७॥

तथा सति युक्तो नियमविधिस्तत्प्रापकाप्राप्तांशसंभवादात्मोपास्तेरस्त्येव क्वचिदप्राप्तिर्न हि सा सदाऽनुवर्तते तत्राऽऽह—प्रत्यगिति ॥९२८॥

तस्या नित्यप्राप्तत्वे हेत्वन्तरमाह—प्रागपीति । अहंधीपूर्वैव सर्वाऽनात्मधीरित्यात्मधियो नित्यप्राप्ततेत्यर्थः । प्रागुक्तमपीदं प्रसङ्गादिह स्मारितमिति द्रष्टव्यम् ॥९२९॥

उपास्योपासकभेदाभावाच्च नाऽऽत्मोपास्तौ नियमविधिरित्याह—उपास्येति । आत्मनि ज्ञाते भेदमात्रस्यासंभवादित्युपास्यादिभेदाभावे हेतुमाह—आत्मनीति । एतेन विध्यन्तरायोगोऽपि न्यायसाम्याद्द्रष्टव्यः ॥९३०॥

न केवलमुपास्योपासकभेदाभावान्नियमविध्यसिद्धिः किंतु "अपि प्रत्यक्तमो नित्यमि"त्याद्युक्तन्यायाच्चेत्याह—उक्तं चेति । एवं नियमविध्यसंभवाद्भाष्यकृतस्तदुक्तिरुपेत्यवादमात्रमित्युपसंहरति—विधेरिति । भाष्यकारो हि नियमविधिमपूर्वविधेर्दौर्बल्यसिद्ध्यर्थमुक्तवान्नापूर्वविधिरित्युपक्रमान्नियमविधेरप्युक्तन्यायेनायोगादित्यर्थः ॥९३१॥

ननु यथा मुक्तेषुः पाषाणादिप्रतिबन्धवैधुर्ये यावद्वेगक्षयं कार्यमारभते तथा प्रवृत्तफलं कर्मावश्यं रागाद्याक्षिपति तस्य ज्ञानेनाविरोधादन्यथा सद्योमुक्तौ जीवन्मुक्तिशास्त्रविरोधादतो विदुषोऽप्यात्मविस्मरणसंभवान्नियमविधिरिति भाष्यकृता नियमविधिः समर्थितः स कथमुपेत्यवादः स्यात्तत्राऽऽह—मुक्तेति । यथा विदुषो रागादेरसंभवस्तथोत्तरत्र ब्रह्मकण्डिकाया"मागमाद्वेद चेद्ब्रह्म ब्रह्मैव भवतीति ही"त्यादिना वक्ष्यते । न च बाधितानुवृत्तिमात्रं विधिप्रयोजकं तस्य कर्तृत्वाद्यभिनिवेशपूर्वकत्वादतो नियमविध्युक्तिरङ्गीकारवादमात्रमित्याह—तस्येति ॥९३२॥

---

१. तेषामर्थेन सम्बन्धः—इति जैमिनिसूत्रं दर्शपूर्णमासप्रकरणे निर्वपणप्रोक्षणावहननादयः, औषधधर्माः तथा उत्पवनविलापनग्रहणासादनादयः आज्यधर्माः, तथा शाखाहरणं गवां प्रस्थापनं इत्यादयः सान्नाय्यधर्माः; ते च धर्माः सर्वे सर्वत्र औषधे आज्ये सान्नाय्ये च न कर्तव्याः अपि तु ये यत्र क्रियमाणा अर्थवन्तः ते तत्रैव कर्तव्याः नान्यत्रेति सिद्धान्तसूत्रार्थः ।

आत्मेत्येवोपासीतेत्यत्र अनात्मोपास्तिवर्णनमिति पूर्वपक्षः

अनात्मोपासनमिदमितिशब्दप्रयोगतः । प्रियमित्यादौ दृष्टत्वादप्रियोपासनं गुणात् ॥३३॥
आत्मैकगुणवत्त्वेन न त्वत्राऽऽत्मैव चिन्त्यते । आत्मोपास्यत्ववाक्याच्च वैलक्षण्यं श्रुतेर्भवेत् ॥३४॥
आत्मानमितिकर्मोक्तेर्वैलक्षण्यमतिस्फुटम् । आत्मोपास्तिनिषेधाच्च[1] न पश्यन्तीति वाक्यतः ॥३५॥

अत्र सिद्धान्तः

नाऽऽत्मोपास्यत्वावगमाद्वाक्यशेषे भवेदिदम् । पदनं यान्तरतरं प्रियमित्यादिशेषतः ॥३६॥
आत्मानं प्रियमित्येतद्वाक्यशेषेऽवगम्यते । तस्मादात्मैवोपास्यः स्यान्नानात्मोपास्य इष्यते ॥३७॥
अकृत्स्नत्वान्निषेधश्च न त्वात्मोपासनस्य सः । शब्दज्ञानातिवर्तित्वख्यापनायेतिशब्दनम् ॥३८॥

शब्दस्य संसृष्टपरोक्षबोधित्वानियमादसंसृष्टापरोक्षधियः शाब्दत्वोपपत्तेः शाब्दज्ञानादेव पुमर्थसिद्धेस्तस्य तदावृत्तेर्वा तृतीयज्ञानस्य वा विधेयत्वाभावाद्वेदान्ताः शुद्धे सिद्धे मानमित्युक्तम् । इदानीमात्मेत्येवोपासीतेत्यत्रेति-शब्दस्योक्तोऽर्थो विवक्षितो भाष्यकृताऽपीति वक्तुं चोदयति—अनात्मेति । "प्रियमित्येनदुपासित"त्यादौ प्रियादिगुणादप्रियादिकस्य प्राणादेरुपास्तिरित्यस्यार्थस्य दृष्टत्वादिहाप्यात्मगुणस्यानात्मनोऽव्याकृतत्वेन प्रकृतस्य प्रधानस्योपास्तिर्विवक्षिताऽऽत्मशब्दादूर्ध्वमितिशब्दप्रयोगादात्मशब्दार्थतयोपास्यत्वेनाविवक्षितत्वादित्यर्थः । आदिशब्देन प्रज्ञेत्येनदुपासीत सत्यमित्येनदुपासीतानन्तमित्येनदुपासीताऽऽनन्दमित्येनदुपासीत स्थितिरित्येनदुपासीतेत्येतानि वाक्यानि गृह्यन्ते । तेषु हि वाक्चक्षुःश्रोत्रमनोहृदयानामप्रज्ञासत्याद्यात्मनां तत्तत्प्रज्ञादिगुणविशिष्टानामुपासनमिष्टं तथेहापि भविष्यति ॥९३३॥

आत्मगुणकमात्मवस्त्वेवोपास्यं किं न स्यादित्यत आह—आत्मेति । प्रकृतवाक्यं सप्तम्या परामृश्यते । एकत्र गुणगुणिभावासंभवादात्मगुणकमनात्मवस्त्वेवोपास्यमित्यर्थः । अनात्मोपासनमेवात्र विधित्सितमित्यत्र हेत्वन्तरमाह—आत्मेति । भवेदनात्मोपासनमेवात्र विवक्षितमिति शेषः ॥९३४॥

वैलक्षण्यं स्फुटयति—आत्मानमिति । द्वितीयाश्रवणाद्वाक्यशेषे कर्मत्वेनाऽऽत्मोच्यते । इह तु द्वितीयाश्रुत्यभावादात्मशब्दस्य चेतिपरत्वादनयोः स्पष्टमेव वैलक्षण्यम् । तथा चानात्मैवाऽऽत्मगुणकः सन्नुपास्य इत्यर्थः । इतश्चानात्मोपास्तिरेवेयमित्याह—आत्मोपास्तीति । तं न पश्यन्तीतिवाक्यादात्मोपास्तेर्निषेधात्पूर्वापराविरोधेनानात्मोपास्तिरेवात्राभिप्रेतेत्यर्थः ॥९३५॥

उपक्रमोपसंहारालोचनयाऽनात्मोपास्तिरत्र विवक्षितेति पूर्वपक्षं प्रत्याह—नाऽऽत्मेति । नेदमनात्मोपासनं भवेदात्मोपास्यत्वस्य वाक्यशेषेऽवगमादिति संबन्धः । कथं वाक्यशेषादात्मोपास्यत्वसिद्धिस्तत्राऽऽह—पदनीयेति । "तदेतत्पदनीयमस्य सर्वस्यान्तरतरं यदयमात्मा" । "आत्मानमेव प्रियमुपासीत" । "आत्मानमेवावेदि"ति च वाक्यशेषादात्मोपास्यत्वसिद्धिरित्यर्थः ॥९३६॥

"स य आत्मानं प्रियमुपास्ते न हास्ये"ति फलवाक्ये चाऽऽत्मोपास्यत्वं गम्यत इत्याह—आत्मानमिति । वाक्यशेषादात्मोपास्यत्वावगतौ फलितमाह—तस्मादिति । आर्थिकीमन्यनिवृत्तिमाश्रित्योक्तं नानात्मेति ॥९३७॥

यस्त्वात्मोपास्तिनिषेधान्न तस्योपास्यतेति तत्राऽऽह—अकृत्स्नत्वादिति । प्राणनादिविशिष्टस्य दृष्टिनिषेधस्तस्य परिच्छिन्नत्वेन नाशित्वादात्मोपास्तेर्नासौ वाक्यशेषविरोधादित्यर्थः । आत्मोपास्तिनिषेधे प्रस्तुतवाक्यविरोधसमुच्चयार्थश्चकारः । यैस्त्वितिशब्दप्रयोगादात्मशब्दार्थस्योपास्यगुणत्वान्नास्य वाक्यस्याऽऽत्मोपास्तिपरतेति तत्राऽऽह—शब्देति ॥९३८॥

१. आत्मोपास्तिनिषेधात्—"नेदं यदिदमुपासते" इत्यनेनेत्यर्थः ।

२. आत्मेत्युपासीत । कं ? अनात्मानमित्यध्याहार्यं यथा प्रियमित्युपासीतेति विधौ वस्तुतः अप्रियं प्राणं प्रियमित्युपासीत इत्यर्थः । षष्ठे षडाचार्यब्राह्मणे द्वितीयखण्डे स्थितमिदम् ।

३. प्राणनादिविशिष्टस्योपास्तिनिषेधः न तु पूर्णस्य । इतिशब्दश्चात्मनः शब्दज्ञानागोचरत्वसूचनार्थः ।

यतो वाचो निवर्तन्ते नेति नेत्यादिकं तथा । एवं सत्यर्थवत्सर्वमन्यथा तदनर्थकम् ॥३९॥

अनात्मार्थापनुत्त्यर्थमात्मानमिति शब्द्यते । नातो वाक्यान्तरं तत्स्याद्यथोक्तार्थानुवादतः ॥४०॥

अत्र ह्येते इति हेतुविवरणम्

आत्मेत्येवोपासीतेति हेतुरत्रोपदिश्यते । अकार्त्स्न्यदोषहानाय प्रतीचः कृत्स्नतोच्यते ॥४१॥

आत्मनोऽनवशेषेण संबन्धोऽनात्मवस्तुना । रज्जुसर्पादिवन्नातः प्रतीचः शिष्यते पराङ् ॥४२॥

सर्वमज्ञातमेव स्याद्यस्मिन्नज्ञात आत्मनि । ज्ञाते ज्ञातं च कृत्स्नोऽसौ तावत्त्वात्सर्ववस्तुनः ॥४३॥

युक्त्या निरूप्यमाणस्य ह्यात्मा तत्त्वमनात्मनः । प्रत्याख्यातः स चेत्तेन क्वानात्मा[1] सिध्यतामयम् ॥४४॥

अनात्मतत्त्वमन्वेति ह्यात्माऽसङ्गोऽगुणोऽद्वयः । स्वतः सिद्धौ न चेत्सिध्येत्किमन्यद्भेषजं[2] ततः ॥४५॥

ज्ञातायां स्रजि तन्मोहकल्पितानां यथैकता । प्रतीच्येवं तदज्ञानक्लृप्तानामेकतेष्यते ॥४६॥

तस्योक्तार्थत्वे वाक्यान्तरानुगुण्यमाह—यत इति। यदि पुनरितिशब्दो न यथोक्तार्थस्तदा तस्य वैयर्थ्यादात्मानमुपासीतेत्येव स्यात्ततश्चाऽऽत्मनः शब्दधीगम्यत्वसंभवादुक्तवाक्यवैयर्थ्यमित्याह—अन्यथेति ॥९३९॥

यच्चाऽऽत्मोपास्यत्ववाक्याच्चेत्यादि तद्दूषयति—अनात्मेति। आत्मानमेवेत्यादिवाक्यस्यानात्मोपास्तिनिवृत्त्यर्थतया पूर्ववाक्येनैकवाक्यत्वमेवेत्यर्थः। अस्माद्वाक्यात्तस्यावाक्यान्तरत्वे हेतुमाह—यथोक्तेति। एतद्वाक्यार्थानुवादित्वादित्यर्थः ॥९४०॥

आत्मेत्येवोपासीतेत्यत्र शब्दप्रत्ययागम्यमात्मानमनुसंदध्यादित्येषोऽर्थः समर्थितस्तत्र हेत्वपेक्षायामत्र हीत्यादिना हेतुरुच्यत इति हेतुवाक्यमवतार्य व्याख्यातमपि प्रपञ्चयितुं पुनरवतारयति—आत्मेत्येवेति। तद्व्याकरोति—अकार्त्स्न्येति। परिच्छिन्नत्वं हि दोषो यदल्पं तन्मर्त्यमित्यल्पस्य मर्त्यत्वश्रवणात्तन्निरासार्थमात्मनोऽऽद्वयत्वमुच्यते हेतुवाक्येनेत्यर्थः ॥९४१॥

कथमद्वयत्वं तत्रोपपत्तिमाह—आत्मन इति। रज्जुसर्पयोरिवाऽऽत्मानात्मनोस्तादात्म्याद्रज्ज्वतिरिक्तसर्पासत्त्ववत्प्रत्यगितरानात्माभावात्तदद्वयत्वं रज्जुर्हि सर्पतादात्म्यमनुभवन्ती न तस्य पृथगवशेषं मृष्यते तथैवाऽऽत्मनोऽनात्मना संबन्धो निरवशेषेणेष्यते। तथा चास्मात्प्रतीचः सकाशादवशिष्टस्य पराचोऽभावात्तदद्वयतेत्यर्थः ॥९४२॥

किंच "येनाश्रुतमि"त्यादिवाक्यप्रामाण्यादात्मनोऽद्वयत्वसिद्धिरित्याह—सर्वमिति। तत्र युक्तिमाह—तावत्त्वादिति। आत्मनः सर्वोपादानत्वात्तावन्मात्रत्वं सर्वस्येत्यात्मज्ञानेन सर्वज्ञानसिद्धिरित्यर्थः ॥९४३॥

किं चाऽऽद्यन्तवत्त्वदृश्यत्वादियुक्त्या विविच्यमानस्यानात्मनः सर्पादि रज्जुवदात्मा सर्वस्य तत्त्वं सिद्धमतो युक्तं तस्याद्वयत्वमित्याह—युक्त्येति। आरोप्यस्याधिष्ठानातिरिक्तस्वरूपाभावो हिशब्देन हेतूकृतः। विपक्षे दोषमाह—प्रत्याख्यात इति। अनात्मनश्चेन्नाऽऽत्मा तत्त्वं तदा निःस्वरूपः सन्नासौ क्वचित्सिध्येदित्यर्थः ॥९४४॥

नन्वात्मा चेदनात्मनस्तत्त्वं तदाऽनात्मसंबन्धात्तस्यासङ्गत्वादिहानिरत आह—अनात्मेति। आरोपितकृतगुणदोषाभ्यामधिष्ठानस्य वस्तुतो न स्पर्शोऽस्तीति प्रसिद्धमिति भावः। आत्मनोऽसङ्गत्वादनात्मसाधकत्वायोगात्तद्वदनात्माऽपि स्वतः सेत्स्यतीत्याशङ्क्याऽऽह—स्वत इति। चेच्छब्दोऽवधारणे। अनात्मनः स्वतःसिद्धत्वे तस्याऽऽत्ममात्रत्वप्रसङ्गादनात्मा नाम न सिध्येदेवेत्यर्थः। आत्मनोऽसङ्गत्वादनात्मनश्च जाड्यादन्यदेव तत्साधकमित्याशङ्क्याऽऽह—किमन्यदिति। आत्मानात्मभ्यामर्थान्तराभावान्न साधकान्तरमित्यर्थः ॥९४५॥

साधकान्तराभावादनुभवात्मनि प्रतीच्यध्यस्तं समस्तं स्फुरतु तथाऽपि प्रस्तुते किमायातमित्याशङ्क्याऽऽत्मज्ञानात्तन्मात्रता सर्वस्य फलतीति सदृष्टान्तमाह—ज्ञातायामिति। यथा स्रजि स्रगेषेत्यवगतायां

१. क्वानात्मासिद्ध्यताम्—अनात्मनः स्वप्रकाशत्वाभावात् न स्वतःसिद्धिः परतः सिद्धौ च मिथ्यात्वम्।

२. किमन्यत्—आत्मानात्मभिन्नं नास्त्येव येन तादृशं साधकं भवेत्। भेषजं = साधकम्।

### अत्रहीत्यस्य भर्तृप्रपञ्चविवरणम्

आत्मशब्दाभिधेयेऽर्थे प्रत्यक्सामान्यरूपके । अन्तर्भवन्ति निखिला विशेषा इति केचन ।।४७।।
सामान्येन समस्तं तद्विशेषैर्व्यस्तमेव च । कृत्स्नमेवं परं ब्रह्म सदोपासीत यत्नतः ।।४८।।
अवस्थावदवस्थाभिः क्वचित्कात्स्र्न्यं प्रचक्षते । कार्यकारणरूपेण क्वचिद्व्याचक्षते तथा ।।४९।।
भागभागिविभागेन नाभिनेम्यरवत्तथा । व्याचक्षते महात्मानः संप्रदायबलात्किल ।।५०।।

### भर्तृप्रपञ्चमतनिरसनम्

अक्षराणामतात्पर्याद्युक्तितश्चाप्यसंभवात् । प्रतिपत्तुं वयं तादृक्शक्नुमो नाञ्जसा परम् ।।५१।।
अज्ञातं जगदज्ञाते ज्ञाते ज्ञातं च यत्र तत् । तद्ब्रह्मैवंविधं कृत्स्नं न गोवृक्षादिवन्मतम् ।।५२।।
सामान्यानि विशेषाश्च व्यावर्तन्ते परस्परम् । प्राणादिवदतः कात्स्र्न्यं न तेषां युक्तिमद्भवेत् ।।५३।।

तन्मोहजनितभुजंगादीनां तदेकता न पृथगवशेषस्तथा प्रतीचि ज्ञाते तदज्ञानोत्थानां प्राणादीनां तन्मात्रत्वाङ्गीकारात्तज्ज्ञाने ज्ञानसिद्धिरित्यर्थः । यद्वा श्रुतियुक्तिभ्यामद्वयत्वमात्मनोऽभिधायात्र हीत्यादिवाक्यार्थं सदृष्टान्तमुपसंहरति—ज्ञातायामिति ।।९४६।।

हेतुवाक्यस्य स्वमतेनार्थमुक्त्वा भर्तृप्रपञ्चमतं प्रागुत्थाप्य प्रत्युक्तमपि प्रतिवचनं प्रपञ्चयितुं पुनरुत्थापयति—आत्मेति । यथोक्त एतस्मिन्नात्मशब्दाभिधेयेऽनानात्वे प्राणनादिव्यापाराः सर्व एकं भवन्तीति ।।९४७।।

कथं तर्हि ब्रह्मणः सामान्यविशेषाभावे कृत्स्नता तदभावे वा कथं प्रागुक्तोऽपवादो नावतरति तत्राऽऽह—सामान्येनेति । यथाऽऽहुर्या तस्मिन्नन्तर्णीते विशेषणे बुद्धिः साऽन्तर्णीतविशेषणैव कृत्स्नग्राहिणी भवतीति । अत्र सामान्यं प्रत्यक्त्वं प्राणो द्रष्टेत्यादयो विशेषाः । ब्रह्मणो दर्शितरीत्या कृत्स्नत्वे पूर्वोक्तापवादराहित्यं फलितमाह—कृत्स्नमिति । सदेति दीर्घकालत्वोक्तिः । यत्नत इत्यवशिष्टविशेषणयोरुदीरणम् ।।९४८।।

सामान्यविशेषात्मना कृत्स्नत्वं ब्रह्मणो दर्शयित्वा ब्रह्मावस्थावदवस्था जगदिति विधान्तरेण कात्स्र्न्यं परैरुक्तमित्याह—अवस्थावदिति । ब्रह्म कारणं कार्यं जगद्ब्रह्मांशि जगदंश इत्येवंप्रकारेणापि कात्स्र्न्यमुक्तमित्याह—कार्येति । क्वचिदित्युभयत्र तदीयग्रन्थदेशोक्तिः । जगद्ब्रह्मणोरंशांशित्वे दृष्टान्तमाह—नाभीति । यथा रथचक्रस्यावयविनो नाभिर्नेमिरराश्चेत्यवयवास्तथा जगद्ब्रह्मणोर्भागभागितेत्यर्थः । मिथोविरुद्धत्वाद्भर्तृप्रपञ्चप्रस्थानमप्रामाणिकमिति मन्वानस्तन्मतं सोपहासमुपसंहरति—व्याचक्षत इति । तदीये व्याख्याने विदुषामसंमतिं द्योतयितुं किलेत्युक्तम् ।।९४९–९५०।।

श्रुत्यक्षराणां समस्तव्यस्तात्मके वस्तुन्यानुकूल्याभावादुक्तवक्ष्यमाणयुक्तितश्च तस्यायोगान्न वस्तुलस्तादृङ्नानारसमुपाधिमन्तरेण परं ब्रह्म प्रतिपत्तुं प्रामाणिकाः प्रभवन्तीति दूषयति—अक्षराणामिति ।।९५१।।

समस्तव्यस्तत्वाभावे ब्रह्मणः कथं कृत्स्नता तत्राह—अज्ञातमिति । यस्मिन्नज्ञाते सर्वमज्ञातं यत्र च ज्ञाते तदेव ज्ञातं तद्ब्रह्माद्वितीयमेवंविधमेकरसमनवच्छिन्नं भवतीत्यर्थः । यत्तु गवादिदृष्टान्तैः सामान्यविशेषादिभावेन कृत्स्नं ब्रह्मेति तत्राऽऽह—नेति । यथा गोः सामान्यविशेषभावेन वृक्षस्यावयवावयविभावेनाब्धेरवस्थातद्वद्भावेन मृदः कार्यकारणभावेन कात्स्र्न्यं नैवं ब्रह्म समस्तव्यस्तभावेन कृत्स्नं शास्त्रगम्यं अतो निर्विशेषतया कृत्स्नं ब्रह्म न विधान्तरेणेत्यर्थः ।।९५२।।

कथं ब्रह्म सामान्यविशेषभावेन कृत्स्नं न भवति तत्राऽऽह—सामान्यानीति । गोत्वाश्वत्वप्रत्यक्त्वादीनि सामान्यानि खण्डमुण्डशोणदेवदत्तादयो विशेषाः । प्राणन्नित्यादिनोक्तप्राणनादिविशिष्टवदिति मिथोव्यावृत्तौ दृष्टान्तमाह—प्राणादिवदिति । मिथोव्यावृत्तिफलमाह—अत इति । न तेषां कात्स्र्न्यमेकब्रह्मतयेति शेषः । सामान्येन समस्तं तदित्यादि निरस्तम् । यच्चावस्थावदवस्थात्वेन कार्यकारणत्वेनांशांशित्वेन च कात्स्र्न्यमुक्तं तत्राप्यवस्थादिष्वन्योन्यव्यावृत्तेरेषामेकब्रह्मताऽयोगादकात्स्र्न्यं तुल्यमिति भावः ।।९५३।।

तदानन्त्याच्च तद्बोधो नेश्वरेणापि कात्स्न्र्यतः । क्रमशोऽक्रमशो वाऽपि शक्यः कर्तुं कदाचन ।।५४।।
तादात्म्यभावनायां तु पुंसां संभावनाऽपि न । शक्या सुनिपुणेनापि कर्तुं तद्व्याप्तिः कुतः ।।५५।।
गङ्गावतारवन्नापि बहूपासितृकर्मता । भावनोपचयाभावादेकैकस्मिंस्तथा सति ।।५६।।
देवो भूत्वैति विबुधान्भावनोपचयान्नरः । इति सर्वपदार्थेषु पुंसोऽशक्यं विधित्सितम् ।।५७।।
यज्ज्ञातमपि कात्स्न्र्येन तत्तदन्यच्च नाञ्जसा । ज्ञानेन ज्ञायते तादृक्कृत्स्नं कथमिहोच्यते ।।५८।।
पराग्वस्तु विरोधित्वात्प्रत्यग्बुद्ध्या न गम्यते । पराञ्चीत्यपि हेतूक्तेर्नातः पिण्डादिकृत्स्नधीः ।।५९।।
तथाऽऽत्मनि च विज्ञाते सर्वं ज्ञातं भवेदिति । येनाश्रुतं श्रुतमिति कस्मिन्न्विति तथाऽपरम् ।।६०।।
आत्मसाम्यग्रहेऽप्यात्मभेदमात्रगृहीतितः । नैवानात्मार्थसामान्यविशेषाणां ग्रहो भवेत् ।।६१।।
समस्तव्यस्तताद्दृष्टावेवमादि सुदुर्घटम् । अपूर्वानपरानन्तरावाह्योक्तिश्च दुःस्थिता ।।६२।।

किंच ब्रह्मणो नानात्वं दृष्टयर्थमुपास्त्यर्थं वा? नाऽऽद्य इत्याह—तदानन्त्यादिति । सामान्यादीनामसंख्यत्वात्पुरुषायुषस्य च परिमितत्वान्न सामान्याद्यात्मकब्रह्मबोधः समर्थेनापि सर्वात्मना क्रमाक्रमाभ्यां कदाचिदपि शक्यः कर्तुमित्यर्थः ।।९५४।।

द्वितीयं दूषयति—तादात्म्येति । अधिकृतानां मध्ये केनचिदतिसूक्ष्मदृशाऽपि तादृग्ब्रह्मण्यात्मतत्त्वध्याने संभावनाऽपि कर्तुं न शक्या धीपूर्वकत्वाद्ध्यानस्यासंख्यसामान्यादिविषयश्चायोगादित्यर्थः । ध्यानसंभावनाभावे तदनुष्ठानं दूरनिरस्तमित्यपिना सूचितं कैमुतिकन्यायमाह—तद्व्याप्तिरिति ।।९५५।।

ननु नानारसब्रह्मोपास्तेरेकेन पुंसा कर्तुमशक्यत्वेऽपि बहुभिः सा करिष्यते सगरपुत्राणां षष्टिसहस्रसंख्याकानां निमित्तविशेषमासाद्य वासुदेवनाम्ना भगवता प्रतप्तानां भस्मीभूतानां गाङ्गेन पाथसा पावितानां परलोकसिद्धये महता प्रयत्नेन तपोबलमवलम्ब्य भगीरथाद्यनेककर्तृकत्वेन पृथिव्यां गङ्गावतारवत्तत्राऽऽह—गङ्गेति । ब्रह्मोपास्तेर्बहुकर्तृकत्वे सत्येकैकस्मिन्पुंसि भावनानुपचयान्न सर्वात्मनोपास्यसाक्षात्कारः कस्यचिदपि स्यादित्यर्थः ।।९५६।।

मा भूत्तत्साक्षात्कारो; नैवं श्रुतिस्मृतिविरोधादित्याह—देव इति । उपास्तेर्बहुकर्तृकत्वायोगादेककर्तृकत्वे वाच्ये पूर्वोक्तं निगमयति—इति सर्वेति । इतिना ध्यानोक्तिः । एकस्यैव पुंसः सर्वेषु सामान्याद्यर्थेषु तदात्मके च ब्रह्मणि कर्तुमशक्यमेव ध्यानं त्वया विधातुमिष्टमित्यर्थ ।।९५७।।

किंच यस्मिन्दृष्टे तत्स्वरूपमन्यच्च सर्वात्मना न दृश्यते तस्य कात्स्न्र्यं विरुद्धमित्याह—यज्ज्ञातमिति । यज्ज्ञातं तदपि स्वरूपेण ततोऽन्यच्च तेन ज्ञानेनाञ्जसा साकल्येन न ज्ञायते तादृङ्न कृत्स्नमित्यन्वयः । इहेति शास्त्रोक्तिः ।।९५८।।

किंच समस्तव्यस्तवादिना प्रत्यग्बुद्ध्या पराग्वस्तु गृह्यते पराग्बुद्ध्या च प्रत्यग्वस्त्विति वाच्यं तत्र न तावत्पराञ्चं प्रत्यग्धीर्गोचरयतीत्याह—परागिति । पराक्प्रतीचोर्मिथो विरोधादिति हेत्वर्थः । नापि प्रत्यञ्चं पराग्धीर्गृह्णातीत्याह—पराञ्चीति । पराञ्चि खानीत्यनात्मबुद्धेरात्माविषयत्वे हेतूक्तेरनात्मबुद्ध्या प्रत्यगपि न गम्यत इत्यर्थः । उक्तन्यायेनैकस्मिञ्ज्ञाते सामान्यादिसर्वज्ञानं परस्य नेति न तस्य पूर्णवस्तुसिद्धिरिति फलितमाह—नात इति ।।९५९।।

किंच यथैकरस्यमात्मनस्तथा वाक्यानि वेदान्तेषु श्रूयन्ते "सर्वमिदं विज्ञातं" "येनाश्रुतमि"त्यादीनि तानि चाऽऽत्मनो नानारसत्वे विरुध्येरन्नित्याह—तथेति ।।९६०।।

ननु सामान्ये गृहीते तदन्तर्भूततया सर्वे विशेषा गृहीता भवन्ति तथा चैकविज्ञानेन सर्वविज्ञानश्रुतयः परस्यापि न विरुध्यन्ते तत्राऽऽह—आत्मेति । अनात्मसामान्यग्रहेऽपि तद्विशेषमात्रग्रहादात्मसामान्यविशेषा न गृह्येरन्निति द्रष्टव्यम् ।।९६१।।

किंच सामान्यादेर्विशेषादेश्चात्यन्तभेदे तद्भावासंभवोऽत्यन्ताभेदेऽप्यन्यतरपरिशेषात्तद्भावानुपपत्तिस्तुल्या भेदाभेदौ च विरुद्धावविरोधे सर्वत्र विरोधोच्छित्तिरिति मत्वाऽऽह—समस्तेति । एवंशब्देन भेदाभेदादिविकल्पोक्तं दोषं परामृशति । सामान्यादेर्विशेषादेश्च प्रातिस्विकाकारस्थितौ तद्विरोधान्नैकस्मिन्नन्तर्भावः तदस्थितौ स्वयम-

पराक्प्रमेयमानानां प्रत्यगर्थधियोदितः । बाधोऽतोऽसाध्वभिहितं समस्तव्यस्ततां प्रति ॥६३॥
तथोपास्यस्य ब्रह्मत्वे श्रुत्या साक्षान्निराकृते । नेदं यदिदमित्येवं समस्तव्यस्तता कुतः ॥६४॥
स्थूलाद्यशेषापह्नुत्या चाक्षरे प्रत्यगात्मनि । कारणान्तस्य जगत ओतप्रोतोक्तितस्तथा ॥६५॥
न च प्रत्यग्धिया द्रष्टुं पराग्वस्त्विह शक्यते । समस्तव्यस्ततैवं च न मानादुपपद्यते ॥६६॥
मानभूमेश्च व्युत्थाप्य तथाऽविदितभूमितः । प्रत्यङ्मात्रस्य ब्रह्मोक्तेः समस्तव्यस्तता कुतः ॥६७॥
न समस्तं न च व्यस्तं नोभयं प्रत्यगात्मनि । प्रत्यक्प्रवणया बुद्ध्या वीक्ष्यतां यदि शक्यते ॥६८॥

तदेतत्पदनीयमस्येति वाक्यतात्पर्यम्

कस्मात्पुनरिदं त्यक्त्वा दृष्टा-दृष्टार्थसाधनम् । आत्मेत्येवोपासीतेति महान्यत्नः श्रुतेरिह ॥६९॥
पदनीयमिदं यस्मादनात्मभ्यः परं पदम् । सर्वज्ञेयपुमर्थानां[1] प्रत्यग्ज्ञाने समाप्तितः ॥७०॥

भावात्कस्यैकस्मिन्नन्तर्भावः । न च तं विनैकविज्ञानेन सर्वविज्ञानसिद्धिरित्यादिशब्दार्थः । निर्विशेषत्वबोधकश्रुतिविरोधाच्च समस्तव्यस्ततादृष्टिरश्लिष्टेत्याह—अपूर्वेति ॥९६२॥

इतश्च सा न युक्तेत्याह—परागिति । अनात्मनां तद्धियां च प्रत्यग्धिया बाधस्योक्तत्वाद्यदात्मनः समस्तव्यस्ततां प्रति त्वयोक्तमात्मशब्दाभिधेयेऽर्थ इत्यादि तदयुक्तं तस्यैकरसत्वेन तद्भावायोगादित्यर्थः ॥९६३॥

किंच ब्रह्मणः समस्तव्यस्तत्वे तस्य वेद्यत्वमुपास्यत्वं च स्यात्तत्र श्रुतिविरोधान्न समस्तव्यस्तदृष्टिर्युक्तेत्याह—तथेति । हेत्वन्तरसमुच्चयार्थस्तथाशब्दः । उपास्यस्येत्युपलक्षणं वेद्यस्येत्यपि द्रष्टव्यम् ॥९६४॥

इतश्च न समस्तव्यस्ततेत्याह—स्थूलादीति । अशेषविशेषनिरासेनाक्षरस्य निर्विशेषत्वनिर्देशान्न समस्तादिरूपं तदित्यर्थः । किंच तत्रैव सकारणस्य जगतोऽन्तर्भाववचनान्न समस्तादिरूपमक्षरमित्याह—अक्षर इति । तथा नास्य समस्तव्यस्ततेति यावत् ॥९६५॥

मानाभावाच्च न वस्तु समस्तव्यस्तमित्याह—न चेति । इहेति व्यवहारमार्गो गृह्यते । न तावदात्मानं पराञ्चःस्पृशन्ति विरोधान्मानान्तरस्य तद्विषयत्वेऽपि नाऽऽत्मनः समस्तव्यस्तता ततः सिध्यति तस्याऽऽत्मास्पर्शित्वान्न च तदात्मानमपि स्प्रक्ष्यति पराञ्चीति च हेतूक्तेरित्यत्र निरस्तत्वात् । तथा च नानारसता वस्तुनो न मानानुसारिणीति भावः ॥९६६॥

मानविरोधाच्च नाऽऽत्मनः समस्तव्यस्ततेत्याह—मानेति । अन्यदेव तद्विदितादित्यादिश्रुत्यर्थोऽत्रोक्तः । ब्रह्मोक्तेर्ब्रह्मत्वोक्तेरिति यावत् ॥९६७॥

विद्वदनुभवविरोधाच्च नाऽऽत्मनः समस्तव्यस्ततेत्याह—नेत्यादिना । प्रतीचि न समस्तं रूपं प्रत्यग्दृष्ट्येक्ष्यते न व्यस्तं न समस्तव्यस्तं यदि तत्र नानारूपं द्रष्टुं शक्येत तदा वीक्ष्यतां न च वीक्ष्यते तस्मादैकरस्यमेवेत्यर्थः ॥९६८॥

अत्र हीत्यादिवाक्येनाऽऽत्मनो मतान्तरनिरासद्वारा निर्विशेषत्वं बोधितमित्युक्तमिदानीं तदेतत्पदनीयमित्यादिवाक्यापोह्यं चोद्यमादत्ते—कस्मादिति । अग्निहोत्रादिकं कर्मेदमा परामृश्यते । इहेत्यात्मज्ञानोक्तिः । यत्नस्य महत्त्वं नाम प्रतिज्ञातात्मज्ञानस्य हेतुना साधनम् । शक्याशक्ययोः शक्योपादानस्य न्याय्यत्वादनायासलभ्यं कर्म यावज्जीवादिश्रुत्युक्तमत्याज्यमिति भावः ॥९६९॥

उत्तरमवतारयति—पदनीयमिति । यस्मादनात्मनामज्ञातत्वज्ञातत्वयोरभावात्तेभ्यः सकाशादिदमेवाऽऽत्मतत्त्वं परं पदमज्ञातं ज्ञातव्यं तस्मात्तज्ज्ञाने यत्नः श्रुतेरित्यर्थः । यत्तु यावज्जीवादिश्रुतिसिद्धं कर्म त्यक्त्वा यत्नाधिक्यमात्मज्ञाने न युक्तमिति तत्राऽऽह—सर्वेति । आयासलभ्येऽपि प्रत्यग्ज्ञाने यत्नातिरेकः श्रुतेरिति शेषः ॥९७०॥

---

१. सर्वज्ञेयेति—सर्वे ज्ञेयपुमर्थाः स्वर्गादयः । तेषां प्रत्यग्ज्ञाने प्रत्यगात्मनः ब्रह्माभेदेन ज्ञाने ज्ञानफले ब्रह्मानन्दरूपे समाप्तेः अन्तर्भावादित्यर्थः । यद्वा सर्वज्ञेयपुमर्था इति बहुव्रीहिणा तत्साधनकर्माणि उपासनानि चोच्यन्ते । तानि प्रत्यग्ज्ञाने सति समाप्तेः । योगारूढस्य शमः कारणं "नैव तस्य कृतेनार्थः" इत्यादिस्मृतेः 'विदित्वा व्युत्थाय भिक्षाचर्यं चरन्ती"ति श्रुतेश्च । कर्मणः सर्वस्य ज्ञानसाधनत्वात् ज्ञाने सति समाप्ति । "सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते" इति भगवद्वचनात् ।

न हि प्रतीचि विज्ञाते कश्चिदप्यवशिष्यते । ज्ञेयोऽर्थः पुरुषार्थो वा पदनीयमतो भवेत् ॥७१॥
अनात्मार्थे तु विज्ञाते स्वाध्यस्ताहिप्रबोधवत् । न किंचित्स्यात्परिज्ञातं नानात्माऽतः प्रमित्सितः॥७२॥

अस्य सर्वस्येत्यस्य व्याख्या

अस्येति शैषिकी षष्ठी कृत्स्नसंगत्यपेक्षया । प्रतीचा व्यतिरेकी सन्ननात्मा ह्येति संगतिम् ॥७३॥
नर्ते विभागं संबंधः प्रतीचाऽनात्मनोऽस्ति हि । प्रत्यगर्थोऽविभागात्मा नातः संगच्छते द्वयम् ॥७४॥
अतो दुःस्थितसिद्धयेतत्पराग्वस्त्वन्तरात्मनि । तावन्मात्रैकयाथात्म्याद्बुद्ध्यादे रज्जुसर्पवत् ॥७५॥
पराक्तयैष ज्ञातोऽपि प्रत्यग्याथात्म्यहेतुतः । अनात्माऽज्ञात एव स्याच्छुक्तिकारूप्यबोधवत् ॥७६॥

भाष्योक्तनिर्धारणार्थत्वविवरणम्

निर्धारणे वा षष्ठीयं ज्ञेयार्थस्यावधारणात् । प्रतीचो ह्यनधिगतान्नान्योऽनधिगतो यतः ॥७७॥

कथमात्मज्ञाने सति सर्वेषां ज्ञेयानां पुमर्थानां च समाप्तिस्तत्राऽऽह—न हीति । निरतिशयसुखात्मकात्मेतरवस्त्वभावादिति भावः। यस्मादात्मज्ञानस्यैष महिमा तस्मादग्निहोत्रादि त्यक्त्वा तदेवाऽऽदर्तव्यमित्याह—पदनीयमिति ॥९७१॥

सूत्रादावनात्मनि विश्वात्मके ज्ञाते सर्वज्ञेयपुमर्थसमाप्तिसंभवादात्मवत्तस्यापि प्रमित्सेत्याशङ्क्याऽऽह—अनात्मेति। यथा स्वशब्दिताधिष्ठानभूतरज्ज्वामध्यस्तस्याहेर्बोधान्न रज्जुरहिर्वा ज्ञायते तथा चिदात्मन्यध्यस्तसूत्राद्यनात्मार्थे ज्ञातेऽपि न तद्रूपमन्यद्वा ज्ञातं स्यादतो नानात्मा प्रमातुमिष्टस्तज्ज्ञानस्याफलवत्त्वादित्यर्थः ॥९७२॥

तदेतत्पदनीयमिति व्याख्यायास्य सर्वस्येति समानाधिकरणषष्ठ्योरर्थमाह—अस्येति । अनात्मराशेरात्मना संबन्धापेक्षया शेषे षष्ठी प्रवृत्ता। शेषशब्देन संबन्धसामान्यमुच्यते। प्रत्यक्षादिसंनिधापितस्य जगतः संबन्ध्यात्मतत्त्वं पदनीयमित्यर्थः। संबन्धे षष्ठी चेदात्मानात्मनोर्भेदः स्यात्संबन्धस्य तदपेक्षत्वादतोऽद्वैतहानिरित्याशङ्क्याऽऽह—प्रतीचेति। ततो विभक्तः सन्ननात्मा न तेन संहन्यते विभागस्यान्योन्याश्रयादिग्रस्तत्वेनाप्रामाणिकत्वादित्यर्थः ॥९७३॥

अस्तु तर्हि विना विभागं तयोः संगतिः संबन्धे षष्ठीस्वीकारान्नेत्याह—नर्ते इति। संबन्धस्य द्विनिष्ठत्वादेकत्रायोगादित्यर्थः। अयमेवार्थो हिशब्देन ध्वनितः। कथं तर्हि शैषिकी षष्ठीत्युक्तं तत्राऽऽह—प्रत्यगिति। अविभागात्मेति च्छेदः। प्रकृतमविभागमतःशब्देन परामृशति। यद्यप्यद्वयो वस्तुतो न द्वैतं स्पृशति तथाऽपि काल्पनिकं संबन्धमाश्रित्य षष्ठीत्यर्थः ॥९७४॥

ननु द्वैतं प्रतीयते तच्च न स्वतन्त्रमाद्यन्तवत्त्वात्। नचाऽऽत्मनोऽन्यदस्याधिकरणं न च कल्पितमधिष्ठानानपेक्षं तत्कथमात्मनो द्वैतासंगतिरित्याशङ्क्य प्रागुक्तं काल्पनिकं संबन्धं साधयति—अत इति। भेदेऽभेदे वाऽऽत्मानात्मनोः संबन्धस्य दुर्वचत्वादाध्यासिकतादात्म्यादेव द्वैतस्याऽऽत्मनि प्रतीतिर्वस्तुतस्तु तदात्मनि दुर्लभमिति तदसंगतेत्यर्थः। आत्मन्यनात्मनो दुःस्थितसिद्धत्वे तस्याऽऽत्मवदेव स्वातन्त्र्यं तुच्छत्वं वेत्याशङ्क्यानिर्वाच्यत्वान्मैवमित्याह—तावन्मात्रेति। आत्ममात्रमेवानपेक्षं स्वरूपं तत्राऽऽरोपितबुद्ध्यादेरनात्मवर्गस्य न स्वातन्त्र्यं नापि तुच्छत्वमपरोक्षतया प्रतीते रज्ज्वामारोपितसर्पस्य रज्जुरूपत्वेन स्वातन्त्र्याद्यभाववदित्यर्थः ॥९७५॥

अनिर्वाच्यत्वं प्रपञ्चस्यायुक्तं प्रत्यक्षादिसिद्धत्वादित्याशङ्क्याऽऽह—पराक्तयेति। ज्ञातस्याज्ञातत्वं विरुद्धमित्याशङ्क्याऽऽह—शुक्तिकेति। न हि शुक्त्यज्ञाने रूप्यज्ञानेन तद्धीस्तस्य शुक्तिरूपत्वात्तज्ज्ञाने च रूप्यतद्धियोर्ध्वस्तेर्न ज्ञेयं रूप्यं शिष्यते तथाऽऽत्माज्ञानेऽनात्मज्ञानेनाऽऽत्मा न गम्यते तस्याऽऽत्मेतरस्वरूपाभावादात्मज्ञाने चानात्मतद्धीध्वस्तेर्ज्ञेयानात्माभाव इत्यर्थः ॥९७६॥

अस्येति षष्ठी शेषे व्याख्याता संप्रति भाष्योक्तं षष्ठ्यर्थमाह—निर्धारणे वेति। किमिति सा तत्र स्वीकृता कर्मादावर्थान्तरे किं न स्यात्तत्राऽऽह—ज्ञेयेति। सर्वस्मिञ्जगति प्रत्यङ्मात्रमेव ज्ञेयं नान्यदित्यस्यार्थस्य निर्धारणात्तस्मिन्विषये युक्ता षष्ठीत्यर्थः। प्रतीचो ज्ञेयत्वं नान्यस्येत्यत्र हेतुमाह—प्रतीचो हीति। यत इति हिशब्दद्योतितो हेतुः स्फुटीकृतः। यद्वा प्रागस्यार्थस्य साधितत्वं हीत्युच्यते ॥९७७॥

ज्ञातोऽपि तद्वदेवास्मान्नाऽऽत्मनो विद्यते परः । प्रत्यगज्ञानहेतुत्वात्तदन्यस्येह वस्तुनः ॥७८॥
अनात्मनोऽस्य सर्वस्य व्याकृताव्याकृतात्मनः । यस्मादात्मा परं तत्त्वं पदनीयमतो भवेत् ॥७९॥
खण्डादौ गोत्ववद्यस्मात्प्रत्यग्दृष्ट्याऽन्तरात्मनि । समीक्ष्यते हिरुङ्नापि तेनासावात्मतत्त्वकः ॥८०॥
ज्ञेय आत्मैव नानात्मा पदनीयत्वकारणात् । नन्वन्यज्ञाने नान्यस्य क्वचिदस्त्यवबुद्धता ॥८१॥
सत्यमेवं भवेदेतद्यद्यात्माऽप्यन्य इष्यते । आत्माऽसावन्य इति च नानुन्मत्तस्य गीरियम् ॥८२॥

सर्वस्यात्ममात्रत्वात् अनेनेति इत्थंभावे तृतीया

अनेनेति तृतीयेयमित्थंभूतार्थलक्षणा । इदंधीशब्दगम्यस्य प्रत्यङ्मात्रसतत्त्वतः ॥८३॥
घटो नास्तीति कोऽन्वस्मान्मानादर्थः प्रतीयते । संवित्तावदशेषेभ्यः प्रमाणेभ्योऽवसीयते ॥८४॥
न संविदः पृथक्त्वेन नापि संविदि तद्धिया । अनात्मवस्तूत्प्रेक्ष्यं स्याद्यथा संविदियं स्वतः ॥८५॥

अन्यस्य ज्ञातत्ववदज्ञातत्वमपि स्यादित्याशङ्क्याऽऽह—ज्ञातोऽपीति । तद्वदित्यज्ञातवदित्यर्थः । अन्यो नास्तीति शेषः । किंचाऽऽत्मनोऽन्यस्याभावान्न तस्योभयमित्याह—अस्मादिति । अनुभवविरोधमाशङ्क्याज्ञानादर्थान्तरप्रतीतिमाह—प्रत्यगिति । इह प्रतीतिर्न विरुद्धेति शेषः ॥९७८॥

शैषिकीमेव षष्ठीमाश्रित्य यदयमात्मेति वाक्यमात्मत्वस्यैव पदनीयत्वे हेतुत्वेन व्याचष्टे—अनात्मन इति ॥९७९॥

कथमात्मा सर्वस्य तत्त्वं न ह्यन्यदन्यस्य तत्त्वमित्याशङ्क्य वैधर्म्यदृष्टान्तमाश्रित्याऽऽह—खण्डादाविति । यथा व्यक्तिषु सामान्यं पृथक्प्रथते व्यावृत्तानुवृत्तयोर्भेदान्न तथाऽऽत्मनि तद्धिया पृथगनात्मा गृह्यते तस्य विरुद्धयोरैक्यायोगात्तस्मादात्मनि स कल्पितस्तन्मात्रयाथात्म्यः स्वीकर्तव्य इत्यर्थः ॥९८०॥

यस्मादात्मा सर्वस्य तत्त्वं तज्ज्ञानेन च सर्वं ज्ञायते तस्मात्स एव ज्ञातव्यो ज्ञातत्वेन प्रतिपाद्यत्वादनात्मा तु न ज्ञेयस्तदभावादिति फलितमाह—ज्ञेय इति । आत्मा ज्ञेयो नानात्मेत्युक्तेस्तयोर्भेदादनेन हीतिवाक्यशेषानुपपत्तिरिति चोदयति—नन्विति । न हि क्वचिदपि देशादौ घटादिज्ञानेन पटादि ज्ञायमानं दृष्टमित्यर्थः ॥९८१॥

अन्यज्ञानेनान्यन्नावबुद्धमित्यङ्गीकरोति—सत्यमिति । आत्मानात्मभेदश्चेत्तदाऽऽत्मज्ञानेनानात्मा न ज्ञायेत न च तद्भेदो वास्तवस्तस्मात्तज्ज्ञानेनानात्मा शक्यो ज्ञातुमित्याह—यदीति । आत्मनोऽपि वस्तुत्वाद्घटादिवद्भिन्नत्वमाशङ्क्याऽऽत्मत्वायोगान्मैवमित्याह—आत्मेति ॥९८२॥

अनेन हीत्यादिवाक्यस्य विरुद्धार्थत्वमुद्धृत्य तदक्षराणां स्पष्टार्थतां दृष्ट्वा करणादिविषयत्वं तृतीयाया व्यावर्त्येत्थंभावार्थत्वमाह—अनेनेतीति । इत्थंभूतमर्थं लक्षयति गमयतीति तथोच्यते । तत्र हेतुमाह—इदमिति ॥९८३॥

इदमर्थस्य सर्वस्यानुभवात्मकप्रत्यङ्मात्रस्वभावत्वादित्थंभावे युक्ता तृतीयेत्युक्तहेतुसिद्ध्यर्थमादौ विमृशति—घट इति । भावाभावप्रमाणात्कोऽर्थो भातीति परामृश्य फलत्वेन सर्वमानेभ्योऽनुभवस्य मानं सर्वाविगीतं दर्शयति—संविदिति ॥९८४॥

ननु फलत्वेन संविद्भानवद्विषयत्वेन जगदपि भाति निर्विषयमानाभावान्नेत्याह—नेत्यादिना । यथा संविन्न स्वतो भेदेनाभेदेन वा लभ्यत एकस्मिन्धर्मित्वप्रतियोगित्वायोगात्सामानाधिकरण्यायोगाच्च तथाऽनात्मा संविदो भेदाभेदाभ्यामसिध्यन्नात्मनि तद्रूपे कल्पितो न हि संविदो भेदेनानात्मवस्तूत्प्रेक्षितुं क्षमं जडत्वात्तत्संबन्धस्य चासकृन्निरासान्नापि संविद्यभिन्नं संविद्रूपया धियाऽनात्मधिया वा तत्सिध्यत्यन्यतरपरिशेषादतो जगदात्ममात्रमित्यर्थः ॥९८५॥

इतश्च संविदात्ममात्रं तदित्याह—उपलब्धोऽस्तीति । निर्विकल्पकानुभवातिरेकेणार्थाभावात्तद्रूपात्ममात्रत्वं सर्वस्य संबन्धे निष्टङ्कितमित्यर्थः ॥९८६॥

ऽपलब्धोऽस्ति सन्कुम्भो लम्बोष्ठो[1] देशकालवान् । पूर्वपूर्वातिरेकेण नोत्तरार्थोऽनुभूयते ।।८६।।
कर्त्रादिव्यापृतेः पूर्वं संवित्स्वात्मन्यवस्थितेः । अविभागादनाख्येया तदुद्भूत्या फलायते ।।८७।।
अक्रियेऽपि[2] यथा व्योम्नि ह्युत्पत्तिस्थितिहानिभिः । जगन्नर्नर्ति मय्येवं सदसद्विश्वरूपभृत् ।।८८।।
नञ्घटार्थावपह्नुत्य संवित्सद्रूपमात्रया । अवगत्यात्मना सत्त्वं सर्वदृक्स्यादविक्रियः ।।८९।।
दिग्विभागोऽविभागेऽपि व्योम्नि यद्वत्प्रकल्पितः । प्रध्वस्ताशेषभेदेऽपि मयि-भिन्नधियस्तथा ।।९०।।

यथाहेत्यादेः व्याख्याभेदाः

कथं पुनरबोधोत्थक्लृप्तोपायेन तत्परम् । गम्यते सत्यमित्यस्य परिहृत्यै परं वचः ।।९१।।
परमार्थात्मनाऽसत्यं पदं[3] तदपि बोधकम् । स्वार्थस्यैवमुपायत्वमसत्यस्याऽऽत्मनीक्ष्यताम् ।।९२।।

सर्वस्य नानुभवमात्रत्वं तस्य फलत्वेन कार्यत्वाद्रज्जुसर्पवत्कल्पितत्वादधिष्ठानत्वायोगादित्याशङ्क्य तत्कौटस्थ्यं साधयति—कर्त्रादीति । मात्रादिव्यापारज्ञानात्पूर्वं स्वापादौ स्वरूपे स्थितत्वाद्धेतुफलविभागाभावात्फलमित्याख्याहीना संविदेष्टव्या सा च तस्य मात्रादिव्यापाराख्यस्य[4] ज्ञानस्योत्पत्त्या फलवदाचरत्यतस्तस्या वस्तुतोऽकार्यत्वादकल्पिततेत्यर्थः ।।९८७।।

संविदोऽकल्पितत्वेनाधिष्ठानत्वसंभवेऽप्यक्रियत्वादनधिष्ठानत्वं सक्रियमेव हि शुक्त्यादि तथा दृष्टमित्याशङ्क्यैकरसे निर्विकारे प्रतीचि कल्पितत्वं जगतो दृष्टान्तेनाऽऽह—अक्रियेऽपीति । व्योम्नोऽक्रियत्वं वादिभिरुपगतमिति वक्तुं हिशब्दः ।।९८८।।

प्रत्यगात्मा सक्रियोऽधिष्ठानत्वाच्छुक्तिवदित्यत्राऽऽकाशे व्यभिचारमुक्त्वा मूर्तत्वोपाधेश्च[5] नैवमित्यभिप्रेत्याऽऽह—नञ्घटेति । यतो द्वैतस्यावगतिरूपेणैव सत्त्वं स्फुरति सामानाधिकरण्यादतो भावाभावौ संविद्रूपसन्मात्रत्वेन निरस्य तद्रूपः प्रत्यगात्मा सर्वं पश्यन्नविक्रियो युक्तो न हि क्रियासाक्षी सक्रियो भवितुमलं साक्ष्यस्य साक्षिकुक्षिनिक्षेपाक्षमत्वादित्यर्थः ।।९८९।।

तर्हि दृष्टिकर्तृत्वात्तदवस्थमस्य सक्रियत्वं न हि तत्कर्तृत्वं विना सर्वदृक्त्वं नापि क्रियां हित्वा कर्तृत्वं मैवं स्वरूपदृष्टिं मुक्त्वा तद्भेदस्य तत्कर्तृत्वस्य चाऽऽत्मनि कल्पितत्वादिति दृष्टान्तेनाऽऽह—दिग्विभाग इति । उभयत्रापिभ्यामक्रियत्वं समुच्चीयते ।।९९०।।

अनेन हीत्यत्रेत्थंभावार्थत्वं तृतीयायाः समर्थितमिदानीं व्यावर्त्यचोद्यमनूद्य यथा हेत्यादिवाक्यमवतारयति—कथमिति । आत्माज्ञानजनितत्वात्कल्पितस्तावदाचार्यादिरुपायस्तेनाविद्यातदुत्थासंसृष्टं सत्यं ब्रह्म न ज्ञातुं शक्यं मिथो विरोधादिति चोद्यं परिहर्तुं यथा हेत्यादिवाक्यमित्यर्थः ।।९९१।।

तद्व्याकरोति—परमार्थेति । गवाश्वादिवर्णात्मकं पदं दैवगत्या कल्पितमपि स्वार्थस्य गोत्वादेर्बोधकं न हि तदकल्पितं क्रमवतां वर्णानां तद्भावात्क्रमस्य च तेष्वारोपं विनाऽयोगान्न हि नित्या विभवश्च वर्णाः स्वारस्येन क्रमवन्तस्तथाऽऽत्मन्याविद्यश्रुत्याचार्यादेस्तद्बोधोपायत्वं द्रष्टव्यमित्यर्थः ।।९९२।।

---

१. सर्वबुद्धिषु सद्बुद्धेरनुगतत्वं सन् घटः सन् लम्बोष्ठः देशकालवानस्तीत्यादौ तदुपलम्भात् पूर्वस्य सत्तादेः भेदेन उत्तरस्य घटादेः अनुपलम्भात् । सन्निति सत्तासामान्यं अस्तीति स्वरूपसत्त्वं प्रतीयते ( न्या० ) ।

२. न चाक्रियत्वं गगने व्यभिचारि तस्य विकारित्वेन सपक्षत्वात् ।

३. अत्र पदमित्यस्य वर्णात्मकं पदमर्थः ।

४. मात्रादिव्यापारात् प्राक् सुषुप्ते स्वात्मन्यवस्थितत्वात् । अविभागात् कार्यकारणभेदाभावात् । अनुपाख्या कार्यकारणशब्दहीना प्रमातृव्यापारोत्पत्त्या फलवदाचरति स्वतः कूटस्था ( न्या० ) ।

५. मूर्तत्वोपाधेः—मूर्तत्वं दृष्टान्ते शुक्तौ साध्यव्यापकं प्रत्यगात्मनि पक्षे साधनाव्यापकं सच घटार्थौ भावाभावौ अपह्नुत्य सद्रूपत्वेन निरस्य तद्रूपः आत्मा साक्षात् पश्यति । स च निष्क्रियः साक्षित्वात् ।

उपायसत्यतां मुक्त्वा नान्या दृश्युपयुज्यते । सत्यताऽत्र ह्युपायानामुपेये किं तयेष्यते ॥९३॥
गवादिखुरबिम्बो वा पदमित्युपदिश्यते[1] । अनन्वितार्थसिद्ध्यर्थं दृष्टान्तोऽयं तथा सति ॥९४॥
गवादिबोधनिर्वृत्तिः पदतज्ज्ञानहेतुतः । अनन्वितपदज्ञानगोपिण्डैकावसायिनी ॥९५॥
यथैवं नामरूपादिप्रपञ्चोपायहेतुतः । अप्रपञ्चात्मके भूम्नि प्रत्यग्बोधः प्रजायते ॥९६॥
प्रमाणभूमावैकात्म्यं विरोधान्न प्रतीयते । तमोन्वयाप्रमेयत्वात्तदभावेऽपि नेक्ष्यते ॥९७॥
न हि वस्त्वात्मनैवाऽऽत्ममोहाद्युच्छित्तये क्वचित् । प्रमाणनिरपेक्षं सद्वस्त्वलं स्वप्रसिद्धये ॥९८॥
संसारानवतारः स्यान्मानवैफल्यमेव च । इत्येतस्येह चोद्यस्य परिहाराय चोत्तरम् ॥९९॥
यथा गवात्मना साक्षाद्गां विन्देद्गोपदानुगः । प्रत्यक्चैतन्यसृत्यैवं विन्देत्तत्परमं पदम् ॥१०००॥
प्रत्यक्तया यदाभाति ह्यागमापायिसाक्षितः । देहेन्द्रियमनोधीषु चैतन्याभासरूपकम् ॥ १ ॥

किं चोपायानामर्थक्रियाकारित्वं सत्यत्वं त्यक्त्वा परमार्थसत्यता नोपेयबोधनोपयोगिनी तन्न तेषां तादृशी सत्यतेत्याह—उपायेति । उपेयबोधनं सप्तम्यर्थः । सत्सूपायेष्वर्थक्रियाकारिषु तदीयपरमार्थसत्यत्वाभावापराधेनानुपायत्वानुपलम्भादिति हिशब्दार्थः । कार्योत्पत्तावनुपयोगित्वं परमार्थसत्यताया व्यनक्ति—उपेय इति ॥९९३॥

ननु गवादिपदं स्वार्थं बोधयदध्यस्तमित्यसिद्धं तस्य च तं बोधयतस्तेनास्ति संगतिस्तथा श्रुत्यादेरपि ब्रह्मबोधकत्वेन संगतिः स्यादतस्तदसङ्गत्वहानिरित्याशङ्क्य पदशब्दस्यार्थान्तरमाह—गवादीति । तदीयखुरबिम्बशब्देन तदङ्कितो देशो गृह्यते । तथाऽपि कथमुपायेन श्रुत्यादिना गम्यमानं ब्रह्मासङ्गमङ्गीकर्तुं शक्यमित्याशङ्क्याऽऽह—अनन्वितेति । गवादिखुराङ्किते देशे पदशब्दिते सति कार्यकारणासंबन्धिप्रत्यगर्थज्ञप्त्यर्थं यथा हेत्यादिदृष्टान्त इत्यर्थः ॥९९४॥

विवक्षितार्थसिद्धये दृष्टान्तं विवृणोति—गवादीति । यथा ज्ञातखुराङ्कितदेशहेतुकस्तद्धीहेतुको वा नष्टे विवक्षिते गवादौ बोधो जायते स च ताभ्यामस्पृष्टगवादिमात्रविषय इत्यर्थः । नान्विते पदतज्ज्ञाने येन गोपिण्डेन तस्मिन्पर्यवसितेति यावत् । दार्ष्टान्तिकमाह—एवमिति । आदिपदं क्रियार्थम् । प्रत्यक्प्रतीचीति यावत् । प्रत्यगाकारत्वाद्वा प्रत्यगिति बोधो विशेष्यते ॥९९५-९९६॥

कल्पितस्य ज्ञानसाधनत्वसाधनाय ब्रह्मणो द्वैतासंबन्धाय च यथा हेत्यादि व्याख्यातमिदानीमात्मेत्येवोपासीतेतिसूत्रावतितारयिषया प्रसञ्जितचोद्योत्तरत्वेन व्याकर्तुं चोद्यमनुद्रवति—प्रमाणेति । अवस्थाद्वये न वस्तुधीरज्ञानतत्कार्यविरोधात्तदभावो मानाभावः स्वापस्तत्रापि न तद्धीरज्ञानप्रतिबन्धात्तन्मेयत्वासिद्धेरित्यर्थः ॥९९७॥

मा भूदात्मधीः स तु स्वयमेव स्वाज्ञानतज्जे निवर्तयिष्यति बोधात्मत्वात्तस्मादप्रतिबन्धात्तस्मिन्प्रमाऽपि सदा स्यादित्याशङ्क्य सामान्यन्यायमाह—न हीति । शुक्त्यादि वस्तुस्वरूपेणैव प्रमाणानपेक्षं सत्स्वाविद्यातज्जापनुत्तये स्वज्ञप्तये वा न क्वचिदपि देशादौ शक्तं दृष्टम् । किंतु प्रमाणमपेक्ष्यैव यथोक्तकार्याय पर्याप्तमित्यर्थः ॥९९८॥

शुक्त्यादौ जडे मानापेक्षायामप्यात्मनि स्वप्रकाशे तदपेक्षां विना स्वरूपबोधादबोधादिध्वस्तिरित्याशङ्क्याऽऽह—संसारेति । यथेत्याद्युत्तरत्वेनाऽऽदत्ते—इत्येतस्येति । पूर्वोक्तस्य सोपस्कारमनूदितस्य चोद्यस्यात्र परिहारायानन्तरवाक्यमित्यर्थः । तस्योक्तार्थेन वक्ष्यमाणार्थस्य समुच्चयार्थश्चकारः ॥९९९॥

परिहारं स्फुटयितुं वाक्यं व्याचष्टे—यथेति । गवादिखुराङ्कितं देशं दृष्ट्वा तदनुरोधेन गतो गामन्विष्यमाणस्तद्रूपेणाध्यक्षतो लभते तथा प्रत्यक्चैतन्यस्य त्वमर्थस्य सृत्या शोधनया तद्रूपेण मुमुक्षुर्ब्रह्म जानातीत्यर्थः ॥१०००॥

त्वमर्थं विविच्याऽऽह—प्रत्यक्तयेति । देहादिषु बाह्येष्वागमापायवत्सु यत्प्रत्यक्त्वेन तत्साक्षित्वेन चान्वयव्यतिरेकाभ्यां भाति तदेतत्पदमिति संबन्धः । साक्षित्वे चिदाभासस्य द्वारत्वद्योतनार्थं विशिनष्टि—चैतन्येति ॥१००१॥

---

१. अत्र पदशब्देन गवादिखुराङ्कितदेशः उच्यते दृष्टान्ते, दार्ष्टान्तिके पुनः पदमिति जीवस्वरूपं तस्य विचारेण ब्रह्मतां प्रतिपद्यते ।

जडेष्वेकमनेकेषु कूटस्थं क्षणभङ्गिषु । अनात्मसु तथा चाऽऽत्मा संहतेष्वप्यसंहतः ॥ २ ॥
तस्यावाक्यार्थरूपस्य पदमेतत्प्रचक्षते । पद्यतेऽनेन तद्यस्मात्तेनेदं पदमुच्यते ॥ ३ ॥
स्वमहिम्नैव चेत्सिध्येदुपायः परमार्थवत् । स्वतः सिद्धेर्न मिथ्यात्वं तस्य स्यात्परमार्थवत् ॥ ४ ॥
परमार्थादभिन्नश्चेन्नितराममृषात्मता । इत्यादि पूर्वमुक्तं यदनुसंधेयमत्र तत् ॥ ५ ॥
न सामान्यं विशेषो वा यथैकात्म्येऽवगम्यते । उक्तमप्युत्तरत्रैतदसंतोषात्प्रवक्ष्यते ॥ ६ ॥
प्रत्यगात्मनि विज्ञाते नाज्ञातमवशिष्यते । अनेन ह्येतदित्युक्त्या तत्पूर्वमुपवर्णितम् ॥ ७ ॥
निःशेषपुरुषार्थाप्तिर्दुःखहानिस्तु तत्फलम् । यथा हेत्युच्यते श्रुत्या साधनाभिन्नमात्मनः ॥ ८ ॥

वेदनलाभयोः भेदशङ्का तन्निरासश्च

ननु प्रतीचि विदिते तदन्यद्विदितं भवेत् । ज्ञानार्थे प्रकृते कस्माल्लाभार्थेनोपसंहृतिः ॥ ९ ॥
ज्ञानलाभार्थयोर्यस्मादेकार्थत्वं विवक्षितम् । अविद्याध्वंसमात्रत्वात्तेनात्रास्त्वविरुद्धता ॥१०॥

साक्ष्यावैलक्षण्ये कथं साक्षित्वं तत्राऽऽह—जडेष्विति । अजडमित्यध्याहारः । तथाऽपि भिन्नत्वे देहादिवदसाक्षित्वमित्याशङ्क्याऽऽह—एकमिति । सक्रियत्वेनासाक्षित्वमाशङ्क्याऽऽह—कूटस्थमिति । प्रत्यक्तया यदाभातीत्युक्तं प्रत्यक्त्वं व्यनक्ति—अनात्मस्विति । सावयवत्वाद्देहादिवदप्रत्यक्त्वमाशङ्क्याऽऽह—संहतेष्विति ॥१००२॥

शोधितं त्वमर्थमुक्त्वा तस्य ब्रह्मैक्यं प्रति पदत्वं प्रतिजानीते—तस्येति । ब्रह्मणस्तदर्थस्याखण्डस्य प्रत्यक्त्वेन शोधितं प्रत्यक्चैतन्यं हेतुरित्यर्थः । कथं त्वमर्थस्तदर्थस्य पदमित्याशङ्क्य करणव्युत्पत्त्येत्याह—पद्यत इति । शोधितेन हि त्वमर्थेन तदर्थः स्वरूपतया ज्ञायते पदार्थज्ञानाधीनत्वाद्वाक्यार्थज्ञानस्येत्यर्थः ॥१००३॥

प्रत्यक्चितो ब्रह्मधीहेतोर्याथार्थ्यवदाचार्यादेरपि तद्धीहेतोस्तद्भावान्न तन्मिथ्यात्वं युक्तमित्याशङ्क्याऽऽचार्यादि स्वतोऽन्यतो वा सिध्यतीति विकल्प्याऽऽद्यमनुवदति—स्वमहिम्नेति । सदा स्वतः सिद्धेः स चैतन्यवन्न जडः स्यादिति दूषयति—परमार्थवदिति । परतः सिद्धौ तस्य मिथ्यात्वं स्यादाध्यासिकसंबन्धादृते दृशा तदसिद्धेरिति द्वितीयं प्रत्याह—मिथ्यात्वमिति । किं चोपायः परमार्थादभिन्नो भिन्नो वा ? नाऽऽद्य इत्याह—परमार्थवदिति । स्वरूपेणोपायस्य त्वया सत्यत्वेष्टेस्तदभिन्नत्वोपगमाच्चेत्यतिशयस्तन्मृषार्थाभावाद्वस्त्वन्तराभावाच्च तदद्वयमिति भावः । न द्वितीयो भेदस्याप्रामाणिकत्वान्न च कुर्वतोऽकुर्वतश्चोपायत्वमतः सर्वस्योपायस्याद्वये चिदात्मनि कल्पितत्वमव्याकृतविचारादावुक्तमत्रोपायासत्यत्वे हेतुत्वेन ज्ञेयमित्याह—इत्यादीति ॥१००४–१००५॥

ब्रह्मणः सामान्यविशेषात्मकत्वादकल्पितं जगदित्याशङ्क्योक्तवक्ष्यमाणन्यायविरोधान्नैवमित्याह—नेत्यादिना । तथोक्तमपीति तथाशब्दमाहृत्य योजना । असंतोषान्नानारसेऽर्थे मानयुक्तिविरोधात्पुनर्दोषोक्तिरित्यर्थः ॥१००६॥

यथेत्यादेर्यथोक्तज्ञानानुवादित्वमर्थान्तरमुक्त्वा कीर्तिमित्यादेस्तात्पर्यं वक्तुमनेन हीत्यत्रोक्तमनुवदति—प्रत्यगिति । क्रियापदादूर्ध्वमितिपदं यत्पदं चावतार्य योजनीयम् ॥१००७॥

तस्य ज्ञानस्य फलोक्तिमवतारयति—निःशेषेति । पुरुषार्थः सुखं तस्य निःशेषत्वं पूर्णत्वं तत्फलं तस्य ज्ञानस्य फलमिति यावत् । आत्मनो विदुष इत्येतत् । साधनाभिन्नं स्वरूपज्ञानाभिन्नं तस्यैव वाक्योत्थवृत्त्युपेतस्य साधनत्वादित्यर्थः । अनेन हीत्यादावुक्तं तत्त्वज्ञानं यथेत्यादिश्रुत्याऽनूद्य तत्फलमात्मरूपा मुक्तिः कीर्तिमित्यादिनोच्यत इति भावः ॥१००८॥

अनेनेत्यत्र वेदेतिज्ञानेनोपक्रम्यानुविन्देदितिलाभमुक्त्वा पुनर्ज्ञानार्थेन विदिना कीर्तिमित्यादिश्रुतिरुपसंहरति अतोऽनुविन्देदितिश्रुतेरुपक्रमोपसंहारविरोध इति शङ्कते—नन्विति । क्रियाशब्दादुपरिष्टादितिशब्दो द्रष्टव्यः । ज्ञानार्थे शब्दे मध्ये लाभार्थेन शब्देनोक्त्वा पुनर्ज्ञानार्थेन शब्देनोपसंहरति कस्मादिति चोद्यार्थः ॥१००९॥

ज्ञानेनोपक्रम्य लाभमुक्त्वा ज्ञानफलत्वेनोपसंहारो न विरुध्यते ज्ञानलाभार्थशब्दयोरैकार्थ्यादित्याह—ज्ञानेति । यस्मादित्यस्य तेनेत्यनेन संबन्धः । ज्ञानलाभयोरैक्ये हेतुमाह—अविद्येति । हस्तगतविस्मृतसुवर्णलाभ-

नित्यलब्धैकरूपस्य नालाभोऽज्ञानतोऽन्यतः । यथैवं तस्य लाभोऽपि तज्ज्ञानान्नान्यतो भवेत् ॥११॥
आत्मता ब्रह्मणो लाभो ब्रह्मताऽप्यात्मनःफलम् । व्यावर्त्यभेदात्तद्द्विस्तेरेकं वस्तु द्विरुच्यते ॥१२॥
ब्रह्मता नाऽऽत्मनोऽन्यत्र नाऽऽत्मता ब्रह्मणोऽन्यतः । यत एवमतोऽभेदो ज्ञानलाभार्थयोरिह ॥१३॥
लब्धृलब्धव्ययोर्भेदो यत्राविद्योत्थभूमिषु । फलभेदः क्रियाभेदात्तत्र भिन्नार्थता तयोः ॥१४॥
आप्ताशेषपुमर्थोऽपि प्रत्यग्याथात्म्यमोहतः । असर्वज्ञो भवेदात्मा तथाऽनाप्तार्थ एव च ॥१५॥
तत्राऽऽत्मा लब्धाऽविद्वान्स्याल्लब्धव्यं च क्रियाफलम् । उत्पत्त्याद्यन्तरायं सत्कारकोपात्तिपूर्वकम् ॥१६॥
तादृग्लब्धोऽप्यलब्धः स्यादविद्यामात्रहेतुतः । आद्यन्तयोरभावाच्च स्वप्नपुत्रादिलाभवत् ॥१७॥
विपरीतस्वभावोऽत आत्मलाभः स्वतः सदा । अज्ञानहेतोरन्यादृक्स च ज्ञानान्निवर्तते ॥१८॥

वत्प्रत्यग्ब्रह्मलाभस्याज्ञानध्वस्तिमात्रत्वात्तस्याश्च ज्ञानानतिरेकात्तयोरेकताऽत्रेत्यर्थः । तयोरैक्यं हेतूकृत्यानुविन्देदित्यत्र प्रक्रमोपसंहाराभ्यामविरुद्धत्वमाह—तेनेति ॥१०१०॥

आत्मनि लाभस्य ज्ञानमात्रत्वं दृष्टान्तेन साधयति—नित्येति । आत्मन्यलाभस्याज्ञानानतिरेकात्तत्र लाभो ज्ञानमेवेत्यर्थः ॥१०११॥

ग्रामादौ ज्ञानलाभयोर्भेदोपलम्भात्प्रकृतेऽपि कथं तदैक्यमित्याशङ्क्य तत्साधनार्थमत्र लाभशब्दार्थमाह—आत्मतेति । फलशब्दो लाभार्थः । ब्रह्मणोऽनात्मत्वे ब्रह्मत्वायोगादात्मनश्चाब्रह्मत्वे तत्त्वानुपपत्तेस्तयोरैक्ये कथं ब्रह्माऽऽत्मेति द्विर्वचनं पौनरुक्त्यात्तत्राऽऽह—व्यावर्त्येति । संसारित्वपारोक्ष्यादिनिरस्यभेदाद्विशिष्टभेदेऽपि वस्तुतो वस्त्वेकमेव द्विवारं व्यपदिश्यते तथाच व्यावर्त्यभेदेन विशिष्टवाच्यार्थभेदादपुनरुक्तिरित्यर्थः ॥१०१२॥

तदभेदमुक्तमनूद्य तं हेतूकृत्य प्रतीचि ज्ञानलाभयोरैक्यं निगमयति—ब्रह्मतेति । न हि प्रत्यग्ब्रह्मणोरभेदे ज्ञानादन्यो लाभस्तत्रास्तीत्यर्थः ॥१०१३॥

तच्छब्दयोरर्थभेदस्तर्हि कुत्रेत्याशङ्क्याऽऽह—लब्धेति । यत्र मैत्रो लब्धा ग्रामादि लभ्यं स एव ज्ञाता घटादि ज्ञेयं तत्र ज्ञानलाभार्थक्रिययोर्भेदाज्ज्ञानलाभयोः फलयोर्भेदोऽतोऽविद्योत्थानात्मसु तच्छब्दयोर्भिन्नार्थतेत्यर्थः ॥१०१४॥

अविद्यादशायां लब्धृलब्धव्ययोर्ज्ञातृज्ञेययोश्च भेदाज्ज्ञानलाभशब्दयोर्भिन्नार्थतेत्युक्तम् । इदानीमाप्ताशेषपुमर्थस्य चिद्धातोर्न लब्धृत्वादीत्याशङ्क्योक्तमेव समर्थयते—आप्तेति । वस्तुतस्तु नासर्वज्ञत्वं नाप्यनाप्तार्थत्वमिति चशब्दार्थः ॥१०१५॥

अविद्यादशां दर्शयित्वा तत्र लब्ध्रादिसंभावनामाह—तत्रेति । चशब्दादविद्वानात्मा ज्ञाता ज्ञेयं घटादीत्युक्तम् । क्रियाफलं विशिनष्टि—उत्पत्त्यादीति । अन्तरायो व्यवधिस्तदुक्तमुत्पाद्यक्रियाव्यवहित इति । कारकाणामुपात्तिरुपादानं तत्पूर्वकं क्रियाफलं कारकाभावे तदभावादित्याह—कारकेति ॥१०१६॥

अनात्मलाभस्याविद्योत्थमिथ्याज्ञानजन्यत्वेनाऽऽभासत्वमाह—तादृगिति । मात्रशब्दो वास्तवहेत्वन्तरनिरासार्थः । अनात्मलाभोऽविद्याकल्पित आगन्तुकत्वात्संमतवदित्याह—आद्यन्तयोरिति ॥१०१७॥

आत्मलाभोऽप्यविद्याकल्पितो लाभत्वादनात्मलाभवदित्याशङ्क्याऽऽह—विपरीतेति । अतोऽनात्मलाभादिति यावत् । वैपरीत्यमेवाऽऽह—स्वत इति । जडत्वं कादाचित्कत्वं चोपाधिरिति भावः । तस्यापि कादाचित्कत्वादिदृष्टेः साधनव्याप्तिमाशङ्क्याऽऽह—अज्ञानेति । कादाचित्कत्वोपाधेर्न[1] व्यतिरेकशुद्धिरज्ञाने व्यभिचारादित्याशङ्क्याऽऽह—स चेति । अज्ञानाख्यो हेतुस्तद्विरोधिनो ज्ञानादपगच्छत्यतश्चाऽऽत्मलाभः स्वाभाविको नित्यस्तदन्यथात्वप्रथाहेत्वभावात्तथा च विमतोऽकल्पितोऽनाद्यनन्तत्वादात्मवदिति व्यतिरेकशुद्धिरिति भावः ॥१०१८॥

---

१. न व्यतिरेकशुद्धिः—साधनाव्याप्तिः आत्मज्ञानस्यापि कादाचित्कत्वात् तत्र तदभावासिद्धिरित्यर्थः । तथा चात्मलाभस्य नित्यत्वात् तत्र कादाचित्कत्वाभावसिद्धिः साधनाव्याप्तिश्च ।

आरभ्य सर्वं वेदेति ज्ञानार्थेनोपसंहृतिम् । अतोऽनुविन्देदित्याह लाभार्थेनैव तत्फले ॥१९॥

एवं कीर्तिं श्लोकं विन्दते इत्यस्य विवरणम्

अप्रख्यातो यथैवाऽऽत्मा व्याकृते ख्यातिमेयिवान् । एवं तदवबोधान्ना ख्यातिमेत्यविनश्वरीम् ॥२०॥
संहृतिश्चक्षुरादीनां श्लोकशब्देन भण्यते । यथाऽऽत्मा संहृतिं प्रापद्व्याकृतः करणादिभिः ॥२१॥
एवं विद्वानवाप्नोति पुत्रामात्यादिसंहृतिम् । उक्तज्ञानप्रवृत्त्यर्थमर्थवादोऽयमिष्यते ॥२२॥
निरेषणानां नेदृग्धि संसारं प्रजिहासताम् । फलं युक्तं प्रवृत्त्यङ्गमर्थवादो भवेदतः ॥२३॥
कीर्तिं चैकात्म्यविज्ञानं श्लोकं चैकात्म्यसंगतिम् । यथोक्तवस्तुवेद्येतत्फलमाप्नोत्यभीप्सितम् ॥२४॥

मू.—तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा । स योऽन्यमात्मनः प्रियं ब्रुवाणं ब्रूयात्प्रियँ रोत्स्यतीतीश्वरो ह तथैव स्यादात्मानमेव प्रियमुपासीत स य आत्मानमेव प्रियमुपास्ते न हास्य प्रियं प्रमायुकं भवति ॥८॥

तदेतत्प्रेय इति श्रुत्यर्थविवरणम्

चव्याकृतव्याकरणं प्रत्यग्दर्शनसिद्धये । तदन्तरायस्तत्सक्तिः स्तन्निवृत्तौ परा श्रुतिः ॥२५॥
शब्दादिवडिशाकृष्टचेतसः प्रत्यगीक्षणे । न सामर्थ्यं यतस्तेभ्यो व्यावृत्त्यर्थं परा श्रुतिः ॥२६॥

अविरोधमुपसंहरति—आरभ्येति । यतो दर्शितनीत्या ज्ञानलाभयोरैक्यमतोऽनेन हीति ज्ञानार्थेन विदिनाऽऽरभ्यानुविन्देदिति लाभार्थेन विदिना मध्ये लाभमुक्त्वा भूयो ज्ञानफले वाच्ये ज्ञानार्थेनैव विदिशब्देनोपसंहृतिमाह श्रुतिरिति योजना ॥१०१९॥

आदिमध्यावसानानामविरोधमुक्त्वा कीर्तिमित्यादिपूर्वपक्षानुगुणतया व्याचष्टे—अप्रख्यात इति । अव्याकृते नामरूपाभ्यामख्यातोऽपि व्याकृते जगति ताभ्यामाख्यातस्तथा यथोक्तात्मज्ञानादधिकृतः पुरुषो नित्यसिद्धां ख्यातिमेतीत्यर्थः ॥१०२०॥

श्लोकशब्दार्थमाह—संहृतिरिति । पदार्थमुक्त्वा वाक्यार्थमाह—यथेति । ननु नोक्तं फलमात्मज्ञानानुकूलं तस्य निरतिशयफलोपायत्वात्तत्राऽऽह—उक्तेति ॥१०२१-१०२२॥

ब्रह्म वेदेत्यादिवत् फलविवक्षयैव किं न स्यादत आह—निरेषणानामिति । एषणात्रयनिर्मुक्तानां तदन्तस्थं संसारं त्यक्तुमिच्छतां तदन्तर्भूतं ख्यात्यादिफलं नोचितमित्यर्थः । फलविवक्षाऽयोगे वाक्यस्य ज्ञानस्तुत्यर्थत्वं फलतीत्याह—प्रवृत्तीति ॥१०२३॥

चकाराभ्यां पूर्वपक्षं व्यावर्त्य सिद्धान्तमाह—कीर्तिमिति । न हि संभवन्त्यां फलोक्तौ स्तुतिकल्पना युक्ता तथा च ज्ञानलाभयोर्नात्रार्थभेदो ब्रह्मात्मनोरभेदादिति यथोक्तं वस्तु यो वेद स मुमुक्षूणामपेक्षितमैक्यज्ञानं तत्फलं च मुक्तिमाप्नोतीत्येतदर्थं कीर्त्यादिवाक्यमित्यर्थः ॥१०२४॥

तदेतदित्यादेस्तात्पर्यमाह—अव्याकृतेति । आत्मज्ञानार्थं सृष्टिरुच्यते "तदस्य रूपमित्या"दिश्रुतेस्तस्य प्रतिबन्धस्तत्र सृष्टे जगत्यासक्तिस्तन्निवृत्त्यर्थमुत्तरं वाक्यं नामरूपासक्तमेवास्य दर्शनं बाह्यविषयासङ्गि प्रीतेर्गृह्यमाणत्वात्तन्निविवर्तयिषुरतश्चाऽऽत्मनि प्रविवर्तयिषुः प्रकरोतीति भर्तृप्रपञ्चैरुक्तत्वादित्यर्थः ॥१०२५॥

तदासक्तिर्नाऽऽत्मधीप्रतिबन्धः सह संभवादित्याशङ्क्याऽऽह—शब्दादीति । ते हि दृश्यमानाश्चित्तस्या-

---

१. अनेन ह्येतत्सर्वं वेद—इत्युपक्रमः यथा ह वै पदेनानुविन्देत् इति मध्ये ज्ञानार्थेन परामर्शः । य एवं वेदेति ज्ञानेनोपसंहारः इत्यर्थः ।

२. तदस्य रूपं प्रतिचक्षणाय इति अत्रैव द्वितीयाध्याये—भगवतः सृष्टिकर्तृत्वादिकथनं स्वरूपज्ञानायेत्युक्तम् ।

पदनीयत्वे हेत्वन्तरमिति भाष्यभावः

हेत्वन्तरोपदेशो वा पदनीयत्व आत्मनः । तदेतदितिशास्त्रेण भण्यते तद्बुभुत्सवे ॥२७॥
सांख्यमुक्तिनिवृत्त्यर्थमथवाऽस्तूत्तरा श्रुतिः । प्रेयोगिराऽऽत्मनो यस्मान्निष्ठाऽऽनन्दस्य भण्यते ॥२८॥
पुत्रात्प्रेय इदं तत्त्वं वित्तात्प्रियतरं तथा । पुत्रो वित्तं च लोकेऽपि प्रसिद्धं प्रियरूपतः ॥२९॥

आत्मनः प्रियतमत्वोपपादनम्

ईयसुंस्तमबर्थे स्यात्पुत्रादीनां बहुत्वतः । छान्दसत्वात्प्रियतमस्तथाऽऽत्मा संभवत्यपि ॥३०॥
वित्तात्पुत्रः प्रियः पुत्रात्पिण्डः पिण्डात्तथेन्द्रियम् । इन्द्रियेभ्यः प्रियः प्राण आत्मा प्रियतमस्ततः ॥३१॥
वित्तं द्विविधमप्यत्र वित्तशब्देन गृह्यते । देवलोकः फलं यस्माद्दैवस्यापि न तत्पदम् ॥३२॥
प्रीतिसाधनहेतुत्वात्प्राणादौ प्रीतिरिष्यते । बन्धकीप्रीतिवन्मुख्या नैवानात्मसु युज्यते ॥३३॥

ऽऽकर्षकत्वाकद्बडिशवदालक्ष्यन्ते तत्प्रवणचेतसो न प्रत्यगर्थधीर्युक्ता पराक्प्रत्यग्दृष्ट्योर्विरोधात्तस्माद्विषयेभ्यो मनो व्यावर्त्य प्रतीचि प्रवेशयितुमुत्तरा श्रुतिरित्यर्थः ॥१०२६॥

आत्मनः पदनीयत्वे तस्यैवाज्ञातत्वसंभवो हेतुरुक्तोऽधुना निरतिशयप्रियत्वं हेत्वन्तरमनेनोच्यत इति भाष्योक्तं तात्पर्यमाह—हेत्वन्तरेति । तद्बुभुत्सवे हेत्वन्तरमात्मानं वा जिज्ञासमानायेत्यर्थः ॥१०२७॥

प्रकृतिपुरुषाविवेककृतबन्धध्वस्तिमात्रं मुक्तिर्नानतिशयसुखव्यक्तिरिति सांख्याः—यथाऽऽहुः—
"वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य । पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य" इति ॥
"प्राप्ते शरीरभेदे चरितार्थत्वात्प्रधानविनिवृत्तौ । ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति" इति च ॥

तन्निवृत्त्यर्थमिदमिति तात्पर्यान्तरमाह—सांख्येति । कथमनया श्रुत्या सर्वस्मात्प्रियतमत्वमात्मनो वदन्त्या सांख्यमुक्तिनिवृत्तिस्तत्राऽऽह—प्रेयोगिरेति । आत्मनः प्रियतमत्वोक्त्या तस्मिन्नानन्दस्यावसानं यतोऽनया श्रुत्योच्यतेऽतो दुःखत्रयध्वस्तिमात्रं सांख्यीयं मोक्षं न मृष्यते श्रुतिरित्यर्थः ॥१०२८॥

भाष्यद्वयानुसारेण[1] स्वाभिप्रायेण च तात्पर्यमुक्त्वाऽक्षरार्थमाह—पुत्रादिति । वीतरागाणां मुमुक्षूणां पुत्रादौ प्रेमानुपलम्भात्कथं तस्मात्प्रियतरत्वं स्वस्योच्यते तत्राऽऽह—पुत्र इति । अपिरभिव्याप्तौ । न वस्तुतोऽस्य प्रियत्वं किंतु प्रतीत्येति वक्तुं रूपशब्दः । लोकदृष्ट्याऽऽत्मनस्तस्मात्प्रियतरत्वोक्तिरित्यर्थः ॥१०२९॥

ईयसुन्प्रत्ययस्यार्थमाह—ईयसुन्निति । बहूनामेकस्य निर्धारणे तमपो विधानादात्मनश्च प्रियत्वे पुत्रादिभ्यो बहुभ्योऽतिशयस्य विवक्षितत्वादिति हेतुमाह—पुत्रादीनामिति । ननु द्विवचनविभज्योपपदे तरबीयसुनाविति स्मरणात्तमबर्थत्वं तस्यायुक्तं तत्राऽऽह—छान्दसत्वादिति । ईयसुनस्तरपा समानार्थत्वस्मृतावप्यस्य च्छन्दोगतत्वादविवक्षित्वा स्वार्थे तमबर्थत्वमेष्टव्यमित्यर्थः । छान्दसत्वेऽपि किमित्यस्यातिशयमात्रमादाय तमबर्थतेष्टा मुख्यसंभवे लक्षणायोगादित्याशङ्क्य प्रियतमत्वस्यैवाऽऽत्मनि संभवादन्यस्य तादृशोऽभावात्तस्मिन्नीयसुनस्तमबर्थत्वमेवेत्याह—प्रियतम इति । अपिरवधारणे । आत्मैव प्रियतमो न तथाऽनात्मा तस्मिन्प्रियतमत्वमेव संभवति पुत्राद्यनेकापेक्षया प्रियत्वादिति योजना ॥१०३०॥

तस्य प्रियतमत्वं पारिशेष्यानुभवाभ्यामाह—वित्तादिति ॥१०३१॥

वित्तशब्दस्य विवक्षितमाह—वित्तमिति मानुषं दैवं चेति द्वैविध्यम् । प्रकृता श्रुतिः सप्तम्यर्थः । मानुषं वित्तं धनादि बन्धफलत्वादत्र वित्तशब्देन गृह्यतां दैवं वित्तं ध्यानाख्यं मुक्तिफलत्वान्न तेन ग्राह्यमित्याशङ्क्याऽऽह—देवेति । यथा पुत्रकर्मणोर्मनुष्यलोकः पितृलोकश्च फलमेवं देवलोकोऽपरविद्याख्यदैववित्तस्यापि फलं विद्यया देवलोक इति श्रुतेर्न मुक्तिस्तत्फलं निषेधश्रुतेस्तस्मात्तदपीह ग्राह्यमित्यर्थः ॥१०३२॥

आत्मनि प्राणादौ च प्रीतेः समत्वात्कथमात्मनः प्रियतमत्वं तत्राऽऽह—प्रीतीति । उल्लासो मानसः

१. भाष्यद्वयं—भर्तृप्रपञ्चभाष्यं भगवत्पादभाष्यं च ।

व्याध्याद्युपप्लुतो यस्माद्वक्ति निर्विण्णमानसः । अद्यैव मरणं श्रेयो मम दुःखार्दितात्मनः ।।३४।।
प्रतीचि निर्निमित्तैव सर्वावस्थास्वपीष्यते । प्रीतिरग्न्युष्णवत्तस्मादात्मा प्रेयाननात्मनः ।।३५।।
त्रैगुण्यात्सर्वभावानां मोहदुःखसुखात्मता । स्वत एव त्वनध्यस्ता ह्येवं केचित्प्रचक्षते ।।३६।।
तत्तु नैवं यतः सत्त्वं मोहादित्रयकृद्धियः । भानूदयं प्रपश्यामश्चोरदृग्रोगिदिग्दृशाम् ।।३७।।
समं त्रयं त्रिषु भवेत्त्रैगुण्यं चेद्रवौ मतम् । गुणान्तराधिकारोऽपि न च भानूदये मतः ।।३८।।
प्रमाणैर्गृह्यते प्रीतिर्व्यभिचारिण्यनात्मसु । रज्ज्वां सर्पादिवन्नैवं प्रत्यगात्मनि सेक्ष्यते ।।३९।।

आत्मैव प्रिय इत्यत्र हेतूक्तिः

आत्मैव प्रिय इत्यत्र हेतुः स्पष्टोऽभिधीयते । श्रुत्याऽन्तरतरोक्त्येह तद्धेतुश्चाऽऽत्मतोच्यते ।।४०।।
यथाऽन्तरतमः प्रत्यक्तथोदर्के प्रवक्ष्यते । वाचक्नव्यक्षरान्तेन ग्रन्थेन प्रत्यगात्मनः ।।४१।।

प्रीतिस्तस्याः साधनमुत्पादनं तत्र हेतुत्वादिति यावत् । बन्धकी वारवनिता । वर्धकीप्रीतिवदिति पाठे त्वसतो वर्धकी प्रसिद्धैव ।।१०३३।।

प्राणादिषु प्रीतेरमुख्यत्वे लोकप्रसिद्धिमाह—व्याध्यादीति । आदिपदेन दरिद्रताराजपीडादि गृह्यते । तस्मात्प्राणादावमुख्या प्रीतिरिति शेषः ।।१०३४।।

तथैव प्रतीच्यपि प्रीतिरमुख्या स्यादित्याशङ्क्यानुभवविरोधमाह—प्रतीचीति । तत्र स्वाभाविकी प्रीतिरित्यत्र दृष्टान्तमाह—अग्नीति । प्राणादावात्मनि च प्रीतेरेकरूपत्वाभावे फलितमाह—तस्मादिति १०३५।।

आत्मनि मुख्या प्रीतिरनात्मन्यमुख्येत्युक्ते वैपरीत्यमिति सांख्यमतमाह—त्रैगुण्यादिति । स्वतस्त्वव्याख्यानमनध्यस्तेति । उक्तार्थस्य सांख्यशास्त्रे प्रसिद्धतां वक्तुं हिशब्दः । आत्मनः सत्त्वादिगुणहीनत्वात्स्वतः सुखाद्यभावः । यथाऽऽह—"गुणवत्यगुणस्य सतस्तस्यार्थमपार्थकं चरति" इति । तथा च प्राकृतबुद्ध्यविवेकात्तस्य सुखादीति तस्मिन्प्रीतिरमुख्या—

"तत्र जरामरणकृतं दुःखं प्राप्नोति चेतनः पुरुषः । लिङ्गस्याविनिवृत्तेस्तस्माद्दुःखं स्वभावेन ।।"

इत्युक्तेरिति भावः ।।१०३६।।

भावानां त्रैगुण्यकृतं मोहाद्यात्मत्वं दूषयति—तत्त्विति । एकमेव सत्त्वं बुद्धेर्मोहादिकरमित्यत्र दृष्टान्तमाह—भानूदयमिति । स हि केवलसत्त्वात्मकः । यदाह—सत्त्वं लघु प्रकाशकमिष्टमिति । नात्र रजस्तमसी चलनावरणयोरभावात्तथाऽपि चोराणां नेत्ररोगिणां दिग्विभागं द्रष्टुमिच्छतां च क्रमेण मोहदुःखसुखानां कारणं प्रतीमोऽतो न भावानां त्रैगुण्यान्मोहाद्यात्मतेत्यर्थः ।।१०३७।।

भानूदयस्यापि गुणत्रयात्मकत्वमनात्मत्वात्संमतवदित्याशङ्क्य तस्करादिषु भास्करोदयदर्शिषु मोहादीनां साम्यं स्यादित्याह—सममिति । न हि भानूदयस्य गुणत्रयात्मत्वे पुरुषभेदेन कार्यविशेषकरत्वे हेतुरस्तीति भावः । किंच रवेस्त्रैगुण्यं वदतः सिद्धान्तहानिस्तस्य प्रकाशैकरसस्य सत्त्वमूर्तित्वात्सत्त्वं लघु प्रकाशकमित्युक्तेरित्याह—गुणान्तरेति । अधिकारशब्दोऽत्र प्रवेशविषयः न हि तत्र रजस्तमसी तत्कार्याभावात् । उपष्टम्भकं चलं च रजो गुर्वावरकमेव तम इति हि पठन्ति । न च कार्यभेददृष्ट्या तत्र त्रैगुण्यं कल्प्यं तदव्यवस्थानस्योक्तत्वात्सत्त्वस्य तु व्यवस्थया कार्यकरत्वमबाधितानुभवाधिगतमित्यर्थः ।।१०३८।।

यत्तु सत्त्वाद्यभावादात्मनः सुखाद्यभावे तत्र प्रीतिरमुख्येति तत्राऽऽह—प्रमाणैरिति । सा व्यभिचारिणी प्रीतिरिति यावत् । सर्वावस्थास्वपि तस्मिन्ननतिशयप्रीतिप्रतीतेरित्यर्थः ।।१०३९।।

पुत्रादौ प्रीतिव्यभिचारेऽप्यात्मवत्प्राणादौ तदव्यभिचारादात्मनो न प्रियतमत्वमित्याशङ्क्य पदान्तरमादत्ते—आत्मैवेति । स्पष्टत्वमुभयसंमतत्वम् । तृतीये समानाधिकरणे व्यधिकरणे अपि वा । इहेति प्रकृतवाक्योक्तिः । अन्तरतमत्वे प्रियतमत्वसाधने हेतूक्त्यर्थं यदयमात्मेति वाक्यमित्याह—तद्धेतुश्चेति ।।१०४०।।

न केवलमत्रैव प्रतीचोऽन्तरतमत्वं किंतूत्तरत्रापीत्याह—यथेति । गार्ग्या वचक्नोर्दुहितुः प्रश्नोऽक्षरविषय-

प्रत्यक्त्वाऽन्यानपेक्षा हि तदन्यत्तदपेक्षया । यतोऽन्तरतमः प्रत्यङ्तस्मादेवावगम्यते ।।४२।।
यस्य त्वष्टास्ववस्थासु प्रत्यक्त्वं सममिष्यते । तस्यान्तरतम इति दुर्घटं वचनं भवेत् ।।४३।।
अन्यूनाधिकरूपासु त्वष्टावस्थास्विहाऽऽत्मनः । कं विशेषं समाश्रित्य ह्यात्माऽन्तरतमो मतः ।।४४।।
भाक्तैवानात्मसु प्रीतिर्यस्मात्तस्मादनात्मनः । व्युत्थाप्य निखिलां प्रीतिं प्रतीच्येव निवेशयेत् ।।४५।।

पुत्रादिप्रीतेर्गौणत्वे युक्तिकथनम्

एवं व्यवस्थितौ सत्यां युक्तिलेशोऽभिधीयते । पुत्रादिप्रियमात्मेति द्वयोर्विवदमानयोः ।।४६।।
आत्मनोऽन्यत्प्रियमिति यो ब्रूते मोहसंप्लुतः । ब्रुवाणं तं प्रति ब्रूयादिति श्रुत्यनुशासनम् ।।४७।।
यस्ते प्रियतयाऽभीष्टः सोऽचिराद्दुःखकृद्भवेत् । यतो नङ्क्ष्यति स क्षिप्रं नश्यंश्चासुखकृत्प्रियः ।।४८।।
यथोक्तस्याविसंवादं तत्तथैवेति च श्रुतिः । आत्मैव प्रिय इत्येवं प्रतिज्ञां प्रत्यभाषत ।।४९।।
यस्मादेवमतो हित्वा प्राणादीनप्रियात्मनः । सर्वान्तरतमात्मानमुपासीत प्रियं सदा ।।५०।।

स्तादृक्च मुनेरुत्तरं तदन्तग्रन्थेन तन्निर्णयपरेण प्रत्यगात्मयोगिना तस्यान्तरतमत्वमुच्यते । अक्षरं हि सर्वस्मादान्तरं तच्च प्रत्यगिति तदन्तरतमत्वं दर्शितमित्यर्थः ।।१०४१।।

किं चाऽऽत्मत्वस्याऽऽत्मनोऽन्यानपेक्षत्वादनात्मनश्चाऽऽत्मापेक्षत्वात्सोऽन्तरतम इत्यन्तरतमत्वे युक्तिमाह—प्रत्यक्त्वेति । अपेक्षणीयवस्त्वसंभवो हिशब्दार्थः । अनात्मनोऽनात्मत्वादेव स्वातन्त्र्यायोगः । प्रत्यक्त्वस्याऽऽत्मनि स्वाभाविकत्वे फलितमाह—यत इति ।।१०४२।।

अन्तरतरवचनं स्वमतेनोपपाद्य भर्तृप्रपञ्चमते न युक्तमित्याह—यस्येति । पिण्डो जातिर्विराट्सूत्रं दैवमव्याकृतमन्तर्यामी साक्षीत्यष्टावस्थानां न बाह्याभ्यन्तरभावो यथा घटशरावादीनां मृद्विकाराणां मृदेव तत्त्वं तथा सामान्यमात्मत्वमतस्तासु प्रत्यक्त्वं सममिति पक्षे नाऽऽत्मनोऽन्तरतमत्वसिद्धिरित्यर्थः ।।१०४३।।

अवस्थासु प्रतीचः साम्येऽप्यन्तरतमत्वं किं न स्यादित्याशङ्क्याऽऽह—अन्यूनेति । इहेत्यात्मनि कल्पितावस्थास्वन्तर्बहिर्विभागहीनासु सतीष्विति यावत् । तस्मादात्मातिरिक्ताव्याकृतादीनां बाह्यान्तरभावो वाच्योऽन्यथा प्रतीचोऽन्तरतमत्वासिद्धेरिति भावः । आक्षिप्तविशेषासंभवं स्फुटयितुं हिशब्दः ।।१०४४।।

परपक्षनिरासद्वाराऽऽत्मनोऽन्तरतमत्वं प्रियतमत्वे हेतुमुक्त्वा स्वपक्षमुपसंहरति—भाक्तैवेति ।।१०४५।।

आत्मैव प्रियो नानात्मेति स्थिते तत्प्रियतमत्वे युक्तिसंक्षेपार्थं स योऽन्यमित्यादिवाक्यमाह—एवमिति । तद्योजयति—पुत्रादीति । आत्मेतरप्रियवादित्वे हेतुमाह—मोहेति ।।१०४६।।१०४७।।

श्रुतिवचो व्याख्याय प्रियं रोत्स्यतीत्यादि प्रतिवादिवचो व्याचष्टे—यस्त इति । दुःखकरत्वे हेतुमाह—यत इति । विनाशित्वेऽपि कथं दुःखकरत्वं तदाह—नश्यन्निति । प्रियस्य नश्यतो दुःखकरत्वं प्रसिद्धमिति वक्तुं चशब्दः ।।१०४८।।

तथैव स्यादिति श्रुतेरर्थमाह—यथोक्तस्येति । आत्मैव प्रिय इत्येवंविधां प्रतिज्ञामादावुक्त्वा तच्छेषत्वेनानात्मनो दुःखकरत्वेनाप्रियत्वस्योक्तस्याविसंवादं च तथैव स्यादिति प्रत्यभाषत श्रुतिरिति योजना । यद्वा यत्तेनोक्तं तत्तथैवेतिश्रुतिरात्मैव प्रिय इति प्रतिज्ञां यथोक्तस्यानात्माप्रियत्वस्याविसंवादमभाषतेति संबन्धः । तदेतत्प्रेयः पुत्रादित्यादिनोक्तमनुवदति—आत्मैवेति ।।१०४९।।

पुत्रादिप्रियस्यानित्यत्वादात्मैव प्रियः सुखरूप इति प्रतिज्ञातं प्रतिपाद्याऽऽत्मानमेव प्रियमुपासीतेत्यस्यार्थमाह—यस्मादिति । सर्वस्मादन्तरताऽस्ति यस्याऽऽत्मनः स सर्वान्तरतस्तमिति यावत् । यद्वा मकारोऽत्र लुप्तो द्रष्टव्यः । सर्वान्तरतमश्चासावात्मा च तमिति वा । विजातीयप्रत्ययाव्यवधानार्थं सदेत्युक्तम् ।।१०५०।।

१. प्रतिज्ञां प्रत्यभाषतेत्यनेन निगमवचनमित्युक्तम् । तदुक्तं—प्रतिज्ञायाः पुनर्वचनं निगमनमिति ।

स य आत्मानमित्युक्त्या प्राप्तदोषनिराक्रिया । प्रमायुकत्वं मर्त्यत्वात्प्राणादेर्न तु वार्यते ।।५१।।
व्यावृत्तसर्वबाह्यार्थप्रीतेस्तन्मुक्तिकामिनः । न ह्यस्येति गिरा नातो मुमुक्षोः फलकीर्तनम् ।।५२।।
आविरिञ्चाद्विरक्तश्चेत्कुम्भीपाकादिवेह यः । आप्ताशेषक्रियाकार्यो मुक्तौ स विनियुज्यते ।।५३।।
परीक्ष्य लोकानित्यादि तथा नैगमिकं वचः । त्यज धर्ममधर्मं चेत्येवमादि स्मृतेरपि ।।५४।।

मू.—तदाहुर्यद्ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते । किमु तद्ब्रह्मावेद्यस्मात्तत्सर्वमभवदिति ।।९।।

तदाहुरित्यादेः सम्बन्धकथनम्

आत्माविद्यापनुत्त्यर्थं प्रारब्धोपनिषत्परा । आत्मेत्युपक्रमं यच्च तत्सूत्रं प्रागुदाहृतम् ।।५५।।
तद्धेदमित्यनेनास्याः प्रमेयोऽर्थो निरूपितः । अकृत्स्नवचसा तद्वत्प्रमाभासोऽप्यपोदितः ।।५६।।
आत्मैवैकोऽत्र द्रष्टव्यः कृत्स्नत्वान्नाऽऽत्मनोऽपरः । अकृत्स्न एव तावत्स्यात्तदन्यो यावदीक्ष्यते ।।५७।।
कोऽहं कस्य कुतो वेति कः कथं वा भवेदिति । प्रयोजकमतेरेष विध्यर्थोऽत्रावगम्यते ।।५८।।

स य आत्मानमित्यादिफलोक्तितात्पर्यमाह—स य इति । न ह्यस्य प्रियमित्यत्र प्रियमात्मसुखं तस्यापि लौकिकसुखवन्नाशः सुखत्वात्प्राप्तस्तस्य दोषस्य निराक्रिया फलोक्त्या क्रियत इत्यर्थः । प्रियशब्देन प्राणादि विवक्षित्वा विदुषो विद्यासामर्थ्यात्तन्न नश्यतीति फलवाक्यार्थे का हानिरित्याशङ्क्याऽऽह—प्रमायुकत्वमिति ।।१०५१।।

अतोऽन्यदार्तमितिश्रुत्या प्राणादेर्नाशित्वात्तदनाशो नोच्यते निर्गुणविद्याफलत्वेनेति फलितमाह—व्यावृत्तेति । बाह्यप्रीतिनिबन्धनो बन्धस्तच्छब्दार्थः । प्राणादेरनात्मनो नाशस्यावश्यंभावित्वमतःशब्दार्थः । विरक्तस्य संसारं जिहासतो मुमुक्षोर्ज्ञानिनो ज्ञानफलं प्राणाद्यनाशित्वं नानेनोच्यते । न हि नाशिनोऽनाशित्वोक्तिर्विद्याफलं मिथ्याज्ञानमूलत्वादित्यर्थः ।।१०५२।।

उक्ताधिकारिणः प्राणाद्यनाशापेक्षाभावाच्च तदनाशो विद्याफलत्वेन नात्रोच्यत इत्याह—आविरिञ्चादिति । ब्रह्मलोकावसानादशेषसंसारादिति यावत् । चेच्छब्दो विरक्ते दौर्लभ्यद्योतनार्थः । इहेति मध्येऽधिकृतानामिति यावत् । क्रियाकार्यं चित्तशुद्धिः ।।१०५३।।

वैराग्यादिभाजो मुक्तिभाक्त्वे श्रुतिस्मृती प्रमाणयति—परीक्ष्येति । स्मृतेरपि वच इति संबन्धः ।।१०५४।।

तदाहुरित्यादेर्गतेन संबन्धं वक्तुं वृत्तं कीर्तयति—आत्मेति । परविषयोपनिषद्वुषा वा इत्याद्या स्वाविद्याध्वंसिस्वविद्यार्थं प्रवृत्तेत्यर्थः । तस्यामुपनिषद्यात्मेत्येवोपासीतेत्यात्मविद्यासूत्रं तच्च वर्णितमित्याह—आत्मेत्युपक्रममिति । आत्मेत्युपक्रमो यत्रास्ति तत्तथेति यावत् ।।१०५५।।

अव्याकृतवाक्योक्तमनुवदति—तद्धेति । अस्या उपनिषदः प्रमेयोऽनधिगतः प्रत्यगात्मेति यावत् । अकृत्स्नो हीत्यादिवाक्योक्तमनुद्रवति—अकृत्स्नेति । अज्ञातप्रत्यगर्थस्याव्याकृतवाक्येन मेयोक्तिवदकृत्स्नवाक्येनानात्मनि प्रमाभासः परं न प्रमेति तन्मेयत्वं निरस्तमित्यर्थः ।।१०५६।।

अथ प्रकृतसूत्रार्थं कीर्तयति—आत्मेति । अत्रेत्यात्मानात्मनोर्द्रष्टव्यत्वप्राप्तावित्यर्थः । अन्ययोगव्यवच्छेदेनाऽऽत्मनो द्रष्टव्यत्वे हेतुः कृत्स्नत्वादिति । तस्मिन्दृष्टे द्रष्टव्यस्यानवशिष्टत्वादित्यर्थः । एवकारार्थमाह—नेति । अनात्मनोऽद्रष्टव्यत्वे हेतुः—अकृत्स्न इति । तस्मादात्मनोऽन्योऽनात्मा यावद्दृश्यते तावन्नियमेन स परिच्छिन्नोऽनुभूयते तद्यावत्सत्त्वं परिच्छिन्नत्वात्तद्धिया च स्वरूपास्फूर्तेर्न तद्द्रष्टव्यतेत्यर्थः । यद्वाऽऽत्मनोऽन्यो यावद्दृश्यते तावदात्मा परिच्छिन्न एव स्यात्प्रतियोगिनो दर्शनादतोऽनात्मत्वप्रसङ्गात्परिच्छिन्नमनात्मानं निरस्यापरिच्छिन्नमात्मानमेवानुसंदध्यादित्यर्थः ।।१०५७।।

आत्मैव द्रष्टव्यश्चेत्तव्याधीनविधिविषयो वाच्यो दर्शने च विधिस्त्रिविधोऽपि निरस्तो न चाऽऽत्मैव तथा सिद्धत्वात्तत्कुत्र विधिरित्याशङ्क्य तद्धेत्वन्वयव्यतिरेकव्यापारे तं दर्शयति—कोऽहमिति । देहादिष्वात्मत्वेन दृष्टेषु

उत्पत्तिस्थितिविध्वंसाः कार्याणां स्युः कुतो न्विति । अन्वयव्यतिरेकाख्यो व्यापारोऽत्र विधीयते ॥५९॥
तपसा तत्परं ब्रह्म विद्धीति वचनादतः । अन्वयव्यतिरेकाख्यो व्यापारोऽत्र तपो मतम् ॥६०॥
यतो वा इत्यतो वाक्यान्न तदन्यत्तपो भवेत् । लक्षणोक्तेर्य आत्मेति सोऽन्वेष्टव्य इति श्रुतेः ॥६१॥
त्यक्ताप्रियपरागर्थो ह्यमानित्वादिसाधनः । प्रियात्मानमुपासीत शक्रवद्ब्रह्मचर्यवान् ॥६२॥

विद्यासूत्रतद्विवरणयोः पक्षभेदाः

आत्मेत्यनेन वाक्येन ब्रह्मविद्योपसूत्रिता । यदर्थोपनिषत्कृत्स्ना वृत्तिस्तस्या भविष्यति ॥६३॥
आत्मेत्येकमिदं सूत्रं कण्डिकाद्वयमेव वा । अध्यायो वा समस्तोऽयमध्यायद्वयमेव वा ॥६४॥
अव्याकृतव्याकरणप्रभृतीन्यपरे विदुः । पञ्चैव किल सूत्राणि तथाऽपीष्टं न बाध्यते ॥६५॥

व्यस्तः समस्तो वाऽहमन्यो वेत्यर्थः। देहादेरेकैकस्य मिलितस्यान्यस्य वाऽहं संबन्धीत्यालोचयति—कस्येति। परस्माद्भूतपञ्चकादन्यस्माद्वा जातोऽहमित्याह—कुतो वेति। इतिशब्दः प्रयोजकमतेरित्यनेन संबध्यते। मत्तोऽन्योऽपि सन्नसन्वेत्याह—क इति। अहमपि सत्त्वेऽसत्त्वे भिन्नत्वेऽभिन्नत्वे च कथमुत्पद्येयेत्याह—कथमिति। पौराणिकं वचो हीदमनुक्रियते। एवं विचारप्रयोजकधीयुक्तस्य मुमुक्षोर्ज्ञानहेत्वन्वयादिव्यापाराख्यत्वमर्थशोधने नियोगः सूत्रे स्वीकृत इत्याह—इति प्रयोजकेति ॥१०५८॥

मुमुक्षुणा त्वमर्थशुद्धिवत्तदर्थशुद्धिश्च कार्या ज्ञातपदार्थद्वयस्यैव तदैक्यवाक्यार्थधीसिद्धेरित्याह—उत्पत्तीति। ब्रह्मणोऽन्यस्माद्वेति कुतःशब्दार्थः। अत्रेतिना पूर्ववार्तिकस्थं प्रयोजकमतेरिति पदमाकृष्यते। एवं वीक्षापन्नस्याज्ञातब्रह्मणो जगदुत्पत्त्यादयो नान्यथा। देहादयो दृश्यत्वादिहेतोरनात्मानः द्रष्ट्रादिरूपश्चाहमित्येवंप्रकारान्वयादिव्यापारस्तत्त्वमर्थबोधेऽभीष्टे श्रोतव्यादिवाक्ये विधीयत इत्याह—अन्वयेति ॥१०५९॥

प्रत्यग्ब्रह्मधीहेतुत्वेनान्वयादिव्यापारो विहितस्तैत्तिरीयश्रुतावपीत्याह—तपसेति। अतो वचनादुक्तो व्यापारो विहित इति शेषः। तपसा ब्रह्म विजिज्ञासस्वेत्यतो वचनाद्धीसाधनत्वेन प्रसिद्धं तपो विधीयते नान्वयादीत्याशङ्क्याऽऽह—अन्वयेति। प्रकृता श्रुतिः सप्तम्यर्थः ॥१०६०॥

प्रसिद्धं हित्वाऽप्रसिद्धग्रहे हेतुमाह—यत इति। 'यतो वा इमानी'त्यादिवाक्याज्जिज्ञास्यब्रह्मलक्षणमुक्तं तथाच लक्ष्यब्रह्मज्ञानाय विहितं तपोऽन्वयाद्येव न कृच्छ्रादि तस्य तथा प्रकृतानुपयोगादित्यर्थः। 'य आत्माऽपहतपाप्मे'त्युपक्रम्य 'सोऽन्वेष्टव्य' इति वाक्याच्चान्वयादिर्विहितो धीहेतुत्वेनेति च्छान्दोग्यश्रुतिमाश्रित्योक्तं विधिं साधयति—य इति। श्रुतेर्विहितो दर्शितो व्यापार इति शेषः ॥१०६१॥

प्रासङ्गिकं प्रजापतिवाक्यतात्पर्यं संगृह्णाति—त्यक्तेति। एकशतं ह वै वर्षाणीत्यादिश्रुतेर्ब्रह्मचर्यवानिन्द्रो यथाऽन्वयादिनाऽऽत्मानमनुसंहितवांस्तथाऽन्योऽपि त्यक्तदुःखात्मकानात्मार्थोऽ'मानित्वमदम्भित्वमि'त्यादिशास्त्रोक्तोपायोपेतः सुखात्मकमात्मानं तेन जानीयादित्यर्थः। अमानित्वादिविशेषणस्य स्मृतिप्रसिद्धिद्योतको हिशब्दः ॥१०६२॥

अनुवादव्याजेन ज्ञानोपायान्वयादिव्यापारस्य विधेयत्वमुक्त्वा यदर्थोऽनुवादस्तदाह—आत्मेत्यनेनेति। विद्यासूत्रस्य सामीप्यादुपशब्दः सूत्रितविद्याजनकत्वेनोपनिषदस्तच्छेषत्वमाह—यदर्थेति। तर्हि सूत्रव्याख्यानेनैव सर्वोपनिषदर्थसिद्धेस्तदाहुरित्यादिर्वृथेत्याशङ्क्याऽऽह—वृत्तिरिति। तदाहुरित्यादिर्यो ग्रन्थो भविष्यत्यसौ सूत्रिताया विद्याया वृत्तिरिति योजना ॥१०६३॥

आत्मेत्येवोपासीतेत्येतदेव सूत्रमुत्तरं सर्वं तद्विवरणमित्युक्तमनुवदति—आत्मेत्येकमिति। तद्धेत्येका कण्डिका तदेतदित्यपरा तदुभयं सूत्रमपरमस्य विवरणमित्याह—कण्डिकेति। तृतीयाध्यायः सर्वोऽप्येकं सूत्रमुत्तरः प्रपञ्चस्तस्येत्याह—अध्यायो वेति। तृतीयाध्यायश्चतुर्थाध्यायश्च सूत्रमुत्तरं विवरणमित्याह—अध्यायेति ॥१०६४॥

स्वाभीष्टां सूत्रवर्त्मिं विकल्पद्वारोक्त्वा भर्तृप्रपञ्चेष्टं तद्विभागमाह—अव्याकृतेति। उक्तविभागस्य तदीयसंप्रदायावगतत्वद्योतनार्थं किलेत्युक्तम्। अस्यामपि कल्पनायामैक्यज्ञानान्मोक्षस्य न क्षतिरित्यङ्गीकारं सूत्रविभागस्य सूचयति—तथाऽपीति ॥१०६५॥

अव्याकृतं स एषेह तथाऽऽत्मैवेति चापरः । पदनीयं तथा प्रेयः पदार्थाः पञ्च सूत्रिताः ।।६६।।
यथोक्तानां च सूत्राणामा शास्त्रस्य समापनात् । वृत्तिः स्यादुत्तरो ग्रन्थस्तत्र तेषां समन्वयात् ।।६७।।
व्याचिख्यासुरथेदानीं सूत्रार्थंश्रुतिरञ्जसा । प्रयोजनाभिधित्साया उपोद्घाते प्रवर्तते ।।६८।।

तदाहुरित्यादिवाक्यविवरणम्

वक्ष्यमाणवचो वस्तु तच्छब्देनाभिधीयते । ब्रह्म जिज्ञासवो विप्रा आहुर्यद्गुरुसन्निधौ ।।६९।।
विज्ञाताशेषवेदान्तसर्वस्वं ब्रह्मणि स्थितम् । उपसद्य गुरुं न्यायादाहुः केचिन्मुमुक्षवः ।।७०।।
यज्ञाद्याहितसंस्कारा अपास्ताशेषसाधनाः । सांसारिकपुमर्थेभ्यो विरक्ताः शुद्धबुद्धयः ।।७१।।
त्यक्त्वा कर्माणि निःसङ्गाः कर्मणां चरितार्थतः । ब्रह्मविद्याप्लवेनेमं संसाराब्धिं तितीर्षवः ।।७२।।
आ विरिञ्चात्पुमर्थानामकृत्स्नत्वादिदोषतः । वितृषोऽशेषतद्दोषध्वस्तिश्रेयः परीप्सवः ।।७३।।

तान्येव परोक्तसूत्राणि दर्शयति—अव्याकृतमिति । एषेहेति च्छान्दस्या प्रक्रियया संधिरनादृतः । अज्ञातमात्मतत्त्वं जगतो निदानं तदेव सृष्टे जगति प्रविष्टं तदेव चानात्मनो हित्वा ज्ञातव्यं तस्यैव ज्ञातत्वेन पदनीयं तदेव च प्रियतममिति पदार्थपञ्चकमत्र सूत्रितमित्यर्थः ।।१०६६।।

उत्तरग्रन्थस्योक्तसूत्रवृत्तित्वेन प्रवृत्तिमाह—यथोक्तानामिति । सूत्रिताव्याकृतादीनामुत्तरग्रन्थे सम्यगनुगतेरिति हेतुमाह—तत्रेति । उक्तं च—एतेषां यथोपन्यस्तानां वृत्तिस्थानीय उत्तरो ग्रन्थ आरभ्यत आ परिसमाप्तेः शास्त्रस्येति ।।१०६७।।

स्वपरपक्षयोः सूत्रं विभज्य स्वपक्षे तदाहुरित्यादेस्तात्पर्यमाह—व्याचिख्यासुरिति । सूत्रप्रवृत्तेरनन्तरमवसरे सत्यात्मेत्यादिसूत्रार्थमात्मज्ञानं तदपेक्षितानपि विवेकादीनुपायभेदानञ्जसा व्याख्यातुमिच्छन्ती श्रुतिः सूत्रितज्ञानफलकथनायोपोद्धातम् "चिन्तां प्रकृतसिद्ध्यर्थामुपोद्धातं प्रचक्षते" इत्युक्तलक्षणं करोतीत्यर्थः । अथेति सूत्रविभागोक्त्यानन्तर्योक्तिः । आदौ सूत्रं ततो वृत्तिरिति क्रमार्थमिदानीमित्युक्तम् । सूत्रभेदे तदैक्ये च तदर्थज्ञानैक्येऽपि तत्र तत्र तदुक्तिप्रक्रियाभेदं दृष्ट्वा बहूक्तिरिति द्रष्टव्यम् । इच्छार्थस्त्वविवक्षितः ।।१०६८।।

वाक्यतात्पर्यमुक्त्वा पदार्थान्व्याचक्षाणस्तत्पदार्थमाह—वक्ष्यमाणेति । यद्ब्रह्मविद्ययेत्यादिवाक्यप्रकाश्यं वस्तु तच्छब्दवाच्यमित्यर्थः । किं तत्प्रकाश्यं तच्छब्देनोच्यते तदाह—ब्रह्मेति । ब्रह्मधीः सर्वात्मत्वहेतुरित्यत्र मुमुक्षवो विविदिषवो गुरुसंनिधौ यच्चोद्यमाहुस्तदुत्तरवाक्यप्रकाश्यमत्र तच्छब्दितमित्यर्थः । ब्राह्मणानामेव ब्रह्मजिज्ञासायां विशेषतोऽधिकार इति दर्शयितुं विप्रविशेषणम् ।।१०६९।।

श्रोत्रियं ब्रह्मनिष्ठमितिश्रुतेर्गुरुं विशिनष्टि—विज्ञातेति । परोक्षज्ञानवन्तं व्यावर्तयति—ब्रह्मणीति । समित्पाणिरितिश्रुतेरुपसत्तिक्रमं सूचयति—न्यायादिति । आहुरित्यस्यापेक्षितं पूरयति—केचिदिति । तेषां तत्त्वज्ञानार्थितामाह—मुमुक्षव इति ।।१०७०।।

ननु न तेषां मुमुक्षोपादेयता वर्तते स्वर्गादीच्छया तद्धेत्वनुष्ठानपराणां मुक्तिस्पृहाराहित्यादत आह—यज्ञादीति । नित्याद्यनुष्ठानोत्पन्नादृष्टविशिष्टाः शुद्धधियो बन्धान्तर्भूतैहिकामुष्मिकफलेभ्यो विरक्ता निरस्तसमस्तसांसारिकपुमर्थहेतवो ज्ञानमेवेच्छन्तश्चोदयन्तीत्यर्थः ।।१०७१।।

ननु श्रौतं नानाकर्मानुतिष्ठन्तस्तत्त्यागेऽपि तत्फलाभिलाषोपहतमतयो न ज्ञानमेवापेक्षेरन्नत आह—त्यक्त्वेति । कर्मणां चित्तशुद्ध्या कृतफलत्वात्तदपेक्षाहेत्वभावात्तत्फलेभ्यो हेतुभ्यो विरक्तास्तानि कर्माणि सफलानि त्यक्त्वा विद्याख्यतरणहेतुना भाष्योक्तमनुभवसिद्धं च संसारसागरं तर्तुमिच्छवः स्वच्छधियश्चोदयन्तीति संबन्धः ।।१०७२।।

केवलं कर्मफले स्वर्गादावपेक्षाभावेऽपि तत्सहितोपास्तिफले ब्रह्मलोकादौ तत्संभवात्कुतो मुमुक्षेत्याशङ्क्याऽऽह—आ विरिञ्चादिति । आ मानुषादा च प्रजापतेर्ये पुमर्थास्तेषां परिच्छिन्नत्वक्षयिष्णुत्वादिदोषदर्शनात्तेभ्यो विरक्ता मुमुक्षवो भवन्तीत्यर्थः । तर्हि मोक्षेऽपि नेच्छा ब्रह्मलोकवत्फलत्वादित्याशङ्क्याऽऽह—अशेषेति । समस्तब्रह्मलोकादिषु दृष्टस्य परिच्छिन्नत्वादिदोषस्य ध्वस्तिर्यत्र श्रेयःशब्दिते मोक्षे तमामुमिच्छव इति यावत् ।।१०७३।।

साक्षेपमाहुः श्रेयांसं गुरुं प्राप्य निरेषणाः । गुरुद्वारैव विद्येह श्रेयःप्राप्तौ क्षमा यतः ॥७४॥

ब्रह्मविद्यापदार्थनिर्वचनम्

किमाहुरित्यपेक्षायामिदं तदभिधीयते । मन्यन्त इत्यनेनैव यच्छब्दो याति संगतिम् ॥७५॥
अव्यावृत्ताननुगतं वस्तु ब्रह्मगिरोच्यते । मुख्यार्थो ब्रह्मशब्दोऽयमेवं सत्युपपद्यते ॥७६॥
तद्यया वेद्यते बुद्धया तदसाधारणात्मना । ब्रह्मविद्येति तां साक्षाच्छेमुषीं प्रतिजानते ॥७७॥
सर्वं कृत्स्नं भविष्यामो मन्यन्ते ब्रह्मविद्यया । यन्मनुष्या वयं तत्र विरोधमनुयुञ्ज्महे ॥७८॥
कृत्स्नमेव यतः प्रोक्तं वस्तु यत्पारमार्थिकम् । तत्प्रमाणविशुद्ध्यर्थं चोदयन्ति मुमुक्षवः ॥७९॥
ब्रह्मविद्यैव कृत्स्नाप्तौ यस्मात्साधनमुच्यते । तत्प्राप्तौ तत्तमोमात्रं व्यवधानमतो भवेत् ॥८०॥
द्योतिकैव यतो विद्या न त्वसौ कारकं ततः । उत्पत्त्यादिक्रियाकार्यं तस्माच्चेह न शङ्क्यते ॥८१॥
सिद्धेऽर्थे द्योतको दीपो न तु कार्ये यतस्ततः । सर्वात्मभावः सर्वेषां सिद्धः प्रागपि बोधतः ॥८२॥

तेषां गुरुं प्रति चोद्यमाक्षेपगर्भत्वादुपेक्षानर्हमित्याह—साक्षेपमिति । तत्समाधिसामर्थ्यं गुरोर्द्योतयति—श्रेयांसमिति । गुरुत्वाच्च शिष्याणां हितोक्तौ यतितव्यमित्याह—गुरुमिति । साक्षेपं चोदयन्ति चेत्ते विजिगीषवो न शिष्या इत्याशङ्क्याऽऽह—निरेषणा इति । तेषां स्वधीवशादेव विद्योदयात्किमिति गुरूपसदनमित्याशङ्क्याऽऽचार्यवानित्यादिश्रुतिमाश्रित्याऽऽह—गुरुद्वारेति । इहेत्यात्मोक्तिः । अतो गुरूपसदनं तेषामुचितमिति शेषः ॥१०७४॥

तदाहुरिति व्याख्याय यदित्याद्यवतारयति—किमिति । तत्रान्वयोक्तिपूर्वकं ब्रह्मपदार्थमाह—मन्यन्त इति । कमलासनादि ब्रह्मशब्दितं किं न स्यादत आह—मुख्येति । सामान्यविशेषभावहीने वस्तुनि ब्रह्मशब्दप्रयोगे सत्यसौ मुख्यार्थः स्यात्कमलासनादिविषयत्वे तु नैवं न च संभवति मुख्येऽर्थेऽमुख्योऽर्थो ग्रहणमर्हतीत्यर्थः ॥१०७५–१०७६॥

विद्याशब्दार्थमाह—तदिति । यया बुद्धया तद्ब्रह्म स्वासाधारणसच्चिदानन्दं प्रत्यक्त्वेन साक्षाद्वेद्यते तां बुद्धिवृत्तिं वाक्योत्थां ब्रह्मविद्येति प्रतिजानत इति योजना ॥१०७७॥

ब्रह्मविद्यया कृत्स्नं भविष्याम इति यन्मनुष्या मन्यन्ते तत्र विद्याफलमधिकृत्य विरोधं चोदयाम इत्युपोद्घातवाक्यं योजयति—सर्वमिति ॥१०७८॥

मुमुक्षूणामुपशान्तदर्पाणां नाऽऽक्षेपो युक्तो जिज्ञासिते तत्त्वे ज्ञानोत्पत्तये प्रश्नमात्रस्यैव प्राप्तेरित्याशङ्क्य चोदयतामाशयमाह—कृत्स्नमिति । यद्वास्तवं वस्तु तत्पूर्णमेव पूर्वमत्र हीत्यादावुक्तमतस्तस्मिन्नद्वैते यत्प्रमाणं तत्परिशोधनार्थं चोद्यमित्यर्थः ॥१०७९॥

ज्ञानमात्रमिच्छतामद्वैतमानशोधनमपि नोपयोगीत्याशङ्क्याऽऽह—ब्रह्मविद्येति । शोधिते हि माने सोदेति सैव मुक्तौ हेतुः श्रुतिस्मृत्योरुच्यतेऽतस्तच्छोधनमर्थवदित्यर्थः । तस्या मुक्तिहेतुत्वोक्तेरार्थिकमर्थमाह—तत्प्राप्ताविति । कृत्स्नं वस्तु तच्छब्दार्थः ॥१०८०॥

विद्याया मुक्तिहेतुत्वेऽपि कथमविद्यायास्तद्व्यवधानत्वं तत्राऽऽह—द्योतिकेति । यतः सा द्योतिकैव न कारकमतो मोक्षे मोहापिधानभङ्गादृते विद्याकार्याभावात्तस्यास्तदुपायत्वानुपपत्त्या तद्व्यवधानत्वमविद्यायाः सिद्धमित्यर्थः । मुक्तेरविद्यामात्रव्यवहितत्वे तद्धानेरकर्मसाध्यत्वात्स्वरूपस्थितेश्चतुर्विधक्रियाफलवैलक्षण्यान्न कर्मसाध्या मुक्तिरिति फलितमाह—उत्पत्त्यादीति । इह मुक्ताविति यावत् । तस्याश्च कर्मसाध्यत्वे यत्कृतकं तदनित्यमितिन्यायान्मुक्तेरनित्यतया पुनर्बन्धः स्यादिति चकारार्थः ॥१०८१॥

कर्मासाध्यत्वेऽपि मुक्तेर्विद्यासाध्यत्वादुत्पाद्यतेत्याशङ्क्याऽऽह—सिद्ध इति । न विद्योत्पादिका द्योतकत्वाद्दीपवदतो मुक्तिर्विद्यातः प्रागेव सिद्धेर्नोत्पाद्येत्यर्थः ॥१०८२॥

अतोऽकृत्स्ना वयं मोहात्कृत्स्नात्मानोऽपि वस्तुतः । निहत्य विद्ययाऽविद्यां यामः कार्त्स्न्यं स्वतोगतम् ८३

### मनुष्यपदप्रयोजनोक्तिः

अधिकारविनिश्चित्यै मनुष्या इति गीरियम् । मनुष्याणां हि निःशेषत्र्यर्थेऽधिकृतिर्यतः ॥८४॥
दृष्टार्थतो वा विद्याया मनुष्यग्रहणं कृतम् । तावन्मात्रोऽधिकार्यत्र नाग्निहोत्राधिकारिवत् ॥८५॥
प्रत्यबुध्यत यो यस्तदिति चोर्ध्वं प्रवक्ष्यति । नातः कर्माधिकार्यत्र दृष्टार्थत्वादपेक्ष्यते ॥८६॥
कर्मभ्य इव च ज्ञानात्फलप्राप्तिं सुनिश्चिताम् । मन्यन्त उभयत्रापि श्रुतिमानाविशेषतः ॥८७॥
यन्मन्यन्ते नरास्तत्र विरुद्धमिव लक्ष्यते । मतोऽतश्चोदयामोऽत्र यथा विप्रतिषिद्धता ॥८८॥

### सर्वात्मत्वप्रापकं ब्रह्म कीदृशमिति विमर्शनम्

किमु तद्ब्रह्म यद्वेद्यं यज्ज्ञानात्सर्वताऽऽप्यते । किंचापि तदवेदन्यद्यज्ज्ञानात्कृत्स्नतामगात् ॥८९॥

सर्वभावस्य स्वतःसिद्धौ ज्ञानात्तत्प्रेप्सा कथमित्याशङ्क्याज्ञानव्यवधानादित्याह—अत इति । कथं तर्हि मुक्तिरत आह—निहत्येति । स्वतोगतं स्वभावतोलब्धमविद्यामात्रव्यवहितमित्यर्थः ॥१०८३॥

मोक्षहेतुज्ञानोत्पाद्याद्वैतमानशुद्ध्यर्थं चोद्यमित्युपपाद्य मनुष्यग्रहणस्य कृत्यमाह—अधिकारेति । ज्ञान-कर्मणोरिति शेषः । कथमधिकारविनिश्चितिस्तत्राऽऽह—मनुष्याणां हीति । तेषामेव वेदार्थेऽधिकृतिरिति प्राच्यां मीमांसायां[1] दर्शितमिति हिशब्दार्थः । अतो मनुष्यग्रहणं युक्तमिति शेषः ॥१०८४॥

भाष्यानुसारिमनुष्योक्तितात्पर्यमुक्त्वा तात्पर्यान्तरमाह—दृष्टेति । विद्यायाः शोकादिनाशाख्यदृष्टफल-त्वात्तत्कामी सर्वोऽपि साधारणाधिकारिलक्षणाक्रान्तोऽत्र विद्यायामधिकारी न त्वग्निहोत्राद्यधिकारिनियमवदत्र तन्नियमोऽस्तीति वक्तुमिह मनुष्योक्तिरित्यर्थः ॥१०८५॥

कर्माधिकारिवज्ज्ञाने नापेक्षितो विशिष्टोऽधिकारीत्यत्र मानमाह—प्रत्यबुध्यतेति । प्रवक्ष्यति विद्याधिकार्य-नियममिति शेषः । मनुष्यग्रहणं विशेषतोऽधिकारज्ञापनार्थमित्यादिभाष्यं तर्हि कथमित्याशङ्क्य वाक्यशेषविरोधा-न्नाऽऽदेयमित्याह—नात इति । अतो दृष्टार्थत्वादिति संबन्धः । कर्माधिकारी तद्वद्विशिष्टोऽधिकारीत्यर्थः । अत्रेति विद्योक्तिः ॥१०८६॥

यथा तथा मनुष्यग्रहणेऽपि किमिति ते निश्चितवन्तो ज्ञानान्मुक्तिमित्याशङ्क्याऽऽह—कर्मभ्य इति । उभयत्र साधनत्वशक्तेरविशेषादिति चशब्दार्थः । कर्मणि ब्रह्मणि च वेदप्रामाण्याविशेषादिति हेत्वन्तरमाह—उभयत्रेति ॥१०८७॥

उक्तमनूद्य किमित्याद्यवतारयति—यदित्यादिना । यन्मनुष्या ब्रह्मविद्यया मोक्षो भवतीति मन्यन्ते तत्र मते तेषामिति यावत् । विरुद्धमिव ज्ञानात्फलमिति शेषः । अत्र ज्ञानफले यथा परस्यापि विप्रतिषिद्धता भाति तथा चोद्यमित्याह—अत्रेति । यद्वा यथा पश्चादविप्रतिषिद्धता तथाऽऽदौ चोद्यते पूर्वपक्षविशुद्धा[2] हीत्यादिन्याया-दित्याह—यथेति ॥१०८८॥

किं तच्चोद्यमित्याशङ्क्य वाक्यं व्याचष्टे—किमिति । यस्य ब्रह्मणो ज्ञानान्मोक्षस्तद्यन्मुमुक्षुभिर्वेद्यं तत्किं परिच्छिन्नमुतापरिच्छिन्नमिति प्रश्नार्थः । तत्किमवेदित्यादिप्रश्नं व्याचष्टे—किंचेति । यस्य ज्ञानाद्ब्रह्म सर्वत्वं गच्छति तत्किं स्वरूपमेव विदित्वा सर्वं भवतीत्युतान्यदित्यर्थः । चकारापिकारौ किं ब्रह्म विदित्वा सर्वं भवत्युताविदित्वेति प्रश्नान्तरद्योतनार्थौ ॥१०८९॥

---

१. मीमांसायामिति—तथाहि फलार्थत्वात् कर्मणः शास्त्रं सर्वाधिकारं स्यादित्यधिकरणे ( ६.१.४ ) तिरश्चा-मपि कर्मण्यधिकारोवक्तव्यः । तेषापि सुखार्थित्वात् घर्मतप्तानां छायाश्रयणदर्शनात् इति पूर्वपक्षे सिद्धान्तः कर्तुर्वाश्रुतिसंयोगात् । यः कृत्स्नं कर्माभिनिर्वर्तयितुं समर्थस्तस्यैव कर्मस्वधिकारः । न चैते शक्नुवन्ति कृत्स्नं कर्म निर्वर्तयितुं अतः मनुष्याधिकारं शास्त्रमित्युक्तम् ।

२. पूर्वपक्षविशुद्धाहीति—पूर्वपक्षं दृढीकृत्य पश्चात् तन्निरासेन सिद्धान्तकरणे सिद्धान्तदार्ढ्यादित्यर्थः ।

ब्रह्माकृत्स्नं मतं तच्चेदुक्तदोषानिराकृतेः । अनुपास्यं भवेत्तादृक्प्राणादिवदसंशयम् ॥९०॥
कल्पना नापि गौण्यत्र मुख्यार्थे सति युज्यते । न ह्यालभन्ते बाहीकं मुख्ये गवि सति क्वचित् ॥९१॥
मुख्यं ब्रह्म न चेदस्ति गौणं स्यात्तद्विना कुतः । मुख्यमग्निं विना गौणं न लोकोऽप्यवगच्छति ॥९२॥
अकृत्स्नज्ञानतो नापि पुरुषार्थोऽवगम्यते । ब्रह्माज्ञानसमुत्थत्वान्मिथ्याज्ञानत्वकारणात् ॥९३॥
मेयमानादिसंभित्तिर्यदि नामेह लभ्यते । अयथावस्तुरूपत्वात्स्वप्नमेयादिवत्तु सा ॥९४॥
अकृत्स्नस्य च ब्रह्मत्वं विरुद्धं भानुशैत्यवत् । तस्मादकृत्स्नं ब्रह्मेति न मानेनोपपद्यते ॥९५॥
ब्रह्मास्तु तर्हि तत्कृत्स्नमुक्तदोषासमन्वयात् । मुख्यार्थलाभतश्चापि तस्य च प्रकृतत्वतः ॥९६॥

### ब्रह्मणि प्रमाणसदसद्भावविचारः

न कृत्स्नमिति तद्ग्राह्यं तत्प्रमाणाद्यसंभवात् । तदन्यवस्तुसद्भावे तद्ब्रह्मत्वं विहन्यते ॥९७॥
न च मानानपेक्षस्य सिद्धिरभ्युपगम्यते । मानादियत्नानर्थक्यप्रसक्तिः स्यात्तथा सति ॥९८॥

परिच्छिन्नत्वपक्षमनुभाषते—ब्रह्मेति । "स योऽत एकैकमुपास्ते न स वेद" इत्यत्र परिच्छिन्नत्वेन प्राणादेरनुपास्यत्वमुक्तं तथा ब्रह्मापि परिच्छिन्नं नोपास्यं प्राणादिषूक्तदोषस्य निवारकाभावादत्रापि प्राप्तेरित्याह—उक्तेति ॥१०९०॥

किंच ब्रह्मशब्दस्य मुख्यार्थोऽस्ति न वा? आद्ये परिच्छिन्नं ब्रह्म नोपेयं मुख्यगौणयोर्मुख्ये संप्रत्ययादित्याह—कल्पनेति । अत्रेति ब्रह्मशब्दोक्तिः । मुख्ये सति न गौणग्रहणमित्यत्र दृष्टान्तमाह—न हीति । गौर्बाहिक इति प्रयोगाद्भारवाहकस्य गौणं गोत्वमवगन्तव्यम् । क्वचिदिति यज्ञोक्तिः ॥१०९१॥

द्वितीयमनूद्य दूषयति—मुख्यमिति । असति मुख्ये नास्ति गौणमित्यत्र दृष्टान्तमाह—मुख्यमग्निमिति । परीक्षकसमुच्चयार्थोऽपिशब्दः ॥१०९२॥

किंच ब्रह्मज्ञानं पुमर्थसाधनं न वा ? न चेद्ब्रह्मविदाप्नोति परमित्यादिश्रुतिकोपस्तत्साधनं चेद्ब्रह्मणोऽपरिच्छिन्नत्वं ग्राह्यमित्याह—अकृत्स्नेति । अपिरवधारणार्थो यथोक्तविकल्पार्थो वा । तस्य पुमर्थहेतुत्वे हेतुमाह—ब्रह्मेति । परिच्छिन्नस्य सर्वस्य ब्रह्माज्ञानजन्यत्वात्तद्धियो मिथ्याधीत्वादिति हेत्वर्थः ॥१०९३॥

परिच्छिन्नत्वे ब्रह्मणो मात्रादिभेदलाभात्तत्तथेत्याशङ्क्याऽऽह—मेयेति । परिच्छिन्नब्रह्मपक्षे मेयादिभेदलाभेऽपि तस्यावस्त्वनुसारित्वान्मिथ्यात्वं स्वप्नभेदवन्न हि मात्रादिभेदो वस्त्वनुसरत्यन्योन्याश्रयादिदोषादित्यर्थः । परिच्छिन्नब्रह्मपक्षः सप्तम्यर्थः । मेयादिसंभित्तिः सेत्युक्ता ॥१०९४॥

किं चास्मिन्पक्षे व्याहतिरित्याह—अकृत्स्नस्येति । आद्यपक्षायोगमुपसंहरति—तस्मादिति ॥१०९५॥

कल्पान्तरमाह—ब्रह्मेति । पूर्वकल्पनिरासेनास्यानिरस्तत्वं सूचयति—उक्तेति । ब्रह्मपदस्य मुख्यार्थसिद्धेश्चापरिच्छिन्नं ब्रह्मेत्याह—मुख्येति । संभवे मुख्यस्य नामुख्योऽर्थो ग्रहणमर्हतीत्यपेरर्थः । अत्र ह्येत इत्यत्र ब्रह्मणोऽपरिच्छिन्नस्य प्रकृतत्वाच्च तत्तथेत्याह—तस्येति ॥१०९६॥

ब्रह्म चेदद्वयं तस्मिन्मानं माता फलं च न सिध्येत्ततो न तदपरिच्छिन्नमित्याह—नेत्यादिना । तच्छब्दस्तत्रेत्यर्थे । ब्रह्मणः सजातीयभेदाभावेऽपि विजातीयमानादिभेदोऽस्तीत्याशङ्क्याऽऽह—तदन्येति । सर्वतोऽनवच्छिन्नं हि ब्रह्म तत्र ब्रह्मशब्दस्य व्युत्पन्नत्वान्न च मानादिकल्पितमित्यदोषः । तद्धि वस्त्ववस्तु वा द्विधाऽपि ब्रह्मासिद्धिरिति भावः ॥१०९७॥

तेन विनाऽपि ब्रह्म सेत्स्यतीत्याशङ्क्याऽऽह—न चेति । विमतं न मानाद्यनपेक्षसिद्धिकं वस्तुत्वाद्घटवदित्यत्र विपक्षे दोषमाह—मानादीति । तन्निरपेक्षस्य वस्तुनः सिद्धत्वे मानद्वारा मितिसिद्धये पुरुषप्रयत्नो विफलः स्यादित्यर्थः ॥१०९८॥

सदानुदितालुप्तैकज्ञप्तिमात्रसतत्त्वकम् । यद्यपीष्टं तथाऽपीदं नाऽऽत्ममोहापनोदकृत् ॥९९॥
न हि मानमनाश्रित्य वस्त्वात्माज्ञानहानिकृत् । स्रक्स्थाण्वादावदृष्टत्वादुक्तदोषोऽपि चाऽऽपतेत् ११००
मानाद्यनभ्युपेतौ हि न किंचिद्वस्तु सिध्यति । तदभ्युपेतौ ब्रह्मत्वं व्यावृत्तेर्न प्रसिध्यति ॥ १ ॥
यथाकथंचिच्छब्दार्थो यदि नामाभ्युपेयते । तथाऽपि दोषवद्ब्रह्म यथा तदधुनोच्यते ॥ २ ॥
कृत्स्नं वा यदि वाऽकृत्स्नं यथेच्छसि तथाऽस्तु तत् । ब्रह्मत्वं किं स्वतस्तस्य किंवा तत्परतो मतम् ॥ ३ ॥
यदि तावत्स्वतस्तत्स्याद्ब्रह्मविद्या निरर्थिका । न ह्युष्णत्वं हुताशस्य परतः कुर्वते बुधाः ॥ ४ ॥
ज्ञानमूर्तेर्न चाज्ञानमागन्तु सहजं तथा । भानौ तमोवत्तेनेदृग्ब्रह्म नैवोपपद्यते ॥ ५ ॥

कृत्स्नत्वस्य स्वतस्त्वे दोषाः

शास्त्राद्यारम्भानर्थक्यदोषश्चापि प्रसज्यते । स्वानुभूतिविरोधोऽपि ब्रह्मत्वं चेद्भवेत्स्वतः ॥ ६ ॥
योषाग्निवच्चेच्छास्त्रं स्याद्दृष्टिमात्रविधायकम् । तथा सत्यविरोधः स्याद्भिन्नाधिकरणत्वतः ॥ ७ ॥
सदसीति क्रियानिष्ठं प्रत्यक्षाद्यर्थनिष्ठितम् । विरोधः कोऽनयोरत्र मिथोऽर्थासंस्पृशोः सतोः ॥ ८ ॥

जडत्वमुपाधिरित्याशङ्क्याऽऽह—सदेति । स्वप्रकाशस्यापि स्वाज्ञानध्वंसे मानाद्यपेक्षोपगमाद्व्यतिरेके बाधापत्तिरित्यर्थः ॥१०९९॥

स्वरूपज्ञानस्यैव तद्ध्वंसित्वात्किमपेक्षयेति व्यतिरेकबाधराहित्यमाशङ्क्याऽऽह—न हीति । विमतं स्वतो न स्वाज्ञानध्वंसधिष्ठानत्वात्स्रगादिवदित्यत्र विपक्षे मानादियत्नानर्थक्यप्रसक्तिमाह—उक्तेति । न च कदाचिदपि संसारोऽवतरेदिति चकारार्थः ॥११००॥

ब्रह्मणि मानादिवैयर्थ्यापत्तिरिष्टापत्तिरिति चेन्मैवं मुमुक्षूणां श्रवणाद्यर्थवत्त्वोपगमभङ्गात् । घटादौ च मानाद्युपगम्यते न वा? द्वितीयं प्रत्याह—मानादीति । घटादेर्जडत्वादिति हिशब्दार्थः । प्रथमं प्रत्यादिशति—तदभ्युपेताविति । व्यावृत्तेर्मानादिना व्यवच्छेदादित्यर्थः ॥११०१॥

परिच्छिन्नत्वेऽपरिच्छिन्नत्वे च प्रत्येकं दोषमुक्त्वा साधारणदोषं वक्तुमुत्तरो ग्रन्थ इत्याह—यथेति । शब्दशब्देन ब्रह्मशब्दो गृह्यते ॥११०२॥

यथाकथंचिदित्येतदेव प्रकटयति—कृत्स्नं वेति । पक्षद्वयेऽपि दोषवत्त्वं वक्तुं विकल्पयति—ब्रह्मत्वमिति ॥११०३॥

आद्यमनूद्य दूषयति—यदीति । ब्रह्मणो ब्रह्मत्वे स्वतःसिद्धेऽपि कुतो विद्यावैयर्थ्यमित्याशङ्क्य सा ब्रह्मत्वमुत्पादयति वा, प्रकाशयति वा, तद्व्यवधानाज्ञानं निवर्तयति वा? नाऽऽद्यः स्वतःसिद्धिविरोधान्नेतरः प्रकाशस्यापि स्वरूपत्वादिति मत्वाऽऽह—न हीति ॥११०४॥

तृतीयं प्रत्याह—ज्ञानेति । प्रकाशरूपस्य ब्रह्मणोऽप्रकाशात्मकाज्ञानायोगे दृष्टान्तमाह—भानाविति । विद्यावैयर्थ्येन स्वतोऽपरिच्छिन्नं परिच्छिन्नं वा ब्रह्मायुक्तमितिफलितमाह—तेनेति ॥११०५॥

किंच ब्रह्मणः स्वतो ब्रह्मत्वे शास्त्रारम्भस्य श्रवणादिपुंप्रवृत्तेश्चाऽऽनर्थक्यान्न स्वतो ब्रह्मतेत्याह—शास्त्रादीति । ब्रह्मत्वस्य स्वतस्त्वे हेत्वधीनत्वशङ्कैव नेति वक्तुमपिशब्दः । किंचाद्वयं ब्रह्माहमित्यननुभवात्कर्ताऽहमित्यादिविपरीतानुभवाच्च प्रतीचोऽद्वयब्रह्मत्वस्य स्वतस्त्वे तदर्थशास्त्रस्यानुभवविरोधेनाप्रामाण्यान्न तस्य स्वतो ब्रह्मतेत्याह—स्वानुभूतीति ॥११०६॥

अनुभवाविरोधार्थमेकदेशी शङ्कते—योषेति । योषा वाव गौतमाग्निरिति वाक्यं यथा योषित्यग्निदृष्टिमात्रपरत्वान्न वस्तुनिष्ठं एवमद्वयब्रह्मशास्त्रं ब्रह्मास्मीत्यत्यात्मनि दृष्टिमात्रपरं न वस्तुपरमित्यर्थः । शास्त्रस्योपास्तिविधायकत्वे वस्तुविषयमानान्तरेणाविरोधफलमाह—तथेति ॥११०७॥

अविरोधे हेतुं भिन्नविषयत्वं स्फोरयति—सदिति । साध्यं निगमयति—विरोध इति । अत्राऽऽत्मनीति यावत् । हेतोर्निगमनं मिथ इति ॥११०८॥

नैतदेवं यतो वाक्यं वस्तुनिष्ठं पुरोदितम् । विरोध एव तेन स्यादेकाधिकरणत्वतः ॥ ९ ॥
अशक्या ब्रह्मदृष्टिश्च कर्तुं ब्रह्माप्रसिद्धितः । लोकसिद्धौ तु योषाग्नी तद्दृष्टिः सुकरेष्यते ॥१०॥
अथाग्निवच्चेत्तद्ब्रह्म सिद्धं मानान्तरान्मतम् । तावतैव कृतार्थत्वात्किमन्यत्प्रार्थ्यते श्रुतेः ॥११॥
तद्दृष्टावेव निःशेषपुरुषार्थसमाप्तितः । फलान्तराय तद्दृष्टिर्न च स्यादग्निदृष्टिवत् ॥१२॥

कृत्स्नत्वस्य पराधीनत्वे दोषः

परतोऽपि च कृत्स्नत्वे ब्रह्मत्वं दुःस्थसिद्धिकम् । क्रियातो ज्ञानतो वा तद्यदि वोभयसंश्रयात् ॥१३॥
न ब्रह्मता क्रियातः स्यादुत्पत्त्यादिसमन्वयात् । न स्यादाद्यन्तवद्ब्रह्म ह्यपूर्वाजादिशास्त्रतः ॥१४॥
अपवादश्च बहुशः कर्मकार्यस्य दृश्यते । मुमुक्षुत्वस्य तद्धेतोः कर्मकार्यं न तत्ततः ॥१५॥

ब्रह्म अन्यत् अनन्यत् अन्यानन्यद्वा ज्ञानाद् ब्रह्माभवदिति विकल्प्य निरासः

अथ ज्ञानात्तदभवत्कृत्स्नं ब्रह्मेति चेन्मतम् । अन्यानन्यप्रमेयत्वे तथाऽपीष्टं न सिध्यति ॥१६॥
क्रियाविरोधः प्राप्नोति यद्यनन्यस्य मेयता । श्रुत्यन्तरविरोधश्च प्रत्यग्दृष्टौ प्रसज्यते ॥१७॥

पूर्ववादी दूषयति—नैतदिति । सर्वोऽपीत्यत्र वस्तुपरत्वं तत्त्वमादेरुक्तमत्र क्रियापरत्वं वदतस्तद्विरोधोऽतो नोपास्तिविधायकं वाक्यमित्याह—यत इति । क्रियापरत्वाभावाद्वाक्यस्यापि मानान्तरवद्वस्तुनिष्ठत्वाद्ब्रह्मनिष्ठवाक्यस्य मानान्तरेणैकविषयतया स्वानुभवविरोधः स्यादेवेत्याह—विरोध इति ॥११०९॥

किंचाप्रसिद्धं प्रसिद्धं वा ब्रह्म?आद्ये तदुपास्तिरशक्येत्याह—अशक्येति । योषित्यग्निदृष्टिवत्प्रतीचि ब्रह्मदृष्टिः सुकरेत्युक्तमित्याशङ्क्याऽऽह—लोकेति । तद्दृष्टिस्तस्यां योषिति तस्याग्नेर्दृष्टिरिति यावत् ॥१११०॥

कल्पान्तरमनूद्य निरस्यति—अथेति । मानान्तराधीनब्रह्माधिगमादेव पुमर्थसिद्धेः श्रौतं ब्रह्मज्ञानमकिंचित्करमित्यर्थः ॥११११॥

ब्रह्मज्ञानमात्रात्पुमर्थमात्रसिद्धावपि पूर्णपुरुषार्थासिद्धेस्तदर्थं तस्य शास्त्रादुपास्तिरित्याशङ्क्याऽऽह—तद्दृष्टाविति । मानान्तरादपि ब्रह्मदृष्टौ तावतैव पूर्णपुरुषार्थलाभात्तदर्थं पुनः शास्त्रीया ब्रह्मदृष्टिर्न कर्तव्या-पिष्टपेषणादित्यर्थः । यथा मानान्तराधीनाग्निदृष्टावनिर्वृत्तफलनिर्वृत्तये योषित्यग्निदृष्टिः शास्त्रात्क्रियते तथेति वैधर्म्यदृष्टान्तोऽग्नीति ॥१११२॥

स्वतो ब्रह्मत्वपक्षं प्रतिक्षिप्य पक्षान्तरमनुभाष्य दूषयति—परतोऽपीति । ब्रह्मणो ब्रह्मत्वस्यान्याधीनत्वे तदव्यवस्थितं स्वर्गवदनित्यं स्यादित्यर्थः । उक्तदृष्टान्तार्थश्चशब्दः । कथमित्याशङ्क्य तद्दर्शयितुं विकल्पयति—क्रियात इति ॥१११३॥

आद्यं प्रत्याह—नेति । क्रियासाध्यस्योत्पत्त्यादियोगात्तत्साध्ये तद्दर्शनादनित्यत्वापत्तेरिति हेतुमाह—उत्पत्त्यादीति । स्याद्ब्रह्मणोऽपि जन्मादीत्याशङ्क्याऽऽह—न स्यादिति । आद्यन्तवत्त्वे घटवदब्रह्मत्वप्रसक्तिरिति युक्तिद्योतको हिशब्दः ॥१११४॥

"नास्त्यकृतः कृतेन" "न कर्मणा न प्रजये"त्यादिश्रुतिविरोधाच्च न क्रियासाध्या ब्रह्मतेत्याह—अपवादश्चेति । मुक्तेरक्रियासाध्यत्वे श्रुतेस्तात्पर्यलिङ्गमभ्यासं सूचयति—बहुश इति । कर्मकार्यस्येति भावप्रधानोक्तिः । मुमुक्षुत्वस्य तदिष्टब्रह्मत्वस्येत्यर्थः । तस्मादपवादादिहेतोर्न ब्रह्मत्वं क्रियासाध्यमित्याह—तद्धेतोरिति । ततः प्रथमपक्षानुपपत्तिः सिद्धेत्याह—तत इति ॥१११५॥

कल्पान्तरं कथयति—अथेति । तस्मादनन्यद्विदित्वा ब्रह्म पूर्णमभवदन्यानन्यद्वाऽन्यद्वा त्रिधाऽपि न ब्रह्मसिद्धिरित्याह—अन्येति ॥१११६॥

अनन्यमेयत्वे कथमिष्टासिद्धिरित्याशङ्क्याऽऽह—क्रियेति । एकस्यां क्रियायामेकस्यैव कर्मत्वकर्तृत्वविरोधः स्यादित्यर्थः । किंच ब्रह्मविषया पृथग्दृष्टिश्चेदिष्टा तदा सत्यज्ञानप्रज्ञानघनादिश्रुतिविरोधः स्यादित्याह—श्रुत्यन्तरेति ।

तथाच ज्ञानसाध्यत्वं ब्रह्मणः संप्रसज्यते । अन्यानन्यप्रमेयेऽपि दोषोऽयं दुर्निवारणः ॥१८॥
बुद्ध्वाऽथान्यत्तदभवत्तदन्यत्किमबुध्यत । तदप्यन्यत्पुराऽज्ञासीदनवस्था प्रसज्यते ॥१९॥
निर्निमित्तस्य कृत्स्नत्वेऽप्यस्मदादेस्तथा न किम् । पक्षपातः श्रुतेर्नापि प्रामाण्यादुपपद्यते ॥२०॥
समुच्चयनिषेधश्च युक्तिभिर्वक्ष्यते स्फुटम् । प्रधानगुणभावोऽपि विरोधान्न तयोर्भवेत् ॥२१॥
इत्यादिबहुदोषत्वाद्दुःसंभाव्यं प्रमाणतः । विद्ययैवाऽऽप्नुमः कात्स्न्यर्मित्यादि यदुदीरितम् ॥२२॥

अत्र सिद्धान्तकथनम्

न कश्चिदपि दोषोऽत्र यथैतदुपपत्स्यते । अन्यथा कल्प्यमानेऽस्मिन्नुक्तदोषपरंपरा ॥२३॥
एवं तावदुपोद्घातो व्याख्यातोऽत्र समासतः । भगवत्पादभाष्येऽस्मिन्नन्यदीयोऽपि वर्ण्यते ॥२४॥

तदाहुरित्यादेः भर्तृप्रपञ्चाभिप्रायः विवर्तवादाभिप्रायेण

तदेतद्ब्रह्मविद्याया आरम्भे फलमुच्यते । तत्प्रवृत्त्यङ्गतायै च तत्फलस्य प्रकीर्तनम् ॥२५॥

यद्वा ब्रह्मणोऽन्या तद्दृष्टिश्चेदन्यदेव तद्विदितादित्यादिना विरोधः स्यादित्यर्थः । अथवा प्रतीचः स्वग्राह्यदृष्ट्या दृष्टौ "न दृष्टे"रित्यादिवाक्यान्तरविरोधः स्यादित्यर्थः ॥१११७॥

ब्रह्मणोऽनन्यब्रह्मत्वस्य ज्ञानसाध्यत्वे ब्रह्मैव तत्साध्यं स्यादिति दोषान्तरमाह—तथा चेति । क्रियाविरोधः श्रुतिविरोधवदित्यर्थः । अनन्यमेयत्वपक्षोक्तदोषेण द्वितीयं निरस्यति—अन्यानन्येति । अत्राप्यनन्यत्वस्य सत्त्वादित्यर्थः । भेदांशेनाविरोधश्चेदभेदांशाद्विरोधः स्यादेवेति भावः ॥१११८॥

तृतीयमनुवदति—बुद्ध्वेति । यदन्यद्बुद्ध्वा ब्रह्म सर्वमभवत्तत्किमन्यदबुध्यतोत नेति विकल्पयति—तदन्यदिति । आद्यमनूद्य दूषयति—तदपीति ॥१११९॥

कल्पान्तरमाशङ्क्याऽऽह—निर्निमित्तस्येति । ज्ञानहीनस्येति यावत् । अस्मदादेरपीति संबन्धः । तथाच सर्वत्र विद्यावैयर्थ्यमिति भावः । अस्मदादेर्ज्ञानादेव सर्वापत्तिर्ब्रह्मणस्तद्वैद्यस्य वा स्वत इति श्रुतिरेव "तस्मात्तत्सर्वमि"त्याद्या वदतीत्याशङ्क्याऽऽह—पक्षपात इति । सर्वान्प्रति श्रुतिप्रामाण्यस्य तुल्यत्वादित्यर्थः । एतेन किंचापि तदवेदिति पक्षो निरस्तः ॥११२०॥

ब्रह्मणो ब्रह्मत्वस्य क्रियातो ज्ञानतो वा साध्यत्वं निरस्य यदि वोभयसंश्रयादिति पक्षं निरस्यति—समुच्चयेति । चकारः संबन्धोक्तसमुच्चयनिषेधसमुच्चयार्थः । वक्ष्यते भुज्युप्रक्रियायामिति शेषः । उक्तवक्ष्यमाणत्रिविधसमुच्चयासंभवं बुद्धिसौकर्यार्थं सूचयति—प्रधानेति ॥११२१॥

उपोद्घातमुपसंहरति—इत्यादीति । इतिशब्देनोक्तदोषप्रकारोक्तिः । प्रेप्सितं कात्स्न्र्यं सद्वाऽसद्वा त्रिधाऽपि विद्यावैयर्थ्यं तच्च प्राप्तुर्भिन्नमभिन्नं वा?आद्ये कात्स्न्र्यविरोधो द्वितीये प्रेप्साऽयोगः तच्च वेद्यं अवेद्यं वा? आद्ये जाड्यादब्रह्मत्वं द्वितीये तदसिद्धिः स्वप्रकाशत्वस्य मानविषयत्वाविषयत्वयोरयोगादित्यादिशब्दोक्तो दोषः । कात्स्न्र्यमित्यादीत्यादिपदेन मोहादकात्स्न्र्यं वस्तुतस्तु कात्स्न्र्यं कल्पनया मानादिभेदः सा चानिर्वाच्याविद्याविजृम्भितेत्यादि गृह्यते ॥११२२॥

मुमुक्षूणामाक्षेपगर्भं चोद्यमुक्त्वा सिद्धान्तं सूचयति—न कश्चिदिति । अत्रेति विवर्तवादोक्तिः । यथा ब्रह्मात्मज्ञानात्तत्र सर्वभावमोक्षोपपत्तिस्तथोपरिष्टाद्वक्ष्यते तन्निर्दोषत्वप्रतिज्ञोचितेत्याह—यथेति । परिणामवादे तु ज्ञानान्मोक्षासिद्ध्या दोषप्रवाहप्राप्तिरित्याह—अन्यथेति ॥११२३॥

पूर्वोत्तरसंदर्भयोरपौनरुक्त्यं वक्तुं वृत्तं कीर्तयति—एवं तावदिति । अत्रेत्यतीतग्रन्थोक्तिः । अस्मिन्भगवत्पादभाष्ये स्थित्वेति शेषः । सिद्धान्तश्च संगृहीत इति द्रष्टव्यम् । भर्तृप्रपञ्चैर्यथोपोद्घातो व्याख्यातस्तथोच्यते स्वीकर्तुमित्याह—अन्यदीयोऽपीति ॥११२४॥

तदाहुरित्यत्र तन्मतेन तच्छब्दार्थमाह—तदेतदिति । ब्रह्म वा इदमित्यादिर्ब्रह्मविद्यारम्भस्तस्मिन्कार्ये मोक्षाख्यमेतत्फलं तदित्यनेन परामृष्टमित्यर्थः । विद्याफलोक्तेरकिंचित्करत्वात्तत्कथं तच्छब्देन तदुक्तिस्तत्राऽऽह—

**वक्ष्यमाण उपोद्घातो ब्रह्मविद्या ततः परम् । ततोऽप्यूर्ध्वं फलोक्तिश्चेत्तच्छब्देनोच्यते कथम् ॥२६॥**
**अनन्तरेण सम्बन्धसामर्थ्ये सत्यमानतः । दवीयसाऽभिसंबन्धस्तच्छब्दस्योच्यते कुतः ॥२७॥**
**द्वैतैकत्वात्मकं साक्षाद्ब्रह्मविद्योदयात्पुरा । समाप्य तत्फलं कृत्स्नं जातकौतूहलाः परे ॥२८॥**
**आहुरेवं द्विजाः केचिद्विरक्ताः पूर्वभूमितः । संभाव्यते ब्रह्मविद्भिर्यत्तदर्थबुभुत्सवः ॥२९॥**
**द्वैतैकत्वधिया नैव पूर्वया फल्गुकार्यया । संभाव्यते सर्वभूतिर्यतः सा ब्रह्मविद्यया ॥३०॥**
**द्वैतैकत्वमतिर्यद्वत्स्वानुरूपफलाप्तये । अलं सर्वमतिस्तद्वत्सर्वभावफलाप्तये ॥३१॥**
**ब्रह्मबुद्ध्या भविष्यामः कृत्स्नं ब्रह्मेति तद्विदः । यन्मन्यन्तेऽथ तद्ब्रह्म किमवेदिति पृच्छ्यते ॥३२॥**
**किमवेदिति यः प्रश्नः स किं स्यात्कर्तृकर्मणोः । विद्यायाः पृच्छ्यते कर्ता कर्म वेह विवक्षितम् ॥३३॥**
**ब्रह्मणा चेत्कृता विद्या निष्फलेयं प्रसज्यते । ब्रह्मविद्योदयाद्यस्मादभूद्ब्रह्म पुराऽपि तत् ॥३४॥**
**तस्मात्कर्मैव विद्यायाः पिपृच्छिषितमत्र तु । प्रमेयोपाश्रयादेव यतः प्रमाण्यमुच्यते ॥३५॥**

तत्प्रवृत्तीति । विद्याफलोक्तौ तदिच्छया विषयविमुखो विद्यायां प्रवर्ततातस्तस्यां प्रवृत्त्यङ्गतयाऽऽदौ फलोक्तिर्युक्तेत्यर्थः । फलोक्तेरुपायप्रवृत्त्युपयोगित्वमन्यत्रापि प्रसिद्धमिति वक्तुं चशब्दः ॥११२५॥

तदुक्तेस्तदङ्गत्वेऽपि तच्छब्देन फलं दुर्वचमिति शङ्कते—वक्ष्यमाण इति । तच्छब्दादूर्ध्वमुपोद्घातो यद्ब्रह्मविद्ययेत्यादिना वक्ष्यते । तस्मात्परस्तात्तदात्मानमेवावेदिति ब्रह्मविद्या । ततोऽप्यूर्ध्वं तस्मादित्यादिना फलं तदेवं व्यवहितं चेन्न तच्छब्दमर्हति तस्य संनिहितावलम्बित्वादित्यर्थः ॥११२६॥

भर्तृप्रपञ्चानुसारी परिहरति—अनन्तरेणेति । न ह्यस्येत्यनन्तरोक्तविद्याफलेन तच्छब्दस्य संबन्धसामर्थ्ये सति विप्रकृष्टसर्वभावेन न संबन्धो मानाभावात्तस्मात्तस्य फलवाचिता युक्तेत्यर्थः ॥११२७॥

अथ प्रकृते विद्याफले चोद्यमुद्भावयन्नाहुरित्यस्यापेक्षितमाह—द्वैतेति । अपरोक्षत्वेनैकरसार्थज्ञानोत्पत्तेः पूर्वं नानारसं सौत्रं पदं कर्मज्ञानफलं कृत्स्नमपि वर्तमानदेहे भावनाप्रकर्षादनुभूय तस्मादुत्कृष्टे तस्मिन्विद्याफले कैवल्ये श्रद्धालवः पूर्वभूमितः सूत्रपदाद्विरक्ता वक्ष्यमाणादित्याहुरिति योजना । उत्कृष्टवाची परशब्दो विद्याफलविषयः । केचिद्द्विजा इति मनुष्याणां सहस्रेष्वितिन्यायं द्योतयति । तत्रापि द्विजग्रहणेन त्रैवर्णिकानामेव वेदद्वारा विद्याधिकारं सूचयति । विद्याफले कुतूहलिनामपि विद्येच्छाभावे कुतूहलवैफल्यमित्याशङ्क्याऽऽह—संभाव्यत इति । यदैक्यं ब्रह्मविद्भिः संभाव्यते तस्मिन्बुभुत्सवस्तत्फलेऽपि कुतूहलिनश्चोदयन्तीत्यर्थः ॥११२८-११२९॥

द्वैतैकत्वज्ञानादेव सर्वभावमोक्षलाभाद्ब्रह्मविद्यावैयर्थ्यादैक्यबुभुत्सोत्सार्यतामित्याशङ्क्याऽऽह—द्वैतेति । ब्रह्मविद्यापेक्षया प्राक्प्रवृत्तत्वं पूर्वत्वम् । फल्गुकार्यया संसारान्तस्थात्यल्पफलयेति यावत् । उपास्तिर्हि संसारफला न तदूर्ध्वमस्ति फलयति तत्क्रतुन्यायविरोधादतः सर्वभावमुक्तिर्ब्रह्मविद्ययैवेति युक्ता तद्बुभुत्सेत्याह—यत इति ॥११३०॥

तथाऽपि न तथाविधं ज्ञानमस्ति यत्सर्वभावं फलयेत्तत्राऽऽह—द्वैतैकत्वेति । सर्वमतिः पूर्णप्रत्यग्ब्रह्मबुद्धिरिति यावत् । सूत्रोपास्त्या तत्क्रतुन्यायेन सूत्राप्तिवद्ब्रह्मधिया ब्रह्मप्राप्तिर्युक्तेत्यर्थः ॥११३१॥

तदाहुरिति व्याख्याय किमाहुरित्यपेक्षायां यदित्यादि व्याचष्टे—ब्रह्मेति । तद्विदो ब्रह्मविदः । अथशब्दस्तत्रार्थे । यस्य ब्रह्मणो ज्ञानान्मनुष्याः सर्वभावमापन्नास्तद्ब्रह्म किमवेत्किंवा नेति पृच्छ्यते शिष्यैर्गुरुरित्याह—तद्ब्रह्मेति ॥११३२॥

पृच्छ्यमानं निर्णेतुं परामृशति—किमवेदिति । विद्यायाः किं कर्ता पृच्छ्यते किंवेह प्रश्ने कर्म विवक्षितमिति परामर्शमेव विशदयति—विद्याया इति ॥११३३॥

पूर्ववादी कर्तरि प्रश्ने दोषमाह—ब्रह्मणेति । विद्यानैष्फल्यप्रसङ्गे हेतुमाह—ब्रह्मेति । यस्मात्तद्ब्रह्म विद्योदयात्पुराऽपि ब्रह्माभूत्स्वरूपत्यागायोगात्तस्मान्न विद्याऽर्थवतीत्यर्थः ॥११३४॥

कर्तरि प्रश्नायोगे फलितमाह—तस्मादिति । अत्रेति प्रश्नवाक्योक्तिः । प्रश्नस्य विषयान्तराभावमेवकारोक्तं

भर्तृप्रपञ्चमते प्रश्नसमाधिः

वस्तुनिष्ठत्वतोऽदोषः कर्तर्यपि विवक्षिते ॥३६॥
सर्वं ब्रह्माभवद्यस्माद्विज्ञानात्तदिहोच्यते । ब्रह्मविद्येति सर्वाप्तावसाधारणकारणम् ॥३७॥
सर्वैकत्वावबोधोऽयं ब्रह्मविद्यागिरोच्यते । द्वैतस्याद्वैतयाथात्म्यात्क्लृप्तसर्पादितत्त्ववत् ॥३८॥
सर्वैकत्वं परं ब्रह्म परमात्मेति यं विदुः । तन्मोहजानां सर्वेषां स तत्त्वं परमार्थतः ॥३९॥
तदज्ञानैकहेतुत्वात्तेनैव परमात्मना । तदन्यान्यात्मवन्ति स्युः सर्पादीनि स्रजा यथा ॥४०॥
उक्तात्मच्युतदृष्टीनां तदबोधैकहेतुतः ।
आब्रह्मस्थाणुभेदोऽयं नामरूपक्रियात्मकः । अविद्याकृत एवायं न यथावस्तुधीकृतः ॥४१॥
तमोघ्न्यैव ततो ब्रह्म प्राप्यते ब्रह्मविद्यया ॥४२॥
यथोक्ततत्त्वकान्येव रज्ज्वां तत्क्लृप्तवस्तुवत् । सूत्रं विराड्देवता च यावत्किंचिच्च वस्त्विह ॥४३॥
ब्रह्मैवेदं यथा सर्वं विद्यया तदबोधजम् । अविद्यया यथाऽकृत्स्नं ब्रह्म सूत्रादिरूपकम् ॥४४॥

व्यक्तीकर्तुं तुशब्दः । विद्याकर्मणः प्रष्टुमिष्टत्वे हेतुमाह—प्रमेयेति । कर्म हि विद्यायामभ्यर्हितं तदन्तरेण तत्प्रमाणभावायोगादतस्तस्यैव प्रष्टुं योग्यतेत्यर्थः ॥११३५॥

सिद्धान्ती कर्तरि कर्मणि च प्रश्नमाश्रित्य परिहरति—वस्त्विति । अदोष इति च्छेदः । कर्मणि प्रश्ने कर्ताऽर्थादाक्षिप्यते तमन्तरेण विद्यानुदयात्कर्तरि प्रश्नेऽपि कर्माऽऽर्थिकं विद्याया वस्तुविषयत्वात्तेनोभयविवक्षायां प्रश्नो न च कर्तृप्रश्ने विद्यावैफल्यं स्वतः सदा ब्रह्मत्वेऽपि ब्रह्मणोऽविद्याध्वंसित्वेन तत्साफल्यादित्यर्थः । प्रष्टृणामभिप्रायमुक्त्वा ब्रह्मविद्यां व्याचष्टे—सर्वमिति । यज्ज्ञानाद्ब्रह्म सर्वमभवत्तत्सर्वाप्तावसाधारणकारणमुपोद्धातवाक्ये ब्रह्मविद्येति शब्दितमिति योजना ॥११३६–११३७॥

प्रतिज्ञामनूद्य हेतुमाह—सर्वेति । रज्ज्वां क्लृप्तस्य सर्पादेर्यथा रज्जुस्तत्त्वं तथा द्वैतस्याद्वैतमेव स्वरूपमतः सर्वैकत्वबोधो ब्रह्मविद्येत्यर्थः ॥११३८॥

अथैतदयुक्तं यतः सर्वस्यैकत्वमेकस्य च सर्वत्वं विरुद्धमित्याशङ्क्य सर्वैकत्वं परं ब्रह्म 'परमात्मा य' इति भाष्यमनुसरन्नाह—सर्वैकत्वमिति । स आत्मेतिभाष्यार्थमाह—तदिति । परमात्मा तच्छब्दार्थः । स तत्त्वमिति पदद्वयम् ॥११३९॥

सर्वस्य ब्रह्म तत्त्वमित्येतद्दृष्टान्तेन स्पष्टयन्ननेनाऽऽत्मनाऽऽत्मवन्तीतिभाष्यार्थमाह—तदज्ञानेति । तदन्यानि परमात्मातिरिक्तानि समस्तान्यनात्मवस्तूनीति यावत् ॥११४०॥

द्वैतभानं तर्हि कथमित्याशङ्क्य ततः प्रच्युतानामविद्याकृतो हिरण्यगर्भ आत्मा सर्वसाधारणस्तेनाऽऽत्मना सर्वसत्त्वान्यात्मवन्तीत्यादिभाष्यं विभजते—उक्तेति । उक्तादात्मनो दृष्टिच्युतौ हेतुः—तदबोधेति । आत्माज्ञानात्ततो बहिर्मुखानां सर्वमपि नामादिद्वैतं मानं विनाऽविद्यया भातीति भावः ॥११४१॥

सर्वस्य ब्रह्ममात्रत्वेऽपि द्वैतधीरविद्येत्युक्त्वा फलितमाह—तमोघ्न्येति । सर्वस्य न ब्रह्ममात्रत्वं सूत्रादीनां भेदेन वस्तुत्वस्य तैरिष्टत्वादित्याशङ्क्य द्वैतस्याद्वैतयाथात्म्यादित्यत्रोक्तं स्मारयति—यथोक्तेति । रज्ज्वां तदज्ञानोत्थसर्पादे रज्जुस्तत्त्वमेवं सूत्रादीन्यात्माज्ञानजत्वादज्ञातात्ममात्राणि ब्रह्मणस्तत्तद्रूपेणावस्थानमपेक्ष्य क्वचित्तत्सत्त्वोक्तिरित्यर्थः । यावत्किंचिदिति पिण्डजात्योरुदाहरणम् । चशब्दो व्याकृतसमुच्चयार्थः । वस्तुशब्देनान्तर्यामी साक्षीत्युभयं विवक्षितम् । इहेति व्यवहारभूमिरुक्ता ॥११४२–११४३॥

कथं निष्प्रपञ्चं ब्रह्म सूत्राद्यात्मकमित्याशङ्क्याऽऽह—ब्रह्मैवेति । यथेदं सर्वं ब्रह्माज्ञानोत्थं तद्विद्यया च तदेव भवति तस्मात्तत्सर्वमभवदितिश्रुतेस्तथा तदेवाविद्यया सूत्रादिरूपमापद्य परिच्छिद्यते ब्रह्मवेदं सर्वमित्यादिश्रुतेरित्यर्थः । अकृत्स्नमिति च्छेदः ॥११४४॥

भावनाज्ञानकर्माणि साधनानीति यद्यपि । तत्सतत्त्वमविद्यैव यतोऽतः सैव कारणम् ॥४५॥
न हि साधनसापेक्षं वस्तु स्यात्पारमार्थिकम् । परमार्थं न वस्त्वस्ति यत्परायत्तसिद्धिकम् ॥४६॥
मोहोत्थाः पृथगात्मानः साधनायत्तसिद्धिकाः । सूत्रादयस्तृणान्ताः स्युरन्योन्यव्यभिचारिणः ॥४७॥
सर्वेऽप्येते यथादृष्टि ह्येकैकस्य तमस्विनः । सूत्रादयोऽनुभूयन्ते यथाकर्म यथाश्रुतम् ॥४८॥
अविद्यैव यतोऽमीषां प्रागभावो न तत्परम् । भावनाज्ञानकर्मभ्यो जन्मैषां तेन नान्यतः ॥४९॥
यथैता दर्शनावस्थाः कार्यमासां तथाविधम् । उत्पाद्यमाप्यं संस्कार्यं विकार्यं च क्रियावशात् ॥५०॥
पिण्डात्माऽहमितीक्षाणः पिण्डमेव प्रपद्यते । दैवं विराजं सूत्रं च मृतः सम्प्रतिपद्यते ॥५१॥
संस्कारोपचयाद्यद्वद्देवो भूत्वैति देवताम् । संस्कारापचयाद्ध्वंसस्तथा तासां न संशयः ॥५२॥
ब्रह्मणोऽन्यद्यतो वस्तु ब्रह्मैव परमार्थतः । तदबोधात्तदन्यत्तद्बोधाद्ब्रह्मैव तत्त्वतः ॥५३॥

अविद्यया ब्रह्म सूत्रादिरूपं परिच्छिन्नमिति वदता जगत्कारणमविद्येत्युक्तं तदयुक्तमुपासनाज्ञानकर्मणां तत्कारणत्वा"द्धिया धिया जनयते कर्मभिश्चे"तिश्रुतेरित्याशङ्क्याऽऽह—भावनेति । तेषामविद्यैव तत्त्वमित्यत्रान्वयव्यतिरेकौ प्रमाणयितव्यौ । "अथ योऽन्यां देवतामुपास्ते" "अविद्यायामन्तरे वर्तमाना" इत्याद्या श्रुतिश्च ॥११४५॥

सूत्रादि नाविद्याकार्यमबाध्यत्वादात्मवदित्याशङ्क्य हेत्वसिद्धिं मत्वा प्रत्यनुमानमाह—न हीति । विमतं कल्पितं सापेक्षत्वात्सर्पवदित्यर्थः । विमतं न वास्तवं कार्यत्वात्संमतवदित्यनुमानान्तरमाह—परमार्थमिति ॥११४६॥

विमतं कल्पितं भिन्नत्वात्संमतवदित्याह—मोहेति । कार्यत्वहेतुनोक्तमनुमानमनूद्यानुमानान्तरमाह—साधनेति । विमतं कल्पितं व्यभिचारित्वात्सर्पादिवदित्यर्थः ॥११४७॥

विमतं कल्पितं दृश्यत्वाद्रूप्यवदित्याह—सर्वेऽपीति । दृश्यत्वस्य कल्पितत्वेन व्याप्ती रज्जुसर्पादिसंसर्गे व्यक्तेति वक्तुं हीत्युक्तम् । तदुक्तम्-एते सर्वेऽप्येकैकस्याऽऽत्मनो यथादर्शनमनुभूयन्त इति । अज्ञस्यैव द्वैतधीर्विदुषस्तु नेति मत्वा तमस्विन इत्युक्तम् । यथादृष्टीत्येतद्व्याचष्टे—यथेति ॥११४८॥

केचिदविद्याविलसितत्वममृष्यन्तो विश्वस्य प्रधानादि निदानमित्याहुरपरे ब्रह्मैव परिणामि तत्कारणमिति तान्प्रत्याह—अविद्यैवेति । अमीषां सूत्रादीनां प्रागभावस्तदुपलक्षितमुपादानमित्येतत् । अतो न परिणामि कारणान्तरं शङ्कनीयमिति शेषः । न ब्रह्म तदुपादानं श्रुत्यादिप्रमितकौटस्थ्यस्यासङ्गाद्वयस्य परिणामायोगादित्याह—न तदिति । सूत्राद्युत्पत्तौ निमित्तमाह—भावनेति । न प्रधानादि तदुपादानमचेतनस्यास्वातन्त्र्यात्पारतन्त्र्ये च मायाप्रवेशात्तां विना तदयोगादित्याशयेनाऽऽह—तेनेति । नान्यतो जन्मैषामिति संबन्धः । भावनाशब्देनोपासनान्युक्तानि ॥११४९॥

तत्फलं ता एता दर्शनावस्था एतदेव चाऽऽसां कार्यमितिभाष्ययोजनया दर्शयति—यथेति । दर्शनावस्थाशब्देन भावना गृह्यते । तथाविधत्वमेव कथयति—उत्पाद्यमिति । फलविकल्पहेतुमाह—क्रियावशादिति ॥११५०॥

पिण्डात्मदर्शी पिण्डात्मानमेवाभिसंपद्यते प्रेत्येत्यादिभाष्यं व्याकुर्वन्नुक्तमेव व्यनक्ति—पिण्डात्मेति । ईक्षमाण इति वक्तव्यम् । तत्र तत्र तादात्म्यापत्तिरिति वक्तुं चशब्दः । परिच्छिन्नेऽपरिच्छिन्ने वा तादात्म्योपासनया तद्भावमापन्नो देहान्ते यथोपासनफली भवतीत्यर्थः ॥११५१॥

सूत्रादीनामुपास्त्यधीनत्वेऽपि ध्वंसाश्रवणान्नित्यत्वमाशङ्क्याऽऽह—संस्कारेति । उपासको हि भावनाप्रकर्षाज्जीवन्नेव देवताभावमनुभूयान्ते । यथोपास्ति प्रतिपद्यते स च तत्तद्देवतापदे स्थित्वा भुञ्जानो भोगहेतुवासनावसानात्ततः प्रच्यवते तदा देवतानामेवाप्रतिबन्धेन ध्वंसो व्यपदिश्यते । तस्माद्भावत्वे सति साध्यस्यानाशित्वं न्यायविरुद्धमिति भावः ॥११५२॥

तर्हि सूत्रादीनामुत्पत्त्यादिमत्त्वाद्ब्रह्मणस्तदभावान्मिथो भेदाद्यथोक्ततत्त्वकान्येव रज्ज्वां तत्क्लृप्तसर्पवदित्ययुक्तं तत्राऽऽह—ब्रह्मण इति । यद्ब्रह्मणोऽन्यद्वस्तु शङ्क्यते तद्वस्तुतो ब्रह्मैव ब्रह्माबोधाद्ब्रह्मणोऽन्यत्तद्भाति ततो ब्रह्मबोधाद्ब्रह्मैव सूत्रादीति तत्र जन्मादिधीर्भ्रान्तिर्धर्मिण्यसति धर्मायोगादित्यर्थः । यतःशब्दो यदित्यर्थे व्याख्येयः ।

सूत्रादिदर्शनानां स्यात्सूत्राद्येव यथा फलम् । परात्मदर्शनस्यापि तद्भावः स्यात्तथा फलम् ॥५४॥
ब्रह्मभावोऽत्र नित्यः स्यात्कारणाद्यनपेक्षतः । अनित्यमितरत्सर्वं यदविद्याविजृम्भितम् ॥५५॥
अनित्यं दर्शनं ज्ञेयं नित्यस्यापि परात्मनः । मोहमात्रान्तरायत्वात्कादाचित्कं हि दर्शनम् ॥५६॥
अहमेव परं ब्रह्मेत्यस्यार्थस्याप्रबुद्धता । अविद्येति वयं ब्रूमो येह नास्ति सदाऽऽत्मनि ॥५७॥
परात्मनि तु संबोधो नित्यः स्याच्छशिशीतवत् । तदन्यात्मस्वनित्योऽसौ मोहसंवीतबुद्धिषु ॥५८॥
तत्रैवं सति योऽकात्स्न्र्यमित्वा ब्रह्माप्रबोधतः । सर्वात्मविद्ययाऽविद्यां हत्वा ब्रह्माभवत्पुमान् ॥५९॥
पुराऽपि चाऽऽत्मसंबोधाद्ब्रह्मैवायं स्वतो ह्यभूत् । यतोऽतस्तत्त्वसंबोधाद्ब्रह्म ब्रह्म प्रपद्यते ॥६०॥
प्रत्यग्याथात्म्यसंबोधात्तदन्यत्रैव या मतिः । परार्था सा मतिर्ज्ञेया बाह्यकर्मव्यपाश्रया ॥६१॥

यद्वा यतो ब्रह्मणोऽन्यद्वस्तु ब्रह्मैव परमार्थतोऽस्ति ब्रह्माबोधाद्ब्रह्मान्यद्भाति ततो ब्रह्मैव ब्रह्मबोधात्तत्सर्वं संपद्यते कल्पितस्याधिष्ठानानतिरेकादित्यर्थः ॥११५३॥

सूत्रादिनिमित्तत्वेन प्रसक्तोपास्तिफलं विविच्य ब्रुवता सूत्रादेर्ब्रह्मबोधाद्ब्रह्मत्वमुक्तं । तदयुक्तं । न हि मैत्रस्य प्रतिमाबोधात्प्रतिमात्वमित्याशङ्क्यैवं परमात्मदर्शनावस्थायाः परमात्मभाव एव कार्यमिति भाष्येणाऽऽह—सूत्रादीति ॥११५४॥

ज्ञानसाध्यत्वे ब्रह्मभावस्य स्वर्गादिवदनित्यतेत्याशङ्क्य तत्र परमात्मा नित्य इति भाष्यार्थमाह—ब्रह्मेति । अत्र सूत्रादिष्विति यावत् । प्रमाणप्रकाश्यत्वमादिशब्दार्थः । ब्रह्मभाववद्विद्याफलत्वात्सूत्रादिभावस्यापि नित्यत्वमाशङ्क्याऽऽह—अनित्यमिति ॥११५५॥

परस्य ब्रह्मभाववद्दर्शनमपि नित्यमनित्यं वा ? आद्ये ततोऽज्ञानध्वस्तेर्बन्धानुदयो द्वितीये विज्ञानघनत्वादिश्रुतिविरोधः परस्यास्मदाद्यविशेषश्चेत्याशङ्क्य कदाचिद्दर्शनमनित्यमित्यस्यार्थमाह—अनित्यं दर्शनमिति । नित्यज्ञप्तिरूपस्यापि परस्य वाक्यीयमनित्यज्ञानमिष्टं न च श्रुतिविरोधस्तस्याः स्वरूपविषयत्वात् । न च परस्यास्मदाद्यविशेषो नित्यज्ञानत्वादिति भावः । परस्य नित्यज्ञानत्वे ततोऽज्ञानध्वस्तेर्बन्धध्वस्तिरित्याशङ्क्य कदाचिदविद्यातिरस्कृतं भवतीत्यस्यार्थमाह—मोहेति । नित्यदृष्टेरपि परस्याविद्यामात्रव्यवहितत्वात्तद्ध्वंसि ज्ञानमनित्यमेव शुक्त्यादौ मानोत्थज्ञानस्य तद्ध्वंसित्वदर्शनान्न हि स्वरूपज्ञानं वाक्यीयबुद्धिवृत्त्युपरागं विना तद्ध्वंसीति भावः । आगन्तुकं प्रमाणज्ञानमेवाज्ञानध्वंसि दृष्टमिति हिशब्दार्थः ॥११५६॥

अविद्या तर्हि कीदृशी यया परस्तिरस्क्रियते तत्राऽऽह—अहमेवेति । यथोक्तं साऽविद्याऽहमेवेदं सर्वमित्येतस्यार्थस्यासंबोध इति ॥११५७॥

तद्ध्वंसिस्वरूपज्ञानसहकारिज्ञानस्यानित्यत्वे तस्यापि ज्ञानत्वादनित्यतेत्याशङ्क्य स एष संबोधो नित्यः परमात्मनीत्यस्यार्थमाह—परात्मनीति । तर्हि तद्वदेव ज्ञानत्वादितरदपि नित्यमित्याशङ्क्यानित्य इतरस्मिंस्तिरस्कृतविज्ञाने सांसारिक इत्यस्यार्थमाह—तदन्येति ॥११५८॥

अहं ब्रह्मेत्यस्याज्ञानमविद्येति स्थिते फलितमाह—तत्रेति । तस्मिन्नज्ञाने दर्शितरूपे सति यस्तद्वशात्परिच्छिन्नत्वमित्वा गत्वा स्थितः स पुरुषो ब्रह्मास्मीतिविद्यया तद्विपरीतामविद्यां त्यक्त्वा पूर्णो भवतीति योजना । यथाऽऽहुः । तत्रैवं सति योऽविद्ययाऽसर्वभावमित्वा विद्यया सर्वात्मदर्शनेन सर्वभावमभिसंपन्न इति ॥११५९॥

अहं ब्रह्मेत्यस्याज्ञानस्याविद्यात्वे तत्कृतत्वादकात्स्न्र्यस्याहं ब्रह्मेति केवलज्ञानात्तद्ध्वस्तेर्मुक्तिरित्युक्तं तदयुक्तं ज्ञानात्प्रागस्य ब्रह्मत्वं सिद्धं चेज्ज्ञानवैयर्थ्यादसिद्धं चेत्तस्मादेव तत्सिद्ध्ययोगात्तस्याकारकत्वादित्याशङ्क्याऽऽह—पुराऽपीति । आत्मनः स्वतो ब्रह्मत्वमशेषोपनिषदधिगतमिति वक्तुं हिशब्दः । स्वतःसिद्धब्रह्मत्वविरोध्यज्ञाननिरासिज्ञानमर्थवदित्यर्थः ॥११६०॥

विमतं न मुक्तिफलं कर्माङ्गसंस्कारत्वात्संमतवदित्याशङ्क्य हेत्वसिद्धिमाह—प्रत्यगिति । तच्छब्दस्तस्मादर्थो बोधसमानाधिकरणः । व्रीह्यादिः समम्यर्थः । तत्र हेतुमाह—बाह्येति । बाह्यं कर्म दर्शपूर्णमासादि ॥११६१॥

अहं ब्रह्मेति यज्ज्ञानं स्वार्थमेव तदिष्यते । सर्वप्रयोगबीजात्मध्वान्तोच्छेदित्वहेतुतः ॥६२॥
निःशेषपुरुषार्थानां ज्ञेयानां चापि कृत्स्नतः । प्रत्यक्तत्त्वपरिज्ञानसमुत्पत्तौ समाप्तितः ॥६३॥

भर्तृप्रपञ्चभाष्यस्य भगवत्पादमतानुकूलत्वेन नयनं सर्वत्र कार्यम्

भर्तृप्रपञ्चप्रस्थानमेवमेतद्यथोदितम् । इतोऽन्यत्रापि तद्भाष्यं गमयेदेवमेव तु ॥६४॥
ब्रह्मभाविरवं श्रुत्वा ये तु व्याचक्षतेऽन्यथा । तानुद्दिश्य विचारोऽयं प्रारब्धो गुरुभिः स्फुटः ॥६५॥

मू.—ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेत् अहं ब्रह्मास्मीति । तस्मात्तत्सर्वमभवत्तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणां तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवँ्सूर्यश्चेति । तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति स इदँ् सर्वं भवति तस्य ह न देवाश्च नाभूत्या ईशते । आत्मा ह्येषाँ् स भवति अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवँ् स देवानाम् । यथा ह वै बहवः पशवो मनुष्यं भुञ्ज्युरेवमेकैकः पुरुषो देवान्भुनक्त्येकस्मिन्नेव पशावादीयमानेऽप्रियं भवति किमु बहुषु तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युः ॥१०॥

भाष्यद्वयेऽपि तदाहुरित्यादिमूलाक्षेपपरिहारः

यथोक्तसूत्रव्याख्यायां प्रयोजनविवक्षया । उपोद्घातोक्तदोषाणां परिहाराय यत्यते ॥६६॥
ब्रह्मविद्योपदेशस्य विषयश्चावधार्यते । साक्षाद्ब्रह्माथवाऽब्रह्म यदि वोभयरूपकम् ॥६७॥

विमतं परार्थं ज्ञानत्वात्संमतवदित्याशङ्क्याऽऽह—अहमिति । तत्र हेतुमाह—सर्वेति । अनुष्ठानमात्रे बीजमात्माज्ञानं तदुच्छेदित्वादैक्यधियस्तच्छेषत्वं धर्मिग्रहबाधितमित्यर्थः ॥११६२॥

तस्य स्वातन्त्र्येण पुमर्थहेतुत्वे हेत्वन्तरमाह—निःशेषेति । स्वतन्त्रमेव तज्ज्ञानमिति शेषः ॥११६३॥

एष विचारः किमु तद्ब्रह्मावेद्यस्मात्तत्सर्वमभवदिति भाष्येणोपोद्घातमुपसंहरति—भर्तृप्रपञ्चेति । अस्यार्थः । यस्य ज्ञानं मोक्षहेतुरिति मनुष्या मन्यन्ते तद्ब्रह्म किं सर्वमभवदुत न ? न चेद्ब्रह्मत्वायोगः । आद्ये विदित्वा तत्सर्वमभवदविदित्वा वा? प्रथमे स्वात्मानमन्यद्वा ? नाऽऽद्यो जीवानामपि स्वज्ञानात्सर्वभावापाताद्ब्रह्मधीवैयर्थ्यान्नेतरोऽनवस्थानात् । अविदित्वैव ब्रह्मणः सर्वभावे जीवानामपि तत्संभवाद्विद्यावैयर्थ्यमेव । ब्रह्मणश्च कर्तृत्वे कर्मत्वे च संसारिवद्घटवच्चाब्रह्मत्वमतो न तज्ज्ञानं सर्वभावे हेतुरित्यनेन क्रमेण भर्तृप्रपञ्चमतं स्थितमिति । कथमुपोद्घातसंबन्धि तद्भाष्यं विवर्तानुसारि व्याख्यातं तदीयभाष्यान्तरस्य परिणामानुसारित्वादित्याशङ्क्याऽऽह—इत इति । उपोद्घातादन्यत्रापि भर्तृप्रपञ्चभाष्यं विवर्तवादानुसारि नेतव्यमित्यस्मन्मतानुकूलमेव तद्भाष्यमित्यर्थः ॥११६४॥

सर्वमपि तद्भाष्यं विवर्तानुसारितया सिद्धान्ताविरुद्धं चेत्किमित्यनुभाष्य दूष्यते भाष्यकृतेत्याशङ्क्याऽऽह—ब्रह्मेति । ब्रह्म वा इदमित्यत्र ब्रह्मभावी पुरुषो ब्रह्मशब्देनोच्यत इति भर्तृप्रपञ्चवचः श्रुत्वा विवर्तवादं ते नेच्छन्तीति ये भ्राम्यन्ति तानुद्दिश्य तद्भ्रान्तिध्वस्त्यर्थं विचारो भाष्यकारैरवतारित इत्यर्थः । विचारं महीकरोति—स्फुट इति ॥११६५॥

उपोद्घातवाक्यं भाष्यद्वयेऽपि व्याख्याय भाष्यान्तरस्य सिद्धान्ताविरुद्धत्वं चोक्त्वा परिहारवाक्यस्य मतद्वयाभिमतमर्थं संगृह्णाति—यथोक्तेति । आत्मेत्येवोपासीतेत्यादेः स्वमते विभज्योक्तस्यैकस्य सूत्रस्य तद्धेत्यादिसूत्राणां वा पञ्चानां परमते व्याख्या प्रस्तुता । तत्र सूत्रितविद्याफलस्यानपवादेन वचनेच्छया तदाहुरित्यादावुक्तदोषाणां परिहारोऽनन्तरवाक्येनोच्यत इत्यर्थः ॥११६६॥

ननु ब्रह्मविद्यायाः सूत्रं विवरणं चायुक्तं तदधिकारिणोऽनुक्तत्वात्तत्राऽऽह—ब्रह्मविद्येति । तमेवाधिकारिणं विषयशब्दितं विशिनष्टि—साक्षादिति । शुद्धं ब्रह्म नित्यमुक्तं तद्विद्यामर्हतीत्येकः कल्पस्ततोऽत्यन्तभिन्नस्यैवान्दः

### "ब्रह्म वा इदं" इत्यादेः भर्तृप्रपञ्चमतेन व्याख्या

समाशङ्कितनिःशेषदोषानाघ्रातमर्थितं स्फुटम् । श्रुतिः प्रतिवचः प्राह दोषमूलनिरासकृत् ॥६८॥
ब्रह्मेति ब्रह्मशब्दोऽयं मुख्यब्रह्मार्थवाचकः । अपूर्वादिश्रुतेर्ज्ञेयो ब्रह्मत्वं न ततोऽन्यथा ॥६९॥
अविचारितसंसिद्धिप्रत्यगज्ञानकारणात् । अब्रह्मेव तदाभाति मोहसंवीतचेतसः ॥७०॥
प्रत्यक्संबोधविध्वस्तप्रत्यङ्मोहः परात्मनः । संभावयति संबोधान्नान्यद्वस्त्वन्तरं यथा ॥७१॥
एवमेव महामोहसंवीतधिषणः पुमान् । ब्रह्मैवापि स्वतो मोहान्न तत्संभावयत्यपि ॥७२॥
बुद्धतत्त्वस्य लोकोऽयं जडोन्मत्तपिशाचवत् । बुद्धतत्त्वोऽपि लोकस्य जडोन्मत्तपिशाचवत् ॥७३॥
यदि नामास्ति संभेदः साक्षात्कल्पितसर्पयोः । भीतं प्रत्यविशिष्टोऽसौ वास्तवत्वादनादृतः ॥७४॥
प्रत्यक्तत्त्वं तमोमात्रव्यवधानादिहोच्यते । ब्रह्मभावीति न पुनर्वस्तुतत्त्वव्यपेक्षया ॥७५॥

### इदंशब्दव्याख्यानम्

इदंधीशब्दगम्यं यद् ब्रह्मरूपाद्विशिष्यते । ब्रह्मैव तदुपाधीहेदंशब्देनाभिधीयते ॥७६॥

करणादेरधिकारितेत्यपरोऽविद्याविशिष्टस्य ब्रह्मणः संसारित्वेन मुमुक्षुत्वादधिकारितेति कल्पान्तरम् । वक्ष्यति हि ब्रह्मविद्याधिकारित्वं द्वैविध्यात्प्रतिपद्यत इति ॥११६७॥

उत्तरवाक्यस्य भाष्यद्वयानुसारि तात्पर्यमुक्त्वा परकीयोपोद्घातोत्तरत्वेन व्याख्यातुं ब्रह्मेत्यादिवाक्यमादत्ते—समाशङ्कितेति । उपोद्घातोक्तसर्वदोषास्पृष्टमिति यावत् । असन्दिग्धाबाधितानधिगतार्थत्वं स्फुटत्वम् । दोषमूलमज्ञानं तन्निरासित्वं वचसो ज्ञानहेतुत्वात् ॥११६८॥

ब्रह्मशब्दे विप्रतिपत्तिं निराकर्तुं विवक्षितमर्थमाह—ब्रह्मेतीति । त्रिधाऽनवच्छिन्नं वस्तु ब्रह्म बृंहतेरेवमर्थत्वादसति संकोचके संकोचायोगादित्यर्थः । उक्ते ब्रह्मशब्दार्थे "तदेतद्ब्रह्मे"त्यादिवाक्यं प्रमाणयति—अपूर्वेति । तत्रैव युक्तिमाह—ब्रह्मत्वमिति । निरतिशयमहत्त्वसंपन्नमात्मानमनादृत्य न ब्रह्मत्वं युक्तं परिच्छिन्नेषु घटादिषु तदभावादित्यर्थः ॥११६९॥

श्रुतियुक्तिधातुभ्यो ब्रह्मशब्दस्योक्तार्थत्वेऽपि कथं परिच्छेदधीरित्याशङ्क्याऽऽह—अविचारितेति ॥११७०॥

अज्ञस्यानिर्वाच्यस्वाज्ञानात्परिच्छेदधीरित्यत्र दृष्टान्तमाह—प्रत्यगिति । समानाधिकरणे पञ्चम्यौ । वस्त्वन्तरं स्वतन्त्रमकल्पितं वस्त्विति यावत् । दग्धाविद्यस्य हेत्वभावान्न द्वैतधीरित्यर्थः ॥११७१॥

अदग्धाविद्यस्य नाद्वैतधीः किं तु मोहाद्द्वैतधीरेवेति दार्ष्टान्तिकमाह—एवमिति । मोहस्य महत्त्वमशेषानर्थमूलत्वम् । स तर्हि ब्रह्मणोऽभिन्नत्वादेव तदसंभावनां भजते तत्राह—ब्रह्मैवेति । संभावयत्यपीत्यपिशब्दो निश्चयस्य दूरनिरस्ततां दर्शयति ॥११७२॥

तत्र पौराणिकीं गाथामाह—बुद्धेति । लोकस्य तत्त्वात्प्रच्युतत्वे तद्विपरीतचेष्टावत्त्वे हेयत्वे च क्रमेण दृष्टान्तत्रयं विदुषो द्वैतमसत्कल्पमित्यर्थः । अविदुषस्तद्वदद्वैतमसत्समित्याह—बुद्धतत्त्वोऽपीति । तस्यापि लोकतो व्युत्थापितत्वे तद्विपरीतचेष्टावैशिष्ट्ये तदुपेक्षणीयत्वे चोदाहरणानि ॥११७३॥

द्वैतमकल्पितं व्यवहारहेतुत्वादात्मवदित्याशङ्क्याऽऽह—यदीति । कल्पिताकल्पितसर्पयोः स्वरूपभेदेऽपि भयादिकार्यं प्रति तुल्यत्वादकल्पितः सर्पो वास्तवत्वान्नार्थक्रियां प्रत्यादृतोऽतः कल्पितसर्पादौ व्यभिचार इत्यर्थः ॥११७४॥

ब्रह्मशब्देन मुख्यब्रह्मग्रहे द्वैतमसत्कल्पमिति युक्तं न चात्र मुख्यग्रहो भर्तृप्रपञ्चैरिष्टो ब्रह्मेति ब्रह्मभावी पुरुषो निर्दिश्यत इति तदुक्तेरित्याशङ्क्याऽऽह—प्रत्यक्तत्त्वमिति । इहेति तद्भाष्योक्तिः । वस्तुतो ब्रह्मणो भिन्नं यज्जीवरूपं तदपेक्षया न ब्रह्मभाविशब्द इत्याह—नेति ॥११७५॥

इदमिति नामरूपव्याकृतं जगन्निर्दिश्यत इति भाष्येणेदंशब्दार्थमाह—इदमिति । कार्योपाधि ब्रह्मेदंशब्दमित्यर्थः । इहेति वाक्योक्तिः ॥११७६॥

**योऽसावविद्योत्सङ्गस्थः प्रावप्रविष्ट इतीरितः । स्वाभासान्तः स संमोहान्नामरूपात्मकोऽभवत् ।।७७।।**
**अव्याकृतादिपिण्डान्तं पर एव त्वविद्यया । तदात्मत्वं समापेदे न त्वसौ परमार्थतः ।।७८।।**
**प्रागात्मबोधात्पिण्डादौ याऽऽत्मेत्यासीन्मतिर्दृढा । सा तत्तत्त्वमसंप्राप्य सिद्धा स्रगहिबोधवत् ।।७९।।**
**अविद्याकल्पितांस्तस्मादन्वयव्यतिरेकतः । विधूयानात्मनोऽशेषांस्तत्प्रत्यग्रूपमैक्षत ।।८०।।**
**प्रत्यग्याथात्म्यविद्याग्निसंप्लुष्टाशेषतत्तमः । ब्रह्मैवाऽऽत्मानमेवेति प्रत्यबुध्यत वाक्यतः ।।८१।।**
**न हि प्लुष्टाखिलाविद्यः प्रतीच्यन्यन्मनागपि । प्रत्यग्दृष्ट्येक्षतेऽन्यस्य तदविद्यैकहेतुतः ।।८२।।**
**अद्वैतविषयं चेदमेकं ब्रह्मेति भण्यते । समस्तव्यस्तता यस्मान्नेह प्रत्यग्धियेक्ष्यते ।।८३।।**
**मिथ्याभिमानात्संपत्तिरविद्योत्थासु भूमिषु । यत्र वा अन्यदित्येवं श्रुतिश्चापि जगौ तथा ।।८४।।**
**निरविद्य इहाद्वैते भेदहेतोरसंभवात् । स्वत एवाभिसंपत्तिर्यत्र त्वस्येतिशास्त्रतः ।।८५।।**

कथमसङ्गोदासीनस्य कार्योपाधित्वेनेदंशब्दत्वमित्याशङ्क्य स इदं जगदात्मत्वेनाभिसंपन्नोऽभूदविद्ययेत्यादिभाष्यमनुसृत्याऽऽह—योऽसाविति । अविद्याविशिष्टः साक्षी सृष्टे कार्ये प्रविष्टो यो व्याख्यातः स मोहात्प्रपञ्चभावं प्राप्तः सन्निदंशब्दवाच्यो भवतीत्यर्थः । स्वाभासान्तशब्देन साक्षी विवक्षितः ।।११७७।।

सप्रपञ्चत्वं परस्य सर्वगन्धादिश्रुतेर्वास्तवमित्याशङ्क्यास्थूलादिश्रुतिविरोधान्नेत्याह—अव्याकृतेति । मूलकारणादारभ्यान्त्यकार्यान्तं यज्जगत्तदात्मत्वमविद्ययैव परः संसारावस्थायामापन्नस्तद्विषया च सर्वगन्धादिश्रुतिर्न वस्तुतस्तस्य जगदात्मत्वापत्तिरित्यर्थः ।।११७८।।

पिण्डादावबाधितात्मधीदृष्टेस्तदात्मत्वं परस्य कुतोऽविद्याकृतमित्याशङ्क्याऽऽसीदित्यस्यार्थमाह—प्रागिति । तत्तत्त्वं पिण्डादेस्तत्त्वमधिष्ठानभूतं प्रत्यग्याथात्म्यं तदसंप्राप्य तदज्ञात्वा सिद्धा तत्प्रसादप्रसूतेति यावत् ।।११७९।।

तदात्मानमित्यादेरर्थमाह—अविद्येति । यस्मात्प्रत्यग्ब्रह्मेतरदविद्यादेहं तस्मात्तस्य प्राणादेर्द्रष्टृदृश्याद्यन्वयव्यतिरेकतो निरासेन तद्ब्रह्मस्वरूपमेवाज्ञासीदयं पुनः सर्वमतीत्य स्वयमेवाऽऽत्मानमवेदित्युक्तेरित्यर्थः ।।११८०।।

यत्तु तद्ब्रह्म विदित्वा सर्वमभवदविदित्वा वेत्यादि तत्राऽऽह—प्रत्यगिति । फलावस्थं ब्रह्म पूर्वार्धार्थः । तत्प्रत्यबुध्यतैवेति नावेदनप्रयुक्तदोषः । तच्चाऽऽत्मानमेवाबुध्यतेति नानवस्था ब्रह्मैव बुद्ध्वा सर्वमभवत्तदात्मानमेवेत्यादिश्रुतेरतो न जीवानामविद्याकल्पितानां विशिष्टरूपज्ञानात्सर्वभाव इति भावः ।।११८१।।

यत्तु कर्तृत्वे संसारिवत्कर्मत्वे घटवदब्रह्मतेति तत्राऽऽह—न हीति । अविद्यादशायामेव तावत्क्रियाकारकादिव्यवहार आत्मदृष्ट्या प्लुष्टाविद्यस्त्वात्माऽऽत्मनि कर्तृत्वादिलेशमपि न पश्यति तस्याऽऽविद्यत्वादतः कल्पितं कर्तृत्वाद्याश्रित्याऽऽत्मानमेव बुध्यमानं ब्रह्म विद्यापास्ताविद्यातज्जं पूर्णं तिष्ठतीत्यर्थः ।।११८२।।

समस्तव्यस्तात्मकं ब्रह्मेत्युपगमान्न कर्तृत्वादेराविद्यत्वमित्याशङ्क्याऽऽह—अद्वैतेति । इदं हि ब्रह्माद्वयमविषयरूपं च "एकमेवाद्वितीयम्" "अन्यदेव तद्विदितादि"त्यादिषूच्यतेऽतस्तदेकरसमेवेत्यर्थः । तदैकरस्ये हेत्वन्तरमाह—समस्तेति । इह ब्रह्मणीति यावत् । न हि ब्रह्मदृष्ट्या ब्रह्मणि नानारसता द्रष्टुं शक्या ब्रह्मत्वविरोधात्तस्मादेकरसमेवेत्यर्थः ।।११८३।।

ब्रह्मैकरसं चेत्कथं तस्याऽऽकाशाद्यात्मतेत्याशङ्क्य द्वैतविषयेऽन्यस्यान्येनाऽऽत्मनाऽभिसंपत्तिरिरिति भाष्येणाऽऽह—मिथ्येति । आकाशादिभावस्याऽऽविद्यत्वे श्रुतिं प्रमाणयति—यत्रेति । जडत्वदृश्यत्वादिहेतोश्च तन्मिथ्यात्वं वक्तुं चशब्दः । न हि प्रतीचस्तद्भावो वास्तवो मिथो विरोधादिति दर्शयितुमपिशब्दः । उक्तार्थानुरोधस्तथाशब्दार्थः ।।११८४।।

तर्हि प्रतीचो ब्रह्मत्वसंपत्तिरप्यविद्याकृता संपत्तित्वादितरवदित्याशङ्क्येह पुनरद्वैते सर्वभावानामनन्यत्वात्सर्वमञ्जसैवाऽऽत्मत्वेनाभिसंपद्यत इति भाष्येणाऽऽह—निरविद्य इति । प्रतीचः स्वतो ब्रह्मसंपत्तिरित्यत्र श्रुतिमाह—यत्रेति ।।११८५।।

तस्मात्तत्सर्वमभवदित्यस्य व्याख्या

तस्मात्तदिति विद्यायाः पूर्णता फलमुच्यते । तदन्यस्य त्वकृत्स्नत्वाज्जिहासाविषयत्वतः ॥८६॥
यदिदंशब्दनिर्दिष्टं पूर्णाविद्यैकहेतुजम् । अहं ब्रह्मेति तद्ध्वंसात्पूर्णमेवाभवत्स्वतः ॥८७॥
भर्तृप्रपञ्चभाष्यस्य प्रचारोऽयं प्रदर्शितः । श्रुत्यक्षरानुसारेण तथाऽनुभववर्त्मना ॥८८॥

भाष्यमतेन व्याख्या तत्र परमतोपन्यासः खण्डनाय

ब्रह्मेतिब्रह्मशब्देन द्वैतैकत्वात्मकं किल । भण्यते न परं ब्रह्म तस्य विद्यानपेक्षतः ॥८९॥
परस्य ब्रह्मता यस्मादनन्यायत्तसिद्धिका । स्वत एव तु तत्सिद्धेर्नातस्तदभिधीयते ॥९०॥
तथा कालानवच्छित्तेरासीदिति न तत्प्रति । घटते कालसम्बन्धो विरिञ्चे तूपपद्यते ॥९१॥
ननु तस्यापि विज्ञानं नोपदेशव्यपेक्षया । जन्मनैवास्य तत्सिद्धेर्न युक्ता ब्रह्मगीरियम् ॥९२॥
आसीदिति च निर्देशस्तस्मिन्नपि न युज्यते । विरिञ्चस्य त्रिकालत्वादासीदस्ति भविष्यति ॥९३॥
यत एवमसंतोषात्पक्षान्तरसमाश्रयः । मनुष्याधिकृतेर्वेति क्रियते पूर्वपक्षिणा ॥९४॥

तस्मात्तत्सर्वमभवदित्यस्यार्थमाह—तस्मादिति । पूर्णतैव फलमित्यत्र हेतुः—तदन्यस्येति । परिच्छिन्नस्य मर्त्यत्वश्रवणात्पुमर्थत्वशङ्कैव नेति वक्तुं तुशब्दः ॥११८६॥

ब्रह्म पूर्वमेव पूर्णं चेन्न तस्य विद्यया पूर्णत्वमपूर्णं चेत्कथमन्यस्यान्यभावस्तथाऽपि स्यादित्याशङ्क्याऽऽह—यदिदमिति । प्रत्यगविद्याजं हि "ब्रह्म वा इदमि"त्यत्रेदंशब्दोपात्तं द्वैतमतोऽहं ब्रह्मेति विद्यया तद्ध्वस्तेः पूर्णमेव ब्रह्म पूर्णमभवदित्युपचर्यत इत्यर्थः ॥११८७॥

परपक्षमुपसंहरति—भर्तृप्रपञ्चेति । प्रचारो विवर्तवादानुसारेण प्रवृत्तिप्रकारः । किमित्येवं तदीयभाष्यस्य गतिरुच्यते तत्राऽऽह—श्रुतीति ॥११८८॥

परमतमादेयमुक्त्वा तद्भाष्ये ब्रह्माभाविशब्दं श्रुत्वा येषां भ्रान्तिस्तन्निरासार्थं विचारो भाष्यकृता कृत इति प्रस्तावितं विचारमवतारयन्पूर्वपक्षयति—ब्रह्मेनीति । द्वैतैकत्वात्मकमनेकरसमपरं ब्रह्मेत्यर्थः । किलेत्युभयोर्भाष्यकृतोरत्रानिच्छोक्तिः ॥११८९॥

न परमित्यादिप्रतिज्ञायां तस्येत्यादिहेतुं प्रपञ्चयति—परस्येति । तस्माद्विद्यानैरपेक्ष्यमिति शेषः । अनन्यायत्तसिद्धिमनूद्य विद्यानपेक्षत्वप्रसङ्गप्राप्तं फलमाह—स्वत इति । विद्यासाध्या तु सर्वभावापत्तिरत्र श्रुतेति तुशब्दार्थः ॥११९०॥

परस्य ब्रह्मशब्देनानुपादाने हेत्वन्तरमाह—तथेति । परस्य कालानवच्छित्तिः"अन्यत्र भूताच्चे"त्यादिश्रुतिसिद्धा । कुत्र तर्हि कालसंबन्धो विद्यापेक्षा चेति तत्राऽऽह—विरिञ्चे त्विति । न हि तस्य ब्रह्मता स्वतस्ततोऽर्थान्तरत्वादतो विद्यापेक्षोपपत्तिः "समवर्तते"ति श्रुतेश्च कालसंबन्धसिद्धिरिति भावः ॥११९१॥

तस्य ब्रह्मणोऽन्यत्वेऽपि नोपदेशजन्यज्ञानात्तद्भावः स्वाभाविकज्ञानवत्त्वात्"सहसिद्धं चतुष्टयमि"तिस्मृतेः "तस्मात्तत्सर्वमभवदि"ति चोपदेशाधीनधीसाध्योऽसौ श्रुतोऽतो नात्र ब्रह्मशब्देनापरग्रहणमिति शङ्कते—नन्विति ॥११९२॥

यत्तु विरिञ्चेः कालसंबन्धः समवर्ततेति तत्राऽऽह—आसीदितिचेति । "अन्यत्र भूताच्चे"त्यादिश्रुतेः परस्मिन्निवेत्यपेरर्थः । संवर्तनं हि जन्ममात्रं न कालात्मकस्य कालसंबन्धोऽनवस्थानादिति मत्वाऽऽह—विरिञ्चस्येति ॥११९३॥

मनुष्याधिकाराद्वेत्यादिभाष्यमुत्तरत्वेनावतारयति—यत इति । यत एवमतोऽपरब्रह्मपक्षेऽसंतोषादिति योजना ॥११९४॥

मनुष्याः प्रकृताः पूर्वं ते च निःश्रेयसार्थिनः । ब्रह्मणो न त्वनर्थित्वात्तथा चाप्रकृतत्वतः ॥९५॥
ऋष्यादिवचसा चापि ब्रह्मविद्याऽविशेषतः । सर्वार्थैव समुद्दिष्टा नाग्रजन्मैकगोचरा ॥९६॥
जन्मनैव तु तत्सिद्धेर्नोपदेशव्यपेक्षता । ज्ञानमप्रतिघं यस्य वैराग्यं चेति च स्मृतेः ॥९७॥
द्वैतैकत्वात्मकब्रह्मविद्याकर्मैकसाधनः ॥९८॥
अपरब्रह्मतापन्नो भोज्याद्व्यावृत्तमानसः । निःशेषप्राप्त्या चोच्छिन्नकामकर्मादिबन्धनः ॥९९॥
परब्रह्मपरिज्ञानभावनोपचयात्परः । ब्रह्मभावी नरोऽतोऽत्र ब्रह्मशब्देन भण्यते ॥१२००॥
भविष्यद्वृत्त्या लोकेऽपि प्रयोगो दृश्यते यथा । ओदनं पचतीत्यादि तथेहापि भविष्यति ॥ १ ॥
गृहस्थो भार्यां विन्देत शास्त्रे चापि समीक्ष्यते । एवं व्याचक्षते केचिद्गम्भीरन्यायवादिनः ॥ २ ॥

ब्रह्मभावी जीवो ग्राह्य इति मतनिरासः

सर्वापत्तेरनित्यत्वदोषासक्तेर्न तत्तथा । साधनायत्तलब्धात्मा न लोकेऽस्त्यविनश्वरः ॥ ३ ॥
अथाविद्योत्थाकृत्स्नत्वनिवृत्तिं चेदिहेच्छसि । कल्पनेयं वृथैव स्याद् ब्रह्मभावीति या कृता ॥ ४ ॥
यतः प्रागपि तद्बोधात्सर्वो जन्तुः स्वभावतः । ब्रह्मत्वादाप्ततद्भावो नित्यमेव न साधनात् ॥ ५ ॥

पक्षान्तरमेव विवृणोति—मनुष्या इति । पूर्वमित्युपोद्घातवाक्योक्तिः । तस्माद्ब्रह्मभावी पुरुषो ब्रह्मेति शेषः । ननु परापरब्रह्मणोरन्यतरग्रहणमिह कुतो न स्यात्तयोरपि मनुष्यशब्दप्रयोगसंभवादत आह—ब्रह्मण इति । परस्यापरस्य वा ज्ञानानर्थित्वादप्रकृतत्वाच्च नात्र ग्रहणमित्यर्थः ॥११९५॥

तत्रैव हेत्वन्तरमाह—ऋष्यादीति । "तद्यो यो देवानामि"त्यादिना सर्वेषामविशेषतः पुरुषार्थहेतुतया ब्रह्मविद्योक्ता, न हिरण्यगर्भादिमात्रस्य । तथा च वाक्यशेषादेष ब्रह्मशब्दो न तद्वाचीत्यर्थः । अग्रजन्मशब्दोऽपरब्रह्मवाची परब्रह्मणोऽप्युपलक्षणम् ॥११९६॥

जन्मनैवास्य तत्सिद्धेरित्यत्र हिरण्यगर्भस्य परस्येव ब्रह्मशब्दत्वं निराकर्तुमुपदेशानपेक्षज्ञानमित्युक्तं तदनूद्य मानमाह—जन्मनेति । तस्याऽऽगन्तुकज्ञानत्वे हेत्वभावस्तुशब्दार्थः । तस्य स्वाभाविकज्ञानत्वे श्रुतिसमुच्चयार्थश्चकारः ॥११९७॥

परापरब्रह्मणोरत्र ब्रह्मशब्दत्वं निराकृत्य ब्रह्मशब्दार्थं निगमयति—द्वैतेत्यादिना । समुच्चयानुष्ठानात्प्राप्तसूत्रभावस्तदधिककर्मफलाभावादशेषतत्फलाप्त्याऽपास्तकर्मादिप्रवाहः सौत्रेऽपि पदे क्षयिष्णुतादिदृष्ट्या ततो विरक्तो वाक्यात्परं ब्रह्म ज्ञात्वा तत्रैव भावनां कुर्वाणस्तदुपचयात्तद्भावी जीवोऽत्र ब्रह्मशब्देनोच्यतेऽन्यस्य तद्वाच्यत्वायोगादिति योजना ॥११९८–११९९–१२००॥

ब्रह्म भविष्यतीति भाविनीं वृत्तिमाश्रित्य जीवो ब्रह्मशब्दित इत्यत्र दृष्टान्तमाह—भविष्यदिति । आदिपदेन ग्रामं ददाति कटं करोतीत्यादि गृह्यते । दार्ष्टान्तिकमाह—तथेति ॥१२०१॥

शास्त्रे चेत्यादिभाष्यस्थमादिशब्दं व्याचष्टे—गृहस्थ इति । पूर्वपक्षमुपसंहरति—एवमिति । गम्भीरेत्यादिरुपहासः ॥१२०२॥

ब्रह्मशब्देन परस्मादर्थान्तरग्रहे तस्य साधनसाध्यत्वान्मुक्तेरनित्यत्वापत्तेर्न तन्मतमुक्तनीत्या युक्तमिति दूषयति—सर्वेति । साध्यस्यापि मोक्षस्य नित्यत्वमाशङ्क्याऽऽह—साधनेति । लोकशब्देन शास्त्रमपि संगृह्यते यत्कृतकं तदनित्यमिति न्यायादित्यर्थः ॥१२०३॥

किं चाऽऽत्मनोऽकृत्स्नत्वमाविद्यं वास्तवं वेति विकल्प्याऽऽद्ये तन्निवृत्तिरेवाऽऽत्मनि सर्वभावापत्तिरेष्टव्येति मत्वाऽऽह—अथेति । या तर्हि ब्रह्मभावी जीवो ब्रह्मेति कल्पना कृता सा व्यर्था स्यान्मुख्यस्यैव ब्रह्मणो ग्रहसंभवादित्याह—कल्पनेति ॥१२०४॥

तत्र हेतुः—यत इति । अतः कल्पना वृथेति संबन्धः । तद्बोधाद्ब्रह्मास्मीति ज्ञानादिति यावत् ॥१२०५॥

केवलं तत्तमोमात्रव्यवधानैकहेतुतः । संभावयत्यकृत्स्नत्वं प्रत्यगात्मनि मूढधीः ॥ ६ ॥
यदविद्यैकहेतु स्यादब्रह्मत्वं न तु स्वतः । तद्यथावस्तुसंबोधान्मूलनाशात्प्रणश्यति ॥ ७ ॥
एवं चेत्स्यादभिप्रायः किमर्थं निष्प्रयोजनम् । मुख्यार्थं संपरित्यज्य पुंसि ब्रह्मेति कल्पनम् ॥ ८ ॥
श्रुतार्थहानिरेवं स्यादश्रुतस्य च कल्पना । अपन्यायो वृथा च स्यात्पुमर्थासंभवादिह ॥ ९ ॥
अविद्योत्थातिरेकेण स्वत एवेति चेन्मतम् । अब्रह्मत्वं न तद्धानिरुपायासंभवात्क्वचित् ॥१०॥
अभिव्यञ्जकमेवेष्टं प्रमाणं न तु कारकम् । नापोढ्री नापि कर्त्रीयं विद्याऽतो वस्तुनः क्वचित् ॥११॥
स्वप्रमेयाखिलाज्ञानध्वंसिनीति समीक्ष्यते । विद्या लोके तथेहापि तद्ध्वंसिन्येव गृह्यताम् ॥१२॥
सदानुदितानस्तमितभास्वद्विज्ञानमात्रतः । तद्विरुद्धतनुर्मोहः कुतो ब्रह्मणि चेन्मतम् ॥१३॥
नानुभूत्यैव तत्सिद्धेर्ज्ञातकुम्भानुभूतिवत् । न वेद्मीत्यनुभूतिर्हि सर्वेषामात्मसाक्षिका ॥१४॥

## ब्रह्मणः अज्ञातत्वोपपादनम्

अव्याकृताधिकारे च यदुक्तं प्राक्समासतः । ब्रह्मण्यविद्यासंसिद्ध्यै स्मर्तव्यं तदिहाखिलम् ॥१५॥

स्वभावतः सर्वस्य ब्रह्मत्वान्नित्यमेव प्राप्ते ब्रह्मत्वे कथमकात्स्न्र्यधीरित्याशङ्क्याऽऽह—केवलमिति । प्रत्यगज्ञानमात्रव्यवधानादेकस्माद्धेतोर्मूढधीरात्मन्यकात्स्न्र्यं संभावयतीति योजना । केवलशब्देन तत्प्रामाणिकत्वे शङ्काभावो द्योतितः ॥१२०६॥

अकात्स्न्र्यस्याऽऽविद्यत्वे फलितमाह—यदिति । यदब्रह्मत्वमविद्यामात्रकृतं तन्न स्वाभाविकं तत्पुनस्तत्त्वज्ञानादज्ञाननाशान्नश्यतीत्यर्थः ॥१२०७॥

यथा त्वयोच्यते तथा मयाऽपीष्यते किंतु ब्रह्मशब्दार्थो जीवो ब्रह्मभावीत्याशङ्क्याऽऽह—एवमिति । आवयोरेकाभिप्रायत्वे ब्रह्मभाविपुरुषकल्पनमप्रयोजनं ब्रह्मशब्दस्य मुख्यार्थत्यागादयुक्तं चेत्यर्थः ॥१२०८॥

ब्रह्मभावी जीवो ब्रह्मेत्यत्र दोषान्तरमाह—श्रुतेति । ब्रह्मभाविकल्पने ब्रह्मशब्दशक्तिदृष्टनिरतिशयमहदर्थत्यागस्ततोऽदृष्टस्य च भाविपुरुषस्य कल्पना स्यादित्यर्थः भवत्वियं कल्पनेति नेत्याह—अपन्याय इति । श्रुतिलक्षणाविशये श्रुतिर्न्याय्येति स्थितेरित्यर्थः । किंच ब्रह्मभाविकल्पनायां फलाभावान्न सा युक्तेत्याह—वृथेति । अयुक्तेति यावत् ॥१२०९॥

कल्पान्तरमादत्ते—अविद्येति । दूषयति—नेत्यादिना । लोके शास्त्रे च वास्तवाब्रह्मत्वनिवर्तकायोगादित्याह—उपायेति ॥१२१०॥

ब्रह्मज्ञानस्योपायत्वात्तदसंभवासिद्धिमाशङ्क्य सामान्यन्यायमाह—अभिव्यञ्जकमिति । तस्य व्यञ्जकत्वनियमे फलितमाह—नेत्यादिना । क्वचिदित्यवस्थादेशकालोक्तिः । अब्रह्मत्वस्य वस्तुत्वे ज्ञानान्न ध्वस्तिर्यतोऽज्ञानस्यैव [ ज्ञानं ] निवर्तकमित्युक्तेरित्यर्थः ॥१२११॥

ज्ञानस्य वस्तुजनकत्वनिवर्तकत्वयोरभावे किं तत्कृत्यं तदाह—स्वप्रमेयेति । ब्रह्म सप्तम्यर्थः । लोकानुसारित्वाद्वेदस्येत्यभिप्रायः ॥१२१२॥

ब्रह्मण्यविद्याध्वस्तिर्विद्याफलमित्यत्र चोदयति—सदेति । कूटस्थस्वप्रकाशज्ञप्तिमात्रत्वाद्ब्रह्मणस्तस्मिन्नज्ञानमयुक्तं ज्ञानाज्ञानयोरेकत्र विरुद्धत्वादित्यर्थः ॥१२१३॥

अनुभवविरोधान्न युक्तिरुल्लसेदित्याह—नानुभूत्येति । ज्ञाते कुम्भे तज्ज्ञानस्याऽऽत्मन्यनुभूत्या सिद्धिवत्तस्मिन्नज्ञातेऽज्ञानस्यापि सिद्धेर्न ते युक्तिस्तद्विरुद्धा सिध्येदित्यर्थः । आत्मन्यज्ञानानुभूतिमेवाभिनयति—नेति । उक्ताज्ञातानुभूतौ विप्रतिपत्त्यभावो हिशब्दार्थः ॥१२१४॥

किंच ब्रह्मण्यज्ञातत्वमज्ञत्वं वाऽऽक्षिप्यते ? नाऽऽद्योऽज्ञातार्थाधिगन्तॄणि प्रमाणानीत्यादावुक्तन्यायविरोधादित्याह—अव्याकृतेति । चकारः संबन्धाधिकारसमुच्चयार्थः ॥१२१५॥

विद्याविधानाच्चाविद्या ब्रह्मण्यस्तीति गम्यताम् । विद्याविधानं विज्ञाते पिष्टपेषणवद्यतः ।।१६।।
अज्ञानमेव मिथ्याधीः प्रमेयानभिसंगतेः । रूप्याध्यारोपणं तस्मादुदाहारि गरीयसा ।।१७।।
अस्त्वविद्या परे भूम्नि यथोक्तन्यायगौरवात् । न तु ब्रह्मैव तां कुर्यात्सर्वज्ञं प्रत्यगात्मनि ।।१८।।
न हि धीपूर्वकारी सन्निःशेषानर्थदायिनीम् । प्रतीच्यविद्यां विसृजेद्याऽन्यत्रापि न काम्यते ।।१९।।
यद्यविद्या भवेत्कार्यमस्त्वेतद्यदिहोदितम् । अकार्यत्वात्त्वविद्यायास्त्वदुक्तं तुषकण्डनम् ।।२०।।
अथोपचारात्कार्यत्वमविद्याविषयत्वतः । तथाऽपि नापराधो नस्तदन्यासंभवादिह ।।२१।।
न हि ब्रह्मातिरेकेण ब्रह्माविद्याकृदिष्यते । न ह्यन्योऽतोऽस्ति द्रष्टेति तथा च श्रुतिशासनम् ।।२२।।

ब्रह्मणः अज्ञत्वोपपत्तिः

क्रिया वा कारकं वेह सदसद्वेह यन्मतम् । अप्रज्ञातात्मयाथात्म्यं ब्रह्मैव तदितीक्ष्यताम् ।।२३।।
पुरुष एवेदं सर्वमात्मैवेदमिति श्रुतिः । नानुभूतेः प्रमाणाद्वा तदन्यद्वस्तु लभ्यते ।।२४।।
ननु शास्त्रोपदेशोऽयमेवं सत्यफलो भवेत् । नासौ ब्रह्मणि साफल्यं नाप्यन्यस्मिन्समश्नुते ।।२५।।

ब्रह्मणोऽज्ञातत्वे हेत्वन्तरमाह—विद्येति । तत्त्वमसीति ब्रह्मणि विद्याविधानेऽपि कथं तस्मिन्नविद्येत्याशङ्क्याऽऽह—विद्याविधानमिति । अतो विद्याविधानं ब्रह्मण्यज्ञातत्वं गमयतीति शेषः ।।१२१६।।

न हि शुक्तिकायामित्यादिभाष्येण मिथ्याज्ञानं ब्रह्मणि भाष्यकृतोक्तं त्वया तस्मिन्नज्ञानं साध्यते न च तदेवाज्ञानं हेतुफलभावात्तथा च भाष्याननुकूलतेत्याशङ्क्योक्तं स्मारयति—अज्ञानमिति । मिथ्याज्ञानस्याज्ञानाव्यतिरेकाद्ब्रह्मण्यविद्याध्यारोपणायां शुक्तौ रूप्यारोपणं यद्भाष्यकृतोदाहृतं तद्युक्तमिति फलितमाह—रूप्येति । हेतुफलभावस्तु नाऽऽत्यन्तिकं भेदमावहतीति भावः ।।१२१७।।

विद्याविधानादिति युक्तेर्बलीयस्त्वाद्ब्रह्मण्यज्ञातत्वमुक्तमङ्गीकरोति—अस्त्विति । कल्पान्तरमालम्बते—न त्विति । ब्रह्म स्वात्मन्यन्यत्र वा नाविद्यां करोति सर्वज्ञत्वादित्यर्थः ।।१२१८।।

सर्वकर्तृत्वात्तदविद्यामपि करिष्यत्यन्यथा तदयोगादित्याशङ्क्याऽऽह—न हीति ।।१२१९।।

किं यथाश्रुतमादाय चोद्यते ? किंवा ब्रह्मणः सर्वज्ञस्याज्ञत्वायोगादन्यस्याज्ञत्वं ? तत्राऽऽद्यं प्रत्याह—यदीति । यदिह ब्रह्मण्यविद्यां प्रति न स्रष्टृत्वमित्यादिष्टं तद्युक्तं यदि कार्यत्वमविद्यायाः स्यान्न च तदस्तीत्यर्थः । अविद्याया ब्रह्मातिरेकात्कार्यत्वमाशङ्क्याऽऽह—अकार्यत्वादिति । तस्या हि कार्यत्वे कारणं वाच्यं निष्कारणकार्यायोगान्न चाऽऽत्मा तथा कौटस्थ्यान्न चाविद्यैव तथैकत्र कार्यकारणत्वायोगात् तद्भेदस्य चासिद्धत्वादतोऽकार्यत्वात्तस्या ब्रह्म न तां करोत्यतिरेकस्त्वनिर्वाच्याविद्याया नास्तीति भावः ।।१२२०।।

मुख्यकार्यत्वाभावेऽपि तस्या विषयत्वान्निवृत्तिमत्त्वाच्च घटवत्कार्यत्वमौपचारिकमित्याह—अथेति । औपचारिकं कार्यत्वमङ्गीकृत्याऽऽह—तथाऽपीति । अविद्याकर्तृ ब्रह्मैवेति वदतामस्माकं नापराधोऽस्तीत्यत्र हेतुं वदन्द्वितीयं दूषयति—तदन्येति । इहेति स्वपक्षो विवक्षितः ।।१२२१।।

ब्रह्मणोऽन्यस्यासंभवं साधयति—न हीति । स हि चेतनोऽचेतनो वेति विकल्प्याऽऽद्यं प्रत्याह—न ह्यन्य इति ।।१२२२।।

द्वितीयं निराकरोति—क्रियेति । इहशब्दाभ्यां लोकशास्त्रे गृह्येते ।।१२२३।।

प्रतिपन्नस्य सर्वस्य कारणब्रह्ममात्रत्वे मानमाह—पुरुष इति । ब्रह्मणः सर्वज्ञत्वादज्ञत्वायोगादन्यदज्ञमिति पक्षं मानविरोधेन निरस्य मानाभावेनापि निरस्यति—नेत्यादिना । न हि ब्रह्मणोऽन्यद्वस्त्वनुभूतेरवगम्यते तथाऽभूतानुभूतेरप्रसिद्धत्वात् नापि मानान्तरात्तद्धीर्ब्रह्मणोऽन्यत्राज्ञातत्वाभावेन मानप्रवृत्त्ययोगादतो न तदन्यदज्ञमस्तीत्यर्थः ।।१२२४।।

ब्रह्मणोऽन्यस्याज्ञस्याभावे शास्त्रारम्भानर्थक्यमिति शङ्कते—नन्विति । कथमित्याशङ्क्य स ब्रह्मण्यन्यत्र वा फलवानिति विकल्प्य क्रमेण निरस्यति—नेत्यादिना ।।१२२५।।

उपदेशानपेक्षत्वाद्ब्रह्मत्वस्य परात्मनः । असंभवात्ततोऽन्यस्य ह्युपदेशोऽफलो भवेत् ॥२६॥

उपदेशसाफल्यम्

ब्रह्माकर्त्रपि संबोधात्प्रागभूत्तदसंसृति । अविद्यातज्जसंबन्धात्कर्तृत्वेऽपि न दोषभाक् ॥२७॥

प्रागज्ञातं तदैकात्म्यं यथैवानुभवान्मतम् । ब्रह्मास्मीत्यपि संबोधस्तथैवानुभवाश्रयात् ॥२८॥

प्रमेयाधिगमं कुर्वत्प्रमाणमफलं यदि । क्वान्यत्र फलवत्तत्स्यान्नातोऽन्यत्स्यान्मितेः फलम् ॥२९॥

सोत्प्रासमिव चाऽऽहातो बाढमित्येवमादिना । अस्त्वेषोऽवगते दोष इतोऽन्यः कीदृशो गुणः ॥३०॥

अथावगमवैयर्थ्यं भवता परिचोद्यते । तत्रापि चानवगमध्वस्तिः प्रतिवचो भवेत् ॥३१॥

ऐकात्म्ये तन्निवृत्तिश्चेदसंभाव्येति चोद्यते । लब्धैकात्म्येन नैवेयं निवृत्तिः काम्यते श्रुतेः ॥३२॥

अप्रसिद्धे त्वथैकात्म्ये निवृत्तिरिह चोद्यते । तथा दृष्टविरोधो वः प्राप्नुवन्न निवार्यते ॥३३॥

ब्रह्मण्युपदेशवैफल्ये हेतुमाह—उपदेशेति । न च तस्मिन्ननर्थध्वंसार्थमुपदेशो नित्यमुक्तत्वादिति भावः । अन्यस्मिन्नुपदेशासाफल्यमित्यत्र हेतुमाह—असंभवादिति । ब्रह्मणोऽन्यस्यासंभवः सिद्धो मानयुक्तिभ्यामिति वक्तुं हिशब्दः । अतः शास्त्रारम्भे वैयर्थ्यमिति फलितमाह—उपदेश इति ॥१२२६॥

सिद्धान्ती ब्रह्मणि तत्साफल्यं साधयति—ब्रह्मेति । तद्ब्रह्म वस्तुतः सनिदानकर्तृत्वादिसंसृतिहीनमपि ज्ञानात्पूर्वमविद्यया संसार्यासीदतस्तत्रोपदेशोऽर्थवानित्यर्थः । न च तस्मिन्नुपदेष्टुरभावात्तदनुपपत्तिरविद्याकृताचार्यपरिच्छेदस्य तद्भावात् । न च सर्पवत्कल्पितत्वात्तस्यावस्तुत्वात्तदयोगः सर्वज्ञतया तत्कल्पनादिति द्रष्टव्यम् । आविद्येऽपि संसारित्वे कथमसंसारित्वं विरोधादित्याशङ्क्याऽऽह—अविद्येति । कल्पितसंसारित्वेन वास्तवासंसारित्वमविरुद्धं न हि कल्पितसर्पादिना रशनादे रशनादित्वविहतिरित्यर्थः ॥१२२७॥

अस्तु तर्हि वस्तुरूपाविरोधित्वादध्वस्तिरध्यस्तसंसारित्वस्येत्याशङ्क्य विरोधिवाक्यीयबोधात्तद्ध्वस्तेर्मैवमिति मत्वा निवर्तकबोधं दृष्टान्तेनानुभूत्या साधयति—प्रागिति । वाक्यप्रवृत्तिरत्र प्रतियोगित्वेन विवक्षिता ॥१२२८॥

वाक्योत्थज्ञानमनुभवसिद्धमपि स्वप्रकाशेऽतिशयाहेतुत्वादफलमित्याशङ्क्याऽऽह—प्रमेयेति । प्रमेयमैकात्म्यं तस्याधिगमस्तद्गताज्ञानतज्जध्वंसस्तत्कुर्वदपि मानमफलं चेन्न क्वचित्तत्फलवत्स्यात्सकार्याज्ञानध्वंसादन्यतत्फलाभावादित्यर्थः ॥१२२९॥

शास्त्रोत्थज्ञानस्य फलवत्त्वमुक्त्वाऽऽनर्थक्यमवगते चोद्यतेऽन्यत्र वेति विकल्प्याऽऽद्यमङ्गीकुर्वन्भाष्यमवतारयति—सोत्प्रासमिति । यतो वाक्यीयज्ञानं ब्रह्मणि फलवदस्माभिरुक्तमतः सोत्प्रासं; परो हि सरोषो हसनीयो हासकनिकुञ्चितांसशीर्षत्वादिना येनोत्प्रास्यते परिभूयते तेन परिभवितृशरीरविकारेणोत्प्रासेन सहितमिव यथोक्तविकारोपेताच्छुरितकपदवेदनीयहासपूर्वकमिव बाढमित्यादिना भाष्येण भाष्यकारो ब्रवीतीत्यर्थः । यथाऽऽह—स्यादाच्छुरितकं हासः सोत्प्रासः स मनाक्स्मितम्' इति । किं तद्भाष्यकारेण यथोक्तहासपूर्वकमुक्तं तदाह—अस्त्विति । उपदेशानर्थक्याख्यं दोषमेषशब्देन परामृशति । नरके सति को दोष इतिवदानर्थक्याङ्गीकारो गतिरित्याशङ्क्याऽऽह—इत इति । वस्तुनि ज्ञाते कृतकृत्यता गुण एवै"तद्बुद्ध्वे"त्यादिस्मृतेरिति भावः ॥१२३०॥

अज्ञाते वस्तुन्युपदेशवैयर्थ्यं चोद्यते न चासौ ज्ञानार्थस्तस्यापि वैयर्थ्यादिति द्वितीयं शङ्कते—अथेति । परिहरति—तत्रेति । यथोपदेशवैयर्थ्ये चोदिते ज्ञानार्थतया तदर्थवत्वमुक्तं तथा ज्ञानानर्थक्ये चोदितेऽपि तदर्थोऽज्ञानध्वस्तिरिति प्रत्युक्तिर्युक्तेत्यर्थः ॥१२३१॥

सा वस्तुनो भिन्नाऽभिन्ना वा?आद्येऽद्वैतहानिर्द्वितीये न ज्ञानाधीनेति चोदयति—ऐकात्म्येति । अज्ञानध्वस्तेरयुक्तत्वमसत्त्वं वोच्यते ? आद्येऽपि वस्तुनि ज्ञातेऽज्ञाते वा तदिति विकल्प्याऽऽद्यं दूषयति—लब्धेति । श्रुतेर्वस्तुनि लब्धे सत्यज्ञाननिवृत्तिर्न तेन वस्तुज्ञानवताऽर्थ्यते ऐकात्म्यज्ञानस्यैव पुमर्थत्वात्"आत्मलाभान्न परमि"तिस्मृतेरतस्तदनुपपत्तावपि न क्षतिरित्यर्थः ॥१२३२॥

कल्पान्तरमनुवदति—अप्रसिद्ध इति । तत्रापि निवृत्तेरनुपपन्नत्वं पूर्ववदङ्गीकरोति—तथेति । पक्षान्तरं प्रत्याह—दृष्टेति । अप्रसिद्धे वस्तुन्यज्ञाननिवृत्तेरसत्त्वेऽपि प्रसिद्धे तदसत्त्वमनुभवविरुद्धमित्यर्थः ॥१२३३॥

सर्वस्यानुपपन्नत्वं सिद्धं दृष्टबलाश्रयात् । दृष्टस्यानुपपन्नत्वं किमाश्रित्याभिधीयते ।।३४।।
उक्तानि तावद्भूयांसि दूषणानि विभागशः । अब्रह्मविषये क्लृप्ते ब्रह्मभावी पुमानिति ।।३५।।

पुण्यो वै इत्यादिभाष्येण पुनः प्रकृतपूर्वपक्षोपस्थापनम्

भूयोऽप्यस्यैव दार्ढ्यार्थं पूर्वपक्षाय यत्यते । वाक्यार्थाभाससंजातभ्रान्त्युच्छित्त्यै प्रयत्नतः ।।३६।।
पुण्यः पुण्येन भवति पापः पापेन कर्मणा । संसारिणं समुद्दिश्य श्रुतिरेतदुदाहरत् ।।३७।।

जीवेशभेदे श्रौतलिङ्गानि अनुमानानि च

तथैष हीति विस्पष्टं संसार्येवाभिधीयते । तस्माद्विलक्षणस्तद्वदीश्वरोऽप्यभिधीयते ।।
स एष नेति नेतीति य आत्मेत्यादिना तथा ।।३८।।
तथाऽक्षपादकाणादतर्कशास्त्रेषु यत्नतः । उपपत्तिशतैरीशः साध्यते वादिभिः पृथक् ।।३९।।
दुःखापनयनार्थित्वप्रवृत्तेर्दर्शनादपि । अत्यन्तभेदो विज्ञेयः संसारीश्वरयोरतः ।।४०।।
तं विदित्वैतमेवेति कर्मकर्तृविभागतः । क्षेत्रज्ञेश्वरयोरुक्तेर्मृगव्याधादिभेदवत् ।।४१।।
मुमुक्षोर्गतिमार्गस्य देशभेदोपदेशतः । भेदेऽसति गतिः केयं गन्तृगन्तव्ययोर्भवेत् ।।४२।।

अज्ञाननिवृत्तेरनुपपन्नत्वमङ्गीकृत्योक्तम् । वस्तुतस्तु नैवं दृष्टिवशादनुपपत्तिनिरासादित्याह—सर्वस्येति ।।१२३४।।

ब्रह्मभाविपुरुषकल्पनां निरस्य स्वपक्षे शास्त्रस्यार्थवत्त्वमुक्त्वा वृत्तं कीर्तयति—उक्तानीति । ब्रह्मभावी जीवो ब्रह्मेत्यब्रह्मविषये ब्रह्मशब्दे कल्पिते सर्वापत्तेरनित्यत्वमित्यादिदूषणान्यसांकर्येणोक्तानीति योजना ।।१२३५।।

अथोक्तनीत्या पूर्वपक्षस्य क्षिप्तत्वात्पुण्यो वै पुण्येनेत्यादिभाष्येण तदुद्भावनमफलमित्याशङ्क्याऽऽह—भूयोऽपीति । अस्य ब्रह्मभावी जीवो ब्रह्मेतिपक्षनिरासस्येति यावत् । तन्निरासो यया युक्त्या दृढीभवति सैव वाच्या निरस्तपक्षोत्थापनं त्वकिंचित्करमित्याशङ्क्याऽऽह—वाक्यार्थेति । वक्ष्यमाणवाक्यानामर्थाभासो जीवपरयोरापाततो भेदस्तस्मिन्नुत्पन्नभ्रान्तिध्वस्त्यै निरस्तस्यापि पक्षस्योत्थापनमित्यर्थः । ननु निरस्तपक्षोक्तिद्वारा वाक्यार्थाभासभ्रान्तिरपि किमिति निरस्यते तत्राऽऽह—प्रयत्नत इति । वाक्यीयसम्यगर्थे जिज्ञासूनां बुद्धिस्थैर्ये तात्पर्यादित्यर्थः ।।१२३६।।

भाष्योक्तां श्रुतिमनुभाष्य तात्पर्यमाह—पुण्य इति । एतत्कर्मफलयोगित्वमिति यावत् ।।१२३७।।

उदाहृतवाक्यवद्वाक्यान्तरमपि संसारिविषयमस्तीत्याह—तथेति । "एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मे"त्यादिश्रुतेः"उपद्रष्टाऽनुमन्ता च भर्ता भोक्ते"त्यादिस्मृतेर्वक्ष्यमाणन्यायाच्च संसारी परस्मादन्यः स चाहंधीगम्यः स्पष्टं तद्भेदमनुभवतीत्यर्थः । जीवस्य परस्माद्वैलक्षण्येऽपि न तस्य ततो वैलक्षण्यमित्याशङ्क्याऽऽह—तस्मादिति । तद्वदीश्वरविलक्षणसंसारिवदित्यर्थः ।।१२३८।।

परस्य तद्वैलक्षण्यं श्रुतितो दर्शयित्वा तत्रैवोपपत्तिमाह—तथेति । उपपत्तिशतैरिति क्षित्याद्युपलब्धिमत्कर्तृकं कार्यत्वाद्घटवदित्यादिभिरित्यर्थः । पृथक्संसारिभ्य इति शेषः । ईश्वरवादिनामीश्वरसाधने तात्पर्यं यत्नत इत्युक्तम् । न च जीवानामेवादृष्टद्वारा क्षित्यादिकर्तृत्वं तेषां तदुपकरणोपादानादिसाक्षात्कारविरहित्वादतः संसारिभ्यो विलक्षणस्तत्कर्तेति भावः ।।१२३९।।

तयोर्मिथो भेदे हेत्वन्तरमाह—दुःखेति । जीवस्य स्वगतदुःखध्वंसे दुःखं मे मा भूदित्यर्थित्वेन प्रवृत्तिर्दृष्टा, नेशस्य साऽस्ति दुःखाभावादतस्तद्भेद इत्यर्थः । अभेदे क्वचित्प्रवृत्तिरन्यत्र नेतिवैधर्म्यायोगादित्यतःशब्दार्थः ।।१२४०।।

मिथो भेदे युक्तिमुक्त्वा तत्रैव श्रौतं लिङ्गमाह—तमिति । "तं विदित्वा न लिप्यते" "एतमेव प्रव्राजिनो लोकमिच्छन्तः" "एतं वै तमात्मानं विदित्वा" "एतमितः प्रेत्याहमभिसंभवितास्मी"ति कर्मकर्तृभेदेन जीवेश्वरयोरुक्तेस्तयोरत्यन्तभेदो मृगव्याधयोरिवैकस्मिन्कर्मकर्तृत्वायोगादित्यर्थः ।।१२४१।।

तद्भेदे श्रौतलिङ्गान्तरमाह—मुमुक्षोरिति । तस्य गतिर्मार्गो देवयानः पन्थास्तस्य देशभेदोऽर्चिरादिपर्व-

दक्षिणोत्तरमार्गोक्तिस्तथा सति विरुध्यते । गन्तव्यदेशाभावाच्च गतिर्नैवोपपद्यते ।।४३।।
तथाऽभ्युदयकैवल्यसाधनानां विधानतः । न ह्रीश्वरस्य कैवल्यं साधनायत्तमिष्यते ।।४४।।
ब्रह्मभावी ततो नेशः किंतु तद्व्यतिरेकभाक् । संसार्येवाभिधीयेत यथोक्तन्यायगौरवात् ।।४५।।

ब्रह्मभावी जीवः न ब्रह्मपदार्थः तथासति उपदेशानर्थक्यम्

नैवं ब्रह्मोपदेशार्थशास्त्रानर्थक्यसक्तितः । संसारिविद्ययैवास्य पुरुषार्थसमाप्तितः ।।४६।।
न च ब्रह्मोपदेशस्य सर्वभावातिरेकतः । शक्यं फलान्तरं वक्तुं येनासावर्थवान्भवेत् ।।४७।।
पुमर्थसाधनेऽन्यस्मिन्न चासौ विनियुज्यते । मन्त्रवत्तेन तच्छास्त्रं स्यादनर्थकमेव तु ।।४८।।
मतं दुःखिन एवासौ संपदर्थं विधीयते । ब्रह्मास्मीत्यविनिर्ज्ञाते कथं ब्रह्मणि सा भवेत् ।।४९।।
तस्मिंस्तु शास्त्राद्विज्ञाते शक्यते कर्तुमञ्जसा । ब्रह्म संपदतः शास्त्रं तादर्थ्यादर्थवद्भवेत् ।।५०।।

विशेषस्तस्योपदेशस्तेऽर्चिषमित्यादिरतो गन्तृगन्तव्यभेदधीरित्यर्थः । तद्भेदाभावेऽपि गतिरुच्यतामित्याशङ्क्याह—भेद इति । असतीति च्छेदः ।।१२४२।।

मा भूद्गतिरित्याशङ्क्याऽऽह—दक्षिणेति । गत्यनङ्गीकारे दक्षिणमार्गस्य धूमाद्युपलक्षितस्येष्टादिकारिणं प्रत्युक्तिवज्ज्ञानिनं प्रत्युत्तरमार्गस्यार्चिराद्युपलक्षितस्योक्तिर्विरुध्येतातो गतिर्दुरपह्नवेत्यर्थः । अस्तु तर्हि गतिः सा च सकर्तृकत्वाद्गन्तारमपेक्षतां ततो विलक्षणगन्तव्यलाभस्तु कुतस्तत्राऽऽह—गन्तव्येति । तस्या हि कर्तृकर्मणोरपेक्षासाम्यात्तद्भेदाभावे नैव सा सिध्येदित्यर्थः । गन्त्रभावे गत्यभाववदितिदृष्टान्तार्थश्चकारः ।।१२४३।।

जीवेशभेदे हेत्वन्तरमाह—तथेति । विधानतस्तथेति सम्बन्धः । अथैतानि परस्यैव विधास्यन्ते तत्कथं भेदस्तत्राऽऽह—न हीति । न तावदीशस्याभ्युदयार्थं साधनं विधेयं तस्य बन्धान्तर्गतस्वर्गाद्यभ्युदयसम्बन्धायोगान्नित्यमुक्तत्वात्कैवल्यं तु तस्य नित्यसिद्धं न साधनाधीनमतो न तं प्रति साधनद्वयविधिर्जीवं प्रति च सोऽस्ति तद्भेदस्तयोरित्यर्थः ।।१२४४।।

जीवेशभेदे प्रामाणिकेऽपि ब्रह्मभाविपुरुषकल्पना कथमित्याशङ्क्योपसंहरति—ब्रह्मेति । पञ्चम्योः सामानाधिकरण्येन सम्बन्धः । "ब्रह्म वा इदमि"त्यत्र ब्रह्मशब्देन नेशो गृह्यते ब्रह्मभावी तु जीवस्ततोऽन्यस्तेनोच्यते यथोक्तन्यायस्य जीवपरभेदप्रामाणिकत्वस्य दृढत्वादित्यर्थः ।।१२४५।।

ब्रह्मभाविनो जीवस्य ब्रह्मोपदेशानर्थक्यमिति दूषयति—नैवमिति । तदुपपादयति—संसारीति । यदत्र ब्रह्मशब्दः तज्ज्ञानादेव मुक्तिरिहेष्टा तदात्मानमित्यादिश्रुतेरतो जीवोऽब्रह्म चेज्जीवज्ञानादेव तत्सिद्धेः सत्यज्ञानादिब्रह्मोपदेशो वृथा स्यादित्यर्थः ।।१२४६।।

जीवधियो मुक्तिफलत्वेऽपि ब्रह्मोपदेशस्य फलान्तरेणार्थवत्त्वमित्याशङ्क्याऽऽह—न चेति । सत्यज्ञानादिलक्षणब्रह्मोपदेशस्य "ब्रह्मविदाप्नोति परमि"त्यादिश्रुत्या तद्भावे फले गम्यमाने तदतिरेकेण फलान्तरमभ्युदयरूपं तस्याशक्यं वक्तुमुक्तश्रुतिविरोधादतो न ब्रह्मोपदेशस्य प्रकारान्तरेणार्थवत्त्वमित्यर्थः ।।१२४७।।

विधिशेषतया तदर्थवत्त्वमाशङ्क्य कर्मविधिशेषत्वेनोपास्तिविधिशेषत्वेन वेति विकल्प्याऽऽद्यं दूषयति—पुमर्थेति । अन्यस्मिन्नग्निहोत्रादिविधाविति यावत् । असाविति ब्रह्मोपदेशोक्तिः । तत्र वैधर्म्यदृष्टान्तो मन्त्रवदिति । "इषे त्वेति शाखामाच्छिनत्ती"त्यादिविनियोजकब्राह्मणवशादिषे त्वेत्यादिमन्त्रो यथा शाखाच्छेदनादौ विनियुक्तो न तथा ब्रह्मोपदेशोऽग्निहोत्रादौ विनियुज्यते विनियोजकश्रुत्याद्यभावादित्यर्थः । विनियोगाभावे फलमाह—तेनेति । तच्छास्त्रं ब्रह्मोपदेशार्थं सत्यज्ञानादिवाक्यमित्यर्थः । कर्मविधिशेषत्वेन ब्रह्मोपदेशस्यार्थवत्त्वायोगेन स्वतन्त्रतया तदर्थवत्त्वमावश्यकमिति तुशब्दार्थः ।।१२४८।।

कल्पान्तरमाह—मतमिति । ब्रह्मोपास्तिस्तज्ज्ञानानपेक्षेत्याशङ्क्य व्यतिरेकमाह—अविनिर्ज्ञात इति ।।१२४९।।

तत्रैवान्वयमन्वाचष्टे—तस्मिन्निति । अन्वयव्यतिरेकाभ्यां ब्रह्मज्ञानस्य तदुपास्त्युपयोगमुक्त्वा फलितमाह—अत इति ।।१२५०।।

ननु ब्रह्म यदि ज्ञातं तावतैव कृतार्थता । न चेत्तत्संपदा किं स्याद्येन तामनुरुध्यते ॥५१॥
नैवं ब्रह्मावबोधस्य पारार्थ्येन[1] फलत्वतः । सर्वमेव यतो ज्ञानं परार्थं फलवन्मतम् ॥५२॥

सिद्धान्तिमतम्

उक्तत्वात्परिहारस्य नैवमेतद्भवेदिह । ब्रह्मज्ञानात्तदन्यत्र परार्थं ज्ञानमिष्यते ॥५३॥
सर्वत्रैव हि विज्ञानं संस्कारत्वेन गम्यते । पराङ्गं चाऽऽत्मविज्ञानादन्यत्रेत्यवधारणात् ॥५४॥

अहं ब्रह्मास्मीति न संपदुपासनम्

सामानाधिकरण्येन तथा ब्रह्मात्मशब्दयोः । श्रुतौ श्रुतेर्न संपत्स्यात्संपद्येष न हि क्रमः ॥५५॥
आत्मा ब्रह्मेत्येवमादौ सामानाधिकरण्यगीः । अन्यस्यान्यत्र संपत्स्यादद्वये सा कथं भवेत् ॥५६॥
द्रष्टव्यस्याऽऽत्मनस्तद्वदैकात्म्यं श्रुतिरब्रवीत् । ब्रह्मादि सर्वमात्मेति संपन्नातोऽत्र युज्यते ॥५७॥
तदापत्तिश्रुतेश्चेयं संपन्नेहोपपद्यते । ब्रह्मैव भवतीत्यादितदापत्तिवचांस्यपि ॥५८॥

सिद्धान्ती संपदमाक्षिपति—नन्विति । ब्रह्मज्ञानेऽपि विनोपास्तिं नास्ति कृतार्थतेत्याशङ्क्याऽऽह—न चेदिति । ब्रह्मज्ञानान्मानान्न कृतार्थता तदुपास्तेरमानात्सेति विचित्रं पाण्डित्यमित्यर्थः ॥१२५१॥

पूर्ववाद्याह—नैवमिति । ब्रह्मधीर्न स्वतन्त्रा पुमर्थहेतुर्ज्ञानत्वादाज्यादिज्ञानवदित्यर्थः । तदेव समर्थयते—सर्वमिति । मतं वार्तिककारादिभिरिति शेषः । अतो युक्तं प्रागुक्तमनुमानमित्यर्थः ॥१२५२॥

ब्रह्मधियः स्वतन्त्रफलायाः श्रुत्यनुभवाभ्यां सम्बन्धे साधितत्वात्तस्या न पारार्थ्यमित्याह—उक्तत्वादिति । एतदिति पारार्थ्यमिहेत्यात्मज्ञानं परामृष्टम् । उक्तानुमानस्य किं बाधकमित्याशङ्क्य कालातीतत्वं शुक्त्यादिज्ञाने व्यभिचारं च मन्वानोऽप्रयोजकत्वमाह—ब्रह्मेति । तज्ज्ञानमिति संबन्धः ॥१२५३॥

शब्दसाधुताज्ञानस्य शब्दे पुंसि वा संस्कारत्वेन प्रयोगाङ्गत्वं प्रकृत्य व्याकरणाधिकरणे वार्तिककारोक्तिमत्र मानत्वेनोदाहरति—सर्वत्रेति । ननु ज्ञानस्य विनियुक्तसंस्कारत्वं विनियोक्ष्यमाणसंस्कारत्वं वा न प्रतीयते । मैव-मुपांशुयाजाङ्गभूताज्यावेक्षणवदस्य विनियोक्ष्यमाणसंस्कारत्वोपपत्तेरित्याह—पराङ्गं चेति । तर्हि ज्ञानत्वादात्म-ज्ञानस्यापि कर्माङ्गतेति नेत्याह—आत्मेति । अपहतपाप्मादिशास्त्रेण मोक्षहेतुं तज्ज्ञानमाचक्षाणेन तद्वर्जयित्वा ज्ञानान्तरमेव परार्थमित्यवधारणात्तत्स्वतन्त्रमेव मुक्तिफलमित्यर्थः ॥१२५४॥

अहं ब्रह्मास्मीति संपदर्थमङ्गीकृत्य तच्छेषत्वं ब्रह्मोपदेशस्य निरस्य संपदमेव निरस्यति—सामानाधि-करण्येनेति । सोऽमितिदृष्टान्तार्थस्तथाशब्दः । संपत्पक्षेऽपि सामानाधिकरण्यं "मनो ब्रह्मे"तिवत् स्यादित्याशङ्क्य विधायकपदातिरेकेण ब्रह्मात्मपदयोः सामानाधिकरण्यं तत्र न युक्तमित्याह-संपदीति ॥१२५५॥

काऽसौ श्रुतिर्यत्र सामानाधिकरण्यश्रवणं ब्रह्मात्मशब्दयोरित्याशङ्क्याऽऽह—आत्मेति । संपदभावे हेत्वन्तर-माह—अन्यस्येति । अन्यत्र मनोगगनादावन्यस्य ब्रह्मणः संपद्दृष्टा न त्वद्वये ब्रह्मण्यप्रपञ्चे सा युक्तेत्यर्थः ॥१२५६॥

अथाद्वयत्वमसिद्धं सामानाधिकरणस्य वेदाः प्रमाणमितिवदन्यथासिद्धेरत आह—द्रष्टव्यस्येति । "आत्मा वा अरे द्रष्टव्य" इतिप्रकृतात्मनो ब्रह्मत्वव"दिदं सर्वं यदयमात्मे"ति श्रुतिरद्वयत्वमाहातः संपदनवकाशेत्यर्थः । ब्रह्मादीत्यादिशब्देन "क्षत्त्रं तं परादादि"त्यादिवाक्योपात्तं क्षत्त्रादि गृह्यते ॥१२५७॥

अभेदेऽपि भेदं कल्पयित्वा सा प्रवर्ततामित्याशङ्क्याऽऽह—तदापत्तीति । चकारो दर्शितशङ्कानिरासार्थः । इहेत्यद्वयात्मोक्तिः । तदापत्तिश्रुतिमुदाहरति—ब्रह्मेति । संपत्पक्षे न तदापत्तिः स्थितस्य नष्टस्य वाऽन्यस्यान्य-त्वायोगादित्यपेरर्थः ॥१२५८॥

---

१. पारार्थ्येन—द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात्—इति सूत्रभाष्यवार्तिकोक्तन्यायात् आत्मज्ञानस्यापि कर्मकर्तृजीवसंस्कारत्वात् नान्यत् तस्य फलं तद्विषये "सर्वांश्च लोकानाप्नोति सर्वांश्च कामानि"त्यर्थवादः ।

**वचनात्स्यात्तदापत्तिः संपत्तेरिति चेन्मतम् । नैवं प्रत्ययमात्रत्वात्संपत्तेर्न तदिष्यते ॥५९॥**
**तमोमात्रान्तरायत्वादाप्तमप्याप्यते न तत् । न च संपत्तमोहन्त्री मिथ्याज्ञानात्मकत्वतः ॥६०॥**
**तमोध्वंसातिरेकेण सम्यग्ज्ञानस्य नापरम् । फलमण्वपि संभाव्यं ज्ञानस्याकारकत्वतः ॥६१॥**
**वस्तुनः शक्तिकृन्नापि वचनं ज्ञापकत्वतः । ज्ञापकानि हि शास्त्राणि कारकाणि न कुत्रचित् ॥६२॥**
**अभीष्टपुरुषार्थस्य बाधश्चैवं प्रसज्यते । निःशेषपुरुषार्थाप्तिकारि ब्रह्मावबोधनम् ॥६३॥**

संपदा सर्वभावापत्तिनिराकरणम्

**तादृक्षं संपदो न स्यान्न च दुःख्यात्मबोधतः । निःशेषपुरुषार्थाप्तिस्तद्बुद्धेरनृतन्त्रतः ॥६४॥**
**अपूर्वाद्यर्थ एवैकः प्राधान्येन विवक्षितः । काण्डद्वयेऽपि नैतस्मादन्योऽर्थः कश्चिदीक्ष्यते ॥६५॥**
**एतावदर इत्यन्त उपसंहारदर्शनात् । न चोपक्रमसंहारविरुद्धोक्तिः प्रशस्यते ॥६६॥**

तं यथेत्यादिश्रुतेः सूत्राद्युपास्तेस्तद्भाववद्ब्रह्मोपास्तेरपि तद्भावो वचनात्फलं स्यादिति शङ्कते—वचनादिति । संपत्तेरमानत्वान्न तद्बलादन्यस्यान्यत्वं मानत्वेऽप्येवंमानस्याकारकत्वात् । न च सूत्राद्युपासनादप्यन्यस्यान्यत्वं, स्थितस्य नष्टस्य वाऽनुपपत्तेरुक्तत्वात् "तं यथे"त्यादिश्रुतिश्च न पूर्वसिद्धसूत्रादिभावमुपासितुराह तत्सादृश्याप्त्या तद्भावोपचारात्तस्माद्ब्रह्मभावः स्वतःसिद्धो न सांपादिक इति समाधत्ते—नैवमिति ॥१२५९॥

ब्रह्मभावस्य स्वतस्त्वे किमिति तद्भावः सर्वैर्नानुभूयते तत्राऽऽह—तमोमात्रेति । तन्मात्रस्य व्यवधानाद्वस्तुभूतव्यवधानाभावात् । वस्तुतस्तु तदाप्तमपि नाऽऽप्यते नानुभूयत इति यावत् । तमोव्यवधानादननुभवेऽपि तद्ध्वस्तिहेतुः संपदेष्टव्येत्याशङ्क्याऽऽह—न चेति । संपदोऽमानत्वान्न ततस्तमोध्वस्तिः किंतु सम्यग्ज्ञानादेवेत्यर्थः ॥१२६०॥

सम्यग्ज्ञानस्य मोक्षफलस्य कथं तमोध्वस्तिः फलमित्याशङ्क्य तद्ध्वस्तिरेव मुक्तिरित्याह—तमोध्वंसेति । नाविद्याध्वस्तिर्मुक्तिः किंत्वात्मनो ब्रह्मत्वं तदुत्पत्तिहेतुर्ज्ञानमित्याशङ्क्याऽऽह—ज्ञानस्येति । विद्याया व्यञ्जकत्वादन्यस्यान्यभावानुपपत्तेरुक्तत्वात्तमोध्वंसेतरब्रह्मभावायोगान्न फलान्तरमिति भावः ॥१२६१॥

कथमन्यस्यान्यभावायोगो "ब्रह्म वेदे"त्यादिवाक्यमेव तच्छक्तिकरमित्यङ्गीकारान्न च श्रौतेऽर्थे केवलतर्कप्रवेशः श्रुतेर्बलीयस्त्वादतः संपन्मुक्तिहेतुरत आह—वस्तुन इति । कथं ज्ञापकं तदाह—ज्ञापकानीति । शास्त्राणामादित्यवदर्थज्ञापकत्वं सर्वसंप्रतिपन्नमिति हिशब्दार्थः । कुत्रचिदिति विषयोक्तिः ॥१२६२॥

ब्रह्मोपदेशस्य संपच्छेषत्वे दोषान्तरमाह—अभीष्टेति । न केवलमिष्टहानिरेव किंत्वनिष्टापत्तिश्चेत्यपेरर्थः । संपद्वशादिष्टापत्तिमाशङ्क्याऽऽह—निःशेषेति ॥१२६३॥

संपदपि तथा किं न स्यादत आह—तादृक्षमिति । न हि तादृशं शास्त्रीयं पूर्णं फलमप्रमाणसंपन्मात्रेण सिध्यति तस्मादिष्टहानिः संपत्पक्षे दुर्वारेत्यर्थः । ननु बन्धमोक्षयोरैकाधिकरण्याज्जीवस्य बद्धत्वात्तस्यैव मुक्तिर्न चाऽन्यज्ञानादन्यमुक्तिरतः संसारिज्ञानादेव तत्सिद्धेर्ब्रह्मशब्देन संसारिग्रहे नेष्टहानिर्न च ब्रह्मोपदेशानर्थक्यं संसारिणं ब्रह्मत्वेन स्तोतुं तदुपदेशात्तत्राऽऽह—न चेति । संसारिज्ञानान्न मुक्तिरित्यत्र हेतुमाह—तद्बुद्धेरिति । जीवधियोऽपुंस्तन्त्रत्वेन निजत्वान्न ततो मुक्तिरन्यथा सर्वमुक्तेराधुनिकः संसारो न स्यान्न चोपदेशः स्तुत्यर्थो मुख्ये बाधाभावादतो ब्रह्मेति जीवोक्तावुपदेशानर्थक्यमिष्टनष्टिश्च स्पष्टेत्यर्थः ॥१२६४॥

किंच ब्रह्मणोऽर्थान्तरस्य संसारिणो ब्रह्मशब्दत्वे बृहदारण्यकेऽभीष्टहानिः स्पष्टेत्याह—अपूर्वेति । अर्थान्तरस्यापि प्राणादेरत्र दृष्टेरवधारणायोगमाशङ्क्याऽऽह—प्राधान्येनेति । यथोक्तं वस्तु तात्पर्यगम्यमिहेत्यत्र हेतुमाह—काण्डेति । मधुकाण्डे मुनिकाण्डे चेति यावत् । अर्थान्तरमत्र दृष्टमपि न तात्पर्यगम्यमित्यर्थः ॥१२६५॥

अर्थान्तरवदपूर्वाद्यर्थस्यापि नात्र तात्पर्यविषयत्वं दृष्टेरविशेषादित्याशङ्क्याऽऽह—एतावदिति । मधुकाण्डान्ते तदेतद्ब्रह्मेत्याद्युपसंहारस्यापीदमुपलक्षणम् । अतश्चोपसंहारवशादुपक्रमेऽप्यद्वयं प्रतिपाद्यमित्यर्थः । ब्रह्म वा इदमित्युपक्रमे जीवपरयोर्भेदोऽस्तूपसंहारे त्वेतावदित्यादावभेद इति व्यवस्थामाशङ्क्याऽऽह—न चेति ॥१२६६॥

तत्रैवं सति संसारी यद्यन्यो ब्रह्मणो भवेत् । इष्टस्यार्थस्य बाधः स्यान्न च ध्वान्तनिराकृतिः ॥६७॥
आरम्भेऽवसितौ शास्त्रं परस्परविरोधतः । समञ्जसं न क्लृप्तं स्यात्संभवेऽप्यविरोधिनः ॥६८॥

ब्रह्मविद्यासमाख्यया अत्र मुख्यब्रह्मोपदेश एव

समाख्यानुपपत्तिश्च ब्रह्मणोऽन्यस्य वेदनात् । नापि रूढिस्तदन्यस्मिन्नश्वकर्णादिवद्भवेत् ॥६९॥
आत्मेति वेत्तुरन्यश्चेन्न ब्रह्माहमिति श्रुतेः । प्रतीचो ब्रह्मवत्प्रत्यग्ब्रह्मणोऽपि विशेषणम् ॥७०॥
ब्रह्मता न मदन्यत्र कौटस्थ्यान्मम नाशिषु । ब्रह्मणो नान्यतः प्रत्यक्साक्षात्त्वाद्ब्रह्मवस्तुनः ॥७१॥
अव्यावृत्ताननुगतेर्मुख्यार्थश्च तथा सति । ब्रह्मविद्येति सिद्धः स्याद्व्यपदेशो न चान्यथा ॥७२॥

जीवब्रह्मणोः भेदाभेदेन सर्वोपपत्तिशङ्का समाधानं च

भिन्नाभिन्नत्वगीर्याऽपि साऽपि दुःस्थितसिद्धिका । विरुद्धधर्मसंबन्धो न प्रतीच्यस्त्यधर्मणि ॥७३॥
धर्मधर्म्यभिसंबन्धा गृह्यन्तेऽनात्मवस्तुषु । प्रत्यक्षादिप्रमाणेन नामीषामात्मनि ग्रहः ॥७४॥

कथं तयोर्भिन्नार्थत्वमप्रशस्तमिति तत्राह—तत्रेति । तयोस्त्वदिच्छया भिन्नार्थत्वे सति ब्रह्मणोऽन्यो जीवः स्यादेवं चेदशेषोपनिषदिष्टैक्यार्थबाधस्तज्ज्ञानादज्ञानाहानिश्च स्यादित्यर्थः ॥१२६७॥

इष्टार्थबाधमुपगन्तुरनिष्टापत्तिमाह—आरम्भ इति । [1]अविरुद्धार्थनिष्ठत्वेनैकवाक्यत्वे विरुद्धार्थनिष्ठतया तद्भेदकल्पनमयुक्तं यथोपांशुयाजवाक्ये जामितादोषोपक्रमे तत्प्रतिसमाधानोपसंहारे च वाक्यैक्यमाश्रित्य विष्णुरुपांशु यष्टव्य इत्यादिरर्थवाद उपांशुयाजमन्तरा यजतीति च विधिः । यथाऽऽहुः—एकं हीदं वाक्यं नानेकं विधातुमर्हतीति । तथेहाप्येकवाक्यतावशादेकार्थतेति भावः ॥१२६८॥

ब्रह्मेत्यादिवाक्ये ब्रह्मशब्देन परस्याग्रहे तद्विद्यायां ब्रह्मविद्येतिसंज्ञानुपपत्तिरिति दोषान्तरमाह—समाख्येति । सास्नादिमति गोशब्दवज्जीवज्ञाने ब्रह्मविद्याशब्दस्य रूढिमाशङ्क्याऽऽह—नापीति । ब्रह्मज्ञानादन्यस्मिञ्जीवज्ञाने ब्रह्मविद्याशब्दस्य न रूढिस्तथाविधवृद्धव्यवहाराभावादित्यर्थः ॥१२६९॥

अत्रोक्तब्रह्मशब्दार्थाद्वेत्तुर्जीवादन्यस्तदात्मानमित्यात्मशब्देन परो गृह्यते । तद्विद्या च ब्रह्मविद्येति संज्ञासिद्धिरित्याशङ्कते—आत्मेतीति । वाक्यशेषविरोधान्मैवमित्याह—नेति । ब्रह्माऽऽत्मा भवत्वात्मा ततोऽन्यः सर्पस्य रज्ज्वभेदेऽपि रज्जोस्तदन्यत्वदृष्टेरित्याशङ्क्याऽऽह—प्रतीच इति ॥१२७०॥

तयोरन्योन्यविशेषणत्वेनान्योन्यात्मत्वमुक्तं व्यनक्ति—ब्रह्मतेति । ब्रह्मधर्मस्य कौटस्थ्यस्याऽऽत्मनि दृष्टेरात्मा ब्रह्म तद्धर्मस्याऽऽपरोक्ष्यस्य यत्साक्षादिति ब्रह्मणि श्रुतेर्ब्रह्माऽऽत्मेत्यर्थः ॥१२७१॥

अन्योन्याभेदे निःसामान्यविशेषं ब्रह्म सिध्यति तत्सिद्धौ तद्विद्यायां ब्रह्मविद्येत्युक्तिर्मुख्या स्यान्मिथो भेदे तु न ब्रह्मशब्दो मुख्यो नापि व्यपदेशस्तथेति फलितमाह—अव्यावृत्तेति ॥१२७२॥

जीवब्रह्मणोरत्यन्तभेदे संज्ञायोगेऽपि भेदाभेदोपगमादभेदांशे तदुपपत्तिरित्याशङ्क्याऽऽह—भिन्नेति । अत्यन्तभिन्नत्वोक्तिवदित्यपेरर्थः । तत्र हेतुः—विरुद्धेति । यत्र धर्ममात्रमेवास्थूलादिश्रुत्याऽपास्तं तत्र कुतो विरुद्धभेदाभेदधर्मवत्त्वं तथा चाभेदांशेन संज्ञासाधनमयुक्तमित्यर्थः ॥१२७३॥

धर्मित्वमनात्ममात्रवृत्ति धर्ममात्रवृत्तित्वाद्घटत्ववदिति मत्वाऽधर्मित्वमात्मनः साधयति—धर्मेति । प्रत्यक्षादिभिरनात्मस्वेव धर्मो धर्मी विशेषणं विशेष्यमित्यादयः सम्बन्धा गृह्यन्ते न त्वात्मनि प्रत्यक्षादिभिस्तेषां ग्रहणमात्मनोऽध्यक्षाद्ययोग्यत्वादित्यर्थः ॥१२७४॥

१. अविरुद्धार्थेति । उपांशुयाजवाक्ये हि आरम्भे जामितादोषः कीर्तितः "जामिवा एतद्यज्ञस्य यदन्वञ्चौ पुरोडाशौ—" इति । जामिता सादृश्यं आलस्यपर्यवसायि आग्नेयाग्नीषोमयोः नैरन्तर्येण क्रियमाणयोः सादृश्यात् कृताकृतविवेको न स्यात् अतः उपांशुयाजमन्तरा यजति इत्यनेन विहितस्य आज्यसाध्यस्य उपांशुयाजयागस्य मध्ये करणे उक्तदोषपरिहारो भवति । इदं च उपांशुयाजवाक्ये यागविध्यङ्गीकार एव संगच्छते । विष्णुः उपांशु यष्टव्य इत्यादौ यागविधाने नायं दोषः परिह्रियेत अत एकवाक्यता अङ्गीकरणीयेत्यर्थः ।

**आत्मानात्मनिमित्तेऽपि व्यपदेशोऽपि दुर्घटः । विकल्पतो वा तत्सिद्धिर्ब्रह्मसंसारिणोर्भवेत् ।।७५।।**
**न चार्धवैशसं युक्तं तत्त्वज्ञाने विवक्षिते । संशयो हि तथा श्रोतुः स्यादनिश्चितवाक्यतः ।।७६।।**
**निश्चितं फलवज्ज्ञानं यस्य स्यादिति शास्त्रतः । न तु संशयितं यस्मात्संशयात्मा विनश्यति ।।७७।।**

ब्रह्मणि साधकत्वं न युक्तमिति न वाच्यम्

**परमात्मन्ययुक्ता चेत्साधकत्वादिकल्पना । शास्त्रोपालम्भतो नैवं शास्त्रीयेयं प्रकल्पना ।।७८।।**
**अक्षमा भवतः केयं साधकत्वप्रकल्पने । किं न पश्यसि संसारं तत्रैवाज्ञानकल्पितम् ।।७९।।**
**अनात्मवस्तु यत्किंचित्तद् ब्रह्मानवबोधतः । ब्रह्मण्येव समध्यस्तं शुक्तिकारजतादिवत् ।।८०।।**
**यस्मादेवमतोऽशेषसंसारानर्थकल्पना—निदानबहुलाज्ञानसमुच्छित्त्यै परा श्रुतिः ।।८१।।**
**ब्रह्मेति ब्रह्मशब्देन कृत्स्नं वस्त्वभिधीयते । प्रकृतस्याऽऽत्मकात्स्न्र्यस्य वैशब्दः स्मृतये मतः ।।८२।।**

स्यातां वा ब्रह्मात्मनोर्भेदाभेदौ तथाऽपि भिन्नाभिन्नविद्यायां ब्रह्मविद्येति नियतोक्तिर्न स्यादित्याह—आत्मेति । निमित्तं विषयः । उभयविषये ज्ञाने स्वीकृतेऽपि व्यपदेशो न घटते तयोर्भिन्नाभिन्नत्वेन द्वयोर्विद्याविषयत्वे ब्रह्मविद्येति ब्रह्मणैव विद्याया विशेष्यत्वायोगादित्यर्थः । द्वयविषया विद्या ब्रह्मविषयाऽपि भवत्येवेति व्यपदेशसिद्धिमाशङ्क्याऽऽह—विकल्पतो वेति । द्वयोर्विद्याविषयत्वाविशेषाद्ब्रह्मविद्येति कदाचित्कदाचिज्जीवविद्येति व्यपदेशो विकल्पितः स्यादित्यर्थः ।।१२७५।।

द्वयात्मत्वाद्वस्तुनस्तद्विद्याऽपि द्वयात्मिकेति समुच्चयमाशङ्क्याऽऽह—न चेति । कुक्कुटादेरेको देशः प्रसवाय कल्पते पच्यते देशान्तरमित्यर्धवैशसं तदिहायुक्तं न हि वस्तु ब्रह्म चाब्रह्म च । तत्त्वज्ञानस्य विवक्षितत्वाद्विरुद्धस्यातथात्वादित्यर्थः । अस्तु तर्हि वस्तु संसार्यसंसारि वा वैकल्पिकमिति नेत्याह—संशयो हीति । विकल्पतो वस्तुनो ह्यात्मत्वे तद्वाक्यात्संशयः श्रोतुः स्यात्संसार्यसंसार्युभयरूपं वा वस्त्विति । न च वस्तुनि संशयं प्रशंसन्तीत्यर्थः । संशयितार्थस्य वाक्यस्य संशयजनकत्वं प्रसिद्धमिति वक्तुं हिशब्दः ।।१२७६।।

किंच संशयिते ज्ञाने वाक्योत्थे तस्य फलवत्त्वासिद्धिरित्याह—निश्चितमिति । तत्र श्रुतिं प्रमाणयति—यस्येति । संशयस्यापि निश्चयवत्फलवत्त्वमाशङ्क्याऽऽह—न त्विति ।।१२७७।।

जीवपरयोरत्यन्तभेदस्य भेदाभेदयोश्चायोगात्परमेव ब्रह्म ब्रह्मशब्दं न जीवस्तद्भावीत्युक्ते सत्यत्यन्ताभेदपक्षे चोदयति—परमात्मनीति । तदात्मानमेवावेदिति ज्ञातृत्वं ब्रह्मण्ययुक्तं तस्य ज्ञानमूर्तित्वादत एव न तत्कर्मत्वमपि न च स्वकर्तृकर्मकज्ञानान् मुक्तिः परस्य क्रियाकारकफलविलक्षणत्वादतस्तत्र ज्ञातृत्वादिकल्पनायोगान्न परं ब्रह्म ब्रह्मशब्दमित्यर्थः । शास्त्रं ब्रह्मणि साधकत्वादि दर्शयति तच्चापौरुषेयमदोषं नोपलम्भार्हमतस्तस्मिन्नाविद्यं साधकत्वादि स्वीकार्यमित्याह—शास्त्रेति ।।१२७८।।

किंच सर्वस्यापि संसारस्य ब्रह्मण्यविद्ययाऽध्यासात्तदन्तर्भूतसाधकत्वाद्यपि तत्राध्यस्तमित्युपगमे नानुपपत्तिरित्याह—अक्षमेति ।।१२७९।।

न संसारो ब्रह्मण्यध्यस्तस्तस्य नित्यमुक्तत्वाज्जीवे त्वारोपितस्तत्र तद्दृष्टेरित्याशङ्क्याऽऽह—अनात्मेति । न तावज्जीवशब्दवाच्यः संसारी संसारान्तर्भावात् तच्छब्दलक्ष्यार्थो ब्रह्मणो नातिरिच्यते तद्ब्रह्मण्येव स्वाज्ञानादनात्मवस्त्वध्यस्तमनात्मत्वात्संमतवदित्यर्थः ।।१२८०।।

उक्तन्यायेन ब्रह्मभावी जीवो न ब्रह्मशब्दार्थः किंतु परमेव ब्रह्म । तत्र च निःशेषदोषाभावस्तस्माद् ब्रह्मेत्याद्या श्रुतिः सर्वसंसारहेत्वनवच्छिन्नस्वाविद्याध्वंसिब्रह्मविद्यार्थत्वेनाऽऽरब्धेत्युपसंहरति—यस्मादिति ।।१२८१।।

परेष्टं ब्रह्म निरस्य स्वेष्टं तदाह—ब्रह्मेतीति । अत्र हीति प्रकृतमात्मकात्स्न्र्यं तस्य स्मारको वैशब्द इत्याह—प्रकृतस्येति ।।१२८२।।

१. यस्य स्यादद्धा न विचिकित्साऽस्तीति ह स्माह शाण्डिल्यः शाण्डिल्यः—अनेन निर्विचिकित्सज्ञानस्यैव विहितत्वात् ।

प्रकृतार्थोपरोधाच्च मुख्यब्रह्मार्थलाभतः । यथोक्तदोषाभावाच्च ब्रह्म कृत्स्नमिहास्त्वतः ॥८३॥

ब्रह्मणः कार्त्स्न्यं न प्रमाणतः सिद्ध्यति इत्याक्षेपः

ननु मानादिविरहादकृत्स्नमपि नेष्यते । कुतः कार्त्स्न्यं यतः सर्वं मानादेव प्रसिध्यति ॥८४॥
अभ्युपेतौ च मानादेस्तस्य कार्त्स्न्यं विहन्यते । न हि ब्रह्मातिरिक्तेऽर्थे सति संभाव्यतेऽजडैः ॥८५॥
भिन्नाभिन्नत्ववादेऽपि ब्रह्माभिन्नात्मना भवेत् । व्यावृत्तेर्न तु भिन्नेषु ब्रह्मता स्याद्घटादिवत् ॥८६॥

उक्ताक्षेपपरिहारः

वस्त्वन्तराभ्युपगमः प्रत्यक्कार्त्स्न्यविघातकृत् । न तु मानाभ्युपगमो मितेस्तदवसानतः ॥८७॥
वस्त्वन्तरस्य सद्भावः सिद्धे कार्त्स्न्ये विरुध्यते । मानाद्यपेक्षा सिद्धस्य नानुन्मत्तेन चोद्यते ॥८८॥
न चापि वास्तवी सिद्धिः प्रमात्रादिविरोधिनी । सत्यामेव यतस्तस्यां संसारानर्थविभ्रमः ॥८९॥
वास्तव्या अपि संसिद्धेः स्वमहिम्नैव नेष्यते । प्रमाणविरहात्सिद्धिरेतच्च स्वानुभूतितः ॥९०॥

ब्रह्मशब्देनाद्वयग्रहे युक्तिमाह—प्रकृतेति । आत्मेत्येवोपासीतेति प्रत्यगात्माऽद्वयः प्रकृतोऽर्थस्तस्य ब्रह्मशब्देनाद्वयवस्तुग्रहेऽबाधात्तदेवात्र ब्रह्मशब्दमित्यर्थः । तत्रैव हेत्वन्तरमाह—मुख्येति । उपोद्घाते शङ्कितदोषाणामत्राभावाच्चैवमित्याह—यथोक्तेति । प्रकृतं वाक्यमिहेत्युक्तम् । परपक्षे प्रकृतहानाप्रकृतप्रक्रियाप्रसङ्गान्मुख्यार्थबाधादुपोद्घातोक्तदोषाच्च न स युक्तिमानित्याह—अत इति ॥१२८३॥

कृत्स्नं ब्रह्मेत्यत्राकृत्स्नपक्षोक्तदोषाभावेऽपि तत्पक्षोक्तदोषापरिहाराद्यथोक्तदोषाभावासिद्धिरिति शङ्कते—नन्विति । कृत्स्नपक्षे मानादि नास्त्यस्ति वेति विकल्प्याऽऽद्यं दूषयति—मानादीति । विना मानादि लौकिकं परिच्छिन्नमपि वस्तु न लभ्यते तदतिरेकेणालौकिकमद्वयं न सिध्यतीति किं वाच्यमित्यर्थः । मानादि विना किंचिदपि न सिध्यतीत्यत्र हेतुमाह—यत इति । यत्सिध्यति तन्मानादेव सिध्यतीति न्यायादित्यर्थः ॥१२८४॥

द्वितीयं निरस्यति—अभ्युपेतौ चेति । तस्येति ब्रह्मार्था षष्ठी । सति मानादौ ब्रह्मणो ब्रह्मताहानिरित्यत्र हेतुमाह—न हीति । अजडैरिति च्छेदः । सत्यन्यस्मिन्विवेकिभिर्ब्रह्म न संभाव्यते वस्तुपरिच्छेदादिति योजना ॥१२८५॥

भिन्नाभिन्नब्रह्मपक्षे भेदान्मानादिव्यवहारोऽभेदाद्ब्रह्मतेति सर्वाविरोधमाशङ्क्याऽऽह—भिन्नेति । यद्यपि तत्राभिन्नात्मना ब्रह्म भवेत्तथाऽपि भिन्नेषु सत्सु न ब्रह्मता स्याद्घटादिवद्व्यावृत्तेरतो ब्रह्मताऽब्रह्मता च दुर्घटेति योजना ॥१२८६॥

प्रतीचोऽन्यवस्तुस्वीकारोऽद्वयत्वविरोधी न मानादिस्वीकारस्तस्य कल्पितत्वादद्वये समाप्तेरित्युत्तरमाह—वस्त्वन्तरेति ॥१२८७॥

किंचाद्वये वस्तुन्यदृष्टे मानादिभावो विरुध्यते दृष्टे वा ? नाऽऽद्य इत्याह—वस्त्वन्तरस्येति । अद्वये दृष्टे हि मानादेर्भावस्तेन विरुध्यतेऽन्यथा विरोध्यदृष्टेर्न विरोधधीरित्यर्थः द्वितीयं दूषयति—मानादीति । अद्वये ज्ञाते वैफल्यादेव मानाद्यनपेक्षणान्न विरोधाशङ्केत्यर्थः ॥१२८८॥

प्रतीच्यद्वयेऽज्ञाते ज्ञाते च मानादिभावो न विरोधीत्युक्तमिदानीं मानाद्यधीनज्ञानहीनमपि वस्तु स्वमहिम्ना वस्त्वन्तरस्य मात्रादेर्बाधकमिति नाद्वये तत्सिद्धिरित्याशङ्क्याऽऽह—न चेति । प्रमाणजनितसिद्धिवदिति वैधर्म्यमपेरर्थः । अद्वयवस्तुसत्ता मानाद्यविरोधिनीत्यत्र हेतुमाह—सत्यामिति । वस्तुस्वरूपस्फूर्तिस्तद्बाधिका चेत्कदाचिदपि संसारभ्रमो न स्यादतो न वास्तवी सिद्धिस्तद्विरोधिनीत्यर्थः ॥१२८९॥

वस्तुनः स्वरूपेण मानाद्यविरोधित्वे हेत्वन्तरमाह—वास्तव्या इति । न हि वस्तुस्वरूपज्ञप्तेरपि मानं विना स्वशक्त्यैव ज्ञप्तिरिष्टाऽज्ञानावृतायास्तस्या मानादेवाऽऽवरणवारणादतो मानादिसापेक्षं वस्तु न तद्विरोधीत्यर्थः । अज्ञानध्वस्तिद्वारा मानापेक्षया वस्तुनः सिद्धिरित्येतत्कुतः सिद्धं तत्राऽऽह—एतच्चेति । यद्वा वस्तुनि कथमावरकमज्ञानं सिद्धं तत्राऽऽह—एतच्चेति ॥१२९०॥

**मेयकार्त्स्न्याविरोधित्वान्न मितेः शङ्क्यते भिदा। मेयस्वरूपावसितेर्नान्या मानस्य मानता ।।९१।।**
**न हि मेयप्रतिस्पर्धि तन्मानं मेयबोधितः । मानप्रसादात्सिद्धं सत्स्पर्धते मितिबाधितैः ।।९२।।**
**न हि वस्त्वनपाश्रित्य मानत्वं लभ्यते मितेः । वास्तव्या अपि संसिद्धेर्न सिद्धिः स्यात्प्रमां विना ।।९३।।**
**स्वप्रमेयार्पणं मुक्त्वा मानत्वेऽन्यन्न कारणम् । अर्पितेन विरोधश्चेदस्तु कामं न दुष्यति ।।९४।।**
**प्राग्ज्ञानाज्ज्ञानकाले च मानं मेयोऽप्यपेक्षते । प्रमाणकार्ये निर्वृत्ते नान्यत्किंचिदपेक्षते ।।९५।।**
**अज्ञातोऽर्थः प्रमेयः स्याज्ज्ञाते कोऽतिशयो मितेः । अज्ञाते न विरोधोऽस्ति ज्ञाते चान्यानपेक्षतः ।।९६।।**
**मेया[1]साधारणात्मोत्थज्ञानस्यैव प्रमाणतः । तस्य वस्त्वनुरोधित्वादभेदादविरोधिता ।।९७।।**

मानाद्यपेक्षया वस्तुसिद्धौ मानमेयभेदादद्वैतहानिरित्याशङ्क्य मितेस्तदवसानत इत्येतत्प्रपञ्चयति—मेयेति । मितेस्तत्त्वमस्यादेर्मेयमैक्यं तदनुसारित्वात्तद्भेदो न शङ्क्यते तन्नीलमानवदद्वैतमानस्य स्वार्थसाधकतैवेत्यर्थः । मानस्वरूपालोचनेऽपि स्वमेयाविरोध्यद्वैते मानमित्याह—मेयस्वरूपेति । मानस्य हि मानत्वं मेयस्वरूपावसानमेव तन्मानं तत्परिच्छेदकमित्यङ्गीकारात्तथा चाद्वैतमानमद्वैते पर्यवस्यत्तदविरोधीत्यर्थः ।।१२९१।।

अद्वैतमानमद्वैताद्भिन्नमभिन्नं वा ? भिन्नं चेत्तद्विरोधि स्यादभिन्नं चेन्न मानमेयभाव एकत्र तदयोगादित्याशङ्क्याऽऽद्यं भेदं मत्वाऽऽह—न हीति । यद्वोक्तं व्यतिरेकेणाऽऽह—न हीति । तत्प्रतिस्पर्धित्वे तद्बोधकत्वानुपपत्तेरित्याह—मेयेति । मानस्य मेयाविरोधित्वे मेय'स्याप्यद्वयस्य तदविरोधात्वाद्द्वैततादवस्थ्यमित्याशङ्क्य बुद्धीद्धो बोधो नित्यबोधबाधितैर्मानादिभिः स्पर्धमानस्तद्ध्वंसीति न द्वैतसंभावनेत्याह—मानेति ।।१२९२।।

तर्हि मेयवन्मानस्यापि मेयविरोधितेत्याशङ्क्य मानस्य तदालम्बित्वात्तदभावे स्वरूपासिद्धेर्न तद्विरोधितेत्याह—न हीति । जडे तस्य मेयानुसारित्वेऽपि स्वप्रकाशे नैवं कृत्याभावादित्याशङ्क्य वास्तव्या अपीत्यादावुक्तं स्मारयति—वास्तव्या इति । वस्तुस्वरूपवज्ज्ञप्तेरपि सिद्धिरज्ञानध्वस्तिरूपा मानादेव सिध्यतीत्यर्थः ।।१२९३।।

मानस्य स्वरूपसत्त्वमस्ति न वा ? आद्ये द्वैतापातो द्वितीये मानत्वासिद्धिरित्याशङ्क्य स्वरूपसत्त्वं विना स्वमेयबोधनमात्रेण प्रतिबिम्बादिवन्मानत्वसिद्धेर्मैवमित्याह—स्वप्रमेयेति । अन्यत्स्वरूपसत्त्वं [ मानात् । न हि स्वरूपसत्त्वाभावे मानत्वाभावः ] केवलव्यतिरेकाभावा[2]त् । न च स्वरूपसत्त्वाभावे स्वप्रमेयार्पकत्वमेव नेति युक्तं प्रतिबिम्बादेर्बोधकत्वाकारस्य स्वरूपसत्त्वराहित्यादिति भावः । प्रतिबिम्बादेरर्प्यमाणबिम्बादिना विरोधाभावाद्युक्तं मानत्वमद्वैतमाने त्वर्पिताद्वैतेन विरोधान्न तत्र मानतेति शङ्क्ते—अर्पितेनेति । विरोधमङ्गीकरोति—अस्त्विति । कथं तर्हि मानतेत्याशङ्क्य मेयार्पकत्वादित्याह—न दुष्यतीति ।।१२९४।।

मानस्य मेयविरोधिनो ध्वस्तेर्न तदर्पकत्वेन मानतेत्याशङ्क्यार्पणात्पूर्वं मेयाकाङ्क्षिते तस्मिन्नविरोधादूर्ध्वं चानपेक्षिते विरोधेऽपि न दोष इत्याह—प्रागिति । अर्थो हि ज्ञानोत्पत्त्यपेक्षया पूर्वकाले तत्काले च तदीयस्वरूपलाभार्थं मानमाकाङ्क्षति तदुत्पत्तेरूर्ध्वं तु कृत्याभावान्न तदपेक्षते तेन युक्तमविरोधेन मानस्य मेयार्पकत्वमित्यर्थः ।।१२९५।।

ज्ञानात्पूर्वं मेयस्य मानापेक्षा नोर्ध्वमित्युक्तं साधयति—अज्ञात इति । अद्वयमज्ञातं चेन्न मानादिविरोधी हेत्वभावात्तस्यैव मानगम्यत्वाच्च ज्ञातं चेत्तत्कृतातिशयाभावेन तदपेक्षाभावात्तथेत्युक्तमुपसंहरति—अज्ञात इति ।।१२९६।।

ज्ञातेऽनपेक्षितमपि मानं सत्त्वादद्वैतविरोधीत्याशङ्क्य विषयस्वरूपबोधिज्ञानस्यैव मानत्वादद्वैतमानस्यापि तद्बोधिनस्तदानुगुण्यात्तस्य स्वमेयाद्भेदाभावान्न विरोधितेत्याह—मेयेति ।।१२९७।।

१. मेयेति—मेयतत्त्वबोधकज्ञानस्यैव प्रमाणत्वात् अद्वैतमानस्यापि अद्वैतानुगुणत्वात् स्वमेयात् भेदाभावात् न विरोध इत्यर्थः ।

२. केवलव्यतिरेकाभावात् स्वरूपसत्त्वं विना बोधकत्वाभाव इति व्याप्तेरसिद्धेरित्यर्थः ।

## ब्रह्मणि वेद्यवेदितृभेदनिरासः

पश्येदात्मानमित्यत्र नियोज्यो विषयाद्विरुक् । न लभ्यते यतो नात ऐकात्म्ये स्याद्विरुद्धता ।।९८।।
ब्रह्मश्रुतेश्च मुख्योऽर्थः प्रतीचोऽन्यत्र दुर्लभः । यथाकथंचिदित्येतदतो नैवाभ्युपेयते ।।९९।।
स्वत एवाऽऽत्मनः कात्स्न्यांन्न कात्स्न्यं साधनाश्रयात्।साधनायासतः प्राक्च ब्रह्मैवाऽऽसीदितीरितम् १३००
आसीदित्यपि यः शब्दः स तन्मोहाद्यपेक्षया । वस्तुवृत्तमपेक्ष्यैतन्नासीदस्ति भविष्यति ।। १ ।।
सदानुदितालुप्तैकज्ञानमूर्तिरिति त्वया । कुतोऽज्ञायि विना मानान्मानं नाज्ञाततां विना ।। २ ।।
एकं ब्रह्म सदा बुद्धं यथा मानानुभूतितः । व्युत्पत्तेः प्रागविज्ञातं तथैवानुभवाश्रयात् ।। ३ ।।
व्युत्पत्तिफलमाश्रित्य तमोऽसंभव उच्यते । व्युत्पत्तेः प्राक्तमस्वित्वं तत्साक्षित्वेऽपि गम्यते ।। ४ ।।
स्वसत्तयाऽऽत्मनो मोहं न यतो वस्तु हन्त्यतः । शास्त्रानारम्भदोषोऽपि नैवास्मान्प्रति ढौकते ।। ५ ।।
अनादेरपि बाधश्चेत्तमसो नाभ्युपेयते । प्रमाणानां प्रमाणत्वं न क्वचिद्वः प्रसिध्यति ।। ६ ।।

अद्वैते मानाद्यविरोधेऽपि ब्रह्मविद्ब्रह्मणो भिन्नो न वा ? आद्ये द्वैततादवस्थ्यं, द्वितीये वेद्यवेदितृत्वासिद्धिरित्याशङ्क्य वस्तुतो भेदाभावात्कल्पितभेदाच्च न किंचिदेतदित्याह—पश्येदिति । आत्मनो हि दर्शनमिहोपदिश्यते न चाऽऽत्मनोऽन्यो वेदिता वस्तुतोऽस्ति तस्यैकरसत्वादतो न वेदितारमादायाद्वैते विरुद्धत्वं शङ्कनीयमित्यर्थः ।।१२९८।।

कल्पितं मानादिभेदमादाय कृत्स्नं ब्रह्मेत्युक्तम् । यत्तु यथाकथंचिच्छब्दार्थो यदि नामेत्यादि तत्राऽऽह—ब्रह्मेति । अकृत्स्नस्य ब्रह्मत्वनिरासात्कृत्स्नमेव तदिति निश्चयान्नाङ्गीकारवादो युक्त इत्यर्थः । आत्मश्रुतेरिवेत्युदाहरणं चकारार्थः ।।१२९९।।

यत्तु ब्रह्मत्वं किं स्वतस्तस्येत्यादि तदाऽऽद्यमुपेत्य द्वितीयं निरस्यति—स्वत एवेति । स्वतःकात्स्न्याङ्गीकारे श्रुतिमनुग्राहिकामाह—साधनेति । तस्याऽऽयासोऽनुष्ठानं तस्मात्प्रागूर्ध्वं च प्रत्यगात्मा ब्रह्मेति ब्रह्म वा इदमित्यादिश्रुत्योक्तमतः स्वतः प्रतीचः कात्स्न्यमित्यर्थः ।।१३००।।

यत्तु ब्रह्मशब्देन परपरिग्रहे तस्य कालानवच्छित्तेरासीदितिकालसंबन्धो न युक्त इति तत्राऽऽह—आसीदित्यपीति । अज्ञानतत्कार्यापेक्षया वस्तुनि कालसंबन्धवाचो शब्दो न स्वरूपापेक्षयाऽन्यत्र भूताच्चेतिश्रुतेरित्यर्थः । एतदिति प्रत्यग्ब्रह्मोच्यते ।।१३०१।।

यत्तु ज्ञानमूर्तेर्न चाज्ञानमित्यादि तत्राऽऽह—सदेति । न हि विना मानमीदृग्वस्त्विति सिध्यति मानं चेत्तत्राज्ञानेन भाव्यमज्ञातस्य मेयत्वादतो वस्तुन्यविद्याध्वंसित्वेन विद्याऽर्थवतीत्यर्थः ।।१३०२।।

तत्र युक्तिसिद्धामविद्यामनुभवेन साधयति—एकमिति । सत्यज्ञानादिवाक्यं मानमनुभूतिर्विद्वदनुभवो व्युत्पत्तिर्वाक्यधीयं ज्ञानमनुभवो न वेद्मीति धीरिति विवेकः ।।१३०३।।

ब्रह्मद्वारा त्वविद्येयं नेति संबन्धे ब्रह्मण्यज्ञानायोगोक्तेस्तद्विरुद्धं तत्राज्ञानं कथमिहेष्यते तत्राऽऽह—व्युत्पत्तीति । ज्ञानफलमज्ञानध्वंसोपलक्षितं स्फुरणमपेक्ष्य तद्रूपे ब्रह्मण्यज्ञानायोगस्तत्रोक्त इह तु ज्ञानात्पूर्वं तस्मिन्नज्ञानं तद्दशायुपेयमित्युच्यते तन्न विरोध इत्यर्थः । ज्ञानात्पूर्वमपि ब्रह्मणो नाज्ञानित्वं तत्साक्षित्वादित्याशङ्क्याऽऽह—व्युत्पत्तेरिति । अयुक्तमपि प्रत्यग्ब्रह्मणोऽज्ञानित्वमनुभवसिद्धमित्यर्थः ।।१३०४।।

स्वतो ब्रह्म कृत्स्नमित्यत्र ब्रह्मविद्यानर्थक्यदोषो निरस्तः । यच्च शास्त्राद्यारम्भानर्थक्यदोषश्चेति तत्राऽऽह—स्वसत्तयेति । शास्त्रोत्थज्ञानादज्ञानध्वस्तेः शास्त्रारम्भोऽर्थवानिति समन्वयाधिकरणे स्थितमित्यर्थः ।।१३०५।।

अनादिनोऽज्ञानस्याऽऽत्मवदनिवृत्तिं शङ्कते—अनादेरिति । अतिप्रसङ्गेन प्रत्याह—प्रमाणानामिति । लौकिकवैदिकसर्वप्रमाणानां स्वविषयाऽज्ञाननिवर्तकत्वेनैव प्रामाण्यसिद्धिसंभवादित्यर्थः ।।१३०६।।

**अनुभूतेस्तदज्ञातं सिद्धं ब्रह्म पुरा मितेः । अपास्ताज्ञानतत्कार्यं तत्तु मानात्प्रसिध्यति ॥ ७ ॥**

किं चापि तदवेदन्यदित्यादेः परिहारः

**पूर्वोक्त्यैवोत्तरेषां च दोषाणां परिहारतः । परिहारान्तरं तस्मान्न वाच्यं तत्प्रसिद्धितः ॥ ८ ॥**

**प्रतीचोऽर्थस्य ज्ञेयत्वादनवस्था च नेष्यते । अकारकस्य कौटस्थ्याद्विरोधो नाऽऽत्मदर्शने ॥ ९ ॥**

**घटादिमेयसाधर्म्ये निषेधोऽपि श्रुतीरितः । यथोक्तावगमत्वं तु न कथंचिन्निवार्यते ॥१०॥**

**तस्मान्न कश्चिदप्यत्र कात्स्न्यत्मावगमे भवेत् । दोषोऽतः सांप्रतं भाष्यग्रन्थं व्याचक्ष्महे स्फुटम् ॥११॥**

यत्प्रविष्टं स्रष्टृ ब्रह्म इतिभाष्यविवरणं

**यत्स्रष्टृ ब्रह्म पूर्वोक्तं स्वात्ममोहैकवर्त्मना । कार्यं चैतन्यबिम्बेन प्रविष्टं जलचन्द्रवत् ॥१२॥**
**ब्रह्मेतिब्रह्मशब्देन न तदेवात्राभिधीयते ।**
**तस्य योऽतिशयः प्रोक्तो व्याकृताव्याकृतात्मकः । इदमित्युच्यते ब्रह्म तदुपाधिस्वभावकम् ॥१३॥**

**यत्तु** स्वानुभूतिविरोधोऽपीति तत्राऽऽह—अनुभूतेरिति । वाक्योत्थज्ञानात्पूर्वं यदज्ञातं ब्रह्म तत्कर्तृत्वादिरूपेणानुभूतेः सिद्धं तदेव यदा वाक्यीयज्ञानात्सिध्यति तदा ध्वस्ताज्ञानतज्जमकर्तृत्वाद्यात्मनाऽनुभूतमिति नानुभवविरोध इत्यर्थः ॥१३०७॥

**किमु** तद्ब्रह्म यद्वेद्यमित्येतत्परिहृत्य किंचापि तदवेदित्येतदपि पूर्वचोद्यनिरासेनैव निरस्तमित्याह—पूर्वेति । **पूर्व**चोद्यपरिहारोक्त्यैवोत्तरचोद्यस्यानवस्थादिदोषाणां परिहारात्परिहारान्तरमत्र न वाच्यं तदतिरेकेणेह परिहारसिद्धेरिति योजना ॥१३०८॥

**कथं** पूर्वेणोत्तरस्य परिहृतत्वं तत्राऽऽह—प्रतीच इति । आत्मनोऽद्वयत्वात्तस्यैव वेद्यत्वान्नानवस्था न च निर्निमित्तं तस्य ब्रह्मत्वं स्वाभाविकत्वेऽपि विना ज्ञानमव्यक्तेरतो निर्निमित्तस्येत्याद्ययुक्तमित्यर्थः । यत्तु क्रियाविरोध इत्यादि तत्राऽऽह—अकारकस्येति । क्रियाकारकादिभेदशून्यस्याऽऽत्मनः स्वदृष्टौ कर्तृत्वाद्यभावाद्वस्तुतो न क्रियाविरोधो न च ब्रह्मणो ज्ञानसाध्यत्वं कौटस्थ्यादित्यर्थः ॥१३०९॥

**यत्तु** श्रुत्यन्तरविरोधश्चेत्यादि तत्राऽऽह—घटादीति । योऽर्थः "सत्यं ज्ञानं" "विज्ञातारमरे केने"त्यादिश्रुत्युक्तः सोऽपि घटादेरिव ब्रह्मणः स्फूर्तिव्याप्यत्वनिषेधो न वृत्तिव्याप्यत्वनिषेधः, अन्यथौपनिषदत्वव्याकोपात् । अतो ब्रह्मविषयवृत्त्युपगमे न श्रुतिविरोध इत्यर्थः तर्हि वृत्तिव्याप्यत्वाद्घटवद्ब्रह्मणः स्फूर्तिव्यापिताऽपि स्यादित्याशङ्क्य कूटस्थस्फूर्तित्वं शास्त्रानुभवसिद्धं दुर्वारमिति नास्य तद्व्याप्यतेत्याह—यथोक्तेति ॥१३१०॥

**यत्पुन**रित्यादिबहुदोषत्वादित्यादि तत्राऽऽह—तस्मादिति । अज्ञाते ब्रह्मणि प्रेप्साप्रमाणप्रवृत्त्योः संभवादज्ञानध्वस्तेश्च मानफलत्वात्पूर्णसदेकरसस्वप्रकाशब्रह्मणो वेदान्तावगमे न कश्चिद्दोषोऽस्तीत्यर्थः । उपोद्घातोक्तदोषान्परिहृत्य तस्माद्यत्प्रविष्टमित्यादिभाष्यमवतारयति—अत इति । परिशङ्कितदोषाभावादिति यावत् । परकीयचोद्यनिरासानन्तरं भाष्यव्याख्यावसरं दर्शयति—सांप्रतमिति ॥१३११॥

**तदक्षराणि** योजयति—यदित्यादिना । पूर्वोक्तमव्याकृतप्रक्रियायामिति शेषः । स्वात्ममोहैकवर्त्मना स्रष्ट्रिति संबन्धः । प्रवेशवाक्योक्तं स्मारयति—कार्यमिति ॥१३१२॥

**यत्पदापेक्षितं** पूरयति—ब्रह्मेतीति । वाक्यं समन्वयार्थः इदं शरीरस्थमित्यादेस्तात्पर्यमाह—तस्येति । कूटस्थस्य ब्रह्मणो यः कार्यकारणाख्योऽतिशयोऽव्याकृतप्रक्रियायामुक्तस्तत्र देहद्वयात्मकोपाधावविद्ये स्थितं ब्रह्मेदंशब्दितमित्यर्थः ॥१३१३॥

---

१. कथं सिद्ध इत्याह—**प्रतीच इति** । अन्यवेद्यत्वाभावान्नानवस्था, स्वप्रकाशत्वान्नात्मनि क्रियाविरोध इत्यर्थः ( न्या० ) ।

२. किञ्चापि तदवेत् ( बृ० वा० अ० १, ब्रा० ४ १०८९ ) इत्यस्यापि परिहारोऽत्र सिद्धः ।

वैशब्दोऽवधृतौ ज्ञेयो ब्रह्मैव न तदन्यथा । अनिर्ज्ञातात्मतत्त्वं सदब्रह्मैवावभाति तत् ॥१४॥
यदिदंशब्दधीगम्यं सम्यग्ज्ञानोदयात्पुरा । अपि ब्रह्मैव तत्कृत्स्नं तन्मोहादतथेक्ष्यते ॥१५॥
रज्जुवत्तदविज्ञानात्सर्पदण्डादिनेक्ष्यते । ब्रह्मेदंमात्रश्रवणात्कुतोऽग्र इति भण्यते ॥१६॥
सूत्रान्तजगतो व्यक्तेः प्राक्तनः काल उच्यते । यद्वै तदिति तच्चापि स्पष्टमूर्ध्वं प्रवक्ष्यते ॥१७॥
नाविद्यासंगतिस्तत्र तदकार्यत्वहेतुतः । तमोजस्यापि कार्यस्य न प्रतीच्यस्त्यकारणात् ॥१८॥
[1]प्रत्यक्तयाऽऽत्मसंबन्धान्मोहादेश्चिन्निभात्मता । आचिच्छेषादतो नासौ मृषा स्याद्धर्मकार्यवत् ॥१९॥

जगतोऽध्यस्तत्वे तन्निवृत्तिः ज्ञानादेव

प्रत्यग्याथात्म्यसंबोधान्नान्यो हेतुः समीक्ष्यते । निरन्वयविनाशाय योऽलं संसाररूपिणः ॥२०॥
कौटस्थ्यासंगतो नास्य मोहतत्कार्यसंगतिः । स्वतः सेद्धुमशक्तत्वान्मोहादेरात्मसंगतिः ॥२१॥

प्रकृतस्याऽऽत्मकात्स्न्र्यस्येत्यत्र प्रकृतार्थस्य वैशब्दः स्मृत्यर्थ उक्तोऽधुना भाष्यमनुसृत्यार्थान्तरमाह— वैशब्द इति । अवधृतिमेवाऽऽह—ब्रह्मेति । यदीदं सर्वं जगद्ब्रह्मैव तर्हि कथमन्यत्वधीरित्याशङ्क्याऽऽह—अनिर्ज्ञतेति ॥१३१४॥

इदंशब्दार्थमनूद्याग्रे प्रागित्यादिभाष्यं व्याचष्टे—यदिदमिति ॥१३१५॥

सम्यग्ज्ञानात्प्रागूर्ध्वं चेदं सर्वं जगद्ब्रह्मैव तथाऽपि तदज्ञानादब्रह्मेव भातीत्यत्र दृष्टान्तमाह—रज्जुवदिति । यथा रज्जुः स्वाज्ञानाद्भुजंगाद्यात्मना गृह्यते तथा ब्रह्माज्ञानादब्रह्मेव दृश्यत इत्यर्थः । अग्रशब्दमाक्षिपति—ब्रह्मेति । ब्रह्म वेदं वाऽन्यद्वाऽत्र प्रतियोगि ? आद्ये तस्मादग्रे तदेवाऽऽसीदिति व्याघातो द्वितीये चा[2]नुवाद्याभावाद्द्विध्ययोगो न तृतीयोऽस्मिन्वाक्ये तदश्रुतेरतः प्रतियोग्यभावादग्र इत्ययुक्तमित्यर्थः । उत्तरमाह—भण्यत इति ॥१३१६॥

कल्पितस्य जगतोऽकल्पितात्मत्वात्तद्व्यक्तिरात्मैक्यधीस्तदुदयात्पूर्वकालोऽग्रशब्दार्थ इत्याह—सूत्रेति । सूत्रं तत्कारणमव्याकृतं तदन्ते यस्येति तद्गुणसंविज्ञानेन सर्वं जगदुक्तं तस्येति यावत् । किं चोक्ते काले सर्वस्य यद्ब्रह्ममात्रत्वं तदुत्तरत्रापि स्वापाधिकारे यद्वै[3] तन्नेत्यत्र वक्ष्यत इति वाक्यशेषं संवादयति—यदिति ॥१३१७॥

अत्रोक्तस्योत्तरत्रोक्तेरेव स्पष्टमिदमर्थस्याव्याकृतादेर्ब्रह्मत्वे ब्रह्मणोऽप्यव्याकृतादित्वं स्यादित्याशङ्क्याव्याकृताख्याविद्यातादात्म्ययोगो न ब्रह्मण्यस्ति तस्याविद्याकार्यत्वाभावात्स्वकार्येणैव तस्यास्तादात्म्यादित्याह—नेत्यादिना । व्याकृताख्यतत्कार्यस्यापि ब्रह्ममात्रत्वाङ्गीकारात्कुतो ब्रह्मणस्तत्कार्यत्वाभावस्तत्राऽऽह—तमोजस्येति । अज्ञानजस्यापि न ब्रह्मण्यभेदेन संगतिस्तस्य स्वकारणेनाभेदाद्ब्रह्मणश्चाकारणत्वात्का[4]र्यकारणान्यत्वश्रुतेरविद्यया च तत्कारणतेति स्थितेरित्यर्थः ॥१३१८॥

तर्हि कथमिदमो मोहादेर्ब्रह्ममात्रत्वं तत्राऽऽह—प्रत्यक्तयेति । कल्पितमोहादिरूपत्वेनाधिष्ठानस्याऽऽत्मनस्तेन संबन्धात्तस्य सदा चिदाभासग्रस्ततेत्यर्थः । किंच मोहादेर्ब्रह्मणश्चाभेदेऽपि ब्रह्मैव शिष्यते नान्यदित्याह—आचिच्छेषादिति । मोहादेः सर्वस्याऽऽभिमुख्येन चिन्मात्रत्वेन शेषान्नाभेदेऽपि ब्रह्मणस्तद्रूपतेत्यर्थः । मोहादेर्ब्रह्मत्वं न तस्य मोहादित्वमिति स्थिते फलितमाह—अत इति । चितोऽपि कल्पितत्वेऽधिष्ठानाभावान्निरधिष्ठानकल्पनायोगोऽतःशब्दार्थः । असाविति चिदुक्तिः । धर्मादिकार्यं द्वैतं वैधर्म्यदृष्टान्तः ॥१३१९॥

कार्यकारणात्मकं जगदध्यस्तं चेत्कुतोऽस्य निवृत्तिरित्याशङ्क्याऽऽह—प्रत्यगिति । आत्मनि सम्यग्ज्ञानादेवानर्थस्याऽऽत्यन्तिको ध्वंसो हेत्वन्तरस्याप्रामाणिकत्वादित्यर्थः ॥१३२०॥

प्रत्यक्तत्त्वविद्यया द्वैतस्य ध्वस्तियोग्यत्वं साधयति—कौटस्थ्येति । प्रतीचोऽस्य कौटस्थ्यादसङ्गत्वाच्च न

१. कार्यकारणप्रपञ्चस्य जडस्य ब्रह्मसम्बन्धाभावे कथं सिद्धिस्तत्राह—प्रत्यक्तयेति । ( न्या० )
२. अनुवाद्याभावात् इदं अग्रे इत्युक्ते कस्याग्रे इत्यनुक्तेः ।
३. यद्वैतन्न पश्यति पश्यन्वै तन्न पश्यति इति स्वापाधिकारे श्रुतिः बृहदारण्यकषष्ठे ।
४. कार्यकारणान्यत्वश्रुतिः "तदेतद्ब्रह्मापूर्वमनपरमि" त्यादिः ।

काष्र्ण्येनेव वियद्योगः खवृत्तापेक्षया त्वसन् । आत्मनैवं तमोयोगो नाऽऽत्मवृत्तानुरोधतः ॥२२॥
अन्यतः संगतिः सेयमविचारितसिद्धिका । अविज्ञातचिदुत्सङ्गसंस्थैवेयं न वस्तुनि ॥२३॥
अविद्याद्वारिकाऽप्यस्य[1] संगतिर्नाञ्जसेष्यते । निरात्मकपरार्थत्वहेतुभ्यां शुक्तिरूप्यवत् ॥२४॥
प्रत्यग्रूपातिरेकेण नान्यद्रूपमनात्मनः । वादिभिर्युक्तिभिः शक्यं क्वचित्साधयितुं सदा ॥२५॥
कूटस्थादितमोन्तेन नित्यमव्यतिरेकतः । बुद्ध्यादेर्विषयान्तस्य नित्यमेतदतो जगत् ॥२६॥

जगतो जन्मादि केवलं भ्रममात्रम्

अतोऽविद्यामहानिद्रासंवीतमनसामसौ । जन्मादिविक्रियाषट्कं स्वप्नदर्शनविभ्रमः ॥२७॥
यथा व्याख्यातबाह्यार्थप्रधानोऽसंहतोऽप्रमः । सर्वप्रमाणभाक्तद्वत्प्रमाणाभासभागपि ॥२८॥

मोहादिना वस्तुतो योगो, न च स्वातन्त्र्येण तत्सिद्धिर्जडस्य तदनुपपत्तेरतस्तस्याऽऽत्मनि काल्पनिकी युक्तिरित्यात्मविद्ययाऽऽत्यन्तिकी तद्ध्वस्तिरित्यर्थः ॥१३२१॥

आत्मनि कल्पिता मोहादियुक्तिरित्येतद्दृष्टान्तेनाऽऽह—काष्र्ण्येनेति । तमःशब्देन तत्कार्यमपि लक्षितम् ॥१३२२॥

आत्मानात्मयोगस्य कल्पितत्वमुपसंहरति—अन्यत इति । अन्येनानात्मनाऽऽत्मनः संगतिश्चेत्कथमात्मवृत्तापेक्षया सा नास्तीत्याशङ्क्याज्ञातात्मस्थैवान्ययुक्तिर्न शुद्धात्मस्थेत्याह—अविज्ञातेति । उत्सङ्गपदमूरुदेशार्थम् ॥१३२३॥

अज्ञातात्मस्था चेदज्ञानादियुक्तिरंशतश्चा[2]श्रयविषयत्वयोरापत्तिरित्याशङ्क्याऽऽह—अविद्येति । यथा वस्तुवृत्तमपेक्ष्य नाऽऽत्मन्यज्ञानादिसंगतिरेवमविद्यावृत्तापेक्षयाऽपि नासाविष्यते निरात्मकत्वात्परार्थत्वादज्ञानतत्कार्ययोस्तदीयसंगतेः स्वतोऽसिद्धेरतोऽविचारसुन्दरैषा शुक्तिरूप्यसंगतिवदतः श्रोत्ररूपयोः संबन्धवदनुपपत्तिरेवेत्यर्थः ॥१३२४॥

अनात्मनो न निरात्मकत्वमात्मातिरेकेण वादिभिस्तस्य वस्तुत्वाङ्गीकारादित्याशङ्क्याऽऽह—प्रत्यगिति । विमतं न स्वातन्त्र्येण सदनात्मत्वाद्रूप्यवदित्यर्थः । प्रातीतिकं रूपान्तरं स्वीकर्तुं युक्तिभिरित्युक्तम् । क्वचिल्लोके शास्त्रे चेत्यर्थः । सदेति कालत्रयं निर्दिश्यते । विमतं स्वातन्त्र्येणासद्व्यभिचारित्वात्संमतवदित्यर्थः ॥१३२५॥

विमतं ब्रह्मणोऽन्यदनिर्वाच्यत्वात्तद्वदिति व्य[3]तिरेकिणा जगतोऽर्थान्तरत्वमाशङ्क्य हेतुप्रतिज्ञयोर्मिथो व्याहतिमभिप्रेत्याऽऽह—कूटस्थादीति । कूटस्थश्च सर्वस्य मूलत्वेनाऽऽदिश्चाज्ञानाविष्टतया तमोन्तश्च तेनाऽऽत्मना सदा सर्वस्याव्यतिरेकादसत्त्वनिरासान्नित्यं जगत्सदेव सोम्येत्यादिश्रुतेरतो बहिरवगतस्य जगतोऽनिर्वाच्यतया ब्रह्मणोऽन्यत्वव्याघातादागमविरोधाच्च नोक्तानुमेत्यर्थः ॥१३२६॥

जगतो जन्मादिदृष्टेर्ब्रह्मणोऽर्थान्तरत्वसिद्धिरित्याशङ्क्य तस्य ब्रह्माव्यतिरेकित्वेन सत्त्वस्य श्रौतत्वाज्जन्मादिधीः स्वप्नधीवद्भ्रान्तिरित्याह—अत इति । जन्मादिरूपविक्रियाषट्कमधिकृत्य स्वप्नदर्शनवद्विभ्रमो जगत्यविवेकिनामिति योजना ॥१३२७॥

सर्वस्य द्वैतस्य मायामात्रत्वे मानतदाभासानामाश्रयो विषयश्च कः स्यादित्याशङ्क्याऽऽह—यथेति । वस्तुतोऽसंहतस्यासङ्गचिदेकतानस्य प्रमाऽविषयस्य प्रतीचो व्याकृताव्याकृतजगदुपहितस्य प्रमाणतदाभासविषयत्वोपपत्तिरित्यर्थः ॥१३२८॥

---

१. आत्मवृत्तापेक्षया अनात्मसंगत्याभावेऽपि अविद्यावृत्तापेक्षया आत्मसंगतिः पारमार्थिकी स्यात् आत्मतन्त्रत्वादविद्याया इत्यत आह—**अविद्येति** ।

२. अज्ञानविशिष्टे आज्ञानाश्रयत्वे अज्ञाने अज्ञानाश्रयत्वं प्राप्तं अत आत्माश्रयः ।

३. व्यतिरेकिणा व्यतिरेकव्याप्तिमता अन्यत्वव्याघातात् भिन्नत्वे तदसत्त्वादिना निर्वक्तुमशक्यत्वात् न भिन्नता श्रुतिश्च "सर्वं ब्रह्मे"तिश्रुतिः ।

अविचारितसंसिद्धि तमोवत्स्यात्तदुद्भवम् । कृत्स्नं जगदतो मोहध्वस्तौ ध्वस्तं भवेच्चितिः ।।२९।।
भिन्नमातृप्रमाणादौ कार्यकारणवस्तुनि । अभिन्नमातृमानादिरात्मैवैकोऽद्वयः स्वतः ।।३०।।
न देशकालावस्थादावपेक्षाऽस्त्यात्मनः स्वतः । अनन्यापेक्षसंसिद्धेर्देशादेस्तदपेक्षतः ।।३१।।
देशकालनिमित्तादिव्यपेक्षं वस्तु यद्भवेत् । तदेव तदपेक्षं स्यान्न तु देशादिसिद्धिदम् ।।३२।।
प्रमात्राद्युत्थितेरग्रे ब्रह्मैवाऽऽसीद्यथोदितम् । यतस्ततो न साध्यं तज्ज्ञानकर्मादिसाधनैः ।।३३।।
ब्रह्मापि तत्स्वतः साक्षात्तदबोधैकहेतुतः । इदंरूपं समापेदे रशनेवाहिरूपताम् ।।३४।।
अविद्याफलकारूढं तदेवंरूपकं परम् । ब्रह्मविद्याधिकारित्वं द्वैविध्यात्प्रतिपद्यते ।।३५।।
स्वतो मुक्तं यतस्तस्माद्ब्रह्म विद्यां तदर्हति । संसारित्वमविद्यातो मुमुक्षुत्वं ततो भवेत् ।।३६।।

असंहतस्य द्वैतोपाधित्वं व्याहतमित्याशङ्क्योपाधेरवस्तुत्वान्मैवमित्याह—अविचारितेति । अज्ञानवत्तज्जन्यद्वैतस्य मिथ्यात्वे फलितमाह—अत इति । ज्ञानादज्ञानध्वस्तौ तज्जत्वाद्ध्वस्तं जगच्चितिरेव स्यादित्यर्थः ।।१३२९।।

प्रतीचोऽसंहतस्य संहतत्वमापाद्य मानतदाभासविषयत्वे मेयत्वापत्तिरित्याशङ्क्याप्रमेयत्वं प्रतिपादयन्नाह—भिन्नेति । प्रपञ्चे प्रमात्रादिभेदभाजि प्रमेये सत्यात्मैव तद्भेदरहितः सन्नद्वयत्वादनपेक्षः स्वतः स्फुरत्यतो नास्य प्रमेयतेत्यर्थः ।।१३३०।।

आत्मा[1] नाद्वयो देशाद्यपेक्षत्वाद्घटवदित्याशङ्क्याऽऽह—नेति । आदिपदेनोत्पादकज्ञापकग्रहः । आत्मनो नैरपेक्ष्ये हेतुमाह—अनन्येति । निरुपाध्यात्मनः स्वारस्येन स्वतःसत्त्वस्फूर्त्योः सत्त्वादित्यर्थः । तत्रैव हेत्वन्तरमाह—देशादेरिति । न हि जडस्याजडापेक्षां विना सिद्धिर्न च वैपरीत्यमजाड्यव्याघातादिति भावः ।।१३३१।।

देशाद्यपेक्षत्वहेतोरसिद्धिमुक्त्वा कार्यत्वोपाधिमाह—देशेति । देशकालौ निमित्ते आदिपदेन कारणान्तरोक्तिस्तदपेक्षं यद्घटादि जायते तदेव देशाद्यपेक्षं सद्वयं स्यादिति योजना । साधनव्याप्तिं शङ्कित्वाऽऽह—न त्विति । न हि देशादिसाधकस्याऽऽत्मनस्तदपेक्षया कार्यत्वं प्रागेव ततः सिद्धत्वाद्विभक्तं कार्यमित्यन्वये घटाद्युदाहरणम् । अकार्यमविभक्तमिति[2] व्यतिरेके च प्रतिपाद्यात्मा । तथा च न तस्यापि विभक्तत्वं घटवदनात्मत्वादिप्रसङ्गादिति भावः ।।१३३२।।

इदं ब्रह्मेतिसामानाधिकरण्यलब्धमर्थमुपपाद्य वाक्यार्थमुपसंहरति—प्रमात्रादीति । उत्थितिस्तत्त्वव्यक्तिः । सप्रपञ्चचैतन्यस्य सदैवाप्रपञ्चब्रह्मत्वं परामृशति—यत इति । ततो हेतोस्तद्ब्रह्मत्वं न साधनायत्तमिति परमतनिरासं निगमयति—तत इति । आदिशब्दो भावनार्थः ।।१३३३।।

जगतो ब्रह्मत्वे कथं तद्विपरीतपरिच्छिन्नरूपतेत्याशङ्क्य मायावशादित्यसकृदुक्तमित्याह—ब्रह्मापीति । तदिति जगदुक्तिः । साक्षादिति ब्रह्मणः शुद्धतोच्यते । स्वतो मायां विनेत्येतद्वास्तवं वृत्तमनूद्याऽऽविद्यकं कथयति—तदबोधेति । कथमबोधादपि विरुद्धाकारता तत्राऽऽह—रशनेति ।।१३३४।।

जगतो ब्रह्ममात्रत्वेऽपि चेतनोऽन्योऽन्यथा तज्ज्ञानाधिकार्यभावात् तदसिद्धेरित्याशङ्क्याऽऽह—अविद्येति । एवंरूपकमन्तःकरणाद्युपाधिकमित्यर्थः । परं हि ब्रह्मानाद्यविद्याख्यं फलकमधिरोहति तदेव पुनरन्तःकरणादिभिरुपधीयते तच्च द्वैविध्यादधिकारित्वं गच्छतीत्यर्थः ।।१३३५।।

द्वैविध्यमेवाऽऽह—स्वत इति । एकमेव ब्रह्म स्वतो मुक्तत्वाद्विद्यालम्बनमविद्यया बद्धत्वाच्च तद्ध्वस्तिहेत्वधिकारीत्यर्थः । एतेनानेकजीववादिनामश्रुतशास्त्रत्वमादर्शितम् ।।१३३६।।

---

१. आत्मा नाद्वयः देशाद्यपेक्षत्वात् इत्यनुमाने कार्यत्वमुपाधिः तस्य घटादौ साध्यव्यापकत्वात् देशाद्यपेक्षत्वं कार्यत्वप्रयुक्तं तदभावान्नात्मनि देशाद्यपेक्षत्वमित्यर्थः ।

२. यद्विभक्तं तत् कार्यं यथा घटः इत्यन्वयः यत् न कार्यं तन्न विभक्तं यथा आत्मा इति व्यतिरेकः । तेनात्मा अविभक्त इत्यर्थः ।

### तदात्मानमेवावेदित्यस्य विवरणम्

अध्यात्ममधिभूतं च तथा चैवाधिदैवतम् । परं तदभिमानेद्धं तच्छब्देनाभिधीयते ॥३७॥
हिरण्यगर्भतां नीत्वा कृत्स्नमध्यात्मरूपकम् । तस्मै हिरण्यगर्भाय ब्रूयाद्विद्यां तमस्विने ॥३८॥
एवं निःशेषसंसारप्रत्याख्यानेन निर्वृतिम् । सर्वाविद्यापनिह्नुत्या विद्यया प्रतिपद्यते ॥३९॥
आत्मानात्मात्मकं विश्वं प्रत्यक्षादिप्रमाणकम् । आत्मानमेव तदवेन्निष्ठां कार्त्स्न्यात्मनः पराम् ॥४०॥
अविचारितसंसिद्धि सर्वानर्थैककारणम् । प्रत्यङ्मात्रैकसाक्षित्वात्तमस्तत्प्रत्यगात्मनि ॥४१॥
प्रतीच्येव यतोऽज्ञानमतस्तत्तत्त्वविद्यया । सकार्ये तमसि ध्वस्त आत्मैवैकोऽवशिष्यते ॥४२॥

### ब्रह्मविद्याधिकारिनिर्णयः

विरक्तः सर्वसंसारान्निविवृत्सुः स्वतस्ततः । संसारानलसंतप्तस्तद्विरुद्धं परीप्सति ॥४३॥
तस्याकृत्स्नापवादेन कृत्स्नैकात्म्यावबुद्धये ॥४४॥
अन्वयव्यतिरेकाख्यो व्यापारो विहितः पुरा । आत्मेत्येवेति विधिना पराक्प्रत्यग्विवेककृत् ॥४५॥

ब्रह्मेत्यादिवाक्यं व्याख्यायोत्तरवाक्यस्थतच्छब्दार्थमाह—अध्यात्ममिति । तत्परं स्रष्टृ ब्रह्माध्यात्मादौ सृष्टे प्रविष्टं तत्र तत्राहंममाभिमानेनाऽऽविद्येन ग्रस्तं तदात्मानमित्यत्र तच्छब्दितत्वंपदवाच्यमित्यर्थः ॥१३३७॥

किमर्था त्वमर्थोक्तिरित्याशङ्क्य वाक्यार्थज्ञानार्थेत्याह—हिरण्यगर्भतामिति । कृत्स्नं ब्रह्माध्यात्माद्य- भिमानेद्धं प्राप्तपरिच्छेदं त्वंपदवाच्यमपरिच्छिन्नतया परिशोध्य तस्मै विविदिषवे दयालुराचार्यो विद्यामुपदिशेत्स च पदार्थज्ञस्तदुपदेशाद्वाक्यार्थं जानातीत्यर्थः ॥१३३८॥

किमर्थं वाक्यार्थज्ञानमित्याशङ्क्य तत्फलं वक्ष्यमाणं संक्षिप्याऽऽह—एवमिति । सर्वानर्थमूलाविद्याया निह्नुतिर्यया विद्यया पूर्वोक्तरीत्या निर्वृत्तयाऽशेषबन्धध्वंसेन मुक्तिमाप्नोति विद्वानित्यर्थः ॥१३३९॥

तदवेदितिपदद्वयस्यार्थमुक्त्वा तदनुवादेनाऽऽत्मशब्दार्थं वदन्वाक्यं योजयति—आत्मेति । चेतनाचेतनं विभक्तमध्यक्षादिसिद्धं जगदन्वयव्यतिरेकाभावपरिहारेण[1] पूर्णवस्तुनः "सा काष्ठा सा परा गति" रिति प्रकृष्टप्रतिष्ठारूपात्ममात्रत्वेन तद्ब्रह्म विदितवदित्यर्थः ॥१३४०॥

ब्रह्मणः स्वात्मनि स्वरूपज्ञानस्य सदा भावात्किमौपदेशिकज्ञानेनेत्याशङ्क्य तदर्थवस्त्वार्थमात्मन्यज्ञानं साधयति—अविचारितेति । तत्तमोऽनिर्वाच्यं प्रत्यगात्मनीति संबन्धः । तदनिर्वाच्यत्वसिद्ध्यर्थमाद्यं विशेषणम् । प्रतीचि तमःसत्त्वे कार्यलिङ्गकमनुमानमाह—सर्वेति । तत्रैव हेत्वन्तरमाह—प्रत्यङ्मात्रेति । तस्यैकस्याविद्यातज्ज- साक्षित्वात्तस्य चाज्ञानसंबन्धं विना सिद्धिरित्यर्थः ॥१३४१॥

आत्मन्येवाज्ञानमित्युक्तिफलमाह—प्रतीचीति । अज्ञाने प्रतीचि सिद्धे तन्निवर्तकत्वेन तत्रोपदेशजनितं ज्ञानमर्थवदिति भावः ॥१३४२॥

ब्रह्मलोकादिपुमर्थं त्यक्त्वा मोक्षार्थित्वायोगादधिकार्यभावात्तत्त्वविद्यानुपपत्तेः सकार्याज्ञानध्वस्त्या कथमात्ममात्रावशेषसिद्धिरत आह—विरक्त इति । संसारेत्यादिना विशेषणेन नित्यानित्यवस्तुविवेकोक्तिः । ततः संसारादिति यावत् । स्वतः संसारस्वरूपवशादित्यर्थः । यद्वा स्वतः प्रकृतवैराग्यस्वभावात्प्राप्तशमादिरित्यर्थः । साधनचतुष्टयवान्बन्धविरुद्धं मुक्तिहेतुज्ञानमाप्तुमिच्छन्नधिकारीत्याह—तद्विरुद्धमिति ॥१३४३॥

तस्य किं ज्ञानसाधनमित्यपेक्षायां पूर्वोक्तं स्मारयति—तस्येति । अधिकारिणो हि प्रकृतस्य परिच्छिन्नार्थ- दर्शननिरासेनापरिच्छिन्नार्थदर्शनार्थमन्वयादिव्यापारो विद्यासूत्रेण प्रागुक्त इत्यर्थः । अन्वयादिव्यापारस्य फलमाह— परागिति ॥१३४४-१३४५॥

१. अन्वयव्यतिरेकाभावपरिहारेण अन्वयव्यतिरेकसत्वेनेत्यर्थः ।

ऐकात्म्यं वीक्ष्यते तेन त्यक्त्वा सर्वाननात्मनः । कृत्स्नमेव यतो वस्तु तदन्यत्तदबोधजम् ।।४६।।

आत्मेत्येवोपासीतेत्यस्य विधित्वनिरासः

कृत्स्नं पश्येदिति ततो वाक्यं वस्तुनि वर्तते ।।
प्रविष्टोऽकृत्स्नरूपत्वात्संसारानर्थचोदितः । आत्मेत्यनेन कृत्स्नात्मदर्शनाय नियुज्यते ।।४७।।
कृत्स्न आत्मेत्यतो वाक्यात्तथारूपं दिदृक्षति । अन्योन्यार्थसमाप्तित्वान्न भेदोऽत्र पदार्थयोः ।।४८।।
अकृत्स्नानात्मनः सर्वान्[1]कृत्स्नांश्चा[2]नात्मनस्तथा । अन्वयव्यतिरेकाभ्यां तथा कृत्स्नाननात्मनः ।।४९।।
निर्माल्यवत्परित्यज्य चैतन्याभासवर्त्मना । अनुनीयाऽऽत्मनाऽऽत्मानं कृत्स्नात्मानं प्रपश्यति ।।५०।।
उक्तदोषापनुत्त्यर्थं प्रत्युक्तिर्गौरवी त्वियम् । ब्रह्म वा इदमित्यादिर्नातो दोषोऽत्र कश्चन ।।५१।।

तदात्मानमेवावेदित्यस्यार्थप्रपञ्चनम्

प्रमेयं यत्पुरा पृष्टं तद्ब्रह्म किमवेदिति । सर्वं चाप्यभवद्यस्माज्ज्ञानं ज्ञेयं च भण्यते ।।५२।।
तद्ब्रह्माऽऽत्मानमेवावेन्मेयं मानं च भण्यते । आत्मा मेयस्तथा मानमात्मप्रत्यय एव तु ।।५३।।

विवेकफलमाह—ऐकात्म्यमिति । देहादीनव्याकृतान्तानात्मत्वेन प्राप्तान्परित्यज्य किमित्यप्रसिद्धमैकात्म्यमेव ज्ञेयमिति तत्राऽऽह—कृत्स्नमिति । अतः कृत्स्नमेव वस्तु ज्ञेयमिति शेषः ।।१३४६।।

आत्मेत्येवेति विधिना विहितोऽन्वयादिव्यापार इति ब्रुवता वाक्यस्य विधिनिष्ठत्वमिष्टमित्याशङ्क्याऽऽह—कृत्स्नमिति । विहितान्वयादिव्यापारस्यैक्यज्ञानावसानत्वाद्वाक्यं साधनविधिद्वारा वस्तुनिष्ठमित्यर्थः । वाक्यस्याद्वयवस्तुपरत्वे तज्ज्ञाने कोऽधिक्रियते न तावत्तदेवाद्वयं घटादिज्ञानेष्वधिकारिणो विषयादन्यत्वान्नापि वस्त्वन्तरं तदभावान्न च निरधिकारं ज्ञानं युक्तमत आह—प्रविष्ट इति । परात्मा स्वाविद्यया बुद्ध्यादि सृष्ट्वा तत्प्रविष्टः परिच्छेदाभिमानित्वात्संसरन्कदाचिद्विवेकादियुक्तस्तत्त्वज्ञानेऽधिकारीति विधिनाऽधिगतमित्यर्थः ।।१३४७।।

तस्य तर्हि पूर्वोक्तान्वयादेरेवाहं ब्रह्मेति धीसिद्धेर्वाक्यवैयर्थ्यमित्याशङ्क्याऽऽह—कृत्स्न इति । परिच्छिन्नस्य घटवदनात्मत्वादपरिच्छिन्नस्तावदात्मा तं पूर्णमात्मानं वाक्यादेवाधिकारी जिज्ञासापूर्वकमनुभवत्यन्वयादेरमानत्वादित्यर्थः । अहं ब्रह्मेति नाभेदधीर्ब्रह्माहमर्थयोर्भेदप्रसिद्धेरित्याशङ्क्याऽऽह—अन्योन्येति । अत्र प्रतीचि वाक्ये वेत्यर्थः । अहमर्थस्य ब्रह्मार्थे ब्रह्मार्थस्य चाहमर्थे पर्यवसानादन्यथाऽनात्मत्वाब्रह्मत्वप्रसङ्गादिति भावार्थः ।।१३४८।।

अस्तु तर्हि वाक्यादेवाहं ब्रह्मेतिधीः कृतमन्वयादिनेत्याशङ्क्याऽऽह—अकृत्स्नानिति । अन्तःकरणविभक्तचैतन्याभासान्व्यष्टिरूपानकृत्स्नानात्मनोऽव्याकृतादिसमष्ट्युपाधीन्कृत्स्नांश्चानात्मनस्तद्व्यष्टिप्राकृतदेहादीनशेषानन्वयादिनोपेक्ष्य चैतन्याभासवर्त्मना समुत्पन्नविवेकज्ञानेन त्वमर्थं निष्कृष्टात्मना दृष्ट्वा कृत्स्नमात्मानमहं ब्रह्मेति वाक्यादनुभवत्यतोऽन्वयादेः शुद्धिहेतुत्वात्तद्वतश्च वाक्यात्तदर्थज्ञानादुभयमर्थवदित्यर्थः ।।१३४९–१३५०।।

तदात्मानमित्यादेरर्थं संक्षिप्य तमेव प्रपञ्चयितुं प्रतिवचनं प्रस्तौति—उक्तेति । उपोद्घातोक्तदोषनिरासार्थं दृढतरन्यायवती ब्रह्मेत्याद्या प्रत्युक्तिरतो ज्ञानान्मुक्तिरित्यत्रादोषतेति योजना ।।१३५१।।

तदात्मानमित्यादेस्तात्पर्यमाह—प्रमेयमिति । उपोद्घाते तद्ब्रह्म किमवेदिति यन्मेयं पृष्टं यस्माद्ब्रह्मज्ञानाद्ब्रह्म सर्वमभवदिति च यन्मानमन्विष्टं तद्द्वयमनन्तरवाक्येनोच्यते । ब्रह्मेत्यत्र तु प्राधान्येनोक्तोऽधिकारीत्यर्थः ।।१३५२।।

कथमत्र मानमेययोरुक्तिरित्याशङ्क्य विभजते—तद्ब्रह्मेति । तत्र तद्ब्रह्मेत्युक्ताधिकारिपरामर्शः । आत्मानमिति मेयोक्तिः । अवेदिति मानवचनमिति भेदः । चकारो मातृसमुच्चयार्थः । एवकारार्थमाह—आत्मेति । एवकारस्याऽऽत्मेत्यत्रापि संबन्धं सूचयितुं तुशब्दः ।।१३५३।।

१. कृत्स्नान् अनातमनः समष्ट्युपाधीन् ।
२. कृत्स्नान् अनात्मनः देहादीनशेषान् ।

नाऽऽत्मज्ञानाद्यतोऽज्ञानं विद्यतेऽनात्मनस्ततः । नाऽऽत्मयाथात्म्यविज्ञानाज्ज्ञानमन्यदनात्मनः ।।५४।।
प्रमात्रादिविभागेन यज्ज्ञानं प्रथते क्वचित् । तज्जन्मनः पुरेवार्थो न[1] तेन ज्ञायतेऽञ्जसा ।।५५।।

अज्ञानस्य विचित्रकार्यजनकता

त[2]मोमात्रावसायित्वान्न यथावस्तु तत्ततः । प्रत्यग्वस्त्वात्मकत्वेऽपि चित्रमज्ञानचेष्टितम् ।।५६।।
यत्प्रसादात्तमः सिद्धिस्तत्स्वसाक्ष्यप्यपह्नुते । तमोऽप्यनुभवादेव प्राक्तद्व्युत्पत्तिजन्मनः ।।५७।।
प्राक्प्रवृत्तेः प्रमाणानामज्ञातं यदिहोदितम् । अक्षादि तत्तमोबाधान्न मानं रज्जुसर्पवत् ।।५८।।
न पश्यन्तीत्यतः प्राह बोद्धृत्वादिसमन्वयम् । न हि मोहैकनिष्ठेन तद्धीनं वस्तु मीयते ।।५९।।
आत्मानं विरहय्यान्यो नालमात्मावबुद्धये । असाधारणतन्मातृमानमेयात्मकत्वतः ।।६०।।
असाधारणमात्रादि प्रत्यग्वस्तु यतस्ततः । नियोगोऽपीह नाऽऽयाति भिन्नकर्त्रादिगो ह्यसौ ।।६१।।

आत्मैव मेयस्तज्ज्ञानमेव मानमिति कुतो नियमोऽनात्मतज्ज्ञानयोरपि तादृशोर्भावादित्याशङ्क्याऽऽह—नाऽऽत्मेति । आत्माज्ञानमेवानात्माज्ञानमात्मज्ञानमेव तज्ज्ञानमतोऽनात्मा नाऽऽत्मातिरेकेणास्तीत्यर्थः ।।१३५४।।

आत्मज्ञानमेवानात्मज्ञानमिति न युक्तमनात्मनो घटाद्यात्मना पृथग्दृष्टेरित्याशङ्क्याऽऽह—प्रमात्रादीति । क्वचिदिति घटादिविषयोक्तिः ।।१३५५।।

प्रागिव घटादिज्ञानोत्पत्तेरुत्पन्नेनापि तेनानात्मा न ज्ञायते याथात्म्येनेत्यत्र हेतुमाह—तमोमात्रेति । वस्तुयाथात्म्याप्रकाशित्वाद्घटादिज्ञानं न मानमतो घटादिरनात्मा नाऽऽत्मातिरेकेणास्तीति फलितमाह—तत इति । ऐकरस्यात्प्रतीचो घटादेरनात्मनोऽपि तद्रूपत्वे वैचित्र्यासिद्धिरित्याशङ्क्याऽऽह—प्रत्यगिति । अथवा सर्वस्य प्रत्यङ्मात्रत्वे कथं द्वैतप्रथेत्याशङ्क्याऽऽह—प्रत्यगिति । सर्वस्य तन्मात्रत्वेऽपि विचित्रमेतदज्ञानचरितं यत्तद्वशादेकमेवानेकधा भातीत्यर्थः ।।१३५६।।

ऐकरस्ये प्रत्यङ्मात्रे जगति कथमज्ञानस्यापि वैचित्र्यहेतुत्वमित्याशङ्क्यासंभावितसाधकं तदिति कैमुतिकन्यायेनाऽऽह—यत्प्रसादादिति । न तमः साक्षिसिद्धं मानसिद्धत्वादित्याशङ्क्य प्रागेव मानाधीनज्ञानोत्पत्तेस्तमोभानादनुभवादेव तद्धीरित्याह—तमोऽपीति । रागादि दृष्टान्तयितुमपिशब्दः ।।१३५७।।

प्रत्यक्षादेर्मानत्वमुपेत्योक्तं तदेवासिद्धमित्याह—प्रागिति । इहेत्यव्याकृतप्रक्रियोक्तिः । तत्तमोऽबाधादज्ञातप्रत्यगज्ञानानिवर्तकत्वादिति यावत् ।।१३५८।।

अव्याकृतवाक्यानुसारेणाक्षादेरमानत्वमुक्त्वा तं न पश्यन्तीति वाक्यादपि तथेत्याह—नेत्यादिना । ये द्रष्टृत्वादिविशिष्टमात्मानमध्यक्षादिभिरीक्षन्ते ते तं न पश्यन्तीत्याह श्रुतिरतस्तेषां वस्तुन्यमानतेत्यर्थः । प्रत्यक्षादिभिर्विशिष्टमात्मानं पश्यन्तो न पश्यन्तीति व्याहतमिति चेन्नेत्याह—न हीति । विशिष्टविषयाध्यक्षादिभिर्निर्विशेषं वस्तु मातुमशक्यमित्यर्थः ।।१३५९।।

किं चाऽऽत्मनोऽध्यक्षादिगम्यत्वे माताऽन्योऽनन्यो वेति विकल्प्याऽऽद्यं दूषयति—आत्मानमिति । न तावदनात्माऽऽत्मानं वेद जडत्वान्न चान्यश्चेतनोऽस्ति "नान्योऽतोऽस्ति द्रष्टे"तिश्रुतेरित्यर्थः । द्वितीयं प्रत्याह—असाधारणेति । प्रतीचोऽनन्योऽसाधारणस्तस्याध्यक्षादेराश्रयो माता तद्वदक्षादिमानं मेयं चेत्यस्य सर्वस्याऽऽत्ममात्रत्वात्तस्मिन्नेकरसे विभागाभावान्नाक्षादिगम्यतेत्यर्थः ।।१३६०।।

तर्हि तदगम्यत्ववदागमागम्यत्वमपि स्यात्तस्य नियोगनिष्ठत्वादित्याशङ्क्याऽऽह—असाधारणेति । यदसाधारणं व्याकृतमात्रादि तस्य सर्पादे रज्जुत्ववत्प्रत्यक्त्वादस्मिन्प्रतीचि तज्जाने वा न नियोगस्तस्य व्यावृत्त-

---

१. न तेन ज्ञायतेऽञ्जसा याथात्म्येनेत्यर्थः यद्यपि प्रमात्रादि विभागेन ज्ञायते तथापि यत् पारमार्थिकमुपादानं तेन रूपेण न ज्ञायत इत्यर्थः ।

२. तमोमात्रावसायित्वात् अज्ञानपर्यवसानात् वस्तुतत्त्वाज्ञानात् ।

सर्वमज्ञातमेव स्याद्यस्मिन्नज्ञात आत्मनि । ज्ञाते ज्ञातं च तत्कात्स्न्र्यात्तावत्त्वात्सर्ववस्तुनः ॥६२॥
युक्त्या निरूप्यमाणस्य ह्यात्मा तत्त्वमनात्मनः । प्रत्याख्यातः स चेत्तेन क्वाऽनात्मा सिध्यतां ततः॥६३॥
अनात्मतत्त्वमन्वेति ह्यात्माऽसङ्गोऽगुणोऽद्वयः । असिध्यन्स्वतःसिद्धौ सिद्धिं क्वान्यत्र लप्स्यते॥६४॥

अज्ञानस्य सर्ववादिसिद्धता

सर्ववादिविरोधेऽपि संवादोऽनुभवे यथा । वादिनामविसंवादस्तथाऽज्ञानेऽप्यसंशयः ॥६५॥
तद्वद्वाधोऽप्यबोधस्य बोधेनाभ्युपगम्यते । एतावतैव पर्याप्तमस्मद्राद्धान्तसिद्धये ॥६६॥
अस्मद्राद्धान्तसंसिद्धौ नान्यराद्धान्तसिद्धता । तत्सिद्धावस्य संसिद्धिर्न कथंचिन्निवार्यते ॥६७॥
अज्ञानं संशयज्ञानं मिथ्याज्ञानमिति त्रिकम् । अज्ञानं कारणं तत्र कार्यत्वं परिशिष्टयोः ॥६८॥
कूटस्थज्ञानमात्रत्वान्न तमोऽस्य स्वभावतः । नाप्यागन्तु तथाऽज्ञानं हिरुक्सिद्धेरसंभवात् ॥६९॥

कर्तृकरणाद्यपेक्षत्वादतो न नियोगपरत्वेनाऽऽगमो मानं किंतु कल्पितमात्राद्यपेक्ष्याऽऽत्मनि सकार्याविद्याध्वंसिसम्यग्धीहेतुत्वेन तन्मानता नैवमध्यक्षादेरित्यर्थः ॥१३६१॥

कथं मात्रादेः सर्वस्य प्रत्यङ्मात्रत्वं तत्रैकविज्ञानेन सर्वविज्ञानश्रुतिं प्रमाणयति—सर्वमिति । आत्मन्यज्ञाते सर्वमज्ञातं ज्ञाते ज्ञातमित्यत्र हेतुमाह—तावत्त्वादिति । तस्मादात्मनोऽद्वयत्वान्न तत्र मात्रादिभेद इत्याह—तत्कात्स्न्र्यादिति ॥१३६२॥

मात्रादेरात्ममात्रत्वं श्रुत्योक्त्वा दृश्यत्वादियुक्त्याऽप्याह—युक्त्येति । रूप्यादेरारोप्यस्य दृश्यत्वादिशालिनः शुक्त्यधिष्ठानात्मत्वदर्शनादिति हिशब्दार्थः । विपक्षे तुच्छत्वापत्तिमाह—प्रत्याख्यात इति ॥१३६३॥

आत्मा चेदनात्मनस्तत्त्वं तद्वत्तदभिन्नत्वादात्मनोऽसङ्गत्वादिहानिरित्याशङ्क्य मायिकत्वादनात्मसंगतेर्मैवमित्याह—अनात्मेति । मायाकृतोदकादिसंगतिर्मरुभूमिप्रमुखस्याधिष्ठानस्य वास्तवकठिनत्वादेरव्याघातकरीतिदृष्टान्तार्थो हिशब्दः । किंच प्रकाशे सदात्मनि सत्तां स्फूर्तिं चानाप्नुवन्ननात्मा नाऽन्यत्र सेत्स्यति। अस्वातन्त्र्यादन्यस्य च साधकस्याभावादतस्तत्रैव कल्पितः सिध्येदित्याह—असिध्यन्निति ॥१३६४॥

मात्रादेरात्मनि कल्पितत्वादक्षादेरमानत्वादज्ञानस्यातद्ग्राह्यत्वात्साक्षिसिद्धतैवेत्युक्तम् । इदानीमद्वयस्वप्रकाशकूटस्थसाक्ष्यनुभवे विवादान्न ततोऽज्ञानसिद्धिरित्याशङ्क्याऽऽह—सर्वेति । सर्वपक्षाणां मिथोविरोधेऽपि सर्वैरनुभवस्तावदिष्टोऽन्यथा व्यवहारलोपात् स च स्वप्रकाशो वेद्यत्वेऽनवस्थानात्स कूटस्थोऽद्वयश्च, तत्र जन्मादिसाधकाभावात्तस्मिन्वादिनामङ्गीकारो यथेत्यर्थः । यथोक्तेऽनुभवे सत्यपि तत्साध्यमज्ञानं विप्रतिपन्नमित्याशङ्क्याऽऽह—अविसंवाद इति । अज्ञानानुपगमे व्यवहारायोगात्तस्य च सादित्वे वस्तुनस्तद्धेतुत्वाभावादवस्तुनस्तद्धेतुत्वे तस्यापि सादित्वेऽनवस्थानादनादित्वे तस्यैवास्मदिष्टाज्ञानत्वादवस्तुत्वे सत्यापरोक्ष्यादेवानिर्वाच्यत्वादनुभववदत्रापि वादिनामस्त्येव संमतिरित्यर्थः ॥१३६५॥

अनुभवेऽपरिपन्थिनि विप्रतिपत्तिरयुक्तेति वक्तुमसंशय इत्युक्तं तथाऽपि तस्य साक्षिसिद्धस्य साक्षिवज्ज्ञानानिवर्त्यत्वमित्याशङ्क्याज्ञानवत्तद्ध्वस्तिरपि संमतेत्याह—तद्वदिति । तदभावे सर्वव्यवहारविहतिरिति भावः । तथाऽपि किं ते सिद्धं तदाह—एतावतेति । अनुभवोऽज्ञानं तद्धानिरितित्रयसिद्धिमात्रेणेति यावत् ॥१३६६॥

त्वत्सिद्धान्तवदितरसिद्धान्तानामपि तद्बुद्ध्या सिद्धिरित्याशङ्क्याऽऽह—अस्मदिति । अद्वैतमते प्रामाणिके सतीतरराद्धान्तानामज्ञानमूलत्वेन भ्रान्तत्वमेवेति भावः । भवतु तावत्तद्बुद्ध्या परसिद्धान्तसिद्धिस्तथाऽपि न क्षतिस्तैरप्यनुभवादित्रयस्वीकारादस्मदिष्टसिद्धिरित्याह—तत्सिद्धाविति । अस्येति स्वसिद्धान्तस्येति यावत् ॥१३६७॥

परसिद्धान्तसिद्धावपि स्वसिद्धान्तसिद्धिश्चेन्मिथोविरोधाद्वस्तुनि विकल्पः स्यादित्याशङ्क्य परसिद्धान्तानां भ्रान्तत्वसिद्ध्यर्थं स्वसिद्धान्तमाह—अज्ञानमिति । प्रत्यगज्ञानविजृम्भिताः सर्वे परसिद्धान्ता अप्रामाणिकभेदाश्रयत्वादतस्तेषां भ्रान्तत्वमिति भावः ॥१३६८॥

प्रत्यगज्ञानस्य कल्पितत्वं साधयति—कूटस्थेति । तदस्य नैजमागन्तु वा ? नाऽऽद्यो नित्यदृष्टिस्वाभाव्यान्नेतरस्तस्याऽऽत्मनोऽन्यत्रानुत्पत्तेस्तत्रापि हेत्वन्तराभावादुत्पत्त्यनुपपत्तेरित्यर्थः ॥१३६९॥

[1]अविद्यातज्जकार्याणामात्मना संगतिस्ततः । आत्मात्मवत्त्वरूपा स्यान्न तु सोभयकर्मजा ।।७०।।
एकमेव हि सद्वस्तु यद्वेदान्तप्रमाणकम् । तावन्मात्रैकनिष्ठत्वादात्मज्ञानं सदास्पदम् ।।७१।।

अनुभवप्रमाणकत्वात् वेदान्तसिद्धान्तस्यानिरासससिद्धिः

सर्ववादिविरोधेऽपि यत्सिद्धान्तबलाश्रयम् । साधनं दूषणं सर्वं न तन्निह्नुतिरिष्यते ।।७२।।
साधनं दूषणं सर्वं यस्य पादव्यपाश्रयात् । सिद्ध्यते तीर्थदृशां कुतः स्यात्तस्य निह्नुतिः ।।७३।।
अभावो येन भावेन भाव्यतेऽस्ति न नास्ति सः । तस्य भावस्य सद्भावो वद केन निवार्यते ।।७४।।
[2]व्यभिचारि न यत्रास्ति प्रमाणं सर्ववादिनाम् । स्वमहिम्ना च यत्सिद्धं तदपह्नूयते कथम् ।।७५।।
[3]तस्यैवाव्यभिचारित्वात्सर्वेषु व्यभिचारिषु । तदेवैकं प्रमाणं नः सर्ववाद्यविरोधि यत् ।।७६।।
देहादावात्मबुद्धिर्नो न कदाचिद्विहन्यते । जाग्रत्स्वप्नसुषुप्तेषु शुक्तिकारजतादिवत् ।।७७।।

अविद्याद्वारा तज्जन्यसंशयादीनामात्मना काल्पनिकी संगतिस्तद्रूपत्वात्तेषामित्यविद्याकार्यस्य कल्पितत्वं साधयति—अविद्येति । संशयादीनामविद्यातिरेकेणासत्त्वं पञ्चम्या परामृश्यते । कीदृशी संगतिरविद्यायास्तज्जानां चाऽऽत्मनेति तामाह—आत्मेति । संयोगादि व्यावर्तयति—न त्विति ।।१३७०।।

सकार्याज्ञानस्य कल्पितत्वे हेत्वन्तरमाह—एकमिति । सदेव सोम्येदमेकमेवेत्यादिवाक्यगम्यं सदात्मकं यद्वस्तु तदेकमेव ततोऽन्यत्कल्पितमित्यर्थः । तत्र ब्रह्मविदामपि संप्रतिपत्त्यर्थो हिशब्दः । वाक्यगम्यत्वे तदुत्थज्ञानस्य ज्योतिष्टोमादिवाक्योत्थज्ञानस्येव संसृष्टविषयत्वाद्ब्रह्म संसृष्टमेव नैकरसमित्याशङ्क्याऽऽह—तावन्मात्रेति । कार्यकारणात्मप्रपञ्चस्य सन्मात्रत्वादात्मज्ञानमेकरसं सदालम्बनमित्यर्थः ।।१३७१।।

स्वसिद्धान्तोक्त्या परसिद्धान्तानां भ्रान्तिमूलत्वमापाद्य स्वसिद्धान्तस्यानिरस्यत्वमुपसंहरति—सर्वेति । यत्र सिद्धान्ते स्थितं बलमनुभवलक्षणं तदाश्रयं साधनादि तस्य सिद्धान्तस्य न निराससिद्धिरित्यर्थः ।।१३७२।।

अनुभवान्न सर्वसिद्धिः शून्यवादिना तस्याप्यपलापादित्याशङ्क्याऽऽह—साधनमिति । अनुभवापलापे साधनाद्यसिद्धिः साधकाभावादित्यर्थः ।।१३७३।।

अभावसाधकत्वाच्च सोऽशक्योऽपह्नोतुमित्याह—अभाव इति । [4]अनुभवाभावसाधकाभावाच्च न तन्निह्नुतिरित्याह—तस्येति ।।१३७४।।

सर्वपक्षेषु सर्वमानस्यानुभवाव्यभिचाराच्च न ह्नुतिरित्याह—व्यभिचारीति । तर्हि मेयतया घटादितुल्यतेत्याशङ्क्य मानमेयादिसत्तास्फूर्तिप्रदत्वान्मैवमित्याह—स्वमहिम्नेति । अनुभवतत्त्वस्य निरासासंभवं निगमयति—तदिति ।।१३७५।।

तस्य स्वमहिमसिद्धिं साधयति—तस्येति । यत्सर्ववादिसंमतं तस्यैव सर्वेषु देहादिषु व्यभिचारिषु साधकत्वेनाव्यभिचारित्वात्तदेकरसमस्माकं मानमेव न मेयमिति स्वमहिमसिद्धतेति योजना ।।१३७६।।

देहादेर्व्यभिचारादनुभवात्मनोऽव्यभिचारात्तयोर्भेदभानाद्देहादावात्मबुद्ध्यसिद्धेर्व्यवहारोच्छित्तिरित्याशङ्क्याऽऽह—देहादाविति । तिसृष्ववस्थासु मध्ये जाग्रत्स्वप्नयोर्देहादावात्मधीरविवेकिनामिव विवेकिनामपि न

---

१. आत्मात्मवत्त्वरूपा संगतिः आत्मनः अविद्या तत्कार्ययोश्च । स चाध्यासिकं तादात्म्यमेव नोभयकर्मजसंयोगादि तयोः कर्माभावात् ।

२. स्वापेऽनुभवव्यभिचारात् अनुभवस्य शून्यत्वं तत्राह—**व्यभिचारीति** । अवस्थात्रयसाधकत्वेनानुभवः सदा स्फुरतीत्यर्थः । साधकान्तरस्वीकारेऽनवस्था । तदस्वीकारे साधकाभावादसिद्धिः तत्राह—**स्वमहिम्नेति** (न्या०)

३. अनुभव एवं स्वात्मन्यन्यत्र च मानम् । जडस्य मातृवायौगात् लोष्टवत् । ( न्या० )

४. अनुभवाभाव उच्यते चेत् तस्यापि साधकः अनुभवः एव वक्तव्यः अतः तस्य निह्नवोऽशक्यः अनुभवाभावसाधकं तु नास्तीत्यर्थः ।

देहान्तात्कर्तुरन्यो यो बुद्ध्यन्ताद्बोद्धुरेव च । प्राणान्तात्करणाच्चान्यः प्रत्यग्दृष्ट्या य ईक्ष्यते ॥७८॥
अदेहतोऽजरोऽमृत्युरस्वान्तोऽमोहशोकवान् । अबुभुक्षोऽपिपासश्च [1]प्राणकारणवर्जनात् ॥७९॥

आत्मानात्मलक्षणकथनं विवेचनाय

[2]अहीनो हीयते योऽसौ तथाऽनागत एति यः । जानीयात्तमनात्मानं जाग्रत्स्वप्नसुषुप्तिषु ॥८०॥
[3]न हीयते हीयमान आगच्छति न चैति यः । आगमापायसाक्षित्वादात्मा सोऽनुभवाश्रयात् ॥८१॥
नाविद्यामनुपादाय प्रत्यक्कारकतां व्रजेत् । नाकारकः क्रियां कर्तुमलं जगति वीक्ष्यते ॥८२॥
द्रष्टुर्दृष्ट्या न चानाप्तोऽनात्मा कश्चित्प्रसिध्यति । [4]मिथ्याज्ञानमतोऽनात्मा ह्यात्माज्ञानसमुत्थितेः ॥८३॥
नाविद्यामनुपादाय जाग्रत्स्वप्नसुषुप्तिषु । अनात्मानं विजानाति तज्जज्ञात्राद्यनन्वयात् ॥८४॥
न च ज्ञात्रनुरोधिन्या दृष्ट्याऽज्ञानासमन्वितम् । आत्माऽऽत्मानमलं द्रष्टुं रूपं श्रोत्रधिया यथा ॥८५॥

कदाचिद्धीयते यथा शुक्तौ भ्रान्तिकाले रजतधीरतः सर्वव्यवहारसिद्धिरित्यर्थः । उदाहरणान्तरद्योतनार्थमादिपदम् ॥१३७७॥

अस्तु तर्हि यथाप्रतिभासं देहाद्येवाऽऽत्मेत्याशङ्क्य लोकायतं प्रत्याह—देहान्तादिति । शरीरमिन्द्रियं मनश्चेति त्रयं पञ्चम्यर्थः । यो हि प्रत्यग्दृष्ट्या स्वरूपज्ञप्त्याऽहंबुद्ध्या वीक्ष्यते स क्रियाश्रयाद्देहादित्रयादन्यस्तस्य भौतिकत्वात्प्रतीचश्चातथात्वादित्यर्थः । मीमांसकं प्रत्याह—बुद्ध्यन्तादिति । अहंकर्तुश्च सोऽन्यस्तस्य व्यभिचारित्वेनानात्मत्वादित्यर्थः । हैरण्यगर्भादीन्प्रत्याह—प्राणान्तादिति । अत्रैको य इति शब्दः सशब्दपर्यायः ॥१३७८॥

देहाद्यतिरेकादात्मनस्तद्धर्मा न तं स्पृशन्तीति षड्ूर्मिवर्जितत्वेनाऽऽत्मनः शुद्धतामाह—अदेहत इति ॥१३७९॥

अनात्मधर्मा नाऽऽत्मानं स्पृशन्तीत्युक्तेरात्मानात्मानौ विभज्य वाच्याविति मन्वानोऽनात्मलक्षणमाह—अहीन इति । अवस्थात्रयेऽपि यो वस्तुतो हानिहीनोऽपि प्रतीचि तामनुभवति यश्चाऽऽगमाभावेऽपि तस्मादेवाऽऽगच्छति सोऽनात्मेत्यर्थः ॥१३८०॥

आत्मलक्षणमाह—नेत्यादिना । देहादेरागमापाययोर्यो नाऽऽगमापायी तदागमापायसाक्षित्वादसावात्मेत्यर्थः । कथं तयोर्यथोक्तयोः सिद्धिरत आह—अनुभवेति ॥१३८१॥

तयोस्तद्धर्माणां चासांकर्ये कथमद्वैतसिद्धिरित्याशङ्क्य कारकस्य कल्पितत्वमाह—नेति । कूटस्थत्वादित्यर्थः । कल्पितकारकनिर्वर्त्यतया क्रियायाः कल्पितत्वमाह—नाकारक इति ॥१३८२॥

कारकाद्यनात्मनोऽविद्यामयत्वमन्वयादिनोक्त्वा तत्रैव हेत्वन्तरमाह—द्रष्टुरिति । अनात्मसिद्धेरन्याधीनत्वात्कल्पितत्वं सर्पवदित्याह—मिथ्येति । तस्य मिथ्याधीविषयत्वे पूर्वोक्तं हेतुं स्मारयति—आत्मेति । अज्ञानोत्थस्य मिथ्याज्ञानविषयत्वं रूप्यादौ व्यक्तमिति वक्तुं हिशब्दः ॥१३८३॥

अज्ञानोत्थत्वं समर्थयते—नाविद्यामिति । अविद्यां विनाऽवस्थात्रयेऽप्यनात्मानं न कश्चिद्वेत्तीत्यत्र हेतुमाह—तज्जेति । अविद्याजन्यज्ञातृज्ञानादेस्तां विनाऽऽत्मासंबन्धादविद्याजमेव दर्शनमित्यर्थः ॥१३८४॥

अनात्मवदात्मनोऽपि मात्रधीनत्वान्मिथ्यात्वमित्याशङ्क्याऽऽह—न चेति । मातृपरिणामरूपया दृश्यया दृष्ट्या केवलस्याविद्यातदुत्थसंस्पर्शशून्यस्याऽऽत्मनो दृष्ट्ययोग्यत्वे दृष्टान्तमाह—रूपमिति ॥१३८५॥

१. प्राणरूपं यत्कारणं तदभावात् ।
२. अहीने इतिपाठश्चेत् स्पष्टः । टीकायां च वस्तुतो हानिहीनेऽपि प्रतीचि हानिमनुभवति । यश्च प्रतीच्यागमाभावेऽपि स्वयमागच्छति स अनात्मा ।
३. हीयमानेऽनात्मनि यो न हीयते तथाऽऽगच्छति अनात्मनि स्वयं न गच्छति । अनात्मगतागमापायसाक्षित्वात् स आत्मा ।
४. मिथ्याभूतमज्ञानमित्यर्थः ।
५. सुषुप्तावपि देहादिसंस्कारसत्वात् देहात्मबुद्धिसंस्कारसद्भाव एवेत्यर्थः ।

उत्सार्यानात्मनः सर्वानन्वयव्यतिरेकतः । प्रत्यक्प्रधानया दृष्ट्या पश्येदात्मानमद्वयम् ।।८६।।
त्वं ब्रह्मेति गुरोर्वाक्यात्तन्निविष्टपदार्थयोः । उक्तान्वयादिनोत्पन्नविवेकः सन्नबुध्यत ।।८७।।
तद्ब्रह्माऽऽत्मानमेवावेद्यदनात्मेत्यभूत्पुरा । अविद्यया विद्यया तु ब्रह्माऽऽत्मैवाभवत्स्वतः ।।८८।।

आत्मानमेवावेदित्यत्र एवकारवाच्यार्थः

एवेत्यवधृतौ ज्ञेयं ब्रह्मात्मार्थविशेषणम् । आत्मैव ब्रह्म विज्ञेयं ब्रह्मैवाऽऽत्मेति संभवात् ।।८९।।
ब्रह्मता नाऽऽत्मनोऽन्यत्र नाऽऽत्मता ब्रह्मणोऽन्यतः । तद्याथात्म्याप्रबोधात्तु तयोरेष विपर्ययः ।।९०।।
आत्माऽपि साक्षात्तद्ब्रह्म परोक्षं तदबोधतः । ब्रह्मैव तद्वदात्माऽपि सद्वितीयवदीक्ष्यते ।।९१।।
वाक्योत्थसम्यग्विज्ञानप्रध्वस्ततमसो यतेः । विभागहेतोरुच्छित्तेः सर्वमात्मैव शिष्यते ।।९२।।
विज्ञातारमरे केन विजानीयादिति श्रुतेः । ननु विप्रतिषिद्धार्थं तदात्मानमितीर्यते ।।९३।।
दृष्टेर्द्रष्टेति विज्ञानान्नात्र विप्रतिषिद्धता । प्रत्यग्बुद्धिः प्रमात्रादौ सर्वत्रैवोपजायते ।।९४।।

आत्मदृष्टिस्तर्हि कथमित्याशङ्क्याऽऽह—उत्सार्येति । प्रत्यक्प्रधानया तन्मात्राकारया वाक्योत्थयेति यावत् ।।१३८६।।

आत्मैव मेयस्तज्ज्ञानमेव मानमित्येवकारार्थः समर्थितः । संप्रत्यात्मज्ञानं गुरूपदेशादेवोत्पद्यते नोत्प्रेक्षयेत्याह—त्वमिति । वाक्यादबुध्यतेति सम्बन्धः । तर्हि गुरूपदिष्टवाक्यात्किमिति सर्वो न बुध्यते तत्राऽऽह—तन्निविष्टेति । श्रुतवाक्योऽपि वाक्यस्थपदार्थपरिशोधनवैधुर्यादनधिकारितया वाक्यार्थं नानुभवतीत्यर्थः ।।१३८७।।

तद्ब्रह्म शिष्यभूतं गुरुवाक्यात्किमबुध्यत न तावदात्मानमेव कर्मकर्तृविरोधात् । नाप्यनात्मानं तदभावादित्याशङ्क्याऽऽह—तद्ब्रह्मेति । अविषयत्वेनाऽऽत्मनो ज्ञानात्कर्मकर्तृविरोधो नास्तीत्यर्थः । आत्मनो नित्यज्ञप्तिरूपस्य किमागन्तुकज्ञानेनेत्याशङ्क्याऽऽह—यदिति । ब्रह्मात्मत्वस्य स्वभावत्वादविद्याध्वस्तौ विद्याऽर्थवतीति फलितमाह—विद्ययेति । यद्विद्योदयात्पूर्वमनात्मेत्यविद्यया स्थितं तद्ब्रह्म स्वरूपमेव गुरूपदिष्टवाक्याद्दृष्टवत् । दृष्टिफलं चाविद्यानिवृत्त्या परिपूर्णतया स्थितिरेवेति समुदायार्थः ।।१३८८।।

आत्मा मेयस्तथा मानमित्यादिना विवक्षितमर्थमेवकारस्योक्त्वाऽधुना वाच्यमर्थमाह—एवेतीति । तच्च ब्रह्मार्थस्याऽऽत्मार्थस्य च प्रत्येकं विशेषणमित्याह—ब्रह्मेति । अवधारणप्रकारं प्रकटयति—आत्मैवेति । विज्ञेयमित्यन्वयार्थमितिपदं तत्र हेतुः संभवादिति ।।१३८९।।

संभवं साधयति—ब्रह्मतेति । आत्मन्यब्रह्मताया ब्रह्मणि चानात्मतायास्तर्हि कथं प्रथेति तत्राऽऽह—तद्याथात्म्येति ।।१३९०।।

ब्रह्मणि विपर्ययं दर्शयति—आत्माऽपीति । आत्मनि तमुदाहरति—ब्रह्मैवेति ।।१३९१।।

अविद्यान्वयव्यतिरेकाभ्यामाविद्यत्वं विपर्ययस्योक्त्वा विद्यापोद्यत्वादपि तथेत्याह—वाक्येति । संन्यासस्यापि शमादिवद्धीहेतुत्वं यतेरित्युक्तम् । विभागहेतोर्विपर्यासस्येति यावत् । सर्वं पूर्णं ब्रह्माऽऽत्मैवैकं सच्चिदानन्दैकतानमवशिष्टमित्याह—सर्वमिति ।।१३९२।।

तदात्मानमेवावेदित्यत्र चोदयति—विज्ञातारमिति । आत्मनो वेद्यत्वस्य श्रुतावाक्षिप्तत्वात्तद्वेद्यत्वोक्तिर्वाक्यान्तरविरुद्धेत्यर्थः ।।१३९३।।

आत्मनः कर्मत्वेन वा साक्षित्वेन वा ज्ञानाद्विप्रतिषेधो नाऽऽद्य इत्याह—दृष्टेरिति । न द्वितीय इत्याह—नात्रेति । सर्वसाक्षित्वेनाऽऽत्मा ज्ञायते न कर्मतयेति कुतोऽस्मिन्वाक्ये विप्रतिषेध इत्यर्थः । सर्वसाक्षित्वं साधयति—प्रत्यगिति । प्रत्यगेव बुद्धिश्चैतन्यं सा सर्वत्र साक्षित्वेन भात्येवान्यथा जडस्यादृष्टेरित्यर्थः । उपजायमानत्वमुपचारतो भासमानत्वम् ।।१३९४।।

साक्षिणः सर्वत्र सर्वविशेषेण भासमानता

**युष्मदस्मद्विभागाभ्यां यावद्वस्त्विह मीयते । तेन तेन विशेषेण प्रत्यगर्थः प्रतीयते ॥९५॥**
**प्रत्यगर्थमनालिङ्ग्य न परा[1]ग्वर्ति जायते । विज्ञानं तेन तत्पूर्वं सर्वमन्यत्प्रतीयते ॥९६॥**
**आब्रह्मास्थाणु चान्वक्षं सर्वेषु व्यभिचारिषु । प्रत्ययोऽव्यभिचार्येकश्चैतन्यप्रतिबिम्बितः ॥९७॥**
**न च विप्रतिपद्यन्ते वादिनोऽनुभवात्मनि । तत्र चेत्स्याद्विसंवादः केनान्येन चिकित्स्यते ॥९८॥**
**अन्योऽपि योऽत्र कल्प्यः स्यात्सोऽप्यस्मान्नैव भिद्यते । सर्वभेदात्मरूपत्वात्कः सन्स्यादात्मना विना ॥९९॥**
**प्रत्यगात्मनि वि[2]श्वस्य ततोऽनात्मनि तद्वशात् । आविद्वदङ्गनाबालं विश्वसित्यनपेक्षतः ॥१४००॥**
**आत्मनैवाऽऽत्मविज्ञानं ज्ञेयज्ञात्रादिवर्जितम् । स्वयमेव फलात्मत्वात्फलं चास्मान्न भिद्यते ॥ १ ॥**
**प्रमाणव्यवहारोऽयं सर्वेषामपि वादिनाम् । स्वतोऽनुभवनिष्ठः स्यान्न चेत्षष्ठेन्द्रियार्थवत् ॥ २ ॥**
**चैतन्यमात्ररूपोऽयं सदानस्तमितोदितः । अविद्यामस्पृशन्नास्ते निष्क्रियोऽकारकोऽफलः ॥ ३ ॥**

तर्हि साक्षिसाक्ष्यभेदः स्यादित्याशङ्क्याऽऽह—युष्मदिति । इहेति मानभूमिरुक्ता ॥१३९५॥

न तर्हि साक्षित्वं भेदाभावादित्याशङ्क्य कल्पितभेदात्तदुपपत्तिरित्याह—प्रत्यगर्थमिति । नासाक्षिका सत्त्ववृत्तिरर्थो जानातेरिति न्यायादित्यर्थः । उक्तन्यायमुपजीव्य फलितमाह—तेनेति ॥१३९६॥

प्रत्यक्चैतन्यपूर्वा सर्वस्य धीरित्ययुक्तं चैतन्यस्य प्रतिक्षणध्वंसित्वादिति केचित्तान्प्रत्याह—आब्रह्मेति । ब्रह्माणमारभ्य स्थाणुपर्यन्तं सर्वेष्वनात्मसु प्रत्यक्षं व्यभिचारिषु सत्सु चैतन्यरूपेण सर्वत्र प्रतिबिम्बितोऽनुभवोऽव्यभिचारीति यावत् । सर्वत्र साक्षित्वेनाऽऽत्मनो भानान्नानुभवो व्यभिचारीत्यर्थः ॥१३९७॥

तस्य क्षणिकत्वं निरस्य शून्यत्वं निरस्यति—न चेति । तस्मिन्नपि विवादः शून्यवादिनोऽस्तीति चेत्तत्राऽऽह—तत्रेति । अनुभवेऽपि विप्रतिपत्तौ साधकाभावेन सर्वासिद्धिः स्यादित्यर्थः ॥१३९८॥

अनुभवं विनैव मात्रादिसिद्धेस्तदभावेऽपि न सर्वासिद्धिरित्याशङ्क्याऽऽह—अन्योऽपीति । अत्रेति सर्वसिद्धिं निमित्तीकृत्येत्यर्थः । स जडोऽजडो वा ? जडश्चेदनुभवे कल्पितः सर्पवदिति मत्वा द्वितीयं दूषयति—सोऽपीति । अनुभवदृष्टान्तार्थोऽपिशब्दः । किंच जडस्याजडस्य वा सर्वस्याऽऽत्मरूपत्वात्तेन विना न कश्चित्सिध्येत्ततो निष्कर्षे सत्त्वायोगात् । स च न स्वाश्रयवृत्तिव्याप्यो विरोधादतः स्वप्रकाश इत्याशयेनाऽऽह—सर्वेति ॥१३९९॥

विषयज्ञानाधारत्वेन तत्सिद्धेर्न स्वप्रकाशतेति कश्चित्तं प्रत्याह—प्रत्यगिति । आत्मन्यादौ विश्वासं कृत्वा तद्वशादनात्मनि सर्वो लोको विश्वासं करोत्यतो विषयसंविदनपेक्षः प्रत्यग्विश्वासस्तत्पूर्वभावितया पराचीनविषयधीसापेक्षत्वायोगादित्यर्थः ॥१४००॥

प्रतीचि विश्वासे मात्रादिविभागापेक्षणात्कुतः स्वप्रकाशता तत्राऽऽह—आत्मनैवेति । एवकारार्थमाह—ज्ञेयेति । आदिपदं करणादिविषयम् । मानफलवन्मानादेरप्यात्मनो भेदः स्यादित्याशङ्क्याऽऽह—स्वयमिति । स्वप्रकाशत्वादात्मनो न तादृक्फलं ततो भेत्तुं युक्तमित्यर्थः ॥१४०१॥

आत्मनि मात्रादिविभागाभावेऽपि शब्दाद्यनात्मनि तद्भावादद्वैतहानिरित्याशङ्क्याऽऽह—प्रमाणेति । विषयवज्ज्ञानादेः स्वप्रकाशानुभवनिष्ठत्वेन तन्मात्रत्वाभावे तुच्छतैवेत्याह—न चेदिति ॥१४०२॥

जगतो व्याकृताव्याकृतात्मकस्याऽऽत्ममात्रत्वे तद्गतगुणदोषाभ्यां संस्पृश्येतेत्याशङ्क्याऽऽह—चैतन्येति । तर्हि तद्वदुदयास्तमयौ स्यातामित्याशङ्क्य तस्मिन्नपि न तावित्याह—सदेति । अविद्यास्पर्शाभाववत्तत्कार्येणापि स्पर्शो नास्तीत्याह—निष्क्रिय इति ॥१४०३॥

१. परागवृत्तिवृत्तिज्ञानं प्रत्यगर्थं ब्रह्म अनालिङ्ग्य प्रतिविम्बतया अगृहीत्वेत्यर्थः ।
२. विश्वस्य तद्भानं मूलीकृत्य ।

आत्मनोऽसङ्गत्वात् अविद्या तज्जं च तं न स्पृशति

स्वतोऽसङ्गस्वभावत्वात्खचारादि वियद्यथा । नाविद्या नापि तत्कार्यं प्रत्यक्स्थमपि ढौकते ।। ४ ।।
स्वतः सेद्धुमशक्तत्वात्खमृते वायुवत्सदा । प्रत्याख्यातस्वभावोऽपि सिध्यतीवाग्रहो दृशौ ।। ५ ।।
युतिं साधारणात्मा हि यात्यसाधारणात्मभिः । अनन्यवृत्तितो नाऽऽत्मा संसर्गं प्रैत्यनात्मभिः ।। ६ ।।
विभज्यमानोऽन्येभ्यो हि विशेषोऽपि प्रसिध्यति । एकत्वादात्मनो भेदो द्वयाभावान्न चेष्यते ।। ७ ।।
भेदसंसर्गहीनत्वात्पदवाक्यार्थताऽऽत्मनः । दुःसंभाव्याऽत आत्माऽयमात्मनैवानुभूयते ।। ८ ।।
यादृगस्य द्वये तत्त्वमात्मनैवानुभूयते । निषिद्धाशेषभेदस्य तावदेवाऽऽत्मसाक्षिकम् ।। ९ ।।
अपास्ताशेषतमसो यत्तत्त्वं प्रत्यगात्मनः । तदवच्छित्तये[1] नालं प्रत्यग्बोधादृतेऽन्यधीः ।।१०।।
प्रत्यङ्मात्रेक्षणादात्ममोहतज्जनिराकृतेः । असंभवाद्द्वितीयस्य स्यामपूर्वादिमानहम्[2] ।।११।।
व्यपेततमसस्तत्त्वमागमापायसाक्षिणः । ज्ञानेन गम्यते साक्षात्तावन्मात्रानुरोधिना ।।१२।।

आत्मनोऽविद्यातज्जास्पर्शेऽपि तद्गतत्वात्तेन संस्पृश्यत इत्याशङ्क्याऽऽह—स्वत इति । यथा वियतोऽसङ्गत्वात्तद्गतमपि विहगादि न तत्स्प्रष्टुमीष्टे तथाऽविद्यादि प्रत्यगात्मगतमपि तस्यासङ्गस्वाभाव्यान्न तं स्पृशतीत्यर्थः ।। १४०४।।

आत्मनोऽविद्यादेश्च मिथोऽसंबन्धे साविद्यजगदसिद्धेर्बन्धासिद्धिरित्याशङ्क्याऽऽह—स्वतः सेद्धुमिति । प्रत्याख्यातस्वभावोऽपि दृशेति शेषः । अग्रहः सकार्यमज्ञानम् । दृगात्मन्यविद्यादिसंगतिरविद्यानिमित्तेतीवशब्दार्थः । न हि वायुराकाशमन्तरेण कदाचित्स्वातन्त्र्येण सिध्यति तथा जगदपि सनिदानं स्वतो जडतया कालत्रयेऽपि सेद्धुमशक्यं प्रत्यगात्मस्वभावालोचनया तत्रासंभाव्यमानमेवाविद्यया तस्मिन्नेव सिद्ध्याभासभाग्भवतीत्यर्थः ।।१४०५।।

दृशो वस्तुतो द्वैतासंबन्धे हेत्वन्तरमाह—युतिमिति । सामान्यस्य विशेषैः संबन्धो दृष्टः प्रतीचस्त्वसामान्यान्न केनापि संगतिरित्यर्थः । सामान्यविशेषसंबन्धस्य गवाश्वादौ प्रसिद्धिप्रदर्शनार्थो हिशब्दः ।।१४०६।।

तर्हि विशेषत्वप्राप्तेः सामान्येन संगतिरिति चेन्नेत्याह—विभज्यमान इति । अन्यतो व्यावृत्तस्य विशेषत्वं खण्डादौ सिद्धमिति हिशब्दार्थः । सामान्यन्यायमुक्त्वाऽऽत्मनि विभागाभावमाह—एकत्वादिति । भेदस्य दुर्निरूपत्वादिति यावत् । तदेव साधयति—द्वयाभावादिति । चकारोऽवधारणे । धर्मिप्रतियोगिनोर्भेदापेक्षत्वात्तस्य चेतरापेक्षया सिद्धेरन्योन्याश्रयाद्भेदो दुर्निरूप इत्यर्थः । यद्वा तत्र तत्र प्रत्यक्त्वेनाऽऽत्मनः स्वरूपत्वान्न कुतश्चिदपि भेदोऽस्तीत्याह—एकत्वादिति । तस्मिन्धर्मिप्रतियोगिविभागायोगाच्च भेदासिद्धिरित्याह—द्वयेति ।।१४०७।।

शब्दार्थत्वादात्मनो गवादिवत्सामान्यत्वं विशेषत्वं चेत्याशङ्क्याऽऽह—भेदेति । न हि क्रियाकारकयोरिवाऽऽत्मनि भेदो वा नीलोत्पलादाविव संसर्गो वा संभवति तस्मिन्नसङ्गाद्वितीये द्वयोरपि दुःसंपादत्वात्तथाच नास्य शब्दार्थतया सामान्यादिभावाशङ्का युक्तेत्यर्थः । आत्मनस्तर्हि मानादसिद्धिरेवेति तत्राऽऽह—अत इति ।।१४०८।।

निःसामान्यविशेषस्य भेदसंसर्गरहितस्य पदवाक्यार्थहीनस्य स्वप्रकाशस्यापि नैकरस्यमात्मनः संभवति बन्धमोक्षयोस्तद्रूपभेदादित्याशङ्क्याऽऽह—यादृगिति । कूटस्थचैतन्यमेकरसमेवाऽऽत्मरूपं सदनुभवसिद्धमित्यर्थः ।।१४०९।।

चैतन्यं चेदुभयत्राऽऽत्मरूपं तदविद्यावस्थायामपि प्रत्यक्षादिसिद्धं किं वाक्येनेत्याशङ्क्याऽऽह—अपास्तेति । प्रत्यक्षादि विशिष्टविषयं न शुद्धविषयमित्यावेदितमिति भावः ।।१४१०।।

वाक्योत्थप्रत्यग्बोधस्य फलमाह—प्रत्यगिति । अनात्मदर्शनं परिहृत्येति मात्रचोऽर्थः ।।१४११।।

१. तदवच्छित्तये तदीयनिर्विशेषस्वरूपपरिज्ञानाय ।
२. अपूर्वादिमानहं कार्यकारणविनिर्मुक्तोऽहं स्यामित्यर्थः ।

कालादिप्रविभक्तं सद्यद्ब्रह्माभूदविद्यया ।
तत्प्रत्यक्तत्त्वसंबोधाद्ध्वस्ते ध्वान्तेऽन्तरात्मनि । आत्मानमेव तद्ब्रह्म ब्रह्मैवाऽऽत्मेत्यवेच्छ्रुतेः ।।१३।।
अब्रह्मानात्मताहेतौ प्रत्यग्ध्वान्ते निवर्तिते । व्यावृत्त्यनुगमाभावात्सर्वं तदभवत्ततः ।।१४।।
व्यावृत्त्यनुगमौ यस्माद्द्वितीये सति वस्तुनि । दृष्टिमात्रात्मवस्तुत्वात्कार्यकारणवस्तुनः ।।१५।।

अहं ब्रह्मास्मीति महावाक्यव्याख्यानम्

नाज्ञातं किंचिदप्यस्ति नानपास्तं तमोऽप्यतः । सामानाधिकरण्यार्थमस्मीत्येतत्पदं भवेत् ।।१६।।
ब्रह्माहंपदयोरर्थौ यौ तयोः संगतिर्मिथः । अहमर्थो विशेष्योऽत्र तत्प्राधान्यप्रसिद्धितः ।।१७।।
तद्याथात्म्यप्रसिद्ध्यर्थं ब्रह्मार्थस्तु विशेषणम् ।।१८।।
विशेषणानां संबन्धो विशेष्येण विशेषणैः । विशेष्यस्यापि संबन्धः स्वातन्त्र्यपारतन्त्र्यतः ।।१९।।
विशेषणविशेष्याणां साकल्येनैव संगतिः । उपात्तान्योन्यरूपाणां[1] विशेषणविशेष्यता ।।२०।।

अकार्यकारणे प्रतीच्यद्वये किं मानमित्याशङ्क्य पूर्वोक्तमनुभवं स्मारयति—व्यपेतेति । साक्षाज्ज्ञानेनेति संबन्धः । साक्षाद्गम्यत इति वा । चक्षुरादिजन्यज्ञानस्य तत्त्वविषयत्वं व्यावर्तयति—तावदिति । निर्विशेषात्ममात्रानुसारिणेति यावत् ।।१४१२।।

तदात्मानमेवावेदित्यस्यार्थमुपसंहरति—कालादीति । श्रुतेर्गुरूपदिष्टवाक्यादिति यावत् । यद्ब्रह्म गुरूपदेशात्प्रागविद्यया देशकालादिप्रविभक्तं परिच्छिन्नमिवाऽऽसीत्तत्प्रतीचस्त्वमर्थस्य तत्त्वं परिशुद्धं रूपं तद्बोधादात्मन्यन्तरवस्थिते ध्वान्ते ध्वस्ते पदार्थधियो वाक्यार्थधीहेतोर्भावादाचार्यादिष्टवाक्यादैक्यं मिथो ब्रह्मात्मनोः साक्षात्कृतवदित्यर्थः ।।१४१३।।

तस्मादित्यादेरर्थमाह—अब्रह्मेति । ततःशब्दस्तत्त्वज्ञानवाची वार्तिकादौ योज्यः ।।१४१४।।

व्यावृत्त्यनुगमयोरभावे हेतुमाह—व्यावृत्तीति । तस्माद्द्वितीयाभावान्न ताविति शेषः । द्वितीयाभावं साधयति—दृष्टीति ।।१४१५।।

आत्मनोऽद्वयत्वे फलितमाह—नेत्यादिना । तस्याखण्डैकरसस्य ज्ञानादित्यर्थः । इदमेवातःशब्दार्थः । अहमित्यादि व्याचिख्यासुरस्मीत्यस्यार्थमाह—सामानाधिकरण्येति । अस्मीति वर्तमानापदेशादैक्यस्य सदा सत्त्वमुच्यते नाभूतभवनमतो भिन्नप्रवृत्तिनिमित्तानां शब्दानामैक्यार्थं सामानाधिकरण्यमितिन्यायेनाहंब्रह्मपदयोरैक्यवृत्तितया तत्सिद्ध्यर्थमिदं पदमित्यर्थः ।।१४१६।।

पदयोः सामानाधिकरण्यमुक्त्वा तदर्थयोर्विशेषणविशेष्यत्वेन मिथः संगतिरित्याह—ब्रह्मेति । कस्य विशेष्यत्वं विशेषणत्वं चेति तत्राऽऽह—अहमर्थ इति । द्वयोर्मध्ये तस्यैव विशेष्यत्वे हेतुमाह—तदिति । अहंशब्दवाच्यस्याऽऽत्मार्थस्य सर्वशेषिणः प्रधानतया प्रसिद्धत्वेनोद्देश्यत्वसंभवादित्यर्थः ।।४११७।।

अहमर्थस्वरूपनिश्चायकत्वाद्ब्रह्मार्थस्तस्य विशेषणमित्याह—तद्याथात्म्येति । भवत्वहमर्थस्य सर्वशेषित्वेन प्राधान्यं ब्रह्मार्थस्य तन्निश्चायकत्वेन तादर्थ्यं तथाऽपि विपरीतं विशेषणविशेष्यत्वं किं न स्यादित्याशङ्क्य तत्स्वरूपमाह—विशेषणानामिति । तयोर्मिथः संबन्धस्तद्भावः स च स्वातन्त्र्यपारतन्त्र्यात्मकोऽतः स्वातन्त्र्यस्य विशेष्यत्वमितरस्य विशेषणतेति प्रसिद्धं स्वातन्त्र्येऽपि ब्रह्मणोऽस्मिन्प्रयोगेऽहमर्थपरतन्त्रतया प्रतीतेस्तद्विशेषणत्वमविरुद्धमित्यर्थः ।।१४१८-१४१९।।

मूलसंबन्धादृते तस्यातिप्रसङ्गित्वमाशङ्क्य तादात्म्यमाह—विशेषणेति । साकल्यमन्योन्यतादात्म्यम् । तदेव साधयति—उपात्तेति । मिथस्तादात्म्यवतामेव वस्तूनां विशेषणविशेष्यत्वमित्यर्थः ।।१४२०।।

१. उपात्तेति—प्राप्तान्योन्यतादात्म्यवताम् ।

उपात्तद्रव्यकाण्येव विशिंषन्त्युत्पलादिकम् । द्रव्यं विशेषणान्येति तथोपात्तविशेषणम् ।।२१।।
नायःशलाकाकल्पानां विशेषणविशेष्यता । परस्परानपेक्षत्वाद्धिमवद्विन्ध्ययोरिव ।।२२।।
एकदा निर्विभागेन कात्स्न्र्यसंगतिकारणात् । सामर्थ्यात्[1]स्वविरुद्धानां न विशेष्येऽस्ति संभवः ।।२३।।
परस्पराविरोधेन विशिंषन्त्यात्मसंश्रयम् । विशेषणानि येनातस्तद्विरुद्धं न ढौकते ।।२४।।
विशेषणयुतिः शाब्दी तद्विरुद्धनिराकृतिः । मोहमात्रेण तत्प्राप्तेः सामर्थ्यात्स्यान्न शब्दतः ।।२५।।
एकैकरूपासंसर्गबोधमात्रस्वभावतः । विशेषणानां संप्राप्तिर्नाऽऽञ्जसी प्रत्यगात्मनि ।।२६।।
विशेषणानां संबन्धो यतो न प्रत्यगात्मनि । लक्ष्यलक्षणता[2] तस्मात्प्रतीच्यध्यवसीयते ।।२७।।
अनन्यापेक्षि प्रत्यक्त्वमहंरूपेण लक्ष्यते । तथैव ब्रह्मरूपेण प्रतीचोऽप्यद्वयात्मता ।।२८।।

तेषां विशेषणविशेष्यत्वमुदाहरति—उपात्तद्रव्यकाणीति । नीलं सुगन्धि महदित्यादीनि विशेषणानि द्रव्येणोत्पलादिना तादात्म्यभाञ्जि सन्ति तद्व्यावर्तयन्ति । तदपि द्रव्यं विशेषणैस्तादात्म्यमुपेत्यैव तैः संगतिमनुभवतीत्यर्थः ।।१४२१।।

ब्रह्माहमर्थयोस्तादात्म्ये न विशेषणविशेष्यत्वं दण्डादिवत्[3]तद्भावस्य भेदापेक्षत्वादित्याशङ्क्याऽऽह—नेत्यादिना । दण्डादावपि नात्यन्तभिन्ने तद्भावस्तस्य तत्र कल्पितत्वात्तादात्म्यानपायाद्विशेषणविशेष्यत्वस्य दण्डदेवदत्ताभ्यामभेदे तद्द्वारा तयोरपि मिथोऽभेदसंभवादिति भावः ।।१४२२।।

ब्रह्माहमर्थौ नाभिन्नौ मिथो विरुद्धत्वादुष्णशीतवदित्यनुमानात्तयोरभेदायोगात्कुतो विशेषणविशेष्यतेत्याशङ्क्याऽऽह—एकदेति । तयोरंशांशित्वाद्यभावादैक्यात्तद्बलाद्ब्रह्मविरुद्धानां बद्धत्वादीनामहमर्थे तद्विरुद्धपारोक्ष्यदीनां चान्यतरत्र संभवो न कदाचिदस्त्यतो हेत्वसिद्धिरित्यर्थः ।।१४२३।।

विशेषणविरुद्धानां विशेष्ये संभावना नेत्युक्तं समर्थयते—परस्परेति । मैत्रो दीर्घो गौरश्चेत्युक्ते दीर्घत्वविशेषणं विशेष्ये ह्रस्वत्वमेव निवर्तयति न गौरत्वं तदपि रक्तत्वाद्येव न दीर्घत्वमेवं सर्वत्र विशेषणानि विशेष्ये स्वविरुद्धं व्यावर्तयन्त्यतो ब्रह्मविरुद्धं संसारित्वादि नाऽऽत्मानं तद्विरुद्धं च पारोक्ष्यादि न ब्रह्म स्पृशतीत्यर्थः ।।१४२४।।

ब्रह्माहमर्थयोरभेदः संसारित्वादिध्वस्तिश्च वाक्यादेव सिध्यति चेदर्थभेदाद्वाक्यभेदः स्यादित्याशङ्क्याभेदस्य शाब्दत्वादन्यनिवृत्तेरार्थत्वान्नैवमित्याह—विशेषणेति । शाब्दाभेदज्ञानशक्त्या संसारित्वादिध्वंसे हेतुमाह—मोहेति । अभेदविरुद्धं बद्धत्वादि तच्छब्दार्थः ।।१४२५।।

ब्रह्माहमर्थयोर्विशेषणविशेष्यत्वे वाक्यार्थो नीलोत्पलवन्नानारसः स्यादित्याशङ्क्य परिच्छिन्नाकारसंसर्गहीनचिदेकरसत्वादात्मनस्तत्र विशेषणविशेष्यत्वस्याविवक्षितत्वान्नैवमित्याह—एकेति । सजातीयभेदव्युदासार्थमेकपदम् । विजातीयभेदापवादार्थमेकरूपेत्युक्तम् । स्वगतभेदनिरासार्थमसंसर्गपदम् । आश्रयाद्यपेक्षां क्षेप्तुं मात्रेति । कथं तर्हि ब्रह्मणो विशेषणत्वं प्रतीचश्च विशेष्यत्वं प्रागुक्तमित्याशङ्क्य कल्पनयेत्यभिप्रेत्याऽऽह—विशेषणानामिति ।।१४२६।।

प्रतीचि वस्तुतो विशेषणविशेष्यत्वासंभवे कथं वाक्यगम्यतेत्याशङ्क्याऽऽह—विशेषणानामिति । शुद्धे तस्मिन्न विशेषणविशेष्यता वाच्ये त्वस्त्यतः शुद्धस्य लक्ष्यत्वाद्वाच्यस्य लक्षणत्वाद्विशिष्टार्थद्वयेनाद्वयं प्रत्यग्वस्तु लक्ष्यमित्यतो युक्तं तस्य वाक्यार्थत्वमित्यर्थः ।।१४२७।।

अहमर्थस्य लक्षकत्वं स्फुटयति—अनन्येति । ब्रह्मसंसृष्टाहमर्थेन तस्यानतिशयप्रत्यक्त्वं लक्ष्यमित्यर्थः । ब्रह्मार्थस्य लक्षकत्वं स्फोरयति—तथेति । प्रतीचा[4] संसृष्टब्रह्मार्थेन तस्य पूर्णता लक्ष्येत्यर्थः ।।१४२८।।

---

१. सामर्थ्यात् = प्रपञ्चमिथ्यात्वश्रुतिसामर्थ्यात् ।

२. लक्ष्यलक्षणता विशिष्टार्थशक्तेन पदद्वयेनाद्वयं वस्तु लक्ष्यत इत्यर्थः ।

३. दण्डे देवदत्ताभेदाभावात् न विशेषणविशेष्यता दण्डिनो देवदत्तसमानाधिकृतत्वात् तादात्म्यं न दण्डेन देवदत्तस्य । तस्य = दण्डस्य । मिथोऽभेदसंभवात् = मिथोऽभेदप्रसंगात् । तच्च नास्तीत्यर्थः ।

४. प्रतीचा = अहमर्थेन संसृष्टब्रह्मरूपेणार्थेन पूर्णं ब्रह्म लक्ष्यत इत्यर्थः ।

निवर्त्यभेदाद्भिन्नोऽर्थोऽमानित्वादेर्यथा तथा । ब्रह्माहमर्थयोर्ज्ञेयस्तयोरैकार्थ्यहेतुतः ।।२९।।
अनात्माब्रह्मताहेतौ प्रत्यग्ध्वान्ते निवर्तिते । पदार्थ एक एव स्याद्ब्रह्माहंपदयोः परः ।।३०।।
भेदसंसर्गनाशार्थो नात उक्तेरिहेष्यते । अहंब्रह्मश्रुतेः साक्षात्तादात्म्यमिह गम्यते ।।३१।।
कर्तुर्ज्ञातुर्हि या दृष्टिः साऽविद्योत्थार्थलेह्निनी । तत्प्रत्यगात्मदृष्ट्या तां प्रत्याख्यायाश्नुतेऽद्वयम् ।।३२।।
अस्मीतीहत्यनिर्देशाद्विद्याकालैव मुक्तता । सिद्धाऽतोऽसौ न साध्या स्यादग्निहोत्रादिकार्यवत् ।।३३।।
प्रत्यग्याथात्म्यविज्ञानमात्रव्युत्पत्तिसिद्धये । तस्मादिति श्रुतिर्वक्ति ह्युत्पत्त्यादिनिवृत्तये ।।३४।।

ब्रह्मभावसर्वभावयोरविशेषः

अविद्यातज्जनिर्मुक्तौ ब्रह्म ब्रह्माभवत्स्वतः । सर्वः कृत्स्नस्तथा पूर्णः शब्दाः पर्यायवाचकाः ।।३५।।

शुद्धाशुद्धयोरध्याससंबन्धाल्लक्ष्यलक्षणत्वेन प्रत्यग्ब्रह्मणोरैक्यमुक्तमिदानीमेकेनैव पदेनैकरस्यार्थसिद्धेरलं पदान्तरेणेत्याशङ्क्याऽऽह—निवर्त्येति । यथाऽमानित्वमदम्भित्वमहिंसेत्यादिपदस्य निवृत्त्युपलक्षितस्वरूपमात्रनिष्ठत्वेऽपि निवर्त्यमानदम्भादिभेदाद्भिन्नार्थता तथा ब्रह्मार्थे पारोक्ष्यमहमर्थे सद्वयत्वमिति निवर्त्यभेदात्तत्त्वंशब्दपर्याययोर्ब्रह्माहंशब्दयोरर्थभेदान्न पदान्तरानर्थक्यमित्यर्थः । ब्रह्माहमर्थयोस्तद्वाचकयोः शब्दयोरिति यावत् । अस्तु तर्हि भिन्नार्थतैव तयोरित्याशङ्क्याऽऽह—तयोरिति । लक्ष्ययोस्तत्त्वमर्थयोरैक्याद्वाच्यभेदेऽपि न वस्तुतो भिन्नार्थतेत्यर्थः ।।१४२९।।

निवर्त्यभेदस्तर्हि किंकृत इत्याशङ्क्य तस्याज्ञानकृतत्वोक्त्या लक्ष्यैक्यं साधयति—अनात्मेति । ब्रह्मण्यनात्मत्वस्याऽऽत्मनि चाब्रह्मत्वस्य प्रतिभानहेतावनाद्यज्ञाने वाक्योत्थज्ञानादपनीते परमात्मैव प्रत्यग्भूतो ब्रह्माहंशब्दयोर्लक्ष्योऽर्थो भेदसंसर्गहीनः सन्नखण्डैकरसो भवतीत्यर्थः ।।१४३०।।

विमतं संसृष्टार्थं वाक्यत्वाद्गवानयनवाक्यवदित्याशङ्क्याऽऽह—भेदेति । इहेत्यात्मोक्तिः । न हि तत्र वाक्यस्य भेदः संसर्गोऽन्यनिवृत्तिर्वाऽर्थस्तस्य सर्वस्याऽऽविद्यस्य विद्यापोह्यत्वादतो वाक्यत्वेऽप्यखण्डार्थत्वं प्रकृष्टप्रकाशादिवाक्यवदित्यनैकान्तो हेतुरिति भावः । अहं ब्रह्मेतिसामानाधिकरण्यसिद्धमर्थमुपसंहरति—अहमिति । साक्षादित्यैक्यावगतेरापरोक्ष्यं विवक्ष्यते । इहेति ब्रह्मात्मनोरुक्तिः ।।१४३१।।

श्रौतं ज्ञानं जडमजडं वा ? आद्ये तद्गम्यत्ववदध्यक्षादिगम्यत्वमपि ब्रह्मात्मनः स्याद् द्वितीये तस्य तदभेदान्न विषयविषयितेत्याशङ्क्याऽऽद्यमङ्गीकृत्य परिणामिसाभासा बुद्धिरिष्टा चक्षुरादिजन्या वृत्तिरविद्योत्थशब्दादिविषया न ब्रह्म विषयीकरोतीत्याह—कर्तुरिति । प्रमातृपरिणामस्या[1]ऽऽत्मग्राह्यतया तद्ग्राहकत्वमयुक्तं न हि सवितृप्रकाश्यं रूपं सवितारं प्रकाशयतीति वक्तुं हिशब्दः । तर्हि श्रौती दृष्टिरपि दृष्टित्वादितरवन्न ब्रह्म स्पृशेदित्याशङ्क्य श्रौताद्वयप्रत्यङ्मात्रदृष्ट्येतरदृष्टिं तद्विषयं चाविद्यातत्कार्यं निरस्य तद्ब्रह्माऽऽत्मानमद्वयं प्रत्यङ्मात्रं व्याप्नोतीत्याह—तदिति । वाक्योत्थदृष्टिर्हि ब्रह्म स्पृशति तदौपनिषदत्वश्रुतेर्दृष्ट्यन्तरं तु नैवं "पराञ्चि खानी"तिश्रुतेरिति भावः ।।१४३२।।

ज्ञानफलमज्ञानध्वस्त्या पूर्णात्मनाऽवस्थानं कैवल्यं न ज्ञानकालभावि श्रौतफलत्वात्कर्मफलवदित्याशङ्क्य श्रुतिविरोधमाह—अस्मीतीति । मुक्तेर्ज्ञानेन तुल्यकालत्वे फलितमाह—अत इति । तत्र वैधर्म्यदृष्टान्तमाह—अग्निहोत्रादीति ।।१४३३।।

न केवलं पदविरोधादनुमानानुदयः किंतु तस्मादित्याद्यनन्तरवाक्यविरोधादपीत्याह—प्रत्यगिति । प्रतीचो याथात्म्यस्य विशिष्टं वाक्योत्थज्ञानमात्रमेव व्युत्पत्तिस्ततः सिद्धिर्मुक्तिरुत्पत्तिनाशादिबन्धध्वस्तिरूपा तस्या ज्ञानकाले प्राप्तिद्योतनार्थं तस्मादित्यादिवाक्यमाह श्रुतिरतो न कालान्तरभावि कैवल्यमित्यर्थः ।।१४३४।।

फलवचनार्थमुपसंहरति—अविद्येति । स्वतो ब्रह्मैवाविद्यातत्कार्याभ्यामब्रह्मवदधिगतं विद्यया तन्निवृत्तौ स्वाभाविकं ब्रह्मैवाभवदित्यर्थः । सर्वभावो ज्ञानफलं श्रूयते न ब्रह्मभावस्तत्कथं ब्रह्माभवदित्युक्तमत आह—सर्वं इति । सर्वशब्दस्य ब्रह्मपर्यायत्वात्तद्भाव एव ज्ञानफलमुच्यत इत्यर्थः ।।१४३५।।

---

१. प्रमातृपरिणामस्य प्रमातृस्वरूपप्रविष्टान्तःकरणपरिणामस्य ।

आत्माविद्यासमुत्थानामात्मयाथात्म्यमात्रतः । कर्मवत्काङ्क्षते ज्ञानं विशिष्टं नाधिकारिणम् ॥३६॥

ज्ञानस्य कर्मवत् विशिष्टाधिकार्यनपेक्षा

देवादीनामतो यो यो यथोक्तेनैव वर्त्मना । प्रत्यबुध्यत तद्ब्रह्म स स तदभवत्परम् ॥३७॥
प्रत्यग्बोधातिरेकेण साधनान्तरनिह्नुतौ । एवेत्यवधृतिर्ज्ञेया ज्ञानादेव ततो भवेत् ॥३८॥
आत्मयाथात्म्यविज्ञानाद्यदन्यत्साधनान्तरम् । ज्ञानाभावोऽथवा सर्वमविद्यैवेति निश्चितिः ॥३९॥
मनुष्या यदमन्यन्त साध्वेवातस्तदीरितम् । न कश्चिदपि दोषोऽत्र पूर्वोक्तोऽतः प्रसज्यते ॥४०॥
प्रत्यक्तयैव संबन्धादात्मनोऽनात्मवस्तुना । विशिष्टेनाविशिष्टस्य क्लृप्तेनाकल्पितात्मनः ॥४१॥
यतोऽतो लोकबुद्ध्यैव देवादीनामितीर्यते । तुल्यो देवादिसंबन्धो ब्रह्मणो मशकादिभिः ॥४२॥

तद्धैतत्पश्यन् इत्यादेरवतरणम्

अन्तरेणाधिकारं चेन्नाऽऽत्मबोधस्य संभवः । न जन्मान्तरसंस्काराद्वामदेवस्य तद्भवेत् ॥४३॥

सर्वशब्दस्य ब्रह्मपर्यायत्वे युक्तिमाह—आत्मेति । यथा रज्ज्वविद्याजनितभुजंगादीनां रज्जुरेव तत्त्वं तथा ब्रह्माविद्याप्रसूतप्रपञ्चस्य ब्रह्ममात्रतया प्रपञ्चविषयः सर्वशब्दो ब्रह्मशब्दस्य पर्यायो युक्त इत्यर्थः । "तद्यो यो देवानामि"त्यादिवाक्यतात्पर्यमाह—कर्मवदिति । यथाऽग्निहोत्रादि मनुष्यत्वजातिमन्तमर्थित्वादिविशेषणमधिकारिणमपेक्षते न तथा ज्ञानमर्थित्वादिविशेषणस्य साधारणत्वेऽपि मनुष्यत्वादिविशेषणमनियतमिति वक्तुमुत्तरं वाक्यमित्यर्थः ॥१४३६॥

तदक्षराणि योजयति—देवादीनामिति । अधिकार्यनियमोऽतःशब्दार्थः । यथोक्तेनान्वयादिकृतपदार्थशोधनादिनेति यावत् ॥१४३७॥

एवकारं व्याकरोति—प्रत्यगिति । अवधृतिफलमाह—ज्ञानादिति । साधनान्तराभावाज्ज्ञानादेव मुक्तिरित्यर्थः ॥१४३८॥

मुक्तेर्हेत्वन्तराभावं साधयति—आत्मेति । अन्यदित्यस्याथवेत्यत्र संबन्धः । ज्ञानस्याभावो यस्मिन्निति ज्ञानाभावः कर्म तद्वाऽन्यद्वाऽभ्यासादि सर्वमविद्या न मोक्षहेतुरित्येवकारसामर्थ्यान्निश्चितम् । यद्यपि ब्रह्मज्ञानमविद्याकार्यत्वादुक्तकर्मादिवदविद्यात्मकमेव तथाऽपि स्वविषयभूतप्रत्यगर्थसामर्थ्यात्तस्याविद्यानिवर्तकत्वेन मोक्षहेतुत्वं निर्धारितमित्यर्थः ॥१४३९॥

एवकारार्थमुपजीव्य फलितमाह—मनुष्या इति । यतो ज्ञानमेव मोचकं नान्यदतो ब्रह्मविद्यया सर्वं भविष्याम इति यदमन्यन्त मनुष्यास्तत्तेषामीरितं वचो युक्तमेवेत्यर्थः । कथं पुनरुपोद्घातोक्तेषु दोषेषु विद्यमानेषु त्वदीयमतमुचितमित्याशङ्क्याऽऽह—न कश्चिदपीति । यतो ज्ञानाद्ब्रह्मभावसंभवो निर्णीतोऽत उपोद्घातोक्तदोषः कश्चिदप्यस्मत्पक्षे नास्तीत्यर्थः ॥१४४०॥

ब्रह्मैवाविद्यया संसरति विद्यया विमुच्यत इत्युक्तत्वाद्देवादीनां विद्याविद्याभ्यां बन्धमोक्षोक्तिस्तद्विरुद्धेत्याशङ्क्य देवादीनामित्यादि लोकदृष्ट्यपेक्षयेत्यादिभाष्यतात्पर्यमाह—प्रत्यक्तयेति । यतः सर्वस्यानात्मनस्तत्त्वमात्मैवातस्तत्र तत्र प्रत्यक्त्वेन तस्य संबन्धादौपाधिकलोकनिष्ठभेदबुद्ध्या देवादीनामित्यात्मभेदमाविद्यमनूद्य तत्तद्रूपेण स्थितब्रह्मचैतन्यस्यैव विद्याविद्याभ्यां बन्धमोक्षौ श्रुत्योच्येते न परिच्छिन्ने जीवशब्दिते प्रतिबिम्बादौ । देवादौ कल्पिते बन्धमोक्षौ कल्पेते कल्पनाया वस्तुनिष्ठत्वात्तन्न पूर्वापरविरोध इत्यर्थः । आत्मनोऽनात्मना प्रत्यक्त्वेन संबन्धे प्रतीचोऽकल्पितत्वमितरस्य तस्मिन्क्लृप्तत्वं च हेतुरनात्मनः कल्पितत्वेऽन्यस्याकल्पितत्वे च वैशिष्ट्यमवैशिष्ट्यं च हेतुरिति द्रष्टव्यम् । देवादीनामुत्तमत्वात्तत्र प्रत्यक्त्वेन ब्रह्मणः संबन्धेऽपि नाधमेषु मशकादिषु सोऽस्तीति तदीयसर्वात्मत्वविरोधमाशङ्क्याह—तुल्य इति । यो ब्रह्मणो देवादिभिः संबन्धः स मशकादिभिरपि तुल्यः सर्वत्र स्वरूपत्वाविशेषादौपाधिकावेवोत्कर्षनिष्कर्षौ न वास्तवाविति भावः ॥१४४१–१४४२॥

तद्धैतदित्याद्यवतारयितुं शङ्कयति—अन्तरेणेति । विमतं विशिष्टाधिकार्यपेक्षं विशिष्टपुमर्थहेतुत्वात्कर्म-

श्रुत्युक्तार्थस्य वा स्थेम्ने मन्त्रोदाहृतिरिष्यते । प्रमाणान्तरसंवादात्पुंसां विश्वासधीर्यतः ।।४४।।
अव्यावृत्ताननुगतं तद्वैतत्प्रत्यगात्मनि । तद्दर्शनादृषिः साक्षात्पश्यन्सर्वं प्रपन्नवान् ।।४५।।
सूक्तादिज्ञापनार्थाय ह्यहं मनुरितीरणम् । ऐकात्म्यं सर्वभूतेषु प्रतीचोऽसौ ददर्श ह ।।४६।।
तत्पश्यन्नित्यनेनात्र ब्रह्मविद्या प्रदर्श्यते । अहमासं मनुरिति विद्यायाः फलमुच्यते ।।४७।।
पश्यन्प्रतिपेद इति प्रयोगादवसीयते । विद्याकालैव कृत्स्नाप्तिरिति तन्मोहहानतः ।।४८।।
ब्रह्मप्राप्त्यन्तरायस्य प्रत्यक्संमोहमात्रतः । प्रत्यग्विज्ञानतो ध्वस्तेस्तत्प्राप्तिर्नान्यसाधना ।।४९।।
अविद्याध्वंसमात्रेण पुमर्थस्य समाप्तितः । तावताऽवसितेर्विद्या स्वार्थैवेति विनिश्चयः ।।५०।।
सकृदात्मप्रसूत्यैव निरुणद्ध्यखिलं भवम् । ध्वान्तमात्रनिरासेन न ततोऽन्याऽन्यथा मतिः ।।५१।।
देशकालाद्यसंबन्धाद्देशादेर्मोहकार्यतः । नानुत्पन्नमदग्धं वा ज्ञानमज्ञानमस्त्यतः ।।५२।।

वदन्यथा तस्यैवानुपपत्तिरित्यर्थः । तदुत्तरत्वेन मन्त्रमवतारयति—नेत्यादिना । जन्मान्तरानुष्ठितान्तरङ्गबहिरङ्ग-साधनसंस्कृतबुद्धेर्वामदेवस्य तत्सदृशस्य च पुंसो यथोक्तसंस्कारात्तद्ब्रह्मज्ञानं भवत्यतो न तस्य मनुष्याधिकार्य-पेक्षेत्यर्थः ।।१४४३।।

विमतं देवादीन्नाधिकरोति विहितसाधनत्वात्संमतवदित्याशङ्क्य मन्त्रब्राह्मणविरोधान्मैवमित्याह—श्रुतीति । ब्रह्मविद्या सर्वभावफलेति श्रुत्यर्थे श्रुतेरेव निश्चायकत्वात्किं मन्त्रेणेत्याशङ्क्याऽऽह—प्रमाणान्तरेति । अतो मन्त्रोदाहृतिरर्थवतीति शेषः ।।१४४४।।

मन्त्रस्थपदयोरर्थमाह—अव्यावृत्तेति । तदव्यावृत्तमेतदननुगतं ब्रह्म प्रसिद्धमित्यर्थः । पश्यन्नित्यादेरर्थ-माह—प्रत्यगिति । तस्य ब्रह्मणो दर्शनादृषिः सन्वामदेवनामा कश्चित्प्रत्यगात्मनि तद्ब्रह्म साक्षात्पश्यन्पूर्णं ब्रह्मै-वाऽऽप्नवानिति योजना ।।१४४५।।

अहं मनुरित्यादिवाक्यं वामदेवसूक्तस्याऽऽदिं ज्ञापयितुमित्याह—सूक्तेति । तस्य सूक्तादित्वमृग्वेदिनां प्रसिद्धमिति वक्तुं हिशब्दः । अवतारितस्य सूक्तस्यार्थमाह—ऐकात्म्यमिति । ऋषिर्वामदेवः सर्वनामार्थः । ज्ञाना-न्मुक्तिरित्यस्यात्राऽऽदेयत्वमिति द्योतयितुं हेति निपातः ।।१४४६।।

अथ मन्त्रं त्रेधा विभज्य व्याचष्टे—तदित्यादिना । प्रकृतं वाक्यं सप्तम्यर्थः ।।१४४७।।

विद्याफलयोर्व्यवधानाभावे गमकमाह—पश्यन्निति । अन्यथा शतुरयोगादिति भावः । ननु ज्ञानादज्ञान-निवृत्तिरेव तत्काले भवति न कृत्स्नाप्तिरिति चेन्न तद्व्यवधिभूतमोहनिवृत्त्या कृत्स्नाप्तिरूपब्रह्मप्राप्तेर्विद्याकालत्वा-दित्याह—तन्मोहेति ।।१४४८।।

मोहनिवृत्त्या ब्रह्मप्राप्तिश्चेज्ज्ञानादेवासहायात्तद्भावात्तत्कालैव सा युक्ता न चाज्ञानमात्रं तत्प्राप्तिव्यवधानं देशादिनाऽपि तद्योगादतो न केवलज्ञानान्मुक्तिरित्याशङ्क्याऽऽह—ब्रह्मेति । देशादेरपि स्वरूपत्वाद्ब्रह्मणो न तेन व्यवधिरिति भावः । तत्प्राप्तिरित्यत्र तच्छब्दो ब्रह्मविषयः ।।१४४९।।

आत्मज्ञानस्याऽऽज्यादिज्ञानवत्पारार्थ्यान्न स्वतन्त्रस्य पुमर्थहेतुता तत्कथमव्यवहितफलतेत्याशङ्क्याऽऽह—अविद्येति । तावता यथोक्ताविद्याध्वस्तिहेतुत्वमात्रेण विद्यायाश्चरितार्थत्वादित्यर्थः ।।१४५०।।

ज्ञानादज्ञानध्वस्तावपि न पुमर्थसिद्धी रागादिसंभवादतोऽभ्यासापेक्षेत्याशङ्क्याऽऽह—सकृदिति । स्वरूप-लाभादेव क्षणमात्रेण सकार्यमज्ञानं निरस्यति ज्ञानमित्यत्र हेतुमाह—नेति । अज्ञानेतररागाद्यभावात्तद्ध्वंसि ज्ञानं तस्यापि ध्वंसकमित्यर्थः ।।१४५१।।

घटज्ञानात्तदज्ञानवद्ब्रह्माज्ञानमपि सर्वात्मना न निवर्तते अतोऽवशिष्टाज्ञानध्वंसार्थमन्यापेक्षेत्याशङ्क्य ब्रह्मणो घटादिवैषम्यमाह—देशेति । घटादि देशादिना परिच्छिद्यते नैवं ब्रह्म देशादेर्मोहकार्यत्वेन तन्निष्ठस्य परिशुद्धे ब्रह्मण्यसंबन्धादित्यर्थः । ब्रह्मणो घटादिवैषम्ये तज्ज्ञानस्यापि तज्ज्ञानाद्वैषम्यसिद्धिरित्याह—नानुत्पन्नमिति । अतो ज्ञानादिति यावत् ।।१४५२।।

नाबाधित्वेह बाध्यार्थं बाधको बाधकात्मताम् । लभते मेययाथात्म्यहेतुमात्रव्यपेक्षतः ।।५३।।
यतोऽतोऽविद्यातज्जानां बाधितत्वात्प्रबोधतः । सकृदेव च मायोगान्नोर्ध्वं तच्चोदनेष्यते ।।५४।।
सम्यग्ज्ञानशिखिप्लुष्टमोहतत्कार्यरूपिणः । सकृन्निवृत्तेर्बाध्यस्य किं कार्यमवशिष्यते ।।५५।।
ध्वान्तादिघस्मरे प्रत्यक्चैतन्यात्मैकनिष्ठिते । प्रत्यर्थिनि स्थितेऽनात्मधियां स्यात्सत्यता कुतः ।।५६।।
अज्ञातमिथ्याविज्ञाततत्त्वमात्रावलम्बिना । ज्ञानेन किं न विज्ञातं वद किं वा न बाधितम् ।।५७।।

तदिदमप्येतर्हि–इत्यादेर्विवरणम्

सर्वापत्तिरियं युक्ता देवादीनां महात्मनाम् । अस्मदादेस्तमस्वित्वान्न संभाव्येति चेन्न तत् ।।५८।।
एतर्ह्यपि तु तद्ब्रह्म यो यः साक्षादबुध्यत । स एव तदभूद्यस्मान्नातोऽभिजनकारणम् ।।५९।।
अप्येतर्हि यथान्यायं यो वेदाऽऽत्मानमद्वयम् । स इदं सर्वमात्मैव भवत्यज्ञानहानतः ।।६०।।
न हीहोत्कृष्टसत्त्वेषु देवादिषु परात्मनः । नापि चात्यन्तमूढेषु विशेषः कश्चिदीक्ष्यते ।।६१।।
प्रत्यक्तत्त्वधियो वाऽस्ति स्वतोबुद्धैकताऽऽत्मनः[1] । श्रेयांसि बहुविघ्नानीत्याशङ्क्यैतदथोच्यते ।।६२।।

ब्रह्मज्ञानस्वरूपालोचनायामपि सर्वात्मना तदात्माज्ञानध्वंसीत्याह—नेत्यादिना । इहेत्यात्मोक्तिः । बाध्योऽर्थोऽज्ञानं तत्कार्यं च । ज्ञानस्य बाधकत्वे सहायसापेक्षत्वमाशङ्क्याऽऽह—मेयेति । आत्मस्वरूपहेतुमात्रापेक्षत्वात्तज्ज्ञानस्य नान्यापेक्षया फलवत्त्वमित्यर्थः ।।१४५३।।

यस्मादात्मज्ञानं तद्गताशेषाज्ञानतत्कार्यध्वंसि तस्मात्तत्र मानसंबन्धादुत्पन्नज्ञानाद्बाध्यमात्रस्य सकृदेव ध्वंसात्पुमर्थसमाप्तेर्नोर्ध्वं मानाद्यपेक्षेति फलितमाह—यत इति । ज्ञानादूर्ध्वं मानाद्यपेक्षाभावेऽपि मोक्षार्थं कर्तव्यान्तरमस्तीत्याशङ्क्याऽऽह—सम्यगिति । अथवा ज्ञानादज्ञानतत्कार्यनिवृत्तावपि न पुरुषार्थपरिसमाप्तिर्विहितादेव ज्ञानात्तद्भावादित्याशङ्क्याऽऽह—नोर्ध्वमिति । तत्र हेतुमाह—सम्यगिति ।।१४५४-५५।।

बाध्यस्य सम्यग्ज्ञानान्निवृत्तावप्यबाध्यानामनात्मबुद्धीनां ध्वंसार्थं कार्यापेक्षेत्याशङ्क्याऽऽह—ध्वान्तादीति । ज्ञानस्याज्ञानतज्जध्वंसशीलत्वे हेतुमाह—प्रत्यगिति । प्रत्यक्त्वमजडत्वमात्मत्वमद्वयत्वं च ज्ञेये वस्तुन्यस्ति तस्मिन्नेवावस्थिते सम्यग्ज्ञाने परिपन्थिनि सति पराचीनजडानात्मद्वैतबुद्धीनां नाबाध्यत्वाशङ्केत्यर्थः ।।१४५६।।

सम्यग्ज्ञानस्य न प्रत्यर्थित्वं बोधकत्वेनाबाधकत्वादित्याशङ्क्योभयमपि तत्रास्तीत्याह—अज्ञातेति । अकारकमपि ज्ञानं बोधकं बाधकं चेष्टं न चाऽऽत्मनि बोधैकरसे तद्भेदोऽस्तीत्यर्थः ।।१४५७।।

तद्धैतदित्यादि व्याख्याय तदिदमित्याद्यवतारयितुं शङ्कयति—सर्वापत्तिरिति । अस्तु तेषां माहात्म्यं साधनाधीना सर्वापत्तिरस्मदादेरपि स्यादित्याशङ्क्याऽऽह—अस्मदिति । तमस्वित्वात्तद्धेत्वसत्त्वात् । तदुत्तरत्वेन वाक्यमादत्ते—न तदिति ।।१४५८।।

तदक्षराणि व्याकरोति—एतर्हीति । तत्त्वसाक्षात्कारस्यैव मोक्षहेतुत्वं न परोक्षधीमात्रस्येति विवक्षित्वा साक्षादित्युक्तम् । नाऽऽभिजात्यकृता मुक्तिः किंतु ज्ञानाधीनेत्यर्थः । अयमेव तुशब्दार्थः ।।१४५९।।

प्राप्तप्राप्तव्यभावेनाऽऽत्मब्रह्मणोर्भेदमाशङ्क्योक्तं व्यनक्ति—अप्येतर्हीति । पूर्वकालवदित्यपेरर्थः । यथान्यायमुक्तान्वयादिक्रमेणेत्यर्थः । सर्वभावस्याऽऽत्मत्वे सदाभावात्कुतो ज्ञानाधीनतेत्याशङ्क्याऽऽह—अज्ञानेति ।।१४६०।।

आभिजात्यं मुक्तिं प्रत्यहेतुरिति व्यक्तीकुर्वन्न हीत्यादिभाष्यं विभजते—न हीति । इहेति शास्त्रग्रहणम् । वस्तुनस्तज्ज्ञानस्य वा सर्वत्राविशेषे हेतुमाह—स्वत इति । स्वभावतो बोधैकरसत्वाद्वस्तुनस्तत्र तज्ज्ञाने वा वस्तुतो न विशेषोऽस्तीत्यर्थः । वाक्यान्तरं शङ्कोत्तरत्वेनाऽऽदत्ते—श्रेयांसीति । ब्रह्मविद्याफले विघ्नमाशङ्क्य तन्निरासार्थं तस्य हेत्यादिवाक्यमित्यर्थः । तस्य तन्निरसनसमर्थताद्योतनार्थमथेत्युक्तम् ।।१४६१-६२।।

१. स्वतो बुद्धैकतात्मनः—अत्र स्वतोबाधैकरसात्मनः इति टीकापाठो दृश्यते ।

"तस्य ह न देवाश्च" इत्यादेः भाष्यद्वयेन विवरणम्

तस्य ज्ञातात्मतत्त्वस्य प्रध्वस्ततमसो यतेः । इन्द्रादयोऽपि नैवालं कैवल्याप्तिनिवारणे ।।६३।।
देवाद्यैश्वर्यविषयव्यतिक्रान्तत्वहेतुतः । कैवल्याभूत्या उद्युक्ता ईश्वरा अपि नेशते ।।६४।।
ईशेशितव्यसंबन्धः प्रत्यगज्ञानहेतुजः । सम्यग्ज्ञानात्तमोध्वस्तावीश्वराणामपीश्वरः ।।६५।।
ईश्वराणामनैश्वर्यं कस्माद्ब्रह्मविदीति चेत् । आत्मा ह्येषामितीत्याह तद्धेतुप्रतिपत्तये ।।६६।।
भोज्यत्वेन जगत्कृत्स्नं कर्मविद्यादिसाधनैः । उपात्तं तदभुक्त्वा तु कैवल्यं लभते न चेत् ।।६७।।
इत्याशङ्कापनुत्त्यर्थं परो ग्रन्थोऽवतार्यते । कैवल्यावाप्तिविघ्नाय नालं देवा अपीश्वराः ।।६८।।
अविद्याविषये यस्मात्तेषामधिकृतिः स्मृता । न तु प्लुष्टात्मयाथात्म्यविज्ञानतमसामसौ ।।६९।।

देवा न विघ्नं कुर्युरित्यप्राप्तप्रतिषेध इति शङ्का

ब्रह्मविद्याफलप्राप्तौ विघ्नं कुर्वन्ति देवताः । इत्यत्र किंनिमित्तेयमाशङ्केत्यभिधीयते ।।७०।।
युक्ताऽऽशङ्का यतो मर्त्या देवान्प्रत्यृणिनः श्रुतेः । पशुलोकत्ववाक्याच्च पारतन्त्र्याच्च कर्मिणः ।।७१।।

तद्व्याचष्टे—तस्येति । ज्ञानयोग्यमधिकारिणमाह—यतेरिति । अन्येषां मुक्तौ विघ्नाचरणे शक्तिर्दूरापास्तेत्यपेरर्थः ।।१३६३।।

विदुषो विद्याफलाप्तौ विघ्नकरणे देवादीनां न शक्ति रित्यत्र हेतुमाह—देवादीति । विदुष इत्यध्याहारः । उद्युक्ता इत्यत्रापिर्योज्यः ।।१४६४।।

देवादीनामीश्वरत्वमाश्रित्योक्तं तदेतद्विद्वद्विषये नास्तीत्याह—ईशेति । ईश्वराणां देवादीनामिति यावत् । विद्वानिति शेषः ।।१४६५।।

वाक्यान्तरमुत्थापयितुं पृच्छति—ईश्वराणामिति । तद्विषये तेषां नानैश्वर्यं युक्तमीश्वरत्वविरोधादित्यर्थः । देवादीनां ब्रह्मविद्विषये स्वातन्त्र्याभावे हेतुसिद्ध्यर्थमात्मा हीत्याद्याह श्रुतिरतो युक्तं तद्विषये तेषामनैश्वर्यमित्याह—आत्मेति । न चैतावता तदैश्वर्यं विरुध्यते तस्यान्यत्र सावकाशत्वादिति हिशब्देन द्योत्यते ।।१४६६।।

उत्कृष्टं श्रेयो मोक्षस्तत्प्राप्तौ प्रत्यूहः संभाव्यते "श्रेयांसि बहुविघ्नानि भवन्ति महतामपी"ति न्यायादित्याशङ्क्य तत्परिहर्तुं तस्य हेत्याद्यवतार्य भाष्यार्थानुसारेण व्याख्यातम् । इदानीं भर्तृप्रपञ्चव्याख्यानुसारेणापि व्याख्यातुं भोज्यतया कृत्स्नं जगदुपात्तमित्यादितद्भाष्योक्तां शङ्कामाह—भोज्यत्वेनेति । उपासनादिसाधनसंपदा भोज्यत्वेन आर्जितस्य भोगादृते मुक्तिरयुक्ता तदार्जनसाधनविरोधान्न च सर्वमपि जगद्भुक्त्वा पुंसो मुक्तिरिति युक्तं तद्भोगस्य पुरुषायुषेणापि दुष्करत्वादित्यर्थः ।।१४६७।।

तत्रोत्तरत्वेन वाक्यं पातयति—इत्याशङ्केति । तद्योजयति—कैवल्येति ।।१४६८।।

द्वैतविषये हि तेषामधिकार इति हेतुभाष्यार्थमाह—अविद्येति । अयं पुनरद्वैतावस्थितो भवतीति भाष्यार्थमाह—न त्विति । तद्विषये नाधिकारो देवादीनां तस्य तैरविभागान्न हि विदुषो जगदशेषमपि भुक्त्वा मुक्तिरिति युक्तं सहेतुकस्य तस्य तत्त्वज्ञानान्निवृत्त्या तस्यासंभवादित्यर्थः ।।१४६९।।

भाष्यद्वयानुरोधेन तस्य हेत्यादि व्याख्याय शङ्कयति—ब्रह्मेति । तत्र विद्याफलाप्तौ देवता विघ्नं कुर्वन्तीत्ययुक्ताऽऽशङ्का निमित्ताभावादतोऽप्राप्तनिषेधः श्रुत्या क्रियत इत्यर्थः । परिहरति—अभिधीयत इति । 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायत' इतिश्रुतेर्मनुष्या देवान्प्रत्यृणिनो गम्यन्ते तथा चाधमर्णानिवोत्तमर्णास्ते तान्प्रति विघ्नं कुर्युरित्यर्थः । यथा पशुरेवं स देवानामिति मनुष्याणां पशुत्वश्रवणात् । "अथो अयं वा आत्मा सर्वेषां भूतानां लोक" इति च तेषां सर्वप्राणिभोग्यत्वश्रुतेः कर्मिणां पारतन्त्र्याद्देवादयस्तद्विघ्नकरा भवन्तीत्याह—पश्विति । विद्याफलप्राप्तौ देवादीनां विघ्नाचरणे हेत्वन्तरं समुच्चेतुमेकश्चकारः । पशुत्वं लोकत्वं च देवादीन्प्रति मनुष्याणां विवक्षितमेव तत्कार्यस्य देवादिषु दर्शनादिति दर्शयितुं द्वितीयश्चकारः ।।१४७०-१४७१।।

**ब्रह्मवित्त्वे च पारार्थ्यं देवादीन्प्रति हीयते । तस्य ब्रह्मतमोहेतोस्तन्निवृत्तौ निवर्तते ।।७२।।**
**अप्रियारिष्टिवाक्याभ्यामयमर्थोऽवसीयते । तस्माद्विद्याफलावाप्तौ विघ्नं कुर्वन्ति देवताः ।।७३।।**

कर्मफलप्राप्तौ देवानां विघ्नकरणशङ्का

**नन्वेवं तर्ह्यविश्रम्भो ह्यदृष्टफलसंपदि । प्राप्तोऽभ्युदयमोक्षार्थसाधनव्यापृताविह ।।७४।।**
**तथेश्वरोऽपि नो विघ्नं कुर्वन्केन निषिध्यते । कालमन्त्रौषधादीनामचिन्त्या शक्तिरिष्यते ।।७५।।**
**कर्ममन्त्रौषधितपःकालादीनां च विद्यते । महती शक्तिरित्यत्र युक्तमाशङ्कितुं फले ।।७६।।**
**देवादयः स्वतन्त्रत्वात्फलप्राप्तिविघातयोः । सर्वं कुर्युरनाश्वासस्तस्मात्प्राप्नोति कर्मसु ।।७७।।**

उक्तशङ्कानिरासः

**नैवं सर्वपदार्थानां नियतादानकारणात् । जगद्वैचित्र्यदृष्टेश्च स्वभावे तदसंभवात् ।।७८।।**
**सुखादिफलदं कर्मेत्यस्मिन्पक्षे व्यवस्थिते । श्रुतिन्यायादिसंसिद्धेर्नातो विघ्नकृतः सुराः ।।७९।।**
**कर्मणैव स्वसिद्ध्यर्थं तेषां क्रोडीकृतत्वतः । नाऽऽत्मानं लभते कर्म देवेशाद्यनपेक्षि सत् ।।८०।।**

मनुष्याणां देवादीन्प्रति पश्वादिभावश्चेद्ब्रह्मवित्त्वे सत्यपि तेषां तद्भावात्पारतन्त्र्यानिवृत्तेर्देवादयस्तान्प्रत्यपि विघ्नकराः स्युरित्याशङ्क्याऽऽह—ब्रह्मवित्त्वे चेति । पारार्थ्यस्याविद्यात्वाद्विद्यया ध्वस्तेरिति हेतुमाह—तस्येति । अथ वा मनुष्याणां देवादीन्प्रति पारतन्त्र्ये ब्रह्मवित्त्वेऽपि तदनिवृत्तेर्न ते ब्रह्मविद्यायां विघ्नमाचरेयुरित्याशङ्क्याऽऽह—ब्रह्मवित्त्वे चेति । पारतन्त्र्यस्याज्ञानकृतत्वाज्ज्ञानादज्ञाननिवृत्तौ निवृत्तेरित्याह—तस्येति ।।१४७२।।

ब्रह्मज्ञाने पारतन्त्र्यहानिरित्यत्र मानमाह—अप्रियेति । "तस्मादेषां तन्न प्रियं" "सर्वाणिभूतान्यरिष्टिमिच्छन्ती"तिवाक्याभ्यां ज्ञानात्पारतन्त्र्यध्वस्तिः सूचितेत्यर्थः । यद्वा देवादयो मनुष्याणां ब्रह्मविद्याप्रवृत्तिं प्रतिबध्नन्तीत्यत्र हेत्वन्तरमाह—अप्रियेति । फलितमाह—तस्मादिति । उक्तहेतुबलात्सामर्थ्याच्चेत्यर्थः ।।१४७३।।

सामर्थ्याच्चेद्विद्याफलाप्तौ तेषां विघ्नकरत्वं तर्हि कर्मफलाप्तावपि स्यादित्यतिप्रसङ्गं शङ्कते—नन्विति । सप्तमीत्रयं समानाधिकरणम् । अविश्रम्भो विश्वासाभावो देवादीनां तत्र विघ्नोत्पादे सामर्थ्यादित्यर्थः । अयमेव हिशब्दार्थः ।।१४७४।।

सामर्थ्याद्विघ्नकर्तृत्वेऽतिप्रसक्त्यन्तरमाह—तथेति । देवादिवदिति यावत् । अपिशब्दः समुच्चयार्थः । नोऽभ्युदयहेतुषु कर्मसु प्रवृत्तानामित्यर्थः । विघ्नं तत्फलप्राप्ताविति शेषः । अतिप्रसङ्गान्तरमाह—कालेति ।।१४७५।।

उक्तानुवादेन फलमाह—कर्मेति । अत्रेति कर्मनिमित्तफलोक्तिः । सप्तमीद्वयं समानाधिकरणम् ।।१४७६।।

चोद्यमुपसंहरति—देवादय इति । सर्वं निग्रहमनुग्रहं वा स्वेच्छाधीनमिति यावत् । तेष्वनाश्वासे कर्मकाण्डप्रामाण्यासिद्धिरिति भावः ।।१४७७।।

कस्येदं चोद्यं स्वभाववादिनामस्वभाववादिनां वेति विकल्प्याऽऽद्यं दूषयति—नैवमिति । दध्याद्युत्पिपादयिषया दुग्धाद्यादानदर्शनात्प्राणिनां सुखदुःखादितारतम्यदृष्टेश्च न स्वभाववादो युक्तस्तत्र नियतहेत्वादानादेरयोगादतो जगत्कर्मफलमित्यर्थः ।।१४७८।।

द्वितीयं प्रत्याह—सुखादीति । "पुण्यो वै पुण्येन कर्मणा" "कर्म हैवे"त्यादिः श्रुतिः । जगद्वैचित्र्यानुपपत्तिर्न्यायः । आदिपदेन "कर्मणा बध्यते जन्तुरि"त्याद्या स्मृतिर्गृह्यते । उक्तश्रुत्यादिप्रमिते यथोक्ते पक्षे स्थिते न कर्मकृतां फलप्राप्तौ देवादयो विघ्नं कुर्वन्तीत्यर्थः । उक्तं च कामसूत्रे—पुरुषकारपूर्वकत्वात्सर्वप्रवृत्तीनामवश्यंभाविनोऽप्यर्थस्योपायपूर्वकत्वादेव न निष्कर्मिणो भद्रमस्तीति ।।१४७९।।

अनुगुणत्वात्कर्मफले देवादयो न विघ्नमाचरन्तीत्यत्र हेतुमाह—कर्मणेति । तमेव हेतुं व्यतिरेकद्वारा साधयति—नेत्यादिना ।।१४८०।।

फलदानेऽनुलोमत्वान्नामी स्युर्विघ्नकारिणः । यथा कर्म तथेशादि कर्मापेक्ष्यैव सिध्यति ॥८१॥
सर्वं सर्वमपेक्ष्यैव संहतत्वात्प्रसिध्यति । प्रधानगुणभावश्च क्वचित्कस्यचिदिष्यते ॥८२॥
विघ्नकार्येऽपि चाप्येते नानपेक्ष्य प्रकुर्वते । तत्सामर्थ्याप्रणोद्यत्वात्सर्वेषां सर्वकर्मसु ॥८३॥

देवकालकर्मादीनां गुणप्राधान्यानियमः

गुणप्रधानभावश्च देवकालेश्वरादिषु । कर्मस्वनियतो दृष्टो नान्यथा चोपपद्यते ॥८४॥
यदैकस्य प्रधानत्वं तदाऽन्यस्याप्रधानता । एवं नृत्यज्जगन्नित्यमतद्वृत्त्याऽऽत्मनि स्थितम् ॥८५॥
गुणप्रधानभावश्च पदार्थानामनन्ततः । क्षेपीयस्त्वाच्च कालस्य दुर्ज्ञेयो मतिविभ्रमात् ॥८६॥
कर्मैव कारणं केचित्फलप्राप्तौ प्रचक्षते । दैवमेकेऽपरे कालं स्वभाव इति चापरे ॥८७॥
श्रुतयः स्मृतिवादाश्च कर्मप्राधान्यमेव तु । अङ्गीकृत्य प्रदृश्यन्ते प्रवृत्ताः सर्व एव हि ॥८८॥

देवादीनां कर्मानुगुणत्वान्न ते तत्फले विघ्नं कुर्वन्तीत्येतमर्थं तस्मादित्यादिभाष्यस्याऽऽह—फलेति । कर्मस्वरूपसिद्धिहेतुत्वात्तत्फलप्राप्तावनुकूलत्वान्न तत्र देवादीनां विघ्नकरत्वमित्यर्थः । यथा कर्म देवाद्यपेक्षमेवं तदपि कर्मापेक्षमतो न तत्फले तस्य विघ्नकर्तृतेति हेत्वन्तरमाह—यथेति ॥१४८१॥

कर्मणो देवादेश्चान्योन्यापेक्षा तेनास्वातन्त्र्यान्न कर्मफले देवादेर्विघ्नकर्तृतेत्युक्त्वा तयोरन्योन्यापेक्षत्वे हेतुमाह—सर्वमिति । एतच्चाग्रे स्फुटीकरिष्यति । कथं तर्हि क्वचित्कस्यचित्प्राधान्यमित्याशङ्क्याऽऽह—प्रधानेति । क्वचित्कार्ये कस्यचित्कर्मादेरिति यावत् । सर्ववादिभिरिष्टेऽर्थे न चोद्यमवतरतीत्यर्थः ॥१४८२॥

देवादेः कर्मापेक्षत्वे हेत्वन्तरमाह—विघ्नेति । विघ्नरूपं यत्कार्यं तत्रापि कर्मानपेक्ष्य देवादयो न कर्तारः सर्वेषु कर्मसु क्रियमाणेषु कार्येषु सर्वेषां हेतूनां तत्सामर्थ्यस्यानपोद्यत्वादतो विघ्नकार्येऽपि कर्मफले कर्मसामर्थ्यस्य दुर्वारत्वात्तत्र देवादीनां कर्मापेक्षावदन्यत्रापि सर्वत्र तेषां तदपेक्षा वाच्येत्यर्थः ॥१४८३॥

कर्मापेक्षत्वेऽपि तेषां प्राधान्यात्तत्फलप्रतिबन्धकत्वं स्यादित्याशङ्क्य प्रधानगुणभावश्चेत्यत्रोक्तं प्रपञ्चयति—गुणेति । कर्मविषये देवादिषु यो गुणप्रधानभावः सोऽनियतो न नियत इति योजना । अथवा देवादिषु कर्मसु च यो गुणप्रधानभावः सोऽनियतो दृष्टो नान्यथेति योजनीयम् । अथवा कर्मसु कार्येषु विषयभूतेषु देवादिषु गुणप्रधानभाव इति योज्यम् ॥१४८४॥

नियमाभावमुपपादयति—यदेति । न हि बहूनां द्वयोर्वैकस्मिन्कार्ये प्राधान्यं भिन्नमतित्वेन कार्याननुदयप्रसङ्गात् न च गुणप्रधानभावं विनैकमत्यं न चैकस्मिन्कार्ये प्रधानस्यान्यत्रापि तथात्वं दाहावौ प्रधानस्याग्नेः सेचनादावपि तत्प्रसङ्गादिति भावः । अनात्मसु मिथो गुणप्रधानत्वस्यानियमेऽपि चिदात्मनि प्राधान्यमितरत्र गुणतेति नियममाशङ्क्याऽऽह—एवमिति । न हि वस्तुतोऽद्वये गुणप्रधानत्वमस्ति कल्पितं त्वविरुद्धमिति भावः । अथवा यथोक्तस्य गुणप्रधानभूतस्य जगतः स्वातन्त्र्यमात्मनि गुणप्रधानभावहीने तदयोगादित्याशङ्क्याऽऽह—एवमिति ॥१४८५॥

तस्यानियमेऽपि यस्य यस्मिन्प्रधानत्वं गुणत्वं वा स तथैव सर्वैः किमिति न गृह्येतेत्याशङ्क्याऽऽह—गुणेति । असंख्यानामपि भावानां पर्यायेण गुणप्रधानत्वं शक्यं ज्ञातुमित्याशङ्क्याऽऽह—क्षेपीयस्त्वादिति । पुरुषायुषोऽल्पत्वादित्यर्थः । गुणप्रधानत्वस्य दुर्ज्ञानत्वे हेत्वन्तरमाह—मतीति ॥१४८६॥

भ्रान्तिहेतुविप्रतिपत्तिमाह—कर्मेति । एवकारो हेत्वन्तरनिरासार्थः । केचिदिति मीमांसकग्रहणम् । "दैवमेव परं मन्ये पौरुषं तु निरर्थकमि"तिन्यायेन देवताकाण्डीयमतमुक्तं दैवमिति । ज्योतिःशास्त्रविदामङ्गीकारं दर्शयति—अपर इति । स्वभाववादस्तु लोकायतादिभिरङ्गीकृतः ॥१४८७॥

कथं तर्हि निश्चयस्तत्राऽऽह—श्रुतय इति । हेत्वन्तराणामपि फलप्राप्तौ गुणत्वेनाङ्गीकारं दर्शयितुं तुशब्दः । कर्मप्राधान्यस्य प्रमाणसिद्धत्वेनोपादेयत्वं वक्तुं हिशब्दः ॥१४८८॥

पुण्यः पुण्येन भवति पापः पापेन कर्मणा । वचांस्येवं सुबहुशो लक्ष्यन्ते शास्त्रभूमिषु ।।८९।।

यद्यप्येषां स्वविषये प्राधान्यं कस्यचित्क्वचित् ।

अप्राधान्यं तदन्येषां तथाऽपि तु न कर्मणाम् । फलप्राप्तावहेतुत्वं शास्त्रन्यायावधारणात् ।।९०।।

### विद्याफले देवानां विघ्नकरणासामर्थ्यम्

कर्मणः फलसंप्राप्तिरप्राप्तिश्चेह येक्ष्यते । साद्गुण्यविगुणत्वाभ्यां सा स्यात्कर्मण एव च ।।९१।।

विघ्नं कुर्वन्ति नो देवा विद्योत्थफलसंगतौ । उक्तं यदपनुत्त्यर्थं तत्र प्रतिविधीयते ।।९२।।

अविद्याहानमात्रत्वात्कैवल्याप्तिफलात्मनः । तत्प्राप्तेर्ज्ञानकालत्वान्नालं विघ्नाय देवताः ।।९३।।

चक्षूरूपाभिसंबन्धसमकाला यथेष्यते । रूपाभिव्यक्तिरेवं स्यादविद्याध्वस्तिरात्मनः ।।९४।।

यथास्थितात्मयाथात्म्यज्ञानजन्मातिरेकतः । न तत्तमोनिवृत्तिः स्यात्तदुत्थस्य च वस्तुनः ।।९५।।

सर्पात्मना गृहीतायां न दण्डादीक्ष्यते स्रजि । प्रतीच्येकतनुग्राह्ये तदन्यन्न तथेक्ष्यते ।।९६।।

अन्योन्यव्यभिचारित्वमज्ञानेऽपि ह्यनात्मनाम् । किमु विध्वस्तनिःशेषघनाज्ञानेऽन्तरात्मनि ।।९७।।

श्रुतीरुदाहरति—पुण्य इति । "धर्मरज्ज्वा व्रजेदूर्ध्वंमि"त्यादिस्मृतिवचनानि श्रुत्यनुसारीणि विवक्षन्नाह—वचांसीति । दर्शितवचनसदृशानि वचनान्तराण्यपि श्रौतस्मार्तानि द्रष्टुं योग्यानि सन्तीत्याह—एवमिति ।।१४८९।।

सूर्योदयदाहसेचनादौ कालज्वलनजलादेः प्रधानत्वप्रसिद्धेर्न कर्मैव प्रधानमित्याशङ्‌क्याऽऽह—यद्यपीति । एषां हेतूनां मध्ये कस्यचित्कालादेः स्वविषये क्वचिदुदयादौ प्राधान्यमन्येषां च तत्राप्राधान्यं यद्यपि दृष्टं तथाऽपि कर्मणां फलप्राप्तौ नाप्राधान्यमिति योजना । अहेतुत्वमप्राधान्यम् । कर्मणः फलप्राप्तिं प्रति प्राधान्ये पूर्वोक्तं हेतुं स्मारयति—शास्त्रेति ।।१४९०

कारीर्यादिषु व्यभिचारान्न कर्मणोऽस्ति फलहेतुत्वं कुतस्तत्प्राधान्यमित्याशङ्क्याऽऽह—कर्मण इति । या हि कर्मभूमौ कुतश्चित्कारीर्यादिकर्मणो वृष्ट्यादिप्राप्तिर्दृष्टा सा तस्य गुणसाकल्यादिष्टा । या तु कुतश्चित्कर्मणस्तदप्राप्तिर्दृश्यते सा तस्य वैगुण्याद्भवत्यतः समग्रं फलाव्यभिचारीति तत्प्राधान्यमिति भावः ।।१४९१।।

कर्मफले देवादीनां विघ्नकर्तृत्वं प्रसङ्गागतं निरस्य विद्याफले तेषां तदाशङ्कितं निरसितुमनुवदति—विघ्नमिति । तेषां विद्याफले विघ्नकरणे न शक्तिरिति परिहरति—अपनुत्त्यर्थमिति ।।१४९२।।

तदेव प्रकटयति—अविद्येति । आत्मनो ब्रह्मप्राप्तिरूपमुक्तेरज्ञानध्वस्तिमात्रत्वात्तस्याश्च ज्ञानेन तुल्यकालत्वात्तस्मिन्सति तत्फलस्याऽऽवश्यकत्वाद्देवादीनां विद्याफले विघ्नाचरणे निरवकाशत्वमित्यर्थः ।।१४९३।।

आत्मनो विद्यासमकालाऽविद्याध्वस्तिरित्येतद्दृष्टान्ते समर्थयते—चक्षुरिति । आत्मनोऽविद्याध्वस्तिर्विद्यासमकालेति शेषः ।।१४९४।।

इतश्च ज्ञानफले प्रतिबन्धासिद्धिरित्याह—यथास्थितेति । आत्मतत्त्वधीर्जायते चेन्न तत्फलमज्ञानादिहानं प्रतिबन्धार्हं तस्य तज्जन्ममात्रत्वादित्यर्थः । चकारेण तस्य निवृत्तिर्ज्ञानजन्मातिरिक्ता नास्तीत्यनुकृष्यते ।।१४९५।।

तदुत्थस्येत्यज्ञानजत्वेन द्वैतस्य कल्पितत्वमुक्तं तदयुक्तं तदप्रसिद्धेरित्याशङ्क्य तत्कल्पितत्वं साधयति—सर्पात्मनेति । यथा स्रजि सर्पोऽयमिति तद्रूपेण गृहीतायां न दण्डादिभ्रमस्तत्कालेऽस्ति न च तस्यां दण्डात्मना गृहीतायां तदा सर्पभ्रमस्तथा प्रतीच्येकाकारेण जाग्रत्प्रपञ्चरूपेण ग्राह्ये तदैव न स्वप्नादिभ्रमो; न च तद्रूपेण तद्ग्रहे जाग्रद्भ्रमोऽतो विमतं कल्पितं व्यभिचारित्वात्सर्पादिवदित्यर्थः । सर्वात्मनेति पाठे त्वयमर्थः—यथा स्रजि यथावद्गृहीतायां न दण्डादिभ्रमस्तथा प्रतीचि चिदेकरूपेण ग्राह्ये ततोऽन्यद्द्वैतं न गृह्यतेऽतो विमतं कल्पितं तत्त्वज्ञाने सत्यग्राह्यत्वात्संमतवदिति ।।१४९६।।

व्यभिचारित्वं कैमुतिकन्यायेन साधयति—अन्योन्येति । देहादीनामनात्मनामज्ञाने कारणे सत्यपि मिथो व्यभिचारित्वं दृष्टं निरस्तसमस्ताज्ञाने तु प्रतीचि तेषां व्यभिचारित्वं किमु वक्तव्यं तदा स्वरूपस्यैव तेषां दुर्वचत्वादित्यर्थः । तेषां स्वरूपतो मिथो व्यभिचारित्वस्यावस्थाद्वयेऽपि प्रत्यक्षत्वं हिशब्दार्थः ।।१४९७।।

रूप्याभज्ञानवेलायां शुक्तिकाधीर्न बाधते । तदसूतेरिह त्वात्मन्यादिमध्यान्तबाधधीः ॥९८॥
निर्निमित्तं प्रमात्रादेः प्रत्यग्रूपमनात्मनः । सनिमित्तं पराग्रूपमात्मनो मोहहेतुतः ॥९९॥
एक आत्मेति विज्ञाने दोषोऽप्यप्रतिबन्धकः । मूढात्मनामपि ह्येतन्न विसंवादमृच्छति ॥१५००॥
मिथ्यासंशयविज्ञानमनात्मानं प्रतीष्यते । प्रत्यगात्मनि तद्यस्मात्सम्यग्ज्ञानान्न भिद्यते ॥ १ ॥
अज्ञानं चेच्चिदाकारं संशयादिषु का कथा । प्रमित्सिते प्रतीच्यस्मान्न दोषो नापि बाधकम् ॥ २ ॥
महिमानो यदाऽमी स्युरविद्याया न वस्तुनः ॥ ३ ॥
काला देवादयस्तस्यां ध्वस्तायां तद्विनाशतः । देवेश्वरादयः के स्युर्विघ्नं वा कस्य कुर्वते ॥ ४ ॥
यत्र त्वस्येति श्रुत्यैव सर्वमेतत्स्फुटीकृतम् । इहापि हेतुसंसिद्ध्यै तत्स्पष्टमभिधीयते ॥ ५ ॥
यतो विघ्नकृतामात्मा प्रत्यग्याथात्म्यविद्भवेत् । तद्गोचरातिवर्तित्वं विद्याकाले तमोहतेः ॥ ६ ॥

द्वैतस्य कल्पितत्वे हेत्वन्तरमाह—रूप्येति । रूप्याकारं ज्ञानं यदा जायते तदाऽधिष्ठानशुक्तीदमंशज्ञानं रूप्यतज्ज्ञाने न बाधते तयोरिदमंशाज्ञानानुत्थत्वात्प्रत्यग्ब्रह्मणि तु वाक्योत्थज्ञानात्प्रागूर्ध्वं तत्काले च स्वरूपज्ञानाख्या बाधधीर्द्वैततद्धियोरस्त्यतो यत्र रूप्यादौ कल्पितत्वसंमतिस्तत्र कदाचिदेव बाधधीर्द्वैते सदेत्यावश्यकं कल्पितत्वम् । यद्वा रूप्यभ्रान्तिकाले शुक्तिधीर्न तद्बाधिका तस्यास्तदाऽनुत्पत्तेरात्मनि तु दृष्टद्वैतस्य तद्दृष्टिकाले प्रागूर्ध्वं च नित्यबोधादेव बाधधीरिति युक्तं तस्य कल्पितत्वं विमतं कल्पितं बाध्यत्वात्संमतवदिति भावः ॥१४९८॥

स्वरूपज्ञानस्यैवासिद्धेस्तस्य कथं बाधकत्वमित्याशङ्क्य तत्साधयति—निर्निमित्तमिति । प्रमात्रादेरनात्मनश्चैतन्याकारभजनस्य स्वाभाविकत्वात्तत्साक्षित्वेन नित्यानुभवसिद्धेः स्वरूपज्ञानं दुरपह्नवमित्यर्थः । अनात्मनश्चैतन्याकारभजनवदात्मनोऽपि शब्दाद्याकारभजनस्य स्वाभाविकत्वात्तदकल्पितमित्याशङ्क्याऽऽह—सनिमित्तमिति । तदेव स्फुटयति—मोहेति ॥१४९९॥

अविद्यादोषप्रतिबन्धान्न स्वरूपज्ञानसिद्धिरित्याशङ्क्याऽऽह—एक इति । अहमेकोऽहमेक इति प्रतिदेहमहंधीसाक्षित्वेनाऽऽत्मनो ज्ञाने नाविद्यादोषो दोषान्तरं वा विरोध्यस्ति तस्यापि स्वसिद्धौ तदपेक्षत्वादतो न स्वरूपज्ञानासत्त्वमित्यर्थः । किं चाविवेकिनामपि न स्वरूपज्ञानं विसंवादास्पदं तस्याहंधीसाधकत्वेनानुभवादतो न तदभाव इत्याह—मूढेति । विदुषामिवेत्यपेरर्थः । सर्वोपनिषत्प्रसिद्धं स्वरूपज्ञानमपह्नवानर्हमिति हिशब्दार्थः ॥१५००॥

स्वरूपज्ञानास्तित्वे हेत्वन्तरमाह—मिथ्येति । संशयाद्यनात्मानं प्रत्येवासम्यग्ज्ञानं तदसाधकत्वात्प्रतीचि सम्यग्ज्ञानमेव तस्य सदा चैतन्याकारभजनात्तद्द्योतकत्वादतो न स्वरूपज्ञानासत्त्वमित्यर्थः ॥१५०१॥

संशयादेः सदा चैतन्याकारभजनं कैमुतिकन्यायेनाऽऽह—अज्ञानमिति । तद्धि नित्यजडरूपं तदपि चैतन्यव्याप्तमेव लक्ष्यते तथा चेदज्ञानभेदेषु संशयादिषु तद्व्याप्तेरतिव्यक्तत्वान्न सा वक्तव्येत्यर्थः । यथोक्तस्वरूपज्ञानेन कुतो द्वैतबाधो न हि तस्य बाधकत्वे कदाचिदपि द्वैतं स्यात्तथा च व्यवहारादिविरोध इत्याशङ्क्याऽऽह—प्रमित्सित इति । अस्मात्तत्त्वमादिवाक्यात्प्रतीचि प्रमातुमिष्टे न कारणदोषो नापि बाधकमध्यक्षादेः कल्पितविषयत्वादतोऽदुष्टकारणत्वादबाध्यत्वाच्च वाक्योत्थं ज्ञानं सम्यग्ज्ञानं तदिद्धं च स्वरूपज्ञानमज्ञानादिबाधकं न केवलमिति कुतो यथोक्तानुपपत्तिप्रसक्तिरित्यर्थः ॥१५०२॥

साविद्यं द्वैतं बाधते विद्येत्युक्त्वा फलितमाह—महिमान इति । विद्ययाऽविद्याध्वस्तौ तद्विकारदेवादिनाशात्सर्वस्याऽऽत्ममात्रत्वाद्विदुषो न ते विघ्नं कुर्वन्तीत्यर्थः ॥१५०३-१५०४॥

विदुषः सर्वमात्ममात्रमित्यत्र मानमाह—यत्रेति । अविद्वद्दृष्ट्युपनीतदेवादेस्तदीयविघ्नकर्तृत्वस्य च विद्वद्दृष्ट्या प्रत्याख्यानपुरःसरं तस्य हेत्यादिवाक्यं व्याख्याय वक्ष्यमाणं सर्वस्याऽऽत्मत्वमात्मा हीत्युत्तरवाक्येऽपि देवादीनां विद्याफले विघ्नाकर्तृत्वे हेतुत्वसिद्ध्यर्थं कथ्यत इत्याह—इहेति । आत्मत्वहेतोर्निर्दोषत्वमाह—स्पष्टमिति ॥१५०५॥

हेतुवाक्यं व्याचष्टे—यत इति । अतो नाऽऽत्मनः प्रतिकूलत्वे यत्नो देवादीनामिति शेषः । विद्याफले न ते विघ्नं कुर्वन्तीत्यत्र हेत्वन्तरं देवाद्यैश्वर्यविषयेत्यादिनोक्तमुपपादयति—तद्गोचरेति । विद्यानान्तरीयकत्वेनाभिनिवेशहेतोस्तमसो ध्वस्तेर्देवाद्यैश्वर्यविषयमतिक्रम्य स्थितत्वाद्विदुषो विरोधाभावान्न ते तद्विघ्नकर्तार इत्यर्थः ॥१५०६॥

आत्माऽमीषां तदा ब्रह्म देवादीनां भवेद्वशी । कालाद्यन्तरितं यत्स्यात्प्राप्त्युत्पत्त्यादिलक्षणम् ॥ ७ ॥

अन्त्यज्ञानस्य तत्सन्ततेर्वा अज्ञाननिवर्तकत्वमिति शङ्कानिरासः

अनात्मैव फलं तत्र देवानामीशता भवेत् । अपि ज्ञातात्मतत्त्वानामभावाज्ज्ञानसंततेः ॥ ८ ॥
अन्त्योऽविद्यापनुद्बोधो रागादिप्रत्ययोत्थितेः । इति चेन्नैतदेवं स्यादाद्येऽनैकान्तिकत्वतः ॥ ९ ॥
नान्त्याऽविद्यापनुद्बुद्धिरात्मैकविषयत्वतः । आद्यात्मबुद्धिवद्धेतोरनैकान्तिकतेक्ष्यते ॥१०॥
अनैकान्तिकता हेतोस्तद्वत्संततिवादिनः । न चाभ्यासात्प्रमाणानि कुर्वन्त्यर्थावबोधनम् ॥११॥
संबन्धमात्राभिव्यक्तेर्व्यञ्जकत्वात्प्रदीपवत् । भोजनादौ न च सति ज्ञानसंततिरिष्यते ॥१२॥
तदन्तरायबाहुल्यात्सुषुप्तादौ च नेष्यते ।
प्रत्यक्प्रमेयपूर्वैव सर्वासां नो यतो धियाम्[1] । सूतिराम्रेडनं तस्मात्सिद्धमात्मधियः सदा ॥१३॥

न विदुषो देवाद्यात्मत्वमन्यस्यान्यत्वायोगादित्याशङ्क्याऽऽह—आत्मेति । यदाऽविद्या विद्यया नष्टा तदा विद्वान्ब्रह्मभूतः स्वतन्त्रः सन्नेषामात्मा भवति ब्रह्मणोऽन्यवस्त्वभावादतो न ते विदुषो विघ्नकर्तार इत्यर्थः । विद्वत्फले कैवल्ये तेषामस्वातन्त्र्ये कुत्र स्वतन्त्रतेत्याशङ्क्याऽऽह—कालादीति । ईशता निग्रहानुग्रहयोः स्वतन्त्रतेति यावत् । ज्ञानस्यानन्तरफलत्वात्तत्फले तेषां न विघ्नकर्तृतेत्युक्तमुपेत्य स्वयूथ्यमतमाह—अपीति । अज्ञानामिव तत्त्वज्ञानामपि न ब्रह्मास्मीति ज्ञानसंततिर्ज्ञानस्यानन्तरफलतोपगमादतो न साऽविद्यानिर्वर्तिकेत्यर्थः ॥१५०७–१५०८॥

आद्यमेव ज्ञानमज्ञानध्वंसि किमन्त्येनेत्याशङ्क्य प्रागिवोर्ध्वमपि रागादेस्तत्कार्यस्य च दृष्टेर्देहपातकालीनं ज्ञानमज्ञानध्वंसीत्याह—अन्त्य इति । अतो जीवन्मुक्त्यनुपपत्तिरित्याह—इति चेदिति । अन्त्यज्ञानस्य वा तत्संततेर्वाऽज्ञानध्वंसित्वम् ? आद्ये तस्यान्त्यत्वाद्वाऽऽत्मविषयत्वाद्वा तद्ध्वंसित्वमिति विकल्प्योभयत्र दृष्टान्ताभावं मत्वा द्वितीये दोषान्तरमाह—नैतदिति । न चान्त्यज्ञानत्वानुमाने रजतभ्रमवतो निधनकालीनं शुक्तिज्ञानमुदाहरणं, तस्य संसारहेत्वज्ञानानिवर्तकत्वात् । न चैवं ब्रह्मज्ञानादज्ञाननिवृत्तौ दृष्टान्तासिद्धिरागमात्तत्सिद्धौ क्वचिदुपन्यासस्य लोकदृष्ट्यनुसारित्वादिति द्रष्टव्यम् ॥१५०९॥

अनुमानविरोधं दोषान्तरं स्फोरयति—नान्त्येति । अन्त्याया बुद्धेरविद्यानिवर्तकत्वमाद्यायास्तु नेति व्यवस्थामाशङ्क्याऽऽत्मविषयत्वहेतोराद्यबुद्धावनैकान्तिकता पूर्वोक्ता स्यादित्याह—हेतोरिति ॥१५१०॥

त्वदनुमानं[2] सिद्धसाधनमन्त्यज्ञानसंततेरविद्याध्वंसित्वस्वीकारादिति कल्पान्तरमाशङ्क्य साऽपि किमन्त्यत्वात्तां निवर्तयत्यात्मविषयत्वाद्वेति विकल्प्योभयत्र दृष्टान्तासत्त्वं मत्वा द्वितीये दोषान्तरमाह—अनैकान्तिकतेति । अन्त्यज्ञानमज्ञानध्वंसीत्यत्राऽऽत्मविषयत्वहेतोराद्यज्ञानेऽनैकान्तिकतावदन्त्यसंततिस्तद्ध्वंसिनीत्यत्राप्यात्मविषयत्वहेतोराद्यज्ञानसंततावनैकान्तिकता तत्र साध्यसिद्धावन्त्यज्ञानतत्संततिवैयर्थ्यादित्यर्थः । किंच सा किं स्वरूपेण तन्निवर्तिका सम्यग्धीद्वारा वा ? नाऽऽद्यः उक्तन्यायादेव तदयोगान्न द्वितीयोऽभ्यासानपेक्षमानोत्थसम्यग्बोधादबोधध्वस्तेरिति मत्वाऽऽह—न चेति ॥१५११॥

मानानामभ्यासं विनाऽर्थावबोधित्वे हेतुमाह—संबन्धेति । दीपवन्मानस्य व्यञ्जकत्वात्तत्संबन्धमात्रान्मेयव्यक्तेर्न तत्राभ्यासापेक्षेत्यर्थः । किंच ज्ञानसंततिरविच्छिन्ना विच्छिन्ना वा सम्यग्धीहेतुरिति विकल्प्याऽऽद्यं दूषयति—भोजनादाविति ॥१५१२॥

तत्र हेतुमाह—तदन्तरायेति । ज्ञानसंततिप्रतिबन्धकस्याशनपानादिव्यवहारस्य बहुलत्वादित्यर्थः । अविच्छिन्नज्ञानसंतत्ययोगे हेत्वन्तरमाह—सुषुप्तेति । आदिपदेन मूर्छाप्रलयासंप्रज्ञातसमाधयो गृह्यन्ते । द्वितीये लौकिकात्मज्ञानस्यालौकिकात्मज्ञानस्य वा संततिरिति विकल्प्याऽऽद्यं प्रत्याह—प्रत्यगिति । अहमितिलोकसिद्धात्म-

१. धियां सूतिः इत्यन्वयः ।
२. त्वदनुमानं अन्त्यज्ञानस्याज्ञाननिवर्तकत्वाभावानुमानम् । अन्त्यज्ञानसन्ततेरविद्यानिवर्तकत्वे आद्यसन्ततौ व्यभिचारः । तदभ्युपगमे अन्त्यवैयर्थ्यम् ।

ज्ञानस्य वस्तुतन्त्रत्वान्न कर्त्रनुविधायिता । शीतोष्णज्ञानवत्तस्मान्नेष्यते ज्ञानसंततिः ॥१४॥
भोजनादिनिरोधेन संततिश्चेत्समर्थ्यते । उक्ता परिहृतिस्तत्र न भूयोऽपि व्यपेक्षते ॥१५॥
क्षुत्पिपासापरिम्लानचेतस्त्वान्नितरां न सा । भोजनादिनिरोधेन न च तस्याः प्रमेक्ष्यते ॥१६॥

ज्ञानसन्ततेः अज्ञाननिवर्तकत्वनिरासः

संतत्यारम्भकधियामियत्तानवधारणात् । शास्त्रार्थानिश्चयो दोषः स चानिष्टः प्रसज्यते ॥१७॥
मतं संततिमात्रत्वे निश्चितिः स्यात्तथाऽपि च । अनैकान्तिकता हेतोराद्यसंततिवद्भवेत् ॥१८॥
समानविषयत्वेऽपि नाऽऽद्याऽविद्यां निहन्ति चेत् । ज्ञानसंततिरन्त्या नः सेत्स्यतीत्यत्र का प्रमा ॥१९॥
मरणेऽपि न विश्वासो हिक्किकावशवर्तिनः । ज्ञानसंततिनिष्पत्तौ तमोमात्रसमाप्तितः ॥२०॥

कर्मच्छिद्रेषु ज्ञानाभ्यासनिरासः

कर्मच्छिद्रेषु कुर्वन्ति येऽपि सम्यग्धियं बलात् । नूनं ते नासिकाग्रेण[1] वीक्षन्ते सूर्यमण्डलम् ॥२१॥
वस्तुतन्त्रं न हि ज्ञानं नृतन्त्रं लोकवह्निवत् । अनन्यज्ञातृकत्वाच्च प्रत्यग्ज्ञानस्य सर्वदा ॥२२॥

धीपूर्विका सर्वेषामस्माकं सर्वप्रत्ययोत्पत्तिरतो लौकिकात्मज्ञानस्य संततिः सदा सिद्धाऽपि सम्यग्बोधादृष्टेर्न तद्धेतुरित्यर्थः ॥१५१३॥

द्वितीये दोषमाह--ज्ञानस्येति । अलौकिकाखण्डाद्वयप्रत्यग्ब्रह्मधीसंततिर्विध्यधीनपुरुषयत्नादिना कर्तुं न शक्यते ज्ञानस्य मानवस्तुतन्त्रत्वात्तज्जन्ममात्रेण निःशेषकारकोपमर्दाच्चातो यथोक्तधीसंतत्यभावान्नासौ सम्यग्धीद्वाराऽविद्याध्वंसिनीत्यर्थः ॥१५१४॥

विच्छिन्नाऽविच्छिन्ना लौकिक्यलौकिकी वाऽनात्मधीसंततिर्विद्याद्वाराऽविद्याध्वंसिनीत्युक्तं तत्राविच्छिन्नपक्षोक्तं दोषं परिहरन्नाशङ्कते--भोजनादीति । ज्ञानस्य वस्तुतन्त्रत्वादित्यत्र परिहृतमेतदित्याह—उक्तेति ॥१५१५॥

भोजनादिनिरोधमङ्गीकृत्योक्तं समाधिं स्मारयित्वा तन्निरोधस्यैवायोगमाह—क्षुदिति । सति भोजनादौ स्वस्थचित्ततया कथंचन ज्ञानसंततिः सिध्यत्यसति पुनर्भोजनादौ चित्तस्वास्थ्याभावान्न ज्ञानसंततिशङ्काऽपीत्यतिशयं दर्शयितुं नितरामित्युक्तम् । उपेत्यवादेनैव मानाभावेन धीसंततिं धुनीते--भोजनेति ॥१५१६॥

ज्ञानसंततिर्ज्ञानद्वाराऽज्ञानध्वंसिनीत्यत्र दोषान्तरमाह—संततीति । ईदृशी संततिर्ज्ञानद्वाराऽज्ञानध्वंसिनीति शास्त्रार्थानिश्चये किं बाधकमित्याशङ्क्य शास्त्राप्रामाण्यप्रसक्तिरित्याह—स चेति ॥१५१७॥

आत्मेत्येवोपासीतेतिश्रुतेस्तद्धीसंततिमात्रसद्भावे ततो विद्याद्वाराऽविद्याध्वस्तिरिति शङ्कते—मतमिति । आत्मधीसंततेः सत्त्वेऽपि न साऽऽत्मविषयत्वाद्विद्याद्वाराऽविद्यां निवर्तयत्याद्यद्वित्रिक्षणस्थात्मधीसंततौ व्यभिचारात् न चान्त्यात्मधीसंततित्वं प्रयोजकं दृष्टान्ताभावस्योक्तत्वादिति परिहरति—तथाऽपीति ॥१५१८॥

व्यभिचारं स्फोरयति—समानेति ॥१५१९॥

द्वितीये दोषमाह—न च दृष्टान्ताभावेऽपि व्यतिरेकव्याप्त्या यथोक्तहेतूनामन्यतमेन विवक्षितं साध्यमनुमेयमिति युक्तमात्मविषयज्ञानत्वस्य तथाविधज्ञानसन्ततित्वस्य च पूर्ववद्विपक्षवृत्तित्वादन्त्यज्ञानत्वस्य तथाविधसंततित्वस्य चासिद्धत्वादित्याह—मरणेऽपीति । हिक्किकादिमरणाव्यभिचारिचिन्हवतोऽतिनिविडे तमोमात्रे मग्नत्वादवश्यंभाविनि मरणेऽपि न निश्चय आत्मधीतत्संतत्युत्पत्तौ तु का वार्तेत्यर्थः ॥१५२०॥

अन्त्यधीतत्संतत्योरज्ञानध्वंसित्वं निरस्य प्रत्यहमनुष्ठानं समाप्यान्तरालक्षणेषु कर्तृत्वादिज्ञानेऽपि बलादेव सम्यग्धीरावर्त्यते ततश्च सहेत्वनर्थध्वस्तिरिति मतान्तरमाशङ्क्याशक्यमिच्छया ज्ञानं कर्तुमित्याह–कर्मेति ॥१५२१॥

ज्ञानस्येच्छया कर्तुमशक्यत्वं साधयति—वस्त्विति । ज्ञानं हि वस्तुतन्त्रं न पुरुषतन्त्रं द्युलोकेऽग्निदृष्टिर्यथा पुंस्तन्त्रा न तथाऽऽत्मधीरित्यर्थः। आत्मधियो व्यवहारदशायां सदा स्वसाक्षिकत्वाच्च न कर्तव्यतेत्याह—अनन्येति ॥१५२२॥

---

१. नासिकाग्रेण सूर्यमण्डलवीक्षणमशक्यं तस्य चक्षुषैव साध्यत्वात्—तद्वदित्यर्थः ।

**न चानिवर्तकं ज्ञानं प्रत्यङ्मोहस्य युज्यते । स्वा[1]नुभूतिविरुद्धत्वादग्निदाहादिबोधवत् ॥२३॥**
**सर्ववेदान्तवाक्यानामेतावन्मात्रनिष्ठतः । न चार्थवादता तेषामन्याशेषत्वकारणात् ॥२४॥**
**अहंधीविषयत्वाच्चेत्तेषां स्यादर्थवादता । नोक्तत्वात्परिहारस्य न चाहंगम्यताऽऽत्मनः ॥२५॥**
**अहंबुद्ध्येक्ष्यते प्रत्यक्प्रतीचा चाप्यहंमतिः । अन्योन्याश्रयता दोषः स्यादहंवृत्तिवीक्षणे ॥२६॥**
**यत एवमतो यो नः प्रत्यक्संमोहहानिकृत् । आद्योऽन्त्यः संततो वाऽसौ बोधो मुक्तिफलः स्मृतः ॥२७॥**

तत्त्वविदां रागदर्शनात् न ज्ञानं अज्ञानध्वंसि इत्यस्य निरासः

**यत्तूक्तं ज्ञाततत्त्वानामपि रागादिदर्शनात् । नाविद्याहानिकृज्ज्ञानमत्र प्रतिविधीयते ॥२८॥**
**आरब्धफलशेषैकहेतुत्वाद्देहसंस्थितेः । रागादिप्रत्ययोद्भूतिरिषुचक्रादिवेगवत् ॥२९॥**
**तस्य वृत्तफलत्वान्नो ज्ञानं स्यात्तन्निवृत्तिकृत् । अतीतत्वाच्च तद्धान्यै नालमात्मावबोधनम् ॥३०॥**
**यत्तु स्वात्माश्रयं कर्म ह्यनारब्धफलं भवेत् । उत्पित्स्वनागतं कृत्स्नं ज्ञानं हन्ति तदेव नः ॥३१॥**

तथाऽपि सा नाज्ञानध्वंसिनी संसारानुदयप्रसङ्गादतो ज्ञानमनिवर्तकमेवेत्याशङ्क्याऽऽह—न चेति । अग्निर्न दाहको जलं न शीतमित्यादिप्रयोगे सत्यग्नेर्दाहकत्वमम्भसः शैत्यमित्यादिस्वानुभवादेव बाधवदात्मधीस्तदज्ञानाध्वंसिनीति गीर्विद्वदनुभवविरुद्धेत्यर्थः ॥१५२३॥

"तस्मात्तत्सर्वमभवत्" "भिद्यते हृदयग्रन्थिरि"त्यादीनामात्मज्ञानात्तदज्ञानध्वस्तिमात्रे निश्चयेन स्थितत्वात्तद्विरोधाच्च नानिवर्तकत्वमित्याह—सर्वेति । तेषामर्थवादत्वेनाविवक्षितत्वमाशङ्क्याऽऽह—न चेति ॥१५२४॥

अहंधीगम्ये प्रतीचि तेषां प्रवृत्तेः संवादविसंवादाभ्यां मानत्वायोगादर्थवादतेति चोदयति—अहमिति । मातुरहंधीगम्यता नाऽऽत्मनस्तत्साक्षिणस्तस्य वेदान्ता ब्रह्मत्वं बोधयन्तीति न संवादादिशङ्केत्याह—नोक्तत्वादिति । तमेव स्मारयति—न चेति ॥१५२५॥

तस्याहंधीगम्यत्वाभावे युक्तिमाह—अहंबुद्ध्येति ॥१५२६॥

विचारफलमुपसंहरति—यत इति । प्रत्यग्ज्ञानस्य तदज्ञानध्वंसित्वमुक्तन्यायाद्यतो युक्तमतः सम्यग्ज्ञानं विशेषजिज्ञासामन्तरेण प्रतीच्यज्ञानतज्जध्वंसि मोचकमित्यर्थः । वाशब्दोऽसंततो वेति विकल्पान्तरार्थः ॥१५२७॥

धीसंततेरन्त्यधियश्चाज्ञानध्वंसित्वायोगादाद्यमेव ज्ञानं तथेत्युक्तम् । संप्रति परोक्तमनूद्योत्तरं प्रतिजानीते—यत्त्विति । अज्ञानामिवेत्यपेरर्थः ॥१५२८॥

प्रतिविधानं प्रकटयति—आरब्धेति । येन कर्मणा शरीरमारब्धं तदारब्धफलं तच्छेषमात्रहेतुकत्वाद्विद्वद्देहस्थितेस्तस्य रागाद्याभासो यावदारब्धक्षयं न विरुध्यते तत्क्षये च देहाभासजगदाभासयोरभावान्मुक्तिरित्यर्थः । विद्वद्देहस्थितावविद्यालेशाधीनप्रारब्धकर्मशेषातिरिक्तवस्तुभूतहेत्वभावं वक्तुमेकविशेषणम् । प्रारब्धकर्मणोऽप्यज्ञानजत्वेन निरस्यत्वान्न ज्ञानिनस्ततो देहस्थितिरित्याशङ्क्याऽऽह—इषुचक्रेति । यथा प्रवृत्तवेगस्येष्वादेर्वेगक्षयादेव क्षयस्तथाऽऽरब्धक्षयो भोगादेव "भोगेन[2]त्वितरे क्षपयित्वा संपद्यत" इति न्यायान्न ज्ञानादित्यर्थः ॥१५२९॥

ज्ञानमनारब्धकर्मवदारब्धमपि कर्मत्वाविशेषात्कुतो न निवर्तयेदित्याशङ्क्याऽऽह—तस्येति । न ज्ञानादारब्धमपि कर्म क्षीयते तस्य फलदानार्थप्रवृत्ततया ज्ञानस्य तदविरोधित्वादविद्यालेशाच्च तदवस्थितेः । य[3]थाऽऽहुः—"तिष्ठति संस्कारवशाच्चक्रभ्रमणवद्धृतशरीर" इति । अन्यथा जीवन्मुक्तिशास्त्रविरोधादित्यर्थः । फलरूपेणाऽऽरब्धकर्मणो जातत्वात्पृथक्तस्य रूपाभावाच्च न तद्ध्वंसिनीधीरित्याह—अतीतत्वाच्चेति ॥१५३०॥

आरब्धकर्मणो ज्ञानानिवर्त्यत्वे ज्ञानं कर्मनिवर्तकमिति कथं प्रसिद्धिरित्याशङ्क्य तद्विषयमाह—यत्त्विति ।

---

१. स्वानुभूतीति—अनेन वार्तिककारस्य जीवन्मुक्तत्वं व्यज्यते ।

२. भोगेन त्वितरे क्षपयित्वा सम्पद्यते ( ब्र० सू० ४-१-१९ ) इतरे = आरब्धकार्ये पुण्यपापे उपभोगेन क्षपयित्वा विनाश्य ब्रह्म सम्पद्यते । "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्यते—इतिश्रुतेः ।

३. यथाहुः—ईश्वरकृष्णाः ६७–सांख्यकारिकायाम् ।

### अनारब्धफलकर्मणः ज्ञानानिवर्त्यत्वे अनिष्टप्रसंगः तन्निरासश्च

अनारब्धफलं कर्म न त्वारब्धफलं यदि । निरुणद्ध्यात्मविज्ञानं तदाऽनिष्टं प्रसज्यते ।।३२।।
प्रारब्धात्मफलं नो चेत्कर्म ज्ञानं निवर्तयेत् । अनारब्धफलं हन्तीत्यत्रापि स्यान्न निश्चितिः ।।३३।।
न चेदारब्धकार्येषु ज्ञानस्वातन्त्र्यमिष्यते । अनारब्धेषु नितरां पुंसोऽपि स्याद्यथेष्टता ।।३४।।
न च तेषु निरुद्धेषु किञ्चिन्नः स्यात्प्रयोजनम् । प्राङ्मृतेर्मुक्त्यसंसिद्धेरबीजत्वाच्च संसृतेः ।।३५।।
सर्वसंहारकाले च निरोधोऽभूदशेषतः । तावानपि न पर्याप्तो निरोधो मुक्तये कथम् ।।३६।।
अल्पीयोहःसमभ्यस्तो निरोधोऽलं विमुक्तये । भावनोपचयान्नापि मुक्तिः स्याद्भङ्गुरत्वतः ।।३७।।
दुःख्यस्मीत्यपि चेद्ध्वस्ता कोटिकल्पोपबृंहिता । अल्पीयोभ्यासजा साध्वी भावनेत्यत्र का प्रमा ।।३८।।
शास्त्रार्थस्य समाप्तेश्च मुक्तिः स्यात्तावता मितेः । रागादयः सन्तु कामं न तद्भावोऽपराध्यति ।।३९।।

स्वात्माश्रयं तत्त्वज्ञानाश्रयाश्रितमिति यावत् । प्रमातृगतं ज्ञानं कर्मापि तन्निष्ठं तस्य परिणामित्वेन तदाश्रयत्वसंभवादिति हिशब्दार्थः । आरब्धमपि कर्म तादृगिति विशिनष्टि—अनारब्धेति । तस्याफलस्य निवृत्तप्रायत्वं निरस्यति—उत्पित्स्विति । फलात्मना जन्माभिमुखमिति यावत् । तस्य ज्ञानकाले पश्चाच्च संभावनामाह—अनागतमिति । तत्सर्वं ज्ञाननिरस्यमित्यागमप्रसिद्धिस्तद्विषयेत्याह—कृत्स्नमिति ।।१५३१।।

सिद्धान्तिनोक्तमनूद्य पूर्ववाद्यनिष्टप्रसङ्गं प्रतिजानीते—अनारब्धेति ।।१५३२।।

किं तदनिष्टं तदाह—प्रारब्धेति । विमतं न ज्ञाननिरस्यं कर्मत्वादारब्धकर्मवदित्यनुमानादितरदपि न तन्निरस्यमित्यागमविरोधस्ते स्यादित्यर्थः ।।१५३३।।

कर्मत्वेऽप्यनारब्धस्य तन्निरस्यत्वं किं न स्यादित्याशङ्क्येतरस्यापि तदापत्तिरन्यथेतरत्रापि न तन्निरस्यत्वमप्राप्तेरित्याह—न चेदिति । नितरामित्यतिशयोक्तिः । किंच त्वत्पक्षे विदुषो यथेष्टचेष्टा स्यात्तस्य वर्तमानदेहपाते देहान्तरारम्भानभ्युपगमादनारब्धस्य ज्ञानादारब्धस्य भोगाद्ध्वस्तेरित्यनिष्टान्तरमाह—पुंसोऽपीति ।।१५३४।।

आरब्धकर्मणोऽपि ज्ञाननिरस्यत्वं वेष्टमितरस्य तद्राहित्यं वेति विकल्प्याऽऽद्यं सिद्धान्ती प्रत्याह—न चेति । आरब्धकर्मसु ज्ञानदग्धेषु नास्माकं किंचित्फलमित्ययुक्तं कैवल्यलब्धेरेव फलत्वादित्याशङ्क्याऽऽह—प्रागिति । न हि ज्ञानोदये सद्यः शरीरं पतति जीवन्मुक्तिशास्त्राद्विद्यासंप्रदायाच्च । न च सति देहे विदेहमुक्तिरतो नाऽऽरब्धदाहो ज्ञानादित्यर्थः । तर्हि तस्य देहान्तरारम्भकत्वादमुक्तिरेवेति नेत्याह—अबीजत्वादिति । तस्य भोगाद्ध्वस्तेर्देहान्तरारम्भाख्यबन्धाहेतुत्वान्मुक्तिरित्यर्थः । नेतरः ज्ञानात्तद्दाहस्याऽऽगमसिद्धत्वात् । न च विदुषो यथेष्टचेष्टा तत्प्रापककर्मारब्धे देहे मुक्तिफलज्ञानानुत्पत्तेर्न च नियामकाभावो यथेष्टचेष्टोपनायकाधर्मारब्धे देहे तथाविधचेष्टासंस्कारविशिष्टस्याशुद्धबुद्धेस्तद्विरुद्धज्ञानहेतुशमादिप्रवृत्त्यनुपपत्त्या तदुत्पत्त्ययोगस्यैव नियामकत्वाच्छ्रुतिस्मृत्युपदर्शितविद्वल्लक्षणस्य च यथेष्टचेष्टाप्रतिस्पर्धित्वाज्ज्ञानादूर्ध्वं तत्प्रापकस्य दुर्वचत्वात्तथा तद्धेत्वारब्धकर्मकल्पने तद्वतो ज्ञानित्वस्यासंमतत्वान्न हि तस्य विहितमपि त्यजतो निषिद्धचेष्टेति चकारार्थः ।।१५३५।।

ज्ञानस्य मुक्तिहेतुत्वमुपेत्यानारब्धकर्मध्वंसित्वमुक्तम् । अन्ये तु चित्ततद्वृत्तिनिरोधो मुक्तिहेतुर्न ज्ञानमित्याहुस्तत्राऽऽह—सर्वेति । चकारो यथोक्तमतनिरासार्थस्त्वर्थे पठितः । विमतो निरोधो न मुक्तिहेतुर्निरोधत्वात्प्रलयस्थनिरोधवदित्यर्थः । अपरे तु ज्ञाननिरोधौ हित्वा ब्रह्मास्मीतिनिरन्तरधीप्रसूतवासनोपचयान्मुक्तिरित्याचक्षते तान्प्रत्याह—भावनेति । स हि मुक्तेर्निमित्तमुपादानं वोभयत्रापि मानाभावं मत्वा द्वितीये दोषान्तरमाह—भंगुरत्वत इति । तत्साध्या मुक्तिरपि तादृशी स्यादिति शेषः ।।१५३६–१५३७।।

ब्रह्मास्मीति भावनाया भङ्गुरत्वमसिद्धमित्याशङ्क्याऽऽह—दुःखीति । दीर्घकालीनाभ्यासजनिताऽपि दुःखित्वभावना निवृत्ता चेदल्पकालीना तद्दर्शिताभ्यासप्रसूतब्रह्मत्वभावना नित्येत्यत्र नास्ति नियामकमित्यर्थः ।।१५३८।।

कथं तर्हि मुक्तिस्तत्राऽऽह—शास्त्रार्थस्येति । तत्त्वमस्यादिवाक्यजा धीर्मितिस्ततो मुक्तिः स्याद्ब्रह्म वेदेत्यादिश्रुतेरैक्यज्ञानान्मुक्तिरित्येव । तावतोपनिषत्फलावसानादतः शास्त्रप्रामाण्याज्ज्ञानादेव मुक्तिरित्यर्थः । ज्ञानि-

आगमाद्वेद चेद्ब्रह्म ब्रह्मैव भवतीति हि । फलावस्थस्य च सतः कुतो रागादिसंप्लुतिः ॥४०॥
न च ब्रह्मपरिज्ञानहुताशाप्लुष्टमण्वपि । संभाव्यते ब्रह्मधियः सर्वान्त्यत्[1]वैकहेतुतः ॥४१॥

जीवन्मुक्तस्य रागादेः असंभावितत्वम्

सम्यग्ज्ञानविरुद्धा धीर्न चैकात्म्यं विजानतः । उत्पद्यते निर्विषया विषयाशयहानतः ॥४२॥
लोकेऽनिर्ज्ञाततत्त्वस्य मिथ्याधीरुपजायते । प्रध्वस्ततत्त्वतमसः कुतः स्यात्कारणादृते ॥४३॥
सम्यग्ज्ञानेऽपि चेत्सा स्यादविश्रम्भः प्रसज्यते । एवं सत्यप्रमाणत्वं मितेश्चापि प्रसज्यते ॥४४॥
सम्यङ्मिथ्याधियोर्यस्माद्विशेषो नोपलभ्यते । व्यवहारस्य लोपोऽतः सर्वस्य स्यादसंशयः ॥४५॥
सम्यग्ज्ञानसमुत्पत्तिसमनन्तरमेव च । शरीरपातः कस्मान्नेत्येतच्चाप्यपहस्तितम् ॥४६॥
पूर्वोक्तेनैव न्यायेन वक्तव्यं नावशिष्यते । ज्ञानोत्पत्तावतो ध्वस्तिः सर्वेषामपि कर्मणाम् ॥४७॥
यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन । ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥४८॥
सर्वदृष्टान्तसारूप्यप्रसक्तौ तन्निषेधकृत् । तावदेव चिरं तस्येत्यपवादः श्रुतीरितः ॥४९॥

नोऽपि रागादिदृष्टेर्न ज्ञानं तद्धेतुरित्याशङ्क्य न तद्दर्शनं तद्विरोधि ज्ञानदग्धबीजत्वेनाऽऽभासत्वादित्याह—रागादय इति ॥१५३९॥

नन्वस्मदादेरिवानाभासो रागादिर्विदुषोऽनुवर्तते तत्कार्यदीर्घदृष्टेस्तत्राऽऽह—आगमादिति । ब्रह्मास्मीति श्रुतेर्ज्ञानतो ब्रह्मभावस्याऽऽवश्यकत्वाद्ब्रह्मभूतस्य रागाद्यसंस्पर्शान्न तस्य यथापूर्वं रागादिः सिध्यति । सर्वो हि रागादिर्बाधितस्तस्यानुवर्तमानोऽन्यथा विद्यावैयर्थ्यान्न च तस्य यथापूर्वं तत्कार्यमस्ति 'यस्य तु यथापूर्वं संसारित्वमि'त्यादिन्यायादित्यर्थः ॥१५४०॥

इतश्च विदुषो ना[2]नाभासो रागादिरित्याह—न चेति ॥१५४१॥

नान्त्या ब्रह्मधीः परस्तादपि ततो भूयसीनामनात्मधियामादेहपाताद्भावादित्याशङ्कयाऽऽह—सम्यगिति । तत्र हेतुः—निर्विषयेति । हेतुं साधयति—विषयेति । विषयाणामाशयः समुदायस्तस्यासत्त्वादिति यावत् । यद्वा विषया यस्मिन्बाह्यकरणद्वारकवृत्तिद्वारेणाऽऽशेरते तस्यान्तःकरणस्याभावादित्यर्थः ॥१५४२॥

विदुषो न मिथ्याधीर्विषयसमुदायान्तःकरणयोरभावादित्युक्त्वा हेत्वभावाच्चेति सामान्यन्यायोक्तिपूर्वकमाह—लोक इति । व्यवहारभूमौ शुक्त्यादितत्त्वमजानतो रजतमेतदित्याद्या मिथ्याबुद्धिरुत्पद्यते विज्ञातशुक्त्यादितत्त्वस्य तु पुंसो नासावस्ति हेत्वभावात्तथैव ब्रह्मविदो न युक्ता मिथ्याधीरित्यर्थः ॥१५४३॥

विदुषो मिथ्याज्ञानाभावमुक्त्वा विपक्षे दोषमाह—सम्यगिति । शास्त्रोत्थज्ञानादूर्ध्वमपि मिथ्याधियः सत्त्वे शास्त्रे विश्वासाभावात्तदर्थं प्रवृत्तेरसामञ्जस्ये दोषान्तरमाह—एवं सतीति ॥१५४४॥

मानस्यामानत्वे सर्वव्यवहारहानिरिति फलितमाह—सम्यगिति ॥१५४५॥

ज्ञानेनाज्ञानध्वस्तेस्तत्कार्यमिथ्याज्ञानस्य सविषयस्य बाधितत्वान्न विदुषो रागादिरित्युपपाद्य ज्ञानान्मोक्षे तज्जन्ममात्रेण शरीरं पतेत्तत्स्थितिहेत्वभावादिति सद्योमुक्तिमतं दूषयति—सम्यग्ज्ञानेति ॥१५४६॥

तस्यापहस्तितत्वे हेतोर्वाच्यत्वमाशङ्क्याह—पूर्वोति । प्रारब्धकर्मणा देहस्थितेः सद्यस्तत्पातो विदुषो नाऽऽप्नोतीत्यर्थः । आरब्धकर्मणा देहस्थितिमुपजीव्येतरेषां ज्ञानध्वस्तिमुपसंहरति—ज्ञानेति ॥१५४७॥

तत्र भगवद्वाक्यं प्रमाणयति—यथेति ॥१५४८॥

ज्ञानाग्निः सर्वकर्माणीति ज्ञानात्कर्मक्षयं ब्रुवता तस्मादेव मुक्तिरुक्ता तत्र च्छान्दोग्यश्रुतिं मानत्वेनावतारयति—सर्वेति ॥१५४९॥

---

१. सर्वज्ञानानामन्त्यं एकोऽसाधारणो हेतुः तस्मात् प्रारब्धेऽवशिष्टं न स्यादित्यर्थः ।
२. नानाभासः द्वैतप्रतिभासः ।

नेत्रबन्धविनिर्मोकादुपदेशः स्मृतिं प्रति ॥५०॥
ततस्तदर्थग्रहणमनुष्ठानं ततः परम् । स भूरिगत्युपचयाद्ग्रामाद्ग्रामान्तरं व्रजेत् ॥५१॥
सम्यग्ज्ञातोपदेशार्थः स्वयं च प्रतिभानवान् । द्राघीयसा स कालेन गन्धारान्प्रतिपद्यते ॥५२॥
यथैवमेवेहापि स्याद्य इहाऽऽचार्यवान्नरः ।
निःशेषदृष्टान्तोक्त्यर्थप्रसक्तिविनिवृत्तये । अपवादं श्रुतिरियं तस्य त्विति जगाद नः ॥५३॥

जीवन्मुक्तिप्रसाधनम्

तस्य त्वेवंविदः पुंसस्तावदेव चिरं भवेत् । यावदैकात्म्यसंमोहपट्टको नापनीयते ॥५४॥
प्रत्यग्याथात्म्यविज्ञानजन्मनो नातिरेकभाक् । प्रत्यङ्मोहाभिनहनध्वंसश्चाप्यन्यथामतेः ॥५५॥
तस्माद्याथात्म्यविज्ञानसमुत्पत्तेः पुरैव तु । आत्माज्ञानं सकार्यं स्यात्तस्य बाध्यत्वकारणात् ॥५६॥
यस्मिन्प्राप्ते यद्भवति तत्तस्मात्स्यात्कथं पुरा । अन्त्यं तस्मात्परिज्ञानं सर्वबाध्यस्य बाधकम् ॥५७॥
ऋणिनोऽप्यस्य देवाद्या नेशते ब्रह्मवेदिनः । इत्युक्तं किंनिमित्तं चेत्तत्र प्रतिविधीयते ॥५८॥

कोऽसौ दृष्टान्तः कथं वा तद्गतसर्वसादृश्यं वार्ष्टान्तिके प्राप्तं कथं च तन्निषेधकोऽपवादः श्रुत्युक्त इति तत्र दृष्टान्तस्वरूपमाह—नेत्रेति । गान्धारो हि प्राप्तदेशान्तरस्ततो गृहीतबहुधनः स्वीयानेव गन्धारानागच्छन्नध्वनि बद्धाक्षस्तस्करैरपहृतधनो वने निसृष्टस्तस्याऽऽर्तध्वनिं श्रुत्वा कश्चित्पथिकस्तदभ्याशमेत्य नेत्रबन्धननिर्मोकपूर्वकमीप्सितदेशप्रापकमार्गस्मृतिमुद्दिश्योपदिदेश ततस्तदर्थे श्रोतुर्ज्ञानं ततो गतिरिति क्रमेणेष्टदेशं श्रोता प्रतिपद्यते । स च यथोपदेशं बहुगत्या ग्रामाद्ग्रामान्तरं गच्छन्दीर्घतरेण कालेन गन्धारान्प्राप्नोतीत्यर्थः ॥१५५०–१५५१॥

पण्डितो मेधावीति विशेषणे दृष्टान्तनिविष्टे तत्र पण्डितपदार्थमाह—सम्यगिति । मेधावीत्यस्यार्थमाह—स्वयं चेति ॥१५५२॥

दृष्टान्तमनूद्य तद्गतसर्वार्थस्य वार्ष्टान्तिके प्रसङ्गमाह—यथेति । इहेत्येका सप्तमी तावदधिकृतान्[2] परा तु मुक्तिमधिकरोतीति विवेक्तव्यम् । गान्धारवन्मोक्षे विदुषोऽप्यनुष्ठानविशेषप्रसङ्गो दृष्टान्तवार्ष्टान्तिकयोस्तुल्यत्वादतो न केवला धीर्मुक्तिहेतुरित्यर्थः । संप्रत्यपवादमुदाहरति—निःशेषेति । सर्वस्य दृष्टान्तवाक्यार्थस्य वार्ष्टान्तिके प्रसक्तौ तन्निवृत्तये "तस्य तावदेव चिरमि"तिश्रुतिरस्मान्प्रति प्रसङ्गस्यापवादमवादीदित्यर्थः ॥१५५३॥

तदेव स्फुटयन्वाक्यं व्याचष्टे—तस्येति । भवेन्मुक्तिरिति शेषः ॥१५५४॥

प्रकृतां जीवन्मुक्तिमेव प्रकारान्तरेण साधयति—प्रत्यगिति । अभिनहनं बन्धनमावरणमिति यावत् । अन्यथामतेश्च मोहकार्यतया निवृत्तिस्तथैवेति योजना ॥१५५५॥

बुद्धीद्धो बोधो बोधेद्धा वा बुद्धिरज्ञानादिध्वस्तिरित्यत्र फलितमाह—तस्मादिति । प्रागेव तद्विषयव्यवहारदृष्टिरुक्तेत्येतदनुग्राहिकां श्रुतिं वक्तुं तुशब्दः । ज्ञानादूर्ध्वमज्ञानाद्यभावे हेत्वन्तरमाह—तस्येति । सति बाधकोपनिपाते बाध्यस्य नावस्थानसिद्धिरित्यर्थः ॥१५५६॥

"अविद्या सह कार्येण नाऽऽसीदस्ति भविष्यती"ति वदता प्रागप्यज्ञानादिहानेरिष्टत्वात्पूर्वं तत्सत्त्वमूर्ध्वं तदसत्त्वमित्येतत्पूर्वोत्तरविरुद्धमित्याशङ्क्याऽऽह—यस्मिन्निति । न हि रजतादिनिवृत्तिः शुक्त्यादिज्ञाने भवन्ती प्रागिष्यते तथैव वाक्योत्थज्ञाने सत्यज्ञानादिहानं न तत्तस्मात्पूर्वं स्यात्पूर्वमज्ञानादिव्यवहारः । पश्चात्तदभावव्यवहार एवंदृष्ट्यनुसारी भावाभावव्यवहारो, वास्तवस्तु नाऽऽसीदस्ति भविष्यतीति व्यवहारस्तन्न पूर्वापरविरोध इत्यर्थः । ज्ञानोत्पत्तावज्ञानादिदाहाद्देहाद्याभासस्य च भोगादारब्धक्षये हेत्वभावादेवास्थितेरद्वैतधियः सिद्धमन्त्यत्वमित्युपसंहरति—अन्त्यमिति । अन्त्यत्वं व्यक्तीकर्तुं विशिनष्टि—सर्वेति ॥१५५७॥

स्वयूथ्यप्रत्युक्तां जीवन्मुक्तिं व्यवस्थापयता ज्ञानफले प्रतिबन्धाभावः साधित इदानीं देवादीनामुत्तमर्णत्वेऽपि

१. तस्य च कर्तृत्वाभावात् (न्या०) ।
२. अधिकृतान्—अधिकरोतीत्यन्वयः ।

ऋणिनोऽपि देवाः ज्ञानिनः फलप्रतिबन्धे नेशते

**न विज्ञातात्मयाथात्म्यं प्रत्यृणित्वं भवेद्यतः । अविद्याविषयं तत्स्यात्तस्य कर्तृत्वकारणात् ॥५९॥**
**यत्र वा अन्यदित्यादि तथाच श्रुतिशासनम् । ध्वस्ताविद्यस्य तन्न स्यात्तस्यैकात्म्यस्वभावतः ॥६०॥**
**न चेहाविदुषोऽपि स्यादृणित्वं हेत्वसंभवात् । न किंचिन्नः सुरैः प्रत्तमृणित्वं येन नो भवेत् ॥६१॥**
**वचनादिति चेन्नैवं तदुक्तेरर्थवादतः । अवदानविधेः[1] शेषो ह्यर्थवादो हि तद्वचः ॥६२॥**

देवानामैश्वर्यस्य विषयप्रदर्शनम् अभयोऽन्यां इत्यस्यावतरणम्

**विद्वांसं प्रति नेशाना यदि देवादयो मताः । कस्मिन्विषय ऐश्वर्यं तेषां स्यात्सोऽधुनोच्यते ॥६३॥**
**प्रामाण्यं कर्मकाण्डस्य यस्मिन्विषय इष्यते । अविद्याविषयः साक्षादथ योऽन्यामितीर्यते ॥६४॥**

विद्याफलप्रतिबन्धे न सामर्थ्यमिति सिद्धान्तिनोक्तमनूद्य हेतुं पृच्छति—ऋणिनोऽपीति । निमित्तं प्रतिजानीते—तत्रेति ॥१५५८॥

तेषामुत्तमर्णत्वं विद्वद्विषयं अविद्वद्विषयं वा ? नाद्य इत्याह—नेति । तस्य कर्तृत्वाद्यभावं हेतुमाह—यत इति । अतस्तद्विषये तेषामनैश्वर्यमुचितमिति शेषः । द्वितीयमङ्गीकरोति—अविद्येति ॥१५५९॥

अविदुषोऽस्ति कर्तृत्वादीत्यत्र मानमाह— यत्रेति । विदुषो न कर्तृत्वादीत्यत्रापि मानमाह—ध्वस्तेति । "यत्र त्वस्य सर्वमात्मैवाभूदि"तिश्रुतेरित्यर्थः ॥१५६०॥

अधमर्णत्वमविदुषोऽङ्गीकृत्य तद्विषये देवादीनामुत्तमर्णत्वमुक्त्वा तदपि नास्तीत्याह—न चेति । इह देवादिष्विति यावत् । हेत्वसंभवं साधयति—नेत्यादिना । पवनवर्षादिप्रदानं तु स्वाधिकारकृतमीश्वराज्ञाधीनं नास्माकमृणित्वमापादयितुमलमन्यथा स्वाधिकारप्रच्युतिप्रसङ्गा"द्भीषाऽस्मादि"त्यादिश्रुतेरिति भावः ॥१५६१॥

"त्रिभिर्ऋणवा जायत" इत्यादिश्रुतेरविदुषोऽधमर्णतेति शङ्कते—वचनादिति । तत्र स्वातन्त्र्येण मानमर्थवादत्वा"त्सोऽरोदीदि"त्यादिवदतो न तद्विवक्षितार्थसाधकमित्याह—नैवमिति । अर्थवादत्वं समर्थयते—अवदानेति ।

यथा "निवीतं मनुष्याणामि"त्युपवीतस्तुत्यर्थोऽर्थवादो न विधिरुपपद्यते "देवलक्ष्ममेव तत्कुरुत" इति विधिनाऽस्यैकवाक्यत्वात्तथा "तदवदानैरेवावदयत" इत्यवदानशेषोऽयमर्थवादो यन्मनुष्याणामृणित्ववचनमित्यर्थः । अर्थवादस्य विधिशेषत्वं "देवा वै देवयजनमध्यवसाये"त्यादौ प्रसिद्धमिति वक्तुमेको हिशब्दः । द्वितीयस्तु यथोक्तदृष्टान्तप्रदर्शनार्थः ॥१५६२॥

मनुष्याणां पशुलोकत्वश्रवणेऽपि देवादिभिस्तद्विद्याफले मुक्तौ प्रतिबन्धो न शक्यते कर्तुं विद्या चाऽऽद्यैवाविद्याध्वंसिनी अन्त्यायास्तत्संततेश्च तदयोगाद्विदुषो रागादिदृष्टेश्चाऽऽभासत्वात्तत्फलमावश्यकमित्युक्तम् । इदानीं देवादीनां विदुष्यस्वातन्त्र्ये कुत्र स्वातन्त्र्यमिति पृच्छति—विद्वांसमिति । अथ योऽन्यामित्याद्यवतारयति—सोऽधुनेति । अब्रह्मविदि निग्रहानुग्रहस्वातन्त्र्यं देवादीनां प्रपञ्च्यतेऽनन्तरवाक्येनेत्यर्थः ॥१५६३॥

आविद्ये साध्यसाधनत्वादौ कर्मश्रुतेर्मानत्वं चोच्यते तेनैवेत्यर्थान्तरमाह—प्रामाण्यमिति । प्रत्यक्षादेरागमेतरप्रमाणस्याविद्याविषये प्रामाण्यवदितिदृष्टान्तद्योतनार्थं साक्षादित्युक्तम् ॥१५६४॥

---

१. अवदानविधेरिति—निवीतं मनुष्याणां प्राचीनावीतं पितॄणामुपवीतं देवानामुपव्ययते इति श्रूयते । तत्र निवीतप्राचीनावीतयोः न विधिः किन्तु उपवीतविधेः स्तुत्यर्थोऽर्थवादः उपवीतविधिना एकवाक्यत्वात् । तथा "जायमानो वै ब्राह्मणः त्रिभिर्ऋणवा जायते" इत्यादिः "तदवदानैरेवावदयते" इति उत्तरत्र विधीयमानावदानविधेः शेषोऽर्थवादः । अन्यथा अवदानेन ऋणत्रयनिवृत्त्यसंभवात् इत्यर्थः । "देवा वै देवयजनमध्यवसाय दिशो न प्राजानन्—" इति "आदित्यः प्राणनीयश्चरुः" इति विहितेष्टेरर्थवादः सर्वव्यामोहानां निवर्तकोऽयं यागः दिङ्मोहस्यापि निवर्तकः इति स्तुतिः । ( जै० सू० १.२.११ )

सम्यग्ज्ञानसमुत्पत्तौ कर्मकार्यसमाप्तितः । नापेक्षा कर्मकाण्डे स्यात्तत्प्रामाण्यकृतार्थतः ।।६५।।

अथ योऽन्यामित्यत्राथशब्दविवरणम्

प्रकृतैकात्म्यविद्याया व्युत्थानायाथगीरियम् । न हि संगच्छते विद्याऽविद्यायोगं विरोधतः ।।६६।।

प्रतीच्यनन्य एकस्मिन्नविद्यापिहितेक्षणः । अनन्योऽप्यात्मनो भिन्नामुपास्ते देवतां नरः ।।६७।।

अन्योऽसाविति वाक्येन व्याख्योपासापदस्य तु । भेददर्शनमेवात्र उपास्त इति भण्यते ।।६८।।

किं मूलं भिन्नदृष्टेः स्यादिति श्रुत्या तदुच्यते । न स वेदेत्यविद्येयं नामरूपप्रपञ्चकृत् ।।६९।।

आत्माविद्याग्रहग्रस्तः संहतस्तज्जवस्तुभिः । स एष पशुतामेति देवादीनां स्वकर्मभिः ।।७०।।

बहूपकारकृद्यद्वद्गवादिर्लौकिकः पशुः । देवादीनां तथाऽविद्वान्पशुः स्यादुपकारकृत् ।।७१।।

यथा ह्वै बहवः इत्यस्य विवरणम्

एकैकस्वामिको लोके गवादिः पशुरिष्यते । ततोऽप्यतिशयः पुंसां सर्वलोकोपकारिता ।।७२।।

एकैकक्रियया लोक एकैकस्वामिकः पशुः । अनेकैः संहतश्चैवं कदाचिदुपकारकः ।।७३।।

नन्वाविद्ये कर्मादौ न तत्प्रामाण्यं विदुषोऽपि कर्मापेक्षत्वात् "न हि कश्चित्क्षणमपी"त्यादिस्मृतेः श्रुतयोऽपि समुच्चितं ज्ञानं मुक्तिहेतुमाहुस्तत्राऽऽह—सम्यगिति । ऐक्यज्ञाने स्वर्गादेर्बाधितत्वात्कर्मकाण्डे तदर्थे वा विदुषो नापेक्षा कृत्याभावाज्ज्ञानात्प्रागेव तत्प्रामाण्यस्य व्यावहारिकस्य सिद्धत्वात् । अथवा सति ज्ञाने कर्मकार्यस्य बुद्धिशुद्धेस्तद्धेतोरादावेव लब्धत्वात्तत्कर्मकाण्डप्रामाण्यस्य चरितार्थत्वान्न पुनस्तस्मिन्नपेक्षा युक्ता फलाभावाज्जनकादेर्बाधितं कर्म दर्शितं "न मे किंचन दह्यते"त्यादिदर्शनात् । स्मृतिश्चाज्ञविषया "तस्य कार्यं न विद्यते" इति च वक्ष्यति । "कुर्याद्विद्वानि"ति चाज्ञं प्रवर्तयितुमेवोक्तं "यद्यदाचरति श्रेष्ठ" इत्यादिदर्शनात् । समुच्चयवचनानि च क्रमसमुच्चयार्थान्यन्यथा "नान्यः पन्था" "न कर्मणे"त्यादिनिषेधविरोधस्तस्मादाविद्ये कर्मादौ कर्मश्रुतेर्मानतेति भावः । आविद्यविषयत्वे तस्या रूप्यादिधीवदमानतेत्याशङ्क्य व्यावहारिकमानत्वस्याध्यक्षादिवदुपपत्तेर्मैवमित्याह—तदिति । रूप्यादिधीस्तु न ज्ञान"मविद्या वेद्यैः सह भ्रम" इत्युपगमादिति द्रष्टव्यम् ।।१५६५।।

अब्रह्मविदि देवादिस्वातन्त्र्यमाविद्ये च कर्मादौ कर्मकाण्डमानतेत्यर्थद्वयं वक्तुमुत्तरं वाक्यमिति तात्पर्यमुक्त्वाऽथशब्दार्थमाह—प्रकृतेति । प्रकृतादुत्तरस्य विच्छेदकरणे हेतुमाह—न हीति । विरोधतो निवर्त्यनिवर्तकभावादित्यर्थः ।।१५६६।।

योऽन्यामित्यामित्यादेरर्थमाह—प्रतीचीति । त्रिविधभेदाभावो विशेषणयोरर्थः । स्वाविद्याच्छन्नदृष्टित्वं हेतूकृत्य भेददृष्टिमाह—अविद्येति । उपासितुर्वस्तुतो देवताया भिन्नत्वं निरसितुमनन्योऽपीत्युक्तम् ।।१५६७।।

कीदृशमुपासनं न तावच्छास्त्रीयं न स वेदेतिवाक्यशेषान्नापि लौकिकं भेददर्शनं तत्रोपास्त्यप्रसिद्धेस्तत्राऽऽह—अन्योऽसावितीति । शास्त्रीयोपास्तिव्यावृत्त्यर्थस्तुशब्दः । न चोपासनाशब्दो लौकिके भेददर्शने न प्रयुज्यते उपास्ते राजानमित्यादौ दर्शनादिति भावः ।।१५६८।।

आकाङ्क्षापूर्वकं वाक्यान्तरमादत्ते—किं मूलमिति । "न स वेदे"ति श्रुत्येति संबन्धः । तदर्थमाह—अविद्येति । तस्यामनुभवं प्रमाणयति—इयमिति । तत्रैव कार्यलिङ्गकमनुमानमाह—नामेति ।।१५६९।।

वाक्यान्तरमवतारयितुं भूमिकामाह—आत्मेति । अविद्वानाविद्यब्राह्मण्याद्यभिमानवान्यागादिभिरुपकुर्वन् देवादीनां पशुत्वमेति न तु विद्वानित्यर्थः ।।१५७०।।

यथा पशुरिति दृष्टान्तं व्याचष्टे—बहूपकारेति । एवमित्यादिदार्ष्टान्तिकं विभजते—देवादीनामिति । अविद्वानिति च्छेदः ।।१५७१।।

वाक्यान्तरमवतारयितुं भूमिकां कुर्वन्गवादिवैसादृश्यं नरपशोर्दर्शयति—एकैकेति ।।१५७२।।

यथा हेत्यादिदृष्टान्ततात्पर्यमाह—एकैकेति । लोके गवादिरेकैकाधिष्ठितो दोहनाद्येकैकक्रियया कदाचिदेकैकस्याधिष्ठातुरुपकरोति कदाचिदनेकैः संभूय वहनादिक्रिययोपकारकस्तं पालयतीत्यर्थः । एकैकस्य पशोरसंहतस्योपकारकत्ववदिति वक्तुमेवमित्युक्तम् ।।१५७३।।

भूरिक्रियावांस्तु नरस्तथाऽनेकेश्वरोऽवशः । एकैको निखिलं विश्वं बिभर्त्यज्ञो दिवानिशम् ॥७४॥
अस्यैवार्थस्य दृष्टान्तो यथा हेत्यभिधीयते । यत एवमतो युक्तं देवादेर्भृशमप्रियम् ॥७५॥
अपि भूरिपशोः पुंस एकस्मिन्नपि तस्करैः । ह्रियमाणे पशौ तीव्रं दुःखं समुपजायते
किमु सर्वस्वहरणे वक्तव्यं दुःखकारणम् ॥७६॥
सर्वस्वतुल्ये नृपशौ ब्रह्मधीपरिमोषिणा ॥७७॥
ह्रियमाणे महद्दुःखं तस्मादेषां तदप्रियम् । यद्यथोक्तं परं ब्रह्म मनुष्या विद्युरञ्जसा ॥७८॥
सर्वाधिकारहेत्वग्निब्रह्मज्ञानस्य जन्मनि । अव्यावृत्ताननुगतात्प्रतीचोऽन्यन्न शिष्यते ॥७९॥
नावशिष्यत एतस्मात्तदविद्योत्थमण्वपि । प्रध्वस्तत्वादविद्याया ब्रह्मात्मज्ञानवह्निना ॥८०॥
क्रियावद्भिर्हि कौन्तेय देवलोकः समावृतः । न चैतदिष्टं देवानां मर्त्यैरुपरि वर्तनम् ॥८१॥

देवताराधनं मुमुक्षुभिः अवश्यं कर्तव्यम्

तस्मान्मुमुक्षुर्देवादीन्सम्यगाराध्य कर्मभिः । उन्मुक्तबन्धनस्तैः सन्नापित्सेज्ज्ञानमात्मनः ॥८२॥
तद्विपक्षस्तु यो बालो बलादेव मुमुक्षति । स्वर्गादेरपि विभ्रष्टो नरकं स निगच्छति ॥८३॥
प्रमादिनो बहिश्चित्ताः पिशुनाः कलहोत्सुकाः । संन्यासिनोऽपि दृश्यन्ते देवसंदूषिताशयाः ॥८४॥

एवमित्यादिदार्ष्टान्तिकतात्पर्यमाह—भूरीति । उक्तदृष्टान्तादविद्वानेकैकोऽनेकदेवाद्यधिष्ठितः संस्तदधीनः सन्दानयागादिक्रियावानशेषं देवादिकं पालयतीत्यर्थः ॥१५७४॥

यथा पशुरित्यनेनैवेष्टसिद्धौ किं यथा हेत्यादिनेत्याशङ्क्य लोकपशोर्मनुष्यपशोर्यथोक्तं विशेषं वक्तुमित्याह—अस्येति । एकस्मिन्नेवेत्यादिवाक्यमवतारयितुं पातनिकामाह—यत इति । इज्यादिभिर्नरस्य देवाद्युपकारकत्वाद्ब्रह्मज्ञानेन पशुत्वाद्व्युत्थाने देवादेर्महद्दुःखं युक्तमित्यर्थः ॥१५७५॥

वाक्यं व्याकरोति—अपीति ॥१५७६॥

तस्मादेषामित्यादेरर्थमाह—सर्वस्वेति ॥१५७७-१५७८॥

परिमोषित्वं ब्रह्मधियः साधयति—सर्वेति । सर्वस्मिन्कर्मण्यधिकारः स्वामित्वेन संबन्धस्तत्र हेतुरभिमानस्तस्य सहेतोरग्निरिव यद्ब्रह्मज्ञानं तस्य जन्मनि सति सर्वस्य प्रत्यङ्मात्रत्वेनावसानात्परिमोषित्वं ब्रह्मधियः स्फुटमित्यर्थः ॥१५७९॥

ज्ञाने सत्यज्ञानाभावेऽप्यर्थान्तरं स्यादित्याशङ्क्याऽऽह—नेत्यादिना । एतस्मात्प्रतीचोऽन्यदिति संबन्धः । कारणमन्तरेण कार्यं स्थातुमसमर्थमित्यर्थः ॥१५८०॥

ब्रह्मज्ञानात्पशुत्वध्वस्त्या मनुष्याणामुत्कर्षो देवाद्यप्रियहेतुरित्युक्त्वा मनुष्योत्कर्षं देवा न मृष्यन्तीत्यत्र व्यासवाक्यं प्रमाणयति—क्रियावद्भिरिति । सुकृतिभिरावृतत्वाभावे तस्य कदाचिद्ध्रासप्रसङ्गादिति हिशब्दार्थः । ते हि मनुष्याणां देवलोकस्थितिमपि न मृष्यन्ते तेषां विद्यया निर्वाणाप्तिं सुतरामेवेति भावः ॥१५८१॥

देवादीनां मनुष्येषु ब्रह्मज्ञानस्याप्रियत्वे तन्मुमुक्षा विफलेत्याशङ्क्य देवाद्यप्रियवाक्येन ध्वनितं दर्शयति—तस्मादिति । मनुष्याणां विद्याप्तौ देवादीनां विघ्नकर्तृत्वसंभवादित्यर्थः । आराधनस्य सम्यक्त्वं शास्त्रानुसारित्वम् । आपित्सेदाप्तुमिच्छेदिति यावत् ॥१५८२॥

मुमुक्षुरद्वैतदर्शनमाकाङ्क्षन्द्वैतदर्शनानुकूलदेवाद्याराधनाय न स्पृहयतीत्याशङ्क्याऽऽह—तद्विपक्षस्त्विति । देवाद्याराधनपराङ्मुखस्य विवेकवैराग्यादिशून्यस्य तत्प्रसादं विना ज्ञानायोग्यस्याकस्मादेव मुक्तिमिच्छतस्तद्धेत्वभावान्न मुक्तिर्न वाऽभ्युदयो मुमुक्षुत्वादेव तद्धेत्वभावादतः स नरकमात्रपात्रं स्यादित्यर्थः ॥१५८३॥

ननु तदाराधनाभावेऽपि कुतो मुमुक्षोर्नारकित्वं न हि मुमुक्षाऽनर्थफला मोक्षशास्त्रविरोधान्न चानर्थध्वंसेच्छया प्रवृत्तोऽनर्थमृच्छतीत्याशङ्क्य बहिर्मुखस्य निषिद्धाचरणध्रौव्यादफला मुमुक्षेति मत्वाऽऽह—प्रमादिन इति ।

न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते । न च संन्यसनादेव सिद्धिं समधिगच्छति ॥८५॥
कषायं पाचयित्वा तु श्रेणीस्थानेषु च त्रिषु । प्रव्रजेच्च परं स्थानं पारिव्राज्यमनुत्तमम् ॥८६॥
भावितैः करणैश्चायं बहुसंसारयोनिषु । आसादयति शुद्धात्मा मोक्षं वै प्रथमाश्रमे ॥८७॥
तमासाद्य तु मुक्तस्य दृष्टार्थस्य विपश्चितः । त्रिष्वाश्रमेषु कोऽन्वर्थो भवेत्परमभीप्सतः ॥८८॥
इत्येवं भगवद्व्यासवचांस्यत्र सहस्रशः । श्रूयन्ते न्यायदृब्धानि तस्मात्तान्यादराच्छ्रयेत् ॥८९॥

मू.—ब्रह्म वा इदमग्र आसीदेकमेव तदेकँ सन्न व्यभवत् । तच्छ्रेयोरूपमत्यसृजत क्षत्रं यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति । तस्मात्क्षत्रात्परं नास्ति तस्माद्ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये । क्षत्र एव तद्यशो दधाति सैषा क्षत्रस्य योनिर्यद्ब्रह्म तस्माद्यद्यपि राजा परमतां गच्छति ब्रह्मैवान्तत उपनिश्रयति स्वां योनिं य उ एनँ हिनस्ति स्वाँ स योनिमृच्छति स पापीयान्भवति यथा श्रेयाँसँ हिँसित्वा ॥११॥

संगतिप्रदर्शनपूर्वकमुत्तरकण्डिकातात्पर्योक्तिः

शास्त्रार्थः सूत्रितस्तावदात्मेत्येवेति यत्नतः । उक्तश्च तस्य सूत्रस्य संबन्धः सप्रयोजनः ॥९०॥

श्रवणादिषु मनःसमाधानवैधुर्यं प्रमादः । स च चेतसो बाह्यार्थप्रावण्ये हेतुस्तच्च परोत्कर्षासहिष्णुत्वे कारणं तच्च कलहकुतूहलित्वे निदानं प्रमादे हेतुर्देवादिभिरनाराधितैर्दूषितधीत्वमिति विभागः । अपिस्तु कैमुतिकन्यायार्थः ॥१५८४॥

संन्यासिनो निषिद्धचेष्टाद्वाराऽनिष्टापत्तिश्चेदागमिकसंन्यासस्य सम्यग्धीहेतुत्वं न स्यात्तथा चाऽऽगमव्याहतिरित्याशङ्क्य तन्मात्रं वा तद्विशेषो वा धीहेतुरिति विकल्प्याऽऽद्यं भगवद्वाक्येन निराचष्टे—न कर्मणामिति । कर्मत्यागमात्रान्नैष्कर्म्याभावेऽपि तन्मात्राज्ज्ञानं स्यादित्याशङ्क्याऽऽह—न चेति ॥१५८५॥

अस्तु तर्हि कर्मभिः शुद्धबुद्धेः संन्यासो धीहेतुरिति द्वितीयमाशङ्क्याङ्गीकुर्वन्क्रमसंन्यासविषयं व्यासवाक्यं पठति—कषायमिति । शुद्धबुद्धेरेव पारिव्राज्येऽधिकारो नान्यस्येति तुशब्दार्थः । श्रेणीस्थानेषु सोपानस्थानीयेष्वाश्रमेष्विति यावत् । तेष्ववस्थित्वेति चकारार्थः । द्वितीयश्चकारो वैराग्यं पारिव्राज्यहेतुरिति समुच्चयार्थः । अनुत्तममनतिशयपुमर्थसाधनं पारिव्राज्यं प्रव्रजेद्गच्छेदिति संबन्धः । परं स्थानं कैवल्यमुद्दिश्येति शेषः ॥१५८६॥

कथं तर्हि ब्रह्मचर्यादेव प्रव्रजेदित्यक्रमसंन्यासश्रुतिस्तत्राऽऽह—भावितैरिति । वैराग्यद्वारेति दर्शयितुं चशब्दः । वैशब्दोऽवधारणार्थः । मोक्षं तद्धेतुज्ञानार्थमाश्रममिति यावत् ॥१५८७॥

सोपानारूढस्यावरोहवत्पारिव्राज्यमाप्तस्यापि पूर्वाश्रमेष्वनुष्ठानेच्छया प्रवृत्तिमाशङ्क्याऽऽह—तमासाद्येति । तुशब्दो दर्शितशङ्काव्यावृत्त्यर्थः । विपश्चितो विवेकवैराग्यादिमतोऽनतिशयं पुमर्थमिच्छतो मोक्षाश्रमं प्राप्तस्य श्रवणादिना दृष्टतत्त्वस्य जीवन्मुक्तस्याऽऽरब्धशेषेण देहाद्याभासमनुभवतो न पूर्वाश्रमेष्वर्थो येनाऽऽरूढपातीत्याशङ्केत्यर्थः ॥१५८८॥

शुद्धबुद्धेः संन्यासो धीहेतुरित्यत्रोक्तं मानमुपसंहरति—इत्येवमिति । तेषामुपकरणन्यायसाहित्येन मानत्वं सूचयति—न्यायेति । कर्मणामीश्वरार्पणबुद्ध्याऽनुष्ठितानां फलं धीशुद्धिः शुद्धधीश्च विवेकादियुक्तस्त्यक्तकर्मा मुक्तिहेतुं ज्ञानमात्रमिच्छन् गुरुपादावनुसृत्य श्रवणादि करोति नान्यदिति न्यायः । अतो देवताराधनादिपरः शुद्धधीर्व्यासादिवाक्यप्रामाण्यात्तत्त्वज्ञानमुद्दिश्य कर्माणि संन्यस्य श्रवणादीन्यावर्तयेदित्याह—तस्मादिति । उक्तं च भाष्ये—तस्मान्मुमुक्षुर्देवताराधनतत्पर इत्यादि ॥१५८९॥

ब्रह्म वा इदमित्यादिवाक्यस्यातीतेन संबन्धं वक्तुं वृत्तं कीर्तयति—शास्त्रार्थ इति । ब्रह्मविद्येति यावत् । यत्नतो विधित्रयनिराकरणेनेत्यर्थः । ननु ब्रह्मविद्यायाः संबन्धः कः किंच फलमित्याशङ्क्य तदाहुरित्यादिनोक्त-

संसारानर्थहेतुत्वमविद्यायाश्च वर्णितम् । योऽन्यामित्यादिवाक्येन तत्कार्यमपि सूत्रितम् ॥९१॥
विद्यावत्सह कार्येण ह्यविद्याऽपीह सूत्रिता । सामर्थ्याद्विस्तरस्तस्या आऽध्यायान्तादिहोच्यते ॥९२॥
यथोक्तात्मानभिज्ञो योऽविद्याकार्याभिमानवान् । पशुवद्देवताः पाति स जुहोत्यादिकर्मभिः ॥९३॥
आऽध्यायावसितेस्तस्मादविद्याया विभूतयः । वक्ष्यन्ते विस्तरेणातः परो ग्रन्थोऽवतार्यते ॥९४॥
अस्यैवार्थस्य सिद्ध्यर्थमग्निसर्गादनन्तरम् । इन्द्रादिसर्गः प्राङ्नोक्तो मोहकार्यविवक्षया ॥९५॥
परि[प्र]पूरणाय सृष्टेस्तु ह्यग्निसर्गः पुरोदितः । यत एवमतोऽविद्याकार्योऽनर्थोऽखिलो भवेत् ॥९६॥
इन्द्रादिसर्गस्तत्रैव तच्छेषत्वात्समीक्ष्यताम् । अविद्याकार्यसिद्ध्यर्थमिह त्वस्य प्रपञ्चनम् ॥९७॥
स्रष्टृ यज्जगतः पूर्वमात्मैवेत्यभिशब्दितम् । तदग्न्याद्यभिमान्यत्र ब्रह्मेति व्यपदिश्यते ॥९८॥

मनुवदति—उक्तश्चेति । सूत्रस्य सूत्रितज्ञानस्येति यावत् । तस्य फलेन साध्यसाधनत्वं संबन्धोऽधिकारिणाऽऽश्रयाश्रयित्वमैक्येन विषयविषयित्वमिति विभागः । सर्वभावश्च तत्फलमिति विभागः ॥१५९०॥

अविद्यासूत्रे वृत्तं कीर्तयति—संसारेति । तादृगनर्थो भेददर्शनं चशब्दादविद्याऽपि कार्यद्वारा दर्शितेत्यर्थः । यथा पशुरित्यादिनोक्तं दर्शयति—तत्कार्यमिति । तच्छब्दो भेददर्शनविषयः ॥१५९१॥

संबन्धप्रयोजनाभ्यां सह विद्या सकार्या चाविद्या सूत्रितेति योऽर्थो विस्तरेणोक्तस्तमेव संक्षिपति—विद्यावदिति । इहेति पूर्वग्रन्थोक्तिः । सूत्रद्वयस्य प्रागेव व्यक्तत्वमस्तीति वक्तुं हिशब्दः । वृत्तमनूद्योत्तरस्य तेन संगतिमाह—सामर्थ्यादिति । उत्तरग्रन्थस्य तदुक्तिशक्तिदृष्टेरिति यावत् । तस्याः सूत्रितसकार्याविद्याया इत्यर्थः । इहेत्यध्यायशेषोक्तिः ॥१५९२॥

कथमुत्तरस्य सकार्याविद्यायां स्वशक्त्याऽन्वितावयवत्वं तत्राऽऽह—यथेति । तदात्मानमेवावेदित्युक्तात्मनोऽज्ञानादज्ञानकार्ये देहादावहंममाभिनभागी यागहोमादिभिरज्ञो देवादीनां मनुष्याणां पशुवदुपकरोतीत्ययमर्थोऽनन्तरग्रन्थेन भातीत्यर्थः ॥१५९३॥

यस्मादुक्तार्थस्यानन्तरग्रन्थे दर्शनात्तस्य सकार्याविद्यायामन्वितावयवत्वं तस्मात्तदारम्भस्तां प्रपञ्चयितुमित्युपसंहरति—आऽध्यायेति । अध्यायशेषतात्पर्यमुक्त्वाऽनन्तरवाक्यमवतारयति—अत इति । यतः सकार्याविद्याप्रपञ्चार्थः शेषोऽतोऽविद्याविवर्तचातुर्वर्ण्यसृष्टिप्रकटनायानन्तरग्रन्थ इत्यर्थः ॥१५९४॥

"अथेत्यभ्यमन्थदि"त्यत्रानुग्राहकदेवतासर्गं प्रक्रम्याग्नेरेव सृष्टिरुक्ता नेन्द्रादीनामत्र त्वविद्यां प्रस्तुत्य तेषां सोच्यते तत्र कः श्रुतेरभिप्रायस्तत्राऽऽह—अस्येति । पूर्वमग्निसर्गानन्तरमिन्द्रादिसर्गो वाच्योऽपि नोक्तः फलाभावादिह त्वविदुषस्तत्कार्यवर्णाद्यभिमानिनः कर्माधिकृतिरित्यस्यार्थस्य प्रतिपत्त्यर्थं तस्याऽऽविद्यत्वविवक्षया स व्युत्पाद्यत इत्यर्थः ॥१५९५॥

अग्निसर्गोऽपि तर्हि तद्वदत्रैव वाच्योऽविद्याकार्यत्वाविशेषादित्याशङ्क्याऽऽह—परिपूरणायेति । तस्येतरवदाविद्यत्वे तुल्येऽपि फलवशात्प्रागुक्तिरित्यर्थः । अग्निसृष्टिवाक्यव्याख्यानकालेऽपि दर्शितमेतदिति वक्तुं हिशब्दः । अग्निसृष्टेर्वाच्यताद्योती तुशब्दः । इन्द्रादिसृष्टेराविद्यत्वे फलितमाह—यत इति । यतः सर्वः सर्गो रज्जुसर्पवदविद्याविलासोऽतः सोऽनर्थः स्यादिति योजना ॥१५९६॥

प्रजापतेः सृष्टिपूर्तये चेदग्निसृष्टिस्तत्रोक्ता हन्तेन्द्रादिसर्गोऽपि तत्रैव वाच्योऽन्यथा तदपूर्तेरित्याशङ्क्याऽऽह—इन्द्रादीति । प्रजापतिसृष्टिप्रक्रियायामिन्द्रादिसृष्टेर्द्रष्टव्यत्वे हेतुस्तच्छेषत्वादिति । तर्हि तत्रोक्तस्य कस्मादत्रोक्तिः पुनरुक्तेरित्याशङ्क्यास्यैवार्थस्येत्यत्रोक्तं स्मारयति—अविद्येति । न चाविद्याकार्यत्वसिद्ध्यर्थमिन्द्रादिसर्गवदग्निसर्गमपीहैवोक्त्वा तत्र सृष्टिपूर्त्यर्थमुपसंहृत्योच्यतामिति वाच्यं अग्निसृष्टेरपि तत्रानुक्तौ संग्राहकाभावादुपसंग्रहासिद्धौ प्रजापतिसृष्टेरपूर्तिप्रसङ्गात् । न चैवमिन्द्रादिसृष्टिं तत्र शिष्ट्वा तत्राग्निसृष्टिरुपलक्ष्यतामिति युक्तमग्निप्राधान्यस्य वक्ष्यमाणतया तेनेतरोपलक्षणस्य युक्तत्वादिति द्रष्टव्यम् ॥१५९७॥

पूर्वोत्तरग्रन्थयोः संगतिमुक्त्वा ब्रह्मेत्यादेरर्थमाह—स्रष्ट्रिति । "आत्मैवेदमग्र आसीदि"त्यत्र यदात्मशब्देनोक्तं

ब्रह्मैकजात्यवच्छिन्नं यस्मादग्रे व्यवर्तत । नानेकजातिमद्धेतुकर्मणेऽलं ततो भवेत् ।।९९।।
चातुर्वर्ण्यप्रसाध्यं सन्नैकजातिप्रसाधनम् । कर्मालं सिद्धये लोके शिबिकोद्वहनं यथा ।।१६००।।
गृहीतिरभिषिक्तानामिन्द्रादीनां श्रुतौ श्रुता । श्रेयोरूपप्रसिद्ध्यर्थं क्षत्त्रस्येत्यवगम्यते ।। १ ।।
धर्मान्तैः सहितैर्यस्मात्कर्म सिध्यति नान्यथा । तेन तेन विनाऽशक्तमतस्तत्तदचीक्लृपत् ।। २ ।।
ब्रह्मासृजद्यतः क्षत्त्रमात्मनोऽप्यतिवीर्यवत् । बलवत्क्षत्त्रतस्तस्मान्नान्यद्भूतमिहेष्यते ।। ३ ।।
तस्माच्च ब्राह्मणोऽधस्ताद्राजसूये महाक्रतौ । आसन्दीस्थमुपास्ते त्वं राजन्ब्रह्मेति संभ्रमात् ।। ४ ।।
ब्रह्मेति श्रावितो राज्ञा ब्रह्मा प्रत्याह तं नृपम् । त्वमेव राजन्ब्रह्मेति क्षत्त्रे तद्यश आत्मनः ।। ५ ।।
दधाति भास्वद्ब्रह्माख्यं यस्मिन्सर्वं प्रतिष्ठितम् । क्षत्त्रस्य योनिर्ब्रह्मेदं क्षत्त्रं ह्याविरभूत्ततः ।। ६ ।।
। यतोऽतो यद्यपि क्षत्त्रं ब्राह्मण्यं प्रतिपद्यते ।। ७ ।।
परमत्वं तथाऽप्यन्ते राजसूयक्रतोः पुनः । उपनिश्रयति ब्रह्म गुणभावेन पूर्ववत् ।। ८ ।।

स्रष्टृ ब्रह्म तदग्निं सृष्ट्वा तद्रूपं ब्राह्मणत्वजात्यभिमानवदस्मिन्वाक्ये ब्रह्मशब्देनोच्यते तावन्मात्रं क्षत्त्रादिसर्गात्पूर्वं संवृत्तमित्यर्थः ।।१५९८।।

एकमेवेत्यस्यार्थमाह—ब्रह्मेति । स्रष्टृत्वेनाऽऽदिष्टं ब्रह्म ब्राह्मणत्वजातिमात्रविशिष्टमिति यावत् । अग्रे क्षत्त्रादिसर्गात्पूर्वमित्यर्थः । तदेकमित्यादेरर्थमाह—नानेकेति । ब्रह्मक्षत्त्राद्यनेकजातिमद्व्यक्तिकार्यस्य कर्मणः सिद्धये क्षत्त्रादिरहितं तद्ब्रह्म यस्मान्न शक्तं तस्मात्सहायत्वेन क्षत्त्रादि सृष्टमिति योजना ।।१५९९।।

कथं कर्माऽनेकजातिमद्धेतु ब्राह्मणत्वजातिमन्मात्रसाध्यं किं न स्याद्बृहस्पतिसववत्तत्राऽऽह—चातुर्वर्ण्येति । बृहस्पतिसवोऽपि पालयित्राद्यभावे न शक्यो निर्वर्तयितुमिति क्षत्त्रादिसृष्टिरिति भावः । चतुर्भिः साध्यं नैकेन सिध्यतीत्यत्र दृष्टान्तमाह—लोक इति ।।१६००।।

यान्येतानीत्यादिवाक्याभिप्रायमाह—गृहीतिरिति । क्षत्त्रस्योत्तमत्वख्यापनार्थं श्रुतावभिषिक्तेन्द्रादिग्रहणमित्यर्थः ।।१६०१।।

ननु ब्रह्मणा कर्त्रा क्षत्त्रेण पालयित्रा सर्वकर्मनिर्माणसंभवात्किमिति वैश्यादिसृष्टिरुच्यते तत्राऽऽह—धर्मान्तैरिति । यथा ब्रह्म पालयित्रभावे कर्म कर्तुं नेष्टे तथा द्रव्यार्जकाद्यभावेऽपि; तेनापेक्षितं सर्वं ससर्जेत्यर्थः ।।१६०२।।

श्रेयोरूपमत्यसृजतेति क्षत्त्रस्योत्कृष्टत्वमादिष्टं तस्यैव स्पष्टीकरणार्थमभिषिक्तग्रहणमित्युक्तम् । कथं तस्योत्तमत्वं ततोऽपि ब्राह्मणस्योत्कर्षादित्याशङ्क्य तस्मादित्यादि व्याचष्टे—ब्रह्मेति । व्यवहारभूमौ क्षत्त्रस्य बलवत्तरत्वमनुभवसिद्धमित्यर्थः ।।१६०३।।

तस्य बलवत्त्वेऽपि कथमुत्तमत्वं क्षत्त्रं हि ब्रह्म पुरोधाय सर्वत्राधिक्रियत इत्याशङ्क्य तस्माद्ब्राह्मण इत्यादेरर्थमाह—तस्माच्चेति । चकारोऽवधारणे । क्षत्त्रस्य बलित्वेनोत्तमत्वं तच्छब्दार्थः । अधस्ताद्भूमौ स्थितः सन्निति यावत् । आसन्दीशब्देन विशिष्टो मञ्चो गृह्यते । संभ्रमस्तात्पर्यम् ।।१६०४।।

उपास्तिप्रकारं प्रकटयन्राजसूयाभिषिक्तेनेत्यादिभाष्यं विभजते—ब्रह्मेतीति । उक्तेऽर्थे क्षत्त्र एवेत्यादिवाक्यं पातयति—क्षत्त्र इति । आत्मनो ब्राह्मणस्य पुरोहितस्येति यावत् । यशःशब्दार्थमाह—भास्वदिति । क्षत्त्राख्यं यशस्ततोऽपि भास्वदित्याशङ्क्याऽऽह—यस्मिन्निति । ब्राह्मणस्य क्षत्त्रं प्रति नीचत्वोपगमात्कुतो ब्रह्माख्ये यशसि क्षत्त्रादि प्रतिष्ठितमित्याशङ्क्य सैषेत्यादि व्याकरोति—क्षत्त्रस्येति । योनित्वं साधयति—क्षत्त्रं हीति । न हि पुरोहितं विना क्षत्त्रं संभवतीत्यर्थः ।।१६०५-१६०६।।

तयोर्ब्राह्मण्यस्य तुल्यत्वात्कुतोऽवान्तरभेदः क्षत्त्रमपि क्रतुकाले ब्राह्मण्यं प्राप्नोतीत्याशङ्क्य तस्माद्यद्यपीत्यादेरर्थमाह—यत इति । क्षत्त्रस्य ब्राह्मणाधीनत्वं प्रागुक्तं पञ्चम्यर्थः ।।१६०७-१६०८।।

हेतुतज्जाविभागेन कार्यकारणहेतुतः । वाचारम्भणशास्त्राच्च विकारानृततोच्यते ॥२१॥
अन्तर्भावश्च सामान्ये विशेषाणामथोच्यते । सामान्यमेतत्सर्वेषां विशेषाणां समं हि तैः ॥२२॥
न विशेषो न सामान्यं भेदतोऽभेदतोऽस्ति नः । तथा रूपविशेषाणां रूपमात्रात्मकत्वतः ॥
स्रग्वत्सर्पादिकान्यद्वद्रूपं सर्वं बिभर्ति हि ॥२३॥

मू.—अथ कर्मणामात्मेत्येतदेषामुक्थमतो हि सर्वाणि कर्माण्युत्तिष्ठन्त्येतदेषाँ सामैतद्धि सर्वैः कर्मभिः सममेतदेषां ब्रह्मैतद्धि सर्वाणि कर्माणि बिभर्ति तदेतत्त्रयँ सदेकमयमात्मात्मो एकः सन्नेतत्त्रयं तदेतदमृतँ सत्त्येन च्छन्नं प्राणो वा अमृतं नामरूपे सत्त्यं ताभ्यामयं प्राणश्छन्नः ॥३॥

इति प्रथमाध्याये षष्ठं ब्राह्मणम् ॥६॥
इति बृहदारण्यकोपनिषदि प्रथमोऽध्यायः ॥१॥
इति बृहदारण्यकक्रमेण तृतीयोऽध्यायः ॥३॥

कर्मविशेषाणां कर्मात्मकत्वम्

उक्तं समासतस्तावदेकत्वं नामरूपयोः । कर्मणोऽपि तथैकत्वमधुना प्रतिपाद्यते ॥२४॥
वाक्चक्षुःशब्दतो यद्वद्गृह्यते विषयस्तयोः । आत्मनो विषयस्तद्वदात्मशब्देन गृह्यते ॥२५॥
सर्वेन्द्रियपरिस्पन्दो व्यज्यते नः शरीरके । शरीरविषयस्तस्मादात्मेत्यत्राभिधीयते ॥२६॥
आत्मैव त्वस्य कर्मेति तथैवाभिहितं पुरा । अतोऽत्र कर्मसामान्यं गृह्यते देहसंश्रितम् ॥२७॥

रूपविशेषाणां तत्सामान्यस्य च कार्यकारणत्ववादिश्रुतेस्तात्पर्यमाह—हेत्विति । कार्यकारणयोरविभागस्य मृद्घटादौ दृष्टत्वात्प्रकृते च तद्भावहेतोस्तादात्म्यदृष्टेर्वाचारम्भणं विकार इति च कार्यानृतत्वोक्ते रूपसामान्यं विना न तद्विशेषा वस्तुतः सन्तीत्यर्थः ॥२१॥

उक्थवाक्यमित्थं व्याख्यायैतदेषां सामेत्यस्यार्थमाह—अन्तर्भावश्चेति । हेत्वन्तरार्थोऽथशब्दः । एतद्धीत्यादेरर्थमाह—सामान्यमिति । रूपमात्रस्य तद्विशेषेषु सामान्यत्वं साधयति—समं हीति ॥२२॥

रूपसामान्ये तद्विशेषाणामन्तर्भावं वदता सामान्यविशेषभावस्य वास्तवत्वमिष्टमन्यथा तद्भावस्यैवायोगात्तथा चापराद्धान्तः स्यादित्याशङ्क्याऽऽह—नेत्यादिना । निःसामान्यविशेषं वस्तु वदतामस्माकं न सामान्याद्भेदाभेदाभ्यां विशेषोऽस्ति नापि सामान्यं विशेषात्ताभ्यां संभवति भेदसंबन्धयोर्दुर्वचत्वादभेदे वाऽन्यतरपरिशेषादतः सामान्यविशेषत्वं कल्पितं तच्चाकल्पितवद्व्यवहाराङ्गमित्यर्थः । एतदेषां ब्रह्मेत्यस्यार्थमाह—तथेति । यथा सर्पादीनां स्रङ्मात्रत्वं तथा रूपविशेषाणां रूपमात्रस्वभावत्वान्न ततो भेदेन ते वस्तुतः सन्तीत्यर्थः । एतद्धीत्यादेरर्थमाह—सर्पादिकानीति । यथा स्रगधिष्ठानं सर्पादीन्बिभर्ति तथा रूपसामान्यं स्वविशेषमात्मत्वेन धारयत्यतो न तद्विशेषस्तन्मात्रात्पृथगस्तीत्यर्थः ॥२३॥

अथ कर्मणामित्यादि वृत्तमनूद्यावतारयति—उक्तमिति । नामविशेषाणां नाममात्रेण रूपविशेषाणां च तन्मात्रेणैक्यं संक्षिप्योक्तं तथैव कर्मविशेषाणां तन्मात्रेणैक्यमुच्यतेऽनन्तरेणेत्यर्थः ॥२४॥

कथमात्मा कर्मणामुक्थमिति विशेषतो व्यपदिश्यते तस्य सर्वोपादानत्वादित्याशङ्क्याऽऽत्मशब्दार्थमाह—वागिति ॥२५॥

कथमात्मशब्दितदेहनिर्वर्त्यकर्ममात्रमत्राऽऽत्मेत्याशङ्क्याऽऽह—सर्वेन्द्रियेति । शरीरविषयस्तज्जन्यपरिस्पन्द इति यावत् । सप्तम्या प्रकृतमुक्थवाक्यमुक्तम् ॥२६॥

आत्मशब्देन तद्ग्रहे हेत्वन्तरमाह—आत्मैवेति । अज्ञस्य बाह्यजायाद्यापादयितुमशक्तस्य शरीरमेव कर्मेत्युक्तं पूर्वब्राह्मणे । कथमेतावताऽत्राऽऽत्मशब्देन कर्मसामान्यग्रह इत्याशङ्क्याऽऽह—अतोऽत्रेति । देहस्याऽऽत्मशब्दत्वमतःशब्दार्थः । अत्राऽऽत्मशब्देन कर्मसामान्यग्रहे तात्स्थ्यादित्यादिभाष्यस्थं हेतुमाह—देहेति ॥२७॥

नाम रूपं तथा कर्म यदेतत्त्रयमीरितम् । एकमेव भवत्येतत्त्रयं सद्देहमात्रकम् ॥२८॥
विकर्तृत्वेन कर्मात्र नामरूपात्मनोर्भवेत् । कर्मणः साधनत्वेन नामरूपे व्यवस्थिते ॥२९॥
रूपमेव प्रतिष्ठा स्यात्सर्वदा नामकर्मणोः । न हि रूपमनाश्रित्य विद्येते नामकर्मणी ॥३०॥
प्राण एव प्रतिष्ठैवं सदा स्यान्नामरूपयोः । प्राणैकात्म्याश्रयाद्यस्मादात्मलाभः सदा तयोः ॥३१॥
तद्वद्वागाश्रयत्वं च तयोः स्याद्रूपकर्मणोः । वाचा प्रकाश्यमाने ते प्रयुज्येते यतः सदा ॥३२॥

नामरूपक्रियाणां शरीरात्मता

आश्रयाश्रयिभावेन नामरूपक्रियात्मनाम् । एकार्थानां सतां तेषां संहतिः स्याच्छरीरके ॥३३॥
एकः सन्नेष आत्माऽपि त्रयमेतत्प्रपद्यते । नामरूपक्रियाभिन्नो देहोऽयं गृह्यते यतः ॥३४॥
एतन्मयोऽयमात्मेति तथा पूर्वं प्रपञ्चितम् । एतावद्व्याकृतं सर्वं यदेतत्संहतं त्रिभिः ॥३५॥
तदेतत्खलु वैराजं नामरूपक्रियात्मकम् । नामरूपात्मसत्त्येन च्छन्नं प्राणामृतं तु तत् ॥३६॥
प्राणशब्देन लिङ्गात्मा भण्यते करणात्मकः । पिण्डस्य मरणे नैतन्म्रियतेऽमृतं मतम् ॥३७॥
पृथिव्यबग्निभूतानि सत्संज्ञान्यत्र लक्षयेत् । त्यत्संज्ञके तु विज्ञेये वाय्वाकाशे महात्मभिः ॥३८॥

तदेतत्त्रयमित्यादेरर्थमाह—नामेति ॥२८॥

तच्चेद्देहमात्रं केन रूपेण देहे नामादीनां स्थितिरित्याशङ्क्याऽऽह—विकर्तृत्वेनेति । अत्रेति देहोक्तिः । नामादीनां मिथोहेतुफलत्वेनात्र स्थितिरित्यर्थः ॥२९॥

इतरेतराश्रयमितिविशेषणतात्पर्यं वदन्नामकर्माश्रयत्वं रूपस्योपन्यस्यति—रूपमिति । सर्वदेति दैहिकयोर्द्वयोः सत्त्वावच्छिन्नकालोक्तिः । तत्र युक्तिमाह—न हीति । तयोरस्वातन्त्र्यादित्यर्थः ॥३०॥

प्राणस्य नामरूपाश्रयत्वमाह—प्राण इति । एवं रूपस्य नामकर्माश्रयत्ववदित्यर्थः । सदाशब्दस्तु पूर्ववत् । तस्य क्रियासामान्यात्मनेतरेतराश्रयत्वे हेतुमाह—प्राणेति । नामरूपयोर्देहस्थयोः सत्त्वं सदा प्राणाधीनमिति प्राणस्य तदाश्रयत्वोक्तिरित्यर्थः ॥३१॥

नाम्नो रूपाद्याश्रयत्वमाह—तद्वदिति । रूपस्य कर्मणश्च प्रत्येकमितरेतराश्रयत्ववदित्यर्थः । वाक्शब्दस्य नाममात्रस्य रूपाद्याश्रयत्वे हेतुमाह—वाचेति । न हि रूपस्य कर्मणश्चाप्रकाशितस्य क्वचिद्विनियोगस्तेन प्रकाश्ययोस्तयोर्युक्तं प्रकाशकाश्रयत्वमित्यर्थः ॥३२॥

अन्योन्याश्रयत्वेन नामादीनां देहे स्थितिमुक्त्वा संहतमित्यादिभाष्यार्थमाह—आश्रयेति । एकार्थानामेकस्य भोक्तुः सुखदुःखप्रदत्वेनैकशरीरारम्भकत्वेनावस्थितानामित्यर्थः । सर्वत्र शरीरसामान्याधिकृतस्य कप्रत्ययस्य कुत्सितत्वमित्यर्थः ॥३३॥

नामादित्रयस्य देहमात्रत्वे कथं व्यवहारासांकर्यमित्याशङ्क्याऽऽत्मो एकः सन्नित्यादेरर्थमाह—एकः सन्निति । एकस्यैव देहस्य कुतस्त्रिरूपत्वमत आह—नामेति ॥३४॥

देहस्य त्रयात्मत्वं न परं प्रत्यक्षं वाक्यीयमपीत्याह—एतन्मय इति । तथेति देहस्य यथोक्तनामरूपकर्मसंभिन्नत्वानुरोधेनेति यावत् । कार्याणां कारणानां च भूयस्त्वात्त्रयोक्तिमात्रेण सर्वानुक्तेरुपसंहारस्य सर्वसंग्राहकत्वासिद्धिरित्याशङ्क्याऽऽह—एतावदिति ॥३५॥

तदेतदिति व्याकुर्वन्संहतिरूपं श्रुतिस्मृतिप्रसिद्धमित्याह—तदिति । अमृतमित्यादेरर्थमाह—नामेति । वैराजेन शरीरेण सत्यशब्दितेन सौत्रं शरीरममृतमावृतमित्यर्थः ॥३६॥

प्राणो वा अमृतमित्यस्यार्थमाह—प्राणेति । तस्य कथममृतत्वं तदाह—पिण्डस्येति ॥३७॥

नामरूपे सत्यमित्यत्र सत्यशब्दस्यावयवार्थमाह—पृथिवीति । अत्र पञ्चसु स्थूलभूतेष्विति यावत् । महात्मभिर्महत्यात्मन्यनवच्छिन्ने चेतो धारयितुमिच्छद्भिरुपायत्वेनेति शेषः ॥३८॥

सच्च त्यच्चेति तत्सत्त्यं पञ्चभूतात्मकं विदुः । कारणायतनं स्थूलं वैराजं यत्प्रचक्षते ॥३९॥
अस्याप्यन्तर्गतः प्राणो विज्ञानात्मेति यं विदुः । आ संसारात्स्थितः स्थास्नुः परिणामात्मकः सदा ॥४०॥
यथाकर्म यथाज्ञानमुपादत्ते शरीरकम् । प्लुष्यादिना समोऽतोऽयं श्रुतावप्यभिधीयते ॥४१॥
उपात्ताशेषभूतोऽयं यथोक्तोपात्तदेवतः । कृत्स्नाविद्योत्थमानी च प्रत्यगज्ञानकारणात् ॥४२॥
हैरण्यगर्भे तत्त्वज्ञो वैराजे च शरीरके । आबद्धात्माभिमानोऽयं गार्ग्योऽविद्यासमन्वितः ॥४३॥
कृत्स्नसंसारमान्येष सर्वोऽस्मीति व्यवस्थितः । ब्रह्मोपदेशविषयः श्रुत्यैवोत्थाप्यते जडः ॥४४॥
नामरूपाभिमानाभ्यां मर्त्याभ्याममृतः स्वयम् । प्राणः करणसंघातश्छन्नः संवेष्टितः सदा ॥४५॥

तदेतत्त्रयमित्यादेः भर्तृप्रपञ्चव्याख्या

संप्रदायविदस्त्वत्र नानात्वैकत्ववादिनः । भिन्नाभिन्नात्मकं ब्रह्म नामरूपादिवज्जगुः ॥४६॥
त्रयं सदेकमेव स्यादेकं सत्तद्यथा त्रयम् । अनेनैवानुमानेन विद्याद्ब्रह्मापि तादृशम् ॥४७॥
दृगादिशक्त्यनेकत्वेऽप्येकमेव परं विदुः । शक्तिशक्तिमतोरैक्याददैतमिति भण्यते ॥४८॥

तस्य समुदायार्थमाह—सच्चेति । पञ्चीकृतपञ्चभूतात्मकं तत्कार्यं च सर्वं सच्च त्यच्चेति व्युत्पत्तेः सत्त्यं वैराजं शरीरं कार्यमपञ्चीकृतपञ्चभूततत्कार्यात्मककरणरूपसप्तदशकलिङ्गस्य सूत्राख्यस्याऽऽयतनं विदुर्ब्रह्मविदस्तदेतदागमज्ञानामेवाभिज्ञास्पदमित्यर्थः ॥३९॥

क्रियात्मकस्तु प्राण इत्यादिभाष्येण करणयाथात्म्यं कथयति—अस्यापीति । तर्ह ज्ञानरूपः परात्मैव प्राण इति नेत्याह—आ संसारादिति । उपाधितद्वतोरेकत्वं गृहीत्वा विज्ञानात्मेत्युक्तम् । तर्हि क्रियात्मनस्तस्य कथं यावद्बन्धभावित्वेनामृतत्वं तत्राऽऽह—स्थास्नुरिति । क्रियाशक्तिप्रधानस्य तस्य सापेक्षममृतत्वमित्यर्थः । निरपेक्षं तद्वारयति—परिणामेति ॥४०॥

स्थूलदेहे गच्छत्यपि स्वयं नापगच्छति चेत्कथमस्य पुनः स्थूलदेहग्रहस्तत्राऽऽह—यथेति । तत्र "समः प्लुषिणे"त्यादिश्रुतिं प्रमाणयति—प्लुष्यादिनेति । स्थूलशरीरवत्प्राणस्य विनाशाभावोऽतःशब्दार्थः । न केवलमत्रैव प्राणस्यामृतत्वमुच्यते किंतु पूर्वत्रापीत्यपेरर्थः ॥४१॥

सर्वं जगद्देहद्वयात्मनोपसंहरन्त्याः श्रुतेरभिप्रायमत्रापि प्रकटयति—उपात्तेति । देहद्वयगताभिमानद्वयवत्त्वे हेतुमाह—कृत्स्नेति ॥४२॥

तदेव स्फुटयति—हैरण्यगर्भे इति । अज्ञानाद्देहद्वयाभिमानी दोषदृष्ट्या ततो विरक्तो विद्याधिकारीति वक्तुमुपसंहारश्रुतिरिति भावः । तत्राजातशत्रुब्राह्मणं गमकमाह—गार्ग्य इत्यादिना । वैराग्यहेतुना विवेकेन सहितस्य बालाकेरविद्यावत्त्वं कथमित्याशङ्क्याऽऽह—जड इति । तत्रापरोक्षराहित्यादित्यर्थः ॥४३–४४॥

उपसंहारश्रुतेस्तात्पर्यमुपसंहृत्य ताभ्यामित्यादि व्याचष्टे—नामेति । सूक्ष्मं शरीरमनात्माऽपि स्थूदेहच्छन्नत्वाद्दुर्ज्ञानं तेनापि च्छन्नं प्रत्यग्वस्तु सुतरामिति तज्ज्ञानेऽवहितैर्भाव्यमिति भावः ॥४५॥

तदेतत्त्रयमित्यादौ स्वव्याख्यानमुक्त्वा भर्तृप्रपञ्चव्याख्यानमुत्थापयति—संप्रदायेति । विशेषणमुपहासार्थम् । पूर्वोक्तव्याख्यानव्यावृत्त्यर्थस्तुशब्दः । नामादित्रयमत्रेत्युक्तम् । वदन्तु ते नामादित्रयस्य भिन्नाभिन्नत्वं ब्रह्मणस्तु किं जातं तदाह—भिन्नेति । नामरूपकर्मणां भिन्नाभिन्नत्वं ब्रह्मणो भिन्नाभिन्नत्वसिद्धये दृष्टान्तत्वेनोच्यते तथाच कुतो ब्रह्मैकरस्यमित्यर्थः ॥४६॥

तत्र दृष्टान्तं स्पष्टयति—त्रयमिति । दार्ष्टान्तिकं स्फुटयति—अनेनेति । दृष्टान्तेनेति यावत् । विमतं भिन्नाभिन्नं वस्तुत्वान्नामादिवदित्याह—अनुमानेनेति । उक्तं चानेन चैकत्वनानात्वदर्शनेन परमेकत्वनानात्वमनुमातव्यमिति ॥४७॥

ब्रह्मणो भिन्नाभिन्नत्वानुमानस्य तदैक्यागमविरोधमाशङ्क्याऽऽह—दृगादीति । तच्छक्तीनामवान्तर-

**सास्नादिषु यथा गोत्वमभेदेन व्यवस्थिम् । मिथः सास्नादयो भिन्ना गोत्वाभिन्नास्तथाऽपि ते ।।४९।।**

**भिन्नाभिन्नात्मता यद्वत्स्थूलेष्वर्थेषु दृश्यते । सूक्ष्मेष्वपि तथा विद्यादनुमानबलाद्बुधः ।।५०।।**

**परपक्षे न दृष्टान्तः कश्चिदप्युपलभ्यते । भिन्नाभिन्नात्मकं तस्मात्सर्वं वस्त्विति निश्चयः ।।५१।।**

भर्तृप्रपञ्चमतनिराकरणम्

**अनुमानैकसिद्धत्वाद्भिन्नाभिन्नात्मवस्तुनः । आगमेनात्र किं कार्यं लिङ्गसिद्धानुवादिना ।।५२।।**

**न चाऽऽगमस्य तात्पर्यमेवंभूतेऽस्ति वस्तुनि । अस्थूलं नेति नेतीति ज्ञाताज्ञातह्रुतेस्तथा ।।५३।।**

**विशेषात्मनिषेधाय तथा सामान्यरूपिणः । क्षुरविश्वंभरौ श्रुत्या दृष्टान्तौ प्रतिपादितौ ।।५४।।**

निस्सामान्यविशेषवस्तुनि परदृष्टान्तः

**अन्त्या विशेषा दृष्टान्तः परपक्षेऽपि विद्यते । त्वत्पक्ष एव दृष्टान्तो यथा नास्ति तथोच्यते ।।५५।।**

भेदेऽप्येकत्वाद्भिन्नाभिन्नस्य ब्रह्मणस्तदैक्यश्रुतिरविरुद्धेत्यर्थः। तथाऽप्यनुमाने द्वैताभावश्रुतिविरोध इत्याशङ्क्याऽऽह— शक्तीति । केवलद्वैतनिषेधार्था सेति भावः ।।४८।।

तथाऽपि भिन्नमभिन्नमिति मिथो व्याघाताख्यतर्कविरुद्धमनुमानमित्याशङ्क्याऽऽह—सास्नादिष्विति । यथा खण्डादिषु गोत्वमनुवृत्तं ते च मिथो व्यावृत्ताः । न च तत एव तेषां गोत्वादपि व्यावृत्तिः खण्डो गौरित्याद्य-भेदबुद्धेः सर्वे भावा ह्येकत्वानेकत्वव्यवस्थयाऽवस्थिता गृह्यन्त इत्युक्तेरित्यर्थः ।।४९।।

दृष्टान्तमनूद्य दार्ष्टान्तिकमाह—भिन्नेति । स्थूलेषु गवादिष्वित्येतत् । सूक्ष्मेषु दृगादिष्वित्यर्थः । बुधोऽनुमान-प्रक्रियाकुशलो विवक्षितः ।।५०।।

विमतं भिन्नाभिन्नं वस्तुत्वाद्गवादिवदित्ययुक्तं विमतं न भिन्नाभिन्नं निःसामान्यत्वादन्त्यविशेषवदित्यनुमा-नादित्याशङ्क्याऽऽह—परेति । सामान्यादन्यत्वं हेतुश्चेत्खण्डादौ व्यभिचारोऽसामान्यवत्त्वं चेद्गोत्वादौ व्यभिचारो न चात्र दृष्टान्तोऽस्त्यन्त्यविशेषाणामप्रमाणत्वादिति[1] भावः । अनुमानस्य निर्दोषत्वे तत्फलमुपसंहरति—भिन्नेति । सर्वं वस्तु दृष्टान्तदार्ष्टान्तिकभूतमित्यर्थः ।।५१।।

अनुमानाद्वा यथोक्तब्रह्मधीरागमाद्वेति विकल्प्याऽऽद्ये ब्रह्मणि वेदप्रामाण्यासिद्धिरिति दूषयति— अनुमानेति ।।५२।।

द्वितीयं निरस्यति—न चेति । न हि नानारसे ब्रह्मणि वेदस्य तात्पर्यं तद्धेतुषड्विधलिङ्गानामन्यतमस्य[2] तत्रानवगमादित्यर्थः । न केवलमागमस्यानेकरसे न तात्पर्यं प्रत्युतैकरसेऽर्थे तदस्तीत्याह—अस्थूलमिति । तथेत्यनेकरसे वस्तुनि नास्ति तात्पर्यमागमस्येत्यनुकृष्यते ।।५३।।

प्रवेशवाक्यवशादपि ब्रह्मैकरस्यमित्याह—विशेषेति । तथाशब्दो निषेधानुकर्षणार्थः । सामान्यविशेषाभ्यां ब्रह्मणो देहे प्रवेशं वक्तुं दृष्टान्तावुक्तौ । न चैवं ब्रह्मणो द्विरूपत्वं मिथोविरोधात्तदतिरिक्तस्वरूपाभावे पर्यवसानादतो निःसामान्यविशेषमेकरसं ब्रह्मेत्यर्थः ।।५४।।

यत्तु परपक्षे दृष्टान्तो नेति तत्राऽऽह—अन्त्या इति । वादिनां प्रामाणिकत्वेन सिद्धतया तेषां दृष्टान्तत्वं सिद्धं; न निःसामान्यत्वानिरुक्तिः सामान्यवदन्योन्याभाववतः सामान्यानधिकरणत्वस्य तत्त्वादिति भावः । निर्विशेषं ब्रह्मेति स्वपक्षे दृष्टान्तमुक्त्वा परपक्षे तदभावादात्मीयो बाणः स्वात्मानमेव प्रहरतीति न्यायप्राप्तिमाह— त्वत्पक्ष इति ।।५५।।

---

१. अन्त्यविशेषाणामिति—वैशेषिकैः परमाणूनां आकाशादीनां च मिथोभेदसिद्धयर्थाः अन्त्यविशेषाः अभ्युप-गताः । अन्त्याः व्यावर्तकेषु मध्ये अन्त्याः घटादीनां कपालादिभिः इतरभेदसिद्धिः परमाणूनां तु निरवयव-त्वात् नावयवविशेषसमवेतत्वादिना भेदसिद्धिः अतः तत्र विशेषा अभ्युपेयन्ते । ते च स्वत एव व्यावृत्ता इति तदभिप्रायः । तत्तु न युक्तं येनैव प्रमाणेन स्वतो व्यावृत्तत्वेन विशेषाणां परस्परभेदसिद्धिः तेनैव परमाणूनामपि स्वतो व्यावृत्तत्वाभ्युपगमसंभवेन तद्भेदसिद्धौ विशेषे मानाभाव इत्यर्थः ।

२. तद्धेत्विति । तात्पर्यज्ञापकोपक्रमोपसंहारैक्यादीत्यर्थः ।

**निःसामान्या विशेषाः स्युर्गोता तेभ्यो न चेद्भिरुक् । अथ व्यावर्तते तेभ्यो गोत्वं ते खण्डवद्भवेत् ॥५६॥**
**व्यावृत्तं यदि भिन्नेभ्यस्त्वयाऽभिन्नगिरोच्यते । व्यावृत्तं न विशेषश्चेत्यहो विद्याविचेष्टितम् ॥५७॥**
**अव्यावृत्तं विशेषेभ्यस्त्वथ सामान्यमुच्यते । सामान्यस्य विशेषत्वाद्विशेषा एव केवलाः ॥५८॥**
**न ह्यभिन्नधिया गोत्वं विशेषेषु प्रतीयते । विशेषमात्रनिष्ठत्वाद्भिन्नाभिन्नं किमुच्यते ॥५९॥**

सामान्यविशेषयोः भेदाभेदविचारः

**अभेदः किं तयोर्योगः किं वैकात्म्यमभिन्नता । नाभेदो मेषयोर्योगे यथा भिन्नौ तथा युतौ ॥६०॥**
**व्यामिश्रं[1] यदि वा शुद्धं गोत्वं भेदेषु गम्यते । नोभयत्राप्यभिन्नत्वमसाधारण्यसंस्थितेः ॥६१॥**
**भेदेषु[2] चोपयुक्तं तत्गोत्वं यद्वा पृथक्स्थितम् । सामान्यं वा विशेषो वा कोऽनयोरभिधीयताम् ॥६२॥**
**उपयुक्तं विशेषत्वादितरस्याप्यनन्वयात् । भिन्नाभिन्नात्मतां नैति द्वैरूप्यासंभवात्तयोः ॥६३॥**

सास्नादिषु यथा गोत्वमित्यत्र मत्पक्षे दृष्टान्तो दर्शित इत्याशङ्क्य विशेषेभ्यो गोत्वमभिन्नं भिन्नं भिन्नाभिन्नं वेति विकल्प्याऽऽद्ये दोषमाह—निःसामान्या इति । गोत्वस्य विशेषमात्रत्वे निःसामान्यास्ते स्युस्तथा च विशेषा एव ते न भवेयुरुत्तरत्रिका[3]न्यनिःसामान्यभावानिष्टेरित्यर्थः । द्वितीयमनूद्य दूषयति—अथेति । तस्य तेभ्यो भेदे विशेषत्वापत्तेर्न सामान्यं न विशेषाः सिध्येयुरित्यर्थः ॥५६॥

तृतीये किमभिन्नशब्देन तेभ्यो व्यावृत्तमव्यावृत्तं वोक्तमिति विकल्प्याऽऽद्यमनुवदति—व्यावृत्तमिति । तदा सामान्यस्यापि विशेषत्वात्तद्भावहानिरिति सोपहासमाह—व्यावृत्तमिति । विद्याविचेष्टितं पाण्डित्यमिति यावत् ॥५७॥

कल्पान्तरमाह—अव्यावृत्तमिति । तदाऽपि सामान्यविशेषभावासिद्धिरित्याह—सामान्यस्येति ॥५८॥

विशेषाणां न कैवल्यमनुगतबुद्ध्या गोत्वस्यापि तेषु दृष्टेरित्याशङ्क्याऽऽह—न हीति । अनुवृत्तधियस्तर्हि निर्विषयत्वं नेत्याह—विशेषेति । अन्त्यविशेषेष्वनुवृत्तधीवत्खण्डादिष्वपि सा तन्मात्रविषयेति कुतोऽनालम्बनेत्यर्थः । सामान्यविशेषभावदूषणफलमाह—भिन्नेति ॥५९॥

सामान्यविशेषत्वनिरासेन भिन्नाभिन्नत्वं निरस्य तद्भावेऽपि तौ भिन्नाभिन्नावित्यत्राभिन्नशब्दार्थस्य दुर्ज्ञानत्वार्थं विकल्पयति—अभेद इति । तयोः सामान्यविषयोरिति यावत् । संबन्धो नाभेदव्यवहारविषयः संबन्धत्वात्संयोगवदित्याद्यं दूषयति—नेति । साध्यवैकल्यं दृष्टान्तस्य निराचष्टे—यथेति ॥६०॥

द्वितीयं दूषयितुं तस्य तेषु प्रतीतिं विकल्पयति—व्यामिश्रमिति । गोत्वस्य विशेषेषु मिश्रस्य केवलस्य वा प्रतीतौ न तयोरैक्यं द्वयोरप्यनुवृत्तव्यावृत्तासाधारणात्मना स्थितेस्तद्विरोधादित्याह—नेति ॥६१॥

सामान्यविशेषयोस्तादात्म्ये दोषान्तरं वक्तुं विकल्पयति—भेदेष्विति । उपयुक्तं तेष्वेव निमग्नं पृथग्विद्यमानमित्यर्थः । गोत्वं विशेषेषूपयुक्तमनुपयुक्तं चेति विकल्पद्वयेऽपि सामान्यविशेषभावासिद्धेर्न तादात्म्यमिति दूषयति—सामान्यं वेति ॥६२॥

कथमुपयुक्तपक्षे तद्भावासिद्धिस्तत्राऽऽह—उपयुक्तमिति । विशेषेषूपयुक्तं न सामान्यं विशेषान्तर्भावान्न विशेषस्तस्य सामान्यापेक्षस्य तदभावेऽभावादित्यर्थः । अनुपयुक्तपक्षे तयोरसत्त्वं साधयति—इतरस्यापीति । अनुपयुक्तस्यापि विशेषेष्वयोगान्न सामान्यादित्यर्थः । उपयुक्तानुपयुक्तयोः सामान्यविशेषत्वायोगात्तादात्म्यासंभवान्न किंचिदपि भिन्नाभिन्नतां प्राप्नोतीति फलितमाह—भिन्नेति ॥६३॥

---

१. व्यामिश्रमभेदसहितम् ।

२. भेदेषु खण्डादिषु । उपयुक्तं अभेदेन स्थितं । उपयोगेऽनुपयोगे च सामान्यविशेषत्वं न सुज्ञानं उपयुक्तत्वानुपयुक्तत्वयोः साधारण्यादित्यर्थः ।

३. उत्तरत्रिकं सामान्यविशेषसमवायाः ते च निस्सामान्याः ।

वस्तुवृत्तं न सामान्यं न विशेषस्तथैव च । अपेक्षामात्रतः सिद्धेर्व्योम्नि कार्ष्ण्यादिवृत्तिवत् ॥६४॥

भेदाभेदवादिनः शङ्का परिहारश्च

प्रत्यभिज्ञानतोऽभेदः खण्डमुण्डस्थगोत्वयोः । एकाधिकरणज्ञानात्खण्डाद्यैस्तद्विभिन्नता ॥६५॥
भिन्नाधिकरणज्ञानान्नैवमप्यभिदा तयोः । सामान्येऽभिन्नधीर्यस्माद्भिन्नेष्वेव तु भिन्नधीः ॥६६॥
प्रत्यक्षेणानुपात्तत्वान्न स्मृतिस्तदितीक्षणम् । न हि प्रत्यक्षतोऽप्राप्तं स्मर्यते वस्तु किंचन ॥६७॥
सामानाधिकरण्यस्य विभिन्नार्थव्यपाश्रयात् । अभेदधीः कथं तत्र विशेषणविशेष्ययोः ॥६८॥
अभिन्नवचसा भिन्नप्रतिषेधोऽभिधीयते । प्राप्तस्य भिन्नरूपस्य शून्यताऽतः प्रसज्यते ॥६९॥
वचो भेदनिषेधं चेन्न कुर्याद्भेदवाक्यवत् । भिन्नाभिन्नात्मतापक्षहानिरेवं प्रसज्यते ॥७०॥

भेदाभेदनिरासः

तक्रकौण्डिन्यवन्न्यायो न चेहाप्यवसीयते । उत्सर्गानवकाशत्वाच्छून्यतैवात आपतेत् ॥७१॥

किंच न तौ वस्तुतो भिन्नाभिन्नौ कल्पितत्वान्नभोनीलवदित्यनुमातुं हेतुं साधयति—वस्त्विति । न हि सामान्यविमेषौ परस्परापेक्षामन्तरेण सेद्धुं पारयतस्तथाच स्वतोऽभावाद्भुजंगादिवत्कल्पितत्वसिद्धिरित्यर्थः । अनुमानं सूचयति—व्योम्नीति ॥६४॥

भेदाभेदवाद्याह—प्रत्यभिज्ञानत इति । खण्डमुण्डस्थगोत्वस्य तदेवेदमिति प्रत्यभिज्ञानादभेदो गम्यते खण्डो गौर्मुण्डो गौरिति सामानाधिकरण्याच्च व्यक्तिभिरभेदधीस्तस्मात्तद्भिन्नत्वात्तस्य भिन्नतेति तयोर्भिन्नाभिन्नतेत्यर्थः ॥६५॥

सामानाधिकरण्येऽपि तयोर्न भिन्नाभिन्नताऽनुवृत्तव्यावृत्तधियोः सामान्यविशेषविषयत्वेन व्यवस्थितत्वादिति दूषयति—भिन्नेति । भिन्नाधिकरणज्ञानादित्येतत्प्रपञ्चयति—सामान्य इति । सामानाधिकरण्यं नभोनीलवदिति भावः ॥६६॥

यत्तु प्रत्यभिज्ञानतोऽभेद इति तत्राऽऽह—प्रत्यक्षेणेति । खण्डादिविषयपूर्वानुभवेन न गोत्वग्रहस्तस्यानेकव्यक्तिनिष्ठस्यैकव्यक्तिग्रहकाले व्यक्त्यन्तराणामग्रहाद्ग्रहासिद्धेरतस्तदिति न गोत्वस्मृतिरननुभूते स्मृत्ययोगात्तस्यास्मृतौ च पूर्वानुभूतं स्मृत्वा तस्योत्तरत्रानुसंधानाख्यप्रत्यभिज्ञालक्षणमीक्षणं न सिध्यतीति कुतो भेदाभेदधीरित्यर्थः ॥६७॥

यत्तु सामानाधिकरण्याद्विशेषैः सामान्यस्या[1]भेदधीरिति तत्राऽऽह—सामानाधिकरण्यस्येति । भवतु वा गोत्वस्य प्रागुक्तप्रत्यभिज्ञानादेकत्वं तथाऽपि न तस्य विशेषैः सामानाधिकरण्यादभेदो नीलं पीतमितिवन्नीलं नीलमित्यदृष्टेस्तस्या भिन्नार्थत्वात्तस्मिन्प्रमाणेऽसति नानयोरभेदधीरतो न तद्वशादभेदसिद्धिरिति कुतो भिन्नाभिन्नतेत्यर्थः ॥६८॥

भिन्नेऽभिन्ने वाऽसामाधिकरण्यात्तद्बलाद्भिन्नाभिन्नता बलादापतेदित्याशङ्क्याभिन्नशब्दो भेदं निषेधति न वेति विकल्प्याऽऽद्यमनूद्य दूषयति—अभिन्नेति । प्रतिपन्नोपाधौ निषेधोऽतःशब्दार्थः । तथाच न भिन्नाभिन्नत्वमेकस्य सेद्धुमलमिति शेषः ॥६९॥

पक्षान्तरमनूद्य निरस्यति—वच इति । एकत्र भेदतदभावयोरनुक्तेर्भावयोर्द्वयोरेकत्रोक्तावपि प्रसिद्धाभेदार्थत्यागादिति भावः ॥७०॥

अभिन्नशब्दस्य भेदनिषेधित्वेऽपि न भेदस्य शून्यता सर्वत्र प्राप्तस्य कारणे निषेधादार्येभ्यो दधि दीयतामित्यार्योपाधौ प्राप्तस्य दध्नस्तक्रं कौण्डिन्यायेति कौण्डिन्ये निषेधेऽप्यशून्यतावदित्याशङ्क्याऽऽह—तक्रेति । तत्संबन्ध्युत्सर्गापवादन्यायो नेह प्रमाणवानित्यत्र हेतुं ब्रुवन्फलितमाह—उत्सर्गेति । सर्वं भिन्नाभिन्नमित्यत्रोत्सर्गापवादयोरनवकाशात्तत्तदर्थस्याभिन्नशब्देन तत्तन्निष्ठभेदनिषेधात्तस्य शून्यतैव स्यादिति भिन्नाभिन्नत्वासिद्धिरित्यर्थः ॥७१॥

---

१. अभेदधीः सामान्यविषया भेदधीः विशेषविषयेति व्यवस्थितत्वात् न तयोरैक्यम् ।

**भिन्नौ जातिगुणौ द्रव्यात्स्वानुभूत्यनुरोधतः । तद्विरोधादभिन्नत्वं कथं मानात्प्रतीयते ॥७२॥**

**अभिन्नं सद्विभिन्नत्वं न कथंचित्प्रपद्यते । स्वाश्रयत्वादभिन्नस्य कुतोऽस्य स्यात्पराश्रयः ॥७३॥**

**अन्यानपेक्षं यद्यस्य वृत्तं तत्पारमार्थिकम् । अन्यापेक्षं यतोऽन्यत्वं तेन तद्व्योमकाष्ण्र्यवत् ॥७४॥**

**गोत्वसत्त्वप्रमेयत्ववस्तुत्वादीनि भिन्नवत् । सामान्यानीह खण्डादौ तेनान्योन्यविरुद्धता ॥७५॥**

**यदेकं तन्न नानेति नाना नैकमिति प्रमा । योऽनुभूतिविरोध्यर्थः स कथं स्थाप्यते बलात् ॥७६॥**

**भेदाः सामान्यतां यान्ति सामान्यं भेदतां यदि । लोकप्रसिद्धिबाधः स्यात्स[1] चापि स्यादनर्थकः ॥७७॥**

सामान्यविशेषभावनिरासः

**सामान्यं च विशेषश्च द्रव्यतन्त्रौ मतौ यदि । असामान्यविशेषात्मद्रव्यवत्प्राप्नुतश्च तौ ॥७८॥**

**गुणतन्त्रं यदा द्रव्यं प्रसिद्धेर्बाधनं तदा । एकस्यानेकतापत्तिर्द्रव्यस्यापि प्रसज्यते ॥७९॥**

**द्रव्येणैवाभिसंबन्धाद्गुणानां[2] न परस्परम् । अन्योन्यानभिसंबन्धान्न विशेषस्तथेतरत् ॥८०॥**

जात्यादौ क्वचिदेव भिन्नाभिन्नत्वाभ्युपगमात्तस्य सर्वत्रानिष्टेरुत्सर्गापवादसिद्धिरित्याशङ्क्य जात्यादेर्धर्मिणश्च भेदमुपेत्याभेदं प्रत्याह—भिन्नाविति ॥७२॥

संप्रत्यभेदमुपेत्य भेदं निरस्यति—अभिन्नमिति । तदुपपादयति—स्वाश्रयत्वादिति । अभेदस्य स्वरूपत्वेनान्तरङ्गस्य बलवत्त्वाद्भेदः सापेक्षस्तद्विरोधान्न वस्तुतः स्यादित्यर्थः ॥७३॥

अन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलवदिति न्यायादभिन्ने भेदानवकाशमुक्त्वा कल्पिताकल्पितयोरकल्पितं बलवदिति वक्तुमभेदस्याकल्पितत्वमाह—अन्येति । भेदस्य कल्पितत्वेन दौर्बल्यमाह—अन्यापेक्षमिति । अतो भेदस्याभेदेन बाध्यतेति भावः ॥७४॥

किं गोत्वादीनि मिथो भिन्नान्येवाभिन्नान्येव वा भिन्नाभिन्नानि वा?आद्ये गोत्वाभिन्नस्य खण्डादेः सत्त्वादिना तदयोगादसत्त्वामेयत्वादिप्रसक्तिरन्यथा तेषां मिथोभिन्नत्वानुपपत्तिरिति मत्वा द्वितीये दोषमाह—गोत्वेति । तानि खण्डादिनिष्ठानि तद्वन्मिथो भिन्नान्येव दृश्यन्ते । तथाच न तान्यभिन्नान्येवानुभवविरोधादित्यर्थः । तृतीयं निराह—तेनेति । तानि मिथो भिन्नाभिन्नानि चेज्जात्यादेरेव धर्मिणो भिन्नाभिन्नतेतीष्टासिद्धिस्तेन त्वदुक्त्योर्मिथोविरोधतेत्यर्थः ॥७५॥

तृतीये दोषान्तरमाह—यदिति । न तावद्यदेकं तन्नानेति प्रमाऽस्ति नापि यदनेकं तदेकमिति प्रमितिरविरोधापेक्षिणो मानस्य विरुद्धार्थत्वायोगादतो नैकत्र भिन्नाभिन्नतेत्यर्थः । तत्रैव स्वानुभवविरोधमाह—योऽनुभूतीति । अनुभवविरोधिनोऽर्थस्य मानं विनाऽभ्युपगतावतिप्रसक्तिरिति भावः ॥७६॥

गोत्वादिजातीनां मिथोभेदादीन्निरस्य तासां व्यक्तीनां चान्योन्याभेदे लोकप्रसिद्धिविरोधमाह—भेदा इति । साऽपि चन्द्रभेदप्रसिद्धिवद्बाध्येत्याशङ्क्यातिप्रसक्तेर्मैवमित्याह—स चेति ॥७७॥

किंच तयोर्द्रव्याद[3]भिन्नत्वं भिन्नत्वं भिन्नाभिन्नत्वं वेति विकल्प्याऽऽद्यमनूद्य दूषयति—सामान्यं चेति । द्रव्यतन्त्रौ द्रव्यादभिन्नाविति यावत् । तौ हि तद्भावहीनद्रव्यमात्रत्वात्तदेवासामान्यविशेषौ स्यातां ततश्च स्वरूपाभावादद्रव्यादभिन्नतैवेत्यर्थः ॥७८॥

किंच सामान्यविशेषयोर्द्रव्यस्य चाभेदे तस्य तयोरन्तर्भावो वैपरीत्यं वेति विकल्प्याऽऽद्यं दूषयति—गुणेति । परतन्त्रतया सामान्यविशेषयोर्गुणशब्दस्तत्तन्त्रं तदभिन्नमिति यावत् । स्वतन्त्रस्य परतन्त्रान्तर्भावे प्रसिद्धिविरोधवद्दोषान्तरमाह—एकस्येति । द्रव्यस्य ताभ्यामभेदे तद्वदनेकता न च सा युक्ता विरोधादित्यर्थः ॥७९॥

द्रव्ये तयोरन्तर्भावं निरस्यति—द्रव्येणेति । तयोस्तेनैवाभेदात्तन्मात्रत्वान्नान्योन्यं भेदाभेदौ चेत्ततस्तयोर्मिथस्तद्भावेनासंबन्धात्तत्त्वच्युतिरित्यर्थः ॥८०॥

---

१. स चापि स्यादनर्थकः अनर्थहेतुः स चानर्थः अतिप्रसक्तिरूप इत्यर्थः घटपटादीनामभेदापत्तिरतिप्रसक्तिः ।

२. गुणानां परस्परं भेदाभेदसम्बन्धाभावे तेषां तत्त्वस्य भेदाभेदस्य च्युतिरित्यर्थः ।

३. द्रव्याभिन्नत्वे द्रव्यवत् सामान्यविशेषभावहीनौ स्याताम् ।

सामान्येतरतो भिन्नं द्रव्यं चेद्भवतो मतम् । तन्निषेधेन तत्सिद्धेः कथं स्यात्तदभिन्नता ॥८१॥
अथाभिन्नं मतं ताभ्यां द्रव्यस्यापह्नवस्ततः । न विशेषो न सामान्यमन्योन्यासंगतेर्भवेत् ॥८२॥

सामान्यविशेषयोरभेदनिरासः

भिन्नाभेदादभिन्नस्य भेदः स्यात्पिण्डवद्ध्रुवम् । पिण्डश्च सर्वगस्तद्वद्गोत्वाभेदात्प्रसज्यते ॥८३॥
अन्योन्याव्यतिरेकित्वादैकात्म्यं प्राप्नुयात्तयोः । ततः प्रत्यक्षबाधः स्यात्तद्भेदो हि तदाश्रयः ॥८४॥
व्यस्ताभेदात्समस्तोऽर्थो व्यस्तवन्न मनागपि । समस्ताकारवज्ज्ञानं कुर्यात्प्रत्यक्षबाधतः ॥८५॥
व्यस्ताभेदेऽपि चेत्कुर्यात्समस्तधिषणां बलात् । व्यस्तात्मनाऽसमस्तोऽपि कुर्यात्प्लुषिधियं गिरिः॥८६॥
असाधारणरूपेण भेदो जगति निश्चितः । साधारण्यं तयोर्मानात्समस्तव्यस्तयोः कुतः ॥८७॥
सर्वाभेदाच्च सर्वस्य रज्ज्वां सर्पादिबुद्धयः । रज्जुबुद्धिवदेव स्युस्तद्धीश्चाप्यहिबुद्धिवत् ॥८८॥
निषेधविधिहेतूनां सर्वेषां सर्ववस्तुषु । समाप्तेरधिकाराणामप्रवृत्तिः प्रसज्यते ॥८९॥

कल्पान्तरमनुवदति—सामान्येति । द्रव्यं सामान्यादेस्तच्च द्रव्याद्भिन्नमिति ते मतं चेदिति योजना । तदा तत्परिहारेणैव द्रव्यस्य द्रव्यपरिहारेणैव सामान्यादेः सिद्धेस्ताभ्यां तस्य नाभिन्नता तयोश्च तस्मादभिन्नत्वायोगान्निःसामान्यविशेषं तत्स्यादित्याह—तन्निषेधेनेति ॥८१॥

तृतीयेऽप्यभेदांशमनूद्य दूषयति—अथेति । द्रव्यं सामान्यविशेषाभ्यामभिन्नं सामान्यविशेषौ च द्रव्यादभिन्नावित्यथ मतमित्यनुवादार्थः । न तावदेकत्रैव भेदाभेदौ विरोधाद्द्रव्यस्य च ताभ्यामभेदे तयोस्तदधीनत्वात्तदभावेऽभावादाश्रयाश्रयिभावेनासंबन्धादभावस्तयोश्च द्रव्यादभेदे तदतिरिक्तयोरभावाद्द्रव्यं निःसामान्यविशेषमेषितव्यं स्यादित्यर्थः ॥८२॥

तयोर्द्रव्यस्य च भेदादि दूषयित्वा सामान्यस्य विशेषाभेदे विशेषत्वं प्रागुक्तं दोषमाह—भिन्नेति । विशेषस्य सामान्याभेदे दोषमाह—पिण्डश्चेति ॥८३॥

परस्पराभेदे दोषमाह—अन्योन्येति । तयोरैक्यमिष्टमिति चेत्तत्राऽऽह—तत इति । तत्र हेतुमाह—तद्भेदो हीति । आश्रयो विषयः ॥८४॥

सामान्यस्य विशेषाभेदे दोषान्तरमाह—व्यस्तेति । विमतं नानुवृत्तधीकारणं व्यावृत्ताभिन्नत्वात्तद्वत्तथाच सामान्यानुवृत्तधीहेतुत्वानुभवविरोधः स्यादित्यर्थः ॥८५॥

विपक्षे दोषमाह—व्यस्ताभेदेऽपीति । बलाद्वस्तुवृत्तमननुसृत्येत्यर्थः । व्यस्तस्य समस्तधीहेतुत्वे तस्यापि व्यस्तहेतुत्वं स्यादविशेषादित्यर्थः । असमस्तोऽपीति च्छेदः ॥८६॥

किंच सामान्यं सर्वानुगतं व्यक्तिस्तु नैवं तत्स्वरूपवैलक्षण्यान्न तयोरैक्यं प्रामाणिकमित्याह—असाधारणेति ॥८७॥

किंच सर्वत्र वा भिन्नाभिन्नत्वं सामान्यादावेव वा ? नाऽऽद्यो, भ्रान्त्यभ्रान्तिव्यवस्थाऽसिद्धेरित्याह—सर्वेति । सर्वसंकरवादे सर्वस्य सर्वाभेदादहिबुद्धिरपि रज्जुबुद्धिवदभ्रान्ती रज्जुबुद्धिश्चाहिबुद्धिवद्भ्रान्तिरिति भ्रान्त्यभ्रान्तिविपर्ययो रज्जुसर्पयोरभेदादित्यर्थः ॥८८॥

तत्रैवातिप्रसङ्गान्तरमाह—निषेधेति । समाप्तेः सम्यगाप्तेरिति यावत् । अधिकाराणां प्रवृत्त्यादिहेतुमतामधिकारिणामित्यर्थः । अप्रवृत्तिरनिवृत्तिश्चेति द्रष्टव्यम् । उक्तं हि—अप्रवृत्तिनिवृत्तीदं प्राप्तं सर्वत्र हि जगदिति । सर्वेषां ब्रह्मक्षत्रादीनामधिकृतानां सर्वेषु बृहस्पतिसवराजसूयादिषु विध्यादिशब्दितप्रवृत्त्यादिहेतूनामधिकारपदवेदनीयाभिमानविशेषाणां सर्वसांकर्येण प्रवृत्तेरविशेषादप्रवृत्तिनिवृत्ती जगदापद्येतेत्यर्थः ॥८९॥

१. असमस्तोऽपि सामान्यस्य विशेषाभेदेनासमस्तत्वात् । गिरिः समस्तः स च व्यस्ता भवेच्चेत् प्लुषि धिय पर्वतस्थकीटधियं कुर्यात् व्यस्ताभेदात् ।

अभावमानक्लृप्त्यर्थो यश्चाऽऽयासः कृतो महान्। निष्फलः सोऽभिसंवृत्तो भिन्नाभिन्नाव्यवस्थितौ॥९०॥
स्वविशेषानुरोधित्वं सामान्यानां मतं यदि। समस्तव्यस्ततापक्षस्तदा कुप्यति कल्पितः॥९१॥
न चापि सर्वसामान्यविशेषार्थावबुद्धये। कश्चिदप्यधिकार्यस्ति कृत्स्नेऽपि जगतीदृशः॥९२॥
न वेदार्थो न चापीदृक्तर्केणाप्युपपद्यते। भिन्नाभिन्नेक्षणं सर्वं यथोक्तन्यायवर्त्मना॥९३॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके प्रथमाध्यायस्य षष्ठं ब्राह्मणम्॥६॥

चत्वार्येव सहस्राणि श्लोकानां द्वे शते तथा। श्लोकाः पञ्चदशान्ये च तृतोयस्यैष संग्रहः॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशंकरभगवत्पादशिष्यश्रीसुरेश्वराचार्यविरचिते
बृहदारण्यकोपनिषद्भाष्यवार्तिके प्रथमोऽध्यायः॥१॥
उपनिषत्क्रमेण तृतीयोऽध्यायः॥३॥

किंच निरङ्कुशं भेदाभेदं वदतः सिद्धान्तविरोधः स्यादित्याह—अभावेति। सर्वस्य भिन्नाभिन्नस्य प्रत्यक्षादिना सिद्धत्वे भेदाभावस्याभिन्नशब्दार्थस्य योग्यानुपलब्धिं विना मानान्तरात् सिद्धेः अभावमानस्य योग्यानुपलब्धेरुपन्यासो व्यर्थः स्यान्मेयाभावाच्च यस्याभावो जिघृक्षितस्तस्य धर्म्यभेदेन सत्त्वाद्भेदस्यापि भावादसत्त्वपक्षे योग्यानुपलब्धेरकिंचित्करत्वात्तथा च—

"प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते। वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता"॥

इत्यारभ्याभावस्य चातुर्विध्यमापाद्य।

"गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम्। मानसं नास्तिताज्ञानं जायतेऽन्यानपेक्षया"॥

इत्यादिना तन्मानमुपपाद्य

"[1]अभावो वा प्रमाणेन स्वान्यरूपेण मीयते। प्रमेयत्वाद्यथा भावात्तस्मात्पृथगिति स्थितिः"॥

इति कथा वृथा स्यादित्यर्थः॥९०॥

द्वितीयं[2]मनुभाष्य दूषयति—स्वविशेषेति। सामान्यविशेषग्रहणमंशांशिगुणगुणिकार्यकारणादेरुपलक्षणम्—क्वचिद्भिन्नाभिन्नतात्यागे सर्वत्र तत्त्यागोऽर्धजरतोयस्याप्रामाणिकत्वादिति भावः॥९१॥

किंच तयोर्भिन्नाभिन्नत्वं ज्ञानार्थं ध्यानार्थं वा? नाऽऽद्यःतज्ज्ञानस्याफलत्वान्न द्वितीयस्तत्रापि फलाभावस्य तुल्यत्वादित्यभिप्रेत्योभयत्र साधारणं दूषणमाह—न चेति। ईदृशः सर्वज्ञ इति यावत्। सर्वसामान्यादिबुद्धेरर्वाग्दृशामशक्यत्वान्न तद्भिन्नाभिन्नत्वमस्मदादिज्ञानध्यानोपयोगीति भावः॥९२॥

भिन्नाभिन्नपक्षदूषणमुपसंहरति—नेत्यादिना। अनुमानैकसिद्धत्वादित्यादिनोक्तं स्मारयति—यथोक्तेति। सर्वं जगद्ब्रह्म च भिन्नाभिन्नमिति ज्ञेयमित्येतन्न प्रामाणिकं नापि यौक्तिकमुक्तन्यायादित्यर्थः। तदेवं तदेतत्त्रयमित्यादौ परकीयव्याख्यायोगात्त्र्यात्मकस्य जगतो देहद्वयात्मनोपसंहारात्तदभिमानिनो विवेकवशात्ततो विरक्तस्य मुमुक्षोस्तद्धेतुज्ञानोपाये संन्यासपूर्वके श्रवणादावधिकारितेति सिद्धम्॥९३॥

वार्तिकामृतसर्वस्वमास्वादयितुमिच्छवः। आनन्दगिरिसंभूतां समुपाध्वं सरस्वतीम्॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां प्रथमाध्यायस्य षष्ठंब्राह्मणम्॥६॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्येण भगवदानन्दज्ञानेन कृतायां
श्रीसुरेश्वरवार्त्तिकटीकायां शास्त्रप्रकाशिकाख्यायां प्रथमोऽध्यायः॥१॥

श्लोकानामादितः समष्ट्यङ्काः—४०९७

---

१. अभावो वेति—अभावः स्वानुरूपेण अभावात्मकेनानुपलब्धिप्रमाणेन प्रमीयते भाववत् तस्मात् भावात्मकाद्वस्तुनः पृथगभावः।

२. द्वितीयं = सामान्यादावेव भिन्नाभिन्नत्वं चेदित्यर्थः। कुप्यति—क्वचिदस्ति क्वचिन्नेति अर्धजरतीयम्।

# अथ द्वितीयऽध्याये प्रथमं ब्राह्मणम्

मू.—ॐ दृप्तबालाकिर्हानूचानो गार्ग्य आस स होवाचाजातशत्रुं काश्यं ब्रह्म ते ब्रवाणीति । स होवाचाजातशत्रुः सहस्रमेतस्यां वाचि दद्मो जनको जनक इति वै जना धावन्तीति ॥१॥

तद्धेदमित्यविज्ञातप्रत्यक्त्वादिदं जगत् । रज्ज्वां सर्पादिवज्जातं नामरूपक्रियात्मकम् ॥ १ ॥
अनिश्चिता यथा रज्जुरन्धकारे विकल्पिता । सर्पधारादिभिर्भावैस्तद्वदात्मा विकल्पितः ॥ २ ॥
अनर्थहेतुरज्ञानं तदुत्थं चाखिलं जगत् । प्रतीचोऽनर्थ इत्यस्माद्भीतोऽत्यर्थं मुमुक्षति ॥ ३ ॥
पुरुषार्थोऽखिलानर्थप्रध्वतिः प्रत्यगात्मनः । सम्यक्तत्त्वपरिज्ञानं पुरुषार्थस्य कारणम् ॥ ४ ॥
निरस्ताशेषानर्थाप्तकृत्स्नाह्लादसतत्त्वकः । स्वतो यतोऽयं संसारी तेनाज्ञो विपरीतदृक् ॥ ५ ॥
मोहमात्रान्तरायत्वात्पुरुषार्थस्य नापरम् । अविद्याध्वंसिनो बोधात्किंचित्साधनमिष्यते ॥ ६ ॥
आत्मेत्येवेति विद्यायाः सूत्रमित्युदितं पुरा । उपोद्घातस्तथा तस्य प्रागुक्तः सप्रयोजनः ॥ ७ ॥
प्रतीचि साक्षाद्विज्ञाते ज्ञेयं सर्वं समाप्यते । निःशेषतस्तमोध्वस्तेः पुमर्थश्च समाप्यते ॥ ८ ॥
यत एवमतः पश्येदात्मन्यात्मानमद्वयम् । आत्मैको ब्रह्मविद्याया विषयः श्रुतितो मतः ॥ ९ ॥
अथ योऽन्यामिति तथाऽविद्यां चानूद्य नश्वरीम् । आऽध्यायावसितेः कार्यं तस्या व्याख्यातमञ्जसा॥ १०॥

सत्यं सत्यस्य यद्ब्रह्म मूर्तामूर्तविलक्षणम् । चिदेकतानं तदहमपूर्वानपरात्मकम् ॥१॥

तृतीयेऽध्याये सूत्रितविद्याविद्ययोरविद्या प्रपञ्चिता संप्रति विद्यां प्रपञ्चयितुं चतुर्थमध्यायमारभमाणो वृत्तं कीर्तयति—तद्धेति । अज्ञातात्प्रतीचो नामाद्यात्मकं जगद्रज्जुसर्पवज्जातमित्यव्याकृतप्रक्रियायामुक्तमित्यर्थः । उदाहरणं तु विवर्तवादद्योतनार्थम् ॥१॥

तत्र पूर्वोक्तमेवाऽऽप्तवाक्यं स्मारयति—अनिश्चितेति ॥२॥

अज्ञातात्मविवर्तत्वे विश्वस्योक्ते किं फलमित्यपेक्षायामाह—अनर्थेति ॥३॥

अनर्थतद्धेतू पूर्वोक्तावनूद्य तदधिगतिफलं च दर्शयित्वा पुमर्थतद्धेतू प्रागुक्तावनुवदति—पुरुषार्थ इति ॥४॥

सम्यग्ज्ञानस्य पुमर्थहेतुत्वे हेतुमाह—निरस्तेति । अयं प्रत्यग्धातुः स्वाज्ञानप्रसूतमिथ्याधीः संसरन्वस्तुतो निरस्तसर्वानर्थस्तथैव प्राप्तपरानन्दश्च यतः श्रुतिषु निश्चितस्तेन स्वज्ञानात्स्वाज्ञानध्वस्तौ तज्जध्वस्तेर्युक्तं प्रत्यग्ज्ञानस्य पुमर्थहेतुत्वमित्यर्थः ॥५॥

सम्यग्धीस्तद्धेतुरित्युक्त्वा हेत्वन्तरनिरासं स्मारयति—मोहेति । अपरं साधनं प्रसंख्यानं कर्म वेति निषेध्यविवेकः ॥६॥

पुमर्थस्तद्धेतुश्च कुत्रोक्तावित्याशङ्क्याऽऽह—आत्मेतीति । तथा विद्यासूत्रानुसारेणेति यावत् । तस्य सूत्रितात्मज्ञानस्येत्यर्थः । आक्षेपपूर्वकं प्रयोजनं तदाहुरित्यादावुक्तमित्याह—प्रागिति ॥७॥

किं तत्प्रयोजनं तदाह—प्रतीचीति । साक्षादित्यपरोक्षत्वोक्तिः । तथाविधज्ञानस्य संशयविपर्यासानास्कन्दितत्वमुपसर्गार्थः । तदन्यार्थाभावादिति शेषः । तज्ज्ञाने यथोक्तसर्वज्ञानहेतौ सति किं स्यात्तदाह—निःशेषेति ॥८॥

आत्मज्ञानस्यैव परमपुरुषार्थहेतुत्वे विद्यासूत्रं प्रमाणयति—यत इति । मोहमात्रान्तरायत्वादित्युक्तनीत्या प्रत्यग्धियः पुमर्थहेतुत्वसिद्धेरात्मेत्येवेत्यत्र स्वमहिमस्थमात्मानमेवाऽऽत्मन्यनुसंदध्यान्मुमुक्षुरिति विवक्ष्यतेऽन्यथा सूत्रवैयर्थ्यादित्यर्थः । स्वमहिमप्रतिष्ठत्वार्थं विशिनष्टि—अद्वयमिति । पुमर्थतद्धेत्वनुवादं निगमयति—आत्मेति ॥९॥

अनर्थतद्धेतू कुत्रोक्तावित्याशङ्क्याऽऽह—अथेति । तद्धेदमित्यत्र सूत्रितामविद्या "मथ योऽन्यामि"त्यत्र "न स वेदे"त्यनूद्याध्यायसमाप्त्यन्तसंदर्भेण तत्कार्यं विवृतमित्यर्थः । तथा सूत्रितानूदिताविद्यानुसारेणेति यावत् । नश्वरीमिति विद्यापोद्यत्वयोग्यतोक्ता । अञ्जसेति व्याख्यानसामीचीन्यमुक्तम् ॥१०॥

सप्तान्नब्राह्मणार्थः अविद्याकार्यनिरूपणम्

अध्यात्ममधिभूतं च तथा चैवाधिदैवतम् । भूतं भवद्भविष्यं च साध्यं साधनमेव च ॥
जनिमत्सर्वमेवेदमविद्यायाः समुत्थितम् ॥११॥
संक्षिप्य चाप्युपन्यस्तमध्यायान्ते च तत्पुनः ॥१२॥
त्रयं वा इदमित्येवं रूपं नाम च कर्म च । त्रयस्यापि च संक्षेपो लिङ्गदेहात्मसंहतिः ॥१३॥
त्रैलोक्यात्मशरीरोऽयं विश्वरूपः प्रजापतिः । अन्तर्णीताखिलानन्तदेवतः प्राणविग्रहः ॥१४॥
अविज्ञातात्मतत्त्वः संस्तदध्यस्ताभिमानवान् । परावप्रवृत्तेर्विरतो विद्याया विषयस्त्वयम् ॥१५॥
साक्षात्कृतात्मभावोऽयमेवंलक्षणवस्तुनि । श्रुत्योपस्थाप्यते गार्ग्यो ब्रह्मविद्याभिधित्सया ॥१६॥
अकृत्स्नब्रह्मवेदित्वाद्दृप्तोऽसावल्पकस्ततः । न हि पूर्णपरिज्ञानः कश्चिद्दृप्यति निर्द्वयः ॥१७॥
समाप्ताशेषविज्ञेयपुरुषार्थस्तथा परः । अजातशत्रुरैकात्म्याद्गार्ग्याचार्यः प्रकल्पते ॥१८॥
व्याख्यातायामविद्यायां तदुच्छित्तावथाधुना । आत्मेत्येवेति सूत्रस्य व्याख्या प्रस्तूयते स्फुटा ॥१९॥

आख्यायिकातात्पर्यम्

श्रुत्या गार्ग्याद्युपन्यासशिष्याचार्यस्वरूपया । सुखावबोधसिद्ध्यर्थमियमाख्यायिकोदिता ॥२०॥

सप्तान्नब्राह्मणोक्तमनुवदन्नविद्याकार्यं विशिनष्टि—अध्यात्ममिति ॥११॥

उपसंहारब्राह्मणोक्तमनुभाषते—संक्षिप्येति । चकारावधारणार्थाविद्याकार्यवाचितत्पदादूर्ध्वं संबध्येते । उत्तरौ समुच्चयार्थौ । तदेतत्त्रयमित्यादावुक्तं संक्षेपस्यापि संक्षेपमनुकीर्तयति—त्रयस्यापीति । तमेवाभिनयति—लिङ्गेति । सूक्ष्मस्थूलदेहात्मना संहतिः कार्यकरणसंघात इति यावत् ॥१२–१३॥

तत्र कार्यस्वरूपमाह—त्रैलोक्येति । करणस्वरूपमाह—अन्तरिति । अन्तर्णीतमन्तर्भावितमखिलं जगदनन्ताश्चान्तर्णीता देवता येन स तथेति विग्रहः । तत्र हेतुः—प्राणेति । तत्र हि सर्वान्तर्भावो वक्ष्यते ॥१४॥

वृत्तमनूद्यानन्तरब्राह्मणतात्पर्यमाह—अविज्ञातेति । तच्छब्दोऽनन्तरप्रकृतदेहद्वयपरामर्शी । यथोक्तात्माज्ञानात्प्रजापतावारोपिताहंभावस्तद्दश।द्विषयविमुखो वीतरागो विद्याधिकारी स्वयमेव श्रुत्योपस्थाप्यते तस्मै विद्यां वक्तुमजातशत्रुब्राह्मणमित्यर्थः ॥१५॥

उक्तं प्रपञ्चयति—साक्षादिति । एवंलक्षणेति । त्रैलोक्यात्मशरीरीत्यादावुक्तविधे प्रजापतावित्यर्थः ॥१६॥

गार्ग्यो ब्रह्मवित्त्वादाचार्यः सन्कथमधिकारित्वेनोत्थाप्यते तत्राऽऽह—अकृत्स्नेति । अल्पको मुख्यब्रह्मज्ञानहीनत्वादाचार्यत्वेऽनधिकृत इति यावत् । तस्य मुख्यब्रह्मविद्याभावे दर्पो लिङ्गम् । अतस्तस्याऽऽचार्यत्वानुपपत्तेः शिष्यत्वमेवेत्यर्थः । मुख्यब्रह्मविदोऽपि दर्पः संप्रतितनब्रह्मविदामिव स्यादिति चेत्तत्राऽऽह—न हीति । न खल्वाधुनिकोऽपि ब्रह्मविद्दृप्तो युक्तो विरोधादित्यर्थः । तस्य दर्पाभावे हेतुः—निर्द्वय इति ॥१७॥

अजातशत्रोरपि गार्ग्यसमत्वादाचार्यान्तरेण भाव्यमित्याशङ्क्याऽऽह—समाप्तेति । गार्ग्यस्यामुख्यब्रह्मविदः शिष्यत्ववदित्याह—तथेति । अजातशत्रुत्वे हेतुः—ऐकात्म्यादिति ॥१८॥

उक्ता।विद्याकार्ये प्रजापतावात्मत्वोपास्त्या तद्देहस्य ध्वस्तरागस्य मुमुक्षोर्ब्रह्मविद्यार्थिनस्तद्व्याख्यानार्थं ब्राह्मणमिति ब्राह्मणसंबन्धमुक्त्वाऽध्यायसंबन्धमाह—व्याख्यातायामिति । सकार्यायामविद्यायां विवृतायां सत्यां बन्धनिवृत्तावपेक्षितायां तद्धेतावाक्षिप्यमाणे व्याख्यायते विद्यासूत्रमित्यर्थः । निषेध्योक्तेरनन्तरं निषेधकोक्तेरवसरं दर्शयति—अथेति । स्फुटेत्यसंदिग्धाबाधितफलवज्ज्ञानोदयायेत्यर्थः ॥१९॥

विद्यासूत्रं चेद्व्याचिख्यासितमाख्यायिका किमर्थेत्याशङ्क्याऽऽह—श्रुत्येति । परमसूक्ष्मे परवस्तुनीति शेषः ॥२०॥

भर्तृप्रपञ्चोक्तः संबन्धः तन्निरासश्च

अन्ये त्वत्राभिसंबन्धमेवं व्याचक्षते बुधाः । स एष इत्युपन्यस्तो विज्ञानात्मा हि यः पुरा ॥२१॥
गार्ग्यकाश्येतिहासेन वक्ष्यते तस्य निर्णयः । कर्त्र्यो भोक्त्र्यश्च देहेऽस्मिन्देवता एव नापरः ॥
श्रुतिर्गार्ग्यात्मना सेयं पूर्वपक्षमभाषत ॥२२॥
आत्मनोऽस्तित्वकर्तृत्वभोक्तृत्वप्रतिपत्तये ॥२३॥

परोक्तसंबन्धनिरासः

श्रुत्या सिद्धान्तसिद्ध्यर्थं काश्यरूपं प्रकल्पितम् । निष्फलत्वात्स चायुक्तः प्रकृतानभिसंगतेः ॥२४॥
देवतास्तित्वपक्षेऽपि किमस्तित्वादि नेष्यते । देहाद्भिन्नस्य[1] विज्ञातुरिष्टं चेन्निष्फलः श्रमः ॥२५॥
अज्ञातैकात्म्ययाथात्म्यो यदा त्विह विवक्ष्यते । अविद्याकार्यनिष्ठः सञ्श्रुत्या गार्ग्यशरीरया ॥२६॥
पूर्वपक्षितयाऽशेषदुःखहेतूपशान्तये । पूर्वपक्षनिदानच्छित्काश्यः सिद्धान्तवाद्यपि ॥२७॥
श्रुत्येहोत्थाप्यतेऽशेषवेदान्तार्थविबुद्धये । सर्वोऽप्येष तदा यत्नः फलवान्स्यान्न चान्यथा ॥२८॥

अध्यायसंबन्धं स्वाभीष्टमुक्त्वा भर्तृप्रपञ्चाभीष्टमाह—अन्ये त्विति । अत्र पूर्वोत्तराध्याययोरिति यावत् । एवंशब्दार्थमेवाऽऽह—स इति । प्रवेशवाक्ये जीवः सूत्रित इत्यर्थः । सूत्रितस्य जीवस्य लोकवेदप्रसिद्ध्यर्थो हिशब्दः ॥२१॥

अजातशत्रुब्राह्मणमुत्थापयति—गार्ग्येति । अनिश्चयप्रसङ्गे निश्चयार्थमारम्भो युक्तस्तत्प्रसङ्गस्तु कथमित्याशङ्क्याऽऽह—कर्त्र्य इति । अपरशब्दादूर्ध्वमितिपदमध्याहृत्य पूर्वपक्षपदेन योजनीयम् । यथाऽऽहुः—भोक्त्र्यश्च देवताः करणाधिष्ठात्र्यश्च किमन्यद्विज्ञानात्मना कार्यमस्त्येतस्मिन्दर्शने स्थितो गार्ग्यः पूर्वपक्षपरिग्रहायोत्थाप्यत इति ॥२२॥

काश्यात्मना श्रुतिः सिद्धान्तमुक्तवतीतिभाष्याभिप्रायमाह—आत्मन इति । तस्यास्तित्वादिसिद्धये श्रुत्या प्रकल्पितं काश्यरूपमिति संबन्धः । तदेव संगृह्णाति—सिद्धान्तेति । परोक्तं संबन्धः निराकरोति—निष्फलत्वादिति । प्राणदेवताया[2] भोक्तृत्वादिनिरासेनाऽऽत्मनस्तदुक्त्यर्थमुत्तरो ग्रन्थ इति यः संबन्धः सोऽयुक्त आत्मनस्तत्साधनस्याफलत्वा"त्तदात्मानमेवावेदि"त्यैक्यज्ञानान्मुक्तिरितिप्रकृतार्थासंयोगाच्च, न हि जीवस्य वास्तवे कर्तृत्वादौ तत्सिद्धिरित्यर्थः ॥२३–२४॥

निष्फलत्वादिति हेतुं साधयति—देवतेति । गार्ग्येष्टप्राणस्यास्तित्वादिपक्षेऽपि देहद्वयातिरिक्तस्य जीवस्य तद्द्वाराऽस्तित्वादि किमिति नेष्यते तथा चेदिष्टं तर्हि देवतायास्तन्निरासेन ज्ञातुर्वस्तुतस्तत्साधने प्रयत्नो वृथेत्यर्थः ॥२५॥

परत्रोक्तं दोषद्वयं स्वपक्षे नास्तीत्याह—अज्ञातेत्यादिना । यदाऽस्यामाख्यायिकायामज्ञो गार्ग्यो विराज्यहंभावोऽशेषदुःखहेतोः स्वाज्ञानस्योपशान्त्यर्थं पूर्वपक्षितया श्रुत्या विवक्ष्यते यदा च तत्कारणमज्ञानं छेत्तुं प्रवृत्तोऽजातशत्रुरैक्यसिद्ध्यर्थं सिद्धान्तवादी तयैवानूद्यते तदा प्राणादेरात्मत्वनिरासोऽतिरिक्तात्मोक्तिरित्यादिः सर्वोऽपि यत्नः सफलः स्यात् । न चात्र मोक्षानुपपत्तिर्ज्ञानादज्ञानतज्जध्वंसे तत्सिद्धेः । परत्र तु यत्नो विफलो न च प्रकृतसंगतिर्न हि कर्तृत्वादेर्वस्तुत्वे ज्ञानान्मुक्तिर्युक्ता वस्तुनस्तस्य तदनिवर्त्यत्वात्तदवस्थाने चानर्थध्वस्तिरूपाया मुक्तेरनवकाशत्वात्कल्पितत्वे च कर्तृत्वादेर्मतभेदासिद्धिरित्यर्थः ॥२६–२७–२८॥

---

१. स्थूलदेहातिरिक्तात्मनोऽस्तित्वादि विवक्षितं चेत् देहातिरिक्तप्राणदेवताऽस्तित्वपक्षेऽपि लोकायतमतनिरासेन तस्या एवात्मत्वेन कर्तृत्वाद्युपपत्तेः तदतिरिक्तात्मास्तित्वादिसाधनं वृथेत्यर्थः । ( न्या० क० )

२. **प्राणदेवताया इति** । गार्ग्यः देवतानां प्राणाद्यधिष्ठात्रीणां भोक्तृत्वं निरस्य आत्मनो भोक्तृत्वं काश्येन व्यवस्थाप्यते इति मतं भर्तृप्रपञ्चस्य । तच्च व्यर्थं तदात्मानमेवावेदिति पूर्वोक्तश्रुत्या जीवब्रह्मैक्यमत्र प्रतिपिपादयिषितं तत्र चात्मनो भोक्तृत्वव्यवस्थापनमफलमित्यर्थः ।

श्रद्धाचारादिविध्यर्था यदि वाऽऽख्यायिका त्वियम् । यथोक्तदर्शनाप्तार्थो नान्यदस्तीति भावितः ॥
अतोऽतिदृप्तोऽविज्ञातदर्पकारणघस्मरः ॥२९॥
श्रद्धालुं वित्तसंपन्नं श्रेयोर्थिनमुपेत्य तु । ब्रह्म तेऽहं ब्रवाणीति गार्ग्यः काश्यमभाषत ॥३०॥
न जातो न भविष्योऽस्ति शत्रुरैकात्म्यदर्शनात् । अजातशत्रुः काश्योऽतो गार्ग्यबुद्धिविरुद्धधीः ॥३१॥
ब्रह्म यस्मात्परं नास्ति न च वस्त्वन्तरं यतः । ब्रवाण्युपास्यं तत्तेऽहं सर्वापध्वस्तिकारणम् ॥३२॥
नापृष्ट इति नन्वेतद्विरुद्धमकरोदृषिः । यद्ब्रह्म ते ब्रवाणीति ह्यपृष्टः काश्यमब्रवीत् ॥३३॥

ब्रह्म पृच्छानि इति गार्ग्याभिप्राय इति मतं तन्निरासश्च

दर्पादिदर्शनान्नूनं वेत्त्यकृत्स्नात्मदर्शनम् । कृत्स्नत्वार्थमतोऽप्राक्षीत्काश्यं प्रज्ञासमन्वितम् ॥३४॥
श्रद्धालुरधिकारी यो जिज्ञासुर्विनयान्वितः । अपृष्टेनापि वक्तव्या तस्मै विद्या विपश्चिता ॥३५॥
धर्मार्थौ यत्र न स्यातां शुश्रूषा वाऽपि तद्विधा । तत्र विद्या न वप्तव्या शुभं बीजमिवोषरे ॥३६॥

परोक्तं संबन्धं निरस्य स्वोक्तः संबन्धः साधितस्तत्र सुखावबोधायाऽऽख्यायिकेत्युक्तम् । इदानीं फलान्तरमाह—श्रद्धेति । गार्ग्यकाश्ययोः श्रद्धालुतादृष्टेर्विद्यायां श्रद्धा परं साधनं उत्तमस्याधमादनुज्ञामात्रेण तत्प्राप्तिर्नोपसत्त्येत्याचारः । शुष्कतर्कवशान्न सा लभ्येत्यादिशब्दार्थः । यदि वेति फलविकल्पार्थः । एवं संबन्धमुक्त्वा दृप्तेत्यादेरर्थमाह—यथोक्तेति । त्वयन्नात्मदृष्ट्याऽऽप्तत‌द्भावस्ततोऽन्यन्नास्ति ब्रह्मेति मन्वानोऽप्राप्तदर्पहेत्वज्ञानध्वंसितत्त्वज्ञानो यतो गार्ग्योऽतोऽत्यन्तदृप्तः स कदाचिदासीदित्यर्थः ॥२९॥

स हेत्याद्यवतारयति—श्रद्धालुमिति । विद्यासंप्रदाने पात्रस्य योग्यत्वार्थं विशेषणानि । योग्यमधिकारिणं प्रति प्रश्नमन्तरेणापि प्रतिवचनमुचितमिति वक्ष्यमाणार्थसूचनार्थस्तुशब्दः ॥३०॥

काश्यस्याजातशत्रुत्वं साधयति—नेत्यादिना । अतःशब्दस्य पञ्चम्या संबन्धः । प्रागुक्तहेतुं विशेषणोक्त्या व्यक्तीकरोति—गार्ग्येति ॥३१॥

यस्मात्परं नापरमस्ति किंचिदित्यादिश्रुतिमाश्रित्य ब्रह्मेत्यादि व्याचष्टे—ब्रह्मेति । तदुपास्तिफलं कथयति—सर्वेति ॥३२॥

"नापृष्टः कस्यचिब्रूयान्न चान्यायेन पृच्छतः ।
जानन्नपि हि मेधावी जडवल्लोक आचरेत् ॥"

इति स्मृतिविरुद्धमृषिचेष्टितमिति शङ्कते—नेत्यादिना । काश्यस्य गार्ग्यं प्रति प्रथमतो न प्रश्नोस्तीतिप्रसिद्धयर्थो हिशब्दः । यच्छब्दो यस्मादर्थे तदभिव्यक्त्यर्थं होत्युक्तम् ॥३३॥

ब्रवाणीत्येत्पृच्छानीत्यर्थे धातूनामनेकार्थत्वात्तन्न स्मृतिविरोध इत्येकदेश्याह—दर्पादीति । अर्थित्वादिग्रहार्थमादिपदम् । अकृत्स्नात्मदर्शिनं स्वात्मानं गार्ग्यो वेत्तीति शेषः । कृत्स्नत्वार्थं पूर्णवस्तुविज्ञानार्थमित्यर्थः । तं प्रति सम्यग्ज्ञानार्थं प्रश्नस्य प्रवृत्तिरुचितेति सूचयितुं प्रज्ञेत्यादिविशेषणम् ॥३४॥

अत्र श्रुतेरनाञ्जस्याद्यथाश्रुतमादाय स्वपक्षमाह—श्रद्धालुरिति । अधिकारित्वसिद्धयर्थानि षिशेषणानि । विपश्चितेति वक्तुस्तदधिगतियोग्यतोक्ता ।

"अधर्मेण तु यः प्राह यश्चाधर्मेण पृच्छति ।
तयोरन्यतरः प्रैति विद्वेषं वा निगच्छति ॥
विद्या ब्राह्मणमेत्याह शेवधिस्तेऽस्मि रक्ष माम् ।
असूयकाय मां मा दास्तथा स्यां वीर्यवत्तमा ॥

इत्यादिशेषादुक्तस्मृतेरनधिकारिणे विद्या न वाच्येत्येवंपरत्वान्न तद्विरुद्धमृषिचेष्टितमिति भावः ॥३५॥

अनधिकारिणि प्रष्टर्यपि विद्या न देयेत्यत्र स्मृतिमुदाहरति—धर्मेति । सप्तमीद्वयं शिष्यविषयम् । तद्विधा विद्या देशकालसामर्थ्यानुरोधिनीति यावत् । तत्र विद्या दत्ताऽपि न फलवतीति दर्शयितुमुदाहरणम् ॥३६॥

**धर्मार्थौ यत्र च स्यातां शुश्रूषा वाऽपि तद्विधा । वक्तव्या तत्र विद्येति निषेधादेव लिङ्ग्यते ॥३७॥**
**नष्टाश्वदग्धरथवन्न्यायं चाऽऽश्रित्य भूमिपम् । प्राह मानुषवित्ताढ्यं दैववित्तसमन्वितम् ॥३८॥**
**वित्तद्वयेन संपन्नो यतोऽधिक्रियते नरः । सर्वकर्मस्वतोऽवादीद्बालाकिः काश्यमन्तिकात् ॥३९॥**
**ब्रह्म तुभ्यं ब्रवाणीतिवाङ्मात्रव्यापृतावहम् । गोसहस्रं ददाम्यद्य विनाऽप्यैकात्म्यनिर्णयात् ॥४०॥**
**गोसहस्रप्रदानस्य निमित्तं श्रुतिरभ्यधात् । जनको जनक इति नामाभ्यासोक्तितः स्फुटम् ॥४१॥**
**शुश्रूषुं जनकं सर्वे जना दित्सन्तमेव च । विवक्षवोऽभिधावन्ति तमुद्दिश्य जिघृक्षवः ॥४२॥**
**मौग्धीं प्रसिद्धिमुल्लङ्घ्य गार्ग्योऽयं मामुपागतः । नूनं दित्सुं च शुश्रूषुं संभावयति मामपि ॥४३॥**

**मू.—स होवाच गार्ग्यो य एवासावादित्ये पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा अतिष्ठाः सर्वेषां भूतानां मूर्धा राजेति वा अहमेतमुपास इति स य एतमेवमुपास्तेऽतिष्ठाः सर्वेषां भूतानां मूर्धा राजा भवति ॥२॥**

गार्ग्योपदेशे प्रथमकण्डिकाविवरणम्

**आदित्यचक्षुर्बुद्धिस्थश्चेतनः सर्वगो ध्रुवः । एतमेव सदोपासे ब्रह्मेति रविमध्यगम् ॥४४॥**
**तथा ब्रुवाणं तं गार्ग्यं काश्यो मा मेत्यथोचिवान् । केवलो मतिसंवादो भवदुक्तेर्ममाभवत् ॥४५॥**
**न त्वपूर्वार्थविज्ञानं प्रतिज्ञातं यथा त्वया । मा वोचोऽतो यतो वेद्मि विनाऽपि वचनात्तव ॥४६॥**
**निषेधाभ्यासो मा मेति ज्ञातब्रह्मप्रवादिनः । आबाधितधियाऽभ्यस्तो गार्ग्यस्यानुक्तिकारणात् ॥४७॥**

अधिकारिण्यपृष्टेनापि सोपदेष्टव्येत्यत्र मानमाह—धर्मार्थाविति । ननु निषेधवचनं विना नैवंविधमस्ति स्मृतिवचनं तत्राऽऽह—इति निषेधादिति । अयोग्ये पात्रे विद्यादाननिषेधाद्योग्ये प्रश्नं विनाऽपि सा देयेति गम्यत इत्यर्थः ॥३७॥

अधिकारिणे विद्यां वक्तुं गार्ग्यश्चेदुपचक्रमे तर्हि योग्यं ब्राह्मणं हित्वा किमिति राजानमुपेत्य ब्रवीति तत्राऽऽह—नष्टेति । यथाऽऽहुः—युक्तः संयोगोऽधिकारार्थेन हेतुना नष्टाश्वदग्धरथवदिति ॥३८॥

उक्तनीत्या गार्ग्यकाश्यसंबन्धस्य फलं प्रकटयति—वित्तेति । यथाऽऽहुः—उभयवित्तवतोऽस्य ह्यधिकारस्तस्मादधिकारार्थेन हेतुना युक्तमुपेत्य वचनमिति ॥३९॥

सहस्रमित्यादेरर्थमाह—ब्रह्मेति ॥४०॥

जनक इत्याद्यवतारयति—गोसहस्रेति ॥४१॥

तद्व्याचष्टे—शुश्रूषुमिति ॥४२॥

विवक्षूणां जिघृक्षूणां च जनकं प्रत्यभिगमनेऽपि कथं ब्रह्म ब्रवाणीति गार्गीयवाङ्मात्रमेव राज्ञो गोसहस्रदाने निमित्तमुक्तमित्याशङ्क्याऽऽह—मौग्धीमिति । उपागन्तुराशयमनुवदति—नूनमिति । तथाच तदीयं वाङ्मात्रमेव निमित्तीकृत्य गोसहस्रप्रदानमुचितमिति भावः ॥४३॥

श्रोतुकामं राजानं प्रति ब्राह्मणो ब्रह्म कीदृगुक्तवानित्याशङ्क्य "य एवासावि"त्यादेरर्थमाह—आदित्येति । तत्प्राधान्यार्थं रविमध्यगमित्युक्तम् । त्वमपि यथोक्तं ब्रह्मोपास्स्वेति शेषः ॥४४॥

मा मैतस्मिन्नित्याद्यादत्ते—तथेति । गार्ग्योक्तेरज्ञातार्थज्ञापकत्वाभावज्ञापनार्थमथेत्युक्तम् । तदेव स्फुटयन्निषेधवादिनो राज्ञोऽभिप्रायमाह—केवल इति । संवादं कर्तुमेवोपक्रान्तमित्याशङ्क्याऽऽह—प्रतिज्ञातमिति । अपूर्वार्थविज्ञानं हि प्रतिज्ञातं न च तथा तदुत्पादितं तथाच प्रतिज्ञाहानिस्तवेत्यर्थः । राजाशयमुक्त्वा निषेधं व्याचष्टे—मा वोच इति ॥४५–४६॥

द्विर्वचनमनूद्य तत्फलमाह—निषेधेति । गार्ग्यो हि विना स्वोपदेशं राज्ञा ज्ञातस्य ब्रह्मणः प्रकर्षेण वदनशीलस्तस्येषद्बाधितत्वबुद्ध्या निषेधो राज्ञाऽभ्यस्तस्तेन मुख्यस्य ब्रह्मणोऽनुक्तेरित्यर्थः ॥४७॥

**सुप्रसिद्धं यदस्माकं त्वच्छासनमृतेऽपि तत् । नापेक्षते भवद्वाक्यं सिद्ध्यर्थं प्राक्प्रसिद्धितः ॥४८॥**
**तदुपासां न वेद्मीति मा च शङ्कां कृथा यतः । उपासनं च वेद्म्यस्य गुणं तत्फलमेव च ॥४९॥**
अतीत्य सर्वभूतानि प्राधान्येन स्थितो यतः ॥५०॥
**अतिष्ठा इति नामास्य तेनाऽऽदित्यात्मनोऽभवत् । चक्षुरुद्दीप्तिसत्त्वाच्च राजेत्येषोऽभिधीयते ॥५१॥**
**स य एतं यथोद्दिष्टमुपास्तेऽहर्निशं नरः । यथोपासनमेवास्य फलं भवति नान्यथा ॥५२॥**

**मू.—स होवाच गार्ग्यो य एवासौ चन्द्रे पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा बृहन्पाण्डरवासाः सोमो राजेति वा अहमेतमुपास इति स य एतमेवमुपास्तेऽहरहर्ह सुतः प्रसुतो भवति नास्यान्नं क्षीयते ॥३॥**

**मतिसंवाददोषेण काश्येनोत्सारिते रवौ । गार्ग्यो ब्रह्मान्तरं राज्ञे प्रवक्तुमुपचक्रमे ॥५३॥**

चन्द्रादिस्थस्य ब्रह्मोपासनविधिः

**चन्द्रे मनसि बुद्धौ च ब्रह्मोपासेऽहमद्वयम् । भानुमण्डलतो यस्माद्द्विगुणं चन्द्रमण्डलम् ॥**
बृहन्निति ततश्चन्द्रः प्रमाणेनाभिधीयते ॥५४॥
**अम्भोऽतिपाण्डरं वासो यस्माच्चन्द्राभिमानिनः। तस्मात्पाण्डरवासाः स्यात्सोमः सौम्यत्वकारणात् ॥५५**
**ज्योत्स्नया राजतेऽत्यर्थं सोमो ब्राह्मणराजतः । सोमो राजेत्यतो वक्ति तदुपासाविधित्सया ॥५६॥**
**तुल्याभिधानधर्मत्वाल्लतासोमोऽपि गृह्यते । उभयोर्देवतैकत्वादुपास्यं तेन तद्द्वयम् ॥५७॥**
**एषैका देवता विभ्वी प्रत्येकार्थावसायिनी । भोक्त्री कर्त्री च सर्वत्र तस्या भोज्यमतोऽपरम् ॥५८॥**
**ब्रह्मैषा सर्वसंव्याप्तेरात्मेत्येतामुपास्महे । व्याख्या तुल्यैव विज्ञेया सर्ववाक्येषु पूर्ववत् ॥५९॥**

**कथं तदुक्तिं विना राज्ञा ज्ञातं ब्रह्म तत्राऽऽह—**सुप्रसिद्धमिति ॥४८॥

**अतिष्ठाः सर्वेषामित्याद्यवतारयति—**तदुपासामिति । तद्गुणं तत्फलं चेति शेषः ॥४९॥

**गुणद्वयं विभजते—**अतीत्येति ॥५०–५१॥

**स य एतमित्यादि व्याचष्टे—**स य इति । नान्यथेत्युपास्त्यनुसारिफलमिति शास्त्रस्थितेरित्यर्थः ॥५२॥

**पर्यायान्तरमादत्ते—**मतीति ॥५३॥

**तद्व्याचष्टे—**चन्द्र इति । त्वं च तथोपास्स्वेति पूर्ववत् । **बृहन्नित्यस्यार्थमाह—**भान्विति । **प्रमाणेन परिमाणेनेति यावत् । तथाच पौराणिकाः—**

"नवयोजनसाहस्रो विष्कम्भः सवितुः स्मृतः ।
द्विगुणस्तस्य विस्तारो मण्डलस्य प्रमाणतः ॥
द्विगुणः सूर्यविस्ताराद्विस्तारः शशिनः स्मृतः" । इति ॥५४॥

**पाण्डरेत्यादिपदानि व्याचष्टे—**अम्भ इत्यादिना । सोमो **ब्राह्मणानां राजेतिश्रुतिमाश्रित्य ब्राह्मणराजत इत्युक्तम् । गुणचतुष्टयोक्तिफलमाह—**तदुपासेति । ५५–५६॥

**सोमशब्दस्यार्थान्तरमाह—**तुल्येति । न केवलं चन्द्रमाः सोमः किंतु लताऽपि सोम इत्यभिधानस्य **वृद्धिह्रासाख्यधर्मस्य चोभयत्र समत्वाच्चन्द्रदेवतायाश्च द्वयोरैक्यादित्यर्थः । लताग्रहोपयोगमाह—**उपास्यमिति । **प्राणात्मनैकीकृत्येति शेषः ॥५७॥**

**उक्तां देवतां विशिनष्टि—**एषेति ॥५८॥

**अन्नदृष्ट्या भोज्यमित्ययुक्तं ब्रह्मणोऽतथात्वादित्याशङ्क्याऽऽह—**ब्रह्मेति । **तथाऽप्यात्मनो भोक्तृत्वादि न प्राणस्येत्याशङ्क्याऽऽह—**आत्मेति । **अतस्त्वदुक्तेर्नास्माकमधिका धीरिति राज्ञोऽभिप्रायः । यथोक्तन्यायं विद्युत्पर्यादिष्वतिदिशति—**व्याख्येति । **आदित्यचन्द्रवाक्ययोर्व्याख्या तुल्योक्ता तथोत्तरेष्वित्यर्थः ॥५९॥**

गुणो यत्र हि यः पुंसो नाम्ना संभाव्यतेऽत्र तु । फलं तदेव तस्य स्यात्सर्ववाक्येषु निर्णयः ॥६०॥

मू.—स होवाच गार्ग्यो य एवासौ विद्युति पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठास्तेजस्वीति वा अहमेतमुपास इति स य एतमेवमुपास्ते तेजस्वी ह भवति तेजस्विनी हास्य प्रजा भवति ॥४॥

भानुचन्द्रमसोस्तेजो जलदैरभिभूयते । विद्युत्तत्राप्यतितरां तेजस्वी तेन विद्युति ॥६१॥

मू.—स होवाच गार्ग्यो य एवायमाकाशे पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठाः पूर्णमप्रवर्तीति वा अहमेतमुपास इति स य एतमेवमुपास्ते पूर्यते प्रजया पशुभिर्नास्यास्माल्लोकात्प्रजोद्वर्तते ॥५॥

खण्डशो न यथा मूर्तं खं पूर्णं चाप्रवर्तनात् । अप्रवर्त्यक्रियावत्स्युर्व्योम्नि सर्वाः प्रवृत्तयः ॥६२॥

मू.—स होवाच गार्ग्यो य एवायं वायौ पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा इन्द्रो वैकुण्ठोऽपराजिता सेनेति वा अहमेतमुपास इति स य एतमेवमुपास्ते जिष्णुर्हापराजिष्णुर्भवत्यन्यतस्त्यजायी ॥६॥

जिष्णुः स्याज्जयशीलत्वाज्जीयते न परैर्यतः । अपराजिष्णुरित्येवं तस्मादेवाभिधीयते ॥६३॥
अन्यतो मातृतो जाता अन्यतस्त्या उदाहृताः । अप्यन्यतस्त्यजायी स्यात्सापत्नभ्रातृमर्दनः ॥६४॥
जिष्णुरिन्द्रगुणोपास्तेर्वैकुण्ठगुणतः परः । सेनाऽपराजितेत्यस्मात्सपत्नानां पराजयः ॥६५॥

मू.—स होवाच गार्ग्यो य एवायमग्नौ पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा विषासहिरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते विषासहिर्ह भवति विषासहिर्हास्य प्रजा भवति ॥७॥

अभ्याहितमपि जगत्सहतेऽग्निर्यतस्ततः । भस्मसात्करणादुक्तो विषासहिरितीश्वरैः ॥६६॥

प्रतिपर्यायं गुणफलयोरपि तुल्यत्वमाशङ्क्याह—गुण इति । अत्रोक्तवक्ष्यमाणपर्यायेषु यस्मिन्पर्याये ध्येयस्य पुंसो यो गुणोऽतिष्ठा राजा तेजस्वीत्यादिशब्दार्पितस्तत्र तदुपासकस्य तदेव गुणोपास्त्यनुरूपमतिष्ठाः सर्वभूतानामित्यादिफलं स्यादेवं सर्ववाक्येषु गुणभेदः फलभेदश्चेत्यर्थः । गुणादिभेदस्य वाचनिकत्वात्तद्भेदाशङ्का नेति हिशब्दार्थः ॥६०॥

प्रतिपर्यायं तद्भेदेऽपि विद्युति निर्देशादादित्यचन्द्राग्निषु च संभवात्तेजस्विगुणश्चतुर्ष्वपि सम इत्याशङ्क्याऽऽह—भान्विति । अग्नेरपि कदाचिदुद्भूतमभिभूतं च तेजो लक्ष्यते तत्रापि जलदेषु सत्स्वपीति यावत् । अतितरां तेजस्विनीति शेषः । तेजस्वी ध्येयः पुरुषः ।.६१॥

पूर्णमप्रवर्तीत्याकाशब्रह्मणो गुणद्वयमुक्तं तद्व्याचष्टे—खण्डश इति । यथा घटादि खण्डशो विभक्तं न तथाऽऽकाशमतस्तत्पूर्णमप्रवर्ति चाप्रवर्तकत्वादित्यर्थः । अप्रवर्तिशब्दस्यार्थान्तरमाह—अक्रियावदिति । व्योम्नि हि सर्वाः प्रवृत्तयः सन्ति न स्वयं क्रिया तद्वद्वा तस्मादप्रवर्तीत्यर्थः ॥६२॥

वायुब्रह्मोपासकस्य जिष्णुरित्यादिफलत्रयमुक्तं तद्व्याचष्टे—जिष्णुरित्यादिना ॥६३–६४॥

कथमेकोपास्तिर्बहुफलेत्याशङ्क्योपास्यगुणभेदादित्याह—जिष्णुरिति ॥६५॥

अग्निपुरुषस्य विषासहिरिति विशेषणं तस्यार्थमाह—अभ्याहितमिति । अभिरभिव्याप्तौ । यद्धविः स्वस्मिन्निक्ष्यते क्षिप्यते तत्सोढुं शीलमस्तीति व्युत्पत्तिः । ईश्वरैर्वेदार्थनिर्धारणसमर्थैरित्यर्थः ॥६६॥

मू.—स होवाच गार्ग्यो य एवायमप्सु पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठाः प्रतिरूप इति वा अहमेतमुपास इति स य एतमेवमुपास्ते प्रतिरूपँ हैवैनमुपगच्छति नाप्रतिरूपमथो प्रतिरूपोऽस्माज्जायते ॥८॥

अप्सु रेतसि बुद्धौ च पुरुषं ब्रह्म चेतनम् । उपास एतमित्युक्तः काश्यः प्रत्याह पूर्ववत् ॥६७॥
प्रतिबिम्बोदयः कार्यं प्रतिरूपं यतस्ततः । प्रतिरूप उपास्योऽप्सु फलमप्यस्य तादृशम् ॥६८॥
अन्वर्थे प्रतिशब्दोऽयं फलस्य पुरुषार्थतः । प्रातिलोम्येन तु ज्ञेयो ह्यनर्थः स्यात्तथा सति ॥६९॥
श्रुतिस्मृतिसदाचारान्प्रति यः सततोद्यतः । प्रतिश्रुत्यादिरूपत्वात्प्रतिरूपस्ततोऽस्तु सः ॥७०॥

मू.—स होवाच गार्ग्यो य एवायमादर्शे पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा रोचिष्णुरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते रोचिष्णुर्ह भवति रोचिष्णुर्हास्य प्रजा भवत्यथो यैः सन्निगच्छति सर्वाँ स्तानतिरोचते ॥९॥

रोचिष्णूपनिषत्कान्तमादर्शाक्षादिबुद्धिषु । उपास इत्यभिहिते काश्यः प्रत्याह पूर्ववत् ॥७१॥
यत्रोपास्यबहुत्वं स्यात्फलं तत्र प्रजास्वपि । शतह्लदादर्शाद्यर्था बहवस्ते प्रसिद्धितः ॥७२॥
फलं यद्गुणकं यत्र तद्गुणं स्यादुपासनम् । फलानुमानतस्तत्र न फलं ह्यनुपासितम् ॥७३॥

मू.—स होवाच गार्ग्यो य एवायं यन्तं पश्चाच्छब्दोऽनूदेत्येतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा असुरिति वा अहमेतमुपास

य एवाप्स्वित्यादेरर्थमाह—अप्स्विति ॥६७॥

प्रतिरूपादिवाक्यस्थप्रतिरूपशब्दार्थमाह—प्रतिबिम्बेति । कार्यमपामिति शेषः । यस्मात्प्रतिबिम्बमपां गुणस्तस्मादबादौ तद्गुणः पुरुषो ध्येय इत्याह—यत इति । फलवाक्यार्थमाह—फलमिति ॥६८॥

प्रतिरूपगुणोपासकं प्रति प्रतिरूपं फलमुपगच्छति चेत्तर्हि प्रतिशब्दादनर्थप्राप्तिः फलमिति प्रतीतेस्त्याज्योपासनेत्याशङ्क्याऽऽह—अन्वर्थ इति । प्रतिशब्दस्य निपातत्वेनानेकार्थत्वसंभवात्प्रकृतोपास्त्यनुसारेणान्वर्थत्वमुचितमिति वक्तुं हीत्युक्तम् । तथा सति प्रातिकूल्यार्थत्वाभ्युपगमे सतीति यावत् ॥६९॥

प्रतिरूपशब्दस्यानुरूपार्थत्वमुक्त्वा तदेव प्रकटयन्नथो इत्यादेरर्थमाह—श्रुतीति । अप्सु हि पुरुषः श्रुत्यादीन्प्रति सदाऽनुरूपस्ताभिरेव श्रौतस्मार्तकर्मनिर्वृत्तेरतस्तदुपासकस्यापि तदात्मकस्य श्रुत्याद्यनुरूपत्वात्ततो जायमानः पुत्रस्तदनुरूपो भवतीत्यर्थः ॥७०॥

य एवायमित्यादेरर्थमाह—रोचिष्ण्विति । देदीप्यमानगोप्यकान्तिसहितं पुरुषमादर्शे चक्षुरादिषु स्वच्छभावेषु बुद्धौ चाहमुपासे त्वं चेत्थमुपास्वेत्युक्ते राजा पूर्ववन्निषेधतीत्यर्थः ॥७१॥

रोचिष्णुर्हेत्यादिना स्वगतं प्रजागतं च फलमत्र श्रूयते विद्युदात्मवाक्ययोरपि तेजस्वी हेत्यादिनोभयत्र फलमुक्तं स्वामिगामि च तन्न्याय्यमित्याशङ्क्याऽऽह—यत्रेति । स्वामिनोऽन्यत्रापि वाचनिकमविरुद्धमिति भावः । क्वाचित्कमुपास्यबहुत्वमेव स्फोरयति—शतह्लदेति ॥७२॥

उपास्यैक्येऽपि फलबाहुल्योपपत्तेः सर्वपर्यायेषूभयत्र फलं किं न स्यादित्याशङ्क्याऽऽह—फलमिति । यस्मिन्पर्याये यद्गुणकं फलं दृष्टं तत्र तद्गुणकमुपासनं फलेन तत्साधनस्यानुमानात्, तद्वैचित्र्ये सत्युपासनवैचित्र्यस्याऽऽवश्यकत्वादित्यर्थः । अनुमानमेव व्यतिरेकद्वारा स्फोरयति—नेति । तं यथा यथेत्यादिशास्त्रादिति शेषः । स एव हिशब्दार्थः ॥७३॥

इति स य एतमेवमुपास्ते सर्वँ हैवास्मिँल्लोक आयुरेति नैनं पुरा कालात्प्राणो जहाति ॥१०॥

गच्छन्तमनु यः शब्दो बहिर्वच्छ्रूयतेऽध्वनि । अध्यात्मं दैहिके शब्दे बुद्धौ चेति विनिर्दिशेत् ॥७४॥
पुंसोऽभिधावतस्तूर्णं देहदेशैः समाहतः । प्राणो वृत्तिविशेषेण बहिर्वत्कुरुते ध्वनिम् ॥७५॥
वृत्तिक्षेपादसुरयमायुषश्च तदाश्रितेः । शतायुरेव भवति म्रियते नापमृत्युना ॥७६॥

मू.— स होवाच गार्ग्यो य एवायं दिक्षु पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा द्वितीयोऽनपग इति वा अहमेतमुपास इति स य एतमेवमुपास्ते द्वितीयवान्ह भवति नास्माद्गणश्छिद्यते ॥११॥

दिक्षु द्वितीयोऽनपगः सद्वितीयः सदैव सः । दुःसंभाव्या हि पूर्वा दिङ्मुक्त्वाऽऽशां पश्चिमां जनैः ॥७७॥
साधुभृत्यपरीवारः सर्वदोपासको भवेत् । पुत्रादिगणसंतानस्थैर्यमेव सदा भवेत् ॥७८॥

मू.—स होवाच गार्ग्यो य एवायं छायामयः पुरुषः एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा मृत्युरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते सर्वँ हैवास्मिँल्लोक आयुरेति नैनं पुरा कालान्मृत्युरागच्छति ॥१२॥

छायामये तथाऽज्ञाने बुद्धौ चैकैव देवता । मृत्युकालात्पुरा नास्य व्याधिरप्युपसर्पति ॥७९॥

मू.—स होवाच गार्ग्यो य एवायमात्मनि पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा आत्मन्वीति वा अहमेतमुपास इति स य एतमेवमुपास्त आत्मन्वी ह भवत्यात्मन्विनी हास्य प्रजा भवति स ह तूष्णीमास गार्ग्यः ॥१३॥

विराडात्मनि देहे च बुद्धावित्यादि पूर्ववत् । आत्मन्वीति च वश्यात्मा प्रजा चापि शमान्विता ॥८०॥
व्यस्तानां पूर्वमुद्देशः समस्तानां त्विहोदितः । विवक्षावसितिर्गार्गी[1] तथा सत्युपपद्यते ॥८१॥

य एवायं यन्तमित्यादि व्याचष्टे—गच्छन्तमिति । अध्वनि गच्छन्तमिति संबन्धः । तस्मिन्बाह्ये शब्दे देहस्थे चाऽऽध्यात्मिके बुद्धौ च यः पुरुषस्तमेवाहमुपासे ब्रह्मबुद्ध्येति वाक्यार्थं ब्रूयादित्यर्थः ॥७४॥

गच्छतः पृष्ठतः शब्दोत्पत्तौ किं कारणं तदाह—पुंस इति । वृत्तिविशेषेण गतिभेदेनेति यावत् । यद्वा प्राणनादिवृत्तीस्त्यक्त्वा वृत्त्यन्तरेणेत्यर्थः ॥७५॥

शाब्दपुरुषस्यासुरिति विशेषणं तस्यार्थमाह—वृत्तीति । गतीनामुपात्तानां प्राणनादिवृत्तीनामेव बाह्यांशेन त्यागात्प्राणात्मा सोऽसुगुणक इत्यर्थः । "स य एतमि"त्यादि व्याकरोति—आयुषश्चेति ॥७६॥

दिक्पुरुषस्य द्वितीयोऽनपग इति विशेषणद्वयं तदनूद्य व्याचष्टे—दिक्ष्विति । सद्वितीयत्वं साधयति—दुःसंभाव्येति । दिशां सद्वितीयत्वं लोकप्रसिद्धमिति हिशब्दः ॥७७॥

स य एतमित्यादि व्याख्याति—साध्विति । उपासकबुद्ध्यनुसारित्वं साधुत्वम् । उत्तरार्धे सदेत्येतस्मात्पूर्वं त येत्यध्याहार्यम् ॥७८॥

पर्यायान्तरं व्याचष्टे—छायेति । बाह्ये तमसीति यावत् । छायापुरुषस्य मृत्युरिति गुणस्तदुपासनाद्दीर्घायुष्यं फलं रोगाद्यभावो विशेष इति मत्वा नैनमित्यादेरर्थमाह—मृत्युकालादिति । मृत्योस्तु न प्रसङ्गोऽस्तीत्यपेरर्थः ॥७९॥

अन्तिमं पर्यायं व्याकरोति—विराडिति । आदिपदेन गार्ग्योक्तिशेषस्य काश्योक्तेश्च ग्रहणम् । आत्मन्वीति च गुणो विराट्पुरुषस्येति शेषः । आत्मन्वीत्यादेरर्थमाह—वश्येति ॥८०॥

पूर्वोत्तरपर्यायेऽवान्तरभेदं दर्शयति—व्यस्तानामिति । उद्देशो ध्येयत्वेनोक्तिरित्यर्थः । अन्त्ये पर्याये समस्तोपदेशे नियामकमाह—विवक्षेति । तथा सति समस्तव्यस्तोपदेशे सतीति यावत् ॥८१॥

१. गार्गी = गार्ग्यस्य ब्रह्मविवक्षायाः समाप्तिः ।

प्रत्याख्यातोपदेशः सन्संवादेन पुनः पुनः । ब्रह्मान्यदन्यदवददात्मन्वीत्यन्तमादरात् ॥८२॥

विशेषाणामनन्तत्वात्समस्तं ब्रह्म सोऽवदत् । तस्मिन्नपि निषिद्धेऽथ तूष्णीं गार्ग्यो बभूव ह ॥८३॥

यत्कृत्स्नं ब्रह्म पूर्वोक्तं तदेवेदमविद्यया । एकधाऽनेकधा मूढैः कल्प्यते रज्जुसर्पवत् ॥८४॥

मू.—स होवाचाजातशत्रुरेतावन्नू ३ इत्येतावद्धीति नैतावता विदितं भवतीति स होवाच गार्ग्य उप त्वा यानीति ॥१४॥

अवाक्शिरस्कमालोक्य नृपो गार्ग्यमनुत्तरम् । एतावदिति तं प्राह शेषाशङ्कानिवृत्तये ॥८५॥

निगृह्यमाणयोगे च प्लुतिमत्र विनिर्दिशेत् । ब्रह्म ब्रवाणीत्यात्थ त्वमेतावद्ब्रह्म तच्च ते ॥८६॥

अज्ञाते जगदज्ञातं ज्ञाते ज्ञातं च यत्र तत् । तदेव ब्रह्म पूर्णत्वान्न त्वदुक्तमकृत्स्नतः ॥८७॥

अव्यावृत्ताननुगतस्वतःसिद्धात्मवस्तुनि । मुख्यार्थो ब्रह्मशब्दः स्यान्न त्वदुक्तेऽतथात्वतः ॥८८॥

यस्मादेवमतो गार्ग्यमेतावद्धीतिवादिनम् । नृपो नैतावतेत्याह ब्रह्मत्वासंभवं स्फुटम् ॥८९॥

अज्ञातब्रह्मतत्त्वस्य दुःसंभाव्यमिदं वचः । नैतावतेति ब्रह्मातः काश्यो वेत्तीति लिङ्ग्यते ॥९०॥

मू.—स होवाचाजातशत्रुः प्रतिलोमं चैतद्यद्ब्राह्मणः क्षत्रियमुपेयाद्ब्रह्म मे वक्ष्यतीति व्येव त्वा ज्ञपयिष्यामीति तं पाणावादायोत्तस्थौ तौ ह पुरुषँ सुप्तमाजग्मतुस्तमेतैर्नामभिरामन्त्रयांचक्रे बृहन्पाण्डरवासः सोम राजन्निति स नोत्तस्थौ तं पाणिनाऽऽपेषं बोधयांचकार स होत्तस्थौ ॥१५॥

गार्ग्योऽनुमाय राज्ञोऽथ प्रावीण्यं ब्रह्मवेदने । उपायानीत्युवाचेमं परब्रह्मावबुद्धये ॥९१॥

तत्समाप्तिं प्रकटयति—प्रत्याख्यातेति । तदनन्तरमज्ञानादेव गार्ग्यो विवक्षारहितोऽभूदिति शेषः ॥८२॥

कतिपयविशेषानुक्त्वा सर्वोपसंहारं विना किमित्यन्ते समस्तब्रह्मोक्तिरित्याशङ्क्याऽऽह—विशेषाणामिति । अनन्तत्वात्प्रत्येकं वक्तुमशक्यत्वादिति शेषः । तत्र सर्वान्तर्भावाच्चेति भावः । स ह तूष्णीमित्यादेरर्थमाह—तस्मिन्निति । समस्तव्यस्तातिरिक्ते वस्तुनि गार्ग्यस्य प्रतिभानहीनत्वद्योतनार्थमथेत्युक्तम् । तस्य मौनमास्थायावाक्शिरस्त्वेनावस्थानं पार्श्वस्थानां प्रत्यक्षमिति हेतिनिपातेन द्योत्यते ॥८३॥

ननु राज्ञा यथोक्तं ब्रह्म निषेधता तदब्रह्मत्वमेव साध्यते ततोऽन्यत्तदस्तीति वा ? नाऽऽद्यो व्येव त्वा ज्ञपयिष्यामीत्यादिशेषविरोधात् । नेतरोऽन्यत्वात्तस्यापि घटवदब्रह्मत्वापत्तेरत आह—यदिति । यद्वाऽऽत्मेत्येव सूत्रिते मुख्ये ब्रह्मणि किमित्यादित्यादिब्रह्मान्तरं गार्ग्येणोक्तमित्याशङ्क्य पूर्वपक्षश्रुत्यभिप्रायमाह—यत्कृत्स्नमिति । एकधाऽनेकधा समस्तत्वेन व्यस्तत्वेन चेत्यर्थः ॥८४॥

स हेत्यादेस्तात्पर्यमाह—अवागिति । प्रतिज्ञाहानिरत्र सूच्यते । उत्तरावसरे तदप्रतिपत्तिमप्रतिभामाह—अनुत्तरमिति । अवशिष्टस्य मुख्यब्रह्मणो गार्ग्येण ज्ञातत्वाशङ्कानिवृत्त्यर्थं राजवाक्यमित्यर्थः ॥८५॥

प्रतिज्ञाहान्यादिना निगृह्यमाणगार्ग्येण प्रश्नस्य संबन्धे प्लुतिरस्मिन्वाक्ये वाच्येति प्लुतेरर्थमाह—निगृह्यमाणेति । उक्तं हि—निगृह्यानुयोगे चेति । निगृह्यमाणत्वमेव स्फुटयति—ब्रह्मेति ॥८६॥

ननु प्रतिज्ञातं ब्रह्माऽऽदित्यादिरूपमुपदिष्टं न च तन्न ब्रह्म ब्रह्मान्तराभावात्तत्राऽऽह—अज्ञात इति ॥८७॥

पूर्णमेव ब्रह्मेत्यत्र निमित्तमाह—अव्यावृत्तेति । आदित्यादौ तस्य मुख्यार्थत्वाभावे हेतुः—अतथात्वत इति । त्वदुक्तादित्यादेर्व्यावृत्तादिरूपत्वादित्यर्थः ॥८८॥

एतावद्धीत्यादेरर्थमाह—यस्मादिति । आदित्यादेरुक्तन्यायेनाब्रह्मत्वं हेत्वर्थः ॥८९॥

उप त्वाऽयानीति वदतोऽभिप्रायमाह—अज्ञातेति ॥९०॥

उपसदनोक्तिमवतारयति—गार्ग्य इति । अनुमाय नैतावतेत्युक्त्या कल्पयित्वेत्यर्थः । ब्रह्मविदं प्रत्युपसत्तिरब्रह्मविदो युक्तेत्यथशब्दार्थः । इमं ब्रह्मविदं राजानमिति यावत् । उपसत्तिफलमाह—परब्रह्मेति ।

परं ब्रह्म विजिज्ञासुरुपेतोऽस्म्यहमादरात् । अनुशाधि यथातत्त्वमित्येवंवादिनं नृपः ॥९२॥
क्षत्त्रियं ब्राह्मणो जात्या यदुपेयादनापदि । प्रतिलोममिदं वृत्तं धर्मशास्त्रैर्निषिद्धतः ॥९३॥
योगक्षेमफलार्थाय गमनं न निषिध्यते । ब्रह्म मे वक्ष्यतीत्यर्थं निषिद्धं नृपसर्पणम् ॥९४॥
अतोऽनुपेतमेव त्वां करविन्यस्तबिल्ववत् । ब्रह्म विज्ञापयिष्यामि यज्ज्ञाने सर्वविद्भवेत् ॥९५॥
इत्युक्त्वा तमथो पाणौ गृहीत्वोत्थितवान्नृपः । आजग्मतुश्च तौ सुप्तं नरं कार्यविवक्षया ॥९६॥
गार्ग्योक्तब्रह्माभोक्तृत्वं तथाऽमीषामनात्मताम् । बालाकेर्बोधयिष्यामीत्यतः सुप्तमगान्नृपः ॥९७॥
देवतानामभिः काश्यो गत्वा सुप्तं यथोदितैः । आमन्त्रयां तदा चक्रे बृहन्नित्येवमादिभिः ॥९८॥
संबोध्यमानोऽपि तथा सुप्तो नैवोदबुध्यत । यतोऽतो गार्ग्याभिमतो न भोक्तेत्यवगम्यते ॥९९॥

सुप्तपुरुषगमने अभिप्रायवर्णनम्

जाग्रत्कालं परित्यज्य सुप्तं किमिति जग्मतुः । स्पष्टता सर्वभावानां जाग्रत्काले हि लक्ष्यते ॥१००॥
प्राणानां देवतानां च पुरुषस्य च संकरात् । बोधे न शक्यते कर्तुं विवेको भोक्तृभोज्ययोः ॥ १ ॥

उपसत्तिवाक्यं व्याचष्टे—उपेत इति । कुतूहलधिया नास्तिकधिया चोपसत्तिं व्यावर्तयति—आदरादिति । प्रतिलोममित्यादेरर्थमाह—इत्येवमिति । नृपः प्राहेति शेषः । कृतकं ब्राह्मणं व्यावर्तयति—जात्येति । धर्मशास्त्रैरिति । आपत्काले ब्राह्मणस्याब्राह्मणाद्विद्योपयोगोऽनुगमनं शुश्रूषाऽऽसमाप्तेरिति गौतमः ।

"अब्राह्मणादध्ययनमापत्काले विधीयते । अनुव्रज्या च शुश्रूषा यावदध्ययनं गुरोः ॥
नाब्राह्मणे गुरौ शिष्यो वासमात्यन्तिकं वसेत् । ब्राह्मणे चाननूचाने काङ्क्षन्गतिमनुत्तमाम्" ॥
इति मनुः । एवमादिभिर्निषेधाद्ब्राह्मणस्य क्षत्त्रियं प्रत्युपगतिरयुक्तेत्यर्थः ॥९१-९२-९३॥

तर्हि तस्य जीवनमेव दुर्लभमित्याशङ्क्यानापदीत्यत्र सूचितमर्थमाह—योगेति । अप्राप्तप्रापणं योगः प्राप्तरक्षणं क्षेमस्तदर्थं पार्थिवं प्रति ब्राह्मणस्योपसर्पणमविरुद्धम् ।

"वेदार्थानधिगच्छेच्च शास्त्राणि विविधानि च । उपेयादीश्वरं चैव योगक्षेमार्थसिद्धये" ॥
इति स्मृतेरित्यर्थः । तर्हि निषेधवाक्यानां का गतिस्तत्राऽऽह—ब्रह्मेति ॥९४॥

ब्राह्मणस्य क्षत्त्रियादुत्तमत्वात्तं प्रति विद्यार्थमुपगत्यभावश्चेद्गार्ग्यस्य राज्ञो विद्या श्रोतुमशक्येत्याशङ्क्य वयेव त्वेत्यादेरर्थमाह—अत इति । आदित्यादिब्रह्मभ्यो वक्ष्यमाणे ब्रह्मणि विशेषमाह—यज्ज्ञान इति । वर्णतो गार्ग्यस्याऽऽधिक्यादुपसत्त्यभावेऽपि विद्यातो राज्ञो वैशिष्ट्यात्ततस्तद्ग्रहो युक्तः ।

"न हायनैर्न पलितैर्न वित्तैर्न च बन्धुभिः । ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान् ॥
इति स्मृतेरित्यर्थः ॥९५॥
तं पाणावित्यादेरर्थमाह—इत्युक्त्वेति । तौ हेत्यादि व्याकरोति—आजग्मतुरिति ॥९६॥
कार्यविवक्षयेत्येतदेव स्फुटयति—गार्ग्येति । अमीषामादित्यादीनामिति यावत् ॥९७॥
तमेतैरित्यादेरर्थमाह—देवतेति । तदा स्वापावस्थायामित्यर्थः ॥९८॥

स नोत्तस्थावित्यस्यार्थमाह—संबोध्यमानोऽपीति । बोधनार्थप्रयुक्तनामाश्रवणादापेषणाच्चोत्थानात्प्राणस्य व्याप्रियमाणस्यैवाभोक्तृत्वं सिध्यतीति फलितमाह—यत इति ॥९९॥

सुप्तपुरुषगतिमाक्षिपति—जाग्रदिति । संनिहितं हित्वा व्यवहितगतिरयुक्तेत्यर्थः । गार्ग्येष्टात्मनो विविच्य काश्येष्टमात्मानमुपदेष्टुं तद्गतिरित्याशङ्क्याऽऽह—स्पष्टेति । तत्र सर्वस्याप्यादिष्टोऽर्थो विविच्य वक्तुं शक्यते न स्वापे सर्वव्यवहारलोपादतस्तद्गतिरनर्थिकेत्यर्थः ॥१००॥

जाग्रति सर्वपदार्थोपलम्भेऽपि क्षीरनीरवत्तेषां सांकर्यान्नेष्टात्मविवेकदृष्टिरित्युत्तरमाह—प्राणानामिति ॥१०१॥

भोक्तृत्वमेव पुंसोऽस्ति भोज्यत्वं न मनागपि । काश्याभिप्रायतोऽनस्य भोज्यतैव न भोक्तृता ।। २ ।।
संकीर्णत्वादशक्यः स्यात्प्रबोधे भोक्तृभोज्ययोः । कर्तुं विवेकोऽतो यातः सुप्तं पुरुषमादरात् ।। ३ ।।
तस्माद्यद्यपि सांनिध्यं प्राणादीनां प्रजागरे । संकीर्णत्वान्मिथस्तेषां दुःशकं तद्विवेचनम् ।। ४ ।।
आत्मनः प्रोषितत्वात्तु भोगोऽस्मै न प्रयुज्यते । उदासतेऽखिलाः सुप्ते देवताः करणैः सह ।। ५ ।।
जाग्रद्भोगप्रयुक्तस्य कर्मणः प्रक्षयात्तदा । शेरते करणान्यस्य सह भोक्त्राऽऽत्मनाऽऽत्मनि ।। ६ ।।
प्राण एकस्तु जागर्ति भोक्ता यो गार्ग्यसंमतः । प्राणेन रक्षन्निति च तथोदर्के प्रवक्ष्यते ।। ७ ।।
प्राणाग्नय इति स्पष्टं तथाऽनस्तमितश्रुतेः । अश्रान्तः प्राण एवातो जागर्त्यत्र दिवानिशम् ।। ८ ।।

प्राणस्याबोद्धृत्वनिरूपणम्

यथा जाग्रदवस्थायां भोक्ता प्राणः पुराऽभवत् । स्वप्नेऽप्येष तथैवाऽऽस्ते बोद्धा चेद्बुध्यतामयम् ।। ९ ।।
प्राणस्येन्दोस्तथा चापां त्र्यन्नात्माविष्कृतौ यतः । ऐक्यमुक्तमतः प्राणो बोध्यते चन्द्रनामभिः ।।१०।।
बृहन्नित्येवमादीनि सन्तु चेहोपलक्षणम् । अनुक्तदेवतानाम्नां सामर्थ्यात्तद्ग्रहोऽथवा ।।११।।
यदि भोक्ता भवेत्प्राणो जाग्रद्वच्छब्दमागतम् । अश्रोष्यत्स न चेद्भोक्ता नाश्रोष्यदुपलादिवत् ।।१२।।

कोऽसौ विवक्षितो विवेकस्तमाह—भोक्तृत्वमिति । साक्षित्वमिति यावत् । भोज्यत्वं साक्ष्यत्वम् । अनस्य प्राणस्येत्यर्थः ।।१०२।।

अस्त्वीदृग्विवेको जाग्रत्येव किमिति सुप्तपुरुषगतिर्नेत्याह—संकीर्णत्वादिति । विवक्षितकार्यगौरवद्योतनार्थमादरादित्युक्तम् ।।१०३।।

यत्तु स्पष्टेत्यादि तत्राऽऽह—तस्मादिति । यद्यपीत्यादि तच्छब्दार्थविवरणम् । तस्माद्युक्तं सुप्तपुरुषगमनमिति शेषः ।।१०४।।

स्वापेऽपि सांकर्यसाम्यात्कुतो विवेकधीस्तत्राऽऽह—आत्मन इति । भोक्तृकरणसहिताधिष्ठातृदेवतानां सुप्तावुपसंहारादसांकर्यात्तत्र विवेकसौकर्यमित्यर्थः ।।१०५।।

सुप्तावुक्तोपसंहारे हेतुमाह—जाग्रदिति । तदा सुप्तावित्येतत् । आत्मन्यज्ञाते परस्मिन्नित्यर्थः ।।१०६।।

गार्ग्येष्टात्मनोऽपि तत्रोपसंहारान्न भोगप्रसक्तिरित्याशङ्क्याऽऽह—प्राण इति । तत्र मानमाह—प्राणेनेति । प्राणेन रक्षन्नवरं कुलायमित्युत्तरत्र तस्य स्वापेऽनुपसंहारो वक्ष्यत इत्यर्थः ।।१०७।।

तत्र श्रुत्यन्तरमाह—प्राणेति । "प्राणाग्नय एवैतस्मिन्पुरे जाग्रती"ति श्रुतिरिममेवार्थमाहेत्यर्थः । "न व्यथते न रिष्यति सैषाऽनस्तमिता देवते"त्यादिवाक्यादपि स्वापे तस्य नोपसंहृतिरित्याह—तथेति । उक्तमानफलमुपसंहरति—अश्रान्त इति । अत्रेति देहोक्तिः ।।१०८

प्राणस्य सदा जागरे लब्धमर्थमाह—यथेति । स्वप्नेऽपीत्यपिना स्वापः समुच्चीयते ।।१०९।।

प्राणस्यासुप्तस्यैव स्वापे संबोधनशब्दाश्रवणान्न भोक्तृतेत्ययुक्तं प्राणचन्द्रमसोर्भेदात्तस्य चन्द्रनामभिः संबोधनादप्रतिबोधो नाचेतनत्वादित्याशङ्क्याऽऽह—प्राणस्येति । त्र्यन्नात्माविष्कृता"वथैतस्य प्राणस्याऽऽपः शरीरं ज्योतीरूपमसौ चन्द्र" इत्यादावित्यर्थः ।।११०।।

अथापि कुतश्चन्द्रनामभिरेव संबोधनं प्राणस्य सर्वात्मत्वादादित्यादिनामभिरपि तत्संभवादित्याशङ्क्याऽऽह—बृहन्नितीति । इहेति संबोधनवाक्योक्तिः । अतस्तैरपि संबोधितवानिति शेषः । यद्वा संबोध्यमानप्राणस्य सूत्रैक्यात्तत्सामर्थ्यादनुक्तसूत्रावयवादित्यादिनाम्नां चन्द्रनामवद्ग्रहात्तैरपि संबोधितवानित्याह—सामर्थ्यादिति ।।१११।।

चन्द्रनामभिः संबोधनं प्रसाध्य तच्छब्दाश्रवणात्तदभोक्तृत्वं यथा जाग्रदवस्थायामित्यत्रोक्तमुपसंहरति—यदीति । स चेन्नाश्रोष्यन्न भोक्ता स्यादिति योजना ।।११२।।

ननु सुप्तेऽपि पुंस्यस्मिन्बोधितः सन्स्वनामभिः । भोक्तैव भोत्स्यते शब्दं न त्वभोक्ता परो जडः ॥११३॥
नैवातोऽपि विवेकः स्यादुत्थितः कोऽनयोर्द्वयोः ॥११४॥
नैवं गार्गीयपक्षस्य विशेषावधृतेः सदा । अजातशत्र्वभिप्रेतब्रह्मणः प्राक्प्रमाणतः ॥११५॥
योऽनस्तमित एकोऽत्र वागाद्यस्तमयेऽमृतः । इन्द्रोऽसपत्नोऽब्देहश्च नामरूपसमावृतः ॥११६॥
अध्यात्माद्यखिलं विश्वं संव्याप्य समवस्थितः । ओतं प्रोतं जगद्यस्मिन्नरनाभिनिदर्शनात् ॥११७॥
कुर्वाणस्तुमुलं शब्दं स्वव्यापारमशेषतः । कुर्वाण एव स्वप्नेऽपि प्राण आस्ते प्रबोधवत् ॥११८॥
न च भोक्त्रन्तरं प्राणाद्गार्ग्येणेहाभ्युपेयते । तत्काले भिन्नकाले वा प्राणादन्यस्य भोज्यतः ॥११९॥
तस्मादवश्यं बोद्धव्यं बोध्यं साक्षादुपस्थितम् । प्राणेन बोद्धृरूपत्वाद्दाह्यं दग्धा यथा दहेत् ॥१२०॥
न चासौ बोध्यमानोऽपि प्रत्यबुध्यत नाम तत् । प्राणोऽभोक्ता ततः सिद्धः स्वनामाप्रतिबोधनात् ॥१२१॥

प्राणस्य स्वनामाग्रहणे कारणविकल्पाः

स्वाख्याविशेषसंबन्धाग्रहणाच्चेन्न बुद्धवान् । अग्रहासंभवान्नैवं सर्वज्ञा देवता यत ॥१२२॥

संबोधनशब्दाश्रुतेरभोक्तृतेत्यत्र शङ्कते—नन्विति । यद्यपि जागरं हित्वा सुप्ते पुंसि विवेकार्थं तयोरुपगतिरुचिता तत्र च भोक्तैव संबोधितः स्वनामभिस्तच्छब्दं श्रोष्यति नाभोक्ता तस्याचेतनत्वात्तथाऽपि नेष्टविवेकधीरित्यर्थः ॥११३॥

कथमिति तत्राऽऽह—नैवेति । दृष्टादपि विशेषान्न भोक्तृभोग्यविवेकः काश्यगार्ग्येष्टात्मनोरुत्थितिसंशयादित्यर्थः । संशयं निरस्यन्परिहरति—नैवमिति । गार्ग्येष्टप्राणस्य काश्येष्टात्मनः सकाशाद्यो विशेषः सदा व्यापृतत्वं तस्य प्रबोधात्प्रागपि प्रमितत्वात्प्राणोत्थाने शब्दाश्रवणायोगात्पाणिपेषानुपपत्तेः स न भोक्तेत्यर्थः ॥११४–११५॥

विशेषानवधारणमेव दर्शयति—योऽनस्तमित इति । अत्र सुप्ताविति यावत् । तत्र हेतुः—अमृत इति । विशेषान्तरमाह—इन्द्र इति । प्रतिपक्षाभावादैश्वर्यं काश्येष्टेऽपि स्यादित्याशङ्क्य विशेषान्तरमाह—अब्देहश्चेति । प्राणस्याऽऽपः शरीरमित्युक्तेस्तस्य तद्देहत्ववत्काश्याभीष्टात्मनो न तद्देहत्वं प्रमाणाभावादित्यर्थः । नामरूपाभ्यां सत्याभ्यां प्राणश्छन्नो नैवमात्मा सत्यस्य सत्यमितिश्रुतेरित्यपरं विशेषमाह—नामेति ॥११६॥

त्रिविधं जगद्व्यापित्वं प्राणस्योक्तं स्मारयति—अध्यात्मादीति । तत्र मानं सूचयति—ओतमिति । स विश्वं संव्याप्य स्थित इति संबन्धः ॥११७॥

यथोक्तं रूपमात्मन्यपि सुसंपादमिति ततो न विशेषाधिगतिरित्याशङ्क्य स स्वव्यापारारूढ इत्यादिभाष्यार्थमाह—कुर्वाण इति । जागरादपि स्वापे प्राणप्रयुक्तशब्दस्याऽऽधिक्यदर्शनात्तुमुलमिति विशेषणम् । न केवलं शब्दमेव कुरुते किंतु सर्वमेव व्यापारमित्याह—स्वव्यापारमिति । योऽनस्तमित इति यच्छब्देनोपक्रमादत्र तच्छब्दो द्रष्टव्यः । स्वप्नेऽपीत्यपिः स्वापसंग्रहार्थः ॥११८॥

प्राणस्योक्तविशेषणवतः स्वापेऽवस्थानेऽपि तस्य तदा भोगाभावस्तत्र भोक्त्रन्तरोपगमादित्याशङ्क्याऽऽह—न चेति । इहेति प्रकृतं स्वापग्रहणम् । तत्र हेतुः—तत्काल इति ॥११९॥

तस्यैव भोक्तृत्वे फलितमाह—तस्मादिति । उपस्थितः संनिकर्षस्तस्याप्रतिबन्धः साक्षादित्युक्तम् । प्राप्ते विषये शक्तस्य कार्यकरत्वे दृष्टान्तमाह—दाह्यमिति ॥१२०॥

अस्तु तस्य प्राप्तशब्दश्रुतिस्तत्राऽऽह—न चेति । परिशेषसिद्धमर्थमाह—प्राण इति । अभोक्तेति छेदः ॥१२१॥

तस्य स्वनामाग्रहणं संबन्धाग्रहकृतं नानात्मत्वकृतमित्याशङ्कते—स्वाख्येति । देवताया न संबन्धाग्रहः सर्वज्ञत्वादित्याह—अग्रहेति ॥१२२॥

त्वत्पक्षेऽप्यग्रहो दोषस्तुल्यश्चेदिति चोद्यते । नैवं कृत्स्नाभिमानित्वादेकदेशानहंकृतेः ।।२३।।
अङ्गुल्याद्यभिधानोक्तौ न हि तद्वान्प्रबुध्यते । कृत्स्नदेहाभिमान्येवं नैकदेहाभिमानभुक् ।।२४।।
प्राणस्य तु समाप्तत्वात्समस्तव्यस्तवस्तुषु । नाऽऽत्मवत्स्यादसंबोधस्तस्य सर्वाभिमानतः ।।२५।।
बोधाबोधौ चितेर्न स्तः कूटस्थज्ञप्तिमात्रतः । परायत्तबोधो ना ह्यप्पात्रोत्थाद्रवेरिव ।।२६।।

प्राणस्याभोक्तृत्वनिर्धारणम्

स्वसंज्ञयाऽप्यसंबोधो यथा दृष्टस्तदात्मनः । भोक्तृत्वे सत्यपि तथा प्राणेऽप्यप्रतिबोधनम् ।।२७।।
सुप्तासुप्तत्वसंभेदविशेषन्यायसंभवात् । नैव सुप्तग्रहो युक्तो न त्वसुप्तस्य युज्यते ।।२८।।
श्रोत्रादेर्गुणभूतत्वात्प्रधानं प्रति सर्वदा । तस्मिञ्जाग्रति जार्गति सुप्ते स्वपिति तद्वशात् ।।२९।।
नेन्द्रियाणां भवेत्स्वापो यदि प्राणप्रधानता । नामात्याः शेरते यस्माद्राज्ञि स्वामिनि जाग्रति ।।३०।।
अप्रसिद्धार्थसंज्ञाभिरुक्तेश्चेदप्रबोधनम् । देवतात्मनिषेधार्थपरत्वात्तद्ग्रहोऽर्थवान् ।।३१।।
प्राणस्याभोक्तृतासिद्धिः स्वनामाग्रहणादपि । देवताप्रतिषेधार्थं बोध्यते चन्द्रनामभिः ।।३२।।

इन्द्रियाणामनात्मत्वम्

स्मृतिज्ञानेषणादीनां संधानानुपपत्तितः । करणानामभोक्तृत्वं देहांशानामिवेष्यते ।।३३।।

संबोधननामाग्रहस्तत्कृतानात्मत्वदोषश्च तुल्यस्त्वदिष्टात्मनोऽपीति शङ्कते—त्वत्पक्षेऽपीति । काश्येष्टात्मनः सर्वस्मिन्कार्यकरणसमुदायेऽभिमानित्वात्तदेकदेशे प्राणमात्रे तदभावात्तन्नामाग्रहणं न त्वभोक्तृत्वादिति परिहरति—नैवमिति ।।१२३।।

एतदेव दृष्टान्तेन साधयति—अङ्गुल्यादीति । यथा हस्तः पादोऽङ्गुलिरित्यादिनामोक्तौ मैत्रो नोत्तिष्ठति सर्वदेहाभिमानित्वेन तन्मात्रानभिमानित्वादेवं काश्येष्टात्मनः सर्वकार्यकरणाभिमानित्वादङ्गुलिस्थानीयप्राणमात्रे तदभावात्तन्नामाग्रहणं न त्वनात्मत्वादित्यर्थः ।।१२४।।

चन्द्रस्यापि प्राणैकदेशत्वात्तन्नामभिः संबोधने कृत्स्नाभिमानी स नोत्तिष्ठत्यत्राप्यङ्गुल्यादिदृष्टान्तोपपत्तेरित्याशङ्क्याऽऽह—प्राणस्येति । गोत्ववत्तस्य सर्ववस्तुषु प्रत्येकं समाप्तेरहमिति सर्वत्राभिमानसंभवादात्मनो वैषम्याच्चन्द्रनामोक्तावप्यग्रहणमयुक्तमित्यर्थः ।।१२५।।

प्राणवच्चिदात्मनोऽपि पूर्णतया सर्वाभिमानसिद्धेर्बोधाबोधौ तुल्यावित्याशङ्क्याऽऽह—बोधेति । कूटस्थज्ञप्तिमात्रत्वे कथं ज्ञातृत्वं तत्राऽऽह—परेति । नेत्यमुख्यात्मोक्तिः । स चक्षुराद्यधीनबोधवत्त्वान्न मुख्यचिदात्मेत्यर्थः । तस्य ज्ञातृत्वप्रसिद्ध्यर्थो हिशब्दस्तुशब्दो वा । स एवाऽऽत्मा मुख्यो नान्योऽस्तीत्याशङ्क्याऽऽह—अप्पात्रेति । जलस्थादित्यान्मुख्यादित्यवच्चैतन्याभासात्कूटस्थबोधोऽन्योऽस्तीत्यर्थः ।।१२६।।

प्रासङ्गिकं त्यक्त्वा प्रकृते चोदयति—स्वसंज्ञयेति ।।१२७।।

काश्येष्टात्मनः सुप्तत्वादितरस्य चासुप्तत्वात्सम्यग्भेदरूपविशेषात्मकन्यायसंभवान्न सुप्तस्य संबोधननामग्रह इतरस्य तु तदग्रहो न युक्त इत्याह—सुप्तेति ।।१२८।।

प्राणस्यापि संहृतकरणत्वात्स्वनामाग्रहो नाभोक्तृत्वादित्याशङ्क्याऽऽह—श्रोत्रादेरिति । तद्वशाद्गुणस्य प्रधानानुवर्तित्वादित्यर्थः ।।१२९।।

प्राणस्य भोक्तृत्वे करणोपसंहारासंभवं दृष्टान्तेन स्फोरयति—नेत्यादिना ।।१३०।।

प्राणनामत्वेनाप्रसिद्धनामभिः संबोधनात्तदनुत्थानं नानात्मत्वादिति चोदयति—अप्रसिद्धेति । चन्द्रदेवताऽस्मिन्देहे भोक्त्री कर्त्री चाऽऽत्मेति गार्ग्याशयनिषेधाख्येऽर्थे देवतानामग्रहस्य तात्पर्यात्तद्ग्रहोऽर्थवानित्याह—देवतेति ।।१३१।।

केवलेत्यादिभाष्यं व्याचक्षाणो यथोक्तं विवृणोति—प्राणस्येति ।।१३२।।

तथाऽपीन्द्रियाणामात्मतेति केचित्तेषां प्रत्येकं वाऽऽत्मत्वं तत्समुदायस्य वेति विकल्प्याऽऽद्यं दूषयति—

अचैतन्यात्तथोक्तस्य कुतो भोक्तृत्वसंभवः । चिदन्यस्य च भोज्यत्वान्नान्यस्यातोऽस्ति भोक्तृता ।।३४।।
दण्डापूपिकनीत्यैव करणानामभोक्तृता । न च प्राणातिरेकेण देवताऽन्योपपद्यते ।।३५।।
ननु तद्व्यतिरेकेण प्रागादित्यादिरीरितः । देवताविषयो भेदः स कथं निनिवार्यते ।।३६।।
नैवं तस्य समस्तस्य प्राण एकत्वहेतुतः । अरनाभ्यादिदृष्टान्ताद्वायुप्राधान्यतस्तथा ।।३७।।

संघातस्य भोक्तृत्वशङ्का तन्निरासश्च

संघात एव भोक्ताऽस्तु तस्य प्रत्यक्षसंगतेः । न तु तद्व्यतिरिक्तस्य भोक्तृता मित्यसंभवात् ।।३८।।
नाचेतनस्य भोक्तृत्वं कथंचिदवकल्पते । चिदन्यस्य च भोग्यत्वात्कम्बलौदनतोयवत् ।।३९।।
न चापि चिद्विशिष्टत्वं प्रत्यक्षेणोपलभ्यते । चित्संबन्धोपलब्ध्यर्थं तज्ज्ञाता कः प्रकल्प्यते ।।४०।।
नेह चिद्व्यतिरेकेण स्वार्थं किंचिदपीष्यते । नापि स्वार्थातिरेकेण प्रमाणफलभाग्भवेत् ।।४१।।
न ह्यचित्कं प्रमेयं सच्चिन्मितिंकिंचिदपीक्ष्यते । न चानुभूतिः प्रात्यक्ष्यमन्यतोऽपेक्षते जडात् ।।४२।।

स्मृतीति । न तावदिन्द्रियाणां प्रत्येकं हस्तादिवद्भोक्तृत्वं स्मृत्यादीनां यो रूपमद्राक्षं स शब्दं शृणोमीत्यादिप्रतिसंधानस्य चानुपपत्तेरन्यस्यान्यदृष्टे तदयोगादित्यर्थः ।।१३३।।

द्वितीयं प्रत्याह—अचैतन्यादिति । यथा समुदायः समुदायिभ्यो भेदाभेदाभ्यामयुक्तस्तथा चैतन्याभिन्नत्वेनोक्तस्याचेतनस्य करणवर्गस्य न भोक्तृता जडत्वाद्घटवदित्यर्थः । पक्षद्वयनिरासे साधारणीमुपपत्तिमाह—चिदन्यस्येति । अतश्चितः सकाशादिति यावत् ।।१३४।।

करणानामभोक्तृत्वे हेत्वन्तरमाह—दण्डेति । दण्डेऽपूपलग्ने गृह्यमाणे बलादपूपोऽपि गृह्यते तया नीत्या प्राणस्याऽऽत्मत्वनिरासे तद्ग्रस्तानां करणानामप्यनात्मताऽऽर्थिकीत्यर्थः । प्राणकरणचन्द्रदेवतानामप्यभोक्तृत्वेऽपि देवतान्तरमत्र भोक्तृ स्यादित्याशङ्क्याऽऽह—न चेति । प्राणे सर्वदेवतान्तर्भावस्याभिधानस्य मानत्वादित्यर्थः ।।१३५।।

तत्रोपक्रमविरोधं शङ्कते—नन्विति ।।१३६।।

समाधत्ते—नैवमिति । प्राणे देवताभेदस्यैक्ये हेतुमाह—अरेति । आदिपदे "नैष उ ह्येव सर्वे देवाः" "कतम एको देव" इत्यादि गृह्यते । अग्न्याद्यपेक्षया वायुप्राधान्याच्च तदात्मप्राणातिरेकेण नास्ति देवतेत्याह—वाय्विति । तच्च संवर्गविद्यायां द्रष्टव्यम् ।।१३७।।

प्राणादीनामनात्मत्वमुक्त्वा स्थूलदेहस्य तद्वक्तुं पूर्वपक्षयति—संघात इति । भूतचतुष्टयसमाहारः स्थूलो देह इति यावत् । गौरोऽहं पश्यामीत्याद्यध्यक्षेण रूपादौ तस्य ज्ञातृत्वेन संबन्धदृष्टेरिति हेत्वर्थः । मित्यसंभवादित्यतिरिक्तात्मनोऽप्रत्यक्षत्वान्मान्तरस्य चानिष्टेरित्यर्थः ।।१३८।।

दूषयति—नेत्यादिना । अचेतनत्वं साधयति—चिदिति ।।१३९।।

किंच चिद्विशिष्टो देहो भोक्तेति ते स्थितिस्तद्वैशिष्ट्ये चाध्यक्षमन्यद्वा मानं ? नाऽऽद्यश्चितेस्तदयोग्यत्वात् । नेतरोऽनुपगमादित्याह—न चेति । चिद्विशिष्टस्य मेयत्वेऽपि ज्ञाता देहोऽन्यो वा ? नाऽऽद्यः एकस्य ज्ञातृज्ञेयत्वायोगान्नेतरो ज्ञात्रन्तरस्य तेऽनिष्टेरित्याह—चिदिति ।।१४०।।

तस्य न ज्ञात्रपेक्षा स्वतःसिद्धेरित्याशङ्क्याऽऽह—नेहेति । लोकशास्त्रयोरिहेति ग्रहणम् । किंच चितोऽन्यस्यास्वप्रकाशत्वाद्घटवन्नाऽऽत्मतेत्याह—नापीति । प्रमाणं प्रमितिकरणं तत्फलं ज्ञानं तदाश्रयो ज्ञाता स्वप्रकाशचितो भेदेन नास्तीत्यर्थः ।।१४१।।

किंच चित्संबन्धे ज्ञेये चितोऽपि ज्ञेयत्वात्तज्ज्ञात्रपेक्षायां चिदन्तरमचिदेव वा तत्स्यात् ? नाऽऽद्यश्चिद्भेदासिद्धेः यदि द्वितीयस्तत्राऽऽह—न हीति । चितं मिनोतीति चिन्मिद्यज्जडं तन्मेयं यथा घटोऽतो न तच्चितोऽचितो वा ज्ञातृ स्यादित्यर्थः । किंच चित्संबन्धधीकाले चिद्ग्राहकमपि मानं वाच्यं तच्च जडमजडं वेति विकल्प्य दोषमाह—न चेति । जडादजडादिति वा छेदः स्वयमजडप्रकाशत्वादित्यर्थः ।।१४२।।

देहात्प्रत्यक्षनिष्पत्तौ न च प्रत्यक्षमिष्यते । लिङ्गस्य चाप्रमाणत्वात्कुतः प्रत्यक्षमानिता ॥४३॥
तथाऽर्थान्तरसंबन्धे प्रत्यक्षे देहनिश्रिते । अनुसंधानसंसिद्धौ न किंचिन्मानमिष्यते ॥४४॥
वागभिव्याहृतिश्चेयं लिङ्गाप्रामाण्यवादिनः । अप्रात्यक्ष्यात्परज्ञप्तिसंगतेः स्यादनर्थिका ॥४५॥
स्वात्मदृष्टचनुरोधेऽपि मौढ्यमेव प्रसज्यते । व्युत्पत्तेः साधुलोकस्य न कश्चिदपि दित्सति ॥४६॥
अधर्मादिभयाभावाद्धन्युरेनमशङ्किताः । आदद्युश्च बलाद्वित्तमेतद्व्युत्पत्तितः फलम् ॥४७॥

देहस्यानात्मत्वे हेत्वन्तरम्

आपेषणे विशेषस्य दृष्टत्वाद्देहसंहृतिः । न भोक्त्री सुखदुःखादिफलानां स्यात्कदाचन ॥४८॥
यदि संघातमात्रस्य भोक्तृत्वमिह कल्प्यते । संघातस्याविशिष्टत्वान्नातिशीतिर्भवेत्सदा ॥४९॥
ईषत्संस्पृष्टमात्रस्य बलाच्चाऽऽपेषणात्तथा । देहादिभिन्नजातीयो भोक्ता यस्य च वादिनः ॥५०॥

किंच चिद्विशिष्टदेहकर्तृकमध्यक्षमेकमेव मानमिति ते मतं तत्राध्यक्षमन्यद्वा मानं ? नाऽऽद्यस्तस्य रूपादेस्तदाधाराच्चेतराविषयत्वादित्याह—देहादिति । द्वितीयं दूषयति—लिङ्गस्येति ॥१४३॥

किंच ते मयेदं विदितमित्यनुसंधानासिद्धिः साधकाभावादित्याह—तथेति । यथा देहस्य चिद्वैशिष्ट्ये प्रत्यक्षस्य तत्कर्तृकत्वे तस्यैव मानत्वे च मानाभावस्तथाऽर्थान्तरेण शब्दादिना विषयविषयिभावसंबन्धवति प्रत्यक्षे देहाश्रिते सति मयैवं विदितमित्यादि यदनुसंधानं तत्सिद्धौ नाध्यक्षं मानं तस्य शब्दादिविषयत्वान्नान्यदनङ्गीकारादतो मानाभावादनुसंधानासिद्धेस्तन्निबन्धनस्थायिवस्त्वसिद्धिरित्यर्थः ॥१४४॥

यत्त्वध्यक्षमेकमेव मानं तन्न,अनुमानप्रामाण्यस्याऽऽवश्यकत्वादित्याह—वागिति । गामानयेत्यादिवाक्योक्तेस्ते वैयर्थ्यं; सा हि स्वार्था परार्था वा ? नाऽऽद्यः स्वोक्त्या स्वस्यापूर्वानधिगतेर्नेतरः, स्ववाक्यात्परस्य तदर्थज्ञानाश्रयताया अप्रत्यक्षत्वादन्योक्त्या मम ज्ञानवत्मदुक्त्या तस्यापि तद्भविष्यतीत्यनुमानस्याऽऽवश्यकत्वादन्यथोक्तिवैयर्थ्यं स्यादित्यर्थः ॥१४५॥

किंच ते स्वशास्त्रप्रणयनमेवायुक्तमनर्थकरत्वादित्याह—स्वात्मेति । स्वात्मनो दृष्टिर्दर्शनं शास्त्रं तस्यानुसारेऽपि मौढ्यमेव स्यात् तदर्थो हि न स्वर्गापवर्गौ नास्त्यात्मा परलोकीत्यादिस्तज्ज्ञानान्न कश्चित्किंचिदपि साधवे दातुमिच्छति । किंतु तस्य स्वमादातुमतस्त्वच्छास्त्रज्ञो यागादिबहिर्मुखो नास्तिको नारकी स्यादित्यर्थः ॥१४६॥

किंच त्वच्छास्त्रज्ञानादधर्मादिनिमित्तभयाभावात्परहिंसाद्यर्थं शास्त्रं प्रणयन्नुन्मत्तः स्यादित्याह—अधर्मादीति । एनं साधुलोकमिति यावत् । आदद्युराददीरन्नित्यर्थः । न च धर्माधर्मयोः स्वर्गनरकयोश्चासत्त्वपरं शास्त्रं स्वभावप्रयुक्तं प्रतिनियतात्मविषयं नोन्मत्तोक्तितुल्यमिति युक्तं, परिदृश्यमानफलवैचित्र्यस्य हेतुवैचित्र्यापेक्षत्वात्स्वभावतस्तदुपपत्तेर्दुर्वचत्वात् नहि सुखादिवैचित्र्यादेव तद्वैचित्र्यं कर्मकर्तृत्वस्य भेदापेक्षत्वात् निर्निमित्तं तद्भावश्चेदनुभवो विरुध्येत्तथाच यथोक्तं शास्त्रं प्रणयन्नुन्मत्तपक्षे निक्षिप्तः सन्नुपेक्ष्यः स्यादिति भावः ॥१४७॥

देहस्यानात्मत्वे हेत्वन्तरमाह—आपेषण इति । आदिपदं तदवान्तरभेदसंग्रहार्थम् । स्थूलदेहाख्या भूतचतुष्टयसंहतिरिति यावत् ॥१४८॥

उक्तं व्यतिरेकद्वारा व्यनक्ति—यदीति । इहेति भोज्योक्तिः । संघातस्य भोक्तृत्वे तस्य पेषणापेषणयोरविशेषान्नोत्थाने विशेषः स्यान्न च तस्मिन्नपि ताभ्यां विशेषस्तदभावेऽपि प्रागुत्थाने हेत्वदृष्टेर्न च पेषणजन्यविशेषस्यैवोत्थापकत्वं नियमेन प्रागुत्थानप्राप्तेरिति भावः ॥१४९॥

सदा संघातस्याविशिष्टत्वं स्पष्टयति—ईषदिति । यथा मृदुस्पर्शस्पृष्टमात्रस्य संघातस्याविशेषस्तथा बलादापेषणेऽपि तस्याविशेषात्प्रबोधे नातिशयः स्यादित्यर्थः । त्वत्पक्षेऽपि कथं पेषणापेषणयोरुत्थाने विशेष इत्या-

१. कर्मकर्तृत्वस्य कर्मत्वकर्तृत्वयोः भेदापेक्षत्वात् यत् कर्म तत् न तद्विषये कर्तृ स्वभावत्वे स्वयमेव स्वहेतुरित्यापन्नं तन्न युक्तमित्यर्थः ।

धर्मादिहेतुसंबन्धबहुत्वात्स्यात्समञ्जसम् । पेषणापेषणकृतवेदनायां भवेद्भिदा ॥५१॥
सुखदुःखादिहेतूनामुत्तमाधममध्यतः । तत्प्रबोधविशेषोऽयं युक्त एव भवेत्तदा ॥५२॥
अस्ति चायं विशेषोऽत्र यत्संस्पर्शनमात्रतः । अबुध्यमानः संसुप्त आपिष्याऽऽपिष्य बोधितः ॥५३॥
अत आपेषणाद्योऽसावुत्थितः करणैः सह । राजेव सचिवैः सार्धं स भोक्तेहेति गम्यताम् ॥५४॥
मृतकल्पमिमं देहं स्वचित्ता[1]ऽऽवेशयन्निव । ज्वलन्निव समुत्तस्थौ यः स भोक्तेति गम्यताम् ॥५५॥
क्रोधहर्षभयोद्वेगज्ञानधर्मैर्विशेषयन् । शरीरं यः समुत्तस्थौ स भोक्तेत्यवसीयताम् ॥५६॥

प्राणस्यानात्मत्वे हेत्वन्तरम्

अपि प्राणस्य पारार्थ्यं संहतत्वाद्गृहादिवत् । ततश्च भोग्यरूपस्य भोक्तृत्वं नोपपद्यते ॥५७॥
देहस्यान्तर्गतः प्राणः स्थूणावद्देहभृत्सदा । संहन्यते शरीरेण यथा वायुस्तथैव सः ॥५८॥
यत एवमतः प्राणो गृहादिवदिहेष्यते । देहाच्च देहधर्मेभ्यो विधर्मात्माऽव[2]भुक्ततः ॥५९॥
स्वात्मांशांशिसजातीयविविक्तफलसद्मवत् । संहतत्वात्तथा प्राणोऽसंहतात्मोपभोगकृत् ॥६०॥

आत्मनःशेषित्वेन संहतत्वशंकापरिहारः

स्वजन्मोपचयग्लानिनाशाख्याकृतिजन्मदि— । ग्धर्मानपेक्षसंलब्धसत्त्वादिस्वार्थरूपकः ॥६१॥

शङ्कयाऽऽह—देहादीति । आदिपदं तदवान्तरभेदसंग्रहार्थम् । धर्मादिहेतूनामात्मसंबन्धस्य तत्कृतदेहसंबन्धस्य च बहुत्वात्तद्धेतुकमुत्थानादि मत्पक्षे युक्तमित्यर्थः । उत्थानादेः सामञ्जस्यमेव साधयति—पेषणेति ॥१५०-१५१॥

यथोक्तवेदनायाः समुत्थानहेतोर्विशेषे हेतुमाह—सुखेति । सुखं दुःखं संबुद्धिरित्यादीनां समुत्थानहेतूनां हेतवो दृष्टादृष्टरूपा धर्मादयस्तत्तारतम्याद्वेदनाभिदेत्यर्थः । तद्भेदे फलितमाह—तत्प्रबोधेति । संघातातिरिक्तमात्मानं तच्छब्दोऽधिकरोति । तदा प्रागुक्तनीत्या प्रबोधहेतुविशेषे सतीति यावत् ॥१५२॥

स्वपक्षे प्रबोधे विशेषसंभावनामुक्त्वा निश्चयं दर्शयति—अस्ति चेति । सुप्तोत्थानमत्रेत्युक्तम् ॥१५३॥

विशेषफलमाह—अत इति । इहेति देहोक्तिः ॥१५४॥

ज्वलन्निवेत्यादिभाष्यार्थमाह—मृतेति । न हि देहे चिद्याप्तिमन्तरेण वस्तुतश्चिदावेशोऽस्तीति वक्तुमिवेत्युक्तम् । न हि ज्वलनमग्नेरिव चिदात्मनोऽस्ति किंतु तथा स्फुरणं गृहीत्वा ज्वलन्निवेत्युक्तम् ॥१५५॥

पिण्डं चेत्यादि व्याचष्टे—क्रोधेति ॥१५६॥

देहादेरनात्मत्वमुक्त्वा प्राणस्यानात्मत्वे हेत्वन्तरमाह—अपीति । पारार्थ्यफलमाह—ततश्चेति ॥१५७॥

कथं संहतत्वं तदाह—देहस्येति । वायुःघ्राणप्राणो वा मुख्यो वा ॥१५८॥

संहतत्वं परामृश्य पारार्थ्यं फलितमाह—यत इति । इहेति देहोक्तिः । इष्यते परार्थ इति शेषः । तत्पारार्थ्ये किमायातं तदाह—देहाच्चेति । देहादेर्भोज्यत्वादात्मनश्च भोक्तृत्वाद्विवेक इत्यर्थः । वैधर्म्ये हेतुः—अवभुगिति । ततःशब्दः संहतत्वफलपरामर्शी ॥१५९॥

प्राणस्य गृहादिवत्पारार्थ्येऽपि संहतशेषित्वं गृहादेस्तद्दृष्टेरित्याशङ्कयाऽऽह—स्वात्मेति । स्वात्मनो गृहादेरंशः स्तम्भादिरंशी स्वयमेव गृहादिः सजातीयमन्यद्गृहादि तेभ्यो विविक्तस्यासंहतस्य भोग्यं गृहादि तथा प्राणोऽपि संहतत्वात्स्वासंहतस्य भोग्य इत्यर्थः ॥१६०॥

तथाऽपि चैत्रवदात्मनोऽपि शेषित्वेन संहतत्वमाशङ्कयाऽऽह—स्वजन्मेति । स्वस्य गृहस्य जन्म चोपचयश्च ग्लानिश्च नाशश्चाऽऽख्या चाऽऽकृतिश्च तस्या जन्म च दिक्चेत्येते धर्मास्ताननपेक्ष्यैव लब्धं सत्त्वं स्फुरणं च येन स

१. स्वचितावेशयन् = स्वात्मकचैतन्येनावेशयन् । स्वचित्तावेशयन्-इति मूलपाठः तत्पक्षे स्वगता या चित्ता चैतन्यं तेनावेशयन् इत्यर्थः ।

२. अवभुक् ततः शरीरेण संहतत्वात्-अवभुक् अवमतं भुङ्क्ते ।

तद्गोचरैकसंद्रष्टृविज्ञात्रर्थं समीक्ष्य हि । प्राणस्य तद्गुणानां च तथार्थत्वं प्रतीयताम् ॥६२॥

अद्वितीये अन्वयव्यतिरेकाभावशंका

ननु वेदान्तसिद्धान्ते न वस्त्वन्तरमिष्यते । सांख्यराद्धान्तवत्किंचित्प्रत्यगात्मैकवस्तुनः ॥६३॥
ऐकात्म्याविद्यया सर्वं प्रतीचि परिकल्पितम् । प्राणाद्यनात्मजातं यद्रूपं नाम च कर्म च ॥६४॥
कल्पिताकल्पितं सर्वं यदाऽऽत्मैवाभ्युपेयते । अन्वयव्यतिरेकोक्तिस्तदैक्यान्नेह युज्यते ॥६५॥
नान्वयो व्यतिरेको वा कल्पितस्यानृतत्वतः । अकल्पितस्य चैकत्वान्नितरां न प्रसिध्यति ॥६६॥
पुंव्युत्पत्तिप्रधानत्वादन्वयादेरदोषता । न त्वन्वयादिनैवेह वस्तुतत्त्वस्य संस्थितिः ॥६७॥
अविद्याकल्पितेऽप्यस्मिन्नात्मप्रत्ययमानभाक् । भोक्तेह गम्यते लोके न त्वनात्ममितिप्रमः[1] ॥६८॥

मिथ्याभूतमन्वयादि त्वमर्थशोधनाय अपेक्ष्यते

अतोऽनूद्य यथासिद्धमन्वयव्यतिरेकतः । भोक्तृभोग्यविवेकेन श्रुत्यैकात्म्यं प्रबोध्यते ॥६९॥

स्वतन्त्रस्वभावः स च तेषु गृहतद्धर्मेषु गोचरेष्वेको निरपेक्षो द्रष्टा च विज्ञाता च तदर्थं वेश्म दृष्ट्वा प्राणतद्धर्माननपेक्षलब्धसत्तास्फुरणो यस्तस्यैव द्रष्टृविज्ञात्रादिलक्षणस्तदर्थत्वं प्राणादेर्ज्ञेयमित्यर्थः। हिशब्दो हेतोरिव दृष्टान्तस्यापि साधकत्वद्योतनार्थः। विमतं स्वस्वधर्मापरामृष्टार्थशेषं संहतत्वात्संमतवदित्यनुमानादात्मनोऽर्थान्तरं प्राणादि सिध्यतीति भावः ॥१६१-१६२॥

तस्याऽऽत्मनो भेदकावन्वयव्यतिरेकावाक्षेप्तुमाक्षेप्ता सिद्धान्तस्वरूपमाह—नन्विति। वैधर्म्यदृष्टान्तमाह—सांख्येति ॥१६३॥

न वस्त्वन्तराभावः सत्त्वात्प्राणादेरित्याशङ्क्याऽऽह—ऐकात्म्येति ॥१६४॥

कल्पिताकल्पितभावेन वस्तुभेदशङ्कां निराकुर्वन्फलितमाह—कल्पितेति। कल्पितत्वेन लोकसिद्धं स्वाप्नाद्यकल्पितत्वेनेष्टमाकाशादि तत्सर्वं जाड्यादिना स्वतोऽसत्त्वादात्मैव यदेष्टं तदा प्रतीच्यैकरस्याद्भेदापेक्षयाऽन्वयाद्यसिद्धिरित्यर्थः ॥१६५॥

अकल्पितवस्त्वन्तराभावेऽपि कल्पितं तदस्तीत्याशङ्क्यान्वयादि कल्पितमकल्पितं वा कल्पिताकल्पितं वाऽऽश्रयतीति विकल्प्याऽऽद्यं दूषयति—नेत्यादिना। द्वितीयं प्रत्याह—अकल्पितस्येति। अन्वयादेर्द्वयापेक्षत्वात्तस्य चाद्वयत्वादविषयत्वाच्च तत्र तदसिद्धिरित्यर्थः। चकारस्तृतीयनिरासार्थः। कल्पिताकल्पितविषयत्वे द्वैतापातान्न तत्रान्वयादिरित्यर्थः ॥१६६॥

अन्वयाद्यङ्गीकारे वास्तवो भेदोऽङ्गीकर्तव्य इति प्राप्ते प्रत्याह—पुमिति। आत्मेत्युपक्रम्य कतम आत्मेत्यादिनोक्तवक्ष्यमाणान्वयादेरवास्तवं भेदमादायाऽऽत्मज्ञानार्थत्वान्नाद्वैतहानिरित्यर्थः। अन्वयादेर्ज्ञानार्थत्वे तेनैव तत्सिद्धेर्व्यर्थं वाक्यमित्याशङ्क्याऽऽह—न त्विति। इहेति स्वपक्षोक्तिः। संस्थितिर्निश्चितिरिति यावत्। अन्वयादेरपरमार्थत्वादिति भावः ॥१६७॥

वाक्यादात्मधीश्चेत्तच्छ्रवणात्प्रागात्मादृष्टेर्नान्वयादि सुकरं दृष्टविषयत्वात्तस्येत्याशङ्क्याऽऽह—अविद्येति। अस्मिन्ननात्मवर्गे स्वाविद्याकल्पिते सतीति यावत्। इह वाक्यश्रवणात्प्रागित्यर्थः। प्रागप्यात्मा दृष्टः स्वप्रकाशत्वादित्ययुक्तमर्थसिद्ध्यधीनत्वात्तत्सिद्धेरित्याशङ्क्याऽऽह—न त्विति। अनात्मत्वप्रसङ्गादित्यर्थः ॥१६८॥

स्वतःसिद्धश्चेदात्मा किमन्वयादिना वाक्येन वेत्याशङ्क्याऽऽह—अत इति। यस्मादात्मनि स्वतःसिद्धेऽन्वयादिस्तस्मात्तद्वशाद्भोक्त्रादिविभागाख्यत्वमर्थशोधनेन ज्ञातं तमनतिक्रम्यानूद्य तस्य ब्रह्मैक्यं वाक्येन बोध्यते तथाच त्वमर्थशोधनार्थमन्वयादि। वाक्यं चैक्यज्ञानार्थमित्युभयार्थवत्तेत्यर्थः ॥१६९॥

---

१. अनात्ममितिप्रमः। अनात्ममितिः घटादिज्ञानं प्रमा यस्य विषये इति विग्रहः तेनानात्मविषयकज्ञानान्नात्मसिद्धिः अपि तु स्वप्रकाशत्वादेव।

चिदन्वयो हि सर्वत्र तत्कार्येषु समीक्ष्यते । व्यतिरेकोऽप्यपह्नुत्या कार्यस्येह प्रसिध्यति ॥७०॥
ऐकात्म्यसिद्धौ दोषः स्यात्तत्सिद्धिश्च न वास्तवी । प्रामाणिकी हि तत्सिद्धिरतो नासौ विरुध्यते ॥७१॥
न चापि मानव्यापारव्यपेक्षैकात्म्यनिश्चितौ । तत्फलस्य समाप्तत्वादपेक्षा निष्फला यतः ॥७२॥
यावत्त्वागमतः साक्षान्न वेत्त्यात्मानमद्वयम् । अन्वयाद्यात्मबोधार्थं तावत्तत्केन वार्यते ॥७३॥
अज्ञानं च तदुत्थं च ह्यात्मैवाज्ञाततत्त्वकः । तत्तत्त्वबोधात्तद्बाधः सर्परज्ज्वादिबाधवत् ॥७४॥
क्लृप्तानामपि[1] रज्ज्वादौ कल्पितान्तरसंश्रयात् । क्लृप्तान्तरापनुत्तिः स्याद्यथा तद्वदिहाऽऽत्मनि ॥७५॥
प्रत्यङ्मानैकमेयोऽतो भोक्ता भोग्यं ततःपरम् । भोग्यानां व्यभिचारेऽपि भोक्तैकोऽव्यभिचारवान्॥७६॥

तं पाणिनापेषं इत्यादेः विवरणम्

बृहन्नित्यादिभिः प्राणो बोध्यमानोऽपि यत्नतः । नैवान्वबुध्यत यदा चक्रे यत्नान्तरं तदा ॥७७॥
पाणिनाऽऽपिष्य वहुशः सुप्तं काश्योऽप्यबोधयत् । आपेषोद्भूतसंक्षोभस्ततोऽसौ प्रत्यबुध्यत ॥७८॥
कारणानामिदं वृत्तं यन्निमित्तान्तराश्रयात् । स्वात्मकार्यसमुद्भूतिरम्बरादभ्रभूतिवत् ॥७९॥

तर्हि कीदृशावन्वयव्यतिरेकौ याभ्यां त्वमर्थः शोध्यते तत्राऽऽह—चिदिति । साभासात्माविद्याकार्येषु सर्वेषु चितोऽनुगमो लक्ष्यते तस्य चाविद्यातज्जस्य प्रतीच्यपन्हुत्या व्यतिरेकोऽपि सिध्यत्यतोऽव्यभिचार्यात्मा सर्वसाक्ष्यनात्मा तु व्यभिचारी साक्ष्यश्चेत्येवंरूपौ तावित्यर्थः । लोके वेदे चोक्तान्वयव्यतिरेकयोरस्ति प्रसिद्धिरिति हिशब्दार्थः । इहेत्यविद्यातत्कार्यापह्नवाधिकरणस्य प्रतीचो वचनम् ॥१७०॥

यत्त्वन्वयव्यतिरेकोक्तिस्तदैक्यादित्यादि तत्रैक्ये ज्ञातेऽज्ञाते वा तदसंभव इति विकल्प्याऽऽद्यमङ्गीकरोति—ऐकात्म्येति । दोषोऽन्वयाद्यसंभवः । तर्हि स्वप्रकाशतया सदाज्ञातत्वादैक्यस्य न जात्वन्वयादिः स्यादित्याशङ्क्याऽऽह—तत्सिद्धिश्चेति । वस्तुनः स्वरूपभूता सिद्धिर्नान्वयादिविरोधिनी चेद्विरोध्यभावात्सदा तत्स्यादित्याशङ्क्याऽऽह—प्रामाणिकीति । अन्वयादिविरोधिनीति शेषः । प्रमाणज्ञानस्य तद्विरोधित्वप्रसिद्धद्यर्थो हिशब्दः । तस्य तद्विरोधित्वान्न स्वरूपसिद्धिस्तेन विरुध्यते साधकत्वादिति फलितमाह—अत इति ॥१७१॥

प्रामाणिकी तत्सिद्धिरपि न तद्विरोधिनी प्रमिते घटादौ पुनर्मानापेक्षावदैक्येपि मितेऽन्वयाद्यपेक्षासंभवादित्याशङ्क्याऽऽह—न चेति । तस्य वाक्यान्निश्चितौ तत्फलस्य सहेतुबन्धध्वस्तेः सिद्धत्वादैक्यज्ञानादनन्तरमन्वयाद्यपेक्षाया वैफल्यान्मानसहकारिणि तस्मिन्नापेक्षा तस्मात्तद्विरोधिन्येव प्रामाणिकी धीरित्यर्थः ॥१७२॥

ऐक्ये ज्ञातेऽन्वयाद्ययोगमङ्गीकृत्य द्वितीयं प्रत्याह—यावत्त्विति ॥१७३॥

आत्मधीहेतुमानसहायत्वेनान्वयाद्युपगमश्चेत्तदपेक्षितद्वैतमपि स्यादित्याशङ्क्याऽऽह—अज्ञानं चेति । तस्य यथोक्तात्मतायाः श्रुतिप्रसिद्धद्यर्थो हिशब्दः । किंच सर्पादि रज्ज्वादिबोधाद्बाधवदात्मज्ञानात्सर्वद्वैतबाधोपगमान्न वास्तवद्वैतप्रसक्तिरित्याह—तत्तत्त्वेति ॥१७४॥

प्रत्यग्ज्ञानमपि बाध्यमबाध्यं वा ? आद्ये बाधकत्वायोगो द्वितीये सर्वद्वैतबाधासिद्धिरित्याशङ्क्याऽऽह—क्लृप्तानामिति । निर्धारणार्था षष्ठी ॥१७५॥

प्राक्प्रमाणप्रवृत्तेः कल्पितं भेदमादायोक्तान्वयादिफलमुपसंहरति—प्रत्यगिति । स्वप्रकाशचिद्धातुरेवाऽऽत्मा प्राणादिर्दृश्यत्वादनात्मेति फलमुपसंहृत्यान्वयाद्युपसंहरति—भोग्यानामिति ॥१७६॥

अन्वयादिना देहद्वयातिरिक्तमात्मानमुपपाद्य तमित्यादिश्रुतिव्याख्यानमनुवदति—बृहन्नित्यादिभिरिति । पुन पुनः संबोधनं यत्नः । तं पाणिनेत्याद्यवतार्य व्याचष्टे—चक्र इति । स हेत्यादेरर्थमनुवदति—आपेषेति ॥१७७–१७८॥

उत्थानकर्तृत्वादात्मनः स्वातन्त्र्यात्कर्तुः[2]स्तल्लक्षणत्वात्किं पेषणादिनेत्याशङ्क्याऽऽह—कारणानामिति ।

१. क्लृप्तानां = अध्यस्तानां कल्पितान्तरं पूर्वाध्यस्तसर्पापेक्षयाऽन्यत् दण्डादिकं तेन बाधवदित्यर्थः ।
२. कर्तुः तल्लक्षणत्वात् ''स्वतन्त्रः कर्ते''ति सूत्रात् स्वातन्त्र्यं कर्तृत्वलक्षणम् ।

आपेषाल्लीनबुद्ध्यादिसमुत्पत्तौ परात्मनः । घटाकाशवदुत्पत्तिर्नाञ्जसैव सदा दृशेः ॥८०॥
तस्मादप्रतिबोधेन प्राणोऽभोक्तेति गम्यताम् । पुंसस्तु प्रतिबोधेन भोक्तृतैवावसीयते ॥८१॥
अदाहकानां दग्धृत्वं यथा दाहकसंगतेः । भोक्तृसंयोगतस्तद्वद्भोक्तृत्वं देवतात्मनः ॥८२॥

मू.—स होवाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषः क्वैष तदाभूत्कुत एतदागादिति तदु ह न मेने गार्ग्यः ॥१६॥

देहेन्द्रियमनोधीभ्यो विविच्याऽऽत्मानमेकलम्[1] । भोक्तारं दर्शयित्वाऽथ राजा गार्ग्यमपृच्छत ॥८३॥
आपेषणेन बुबुधे यः प्राणादिविलक्षणः । क्वाभूदयं पुरा बोधात्कुतश्चाऽऽगतवान्पुमान् ॥८४॥
अन्तःकरणसम्बन्धे विज्ञानमिति कर्तरि । प्रत्ययः करणार्थः स्यात्क्रियायां भावसाधनः ॥८५॥
प्रमेयार्थविवक्षायां शब्दः स्यात्कर्मसाधनः । यथोक्तानामसद्भावात्प्रायार्थः प्रत्यगात्मनि ॥८६॥

### विज्ञानमयपदार्थविवेचनम्

स्वाभासवदविद्योत्थबुद्ध्यादिव्याप्तिविभ्रमात् । तदात्मत्वाभिमानित्वाद्विज्ञानमयताऽऽत्मनः ॥८७॥
साक्षित्वेनोपलभ्यत्वात्साक्ष्यबुद्ध्यादिसंश्रयात् । अकारकफलत्वेन तेन प्रायार्थतेष्यते ॥८८॥

आकाशमभ्रोद्भूतिकारणमपि पुरोवाताद्यपेक्षते तथाऽऽत्मोत्थानकर्ताऽपि पेषणाद्यपेक्षिष्यते कारकान्तराप्रयोज्यस्य तत्प्रयोक्तुः कर्तृत्वादित्यर्थः ॥१७९॥

उत्थानमात्मनः सुप्तेरुद्बोधस्तस्य स्वरूपत्वेनानुत्पत्तेर्न हेत्वपेक्षेत्याशङ्क्याऽऽह—आपेषादिति । स्वापे प्रतीच्यज्ञाते लीनस्य बुद्ध्यादेर्जाग्रद्धेतुकर्मादिना परस्मादुत्पत्तौ बोधोदयो व्यवह्रियते घटोत्पत्तौ तदाकाशोत्पत्तिवन्न साक्षादेव तदुत्पत्तिरित्यत्र हेतुमाह—सदेति ॥१८०॥

स हेत्यादेरर्थमुपपाद्य तौ हेत्यादिवाक्यार्थमुपसंहरति—तस्मादिति ॥१८१॥

पुरुषस्यैव भोक्तृत्वं चेत्कथं प्राणदेवतायास्तत्प्रसिद्धिस्तत्राऽऽह—अदाहकानामिति ॥१८२॥

वृत्तमनूद्य स हेत्यादेरर्थमाह—देहेति । विवेकानन्तरं वक्ष्यमाणप्रश्नस्यावकाशं दर्शयितुमथेत्युक्तम् ॥१८३॥

पृच्छास्वरूपमाह—आपेषणेनेति ॥१८४॥

य एष विज्ञानमय इत्यत्र विज्ञानं परं ब्रह्म तद्विकारो जीवोऽतो विकारार्थो मयडिति केचित्तन्निवृत्त्यर्थं विज्ञानं भिनत्ति—अन्तःकरणेति । ल्युडन्तस्य विज्ञानमितिशब्दस्यान्तःकरणेन वाचकतया संबन्धे विवक्षिते कर्तरि प्रत्ययः स्यादन्तःकरणस्य ज्ञानकर्तृत्वादतो विजानातीति विज्ञानमन्तःकरणं यदा विज्ञानपदस्य चक्षुरादिवाचित्वं तदा प्रत्ययः करणार्थः स्यात्ततो विज्ञायतेऽनेनेति विज्ञानं चक्षुरादि यदा तस्य क्रियायां संबन्धस्तदा विज्ञप्तिरिति विज्ञानं क्रिया स्यादित्यर्थः ॥१८५॥

यदा तद्घटादिवाचि तदा विज्ञायत इति विज्ञानं घटादि स्यादित्यर्थमाह—प्रमेयेति । एतेष्वर्थेषु विज्ञानशब्दप्रयोगादन्यत्र तस्यामुख्यत्वात्प्रतीचि कूटस्थे यथोक्तकर्तृत्वाद्यभावादत्रास्य कर्तृव्युत्पत्त्याऽन्तःकरणविषयत्वात्प्रतीचस्तदविकारत्वात्प्रायार्थो मयडित्याह—यथोक्तानामिति ॥१८६॥

प्रतीचोऽन्तःकरणविकारत्ववन्न तत्प्रायत्वमप्यसङ्गस्य बुद्ध्याद्यसंबन्धादित्याशङ्क्याऽऽह—स्वाभासेति । प्रत्यगाभासवती याऽविद्या तदुत्थबुद्ध्यादिव्याप्तिकृतं भ्रममेव व्याकरोति—तदात्मत्वेति । भ्रान्तिफलमाह—विज्ञानेति ॥१८७॥

मयटः प्रायार्थत्वे हेत्वन्तरमाह—साक्षित्वेनेति । विकारार्थत्वायोगाच्च तथेत्याह—अकारकेति । क्रियादिरूपत्वाभावे तत्साक्षित्वं हेतुमाह—तेनेति ॥१८८॥

---

१. एकलः एकस्मिन् लीयत इत्येकलः सुषुप्तात्मा अद्वितीयः । एकल एव मध्ये स्थाता इति श्रुतेः (छा० ३.११.१) ।

यतो विज्ञानमानी सन्सर्वं वस्त्ववगच्छति । विज्ञानमयता तस्मात्प्रतीचोऽबोधकारणात् ॥८९॥
विज्ञानेन विशिष्टं वा यस्मान्मेयं प्रपद्यते । प्रायार्थत्वं प्रतीचोऽतस्तदभिन्नग्रहाद्भवेत् ॥९०॥
विज्ञानमय इत्युक्त्वा पृथिव्यादिमयोक्तितः । षड्विकारनिषेधाच्च प्रायार्थत्वं समञ्जसम् ॥९१॥

पुरुषशब्दार्थविवरणम्

अनात्मनो यतोऽशेषान्कल्पितत्वादकल्पितः । पूरयन्पुरुषः प्रत्यक्सर्पादीन्रशना यथा ॥९२॥
व्युत्पत्तिरियमेवात्र तात्पर्यस्य समीक्षणात् । स वा इति ह्युपक्रम्य नैनेनेत्यादिनिर्णयात् ॥९३॥
इयं तावत्पदार्थोक्तिः सम्बन्धोक्तिरथाधुना । प्रश्नस्य क्वैष इत्यादेः किमर्थोऽयमुपक्रमः ॥९४॥

क्वैष इत्यादिप्रश्नस्य भर्तृप्रपञ्चमतेन सम्बन्धकथनम्

चोद्यैकमूलां प्रश्नोक्तिं केचिद्व्याचक्षतेऽपरे । याथात्म्यप्रतिपत्त्यर्थमुत्थितस्य प्रचक्षते ॥९५॥
पुंसोऽस्य ज्ञस्वभावत्वे करणेष्वपि सत्सु च । कादाचित्कोऽवबोधोऽस्य कुत इत्युच्यतां यथा ॥९६॥
विहायैतच्छरीरं वा गतो देशान्तरं पुमान् । विनष्टो वा कुतो भूयो देहमागादितीर्यताम् ॥९७॥

स्वतः सर्वज्ञस्य कुतो बुद्ध्यादिप्रधानतेत्याशङ्क्याज्ञानात्तत्संबन्धद्वारैव सर्वज्ञतेति युक्ता प्रायार्थतेत्याह—यत इति ॥१८९॥

प्रकारान्तरेण प्रायार्थत्वं मयटः स्फुटयति—विज्ञानेनेति । प्रतीचो विज्ञानशब्दितान्तःकरणेन वृत्तिद्वारा व्याप्तार्थज्ञानान्मयटः प्रायार्थत्वमित्युत्तरार्धे संबन्धः ॥१९०॥

विकारार्थत्वाभावे मयटः श्रौते लिङ्गे वदन्प्रायार्थत्वमुपसंहरति—विज्ञानेति । न हि पृथिव्यादिविकारत्वं प्रतीचोऽङ्गीकृतं तथाच समभिव्याहाराद्विज्ञानमयत्वमपि तस्य युक्तमस्तित्वादयश्च विकारास्तत्र श्रुतिस्मृतिभ्यां निषिध्यन्तेऽतः प्रायार्थत्वमित्यर्थः ॥१९१॥

पुरुषशब्दार्थमाह—अनात्मन इति । यथा रज्जुरकल्पिता कल्पितान्भुजंगादीन्पूरयति तथाऽनात्मनां कल्पितत्वान्निरधिष्ठानकल्पनायोगात्तदधिष्ठानत्वेनाकल्पितः सन्नात्माऽशेषान्यतस्तान्पूरयन्वर्ततेऽतः स पुरुष इत्यर्थः ॥१९२॥

पुरि शयनादित्यादिभाष्यं कस्मादुपेक्ष्यतेऽत आह—व्युत्पत्तिरिति । पूर्णत्वात्पुरुष इत्येषैव व्युत्पत्तिरत्र ग्राह्या प्रत्यक्पूर्णत्वे वाक्यतात्पर्यदृष्टेरित्यर्थः । तत्र श्रुतितात्पर्ये हेतुमाह—स वा इतीति । "स वा अयं पुरुषः सर्वास्वि"ति पुरुषमुपक्रम्य "नैनेन किंचनानावृतमि"त्यादिना तत्पूर्णत्वं निर्णीयते तेन तत्पूर्णत्वे श्रुतितात्पर्यं सिद्धमित्यर्थः । संदिग्धस्य च वाक्यशेषान्निर्णयो भवतोति हिशब्दार्थः ॥१९३॥

विज्ञानादिपदार्थोक्तिं वृत्तामनूद्योत्तरस्य गतेन संबन्धोक्तिं प्रतिजानीते—इयमिति । संबन्धोक्त्यर्थमाकाङ्क्षामाह—प्रश्नस्येति ॥१९४॥

तत्र भर्तृप्रपञ्चप्रस्थानमाह—चोद्येति । तद्गर्भामिति यावत् । स्वमतं सूचयति—अपर इति ॥१९५॥

कथं ते चोद्यगर्भां प्रश्नोक्तिं व्याकुर्वन्तीत्याशङ्क्य भोक्तुर्ज्ञानस्वभावत्वे करणेषु विद्यमानेषु कथं कदाचित्प्रतिबोध इति तदीयभाष्यार्थमाह—पुंसोऽस्येति । अपवर्गादर्वाक्करणानां सदासत्वं चार्थः । बोधस्त्वात्मविषयोऽनात्मविषयश्च । अस्येति प्रत्यगात्मोक्तिः । इत्थं प्रश्ने यथाऽयमर्थस्तथोच्यतामिति योजना । चिद्रूपस्य सकरणस्याऽऽत्मनः सदा बोधप्राप्तेरसुप्तिरिति भावः ॥१९६॥

सुप्त्युपगमेऽपि न निस्तार इत्याह—विहायेति । उक्तं हि—अथ पुनर्विहायैतदसंनिहितोऽभूद्विनष्टो वा कुतः प्रत्यागमनमिति ॥१९७॥

---

१. षड्विकारनिषेधः—न जायते म्रियते वा विपश्चित् इत्यादि काठकवाक्यात्सिद्धः ।

प्रष्टव्यमेतद्गार्ग्येण शिष्यत्वान्न त्वचूचुदत् । नैवोदास्ते तथाऽपीनो बोधाभ्युपगमात्स्वयम् ॥९८॥
अर्थिनेऽर्थं प्रतिज्ञाय नासम्पाद्य निवर्तते । यथार्थितं सत्पुरुष इति सत्पुरुषव्रतम् ॥९९॥
कूटस्थोऽस्यावबोधश्चेत्कादाचित्कं कुतो भवेत् । मतोऽवबोधोऽनित्यश्चेत्कादाचित्कं तदाऽर्थवत् ॥२००॥

भर्तृप्रपञ्चपक्षनिरासः

देहादिष्वभिमानोऽस्य कादाचित्कः सहेतुकः । आगमापायिसाक्षित्वं नित्यमेवानिमित्ततः ॥ १ ॥
इदमेव यतो वृत्तं कारणापेक्षिणां सताम् । अभूत्वा भवनं तस्मात्कादाचित्कं न दोषभ क् ॥ २ ॥
प्रतीच्येव यतश्चाभूदागाच्च प्रत्यगात्मनः । प्रश्नार्थप्रतिकूलत्वात्प्रत्युक्तेर्नेदृगर्थता ॥ ३ ॥
गत्यादिसाधनानां च देह एव स्थितेः कुतः । देशान्तरगतिः पुंसो नापि नाशोऽस्य युक्तिमान् ॥ ४ ॥

आत्मनः शिष्यत्वस्वीकाराद्गार्ग्येण सर्वमेतत्प्रष्टव्यं तत्किमिति न पृष्टवानित्याशङ्क्याज्ञत्वादित्याह—प्रष्टव्यमिति । यथाऽऽहुः—तदेतद्गार्ग्येण प्रष्टव्यमासीत्स हि शिष्यश्चोदयितेति । तर्हि गार्ग्यमज्ञं निवृत्तप्रश्नं दृष्ट्वा राज्ञो युक्तमौदासीन्यमित्याशङ्क्याऽऽह—नैवेति । इनः स्वामी राजेति यावत् । व्येव त्वेति राज्ञा गार्ग्यस्य तत्त्वज्ञानोत्पादनस्य प्रतिज्ञातत्वादित्याह—बोधेति । उक्तं च—यदा चोदयितुः शिष्यस्य प्रतिपत्तिर्न भवत्याचार्यश्च तमर्थं व्याचिख्यासुर्भवति तदा स्वयमेव चोद्यमुत्थाप्य व्याचष्ट इति ॥१९८॥

प्रतिज्ञातमपि प्रश्नाकुशलं गार्ग्यं दृष्ट्वा राजा त्यक्ष्यतीत्याशङ्क्याऽऽह—अर्थिन इति । अजातशत्रोः सत्पुरुषत्वात्तदीयं वृत्तमाकलयतोऽकुशलमपि शिष्यमुपलभ्य न संभवत्यौदासीन्यमित्यर्थः ॥१९९॥

गार्ग्यस्य प्रश्नाकरणे राज्ञस्तत्करणे च कारणमुक्त्वा विहायैतदित्यत्र शङ्कते—कूटस्थोऽस्येति । अस्य पुंसः स्वरूपभूतो बोधः कूटस्थो न कादाचित्कोऽतः कूटस्थज्ञानत्वादात्मा स्वापे न गतोऽन्यत्र नापि नष्ट इत्यर्थः । न किंचिदवेदिषमित्यनुभवविरुद्धमेतदिति पूर्ववाद्याह—कादाचित्कमिति । अनुभववशेन बोधस्यानित्यत्वे तत्कादाचित्कत्वं यद्यपि युक्तं तथाऽपि पुंसोऽस्येत्यत्रोक्तज्ञानकादाचित्कत्वासंभवस्य न समाधिरित्याह—मत इति । यद्वा गार्ग्ये प्रश्नमकुर्वत्यपि राज्ञस्तत्करणे हेतुमुक्त्वा प्रष्टुरभिप्रायं वदन्नात्मनो ज्ञानं नित्यमनित्यं वेति विकल्प्याऽऽद्यमादत्ते—कूटस्थोऽस्येति । अनुभवविरोधेन निरस्यति—कादाचित्कमिति । द्वितीयमनुवदति—मत इति । तदा कादाचित्कज्ञानत्वमात्मनो युक्तं यद्यात्माऽचित्स्वभावः स्यात्तस्य चाचित्स्वभावत्वे स्वरूपहानिरिति मत्वाऽऽह—कादाचित्कमिति ॥२००॥

परोक्तां चोद्यगर्भां प्रश्नोक्तिं निरस्यन्पुंसोऽस्येत्यत्रोक्तं कादाचित्कज्ञानायोगं दूषयति—देहादिष्विति । अस्य देहस्थस्याऽऽत्मनस्ततदभिमानरूपः कादाचित्को बोधो युक्तो धर्मादिहेतुत्वात्तस्मिन्फलदानायोद्बुद्धे देहादिष्वात्माभिमानात्तदात्मनो युक्तं कादाचित्कज्ञानवत्त्वमित्यर्थः । कथं तर्हि तत्स्वभावत्वं तत्राऽऽह—आगमेति । आत्मनो बुद्ध्यादिसाक्षितया बोधरूपत्वं नित्यमेव हेत्वनपेक्षत्वादित्यर्थः ॥२०१॥

देहाद्यभिमानस्य धर्मादिकृतस्यापि सदातनत्वमस्तु धर्मादेः सदासंभवात्तन्न सुषुप्तिरित्याशङ्क्याऽऽह—इदमिति । कार्याणामभूत्वा भवनस्वाभाव्याद्देहाद्यभिमानस्यापि धर्मादिकृतस्य कार्यत्वात्तत्स्वाभाव्यं धर्मादेश्च प्रवाहाविच्छेदेऽपि व्यक्तिविच्छेदान्न सदा सत्त्वं न च सति हेतौ कार्यनियमः सामग्र्यां तन्नियमादतो न सुषुप्त्यसिद्धिरिति भावः । कादाचित्कं देहाद्यभिमानस्येति शेषः ॥२०२॥

यत्तु कूटस्थोऽस्यावबोधश्चेदित्यादि तत्राऽऽह—प्रतीचीति । स्वापकाले प्रतीच्येव जीवस्य स्थितिरुक्ता उत्थानकाले च तस्मादेवाऽऽगमनमिति वक्ष्यमाणप्रत्युक्तेरर्थस्फूर्तेःत्वदुक्तरीत्या प्रश्नार्थस्य प्रतिकूलत्वान्न परोक्तार्थता प्रश्नस्य युक्ताऽतस्त्वत्पक्षे न चोद्यगर्भप्रश्नप्रवृत्तिरित्यर्थः ॥२०३॥

यत्तु विहायैतदित्यादि तत्राऽऽह—गत्यादीति । आगतिरादिपदार्थः । साधनानि पादादीनि । न हि नाशोऽस्य युक्तः पुनरुत्थानायोगादकृताभ्यागमादिप्रसङ्गाच्चेत्याह—नापीति ॥२०४॥

### स्वमतेन प्रश्नाभिप्रायकथनम्

साक्षाद्ब्रह्मावबोधस्य प्रतिज्ञातत्वकारणात् । भोक्तृभोक्तव्ययोस्तत्त्वं वक्तुं युक्तमतोऽञ्जसा ॥ ५ ॥
कर्मादिहेतुजं रूपमतत्त्वं तदनन्वयात् । अनिमित्तं स्वतस्तस्य सर्वदाऽव्यभिचारतः ॥ ६ ॥
अकारकक्रियाकार्यं रूपं प्राक्प्रतिबोधतः । बुबोधयिषितं भोक्तुरस्मद्गोचरवर्तिनः ॥ ७ ॥
यतोऽस्य न पुरा बोधात्कर्मादेः कार्यमण्वपि । प्रतीचो गृह्यते मानादतोऽयं तत्स्वभावकः ॥ ८ ॥
क्वाभूदेष पुरा बोधात्कुतश्चायमुपागतः । आचक्ष्वैतद्द्वयं गार्ग्य स्थितावागमनेऽवधिम् ॥ ९ ॥
अभूत्प्रतीचोऽन्यत्रायमन्यस्माच्चायमागतः । यदि चेत्कारकत्वं स्यान्नो चेद्भ्रान्तिरियं भवेत् ॥१०॥
यत्र वा अन्यदित्येवं यत्र त्वस्येति चापरम् । अविद्याविद्ययोः कार्यं तथाच श्रुतिरब्रवीत् ॥११॥
वक्तुं प्रष्टुं च बालाकिर्न यतो जज्ञिवांस्ततः । प्रश्नयोः स्वयमेवार्थं काश्यो वक्तुं प्रचक्रमे ॥१२॥
पृष्टेनापि न विज्ञातं भवता तदिदं मया । उच्यमानं यथा तत्त्वं सम्यक्त्वं श्रोतुमर्हसि ॥१३॥

मू.—स होवाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषस्तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते तानि यदा गृह्णात्यथ हैतत्पुरुषः स्वपिति नाम तद्गृहीत एव प्राणो भवति गृहीता वाग्गृहीतं चक्षुर्गृहीतँ् श्रोत्रं गृहीतं मनः ॥१७॥

### प्रश्नयोरभिप्रायकथनम्

यत्रैष एतत्सुप्तोऽभूत्स्वनामामन्त्रणध्वनिम् । नाश्रौषीद्यन्निमित्तं ज्ञस्तन्निमित्तमिदं शृणु ॥१४॥

चोद्यैकमूलामित्यत्र सूत्रितं परमतं पुंसोऽस्येत्यादिनोपपाद्य देहादिष्वित्यादिना निरस्तम् । इदानीमपरे याथात्म्यप्रतिपत्त्यर्थमित्यत्र स्वमतं सूचितं वक्तुं प्रक्रमते—साक्षादिति । व्येव त्वेत्यपरोक्षज्ञानस्य प्रतिज्ञातत्वात्तदर्थं द्रष्टृदृश्यरूपं वाच्यमतो यथावत्पदार्थे शुद्धे वाक्यार्थधीरित्यर्थः ॥२०५॥

दृश्यरूपं द्रष्टुर्विविच्य व्याचष्टे—कर्मादीति । कर्मज्ञानवासनादिकृतं जगदविद्यान्तमनात्मा स्वापादावनन्वयेन व्यभिचारादित्यर्थः । द्रष्टृरूपं दृश्याद्विवेचयति—अनिमित्तमिति । कूटस्थमात्मनः स्वतो रूपं तस्य निमित्तानपेक्षत्वेन सदैवाव्यभिचारादित्यर्थः । उक्तं सौषुप्तं तत्त्वं गार्ग्यासंमतमित्याशङ्क्याऽऽह—प्रागिति । अस्मत्प्रत्ययशब्दयोर्गोचरोऽहंकारस्तत्र साक्षित्वेन वर्तमानस्याऽऽत्मनो निर्विकारं रूपं स्वापे गार्ग्यं प्रति राज्ञा ज्ञापयितुमिष्टमतस्तदसंमतिरप्रयोजिकेत्यर्थः ॥२०६-२०७॥

कथं कूटस्थाद्वयचैतन्यमात्मरूपं तत्राऽऽह—यतोऽस्येति । प्रत्यगात्मनोऽन्यत्कर्मज्ञानादिकार्यं द्वैतमीषदपि स्वापादौ यतो नावगम्यते मानाभावादतोऽयमात्मा पूर्वोक्तचित्स्वभावः पश्यन्वै तन्न पश्यतीति श्रुतेरित्यर्थः ॥२०८॥

पूर्वोत्तरसंबन्धं भाष्येष्टं शिष्ट्वा प्रश्नयोरर्थमाह—क्वेति । द्वयमेव व्यनक्ति—स्थिताविति ॥२०९॥

तयोरक्षरार्थमुक्त्वा तात्पर्यार्थमाह—अभूदिति । यद्ययमात्मा स्वापे स्थितोऽन्यत्राभूद्यदि वाऽऽगतौ ततोऽन्यस्मादागतस्तदा क्रियाकारकफलव्यवहारो वास्तवः स्यात्स्थितावागतौ च स्वयमेवावधिर्नान्यश्चेत्तदा भ्रान्तोऽयं व्यवहारः स्यादेकत्र तदनुपपत्तेरित्यभिप्रायेण प्रश्नावित्यर्थः ॥२१०॥

क्रियादिव्यवहारस्य भ्रान्तत्वे तदभावस्य वस्तुत्वे च मानमाह—यत्रेति । तत्राविद्याकार्यं क्रियादिव्यवहारमस्मदुक्तमनुस्मरन्ती प्रथमा श्रुतिरुक्तवती । द्वितीयातु श्रुतिरपरं विद्याकार्यं क्रियादिव्यवहाराभावं तथैव कथितवतीति योजना ॥२११॥

तदु हेत्यादि व्याचष्टे—वक्तुमिति । उत्तरमवतारयति—तत इति ॥२१२॥

यदपृच्छामेत्यादिभाष्यार्थमाह—पृष्टेनेति ॥२१३॥

यत्रेत्यादिवाक्यमनुवदति—यत्रेति । सुप्तोऽभूदित्यस्यार्थमाह—स्वनामेति । यत्रेति सप्तम्यर्थमाह—यन्नि-

इतिशब्दनञोरर्थः

उपप्रदर्शकोऽशेषनामादेरितिरिष्यते । तस्योपदर्शितस्याथ निषेधः क्रियते नञा ॥१८३॥
आकृष्टं रूपिणो रूपं न पृथग्व्यवतिष्ठते । जगत्यकल्पितमपि किमु मोहादिकल्पितम् ॥१८४॥
घटे पटो निषिद्धोऽपि घटादन्यत्र तिष्ठति । तदन्यत्रापि सद्भावादनिषिद्धस्य धर्मिणः ॥१८५॥
परमार्थान्निषिद्धस्य तन्मोहोत्थस्य वस्तुनः । हिरुक्[1]स्थितिः कथं तस्य परमार्थात्मनाऽथवा ॥१८६॥
निषेध्यानामशेषाणामन्योन्यव्यभिचारतः । प्रतीचोऽव्यभिचारोऽतस्तत्राध्यस्तं निषिध्यते ॥१८७॥
इतिशब्दोपदिष्टानां निषेधोऽनुभवात्मनि । अनन्तेऽन्तवतां यत्र तद्ब्रह्मेत्यवसीयताम् ॥१८८॥
सद्भावश्चोपलब्धिश्च स्वार्थप्रत्यक्चिदाश्रयात् । मूर्तादीनां[2]मनिर्देश्यादितिर्मत्तो निवर्तते ॥१८९॥
निषेधति निषेध्यार्थं यद्बलान्नञ्चिदात्मनः । विज्ञानेनैव हत्वाऽन्यत्पूर्णत्वेनैति चित्स्वतः ॥१९०॥
प्रत्यङ्मात्रदृशि ह्यस्मिञ्जाग्रत्स्वप्नसुषुप्तिषु । तदन्यद्यत्तदाभासं तन्नञा प्रतिषिध्यते ॥१९१॥

तज्ज्ञापनम् तथाच प्रतिज्ञाहानिस्तत्राऽऽह—इत्यादेरिति । इत्थमुक्तस्यानुक्तस्य च निषेधो नकारस्तेन सर्वं निषिध्य प्रत्यङ्मात्रमनिषिद्धमवलम्ब्य स्थितेन ब्रह्मयाथात्म्यमवगम्यते तस्य तदेव तत्त्वं तन्न प्रतिज्ञाहानिरित्यर्थः ॥१८२॥

निषेध्यार्पकाभावे न निषेधः प्राप्तिं विना तदयोगादित्याशङ्क्याऽऽह—उपेति । नञर्थं निगमयति—तस्येति । निषेधस्य प्राप्तिपूर्वकत्वेन सम्भावितत्वमथशब्दार्थः ॥१८३॥

ब्रह्मणि निषिद्धं मोहाद्यन्यत्र स्थास्यत्यत्र निषिद्धघटवदित्याशङ्क्य कैमुतिकन्यायमाह—आकृष्टमिति ॥१८४॥

दृष्टान्तं विघटयति—घट इति । घटादौ निषिद्धस्तत्रासन्नपि पटादिस्ततोऽन्यत्र स्थातुं युक्तस्तस्य तत्राकल्पितत्वाद्घटादि विर्जयित्वाऽपि तन्त्वादेरनिषिद्धस्य धर्मिणो भावादित्यर्थः ॥१८५॥

दार्ष्टान्तिके वैषम्यमाह—परमार्थादिति । आत्मनो निषिद्धस्यानात्मनोऽन्यत्र भेदेनाभेदेन वा न स्थिती रजतादिवत्कल्पितत्वादित्यर्थः ॥१८६॥

कल्पितत्वासिद्धिमाशङ्क्याऽऽह—निषेध्यानामिति । विमतं कल्पितं व्यभिचारित्वात्सर्पवदित्यत्र प्रतीचि व्यभिचारमाशङ्क्याऽऽह—प्रतीच इति । तत्र कल्पितमनात्मजातं तत्र निषिद्धं नान्यत्रास्ति रजतवदिति फलितमाह—अत इति ॥१८७॥

प्रतीचि कल्पितमाकाशादि प्रकृतमितिशब्दोक्तं नञा निषिध्यते चेन्न ब्रह्मसिद्धिस्तद्वाचकाभावादतो निषेधवैयर्थ्यमित्याशङ्क्याऽऽह—इतिशब्देति । ब्रह्मवाचिपदाभावेऽपि विषेधस्तत्र पर्यवस्यति निरङ्कुशत्वायोगात्सर्वं हि विनश्यद्विकारजातं पुरुषान्तं विनश्यति पुरुषो विनाशहेत्वभावादविनाशीति न्यायादित्यर्थः ॥१८८॥

प्रकृतमितिशब्दोक्तं निषिध्यते चेद्ब्रह्मणोऽपि प्रकृतत्वेन तदुपात्ततया तदापत्तौ शून्यतेत्याशङ्क्याऽऽह—सदिति । भावाभावयोः सत्तास्फूर्तिप्रदं स्वप्रकाशं वाङ्मनसातीतं प्रत्यञ्चमितिशब्दो न वदत्यतस्तस्यानिषेधान्न शून्यतेत्यर्थः ॥१८९॥

किंच प्रत्यग्बलात्प्राप्तसत्तास्फूर्ति नञ्पदं मूर्तादिद्वैतं चिदात्मावसायित्वेन निषेधत्यतो न तन्निषेधकमित्याह—निषेधतीति । आत्मबलान्नञो द्वैतनिषेधित्वे नञात्मनोः सदाभावान्न कदाचिदपि द्वैतं भायादित्याशङ्क्य वाक्योत्थज्ञानेनैव चिदात्मा सर्वमुपमृद्य स्वाभाविकेनानविच्छिन्नत्वेन तिष्ठत्यतो ज्ञानात्प्राग्द्वैतधीसिद्धिरित्याह—विज्ञानेनेति ॥१९०॥

आत्मनोऽनिषेध्यत्वमुक्त्वा द्वैतस्य निषेध्यत्वमुपसंहरति—प्रत्यगिति । अवस्थात्रयेऽपि साक्षिणि सति कार्यं कारणं वा यच्चिदाभासवत्तन्निषेध्यमित्यर्थः । तस्य कल्पितत्वेन निषेधयोग्यत्वं हिशब्दार्थः ॥१९१॥

---

१. हिरुक्=पृथक् स्थितिः, अथवा ब्रह्मरूपेण स्थितिर्नेत्यर्थः ।

२. मूर्तादीनां सद्भावः । उपलब्धिः उभयं प्रत्यचिदाश्रिते प्रत्यगात्मा न परार्थः । अनिर्देश्यश्च अतः श्रुतिः तं परामृशति । मत्तः स्वरूपान्निवर्तते । मत्त इति शास्त्रदृष्ट्या उपदेशः ।

**[1]अविचारितसंसिद्धिप्रत्यङ्मोहहतौ सदा । विस्फारिताक्षः प्रत्यग्धीर्मानान्निर्वात्यथाऽऽत्मनि॥१९२॥**
**अपेक्षाज्ञानहेतूत्थं कार्यकारणवस्त्वतः । विचार्यमाणं तन्नास्ति व्योम्नि कार्ष्ण्यमिवाऽऽत्मनि॥१९३॥**
**शब्दप्रवृत्तिहेतूनां प्रत्यगात्मन्यसम्भवात् । प्रमाणगोचराणां च स्वतः सिद्धेर्न निह्नुतिः ॥१९४॥**

**निषेधस्यापि निवृत्तिः**

**मानाभिधानविषयो यावन्नाऽऽत्मानमात्मनि । लभते प्रत्यगात्मानं न नञ्तावन्निवर्तते ॥१९५॥**
**निरस्ताज्ञानतत्कार्ये लब्ध आत्मन्यथाऽऽत्मना । निषेध्यहेतौ प्रध्वस्ते निषेधोऽपि निवर्तते ॥१९६॥**
**प्रमातृत्वादिना यावत्किंचिदत्र विवक्षितम् । तदभावश्च तत्सर्वं नेतीति प्रतिषिध्यते ॥१९७॥**
**[2]निषेध्यं सर्वमेवैतदनिषेध्यात्मवस्तुगम् । अतो नाभावनिष्ठः स्यादभावस्यापि निह्नवात्॥१९८॥**

निषेधफलमाह—अविचारितेति । ईश्वरार्पणबुद्ध्या नित्याद्यनुष्ठानाद्विकसितचेताः श्रुताद्वाक्यात्प्रतीचि लब्धबुद्धिस्तद्बलादविद्यातज्जध्वस्तौ सदा निर्व्यापारः सन्नात्मन्येव स्वे महिम्नि तिष्ठतीत्यर्थः । अविद्यानिवृत्त्या तत्कार्यनिवृत्तौ स्वमहिमप्रतिष्ठत्वे प्रतिबन्धवैधुर्यमथेत्युच्यते ॥१९२॥

प्रत्यग्धिया तन्मोहहतावपि कुतो जगतो ध्वस्तिर्न च तदध्वस्तौ पुमर्थसमाप्तिरित्याशङ्क्याऽऽह—अपेक्षेति । कारणापेक्षावत्कार्यापेक्षावच्च यज्ज्ञानं तेन हेतुना व्यक्तं कार्यादि न तदात्मनि वस्तुतोऽस्त्यतो नभसि नीलवन्मिथ्या जगदपि निरूप्यमाणं विद्यापोह्यमित्यर्थः ॥१९३॥

जगतो व्योमकार्ष्ण्यवन्मोहोत्थत्वान्निषेध्यत्वेऽपि न तन्निषेधेनाऽऽत्मा प्रतिपादयितुं पार्यते न हि कार्ष्ण्यनिषेधेन प्रतिपाद्यते व्योमेत्याशङ्क्याऽऽह—शब्देति । असङ्गे प्रतीचि कूटस्थेऽद्वये षष्ठ्याद्ययोगान्न विधिमुखप्रतिपादनं तन्निषेधद्वारं तदित्यर्थः । यत्तु व्योमवदस्य निषेधद्वारा न प्रतिपादनमिति तत्राऽऽह—प्रमाणेति । तत्खल्वनुमानादिगोचरत्वान्न निषेधद्वारा प्रतिपाद्यते प्रत्यगात्मा तु शब्दादिहीनो मानान्तराविषयो न चाऽऽगमोऽपि तस्मिन्विधिद्वारा क्रमते तन्निषेधद्वारं तत्प्रतिपादनमित्यर्थः । यन्न विधिमुखेनोच्यते तन्नास्ति यथा वन्ध्यासुतादि तदात्माऽपि विधिमुखेनानुक्तेरसन्नित्याशङ्क्याऽऽह—स्वत इति ॥१९४॥

अन्यानपेक्षसत्तास्फूर्तित्वात्प्रतीचो न नास्तितेत्येतदेव स्फुटयति—मानेति । अयं हि व्यवहारे सोपाधिः शब्देतरमानविषयः । स पुनः सर्वविशेषापोहेन परमार्थस्वरूपेण यावदवस्थानं न लभते तावदुपाधिविषयो निषेधो न निर्वृणोतीत्यर्थः ॥१९५॥

कथं तर्हि नञो निवृत्तिरत आह—निरस्तेति । प्रथमपादार्थं स्फोरयति—निषेध्येति । अज्ञानं तत्कार्यं च निषेध्यं तदेव प्रतियोगित्वेन निषेधस्य हेतुस्तस्मिन्ध्वस्ते सतीति यावत् । निषेध्यनिवृत्तौ निषेधावस्थानहेत्वभावोऽथशब्दार्थः ॥१९६॥

प्रतीचोऽनिषेधेऽपि द्वैतनिषेधस्य निषेधकान्तरमस्ति चेदनवस्था; तदभावे निषेधस्थितेरात्मनः सविशेषतेत्याशङ्क्याऽऽह—प्रमातृत्वादिनेति ॥१९७॥

निषेधस्यापि निषेधे कथं नानवस्थेत्याशङ्क्याऽऽह—निषेध्यमिति । एतेनाभावनिष्ठताऽपि निषेधस्यापास्तेत्याह—अत इति । स्यान्निषेध इति शेषः ॥१९८॥

---

१. प्रत्यगात्मनि भासमानो मोहोऽनिर्वचनीयो विचार्यमाणे न सिद्ध्येत् । सद्वा असद्वा आत्मनो भिन्नोऽभिन्नो वेत्यादि विचारासहः स च प्रत्यगात्मन वाक्यजन्यज्ञानान्निवर्तते ततः विस्फारिताक्षः साधकः प्रसन्नेन्द्रियः आत्मनि ब्रह्मणि लीयते ।

२. निषेध्यं सर्वं द्वैतं तदभावश्चेत्यर्थः । पूर्वश्लोके उभयोः निषेधकथनात् । उभयनिषेधेऽधिष्ठानमात्रे पर्यवसानमित्यर्थः । अयमेवार्थः अद्वैतसिद्धौ द्वितीयमिथ्यात्वनिरूपणे व्यक्तः, तत्र हि "न च निषेधस्य निषेधे प्रतियोगिसत्त्वापत्तिः, तत्र हि निषेधस्य निषेधे प्रतियोगिसत्त्वमायाति यत्र निषेधस्य निषेधबुद्ध्या प्रतियोगिसत्त्वं व्यवस्थाप्यते निषेधमात्रं निषिध्यते । यत्र तु प्रतियोगिनिषेधयोरुभयोरपि निषेधः तत्र न प्रतियोगिसत्त्वं यथा ध्वंससमये प्रागभावप्रतियोगिनोरुभयोरपि निषेधे"इत्यादिना ।

**नेति[1] नेतीत्यतो वीप्सा जिघृक्षितनिषेधतः। बुभुत्सितस्य कृत्स्नस्य वीप्सैवातो निषेधनी ॥१९९॥**
**ज्ञानक्रियाभ्यां व्याप्योऽयमित्याकाङ्क्षा निवर्तते। अप्रमित्सित एकस्मिन्निष्ठां यात्यचिकीर्षिते ॥२००॥**

वीप्सया प्रपञ्चस्य तन्निवृत्तेश्च निषेधः

**रज्जुयाथात्म्यविज्ञानात्सर्पवत्करणात्मनः। निषेधो नान्यतः शक्यः कर्तुं वर्षशतैरपि ॥ १ ॥**
**यद्यत्प्राप्तं जगत्यस्मिंस्तत्तत्सर्वं निषिध्यते। एवं च सत्यनिर्दिष्टाशङ्काऽपि विनिवर्तते ॥ २ ॥**
**न चेद्वीप्सा तदा वाक्यद्वयमेतद्विवक्षितम्। उक्तद्वयनिषेधेन तस्य चोपक्षयाद्भवेत् ॥ ३ ॥**
**अनुक्तविषयाशङ्का सर्वस्याप्रतिषेधतः। यदि[3] वाऽभावविषया न ह्यभावो निषिध्यते ॥ ४ ॥**
**साक्षान्मानप्रसिद्धेषु प्रतिषिद्धेतरग्रहः। अप्रसिद्धे प्रसिद्धानां निषेधाच्छून्यताग्रहः ॥ ५ ॥**

आदेशस्य शून्यनिष्ठतानिरासः

**आदेश इत्युपक्रम्य प्रतिषेधोऽयमुच्यते। साक्षादादिश्यते येन तादृगादेश उच्यते ॥ ६ ॥**

**इतिनोपात्तद्वैतस्य प्रत्यङ्मात्रत्वेन निषेधात्प्रतीचि वाक्यार्थेऽपि किमर्थं नकारद्वयमितिद्वयं चेत्या शङ्क्याऽऽह–** नेतीति। **यतो यद्यत्प्राप्तं तन्निषिध्यतेऽतो वीप्सेयमित्यर्थः।** आकाङ्क्षादिनिवृत्तेश्चैवमित्याह—जिघृक्षितेति। **तदेव स्फुटयति**—बुभुत्सितस्येति। **यतः सर्वस्याऽऽकाङ्क्षितस्य वीप्सा निषेधन्यतः सैव युक्तेत्यर्थः ॥१९९॥**

**तत्पक्षेऽपि कथं सर्वाकाङ्क्षाशान्तिरित्याशङ्क्याऽऽह**—ज्ञानेति। **अयमर्थो ज्ञेयः कार्यश्चायमित्याकाङ्क्षा वीप्सायां निवर्तते प्राप्तस्य सर्वस्य निषेधाज्ज्ञानक्रिययोरविषये च तादात्म्यरूपां निष्ठां विद्वानातिष्ठते तद्युक्ता वीप्सेत्यर्थः ॥२००॥**

**स्थूलाद्यभावधियैव द्वैततद्धेतुध्वस्तेर्ब्रह्म[4]निष्ठानर्थक्यादभावपक्षाद्वीप्सापक्षे न विशेष इत्याशङ्क्य ब्रह्मतत्त्वधीरेव बाधिकेत्यत्र दृष्टान्तमाह**—रज्ज्वेति ॥२०१॥

**वीप्साफलमाह**—यद्यदिति। **निर्देश्यस्य सर्वस्य निषेधे किं जातं तदाह**—एवं चेति। **वाङ्मनसविषयस्याशेषस्य नञ्भ्यां निषेधे तदतीतं प्रत्यङ्मात्रं ब्रह्मेत्यर्थादादिष्टं निरवधिनिषेधायोगात्तथाच तदनिर्दिष्टत्वशङ्काध्वस्तिरित्यर्थः ॥२०२॥**

**वीप्सापक्षे गुणमुक्त्वा पक्षान्तरे दोषमाह**—न चेदिति। **वाक्यद्वयपक्षे को दोषस्तत्राऽऽह**—उक्तेति। **मूर्तामूर्तनिषेधेन वाक्यद्वयोपरतेरशेषव्यपदेश्यानिषेधात्किंचिदनुक्तं व्यपदेश्यमेव ब्रह्मेत्याशङ्का स्यादित्यर्थः। शङ्कान्तरमाह**—यदि वेति। **इतिभ्यामुपनीतमूर्तामूर्तयोरेव नञ्भ्यां निषेधादभावानिषेधात्तन्निष्ठं वाक्यमिति शङ्कोन्मिषेदित्यर्थः ॥२०३-२०४॥**

**तदेव साधयति**—साक्षादिति। **प्रमितेषु भूतलादिषु प्रमितानामेव घटादीनां धर्मित्वप्रतियोगित्वग्रहात्तदुभयं साक्षादशून्यं तिष्ठति। अप्रमिते ब्रह्मणि प्रमितं जगन्निषिध्यते चेद्वचः शून्यावसायि स्याद्ब्रह्मणि मानाभावान्मितस्य जगतो निषिद्धत्वादित्यर्थः ॥२०५॥**

**भवतु वाक्यस्य शून्यनिष्ठतेत्याशङ्क्याऽऽह**—आदेश इति। **ब्रह्मण आदेश इत्युक्त्वा निषेधोक्तेरयमादेशो निषेधाख्यो ब्रह्मप्रतिपादनपर एवेत्यर्थः ॥२०६॥**

---

१. अस्थूलमनणु इत्यादिनिषेधेनैवोपपत्तौ अधिष्ठाननिष्ठा नेति नेतीति वीप्सा किमर्थेति चेन्न, केवलाभावबोधने अधिष्ठानज्ञानाभावात् द्वैतबाधो न स्यात्। वीप्सया अधिष्ठाने द्वैतशून्यत्वेन बोधिते सति प्रपञ्चबाधः सेत्स्यति अधिष्ठानज्ञानस्यैवारोप्यबाधकत्वात्।

२. ज्ञानक्रियाभ्यां ज्ञानव्याप्यः ज्ञानविषयः, क्रियाव्याप्यः क्रियाविषयः एतदुभयं वीप्सया निवर्तते सर्वेषां ज्ञानानां क्रियाणां चाविषयः तेन शुद्धे आत्मनि निष्ठामाप्नोति।

३. यदि वा अभावविषया अनिषिद्धाभावनिष्ठं वाक्यमित्यर्थः।

४. ब्रह्मनिष्ठानर्थक्यं = ब्रह्मणि द्वैतावबोधनानर्थक्यम्।

निषेधवर्त्मना तस्मादनिषेध्यात्मसाक्षिणा । ज्ञाताज्ञातं निषिध्याथ सदा दृष्टौ प्रतिष्ठति ॥ ७ ॥

यथा[1] श्रोत्रधिया रूपं रूपहेत्वसमन्वयात् । नाग्रहीन्न च गृह्णाति न ग्रहीष्यति शब्दवत् ॥ ८ ॥

प्रत्यक्तत्त्वे विनिर्ज्ञाते नेति नेतीतिवाक्यतः । तद्वत्सकारणोऽनात्मा नाभूदस्ति भविष्यति ॥ ९ ॥

नान्यदज्ञानतोऽस्तित्वं द्वितीयस्या[2]ऽऽत्मनो यथा । निवृत्तिस्तद्वदेवास्य नावगत्यात्मनोऽपरा ॥१०॥

अनन्यायत्तमैकात्म्यं यदा साक्षाद्व्यवस्थितम् । व्येव त्वेति प्रतिज्ञेयं तदा स्यात्सफलोदिता ॥११॥

नेति नेतीत्यतो वीप्सासम्भवादुक्तवस्तुनः । कृतार्थता तथाच स्यादन्यथा नोपपद्यते ॥१२॥

परागर्थेषु सक्ता धीः प्रत्यगर्थानुरञ्जनात् । निषिद्धाऽतः परागर्थात्प्रतीचि लभते स्थितिम् ॥१३॥

नेति नेतीत्यस्य स्वयं विधिमुखेन अर्थान्तरवर्णनम्

व्यतिरेकस्य सिद्धत्वादादेशोक्तेः पुरैव हि । साक्षाद्ब्रह्मत्वसिद्ध्यर्थमादेशोऽयमथोच्यते ॥१४॥

न निषेधो निषेध्यार्थो लक्षणार्थपरत्वतः । ब्रह्मणो मान्तरासिद्धेः शून्यतैव प्रसज्यते ॥१५॥

वाक्यस्य शून्यनिष्ठत्वायोगे फलितमाह—निषेवेति । निषेधादेशेन कार्यकारणं जगन्निषेधायोग्यसाक्षिब्रह्मरूपेण निषिध्य स्वरूपेण तिष्ठति विद्वानित्यर्थः । उपाधिनिवृत्तावनुपहितरूपेण विदुषोऽवस्थितिरुचितेत्यथशब्दार्थः ॥२०७॥

जगदेकदा निषिद्धमपि पुनः पुनरुद्भविष्यति सर्पादौ तथा दृष्टेरित्याशङ्क्य दृष्टान्तेन निराचष्टे—यथेत्यादिना । रूपेण हेतुना श्रोत्रस्य संबन्धाभावादिति यावत् ॥२०८-२०९॥

सकारणद्वैतनिवृत्तिरात्मनोऽन्येत्याशङ्क्य पूर्वोक्तं स्मारयति—अनन्येति ॥२१०॥

वाक्यस्याभावनिष्ठत्वायोगाद्वीप्सया सर्वमारोपितं साक्षिरूपेण निरस्य तदात्मना तिष्ठति विद्वानित्युक्त्वा वीप्सापक्षे हेत्वन्तरमाह—अनन्येति ॥२११॥

तत्पक्षमुपसंहरति—नेतीति । वीप्साश्रयणे विवक्षितस्य प्रतिज्ञार्थवत्त्वादेर्वस्तुनः संभवादिति हेत्वर्थः । उक्तार्थसिद्धिरेव मा भूदित्याशङ्क्याऽऽह—कृतार्थतेति । अनन्यायत्तमैकात्म्यमित्यादेरुक्तार्थसिद्धावेव पुरुषस्य कृतार्थता नान्यथा "इह चेदवेदीदथ सत्यमस्ती"त्यादिश्रुतेरित्यर्थः ॥२१२॥

निषेधफलमुपसंहरति—परागिति । मनः स्वभावतो बाह्यविषयं कथंचिद्दैववशात्प्रत्यगनुषक्तं विषयेभ्यो निषिद्धं सत्परिशेषात्प्रतीचि स्थास्यतीत्यर्थः ॥२१३॥

भाष्यमाश्रित्य युक्तितो निषेधवाक्यं व्याख्यातम्—इदानीमिदमेव विधिमुखेन बोधकमित्यर्थान्तरं विवक्षुरस्यातिरेकार्थतेति पक्षं प्रत्याह—व्यतिरेकस्येति । षष्ठीनिर्देशे व्यतिरेकसिद्धिरिति द्योतयितुं हिशब्दः । पूर्वमेव ब्रह्मणो मूर्तादेर्व्यतिरेकलाभान्नाऽऽदेशोक्तिस्तदर्था चेत्तर्हि किमर्थेत्यत आह—साक्षादिति । पदार्थशोधनानन्तरं मुमुक्षोः साक्षादेव ब्रह्मभावं बोधयितुमादेशोक्तिरित्यर्थः ॥२१४॥

केचिदुक्तौ पक्षावविमृशन्तो मूर्तादिनिषेधार्थतामादेशोक्तेराहुस्तान् प्रत्याह—नेत्यादिना । न हि निषेधादेशो निषेध्यमूर्तादिनिषेधार्थो लक्षणया त्वमर्थपरत्वादित्यर्थः । विपक्षे दोषमाह—ब्रह्मण इति । प्रमितस्य मूर्तादेर्निषिद्धत्वाद्ब्रह्मणश्चाप्रमितत्वात्तात्त्विकी शून्यतैव विश्वस्य स्यादित्यर्थः ॥२१५॥

---

१. यथा श्रोत्रजन्यबुद्धया रूपं न ग्रहीष्यति रूपस्य श्रोत्रेण हेतुना योग्यसम्बन्धाभावात् = रूपप्रत्यक्षे तस्याहेतुत्वात् । यथा शब्देन सम्बन्धः तथा न रूपेणेत्यर्थः ।

२. नात्मनो द्वितीयस्यास्तित्वं अज्ञानतोऽन्यत्र, तथा निवृत्तिरपि अवगतिरूपब्रह्मभिन्ना नेत्यन्वयः । नञर्थेन त्वमर्थो लभ्यत इति । पदार्थवृत्तिः लक्षणेति मीमांसकमतेनोक्तम् । "अभिधेयाविनाभूतप्रतीतिलक्षणोच्यते" इति भट्टोक्तेः । नञर्थेन साक्षिसम्बन्धश्च साक्षिसाक्ष्यत्वमेव ।

षष्ठ्युक्तेरेव संसिद्धा मूर्तादेर्ब्रह्मणोऽन्यता । ततश्च जामितासक्तिर्नातः स्यात्पारिशेष्यगीः ॥१६॥
शक्यते न निषेद्धुं च प्रत्यक्षाद्याश्रितत्वतः । निषेधान्न पुमर्थोऽपि कश्चित्सिध्येत्समीहितः ॥१७॥
निषेधमात्रनिष्ठत्वे न चाऽऽदेशो भवेत्प्रभोः । ब्रह्म मूर्तादि नेत्युक्तौ मूर्तादेर्न निषेधगीः ॥१८॥
ततश्च ब्रह्मतासिद्धिर्द्वितीये सति वस्तुनि । व्येव त्वेति प्रतिज्ञार्थो नापि चाऽऽविष्कृतो भवेत्॥१९॥
पारिशेष्याददतोऽसिद्धिः स्याद्विवक्षितवस्तुनः । यथा सिद्धिस्तथा व्याख्या कार्येहोक्तेरतोऽञ्जसा ॥२०॥

वाक्यस्य साक्षाद्ब्रह्मपरत्वेन विवरणम्

सिद्धो निषेधः प्रागेव सर्वस्यानात्मवस्तुनः । प्रत्यग्याथात्म्यविज्ञानादन्योन्यव्यभिचारतः ॥२१॥
अन्योन्यव्यभिचारोऽस्य वीक्ष्यतेऽनात्मवस्तुनः । स्वरूपव्यभिचारोऽपि सुषुप्तादौ स्वसाक्षिगः ॥२२॥
यथा मात्रादिसत्तेयं प्रत्यक्संवित्तिसिद्धिका । प्रमात्रादेरभावोऽपि प्रत्यग्बोधाश्रयात्तथा ॥२३॥
अविचारितसंसिद्धिरात्माविद्यैकरूपतः । सिद्धायतेऽखिलोऽनात्मा स्वतःसिद्धात्मसंश्रयात्॥२४॥
अतिरोहितसंवित्को व्यपास्ताशेषविक्रियः । अनन्यमातृमानादिर्दृष्टिमात्रात्मकत्वतः ॥२५॥

निषेधपक्षायोगे ब्रह्मणो मूर्तादित्वासंभवात्पारिशेष्याद्व्यतिरेकपक्षः स्यान्न च पुरैव तत्सिद्धिः साधकाभावादित्याशङ्क्याऽऽह—षष्ठीति । द्वे वावेत्यत्रैव षष्ठ्या मूर्तादेर्ब्रह्मणोऽन्यता सिद्धा तदादेशवाक्येऽपि व्यतिरेकोक्तिश्चेत्पुनरुक्तिरित्यर्थः । यत्तु पारिशेष्याद्व्यतिरेकार्थतेति तत्राऽऽह—नेति । निषेधोक्त्या मूर्तादेर्ब्रह्माभेदे निषिद्धे पारिशेष्याद्व्यतिरेकसिद्धिरित्युक्तिरयुक्ता षष्ठ्यैव तत्सिद्धौ पारिशेष्यानवकाशादित्यर्थः ॥२१६॥

व्यतिरेकपक्षं निरस्य निषेधपक्षे दोषान्तरमाह—शक्यत इति । तदाश्रित्य तद्विषयत्वेन स्थितं मूर्ताद्यशक्यं निषेद्धुं तद्विरोधादित्यर्थः । यदि रूप्यादिधीवदध्यक्षादेराभासत्वात्तदर्थनिषेधो युक्तस्तदाऽपि नाऽऽदेशोक्तेर्निषेधार्थता तन्मात्रस्याफलत्वादित्याह—निषेधादिति ॥२१७॥

किंच निषेधमात्रनिष्ठं वा वाक्यं तद्द्वारा ब्रह्मनिष्ठं वा ? नाऽऽद्यः प्रक्रमविरोधादित्याह—निषेधेति । द्वितीयेऽस्मत्पक्षप्राप्तिरिति चकारार्थः । व्यतिरेकपक्षेऽपि न तन्मात्रपरं वाक्यमुपक्रमविरोधात्तद्द्वारा ब्रह्मपरं चेत्तत्राऽऽह—ब्रह्मेति ॥२१८॥

मूर्तादेरनिषेधेऽपि व्यतिरेकोक्त्या वाक्यपर्यवसाने का हानिरित्याशङ्क्याऽऽह—ततश्चेति । पक्षद्वयसाधारणं दोषमाह—व्येवेति । यदि मूर्तादिनिषेधस्तस्य वा ब्रह्माभेदे निषिद्धे पारिशेष्यात्ततोऽर्थान्तरत्वविधिस्तदादेशोक्त्या प्रतिज्ञार्थो न प्रकटितः स्यादनिषिद्धवस्त्वन्तरस्य वा निषेधस्य वा मूर्तादेर्वा द्वितीयस्य सत्त्वादद्वयार्थासिद्धेरित्यर्थः । कथं तर्हि निषेधोक्तिर्निर्वहत्यत आह—यथेति । पक्षद्वयेऽपि यतोऽभीष्टब्रह्मासिद्धिरतो यथा तत्सिद्धिस्तथा तस्मिन्नेव ब्रह्मणि विषये निषेधोक्तेः साक्षाद्व्याख्या कार्येति योजना ॥२१९–२२०॥

तामेव व्याख्यातुमादेशोक्तेरर्वागेव निषेधव्यतिरेकौ सिद्धावित्यनुवदति—सिद्ध इति । अनात्मनिषेधे हेतुमाह—अन्योन्येति ॥२२१॥

तमनुभवेन साधयति—अन्योन्येति । न केवलं मिथो व्यभिचारादनात्मा कल्पितो ज्ञाननिषेध्यः किंत्वात्मव्यभिचारस्य स्वापादौ स्वानुभवसिद्धेश्चेत्याह—स्वरूपेति ॥२२२॥

अनुवादव्याजेन निषेधोक्तेरर्थान्तरं निरस्य स्वानुगुणव्याख्यामाचक्षाणो नञर्थेन प्रत्यगर्थस्य लक्ष्यत्वं विवक्षुस्तयोः साक्षिसाक्ष्यसंबन्धं दृष्टान्तेनाऽऽह—यथेति ॥२२३॥

भावाभावरूपोऽनात्माऽनुभवसिद्धश्चेत्तद्वत्तस्य सत्यतेत्याशङ्क्याऽऽह—अविचारितेति । सर्वोऽनात्मा स्वप्रकाशात्मप्रसादाद्भासमानवद्भवति, स च दुर्निरूपत्वात्प्रत्यगविद्यैकस्वभावस्तत्कुतोऽस्य सत्यतेत्यर्थः ॥२२४॥

कथमात्मनः स्वप्रकाशतेत्याशङ्क्य चिद्रूपत्वादित्याह—अतिरोहितेति । तथाऽप्यात्माऽनात्मानं साधयति चेद्दीपवद्विकारी स्यादित्याशङ्क्याऽऽह—व्यपास्तेति । संविद्रूपत्वं साधयति—अनन्येति । मात्रादिरूपत्वेन नानारसत्वं शङ्कित्वाऽऽह—दृष्टीति । न नानारसतेति शेषः ॥२२५॥

भावाभावात्मिका सिद्धिर्येयं सर्वाऽप्यनात्मनः । तद्विरुद्धात्मकान्मत्तो मय्येवासौ प्रसिध्यति ॥२२६॥
अनन्यानुभवेनैव भावाभावात्मभूमिषु । प्रत्यक्कूटस्थ आत्मानं पश्यन्नास्ते फलात्मना ॥२२७॥
अतो मात्रादिसम्भेदो यत्र यत्र निवर्तते । तत्र तत्रैकलः प्रत्यक्स्वहिम्नैव सिध्यति ॥२२८॥
प्रमात्रादेरभावोऽतो यः सिद्धः स्वात्मबोधतः । नञ्वृत्तिस्तं सदाबुद्धं लक्षयत्यपृथक्प्रमम् ॥२२९॥
वैविक्त्या[1]न्न च मानादेरनन्यानुभवात्मनि । सहेतुकस्य वृत्तिः स्यान्नित्यबोधावबोधिनि ॥२३०॥
अविद्याद्यतिरेकेण कारणादिविधर्मकम् । लब्धमात्मात्मकं वस्तु प्रतीचोऽनन्यमानतः ॥२३१॥
एतद्वस्तु स्वतःसिद्धं प्रमात्राद्यनपेक्षतः । सर्वस्यैव ततः सिद्धेः कथं सिध्येत्तदन्यतः ॥२३२॥

"नेति" इत्यनेन जीवब्रह्मैक्यबोधनरीतिः

उक्ता प्रमेयसंसिद्धिः स्वमहिम्नैव नञ्श्रुतेः । तस्य ब्रह्मत्वबोधाय नेति ब्रह्मेतिनोच्यते ॥२३३॥
[2]आत्मप्रत्ययमामेयो लक्षितो यो नञाऽञ्जसा । अविद्यादेस्तदात्मत्वादिति ब्रह्मेति बोध्यते ॥२३४॥

रूपादिमतो दीपादेस्तादृग्घटादिसाधकत्वदृष्टेरात्मनोऽपि द्वैतसाधकत्वे तद्गतजाड्यादिप्रसङ्गस्तस्मादन्यत्रैव तत्साधकत्वं स्यादित्याशङ्क्याऽऽह—भावेति । न हि दीपवदात्मा साधकोऽनात्मत्वापत्तेरिति भावः ॥२२६॥

स साधकान्तरापेक्षः साधकत्वाद्दीपवदित्यनवस्थामाशङ्क्याऽऽह—अनन्येति । पश्यन्नित्युक्त्या दर्शनकर्तृत्वप्राप्त्या कौटस्थ्यदौस्थ्यमित्याशङ्क्याऽऽह—फलेति ॥२२७॥

प्रत्यगर्थस्य कूटस्थाद्वयचिदेकरसस्य नञर्थस्य च साक्षिसाक्ष्यसंबन्धमुक्तमुपसंहरति—अत इति । प्रकृतं फलात्मकत्वमतःशब्दार्थः । अवस्थाभेदो वीप्सया गृह्यते ॥२२८॥

उक्तं संबन्धमनूद्य नञर्थस्य प्रत्यगर्थलक्षकत्वमाह—प्रमात्रादेरिति । नञो वृत्तिर्वाचकत्वेन यस्मिन्निति नञ्वृत्तिर्मात्राद्यभावः स स्वसाधकं बोधैकरसं प्रत्यञ्चं लक्षयत्यतो निषेधवाक्ये नञस्त्वमर्थ इत्यर्थः । सदाबुद्धमित्येतद्विवृणोति —अपृथक्प्रममिति ॥२२९॥

कस्मान्नञर्थेन स लक्ष्यते प्रत्यक्षादिबलादेव तत्सिद्धेरत आह—वैविक्त्यादिति । मात्रादेः स्वहेत्वविद्यासहितस्य न प्रतीच्यनुभवैकरसे संभवो जडाजडयोरत्यन्तविविक्तत्वादतो नाध्यक्षादिना प्रत्यग्धीरित्यर्थः । किंच मानादेरपि साधके साधकत्वेन न तद्वृत्तिरित्याह—नित्येति ॥२३०॥

वैविक्त्यादितिहेत्वसिद्धिमाशङ्क्याऽऽह—अविद्यादीति । तस्यास्तज्जाड्याच्चातिरेकेण हेतुना द्वयविलक्षणं प्रतीचः स्वभावभूतं वस्तु स्वानुभवादेव लब्धमतो विविक्तताऽऽत्मानात्मनोरित्यर्थः ॥२३१॥

अनन्यमानत्वासिद्धिमाशङ्क्याऽऽह—एतदिति । तत्र युक्तिमाह—सर्वस्येति ॥२३२॥

नञर्थमनुवदति—उक्तेति । स्वमहिम्नैव सिद्धः प्रत्यगात्मा त्वमर्थो नञर्थोऽतो नञ्पदस्य विषयसिद्धिरुक्तेत्यनुवादार्थः । इतिशब्दार्थं वदन्वाक्यार्थमाह—तस्येति । साक्षिणो नञर्थस्य ब्रह्मत्वज्ञापनाय नेतीति वाक्यं प्रमाणमुच्यते । [3]इतिशब्देन मूर्तादिविशिष्टं गृहीत्वा विशेषणत्यागेन केवलं ब्रह्म लक्ष्यते । तस्मादितिशब्दोपात्तं ब्रह्म नञर्थः साक्षीति वाक्यार्थः ॥२३३॥

जीवब्रह्मणोरैक्ये नेतीति वाक्यं मानमित्ययुक्तं परिच्छिन्नस्यापरिच्छिन्नत्वायोगादित्याशङ्क्याऽऽह—

१. वैविक्त्यात्—जडाजडयोरत्यन्तविविक्तत्वात् न मानादेरात्मनि बोधकत्वेनानुवृत्तिः (न्या०) नित्यबोधेति मानादेरपि साधके साक्षिणि न साधकत्वेन मानानां वृत्तिः ।

२. आत्मप्रत्यय एव प्रमाणं तेन मेयः=स्वप्रकाश इत्यर्थः । तत्र चाविद्यादेस्ततो भेदेन दुर्निरूपत्वेन तन्मात्रत्वादित्यर्थः ।

३. इतिशब्दः तत्पदार्थपरः नञर्थः साक्षी त्वंपदार्थः । तस्य साक्षिणः ब्रह्मत्वं सामानाधिकरण्येन बोध्यते । न=जीवः इति=ब्रह्म इत्यन्वयः ।

प्रत्यङ्मोहतदुत्थस्य[1] प्रत्यग्याथात्म्यबोधतः । बाधितत्वाददतोऽवोचदिति ब्रह्मेति मोहनुत् ॥३५॥

अथात इति संरम्भोऽयुक्त इति शङ्का समाधिश्च

आदेशं प्रत्यतिमहानथात इति सम्भ्रमः । तेनासदृश आदेशो नन्वयुक्तोऽयमीर्यते ॥३६॥

न ह्येतस्मादित्यस्य विवरणम्

युक्त एवायमादेशो न यतो विद्यते परः । आदेशोऽतोऽयमेवात्र ब्रह्मण्यादेश इष्यते ॥३७॥

आदिदिक्षितमेतस्य तत्त्वं यद्ब्रह्मणः परम् । यावन्तस्तत्र निर्देश्यास्तेऽर्थाः सर्वे निर्वर्तिताः ॥३८॥

निवृत्तिश्च यथोक्तैव तेषामैकात्म्यलक्षणा । भिन्नदेशस्थितिस्त्वत्र वास्तवी नोपपद्यते ॥३९॥

अव्यावृत्ताननुगतो ब्रह्मशब्दार्थ इष्यते । मुख्योऽन्यस्मिन्सति यतो ब्रह्मार्थो नावसीयते ॥४०॥

शब्दप्रवृत्तिहेतूनामैकात्म्येन समाप्तितः । तथा तदभिधेयानामादेशोऽयं मतः परः ॥४१॥

अभिधाभिधेयसम्बन्धमङ्गीकृत्य यतोऽक्षरे । न कश्चिदपि शब्दोऽत्र साक्षाद्ब्रह्मणि वर्तते ॥४२॥

आदेशो नेति नेत्येव तेनेह घटतेऽञ्जसा । तदबोधप्रसूतानामाकाङ्क्षाणां निषेधतः ॥४३॥

अथ नामधेयमित्यस्यार्थः

मूर्तामूर्तं हि सत्याह्वं प्राणाः सत्यास्तदात्मतः । क्षेत्रज्ञस्तदुपाधित्वात्सत्य इत्यभिधीयते ॥४४॥

आत्मेति। वाच्यस्य परिच्छिन्नत्वेऽपि लक्ष्यस्य तदभावात्तदन्यवस्त्वभावादितिशब्दलक्षितब्रह्म नञर्थप्रत्यङ्मात्रमिति बोध्यते वाक्येनेत्यर्थः ॥२३४॥

आत्ममात्रत्वमविद्यादेरयुक्तं मिथो विरोधात्तन्न प्रतीचो ब्रह्मत्वबोधि वाक्यमित्याशङ्क्याऽऽह—प्रत्यगिति। परिच्छेदहेत्वभावादितिशब्दलक्ष्यं ब्रह्म नञर्थः प्रत्यगात्मेत्येतमर्थं नेतिवाक्यमवदत्तच्च धीद्वारा मोहध्वंसीत्यर्थः ॥२३५॥

आदेशवाक्यं व्याख्याय न हीत्याद्यवतारयितुं शङ्कयति—आदेशमिति। संभ्रमः संरम्भस्तस्य महत्त्वं तात्पर्यपूर्वकत्वमस्य च प्रकरणान्तरेणातिशयं विवक्षित्वाऽतिशब्दः ॥२३६॥

प्रक्रमासादृश्येनाऽऽदेशस्यायुक्तत्वं प्रत्याह—युक्त इति। तत्र हेतुः—नेति। तस्य युक्ततां निगमयति—अत इति ॥२३७॥

कथं तस्मिन्नादेशान्तराभावो विधिरूपस्यापि संभवादित्याशङ्क्याऽऽह—आदिदिक्षितमिति। यत्परं तत्त्वं ब्रह्मणो निर्देष्टुमिष्टं तत्र यावन्तो मूर्तादयो निर्देशयोग्यास्तेषां नेतीति निरासान्न विधिमुखं तद्बोधनमित्यर्थः ॥२३८॥

निषेधमुखेनापि नाद्वयबोधनं मूर्तादिनिवृत्त्या द्वैतापत्तेरित्याशङ्क्य नान्यदज्ञानतोऽस्तित्वमित्यादावुक्तं स्मारयति—निवृत्तिश्चेति। किंच ब्रह्मणोऽन्यत्र भावाभावस्थितिरापाततो वस्तुतो वा ? प्रथममङ्गीकृत्य द्वितीयं प्रत्याह—भिन्नेति ॥२३९॥

भावाभावयोर्ब्रह्मणोऽन्यत्र वस्तुतो न स्थितिरित्यत्र ब्रह्मशब्दार्थोक्तिपूर्वकं हेतुमाह—अव्यावृत्तेति ॥२४०॥

इतश्च निषेधद्वारैव ब्रह्मण्यादेशो युक्तिमानित्याह—शब्देति ॥२४१॥

विधिरूपादेशस्यात्रासंभवमुपसंहरति—अभिधेति। कूटस्थासङ्गाद्वये निमित्ताभावान्न मुख्या शब्दवृत्तिरित्यर्थः ॥२४२॥

निषेधादेशस्य तत्र घटमानत्वमुपसंहरति—आदेश इति। विधिमुखादेशायोगे हेतुं तेनेत्युक्त्वा हेत्वन्तरमाह—तदबोधेति ॥२४३॥

न हीत्यादि व्याख्यायाथेत्यादौ षष्ठ्यन्तसत्यशब्दार्थमाह—मूर्तेति। सच्च त्यच्चाभवदितिश्रुत्यन्तरप्रसिद्धिमुक्तेऽर्थे द्योतयति हिशब्दः। भूतपञ्चकं तत्कार्यं तदुपाधिकं च चैतन्यं सत्यमित्यर्थः ॥२४४॥

---

१. प्रत्यङ्मोहः अज्ञानं तदुत्थं तज्जन्यं च।

अनिर्देश्यस्य निर्देश्या ये भेदाः कार्यलक्षणाः । तेषु लब्धास्पदं नाम परस्मिन्नुपचर्यते ॥४५॥
मूर्तामूर्तात्मकं सत्यं प्राणादेः कार्यरूपिणः । तस्याप्येतत्परं सत्यं यन्नेतीत्यवधारितम् ॥४६॥
उक्तवस्त्वतिरेकेण नामीषां सत्यता यतः । न चाप्यसत्यता तस्मात्तेषां सत्यं परं पदम् ॥४७॥
आत्मवन्तो यथा रज्ज्वा रज्जुसर्पादयस्तथा । आत्मवन्तो निरात्मानः प्राणाद्याः प्रत्यगात्मना ॥४८॥
यत एवमतोऽन्वीक्ष्य मूर्तामूर्तादिवर्त्मना । सत्यशब्दाभिधेयार्थं तया द्वारा परं पदम् ॥४९॥
व्यपदिश्यमानमैकात्म्यं सत्यस्याऽऽत्मानमद्वयम् । द्रष्टव्यमात्मनैवैनं सत्यं पश्येद्यथोदितम् ॥५०॥
अतो[1]ऽव्याकृतयाथात्म्यं व्याकृतेनोपदिश्यते । सत्यस्य सत्यमिति तन्नान्यथा व्यपदेशभाक् ॥५१॥
व्यपदेशाय नामैतन्न स्वं नामास्य विद्यते । ननु ब्रह्माक्षरमिति व्यपदेशोऽत्र नामभिः ॥५२॥
कार्यकारणगे तत्त्वे नाम लब्धास्पदं यतः । रूपाभिधेयसम्बन्धमरूपाशब्दमक्षरम् ॥५३॥
लक्षयेन्नाञ्जसा वक्ति परं ब्रह्म कथंचन । शब्दप्रवृत्तिहेतूनां साक्षाद्ब्रह्मण्यसम्भवात् ॥५४॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके द्वितीयाध्यायस्य
तृतीयं ब्राह्मणम् ॥३॥

श्लोकानामादितः समष्टयङ्काः–४९९३

सेश्वरं सजीवं सर्वं जगदस्तु षष्ठ्यर्थस्[2]तथाऽपि न प्रथमार्थो निरुपाधिकं ब्रह्म तत्र शब्दप्रवृत्तेर्निरस्तत्वादित्याशङ्क्य लक्षणया तत्र सत्यशब्दोत्पत्तिं प्रतिजानीते—अनिर्देश्यस्येति ॥२४५॥

षष्ठ्यर्थानुवादेन विवक्षितं प्रथमार्थमाह—मूर्तेति ॥२४६॥

परस्य स्वरूपेण सत्यत्ववन्मूर्तादीनामपि तद्योगात्कथमिदं सत्यस्य सत्यमित्याशङ्क्याऽऽह—उक्तेति ॥२४७॥

ब्रह्मणा तेषां लब्धात्मता न स्वातन्त्र्येणेत्येतद्दृष्टान्तेनाऽऽह—आत्मवन्त इति ॥२४८॥

तेनैव तेषामात्मवत्त्वे फलितमाह—यत इति । रज्जुसर्पादेरिव सर्वस्य ब्रह्मणैवाऽऽत्मत्वान्मूर्तादिरूपेण षष्ठ्यर्थं सर्वमालोच्य तद्द्वारा प्रथमार्थमुच्यमानमकार्यकारणमैकात्म्यमादाय तदेवाद्वयं षष्ठ्यर्थस्यापि सत्तास्फूर्तिदं दृष्टियोग्यं ज्ञात्वा दर्शितरूपमनतिक्रम्य स्थितमेनं परात्मानं प्रथमालक्ष्यं स्वरूपत्वेनैव मुमुक्षुरनुसंदध्यादित्यक्षरार्थः ॥२४९–२५०॥

रज्ज्वा सर्पादेरात्मवत्त्वमन्वयादिसिद्धं ब्रह्मणा सर्वस्याऽऽत्मवत्त्वे किं मानमित्याशङ्क्य तत्र सत्यशब्दप्रवृत्तिरित्याह—अत इति । व्याकृताव्याकृतयोर्यथोक्तं ब्रह्मयाथात्म्यमत एव तद्द्वारा सत्यस्य सत्यमिति ब्रह्मोच्यते यदि तयोर्न याथात्म्यं ब्रह्म तदा न तत्र शब्दप्रवृत्तिः स्याद्द्वारं विना साक्षादेव तस्याव्यपदेश्यत्वादित्यर्थः ॥२५१॥

मा तर्हि ब्रह्मणि व्यपदेशो भूदित्याशङ्क्याऽऽह—व्यपदेशायेति । स्वनामभिरेव ब्रह्मणो व्यपदेशमाशङ्क्याऽऽह—न स्वमिति । स्वीयनामासत्त्वमसिद्धमिति शङ्कते—नन्विति । अत्रेति ब्रह्मोक्तिः ॥२५२॥

कार्यकारणोपाधिके ब्रह्मणि यतो नाम सावकाशमतो नोभयविलक्षणे तत्र शब्दप्रवृत्तिरिति परिहरति—कार्येति । द्वयविलक्षणेऽपि सत्यज्ञानादिशब्दप्रयोगोऽस्तीत्याशङ्क्याऽऽह—रूपेति । सोपाधिके ब्रह्मणि वाच्ये गृहीतसम्बन्धं पदं विरुद्धांशत्यागेन शुद्धं लक्षयति न तु विना लक्षणां ब्रह्मणि शब्दप्रवृत्तिरित्यर्थः । तत्र मुख्यवृत्त्या शब्दाप्रवृत्तौ हेतुमाह—शब्देति । अतो लक्षणयैव निष्प्रपञ्चं प्रत्यग्ब्रह्म वेदान्तप्रमाणकमिति भावः ॥२५३–२५४॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां द्वितीयाध्यायस्य
तृतीयं मूर्तामूर्तब्राह्मणम् ॥३॥

१. अतो व्याकृतेत्यपि पदच्छेदेन व्याकृताव्याकृतयोः याथात्म्यं ब्रह्मोच्यते । तच्च व्याकृतवाचिसत्यशब्देन लक्ष्यते ।
२. षष्ठ्यर्थः षष्ठ्यन्तस्य 'सत्यस्य' इति पदस्यार्थः ।

## अथ द्वितीयाध्याये चतुर्थं ब्राह्मणम्

### ज्ञानाङ्गत्वेन संन्यासविधये मैत्रेयी ब्राह्मणम् । उपयुक्तकथनम्

आत्मेत्येवेति सूत्रस्य व्याख्येयं प्रस्तुता स्फुटा । ब्रह्म तेऽहं ब्रवाणीति प्रारभ्याऽऽपूर्णवाक्यतः ।। १ ।।
नित्यकर्माद्यनुष्ठानसंशुद्धधिषणः पुमान् । निःशेषकर्महेतूत्थफलसावद्यधीस्ततः ।। २ ।।
विरक्त[1] आग्रजात्सोऽयं तत्सावद्यसमीक्षणात् । संसारदुःखसंस्कारस्मृतिभिः प्रेर्यमाणधीः ।। ३ ।।
उद्भूततज्जिहासः संस्तद्धाने साधनस्पृहः । त्यक्ताशेषैषणः सोऽथ प्रत्यग्याथात्म्यनिश्चयः ।। ४ ।।
वस्तुवृत्तात्मसम्बोधध्वस्तसंसारकारणः । व्याविद्धाशेषसंसारो विमुक्तो ना विमुच्यते[2] ।। ५ ।।
यावत्किंचिदविद्यायाः कार्यं वैराग्यकारणम् । तत्संन्यासो विरक्तत्वात्स्वत एव न शास्त्रतः ।। ६ ।।
ब्रह्मयाथात्म्यविज्ञानसाधनत्वं विनाऽऽगमात् । संन्यासस्य न विज्ञातं तच्छास्त्रेणेह बोध्यते ।। ७ ।।

### मैत्रेयीब्राह्मणस्य अर्थान्तरेऽपि तात्पर्यम्

ब्रह्माविद्यासमुत्थानात्कार्यकारणलक्षणात् । व्युत्थाप्य नेति नेतीति परं ब्रह्म प्रदर्शितम् ।। ८ ।।
तत्रैतच्छङ्क्यते चोद्यं ब्रह्मत्वासिद्धिदोषकृत् । निषिद्धं नेति नेतीति मूर्तामूर्तादि वस्तु यत् ।। ९ ।।
किं तद्ब्रह्मानुगं सर्वं किं वा तस्माद्विविच्यते । यदि ब्रह्मानुगं ब्रह्म स्यादनर्थात्मकं तदा ।।१०।।

सम्बन्धं वक्तुमुपयुक्तं वृत्तं कीर्तयति—आत्मेत्येवेति । ब्रह्म ते ब्रवाणीति व्येव त्वा ज्ञपयिष्यामीति चोपक्रम्य पूर्णवाक्यान्तो[3] यो ग्रन्थस्तेन तार्तीयविद्यासूत्रस्य स्फुटा व्याख्या कार्येति चतुर्थादौ प्रस्तुतमित्यर्थः ।।१।।

मुक्तिहेतुत्वेन प्रस्तुतविद्याङ्गतया संन्यासविधानायेदं ब्राह्मणमिति सम्बन्धं विवक्षुर्ज्ञानान्मुक्तिसिद्धौ क्रमं वदन्निहामुत्र वाऽनुष्ठितनित्यादिकर्मफलं चित्तशुद्धिरित्याह—नित्येति । शुद्धिफलं संसारासारतादृष्टिरित्याह—निःशेषेति । ततः शुद्धेरिति यावत् ।।२।।

संसारदोषदृष्टिफलमाह—विरक्त इति । वैराग्यफलं संसारजिहासां तज्जन्महेतूक्तिपूर्वकमाह—संसारेति । उत्पन्नसंसारजिहासाकार्यमाह—तद्धान इति । आत्यन्तिकबन्धध्वस्तौ हेतुं जिज्ञासमानः स्वाध्यायादापातेनाऽऽत्मज्ञानं तदुपायं श्रुत्वा तच्छेषत्वेन पुत्राद्येषणात्रयं त्यजतीत्याह—त्यक्तेति । विविदिषासंन्यासानन्तरमसकृदनुष्ठितश्रवणादिफलमाह—अथेति ।।३–४।।

तत्त्वज्ञानफलमाह—वस्त्विति । कारणध्वस्त्या कार्यध्वस्तिमाह—व्याविद्धेति । आत्मनः स्वतो मुक्तस्य कुतः सा हेत्वधीनेत्याशङ्क्याज्ञानाद्बन्धवज्ज्ञानाद्बुद्धस्य सकार्याज्ञानध्वस्तौ सोपचर्यते ब्रह्मविदाप्नोतीत्यादावित्याह—विमुक्त इति ।।५।।

ज्ञानाङ्गत्वेनोक्तसंन्यासस्य वैराग्यादेव प्राप्तेर्न तद्विध्यर्थं ब्राह्मणमारभ्यमित्याशङ्क्य संन्यासस्वरूपे विध्यानर्थक्यं तस्य ज्ञानाङ्गत्वे वेति विकल्प्याऽऽद्यमङ्गीकरोति—यावदिति । तस्य तत्कारणत्वं दुःखबहुलत्वादवधेयम् ।।६।।

द्वितीयं दूषयति—ब्रह्मेति । इहेति वैदिकपक्षोक्तिः ।।७।।

संन्यासस्य ज्ञानसाधनत्वोक्त्यर्थं ब्राह्मणमिति भाष्योक्तमर्थमुक्त्वाऽर्थान्तरं वक्तुमनन्तरब्राह्मणोक्तमनुवदति—ब्रह्माविद्येति ।।८।।

उत्तरब्राह्मणापोद्यं चोद्यमाह—तत्रेति । तस्य निरस्यतामाह—ब्रह्मेति । चोद्यमेव विशदयितुं विकल्पविषयमाह—निषिद्धमिति ।।९।।

तत्किं ब्रह्मणोऽभिन्नं किंवाऽभावनिष्ठमथ भिन्नमिति विकल्पयति—किं तदिति । अभेदपक्षमनुभाष्य दूषयति—यदीति ।।१०

---

१. आ अग्रजात् ब्रह्मपर्यन्ते संसारे विरक्तः । अग्रजो ब्रह्मा ।
२. विमुक्तः स्वयं विमुच्यते—अज्ञाननिवृत्या । ना=नरः ।
३. पूर्णवाक्यं—पूर्णमद इति पञ्चमाध्यायगतं वाक्यम् ।

अभावनिष्ठं तच्चेत्स्यान्मुख्यं ब्रह्म न सिध्यति । अभावस्य ततोऽन्यत्वादन्वयव्यतिरेकतः ॥११॥
नेतीत्यपि निषेधोक्तिस्तथा सति विरुध्यते । वैदिकश्च प्रयासोऽयं सर्वः स्यात्तुषकण्डनम् ॥१२॥
विविच्यते ब्रह्मणश्चेन्मैवं दोषस्तथाऽपि हि । ब्रह्मत्वं ब्रह्मणो न स्याद्द्वितीये सति वस्तुनि ॥१३॥
अव्यावृत्ताननुगतं वस्तु ब्रह्मत्वमश्नुते । एतच्च दुर्लभं तस्य द्वितीये सति लक्षणम् ॥१४॥
अथाब्रह्मात्मकं वस्तु जग्ध्वा चेद्ब्रह्म तद्भवेत् । प्रतीचो ब्रह्मणाऽत्तत्वान्न मोक्षो नापि संसृतिः॥१५॥
संसारिणो न चेदत्ति संसार्येव प्रसज्यते । नाऽऽप्नोति ब्रह्मतां साक्षात्सत्सु संसारिवस्तुषु ॥१६॥
संसारे चापि जग्धेऽस्मिन्ब्रह्मणा निखिले सति । ऋतेऽपि ब्रह्मविज्ञानात्सर्वे स्युर्मुक्तबन्धनाः ॥१७॥
अन्वयादिनिषेधाय सर्वमात्मेति वाक्यतः । मैत्रेयीत्यादिको ग्रन्थस्तस्मादारभ्यते परः ॥१८॥

ब्राह्मणस्य तात्पर्यान्तरम्

सर्वाब्रह्मनिषेधेन तदर्थो वेह निश्चितः । तस्य संसिद्धिविषयमैकात्म्यमधुनोच्यते ॥१९॥
नेतीति ब्रह्मणोऽन्यत्र मूर्तामूर्तव्यवस्थितौ । प्रसक्ते सांख्यसिद्धान्ते सर्वमात्मेति वोच्यते ॥२०॥

ज्ञानसंन्याससमुच्चयः मोक्षसाधनम्

सत्यपि ब्रह्मवेदित्वे नासंत्यक्तैषणो यतिः । मुक्तिभागिति चेहोक्तः संन्यासेन समुच्चयः ॥२१॥

अभावनिष्ठत्वपक्षमनूद्य निरस्यति—अभावेति । कुतो मुख्यब्रह्मासिद्धिस्तत्राऽऽह—अभावस्येति । मूर्तादेरभावनिष्ठत्वे तस्य ब्रह्मणोऽन्यत्वमनन्यत्वं वा ? आद्ये तस्य तेन संयोगविभागयोगादद्वैतासिद्धेर्मुख्यब्रह्मासिद्धिरित्यर्थः ॥११॥

द्वितीये निषेधोक्तिरफला बोध्यब्रह्माभावादित्याह—नेतीत्यपीति । वक्ष्यमाणदोषसमुच्चयार्थोऽपिशब्दः । ब्रह्माभावे सर्वोपनिषदारम्भवैयर्थ्यं दोषान्तरमाह—वैदिकश्चेति ॥१२॥

भेदपक्षमनूद्य प्रत्याह—विविच्यत इति । तमेव प्रकटयति—ब्रह्मत्वमिति ॥१३॥

सत्यपि द्वितीये तत्किं न स्यादित्याशङ्क्य ब्रह्मलक्षणमाह—अव्यावृत्तेति । द्वितीये सत्यपीदं लक्षणं ब्रह्मणि किं न स्यात्तत्राऽऽह—एतच्चेति ॥१४॥

सदपि द्वितीयमुपसंहृत्य ब्रह्मोक्तलक्षणं स्यादित्याह—अथेति । ब्रह्म द्वितीयमुपसंहरत्तद्वज्जीवमुपसंहरति न वा ? नाऽऽद्य इत्याह—प्रतीच इति ॥१५॥

कल्पान्तरमनुवदति—संसारिण इति । ते ब्रह्मणोऽभिन्ना भिन्ना वेति विकल्प्याऽऽद्यं निराह—संसारीति । ब्रह्मेति शेषः । भेदपक्षं निरस्यति—नाऽऽप्नोतीति ॥१६॥

संसारिब्रह्मणोरभेदेऽपि न ब्रह्मणः संसारस्तस्य तेन ग्रस्तत्वादित्याशङ्क्यातिप्रसङ्गमाह—संसारे चेति ॥१७॥

एतदुत्तरत्वेन ब्राह्मणमवतारयति—अन्वयादीति । अन्वयव्यतिरेकाभावपरिहाण्या सर्वमात्मेति वाक्यात् प्रत्यङ्मात्रं जगदिति वक्तुमुत्तरो ग्रन्थो यस्मादारभ्यते तस्मान्नोक्तदोषप्रसक्तिरित्यर्थः ॥१८॥

चोद्योत्तरत्वेन ब्राह्मणमवतार्यार्थान्तरमाह—सर्वेति । इहेत्यनन्तरब्राह्मणमुक्तम् । मूर्ताद्यनात्मनिरासेन तदर्थो निर्धारितस्तस्य त्वमर्थेनैक्यं मुक्त्यालम्बनमत्र निर्धार्यत इत्यर्थः ॥१९॥

प्रकारान्तरेण ब्राह्मणमुत्थापयति—नेत्यादिना । निषेधोक्तेर्ब्रह्मणोऽन्यत्र द्वैतसम्भावनायां द्वैतिमतमाशङ्क्य कल्पितस्य सर्वस्याऽऽत्ममात्रत्वं वक्तुमनन्तरब्राह्मणमित्यर्थः ॥२०॥

तस्यार्थान्तरमाह—सत्यपीति । संन्यासस्य सम्यग्ज्ञानाङ्गत्वख्यापनायाऽऽरम्भः प्रागुक्तोऽधुना ज्ञानस्य तेन समुच्चयविधानायेति भेदः ॥२१॥

निरस्तातिशयज्ञानो याज्ञवल्क्यो यतो गृही । कैवल्याश्रममास्थाय प्राप तद्वैष्णवं पदम् ॥२२॥
त्याग एव हि सर्वेषां मोक्षसाधनमुत्तमम् । त्यजतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक्परं पदम् ॥२३॥
मुक्तेश्च बिभ्यतो देवा मोहेनापिदधुर्नरान् । ततस्ते कर्मसूद्युक्ताः प्रावर्तन्ताविपश्चितः ॥२४॥
मोहमात्रैकहेतूनि तस्मात्कर्माण्यशेषतः । संन्यस्यैकात्म्यसम्बोधाद्धित्वा मोहं विशुद्धधीः ॥
ज्ञानमेवाऽऽत्मनाऽऽत्मानमुपासीनोऽमृतो भवेत् ॥२५॥
इति प्रमाणमत्रार्थे वचनं भाल्लविश्रुतौ । सर्वः संन्यस्तकर्मैव ज्ञानात्कैवल्यमश्नुते ॥२६॥
ब्रह्मचर्याद्गृहाच्चैव वनाच्चापि विधीयते । निःशेषकर्मसंन्यासो यतोऽतो नर्णबद्धता ॥२७॥
श्रुत्या जाबालशाखायां तथाचानधिकारिणाम् । संन्यासस्य विधानाच्च कार्योऽतोऽसौ मुमुक्षुभिः॥२८॥

आत्मकामिभिः संन्यास एव कार्य इति निरूपणम्

नरलोकादिकामानां सुतोत्पत्त्यादि साधनम् । तेभ्यो व्युत्थितचित्तानां संन्यासस्त्वात्मकामिनाम्॥२९॥
इममर्थं श्रुतिर्वक्ति सर्वकर्मानपेक्षिणी । प्रजादिना करिष्यामः किं तत्फलवितृष्णतः ॥३०॥
[1]उत्पत्त्यादिविरुद्धोऽयं लोको येषामकर्मजः । मोहमात्रान्तरायत्वाज्ज्ञानमात्रमपेक्षते ॥३१॥
प्रवृत्तिलक्षणो योगो ज्ञानं संन्यासलक्षणम् । तस्माज्ज्ञानं पुरस्कृत्य संन्यसेदिह बुद्धिमान् ॥३२॥

ज्ञाने सत्यपि संन्यासाभावादमुक्तेरदृष्टेर्न मुक्तौ समुच्चयस्तत्राऽऽह—निरस्तेति । अतः संन्यासज्ञानयोर्युक्तो मुक्तौ समुच्चय इति शेषः ॥२२॥

तत्समुच्चितधियो मुक्तिहेतुत्वे न केवलं लिङ्गमेव मानं किन्तु स्मृतिरपीत्याह—त्याग इति । तर्हि त्यागस्यैव मुक्तिहेतुता न तत्समुच्चितज्ञानस्येत्याशङ्क्याऽऽह—त्यजतेति ॥२३॥

तत्रैव श्रुतिं दर्शयितुं कर्मणां मोहमात्रोत्थत्वं साधयति—मुक्तेश्चेति ॥२४॥

तेषां तन्मात्रजत्वेऽपि विवेकपूर्वाद्वैराग्यात्तत्त्यागेन समुच्चितात्तत्त्वबोधादबोधध्वस्तौ सकार्यं तं हित्वा शुद्धब्रह्मणि स्थिरधीस्तदेव स्वरूपत्वेन सदाऽनुसंदधानो जीवन्मुक्तो विदेहकैवल्यं गच्छतीति फलितमाह—मोहेति ॥२५॥

प्रमाणमुपसंहरति—इति प्रमाणमिति । प्रमेयमुपसंहरति—सर्व इति ॥२६॥

ऋणापाकरणश्रुतिस्मृतिविरोधात्संन्यासायोगे कुतस्तत्समुच्चयसिद्धिरित्याशङ्क्याऽऽह—ब्रह्मचर्यादिति । न विधिविरोधेऽर्थवादश्रुतिस्मृत्योः स्वार्थे मानतेति सम्बन्धग्रन्थे साधितमिति भावः । अथ जाबालश्रुतौ कर्मानधिकृतान्धादिविषयः संन्यासविधिः । यथाऽऽहुः—तवैवं शक्यते वक्तुं येऽन्धपङ्ग्वादयो नराः । गृहस्थत्वं न शक्ष्यन्ति कर्तुं तेषामयं विधिः । नैष्ठिकब्रह्मचर्यं वा परिव्राजाकतापि वा । तैरवश्यं ग्रहीतव्या तेनादावे दुच्यते । इति ॥ तत्राऽऽह—तथाचेति । अथ पुनरव्रती वेत्यादिना पृथगनधिकृतानां संन्यासविधानात्पूर्वमधिकृतविषयमेवेति भावः । ऋणश्रुत्याद्यविरोधे फलितमाह—कार्यं इति ॥२७-२८॥

ऋणप्रमाणाविरोधेऽपि मोचकज्ञानाङ्गत्वेन संन्यासो न कार्यः सुतादिसाधनात्तत्समुच्चितज्ञानाद्वा तत्सिद्धेरित्याशङ्क्याऽऽह—नरेति ॥२९॥

पुत्रादेः स्वतन्त्रस्य परतन्त्रस्य वा न मुक्तिहेतुतेत्यत्र श्रुतिमाह—इममिति । पुत्रादिना मनुष्यलोकादिसिद्धेरिष्टत्वादाक्षेपानुपपत्तिरित्याशङ्क्याऽऽह—तत्फलेति ॥३०॥

तद्वैतृष्ण्ये हेतुमाह—उत्पत्त्यादीति । ते वयं तत्फलवितृष्णत इति सम्बन्धः । मोक्षः सुताद्यनपेक्षश्चेत्किमपेक्ष्य भवति तत्राऽऽह—मोहेति ॥३१॥

पुत्रादेरन्यत्र विनियुक्तत्वात्केवलस्य समुच्चितस्य वा मुक्तिहेतुत्वायोगाज्ज्ञानस्यैव तद्धेतुत्वात्तदङ्गत्वेन संन्यासविधिरित्युक्तं संप्रति तस्य ज्ञानहेतुत्वे स्मृतिमाह—प्रवृत्तीति ॥३२॥

---

१. उत्पत्त्याप्तिसंस्कृतिविकृतिरूपकर्मफलविलक्षणोऽयमात्मलोकः अकर्मजः ।

भावितैः[1] करणैश्चायं बहुसंसारयोनिषु । आसादयति शुद्धात्मा मोक्षं वै प्रथमाश्रमे[2] ॥३३॥
तमासाद्य तु मुक्तस्य दृष्टार्थस्य विपश्चितः । त्रिष्वाश्रमेषु को न्वर्थो भवेत्परमभीप्सतः ॥३४॥
श्रुतयः स्मृतयश्चैवमस्मिन्नर्थे सहस्रशः । प्रत्यक्षा एव विद्यन्ते संन्यासप्रतिपादिकाः ॥३५॥

तदर्थस्य त्वमर्थपर्यन्तताउक्ता अत्र त्वमर्थस्य तदर्थतानिरूपणम्

मुख्यार्थता वा प्रागुक्ता ब्रह्मेत्यस्य सदादृशि । प्रतीच्यथाऽऽत्मशब्दस्य मुख्यार्थो ब्रह्मणीर्यते ॥३६॥
ततस्तदेतदिति च ब्रह्मात्मपदवाच्ययोः । मधुकाण्डार्थसर्वस्वं वाक्येन प्रतिपाद्यते ॥३७॥
प्रत्यग्याथात्म्यविज्ञानजन्मनेऽतः श्रुतिः स्वयम् । विधित्सन्तीह संन्यासं मैत्रेयीति प्रवर्तते ॥३८॥
भार्याद्यनुज्ञापूर्वो हि संन्यासो विहितः श्रुतौ । अतोऽनुज्ञार्थमेवाऽऽह मैत्रेयीमृषिरात्मनः ॥३९॥

मू.—मैत्रेयीति होवाच याज्ञवल्क्य उद्यास्यन्वा अरेऽहमस्मात्स्थानादस्मि हन्त तेऽनया कात्यायन्याऽन्तं करवाणीति ॥१॥

उद्यास्यन्वा अरे स्थानादस्माद्गार्हस्थ्यलक्षणात् । चिकीर्षवे मे संन्यासमनुज्ञां दातुमर्हसि ॥४०॥
युक्तमाह भवानस्माननुरूपं चिकीर्षति । यदेवं सति कर्तव्यं तत्क्षिप्रमनुशाधि माम् ॥४१॥
अनुज्ञातोऽथ तामाह हन्तेत्यादि परं वचः । कात्यायन्या सपत्न्या ते विभागं करवाण्यहम् ॥४२॥

क्रमसंन्यासविषयमिदं वाक्यमित्याशङ्क्याऽऽह—भावितैरिति ॥३३॥

ब्रह्मचर्यादेव प्रव्रजितस्यापि पुनरिच्छया गार्हस्थ्यादौ प्रवृत्तिः स्यादित्याशङ्क्याऽऽह—तमिति ॥३४॥

संन्यासस्य ज्ञानाङ्गत्वे मानभूतस्मृतिमूलभूताः श्रुतयो भूयस्यः सन्तीति प्रमाणमुपसंहरति—श्रुतय इति ॥३५॥

ज्ञानस्य स्वरूपे फले वोपकारित्वेन संन्यासं विधातुं ब्राह्मणमित्युक्त्वाऽर्थान्तरविवक्षया पूर्वब्राह्मणार्थमनुवदिति—मुख्येति । तदर्थस्य त्वमर्थपर्यन्तता विहितेत्यर्थः । वक्ष्यमाणं ब्राह्मणार्थं संक्षिपति—अथेति । त्वमर्थस्य तदर्थपर्यन्तताऽनन्तरमुच्यत इत्यर्थः ॥३६॥

ब्राह्मणद्वयं पदार्थोपक्षीणं चेद्वाक्यार्थस्तर्हि केनोच्यत इत्याशङ्क्य मधुब्राह्मणेनेत्याह—तत इति । तदेतद्ब्रह्मापूर्वमित्यादिना वाक्येनेति सम्बन्धः । ब्रह्मादिपदवाच्ययोस्तद्द्वारा लक्ष्ययोरिति यावत् । मधुकाण्डार्थसर्वस्वमैक्यमित्यर्थः ॥३७॥

ब्राह्मणार्थमनेकधोक्त्वा संन्यासस्य ज्ञानाङ्गत्वपक्षे ब्राह्मणमवतारयन्सुखप्रतिपत्त्यर्थामाख्यायिकामुत्थापयति—प्रत्यगिति । संन्यासस्य ज्ञानाङ्गत्वपरामर्शार्थोऽतःशब्दः । इहेति विरक्ताधिकार्युक्तिः ॥३८॥

विरक्तः सन्नुपेक्षाकाले किमिति भार्यां मुनिः संबोधितवानित्याशङ्क्य संबोधनतात्पर्यमाह—भार्यादीति । संन्यासशब्देन क्रमसंन्यासो गृह्यते । "मातरं पितरं भार्यां पुत्रान्सुहृदो बन्धूनेताननुमोदयित्वा ये चास्यर्त्विजस्तान्सर्वान्पूर्ववद्वृणीत्वा वैश्वानरीमिष्टिं कृत्वा सर्वस्वं दद्यादि"ति कौषीतकिश्रुतिमाह—श्रुताविति । हिशब्दापेक्षितं पूरयति—अत इति ॥३९॥

ऋषिवाक्यं व्याकरोति—उद्यास्यन्निति । भवतु किं ततो मया कार्यमिति भार्याशङ्कां प्रत्याह—चिकीर्षव इति ॥४०॥

हन्तेत्यादेर्भूमिकां करोति—युक्तमिति । अनुरूपं भवतो ज्ञानस्य वयसो देशकालयोश्चेति वाक्यशेषः । कर्तव्यं मयेति शेषः ॥४१॥

हन्तेत्याद्यवतार्य व्याकरोति—अनुज्ञात इति । अनुज्ञायाः समनन्तरवाक्यप्रवृत्तिहेतुत्वद्योतकोऽथशब्दः ॥४२॥

---

१. भावितैः=संस्कृतैः ।
२. प्रथमाश्रमे=ब्रह्मचर्ये ।

निःस्वा स्त्री स्ववता पुंसा नियुक्ता कर्मसंपदि । मयि प्रव्रजिते तस्माद्युवयोर्नार्थसंगतिः ॥४३॥
स्ववानेव पुरा न्यासाद्युवयोः स्वेन सांप्रतम् । विभागं करवाणीति भार्या तेनाभ्यचोदयत् ॥४४॥
वृत्तिभिः संविभज्य स्वान्संन्यसेदिति चोद्यते । यतः शास्त्रेण तेनायं विभागः क्रियते मया ॥४५॥

मू.—सा होवाच मैत्रेयी । यन्नु म इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात्कथं तेनामृता स्यामिति नेति होवाच याज्ञवल्क्यो यथैवोपकरणवतां जीवितं तथैव ते जीवितँ स्यादमृतत्वस्य तु नाशास्ति वित्तेनेति ॥२॥

मू.—सा होवाच मैत्रेयी येनाहं नाऽमृता स्यां किमहं तेन कुर्यां यदेव भगवान्वेद तदेव मे ब्रूहीति ॥३॥

मैत्रेयीवचनम्

युक्तमेतद्व्यवसितं यद्वित्तं न प्रदित्सति । भवत्संन्यासवन्नूमस्मद्धितकरं धनम् ॥४६॥
महानुभावसंपर्कः कस्य नोन्नतिकारणम् । अशुच्यपि पयः प्राप्य गङ्गां याति पवित्रताम् ॥४७॥
भगवत्संगतेर्नान्यः पुरुषार्थोऽमृतत्वतः । पृच्छाम्यतोऽमृतत्वस्य साधनं स्यात्कथं धनम् ॥४८॥
सारेण यदि नामेयं पूर्णा स्याद्वसुना मही । तावताऽप्यमृताऽहं स्यां किंवा नेत्युच्यतां यथा ॥४९॥
सत्तामात्रोपकारीणि धनानि धनिनां न हि । क्रियाद्वारोपकारीणि यतोऽतः पृच्छ्यते क्रिया ॥५०॥
प्रत्याह पृष्टः स्वां जायां नामृतत्वं धनादिति ॥५१॥
वित्तं चेन्नामृतत्वाय कस्माद्दित्सति तद्भवान् । इति पृष्टोऽब्रवीद्वित्तसाधनस्य प्रयोजनम् ॥५२॥

ननु त्वया संन्यासश्चिकीर्षितश्चेत्क्रियतां किमित्यावयोर्द्रव्यविभागेन विच्छेदश्चिकीर्ष्यत आवामेव त्वत्संन्यासोत्तरकालं द्रव्यं विभज्य विच्छेदं करिष्यावस्तत्राऽऽह—निःस्वेति ।

"भार्या पुत्रश्च दासश्च त्रयस्ते निर्धनाः स्मृताः । यत् ते समधिगच्छन्ति यस्य ते तस्य तद्धनम् ॥"

इति स्मृतेरित्यर्थः । कथं तर्हि सा कर्मण्यधिक्रियते तत्राऽऽह—स्ववतेति ॥४३॥

तवापि विरक्तस्य संन्यस्यतः समानं निःस्वत्वमित्याशङ्क्याऽऽह—स्ववानिति ॥४४॥

संन्यासात्पूर्वं स्वस्वामित्वेऽपि तं चिकीर्षुणा द्रव्येणाऽऽवयोर्विभागो न कार्यो नियामकाभावादित्याशङ्क्य तेनेत्युक्तं व्यनक्ति—वृत्तिभिरिति ।ताननुरूपाभिर्वृत्तिभिः संविभज्य संन्यसेदिति शास्त्रमत्र नियामकमित्यर्थः ॥४५॥

तत्र मैत्रेयी ब्रूते—युक्तमिति । तत्र हेतुः—भवदिति ॥४६॥

ननु जीवनार्थं धनं विना हितसाधने धने न ते अधिकारः स्त्रीणां पापयोनित्वेनाशुचिराशित्वात् 'येऽपि स्युः पापयोनयः । स्त्रियो वैश्यास्तथा शूद्रा" इति स्मृतेरतो न ते हितकरं धनं देयमिति तत्राऽऽह—महानुभावेति । महापुरुषसंपर्कस्योत्कर्षहेतुत्वे दृष्टान्तमाह—अशुचीति ॥४७॥

यन्न्वित्याद्यवतारयति—भगवदिति । त्वत्संबन्धादेव मोक्षादन्यो न पुमर्थोऽस्तीति यतो मे भात्यतो मोक्षस्य साधनं धनं कथं स्यादिति त्वां पृच्छामीति योजना ॥४८॥

पृच्छामेव स्फुटयन्वाक्यं योजयति—सारेणेति ॥४९॥

धनं मोक्षसाधनं न वेति प्रश्नप्रतीतेः पृथिवीपूर्णवित्तसाध्येन कर्मणेत्यादिभाष्यं कथमित्याशङ्क्याऽऽह—सत्तेति ॥५०॥

नेतीत्यादेरर्थमाह—प्रत्याहेति । यथेत्याद्याकाङ्क्षापूर्वकमुत्थापयति—वित्तं चेदिति ॥५१–५२॥

---

१. हितकरं धनं = जीवनातिरिक्तभोगसाधनं धनं न प्रयच्छसीत्यर्थः । जीवनसाधनं तु देयमेवेत्यर्थः ।

क्षयिष्णुसाधनाधीनं जीवितं स्याद्यथा नृणाम् । तथैव तव वित्तेन जीवितं नामृतात्मता ॥५३॥
अविद्यामात्रविध्वंसाज्ज्ञानादेवामृतं यतः । अमृतत्वस्य नाऽऽशाऽपि वित्तसाध्येन कर्मणा ॥५४॥
कुतोऽमृतत्वसंप्राप्तिर्ज्ञानमात्रैकहेतुका । न कर्म कारणं मुक्तेर्नाग्निस्तापस्य भेषजम् ॥
कर्मभ्यो जन्म नियतं जन्म चेन्निर्वृतिः कुतः ॥५५॥
स्वभावादेव साधूनां प्रवृत्तिरुपकारिणी । अपकारिण्यपि जने किमु भक्तजनं प्रति ॥५६॥
नूनं ममापराधोऽयं यद्भवन्तोऽपि मां प्रति । प्रतिलोमं चिकीर्षन्ति कोऽन्यः स्याद्धितकृन्मम ॥५७॥
अनुरक्तां प्रियां साध्वीं बद्ध्वा वित्तेन मां कथम् । कामोच्छित्तिमकृत्वा च संन्यस्यन्ति भवद्विधाः ॥५८॥
वित्ताच्चेदमृतत्वं स्यात्तत्तित्यक्षा न युज्यते । वित्ताच्चेन्नामृतत्वं स्याद्वद तेन ममापि किम् ॥५९॥
यद्यस्त्यनुजिघृक्षैवं करुणा वा मयीष्यते । यदेव भगवान्वेद तेन संविभजस्व माम् ॥६०॥
यद्विज्ञानात्परित्यज्य निःशेषं वित्तसाधनम् । स्वाराज्यमीप्सति भवांस्तदेव वसु देहि मे ॥६१॥
नाऽऽदिर्नान्तो न मध्यं वा यस्य वित्तस्य विद्यते । भोगे न च क्षयं याति तदेव वसु दीयताम् ॥६२॥
अनन्तवित्तो हि भवानन्तवद्दीयते कुतः । असतः कीदृशं दानं सदेवातः प्रदीयताम् ॥६३॥

मू.—स होवाच याज्ञवल्क्यः प्रिया बतारे नः सती प्रियं भाषस एह्यास्स्व व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्वेति ॥४॥

याज्ञवल्क्यस्य प्रतिवचनम्

संसारपुरुषार्थेभ्यो यतो नाव्युत्थितात्मने । मुक्त्येकसाधनं ज्ञानं दातुं शक्यमिदं मया ॥६४॥
अमुमुक्षुत्वमाशङ्क्य भवत्यै तत्प्रदित्सितम् । संसाराच्चेद्विरक्ताऽसि गृहाणानुत्तमामृतम् ॥६५॥

तद्व्याचष्टे—क्षयिष्ण्विति ॥५३॥

अमृतत्वस्येत्यादि व्याकरोति—अविद्येति ॥५४॥

उक्तमर्थं प्रश्नपूर्वकं समर्थयते—कुत इति । कर्मणां मुक्तिप्रतिकूलत्वं स्फुटयति—कर्मभ्य इति ॥५५॥

उपालम्भं तस्या दर्शयन्सामान्यन्यायमाह—स्वभावादिति ॥५६॥

तस्य स्वविषयेऽपराधशङ्कां सूचयति—नूनमिति । सर्वभूतेष्वनुग्रहकर्ता रोऽपीत्यपेरर्थः । यदि वयं ते प्रतिकूलं चिकीर्षवस्तर्हि योऽन्यस्तेऽनुकूलकर्ता तमनुगच्छेत्याशङ्क्याऽऽह—क इति ॥५७॥

अस्माकं संन्यासकाल उपस्थितस्ते हितकरणे नावसरोऽस्तीत्याशङ्क्याऽऽह—अनुरक्तामिति ॥५८॥

इदमेव दीयमानं वित्तं तवामृतत्वसाधनं किं साधनान्तरेणेत्याशङ्क्य येनेत्यादेस्तात्पर्यमाह—वित्तादिति । तेन मे नामृतत्वमिति तत्त्यागेच्छेत्याशङ्क्याऽऽह—वित्ताच्चेदिति ॥५९॥

उपालम्भेन तर्केण च भर्तारं वशीकृत्य विनयं दर्शयति—यदीति । संविभजस्व कात्यायन्याः सपत्न्याः सकाशादिति शेषः ॥६०॥

ममापि नास्ति मुक्तिसाधनं ज्ञानं तत्कथं तद्देयमित्याशङ्क्याऽऽह—यदिति ॥६१॥

मदीयं ज्ञानसाधनं तुभ्यं दातुमशक्यमपचयप्रसङ्गादित्याशङ्क्याऽऽह—नाऽऽदिरिति ॥६२॥

किंचान्तवद्वित्तं न त्वया मह्यं दातुं शक्यं तव तदभावान्न चासतो दानमाकाशपुष्पवदित्याह—अनन्तेति । अतो ज्ञानमेव मह्यमुपदिश्यतामिति फलितमाह—सदेवेति ॥६३॥

स होवाचेत्यस्य तात्पर्यमाह—संसारेति । यतो नाविरक्तस्य मुक्तिहेतुज्ञानेऽधिकारोऽतस्ते वैराग्याभावान्न मुमुक्षुतेत्यनधिकारमाशङ्क्य जीवनार्थमेव धनं त्वदर्थं दातुमिष्टमित्यर्थः । ततोऽहं विरक्तेति मुमुक्षुत्वाद्विद्याधिकारिणी स्यामित्याशङ्क्याऽऽह—संसारादिति ॥६४-६५॥

स्त्रीणां यदुचितं वाक्यं प्रतिलोमं न भाषसे । पूर्ववत्त्वनुकूलं त्वमिदानीमपि भाषसे ॥६६॥
मोक्षं यान्तं नरं सर्वे मुञ्चन्ति सहजा अपि । अतिभक्तितया मां त्वं मोक्षेऽपि न जिहाससि ॥६७॥
विभागमसहन्तीव मदतिस्नेहकारणात् । मुक्तावनुयियासि त्वं मदैकात्म्यपरीप्सया ॥६८॥
अतिस्नेहाऽपकृष्टोमा देहार्धं शूलिनः श्रिता । त्वं तु सर्वात्मनाऽऽत्मानं कृत्स्नं मामाप्तुमिच्छसि ॥६९॥
यत एवमतस्तुभ्यं वक्ष्याम्यमृतसाधनम् । निदिध्यासस्व चेतोऽतो व्याचक्षाणस्य तन्मम ॥७०॥

मू.—स होवाच न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति न वा अरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवति । न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्रिया भवन्ति । न वा अरे वित्तस्य कामाय वित्तं प्रियं भवत्यात्मनस्तु कामाय वित्तं प्रियं भवति । न वा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवत्यात्मनस्तु कामाय ब्रह्म प्रियं भवति । न वा अरे क्षत्रस्य कामाय क्षत्रं प्रियं भवत्यात्मनस्तु कामाय क्षत्रं प्रियं भवति । न वा अरे लोकानां कामाय लोकाः प्रिया भवन्त्यात्मनस्तु कामाय लोकाः प्रिया भवन्ति । न वा अरे देवानां कामाय देवाः प्रिया भवन्त्यात्मनस्तु कामाय देवाः प्रिया भवन्ति । न वा अरे भूतानां कामाय भूतानि प्रियाणि भवन्त्यात्मनस्तु कामाय भूतानि प्रियाणि भवन्ति । न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति । आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदँ सर्वं विदितम् ॥५॥

आ ब्रह्मणोऽस्मात्संसाराच्छुद्धधीर्न विरज्यते । यावत्तावन्न विद्याया अधिकारी भवेन्नरः ॥७१॥

प्रियेत्यादेस्तात्पर्यमाह—स्त्रीणामिति । इदं हि स्त्रीणामुचितं वाक्यं यद्भर्तारं प्रत्यनुकूलवचनम् । यथाऽऽहुः—

"कुशीलः कामवृत्तो वा गुणैर्वा परिवर्जितः । पूजनीयः स्त्रिया साध्व्या सततं देववत्पतिः ।
पाणिग्राहस्य साध्वी स्त्री जीवतो वा मृतस्य वा । पतिलोकमभीप्सन्ती नाऽऽचरेत्क्वचिदप्रियम्" । इति

तदेवं त्वं संसारदशायामिव मोक्षावस्थायामपि भाषसे न तु समयमतिक्रम्य प्रतिकूलमभिसंदधासीत्यर्थः ॥६६॥

"अर्धो वा एष आत्मनो यत्पत्नी"तिश्रुतेरहं सहजा सदैव तेऽनुकूला तन्न मे त्वत्प्रतिकूलोक्तिप्रसक्तिरित्याशङ्क्याऽऽह—मोक्षमिति ॥६७॥

न केवलं मां हातुं नेच्छसि किंतु मदाप्तीच्छया मुक्तावपि मामनुगच्छसीत्याह—विभागमिति । असहन्त्यसहमानेति यावत् । क्रियापदे छान्दसः सकारलोपः ॥६८॥

न केवलं प्राकृतसर्वस्त्रीपुंसेभ्यस्तवोत्कर्षः किंतु पार्वत्याः सकाशादपीत्याह—अतिस्नेहेति ॥६९॥

प्रियेत्यादि व्याकुर्वता तस्या वैराग्यं दृष्ट्वा तुष्टस्य पत्युस्तद्विषया स्तुतिरिष्टेत्युक्तम् । इदानीमेहीत्यादेस्तात्पर्यमाह—यत इति । यतो ममेव तवापि वैराग्यं मुमुक्षुत्वं चेक्ष्यतेऽतो वैराग्योक्तिपूर्वकं मोक्षोपायं ज्ञानं वक्ष्यामि तच्च व्याचक्षाणस्य मे तद्विषयं वाक्यमेकाग्रं चेतः स्वीकृत्यार्थतो निश्चयेन ध्यातुमिच्छ गम्भीरार्थत्वादित्यर्थः ॥७०॥

न वा अरे पत्युरित्यादेस्तात्पर्यं दर्शयन्नविरक्तस्य विद्यानधिकारमाह—आ ब्रह्मण इति ॥७१॥

वैराग्यहेतावप्यस्मिन्रक्तो धर्मादिहेतुतः । यतोऽतः कर्मशुद्धात्मा भवादस्माद्विरज्यते ॥७२॥
वैराग्यहेतून्संसारे तस्माद्यत्नादियं श्रुतिः । न वा अर इति ह्युक्त्या वक्तुं समुपचक्रमे ॥७३॥
यस्मिन्नेव परा सक्तिस्तस्मिन्नेव निरादरम् । कर्म कृत्वा परं यत्नादन्यस्यार्थयते फलम् ॥७४॥
किमिक्षो रसमाप्नोति यत्नान्निष्पीडयन्न ना ॥७५॥
तीव्रदुःखोद्भवो बुद्धौ संस्कारो यावदेव तु । तद्विपक्षः सुखं तावदल्पं तत्संक्षये क्षयः ॥७६॥
शीतमल्पं सुखं ग्रीष्मे तापोऽल्पः शिशिरे सुखम् । तदेव दुःखकृद्भूरि तद्धेत्वोरनवस्थितेः ॥७७॥

प्रियाप्रियविवेचनम्

शब्दोऽस्ति न प्रियः कश्चिदप्रियो वा स्वतस्तथा । रक्तद्विष्टमनो हेतुः शब्दाद्यर्थे प्रियाप्रिये ॥७८॥
स्वतोऽखिलोऽप्रियोऽनात्मा प्रत्यङ्मोहैकहेतुतः । प्रत्यगाह्लादकारित्वादप्रियोऽपि प्रियो मतः ॥७९॥
जायादिरप्रियः सर्वः स्वत आद्यन्तदुःखकृत् । तद्धेतोरात्मनः प्रीतेर्जायादिः प्रिय उच्यते ॥८०॥

दृष्टनष्टस्वभावत्वाद्बन्धस्य तस्मिन्नासङ्गहेत्वभावात्स्वतस्ततो वैराग्यसिद्धेरलं तत्प्रतिपादकश्रुत्येत्याशङ्क्याऽऽह—वैराग्येति ॥७२॥

कर्मभोगवासनावशात्पुरुषः संसारे यस्माद्रक्तस्तस्मात्कर्मभिः शुद्धधियस्तस्मिन्वैराग्यसिद्धये तद्धेतून्क्षयिष्णुत्वादीन्न वा अर इत्यादिना वक्तुमेषा श्रुतिस्तात्पर्येण प्रवृत्तेति श्रुतिमवतारयति—वैराग्यहेतूनिति । तद्धेतुप्रतिपत्तौ तदावश्यकत्वद्योतको हिशब्दः ॥७३॥

शुद्धबुद्धेर्वैराग्यसिद्धये संसारासारत्वमुच्यते चेत्केन प्रकारेणानुष्ठितानि कर्माणि शुद्धिं भावयन्तीत्याशङ्क्याऽऽह—यस्मिन्निति । यत्र स्वर्गादौ संसारिणः सक्तिरनतिशया तस्मिन्काम्यानुष्ठानादानुषङ्गिकशुद्धेरादरराहित्यं यथा स्यात्तथेश्वरार्पणबुद्ध्या नित्यादि कृत्वा शुद्धधीर्भूत्वा विरक्तो ज्ञानस्य निरतिशयं फलमर्थयमानो ब्रह्म जिज्ञासुर्भवतीत्यर्थः ॥७४॥

नित्याद्यनुष्ठानेऽपि शुद्धिद्वारा ब्रह्मविविदिषा न भवत्यस्मदादिष्वदर्शनादित्याशङ्क्याऽऽह—किमिति । यथा यन्त्रादिषु निष्पीडयन्पुरुष इक्षूंस्तद्रसमाप्नोति तथेश्वरार्पणबुद्ध्या नित्यादि कुर्वन्निहामुत्र वा तत्फलं विविदिषां लभते येन केनचनेत्यादिश्रुतेरित्यर्थः । नित्याद्यनुष्ठानान्न शुद्धिद्वारा जिज्ञासा संसारेऽपि सुखदृष्टेर्वैराग्यायोगादित्याशङ्क्याऽऽह—तीव्रेति । सुखहेत्वनुष्ठानायासस्तीव्रं दुःखं तज्जा वासना यावद्बुद्धौ वर्तते तावदेव तद्दुःखविरोधिवैषयिकं सुखमनुवर्तते तच्चाल्पं दुःखक्षये च क्षीयते तदविनाभावादतस्तस्यासारत्वाद्युक्तं तत्र वैराग्यमित्यर्थः ॥७५–७६॥

सुखदुःखहेत्वोरनवस्थितत्वाच्च सहेतुकं सुखं दुःखवदनादेयमिति वैराग्ये हेत्वन्तरमाह—शीतमिति । सुखदुःखहेत्वोरनवस्थितत्वे हेतुमाह–तद्धेत्वोरिति । तयोर्हेतू धर्माधर्मौ तयोरुद्भवानुद्भवकालानियमादित्यर्थः ॥७७॥

शब्दाद्यर्थस्य कस्यचित्प्रियत्वमेव कस्यचिद्वैपरीत्यमितिनियमदृष्टेस्तद्धेत्वोर्व्यवस्थेत्याशङ्क्याऽऽह—शब्दोऽस्तीति । कथं तर्हि व्यवस्थाप्रतीतिरत आह—रक्तेति । शब्दादौ शोभनाशोभनाध्यासपूर्वकं रागादिकलुषितं मनस्तत्र प्रियादिदृष्टिहेतुरित्यर्थः ॥७८॥

प्रियत्वमप्रियत्वं वाऽनात्मसु न स्वतोऽस्तीत्युक्तमिदानीं प्रत्यगविद्याजत्वात्तेषु स्वतोऽप्रियत्वमित्याह—स्वत इति । प्रियत्वं शोभनाध्यासादित्युक्त्वा हेत्वन्तरमाह—प्रत्यगिति । प्रागुक्तन्यायादप्रियोऽपि स्वतोऽनात्मा प्रत्यक्चित्स्वरूपभूतानन्दाभिव्यञ्जकधीवृत्तिविषयत्वात्प्रियो व्यवह्रियत इत्यर्थः ॥७९॥

स्वभावतोऽनात्मनोऽप्रियत्वे हेत्वन्तरमाह—जायादिरिति । तर्हि कथं तत्र प्रियत्वधीरित्याशङ्क्य प्रत्यगाह्लादकारित्वादित्युक्तं व्यनक्ति—तद्धेतोरिति ॥८०॥

---

१. अन्यस्य = ज्ञानस्य फलं मोक्षम् ।

२. येन केनचन इति केनभाष्यम् ।

न कस्यांचिदवस्थायामात्मा लोकेऽप्रियो मतः । प्रियोऽप्रियश्च जायादिर्यथाऽनात्मा मुहुर्मुहुः ॥८१॥
स्वत एवाप्रियोऽनात्मा ह्यात्मप्रीत्यर्थसाधनात् । जायादिः स्यात्प्रियो भक्त्या बन्धक्याः कामुको यथा८२
निर्हेतुकी स्वतः प्रीतिरात्मन्येव यतस्ततः । भाक्तं प्रियं परित्यज्य मुख्यं प्रियमुपाश्रयेत् ॥८३॥
क्षयान्ता निचयाः सर्वे पतनान्ताः समुच्छ्रयाः । संयोगा विप्रयोगान्ता मरणान्तं च जीवितम् ॥८४॥
न तदस्ति सुखं लोके यन्न दुःखकरं भवेत् । तदसंप्राप्तिविच्छेदक्षयेष्वसुखकृद्यतः ॥८५॥
एवं चेत्साधनोद्भूतं यावत्किंचित्सुखं मतम् । तन्निःशेषं परित्यज्य सुखमात्यन्तिकं श्रयेत् ॥८६॥
सांसारिकसुखस्यास्य दुःखत्वादुक्तहेतुतः । निष्कृष्यातस्ततः प्रीतिं प्रतीच्येव निवेशयेत् ॥८७॥
स्रजि दण्डादयो यद्वत्स्रगज्ञानैकहेतुकाः । पतिजायासुताद्येवं प्रत्यगज्ञानहेतुजम् ॥८८॥
सर्वानर्थनिवृत्तिश्च सर्वाह्लादाप्तिरेव च । प्रतीचि ज्ञानमात्राच्चेत्तदन्यत्प्रार्थ्यते कथम् ॥८९॥
यस्य सम्बन्धमाश्रित्य ह्यप्रियोऽपि प्रियायते । प्रियोऽप्यप्रियतां याति यस्य संगतिकारणात् ॥९०॥
दृष्ट्वाऽनुभवतस्तत्त्वमात्मानात्मपदार्थयोः । उपादित्सा जिहासा च तत्कृतैवानुपाल्यताम् ॥९१॥
नानाप्रकार आसङ्गो विषक्तो योऽस्य बाह्यतः । यथोक्तकारणात्सर्वं प्रतीच्येव निवेशयेत् ॥९२॥

आत्मनोऽपि प्रियत्वमनवस्थितं कदाचित्तदुच्छेदेच्छाया दृष्टेरित्याशङ्क्याऽऽह—नेत्यादिना । व्याध्याद्युपद्रुतस्य देहोच्छेदेच्छायामपि स्वरूपप्रीतेरव्यभिचारादात्मनः सुखत्वमित्यर्थः । अप्रिय इति च्छेदः । तत्र प्रीतिनियमे वैधर्म्यदृष्टान्तमाह—प्रिय इति ॥८१॥

तस्य स्वतोऽप्रियत्वं चेदात्मार्थत्वेनापि न प्रियत्वमन्यस्यान्यभावायोगादित्याशङ्क्याऽऽह—स्वत इति । माणवकस्य स्वतोऽनग्नेरपि तद्गुणयोगादग्नित्वव्यवहारस्य भाक्तस्य दर्शनादिति हितशब्दार्थः । बन्धकी बन्धहेतुः पुंश्चलीति यावत् । उक्तं हि—पुंश्चली धर्षणी बन्धक्यसती कुलटेत्वरीति । वर्धकीपाठेऽप्ययमेवार्थः ॥८२॥

आत्मनः स्वतः प्रियत्वमनात्मनः स्वतोऽप्रियत्वमिति स्थिते फलितमाह—निर्हेतुकीति ॥८३॥

वैषयिकसुखतद्धेत्वोरनवस्थितत्वस्य वेदव्यासोक्तत्वाच्च तत्र वैराग्यं कार्यमित्याह—क्षयेति ॥८४॥

शीतमल्पं सुखमित्यत्र सुखहेतोर्दुःखकरत्वमुक्तमिदानीं तस्यापि तदस्तीत्याह—नेत्यादिना ॥८५॥

भवतु किं तावतेति तत्राऽऽह—एवं चेदिति । सुखं यावत्किंचिद्धेतुकं तदेव दुःखकृन्मतं चेदिति योजना ॥८६॥

विषयसुखे प्रीतिरनपायिनी "या प्रीतिरविवेकानां विषयेष्वनपायिनी" तिस्मृतेस्तद्विषयप्रीतिरप्रत्याख्येयेत्याशङ्क्याऽऽह—सांसारिकेति । उक्तहेतुतोऽनात्मप्रपञ्चस्य प्रत्यङ्मोहप्रसूतत्वादेरित्यर्थः । अतःशब्दस्य प्राच्या पञ्चम्या संबन्धः । ततः सांसारिकसुखपरामर्शी निष्कर्षापादानमाचष्टे ॥८७॥

तस्य स्वाज्ञानकार्यत्वमेव दृष्टान्तेन स्पष्टयति—स्रजीति ॥८८॥

न केवलमज्ञानजत्वादेवानात्मनि प्रीत्यभावः किंत्वात्मधीमात्रादुभयविधपुमर्थसिद्धेश्चानात्मानं त्यक्त्वाऽऽत्मन्येव प्रीतिं कुर्यादित्याह—सर्वेति ॥८९॥

आत्मनोऽनात्मप्रीतिहेतुत्वेन पुमर्थत्वाच्च तस्मिन्नेव सा युक्तेत्याह—यस्येति । अग्निव्याप्तस्य लोहपिण्डस्य तदाकारत्वदर्शनादिति हिशब्दार्थः । अनात्मनस्त्वात्माप्रीतिहेतुत्वेनापुमर्थत्वात्तस्मिन्नप्रीतिरेवोचितेत्याह—प्रियोऽपीति ॥९०॥

उक्तेऽर्थेऽनुभवं प्रमाणयन्फलितमाह—दृष्ट्वेति । उक्तरीत्याऽऽत्मानात्मनोः स्वरूपमनुभूयाऽऽत्मनि पुमर्थत्वधीकृतोपादित्साऽन्यत्र चापुमर्थत्वधीकृता जिहासा कार्येत्यर्थः ॥९१॥

अवान्तरप्रकृतं निगमयति—नानेति । यथोक्तकारणादात्मन्येव पुमर्थत्वं नान्यत्रेत्यादेरित्यर्थः ॥९२॥

नरकादिव निर्विण्णो यावन्नाऽऽब्रह्मणो नरः । न तावदधिकारोऽस्ति कैवल्यज्ञानवर्त्मनि ॥९३॥
सर्वासङ्गविनिर्मुक्तो मोक्षमात्रप्रयोजनः । अतोऽधिक्रियते प्रत्यग्ज्ञानोत्पत्तौ न रागवान् ॥९४॥

आत्मा द्रष्टव्य इत्यत्र विधिविचारः

आत्मा प्रत्यक्प्रसिद्धेः स्यात्तत्रैवाऽऽत्मानुभूतितः । इति प्रमेयनिर्देशो द्रष्टव्य इति तत्प्रमा ॥९५॥
आत्मबुद्धिरियं तावत्सर्वेषां जायते स्वतः । अप्राप्ता सर्वमात्मेति सैवातो धीर्विधीयते ॥९६॥
द्रष्टृद्रष्टव्ययोर्भेदे सत्येवं धीर्विधीयते । नियोज्यविषयाभेदे घटते न विधिर्यतः ॥९७॥
उत्तरोत्तरभूयांसि नामादीनि यथाक्रमम् । उपन्यस्याऽऽत्मयाथात्म्यं तत्तत्वं प्राब्रवीच्छ्रुतिः ॥९८॥
भूम्नश्च लक्षणं चक्रे यत्र नान्यदिति स्वयम् । अथ यत्रेति चाल्पस्य प्राणान्तस्य च लक्षणम् ॥९९॥

भूम्नि नियोज्यविषयभेदाभावान्न विधिः

अथात इति वाक्येन ह्यहमेवेति निश्चितेः । निषिध्यानात्मरूपं यत्ततोऽहंकारनिह्नुतिः ॥१००॥

आत्मनो ज्ञातत्वे विध्यानर्थक्यम्

आत्मैवेत्यादिवाक्येन पूर्णब्रह्मावबोधिना । नाविध्वस्तंतमोऽतोऽस्ति न च ज्ञानमनुत्थितम् ॥ १ ॥
नानिवृत्तस्तथाऽनर्थो नानवाप्तं सुखं तथा । कार्यज्ञेयसमाप्तिः स्यात्प्रत्यग्याथात्म्यबोधतः ॥ २ ॥

अनात्मसु कार्या विरक्तिरित्युक्त्वा तद्धीनस्य विद्यानधिकारमुपसंहरति—नरकादिति । आ ब्रह्मणः सर्वस्मात्संसाराद्यावन्नरो नरकादिव न निर्विण्णस्तावदस्य मुक्त्युपाये ज्ञाने नाधिकारोऽस्तीति योजना ॥९३॥

विरक्तस्य विद्याधिकारमुपसंहरति—सर्वेति । वैराग्यस्य ज्ञानोत्पत्त्यनुगुणत्वं रागस्य तत्प्रतिकूलत्वं चातःशब्दार्थः ॥९४॥

"न वा अरे पत्युरि"त्यारभ्य द्रष्टव्यवाक्यात्प्राक्तनसंदर्भो व्याख्यातः । संप्रति तद्वाक्यस्थात्मशब्दार्थमाह—आत्मेति । प्रतीच्यात्मशब्दस्य प्रसिद्धिं साधयति—तत्रेति । वाच्यमर्थमुक्त्वा विवक्षितमाह—इतीति । द्रष्टव्यशब्दार्थमाह—द्रष्टव्य इतीति । प्रतीच्यात्मनि प्रमेये वैदिकं दर्शनं मानमित्येतदत्र विवक्षितमित्यर्थः ॥९५॥

तव्यप्रत्ययो विधायकोऽधिगतः स च लोकप्रसिद्धात्मदर्शनं विधत्ते ब्रह्माऽऽत्मेति ज्ञानं वेति विकल्प्याऽऽद्यं विधिवादी दूषयति—आत्मेति । द्वितीयमङ्गीकरोति—अप्राप्तेति ॥९६॥

सिद्धान्तवाद्याह—द्रष्टृति । अज्ञाते ब्रह्मात्मत्वे तज्ज्ञाने विधिर्ज्ञाते वा ? नाऽऽद्यो विषयाभावान्नेतरो नियोज्यादिभेदाभावादित्यर्थः ॥९७॥

ब्रह्मात्मत्वे ज्ञाते भेदाभावं श्रुत्या साधयति—उत्तरेति । नामादीनि प्राणान्तानि तत्त्वान्यादाय पाठक्रममनतिक्रम्य पूर्वस्मात्पूर्वस्मादुत्तरमुत्तरं महत्त्वेनोक्त्वा तेषां स्वरूपं भूमशब्दितमात्ममात्रमुक्तवती भूमा त्वेव विजिज्ञासितव्य इत्याद्या श्रुतिरित्यर्थः ॥९८॥

कोऽसौ भूमा तमाह—भूम्नश्चेति । प्राणादावतिव्याप्तिमाशङ्क्याऽऽह—अथेति । एकश्चकारः समुच्चये द्वितीयः शङ्कानिरासे ॥९९॥

नामादिप्राणान्तं जगद्भूममात्रं स चाद्वयोऽतस्तज्ज्ञाने नियोज्यादिभेदाभावान्न विधिरित्युक्त्वा विध्यभावे हेत्वन्तरमाह—अथेति । अथातोऽहंकारादेश इत्यादिना ब्रह्माहमेवेत्यहङ्कारमात्रत्वनिश्चयाद्यदनात्मरूपं तत्सर्वं निषिध्या"थात आत्मादेश आत्मैवाधस्तादि"त्यादिनाऽद्वयात्मधीद्वाराऽहंकारस्यापि बाध उक्तोऽतो ब्रह्मज्ञानादध्वस्ताहंकारो न विधियोग्य इत्यर्थः । अहमेवाधस्तादित्यादिनाऽहंकारस्य सर्वात्मत्वेन ब्रह्मत्वायोग्यत्वं हिशब्दार्थः । न केवलमैक्यधियाऽहंकारध्वस्तिरेव किंत्वशेषपुमर्थाप्तिरित्याह—नेत्यादिना । अतो ज्ञानादिति यावत् । तत्फलं संक्षिप्याऽऽह—कार्येति ॥१००–१०१–१०२॥

सर्वासूपनिषत्स्वेवं प्रमात्रादेरनात्मनः । प्रत्यङ्मात्रैकयाथात्म्यं श्रूयते सोपपत्तिकम् ॥ ३ ॥
इहापि नेति वाक्येन प्रतीचोऽतत्स्वभावकम् । व्युत्थापितमनूद्याऽऽह सर्वमात्मेति नः श्रुतिः ॥ ४ ॥
भावाभावात्मना स्थानं न निषेध्यस्य वस्तुनः । यतोऽतः सर्वमात्मैव प्राब्रवीच्छ्रुतिरञ्जसा ॥ ५ ॥

लौकिकात्मज्ञानमपि न विधेयं प्राप्तत्वात् । आत्मानात्मविवेको विधेयः

नाव्युत्थितमनाः कश्चित्प्रतीचोऽन्यत्प्रपश्यति । व्युत्थितात्माऽपि चाऽऽत्मानं पश्यन्नेवान्यदीक्षते ॥ ६ ॥
स्वातन्त्र्यं यत्र कर्तुः स्यात्तत्र कर्ता नियुज्यते । अन्वयव्यतिरेकाभ्यामात्मानात्मविवेचने ॥ ७ ॥
वचोऽर्थप्रतिबोधस्य पदार्थाज्ञानमेव तु । यतोऽन्तरायस्तद्धानौ तेन तत्र नियुज्यते ॥ ८ ॥
एवं ज्ञातपदार्थः सन्यथा पूर्वमवादिषम् । ब्रह्म वा इदमित्यत्र न्यायेनैकात्म्ययायिना ॥ ९ ॥
निरन्तरायो वाक्यार्थं वाक्यादेवावगच्छति । अव्यावृत्ताननुगतप्रत्यक्त्त्वसमीक्षणात् ॥ १० ॥
नित्यमुक्तत्वविज्ञानं वाक्यादेवाञ्जसा भवेत् । वाक्यार्थस्य च विज्ञानं पदार्थस्मृतिपूर्वकम् ॥ ११ ॥
अन्वयव्यतिरेकाभ्यां पदार्थः स्मर्यते ध्रुवम् । एवं निर्दुःखमात्मानमक्रियं प्रतिपद्यते ॥ १२ ॥
प्रत्यङ्मोहोद्भवानात्मप्राधान्येन तमोन्वयात् । आत्माऽऽत्मानं पुराऽज्ञासीद्वाक्यार्थज्ञानजन्मतः ॥ १३ ॥
अनात्मनोऽत आत्मानमन्वयव्यतिरेकतः । निष्कृष्याऽऽत्मन्यथाऽऽत्मानं सर्वमात्मेति पश्यति ॥ १४ ॥

छान्दोग्यश्रुत्युक्तेऽर्थे सर्वोपनिषत्संमतिमाह—सर्वास्विति । "ब्रह्मैवेदममृतमि"त्याद्यास्विति यावत् । एवं छान्दोग्यश्रुतिवदित्यर्थः । श्रुतेरुपकरणोपबृंहितत्वेन प्रामाण्याविसंवादं सूचयति—सोपपत्तिकमिति ॥१०३॥

तत्रैव बृहदारण्यकसंवादमाह—इहेति ॥१०४॥

तस्यास्तात्पर्यमाह—भावेति ॥१०५॥

ब्रह्मणि ज्ञातेऽज्ञाते च तद्धीर्न विधेयेत्यापाद्य लौकिकात्मज्ञानस्याविधेयत्वे हेत्वन्तरमाह—नेत्यादिना । अव्युत्थितमनाः स्वविषयत्वेनाप्रवृत्ताहंप्रत्ययः सुप्त इति यावत् । तं प्रति न विधिस्तस्य स्वेतरज्ञानाभावादिति शेषः । व्युत्थितात्माऽवस्थाद्वयसम्बन्धी स्वविषयाहंप्रत्ययवानिति यावत् । तं प्रत्यपि न विधिर्विधिं विनैव तस्य स्वधीसिद्धेरिति शेषः ॥१०६॥

द्वयोरात्मधियोरविधेयत्वे तव्यप्रत्ययविधेयत्वं कस्येत्याशङ्क्य सामान्यन्यायमाह—स्वातन्त्र्यमिति । प्रकृते विधिविषयमाह—अन्वयेति । विधिरिति शेषः ॥१०७॥

वाक्यादेव तदर्थज्ञानादन्वयादिना पदार्थशोधने किं विधिनेत्याशङ्क्याऽऽह—वचोर्थेति । तद्धानौ पदार्थाज्ञानस्य वाक्यार्थधीप्रतिबन्धकस्य ध्वस्ताविष्टायामिति यावत् । तत्र पदार्थशोधने तेन विधिनेत्यर्थः ॥१०८॥

तर्हि ज्ञातपदार्थस्यान्वयादिनैव वाक्यार्थधीरपि सेत्स्यति किं वाक्येनेत्याशङ्क्याऽऽह—एवमिति । ऐक्यानुसारिन्यायेन ब्रह्मकण्डिकायां पदार्थशोधनं यथोक्तं तथा ज्ञातपदार्थोऽधिकारी सामान्यविशेषशून्यत्वमर्थनिश्चयात् तदज्ञानाख्यप्रतिबन्धहीनो वाक्यादेव वाक्यार्थं वेत्ति सम्यग्धियोऽमानादन्वयादेरनुदयादित्यर्थः[1] ॥१०९-११०॥

उक्तेऽर्थे भाष्यकारसंमतिमाह—नित्येति । तर्हि किमित्यन्वयादिना पदार्थशोधनमित्याशङ्क्याऽऽह—वाक्यार्थस्येति । तज्ज्ञानफलं सूचयति—एवमिति । तत्त्वमर्थधीद्वारा वाक्यार्थज्ञाने कूटस्थं वस्त्ववशिष्टमित्यर्थः ॥१११-११२॥

पदार्थधियो वाक्यार्थधीहेतुत्वेऽपि तद्धियो नान्वयाद्यपेक्षाऽहमित्यात्मधियः सदा सिद्धेरित्याशङ्क्याऽऽह—प्रत्यगिति । वाक्यार्थज्ञानात्पूर्वमज्ञानसम्बन्धात्तज्जदेहादिवैशिष्ट्येनाऽऽत्मानमात्मा ज्ञातवान्न वाक्यार्थान्वययोग्यत्वेनेत्यर्थः ॥११३॥

यस्मादन्वयादिना विना शुद्धमात्मानं न स बुध्यते तस्मात्तेन देहादेस्तं निष्कृष्य स्वमहिमस्थं ज्ञात्वा

१. अमानादन्वयादेः । अन्वयव्यतिरेकौ न मानं वाक्यार्थज्ञाने अपि तु वाक्यमेव मानम् ।

पदार्थशोधने विधिः तच्च अज्ञातज्ञापनं न तु प्रवर्तनम्

अज्ञातज्ञापनं चातो विधिरत्राभिधीयते । अप्रवृत्तप्रवृत्तिस्तु न्यायाभावान्न युज्यते ॥११५॥
नित्यं न भवनं यस्य यस्य वा नित्यभूतता । न तस्य क्रियमाणत्वं खपुष्पाकाशयोरिव ॥११६॥
उत्पत्त्यादि स्वतो यस्य यस्य चात्यन्तमेव न । क्रियानपेक्षसिद्धत्वात्स्वतःसिद्धं तदुच्यते ॥११७॥
उत्पत्त्यादौ तु यच्छक्तं हेतुमात्रमपेक्षते । साफल्यं कर्मणस्तत्र तदभिव्यक्तिकृद्धि तत् ॥११८॥
कार्यं कारणतन्त्रं स्यात्ततस्तस्याऽऽत्मलाभतः । अन्यकार्यमकार्यं च नान्यत्कारणमीक्ष्यते ॥११९॥
सर्वमात्मेति या बुद्धिः सा प्रमेयबलाद्भवेत् । प्रमातृतन्त्रा सा चेत्स्यात्प्राप्ता लोकाग्निबुद्धिवत् ॥१२०॥

आत्मज्ञाने विधिनिरासः

अतोऽपुरुषतन्त्रत्वान्नाऽऽत्मज्ञाने विधिर्भवेत् । अन्वयादिक्रिया त्वस्य तत्तन्त्रत्वाद्विधीयते ॥१२१॥
श्रवणं मननं तद्वत्तथा शमदमादि यत् । पुमाञ्शक्नोति तत्कर्तुं तस्मादेतद्विधीयते ॥१२२॥
विशिष्टेहानुभूतिश्च सर्वमानफलं यतः । फलं च न विधेयं स्यादतो नेदं विधीयते ॥१२३॥
प्रमाणमप्रमाणं च प्रमाभासं च यद्भवेत् । चैतन्याकारमेवैतत्प्रथते सर्वमेव तत् ॥१२४॥

सोऽहं ब्रह्मेति वाक्यादनुभवतीति फलितमाह—अनात्मन इति । अथशब्दो ज्ञानानन्तरं सकार्याविद्याध्वस्तिपरामर्शार्थः ॥११४॥

अन्वयादिकृते पदार्थशोधने विधिरुक्तः सम्प्रति वाक्यार्थज्ञानेऽप्यज्ञातज्ञापनविध्युपगमे न दोष इत्याह—अज्ञातेति । चकारोऽन्वयादिकृतपदार्थशुद्धिदृष्टान्तार्थः । अतः शब्दोक्तं हेतुमाह—अप्रवृत्तेति ॥११५॥

कथं न्यायाभावः ? तत्राप्रवृत्तप्रवर्तनविधौ ज्ञानस्य वा ज्ञेयस्य वा द्वयोर्वा विधेयत्वं ? नाऽऽद्योऽज्ञाते ज्ञाते वा तज्ज्ञाने विध्ययोगस्योक्तत्वादिति मत्वा द्वितीयं निरसितुं सामान्यन्यायं सदृष्टान्तमाह—नित्यमिति ॥११६॥

तद्दार्ष्टान्तिके योजयति—उत्पत्त्यादीति । यस्य घटादिवदुत्पत्त्यादि स्वतो नास्ति यस्य चाऽऽकाशादिवदुपाधितोऽपि न तद्विद्यते तदात्मवस्तु क्रियानपेक्षसत्ताकं स्वतो विद्यमानमतो न तत्रावकाशो विधेरित्यर्थः । यद्वोत्पत्तिरादिर्यस्य सत्त्वस्य तद्यस्य स्वतोऽस्ति यस्य च सर्वथैव न सत्त्वं तदाकाशं तत्पुष्पं च स्वतो विद्यमानमविद्यमानं चेति क्रियानपेक्षत्वाद्विध्ययोग्यमिति पूर्वस्यैव प्रपञ्चः ॥११७॥

कुत्र तर्हि विधिरित्याशङ्क्य क्रियायामित्यभिप्रेत्य तदुपयुक्तं स्थलमाह—उत्पत्त्यादाविति । यत्तच्छब्दौ फलार्थौ । कर्म पुरुषव्यापारः । तत्र हेतुः—तदभिव्यक्तिकृदिति । कर्मविषयो द्वितीयस्तच्छब्दः ॥११८॥

आत्मतद्धियोर्विधिं दूषयितुं संमतमर्थमाह—कार्यमिति । उक्तेऽर्थे व्यतिरेकमाह—अन्येति ॥११९॥

तथाऽप्यात्मतज्ज्ञानयोर्विध्यभावे किं जातं तदाह—सर्वमिति । ब्रह्मात्मनोऽकार्यत्वान्न विध्यपेक्षा तद्बुद्धिरपि मानादिवशाद्भवन्ती न पुरुषतन्त्रा तन्न विध्यधीनपुरुषेच्छा यत्नसाध्येत्यर्थः । तद्बुद्धेरपुरुषतन्त्रत्वमसिद्धमित्याशङ्क्याऽऽह—प्रमात्रिति ॥१२०॥

द्युलोकादावग्निधीवदात्मधियो न मानत्वं परिच्छेदकत्वादिति मत्वाऽऽह—अत इति । आत्मनि तज्ज्ञाने चेत्यर्थः । ज्ञानादौ विध्यसंभवं प्रसाध्य स्वातन्त्र्यं यत्रेत्युक्तं विधिविषयमुपसंहरति—अन्वयादीति । अस्यान्वयादिव्यापारस्येत्यर्थः ॥१२१॥

तमेव विशिनष्टि—श्रवणमिति । अन्वयादिक्रिया नृतन्त्रत्वाद्विधीयत इत्येतदेव स्फुटयति—पुमानिति ॥१२२॥

आत्मनो विधेयत्वाभावे हेत्वन्तरमाह—विशिष्टेति । सर्वेषां मानानां फलभूताऽनुभूतिः सत्यानन्दादिलक्षणा ब्रह्मात्मनि स्वरूपं न च फलं स्वर्गवद्विधिमर्हत्यतो नाऽऽत्मा विधेय इत्यर्थः ॥१२३॥

तत्रैव युक्त्यन्तरमाह—प्रमाणमिति । यत्प्रमाणादि तदेतत्सर्वं स्फुरतीति चैतन्ये कल्पितं भात्यतः सर्वत्राधिष्ठानत्वेन संनिहितं चिद्वस्तु न विधियोग्यमित्यर्थः ॥१२४॥

चैतन्यं अव्यभिचारि रूपं आत्मनः अतो न तत्र विधिः

नानाकारानुपादत्ते चैतन्याकारमेव सत् । प्रतीच्यव्यभिचार्येकं तदन्ये व्यभिचारिणः ॥२५॥
मात्रादिव्यभिचारेऽपि संविदव्यभिचारिणी । मिथः कृत्स्नेऽपि जगति तदन्यद्व्यभिचारि तु ॥२६॥
उत्पन्नमपि सज्ज्ञानं प्रमातृत्वाद्युपग्रहात् । तदनुत्पन्नवद्भाति तद्व्युत्पत्तेः पुरा नृणाम् ॥२७॥
व्युत्पाद्यते यदा साक्षाद्यथोक्तन्यायवर्त्मना । उत्पन्नमेव विज्ञानं तदा प्रागपि मन्यते ॥२८॥
स्वसाक्षिकैव सर्वस्य न वेद्मीत्यपि या मतिः । किमु वेद्मीति बुद्धिः स्याच्चिदतोऽव्यभिचारिणी ॥२९॥

द्रष्टव्यवाक्यस्य यथाश्रुतार्थनिरासः

आत्मेति मेयनिर्देशो वैशब्दस्तत्स्मृताविह । प्रमातृक्रियया व्याप्तिर्द्रष्टव्य इति भण्यते ॥३०॥
शब्दानुरोधतस्तावदीदृगत्रोपजायते । श्रुतेरनुभवः साक्षाद्यथावस्तु[1] न वेति वा ॥३१॥
विचार्यमाणोऽनुभवो रूप्यशुक्त्यनुभूतिवत् । प्रमाणमप्रमाणं वा मेयसङ्गत्यसङ्गतेः[2] ॥३२॥
प्रमातृमेयभेदोऽत्र न तावद्गम्यते मितेः । प्रत्यग्धीमात्रगम्योऽर्थो यस्मादात्मेति निश्चितः ॥३३॥

तत्रैव हेत्वन्तरमाह—नानेति । सद्वस्त्वखण्डं चिद्रूपमेवमनेकविशेषालम्बनमतस्तस्य स्वतो निर्विशेषस्य न विध्यर्हतेत्यर्थः । तत्रैवोपपत्त्यन्तरमाह—प्रतीचीति । आत्मनि स्वरूपचैतन्यमेकरसं न व्यभिचारि स्वरूपतो मिथश्चानात्मानो व्यभिचारिणोऽतः सदैकरूपे न विधिरित्यर्थः ॥१२५॥

आत्मचैतन्यमपि स्वापादौ व्यभिचारीत्याशङ्क्याऽऽह—मात्रादीति । तत्साधकत्वादित्यर्थः । तदव्यभिचारे हेत्वन्तरमाह—मिथ इति । सर्वस्मिञ्जगत्यनात्मवस्तु मिथः स्वरूपतश्च व्यभिचार्येव दृश्यतेऽतस्तत्साधिका चिदव्यभिचारिणीत्यर्थः ॥१२६॥

आत्मा चिद्रूपश्चेत्तज्ज्ञानं सदा सिद्धमिति तदर्थश्रवणादिविध्यानर्थक्यमित्याशङ्क्याऽऽह—उत्पन्नमिति । प्रतीचि सदा सिद्धमपि ज्ञानं मातृत्वादियोगात्परिच्छेदाभिमानाद्विहितश्रवणादिना ज्ञानोत्पत्तेः पूर्वं सर्वेषामप्यप्राप्तवद्भात्यतो वैधं श्रवणाद्यनुष्ठेयमित्यर्थः ॥१२७॥

तदनुष्ठानफलमाह—व्युत्पाद्यत इति । श्रवणादिना मातृत्वादियोगजमभिमानं त्यक्त्वाऽद्वयात्मना यदा त्वमर्थो बोध्यते तदा पूर्वमपीदं ज्ञानमात्मतयाऽऽप्तमेव मायावृतं तच्चाऽऽवरणमधुनाऽपनीतमिति निश्चिनोतीत्यर्थः ॥१२८॥

व्युत्पादनात्पूर्वं विशिष्टज्ञानादृष्टेरूर्ध्वं च तद्दृष्टेरागन्तुकमेव स्वरूपज्ञानं नाव्यभिचारीत्याशङ्क्याऽऽह—स्वसाक्षिकेति[3] । ज्ञानत्वाज्ञानत्वसाधकत्वमतः शब्दार्थः ॥१२९॥

द्रष्टव्यवाक्यस्य विधिपरत्वं पराकृत्य शब्दताडितमर्थं निराकर्तुमनुवदति—आत्मेतीति । इहेति वाक्योक्तिः । अत्रेत्युक्तमेयोक्तिः । आपातिकमर्थं निरस्यति—यथेति । ब्रह्मात्मनि मात्रादिभेदधीः शब्दशक्त्या दृश्यमाना रूप्यस्य शुक्तौ धीवन्मिथ्येत्यर्थः । शुक्तिरूप्यधियो बाधान्मिथ्यात्वेऽपि तदभावान्मात्रादिभेदधियो न मिथ्यतेत्याशङ्क्य वादिसंमतमर्थमाह—प्रमाणमिति । अबाधिताबुद्धार्थबोधि मानमन्यथाबोधि चामानमित्यर्थः ॥१३०–१३१–१३२॥

अस्तु प्रस्तुते किं जातं तत्राऽऽह—प्रमात्रिति । अत्र ब्रह्मात्मनीत्येतत् । तस्याद्वयत्वादिति शेषः । विमता मिथ्याऽप्रामाणिकत्वात्संमतवदिति भावः । आत्मनि भेदधियो मिथ्यात्वे हेत्वन्तरमाह—प्रत्यगिति । प्रत्यगेव धीश्चैतन्यं तन्मात्रेण गम्यः स्वप्रकाशो यस्मादात्मेत निश्चयस्तस्मात्तस्मिन्मात्रादिधियो मिथ्यात्वमित्यर्थः ॥१३३॥

---

१. उत्पन्नं ज्ञानं यथावस्तु = यथार्थं न वेति विचार्यमाणोऽनुभवः शुक्तिरूप्यानुभववत् मिथ्येत्यर्थः ।

२. मेयबुद्धिसङ्गतेः प्रमाणं तदसङ्गतेरप्रमाणमित्यन्वयः ।

३. ज्ञाताज्ञातसाक्षित्वादव्यभिचारीत्यर्थः ।—न्या०

प्रत्यग्धीगोचरो नो चेदनात्माऽसौ घटादिवत् । ब्रह्मादिमध्यपातित्वं ततश्चास्य प्रसज्यते ।।३४।।
विभिन्नद्रष्टृदृष्ट्याप्तिर्घटादेरिव नाऽऽत्मनः । न चाभेदेऽस्ति संव्याप्तिरैकात्म्यादेव कारणात् ।।३५।।
न च द्रष्टाऽऽत्मनोऽन्योऽस्ति द्रष्ट्रन्तरनिषेधनात् । न च द्रष्ट्रोर्द्वयोर्लोके द्रष्टृदृश्यत्वसङ्गतिः ।।३६।।
क्रियाविरोधः प्राप्नोति द्रष्टुः स्वात्मसमीक्षणे । तद्दृष्टेर्नित्यसम्प्राप्तेर्विध्यानर्थक्यसङ्गतिः ।।३७।।

संसार्यात्मनो द्रष्टव्यत्वनिरासः

संसार्यात्मनि दृष्टेऽपि न च किंचित्प्रयोजनम् । अयमेव च नोऽनर्थो यत्संसार्यात्मदर्शनम् ।।३८।।
तदन्यस्याप्रसिद्धेश्च कथं स्यात्तत्समीक्षणम् । अथ प्रसिद्धोऽसावात्मा तद्दृष्टिः किं विधीयते ।।३९।।
द्रष्टृदर्शनदृश्यानां प्रात्यक्ष्यान्नाऽऽगमेक्षणम् । द्रष्टुरात्मा पृथक्चेत्स्यात्पृथगात्मेति दुर्वचः[1] ।।४०।।
न चाऽऽत्मन्यप्रसिद्धे स्यात्संसारस्य प्रसिद्धता । न ह्यप्रसिद्धसम्बन्धी सम्बन्धः क्वचिदिष्यते ।।४१।।
न चेदात्माभिसम्बन्धः संसारोऽयं समीक्ष्यते । तन्मुमुक्षुत्वमायातं कुतो हेतोरितीर्यताम् । ४२।।
अनृतन्त्रे विधिर्नेष्टो वन्ध्यापुत्रोद्भवे यथा । मातृतन्त्रे तथैवायं न विधिः प्रत्यगीक्षणे ।।४३।।

स्वप्रकाशत्वमात्मनोऽसिद्धमित्याशङ्क्याऽऽह—प्रत्यग्धीति । अनात्मत्वे कल्पितत्वापत्तिरित्याह—ब्रह्मादीति ।।१३४।।

यत्तु प्रमातृक्रियया व्याप्तिरित्यादि तदपि स्वप्रकाशत्वेन प्रत्युक्तमित्याह—विभिन्नेति । किंचाऽऽत्मनो दृष्टिक्रियाव्याप्तौ स्वयमेव द्रष्टाऽन्यो वा ? नाऽऽद्य इत्याह—न चेति । विषयत्वेन विषयित्वेन वा समाप्तिरिति हेत्वर्थः ।।१३५।।

द्वितीयं दूषयति—न चेति । नान्योऽतोऽस्तीत्यादिश्रुतेरिति शेषः । द्रष्टृभेदमङ्गीकृत्याऽऽह—न चेति । तयोः समत्वमसमत्वं वा ? नाऽऽद्यो दीपयोरिव विषयविषयित्वायोगान्नेतरश्चेतनगतगुणप्रधानत्वसाधकाभावादिति भावः ।।१३६।।

स्वयमेव द्रष्टेत्यत्र दोषान्तरमाह—क्रियेति । एकस्यामेव क्रियायां कर्तृत्वेन गुणत्वं कर्मत्वेन प्राधान्यमिति विरोध इति यावत् । तत्रैव दोषान्तरमाह—तद्दृष्टेरिति । स्वकर्तृकस्वदृष्टेः स्वाधीनतया विधिं विना सदा सिद्धेस्तत्राकिंचित्करो विधिरित्यर्थः ।।१३७।।

स्वकर्तृकाऽपि स्वदृष्टिः स्वोत्पत्त्यर्थं विधिमपेक्षतामित्याशङ्क्य संसारिणोऽसंसारिणो वा सा विधेयेति विकल्प्याऽऽद्यं दूषयति—संसारीति । न केवलं तद्दृष्टिविधिवैफल्यं प्रत्युतानर्थाप्तिरित्याह—अयमेवेति ।।१३८।।

कल्पान्तरं प्रत्याह—तदन्यस्येति । लोकतोऽप्रसिद्धावपि शास्त्रात्प्रसिद्धिमाशङ्क्याऽऽह—तथेति ।।१३९।।

संसार्यात्मदृष्टेरविधेयत्वे हेत्वन्तरमाह—द्रष्ट्रिति । न हि लोकसिद्धेऽर्थे तद्दृष्टिः शास्त्रीयविध्यपेक्षेत्यर्थः । द्रष्टुर्लोकसिद्धत्वेऽप्यात्मनस्तदभावात्तद्दृष्टिविधिमाशङ्क्याऽऽह—द्रष्टुरिति । विभक्तस्य घटवदनात्मतेति भावः ।।१४०।।

तस्यैवाऽऽत्मत्वेऽप्यशनायाद्यतीतस्यालौकिकत्वात् तद्दृष्टौ शास्त्रीयो विधिरित्याशङ्क्याऽऽह—न चेति । संसारस्य परतन्त्रतया प्रसिद्धेस्तत्संबन्धित्वेनाऽऽत्मनोऽपि प्रसिद्धिरित्यर्थः । संबन्धशब्दः संसारविषयः ।।१४१।।

परतन्त्रोऽपि सोऽन्तःकरणगतो नाऽऽत्मगामीति सांख्यास्तान्प्रत्याह—न चेदिति । आत्मनोऽसंसारित्वे मुमुक्षुत्वासिद्धिः संसारमोक्षयोरेकाधिकरणत्वान्न बुद्धिद्वाराऽऽत्मन्यपि तत्संभवोऽऽसङ्गस्य तदयोगात्कल्पिते तु संबन्धे मायावादापत्तिरिति भावः ।।१४२।।

संसार्यसंसार्यात्मधियोरविधेयतेत्यापाद्याऽऽत्मधियोऽपुंस्तन्त्रत्वान्न विधेयतेत्येतद्दृष्टान्तेन साधयति—अनृतन्त्र इति । विपक्षेऽपि विधिवैधुर्यतादवस्थ्यमाह—मात्रिति । नित्यप्राप्तेरित्यर्थः ।।१४३।।

---

१. जडात्मा पृथक् इति दुर्वचमात्मभिन्नस्य जडत्वनियमादित्यर्थः ।

नानाद्रव्यसमायोगे वियोगे च घटात्मनः । वियत्सम्पूर्णता नित्या वियत्सक्तेरवर्जनात् ॥४४॥
शब्दादिबाह्यसम्बन्धे विभागे च तथा धियः । प्रत्यक्चैतन्यसम्बन्धो नित्यो नित्यात्मसाक्षिकः ॥४५॥
यतोऽतः पाक्षिकी प्राप्तिर्नेहास्त्यैकात्म्यदर्शने । नियमः परिसंख्या वा न तेनेहोपपद्यते ॥४६॥

वेदान्तेऽपि प्रामाण्यसिध्यर्थो विधिरित्याक्षिप्य समाधानम्

कर्मकाण्डे यथा मानं तथैवोपनिषत्स्वपि । विधिरेवानपेक्षत्वात्सापेक्ष्यान्नाभिधाश्रुतिः ॥४७॥
मैवं मानान्तराप्राप्तसम्यगैकात्म्यबोधतः । अभिधाश्रुतेः प्रमाणत्वं सुप्तोत्थापकवाक्यवत् ॥४८॥
अकारकैकात्म्यमात्रं मेयं वस्त्विष्यते यतः । तदन्यस्य यतो मानाद्व्यतिरेको न लभ्यते ॥४९॥
मुक्त्वैकात्म्यस्य चाज्ञानं नान्तरायान्तरं यतः । विधितन्त्रस्य[1] कार्यत्वान्नाज्ञाने प्रभविष्णुता ॥५०॥
यथास्थितात्मवस्तूत्थज्ञानं मुक्त्वा तमोहृतौ । नान्यो हेतुर्यतस्तस्मान्न त्रय्यन्ते विधिः प्रमा ॥५१॥
नियोज्यस्य च नैश्वर्यं धीसम्यक्त्वं प्रतीष्यते । तस्य मेयैकहेतुत्वान्नैव स्यान्मातृतन्त्रता ॥५२॥

वेदान्तानां अपौरुषेयत्वादेव सिद्धं प्रामाण्यम्

विधेरिवानपेक्षात्वं वेदान्तेष्वभिधाश्रुतेः । अनृतन्त्रत्वसामान्यात्तथाऽतीन्द्रियबोधतः ॥५३॥

अपूर्वविध्यभावेऽपि नियमपरिसंख्ययोरन्यतरः स्यादित्याशङ्क्याऽऽत्मधियो नित्यप्राप्तिं दृष्टान्तेनाऽऽह—नानेत्यादिना । तन्नित्यत्वे मानमाह—नित्यात्मेति ॥१४४–१४५॥

तन्नित्यप्राप्तिफलमाह—यत इति । यथोक्तनीत्याऽऽत्मज्ञाने नित्याप्ते यतो न पाक्षिकी प्राप्तिरतो नात्र नियमो "नियमः पाक्षिके सती"ति स्थितेः सति तस्मिन्नान्यत्र प्रसङ्गस्तेन तन्निवृत्तिस्तन्नात्र परिसंख्याऽपि "तत्र चान्यत्र च प्राप्तौ से"ति न्यायादित्यर्थः ॥१४६॥

शब्दादेव ज्ञानोत्पत्तेस्तज्जन्मार्थं विध्यभावेऽपि प्रामाण्यार्थो विधिरित्याशङ्क्ते—कर्मेति । यथा विधिकाण्डे विधिवाक्यमेव मानमन्यत्तच्छेषतयोपयुक्तं तथा ज्ञानकाण्डेऽपि विध्यर्थस्य मानान्तरायोग्यत्वात्तन्निष्ठवाक्यस्यानपेक्षप्रामाण्यसिद्धेरयमात्मेत्यादि[2] तु विधिहीनं न सिद्धेऽर्थे मानं तस्य मानान्तरयोग्यत्वात्तन्निष्ठस्य सापेक्षत्वात्तद्वेदान्तेषु प्रामाण्यार्थमेव विधिरित्यर्थः ॥१४७॥

अभिधाश्रुतेरमानतेत्येतत्प्रत्याह—मैवमिति । ऐक्यस्य सिद्धत्वेऽपि रूपाद्यभावेन मानान्तरायोग्यत्वात्तद्बोधिवाक्यस्य प्रामाण्यं सुप्तबोधिलौकिकवाक्यवद्युक्तमित्यर्थः ॥१४८॥

ऐक्यस्य नाभिधाश्रुतिमेयत्वं मात्रादिभावाभावयोस्तदयोगादित्याशङ्क्याऽऽह—अकारकेति । मात्रादेर्भावत्वेऽप्यप्रामाणिकत्वात्कूटस्थमेकरसं तत्त्वमभिधावाक्यीयमित्यर्थः । एको यतःशब्दोऽतःशब्दपर्यायः ॥१४९॥

वेदान्तेषु प्रामाण्याय विध्यभावेऽपि ब्रह्मात्मनोर्व्यवधानभङ्गार्थं विहितज्ञानापेक्षणात्तत्र विधिरित्याशङ्क्याज्ञानादन्यत्तदेव वा व्यवधानमिति विकल्प्याऽऽद्यं दूषयति—मुक्त्वेति । अतस्तद्भङ्गाय न ज्ञाने विधिरिति शेषः । द्वितीयं प्रत्याह—विधीति । अज्ञानं चेद्व्यवधिस्तदा विध्यधीनधियोऽप्रमात्वान्न तन्निराससमर्थतेत्यर्थः ॥१५०॥

अज्ञानाख्यव्यवधेस्तर्हि किं निवर्तकं तदाह—यथेति । व्यवधिध्वंसार्थत्वेनापि विध्यसंभवे फलितमाह—यत इति ॥१५१॥

विधितन्त्रस्याप्रमात्वान्नाज्ञानध्वंसितेत्ययुक्तं विहिते ज्ञाने प्रामाण्यस्य बुद्धिमता क्रियमाणत्वादित्याशङ्क्याऽऽह—नियोज्यस्येति । तर्हि किंप्रयुक्तं धीसम्यक्त्वं तदाह—तस्येति ॥१५२॥

यत्तु सिद्धार्थत्वादभिधाश्रुतिः सापेक्षत्वादमानमिति तत्राऽऽह—विधेरिति । कर्मज्ञानवाक्ययोरनपेक्षत्वस्य तुल्यत्वे हेतुमाह—अनृततन्त्रत्वेति । अपौरुतेयत्ववन्मानान्तरायोग्यार्थबोधित्वं हेत्वन्तरमाह—तथेति ॥१५३॥

---

१. विधितन्त्रस्य कार्यत्वात् कृतिसाध्यत्वात् प्रमात्वाभावादित्यर्थः ।
२. अयमात्मेत्यादि—"अयमात्मा ब्रह्मे"ति वाक्यम् ।

अक्षाद्यविषयं प्रत्यक्स्वतः सिद्धेरसाधनम् । अभिधा बोधयन्तीयं नान्यत्किंचिदपेक्षते ॥१५४॥
तस्माद्विधेः प्रमाणत्वं साध्यसाधनबोधने । अतीन्द्रिये तदन्येन ज्ञातुं शक्यं न तद्यतः ॥१५५॥
साध्यसाधनसम्बन्धो न शक्योऽभिधया यथा । प्रतिपत्तुं स्वतः सिद्धोऽशक्यो विधिगिरा तथा ॥१५६॥
ऐकात्म्यस्य स्वतः सिद्धेर्न क्रियाऽपेक्ष्यते यतः । ततश्च भावनाभावो भावनायाः क्रियाश्रयात् ॥१५७॥
विरहे भावनायाश्च न विधेस्तत्र मानता । स्वतःसिद्धार्थबोधित्वादभिधायास्तु मानता ॥१५८॥

तत्त्वमस्यादिपदानां सापेक्षत्वादमानत्वशंका

सापेक्षत्वादमानं चेदभिधा लोकवर्त्मना । अभिधा तत्त्वमस्यादि[1] सरित्तीरफलोक्तिवत् ॥१५९॥
संहृत्यनुपपत्तिश्च पदानामभिधाश्रुतौ । आख्यातपदहेतुत्वात्सर्वत्र पदसंहतेः ॥१६०॥

विध्यभावेऽपि अस्यादिपदसद्भावात् महावाक्यप्रामाण्यम्

नाऽऽख्यातपदसद्भावात्स्यादेव पदसंहतिः । अस्यस्म्याद्याख्यातपदमस्त्येवेहाभिधाश्रुतौ ॥१६१॥
सरित्तीरे फलानीति युक्ताऽपेक्षाऽभिधाश्रुतेः । प्रत्यक्षमानग्राह्यत्वात्फलतीरार्थसंगतेः ॥१६२॥
प्रत्यक्षग्राह्य एषोऽर्थो न तदन्यप्रमाणकः । यतोऽतो नाऽऽगमादेव तादृशेऽर्थे विनिश्चितिः ॥१६३॥
अपूर्वादिवचोऽर्थे तु न प्रत्यक्षाद्यपेक्षते । प्रत्यक्षाद्यप्रमेयत्वादैकात्म्याख्यस्य वस्तुनः ॥१६४॥

पृथिव्यादिवद्ब्रह्मात्मनोऽपि मानान्तरयोग्यत्वात्कथमतीन्द्रियतेत्याशङ्क्याऽऽह—अक्षादीति । रूपादिहीनं स्वप्रकाशं साधकानपेक्षं प्रत्यक्षाद्ययोग्यं ब्रह्म तद्विषयाऽभिधाश्रुतिर्विध्यनपेक्षेत्यर्थः ॥१५४॥

सिद्धेऽर्थे विधिप्रामाण्यस्यानिष्टेर्नियोगे तत्प्रामाण्यस्य संबन्धे निराशादिष्टसाधनवत एव तन्मानतेति प्रासङ्गिकमर्थमाह—तस्मादिति । इष्टोपायस्य विधिं विनाऽपि प्राप्तेर्न तत्र तत्प्रामाण्यमित्याशङ्क्याऽऽह—तदन्येनेति । अतो विधेरेव समीहितसाधने प्रामाण्यमिति शेषः ॥१५५॥

विमतं विधिमानकं शास्त्रार्थत्वादग्निहोत्रवदित्याशङ्क्याऽऽह—साध्येति । अभिधाश्रुतेर्ब्रह्मण्यबाध्याबुद्धासंदिग्धबोधधीविरुद्धाऽनुमेति भावः ॥१५६॥

सिद्धेऽर्थे विध्यमानत्वे हेत्वन्तरमाह—ऐकात्म्यस्येति । यत्र क्रिया तत्र भावना तस्याः साध्यक्रियाविषयत्वाद्यत्र च सा तत्र विधिर्न च सिद्धे क्रियाद्यस्ति तन्न तत्र विधिमानतेत्यर्थः । अभिधाऽपि तत्र न मानं वेदवाक्यत्वात्संमतवदित्याशङ्क्याऽऽह—स्वत इति ॥१५७–१५८

प्रत्युक्तमपि चोद्यं दृष्टान्तवशादुत्थापयति—सापेक्षत्वादिति । तदेव व्यनक्ति—अभिधेति । तत्त्वमस्याद्यभिधा सापेक्षत्वादमानमिति सम्वन्धः ॥१५९॥

न केवलं वेदान्तेषु प्रामाण्यार्थमेव विधिः किन्तु पदानां मिथोऽन्वयार्थं चेत्याह—संहृतीति ॥१६०॥

पदान्वयार्थं विधिरित्येद्दूषयति—नेति । तर्हि विधिपदोपगतेरस्मत्पक्षाप्तिरित्याशङ्क्याऽऽह—असीति । आदिपदं वेद भवतीत्यादि ग्रहीतुम् ॥१६१॥

यत्तु सरित्तीरफलोक्तिवदिति तत्र मानान्तरगम्यार्थत्वमुपाधिरित्याह[2]—सरिदिति ॥१६२॥

उपाधेरसंभवं निरस्यति—प्रत्यक्षेति । फलतीरसंबन्धाख्यार्थस्य वक्तृप्रत्यक्षत्वात्तदपेक्षवाक्यस्यानुवादितया तत्रामानतेत्यर्थः ॥१६३॥

साधनव्याप्तिं[3] प्रत्याह—अपूर्वादीति । यदपूर्वमनपरमित्यादिवचस्तत्र स्वार्थे प्रत्यक्षाद्यपेक्षं स्वार्थस्य तदयोग्यत्वान्न साधनव्याप्तिरित्यर्थः ॥१६४॥

---

१. तत्त्वमस्यादिवाक्यं न प्रमाणं सापेक्षत्वात् नदीतटफलवाक्यवत् इत्यनुमानमत्र सूचितम् ।

२. उक्तानुमाने मानान्तरगम्यार्थत्वमुपाधिः तस्य दृष्टान्ते नदीतीरवाक्ये साध्यव्यापकता पक्षे तत्त्वमस्यादौ साधनाव्यापकता ।

३. साधनव्याप्तिमिति "अपूर्वमनपरं तत्त्वमसी"त्यादेरपि सापेक्षत्वे साधनव्याप्तिः स्यात् । न चैवं तेषां प्रत्यक्षाद्यगोचरार्थत्वात् ॥

अपौरुषेयवाक्यत्वं समानमभिधाश्रुतेः । अतीन्द्रियार्थबोधित्वं समानं चोदनोक्तिभिः ।।१६५।।
सिद्धसाध्यप्रमेयत्वभेदो यदि परं तयोः । प्रामाण्ये त्वतिशीतिस्तु न काचिदपि दृश्यते ।।१६६।।
प्रमोपजायते तावदहं ब्रह्मेत्यलौकिकी । तत्त्वमस्यादिवाक्येभ्यः श्रवणात्समनन्तरम् ।।१६७।।
एवं चेदप्रमाणत्वं किमिवेहाभिधाश्रुतेः । विधेरपीह मानत्वं नोक्तन्यायातिरेकतः ।।१६८।।
स्वशक्तिः सर्वमानानां यथा वस्त्ववबोधने । अभिधायाश्च साऽस्त्येव किमिति स्यादमानता ।।१६९।।

प्रत्यक्षायोग्येऽपि विषये वेदान्ता अनपेक्षाः

नाप्यर्थेऽतीन्द्रिये सिद्धे मानं लिङ्गाद्यपेक्षते । योगिप्रत्यक्षमानं वा तयोरविषयत्वतः ।।१७०।।
नेतीत्यस्थूलमित्यादिवाक्याद्योऽर्थोऽवगम्यते । योगिप्रत्यक्षगम्योऽयं न तत्प्रत्यक्त्वहेतुतः ।।१७१।।
प्रत्यक्षानवताराच्च नानुमानेन मीयते । धर्मधर्म्यभिसम्बन्धे नागृहीतेऽनुमायतः ।।१७२।।
यज्जातीयैः प्रमाणैस्तु यज्जातीयार्थदर्शनम् । भवेदिदानीं लोकस्य तथा कालान्तरेऽप्यभूत् ।।१७३।।
यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात् । दूरसूक्ष्मादिदृष्टौ स्यान्न रूपे श्रोत्रवृत्तिता ।।१७४।।
योगिप्रत्यक्षमानादेर्न चेदैकात्म्यमेयता । तत्प्राप्तमपि किं कुर्यात्स्वात्माऽयोग्यासु भूमिषु ।।१७५।।

किंच वेदान्ताः स्वार्थे मानमपौरुषेयत्वाद्विधिवाक्यवदिति प्रत्यनुमानमाह—अपौरुषेयेति । अग्निर्हिमस्येत्यादौ व्यभिचारमाशङ्क्य वेदान्ताः स्वार्थे मानं संवादादिहीनार्थबोधित्वात्संमतवदित्याह—अतीन्द्रियेति ।।१६५।।

सापेक्षत्वानुमादोषमुपसंहरति—सिद्धेति । तयोरिति कर्मज्ञानकाण्डयोरुक्तिः ।।१६६।।

वेदान्तानां प्रमाजनकत्वमेवासिद्धमिति कथं प्रामाण्यमित्याशङ्क्याऽऽह—प्रमेति । अधिकारिणो वाक्यीया प्रमितिर्न प्रत्याख्यानमर्हतीति भावः ।।१६७।।

तथाऽपि तेषां मात्रादिवदप्रामाण्यमित्याशङ्क्याऽऽह—एवं चेदिति । स्वार्थे प्रमितिकरणत्वे तस्या नाप्रमाणत्वं हेत्वभावादित्यर्थः विपक्षे विधेरप्यप्रामाण्यं स्यादित्याह—विधेरिति । प्रमाजनकत्वमुक्तन्यायः इहेति स्वार्थोक्तिः ।।१६८।।

किंच वेदान्ताः स्वार्थे मानं तद्धीसमर्थत्वादध्यक्षवदित्याह—स्वशक्तिरिति ।।१६९।।

प्रत्यक्षायोग्येऽपि ब्रह्मण्यनुमादिसंभवात्तदपेक्षा वेदान्ता न स्वार्थे मानमित्याशङ्क्याऽऽह—नापीति । सोपाधिकेऽर्थे लिङ्गादिप्रवृत्तावपि निरुपाधिके न तत्प्रवृत्तिरित्यर्थः । ब्रह्मास्मदध्यक्षाद्यगोचरोऽप्यस्मद्विशिष्टानां योगिनां प्रत्यक्षं स्यादित्याशङ्क्याऽऽह—योगीति । वाशब्दो नञ्क्रियापदयोरनुकर्षणार्थः । तत्र हेतुः—तयोरिति ।।१७०।।

हेतुं साधयति—नेत्यादिना । योगिप्रत्यक्षपदं लिङ्गाद्युपलक्षणार्थम् । तत्प्रत्यक्त्वहेतुतः प्रत्यक्षानुमानादेः सत्तास्फूर्तिप्रदत्वेनाऽऽत्मनस्तत्स्वरूपत्वादिति यावत् ।।१७१।।

तस्यानुमानागम्यत्वे हेत्वन्तरमाह—प्रत्यक्षेति । प्रत्यक्षद्वयाविषयत्वेऽप्यनुमानविषयत्वं किं न स्यान्न हि मानं मनान्तरमपेक्षते तत्राऽऽह—धर्मेति । अतोऽप्रत्यक्षादग्रहान्नानुमानमङ्गाभावादिति शेषः ।।१७२।।

वर्तमानकल्पवर्तिनामप्रत्यक्षमपि ब्रह्म कल्पान्तरस्थानां तद्योग्यं स्यात्तत्प्रत्यक्षस्यातिशयादित्याशङ्क्याऽऽह—यदिति । विमतं न ब्रह्मग्राहीन्द्रियत्वात्संमतवदित्यर्थः ।।१७३।।

अस्मदिन्द्रियेष्वतिशयाभावाद्ब्रह्माविषयत्वमाशङ्क्येतरत्राप्ययोग्यविषये तुल्यमतिशयशून्यत्वमिति मत्वा वार्तिकमुदाहरति—यत्रेति । धर्मब्रह्मादिविषयेऽपि केषांचिदिन्द्रियं प्रवर्तते चेत्तेषां रूपेऽपि श्रोत्रस्य प्रवृत्तिः स्यादित्यतिप्रसक्तिमाह—नेति ।।१७४।।

उक्तन्यायाद्ब्रह्मात्मनो योगिप्रत्यक्षाद्यविषयत्वेऽपि तत्र तस्यातिशयवत्त्वेन प्रसङ्गमाशङ्क्य तस्याकिंचित्करत्वमाह—योगीति ।।१७५।।

अक्षादिमेयासारूप्यादैकात्म्यं स्यान्न तत्प्रमम्[1] । यथा विधेयासारूप्यान्नैकात्म्यं[2] स्याद्विधेस्तथा ॥७६॥
संभाव्यते चेदक्षादि ह्यैकात्म्यार्थे फलादिवत् । न तद्वारयितुं शक्यं लोके विधिशतैरपि ॥७७॥
नासमीक्ष्य स्वसामर्थ्यं पुमान्विधिशतैरपि । प्रवर्ततेऽनपेक्षत्वं कुतो विधिवचःस्वतः ॥७८॥

विधेः पुरुषशक्तिसापेक्षतायां दृष्टान्तः

अपाक्येषु नियुक्तोऽपि कृष्णलाञ्श्रपयेदिति । न तच्छक्तिं विना कश्चित्पुमांस्तत्र चिकीर्षति ॥७९॥
एवं चेदनपेक्षत्वं विधेः किमिति भण्यते । न भावनानपेक्षोऽसौ विधिर्यस्मात्प्रवर्तते ॥८०॥
न भावनान्तरमियं न च मानान्तरं तथा । अपेक्ष्याभिधयैकात्म्यमवबोधयति श्रुतिः ॥८१॥
अतोऽनपेक्षता युक्ता सर्वदैवाभिधाश्रुतेः । अभिधानाभिधेयार्थज्ञानमेव व्यपेक्षते ॥८२॥

उपासनाख्यज्ञानविधेः विषयासाधकता

ज्ञानक्रिया प्रमातृस्था न यथावस्तु बोधकृत् । प्रमेयकर्तृकैवासौ यथावस्त्ववबोधिनी ॥८३॥

ब्रह्मात्मन्युक्तन्यायात्प्रत्यक्षाद्यनवतारेऽपि तस्मिन्विधिवाक्यगम्ये कुतो वेदान्ता निरपेक्षतया मानमित्याशङ्क्याऽऽह—अक्षादीति ॥१७६॥

किंच ब्रह्मात्मनि वेदान्तानामनपेक्षं मानत्वं वक्तुं तज्ज्ञाने विधिमिच्छता वाच्यमैक्ये नदीतीरफलादाविव मानान्तरं संभावितं न वेति । आद्ये न तद्विधिनाऽपि शक्यं निरसितुमिति तत्पक्षेऽप्यनपेक्षप्रामाण्यसिद्धिः । द्वितीये विनाऽपि तं तादृक्प्रामाण्यसिद्धेर्व्यर्थो विधिरित्याह—संभाव्यत इति । प्रमाणोपनीतस्य निवारणे प्रमाणविरोधः स्यादिति हिशब्दार्थः । वेदान्तानामनपेक्षप्रामाण्यमुक्त्वा विधिष्वेव सापेक्षतेत्याह—नेत्यादिना ॥१७७–१७८॥

विधेरधिकारिगतप्रवृत्तिशक्तिसापेक्षत्वं दृष्टान्तेन स्पष्टयति—अपाक्येष्विति । यथा कृष्णलाञ्श्रपयेदिति विक्लित्त्ययोग्येषु कृष्णलेषु नियुक्तः स्वशक्तिमनपेक्ष्य न पिपक्षति किंतु स्वसामर्थ्यमनुसृत्य तेषां विक्लित्त्ययोग्येऽपि तत्पाके संतापनमात्रे घृते श्रपयतीत्युक्तिसामर्थ्याददृष्टार्थो प्रवर्त्तते तथा सर्वत्र विधिविषये पुरुषशक्तिरपेक्षितेत्यर्थः ॥१७९॥

इष्टमेव पुरुषशक्तिसापेक्षत्वं विधेरित्याशङ्क्याऽऽह—एवं चेदिति । विधेरधिकारिशक्त्यपेक्षतया प्रवर्तकत्वान्नानपेक्षं प्रामाण्यमित्युक्त्वा तत्रैव हेत्वन्तरमाह—नेति । तस्मादपि निरपेक्षप्रामाण्यासिद्धिरिति शेषः ॥१८०॥

तत्त्वमादावपि तुल्यमुक्तशक्त्यपेक्षत्वमधिकारिणः प्रमितिजनको वेद इति स्थितेरित्याशङ्क्याऽऽह—नेत्यादिना । पुरुषशक्तिसापेक्षत्वमुभयत्र तुल्यं करणशक्तौ भावनायां च विधिष्वेव सापेक्षतेत्यतिशयस्तथापि मानान्तरापेक्षाभावाद्विधीनामनपेक्षप्रमाणतेत्याशङ्क्याऽऽह—न चेति । नियोगस्य जाड्यात्तत्र मानान्तरं संभवत्यन्यथा शक्तिग्रहायोगादात्मा तु स्वप्रकाशत्वादमेयः शक्तिग्रहस्तत्रोपपादितोऽतः श्रुतिर्विधिरहितवाक्येनैक्यं बोधयन्ती ब्रह्मनिष्ठतां विनाऽनुष्ठानान्तरं मानान्तरं प्रवृत्तिशक्तिं वा नापेक्षते किंतु स्वमहिम्नैवाधिकारिणं प्रति तद्बोधयतीत्यर्थः ॥१८१॥

विधिभ्यो वेदान्तेषु भेदमुपसंहरति—अत इति । सर्वदैवानपेक्षतेति ब्रुवता शक्तिग्रहेऽप्यपेक्षाभावेष्टेरव्युत्पन्नस्यापि तत्त्वमादिनैक्यधीरिष्टा स्यादित्याशङ्क्याऽऽह—अभिधानेति । शक्तितात्पर्यवतः शब्दस्य मानत्वात्तस्य चानपेक्षत्वादनपेक्षत्ववाचोयुक्तिरिति भावः ॥१८२॥

विधीनामनपेक्षत्वायोगात्तदुपगमेन सापेक्षत्वापरिहारात्तं विनैव वेदान्तानामनपेक्षं प्रामाण्यमित्युपपाद्य विहितज्ञानस्याप्रामाण्येनार्थासाधकत्वाच्च न ज्ञाने विधिरित्याह—ज्ञानेति । प्रमातृस्था तत्तन्त्रेति यावत् । योषिदग्न्यादिधीवदित्यर्थः । प्रमेयकर्तृका मानमेयाधीनेति यावत् । असाविति ज्ञानक्रियोक्ता ॥१८३॥

---

१. न तत्प्रमं न तत्प्रमाणकम् ।

२. विधेयं यागादि तत्सारूप्यमैकात्म्ये नास्ति तन्न विधिविषयः इत्यर्थः ।

**न[1] चान्यदीयव्यापारे ह्यन्योऽशक्तेर्नियुज्यते । न ह्यग्निसाध्ये शोषादौ नियोगो घटतेऽम्भसः ॥१८४॥**
**ब्रह्मणोऽविद्यया योऽपि स्यादवच्छेद आत्मनः । तदवच्छेदविध्वस्तौ न साधनमपेक्षते ॥१८५॥**
**अनवच्छिन्नयाथात्म्यब्रह्मैकात्म्यादविद्यया । अवच्छिन्नवदाभाति क्षेत्रज्ञो रज्जुसर्पवत् ॥१८६॥**
**न चाविद्यानिरास्यत्र प्रत्यग्याथात्म्यबोधतः । साधनं किंचिदापेक्ष्यं स्वर्गे यागादिवत्क्वचित् ॥१८७॥**
**न चापि मुख्यया वृत्त्या साध्येऽसति जगत्यपि । किंचित्साधनमित्येवं भण्यते लोकवेदयोः ॥१८८॥**
**साध्यं च लोकतः सिद्धमुत्पत्त्यादिचतुष्टयम् । प्रमाणस्य न तन्न्याय्यं सिद्धार्थव्यञ्जकत्वतः ॥१८९॥**
**नाऽऽत्मलाभातिरेकेण व्यञ्जकस्य मनागपि । संभाव्यतेऽपरं रूपमज्ञातत्वापनोदकृत् ॥१९०॥**
**आत्मासामान्यरूपोत्थं न चाभूत्वोपजायते । घटादिज्ञानवज्ज्ञानं भिन्नहेत्वनपेक्षतः[2] ॥१९१॥**
**स्थास्न्वनुभवमात्रत्वात्कार्यकारणवस्तुनः । अभूतभूतिर्नैवातो युज्यतेऽनुभवात्मनि ॥१९२॥**
**प्रत्यगज्ञानहेतूत्था भावनेयं न तु स्वतः । प्रत्यग्याथात्म्यजिज्ञासोः कथं सा विषयो भवेत् ॥१९३॥**
**क्रियाकारकभेदोऽयमज्ञातैकात्म्यवस्तुनः । तज्ज्ञानेऽसावसंभाव्यस्तद्धेतूच्छित्तिकारणात्[3] ॥१९४॥**

तादृश्यपि ज्ञाने पुंसो नियोगः किं न स्यादित्याशङ्क्याऽऽह—न चेति । पितृव्यापारे पुत्रस्य नियोगेऽपि पुंसो यत्र न स्वातन्त्र्यं तत्र नियोगो नेति हिशब्दार्थः । मानादिव्यापारे पुंसो न नियोगोऽशक्तेरित्यत्र दृष्टान्तमाह—न चेति ॥१८४॥

**वैधं ज्ञानं फलवदिति ज्ञाने विधिमाशङ्क्य तत्फलं भेदध्वस्तिर्वाऽविद्यानिवृत्तिर्वा जीवस्य ब्रह्मप्राप्तिर्वाऽन्यद्वा किंचिदिति विकल्प्य जीवब्रह्मभेदस्य विहितज्ञानाद्ध्वस्तेर्ज्ञाने विधिरित्याद्यः स किमाविद्यो वा वास्तवो वा?आद्ये विधिवैयर्थ्यमित्याह**—ब्रह्मण इति । **साधनं विधिर्ज्ञानादेव तत्सिद्धेरित्यर्थः** ॥१८५॥

**द्वितीयं दूषयति**—अनवच्छिन्नेति ॥१८६॥

**अविद्याध्वस्त्या तज्जदेहध्वस्तावप्यविद्याध्वंसार्थं विहितज्ञानापेक्षणात्तत्र विधिरिति द्वितीयमाशङ्क्याऽऽह**—न चेति । **अत्र प्रतीचीति यावत् । क्वचिद्देशे काले वेत्यर्थः । बोधतोऽन्यदिति शेषः** ॥१८७॥

**जीवस्य ब्रह्मत्वसिद्धिर्विहितज्ञानादिति ज्ञाने विधिरिति तृतीयमाशङ्क्याऽऽह**—न चेति । **ब्रह्मत्वं विद्यया साध्यमपि न मुख्यया वृत्त्या साध्यं न चासति मुख्ये साध्ये सर्वत्रापि व्यवहारे साधनमिति किंचिदुच्यते तस्मात्साध्याभावान्न विधिरित्यर्थः** ॥१८८॥

**उक्तसाध्येभ्योऽन्यदेव तद्विधेः साध्यमिति चतुर्थमाशङ्क्य तदभावं वक्तुं साध्यस्वरूपमाह**—साध्यं चेति । **उत्पत्त्यादीनामेकं विहितज्ञानस्यापि साध्यमित्याशङ्क्याऽऽह**—प्रमाणस्येति ॥१८९॥

**शाब्दे ज्ञाने विधिं निरस्याभ्यस्यमानस्य तस्याविद्याध्वंसित्वात्तदभ्यासे विधिरित्याशङ्क्याऽऽह**—नाऽऽत्मेति । **अपरमभ्यासादिष्टमिति यावत्** । उत्पन्नमात्रादेव ज्ञानादज्ञानध्वस्तिसंभवादित्यर्थः ॥१९०॥

**माने तदभ्यासे वा विधिर्मा भूत्स्वरूपज्ञाने तु स्यादित्याशङ्क्य दोषान्तरमाह**—आत्मेति । **यदस्यासाधारणं रूपं तेनाभिव्यक्तं ज्ञानं हेत्वनपेक्षत्वादकार्यं न विधेयमित्यर्थः** ॥१९१॥

**कथं स्वातिरिक्तहेत्वनपेक्षत्वं तत्राऽऽह**—स्थास्न्विति । अतःशब्दस्य पञ्चम्या संबन्धः ॥१९२॥

**किंच ब्रह्म जिज्ञासोस्तद्विदो वा विधिराद्येऽपि तस्य ज्ञानोपायेऽन्यत्र वा असाविति विकल्प्याऽऽद्यमङ्गीकृत्य द्वितीयं दूषयति**—प्रत्यगिति । **ज्ञानार्थिनस्तदुपायादन्यत्र न यत्नस्तदनर्थित्वादित्यर्थः** ॥१९३॥

**कल्पान्तरं प्रत्याह**—क्रियेति ॥१९४॥

१. न चान्यदीयेति प्रमाणसाध्ये वस्तुनि न नियोगो व्याप्रियेत ।
२. भिन्नहेत्विति—स्वोत्पादकहेत्वतिरिक्तहेत्वनपेक्षत्वात् ।
३. तद्धेतूच्छित्तिः भेदहेत्वज्ञाननाशः ।

**न चाविद्यासमुच्छित्तिर्ज्ञानोत्पत्त्यतिरेकतः । संसारनाशोऽविद्याया नाशान्न व्यतिरिच्यते ॥१९५॥**
**न चाप्यविद्यानाशोऽत्र संसर्गः कारणात्मनि । तद्ध्वस्तेर्वस्तुवृत्तत्वान्मृदि लोष्टादिनाशवत् ॥१९६॥**
**आदाय वास्तवं वृत्तं ज्ञानमज्ञाननाशकृत् । वस्तुयाथात्म्यवृत्तेन तमोऽपह्नूयते सदा ॥१९७॥**
**अज्ञातज्ञापनं तस्माद्विधिरत्रोपपद्यते । अकृतस्य क्रिया त्वत्र विधिर्नैवोपपद्यते ॥१९८॥**

अविद्या द्विविधा तत्र द्वितीया विहितज्ञानान्निवर्तते

**द्वैविध्यं चाप्यविद्याया न च युक्त्याऽवसीयते । ऐकात्म्यमात्रवस्तुत्वादविद्यैकैव युज्यते ॥१९९॥**
**प्रमेयभेदभिन्नत्वं ज्ञानानामिव भेदकम् । नाविद्याया यतोऽस्तीह द्वैविध्यं तेन दुर्घटम् ॥२००॥**
**प्रत्यगज्ञानमेवेह तदन्यद्वस्तुकारणम् । तदन्यकारणासत्त्वाद्द्वैविध्यं तमसः कुतः ॥ १ ॥**

ज्ञानाभ्यासान्मुक्तिरिति पक्षनिरासः

**न चाभ्यासाद्यपेक्षाऽपि स्वतो मुक्तत्वकारणात् । न घटादेर्घटत्वादि घटाद्यभ्याससंश्रयम् ॥ २ ॥**
**न चाविषयविज्ञानमनाकारं च भाव्यते । भावकप्रत्यगात्मत्वादाकृतेश्च निषेधतः ॥ ३ ॥**
**नेन्द्रियेण ग्रहोऽस्यास्ति शब्दाद्यर्थानुपातिना । दुःखादिवच्च नैवाऽऽत्मा चितेः स्वार्थैकरूपतः ॥ ४ ॥**

भेदहेतोरविद्याया नोच्छेदोऽनुत्पन्नायाः[1] प्राप्त्यभावेनानिवर्तकत्वादुत्पन्नायाश्चाविरोधेनोत्पन्नत्वादित्याशङ्क्य दीपात्तमोध्वस्तिवत्तदुपपत्तेर्मैवमित्याह—न चेति । ज्ञानोदयनान्तरीयकत्वेनाज्ञानध्वंसेऽपि तत्कार्यध्वस्त्यर्थं ज्ञानाभ्यासे विधिरित्याशङ्क्याऽऽह—संसारेति ॥१९५॥

यथा लोष्टादिनाशो मृदि संसर्गस्तथा सकार्याविद्यानाशोऽप्यात्मन्यन्वयस्तत्तस्या निरन्वयनाशार्थमभ्यासे विधिरित्याशङ्क्याऽऽह—न चापीति । सकार्याविद्याध्वस्तेरकार्यकारणात्ममात्रत्वादित्यर्थः ॥१९६॥

कथं तस्या यथोक्तात्ममात्रतेत्याशङ्क्याऽऽह—आदायेति । वस्तुस्वरूपानुसारेण ज्ञानस्याज्ञानध्वंसित्वान्न वस्त्वतिरेकेण शिष्टमस्तीत्यर्थः । तत्र विद्वदनुभवं प्रमाणयति—वस्त्विति ॥१९७॥

वेदान्तेष्वप्रवृत्तप्रवर्तनात्मकं विधिं निरस्याज्ञातज्ञापनं चातो विधिरित्यत्रोक्तमुपसंहरति—अज्ञातेति । अत्रेति वेदान्तोक्तिः । तच्छब्दार्थं हेतुमाह—अकृतस्येति ॥१९८॥

अग्रहान्यथाग्रहाभ्यां द्विविधाऽविद्या तत्राद्याया जन्मात्रान्निवृत्तिर्द्वितीयस्या विहितज्ञानादित्येके । तान्प्रत्याह—द्वैविध्यं चेति । तत्स्वरूपवदित्यपेरर्थः । युक्त्या मानं समुच्चेतुं चकारः । एकत्वमपि न तस्या मानयुक्त्यभावादित्याशङ्क्याऽऽह—ऐकात्म्येति । आश्रयविषयभेदाभावाद्भेदकाभावे तदैक्यमित्यर्थः ॥१९९॥

तदेव दृष्टान्तेन साधयति—प्रमेयेति । इह प्रतीचीत्येतत् ॥२००॥

आत्माज्ञानं तमाच्छादयन्न जगद्धेतुरेकस्य द्विकरत्वायोगादतो जगत्कारणमज्ञानान्तरं तद्ध्वस्तिर्विहितज्ञानादित्याशङ्क्याऽऽह—प्रत्यगिति । "इन्द्रो मायाभिरि"त्यादिश्रुतेर्यदनात्मवस्तु तस्मिन्कारणं प्रत्यगज्ञानमेवैकस्य द्विकरत्वविरोधस्तु कुल्यादिदृष्टान्तेन निरस्य इत्यर्थः । इहेति व्यवहारभेदोक्तिः । प्रत्यगज्ञानातिरिक्तकारणाभावे फलितमाह—तदन्येति ॥२०१॥

मा भूदविद्याद्वैविध्यं तथाऽपि मुक्तत्वमात्मनो ज्ञानाभ्यासादिति तद्विधिमाशङ्क्याऽऽह—न चेति । आदिपदेन योगाद्युक्तिः । नित्यमुक्तस्य मुक्तत्वं नाभ्यासापेक्षमित्यत्र दृष्टान्तमाह—नेत्यादिना ॥२०२॥

किंच सविषयं साकारं च गरुडादिज्ञानमभ्यस्यतेऽन्यथा त्वात्मज्ञानं तेन तदभ्यासायोगान्न तत्र विधिरित्याह—न चेति । अविषयत्वमात्मनः साधयति—भावकेति । भावकोऽभ्यासकर्ता । आत्मधियोऽनाकारत्वे हेतुमाह—आकृतेश्चेति । अशब्दमित्यादिश्रुतेरित्यर्थः ॥२०३॥

किंचाध्यक्षस्यैव गरुडादेर्ज्ञानमभ्यस्यत आत्मज्ञानमप्यभ्यस्यते चेदात्मनोऽध्यक्षत्वे वाच्ये तस्य बाह्येन्द्रियेण

[1] अनुत्पन्नाया विद्याया इति शेषः ।

भावनोपचितं चेतो न च कैवल्यकारणम् । तस्येहैव समुच्छेदात्तद्धेत्वज्ञानहानतः ॥ ५ ॥
स्वकार्यार्थानुगामित्वं भावनाज्ञानकर्मणाम् । अकार्यकारणात्मत्वात्कैवल्येऽनुगतिः कुतः ॥ ६ ॥
साक्षादात्मप्रसिद्धौ च नाभ्यासस्तत्फलस्थितेः । ज्ञानाभावादसिद्धौ च क्व न्वभ्यासव्यपेक्षणम् ॥ ७ ॥
आत्मासामान्यरूपोत्थं ज्ञानमज्ञानमात्मनि । सकृज्जातं न चेद्धन्ति ज्ञानमेव न तद्भवेत् ॥ ८ ॥
सम्यग्ज्ञानं यदाश्रित्य तन्मोहोऽपि तदाश्रयः । अबाधितं तमोऽत्राऽऽस्त इत्युक्तिर्जडवक्तृका ॥ ९ ॥
इत्येवमादि यच्चोक्तं पूर्वमेवातिविस्तरात् । तत्कृत्स्नमनुसंधेयं सर्वावकरहानिकृत् ॥१०॥

आत्मा दर्शनार्ह इति द्रष्टव्यविध्यर्थः

सर्वमात्मेत्यतः पश्येदात्मानात्मविभागवित् । आत्मा द्रष्टव्य इत्युक्त्या ह्येषोऽर्थोऽत्राभिधीयते ॥११॥
सर्वमानप्रसक्तौ च सर्वमानफलाश्रयात् । श्रोतव्य इत्यतः प्राह वेदान्तावरुरुत्सया ॥१२॥
दर्शनस्याविधेयत्वात्तदुपायो विधीयते । वेदान्तश्रवणं यत्नादुपायस्तर्क एव च ॥१३॥

मनसा वा ग्राह्यतेति विकल्प्याऽऽद्यं प्रत्याह—नेति । द्वितीयं निराह—दुःखेति । ग्राह्यो मनसेति शेषः । तत्र हेतुः—चितेरिति । स्वप्रकाशत्वात्स्वातन्त्र्याच्चेत्यर्थः ॥२०४॥

केचित्तु विहिताभ्याससहितं मनो मुक्तिहेतुरिति ज्ञानाभ्यासे विधिमिच्छन्ति तान्प्रत्याह—भावनेति । तद्धि तत्रोपादानं निमित्तं वा ? नाऽऽद्य इत्याह—तस्येति । इहेति ज्ञानसत्त्वावस्थोच्यते ॥२०५॥

न द्वितीय इत्याह—स्वकार्येति । अनुगतिर्निमित्तत्वेनेति शेषः ॥२०६॥

किंचापरोक्षत्वेनाऽऽत्मन्यवगतेऽभ्यासविधिरनवगते वेति विकल्प्याऽऽद्यं प्रत्याह—साक्षादिति । द्वितीयं निरस्यति—ज्ञानेति । न चाऽऽत्मनि परोक्षज्ञाने तदापरोक्ष्यायाभ्यासविधिः परोक्षाभ्यासादापरोक्ष्यायोगादिति चकारार्थः ॥२०७॥

सकृज्जाता धीर्नाज्ञानध्वंसिनीत्यभ्यासे विधिरित्याशङ्क्याऽऽह—आत्मेति । ज्ञानाज्ञानयोर्मिथोविरोधप्रसिद्धेरित्यर्थः ॥२०८॥

जन्ममात्रेणाज्ञानाध्वंसित्वेऽपि कदाचित्तद्भावाज्ज्ञानस्य ज्ञानत्वमित्याशङ्क्याऽऽह—सम्यगिति । न हि यस्मिन्देशे प्रकाशस्तत्रैव तमोऽव्यावृत्तं दृष्टचरमित्यर्थः । विपक्षे दोषमाह—अबाधितमिति । अत्र विदुषीति यावत् ॥२०९॥

ननु वेदान्तेषु सर्वो विधिः संबन्धादौ निरस्तः स किमित्यत्र निरस्यते पिष्टपिष्टेरित्याशङ्क्याऽऽह—इत्येवमिति । आदिपदेन शाब्दे ज्ञाने षोढा विधिनिराकरणं गृह्यते । अनुसंधानफलमाह—सर्वेति । अवकरः शङ्क्यमानो विधिप्रकारः । निरस्तोऽपि विधिरत्र निरस्यते प्रसङ्गादिति समुदायार्थः ॥२१०॥

उक्तरीत्या विध्यभावे द्रष्टव्यवाक्यस्य का गतिरित्याशङ्क्य तदर्थं निगमयति—सर्वमिति । तत्र वाक्यमवतारयति—आत्मेति । स सर्वस्मादिष्टत्वात्परानन्दो दृष्टचर्हस्तं ब्रह्मेति विवेकी पश्यतीत्यर्थोऽस्यां श्रुतावनेन वाक्येन भातीत्यर्थः । प्रागुक्तमर्थान्तरासंभवं हेतुं कर्तुं हिशब्दः ॥२११॥

द्रष्टव्यवाक्ये तव्यो न विधायकः किंत्वर्हार्थोऽतश्चाऽऽत्मा दर्शनार्ह इति वाक्यार्थमुक्त्वा श्रोतव्यवाक्यमवतारयति—सर्वेति । प्रस्तुतमानफलभूतदृष्टयवष्टम्भादात्मनि सर्वस्य मानस्य तत्कारणत्वेन प्रसक्तावौपनिषदत्वाभावे शङ्किते तन्निरासार्थं वेदान्तानामेवाऽऽत्मदृष्टिहेतुत्वेन स्वीकारेच्छया श्रोतव्य इत्येतदाह श्रुतिस्तस्मात्तदौपनिषदत्वसिद्धिरित्यर्थः ॥२१२॥

श्रोतव्यवाक्यार्थमाह—दर्शनस्येति । विधीयमानश्रवणस्याग्निहोत्रवदसकृदनुष्ठेयत्वं यत्नादिति श्राव्यते । मन्तव्यवाक्यमादत्ते—उपाय इति ॥२१३॥

श्रुतिलिङ्गादिको न्यायः शब्दशक्तिविवेककृत् । आगमार्थविनिश्चित्यै मन्तव्य इति भण्यते ॥१४॥

वेदान्तानामुपास्तिपरत्वनिरासः

वस्तुतत्त्वविवक्षेह मन्तव्य इतिशासनात् । योषिदग्न्यादिदृष्टौ हि नैव मन्तव्यताविधिः ॥१५॥
वेदशब्दानुरोध्यत्र तर्कोऽपि विनियुज्यते । वाच्यवाचकसंबन्धनियमे तस्य हेतुता ॥१६॥

निदिध्यासनस्वरूपनिर्धारणम्

अपरायत्तबोधोऽत्र निदिध्यासनमुच्यते । पूर्वयोरवधित्वेन तदुपन्यास इष्यते ॥१७॥
श्रवणादिक्रिया तावत्कर्तव्येह प्रयत्नतः । यावद्यथोक्तं विज्ञानमाविर्भवति भास्वरम् ॥१८॥
आगमाद्दर्शनं पूर्वमागमाचार्यतो मतिः । त्रयाणामपि संगानाच्छास्त्राचार्यात्मनां स्थिरम् ॥१९॥
प्रतिपत्तिः पुरा शाब्दी यावन्न मनुते श्रुतम् । श्रुत्वा मत्वाऽथ तं साक्षादात्मानं प्रतिपद्यते ॥२०॥
अनन्यायत्तविज्ञाने श्रवणादेरुपायतः । जाते नापेक्षते किंचित्प्रतीचोऽनुभवात्परम् ॥२१॥

तयोः श्रवणस्वरूपमाह—श्रुतीति । श्रुत्यादिभिः शक्तितात्पर्यनिश्चायकैन्यायैर्ब्रह्मात्मनि वेदान्ततात्पर्यनिरूपणं श्रवणमित्यर्थः । मननस्वरूपमाह—आगमेति । श्रुत्यादिना ज्ञातस्य तत्त्वस्यासंभावनादिनिरासेन निश्चयार्थं द्वैतमिथ्यात्वसाधको यस्तर्कस्तदनुसंधानं मन्तव्य इत्युच्यत इत्यर्थः ॥२१४॥

वेदान्ता न वस्तुपराः किं तूपास्तिविधिपरा इति केचित्तान्प्रत्याह—वस्त्विति । कथं वेदान्तेषु वस्तुनि तात्पर्यं मननविधिना ज्ञातं तत्राऽऽह—योषिदिति । यत्र दृष्टिमात्रमिष्टं न वस्तु तत्र तस्य श्रुतस्य न मन्तव्यादिविधिरत्र तु तद्विधेर्वस्तुनि तात्पर्यं सिद्धमित्यर्थः । दृष्टान्ते मननविध्यभावसंप्रतिपत्त्यर्थो हिशब्दः ॥२१५॥

मननाख्यतर्कस्य भूयस्त्वात्तस्य सर्वस्यात्रोपायत्वे नैषा तर्केणेत्यादि विरुद्धमित्याशङ्क्याऽऽह—वेदेति । अत्रेति श्रुतार्थनिश्चयोक्तिः । नैषेत्यवैदिकतर्कनिन्दा । तदनुसारितर्काङ्गीकारोऽविरुद्ध इत्यपेरर्थः । वैदिकशब्दस्यैव तत्त्वनिश्चायकत्वात्तर्कस्य कुत्रोपयोगस्तत्राऽऽह—वाच्येति । त्वंपदवाच्यं न देहादि किंतु तत्साक्षी चिदात्मा । तत्पदवाच्यमपि न प्रधानादि किंतु सच्चिदानन्दात्मकमद्वयं ब्रह्मेत्येवंविधो वाच्यवाचकसंबन्धनियमस्तत्र तस्य तर्कस्य विनियोगः यद्यपि शब्दस्तत्त्वनिश्चायकस्तथाऽप्यसंभावनादिध्वस्त्या मननाख्यतर्कोऽपीतिकर्तव्यतात्वेनोपयुज्यते सेतिकर्तव्यताकस्य करणत्वादित्यर्थः ॥२१६॥

निदिध्यासनस्वरूपमाह—अपरेति । श्रवणमनने शमादियुक्ते कृत्वा स्थितस्य वाक्यार्थज्ञानान्तरायहीनस्यानायासेन वाक्यीयो वाक्यार्थबोधो निदिध्यासनवाक्ये निदिध्यासनमित्युच्यते । द्रष्टव्यवाक्ये तु विचारप्रयोजकमापातिकं ज्ञानमुक्तमेतदेव वा साधनं विधातुमनूदितमिति भावः । निदिध्यासनोक्तिफलमाह—पूर्वयोरिति ॥२१७॥

तस्य शमादिसहितश्रवणाद्यवसानभूमित्वमेव स्फोरयति—श्रवणादीति । इहेत्यात्मोक्तिः । प्रयत्नः शमादिसाहित्यं; तत्राऽऽवृत्तिं सूचयति—यावदिति । भास्वरत्वं फलशिरस्कत्वम् ॥२१८॥

पाठक्रमेण दर्शनादीनां क्रममनुक्रामति—आगमादिति । अङ्गैः सहाधीताद्वेदादादौ विचारप्रयोजकं ज्ञानं जायते तदन्वागमादाचार्याच्च श्रवणं ततो मतिर्मननं ततः शास्त्रादिप्रयुक्तश्रवणस्याऽऽत्मधीहेतुत्वेनाऽऽत्मशब्दितमननस्य च संगानात्पूर्णतयाऽनुष्ठानादसंभवनादिशून्यं स्थिरं ब्रह्मज्ञानं निदिध्यासनाख्यं भवतीत्यर्थः ॥२१९॥

न श्रौतोऽयं क्रमः किंत्वार्थोऽपीत्याह—प्रतिपत्तिरिति । यावन्न श्रुतं मनुते तावच्छृणोतीति शेषः । विशिष्टस्य श्रवणादेः साक्षादात्मप्रतिपत्तौ सामग्रीत्वं द्योतयितुमथशब्दः ॥२२०॥

तस्यां शब्दादुदितायामपि श्रवणाद्यपेक्षते चेत्तर्हि ततो जाते विज्ञाने किंचिदपेक्षेत तन्न केवला धीर्मुक्तिहेतुरित्याशङ्क्याऽऽह—अनन्येति । स्वतःसिद्धात्माकारे ज्ञाने ततो लब्धे प्रत्यगापरोक्ष्यस्य लब्धेरनन्तरं न किंचिद्विद्वानपेक्षत आत्मलाभस्मृतेरित्यर्थः ॥२२१॥

साध्यसाधनसम्बन्धे शास्त्रापेक्षैव नापरा । लिङ्गापेक्षाऽनुमेयेऽर्थे नरापेक्षा नरोचिते ॥२२॥
भिन्नमात्रादिविज्ञाने सापेक्षैव विनिश्चितिः । एकमात्रादिके त्वस्मिन्कः किं कस्मादपेक्षते ॥२३॥
प्रमाणरूपावष्टम्भात्प्रमा पूर्वं प्रजायते । पश्चात्प्रमेयनिष्ठैव प्रमेयार्थानुरोधिनी ॥२४॥

आत्मज्ञानस्य मात्राद्युपमर्देन जन्म

आत्माऽऽत्मानं विजानाति यत्र वाक्यादिमानतः । तत्र मात्रादिसम्भेदो न मनागपि लभ्यते ॥२५॥
पदार्थविषयस्तर्कस्तथैवानुमितिर्भवेत् । वाक्यार्थप्रतिपत्तिस्तु वाक्यादेवाभिजायते ॥२६॥
आत्मानात्मत्वमात्रं हि लिङ्गाद्वस्तुषु गम्यते । सर्वमानातिवर्त्यात्मा वाक्यादेवावगम्यते ॥२७॥

आत्मज्ञानस्य असम्यक्त्वशङ्कापरिहारौ

नन्वकृत्स्नं भवेज्ज्ञानं यद्यात्मैव समीक्ष्यते । केवलोऽनात्मनोऽदृष्टेः प्रतीचोऽन्यस्य वस्तुनः ॥२८॥
नायमन्योऽथवाऽनन्यः प्रत्यगज्ञानजत्वतः । दण्डसर्पादिवद्रज्ज्वां स्वतोऽपूर्वादिमान्यतः ॥२९॥
यतोऽतो दृष्ट एतस्मिन्प्रत्यगात्मनि केवले । नास्ति ज्ञानमनुत्पन्नं नाप्यध्वस्तं तथा तमः ॥३०॥
प्रत्यङ्मात्रैकयाथात्म्यात्कार्यकारणवस्तुनः । तज्ज्ञानात्किं तमोऽध्वस्तं किंवाऽज्ञानं वदाऽऽत्मनः॥३१॥

किंच ज्ञाने जाते सापेक्षत्वं मोक्षस्य तस्य वेति विकल्प्याऽऽद्यं दूषयति—साध्येति । यद्यत्र योग्यं तदेव तत्रापेक्ष्यमिति नियमान्मोक्षे ज्ञानमेवापेक्ष्यमिति भावः ॥२२२॥

द्वितीयं निरस्यति—भिन्नेति । भिन्नो मातृमानादिर्यस्यानात्मनस्तस्य ज्ञाने मात्राद्यपेक्षया निश्चयफलं जायते । यस्य त्वेको व्यतिरिक्तो न मात्रादिरात्मनस्तस्मिन्वाक्याज्ज्ञाने मात्राद्यभावान्नापेक्षा युक्ता तद्धियो जन्मनैव मात्राद्युपमर्दित्वादित्यर्थः ॥२२३॥

अनात्मधियो मात्राद्यनुपमर्देन जन्मोपपादयति—प्रमाणेति । कारणानुसारादादौ जाता प्रमा विषयमनुसरन्ती तन्निश्चयफला पश्चान्मात्राद्यनुपमर्देनैव तिष्ठतीत्यर्थः ॥२२४॥

आत्मधियो मात्राद्युपमर्देन जन्म व्यनक्ति—आत्मेति । यत्रेति बुद्धिशुद्ध्यवस्थोक्ता । तत्रेति तत्फलावस्था ॥२२५॥

वाक्यादिमानत इत्यादिशब्दान्मानान्तरस्याऽऽत्मनि संभवादौपनिषदत्वव्याहतिरित्याशङ्क्याऽऽह—पदार्थेति । वेदान्ताविरोधि परकीयमनुमानमनुमितिः । तथैवेति पदार्थविषयत्वोक्तिः । तन्मात्रविषयत्वे तर्कादेरात्मनो युक्तमौपनिषदत्वमित्याह—वाक्यार्थेति ॥२२६॥

कथं पदार्थमात्रविषयत्वं तर्कादेरिति तत्राऽऽह—आत्मेति । अविशेषदृष्टेषु वस्तुषु कस्यचिदात्मत्वमनात्मत्वं कस्यचिदिति विवेकमात्रं किमिति तर्कादिना गम्यते ? ततो वाक्यार्थोऽपि किं न गम्यते ? तत्र हिसूचितमर्थमाह—सर्वेति । न हि पदार्थस्य तद्विषयतेति वाक्यार्थस्यापि तथा । अस्याखण्डैकरसस्य तदयोग्यत्वादित्यर्थः ॥२२७॥

वाक्यादेवाऽऽत्मज्ञानेऽपि तदनात्मानमपि गोचरयत्यात्मानमेव वा ? नाऽऽद्यः आत्मनः सविशेषत्वापत्तेरिति मत्वा द्वितीयमादाय दूषयति—नन्विति । ज्ञानस्य परिच्छिन्नविषयत्वेनासम्यक्त्वे हेतुरनात्मन इति ॥२२८॥

प्रतीचोऽनात्मनोऽन्यत्वानन्यत्वासिद्धेर्नैवमित्याह—नायमिति । तत्र हेतुः—प्रत्यगिति । तत्र दृष्टान्तः—दण्डेति । आत्माज्ञानमेवानात्मनस्तत्त्वमित्येतत्समर्थयते—स्वत इति । यतः स्वतोऽपूर्वानपरादिमानात्माऽतो द्वैतमाविद्यमित्यर्थः ॥२२९॥

आत्माऽद्वयो द्वैतं चाऽऽविद्यमिति सिद्धे फलितमाह—यत इति । कैवल्यं निरुपाधित्वम् ॥२३०॥

यतःशब्दोक्तं हेतुं स्फोरयति—प्रत्यगिति । अत इत्यादिभागं विभजते—तज्ज्ञानादिति । अध्वस्तमज्ञानमिति च च्छेदः ॥२३१॥

निदिध्यासनस्य विज्ञानेनेत्यनुवादानौचित्यम् । तत्परिहारश्च

**अनुवादे यथोक्तानां प्रक्रान्ते दर्शनादिषु । विज्ञानेनेत्यथ कथं निदिध्यासनमुच्यते ।।३२।।**
**ध्यानाशङ्कानिवृत्त्यर्थं विज्ञानेनेति भण्यते । निदिध्यासनशब्देन ध्यानमाशङ्क्यते यतः ।।३३।।**
**विज्ञानोत्पत्तिहेतुत्वं ध्यानादेः प्रागवादिषम् । स्वार्थमेव तु विज्ञानं मुक्तिमात्रफलं स्मृतम् ।।३४।।**
**ऐकात्म्याज्ञानविध्वंसव्यतिरेकेण नेष्यते । ऐकात्म्यविज्ञानफलं प्राप्तमेव हि तत्स्वतः ।।३५।।**
**यतोऽनवयवेनैव रज्जुसर्पादिवत्तथा । आत्माऽयं संगतिं याति तन्मोहाध्यस्तरूपिणा ।।३६।।**
**आत्मा तत्त्वं विभक्तस्य प्रमात्रादेरनात्मनः । स्वतः सिद्धस्तदज्ञानसमुत्थस्य मृषात्मनः ।।३७।।**
**आत्मज्ञानप्रमेयाच्च नान्यस्तज्ज्ञानकृद्यतः । अनन्यमातृमानोऽतः प्रत्यगात्मा तमोपनुत् ।।३८।।**

द्रष्टव्यादिवाक्ये व्याख्यातेऽनुवादवाक्ये दर्शनादिषु स्वशब्दानूदितेषु विज्ञानशब्देन निदिध्यासनानुवादे फलं पृच्छति—अनुवाद इति ।।२३२।।

तत्र फलमाह—ध्यानेति । निदिध्यासितव्य इत्युक्ते ध्यानं तदित्याशङ्कायां तन्निरासार्थं विज्ञानशब्देन तदनूद्यते संदिग्धस्य वाक्यशेषान्निर्णयादक्ताः[1] शर्करा उपदधातीतिवदित्यर्थः । निरस्यशङ्काप्राप्तिमाह—निदिध्यासनेति ।।२३३।।

श्रवणादिसमभिव्याहारान्निदिध्यासनं ध्यानमिति शङ्किते तन्निरासेन वाक्यार्थधीग्रहार्थं विज्ञानशब्देन तदनुवादश्चेन्निदिध्यासितव्य इति ध्यानस्य साधनत्वानुक्तेस्तत्साधनत्वमुपेक्षितमित्याशङ्क्याऽऽह—विज्ञानेति । संबन्धग्रन्थादारभ्य तत्र तत्रेत्यर्थः । न च विध्यभावे तत्साधनत्वासिद्धिः समाहितो भूत्वेत्यादिश्रुतेस्तत्सिद्धेर्निदिध्यासितव्य इति च ध्यानसहितश्रवणादिफलभूतवाक्यार्थज्ञानोक्तेरिति द्रष्टव्यम् । ध्यानस्य साधनत्वमिष्टं चेदत्रापि तदेव किं नोच्यते तन्न वाक्यशेषविरोधादित्याह—स्वार्थमिति । यन्मुक्तिमात्रफलं स्वतन्त्रं ज्ञानं तदेव निदिध्यासनं स्मृतमिति संबन्धः ।।२३४।।

तस्य मुक्तिफलत्वे मुक्तेः साधनाधीनत्वादनित्यतेत्याशङ्क्याऽऽह—ऐकात्म्येति । अज्ञानध्वंसान्यज्ञानफलानुपगमे हेतुमाह—प्राप्तमिति । ऐकात्म्यं कैवल्यं नित्यप्राप्तमतस्तदावरकाज्ञानस्य ज्ञानान्निरासान्मुक्तेस्तत्कार्यत्वमौपचारिकमित्यर्थः ।।२३५।।

सकार्याविद्यानिवृत्तेरात्मनोऽन्यत्वे द्वैतापत्तेरनन्यत्वे तदवस्थमात्मनः साधनाधीनत्वमित्याशङ्क्याऽऽह—यत इति । रज्जुरिव सर्पादेरात्मैव सकार्याज्ञानस्य तत्त्वमतस्तद्ध्वस्तिरपि नाऽऽत्मनो भिद्यते । न चैतावताऽऽत्मनो ज्ञानकार्यत्वं तदधीनध्वस्तेरात्मानतिरेकान्न हि ज्ञानाधीनसर्पादिध्वस्ते रज्जुत्वेऽपि तस्यास्तत्कार्यतेति भावः ।।२३६।।

आत्मनोऽनात्मना सहानवयवेन संगतिस्तादात्म्यं कथमात्मा कल्पितस्य तत्त्वं तदाह आत्मेति । विभक्तत्वादनात्मत्वाच्चाऽऽत्माज्ञानजस्य मिथ्यारूपस्य मात्रादेरात्मैव रूपं तस्यानन्याधीनसिद्धेः सर्वकल्पनाधिष्ठानत्वसंभवादित्यर्थः ।।२३७।।

सकार्याज्ञानध्वस्त्या सद्वयत्वाभावेऽपि ज्ञाता ततो भिन्नोऽभिन्नो वा ? भिन्नश्चेन्नाऽऽत्माऽद्वयोऽभिन्नश्चेत्कौटस्थ्यदौस्थ्यमित्याशङ्क्याऽऽह—आत्मेति । अतो नाद्वैतहानिर्नापि कौटस्थ्यदौस्थ्यमज्ञानदशाय ज्ञातृत्वादित्यर्थः । तथाऽपि ज्ञानमात्मनो भिन्नमभिन्नं वा ? नाऽऽद्योऽद्वैतहानेर्द्वितीये सदा ज्ञानभावात्सदाऽज्ञानध्वस्तिः स्यादित्याशङ्क्याऽऽह—अनन्येति । प्रत्यगेवाद्वयो वाक्योत्थधीफलकारूढः स्वाज्ञानं सकार्यं दहत्यतो नोक्तदोषापत्तिरित्यर्थः ।।२३८।।

---

१. वाक्यशेषान्निर्णयः । ( पू० मी० १-४-२९ ) अक्ताः शर्करा उपदध्यात् इति क्षुद्रचयने विधीयते । केनाक्ता इत्यवचनात् अनियमेन तैलघृतजलादिनेति प्राप्ते "सन्दिग्धेषु तु वाक्यशेषात्" इतिसूत्रेण अत्रैवार्थवादे "तेजो घृतमि"ति घृतस्तुत्या घृतेनाक्ता इति निर्णयः ।

आपीतकरणग्रामे पुंसि स्वात्मन्यवस्थिते । तथा प्राणाग्नयः शुद्धा जाग्रतीति श्रुतेर्वचः ॥८२॥
सहैव कर्मशक्त्याऽतो ज्ञानशक्तिर्विलीयते । प्राणात्मनि श्रुतिश्चाऽऽह कस्मिन्निति च सादरा ॥८३॥
साधारणोऽयं विलयः समानान्तोऽभिधीयते । स्वहेतुमात्रसंसर्गान्नायमात्यन्तिको लयः ॥८४॥
ज्ञानशक्तिक्रियाशक्तिविभुत्वात्परमक्षरम् । व्युह्याऽऽत्मानं जगत्त्वेन स्वात्मन्येव समूहति ॥८५॥
निरुह्येति तथा श्रुत्या कारणात्माऽभिधीयते । अत्यक्रामदिति त्वस्य निर्बीजावस्थतोच्यते ॥८६॥
यत एवमतोऽशेषज्ञानशक्तिलयात्परम् । सर्वकार्योपसंहारी प्राण एकोऽवतिष्ठते ॥८७॥
प्राणोऽपाने तथाऽपानो व्यानात्मनि विलीयते । व्यानोऽप्युदानमप्येति ह्युदानोऽपि समानगः ॥८८॥
कारणात्मैव जगतः समानोक्त्याऽभिधीयते । सर्वसाधारणः सोऽयं प्राकृतः प्रलयो मतः ॥८९॥
प्रज्ञानघनताऽप्यस्य न बुद्धिप्रज्ञयोच्यते । प्रत्यक्प्रज्ञोत्थिताभाससंबन्धात्प्राज्ञ उच्यते ॥९०॥
यन्निमित्तं प्रमाणानि प्रामाण्यमिह बिभ्रति । तदविज्ञातयाथात्म्यमेतत्कारणमुच्यते ॥९१॥

चतुरोऽपि जात्योऽश्वः समुत्पाटयत्येवं प्राणो वागादीनुत्खिदतीति श्रुत्युक्तेरिन्द्रियाणि प्राणाधीनतया तद्रूपाणीत्यर्थः ॥३८१॥

तेषां प्राणाधीनतया तदात्मत्वेन लये वाक्यान्तरमाह—आपीतेति । यथोक्तेन्द्रियलयानुरोधेनेति यावत् ॥३८२॥

तेषां प्राणतादात्म्ये फलितमाह—सहैवेति । प्राणस्य परस्मिन्प्रलयमभिप्रेत्य तस्य तत्कारणत्वे कस्मिन्न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामीत्यादि मानमाह—श्रुतिश्चेति । प्राणविषयानुभवसमुच्चयार्थश्चकारः । द्वितीयस्तु स प्राणमसृजतेत्यादिवाक्यान्तरार्थः ॥३८३॥

किञ्च सर्वप्राणिसाधारणो योऽत्र प्राकृतो लयः स समानशब्दितकारणान्तः सन्पञ्चमान्तेऽपि वक्ष्यते तदत्र वाक्यशेषानुगुण्यमस्तीत्याह—साधारण इति । चातुर्थिकस्य पाञ्चमिकस्य चास्य लयस्य साधारणत्वे हेतुमाह—स्वहेत्विति ॥३८४॥

कथं पञ्चमान्ते कारणान्तो लय उक्तस्तत्राऽऽह—ज्ञानेति । ब्रह्म सर्वशक्तित्वादात्मानमेव प्रपञ्चतया विस्तार्य स्वात्मनि तमुपसंहृत्य स्वयमेव तिष्ठतीति पञ्चमशेषे भविष्यतीत्यर्थः ॥३८५॥

तत्र प्राणादिकार्यवाचिशब्दसत्त्वेऽपि कारणवाची शब्दो नास्तीत्याशङ्क्याऽऽह—निरुह्येतीति । प्राणादीन्प्रसार्याऽऽत्मानं च तत्र प्रवेश्य स्थित इत्युक्तार्थानुसारेण कारणमुक्तमित्यर्थः । तर्हि तदेवास्तु तत्त्वं नेत्याह—अत्यक्रामदितीति ॥३८६॥

यस्मादत्र निरुह्येत्येवं मूलकारणमुक्तं तस्मादेव पञ्चमस्थया कस्मिन्नु त्वं चाऽऽत्मा च प्रतिष्ठितावित्यादिश्रुत्या संहारक्रमः कथ्यते तथाच तत्र कारणोक्तावपि कुतस्तदन्तलयोक्तिरिति नाऽऽशङ्क्येत्याह—यत इति ॥३८७॥

प्राणो वृत्तिविशेषोऽपाने लयश्रुतेर्मुख्यस्य तदयोगात् । न च तस्य सर्वकार्यसंहर्तृत्वायोगः सर्वव्यवहारान्वयव्यतिरेकवत्त्वादित्याह—प्राण इति । प्राणस्यापाने लयवदपानस्य व्याने व्यानस्योदाने तस्यापि समाने लयो भवतीत्याह—तथेति । अस्यार्थस्य पञ्चमे सिद्धत्वार्थो हिशब्दः ॥३८८॥

समानशब्दस्यापि प्राणादिशब्दवद्वृत्तिविशेषार्थत्वमाशङ्क्याऽऽह—कारणात्मेति । प्रकृतानुगुणवाक्यशेषार्थं संक्षेपतो व्युत्पाद्य स्वाभाविकं लयमुपसंहरति—सर्वेति ॥३८९॥

ननु प्राकृतलये सर्वकार्यलयोऽस्ति न वा ? न चेन्न सुषुप्तेः स्वप्नाद्विशेषः कतिपयकार्यलयस्य स्वप्नेऽपि भावादस्ति चेत् "प्राज्ञः कारणबद्धस्तु" "आनन्दभुक्तथा प्राज्ञ" इत्यादि विरुध्येत तत्तद्बुद्धेर्लीनत्वात्तत्तद्वृत्तिप्रज्ञाभावे प्राज्ञतायोगादत आह—प्रज्ञानेति । प्राकृतलयस्य बुद्ध्यधीनत्वाभावं दृष्टान्तयितुमपिशब्दः । कथं तर्हि श्रौतं प्राज्ञत्वं तदाह—प्रत्यगिति ॥३९०॥

आत्माभासयोगात्कारणस्य प्राज्ञत्वे कारणात्मनोर्भेदात्ते सिद्धान्तहानिरित्याशङ्क्याऽऽह—यन्निमित्तमिति ।

यस्मिञ्ज्ञाते भवेज्ज्ञातं जगदेतच्चराचरम् । अज्ञाते च तथाऽज्ञातमेतदेव तदुच्यते ॥९२॥

बुध्यादिलयोक्तावपि करणलयः कुतो नोक्त इति शङ्का

नन्विह प्रलयः श्रुत्या विषयस्यैव भण्यते । करणस्य तु नैवोक्तस्तत्कस्मादिति भण्यते ॥९३॥

स्वगोचरसजातीयं करणं मन्यते श्रुतिः । विषयस्य लयोक्त्याऽन्तःकरणप्रलयोक्तता ॥९४॥

मननप्रकारमुक्त्वा आत्मनि लय समर्थनम्

एवं मन्तव्य आत्माऽयं तर्कतः प्राग्यथोदितः । दुन्दुभ्याद्युक्तदृष्टान्तन्यायमार्गेण यत्नतः ॥९५॥

आत्मसामान्यसंभूतिलयहेतुसमाश्रयात् । आत्मैव सर्वमित्येष प्रतिज्ञार्थः समर्थितः ॥९६॥

स्वाभाविकोऽयं प्रलय इति पौराणिका जगुः । बुद्धिपूर्वस्तु विलयः सम्यग्ज्ञानैकपूर्वकः ॥९७॥

शक्तिमात्रात्मना स्थानं कार्याणां यत्स्वकारणे । इत्यनात्यन्तिकलयो भूयोजन्मकृतक्षणः ॥९८॥

मू.—स यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयेत न हास्योद्ग्रहणायेव स्यात् । यतो यतस्त्वाददीत लवणमेवैवं वा अर इदं महद्भूतमनन्तमपारं विज्ञानघन एव । एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञास्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्यः ॥१२॥

तत्त्वज्ञाननिमित्तस्य सर्वेषां कार्यकरणानामात्यन्तिकप्रलयस्य वर्णनम्

अतीतानागतेहत्यजन्मनाशादिहेतुनुत् । यस्तु धीपूर्वको ध्वंसस्तदर्थेयं परा श्रुतिः ॥९९॥

यदज्ञातमात्मतत्त्वं विषयीकृत्य व्यहारभूमौ प्रत्यक्षादीनि प्रामाण्यं लभन्ते तज्जगत्कारणमिति श्रुतिस्मृतिवादेषूच्यते तत्कुतो द्वैतमित्यर्थः ॥३९१॥

आत्मैवाज्ञानद्वारा कारणमित्यत्रैकविज्ञानेन सर्वविज्ञानश्रुतिं प्रमाणयति—यस्मिन्निति । यज्ज्ञाने ज्ञातं सर्वं यदज्ञाने चाज्ञातं तदेवैतत्कारणमुपनिषदधिगतमुपादानातिरिक्तोपादेयाभावादिति भावः ॥३९२॥

यद्यपि प्राकृते लये बुद्ध्यादिलयस्त्वया साध्यते तथाऽपि नासौ श्रौतस्तत्र को हेतुरिति पृच्छति—नन्विति । करणलयस्येष्टस्यापि श्रुत्या मुखतोऽनुक्तौ हेतुं प्रतिजानीते—भण्यत इति ॥३९३॥

तदेव प्रकटयति—स्वगोचरेति । तत्साजात्यं करणस्य प्रागेव व्यक्तीकृतम् । साजात्यफलं दर्शयति—विषयस्येति ॥३९४॥

मननविधिप्रपञ्चमुपसंहरति—एवमिति । यथाऽयमात्मा तर्कतो मन्तव्य एवं प्रागुक्त इति योजना । उक्तं तं प्रकारमेव दर्शयति—दुन्दुभ्यादीति । अनेकदृष्टान्तद्वारेणानेकहेतूपन्यासो यथोक्तार्थसमर्थने यत्नः ॥३९५–३९६॥

स यथेत्यादेर्वाक्यार्थधीप्रकटनार्थस्य विषयपरिशेषार्थमुक्ते लये पौराणिकसंमतिमाह—स्वाभाविक इति । नैमित्तिकस्वाभाविकात्यन्तिकभेदात्त्रिविधो लयः । उक्तं हि—

"सर्वेषामेव भूतानां त्रिविधः प्रतिसंचरः । नैमित्तिकः प्राकृतिकस्तथैवाऽऽत्यन्तिको लयः" ॥ इति

तत्राऽऽद्यो ब्रह्मकर्तृकोऽवान्तरलयः । यथाऽऽह—ब्राह्मो नैमित्तिकस्तेषां कल्पान्ते प्रतिसंचर इति । द्वितीयस्तु कार्याणां प्रकृतावावसानम् । आत्यन्तिको ज्ञानाधीनो मोक्ष इत्याह—बुद्धिपूर्वस्त्विति । उक्तं च-आत्यन्तिकश्च मोक्षाख्यः प्राकृतो द्विपरार्धिक इति ॥३९७॥

स्वाभाविकलयस्य धीपूर्वलयाद्विशेषमाह—शक्तीति । स्वाभाविके लये कार्याणां कारणे शक्त्यात्मनाऽवस्थानमिति यस्मादास्थितं तस्मादसावनात्यन्तिक इति योजना । अनात्यन्तिकत्वं विशदयति—भूय इति । पुनरपि जन्मार्थं कृतावकाशत्वात्प्राकृतोऽयमित्यर्थः ॥३९८॥

ततो धीपूर्वलये विशेषं ब्रुवाणस्तदर्थमुत्तरवाक्यमवतारयति—अतीतेति । त्रैकाल्यजन्मादिहेत्वज्ञानध्वस्तिर्हि बुद्धिपूर्वो ध्वंसस्तदुपायधीप्रदर्शनायोत्तरा श्रुतिरित्यर्थः ॥३९९॥

यथोक्तवस्तुसिद्ध्यर्थं दृष्टान्तोऽयमिहोच्यते । यथा सैन्धवखिल्योऽस्तः स्वयोनावुदधाविह ॥४००॥
कठिनोदकविलयमनु खिल्यो विलीयते । विलीनस्याद्भ्य उद्धृत्य ग्रहणाय न कश्चन ॥ १ ॥
निपुणोऽपि नरः शक्तः खिल्यरूपेण पूर्ववत् । सामुद्ररूपान्नान्येन ग्रहीतुं कश्चन क्षमः ॥ २ ॥
आददीत समुद्राम्भस्तं जिघृक्षुर्यतो यतः । ततस्ततस्तल्लवणं वेत्ति खिल्यं न कुत्रचित् ॥ ३ ॥
सामुद्रमम्भः खिल्यत्वं याति भानुविपाकतः । सिन्धोरायातः स यतस्तस्मात्सैन्धव उच्यते ॥ ४ ॥

खिल्यपदार्थविवरणम्

असंभिन्नस्वावयवः खिल्यः सोऽथ निगद्यते । सोऽयं सैन्धवखिल्योऽस्तो यथैवेह महोदधौ ॥ ५ ॥
[1]तेजोविरोधिनीं प्राप्य प्रकृतिं विजहात्यथ । तेजोवियोगात्काठिन्यं ध्वस्तीभवति तद्घनम् ॥ ६ ॥
काठिन्यकारणध्वस्तौ खिल्यस्येह महोदधौ । कठिनोदकविध्वंसमनु खिल्यो विलीयते ॥ ७ ॥
यदेवाकृत्रिमं रूपं तदेवास्यावशिष्यते । तेजोवयवसंबन्धसमुत्थं विनिवर्तते ॥ ८ ॥
तेजआद्यभिसंबन्धः कारणं खिल्यरूपिणः । तद्भावभावतस्तस्य तद्ध्वस्तौ ध्वंसतस्तथा ॥ ९ ॥
एवं वा अर इत्यस्य कार्यकारणरूपतः । प्रतीचो वास्तवं वृत्तं विरुद्धमभिधीयते ॥१०॥

तामविशेषेणावतार्य विशेषतो दृष्टान्तश्रुतिमवतारयति—यथोक्तेति । कार्यकारणप्रपञ्चस्य तद्विलक्षणे ब्रह्मणि ज्ञानाद्विलयो यथोक्तं वस्तु तत्प्रतिपादनाय श्रुतो दृष्टान्तोक्तिरित्यर्थः । तदक्षराणि व्याचष्टे—यथेति । दार्ष्टान्तिकस्थैवंशब्देन यथाशब्दस्यान्वयो यः सैन्धवखिल्यः स्वयोनावुदके क्षिप्तः कठिनोदकलयानन्तरं लीयत इति योजना । न हास्येत्यादेरर्थमाह—विलीनस्येति । पूर्ववत्खिल्यस्योदके प्रक्षेपात्प्रागवस्थायामिवेत्यर्थः तत्र हेतुं वक्तुं प्रतिज्ञामनुवदति—सामुद्रेति । तद्रूपं सलिलमात्रम् ॥४००–४०१–४०२॥

यतो यतस्त्वित्यादिहेतुवाक्यार्थमाह—आददीतेति । तं जिघृक्षुः खिल्यग्रहेच्छावानित्यर्थः ॥४०३॥

दृष्टान्तवाक्यार्थं संक्षिप्य प्रपञ्चयन् खिल्यत्वे निमित्तमाह—सामुद्रमिति । सैन्धवशब्दार्थमाह—सिन्धोरिति ॥४०४॥

खिल्यपदार्थमाह—असंभिन्नेति । स्वावयवानामसंभिन्नत्वं मिथः संसृष्टतया दार्ढ्यम् । अथेति स्वयोनावुदके प्रक्षेपात्प्रागवस्थायामित्यर्थः । पदयोरर्थमुक्त्वा वाक्यार्थमाह—सोऽयमिति । यन्निमित्तमुदकं खिल्यरूपेण परिणतं तद्विरोधिनीं प्रकृतिं प्राप्य तदेव खिल्यरूपं तेजो जहातीत्यर्थः । अथशब्दो विरोधिप्राप्तेस्तेजसस्त्यागहेतुत्वद्योतनार्थः ॥४०५॥

पाचके तेजसि त्यक्तेऽपि खिल्यरूपस्थितिमाशङ्क्याऽऽह—तेज इति ॥४०६॥

एतदेव स्फुटयति—काठिन्येति । खिल्यस्य महोदधौ क्षिप्तस्य काठिन्यहेतुतेजःसंपर्कध्वस्तौ कठिनोदकध्वंसद्वारा खिल्यस्यापि ध्वस्तिरित्यर्थः ॥४०७॥

अवशिष्टमर्थमाह—यदेवेति । अस्य खिल्यस्येति यावत् । तच्चोदकमात्रम् । अकृत्रिमत्वं काठिन्येऽपि तुल्यमित्याशङ्क्याऽऽह—तेज इति ॥४०८॥

तर्हि तद्योगमात्रं खिल्यताहेतुरिति व्यर्थं पृथिव्यादीत्याशङ्क्याऽऽह—तेजआदीति । तेजोवत्पृथिव्यादेरपि तद्धेतुत्वे हेतुमाह—तद्भावेति । अन्वयव्यतिरेकाभ्यां हि कारणं कल्प्यते तौ च तेजसीव पृथिव्यादावपि तुल्यौ तेनाविशिष्टं कारणत्वमित्यर्थः ॥४०९॥

दृष्टान्तं संक्षेपविस्तराभ्यामुक्त्वा दार्ष्टान्तिकं व्याख्यास्यन्नेवमित्यादेरर्थमाह—एवमिति । एतद्वाक्यस्येदमाऽस्य प्रतीचः कारणादिविरुद्धं वास्तवं रूपमुच्यत इत्यक्षरार्थः ॥४१०॥

---

१. तेजः संपर्कात् यदुदकं खिल्यरूपेण परिणतं ततः उदकान्तरं तेजोविरोधिनी प्रकृतिः । तां प्राप्य । किं विजहाति ? तत्राह—तेज इति । काठिन्यं निवर्तत इत्यर्थः । ( न्या० )

इदं महद्भूतमित्यादेः विवरणम्

अव्यावृत्ताननुगतब्रह्मत्वप्रतिपत्तये । महदित्यभिधानं स्यात्कौटस्थ्यार्थं च भूतगीः ।।११।।
वास्तवं वृत्तमाश्रित्य प्रतीचः प्राक्प्रबोधतः । स्वतःसिद्धस्य विज्ञप्त्यै महदित्यादि भण्यते ।।१२।।
कारणस्य निषेधोक्तिर[1]नन्तमिति यद्वचः । अपारमिति कार्यस्य पारः कार्यस्य कारणम् ।।१३।।
कारणस्य तथा कार्यमन्तोऽनादेः प्रसिद्धितः । जात्यन्तरनिषेधाय विज्ञानघनगीरपि ।।१४।।
क्षेत्रज्ञाकाशयोरेवं कार्यकारणसंगतिः । अब्धिस्थानीयमैकात्म्यं प्राप्योक्तेर्विनिवर्तते ।।१५।।
कार्यकारणविध्वस्तौ ब्रह्मैकात्म्यप्रबोधतः । न विशेषात्मलाभोऽस्ति खिल्यस्येव महोदधौ ।।१६।।
तेजःसंबन्धमासाद्य यथाऽम्भः खिल्यतामगात् । तथैवाज्ञानभूतेभ्यः परः क्षेत्रज्ञतां ययौ ।।१७।।

एतेभ्यो भूतेभ्यः समुत्थायेत्यस्य निवृतिः

कार्यात्माऽपचयं गच्छन्यत्र निष्ठां निगच्छति । तानि भूतान्यविद्येति प्राहुस्त्रय्यन्तनिष्ठिताः ।।१८।।
परः कारणकार्येभ्य आत्मा पूर्णत्वकारणात् । एतेभ्योऽविद्याभूतेभ्यः कार्यकारणतामगात् ।।१९।।
यतोऽविद्यैव तद्धेतुस्तदुच्छित्तावतो न सन् । [2]कार्यकारणभेदोऽयं ब्रह्मास्मीतिप्रबोधतः ।।२०।।

महद्भूतमितिपदद्वयस्यार्थमाह—अव्यावृत्तेति ।।४११।।

प्रतीचो महत्त्वादि मोक्षदशायामेवेत्याशङ्क्याऽऽह—वास्तवमिति । प्रागपीत्यपिशब्दोऽध्याहर्तव्यः । स्वतःसिद्धस्य महदित्यादिरूपस्येति शेषः ।।४१२।।

अनन्तमपारमित्यनयोरर्थमाह—कारणस्येति । कथमपारपदेन परस्य कार्यत्वं निरस्यते तत्राऽऽह—पार इति । अपूर्वमिति कारणे निषिद्धे कार्यत्वमस्य निरसितुं सुशकमित्यर्थः ।।४१३।।

तथाऽपि कथमनन्तपदेन कारणत्वमस्य निषिध्यते तत्राऽऽह—कारणस्येति । अनादि हि कारणमन्यथाऽनन्वयादनवस्थानाच्च तस्य कार्यमन्तस्तत्रान्तत्वप्रसिद्धेर्न हि मृदादि घटाद्यापन्नं शरावादि करोति ततोऽनपरमिति कार्यनिरासात्कारणत्वं परस्य निषेद्धुं शक्यमित्यर्थः । विज्ञानघनपदार्थमाह—जात्यन्तरेति । ज्ञप्तेरर्थान्तरं जात्यन्तरम् ।।४१४।।

एवकारार्थमाह—क्षेत्रज्ञेति । तत्त्वमादिवाक्याज्जीवेश्वरयोरैक्यं ज्ञात्वा तद्बलात्कार्यकारणाख्यं जगन्निवर्तत एवं सत्यैकरस्यमेव पर्यवस्यतीत्यर्थः ।।४१५।।

ज्ञानात्कार्यकारणध्वस्तौ ध्वस्तमपि जीवत्वं पुनरुदेष्यतीत्यनिर्मोक्षप्रसक्तिमाशङ्क्याऽऽह—कार्येति । न हि भूयो जीवभावो हेत्वभावान्न खलु खिल्यस्य महोदधौ क्षिप्तस्य ध्वस्तस्य तस्यैव पुनरुद्भवोऽस्तीत्यर्थः ।।४१६।।

ज्ञानादज्ञानस्यैव ध्वस्तिर्न कार्यकारणत्वस्य जीवत्वस्य चेत्याशङ्क्य सर्वस्यानात्मनोऽज्ञानजत्वाज्ज्ञानात्तद्ध्वस्तौ ध्वस्तिः फलतीति ब्रुवन्नेतेभ्य इत्याद्यवतारयति—तेज इति ।।४१७।।

भूतशब्दस्य महाभूतेषु रूढत्वात्कथं परस्य क्षेत्रज्ञत्वमज्ञानरूपभूतेभ्योऽभिधीयते तत्राऽऽह—कार्यात्मेति । यत्र सर्वं कार्यं लीयते तन्मूलकारणमविद्या भूतशब्देनोच्यते । यदाहाऽऽचार्यवाचस्पतिः"नामरूपबीजशक्तिभूतमव्याकृतं भूतसूक्ष्ममि"ति । प्रसिद्धभूतानां क्षेत्रज्ञोत्थापकत्वानुपपत्तेरित्यर्थः ।।४१८।।

तर्हि तदुत्थापकानि कार्यकारणान्येवात्र भूतानीत्याशङ्क्याऽऽह—पर इति । आत्मा पूर्णत्वात्परिच्छिन्नकारणादिविलक्षणः सोऽविद्यात्मकभूतवशात्तद्भावं गतः मूलाविद्याऽत्र कार्यादिभूता भूतशब्देत्यर्थः ।।४१९।।

सर्वस्यानात्मनोऽविद्याजत्वे फलितमाह—यत इति ।।४२०।।

---

१. अनन्तम् = अन्तः कार्यं न विद्यते यस्य इति—अकारण्यमित्युक्तं भवति । अपारं पारं कार्यस्य कारणं पारं तद्रहितं कारणरहितं = अकार्यमित्यर्थः ।

२. कार्यकारणभेदः कार्यकारणत्वनिवृत्तिः ।

तस्मिन्ध्वस्तेऽथ संबोधात्केवलैकात्म्यशेषतः । विशेषसंज्ञा नास्त्यस्य पूर्णप्रज्ञप्तिमात्रतः ॥२१॥
अविचारितसिद्धीनि यान्यविद्येत्यवादिषम् । एतेभ्यो हेतुभूतेभ्यो भूतेभ्योऽकार्यकारणः ॥२२॥
कार्यकारणवद्रूपं समुत्थायेति शब्द्यते । अविद्यासंगतेरस्य जायतेऽनेकरूपवान् ॥२३॥
चेतनाचेतनाभास आत्मानात्मत्वलक्षणः । कार्यकारणरूपेण मिथोपेक्षाश्रयं तमः ॥२४॥
कार्यकारणतां यात आत्माऽप्येवं तमोवशात् । स्वाभासैर्बहुतामेति मनोबुद्धयाद्युपाधिभिः ॥२५॥

## समुत्थानस्य बहुधा विवरणम्

तमोहेतु समुत्थानं न वेद्मीत्यग्रहात्मकम् । मिथ्याज्ञानं तमः कुर्वदीदृगेव करोति तत् ॥२६॥
अविद्याकार्यबुद्धिस्थप्रत्यगाभासरूपवत् । बोद्धेत्यादिसमुत्थानं भण्यते परमात्मनः ॥२७॥
श्रोता स्प्रष्टेतिरूपः स्यात्तथैवेन्द्रियवृत्तिभिः । दुःखी गौरो द्विजश्चेति शरीरोत्थानतः परः ॥२८॥
धनी गोमान्दरिद्रो वा धनाद्यर्थात्मसंगतेः । अतद्वानपि संमोहाद्यथोक्तात्मकतामगात् ॥२९॥

## तान्येवानुविनश्यतीत्यस्य विवरणम्

प्रत्यग्याथात्म्यमोहोत्था विरिञ्चोपक्रमा मृषा । क्षेत्रक्षेत्रज्ञभेदेन ह्यास्थाणोरुत्थितिर्दृशेः ॥३०॥
यथावस्तु यदा बोधो वेदान्तोक्तिश्रुतेर्भवेत् । तदा नश्यन्ति भूतानि येभ्यः क्षेत्रज्ञतां गतः ॥३१॥

केचित्तु कार्यनिवृत्तिं शून्यतावसायिनीमाहुस्तान्निवर्तयन्भेदनिवृत्तिफलमाह—तस्मिन्निति । ऐक्यसंबोधस्याऽऽविद्यबन्धध्वंसे हेतुत्वसमर्थनार्थोऽथशब्दः । संज्ञाभावे कैवल्यस्यापुमर्थत्वमाशङ्क्योक्तम्—अस्येति ॥४२१॥

भूतशब्दार्थमनूद्य समुत्थायेत्यस्यार्थमाह—अविचारितेति । योऽकार्यकारणः परस्तस्य यथोक्तभूतेभ्यो भवत्तत्तद्विशिष्टरूपमुत्थायेत्यत्र समुत्थानमित्यर्थः । तत्प्रपञ्चयन्नात्मनोऽविद्ययाऽनेकाकारावाप्तिमाह—अविद्येति ॥४२२–४२३॥

अनेकरूपवन्तं स्वभावं विशदीकुर्वाणश्चिदाभासवैशिष्ट्यं तस्याऽऽचष्टे—चेतनेति ॥४२४॥

अविद्यायामेवमनेकरूपत्वेऽपि प्रतीचि किमायातमित्याशङ्क्याऽऽह—कार्येति । न केवलमात्माऽज्ञानवशात्कार्यकारणतां गतः किंतु स्वाभासविशिष्टाविद्याकृतबुद्धयाद्युपाधिवशान्मातृत्वादिभावं चाऽऽप्तवानित्याह—स्वाभासैरिति ॥४२५॥

समुत्थानमित्थमुक्त्वा तत्र क्रममाह—तम इति । सर्वमात्मनः समुत्थानमज्ञानजमिति न विवादस्तच्च तमोऽज्ञानमादौ न वेद्मि मूढोऽस्मीत्यग्रहात्मकं मिथ्याज्ञानं कुर्वदेव तत्सदृशमिथ्याज्ञानान्तरं करोतीत्यर्थः ॥४२६॥

अविद्यामात्रनिमित्तमुत्थानमुक्त्वा तत्कार्यबुद्धयादिकृतं तदाह—अविद्येति । आदिशब्देन भोक्तृत्वाद्युक्तिः ॥४२७॥

इन्द्रियनिमित्तमुत्थानमाह—श्रोतेति । इन्द्रियाण्येव वा तद्द्वारिका या वृत्तयस्ताभिरिति यावत् । स्थूलदेहकृतं तदाह—दुःखीति ॥४२८॥

देहवतो धनादिसंबन्धकृतं तदाह—धनीति । आत्मशब्दो देहविषयः । आत्मनो मिथ्याभूतमुत्थानमुपसंहरति—अतद्वानिति ॥४२९॥

तान्येवेत्यादि व्याख्यातुं वृत्तं कीर्तयति—प्रत्यगिति । आ विरिञ्चादा च स्थाणोर्द्विविधोत्थानस्य मोहोत्थत्वमेव मृषात्वे हेतुरिति द्योतयितुं हिशब्दः ॥४३०॥

तद्व्याचष्टे—यथेति । वेदान्तवाक्यश्रवणाद्वस्त्वनुसारी बोधो यदा भवति तदा भूतान्यविद्याशब्दितानि नश्यन्ति ततो हेत्वभावात्क्षेत्रज्ञत्वाद्युत्थानमपि नश्यतीत्यर्थः ॥४३१॥

स्वरूपलाभमात्रेण सम्यग्बोधोऽखिलं तमः । यतो हन्ति ततो नासावभ्यासं प्रति वीक्षते ॥३२॥
व्यङ्ग्येष्वर्थेषु नाऽऽवृत्त्या व्यञ्जको हन्ति तत्तमः । व्यञ्जकस्य स्वभावोऽयं न प्रयोगमपेक्षते ॥३३॥
मोहतत्कार्यनीडो यस्तस्याज्ञानसमन्वयात् । प्रत्यगात्माऽपि तद्ब्रह्म परोक्षमभवन्मृषा ॥३४॥
तद्वदद्वयतत्त्वोऽपि तदसंबोधहेतुतः । आत्मा संसारितां यातो यथा कार्ष्ण्यं वियत्तथा ॥३५॥
आत्मनो ब्रह्मता यस्माद्ब्रह्मणोऽप्यात्मता स्वतः । तमोमात्रान्तरायत्वात्तद्ध्वस्तावेव साऽऽप्यते ॥३६॥

न प्रेत्य संज्ञास्तीत्यस्य विवरणम्

सर्वमात्मेतिसम्यग्धीजन्मनैवाखिलं तमः । ध्वंसमेति ततः संज्ञा नाविद्योत्थाऽवशिष्यते ॥३७॥
सदोत्पन्ना[1]ऽऽत्मनि मितिरुत्पाद्याऽकारणादिधीः । कारणादिधियः पूर्वं प्रतीचि ब्रह्मधीस्ततः ॥३८॥
अपास्ताशेषभेदस्य यद्रूपं भेदवद्गतम् । तज्ज्ञानेनैव तज्ज्ञातं तदन्या[2]नवशेषतः ॥३९॥
अहेतुफलरूपेण प्रतीचा तद्विलक्षणम् । कार्यकारणवज्जग्ध्वा द्रष्टैवैकोऽवशिष्यते ॥४०॥
प्रत्यङ्मात्रेक्षणादात्ममोहतज्जनिराकृतेः । असंभवाद्द्वितीयस्य स्यामपूर्वादिमानहम् ॥४१॥

अभ्यासमपेक्ष्य बोधोऽविद्यातज्जध्वंसीत्येकदेशिमतं प्रसङ्गात्प्रत्याह—स्वरूपेति ॥४३२॥

ज्ञानमावृत्त्यनपेक्षमज्ञानादिध्वंसीत्येतद्दृष्टान्तेनाऽऽह—व्यङ्ग्येष्विति । विमतमावृत्त्यनपेक्षं तमोनिवर्तकं व्यञ्जकत्वाद्दीपवदित्यर्थः । उक्तस्य हेतोर्व्याप्तिं विवक्षित्वा ब्रूते—व्यञ्जकस्येति ॥४३३॥

ऐक्यज्ञानादज्ञानहानिश्चेदैक्यस्य सदाभावाद्ब्रह्मणि प्रत्यगभिन्ने पारोक्ष्यं ब्रह्माभिन्ने चाऽऽत्मनि संसारित्वं कथमित्याशङ्क्य ब्रह्मणि पारोक्ष्यमज्ञानकृतमित्याह—मोहेति । तद्ब्रह्मापरोक्षं प्रत्यक्चिदेकतानमपि मोहात्परोक्षं भवति मोहतत्कार्याश्रितार्थस्य मोहेनान्वयव्यतिरेकवत्त्वाद्वस्तुतो वस्तुन्यसंभवात्तस्माद्यत्साक्षादित्युक्तलक्षणे ब्रह्मणि पारोक्ष्यं मृषेत्यर्थः ॥४३४॥

तस्मिन्पारोक्ष्यवदात्मनि ब्रह्माभिन्नेऽपि संसारित्वस्याऽऽविद्यत्वं दृष्टान्तेनाऽऽह—तद्वदिति ॥४३५॥

तान्येवेत्यादेस्तात्पर्यमुपसंहरति—आत्मन इति । तस्मान्नार्थभेदोऽस्तीति शेषः । कथं तर्हि मिथो भेदधीरित्याशङ्क्याऽऽह—तमोमात्रेति । ज्ञानादज्ञानध्वस्तौ सविशेषत्वं हित्वा ब्रह्मात्मना तिष्ठतीत्यर्थः ॥४३६॥

न प्रेत्येत्यादेरर्थमाह—सर्वमिति ॥४३७॥

कथं सा नावशिष्यते प्रतीचि ब्रह्मधियस्तदुत्थायाः शेषादित्याशङ्क्याऽऽह—सदेति । अकारणादिधीरिति च्छेदः । आत्मनि कर्तृत्वादिधीरौत्सर्गिकी वाक्यादकर्तृत्वादिधीराधेया । तथाच वाक्योत्थादैक्यज्ञानात्कर्तृत्वादिधियः पूर्वं ध्वंसस्ततो निरिन्धनाग्निवत्प्रतीचि ब्रह्मधीरपि ध्वंसमेतीत्यर्थः ॥४३८॥

तथाऽप्याकाशादिभेददृष्टौ सत्यां कथमविद्योत्थसंज्ञानवशेषस्तत्राऽऽह—अपास्तेति । एकरसस्य प्रतीचो यदाकाशादिभेदवद्रूपमधिगतं तत्प्रत्यग्ज्ञानेनैव ज्ञातं तदविद्याविलसितस्य तन्मात्रत्वादतः प्रत्यग्ज्ञानात्कर्तृत्वादिध्वस्तिकाले भेदधीरपि ध्वस्तेत्यर्थः ॥४३९॥

विशेषसंज्ञाध्वस्तौ शिष्टमर्थमाह—अहेत्विति । नानारूपं जगदेकरूपप्रत्यङ्मात्रत्वेनोपसंहृत्य चिदात्मैवैकः शिष्टो भवतीत्यर्थः ॥४४०॥

एकत्वसंख्यावत्त्वात्प्रतीचि कार्यकारणवत्त्वसंभवादहेतुफलरूपेणेत्ययुक्तमित्याशङ्क्याऽऽह—प्रत्यगिति ॥४४१॥

---

१. सदोत्पन्नेति—आत्मनि धीः अहमाकारा—सदाऽस्ति अकारणादिधीः ''अपूर्वमनपरमि''ति शास्त्रोक्ता तु शास्त्रेणाधेया । अकारणादिधियः पूर्वं नाशः ततः ब्रह्मधियोऽपि नाशः ।
२. तदन्येति—गतमित्यनुवर्तते ।

व्यपेततमसस्तत्त्वमागमापायसाक्षिणः । ज्ञानेन गम्यते साक्षात्तावन्मात्रानुरोधिना ॥४२॥
दृष्टिमात्रात्मयाथात्म्यात्कार्यकारणवस्तुनः । नाज्ञातं किंचिदप्यस्ति नानपास्तं तमोऽप्यतः ॥४३॥
क्षेत्रज्ञेश्वरभेदेन संज्ञा नैवेह विद्यते । तद्धेतौ तमसि ध्वस्ते कुतः संज्ञाऽनिमित्ततः ॥४४॥

मू.—सा होवाच मैत्रेय्यत्रैव मा भगवानमूमुहन्न प्रेत्य संज्ञास्तीति स होवाच न वा अरेऽहं मोहं ब्रवीम्यलं वा अर इदं विज्ञानाय ॥१३॥

संज्ञा प्रेत्याऽऽत्मनो नास्तीत्येतच्छ्रुत्वा त्वचूचुदत् । शङ्कमानाऽऽत्मनो नाशं मैत्रेयी पतिमादरात् ॥४५॥

विज्ञानघनत्वनिस्संज्ञत्वयोः विरोधेन प्रश्नः

विज्ञानैकघनोक्त्या च निःसंज्ञवचसा तथा । उक्त्योर्मिथोविरुद्धत्वादात्मा मोमुह्यते मम ॥४६॥
अविरुद्धं सुविस्पष्टं मया तुभ्यं प्रभाषितम् । स्वापराधात्तु मद्वाक्यं विरुद्धार्थं त्वमीक्षसे ॥४७॥
विज्ञानैकघनोक्त्याऽहं कृत्स्नैकात्म्यं तवाब्रुवम् । संज्ञानाशेन चाविद्याहेतूत्थापह्नुतिं तथा ॥४८॥

विशेषसंज्ञानाशेन समाधानम्

विशेषसंज्ञा याऽस्याभूद्विज्ञानात्मादिलक्षणा । सम्यग्धोध्वस्तमोहस्य सा कृत्स्ना विनिवर्तते ॥४९॥
यत्त्वपारमनन्तं च वास्तवं ज्ञानमात्मनः । कूटस्थं तत्स्वतःसिद्धेस्तत्कस्माद्विनिवर्तते ॥५०॥
इतीममर्थं भार्यायै याज्ञवल्क्योऽभ्यभाषत ॥५१॥

अलं वा अरे इत्यादेः विवृतिः

कार्यकारणनाशेऽपि स्वतःसिद्धमनन्यमम् । यद्वस्तु तदलं स्वात्मसंवित्त्यै निरपेक्षतः ॥५२॥

मू.—यत्र हि द्वैतमिव भवति तदितर इतरं जिघ्रति तदितर इतरं पश्यति तदितर इतरँ शृणोति तदितर इतरमभिवदति तदितर इतरं मनुते तदितर इतरं विजानाति यत्र वा अस्य सर्वमात्मैवाभूत्तत्केन कं जिघ्रेत्तत्केन

संज्ञामात्रस्याज्ञानात्मतया निरस्यत्वाविशेषे किमिति प्रत्यगीक्षणान्मोहादिनिराकृतिर्घटादिविज्ञानात्किं न स्यादित्याशङ्क्य विशेषमाह—व्यपेतेति ॥४४२॥

घटादिज्ञानात्प्रत्यग्ज्ञाने दर्शितविशेषकृतं फलमाह—दृष्टीति । अतःशब्देन प्रत्यग्ज्ञानोक्तिः ॥४४३॥

नेत्यादेरर्थमुपसंहरति—क्षेत्रज्ञेति । इहेति विद्यावस्थोक्तिः । तदेव स्फुटयति—तद्धेताविति । अनिमित्तत इति च्छेदः । कुतो वा निमित्ततः संज्ञेति संबन्धः ॥४४४॥

निवर्त्यसंज्ञागतमविद्योत्थत्वविशेषणमप्रतीत्य सा हेत्यादेरर्थमाह—संज्ञेति ॥४४५॥

अत्रेत्यादेस्तात्पर्यमाह—विज्ञानेति । उक्तिभ्यामात्मनो मोहे हेतुमाह—उक्त्योरिति ॥४४६॥

विशेषणं प्रकटीचिकीर्षुः स हेत्यादेस्तात्पर्यमाह—अविरुद्धमिति । कथं तर्हि विरोधधीस्तत्राऽऽह—स्वापराधादिति ॥४४७॥

विज्ञानघन एवेत्युक्त्वा संज्ञा नास्तीति वदता कथमविरुद्धमुक्तमित्याशङ्क्याऽऽह—विज्ञानेति ॥४४८॥

उत्तरार्धार्थं प्रपञ्चयति—विशेषेति ॥४४९॥

पूर्वार्धोक्तं व्यक्तीकरोति—यत्त्विति । कौटस्थ्ये हेतुमाह—स्वतःसिद्धेरिति । तत्फलमाह—तत्कस्मादिति ॥४५०॥

स हेत्यादेरर्थमुपसंहरति—इतीममिति । विज्ञानात्मादिसंज्ञा ध्वस्ता चेत्कथं वस्तुज्ञानं हेत्वभावादित्याशङ्क्यालमित्यादेरर्थमाह—कार्येति । स्वतःसिद्धत्वसिद्ध्यर्थमनन्यममित्युक्तम् ॥४५१–४५२॥

१. निवर्त्यायां संज्ञायामविद्योत्थत्वं विशेषणमस्ति तदज्ञात्वा पृच्छतीत्यर्थः ।

कं पश्येत्तत्केन कँ श्रृणुयात्तत्केन कमभिवदेत्तत्केन कं मन्वीत तत्केन कं विजानीयात् । येनेदँ सर्वं विजानाति तं केन विजानीयाद्विज्ञातारमरे केन विजानीयादिति ॥१४॥

यत्राज्ञातात्मतत्त्वात्माऽविद्यासंवीतशेमुषिः । तत्र मिथ्याग्रहग्रस्तो द्रष्टृदृश्यादिभेदधीः ॥५३॥
यत्राज्ञातात्मयाथात्म्यस्तत्तमोपिहितेक्षणः । तत्राविद्योत्थबुद्ध्यादिगुणभूतात्मविन्नरः ॥५४॥
अविद्यामात्रशेषत्वं जगतः प्रागवादिषम् । नर्तेऽविद्यां कार्यमिदं हीति हेतावतः पदम् ॥५५॥
सतोऽभिव्यञ्जकं मानं स्वभावोऽयं मितेर्भवेत् । अविद्यायाः स्वभावोऽयं यदसत्करणं मृषा ॥५६॥
उक्तहेत्वर्थदीप्येतद्धीति तस्य निपाततः । द्वीतं द्विधेतमेकं सत्तद्भावो द्वैतमुच्यते ॥५७॥
उपमार्थ इवेत्येतद्भवतीति क्रियापदम् । तत्रैवाविद्यावस्थायां संज्ञेयं युज्यते मृषा ॥५८॥
ननु द्वैतमिवेत्येतदुपमानं कथं भवेत् । द्वैतं वस्तु न चेदस्ति सर्वस्यैकात्म्यमात्रतः ॥५९॥

द्वैतमिवेत्यत्र इवशब्दार्थः

नैष दोषो यतो दृष्ट एकस्मिन्नपि वस्तुनि । उपमेयोपमाभावो दिग्धीरिव विहायसि ॥६०॥
रामरावणयोर्युद्धं रामरावणयोरिव । यथा प्रसिद्धो जगति तथैवेहापि गम्यताम् ॥६१॥
अद्वैतात्परमार्थाद्वा मायाद्वैतमपीष्यते । तेनोपमार्थसंसिद्धेर्यथा स्वप्नेन्द्रजालयोः ॥६२॥
मिथ्येव भाति सत्योऽपीत्यपि लोकेऽभिधीयते । मिथ्याभावो न नास्तीति वक्तुं कश्चिदपि क्षमः ॥६३॥

यत्र हीत्यादेस्तात्पर्यमाह—यत्रेति । अज्ञातात्मकं तत्त्वमेवाऽऽत्मा यस्य स तथा ॥४५३॥

यदा स्वरूपमविद्योपहतधीरात्मा न वेद तदा स द्वैतदर्शीत्युक्तं प्रपञ्चयति—यत्रेत्यादिना ॥४५४॥

तात्पर्यमुक्त्वाऽक्षराणि व्याचक्षाणो हिशब्दार्थमाह—अविद्येति । अव्याकृतविचारादौ । उक्तेऽर्थे हेतुमन्वयव्यतिरेकाख्यमाख्याति—नेति । अविद्यामात्रं द्वैतमिति पूर्वोक्तस्यैव प्रतिपादके हेतौ हीति पदमतस्तद्युक्तमित्याह—हीतीति ॥४५५॥

ननु प्रपञ्चोऽस्ति न वा? आद्ये नाविद्योपयोगो द्वितीयेऽपि कथमसन्तमविद्याऽपि दर्शयितुमलमित्याशङ्क्य दृष्टान्तेनाऽऽह—सत इति ॥४५६॥

द्वैतस्याऽऽविद्यत्वेऽपि तद्धेतुद्योतित्वं हिशब्दस्य कथमित्याशङ्क्याऽऽह—उक्तेति । दृश्यत्वादिहेतुतो जगतो रजतादिवदविद्यामात्रत्वात्तद्धेतुद्योतकं हीत्येतत्पदमित्यर्थः । हिशब्दस्य यथोक्तहेतुवाचित्वमेव किं न स्यादत आह—तस्येति । निपातानां द्योतकत्वमेवेति हि वैयाकरणसमयः । द्वैतमित्यादि व्याकरोति—द्वीतमिति । इवशब्दार्थसमर्थनार्थं यत्र हीत्यादिवाक्यस्य पर्यवसितमर्थमाह—तत्रेति ॥४५७–४५८॥

द्वैतमस्ति न वा? नाऽऽद्यः ऐकात्म्यविरोधान्न द्वितीयः, एकत्रोपमानोपमेयत्वायोगादिवशब्दासिद्धेरिति शङ्कते—नन्विति ॥४५९॥

आत्मेतरद्वैताभावेऽपीवशब्दस्य नोपमार्थत्वासिद्धिरुपमानोपमेयभावस्यैकत्रापि दृष्टेरित्याह—नेत्यादिना । दृष्टिमेव व्याचष्टे—दिग्धीरिति । नाऽऽकाशादर्थान्तरं दिगस्ति मानाभावात्तथाऽपि दिगिव तद्भातीति सादृश्यधीराकाशे दृश्यते तथाऽऽत्मान्यद्वैताभावेऽपि द्वैतमिव स भवतीत्युक्तिसिद्धिरित्यर्थः ॥४६०॥

एकस्मिन्नुपमानोपमेयत्वसंभवमुदाहरणान्तरेणाऽऽह—रामेति ॥४६१॥

नात्रोपमानोपमेयविवक्षा युद्धमनयोरनुपममित्यस्मिन्नर्थे तात्पर्यादित्याशङ्क्य विधान्तरेणोपमानं समर्थ्यते—अद्वैतादिति । इवशब्दः संभवतीति शेषः । कल्पितद्वैतेनोपमासिद्धिं स्फुटयति–यथेति । स्वप्ने महेन्द्रजाले च स्वप्नदशा मायाविना च कृतद्वैतवदात्मा स्वाविद्योत्थकर्त्रादिद्वैतरूपो भातीत्यर्थः ॥४६२॥

मिथ्यास्वप्नादिद्वैतस्य कथं सत्यात्मदृष्टान्ततेत्याशङ्क्याऽऽह—मिथ्येति । यथा मिथ्यार्थः सत्यवद्भाति

समस्तव्यस्ततारूपं यो वक्तीहाऽऽत्मनः श्रुतेः । तत्पक्षस्य निषेधोऽयं यत्र हीत्यादिनोच्यते ।।६४।।
तस्यामविद्यावस्थायां स्वप्नावस्थां गतो यथा । घ्रातेतरः सन्नितरं गन्धं घ्राणेन जिघ्रति ।।६५।।
घ्रातृघ्रेयाभिसंबन्धाद्घ्राणाद्याहृतिरिष्यते । जिघ्रतीत्यपि निर्देशः क्रियातत्फलयोर्भवेत् ।।६६।।
उत्तरेष्वपि वाक्येषु योजनेयं यथोदिता । प्रत्यगज्ञानमात्रोत्थं ग्राहकाद्यत्र भण्यते ।।६७।।
क्रियाकारकसंज्ञाया विषयोऽयं समीरितः । अतोऽविद्यासमुच्छित्तावियं संज्ञा निवर्तते ।।६८।।

### "यत्र वा अस्य" इत्यादेः विवरणम्

विज्ञानघन इत्युक्तेर्विषयोऽयमथोच्यते । यत्र वा इति वाक्येन ध्वस्ताविद्ये विपश्चिति ।।६९।।
यत्र त्वस्याऽऽत्मनोऽज्ञस्य शास्त्राचार्यप्रसादतः ।।७०।।
प्रत्यग्याथात्म्यविज्ञानभास्वद्भास्करदीधिति—
संप्लुष्टनिखिलाविद्ये तत्र कः केन किं वद । जिघ्रेदैकात्म्यमात्रेण सर्वस्यास्याऽऽत्ममात्रतः ।।७१।।
षष्ठगोचरवत्सर्वं कार्यकारणवज्जगत् । ध्वस्तात्मान्ध्यस्य विदुषः[1] सम्यग्ज्ञानोदये भवेत् ।।७२।।
अव्यावृत्ताननुगतमतिहेतु सदैकलम् । विज्ञानघनमानन्दमैकात्म्यं व्यवतिष्ठते ।।७३।।

तथा वक्तुं प्रथमोऽपिशब्दः। द्वितीयस्तु शास्त्रसमुच्चयार्थः। यद्दृश्यं तत्सत्यमिति व्याप्तेर्मिथ्यापदार्थस्यैवासत्त्वे कुतस्तस्य दृष्टान्ततेत्याशङ्क्याऽऽह—मिथ्याभाव इति। भ्रान्तिबाधप्रसिद्धिविरोधादिति भावः ।।४६३।।

यत्र हीत्यादेस्तात्पर्यमविद्यादशायामेव द्वैतदर्शनं नान्यदेत्युक्त्वा तत्फलमाह—समस्तेति। एष हि द्रष्टेत्यादिवाक्यमिदं सर्वं यदयमात्मेत्यादि च श्रुतिरित्युच्यते। परीक्षकनिर्धारणार्थमिहेत्युक्तम्। आत्मनस्तथाविधं रूपमवास्तवं चेदविरुद्धं वास्तवं चेदविद्यावस्थायामेव द्वैतदर्शनवादिनी श्रुतिर्विरुध्येतेति भावः ।।४६४।।

तदित्यादि व्याचष्टे—तस्यामिति ।।४६५।।

कर्तृकर्मक्रियार्पकपदानामेव श्रवणाद्घ्राणेनेत्ययुक्तमित्याशङ्क्येतर इतरमिति कारकप्रदर्शनार्थमिति भाष्यतात्पर्यमाह—घ्रात्रिति। आदिशब्देन घ्राणस्यार्थयोगप्रयोजकं सर्वं गृह्यते। तथाऽपि फलमिह नाभिलप्यते तद्वाचकाभावादित्याशङ्क्याऽऽह—जिघ्रतीत्यपीति। यथा कारकाणामितर इतरमिति निर्देशस्तथेत्यपेरर्थः ।।४६६।।

तदितर इतरं पश्यतीत्यादिषु पूर्वोक्तन्यायमतिदिशति—उत्तरेष्विति। यत्र हीत्यादिवाक्यार्थमुपसंहरति—प्रत्यगिति ।।४६७।।

तदनुवादेन फलितमाह—क्रियेति। अत इत्यविद्याकृतत्वोक्तिः ।।४६८।।

यत्र वा अस्येत्याद्यवतारयति—विज्ञानेति। एतेभ्य इत्यादिवाक्यस्य यत्र हीत्यादिना व्याख्यानानन्तरमित्यर्थः। अक्षराणि व्याकरोति—ध्वस्तेत्यादिना। विदुषि निवृत्ताविद्ये सति यत्र सर्वमात्मैवाभूत्तत्र कः कर्ता केन करणेन किं कर्म जिघ्रेत्तत्कर्त्रादिकं वदेति संबन्धः ।।४६९।।

तदेव स्फुटयति—यत्रेति। अज्ञस्याऽऽत्मनः शास्त्रादिवशादुत्पन्नतत्त्वज्ञानाद्ध्वस्ताविद्ये स्वरूपे सति यस्यां विद्यादशायां सर्वमात्मैव भवति तत्रेति पूर्ववदन्वयः। सर्वमात्मैवाभूदित्यस्य हेतुरूपमर्थमाह—ऐकात्म्येति ।।४७०-४७१।।

सर्वस्य कर्त्रादेरात्ममात्रत्वे तद्वदेव सत्त्वमाशङ्क्य सर्वमित्यादेस्तात्पर्यमुपसंहरति—षष्ठेति ।।४७२।।

द्वैतस्य तुच्छत्वे तदभेदादद्वैतस्यापि तथात्वमित्याशङ्क्याऽऽह—अव्यावृत्तेति। निःसामान्यविशेषं स्वप्रकाशमेकस्वभावं विज्ञप्तिमात्रं परमपुरुषार्थात्मकमैकात्म्यमवशिष्यते तन्न शून्यतावसानं द्वैतमित्यर्थः ।।४७३।।

---

१. विदुषः तत्त्वज्ञानोदये सर्वं जगत् षष्ठगोचरवत् भवेत्। षष्ठेन्द्रियं नास्त्येव तद्गोचरमपि तथा। मनसः इन्द्रियत्वे तदेव षष्ठं तस्य गोचरः पृथक् नास्त्येव रूपादीनामेव मनोविषयत्वात् सुखादिकं तु साक्षिभास्यत्वात् न मनोगोचरः।

ग्राहकादिविभागोऽत्र नास्ति तद्धेत्वसंभवात् । चिन्मात्रस्य स्वतः सिद्धेर्विज्ञानघनगीरतः ॥७४॥
आत्माविद्यामनाश्रित्य कारकत्वं न लभ्यते । कारकं चानपाश्रित्य न क्रियेह प्रसिध्यति ॥७५॥
अन्तरेण क्रियां तद्वत्फलं नैव प्रसिध्यति । कारकाद्यात्मना सेयमविद्यैव प्रकाशते ॥७६॥
यत एवमतोऽविद्यासमुच्छित्ताविदं जगत् । व्याकृताव्याकृतं कृत्स्नमात्मतामेति बोधतः ॥७७॥
भूयोऽपि लभते संज्ञां लीनं सत्कारणात्मनि । जगदेतद्यथा तद्वन्नाविद्याविलये भवेत् ॥७८॥

येनेदं सर्वं विजानाति इत्यस्य विवरणम्

ज्ञानोत्पत्तौ[1] न संज्ञाऽस्तीत्यास्तां तावदिहाऽऽत्मनः । अपि सत्यामविद्यायां न संज्ञाऽस्त्यात्मनीदृशी ॥७९॥
ग्राहकादि जगत्सर्वं येन कूटस्थसाक्षिणा । लोकः सर्वो विजानाति जानीयात्केन तं वद ॥८०॥
अचेतने जगत्यस्मिन्साक्ष्येवैकोऽत्र चेतनः । ग्राहकादिर्न तत्रापि साक्षिसिद्धावपेक्ष्यते ॥८१॥
संज्ञेयं किमु विध्वस्तसंसारानर्थकारणे । उदितैकात्म्ययाथात्म्यसम्यग्ज्ञानदिवाकरे ॥८२॥

विज्ञातारमरे इत्यस्य विवरणम्

बोद्धारमपि चापेक्ष्य न संज्ञा प्रत्यगात्मनि । बोद्धृतज्ज्ञानविषयैर्न बोद्धा गृह्यते यतः ॥८३॥
अविचारितसंसिद्धिः प्रमात्रादिस्वलक्षणा । संज्ञेयं प्रथते मोहान्नत्वसौ वस्तुनिश्चितौ ॥८४॥

यत्सिध्यति तन्मात्रादिविभागादेवेति नियमात्कुतः स्वप्रकाशत्वादीत्याशङ्क्याऽऽह—ग्राहकादीति । अत्रेति विद्यावस्थोक्ता ॥४७४॥

को ग्राहकादिविभागहेतुस्तदसंभवो वा कथमित्याशङ्क्य प्रथमं कारकहेतुत्वमविद्याया दर्शयति—आत्मेति । कारकस्य क्रियाहेतुत्वमाह—कारकं चेति । क्रियाकारकव्यवहारः सप्तम्यर्थः ॥४७५॥

फलहेतुत्वं तस्या निर्दिशति—अन्तरेणेति । तर्हि बहूनां हेतूनामुपगमादात्माविद्यैव हेतुरितिपक्षक्षतिरित्याशङ्क्याऽऽह—कारकादीति ॥४७६॥

ग्राहकादिविभागहेतुमुक्त्वा ज्ञानात्तद्ध्वस्तावात्ममात्रत्वेन विभागध्वस्तिमाह—यत इति ॥४७७॥

विमतं पुनः समुत्थास्यत्यात्ममात्रेण समाप्तत्वात्स्वापादौ तथा समाप्तग्राहकादिवदित्याशङ्क्य कारणवत्त्वमुपाधिमाह—भूयोऽपीति ॥४७८॥

येनेत्यादेस्तात्पर्यमाह—ज्ञानेति । ईदृशी ग्राहकादिविभागोद्ग्राहिणीत्यर्थः ॥४७९॥

कैमुतिकन्यायपरं वाक्यमित्युक्त्वा तस्मिन्नर्थे तद्योजयति—ग्राहकादीति । अविद्यावस्थायामपि सर्वसाक्षी नान्यापेक्षः किमु विद्यावस्थायामित्यर्थः ॥४८०॥

जगदपि साक्षिवदनपेक्षं सेत्स्यत्यविशेषात्तत्कथं कूटस्थसाक्षिणा लोको जगज्जानातीत्युक्तमित्याशङ्क्याऽऽह—अचेतन इति । अत्रेति व्यवहारदशोक्तिः । साक्षिणोऽपि तर्हि साधकान्तरापेक्षा किं न स्याच्चिद्रूपस्यापि पुरुषान्तरज्ञानस्य पुरुषान्तरापेक्षया सिद्धिदृष्टेरित्याशङ्क्याऽऽह—ग्राहकादिरिति । न हि निरुपाधिके चिदात्मन्यन्यापेक्षा सिद्धिरनवस्थितेरिति भावः ॥४८१॥

तत्रापीत्यपिना सूचितं येनेत्यादिवाक्यीयन्यायमुपसंहरति—संज्ञेति । साक्षिणोऽन्यस्य चेतनस्याभावादविद्यावस्थायामपि नाऽऽत्मनि ग्राहकादिभेदधीः किं पुनर्विद्यावस्थायामित्यर्थः ॥४८२॥

विज्ञातारमित्यादेस्तात्पर्यमाह—बोद्धारमिति । मातारमपेक्ष्य तत्रापि न ग्राहकादिभेदधीः किमुत साक्षिणीत्यर्थः । मातरि ग्राहकादिभेदज्ञानाभावे हेतुमाह—बोद्ध्रिति ॥४८३॥

कुत्र तर्हि ग्राहकादिभेदधीरिष्टेत्याशङ्क्यानात्मनिश्चितावित्याह—अविचारितेति ॥४८४॥

---

१. स्वापादौ कारणाविद्या वर्तते मुक्तौ सा न विद्यत इति वैलक्षण्यम् ।

यत एवमतः सिद्धं दर्शनं प्रत्यगात्मनः । श्रुत्यादिसाधनं साक्षात्सर्वमात्मेत्युदीरितम् ॥८५॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके द्वितीयाध्यायस्य
चतुर्थं ब्राह्मणम् ॥४॥
श्लोकानामादितः समष्टयङ्काः–५४७८

## अथ द्वितीयाध्याये पञ्चमं ब्राह्मणम्

नमोऽसाधारणज्ञातृज्ञानज्ञेयात्मबोधिने । जग्धाशेषमहाविद्यातज्जानर्थाय विष्णवे ॥ १ ॥
प्रत्यग्ध्वान्तसमुच्छेदि ज्ञानमैकात्म्यनिष्ठितम् । संन्याससाधनं प्रोक्तममृतत्वैकसाधनम् ॥ २ ॥
हेतवोऽपि च तत्सिद्धौ श्रवणादिपुरःसराः । उक्ता यथावत्तत्रैव श्रोतव्यः श्रुतिवाक्यतः ॥ ३ ॥
मन्तव्यो हेतुभिः सूक्ष्मैरुक्तदृष्टान्तबोधितैः । चित्सामान्यचिदुत्पत्तिचिदेकप्रलयात्मभिः ॥ ४ ॥

ऐकात्म्यसिद्धिहेतोरसिद्धिवारणाय मधुब्राह्मणम्

आशङ्क्य हेत्वसिद्धत्वं मधुब्राह्मणमुच्यते । कुतोऽसिद्धत्वमिति चेच्छृणु तद्गदतो मम ॥ ५ ॥
निःसामान्यविशेषत्वाच्चित्सामान्यं कथं भवेत् । चिदुत्पत्तिलयासिद्धिः सांख्यादीन्प्रति वादिनः ॥ ६ ॥
ऐकात्म्यवस्तुतात्पर्यं हेत्वादिच्छद्मनोच्यते । वेदे यतो न हेत्वादि लोकवत्स्याद्विवक्षितम् ॥ ७ ॥
चित्तत्त्वं सदविद्यावत्कारणत्वं निगच्छति । चित्सामान्याद्यतः सिद्धं प्रागप्येतत्प्रसाधितम् ॥ ८ ॥

ब्राह्मणार्थमुपसंहरति—यत इति । अविद्यावस्थायामेव भेदव्यवहारो नान्यत्रेत्येवं यतो निश्चितमतः सर्वमात्मेति यत्प्रतीचः साक्षाद्दर्शनं श्रवणादिसापेक्षमुक्तं तन्मोक्षसाधनं संन्याससहितं सिद्धमित्यर्थः ॥४८५॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां द्वितीयाध्यायस्य चतुर्थं
मैत्रेयीब्राह्मणम् ॥४॥

शास्त्रस्याऽऽद्यन्तयोर्मङ्गलाचरणं कर्तव्यमिति शिष्टाचारं प्रमाणयन्मधुकाण्डसमाप्तौ देवतां प्रणमति—नम इति । यद्वा ब्राह्मणद्वयेन पदार्थौ व्याख्याय वाक्यार्थं व्याख्यातुकामो वाक्यार्थे श्रद्धातिशयकार्यतार्थं देवतां प्रणमति—नम इति । यद्वा मङ्गलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषाण्यायुष्मत्पुरुषाणि चेति न्यायादादिमध्यावसानेषु कृतमङ्गला ग्रन्थाः प्रचारिण इति मत्वा मध्येऽपि मङ्गलमाचरति—नम इति । साधारणा ज्ञातृज्ञानज्ञेया यस्य न सन्ति यस्य चाऽऽत्मनैवाऽऽत्मानं बोधयितुं शीलं यश्च वाक्योत्थधीव्यक्तो ग्रस्तसमस्ताविद्यातत्कार्यस्तस्मै परस्मै व्यापिने प्रतीचे त्रिविधोऽपि प्रह्वीभावोऽस्त्विति योजना ॥१॥

देवतानतिरूपं मङ्गलं कृत्वा वृत्तं कीर्तयति—प्रत्यगिति । यथोक्तं ज्ञानमज्ञानमुच्छिददभ्यासापेक्षमित्याशङ्क्याऽऽह—अमृतत्वेति ॥२॥

कथमिदमुदेति न हि संन्यासादेव केवलात्तदुदयोऽत आह—हेतवोऽपीति । तत्रैवेति पूर्वब्राह्मणोक्तिः । के ते श्रवणादयोऽत आह—श्रोतव्य इति ॥३–४॥

वृत्तमनूद्य ब्राह्मणयोः संगतिमाह—आशङ्क्येति । श्रौतहेतोरसिद्धयाशङ्का न युक्तेत्याक्षिप्य समाधत्ते—कुत इति ॥५॥

जगतः स्थितिकाले चित्सामान्यत्वं यदुक्तं तस्यासिद्धिं साधयति—निःसामान्येति । चिदुत्पत्तिलयाख्यहेत्वंशस्यासिद्धिं विशदयति—चिदिति । ते हि प्रधानादेस्तज्जन्मलयाविच्छन्ति न च त्वयाऽपि चितो जगज्जन्मलयावेष्टुं शक्यौ कूटस्थासङ्गाद्वयत्वोपगमादित्यर्थः ॥६॥

किं चित्सामान्यादिरूपो हेतुर्वस्तुतो नास्ति यथाकथंचिद्वेति विकल्प्याऽऽद्यमङ्गीकरोति—ऐकात्म्येति । लोकशब्दस्तर्कशास्त्रस्याप्युपलक्षणम् ॥७॥

न द्वितीयोऽज्ञाते ब्रह्मणि चित्सामान्यादिसंभवा "त्तद्धेदमि" त्यादौ चोक्तत्वादित्याह—चित्तत्त्वकिति ॥८॥

अभ्युपेत्याप्यसिद्धत्वं तत्सिद्धत्वाभिधित्सया । मधुब्राह्मणमारब्धमियमित्याद्यथोत्तरम् ।। ९ ।।

प्रकारान्तरेण मधुब्राह्मणावतरणम्

प्रतिदेहं लयोत्पत्तिश्रुतेर्ह्यात्मनि शङ्क्यते । भेदोऽतस्तन्निवृत्त्यर्थं मधुत्वेनैकतोच्यते ।।१०।।

उपकार्योपकारित्वभिन्नं यज्जगदीक्ष्यते । उपकार्योपकारित्वात्तस्यादेकात्मतत्त्वकम् ।।११।।

प्रतिज्ञायाथवैकात्म्यं हेतूनुक्त्वोक्तसिद्धये । निगमायोत्तरो ग्रन्थः प्रतिज्ञाया विवक्षितः ।।१२।।

प्रतिज्ञातार्थसिद्ध्यर्थं हेतूनुक्त्वा पृथग्विधान् । हेतोर्निगमनं पश्चात्क्रियतेऽथोत्तरोक्तिभिः ।।०३।।

भर्तृप्रपञ्चमतेन मधुब्राह्मणावतरणं तन्निरासश्च

निदिध्यासनसिद्ध्यर्थं केचिद्व्याचक्षते परम् । मधुब्राह्मणमेतत्तु न युक्तं प्रतिभाति नः ।।१४।।

श्रुत आगमतो योऽर्थस्तर्केणापि समर्थितः । स एवार्थस्तु निष्णातो[1] निदिध्यासनमुच्यते ।।१५।।

शास्त्राचार्यानुभवनैर्हेतुभिश्च समर्थितः । ईदृगैकात्म्यसंबोधो निदिध्यासनमुच्यते ।।१६।।

निदिध्यासनसिद्ध्यर्थो यत्नोऽतोऽयमनर्थकः । प्रत्यग्याथात्म्यसंबोधमात्रत्वादेव हेतुतः ।।१७।।

मू.—इयं पृथिवी सर्वेषां भूतानां मध्वस्यै पृथिव्यै सर्वाणि भूतानि मधु यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मँ शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ।।१।।

मू.—इमा आपः सर्वेषां भूतानां मध्यासामपाँ सर्वाणि भूतानि मधु यश्चायमास्वप्सु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मँ रैतसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ।।२।।

चित्सामान्यादि साधितं चेदसिद्धिशङ्काभावात्किमनेन ब्राह्मणेनेत्याशङ्क्याऽऽह—अभ्युपेत्येति । अनन्तरब्राह्मणस्याऽऽशङ्कितहेत्वसिद्धिनिरासे सामर्थ्यद्योतनार्थमथेत्युक्तम् ।।९।।

हेत्वसिद्धिशङ्कां परिहर्तुं ब्राह्मणमिति संगतिमुक्त्वा प्रकारान्तरेण तामाह—प्रतिदेहमिति । "स वा अयं पुरुषो जायमान" इत्यादिना प्रतिदेहमात्मनो जन्मलयश्रुतेस्तस्मिन्भेदः शङ्कितोऽतस्तन्निवृत्त्यर्थमनेन ब्राह्मणेन सर्वस्य मधुत्वेनाऽऽत्मनैक्यं कथ्यत इत्यर्थः ।।१०।।

कथमिह सर्वस्य मधुत्वोक्त्याऽऽत्ममात्रत्वगीरित्याशङ्क्याऽऽह—उपकार्येति । विमतमेकात्मकमुपकार्योपकारित्वात्स्वप्नद्वैतवदित्यर्थः । प्रथमार्धेन हेतुः साधितः ।।११।।

ब्राह्मणस्य संबन्धान्तरमाह—प्रतिज्ञातेति । उक्तसिद्धये प्रतिज्ञातैकात्म्यसिद्ध्यर्थमिति यावत् । प्रतिज्ञाया हेतुसहिताया इत्यर्थः ।।१२।।

तथाहीत्यादिभाष्यतात्पर्यमाह—प्रतिज्ञातेति । हेतोस्तत्सहितप्रतिज्ञातार्थस्येति यावत् । निगमनस्यापि साधनाङ्गताया वादिभिरिष्टत्वादित्यथशब्दार्थः ।।१३।।

भर्तृप्रपञ्चानां ब्राह्मणारम्भप्रकारमनूद्य निरस्यति—निदिध्यासनेति । श्रवणादित्रयं प्रकृत्य श्रवणमनने व्याख्याय निदिध्यासनं व्याख्यातुमेतद्ब्राह्मणमिति मतमयुक्तमित्यर्थः ।।१४।।

अयुक्ततां स्फोरयति—श्रुत इति । श्रवणादिफलं वाक्यार्थज्ञानं निदिध्यासनमत्रेष्टमित्यर्थः ।।१५।।

कथं ध्यानवाची शब्दोऽन्यथा व्याख्यायते तत्राऽऽह—शास्त्रेति । निदिध्यासनस्य वाक्यार्थज्ञानत्वं पूर्वब्राह्मणे साधितमिति भावः ।।१६।।

अस्तु निदिध्यासनं वाक्यार्थज्ञानं किं तावतेत्याशङ्क्याऽऽह—निदिध्यासनेति । अतःशब्दार्थं व्याकरोति—प्रत्यगिति । तस्य च श्रवणादिनैव सिद्धेरिति शेषः ।।१७।।

१. निष्णातः निश्चितः ।

मू.—अयमग्निः सर्वेषां भूतानां मध्वस्याग्नेः सर्वाणि भूतानि मधु यश्चायमस्मिन्नग्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं वाङ्मयस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥३॥

मू.—अयं वायुः सर्वेषां भूतानां मध्वस्य वायोः सर्वाणि भूतानि मधु यश्चायमस्मिन्वायौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं प्राणस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥४॥

मू.—अयमादित्यः सर्वेषां भूतानां मध्वस्यादित्यस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्नादित्ये तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं चाक्षुषस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥५॥

मू.—इमा दिशः सर्वेषां भूतानां मध्वासां दिशाँ सर्वाणि भूतानि मधु यश्चायमासु दिक्षु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मँ श्रौत्रः प्रातिश्रुत्कस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥६॥

मू.—अयं चन्द्रः सर्वेषां भूतानां मध्वस्य चन्द्रस्य सर्वाणि भूतानि मधु यश्चायमस्मिँश्चन्द्रे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं मानसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥७॥

मू.—इयं विद्युत्सर्वेषां भूतानां मध्वस्यै विद्युतः सर्वाणि भूतानि मधु यश्चायमस्यां विद्युति तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं तैजसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥८॥

मू.—अयँ स्तनयित्नुः सर्वेषां भूतानां मध्वस्य स्तनयित्नोः सर्वाणि भूतानि मधु यश्चायमस्मिन्स्तनयित्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मँ शाब्दः सौवरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥९॥

मू.—अयमाकाशः सर्वेषां भूतानां मध्वस्याकाशस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्नाकाशे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मँ हृद्याकाशस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥१०॥

इयं पृथिवीत्यादेः व्याख्या

क्रियाफलोपभोगार्थं सर्वैरेव स्वकर्मभिः । जन्तुभिः पृथिवी सृष्टा मधु तेषां ततो मही ॥१८॥
पृथिव्याऽप्यात्मभोगार्थं सृष्टाः सर्वेऽपि जन्तवः । पृथिव्या अपि कार्यत्वान्मधु तेऽपि भवन्त्यतः ॥१९॥
पार्थिवानि शरीराणि सर्वेषां देहिनां यतः । पृथिव्या तानि सृष्टानि पृथिव्यन्वयदर्शनात् ॥२०॥

परोक्तं संबन्धं निरस्येयमित्यादि व्याचष्टे—क्रियेति ॥१८॥

अस्या इत्यादि व्याकरोति—पृथिव्येति । सर्वैर्जन्तुभिर्यथा पृथिवी सृष्टा तथेति प्रथमोऽपिशब्दः । द्वितीयोऽपिरभिव्याप्त्यर्थः । तृतीयो जन्तूनां पृथिवीवदिति दृष्टान्तार्थः । चतुर्थस्तु पृथिवीं दृष्टान्तयितुमेव ॥१९॥

तथा सर्वेषां सृष्टत्वे युक्तिमाह—पार्थिवानीति । पार्थिवत्वे हेतुः—पृथिवीति ॥२०॥

भूतानां च पृथिव्याश्च मिथःकार्यत्वहेतुतः । भोग्यभोक्तृत्वसंबन्धस्तस्मात्सिद्धः परस्परम् ॥२१॥
भोग्यता प्रथमान्तेन[1] पृथिव्यादेरिहोच्यते । कर्तृता भोक्तृता चैषां षष्ठ्यन्तेनाभिधीयते ॥२२॥
अचेतनांश[2]प्राधान्यात्कार्यकारणतोच्यते । भोक्तृभोग्याभिसंबन्धश्चेतनाचेतनात्मनोः[3] ॥२३॥
सर्वेषामपि भूतानां कार्यकारणसंगतेः । सर्वभूतात्मकत्वं स्याद्यथा सर्वात्मनस्तथा ॥२४॥
संहृत्य[4] स्थूलमाधारं भूतानां च क्षितेस्तथा । तदाधेयोपसंहृत्यै यश्चायमिति शब्द्यते ॥२५॥
अस्यां पृथिव्यां यश्चासौ भास्वद्विज्ञानविग्रहः । अमूर्तो नित्य एवातो न नाशी स्थूलदेहवत् ॥२६॥
स चापि मधु सर्वेषां भूतानां तानि तस्य च । मधु सर्वाणि भूतानि यथा पूर्वमवादिषम् ॥२७॥
सहाध्यात्माधिदैवं हि साधिभूतमिदं जगत् । एकैकस्याऽऽत्मनः कृत्स्नं भोग्यत्वेनावतिष्ठते ॥२८॥
सर्वः सर्वस्य कार्यं स्यात्सर्वः सर्वस्य भोजकः । एवं सति भवेत्सिद्धं यथा पूर्वं प्रपञ्चितम् ॥२९॥

यश्चायमध्यात्मं इत्यादेः विवरणम्

अध्यात्मं यश्च शारीरः पार्थिवांशसमाश्रयः । स चापि मधु सर्वेषां सर्वभूतानि तस्य च ॥३०॥
कार्यकारणरूपेण भोज्यभोक्तृतयोदितम् । चतुष्टयं पृथिव्यादि तस्य तत्त्वमथोच्यते ॥३१॥

भूतानां पृथिव्याश्च कार्यकारणत्वे श्रुतियुक्तिसिद्धे फलितमाह—भूतानामिति ॥२१॥

कर्तृकार्यत्वयोर्भोक्तृभोग्यत्वयोश्च किमत्र द्योतकमित्याशङ्क्याऽऽह—भोग्यतेति । कार्यतेत्यपि वाच्यम् ॥२२॥

कथं मिथोविरुद्धमेकस्मिन्पृथिव्यादौ चतुष्टयमित्याशङ्क्यावान्तरभेदमाह—अचेतनेति । पृथिव्यादेरचेतनांशप्राधान्यात्कार्यत्वादित्रयं चेतनांशप्राधान्याच्च भोक्तृतेत्यविरोध इत्यर्थः ॥२३॥

वाक्याभ्यां सिद्धमुपसंहरति—सर्वेषामिति । यथा मूलकारणं सर्वात्मकं तथा सर्वं सर्वात्मकं सर्वकारणत्वादतो भेदाभावादात्ममात्रं सर्वमितिनिगमनौचित्यमित्यर्थः ॥२४॥

वृत्तमनूद्य वाक्यान्तरमादत्ते—संहृत्येति । पृथिव्या भूतानां च स्थूलदेहभागं चतुर्धा संक्षिप्य तस्मिन्नेव स्थूले यदाधेयं लिङ्गं तस्य चतुर्धासंक्षेपार्थमुत्तरं वाक्यमित्यर्थः ॥२५॥

तदक्षराणि व्याकरोति—अस्यामिति । आत्मवन्नित्यत्वं व्यावर्तयति—अतो नेति । स्थूलोपाधिवैलक्षण्यमतः शब्दार्थः ॥२६॥

चकारसूचितमर्थमाह— स चेति । आद्यवाक्यद्वयोक्तं दृष्टान्तयति—यथेति ॥२७॥

कथं चकारस्योक्तार्थसूचकत्वमित्याशङ्क्यानुभवमनुसृत्याऽऽह—सहेति । उक्तार्थेऽनुभवं प्रमाणयितुं हिशब्दः ॥२८॥

मानान्तरं वक्तुमनुवदति—सर्व इति । सर्वस्य कार्यकारणभावे मिथो भोक्तृभोज्यत्वे चाऽऽत्ममात्रत्वं यथा पूर्वब्राह्मणे प्रपञ्चितं तथा तत्सिद्धं भवेत्तस्मादिदं सर्वमित्यादिवाक्यं चकारस्यार्थानुग्राहकमित्याह—एवं सतीति ॥२९॥

यश्चेत्यादि व्याख्याय यश्चायमध्यात्ममित्यादेरर्थमाह—अध्यात्ममिति । शारीरस्य जीवत्वं व्यावर्तयति—पार्थिवेति । चार्थमाह— स चेति ॥३०॥

अध्यात्मादिविभागोक्तचतुष्टयमनूद्यायमित्यादिवाक्यतात्पर्यमाह—कार्येति ॥३१॥

---

१. प्रथमान्तेन इयं पृथिवी इत्यनेन भोग्यता कार्यता चोक्ते । सर्वेषां भूतानां इति षष्ठ्या भोक्तृत्वं कर्तृत्वं चोक्तम् ।
२. अचतेनांशः पृथिव्यादौ कार्यं सर्वाणि भूतानीत्यत्र अचेनांशस्य भोक्तृत्वम् ।
३. कार्यत्वादित्रयं कार्यत्वं कर्तृत्वं भोग्यत्वं च ।
४. संहृत्य = संक्षिप्य ।

चतुष्टयविभागेन स्वार्थोऽप्यात्मा विभज्यते । अविभागोऽपि तादर्थ्याद्धोक्ताऽतः सोऽत्र गृह्यते ॥३२॥
प्रत्यक्तया यः प्रथते चतुष्टयविलक्षणः । प्रात्यक्ष्यात्सोऽयमित्येवं प्रत्यक्साक्ष्यभिधीयते ॥३३॥
अयमेव स इत्युक्त्वा सामानाधिकरण्यतः । प्रत्यङ्मात्रैक्ययाथात्म्यं चतुर्धोक्तस्य बोध्यते ॥३४॥
पृथिव्यादिषु यः पूर्वं व्याख्यातोऽन्तरबाह्यतः । आत्मैव स इति ज्ञेयस्तदबोधप्रसूतितः ॥३५॥

योऽयमात्मेत्यस्य स्वीयं विवरणम्

अयमित्यस्य शेषः स्याद्योऽयमित्यादिकः परः । एवेत्यवधृतावेतत्संसर्गप्रतिषेधकृत् ॥३६॥
तत्त्वं चतुष्टयस्यास्य प्रत्यगात्मैव केवलः । अव्यावृत्ताननुगतध्वस्ताविद्यातदुद्भवः ॥३७॥

अयमित्यस्य भाष्यानुसारि विवरणम्

प्रकृतात्माभिधानं वा स इत्येतत्पदं भवेत् । अयमित्युच्यते साक्षात्संनिकर्षाच्चतुष्टयम् ॥३८॥
स एवायमिति ज्ञेयो यो द्रष्टव्यतयोदितः । यच्चामृतं स्वभार्यायै याज्ञवल्क्येन भाषितम् ॥३९॥
ब्रह्मेति ध्वस्तसंभेदं यन्नेतीति पुरोदितम् । सर्वं समभवत्कृत्स्नं यद्याथात्म्यावबोधतः ॥४०॥
पृथिवीं पार्थिवं चांशं शरीरं साधिदैवतम् । जानीयात्सर्वमात्मेति नेति नेत्युपलक्षणम् ॥४१॥

कथमात्मा चतुष्टयस्य स्वरूपमात्मनः स्वार्थत्वादविभागत्वाच्च तद्वैलक्षण्यादित्याशङ्क्याऽऽह— चतुष्टयेति । आत्मनः स्वाविद्यया चतुष्टयात्मनाऽवस्थानाद्विभागसिद्धिरित्यर्थः । आत्माविद्याविवर्तत्वेनाऽऽत्मार्थत्वाच्चतुष्टयस्यात्र चतुष्टये स भोक्ताऽऽत्मा तत्त्वं गृह्यत इति फलितमाह— तादर्थ्यादिति ॥३२॥

अयंशब्दार्थमाह—प्रत्यक्तयेति । यः सशब्दार्थाच्चतुष्टयाद्विलक्षणः सन्प्रत्यग्भावेन भाति स साक्षी प्रत्यगात्मा प्रात्यक्ष्यादयमित्येवमुच्यत इति संबन्धः ॥३३॥

सामानाधिकरण्यार्थमाह—अयमेवेति । चतुर्धेति भोक्तृभोग्यकर्तृकार्यत्वेनाध्यात्माधिदैवयोः प्रत्येकमाधाराधेयत्वेन वेत्यर्थः ॥३४॥

सशब्दार्थं वदन्वाक्यार्थं प्रपञ्चयति—पृथिव्यादिष्विति । अन्तरमाधेयादि बाह्यमाधारादि । चतुष्टयस्याऽऽत्ममात्रत्वे हेतुः—तदबोधेति ॥३५॥

योऽयमात्मेतिशेषस्यायंशब्देन पुनरुक्तिमाशङ्क्याऽऽह—अयमित्यस्येति । अयमित्युक्त आकाङ्क्षा स्यात्तन्निवृत्त्यर्थं विशेषणं योऽयमित्यादि । सामानाधिकरण्यस्य नीलोत्पलवदखण्डार्थत्वं विना संसर्गमात्रविषयत्वेनोपपत्तेर्न चतुष्टयस्य प्रत्यङ्मात्रतेत्याशङ्क्याऽऽह—एवेतीति ॥३६॥

कथमवधारणं चतुष्टयस्याऽऽत्मनि संसर्गनिषेधकं संसर्गपक्षेऽप्ययोगव्यवच्छेदित्वेनोपपत्तेस्तत्राऽऽह— तत्त्वमिति । केवलशब्दार्थं स्फुटयति—अव्यावृत्तेति । अयोगव्यवच्छेदे तु चतुष्टयस्याऽऽत्मनो व्यावृत्ततया निःस्वरूपस्य संसर्गानुपपत्तिरिति भावः ॥३७॥

अयमेवेत्यादेरुद्भाष्यार्थमुक्त्वा भाष्यानुसारेणार्थमाह—प्रकृतेति । मैत्रेयीब्राह्मणे प्रकृतत्वमात्मनो द्रष्टव्यम् ॥३८॥

पदार्थभेदवद्वाक्यार्थभेदोऽपि स्यादित्याशङ्क्याऽऽह—स एवेति । आत्मा वा अरे द्रष्टव्य इत्युक्तो यः स एवायं चतुष्टयात्माऽभेद इत्यक्षरार्थः । इदममृतमित्यस्यार्थमाह—यच्चेति । तदेवेदं चतुष्टयमिति शेषः ॥३९॥

इदं ब्रह्मेत्यस्यार्थमाह—ब्रह्मेतीति । ब्रह्म ते ब्रवाणि ज्ञपयिष्यामीत्यध्यायादौ प्रस्तुत्य मूर्तामूर्तब्राह्मणे नेति नेतीति निर्विशेषं यद्ब्रह्मोक्तं तदेवेदं चतुष्टयमित्यर्थः । इदं सर्वमित्यस्यार्थमाह—सर्वमिति । यत्स्वरूपज्ञानात्सर्वं जगत्पूर्णं ब्रह्माभवदित्युक्तं तृतीये तदेवेदमित्यर्थः ॥४०॥

वाक्यत्रयार्थमुपसंहरति—पृथिवीमिति । आधिदैवाध्यात्मयोः स्थूलद्वयं सूक्ष्मद्वयं चेति चतुष्टयं सर्वविशेषाभावोपलक्षितात्ममात्रमिति द्रष्टव्यमित्यर्थः ॥४१॥

मू.—अयं धर्मः सर्वेषां भूतानां मध्वस्य धर्मस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्धर्मे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं धार्मस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ् सर्वम् ॥११॥

प्रथमपर्यायोक्तार्थस्योत्तरेष्वतिदेशः

उत्तरेष्वपि वाक्येषु यथोक्तेनैव वर्त्मना । इममेव तु वाक्यार्थं व्याचक्षीताविचारयन् ॥४२॥
पृथिव्यादीनि भूतानि तदंशाश्च समीरिताः । हिरण्यगर्भलिङ्गांशास्तथा पूर्वोक्तमूर्तयः ॥४३॥
यथोक्ता येन सर्वेऽपि प्रयुक्ताः स्वात्मकर्मभिः । उपकुर्वन्ति नः सर्वान्स धर्म इति संज्ञितः ॥४४॥
तस्य कार्यं द्विधेहोक्तं सामान्यात्मविशेषतः । पृथिव्यादीह सामान्यं विशेषः पिण्डमात्रकम् ॥४५॥
तत्कार्यस्येह प्रात्यक्ष्यात्तदभेदोपचारतः । प्रत्यक्षवदयं धर्मस्तस्मादेवाभिधीयते ॥४६॥
साधारणः पृथिव्यादिकारी धर्मोऽभिधीयते । यश्चायमिति वाक्येन तथाऽसाधारणाभिधा ॥४७॥
यश्चायमध्यात्ममिति योऽयं मद्देहकृन्मतः । साधारणविशेषात्मा यदपूर्वं तदुच्यते ॥४८॥
प्राजापत्यमपूर्वं यत्सर्वभूतप्रयोजकम् । अध्यात्मं पिण्डकृद्यच्च सोऽयं धर्माभिधोदितः ॥४९॥

मू.—इदँ् सत्यँ् सर्वेषां भूतानां मध्वस्य सत्यस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्सत्ये तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मँ् सात्यस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ् सर्वम् ॥१२॥

तथैवाऽऽचाररूपेण प्रत्यक्षेण यदीक्ष्यते । स एव धर्मः सत्यं स्याद्यद्व्यवस्थाप्रयोजकम् ॥५०॥

इयं पृथिवीत्यादावुक्तमर्थमिमा आपः सर्वेषामित्यादिपर्यायान्तरेष्वतिदिशति—उत्तरेष्विति । निराकार्यस्याऽऽदेयस्य चार्थभेदस्याभावादुक्तव्याख्याने संशयो नास्तीति सूचयति—अविचारयन्निति ॥४२॥

अयं धर्म इत्यस्यार्थं वक्तुं वृत्तमनुवदति—पृथिव्यादीनीति । भूतानि पञ्चोक्तानि तेषामंशाश्च शरीरादयः सूत्रांशाश्च भूतशरीराधारा भूतानां शरीरादीनां च मूर्तयः स्वरूपभूताः पुरेव सूत्रांशा इत्यर्थः ॥४३॥

धर्मशब्दार्थमाह—यथोक्ता इति । प्रयुक्ता भूतादय इति यावत् । स्वात्मकर्मभिः स्वानुरूपाचरणादिभिरित्यर्थः ॥४४॥

तस्य शास्त्रैकगम्यत्वेन पारोक्ष्यादयमितिनिर्देशानर्हत्वशङ्कां परिहर्तुं पातनिकामाह—तस्येति । शास्त्रे सप्तम्यर्थः । सामान्यविशेषभावेन कार्यद्वैविध्यं स्फोरयति—पृथिव्यादीति । इहेति धर्मादि निर्दिश्यते ॥४५॥

तथाऽपि प्रस्तुते किमिति तत्राऽऽह—तत्कार्यस्येति । धर्मकार्यस्य पृथिव्यादेर्व्यवहारभूमौ प्रात्यक्ष्यं तेन कारणस्याभेदमौपचारिकमादाय प्रत्यक्षघटादिवद्धर्मोऽयमित्युच्यते तस्मादयमित्युक्तिरविरुद्धेत्यर्थः ॥४६॥

अस्मिन्पर्याये बहवो धर्मशब्दास्तेषामर्थभेदं वक्तुं यश्चायमस्मिन्धर्म इत्यत्र धर्मशब्दार्थमाह—साधारण इति । वाक्येन तद्गतधर्मशब्देनेत्यर्थः । यश्चायमध्यात्मं धार्मं इत्यत्राऽऽत्मनो देहाद्यारम्भकः प्रत्यात्ममसाधारणो धर्म इत्याह—तथेति । "यो वै स धर्मः सत्यं वैतदि"ति सत्यधर्मयोरभेदोक्तेरिदं सत्यमिति पुनरुक्तिशङ्कां परिहर्तुमयं धर्म प्रत्यत्र विवक्षितधर्मशब्दार्थमाह—साधारणेति । उच्यते प्रथमधर्मशब्देनेति शेषः ॥४७–४८॥

किं तदुभयात्मकमपूर्वं तदाह—प्राजापत्यमिति । तस्य साधारणाकारं दर्शयति—यदिति । असाधारणं रूपमाह—अध्यात्ममिति । प्राथमिकधर्मशब्दार्थं निगमयति—सोऽयमिति ॥४९॥

इदं सत्यमित्यत्र सत्यशब्दस्यार्थमाह—तथेति । यथा हैरण्यगर्भमपूर्वं जगदारम्भकं तथा तदेव प्रत्यक्षदृष्टेनानुष्ठीयमानाचारेण यत्प्रतीयते स एवापूर्वशब्दार्थो धर्मः सत्यमित्युच्यते लोके हि वर्णाश्रमव्यवस्थापकं सत्यमिति प्रसिद्धमित्यर्थः ॥५०॥

साधारणविशेषाभ्यां धर्मवत्तदपि द्विधा । साधारणविशेषार्थव्यवस्थाकारणत्वतः ॥५१॥

मू.—इदं मानुषँ सर्वेषां भूतानां मध्वस्य मानुषस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्मानुषे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं मानुषस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥१३॥

धर्मसत्यप्रयुक्तोऽयं लिङ्गपिण्डस्वलक्षणः । विराड्ढिरण्यगर्भश्च सर्वजातिसमन्वितः ॥५२॥
मनुष्यजातेर्ग्रहणं सर्वजात्युपलक्षणम् । इदं मानुषमित्येवं व्याख्या तस्यास्तु पूर्ववत् ॥५३॥

मू.—अयमात्मा सर्वेषां भूतानां मध्वस्यात्मनः सर्वाणि भूतानि मधु यश्चायमस्मिन्नात्मनि तेजोमयोऽमृतमयः पुरुषो यश्चायमात्मा तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥१४॥

पृथिवी शारीर इत्येवं खण्डशो यः पुरादितः । विराड्ढिरण्यगर्भश्चेत्ययमात्मेति तद्वचः ॥५४॥
हिरण्यगर्भभेदानां भूतानां च पृथक्पृथक् । उक्तं मधुत्वं येनातस्तत्सामस्त्यमथोच्यते ॥५५॥
अयमात्मेति निर्देशो विराजः प्रथमो मतः । सप्तम्यन्तेन तत्प्रत्यङ्लिङ्गात्माऽतोऽभिधीयते ॥५६॥
कार्यात्मा कारणात्मा च यदर्थौ भवतः सदा । यश्चायमात्मेत्यत्रोक्तो विज्ञानात्मेति यं विदुः ॥५७॥

मू.—स वा अयमात्मा सर्वेषां भूतानामधिपतिः सर्वेषां भूतानाँ राजा तद्यथा रथनाभौ च रथनेमौ चाराः सर्वे समर्पिता एवमेवास्मिन्नात्मनि सर्वाणि भूतानि सर्वे देवाः सर्वे लोकाः सर्वे प्राणाः सर्व एत आत्मानः समर्पिताः ॥१५॥

यस्मिन्नात्मनि विध्वस्तव्याकृताव्याकृतात्मके । खिल्यदृष्टान्तवचसा विज्ञानात्मा प्रवेशितः ॥५८॥

अत्रापि बहवः सत्यशब्दास्तेषामर्थं भेत्तुं तद्द्वैविध्यमाह—साधारणेति । द्वैविध्ये हेतुमाह—साधारणविशेषेति । यश्चायमस्मिन्सत्य इत्यत्र सामान्यरूपं यश्चायमध्यात्मं सात्य इत्यत्र विशेषरूपमिदं सत्यमित्यत्र मिलितं ग्राह्यमिति भेदः ॥५१॥

इदं मानुषमित्यस्यार्थमाह—धर्मेति । शरीरद्वयं धर्मादिप्रयुक्तं सूत्रादिशब्दितं यज्जातिविशिष्टं सर्वव्यवहारक्षमं सा जातिः सर्वा मानुषशब्दितेत्यर्थः ॥५२॥

इदं मानुषमिति विशेषणान्न सर्वजात्यन्वितत्वमिति चेत्तत्राऽऽह—मनुष्येति । इदं मानुषमित्येवं मनुष्यजातेर्ग्रहणमिति संबन्धः । साऽपि बाह्याध्यात्मिकभेदेन धर्मादिवद्द्विधा निर्दिश्यते तेनेदं मानुषमिति मिलितसर्वजातेर्यश्चायमस्मिन्निति बाह्यभेदस्य यश्चायमध्यात्ममित्याध्यात्मिकभेदस्योक्तिरित्याह—व्याख्येति ॥५३॥

अयमात्मेति पर्यायस्य तात्पर्यमाह—पृथिवीति । इयं पृथिवीत्यारभ्य मानुषपर्यायपर्यन्तेन संदर्भेण विराट्सूत्रमित्युच्यमानावयविनः पृथिवी शारीर इत्यनेन क्रमेणावयवशो विभाग उक्तस्तद्वतोऽवयविनो निर्देशोऽयमात्मेत्यादिना क्रियत इत्यर्थः ॥५४॥

आद्ये पर्याये शारीरशब्देनैवास्य गतत्वात्पौनरुक्त्यमित्याशङ्क्याऽऽह—हिरण्यगर्भेति ॥५५॥

अयमात्मेत्यत्राऽऽत्मशब्दार्थमाह—अयमिति । विराजः सूत्रस्य च यन्मिलितं रूपं तस्यायमात्मेत्यत्राऽऽत्मशब्दः प्रथमान्तो वाचक इत्यर्थः । यश्चायमस्मिन्नात्मनीत्यत्र सप्तम्यन्तात्मशब्देन विराज एवोक्तिरित्याह—सप्तम्यन्तेनेति । निर्देशो विराज इति पूर्वेण संबन्धः । विराजोऽभ्यन्तरो लिङ्गात्मा तेजोमयादिशब्देनोच्यत इत्याह—तत्प्रत्यङ्ङिति । अतस्तेजोमयादिशब्दादिति यावत् ॥५६॥

यश्चायमात्मेत्यत्राऽऽत्मशब्दस्य चैतन्याभासजीववाचित्वमाह—कार्येति । सोऽत्राऽऽत्मशब्देनोक्तः शेषीति शेषः । शेषिणोऽप्रसिद्धिं निरस्यति—विज्ञानेति ॥५७॥

स वा अयमात्मेत्यत्राऽऽत्मशब्दस्यार्थमाह—यस्मिन्निति । अन्त्ये पर्याये यश्चायमात्मेति श्रुतो जीवो

ब्रह्मविद्याहतध्वान्ते तस्मिन्ब्रह्मणि निष्ठिते । तमस्तदुत्थकार्याणामत्यन्तासम्भवादतः ॥५९॥

"स वा अयमात्मा" इत्यस्यार्थः

योऽसावविद्यया देही संसारीवाप्यभूत्पुरा । सोऽयं साक्षात्परं ब्रह्म विद्यया वर्ततेऽधुना ॥६०॥
ध्वस्ताज्ञानतदुत्थोऽयं संविन्मात्रसतत्त्वकः । अनन्तापार आत्मैव स्वमहिम्नि व्यवस्थितः ॥६१॥
अपूर्वानपरामध्यप्रत्यग्याथात्म्यवित्तये । स वा इत्यादिको ग्रन्थः सदृष्टान्तोऽभिधीयते ॥६२॥
ब्रह्मास्मीतिपरिज्ञानध्वस्तध्वान्तत्वकारणात् । राजेति राजनाद्भास्वदविलुप्तात्मदर्शनात् ॥६३॥
तथाऽधिपतिशब्देन स्वातन्त्र्यमभिधीयते । स्वार्थः प्रत्यक्तदर्थत्वात्सहेतोर्जगदात्मनः ॥६४॥
प्रत्यग्विज्ञप्तिमात्रेण समाप्तिं जगदात्मनः । आविश्चिकीर्षुः साक्षान्नस्तद्यथेति परा श्रुतिः ॥६५॥
चक्रनाभौ यथा प्रोताश्चक्रनेमौ च बाह्यतः । अराः प्राणादयस्तद्वदोताः प्रोताः परात्मनि ॥६६॥

रथनाभौ इत्यादेः भर्तृप्रपञ्चटीका

व्याचक्षतेऽन्यथैवेमं दृष्टान्तं केचिदात्मनः । समस्तादिप्रतिज्ञार्थसिद्धये ब्रह्मवादिनः ॥६७॥
एकीकृत्य स्वमात्मानमक्षरे परमात्मनि । चक्रनाभिवदात्मानं कल्पयित्वा विचक्षणः ॥६८॥
शरीरं नेमिवच्चैतद्देवताद्यरवज्जगत् । कल्पयित्वा निदिध्यासेत्तद्भावाविष्टधीः सदा ॥६९॥
अनेन ध्यानमार्गेण ध्यायमानस्य सर्वदा । तप्तलोहवदेकत्वं भवत्यावृत्तिदुर्लभम् ॥७०॥

यस्मिन्परस्मिन्नविद्यातज्जहीने यथा सैन्धवखिल्य इत्यादिदृष्टान्तपूर्वादिवं वा अर इत्यादिवाक्यादैक्येन बोधितः सोऽत्राऽऽत्मेत्यर्थः ॥५८॥

अविद्यातज्जहीनं ब्रह्म जीवो विपरीतस्तत्कथमैक्यमित्याशङ्क्याऽऽह—ब्रह्मेति । तस्मिञ्जीवे ब्रह्मणि निश्चयेन स्थिते तद्विद्यया निरस्ताज्ञाने सति सर्वात्मना कार्यकारणास्पर्शात्प्रतिबन्धाभावाद्युक्तं तस्य स्वाभाविकं ब्रह्मैक्यमित्यर्थः ॥५९॥

आत्मार्थमुक्त्वा स वा अयमितिपदत्रयार्थमाह—योऽसाविति । अधुना विद्यादशायामित्यर्थः ॥६०॥

विद्याफलभूतमात्मानमनन्तरोक्तं प्रपञ्चयति—ध्वस्तेति ॥६१॥

उक्तेऽर्थे वाक्यमवतारयति—अपूर्वेति ॥६२॥

तद्गतराजशब्दार्थमाह—ब्रह्मेति । ज्ञानादज्ञाननिरासादप्रतिबन्धस्वरूपस्फुरणेन भानाद्ब्रह्मविद्राजेत्युक्तिमर्हतीत्यर्थः ॥६३॥

अधिपतिशब्दस्य राजशब्देन पौनरुक्त्यमाशङ्क्याऽऽह—तथेति । राजशब्देन राजनवदित्यर्थः । स्वातन्त्र्यं साधयति—स्वार्थ इति ॥६४॥

तद्यथेत्यादेस्तात्पर्यमाह । प्रत्यगिति । कार्यकारणप्रपञ्चस्य ब्रह्ममात्रेणावसानमाविष्कर्तुमिच्छन्ती परा श्रुतिर्दृष्टान्तद्वारा प्रवृत्तेत्यर्थः ॥६५॥

तत्पदानि व्याचष्टे—चक्रेति ॥६६॥

तद्यथेत्यादिवाक्यस्य भर्तृप्रपञ्चव्याख्यामुत्थापयति—व्याचक्षत इति । दृष्टान्तग्रहणं दार्ष्टान्तिकोपलक्षणम् । अन्यथाव्याख्यानफलं सूचयति—आत्मन इति । सप्रपञ्चोऽयमात्मेति प्रतिज्ञेदं सर्वं यदयमात्मेत्यत्र स्थिता तदर्थसिद्ध्यर्थमन्यथा व्याख्यानमित्यर्थः ॥६७॥

तदेव स्फुटयति—एकीकृत्येति । न तावदात्मा परस्माद्भिद्यत ऐक्यश्रुतेः स च चक्रनाभिस्थानीयो देहं पञ्चभूतात्मकं चक्रनेमिस्थानीयं देवतादि जगदरवदात्मनि भूतेषु चार्पितं कल्पयित्वा तत्रैव कल्पितेऽर्थे स्थिरबुद्धिः सदा ध्यानं कुर्यादित्यर्थः ॥६८-६९॥

किमनेन ध्यानेनेत्याशङ्क्याऽऽह—अनेनेति । सदातनमेकत्वं न ध्यानफलमित्याशङ्क्य बन्धध्वस्तिस्तस्येति मत्वा विशिनष्टि—आवृत्तीति ॥७०॥

एतामवस्थामापन्नो ध्यातृत्वाद्विनिवर्तते । अविद्यातिमिरान्धानां ध्येयत्वमधिगच्छति ।।७१।।
निश्चित्याचिन्त्यमेतद्यो योगिनां निलयं परम् । यं प्राप्य न निवर्तन्ते निर्वाणं परमं गताः ।।७२।।
प्रत्येकं प्राणिनां ह्येतद्ब्रह्मचक्रमवस्थितम् । असंबोधात्तु तैः सर्वैः प्राणिभिर्नानुभूयते ।।७३।।

भर्तृप्रपञ्चमतखण्डनारम्भः

वैश्वानरवरात्केचिदेवं व्याचक्षते स्फुटम् । अक्षरानन्वयात्त्याज्या व्याख्येयं साध्वपीदृशी ।।७४।।
सामर्थ्यादपि संप्राप्तो न चेदक्षरपूर्वकः । तादृङ्नोपास्य एवेति प्राहुरागमवेदिनः ।।७५।।
[१]प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि । अदृष्टशतभागोऽपि न कल्प्यो निष्प्रमाणकः ।।७६।।
यथोक्तचक्रविन्यासो न श्रुतोऽक्षरपूर्वकः । न चाप्युपासनपदं कृत्स्नेऽपि ब्राह्मणे श्रुतम् ।।७७।।
नाभिनेमिद्वयस्थाने दृष्टान्तत्वेन संमते । दार्ष्टान्तिकोक्तावात्मैव यतः साक्षादिह श्रुतः ।।७८।।
समर्पितत्वं प्राणादेः श्रूयते प्रत्यगात्मनि । भूतेषु देवतादेस्तदश्रुतं गृह्यते कथम् ।।७९।।
बहिरन्तर्विभागोऽस्य कार्यकारणता तथा । तदेतदिति वाक्येन प्रतीचोऽत्रैव वार्यते ।।८०।।
अथ योऽन्यामिति तथा भेददृष्टिनिराकृतेः । उपास्योपासनविधिर्न सम्यगिति मे मतिः ।।८१।।

एकत्वमापन्नोऽपि ध्यानमातनुयादिति चेन्नेत्याह—एतामिति । न केवलमैक्यफलं ध्यातृत्वनिवृत्तिः किंतु ध्येयत्वाप्तिरपीत्याह—अविद्येति ।।७१।।

ध्येयस्वरूपं निरूपयति—निश्चित्येति । यं ज्ञात्वा मुक्ताः सन्तो न पुनः संसरन्ति तं प्रकृताचिन्त्यं परमात्मानं ज्ञानिनामयनं प्रत्यक्तया निश्चित्य यः स्थितः स ध्येयत्वमज्ञान्प्रत्याप्नोतीत्यर्थः ।।७२।।

चक्रक्लृप्तिध्यानं तत्फलं चेति परेषां प्रक्रियां प्रदर्श्य तेषामेव प्रक्रियान्तरमाह—प्रत्येकमिति । ब्रह्मणः सर्वप्राणिहृदयसंनिधानमशेषश्रुतिस्मृतिप्रसिद्धमिति हिशब्दार्थः । यदि ब्रह्माख्यं चक्रं सर्वप्राणिनां हृदि सर्वदा स्थितं किमिति तर्हि सर्वैर्नानुभूयते तत्राऽऽह—असंबोधादिति ।।७३।।

पूर्वपक्षमुपसंहरति—वैश्वानरेति । आपातरमणीयाऽपीयं व्याख्या न स्वीकार्या श्रुत्यक्षरबाह्यत्वादित्याह—अक्षरेति । ईदृशी यथोक्तप्रक्रियाविशिष्टेति यावत् ।।७४।।

दृष्टान्तसामर्थ्यादात्मनो नानारसत्वदृष्टेरस्मदिष्टोऽर्थो न श्रुतिबाह्य इत्याशङ्क्याऽऽह—सामर्थ्यादिति । यद्यपि दृष्टान्तसामर्थ्यात्त्वदिष्टोऽर्थो भाति तथाऽपि नासौ श्रौतोऽस्मिन्प्रकरणे तद्वाचकपदाभावादपूर्वादिवाक्यविरोधाच्च । अतो नाऽऽत्मनोऽनेकरूपत्वाय दृष्टान्तः तथाचाऽऽर्थिकोऽप्यर्थो नाऽऽदेयो "यश्चार्थादर्थो न स चोदनार्थ" इति स्थितेरन्यथा चातिप्रसक्तिरित्यर्थः ।।७५।।

किंच ब्रह्मणोऽन्यदपि न नानारसं कल्पकाभावादन्यथाऽतिप्रसङ्गादित्याह—प्रमाणवन्तीति ।।७६।।

ननु न ब्रह्म समस्तादिरूपं कल्प्यते किंतु चक्रविन्यासः श्रुत्यैव श्राव्यते नेत्याह—यथोक्तेति । यत्तु निदिध्यासेदिति तत्राऽऽह—न चेति ।।७७।।

किंच दृष्टान्तस्थस्य न सर्वस्य दार्ष्टान्तिकेऽन्वयस्तद्भावविरोधादतो न ब्रह्म समस्तादिरूपमित्याह—नाभीति ।।७८।।

यत्तु चक्रनाभिस्थानीये प्रतीचि चक्रनेमिस्थानीयदेहात्मकभूतेषु च देवतादिजगदरवदर्पितमिति तत्राऽऽह—समर्पितत्वमिति ।।७९।।

प्रधानवाक्यविरोधाच्च न समस्तादिरूपं ब्रह्मेत्याह—बहिरिति ।।८०।।

इतश्च ब्रह्म न समस्तादिरूपमित्याह—अथेति । ननु देवतान्तरे दृष्टिर्निन्दितत्वान्नेष्टा ब्रह्मदृष्टिस्त्वनिन्दितोपपद्यते तत्तस्मिन्नुपास्तिविधिप्रवृत्तेः सप्रपञ्चत्वं न हि निष्प्रपञ्चमुपास्यते तत्राऽऽह—उपास्येति । न हि भेदं विनोपास्यादिप्रकारसंभवः । प्रकृते च भेददृष्टिरपोद्यते तन्नात्रोपास्तिविधिरित्यर्थः ।।८१।।

१. अत्र मीमांसावार्तिककारसम्मतिमाह—प्रमाणेति । तन्त्रवा० २-१-५ ।

शुद्धब्रह्मणः उपास्यत्वनिषेधः

अज्ञानमात्रव्यवधेर्ब्रह्मैकात्म्यफलस्य च । ब्रह्मविद्यातिरेकेण तत्प्राप्तौ नापरा क्रिया ॥८२॥
यद्वाचाऽनभ्युदितं मनुते मनसा न यत् । तदेव ब्रह्म विद्धि त्वं न त्विदं यदुपासते ॥८३॥
उपासिक्रियया व्याप्तिरब्रह्मत्वस्य लक्षणम् । श्रुत्याऽकारि यतस्तादृक्कथं ब्रह्मेत्युपास्यते ॥८४॥
दृश्यते त्वग्र्यया बुद्ध्या मनसैवेति यद्वचः । तदात्मविद्याविध्यर्थं नोपासनविधायकम् ॥८५॥
रजस्तमोनुविद्धेन यतो न ब्रह्म गम्यते । शुद्धचेतस्तया तस्माद्विद्याद्ब्रह्मान्तरात्मनि ॥८६॥
यद्वाऽनात्माभिसम्बन्धात्पूर्वमैकात्म्यनिष्ठिता । सर्वप्राणभृतां बुद्धिरित्यर्थो वचसो भवेत् ॥८७॥
एषोऽर्थो वचसस्तस्य न तूपासाविधिर्भवेत् । प्रध्वस्तभेद ऐकात्म्ये नोपासनविधिर्यतः ॥८८॥
चक्रक्लृप्तिरतोऽसाध्वी श्रुत्यादिमितिबाह्यतः । तदेतदितिवाक्यार्थो ग्राह्योऽतः सम्भवान्मितेः ॥८९॥

तस्मात्तत्सर्वमभवदिति विद्याफलोपसंहरोऽत्रेति भावान्तरम्

तदाहुरिति वाक्येन ब्रह्मविद्याप्रयोजनम् । साक्षेपं प्रागुपन्यस्तं तस्यायं निर्णयः कृतः ॥९०॥

मू.—इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच । तदेतदृषिः पश्यन्नवोचत् । तद्वां नरा सनये दँस उग्रमाविष्कृणोमि तन्यतुर्न वृष्टिम् । दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्र यदीमुवाचेति ॥१६॥

आत्मेत्येवेति सूत्रस्य व्याख्येयं सम्यगात्मनः । पञ्चभिर्ब्राह्मणैः श्रुत्याऽकारि कृत्स्नात्मबुद्धये ॥९१॥

ब्रह्म सप्रपञ्चं उपास्यत्वात्प्राणवदित्यत्रासिद्धिमुक्त्वा तदुपास्तिरात्मनो ब्रह्मत्वाय फलान्तराय वेति विकल्प्याऽऽद्यं दूषयति—अज्ञानेति । न द्वितीयः फलान्तराभावान्न हि जीवस्याविद्याध्वस्तौ ब्रह्माप्तिं विनाऽन्यदिष्टं ज्ञानादेव च तत्सिद्धेर्व्यर्था तदुपासेति चार्थः ॥८२॥

उपास्यत्वहेतोरुपास्तिप्रयुक्तफलवत्त्वोपाधिना व्याप्यत्वासिद्धिमुक्त्वा श्रुतिविरोधमाह—यदिति ॥८३॥

नन्वसंस्कृतवागाद्यगोचरत्वेनोपास्यत्वनिषेधेऽपि ब्रह्मणः संस्कृततदृगम्यत्वेनोपास्यत्वमविरुद्धमित्याशङ्क्य श्रुत्यर्थमाह—उपासीति । तादृगित्युपासिक्रियाव्याप्तमिति यावत् । उपास्यतेऽनुध्यीयतेऽङ्गीक्रियत इत्यर्थः ॥८४॥

ननु ब्रह्मोपास्तिविधिरपि क्वचिदस्ति तथाच श्रुत्यैव श्रुतेरपसारितत्वादुपास्यं ब्रह्मेति तत्राऽऽह—दृश्यते त्विति ॥८५॥

विद्याविधानस्य प्रागपहस्तितत्वात्कथमस्य तदर्थतेत्याशङ्क्याऽऽह—रज इति । ब्रह्मविद्यार्थं बुद्धिशुद्धिविध्यर्थं यथोक्तं वाक्यमित्यर्थः ॥८६॥

यथोक्ते वाक्ये शुद्धिविधिवाचकाभावात्कथं तदर्थतेत्याह—यद्वेति । विषयानुषङ्गात्प्रागेव सर्वेषां धीर्जन्ममात्रेण चिदाकारेत्येषोऽर्थो वाक्यस्येष्यतेऽन्ययेतिविशेषणानुगुण्यादित्यर्थः ॥८७॥

ब्रह्मोपास्तिविधायकत्वेन शङ्कितश्रुतेर्गत्यन्तरमुपसंहरति—एष इति ॥८८॥

ब्रह्मणः समस्तादिरूपत्वे मानाभावात्तद्विरोधाच्चायुक्ता भर्तृप्रपञ्चव्याख्येति निगमयति—चक्रेति । परपक्षस्योपेक्ष्यत्वमुक्त्वा स्वपक्षस्याऽऽदेयत्वमाह—तदिति । तदेतद्ब्रह्मापूर्वमित्यादिवाक्यस्यार्थस्तद्यथेत्यादिवाक्ये विवक्षितो ग्राह्यः पक्षान्तरायोगोक्तेरैकरस्यावेदकागमभावाच्चेत्यर्थः ॥८९॥

तस्मात्तत्सर्वमभवदिति विद्याफलमुक्तं तृतीये तदत्रोपसंह्रियत इति पक्षान्तरमाह—तदिति ॥९०॥

तद्यथेत्यादि व्याख्यायेदं वैतदित्याद्यवतारयितुं वृत्तमनुद्रवति—आत्मेतीति । विद्यासूत्रं तृतीये प्रस्तुतं तस्येयं व्याख्या पञ्चभिरतीतब्राह्मणैः श्रुत्या सम्यगेव कृता सा च त्वमर्थस्याऽऽत्मनो यत्कृत्स्नं पूर्वं तदर्थो ब्रह्म तदात्मत्वसाक्षात्कारहेतुरिति योजना ॥९१॥

**समाप्ता ब्रह्मविद्येयं कैवल्यावाप्तयेऽखिला । याममवोचत्स्वभार्यायै याज्ञवल्क्योऽतिविस्तरात् ॥९२॥**

ब्रह्मविद्यास्तुतये आख्यायिका आरभ्यते

**यथोक्तब्रह्मविद्याया इत आरभ्य भण्यते । आख्यायिकेयं स्तुत्यर्था प्रवृत्त्यङ्गतया परा ॥९३॥**
**आख्यायिकार्थं मन्त्राभ्यां व्याचष्टे श्रुतिरादरात् । श्रुतिमन्त्रस्तुतो ह्यर्थ आदेयत्वं निगच्छति ॥९४॥**
**अवाप्तपुरुषार्थोऽपि यामरक्षच्छचीपतिः । प्रत्यग्विद्यैव तेन स्यादुदारफलसाधनम् ॥९५॥**
**महता च यतोऽश्विभ्यामायासेनार्जिता पुरा । ब्रह्मविद्या ततो नास्या मुक्तौ स्यात्साधनं परम् ॥९६॥**
**निःशेषपुरुषार्थानां कैवल्योत्तमता यथा । साधनानामपि तथा तद्विद्योत्तमसाधनम् ॥९७॥**

अश्व्याथर्वणयोः यद्वृत्तं तस्य स्पष्टं विवरणम्

**अश्व्याथर्वणयोर्वृत्तं ब्रह्मविद्याप्तिकारणात् । यत्प्रागाविष्कृतिस्तस्य मन्त्राभ्यां क्रियतेऽञ्जसा ॥९८॥**
**अश्विभ्यां प्रार्थितोऽथर्वा मधुविद्यामिमां किल । तावथर्वाऽब्रवीदिन्द्रश्छिन्द्यान्मे ब्रुवतः शिरः ॥९९॥**
**अतो भयादिमां विद्यां युवाभ्यां न ब्रवीम्यहम् । तमूचतुः पुरैवाऽऽवामिन्द्रच्छेदनतः शिरः ॥१००॥**
**छित्त्वा तवाश्व्यं संधाय शिरः श्रोष्यावहे ततः । ब्रूह्यतोऽश्व्येन शिरसा मधुविद्यां विमुक्तये ॥ १ ॥**
**एवमस्त्वित्यनुज्ञाते छित्वा तस्याथ तच्छिरः । समधत्तां शिरोऽश्वस्य तेन विद्यामुवाच सः ॥ २ ॥**
**पुनश्छिन्नेऽथ शिरसि तेनेन्द्रेणाश्विनावपि । समधत्तां शिरस्तस्य विद्यां स्वशिरसाऽथ सः ॥ ३ ॥**
**शेषामवोचदश्विभ्यामृतायन्नात्मनो वचः । यत एवमतस्तस्मात्सत्यं रक्ष्यं प्रयत्नतः ॥ ४ ॥**
**इदं वै तन्मधु प्रोक्तं यत्तत्प्रकरणान्तरे । दध्यङ् ह वा आभ्यामिति श्रूयते ब्राह्मणोक्तितः ॥ ५ ॥**

व्याख्यातेऽपि सूत्रे ब्रह्मविद्या नाद्यापि स्पष्टीकृतेत्याशङ्क्याऽऽह—समाप्तेति ॥९२॥

सा सफला समाप्ता चेदुत्तरग्रन्थवैयर्थ्यमित्याशङ्क्याऽऽह—यथोक्तेति । स्तुतेर्वैफल्यमाशङ्क्याऽऽह—प्रवृत्तीति ॥९३॥

ब्रह्मविद्यां स्तोतुमानीता याऽऽख्यायिका तदर्थे वक्तव्ये तस्या इत्यादि भाष्यं व्याचष्टे—आख्यायिकार्थमिति । मन्त्रौ वक्ष्यमाणौ । श्रुत्युक्तार्थस्य मन्त्राभ्यामुक्तिरनर्थिकेत्याशङ्क्याऽऽह—श्रुतीति । आदेयत्वे स्तुत्यतिरेको हेतुरितिद्योतको हिशब्दः ॥९४॥

स्तुतिस्तर्हि कीदृशीत्याशङ्क्याऽऽह—अवाप्तेति । सैव प्रत्यग्विद्येति योज्यम् । तेन कृतकृत्यस्यापि तत्पालनेनेत्यर्थः ॥९५॥

विद्यायाः स्तुत्यन्तरमाह—महता चेति ॥९६॥

स्तुत्यन्तरमाह—निःशेषेति ॥९७॥

विद्यास्तुतिप्रकारं प्रदर्श्याऽऽख्यायिकार्थं मन्त्राभ्यामित्यत्रोक्तमनुवदति—अश्वीति ॥९८॥

मन्त्राभ्यामाविष्क्रियमाणमाख्यायिकार्थं संक्षिपन्प्रवर्ग्यप्रथमाध्यायस्थाख्यायिकाश्रुतेरर्थमाह—अश्विभ्यामित्यादिना । किलेति श्रुतिमात्रसिद्धतया स्वार्थस्य परोक्षत्वोक्तिः । ततोऽश्वीयशिरोवशादिति यावत् । इन्द्रप्रयुक्तभयाभावोऽतःशब्दार्थः । ब्राह्मणानुज्ञानन्तरं तदीयशिरश्छेदस्यानुज्ञाधीनतया निर्दोषत्वार्थोऽथशब्दः । विद्याप्रवचनोपक्रमानन्तर्यं पुनःशब्दार्थः । शिरश्छेदानन्तर्यमथशब्दार्थः । स्वशिरःसंधानानन्तरमतिहृष्टिविद्याशेषदानहेतुरथेत्युच्यते । किमर्थं ब्राह्मणो जीवितसंदेहे प्रवृत्तस्तत्राऽऽह—ऋतायन्निति । तस्य तात्पर्यमाह—यत इति । प्राणसंशयमापन्नोऽपि यस्मादृषिः सत्यं रक्षितवांस्तस्माज्जीवितादपि सत्यं रक्ष्यं श्रेयोर्थिभिरित्यर्थः । असत्यप्रसङ्गेऽपि तदकरणं प्रयत्नः ॥९९-१००-१०१-१०२-१०३-१०४॥

आख्यायिकार्थं व्याख्यायेदमित्यादि व्याचष्टे—इदमिति । यत्प्रवर्ग्यप्रकरणे मधु (१२.१) सूचितं न व्यक्तीकृतं तदिदमेव य"दियं पृथिवी"त्यादिनोक्तमित्यर्थः । कथं प्रकरणान्तरेण मधु सूचितमत आह—दध्यङ्ङिति ।

मधुब्राह्मणमेतत्तद्यत्प्रागुक्तमभूत्स्फुटम् । दध्यङ्ङाथर्वणोऽश्विभ्यां यदुवाचाऽऽत्मबोधनम् ॥ ६ ॥
अश्व्याथर्वणयोरेतत्कर्म पश्यन्नृचाऽब्रवीत् । ऋषिरार्षेयदृष्ट्यैव तदेतदभिधीयते ॥ ७ ॥

तद्वां नरा सनये इत्यादेर्विवरणं सत्यपरिपालनं मरणादपि श्रेयः

आविष्करोमि तत्कर्म युवयोरद्य हे नरौ । लाभाय सनये क्रूरं चक्रथुर्यद्रहस्यगौ ॥ ८ ॥
वृष्टेरागमनं यद्वत्स्तनयित्नुः प्रबोधयेत् । रहस्यं युवयोः कर्म तद्वदाविष्करोम्यहम् ॥ ९ ॥

मू.—इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच । तदेतदृषिः पश्यन्नवोचत् । आथर्वणायाश्विना दधीचेऽश्व्यँ शिरः प्रत्यैरयतम् । स वां मधु प्रवोचदृतायन्त्वाष्ट्रं यद्दस्रावपि कक्ष्यं वामिति ॥१७॥

अश्वस्य शिरसा वां यदवोचन्मध्वसावृषिः । दधीचोऽश्व्यं शिरश्छित्वा निकृत्यास्य शिरोऽश्विनौ ॥१०॥
संधत्तां सोऽश्वशिरसा युवाभ्यां मध्वथाब्रवीत् । ऋतायन्सत्यमात्मानं कर्तुमिच्छन्नसावृषिः ॥११॥
प्राणसंशयमापन्नस्तस्माच्चैवावसीयते । आत्मनो मरणेनापि सत्यं रक्ष्यं प्रयत्नतः ॥१२॥
आदित्यविषयं त्वाष्ट्रं मध्ववोचदथर्वणः । हे दस्रावपि कक्ष्यं यत्प्रत्यग्याथात्म्यदर्शनम् ॥१३॥
उपक्षयकरौ व्याधेर्दस्रौ स्यातामतोऽश्विनौ । न केवलं त्वाष्ट्रमेव कक्ष्यमप्यब्रवीन्मधु ॥१४॥
प्रवर्ग्याध्याययोरेवं त्वाष्ट्रज्ञानोपसंहृतिम् । मन्त्रद्वयेन कृत्वाऽथ कक्ष्यज्ञानोपसंहृतिः ॥१५॥
क्रियतेऽध्याययोरेवं मधुकाण्डं समाप्यते । श्रुतिमन्त्रोपदिष्टोऽर्थो यस्मादाद्रियते ततः ॥१६॥

मू.—इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच । तदेतदृषिः पश्यन्नवोचत् । पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः । पुरः स पक्षी भूत्वा पुरः पुरुष आविशदिति । स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयो नैनेन किञ्चनानावृतं नैनेन किञ्चनासंवृतम् ॥१८॥

पुरश्चक्रे शरीराणि द्विपदः पक्षिमानुषान् । चतुष्पदोऽथ पशवः पुरश्चक्रे स्वमायया ॥१७॥

आभ्यामित्यादि ब्राह्मणोक्तितः श्रूयते प्रथमेऽध्याये मधुब्राह्मणमिति सम्बन्धः । तर्हि तेन गतार्थत्वात्किमनेन मधुब्राह्मणेनेत्याशङ्क्याऽऽह—एतदिति । यदात्मज्ञानसाधनं मधुब्राह्मणं ब्राह्मणोऽश्विभ्यां प्रवर्ग्यसंनिधावव्यक्तमुक्तवांस्तदेतदेव यदियमित्यादिना स्फुटमुक्तमित्यर्थः । तदेतदृषिरित्यादेरर्थमाह—अश्वीति । आर्षदृष्टिः सूक्ष्मार्थाप्रकृष्टधर्मजा प्रतिभा तया मन्त्रद्रष्टा प्रकृतं कर्म शिष्याचार्यसम्बन्धं पश्यन्मन्त्रेणावोचदित्यर्थः । तत्र तद्वामित्यादिकामृचमवतारयति—तदेतदिति । तत्कर्म वृत्तमेतदृषिदृष्टं मन्त्रेणोच्यत इत्यर्थः ॥१०५–१०६–१०७॥

तद्वामित्यादिमन्त्रपदानि व्याकरोति—आविष्करोमीत्यादिना । यदवोचत्तदप्याविष्करोमीति सम्बन्धः । अथर्वणायेत्यादिमन्त्रान्तरं व्याचष्टे—दधीच इत्यादिना । प्रतिज्ञापालनं प्रज्ञावतामावश्यकमितिद्योतनार्थोऽथशब्दः । प्राणसंशयमापन्नोऽप्यात्मानं सत्यं कर्तुमिच्छन्मध्वब्रवीदिति सम्बन्धः । ऋतायन्नित्यस्य तात्पर्यं यत एवमित्यत्रोक्तमवसरप्राप्तावनुवदति—तस्माच्चेति ॥१०८–१०९–११०–१११–११२॥

त्वाष्ट्रमित्यादि व्याचष्टे—आदित्येति । यत्तदप्यवोचदिति सम्बन्धः ॥११३॥

दस्रशब्दार्थमाह—उपक्षयेति । अपिशब्दार्थमाह—नेति ॥११४॥

पुर इत्याद्यवतारयितुं वृत्तमनुवदति—प्रवर्ग्येति । अनन्तरमन्त्रयोस्तात्पर्यमाह—अथेति । त्वाष्ट्रज्ञानस्य कक्ष्यज्ञानं प्रति हेतुत्वं द्योतयितुमथेत्युक्तम् । अध्यायैर्ज्ञानद्वये निर्दिष्टे फलितमाह—एवमिति । अध्यायाभ्यामुक्तार्थस्य किमिति मन्त्राभ्यामुपसंहृतिस्तत्राऽऽह—श्रुतीति । तस्मादुपसंहारो मान्त्रो युक्त इति शेषः ॥११५–११६॥

पुर इति । अथशब्दस्तथाशब्दपर्यायः । कूटस्थस्य शरीरनिर्माणे हेतुमाह—स्वमाययेति । पक्षी सूक्ष्म-

पुरो भुक्तशरीरात्स पक्षी लिङ्गमिहोच्यते । पुरो नवशरीराणि प्राविशज्जलचन्द्रवत् ॥११८॥
कस्मात्पुरुष इति चेत्पुरुषार्थं श्रुतिः स्वयम् । स वा इत्यादिनाऽऽचष्टे सर्वैकात्म्यावबुद्धये ॥११९॥
पुरुषोऽयं भवेदात्मा यतः शेते स पूर्षु । सर्वासु तेन लोकेऽस्मिन्पुरुषोऽयमितीर्यते ॥१२०॥
परिच्छेदप्रसङ्गश्चेन्मैवं यस्मादिदं जगत् । नैनेनानावृतं किंचिन्नाव्याप्तं ह्योततन्तुवत् ॥१२१॥
नासंवृतं तथा किंचित्प्रोततन्तुवदात्मना । पूर्णत्वात्पुरुषः सोऽयं ब्रह्मैकं पुरुषस्ततः ॥१२२॥
यस्मात्परं नापरमस्ति किंचिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् ।
वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥१२३॥
आवृतं ज्ञप्तिमात्रेण सर्वमात्मीकृतं जगत् । संवृतं प्रतिषिद्धं तद्यदनात्मेव लक्ष्यते ॥१२४॥
तन्नास्ति कारणं कार्यं यन्नानेनाऽऽत्मसात्कृतम् । तन्नास्ति कारणं कार्यं यन्नानेनाऽऽत्मना ह्वुतम् ॥१२५॥

मू.—इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच । तदेतदृषिः पश्यन्नवोचत् । रूपꣳ रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय । इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दशेति । अयं वै हरयोऽयं वै दश च सहस्राणि बहूनि चानन्तानि च तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूरित्यनुशासनम् ॥१९॥

इति बृहदारण्यकोपनिषदि द्वितीयाध्याये पञ्चमं ब्राह्मणम् ॥५॥

रूपं रूपं प्रति ह्येष प्रतिरूपो बभूव ह । देहं देहं प्रविष्टः संस्तद्देहाकारतामगात् ॥१२६॥
मायाभिः प्रत्यगज्ञानैर्यदि वाऽनृतबुद्धिभिः । गम्यते पुरुरूपोऽज्ञैरेकोऽपि जलसूर्यवत् ॥१२७॥

भोगवानित्यर्थः । अज्ञस्य स्थूलदेहत्यागानन्तरं सूक्ष्मदेहप्राप्तिस्ततश्चाभिनवस्थूलशरीरप्राप्तिरिति पारंपर्यं यावदज्ञानमवश्यंभावीत्यथशब्दार्थः । वास्तवं देहयोगं व्यासेद्धुमुदाहरणम् ॥११७–११८॥

स वा अयमित्यादिवाक्यस्याऽऽकाङ्क्षापूर्वकं तात्पर्यमाह—कस्मादिति । पुरुषशब्दार्थोक्तिफलमाह—सर्वेति ॥११९॥

तात्पर्यमुक्त्वा पदानि व्याकरोति—पुरुषोऽयमिति । तदर्थं निगमयति—तेनेति ॥१२०॥

आधाराधेयनिर्देशाद्भेदं शङ्कते—परिच्छेदेति । नेत्यादिवाक्येनोत्तरमाह—मैवमिति । तद्व्याचष्टे—नाव्याप्तमिति ॥१२१॥

वाक्यान्तरस्य पुनरुक्तिं परिहरन्नर्थमाह—नेत्यादिना । दृष्टान्ताभ्यां वाक्ययोरर्थकथने पुनरुक्तिसमाधेर्व्यक्ततेति वक्तुं हिशब्दः । ओतप्रोतत्वेन सर्वं जगदात्मव्याप्तमित्यक्षराधिकरणन्यायेन स्थिते फलितमाह—पूर्णत्वादिति । ब्रह्म पूर्णं कथं पुरुषस्य तद्भावस्तत्राऽऽह—ब्रह्मेति ॥१२२॥

पूर्णमेकरसं ब्रह्मेत्यत्र मन्त्रान्तरमाह—यस्मादिति । कार्यं कारणमन्तर्बहिरिति विशेषो यत्र नास्तीत्यर्थः । कश्चिदिति च्छान्दसम् । तस्य कौटस्थ्यमाह—वृक्ष इति । स्वमहिमप्रतिष्ठिततामाह—दिवीति । फलितमाह—तेनेति ॥१२३॥

नैनेनेत्यादिवाक्यस्यार्थान्तरमाह—आवृतमिति । द्वितीयवाक्यस्य व्याख्यान्तरमाह—संवृतमिति ॥१२४॥

आवृतमित्यादि व्यतिरेकद्वारा विवृणोति–तन्नेति । संवृतमित्याद्यपि तयैव द्वारा विशदयति–तदिति ॥१२५॥

मन्त्रान्तरमादाय व्याकरोति—रूपमित्यादिना । अनेकरूपत्वं लोकवाद्यनुभवानुसारीति वक्तुं निपातद्वयम् ॥१२६॥

परस्यानेकरूपत्वे किं कारणमित्याशङ्क्योपादानं निमित्तं वा पृष्टमिति विकल्प्याऽऽद्यं प्रत्याह—मायाभिरिति । एकस्मिन्बहुवचनायोगमाशङ्क्य प्रकारभेदात्तदुपपत्तिं मत्वा पक्षान्तरं वदन्द्वितीयं निराह—यदि वेति ॥१२७॥

प्रत्यग्याथात्म्यबोधार्थं रूपं मायामयं विभोः । शास्त्राचार्यादिना नर्ते ज्ञातुं वस्त्विह शक्यते ॥ २८॥
कुतोऽस्य बहुरूपत्वमिति हेतुरिहोच्यते । युक्ता ह्यस्येति वचसा मिथ्याज्ञानैकहेतुतः ॥ २९॥
स्रजस्तत्त्वापरिज्ञानाद्युक्ता दण्डादयो यथा । प्रत्यक्तत्त्वापरिज्ञानादात्मनो हरयस्तथा ॥ ३०॥
इन्द्रियाण्येव हरयो हरणाद्विषयान्प्रति । दश तानि सहस्राणि शतानि प्राणिभेदतः ॥ ३१॥
नान्यो हेतुरविज्ञानादिन्द्रियादेरिहाऽऽत्मनि । यतोऽयमेव हरयो यावत्संख्या तदाश्रया ॥ ३२॥
अयमेवेन्द्रियत्वेन देहत्वेन च कल्पितः । तथा शतसहस्रादिसंख्याभेदेन चाप्ययम् ॥ ३३॥
नामरूपक्रियाभेदैर्यथा पूर्वमवादिषम् । अयमेव तथाऽऽरूपः कल्पितोऽविद्ययाऽद्वयः ॥ ३४॥
तदेतत्कल्पितं सर्वं सहेतु फलवज्जगत् । प्रत्यगात्मात्मकं भास्वत्प्रज्ञानघनतत्त्वकम् ॥ ३५॥

सकलोपनिषत्सारभूतं तदेतदित्यादि व्याचष्टे

निःशेषोपनिषत्सारस्तदेतदिति सांप्रतम् । उक्त्याऽऽविष्क्रियते साक्षात्करविन्यस्तबिल्ववत् ॥ ३६॥
अज्ञातं संशयज्ञातं मिथ्याज्ञातमिदं जगत् । तदेतदित्यनूद्यैतत्तत्त्वमवबोध्यते ॥ ३७॥
ब्रह्मेति वास्तवं वृत्तं तावदस्यावबोध्यते । ज्ञानात्पुराऽपि ब्रह्मैव नातो ज्ञानफलं भवेत् ॥ ३८॥

किमर्थमिदं बहुरूपत्वमित्याशङ्क्य पाठक्रमादर्थक्रमस्य बलवत्त्वात्तदस्येत्यादेरर्थमाह—प्रत्यगिति । **माया-कृतं** रूपं विनाऽपीदं स्वतो ज्ञातुं शक्यमित्याशङ्क्याऽऽह—शास्त्रेति ॥१२८॥

यदि वेत्यत्र परस्य बहुरूपत्वे निमित्तमुक्तं तदेव साधयितुमाकाङ्क्षापूर्वकं युक्ता हीत्याद्यादत्ते—कुतोऽस्येति । अस्य प्रतीचो हरिशब्दितानीन्द्रियाणि ज्ञानात्प्रागज्ञानतः सम्बद्धानि स च सम्बन्धः सम्बन्धीन्द्रियोत्थमिथ्याज्ञानादेकस्माद्धेतोरात्मनो बहुरूपभाक्त्वे भवति निमित्तमिति हेतुवचो व्याचष्टे—मिथ्येति ॥१२९॥

अज्ञानादिन्द्रियसम्बन्धं प्रतीचो दृष्टान्तेनाऽऽह—स्रज इति ॥१३०॥

हरीणामात्मसम्बन्धेऽज्ञाननिबन्धनेऽपीन्द्रियसम्बन्धे किमायातमित्याशङ्क्याऽऽह—इन्द्रियाणीति । **शता** दशेत्यस्यार्थमाह—दशेति । तान्येकादशेत्यङ्गीकारविरोधमाशङ्क्याऽऽह—प्राणीति ॥१३१॥

युक्ता हीति सम्बन्ध उक्तस्तत्कथमयमित्यादिना तद्विरुद्धं तादात्म्यमुच्यते तत्राऽऽह—नान्य इति । **अज्ञान-**विलासत्वादिन्द्रियाद्यात्ममात्रं न हि सम्बन्धोऽपि तत्र वास्तवोऽस्तीत्यर्थः । तथा संख्यासंख्येययोरात्मगतत्वेन तन्मात्रत्वाद्युक्तं तादात्म्यवचनमित्यर्थः ॥१३२॥

इन्द्रियादेरज्ञानजत्वे कारणाज्ञानमात्रत्वं युक्तं नाऽऽत्मत्वमित्याशङ्क्य तत्तदिन्द्रियादिरूपेणाऽऽत्मन एवाविद्यया कल्पितत्वाद्युक्तमिन्द्रियादेस्तन्मात्रत्वमित्याह—अयमेवेति ॥१३३॥

अद्वयोऽप्यात्मा देहाद्यात्मना कल्पितोऽविद्ययेत्युक्तं दृष्टान्तेन स्पष्टयति—नामेति । यथाऽव्याकृतप्रक्रियादौ नामाद्यनात्मप्रपञ्चात्मना प्रत्यगात्मैव कल्पित इत्यवादिष्म तथैवासावरूपोऽद्वयोऽप्यविद्यया देहाद्यात्मना कल्पित इत्यर्थः ॥१३४॥

प्रतीचः स्वाविद्यया जगदात्मना कल्पितत्वे सर्वस्य तन्मात्रत्वं फलतीत्युपसंहरति—तदेतदिति ॥१३५॥

वाक्यार्थव्याख्यार्थमित्थं भूमिकां गतेन सन्दर्भेणाऽऽरचय्य तत्परस्य तदेतदित्यादिवाक्यस्य तात्पर्यमाह—निःशेषेति ॥१३६॥

पदद्वयस्यार्थमाह—अज्ञातमिति । कार्यकारणात्मकं त्रिविधं जगत्तच्छब्देनानूद्य तस्य वास्तवं रूपमेतच्छब्देनोक्त्वा सामानाधिकरण्यादैकरस्यं द्योत्यत इत्यर्थः ॥१३७॥

तदेव तत्त्वं दर्शयन्ब्रह्मशब्दार्थमाह—ब्रह्मेतीति । ब्रह्मत्वस्य ज्ञानफलत्वेन तत्साध्यत्वात्कथं सर्वस्य तत्त्वं ब्रह्मेति तत्राऽऽह—ज्ञानादिति । पूर्वमपि ज्ञानोत्पत्तेः सर्वं ब्रह्मैव सामानाधिकरण्यश्रुतेरतो न तस्य ब्रह्मत्वं ज्ञान-कार्यमित्यर्थः ॥१३८॥

अपूर्वमिति कार्यत्वनिषेधायाभिधीयते । कारणत्वनिषेधाय तथाऽनपरगीरियम् ।।३९।।
अनन्तरमिति तयो रन्ध्रस्य प्रतिषेधनम् । कार्यकारणयोर्बाह्यमबाह्यमिति वार्यते ।।४०।।
सत्ता वाऽनन्तरगिरा ब्रह्मणः प्रतिषिध्यते । विशेषोऽबाह्यशब्देन ततो वाक्यार्थरूपकम् ।।४१।।
नाऽऽत्मनोऽन्यत्र संभाव्यमपूर्वादि यदीरितम् । ब्रह्माऽऽत्मैवेत्यतो वक्ति श्रुतिरैकात्म्यसिद्धये ।।४२।।
पारोक्ष्यप्रतिषेधार्थं ब्रह्माऽऽत्मैवेति भण्यते । ब्रह्मैवाऽऽत्मेति च तथा संसारित्वनिवृत्तये ।।४३।।
भिन्नं ब्रह्मापरिज्ञानात्संसारित्वं तथाऽऽत्मनः । तत्त्वज्ञानात्तमोध्वस्तौ नेतीत्यात्माऽवशिष्यते ।।४४।।
सर्वोऽनुभव एवायमतः सर्वानुभूः परः । कार्त्स्न्यात्सर्वो भवेदेष चिन्मात्रत्वात्तथाऽनुभूः ।।४५।।
इतीत्युक्तपरामर्शो वेदाज्ञा चानुशासनम् । कर्तव्यमेतद्विज्ञानमिति वेदानुशासनम् ।।४६।।
अस्यातिलङ्घने दोषः संसारानर्थसङ्गतिः । कुर्वतश्च महाल्लाँभ आत्मनः कृतकृत्यता ।।४७।।

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके द्वितीयाध्यायस्य
पञ्चमं ब्राह्मणम् ।।५।।
श्लोकानामादितः समष्टचङ्काः–५६२५

## अथ द्वितीयाध्याये षष्ठं ब्राह्मणम्

स्तुत्यर्थं ब्रह्मविद्याया ब्रह्मविद्वंश उच्यते । जपोऽयं ब्रह्मविज्ञानजन्मने चोद्यते श्रुतौ ।। १ ।।
पुंमत्यूहोत्थिताशङ्कानिवृत्त्यर्थं यथोदितम् । ब्रह्मज्ञानस्य वा वंशो यत्नाच्छ्रुत्याऽयमुच्यते ।। २ ।।

अपूर्वमित्यादि व्याचष्टे—अपूर्वमिति ।।१३९।।

कार्यकारणयोर्ब्रह्मणो भेदेन स्थितिशङ्कां निरस्यति—अनन्तरमिति । तयोरन्वयव्यतिरेकभावश्चेदभावस्तर्हीत्याशङ्क्याऽऽह—कार्येति । बाह्यपदेनाभावो विवक्षितः ।।१४०।।

ब्रह्मणो निःसामान्यत्वं निश्चेतुमनन्तरपदमित्यर्थान्तरमाह—सत्तेति । सामान्यं हि भेदापरपर्यायमन्तरमपेक्षते ब्रह्म त्वनन्तरमतो न सामान्यमित्यर्थः । निर्विशेषत्वं वक्तुमबाह्यपदमित्याह—विशेष इति । कार्यकारणयोरन्वयव्यतिरेकभावपरिहाराय निःसामान्यविशेषब्रह्ममात्रत्वे तदैकरस्यं फलतीत्याह—तत इति ।।१४१।।

अस्तु यथोक्तलक्षणं ब्रह्म प्रतीचस्तु किमायातमित्याशङ्क्योत्तरवाक्यमवतारयति—नेत्यादिना ।।१४२।।

पाठक्रममतिक्रम्यानुवदन्नात्मब्रह्मणोरन्योन्यैक्यमत्रेष्टमिति मन्यते किमर्थमन्योन्यैक्यबोधनमित्यपेक्षायामाह—पारोक्ष्येति ।।१४३।।

कथं तर्हि तयोर्ब्रह्मात्मस्थयोश्चैतन्यवन्निवृत्तिरित्याशङ्क्याज्ञानजत्वं तावदाह—भिन्नमिति । तथेत्यपरिज्ञानमनुकर्षति पारोक्ष्यादेरज्ञानजत्वफलमाह—तत्त्वेति ।।१४४।।

सर्वानुभूरित्यस्यार्थमाह—सर्व इति । कथं परस्य सर्वत्वमनुभवत्वं च तदाह—कार्त्स्न्यादिति ।।१४५।।

इत्यनुशासनमित्यस्यार्थमाह—इतीत्युक्तेति । वाक्यार्थमाह—कर्तव्यमिति ।।१४६।।

ऐक्यज्ञानं संन्यासपूर्वकश्रवणादिद्वारा कार्यमितिवेदाज्ञातिलङ्घनपालनयोर्दोषगुणौ प्रवृत्त्यर्थत्वेनाऽऽह—अस्येति ।।१४७।।

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां द्वितीयाध्यायस्य पञ्चमं मधुब्राह्मणम् ।।५।।

ब्रह्मविद्यां संक्षेपविस्तराभ्यां प्रतिपाद्य वंशब्राह्मणतात्पर्यमाह—स्तुत्यर्थमिति । परमर्षिपरिगृहीता हि ब्रह्मविद्या तेन सा महाभागधेयेति स्तुतिरत्र विवक्षितेत्यर्थः । मन्त्रश्चेत्यादिभाष्योक्तमर्थान्तरमाह—जपोऽयमिति ।।१।।

प्रकृतब्रह्मज्ञानस्य पुरुषबुद्ध्युत्प्रेक्षितत्वशङ्कानिवृत्त्यर्थं ब्राह्मणमित्यर्थान्तरमाह—पुंमतीति । वंशोपन्यासस्य यत्नो बहुशो वचनम् ।।२।।

यस्यानुशासनं तस्य स्वयम्भोः प्रतिपत्तये । पौतिमाष्यादिको ग्रन्थः श्रुत्याऽथ प्रतिपाद्यते ॥ ३ ॥
अग्रात्प्रभृति वंशोऽयमावेदब्रह्ममूलतः । भिन्नहेतुनिषेधार्थं स्वयम्भु ब्रह्म शब्द्यते ॥ ४ ॥

मू.—अथ वँ्शः पौतिमाष्यो गौपवनाद्गौपवनः पौतिमाष्यात्पौतिमाष्यो गौपवनाद्गौपवनः कौशिकात्कौशिकः कौण्डिन्यात्कौण्डिन्यः शाण्डिल्याच्छाण्डिल्यः कौशिकाच्च गौतमाच्च गौतमः—॥१॥

मू.—आग्निवेश्यादाग्निवेश्यः शाण्डिल्याच्चानभिम्लाताच्चानभिम्लात आनभिम्लातादानभिम्लात आनभिम्लातादानभिम्लातो गौतमाद्गौतमः सैतवप्राचीनयोग्याभ्याँ्सैतवप्राचीनयोग्यौ पाराशर्यात्पाराशर्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्च गौतमाच्च गौतमो भारद्वाजाद्भारद्वाजः पाराशर्यात्पाराशर्यो वैजवापायनाद्वैजवापायनः कौशिकायनेः कौशिकायनिः—॥२॥

मू.—घृतकौशिकाद्घृतकौशिकः पाराशर्यायणात्पाराशर्यायणः पाराशर्यात्पाराशर्यो जातूकर्ण्याज्जातूकर्ण्य आसुरायणाच्च यास्काच्चासुरायणस्त्रैवणेस्त्रैवणिरौपजन्धनेरौपजन्धनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाज आत्रेयादात्रेयो माण्टेर्माण्टिर्गौतमाद्गौतमो गौतमाद्गौतमो वात्स्याद्वात्स्यः शाण्डिल्याच्छाण्डिल्यः कैशोर्यात्काप्यात् कैशोर्यः काप्यः कुमारहारितात्कुमारहारितो गालवाद्गालवो विदर्भीकौण्डिन्याद्विदर्भीकौण्डिन्यो वत्सनपातो बाभ्रवाद्वत्सनपाद्बाभ्रवः पथः सौभरात्पन्थाः सौभरोऽयास्यादाङ्गिरसादयास्य आङ्गिरस आभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीच आथर्वणाद्दध्यङ्ङाथर्वणोऽथर्वणो दैवादथर्वा दैवो मृत्योः प्राध्वँ्सनान्मृत्युः प्राध्वँ्सनः प्रध्वँ्सनात्प्रध्वँ्सन एकर्षेरेकर्षिर्विप्रचित्तेर्विप्रचित्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातनात्सनातनः सनगात्सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयंभु ब्रह्मणे नमः—॥३॥

इति बृहदारण्यकोपनिषदि द्वितीयाध्याये षष्ठं ब्राह्मणम् ॥६॥
इति बृहदारण्यकोपनिषदि द्वितीयोऽध्यायः ॥२॥
इति बृहदारण्यकक्रमेण चतुर्थोऽध्यायः ॥४॥

यस्मादपरतन्त्रोऽयं वेदात्मा ब्रह्म भण्यते । मनोवाक्कर्मभिस्तस्माद्भक्त्या तस्मै नमः सदा ॥ ५ ॥

अनन्तरब्राह्मणेनावान्तरसम्बन्धं दर्शयन्नर्थान्तरमाह—यस्येति । परस्य वेदात्मनो यस्यैक्यज्ञानात्मकमनुशासनं तत्प्रतिपत्त्यर्थमुत्तरं ब्राह्मणमित्यर्थः ॥३॥

कथं तत्प्रतिपत्त्यर्थत्वमस्येति तत्राऽऽह—अग्रादिति । शिष्यावसानोपलक्षणभूतात्पौतिमाष्यादारभ्य तदादिर्वेदाख्यब्रह्ममूलपर्यन्तोऽयमाचार्यपरंपराक्रमो वंश इत्युच्यते तेन ब्रह्मपर्यन्तत्वादस्य तत्प्रतिपत्तिरत्र विवक्षितेत्यर्थः । प्रथमान्तः शिष्यः पञ्चम्यन्तो गुरुरिति मत्वा ब्रह्मणः स्वयंभुविशेषणस्य कृत्यमाह—भिन्नेति । परस्य वेदद्वारा सूत्रभावमापन्नस्यास्मदादीनामिव भिन्नाचार्यादिप्रयुक्तं विज्ञानमिन्येतन्निषेद्धुं विशेषणमित्यर्थः ॥४॥

कारणोक्तिपूर्वकं त्रिविधं प्रह्वीभावं नमःशब्दार्थं दर्शयन्ब्रह्मणे नम इत्यस्यार्थमाह—यस्मादिति । अयं हि वेदस्वभावश्चिद्धातुः सत्तास्फूर्त्योः स्वतन्त्रो यतोऽनुभूयतेऽतोऽसौ ब्रह्मैवोच्यते स्वतन्त्रवस्त्वन्तराभावादेतेन

**शतानि दश पञ्चैव श्लोकाः सप्तदशापरे । श्लोकसंख्याऽत्र विज्ञेया चतुर्थाध्यायवार्तिके ॥**

**इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके द्वितीयाध्यायस्य**
**षष्ठं ब्राह्मणम् ॥६॥**

**इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीसुरेश्वराचार्यविरचिते बृहदारण्य-**
**कोपनिषद्भाष्यवार्तिके द्वितीयोऽध्यायः ॥२॥**

**उपनिषत्क्रमेण चतुर्थोऽध्यायः ॥४॥**

**वेदानामनित्यत्वमपि प्रत्युक्तं तस्मात्तस्मै ब्रह्मणे वेदात्मने श्रेयोर्थिभिस्त्रिधाऽपि नमो भक्तिश्रद्धाभ्यां सदा कार्यमित्यर्थः । तदनेनाध्यायेन ब्रह्मविद्यासूत्रं ब्राह्मणपञ्चकेन प्रपञ्चितं विद्याविषयस्य मधुकाण्डस्योत्प्रेक्षितत्वशङ्काऽपि पराकृता भवति ॥५॥**

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां द्वितीयाध्यायस्य
षष्ठं वंशब्राह्मणम् ॥६॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दभगवत्पूज्यपादशिष्य-
श्रीमद्भगवदानन्दज्ञानकृतायां श्रीमत्सुरेश्वरवार्तिकटीकायां
शास्त्रप्रकाशिकाख्यायां द्वितीयोऽध्यायः ॥२॥

श्लोकानामादितः समष्टयङ्काः–५६३०

## प्रकाशिताः ग्रन्थाः

### Published Books

१. **वैदिकसम्प्रदायान्तर्गता औपनिषद दश शान्ति** ( *SH )
आचार्य श्री महेशानन्द गिरि
आकार—२०×३०/१६ पृष्ठ—६+७५
मूल्य : २.५०

२. **मानसोल्लास-माधुरी** (SH) आचार्य श्री महेशानन्द गिरि
( श्रीदक्षिणामूर्तिस्तोत्रवार्तिक )
आकार—२०×३०/१६ पृष्ठ—५८+४१९
मूल्य : २०.००

३. **साधनसंग्राम-१** ( H ) आचार्य श्री महेशानन्द गिरि
आकार—२०×३०/१६ पृष्ठ—८+४८०
मूल्य २०.००

४. **साधनसंग्राम—२** ( H ) आचार्य श्री महेशानन्द गिरि
आकार—२०×३०/१६ पृष्ठ—८+९३
मूल्य : ५.००

५. **श्वेताश्वतरोपनिषद्** (SH) आचार्य श्री महेशानन्द गिरि
आकार—२०×३०/१६ पृष्ठ—२०+५१२
मूल्य : २०.००

६. **ईशावास्योपनिषद्** ( SH ) आचार्य श्री महेशानन्द गिरि
आकार—२०×३०/१६ पृष्ठ—२४
मूल्य : १.००

७. **कठोपनिषद्-१** ( SH ) आचार्य श्री महेशानन्द गिरि
( प्रथमाध्याय पर्यन्त )
आकार—२३×३६/१६ पृष्ठ—२४+३२०
मूल्य : २०.००

८. **स्तुतिकदम्बः** ( S ) सं० आचार्य श्री महेशानन्द गिरि
( स्तोत्रसंग्रहः )
आकार—२०×३०/१६ पृष्ठ—४+११५
मूल्य : ३.००

९. **मानवता की ओर** ( H ) आचार्य श्री महेशानन्द गिरि
आकार—२०×३०/१६ पृष्ठ—१०+२३५
मूल्य : १५.००

१०. **व्यक्तित्व का विकास** (H) आचार्य श्री महेशानन्द गिरि
आकार—२३×३६/१६ पृष्ठ—६+९५
मूल्य : ५.००

११. **गीता प्रवेश-१** ( H ) आचार्य श्री महेशानन्द गिरि
आकार—२२×३२/१६ पृष्ठ—१२+२३०
मूल्य : १५.००

१२. **रुद्राध्याय** ( SH ) आचार्य श्री महेशानन्द गिरि
आकार—२०×३०/१६ मूल्य : पृष्ठ—

13. **Our Dharma** ( *E )
Shri Maheshananda Giri
Size—23×36/16 Pages—96
Price : 2.50

14, **Jivana Yajna** ( E )
Shri Maheshananda Giri
Size—20×30/16 Pages—13+115
Price : 10.00

१५. **उपदेशसाहस्री** ( S ) सं० श्री एस. सुब्रह्मण्यशास्त्री
आकारः—२०×३०/८ पृष्ठाः—३६+१८४
मूल्यम् : ३०.००

१६. **सिद्धान्तबिन्दुः** ( S ) सं० श्री एस. सुब्रह्मण्यशास्त्री
आकारः—२०×३०/८ पृष्ठाः—२२+१७८
मूल्यम् : ३०.००

१७. **शतश्लोकी** ( S ) सं० श्री एस. सुब्रह्मण्यशास्त्री
आकारः—२०×३०/८ पृष्ठाः—१२+६०
मूल्यम् : १०.००

१८. **पञ्चीकरणम्** ( S ) सं० श्री एस. सुब्रह्मण्यशास्त्री
आकारः—२०×३०/८ पृष्ठाः—१२+४८
मूल्यम् : १०.००

१९. **प्रकरणाष्टकम्** ( S ) सं० श्री एस. सुब्रह्मण्यशास्त्री
आकारः—२०×३०/८ पृष्ठाः—१८८
मूल्यम् : ३०.००

२०. **प्रकरणद्वादशी** ( S ) सं० श्री एस. सुब्रह्मण्यशास्त्री
आकारः—२०×३०/८ पृष्ठाः—७००
मूल्यम् : ८५.००

२१ **उपनिषद्भाष्यम्-१** ( S ) सं० श्री एस. सुब्रह्मण्यशास्त्री
( आदितः ८ सटीकोपनिषदाम् )
आकारः—२२×३६/८ पृष्ठाः—३४+७४६
मूल्यम् : १५०.००

२२. **बृहदारण्यकोपनिषत्सम्बन्धभाष्यवार्तिकम्** ( S )
सं० श्री एस. सुब्रह्मण्यशास्त्री
आकारः—२३×३६/८ पृष्ठाः—२२४
मूल्यम् : ३०.००

२३. **बृहदारण्यकोपनिषद्भाष्यवार्तिकम्-१** ( S )
( प्रथमद्वितीयाध्यायसन्दृब्धम् )
सं० श्री एस. सुब्रह्मण्यशास्त्री
आकारः—२३×३६/८ पृष्ठाः ८००
मूल्यम् : १५०-००

२४. **उपनिषद्भाष्यम्-२** सं० श्री एस. सुब्रह्मण्यशास्त्री
( **छान्दोग्योपनिषदः** )
आकारः २२×३६/८ पृष्ठाः ६६०
मूल्यम् : ११५.००

* S = Sanskrit, H = Hindi, E = English

## प्रकाश्यमानाः ग्रन्थाः

**Forthcoming Publications**

१. **बृहदारण्यकोपनिषद्भाष्यवार्तिकम्–२** ( S )
सं० श्री एस. सुब्रह्मण्यशास्त्री
श्रीमत्सुरेश्वराचार्यकृतवार्तिकमिदं श्रीमदानन्दगिरिविरचितशास्त्रप्रकाशिकाव्याख्योपेतं खण्डद्वये समाप्तिमेति ।

२. **उपनिषद्भाष्यम्–३** ( S ) : सं० श्री एस. सुब्रह्मण्यशास्त्री
( बृहदारण्यकोपनिषदः )
**बृहदारण्यकोपनिषत्** — शाङ्करभाष्यतदीयआनन्दगिरिटीकोपेता ।

३. **ब्रह्मसूत्रभाष्यम्-१** ( S ) : सं० श्री एस. सुब्रह्मण्यशास्त्री
( भामतीप्रस्थानस्य )
वाचस्पतिमिश्रविरचित**भामती**–तदीयटीका**कल्पतरु**-तदीयटीका**परिमल**ोपेतम् ।

४. **ब्रह्मसूत्रभाष्यम्-२** ( S ) : सं० श्री एस. सुब्रह्मण्यशास्त्री
पद्मपादाचार्यविरचित**पञ्चपादिका**–तट्टीका**पञ्चपादिकाविवरण**–तट्टीका-**ऋजुविवरण**संवृत्तम् ।

५. **ब्रह्मसूत्रभाष्यम्-३** ( S ) : सं० श्री एस. सुब्रह्मण्यशास्त्री
( उभयप्रस्थानटीकानाम् )
अनुभूतिस्वरूपाचार्यविरचित**प्रकटार्थविवरण** — आनन्दगिरिविरचित**न्यायनिर्णय**—रामानन्दयतिविरचित**रत्नप्रभा**—चित्सुखाचार्यविरचित**भाष्यभावप्रकाशिके**तिटीकाचतुष्टयालङ्कृतम् ।

६. **श्रीमद्भगवद्गीता–१**·२ ( S )
सं० श्री एस. सुब्रह्मण्यशास्त्री
श्रीशाङ्करभाष्यं, तदीयटीकाभिस्सह, **अथ चान्य**-प्राचीनाचार्यविरचिताभिष्टीकाभिस्साकं खण्डद्वये ।

७. **उपदेशसाहस्री** ( H ) : श्री गजानन्द शास्त्री "मूसलगाँवकर" कृत मूलग्रन्थ व आनन्दगिरि टीका का विस्तृत अनुवाद प्रस्तुत किया जायेगा ।

अन्येऽपि बृहल्लघुकायाः शाङ्करसम्प्रदायस्य ग्रन्थाः
व्याख्योपव्याख्याभिस्सह प्रकटीक्रियन्ते

*Advaita Grantha Ratna Manjusha Ratna–23—*



**Shri Sureshvaracharya's**

**Brihadaranyakopanishad–**

# BHASHYAVARTIKAM

**VOLUME–1**

( I & II Chapters )

*With the Commentary*

***SHASTRAPRAKASHIKA***

*of*

**Shri Aanandagiri Aacharya**

*Adorned with*

Brihadaranyakopanishad text

Under directions from

*Shri Swami Maheshananda Giri Maharaj*

Mahamandaleshvar Pontiff of Dakshinamurti Peetha

Edited with introduction notes, etc.

*by*

Panditaraja Shastraratnakara etc.

**SHRI S. SUBRAHMANYA SHASTRI M. A.**

**Mahesh Research Institute**

अद्वैतग्रन्थरत्नमञ्जूषायाः २३ रत्नम्—




बृहदारण्यकोपनिषदा सह

श्रीमच्छङ्करभगवत्पादाचार्यशिष्यपदवाक्यप्रमाणपारावारपारीण–

**श्रीमत्सुरेश्वराचार्य–**

विरचितं

काण्वशाखीय–

# बृहदारण्यकोपनिषद्भाष्यवार्तिकम्

खण्डः–१

( प्रथमद्वितीयाध्यायात्मकम् )

सर्वतन्त्रस्वतन्त्र–

**श्रीमदानन्दगिर्याचार्य–**

प्रणीत–

**शास्त्रप्रकाशिका–**

टीकासमलङ्कृतं

*श्रीदक्षिणामूर्तिपीठाधीश्वराचार्यमहामण्डलेश्वर—*

**श्रीमन्महेशानन्दगिरिमहाराजानां**

निर्देशेन

*पण्डितराजशास्त्ररत्नाकरादिपदभाजा*

**श्री एस० सुब्रह्मण्यशास्त्रिणा**

महेश – अनुसन्धान – संस्थान – निदेशकेन

पाठभेदटिप्पण्यादिभिः संशोध्य

सम्पादितम्

**महेश-अनुसन्धान-संस्थानम्**

*Published by*

**Mahesh Research Institute**
**Shri Shankar Kul**
MOUNT ABU-307 501 ( India )
Phone : 146

**Mahesh Research Institute**
**Shri Dakshina Murti Matha**
D. 49/9 Mishra Pokhara
VARANASI-221 001 (India)

Copies and information my be had of—

**Mahesh Research Institute**
**Shri Dakshina Murti Matha**
D. 49/9 Mishra Pokhara
**VARANASI-221 001 ( India )**

भगवत्पादाब्दः ११९४
वैक्रमाब्दः २०३९
खैष्टाब्दः १९८२



**first Impression**

**Pric** 200-[illegible]

*Printed by*
AANAND KANAN PRESS
Ck. 36/20 Dhundhiraj
**VARANASI-221 001**

## निदेशिका

श्रीमत्परमहंसपरिव्राजकाचार्य-पदवाक्यप्रमाणपारावारपारीण-शमदमोपरतितितिक्षासमाधानश्रद्धाचरणनिष्ठ-
ब्रह्मविद्वरिष्ठ-यतिचक्रवर्तित्वाद्यनाद्यनवच्छिन्नगुरुपरम्पराप्राप्तब्रह्मात्मैक्यज्ञानवैभवानुभवप्रद्योतितान्तः-
करण-वेदान्तमार्गप्रवर्तक-श्रीकाशीक्षेत्रस्थितश्रीकेवलाद्वैतव्याख्यानसिंहासन-दक्षिणामूर्तिपीठाधीश्वर-
शङ्करधर्मसंस्थापनाचार्य-श्रीशङ्करभगवत्पादारविन्दोपासक-तोटकाचार्यानन्दगिरि-परम्पराप्राप्त-
महामण्डलेश्वरस्थानवैभव-सर्वतन्त्रस्वतन्त्र-अनन्तश्रीविभूषित-नृसिंहगिरिस्वामि-करकमल-
सञ्जात-श्रीदक्षिणामूर्ति-निरञ्जनपीठाचार्य-**महेशानन्दगिरि**महामण्डलेश्वरस्वामिभिः
क्रियन्ते नारायणस्मृतयः

वेदान्तमञ्जूषायाः त्रयोविंशं रत्नं प्रकाश्यत इति ज्ञात्वा हर्षिता वयम्। घोरेऽस्मिन् कलौ श्रीशङ्कर-भगवत्पूज्यपादप्रदर्शितं मार्गं विहाय नान्यमुपायं शान्तिकरमुत्पश्यामः। मुमुक्षूणां कृते तु पूर्वमपि नासीद्ब्रह्म-ज्ञानादृते किमप्युपायान्तरम्। वैदिककर्मणा तु आपेक्षिकी शान्तिरासीदपि। अधुना तु द्रव्यादेरनुपलभ्यता, वर्णाश्रमादिसाङ्कर्यादधिकारिणोऽप्यनुपलभ्यता जरीजागर्ति। तस्माद्भाष्यकारप्रदर्शितं विधुराधिकरणमनुसृत्य पुरुषमात्रसम्बन्धिभिर्जपोपवासदेवताराधनादिभिरन्तःकरणस्यापि संशुद्धिः सम्भवति। तदनुकूलस्तोत्रदेवमन्दिरा-दीनामपि सौलभ्यं कृतं शङ्करभगवत्पूज्यपादैः, तदनुसारिभिश्च दशनामसम्प्रदायाचार्यैस्तत्र तत्र तदा तदा। एवं बहिरङ्गं संसाध्य निर्गतनिखिलकल्मषान्तःकरणैस्तु बाह्याभ्यन्तरिकालिङ्गसलिङ्गपारिव्राज्यं गृहीत्वा सभाष्यं सवार्तिकं प्रस्थानत्रयं श्रोतव्यम्। संशयविप्रतिपत्तिनिवारणाय प्रकरणग्रन्थानां लघुचन्द्रिकापर्यन्तानां विचारणं विधेयम्। कृते चित्तैकाग्र्येण श्रवणमनने पर्याप्ते ब्रह्मवेदने। प्रारब्धदोषतो नानुभूयते जीवमुक्ति-श्चेज्जीवन्मुक्तिमिच्छता प्रबलदोषनिवृत्त्यै संयमाभ्यासादिकमेकान्तसेवनादिकं च कार्यम्। अल्पदोषनिवृत्त्यै तु वेदान्तपाठनं शिष्यबोधायेति। तत्र च शिष्यसन्देहनिवृत्तियत्नजनितेनापूर्वेण जीवन्मुक्तेर्लाभो भविता। अयमेव राजमार्गः श्रेयस्करः शान्तिप्राप्त्यै।

किन्तु ग्रन्थानामभावे कथं पठनं पाठनं वा सिद्ध्येदिति भृशं चिन्तयन्तः खिन्ना वयं भगवन्तं भूतभावनं शङ्करं प्रार्थितवन्तः। भिक्षुभिरस्माभिर्द्रव्यानर्हैर्न तादृशी चिन्ता कार्येति श्रीदक्षिणामूर्तिना **विष्णुदासमेहताख्यः** कश्चिच्छ्रेष्ठिप्रवरः प्रेरितः। तन्मुखात् सर्वं प्रकाशनं स्वकीयद्रव्येण करिष्यामीति प्रतिज्ञां श्रुत्वा निश्चिन्ता अभूम। पारिव्राज्यधर्ममनुसरद्भिर्नैकत्र स्थातव्यमस्माभिः। सम्पादनं तु नैवं भवेदिति कृत्वा पण्डितराजादि-विरुदान्विता एकविंशतिविक्रमशताब्दे वेदान्तज्ञाने मार्तण्डवदुद्भासिताः शास्त्रिप्रवराः **श्रीसुब्रह्मण्यशास्त्रिणो**ऽस्य सम्पादने संयोजिताः। अल्पीयसैव कालेन महता श्रमेण सत्यपि वार्धक्ये श्रीशङ्करानुरागमात्रेण कृतसङ्कल्पाः त्रयोविंशं रत्नं प्रकटयन्तीति प्रमोदान्वितास्सञ्जाता वयमपि। प्रार्थये शङ्करं यच्छास्त्रिसुब्रह्मण्यमहोदयाः जीवन्मुक्तिसुखं सम्प्राप्नुयुरिति।

विशेषोऽयमस्मिन् ग्रन्थरत्ने—सर्वतन्त्रस्वतन्त्राणां भगवत्पादशिष्येषु प्रधानानां श्रीमत्सुरेश्वराचार्याणां कृतिषूत्तमस्य वेदान्तेषु सारतमस्य सकलवेदार्थानां न्यायपूर्वकनिर्धारणात्मकस्य वार्तिकामृतमित्यन्वर्थनाम-धेयस्य महाग्रन्थस्य श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकस्य श्रीमदानन्दगिरिटीकायुतस्य षडध्यायात्मकस्य प्रथमखण्डात्मकत्वेन प्रथमद्वितीयाध्यायौ सन्दृब्धौ। वार्तिककाराणां व्याख्यासरणिः विस्तृताऽपि सरला। श्रीमदानन्दगिर्याचार्याणां टीका शास्त्रप्रकाशिका प्रभाकरमीमांसान्यायबहुलाऽपि सरला सर्वत्रैव विद्वन्मनांसि समाकर्षन्ती परवादान् धुन्वन्ती दरीदृश्यते। अस्य ग्रन्थरत्नस्य गाम्भीर्यं पूर्वपुण्यपुञ्जेनैवानुभवितुं शक्यते। वेदान्ते श्रद्धालवः समेऽपीमं सटीकवार्तिकामृतमास्वाद्य "अत्र ब्रह्मसमश्नुत" इति प्रकृतोपनिषत्सूचितरीत्या श्रीसुरेश्वराचार्यवदेव जीवन्त एवामृता भूयासुरित्याशास्महे।

एषां समेषां ग्रन्थानां आङ्गलहिन्दीभाषानुवादोऽपि प्रकाशयिष्यते सत्वरमेव। तेनासंस्कृतज्ञा अपि श्रवणमननादिसिद्धिं कृत्वा प्राप्स्यन्ति शान्तिं ज्ञानं च।

ग्रन्थप्रकाशने **शारदानन्द**शास्त्रिमहोदया अस्मदन्तेवासिनो बहुश्रमं कृतवन्तः। तत्सर्वं 'भक्तिं मयि परां कृत्वा मामेवैष्यती'ति शास्त्रेण ब्रह्मानुभूतेरुपायत्वेन तैरनुष्ठितोऽपि पाठकानधमर्णीकरोति।

उमारमणं रमारमणं च प्रार्थये यत्समेषां बुद्धौ स्फुरतु ब्रह्मात्मैक्यम्। येषां गृहे च शाङ्करवचनरूपा ग्रन्थाः स्थिता मन्ये तेषां गृहाद्भूतग्रहपिशाचगदाकालमृत्युशान्त्यभावादीनि च निर्गच्छेयुरिति।

वैक्रमाब्दे एकोनचत्वारिंशदुत्तरद्विसहस्रतमे श्रीशङ्कराविर्भावपर्वणि। **—नारायणस्मृतयः**

# PREFACE

Vedānta is based mainly on the mystic thoughts of the Upaniṣads, made intellectually comprehensive and impeccable by Śaṅkara and Sureśwara. Though Advaita had been taught from the dawn of human civilization, it was only Śaṅkara who made it the foundation and structure of neo-Hinduism as the post-Buddhist Hinduism is called by Western writers. The complexity of Vedic Karma had been the main cause of Buddhist success, rather than its supposed new message. Buddha taught the Upaniṣadic message in the local dialect as he understood it, just as much as Nānaka, Kabīra did in the later centuries. Being a difficult topic, the later followers, cut off from the personal touch of the Great master and not having the traditional lore available to them, mis-construed the message in a natural way. Just as snow-ball gathers both momentum and mass as it moves along a slope, so also a mistake, for ignorance is the basic stuff of everything psychological as well as material. Śaṅkara saw through this, and hence in reviving the message of the Upaniṣads he followed the middle path of presenting a logical approach in the language of the day viz. Classical Sanskrit, but presenting it as a commentary on the original so that any misconstruction in future is avoided. History is a living proof that the message has survived a dozen centuries or more in its pristine purity. Śaṅkara and Sureśwara also gave us a new orientation to the Karma which was the foundation of Vedic Karma, but without the complex ritual attached to it. They made Karma intellectually comprehensible and morally impeccable. Thus a superficial reader sees an antagonism between Vedic Karma and Jñāna in the writings of Śaṅkara and Sureśwara, specially the latter who has exhausted the incompatibility of the two in his present Vārtika, but a serious reader perceives the goal to which Sureśwara is driving the aspirant. He establishes Karma as the foundation for Jñāna, and shows its utter inefficacy if it does not serve this purpose. To Sureśwara it is the psychosis of the identity of Brahman with the soul and the world that is the summum bonum of life and the intent as well as the content of the Veda.

Sureśwara was the fittest person to bring out this unanimity, for he was master of both the Mīmāṁsās. As the disciple of Kumārila Bhaṭṭa, the rejuvenator of the Pūrva Mīmāṁsā or the science of the Karma portion of the Vedas, he had extensively commented on it in his life as a householder, and was considered a great authority of Mīmāṁsā in his own right. He is still one of the greatest authority quoted in that branch. On entering the monkhood he had the opportunity of lapping the thoughts flowing from the lips of the great rejuvenator of Uttara Mīmāṁsā or the science of the Knowledge portion of the Vedas, the great Śaṅkara himself. His is regarded as the

last word in that branch. Thus he has the right to interpret the connection between the two seemingly conflicting branches of the Vedic lore. Undoubtedly what he says is in the same line as Manu, Yājñavalkya, Vyāsa and of course Bhagawān Śrī Kṛṣṇa. But he says it in such a logical way that the later writers seem to echo his thoughts without making any major contribution in its content. One must remember that it is Advaita which has brought in its fold such great mīmāṁsakas as Vācaspati, Pārtha Sārathi, Madhava and Appaya. This is mainly due to the presentation of its philosophy by Sureśwara, following the footsteps of Śaṅkara.

Tradition maintains that Maṇḍana had to be converted to Advaita through Śastrārtha or dialogue, since he was an addict to rituals. But once converted he was equally true to Advaita, never wavering in his extensive writings even a millimetre from his master in the tenets of philosophy. This shows that the Śāstrārtha was not of the type as indulged in later times as mere intellectual gymnastics, but it was to discover the truth. Even so some people doubted his honesty, and put obstacles in his commenting on the Brahmasūtrabhāṣya. But his Bṛhadāraṇyakavārtika which is half the size of Valmīki's Rāmāyaṇa, extending as it does to 12,000 verses, without any narration, but solid spiritual theology, has been the most authoritative interpretation of the Great Master Śaṅkara, and there is no doubt that it has not left untouched any branch of Vedic philosophy. Though printed in the last century, it has been long out of print. Thus the present edition needs no apology. Fortunately another annotation has been published in the mean time and it has been utilized wherever it shed new light, but since Ānanda Giri is far more comprehensive and enlightening, apart from being exhaustive and voluminous, it was not thought necessary to include Vidyāsāgarī in toto. **Panditaraj S. Subrahmanya Shastri** has given copious notes wherever Giri was elusive, apart from throwing new light on various topics. We are sure this edition will be a must for every student of Advaita philosophy. It has been a privilege for **Mahesh Research Institute** of Vedānta to publish the present edition's 1st. volume containing the Sambandha Vārtika and the Vārtika on the 1st. and 2nd. chapters of Bṛhadāraṇyaka Upaniṣad. The 2nd. volume containing the rest will follow soon. It contains the text of Upaniṣad and Vārtika, giving reference to the exact Bhāṣya passages referred by Vārtika, an innovation not found in the earlier editions, to facilitate the cross references, the authoritative comments of Ānanda Giri, and notes from Nyāyakalpalatikā or Vidyāsāgarī along with those of the editor. The Vārtika is often referred as Bṛhad Vārtika for not only in size but in the scope it is really magnum, not leaving anything out which is of value to a spiritual seeker.

According to the ancient tradition 'उक्तानुक्तदुरुक्तार्थचिन्ता यत्र प्रवर्तते। तं ग्रन्थं वार्तिकं प्राहुर्वार्तिकार्थविचारकाः ॥ Vārtika is a commentary that repeats all that is said in the text in its own words, adds all that is left out by the text on any topic and points out the

difficulties and inconsistancies etc. of the text and resolves them harmoniously with the text, giving an alternative interpretation if necessary. The present work justifies the definition completely. The purport of Bhāṣya is explained scrupulously and brilliantly. In यथा ह वै पदेन (बृ. 1-4-7), अथातो नेति नेति (बृ. 2-3-6), विज्ञाय प्रज्ञां कुर्वीत (बृ. 4-4-21) etc. he adds to the information given by Bhāṣya, and also gives several alternative interpretations. There are innumerable instances of this even in the first volume. Sambandha Vārtika can be sighted in toto for this.

Sureśwara regarded Śaṅkara as God Himself, and venerated his Guru with the highest reverence, hence the question of finding fault with the Bhāṣya was as distant from his mind as could possibly be. Hence Ānanda Giri reads 'द्विरुक्त' in place of 'दुरुक्त'. Sureśwara says that he had nothing but faith in his master as his guide in writing this work 'श्रद्धामात्रबलेन वार्तिकं कृतम्'. But in spite of all this he has intellectual honesty and courage of conviction to disregard his personal devotion in search of Truth. But such topics, where he differs, are of minor importance as far as the spiritual structure is concerned, and are generally extension of the master's thought, or trials towards a more rational interpretation of the same concept. Certainly Sureśwara was a liberal and catholic interpreter of Śaṅkara, as compared to some others of the later times. One must remember that the traditional biographers of Śaṅkara have recorded that Vārtika was ordered to be written by him, heard in toto and approved by him. So the question of heterodoxy or heresy is out of question. Śaṅkara if anything approved of the alternative innovations of his great disciple. The greatness lies in discovering the greatness of others as much as inducting it in them. It was for nothing that Śaṅkara tried so hard to convert Maṇḍana into Sureśwara. Vedānta certainly would have been poorer if he had not entered the order.

Maṇḍana was born in Māhiṣmatī on the banks of Narmadā. Even to this day a temple dedicated to Śiva called Maṇḍaneśwara Mahādeva exists there. After his conversion as Sureśwara he was appointed as the organizer of the Southern movement of Advaita with Śṛṅgagiri as its headquarters. He was also in that capacity associated intimately with the planning of Kāñcīpuram as the city of Śrī Vidyā. Kāmākṣī, Viṣṇu and Ekamreśwara are the three legs of the city which is Hinduism in a nutshell. Hence both Śṛṅgerī and Kāñchī are in a direct spiritual lineage to the great Master. Being senior in age to Śaṅkara he might have been born in the middle of the Seventh century. Apart from Vārtikāmṛta as Bṛhadāraṇyaka Vārtika is often referred to, he wrote Taittirīyavārtika, Dakṣiṇāmūrtivārtika and Pañcīkaraṇa Vārtika, He also wrote one independent treatise Naiṣkarmya Siddhi which is one of the best introductions to Vedānta. As Maṇḍana he wrote mīmāṁsā works and a commentary on the Yājñavalkya Smṛti. But Vārtikāmṛta is undoubtedly his magnum-opus, and richly deserves the name of nectar for it gives the aspirant the immortality here and now.

Ānanda Giri must have stayed in Purī for a long time for in many of his invocations he mentions Śrī Jagannātha. Here also he mentions 'पुरुषोत्तमो विजयते नीलाद्रिचूडामणिः' ।

Vidyāsāgara was a native of Gokarṇamaṭha which is Śivakṣetra on the West Coast. He belongs to 14th century and was associated with king Kāmadeva.

*SWAMI MAHESHANAND GIRI*

Mahamandaleshwar

## उपोद्घातः

ॐ नमो ब्रह्मादिभ्यो ब्रह्मविद्यासम्प्रदायकर्तृभ्यो वंशऋषिभ्यो नमो गुरुभ्यः

वार्तिकामृतसंज्ञेन ग्रन्थेन सुधियां ददौ ।
योऽमृतत्वं नमामस्तं सुरेश्वरसुधानिधिम् ॥

बृहदारण्यकोपनिषद् षडध्यायीरूपा काण्वशाखायां "उषा वा अश्वस्ये" त्यारभ्य प्रवर्तते, माध्यन्दिनशाखायां तु "द्वया ह प्राजापत्या" इत्यारभ्य प्रवर्तते । भगवत्पादैस्तु काण्वशाखीयपाठमाश्रित्यैव भाष्यं व्यरचि । माध्यन्दिनपाठे "उषा वे"ति ब्राह्मणं, तथा "नैवेह किञ्चने"ति ब्राह्मणञ्च अत्रैव दशमकाण्डे गते । अश्वमेधाङ्गभूताश्वोपास्तेः "नैवेह" इत्यादिना अश्वमेधाङ्गभूताग्नौ हिरण्यगर्भोपास्तेश्च वर्णनेन विषयाधिक्यात् काण्वशाखीयोपनिषदेव भगवत्पादैः व्याख्यानाय स्वीकृतेति वक्तुं पार्यते । तत्रादौ कर्मकाण्डेन सहोपनिषदः सम्बन्धो वक्तव्यः । पूर्वकाण्डेऽश्वमेधान्तानि कर्माण्युक्तानि । तेषां फलं स्वर्गमारभ्य ब्रह्मलोकान्तम् । ब्रह्मलोकश्च अश्वमेधस्यैकस्यैव कर्मणः फलं, तदुक्तम्—"अश्वेनैव मेध्येन प्रजापतेस्सायुज्यं सलोकतामाप्नोती"ति "योऽश्वमेधेन यजते देवानामेवायनेनैति" इति च देवायनशब्दितोत्तरायणमार्गं ब्रह्मलोकप्रापकं दर्शयति । उत्तरायणमार्गश्च अहंग्रहोपासकानामेवेत्युत्सर्गः । अयं तु तस्यापवादः वाचनिक इति विवेकः । अश्वमेधोपयोगिनोऽश्वस्यावयवेषु कालादिदृष्टिरत्र विधीयते । सा च दृष्टिः अश्वमेधानधिकृतानां ब्राह्मणादीनां ब्रह्मलोकप्रापिका इत्येष विशेषः ।

यद्यपि ब्रह्मलोकान्तं फलं कर्मणा सम्प्राप्येत, तथापीदं फलं संसारान्तर्गतमेव, अश्वमेधादिना च ब्रह्मलोकं गन्तॄणां कर्तृत्वभोक्तृत्वकारणीभूताज्ञानानिवृत्तेः पुनः संसारस्स्यादेव । यदि ब्रह्मलोके ब्रह्मणा सह वेदान्तविचारमकृत्वा केवलं भोगमात्रेण कालं यापयेयुः तदा भुवं प्रति निवर्तेयुः । भगवद्गीतासु तत्र गतानामपि "आ ब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन" इति ब्रह्मलोकेन सहैव लोकानां पुरावर्त्तिहेतुत्वोक्तेः । "अपुनर्मारमेव गच्छति" ( तै० ब्रा० ३-९ ) "ब्रह्मलोकमभिसम्पद्यते न च पुरावर्तते" इत्यादिकं तु दीर्घकालस्थितिमपेक्ष्य । "इमं मानवमावर्तं नावर्तन्ते" इत्यत्र अस्मिन् मन्वन्तरे पुरावृत्त्यभावमात्रनिर्देशात् । येषूपासनेषु ब्रह्मलोकं गतानां परब्रह्मप्राप्तिर्वाचनिकी भवति यथा—प्रश्नोपनिषदि पञ्चमस्य प्रणवोपास्तिप्रश्नस्य समाधानप्रसंगे "यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत" इत्यारभ्य "स सामभिरुन्नीयते ब्रह्मलोकं स एतस्मात् परात्परं पुरिशयं पुरुषमीक्षते" इति । यथा वा उपकोसलविद्यायां "ब्रह्मलोकमभिसम्पद्यते न स पुरावर्तते" इति तत्रैवापुनरावृत्तिः स्वीकार्या न तु सर्वत्र । तथा च आत्यन्तिकसंसारनिवृत्तौ अपेक्षितं यत् ब्रह्मात्मसाक्षात्काररूपं ज्ञानं तत्प्रतिपादनार्था उपनिषदिदानीमारभ्यते । तथा च पूर्वोत्तरकाण्डयोरभ्युदयनिःश्रेयससाधनप्रतिपादकत्वेन भेदेऽपि अभ्युदयनिःश्रेयसयोरुभयोरपि पुरुषाभिलषितत्वेनैकत्वात् तयोः तत्साधकत्वेन एककार्यकत्वं सम्बन्धः । तथा कर्मकाण्डोपदिष्टानां कर्मणां फलाभिसन्धिं परित्यज्य कृतानां बुद्धिशुद्धिद्वारा ब्रह्मसाक्षात्कारहेतुत्वात् हेतुहेतुमद्भावः संगतिः ।

श्रीमद्भाष्यकाराणामनुज्ञया आज्ञया च श्रीमत्सुरेश्वराचार्याः आचार्याणां शिष्येषु प्रधानभूतेषु अन्यतमाः आचार्यकैङ्कर्यरूपेणेमां वार्तिकरचनामङ्गीचक्रुः । वार्तिकं नाम—

उक्तानुक्तदुरुक्तादिचिन्ता यत्र प्रवर्तते ।
तं ग्रन्थं वार्तिकं प्राहुः वार्तिकज्ञा मनीषिणः ॥

इति प्राचीनश्लोकोक्त्या भाष्यव्याख्यानरूपत्वेऽपि भाष्यगतदुरुक्तचिन्तामपि करोति । महामण्डलेश्वरश्रीमन्महेशानन्दगिरिपादाः, अत्र दुरुक्तिः न दुष्टोक्तिः अपितु दुःखेन या उक्तिः, क्वचित् दुरवगाह्या उक्तिः इति व्याकुर्वन्ति भाष्योक्तिषु दुष्टत्वाभावात् वार्तिककृतां भाष्यकारेषु ईश्वरभावनाकरणात् । अत एवोक्तं तैः "ईश्वरो

गुरुरात्मेति मूर्तित्रयविभागिने" इति दक्षिणामूर्तिवार्तिके भाष्यकाराणां भगवदवतारत्वेन सर्वज्ञत्वात् स्वगुरुत्वाच्च तदुक्तौ दोषोद्भावनमयुक्तं साहसमेव च। तथापि सुरेश्वराचार्यैः पञ्चसु स्थलेषु दोषोद्भावनमिव कृतं दृश्यते। केवलं स्वग्रन्थस्य वार्त्तिकत्वरक्षणाय दुःखेनैव।

अत्र—१. प्रथमाध्यायस्य पञ्चमब्राह्मणे "कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिरित्येतत्सर्वं मन एव" इति वाक्यव्याख्यानावसरे भाष्ये—"कामः स्त्रीव्यतिकराभिलाषः" इति व्याख्यातम्। तत्र वार्तिककारैः—"विषयाभिलाषः कामः स्यात् न विशेषेऽस्ति कारणम्" इति। आनन्दगिरीये च स्त्रीव्यतिकराभिलाषः इति भाष्ये विशेषोक्तिरयुक्तेत्याह—विषयेति। अत्र कामशब्दस्य सामान्येन सर्वविधेच्छापरत्वं युक्तं तस्य विशेषपरत्वोक्तिरयुक्तेति। अत्रेदं चिन्तनीयं—छान्दोग्ये सप्तमे—"आहारशुद्धौ सत्त्वशुद्धिः" इति वाक्यविवरणे भाष्यकारैः आहारः ज्ञानेन्द्रियकर्मेन्द्रियैः आह्रियमाणः सर्वोऽप्याहार एव न तु भुज्यमानान्नमात्रमाहार इति निरूपितम्। नरेन्द्रपुरीमहाभागाः तद्वाक्यविवरणप्रसङ्गे भास्करीयं भुज्यमानान्नमात्रपरतया तद्व्याख्यानं दूषयित्वा "रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन्" इति भगवद्गीतैकवाक्यत्वात् भगवत्पादीयमेव विवरणं युक्तमिति साटोपं समर्थयन्ते। तद्वदत्र कामपदस्य सर्वेच्छापरत्वं नहि भाष्यकृतामविदितम्। नापि इतरेच्छानां मनोव्यतिरिक्तेन्द्रिय-धर्मत्वं तैरिष्यते। अतो भाष्यकारैः स्त्रीव्यतिकराभिलाषमात्रपरतया तद्व्याख्यानं संसारमूलत्वेन तत्प्राधान्यादिति भावेनेति विवेक्तव्यम्। वस्तुतस्तु छान्दोग्यभाष्ये कामः स्त्रीव्यतिकराद्यभिलाषः इत्युक्तत्वात् अत्रापि कामशब्दार्थः स एव भाष्याभिप्रेतः इत्यभिप्रायकं वार्तिकम्। अतो न कोप्यत्र विसंवादः।

२. "पुत्रेणैवायं लोको जय्यो नान्येन कर्मणा, कर्मणा पितृलोको विद्यया देवलोकः" इति वाक्यविवरणे भाष्यम्—कर्मणा अग्निहोत्रादिलक्षणेव केवलेन पितृलोको जेतव्यः न पुत्रेण नापि विद्यया, विद्यया देवलोको न पुत्रेण नापि कर्मणा इति।

अत्र वार्तिकम्—

विद्यया देवलोकाप्तिः श्रुतत्वादेव कारणात्।
नैवकाराभिसंबन्धात् एवेत्यत्र न संगतिः॥
पुत्रस्यैवावधृतये एवकारो भवेदयम्।
पितृदेवलोकसंप्राप्तिः श्रुतेहान्यैश्च साधनैः॥ (१-५-२५६)

अत्रानन्दगिरिः—नहि पितृलोकजयः नित्यादिकर्मनियतः "संकल्पादेव तु तच्छ्रुतेरि"ति न्यायविरोधात्। नापि विद्ययैव देवलोकजयः "संन्यासात् ब्रह्मणः स्थानं" इत्यादिस्मृतिविरोधात्, हेत्वन्तरायत्तत्वसम्भवात् एवकारं प्रक्षिप्य वाक्ययोर्व्याख्या न युक्तेत्यर्थः। अत्रापीदं भाति—दहरोपासनफलं हि "स यदि पितृलोककामो भवति संकल्पादेवास्य पितरस्समुत्तिष्ठन्ति" इति वचनबोधितम्। तत्र च पितैव लोकः पितृलोकः लोकत्वं च आलोकनाभिभाषणादिसाधनत्वात्। ततश्च ब्रह्मलोके स्थितः यदि पूर्वानुभूतान् पितॄन् द्रष्टुमिच्छति तदा संकल्पादेव तेषां दर्शनं भवति। ते च केवलं मानसा एव न तु पार्थिवशरीरादिरूपाः "मानसानि वै ब्रह्मलोके शरीराणि" इति वचनात्। कर्मणा प्राप्यस्तु पितृलोकः स्थूलः स्थूलशब्दस्पर्शादिसंयुक्त इति वैषम्यम्। अयं च नित्यादिकर्मणैव प्राप्यः न तु विद्यया।

ब्रह्मलोकप्राप्तिश्च संन्यासमात्रेणेति वक्तुं न शक्यते "न च संन्यसनादेव सिद्धिं समधिगच्छति" इति भगवद्वचनविरोधात्।

विद्यया तदारोहन्ति यत्र कामाः परागताः।
न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः॥ इति स्मृतेश्च,

यद्युच्यते—विद्यया ब्रह्मलोक इत्युत्सर्गः पञ्चाग्निविद्यया संन्यासेन शिवपूजादिना च तत्प्राप्तिः वाचनिकीति, तदापि भाष्यकारैः उत्सर्गपक्षेण व्याख्यातमिति न एवकारानुपपत्तिः। अत्र च वार्तिककृद्भिः भाष्याभिप्रायदुरवगाह इति मत्वा एवं व्याख्यातम्।

भाष्यकारैः "कर्मणा पितृलोको विद्यया देवलोक" इत्युभयत्रापि नञनुकर्षणं तैत्तिरीये—"श्रद्धया देयम्

अश्रद्धया अदेयमि"त्युक्त्वा "श्रिया देयं ह्रिया देयं भिया देयमि"त्यादिश्रुतिवाक्येष्वपि अश्रिया अदेयं अह्रिया अदेयं अभिया अदेयं" इत्यादिवाक्यकल्पनस्योपलक्षणत्ववदेवात्राप्युपलक्षणत्वमभिप्रेयते ।

३. मैत्रेयीब्राह्मणे—"स यथाऽऽर्द्रैधाग्नेरभ्याहितस्य पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदस्सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि" इति खण्डविवरणे भाष्यम्–इतिहासः—उर्वशीपुरूरवसोः, संवादादिः । पुराणम्, "असद्वा इदमग्र आसीदि"त्यादि इत्यादिना सर्वं वैदिकं मन्त्रब्राह्मणजातमुदाहरति । न तु भारतं विष्णुपुराणं इत्यादीन् अनादिसिद्धवेदप्रतिपादितत्वं ऐदंयुगीयानां भारतादीनां कथं स्यादिति ।

वार्तिककारास्तु—लोकसिद्धपुराणेतिहासादिकमेव निःश्वसितवत् ब्रह्मणः संभूतमिति व्याख्येयमित्याहुः तदुक्तम्—

"लोकप्रसिद्धिमुल्लङ्घ्य यतोऽन्याय्योऽन्यथाग्रहः ।
कारणत्वं प्रमाणेन यस्य साक्षाद्विनिश्चितम् ॥
अपि तत्कार्यकर्तृत्वे तदेवाभ्युपगम्यते ।"

इत्यादिना परस्यैव व्यासादिरूपेण पुराणादिकारणत्वादिदमेवग्राह्यमित्याहुः । अत्रेदं भाति—भारत-पुराणादीनां पौरुषेयत्वेन यत्र प्रत्यक्षवेदविरोधस्तत् त्याज्यमिति मीमांसकमर्यादा । यद्येषां साक्षाद्ब्रह्मनिर्मितत्वं तदा श्रीकृष्णेन गीतासु "तस्माच्छास्त्रं प्रमाणं ते" इत्युक्तं कथमुपपद्येत । मीमांसायां वेदप्रामाण्योपपादकं "वेदांश्चैके सन्निकर्षं पुरुषाख्या" इत्यधिकरणमुक्त्वा "धर्मस्य शब्दमूलत्वात्"इति स्मृत्यधिकरणे स्मृतीनां भारतादीनां च वेदमूलकतया प्रामाण्योक्तिः न संगच्छेत । अपि च ईश्वरस्य सर्वप्रेरकत्वात् पौरुषेयग्रन्थानां बौद्धग्रन्थानां च निःश्वसितत्वापत्तिः बुद्धस्य दशावतारान्तर्गतत्वेन व्यासादिवत् अवतारपुरुषत्वाच्च । न च वेदविरुद्धत्वात्तदप्रामाण्यम् । वेदाविरुद्धाहिंसादावपि बौद्धोक्तत्वेनाप्रामाण्यस्य भट्टैरुक्तत्वात् । अतः भाष्यस्य दुरवगाहत्वात् प्रौढिवाद एवायं तत्र भवतो वार्तिकारस्येति ज्ञेयम् ।

४. षष्ठाध्यायतृतीयब्राह्मणारम्भे "जनकं ह वैदेहं याज्ञवल्क्यो जगाम स मेने न वदिष्य इति तस्य ह जनकस्य वैदेहस्याग्निहोत्रे समूदाते याज्ञवल्क्यो वरं ददौ स ह कामप्रश्नमेव वव्रे तं हास्मै ददौ तं ह सम्राडेव पूर्वः पप्रच्छ" इति श्रूयते । अत्र याज्ञवल्क्यो मेने अद्य राज्ञा न संवदिष्ये इति परन्तु अग्निहोत्रविषयप्रस्तावकाले जनकाय ऋषिः कामप्रश्नवरं ददौ तद्बलात् अविवक्षुं याज्ञवल्क्यं वरदानबलेन सम्राडेव पूर्वं पप्रच्छ इति भाष्यकाराणां व्याख्याप्रकारः । वार्तिककारास्तु सं एनेन वदिष्य इति पदं छित्वा संवादाय सज्जीबभूव । राजापि वरदानात् पूर्वं पप्रच्छेति । एवं विलिख्य वार्तिकाचार्याः स्वीयव्याख्यानमेव सुष्ठु न तु भाष्मकारीयमित्याहुः ।

राजैव पूर्वं पप्रच्छेत्येतस्माद्गम्यते शुभा ।
लिङ्गात् व्याख्योत्तरा पूर्वा न साध्वीत्यप्रमाणतः ॥

अत्र यद्यपि व्याख्याद्वयेऽपि न विरोधः राज्ञः प्रथमं ऋषेरभ्यनुज्ञां विना प्रश्नः उभयत्र न विरुद्धः वरदानबलात् । एवं स्थिते महर्षेः एनेन संवदिष्ये इति संकल्पः किमर्थः तादृशसंकल्पं विनापि वरदानबलादेव राज्ञा पृष्टं सर्वं ऋषिणा वक्तव्यमेव । तद्बलादेव संवदिष्ये इति संकल्पः अर्थप्राप्तः न वक्तव्यः श्रुत्या ।

भाष्यकारविवरणरीतौ तु महर्षिः संवादं न करिष्य इति संकल्पं कृत्वापि यदवोचत् तत् वरदानमूलकं इत्यर्थपुष्टिर्वर्तत इति भाष्यकारीयव्याख्यापि शोभना प्रतिभाति ।

५. क्वचित्तु भाष्यकाराभिप्रायं अदूषयित्वैव स्वयं तद्भिन्नं व्याख्यानं दृश्यते यथा तृतीयाध्याये कहोलप्रश्ने "ब्राह्मणा व्युत्थाय भिक्षाचर्यं चरन्ति" इत्यत्र भाष्यम् "ब्राह्मणानामेवाधिकारो व्युत्थाने अतो ब्राह्मणग्रहणमि"ति ।

वार्तिके तु "ब्रह्मचर्यादेव प्रव्रजेत् यदहरेव विरजेत् तदहरेव प्रव्रजेदि"ति च संन्यासविधौ ब्राह्मणग्रहणाभावात् संन्यासे त्रैवर्णिकाधिकारः । अतः ब्राह्मणग्रहणं उक्तश्रुतौ वर्णत्रयोपलक्षणमित्युक्तम् । अत एव ब्रह्मज्ञानसम्पन्नः यः स ब्राह्मण इत्युक्तिः "यो वा को वा तत्त्वनिष्ठश्चेत् स ब्राह्मण" इत्यर्थे संगच्छते । आचार्यैरपि ब्रह्मवित् चण्डालोऽपि गुरुरित्युक्तम् ।

एवमन्यत्र भाष्ये दृश्यमानव्याख्यानपोषकतया वार्तिककाराः लिखन्ति यथा "विज्ञाय प्रज्ञां कुर्वीत" इत्यत्र अष्टव्याख्यानभेदान् प्रदर्शयन्ति ।

अत्र भाष्यारम्भे उपनिषदां पूर्वकाण्डेन सम्बन्धः कथ्यते । इमं सम्बन्धग्रन्थं उपक्रमस्थं व्याख्यातुकामाः वार्तिकाराः ये दृष्टानुश्रविकविषयवितृष्णाः सन्तः इमं ग्रन्थं निश्चयेन शीलयन्ति तेषां अनर्थमूलाया अविद्याया निहन्तृत्वेन ब्रह्मप्रापकत्वेन वा प्रवृत्तिहेतुरागादिनिवर्तकत्वेन वा उपनिषदिति ब्रह्मविद्यायां उपनिषच्छब्दः । तादर्थ्येन ग्रन्थेऽपि प्रयुज्यते इति व्याचख्युः । अस्यां साधनचतुष्टयसंपन्नस्य मुमुक्षोः संन्यासिनः एवाधिकारो मुख्यः इतरेषां गौणः । विषयस्तु जीवब्रह्मैक्यं फलं च अविद्यानिवृत्त्युपलक्षितः पूर्णानन्दरूपो मोक्षः ।

**प्रथमाध्यायः**

अत्र सम्बन्धग्रन्थे सकलाद्वैतशास्त्रोपयोगिनोऽर्था एव विस्तरशो विचारिताः तथाहि—

१. गृहस्थः शरीराद्यभिमानवान् अहमस्य कर्मणः कर्ता तत्फलस्य च भोक्तेति निश्चितबुद्धिः कर्माधिकारी । मुमुक्षुः त्यक्ताशेषकर्मा कर्तृत्वादिकमात्मनः नास्तीति शास्त्रान्निश्चितबुद्धिः ज्ञानेऽधिकारीति विशेषः इत्यधिकारिभेदः शास्त्रस्य ।

२. नित्यकर्मानुष्ठानस्यापि स्वर्गादिफलजनकत्वमस्तीत्युपगमात् न नित्यानां मोक्षफलम् ।

३. एकस्मिन्नेव जन्मनि निषिद्धकाम्ययोस्त्यागात् विहितानुष्ठानात् प्रारब्धकर्मणां भोगेन क्षयात् सञ्चितानां नित्यानुष्ठानक्लेशादेव क्षये एकस्मिन्नेव जन्मनि मुक्तिः प्राप्तुं शक्येति पक्षस्य विस्तरेण दूषणम् ।

४. आत्मज्ञानमपि कर्माङ्गमिति पक्षस्य निरासः, आत्मनः अकर्तृत्वाभोक्तृत्वादिगुणवतः कर्मविरुद्धत्वात् । आत्मज्ञानस्य कर्मानङ्गत्वेऽपि कर्तृत्वादिस्वाभाविकधर्मेषु निश्चयवन्तमादाय शास्त्रप्रामाण्योपपत्तिः ।

५. कैवल्यं ज्ञानैकसाध्यं तत्र क्रियाणां निष्कामेन क्रियमाणानां विविदिषायामुपयोगः । "तरति शोकमात्मवित्" इति ब्राह्मणम् ।

६. ज्ञानकर्मसमुच्चयस्त्वसम्भावितः तत्त्वज्ञानिनोऽसङ्गाद्वितीयत्वनिश्चयात् ।

७. सर्वस्यापि वेदस्य "आम्नायस्य क्रियार्थत्वादि"त्युक्तेः कर्मपरत्वमिति शङ्कानिरासः ।

८. प्राभाकराभिमतस्य 'नियोगः विध्यर्थः' इति पक्षस्य नियोगस्वरूपखण्डनेन तस्य विध्यर्थत्वखण्डनेन च निराकरणम् ।

९. भावनाया वाक्यार्थत्वनिरासः लिङः इष्टसाधनत्वार्थकत्वस्य समर्थनं च ।

१०. सिद्धं ब्रह्म मानान्तरवेद्यमिति पक्षनिरासः ।

११. तत्त्वज्ञानोत्तरं मानसं तत्त्वज्ञानावृत्तिरूपं प्रसङ्ख्यानं मोक्षसाधनमिति पक्षस्य ब्रह्मसिद्धिकाराहृतस्य खण्डनम् ।

१२. प्रसंख्यानविधिपक्षे वेदातान्तानां नियोगानिष्ठत्वं अद्वयब्रह्मासिद्धिप्रसङ्गश्च ।

१३. चतुष्पात्प्रमाणं—शब्दः, युक्तिः, प्रमाणं, आत्मा चेति पादाः —इति पक्षनिरासः ।

१४. शास्त्रस्य युक्त्यनपेक्षता ।

१५. नियोगो वा भावना वा न लिङर्थः अपितु इष्टसाधनत्वमेव तथेति सिद्धान्तः ।

१६. वाक्येनैव ब्रह्मानुभवः साध्यः ।

१७. भेदस्य प्रत्यक्षानुमानादिना न साधयितुं शक्यता ।

१८. यथार्थानुभवे सर्वत्र ब्रह्मण एवाज्ञातस्य विषयता ।

१९. सुखस्वरूपविचारः —सुखं न दुःखनिवृत्तिः अपि तु भावरूप आत्मैव सुखम् ।

२०. ज्ञानमेवाज्ञाननिवर्तकं ब्रह्मस्वरूपं तु स्वप्रकाशत्वात् स्वयमेवानन्दरूपतया प्रकाशते मुक्तस्येति च ।

प्रथमाध्यायप्रतिपाद्या विषयाः—प्रथममश्वब्राह्मणम् । तत्राश्वस्याङ्गेषु शिरआदिषु उषःकालादिरूपत्वम् अश्वमेधकर्तारं यजमानं कालादिरूपमश्वं चयननिर्मितमग्निम्, अर्कशब्दितं प्रजापतिं मृत्युशब्दवाच्यं सूत्रात्मानं च एकीकृत्य अहमेवेतित्युपासनात् ब्राह्मणः क्षत्रियो वैश्यो वा अश्वमेधानधिकार्यपि अश्वमेधफलं

सूत्रात्मभावं प्रतिपद्यते। अत्रैव द्वितीयकण्डिकायां विशेषमहिमप्रापकौ सौवर्णराजतौ ग्रहौ गृहीत्वा ताभ्यां होमः कथ्यते।

अश्वमेधब्राह्मणम्—अत्रादौ अग्नेरुत्पत्तिरुच्यते "नैवेह किञ्चनाग्र आसीत्" इत्यादिना। अत्र प्रसङ्गात् बौद्धाभिमतः असत एव सदुत्पत्तिवादः आचार्यैः सयुक्तिकं खण्डयते। उत्पत्तेः पूर्वमपि कार्यं सदेव उत्पत्तिः केवलमभिव्यक्तिः। अभिव्यक्तिश्च न सती नाप्यसती अपितु अनिर्वचनीयेति सिद्धान्तप्रदर्शनम्। "नैवेह किञ्चने" त्यनेन स्वाविद्याद्वारेण जगत्कारणं ब्रह्मैवोच्यते इति वार्तिकाभिप्रायः।

अश्वमेधोपासनं च वार्तिके अश्वमेधाख्यः क्रतुः आदित्य एव अश्वावयवेषु उषात्वादिकल्पनात्। तस्य संवत्सर आत्मा अङ्गभूतः चित्याग्निः सोऽप्यादित्यः। उभयमपि प्राणरूपा देवतैव स च उपासितुरात्मैव तं, सोऽहमितिभावयन् मृत्युं तरति। अत्रासत्कारणवादनिरासेन ध्वंसप्रागभावात्यन्तान्योन्याभावानां न्यायवाद्यभिमतानां निरासः।

तृतीयब्राह्मणम्—उपासनेन मृत्योरात्मभावप्राप्तिरेव फलम्। उपासनप्रकारश्च ब्राह्मणान्ते भाष्योक्तः अहमस्मि प्राणः विषयासङ्गैरासुरैः पाप्मभिरधर्षणीयः विशुद्धः वागादिपञ्चकं मदाश्रयत्वादग्न्यादिरूपं विषयासङ्गरूपपाप्मवियुक्तं सर्वभूतेषु मदाश्रयान्नाद्योपयोगबन्धनं आत्मा चाहं सर्वभूतानां इत्यादिरूपेणोपासनं कार्यम्। उपास्यहिरण्यगर्भात्मभावप्राप्तिः फलम्। उपासनं च "देवो भूत्वा देवानप्येती"त्युक्तरीत्या अत्रैव हिरण्यगर्भतादात्म्याभिमानाभिव्यक्त्यन्तं कर्तव्यमेव।

चतुर्थब्राह्मणम्—"आत्मैवेदमग्र आसीत् पुरुषविध" इत्युक्तेः आत्माऽत्र प्रजापतिरेव न तु मुख्यात्मा ब्रह्मशब्दोऽत्र गौणः तस्य भयारत्यादयः संसारिधर्माः श्रूयन्ते। अत्र वार्तिककारैः उत्तरत्र "स एष इह प्रविष्ट" इत्यत्र। तच्छब्दपरामर्शोपयोगितया आत्मशब्दः परमात्मपर इत्यपि पक्षान्तरमुक्तम् न तु तत्र निर्भरः प्रदर्शितः भयारत्याद्यनन्वयात्। उत्तरत्र च स पक्षस्त्यक्तः।

वाक्योत्थवृत्तिप्रतिबिम्बितचैतन्यमेवाज्ञाननिवर्तकं न तु केवलं चैतन्यम् तस्याज्ञानसाधकत्वात् आत्मनः अनुभवरूपत्वात्, अनुभवस्य च साक्षित्वात् तत्र जन्मादेः कल्पितत्वमेव। अत एव चैतन्यमेव परमार्थः-कार्यकारणभावनिराकरणम् अनिर्वचनीयख्यातिदार्ढ्यार्थं ख्यात्यन्तरनिराकरणम् च।

आत्मेत्येवोपासीत—इत्यत्र न विधौ तात्पर्यम्।

उपासनमत्र ज्ञानं न ध्यानम्। आत्मानं पश्येत् इत्यत्रापि न विधिः, अत्रैव "अनेन ह्येतत्सर्वं वेद" इति सर्ववेदनफलश्रुतेश्च। चैतन्यस्वरूपे ब्रह्मणि अविद्याऽङ्गीकर्तव्या न तावता ब्रह्मणः सर्वज्ञत्वक्षतिः स्वप्रकाशे अज्ञानेनावरणासंभवात् तस्यावरणे चित्वेन प्रकाशोऽपि न स्यात्। 'अहं ब्रह्मास्मि' इति श्रुत्यर्थस्य विवरणम्।

सर्वेषामेव शास्त्राणामात्मैकत्वबोधपरत्वं भाष्यकाराः आहुः यथा "यदर्थः सर्वशास्त्रारम्भ" इति "स एष इह प्रविष्ट" इति प्रवेशवाक्योपोद्घाततया। तथाहि—यद्यपि वैशेषिकन्यायशास्त्राणां स्वस्वप्रतिपाद्येऽर्थे विरोधः तथापि रागादिध्वस्तिद्वारा तत्वज्ञानफले न विवादः किमु वक्तव्यं कामशास्त्रस्यापि कामे प्रवृत्तस्य दुःखप्रदर्शनद्वारा वैराग्यपरता तत्रैव सूचिता। अनित्यदुःखशून्यत्वं प्रपञ्चस्य प्रदर्शयन् बुद्धोऽपि निवृत्तिद्वारा तत्त्वज्ञानस्यैव सम्पाद्यत्वमाह। एवं सृष्टिप्रक्रियासु न श्रुतेस्तात्पर्यं प्रतिशाखं वैरूप्यात् "इदं सर्वमसृजत" "आत्मन आकाशः सम्भूतः" "तत्तेजोऽसृजत" "तन्नामरूपाभ्यामेव व्याक्रियत" इत्यादिना। सृष्टिः कल्पिता न वास्तवी। तदुक्तिश्च आत्मज्ञानाय। तदुक्तं श्रुतौ "तदस्य रूपं प्रतिचक्षणाय" इति। इदं च वार्तिककाराः स्पष्टं वदन्ति—

यया यया भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि। सा सैव प्रक्रियेह स्यात् साध्वी सा चानवस्थिता॥ इति।

सैद्धान्तिकी प्रक्रियापि खण्डनीयैव व्यावहारिकत्वेन मिथ्यात्वात् इत्युक्तं भगवता श्रीहर्षेण—

"अभीष्टसिद्धावपि खण्डनानामखण्डि राज्ञामिव नैवमाज्ञा।
तत्तानि कस्मान्न यथा वदेव सैद्धान्तिकेऽप्यध्वनि योजयध्वम्॥" इति।

एतेनाद्वैतप्रक्रियाखण्डनेनाद्वैतं निरस्तमिति भ्रान्ताः विमतस्थाः प्रत्युक्ताः। ब्रह्मैव हि अद्वैतं तच्च आत्मैव। तत्खण्डनं तस्य कथंकारं शक्यते साक्षिणः अनपलापात्। अस्मिन् ब्राह्मणे "अहं ब्रह्मास्मी"ति महावाक्यं भेददर्शिनः पशुभावः सप्तान्नसर्गः कामादीनां मनोधर्मत्वम्। मुमुर्षोः सम्प्रतिकर्मेत्यादयः उपदिश्यन्ते। अन्तिमब्राह्मणे च सर्वः संसारः नामरूपकर्मान्तर्गतः नात्मा। इह च वैराग्यार्थं पठ्यते इत्युक्तम्।

## द्वितीयोऽध्यायः

प्रथमाध्याये "आत्मेत्येवोपासीत" इति विद्यासूत्रं समुपस्थाप्य तद्व्याख्यानरूपं चतुर्थाध्यायान्तं इति व्याचख्यौ वार्तिककारः। "अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः" इत्यविद्यासूत्रं तस्य सप्तान्नब्राह्मणेन विवरणं कृत्वा पुनर्विद्यासूत्रार्थमेव विवृणोति द्वितीयेनाध्यायेन। अत एव वार्तिककृतः चतुर्थाध्यायान्तं विद्यासूत्रविवरणमित्याहुः। तत्रादौ गार्ग्यजातशत्रुसंवादे "आत्मा ब्रह्मे"ति राजा अजातशत्रुः काश्यः गार्ग्यं मन्दब्रह्मविदं बोधयति। तथाहि—सुषुप्तिकाले जीवः हृदयाकाशे शेते इत्यवोचत् काश्यः। स च ब्रह्मैव "अथ हैतत्पुरुषः स्वपिति नामे"त्युक्तेः स्वस्वरूपेऽवतिष्ठत इत्यवगतं; "स्वाप्ययादि"ति न्यायाच्च। तेन जीवस्य स्वाभाविकं शुद्धत्वं निर्णीतम्। पुनः जाग्रति "एतस्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वाणि भूतानि व्युच्चरन्ति" इत्युक्त्या जीवादेव सर्वं वस्तुजातमुद्गच्छतीत्युक्तेः जीव एव ब्रह्मेति न्यरूपि।

द्वितीये शिशुब्राह्मणे प्राणसम्बद्धाः काश्चनोपनिषदः ध्यानार्थमुपदिश्यन्ते।

तृतीयं मूर्तामूर्तब्राह्मणम्—"प्राणा वै सत्यं तेषामेष सत्यं" इति प्रथमब्राह्मणान्ते प्राणकारणीभूतानि पञ्च भूतानि सत्यमित्युक्तम् तेषां सत्यत्वं अधिष्ठानसत्यत्वापेक्षयेति वक्तुं एषः सत्यमित्युक्तं तत्र प्राणानां सत्यत्वं पञ्चभूतात्मकत्वरूपमेत्र मूर्तामूर्तब्राह्मणे व्युत्पाद्यते। सत् पृथिव्यादित्रिकम्। त्यत् वाय्वाकाशौ मूर्तरसः आदित्यः अमूर्तरसः आदित्यान्तर्वर्तिपुरुषः समष्टिप्राणो हिरण्यगर्भः अधिदैवतम्। अध्यात्मं मूर्तरसः चक्षुः अमूर्तरसः चक्षुषि सन्निहितः लिङ्गात्मा तस्य च वासनामयं स्वप्ने दृश्यमानं रूपमुक्त्वा "अथात आदेश" इत्यनेन सत्यस्य सत्यं ब्रह्म उपदिशति। "नेति नेति" इति वीप्सा–तेन इदं इति यद्यत् गृह्यते तत्सर्वं न भवतीत्यर्थः। एवं च निर्गुणं ब्रह्मात्र प्रतिपादितम्। अत्र वार्तिके 'नेति नेति'त्यस्य विधिरूपेण व्याख्यापि दृश्यते। "न निषेधो निषेध्यार्थो लक्षणार्थपरत्वतः। ब्रह्मणो मान्तरासिद्धेः शून्यतैव प्रसज्यते" इत्यनेन निषेधपक्षं प्रदूष्य स्वयं व्याख्यामाह वार्तिककारः—नेतीत्यत्र न इत्यनेन अवाच्यस्याभावस्य साक्षी प्रत्यगात्मा उच्यते इति इत्यनेन प्रकृतं ब्रह्मोच्यते इति इदं वाक्यं महावाक्यमेवेत्यर्थः नेति नेति इति तस्यैवावृत्तिः।

चतुर्थं मैत्रेयीब्राह्मणम्—मैत्रेय्यै याज्ञवल्क्यः अमृतत्वसाधनमात्मज्ञानमुपदिशति। आदौ आत्मा सर्वेषां प्रियः तत्प्रीत्यैव तदनुबन्धिषु प्रीतिः तत्प्रियत्वं आनन्दरूपतयेत्युक्त्वा आत्मनः श्रवणमननादि विधाय आत्म-विज्ञानेन सर्वज्ञत्वमपि भविष्यतीत्युवाच। तत्कथमितिशङ्कायां सामान्यज्ञाने सति तद्गतविशेषा बुध्यन्ते यथा दुन्दुभ्यादिध्वनौ दृष्टान्ते। अपि च प्रपञ्चोत्पत्तिलयावपि आत्मनि भवत इत्यतः आत्मनः उपादानत्वम्। तस्मादेव प्रपञ्चोत्पत्तिः तस्य सुषुप्तावपि न नाशः अपितु वृत्तिज्ञाननाश एव। स च द्वितीयाभावविशिष्ट इत्युक्तम्। तेन इदं सर्वं यदयमात्मा इत्यनेनात्मनः सर्वात्मत्वं जीवाभेदश्च सिद्ध्यति।

पञ्चमं मधुब्राह्मणम्—पूर्वं "इदं सर्वं यदयमात्मा" इत्यत्रोक्तसर्वात्मकत्वे आत्मैकसामान्यत्वं आत्मैकोद्भवत्वं तत्रैव लयश्च हेतुरुक्तः तत्र को हेतुः इति प्रश्ने यत् परस्परोपकार्योपकारकं तत् एकप्रभवं एकलयं एक-सामान्यात्मकं च दृष्टम् पृथिव्यादि तथेदमिति निगमनात् उक्तार्थसिद्धिः।

**भर्तृप्रपञ्चमतम्**—भर्तृप्रपञ्चा नाम विद्वांसः भगवत्पादेभ्यः पूर्वमेव बृहदारण्यकोपनिषदः भाष्यं व्यरचयन्। भगवत्पादानां स्थितिकालेऽपि प्रचारस्तस्याभूत् वार्तिककारसमयेऽपि तद्ग्रन्थस्य पठनपाठनादिकमन्ववर्तत इति "इति श्रीमन्महाभर्तृप्रपञ्चस्य महीयसः। व्याख्यामधीयते धीराः न्यायागमबहिष्कृताम्" इति ( अ० ४-४-४१२ ) वार्तिकादवगच्छामः। ते च प्रपञ्चस्य ब्रह्मणस्सकाशात् भेदाभेदवादिनः भगवत्पादादर्वाचीनस्य भास्करभाष्यस्य मार्गदर्शिन इत्युन्नीयते। तन्मतमिदानीं संक्षेपेण प्रदर्श्यते। तथाहि—

मैत्रेयीब्राह्मणान्ते "यत्र हि द्वैतमिव भवति" इत्युक्त्वा "यत्र त्वस्य सर्वमात्मैवाभूत्" इति कथनाच्च द्वैताद्वैतात्मकं ब्रह्मेत्युक्तम् भवति। अतः द्वैतस्य स्वानुभवात् सत्यत्वं अद्वैतस्य च श्रुतिवशात्सत्यत्वमिष्टमित्यतः कर्मकाण्डप्रामाण्याविघातः। अन्यथा द्वैतमिथ्यात्वे द्वैतमवलम्ब्य प्रवृत्तस्य तस्याप्रामाण्यापातः। इदमेवोच्यते "पूर्णमद" इति मन्त्रेण। अदः ब्रह्म इदं कार्यं जगदपि पूर्णं पूर्णब्रह्माभिन्नं "यद्यतो नातिरेकेण वर्तते तत्तदेवेति निश्चितिः" इति च वार्तिकम्। ब्रह्मप्रपञ्चयोः एकरूपतया स्थितौ कथं कार्यकारणभावः इति चेदुच्यते— "पूर्णात् पूर्णमुदच्यत" इति। यस्मात् द्वैतं अद्वैतादुद्रिच्यते तस्मात् तत् ब्रह्मणो नातिरिच्यते। "पूर्णस्य पूर्णमादाय" इत्यनेन फलावस्थायां आत्मन्यवस्थाद्वयस्य अविभागेनावस्थानदर्शनात् द्वैताद्वैतात्मकमेवात्मवस्तु इति प्रदर्शयन्ति। न च प्रलयावस्थायामद्वैतावस्थैवास्ति कुतो द्वैतं इति शङ्कनीयम्। यतः यथा समुद्रात्मनि ऊर्म्यादिविभागेऽपि जलात्मना एकरूपोऽपि सदा वर्तत एव, स्थूलसूक्ष्मरूपाभ्यां तथा पूर्णवस्तुनः अवस्थाद्वयं सर्वदाऽस्त्येवेति।

तथा "तदेतत्त्रयं सदेकमयमात्मात्मा एकः सन्नेतत्त्रयं" इत्यत्र नामादित्रयस्य नामरूपकर्माख्यस्य भिन्नाभिन्नत्वमनुमेयम्। तथा विमतं भिन्नाभिन्नं वस्तुत्वात् नामादिवत् इत्यनुमानम्। अपि च गोषु गोत्वमभिन्नं व्यक्तयस्तु भिन्नाः इति सामान्यविशेषयोः भेदाभेदः सिद्धः भेदोऽभेदश्चोभयमपि पारमार्थिकं प्रपञ्चस्यापि ब्रह्मवदेव पारमार्थिकत्वात्। जीवः न साक्षादेव ब्रह्म अपि तु ब्रह्मणो विकारः। अत एव तस्य विज्ञानमय इति नाम। मयड्विकारे। "तत्सृष्ट्वा तदेवानुप्राविशदि"ति विकारात्मना प्राविशदित्यर्थकम्। अत एव जीवब्रह्मणोः भेदाभेदौ सर्वत्र भेदाभेदाङ्गीकारात् येनान्यस्तेन संसारी कर्माधिकृत उच्यते। अनन्यपक्षेऽहं ब्रह्मेत्युक्तेः ब्रह्म प्रपत्स्यते। उपाधिद्वयविशिष्टं जीवमनूद्य तत्त्वमस्यादिवाक्यात्तस्य ब्रह्मत्वमुच्यते। अभयप्रतिष्ठा फलम्। प्रवेशादौ तु न तात्पर्यम्। यथा क्षितेरूषरो विकारः यथा वा पुरुषशरीरस्य केशनखादिकं विकारः तथा जीवः परस्यैकदेशो विकारः "तद्यथा रथनाभौ च रथनेमौ च अराः सर्वे समर्पिताः एवमेवास्मिन्नात्मनि सर्वाणि भूतानि सर्वे देवाः सर्वे लोकाः सर्व एत आत्मानः समर्पिताः" इति मधुब्राह्मणवाक्यं च तेषामभिप्रायं स्पष्टं ब्रूत इति वदन्ति।

अयमर्थः न तावदयमात्मा परस्माद्भिद्यते तत्त्वमसीत्यादिश्रुतेः। ब्रह्म चक्रनाभिस्थानीयं पञ्चभूतात्मको देहः चक्रनेमिस्थानीयः देवतादिजगत् आत्मनि भूतेषु चार्पितम् इत्येवं सदा ध्यायेत्।

एवं ध्यायन् परमात्मानं ज्ञानिनामयनं प्रत्यक्तया निश्चित्य स्थितः आज्ञानाद्ध्येयो भवति। ब्रह्माख्यं चक्रं हृदयस्थितमपि सर्वैः नानुभूयते—अज्ञानादित्याहुः अविद्या च ब्रह्मणस्सकाशात् जीवस्य परिच्छेदापादिका। परस्यैव विकारः यथा भूमेः ऊषरभागः सा च परमात्मैकदेशं जीवमेवाश्रयते। सा च अविद्या स्वाश्रयस्य जीवस्य विकारं मिथ्याज्ञानं च जनयति।

मोक्षो द्विविधः अस्मिन्नेव शरीरे साक्षात्कृतब्रह्मा मुक्त इत्युच्यते। तस्य शरीरपातोत्तरं ब्रह्मणि लयो मुख्यो मोक्षः। प्रथमं नित्यकर्मसमुच्चितात् हिरण्यगर्भोपासनात् कर्मासिंगादिलक्षणमृत्युक्षयः। ततः अयमुपासकः नाममात्रावशिष्टः अन्तरालावस्थः जायते। हिरण्यगर्भोपासनरूपकर्मसमुच्चितात् ततः जीवब्रह्माभेदोपासनात् ब्रह्मणि लीयते इत्याहुः। एवमद्वैतमप्यभ्युपगम्य भेदाभेदं वदतः भर्तृप्रपञ्चाचार्यस्य मतं भाष्ये तत्र तत्र संग्रहेणाचार्यैः दूषितमेव। वार्तिककृतस्तु विशिष्य तद्वाक्यान्येवाहृत्य सम्यगेव खण्डयन्तीत्ययं विशेषः। एतन्मतखण्डनं तत्र तत्र वार्तिकटीकयोः पाठकैः अवधारणीयम्।

यथा भगवत्पादाः जीवन्मुक्तास्सन्तः जीवन्मुक्तिसुखमन्वभूवन् तथा वार्तिककारा अपि। तथा हि ब्रह्मसूत्रभाष्ये "अनारब्धकार्ये एव तु पूर्वे तदवधेः" इति चातुर्थिकसूत्रे ( ब्र. सू. ४।१।१५ ) भाष्यकाराः "अपि च नैवात्र विवदितव्यं ब्रह्मविदा कञ्चित् कालं शरीरं ध्रियते न वा ध्रियत इति। कथं हि एकस्य स्वहृदयप्रत्ययं ब्रह्मवेदनं देहधारणं चापरेण प्रतिक्षेप्तुं शक्यते" इत्यादिवाक्येनात्मनः ब्रह्मापरोक्षं सूचयन्ति। वाचस्पतिमिश्रा अपि—तदेवं मध्यस्थात् प्रति प्रतिपाद्य ये भाष्यकारमाप्तं मन्यन्ते तान्प्रत्याह इति वाक्यमिदं अवतारयन्ति। अत्रापि चतुर्थाध्यायान्ते "सर्वदा समैकरसं अविक्रियं अजमजरमभयमात्मतत्त्वं ब्रह्मैव स्म"इत्यादि च।

एवमेव वार्तिककारा अपि ब्रह्मनिष्ठाः स्ववचनेनैव स्वस्य ब्रह्मानुभवं सूचयन्ति।

तथाहि—मम तावदिदं बुद्धौ भवद्भ्यो यन्न रोचते।
प्रत्यक्प्रवणया दृष्ट्या संसारो नात्मनीक्ष्यते॥
उक्तार्थे संशयश्चेत्स्यात् प्रत्यग्दृष्ट्या समीक्ष्यताम्।
स्वप्नेभबुद्धिर्नष्टेऽपि स्वप्न आभाति जागरे॥
यथैवं मोहजं द्वैतं नष्टे मोहेपि साम्प्रतम्।
जगन्नर्नति मय्येवं कार्यकारणवस्त्विदम्॥
दिग्विभागोऽविभागेऽपि व्योम्नि यद्वत्प्रकल्पितः।
प्रध्वस्ताशेषभेदेऽपि मयि भिन्नधियस्तया॥

इत्यादौ। एतेषां वार्तिकं जगन्मिथ्यात्वजीवब्रह्मैक्यादिवैदान्तिकपदार्थानां हृदयंगमया युक्तिपरिपुष्टया शैल्या निरूपयत् इतरान् अद्वैतग्रन्थानतिशेते। अत एवाहुः साम्प्रदायिकाः—वार्तिकं पठित्वा जीवन्मुक्तो भविष्यति। अतः सर्वसंगपरित्यागिनः परमहंसा एवात्राधिकारिण इति।

याज्ञवल्क्यस्य स्वभार्यां मैत्रेयीं प्रति ब्रह्मोपदेशः यः श्रुतावनुक्रान्तः सः "कान्तासम्मिततयोपदेशयुजे" इति काव्यप्रकाशोक्तरीत्या शान्तिरसभरितः प्रियां प्रति प्रियस्य भाषणमिव हृदयंगमो वर्तते यद्यपि याज्ञवल्क्यो जीवन्मुक्तः सर्वतो विरक्तः पारिव्राज्याय प्रस्थितः। काश्यस्याजातशत्रोरुपदेशश्च "व्येव त्वा ज्ञपयिष्यामि" इति "बोधयिष्याम्येवे"ति प्रतिज्ञापूर्वकं प्रवृत्ततया गार्ग्यस्याज्ञानमपि तिरस्कृत्य सान्त्ववचनेन गुरुणा मन्दशिष्याय तत्त्वबोधनरीतिं ज्ञापयति।

वार्तिकटीकाकृतः श्रीमदानन्दगिरिपादाः इमे समेषां भाष्याणां भाष्यकृद्भिरचितप्रकरणानां च टीका-रचनेन सुप्रसिद्धाः। इमे चाश्रमान्तरे जनार्दननाम्ना प्रसिद्धाः प्रकटार्थकाराणां श्रीमदनुभूतिस्वरूपाचार्याणां शिष्या इत्यात्मानं वर्णयन्ति स्वकृततत्त्वालोके। एते च स्वकृतटीकाग्रन्थे नीलाचलनायकं श्रीजगन्नाथं स्तुवन्ति अत्र मंगलाचरणे द्वितीयश्लोके—

"श्रीपुरुषोत्तमो विजयते नीलाद्रिचूडामणिः" इति। तेनेमे तद्देशाभिजना इति वक्तुं पार्यते। श्रीमदानन्द-पूर्णविद्यासागरन्यायकल्पलतिकव्याख्या तु अतिसंक्षिप्ता प्रायेण आनन्दगिरीयामेव टीकामनुसरति। क्वचिदेव तु विशेषो दृश्यते। सोऽप्यत्र टिप्पण्यामुद्धृत्य प्रादर्शि।

**वार्तिककाराणां व्याख्याशैली**—वार्तिककाराः भाष्योक्तानर्थान् प्रायेण स्वीकृत्य दृढीकृत्य च बहुषु प्रदेशेषु स्वयमर्थान्तराणि प्रदर्शयन्ति यथा "विज्ञाय प्रज्ञां कुर्वीत" इति एतद्वाक्यं ब्रह्मसिद्धिकारैरपि ध्यान-विधिपरतया व्याख्यातं; विवरणकारादिभिश्च शतशः ध्यानविधिः खण्डितः। एतेऽपि ध्यानविधिर्नास्ति लब्ध साक्षात्कारस्येति निश्चिक्युः। अपि च "निदिध्यासितव्यः" इत्यत्रापि न ध्यानविधिः तस्मिन्नेव वाक्ये "दर्शनेन श्रवणेन विज्ञानेन" इत्यत्र प्रकृतनिदिध्यासनस्य विज्ञानपदेनानुवादात् इत्यूचुः। तदुक्तं—"अपरायत्तबोधो हि निदिध्यासनमुच्यते" इति।

भगवत्पादशिष्याणां समेषामसाधारणी गुरुभक्तिः। वेदान्तेषु श्रद्धा शमदमादिसाधनसम्पत्तिश्च सर्वेषां तत्तद्ग्रन्थमुखेन दृश्यते।

पद्मपादाः—नमाम्यभोगिपरिवारसंपदं निरस्तभूतिमनुमार्धविग्रहम्।
अनुग्रमुन्मृदितकाललाच्छनं विनाविनायकमपूर्वशङ्करम्॥
तोटकाचार्याः—येषां धीसूर्यदीप्त्या प्रतिहतमभवन्नाशमेकान्ततो मे
ध्वान्तं स्वान्तस्य हेतुः जननमरणसन्तानदोलाधिरूढेः।
येषां पादौ प्रपन्नाः श्रुतिशमविनयैः भूषिताः शिष्यसङ्घाः
सद्योमुक्ताः स्थितास्तान् यतिवरमहितान् यावदायुर्नमामि॥

भगवत्पादानां सान्निध्यात् सर्वेऽपि जीवन्मुक्तिपदं प्राप्य अन्ते विदेहकैवल्यमापुः इति। इष्टसिद्धिकारैः वार्तिककारीयत्वेनोल्लिखिता इमे श्लोकाः वार्तिके न दृश्यन्ते।

नेहात्मविन्मदन्योऽस्ति न मत्तोऽज्ञोऽस्ति कश्चन।
इत्यजानन् विजानाति यस्स ब्रह्मविदुत्तमः ॥
स्वयमेव त्ववस्तुत्वादविद्यायाः परात्मधीः ।
मृतमारणवल्लज्जन्ती स्वाभावमपि निर्दहेत् ॥
भावाभावविभागं सा नेति नेत्यात्मवह्निना ।
प्लुष्ट्वाऽपास्ततमस्तज्जविकल्पात्मा न कं विशेत् ॥

इत्थमतिगम्भीरविषयनिबन्धनस्य दुरूहस्य वार्तिकस्य आनन्दगिर्याचार्योपज्ञा टीकाऽत्र न्यवेशि। मुद्रितपूर्वापीयं टीका नेदानीमुपलभ्यते। आनन्दगिरीणां व्याख्यानरीतिः सुप्रसिद्धा सरला मूलार्थावबोधनाय पण्डितैः समादृता च। स्वपक्षस्थापनाय वार्तिकोद्धृतानां मीमांसाधिकरणानां प्रभाकरपक्षानुसारित्वात् दुरवगाहतामालक्ष्य श्रीमदानन्दगिरिभिः अतिविशदया शैल्या तेषामुपपादनं सर्वान् विदुषः अधमर्णयति। आनन्दपूर्णविद्यासागरटीकाप्यन्यत्र मुद्र्यमाणा वर्तते। सा तु संक्षिप्ता सरला च। टीकयोः व्याख्याप्रकारः प्रायः सुसदृश एव। यत्र तु क्वचिद्भेदो विद्यासागरीये उपलभ्यते सोप्यत्र टिप्पण्यामुद्धृत्य प्रकाशितः।

महदिदं प्रमोदस्थानं पण्डितानां यत् आचार्यश्रीमच्छङ्करभगवत्पादीयसिद्धान्तप्रचारणबद्धदीक्षैर्वेदान्तग्रन्थानां मुद्रणादिना संरक्षणकुतूहलैः स्वयमपि वेदान्तशास्त्रनदीष्णैर्महामण्डलेश्वरैः काशीदक्षिणामूर्तिपीठाध्यक्षैः **श्रीमहेशानन्दगिरिमहाराजैः** स्थापितेन महेशानुसन्धानसंस्थानेन प्रकाशिते बृहदारण्यकोपनिषत्सहितसुरेश्वराचार्यवार्तिके प्रथमद्वितीयाध्यायात्मकः प्रथमो भाग इदानीं मुद्राप्य पण्डितानां पुरतः समुपस्थाप्यत इति।

अत्र ग्रन्थसंशोधनादिकठिनतरेऽस्मिन् समारम्भे अखर्वेण श्रमेण श्रद्धया बहूपकृतवतां **श्रीशारदानन्दशास्त्रि**महोदयानां तथा **श्रीवंशपतिद्विवेदिशास्त्रि**महोदयानां च कार्तज्ञ्यं प्रकाश्य तेषां सप्रमोदं धन्यवादान् समर्पयामि।

तथा आनन्दकाननमुद्रणालयस्य प्रभवः संस्कृतैकानुरागिणः **श्रीविश्वम्भरनाथद्विवेदिमहोदयाः** सोद्योगं विशेषपरिश्रमपुरस्सरमल्पीयसैव कालेनेदं मुद्रितवन्त । तेभ्यो बहुशो धन्यवादा भवन्त्विति।

अद्वैतग्रन्थसद्रत्नमञ्जूषान्तर्गतं शुभम्।
सटीकवार्तिकोद्दीप्तं भाष्यरत्नं सतां मुदे ॥

**श्रीमत्सुरेश्वराचार्यसंन्यासपर्व**
**चैत्रशुक्लरामनवमी**
**वि० २०३९**

**विदुषां वंशवदः**
**पण्डितराजः एस० सुब्रह्मण्यशास्त्री**
**महेशानुसन्धानसंस्थाननिदेशकः**

# विषयविन्यासः

## अथ प्रथमोऽध्यायः

| विषयाः | पृष्ठाः |
|---|---|

•

ॐ

श्रीमत्सुरेश्वराचार्यविरचितं

# बृहदारण्यकोपनिषद्भाष्यवार्तिकम्

श्रीमदानन्दगिर्याचार्यविरचित-

## शास्त्रप्रकाशिकाटीका-

समुल्लसितम्

## प्रथमाध्याये प्रथमं ब्राह्मणम्

### सम्बन्धभाष्यवार्तिकम्

**स्वाविद्याविभवप्रसूतविपुलद्वैतप्रपञ्चाहितस्पष्टभ्रान्तितिरोहितात्ममतयो यं भागशो मन्वते ।**
**निर्भागं सकलाभिधानमननव्यापारदूरस्थितं वन्दे नन्दितविश्वमव्ययमजं भक्त्या तमेकं विभुम् ॥१॥**

### शास्त्रप्रकाशिका

[1]स्वाज्ञानोद्भूतभूतप्रमुखबहुमुखद्वैतदेहद्वयोद्यन्मातृत्वादिप्रपञ्चप्रचयपरिचयप्राप्तसंसारयन्त्रम् ।
नेत्यभ्यासप्रसूतप्रबलमतिबलप्रास्तमोहप्रभावप्रोत्थप्रत्यर्थिसार्थद्युतिकथमकथं धाम कामं प्रपद्ये ॥ १ ॥

[2]कारुण्यामृतवारिपूरलहरीदूरीकृतस्वाश्रितस्वान्तध्वान्तनिरन्तरान्तररजोराशिर्यशः शेवधिः ।
भास्वद्भानुसहस्रभानुगहनोऽवज्ञाततिग्मद्युतिर्देवः श्रीपुरुषोत्तमो विजयते नीलाद्रिचूडामणिः ॥ २ ॥

[3]त्वङ्गत्तुङ्गभुजङ्गसङ्गगहनप्रत्युद्यदङ्गद्युतिभ्रश्यद्विश्वदिगन्तरालबहुलप्रौढान्धकाराङ्कुरः ।
सोमः सोमकलाकलापकलितो लावण्यकारुण्यभूर्भूयान्नो निरवद्यबोधविधये देवो भवानीपतिः ॥ ३ ॥

बन्धूकबन्धुरुचये रचये नमस्यां हेरम्बनाम वहते महते गजाय ।
प्रत्यूहभङ्गविधये निधये गुणानां शोभामतीव भजते सृजते जगन्ति ॥ ४ ॥

मातर्नतोऽस्मि भवतीमथ चाऽर्थये त्वां[4] चेतः सरस्वति ! सुरेश्वरवार्तिके मे ।
वाचा सहैव सदनुग्रहसम्प्रसन्नमेकाग्रमस्तु परिहाय पराञ्चमर्थम् ॥ ५ ॥

---

१. स्वाश्रिताज्ञानजन्यपञ्चभूतप्रमुखं द्वैतं तद्गतं देहद्वयं सूक्ष्मस्थूलरूपं तेन निमित्तेन प्राप्तः प्रमातृत्वादिप्रपञ्चप्रचयपरिचयः तेन संसारयन्त्रं प्राप्तः जीवरूपं प्राप्तः आत्मा स एव धाम। तच्च ''नेति नेति'' इत्यभ्यासश्रुतिबलात् प्राप्ता या मतिः साक्षात्कारः तद्बलेन प्रास्ता निरस्ता मोहप्रभावेणोत्पन्ना या वैरिसमूहस्यानात्मनः प्रकाशस्य कथा येन तत्। अकथं वाङ्मनसागोचरं प्रपद्ये शरणं गतोऽस्मि। अत्र प्रपत्तिः अभेदध्यानमेव निर्गुणे नमस्कार्यत्वाद्यसम्भवात्।

२. अयं श्लोकः जगन्नाथक्षेत्रस्थश्रीविष्णुपरः पुरुषोत्तमः कारुण्याख्यामृतवारिपूरलहर्या येन स्वाश्रितानामज्ञानं आन्तरः रजोगुणश्च दूरीकृतौ, यश्च प्रकाशमानसूर्यसहस्रकिरणैः गहनः अप्रकाश्यः। अत एव येन सूर्योऽप्यवज्ञातः न्यक्कृतः सः विजयते।

३. श्रीभवानीपतिः शिवः स्तूयते—यः स्वशरीरे विहरतां सर्पाणां प्रकाशेन बहुलीभवदङ्गद्युत्या प्रपञ्चगतान्धकारं निवर्तयति, यश्च चन्द्रकलाभूषणः लावण्यस्य कारुण्यं प्रकाशयति अतिलावण्ययुक्तमस्य लीलाशरीरमित्यर्थः। ''ईश्वरात् ज्ञानमिच्छेत्'' इति स्मृतिमनुसृत्य शिवं ज्ञानं प्रार्थयते। वार्तिकद्वितीयश्लोके सतां मुमुक्षूणां शान्तये मोक्षार्थमित्यर्थः। यद्यपि तत्र सतां इति साधनचतुष्टयसम्पन्नानामित्यर्थो युक्तः तथापि तत्र पूर्वपूर्वस्योत्तरोत्तरकारणत्वात् मुमुक्षुत्वमेवाधिकार इति न्यायकल्पलतिका। युक्तं चैतत् अत एव सूत्रमुक्तावलौ पूर्वेषां कुलालपितृवत् अन्यथासिद्धिरुक्ता।

४. ''अथ वार्थये त्वामि''ति पाठः।

श्रीमद्व्यासपयोनिधिर्निधिरसौ सत्सूक्तिपङ्क्तिस्फुरन्मुक्तानामनवद्यहृद्यविपुलप्रद्योतिविद्यामणिः ।
शान्तिः क्षान्तिधृतो दयेति सरितामेकान्तविश्रान्तिभूर्भूयान्नः सततं मुनीन्द्रमकरश्रेणीश्रयः श्रेयसे ॥ ६ ॥
यद्भाष्याम्बुजजातजातमधुरप्रेयोमधुप्रार्थनासार्थव्यग्रधियः समग्रमरुतः स्वर्गेऽपि निर्वेदिनः ।
यस्मिन्मुक्तिपथः पथीनमुनिभिः सम्प्रार्थितः सम्बभौ तस्मै भाष्यकृते नमोऽस्तु भगवत्पादाभिधां बिभ्रते ॥ ७ ॥
संसाराम्भोधिपारप्रकटनपटुतागाढगूढागमान्तव्याख्याव्याख्यातविद्वन्निवहमहिमसंव्याप्तसर्वावकाशः ।
शश्वद्विश्वात्ममोहप्रवहहुतवहः संदुहानः सुधानां धारां गीर्भिः सुरेशः स जयति यमिनामग्रिमग्रामणीन्द्रः ॥ ८ ॥
यत्पादाम्बुजचञ्चरीकधिषणा निर्वाणमार्गाधिगा पङ्क्तिर्मुक्तनिसर्गदुर्गदुरिता वाचंयमानामियम् ।
यस्मिन्नित्यमिदं शमादि समभूद्बोधाङ्कुरो मे यतः शुद्धानन्दमुनीश्वराय गुरवे तस्मै परस्मै नमः ॥ ९ ॥
कारुण्याम्भोनिधिभ्यो विधिशतवशगान्प्राणिनो मोचयद्भ्यो विद्यापारंगतेभ्यो गतविततमस्तोमवद्भ्यो महद्भ्यः ।
आ भूमेरा च सत्यात्प्रथितपृथुयशः श्रेणिनिश्रेणिभाग्भ्यस्तेभ्यः सद्भ्यो गुरुभ्यस्त्रिविधमपि नमः संततं संविदध्मः ॥१०॥
सम्प्रदायविदामुक्तीरनुसृत्य प्रणीयते । शास्त्रप्रकाशिका सेयं सुरेश्वरवचोनुगा ॥११॥

इह खलु निखिलाम्नायार्थपरिशोधनार्थं काण्वोपनिषद्भाष्यं व्याचिकीर्षुराचार्यश्चिकीर्षितपरिसमाप्त्यादिपरिपन्थिदुरितनिबर्हणसिद्धये वृद्धाचारप्रमाणकमिष्टदेवताप्रणतिलक्षणं मङ्गलाचरणं मुखतः समाचरन्नर्थाच्च व्याचिख्यासितभाष्यार्थं सुखप्रतिपत्त्यर्थं संक्षिपति—स्वाविद्येत्यादिना । तं विभुं वन्दे भक्त्येति संबन्धः । तच्छब्देन परस्य लोकवादिप्रसिद्धिरुक्ता । ननु परश्चेत्प्रसिद्धिविषयो न तर्हि शास्त्रप्रतिपाद्योऽनन्यलभ्यत्वाभावात्तत्र विशेष्यं व्यपदिशन्नुत्तरमाह—विभुमिति । सामान्येन प्रसिद्धोऽप्यनतिशयैश्वर्यशाली परो नानन्तसच्चिदानन्दात्मकविशेषाकारेण शास्त्रादृते सिध्यति । तथा च धर्मवत्तस्य शास्त्रगम्यतोचितेति भावः । आराध्यानां हि परा काष्ठेश्वरोऽतस्तत्राभिवादनं युक्तमिति मत्वा वन्दनं प्रायुङ्क्त । भक्तिश्रद्धानिबन्धनमभिवादनमभिमतफलवदित्यभिप्रेत्याऽऽह—भक्त्येति । मीमांसकास्तु भोक्तृभोग्यविभागमनुभवन्तोऽतिरेकिणं प्रेरयितारमपश्यन्तस्तस्य शास्त्रप्रतिपाद्यत्वाद्यसत्यां भित्तौ चित्रकर्मेति वर्णयन्ति तान्प्रत्याह—स्वाविद्येति । स्वशब्दः स्वीयविषयो मैत्रस्य स्वमितिवत् । स च मीमांस्यात्मगतः अविद्याख्यो विभवस्तेनोपादानेन प्रसूता विपुलेन च भोक्तृभोग्यात्मकद्वैतप्रपञ्चेन प्रतीतेन निमित्तेनाऽऽहिताऽऽपादिता या स्पष्टा सुदृढा भ्रान्तिरीश्वरो नास्तीत्येवमात्मिका तया तिरोहिता प्रतिबद्धा परस्मिन्नस्तित्वधीर्येषां ते मीमांसका यमीश्वरं भोक्त्रादिविभागेनैव कल्पयन्ति तं वन्दे भक्त्येति योजना । अयं भावः । न तावदीश्वरो नास्ति तस्य श्रुत्याद्यधिगतत्वादतस्तस्य शास्त्रीयता युक्तेति । केचित्तु तस्य परिणामित्वं क्षीरवदाचक्षते तान् प्रत्याह—निर्भागमिति । सावयवं हि क्षीरादि परिणमते न तु परो निरवयवत्वश्रुतेस्तथेति भावः । अन्ये तु सकर्तृकत्वानुमाना"दत्यतिष्ठदि"त्यादिश्रुतेश्च तटस्थमीश्वरमाहुस्तान्दूषयति—सकलेति । न हि वाचां मनसां चागोचरं परमनुमानागमाभ्यां तटस्थमातिष्ठामहे। अनुमानं हि तत्र संभावनाहेतुर्न स्वतन्त्रं मानं जन्मादिसूत्रविरोधात् । आगमोऽपि तमगोचरयन्नेव तस्यासङ्गत्वमुद्गिरति न तु साक्षादेव तत्राऽऽगमानुमाने क्रमेते वाङ्मनसातीतत्वश्रुतेः । तन्नेश्वरस्य ताटस्थ्यमित्यर्थः ।

ननु क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वर इति पतञ्जलिना भगवताऽभिधानात्तस्मिन् दुःखादिवन्न सुखमपीति कुतस्तस्य शास्त्रार्थता, न हि त्वन्मते परानन्दतया पुरुषार्थताऽभावे शास्त्रीयता तत्राऽऽह—नन्दितविश्वमिति । यो हि धनवतोऽन्यान्करोति स स्वयमनवधिकधन इति प्रसिद्धम् । तत्र परोऽपि विश्वमानन्दयन्ननतिशयानन्दः स्वयमिति गम्यते । "एष ह्येवाऽऽनन्दयाती"ति च श्रुतेः । अतोऽस्य योगसूत्राद्दुःखादिवद्वैषयिकसुखाभावेऽपि शास्त्रार्थता युक्तेति भावः । अथ यथाऽन्यं धनिनं कुर्वतः स्वस्यापि तद्वत्त्वमेव न धनत्वं तथा परस्य सर्वं सुखयतः सुखित्वमेव न सुखत्वं तथा च परानन्दयो रूपरूपिणोरिव गुणगुणित्वमत आह—एकमिति । एकमेवेति सर्वभेदासहत्वश्रुतेर्न परस्मिन्गुणगुणित्वम् । "आनन्दो ब्रह्मेति व्यजानादि"त्यादावभेदश्रवणाच्च । सुखस्वरूपस्यापि तत्तद्वृत्त्यवच्छिन्नत्वेन सुखहेतुतेति भावः । सौगतास्तु सर्वज्ञमीश्वरं स्वरसनिर्वाणमविरतोदयं शास्त्रप्रणयनादिव्यवहारनिर्वाहकमाहुस्तान्प्रत्याह—अव्ययमजमिति । न हि परस्य स्वतो जनिविनाशौ हेतूपादानस्यान्यत्रापि वैयर्थ्यापातात्सत्ताकाले तदभावात्तत्काले च स्वयमभावात् । स्वतः सिध्यतोश्च तयोः स्वप्रकाशवस्तुमात्रत्वापत्तेः । न च तौ परतः सिध्यतः परेणासंबन्धात् । आद्यन्तविकारव्यासेधेन तदन्तर्वर्तिसर्वविकारव्यासेधः । तथा च नित्यकूटस्थस्य परस्य यथावदप्रतिपन्नस्य युक्ता शास्त्रीयतेति भावः । अथवा तमिति प्रतीचः स्वतःसिद्धतया सिद्धिरुक्ताऽन्यथा घटवदनात्मत्वापत्तेः "अत्रायं पुरुषः स्वयं ज्योतिरि"ति श्रुतेः । तस्याणुत्वमेकदेशिनो दिगम्बराश्च

मध्यमपरिमाणत्वमाहुस्तदपनुदति—विभुमिति। अणुत्वे सर्वदेहव्यापिकार्यायोगान्मध्यमपरिमाणत्वे घटवदनित्यत्वापत्तेरनन्तपरिमाणं प्रत्यञ्चं प्रतीमः। "स पर्यगादि"त्याद्याऽत्र श्रुतिरित्याशयः। पूर्णे च प्रतीचि स्तोतव्यान्तराभावात्तस्यैवाभिवादनं योग्यमिति मत्वा वन्दतिः प्रयुज्यते, न च तदभिवादनं भक्तिश्रद्धे विना फलवदिति भक्त्येत्युक्तम्। ननु प्रतीचो न पूर्णत्वमध्यात्मादिषु तद्भेदप्रतीतेस्तत्राऽऽह—स्वाविद्येति। स्वशब्देन प्रत्यगात्मोच्यते बलवत्यसति बाधके तस्य तस्मिन्मुख्यत्वात्। तस्याविद्यैव विभवः। न हि तस्याविद्यातिरिक्तं सामर्थ्यम्। वक्ष्यति चाऽऽत्माविद्यैव नः शक्तिरिति। तेन प्रसूतो विपुलोऽध्यात्मादिभावेन विस्तीर्णो द्वैतप्रपञ्चस्तेन निमित्तेनाऽऽहिता स्पष्टा भ्रान्तिरात्मभेदावगाहिनी तया तिरोहिता प्रतीचि पूर्णा मतिर्येषां ते जीवाः। सूत्रं हिरण्यगर्भो विराडित्यादिना भेदेन यं प्रत्यञ्चं चिन्तयन्ति तं वन्दे भक्त्येति सम्बन्धः।

अयमाशयः। न तावत्प्रतीचो वास्तवो भेदो मानाभावात्प्रतीतेराविद्यत्वात्तथा च न तस्य पूर्णताहतिरिति। ननु यथाप्रतिभासं विभागो वास्तवो लौकिकपरीक्षकसिद्धविभागबुद्धेरपहस्तयितुमशक्यत्वात्तत्राऽऽह—निर्भागमिति। न तावत्तत्र देशादिकृतो विभागो विभुत्वान्नित्यत्वादद्वयत्वाच्च यतश्चाऽऽत्मा व्यावर्तते तस्य निःस्वरूपत्वमात्मस्वरूपस्य ततो व्यावृत्तेस्तस्मात्तस्मिन्भेदधीरविद्यैवेत्यर्थः। आत्मा निर्विभागश्चेत्तथैव सर्वेषां प्रथेतेत्याशङ्क्याऽऽह—सकलेति। यद्वाऽऽत्मा सर्वमानाविषयः स्वप्रकाशस्तस्मिन्भेदो न प्रामाणिको न खल्वमेये तद्भेदस्य प्रमेयतेत्याह—सकलेति। अव्यवहार्यश्चेदात्मा न तर्हि शास्त्रार्थः प्रवृत्तिनिवृत्तिभ्यामपरामृष्टस्यापुरुषार्थत्वादिति नेत्याह—नन्दितेति। आत्मना हि सर्वं जगदापादितप्रहर्षं निरानन्दात्मकस्य तदयोगा"देतस्यैवाऽऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती"ति च श्रुतिः। अतो युक्तमानन्दतया पुमर्थस्य प्रवृत्तिनिवृत्तिभ्यामपरामर्शेऽपि प्रतीचः शास्त्रार्थत्वमिति भावः।

यद्वा सुख्यहं दुःख्यहमिति प्रतीतेः संसारी न शास्त्रार्थः स्यादित्याशङ्क्याऽऽह—नन्दितेति। साभासमन्तःकरणं सुखाद्याश्रयो न प्रत्यगात्मा तत्साक्षित्वात्परानन्दत्वाच्चातो युक्ता तस्य शास्त्रगम्यतेत्यर्थः। आत्मा चेदानन्दस्तस्य जन्मादिभावादात्मनोऽपि तत्प्रसक्तिरित्याशङ्क्याऽऽह—अव्ययमजमिति। "न जायते म्रियते वे"त्यादिना सर्वविक्रियानिषेधेन कौटस्थ्यमस्योच्यते तत्कुतोऽयं जन्मादिभागी। न चाऽऽनन्दस्यापि तदस्त्युपाध्यपरामर्शे तदप्रतीतेर्दुःखादौ त्वात्मत्वाप्रमितेस्तस्य स्वाभाविकत्वेऽप्यदोषतेत्यर्थः। अभिवाद्याभिवादित्रोर्भेदस्य गुरुशिष्यादौ दृष्टेर्न प्रत्यगभिवादनमिति चेत्तत्राऽऽह—एकमिति। प्रतीचि वस्तुतो भेदाभावेऽपि भेदं कल्पयित्वा तदभिवादनमिति भावः।

अपरा योजना। "सदेव सोम्येदमि"त्यादिश्रुतिदर्शितं सत्यज्ञानादिलक्षणं तत्पदलक्ष्यं निरूपयति—तमिति। कार्यकारणस्वामिनं तत्साक्षिणं त्वंपदलक्ष्यं "योऽयं विज्ञानमयः प्राणेष्वि"त्यादिश्रुतिसिद्धं दर्शयति—विभुमिति। पदद्वयसामानाधिकरण्यात्तत्त्वमर्थयोरैक्यं वाक्यार्थमावेदयति—एकमिति। कल्पितकर्मत्वमेव प्रत्यग्भूतं परं तत्त्वमभिवाद्यमित्यभिप्रेत्य द्वितीयाप्रयोगः। तत्र वाक्कायचेतसामेकाग्रतयाऽवस्थानमभिवादनम्। भक्तिश्रद्धाभ्यामेव क्रियमाणं तदभिवादनं फलवदिति भक्त्येत्युक्तम्। नन्वात्मा भोक्ता "तयोरन्यः पिप्पलं स्वाद्वत्ती"ति श्रुतेः। ईशस्तु नैवम् "अनश्नन्नन्यो अभिचाकशीती"ति च श्रुतेः। अतो मिथो विरुद्धयोस्तयोर्नाभेदस्तत्राऽऽह—स्वाविद्येति। स्वशब्देन प्रत्यग्ब्रह्मोच्यते। "स्वमपीतो भवती"ति श्रुतेः। तदाश्रया तद्विषया चाविद्या, अन्यस्याऽऽविद्यत्वेन तदाश्रयत्वाद्ययोगात् यथाऽऽहुः—"आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवले"ति। तस्या विभवः समाच्छादनशक्तिरन्या विक्षेपशक्तिः। न चाऽऽत्माऽविद्यैव नः शक्तिरित्युक्तेरविद्याया न शक्त्यन्तरमनवस्थानादिति वाच्यम्। कार्यैकसमधिगम्या हि शक्तिः। अविद्यायाश्चाऽऽच्छादनविक्षेपाख्यं कार्यद्वयं लक्ष्यते। उक्तं च—"आच्छाद्य विक्षिपति संस्फुरदात्मरूपमि"ति। तस्मात्तदनुरोधिशक्तिद्वयं तस्याः शक्तेरपीष्टम्। न चानवस्था शक्त्यन्तरकल्पकाभावात्। तेन प्रसूतो विपुलः समष्टिरूपः सूक्ष्मस्थूलभेदेन द्विधागतो योऽयमुपाधिरपञ्चीकृतपञ्चमहाभूततत्कार्यात्मकं सप्तदशकं लिङ्गं सूक्ष्मं शरीरं पञ्चीकृतपञ्चमहाभूततत्कार्यात्मकं च वैराजं स्थूलं शरीरं तद्भावेन द्वैतेनोपाधिना प्रपञ्चेन च व्यष्टिरूपेणाऽऽहिता देहद्वयोपहितास्तदैक्याध्यासादेव कर्ता भोक्तेति स्पष्टभ्रान्तयो भ्रान्तत्वादेव तन्निदानाज्ञानावृतस्वरूपस्फुरणाश्चिदाभासा यं जीवो जगत्परमात्मेति भेदेन कल्पयन्ति तं वन्दे भक्त्येत्यन्वयः। उक्तं च—"स्वाज्ञानकल्पितजगत्परमेश्वरत्वजीवत्वभेदकलुषीकृतभूमभावे"ति। स्वस्य स्वस्मिन्वाऽविद्या स्वाविद्या तस्या विभवस्तेन

**ग्रन्थकारस्य प्रतिज्ञा**

**यां काण्वोपनिषच्छलेन सकलाम्नायार्थसंशोधिनीं सञ्चक्रुर्गुरवोऽनुवृत्तगुरवो वृत्तिं सतां शान्तये ।**
**अर्थाविष्करणं कुतार्किककृताशङ्कासमुच्छित्तये तस्या न्यायसमाश्रितेन वचसा प्रक्रम्यते लेशतः ॥ २ ॥**

प्रसूतश्च विपुलश्च द्वैधागतश्च स च प्रपञ्चश्च ताभ्यामाहिता स्पष्टा भ्रान्तिर्येषां ते स्पष्टभ्रान्तयः। आत्मैव मतिरात्ममतिः सा तिरोहिता येषां ते तथा स्वाविद्याविभवप्रसूतविपुलद्वैतप्रपञ्चाहिताश्च ते स्पष्टभ्रान्तयश्च ते तिरोहितात्ममतयश्चेति विग्रहः। तत्र स्वाविद्येत्येकरसे वस्तुनि मूलाविद्याध्यासो दर्शितः विभवशब्देन तस्याः शक्तिद्वयमुक्तम्। प्रसूतेत्यादिना भ्रान्तीत्यन्तेन विक्षेपशक्तेर्विकारो विक्षेपो व्याख्यातः। तिरोहितेत्यादिनाऽऽच्छादनशक्तिकार्यमुक्तमिति विभागः। अविद्योत्थपुरद्वयवेष्टनलब्धभेदप्रत्ययस्याऽऽत्मनो भेदभ्रान्तिमनुभाषते—यं भागशो मन्वत इति। इमामेव भेदभ्रान्तिमादाय बहुवचनमुन्नेयम्। अयमभिसन्धिः। आत्मनि भोक्तृत्वादिभानस्य आविद्यत्वात्तस्य विपरीतरूपेण परेणाऽऽत्मना वाक्यीयमैक्यमविरुद्धमिति। अथ मिथो ब्रह्मात्मानौ भिन्नौ विरुद्धधर्मवत्त्वात्पयःपावकवदित्यनुमानस्य किमुत्तरं तत्राऽऽह—निर्भागमिति। न तावदिह वास्तवो भेदः साध्योऽप्रसिद्धविशेषणत्वान्नापि प्रातिभासिकः सिद्धसाध्यत्वाद्विरुद्धधर्मवत्त्वं च प्रामाणिकमसिद्धमितरद्बिम्बप्रतिबिम्बयोरनैकान्तमतो नानुमानादपि भेदो जीवपरयोरित्यर्थः। किञ्च वाङ्मनसातीतं ब्रह्म श्रुतं प्रत्यगात्मा च तथा, अन्यथा घटवत् अनात्मत्वापातात्तथा च नासौ परस्मात्तत्त्वतोऽतिरिच्यते वाङ्मनसातीतत्वात्तद्वदिति प्रत्यनुमानमाह—सकलेति। किञ्च "आनन्दो ब्रह्मेति व्यजानादि"त्यादिश्रुतेरानन्दो ब्रह्म। "एतस्यैवाऽऽनन्दस्ये"त्यादिश्रवणात्परप्रेमास्पदत्वाच्च आत्माऽपि तथा, अतो नायं परस्मात्तत्त्वतो भिन्नः परमानन्दत्वात्तद्वदित्यनुमानान्तरमाह—नन्दितेति। किञ्च श्रुतिस्मृतिभ्यां परस्तावत्कूटस्थो जीवोऽपि ताभ्यामेव तथा, तेन स परस्मात्तत्त्वतो न भिन्नः कूटस्थत्वात्तद्वदित्याह—अव्ययमजमिति। किञ्चेशोऽनपेक्षोऽन्यथा तत्त्वायोगात्; जीवोऽपि तथाऽऽत्मत्वात्तद्वत्। परतन्त्रताश्रुतिस्मृतिवादास्तु जीवशब्दितविशिष्टविषयाः। अतस्त्वंशब्दलक्षितं प्रत्यक्चैतन्यं परस्मादभिन्नं स्वतन्त्रत्वात्तद्वत्, न च साधनवैकल्यं दृष्टान्तेऽपि तल्लक्ष्यस्य विवक्षितत्वादित्याह—एकमिति। यद्वा भेदानुमानस्य श्रुतिविरोधमाह—एकमिति। तत्र तं विभुमेकमिति शास्त्रीयं तत्त्वमर्थयोरैक्यं विषयः श्रुत्योक्तो विषयविषयिभावः सम्बन्धोऽपि सूचितो नन्दितविश्वमित्यनतिशयानन्दाप्तिः फलमधिकारी च तत्कामो ध्वनितः। अतोऽनुबन्धचतुष्टयसिद्धेरिदमारभ्यमिति द्रष्टव्यम् ॥१॥

एवं देवतानमस्कारव्याजेन स्वाविद्यया प्रतीच्यनात्मवर्गोऽध्यस्तो न वास्तवः स तु नित्यशुद्धबुद्धमुक्तस्वभावो ब्रह्मैवेति भाष्यार्थः संक्षिप्तः। सम्प्रति व्याचिख्यासितभाष्यस्य सर्वदोषराहित्योक्त्या तदर्थप्रकटीकरणात्मनो वार्तिकस्यापि निर्दोषत्वं निर्दिशन्नुद्देश्यं प्रतिजानीते—यामित्यादिना। यां वृत्तिं गुरवः संचक्रुस्तस्या लेशतोऽर्थाविष्करणं प्रक्रम्यते न्यायसमाश्रितेन वचसेति संबन्धः। वृत्तिशब्दितस्य भाष्यस्यातिरोहितार्थत्वादव्याख्येयत्वमाशङ्क्य प्रसन्नगम्भीरत्वमाह—काण्वेति। तस्या व्याख्यानव्याजेनाध्ययनविध्युपात्तस्वाध्यायमात्रस्य ब्रह्मात्मन्यैदंपर्यं वक्तुं वृत्तिः प्रवृत्ता। कर्मकाण्डं हि कर्मानुष्ठानप्रयुक्तशुद्धिद्वारा ब्रह्माधिगतावारादुपकारकं "विविदिषन्ति यज्ञेने"ति श्रुतेः सर्वापेक्षाधिकरणन्यायाच्च। ज्ञानकाण्डं तु साक्षादेव तत्रोपयुक्तं परस्यौपनिषदत्वश्रुतेः, समन्वयाधिकरणन्यायाच्च। "सर्वे वेदा यत्पदमामनन्ती"ति च श्रुतिः। तदापातेन प्रसन्नाऽपि वृत्तिराम्नायमात्रस्य ब्रह्मपरत्वावेदकत्वादतिगम्भीरा व्याख्यानार्हेति भावः। एतेन विषयसंबन्धौ वृत्तेरुक्तौ। आप्तप्रणीतत्वादपि वृत्तेरस्ति व्याख्येयत्वमित्याह—गुरव इति। सांप्रदायिकप्रणीतत्वादपि सा व्याख्येयेत्याह—अनुवृत्तेति। शुश्रूषादिद्वारा गुरवोऽनुवृत्ता यैस्तेऽनुवृत्तगुरवस्ततो लब्धविद्या वृत्तिं चक्रुरतः सा व्याख्येयेत्यर्थः। साधनचतुष्टयसम्पन्नाधिकारिणां सत्त्वादपि तानुद्दिश्य प्रवृत्ता वृत्तिर्व्याख्येयेत्याह—सतामिति। तेभ्यो वृत्तिरेषा कथमुपकारमुपनयेदित्याशङ्क्य फलमाह—शान्तय इति। शान्तिः सनिदानसंसारनिरासस्तत्प्राप्तये तेषामेषा वृत्तिरित्यर्थः। वृत्तेरव्याख्येयत्वे हेत्वभावात्तदर्थाविष्करणे वार्तिकस्य प्रवृत्तिर्युक्तेति प्रतिजानीते—अर्थेति। ननु वृत्तिफलमेव तद्वार्तिकफलं फलान्तरं वा ? आद्ये वृत्तिमात्रलब्धफलानां प्रेक्षावतामुपेक्षा तद्वार्तिके स्याद्द्वितीये तद्वाच्यं तत्राऽऽह—कुतार्किकेति। श्रौतं तदनुग्राहकं तर्कं हित्वा स्वधीप्रभवं तर्कमास्थाय तत्त्वं व्यवस्थापयितुकामा भेदवादिनः कुतार्किकास्तेषामौत्प्रेक्षिकतर्कोत्थासंभावनादिनिवृत्तिर्वार्तिकावान्तरफलं परमफलं तु शान्तिरेवेति भावः। ननु भाष्याक्षरैरेव स्वार्थधीसमर्थैरवान्तर-

### उपनिषत्पदार्थनिर्वचनम्

**अत्र चोपनिषच्छब्दो ब्रह्मविद्यैकगोचरः । तत्रैव चास्य सद्भावादभिधार्थस्य तत्कुतः ।। ३ ।।**
**उपोपसर्गः सामीप्ये तत्प्रतीचि समाप्यते । त्रिविधस्य सदर्थस्य निशब्दोऽपि विशेषणम् ।। ४ ।।**

फलस्यापि सिद्धेर्वृथा वार्तिकमिति चेन्नेत्याह—न्यायेति । मन्दमध्यमयोर्भाष्यार्थेऽपि विपरीतधीसंभवात्तन्निरासिन्यायापेक्षायां भाष्यस्थन्यायविशदीकरणात्मनो वार्तिकस्याऽऽरम्भात्तत्साफल्यमित्यर्थः । वचसेत्युक्तानुक्तद्विरुक्तादिचिन्तात्मकेनेति यावत् । उक्तं च—

"उक्तानुक्तद्विरुक्तादिचिन्ता यत्र प्रवर्तते । तं ग्रन्थं वार्तिकं प्राहुर्वार्तिकज्ञा मनीषिणः" इति ।

यथोक्ताया वृत्तेः सर्वार्थप्रकटनमशक्यमित्यतिगम्भीरतां द्रढयन्ननौद्धत्यं सूचयति—लेशत इति । काण्वोपनिषद्भाष्यस्य व्याख्येयत्वोक्त्या तदीयवार्तिकस्याप्यारभ्यत्वमुक्तम् ॥ २ ॥

ननु ग्रन्थारम्भे प्रवृत्त्यङ्गत्वेनाधिकार्यादि वक्तव्यम् । तदभावे प्रेक्षावतामप्रवृत्तेः । यथाऽऽहुः—
"सिद्धार्थं सिद्धसंबन्धं श्रोतुं श्रोता प्रवर्तते । शास्त्रादौ तेन वक्तव्यः संबन्धः सप्रयोजनः ॥" इति ।

यद्यपि "संसारव्याधिवृत्सुभ्य" इत्यादिभाष्याभ्यामधिकारिविषयावुच्येते तथाऽपि फलानुक्तेर्न प्रवृत्तिविश्रम्भः । उक्तं हि—

"सर्वस्यैव हि शास्त्रस्य कर्मणो वाऽपि कस्यचित् । यावत्प्रयोजनं नोक्तं तावत्तत्केन गृह्यते ॥" इति ।

न च भाष्यद्वयं तदप्यर्पयति वाक्यभेदात् । न चार्थात्तदर्पणाददोषः । आर्थिकस्याशाब्दत्वेनानास्थापत्तेः । न च नामभाष्यं फलविषयं तस्य तन्निरुक्त्यैवावसानात् । न च तदेव फलमिष्टत्वाभावात्तन्न व्याख्येयं भाष्यमिति । तत्र सर्वव्यापाराणां फलार्थत्वात्तत्प्राधान्यादधिकार्याद्यर्पकभाष्ययोश्च वाच्यबाहुल्यात्तत्त्यागेनाऽऽदौ नामभाष्यस्य फलपरत्वमर्थक्रमबलीयस्त्वन्यायेन दर्शयति—अत्र चेत्यादिना मुक्तिमात्रं प्रयोजनमित्यन्तेन ।

"सेयमि"त्यादिभाष्यं विभजते—अत्रेति । अस्मिन्भाष्ये चशब्दाद्ग्रन्थान्तरे चाऽऽध्यात्मिके वृत्तमुपनिषत्पदं ब्रह्मविद्यामात्रमाहेति प्रतिज्ञातम् । "तत्पराणामि"त्यादिभाष्योक्तं हेतुमाह—तत्रेति । उपसर्गद्वयं क्विबन्तः सदिरित्यभिधानानामर्थस्य वक्ष्यमाणरीत्या ब्रह्मविद्यायामेव संभवादुपनिपूर्वस्य सदेः क्विपि निष्पन्नमुपनिषत्पदं तामेव स्वार्थवतीमधिकरोतीत्यर्थः । "उपनिषदं भो ब्रूही"त्यादौ ब्रह्मविद्यायां तच्छब्दप्रयोगसमुच्चयार्थश्चकारः । तच्छब्दस्याऽऽम्नायविशेषे रूढेस्तामतिलङ्घ्यावयवार्थेन कुतोऽर्थान्तरे वृत्तिः । रूढिर्योगमपहरतीतिन्यायादपरित्यज्यैव रूढिं श्येनादिशब्दानामन्यत्र वृत्तेरङ्गीकारादिति चोदयति—तत्कुत इति ॥ ३ ॥

[1]तद्व्यपदेशं चेत्यत्राभिधावृत्तेस्तात्पर्यवृत्तिर्बलीयसीति न्यायेन तात्पर्यालोचनया रूढिमत्यक्त्वा "यथा ह वै श्येनो निपत्य आदत्ते एवमयं द्विषन्तं भ्रातृव्यमि"त्याद्यर्थवादिकसादृश्येन श्येनादिशब्दानां कर्मनामत्वमुक्तं न तथाऽत्राभिधावृत्तिः समुदायशक्तेरसत्त्वात्प्रसिद्धेस्तु गतिर्वक्ष्यते तन्नेह न्यायोऽवतरतीत्यभिप्रेत्योपनिपूर्वस्येत्यादिभाष्यं वार्तिकचतुष्टयेन व्याकुर्वन्नुपेत्युपसर्गवाच्यमाह—उपेति । तस्यैव लक्ष्यमर्थमाह—तत्प्रतीचीति । सामीप्यमव्यवहितत्वमन्तर्बहिर्विभागशून्ये प्रतीचि पर्यवस्यति । "अनन्तरोऽबाह्य" इति श्रुतेः उक्तं च—आत्मत्वादात्मनः केन व्यवधानमिति । विद्यासूत्रे चैतद्व्यक्तीकरिष्यते । अतः सर्वतो व्यवधानाभावोपलक्षितं चैतन्यमुपोपसर्गलक्ष्यमित्यर्थः । उपसर्गान्तरस्य धातोश्चार्थमाह—त्रिविधस्येति । क्विप्प्रत्ययान्तस्य सदेर्धातोर्विशरणादिकर्तृत्वाख्यस्त्रिविधोऽर्थः । "षद्लृ विशरणगत्यवसादनेष्वि"तिस्मृतेः । तस्योपशब्दवन्निशब्दोऽपि वक्ष्यमाणरीत्या त्रिविधस्वार्थार्पणद्वारा विशेषणमित्यर्थः ॥ ४ ॥

---

१. तद्व्यपदेशं चेति जैमिनिसूत्रम् ( अधि.॰१–४ ) "श्येनेनाभिचरन् यजेत" इति विधौ श्येनपक्षी यागसाधनत्वेन विधीयत इति पूर्वपक्षं कृत्वा "यथा ह वै श्येनः निपत्य अशङ्कित एवागत्य क्षुद्रजन्तूनादत्ते एवमयं यागः द्विषन्तं शत्रुमशङ्कित एव गृह्णाती"त्यर्थः । अत्र च यागे श्येनपदं श्येनसादृश्यात् प्रयुक्तं सादृश्यं च निपत्य आदानम् ।

**उपनीयेममात्मानं ब्रह्मापास्तद्वयं यतः । निहन्त्यविद्यां तज्जं च तस्मादुपनिषद्भवेत् ॥ ५ ॥**
**निहत्यानर्थमूलं स्वाविद्यां प्रत्यक्तया परम् । गमयत्यस्तसम्भेदमतो वोपनिषद्भवेत् ॥ ६ ॥**
**प्रवृत्तिहेतून्निःशेषांस्तन्मूलोच्छेदकत्वतः । यतोऽवसादयेद्विद्या तस्मादुपनिषन्मता ॥ ७ ॥**
**यथोक्तविद्याबोधित्वाद्ग्रन्थोऽपि तदभेदतः । भवेदुपनिषन्नामा लाङ्गलं जीवनं यथा ॥ ८ ॥**
**अरण्याध्ययनाच्चैतदारण्यकमितीर्यते । बृहत्त्वाद्ग्रन्थतोऽर्थाच्च बृहदारण्यकं मतम् ॥ ९ ॥**

नामभाष्यतात्पर्यम्

**इत्यादिनामव्युत्पत्तिच्छद्मना प्रकृतोचितम् । सर्वोपनिषदामाह मुक्तिमात्रं प्रयोजनम् ॥१०॥**
**मिथोविरोधसिद्ध्यर्थं कर्मज्ञानाधिकारिणोः । संसारव्याविवृत्सुभ्य इत्युक्तिं भाष्यकृज्जगौ ॥११॥**

कथमित्थमवयवार्थेऽपि विद्यायामेवोपनिषत्पदमित्याशङ्क्योपसर्गयोर्धातोश्चार्थावनुवदन्विशेषणविशेष्ययोर्विद्यागतत्वात्सैवोपनिषदित्याह—उपनीयेति । त्वमर्थं शुद्धमुपोपसर्गलक्षितमप्रपञ्चं ब्रह्म ग्राहयित्वा विद्या सकार्यामविद्यां पूर्वावस्थातः शिथिलयति । उक्तं च—तत्समीपात्मनां विशातनी गर्भादीनामिति । अतोऽवयवार्थस्य तस्यां पौष्कल्यात्सैवोपनिषदित्यर्थः । अत्रेममित्यादिपदचतुष्टयेनोपोपसर्गार्थ उक्तः, उपनीयेति निशब्दार्थो निहन्तीति विशरणकर्तृत्वमिति भेदः ॥ ५ ॥

उपसर्गार्थं धात्वर्थं च गतिहेतुत्वमनुवदन्विद्यायामेवोपनिषच्छब्दप्रवृत्तौ प्रकारान्तरमाह—निहत्येति । प्रमातृत्वादिरनर्थः । उक्तं हि—अनर्थश्च प्रमातृताप्रमुखं कर्तृत्वभोक्तृत्वमिति । तस्य मूलमविद्या तामात्माऽब्रह्मत्वधीहेतुं निरस्य विद्या परमात्मानं भेदाभावोपलक्षितं प्रत्यक्त्वेन प्रापयति । यथोक्तम्—निगमनाद्गमनाद्वोपरिष्टात्सर्वविद्यानां कार्यवैशेष्यादिति । तस्मादभिधात्रयार्थस्य तस्यां पूर्तेः सैवोपनिषदित्यर्थः ॥ ६ ॥

सम्प्रत्युपसर्गार्थं धात्वर्थं चावसादकत्वमनुवदन्नस्यामेवोपनिषच्छब्दप्रवृत्तौ प्रकारान्तरमालम्बते—प्रवृत्तीति । शुभाशुभव्यामिश्रप्रवृत्तीनां हेतवो रागादयस्तानशेषेण तद्धेत्वज्ञानस्य प्रत्यङ्मात्रतया निरासद्वारा विद्या नाशयति । उक्तं हि—अवसादनार्थस्य चावसादादिति । तस्मादवयवार्थस्यास्यां पूर्तेः सैवोपनिषदित्यर्थः ॥ ७ ॥

विद्यैव चेदुपनिषदिष्टा कथं तर्हि ग्रन्थे तच्छब्दोऽन्यायश्चानेकार्थत्वमित्याशङ्क्य "तादर्थ्यादि"त्यादिभाष्यं योजयति—यथोक्तेति । सा हि विशरणादिहेतुर्ब्रह्मात्मधीस्तद्बोधित्वं ग्रन्थस्य तद्व्युत्पादकत्वमतो व्युत्पाद्यव्युत्पादकयोरभेदोपचारादुपनिषदमधीमह इत्यादौ ग्रन्थेऽपि तच्छब्दो युक्तः । एतेनोभयत्र तच्छक्तिकल्पना प्रत्युक्तेत्यर्थः । साध्यसाधनयोरभेदोपचारेण साध्यशब्दस्य साधने प्रयोगे दृष्टान्तमाह—लाङ्गलमिति ॥ ८ ॥

यथोक्तविद्याजनकत्वे ग्रन्थस्य तदध्येतॄणां सर्वेषां किमिति सा न भवतीत्याशङ्क्य श्रवणादिपराणामेव अरण्यानुवचनादिनियमाधीताक्षरेभ्यस्तज्जन्मेत्याशयेन "सेयं षडध्यायी"त्यादिभाष्यार्थमाह—अरण्येति । न केवलमुक्तनियमाधीतः स्वाध्यायो विद्याहेतुर्वेदव्रतादिनियमाधीतश्चेति चार्थः । एतदिति ग्रन्थजातोक्तिः । अथारण्यानुवचनादिनियमाधीतवेदान्तानामपि केषांचित्तत्त्वाज्ञानात्कुतो यथोक्ताक्षरेभ्यो विद्याजन्मेत्याशङ्क्य "बृहत्त्वादित्यादि"भाष्यार्थमाह—बृहत्त्वादिति । उपनिषदन्तरेभ्यो ग्रन्थाधिक्याद्ग्रन्थतोऽस्य बृहत्त्वमर्थतस्त्वखण्डस्य ब्रह्मणोऽत्र प्रतिपाद्यत्वात्तज्ज्ञानहेतूनां चान्तरङ्गबहिरङ्गाणां भूयसां प्रतिपादनादतो बृहत्त्वादारण्यकत्वाच्च बृहदारण्यकम् । तस्मादनेकजन्मसुकृतक्षालितचेतसो नियमाधीतस्वाध्यायस्याऽऽपादितश्रवणादेराचार्यादिष्टो वेदान्तो विद्याहेतुर्न त्वशुद्धबुद्धेरित्यर्थः ॥ ९ ॥

नामभाष्यतात्पर्यमुपसंहरति—इत्यादीति । इत्थं ग्रन्थादावुपनिषद्बृहदारण्यकनाम्नोर्व्युत्पादनव्याजेन प्रकृतशास्त्रारम्भौपयिकं सर्वोपनिषदुत्पाद्यब्रह्मविद्यायाः सहेतुबन्धध्वस्तिरनतिशयानन्दावाप्तिश्चेति फलं न साध्यफलान्तरमित्येतदाह भगवान्भाष्यकारः । उपनिषद्ग्रहणं विद्याग्रन्थयोरेकफलत्वं दर्शयितुमित्याशयः ॥ १० ॥

ननु नामभाष्येण फलमुक्तं चेत्तत्कामोऽर्थादधिकारी सिद्धोऽतो व्यर्थमधिकारिभाष्यमित्याशङ्क्य तस्य तात्पर्यमाह—मिथ इति । कर्माधिकारी ज्ञानाधिकारी च तयोरन्योन्यं विरोधो वैलक्षण्यं तत्सिद्ध्येऽधिकारिभाष्यमित्यक्षरार्थः । यद्यपि फलभाष्येऽर्थादधिकारी सिद्धस्तथाऽपि कर्माधिकारिणो ज्ञानाधिकारिणं भेत्तुमधिकारिभाष्यमिति भावः ॥ ११ ॥

### वेदान्तानां नियोगपरत्वमतनिरासः

नैतत्साध्वभ्यधाय्युच्चैर्नियोगविरहादपि । कामितार्थस्य संसिद्धेर्लौकिकादेव मानतः ॥५५॥
तद्भावभावतो लिङ्गाद्वासनैकसमाश्रयात् । ज्ञातोऽनर्थेन संबन्ध आत्मनो न तु वास्तवः ॥५६॥
तस्मात्संसारसंबन्धनिदानस्य प्रसिद्धितः । लिङ्गादेव ततस्तस्य ध्वंसेऽनर्थो निवर्तते ॥५७॥
अन्तरेणापि वचनं बौद्धादेरिव सिद्धितः । मोक्षस्य पुरुषार्थस्य वचोऽतो निष्फलं भवेत् ॥५८॥
व्यतीतानेकजन्मोत्थवासनानामनन्ततः । तासां निरोधोऽसंभाव्यो जन्मन्येकत्र मानवैः ॥५९॥
साक्षादात्मावबोधेन प्रत्यग्ध्वान्तच्छिदा न चेत् । दुःखादिभावना ध्वस्ता कथं तद्भावना नुदेत् ॥६०॥
नियोगवर्त्मना चेयं यथा मुक्तिर्न सिध्यति । स्पष्टेन न्यायमार्गेण वक्ष्यामोऽवसरे तथा ॥६१॥

### पदार्थत्वादात्मनो मानान्तरापेक्षत्वमित्यस्य निरासः

न पदार्थो न वाक्यार्थ आत्माऽयं वस्तुतो यतः । तत्प्रत्याख्यानश्रुत्यैव तद्याथात्म्यावबोधनात् ॥६२॥

निरोधादेव मुक्ततेत्ययुक्तमिति प्रतिजानीते—नैतदिति । यदेतदुच्चैस्तात्पर्येणाभ्यधायि निरोधविधिवादिना तन्न साध्विति सम्बन्धः । वासनानिरोधान्मोक्षपक्षे नियोगं विनाऽपि लौकिकमानादेवानर्थतद्धेतुपुरुषार्थतद्धेतुरूपेष्टार्थसिद्धेर्वेदवचोवैयर्थ्यमित्यसाधुतामेव साधयति—नियोगेति ॥ ४५५ ॥

कथमनर्थस्य तद्धेतोश्च लौकिकमानसिद्धतेत्याशङ्क्याऽऽह— तद्भावेति । आत्मनोऽनर्थेन मातृत्वादिना सम्बन्धो भासमानः समुद्भूतजागरादिवासनानां भावे भावादभावे चाभावादित्यन्वयव्यतिरेकाख्याल्लिङ्गाद्वासनामात्रावष्टम्भाद्भवति ज्ञातोऽनात्मस्वभावानुसारी स्वापादावनवभासादतोऽनुभवलिङ्गाभ्यामनर्थतद्धेतुधीरित्यर्थः॥४५६॥

तथाऽपि कथं वेदवचोवैयर्थ्यप्रतिज्ञेति तत्राऽऽह—तस्मादिति । प्रकृतादनुभवादात्मनो बन्धसम्बन्धस्य तन्निमित्तस्य च वासनाख्यस्याज्ञयादिरूपलिङ्गादेव सिद्धेर्वचो विफलमित्युत्तरेण सम्बन्धः । नहि लिङ्गादिसिद्धेऽर्थे वचोऽर्थवदज्ञातविषयाभावादिति भावः । नन्वनर्थतद्धेतुविषयत्वेन वचसोऽर्थवत्त्वाभावेऽपि पुरुषार्थतद्धेतुविषयतया तदर्थवत्ता तत्राऽऽह—तत इति । समाधिना मनोनिरोधे जागरादिवासना निरुध्यन्ते नान्यथेत्यन्वयव्यतिरेकाभ्यां मनोनिरोधादेवोपायात्तस्य वासनाख्यबन्धहेतोर्ध्वंसे हेत्वभावे फलाभावन्यायेनानर्थो बन्धसंज्ञो निवर्तते । तथा च शास्त्रादृतेऽपि पुरुषार्थतद्धेतुसिद्धेः शास्त्रानर्थक्यं परस्य दुर्वारमित्यर्थः ॥ ४५७ ॥

वैदिकं वचो विनैव मोक्षाख्यपुमर्थस्य तद्धेतोर्मनोवासनानिरोधस्य च लिङ्गादिना सिद्धत्वाद्बौद्धादेरिव तवापि वेदानर्थक्यमिति फलितमाह—अन्तरेणेति । अतः सिद्धित इति सम्बन्धः ॥ ४५८ ॥

यत्तु तद्वासनानिरोधेऽतः पुमाञ्श्रुत्या नियुज्यत इति तत्रातीता वा वर्तमाना वा भाविन्यो वा वासना निरोद्धव्याः ? नाऽऽद्य इत्याह—व्यतीतेति । अतीतजन्मार्जितवासनानामनन्तत्वादतिवृत्तत्वाच्च दुःसाध्यो निरोधः । देवादयो हि कथंचिद्यथोक्तवासना निरोद्धमर्हन्ति मनुष्यास्तु शास्त्राधिकृता नैवमित्यर्थः । न द्वितीयो वर्तमानवासनानां कादाचित्कत्वान्नियोगं विना निरोधसिद्धेः । न तृतीयः । आगामिनीनां वासनानामप्राप्तत्वेन निरोधस्य दुःसाधत्वादिति द्रष्टव्यम् ॥ ४५९ ॥

किञ्च वासनानिरोधे ज्ञानं वा तदभ्यासो वा तद्विषयनियोगो वा हेतुः ? आद्यं प्रत्याह—साक्षादिति । अपरोक्षेणाऽऽत्मावबोधेनाऽऽत्माज्ञानध्वस्तिद्वारा वासनानिरोधेन मुक्तिश्चेदस्मन्मतमेव त्वयाऽपीष्टमिति भावः । द्वितीयं निरस्यति—न चेदिति । ज्ञानमज्ञानं वासनां वा नापनुदति ज्ञानभावना तदुभयं नुदति चेत्तदा चिरकालनिरूढातिनिबिडदुःखादिभावनाभिर्ध्वस्ता स्वल्पीयोज्ञानाभ्यासवासना कथं सकार्यमज्ञानं नुदेन्नहि स्वयंबाधिता भावनाऽन्यबाधे पर्याप्तेत्यर्थः ॥ ४६० ॥

ज्ञानाभ्यासनियोगोऽज्ञानादिनिरासद्वारा मुक्तिहेतुरिति तृतीयं दूषयति—नियोगेति । नियोगवशान्न मुक्तिरित्येतदन्योऽप्यनुभवोपाय इत्यारभ्याभिधास्यत इत्याह—वक्ष्याम इति ॥ ४६१ ॥

निरोधादेव मुक्ततेत्यादि निरस्तम् । यत्तु पदार्थत्वादात्मनो व्रीह्यादिवन्मानान्तरगम्यतेति तत्राऽऽह—नेत्यादिना । संसृष्टानां पदार्थानां तत्संसर्गस्य वा वाक्यार्थत्वात्कथमात्मनो वाक्यार्थस्यापदार्थत्वमत आह—नेति ।

वासनानामभावेऽपि सुषुप्त्यादौ न मुक्तता । मानव्यापारविरहात्प्रथनं वा दृगात्मनः ।।६३।।
सर्वानर्थाभिसंबन्धे ह्यविद्यैवास्य कारणम् । वासनानामपि युतौ सैव यस्मादपेक्ष्यते ।।६४।।
संभाव्यतेऽनपेक्षत्वं नियोगविरहादपि । यथा तथा च वक्ष्यामः स्पष्टेन न्यायवर्त्मना ।।६५।।
स्वानुभूतिबलादेव भवताऽपि विभाव्यते । नियोगादिः प्रमाणार्थो नानुभूतिर्नियोगतः ।।६६।।
यस्याप्रसिद्धिर्नाज्ञानात्प्रसिद्धिर्नापि मानतः । तस्यानुभवतत्त्वस्य कुतः सापेक्षतोच्यते ।।६७।।
स्वप्रधानात्मबुद्ध्यैव तदन्यस्य प्रसिद्धितः । कार्यबुद्धिव्यपेक्षातो नानुभूत्यात्मवस्तुनः ।।६८।।
क्व नु प्रतीयमानस्य पुमर्थत्वं समीक्षितम् । मानान्मानफलस्यैव पुमर्थत्वसमन्वयात् ।।६९।।
प्रतीतेर्माफलत्वाच्च कथं मेयैकनिष्ठता । माक्रियाफलयोगोऽयं यतो मातरि भोक्तरि ।।७०।।

तर्हि कथमस्य वेदार्थत्वं तत्राऽऽह—तदिति । पदार्थत्वादिः सर्वो विशेषस्तच्छब्दार्थः । आत्मविषयो द्वितीयस्तच्छब्दः । समारोपितसमस्तविशेषनिषेधद्वारा तस्य चिदेकतानस्य वेदार्थतेत्यर्थः ॥ ४६२ ॥

पदार्थत्वेनाऽऽत्मनो मानान्तरगम्यत्वशङ्कां निरस्य निरोधादेव मुक्ततेत्यत्र दोषान्तरमाह – वासनानामिति । न च तत्र पुनरुत्थानाज्जागरादिवासनाः सन्तीति वाच्यम् । स्वापादित्वभङ्गप्रसङ्गात् । न च तत्र कारणात्मना सत्त्वं विशेषोऽवस्थान्तरेऽपि तद्रूपेणैव सत्त्वान्न चैवमपि स्वापादौ न मुक्तिर्वासनाहेतुसत्त्वादिति युक्तम् । तथा सति तद्धेतुध्वंसादेव मुक्तिर्न वासनाध्वंसाद्धेतुध्वंसश्च ज्ञानादित्यस्मत्पक्षप्राप्तेरिति भावः । यत्तु स्वयंज्योतिःस्वभावत्वादित्यत्र वासनासु निरुद्धासु प्रथनमात्मनोऽवश्यंभावीति तदपि स्वापादौ व्यभिचारीत्याह—मानेति । वाशब्देन नञ्पदमनुकृष्यते । सत्यपि स्वरूपप्रथने तद्व्यवहारो मानं विना न सम्भवतीति भावः ॥ ४६३ ॥

वासनामात्रहेतुत्वादात्मनोऽनर्थसंगतेरित्यत्र वासनाऽनर्थहेतुरित्युक्तं तत्राऽऽह—सर्वेति । अविद्यावद्वासनानामपि हेतुत्वसम्भवे कुतोऽवधारणमित्याशङ्क्याऽऽह—वासनानामिति । तासां कार्यत्वेनानन्वयानवस्थाभ्यामुपादानत्वायोगात्सवासनानर्थहेतुरविद्यैवेत्यर्थः । विनाऽविद्यामसङ्गस्याऽऽत्मनो न वासनासंगतिरिति द्योतयितुं सैवेत्युक्तम् ॥ ४६४ ॥

यच्च सम्भाव्यं नानपेक्षत्वमित्यत्र नियोगानुप्रवेशं विना शब्दस्य नानपेक्षं प्रामाण्यमित्युक्तं तत्राऽऽह—सम्भाव्यत इति । वक्ष्यामः "सर्वोऽपी"त्यादाविति शेषः ॥ ४६५ ॥

यत्तु सिद्धे च न नियोगस्य सम्भव इति तत्राऽऽह—स्वानुभूतीति । नियोगवादिना चिदात्मवशादेव नियोगादिर्जडोऽर्थो गम्यते तथा च तत्साधकश्चिद्धातुः स्वसिद्धौ न नियोगाद्यपेक्षते नहि सविता रूपादिप्रकाशकस्तदपेक्षया प्रकाशते तन्न चिदात्मनि सिद्धेऽर्थे नियोगासम्भवो दोषोऽभ्युपेतत्वादित्यर्थः ॥ ४६६ ॥

ननु मानाधीना मेयसिद्धिर्न चाऽऽत्मनि मानान्तरमिष्टमागमश्च वियोगनिष्ठो न विध्यस्पृष्टमात्मानं गोचरयति तस्मादात्मसिद्धौ नियोगापेक्षा दुर्वारा नेत्याह—यस्येति । ज्ञानाज्ञानाभ्यां प्रसिद्ध्यप्रसिद्ध्योरभावे हेतुमाह—अनुभवतत्त्वस्येति । अनुदितानस्तमितकूटस्थबोधैकरसस्य सिद्धौ न नियोगाद्यपेक्षाशङ्काऽपीत्याह—कुत इति ॥४६७॥

तत्रैव हेत्वन्तरमाह—स्वप्रधानेति । स्वप्रधानमनन्याधीनं स्वतन्त्रमात्मवस्तु तद्रूपा बुद्धिश्चैतन्यं तदात्मनैव स्वातिरिक्तानात्मवर्गस्य लब्धसत्ताकत्वाच्चिद्रूपस्य वस्तुनः स्वसिद्ध्यर्थं न नियोगादिबुद्ध्यपेक्षा न हि भुजंगधियमपेक्षते रज्जुधीरतो नाऽऽत्मसिद्धिर्नियोगापेक्षेत्यर्थः ॥ ४६८ ॥

किञ्चानुभूयमानस्येत्यत्रानुभाव्यस्यैव पुमर्थत्वमित्युक्तं तत्राऽऽह—क्वेति । अर्थस्य हि निष्कृष्टानुभवस्य पुमर्थत्वं न क्वचिदपि मानादधिगतमित्यर्थः । कस्य तर्हि पुमर्थत्वं तत्राऽऽह—मानफलस्येति । पुमर्थत्वेनेष्टार्थविशेषणत्वेनानुभवस्य सम्बन्धात्तस्यैवानुगतस्य तदर्थत्वं नहि तत्त्वेनेष्टस्रगादिरनुभवानारूढस्तथा तदव्यभिचारिणोऽनुभवस्यैव पुमर्थता न मिथोव्यभिचारिणोऽर्थस्येत्यर्थः ॥ ४६९ ॥

अनुभाव्याश्रितत्वादनुभूतिरपि तद्गतरूपादिवदनुभाव्यैवेत्यर्थस्यैव पुमर्थतेति चेन्नेत्याह—प्रतीतेरिति । अनुभवो मानफलं न च मेयोऽर्थस्तदाश्रयो जडत्वात्, न हि जडाजडयोराश्रयाश्रयित्वमतो हेत्वसिद्धिरित्यर्थः । ननु

**न चाऽऽत्मानुभवादन्यो विषयः कश्चिदिष्यते । अपि सर्वप्रमाणानां किमु वेदान्तशासने ॥७१॥**
**लौकिको वैदिकः सर्वो व्यवहारो जगत्यपि । भोक्त्रर्थ एव नान्योऽतः प्रधानं[1] भोक्तुरिष्यते ॥७२॥**
**न वा अरे पत्युरिति तदेतत्प्रेय इत्यपि । निखिलेऽपि जगत्यस्मिन्प्रधानं नाऽऽत्मनोऽपरः ॥७३॥**
**न प्रमाता प्रमाणं वा क्रियामेयफलानि वा । प्राधान्यायेह कल्पन्ते भोक्तुरेव प्रधानतः ॥७४॥**
**आत्मनः कर्त्रवस्थाऽपि[2] भोक्त्रर्थमिति निश्चयः । यतोऽतोऽपरमप्येतद्भोक्त्रर्थं विनियुज्यते ॥७५॥**
**नापि चाऽऽत्मातिरेकेण वस्त्वन्यन्मानभूमिगम् । संभाव्यते यथा चैतत्तथोदर्के प्रवक्ष्यते ॥७६॥**
**अनादृत्य यथोक्तार्थं नियोगार्थैकरागतः । केचित्कार्यैकनिष्ठत्वं वेदान्तानां प्रचक्षते ॥७७॥**

फलस्यास्वातन्त्र्यादाश्रयो वाच्यस्तत्र परिशेषान्मेयाश्रितत्वं नेत्याह—माक्रियेति । मानस्य हि फलं मातारमाश्रयते क्रियाफलं तु भोक्तारं न च तौ भिद्येते, अतो मानक्रियाया यदनुभवाख्यमुपचरितं फलं तत्सम्बन्धस्तस्मिन्नात्मन्युपचर्यते तस्मान्मानफलस्य मेयनिष्ठत्वासिद्धेः सिद्धा हेत्वसिद्धिरित्यर्थः ॥ ४७० ॥

यत्तु वेदान्तानां प्रमाणत्वं नाक्षवद्वस्तुनीति तत्राऽऽह—न चेति । अन्यस्याज्ञातत्वाभावादिति शेषः । अपिना सूचितमाह—किम्विति । वेदान्तेषु पुरुषार्थरूपानुभवस्वभावात्मनोऽन्यो विषयो नेति किमु वाच्यं तस्यैवाज्ञातत्वादित्यर्थः ॥ ४७१ ॥

नियोगास्पृष्टे परमपुरुषार्थे परस्मिन्नेव चिदात्मनि वेदान्तमानतेत्यत्रैव हेत्वन्तरमाह—लौकिक इति । सर्वत्र जगति सर्वोऽपि व्यवहारो भोक्त्रर्थो नान्यार्थः स्वतन्त्रो वा । अतो भोक्तृरूपानुभवस्य शेषित्वेन प्राधान्यात्तस्यैव परप्रेमास्पदस्य पुरुषार्थत्वं पुरुषार्थे चापूर्वे शब्दस्य तात्पर्यम् । तथाचाऽऽनन्दरूपे प्रतीचि वेदान्तप्रामाण्यमित्यर्थः ॥ ४७२ ॥

प्रतीचो निरतिशयसुखत्वे मानमाह—न वा इति । अस्मिञ्जगति जायापुत्रादौ निखिलेऽपि प्रधानमात्मा न तस्मादन्यो जायादिस्तस्याऽऽत्मशेषत्वेन प्रियत्वस्य "न वा अरे पत्युरि"त्यादिना श्रवणात्प्रधानं चाऽऽत्माऽनुपाधिप्रेमगोचरः कथं परमानन्दो न स्यात् । "तदेतत्प्रेयः पुत्रादि"त्यादिश्रुतिश्चास्यानतिशयप्रीत्यास्पदत्वेन परमसुखतामाहेत्यर्थः ॥ ४७३ ॥

मात्रादौ प्रधाने सति कथं भोक्तृप्राधान्यं तत्राऽऽह—नेति । इहेति व्यवहारभूमिः । तत्र हेतुः—भोक्तुरिति । तस्य सर्वशेषित्वेनेष्यमाणत्वात्प्राधान्यस्य युक्तत्वादितरस्य शेषतया तदयोगादित्यर्थः ॥ ४७४ ॥

ननु कर्त्रवस्था क्रियाश्रयत्वात्प्रधानं तत्कथं भोक्तुरेव प्राधान्यं तत्राऽऽह—आत्मन इति । ननु विषयाभिनिवेशवान्पुमान्पुत्राद्येव प्रधानं मन्यते तत्राऽऽह—यत इति । कर्तृत्वस्य भोक्त्रर्थत्वे यदन्यत्पुत्रादि तत्सर्वं तदर्थमिति नाऽऽत्मनो भोक्तुरर्थान्तरं प्रधानमन्यत्र तदभिनिवेशस्तु भ्रान्तिरिति भावः ॥ ४७५ ॥

किञ्चाऽऽत्मनोऽर्थान्तरं न प्रामाणिकमस्ति यस्य प्राधान्यादि शङ्क्येतेत्याह—नापीति । कथमात्मातिरिक्तं वस्तु कल्पितमिति तत्राऽऽह—यथा चेति । उदर्कशब्दोऽव्याकृतविचारादिपरः[3] ॥ ४७६ ॥

एवं पुरुषार्थे कूटस्थानुभवे प्रत्यग्ब्रह्मणि वेदान्तप्रामाण्यात्तेषां निरोधविधिशेषत्वायोगात्काण्डद्वयसम्बन्धानां परोक्तानामयुक्तत्वात् कर्मणां शुद्धिद्वारा ज्ञानहेतुत्वमुपनिषदां साक्षादिति विविदिषावाक्यीयं सम्बन्धमुपेत्य "तस्य"-इत्यादिभाष्यं व्याख्यातम् । सम्प्रति "सर्वोऽपी[4]"त्यादिभाष्यनिरस्यं पूर्वपक्षमाह—अनादृत्येत्यादिना । काण्डयोरधिकार्यादिभेदं सम्बन्धविशेषमैकात्म्याख्यं वस्तु चोक्तं सर्वमप्रामाणिकं कृत्वा वेदान्तानां कार्यमात्रपर्यवसायित्वमेके वदन्तीत्यर्थः । वक्ष्यमाणपूर्वपक्षस्याऽऽभासत्वं सूचयति—नियोगेति ॥ ४७७ ॥

---

१. प्रधानंप्राधान्यं, भोक्तुरिष्यते ।
२. कर्त्रवस्थापीति—कर्मकाण्डेऽपि कर्ता कर्माङ्गं तस्य कर्मणः फलं प्रतिगुणत्वं फलं च भोक्तारं प्रति गुण एवेति निर्णीतम् । तथा च भोक्ता सर्वप्रधानः ।
३. अव्याकृतविचारः प्रथमाध्याये चतुर्थब्राह्मणे "तद्धेदं तर्ह्यव्याकृतमासीदि"तिखण्डव्याख्यायामित्यर्थः ।
४. "सर्वोऽपि" इति भाष्यम् ( पृष्ठम्—३, पंक्तिः—१ )

कार्यैकमात्रनिष्ठत्वात्प्रमाणस्याऽऽगमात्मनः । कुत ऐकात्म्यनिष्ठत्वं त्वया यदुदितं पुरा ।।७८।।
नहि तस्यानपेक्षत्वं सिद्धवस्त्ववबोधनात् । यतो मानान्तरमितं सिद्धं वस्त्विति भण्यते ।।७९।।
शब्दसामर्थ्यनियमो लोकादेवावगम्यते । लोके मान्तरसिद्धोऽर्थः कार्यायैवाभिधीयते ।।८०।।
न प्रवृत्तिनिवृत्तिभ्यां शून्यस्य वचसो यतः । कश्चिदर्थोऽत्र दृष्टोऽतो वस्तुनि स्यान्न मानता ।।८१।।
सम्बन्धावगमो नापि शब्दाद्भूतार्थवाचिनः । प्रवर्तकात्प्रवृत्त्याऽर्थे प्रत्ययो ह्यनुमीयते ।।८२।।
ततः शब्दस्य सामर्थ्यं प्रतीतेरवधार्यते । कार्यैकविषयैवेयं वाक्यस्यातः प्रमाणतः ।।८३।।
क्रियाकारकसम्बन्धो वाक्यार्थो यैरपीष्यते । अनुवादविसम्वादात्तेषामुक्तेरमानता ।।८४।।
मान्तरानुप्रवेशित्वं कार्यस्य तु न शङ्क्यते । शब्दादेव हि कार्यार्थप्रतिपत्तिर्न लोकतः ।।८५।।

तत्त्वमादिवाक्यमैक्यपरमुक्तं न च तदनादरे हेतुरस्तीत्याशङ्क्याऽऽह—कार्येति । तदपि कार्यनिष्ठं प्रमाणवाक्यत्वाद्विधिवाक्यवदित्यर्थः । वेदस्य सर्वस्यापि कार्यनिष्ठत्ववद्वस्तुनिष्ठत्वमपि स्यादित्याशङ्क्याऽऽह—एकेति । न खल्वेकं वाक्यमुभयार्थमर्थभेदे वाक्यभेदादिति भावः । भूतभव्यन्यायेन कार्यशेषतया भूतोपदेशोऽपि स्यादित्याशङ्क्य कार्यशेषस्य भूतस्यापि कार्यत्वमेवेति मत्वाऽऽह—मात्रेति ॥ ४७८ ॥

आगमस्य सिद्धार्थनिष्ठत्वाभावं साधयति—न हीति । सिद्धार्थत्वेनेष्टागमस्य तत्प्रकाशनान्नानपेक्षं प्रामाण्यं तस्य मानान्तरयोग्यत्वात्तन्निष्ठस्यानपेक्षत्वायोगादित्यर्थः । नन्वागमस्य कार्यनिष्ठत्वेऽपि निरपेक्षप्रामाण्यहानिस्तुल्येति नेत्याह—यत इति । यत्सिद्धं वस्तु तन्मानान्तरयोग्यमित्युच्यते न कार्यं तद्योग्यम्, अतो मानान्तरापूर्वमपूर्वमित्यभ्युपगमादतस्तन्निष्ठस्यानपेक्षं प्रामाण्यमित्यर्थः ॥ ४७९ ॥

वेदः सर्वोऽपि कार्यनिष्ठो न सिद्धार्थे मानमित्यत्रैव हेत्वन्तरमाह – शब्देति । ज्ञातशक्तिः शब्दो बोधकः, अस्यास्मिन्नर्थे शक्तिरिति नियता सा वृद्धव्यवहारादेव गम्यते । ततश्चेयं कार्ये पर्यवस्यतीत्यर्थः । वृद्धव्यवहारलिङ्गतः सिद्धार्थेऽपि शक्तिः शब्दस्य गृह्यतामित्याशङ्क्य लिङ्गस्य प्रवर्तकबोधाधीनत्वान्मैवमिति मत्वाऽऽह—लोक इति । व्यवहारभूमावध्यक्षादिसिद्धस्य सिद्धार्थस्य कार्यशेषत्वेनैवोक्तेस्तदन्विते शक्तिग्रहात्तत्पर एव वेद इत्यर्थः ॥ ४८० ॥

किञ्च तात्पर्याधीनं शब्दप्रामाण्यं तच्च पुरुषार्थे । स च प्रवृत्तिनिवृत्तिसाध्यः । ते च विधिनिषेधाधीने तौ च कार्ये भवतोऽतोऽपि न वेदस्य सिद्धार्थपरतेत्याह—नेत्यादिना । शक्तितात्पर्ययोः कार्ये नियमो दर्शितः ॥ ४८१ ॥

ननु शक्तिर्न कार्यमेवाधिकरोति प्रवर्तकादेव वाक्यात्तद्ग्रहानियमात्सिद्धार्थादपि पुत्रस्ते जात इत्यादेस्तद्ग्रहसम्भवादिति तत्रापि कार्याध्याहारो लक्षणा वेति विवक्षन्नाह—सम्बन्धेति । प्रवृत्त्यभावेन लिङ्गाभावादिति शेषः । कथं तर्हि शक्तिधीस्तत्राऽऽह – प्रवर्तकादिति । उत्तमवृद्धोक्तप्रवर्तकवाक्यश्रुत्यनन्तरभाविमध्यमवृद्धप्रवृत्त्या प्रवर्तकार्थधीर्बालेनानुमीयते । विमता प्रवृत्तिः प्रवर्तकधीपूर्विका बुद्धिपूर्वप्रवृत्तित्वात्सम्मतवत्सा च प्रवर्तकधीः शब्दान्वयव्यतिरेकवत्तया प्रतीतेस्ततः शब्दादुत्पन्ना निश्चीयते । एवं प्रवर्तकार्थे सामर्थ्यं शब्दस्य सामान्यतोऽवधार्य आवापोद्धाराभ्यां लिङादिपदं प्रवर्तकवाचीतराणि तदन्वितस्वार्थवाचीनीत्यवगम्यते । तस्मात्कार्ये शक्तिधीरित्यर्थः । पदानां कार्ये ज्ञातशक्तित्वेऽपि वाक्यस्य सिद्धेऽर्थे प्रामाण्यं स्यादित्याशङ्क्याऽऽह—कार्येति । ज्ञातशक्तीनां पदानां स्वार्थबोधकत्वात्कार्ये च शक्तिज्ञानादित्यतःशब्दार्थः ॥ ४८२-४८३ ॥

ननु वाक्यं वाक्यार्थे क्रियाकारकसम्बन्धे मानं तत्कथं कार्यैकविषयं वाक्यप्रामाण्यं तत्राऽऽह—क्रियेति । ओदनं पचतीत्यादौ क्रियाकारकान्वयस्य मानान्तरयोग्यत्वात्तत्सम्वादविसम्वादाभ्यां तत्र वाक्याप्रामाण्यान्नियोगे तत्प्रामाण्यमित्यर्थः ॥ ४८४ ॥

ननु तस्मिन्नपि कार्यात्मनि लौकिककार्यवन्मानान्तरसम्भवादुक्तदोषसाम्यमिति नेत्याह—मान्तरेति । तत्र हेतुमाह—शब्दादिति । "क्रियादिभिन्नं यत्कार्यं वेद्यं मानान्तरैर्न तदि"ति न्यायेन मानान्तरापूर्वनियोगे वाक्यं मानं, नहि कार्यत्वेऽपि लौकिककार्यवदस्य मानान्तरगोचरत्वं क्रियात्वस्यापि तद्वदेव प्रसङ्गात्तदन्यत्वं च नियोगस्य वक्ष्यतेऽतो लिङादिशब्दात्प्रवर्तककार्यप्रतीतेस्तत्र वाक्यप्रामाण्यमिति भावः ॥ ४८५ ॥

प्रवर्तनां वदञ्शब्दः प्रवर्तक इतीर्यते । ज्ञापकत्वात्प्रमाणस्य प्रेरयन् कारको भवेत् ॥८६॥
शब्दात्प्रवर्तनाबुद्धौ रागादिर्न च शङ्क्यते । रागादिः प्रेरणाकारी प्रेरणाज्ञापको ध्वनिः ॥८७॥
आज्ञापितार्थनिष्पत्तौ कृतिमत्त्वेक्षणात्प्रभोः । रागाद्यर्थस्य चासिद्धौ कर्तृवृत्तिर्न रागतः ॥८८॥
स्वामिकोपप्रसादादिहृदयाकूतवेदनात् । नापि श्रोतुः प्रवृत्तिः स्याच्छब्दात्कोपाद्यवेदनात् ॥८९॥
लिङादयो न कोपादेः स्मर्यन्ते प्रतिपादकाः । मानान्तरमिताः सन्तस्ते हि पुंसां प्रवर्तकाः ॥९०॥
धिगङ्गाद्यभिधानैस्तु लिङ्गभूतैरिहेङ्गिताः । रागादयो नियोगस्य सिद्ध्यै विषयसाधनाः ॥९१॥
अत एव च रागादिसंसृष्टोऽपि विविच्यते । लोडाद्यर्थो व्रजेत्युक्तो याति स्वार्थं विना यतः ॥९२॥

ननु लिङादिशब्दात्प्रवर्तकधीः "चोदनेति क्रियायाः प्रवर्तकं वचनमाहुरि"ति भाष्याल्लिङादेरेव प्रवर्तकत्वादत आह—प्रवर्तनामिति । लिङादिः प्रवर्तनां बोधयन्प्रवर्तक इत्युच्यते भाष्यकृतेति किमिति कल्प्यते साक्षादेव प्रवर्तकत्वं तस्याभीष्टं किं न स्यात्तत्राऽऽह—ज्ञापकत्वादिति । प्रमाणस्य ज्ञापकत्वान्न रागादिवत्कारकत्वं लिङादिश्चेत्प्रवर्तकः कारकं स्यान्न मानं मानं चेष्यतेऽतः प्रवर्तकवाचित्वेनैव भाष्ये तत्प्रवर्तकत्वोक्तिरित्यर्थः ॥ ४८६ ॥

लिङादेः प्रवर्तकवाचित्वेऽपि वाच्यः प्रवर्तको रागादिरस्तु न कार्यमिति चेन्नेत्याह—शब्दादिति । लिङादिशब्दात्प्रवर्तकबुद्धाविष्टायां प्रवर्तकत्वेन रागादिर्न शङ्कामर्हतीत्यत्र हेतुमाह—रागादिरिति । रागादेः प्रवर्तकनिर्वर्तनेनाप्रवर्तकत्वेऽपि प्रवृत्त्यनुविधायिनो लिङादेस्तथात्वं नहि तस्य रागादिवद्धेतुहेतुत्वादन्वयव्यतिरेकावन्यथासिद्धौ अकारकत्वादित्याशङ्क्य प्रवर्तकत्वे कारकत्वप्रसङ्गान्मैवमित्याह—प्रेरणेति । ध्वनिर्नाम लिङादिशब्दः स च न स्वयं प्रवर्तकः किंतु प्रेरणार्थप्रवर्तकज्ञापनेन प्रवृत्त्यनुविधायीत्युक्तमित्यर्थः ॥ ४८७ ॥

रागादेः शब्दस्य च प्रवर्तकत्वानुपपत्त्या कार्यस्यैव तदित्युक्तम् । अथवा लोके रागादेरेव प्रवर्तकत्वेऽपि शब्दार्थभूततन्निरूपणे न तस्य तथात्वमित्याह—आज्ञापितेति । आचार्यादिराज्ञाविषयगवानयनादिसंपादने शिष्यादेरागाद्यभावेऽप्याज्ञाप्रभावादेव कृतिशब्दितयत्नपूर्वकप्रवृत्तिमत्त्वस्य दर्शनात्कर्तृभृत्यादेः शब्दानन्तरभाविनी प्रवृत्ती रागादेर्न भवतीत्यर्थः ॥ ४८८ ॥

श्रोतृगतरागद्वेषयोरप्रवर्तकत्वेऽप्युत्तमवृद्धकोपादेर्लिङादिसिद्धस्य तद्भावान्न कार्यस्य प्रवर्तकत्वमित्याशङ्क्याऽऽह—स्वामीति । आदिशब्दो हर्षशोकादिविषयस्तदेव तस्य हृदयगलमाकूतमभिप्रायस्तस्य वेदनादपि न प्रवृत्तिरित्यर्थः । तत्र हेतुमाह—शब्दादिति । लिङादेर्नियोगवत्स्वामिकोपाद्यप्रतीतेरिति हेत्वर्थः ॥४८९॥

हेतुं साधयति—लिङादय इति । विध्यर्थादिमात्रप्रतिपादकत्वस्मरणादित्यर्थः । स्वामिकोपादेरपि प्रवर्तकत्वप्रसिद्धेस्तस्याशाब्दत्वे केनावगतिर्न खल्वज्ञातस्यैव प्रवर्तकत्वं सुप्तस्यापि स्वामिकोपादिना तत्प्रसङ्गादित्याशङ्क्याऽऽह—मानान्तरेति । तथा चानन्यलभ्यत्वाभावान्न शब्दार्थीभूयप्रवर्तकता तेषामिति भावः ॥४९०॥

किं तन्मानान्तरं तदाह—धिगिति । आदिशब्देन कोपप्रसादहर्षशोकादिसूचकान्युच्यन्ते । इहेति वाक्यश्रुत्युक्तिः । इङ्गितत्वमनुमितत्वम् । तन्न ते शब्दार्थीभूता इति शेषः । ननु लिङादेर्वा रागादेर्वा कोपादेर्वा प्रवर्तकत्वाभावे कार्यस्यैव प्रवर्तकत्वं परिशेषतो लब्धं तथा च प्रेरणाकारी रागादिरित्युक्तमयुक्तं प्रेरणाख्यनियोगस्य धात्वर्थाधीनतया रागाद्यजन्यत्वात्तत्राऽऽह—रागादय इति । नियोगसिद्ध्यर्थं धात्वर्थं साधयन्तस्ते प्रेरणाख्यं तमपि साधयन्त्यतो रागादिः प्रेरणाकारीति युक्तमित्यर्थः ॥४९१॥

ननु लौकिकवाक्ये रागादिसंसृष्टस्यैव नियोगस्य दृष्टत्वात्सर्वत्र शब्दानन्तरप्रवृत्तौ तत्संसृष्टस्यैव तस्य प्रवर्तकत्वप्रतीतेर्नियोगस्यैव प्रवर्तकत्वं न रागादेरिति विवेक्तुमशक्यमत आह—अत एवेति । नहि लौकिकवाक्येषु रागादिसंसृष्टनियोगदृष्टिनियमो, व्रजेति प्रभुणोक्तः श्रोता स्वार्थं फलरागं विनाऽपि यतो यात्यतो यत्र शाब्दप्रवृत्तौ

---

१. रागादेरिति—रागः प्रवर्तकं प्रवृत्त्युन्मुखं करोति । तं निर्वर्तयतीति यावत् । लिङ्गादिस्तु प्रवृत्त्यन्वयव्यतिरेकानुविधायी प्रवृत्तिजनकः । न च लिङादेः कुलालपितृवत् हेतुहेतुत्वेनान्यथासिद्धत्वं यथा प्रवृत्तौ रागादेरिति वाच्यम् । तस्य प्रवर्तकत्वे कारकत्वप्रसङ्गादित्यर्थः ।

ननु दानादिसंबद्धमहावाक्यानुमानतः । गच्छेत्याद्येकदेशोक्तौ लोभादेव प्रवर्तते ॥९३॥
महावाक्यप्रयोगेऽपि पदार्थप्रविवेचने । पुंस्प्रवृत्तिस्तु दृष्टेयं लोडादेरेव नान्यतः ॥९४॥
लोडादेरेव श्रवणाद्यत्र रागाद्यसंभवः । बालः प्रवर्तते तत्र ज्ञायते प्रेरणार्थता ॥९५॥
आह मानान्तरेणासौ किल नार्थोऽवगम्यते । शब्दाच्च ज्ञायतेऽज्ञातसंबन्धादिति चित्रता ॥९६॥
यद्यनिर्ज्ञातसंबन्धोऽप्यर्थं शब्दः प्रबोधयेत् । को द्वेषोऽस्मासु भवतो येनोपालम्भ ईर्यते ॥९७॥
यदाऽवगम्यते नान्यत्प्रवृत्तेः कारणान्तरम् । शब्दश्च गम्यते स्पष्टस्तदाऽर्थः प्रविविच्यते ॥९८॥
अन्वयव्यतिरेकौ तु वाक्यार्थज्ञानपूर्वकौ । वाक्यार्थस्तु तदायत्तो नेत्यन्येभ्यो विशिष्टता ॥९९॥

रागादिः संभवति तत्रापि तत्संसृष्टो नियोगस्ततोऽपि विविच्यते तस्मादनुगतनियोग एव प्रवर्तको न रागादिरिति निश्चयसिद्धिरित्यर्थः ॥४९२॥

फलरागं विना कस्यचिदप्रवृत्ते रागसंसृष्टस्यैव नियोगस्य प्रवर्तकत्वादुक्तप्रवर्तकत्वविवेकासिद्धिरिति शङ्कते—नन्विति । उत्तमवृद्धेन गच्छ तिष्ठेत्यादिवाक्यैकदेशोक्तौ गच्छ ग्रामं द्रव्यं दास्यामि तिष्ठात्र वस्त्रादिलाभस्ते भवितेत्यादिरूपं दानादिसंबद्धं महावाक्यं मध्यमवृद्धेनानुमीयते, विमता वाक्प्रवृत्तिः श्रोतृफलावसायिनी विशिष्टवाक्प्रवृत्तित्वात्संप्रतिपन्नवत्ततो द्रव्यादिरागसहितादेव नियोगात्प्रवृत्तिरिति न प्रवर्तकनिष्कर्ष इत्यर्थः ॥४९३॥

परिहरति—महावाक्येति । यत्र वाक्यैकदेशोक्तिं विना महावाक्यमेव प्रयुक्तं तत्रापि पुंसो मध्यमवृद्धस्य प्रवृत्तिरुपलब्धा सा नियोगाद्वा रागाद्वेति प्रवर्तकविवेके लोडाद्यर्थान्नियोगादेव न रागादिति निश्चीयते तत्र श्रोतृरागस्य दुःसंपादत्वादतो वाक्यैकदेशोक्तौ महावाक्यानुमानेऽपि प्रवर्तकनिरूपणे निष्कृष्टनियोगस्य तत्सिद्धिरित्यर्थः ॥४९४॥

उक्तमेव व्यनक्ति—लोडादेरिति । यत्र दण्डादौ बालस्याभिलाषाद्यसंभवस्तत्रापि लोडादेरानयेत्यादिरूपस्य श्रवणात्तदर्थज्ञानादेवासौ प्रवर्ततेऽतो लोडादिशब्दस्य प्रेरणाख्यप्रवर्तकनियोगार्थत्वावगमात्तस्यैव सर्वत्र प्रवर्तकत्वं निश्चितमित्यर्थः ॥४९५॥

अथ नियोगो मानान्तरगम्यो न वा ? आद्ये "मानान्तरानुप्रवेशित्वं कार्यस्य तु न शक्यत" इत्युक्तिव्याघातः । द्वितीये त्वज्ञातसंबन्धस्य लिङादेर्न नियोगबोधितेति चोदयति—आहेति । नियोगश्चेन्मानान्तरागोचरो न तर्हि तत्र लिङादेः शक्तिर्गृह्येत न ह्यज्ञाते संबन्धधीर्न चाज्ञातशक्तेर्लिङादेर्नियोगावगतिर्बालस्यापि तत्प्रसङ्गादतो न शब्दार्थीभूतः प्रवर्तको नियोग इत्यर्थः ॥४९६॥

लिङादेरेष महिमा यदयमज्ञातशक्तिरपि नियोगं गमयतीति शङ्कते—यदीति । तदा पदधर्मव्युत्क्रान्तिरिति मत्वाऽऽह—को द्वेष इति । नियोगवादिनो ब्रह्मवादिषु द्वेषो न युक्तो ब्रह्मादिपदस्याज्ञातशक्तेरेव बोधकत्वात्तच्छक्तिग्रहे ब्रह्मणि मानान्तरप्रवेशात्तत्संवादविसंवादाभ्यां वेदान्ताप्रामाण्यमित्याक्षेपो येन निक्षिप्यते ब्रह्मादिपदस्यापि लिङादिवदुक्तमहिमसम्भवादित्यर्थः ॥४९७॥

पूर्ववादी परिहरति—यदेति । यदा कारणान्तरं शब्दानन्तरभाविप्रवृत्तिहेतुगमकं लिङादिशब्दादन्यन्नावगम्यते, लिङादिशब्दश्च प्रवृत्तिहेतुज्ञापको ज्ञायते तदा लिङादेरर्थो नियोगो मानान्तरायोग्यत्वेन नामपदार्थेभ्यो विविच्यते स च निष्कृष्टः स्पष्टः शब्दार्थीभूतः प्रवृत्तिहेतुरित्यर्थः ॥४९८॥

कार्यमात्रे लिङादेः शक्तिग्रहेऽपि तन्मात्रस्यानियोगत्वान्मानान्तरायोग्ये नियोगे कथमसावनवसितसंगतिः तमवगमयेदित्याशङ्क्याऽऽह—अन्वयेति । उत्तमवृद्धोक्तवाक्यात्तदर्थे नियोगे मध्यमवृद्धस्य ज्ञानपूर्वकप्रवृत्तिलिङ्गेन बालस्यान्वयव्यतिरेकाख्यमनुमानमुदेति विमता प्रवृत्तिः प्रवृत्त्यभावविरोधिधीपूर्विका विशिष्टप्रवृत्तित्वान्मदीयप्रवृत्तिवत्स च प्रवृत्त्यभावविरोध्यर्थः, शब्दान्वयव्यतिरेकवत्तया शब्दादेव प्रतिपन्न इति निश्चिनोति । एवं मध्यमवृद्धेन शब्दावगते प्रवर्तके बालेन लिङादेः शक्तिग्रहान्न प्रवर्तकनियोगस्य मानान्तरगम्यत्वम् । नाप्यज्ञातशक्तेः शब्दस्य बोधकत्वमित्यर्थः । प्रवर्तकमनुमाय तत्र लिङादेः शक्तिग्रहे कथं प्रवर्तकनियोगस्य मानान्तरागम्यतेत्या-

विवक्षाया लिङर्थत्वपक्षनिरासः

**कर्तव्यताविवक्षैव नृवाक्येभ्योऽपि गम्यते । विवक्षाया न कार्यत्वं शब्दार्थविषया हि सा ॥५००॥**
**तद्वशान्नतु शब्दार्थः स हि पूर्वं प्रतीयते । अतः प्रैषादिसंसृष्टोऽप्यर्थः सिद्धो विवेकतः ॥१॥**
**शब्दार्थोपाधयो ह्येते पुरुषाशयपातिनः । प्रैषादयो न शब्दार्था न चानेकार्थता मता ॥२॥**

शङ्क्याऽऽह–वाक्यार्थस्त्विति । चन्द्रादिसंपृक्तराहोरध्यक्षत्ववदाज्ञा[1]द्युपहितस्यैव नियोगस्यानुमानादिगोचरत्वान्न स्वरूपेण वाक्यार्थो नियोगो मानान्तराधीनाधिगतिरित्यन्येभ्यः स्वरूपेण तद्योग्येभ्यो नामार्थेभ्यस्तस्य विलक्षणता। तथा चोपाधिद्वारा नियोगे मानान्तरप्रवेशात्तत्र लिङादेः शक्तिग्रहात्स्वरूपेण मानान्तराप्रवेशाद्वैदिकत्वसिद्धेर्नियोगपक्षो युक्तिमानिति भावः ॥ ४९९ ॥

ननु रागादेर्लिङाद्यर्थत्वाभावेऽपि नियोगस्य न तदर्थत्वं विवक्षायास्तदर्थत्वात् । उक्तं हि कीर्तिना— [2]"नान्तरीयकताभावाच्छब्दानां वस्तुभिः सह । नार्थसिद्धिस्ततस्ते हि वक्त्रभिप्रायसूचकाः ॥" इति । तत्राऽऽह— कर्तव्यतेति । किं विवक्षामात्रं लिङाद्यर्थः किंवा कर्तव्यताविशेषिता विवक्षा ? नाऽऽद्योऽपौरुषेये वेदे तदभावात्तस्या लिङाद्यर्थत्वायोगात्पौरुषेयवाक्येषु तत्प्रतीतावपि कर्तव्यताविशेषितैव सा प्रतीयतेऽतो न तन्मात्रं लिङाद्यर्थः । न द्वितीयो विशिष्टविवक्षाऽसंभवस्याप्यपौरुषेये वेदे तुल्यत्वात्तस्याश्च तदर्थत्वे प्राप्ताप्राप्तविवेकेन कर्तव्यतैव शब्दार्थः स्यादिति भावः । विवक्षाकर्तव्यतयोरैक्यान्न विशेषणविशेष्यता तेन कर्तव्यतायाः शब्दार्थत्वे विवक्षैव तदर्थः स्यादित्याशङ्क्याऽऽह—विवक्षाया इति । तयोरभेदाभावे हेतुमाह—शब्दार्थेति ॥५००॥

वक्तृविवक्षितपूर्विका शब्दस्य प्रवृत्तिरिति न्यायाद्विवक्षावशाल्लोके शब्दप्रवृत्तेस्तदर्थकर्तव्यता विवक्षितैवेति विशेषमाशङ्क्याऽऽह—तद्वशादिति । नहि विवक्षावशात्प्रवृत्तिः शब्दानां नियन्तुं शक्याऽतिप्रसङ्गात् । न च विवक्षाधीनः शब्दार्थनिश्चयः "विवक्षा[3] नियमे हेतुः संकेतस्तत्प्रकाशने" इति न्यायादिति वाच्यं; तस्य सामर्थ्याधीनत्वाद्वेदे च विवक्षाऽसंभवस्योक्तत्वादतोऽन्या कर्तव्यताऽन्या च विवक्षा यथाऽऽह कीर्तिः—"विवक्षया हि सर्वत्र शब्दोऽर्थेषु नियम्यते" इति । तन्नाभेदशङ्केति भावः । विवक्षाकर्तव्यतयोर्भेदे हेत्वन्तरमाह—स हीति । कर्तव्यताख्यः शब्दार्थो विवक्षाप्रतीतेः पूर्वमेव शब्दश्रवणमात्रेण प्रतीयते, अतो भेदस्तयोरित्यर्थः विवक्षाया लिङाद्यर्थत्वाभावेऽपि प्रैषादीनां तदर्थत्वान्न नियोगस्य प्रत्ययार्थतेत्याशङ्क्याऽऽह अत इति । प्रैषादिष्वपि कार्यमेवानुवर्तमानं प्रवर्तकम् । उक्तं[4] हि—कार्यमेव च वक्तॄणां ज्यायः समकनीयसाम् । प्रवर्त्यापेक्षया भेदात्प्रैषादिव्यपदेशभाक् ॥ इति । न ते मिथो व्यावृत्तास्तद्वेतवोऽतस्तैः संसृष्टो लिङाद्यर्थस्तेभ्यो विविक्तः सिद्धस्तन्न प्रैषादीनां तदर्थतेत्यर्थः ॥ ५०१ ॥

तेषां लिङाद्यर्थत्वाभावे कथं तेभ्यस्तद्धीरिति तत्राऽऽह—शब्दार्थेति । लिङाद्यर्थनियोगोपाधित्वेन लौकिकलिङादिषु प्रैषादिधीर्न तदर्थतयेत्यर्थः । वेदे प्रैषाद्याशङ्कैव नास्ति तद्वचाप्ताभिप्रायाभावादित्याह— पुरुषेति । तेषां लिङाद्यर्थत्वे दोषान्तरमाह—न चेति । सर्वत्र लिङादिष्वेकस्यैव नियोगस्य शक्तिप्रतियोगित्वसंभवे प्रैषादिष्वनेकेषु न सा कल्प्या गौरवादिति भावः ॥ ५०२ ॥

---

१. आज्ञाद्यन्यतमोपहित एव नियोगो बालस्यानुमानगोचरो न त्वाज्ञादिकं केवलं नियोगो वा वैदिकमपूर्वमपि न स्वेन रूपेणानुमितिगोचरः । अपितु नियोगोपाधितयेति अपूर्वस्य केवलवेदैकगम्यता ।

२. नान्तरीयकताभावात्=अविनाभावसंबन्धस्याभावात् । शब्देनार्थसिद्धिर्नास्ति । अतः लिङ् विवक्षातात्पर्यकः इति कीर्तिश्लोकार्थः ।

३. विवक्षा नियमे हेतुः । नियमः नानार्थशब्देषु अयमेव प्रकृते शब्दार्थ इति विशेषनियमः । तत्प्रकाशने=प्रकृतार्थप्रकाशने ।

४. उक्तं हीति प्रकरणपञ्चिकायामित्यर्थः । प्रवर्त्यपुरुषापेक्षया ज्यायसा वक्त्रा प्रतिपाद्यमानं कार्यं प्रैषः । समेन आमन्त्रणम्, हीनेन अध्येषणमिति व्यपदिश्यते । अतः प्रैषादिप्रतिपादका अपि कार्यमेव प्रतिपादयन्ति ।

अभिप्रायवतोऽभावादभिप्रायानुपातिनः । शङ्क्यतेऽपि न वेदे तु[1] कार्यं वाच्यमिति स्थितम् ॥३॥
प्रयोगविधिशेषत्वात्तन्मूला एव नाऽऽशयात् । वेदे प्रैषास्तु ये दृष्टा अग्नीदग्नीनितीदृशाः ॥४॥

क्रियातत्फलादेर्लिङर्थत्वनिरासः

प्रैषादिभ्यो यथैवेयं भिन्ना कर्तव्यतेक्ष्यते । शब्दशक्तिवशात्तद्वत्क्रियादेरपि वीक्ष्यताम् ॥५॥
नानिष्पन्नस्वभावोऽपि भावः कर्तव्यता यतः । लडादिश्रवणात्तस्या अप्रतीतिर्लिङादिवत् ॥६॥
ननु कालोपबन्धोऽत्र कार्यबुद्धिविघातकृत् । नैतत्संदेह एवात्र विवेकाभावतस्तव ॥७॥

किंच पौरुषेये वाक्ये तेषां शब्दार्थत्वेऽप्यपौरुषेये न तदर्थत्वशङ्काऽपीति पुरुषाशयपातिन इत्यत्रोक्तं व्यनक्ति—अभिप्रायवत इति। तर्हि लोके प्रैषादीनां लिङाद्यर्थत्वं वेदे नियोगस्येति व्यवस्थेति नेत्याह—कार्यमिति। लोकवेदयोरर्थैक्यस्य न्याय्यत्वाल्लाघवाच्च कार्यमेव सर्वत्र लिङादिवाच्यमित्यर्थः ॥ ५०३ ॥

ननु "अग्नीदग्नीन्[2]विहर बर्हिस्तृणीहि पुरोडाशानलंकुरु" "प्रतिप्रस्थातर्विहरे"त्यादयो वेदेऽपि प्रैषाः श्रूयन्ते तत्कथमभिप्रायवतोऽभावादित्यादि तत्राऽऽह–प्रयोगेति। साङ्गे प्रधाने कर्मणि प्रवर्तको नियोगः प्रयोगविधिः तच्छेषत्वात्तन्मूलास्तस्य नियोगस्य व्यापारा वेदे दृश्यमानाः प्रैषा न पुरुषाभिप्रायानुवर्तिनोऽतोऽभिप्रायवतोऽभावादित्यादि युक्तमित्यर्थः ॥ ५०४ ॥

ननु प्रैषादयो लिङादिवाच्या मा भूवन्क्रिया वा तत्फलं वा तदर्थोऽस्तु तत्कुतो नियोगस्तदर्थस्तत्राऽऽह—प्रैषादिभ्य इति। यथा शब्दार्थीभूतनियोगाख्यकर्तव्यता तेभ्यो भिन्नोक्ता तथा क्रियादेरपि सा भिन्नैव तस्मिन्ननेकत्र लिङादिशक्तिकल्पनादेकत्रैव तत्कल्पनस्य न्याय्यत्वादित्यर्थः ॥ ५०५ ॥

क्रियानियोगयोः साध्यत्वाविशेषादैक्यान्नियोगस्य शब्दार्थत्वे क्रियायास्तदर्थत्वं स्यान्न च क्रियातिरिक्तो नियोगोऽस्तीत्याशङ्क्यापूर्वाधिकरणन्यायेनाऽऽह—नेत्यादिना। भावः क्रिया सा न नियोगाख्या कर्तव्यता यद्यप्यनिष्पन्नस्वभावः साध्यो भावः, कर्तव्यताऽपि तथा तथापि नानयोरभेद इत्यर्थः। तत्र हेतुमाह—यत इति। लिङादिश्रवणे कर्तव्यताधीवत्पचतीत्यादिश्रवणात्क्रियाप्रतीतावपि कर्तव्यताया यतो न प्रतीतिरतः क्रियातिरिक्तो लिङाद्यर्थः। उक्तं हि भेदलक्षणे–"चोदना पुनरारम्भः" "स्वर्गकामो यजेते"त्यादिसाधिकारचोदनासु क्रियैव कार्यतया लिङादिवाच्या तदन्यद्वा कार्यमिति संशये शब्दार्थधियो व्युत्पत्तिनिमित्तत्वात्तस्याश्च कार्ये नियमादपूर्वे तदयोगात् क्रियैव कार्यतया वेदे लिङादिवाच्येति प्राप्ते स्वर्गानुगुणकार्यवादिलिङादीनां नियोज्यार्पकस्वर्गकामपदेनान्विताभिधायित्वात्क्षणापवर्गिकर्मणस्तदानुगुण्यायोगात्कार्यमात्रे व्युत्पन्नलिङादेर्वेदे पदान्तरसमभिव्याहारात्क्रियातिरिक्ते व्युत्पत्तेरपूर्वस्य[3] स्थायित्वादव्यवहितस्य स्वर्गसाधनत्वसंभवात्तस्य स्थायिनस्तद्विपरीतक्रियावान्तरव्यापारत्वायोगादपूर्वमेव क्रियातिरिक्तं वेदे लिङादिवाच्यमिति सिद्धान्तितम्। यथाऽऽहुः—"अपूर्वं पुनरस्ति यत आरम्भः शिष्यते" "स्वर्गकामो यजेते"ति। इतरथा विधानमनर्थकं स्याद्भङ्गित्वाद्यागस्येति। तथा च क्रियैव कार्यतेत्यङ्गीकारे तद्विरोधः स्यादित्यर्थः ( पू० मी० २-१-७ ) ॥ ५०६ ॥

क्रियाकर्तव्यतयोरभेदेऽपि पचतीत्यत्र क्रियाप्रतीतावेव वर्तमानकालस्य पचत्यर्थे विशेषणत्वेन संबन्धस्तत्र कर्तव्यताबुद्धिं निरुणद्धीति क्रियाकर्तव्यतयोरभेदवादी शङ्कते—नन्विति। तयोर्भेदवाद्याह—नैतदिति। अत्र लडादिश्रवणे क्रियाप्रतीतौ सत्यां कर्तव्यताबुद्ध्यभावः कालप्रतिबन्धादिति न निश्चयः किन्त्वस्मिन्विषये संशयस्तव विवेकाभावादित्यर्थः ॥ ५०७ ॥

---

१. तु=अपितु इत्यर्थः

२. अग्नीत् हे आग्नीध्र अग्निविहरणबर्हिस्तरणपुरोडाशालङ्करणानि कुरु इति अध्वर्युप्रैषः। हे प्रतिस्थातः विहर आहवनीये परिधिनिधानादिकार्यं कुरु। अग्निविहरणादीनां प्रधाननियोगशेषत्वात् तन्मूला एवैते नियोगाः। न कर्तृपुरुषाभिप्रायानुवादकाः।

३. अपूर्वाधिकरणम् ( मी०सू०२-७-५ ) पदान्तरं स्वर्गकामपदम्। अव्यवहितस्य स्वर्गाव्यवहितपूर्वभाविनः तद्विपरीतक्रिया अस्थायिक्रियायागः।

कालोपबन्धः किन्त्वत्र कार्यबुद्धिविघातकृत् । किं भावात्कार्यता भिन्ना लडादिर्यां न भाषते ॥८॥
कर्तव्यः कट इत्यादावव्यापारेऽपि कार्यता । वीक्ष्यतेऽतः पृथग्भावात्फलाच्च प्राक्प्रतीतितः ॥९॥
ननु कर्मणि कृत्योऽयं तयोरेवेति शासनात् । मैवं प्रैषादिवद्यस्मादुपाधित्वादवाच्यता ॥१०॥
प्रैषादिष्वपि कृत्यानां तथा च स्मरणं मुनेः । कृत्यानां युक्तितोऽपि स्यान्नैव कर्माभिधायिता ॥११॥
यथा कटं करोतीति कर्ममात्रावबोधनम् । कर्तव्यः कट इत्यत्र तथैव स्यान्न चेक्ष्यते ॥१२॥
कर्तव्यत्वादभीष्टत्वसिद्धौ कर्मार्थलाभतः । [1]साक्षादनभिधानेऽपि न द्वितीया प्रसज्यते ॥१३॥

विवेकाभावकृतं संशयं विशदयति—कालेति । पचतीत्यादौ क्रियाप्रतीतावेव कर्तव्यताबुद्ध्यभावः कालप्रतिबन्धकृतो वा लडादिर्यां कार्यतां न वदति तस्या भावशब्दितक्रियातो भेदकृतो वेत्यनिर्णयेन संदेहस्य दुर्वारतेत्यर्थः ॥ ५०८ ॥

तर्हि संदेहादेव क्रियातो नियोगस्य भेदोऽपि न स्यान्नेत्याह—कर्तव्य इति । कटः कर्तव्यो, ग्रामो गन्तव्य इत्यादौ व्यापारविलक्षणेऽपि कटादौ प्रत्यय[2]स्य सामर्थ्यान्नियोगाख्या कर्तव्यता भात्यतः क्रियातो भावशब्दार्थात्पृथगेव सा । न च तत्रापि कटकरणादिक्रियाऽस्ति तद्भावेऽपि प्रत्ययस्य कर्मप्रधानस्यातदर्थत्वात् । तस्मात्प्रकृतिप्रत्ययार्थौ क्रियानियोगौ भिन्नाविति भावः । क्रियाया लिङाद्यर्थत्वाभावेऽपि तत्फलं तदर्थः कर्तव्यताफलयोः साध्यत्वेनाभेदादित्याशङ्क्याऽऽह—फलाच्चेति । कार्यता पृथगिति संबन्धः । गच्छ ग्राममित्यादौ फलप्रतीतेः प्रागेव कर्तव्यताबुद्धेरिति हेतुमाह—प्रागिति ॥ ५०९ ॥

कर्तव्यः कट इत्यादौ क्रियाऽभावेऽपि प्रत्ययान्नियोगधियमुक्तामाक्षिपति—नन्विति । "तयोरेव कृत्यक्तखलर्थाः" इति सूत्रेण भावकर्मणोरेव कृत्यानां नियमान्न प्रत्ययसामर्थ्यान्नियोगधीरित्याक्षेपः । तयोरेव कृत्यानां नियमं दूषयति—मैवमिति । कथं तर्हि तयोरेवेत्यादि सावधारणं सूत्रं तत्राऽऽह—प्रैषादिवदिति । यथा प्रैषादेः प्रत्ययार्थोपाधित्वात्तदर्थत्वोपचारस्तथा भावकर्मणोरपि कृत्यार्थनियोगोपाधित्वात्तदर्थतोपचर्यते तस्मान्न तयोः साक्षात्कृत्यार्थतेत्यर्थः ॥५१०॥

किंच "प्रैषातिसर्गप्राप्तकालेषु कृत्याश्चे"ति प्रैषादिष्वपि भावकर्मणोरिव कृत्याः स्मर्यन्ते । प्रेषणं प्रैषः, कामचाराभ्यनुज्ञानमतिसर्गो निमित्तभूतस्य कालस्यावसरः प्राप्तकालता । एतेष्वर्थेषु गम्यमानेषु कृत्या भवन्ति चकाराल्लोड्चेति सूत्रार्थः । ततो भावकर्मणोरेवेति नियमासिद्धिरित्याह—प्रैषादिष्विति । किंच कृत्यानां कर्मवाचिता नैव स्याद्युक्तितस्तेषां कर्मानुपपत्तेरित्याह—कृत्यानामिति ॥५११॥

काऽसौ युक्तिस्तामाह—यथेति । अस्यार्थः । कटं करोतीत्यत्र कटमिति द्वितीयया कर्मवाचिन्या तन्मात्रं बोध्यते न कर्तृकरणादिकारकान्तरं तथैव कटः कर्तव्य इत्यादावपि तव्यस्य कर्मवाचित्वेन तन्मात्रबोधनं स्यान्न प्रैषाद्यर्थान्त बोधनं सत्यां गतावेकस्यानेकार्थताऽयोगान्न चैवमिष्यते प्रैषादावपि कृत्यस्मरणदर्शनात्तस्मान्न कर्मवाचिता कृत्यानामिति ॥५१२॥

यदि कटः कर्तव्य इत्यत्र तव्यस्य कर्मावाचितया नियोगवाचित्वं तदा कटं कर्तव्य इति स्यात्तिङ्कृत्तद्धितसमासैरनभिहिते कर्मणि द्वितीयाविभक्तिर्भवतीति न्यायाद्विवक्षातः कारकाणि भवन्तीति कर्मत्वस्य कटे विवक्षितत्वात्तस्य चानभिधाने कर्मणि द्वितीयेति साधिकारसूत्राद्द्वितीयाया दुर्वारत्वादित्याशङ्क्याऽऽह—कर्तव्यत्वादिति । "कर्तुरीप्सिततमं कर्मे"ति स्मरणादिष्टत्वं कर्मत्वं कटः कर्तव्य इत्यत्र तव्यस्य नियोगार्थत्वात्कटस्थकर्मत्वस्य तेन साक्षादनभिधानेऽप्यनभीष्टस्य कर्तव्यतानुपपत्त्या कर्तव्यत्वादेव कटस्येष्टत्वसिद्धौ तद्गतकर्मत्वरूपार्थस्य तव्यसामर्थ्येन लाभान्न कटे द्वितीयाप्राप्तिः अर्थादभिहितत्वादनभिहितः इत्यधिकारानवतारादित्यर्थः ॥५१३॥

---

१. कर्मत्वादेः साक्षादनभिधानेऽपि अर्थादभिधानमस्ति अनभीष्टस्य कर्तव्यत्वानुपपत्तेः ईप्सिततमत्वलाभादित्यर्थः ।

२. प्रत्ययस्य = तव्यप्रत्ययस्य ।

न चाभीष्टत्वकार्यत्वमभिन्नं व्यतिरेकतः । इच्छेदेष्टव्यमित्येवं तत्रापि प्रत्ययो यतः ॥१४॥
तस्मात्कर्तव्यता[1]वेशात्क्रिया वा यदि वा फलम् । कारकं वाऽपि कार्यत्वं लभते न स्वतन्त्रतः ॥१५॥

क्रियादिविलक्षणस्य कार्यस्य वाच्यत्वे आक्षेपनिरासौ

लोकवन्नन्नु वेदेऽपि कार्यमात्रं न गम्यते । साधनेहानुबन्धस्य वेदे कार्यस्य बोधनात् ॥१६॥
ततश्चाऽऽरोग्यकामस्य पथ्यभोजनवाक्यवत् । मानान्तरप्रवेशेन सापेक्षत्वं प्रसज्यते ॥१७॥
अतः प्रैषादितुल्योऽयं क्रियाफलनिबन्धनः । नियोगस्तदसंवादाच्चित्रादौ ते विहन्यते ॥१८॥
मैवं मानान्तरावेशाल्लोके प्रैषाद्युपाधिकम् । कार्यं प्रयोजनार्था च प्रवृत्तिरिति युज्यते ॥१९॥
साध्यसाधनसंबन्धविषयत्वं पुमर्थतः । नियोगस्यात एवात्र कर्तृत्वेन नियुज्यते ॥२०॥

ननु कर्तव्यत्वादभीष्टत्वसिद्धिरिति हेतुहेतुमद्भावो न युक्तस्तयोरेकत्वेन साध्यावैशिष्ट्यादित्याशङ्क्य "फलो[2]च्चे"त्यादि प्रपञ्चयति—न चेति । व्यतिरेकं विशदयति—इच्छेदिति । इष्टत्वादर्थान्तरेऽपि कार्यार्थस्य तव्यादिप्रत्ययस्य दृष्टत्वात्प्रत्ययार्थस्येष्टत्वस्य च भेदः । न हि धर्मं जिज्ञासितुमिच्छेद्धर्मजिज्ञासनमेष्टव्यमित्यादाविष्टत्वं प्रत्ययार्थ इच्छाविषयत्वं हीष्टत्वं न चेच्छायास्तद्विषयत्वं स्वविषयत्वे वृत्तिविरोधादन्यविषयत्वे चानवस्थानात् कर्तव्यताविषयत्वं तु तस्या दृष्टं तस्मादन्यदिष्टत्वमन्यच्च कर्तव्यत्वमिति न साध्याविशिष्टतेति भावः ॥५१४॥

कर्तव्यता क्रियादिभ्यो भिन्ना चेत्कथं तर्हि तेषु तद्धीरित्याशङ्क्याऽऽह—तस्मादिति ॥५१५॥

क्रियादिविलक्षणं कार्यं लिङादिवाच्यमिति स्थिते चोदयति—लोकवदिति । यथा लोके मानान्तरसिद्धधात्वर्थसंबद्धं कार्यं गृह्यते; न तन्मात्रं तथा वेदेऽपि कार्यमात्रं न प्रतीयते यजेतेत्यादौ मानान्तरसिद्धयागादिरूपसाधनभूतचेष्टासंसृष्टस्य कार्यस्य प्रतिपादनादित्यर्थः ॥५१६॥

मानान्तरगम्यभावार्थस्पृष्टकार्यस्य वैदिकत्वे प्राप्ते दोषमाह—ततश्चेति । आरोग्यकामः पथ्यमश्नीयादिति वाक्यस्य स्वार्थे मानान्तरप्रवेशात्तत्सापेक्षत्ववद्वेदेऽपि यजेतेत्यादौ मानान्तरसिद्धसाध्यसाधनसंबन्धविषयत्वात् नियोगस्य प्रमाणान्तरप्रवेशोपपत्तेः सापेक्षत्वापत्तिरित्यर्थः ॥५१७॥

भवतु सापेक्षत्वं नेत्याह—अत इति । यतो मानान्तरसिद्धसाध्यसाधनसंबन्धविषयो नियोगो हरीतकीं भक्षयेदित्यादिना प्रैषादिनियोगेन समोऽतस्तेन मानान्तरेण फलसाधनत्वोपरक्तकार्यगोचरेण विरोधा[3]दुपरोधाद्वा "चित्रया यजेत पशुकाम" इत्यादौ वेदमात्रे प्रामाण्यं हीयते । लोके हि फलसाधनतावच्छिन्ने कार्ये दृष्टो लिङादिर्वेदेऽपि न स्वतन्त्रकार्यार्थः किंतु विनियोगाधीनमेव नियोगमाहेति फलसाधनात्मकविनियोगे मानान्तरापेक्षयाऽनपेक्षत्वक्षतिश्चित्रादेश्च पश्वादिविद्यमानोपलम्भनं यद्धि क्रियानन्तरं भवनार्हं तस्य मानान्तरोपलम्भनार्हताऽस्ति, तेन तदपेक्षफलसाधनतया चित्रादौ कार्यता व्यक्ता । न चात्रानन्तरोपलब्ध्यर्हमपि फलमुपलभ्यते तस्मान्मानान्तरगोचरविनियोगावच्छिन्ननियोगविषयत्वेन सापेक्षत्वाद्योग्यत्वे सत्यनन्तरं फलादर्शनविरोधाच्च न चित्रादिवाक्ये प्रामाण्यमित्यर्थः ॥५१८॥

कार्यवादी लौकिकवाक्येषु गतिं दर्शयन्परिहरति—मैवमिति । लोके वाक्यानां पौरुषेयत्वात्तादर्थे मानान्तरावेशात्प्रैषाद्युपाधिकं लिङादिवाच्यं कार्यं मानान्तरगम्यविनियोगप्रधानमित्यङ्गीकरोति––मानान्तरेति । यत्तु लोके मानान्तरसिद्धफलसाधनत्वावच्छिन्नलिङाद्यर्थनियोगनिमित्ता शाब्दी प्रवृत्तिरिति तत्राऽऽह—प्रयोजनेति ॥५१९॥

इतश्च लौकिकनियोगस्य मानान्तरसिद्धविनियोगविषयत्वमिष्टमित्याह—साध्येति । तदेव हेत्वन्तरं स्फुटयति—पुमर्थत इति । हरीतकीभक्षणादौ फलोपायत्वस्य मानान्तरगम्यत्वात्तदवच्छिन्नो नियोगस्तद्गम्यविनियोगविषयो युक्त इत्यर्थः । लौकिकनियोगस्य मानान्तरगम्यविनियोगविषयत्वे गमकमाह—अत इति । हरीतकीभक्षणनियोगस्य मानान्तरगम्यविनियोगविषयत्वादिति यावत् । अत्रेति हरीतकीभक्षणोक्तिः ॥५२०॥

१. कर्तव्यतावेशात् = कर्तव्यतोपाधिविशिष्टत्वात् ।
२. ५०९ श्लोकस्थेत्यादिः ।
३. उपरोधात् = बाधनात् ।

स्वत एव प्रवृत्तत्वात्कर्तुरेवाधिकारिता । पदं चाऽऽरोग्यकामादि भवेत्कर्तृविशेषणम् ।।२१।।
वेदे तु सकलाक्षादिप्रमाणागोचरत्वतः । साध्यसाधनताज्ञानं नियोगादेव नान्यतः ।।२२।।
तथा ह्यकारकः कामी स्वर्गकामपदार्पितः । नियोगात्कर्मसंबन्धे पश्चाद्यातीह कर्तृताम् ।।२३।।
कामस्य च प्रधानत्वात्तत्प्राधान्यानपायतः । पुंविशेषणता तस्माद्भोगी कामी न कारकः ।।२४।।
अप्रवृत्तप्रवृत्तेश्च कारकत्वं न युज्यते । प्रवृत्तस्य णिचोक्तिः स्यात्पचन्तं पाचयेद्यथा ।।२५।।

ननु विरेचनकामो हरीतकीं भक्षयेदित्यत्र यजेतेतिवन्नियोज्यान्वयपूर्वकेऽधिकारान्वये सति कर्त्रन्वयो वाच्योऽन्यथा वेदेऽपि कर्त्रन्वयप्राथम्यापातात्तत्राऽऽह—स्वत इति । आरोग्यकामो हरीतकीं भक्षयेदित्यत्र नियोगस्य मानान्तरयोग्यविनियोगविषयत्वाद्वाक्यापेक्षां विना मानान्तरादेव हरीतकीभक्षणे पुंस्प्रवृत्तेस्तत्र गुणभूतस्याऽऽदावेव कर्तृत्वेनान्वितस्य पश्चाल्लिङादिश्राविणो नियोज्यत्वाधिकारित्वान्वयः । वेदे त्वन्यथात्वं वक्ष्यत इत्यर्थः । ननु स्वर्गकामपदवदारोग्यकामपदे नियोज्यार्पके सति कथं कर्त्रन्वयप्राथम्यं तत्राऽऽह—पदं चेति । देवदत्तः पचतीत्यत्र देवदत्तपदवदिदमपि कर्तुरर्पकं मानान्तरवशादत्र पुरुषप्रवृत्तेरुक्तत्वान्न तु नियोज्यस्येत्यर्थः[1] ।।५२१।।

लौकिकवाक्यानां गतिमुक्त्वा वैदिकप्रवर्तकवाक्यानां गतिमाह—वेदे त्विति । अपौरुषेये वेदे प्रतीतोऽपि नियोगो न मानान्तरगोचरो न च यागादेः स्वर्गाद्यसाधकत्वे तत्कामस्य तस्मिन्नियोगो युक्तोऽतो नियोगवशादेव तत्र साध्यसाधनताधीर्न मानान्तरादित्यर्थः ।।५२२।।

वेदे साध्यसाधनताधियो नियोगाधीनत्वेऽपि कामस्य कर्तृविशेषणत्वं लोकवदित्याशङ्क्याऽऽह–तथा हीति । वेदे साध्यसाधनत्वस्य मानान्तरासिद्धत्वात्तद्विषयनियोगस्यातत्सापेक्षत्वाद्वेदादेव तत्सिद्धिरिति सिद्धे तस्मिन्कार्यात्मनि ममायमिति स्वामित्वबोद्धुर्नियोज्यस्य स्वर्गकामपदेनार्पणादादौ नियोज्यान्वयः । स च पश्चान्नियोगविषये तत्करणे च कर्मण्यैश्वर्यमधिकारं प्रतिपद्यते । एवं स्वर्गकामशब्दितः कामी नियोज्यश्चाधिकारी च, न कारकः कर्तेति कामो न कर्तृविशेषणमित्यर्थः । नियोज्यान्वयपूर्वकोऽधिकारान्वयोऽस्तु कर्त्रन्वयस्तु कथमिति तत्राऽऽह—नियोगादिति । नियोगेन नियोज्यतयाऽन्वयस्तद्द्वारा कर्मण्यधिकारान्वयस्तस्मिन्सति मदीयनियोगसाधकं चेत्कर्म तर्हि निर्वर्तयिष्यामीति धात्वर्थे गुणतया कर्तृत्वेनान्वेतीत्यर्थः ।।५२३।।

स्वर्गकामादिवाक्ये कामो न कर्तृविशेषणमित्यत्रैव हेत्वन्तरमाह—कामस्येति । तस्य फलविषयत्वेन प्राधान्यात्तत्प्रधानत्वात्यागेन पुंविशेषणता वाच्या क्रियां प्रति कर्तुर्गुणत्वात्तद्विशेषणत्वे तस्योपसर्जनोपसर्जनत्वात्प्राधान्यच्युतिः अधिकारिविशेषणत्वे तु तस्य स्वामित्वेन प्राधान्यान्न कामप्राधान्यहानिरित्यर्थः । वेदे कामस्याधिकारिविशेषणत्वं निगमयति—तस्मादिति । भोगः फलं नियोगस्तद्वान्नियोज्योऽधिकारी वेदे कामविशेषित इति यावत् । तत्र कामो न कर्तृविशेषणमित्येतन्निगमयति—न कारक इति ।। ५२४ ।।

वेदे नियोज्यान्वयपूर्वकाधिकारान्वये कर्त्रन्वय इत्यत्रैव हेत्वन्तरमाह—अप्रवृत्तेति । हरीतकीभक्षणे साध्यसाधनत्वस्य मानान्तरगम्यत्वात्तद्वशात्प्रवृत्तस्य न नियोगाधीना प्रवृत्तिर्न च प्रवृत्तप्रवृत्तौ णिचोऽवकाशः पौरुषेयवाक्यानां हि वक्तृधीरर्थः "एवमयं पुरुषो वेदेति भवति प्रत्यय" इति स्थितेस्तन्मानान्तरात्प्रवृत्तस्य लौकिकवाक्याद्वक्तृज्ञानमवगच्छतस्तद्द्वारा प्रवृत्तौ णिचो नावकाशः । वेदे तु यागादौ मानान्तरादप्रवृत्तेरप्रवृत्तस्यैव शास्त्रात्प्रवृत्तिरतो धात्वर्थे पुरुषस्याऽऽदावेव वेदे कर्तृत्वायोगान्नियोज्यान्वयपूर्वकमधिकारित्वं प्राथमिकमित्यर्थः । नन्वादौ कर्त्रन्वयार्थं यागादावपि प्रवृत्तप्रवृत्तिरिष्टा तत्राऽऽह—प्रवृत्तस्येति । प्रवृत्तस्यैव यागादौ शब्दात्प्रवृत्तिः चेत्प्रयोजकीभूतनियोगस्य याजयेदिति णिचा वचनं स्याद्यथा पाके प्रवृत्तस्य प्रवर्तने पाचयेदिति णिचोक्तिः न तथाऽत्र साऽस्ति । न चापौरुषेये वेदे पौरुषेयवाक्यतुल्यत्वमतोऽप्रवृत्तप्रवर्तनादधिकारिणो विशेषणं वेदे कामो न कर्तुरित्यर्थः ।। ५२५ ।।

---

१. इदमपि आरोग्यकामपदमपि कर्तुरर्पकं नतु नियोज्यस्यार्पकमित्यर्थः ।

अक्रियाकर्तृसंबन्धे ननु षष्ठी प्रसज्यते । नैवं नाम्नोः सदा योगे षष्ठीयं शैषिकी यतः ।।२६।।
क्रियाकारकयोगे च द्वितीयादिर्लडादि तु । स्यात्प्रातिपदिकार्थस्य भावार्थेनेत्यसङ्करः ।।२७।।
नीलोत्पले तु नामार्थावपहाय परस्परम् । भेदमेकात्मतां याताविति षष्ठी न सम्मता ।।२८।।
लिङर्थे युज्यमानस्य कर्मत्वं न च कामिनः । अक्रियात्वान्नियोगस्य द्वितीया चेद्भवेत्तथा ।।२९।।
तस्मादकारकः कामी स्वनियोगप्रसिद्धये । नियुज्यमान एवेह विषयं साध्यमीक्षते ।।३०।।
राजादिषु प्रसिद्धश्च नियोगः साध्यगोचरः । भावार्थस्य च साध्यत्वमिति तेनापि युज्यते ।।३१।।

क्रियाकर्तृभावेन नियोगस्वर्गकामयोः संबन्धं हित्वा स्वस्वामित्वेन संबन्धे चैत्रस्य स्वमितिवन्नियोगः स्वर्गकामस्येति कृत्वा स्वर्गकामे षष्ठी प्राप्नोतीति शङ्कते—अक्रियेति । परिहरति—नैवमिति । "शेषे षष्ठी"ति संबन्धमात्रविषया सा सूत्रिता सा चेयं नाम्नोः संबन्धे नियताऽतो यजेतेत्यस्यानामत्वात्तद्योगे स्वर्गकामपदस्य 'तस्य यजेते'ति न षष्ठीत्यर्थः ।। ५२६ ।।

नाम्नोर्मिथो योगे षष्ठीति प्रसङ्गेनेतरविभक्तीनां विषयव्यवस्थामाह—क्रियेति । वृक्षस्तिष्ठति तं पश्येत्यादिप्रयोगेषु क्रियाकारकयोगे गम्यमाने तदवद्योती प्रथमा द्वितीयेत्यादिर्विभक्तिविशेषः स्यात्तत्रापि क्रियायाः कर्तृकर्मकरणसंप्रदानापादानाधिकरणसंबन्धे विभक्तिविशेषा भवन्तीत्यर्थः । कारकविभक्तीनां विषयमुक्त्वा क्रियापदविषयमाह—लडादीति । आदिपदेन लिडादयो नव लकारा गृह्यन्ते । "अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" ( पा.अ. १-२-४५ ) इति सूत्रितप्रातिपदिकार्थस्य पचत्यादिधात्वर्थेन योगे गम्यमाने लडादिविभक्तिः स्यात्तत्रापि वर्तमानत्वानद्यतनत्वादिविशेषेषु क्रियायोगे लकारविशेषा भवन्तीत्यर्थः । सुपां तिङां च विभक्तीनामित्थं व्यवस्थितावसांकर्यं फलमाह—इत्यसंकर इति ।। ५२७ ।।

नाम्नोर्मिथो योगे षष्ठीत्युक्तं तर्हि नीलोत्पलयोरपि तथात्वान्मिथो योगे नीलमुत्पलस्येति षष्ठी स्यान्न सामानाधिकरण्यमित्याशङ्क्याऽऽह—नीलेति । यद्यपि नीलोत्पले नामार्थौ तथाऽपि तौ मिथो भेदं हित्वा प्राप्तावेकात्मतां नीलस्योत्पलमुत्पलस्य वा नीलमिति षष्ठी तद्विदां नेष्टेति योजना । युतसिद्धयोर्नामार्थयोर्योगे षष्ठी नीलोत्पलयोस्त्वयुतसिद्धयोः सामानाधिकरण्यमेवेत्यर्थः ।। ५२८ ।।

स्वर्गकामिनि षष्ठ्यभावेऽपि द्वितीया स्यात्स हि नियोगेन प्रेर्यते ग्रामं गच्छतीत्यादौ च क्रियाव्याप्ये द्वितीया दृष्टा अतः स्वर्गकामं यजेतेति वाक्यं स्यादिति चेन्नेत्याह—लिङर्थ इति । नियोगे प्रेर्यत्वेन सम्बध्यमानस्य स्वर्गकामस्य कर्मत्वाप्राप्तेर्न तस्मिन्द्वितीयेत्यर्थः । कामिनो नियोगे युज्यमानस्याकर्मत्वे हेतुमाह—अक्रियात्वादिति । क्रियाविशेषो हि कर्मापेक्षो नियोगो न क्रिया तत्साध्यत्वादतस्तस्मिन्युज्यमाने कामिनि न द्वितीयापत्तिः स्वामित्वेन हि तस्य संगतिरित्यर्थः । एतदेव व्यतिरेकमुखेनाऽऽह—द्वितीयेति । गमनादिवत्क्रिया चेन्नियोगस्तर्हि तत्प्रेर्ये कामिनि ग्रामवद्द्वितीया स्यान्नासौ क्रिया तदन्यत्वस्योक्तत्वादित्यर्थः ।। ५२९ ।।

नियोज्यान्वयपूर्वकेऽधिकारान्वये कर्त्रन्वय इत्युक्तमुपसंहरति—तस्मादिति । यस्मात्कामी नियोगेन नियोज्यतयाऽन्वेति तस्मात्प्रथमं कर्तृत्वधीरहितः स्वामित्वेन सम्बध्यमानः स्वीयत्वेन ज्ञातनियोगस्य विषयकरणविरहिणः स्फुरणसत्तानुपपत्तेस्तादर्थ्येन विषयाद्यपेक्षमाणो लिङादिना धात्वर्थे प्रेर्यमाणस्तदेव प्रतीत्यनुबन्धितया विषयमुत्पत्तिप्रयोजकतया च करणं स्वानुष्ठेयं पश्यतीत्यर्थः ।। ५३० ।।

ननु नियोगविषयस्य साध्यत्वमनियतं "दध्नेन्द्रियकामस्ये"त्यादौ सिद्धेऽपि दध्यादौ नियोगदर्शनादत आह—राजादिष्विति । [1]दध्यादेरपि धात्वर्थाविष्टतया साध्यस्यैव नियोगविषयता दृष्टेति भावः । नियोगस्य साध्यविषयत्वेऽपि दध्यादेः स्वरूपेणैव साध्यतया तद्विषयत्वसम्भवे कृतं क्रियानुप्रवेशेनेत्याशङ्क्याऽऽह—भावार्थस्येति । क्रियैव साक्षात्साध्या तद्द्वारा द्रव्यादीति स्वसाक्षिकमित्यर्थः । ननु स्वर्गकामः स्वाभिलषितस्वर्गोपाये सम्बध्येत । न चैकस्यैव स्वर्गस्य नियोगो यागश्चेति द्वावुपायावेकेनैवेष्टसिद्धावपरानर्थक्याद्विकल्पापत्तेरतो नियोगयागयोरन्यतरस्मिन्नेव स्वर्गकामस्य संगतिर्नेत्याह—इति तेनेति । नियोज्यत्वाधिकारित्वपूर्वकं कर्तृत्वमित्युक्तन्यायेन स्वर्गकामो

१. धात्वर्थो होमः तद्विशिष्टत्वेन दध्नः साध्यता ।

अविवक्षितमप्येवं लिङ्गसङ्ख्यं विवक्ष्यते । पश्चाद्विषयसिद्ध्यर्थं कारकादि च यच्छ्रुतम् ॥३२॥
ततश्च स्वर्गकामो यः स्वनियोगं स साधयेत् । केन यागादिनिर्वृत्त्येत्येतच्छास्त्रात्प्रतीयते ॥३३॥
न चानपनयन्यागः कामिनः स्वर्गकामिताम् । साधनं स्वाधिकारस्य भवतीह कथंचन ॥३४॥
अनुन्मृदितकामो हि पूर्वावस्थाऽविशेषतः । निष्पादिताधिकारोऽपि नियोगार्हः पुनर्भवेत् ॥३५॥

नियोगेनाऽऽदौ सम्बध्य धात्वर्थेनापि सम्बध्यते । न खल्वाशुतरविनाशिधात्वर्थो विना नियोगमिष्टमुपनयति । नापि स भावार्थाद्दृते भवति । न च सोऽनिष्पन्नः स्वर्गमुपनयेत्तस्मादुभयत्र कामिनः संगतिरिति भावः ॥ ५३१ ॥

स्वर्गकामस्योभयत्र योगेऽपि वाक्यस्य नियोगपरत्वे स्वर्गकामपदे लिङ्गसंख्ययोरविवक्षितत्वाद[1]नुष्ठात्रनियमादनुष्ठानमनियतं स्यादित्याशङ्क्य पश्वेकत्वाधिकरणन्यायेनाऽऽह—अविवक्षितमिति । उक्तन्यायाद्वाक्यस्य नियोगपरत्वाद्यद्यपि स्वर्गकामपदे लिङ्गं च संख्या चेत्येतदप्रतिपाद्यं तथाऽपि श्रुतलिङ्गादित्यागेनाश्रुतकल्पनायोगाद्यथाश्रुतं तद्ग्राह्यमित्यक्षरार्थः । अयं भावः—स्थितं चतुर्थे—"तत्रैकत्वमयज्ञाङ्गभूतमर्थस्य गुणभूतत्वात्" ( पू. मी. ४–१–११ ) ज्योतिष्टोमे "यो दीक्षितो यदग्नीषोमीयं पशुमालभत" इति "अनड्वाहौ युनक्ती"ति च श्रुतमश्वमेधेऽपि "वसन्ताय कपिञ्जलानालभत" इति । तत्रैकत्वाद्यविवक्षितं विवक्षितं वेति संशये पशुना यजेतेति वाक्यार्थे सति करणत्वेन पशोर्नियोगान्वयादेकत्वादेश्च तदभावात्तत्र पशावनडुहोः कपिञ्जलेषु चैकत्वाद्ययज्ञाङ्गभूतमविवक्षितमर्थस्य पश्वादेर्गुणभूतत्वेन नियोगायोगित्वादिति पूर्वपक्षे राद्धान्तितम् । "शब्दवत्तूपलभ्यते तदागमे हि तद् दृश्यते तस्य ज्ञानं हि यथाऽन्येषाम्" (पू. मी. ४-१-१५) इति । लोके पशुमानयेत्यादिप्रयोगे सत्येकत्वादिविशिष्टपश्वानयनं प्रतीयते । तस्यैकवचनादेरागमे तस्यैकत्वादेर्ज्ञानं दृश्यते यदागमने यदुपजायते स तस्यार्थ इति गम्यते । यथाऽन्येषां शब्दानामश्वमानयेत्युक्ते सत्यश्वानयनं गामानयेति तदानयनं चार्थो भाति तस्मात्पशुना यजेतेति वाक्येन संख्या यज्ञे विधीयत इति सूत्रार्थः । तथा च प्रकृतेऽपि स्वर्गकामपदे संख्या विवक्षिता । न चोपादेयविशेषणतया पश्वेकत्वस्य विवक्षितत्वेऽपि स्वर्गकामैकत्वं ग्रहैकत्ववदनुपादेयविशेषणत्वादविवक्षितमिति युक्तं, तत्र हि वाक्यभेदादविवक्षितत्वम् । स्वर्गकामस्य तु नियोज्यत्वेनोपादेयत्वात्तद्विशेषणमेकत्वं कुतो न विवक्ष्यते । न चैवमपि लिङ्गमविवक्षितम् । पशुना यजेतेत्यत्र लिङ्गमविवक्षितं विवक्षितं वेति संशय्यानुष्ठानविशेषानापादकत्वादविवक्षितमिति प्राप्यस्यानुष्ठाने भेदाभावेऽपि तस्य विशेषनिष्ठत्वादुपादेयद्रव्यविशेषनिश्चयं विना तदयोगात्तन्निश्चयहेतुत्वाल्लिङ्गस्य संख्यावद्विवक्षितं तदित्युक्तम्–"तथा च लिङ्गम्" ( पू. मी. ४–१–१७ ) इत्यत्र । अतः स्वर्गकामपदे लिङ्गमपि विवक्षितमिति । तथाऽपि फलादेरविवक्षितत्वे कथमनुष्ठानं न हि विहाय क्रियाकारकफलाद्यनुष्ठानं नाम, न चैकस्मिन्नेव वाक्ये नियोगस्य फलादेश्च विवक्षितत्वं वाक्यभेदापातादित्याशङ्क्याऽऽह—पश्चादिति । प्रत्ययार्थप्रतीत्यनन्तरं तद्विषयधात्वर्थनिष्पत्त्यर्थं सन्निधौ श्रुतं यत्कर्ता फलमितिकर्तव्यतेति तदपि ग्राह्यं न चार्थभेदाद्वाक्यभेदः साक्षान्नियोगपरस्यार्थादर्थान्तरेऽपि कारकादौ पर्यवसानादित्यर्थः ॥ ५३२ ॥

लिङ्गसंख्याकर्तृफलानां विवक्षितत्वे फलमाह—ततश्चेति । फलस्य विवक्षितत्वात्स्वर्गकामोऽधिकारी न यत्किञ्चित्कामो, लिङ्गस्य विवक्षितत्वात्तत्कामः पुरुषोऽधिकारी न स्वातन्त्र्यात्काऽपि स्त्री तत्कामा, संख्याया विवक्षितत्वात्तत्काम एवाधिकारी न तत्कामौ तत्कामाश्च, कर्तुर्विवक्षितत्वात्स एव क्रियाद्वारा स्वनियोगं साधयेन्नान्य इत्यर्थः । इतिकर्तव्यतादेर्विवक्षितत्वे फलोक्त्यर्थं केन स स्वनियोगं साधयेदित्याकाङ्क्षते—केनेति । करणेतिकर्तव्यतयोर्विवक्षितत्वाद्यागस्य साङ्गस्य सम्पादनेन नियोज्यः स्वनियोगं साधयेदित्याह—यागेति । साङ्गयागानुष्ठानान्नियोगसिद्धौ मानमाह—इत्येतदिति ॥ ५३३ ॥

ननु नियोगपरे वाक्ये लिङ्गादेरप्रतिपाद्यस्यैव फलवशादादानेऽपि यागादेर्नियोगसाधनत्वादसाधनं स्वर्गादि स्यान्नियोगस्य तत्साधनत्वे चाप्राधान्यमत आह—न चेति । इह स्वर्गे कामिनो विहितो यागः कामिनः स्वर्गोत्पादनेन तत्कामितां पुंसो नापनयेच्चेत्स्वसाध्याधिकाराख्यनियोगस्य न कथंचिदपि साधनं स्यान्नहि पुरुषेष्टं स्वर्गमनुपनयन्यागो नियोगं जनयेदतो नियोगद्वारा स्वर्गोत्पादनेन तदिच्छां यागोऽपनयेदित्यर्थः ॥ ५३४ ॥

ननु यागो नियोगमेव साधयति तस्य तत्सिद्धिप्रयं.जनत्वा"न्नियोगसिद्धेः किमन्यत्प्रयोजनं सर्वविधीनामि"ति हि टीकाकृतः । अतः स्वर्गकामना पुनरपि स्थास्यति नेत्याह—अनुन्मृदितेति । यागेनानपाकृतस्वर्गकामनश्चेत्पुरुषस्तदा

१. अनुष्ठात्रनियमात् स्त्रिया द्वाभ्यां बहुभिर्वा कर्तव्यत्वप्रसङ्गादित्यर्थं ।

अधिकारः स्वसिद्ध्यर्थमतः कामस्य साध्यताम्। यागेनाऽऽपाद्य संसिध्यन्विषयस्यैति साध्यताम् ।।३६।।
नानन्तरफलाभावे विसंवादोऽत्र शङ्क्यते । क्रियासाध्ये फले स स्याल्लिङर्थस्त्वक्रियात्मकः ।।३७।।
प्रत्यर्थिनि च शब्देऽस्मिन्नाभावोऽनुपलब्धितः । मानाभावे ह्यसौ मानमानन्तर्यं त्वचोदितम् ।।३८।।
अतः कृताधिकारोऽपि यो विद्यादकृतार्थताम्। तस्य शास्त्रानभिज्ञत्वान्नाधिकारोऽत्र वैदिके ।।३९।।
मन्त्रार्थवादनाम्नां च कार्यार्थानुप्रवेशतः । प्रामाण्यं न स्वतस्तस्मात्कार्ये वेदस्य मानता ।।४०।।

तेनाऽऽपादितनियोगोऽपि पुनस्तद्योग्यः स्यान्नियोगनिष्पत्तेः प्रागिवोर्ध्वमपि कामित्वाविशेषादतो यागो नियोगद्वारा स्वर्गमुत्पाद्य तत्कामितां पुंसो निवर्तयति नियोगसिद्धिस्तु नित्यविधीनामेव फलं विध्यन्तरेषु तद्द्वारा फलान्तरोपगमादित्यर्थः ।। ५३५ ।।

यागः स्वर्गद्वारा तत्कामितापनायकश्चेत्तेनैवालं कृतं नियोगेनेत्याशङ्क्याऽऽह—अधिकार इति । याग स्य आशुनाशित्वात्कालान्तरभाविस्वर्गहेतुत्वात्तद्धेतुतया नियोगाङ्गीकारादधिकारो नियोगः स्वसिद्ध्यनुकूलनियोज्यलाभार्थं स्वर्गस्य साध्यतां स्वविषयधात्वर्थेनाऽऽपाद्य नियोज्यानुष्ठितस्वविषयद्वारा स्वयं सिध्यन्विषयस्यैव करणत्वात् तत्साध्यतां गच्छति । तथा चास्य प्राधान्यमपि न च्यवते । स्वानुकूलनियोज्यलाभार्थमेव फलानुकूलतावलम्बनादित्यर्थः ।। ५३६ ।।

ननु भोजनादिवद्यागादेरनन्तरफलानुपलम्भादमानत्वं स्वर्गकामादिवाक्ये शङ्क्यते फलसाधनतावच्छिन्नो हि नियोगो लिङर्थोऽतो मानान्तरसापेक्षविनियोगविषयनियोगवाचित्वाल्लिङादेस्तद्युक्तं वाक्यं सापेक्षत्वादमानं यथाऽऽह—"कालान्तरफले स्वर्गादौ मानान्तरानर्हेऽपि तदपेक्षविनियोगाधीनो नियोगोऽनुगम्यत एवे"ति । फले योग्यानुपलब्धिविरोधाच्च वेदाप्रामाण्यशङ्काऽवतरति नेत्याह—नानन्तरेति । अत्र चित्रादिवाक्ये चित्राद्यनन्तरमुपलम्भार्हेऽपि फले पश्वादौ तदनुपलम्भान्मानान्तरेण विसम्वादस्ततश्चाप्रामाण्यमित्ययुक्तमित्यत्र हेतुमाह—क्रियेति । फले क्रियासाध्ये सति क्रियानन्तरं तदनुपलम्भाद्विसम्वादादमानत्वं वाक्यस्य शङ्क्येत न चात्र सा युक्ता नियोगस्याक्रियात्वात्तत्साध्ये फलेऽनन्तरानुपलम्भाधीनाप्रामाण्यशङ्कानवतारान्निरस्ता च वैदिकनियोगस्य सापेक्षतेत्यर्थः ।। ५३७ ।।

यागाद्यनुष्ठानान्नियोगसिद्धौ तस्य मानान्तरानपेक्षत्वेऽप्यनन्तरानुपलम्भे योग्यानुपलम्भात्फलाभावनिश्चयान्न वाक्यमानतेत्याशङ्क्याऽऽह—प्रत्यर्थिनीति । फलसत्त्वग्राहिणि शब्दे तदसत्त्वविरोधिनि सति योग्यानुपलब्ध्या न फलाभावः सिध्यति फलभावप्रमाणविरोधात्तदभावमानानुदयादिति भावः । अभावमानविरोधाद्भावमानस्यैवानुत्थानमाशङ्क्याऽऽह—मानेति । भावमानाभावे सति तद्रूपानुपलब्धिरभावे मानं शब्दे चानादौ भावमानेऽनुपलब्धेरेवाभावान्न तद्विरोधाद्भावमानानुत्थानमित्यर्थः । तर्हि फलं प्रतिपादयता शब्देन यागादेस्तज्जन्यनियोगस्य वाऽनन्तरफलत्वं वाच्यं नेत्याह—आनन्तर्यं त्विति । यागाद्युत्थनियोगस्य फलमावश्यकमित्येतावान्फलश्रुतेरर्थो न तस्याऽऽनन्तर्यमप्यतोऽपूर्वद्वारा फलसिद्धिध्रौव्यादानन्तर्यमशाब्दमित्यर्थः ।।५३८।।

फलवाक्यमालोचयतो यागानुष्ठायिनो निष्पादितनियोगस्यानन्तरानुपलम्भेऽपि फलित्वाभिमानो युक्तस्तदालोचनाविकलस्त्वापादितनियोगोऽपि स्वस्याफलित्वमनन्तरानुपलम्भादित्यवश्यं वाक्याप्रामाण्यसंशयी स्यादित्याशङ्क्याऽऽह—अत इति । कृतनियोगस्य पुंसोऽवश्यंभावि फलमित्यतःशब्दार्थः । तथाऽपि शास्त्रालोचनविकलत्वाद्विधितो निष्पादितनियोगोऽपि स्वस्याफलित्वं यो मन्यते तस्य वैदिके कर्मणि नाधिकारो, विदुषस्तद्भावात्तेन तदीयः संशयो न प्रामाण्यविघातीत्यर्थः ।।५३९।।

स्वर्गकामादिवाक्यस्य नियोगपरस्य प्रामाण्येऽपि मन्त्रादेरविवक्षितार्थत्वान्न सर्वस्य वेदस्य कार्यनिष्ठतेत्याशङ्क्य मन्त्राधिकरणादिन्यायेनाऽऽह—मन्त्रेति । अस्यार्थः–-स्थितं प्रमाणलक्षणे—"तदर्थशास्त्रात्" ( पू० मी० १–२–३१ ) । श्रुत्यादिविनियुक्तार्थप्रकाशनसमर्था मन्त्राः किमविवक्षितार्थाः किंवा विवक्षितार्था इति संशये मन्त्राणाम्" उरु प्रथस्वे"त्यादीनां विवक्षितार्थत्वे तत्सामर्थ्यादेव पुरोडाशप्रथनादौ तद्विनियोगात्तदर्थशास्त्रस्योरु प्रथस्वेति पुरोडाशं प्रथयतीत्यादेरानर्थक्याद्यदभिधानसमर्थास्ते तेष्वेवैतान्निबध्नाति शास्त्रमित्युच्चारणमात्रोप-

भिन्नाभिन्नं न वो वस्तु येन मानाविरोधिता । नेह नानेति भेदानां निषेधात् क्व नु भेदधीः ।।१४।।
वर्णादिग्रहणोपायो नापीहाक्षादि बाध्यते । संस्काराय च यच्छास्त्रमात्मज्ञानोपकारकम् ।।१५।।
उपचारार्थतः शास्त्रं सावकाशं जपेऽथवा । अक्षादेरकृतार्थत्वात्कथं स्यात्तेन बाधनम् ।।१६।।

कर्मकाण्डप्रत्यक्षाभ्यां विरोधस्य परिहारः

उच्यते लोकतः सिद्धं भेदमाश्रित्य चोदना । प्रवृत्ता पुरुषार्थाय न तु भेदावबुद्धये ।।१७।।
भेदस्य चापुमर्थत्वात्तादर्थ्ये स्यादमानता । पुमर्थत्वेन चास्येष्टं प्रामाण्यं वेदवादिभिः ।।१८।।
वस्तुस्वरूपसंस्पर्शिचक्षुरादिभ्य उत्थितम् । भेदस्पृङ्नाक्षजाचैवं न तेनैकात्म्यबाधनम् ।।१९।।
प्रमेयविषयं मानं वस्तुनश्च प्रमेयता । न च भेदस्य वस्तुत्वं वस्तुतत्त्वानपेक्षणात् ।।२०।।

प्रत्यक्षस्य निषेधकत्वनिरासः

लब्धे हि भूतलेऽलब्धो घटस्तत्र निषिध्यते । मानान्तरेण विज्ञातो नाज्ञातः शून्यताश्रितः ।।२१।।

ऐकात्म्यवादिनां भेदाभेदाङ्गीकारे सिद्धान्तविरोधदोषान्तरमाह—भिन्नेति । भिन्नाभिन्नार्थाभ्युपगमेनोभयविध-मानानां मानत्वादविरोधिता वाच्या सा च तदभावादेव निरस्तेत्याह—येनेति । किंच तादृग्वस्तु त्वया नोपेयमुपेत-श्रुतिविरोधादित्याह—नेहेति ।।९१४।।

शास्त्रस्याध्यक्षादीनां च विकल्पसमुच्चयौ प्रत्यादिश्य नापि बाध्यत्वमित्यत्र हेतुमाह—वर्णादीति । प्रत्यक्षादि तावद्वर्णपदवाक्यादिग्रहोपायो न च शास्त्रेण तद्बाधो युक्तस्तथा सति हेत्वभावाद्वस्तुनि ज्ञानासिद्धेर्मोक्षा-भावप्रसङ्गादित्यर्थः । ऐक्यशास्त्रेण कर्मशास्त्रस्याबाधे हेतुमाह—संस्कारायेति । यत्कर्मकाण्डं स्वार्थानुष्ठानद्वारा बुद्धिशुद्धये भवदात्मज्ञानस्य परम्परयोत्पादकं तद्बाधे कर्माभावाज्ज्ञानाभावस्तस्मात्कर्मकाण्डमध्यक्षादि चाबाध्यमित्यर्थः ।।९१५।।

का तर्हि वेदान्तानां गतिस्तामाह—उपचारेति । ग्रामीणप्रधानपुंसोऽद्वयत्वोपचारवदुपचरितं ब्रह्माद्वैत-माश्रित्य शास्त्रं चरितार्थमित्यर्थः । गत्यन्तरमाह—जप इति । किंच सावकाशनिरवकाशयोर्निरवकाशं बलवदिति न्यायादद्वैतमानानामृते द्वैतादनवकाशानां दर्शितरीत्या सावकाशेन शास्त्रेण न बाध्यतेत्याह—अक्षादेरिति ।।९१६।।

द्वैतग्राहिमानविरोधान्न वेदान्तानामेकरसे ब्रह्मणि प्रामाण्यमिति प्राप्ते सिद्धान्तयति—उच्यत इति । तत्राऽऽदौ कर्मकाण्डविरोधं निरस्यति—लोकत इति । कर्मकाण्डं हि लौकिकं कर्त्रादिभेदमादायाभ्युदयार्थं प्रवृत्तं न भेदं प्रतिपादयितुं तस्यापूर्वत्वाभावात्तत्रातात्पर्यादित्यर्थः ।।९१७।।

भेदे शास्त्रस्यातात्पर्ये हेत्वन्तरमाह—भेदस्येति । "द्वितीयाद्वै भयमि"ति श्रुतेर्भेदस्यानर्थत्वात्तन्निष्ठत्वे कर्मकाण्डस्याप्रामाण्यं स्यादित्यर्थः । किंच शास्त्रस्य पुमर्थापूर्वार्थनिष्ठत्वेन प्रामाण्यमिष्टं तद्विरोधस्ते कर्मशास्त्रस्य भेदनिष्ठत्वे स्यादित्याह—पुमर्थत्वेनेति ।।९१८।।

कर्मकाण्डाविरोधेऽपि वेदान्तानामध्यक्षादिविरोधे कः समाधि?तत्र प्रत्यक्षं विधायकमेव वा निषेधकमेव वा विधिनिषेधव्यापारं वेति विकल्प्याऽऽद्यमादत्ते—वस्त्विति । उत्थितं ज्ञानमिति शेषः । विधिमात्रव्यापारत्वे-ऽध्यक्षस्य भेदाविषयत्वात्तेन वस्तुविषयवाक्यस्य न बाधनमित्याह—भेदेति ।।९१९।।

प्रत्यक्षं भेदमपि वस्तुवत्किं न स्पृशेदित्याशङ्क्याऽऽह—प्रमेयेति । मानयोग्यत्वमपि भेदस्य किं न स्यात्तत्राऽऽह—वस्तुनश्चेति । वस्तुत्वमपि तस्यास्त्येवेति चेन्नेत्याह—न चेति । तत्र हेतुमाह—वस्त्विति । वस्तु-स्वरूपस्य निरपेक्षत्वाद्धर्म्यादिसापेक्षभेदस्य सर्पादिवत्कल्पितत्वान्न वस्तुतेत्यर्थः ।।९२०।।

निषेधकमेवाध्यक्षमिति पक्षं प्रत्याह—लब्धे हीति । दृष्टे धर्मिण्यदृष्टस्यैव प्रतियोगिनो निषेधो नेदमिति वा नेदमिहेति वा । नहि प्रमितो निषेध्यः प्रमाणविरोधान्न चाज्ञातोऽज्ञातसर्वनिषेधप्रसङ्गात्तन्न निषेधकमेवाध्यक्ष-मित्यर्थः ।।९२१।।

व्यञ्जकस्य समायोगो वस्तुनो वस्तुनैव हि । नाभावेन निरात्मत्वाद्व्यावृत्त्या वा मितेर्भवेत्॥२२॥
नातो वस्तुनि संभेदो वस्तुनोऽभेदरूपतः । न प्रमाणाद्बहिर्वस्तु न मानं वस्तुनो बहिः ॥२३॥
नाभावयोर्मिथो योगोऽवस्तुत्वाभेदतस्तयोः । अभावभावयोस्तद्वद्भावरूपेषु का भिदा ॥२४॥
अनित्यत्वस्य धर्मस्य घटादेर्धर्मिणस्तयोः । संयोगः समवायो वा तादात्म्यं वेह संगतिः ॥२५॥
आधाराधेययोगेषु घटोऽत्रेति यथा मतिः । नाभावभावयोगेषु मितेर्धीः कस्यचित्तथा ॥२६॥
नहि भावातिरेकेण भावाभावः प्रमाणभाक् । भावात्मनाऽप्यतोऽभावो व्यवहाराय कल्पते ॥२७॥
अथाभावोऽपि वस्त्वेव नास्तीति मितिजन्मतः । द्वयोर्भावैकरूपत्वात्काऽतिशीतिर्मितेस्तयोः ॥२८॥
विश्वं सदेव यस्येष्टं तस्याभावः कुतो मितेः । न च भावातिरेकेण भाववत्सिद्धिमश्नुते ॥२९॥

किंच निषेधोऽभावो भेदो वा । न तावदभावेऽध्यक्षस्य प्रवृत्तिरित्याह—व्यञ्जकस्येति । प्रत्यक्षस्य वस्तुत्वाद्वस्तुनैव योगो नाभावेनावस्तुना, तस्य निःस्वभावत्वादाधारत्वायोगात् । न चाध्यक्षासंबद्धस्य तद्वेद्यताऽतिप्रसङ्गादिति भावः । द्वितीयेऽपि व्यावृत्त्याख्यभेदेन मितेरध्यक्षस्य न योगो भेदस्याप्यवस्तुत्वादतो न तस्यापि प्रत्यक्षतेत्याह—व्यावृत्त्येति ॥९२२॥

भेदाभावयोरवस्तुत्वेन मानायोग्यत्वे फलितमाह—नात इति । अवस्तुत्वाद्भेदाभावयोर्वस्तुनि स्पर्शाभावान्नोऽस्माकमभेदरूपतो वस्त्वभेदरूपमद्वयं भवतीत्यर्थः । यद्वा वस्तुनि भेदाद्यस्पर्शे हेतुमाह—वस्तुन इति । तस्य स्वारस्येनाभेदस्वाभाव्यादित्यर्थः । अथवा तत्र भेदादिस्पर्शे तदेकरूपतायोगादित्यर्थः । भेदाभावयोरन्यत्रावस्तुत्वेऽपि न वस्त्वद्वयं मानमेयभेदादित्याशङ्क्याऽऽह—नेति । अद्वये तद्भेदोऽपि वास्तवो नास्तीत्यर्थः ॥९२३॥

वस्तुनि भेदाभावौ निरस्य भेदनिरासे हेत्वन्तरमुच्यते तत्र भेदस्य धर्मिप्रतियोगिनावभावौ वा भावाभावौ वा भावावेव वा ? नाऽऽद्यो न ह्यभावयोर्मिथो भेदोऽवस्तुत्वाविशेषादित्याह—नाभावयोरिति । योगशब्देन भेदो लक्ष्यते । द्वितीयं निरस्यनि—अभावेति । तद्वदिति । न मिथो भेदोऽभावस्यानाधारत्वादित्यर्थः । तृतीयं निराह—भावेति । नहि भावेषु भेदो भेदकाभावान्न तावद्भावत्वं भेदकं प्रतियोगिनो भावत्वेन धर्म्यद्वैतापातान्नाप्यभावत्वं तस्यावस्तुत्वाद्धर्मिणोऽवस्तुत्वेन प्रतियोग्यद्वैतापत्तेश्चेति भावः ॥९२४॥

भेदनिरासेनार्थादभावं निरस्याभावनिरासेनार्थाद्भेदं निरस्यति—अनित्यत्वस्येति । अनित्यत्वशब्देनाभावो गृह्यते । भावाभावयोः सम्बन्धोऽस्ति न वा ? न चेदनादिरनन्तो भावः स्यादभावश्च स्वतन्त्रः स्यादस्ति चेत्सोऽपि संयोगादीनामन्यतमो व्यवहारभूमौ संबन्धान्तराभावादित्यर्थः ॥९२५॥

अस्तु तयोस्तेषामन्यतमः संबन्धः का हानिरित्याशङ्क्य त्रिविधमपि संबन्धं मानाभावेन दूषयति—आधारेति । भूतलादेर्घटादेश्च संयोगादिषु सत्सु घटोऽत्रेति सम्यग्धीवद्भावाभावयोस्तेषु न कस्यचिदपि मानाद्धीरुदेतीत्यर्थः ॥९२६॥

इतश्च न तयोस्त्रेधाऽपि योगः अभावो हि भावाद्भिन्नोऽभिन्नो वा? नाऽऽद्य इत्याह—न हीति । अभावस्य भावातिरेकेऽभावान्तराभ्युपगमादनवस्थानादिति भावः । न द्वितीय इत्याह—भावात्मनेति । भावाभावो न प्रमाणभागिति पूर्वेण संबन्धः । न तावदभावस्य भावान्तर्भावस्तदद्वैतापातान्नापि भावस्याभावान्तर्भावोऽभावाद्वैतप्रसङ्गादिति भावः । भावाद्भेदाभेदाभ्यामभावो दुर्भणश्चेत्कथं तद्व्यवहारस्तत्राऽऽह—अत इति ॥९२७॥

भाववदभावोऽपि न कल्पितो बोध्यत्वादिति शङ्कते—अथेति । अभावस्यापि वस्तुत्वे भावाभावयोर्वस्तुत्वेनैकरूप्याद्भेदकाभावाद्भावाभावमानतो भेदासिद्धेस्तयोर्न संगतिरिति दूषयति—द्वयोरिति ॥९२८॥

किंचाभावः सन्नसन्वा? आद्ये सर्वस्य सन्मात्रत्वादितराभावोऽविद्यमानः स्यादतो न तस्य भावेन वास्तवी संगतिरित्याह—विश्वमिति । कल्पान्तरं निराह—न चेति । यथा भावो भावादन्यत्वेन न सिध्यति भेदकाभावादेवमभावोऽपि भावादसतो भेदासंभवात्प्रामाणिकप्रतीत्यनुपपत्तेश्चातः सदद्वैतान्न संबन्ध इत्यर्थः ॥९२९॥

अभावयोगं भावश्चेत्सहते नीलयोगवत् । अविरोधादभावेन न भावापह्नुतिर्भवेत् ॥३०॥
योगोऽयं वस्तुनोर्दृष्टः पृथक्सिद्धौ परस्परम् । मेषयोर्मल्लयोर्यद्वन्न भावाभावयोस्तथा ॥३१॥
न योगोऽभावयोर्दृष्टो वन्ध्यासूनुखपुष्पयोः । न भावाभावयोरेवं विरोधादितरेतरम् ॥३२॥
क्षितिदेशे घटाभावो घटवन्न प्रमीयते । योगो वा समवायो वा नाभावक्षितिदेशयोः ॥३३॥
सदात्मतैवं सर्वस्य नाभावात्मकता सतः ॥३४॥
अप्यभावात्मकत्वेऽपि सतोऽभावात्मकत्वतः । कुतो भेदावकाशः स्याद्भेदेऽसति कुतो युतिः ॥३५॥
यावत्किंचिज्जगत्यस्मिन्भेदकं वस्तु लक्ष्यते । अनापन्नादिमध्यान्तं सदेव तदितीष्यते ॥३६॥
सदेवेदमिति स्पष्टं सन्मूला इति चापरम् । श्रुत्योदाहारि नः साक्षात्सदैकात्म्यावबुद्धये ॥३७॥

अभावस्य योग्यानुलम्भगम्यत्वनिरासः

मानाभावस्य मानत्वं मेयाभावस्य मेयता । न्यायं न सहतेऽतीव यथा तदधुनोच्यते ॥३८॥
बोधकं यदबुद्धस्य तन्मानमिति हि स्थितिः । न च प्रमाणतास्तित्वमीदृक्तस्मान्न युज्यते ॥३९॥
मेयाभावः प्रमाणानां यद्यभावेन गम्यते । प्रमाणानामभावस्य गमकः को भविष्यति ॥४०॥

तयोस्त्रिधाऽपि संबन्धे दोषान्तरमाह—अभावेति । यथोत्पलं नीलेन समवायं सहते तथाऽभावेन संबन्धं भावो मृष्यति चेदविरोधाद्भावस्याभावेनानिरासाद्भावोऽनाद्यनन्तः स्यादिति भावः ॥९३०॥

भावाभावयोस्त्रेधाऽप्यसंबन्धे युक्त्यन्तरमाह—योगोऽयमिति । वस्तुनोर्भेदेन सिद्धावयं मिथो योगो दृष्टो यथा मेषादौ न तथाऽनयोः पृथक्सिद्धिरिति योगासिद्धिरित्यर्थः ॥९३१॥

इतश्चाभावस्य भावेन त्रिधाऽपि न संबन्धोऽस्तीत्याह—न योग इति । असतोरसंबन्धवन्न सदसतोरपि संबन्धो मिथो विरोधादित्यर्थः ॥९३२॥

किंच भूतले घटश्चक्षुःसंयोगाद्भाति न तथा तत्राभावस्तस्यासंप्रयोगात्संयुक्तविशेषणत्वादेरतिप्रसङ्गित्वादतो नाभावस्य भूतले संयोगादीत्याधाराधेययोगेष्वित्यत्रोक्तं प्रपञ्चयति—क्षितीति । योगशब्दः संयोगतादात्म्यविषयः ॥९३३॥

किंच भावाभावयोस्तादात्म्येऽभावस्य भावान्तर्भावो वा भावस्याभावान्तर्भावो वा ? आद्ये सदद्वैतापत्तिरित्याह—सदात्मतेति । न द्वितीय इत्याह—नाभावेति । मिथो विरोधादित्यर्थः । भावस्याभावान्तर्भावमुपेत्यापि दोषमाह—अपीति । विरोधे सत्यपीत्याद्यस्यापेरर्थः । भावस्याभावात्मत्वेऽप्यभावमात्रशेषान्न तयोर्भेदः स्यात्तदभावे च न संबन्धत्रयमतो भावस्याभावत्वं नोपेयमित्यर्थः ॥९३४-९३५॥

भावयोर्धर्मिप्रतियोगिनोर्मिथोयोगवद्भावाभावयोरपि स्यादित्याशङ्क्याऽऽह—यावदिति । भेदकत्वेनेष्टस्य सर्वस्यादिमध्यावसानहीनसन्मात्रतया दृष्टान्तासिद्धेरचोद्यमेतदिति भावः ॥९३६॥

सर्वस्य सन्मात्रत्वे मानमाह—सदेवेति । स्पष्टमिति श्रुतत्वाभिप्रायेणोक्तमपरमिति श्रुतार्थापत्तित्वविवक्षयेति विवेक्तव्यम् । वाक्यद्वयोदाहरणतात्पर्यमाह—साक्षादिति ॥९३७॥

अभावस्य भावेन संबन्धं निरस्याभावस्याध्यक्षत्वं प्राधान्येन प्रत्युक्तमिदानीं मतान्तरमनुवदन्नेव तस्य न्यायविरुद्धत्वं प्रतिजानीते—मानेति ॥९३८॥

मानाभावस्य मानलक्षणाभावान्मानत्वासंभवं वक्तुं तल्लक्षणमाह—बोधकमिति । तदनाक्रान्तत्वं मानाभावस्याऽऽह—न चेति । नहि मेयाभावस्याबुद्धत्वमसत्त्वान्नाप्यत एव मानाभावस्य बोधकतेत्यर्थः । लक्षणाभावे फलितमाह—तस्मादिति । मानतेति शेषः ॥९३९॥

किंचामितो वा मानाभावो मेयाभावं मिनोति मितो वा । नाऽऽद्यः । सभातो निर्गतदेवदत्तस्य तस्याम-

नाक्षादिपञ्चकं तस्य बोधकं सत्समन्वयात् । नयतस्तदभावो वा मेयत्वेनैव[1] तत्स्थितेः ॥४१॥
नीलादिवदभावस्य यद्यक्षादिविशेषणम् । [2]विशेषणेन तद्व्याप्तेस्तदभावः कुतो मितेः ॥४२॥
अथाविशेषणोऽभावो भवद्भिरभिधीयते । मेयाभावस्य मानत्वमविशेषात्प्रसज्यते ॥४३॥

घटाद्यभावनिरासः

घटाद्यभाव इत्युक्तिर्न सम्यगिति मे मतिः । पदानामसमर्थत्वाद्विरोधाद्वस्तुनोर्मिथः ॥४४॥
भावाभावाख्यपदयोः सामर्थ्ये चेत्समासता । घटादिनाऽनपेक्षत्वान्न[3] समासः प्रसिध्यति ॥४५॥
भावस्याभाव इत्यत्र षष्ठ्यर्थः कतमो मतः । न कश्चिदपि सम्बन्धो नीरूपस्यासदात्मनः ॥४६॥
वस्त्वन्तरमभावश्चे[4]दन्यदन्यद्भवेत्कथम् । अन्योऽपि चेद्भवेदन्योऽविरोधो नीलवद्भवेत् ॥४७॥

भावसंदेहासंभवप्रसङ्गादिति मत्वा द्वितीयमादत्ते—मेयेति । प्रमाणानामभावेन मितेनेति शेषः । मितस्य मानाभावस्य मानत्वे तत्प्रमापकं मानपञ्चकं तदभावो वेति विकल्पयति—प्रामाणानामिति ॥९४०॥

नाऽऽद्य इत्याह—नाक्षादीति । न द्वितीय इत्याह—नयत इति । मानपञ्चकस्याभावस्तस्यैव नयतो न्यायतो न बोधको मानमेयत्वस्य भेदापेक्षत्वादित्यर्थः ॥९४१॥

किंचाभावः सविशेषणो निर्विशेषणो वा ? आद्ये मानं मेयं वा विशेषणम्, आद्यमनुवदति—नीलादिवदिति । यथोत्पलादेर्नीलादि विशेषणं दृष्टं तथा प्रमाणमभावस्य विशेषणं चेदित्यनुवादार्थः । तर्हि नीलादिनोत्पलादेर्वैशिष्ट्यवदक्षादिना विशेषणेनाभावस्य वैशिष्ट्याद्विशिष्टोऽभावो नाक्षादिविषयस्तस्यांशतः स्वविषयत्वापत्तेर्नापि विशिष्टाभावो मानाभावविषयस्तस्य विषयत्वात्, अक्षादेश्च विशेषणत्वे विशेषणेन विशेष्यस्य संबन्धनियमात्तस्य च निरस्तत्वादक्षाद्यभावो न प्रामाणिकः स्यादित्याह—विशेषणेनेति ॥९४२॥

कल्पान्तरमाह—अथेति । तर्हि मानाभावस्य मानत्वं मेयाभावस्य मेयतेति विभागासिद्धिरित्याह—मेयेति । अविशेषादभावगतविशेषानभ्युपगमादित्यर्थः ॥९४३॥

मेयमभावस्य विशेषणमिति पक्षं प्रत्याह—घटादीति । भावाभावपदयोरन्योन्यान्वये सामर्थ्याभावादिति हेतुमाह—पदानामिति । कुतस्तदसामर्थ्यं तत्राऽऽह—विरोधादिति । भावाभावयोर्वस्त्ववस्तुत्वेन मिथोयोगविरोधात्तत्पदानां संसर्गासामर्थ्यमित्यर्थः ॥९४४॥

भावाभावयोर्विरोधेऽपि तत्पदयोस्तमःप्रकाशपदयोरिव समाससंभवाद्घटाद्यभाव इत्युक्तिर्युक्तेत्याशङ्क्याऽऽह—भावेति । समर्थः पदविधिरिति स्मृतेर्घटादिना पदेन पदान्तरस्य सामर्थ्ये सत्येव समासश्चेत्तर्हि भावाभावपदयोर्न समासस्तदर्थयोर्मिथो विरोधित्वेनानपेक्षत्वाद्दृष्टान्तेऽपि तुल्यत्वादनुपपत्तेरित्यर्थः ॥९४५॥

मा तर्हि समासो भूद्भावस्याभाव इति व्यासेनापि विशेषणविशेष्यत्वं निर्वक्ष्यति नेत्याह—भावस्येति । षष्ठी शेष इति स्मरणात्तदर्थः संबन्धः इत्याशङ्क्याऽऽह—न कश्चिदिति । नीरूपत्वं निःस्वभावत्वं तत्र हेतुरसदात्मन इति ॥९४६॥

वस्त्वन्तरस्याभावो वस्त्वन्तरमिति स्थितेर्निःस्वभावत्वमसिद्धमिति शङ्कते—वस्त्वन्तरमिति । घटोऽस्तीत्युक्ते घटास्तित्वयोरेकत्ववन्न सोऽस्तीत्युक्तेऽपि घटनास्तित्वयोरैक्यं वाच्यं तथा च घटाभावस्य पटत्वे घटः

---

१. मेयत्वेन प्रमाणाभावस्य स्थितेर्न तस्य मानत्वं मानमेयभावस्य भिन्नवृत्तित्वनियमात् । तदाह—**नयत इति** न्यायादित्यर्थः । न यत इति भिन्ने पदे ( न्या० )

२. विशेष्येणैकबुद्धिवेद्यस्य विशेषणत्वात् तेन विशेष्यस्य सम्बन्धत्वात् प्रतियोगिनि प्रत्यक्षादौ विशेषणे सति तदभावो न सम्भवति । (न्या० क०)

३. घटाभाव इति समासो न स्यात्, असामर्थ्यात् सामर्थ्याभावश्च भावस्य सात्मकत्वात्, अभावस्य च निरात्मकत्वादित्यर्थः । (न्या० क०)

४. **अन्यदन्यद्भवेत्कथम्**—घटाभावो घटादन्यः पटोऽपि घटाभावात् । तयोरभेदो न युक्त इत्यर्थः ।

**संगतावविरोधी चेन्न सम्बन्धिनिवृत्तिकृत् । न सम्बन्धिग्रहाभावे सम्बन्धोऽयं प्रसिध्यति ॥४८॥**

**प्रत्यक्षेण भेदो न सिद्धयतीति निरूपणम्ः**

**सम्बन्धिविरहेऽसिद्धौ षष्ठ्यर्थत्वं न सिध्यति । विरोधाद्युगपन्नापि विधानप्रतिषेधनम् ॥४९॥**

**क्षणिकत्वाद्धियां नापि स्थायिधर्मः क्रमो भवेत् । [१]अनीलाभावपृष्ठेन नापि नीलस्य वेदनम् ॥५०॥**

**नह्यदृश्यनिषेधः स्याद्घटादेरिव भूतले । नान्याभावविशिष्टत्वं कृत्स्नाभावगतौ भवेत् ॥५१॥**

**अन्याभावस्य भावत्वे स्यादभावः खपुष्पवत् । भावान्तरमभावश्चेत्सिद्धं वस्तु ततः स्वतः ॥५२॥**

**तद्ग्राहीणि च मानानि व्यावृत्तिः केन गम्यते । [२]चित्रेऽपि विषये चित्रमेकं वस्त्वेकमानतः ॥५३॥**

पट इत्युक्तं स्यान्न चैतद्युक्तमन्यस्य स्थितस्य नष्टस्य वाऽन्यभावायोगादित्याह—अन्यदिति । यद्वा घटविशेषिताभावस्य पटत्वे विशेषणस्यापि घटस्य पटेऽन्तर्भावाद्यथोक्तं दूषणं द्रष्टव्यम् । विपक्षे नीलस्योत्पलात्मत्ववदन्यस्यान्यात्मत्वाविरोधादद्वैतापत्तिरित्याह—अन्योऽपीति ॥९४७॥

अभावस्य भावेन तादात्म्यविरोधेऽपि संबन्धान्तराविरोधादुपपत्तिः षष्ठ्यर्थस्येति शङ्कते—संगताविति । संबन्धस्य निरस्तत्वान्नैवमित्याह—नेति । किंच येनाभावः संबध्यते तं निरुणद्धि न वा? न चेद्भावाभावयोरविरोधाद्विरोधः सर्वत्र न स्यान्निरुणद्धि चेत्संगतावपि विरोधितेत्याह—संबन्धीति । किंचाभावः सप्रतियोगिको निष्प्रतियोगिको वा? आद्ये सति प्रतियोगिन्यभावयोगोऽसति वा? नाऽऽद्यो विरोधात् नेतरः संबन्धिनोऽसत्त्वे तदग्रहे तत्राभावस्य संबन्धासिद्धेरित्याह—न संबन्धीति ॥९४८॥

निष्प्रतियोगिकत्वपक्षे स्वातन्त्र्यमभावस्य स्याद्धर्मिसंबन्धस्यापास्तत्वादिति मत्वाऽऽह—संबन्धीति । प्रतियोगी संबन्धी तस्याभावे धर्मिसंबन्धस्य चासिद्धौ षष्ठ्यर्थत्वं संबन्धत्वं नाभावस्येत्यक्षरार्थः । निषेधकमेव प्रत्यक्षमित्यत्र निषेधार्थं तन्मानं च निराकार्षीद्यत्तु विधिनिषेधव्यापारं तदिति तत्रापि युगपद्वा विधिर्निषेधश्च विधिपूर्वको वा विषेधस्तत्पूर्वको वा विधिर्नाऽऽद्य इत्याह—विरोधादिति ॥९४९॥

न द्वितीय इत्याह—क्षणिकत्वादिति । द्वित्रिक्षणावस्थानेऽपि धियां जन्मातिरिक्तव्यापारासत्त्वमित्यपिशब्दार्थः । न तृतीय इत्याह—अनीलेति ॥९५०॥

पीतादिनिषेधमुखेन न नीलस्य धीरित्यत्र हेतुमाह—नहीति । दर्शनयोग्यस्य घटादेरनुपलम्भे निषेधो भूतलादौ दृष्टो न त्वयोग्यस्याण्वादेरेवमयोग्यस्य निषेधायोगादनीलमित्ययमेव न निषेधस्तदभावे तन्निषेधो द्वितीयो न स्यात्कुतस्तन्मुखेन नीलविधिर्न च विना तद्विधिमनीलमिति निषेधः । प्रतियोगिधियं विना निषेधाप्रतीतेरतश्च[३]क्रकापत्तेर्न निषेधपूर्वो विधिरित्यर्थः । किंचानीलस्य पीतादेरभावो नीलस्य विशेषणं स्वरूपं वा? नाऽऽद्य इत्याह—नान्येति । सर्वस्यानीलस्य पीतादेस्तदभावस्य चावगतौ सत्यां नीलस्यान्याभावेन विशिष्टत्वं नान्यथा विशेषणादृष्टौ विशिष्टादृष्टेरतो नीलमालोचयतस्तदितरसर्वभावाभावदृष्टिप्रसङ्गात्तस्याश्चानीश्वराणामयोगान्नीलविधिरेव न स्यादित्यर्थः ॥९५१॥

न द्वितीय इत्याह—अन्येति । पीताद्यभावस्य नीलरूपत्वे नीलस्याभावान्तर्भावो वा तस्य नीलान्तर्भावो वा? आद्ये नभोनलिनवन्नीलं तुच्छं स्यात् । द्वितीये त्वभावस्तद्वदविद्यमानः स्यादित्यर्थः । अभावस्य तुच्छत्वं परिहर्तुं परिहृतमेव चोद्यमनुद्रवति—भावान्तरमिति । तत्किं भावोऽभावो वोभयथाऽपि भेदाभावयोरभावात्ताभ्यामस्पृष्टं वस्तु स्वतःसिद्धमित्याह—सिद्धमिति ॥९५२॥

ननु भेदाभावयोरपि मानसिद्धत्वात्कथं वस्तु तदस्पृष्टं तत्राऽऽह—तद्ग्राहीणीति । व्यावृत्तिर्भेदोऽभावो वा

---

१. अनीलं पीतादि तदभावपृष्ठेन—तदभावज्ञानपूर्वकं नीलादिज्ञानमित्यर्थः ।

२. चित्रस्य वस्तुत्वात् सद्रूपस्यैकत्वात् एकमानतः—सदित्येकरूपप्रत्ययात् सद्रूपेण भेदाभावोपगमे न सदद्वैतविरोधः । (न्या० क०)

३. चक्रकमिति—प्रममं नीलज्ञानं ततः प्रतियोगिज्ञानसम्पत्त्या अनीलज्ञानं ततोऽनीलज्ञानपूर्वकं नीलज्ञानं ततो निषेधपूर्वकविधिज्ञानमिति चक्रकम् ।

प्रत्येकं नीलपीतादिग्रहणे चित्रता कुतः । वस्तुनो भेदरूपत्वे वस्त्वभावः प्रसज्यते ।।५४।।

[1]अन्यधर्मे त्वभिन्नं स्यात्स्वतो वस्तु प्रमाश्रयम् । भिन्नाभिन्नं विरुद्धत्वान्नैकमानस्य गोचरः ।।५५।।

वस्त्वात्मनाऽविरोधश्चेद्वस्त्वेव विषयस्ततः ।

सत्यं वस्तु कथं भिन्द्यात्पुंव्यपेक्षाविनिर्मितः । भेदः पुत्रादिभावे तु जन्यत्वं [2]वस्तुकल्पितम् ।।५६।।

कार्यभेदात् भेदसिद्धिशङ्का तन्निरासौ

दाहपाकप्रकाशादिभेदेऽप्यग्नेरभिन्नता । कार्यतोऽपि न भेदः स्याद्वस्त्वभेदव्यवस्थितेः ।।५७।।

नोभयथाऽपि सा मेयेत्युक्तमतो मानान्यपि भेदाभावानागन्धितवस्तुप्रकाशकान्येवेत्यर्थः । ननु प्रत्यक्षेण चित्रे चेत्यमाने व्यावृत्तिरपि तेन चेत्यतेऽन्यथा चित्रस्य चित्रत्वानुपपत्तेरतो व्यावृत्तिः केनेत्याक्षेपोऽनवकाशस्तत्राऽऽह—चित्रेऽपीति । नहि तत्रैकस्मात्प्रत्यक्षाद्व्यावृत्तिर्भाति चित्रस्य वस्तुत्वात्तस्य चैकत्वाद्वस्तुनोऽन्यत्र चेद्व्यावृत्तिरवस्तु स्यादित्यर्थः ।।९५३।।

चित्रस्यैकत्वे चित्रत्वानुपपत्ति"रेकं च तच्च चित्रं चेत्येतच्चित्रतरं महदि"ति न्यायादित्याशङ्क्यापिना सूचितमरुचिहेतुमाह—प्रत्येकमिति । तत्किमेकैकं मिलितं वा?नाऽऽद्यो नीलपीताद्येकैकग्रहे चित्रत्वाग्रहात्, नेतरो मिलितस्य समुदायात्मनो नीलपीतादिभ्यो भेदाभेदाभ्यां दुर्भणत्वादतश्चित्रस्यावस्तुत्वात्तद्गतत्वेन व्यावृत्तिग्रहे साऽपि न वस्तु स्यादित्यर्थः । नीलादिवस्तुस्वरूपत्वाद्व्यावृत्तेर्वस्तुग्राहि मानं तामपि गोचरयति तन्न व्यावृत्तेरवस्तुत्वमप्रामाणिकत्वं चेत्याशङ्क्याऽऽह—वस्तुन इति । तस्य भेदेऽन्तर्भावो वा भेदस्य वस्तुन्यन्तर्भावो वा?नाऽऽद्यो भेदस्य विदारणात्मत्वात्तदात्मनो वस्तुनः शून्यतापातान्न द्वितीयो भेदस्य वस्तुनोऽनर्थान्तरत्वे सदद्वैतापत्तेरिति भावः ।।९५४।।

ननु भेदः स्वभावो मा भूद्धर्मस्तु भविष्यति नेत्याह—अन्यधर्मे त्विति । स हि वस्तुनोऽवस्तुनो वा धर्मः ? नाऽऽद्यो धर्मस्यापि वस्तुत्वे धर्मिणो भेदासिद्धेरवस्तुत्वे वस्त्वद्वैतापत्तेर्नेतरो भेदस्यावस्तुधर्मत्वे वस्त्वस्पर्शात्स्वतस्तदद्वयं प्रामाणिकं स्यादित्यर्थः । आश्रयशब्दो विषयवाची भावप्रधानो बहुव्रीहिसमासान्तः । वस्तुनो भिन्नाभिन्नत्वान्नाद्वयत्वमिति मतान्तरमाशङ्क्याऽऽह—भिन्नाभिन्नमिति ।।९५५।।

वस्तुरूपेण भेदाभेदयोरविरोधान्मानविषयत्वं शङ्कते—वस्त्विति । येन रूपेण तयोरविरोधस्तदेव मेयं न भेदाभेदावित्याह—वस्त्वेवेति । यद्यपि वस्त्वेव मेयं तथाऽपि भेदस्य मेयत्वं वस्तुरूपत्वान्न चैवं वस्त्वभावः स्वापेक्षया वस्तुनो भेदत्वानभ्युपगमादन्यापेक्षयैव तद्रूपत्वादित्याशङ्क्याऽऽह—सत्यमिति । स्वहेत्वासादितरूपमवितथमनपेक्षं वस्तु चेद्भेदः स तर्हि सापेक्षः सन्वस्तुनि तदभिन्नो भेदव्यवहारं नाऽऽदध्यात्सापेक्षनिरपेक्षयोर्भिन्नत्वात्पुंधर्मश्चापेक्षा नाचेतनेषु युक्ता । यदि तद्धर्मेणापेक्षया निर्मितो भेदो न तर्हि सत्यं वस्तु स्यादपेक्षाकृतस्य सर्पवत्कल्पितत्वादित्यर्थः । आपेक्षिकत्वात्कल्पितो भेदः सर्पवदित्यत्र पित्रादौ व्यभिचारमाशङ्क्याऽऽह—पुत्रादीति । पुत्रस्य भावो जन्म पितुर्भावस्तदुपादानं तन्निमित्तं वा तस्मिन्सति पुत्रदेहस्य कर्मकारकत्वं पितृदेहस्य कर्तृकारकत्वं तदुभयमापेक्षिकत्वाद्वस्तुनि देहविशेषे कल्पितमिति कुतो व्यभिचारः ? यत्तु वस्तुदेहद्वयमकल्पितं तदनपेक्षमेव, पुत्रोत्पत्तेः प्रागपि पितृदेहस्य भावात्पुत्रदेहस्य च पितृसंबन्धात्पूर्वमनुशयिरूपेण सत्त्वादिति भावः ।।९५६।।

प्रत्यक्षाभावमानाभ्यां भेदसिद्धिरुद्धृता । इदानीं विमतं भिन्नं भिन्नकार्यत्वान्मृदादिवदित्यनुमानाद्वा, कार्यभेदो हेतुभेदं विनाऽनुपपन्नस्तद्भेदं कल्पयतीत्यर्थापत्तेर्वा जगद्धेतुभेदः सिध्यतीत्याशङ्क्यानुमाने व्यभिचारमर्थापत्तौ चान्यथोपपत्तिमाह—दाहेति । एकस्मिन्नेवाग्नौ भिन्नकार्यत्वस्य दृष्टत्वान्न मानद्वयाद्धेतुभेदः कार्यभेदेऽपि जगद्धेतोरभेदेन स्थितेरग्निवदुपपत्तेरिति फलितमाह—कार्यतोऽपीति । कार्यभेदेऽप्यरुचिमपिना सूचयति ।।९५७।।

---

१. भेदे अन्यधर्मे प्रतियोग्यन्तरापेक्षरूपे इतरापेक्षस्य स्फटिकलौहित्यवत् कल्पितत्वात् वस्तुस्वरूपमद्वैतं स्यादित्यर्थः । (न्या० क०)

२. वस्तुकल्पितम्—वस्तुनि पितृपुत्रदेहादौ जन्यत्वं जनकत्वं च कल्पितम् । अतो न व्यभिचारः ।

**विभिन्नकार्यकर्त्रीणां शक्तीनां यद्वदाश्रयः । न विरुद्धोऽग्निरेकोऽपि तद्वत्कार्येऽपि किं न ते ॥५८॥**

**घटाभावे घटः सिध्येत्पटाभावे पटस्तथा । अन्योन्याभावदृष्टेः स्यादन्योन्याश्रयता तव ॥५९॥**

पृथक्त्वं गुणः प्रत्यक्षः तेन भेदसिद्धिनिरासौ

**प्रत्यक्षत्वं पृथक्त्वस्य गुणत्वाद्यैरपीष्यते । तेषामपि गुणे मानं नीलवन्न त्ववस्तुनि ॥६०॥**

**अथ वस्तु पृथक्त्वेन विशिष्टं गम्यते तदा । शुक्लो गौरितिवन्मानं वस्तुन्येव न भेदगम् ॥६१॥**

**अभेदेनैव वर्तेत पृथक्ता यदि वस्तुषु । वस्त्वेव तत्ततोऽन्या चेदपृथग्वस्तु तर्हि ते ॥६२॥**

**भावाभावपृथक्ताऽपि यद्यभिन्ना ततोऽपृथक् । भावाभावविभिन्ना चेत्पृथक्ता न परस्परम् ॥६३॥**

पृथक्त्वस्य सापेक्षत्वनिरपेक्षत्वाभ्यां भेदकत्वनिरासः

**अन्यापेक्षं पृथक्त्वं चेत्स्वयं तर्ह्यपृथग्घटः । द्विधर्मत्वेऽपि वस्त्वेतदेकं स्यादुत्पलादिवत् ॥६४॥**

ननु दहनादिशक्तयो दहने भिद्यन्ते तत्र कारणभेदादेव कार्यभेदस्तत्कुतो भिन्नकार्यत्वहेतोर्व्यभिचारः कुतश्चार्थापत्तेरन्यथाऽप्युपपत्तिस्तत्राह—विभिन्नेति । न तावच्छक्तीनामेव कारणत्वं तासां केवलानां तद्भावादृष्टेरग्नेरपि तद्भावे व्यभिचारादितादवस्थ्यं तासामेव कारणत्वेऽपि वह्नेरेकस्यानेकशक्त्याश्रयत्ववद्भिन्नेऽपि कार्ये कारणमेकमेव किं न स्यादतोऽनुमानादेर्व्यभिचारादिदुष्टत्वादसाधकतेति भावः ॥९५८॥

कार्ये भेदाभावावङ्गीकृत्य कारणे तदुभयमपास्तम् । संप्रति कार्येऽपि तन्नास्तीत्याह—घटेति । घटस्याभावः पटस्तस्मिन्पटे घटो नेत्येवं घटाभावतया निष्पन्ने तदभावतया घटो निष्पद्येत पटस्य वाऽभावो घटस्तस्मिन्घटे पटो नेत्येवं पटाभावतया जाते घटाभावतया पटः सिध्येदित्यक्षरार्थः । यद्वा घट एव पटस्याभावस्तस्मिन्नुत्पन्ने सत्यघटः पटो घटाभावत्वेन सिध्यति । पट एव घटस्याभावस्तस्मिन्सिद्धे सत्यपटो घटः पटाभावत्वेन सिध्यतीत्यर्थः । उभयत्र फलितं दोषमाह—अन्योन्येति । घटपटयोरन्योन्यमभावरूपेण दृष्टेरिष्टत्वात्तत्पक्षे घटसिद्धौ पटसिद्धिः पटसिद्धौ च घटसिद्धिरित्यन्योन्याश्रयान्न किंचिदपि सिध्येदतो भेदाभावयोरभावादद्वयं वस्तु स्यादित्यर्थः ॥९५९॥

मीमांसकादिपक्षे भेदाभावयोरसिद्धिमुक्त्वा वैशेषिकादिपक्षेऽपि भेदासिद्धिं वक्तुमारभते—प्रत्यक्षत्वमिति । पृथक्त्वं भेदस्तस्य गुणत्वेन वस्तुत्वात्प्रत्यक्षत्वं यैरपीष्टं तन्मतेऽपि नीलादिष्विव प्रत्यक्षं गुणे मानं तस्य वस्तुत्वात्संप्रयोगयोग्यत्वाद्भेदस्तु न गुणो गुणेऽपि भावादतो नावस्तुनि भेदे तस्य माननेत्यर्थः ॥९६०॥

पृथक्त्वाख्यभेदस्य नावस्तुत्वं वस्तुविशेषणत्वाद्रूपवदिति शङ्कते—अथेति । गुणादिषु च तथाविधभेदस्यैकार्थसमवायोपाधिकृतत्वादध्यक्षतेति भावः । अभावेऽपि व्यभिचारं मत्वा दोषान्तरमाह—तदेति । तस्मिन्पक्षे यथा शुक्लो गौरिति धीः शुक्ले गव्येव वस्तुनि मानं तथा भिन्नो घट इत्यपि भिन्नवस्तुन्येव मानं न भेदे तस्य वस्तुविशेषणत्वेऽप्यभाववदवस्तुत्वोपपत्तेरतोऽप्रयोजको हेतुः । संभवति च भेदस्य मुख्यत्वे किमित्यौपचारिकत्वमित्यर्थः ॥९६१॥

शुक्लो गौरिति ज्ञानं गवि मानं भवद्विशेषणे शौक्ल्येऽपि मानं तथा भिन्नो घट इत्यपि धीर्घटवद्भेदेऽपि मानमित्याशङ्क्य पृथक्त्वभेदस्य वस्तुन्यभेदो भेदो वेति विकल्प्याऽऽद्यमादत्ते—अभेदेनेति । तर्हि वस्त्वद्वैतापातस्तदतिरिक्तपृथक्त्वाभावादित्याह—वस्त्वेवेति । द्वितीयमनुभाष्य दूषयति—तत इति । पृथक्ता वस्तुनोऽन्या चेत्तर्हि वस्त्वपृथक्स्यात्तस्यावस्तुनो निष्कृष्टत्वात्संबन्धस्य च भेदाभेदाभ्यां दुर्वचत्वादित्यर्थः ॥९६२॥

किंच भावाभावयोः पृथक्त्वमस्ति न वा? आद्यमनुवदति—भावेति । साऽपि ताभ्यामभिन्ना भिन्ना वेति विकल्पयति—अपीति । तत्राऽऽद्यं गृह्णाति—यदीति । तदा भेदाभावाद्भावाभावयोर्न कुतश्चिद्व्यावृत्तिरिति वस्त्वद्वैतं स्यादित्याह—तत इति । कल्पान्तरमादायापास्यति—भावेति । पृथक्ताया भावाभावाभ्यां भेदे तस्यास्ताभ्यां संबन्धस्य दुःसाध्यत्वात्तयोर्मिथोऽभेदाभावादद्वैतमेव स्याद्भावाभावयोर्न पृथक्तेत्यत्रापि तदेवेति भावः ॥९६३॥

किंच घटस्य पृथक्त्वं स्वापेक्षमन्यापेक्षं वा? आद्ये घटस्य शून्यतेति मन्वानो द्वितीयमनुवदति—अन्यापेक्षमिति । तर्हि घटः स्वयमपृथगद्वितीयः स्यादन्यापेक्षानिमितस्य सर्ववन्मिथ्यात्वादित्याह—स्वयमिति । घटः स्वरूपेण

धर्मबुद्धिप्रभेदेऽपि धर्म्यभेदः सदेष्यते । अतो गवादेर्भेदेऽपि सन्मात्रमवसीयते ॥६५॥
गोत्वादिमेयपक्षेऽपि सद्रूपस्यानपायतः । वस्त्वेव मेयं गोत्वादि शाबलेयादिवत्स्फुटम् ॥६६॥
सद्रूपत्वापरित्यागादवान्तरनिबन्धनाः । व्यवहाराः प्रतीयन्ते सत्तत्त्वं तेष्ववस्थितम् ॥६७॥
सत्तातोऽपि न भेदः स्याद्द्रव्यत्वादेः कुतोऽन्यतः । एकाकारा हि संवित्तिः सद्द्रव्यं सन्गुणस्तथा ॥६८॥
समवायाच्च सम्बन्धे नैकरूप्यं विभिन्नयोः । तच्चेत्ततो न विश्वासो जातावप्येकबुद्धितः ॥६९॥

पृथक्त्वापृथक्त्वधर्मत्युपगमात्कुतो घटाद्वैतमिति तत्राऽऽह—द्विधर्मत्वेऽपीति । पृथक्त्वापृथक्त्वधर्मकत्वेऽपि घटस्य ततो धर्मयोर्भेदाभेदाभ्यां दुर्वचनत्वेन कल्पितत्वादखण्डमेव तत्स्याद्यथोत्पलादेरनेकरूपादिधर्मवत्त्वेऽप्यखण्डत्वं तथाऽस्यापीत्यर्थः । अपिशब्देन राद्धान्तविरोधो भेदाभेदयोर्दूषितत्वं च सूच्यते ॥९६४॥

पृथक्त्वमपृथक्त्वमिति धर्मभेदे भाति तदाधारतया धर्मिणोऽपि भेदात्कथमखण्डतेत्याशङ्क्याऽऽह—धर्मेति । धर्मेषु प्रतीतितो भेदेऽपि न धर्मिभेदो दाहादिभेदेऽपि दहने भेदाभावोपलम्भादिति भावः । धर्म्यभेदे फलितमाह—अत इति । गवादेर्विशेषस्य मिथो व्यभिचारेऽपि सन्मात्रमनुगतं न भिद्यते तदेव च मीयते न गवादिर्व्यभिचारादित्यर्थः । यद्वा निरस्तो गोघटादिभेदस्तस्मिन्नङ्गीकृतेऽपि नासौ मेयोऽन्योन्याश्रयादिदोषात्सन्मात्रं तु मेयं तस्मादद्वैतमेव प्रामाणिकमित्याह—अत इति ॥९६५॥

न सन्मात्रमेव मेयं गोत्वादेरपि तद्भावादित्याशङ्क्याऽऽह—गोत्वादीति । यदा गोत्वादि मेयं तदा तदेव वा मेयं सद्रूपमपि वा? नाऽऽद्यो घटः सन्पटः सन्निति सर्वत्रानुसंधीयमानं सद्रूपं हित्वा गोत्वादेरेव मेयत्वकल्पनानिमित्ताभावात्तस्य सद्रूपादुद्रिक्तस्यासत्त्वात् । द्वितीये सदेव मेयं तस्योभयसंमतत्वान्न गोत्वादि व्यभिचारित्वाद्यथा शाबलेयादेर्व्यभिचारिणो न गवादिशब्दताऽऽकृतेस्तद्भावात्तथा गोत्वादेरपि मेयत्वायोगान्निःसंदिग्धतया सन्मात्रमेव तथेत्यर्थः ॥९६६॥

ननु सद्रूपमपि गोत्वादिवन्न मेयमुत्तरत्रिकाद्व्यावृत्तत्वेन व्यभिचारित्वस्य तुल्यत्वादन्यथा जात्यादीनां जातिरहितत्वाङ्गीकारविरोधान्न च तत्रापि स्वरूपसत्त्वस्वीकारात्ततः सद्रूपस्याव्यावृत्तता तस्य खण्डादिवद्व्यभिचारिणः सच्छब्दावाच्यत्वात्तत्राऽऽह—सद्रूपेति । स्तम्भकुम्भाद्यवान्तरपदार्थनिमित्ता ये व्यवहारास्ते सद्रूपात्यागेन प्रतीयन्ते तेन स्तम्भादिषु सद्रूपमवस्थितमास्थेयं ततो निष्कृष्टानामसत्त्वेन दृष्टादृष्टव्यवहारहेतुत्वायोगात् तथा च सन्मात्रं तत्त्वं तस्मादुद्रिक्तं तस्मिन्कल्पितम् । न च सर्वकल्पनाधिष्ठानात्सन्मात्रादन्यत्सामान्यं नामास्ति यदुत्तरत्रिकं व्यभिचरेन्न च द्रव्यत्वमाकाशवृत्तिजातेर्भिन्नजातित्वादित्याद्यनुमानात्तदस्तित्वं; द्रव्यत्वं तद्वृत्तिव्याप्यजातेरन्यजातित्वादित्यपि वक्तुं सुकरत्वादिति भावः ॥९६७॥

ननु न सन्मात्रेऽतिरिक्तं कल्पितं द्रव्यादिसमवायान्तानां षट्पदार्थानां मिथोव्यावृत्तानां परमार्थतया कैश्चिदिष्टत्वादिति । तत्र किं सामान्यविशेषौ द्वे वस्तुनी विशेषा एव वस्तूनि सामान्यविशेषात्मकमेकं वा वस्तु सामान्यमेव वेति विकल्प्याऽऽद्ये दोषमाह—सत्तातोऽपीति । सत्सामान्यादनुवृत्ताद्व्यावृत्तानां भेदेऽपि नासौ युक्तो व्यावृत्तानां ततो निष्कर्षे तुच्छत्वप्रसङ्गाद्द्रव्यादिभावपदार्थषट्कस्य मिथोभेदस्तु कुतस्त्यो भेदकाभावादभिन्नसन्मात्राभेदाच्चातो वस्तुद्वयमित्ययुक्तमित्यर्थः । द्रव्यादेः सत्तासामान्याद्भेदाभावे हेतुमाह—एकाकारेति । विमतं सतो न भिद्यते तदेकाकारधीत्वात्तद्वदित्यर्थः । संवित्तेरेकाकारत्वमुदाहरति—सदिति । सामानाधिकरण्यादेकत्वप्रतीतेर्न द्रव्यादेः सत्सामान्याद्भेदधीरिति यावत् ॥९६८॥

एकत्वधीर्द्रव्यादेः सत्सामान्यस्य च भेदे सत्येव समवायकृतेत्याशङ्क्याऽऽह—समवायाच्चेति । नहि संबन्धकृता भिन्नयोरेकत्वधीर्दण्डीत्यत्रानुपलम्भादित्यर्थः । तत्र समवायाभावादेकत्वास्फूर्तिर्द्रव्यादेः सतश्च तद्भावात्तद्धीरिति शङ्कते—तच्चेति । एकत्वधीः समवायकृता वा स्वरूपैक्यकृता वेति संदेहान्न समवायात्तज्ज्ञानं निश्चेतुं शक्यमिति परिहरति—नेति । संशयबीजमाह—जाताविति । गोत्वमेकमित्येकत्वधीर्गोत्वेऽपि दृष्टा न च सा समवायकृतैकत्वस्य गोत्वे समवायानुपगमादद्रव्यस्य गुणवत्त्वायोगादतः स्वरूपैक्यकारिता सेति सद्द्रव्यमित्यादावपि तदधीना चैक्यधीः समवायाद्वेति संशयप्रसक्तिरिति भावः ॥९६९॥

### समवायनिरासः

**संसर्गधर्मता नापि भेदेनानुपलम्भनात् । समवायेन सम्बन्धे को हेतुरिति नेष्यते ॥७०॥**
**संयोगश्चेद्वियोगोऽपि समवायेऽनवस्थितिः । स्वतश्चेत्कल्पना व्यर्था द्रव्यस्याप्येकता स्वतः ॥७१॥**
**सत्तावगुण्ठिताश्चैते सर्वे भावाः सदैव हि । व्यवहाराय कल्पन्ते भ्रान्तो भेदः सदैव तु ॥७२॥**

### वस्तु सामान्यविशेषात्मकं इति मतेऽपि भेदासिद्धिः

**येषामपि हि सामान्यभेदवद्वस्तु गृह्यते । तेषामपि कुतो भेदो वस्त्वैक्याद्धर्म्यभेदतः ॥७३॥**
**अपि भेदेन या बुद्धिः स्यात्सामान्यविशेषयोः । साऽपि तन्मात्रनिष्ठत्वान्नैव भेदस्पृगिष्यते ॥७४॥**
**एकं चेद्भिन्नता नास्ति भेदश्चेदेकता कुतः । चित्रेऽप्यनुगमाभावान्न सामान्यविशेषता ॥७५॥**

सतो गवादेश्च समवायमुपेत्य न तत्कृता तयोरेकत्वधीरित्युक्तमिदानीं तयोः संसर्गाख्यसमवायवत्ताऽपि न युक्ता तयोर्मिथो भेदेनादृष्टेः सत्सामान्यवद्गवादिवच्चेत्याह—संसर्गेति । किंच समवायः स्वतन्त्रः परतन्त्रो वा? नाऽऽद्यः, अयमनयोरिति षष्ठ्यनुपपत्तेर्द्वितीये समवायेन समवायिनोः सम्बन्धो वाच्यः । स न संयोगः समवायो वा मानाभावादित्याह—समवायेनेति ॥९७०॥

संयोगस्याप्रामाणिकत्वं साधयति—संयोगश्चेदिति । समवायस्य समवायिनोश्च संयोगे तस्य वियोगावसानत्वात्तयोर्वियोगोऽपि कदाचित्स्यात्तथा च गुणादेः स्वतन्त्रताऽप्यापतेदित्यर्थः । समवायसमवायिनोः समवायस्य विमानत्वमुपपादयति—समवाय इति । [1]नित्यद्रव्यसमवाययोरसमवेतत्वमिति मतव्याहतिश्चेति भावः । समवायस्य समवायितन्त्रत्वं स्वतःसिद्धं न तत्र संबन्धान्तरापेक्षेति शङ्कते—स्वतश्चेदिति । तर्हि समवायकल्पना विफलेत्याह—कल्पनेति । द्रव्यादेः सत्त्वेनैक्यधीप्रयोजकतया समवायकल्पनाऽर्थवतीत्याशङ्क्याऽऽह—द्रव्यस्येति । समवायपारतन्त्र्यस्य स्वाभाविकत्ववद्द्रव्यादेः सत्त्वेनैक्यधीरपि स्वतोऽस्तु कृतं समवायेनेत्यर्थः ॥९७१॥

द्वे वस्तुनी सामान्यविशेषाविति पक्षं प्रतिक्षिप्य विशेषा एव वस्तूनीति पक्षं प्रत्याह—सत्तेति । सर्वे हि विशेषा नियमेन सत्ताव्याप्ता व्यवहारकाले व्यवहारयोग्या भवन्त्यतस्तेषां सन्मात्रत्वाद्भासमानो भेदः सदैव भेदत्वाच्चन्द्रभेदवद्भ्रान्तः स्यान्न चानुगतं सत्त्वमेव नास्ति घटवृत्तितद्वृत्तिवृत्तिसामान्यस्य प्रत्यक्षत्वात् । न च सामान्यं नास्तीत्युक्तिव्याघातः, सन्मात्रस्यैवात्र तच्छब्दत्वादिति भावः ॥९७२॥

सामान्यविशेषात्मकमेकं वस्त्विति पक्षं प्रत्याह—येषामिति । तन्मते भेदासिद्धौ हेतुमाह—वस्त्विति । तदेव कथं तत्राऽऽह—धर्मीति । धर्मिणः सामान्यविशेषात्मकस्याभेदात्तस्य च वस्तुत्वादित्यर्थः ॥९७३॥

सामान्यविशेषयोर्मिथो भेददृष्टेस्तद्भेदो धर्मिण्यनुप्रविशतीत्याशङ्क्याऽऽह—अपीति । सामान्यविशेषयोस्त्वन्मते वस्तुत्वाभावान्न तत्र भेदधीर्न ह्यवस्तुनि सा युक्ता तथाऽपि तयोर्भेदेन या धीरिष्टा सा सामान्यधीर्वा विशेषधीर्वोभयधीर्वा बुद्ध्यन्तरं वा? तत्र पक्षत्रये सामान्यादिमात्रावसायित्वान्न सा भेदनिष्ठा बुद्ध्यन्तरमपि न भेदविषयं [2]परस्पराश्रयादिदोषादतः सामान्यविशेषयोरपि न भेदः कुतः स धर्मिणि स्यादित्यर्थः ॥९७४॥

किंच सामान्यविशेषं तद्वतोऽभिन्नं भिन्नं वा? नाऽऽद्य इत्याह—एकं चेदिति । सामान्यं विशेषश्चेत्युभयं धर्मिणः सकाशादभिन्नं चेन्न सामान्यविशेषभावो धर्मिवदित्यर्थः । द्वितीयमनूद्य वस्तुत्रयप्रसङ्गं दोषमाह—भेदश्चेदिति । एकं वस्तु द्व्यात्मकमित्युक्ते कुतोऽयं विकल्पो वस्तुनश्चित्रत्वादित्याशङ्क्याऽऽह—चित्रेऽपीति । उभयात्मके वस्तुनीष्टेऽपि विशेषात्मकमेव तत्स्यान्नोभयात्मकं खण्डगोर्मुण्डगव्यन्वयाभावादन्वयिनश्च सामान्यमात्रस्यावस्तुत्वादित्यर्थः ९७५॥

---

१. नित्यद्रव्यसमवाययोः नित्यद्रव्याणां परमाण्वाकाशादीनां कुत्राप्यसमवेतत्वात् समवायस्य च स्वाश्रये स्वरूपसम्बन्धेन संबद्धत्वात् ।

२. परस्पराश्रयादीति । सामान्यविशेषयोः भेदसिद्धौ बुद्ध्यन्तरस्य भेदविषयत्वं तस्यभेदविषयत्वे तयोर्भेदसिद्धिरिति परस्पराश्रयता आदिपदेन चक्रकादि ग्राह्यम् ।

स्वरूपपररूपाभ्यां यदा सदसदात्मकम् । वस्त्वेकं मानविषयमभावस्ते तदा कुतः ॥७६॥
प्रत्यक्षादिनिवृत्तिश्चे[1]त्तस्याः किं रूपमुच्यताम् । स्तैमित्यमात्मनश्चेत्स्यात्तद्वस्त्वेवास्मदीहितम्॥७७॥
अथ वस्त्वन्तरज्ञानं नितरां तस्य वस्तुता ।
भावान्तरमभावोऽपि निरुपाख्यः स नेष्यते । तस्माद्वस्त्वेकनिष्ठत्वान्न भेदोऽक्षादिगोचरः ॥७८॥
घटोऽयमिति संवित्तेर्घटो मेयः प्रतीयते । न व्यावृत्तिः पटादीनामताद्रूप्यात्तथा पटे ॥७९॥
घटाभावो विरोधित्वान्न घटेऽर्थान्तरेऽपि न । अषष्ठ्यर्थतया तस्माद्विकल्पोऽयं न वस्तुगः ॥८०॥
घटो हि [2]संविदं कुर्वन्नात्माकारविशेषणम् । आत्मानं लभते तद्वद्व्यावृत्तिं न पटादितः ॥८१॥

एकं वस्तु द्व्यात्मकमित्यत्र भेदनिरासद्वारेणाभावं निरस्य पक्षान्तरमुद्भाव्याभावनिरासद्वारा भेदं निरस्यति—स्वरूपेति । स्वरूपेण सदात्मकं पररूपेणासदात्मकमेकं वस्तु मानविषयत्वाक्रान्तं यदेष्टं तदा वस्तुनो नाभावो मानाभावात्तन्न तदपेक्षो भेदोऽपीत्यर्थः ॥९७६॥

वस्त्वभावे मानपञ्चकानुदयो मानमिति शङ्कते—प्रत्यक्षादीति । तदनुत्पत्तेः स्वरूपं विकल्पयति—तस्या इति । आत्मनो निर्व्यापारात्मनाऽवस्थानं वा वस्त्वन्तरज्ञानं वा भावान्तरं वा सेति विकल्पार्थः । आद्यमनूद्य कूटस्थवस्त्वतिरेकेणाभावो नेति स्वपक्षप्राप्तिमभिप्रेत्याऽऽह—स्तैमित्यमिति ॥९७७॥

द्वितीयमनूद्य निराह—अथेत्यादिना । यस्य ज्ञानत्वाद्भावत्वोपगमाच्चेत्यतिशयमाह—नितरामिति । तृतीयं प्रत्याह—भावान्तरमिति । भावान्तरस्य भावत्वेऽन्तरशब्दायोगादन्यत्वासिद्धया चान्यस्य भावस्य तद्भावासंभवादभावत्वे च भावशब्दानुपपत्तेस्तस्य चातुच्छत्वात्तदात्मनोऽभावस्यापि तदयोगाद्वस्तुत्वमेवेत्यर्थः । त्रिधाऽपि मानपञ्चकानुदयस्य वस्तुत्वात्तद्विषयस्यापि वस्तुत्वमेव । नहि वस्तु वस्त्वभावं साधयति स्वाभावसाधकत्वापाताद्वस्तुभेदस्याद्याप्यसिद्धेरिति समुदायार्थः । अभावनिरासेन भेदमपि निरस्य सामान्यमेव वस्त्विति पक्षमङ्गीकुर्वन्भेदाप्रामाणिकत्वमुपसंहरति—तस्मादिति । वस्तुनस्त्रैविध्यायोगात्परिशेषतः सामान्यमेव तदिति स्थितत्वात्तस्य च सन्मात्रस्य सर्वत्रैक्यान्न प्रमितो भेदोऽस्तीत्यर्थः ॥ ९७८ ॥

ननु घटादेः सर्वतो व्यावृत्तस्य प्रत्यक्षत्वात्कुतो भेदो नाक्षादिगोचरस्तत्राऽऽह—घट इति । निर्विकल्पकं वा सर्वतो व्यावृत्तं घटं गोचरयेत्सविकल्पकं वा । नाऽऽद्यः "आलोच्यते वस्तुमात्रमि"त्यादिन्यायविरोधान्नेतरस्तत्रापि घटमात्रस्य विषयत्वदृष्टेरितरव्यावृत्तेरप्रतीतेस्तस्यास्तद्रूपताया निरस्तत्वान्न चेतरसमस्ताग्रहे तद्व्यावृत्ततया घटः शक्यो ज्ञातुमित्युक्तम् । तस्मान्न प्रत्यक्षं तस्येतरव्यावृत्तिं प्रत्याययतीत्यर्थः । घटे दर्शितन्यायं पटादावतिदिशति—तथेति । घटवत्पटेऽपि व्यावृत्तिर्नाध्यक्षा पटोऽयमिति संवित्तेः पटो मेयः प्रतीयते न व्यावृत्तिर्घटादीनामताद्रूप्यादित्यस्य सर्वत्र सुवचत्वादित्यर्थः ॥९७९॥

भेदस्याध्यक्षत्वनिरासेन तदपेक्षाभावस्यापि तन्निरस्तम् । किंच घटाभावो निराश्रयः साश्रयो वा? आद्ये स्वातन्त्र्यं द्वितीये घटं वाऽऽश्रयतेऽर्थान्तरं वा? प्रथमं प्रत्याह—घटेति । न हि घटप्रागभावादिर्घटे घटते समसमयसंभवाभावात् । घटान्योन्याभावस्य घटाश्रयत्वेऽपि भेदनिरासात्तद्रूपस्तदपेक्षो वा न सोऽस्तीति भावः । द्वितीयं निराह–अर्थान्तरेऽपीति । अर्थान्तरमभावो भावो वा? नाऽऽद्योऽभावस्याभावाश्रयत्वायोगान्न द्वितीयो भावाभावयोः संबन्धाभावस्योक्तत्वादित्याह—अषष्ठीति । अभावप्रतीतेस्तर्हि का गतिस्तत्राऽऽह—तस्मादिति । विकल्पोऽपि प्रत्ययत्वात्संमतवद्वस्तु गोचरयतीत्याशङ्क्याऽऽह—नेति । "शब्दज्ञानानुपाती वस्तुशून्यो विकल्प" इति लक्षणान्न तस्य वस्तुविषयतेत्यर्थः ॥९८०॥

घटज्ञाने घटवद्भेदाभावयोरपि भानात्तद्धीर्न विकल्पमात्रमित्याशङ्क्य घटोऽयमिति संवित्तेरित्येतत्प्रपञ्चयति—घटो हीति । यथा घटः स्वविशेषितां संविदं जनयन्भावो भवति नहि स जाड्याद्धित्वा संविदमात्मानमास्कन्दति न तथा पटादिव्यावृत्तिमपि कुर्वन्नात्मानं लभते तस्याः स्वरूपत्वधर्मत्वयोर्निरस्तत्वादित्यर्थः ॥९८१॥

---

१. प्रत्यक्षादि प्रमाणपञ्चकस्य निवृत्तिः अभावः भेदे, अभावे, प्रमाणं चेदित्यर्थः ।

२. हित्वा संविदं—ज्ञानमजनयित्वा आत्मानं स्वस्वरूपं आस्कन्दति लभते जाड्यादिति योजना ।

**पटसंवेदनेऽप्येवं पटमात्रं विशेषणम् । ईक्षतेऽत्राधिकं नान्यदभावादि यदुच्यते ॥८२॥**

**संदिग्धनिश्चयाद्येवं ज्ञानधर्मो विशेषयन् । संविदं भिद्यते मेयात्प्रत्येकं भेदधीर्न तु ॥८३॥**

**तथाऽहमेव जानामि माता नान्य इतीदृशाः । मातृधर्माः प्रसिध्यन्ति विशिषन्तः स्वसंविदम् ॥८४॥**

**संविदेका स्वतःसिद्धा प्रत्यग्रूपैकलक्षणा । भावाभावादिरूपाय व्यवहाराय कल्पते ॥८५॥**

वेदान्तानां मानान्तराविरोधोपसंहारः

**अतोऽनुभवमुल्लङ्घ्य न भेदो नाप्यभिन्नता । तत्पृष्ठेन तु मानानि विरोधः किंसमाश्रयः ॥८६॥**

प्रत्यक्षवेदान्तयोरपि अनुभवाख्यब्रह्मविषयता अतो न विरोधः

**अविज्ञातः[1] प्रमाणानां विषयो वादिनां मतः । न तस्य मानतः सिद्धिस्तत्सिद्धेः प्राक्प्रमागमात् ॥८७॥**

**अमानकं कथं च स्यादज्ञातत्वमिहोच्यताम् । कथं वा तद्विना मानं विषयासंभवाद्भवेत् ॥८८॥**

**अज्ञातत्वक्षतिं कुर्वन्मानं मानत्वमश्नुते । मानादज्ञातता चेत्स्यान्न सा तत्फलमिष्यते ॥८९॥**

तथा पट इत्यतिदेशं विशदयति—पटेति । समानाधिकरणे सप्तम्यौ । घटसंविदि घटमात्रवत्पटसंविद्यपि तन्मात्रं विशेषणं दृष्टं यत्पटादधिकमभावादि विशेषणमिष्टं तत्पटसंविद्भ्यामन्यदनन्यद्वा न सिध्यत्यन्यत्वे पटादेस्तद-स्पर्शात्संबन्धस्य निरस्तत्वादनन्यत्वे च तदसिद्धेरित्यर्थः ॥९८२॥

अथाऽन्तरेषु ज्ञानादिष्विव बाह्येष्वपि घटादिषु भेदाभावौ नापह्नोतुं शक्याविति तत्राऽऽह—संदिग्धेति । संदिग्धशब्दो निश्चयसांनिध्याद्भावप्रधानस्तथा च यथा संशयादिः करणव्युत्पत्त्या ज्ञानशब्दितान्तःकरणधर्मः संशयसंविन्मिथ्यासंविदिति संविदं व्यावर्तयन्मेयान्मिथः संविदश्च न भिद्यते नहि तस्मिन्भेदधीरन्यव्यावृत्तेर्दुर्ज्ञानत्व-स्योक्तत्वादेवं घटादिरपि संविदं विशेषयन्न कुतश्चिद्भिद्यतेत्यर्थः ॥९८३॥

मात्रादिभेदवद्घटादिभेदः संशयादिभेदश्च निश्चीयतामित्याशङ्क्याह—तथेति । माता श्रोता द्रष्टेत्यादयो मातृत्वादिरूपा धर्मा मातृज्ञानमित्यादिना स्वसाधिकां संविदं व्यावर्तयन्तः संविदो मेयान्मिथश्च भेदमलभमानाः संविदस्तास्तथा संशयादयो घटादयश्च तत्राऽऽरोपिता वस्तुनो न भिद्येरन्नित्यर्थः ॥९८४॥

ननु संविदं सर्वकल्पनाधिष्ठानं नातिष्ठामहे यतः साऽपि भिन्नत्वाद्रज्जुसर्पवत्कल्पनामर्हति तत्राऽऽह—संविदिति । अधिष्ठानत्वात्तर्हि रज्जुवज्जडा सेति नेत्याह—स्वतः सिद्धेति । तर्हि संविदात्मेति वस्तुद्वयस्वीकारादपसिद्धान्तो नेत्याह—प्रत्यगिति । तस्याः सर्वकल्पनाधिष्ठानत्वे सर्वव्यवहारास्पदत्वं फलतीत्याह—भावेति ॥९८५॥

प्रत्यक्षादिविषयत्वेनेष्टौ भेदाभावौ सर्वत्र प्रत्याख्याय वेदान्तानां मानान्तराविरोधं प्रकृतमुपसंहरति—अत इति । कूटस्थप्रत्यगनुभवस्य सर्वाधिष्ठानत्वात्तमतिक्रम्य प्रपञ्चस्य तद्भेदादेश्चासिद्धेस्तत्त्वमस्यादीनां तादृग्वस्तु बोधयतां न विरोधो मानान्तरैरित्यर्थः । किंचानुभवानुसारेण मानानां मानत्वं तत्कथं तमनुसरन्तो वेदान्ता मानान्तरैर्विरुध्येरन्नित्याह—तत्पृष्ठेनेति ॥९८५॥

किंचानुभवस्यैवाज्ञातत्वात्प्रत्यक्षादीनां तद्विषयत्वात्तत्र प्रवृत्तानां वेदान्तानां तैर्विरोधो नेति वक्तुं संमत-मर्थमाह—अविज्ञात इति । अज्ञातत्वस्यापि तर्हि मेयत्वादनुभवस्यैव तन्नियमो भज्येत नेत्याह—न तस्येति ॥९८७॥

प्रमाणप्रवृत्तेः प्रागेव तस्य सिद्धत्वान्मेयत्वं नास्ति चेत्तर्हि साधकाभावादसिद्धिरेव स्यात्तद्वा किंचिद्वाच्य-मिति शङ्कते—अमानकमिति । इहेति वस्तुनोऽज्ञातत्वस्यैवोक्तिः । अज्ञातत्वस्यासत्त्वं वा मानगम्यत्वं वा साधका-न्तरं वा वाच्यमिति वोच्यते नाऽऽद्य इत्याह—कथं वेति । अज्ञातत्वं विना मानमेव न संभवेत्तदभावे तदुपलक्षित-विषयाभावान्नहि निर्विषयं मानमस्तीत्यर्थः ॥९८८॥

द्वितीयं परास्यति—अज्ञातत्वेति । मानं खल्वज्ञातत्वं निवर्तयन्न तद्विषयीकर्तुमीष्टे न हि दीपस्तमो गोचरयतीति भावः । विपक्षे दोषमाह—मानादिति । अज्ञातता मानाज्ज्ञाता चेन्न तत्क्षतिर्मानफलं स्यात्तद्गम्य-स्यातन्निवर्त्यत्वादित्यर्थः ॥९८९॥

---

१. अज्ञात एव प्रमाणगोचरः अज्ञानं तु मानप्रवृत्तेः प्रागेव सिद्धं साक्षिवेद्यम् ।

अतोऽनुभवतो लब्धमज्ञातं ज्ञापयत्सदा । प्रत्यक्षादि प्रमाणं स्यान्न स्वतो नापि चान्यतः ॥९९०॥
नाज्ञासिषमहं पूर्वमित्येवं प्रमिते घटे । पूर्वाज्ञातत्वविषयो भूयोऽप्यनुभवो यतः ॥९९१॥
प्रवृत्तं विषये मानमवच्छेदफलं[1] मतम् । ज्ञाताज्ञाते प्रति त्वस्य न व्यापारोऽप्रमाणतः ॥९९२॥
सर्वोऽप्यनुभवात्सिद्धां बालोऽप्यज्ञाततां स्वतः । न किंचिज्जान इत्येवं पृष्टो वक्ति प्रमां विना ॥९९३॥
निःशेषकरणग्रामलयेऽप्यनुभवः स्वतः । अलुप्तदृक्सुषुप्तेऽपि जाग्रद्बोधाविशेषतः ॥९९४॥
अत्यन्ताननुभूतेषु हिमवत्पृष्ठवस्तुषु । जाग्रतोऽनुभवोऽप्येवं सुषुप्तान्न विशिष्यते ॥९९५॥

अनुभवो नित्यः

न चात्रानुभवो लुप्तो न जानामीति बोधनात् । अदृष्टमपि दृष्ट्वाऽस्ति बोधो नाज्ञासिषं त्विति ॥९९६॥

तृतीयं प्रत्याह—अत इति। पक्षद्वयासंभवोऽतःशब्दार्थः। अतोऽनुभवत इति वा सामानाधिकरण्यं सदाऽनुभवतो लब्धमिति संबन्धः। अनुदितानस्तमितानुभवसिद्धाज्ञाततत्त्वोपलक्षितप्रत्यङ्मात्रे प्रत्यक्षादि प्रमाणमिति फलितमाह—अज्ञातमिति। स्वयंप्रभत्वानभ्युपगमान्मेयत्वस्य च निरस्तत्वादनुभवसिद्धमज्ञातत्वमिति स्फुटयति—न स्वत इति ॥९९०॥

ननु मेयत्वस्वप्रकाशत्वयोरन्यतरत्वव्याप्तमतुच्छत्वं तदितो व्यावर्तमानं स्वव्याप्यमतुच्छत्वमपि व्यावर्तयति तथा चाज्ञातत्वस्य तुच्छेषता नेत्याह—नेत्यादिना। घटे प्रमिते सत्येतावन्तं कालमहमिमं न ज्ञातवानित्येवं पूर्वं ज्ञानोत्पत्तेरज्ञातत्वेनानुभूतघटविषयोऽनुभवो दृष्टस्तस्मात्परामर्शादज्ञाततत्त्वमनुभवसिद्धं न तुच्छीभवत्यतुच्छत्वस्य व्याप्तिस्तु मेयत्वस्वप्रकाशत्वानुभवसिद्धत्वानामन्यतमेनेत्यास्थेयमित्यर्थः ॥९९१॥

प्रमितेऽर्थे चेदज्ञातत्वधीस्तर्हि घटमानादेव तत्सिद्धेरनुभवसिद्धत्वकथा वृथेत्याशङ्क्याऽऽह—प्रवृत्तमिति। घटादौ प्रवृत्तं मानं तदनुभवावसानं चेत्तस्य स्वकालेऽर्थे ज्ञातत्वजनकत्ववत्प्राक्कालेऽज्ञातत्वज्ञापकत्वमिति स्यादित्याशङ्क्याऽऽह—ज्ञातेति। नहि मानस्य ज्ञाततायां जननव्यापारः कारकत्वेनामानत्वापत्तेर्नच ज्ञातताजननं ज्ञापनमेवेति युक्तम्, तथाऽपि तस्य प्रकाशत्वाप्रकाशत्वयोर्वस्तुन्ययुक्तत्वान्नापि पूर्वकालीनाज्ञातत्वज्ञापनव्यापारोऽर्थावग्रहात्मनो मानस्य जन्मातिरिक्तव्यापारानुपगमान्मेयत्वे चाज्ञातत्वस्य मानानिवर्त्यत्वापत्तेरुक्तत्वादिति भावः ॥९९२॥

किंचाज्ञातत्वस्यानुभवसिद्धत्वं सार्वजनीनमित्याह—सर्वोऽपीति। किं गवयमाकलयसीति केनचित्पृष्टो बालो मानवृत्तान्ताकुशलत्वात्प्राकृतोऽपि स्वतः स्वानुभवादज्ञातत्वं न जानामीत्यनेन विधिना प्रतिपादयत्यतो मानं विना सर्वोऽप्यनुभवादेव सिद्धां तामवगच्छति तत्कुतो विप्रतिपत्तिरित्यर्थः ॥९९३॥

नन्वज्ञातत्वस्यानुभवसिद्धत्वेऽपि मेयत्वमनुभवस्य मानकरणजत्वेन मानत्वात्तत्राऽऽह—निःशेषेति। स्वापे प्रमासामग्रीविरहेऽपि नित्यसिद्धचिद्धातुरूपोऽज्ञातत्वानुभवः स्वतोऽस्त्यन्यथोत्थितस्य नावेदिषमिति परामर्शायोगादतो जागरितेऽप्यज्ञातताबोधस्य स्वापादविशेषादनुभवसिद्धा सर्वत्र सेत्यर्थः ॥९९४॥

तत्रैव हेत्वन्तरमाह—अत्यन्तेति। हिमवत्पृष्ठनिष्ठानि वस्तूनि किं त्वया दृष्टानीति केनचित्कश्चित्पृष्टो नेति निश्चित्याज्ञाततां ब्रवीति। न च तत्रासौ प्रमिता सर्वथैव तेषामप्रमितेरतो नित्यानुभवादेव तेषु सा सिद्धेत्यर्थः। तथाऽपि जाग्रद्बोधाविशेषत इत्ययुक्तं स्वापे मानकारणाभावादज्ञातत्वस्यामेयत्वेऽपि जाग्रति तद्भावात्तद्मेयत्वसिद्धेरित्याशङ्क्याऽऽह—जाग्रत इति। उक्तविभागे सत्यपि नोभयत्राज्ञातत्वानुभवस्य विशेषो नहि जाग्रतोऽज्ञातत्वानुभवः सुषुप्ताज्ञातत्वानुभवाद्भिद्यते तस्य मेयताया निरस्तत्वादित्यर्थः ॥९९५॥

ननु [ न ]क्वचिदनुभवसिद्धमज्ञातत्वमनुभवस्यैवाभावादिति तत्र जाग्रति तदभावः स्वापे वा ? नाऽऽद्य इत्याह—नचेति। जागरे त्वदुक्तमर्थं न जानामीत्यनुभवात्तदभावो नास्तीत्यर्थः। किंचादृष्टं वस्तु दृष्ट्वा नैतावन्तं कालमेतदवेदिषमिति परामर्शाधीनो बोधोऽस्ति तन्न जागरेऽनुभवापलाप इत्याह—अदृष्टमिति ॥९९६॥

१. अवच्छेदफलं विषयज्ञानरूपविषयपरिच्छेदफलकमित्यर्थः।

**पुमान्सुप्तोत्थितोऽप्येवं प्रमात्रादिलयं स्वतः । अनुभूत्यैव संधत्ते नान्तराऽतोऽस्य लुप्तता ॥९७॥**
**न चेदानींतनाद्बोधाद्बोधाभावगतिर्भवेत् । सौषुप्तो नहि बोधस्य कालभेदेन भिन्नता ॥९८॥**
**बोधादेव प्रसिध्यन्ति कालावस्थादयो यतः । मातृमानादयश्चापि कुतस्तैरस्य विक्रिया ॥९९॥**
**प्रमातृमानतन्मेयेष्वागमापायिषु त्रिषु । अलुप्तानुदितो बोधः प्रथते प्रत्यगेकलः ॥१०००॥**
**अभितोऽनुभवाक्रान्ता ज्ञाताज्ञाततत्वभूमिषु । नान्यत्रार्थाः प्रसिध्यन्ति लीयन्ते नाप्यनात्मनि ॥ १ ॥**

अनुभव एवाज्ञातत्वात् प्रमाविषयः

**[1]अतोऽनुभव एवैको विषयोऽज्ञातलक्षणः । अक्षादीनां स्वतःसिद्धो यत्र तेषां प्रमाणता ॥ २ ॥**
**तेनानुभवसिद्धानां लोकेऽज्ञानविघातिनः । मात्वमक्षादयो यान्ति नाज्ञातज्ञाततोऽन्यथा ॥ ३ ॥**

न द्वितीय इत्याह—पुमानिति । जागरे नाज्ञासिषमितिवत्पुरुषः स्वापादुत्थितोऽपि मात्राद्यभावं तत्कालीनं स्वानुभवादेवानुसंधत्ते । उत्थितो हि न किंचिदवेदिषमिति ब्रूते तत्स्वप्नजागरान्तराले कुतोऽनुभवासत्तेत्यर्थः ॥९९७॥

किंच सौषुप्तबोधाभावधीर्जाग्रत्कालीनबोधाद्वा सौषुप्तबोधाद्वा ? नाऽऽद्य इत्याह—न चेति । तत्र हेतुर्नहीति । देशकालावस्थाभेदान्नानुभवस्य भिन्नता तत्प्रागभावाद्यसिद्धेर्नहि स्वतः परतो वा तत्सिद्धिरतोऽद्वयोऽनुभवः कूटस्थनित्योऽभ्युपेयः । एतेन द्वितीयोऽपि व्याख्यातो व्याघाताच्चेति भावः ॥९९८॥

नन्वनुभवस्य क्षीरादिवत्कालादिवशात्परिणामान्न कूटस्थता तत्राऽऽह—बोधादिति । न तावत्कालादि स्वतः सिध्यति जडत्वादतो बोधाधीनसत्तास्फूर्तिकात्तस्मादादावेव साधकत्वेन सिद्धानुभवस्य न तद्वशात्तद्विकारो नहि पुरा विकारविरहो स्वरूपानुभवः पुनर्विकारितां स्वरसतो गन्तुमर्हति स्वरूपविपरिलोपानुपपत्तेरित्यर्थः ॥९९९॥

आत्मानुभवस्यापरिणामित्वे हेत्वन्तरमाह—प्रमात्रिति । मात्रादीनामागमापायिनां तदागमापाययोश्च साधकत्वेनाऽऽगमापायशून्यः प्रत्यगेकस्वभावोऽनुभवो भात्यतो हेत्वभावान्नास्य विक्रियेत्यर्थः ॥१०००॥

मात्रादीनामाधारत्वं तेषु सप्तमीप्रयोगात्तद्बोधकस्याऽऽधेयत्वं तत्र प्रथमाप्रयोगात्कथं तस्य प्रत्यगेकत्वमित्याशङ्क्याऽऽह—अभित इति । ज्ञातत्वेनाज्ञातत्वेन चाऽऽक्रान्तार्थगोचरव्यवहारकाले सर्वतोऽनुभवव्याप्ताः स्तम्भादयः सत्तां लभन्ते न चानुभवादन्यत्र ते तिष्ठन्ति नाप्यर्थान्तरे लीयन्तेऽनुभवातिलङ्घिनां जडानां सुषुप्तत्वेनोत्पत्त्यादिव्यापारानुपपत्तेः । अतो मात्राद्यर्थानामनुभवात्मन्येवोत्पत्तिस्थितिलयभावात्तदतिरेकेणासत्त्वं काल्पनिकभेदादाधाराधेयतेत्यर्थः ॥१००१॥

अनुभवादर्थान्तराभावे तदद्वयत्वं फलतीत्याह—अत इति । स एव प्रत्यक्षादीनां विषयो विषयान्तराभावादित्याह—विषय इति । तत्र युक्तिमाह—अज्ञातेति । प्रमेयत्वे स्वप्रकाशत्वहानिरित्याशङ्क्याऽऽह—स्वत इति । यत्रानुभवे मानानामज्ञातत्वनिवर्तकत्वेन मानता स स्वतःस्फुरत्स्वरूपो न तत्र स्फूर्तिरन्याधीना नहि स्वप्रकाशत्वप्रमेयत्वयोर्विप्रतिषेधः संविदेकतानस्यापि स्वगताज्ञानापनयनार्थं मानापेक्षणादित्यर्थः ॥१००२॥

अक्षादीनां नानुभवविषयत्वं घटादिविषयत्वप्रसिद्धेरिति चेत्तत्राऽऽह—तेनेति । लोके खल्वज्ञातेऽनुभवेऽध्यस्तत्वेन सिद्धानां घटादीनामज्ञातत्वं निवर्तयन्तोऽक्षादयो व्यावहारिकं मानत्वमनुभवन्त्यन्यथाऽनुभवेऽध्यासं विना मानादज्ञातत्वेन सिद्धानां तेषां ज्ञापकत्वेन नाक्षादिप्रामाण्यं तेन मानसिद्धस्य मानेन निवृत्त्यसंभवेन हेतुनेत्यर्थः । एतेन प्रत्यक्षादीनां घटादिविषयत्वप्रसिद्धिरपि प्रतिनेतव्या ॥१००३॥

---

१. **अतोऽनुभवः इति**—व्याख्यातमिदं लघुचन्द्रिकायां—सत्तायाः सर्वेन्द्रियग्राह्यत्वे सम्मतिमाह—**तदुक्तमिति** अतोऽनुभवान्यस्याज्ञातत्वाभावेन प्रमाणाविषयत्वात् अनुभवः सद्रूप आत्मैव विषयः । तत्र हेतुः **अज्ञातलक्षण**—इति । जडस्याज्ञातत्वाभावेन न विषयत्वं किन्तु विषयीभूतसद्रूपावच्छेदकत्वम् । अक्षादीनां इन्द्रियादिजन्यमनोवृत्तीनां दोषजन्याविद्यावृत्तीनां च । स्वतःसिद्धः अनारोपितः । तस्याविषयत्वे प्रमाणानां प्रमाणता न स्यात् अनधिगताबाधितविषयकत्वस्यैव प्रमाणतारूपत्वात् । यत्रेति यत्रैवेत्यर्थः ।

घटादयः प्रमासिद्धा मुञ्चन्त्यज्ञाततां न तु । स्वतःसिद्धोऽपि वस्तुत्वान्मुञ्चत्यात्मा प्रमां विना ।।४।।
प्राग्बाधकागमात्सिद्धिर्लौकिकस्यापि वस्तुनः । वस्तुतत्त्वबलादेव तत्तमोव्यवधानतः ।।५।।
कृत्स्नमात्राद्युपादानतमोबाधस्तु बोधतः । तत्त्वमस्यादिवाक्योत्थात्पूर्णैकात्म्यस्वलक्षणात् ।।६।।
तेनाऽऽगमस्य तत्र स्यादज्ञातत्वविघातिनः । प्रमाणत्वं पुमर्थश्च स एव विदुषां मतः ।।७।।

दुःखाभाव एव सुखमिति जरत्तार्किकमतम्

ननु दुर्वारसंसारदुःखसंदर्भहानतः । किमन्यत्सुखमिष्टं स्याद्यस्याऽऽप्तेः पुरुषार्थता ।।८।।
लोकेऽपि व्याधिसंतापविच्छित्तौ सुखितेक्ष्यते । व्यतिरिक्तसुखार्था च न प्रवृत्तिर्विरागिणाम् ।।९।।
असंवेद्यं सुखं नापि पुमर्थो न च कर्मता । स्वरूपे वेद्यवेत्तृत्वायोगाद्द्वैतप्रसङ्गतः ।।१०।।

व्यवहारतस्तेषामनुभवेऽध्यस्तघटाद्यज्ञातत्वनिवर्तकत्वादज्ञातानुभवावष्टम्भात्प्रत्यक्षादिप्रामाण्येऽपि चिदात्मनः स्वप्रकाशत्वादज्ञातत्वं मानं विना निवर्तेत । तथा च न तत्र मानप्रवृत्तेरस्ति कृत्यमित्याशङ्क्याऽऽह—घटादय इति । यथा घटादयो व्यावहारिकमानसिद्धाः स्वगतमज्ञातत्वं त्यजन्ति न मानमनपेक्ष्य तज्जहति तथा प्रत्यगात्मा चित्स्वभावःस्वप्रकाशोऽपि वस्तुसामर्थ्यादेव प्रमां विना नाज्ञाततां त्यक्तुमलं मानफलप्रकाशस्यैवाज्ञानविरोधित्वात्स्वरूपप्रकाशस्यातथात्वादित्यर्थः ।।१००४।।

आत्मनो मानं विनाऽज्ञातत्वं न निवर्तते चेन्मानाधीनाऽस्य स्वप्रकाशतेति न स्वरूपमागन्तुकत्वादित्याशङ्क्याऽऽह—प्रागिति । ब्रह्माहमितिबाधकबोधोदयात्पूर्वमज्ञानव्यवहितानुभवबलादेव सर्वानात्मसिद्धेर्माननमेयादिप्रपञ्चं प्रकाशयन्नात्मा मानमनपेक्ष्यैव स्वप्रकाश इत्यर्थः । अपिशब्दः समस्तलौकिकवस्त्वभिव्याप्त्यर्थः । वस्तुतत्त्वबलादात्मस्वभावभूतचैतन्यप्रकाशवशादिति यावत् ।।१००५।।

प्रत्यक्षादीनामात्मनि मानत्वे तैरेव तदज्ञाननिवृत्तेरागमवैयर्थ्यमित्याशङ्क्याऽऽह—कृत्स्नेति । समस्तमात्रादिनिदानाज्ञाननिरासि ज्ञानं प्रत्यक्षादिकृतं किं न स्यादित्याशङ्क्य बोधं विशिनष्टि—पूर्णेति ।।१००६।।

सोपाधिके तत्त्वे ज्ञानमध्यक्षादिकृतं तत्र प्रवृत्तिसंभवान्निरुपाधिके तु श्रौतं श्रुतेरेव तत्र प्रवृत्तिक्षमत्वान्न च सोपाधिकज्ञानमज्ञानमपनेतुमर्हति तदर्थस्याज्ञानापेक्षत्वान्निरुपाधिकज्ञानं तु विषयबलात्तदुन्मूलयेदतो वाक्योत्थज्ञानादेवानर्थोपादानाज्ञाननिवृत्तेस्तत्त्वमस्यादेरैक्ये सिद्धं प्रामाण्यमिति फलितमाह—तेनेति । श्रौतात्मज्ञानादेव तदज्ञानध्वस्तेरुक्तत्वेनेति यावत् । तत्रेति श्रुतितात्पर्यगम्यब्रह्मात्मोक्तिः । परानन्दतया पुरुषार्थत्वाच्च ब्रह्मात्मनि युक्ता तत्त्वमादेर्मानतेत्याह—पुमर्थश्चेति । स्रक्चन्दनादौ पुमर्थत्वप्रसिद्धेरात्मनस्तथात्वमसंप्रतिपन्नमिति चेत्तत्राऽऽह—विदुषामिति ।।१००७।।

पुमर्थशब्देन ब्रह्मात्मा सुखमित्युक्तं तदयुक्तं दुःखनिवृत्तीतरसुखाभावाद्भावाभावयोरैक्यायोगादिति जरत्तार्किकमतमाशङ्कते—नन्विति । यानि दुर्वाराणि संसारदुःखानि तेषां समूहस्य हानिरेव सुखं ततोऽन्यस्येष्टलक्षणत्वाभावादित्यर्थः । सुखनिरूपणस्याप्रस्तुतत्वं निरस्यति—यस्येति ।।१००८।।

दुःखध्वस्तिरेव सुखमित्यत्र लोकानुभवं प्रमाणयति—लोकेऽपीति । लौकिका हि व्याध्यधीनसंतापवन्तं पुरुषमुपलभ्य बतायमतिदुःखीति वदन्तो दैवयोगादपगतरोगं तमवगच्छन्तो दिष्ट्या जातोऽयं सुखीति वदन्तीत्यर्थः । ननु दुःखध्वस्तीतरसुखार्था विरक्तमुमुक्षुप्रवृत्तिस्तदनुपपत्त्या भावरूपसुखसिद्धिर्नहि तेषां संसारविमुखानामस्ति दुःखं यन्निविवर्तयिषितं तत्राह—व्यतिरिक्तेति । मोक्षार्था मुमुक्षुप्रवृत्तिः स च बन्धविश्लेषो बन्धश्चानर्थत्वाद्दुःखमिति तन्निवृत्त्यर्थैव तत्प्रवृत्तिरित्यर्थः ।।१००९।।

किंच भावरूपं सुखमसंवेद्यं संवेद्यं वा ? आद्ये गृहगुहानिहितागृहीतनिधिवदपुमर्थतेत्याह—असंवेद्यमिति । द्वितीयं दूषयति—न चेति । तत्र हेतुमाह—स्वरूप इति । एकत्र विषयविषयित्वायोगात्तस्य भेदापेक्षत्वादद्वैतविरोधादित्यर्थः ।।१०१०।।

### उक्तमतनिरासः

**नैवं भेदेन संसिद्धे सुखदुःखे कथं तयोः । ऐक्यं सुखस्य विच्छेदो दुःखं वा किं न कल्प्यते ॥११॥**
**अदुःखिनोऽपि दृश्यन्ते सुखप्राप्तीच्छया यतः । तदुपाये प्रवर्तन्तस्तदभेदे न युज्यते ॥१२॥**
**चन्दनादिसुखोपायसंपन्नाः सुखिनोऽप्यलम् । पुत्रजन्मादिवार्ताभिः प्राप्नुवन्ति सुखान्तरम् ॥१३॥**
**पुत्राद्यप्राप्तिरूपं च दुःखं तत्र न कल्प्यते । असंवित्तेरवेद्यं हि न दुःखं वैरिदुःखवत् ॥१४॥**
**तिर्यञ्चोऽप्यत एवेह कामयन्ते सुखं तथा । अप्रियं विजिहासन्ति न तु जानन्ति साधनम् ॥१५॥**
**वेदोऽपि शुद्धमात्मानं सुखं मुख्यं प्रदर्शयन् । अनात्मानं तथा दुःखं पुमर्थत्वेन संमतः ॥१६॥**
**तदेतत्प्रेय इत्यादिवाक्येभ्योऽनेकधा श्रुतम् । तथाऽऽत्मनस्तु कामाय तस्मान्नान्यत्सुखं भवेत् ॥१७॥**

दुःखध्वस्तिरेव सुखमित्येतन्निराकरोति—नैवमिति । तत्र हेतुर्भेदेनेति । संतापवतः शीतह्रदे निमग्नार्धदेहस्य युगपदेवासंकीर्णत्वेन सुखदुःखे दृष्टे तत्कुतो दुःखध्वंससुखयोरैक्यं भावाभावयोरेकत्रोपलम्भासंभवान्न च तत्र सुखदुःखयोर्भावाभावयोरपि प्रदेशभेदवर्तिनोर्युगपदविरोध आत्मनोऽप्रदेशत्वाद्देहदेशयोश्चाचेतनत्वात्तदवच्छिन्नात्मवृत्तित्वे चावच्छेदकभेदेऽपि तद्भेदाभावादेकत्रैव तद्वृत्तेस्तयोर्भावाभावत्वासंभवादित्यर्थः । किंच दुःखाभावः सुखं चेत् सुखाभावो दुःखं किं न स्यादविशेषादिति वैपरीत्यं प्रसञ्जयति—सुखस्येति ॥ १०११॥

सुखं न दुःखध्वस्तिरित्यत्र हेत्वन्तरमाह—अदुःखिनोऽपीति । दुःखहीना राजादयोऽपि सुखेच्छया तद्धेतौ नृत्यगीतादिप्रभेदे प्रवर्तमाना दृष्टा न च तद्दर्शनं दुःखध्वस्तिसुखयोरभेदे युक्तमप्राप्तदुःखेषु तद्ध्वस्तये प्रवृत्त्ययोगात्तद्दुःखध्वस्तेरतिरिक्तं सुखमित्यर्थः । वर्ततेरात्मनेपदित्वनियमेऽपि च्छन्दोवत्सूत्रिदां वृत्तिरिति न्यायं द्योतयितुं प्रवर्तन्त इत्युक्तम् । प्रोपसर्गतो वा नियमभङ्गः ॥१०१२॥

सुखोपाये प्रवर्तमानानामदुःखत्वमसिद्धमिति चेत्तत्राऽऽह—चन्दनेति । कथं पुनरुपायसंपत्त्या निरतिशयं सुखमासाद्य स्थितानां तत्रैवोपाये प्राप्ते प्रेप्सया प्रवृत्तिस्तत्राऽऽह—पुत्रजन्मादीति ॥१०१३॥

ननु यत्र पुंसि पुत्रजन्मादिश्रवणकृतं सुखं जायते तत्र पुत्राद्यप्राप्तिनिमित्तदुःखध्वस्तिरेव सुखं नेत्याह—पुत्रादीति । तत्र हेतुरसंवित्तेरिति । अननुभूयमानमपि दुःखं तत्रास्तीत्याशङ्क्याऽऽह—अवेद्यमिति । तस्यादुःखत्वे दृष्टान्तमाह—वैरीति । नो खल्वन्यस्य दुःखमन्यस्य भवति तेनाननुभूयमानत्वात्तथोत्खातदुःखे पुंसि पुत्रादिप्राप्तिप्रयुक्तसुखभाजि दुःखप्रसङ्गाभावेऽपि सुखोपलम्भात्तद्ध्वस्तेरन्यदेव तदित्यर्थः ॥१०१४॥

तत्रैव हेत्वन्तरमाह—तिर्यञ्चोऽपीति । यतो दुःखध्वस्तिसुखे भिद्येते अतो लोके पशुशकुन्तादयोऽपि विभागेन सुखाप्तिं दुःखध्वस्तिं चेच्छन्ति तदन्या दुःखध्वस्तिरन्यच्च सुखमित्यर्थः । तर्हि तिरश्चामस्माकं च सुखप्रेप्सया दुःखजिहासया च साधनानुष्ठानमविशिष्टं स्यात्तत्राऽऽह—न त्विति । शास्त्रीयं साधनमस्माकमेवाधिगतिगोचरो नेतरेषामित्यनुष्ठानविशेषसिद्धिरित्यर्थः ॥१०१५॥

लोके भावरूपसुखसत्त्वेऽपि नाऽऽत्मनि तदस्तीत्याशङ्क्याऽऽह—वेदोऽपीति । अशनायाद्यशेषधर्मशून्यमात्मानमलौकिकसुखात्मकं दुःखं चाऽऽत्मास्पृष्टं ब्रुवन्पुमर्थावसायितया वेदो मानत्वेनेष्टोऽतो लोकानुसारादात्मन्यपि भावरूपमेव सुखमित्यर्थः ॥१०१६॥

कोऽसौ वेदो यः सुखमात्मानमाहेत्याशङ्क्याऽऽत्मनः सुखत्वे वेदवाक्यान्युदाहरति—तदेतदि[1]ति । श्रुतमात्मनः सुखत्वमिति शेषः । तत्र वाक्यानां तात्पर्यलिङ्गमभ्यासं सूचयति—अनेकधेति । आत्मशेषत्वेन सर्वस्य प्रियत्वाच्चाऽऽत्मा

---

१. आत्मनः प्रियतमत्वं सुखरूपत्वे लिङ्गं तथाहि सुखे सुखसाधने वा प्रीतिः प्रसिद्धा, साधने प्रीतिः फले प्रीतिसद्भावादेव, फले प्रीतिविगमे साधने प्रद्वेषानुभवात् आत्मा च सर्वशेषि आत्मनः सुखं किमर्थमपेक्ष्यत इति प्रश्नादर्शनात् । विषयेषु च मम सुखायेदं करोमीति व्यवहारात् । अतः आत्मासुखरूप इति वाच्यम् न चात्मधर्मः सुखं सुषुप्तौ तदपरिज्ञानात् सुखानुभवपरामर्शेन सुखानुभवावश्यं भावात् । "विज्ञानमानन्दं ब्रह्म"ति श्रुतेः ब्रह्माभिन्नस्यात्मनः आनन्दरूपतासिद्धिः ।

एतावदेव चेदत्र भवतैवं विवक्षितम् ॥२२॥
प्रयोजनं तत्सुकरं विध्युद्देशेऽपि भाषितुम् । विद्याप्रकरणे तस्य त्वाम्नायः किमितीर्यताम् ॥२३॥
सोऽपि ज्ञानेन संयुक्तो हयमेधो महाक्रतुः । संसारफल एवेति प्रवृत्त्यङ्गतयोच्यते ॥२४॥
प्रत्यग्बोधातिरेकेण साधनान्तरनिःस्पृहाः । निर्ज्ञाताशेषकर्मोत्थफलफल्गुत्वबुद्धयः ॥२५॥
मुमुक्षवः प्रवर्तेरन्कथं नामाऽऽत्मवेदने ॥२६॥
संसारफलता काममस्तु काम्यस्य कर्मणः । नित्यानामफलत्वात्तु मुक्तिरेवास्तु तत्फलम् ॥२७॥
न ह्युत्सर्गेण सर्वेषां फलवत्त्वस्य संश्रवात् । कर्मणा पितृलोकादि नित्यानामेव तत्फलम् ॥२८॥
फलवत्त्वे हि नित्यानां काम्यत्वमिति चेन्मतम् । नैवं शुद्धिप्रमाणत्वाद्भोगनिष्ठस्य काम्यता ॥२९॥
काम्येऽपि शुद्धिरस्त्येव भोगसिद्ध्यर्थमेव सा । विड्वराहादिदेहेन न ह्यैन्द्रं भुज्यते फलम् ॥३०॥

उक्तमश्वमेधोपासनं न क्रत्वर्थं किंतु पुरुषार्थं तत्र चाधिकारोऽश्वमेधक्रत्वनधिकारिणामपीत्येतावदेव चेदिष्टमेवं सत्यस्मिन्नुपासने कर्मप्रकरणस्थेऽपि त्वदिष्टं सर्वं सुकरमेव वक्तुमतोऽत्र विद्याप्रकरणे नास्याध्ययनं युक्तमिति चोदयति—एतावदिति ॥११२२–११२३॥

सर्वेषां चेत्यादिभाष्येणोत्तरमाह—उच्यत इति । उच्यतेऽशेषयज्ञानां क्रतुराडेष उच्यते । सर्वप्रायश्चित्तत्वं सर्वभेषजत्वं सर्वपापनिवर्तकत्वमित्यादिविभूतिश्रुते"र्ब्रह्महत्याश्वमेधाभ्यां न परं पुण्यपापयोरि"ति स्मृतेश्चास्य क्रतुमुख्यत्वमवधेयमित्यर्थः । अश्वमेधस्य पुण्यकर्मश्रेष्ठत्वेऽपि प्रकृते किमायातं तदाह—सोऽपीति । उपास्तियुक्तस्याश्वमेधस्य महत्त्वे तस्यैव मोक्षहेतुत्वमन्यथा महत्त्वानुपपत्तेरित्याशङ्क्याऽऽह—संसारेति । "अशनाया हि मृत्युः" "स वै नैव रेमे" "सोऽबिभे"दिति भयारत्यादिश्रवणादुपास्तियुक्तक्रतुफलस्य सूत्रस्य बन्धमध्यपातित्वाद्विशिष्टोऽपि क्रतुर्न मुक्तये पर्याप्नोति महत्त्वं च क्रत्वन्तरापेक्षया फलातिरेकादिति भावः । तथाऽपि किमिति विद्यारम्भे बन्धफलत्वमस्योच्यते तत्राऽऽह—प्रवृत्तीति ॥११२४॥

कथमस्य बन्धफलत्वकथनं विद्यायां मुमुक्षुप्रवृत्तावुपयुज्यते तत्राऽऽह—प्रत्यगिति । ननु स्वर्गादिष्वभिलाषसंभवात्तद्धेतुषु वैदिककर्मस्वपि स्पृहाराहित्यायोगात्कथं साधनान्तरनिःस्पृहत्वं तत्राऽऽह—निर्ज्ञातेति ॥११२५॥

तर्हि स्वर्गादाविव मोक्षेऽपि न स्पृहा वैदिकफलत्वाविशेषात्कुतो विद्यायां प्रवृत्तिस्तत्राऽऽह—मुमुक्षव इति । निश्चयेन ज्ञातानामशेषवैदिककर्मणां यानि फलानि तेषां फल्गुत्वमल्पीयस्त्वं तद्विषया बुद्धिर्येषां विवेकिनामनुमानागमाभ्यामुत्पद्यते ते यदा क्रतुप्रधानस्याश्वमेधस्योपासनसहितस्यापि संसारफलत्वं तदा स्वल्पीयसामग्निहोत्रादीनां किं वाच्यं संसारफलत्वमित्यभिसंधायास्मिन्कर्मराशौ बन्धहेतावनभिलाषिणः सन्तः साधनचतुष्टयविशिष्टा ज्ञानमपेक्षमाणास्तदुपाये श्रवणादावेव सर्वकर्मसंन्यासपूर्वके कथं प्रवर्तेरन्नित्याशयवती श्रुतिरुपासनां विद्यारम्भेऽभिदधौ । तेनोषा वा अश्वस्येत्यारभ्योपनिषदारम्भः संभाव्यतेऽस्य विशिष्टाधिकारिसमर्पकत्वादिति भावः । उक्ते सर्वकर्मणां बन्धफलत्वे नित्यनैमित्तिकानां न तत्फलत्वं तेषां विध्युद्देशे फलाश्रुतेर्मुक्तिफलत्वभावादिति चोदयति—संसारेति ॥११२६–११२७॥

न सर्वकर्मेत्यादिभाष्यतात्पर्योक्त्या परिहरति—न हीति । एतावान्वै काम इति सर्वकर्मणामविशेषेण फलश्रवणात् पश्चादेश्च काम्यफलत्वश्रुतेः कर्मणा पितृलोक इति श्रुतं फलं नित्यादिकर्मणामस्त्वतस्तेषां न मोक्षफलत्वाशङ्केत्यर्थः । पितृलोकादीत्यादिपदेन तद्यथाऽऽम्रस्मृतिप्रसिद्धं फलं गृह्यते ॥११२८॥

नित्यादेरपि फलवत्त्वे चित्रादिवत्काम्यत्वादकरणे प्रत्यवायो न स्यादिति शङ्कते—फलवत्त्वे हीति । तद्वत्त्वमात्रेण न सांकर्यमित्याह—नैवमिति । फलवत्त्वेऽपि पापक्षयप्रधानं नित्यादि भोगप्रधानं काम्यमिति विभागः । नित्याद्यकरणं तु पूर्वसंचितदुरितद्योतीति भावः ॥११२९॥

शुद्धिप्रधानत्वादिति वदता काम्येऽप्यानुषङ्गिकी साऽभ्युपगताऽन्यथा प्रधानपदविरोधात्तदाह—काम्येऽपीति । साऽपि नित्यादिनिमित्तशुद्धिवद्विद्योपयोगिनीत्याशङ्क्याऽऽह—भोगेति । एवकारो भोगप्रतिबन्धकत्व-

नित्येषु शुद्धेः प्राधान्याद्भोगोऽप्यप्रतिबन्धकः । भोगं भङ्गुरमीक्षन्ते बुद्धिशुद्ध्यनुरोधतः ।।३१।।
तमेतमित्यतश्चोच्चैर्वेदानुवचनादिना । विरक्ताः सर्वसंसाराज्जिज्ञासन्ते परं पदम् ।।३२।।
आरादेवोपकुर्वन्ति नित्यान्यात्मविशुद्धितः । आत्माज्ञानाविरोधित्वात्साक्षान्न त्वात्मबोधवत्।।३३।।
त्यक्त्वा कर्माण्यतोऽसङ्गाः प्रत्यक्प्रवणबुद्धयः । अपास्तरागादिमला ईक्षन्ते ज्ञं स्वमात्मनि ।।३४।।
अतोऽशेषमहानर्थहेत्वात्माज्ञानहानिकृत् । प्रत्यग्याथात्म्यविज्ञानभास्करोदयहेतवे ।
आरब्धेयं प्रयत्नेन वेदान्तोपनिषत्परा ।।३५।।
शतानि दश चैकं च चत्वारिंशत्तथाऽष्ट च। श्लोकाः संबन्धभाष्येऽस्मिन्संख्याताः सख्ययाऽखिलाः।। ३६

## इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके सम्बन्धवार्तिकम्

व्यावृत्त्यर्थः । शुद्धेर्भोगार्थत्वमनुभवेन साधयति—विडिति । नहि वराहादिदेहे बुद्धिशुद्धिरस्त्यतो न तेन पुमानिन्द्रादिभोगमनुभवति। दैवेन तु देहेन प्रकृष्टशुद्धिमता तद्भुपभोगभागितेत्यर्थः। "यद्वा विविदिषार्थत्वमि"त्यत्रोक्तं न प्रस्मर्तव्यम् ।।११३०।।

नित्यादिकर्मणां पापक्षयात्फलान्तरोपगमे तद्भोगस्य शुद्धिप्रतिबन्धकत्वान्न सा ज्ञानमुत्पादयेदित्याशङ्क्याऽऽह—नित्येष्विति । तेषु पितृलोकादिभोगो भवन्नपि शुद्धेर्न प्रतिबन्धकस्तस्यास्तत्र प्राधान्यात्सा हि प्रधानं सती भोगमनुगुणीकरोतीत्यर्थः। ननु नित्यादिषु शुद्धिभोगयोरविशेषोऽस्तु शुद्धेः प्राधान्ये हेत्वदृष्टेरतो न तत्र शुद्धिर्भोगं भोगश्च शुद्धिं प्रतिबध्नीयात्तत्राऽऽह—भोगमिति । शुद्धिर्विवेकद्वारा भोगवैतृष्ण्यहेतुरित्यर्थः ॥११३१।।

ननु विरक्तानां स्वदेहधारणेऽपि निःस्पृहाणां श्रवणादिष्वप्रवृत्तेर्न विद्योत्पद्येतातो निःश्रेयसार्थिना वैराग्यं त्याज्यमत आह—तमिति । विविदिषावाक्यतात्पर्यतो विहितवेदानुवचनादिकर्मभिः शुद्धबुद्धेर्विवेकद्वारा सर्वतो विरक्तस्य स्वदेहादावप्यात्यन्तिकीमास्थामनास्थातुः शमादिसहितस्य मुमुक्षोर्ब्रह्म जिज्ञासोर्बाह्यार्थवैमुख्यद्वारेण श्रवणाद्युपस्थापयद्वैराग्यं मृग्यमित्यर्थः। नित्यादेः शुद्धिहेतुत्वमतःशब्दार्थः ॥११३२।।

दर्शितपरिपाट्या ब्रह्मविचारकारणत्वं कर्मणां वैराग्योपहारेणेष्टं चेन्मुक्तिहेतुत्वमेव तेषां किं नेष्यते तत्राऽऽह—आरादिति । आत्मशब्देन मनो गृह्यते । नित्यादीनामज्ञानप्रक्षयलक्षणे मोक्षे साक्षाज्ज्ञानवदुपकारित्वाभावे हेतुमाह—आत्मेति ।।११३३।।

यतो बुद्धिशुद्धिद्वारा प्रणाड्या कर्मणां मोक्षोपायत्वं न साक्षाज्ज्ञानवदतः शुद्धधियः ससाधनसर्वकर्मत्यागपूर्वके श्रवणादावधिकार इति फलितमाह—त्यक्त्वेति । कर्मत्यागे हेतुर्वैराग्यमिति सूचयति—असङ्गा इति । ये त्वन्तरेण वैराग्यं कर्मत्यजस्तद्विमुखा ज्ञानं चाप्राप्यान्तराले तिष्ठन्ति ते सर्वपुरुषार्थबहिर्भूताः शिष्टैः स्प्रष्टुमप्ययोग्या इति भावः। विरक्तानां संन्यासिनां विद्योपायश्रवणादिषु यत्नाधेयां निष्ठामाह—प्रत्यगिति । तेषामेव समाधिसाधनसंपन्नतामाह—अपास्तेति । उक्तलक्षणमुमुक्षूणां स्वमहिमप्रतिष्ठकूटस्थप्रत्यक्तत्वसाक्षात्काराधिकारो न बहिर्मुखाणामिति गमयति—ईक्षन्त इति ।।११३४।।

यतस्तत्त्वज्ञानमेव केवलं कैवल्यहेतुरतस्तादर्थ्येनोपनिषदारम्भः संभवतीत्यतोऽस्मादित्यादिभाष्यं व्याख्यास्यन्नुपसंहरति—अत इति । वेदान्तार्थस्य विनोपदेशं दुर्दर्शत्वं दर्शयितुमुपनिषत्पर्यायस्तेषु प्रयुज्यते । नन्वतिरोहितार्था वेदान्ता नोपदेशमपेक्षेरन्। मैवमतिगहनार्थत्वेन तेषां व्याख्यानसापेक्षत्वादित्याह—परेति ।।११३५--११३६।।

संबन्धवार्तिकमहाम्बुधिरेष तीर्णः सत्संप्रदायपदवीकृतसेतुबन्धः ।
सत्तर्कमानलहरीगहनावगाहपूर्णेन पुण्यनिचयेन पुराचितेन ।।१।।

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां संबन्धवार्तिकम्

ॐ उषा वा अश्वस्य मेध्यस्य शिरः । सूर्यश्चक्षुर्वातः प्राणो व्यात्तमग्निर्वैश्वानरः सम्वत्सर आत्माऽश्वस्य मेध्यस्य । द्यौः पृष्ठमन्तरिक्षमुदरं पृथिवी पाजस्यं दिशः पार्श्वे अवान्तरदिशः पर्शव ऋतवोऽङ्गानि मासाश्चार्धमासाश्च पर्वाण्यहोरात्राणि प्रतिष्ठा नक्षत्राण्यस्थीनि नभो माँसानि । ऊवध्यँ सिकताः सिन्धवो गुदा यकृच्च क्लोमानश्च पर्वता ओषधयश्च वनस्पतयश्च लोमान्युद्यन्पूर्वार्धो निम्लोचञ्जघनार्धो यद्विजृम्भते तद्विद्योतते यद्विधूनुते तत्स्तनयति यन्मेहति तद्वर्षति वागेवास्य वाक् ॥१॥

तत्राश्वविषयं तावदादौ दर्शनमुच्यते । प्राजापत्यत्वहेतो[1]श्चाप्यश्वनामाङ्कितत्वतः ॥ १ ॥
अश्वस्य यच्छिरः साक्षात्तदुषा इति चिन्तयेत् । हरेरवयवेष्वेवं योज्याः कालादिदृष्टयः ॥ २ ॥
संस्कार्यत्वात्पशोरेवं दृष्टीरङ्गेषु[2] योजयेत् । कालादावमखाङ्गत्वान्नाश्वदृष्टिर्विधित्स्यते ॥ ३ ॥
सत्स्वश्वादिषु कालादिदृष्टीरङ्गेषु योजयेत् । असत्स्वात्मानमेवाश्वं कल्पयित्वा नियोजयेत् ॥ ४ ॥
कर्तारमश्वमग्निं च चित्यं सर्वं प्रजापतिम् । अश्वमेधफलं चार्कं वेत्ति मृत्युं यथोदितम् ॥ ५ ॥

वियदादिजगज्जालं जातमज्ञानतो यतः । तदस्मि नामरूपेहाविरहि ब्रह्म निर्भयम् ॥१॥

एवमुपनिषदारम्भे स्थिते प्राथमिकब्राह्मणयोरवान्तरतात्पर्यमाह—तत्रेति । आदौ ब्राह्मणाभ्यामश्वमेधोपासनमुच्यते । तत्राप्याद्येनाश्वमेधविषयं ग्रहविषयं च दर्शनं द्वितीयेनाग्निविषयमिति भेदः । नन्वश्वमेधस्याङ्गबाहुल्ये कस्मादश्वाख्याङ्गविषयमेवोपासनमुच्यते तत्राऽऽह—प्राजापत्यत्वेति । अश्वस्य प्रजापतिदेवताकत्वादश्वमेधक्रतोश्चाश्वनाम्ना व्यावर्तितत्वात्तत्प्राधान्यादितराङ्गत्यागेनाश्वदर्शनमेवाऽऽदावुक्तमित्यर्थः ॥१॥

ब्राह्मणतात्पर्यं संक्षिप्याक्षराणि व्याकुर्वन्नुषा वा अश्वस्य शिर इत्यस्यार्थमाह—अश्वस्येति । आश्वमेधिकाश्वशिरस्युषसो मुहूर्तविशेषस्य दृष्टिः कार्येत्यर्थः । साक्षादित्यभेदेन दृष्टिमाचष्टे । सूर्यश्चक्षुरित्यादेरर्थं संक्षिपति—हरेरिति । अश्वस्य शिरस्युषसो दृष्टिवत्तस्यैव शरीरे सूर्यश्चक्षुरित्यादिषु संवत्सरादित्यादिदृष्टयः कार्या इत्यर्थः ॥२॥

कालादिदृष्टिरश्वाङ्गेषु किमिति क्षिप्यतेऽश्वाङ्गदृष्टिरेव तेषु किं न स्यादित्याशङ्क्याऽऽह—संस्कार्यत्वादिति । एवमिति श्रुतिभाष्ययोरुक्तं क्रममाह । आदित्यादिमतयश्चाङ्ग उपपत्तेरिति न्यायेन व्यावर्त्यमाह—कालादाविति ॥३॥

येषामश्वमेधे नाधिकारस्तेषामस्मादेव ज्ञानात्तत्फलप्राप्तिरित्युक्तत्वादश्वमेधानधिकृतानामेव प्रकृतोपास्तिरित्याशङ्क्याऽऽह—सत्स्वित्ति । अङ्गेष्वश्वावयवेषु शिरःप्रभृतिषु योजयेदश्वमेधाधिकारीति शेषः । आत्मशब्दो देहविषयः । नियोजयेदश्वमेधानधिकारी स्वावयवेषु कालादिदृष्टीरिति योजना ॥४॥

अश्वग्रहाग्नीनामुपासनान्यत्रोच्यन्ते तानि मिथो भिन्नानीति वाक्यभेदमाशङ्क्याऽऽह—कर्तारमिति । अश्वमेधे यजमानमश्वं च कालादिदृष्ट्यास्पदं चित्यं चाग्निमर्कशब्दितं प्रजापतिं मृत्युशब्दवाच्यं सूत्राख्याश्वमेधफलं च यथोदितं सर्वदेवतात्मकं सर्वं प्रजापतिं यो वेत्ति स क्रतोरकर्ता ब्राह्मणो वैश्यश्च क्षत्रियश्च शास्त्रार्थे विवेकी

१. प्राजापत्यत्वहेतोः—"अश्वस्तूपरो गोमृगः ते प्राजापत्याः" इत्यनेन प्रजापतिदेवताकयागे द्रव्यतया अश्वविधानादित्यर्थः ।

२. अङ्गेषु दृष्टीः विधत्ते—न तु सूर्ये चक्षुर्दृष्टिः अङ्गानामुपासनया संस्कार्यत्वात् सूर्यादीनां यागानङ्गत्वात् । तदुक्तं—आदित्यादिमतयश्चाङ्ग उपपत्तेः इति ( ब्र० सू० ४-१-६ ) उद्गीथे आदित्यदृष्टिः कर्तव्या न विपरीतमित्यर्थः ।

अकर्ता[1]ऽप्यश्वमेधस्य ब्राह्मणश्चेह बुद्धिमान् । क्रत्वात्मा मृत्युरस्मीति तादात्म्यं सोऽधिगच्छति ॥ ६ ॥

अहर्वा अश्वं पुरस्तान्महिमाऽन्वजायत तस्य पूर्वे समुद्रे योनी रात्रिरेनं पश्चान्महिमाऽन्वजायत तस्यापरे समुद्रे योनिरेतौ वा अश्वं महिमानावभितः सम्बभूवतुः । हयो भूत्वा देवानवहद्वाजी गन्धर्वानर्वाऽसुरानश्वो मनुष्यान्समुद्र एवास्य बन्धुः समुद्रो योनिः ॥२॥

इति प्रथमाध्यास्य प्रथमं ब्राह्मणं समाप्तम् ॥१॥

द्वितीयकण्डिकावार्तिकम्

अश्वसंज्ञपनात्पूर्वं तथोर्ध्वं चापि हाटक— । राजतात्मकपात्राभ्यां गृह्येते तत्र यौ ग्रहौ ॥
महिमाख्यौ तयोरेतदहर्वा इति दर्शनम् ॥ ७ ॥
व्यत्ययेनावबोद्धव्या प्रथमार्थे च सप्तमी ॥ ८ ॥
समुद्र ईश्वरो ज्ञेयो योनिः कारणमुच्यते । सर्वस्य जगतो यस्मादीश एवेह कारणम् ॥ ९ ॥

इति बृहदारण्यकोपनिषद्भाष्यवार्तिके प्रथमं ब्राह्मणम्

नैवेह किञ्चिनाग्र आसीन्मृत्युनैवेदमावृतमासीदशनायया । अशनाया हि मृत्युस्तन्मनोऽकुरुताऽऽत्मन्वी स्यामिति । सोऽर्चन्नचरत्तस्यार्चत आपोऽजायन्तार्चते वै मे कमभूदिति तदेवार्कस्यार्कत्वं कँ ह वा अस्मै भवति य एवमेतदर्कस्यार्कत्वं वेद ॥१॥

क्रतुतद्धेतुफलात्मा मृत्युरेवाहमिति जानन्मृत्युतादात्म्यं सौत्रं पदमधिरोहति । तथा चेदमेकं फलमेकमेवोपासनमिति वाक्याभेद इत्यर्थः ॥५–६॥

अश्वविषयं दर्शनमुक्त्वाऽहरित्यादेरर्थमाह—अश्वेति । इत्थंभावे तृतीया । ग्रहो हवनीयद्रव्ययुक्तपात्रविशेषः । तयोर्ग्रहो मन्त्रसंस्कृतयोरुपादानम् । तत्रेत्यश्वमेधोक्तिः ॥७॥

पूर्वे समुद्र इत्यादौ सप्तमीचतुष्टयस्यार्थाभावमाशङ्क्याऽऽह—व्यत्ययेनेति । समुद्र एवास्येत्यादौ समुद्रशब्दार्थं भाष्योक्तमाह—समुद्र इति । समुत्पद्य भूतानि द्रवन्त्यस्मिन्निति व्युत्पत्त्याऽतिगम्भीरस्येश्वरस्य समुद्रशब्दतेत्यर्थः । समुद्रो योनिरित्यत्र योनिशब्दार्थमाह—योनिरिति । बन्धुशब्दस्याप्ययमेवार्थः । तत्र योनित्वमुत्पादकत्वं बन्धुत्वं स्थापकत्वं समुद्रता विलापकत्वमिति भेदः । प्रधानादिकारणमाशङ्क्य श्रुतिविरोधेन निरस्यति—सर्वस्येति । शास्त्रमिहशब्दार्थः तस्मान्न प्रधानादिशङ्केति शेषः । परस्य सर्वकारणतया श्रौतत्वादश्वेऽपीश्वरकारणत्वदृष्टिः कार्येति भावः ॥८–९॥

इति बृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायामश्वमेधोपासनब्राह्मणं प्रथमम् ॥१॥

---

१. अश्वमेधस्य सार्वभौमक्षत्रियाधिकारिकत्वात् तदतिरिक्तैः स्वशरीरमेवाश्वं प्रकल्प्य तत्र दृष्टिविधानमित्यर्थः । अश्वमेधे "अश्वस्तूपरो गोमृगस्ते प्राजापत्याः" इत्युक्तत्वेन प्रजापतये देया अश्वादयः । अश्वमेधस्य सोमयागत्वात् आग्रयणोक्थ्यग्रहग्रहणमध्यकाले महिमाख्यौ द्वौ ग्रहौ महत्वकामस्य विहितौ । तदुक्तं—यःकामयेत महान् अन्नादः स्यामिति स एतौ महिमानौ गृह्णीत—इति । तयोरेकः सौवर्णः अपरः राजतः तयोर्यथाक्रममश्वस्य पुरस्तात्पश्चाच्च स्थापनं, वपाहोमात्पूर्वं सौवर्णस्य होमस्ततः परं राजतस्येति विशेषः श्रौतसूत्रेषु ।

अथा[1]ग्नेरुच्यते जन्म हयमेधोपयोगिनः । तद्दर्शनविधित्सायै स्तुत्यर्थोत्पत्तिरिष्यते ॥ १ ॥

घटभाष्यवार्तिकम् । कार्यकारणयोर्द्वयोरपि सृष्टेः प्रागसत्वपूर्वपक्षः

नामवद्रूपवच्चेह कारणं यावदीक्ष्यते । नाभूत्तत्प्राक्समुत्पत्तेः प्राणाद्युत्पत्तिसंश्रवात् ॥ २ ॥

कार्यमुत्पत्तिमत्त्वाच्चेत्प्रागुत्पत्तेर्निषिध्यते । कारणस्य त्वनुत्पत्तेरनिषेधस्तथा सति ॥ ३ ॥

तथा चानुपलब्धेश्च कार्यस्यैवास्तु नास्तिता । कारणस्य न नास्तित्वमुक्तहेत्वोरसंभवात् ॥ ४ ॥

सर्वस्यानुपलब्धेस्तु मैवं वोचो यतः श्रुतिः । नैवेह किंचनेत्याह कारणेतरनिह्नुतिम् ॥ ५ ॥

सिद्धान्तः

नैवं यतः श्रुतिः साक्षात्सत्त्वमेवावदत्स्वयम् । कार्यकारणयोः स्पष्टं मृत्युनैवेति सादरा ॥ ६ ॥

मृत्युना कारणेनेदं कार्यं सर्वं समावृतम् । इति नावश्यग्रह्येतदुभयं नाभवत्पुरा ॥ ७ ॥

प्राणपिण्डादिकार्याणां समुद्रः परमेश्वरः । बन्धुः कारणमात्मोक्तो मृत्युरत्र स एव तु ॥ ८ ॥

अश्वादिदर्शनोक्त्यनन्तरमग्निदर्शनं वक्तुं[2] ब्राह्मणान्तरमवतारयति—अथेति । नैवेहेत्यादावग्निदर्शनोक्तिर्नास्तीति चेत्सत्यं तत्राग्नेर्जन्म वक्तुं भूमिका क्रियत इत्याह—अग्नेरिति । वायोरग्निरित्यादौ सिद्धं तज्जन्मेति चेत्सत्यं तद्विशेषस्यात्र जन्मोक्तिरित्याह—हयमेधेति । दर्शने विधित्सिते किं जन्मोक्त्येति चेत्तत्राऽऽह—तद्दर्शनेति । अग्निदर्शनस्य विधातुमिष्टस्य विध्यर्थमुपास्याग्निस्तुतिफला तदुत्पत्तिरिष्टा शुद्धजन्मत्वादुत्कृष्टत्वेनायमुपास्यो राजादिवदित्यर्थः ॥१॥

तात्पर्यमुक्त्वा नैवेत्यादिवाक्याक्षराणि पूर्वपक्षानुगुण्येन योजयति—नामवदिति । इह संसारमण्डले कारणं कार्यं वा त्र्यात्मकं यत्किंचिद्दृश्यते तत्प्रागुत्पत्तेर्नैवाभूदिति वाक्यप्रामाण्यादेष्टव्यमित्यर्थः । कार्यस्य प्रागसत्त्वे हेत्वन्तरमाह—प्राणादीति । प्राणः सूक्ष्मः प्रपञ्चः । आदिशब्दः स्थूलप्रपञ्चार्थः । तस्योत्पत्तिरेतस्माज्जायते प्राण इत्यादौ श्रूयते । तथाच विमतं प्रागसदुत्पद्यमानत्वाद्यन्नैवं तन्नैवं यथा परेष्टं ब्रह्मेत्यर्थः ॥२॥

सिद्धसाध्यत्वेनासत्कार्यवादी दूषयति—कार्यमिति । कार्यस्य प्रागसत्त्वमिष्टमेव न च कारणस्य तथात्वं तस्य प्रागसत्त्वमुत्पत्तिमत्त्वाद्वा प्रागनुपलब्धेर्वा? नाऽऽद्यो हेत्वसिद्धेरिति भावः ॥३॥

द्वितीयं निराह—तथा चेति । उत्पत्तिमत्त्वेन कार्यस्यैव प्रागसत्त्ववत्प्रागनुपलब्धेरपि तस्यैवासत्त्वं कारणस्य तदाऽनुपलब्धेरसिद्धत्वात्प्रागपि घटाद्युत्पत्तेर्मृदाद्युपलम्भादित्यर्थः ॥४॥

सिद्धसाध्यतयाऽनुमाने कारणस्य च हेत्वभावादसत्त्वे दूषिते शून्यवाद्याह—सर्वस्येति । कार्यस्य प्रागसत्त्वेऽपि कारणस्य सत्त्वमित्ययुक्तं कार्यवत्तत्कारणस्यापि प्रागनुपलब्धेरविशेषादतः सर्वस्य प्रागसत्त्वं विमतं प्रागसद्योग्यत्वे सति तदाऽनुपलब्धत्वात्संमतवदित्यर्थः । असिद्धिनिरासार्थस्तुशब्दः । मृदादेरप्यभावावसानाच्छ्रुतावपि प्रागसत्त्वं कार्यकारणयोरुक्तमित्याह—यत इति ॥५॥

कार्यवत्कारणस्यापि प्रागसत्त्वे प्राप्ते सिद्धान्तयति—नैवमिति । नैवेत्यादिश्रुतिरव्यक्तनामरूपार्थविषया न प्रागसत्त्वं कार्यकारणयोराहेत्यर्थः । किंच यां श्रुतिमाश्रित्यासत्त्वं तयोरुच्यते सा स्वयमेवानन्तरवाक्यसहिता तयोः सत्त्वं ब्रूते । सा च तत्र तात्पर्यवत्यतात्पर्यहेत्वभावादतो यथा साक्षादध्यक्षेऽर्थे नाविश्वासस्तथा श्रौतं कार्यादिसत्त्वमतिस्पष्टत्वान्नाविश्वासार्हमित्याह—यत इति ॥६॥

यदि हीत्यादि श्रुतिविवरणभाष्यं विवृणोति—मृत्युनेति । अत्र पूर्वार्धेन श्रुत्यक्षराणि व्याख्यातान्युत्तरार्धेनाभीष्टो वाक्यार्थ उक्तः । येनाऽऽव्रियते यच्चाऽऽव्रियते तदुभयं वक्ति च श्रुतिस्तस्मात्तत्प्रागपि सदेवेति शेषः ॥७॥

मृत्युना कारणेनेत्ययुक्तं मृत्युशब्दस्यार्थान्तरे रूढेरित्याशङ्क्याऽऽह—प्राणेति । सूत्रविराजोः समष्टयोर्व्य-

१. अग्नेः चित्याग्नौ उपास्यस्य हिरण्यगर्भस्येत्यर्थः ।

२. सर्वत्र आनन्दाश्रमसंस्करणस्य पृष्ठपंक्तिसंख्या ग्राह्या–२१-५

ज्ञानमात्रसतत्त्वं यद्ब्रह्माज्ञातसतत्त्वकम् । मृत्युर्जनिमतः साक्षात्तत्र कार्याप्ययत्वतः ॥ ९ ॥
सद्बीजं सत्प्रतिष्ठं च सदायतनमेव च । प्रत्यक्षमेव सत्सिद्धं सदन्यस्याप्रसिद्धितः ॥१०॥

असतोऽप्रसिद्धिः

असत्सदतिरेकेण यदि वाऽव्यतिरेकतः । व्यतिरेके सदेवासदसद्वा तत्किमुच्यते ॥११॥
नेह सद्व्यतिरेकेण स्वमहिम्ना प्रसिध्यति । सर्वस्य सदपेक्षत्वात्सत्तु नान्यदपेक्षते ॥१२॥
मतमव्यतिरेकेण सतोऽसत्सत्तदिष्यताम् । कुतोऽदो लभतेऽसत्त्वं यत्सदात्मनि निष्ठितम् ॥१३॥
अन्योन्यव्यतिरेकित्वान्नान्योन्यात्मकता तयोः । विरोधित्वाच्च नान्योन्यं संबन्धस्तापशीतवत्॥१४॥
स्फुरताऽपि सतो नान्यदभिधातुं घटादिवत् । शक्यते नाभिधानेन ह्यसद्वस्तु निरुच्यते ॥१५॥

ष्टीनां च कार्यान्तराणां जन्मादिहेतुरीश्वरः समुद्र एवास्य बन्धुरित्यादौ समुद्रपदेनोक्तः स एवास्मिन्वाक्ये मृत्युर्नान्यस्तस्य सर्वकार्यसंहर्तृत्वायोगाद्रुद्रेरवहेयत्वादित्यर्थः ॥८॥

कूटस्थचिद्धातोरीश्वरस्य कारणत्वायोगात्तस्यापि न मृत्युतेत्याशङ्क्याऽऽह—ज्ञानेति । साक्षादितिपदं सर्वत्र संबध्यते तत्र तत्र प्रमाणसत्त्वं च तदर्थः । मायावशाद्ब्रह्मणो जगद्धेतोर्मृत्युत्वे युक्तिमाह—तत्रेति ॥९॥

श्रुत्या कार्यकारणयोः सत्त्वमुक्त्वा तत्रैवाध्यक्षं दर्शयति—सद्बीजमिति । सकलमपि जगदुत्पत्तिस्थितिलयेषु सत्त्वाक्रान्तं सर्वस्य स्वानुभवसमधिगतमित्यर्थः । असतोऽप्रसिद्धेश्च न प्रागसत्त्वं कार्यादेरित्युपपत्तिमाह—सदन्यस्येति ॥१०॥

कथमप्रसिद्धिरिति चेत्तदर्थमसत्सतो भिन्नमभिन्नं वेति विकल्पयति—असदिति । भेदपक्षे दोषमाह—व्यतिरेक इति[1] । भेदश्चेदसदपि सदेव स्याद्भेदधर्मित्वाद्घटवदित्यर्थः । असत्सदिति वदतो व्याहतिमाशङ्क्य भेदपक्षे नास्त्यसदित्यापादनावसानान्नैवमित्याह—असद्वेति ॥११॥

भेदपक्षमुपेत्य दोषमुक्त्वा तस्यैवानुत्थानमाह—नेहेति । सतः स्वतो भेदेन स्वसामर्थ्यादेव न किंचिज्जगति सत्तास्फूर्ती लभते सर्वस्य स्वरूपभूतसत्तापेक्षामन्तरेणासिद्धेरतः सदद्वैतमित्यर्थः । असदपोहत्वान्न सदप्यनपेक्षमिति कुतः सदद्वैतमित्याशङ्क्याऽऽह—सत्त्विति । नासदपोहः सत्त्वमन्योन्याश्रयादिति[2] भावः ॥१२॥

कल्पान्तरमालम्बते—मतमिति । तर्हि सदभिन्नत्वादसदपि सदेव स्यादिति सदद्वैततादवस्थ्यमित्याह—सदिति । तदेवोपपादयति—कुत इति । तद्धि सदात्मनि निष्ठितं सदभिन्नमसदसत्त्वमेव नाऽऽप्नोति सद्वदित्यर्थः ॥१३॥

अभेदपक्षमुपेत्य दोषमुक्त्वा तस्यैवानुत्थानमाह—अन्योन्येति । न हि सदसतोस्तादात्म्यं सापेक्षत्वानपेक्षत्वाभ्यां मिथोभिन्नत्वदृष्टेरित्यर्थः । तयोरतादात्म्येऽपि संबन्धान्न सतोऽनाद्यनन्ततेत्याशङ्क्याऽऽह—विरोधित्वादिति ॥१४॥

असंबन्धे स्वतन्त्रे तर्हि सदसती स्तामतो न सदद्वैतमित्याशङ्क्याऽऽह—स्फुरतेति । सुशिक्षितेनापि घटादि न सतोऽन्यदुच्यते तुच्छत्वप्रसङ्गात्तद्वदसदपि न सतोऽन्यद्वक्तुं शक्यं सत्येव शब्दप्रत्ययप्रवृत्तेरित्यर्थः । ननु सतोऽन्यदसत्प्रसिद्धं अस्तिनास्तिशब्दधियोर्विषयभेदादिति; तत्र किमसत्तुच्छं किंवा वस्तुनोऽतिशयो नाऽऽद्य इत्याह—नेति । न ह्यसदभिधानेन निश्चित्योच्यते निःस्वरूपत्वाद्वस्त्वेव हि वाच्यं नास्तिशब्दप्रत्यययोरपि निःस्वरूपगोचरत्वमनिष्टमित्यर्थः ॥१५॥

---

१. व्यतिरेक इति—भेदपक्षे असदपि सदेव भेदाश्रयत्वात् । अपि चासतः सत्त्वेऽसच्छब्दस्य तज्ज्ञानस्य वा किमालम्बनं ? वदेत्यर्थः ( न्या० )

२. अन्योन्याश्रयादिति—असतः सद्भिन्नत्वं सतश्चासद्भिन्नत्वमित्युक्तौ ज्ञप्तावन्योन्याश्रय इत्यर्थः ।

वस्तुनोऽतिशयः कश्चिदभाववचसोच्यते । तस्य तेनाभिसंव्याप्तेर्न कथंचिदपह्नुतिः ॥१६॥

ध्वंसनिरासः

क्रिया वा तत्फलं वा स्यादभावो नाऽऽत्महेतुहा । यो यतो लभते सत्तां निरुणद्धि स तं कथम् ॥१७॥

न नाशो हन्ति नष्टारं गन्तारमिव तद्गतिः । यो यतो लिप्सते सिद्धिं स तं हन्ति कथं वद ॥१८॥

विज्ञानाव्यतिरेकी चेदभावः स्यात्सहेतुकः । ध्वंसादव्यतिरेकेऽपि धियो नित्यत्वमापतेत्[1] ॥१९॥

अतोऽभावत्वसिद्ध्यर्थमभावेनाप्यपेक्ष्यते । स्वहेतुसिद्धिः कार्योऽर्थो न दृष्टः कारणं विना ॥२०॥

धर्म्यसिद्धिः प्रतिज्ञायां हेतुश्चानाश्रयो भवेत् । न चास्ति कश्चिद्दृष्टान्तः सर्वशून्यत्ववादिनः ॥२१॥

शून्यवाद्युक्तदोषस्य विज्ञानवादेऽपि प्रसङ्गः

विज्ञानमात्रं यस्यापि जगदेतच्चराचरम् । प्रतिज्ञाहेतुदृष्टान्तैर्ज्ञानं तेनापि दूष्यते ॥२२॥

द्वितीयमालम्बते—वस्तुन इति । तत्र वाच्यत्वमसतः सिध्यति न वस्त्वभावोऽतिशयस्य तद्वता वस्तुना व्याप्तेरिति परिहरति—तस्येति ॥१६॥

अविशेषेणासन्निरस्य तद्विशेषं ध्वंसं निरस्यति—क्रियेति । ध्वंसो हि क्रिया वा तत्फलं वा? नोभयथाऽपि स्वहेतुं निवर्तयतीति यावत् । कथं नाशस्य स्वहेत्वनिवर्तकत्वं तदाह—यो यत इति । नाशस्य क्रियात्वे तत्फलत्वे च घटो हेतुरिति न तस्यासौ निवर्तको न हि घटस्य मृदादिनिवर्तकता दृष्टेत्यर्थः ॥१७॥

किंच नाशस्य क्रियात्वे तत्फलत्वे च न स्वहेतुनिवर्तकत्वं क्रियात्वात्तत्फलत्वाच्च गतिवत्तत्फलवच्चेत्याह—न नाश इति । अग्निवद्ब्रह्मधीवच्च स्वहेतुध्वंसित्वं नाशस्य किं न स्यादिति चेन्नेत्याह—यो यत इति । अग्न्यादिविलक्षणो हि नाशो घटाभावेऽपि स्थितेर्न हि काष्ठाद्यभावेऽग्निरज्ञानाभावे च ब्रह्मधीस्तिष्ठति । अतो घटस्योपादानत्वे नाशो न तन्निवर्तयेत्स्वस्थितिहेतुत्वेन तदपेक्षत्वान्न च घटस्य नाशनिमित्तत्वेन तन्निवर्त्यत्वं कुलालादेरपि घटनिवर्त्यत्वप्रसङ्गाच्छब्दादेः स्वहेतुनिवर्तकत्वं तु प्र[2]क्रियामात्रमिति भावः ॥१८॥

तार्किकमते ध्वंसं निरस्य विज्ञानवादिमतमनुवदति—विज्ञानेति । तत्र किमभावस्य विज्ञानेऽन्तर्भावस्तस्याभावे वा ? नाऽऽद्यो विज्ञानवदभावस्यापि हेतुमत्तया क्षणिकत्वापत्तेरित्याह—अभाव इति । उभयत्राभावपदं संबध्यते । द्वितीयमनूद्य दूषयति—ध्वंसादिति ॥१९॥

मा तर्हि तार्किकयोगाचारमते भूतां माध्यमिकसिद्धान्तेन तु सर्वस्य ध्वंससिद्धिरित्याशङ्क्यानुभवविरोधान्मैवमित्याह—अत इति । किंच सर्वाभावः कार्योऽकार्यो वा?आद्ये तद्धेतुसिद्धेः सर्वाभावासिद्धिरित्याह—अभावत्वेति । घटादिनेवेति दृष्टान्तार्थोऽपिशब्दः । अभावेनाभावत्वस्य स्वरूपस्य सिद्ध्यर्थं स्वहेतुसद्भावोऽपेक्षित इत्यत्र हेतुमाह—कार्य इति । यत्कार्यं तद्धेत्वपेक्षं यथा घटोऽभावस्यापि कार्यत्वे हेत्वपेक्षत्वान्न सर्वशून्यता हेतोः सत्त्वादन्यथा तदसिद्धिर्विना हेतुं कार्यायोगात्तदुभयतः पा[3]शा रज्जुरिति भावः ॥२०॥

अकार्योऽपि सर्वाभावोऽध्यक्षेणानुमानेन वा साध्यते?नाऽऽद्यस्तस्य सर्वसत्त्वविषयत्वात्, नेतरस्तदनिर्देशादित्याशयेनाऽऽह—धर्मीति ॥२१॥

शून्यवादिन्युक्तमनुमानायोगं विज्ञानवादिन्यतिदिशति—विज्ञानेति । यत्प्रकाशते तत्प्रकाशाभिन्नं यथा ज्ञानं प्रकाशते चेदमित्यनुमानाज्ज्ञानमात्रत्वं विज्ञानवादिना सर्वस्योच्यते । न च तस्य धर्म्यादि मिथो व्यावृत्तं सिध्यत्यतिरिक्तस्य ज्ञानादनिष्टत्वात् । न च कल्पनया तत्सिद्धिः, कल्पकाभावात् न चाविद्या तथा, तस्या निराश्रयत्वा-

१. नित्यत्वमापतेदिति—ध्वंसस्य नित्यत्वादित्यर्थः ।

२. प्रक्रियामात्रमिति—सा च प्रक्रिया नास्मत्सम्मता वर्णात्मकशब्दस्याकाशादिवन्नित्यत्वात् ।

३. उभयतः पाशेति—हेतुसत्त्वे तदसत्त्वे च सर्वाभावस्यासिद्धिरित्यर्थः ।

**मानाभेदाच्च मेयस्य नाज्ञातार्थः प्रसिध्यति । तादात्म्येऽपि न चेज्ज्ञातो मानात्कोऽतिशयो मतः ॥२३॥**
**अज्ञाताधिगमं कुर्वन्मानं स्यात्सर्ववादिनाम् । न चेच्छुक्तितमोजस्य ज्ञानस्यापि प्रमाणता ॥२४॥**
**विज्ञानाव्यतिरेकित्वादसिद्धादेस्तथैव च । प्रामाण्यवत्प्रसङ्गः स्यादप्रमात्वेऽपि ते ध्रुवम् ॥२५॥**

अद्वैतवादे कार्यकारणयोः सत्त्वे सिद्धान्तभंगशंका समाधानं च

**अजमेकं स्वतःसिद्धं प्रत्यग्रूपमनन्यदृक् । वस्त्वेवं चेदिहाभीष्टं किमर्थं साध्यतेऽपरम् ॥२६॥**
**एवंभूतात्मसिद्ध्यर्थं कारणादि प्रसाध्यते । उपायः सोऽवताराय तथा तज्ज्ञैश्च सूत्रितम् ॥२७॥**
**कारणादिनिषेधेन न चाद्वैतमभीप्सितम् । ऐकात्म्यबोधमात्रेण निषेधस्याप्यपह्नवात् ॥२८॥**
**सत्तत्त्वकमिदं सर्वमिति संसाध्य यत्नतः । तस्यापि संविन्मात्रेण पूर्णतैवोच्यते सतः ॥२९॥**

योगाज्ज्ञानस्यस्वरसभङ्गुरस्यातदाश्रयत्वात्तस्याश्च ज्ञानादभेदे क्षणिकत्वाद्भेदे चावस्तुत्वेनाकल्पकत्वादतोऽनुमानामानता तुल्येत्यर्थः ॥२२॥

न केवलमनुमानस्यैव विज्ञानवादे मानत्वायोगः किंत्वध्यक्षस्याप्यज्ञातार्थाभावादित्याह—मानेति । तथाऽपि मेयांशस्याज्ञाततेति शङ्कते—तादात्म्येऽपीति । तर्हि मानाद्वस्तुनि कोऽतिशयोऽज्ञातत्वध्वस्तिर्वा ज्ञातत्वोत्पत्तिर्वेति विकल्पयति—मानादिति ॥२३॥

नाऽऽद्यो मानाभेदेऽपि वस्तुन्यज्ञातत्वोपगमादिति मन्वानो द्वितीयं दूषयति—अज्ञातेति । वस्तुन्यज्ञाते सत्यज्ञातत्वनिरासद्वारा ज्ञातत्वमुत्पादयन्मानमिति सर्वसंमतं तथाचाज्ञातत्वं मानाभिन्नेऽप्यर्थेऽस्ति चेत्कथं तस्मिन्नधिगमं कुर्वतोऽपि मानस्य मानता-कथं च तदधिगमे हेतुतेत्यर्थः । अज्ञातज्ञापकं मानमिति न कुलधर्मो ज्ञापकं तदित्यत्रादोषादिति शङ्कते—न चेदिति । ज्ञापकत्वमात्रेण मानत्वेऽतिप्रसङ्गमाह—शुक्तीति । न च तस्य ज्ञापकत्वमेव नेति युक्तमज्ञातत्वप्रसङ्गान्न च तदपि प्रमाणमेव प्रमाणाप्रमाणविभागाभावापातादस्मन्मते च स्वतः सर्वज्ञानानां प्रामाण्येऽपि क्वचित्परतोऽप्रामाण्यादिति भावः ॥२४॥

विज्ञानवादे मानाभासस्यापि विज्ञानवन्मानत्वापत्तिरिति दोषान्तरमाह—विज्ञानेति । वतिः स्वरूपार्थः । तत्र हि विज्ञानं मानं तदभेदादसिद्धविरुद्धादेरपि तथैव मानता व्यतिरेके राद्धान्तहानिर्बाह्यार्थोपगमादित्यर्थः ॥२५॥

अद्वैतवादेऽपि कार्यकारणयोः सत्त्वे सिद्धान्तहानिरिति चोदयति—अजमिति । वस्तुनोऽकार्यत्वात्कार्यस्य सत्त्वसाधनमसदित्यर्थः । अद्वयत्वाच्च तस्य न कार्यादेः सत्त्वमित्याह—एकमिति । साधकापेक्षत्वान्नैकत्वमित्याशङ्क्याऽऽह—स्वत इति । उत्पादके ज्ञापके वा वस्तुनोऽपेक्षा? नाऽऽद्योऽजत्वान्नेतरः स्वप्रकाशत्वादित्यर्थः । आत्मत्वाच्च वस्तुनो नानात्मकार्यादिसत्त्वमित्याह—प्रत्यगिति । स्वप्रभत्वमुक्तं व्यनक्ति—अनन्येति । यथोक्तं वस्तु केनेष्टमत आह—वस्त्विति । इहेत्यद्वैतपक्षोक्तिः । अपरमिति कार्याद्युच्यते । किमर्थमित्याक्षेपे वस्तुविरोधो हेतुः ॥२६॥

कार्यकारणतदभावविलक्षणप्रत्यग्ब्रह्मसिद्धये कारणादेरतुच्छत्वं साधयतो न सिद्धान्तहानिरिति परिहरति—एवमिति । तर्हीष्टं वस्त्वेवोच्यतां किं कारणादिकथयेत्याशङ्क्याऽऽह—उपाय इति । तत्त्वज्ञानसिद्धये कारणादि हेतुरित्यत्र मृल्लोहविस्फुलिङ्गैरित्यादिवृद्धवाक्यमुदाहरति[1]—तथेति ॥२७॥

कारणाद्यभावविलक्षणत्वं ब्रह्मणोऽसिद्धं तस्याद्वयत्वात्कारणादिद्वयनिषेधात्मत्वादित्याशङ्क्याऽऽह—कारणादीति । अद्वयत्वं तर्हि कथमिति तत्राऽऽह—ऐकात्म्येति । उभयत्रापीत्थंभावे तृतीया । कारणादिनिषेधे पृथग्विद्यमाने कथमैक्यस्फुरणरूपेणाद्वयत्वं तत्राऽऽह—निषेधस्यापीति । कार्यादेरिव तन्निषेधस्यापि तत्त्वज्ञानाद्वस्तुमात्रत्वेनापह्नवाच्चिदेकरसत्वेनाद्वयत्वमविरुद्धमित्यर्थः ॥२८॥

तर्हि कार्यकारणयोः सत्त्वे साध्ये कथं वस्तुनश्चिन्मात्रतया पूर्णत्वमन्यथा तयोः सत्त्वसाधनमस्थाने

१. मृल्लोहेति—मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदिताऽन्यथा । इत्यादिः । अवताराय =ब्रह्मज्ञानोत्पत्तये ।

अनुमेयत्वाच्चेत्यादिभाष्यतात्पर्यम्

**सदेवाऽऽगमतः[1] सर्वं प्रत्यक्षाच्च सदीक्ष्यते । अनुमानाच्च सत्सर्वं यथा तदधुनोच्यते ॥३०॥**

**अनुमेयं च सत्पूर्वं कारणं कार्यमेव च । जगत्प्रसूतेस्तच्चेह प्रयोगेण प्रदर्श्यते ॥३१॥**

कारणस्य सत्त्वानुमानम्

**विवादगोचरापन्नं सत्कारणमिदं भवेत् । कार्यात्मकं मनोऽबादि[2] कार्यत्वात्कटकुम्भवत् ॥३२॥**

**हेतुमज्जनिमत्सर्वं कार्यत्वात्पटकुम्भवत् । वियदादि च नः कार्यं तदप्येवं प्रतीयताम् ॥३३॥**

कारणासत्त्वानुमानेन शङ्का

**असत्कारणकं कार्यं तद्विनाश्यास्य जन्मतः । सर्वं स्वहेतुमुन्मूल्य जायतेऽङ्कुरकुम्भवत् ॥३४॥**

स्यादित्याशङ्क्य घट[3]विचारतात्पर्यमाह—सतत्त्वकमिति । कार्यं कारणं च सर्वमिदं सन्मात्रमिति परपक्षप्रतिक्षेपमुखेन प्रसाध्य तस्यापि सतः संविन्मात्रतया पूर्णत्वमेवात्र विचार्य निर्धार्यते । तथा च वस्तुनोऽद्वितीयत्वमविरुद्धमित्यर्थः ॥२९॥

मृत्युनैवेत्याद्यागमात् सद्बीजमित्याद्यध्यक्षात्सर्वस्य कारणादेः सत्त्वमुक्तमनुवदति—सदेवेति । अनुमेयत्वाच्चेत्यादेराविचारसमाप्तेर्भाष्य[4]स्य तात्पर्यमाह—अनुमानादिति ॥३०॥

अनुमीयते हीत्यादिविवरणभाष्यार्थमाह— अनुमेयं चेति । जगत्प्रसूतेः पूर्वमिति संबन्धः । कथमनुमानं तदाह—तच्चेति ॥३१॥

कार्यकारणयोः सत्त्वानुमानं प्रतिज्ञाय कारणसत्त्वे कार्यस्य[5] हीत्यादिभाष्योक्तमनुमानमाह—विवादेति । भागे सिद्धसाध्यतामुद्धर्तुं विवादेति विशेषणं इदमिति व्याकृतजगदुक्तिः । तन्मनोऽकुरुतेत्यादिवाक्यशेषान्मनोऽबादीत्युक्तम् । कार्यात्मकमित्यसिद्धिमुद्धर्तुं विशेष्यते ॥३२॥

कार्यत्वेऽपि तस्य कारणापेक्षा मा भूत्स्वभाववादसंभवात्तत्कथं कारणसत्त्वानुमेति तत्राऽऽह—हेतुमदिति । स्वभाववादस्तूपरिष्टान्निराकरिष्यते । ननु प्रथमानुमाने हेतोर्भागासिद्धिराशङ्क्यते । न च कार्यात्मकमिति विशेषणात्तस्यैव धर्मित्वाददोषः, त्वन्मते वियदादेरपि कार्यत्वात्परमते च भागासिद्धिशङ्कासमुन्मेषात्तत्राऽऽह— वियदादिति । तस्य कार्यत्वे किं मानं तदभावे स्यादन्यतरस्य भागासिद्धिस्तत्राऽऽह—तदपीति । कार्यत्वमपि वियदादेर्विभक्तत्वाद्यनुमानादागमाच्च निश्चेतव्यमित्यर्थः । यद्वा चकारसूचिताभ्यामनुमानागमाभ्यां कार्यत्वे तस्य सिद्धे फलितमाह—तदपीति । वियदाद्यपि कार्यत्वाद्घटवत्सकारणकं ज्ञेयमित्यर्थः ॥३३॥

जगज्जनेः प्राक्कारणस्य सत्त्वेऽनुमिते प्रत्यनुमानं शङ्कते—असदिति । विमतमसत्कारणकं कार्यत्वादङ्कुरवदित्यत्र दृष्टान्तस्य साध्यवैकल्यमाशङ्क्याऽऽह—तद्विनाश्येति । बीजमुपमृद्यैवाङ्कुरोदयदर्शनात्तस्यासत्कारणतेत्यर्थः । तथाऽपि जगति स्वहेतूपमर्देन जन्मादर्शनात्कार्यत्वेऽपि मा भूदसत्कारणकत्वं तत्राऽऽह—सर्वमिति । विमतं स्वहेतूपमर्देनोत्पद्यते कार्यत्वात्संमतवदित्यर्थः ॥३४॥

---

१. आगमतः—"सदेवसोम्येदमग्र आसीदेकमेवाद्वितीयमि"त्यागमात् 'मृत्युनैवे"ति प्रकृतवाक्याच्च । प्रत्यक्षं च सन् घट इत्यादि ।

२. आदिपदेन "आपोऽजायन्ते"ति श्रुतिसंग्रहः । असिद्धिं—नित्यस्यापि पक्षान्तर्गतत्वे कार्यत्वहेतोरसिद्धिः स्यात् तामुद्धर्तुं कार्यात्मकमिति । विवादेति दृष्टान्ते सिद्धसाधनवारणाय ( न्या० )

विभक्तत्वाद्यनुमानात्–विमतं कार्यं विभक्तत्वात् घटवत्–इत्यनुमानं यावद्विकारं तु विभागो लोकवत्–इति ब्रह्मसूत्रोक्तम् ( २-३-७ )

आगमः "तस्माद्वाएतस्मादात्मन आकाशः सम्भूत" इत्यादिः । फलितमिति—निगमनवाक्यमित्यर्थः ।

३. घटविचारः घटमधिकृत्य कारणसत्त्वासत्त्वविचारः ।   ४. २१–९   ५. २१–१०

## कार्यस्यानुत्पन्नत्वेन कार्यानाशकता

**स्वकारणं चेदुत्साद्य कार्यं सर्वं प्रजायते । तत्कारणविनाशाय तत्सूतेः प्राक्क्व ईर्यताम् ।।३५।।**
**स्वहेतूच्छित्तयेऽलं चेदजातमपि सद्यदि । द्वयमप्यभ्युपेतं स्यान्न ह्यसद्धन्यतेऽसता ।।३६।।**
**विनाशस्यापि कार्यत्वात्सोऽपि सत्कारणो मम । न चेत्कार्यो विनाशः स्यान्नाशोऽकार्येण नेष्यते ।।३७।।**
**स्वकारणविनाशाय सिद्धं वाऽसिद्धमेव वा । अङ्कुरादि मतं कार्यं नोभयत्रापि युज्यते ।।३८।।**
**सिद्धं चेत्कारणासिद्धमुपमर्दं विनैव तु । उत्पन्नेन च तन्नाश उत्पन्नत्वादनर्थकः ।।३९।।**
**उपमृद्नाति चेत्कार्यमथासिद्धं स्वकारणम् । तत्कारणं कथं तत्स्यान्न चेत्तस्मात्प्रजायते ।।४०।।**
**उपमर्दोऽपि कार्यत्वात्किं न हन्यात्स्वकारणम् । हन्तर्यसति हानोक्तिर्लक्ष्यते शिशुवक्तृका ।।४१।।**
**नंष्टृतन्त्रो विनाशोऽपि गन्तृतन्त्रा गतिर्यथा । नास्तीह कश्चिद्धात्वर्थो यः स्वहेतुं विनाशयेत् ।।४२।।**

प्रत्यनुमाने दृष्टान्तस्य साध्यवैकल्यं वक्तुं नानुपमृद्य प्रादुर्भावादिति[1] परोक्तेरर्थमनुवदति—स्वकारणमिति । प्राक्कार्योत्पत्तेस्तस्य न स्वकारणनिवर्तकत्वमनुत्पन्नत्वेनालब्धात्मकत्वादिति दूषयति—तत्कारणेति ।।३५।।

विपक्षे दोषमनुभाषते—स्वहेत्विति । चेच्छब्दो वेदाश्चेत्प्रमाणमितिवत् । अथवा कार्यमजातमेव यदि स्वहेतुमुच्छेत्तुमलं तच्च सदेव चेदिति योजना । तर्हि कार्यं कारणं च प्रागुत्पत्तेः सदेष्टव्यमसतो निवर्त्यनिवर्तकत्वायोगादित्याह—द्वयमिति ।।३६।।

किंच कारणोपमर्दः कार्योऽकार्यो वा? आद्ये तस्यापि पक्षतुल्यतया सदेव कारणमनुमेयं तेन सत्यपि तस्मिन्कारणस्य सत्त्वान्न कार्यस्यासत्कारणत्वं कारणोपमर्दे व्यभिचारान्न च सोऽपि स्वहेतुमुपमृद्यैव भवत्यनवस्थानादित्याह—विनाशस्येति । घटादिदृष्टान्तार्थावपिशब्दौ । द्वितीयमादत्ते—न चेदिति । अकार्येण नाशेन नाशो न पिण्डादेरेष्टुं शक्यते नाशस्याकार्यत्वे नित्यत्वात्पिण्डादेः सत्त्वप्रसङ्गाभावात्तत्पूर्वकनाशस्यापि दुर्वचत्वादित्याह—नाश इति । अथवा नाशस्य कृतकत्वाभ्युपगमादकार्यात्मना नासाविष्यते स्वाभ्युपगमविरोधादित्यर्थः ।।३७।।

स्वकारणं चेदुत्साद्येत्यादौ कार्यं कारणं न नाशयतीत्युक्तं तदेव विकल्प्य प्रपञ्चयितुं प्रक्रमते—स्वकारणेति । कार्यस्य सिद्धत्वेऽसिद्धत्वे च न स्वकारणनाशकतेति प्रतिजानीते—नेति ।।३८।।

सिद्धत्वपक्षमनूद्य तत्र स्वकारणानिवर्तकत्वमुपपादयति—सिद्धं चेदिति । यदि सिद्धं कार्यं स्वकारणमुपमृद्नीयान्न तर्हि तदन्तरेण कारणं सेद्धुमर्हति तथाच कारणोपमर्दं विना कारणादेव सिद्धं तदेष्टव्यमित्यर्थः । कारणोपमर्दादृते सिद्धेन कार्येण कारणमुपमृद्यतामिति चेन्नेत्याह—उत्पन्नेनेति । कार्योत्पत्तये कारणनाशस्त्वयेष्यते तच्चेदविरोधेनोत्पन्नं व्यर्थं तेन कारणनाशकल्पनमित्यर्थः ।।३९।।

असिद्धत्वपक्षमनुवदति—उपमृद्नातीति । अनुत्पन्नस्य कार्यस्योपमर्दकत्वे तत्तावन्न वस्तुमात्रमुपमृद्नात्यतिप्रसङ्गान्नापि स्वकारणं ततो जन्म विना तत्कारणत्वायोगादतोऽनुत्पन्नस्योपमर्दकत्वे न स्वकारणोपमर्दकत्वमित्याह—तत्कारणमिति ।।४०।।

कार्यस्य सिद्धस्यासिद्धस्य वा न स्वहेतूमर्दित्वमित्युपपाद्य हेतूपमर्दस्यापि कार्यस्याकार्यस्य वा न स्वहेतूपमर्दित्वमित्युक्तं व्यक्तीकर्तुं प्रसङ्गमाह । उपमर्दोऽपीति । हेतूपमर्देन कार्यजन्म चेदुपमर्दस्यापि कार्यत्वात्स्वहेतुपिण्डाद्युपमर्दित्वं स्यादित्यर्थः । अस्तूपमर्दस्य स्वहेतुनाशकत्वं स तर्हि सन्नसन्वा तन्नाशयेदसंश्चेत्तत्राऽऽह—हन्तरीति । न हि कर्तारमन्तरेण क्रिया सिध्यति व्याघातादित्यर्थः ।।४१।।

संश्चेत्तत्राऽऽह—नंष्ट्रिति । यथा गतिर्गन्तृतन्त्रा न गन्तारं निवर्तयति तथा नाशः सन्नपि नंष्टृतन्त्रो न स्वहेतुं निवर्तयेदविशेषादित्यर्थः । गतेः स्वहेत्वनिवर्तकत्वेऽपि नाशस्य तन्निवर्तकत्वमिति विभागमाशङ्क्याऽऽह—नास्तीति । विमतो न स्वहेतुनाशको धात्वर्थत्वाद्गतिवदित्यर्थः ।।४२।।

---

१. न्यायसूत्रम् ४–१–१४ अनुपमृद्य-कारणं अविनाश्य अनुत्पत्तेः कार्यस्येत्यर्थः ।

नाशव्याप्तं कार्यं न कारणमुपमर्देत

**निर्हेतुनाशसंव्याप्तेर्न स्यात्कुम्भजनिर्मृदः । न बीजादग्निसंव्याप्तादङ्कुरोद्भूतिरीक्ष्यते ॥४३॥**

पिण्डस्य घटकारणत्वाभावः

**घटादेः कारणं पिण्ड इति नाभ्युपगम्यते । मृदेव कारणं यस्मात्पिण्डादेरवगम्यते ॥४४॥**

**यदेव कारणं मानैरिह साक्षाद्विनिश्चितम् । तदेवोत्तरकार्येषु न कार्यं कारणं मितेः ॥४५॥**

**विनाशोऽतिशयः कश्चिद्यदि पिण्डादिवन्मतः । प्रत्यक्षात्तद्द्वयं सत्स्यान्नो चेदस्तु ध्रुवो घटः ॥४६॥**

नाशस्वरूपस्य विकल्प्य खण्डनम्

**क्रिया वा तत्फलं वा स्याद्वस्त्वन्तरमथापि वा । नाशोऽथ वा न किंचित्स्यात्सत्त्वं नैवमपोह्यते ॥४७॥**

**क्रियाऽप्यस्ति फलं चास्ति तद्वद्वस्त्वन्तरं च सत् । अथ नाशोऽपि नैवास्ति तं विना सदिदं जगत् ॥४८॥**

**सन्नेव नाशोऽपीष्टश्चेत्सत्सता न विरुध्यते । ऐकात्म्येऽपि विरोधश्चेन्नाशो नाशेऽपि शङ्क्यते ॥४९॥**

कार्यस्योपमर्दस्य वा न स्वहेतुनाशकतेत्युक्तम् । किंच मृदादिहेतुः स्थायी क्षणिको वा?आद्ये सिद्धान्तहानिं मत्वा द्वितीयं प्रत्याह—निर्हेत्विति । क्षणिकत्वे मृदादेः स्वारसिकनाशव्याप्तत्वान्न ततो घटादिजन्म युज्यते। नाशोपक्षीणस्य जननव्यापारायोगादित्यर्थः । नाशव्याप्तात्कारणात्कार्यानुत्पत्तौ दृष्टान्तमाह—न बीजादिति ॥४३॥

स्वकारणं चेदित्यादिना न[1] मृदादेरित्यादिभाष्यस्थनञर्थ उक्तः । इदानीं मृदो न कुम्भादिहेतुत्वं किंतु पिण्डस्येत्याशङ्क्य मृदादेरित्यादिभाष्यं व्याचष्टे—घटादेरिति । तत्र हेतुमाह—मृदेवेति ॥४४॥

मृदादेरेव हेतुत्वं न पिण्डादेरित्येतदुपपादयति—यदेवेति । मानैरन्वयव्यतिरेकानुसंधानप्रत्ययैरित्यर्थः । इहेति पिण्डादेराद्यकार्यस्योक्तिः । तत्र मृदादेर्हेतुत्वे प्रत्यक्षं प्रमाणयति—साक्षादिति । उत्तरकार्याणि घटादीनि । पिण्डादौ मृदादि कारणं घटादौ पिण्डादीति व्यवस्थामाशङ्क्याऽऽह—नेति । न हि पिण्डादि घटादिकारणं मानतः सिध्यत्यनन्वयादनवस्थानाच्चेत्यर्थः[2] ॥४५॥

कार्यस्याकारणत्वे मृदादेरप्यकारणत्वं तस्य नाशित्वेन कार्यत्वादिति चेत्तत्र नाशो मृदादेरतिशयोऽन्यो वेति विकल्प्याऽऽद्यमादत्ते—विनाश इति । तदा नाशो नाशीति द्वयमपि सदेव स्यात्प्रत्यक्षस्य तस्यासत्त्वायोगादित्याह—प्रत्यक्षादिति । अतिशयो हि नाऽऽश्रयं विना युक्तस्तस्य च नाशनाम्नो नाशाभावात्तदाश्रयस्य नाशिनो मृदादेस्तस्मिन्सत्यपि सत्त्वं प्रत्यक्षं च मृदादि नासद्भवतीत्यर्थः। न मृदादेरतिशयो नाशः किं त्वन्यस्तस्मादिति कल्पान्तरमाह—नो चेदिति । तर्हि नाशास्पृष्टत्वात्कूटस्थो मृदादिरित्याह—अस्त्विति । नहि तस्य मृदादिना संबन्धः सिध्यति भावाभावयोः संबन्धस्य निरस्तत्वाद्घटादेरपि कार्यस्यातिशयत्वेनार्थान्तरत्वेन वा नाशस्य दुर्निरूपत्वं मत्वा घटग्रहणम् ॥४६॥

किंच नाशो वस्तुनः क्रिया वा फलं वा वस्त्वन्तरं वा न वा किंचिच्चतुर्धाऽपि तत्सत्त्वं दुर्वारमित्याह—क्रियेति ॥४७॥

कथं पक्षचतुष्टयेऽपि तत्सत्त्वं तदाह—क्रियाऽपीति । क्रिया चेन्नाशस्तस्यास्तदाश्रयस्य च सत्त्वान्न वस्त्वसत्त्वं फलत्वेन तस्य फलिनश्च सत्त्वाद्वस्त्वन्तरत्वे मृदादेस्तदस्पृष्टत्वान्नाशस्य तुच्छत्वे तत्सत्त्वं सुप्रसिद्धमित्यर्थः ॥४८॥

न नाशस्य तुच्छत्वं नास्तिव्यवहारविषयत्वान्नापि क्रियादिरूपतोक्तदोषादिति शङ्कते—सन्निति । तर्हि तस्य वस्तुमात्रत्वाद्वस्तुनि च भेदकाभावेन भेदाभावस्योक्तत्वादेकत्वविरोधासिद्धेर्न तेन निरस्यते वस्तुसत्तेत्याह—सदिति । नाशस्य वस्त्वैक्येऽपि स्वभावविरोधस्ते नास्तीति शङ्कते—ऐकात्म्येऽपीति । तर्हि नाशेऽपि नाशः शङ्कितुं शक्यते स्वेनैव स्वस्य नाश्यमानत्वादतो नाशासिद्धेर्वस्तु कूटस्थं स्यादित्याह—नाश इति ॥४९॥

१. २२-२ ।

२. **अनन्वयात्**—पिण्डादेः घटाद्यननुगतत्वात् । **अनवस्थानात्** अननुगतस्य कारणत्वे पिण्डस्याप्यन्यत् तस्याप्यन्यत् कारणं स्यादित्यनवस्था ।

पिण्डादेः न घटकारणता । मृदेव तु कारणम्

पिण्डादिना विनाऽपीदं मृदादेः केवलादपि । घटाद्युत्पद्यमानं तु कार्यं दृष्टमतो ध्रुवम् ॥५०॥
मृदाद्येव ततो ग्राह्यं कारणं ह्यन्वयान्मृदः । कार्यमेव तु पिण्डादि तस्य कार्येष्वनन्वयात् ॥५१॥
[1]विरुद्धानेककार्याणां युगपज्जन्म नेष्यते । एकस्मात्कारणात्तस्मात्पिण्डाभावे घटोद्भवः ॥५२॥
पिण्डादिव्यतिरेकेण कारणानुपलब्धितः । असत्त्वं चेन्मृदादेः स्यान्न मानानुपपत्तितः ॥५३॥
पिण्डादिव्यतिरेकेण यदि मानं भवेत्ततः । मृदादि कारणं लब्धं न मानं स्यान्मृदा विना ॥५४॥
पिण्डादिव्यतिरेकेण पिण्डादाविव चेत्प्रमा । सिद्धं कारणमेवं स्यान्न मा मेयं विना यतः ॥५५॥
असाधारणरूपेषु व्यावृत्तेष्वितरेतरम् । बहुष्वेकं यदाभाति प्रत्यक्षं कारणं तु तत् ॥५६॥

अनुवृत्तस्य न कारणता अनुवृत्तिज्ञानं भ्रान्तिः तेन तदसिद्धेः

सादृश्यादन्वयभ्रान्तिस्तन्निवृत्तावपीति चेत् । नैवं पिण्डस्थदृष्टानां घटादावपि दर्शनात् ॥५७॥

भ्रान्तिरसिद्धा प्रत्यभिज्ञानात्

प्रत्यभिज्ञायमानेऽर्थे तदेवेदमिति ध्रुवे । लिङ्गमाभासतामेति प्रत्यक्षार्थविरुद्धमित् ॥५८॥

मृदादेर्नाशस्य दुर्निरूपत्वान्न तस्य कार्यत्वेनाकारणतेत्युक्तं तर्हि पिण्डादेरपि नाशस्य दुर्निरूपत्वात्कार्यत्वासिद्धौ करणत्वसिद्धिरित्याशङ्क्य पिण्डादौ नाशदृष्टिवन्मृदादौ तदभावान्नैवमिति मत्वाऽसत्यपीत्यादि[2]भाष्यं व्याचष्टे—पिण्डादिनेति । अतो मृदादेरिति संबन्धः । द्वितीयोऽपिरवधारणार्थः । पिण्डाद्यवस्थाविशेषेण विनाऽपि केवलादेवानुयायिनो मृदादेः सकाशाद्धटादिकार्यमुत्पद्यमानं दृष्टमिति योजना । तस्मान्नेत्यादिभाष्यार्थमाह—ध्रुवमित्यादिना । पूर्वोक्ता दृष्टिस्ततःशब्देन परामृश्यते । हिशब्दसूचितं हेतुमभिनयति—अन्वयादिति ॥५०॥५१॥

मृदाद्येव घटादिकारणं चेत्किमिति पिण्डादौ सत्येव ततो घटानुत्पत्तिरित्याशङ्क्य सर्वं हि कारणमित्यादि[3]भाष्यं योजयति—विरुद्धेति ॥५२॥

अनुयायिमृदादेर्मानाभावेनाभावान्न कारणतेति शङ्कते—पिण्डादीति । मृद्धटः सुवर्णं कुण्डलमित्यादितादात्म्यप्रत्ययस्य पिण्डादतिरिक्तमृदाद्यभावेऽनुपपत्तेरनुगतं मृदाद्युपेयमिति परिहरति—न मानेति ॥५३॥

सामानाधिकरण्यादेकत्वप्रत्यये सत्यपि कथमनुगतमृदादिसिद्धिरित्याशङ्क्याऽऽह—पिण्डेति । व्यावृत्तं पिण्डादि हित्वा यद्यनुवृत्तमृदादिविषयं मानं स्यात्ततो व्यावृत्तादन्यन्मृदाद्यनुवृत्तं कारणं लब्धं मानस्य मेयं विनाऽयोगादिति योजना ॥५४॥

अनुवृत्तमृदादेर्व्यावृत्तपिण्डादितो भेदाभेदाभ्यां दुर्भणत्वान्मानस्य व्यावृत्तविषयत्वोपपत्तेर्नेष्टकारणसिद्धिरित्याशङ्क्याऽऽह—पिण्डादीति । पिण्डादाविव मृदादावपि प्रमा चेदेवं सति पिण्डादिवत्तदतिरेकेण मृदादिकमनुवृत्तं सिद्धं स्यान्न हि मानं मेयं विना युक्तमन्यथा पिण्डादेरप्यपलापापाताद्युक्तं चैतद्व्यावृत्तस्यानुवृत्तेऽन्तर्भावादित्यर्थः ॥५५॥

[4]भाष्यस्थं दर्शनं मृदादिप्रमाणं वार्तिकाभ्यामुक्तं प्रत्यक्षत्वेन व्याकरोति—असाधारणेति । यद्वा किं तदनुवृत्तं कारणमित्याशङ्क्य प्रत्यभिज्ञया तत्स्वरूपमाह—असाधारणेति ॥५६॥

एकस्यानेकेष्वन्वयदृष्टिर्भ्रान्तिरन्वयाभावेऽपि सादृश्यात्तद्दृष्टिरिति शङ्कते—सादृश्यादिति । अन्वयदृष्टेर्न भ्रान्तितेत्याह—नैवमिति । तत्र हेतुमाह—पिण्डस्थेति । मृदाद्यवयवानामिति शेषः ॥५७॥

यत्सत्तत्क्षणिकं यथा दीपः सन्तश्चेमे [5]भावा इत्यनुमानात्सर्वार्थानां क्षणिकत्वसिद्धेरन्वयदृष्टिः सादृश्याद्भ्रा-

१. विरुद्धेति—तादात्म्येन घटोत्पत्तौ तादात्म्येन पिण्डस्य प्रतिबन्धकत्वमित्यर्थः ।
२. २-३ । ३. २२-६ । ४. २३-४ ।
५. विमता भावाः क्षणिकाः अर्थक्रियाकारित्वात् इत्यनुमाने तात्पर्यम् सदित्यस्यार्थक्रियाकारि इत्यर्थात् । अर्थक्रियाकारित्वमस्तु क्षणिकत्वं मास्तु इति चेन्न स्थिरस्य कार्यजनकत्वे सर्वं कार्यमेकक्षणे कुर्यात् समर्थस्य विलम्बायोगात् । तथा न दृश्यते । अतो भिन्नत्वान्न पूर्वोक्तापादनसंभव इत्यर्थः ।

विरुद्धाव्यभिचारित्वं[1] न च प्रत्यक्षलिङ्गयोः । प्रत्यक्षापाश्रयान्नित्यं नानपेक्षं तदक्षवत् ॥५९॥
विरुद्धाव्यभिचारित्वं समानबलयोर्यतः । दृष्टं सर्वत्र लोकेऽस्मिन्न तु सिंहशृगालयोः ॥६०॥
क्षणिकत्वे च भावानां प्रत्यभिज्ञाद्यसंभवः । न ह्यन्यदृष्टं वस्त्वन्यैः प्रत्यभिज्ञायते क्वचित् ॥६१॥

प्रत्यभिज्ञायाः अप्रमाणत्वशंकानिरासौ

क्षणिकं चेदिदं सर्वं प्रत्यभिज्ञाप्रमाणकम् । अन्यतद्बुद्धयपेक्षत्वं तद्बुद्धेर्वः प्रसज्यते ॥६२॥
इदं क्षणिकमित्येतत्क्षणिकत्वे न सिध्यति । इदंक्षणिकताबुद्धयोर्भिन्नाधिकरणत्वतः ॥६३॥

न्तिरित्याशङ्क्याऽऽह—प्रत्यभिज्ञायमान इति । प्रत्यभिज्ञाविरोधिलिङ्गस्यागमकत्वे हेतुमाह—प्रत्यक्षेति । प्रत्यभिज्ञासिद्धस्थाय्यर्थविरुद्धक्षणिकार्थबोधि लिङ्गमनुष्णतानुमानवन्न मानमित्यर्थः ॥५८॥

प्रत्यक्षात्कारणैक्यं गम्यतेऽनुमानात्तद्भेदोऽतो द्वयोर्विरुद्धात्वस्याव्यभिचारित्वान्नाध्यक्षेणानुमानबाधो वैपरीत्यस्यापि संभवादित्याशङ्क्याऽऽह—विरुद्धेति । तत्र हेतुमाह—प्रत्यक्षेति । अनुमानस्य नियमेन प्रत्यक्षोपजीवित्वं व्यतिरेकद्वारा दर्शयति—नेति । प्रत्यक्षमनुमानानपेक्षं न तथाऽनुमानं तदनपेक्षं तत्सिद्धव्याप्त्युपजीवित्वादतः प्रत्यक्षस्योपजीव्यत्वाद्बलवत्त्वेत्यर्थः ॥५९॥

प्रत्यक्षस्य प्राबल्येऽपि प्रकृताध्यक्षानुमानयोस्तुल्यत्वादस्ति विरुद्धाव्यभिचारित्वं न हि प्रत्यभिज्ञोपजीविक्षणिकत्वानुमानमित्याशङ्क्याऽऽह—विरुद्धेति । लोके हि तुल्यबलयोरेव विरुद्धाव्यभिचारित्वं न तु सिंहशृगालवदतुल्यबलयोस्तदुपलब्धमतः प्रत्यभिज्ञानमुपजीव्यक्षणिकत्वानुमानाप्रवृत्तावप्युपजीव्यजातीयत्वात्तस्य प्राबल्यादुपजीवकजातीयमुक्तानुमानं दुर्बलं तद्बाध्यमिति भावः ॥६०॥

प्रत्यभिज्ञादिभिर्मृदादीनां स्थायित्वमुक्त्वा क्षणिकत्वे तेषामभिज्ञाप्रत्यभिज्ञान्वयव्यतिरेकाणामनुपपत्तिमाह—क्षणिकत्वे चेति । आदिशब्देन स एव तु कर्मानुस्मृतिशब्दविधिभ्यः[2] इत्यधिकरणोक्ताः शेषकर्मानुष्ठानादयो गृह्यन्ते । क्षणिकेष्वेव भावेषु संतानैक्यात्प्रत्यभिज्ञाद्युपपत्तिमाशङ्क्य तस्यावस्तुत्वान्नैवमिति मत्वाऽऽह—न हीति । क्वचिद्देशे काले वेति यावत् । तस्मादनन्यथासिद्धप्रत्यभिज्ञादिसिद्धं स्थायित्वं सर्वस्येति भावः ॥६१॥

प्रत्यभिज्ञा स्वार्थे स्वतो न मानं बुद्ध्यन्तरसंवादादेव बुद्धीनां मानत्वस्य बौद्धैरिष्टत्वान्न च बुद्ध्यन्तरं स्थायित्वसाधकमस्तीति प्रत्यभिज्ञायमानस्यापि क्षणिकतेति शङ्कते—क्षणिकमिति । उत्तरमाह—अन्येति । क्षणिकत्वबुद्धेरपि स्वार्थे स्वतोमानत्वाभावात्तादृग्बुद्ध्यन्तरापेक्षायां तस्यापि तथात्वेनानवस्थानाद्बुद्धेः स्वतःप्रामाण्यमुपेयम् । तथा च प्रत्यभिज्ञानं सर्वं तथैवाबाधात्तदिदंबुद्ध्योश्च बुद्ध्यन्तरापेक्षया प्रामाण्ये तस्यापि तदपेक्षत्वेनानवस्थायां तेनेदं सदृशमिति बुद्धेरप्रामाण्यादैक्यबुद्धेरवसानत्वमशक्यशङ्कमित्यर्थः ॥६२॥

किंचेदं क्षणिकमितिबुद्ध्योरेकाश्रयत्वं भिन्नाश्रयत्वं वा? आद्ये न क्षणिकता क्षणद्वयवर्तित्वं बुद्ध्योरेकाश्रयत्वात्तयोरयौगपद्यादाश्रयस्य क्षणद्वयस्थानप्रसङ्गादित्याह—इदमिति । एकाश्रयं बुद्धिद्वयमेतदित्युच्यते । द्वितीये क्षणिकत्वविशिष्टार्थज्ञानं नैकस्यापि स्यादित्याह—इदंक्षणिकतेति । ॥६३॥

१. विरुद्धाव्यभिचारित्वं—विरुद्धाव्यभिचारलक्षणमुक्तं न्यायभूषणे—एकत्र धर्मिणि तुल्यलक्षणयोः हेत्वोः सन्निपातः विरुद्धाव्यभिचारी—यथा शब्दोऽनित्यः सामान्यवत्त्वे सति बाह्येन्द्रियग्राह्यत्वात् । शब्दो नित्यः श्रावणत्वात् शब्दत्ववत् । विरुद्धसाध्यद्वयाव्यभिचारिहेतुद्वयं एकत्र विरुद्धाव्यभिचारी । यद्यपि उभयोर्हेत्वोः नाव्यभिचारित्वं तथापि प्रतिपत्त्रभिप्रायेणेदम्, इदं चानुमानद्वयप्रयोग एव भवेत् । तच्च तुल्यबलयोः न तु प्रबलदुर्बलयोः । प्रकृते च व्याप्तिपक्षधर्मताज्ञानविषये प्रत्यक्षापेक्षत्वात् अनुमानं दुर्बलं प्रत्यक्षं तु अनपेक्षं प्रबलमित्यर्थः ।

२. ब्र० सू० ३-२.९ ।

अज्ञातं[1] ज्ञायते यस्य तथाऽजातं च जायते । प्रत्यभिज्ञामृते तस्य प्रतिज्ञार्थो न सिध्यति ॥६४॥
अनवस्था[2] च दुर्वारा ह्यविश्वासश्च जायते । मृषात्वात्सर्वबुद्धीनां न क्वचिन्निश्चितिर्भवेत् ॥६५॥
संबन्धानुपपत्तिश्च तदिदंज्ञानयोर्ध्रुवम् । संबन्धकर्तर्यसति न च सादृश्यसंश्रयात् ॥६६॥
ध्वंसिनोरिव सादृश्यं स्थायिनोरपि नेष्यते । ग्राहकेऽसति तद्भिन्ने बुद्धीनां चैकरूपतः ॥६७॥
नाशभेदविरुद्धार्थप्रमेये च व्यवस्थिते । प्रत्यर्थिनि हि प्रत्यक्षे तद्विरुद्धः कुतोऽमितेः[3] ॥६८॥
अनुत्पन्नोत्पित्सूत्पन्नोऽनष्टो नाशादिकृत्तथा । एवमष्टक्षणावस्थो भावोऽवश्यं त्वयेष्यते ॥६९॥
अन्योन्याविषयत्वे तु कुतः सादृश्यधीरियम् । सदृशार्थं विनैवेयं क्लृप्ता सादृश्यधीर्यदि ॥७०॥

बुद्धीनामनाधारत्वादाधारविकल्पेन दोषोक्तिरयुक्तेति चेन्न प्रत्यभिज्ञया तदाधारस्यैकस्य सिद्धेरित्यभिप्रेत्य प्रत्यभिज्ञाप्रामाण्यं परमतेऽपि संमतमिति साधयति—अज्ञातमिति ॥६४॥

अज्ञातस्य ज्ञानमजातस्य जन्मेति नास्मत्प्रतिज्ञेति चेत्तत्राऽऽह—अनवस्था चेति । ज्ञातं ज्ञायते जातं च जायते चेदनवस्था स्यादेवेत्यर्थः । किंच प्रत्यभिज्ञानस्यामानत्वं स्वतः परतो वा? आद्ये क्षणिकत्वबुद्धयाऽपि न स्वार्थनिश्चयस्तत्रापि स्वारस्येनामानत्वात्परतोऽमानत्वे च तद्बुद्धेः सैवानवस्थेत्याह—अविश्वासश्चेति । कल्पान्तरं प्रत्याह—मृषात्वादिति । परतश्चेत्प्रत्यभिज्ञाप्रामाण्यं तदा स्वतस्तस्या मानतया स्थाय्यर्थसिद्धिः । स्वतश्चेत्सा नार्थं निश्चाययेत्तदा सर्वधियां स्वतोऽनिश्चायकत्वादनवस्थानान्न क्वचिदपि बुद्धेर्निश्चयोऽतः सर्वं क्षणिकमित्येतदपि न सेत्स्यतीत्यर्थः । मृषात्वं स्वतोऽनिश्चायकत्वम् ॥६५॥

किंच तदिदंबुद्धयोः संबन्धोऽस्ति न वा? नाऽऽद्यः स्थाय्यर्थातिरेकेण तदयोगात्तदुपगमापत्तेरित्याह—संबन्धेति । असति संबन्धे बुद्धयोः सादृश्यात्तद्धीरिति द्वितीयमाशङ्क्याऽऽह—न चेति ॥६६॥

कथं सादृश्यात्संबन्धासिद्धिरिति सादृश्यस्यापि स्थायिग्राहकाधीनत्वात्तं विनाऽसिद्धेरित्याह—ध्वंसिनोरिति । सदृशाभ्यां भिन्ने तयोस्तन्निष्ठसादृश्यस्य च ग्रहीतर्यसति क्षणिकयोः स्थायिनोर्वा न सादृश्यसिद्धिस्तद्दृग्ग्राहकोपगमे क्षणिकत्वक्षतिरित्यर्थः । तद्भित्तेरिति पाठे सत्यपि ग्राहके तस्य प्रतिक्षणं भिन्नत्वात्क्षणद्वयग्राहिणोऽभावान्न तत्सादृश्यधीरित्यर्थः । बुद्धीनां सादृश्यमाश्रित्योक्तं तदेव नास्तीत्याह—बुद्धीनां चेति । भेदे सत्यैक्यमात्रं सादृश्यगमकमिह प्रकाशैकरस्याद्भेदं विना तज्ज्ञानान्न सादृश्यं युक्तमित्यर्थः ॥६७॥

ऐक्यबुद्धेर्भ्रान्तित्वभङ्गेन भावेषु क्षणिकत्वमभाङ्क्षीत्तत्रैव हेत्वन्तरमाह—नाशेति । भावेष्वविकल्पकेऽध्यक्षे भेदादिविरुद्धसन्मात्रविषये क्षणिकत्वप्रत्यर्थिनि स्थिते सति तस्मात्प्रत्यक्षाद्विरुद्धस्वरसनाशादिर्न युक्तो मानाभावादित्यर्थः । अमितेरिति च्छेदः ॥६८॥

इतश्च भावानां न क्षणिकतेत्याह—अनुत्पन्नेति । स्वतोऽनुत्पन्नः सन्नुत्पित्सुरुत्पद्यमानः समुत्पन्नोऽनष्टो निनङ्क्षुर्नंष्टा नष्टो भवतीत्यष्टक्षणावस्थत्वात्तस्य न क्षणिकतेत्यर्थः ॥६९॥

न तदिदंबुद्धयोरित्यादिभाष्ये[4] नञर्थमुक्त्वेतरभागस्यार्थमाह—अन्योन्येति । न तावदनयोरन्यो ग्राहको यस्तयोः सादृश्यं पश्येदनभ्युपगमात् । अन्योन्यविषयत्वं तु स्वसंवेद्यत्वहतमतः सादृश्यधीरयुक्ता द्वयोस्तत्सादृश्यस्य च ग्राहकाभावादित्यर्थः । यत्र सत्येवार्थे धीस्तत्रैव ग्राहकापेक्षा नान्यत्रेति शङ्कते—सदृशेति ॥७०॥

---

१. पूर्वमज्ञातमिदानीं ज्ञायते—पूर्वमजातमिदानीं जायत इति बुद्धिद्वयं प्रत्यभिज्ञामपेक्षते पूर्वज्ञानस्य इदानीं ज्ञानस्य च ग्राहकापेक्षत्वात् ।

२. अनवस्थेति—ज्ञातं ज्ञायत इत्यादौ पूर्वज्ञानापेक्षा । पूर्वमपि ज्ञातमेवज्ञायत इति तत्पूर्वज्ञानापेक्षेत्येवमनवस्था । अविसंवादिज्ञानं प्रमा । अर्थक्रियास्थितिश्चाविसंवाद इत्युक्तत्वात् कथं तद्धीनप्रत्यभिज्ञाप्रामाण्यं तत्राह—अनवस्थेति । अर्थक्रियाज्ञानस्याप्यर्थक्रियाज्ञानान्तरापेक्षत्वादनवस्थेत्यर्थः ( न्या० ) ।

३. कुतोमितेः कस्मात् प्रमाणात्-पा० ( न्या० ) ।

४. २३-१० ।

साद‍ृश्यज्ञानस्य निरालंबनत्वे दोषः

मृगाम्बुधीवन्मिथ्यात्वं स्यादेवं तदिदंधियोः । असद्विषयतैवेह सर्वासामपि चेद्धियाम् ।।७१।।
नैवं बुद्धेरपि तथा ह्यसद्विषयता भवेत् । अस्त्वेवं सर्वबुद्धीनां मृषात्वमिति चेन्मतम् ।।७२।।

कारणस्य प्राक् सत्त्वनिर्णयः

नैवं स्यात्सर्वबुद्धीनां मृषात्वे मित्यसंभवात् । कारणस्यास्तिता तस्मात्सिद्धा कार्योद्भवात्पुरा ।।७३।।

अभिव्यज्यमानं कार्यं पूर्वमेव सत्

कार्यस्यापि यथाऽस्तित्वं तथेदानीं प्रपञ्च्यते । सत्त्वपूर्वमिदं कार्यं तमोन्तस्थघटादिवत् ।।
तस्याभिव्यक्तिधर्मत्वादन्यथा स्यान्नृशृङ्गवत् ।।७४।।
सत्यामपि च सामग्र्यां वन्ध्यापुत्राद्यसत्त्वतः । विज्ञानालम्बनत्वं नो न कदाचित्प्रपद्यते ।।७५।।

कार्यस्य सदासत्वे सदोपलंभप्रसङ्गः

सर्वं सदेव चेदिष्टमुपलभ्येत ते सदा । सामग्र्यां घटवत्सत्यां सर्वं सद्वादिनो ध्रुवम् ।।७६।।

समाधिः

न विद्यमानमात्रेण ह्यभिव्यक्तिरपीष्यते । सदेव वस्त्वभिव्यक्तं तथाऽव्यक्तं च लक्ष्यते ।।७७।।

बाह्यार्थवादिनं प्रत्याह—मृगेति । सादृश्यज्ञानस्य निरालम्बनत्वे मरुमरीचिकोदकज्ञानवत्तदिदंज्ञानयोरपि निरालम्बत्वेनामानत्वं स्यादित्यर्थः । विज्ञानवाद्याह—असदिति ।।७१।।

तथा सत्यनालम्बनं क्षणिकं विज्ञानमित्यस्यापि ज्ञानस्यासद्विषयतया विज्ञानवादासिद्धिरित्याह—नैवमिति । शून्यवादी शङ्कते—अस्त्विति ।।७२।।

सर्वा धीरसद्विषयेत्येषा धीरसद्विषया स्यात्ततश्च सर्वबुद्धेरसद्विषयत्वासिद्धिरित्याह—नैवं स्यादिति । यद्वा सर्वासां धियामसत्त्वे बोधकबुद्धेरपि तथात्वात्तदसत्त्वासिद्धेर्न शून्यवाद इत्याह—नैवमिति । परपक्षासंभवात्प्रत्यभिज्ञया स्थायिहेतुसिद्धिरिति स्थापयता प्रत्यनुमाने दृष्टान्तस्य साध्यविकलतोक्तेदानीं कारणसत्त्वानुमानमुपसंहरति—कारणस्येति ।।७३।।

कार्यकारणयोर्द्वयोरपि प्रागुत्पत्तेः सत्त्वमनुमेयमिति प्रतिज्ञाय कारणास्तित्वानुमानं प्रपञ्चितमथ कार्यास्तित्वमनुमातुं कार्यस्य चेत्यादिभाष्यतात्पर्यमाह—कार्यस्येति । कथं प्रागुत्पत्तेः कार्यस्य सत्त्वमित्याशङ्क्यानुमानं रचयति—सत्त्वेति । इदमित्यभिव्यज्यमानमुच्यते । अभिव्यक्तिधर्मत्वादभिव्यज्यमानत्वादिति यावत् अभिव्यक्तेर्वा सत्त्वपूर्वकत्वं संमताभिव्यक्तवदभिव्यक्तत्वादनुमेयम् सत्त्वं विनाऽपि व्यज्यमानत्वोपपत्तेरप्रयोजकत्वमाशङ्क्यापरोक्षव्यक्त्यनुपपत्तिरसत्त्वे बाधिकेत्याह—अन्यथेति । घटादेरसत्त्वे वैकल्पिकव्यक्तावपि नरविषाणवन्नापरोक्षव्यक्तिः स्यादस्ति च तस्य तादृशी व्यक्तिस्तेनासत्त्वमयुक्तमित्यर्थः ।।७४।।

नृशृङ्गस्य सामग्र्यभावादपरोक्षव्यक्त्यभावो नासत्त्वादित्याशङ्क्य कार्यस्यापि तुच्छत्वे सामग्र्यभावस्य तुल्यतेत्यभिप्रेत्याऽऽह—सत्यामिति । न हि वन्ध्यापुत्रादि आलोकादिज्ञापकसामग्रीसत्त्वेऽपि कदाचिदस्माकमपरोक्षी भवत्यत्यन्तासत्त्वात्कार्यस्य त्वपरोक्षज्ञानालम्बनत्वान्नासत्त्वमिति भावः ।।७५।।

प्रकृतेऽनुमाने कार्यस्य सदोपलब्धिप्रसङ्गं पक्षबाधकं शङ्कते—सर्वमिति । वर्तमानवदतीतमागामि च घटादि सदेव चेदुपलब्धिसामग्र्यां सत्यां वर्तमानवत्प्रागजनेर्नाशाच्चोर्ध्वमुपलभ्येत न चैवं; न च सर्वदा कार्योपलब्धिसामग्रीराहित्यं तत्कारणस्यैव तत्सामग्रीत्वात्कारणस्य च प्रागुत्पत्तेरपि सत्त्वस्य साधितत्वात्तस्मादयुक्तं कार्यस्य सदासत्त्वमित्यर्थः ।।७६।।

विद्यमानत्वमात्रं सामग्रीसत्त्वं वा कार्यस्य सदोपलब्धिप्रसञ्जकं ? नाऽऽद्य इत्याह—नेत्यादिना । अर्थक्रियावदित्यपेरर्थः । तत्र सर्वसंमतिद्योतनार्थो हिशब्दः । सत्तामात्रेण व्यक्त्यनुपगमे स्वानुभवं हेतुमाह—सदेवेति ।।७७।।

१. २४-५

अङ्गीकर्तव्यमेतच्च भवद्भिरविशङ्कितैः । न चेद्वः सर्वसिद्धान्तो नश्येत्सैकतकूपवत् ॥७८॥
प्रमाणव्यतिरेकेण प्रमेयोऽर्थो भवन्भवेत् । मानादव्यतिरेके हि मानमेयौ न सिध्यतः ॥७९॥
कारणस्यापि नास्तित्वं कार्यासत्त्वे प्रसज्यते । न हि कार्यमनाश्रित्य कारणं जगतीक्ष्यते ॥८०॥
सत्तामात्रेण किं कार्यं समवाय्यादिकारणम् । साधयेद्व्यापृतं वेदं तथाऽपीष्टं न सिध्यति ॥८१॥

सत्तामात्रेण कारणत्रयस्य कार्यकरत्वे दोषाः

सत्तामात्रेण चेत्कुर्यात्कारणत्रितयं तदा । कार्योत्पत्तिस्थितिलयाः प्राप्नुयुर्युगपत्सदा ॥८२॥
अविशेषाच्च सत्तायाः सर्वतः सर्वसंभवः । सर्व एव न संसिध्येद्व्यवहारश्च लौकिकः ॥८३॥
त्रीण्येव कारणानीति निष्फलाऽवधृतिर्भवेत् । यथा त्रयं तथा सर्वं सत्तया किं न कारणम् ॥८४॥

व्यापारविशिष्टत्वेन तेषां कारणत्वे दोषाः

संभूय कार्यं कुर्याच्चेत्कारणत्रितयं तदा । मेलनस्यापि कार्यत्वात्कथं तत्स्यात्त्रयं विना ॥८५॥

अभिव्यक्तिसामग्रीसत्त्वमभिव्यक्तिसाधकं न तु सतस्तत्सामग्रीनियमो वर्तमानघटादावदृष्टेरनेन कारणसत्त्वमेव तत्सत्त्वमिति प्रत्युक्तं वर्तमानघटे तत्सत्त्वेऽपि व्यञ्जकसत्त्वानियमादतः सतोऽप्यव्यज्यमानत्वं स्थायिवादिभिरेष्टव्यमित्याह—अङ्गीकर्तव्यमिति । सच्चेद्व्यज्यमानमेवेति नियमे क्षणमात्रवृत्तित्वाद्व्यक्तेर्ज्ञप्तिरूपायास्तत्समकालस्य वस्तुनोऽपि क्षणिकत्वापातात् क्षणिकवादिनां सर्वं स्थायीति सिद्धान्तस्य हानिरित्याह—न चेदिति ॥७८॥

क्षणिकं ज्ञानमात्रं सत्त्वमित्युपगमाद्योगाचारमते क्षणिकत्वं वस्तुनो नानिष्टमित्याशङ्क्य ज्ञानस्य ज्ञेयेऽन्तर्भावस्तस्य ज्ञाने वेति विकल्प्याऽऽद्ये दोषमाह—प्रमाणेति । मानस्य मेयाद्भेदेनावस्थाने मेयसिद्धिः, अन्यथा विषय्यभावात्तदपेक्षविषयस्याप्यभावः स्यादित्यर्थः । भवन्निति व्यवहारयोग्यतामापद्यमानत्वमुच्यते । द्वितीयं दूषयति—मानादिति । मेयोऽर्थो मानाभिन्नश्चेन्मानमेयभेदासिद्धिर्मेयस्य मानात्मना समाप्तत्वान्मेयासिद्धौ च तदपेक्षमानासिद्धेः शून्यतेत्यर्थः ॥७९॥

विज्ञानवादासंभवेऽपि स्थायिवादे कार्यस्य प्रागुत्पत्तेरनुपलम्भोऽसत्त्वाद्वा सामग्र्यभावाद्वेति संशयान्न सोऽपि सिध्येदित्याशङ्क्य सामग्र्यभावादेव कार्यस्य प्रागनुपलब्धिरन्यथा कारणस्यापि प्रागसत्त्वापत्तेस्तत्सत्त्वस्य च साधितत्वादित्याह—कारणस्येति । कार्यस्यासत्त्वे किमिति कारणस्यासत्त्वं तत्राऽऽह—न हीति । कार्यकारणयोरन्योन्यसंबन्धत्वस्य लोकसिद्धत्वादेकाभावेऽन्याभावः स्यादित्यर्थः ॥८०॥

कार्याभावेऽपि समवाय्यसमवायिनिमित्तकारणत्रितयं तिष्ठति न हि घटो नास्तीति मृदवयवानां तेषां मिथः संयोगो वा कुलालादिर्वा नास्तीत्यारम्भवादमाशङ्क्याऽऽह—सत्तेति । कारणत्रितयमव्यापृतं व्यापृतं वा कार्यं कुर्यान्नोभयथाऽपि कार्यकारणत्वसिद्धिरित्यर्थः ॥८१॥

तदेव साधयितुमाद्यमनुवदति—सत्तामात्रेणेति । तत्र कार्योत्पत्तिकाले तस्य स्थितिलयौ स्यातां त्रितयस्य तदा सत्त्वात्तन्मात्रेण च कार्यकरत्वादेवं स्थितिकाले जनिलयौ लयकाले च स्थितिजनी प्रसज्येयातामित्यव्यवस्थामाह—तदेति । यदा त्रितयं तदा सदैव जन्मादीनां प्रसक्तिरित्यव्यवस्थान्तरमाह—सदेति ॥८२॥

सत्तामात्रेण त्रितयस्य कार्यकरत्वे सर्वत्र सत्त्वस्य विशेषाभावात्कार्यकारणनियमासिद्धिरिति दोषान्तरमाह—अविशेषादिति । भवतु सर्वं सर्वस्य कारणं तथाऽपि कार्यकारणत्वं सिध्यत्येव नेत्याह—सर्व इति । घटार्थिनो मृदाद्यादाननियमायोगो वैदिकश्च व्यवहारो व्यवस्थामनास्थातुर्न स्यादित्यर्थः ॥८३॥

त्रितयस्य सत्तामात्रेण कार्यकरत्वे दोषान्तरमाह—त्रीणीति । अवधारणवैफल्यमुपपादयति—यथेति ॥८४॥

कल्पान्तरमनुवदति—संभूयेति । व्यापाराविष्टं भूत्वेत्यर्थः । तस्य तदाविष्टत्वमकार्यं कार्यं वा?आद्ये तस्य सदा भावात्कार्यमपि सदा स्याद्द्वितीये तस्यापि कार्यत्वात् त्रितयमस्ति न वा?न चेत्कार्यस्यैव तदभावेऽपि जन्म स्यादिति मत्वाऽऽह—तदेति ॥८५॥

कारणत्रितयेनाथ एकैकस्य प्रसिध्यति । तस्य तस्य तथैवेति साऽनवस्था प्रसज्यते ॥८६॥
वस्तुनः सदसत्त्वाय ह्यभिव्यक्त्येकहेतुतः । ऐश्वर्यं न प्रमाणस्य[1] सत्त्वं वस्तुबलाद्यतः ॥८७॥

प्रागभिव्यक्तेः कारणस्यैव कार्यावरकत्वम्

द्वैविध्यादावृतेः कार्यं नेष्यते तेन संवृतम् । लब्धात्मकस्य कुड्यादि प्राक्सूतेः कारणावृतिः ॥८८॥
मृदात्मनोपसंश्लिष्टं कार्यं कारणतामितम् । कारणत्वाद्धि तत्स्थं तत्तद्वते कारणं कथम् ॥८९॥
यदि कारणसंस्थं सत्तन्निमित्तं च कारणम् । व्यवधानान्तराभावात्किमर्थं नोपलभ्यते ॥९०॥
कार्यान्तरेण संस्थानान्मृदादेर्नोपलभ्यते । सदात्मनोपलब्धिस्तु न कदाचन हीयते ॥९१॥
नष्टोत्पन्नसदभावशब्दप्रत्ययभेदधीः । अभिव्यक्तितिरोभूतिद्वैविध्यापेक्षयैव तु ॥९२॥

एकैकस्य हेतोर्व्यापाराविष्टत्वं त्रितयेन सिध्यतीति कल्पान्तरमाह—कारणेति । विवक्षितो हि संधिर्भवतीति मन्यते । अथो इति पाठश्चेदप्यर्थलाभान्न वक्तव्यमस्ति । तस्य तस्य त्रितयस्य व्यापाराविष्टत्वं परेण सव्यापारेण त्रितयेनेत्यनवस्थानादारम्भवादासंभवात्प्रागुत्पत्तेः सदेव कार्यमिति मत्वाऽऽह—तस्येति । क्षणिकत्ववादिनि प्रस्तुतामनवस्थां सेति परामृशति ॥८६॥

यदुपलभ्यते तदेव सदिति नियमात्प्रागुत्पत्तेरनुपलब्धं न सदित्याशङ्क्यानुपलब्धेरन्यथासिद्धेरुक्तत्वान्नैवमित्याह—वस्तुन इति । यस्य सत्त्वायासत्त्वाय वा मानस्य न सामर्थ्यं तस्य तद्व्यक्तिमात्रहेतुत्वात्सत्त्वादि वस्तुनः स्वरूपवशान्निजसिद्धं सत्त्वं न हि यदुपलभ्यते तदेव सदिति शक्यं नियन्तुमनुपलब्धस्यापि निध्यादेः सत्त्वस्वीकारादतो नाव्यक्त्या कार्यस्य प्रागुत्पत्तेरसत्त्वशङ्केत्यर्थः ॥८७॥

न[2] द्विविधत्वादित्यादिभाष्ये नञर्थमुक्त्वा विद्यमानस्य प्रागनुपलब्धिनिमित्तं द्विविधत्वादित्यादिभाष्योक्तं दर्शयति—द्वैविध्यादिति । तेन द्विविधेनाऽऽवरणेनेति यावत् । उत्पन्नस्य कुड्याद्यावरणमनुत्पन्नस्य कारणमित्यावरणद्वैविध्यमाह—लब्धेति ॥८८॥

प्रागुत्पत्तेर्यदि कारणं कार्यमावृणोति तर्हि तयोर्भेदो घटकुड्यवदित्याशङ्क्याऽऽह—मृदात्मनेति । मृदादिकारणरूपेण व्याप्तं घटादिकार्यं स्वनामरूपतिरोधानेन प्राक्कारणतां गतमिति कार्यस्य कारणमावरणं न कुड्यादिवदिति नास्ति भेदस्तयोरित्यर्थः । कार्यस्य स्वकारणस्थत्वे तेन व्याप्तिर्न च कार्यं कारणस्थं पूर्वोत्तरक्षणवर्तिनोस्तयोराधाराधेयत्वायोगादिति चेन्नेत्याह—कारणत्वादिति । कारणत्वादेव मृदादेर्घटादिकार्यं तन्निष्ठमित्यत्र हिशब्दसूचितं हेतुमाह—तद्वत इति । कार्यं विना कारणत्वायोगात्तस्य तदपेक्षत्वादित्यर्थः । पूर्वक्षणवर्तित्वेऽपि कारणस्यानन्तरक्षणवर्ति कार्यं तत्स्थमेव कार्यकारणयोरुभयोरपि स्थायित्वाभ्युपगमादन्यथा मिथोऽसंबन्धयोस्तद्भावस्यैवासंभवादिति भावः ॥८९॥

यदि कार्यं कारणस्थं तच्च द्वयं सदेव, कार्यव्यक्तिनिमित्तं च कारणं तदा कारणेतराव्यवधानात्तस्य च व्यञ्जकत्वात्प्रागपि कार्यं दृश्येतान्यथा तदसत्तेति प्रागुक्तबाधकतादवस्थ्यमिति शङ्कते—यदीति ॥९०॥

किं घटादेः स्वाकारविशेषेणोपलम्भः साध्यते किंवा सदात्मनेति विकल्प्याऽऽद्यं दूषयति—कार्यान्तरेणेति । मृदादिकारणस्य पिण्डादिरूपेण प्रागवस्थायामवस्थानात्तेन संवृतत्वाद्घटादिकार्यमाकारविशेषेण नोपलभ्यते विरुद्धानेककार्याणामपर्यायमेकस्मादुत्पत्तेरपास्तत्वादित्यर्थः । द्वितीये त्विष्टापत्तिरित्याह—सदात्मनेति ॥९१॥

प्राक्कार्यास्तित्वे सदा तदुपलब्धिप्रसङ्गं पक्षबाधकं निराकृत्य घटो नष्टो घटो नास्तीत्यादिप्रयोगप्रत्ययभेदानुपपत्तिं बाधकान्तरमाशङ्क्याऽऽह—नष्टेति । पिण्डाद्यावरणभङ्गेनाभिव्यक्तावुत्पत्तिव्यवहारो दीपादिना तमोनिरासेन व्यक्तावस्तिव्यवहारः कपालादिना तिरोभावे नष्टव्यवहारः पिण्डादिना तिरोभावे नास्तिव्यवहार इति भेदः ॥९२॥

---

१. प्रमाणस्य ऐश्वर्यं =सामर्थ्यं सदसत्त्वाय न भवति तस्य तत्प्रकाशमात्रहेतुत्वात् ।

२. २५-८ ।

**कुड्याद्यावरणं दृष्टं भिन्नदेशं सदाऽऽवृतात् । कुम्भाद्यभिन्नदेशस्थं पिण्डाद्यावरणं कथम् ॥९३॥**
**नैवं पयोघृतादीनामेकदेशत्वदर्शनात् ॥९४॥**
**अनावरणता चेत्स्यात्कपालादेर्घटात्मनि । अन्तर्भावान्न साध्वेतद्विभक्तानां भवेद्यतः ॥९५॥**

यदि पूर्वं आवरणं घटादेरस्ति तदा तद्भङ्गे यत्नः कार्यः न घटोत्पत्तौ इति शंकासमाधाने

**आवृतत्वमथ मतं भङ्ग एव प्रसज्यते । यत्नो न तु घटोत्पत्तौ नैवमप्युपपद्यते ॥९६॥**
**न हि लोकेऽस्ति नियमो घटाभिव्यक्तिहेतुकः । अनेकसाधना यस्मादभिव्यक्तिरिहेक्ष्यते ॥९७॥**
**दीपेनान्यो मथा चान्यस्तथा चक्रादिना परः । अभिव्यक्तिं प्रयात्यर्थः पुरा सन्नेव सर्वदा ॥९८॥**
**तमोविनाशनायैव प्रदीपोऽपीति चेन्मतम् । नष्टे तमसि कुम्भोऽपि स्वयमेवोपलभ्यते ॥९९॥**
**किमेवं भवतः सिद्धं यदि नाम तमोहृतिः । सदेव व्यज्यते सर्वमिति नैवापनुद्यते ॥१००॥**

अभिव्यक्तिरेव मानफलं अज्ञाननिवृत्तिः पश्चादिति साधनम्

**अज्ञातत्वापमार्ष्ट्यर्थमुपादित्सन्ति मानिनः । मानानि मानसंबन्धादज्ञातत्वं च नश्यति ॥ १ ॥**
**यतः सति क्रियाभेदे किं पूर्वमिति चोदना । क्रियाभेदे न च न्याय्यं ध्वान्तनाशः क्रियाफलम् ॥ २ ॥**

पिण्डादि न घटाद्यावरणं तेन समानदेशत्वाद्यद्यस्याऽऽवरणं न तत्तेन समानदेशं यथा कुड्यादि घटाद्यावरणं न तेन तुल्यदेशमिति शङ्कते—कुड्यादीति ॥९३॥

किमिदं समानदेशत्वं किमेकाश्रयत्वं किं वैककारणकत्वमाद्यं विरुद्धत्वेन दूषयति—नैवमिति । क्षीरनीरयोर्घृततैलयोश्च तुल्याश्रयप्रविष्टयोरेव परस्परमावृतत्वदर्शनाद्धेतोर्विरुद्धतया नानुमानोत्थानमित्यर्थः । द्वितीयमुत्थापयति—अनावरणतेति । घटस्याऽऽत्मा तत्कारणं मृदुच्यते तत्रान्तर्भावस्तस्यां कपालादेः स्थितिरस्मात्तुल्यदेशत्वाद्घटवत्तस्य कपालादि नाऽऽवरणमित्यर्थः । घटावस्थमृन्मात्रवृत्तिकपालादेर्घटानावरणत्वमिष्टमेवेति सिद्धसाध्यताऽव्यक्तघटावस्थमृद्वृत्तिकपालादेरनावरणत्वसाधने हेत्वसिद्धिर्घटस्य कपालादेश्च स्वाश्रयमृदवयवभेदादिति समाधत्ते—न साध्विति । विद्यमानस्यैवाऽऽवृतत्वादनुपलब्धिश्चेदावरणतिरस्कारे यत्नः स्यान्न घटादेरुत्पत्तौ तदुत्पत्तौ च घटाद्यर्थी यतते ऽतोऽनुभवविरोधः सत्कार्यवादिन इति शङ्कते—अथेति । घटव्यक्तिमुद्देश्यां हेतूकृत्याऽऽवरणभङ्गादेव सेति न नियमो लोकेऽस्तीत्युत्तरमाह—नैवमिति । घटाभिव्यक्तिहेतुत इति पाठे घटाभिव्यक्तिहेतोरावरणभङ्गत्वेन नियमो नास्तीत्यर्थः । अनियमे हेतुमाह—अनेकेति । इहेति लोकोक्तिः ॥९४–९५–९६–९७॥

व्यक्तेरनेकसाधनत्वमुदाहरति—दीपेनेति । घटादिस्तमसाऽऽवृतो दीपेन व्यज्यते दध्याद्यावृतो नवनीतादिर्मथा, पिण्डाद्यावृतस्तु शरावादिश्चक्रादिनेति भेदः । व्यक्तिभेदवत्सत्त्वेऽपि भेदमाशङ्क्याऽऽह—पुरेति । साधनभेदाद्व्यक्तिभेदेऽपि व्यक्त्यपेक्षया पूर्वं सन्नेवार्थो व्यज्यते न तत्सत्त्वे भेदोऽस्तीत्यर्थः ॥९८॥

दीपेनान्यो व्यक्तिं यातीत्यत्र चोदयति—तम इति । मथ्यादेरपि दध्यादिप्रतिबन्धनिवर्तकत्वमेवेत्यपेरर्थः । दीपस्तमस्तिरयति चेत्कथं कुम्भोपलब्धिरत आह—नष्ट इति । नवनीतादेरपि दध्यादिनाशे स्वयमेवोपलब्धिरिति वक्तुमपिशब्दः ॥९९॥

दीपोत्पत्तियत्नेन तमो नाश्यते चेदेवमस्तु नाम नैतावता त्वदिष्टं प्रागभिव्यक्तेरसत्त्वं सिध्यतीत्याह—किमेवमिति । भवतोऽपि सिद्धान्तासिद्धिरिति नेत्याह—सदेवेति ॥१००॥

किंचाऽऽवरणभङ्गार्थं नाभिव्यञ्जकव्यापारः किं त्वर्थप्रकाशनार्थं तद्भङ्गस्त्वर्थादिति वक्तुमादौ सामान्यन्यायमाह—अज्ञातत्वेति । मानिनः प्रामाणिका इति यावत् । अज्ञाननिवृत्तिद्वारेति दर्शयितुं चकारः ॥१०१॥

नन्वज्ञाने सति मानप्रवृत्तिस्तन्निवृत्तौ वा? आद्ये विरोधाभावान्न तेनाज्ञानहानिर्द्वितीये मानवैयर्थ्यमतो मानं पूर्वं पश्चादज्ञाननाशो विपरीतं वेति निश्चयासिद्धिरित्याशङ्क्य साधारणमर्थमाह—यत इति । क्रिययोर्भेदे पौर्वापर्यविचार एककर्तृकयोस्तयोः यौगपद्यायोगात्क्रियैक्ये नासौ सावकाशः क्रियातत्फलयोः पौर्वापर्यस्य व्यवस्थित-

ज्ञातुर्ज्ञानाभिनिष्पत्तिर्निष्पन्नं मेयमेति सत् । मेयाभिसंगतं तच्च मेयाभत्वं प्रपद्यते ॥ ३ ॥
व्यवधानं तमो यस्माद्घटोऽयमिति संविदः । प्रकाशवद्घटं चर्ते कुतस्तत्तमसो ह्रुतिः ॥ ४ ॥
प्रमाणव्यापृतेर्ज्ञातोऽज्ञातोऽज्ञातत्वहानिकृत् । घटोऽवगत इत्येतत्ततः संपद्यते फलम् ॥ ५ ॥
यद्यावरणभङ्गाय यत्नः स्याद्घटवित्तये । कार्यान्तरं भवेद्भङ्गात्तेनाप्यावृतता घटे ॥ ६ ॥
व्यवधानान्तरं तस्मादन्यदप्यापतेत्तदा । अतो नियत एवात्र व्यापारः फलवान्भवेत् ॥ ७ ॥

कार्यस्य प्राक्सत्त्वे अनुमानान्तरम्

अतीतैष्यद्घटज्ञानं सद्घटालम्बनं भवेत् । घटज्ञानत्वतः साक्षादिहत्यघटबोधवत् ॥ ८ ॥
अतीतोऽनागतोऽर्थोऽसन्यदि वाऽभ्युपगम्यते । अतीतानागतज्ञानं मिथ्येशस्य प्रसज्यते ॥ ९ ॥
प्रत्यक्षं नापि चेशस्य केनचित्प्रतिहन्यते । [1]अपविद्धातिशीत्येव तज्ज्ञानं केन हन्यते ॥१०॥

त्वादतो मानाज्ञाननाशयोर्न पौर्वापर्यं चोदनीयमित्यर्थः । तत्र दृष्टान्तमाह—ध्वान्तेति । तमोनाशो दीपादिप्रकाशफलं तत्र पौर्वापर्यं सर्वैरिष्टं तथा प्रकृतेऽपि सिद्धमित्यर्थः ॥१०२॥

दार्ष्टान्तिके पौर्वापर्यं साधयति—ज्ञातुरिति । साभासबुद्ध्याश्रयं ज्ञानमादावुत्पद्यते तच्च विषयं स्पृष्ट्वा तदाकारं भजते तदाकारधीरेव तदावरणं नाशयतीत्यर्थः ॥१०३॥

उक्तरूपबुद्धिपरिणामादेव च घटादिसंविदुत्पत्तौ किमज्ञानध्वंसेनेत्याशङ्क्याऽऽह—व्यवधानमिति । अज्ञानं तमस्तस्मिन्सति न घटसंविदिति शेषः । तन्निवृत्तिरेव तर्हि ज्ञानात्प्राची किं न स्यादित्याशङ्क्य दृष्टान्तमाह—प्रकाशवदिति । प्रकाशव्याप्तं घटमृते तदावृतितमोहानेरदृष्टेस्तत्र प्रकाशप्राथम्यं तमोहानेश्च पाश्चात्यं दृष्टमित्यर्थः ॥१०४॥

दार्ष्टान्तिकमाह—प्रमाणेति । घटस्तावत्पूर्वमज्ञातो बुद्धिवृत्त्या बाह्येन्द्रियद्वारा व्याप्यते तद्व्याप्तश्च स्वगताज्ञानध्वस्तिविशिष्टः प्राकट्यभागी ततश्चाऽऽदानादिव्यवहारसिद्धिरित्यर्थः ॥१०५॥

व्यञ्जकव्यापारस्यार्थप्रकाशार्थत्वादावृतिहानिरर्थादिति स्थिते तद्ध्वस्तावेव च यत्नो नेति सिद्धेऽर्थे हेत्वन्तरमाह—यदीति । घटावगत्यर्थमावृतिभङ्गस्तदर्थं यत्नश्चेत्तर्हि पिण्डाद्यावृतिभङ्गादपि विदलचूर्णादिकार्यान्तरसंभवात्तेनाऽऽवृते घटे न व्यक्तिः स्यादित्यर्थः ॥१०६॥

विदलादेरपि भङ्गे तद्व्यक्तिरिति चेन्नेत्याह—व्यवधानान्तरमिति । तस्माद्विदलादेरिति यावत् । तदा तद्भङ्गावस्थायामित्यर्थः । पूर्वेण सजातीयं विजातीयं वेत्यन्तरशब्दार्थः । आवृतिभङ्गे चेद्यत्नस्तदा यावच्छून्यं तद्भावात्तद्भङ्गापेक्षायां घटाव्यक्तिरेव स्यादिति भावः । आवृतिभङ्गार्थे यत्ने घटानुपलब्धिर्यतो दर्शिताऽतस्तदुपलब्ध्यर्थत्वेन नियतः सन्यत्नः सफलः स्यादित्युपसंहरति—अत इति । अत्रेति प्रयतितोच्यते ॥१०७॥

उत्पत्तेः पूर्वं सदपि कार्यमावृतत्वाददृष्टमित्येतत्प्रसङ्गेनाऽऽगतं चोद्यमपोद्य प्रकृतमभिव्यक्तिलिङ्गकमनुमानमुपसंहृतम् । इदानीमतीतानागतप्रत्ययभेदाच्चेत्यादिभाष्यविवक्षितमनुमानमाह—अतीतेति । विमतं सदालम्बनं घटज्ञानत्वाद्वर्तमानघटज्ञानवदित्यर्थः । किं चैष्यद्घटार्था प्रवृत्तिर्लोके दृष्टा न चात्यन्तासति सा युक्ता योगिनां ईशस्य च अतीतादिविषयं प्रत्यक्षज्ञानमिष्टं तच्च विद्यमानोपलम्भनम् । अतो घटस्यं सदा सत्त्वमित्याह—साक्षादिति ॥१०८॥

उक्तेऽनुमाने विपक्षमनूद्य बाधकमाह—अतीत इत्यादिना । प्रत्यक्षं तावदैश्वरं ज्ञानं तच्चेदतीतादिविषयमसदालम्बनं तर्हि तस्मिन्नंशे प्रामाण्यमपजह्यादयथार्थत्वादित्यर्थः ॥१०९॥

प्रसङ्गस्येष्टत्वमाशङ्क्याऽऽह—प्रत्यक्षमिति । अप्रतिघातं साधयति—अपविद्धेति । अधिकबलं हि बाधकं न चानतिशयादैशज्ञानादधिकबलं ज्ञानं दृष्टमतो बाधकाभावान्न तन्मिथ्येत्यर्थः ॥११०॥

---

१. अपविद्धेति—अपविद्धा अतिशीतिः अधिकबलं मान्तरं यस्मात् इति विग्रहः ( न्या० ) ।   २. ८५.५

घटसत्त्वे पुरोत्पत्तेरनुमा च प्रदर्शिता । तस्मात्सदेव कार्यं स्यात्प्रागुत्पत्तेरपि ध्रुवम् ॥१११॥

भूतभाविघटनिषेधासंभवनिरूपणम्

एष्यद्घटनिषेधे च विरोधोऽपि प्रसज्यते । भविष्यति न भाव्यर्थो वर्तमाननिषेधवत् ॥११२॥
गृह्यमाणो घटो नासन्निति यद्वद्विरुध्यते । अतीतैष्यन्मितघटप्रतिषेधस्तथाविधः ॥११३॥
प्रागभावादयोऽभावाः सन्तः स्युरतिरेकिणः । व्यपदेशाद्घटेनैषामन्योन्याभाववद्ध्रुवम् ॥११४॥
एवं च सति संबन्धो न भावाभावयोर्मिथः । विरोधाद्भावयोर्यद्वदेकत्वान्नाप्यभावयोः ॥११५॥
असतश्च न संबन्धोऽकारकत्वात्कथंचन । संबन्धश्च क्रियात्मत्वान्न सिध्येत्कारकं विना ॥११६॥
प्रागभावो घटस्येति घट एवोच्यते यदि । घट एव घटस्येति व्यपदेशो न युज्यते ॥११७॥

तस्य सम्यक्त्वेऽपि प्रागसद्घटविषयत्वं किं न स्यादित्याशङ्क्याऽऽह—घटेति । उक्तोपपत्तिसमुच्चयार्थश्चकारः । उक्तमानफलमाह—तस्मादिति । अपिना वर्तमानकार्यं दृष्टान्त्यते ॥१११॥

किं चातीतस्य भविष्यतश्च घटस्य कारकव्यापारदशायामसत्त्वमिति कोऽर्थः ? किं तस्यातीतत्वादि तदा नास्ति किंवा नार्थक्रियासामर्थ्यं सत्त्वम् ? आद्ये व्याहतिरित्याह—एष्यदिति । अतीतघटनिषेधसमुच्चयार्थश्चकारः । ईश्वरादिप्रत्यक्षस्याप्रामाण्यप्रसक्त्या सह विरोधं समुच्चेतुमपीत्युक्तम् । एष्यतो गतस्य च घटस्य भविष्यत्वादिरूपसत्त्वस्य कारकव्यापारकाले निषेधश्चेद्व्याहतिरित्युक्त्वा तामेव स्फुटयति—भविष्यतीति । भविष्यत्वभूदिति च घटस्य वर्तमानकाले भविष्यत्वादिरूपसत्त्वमुच्यते तच्चेत्तदैव निषिध्यते तदा भविष्यति न भविष्यत्वभून्नाभूदिति व्याहतिरित्यर्थः ॥११२॥

वर्तमाननिषेधवदित्युक्तं दृष्टान्तं स्पष्टयति—गृह्यमाण इति । एष न वर्तते किं त्वसन्निति विरुध्यते यद्वदिति योजना । नो सन्निति पाठे व्यक्तैव योजना । वर्तमानो घटो न वर्तत इत्युक्ते व्यक्ता हि व्याहतिरित्यर्थः । दार्ष्टान्तिकं विवृणोति—अतीतेति । अतीतस्य भविष्यतश्चातीतत्वादिरूपेणाधुना मितस्य घटस्य तत्रैव तेनाऽऽकारेण निषेधो वर्तमानघटनिषेधवद्व्याहतः । द्वितीये त्वथ प्रागुत्पत्तेरित्यादिभाष्योक्तं[1] द्रष्टव्यमिति भावः ॥११३॥

किंच प्रागभावादयो घटाद्भिद्यन्ते तेन व्यपदिश्यमानत्वात्तदन्योन्याभाववत्ते च सन्तो भिन्नत्वात्पटवदित्यनुमानद्वयमाह—प्रागिति । न चाऽऽद्ये प्रयोगे दृष्टान्तस्य साध्यवैकल्यं घटान्योन्याभावस्य पटाद्यात्मनो घटादन्यत्वाभावे घटस्य पटाद्यात्मत्वप्रसङ्गात्, न चान्योन्याभावस्यान्यत्वेऽनवस्था, स्वरूपभेदाङ्गीकाराद्द्वितीयानुमाने च स्वरूपसत्त्वोक्त्या न व्याघातः स्वरूपभेदाच्च हेतुसिद्धिरिति भावः । तेषां घटादन्यत्वात्तस्यानाद्यनन्तत्वमद्वयत्वं सर्वात्मत्वं च प्राप्तमित्यन्यत्वानुमानफलमाह—ध्रुवमिति ॥११४॥

अन्यत्वेऽपि तेषां घटसंबन्धात्कुतोऽस्योक्तरूपतेत्याशङ्क्य द्वितीयानुमानफलमाह—एवं चेति । अभावानां सत्त्वेऽभावस्यैव भावान्न भावाभावयोर्मिथः संगतिरित्यर्थः । विरोधादित्यभावस्यैवासत्त्वादिति यावत् । संबन्धाभावे दृष्टान्तो भावयोरिति । यथाऽभावयोर्भावयोर्वैक्यान्न मिथो योगो न हि भावेऽभावे वा कश्चिदाकारो भेदकस्तथा भावाभावयोरप्युक्तन्यायेनैक्यान्नासावित्यर्थः ॥११५॥

अभावस्य संबन्धाभावे हेत्वन्तरमाह—असतश्चेति । असत्त्वादेवाभावस्य कारणत्वायोगान्न भावेन संयोगादीनामन्यतमोऽपि संबन्धः सिध्यतीत्यर्थः । नन्वभावस्याकारकत्वेऽपि संबन्धो युक्तः क्रियैव कारकापेक्षा, संबन्धस्तु न क्रियेति नेत्याह—संबन्धश्चेति । न हि क्रियापूर्वः संबन्धो लाघवात्तदात्मत्वाद्धात्वर्थत्वाच्च योगस्य क्रियात्वसंभवादिति भावः ॥११६॥

भावाभावयोः संबन्धस्य प्रसिद्धत्वात्कथं स निरस्यते ? तत्र वक्तव्यं घटप्रागभावादिर्घटस्ततोऽन्यो वेति तत्राऽऽद्यमनुवदति–प्रागिति । प्रागभावग्रहणमभावान्तरोपलक्षणार्थम् । व्यपदेशानुपपत्त्या दूषयति–घट इति ॥११७॥

---

1. २९.४

न चासत्त्वं घटस्यैवं प्रागभावो घटो न च । अवध्यवधिमद्भेदे प्रागभावोऽपि सिध्यति ॥१८॥
अथ प्रकल्प्य संबन्धं घटस्येत्यभिधीयते । क्लृप्तस्यैव ह्यभावस्य व्यपदेशः प्रसज्यते ॥१९॥
अर्थान्तरमभावश्चेदुक्तं संस्मर्तुमर्हसि । शशशृङ्गादिकल्पस्य घटस्य स न युज्यते ॥२०॥

परामिमतजन्मनो निराकरणम्

स्वहेतुसत्तासंबन्धः संबन्धस्य सदाश्रयात् । अथास्त्वयुतसिद्धानां नासतोऽयुतसिद्धता ॥२१॥
न भावाभावयोर्योगो नापि चायमभावयोः । सतोरेव यतो योगः सिद्धं कार्यमतः सदा ॥२२॥

"मृत्युनैवेदमावृतमि"त्यत्र मृत्युशब्दार्थः

द्वैतैकत्वात्मकं रूपं वैराजं कार्यमात्मनः । समुद्र एव ह्यस्येति विराट्कारणमब्रवीत् ॥२३॥
संभूय कार्यभूतानि भूतयोनिं यतो विभुम् । जन्मस्थितिलयान्यान्ति समुद्रस्तेन विश्वकृत् ॥२४॥

किंच प्रागभावादेर्घटान्तर्भावो घटस्य तस्मिन्नन्तर्भावो वा? आद्ये तस्य नासत्त्वमित्याह—न चेति। एवमित्यभावस्य घटाद्यन्तर्भावे सतीति यावत्। द्वितीयं प्रत्याह—प्रागभाव इति। प्रागभावग्रहणमिहापि पूर्ववत्। घटो न च स्वरूपमिति शेषः। उभयत्र हेतुमाह—अवधीति। अवधिर्घटोऽवधिमानभावः। अपिना ध्वंसादिग्रहः ॥११८॥

प्रागभावादेर्घटत्वेऽपि संबन्धं कल्पयित्वा स घटस्येत्युक्तिश्चैतन्यं पुरुषस्येतिवदिति व्यपदेशोपपत्तिं चोदयति—अथेति। संबन्धस्य कल्पितत्वे संबन्ध्यभावोऽपि कल्पितः स्यादित्याह—क्लृप्तस्येति। यत्र संबन्धं कल्पयित्वा व्यपदेशस्तत्र न वास्तवो भेदो यथा राहुशिरसोस्तथा चात्रापि संबन्धे कल्पिते तथात्वाद्भेदस्य वास्तवत्वं संबन्धिनोरन्यतरस्य स्यान्न चाभावस्तथा सापेक्षत्वादतो घटो वास्तव इत्यर्थः ॥११९॥

कल्पान्तरमाह—अर्थान्तरमिति। व्यतिरेके सदेवासदसद्वा तत्किमित्यादिना दूषितमेतदित्याह—उक्तमिति। व्यतिरेकादिविकल्पेनाभावं निरस्यासत्कार्यवादे दोषान्तरमाह—शशेति ॥१२०॥

स्वहेतुसंबन्धः सत्तासंबन्धो वा जन्मेति तार्किकाः। न च प्रागुत्पत्तेरसतः संबन्धस्तस्य सतोर्वृत्तेर्न च कार्यस्यात्यन्तासत्त्वाभावान्न शशविषाणसादृश्यं; तस्य प्रागसतोऽत्यन्तासतो विशेषासिद्धेरित्यर्थः। असतोऽपृथक्सिद्धस्य कारणसंबन्धं शङ्कयति—अथेति। परिहरति—नेत्यादिना ॥१२१॥

भावभूतयोरित्यादिभाष्यं[1] व्याकुर्वन्नुक्तं विवृणोति—न भावेति। सतोरेवायुतसिद्धत्वेन संबन्धदर्शनाद्भावाभावयोरभावयोर्वा नायुतसिद्धपूर्वकः संबन्धः सिध्यतीत्यर्थः। कार्यसत्त्वे साधनमुपसंहरति—सिद्धमिति। कार्यसत्त्वे साधकसद्भावादसत्त्वे च दोषस्योक्तत्वादित्यतःशब्दार्थः। सदेति वर्तमानकालवद्भूतभविष्यत्कालयोरपीत्यर्थः॥१२२॥

"नैवेहे"त्यत्र सर्वस्य प्रागुत्पत्तेरसत्त्वाशङ्कां "मृत्युने"त्यादिवाक्यव्याख्यानेन निरस्यता मृत्युशब्देन "समुद्र एवास्ये"त्यादौ समुद्रशब्दितः परमात्मोच्यत इत्युक्तं संप्रति समुद्रशब्दस्यार्थान्तरे रूढेर्न परविषयतेत्याशङ्क्याऽऽह—द्वैतेति। नानारसं वैराजं रूपं परस्याऽऽत्मनः कार्यमिति श्रुतिस्मृतिप्रसिद्ध"मग्निर्मूर्धे"त्यादिश्रुता"वप एव ससर्जे"त्यादिस्मृतौ च परस्यैव सूत्रद्वारा विराडात्मस्रष्टृत्वमतिस्पष्टमित्यर्थः। तथाऽपि कथं समुद्रशब्दस्य परविषयत्वं तत्राऽऽह—समुद्र इति। समुद्र एवास्येत्यादौ समुद्रशब्देन विराडात्मकारणं समुद्रं श्रुतिरुक्तवती तस्माद्विराट्कारणत्वलिङ्गात्प्रसिद्धसमुद्रादर्थान्तरत्वादस्य समुद्रस्य सिद्धं परमात्मत्वमित्यर्थः ॥१२३॥

अथापि परस्मिन्न समुद्रशब्दस्य रूढिरन्यत्र तद्भावान्नापि योगस्तदनवगमाद्योगाच्च रूढेर्बलीयस्त्वादित्याशङ्क्याऽऽह—संभूयेति। कार्यत्वेन स्थितानि वियदादिवस्तूनि मिलित्वा जन्मादीनि द्रवन्ति सन्ति भूतानां योनिमनवच्छिन्नमीशमदृश्यत्वादिगुणं यतो यान्ति तेन परः समुद्रो युक्तो भूतयोनिना संभूय ततो भूतान्युद्गच्छन्ति तस्मिन्नेव द्रवन्तीति व्युत्पत्तेः। रूढियोगापहारन्यायस्तु प्रकृते रूढ्यसंभवात्त्याज्य इति भावः ॥१२४॥

---

१. ३१-७

कूटस्थस्याज्ञानद्वारा जगत्कारणता

तत्समुद्रं परं ब्रह्म संविन्मात्रसतत्त्वकम् । अविज्ञातात्मयाथात्म्यं हेतुत्वेनेह शब्द्यते ॥२५॥
इदं जगदुपादानं सर्वशक्त्यजमव्ययम् । स्वात्मैकाज्ञानवृत्तेन ग्रसिष्णु प्रभविष्णु च ॥२६॥
स्वाभासवर्त्मनैवैतत्स्वात्माज्ञानजभूमिषु । इतं बहुत्वमेकं सद्वियद्यद्वद्घटादिषु ॥२७॥

ब्रह्मणः सर्वकारणत्वं सर्वात्मत्वमपि मायिकम्

अकारणं सदज्ञानात्कारणत्वं यथैत्यजम् । सर्वकारकतामेवं क्रियातत्फलतामपि ॥२८॥
साध्यसाधनतां तस्मादज्ञानैकव्यपाश्रयाम् । उच्चैरनूद्य तत्तत्त्वं वेदान्ताः प्रत्यपीपदन् ॥२९॥
अकारणमकार्यं सत्कार्यकारणतामगात् । मोहादेव ततः शास्त्रं तदुच्छित्तौ प्रवर्तते ॥३०॥

अव्याकृतं कारणमिति वक्ष्यति कथं ब्रह्म कारणमित्यस्योत्तरम्

आपीताशेषसंसारं[1] शुद्धसंस्कारसंश्रयम् । अव्याकृतमिदं ब्रह्म ह्यन्तर्यामीति चोच्यते ॥३१॥

परस्य समुद्रत्वेऽपि कूटस्थसंविदेकरसस्य कथं कारणवाचिमृत्युशब्दतेत्याशङ्क्याऽऽह—तत्समुद्रमिति । मृत्युनैवेतिवाक्यमिहशब्दार्थः । कूटस्थचिन्मात्रमपि ब्रह्माज्ञानद्वारा जगत्कारणत्वान्मृत्युशब्दमर्हतीत्यर्थः ॥१२५॥

केचिदज्ञानं विना ब्रह्मैव जगदाकारेण परिणमते क्षीरमिव दध्याकारेणेति कल्पयन्ति तान्प्रत्याह—इदमिति । ब्रह्म सर्वत्रोत्पत्त्यादावात्माविद्याख्यशक्तियुक्तं सज्जगतो निदानं न हि निरवयवस्याक्रियस्य कार्त्स्न्यैकदेशाभ्यां परिणामः संभवतीत्यर्थः । परिणामवादायोगेऽपि विवर्तवादं फलितमाह—स्वात्मेति । स्वस्याऽऽत्मनि यदेकं दण्डायमानमज्ञानं तस्य वृत्तं परिणामित्वं तेनेदमपि ब्रह्म कदाचिज्जगतो ग्रसनशीलं कदाचित्तदाकारेण प्रभवनशीलमित्यर्थः ॥१२६॥

जीवानां मिथो ब्रह्मणश्च भेदवत्कारणत्वमपि तस्य वास्तवमस्तु नाऽऽविद्यमित्याशङ्क्याऽऽह—स्वाभासेति । स्वस्य ब्रह्मणो यस्मिन्नाभासस्तदज्ञानं तथा तदनुसारेणैव स्वाश्रयविषयाज्ञानजदेहादिष्वेतद्ब्रह्मैकमेव वस्तुतः सूत्रं विराडित्यादिना बहुत्वं गतं यथा व्योम घटाद्युपाधिषु नानात्वं गच्छति तद्वदतो भेदस्याऽऽविद्यत्वात्कारणत्वमपि तथेत्यर्थः ॥१२७॥

"सर्वं खल्विदं ब्रह्मे"ति श्रुतेर्ब्रह्मणः सर्वात्मकत्ववत्सर्वकारणत्वमपि वास्तवमित्याशङ्क्याऽऽह—अकारणमिति । कूटस्थं ब्रह्म वस्तुतो न कारणं "तदेतद्ब्रह्मापूर्वमि"त्यादिश्रुतेः तथाऽपि मायया तत्त्वं प्रतिपद्यते । "तस्माद्वा एतस्मादात्मन आकाशः संभूत" इत्यादिश्रौतकारणत्वस्य "मायां तु प्रकृतिमि"त्यादिश्रुतौ मायानिर्वाह्यत्वश्रुतेरतो ब्रह्मणः कारणत्ववत्तत्कृतं सर्वात्मत्वमपि मायिकमेवेत्यर्थः ॥१२८॥

सृष्ट्यादिश्रुतिदृष्टत्वात्कार्यकारणभावस्य ब्रह्मवद्वस्तुत्वमाशङ्क्याऽऽह—साध्येति । उक्तन्यायेनानाद्यज्ञानमात्रनिमित्तां कार्यकारणतां सृष्ट्यादिवाक्यैरनूद्य कल्पितकार्यादेः स्वरूपं प्रत्यग्ब्रह्म "सबाह्याभ्यन्तरो ह्यजः" "तत्त्वमसी"त्यादयो वेदान्तास्तात्पर्येण प्रतिपादयितुं प्रवृत्ता न सृष्ट्यादिप्रपञ्चस्तेषु विवक्षितस्तस्यापूर्वत्वाभावादफलत्वाच्चेत्यर्थः ॥१२९॥

उक्तेऽर्थे नैवेहेत्यादिवाक्यस्य तात्पर्यमाह—अकारणमिति । निष्प्रपञ्चस्य ब्रह्मणः स्वाविद्याद्वारा जगदात्मत्वं तत्कारणत्वं च नैवेहेत्यादिनोच्यते । न च स्तुत्यर्थोत्पत्तिरित्युक्तिविरोधस्तदवान्तरतात्पर्यमेतन्महातात्पर्यमिति विभागादिति भावः । कार्यकारणत्वस्य मोहनिमित्तत्वे सहेतुबन्धध्वस्तौ हेतुभूतज्ञानार्थत्वेन शास्त्रारम्भोऽपि सिध्यतीत्युक्तेऽर्थापत्तिमाह—तत इति ॥१३०॥

अव्याकृतादि जगत्कारणं "तद्धेदमि"त्यादौ श्रूयते तत्कथं ब्रह्म तत्कारणमित्याशङ्क्याऽऽह—आपीतेति ।

---

१. आपीताशेषसंसारं—स्वस्मिन् उपसंहृतसर्वस्थूलसूक्ष्मप्रपञ्चं शुद्धसंस्काराश्रयं संस्कारमात्राश्रयं न तु तत्कार्याश्रयम् ।

**अज्ञानानुपमर्देन व्याकृतिर्याऽस्य जायते । स्वप्नविज्ञानवन्नासौ सत्यमेयव्यपाश्रया ॥१३२॥**
**सम्यग्ज्ञानसमुत्पत्तौ हेतुत्वं तु निगच्छति । निद्रां हत्वा यतः स्वप्नज्ञानादपि विबुध्यते ॥१३३॥**

असत्यादपि सत्यज्ञानोत्पत्तिसमर्थनम्

**उपेयप्रतिपत्त्यैव प्रमाणानां प्रमाणता । वस्तुस्थित्या न सत्यत्वमिति पूर्वमवादिषम् ॥१३४॥**

मृत्युशब्दस्य मायार्थत्वम्

**नामरूपादिना येयमविद्या प्रथतेऽसती । माया तस्याः परं सौक्ष्म्यं मृत्युनैवेति भण्यते ॥१३५॥**
**मृत्युर्वै तम इत्येवमाप एवेदमित्यपि । अविद्या प्रथते मौली व्यक्ताव्यक्तात्मनाऽनिशम् ॥१३६॥**
**एतेभ्योऽसौ समुत्थाय स्वाभासानात्मजन्मना । याति क्षेत्रज्ञतामीशः कूटस्थोऽपि ह्यविद्यया ॥१३७॥**

स्वस्मिन्नुपसंहृतसर्वप्रपञ्चमिति यावत् । मुक्त्यालम्बनं ब्रह्म व्यावर्तयति—संस्कारेति । संश्रयशब्दो भावप्रधानः संस्कारस्य संश्रयः संश्रयणं स्वस्मिन्निति वा । संसारदशातो विशेषमाह—शुद्धेति । केवलसंस्काराश्रयत्वं साधयितुमाद्यं विशेषणम् । उपाधिप्रधानमव्याकृतमुपहितप्रधानस्त्वन्तर्यामीति भेदः ॥१३१॥

नन्वज्ञातब्रह्मकार्यत्वेनावस्तुत्वं जगतो न युक्तं प्रामाणिकत्वाद्ब्रह्मवदत आह—अज्ञानेति । व्याकृतिरभिव्यक्तिः । अस्येति जगदुक्तिः । प्रत्यगज्ञाने स्थिते प्रत्यक्षादिना या जगतो व्यक्तिः सा न वस्तुविषया । न हि सत्यामेव निद्रायां प्रवृत्तस्वप्नज्ञानं वस्तु गोचरयति । तथा जागरेऽपि स्थितेऽज्ञानेऽध्यक्षादिना व्यक्त्याभासो भवतीत्यर्थः ॥१३२॥

स्वप्नवज्जाग्रतोऽपि मिथ्यात्वे श्रुत्यादेरपि मिथ्यात्वात्कथं ततो ब्रह्मधीरित्याशङ्क्याऽऽह—सम्यगिति । निगच्छत्यसत्यमपि श्रुत्यादीति शेषः । असत्यस्यापि श्रुत्यादेस्तत्त्वधीहेतुत्वे दृष्टान्तमाह—निद्रामिति । असत्यादपीत्यपेरर्थः । न च तस्य स्वरूपस्य सत्यत्वं विषयासत्वे तदयोगाज्ज्ञायतेऽर्थोऽनेनेति व्युत्पत्तेरतः स्वप्ने ज्ञानादसत्यादेव व्याघ्रादिविषयान्निद्रानिरोधेन सम्यग्बोधोदयवत्प्रकृतेऽप्यसत्येनैव श्रुत्यादिना सम्यग्धीरित्यर्थः ॥१३३॥

ननु श्रुत्यादेः सम्यग्धीहेतोः सत्यत्वमपि धूमादिवत्संभावितमित्याशङ्क्यो"पेयबोधनं मुक्त्वे"त्यादिनोक्तं स्मारयति—उपेयेति । प्रमाणानां प्रमाकरणश्रुतीनामिति यावत् । तेषां च विषयसत्यत्वेऽपि न स्वरूपसत्यत्वं न च तेनैव तदनुमेयं प्रपञ्चमिथ्यात्वावेदकागमविरोधादित्याह—वस्त्विति ॥१३४॥

मृत्युशब्दार्थोक्तिप्रसङ्गप्राप्तं चोद्यमपोद्य प्रकृतं मृत्युशब्दार्थमेव विवेचयति—नामेति । कर्माऽऽदिशब्देन गृह्यते । न केवलं कार्यलिङ्गकानुमानगम्यैवाविद्या अपि त्वनुभवसिद्धाऽपीत्याह—इयमिति । तर्हि प्रामाणिकत्वाद्वस्तुत्वं नेत्याह—असतीति । तत्त्वतो मानागम्यत्वादित्यर्थः । ये केचिदविद्यामाययोर्भेदमाहुस्तन्निरासार्थं मायेत्युक्तम् । अप्रामाणिकं हि तयोर्नानात्वम् । अव्यक्तनामरूपमध्यक्षाद्ययोग्यमपञ्चीकृतमहाभूतावस्थातिरिक्तं मायाख्यं मृत्युशब्दितमित्याह—तस्या इति ॥१३५॥

ननु "मृत्युर्वै तमो ज्योतिरमृतमि"त्यत्र स्वाभाविके ज्ञानकर्मणी मृत्युशब्देनोच्येते । न च तयोरस्ति कारणत्वं कार्यत्वादपां च सप्तमे कारणत्वं वक्ष्यते तत्कथं साभासं प्रत्यगज्ञानं कारणवाचिमृत्युशब्दवाच्यमत आह—मृत्युरिति । उद्गीथाधिकारे हि व्यक्तशब्दितस्वाभाविकज्ञानकर्मात्मना प्रथमाना मूलाविद्यैव मृत्युशब्दव्याख्यानेन तमःशब्देनोच्यते । सप्तमे चाव्यक्तशब्दितप्रकृत्यात्मना प्रकाशमाना सैवाविद्याऽप्शब्देन विवक्ष्यतेऽतः सदा दृश्यद्वैतात्मना तस्या भावादविरुद्धं साभासायास्तस्या मृत्युशब्दत्वमित्यर्थः ॥१३६॥

व्यक्ताव्यक्तयोरविद्याविवर्तत्वेन प्रत्यङ्मात्रत्वमस्तु न तु क्षेत्रज्ञस्य तन्मात्रत्वं तदविद्याविवर्तत्वाभावादतोऽद्वैतहानिरित्याशङ्क्याऽऽह—एतेभ्य इति । कार्यकारणाकारेण परिणतेभ्यो भूतेभ्यो व्यज्यमानेभ्यः साम्येन

१. मृत्युर्वै तमोज्योतिरमृतमिति—"अथातः पवमानानामि"त्यत्र तृतीयब्राह्मणे उच्यते । "आप एवेदमग्र आसुः" इति सप्तमाध्याये इत्यर्थः ।

आपो ह्यणुतराः सत्यमसृजन्तेति हि श्रुतिः । क्रियाविज्ञानशक्त्यात्मा सोऽपि ब्रह्मासृजत्परः ॥३८॥
विराड्ब्रह्माथ ससृजे मनुं देवं प्रजापतिम् । मनुर्देवान्मनुष्यांश्च स्थास्नु कृत्स्नं चरिष्णु च ॥३९॥
साध्यसाधनवत्कृत्स्नकार्यरूपविवक्षया । श्रुतिः प्रववृते सेयं नैवेहेतीह यत्नतः ॥४०॥
अशनायापिपासाभ्यां मृत्यो रूपं प्रचक्षते । प्राणस्य तत्र संवर्गाद्वागाद्यध्यात्मदैवयोः ॥४१॥
एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापश्च पृथ्वी विश्वस्य धारिणी ॥४२॥
सृष्टिमेतां समुद्दिश्य तन्मनोऽकुरुतेति या । श्रुतिः प्रवृत्ता निर्वक्तुं यावदव्याकृतं परा ॥४३॥
यद्वा विराजमुद्दिश्य संकल्पमकरोन्मनः । आत्मन्वी स्यामिति तथा साकूतः सृष्टिकारणः ॥४४॥
स्वविभूतीक्षणं सृष्टौ विभोरर्चनमुच्यते । आपोऽजायन्त इति च सर्वभूतोपलक्षणम् ॥४५॥

व्यक्तिमनुभूय निर्विकारोऽपि परः स्वप्रतिबिम्बस्यानात्मवत्प्रतिपन्नस्य जन्मद्वारा जीवतामेति । न च प्रतिबिम्बो वस्तुतो बिम्बादर्थान्तरमेकरूपनिर्भासनादतोऽविद्यया परस्यैवाविकृतस्य जीवत्वान्नाद्वैतहतिरित्यर्थः ॥१३७॥

ननु श्रुतौ भाष्ये च सूत्रकर्तृका सृष्टिरुक्ता मृत्योः स्रष्टुरशनायादिमत्त्वोक्तेस्तत्कथं सा मूलकारणादुच्यते त्वयेत्याशङ्क्य तस्मादेवात्र सृष्टिरिष्टा न सूत्रादिति वक्तुं वाक्यान्तरसिद्धां सृष्टिपद्धतिमाचष्टे—आप इति । अपां भूतान्तरसहितानामपञ्चीकृतत्वादतिसूक्ष्मत्वं तासां मायात्मत्वात्ततोऽपि सौक्ष्म्यं ता मायात्मिकाः सत्यमपञ्चीकृतपञ्चभूतात्मकं सूत्रमसृजन्न चात्राविश्वासः श्रुत्युक्तत्वादित्यर्थः । हिरण्यगर्भस्तर्हि कीदृगित्यपेक्षायामाह—क्रियेति । तस्य विराजं प्रति स्रष्टृत्वमाचष्टे—सोऽपीति । हिरण्यगर्भोऽपि परस्य ब्रह्मणो विकारतया परः सन्ब्रह्म विराडात्मकं सृष्टवानित्यर्थः ॥१३८॥

विराजो मनुस्रष्टृत्वमाह—विराडिति । मनुसृष्टिकारणीभूतज्ञानकर्मवासनाभिव्यक्त्यानन्तर्यमथशब्दार्थः । तस्य वक्ष्यमाणसृष्टिदृष्टिशक्तिं द्योतयति—देवमिति । अमानवीं सृष्टिं शिष्ट्वा मानवीमाह—मनुरिति ॥१३९॥

मूलकारणविषयतयोक्तसाप्तमिकश्रुत्या प्रकृतश्रुतेरेकवाक्यत्वमाह—साध्येति । इहेति प्रकरणोक्तिः । यत्नो मूलकारणे श्रुतेस्तात्पर्यं न हि कृत्स्नं कार्यमवान्तरकारणाद्युक्तमतो मूलकारणमेवात्र मृत्युशब्दितमित्यर्थः ॥१४०॥

तर्हि कथमशनाययेत्यादिवाक्यशेषो न हि मूलकारणस्याशनायादिमत्त्वमशनायापिपासे प्राणस्येति स्थितेरित्याशङ्क्य परस्य सूत्रात्मत्वं प्राप्तस्य सर्वसंहर्तृत्वान्मृत्युत्वे सति वाक्यशेषोपपत्तिरिति मत्वाऽऽह—अशनायेति । प्राणस्य मृत्योरिति संबन्धः । कथं तस्य मृत्युत्वमित्याशङ्क्योपपत्तिमाह—तत्रेति । तस्मिन् प्राणे वायौ वागादीनामध्यात्ममग्न्यादीनां चाधिदैवं संहरणात्तस्य मृत्युतेत्यर्थः ॥१४१॥

मूलकारणादत्र सृष्टिरिष्टा चेदाकाशाद्या सा वाच्या । तथा च "तन्मनोऽकुरुते"तिवाक्यशेषानुपपत्तिरित्याशङ्क्याऽऽदावाथर्वणीं सृष्टिमनुक्रामति—एतस्मादिति । सर्वज्ञत्वादिरूपात्परस्मादात्मनः सकाशादिति यावत् ॥१४२॥

वाक्यशेषविरोधमधुना धुनीते—सृष्टिमिति । या "तन्मनोऽकुरुते"त्याद्या "तद्धेदं तर्ह्यव्याकृतमि"त्यन्ता परा श्रुतिः सा सर्वस्य कार्यस्य मूलकारणतः सृष्टिं श्रुत्यन्तरसिद्धामुद्दिश्यात्रापि तामेव निश्चित्य वक्तुं प्रवृत्ता तस्य मूलकारणस्येक्षणव्यापारस्तन्मनोऽकुरुतेत्युच्यते तन्न वाक्यशेषविरोध इत्यर्थः ॥१४३॥

तन्मूलकारणं मनःशब्दितेक्षणव्यापारमकरोदिति वाक्यार्थमुक्त्वा तदिति मनसो निर्देश इत्यादिभाष्यमनुसृत्य मृत्युर्मूलकारणात्मा सूत्रत्वं प्राप्तो विराडात्मसृष्टिमुद्दिश्य मनःशब्दितं संकल्पं कृतवानित्यर्थान्तरमाह—यद्वेति । केनाभिप्रायेण मनोऽकरोदित्यपेक्षायामाह—आत्मन्वीति । संकल्परूपे मनसि सृष्टे स्रष्टा हिरण्यगर्भो विराट्सृष्टिमुद्दिश्यानेनाऽऽत्मवानहं स्यामिति साकूतः साभिप्रायः संवृत्त इत्यर्थः । सृष्टेः कारणं ब्रह्मास्य कारणं स्वरूपमिति वा सूत्रात्मा तथोक्तः ॥१४४॥

अभिप्रायवतोऽपि नाशक्तस्य स्रष्टृतेत्याशङ्क्य सोऽर्चन्नित्यस्यार्थमाह—स्वविभूतीति । सूत्रात्मनः सृष्टिविषये शक्तोऽस्मीति स्वसामर्थ्यालोचनमर्चनमित्यर्थः । नन्वीक्षिता नापामेव स्रष्टा किंतु वियदादीनामपि । तत्कथं

१. सृष्टिकारणः विग्रहमाह—सृष्टेरिति । सृष्टेः स्वरूपं यस्येति सृष्टिकारण इत्यर्थः ।

विद्योत्पत्तिप्रधानत्वात्सृष्टिर्वा[1] न विवक्ष्यते । तथा च प्रतिवेदान्तं सृष्टिर्नानाविधेक्ष्यते ॥४६॥
अर्चतो मे यतो जज्ञे कमम्भः सुखकृत्ततः । अर्काभिधोऽथ संवृत्तः प्राणो मृत्युः प्रजापतिः ॥४७॥
उपासनमतोऽस्यापि नाग्नेरेवेति निश्चितिः । अर्कनामाभिसंबन्धो नोपासनमृते यतः ॥४८॥

मू०—आपो वा अर्कस्तद्यदपाँ् शर आसीत्तत्समहन्यत । सा पृथिव्यभवत्तस्यामश्राम्यत्तस्य श्रान्तस्य तप्तस्य तेजोरसो निरवर्तताग्निः ॥२॥

यदि वाऽग्नेरिदं नाम तस्य प्रकरणित्वतः । आपो वा अर्क इति तु चित्यनामार्थमेव तत् ॥४९॥
शर आसीदिति गिरा शक्त्यवस्था विवक्ष्यते । सा पृथिव्यभवच्चेति विराजो जन्मशब्दनम् ॥५०॥
तपोऽप्सु तप्यमानासु ह्यण्डं जज्ञे हिरण्मयम् । इति श्रुतिर्जगादार्थं यथैवेह प्रपञ्च्यते ॥५१॥
एवं व्यष्टिसमष्ट्यात्मा वैराजं देहमात्मनः । प्राचीक्लृपदथेदानीं सृष्टिस्तस्य विवक्ष्यते ॥५२॥

तस्येत्यादावपामेव ग्रहणमित्याशङ्क्याऽऽह—आप इति । यथाश्रुतप्रतीकग्रहो विवक्षित इत्यविवक्षितः संधिः । सर्वशब्देनाऽऽकाशादित्रयं गृह्यते । तथाच भाष्यमत्राऽऽकाशप्रभृतीनां त्रयाणामुत्पत्त्यनन्तरमिति वक्तव्यमिति । भूतशब्देनात्र पञ्चीकृतानि भूतानि गृह्यन्ते ॥१४५॥

समनन्तरं विराजः सर्गनिर्देशात्सृष्टेर्विवक्षितत्वमुपेत्यापां ग्रहणमुपलक्षणमित्युक्तं संप्रति सैवाविवक्षिता विद्यानिष्ठत्वादुपनिषदामित्याह—विद्येति । सृष्टेरविवक्षितत्वे हेत्वन्तरमाह—तथाचेति । आकाशाद्या तैत्तिरीयके सृष्टिरुक्ता, छान्दोग्ये तेजआद्या, प्राणाद्या त्वाथर्वणे, सा पुनरैतरेयके क्रमशून्येति विप्रतिपन्ना सर्वेषु वेदान्तेषु सृष्टिर्दृष्टा तथाच नासौ विवक्षितेत्यर्थः ॥१४६॥

अर्चत इत्यादेरर्थमाह—अर्चत इति । अर्चनात्सुखहेत्वम्भःसंबन्धाच्चार्कनामा प्रजापतिरित्यर्थः । यथा मृत्युरीश्वरः सूत्रात्मा जातस्तथा तद्रूपेणार्कशब्दवाच्योऽभूदित्याह—अथेति ॥१४७॥

किमर्थं सूत्रस्यार्कनामनिर्वचनमित्याशङ्क्याऽऽह—उपासनमिति । अपूर्वसंज्ञायोगस्य फलान्तराभावात् तन्नाम्नः सूत्रस्याप्युपासनमत्रेष्टमित्यर्थः । उक्तमर्थं व्यतिरेकद्वारा स्फोरयति—अर्केति ॥१४८॥

अग्निप्राधान्यार्थं पक्षान्तरमाह—यदि वेति । "आपो वा अर्क" इत्यपामर्कत्वश्रवणात्कथमग्नेरर्कत्वमत आह—आप इति । भूतान्तरसहितानामपां सूत्ररूपाणामर्कत्वश्रवणं चित्याग्नेरर्कनाम्नोऽर्थप्रतिपत्त्यर्थं स हि विराट्पूर्वोक्तास्वप्सु वक्ष्यमाणरीत्या प्रतिष्ठितोऽतोऽर्चनात्कसंबन्धाच्चार्कश्चित्योऽग्निरित्यर्थः ॥१४९॥

तद्यदपामित्यत्र शरशब्दार्थमाह—शर इति । शर आसीदित्यत्र शरगिरा कारणस्य सूत्रभूतस्य शक्तिमदुच्छूनावस्था विवक्षितेत्यर्थः । तत्समहन्यतेत्यादेरर्थमाह—सेति । स्थूलप्रपञ्चात्मकविराज. सूक्ष्मप्रपञ्चात्मकसूत्रादुत्पत्तिरत्रेष्टेत्यर्थः ॥१५०॥

ताभ्योऽद्भ्योऽण्डमभिनिर्वृत्तमिति[3]भाष्योक्तेऽर्थे वाक्यान्तरमुदाहरति—तप इति । अप्सु भूतान्तरसहितासु तपस्तप्यमानासु सूत्ररूपासु संकल्पं कुर्वतीषु ज्योतिर्मयं वैराजं शरीरं ताभ्यो निर्वृत्तं न चेदमौत्प्रेक्षिकं श्रौतत्वादित्याह—इति श्रुतिरिति । "आपो हि वा इदमग्र आसुः सलिलमेव ता अकामयन्त कथं नु प्रजायेमहीति ता अश्राम्यंस्तास्तपोऽतप्यन्त तासु तपस्तप्यमानासु तास्वन्तर्हिरण्यमण्डं संबभूवे"ति शातपथी श्रुतिस्तया प्रकृतश्रुतेरेकवाक्यत्वमाह—यथेति । प्रकृते प्रकरणे विराजः सूत्रादुत्पत्तिरूपोऽर्थो यथा विव्रियते तथैवेममर्थं शातपथश्रुतिरपि जगादेति योजना ॥१५१॥

स्थूलदेहसृष्टिमादिष्टामनुवदति—एवमिति । नानारसः सूत्रात्मा स्वस्य स्थूलदेहमुक्तरीत्या सृष्टवानित्यर्थः । तस्यामश्राम्यदित्यादेस्तात्पर्यमाह—अथेति । स्थूलसृष्ट्यनन्तरं तेन सृष्टेन स्रष्टुः सूत्रात्मनः सृष्टिसंबन्धः परिच्छेदो विवक्ष्यतेऽनन्तरवाक्येनेत्यर्थः ॥१५२॥

---

१. विद्योत्पत्तीति—वार्तिकत्वसिध्यर्थमाक्षिपतीति अवतरति ( न्या० ) दुरुक्तिचिन्तारूपत्वाद्वार्तिकस्येत्यर्थः ।
२. ३२.१० ३. ३४.१

श्रान्तस्येति तु देहस्य कर्मायोग्यत्वमुच्यते । श्रमहेतुरतस्तापस्तप्तस्येत्यभिशब्द्यते ॥५३॥
भास्वज्ज्ञानं भवेत्तेजो रसः प्राणो विवक्षितः । क्रियाविज्ञानशक्तित्वात्प्रकृतस्य प्रजापतेः ॥५४॥
अनवच्छिन्नवपुषः पिण्डावच्छेदहेतुतः । खस्य कुम्भादिनेवासोर्निरवर्तत शब्दनम् ॥५५॥
नामरूपादिमद्देहसंबन्धात्तद्विधर्मकः । अरूपोऽपि हि सूत्रात्मा लक्ष्यते रूपवानिव ॥५६॥
सूक्ष्मस्थूलशरीराभ्यां चिदाभाभ्यामविद्यया । संवृतः परमेशोऽपि त्रैलोक्यात्माग्निरुच्यते ॥५७॥
अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् । महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥५८॥
विराड्देहावनद्धोऽसुरध्यात्माद्याधिगः खवत् । व्यष्टितामेति तद्धीनः समष्टित्वेन तिष्ठति ॥५९॥
उर्व्यामुत्पादितायां तु श्रमात्तापात्प्रजापतेः । निरवर्ततेवास्याऽऽत्मा परिच्छेदाभिमानतः ॥६०॥
स्थूलदेहपरिच्छिन्नः स एवाऽऽद्यः प्रजापतिः । अग्निरेष यतस्तस्मादुपास्योऽयं प्रयत्नतः ॥६१॥
स वै शरीरी प्रथमः स वै पुरुष उच्यते । आदिकर्ता स भूतानां ब्रह्माऽग्रे समवर्तत ॥६२॥

तस्येत्यादौ पदयोरपुनरुक्तमर्थमाह—श्रान्तस्येत्यादिना । यतः श्रमहेतुस्तापोऽतस्तप्तस्येति पृथक्तापशब्द इति योजना ॥१५३॥

तेजो रस इति पदयोरर्थमाह—भास्वदिति । ज्ञानस्य भास्वत्त्वमप्रतिहतप्रकाशत्वम् । तयोरुक्तार्थत्वे युक्तिमाह—क्रियेति । प्रकृतो हि कारणत्वेन प्रजापतिः सूत्रात्मा तस्य शक्तिद्वयरूपत्वात्तत्कार्यस्य विराजो युक्त-मुक्तरूपत्वमित्यर्थः ॥१५४॥

निरवर्ततेत्यस्यार्थमाह—अनवच्छिन्नेति । असोरनवच्छिन्नवपुष इति संबन्धः । यथाऽऽकाशस्य कुम्भा-दिनाऽवच्छेदस्तथा सूत्रस्य ज्ञानक्रियात्मनः स्थूलदेहावच्छेदार्थं निरवर्ततेत्युक्तमित्यर्थः ॥१५५॥

सूत्रस्य स्थूलदेहावच्छेदफलमाह—नामेति । तद्विधर्मकत्वं व्याकरोति—अरूपोऽपीति । अपिशब्दादना-माऽपीत्यर्थः । रूपवानिवेत्यत्र नामवानिवेत्यपि द्रष्टव्यम् ॥१५६॥

अग्निशब्दार्थमाह—सूक्ष्मेति । अपिरवधारणार्थः । पर एवाविद्याकृताभ्यां देहाभ्यामावृतस्त्रैलोक्यशरीरः सन्नग्निरिति व्यपदेशभागिव भवतीत्यर्थः ॥१५७॥

देहद्वयावच्छिन्नः पर रावेत्यत्र मानमाह—अशरीरमिति । सापेक्षं महत्वं निरस्यति—विभुमिति । यद्वा स्वयमेव विविधं भवतीति व्युत्पत्त्या विभुत्वं सर्वात्मत्वम् ॥१५८॥

परस्य देहद्वयावच्छेदेऽपि सूत्रस्य स्वतो व्यष्टित्वमस्तु विराडात्मत्ववदतो न तयोर्विशेष इत्या-शङ्क्याऽऽह—विराडिति । यथा खल्वाकाशं कूपकुम्भाद्यवच्छिन्नं विशेषभावमनुभवति स्वभावतस्त्वनवच्छिन्नम-वतिष्ठते तथैवासुशब्दितः सूत्रात्मा वैराजं देहमुत्पाद्य तेनावच्छिन्नः सन्नध्यात्ममधिभूतमधिदैवमित्युपाधिभेदेषु प्रविष्टो व्यष्टितामश्नुते विराडवच्छेदद्वारेण । अध्यात्माद्युपाधिसंबन्धहीनस्तु समष्टित्वेन वर्तते तेन सूत्रस्य सूक्ष्म-समष्टित्वं विराजः स्थूलसमष्टितेत्यर्थः ॥१५९॥

पूर्वं विराजः सृष्टिरुक्ता संप्रति तस्यामश्राम्यदित्यादेरर्थमनुवदति—उर्व्यामिति । विराज्युत्पादिते महत्कार्यं कृत्वा श्रमात्खिन्नस्य प्रजापतेरात्मा विराड्देहावच्छेदाभिमानविशिष्टो निर्वृत्तो लौकिकवदित्यर्थः ॥१६०॥

तेज[1] एव रस इत्यादेर्भाष्यस्य तात्पर्यं वदन्ननुवादफलमाह—स्थूलेति । यस्मादाद्यः सूत्रात्मा प्रजापतिरेव विराड्देहावच्छिन्नः सन्नेष चित्योऽग्निरिष्यते तस्मादयमग्निरादरेण निरन्तरतया दीर्घकालमुपासितव्य इत्यर्थः ॥१६१॥

सूत्रात्मैव स्थूलदेहावच्छिन्न इत्यत्र पुराणवाक्यं प्रमाणयति—स वा इति । सर्वनामभिः सूत्रात्मा परामृश्यते स एव विराड्भावमापन्नः शरीरीत्यादिभिरुच्यते । भूतानां व्यष्टीनामग्रे व्यष्टिसृष्टेः पूर्वमित्यर्थः ॥१६२॥

---

१. ३४.४

मू०—स त्रेधाऽऽत्मानं व्यकुरुताऽऽदित्यं तृतीयं वायुं तृतीयँ स एष प्राणस्त्रेधा विहितः । तस्य प्राची दिक्शिरोऽसौ चासौ चेर्मौ । अथास्य प्रतीची दिक्पुच्छमसौ चासौ च सक्थ्यौ दक्षिणा चोदीची च पार्श्वे द्यौः पृष्ठमन्तरिक्षमुदरमियमुरः स एषोऽप्सु प्रतिष्ठितो यत्र क्व चैति तदेव प्रतितिष्ठत्येवं विद्वान् ॥३॥

अनुपाख्यतनुः सोऽयं व्यवहारप्रसिद्धये । आत्मानं व्यभजत्स्थूलैस्त्रिधा वाय्वग्निभानुभिः ॥१६३॥

त्रेधाभावकर्ता विराडिति पूर्वपक्षः

स्वरूपानुपमर्देन स विराड्देवतात्मभिः । उपासनादिसिद्ध्यर्थमात्मानं व्यभजत्स्वयम् ॥१६४॥

हिरण्यगर्भ इति सिद्धान्तः

मूलात्मैव त्रिधाऽऽत्मानमभिनत्स प्रजापतिः । इत्यस्य प्रतिपत्त्यर्थं स एष इति भण्यते ॥१६५॥

तस्य प्रथमजस्याग्नेर्विराजोऽर्कस्य वाजिवत् । दर्शनस्य विधानार्थं तस्य प्राचीति कीर्त्यते ॥१६६॥

यस्मात्कारणमुल्लङ्घ्य कार्यं नान्यत्र वर्तते । अप्सु कारणभूतासु तस्मादग्निः प्रतिष्ठितः ॥१६७॥

अप्प्रतिष्ठागुणं देवमुपास्ते योऽनिशं नरः । यत्र क्व चैति तत्रासौ प्रतिष्ठां लभते शुभाम् ॥१६८॥

मू०—सोऽकामयत द्वितीयो म आत्मा जायेतेति स मनसा वाचं मिथुनँ समभवदशनाया मृत्युस्तद्यद्रेत आसीत्स सम्वत्सरोऽभवत् । न ह पुरा ततः सम्वत्सर आस तमेतावन्तं कालमबिभः । यावान्सम्वत्सरस्तमेतावतः कालस्य परस्तादसृजत । तं जातमभिव्याददात्स भाणकरोत्सैव वागभवत् ॥४॥

योऽबादिपरिपाट्यैवं विराजमसृजत्स्वयम् । कीदृग्व्यापारसंयुक्तः सोऽस्राक्षीदिति भण्यते ॥१६९॥

अत्तृसर्गोऽथवोक्तः प्रागन्नसर्गोऽधुनोच्यते । अशनायावतो यस्मान्नास्त्यन्नविरहात्स्थितिः ॥१७०॥

स त्रेधेत्यादेर्भाष्योक्तमर्थमाह—अनुपाख्येति । अपञ्चीकृतमहाभूतदेहत्वाद्व्यवहर्तुमयोग्यत्वं प्रजापतेरनुपाख्यतनुत्वम् । उपास्त्यादिर्व्यवहारः ॥१६३॥

कोऽस्य त्रेधाभावस्य कर्ता प्रजापतिर्विराडात्मा वा हिरण्यगर्भो वेति वीक्षायां पूर्वपक्षमाह—स्वरूपेति । आदिपदेनाभिधानं तत्प्रयुक्तार्थक्रिया च गृह्यते ॥१६४॥

त्रिधाभावकर्ता विराडिति पूर्वपक्षे सिद्धान्तमाह—मूलात्मेति । किमत्र प्रमाणं तदाह—इत्यस्येति । विराजस्त्रेधाभावकर्तृत्वे वाक्यशेषानर्थक्यं स्यादित्यर्थः ॥१६५॥

तस्य प्राचीत्यादेरर्थमाह—तस्येति । अनेन वाक्येन कीर्त्यते काललोकदेवतात्मत्वमग्नेरिति शेषः ॥१६६॥

स एषोऽप्सु प्रतिष्ठित इत्यस्यार्थमाह—यस्मादिति । अप्सु भूतान्तरसहितासु कारणभूतासु सूत्ररूपास्विति यावत् । अग्निरिति पार्थिवो विराडुच्यते ॥१६७॥

यत्र क्व चेत्यादिफलोक्तिं व्याचष्टे—अप्प्रतिष्ठेति । शुभामगर्हितां परलोकाविरोधिनीमित्येतत् ॥१६८॥

सोऽकामयतेत्यादिग्रन्थस्य पूर्वग्रन्थेन भाष्योक्तं संबन्धमाह—योऽबादीति । आदिपदेन पृथिवीग्रहः । यो मृत्युरपञ्चीकृतप्रपञ्चात्मा पञ्चीकृतभूतपञ्चकतत्कार्यसृष्टिक्रमेण तदात्मकं विराजं ससर्ज स केन व्यापारेण युक्तस्तं सृष्टवानित्याकाङ्क्षायामसावुच्यतेऽनन्तरग्रन्थेनेत्यर्थः ॥१६९॥

उद्भाष्यं संबन्धान्तरमाह—अत्त्रिति । तेजोरसो निरवर्तताग्निरित्यत्रात्तुः सर्ग उक्त संप्रत्यन्नसर्ग उच्यत इति साधीयसी संगतिरित्यर्थः । किमर्थमन्नसर्गवचनमित्याशङ्क्यात्तुः स्थित्यर्थमित्याह—अशनायावत इति । अत्र हि विराजः सृष्टिः स्पष्टीक्रियते । अन्नं विराडिति च श्रुतेः । कनीयोऽन्नं करिष्य इति च वक्ष्यते ततोऽयमपि संबन्धो युक्त इति भावः ॥१७०॥

त्रेधा व्यभजदात्मानमित्येतद्वा प्रदर्श्यते । अग्निप्राणौ पुरैवोक्तावथ संवत्सरोद्भवः ।।७१।।
मनसा ज्ञाननिर्देशस्त्रयी वागिति भण्यते । सर्गक्रमं स वेदोक्तं ज्ञानेनाऽऽलोचयत्प्रभुः ।।७२।।
ज्ञानेनाप्रतिघेनासौ वेदोक्तां सृष्टिपद्धतिम् । समन्वालोचयच्छंभुः सिसृक्षुर्विविधं जगत् ।।७३।।
आलोच्यालोचकयोर्हि योगो मिथुनमुच्यते । प्रसिद्धं मिथुनं चात्र न कथंचन युज्यते ।।७४।।
अनन्तराग्निसंबन्धप्रसङ्गविनिवृत्तये । अशनायेति हि प्राह मूलकारणसंगतिम् ।।७५।।
जगतः प्रक्रियाबीजं यदवैषीत्पुरा गृही । द्वैतैकत्वात्मकं ज्ञानं कर्म च ज्ञानसंभृतम् ।।
भावना च तयोरेतत्त्रयं रेतोऽभिधीयते ।।७६।।
सृष्ट्यालोचनहेत्वेतत्सृष्टावाविरभूद्विभोः । तद्भावभाव्यपः सृष्ट्वा रेतोबीजेन स प्रभुः ।।७७।।
सर्वलोकैकबीजेन गर्भ्यण्डेन बभूव ह । अप एव ससर्जाऽऽदौ तासु वीर्यमवासृजत् ।।७८।।
तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । इत्येवं मनुनाऽप्युक्तः श्रौतोऽयं सर्गविस्तरः ।।७९।।

संबन्धान्तरमाह—त्रेधेति । नन्वादित्यं तृतीयमित्यादिना प्रागेव प्रजापतेस्त्रेधात्मत्वमुक्तं तत्कथं तदुक्त्यर्थमुत्तरं वाक्यं तत्राऽऽह—अग्नीति । निरवर्ततानिरित्यग्निरुक्तो वायुं तृतीयमिति च वायुः । यद्यप्यादित्यं तृतीयमित्यादित्योऽप्युक्तस्तथाऽपि तस्य संवत्सरात्मनो जन्मोक्त्यर्थमुत्तराश्रुतिरित्यर्थः ।।१७१।।

संबन्धमनेकधोक्त्वा स मनसेत्यादेरर्थमाह—मनसेति । मनसेति ज्ञाननिर्देशो वागिति त्रयी भण्यत इति योजना । पदार्थमुक्त्वा वाक्यार्थमाह—सर्गेति । स प्रभुरिति सूत्रात्मोक्तिः । ज्ञानेनाप्रतिहतेन सत्त्वपरिणामाभिव्यक्तेन चैतन्येनेति यावत् ।।१७२।।

नन्वीश्वरो वैदिकीं सृष्टिं ज्ञानेनाऽऽलोचयितुं नालं पुरुषत्वादस्मदादिवदित्याशङ्क्य प्रतिहतज्ञानत्वमुपाधिरित्याह—ज्ञानेनेति । अथास्य सिसृक्षा स्वार्थाऽन्यार्था वा ? नाऽऽद्यः आप्तकामत्वान्नेतरोऽन्याभावादित्याशङ्क्य कल्पितानां प्राणिनां कर्मफलभोगार्थं तत्सिसृक्षेति मत्वाऽऽह—शंभुरिति ।।१७३।।

मिथुनं समभवदित्यत्र मिथुनशब्दार्थमाह—आलोच्येति । आलोच्यो वेदोक्तसृष्टिक्रम आलोचकं तु मनःशब्दितं ज्ञानं तयोर्योगो विषयविषयित्वं तदत्र श्रुतिप्रसिद्धं मिथुनमित्यर्थः । प्रसिद्धमेव मिथुनमत्र किं न स्यादित्याशङ्क्य स्त्रीपुंसयोरप्रस्तुतत्वान्नैवमित्याह—प्रसिद्धमिति । अत्रेत्यध्यात्मप्रकरणोक्तिः ।।१७४।।

अशनाया मृत्युरित्यत्राशनायाग्रहणस्य तात्पर्यमाह—अनन्तरेति । अशनायेति च्छान्दसं मृत्युविशेषणम् । अशनायालक्षितो मृत्युरिति पुनरुक्तिर्मूलकारणेन सूत्रेण संगतिं स मनसेत्यत्र सर्वनाम्नः सूचयति । तथा चानन्तरप्रकृतेनाग्निना विराजा तस्य संबन्धप्रसक्तिनिवृत्तिः फलतीत्यर्थः ।।१७५।।

तद्यद्रेत आसीदित्यत्र रेतःशब्दार्थमाह—जगत इति । प्रक्रिया सृष्टिः । पुरेति साधकावस्थोक्तिः । किं तज्जगतः सृष्टिबीजं यजमानेन संचितं तदाह—द्वैतेति । उपास्यस्य नानात्वात्तदुपास्तिरपि तथा ज्ञानसंभृतं ज्ञानेन समुच्चितमिति यावत् ।।१७६।।

ज्ञानकर्मणी तयोर्भावनेत्येतत्त्रयं जन्मान्तरे संचितं सत्तामात्रेण वा दृष्टं वा सृष्टिकारणम् ? आद्ये मनसा त्रय्यालोचनमकिंचित्करं द्वितीये कदा तद्दृष्टिरित्याशङ्क्याऽऽह—सृष्टीति । सृष्टेरालोचनं हेतुं कृत्वा ज्ञानादित्रयं जन्मान्तरार्जितं सृष्टिकाले फलावस्थस्य प्रजापतेराविर्भूतमित्यर्थः । व्यक्तस्य रेतसो ज्ञानादित्रयस्य कार्यमाह—तद्भावेति । आविर्भूतज्ञानादियुक्तस्तेनैव पञ्चीकृतानि भूतानि सृष्ट्वा तेषु प्रविश्य स्थावरजङ्गममात्रहेतुनाऽण्डेन गर्भवानभूत्प्रजापतिरित्यर्थः । हेतिनिपातो हिरण्यगर्भः समवर्ततेत्यादौ यथोक्तस्य गर्भस्य प्रसिद्धत्वद्योतनार्थः । उक्तेऽर्थे स्मृतिं प्रमाणयति—अप इति । आदावित्यण्डसर्गात्प्रागिति यावत् । अप्शब्देन भूतान्तराण्यपि लक्ष्यन्ते स्थूलानि भूतान्यादौ सृष्टवान्प्रजापतिरित्यर्थः । ततो ज्ञानादिद्वारा भूतेषु प्रवेशं तस्याऽऽह—तास्विति ।।१७७-१७८।।

प्रविष्टस्याण्डेन गर्भित्वं ब्रूते—तदण्डमिति । हैमं ज्योतिर्मयमिति यावत् । तत्र दृष्टान्तः—सहस्रेति । उक्तस्मृत्या सहैकवाक्यत्वं प्रकृतश्रुतेराह—इत्येवमिति ।।१७९।।

आपो ह वा इति तथा ह्ययमेव क्रमः श्रुतौ । ज्ञानकर्मादिबीजस्य गर्भ एवं प्रजापतेः ।।८०।।
स संवत्सरोऽभवदिति परिमाणोऽयमुच्यते । अशनायादिमत्त्वात्स स्वभावबलचोदितः ।।८१।।
सृष्ट्वाऽऽद्यं घस्मरः पुत्रं तमभिव्याददात्क्षुधा । भिनत्ति सर्वमर्यादां नान्वयाद्यप्यपेक्षते ।।८२।।
अस्य दग्धोदरस्यार्थे को न कुर्यादसांप्रतम् ।।८३।।
अन्न एव यतो वृत्तिरत्तुरन्नाद एव च । अन्नस्य युक्तमेवातस्तमभिव्याददादिति ।।८४।।
जन्मान्तरसमभ्यस्तविद्याकर्मादिहेतुतः । जन्यकर्मप्रयुक्तः सञ्शिशुर्भाणित्यथाकरोत् ।।८५।।
यथोक्तहेतुवशगः स्वभावप्रहितोऽप्यसुः । कुमारोत्थरवत्रस्तः स्वभावं चिच्छिदे भयात् ।।८६।।
अत्यन्तमपि शूराणां स्वस्वभावैकहेतुतः । तित्तिरादिसमुत्पाते[1] वेपथुर्जायते भयात् ।।८७।।

मू०—स ऐक्षत यदि वा इममभिमँस्ये कनीयोऽन्नं करिष्य इति । स तया वाचा तेनाऽऽत्मनेदँ सर्वमसृजत यदिदं किञ्चर्चो यजूँषि सामानि छन्दाँसि यज्ञान्प्रजाः पशून् । स यद्यदेवासृजत तत्तदत्तुमध्रियत सर्वं वा अत्तीति तददितेरदितित्वँ सर्वस्यैतस्यात्ता भवति सर्वमस्यान्नं भवति य एवमेतददितेरदितित्वं वेद ।।५।।

श्रुतिस्मृत्युक्तसृष्टिक्रमे श्रुत्यन्तरमपि मानमित्याह—आप इति । यथाऽस्मिन्वाक्ये मनुवाक्ये च क्रमः सृष्टेः श्रुतस्तथाऽयमेवा''ऽऽपो ह वा इदमग्र आसुः सलिलमेवे''त्यादिपूर्वोक्तशातपथश्रुतावपि क्रमः श्रुत इति योजना । सृष्टिक्रममुक्त्वा प्रजापतेर्गर्भं निगमयति—ज्ञानेति ।।१८०।।

कियन्तं कालमण्डेन स गर्भी बभूवेत्यपेक्षायामाह—स इति । स प्रजापतिः संवत्सरनिर्माता तदात्माऽऽदित्यो निर्वृत्तो न हि तस्मात्पूर्वं संवत्सरो नामाऽऽदित्योदयाधीनत्वात्तन्निश्चयस्य । स च संवत्सरो यावानिह प्रसिद्धस्तावन्तं कालमण्डेन गर्भवानासीदिति परिमाणसहितो गर्भोऽभिधीयतेतं च विराडात्मकं संवत्सरादूर्ध्वं सृष्टवानित्यर्थः । परिच्छिन्नं मानमस्येति व्युत्पत्त्या गर्भस्तथा । तं जातमित्यादेरर्थमाह—अशनायेति । मृत्युर्हि ग्रसनशीलस्तेनैव हिंसास्वभावेन चोदितः क्षुत्पिपासायुक्तत्वाज्ज्येष्ठं पुत्रं सृष्ट्वा तमत्तुमभिमुखत्वेन मुखं विदारितवानित्यर्थः । पुत्रमत्तुं प्रवृत्तस्य स्रष्टुर्मर्यादाभङ्गः स्यादित्याशङ्क्याऽऽह—क्षुधेति । अशनायाद्युपद्रुतो मर्यादां भिन्दानोऽपि स्वात्मानं च परं च दृष्टवैवाशने प्रवर्ततेत्याशङ्क्याऽऽह—नान्वयेति । आदिपदेनाभोज्यादिग्रहः । मर्यादाभेत्तृत्ववदित्यपेरर्थः ।।१८१-१८२।।

नन्वविवेकिनामेवं प्रवृत्तावपि न विवेकिनामित्याशङ्क्याऽऽह—अस्येति । विवेकिनामपि पश्वादिभिरविशेषो व्यवहारदशायामिति भावः । क्षुत्पिपासापीडितः पुत्रमपि भक्षयति किं पुनरन्यन्न करोतीत्याक्रोशमुक्त्वा प्राणस्य स्वपुत्रभक्षणे प्रवृत्तिर्युक्तेत्याह—अन्न इति । अत्तुरन्नाधीनत्वमध्यक्षमन्नस्याप्यत्त्रधीनत्वं युक्तं तस्य स्वार्थमन्नसृष्टेरतोऽत्तुरन्नं सृष्ट्वा तदत्तुं मुखविदारणमुचितमित्यर्थः ।।१८३-१८४।।

स भाणकरोदित्यस्य सहेतुकमर्थमाह—जन्मान्तरेति । आदिपदं वासनार्थम् । जनिष्यमाणप्राणिकर्मणश्च तत्र हेतुत्वमाह—जन्येति । असंस्कृतशब्दकरणे हेत्वन्तरमाह—शिशुरिति । व्यादितास्यमन्तकमन्तिके दृष्ट्वा भीत्यनन्तरमित्याह—अथेति ।।१८५।।

तथाऽपि किमिति मृत्युः पशुमिव व्याघ्रो न तं भक्षितवानित्याशङ्क्याऽऽह—यथोक्तेति । हेतुशब्दो जन्यकर्मार्थः । स्वभावो हिंस्रत्वम् । असुः प्राणो मृत्युरिति यावत् । स कुमारकृतरवेण त्रस्तः सन्भयादेव स्वभावमजहत्तद्भक्षणादुपरतवानित्यर्थः ।।१८६।।

सर्वसंहर्तुरतिशूरस्य प्रजापतेः शिशुशब्दश्रुतिमात्रात्कथं त्रासः स्यात्तत्राऽऽह—अत्यन्तमिति । स्वस्वभावो नाम प्रकृतिस्वभावः ।।१८७।।

---

१. तित्तिरिः अल्पपरिमाणः पक्षी तत्पतनेऽपि शूराणां भीतिर्जायते—सा च मरणभयात्—मरणं च प्रतिजन्म अनुभूतम् ।

एवं स शिशुसंरावसंलब्धालोचनक्षणः[1] । ऐक्षतेह न कामार्तः कश्चिदालोचने क्षमः ॥८८॥
मन्यतिश्चाभिपूर्वोऽयं हिंसार्थः स्यात्प्रसिद्धितः । यदीममभिहिंसिष्ये कनीयोऽन्नं भवेद्ध्रुवम् ॥८९॥
कारणादल्पमेव स्यात्तद्व्याप्तेरदितिर्यतः । अन्नमल्पं ततोऽप्यल्पात्कनीयोऽन्नं भवेदतः ॥९०॥
लोकेऽपीदं सुप्रसिद्धमाङ्गनाबालपण्डितम् । जग्धनिःशेषबीजस्य तत्फलं नाऽऽप्यतेऽण्वपि ॥९१॥
कुमारवक्त्रोद्गतया वाचर्गादीन्ससर्ज सः । पश्वादींश्च कुमारेण ह्यात्मनाऽजीजनज्जगत् ॥९२॥
स्रष्टृत्त्रोः कार्यभक्ष्याभ्यामन्योन्याव्यतिरेकतः । स्रष्टृत्वात्स सृजत्येव खाद्यतेऽन्नं सदाऽऽद्यतः ॥९३॥
सर्वमत्ति यतः सृष्टं तस्माददितिरुच्यते । नामज्ञस्तमुपासीनः सर्वस्यात्ताऽदितिर्भवेत् ॥९४॥

स ऐक्षतेत्यस्यार्थमाह—एवमिति । शिशोः संरावेण संलब्धो भाविन्यालोचने क्षणो येनेति बहुव्रीहिः । प्रजापतेः सर्वज्ञत्वादीक्षणं स्वतः संभवति किं निमित्तविशेषोक्त्येत्याशङ्क्याशनायावानपीति भाष्ये[2] विवक्षितमाह—इहेति । तथाऽपि प्रजापतेरतिनिपुणत्वादुक्तनिमित्तवशादीक्षितवानिति शेषः ॥१८८॥

अभिपूर्वो[3] मन्यतिरित्यादिभाष्यार्थमाह—मन्यतिश्चेति । तत्र 'रुद्रोऽस्य पशूनभिमन्येत' 'नास्य रुद्रः पशूनभिमन्यते' 'पशून्नाभिमंस्यत इति' 'ततो वै रुद्रः पशून्नाभ्यमन्यते'त्यादिश्रुतिप्रसिद्धिं प्रमाणयति—प्रसिद्धित इति । पदार्थमुक्त्वा वाक्यार्थमाह—यदीति ॥१८९॥

कथं विराजो हिंसनेऽन्नस्य कनीयस्त्वं तत्राऽऽह—कारणादिति । सूत्रात्कारणाद्वैराजं शरीरमन्नबीजत्वादन्नशब्दितमल्पं सूत्रेण तस्य व्याप्तत्वात्तस्यापि हिंसने कुतोऽन्नसमृद्धिरित्यर्थः । अन्नस्याल्पत्वे हेत्वन्तरमाह—अदितिरिति । यतः सूत्रमदितिर्द्यौरदितिरन्तरिक्षमित्यादावदितिरिति प्रसिद्धमतस्तेन प्रतिक्षणं भक्ष्यमाणमन्नमल्पं युक्तमित्यर्थः । तथाऽपि विराजो भक्षणे किमित्यन्नस्याल्पत्वं तत्राऽऽह—ततोऽपीति । हेत्वभावे फलाभावोऽतःशब्दार्थः । अन्नबीजस्य विराजो भक्षणे कुतोऽन्नसमृद्धिर्न हि हेत्वभावे कार्यं संभवतीति भावः ॥१९०॥

कुलालाभावे घटवद्विराडभावेऽपि स्यादन्नमित्याशङ्क्याऽऽह—लोकेऽपीति । यद्यप्युत्पन्नो घटो निमित्ताभावेऽपि तिष्ठति तथाऽपि तदभावे न जायते न चोपादानं विना भावकार्यसंभवो न हि बीजमङ्कुरकारणं भक्षितवता तत्कारणोऽङ्कुरो लभ्यतेऽतो विराडभावे जन्माभावादन्नस्य समृद्धिर्दूरनिरस्तेत्यर्थः ॥१९१॥

स[4] तयेत्यादेरर्थमाह—कुमारेति । स हि स्वकीयकुमारमुखनिर्गतया वाचा वेदादीनात्मना च कुमारेण पश्वादीनर्थानजीजनदेवं वाच्यवाचकरूपं जगद्विराजा तद्वक्त्रोत्थया वाचा चोत्पादितवान्प्रजापतिर्न हि हेतुभूतयोक्तत्रय्यैव त्रय्याः सृष्टिर्न चाव्यक्ता त्रयी तद्व्यक्तिहेतुः तयेत्यनन्तरप्रकृतकुमारमुखनिर्गतवाग्ग्रहणसंभवे क्लिष्टकल्पनानवकाशादिति भावः ॥१९२॥

तर्हि प्रजापतेः स्रष्टृत्वमेव नात्तृत्वमन्यथाऽन्नवृद्ध्यसिद्धेस्तत्कुतोऽस्यादितित्वं तत्राऽऽह—स्रष्टृति । स्रष्टा कार्यं तच्च तमपेक्षतेऽत्ता भक्ष्यं तच्च तमपेक्षतेऽतः स्रष्टा कार्यं सृजत्येव स्रष्टृत्वादन्यथा तदसिद्धेरत्त्रा चान्नं सदैवाद्यते तस्याऽऽद्यत्वेनैव स्थितेरित्यर्थः ॥१९३॥

स्रष्टुरदितित्वमुपपाद्य सर्वमित्यादेरर्थमाह—सर्वमिति । सर्वस्येत्यादि व्याचष्टे—नामेति । यथोपासनं हि फलं तथाच प्रजापतिमदितिनामानमात्मत्वेन ध्यायन्ध्येयात्माऽदितिर्भूत्वा तत्तदत्तृरूपमापन्नः सर्वस्यात्ता स्यादित्यर्थः ॥१९४॥

---

१. आलोचने क्षणः निर्व्यापारस्थितिः यस्येत्यर्थः भवता क्षणः कर्तव्यः इत्यादाविवायमेवार्थः न तु क्षणः कालः ।

२. ३८.९ ३. ३९.१

४. "स तया वाचा तेनात्मनेदं सर्वमसृजत" इति श्रुतेः भाष्यं तयैव त्रय्या वाचा सूक्ष्मया पूर्वोक्तया तेनैवात्मना मनसा मिथुनीभावं आलोचनमुपगम्य स्थावरादीन् ऋगादीन् कर्माङ्गभावेनोपयोगिनः स्थूलान् असृजत-इति । अत्र तु "तया वाचा" इत्यत्र तच्छब्देन त्रयीग्रहणं क्लिष्टमित्यनुसन्धाय तया कुमारनिर्गतया वाचा वेदादीन्; आत्मना कुमारेण पश्वादीन् असृजत इति वार्तिककृता व्याख्यातम् ।

**सर्वात्तृत्वेन सिद्धेऽर्थे सर्वान्नोक्तिः किमीर्यते । अन्नमेव भवेदन्नं नान्नमन्नस्य कुत्रचित् ॥१९५॥**
**प्राणात्माऽत्तैव सोऽवश्यमुपासनबलाद्भवेत् । य एवमभिधानज्ञ उपासीतादिति सदा ॥१९६॥**

मू०—सोऽकामयत भूयसा यज्ञेन भूयो यजेयेति । सोऽश्राम्यत्स तपोऽतप्यत तस्य श्रान्तस्य तप्तस्य यशोवीर्यमुदक्रामत् । प्राणा वै यशो वीर्यं तत्प्राणेषूत्क्रान्तेषु शरीरँ श्वयितुमध्रियत तस्य शरीर एव मन आसीत् ॥६॥

**अश्वाश्वमेधनाम्नोऽथ कारणप्रतिपत्तये । सोऽकामयत इत्यादिः परो ग्रन्थोऽवतार्यते ॥१९७॥**
**यज्ञेन भूयसा यक्ष्य इत्येवं स प्रजापतिः । अश्वमेधो भवेद्भूयान् भूयोदक्षिणको हि सः ॥१९८॥**
**यजेय भूयोऽपीत्येवमकामयत भावितः । क्रत्वात्मेत्यभिमानेद्धः पूर्वजन्मन्यभूत्प्रभुः ॥१९९॥**
**पूर्वजन्माभिनिर्वृत्तप्रयोगापेक्षयोच्यते । भूयो यजेयेति वचः सदा तद्भावभावनात् ॥२००॥**
**क्रत्वात्मैवाभिसंपन्नो द्वैतैकत्वात्मकः प्रभुः । इह तत्फलतां यातो भूयोवाग्युज्यते ततः ॥ १ ॥**

सर्वमत्तीत्यनेनैव सर्वस्यान्नत्वसिद्धेः सर्वमस्यान्नमिति पुनरुक्तिरिति शङ्कते—सर्वेति । अन्नमन्नमेवास्य सदा न कदाचित्तदस्यात्तृ भवतीति वक्तुं सर्वमस्यान्नमित्युक्तिरित्याह—अन्नमिति ॥१९५॥

य एवमित्यादिवाक्यं व्याकरोति—प्राणेति । उपासितुरुपास्यदेवताभावे प्रतिबन्धकाभावं दर्शयति—अवश्यमिति । उपासनस्य बलं भावनाप्रकर्षस्तदर्थमेव सदेत्युक्तम् ॥१९६॥

अथोपास्तिविधौ सफले सति समाप्तिरेव ब्राह्मणस्योचिता किमुत्तरग्रन्थेनेत्याशङ्क्याऽऽह—अश्वेति । संधिरविवक्षितः । अप्रतिष्ठितत्वमदितित्वमितिगुणवतः प्रजापतेरुपासनोक्त्यनन्तरं तस्यैवाश्वादिनामप्रवृत्तिनिमित्तप्रतिपत्त्यर्थमुत्तरो ग्रन्थः । स चावतार्यते तात्पर्योक्त्या भाष्यकृतेत्यर्थः ॥१९७॥

संगतिमुक्त्वा श्रुत्यक्षराणि योजयति—यज्ञेनेति । अकामयतेति शेषः । कोऽसौ यज्ञो भूयानिति तमाह—अश्वमेध इति । तस्य भूयस्त्वे हेतुमाह—भूय इति । प्राच्यादिदिक्चतुष्टयस्याध्वर्युप्रभृतिभ्यश्चतुर्भ्यो भूम्यवच्छिन्नस्य चावशिष्टस्य धनस्य सदस्येभ्यो दक्षिणात्वेन देयतायास्तत्राऽऽपस्तम्बादिभिः स्मृतत्वादित्यर्थः ॥१९८॥[1]

तेन यक्ष्यमाणस्याननुष्ठिताश्वमेधस्य प्रजापतेर्भूयःशब्दोक्तिः कथमित्याशङ्क्याऽऽह—यजेयेति । भावितत्वं भूयःशब्दप्रयोगकारणं साधयति—क्रत्वात्मेति । बाह्यस्याऽऽन्तरस्य च क्रतोरात्मा हिरण्यगर्भोऽस्मीत्यभिमानातिरेकात्तद्रूपेण भानविषयो यजमानावस्थायां प्रजापतिरासीदित्यर्थः ॥१९९॥

अथातीते जन्मनि यजमानोऽश्वमेधस्य कर्ताऽभूदधुना हिरण्यगर्भो भूयो यजेयेत्याह तथाच कर्तृभेदाद्भूयःशब्दासामञ्जस्यमित्याशङ्क्याऽऽह—पूर्वेति । साधकसमये समुत्थक्रत्वनुष्ठानापेक्षया भूयो यजेयेत्युच्यते तेन तस्याश्वमेधवासनाविशिष्टस्य कल्पादौ ज्ञानकर्मफलत्वेन वृत्तस्य भूयोगीरुचिता कर्तृभोक्त्रोरैक्येन साधकफलावस्थयोर्यजमानसूत्रयोर्भेदाभावादित्यर्थः । उक्तमेव स्फुटयति—सदेत्यादिना । साधकावस्थायां दीर्घकालमादरेण निरन्तरतया

---

१. "प्राचीं होत्रे ददौ राजा" इति अश्वमेधदक्षिणात्वेन चतुर्णां दिशां चतुर्भ्यो महर्त्विग्भ्यः स्वगणान्तर्गतेतरऋत्विक्सहितेभ्यः देयत्वं कल्पसूत्रकारैः आपस्तम्बादिभिरुक्तम् । तथापि सर्वस्वदक्षिणा कथं देया यजमानस्य यावज्जीवं वृत्तिः तत्र कर्तव्ययागाद्यर्थं धनं चावश्यकमिति विमृश्य पूर्वमीमांसाषष्ठाध्यायषष्ठपादे "अशेषत्वात्तदन्तः स्यादि"त्यधिकरणे—इदं मे भक्षार्थमिदं मे दक्षिणार्थं इदं मे यज्ञार्थं इति स्वीयं धनं त्रेधा विभज्य दक्षिणार्थस्यैव सर्वस्य दानं निर्णीतम् । राज्ञः प्रागादिदिशां दानं तत्तद्देशपरिपालकत्वमात्रस्य समर्पणं न तु तत्तदेशस्वत्वस्यापि तत्तद्देशभागानां तत्तद्देशवासिजनैः क्रयादिना स्वीकृतत्वात् तत्र राज्ञः स्वत्वाभावात् । परिपालनं तदर्थतया करग्रहणं च यद्राज्ञो वर्तते तदेव देयमित्यर्थः । तदुक्तं जैमिनिना—"स भूमिस्स्यात् सर्वान् प्रत्यविशिष्टत्वात्" ( ६-७-३ ) ।

कारणप्रवणं सर्वं कार्यं दृष्टं जगत्यपि । प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥ २ ॥
यशोवीर्यैकहेतुत्वात्प्राणा यश इहेष्यताम् । यशः प्रकाशरूपेण वीर्यं तद्बलहेतुतः ॥ ३ ॥
उदक्रामद्यशो वीर्यं विराजः श्रमकर्शितात् । लिङ्गात्मेह यशो वीर्यमुभयं हि तदुद्भवम् ॥ ४ ॥
पूर्वदेहेऽभिषङ्गोऽभूदपविद्धतनोरपि । सङ्गत्यागो ह्यसंभाव्यो विनैकात्म्यावबोधनात् ॥ ५ ॥

मू०—सोऽकामयत मेध्यं म इदं स्यादात्मन्व्यनेन स्यामिति । ततोऽश्वः समभवद्यदश्वत्तन्मेध्यमभूदिति तदेवाश्वमेधस्याश्वमेधत्वम् । एष ह वा अश्वमेधं वेद य एनमेवं वेद । तमनवरुध्यैवामन्यत । तं संवत्सरस्य परस्तादात्मन आलभत । पशून्देवताभ्यः प्रत्यौहत् । तस्मात्सर्वदेवत्यं प्रोक्षितं प्राजापत्यमालभन्त एष ह वा अश्वमेधो य एष तपति तस्य संवत्सर आत्माऽयमग्निरर्कस्तस्येमे लोका आत्मानस्तावेतावर्काश्वमेधौ । सो पुनरेकैव देवता भवति मृत्युरेवापपुनर्मृत्युं जयति नैनं मृत्युराप्नोति मृत्युरस्याऽऽत्मा भवत्येतासां देवतानामेको भवति ॥७॥

इति प्रथमाध्यायस्य द्वितीयं ब्राह्मणम् ॥२॥

जातदेहाभिषङ्गः संस्तादात्म्यप्रतिपित्सया । मेध्यमित्यादिकं कामं सोऽकामयत कामुकः ॥ ६ ॥
अपविद्धयशोवीर्यं शरीरं कवियोगतः । यतोऽश्वयदतोऽश्वोऽसुः संवृत्तः स प्रजापतिः ॥ ७ ॥

हिरण्यगर्भोऽस्मीतिभावनावशादुभयविधक्रत्वात्मा प्रजापतिरेव समष्टिव्यष्ट्यात्मा संपन्नः सन्नेतत्कल्पादौ क्रतुफलतां यतो यातस्ततो भूयःशब्दो युक्तिमानित्यर्थः ॥२००–२०१॥

ननु तस्येश्वरस्य कथं दुःखात्मकक्रत्वनुष्ठानेच्छा न हि सुखी दुःखं भोक्तुमर्थयते तत्राऽऽह—कारणेति । सर्वमपि कार्यं व्यवहारभूमौ प्रकृतितन्त्रं दृष्टं तथा च सूत्रस्यापि प्रकृतिवशात्क्रत्वनुष्ठानेच्छा । कर्ता हि भोक्तुः फलावस्थस्य प्रकृतिः । स च क्रतुमन्वतिष्ठदतस्तद्वशात्फलभूतस्यापि प्रजापतेस्तदनुष्ठानेच्छेत्यर्थः । सर्वं कार्यं प्रकृतितन्त्रमित्यत्र भगवद्वाक्यं प्रमाणयति—प्रकृतिमिति । ज्ञानवानपि प्रकृत्यनुरूपं चेष्टते सर्वाणि हि भूतानि तत्तन्त्राणि परनिमित्तो निग्रहो न प्रकृतिप्रवृत्तेर्निवारक इत्यर्थः ॥२०२॥

प्राणा वै यशो वीर्यमित्यत्र प्राणानां यशस्त्वं वीर्यत्वं चोक्तं तत्र हेतुमाह—यश इति । द्वितीयो यशः—शब्दो वीर्यस्याप्युपलक्षणम् । इहेति वाक्यं देहो वा गृह्यते । यशोवीर्यशब्दयोरर्थविशेषमाह—यश इति । प्रकाशो नाम ख्यातिस्तद्धेतुत्वाकारेण प्राणानां यशस्त्वं न हि पुमानसत्सु प्राणेषु यशस्वी । अस्ति च देहे तेषां बलहेतुत्वं न हि तेषूत्क्रान्तेषु देहे बलं दृष्टमतो यशोवीर्यत्वं तेषां युक्तमित्यर्थः ॥२०३॥

तदेवमित्यादिभाष्यं विभजते—उदक्रामदिति । कथं बहूनां प्राणानां यशोवीर्यत्वं न हि तेषां प्रत्येकं तद्भावः कस्यचिद्भावेऽपीतरेषामभावे देहे ख्यातिबलयोरनुपलम्भात् । नापि मिलितानां तथात्वमेकस्याप्यभावे तदभावप्रसङ्गादिति । तत्र श्रुतिभाष्ययोरभिप्रायमाह—लिङ्गात्मेति । इहेति स्थूलदेहोक्तिः । लिङ्गात्मनि यशोवीर्यशब्दयोर्वृद्धप्रयोगाभावान्नैवमित्याशङ्क्याऽऽह—उभयं हीति । यशश्च वीर्यं चेत्युभयं लिङ्गात्मनः सकाशादुद्भवति तदभावे तदयोगात्तस्माद्युक्तं लिङ्गात्मनस्तथात्वमित्यर्थः ॥२०४॥

तस्येत्यादिभाष्यार्थमाह—पूर्वेति । ननु प्रजापतेर्देहान्निर्गतस्यापि किमिति तस्मिन्नेवाऽऽसक्तिरासीन्न हि बुद्धिपूर्वकारी दुःखायतनाय देहाय स्पृहयति तत्राऽऽह—सङ्गेति । "रसवर्जमि"त्याद्या स्मृतिरत्रानुगुणेति द्योतयितुं हिशब्दः ॥२०५॥

सं तस्मिन्नित्यादिभाष्यं योजयति—जातेति । तद्देहासक्तिरेवोक्तकामनायां हेतुरिति वक्तुं कामुक इत्युक्तम् ॥२०६॥

ननु प्रजापतेरश्वादिनामनिर्वचनार्थमुपक्रान्तं तदकृत्वा कथमन्यदाचरितमत आह—अपविद्धेति । कस्य

१. ४१-७ २. ४२.१

व्यपेतसद्यशोवीर्यममेध्यं मेध्यतामगात् । तत्प्रवेशाद्यतोऽतोऽयमश्वमेधोऽभवत्प्रभुः ।। ८ ।।
अश्वाश्वमेधावेवं च प्राजापत्यात्मनाऽञ्जसा । अभिष्टुतौ कथं नाम भवेतामिति भण्यते ।। ९ ।।

अश्वस्याग्नेश्चैकमुपासनम्

काललोकादिवपुषस्त्वश्वस्याग्नेश्च सांप्रतम् । समस्योपासनं वाच्यमित्यर्थो ग्रन्थ उत्तरः ।।१०।।
विधायकपदाभावादसंगानं परस्परम् । पदानामिति मा प्रापदित्यर्थेयं परा श्रुतिः ।।११।।
एष एवं यथातत्त्वमश्वमेधं विवेद यः । वक्ष्यमाणेन रूपेण वेद विद्यादतस्तथा ।।१२।।
आत्मानमश्वं संकल्प्य काललोकादिधर्मिणम् । तथाविधशरीरः सन्सर्वलोकपितामहः ।।१३।।
यजेयमश्वमेधेन भूयोऽपीत्यभ्यमन्यत । भूर्लोकाद्यात्मकं सोऽश्वमात्मानं निरवग्रहम् ।।१४।।
यावदब्दं मुमोचाश्वं स्वच्छन्दं मुक्तबन्धनम् । ततः संवत्सरादूर्ध्वं तं चाप्यालभताऽऽत्मने ।।१५।।
स्वात्मावयवभूताभ्यो देवताभ्यो यथायथम् । ग्राम्यारण्यान्पशून्प्रादादन्याभ्यः स प्रजापतिः ।।१६।।

प्राणस्य शरीराद्वियोगादिदं शरीरं यशोवीर्यशून्यमश्वयदुच्छूनतां यतो गतवदतोऽश्वस्तस्मिन्प्रविष्टः प्रजापतिरित्यर्थः । देहस्याश्वत्वेऽपि न प्रजापतेरश्वत्वमित्याशङ्क्य तत्तादात्म्यादश्वत्वं तस्यापीत्याह—अश्वोऽसुरिति । अश्वस्य प्रजापतित्वेन स्तुतत्वात्तस्योपास्यत्वं फलितमिति भावः ।।२०७।।

अश्वनामनिर्वचनेऽपि कथमश्वमेधनामनिर्वचनमित्याशङ्क्याऽऽह—व्यपेतेति । व्यपेते सती यशोवीर्ये यस्मादिति विग्रहः । शरीरं हि प्राणवियोगादश्वयत्तत्प्रवेशाच्च मेध्यमित्यश्वमेधसंज्ञामर्हति प्रजापतेरश्वमेधत्वं देहतादात्म्यादित्यर्थः ।।२०८।।

उक्तरीत्या तस्याश्वत्वादिनिर्देशस्य फलमाह—अश्वेति । भण्यते प्रजापतेरश्वत्वमश्वमेधत्वं चेति शेषः ।।२०९।।

ननु क्रत्वङ्गस्याश्वस्याश्वमेधक्रत्वात्मनश्चाग्नेरुक्तरीत्या स्तुतत्वात्तदुपास्तेश्च पूर्वमेवोक्तत्वादेष ह वा अश्वमेधमित्यादि किमर्थं तत्राऽऽह—कालेति । आदिपदं देवतार्थम् । इदं च विशेषणमुभयत्र संबध्यते । अश्वोपासनमुषा वा इत्यादिनोक्तमुक्तं चाग्न्युपासनं नैवेत्यादिना तदुभयं न मिथो भिन्नं किं त्वेकमेवेति वक्तुमुत्तरवाक्यमित्यर्थः ।।२१०।।

कथमुक्तोपास्त्योरेकत्वं तत्राऽऽह—विधायकेति । पूर्वत्र विधिपदाभावात्पदानां मिथोऽसंगतिरिति प्राप्तं तन्मा भूदित्येवमर्थं विधिपदसहितमुत्तरं वाक्यं प्रवृत्तं यद्यपि पूर्वत्रादितित्वं वेदेति विधिः श्रुतस्तथाऽपि स गुणोपास्तिविधिर्न प्रधानविधिरत्र त्वश्वमेधं वेदेति प्रधानविधिरिति भावः ।।२११।।

उत्तरवाक्यतात्पर्यमुक्त्वा तदक्षराणि योजयति—एष इति । एवंशब्दात्प्रसिद्धार्थत्वे भाति कुतो विधिरित्याशङ्क्याभीष्टं विधिमाह—विद्यादिति । तस्यैवाश्वमेधवेदित्वादित्यतःशब्दार्थः वक्ष्यमाणप्रकारार्थस्तथाशब्दः ।।२१२।।

अस्य विधेर्भूमिकां करोति—आत्मानमिति । आत्मशब्दः शरीरविषयः । अश्वमेधं विशिनष्टि—कालेति । आदिपदेन देवताग्रहः । आत्मशब्दार्थं निश्चेतुं प्रजापतिं विशिनष्टि—तथेति । काललोकदेवतादृष्ट्या दृष्टस्याश्वस्य प्रजापतिदेहत्वं युक्तं तस्य सर्वहेतुत्वेन सर्वेण तादात्म्यसंभवादित्याह—सर्वेति ।।२१३।।

प्रजापतेः स्वदेहस्याश्वत्वकल्पनं किमर्थमित्यपेक्षायामाह—यजेयमिति । स्वकीयसंकल्पानुगुणत्वेन स्वदेहस्याश्वत्वं कल्पितमित्यर्थः । ननु तस्य देवतात्मनो देवतान्तराभावात्कर्मानधिकारात्कथं भूयो यजेयेत्याशंसनं; मैवमुपास्तिविध्यर्थमस्यार्थवादत्वादिति मत्वा तमित्यादेरर्थमाह—भूरिति । निरवग्रहत्वं निरङ्कुशत्वमप्रतिबद्धत्वम् । तत्र हेतुर्मुक्तेति । स्वच्छन्दत्वं स्वेच्छाचारित्वमप्रतिबद्धत्वफलम् । द्विरश्वशब्दस्तत्प्राधान्यद्योती । तदनन्तरं किं कृतवानित्युक्ते तं संवत्सरस्येत्यादेरर्थमाह—तत इति ।।२१४-२१५।।

पशूनित्यादि व्याचष्टे—स्वात्मेति । स हि प्रजापतिः स्वात्मनोऽवयवभूता या देवतास्ताभ्योऽन्यादिभ्यो

यतोऽकरोद्विराडेवं तस्मादेवेह याज्ञिकाः । प्रोक्षितं सर्वदेवत्यं प्राजापत्यं तुरंगमम् ॥१७॥
आलभन्ते यतस्तस्माद्यथाव्याख्याततत्त्ववित् । कुर्यादेवं यथोक्तार्थं मृत्युत्वप्रतिपित्सया ॥१८॥

"एष ह वा" इत्यादेः अश्वमेधोपासनफलत्वकथनपरता

कर्मोपासनमुक्त्वाऽथ तत्फलोपदिदिक्षया । एष वा इति यत्नेन ह्याजगामोत्तरा श्रुतिः ॥१९॥
दर्शनाद्यभिनिर्वृत्तो यस्त्वेवं हयसाधनः । प्रत्यक्षं फलरूपेण स एष इति दर्श्यते ॥२०॥
अश्वमेधक्रियापूर्वपरिणामैकवर्त्मना । अश्वमेधो रविः साक्षादुषा इत्यादिनोदितः ॥२१॥
तस्य संवत्सर आत्मा तस्याऽऽदित्यैकहेतुतः । तस्य क्रत्वात्मनश्चित्यो योऽङ्गभूतः पुरोदितः ॥२२॥
फलात्मकः स एवैष पार्थिवोऽग्निः प्रदर्श्यते । आत्मान एते तस्यापि त्रयो लोका यथोदिताः ॥२३॥
क्रतुतत्साधनात्मानावादित्याग्नी यथोदितौ । निर्वृत्तात्माधिकारौ तावेकैवासौ भवेदमुः ॥२४॥

यथायथं येन येन प्रकारेण शास्त्रे कथ्यते तेन तेन प्रकारेण ग्राम्यानजादीनारण्यांश्च गवयादीन्पशून्दत्तवानिति योजना ॥२१६॥

पुराकल्पमुपास्तिविधेरुक्त्वा क्रतुविधेरपि तस्य तुल्यतां मत्वा तस्मादित्यादि व्याचष्टे—यत इति। प्रोक्षितं मन्त्रपूतजलसंस्कृतमिति यावत्। इहेति यज्ञभूमिरुक्ता। सर्वदेवत्यमित्यत्र हेतुमाह—प्राजापत्यमिति। उपास्तिविधेर्भूमिकां कृत्वा तद्विधिमुपसंहरति—यत इति। यस्मादेवमुपासितवान्प्रजापतिस्तस्मादन्योऽप्येवमुपासीतेति योजना। यस्य कस्यचिदुपास्त्यधिकारं वारयति—यथेति। सोऽपि विरक्तो मुमुक्षुश्चेन्नात्राधिकारीति सूचयति—मृत्युत्वेति। न हि सौत्रात्पदाद्विरक्तस्य तस्मिन्नहंग्रहोपास्त्यधिकारस्तत्प्रजापतित्वार्थी चेदित्थमुपासीतेत्यर्थः ॥२१७–२१८॥

नन्वश्वमेधोपासनमत्र विधित्सितं तस्य च विधिरतिक्रान्तस्तत्किमुत्तरेण वाक्येनेत्यत आह—कर्मेति। उपायोपदेशानन्तरमुपेयोपदेशस्यावसरं प्रत्ययसूचितं स्फोरयति—अथेति। फलोपदेशमन्तरेणाऽऽकाङ्क्षानुपशान्तेरितिहेतुद्योतनार्थो हिशब्दः। फलोक्तेरभूतार्थवादत्वव्यासेधार्थं यत्नेनेत्युक्तम् ॥२१९॥

अश्वमेधोपासनफलं वक्तुमुत्तरं वाक्यमिति तात्पर्यमुक्त्वाऽक्षराणि व्याचष्टे—दर्शनादीति। यो दर्शनेन मनसा संपादितः पूर्वोक्ताश्वाग्निसाधनोऽश्वमेधो यश्च कायेन निष्पादितो बाह्याश्वादिहेतुकः क्रतुः स द्विप्रकारोऽपि फलरूपेण स्थितः सवितैव स चैष इति प्रत्यक्षं प्रदर्श्यत इत्यर्थः ॥२२०॥

कथमादित्यस्योभयविधाश्वमेधत्वं न हि तस्य मनोदेहनिर्वर्त्यक्रियात्वं तत्राऽऽह—अश्वेति। उभयी तावदश्वमेधक्रिया मानसी कायिकी च तदनुष्ठानाद्योऽपूर्वात्मा परिणामस्तद्वारा सवितैव मानसोऽश्वमेधो यः पूर्वमुषा वा इत्यादिनाऽनुक्रान्तः। कायिकश्च स एव यं साक्षादश्वादिभिर्निर्वर्तयति। "अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठत" इति स्मृतेरित्यर्थः ॥२२१॥

कोऽसौ क्रतुफलात्मकः सविता मण्डलं वा देवता वेति संदेहे द्वितीयं परिगृह्य तस्येत्यादि व्याचष्टे—तस्येति। कथमादित्यस्याऽऽत्मा संवत्सरः स हि कालेन परिच्छिन्नो न तदभिन्नो भवति तत्राऽऽह—तस्येति। आदित्योदयास्तमयाभ्यामहोरात्रादिद्वारा संवत्सरव्यवस्था तेन तन्निर्मातुस्तस्य युक्तं तत्तादात्म्यमित्यर्थः। क्रतोरादित्यत्वमुक्त्वा तदङ्गस्याग्नेस्तद्वक्तुमयमग्निरर्क इति वाक्यं तस्यार्थमाह—तस्येति। योऽयं पार्थिवश्चित्योऽग्निः क्रत्वङ्गभूतस्तेजोरसो निरवर्ततताग्निरित्यत्रोक्तः स एव फलात्मकोऽर्कः सवितैवेति प्रदर्श्यते प्रकृतेन वाक्येनेत्यर्थः। यद्वाऽर्कशब्देनाग्निरेवोक्तः स सवितैवेति वाक्यार्थः। ननु पूर्वोक्तस्यैवाग्नेरादित्यत्वं कस्मान्नियम्यतेऽन्यश्चित्योऽग्निरन्यश्चाग्निरादित्यः किं न स्यादित्याशङ्क्य तस्येत्यादिवाक्यं योजयति—आत्मान इति। यथोदितत्वं चित्याग्निरूपेण प्रागुक्तत्वं तस्य प्राचीत्यादिना लोकात्मत्वं चित्याग्नेरुक्तं तदिहाप्युच्यते तत्तस्यैव आदित्यत्वमत्रेष्टमित्यर्थः ॥२२२–२२३॥

नन्वादित्यः क्रतुरुक्तस्तद्धेतुश्चाग्निस्तत्कथं तयोः साध्यसाधनयोरैक्यमित्याशङ्क्य तावित्यादेरर्थमाह—

अशनायावती योक्ता मृत्युः सर्वान्नघस्मरा । सैवाऽऽत्मा विदुषः साक्षादात्मा स्यादजरोऽमरः ॥२५॥
नैनमाध्यात्मिको मृत्युस्तन्मृत्युत्वादवाप्नुयात् । सकृन्मृत्वाऽसुदेहेन मुच्यते सर्वबन्धनात् ॥२६॥
अग्न्यादिभेदभिन्नानां देवतानामशेषतः । आत्माऽभिन्नो भवत्येष यथोक्तोपासनाद्बुधः ॥२७॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके द्वितीयमग्निब्राह्मणम् ॥२॥

## अथ प्रथमाध्याये तृतीयं ब्राह्मणम्

### उत्तरब्राह्मणस्य पूर्वेण संबन्धः

शास्त्रोक्तज्ञानयुक्तानां कर्मणां ज्ञानतस्तथा । सर्वत्र वेदशास्त्रेऽस्मिन्मृत्युभावः फलं श्रुतम् ॥ १ ॥
आध्यात्मिकपरिच्छेदव्यावृत्तिर्यत्समाश्रयात् । स मृत्युर्मृत्युशब्देन फलभूतोऽत्र भण्यते ॥ २ ॥
या त्वश्वमेधगत्युक्तिः सोपलक्षणसिद्धये । कर्मज्ञानान्तराणां स्यान्नाश्वमेधगृहीतये ॥ ३ ॥

क्रत्विति । क्रतोरात्मा सविता तत्फलत्वात्क्रतुसाधनात्मा चित्योऽग्निस्तावुक्तविभागावुत्पादितोपासनादिस्वव्यापारौ सन्तावेकैव प्राणाख्या देवतेति तयोरैक्योक्तिरित्यर्थः ॥२२४॥

अपपुनर्मृत्युमित्यादेरर्थमाह—अशनायावतीति । अशनाया हि मृत्युरित्यशनायापिपासावती सर्वस्थूलप्रपञ्चसंहर्त्री या मृत्युशब्दिता प्राणाख्या देवतोपास्योक्ता सैवोपासितुरात्मा तत्क्रतुन्यायादित्यर्थः । अशनायादिमती देवता चेदुपासितुरात्मा तर्हि क्षुत्पिपासादितः सुदुःखी स्यात्तन्नार्थोऽनर्थकरेणोपासनेनेत्याशङ्क्याऽऽह—साक्षादिति । मृत्योर्हि साक्षादात्मा निरुपाधिको जरादिवर्जितः स चेदुपासितुरात्मा कथं सर्वोपद्रवरहितो न स्यादशनायादिना चोपलक्षणेन तस्य संहर्तृत्वमेवेष्टमिति भावः ॥२२५॥

यद्यपि विदुषो मृत्युरात्मा तथाऽपि तस्य देहसंबन्धादाध्यात्मिकमृत्युसंबन्धः स्यादित्याशङ्क्य नैनमित्यादेरर्थमाह—नैन मिति । तर्हि विदुषः शरीरमविनाशि तिष्ठेत्ततस्तस्य शरीरत्वव्याहतिरित्याशङ्क्य मृत्युरस्येत्यादेरर्थमाह—सकृदिति । प्राणात्मना स्थितो विद्वान्वर्तमानं देहमारब्धकर्मान्ते जहाति ततश्च तस्य सर्वसंबन्धविनिर्मोको भवति न पुनर्मरणार्थं देहं गृह्णातीत्यर्थः ॥२२६॥

ननु विदुषः सर्वसंबन्धविनिर्मोको न युक्तोऽग्न्यादिदेवताप्रेष्यत्वादित्याशङ्क्यैतासामित्यादेरर्थमाह—अग्न्यादीति ॥२२७॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां द्वितीयमग्निब्राह्मणम् ॥२॥

ज्ञानसमुच्चितकर्मबलान्मृत्युजयं ब्रुवता मुक्तेरुक्तत्वादनर्थिका सम्यग्धीरित्याशङ्क्य वृत्तं कीर्तयति—शास्त्रेति । शास्त्रे तत्र तत्र यान्युपासनान्युक्तानि तैः समुच्चितानि यानि कर्माणि तेषां केवलस्य चास्मिन्ननन्तरव्याख्याते वेदरूपे हितोपदेशपरे ग्रन्थे सर्वत्र चान्यत्रोपास्तिप्रकरणे मृत्युत्वं फलमुक्तं गौणी हि सा मुक्तिरशनायादिसंबन्धादात्यन्तिकी तु मुक्तिः सम्यग्ज्ञानादेवेति तदर्थवत्त्वेत्यर्थः ॥१॥

वक्ष्यमाणमृत्युव्यावृत्त्यर्थं मृत्य्वात्मभाव इति भाष्ये मृत्युशब्दार्थमाह—आध्यात्मिकेति । यस्य सूत्रस्याऽऽत्मत्वेन सदा ध्यानाद्देहसंबन्धाधीनपरिच्छेदाभिमाननिवृत्तिस्तदात्मतादात्म्येन ध्यायतः परिच्छेदाभिमानसंहर्तृफलत्वेन स्थितो मृत्युरस्येत्यादिवाक्ये प्रस्तुतभाष्ये च मृत्युशब्देनोच्यते तद्वक्ष्यमाणमृत्योर्नात्र प्रस्तावोऽस्तीत्यर्थः ॥२॥

अश्वमेधोपासनस्य साश्वमेधस्य केवलस्य वा फलत्वेन मृत्युप्राप्तिरुक्ता नोपास्त्यन्तराणां कर्मान्तराणां चेत्याशङ्क्याऽऽह—या त्विति । अश्वमेधोपास्तिफलोक्तिरुपास्त्यन्तराणां केवलानां समुच्चितानां च फलोपलक्षणार्था नाश्वमेधोपास्तिफलमात्रग्रहार्था सर्वस्मात्फलवदुपायराशेर्वैराग्यस्येष्टत्वादित्यर्थः ॥३॥

१. ४६-२ ।

अल्पीयःफलसंप्राप्तिरल्पीयोज्ञानकर्मतः । अल्पत्वमभिभूतेः स्यात्तयोरासुरपाप्मभिः ॥ ४ ॥
कुतस्तस्याभिभूतस्य रागाद्यासुरपाप्मभिः । उद्भूतिः कर्मणोऽत्यर्थं ज्ञानस्य च निगद्यताम् ॥ ५ ॥
मृत्युं साक्षादवाप्नोति ज्ञानयुक्तेन कर्मणा । इत्येतद्बहुशोऽश्रावि पूर्वग्रन्थेषु चाऽऽगमैः ॥ ६ ॥
तज्ज्ञानोत्पत्तिविघ्नापध्वस्तिकृज्ज्ञानलब्धये । उद्गीथदेवतावाप्त्यै प्रारब्धेहोत्तरा श्रुतिः ॥ ७ ॥
ननु मृत्योरतिक्रान्तेरुद्गीथज्ञानकर्मणोः । फलस्य संश्रवान्नातो मृत्युप्राप्तिस्तयोः फलम् ॥ ८ ॥
नाग्न्यादिदेवतात्मत्वतत्फलावगमाच्छ्रुतेः । स्वाभाविकासङ्गमृत्योरतिक्रान्तिः पृथक्फलम् ॥ ९ ॥

आख्यायिकायाः श्रौतार्थकथनम्

कोऽसौ स्वाभाविकः पाप्मा तस्योद्भूतिस्तथा कुतः । तस्मान्निवृत्तिः केन स्यात्कथं वेत्येतदुच्यते ॥१०॥

ज्ञानयुक्तानां कर्मणां सूत्राप्तिफलत्वे कथं पितृलोकाद्याप्तिर्न ह्येकमेव साधनं ब्रह्मलोकं पितृलोकादि च प्रापयति तत्कर्मणा पितृलोको विद्यया देवलोक इत्यादिविरुद्धमित्याशङ्क्याऽऽह—अल्पीय इति । महत्तराभ्यां ज्ञानकर्मभ्यां समुच्चिताभ्यां केवलाद्वा तथाविधज्ञानाद्ब्रह्मलोकस्ताभ्यामेवाल्पीयोभ्यां पितृलोकादीति व्यवस्थायां न श्रुतिविरोधोऽस्तीत्यर्थः । ननु ज्ञानकर्मणोरल्पत्वं नाम न्यूनफलत्वं वा परिच्छिन्नविषयत्वं वा ? नाऽऽद्यः परस्पराश्रयान्नेतरः सूत्राद्युपासनस्यापि तथात्वेन पितृलोकादिफलत्वप्रसङ्गादत आह—अल्पत्वमिति । तयोर्ज्ञानकर्मणोरल्पत्वमासुरपाप्मभिरभिभूतेः स्यात्तेन तदभिभूतत्वमेव तदल्पत्वमिति योजना ॥४॥

सूत्रान्तो ज्ञानकर्मणोः फलोत्कर्षस्तयो रागाद्युपहतयोः पितृलोकादि फलमित्ययुक्तं प्राणाद्युपासनेष्वपि तदभिभवसंभवादनभिभूतज्ञानकर्माभावादिति शङ्कते—कुत इति । तयोरुद्भवकारणस्य दुर्भणत्वात्ताभ्यामुद्भूताभ्यां दुर्लभा सूत्राप्तिरिति भावः ॥५॥

तयोरुद्भवकारणमुपास्या प्राणदेवतेति वक्तुं विस्तरेणानूदितं संगृह्णाति—मृत्युमिति । उपास्तिसमुच्चितकर्मणा केवलोपास्त्या वा सूत्रमात्मत्वेनाऽऽप्नोतीत्येतत्पूर्वग्रन्थेषु मृत्युरस्याऽऽत्मेत्यादिषु श्रुतमन्यैश्चोपास्तिप्रकरणस्थैर्वाक्यैरेतदसकृत्प्रतिपन्नमित्यर्थः ॥६॥

अथ पूर्वोत्तरब्राह्मणयोः संगतिमाह—तज्ज्ञानेति । तस्य सूत्रभावस्य साधनं ज्ञानं कर्म च तयोरुत्पत्तौ प्रतिबन्धको रागादिस्तदपध्वस्तिकारणं यज्ज्ञानादि तत्प्राप्त्यर्थं तद्विषयोद्गीथदेवता प्राणाख्या ग्राह्या । तादर्थ्येनास्यामुपनिषदि द्वया हेत्याद्या श्रुतिरारब्धा । भवति हि प्राणो मन्त्रप्रकाश्योऽनुस्त्रियमाणो यथोक्तप्रतिबन्धध्वस्तिहेतुरिति भावः ॥७॥

ज्ञानकर्मणोरुद्भावकस्य प्राणस्य स्वरूपनिरूपणार्थं ब्राह्मणारम्भमुक्त्वा यथोक्तं संबन्धमाक्षिपति—नन्विति । मृत्युमतिक्रान्तो दीप्यत इति मृत्योरतिक्रमस्य वक्ष्यमाणोद्गीथज्ञानकर्मफलस्य श्रवणात्पूर्वत्र च मृत्योरात्मभावस्य तत्फलस्योक्तत्वान्नानयोर्मृत्युप्राप्तिः फलं पूर्वयोस्तु तदिति फलभेदात्पूर्वोत्तरयोस्तयोर्विषयभेदादुक्तयोर्वक्ष्यमाणयोरन्तर्भावान्न पूर्वज्ञानकर्मोद्भावकप्रकाशनार्थमिदं ब्राह्मणमित्यर्थः ॥८॥

अग्न्यादिदेवतात्मभावस्योद्गीथज्ञानकर्मफलस्य वक्ष्यमाणत्वात्पूर्वत्र चैतासां देवतानामित्यस्यैवोक्तत्वात्पूर्वोत्तरज्ञानकर्मफलभेदाभावादेकविषयत्वात्तयोरुद्भावकप्रकाशनार्थं ब्राह्मणमुक्तमिति परिहरति—नाग्न्यादीति । एतासां देवतानामेको भवतीति पूर्वा सोऽग्निरभवदित्याद्या चोत्तरा श्रुतिः श्रुतिशब्देन गृह्यते । कथं तर्हि मृत्युमतिक्रान्तो दीप्यत इति श्रुतिस्तत्राऽऽह—स्वाभाविकेति । पृथगित्यत्र मृत्युभावादिति शेषः । अवान्तरफलविषयमेतद्वाक्यं परमफलं तु सूत्रत्वमिति भावः ॥९॥

ज्ञानकर्मणोर्मृत्युत्वमुत्तमं फलमुक्त्वा तयोरप्रतिबद्धयोरेव तदिति मत्वा प्रतिबन्धध्वंसि प्राणदेवताध्यानादि वक्तुं ब्राह्मणमिति तदर्थं चोक्त्वाऽऽख्यायिकायाः श्रौतमर्थं वक्तुं भाष्यस्थं प्रश्नमनुवदति—कोऽसाविति । तत्र प्रथमप्रश्नस्य स्वाभाविकपाप्मस्वरूपं विषयो द्वितीयस्य तदुत्पादकं तृतीयस्य तन्निवर्तकं चतुर्थस्य तन्निवृत्त्युपकरणमिति विवेक्तव्यम् । प्रश्नचतुष्टयमनूद्योत्तरं प्रतिजानीते—इत्येतदिति ॥१०॥

यथोक्तार्थप्रसिद्ध्यर्थं श्रुतिराख्यायिकात्मिका । द्वया हेत्येवमाद्येयं प्रचक्राम परीक्षितुम् ॥११॥
प्राजापत्यं पदं यो यो ह्यधिकारी परीप्सति । तन्निर्धार्यानया श्रुत्या परमाप्नोत्युपासनात् ॥१२॥

द्वया ह प्राजापत्या देवाश्चासुराश्च ततः कानीयसा एव देवा ज्यायसा असुरास्त एषु लोकेष्वस्पर्धन्त ते ह देवा ऊचुर्हन्तासुरान्यज्ञ उद्गीथेनात्ययामेति ॥१॥

पूर्वजन्मनि यद्वृत्तं वर्तमानप्रजापतेः । तदवद्योतको हेति निपातोऽत्र प्रयुज्यते ॥१३॥
भविष्यद्वृत्तिमाश्रित्य यजमानः प्रजापतिः । इहाभिधीयतेऽन्यस्तु न कश्चित्सप्रयोजनः ॥१४॥
ज्ञानकर्मोपदेशो हि नरं प्रत्येव सर्वथा । सर्वः श्रौतो यतस्तस्मात्स एवेहाभिधीयते ॥१५॥
तत्कर्मज्ञानजत्वाच्च तत्प्राणाः शुद्ध्यशुद्धिजाः । प्राजापत्या इहोच्यन्ते वागाद्युक्तेश्च लिङ्गतः ॥१६॥
उद्गीथोपास्तिसंबन्धाद्द्वया हेत्यादिकस्य च । उपास्यार्थविशुद्ध्यर्था प्रवृत्ताऽऽख्यायिका ततः ॥१७॥
अभ्यारोहजपस्येह प्राण एवास्तु देवता । कस्माद्वागादयो नेति तत्परीक्षाऽत ईर्यते ॥१८॥

इयं हि द्वया हेत्याद्या श्रुतिराख्यायिकारूपा यथोक्तबुभुत्सितस्वाभाविकपाप्मादिचतुष्टयज्ञानद्वारा प्राणयाथात्म्यं निरूपयितुं प्रक्रान्तेत्युत्तरमेव स्फोरयति—यथोक्तेति ॥११॥

किं तन्निरूपणमुद्गीथोपास्तेरेवोपकरोति किंवा सर्वप्राणोपास्तीनामिति वीक्षायां द्वितीयं गृह्णाति—प्राजापत्यमिति । यो यः सौत्रं स्थानमाप्तुमिच्छति स स तदुपायमन्वेषमाणोऽनया श्रुत्या शुद्ध्यादिगुणकं प्राणं निश्चित्य तत्र तत्रोक्ततत्तद्गुणकस्य तस्योपासनात्तत्पदमाप्नोत्यतोऽयं विचारः सर्वप्राणोपास्त्युपकारीत्यर्थः । अन्यपर्युदासार्थमधिकारीत्युक्तम् ॥१२॥

ब्राह्मणाख्यायिकयोरर्थमुक्त्वाऽक्षराणि व्याकुर्वन्निपातार्थमाह—पूर्वेति । वर्तमानप्रजापतेरेतत्कल्पादौ फलरूपेणाभिनिर्वृत्तस्य हिरण्यगर्भस्येति यावत् । निपातानां द्योतकत्वमेव न वाचकत्वमिति वक्तुमवद्योतकपदम् । प्रथमवाक्यं सप्तम्यर्थः ॥१३॥

प्राजापत्या इत्यत्र प्रकृत्यर्थमाह—भविष्यदिति । इहेति तद्धितान्तपदोक्तिः । हिरण्यगर्भस्यैव प्रजापतिशब्देनोपादानमिह किं न स्यादित्याशङ्क्याऽऽह—अन्यस्त्विति ॥१४॥

यद्यपि प्रयोजनेन सह तादात्म्येन स वर्तते तथाऽपि तस्यैव फलभूतस्य किमित्यत्र न प्रकृत्यर्थतेति तत्राऽऽह—ज्ञानेति । अत्र हि प्राजापत्यानां देवासुराणां संग्रामोक्तिद्वारा प्रजापतेर्ज्ञानकर्मणी कर्तव्ये कथ्येते ज्ञानाद्युपदेशश्च सर्वो गुणप्रधानत्वेन समप्रधानत्वेन वा सर्वप्रकारोऽपि श्रुतिस्मृतिगतो मनुष्यत्वाद्यभिमानवन्तं प्रत्येव युक्तः शास्त्रस्य तदधिकारत्वात्तस्माद्यजमानोऽत्र प्रजापतिरित्यर्थः ॥१५॥

प्रत्ययार्थमन्यत्राप्रसङ्गार्थं कथयति—तत्कर्मेति । चकारोऽवधारणार्थः प्राणशब्दादुपरि संबध्यते । तस्य यजमानस्य शास्त्रीये स्वाभाविके च ये ज्ञानकर्मणी ताभ्यां जन्यत्वात्तदुपाधिभूता वागादय एव प्राजापत्याः प्रकृते वाक्ये विवक्ष्यन्ते ते च शुद्धिशब्दितशास्त्रीयज्ञानकर्मजा देवा अशुद्धिशब्दितस्वाभाविकज्ञानकर्मजाश्चासुरा न त्विन्द्रादीनां विरोचनादीनां चात्र प्रसक्तिरित्यर्थः । ननु यजमानसंबन्धिनां देहान्तर्वर्तिनाड्यादीनामनेकेषां संभवात्किमिति वागादीनामेवात्र ग्रहणमित्याशङ्क्य वाक्यशेषादित्याह—वागादीति । चकारः शङ्कानिरासार्थः ॥१६॥

ब्राह्मणतात्पर्यमाख्यायिकाश्रुत्यर्थं चोक्त्वा द्वया ह प्राजापत्या इत्यक्षराणि व्याख्यातानि । इदानीमाख्यायिकायाः स्वार्थनिष्ठत्वमाशङ्क्य तात्त्विकं तात्पर्यमाह—उद्गीथेति । द्वया हेत्यादेरुद्गीथोपास्त्यन्वयान्न स्वार्थनिष्ठतेत्यर्थः । तन्निष्ठत्वाभावादुपास्यं विविच्य वक्तुमाख्यायिकेति फलितमाह—उपास्येति ॥१७॥

कथं तच्छुद्धिरत आह—अभ्यारोहेति । इह ब्राह्मणे योऽभ्यारोह[1]नामा जपो वक्ष्यते तस्योद्गीथोपास्तेश्च

१. अभ्यारोहजपः—मनुष्यभावं परित्यज्य देवभावं प्रत्यारोहणफलकः मन्त्रजपः ।

अन्वयव्यतिरेकाभ्यां प्राणप्राधान्यसिद्धये । प्रवृत्ताऽऽख्यायिका यत्नाद्वागादीन्द्रियनिन्दया ॥१९॥

शास्त्रस्वभावजज्ञानकर्मसंस्कारहेतुतः । देवासुरत्वं प्राणानां विरुद्धोपाधिकारणात् ॥२०॥

सहस्रादिर्यथा भेदः प्राणस्यैकस्य शब्द्यते । भूयोऽधिकारभेदेन वागादीनां तथा भिदा ॥२१॥

सहजं सर्वभूतानां वृत्तमासुरमिष्यते । यत्नाधेयं यतो दैवं ज्यायांसः स्युस्ततोऽसुराः ॥२२॥

इह वागादयः शब्दा देवतार्थाभिधायकाः । मर्त्यत्वान्न तु गृह्यन्ते करणस्थानगोचराः ॥२३॥

देवतैकात्म्यमेवेह दैवज्ञानक्रियाफलम् । अध्यात्मादिपरिच्छेद आसुरत्वान्न गृह्यते ॥२४॥

हिंसाभिप्रवणं चेतः प्रायेण श्रेयसामपि । भूयांसोऽतोऽसुरा देवाः कनीयांसोऽतियत्नजाः ॥२५॥

धर्माधर्मैकसाध्यत्वाद्ब्रह्मादेः स्थावरावधेः । अस्पर्धन्त ततोऽन्योन्यं दैतेया विबुधैः सह ॥२६॥

प्राण एव देवताऽस्तु वागादयो नेति कस्मादिति चोदिते तस्या देवतायाः परीक्षा प्रकृताख्यायिकया क्रियत इत्यर्थः । प्रकृताख्यायिकाविषयोऽतःशब्दः ॥१८॥

परीक्षाफलमाह—अन्वयेति । सति प्राणे वागादिव्यापारो नान्यथेत्यन्वयव्यतिरेकाभ्यां वागादीनामासुरपाप्मविद्धत्वेन निन्दया च तद्वैधविधुरस्य प्राणस्य संघातविधारकस्य प्राधान्यधीद्वारोपास्यत्वसिद्ध्यर्थं तात्पर्येणाऽऽख्यायिका प्रवृत्ता तेनोपास्यः प्राणो वागादयो नेति ज्ञानं परीक्षाफलमेवैव चोपास्यशुद्धिरित्यर्थः ॥१९॥

आख्यायिकायास्तात्त्विकं तात्पर्यमुक्त्वा देवाश्चासुराश्चेति यजमानप्राणानां देवासुरत्वं कथमित्याशङ्क्याऽऽह—शास्त्रेति । शास्त्रजे स्वभावजे च ये ज्ञानकर्मणी तयोः संस्कारैर्वागादीनां संस्कृतत्वाद्धेतोः शास्त्रीयज्ञानादिसंस्कृतत्वमितरज्ञानादिसंस्कृतत्वं चेति विरुद्धोपाधिसंबन्धरूपकारणाद्यजमानप्राणानां देवत्वमसुरत्वं चेत्यर्थः ॥२०॥

वागादीनामुपाधितो द्वैविध्यं श्रौतदृष्टान्तेनाऽऽह—सहस्रादिरिति । बहुधाधिकारस्थानोपाधिविशेषेणैकस्यैव सूत्रात्मनः षडधिकत्रिशताधिकत्रिसहस्रसंख्याको भेदः "कति देवा याज्ञवल्क्ये"त्यादावुच्यते । तथा वागादीनां स्वाभाविकेतरज्ञानादिसंस्कृतत्वोपाधितो द्वैविध्यमित्यर्थः ॥२१॥

तत इत्यादिवाक्ययोस्तात्पर्यमाह—सहजमिति । शरीराभिमानद्वारा हिंसानृताद्यासुरं वृत्तं; दैवं पुनरहिंसासत्यवदनादीति विवेकः । देवाश्चाल्पीयांसः स्युरिति द्रष्टव्यम् ॥२२॥

वागादिशब्दैरिन्द्रियाण्युक्त्वा तेषां देवताविषयत्वमाह—इहेति । ब्राह्मणमिहेत्युक्तम् । प्रसिद्धानामिन्द्रियाणामेव कुतस्तच्छब्दैर्नोक्तिरित्याशङ्क्याऽऽह—मर्त्यत्वादिति । करणानां स्थानानि गोलकाख्यानि तद्गताः प्राणा एव न वागादिशब्दास्तेषां नाशित्वादित्यर्थः ॥२३॥

नाशित्वेऽपि तेषामेव ग्रहणं किं न स्यादित्याशङ्क्याऽऽह—देवतेति । वागाद्युपास्तिसहितक्रियाफलमग्न्यादिदेवतात्मत्वमस्मिन्ब्राह्मणे वक्ष्यते । अतश्चाध्यात्मे देहे यो वागादीनां परिच्छेदः करणशब्दितः स नात्र गृह्यते तस्याऽऽसुरत्वात् । किं त्वाध्यात्मिकवागादिद्वाराऽऽधिदैविकाग्न्यादिषु तच्छब्दाः पर्यवस्यन्तीत्यर्थः ॥२४॥

वागादीन्द्रियाण्येव तच्छब्दैरुपेत्य स्वाभाविकी हीत्यादिभाष्यं विवृणोति—हिंसेति । नियमं निरसितुं प्रायेणेत्युक्तम् । किं पुनरश्रेयसामिति वक्तुमपिशब्दः । मनसो हिंसाप्रवणत्वे स्वाभाविकज्ञानादिवृत्तिभूयस्त्वात्तद्विशिष्टप्राणानां भूयस्त्वमिति फलितमसुरबाहुल्यमाह—भूयांस इति । शास्त्रीयज्ञानादेरल्पत्वात्तद्विशिष्टप्राणानामपि तथात्वाद्देवानामल्पतेति फलान्तरमाह—देवा इति । अतियत्नजा इत्यत्यन्तयत्नसाध्यज्ञानकर्मलभ्या इत्यर्थः ॥२५॥

त एष्वित्यादेरर्थमाह—धर्मेति । सर्वस्यापि भोगस्थानस्य धर्मेणाधर्मेण ताभ्यां च साध्यत्वात्तस्मिन्निमित्ते ततः स्वाभाविकेतरज्ञानकर्मवशादसुरा देवैस्ते चासुरैर्मिथः संघर्षं चक्रुरित्यर्थः ॥२६॥

---

१. सहस्रादिभेदः प्राणस्य-शाकल्यब्राह्मणे याज्ञवल्क्यः सूत्रात्मनः ३३०६ भेदाः प्राणस्येत्युक्तवान् । "त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति" इत्यनेन । भूयोऽधिकारभेदेनअष्टौ वसवः एकादशरुद्राः इत्यादिः अधिकारभेदः ।

आसुरेभ्योऽधिकारेभ्यो व्युत्थाप्येह प्रजापतिम् । दैवीर्भूमीर्नयामैनमिति देवचिकीर्षितम् ॥२७॥
दैवेभ्य एनमाच्छिद्य कामक्रोधादिसाधनाः । आनयामाऽऽसुरीर्भूमीरिति दैतेयनिश्चितिः ॥२८॥
यत्नायत्नसमुत्थाभ्यां वृत्तिभ्यां देवदानवाः । दैव्यासुरीभ्यामन्योन्यमस्पर्धन्त विरोधतः ॥२९॥
भूयो बलेन ते देवा आसुरेण निराश्रयाः । अर्द्यमाना न शरणं लेभिरेऽल्पत्वकारणात् ॥३०॥
अनीक्षमाणास्ते शर्म संभूयोचुः परस्परम् । क्रियतामविचारेण हन्तेत्यनुमतौ पदम् ॥३१॥
अस्मज्जिगीषूनसुराञ्जित्वोद्गात्रात्मसंश्रयात् । अतिलङ्घ्याऽऽसुरं भावं देवतात्मानमाप्नुमः ॥३२॥
उद्गीथदेवतावाप्तिर्ज्ञानकर्मसमुच्चयात् । अभ्यारोहजपः कर्म ज्ञानं त्विह परीक्ष्यते ॥३३॥

"द्वया हे"त्यादि नार्थवादः अपितु ज्ञाननिरूपणपरम्

विधिशेषार्थवादत्वान्नेदं ज्ञाननिरूपणम् । इति चेन्नैतदेवं स्यादेवं वेदेति तद्विधेः ॥३४॥
उद्गीथविधिशेषश्चेदुद्गीथप्रकृतौ श्रवात् । नातत्प्रकरणान्न्याय्यमितोऽन्यत्र च तद्विधेः ॥३५॥
विद्याप्रकरणत्वाच्च नेहोद्गीथो विधीयते । जपस्य चाप्यनित्यत्वात्स्यादेवंवित्प्रयोज्यता ॥३६॥

देवानामसुरैः स्पर्धां कुर्वतामभिप्रायमाह—आसुरेभ्य इति । व्यवहारमार्गे स्थितं यजमानं स्वाभाविकज्ञानकर्मभ्यो विमुखीकृत्य शास्त्रीयज्ञानकर्मणी प्रापयामेति देवानां विवक्षितमित्यर्थः ॥२७॥

असुराणामभिप्रायमाह—दैवेभ्य इति । शास्त्रीयज्ञानादिभ्यो यजमानं पृथक्कृत्य कामादिवशादितरज्ञानादीनि तमानयामेति दैत्यविवक्षितमित्यर्थः ॥२८॥

देवानां[1] चेत्यादिभाष्यतात्पर्यमाह—यत्नेति । कदाचिद्दैवी शास्त्रीयज्ञानाद्या वृत्तिरुद्भवत्यासुरी चेतराऽभिभूयते । कदाचिदासुरी स्वाभाविकज्ञानाद्या वृत्तिरुद्भवति दैवी चेतराऽभिभूयते सेयं देवासुरस्पर्धेत्यर्थः । देवानामसुराणां च परस्परस्पर्धाकारणीभूतवृत्तिद्वयस्य मिथो विरोधादशक्या तदीयस्पर्धा समाधातुमित्याह—विरोधत इति ॥२९॥

त[2] एवमित्यादिभाष्यार्थमाह—भूय इति । पीड्यमानत्वे हेतुमाह—निराश्रया इति । शरणं शर्माऽऽश्रयं वा । अर्द्यमानत्वे हेत्वन्तरमाह—अल्पत्वेति ॥३०॥

ते हेत्यादेरर्थमाह—अनीक्षमाणा इति । हन्तेति पदमनुमत्यर्थम् । तत्रानुमतिस्वरूपमाह—क्रियतामिति ॥३१॥

किं तत्कर्तव्यमित्यपेक्षायामाह—अस्मदिति । उद्गीथेनेत्यस्यार्थमाह—उद्गात्रिति । उद्गातुरात्मा प्राणस्तदाश्रयेणेत्यर्थः । असुराञ्जित्वेत्येतदेव दर्शयन्नुपसर्गार्थमाह—अतिलङ्घ्येति । अयामेत्यस्यार्थमाह—देवतेति ॥३२॥

उद्गात्रात्मप्राणाश्रयणं केनोपायेनेत्याशङ्क्याऽऽह—उद्गीथेति । किं तत्कर्म किंवा ज्ञानं तदाह-अभ्यारोहेति ॥३३॥

द्वया हेत्यादि न ज्ञाननिरूपणपरं विधिशेषत्वेनार्थवादत्वात्तत्कुतोऽत्र ज्ञानपरीक्षेत्याक्षिपति—विधीति । उपास्तिविधेः श्रवणात्तत्परं वाक्यमिति परिहरति—नैतदिति ॥३४॥

यत्तु विधिशेषत्वादर्थवादतेति तत्र किमुद्गीथविधिशेषता जपविधिशेषता वेति विकल्प्याऽऽद्यमनुवदति—उद्गीथेति । औद्गात्रस्य कर्मणः प्रकृतौ प्रस्तावसंनिधौ पुराकल्पस्य द्वया हेत्यादिना श्रवणात्तद्विधिशेषोऽर्थवादोऽयमिति कुतो ज्ञाननिरूपणेत्यर्थः । नास्योद्गीथविधिशेषत्वं न्याय्यं तत्प्रकरणत्वाभावात्कर्मप्रकरणे चोद्गीथस्य विधानादिति समाधत्ते—नेत्यादिना ॥३५॥

नन्वत्रैवोद्गीथविधिः किं न स्यादुद्गायेत्यादिदर्शनादत आह—विद्येति । इहेति प्रकरणोक्तिः । न चोद्गायेत्युद्गीथविधिस्तदनुवादेन वागादिनिन्दया मुख्यप्राणपरिग्रहार्थत्वादिति चकारार्थः । जपविधिशेषत्वेनार्थवादत्वं प्रत्याह-

१. देवानां चासुराणां च वृत्त्युद्भवाभिभवौ स्पर्धा ४८-७ ।     २. ४८-१४ ।

उदारफलवद्यस्मादपि ज्ञानमिह श्रुतम् । तद्धैतदित्यतो ज्ञानं फलवत्त्वाद्विधित्सितम् ।।३७।।
शुद्ध्यशुद्ध्युक्तितश्चेह प्राणोपासा विवक्षिता । वागादिनिन्दया मुख्यप्राणोपासा न चेदिह ।।३८।।
विधित्सिताऽथ तन्निन्दा स्तुतिश्चानस्य किंफला । अतोऽर्थवादाद्धि विधिर्लिङ्गादत्रानुमीयते ।।३९।।
प्राणस्वरूपापत्तिश्च यतोपासाफलं श्रुतम् । उपासनमतोऽनस्य विधित्सितमितीक्ष्यताम् ।।४०।।
उपासनमसोः काममस्तु सूक्तोपपत्तितः । शुद्ध्यादिगुणवत्ता तु न मानादुपपद्यते ।।४१।।
गुणवत्ताऽप्यसोरस्तु यथाऽस्योपासनं तथा । प्रामाणिक्युभयत्रापि प्राप्तिर्यस्मादिहेक्ष्यते ।।४२।।

जपस्येति । अनावश्यको हि जपः प्राणविदा तस्याननुष्ठेयत्वसंभवादसत्यपि जपे विदुषो विद्यया फलसिद्धेरुपासनं त्वावश्यकं तद्विना जपमात्रादुत्कृष्टफलासिद्धेस्ततो जपःयानित्यस्य नित्यवच्छ्रुतोपासनाऽप्रयोजकत्वान्नित्यानित्यसंयोगायोगान्न तत्परवाक्यस्य जपविधिशेषतेत्यर्थः । यद्वा प्राणविज्ञानवताऽनुसंधेयो जपो न तद्विज्ञानात्प्रागस्ति तन्नासौ पश्चाद्भावी प्रागेव सिद्धं विज्ञानं प्रयोजयति । न हि प्रयाजादि दर्शपूर्णमासप्रयोजकं तत्प्रयोज्यत्वादेवं प्राणवित्प्रयोज्यो जपो न ज्ञानप्रयोजकस्तस्य प्रयोजकत्वेन प्रागेव सिद्धेस्तथा च नास्य तद्विधिशेषतेत्यर्थः ।।३६।।

किंचेह प्रकरणे तद्धैतदित्यतो वाक्यादुत्कृष्टफलविशिष्टं प्राणविज्ञानं यस्माच्छ्रुतं तस्मात्फलवत्त्वादपि तद्विषयं ज्ञानं विधातुमिष्टमिति द्वया हेत्यादि तत्परमेव न विध्यन्तरपरमित्याह—उदारेति ।।३७।।

प्राणोपास्तेर्विवक्षितत्वे हेत्वन्तरमाह –शुद्धेति । प्राणस्य शुद्धिरशुद्धिश्च वागादीनामित्युक्तिवशादस्मिन्प्रकरणे प्राणोपास्तिरभिप्रेता शुद्ध्यशुद्धिवचनमन्यथा वृथा स्यादित्यर्थः । उक्तमेव व्यक्तीकुर्वन्नहीत्यादिभाष्यं विवृणोति—वागादीति । इहेति पूर्ववत् । अथशब्दस्तर्हीत्यर्थे । तन्निन्दा वागादिनिन्दा । प्राणविषयोऽनशब्दः । यद्धि स्तूयते तद्विधीयत इति न्यायमाश्रित्य फलितमाह—अत इति । वागादीनामशुद्धत्वेन निन्दा प्राणस्य शुद्धत्वेन स्तुतिरित्येवमर्थादर्थवादात्कल्पकात्प्राणोपासने कल्प्यते विधिरित्यर्थः । अर्थवादलिङ्गकं विधिकल्पनमन्यत्रापि प्रसिद्धमिति वक्तुं हिशब्दः । प्रकरणमेव सप्तम्यर्थः ।।३८–३९।।

इतश्च विधित्सितं प्राणोपासनमित्याह—प्राणेति । यत उपासाफलमिति वक्तव्येऽन्यथावचनं छान्दसत्वद्योतनार्थम् । ततः सोऽपामितिवत्संधिः । मृत्युमतिक्रान्तो दीप्यत इत्यादिश्रुतेर्वागाद्युपासनस्याग्न्याद्यात्मत्वं फलं प्राणस्वरूपापत्तिनिमित्तमतो विधित्सिता तदुपास्तिरित्यर्थः उदारफलवदित्यत्र प्राणोपास्तेः सूत्रात्मत्वं फलमुक्तमिह तु तत्कृतं वागाद्युपास्तेरग्न्याद्यात्मत्वमुपासितुर्वागादीनामुच्यत इति विशेषः । एवं प्राणोपास्तेर्विधित्सितत्वात्तद्विधिशेषो द्वया हेत्यादिरित्युपसंहरति—उपासनमिति ।।४०।।

उपदिष्टाद्दृष्टोपपत्तिवशात्प्राणस्योपासनं यद्यस्ति तदस्तु काममित्यङ्गीकरोति—उपासनमिति । शुद्ध्यादिगुणवती तु प्राणदेवता नास्ति प्रमाणाभावात् । उपास्तिविधिपरत्वेन श्रुतेरुक्तदेवतायामतात्पर्यात् । उक्तं हि—अपि वा शब्दपूर्वत्वाद्यज्ञकर्म प्रधानं स्याद्गुणत्वे देवताश्रुतिरिति[1] । तदाह—शुद्ध्यादीति ।।४१।।

देवताधिकरणन्यायेन[2] परिहरति—गुणवत्ताऽपीति । यथा प्राणस्योपास्तिः शास्त्रदृष्टत्वादिष्टा तथाऽस्य गुणसंबन्धोऽपि श्रुतत्वादेष्टव्यः । उपास्तावुपास्ये गुणवति च प्राणे प्रामाणिकप्राप्तेरविशेषान्मन्त्रार्थवादेतिहासपुराणलोकप्रसिद्धिभ्यो विग्रहादिपञ्चकविशिष्टदेवतादृष्टेर्न[3] तत्प्रत्याख्यानं संभवतीति भावः । इहेति श्रुतिरुक्ता सा च विधिपरत्वेऽपि संवादविसंवादयोरभावे द्वारार्थे मानतामनुभवति ।।४२।।

---

१. अपि वेति—पूर्वमीमांसायां नवमाध्याये देवताधिकरणसिद्धान्तसूत्रमिदम् । पूर्वपक्षे यागादिप्रयोजकत्वं देवतानां तत्पूजार्थत्वाद्यागस्य । इदं तु सिद्धान्तसूत्रम् तदर्थश्च यदुक्तं देवता प्रयोजयेदिति । तन्न । यज्ञकर्म प्रधानं । यजतेर्जातमपूर्वं शब्दपूर्वत्वात् । शब्दश्च यागात्फलमाह न देवतायाः देवता तु यागे गुणभूतेत्यर्थः, देवतोद्देशपूर्वकद्रव्यत्यागं च देवतोद्देशः विशेषणम् । देवतोद्देशः देवताशब्दप्रयोगः ।

२. देवताधिकरणन्यायः प्रमाणान्तरविरोधप्राप्त्योः अभावे अर्थवादानां स्वार्थे प्रामाण्यं देवताविग्रहादौ ।

३. विग्रहादिपञ्चकम्—विग्रहो हविषां भोगः ऐश्वर्यं च प्रसन्नता । फलप्रदानमित्येतत्पञ्चकं विग्रहादिकम् ।

**ननु स्तुत्यर्थतैवास्य शुद्धयादेरवगम्यते । उपासाविधिशेषत्वादर्थवादोऽत ईक्ष्यताम् ॥४३॥**
**प्रामाणिकोऽभिसंबन्धो यस्मात्प्राणस्य गम्यते । किंबलं समुपाश्रित्य शुद्धयादेरर्थवादता ॥४४॥**
**नहि मानं विहायेह साध्यसाधननिश्चितौ । चक्षुरन्यत्प्रपश्यामो यद्बलात्स्यादयं मृषा ॥४५॥**
**आसन्यत्वादयोऽनस्य न च योषाग्निवद्यतः । तेषां प्रत्यक्षतः सिद्धेरतः शुद्धयादिमानसुः ॥४६॥**
**अक्षाद्यविषया ये तु गुणा आगमतो मताः । मानाविरोधात्केनैषां शुद्धयादीनां मृषार्थता ॥४७॥**
**श्रोत्रादिवत्प्रमाणानामसाधारणमेयता । तन्मेयप्रथने मानं न किंचिदनुभूतितः ॥४८॥**

नंनु[1] स्याच्छ्रुतत्वादिति भाष्यं व्याख्याय न स्यादित्यादिपूर्वपक्षं विभजते—नन्विति । शुद्धयादिवादस्य स्तुत्यर्थत्वे फलितमाह—अर्थवाद इति ॥४३॥

शुद्धयादिवादस्यार्थवादत्वेऽपि नाभूतार्थवादतेति परिहरति—प्रामाणिक इति । प्राणस्य शुद्ध्यादिसंबन्धोऽर्थवादसिद्धोऽपि यस्मादविद्यमानोऽपि न भवति तस्मात्तद्वादस्याभूतार्थवादत्वमनिमित्तकमित्यर्थः ॥४४॥

आर्थवादिकोऽपि शुद्ध्यादिसंबन्धो मिथ्या गुणगुणिभावस्य मानान्तरासिद्धत्वादतस्तद्वादस्याभूतार्थवादतेत्याशङ्क्याऽऽह—न हीति । शास्त्रीये व्यवहारे गुणगुणित्वनिश्चये श्रुतिं हित्वा नान्यन्मानमस्ति यस्य संभावितस्याभावबलादस्यायं शुद्ध्यादिसंबन्धो मिथ्योच्येत न तथाऽत्र मानान्तरं संभाव्यते । नहि श्रौतेऽर्थे तदभावादभूतार्थता श्रुतेर्युक्ताऽतिप्रसङ्गादिति भावः ॥४५॥

किंच विंमताः[2] शुद्धत्वादयो न मिथ्या प्राणगुणत्वादासन्यत्वादिवदित्याह—आसन्यत्वादय इति । [3]योषितोऽग्नित्ववत्प्राणस्याऽऽसन्यत्वादयो यतो मिथ्या न भवन्त्यतस्तस्य शुद्धत्वादयोऽपि तथैव न मिथ्या स्युरिति योजना । न च योषितोऽग्नित्वं शास्त्रगम्यत्वादमिथ्येति युक्तं ध्यानार्थमारोपाङ्गीकारात् । साध्यवैकल्यं परिहरति—तेषामिति । अनुमानफलमाह—अत इति । यतःशब्दोऽत्रापि संबध्यते ॥४६॥

मानान्तराविसंवादित्वमुपाधिरित्याशङ्क्य साधनव्याप्तिमाह—अक्षादीति । ये प्राणस्य शुद्ध्यादयो गुणास्ते यदि श्रुता न तर्हि मृषा मानान्तराविरोधाच्छ्रुतिमात्रगम्येषु तस्यायोग्यत्वान्न च तन्मृषात्वे हेत्वन्तरमस्तीत्यर्थः । अथवा योषितोऽग्नित्वमध्यक्षविरोधादसदिष्टम् । ये तु प्राणस्याऽऽगमतोऽवगताः शुद्धत्वादयो गुणा न ते प्रत्यक्षादिविषयाः श्रुतिसिद्धेऽर्थे तदनवकाशादतस्तेषामविरोधान्नासत्यतेत्यर्थः ॥४७॥

नन्वासन्यत्वादिवत्प्राणगुणत्वाविशेषान्मानान्तरयोग्यत्वं शुद्धत्वादीनामनुमीयते । तथा च तत्संवादविसंवादाभ्यां श्रुतेस्तेषु न प्रामाण्यमित्याशङ्क्याऽऽह—श्रोत्रादिवदिति । यथेन्द्रियाणां शब्दादिविषयव्यवस्था तथा सर्वमानानामसाधारणार्थवत्ता स्वीकर्तव्या मानान्तरसिद्धे मानान्तरस्याकिंचित्करत्वादतः शाब्दशुद्ध्यादिष्वक्षादेरनवकाशान्न तद्विसंवादाद्याशङ्केत्यर्थः । ननु मानमेययोः संबन्धोऽस्ति न वा ? न चेन्मानमेयत्वायोगोऽतिप्रसङ्गादस्ति चेद्गम्यते न वा? न चेत्तदस्तित्वमनिमित्तं स्याद्गम्यते चेत्तेनैव मानेनान्येन वा?नाऽऽद्योऽशतः स्वग्रहापत्तेर्द्वितीये संबन्धग्राहिणा संबन्धिनोरपि ग्रहान्नासाधारणमेयता मानानामत आह—तन्मेयेति । मानमेययोः संबन्धस्तच्छब्दार्थः । स एव मेयस्तस्य प्रथनं स्फूर्तिस्तस्य साक्ष्यनुभवादन्यन्न मानमस्तीति यावत् ॥४८॥

---

१. ननु स्यात् श्रुतत्वात्—न स्यादुपास्यत्वे स्तुत्यर्थतोपपत्तेः—( भा० ४५ ) चक्षुः प्रमाणम् ।
२. विमताः शुद्धयादयो न मिथ्या प्राणगुणत्वात् आसन्यत्ववत् इत्यनुमाने प्रत्यक्षाद्यविरुद्धत्वं उपाधिः दृष्टान्ते साध्यव्यापकत्वं पक्षे साधनाव्यापकत्वं चेति चेन्न शुद्धत्वादीनां प्रत्यक्षाविरुद्धत्वेन साधनव्यापकत्वात् ।
३. योषाग्निवत्—"योषा वा गौतमाग्निः" इति पञ्चाग्निविद्यायां योषा अग्नित्वेन ध्यातव्येत्युक्तम् । आसन्यत्वं आस्यान्तर्गतत्वम् ।
४. तन्मेयप्रथने मानस्य मेयेन सम्बन्धे इति—न्या० ।
५. अनुभूतितः = साक्ष्यनुभवात् अन्यत् न किञ्चिन्मानमस्तीत्यर्थः ।

मृषात्वानिरुक्तेः प्राणगतशुद्ध्यादेः सत्यता

**परमार्थातिरेकाद्वाऽभेदाद्वा परमार्थतः । वस्तुनः स्यान्मृषात्मत्वं नैवमप्युपपद्यते ॥४९॥**
**लभते व्यतिरेकं चेत्परमार्थात्ततोऽपरम् । स्वमहिम्नैव तत्सिद्धेः किमिव स्यान्मृषार्थता ॥५०॥**
**परमार्थात्मकत्वे तु न किंचिद्वितथं क्वचित् । असत्यस्याप्यसत्यत्वं परमार्थसदात्मना ॥५१॥**
**सत्यासत्यविभागोऽयमविभागात्मवस्तुनि । प्रत्यगज्ञानहेतूत्थस्तद्बोधादेव तद्धतिः ॥५२॥**
**स्वाभासफलकारूढस्तदज्ञानजभूमिषु । तत्स्थोऽपि तदसंबद्ध ईश्वराद्यात्मतां गतः ॥५३॥**
**तदज्ञानं तदुत्थं च जगत्कृत्स्नं तदात्मकम् । यतोऽतस्तदनूद्याऽऽह ह्यात्मैवेति श्रुतिः स्फुटम् ॥५४॥**
**ऐकात्म्यमेव मानानां सर्वेषां मेयमिष्यते । यथा तथा प्रवक्ष्याम उदर्केऽप्युपपत्तिभिः ॥५५॥**
**मिथ्येतिप्रत्ययोत्पत्तिस्तथा कारणदोषतः । बाध्यज्ञानस्य हेतुः स्यान्नातोऽन्यद्बाध्यकारणम् ॥५६॥**

किंच परस्य मिथ्याशब्दार्थानिरुक्तेः प्राणगतशुद्ध्यादेर्न मृषात्वमिति वक्तुं विकल्प्य दूषयति—परमार्थेति । यन्मृषात्वं वस्तुनोऽभिमतं तत्परमार्थाद्भिन्नमभिन्नं वा?नोभयथापि संभवति । न हि परमार्थादर्थान्तरस्य सत्त्वं तद्भेदे मानाभावान्न च मृषात्वेनेष्टस्य तस्मादभिन्नत्वं व्याघातादिति भावः । इदानीं पक्षद्वयाङ्गीकारेऽपि मृषात्वानुपपत्तिरित्याह—नैवमिति । यद्वा कल्पद्वयं दर्शयित्वा दोषमुभयत्रापि संभावयति—नैवमिति ॥४९॥

भेदपक्षेऽनुपपत्तिं दर्शयितुमनुवदति—लभत इति । अपरं मृषात्वेनेष्टमिति यावत् । तत्किं स्फुरति न वा? न चेन्न तदस्तित्वं निश्चायकाभावात्स्फुरति चेत्स्वतः परतो वा? न परतः संबन्धानिरूपणात्स्वतश्चेन्न मृषात्वमात्मवदित्याह—स्वमहिम्नेति ॥५०॥

कल्पान्तरमनुभाष्य दूषयति—परमार्थेति । भेदपक्षस्योत्थानमेव नास्तीत्याह—असत्येति । परमार्थात्सदात्मनोऽतिरेके तुच्छत्वप्रसङ्गादसत्यस्यापि स्वरूपं सद्वस्त्वात्मना वाच्यमतो भेदपक्षानुपपत्तेः सदद्वैतमित्यर्थः ॥५१॥

सत्यानृते मिथुनीकृत्येति वदतस्तवापि सत्यासत्यविभागादनवसरनिरस्तौ विकल्पदोषावित्याशङ्क्याऽऽह—सत्येति । प्रतीचि विभागस्याज्ञानकृतत्वे प्रत्यग्ज्ञानात्तदज्ञानध्वस्तौ तत्कृतविभागध्वस्तिरिति फलितमाह—तद्बोधादिति ॥५२॥

ननु तवेश्वरोऽस्ति न वा? नास्ति चेन्नास्तिकत्वमनुमानादिविरोधश्चास्ति चेत्तस्य वैदिकत्वेन वस्तुत्वादीशितव्यप्रपञ्चस्यापि तथात्वेनाकल्पितत्वात्कथं प्रत्यग्ज्ञानादज्ञानध्वस्तौ द्वैतध्वस्तिस्तत्राऽऽह—स्वाभासेति । प्रत्यगज्ञानजेषु सर्वद्वैताकाराज्ञानपरिणामेषु स्वस्याऽऽभासस्तस्मिन्फलके समारूढः साक्षित्वेश्वरत्वकारणत्वान्तर्यामित्वरूपतामात्मा गच्छति । स च प्रपञ्चस्थोऽपि वस्तुतोऽपि न तेन संबध्यतेऽसङ्गागमविरोधात्तस्मादीश्वरादि कल्पितम् । उक्तं हि—अविद्याकृतनामरूपोपाध्यनुरोधीश्वरो भवतीति । तथा च तद्बोधादेव तद्धतिरित्यविरुद्धमित्यर्थः ॥५३॥

सेश्वरस्य जगतोऽज्ञानशरीरत्वे श्रुतिं प्रमाणयति—तदज्ञानमिति । कार्यस्य कारणस्य च सर्वस्य द्वैतस्य प्रतीचि कल्पितत्वेन तन्मात्रत्वादिदं सर्वमिति तदनुवादेनाऽऽत्मैवाद्वयं वस्तु निःसंदिग्धमाह श्रुतिरतः सेश्वरं जगदाविद्यमित्यर्थः ॥५४॥

द्वैतस्याऽऽविद्यत्वे विषयाभावात्प्रत्यक्षाद्यमानतेत्याशङ्क्य तात्त्विकमानत्वाभावेऽपि व्यावहारिकमानत्वोपपत्तिरिति मत्वा परिहारान्तरमाह—ऐकात्म्यमिति । तदेवासंमतमित्याशङ्क्योक्तवक्ष्यमाणयुक्तितः संमतिरित्याह—यथेति । उदर्कशब्दो व्याकृतप्रकरणविषयः । अपिशब्दस्तु संबन्धग्रन्थे यथोक्तार्थस्योक्तत्वद्योतनार्थः ॥५५॥

नन्वैकात्म्यधीर्मानममानं वा ? आद्ये तद्धेतुमात्रादिद्वैतस्य सत्यता, द्वितीयेऽपि बाधकाभावात्तस्य सत्यतैव । तथा चोभयथाऽपि द्वैतविषयमेवाध्यक्षादि मानमत आह—मिथ्येतीति । सा हि बाध्यज्ञानस्य ज्ञप्तिहेतुः कारणदोषश्च तदुत्पादको रजतादिबोधे द्वयोरपि दर्शनादतश्चोभयस्मान्नान्यो बाध्यज्ञानस्य ज्ञापको जनको वाऽस्तीत्यर्थः ॥५६॥

न चेहोभयमप्यस्ति कुतो मिथ्येति भण्यते । मितेर्मेये समाप्तत्वान्मिथ्यात्वं न मितेर्भवेत् ॥५७॥

प्रत्यगात्मैव सत्यः तदवगमान्मुक्तिः इत्यर्थान्तरम्

तस्मादविपरीतार्थज्ञानाच्छ्रेयो ह्यवाप्यते । विपरीतार्थतायास्तु न हेतुर्जगतीक्ष्यते ॥५८॥

वस्तुनिष्ठैव मा यस्मान्न तदज्ञानजाश्रया । तस्मात्तन्मोहविध्वस्तौ ध्वस्तिः स्यान्मोहजस्य च ॥५९॥

न चैवं सति मानानां द्व्यर्थता स्यात्कथंचन । यथाभूतार्थबोधित्वमेवमेव मितेर्भवेत् ॥६०॥

ईश्वरादिविकल्पानां प्रत्यग्वस्त्वविकल्पितम् । विषयो न मृषाबुद्धिः परमार्थं विना यतः ॥६१॥

[1]नाविपरीतार्थेति भाष्यस्य प्रकरणाविरुद्धमर्थान्तरम्

यावत्किंचिन्मितेः प्राप्तं न तन्मिथ्या मितत्वतः । मिथ्येति ग्राहयच्छास्त्रमनर्थार्थं यतो भवेत् ॥६२॥

सामान्यन्यायमुक्त्वैकात्म्यज्ञाने मिथ्येतिधीजन्मादेरभावात्तन्मिथ्यात्वासिद्धेर्युक्तं प्रामाण्यमित्याह—न चेति । किं चैकात्म्यधियो मिथ्यात्वं स्वरूपतो विषयतो वा? नाऽऽद्योऽभ्युपगमान्न चैवमप्रामाण्यं विषयसत्यतया तत्सिद्धेर्नेतरो मितेरैक्यबोधस्य मेये परमार्थसत्ये पर्यवसानादित्याह—मितेरिति । इतश्चाद्वैतबोधस्य विषयतो न मिथ्यात्वं बाधकाद्धि तद्धीर्नचेह बलवती बाधकधीरस्तीत्याह—मिथ्यात्वमिति ॥५७॥

परेष्टमिथ्यार्थस्य दुर्वचत्वात्प्राणस्य शुद्ध्यादिसंबन्धो न मिथ्येति वदता प्रत्यग्व्यतिरिक्तं सर्वं तदज्ञानजमित्युक्तम् । इदानीं तदुपजीव्य प्रत्यगात्मैव सत्यस्तदज्ञानाद्बन्धस्तज्ज्ञानान्मुक्तिरित्यस्मिन्नर्थे "नाविपरीते"त्यादिभाष्यमवतारय'ति—तस्मादिति । सम्यग्बोधाधीना श्रेयोवाप्तिरिति स्थाण्वादौ प्रसिद्धमिति वक्तुं हिशब्दः । विसंधिपाठस्त्वफलत्वादुपेक्षितः । कथं प्रत्यग्ज्ञानस्याविपरीतार्थतेत्याशङ्क्य स्वरूपतो मिथ्यात्वेऽपि विषयतस्तदभावस्योक्तत्वादिति मत्वाऽऽह—विपरीतेति ॥५८॥

ननु प्रत्यग्धीरपि विपरीतार्था शाब्दज्ञानस्य संसृष्टपरोक्षार्थत्वात्तयोश्च त्वत्पक्षे प्रत्यगज्ञानविलसितत्वाभ्युपगमात्तत्राऽऽह—वस्तुनिष्ठेति । असंसृष्टापरोक्षं वस्त्वेकमेवाद्वितीयं यत्साक्षादित्यादिश्रुतेस्तन्निष्ठैव प्रमा वाक्यादुदेति यथाविषयमुत्पत्तेर्न वस्त्वज्ञानजसंसृष्टादिविषया तस्याज्ञानात्मकस्य प्रमाविषयत्वायोगादतो युक्ता वाक्यीयप्रत्यग्धियोऽविपरीतार्थतेत्यर्थः । परोक्षादेरज्ञानजस्य मेयत्वाभावे ज्ञानादज्ञानध्वस्तौ तज्जस्य तस्यापि ध्वस्तेरपरोक्षमेकरसं वस्तु सिध्यति तत्र वाक्यीयज्ञानस्य विपरीतार्थशङ्कैव नास्तीति फलितमाह—तस्मादिति ॥५९॥

ननु यन्मानं प्रतीचि सकार्याज्ञानध्वंसि तत्प्रत्यञ्चं बोधयत्युत न? आद्ये तस्य स्याद्विकारता द्वितीये निवर्तकत्वायोगो न हि तमगोचरयन्मानं तत्राज्ञानं तज्जं च निरसितुं पारयति तत्राऽऽह—न चेति । संविदेकरसे मानप्रवृत्तिरिति स्वीकारे बोधकत्वं निवर्तकत्वं चेति न तद्विकारता बोधस्य, वस्तुनि स्वारसिकत्वान्निवृत्तेरेव तदाधेयत्वाज्जडे तु मानप्रवृत्तौ स्यादेव द्व्यर्थता तस्य स्वतोऽसिद्धेरतः संविदात्मन्येव सर्वमानप्रवृत्तिरित्यर्थः । इतश्च मानानां तद्विषयत्वं तथा सति यथाभूतार्थविषयत्वलाभादितरस्य कल्पितत्वादित्याह—यथेति ॥६०॥

ननु जगदीशो जीवश्चेति प्रपञ्चस्य कल्पितत्वे शून्यवादो भ्रमाधिष्ठानाभावात्तत्राऽऽह—ईश्वरादीति । विषयोऽधिष्ठानम् तस्याधिष्ठानत्वयोग्यतामाह—अविकल्पितमिति । उक्तेऽर्थे युक्तिमाह—नेत्यादिना । न च शून्यमेवपारमार्थिकमविकल्पितमधिष्ठानमारोप्यस्य तदनुवेधाभावादतः सत्यत्वमेव तथेत्यर्थः ॥६१॥

[1]नाविपरीतार्थेत्यादिभाष्यस्यान्तर्गर्भितप्रत्यगात्मसंबन्धार्थोक्तिद्वारा प्राणसंबन्धिशुद्ध्यादिगुणस्य परेष्टमिथ्यात्वासिद्धिरुक्ता तस्यैव भाष्यस्य प्रकरणाविरुद्धमर्थान्तरमाह—यावदिति । शास्त्रसिद्धं प्राणस्य शुद्ध्यादि न तन्मिथ्या हेत्वभावादित्यर्थः । प्राणस्य सत्यमेव शुद्ध्यादीत्यत्र हेत्वन्तरमाह—मिथ्येति । यदि मिथ्येति निश्चितं प्राणस्य शास्त्रं बोधयेत्तदा वस्तुतोविद्यमानतद्विशिष्टतत्प्रतिपत्तेरनर्थः स्याल्लोके विपरीतार्थधियोऽनर्थदृष्टेरतः शास्त्रं मिथ्याशुद्ध्यादिबोध्यनर्थार्थं स्यान्न चैतदिष्टं तेन शास्त्रीयं शुद्ध्यादि सत्यमेव न च योषाग्नित्ववदिदमपि मिथ्येति युक्तं तद्वदत्र द्वारार्थे विरोधाभावस्योक्तत्वादित्यर्थः ॥६२॥

---

१. २. ५०-६ ।

**नाम्नि ब्रह्मेति दृष्टं चेन्न भेदप्रतिपत्तितः । प्रतिमावद्धि नामादौ ज्ञाते ब्रह्मेति धीरियम् ।।६३।।**
**यथा निर्ज्ञातभेदे हि विष्णुधीरुपलात्मनि । विधीयते तथा नाम्नि ब्रह्मबुद्धिर्विधीयते ।।६४।।**
**अज्ञातरज्जुतत्त्वो हि रज्जुं सर्पधियेक्षते । नामादौ तु यतो नैवं तस्मादसदिदं वचः ।।६५।।**

**नास्ति ब्रह्म उपासनं तु असत एवेति शङ्कासमाधाने**

**ब्रह्म नैवेह वस्त्वस्ति दृष्टिरेवेति चेन्मतम् । नर्गादिषु सतामेव सत्सु दृष्टिसमन्वयात् ।।६६।।**
**गौणस्य मुख्यापेक्षत्वान्मुख्यं ब्रह्म विना न सत् । गौणं ब्रह्म यथा गौणो वह्निर्मुख्याग्निपूर्वकः ।।६७।।**
**न चासद्विषया काचिद्बुद्धिर्जगति वीक्ष्यते । सर्वार्थव्यभिचारेऽपि संविदव्यभिचारिणी ।।६८।।**
**न चापीहाऽऽगमाभासोऽचोदनालक्षणत्वतः । क्रियार्थैरविशिष्टत्वाद्विद्यार्थोक्तेः परात्मनि ।।६९।।**

शास्त्राद्यथार्थप्रतिपत्तेरेव श्रेयोवाप्तिरित्यत्र व्यभिचारं चोदयति—नाम्नीति । नाम ब्रह्मेत्युपासीतेति श्रुतेरब्रह्मण्येव नाम्नि ब्रह्मेति ज्ञानस्यातस्मिंस्तद्बुद्धित्वेन मिथ्याभूतस्य यावन्नाम्नो गतमित्यादिना श्रुतफलस्य दृष्टत्वादागमाद्यथार्थप्रतिपत्तेरेव फलमित्ययुक्तमित्यर्थः । न तन्मिथ्याज्ञानमित्याह—नेति । ब्रह्मणो नाम्नो भेदधीद्वारा तत्र ब्रह्मदृष्टेरिति हेतुमाह—भेदेति । उक्तेऽर्थे न प्रतिमावदित्यादिभाष्यं योजयति—प्रतिमावद्धीति ।।६३।।

दृष्टान्तं व्याचष्टे—यथेति । निर्ज्ञातभेदे विष्णोः सकाशादिति शेषः । दार्ष्टान्तिकमाह—तथेति । नाम्नि ब्रह्मणो निर्ज्ञातभेदे दृष्टे सतीति यावत् ।।६४।।

नाम्नि ब्रह्मदृष्टेर्भेदधीपूर्वकत्वेऽपि मिथ्यादृष्टित्वमतस्मिंस्तद्बुद्धित्वादित्याशङ्क्याऽऽह—अज्ञातेति । यो हि रज्जुं रज्जुतया न जानाति स तां सर्पतया प्रतिपद्यते नामादौ तु तदात्मना नाज्ञानमस्ति तस्य ब्रह्मणो भेदेन प्रथनादित्यर्थः । यस्मादेवं तस्मादविवेकपूर्वकाभेदधियो मिथ्यात्वान्नाम्नि ब्रह्मदृष्टेर्विवेकपूर्वकत्वात्तन्मिथ्यात्वोक्तिरयुक्तेत्याह—तस्मादिति ।।६५।।

ननु विवेकस्य धर्मिप्रतियोगिनौ वाच्यौ । न चासतस्तथात्वं न च ब्रह्मास्ति यस्य धर्मित्वं प्रतियोगित्वं वा मानाभावादुपनिषदां तु वेदोपरत्वेनामानत्वादतो विवेकपूर्वकत्वायोगान्नामादौ ब्रह्मदृष्टे रज्जुसर्पदृष्टेरिव मिथ्यात्वमिति मन्वानश्चोदयति—ब्रह्मेति । इह नामादौ ब्रह्मदृष्टिरेवाऽऽरोप्यतां ब्रह्म तु नास्ति वस्तु मानाभावादित्यक्षरार्थः । "सत्यं ज्ञानमनन्तं" ब्रह्म "विज्ञानमानन्दं ब्रह्म" "प्रज्ञानं ब्रह्म"त्यादिश्रुतिशताधिगतं ब्रह्म नास्तीत्यशक्यं वक्तुं तन्मानत्वस्य संबन्धग्रन्थे साधितत्वात्तस्मादस्त्येव ब्रह्म 'सदेव सोम्येदम्' 'अस्तीत्येवोपलब्धव्यः' "असन्नेव स भवति असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुरि"ति परिहरति—नेति । किंच ब्रह्मदृष्टिः सत्यार्था शास्त्रीयदृष्टित्वादियमेवर्ग्गिनः सामेतिदृष्टिवदित्याह—ऋगादिष्विति । ऋगादिषु सत्सु सतां पृथिव्यादीनामारोपदर्शनान्नामादावपि सत्येव सतो ब्रह्मणो दृष्टिरारोपणीयेत्यर्थः ।।६६।।

ब्रह्मास्तित्वे हेत्वन्तरपरं मुख्यापेक्षत्वाच्चेत्यादिभाष्यं[1] गौणमुख्याधिकरणन्यायेन व्याचष्टे—गौणस्येति ।।६७।।

विमता बुद्धिः सालम्बना बुद्धित्वाद्घटबुद्धिवदित्यनुमानाच्च ब्रह्मास्तीत्याह—न चेति । किंच सर्वस्य मात्राद्यर्थस्य व्यभिचारेऽपि चिद्वस्तु, भावाभावसाधकमव्यभिचार्यस्ति तत्कथं कूटस्थं संविदेकरसं ब्रह्म नास्तीत्याह—सर्वार्थेति ।।६८।।

ननु वेदान्तेभ्यो न ब्रह्मप्रमितिस्तेषां विधिवैधुर्येणाप्रामाण्यान्नहि वाक्यं किंचिद्विध्यस्पृष्टं मानमतो नास्ति ब्रह्मेति संबन्धग्रन्थमबुध्यमानस्य चोद्यं निरस्यति—न चेति । चकारोऽवधारणार्थः ब्रह्मात्मनि तत्त्वमादि

---

१. मुख्यापेक्षत्वाच्च गौणत्वस्य । गौणमुख्याधिकरणं ३-२-१ अर्थाभिधानसंयोगात् इत्यधिकरणम्, तत्र "बर्हिर्देवसदनं दामि' इति मन्त्रः बर्हिश्शब्दार्थस्य मुख्यस्य दर्भस्य लवने विनियुज्यते उत बर्हिश्शब्दस्य यो गौणार्थः उलपराजिः तृणविशेषः तदीयलवनेऽपीति सन्देहे उलपराजितृणस्यापि यज्ञाङ्गत्वेन लवितव्यत्वात् तल्लवनेऽपि स्यादिति प्राप्ते मुख्ये दर्भलवन एव मन्त्रः तस्य शीघ्रोपस्थितत्वेन मन्त्रस्य चरितार्थत्वात् गौणप्रतीक्षाभावात् इति, एवं प्रकृते गौणब्रह्मणः मुख्यब्रह्मपूर्वकत्वात् तदेव ग्राह्यम् । २. ५३-१ ।

कर्म वाक्येभ्यः कर्मवत् वेदान्तेभ्यो ब्रह्मावगमः

ज्योतिष्टोमादिका यद्वद्विशिष्टानेकसाधना । एवंक्रमप्रयुक्ताङ्गा तथा चैवंफला क्रिया ॥७०॥
अन्यप्रमाणाविषया वाक्यादेवावगम्यते । यथा तथेहापूर्वादिवस्तूक्तेरेव गम्यते ॥७१॥
न च वाक्याद्विपर्यस्ता यदि वा संशयात्मिका । बुद्धिरुत्पद्यतेऽस्माकं यथाभूतार्थबोधिनः ॥७२॥
कार्याभावादयुक्तं चेन्नोक्तिबुद्धेस्तथार्थतः ।
भावनार्थस्य नैवेह भाव्यर्थत्वात्तथार्थता । किंतु मानार्पितत्वात्सा यथाभूतार्थतेष्यते ॥७३॥
नापि तद्धिषणायाश्च कार्यत्वात्स्यात्तथार्थता । प्रमाणाभिजनादेव यथाभूतार्थता धियः ॥७४॥
अन्योन्याश्रयतादोषः कार्यप्रामाण्यवादिनः ॥७५॥
प्रमाणाधिगतौ सत्यां पुंसो मेयानुरोधतः । अनुष्ठेयोऽननुष्ठेय इति पश्चान्मतिर्भवेत् ॥७६॥

विधिशून्यत्वादागमाभासो न मानमित्यपि नैव युक्तमित्यत्र क्रियार्थैश्चे[1]दित्यादिभाष्योक्तं हेतुमाह— क्रियार्थैरिति ॥६९॥

सिद्धसाध्यार्थत्वेन वैषम्यादविशिष्टत्वमनिष्टमित्याशङ्क्य विवक्षितमविशेषमाह—ज्योतिष्टोमादिकेति । क्रियेति संबन्धः । क्रियेत्यपूर्वं विवक्ष्यते । यद्वदित्यस्य तथा चेत्यत्र संबन्धः । विशिष्टत्वं स्वरूपोपकारित्वं फलोपकारित्वं च । पञ्चमोक्तं प्रकारं परामृशन्नेवमित्यादिष्टम् । विध्युद्देशतो विश्वजिन्न्यायादिना च सिद्धमधिकारं परामृशति—एवंफलेति ॥७०॥

अपूर्वा[2]धिकरणन्यायं सूचयति—अन्येति । दृष्टान्तमनूद्य दार्ष्टान्तिकमाह—यथेति । इहशब्दो मोक्षप्रकरणं वदन्नुक्तेरित्यनेन संबध्यते । अपूर्वमनपरमनन्तरमित्यादिविशेषितं वस्तु ब्रह्मेति यावत् ॥७१॥

ननु बुद्ध्युत्पत्तेरविशेषादनुत्पत्तिरूपाप्रामाण्यं तत्त्वमादेर्मा भूद्विपर्यासरूपं संशयरूपं वा स्यादिति नेत्याह—न चेति । अधिकारिणामेकरूपाबाधितबुद्ध्युत्पत्तेरिति हेतुमाह—अस्माकमिति ॥७२॥

न चापीहाऽऽगमाभास इत्यत्रोक्तमेव चोद्यसमाधिभ्यां वक्तुं तत्त्वमादिवाक्येषु नियोगाभावादयुक्ता मानतेति चोदयति—कार्येति । विद्यार्थानां क्रियार्थैर्वाक्यैर्वैधर्म्यं दूषयति—नोक्तेति । वाक्योत्थबुद्धेर्यथार्थत्वान्नियोगाभावेऽपि वाक्यप्रामाण्यमविरुद्धं 'नहि तन्निष्ठत्वं[3] तत्प्रयोजकं' स्वर्गकामः सिकतां भक्षयेदित्यादौ व्यभिचारात्किं त्वज्ञातज्ञापकत्वं तस्य सर्वत्राव्यभिचारादित्यर्थः । अनुष्ठेयापेक्षामन्तरेण वस्तुनि शब्दधियोस्तथार्थत्वं कथमित्याशङ्क्य तयोर्विषयतथात्वार्थं तदपेक्षा स्वप्रामाण्यार्थं वेति विकल्प्याऽऽद्यं दूषयति—भावनेति । इहेति कर्मकाण्डोक्तिः । प्रयोगप्रत्ययविषयस्य कर्तव्यार्थस्य तथार्थत्वं न कर्तव्यतापेक्षं किंतु मानगम्यत्वादन्यथा विप्रलम्भकवाक्येऽपि तथात्वापत्तेरित्यर्थः ॥७३॥

द्वितीयं दूषयति—नापीति । उक्तिसमुच्चयार्थश्चकारः । कार्यत्वात्तद्विषयत्वादिति यावत् । तथार्थता प्रमाणतेत्यर्थः । यथाभूतार्थताऽपि तथैव । धीग्रहणमुक्त्युपलक्षणम् । कर्तव्यार्थविषयप्रयोगादेर्नानुष्ठेयविषयत्वान्मानत्वं किंतु प्रमाकरणत्वात्तज्जन्यत्वाच्च, अन्यथोक्तातिप्रसक्तितादवस्थ्यादतोऽनुष्ठेयत्वं मानत्वेऽनुपयुक्तमित्यर्थः ॥७४॥

किंच कार्यनिष्ठत्वेन प्रामाण्ये तन्निष्ठत्वे प्रामाण्यं तस्मिन्सति तन्निष्ठतेत्यन्योन्याश्रयादज्ञातज्ञापकत्वमेव प्रामाण्यमतो यागादेरिष्टोपायत्वस्य मानान्तरायोग्यत्वात्तदेव विधिकाण्डमेयमिति मत्वाऽऽह—अन्योन्येति । कुतस्तर्हि कार्याकार्यधीरित्याशङ्क्य मानसी सेति संबन्धग्रन्थोक्तं स्मारयति—प्रमाणेति ॥७५–७६॥

१. क्रियार्थैरिति-क्रियार्थैश्चाविशेषाद्विद्यार्थानाम् ५३-३ ।
२. अपूर्वमुच्यते इति प्रभाकरमतरीत्या नियोगविशेष्यकशाब्दबोधाभिप्रायम् ।
पञ्चमोक्तः प्रकारः क्रम इत्यर्थः । विध्युद्देशत इति प्रत्यक्षपठितफलवत्कर्म परम् विश्वजिदिति यत्र फलं विश्वजिन्न्यायेन कल्पनीयं तत्परम् ।
३. तन्निष्ठत्वं प्रतिपाद्यर्थपरत्वं तत्प्रयोजकं प्रामाण्यप्रयोजकं "स्वर्गकामः सिकतां भक्षयेदि"त्यत्र सिकताभक्षणपरत्वेऽपि तत्र प्रामाण्याभावात् ।

एकरूपं यतो मानं विरुद्धानेकरूपिणाम् । भानुवद्बोधकं दृष्टं नातोऽनुष्ठेयतो मितिः ॥७७॥

ब्रह्मणः पदार्थत्वं वाक्यार्थत्वं वा नेति शङ्कासमाधाने

नन्ववाक्यप्रमाणत्वमननुष्ठानतो भवेत् । पदानां संहतिर्यस्मान्न दृष्टेह क्रियां विना ॥७८॥
पदार्थत्वे च तत्सिद्धिर्लिङ्गप्रत्यक्षसंश्रयात् । आगमैकप्रमाणत्वान्न पदार्थत्वमिष्यते ॥७९॥
अस्त्यस्मीत्यभ्युपेतत्वान्नैवमप्युपपद्यते । अस्ति मेरुर्यथा वर्णचतुष्टयविशेषणः ॥८०॥
अकार्येऽपि हि मेर्वादावस्ति मेरुरिति श्रुतेः । सम्यग्धीर्जायते यद्वत्तथा तत्त्वमसीत्यतः ॥८१॥
मेर्वादिज्ञानवच्चेत्स्यान्निष्फलत्वादमानता । नैवं तत्फलसाक्षात्त्वाज्ज्ञानोद्भूतेरनन्तरम् ॥८२॥
भिद्यते हृदयग्रन्थिर्ब्रह्माप्येतीति च श्रुतेः । न चार्थवादतैतस्यां जुह्वामिव फलश्रुतेः ॥८३॥

किं चाध्यक्षं विरुद्धानेकाकारवतां कुम्भादीनां बोधकं मानं दृष्टं तथा वेदवाक्यमपि सिद्धसाध्ययोरेकरूपं दृश्यते तदज्ञातज्ञापकत्वाविशेषादुभयत्र तत्प्रामाण्यमविशिष्टमित्याह—एकरूपमिति। ननु प्रेप्साजिहासे शास्त्राज्जायेते तत्तस्य कारकत्वान्न क्वचिदपि मानतेत्यत आह—भानुवदिति। किंच विमतं परेष्टकार्यादन्यत्रैव मानं मानत्वाच्चक्षुरादिवदिति विवक्षन्नाह—नात इति ॥७७॥

तत्र कार्यवादी ब्रह्म वाक्यगम्यं पदगम्यं वेति विकल्प्य दूषयति—नन्विति। नाऽऽद्य इत्याह—अवाक्येति। कार्यस्यैव वाक्यगम्यत्वाद्ब्रह्मणोऽकार्यत्वान्न तद्गम्यतेत्यर्थः। ब्रह्मणोऽकार्यत्वेऽपि वाक्यार्थत्वं किं न स्यादत आह—पदानामिति। ब्रह्मणश्चेदकार्यत्वं तदा तद्विषयवेदान्तेषु क्रियापदाभावात्पदसंहत्ययोगाद्वाक्यासिद्धेर्न तस्य तदर्थतेत्यर्थः। लोकवेदयोर्न क्रियापदमन्तरेण यस्मात्पदानां मिथः संहतिर्दृष्टा तस्माद्वेदान्तेषु क्रियापदशून्येषु नास्ति पदसंहतिरिति योजना ॥७८॥

द्वितीयं प्रत्याह—पदार्थत्वे चेति। किंच पदार्थत्वं ब्रह्मणो ब्रुवतः सिद्धान्तहानिरित्याह—आगमेति। ब्रह्मवादी ब्रह्म वाक्यीयमित्यङ्गीकारात्पदार्थत्वकृतदोषाभावो न च क्रियापदाभावात्पदासंहतिर्वेदान्तेष्वपि प्रतिपाद्यानुगुणक्रियापदोपगमादिति परिहरति—असीति। यद्वा वाक्यार्थत्वमङ्गीकृत्य पदार्थत्वमनङ्गीकारपरास्तमिति दूषयति—आगमेति। क्रियापदं विना पदसंहत्यभावाद्वाक्यासिद्धेस्तद्गम्यत्वमपि निरस्तमित्याशङ्क्याऽऽह—असीति। कार्यास्पृष्टेऽर्थे वाक्यमानत्वं भाष्योक्तं दृष्टान्तेन स्पष्टयति—अस्तीत्यादिना। यथा कार्यसंबन्धं विनैव वस्तुनि वाक्यं मानं तथोच्यते दृष्टान्तेनेति यावत्। शुक्लकृष्णलोहितमिश्रलक्षणं वर्णचतुष्टयं यत्तच्च मेरावेकस्मिन्दिग्भेदेन द्रष्टव्यम्। रूपचतुष्टयविशिष्टो मेरुरस्तीत्यस्मिन्प्रयोगे मेरावकार्येऽप्यस्ति मेरुरिति शब्दाद्यथा सम्यग्धीर्भवति यथा च सौवर्णराजतपक्षाभ्यां सुपर्णगतिविहंगमोऽत्यद्भुतदर्शनो द्वीपान्तरेऽस्तीति प्रयोगे विशिष्टे पतत्रिण्यकार्येऽप्यस्ति पक्षीति शब्दादुत्पद्यते सम्यग्ज्ञानं तथा तत्त्वमसिवाक्यात्कार्यासंबन्धेऽपि ब्रह्मणि सम्यग्ज्ञानोत्पत्तिरित्यर्थः ॥७९–८०–८१॥

विमतमफलं सिद्धार्थज्ञानत्वात्संमतवदित्यनुमानात्तत्त्वमादेः सिद्धार्थस्याफलत्वादमानतेत्याशङ्क्ते—मेर्वादीति। विद्वदनुभवविरोधेनानुमानं धुनीते—नैवमिति। वाक्यीयज्ञानोदयानन्तरं तत्फलस्य शोकादिविमोकस्य प्रत्यक्षत्वात्तद्विरुद्धमनुमानं नोदयतीत्यर्थः ॥८२॥

तत्र विवदमानं प्रति श्रुतिविरोधमाह—भिद्यत इति। फलश्रुतेरर्थवादत्वेनामानत्वादनुमानाबाधकतेत्याशङ्क्याऽऽह—न चेति। ब्रह्मधीः सप्तम्यर्थः षष्ठीपाठे तु तत्फलश्रुतिरेवोच्यते। पर्णमयीत्वाधिकरणन्यायेन जुह्वां[1] फलश्रुतेरर्थवादत्वं युक्तम्। ब्रह्मधियोऽन्यशेषत्वप्रापकाभावात्तत्फलश्रुतिर्नार्थवादः शारीरकानारम्भप्रसङ्गादित्यर्थः ॥८३॥

---

१. जुह्वामिति—"यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति" इति वाक्ये पर्णतायाः पापश्लोकश्रवणाभावः न फलं द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात् इतिसूत्रेण तस्य क्रतुप्रकरणगतत्वेन क्रत्वङ्गत्वात् न फलार्थत्वं दध्नस्तु संयोगभेदात् उभयार्थत्वमिति विशेषः।

**निषेधवाक्यवत् अक्रियार्थस्यापि तत्त्वमादेः प्रामाण्यम्**

निषिद्धानिष्टसंबन्धो वाक्यादेवावगम्यते । न चानुष्ठेयता तस्य मनागप्युपपद्यते ॥८४॥
निषेधसंस्कृतधियो निषिद्धविषये न च । पलाण्ड्वादावकरणादन्या धीर्जायते श्रुतेः ॥८५॥
यथा निषेधवाक्येभ्यो नान्याऽकरणतो मतिः । तत्त्वमस्यादिवाक्येभ्यस्तद्वदेवेति निश्चयः ॥८६॥
मृगतोये प्रवृत्तस्य तृडार्तस्योषरेक्षणात् । तमोध्वस्तौ निवृत्तिः स्यात्तथाऽऽत्मज्ञानतोऽपि नः ॥८७॥
तस्मान्निषेधशास्त्रस्य यथाभूतार्थनिष्ठता । पुंव्यापारस्य गन्धोऽपि नतत्रास्तीति निश्चयः ॥८८॥
आत्मयाथात्म्यविज्ञाननिष्ठता तद्वदीक्ष्यताम् । तत्त्वमस्यादिवाक्यानां नानुष्ठानं मनागपि ॥८९॥
कलञ्जभक्षणस्येव ननु न श्रौतकर्मणः । अज्ञानहेत्वनर्थार्थकारिता गम्यते मितेः ॥९०॥
नैवमज्ञानहेतुत्वानर्थार्थत्वेन तुल्यता । कलञ्जभक्षणेनातस्तन्निवृत्तौ निवर्तते ॥९१॥
शास्त्रमात्रनिमित्तत्वान्नित्यानां नैवमिष्यते । मिथ्याज्ञानादिहेतुत्वं काम्यानामिव-चेन्मतम् ॥९२॥

तत्त्वमादिवाक्योत्थज्ञानस्य श्रुत्यनुभवाभ्यां फलवत्त्वदृष्टेर्युक्ता कार्यास्पृष्टे स्वार्थे मानता तत्त्वमादेरित्युक्तम् । संप्रति शास्त्रस्य कार्यपरत्वानियमे हेत्वन्तरमाह—निषिद्धेति । हननादेरनिष्टफलसंबन्धो 'न हन्यादि'त्यादिवेदादेव ज्ञायते । न च तस्य कार्यता शङ्कितुमपि शक्यते । नहि निषेधगम्यं निषिद्धानिष्टसंबन्धं तत्संस्कृतोऽनुतिष्ठत्यतो निषेधवाक्यानां कार्यानपेक्षाणामपि मानत्वात्कार्यपरत्वानियमः शास्त्रस्येत्यर्थः ॥८४॥

अहननादि कार्यमिति विधिपरत्वमेव निषेधवाक्यानामपि किं न स्यादित्याशङ्क्याऽऽह—निषेधेति । पलाण्डुशब्दो लशुनविशेषवाची । निषेधवाक्यानामपि कार्यार्थत्वे विधिनिषेधभेदभङ्गान्नञश्च स्वसंबन्ध्यभावबोधने मुख्यस्यार्थान्तरे वृत्तौ लक्षणापातान्निषिद्धविषये रागादिना प्रवृत्तस्य निषेधशास्त्रार्थधीसंस्कृतस्य निषेधश्रुतेरकरणात्प्रसक्तक्रियानिवृत्त्युपलक्षितादौदासीन्यादन्या धीरनुष्ठेयविषया नोदेतीत्यर्थः ॥८५॥

दृष्टान्तं विवक्षितमनूद्य दार्ष्टान्तिकमाह—यथेति । "न हन्यात्" "न पिबेदि"त्यादिवाक्येभ्योऽकार्यमकरणमेव मीयते न तु कार्यविषया तेभ्यो मतिर्भवति तथैव वेदान्तेभ्योऽप्यकार्ये ब्रह्मणि प्रमितिसंभवात्तेषां कार्यास्पर्शित्वमित्यर्थः ॥८६॥

तत्त्वमादेर्वाक्याज्ज्ञानमज्ञानध्वंसि सर्वव्यवहारोपरमात्मकं भवतीत्यत्र लोकसिद्धं दृष्टान्तमाह—मृगेति । पिपासापरवशस्य मरुभूमिप्रतिफलितमरीचिषु नीरपूरमारोप्य तस्मिन्प्रवृत्तस्य मरुभूमिरेषेति तत्त्वबोधात्तदज्ञाननिवृत्तौ समारोपनिवृत्तिस्तस्मिन्निवृत्ते प्रवृत्तेरुपशान्तिरुपलब्धेत्यर्थः । उक्तदृष्टान्तवशादात्माज्ञानात्कर्तृत्वाद्यभिमानद्वारा कर्मसु प्रवृत्तस्य वाक्योत्थात्मज्ञानात्तदज्ञाननिवृत्तौ सर्वप्रवृत्त्युपशान्तिरित्यस्माकं प्रत्यक्षमित्याह–तथेति ॥८७॥

दृष्टान्तमुपसंहरति—तस्मादिति । दार्ष्टान्तिकमुपसंहरति—आत्मेति । भ्रान्तिप्राप्तहिंसादिनिरासेन निवृत्तिनिष्ठतया निषेधवाक्यमानत्ववत्तत्त्वमादेरपि प्रत्यगज्ञानोत्थकर्तृत्वाद्यशेषविशेषनिवर्तकत्वेन मानत्वोपपत्तिरिति वार्तिकद्वयार्थः ॥८८–८९॥

दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमुत्थापयति—कलञ्जेति । यथा कलञ्जभक्षणादेरज्ञानकृतत्वादनर्थफलत्वाच्च "न कलञ्जं भक्षयेदि"त्यादिनिषेधवाक्यानामनिष्टोपायताधीद्वारा निवृत्तिनिष्ठत्वेन प्रामाण्यं युक्तं तथा श्रौतकर्मणो नाज्ञानकृतत्वमनर्थार्थत्वं वा । तद्धि शास्त्रप्रयुक्तमतस्तत्त्वमादेस्तत्त्वज्ञानं जनयतोऽपि श्रौतकर्मानिवर्तकत्वान्न निवर्तकत्वेन प्रामाण्यमित्यर्थः ॥९०॥

यथा कलञ्जभक्षणाद्यज्ञानकृतमनर्थफलं च तथा श्रौतमपि कर्म प्रत्यगज्ञानकृतकर्तृत्वादिजन्यत्वात्तज्जन्यदेहग्रहस्य चानर्थत्वादतो वाक्योत्थज्ञानादज्ञानध्वस्तौ तज्जन्यकर्मध्वस्तेर्निवर्तकत्वेन निषेधवत्तत्त्वमादिवाक्यस्य मानत्वोपपत्तिरित्युत्तरमाह—नैवमिति । श्रौतकर्मण इत्यत्रापि संबध्यते ॥९१॥

काम्यकर्मणामज्ञानहेतुत्वानर्थार्थत्वेऽपि नित्यानां शास्त्रमात्रकृतानुष्ठानत्वान्नाज्ञानकृतत्वमनर्थकरत्वं वा प्रत्यवायाख्यानर्थध्वंसित्वादिति विशेषं शङ्कते—शास्त्रेति । अज्ञानकृतत्ववदनर्थफलमेवंशब्दार्थः । आदिपदेन रागादिग्रहः । काम्यकर्मणामज्ञानकृतत्वादिति वैधर्म्यदृष्टान्तव्याजेनाङ्गीकरोति—काम्यानामिति ॥९२॥

नाविद्यारागद्वेषादिदोषदुष्टस्य तद्विधेः । स्वर्गादिकामिनो यद्वदग्निहोत्रविधिस्तथा ॥९३॥
मोहकामादिदुष्टस्य नित्यं कर्म विधीयते । न स्वतः काम्यनित्यत्वविवेकोऽस्तीह कर्मणः ॥९४॥
कर्तृस्थेन हि स्वर्गादिकामदोषेण काम्यता । अतो नान्येन काम्यत्वं कर्मणः स्यात्कथंचन ॥९५॥

ज्ञानकर्मणोरधिकारिभेदः

आविरिञ्चाद्विरक्तस्य तद्विविक्तात्मकामिनः । मोक्षे पुंसोऽधिकारः स्यान्न कामापहृतात्मनः ॥९६॥
पराचः कामानित्येवं कामानित्यपरं तथा । योऽकाम इति तद्वच्च श्रुतिः कामनिषेधनी ॥९७॥
अविद्याया न चोच्छित्तौ ज्ञानादन्यदपेक्ष्यते । ज्ञानोत्पत्तौ न चैवान्यच्छमादिभ्यो ह्यपेक्ष्यते ॥९८॥
शमाद्युत्पत्तये नान्यद्बुद्धिशुद्धेरपेक्ष्यते । बुद्धिशुद्धौ च नित्यादिकर्मभ्यो नान्यदिष्यते ॥९९॥
आत्माज्ञानैकहेतुत्वाद्वाङ्मनःकायकर्मणाम् । आत्मज्ञानेन तद्बाधात्कर्मापेक्षा कुतो भवेत् ॥१००॥
यदज्ञानात्प्रवृत्तिर्या तज्ज्ञानात्सा कुतो भवेत् । प्रत्यग्ज्ञानोद्भवे तस्मात्समाप्तिः सर्वकर्मणाम् ॥ १ ॥
न चोच्छिन्नात्ममोहस्य सदैवाऽऽत्मधियः स्थितेः । प्रतीच्यवसरोऽस्तीह वाङ्मनःकायकर्मणाम् ॥ २ ॥

नित्यानां शास्त्रमात्रकृतानुष्ठानत्वमसिद्धमिति परिहरति—नाविद्येति । तच्छब्दो नित्यकर्मविषयः । यथेत्यादिभाष्यं व्याकुर्वन्नुक्तमेव प्रपञ्चयति—स्वर्गादीति । किंच काम्यानां दुष्टत्वं ब्रुवता नित्यानामपि तदिष्टमुत्पत्तिविनियोगप्रयोगाधिकारविधिरूपे विशेषाभावादित्याह—न स्वत इति । इहेति शास्त्रोक्तिः ॥९३–९४॥

कथं तर्हि काम्यनित्यविभागस्तत्राऽऽह—कर्तृस्थेनेति । नित्यता चेति शेषः । स्वर्गकामः पशुकाम इति विशेषार्थिनः काम्यविधिरिष्टं मे स्याद्दुःखं मा भूदित्यविशेषकामप्रेरिताविशेषितप्रवृत्तेः पुंसो नित्यविधिरिति विभागः । कामनाप्रयुक्तं काम्यं जीवनप्रयुक्तं नित्यमिति विभागमाशङ्क्याऽऽह—अत इति । काम्यत्वं नित्यत्वं चेति द्रष्टव्यम् । उक्तप्रकारात्प्रकारान्तरेण काम्यनित्यविभागो न सिध्यति तुल्यं हि नित्यस्यापि कामनाधीनत्वम् । "यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितमि"ति स्मृतेः । न च जीवनकृतं नित्यं सत्यपि तस्मिन्कदाचित्तदभावात्तस्मिन्सत्येव तत्सत्त्वं तु काम्येऽपि तुल्यमिति भावः ॥९५॥

रागादिदुष्टस्य कर्माधिकारे तथाविधस्यैव मुमुक्षोर्ज्ञानाधिकारोऽपीति न विशेषो ज्ञानकर्मणोरित्याशङ्क्याऽऽह—आविरिञ्चादिति । आ च स्थाणोः संसारादिति शेषः । अनित्यसंसारविषयस्तच्छब्दः । मोक्षशब्दस्तदुपायज्ञानविषयः । साधनचतुष्टयविशिष्टो हि मोक्षोपाये ज्ञानेऽधिक्रियते न रागादिमानथशब्दोपात्तन्यायविरोधादित्यर्थः ।।९६॥

विरक्तस्य ज्ञानाधिकारे मानमाह—पराच इति । "पराचः कामाननुयन्ति बालास्ते मृत्योर्यन्ति विततस्य पाशमि"त्येवंप्रकारकं वाक्यं "कामान्यः कामयते मन्यमानः स कामभिर्जायते तत्र तत्रे"त्यपरमपि वाक्यं पूर्ववन्निन्दाद्वारा कामनिषेधकमुक्तवाक्यवद्"योऽकाम"इति च श्रुतिः साक्षादेव तन्निषेधेन कामाद्यनुपद्रुतस्य श्रेयोमार्गे सम्यग्ज्ञानेऽधिकारं सूचयतीत्यर्थः ।।९७॥

कथं कर्मफलाद्विरक्तस्य मोक्षाधिकारस्तस्यापि तत्फलत्वादन्यथा कर्मणामुत्तमफलानन्वयः स्यादित्याशङ्क्य क्रममुपन्यस्यति—अविद्याया इति । शमादीनां ज्ञानोत्पत्त्युपकरणत्वं श्रुतिप्रसिद्धमिति हिशब्दार्थः ।।९८–९९॥ परंपरयाऽपि कर्मणां मोक्षोपयोगश्चेत्किमिति साक्षादेव नेष्यते तत्राऽऽह—आत्मेति । त्रिविधस्यापि कर्मणोऽज्ञानजन्यत्वाज्ज्ञानादज्ञाननिवृत्तौ तदुत्थस्य कर्मणोऽपि निवृत्तेर्ज्ञानिनो मोक्षे तदपेक्षा न युक्तेत्यर्थः ॥१००॥

ज्ञानिनो ध्वस्ताज्ञानस्यापि कर्मदृष्टेर्मोक्षे तदपेक्षेत्याशङ्क्य तस्य बाधितानुवृत्त्या तद्दृष्टिरित्याशयेनाऽऽह—यदज्ञानादिति । तज्ज्ञानादूर्ध्वमिति शेषः । योगारूढस्य तस्यैव शमः कारणमितिवचनात्कर्मोपशमो ज्ञानपरिपाके हेतुर्न कर्मेति मत्वा फलितमाह—प्रत्यगिति । ज्ञानादूर्ध्वं कर्मासंभवस्तच्छब्दार्थः ॥१०१॥

उत्पन्नधियोऽपि तन्नाशादूर्ध्वं कर्म भविष्यतीत्याशङ्क्याऽऽह—न चेति । स्थितेः प्रवाहरूपेणेति शेषः । इह प्रतीच्यात्मधियः सदैव स्थितेरिति संबन्धः ॥१०२॥

कर्मणोऽवसरश्चेत्स्यात्त्वद्भिक्षावसरो यथा । नाऽऽत्मवस्तुनिमित्तत्वात्सम्यग्बुद्धेः सदा स्थितेः ।। ३ ।।
न वस्त्ववसरापेक्षं स्वतःसिद्धत्वकारणात् । क्रियैवावसरापेक्षा तस्याः कारकतन्त्रतः ।। ४ ।।
सम्यग्ज्ञानशिखिप्लुष्टं कुतोऽज्ञानं पुनर्भवेत् । शुद्धदोषोद्भवत्वाच्च न तु कर्मैवमिष्यते ।। ५ ।।
क्षुधादिदोषहेत्वेव त्वस्मद्भुज्यादि नो मतम् । नियतानेकहेतुत्वान्नातो भुजिसमा क्रिया ।। ६ ।।
दोषहेतावपि तथा कालादिनियमस्तथा । भवद्भिक्षाटनादौ स्यादिति चेन्नैतदेव तु ।। ७ ।।
नैवायं नियमोऽस्माकं परिसंख्या हि सा यतः । क्रियाप्रयोक्त्री नाप्येषा तस्माद्विषममुच्यते ।। ८ ।।

विदुषो भिक्षाटनादिवत्कर्मावसरः स्यादिति शङ्कते—कर्मण इति । न च विदुषस्तदवसरोऽपि नास्ति देहधारणदर्शनाज्जीवन्मुक्तिशास्त्राच्चेति भावः । दृष्टान्तासंमत्या परिहरति—नेति । तत्र हेतुरात्मेति । प्रवाहात्मना सदा सम्यग्बुद्धिस्थितेरात्मवस्तुनिमित्तत्वादिति योजना । न हि सत्यामेवाकर्तृभोक्तृब्रह्मात्मविद्यायां भिक्षाटनादेरवकाशस्तथाऽपि दग्धपटवद्बाधितानुवृत्त्या तद्भानाज्जीवन्मुक्तिरविरुद्धेति भावः ।।१०३।।

ननु ब्रह्मणो वस्तुत्वात्कालातिरिक्तस्य घटवत्कालसंबन्धात्तदात्मनो विदुषोऽपि तत्संबन्धः स्यात्तथा च तथैव कर्मसंबन्धोऽपि भवेत्तत्राऽऽह—न वस्त्विति । वस्तुनो हि कालापेक्षा जन्मनि वा ज्ञप्तौ वा न युक्ता नित्यत्वात्स्वप्रकाशत्वाच्चेत्यर्थः । कस्य तर्हि कालापेक्षा स्यात्तत्राऽऽह—क्रियेति । कार्यमात्रं क्रियाशब्देन गृह्यते ।।१०४।।

ज्ञानिनो दग्धाज्ञानस्य न कर्मावसरोऽस्तीत्युक्तमिदानीमज्ञानस्य ज्ञानाद्ध्वस्तस्यापि पुनरुद्भवाज्ज्ञानिनोऽपि कर्मावकाशमाशङ्क्याऽऽह—सम्यगिति । न हि नष्टमेवाज्ञानं पुनर्भवति विरोधान्नापि तज्जातीयं हेत्वभावान्न चाज्ञानं हेतुर्नष्टत्वान्न चानष्टं तद्धेतुस्तद्भावे तदुत्पत्तेर्वैयर्थ्यादनिर्मोक्षप्रसङ्गाच्च । न चाऽऽत्मैव तद्धेतुरुक्तदोषतादवस्थ्यात् न चाज्ञानभेदो मानाभावात्प्रतीतेरेकत्वेऽपि संभवादतो नष्टाज्ञानस्य ज्ञानिनो न कर्मेति भावः । यत्तु तस्य भिक्षाटनादिवदग्निहोत्रादि स्यादिति तत्र भिक्षाटनाद्यपरोक्षज्ञानवतो वा परोक्षज्ञानवतो वा? नाऽऽद्योऽनभ्युपगमात्तस्य बाधितानुवृत्तिमात्रं भिक्षाटनादीत्यादिष्टम् । द्वितीयं दूषयति—शुद्धेति । परोक्षज्ञानिनो मूलाज्ञानादागमानपेक्षक्षुत्पिपासादिदोषमात्रकृतत्वाद्भवत्येव भिक्षाटनादिक्रियेत्यर्थः । अग्निहोत्रादि तु न दोषमात्रकृतं शास्त्रनिमित्तत्वादिति विशेषमाह—न त्विति ।।१०५।।

उक्तमेव प्रपञ्चयति—क्षुधादीति ।[1]शास्त्रनिमित्तकालाद्यपेक्षत्वादित्यादिभाष्यं व्याचष्टे—नियतेति ।।१०६।।

भिक्षाटनादेर्दोषहेतुत्वेऽपि "चातुर्वर्ण्यं चरेद्भैक्ष"मेककालं चरेद्भैक्षं "यतीनां च चतुर्गुणमि"त्यादिनियमवद्विदुषोऽग्निहोत्रादिनियमोऽपि स्यादिति चोदयति—दोषेति । दोषहेतावपि त्वद्भिक्षाशौचादौ यथा कालवर्णसंख्यानियमस्तथाऽग्निहोत्रादिनियमोऽपि स्यादिति योजना । विदुषो भिक्षाटनाद्येवासिद्धं तन्नियमवदग्निहोत्रादिनियतिस्तु दूरनिरस्तेत्याह—नैतदिति । ।।१०७।।

कुतो विदुषस्तदसिद्धिः सति नियमविधाविति तत्राऽऽह—नैवेति । "एककालं चरेदि"त्यादि नैवास्माकं नियमो ब्रह्मविदां युज्यतेऽतिक्रान्तविधित्वान्नैतावता यथेष्टचेष्टा यतोऽधर्माधीनाऽविवेककृता हि सा । न च तौ विदुषो विद्येते । तदविद्यावस्थायामप्यसती यथेष्टचेष्टा विद्यादशायां कुतः संभवति संस्कारस्याप्यभावाद्बाधितानुवृत्तेश्चाग्निहोत्रादेस्त्वनाभासत्वान्न बाधितानुवृत्तिरिति भावः । किं चाविदुषां विविदिषूणामेव विधिस्तेषामपि नायं नियमविधिः प्रसिद्धपरिसंख्याविधित्वोपगमादित्याह—परिसंख्येति । साऽपि क्रियामाक्षिपन्ती ब्रह्मविद्यां प्रतिक्षिपेदन्यथा तथैवाग्निहोत्रादिक्रियाऽपि स्यादित्याशङ्क्याऽऽह—क्रियेति । सा खल्वन्यनिवृत्तिं प्रयोजयन्ती न प्रयोजयति क्रियामिति कुतो विद्याविरोधः कुतश्च विदुषोऽग्निहोत्रादिप्रसक्तिरित्यर्थः । विधेर्भावार्थविषयत्वनियमादस्ति क्रियाक्षेपकत्वमित्याशङ्क्य विद्याविरुद्धतदाक्षेपकत्वाभावमभिप्रेत्याऽऽह—तस्मादिति । भिक्षादेः शुद्धदोषकृतत्वात्कर्मणोऽतथात्वाद्वैषम्यमित्यर्थः ।।१०८।।

---

१. शास्त्रनिमित्तकालाद्यपेक्षत्वाच्च नित्यानामनियतत्वानुपपत्तिः । ( भा० )

नातोऽपवादकृत्सा स्यादैकात्म्यज्ञानजन्मनः । सर्वकर्माधिकाराणां निषेधायाऽऽत्मधीभवः ॥ ९ ॥

निषेधविधिवत्तस्मात्प्रत्यग्याथात्म्यधीविधिः । प्रत्यङ्मोहैकहेतुत्वाद्वाङ्मनःकायकर्मणाम् ॥१०॥

तस्माद्वस्त्वेकनिष्ठस्य प्रामाण्यं वचसो ध्रुवम् । प्रतिषेधविधेर्यद्वदुभयोरविशेषतः ॥११॥

स्वाभाविकैकदोषोत्थो व्यवहार इहाऽऽसुरः । शास्त्रैकहेतुर्दैवः स्यात्तयोः स्पर्धा विरोधतः ॥१२॥

प्राकृतासङ्गविज्ञानकार्ये ह्यधिकृतिः स्वतः । सुरद्विषां सुराणां तु शास्त्रोत्थज्ञानदीपितः ॥
कर्मज्ञानाधिकारः स्यात्संग्रामस्तद्विरोधतः ॥१३॥

उत्कर्षो मानुषादूर्ध्वं पुंसः केवलधर्मतः । अधोभावस्त्वधर्मात्स्याद्द्वाभ्यां मानुष्यसंभवः ॥१४॥

आग्रजस्थाणुपर्यन्तशरीरग्रहणान्यतः । लोकेष्विति श्रुतिर्वक्ति विरोधस्तन्निबन्धनः ॥१५॥

अधोलोकफलेष्वेव प्राकृतज्ञानकर्मसु । यत्नादासङ्गनीयोऽयं पितेत्यसुरनिश्चयः ॥१६॥

विविदिषूणां परिसंख्येष्यते चेत्तदर्थानुष्ठाननिष्ठानां तेषां विद्यार्थप्रवृत्त्यनुपपत्तेः सा नोपपद्येतेत्याशङ्क्याऽऽह—नात इति । यस्मादन्यनिवृत्तिफला परिसंख्या न विरुद्धक्रियाप्रयोक्त्री तस्मान्नाऽऽत्मधियो बाधिका किं त्वनुग्राहिकैव भोजनादिहीनस्य वा यथेष्टचेष्टारसिकस्य वा तदनुत्पत्तेरित्यर्थः । कर्मसु रागादिमतोऽधिकाराद्विरक्तस्य ज्ञानाधिकाराज्ज्ञानिनो हेत्वभावादेव कर्मायोगात्तस्य भिक्षाद्यतुल्यत्वात्तत्त्वमादेः सर्वव्यवहारोपरमधीहेतोर्निवर्तकत्वेन प्रामाण्यं प्रतिपाद्यावान्तरप्रमेयमुपसंहरति—सर्वकर्मेति । अधिकाराः प्रवृत्तयो वा तद्धेतवो वा ब्राह्मणाद्यभिमाना वा विधिपुरुषसंबन्धा वा फलानि वा । पूर्वार्धोक्तं तत्पदेन परामृशति । विधिः सम्यग्धीहेतुवाक्यं तन्निवर्तकत्वेन मानमिति शेषः । आत्मधियः सर्वकर्मध्वंसित्वे हेतुमाह—प्रत्यगिति ॥१०९–११०॥

परमप्रकृतमुपसंहरति—तस्मादिति । निषेधवाक्ये तत्त्वमादौ च भ्रान्तप्रवृत्तिनिरासेनाकार्यशेषवस्त्ववसानाविशेषादित्याह—उभयोरिति । एतेन तत्पदपरामृष्टो हेतुः स्पष्टीकृतः ॥१११॥

तदनेन विचारेण शुद्धे सिद्धे ब्रह्मात्मनि वेदान्तमानत्वं सिद्धं-सिद्धं चान्यपराणामपि मन्त्रादीनां मानान्तरसंवादाद्यभावे श्रुतेऽर्थे मानत्वं ततश्च प्राणदेवतायाः शुद्ध्यादिगुणवत्याः सिद्धेस्तदुपास्तेश्च साधितत्वात्तत्परमेव द्वया हेत्यादिवाक्यं सिद्धमिति ज्ञानमिह परीक्ष्यमाणमित्येतत्प्रसङ्गागतं विचारं परिसमाप्य "ते ह वाचमि"त्यादि व्याचिख्यासुः सुखवित्तये देवाश्चासुराश्चेत्यादिवाक्यार्थमुक्तमेव सोपस्कारमनुवदति-स्वाभाविकेत्यादिना कर्तृत्वादीत्येतदन्तेन संदर्भेण । इह यजमानदेहस्थवागादिषु स्वभावशब्दिता प्रकृतिस्तत्प्रसूतशास्त्रानपेक्षितरागादिदोषजन्योयो ज्ञानकर्मात्मको व्यापारोऽसावासुरस्तेष्वेव शास्त्रप्रधानो ज्ञानादिव्यवहारो दैवस्तयोर्मिथो विरोधाद्देवानामसुराणां च स्पर्धेत्यर्थः ॥११२॥

उभयेषामेकरूपव्यवहारसंभवे कुतस्तद्विरोधेन स्पर्धेत्याशङ्क्याऽऽह—प्राकृतेति । प्रकृतिरविद्या ततो विषयासङ्गाज्ज्ञानं कर्म च तत्र स्वतोऽसुराणां प्रसिद्धाऽधिकृतिशब्दिता प्रवृत्तिः अन्येषां शास्त्रीयविवेकप्रकाशितकर्मादावधिकारोऽतस्तयोर्विरोधात्तेषां संघर्षोऽभूदित्यर्थः ॥११३॥

अधिकृतैर्देवानां जये पराजये चासुराणां यतितव्यमिति शिष्यशिक्षार्थमाह—उत्कर्ष इति । यदा देवजयोऽसुरपराजयश्च तदा देवशब्दितवागाद्युपहितयजमानस्य धर्मप्राधान्यादा मानुषादा च प्रजापतेरुत्कर्षो भवति असुरजये देवपराजये चासुरवागाद्युपहितस्याधर्मवशादा मानुषादा च स्थाणोर्निकर्षः स्याद्देवासुरसाम्ये तदुपहितस्य धर्माधर्मसाम्यात्ताभ्यां मनुष्यत्वमतो देवजयेऽसुरपराजये चाधिकृतैर्यतितव्यमित्यर्थः ॥११४॥

उक्तेऽर्थे श्रुतिसंवादमाह—आग्रजेति । यतो धर्मादिफलानि पूर्वोक्तानि श्रुत्यभिप्रेतान्यतो लोकेष्वित्यत्र प्रातिपदिकश्रुतिराप्रजापतेरा च स्थाणोर्देहग्रहणानि कर्मफलानि जन्मान्याह । सप्तमीश्रुतिस्तूक्तफलनिमित्तो मिथो विरोधो देवादीनां तत्र स्पर्धेति ब्रवीतीत्यर्थः ॥११५॥

देवैः स्पर्धां कुर्वतामसुराणामभिप्रायमाह—अधोलोकेति । देवताभिमुखस्यापि पितुः स्वकीयासङ्गपाप्मभिस्ततो विमुखीकरणं यत्नः । असुरैः स्पर्धमानानां देवानामाशयमाह—प्राकृतेति । अविद्याकृतविषयासक्तितो

**प्राकृतासङ्गतो मुक्त्वा पिताऽयं दैवसाधनैः । उत्क्रष्टव्यो यथाशक्ति विबुधानां चिकीर्षितम् ॥११७॥**
**नरप्रजापतितनावेवं देवासुरा मिथः । स्वस्वभावानुरोधेन तेऽस्पर्धन्त स्ववृत्तिभिः ॥११८॥**
**यदोद्भवति शास्त्रोत्था दैवी वृत्तिस्तदाऽऽसुरी । व्येति यस्मात्तमोऽशेषं देवानां स जयः स्मृतः ॥११९॥**
**आसुरी तु यदा सेना कामक्रोधपुरःसरा । जायते ह्यजयस्तेषामसुराणां जयस्तु सः ॥१२०॥**
**स्वाभाविकत्वादासुर्या भूयस्या सेनयार्दिताः । न शर्म लेभिरे देवाः स्वात्मत्राणासमीक्षणात् ॥१२१॥**
**स्वभूमेश्च्याव्यमानानां सुराणामसुरैस्तदा । प्रादुरासीन्मतिः साध्वी दैतेयभयनाशिनी ॥१२२॥**
**उद्गीथं समुपाश्रित्य ज्योतिष्टोमक्रताविह । तिरस्कृत्याऽऽसुरं दैवं भावं यामोऽधुना वयम् ॥१२३॥**

वागादिगतत्वेन सर्वव्यवहारोक्तेः तात्पर्यम्

**कर्तृत्वादीह यत्सिद्धं वागादिद्वारमीक्ष्यते । आत्मनस्तदविद्योत्थं निरविद्ये निषेधतः ॥१२४॥**
**लौकिको वैदिकः सर्वो व्यवहारश्च वक्ष्यते । अन्नत्रयाधिकारे[1] हि मनआदावनात्मनि ॥१२५॥**

विश्लेषमापाद्येति यावत् । दैवसाधनानि शमदमब्रह्मचर्यादीनि । उत्क्रष्टव्यो मनुष्यत्वादारभ्य [आ] प्रजापतित्वप्राप्तेरिति शेषः । यथाशक्ति ज्ञानकर्मशक्तिमनतिक्रम्येति यावत् ॥११६–११७॥

देवासुरस्पर्धामुक्तां निगमयति—नरेति । फलावस्थप्रजापतिव्यावृत्त्यर्थं विशेषणम् । एवंशब्दो यथोक्ताभिप्रायपरामर्शार्थः । सात्त्विकतामसस्वरूपानुसारेण शमादीनां कामादीनां च स्ववृत्तीनामुद्भवाभिभवाभ्यां देवासुरस्पर्धा प्रवृत्तेत्यर्थः ॥११८॥

कथं तर्हि जयो देवानां पराजयोऽसुराणामिति तत्राऽऽह—यदेति । शास्त्रीयज्ञानकर्मणोरुद्भवावस्थायां स्वाभाविकज्ञानकर्मणोः साकल्येनाभिभवो यतो भवति ततः शास्त्रीयज्ञानाद्युद्भवो देवानां जयोऽशास्त्रीयज्ञानाद्यभिभवश्च पराजयोऽसुराणामित्यर्थः ॥११९॥

कथं तर्हि देवानां पराजयो जयोऽसुराणामिति तत्राऽऽह—आसुरी त्विति । करणवर्गः स्वाभाविकज्ञानादिप्रधानोऽत्राऽऽसुरी सेनेत्युच्यते । तेषां देवानामिति यावत् । स्वाभाविकज्ञानादिद्वारा कामादिप्रसरः सर्वनामार्थः । पूर्वोक्तजयादेर्वक्ष्यमाणजयादौ विशेषार्थस्तुशब्दः । द्वितीयस्त्ववधारणे ॥१२०॥

अस्पर्धन्तेत्येतदन्तं वाक्यार्थमनूद्य ते हेत्यादिवाक्यतात्पर्यं वक्तुं भूमिकां करोति—स्वाभाविकत्वादिति । भूयस्त्वे स्वाभाविकत्वं तच्च देवानामल्पीयसामर्दितत्वे हेतुः । सुखालाभे हेत्वन्तरमाह—स्वात्मेति ॥१२१॥

ते हेत्यादिवाक्यतात्पर्यमाह—स्वभूमेरिति । तामसैर्रागादिभिः शास्त्रीयज्ञानादेश्च्याव्यमानानां सात्त्विकवागादीनां तस्यामापदवस्थायां श्रेयोहेतुर्बुद्धिरासीदतस्ते परस्परमूचुरित्यर्थः । साधुत्वे हेतुर्दैतेयेति । असुरनिमित्तभयध्वस्तिहेतुरित्यर्थः ॥१२२॥

तामेव मतिं व्याचक्षाणो हन्तेत्यादेस्तात्पर्यमाह—उद्गीथमिति । उद्गीथदेवताश्रयणस्याऽऽसुरभावतिरस्कारे दैवभावाप्तौ चाविलम्बितकारणत्वं वक्तुमधुनेत्युक्तम् ॥१२३॥

वृत्तमनूद्य ते ह वाचमित्यादेरर्थवादस्य वागादिगतत्वेन सर्वव्यवहारं वदतस्तात्पर्यमाह—कर्तृत्वादीति । इहाऽऽत्मनि यत्कर्तृत्वादि दृष्टं तदस्य वागाद्युपाधिकं तस्याविद्यान्वयव्यतिरेकवतस्तज्जस्याविद्याशून्ये नित्यमुक्ते परस्मिन्नयोगान्नेति नेत्यादिना तत्र सर्वविशेषनिषेधादतोऽविद्याकार्यवागाद्युपाधिद्वारा प्रतीच्यारोपितं तदित्यर्थः ॥१२४॥

वाक्यशेषादपि परस्मिन्नात्मनि नास्ति कर्तृत्वादीत्याह—लौकिकेति । नास्त्यात्मनि वास्तवं कर्तृत्वादीत्यत्र विद्वत्प्रसिद्धिद्योतनार्थो हिशब्दः । आदिशब्देन वाक्प्राणौ गृह्येते ॥१२५॥

---

१. अन्नत्रयाधिकारः त्रीण्यात्मनेऽकुरुत इति कण्डिका । तत्र सर्वो व्यवहारः मनोवाक्प्राणसंश्रित इत्युक्तम् ।

भूतेहानुविधायित्वात्क्षेत्रज्ञस्य[1] तमस्विनः । कूटस्थात्मातिरेकेण रूपमन्यन्न लक्ष्यते ॥१२६॥

ते ह वाचमूचुस्त्वं न उद्गायेति तथेति तेभ्यो वागुदगायत् । यो वाचि भोगस्तं देवेभ्य आगायद्यत्कल्याणं वदति तदात्मने । ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन्स यः स पाप्मा यदेवेदमप्रतिरूपं वदति स एव स पाप्मा ॥२॥

औद्गात्रकर्मणि वाचो नियोजनं तस्याः आसुरपाप्मवेधश्च

एवं ताः संप्रधार्योचुरुद्गीथं साधनं परम् । तत्परीक्षां प्रयत्नेन चक्रुः संभूय देवताः ॥१२७॥
वाचं संभावयामासुरियं ह्युद्गीथकर्मणि । अत्यर्थं व्यापृता दृष्ट्वा वाचमूचुस्ततः सुराः ॥१२८॥
त्वं न उद्गाय उद्गानं त्वत्प्रधानं भवत्विदम् । उद्गीथ इति चोद्गानं कर्मैवेहाभिधीयते ॥१२९॥
स्तोत्रेणास्याभिसंबन्धाद्भक्तिमात्रं न तु क्वचित् । वागभिमानिनी चेह वाक्शब्देनाग्निरुच्यते ॥१३०॥
विषयोऽध्येषणाया हि चेतनावान्यतो मतः । उपासिक्रियया योगो देवताया इहेष्यते ॥१३१॥

तत्रेश्वरे तदभावेऽपि जीवे तद्दृष्टेस्तदेष्टव्यमित्याशङ्क्याऽऽह—भूतेति । परस्याविकृतस्य तमोवच्छिन्नस्य जीवतां गतस्य ध्यायतीव लेलायतीवेति श्रुतेर्बुद्ध्यादिचेष्टानुसारित्वाद्युक्ता तत्र कर्तृत्वादिधीरित्यर्थः । तर्हि कर्तृत्वादिमानेकस्तद्रहितश्चान्य इति द्वैतमित्याशङ्क्याऽऽह—कूटस्थेति । परस्मिन्नेव प्रतीचि विशिष्टद्वारा स्वाविद्यारोपितं कर्तृत्वादीत्युक्तमिति भावः ॥१२६॥

अर्थवादरूपाख्यायिकातात्पर्यमुक्त्वा ते होचुरिति भागस्यार्थमाह—एवमिति । हन्तासुरानित्युक्तक्रमेणोद्गीथं श्रेयोहेतुं निश्चित्य वागादयो देवता मिथः कथां चक्रुरित्यर्थः । कोऽयमुद्गीथो नाम तत्राऽऽह—तत्परीक्षामिति । प्रयत्नोऽन्वयव्यतिरेकाख्यो व्यापारः ॥१२७॥

परीक्षाप्रकारमेव प्रकटयन्वाचमूचुरित्यस्यार्थमाह—वाचमिति । उद्गीथत्वेन तत्संभावनानिमित्तमाह—इयं हीति । संभावनाफलमाह—वाचमूचुरिति ॥१२८॥

किमूचुरित्यपेक्षायामुत्तरं वाक्यमवतार्य तस्यार्थमाह—त्वमिति । प्रतीकग्रहणे व्यग्रतया संधिर्न कृतः । उद्गीथपरीक्षां प्रक्रम्य कथमौद्गात्रे कर्मणि वाङ्नियुज्यते । उद्गीथे हि भक्तिविशेषे सा नियोक्तव्येत्याशङ्क्याऽऽह—उद्गीथ इति । इहशब्देन हन्तेत्यादिवाक्योक्तिः ॥१२९॥

उक्तेऽर्थे हेतुमाह—स्तोत्रेणेति । अस्यार्थः—उद्गीथेनात्ययाम त्वं न उद्गायेत्यादौ चोदितस्योद्गीथस्य प्रकरणित्वा"दथातः पवमानानामि"ति पवमानाख्यस्तोत्रेणास्य सम्बन्धप्रतीतेस्तत्र चोद्गीथभक्तेरनवकाशा"त्स यत्र प्रस्तुयात्तदेतानि जपेदि"ति चोद्गीथभक्तिमतिक्रम्योद्गानमात्रसंबन्धित्वेनाङ्गभूतजपकर्मविधानादत्राप्युद्गीथशब्देन भक्तिमात्रं न विवक्षितमिति । किंचास्मिन्प्रकरणे क्वचिदपि वाक्ये भक्तिमात्रमुद्गीथपदेन नोच्यते तन्मात्रस्यानुपास्यत्वादुद्गीथोपासनस्य चात्र विवक्षितत्वात् । न चोद्गानस्यापि नोपास्यत्वमित्यविवक्षितत्वं, तदनुवादेन तद्देवतोपासनस्येष्टत्वात् । न चोद्गीथो नाम सामावयवो भक्तिविशेषो नोद्गानमिति भाष्यविरोधस्तत्र प्रकरणाविरुद्धार्थानुवादेन प्राणस्योद्गीथत्वविधानादित्याह—भक्तिमात्रमिति । ननु चेतनस्यैव भृत्यादेश्चेतनेन राजादिना नियोगदर्शनादचेतनेन चक्षुरादिना कथमचेतनाया वाचो नियोग इत्याशङ्क्येह वागादयः शब्दा इत्यत्रोक्तं स्मारयति—वागिति । इहशब्दस्ते ह वाचमित्यादिवाक्यविषयः । अथ ह प्राणमूचुरित्यादिपर्यायेष्वपि प्राणादिशब्दानां देवतावाचित्वं चशब्देन समुच्चीयते । तामेव विशिनष्टि—अग्निरिति । "अग्निर्वाग्भूत्वा मुखं प्राविशदि"ति श्रुतेरग्निरेव वागभिमानिनी देवता सा चात्र ग्राह्या प्रसिद्धचसंभवस्य वक्ष्यमाणत्वादित्यर्थः ॥१३०॥

ये तु देवतामचेतनामाचक्षते तान्प्रत्याह—विषय इति । लोकेऽध्येषणाविषयश्चेतनश्चैत्रो दृष्टो वाक्चोद्गाये-

१. भूतेहा—प्राणादीनां चेष्टा तदनुविधायित्वं ध्यायतीवेत्यादिनोक्तम् ।

अतोऽपि देवतैवेह वाक्शब्देनाभिधीयते । तद्भूतेः पुरुषार्थत्वाद्देवता हीश्वरा परा ।।३२।।
सैवातः प्रतिपत्तव्या सर्वासु ध्यानभूमिषु । न त्विह प्रतिपत्तव्याः करणस्थानगोचराः ।।३३।।
पारार्थ्याचेतनत्वाभ्यां मर्त्यत्वाच्चापि कारणात् ।।३४।।
एवं वागादयः शब्दा देवतार्थाभिधायिनः । सर्वत्र प्रतिपत्तव्या यत्रोपासा विवक्षिता ।।३५।।
जपमन्त्राभिधेयेयं वागित्येवं विनिश्चिताः । उपासांचक्रिरे देवा एषैवोद्गीथदेवता ।।३६।।
देवाभ्युदय उद्गानं देवेभ्योऽर्थाय वागियम् । यथाशक्त्युदगायत्तं यो भोगो वाङ्निबन्धनः ।।३७।।
येन भोगेन वाग्देवांश्चक्षुरादीनहर्निशम् । साक्षादवति तं भोगमुदगायदशेषतः ।।३८।।
पवमानेषु सोद्गात्री याजमानं यथाविधि । फलमुद्गाय शेषेषु ह्युदगायदथाऽऽत्मने ।।३९।।

त्यध्येषणाविषयोऽतश्चेतनत्वं वाग्देवताया निश्चितमित्यर्थः । चेतनस्याध्येषणाविषयत्वे लौकिकपरीक्षकादिप्रतिपत्तिं वक्तुं हिशब्दः । वाचो देवतात्वे हेत्वन्तरमाह—उपासीति । उपास्तिप्रकरणमिहशब्दार्थः ।।१३१।।

उक्तहेतुफलमाह—अतोऽपीति । अध्येषणाविषयत्वसमुच्चयार्थोऽपिशब्दः । इहशब्दस्तु पूर्ववत्प्रस्तुतवाक्यविषयः । वागुपास्तेरग्निभावस्य फलत्वाच्च वाक्शब्देन तद्ग्रहणमित्याह—तद्भूतेरिति । कथं तद्भावस्य पुमर्थतेत्याशङ्क्य देवताया निरतिशयैश्वर्यशालित्वादित्याह—देवतेति ।।१३२।।

ते ह वाचमित्यादिपर्यायोक्तन्यायादथ ह प्राणमित्याद्युत्तरपर्यायेष्वपि देवतैव प्राणादिशब्दवाच्येत्याह—सैवेति । वागादिशब्दैरिन्द्रियाणामेव रूढिवशाद्ग्रहणं किं न स्यादित्याशङ्क्याऽऽह—न त्विति । इहेति प्रकृता ध्यानभूमयो गृह्यन्ते ।।१३३।।

तत्र हेतूनाह—पारार्थ्येति । अनीश्वरत्वादिसंग्रहार्थोऽपिशब्दः । अस्मिन्प्रकरणे वागादिपदानां देवतार्थत्वमुक्त्वा समानार्थे प्रकरणान्तरे[1]ऽपि तुल्यमेतदिति न्यायं संस्मरति—एवमिति । अतिप्रसक्तिं वारयति—यत्रेति ।।१३४–१३५।।

वाग्देवतानिर्वर्त्यमौद्गात्रं कर्मेति भाष्ये वाचि देवताशब्दं प्रयुञ्जानस्य भाष्यकृतो मतमुक्तम् । वाग्देवताया नोपास्यत्वं जपमन्त्राप्रकाश्यत्वादित्याशङ्क्याऽऽह—जपेति । असतो मा सद्गमयेत्यादिमन्त्रैरियमेव वागभिधेया । एषैव चोद्गीथदेवतेतिनिश्चयवन्तो देवा वाचमुद्गातृबुद्ध्योपासितवन्त इत्यर्थः ।।१३६।।

तथेत्यादिवाक्यतात्पर्यमाह—देवेति । देवानामभ्युदये विवक्षिते तदुपायस्तावदुद्गानमतः स्वशक्तिमनुसृत्यैषा वागर्थिभ्यो देवेभ्योऽर्थायोद्गानं कृतवतीत्यर्थः । यो वाचीत्यादेरर्थमाह—तमिति ।।१३७।।

कोऽसौ वाङ्निबन्धनो भोगो यः साधारणः सर्वेषां प्राणानामित्याशङ्क्याऽऽह—येनेति । उपकारो भोगः । वाग्देवताभिवदनप्रयुक्तमुपकारमशेषकार्यकरणसाधारणमुदगायदित्यर्थः । उद्गीथदेवताधीनं संघातस्य सदा जीवनमिति द्योतयति—अहर्निशमिति । तज्जीवनस्य तदधीनत्वं प्रत्यक्षमिति वक्तुं साक्षादित्युक्तम् ।।१३८।।

किमिदमुद्गानं याजमानमेव किंवाऽऽर्त्विज्यमपि? नाऽऽद्यः "अथाऽऽत्मनेऽन्नाद्यमागायदि"त्येतद्विरोधात् । द्वितीये तु केषु स्तोत्रेषु याजमानमुद्गानं केषु चाऽऽर्त्विज्यमिति बुभुत्सायामाह—पवमानेष्विति । यथाविधि लक्षणशास्त्रमनतिक्रम्येति यावत् । ज्योतिष्टोमे द्वादश स्तोत्राणि तत्र पवमानाख्येषु त्रिषु याजमानमेवोद्गानं कर्मफलस्योत्सर्गतो यजमानगामित्वात्परिशिष्टेषु नवसु स्तोत्रेष्वार्त्विज्यमपि । तत्रोद्गातुः फलसंबन्धस्याऽऽत्मनेऽन्नाद्यमागायदिति वाचनिकत्वादित्यर्थः । उक्तहेतुद्योतनार्थो हिशब्दः । यथा यजमानार्थमुदगायत्तथा स्वार्थमपीत्यथशब्दार्थः ।।१३९।।

---

१. प्रकरणान्तरे "सा ह वागुवाच यद्वा अहं वसिष्ठास्मि इत्यादौ । त्रिषु पवमानेषु—बहिष्पवमानं, माध्यन्दिनपवमानं आर्भवपवमानं इत्येतेषु । परिशिष्टानि नव स्तोत्राणि—चत्वार्याज्यस्तोत्राणि चत्वारि पृष्ठस्तोत्राणि यज्ञायज्ञीयं इति नव ।

स्तोत्रेषु परिशिष्टेषु वागागायदथाऽऽत्मने । यत्कल्याणं वदत्येषा ह्यात्मने तदचीक्लृपत् ।।४०।।
यथाशास्त्रं यथायोगं वर्णदोषविवर्जितम् । वर्णोच्चारणसामर्थ्यं ममैवाऽस्तु तदीदृशम् ।।४१।।
कल्याणवदनोत्थं यत्कृत्स्नं देवेभ्य एव तत् । फलं वदनमात्रं तु वाच एव न दैविकम् ।।४२।।
तमस्युत्सार्यमाणे तु वाचोद्गात्रा सुरद्विषाम् । स्वाधिकाराच्चयाव्यमानास्ते विदुर्देवहृद्गतम् ।।४३।।
अनेन वाचोद्गात्रा नो बलं ध्वान्तं तु देवताः । ज्योतिषा स्वेन निर्जित्य यास्यन्त्यग्न्यादिरूपताम् ।।४४।।
महन्नो भयमायातमिति बुबुधिरेऽसुराः । कर्मण्यनुचिते तेषां प्रहीणमनसां तदा ।।
वदनादावभिष्वङ्ग आत्मसंभावनादभूत् ।।४५।।
यत्कल्याणमिति च्छिद्राद्विदुः सुरचिकीर्षितम् । अनेन वै न उद्गात्रा वाचाऽत्येष्यन्ति स्वं वपुः ।।४६।।

यदुक्तं शेषेष्वित्यादि तदेव स्फुटयते—स्तोत्रेष्विति । याजमानस्योत्गानस्य त्रिषु स्तोत्रेषु कृतत्वादिति हिशब्दार्थः । अवशिष्टेषु स्तोत्रेषु स्वार्थगानस्यावसरं दर्शयितुमथेत्युक्तम् । एवं विभागमुक्त्वा किं तदात्मार्थमागीतमित्यपेक्षायामाह—यदिति । नवसु स्तोत्रेषु कल्याणवदनं कार्यमृत्विगर्थमागीतमित्यर्थः । उक्तकार्यस्य करणान्तरेष्वसंभवप्रसिद्ध्यर्थो हिशब्दः ।।१४०।।

कीदृशं कल्याणवदनं तदाह—यथेति । व्याकरणादिलक्षणशास्त्रोक्तक्रमेण तात्वादिस्थानसंबन्धानुरोधेन चातिद्रुतत्वादिदोषहीनं यथा भवति तथा वर्णानामुच्चारणे सामर्थ्यं कल्याणवदनं तदार्त्विज्यमेवेत्यर्थः ।।१४१।।

कथं तर्हि पवमानेषु याजमानमेवोद्गानमुक्तं तस्योक्तरूपवदनानुप्रवेशादित्याशङ्क्योक्तं याजमानमुद्गानं व्यनक्ति—कल्याणेति । यथोक्तवदनोत्थं कार्यं पवमानेषु याजमानमेव नाऽऽर्त्विज्यं वचनाभावादित्यर्थः । आर्त्विज्यमुद्गानं निगमयति—वदनमात्रमिति । यथा वदनमात्रेण तद्विशेषेण चोत्पन्नं कार्यं पवमानेषूत्सर्गतो याजमानमेवेत्युक्तं तथा वदनात्मकं सर्वमपि कार्यं स्तोत्रान्तरेष्वार्त्विज्यमेव न याजमानमित्यर्थः । अथवा याजमानमार्त्विज्यं च विभज्योक्तमागानमनेन वार्तिकेन निगम्यते । यद्धि कल्याणाकल्याणवदनजनितं कार्यं तदशेषमपि देवतार्थं याजमानमेव न पुनरार्त्विज्यम् । यत्तु कल्याणाकल्याणवदनं तदार्त्विज्यमेव न याजमानमिति योजनीयम् । यथाश्रुतग्रहेऽपि न विरोधोऽस्तीति नातीव प्रयतितव्यम् ।।१४२।।

ते विदुरित्यस्यार्थमाह—तमसीति । यदा वागुदगायत्तदोद्गात्रा वाग्रूपेणोपास्यमानेनासुराणामविवेकपूर्वके बले कामक्रोधादौ निरस्यमाने तदपचयलिङ्गेन स्वविषयस्वाभाविकज्ञानकर्मभ्यश्च्याव्यमाना देवद्विषो देवाभिप्रायं ज्ञातवन्त इत्यर्थः । पराभिप्रायप्रतिपत्तिप्रारम्भार्थस्तुशब्दः ।।१४३।।

किं तद्देवहृद्गतं यदसुरैरवगतं तदाह—अनेनेति । ध्वान्तं तत्पूर्वकं कामादि । ज्योतिः शास्त्रीयं ज्ञानादि ।।१४४।।

असुरबलनिरासेन वागादिदेवतानामग्न्यादिरूपत्वे हीनबलानामसुराणां स्वरूपहानिः स्यादतो देवपराभवे यतितव्यमित्यसुराशयमाविष्करोति—महदिति । असुरा इति च्छेदः । रागाद्यपचयलिङ्गेनासुराणां सुराशयधियं प्रदर्श्य श्रुत्युक्तलिङ्गेनापि तेषां तद्धियं वक्तुं पातनिकां करोति—कर्मणीति । स्वेतरदेवैरौद्गात्रे कर्मणि नियुक्तानां वागादीनां स्वात्मनि संभावनावशादन्वयव्यतिरेकाकुशलानामसुरसंनिधावेवायोग्ये[1] कल्याणवदनादावासक्तिर्जाता तस्य चायोग्यत्वं स्वमात्रसंबन्धितेत्यर्थः ।।१४५।।

संप्रति श्रुत्युक्तमसुराणां सुराभिप्रायज्ञानलिङ्गमाह—यदिति । यत्कल्याणं वदति तदात्मार्थमित्यत्र कल्याणवदनासङ्गरूपाद्देवताच्छिद्रादसुरावकाशादसुराः सुराभिप्रायं विदुरित्यर्थः । तदेव सुरचिकीर्षितविषयमसुराणां विज्ञानं दर्शयति—अनेनेति । वाचोद्गात्राऽस्मानतीत्य स्वं वपुरग्न्याद्यात्मत्वमेष्यन्तीति संबन्धः ।।१४६।।

१. अयोग्ये कल्याणवदनादौ = अहमेव कल्याणवचनं वदामि इत्यहंकारपूर्वकवदने ।

इति ज्ञात्वा ह्यभिद्रुत्य स्वैरासङ्गशरोर्मिभिः । विविधुस्तानथोद्गातॄंस्ते विद्धास्तत्यजुः क्रियाः ॥४७॥
नानादन्यस्य सामर्थ्यं विद्यतेऽसुरनाशने ॥४८॥
अनेनाप्रतिरूपेण वचसा कार्यशायिना । पाप्मादिदोषसंपर्कः कारणस्थोऽनुमीयते ॥४९॥
व्युत्थायाऽऽख्यायिकारूपाच्छ्रुतिः स्ववपुषाऽधुना । आचष्टे कारणे वृत्तं कार्यगेणासुरात्मना ॥५०॥
दृष्टेनाप्रतिरूपेण कार्यगेणानुमीयते । कारणे पाप्मवेधोऽभूद्यो वाचि प्राक्प्रजापतेः ॥५१॥
स यो वाच्यसुरैः क्षिप्तः पाप्मा कार्ये स दृश्यते । प्रमाविरोधि यद्वाक्यं तत्तत्कार्यसमाश्रयम् ॥५२॥
स एव स इति ह्युक्तिः कार्यकारणसंस्थयोः । प्रजासु साक्षाद्यः पाप्मा यश्च तत्कारणाश्रयः ॥५३॥

आसुरं ज्ञानमनूद्य तमभिद्रुत्येत्यादेरर्थमाह—इति ज्ञात्वेति । ज्ञानस्याभिगमननिदानत्वसाधनार्थो हिशब्दः । प्रणादिष्वपि सममासुरासङ्गपाप्मपीडनमिति मत्वा तानित्युक्तम् । आसङ्गपाप्मवेधस्य वैदिकानुष्ठानत्यागे हेतुत्वमथेत्युक्तम् । आसुरासङ्गग्रस्तानां वागादीनां वैदिकज्ञानकर्मभ्यो वैमुख्यं फलितमाह—ते विद्धा इति ॥१४७॥

वागादिदेवतानामुपास्यमानानामसुरनाशकत्वसंभवात्कथं तासां पाप्मविद्धतया शास्त्रीयज्ञानादिवैमुख्यमित्याशङ्क्याऽऽह—नेत्यादिना । नहि मुख्यप्राणादन्यस्य वागादेरसुरनिरासे सामर्थ्यमस्ति परिच्छेदाभिमानवत्त्वेनासुरपक्षनिवेशादित्यर्थः । तथाऽपि प्राजापत्यासु प्रजासु न पाप्मवेधो युक्तः कारणे तदभावादन्यथाऽऽकस्मिकत्वापत्तेरित्याशङ्क्याऽऽह—अनेनेति । प्राजापत्यप्रजावर्गगतेनानुभूयमानेनासत्यासभ्यवादादिना लिङ्गेनानुमिततद्गतपापादिना कारणात्मकप्रजापतिस्थोऽपि पापादिसंबन्धोऽनुमीयते । विमतं पापादिपूर्वकं प्रतिकूलधीविषयत्वाद्दुःखवत्, तच्च कारणपूर्वकं कार्यत्वाद्घटवत् । न च प्रजागतं दुरितादि विना हेत्वन्तरादेव स्यात्कारणानुविधायित्वात्कार्यस्येत्यर्थः ॥१४८–१४९॥

आनुमानिकेऽपि दर्शितेऽर्थे श्रुतिसंवादाभावादविश्वासमाशङ्क्य 'स य' इत्यादिवाक्यमवतारयति—व्युत्थायेति । वाग्देवताया नोपास्यतेति निश्चित्यार्थवादभावाद्वैमुख्यनोत्थिता श्रुतिः स्वेनैव विद्यमानवादित्वात्मना सौत्रं पापादि तत्कार्यं प्रजासु दृष्टानृताद्यनुमितं तद्गतासुरासङ्गपाप्मलिङ्गेनाऽऽहेत्यर्थः । उक्तेऽर्थे श्रुत्यनुसारिणो विश्वासोत्पादनविवक्षायामित्येतदधुनेत्युक्तम् ॥१५०॥

नन्वनृतादिकार्यस्याध्यक्षत्वात्प्रजासु पाप्मवेधः कल्प्यते । सूत्रे तु कल्पकाभावान्न तत्कल्पना । न च कार्यत्वानुमानं कल्पकं कार्यस्य कारणमात्रादेव सिद्धेर्न च कारणानुविधायित्वात्कार्यस्य तत्रापि पापादिसिद्धिस्तत्कारणे परस्मिन्नपि प्रसङ्गादत आह—दृष्टेनेति । पूर्वकल्पयजमानावस्थस्य प्रजापतेर्वाचि प्राप्मवेधो योऽभूत्स कार्यगतानुमितपापलिङ्गेन तत्र कल्प्यते । न च तत्कारणेऽपि परस्मिन्प्रसङ्गोऽपापविद्धमिति श्रुतेः । न च "न ह वै देवान्पापं गच्छती"तिश्रुतेर्न सूत्रेऽपि पापवेधस्तस्य फलावस्थस्यापापत्वेऽपि यजमानावस्थस्य तद्भावात् "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ती"तिश्रुतेरिति भावः ॥१५१॥

"स य" इत्यादि व्याख्यातुं भूमिकामारचय्य व्याचष्टे—स य इति । यः स पाप्मा प्रजापतेर्वाचि प्रागसुरैरुपक्षिप्तः स तत्कार्ये प्रजावर्गे लिङ्गेनानृतादिना गम्यत इत्यर्थः । यदेवेदमित्यादि व्याकुर्वन् प्रजावर्गे गम्यमानं पाप्मानमेव स्फुटयति—प्रमेति । नानृतं वदेदित्यादिनिषेधशास्त्रविरुद्धं यदसत्यवादादि तत्तस्य प्रजापतेः कार्यभूतप्रजानिष्ठं दृष्टं तेनानुमितः स पाप्मेत्यर्थः ॥१५२॥

"स एव स पाप्मे"त्यस्यार्थमाह—स एवेति । तयोर्लोकवेदप्रसिद्धत्वद्योतनार्थो हिशब्दः । तावेव पाप्मानौ विशिनष्टि—प्रजास्विति । यः प्रजास्वसत्यादिना पाप्मा स्पष्टो दृष्टो यश्चासौ तासां हेतुभूतसूत्रवाङ्निष्ठः स एव सः । तथा चाऽऽद्यसकाराभ्यां कारणस्थं पाप्मानमनूद्य तस्यैव कार्यस्थत्वमुच्यते । उत्तराभ्यां तु कार्यस्थं पाप्मानमनूद्य तस्यैव कारणस्थत्वं विवक्षितमिति भावः ॥१५३॥

अथ ह प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्यः प्राण उदगायद्यः प्राणे भोगस्तं देवेभ्य आगायद्यत्कल्याणं जिघ्रति तदात्मने। ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन्स यः स पाप्मा यदेवेदमप्रतिरूपं जिघ्रति स एव स पाप्मा ॥३॥

अथ ह चक्षुरूचुस्त्वं न उद्गायेति तथेति तेभ्यश्चक्षुरुदगायत्। यश्चक्षुषि भोगस्तं देवेभ्य आगायद्यत्कल्याणं पश्यति तदात्मने। ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन्स यः स पाप्मा यदेवेदमप्रतिरूपं पश्यति स एव स पाप्मा ॥४॥

अथ ह श्रोत्रमूचुस्त्वं न उद्गायेति तथेति तेभ्यः श्रोत्रमुदगायद्यः श्रोत्रे भोगस्तं देवेभ्य आगायद्यत्कल्याण ँ् शृणोति तदात्मने। ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन्स यः स पाप्मा यदेवेदमप्रतिरूप ँ् शृणोति स एव स पाप्मा ॥५॥

अथ ह मन ऊचुस्त्वं न उद्गायेति तथेति तेभ्यो मन उदगायद्यो मनसि भोगस्तं देवेभ्य आगायद्यत्कल्याण ँ् संकल्पयति तदात्मने। ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन्स यः स पाप्मा यदेवेदमप्रतिरूप ँ् संकल्पयति स एव स पाप्मैवमु खल्वेता देवताः पाप्मभिरुपासृजन्नेवमेनाः पाप्मनाऽविध्यन् ॥६॥

"अथ ह प्राणमूचुरि"त्यादिपर्यायचतुष्टयार्थनिरूपणम्

**घ्राणं चक्षुस्तथा श्रोत्रं मनश्चैवमनुक्रमात्। वव्रुर्देवा यथा वाणीं विद्धाः सर्वे तथाऽसुरैः ॥१५४॥**

**कर्मेन्द्रियाणां सर्वेषां वागेवात्रोपलक्षणम्। चक्षुःश्रोत्रे धीन्द्रियाणां मनो बुद्धेस्तथैव च ॥१५५॥**

**कृत्स्नं जगदनादाय नैकस्यापीष्यते क्रिया। प्राणस्य किमु वक्तव्यं कृत्स्नाध्यात्मेन्द्रियग्रहः ॥१५६॥**

वाग्देवताया जपमन्त्रप्रकाश्यत्वमुपास्यत्वं च नेति निर्धार्याथ ह प्राणमित्यादिपर्यायचतुष्टयस्य तात्पर्यमाह—घ्राणमिति। अनुक्रमात्पाठक्रमानुसारेणेत्यर्थः। तथा वाग्देवतावदिति यावत् ॥१५४॥

उक्तेन्द्रियैरनुक्तेन्द्रियाण्युपलक्षणीयानीत्याह—कर्मेति। अत्रेति प्रकृतः संदर्भो गृह्यते। चक्षुःश्रोत्रे घ्राणसहिते उक्तत्वाविशेषात्। धीन्द्रियाणामिति त्वग्जिह्वयोरेव वृत्तिभेदाद्बहूक्तिः। वागादि दृष्टान्तयितुं तथैवेत्युक्तम्। चकारस्त्वनुक्तचित्ताहंकारसमुच्चयार्थः ॥१५५॥

किमित्युक्तेन्द्रियैरनुक्तेन्द्रियाण्युपलक्ष्यन्ते उक्तानामेव यथाश्रुति ग्रहणं किं न स्यात्तत्राऽऽह—कृत्स्नमिति। एकस्यापि हेतोः सर्वजगदुपसंग्रहं विना स्वकार्यकर्तृत्वं न प्रामाणिक"मियं पृथिवी सर्वेषां भूतानां मध्वि"तिश्रुतौ[1] सर्वस्य सर्वत्र कारणताया वक्ष्यमाणत्वादेवं सत्येकस्येन्द्रियस्य स्वव्यापारकर्तृत्वे सर्वाध्यात्मिकेन्द्रियग्रहो नान्यथा कर्तृत्वमिति किं वक्तव्यं स्वकार्ये सर्वापेक्षस्य तस्याऽऽध्यात्मिकसर्वेन्द्रियापेक्षाया दुर्निवारत्वात्तद्युक्तमुपलक्षणमित्यर्थः ॥१५६॥

१. मधुब्राह्मणे—"इयं पृथ्वी सर्वेषां भूतानां मधु" इत्यत्र मधु कार्यमित्यर्थः। तेन सर्वं सर्वभूतकार्यमित्यर्थः।

यद्यपीदं जगत्कृत्स्नं गृह्यते संहृतत्वतः । तथाऽपि चोदितोऽत्रार्थ उपास्यो नाऽऽगतोऽर्थतः ॥५७॥
कल्याणेतररूपेण परिशिष्टेष्वपीक्ष्यते । विभाग आसुरो वेधस्तेन तेष्वनुमीयते ॥५८॥
अतस्तदर्थमाहेयमेवम्विति पुनः श्रुतिः । यथा वागादयो विद्धास्तद्वज्ज्ञेयास्त्वगादयः ॥५९॥
सिद्धान्वागादिदृष्टान्तान्पुरस्कृत्यात उच्यते । एवम्वित्युक्तशेषाणां पाप्मविद्धत्वसिद्धये ॥६०॥
अविध्यन्निति योऽर्थोऽस्य तद्व्याख्यानाय यत्यते । स्वैः स्वैस्तानिन्द्रियासङ्गैः पाप्मभिस्त उपासृजन् ॥६१॥
यत्संसर्गं पुरा चक्रुरविध्यंस्तदिहोच्यते । या विद्धा देवतास्तासां प्रक्रियासंहृतिः पृथक् ॥६२॥
आसङ्गपाप्मभिर्विद्धा यस्माद्वागादयोऽसुरैः । वर्जनीयास्ततस्ताः स्युर्नोपास्याः श्रेय ईप्सुभिः ॥६३॥

अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविव्यत्सन्स यथाश्मानमृत्वा लोष्टो विध्वँ्सेतैवँ् हैव विध्वँ्समाना विष्वञ्चो विनेशुस्ततो देवा अभवन् परासुरा भवत्यात्मना परास्य द्विषन्भ्रातृव्यो भवति य एवं वेद ॥७॥

एकस्य व्यापारहेतुत्वेन सर्वजगदादाने वागादिवदत्रोपात्तं सर्वं जगदुपास्यं स्यादन्यथा वागादेरपि नोपास्यत्वमविशेषादित्याशङ्क्याऽऽह—यद्यपीति । वागादिव्यापारे सहकारित्वेन संबद्धत्वादशेषजगद्ग्रहेऽपि योऽत्र प्रकरणे वागादिरुपास्यत्वेनोच्यते तस्यैवोपास्यत्वं कार्योत्पत्त्यनुपपत्त्या लब्धस्य प्रपञ्चस्य नोपास्यत्वं यश्चार्थादर्थो न स चोदनार्थ इति न्यायादित्यर्थः ॥१५७॥

उक्तैरनुक्तोपलक्षणं साधितम् । ननु वागादिषूक्तेषु पाप्मवेधो ज्ञातो न च शिष्टेषु त्वगादिषु सोऽस्ति कल्पकाभावात्तत्कथमादिष्टैः शिष्टोपलक्षणं तत्राऽऽह—कल्याणेति । यस्मादनुक्तेष्वपि त्वगादिषु कल्याणस्पर्शनं तत्कृतं कार्यमित्यादिरूपेण कार्यभेदो दृष्टस्तस्मात्तेष्वपि पूर्वोक्तेष्विवाऽऽसुरपाप्मवेधः कल्प्यते न्यायसाम्यात्तद्युक्तमुपलक्षणमित्यर्थः ॥१५८॥

एवमित्यादिवाक्यमुक्तेऽर्थेऽवतारयति—अत इति । यतस्त्वगादिष्वपि पाप्मवेधोऽस्त्यतः स चासावर्थश्च तदर्थस्तं पाप्मवेधं त्वगादिष्वेषा श्रुतिर्वागादिषु सिद्धन्यायमुपजीव्याऽऽहेत्यर्थः । न्यायसिद्धस्यार्थस्य श्रुत्या कथनं न्यायस्य समूलत्वसिद्ध्यर्थमित्यभिप्रेत्य पुनरित्युक्तां श्रुतिं व्याचष्टे—यथेति ॥१५९॥

वागादिवत्त्वगादीनां पाप्मविद्धत्वे किं प्रापकमित्याशङ्क्य कल्याणेतररूपेणेत्यत्रोक्तं स्मारयति—सिद्धानिति । अतः सत्सु दृष्टान्तेष्वनुमानसंभवादिति यावत् । उक्तशेषाणामुक्तेभ्यो वागादिभ्यः शेषास्त्वगादयोऽनुक्तास्तेषामित्यर्थः । विमतं पाप्मानुविद्धं तत्कार्यवत्त्वाद्वागादिवदिति भावः ॥१६०॥

पाप्मभिरुपासृजन्पाप्मनाऽविध्यन्नित्यनयोरस्ति पौनरुक्त्यमित्याशङ्क्याऽऽह—अविध्यन्निति । व्याख्यानव्याख्येयभावादपौनरुक्त्यमित्यर्थः । व्याख्यानवाक्यस्यार्थमाह—स्वैः स्वैरिति । कल्याणस्पर्शनं ममैवेत्यादिप्रकारैरित्यर्थः । तानिति त्वगादिदेवानां कर्मत्वोक्तिः प्रथमया त्वसुराणां कर्तृत्ववचनमिति विवेक्तव्यम् ॥१६१॥

व्याख्येयवाक्यस्यार्थमाह—यदिति । पूर्ववाक्ये वागादिषु पापसंसर्गमसुराश्चक्रुरिति यत्तदेवोत्तरवाक्ये पाप्मनाऽविध्यन्नित्युच्यत इति योजना । एवमेता देवता इति व्यर्थमेवमु खल्वेता इत्यनेन गतत्वादित्याशङ्क्याऽऽह—या इति । या वागादिदेवता दर्शितन्यायेन पाप्मना विद्धास्तासां प्राणप्रकरणात्पृथगेव प्रक्रियायाः प्रकरणस्योपसंहृतिरेवमित्यादिना क्रियते तन्नास्य वैयर्थ्यमित्यर्थः ॥१६२॥

उपसंहृतप्रकरणस्य तात्पर्यमाह—आसङ्गेति । वागादीनां स्वप्राधान्येन नोपास्यतेति भावः ॥१६३॥

---

१. यश्चार्थात् वेदप्रतिपादितार्थात् अन्यथानुपपत्त्या सिद्धं, यथा व्रीह्यादिसिद्ध्यर्थं कृष्यादि । तन्न वेदविहितं तथा प्रकृतेऽपि अविहितमनुपास्यमित्यर्थः ।

मुख्यप्राणं प्रति प्रार्थना, असुरविनाशः देवजयश्च

एवं निराशाः पूर्वासु देवतास्वसुरार्दनात् । पारिशेष्यादथाऽऽजग्मुर्मध्यमं प्राणमादरात् ॥१६४॥
अथेत्यनन्तरोक्तिः स्यात्तथाऽभिनयवृत्तये । इममित्यप्रसिद्धत्वात्प्राणस्येह त्वगादिवत् ॥१६५॥
अस्ति यस्मादसुर्नित्यमासन्योऽयमतो मतः । वागादिभ्यो विभागार्थं विशेषणमसोरिदम् ॥१६६॥
जपमन्त्राभिधेयोऽत्र पारिशेष्यात्प्रतीयताम् । उद्गीथदेवता प्राण इत्यभूत्सुरनिश्चयः ॥१६७॥
मन्त्रप्रयोगे सर्वेषां संनिधौ तत्प्रकाशितम्[1] । भारमुत्सहते वोढुं योऽनो यामस्तमाश्रयम् ॥१६८॥
परीक्षमाणास्ते त्राणं यथोक्ताख्यानवर्त्मना । क्रमेणाऽऽसेदुरासन्यं प्राणं पाप्मपराभवात् ॥१६९॥
श्रेयोर्थिनां मनुष्याणामुपास्यप्रतिपत्तये । इयमाख्यायिका चक्षुर्नान्यथोपास्यनिश्चितिः ॥१७०॥
यः प्राणे भोग इति न पूर्ववद्भण्यतेऽत्र किम् । वागादीनामिव यतो नासोर्भोगो विशिष्यते ॥१७१॥
अकृत्स्नभोगतो युक्तं वागादिषु विशेषणम् । सर्वस्यैवासुभोगत्वात्किं कुतोऽत्र विशिष्यते ॥१७२॥

वृत्तमनूद्याथ हेममित्याद्युत्तरं वाक्यमादत्ते—एवमिति । जपमन्त्रप्रकाश्यत्वे ध्येयत्वे च नैराश्यमुक्तन्यायेन तासामसुरार्दनादप्राधान्यनिश्चयादिति हेतुः । प्रसक्तदेवतानिषेधाद्देवतान्तरस्य चाप्रसङ्गादित्यागतिहेतुं वदन्नपेक्षितं निक्षिप्याथशब्दमवतारयति—पारिशेष्यादिति ॥१६४॥

वागादिषु नैराश्यानन्तर्यमथशब्दार्थमाह—अथेति । इममित्यस्यार्थमाह—तथेति । विवक्षितार्थद्योतको देहतदवयवव्यापारविशेषोऽभिनयः । प्राणान्तरेष्वभिनयाभावादिहापि तद्वैयर्थ्यमित्याशङ्क्याऽऽह—अप्रसिद्धत्वादिति । इहेति देहोक्तिः । नहि देहे प्राणस्य करणग्रामवदायतनविशेषे प्रसिद्धिरतस्तदभिनयार्थवत्तेत्यर्थः ॥१६५॥

आसन्यमित्यस्यार्थोक्तिपूर्वकं फलमाह—अस्तीति ॥१६६॥

केनाभिप्रायेण वागादयो मुख्यं प्राणमुपजग्मुरित्यपेक्षायामाह—जपेति । अत्रेति निर्धारणार्था सप्तमी । प्राणानां मध्ये प्राणो मुख्यो जपमन्त्रप्रकाश्य इति प्रतीयतामन्यस्य तदयोगादसावेव चोद्गीथदेवतेति सुराणां निश्चयोऽभूदिति योजना । तत्प्रकाश्योद्गीथदेवतावशादसुरनिरासं देवा निश्चितवन्तः । न च प्राणानां मध्येऽन्यतमस्य तदुभयमस्ति तस्मात्पारिशेष्यान्मुख्यप्राणो मन्त्रप्रकाश्य उद्गीथदेवता चेति देवानां निश्चयोऽभूत्तेन तमुपजग्मुरित्यर्थः ॥१६७॥

कथं मन्त्रप्रकाश्योद्गीथदेवतात्वं प्राणस्य सिद्धमित्याशङ्क्य मन्त्रार्थस्य तत्र पूर्णत्वादित्याह—मन्त्रेति । अन इति च्छेदः ॥१६८॥

वागादीनां मुख्यप्राणवदाश्रयानपेक्षत्वमाशङ्क्याह—परीक्षमाणा इति । परीक्षाप्रकारमाह—यथोक्तेति । रक्षकपरीक्षायां हेतुमाह—पाप्मेति । परीक्षापर्यवसानमाह—आसेदुरिति ॥१६९॥

यथोक्ताख्यानवर्त्मनेत्ययुक्तं श्रुतेरुपाख्याने तात्पर्याभावात्तत्प्रणयनानुपपत्तेरित्याशङ्क्योपास्यं निश्चेतुमाख्यायिका श्रुत्या प्रणीतेत्याह—श्रेयोर्थिनामिति । देवतोपास्त्यधिकारो मनुष्याणामेवेति वक्तुं मनुष्यग्रहणम् । उक्तमर्थं व्यतिरेकद्वारा दर्शयति—नान्यथेति ॥१७०॥

पूर्वत्र वागादौ यो वाचि भोग इत्यादिवदत्रापि प्राणे यो भोग इति वाच्यं प्रकरणवशादिति शङ्कते—यः प्राण इति । लिङ्गेन प्रकरणभङ्गं मन्वानः समाधत्ते—वागादीनामिति । नहि प्राणस्य विशिष्टो भोगोऽस्ति तेन तस्य विशेषणानुपपत्तेः सदपि प्रकरणमनुपपत्त्या बाधितमकिंचित्करमित्यर्थः ॥१७१॥

तर्हि तेषामपि प्राणवद्विशेषणानुपपत्तिरित्याशङ्क्य दृष्टान्तं स्पष्टयति—अकृत्स्नेति । वाचो हि वचनमेव भोगो न दर्शनादिश्चक्षुषो दर्शनमेव च न वदनादिरित्येवमशेषस्य वागादिभोगत्वाभावात्प्रातिस्विकं भोगमादाय यो वाचीत्यादिवचनमित्यर्थः । अस्तु तर्हि वागादिवत्प्राणेऽपि विशेषणमकृत्स्नभोगत्वाविशेषादित्याशङ्क्य

१. तत्प्रकाशितं भारं असतो मा सद्गमयेत्यस्यार्थः ।

अभिसंधिर्[1]विव्यत्सन्नित्यभूत्सुरविद्विषाम् । अनिष्ठितक्रियारम्भोऽविव्यत्सन्निति भण्यते ॥७३॥
विव्यत्सोद्देशमात्रेण प्राणो हन्ता सुरद्विषाम् । इत्यर्थप्रतिपत्त्यर्थमीदृग्दृष्टान्त उच्यते ॥७४॥
बिभित्सायै यथा वेगाल्लोष्टः[2] क्षिप्तोऽश्मनोऽन्तिकात् । नश्येत्स्ववेगाच्छतधा ह्याखणाश्मसमागमात् ७५॥
अप्रधृष्यं तथा प्राणमृत्वा नेशुः सहस्रधा । दैत्यास्तन्नाशतो देवा देवा एवाभवन्सदा ॥७६॥
अत एव मनुष्यत्वहेतवोऽप्यसुराः समम् । विनेशुर्विष्वग्गतयो लोष्टः क्षिप्तो यथाऽश्मनि ॥७७॥
प्राणस्वभावसंपत्तेः प्राणवद्देवता अपि । देवा एवाभवन्दैत्यकृत्स्नपाप्मविनाशतः ॥७८॥
वागादीन्द्रियसंघातो यजमानो यथा पुरा । प्राणात्मभावाद्धत्वाऽऽगो वैराजं रूपमाप्तवान् ॥७९॥
तथा यस्तमुपासीत यथोक्ताख्यानवर्त्मना । विराजैवाऽऽत्मना हत्वा पापं भवति सोऽचिरात् ॥८०॥

दार्ष्टान्तिकं स्फुटयति—सर्वस्येति । दर्शनश्रवणादेरिति यावत् । किमिति कार्यं कुत इति हेतुश्चाऽऽक्षिप्यते । प्राणः सप्तम्यर्थः । उक्तं च—अप्रसिद्धत्वात्प्राणस्येह त्वगादिवदिति ॥१७२॥

तमभिद्रुत्येत्यादौ क्रियापदं व्याकरोति—अभिसंधिरिति । अविव्यत्सन्नित्यनेनासुराणां प्राणताडनेच्छा जातेत्युच्यत इत्यर्थः । तदेव स्फुटयति—अनिष्ठितेति । अनिष्पन्नक्रिया पापसंसर्गहेतुरूपा तदारम्भस्तदिच्छा साऽत्राऽऽख्यातवाच्येत्यर्थः ॥१७३॥

स यथेत्यादौ सशब्दार्थमाह—विव्यत्सेति । प्राणताडनेच्छोदयमात्रेण प्राणोऽसुराणां हन्तेत्यस्यार्थस्य प्रतिपत्त्यर्थं वक्ष्यमाणप्रकारो दृष्टान्तः कथ्यत इत्यर्थः ॥१७४॥

यथेत्यादेरर्थमाह—बिभित्साया इति । अश्मनो भेदनेच्छया तदर्थं तत्समीपे स्थित्वा तस्मिन्नतिवेगक्षिप्तस्य पांसुपिण्डस्य स्वगतवेगवशेनानेकधा नाशे हेतुमाह—आखणेति । दुर्भेद्यशिलासंबन्धादित्यर्थः । उक्तार्थस्य लौकिकत्वं वक्तुं हिशब्दः ॥१७५॥

एवं हेत्यादिदार्ष्टान्तिकं व्याचष्टे—अप्रधृष्यमिति । अधर्षणीयमतिगम्भीरमगोचरमसुराणामिति यावत् । ततो देवा अभवन्नित्यस्यार्थमाह—तन्नाशत इति । सदा देवा एव वागादयो देवताप्रतिबन्धकासुराणां मुख्यप्राणतो नाशात्परिच्छेदाभिमानं हित्वा देवा एवाभवन्निति यावत् ॥१७६॥

विष्वञ्च इत्यस्यार्थं दर्शयन्दार्ष्टान्तिकं दृष्टान्तेन सह विवृणोति—अत इति । प्राणस्याधृष्यत्वादेव तत्ताडनेच्छामात्रेणासुरा मनुष्यत्वस्य स्थावरत्वादेश्च हेतवो देवत्वप्रतिबन्धकाः सर्वेऽपि युगपन्नानागतयो नष्टा दुर्भेद्यशिलाक्षिप्तपांसुपिण्डवदित्यर्थः ॥१७७॥

तत इत्यादेरुक्तमेवार्थं विवृणोति—प्राणेति । वागाद्युपाधिकस्य यजमानस्य प्राणेऽहंग्रहोपासनात्तत्स्वरूपाप्तेः सर्वस्य परिच्छेदाभिमानरूपस्य पाप्मनो नाशात्प्राणवद्वागादयः सदा देवतात्मानः सन्तोऽध्यात्मपरिच्छेदाभिमानप्रतिबन्धनिवृत्तावग्न्यादिदेवतात्वं भजन्तीत्यर्थः ॥१७८॥

भवत्यात्मनेत्यस्यार्थं वक्तुं यथेत्यादिभाष्यतात्पर्यमाह—वागादीति । आध्यात्मिकपिण्डमात्रपरिच्छिन्नात्माभिमानाख्यं दुरितमागो विवक्षितम् । पुरेत्युपासनपरिपाकावस्थाकथनम् ॥१७९॥

तथेत्यादिभाष्यं व्याकुर्वन्वाक्यं योजयति—तथेति । पूर्वयजमानवदपोह्य वागादीनादाय प्राणं तदुपासनात्परिच्छिन्नाभिमानं हित्वा विराडात्मनोपासको भवतीत्यर्थः । प्रतिबन्धके पापेऽपयाते विराड्भावस्य न क्षेपोऽस्तीति विवक्षित्वोक्तमचिरादिति ॥१८०॥

---

१. अविव्यत्सन्—तमभिद्रुत्य पाप्मनाऽविव्यत्सन् ।
२. यथाऽश्मानमृत्वा लोष्टो विध्वंसेत इति बृहदारण्यकपाठः । छान्दोग्ये तु यथाऽश्मानमाखणमृत्वा विध्वंसेत् इति । तत्र न शक्यते खनितुं भेत्तुं कुद्दालकादिभिः इत्यखणः स एवाखणः इत्यर्थः ।

जीवा विट् उपास्योऽत्र देवताविग्रहः सदा । प्राणो हिरण्यगर्भात्मा यावत्तदभिमानिता ॥१८१॥
भावनोपचयाद्धत्वा परिच्छेदं स्वमासुरम् । देवतात्मानमेत्याशु सदा तद्भावभावितः ॥१८२॥
तत्तमोमात्रविध्वंसान्नतु प्राणादिराप्यते । कार्यत्वात्कारणं मुक्त्वा न हि तत्कार्यसंभवः ॥१८३॥
देवो[1] भूत्वेह देवोऽसौ भावनोपचयाद्भवेत् । पुंव्यापारोद्भवत्वं नः श्रुत्याऽपि प्रतिपादितम् ॥१८४॥
ब्रह्मैवाप्येति ब्रह्मैव प्रागप्यासीद्यतोऽद्वयम् । तन्मोहमात्रविध्वंसादित्यपि श्रुतिशासनम् ॥१८५॥
स्वतःसिद्धौ तदन्येषां[2] श्रुतिकोपः प्रसज्यते । अतोऽन्यदार्तं तद्वच्चाप्येकमेवेति च श्रुतिः ॥१८६॥
नाव्याकृतादेः संसिद्धौ परमात्मातिरेकतः । ब्रह्मवन्मानमस्तीह तथाऽनिर्मोक्षताऽऽपतेत् ॥१८७॥

ननु विराजो नोपास्यत्वमचेतनत्वादतो न तद्भावः फलं तत्राऽऽह—जीवेति । अस्मिन्प्रकरणे देवताविग्रहो विराडात्मा क्रियाशक्तिप्राधान्येन प्राणो ज्ञानशक्तिप्राधान्येन च हिरण्यगर्भश्चैतन्याभासविशिष्टः सन्नैरन्तर्यादिभिरुपास्यो न तूपाधिरेवेत्युक्तं फलं युक्तमित्यर्थः । उपास्तेरवधिमाह—यावदिति । मनुष्योऽहमितिवत्तस्मिन्देवतात्मन्यहंभावस्याभिमानस्य भावो यावत्तावदुपास्तिरित्यर्थः ॥१८१॥

पराप्तिवत्प्राणाप्तिरपि ज्ञानमात्रादित्याशङ्क्याऽऽह—भावनेति । शास्त्रादुपास्यं निश्चित्य तत्र भावनामुपचिनोति ततः स्वसंबद्धमासुरं परिच्छेदाभिमानमाशु हत्वा सदा तस्मिन्नेव देवतात्मनि भावेन संस्कृतस्तमेव गच्छति "तं तमेवैति कौन्तेये"त्यादिस्मृतेरित्यर्थः ॥१८२॥

परस्मिन्प्रतीचि शास्त्रीयज्ञानात्तदज्ञानध्वंसमात्रेण तत्प्राप्तिवत्तस्मिन्प्राणादौ शास्त्रोत्थज्ञानात्तदज्ञानमात्रध्वस्तेर्न तत्प्राप्तिरिति व्यावर्त्यमाह—तत्तम इति । तत्र हेतुमाह—कार्यत्वादिति । प्राणात्मत्वस्य कार्यत्वात्कारणं विनाऽयोगादुपास्तेरुक्तकर्मणश्च तद्धेतुत्वान्न ज्ञानमात्रात्प्राप्तिरित्यर्थः ॥१८३॥

प्राणाद्यात्मत्वस्य ज्ञानमात्रानायत्तत्वे श्रुतिरपि मानमित्याह—देव इति । इहैव देहे भावनाप्रकर्षाद्देवभावमनुभूय देहपातादूर्ध्वमुपास्यो देवः स्यादित्यनया श्रुत्या पुंव्यापारसाध्यत्वमस्मान्प्रति प्राणादिभावस्योक्तमित्यर्थः । अपिशब्दो यथोक्तां स्मृतिमनुकर्षति ॥१८४॥

तर्हि प्राणादिभाववत्परात्मभावोऽपि न ज्ञानमात्रादित्याशङ्क्याऽऽह—ब्रह्मैवेति । ब्रह्मण्येकीभावात्प्रागपि वस्तुतो ब्रह्मैव सञ्जीवो मोहादब्रह्मवद्दृष्टो वाक्योत्थज्ञानात्तन्मात्रनिरासादद्वयं ब्रह्मैवाऽऽप्नोतीतिश्रुतेर्ब्रह्मप्राप्तिर्धीमात्रायत्ता सिद्धेत्यर्थः । जीवस्य ब्रह्मणोऽर्थान्तरत्वं निरसितुमद्वयमित्युक्तम् । अपिशब्दाद्विमुक्तश्चेत्यादिवाक्यान्तरं गृहीतम् ॥१८५॥

ब्रह्मभाववत्प्राणादिभावस्यापि स्वतःसिद्धेर्ज्ञानमात्रायत्तता युक्तेत्याशङ्क्याऽऽह—स्वत इति । तच्छब्देन ब्रह्मोच्यते । अतःशब्देनान्तर्यामिणोऽक्षरस्य वा निर्देशः । उक्तवाक्यवन्नेह नानेति प्राणादिद्वैतनिषेधकवाक्यस्य व्याकोपमाह—तद्वदिति । चकारेण मृत्योः स मृत्युमित्यादिद्वैतदृष्टिनिन्दानुपपत्तिं समुच्चिनोति । 'एको देवः सर्वभूतेषु' 'एक एव तु भूतात्मा' इत्यादिश्रुतिस्मृतिविरोधार्थोऽपिशब्दः । श्रुत्यन्तरविरोधमाह—एकमिति ॥१८६॥

अव्याकृतादेर्नित्यसिद्धत्वे मानविरोधमुक्त्वा मानाभावमाह—नेत्यादिना । "अस्तीत्येवोपलब्धव्यः" "सदेव सोम्येदमि"त्यादि ब्रह्मणः स्वातन्त्र्येण सिद्धौ मानं दृष्टं न तथाऽव्याकृतसूत्रादेरनपेक्षत्वेन सिद्धौ मानमस्तीत्यर्थः । इहेति पूर्वसप्तम्या संबध्यते । किंचाव्याकृतादेरकल्पितत्वं वा कल्पितत्वं वा?आद्ये सदा संसारः स्यादित्याह—तथेति ॥१८७॥

---

१. देवो भूत्वा देवानप्येति (बृ० ६-१-२) भावनाप्रकर्षात् । इहैव देवभावमापद्य शरीरपातानन्तरं देवानप्येति इत्यर्थः ।

२. तदन्येषां ब्रह्मभिन्नानां स्वतस्सिद्धौ ब्रह्मवत् ज्ञानमात्रात् प्राणादिभावसिद्धौ अङ्गीक्रियमाणायां श्रुतिकोपः 'नेह नानास्ति' इत्यादि श्रुतिविरोधः प्राणादेरपि निषेधात् ।

अथाऽऽत्माविद्याऽव्यक्तादिरूपेण प्रथते तदा । तन्निवृत्तौ निवृत्तिः स्यान्निवृत्तिः केवलात्मता ॥८८॥
प्राणस्येव पराभूतो द्विषन्पाप्माऽऽसुरोऽखिलः ।
उपासीनस्य तं प्राणं कृत्स्नो नश्येत्तथाऽऽसुरः । द्विषंश्चाप्यद्विषच्छत्रुरासुरादन्य इष्यते ॥८९॥
नित्यविघ्नकृदेवैष प्राणाप्तावासुरो मतः । अतो विशेष्यते श्रुत्या द्विषन्भ्रातृव्यरूपया ॥९०॥
उक्तासुरपराभूतौ नान्योऽरिरवशिष्यते । य एवं वेदेति विधिः फलोक्तेरर्थवादतः[2] ॥९१॥
आनुषङ्गिफलोक्त्या वा तदुपासा विमुक्तये । आत्मविद्याधिकारेऽस्मिंस्तदुपासाविधानतः ॥९२॥
आत्मविद्योपकारित्वं तस्माद्वाक्याच्च गम्यते ॥९३॥

ते होचुः क्व नु सोऽभूद्यो न इत्थमसक्तेत्ययमास्येऽन्तरिति सोऽयास्य आङ्गिरसोऽङ्गाना ँ हि रसः ॥८॥

द्वितीयमुत्थापयति—अथेति । तत्र ज्ञानादज्ञानध्वस्तौ चाव्याकृतादेस्तद्विलासस्य ध्वस्तिः स्यादिति स्वपक्षसिद्धिमाह—तदेति । तथाऽपि तन्निवृत्तिरात्मनो भिन्नाऽभिन्ना वा? आद्ये द्वैतापत्तिर्द्वितीये भावाभावयोरेकत्वानुपपत्तिरित्याशङ्क्याऽऽह—निवृत्तिरिति । वाक्योत्थबुद्धिवृत्त्युपलक्षितचिदतिरेकेण कल्पिताव्याकृतादिभावाभावयोर्न सत्त्वं कल्पितसर्पस्य रज्ज्वतिरिक्तसत्त्वासत्त्वादृष्टेरित्यर्थः ॥१८८॥

प्राणभावस्य परात्मभावाद्वैषम्यमापाद्य पराऽस्येत्यादिवाक्यस्यार्थमाह—प्राणस्येति । द्विषन्निति विशेषणस्यार्थवत्त्वं वक्तुमासुरपाप्मेतरशत्रोर्द्वैविध्यमाह—द्विषन्निति । शत्रुशब्दः सापत्नविषयः ॥१८९॥

आसुरे तु शत्रौ न द्वैविध्यमित्याह—नित्येति । यस्मादासुरः शत्रुर्द्विषन्नेव तस्माद्द्विषन्भ्रातृव्य इत्येवंरूपया श्रुत्या भ्रातृव्यः सापत्नः शत्रुर्द्विषन्निति विशेष्यते तद्विशेषणमर्थवदित्यर्थः ॥१९०॥

यथोक्तशत्रुनिराकरणेऽपि प्रतिबन्धान्तरसंभवान्न प्राणात्मतेत्याशङ्क्याऽऽह—उक्तेति । यदाग्नेयोऽष्टाकपाल इतिवद्य[1] एवं वेदेति प्रसिद्धार्थोपबन्धेऽपि विधिपरं वाक्यमतश्चैवं विद्यादिति विवक्षितमित्याह—य एवमिति । विधेर्विवक्षितत्वे हेतुमाह—फलोक्तेरिति । पूर्वोक्तार्थवादवशात्फलस्योच्यमानत्वात्तद्वचनस्य च स्तुतित्वाद्विधिं विना च तदयोगादत्र सूत्राप्तिफलत्वेन विधीयते तदुपास्तिरित्यर्थः ॥१९१॥

यद्वा मोक्षफलत्वेन तदुपास्तिरत्र विधीयते । सूत्रभावस्तु फलार्थे बीजावापे छायागन्धादिवदानुषङ्गिकं फलमित्याह—आनुषङ्गीति । सूत्रोपास्तिस्तत्प्राप्तिद्वारा क्रममुक्तिफलेत्यत्र मानमाह—आत्मेति ॥१९२॥

आत्मविद्याप्रकरणे सूत्रोपास्तिविधेस्तस्या मुक्तिफलं चेदात्मविद्यैव मुक्तिहेतुरिति नियमासिद्धिरित्याशङ्क्याऽऽह—आत्मविद्येति । सैव मुक्तिहेतुस्तदुत्पत्त्युपकारित्वमुपासनस्य प्रकरणादित्यर्थः । "उक्तोपनिषत्क[3] इतो

१. य एवं वेदेति विधिः—यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां च भवति इत्यत्र यच्छब्दोपबन्धात् तस्य च प्राप्तत्वद्योतकत्वेन विधित्वप्रतिबन्धकत्वं यद्यपि, तथापि अग्निदेवतायाः अष्टाकपालपुरोडाशस्य च सम्बन्धः अप्राप्तः अतो विधिरङ्गीकृतो मीमांसकैः तद्गुणाश्च विधीयेरन् अविभागाद्विधानार्थे न चेदन्येनशिष्टा इति जैमिनिसूत्रात् । तद्वत्—इत्यर्थः ।

यच्छद्वयोगः प्राथम्यमित्युद्देश्यस्य लक्षणम् ।
तद्वृत्तमेवकारश्च स्यादुपादेयलक्षणम् ।। इति न्यायात् ।

य एवं वेदेति न विधिः प्राप्तत्वात् इत्याशङ्क्याह—(न्या)द्विषन् इति विशेषणं अद्विषतां व्यावृत्यर्थं यथा भरतो भ्रातृव्यः—(भाष्ये) ।

२. अर्थवादेन फलोक्तेः यत् स्तुत्यं तद्विधेयं इति न्यायात् अत्र वेदनं विधीयते ।

३. उक्तोपनिषत्कः इति उपासनादियुक्तत्वं सूचितं इतो विमुच्यमान इति मोक्षाधिकारिता सूच्यते—जनकं प्रति याज्ञवल्क्यवचनमिदम् ।

अथायास्यांङ्गिरो[1]दूर्भिर्विशिष्टमसुकर्मकम् । उपासनं विधास्यामीत्यारब्धैषोत्तरा श्रुतिः ॥९४॥
अनुवादाद्विधिर्ज्यायाननुवादे वृथा श्रमः । पुरुषार्थाभिसंबन्धादतो विधिरिहाऽऽश्रितः ॥९५॥
श्रूयते फलसंबन्धो यासूपासासु तास्विह । दध्नेन्द्रियादिवज्ज्ञेयो विधिर्गुणसमाश्रयः ॥९६॥
प्रधानफलसंबन्धो यत्र तु स्याच्छ्रुतेर्मुखात् । विशिष्टः स विधिर्ज्ञेयो यथाऽऽग्नेयादयस्तथा ॥९७॥

ते होचुरिति कण्डिकाविवरणम्

अत्राप्राग्न्यादिरूपास्ते प्राणालिङ्गनसंश्रयात् । कृतोपकारं स्मृत्वोचुः प्राणा वागादयस्तदा ॥९८॥
अनन्ताग्न्यादिभावेन यो नः सञ्जितवानसुः । क्व न्वसौ वर्तते ह्यात्मा योऽस्मच्छत्रुविनाशकृत् ॥९९॥
वितर्कयन्तस्ते प्राणा उक्त्वैवं प्रत्यगात्मसु । कुर्वाणमुपकारं तं ददृशुः प्रागिवाऽऽदरात् ॥२००॥
लोकेऽपि हि विचार्यार्थमथ संविदते जनाः । यथा वागादयस्तद्वद्विजज्ञुः प्राणमात्मनि ॥ १ ॥

विमुच्यमानः क्व गमिष्यसी"ति वाक्याच्च क्रममुक्तिफलत्वं सूत्रोपास्तेर्गम्यते । अतो ब्रह्मविद्याद्वारा मोक्षे पर्यवसिता प्रकृतोपास्तिरित्याह—वाक्याच्चेति । फलवत्प्रधानोपास्तेरुक्तत्वात्ते होचुरित्याद्युत्तरवाक्यं गुणोपास्तिविधिपरमित्याशङ्क्य तस्य तात्पर्यमाह—अथेति । सफलप्राणोपासनोक्त्यानन्तर्यमथशब्दार्थः । ते होचुरित्यारभ्याथाऽऽत्मनेऽन्नाद्यमित्यस्मात्प्राक्तनं वाक्यमुत्तरा श्रुतिरित्युच्यते ॥१९३–१९४॥

प्राणस्याऽऽङ्गिरसत्वादेर्लोकसिद्धत्वेनानूद्यत्वान्नोपास्यकोटिप्रविष्टतया विधेयतेत्याशङ्क्याऽऽह—अनुवादादिति । अनुवादस्यायुक्तत्वे हेतुमाह—अनुवाद इति । तत्पक्षे गुणवादस्य निष्फलत्वान्नानुवादो युक्त इत्यर्थः । विधेर्ज्यायस्त्वे हेतुमाह—पुरुषार्थेति । अनुवादस्यायुक्तत्वाद्विधेश्चोपपन्नत्वादाङ्गिरसत्वादिगुणकप्राणकर्मकोपास्तेर्विधेयत्वाद्गुणानामप्युपास्यकोटिनिविष्टतया विधेयोपास्तिकर्मतेति फलितमाह—अत इति ॥१९५॥

उपास्यतया गुणानां विधेयत्वे गुणविधिरेव किं न स्यादित्याशङ्क्याऽऽह—श्रूयत इति । दध्नेन्द्रियकामस्य जुहुयादित्यत्र प्रधानाग्निहोत्रस्य स्वर्गफलात्फलान्तरस्येन्द्रियपाटवस्य श्रुतत्वात्प्रधानानुवादेन गुणविधिरिति संबन्धग्रन्थे बोधितं तथेहोपास्तिप्रकरणे यासु गुणोपास्तिषु प्रधानफलात्फलान्तरं श्रूयते तासु गुणाश्रयो विधिर्यथा "भर्ता श्रेष्ठः पुरो गन्ते"त्यादिषु । न चायास्यादिषु प्रधानफलात्फलान्तरं श्रुतमतो नात्र गुणविधिरित्यर्थः ॥१९६॥

अयास्याङ्गिरसादिषु तर्हि कीदृशो विधिस्तत्राऽऽह—प्रधानेति । यथाऽऽग्नेयोऽष्टाकपालोऽग्नीषोमीयमेकादशकपालमुपांशुयाजमन्तरा यजतीत्यादावेकैकत्र प्रधानदर्शादिफलात्फलान्तरस्य विवक्षितस्याश्रुतेराग्नेयादयो विशिष्टविधिविधेयाः स्वीक्रियन्ते तथा यासूपासासु प्रधानफलात्फलान्तरसंबन्धः श्रुतिवाक्यान्न प्रतीयते तत्र विशिष्टविधिरयास्यादिषु च फलान्तराश्रुतेस्तद्विशिष्टप्राणकर्मकोपास्तिविधिरित्यर्थः ॥१९७॥

यद्यपि फलान्तरसंबन्धमन्तरेण प्रधानफलसंबन्धिनोऽपि कस्यचिद्गुणस्य(विधि)विधेयत्वमिष्टं तथाऽप्युपासनाधिकारे यथोक्तो विभागः संभवतीत्यभिप्रेत्योत्तरसंदर्भस्य विभागेन तात्पर्यमुक्त्वा ते होचुरित्यक्षराणि योजयति—अत्रापीति । तेषामग्न्यादिरूपत्वाप्तौ हेतुमाह—प्राणेति । प्राणस्य मुख्यस्याऽऽलिङ्गनं प्रधानत्वेनाऽऽश्रयणं तस्मादेव संश्रयादवष्टम्भादिति यावत् । कृतो देवतात्वप्रापणरूप उपकारो येन तं प्राणं स्मृत्वा फलावस्थायामन्योन्यमुक्तवन्त इत्याह—कृतेति ॥१९८॥

किमूचुरित्यपेक्षायां क्वेत्यादेरर्थमाह—अनन्तेति । स्वरूपत्वाद्वागादीनां देवतात्वप्रतिबन्धकपरिच्छेदाभिमानध्वंसित्वाच्च तस्यानुस्मरणं युक्तमित्याह—आत्मेत्यादिना । उक्तहेत्वद्योती हिशब्दः ॥१९९॥

नुशब्देतिशब्दयोरयंशब्दस्य चार्थमाह—वितर्कयन्त इति । प्रागिति फलावस्थायाः पूर्वमित्यर्थः । आदरस्तूपकारे दर्शने द्वयोर्वा द्रष्टव्यः ॥२००॥

कृतोपकारं प्राणं स्मृत्वा फलावस्था वागादयः स्वात्मन्येव विचारयन्तो दृष्टवन्तस्तमित्युक्त्वा तत्रैव लोकानुसारं दर्शयति—लोकेऽपीति । वेदसंग्रहार्थोऽपिशब्दः । द्विविधप्रसिद्धेरविगीतत्वं हिशब्दार्थः । विचारफलमर्थसंवेदनं स्फुटयितुमथेत्युक्तम् । उक्तं दृष्टान्तीकृत्य दार्ष्टान्तिकमाह—यथेति । आत्मा कार्यकरणसंघातः ॥२०१॥

---

१. अयास्यः अङ्गिराः, दूः इत्यादिगुणविशिष्टेत्यर्थः ।

सामान्योक्तावास्य इति तद्विशेषणमुच्यते । अन्तरित्यन्यथा मा भूत्प्रसङ्गः प्राणनिश्चितौ ॥ २ ॥
त्वगादयोऽपि सन्त्यास्ये यतोऽतस्तद्विशेषणम् । विशिनष्टि ततः प्राणमास्यान्तर्बिलचारिणम् ॥ ३ ॥
आस्यपर्यन्तशायीनि त्वगादीनि न मध्यतः । प्राणस्तु मध्य आस्यस्य तस्मादन्तर्विशेषणम् ॥ ४ ॥
सर्वेन्द्रियाणामथवा प्राण आत्मेति कथ्यते । अयमास्येऽन्तरित्येवमरनाभिनिदर्शनात् ॥ ५ ॥
अयमास्येऽन्तरित्येवं प्राणं दृष्ट्वा यतः पुरा । व्याजह्रुरमरास्तस्मात्प्राण आयास्यसंज्ञितः ॥ ६ ॥
अङ्गानां करणानां च रसः सारो यतस्ततः । प्राण आङ्गिरसः प्रोक्तस्तद्विद्भिस्तद्गुणाश्रयात् ॥ ७ ॥
कथमाङ्गिरसः प्राण इत्यस्य प्रतिपत्तये । अन्वयव्यतिरेकाभ्यामुपरिष्टात्प्रवक्ष्यते ॥ ८ ॥

मू.—सा वा एषा देवता दूर्नाम । दूरँ ह्यस्या मृत्युर्दूरँ ह वा अस्मान्मृत्युर्भवति य एवं वेद ॥९॥

तथाऽन्योऽपि गुणोऽनस्य दूरिति प्रतिपाद्यते । उदारफलसिद्ध्यर्थं सा वा एषेत्यतः श्रुतिः ॥ ९ ॥

आस्येऽन्तरित्यत्रान्तरितिविशेषणस्य तात्पर्यमाह—सामान्येति। निश्चये विवक्षिते प्राणस्याऽऽस्ये वर्तत इत्यविशेषेणोक्तौ त्वगादावपि प्राणत्वप्रसङ्गस्तत्र वृत्तेरविशेषात्तन्मा भूदित्यास्यगतप्राणस्यान्तरिति विशेषणं युक्तमित्यर्थः ॥२०२॥

आस्ये प्राण इत्युक्ते विशेषणाभावे कथं त्वगादौ प्रसक्तिस्तत्राऽऽह—त्वगादयोऽपीति। तेषामप्यास्ये भावात्सामान्योक्तौ तत्रापि यतः प्रसक्तिरतस्तदन्तरिति विशेषणं तेभ्यो मुखान्तराकाशस्थं प्राणं व्यावर्तयतीत्यर्थः ॥२०३॥

कथं प्राणस्योक्ताद्विशेषणात्तेभ्यो व्यावृत्तिस्तेषामप्यास्यान्तर्भावस्योक्तत्वादित्याशङ्क्याऽऽह—आस्येति। त्वचस्तावदनुभवसिद्धमास्यपर्यन्तत्वं वाग्जिह्वयोस्तदन्तस्थत्वेऽपि न व्याप्त्या मध्यस्थतेति भावः। कथं प्राणस्य मध्यस्थत्वं तदाह—प्राणस्त्विति। मुखनासिकाकाशमध्ये प्राणो वर्तते नैवं त्वगादयोऽतोऽन्तर्विशेषणं तेभ्यो व्यावर्तयति तमित्यर्थः ॥२०४॥

अन्तःशब्दस्यार्थान्तरमाह—सर्वेति। उक्तवाक्यस्थान्तःशब्देनावसानवाचिना वागादीनामात्मा प्राण इत्युच्यते तत्रैव तेषामवसानात्तदितरस्वरूपाभावात् "प्राणं तर्हि वागप्येती"त्यादिश्रुतेरित्यर्थः। कथं तेषां तदितरस्वरूपाभावेन तत्रावसानं तत्राऽऽह—एवमिति। नेम्याश्रयाणामराणां रथनाभ्यर्पितत्वदृष्टान्तादखिलस्यापि भूतभौतिकप्रपञ्चस्य प्राणेऽर्पितत्वमुक्तार्थानुसारेण श्रुतौ दर्शितमित्यर्थः ॥२०५॥

सोऽयास्य इत्यस्यार्थमाह—अयमिति। व्याहरणस्य पूर्वकल्पीययजमानसंबन्धं सूचयति—पुरेति। तत्कर्तृत्वं वागादीनां फलावस्थायामित्याह—अमरा इति ॥२०६॥

अङ्गानां हि रस इति हेतुमादौ व्याकरोति—अङ्गानामिति। आङ्गिरस इति प्रतिज्ञां व्याचष्टे—तत इति। तत्रैव प्राणविदामनुभवं प्रमाणयति—तद्विद्भिरिति। अङ्गकरणसारत्वं प्राणगुणमाश्रित्य तस्याऽऽङ्गिरसत्वमिति हेत्वर्थमेव संक्षिप्याऽऽह—तद्गुणेति ॥२०७॥

प्राणस्य नाऽऽङ्गिरसत्वमङ्गरसत्वासिद्धेर्वागादीनामन्यतमस्य तत्सारत्वसंभवादित्याह—कथमिति। तस्याऽऽङ्गिरसत्वाख्यप्रतिज्ञातार्थसिद्ध्येऽङ्गरसत्वं हेतूकृतमन्वयव्यतिरेकाभ्यामग्रे स्पष्टीकरिष्यत इत्याह—अस्येति ॥२०८॥

ननु सिद्धे प्राणस्योपास्यत्वे गुणा वाच्याः न च तत्सिद्धं शुद्धेरसिद्धेर्नहि तस्याशुद्धवागादिसंबन्धिनः शवस्पृष्टे तत्स्पृष्टस्येव सा सिद्धेत्याशङ्क्य सा वा एषेत्यादेस्तात्पर्यमाह—तथेति। आयास्यत्वादिपूर्वोक्तगुणवदिति यावत्। अस्य हि गुणस्योक्तौ प्राणस्योपास्यत्वं सिध्यत्यासङ्गपाप्माविद्धतयोक्तशुद्धिदार्ढ्यादिति भावः। किं चोक्ते

**उपास्तिक्रमसिद्ध्यर्थं क्रमभङ्गोऽयमिष्यते । यतोऽतोऽङ्गिरसं त्यक्त्वा दूरित्येवाभिधीयते ॥१०॥**
**विशिष्टोपास्तिरेवेयं प्रधानफलकीर्तनात् । नायं गुणविधिर्ज्ञेयस्तत्फलस्याश्रुतत्वतः ॥११॥**
**क्रियायां गुणभूतोऽर्थो देवतेत्युपदिश्यते । अस्त्युपासिक्रियायोगो देवताऽतोऽन उच्यते ॥१२॥**
**दूरमेवंविदः पाप्मा कथमध्यवसीयते । एवंवित्त्वविरोधित्वाद्दूरं पाप्मा भवेदतः ॥१३॥**
**विषयेन्द्रियसंबन्धजो हि पाप्माऽऽसुरो यतः । श्रौतानन्तादहंमानात्परिच्छिन्नो विरुध्यते ॥१४॥**
**चक्षुरादिपरिच्छेदः प्राकृतज्ञानहेतुतः । युक्तोऽध्यात्मैकरूपस्य बाधः शास्त्राभिमानतः ॥१५॥**

दूर्गुणे तद्विशिष्टप्राणोपास्तेरुत्कृष्टं फलं पापहानिः सेत्स्यत्यतस्तस्य गुणस्य प्रतिपाद्यतेत्याह—उदारेति । गुणस्य वाच्यत्वमतःशब्देनोक्त्वा तत्र श्रुतिमवतारयति—सा वा इति ॥२०९॥

ननु प्राणस्याऽऽङ्गिरसत्वमादावुक्तमनन्तरं च "सा वा एषे"त्यादिना दूर्गुणत्वं तत्र प्रथमश्रुतमुपरिष्टात्प्रतिपादयिष्यति चरमश्रुतं दूरं हीत्यादिश्रुतिरादावेव प्रतिपादयति । तत्र क्रमभङ्गे किं कारणं तत्राऽऽह—उपास्तीति । आदौ दूर्गुणो ध्येयोऽनन्तरमाङ्गिरसत्वमित्युपास्तिक्रमसिद्ध्यर्थं पाठक्रमभङ्गोऽङ्गीकृतः, पाठक्रमादर्थक्रमस्य बलवत्त्वात्, न ह्यनुक्ते दूर्गुणे प्राणस्य शुद्धिसिद्धिर्न चाशुद्धस्योपास्यत्वम् । तस्मादग्निहोत्रहोमयवागूपाकक्रमवत्पाठक्रमातिक्रम इत्यर्थः । श्रौतक्रमभङ्गेनार्थक्रमोपादाने फलितमाह—यत इति ॥२१०॥

तथाऽपि दध्यादिवत्फलविशेषसंबन्धाद्गुणविधिरेवायं न विशिष्टविधिरित्याशङ्क्याऽऽह—विशिष्टेति । प्राणोपास्तेः पापहानिः देवताभावश्चेति द्विविधं फलम् । तत्र पापहानेस्तत्फलस्यैवात्र श्रवणादिति हेतुमाह—प्रधानेति । गुणविधित्वाभावे नायमितिप्रतिज्ञापूर्वकं हेतुमाह—तत्फलस्येति । प्रधानफलात्फलान्तरस्याश्रुतेर्दध्यादिवैषम्यादित्यर्थः ॥२११॥

दूर्गुणविशिष्टप्राणोपास्तिरिह विवक्षितेत्युपपाद्यैषा देवतेति प्राणे देवताशब्दप्रयोगात्तद्देवतात्वं दृष्टं कथं निर्वहतीत्याशङ्क्याऽऽह—क्रियायामिति । यागादौ कर्त्रतिरेकेण चेतनो गुणोऽग्न्यादिर्देवतेत्यर्थः । तथाऽपि कथं प्राणस्य तत्त्वं तत्राऽऽह—अस्तीति । न च तस्य कर्मत्वान्न गुणतेति युक्तं गुणशब्देन कारकस्य विवक्षितत्वात्तथा च प्राणस्य कर्त्रतिरिक्तचेतनत्वे सति क्रियायां कारकत्वाद्देवतात्वं युक्तमित्याह—देवतेति ॥२१२॥

नित्याद्यनुष्ठानात्पापहानिर्धर्मात्पापक्षयश्रुतेर्नं चेदमुपासनं नित्यं नैमित्तिकं वा देवतात्मत्वकामिनो विधानात्तत्र पापमेवंविदो दूरे भवतीत्याक्षिपति—दूरमिति । फलोक्तिव्याख्यया परिहरति—एवमिति । नहि नित्याद्यनुष्ठानादेव पापक्षयो नियतस्तीर्थस्नानादेरपि तत्प्रसिद्धेः । तस्मादेवंवित्त्वेन पाप्मनो विरोधित्वादेवंविदः सकाशाद्दूरे भवत्येवासावित्यर्थः ॥२१३॥

उक्तमेव व्यनक्ति—विषयेति । विषयेष्विन्द्रियाणां सम्बन्धात्पाप्मा परिच्छिन्नोऽभिमानो जातः । स यतः शास्त्रानपेक्षःस्वाभाविकः समुल्लसत्यतः शास्त्रोत्थादपरिच्छिन्ने प्राणात्मन्यहंमानाद्विरुध्यते परिच्छिन्नापरिच्छिन्नाभिमानयोर्विरोधस्य प्रसिद्धत्वादित्यर्थः ॥२१४॥

नन्वभिमानयोर्विरोधित्वाविशेषाद्बाध्यबाधकत्वव्यवस्थाऽयोगाद्द्वयोरपि मिथो बाधः स्यात्तत्राऽऽह—

---

१. तस्मादिति—"अग्निहोत्रं जुहोति" "यवागूं पचति" इति श्रूयते । तत्र पाठक्रमात् प्रथममग्निहोत्रं ततः यवागूपाक इति वा प्रथमं पाकः ततो होम इति वा न नियमः इति प्राप्ते सिद्धान्तः प्रथमं पाकः ततो होम इति अन्यथा होमानन्तरं यवागूपाके पाकस्यादृष्टार्थत्वापत्तेः होमस्य द्रव्यसापेक्षत्वाच्चेति । निर्णीतं पञ्चमप्रथमे ।

२. दध्यादिवैषम्यात्—"दध्नेन्द्रियकामस्य जुहुयात्" इत्यनेन दध्नः इन्द्रियं फलं, अग्निहोत्रस्य तु स्वर्गः फलमिति फले वैषम्यादित्यर्थः ।

३. क्रियायां गुणेभूतं इति देवतादर्शनं द्रव्यत्यागा योगः तत्र देवता गुणः ।

परिस्पन्दात्मिका वृत्तिः श्रोत्रादिष्वपि विद्यते । प्राणस्याथेन्द्रियाणां तु शब्दाद्यर्थावलेहिनी ॥१६॥
शब्दादिग्राहिणी वृत्तिः स्वैरासङ्गात्मपाप्मभिः । दूषिता न परिस्पन्दो दूरं मृत्युरसोस्ततः ॥१७॥
मृत्युर्दूरं यथा प्राणात्तदात्मत्वात्तथाऽऽसुरः । तद्विदश्च भवेन्मृत्युर्दूरमित्युपदिश्यते ॥१८॥

मू.—सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमपहत्य यत्राऽऽसां दिशामन्तस्तद्गमयांचकार । तदासां पाप्मनो विन्यदधात्तस्मान्न जनमियान्नान्तमियान्नेत्पाप्मानं मृत्युमन्ववायानीति ॥१०॥

दिशामन्त इह ग्राह्यो मध्यदेशोपलक्षितः । अनन्ताकाशदेशत्वान्नाञ्जसाऽन्तो दिशां यतः ॥१९॥
श्रुतिस्मृतिसदाचारसंस्कृताशयवज्जनम् । अवधीकृत्यान्तत्वोक्तेर्नतु दोषो मनागपि ॥२०॥
मध्यदेशावधिस्तस्माद्दिगन्त इति गृह्यते ।

चक्षुरादीति । प्राकृताज्ज्ञानात्कर्मणश्च यश्चक्षुरादौ परिच्छेदोऽभिमानविशेषो वृत्तस्तस्याध्यात्मैकरूपस्य पिण्डमात्रे स्थितस्य शास्त्रोत्थादपरिच्छिन्नप्राणाभिमानाद्बाधो युक्त इति योजना ॥२१५॥

प्राणस्य पापासंबन्धे तदभिमानिनस्तदात्मकस्यापि पापासम्बन्धसिद्धिः न च प्राणस्य तदसम्बन्धोऽसिद्धः, प्राणत्वादितरप्राणवत्तत्सम्बन्धानुमानादित्याशङ्क्याऽऽह—परिस्पन्देति । प्राणस्य चलनरूपा वृत्तिरपरिच्छिन्ना सर्वदेहव्यापिनीति न पापदूषितेत्यर्थः । प्राणान्तरवृत्तिरपि तथैवेत्याशङ्क्ते—अथेति । तुशब्देन शङ्कां व्यावर्तयन्नाह—इन्द्रियाणां त्विति । वागादीनां शब्दादिग्राहिणी वृत्तिस्तन्मात्रं गोचरयति । नहि वाचा दर्शनं चक्षुषा वा वदनं तथा च परिच्छन्नैव तद्वृत्तिरित्यर्थः । तथाऽपि पाप्मस्पर्शास्पर्शयोरुभयत्र तुल्यतेत्याशङ्क्य परिच्छेदस्य पाप्मफलत्वात्तद्दूषिता परिच्छिन्ना वागादिवृत्तिरित्याह—स्वैरिति । धर्मफलत्वादपरिच्छेदस्य प्राणवृत्तिरपरिच्छिन्ना न पापदूषितेत्याह—नेति । एवमनुमानासंभवे प्राणस्य पापसम्बन्धाभावं फलितमाह—दूरमिति ॥२१६–२१७॥

पापासम्बन्धं प्राणस्योक्त्वा तद्विदोऽपि तं निगमयति—मृत्युरिति । यथा पूर्वोक्तन्यायात्प्राणादासङ्गारूपो मृत्युर्दूरे भवति तथा तद्विदोऽप्यसौ दूरे स्याद्विदुषः सदा तद्भावनया तदात्मत्वादतो दूरमित्यादिफलोक्तिरविरुद्धेत्यर्थः ॥२१८॥

सा वा एषेत्यादेरपहत्येत्यन्तस्य स्पष्टतां दृष्ट्वा यत्राऽऽसामित्यादौ दिशामन्त इत्यस्यार्थमाह—दिशामिति । इह वाक्ये दिक्शब्देन मध्यदेशो[1] गृह्यते । तेनोपलक्षितो व्यावर्तितस्तदन्तस्तद्व्यतिरिक्तो देश इत्यर्थः । प्राच्यादीनां दिशामवसानमेव दिगन्तपदवाच्यं किं न गृह्यते तत्राऽऽह—अनन्तेति । अतः पूर्वोक्त एव दिशामन्त इति शेषः ॥२१९॥

आर्यावर्तः पुण्यभूमिर्मध्यं विन्ध्यहिमागयोरितिप्रसिद्धमध्यदेशस्य मध्यदेशशब्देन ग्रहे तदितरदेशमात्रस्य पापीयस्त्वं प्रामाणिकप्रसिद्धिविरुद्धमित्याशङ्क्याऽऽह—श्रुतीति[2] । शास्त्रप्रसिद्धानिन्दिताचारसंस्कृतमनोजनो मध्यदेशः प्रसिद्धस्यापि तदधिष्ठितत्वेन मध्यदेशत्वात्तत्राप्यन्त्यजाधिष्ठितदेशस्य पापीयस्त्वस्वीकारादतस्तज्जनं तदधिष्ठितं च देशमवधिं कृत्वा तदितरजनस्य तदध्युषितदेशस्य चान्तत्वोक्तेर्मध्यदेशादन्यो देशो दिशामन्त इत्युक्ते कुतो विरोध इत्यर्थः ॥२२०॥

---

१. मध्यदेशः आर्यावर्तः पुण्यभूमिर्मध्यं विन्ध्यहिमागयोरित्युक्तेः विन्ध्यहिमालयमध्यदेश इत्यर्थः ।

२. "विन्ध्यस्य दक्षिणे भागे कलौ वासः प्रशस्यते ।
तत्र वेदाश्च यज्ञाश्च यत्र गोदावरी नदी ॥"
इति स्मृत्यन्तरविरोधमाशङ्क्याह—श्रुतीति—( न्या० )

प्रात्यन्तिकजनोद्देशः पापीयोजनसंश्रयात् । वर्ज्यतेऽतः प्रयत्नेन तद्विद्भिरधुनातनैः ।।२२१।।
तेषु प्रत्यन्तदेशेषु तन्निवासिषु चाऽऽसुरान् । यतो विन्यदधात्प्राणस्तस्मात्तद्वर्जयेद्द्वयम् ।।२२२।।
जनो विशिष्टो देशेन देशो जनविशेषितः । पाप्मोपस्पृष्टमुभयं शिष्टास्तद्वर्जयन्त्यतः ।।२२३।।
समाहारोऽथवा भेदो नेदित्येतत्पदं भवेत् । अनीप्सितानिवृत्तिः स्यात्समाहारेऽविवक्षिते ।।२२४।।
इत्थं न चेदहं कुर्यां प्रतिषेधश्रुतीरितम् । अन्ववायानि पाप्मानं प्रतिषेधातिलङ्घनात् ।।२२५।।
इति भेदविवक्षायां व्याख्या कार्या पदद्वये । माऽर्थस्तु तथाऽभेदे व्याख्येयः प्रतिषेधकृत् ।।२२६।।
सामान्यविषयश्चायं निषेधो नानविद्वतः । बलवत्प्रक्रियातो हि वाक्यं सामान्यमात्रगम् ।।२२७।।

मू.—सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमपहत्याथैना मृत्युमत्यवहत् ।।११।।

तर्हि मध्यदेशशब्दस्यानेकार्थतेत्याशङ्क्याऽऽह—मध्येति । यस्मादुक्तो विशिष्टो जनो मध्यदेशस्तदधिष्ठितदेशस्तूपचारात्तस्मात्तदितरो जनस्तदाश्रयो देशश्चास्मिन्वाक्ये दिगन्तो ग्राह्य इत्यर्थः । यथोक्तस्य दिगन्तत्वेऽपि किमायातमित्याशङ्क्य तस्य विशिष्टैस्त्याज्यत्वमित्याह—प्रात्यन्तिकेति । प्रत्यन्तो दर्शितो मध्यदेशातिरिक्तो म्लेच्छदेशस्तन्निवासिना जनेनोद्दिश्यते स्वनिवासत्वेनाधिष्ठीयते यो देशः स प्रचुरपापवतां दुर्जनानामाश्रयत्वाद्विवेकिभिर्वर्तमानैरपि शिष्टैः सर्वात्मना त्यज्यते किं पुनः पूर्वैरित्यर्थः । अतःशब्दस्य पूर्वपञ्चम्या संबन्धः ।।२२१।।

उक्तेऽर्थे हेतुत्वेन तदासामित्यादि योजयति—तेष्विति । आसुरान्पाप्मन इति शेषः ।।२२२।।

द्वयमित्यस्यैवार्थं विशदयति—जन इति । तस्य त्याज्यत्वे पूर्वोक्तं हेतुं स्मारयति—पाप्मेति । पापस्पृष्टत्वात्तदुभयं विशिष्टा यतो वर्जयन्त्यतोऽन्यैरपि यत्नेन त्याज्यमित्याह—शिष्टा इति ।।२२३।।

नेदित्यादेरर्थं वक्तुं विभागमाह—समाहार इति । पदद्वयपक्षे विवक्षितमर्थमाह—अनीप्सितेति । यदा पदमखण्डमविवक्षितं नञ्पदमित्पदं चेति पदद्वयमिष्टं तथा सत्यनीप्सितस्यानिष्टस्यानिवृत्तिर्वाक्यार्थः स्यादित्यर्थः ।।२२४।।

तत्र वाक्यं योजयति—इत्थमिति । "तस्मान्न जनमि"त्यादिनिषेधवाक्योक्तं निषेधश्रुत्यनुसारेण यदि न पालयेयं तदा निषेधातिक्रमात्पापमनुगच्छेयं तच्चानिष्टमिति निषेधवाक्यार्थपालनं कार्यमित्यर्थः ।।२२५।।

भेदविवक्षायां पदद्वये सत्येव निषेधवाक्यसंबन्धेनास्य वाक्यस्य व्याख्येति निगमयति—इति भेदेति । अखण्डपक्षे तु माऽर्थो निषेधको नेच्छब्दो व्याख्येयस्तथा सति मा पाप्मानमनुगतः स्यामिति मत्वा निषेधवाक्यार्थं रक्षेदित्याह—माऽर्थस्त्विति ।।२२६।।

प्राणोपास्तिप्रकरणे निषेधश्रुतेस्तेनैवायं निषेधोऽनुष्ठेयो न सर्वैरित्याशङ्क्याऽऽह—सामान्येति । अनवित्प्राणवित्, तदुपासितेति यावत् । प्रकरणात्प्राणविद्विषये निषेधे गम्यमाने कथं तस्मान्न जनमित्यादिवाक्यात्तस्य सामान्यविषयतेत्याशङ्क्य श्रुतिलिङ्गादिसूत्रे प्रकरणाद्वाक्यस्य बलवत्त्वनिश्चयादित्याह—बलवदिति । अस्यार्थः—श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात् । अत्र वाक्यप्रकरणयोर्विरोधोदाहरणं—दर्शपौर्णमासयोः सूक्तवाकनिगदे सन्ति पौर्णमास्यमावास्यादेवतावाचीनि पदानि "अग्नीषोमाविदं हविरजुषेतामिन्द्राग्नी इदं हविरजुषेतामि"त्यादीनि । तत्र किमेष मन्त्रवर्णः पौर्णमास्याममावास्यायां च द्विः प्रयोक्तव्यः किंवा यस्य येनैकवाक्यता स तत्रेति संशये वाक्यप्रकरणयोस्तुल्यबलत्वाद्वाक्यादात्मीयस्य प्रयोगः प्रकरणाच्चेतरस्येति कृत्स्नस्यैव मन्त्रस्योभयत्र प्रयोग इति पूर्वपक्षे शाब्दैकवाक्यभावस्य शीघ्रभावित्वात्प्राकरणिकविनियोगस्य काल्पनिकत्वेन विप्रकृष्टत्वाद्वाक्यस्य बलीयस्त्वान्न प्रकरणादुभयत्र विनियोग इति तृतीये स्थितम् । तथाच प्रकृतेऽपि प्रकरणात् वाक्यस्य बलीयस्त्वात्ततो निषेधस्य सामान्याधिकृतमात्रविषयता युक्तेति ।।२२७।।

१. प्रकरणं प्राणोपासकस्य, वाक्यं सर्वस्य तयोः समवाये परस्य प्रकरणस्य दौर्बल्यं दर्शपूर्णमासप्रकरणे मलवद्वाससो व्रतकलापविधानवत् ( न्या० )

मू.—स वै वाचमेव प्रथमामत्यवहत्। सा यदा मृत्युमत्यमुच्यत सोऽग्निरभवत्। सोऽयमग्निः परेण मृत्युमतिक्रान्तो दीप्यते ॥१२॥

अथ प्राणमत्यवहत्। स यदा मृत्युमत्यमुच्यत स वायुरभवत्। सोऽयं वायुः परेण मृत्युमतिक्रान्तः पवते ॥१३॥

अथ चक्षुरत्यवहत्। तद्यदा मृत्युमत्यमुच्यत स आदित्योऽभवत्। सोऽसावादित्यः परेण मृत्युमतिक्रान्तस्तपति ॥१४॥

अथ श्रोत्रमत्यवहत्। तद्यदा मृत्युमत्यमुच्यत ता दिशोऽभवँस्ता इमा दिशः परेण मृत्युमतिक्रान्ताः ॥१५॥

अथ मनोऽत्यवहत्। तद्यदा मृत्युमत्यमुच्यत स चन्द्रमा अभवत्। सोऽसौ चन्द्रः परेण मृत्युमतिक्रान्तो भात्येवँ ह वा एनमेषा देवता मृत्युमतिवहति य एवं वेद ॥१६॥

### वागादीनामग्न्यादिभावफलम्

आसुरेणावरुद्धांस्तान्वागादीन्हतपाप्मनः । देवत्वं प्रापयत्प्राणः कथमित्येतदुच्यते ॥२८॥
ज्ञानतोऽज्ञानहानिः स्याद्देवत्वं भावनाबलात्। आनन्तर्ये क्रियाद्वित्वादथशब्दो भवेद्ध्रुवम् ॥२९॥
मृत्युमत्यवहत्प्राणः सामान्योक्तेर्विशेषतः । विशिष्टदेवतावाप्तिर्वागादीनां प्रपञ्च्यते ॥३०॥
नेदीयसी यतोऽन्येभ्यो वागेवोद्गीथकर्मणि । प्राणस्य तेन सोद्गातुः प्रथमेत्यभिधीयते ॥३१॥
वागाद्यग्न्याद्यवाप्त्यैवं पाप्मनोऽपास्य सर्वतः । वैराजं पदमेत्येवं यजमानः सुभावितः ॥३२॥
कल्याणासङ्गसंबन्धाद्वागाद्यधर्मकारणम् । त्यक्त्वाऽनं मुख्यमात्मानमाश्रयेन्मृत्युवर्जितम् ॥३३॥

प्राणोपास्तेरुक्तं पापक्षयफलमङ्गीकृत्याग्न्यादिदेवताप्तिफलमाक्षिपति—आसुरेणेति । वागादिषु स्थितेषु नष्टेषु च तेषां देवत्वप्रापणं प्राणस्याशक्यमिति भावः। स्थितेष्वेव तेषु वस्तुतो देवतात्मसु परिच्छेदाभिमानप्रतिबन्धध्वस्तिमात्रेण देवत्वप्रापणं प्राणस्य संभवतीत्येतदनन्तरग्रन्थेनोच्यत इत्याह—एतदुच्यत इति ॥२२८॥

अथेत्याद्यवतारितं वाक्यं व्याकरोति—ज्ञानत इति । ध्येयज्ञानात्तदज्ञाननाशस्ततस्तस्मिन्भावनाप्रकर्षाद्ध्येयदेवताभावः। एवं ज्ञानभावनाक्रिययोर्भेदाज्ज्ञानानन्तर्येऽर्थे प्रयुक्तोऽथशब्दः। ततो भावनासामर्थ्यादुपासकोपाधिभूतवागादिदेवता मृत्युमतीत्याग्न्यादिभावमुपासकात्मा भवन्प्राणो नीतवानित्यर्थः। उक्तेऽर्थे निश्चयो ध्रुवमित्युच्यते ॥२२९॥

पूर्ववाक्येनैव वागादीनामग्न्यादिभावस्योक्तत्वादुत्तरवाक्यवैयर्थ्यमित्याशङ्क्यार्थभेदमाह—मृत्युमिति । वागादिदेवता मृत्युं पाप्मानमतीत्याग्न्यादिभावं प्राणः प्रापयति स्मेति सामान्येन तासां देवताभावस्योक्तत्वाद्वाचोऽग्नित्वं प्राणस्य वायुत्वमित्यादिविशेषणविशिष्टदेवतारूपताऽनन्तरग्रन्थेन विव्रियत इत्यर्थः ॥२३०॥

स वै वाचमेव प्रथमामित्यत्र वाचः प्राथम्यं प्राधान्यं तत्कथमित्याशङ्क्याऽऽह—नेदीयसीति । औद्गात्रे कर्मणि साधकतमत्वेन प्राणस्योद्गातुरत्यन्तसंनिहितत्वात्करणान्तरेभ्यो वाचः प्राधान्यमित्यर्थः ॥२३१॥

वागादीनामग्न्याद्याप्तावप्युपासकस्य किमायातं नहि तदेव तस्य फलमित्याशङ्क्याऽऽह—वागादीति । देवतात्वप्रतिबन्धकान्पाप्मनः सर्वान्निरस्योक्तवर्त्मना वागादीनामुपासकोपाधिभूतानामग्न्याद्याप्त्यैव सोऽपि सदा प्राणमात्मत्वेन ध्यायन्भावनाबलाद्वैराजं प्राणाख्यं पदं पूर्वयजमानवदाप्नोतीत्यर्थः ॥२३२॥

प्रकरणार्थं संक्षिपति—कल्याणेति । अधर्मस्य कारणं, स वा कारणमस्येति तथोक्तम् । मुख्यप्राणाश्रयणं तस्मिन्विशेषणत्रयविशिष्टं ध्यानं, तत्र हेतुमाह—मृत्युवर्जितमिति ॥२३३॥

वागाद्यैः पञ्चभिर्युक्तं विराजं साधिभौतिकम् । हित्वाऽध्यात्मपरिच्छेदं ततस्तं प्रतिपद्यते ॥३४॥
साधिभूताधिदैवं च नामरूपक्रियात्मकः । सूत्रं प्राणोऽङ्गिराः सत्यमृक्सामेत्यन उच्यते ॥३५॥
तमेकं सर्वभूतेषु ज्ञानकर्मफलाश्रयम् । आस्वभावात्मविज्ञानाद्युपास्ते यः स तं व्रजेत् ॥३६॥

मू.—अथात्मनेऽन्नाद्यमागायद्यद्धि किंचान्नमद्यतेऽनेनैव तदद्यते । इह प्रतितिष्ठति ॥१७॥

मुख्यप्राणस्य स्वात्मने आगानम्

उक्तमभ्युदयार्थं यद्वागादीनामथाधुना । आगानमवशिष्टेषु स्तोत्रेषूद्गातुरुच्यते ॥३७॥
सामान्यभोज्यविषयस्त्वन्नशब्दो यतस्ततः । आद्यमित्युच्यते तस्य विशेषणतया वचः ॥३८॥
यत आदाविदं वृत्तमन्नागानमनात्मनि । तस्मात्तत्कार्यभूतासु प्रजास्वद्यापि दृश्यते ॥३९॥
यद्धि किंचेति सर्वार्थमेवेत्यत्रावधारणम् । प्राणेनैव तु तत्सर्वं लोकोऽन्नं ह्यत्ति सर्वदा ॥४०॥
अन्नोपकारः सर्वेषामविशिष्टः समीक्ष्यते ॥४१॥
अथावधारणं कस्मादनेनैवेति भण्यते । प्राणद्वारक एवैषामुपकारो न तु स्वतः ॥४२॥

वागादीनपास्य मुख्यं प्राणमाश्रयेदित्युक्तत्वात्तेषां सर्वथाऽनुपास्यत्वप्राप्तावुक्तं वागाद्यैरिति । पञ्चभिरिति तेषामेव पाठापेक्षयोक्तं त्वगादिभिरित्यपि द्रष्टव्यम् । मुख्यप्राणस्य मृत्युवर्जितत्वार्थं विशिनष्टि—विराजमित्यादिना । साध्यात्मिकमित्यपि द्रष्टव्यम् । सर्वजगदात्मकमिति यावत् । आश्रयेदिति संबन्धः । अपरिच्छिन्नप्राणध्याने फलं "तं यथा यथे"त्यादिश्रुतिसिद्धमाह—तत इति ॥२३४॥

तस्यापि वागादिवत्परिच्छिन्नत्वात्कथं तदुपासितुरपरिच्छिन्नफलाप्तिरित्याशङ्क्य प्राणस्यापरिच्छिन्नत्वं विराजमित्यादौ सूचितं साधयति—साधिभूतेति । नपुंसकं सूत्रेणाध्याहृतप्रपञ्चेन च पुमान्संबध्यते । अध्यात्माधिदैवाधिभूतसहितं त्र्यात्मकं जगत्प्राणोऽभिधीयते श्रुतावित्यर्थः । तत्र क्रियात्मत्वं पदद्वयेनाऽऽह—सूत्रमिति । रूप-रूपत्वं पदाभ्यामाह—अङ्गिरा इति । नामात्मत्वमाह—ऋगिति । ऋक्सामयोर्ग्रहणं यजुषामुपलक्षणम् ॥२३५॥

प्राणस्यापरिच्छेदमुक्त्वा तदुपासितुस्तत्प्राप्तेरपरिच्छिन्नता युक्तेति फलितमाह—तमेकमिति । आश्रयशब्दः स्वरूपवाची तात्पर्यावसानभूमिविषयो वा । स्वभावे प्राणात्मन्यहमस्मीत्यभिमानज्ञानाविर्भावपर्यन्तमित्युपास्तेरवधिमाह—आस्वभावेति ॥२३६॥

अथाऽऽत्मनेऽन्नाद्यमित्यादेर्वृत्तमनूद्य तात्पर्यमाह—उक्तमित्यादिना । वागाद्युपाधिकस्य यजमानस्य यदभ्युदयार्थमागानं तत्त्रिषु पवमानेषूक्तमित्यनुवादार्थः । अधुनेत्यथशब्दार्थः । नवसु स्तोत्रेष्वागानसाध्यं फलमार्त्विज्यमेव वचनादित्याह—आगानमिति ॥२३७॥

अन्नाद्यशब्दयोरेकार्थतया पुनरुक्तिमाशङ्क्यार्थभेदमाह—सामान्येति । तस्यैव संस्कृतत्वं विशेषणेन विवक्षितम् ॥२३८॥

न केवलं प्रजापतावन्नस्वीकारे श्रुतिरेव मानं किंतु कार्यभूतप्राणिष्वन्नस्वीकारं दृष्ट्वा कारणेऽपि तदनुमेयं कारणानुसारित्वात्कार्यस्येत्याह—यत इति । अनात्मनि प्राणात्मनीत्यर्थः । दृश्यते स्वार्थमन्नस्वीकरणमिति शेषः ॥२३९॥

यद्धीत्यादिवाक्यस्थपदानि व्याचष्टे—यद्धीति । वाक्यार्थमाह—प्राणेनेति । प्राणद्वारकमेवान्नात्तृत्वं लोकस्यान्वयव्यतिरेकसिद्धमिति हिशब्दार्थः ॥२४०॥

इह प्रतितिष्ठतीत्यस्य शङ्कामाह—अन्नेति । प्राणेनैवाद्यते सर्वमन्नमित्यवधारणमयुक्तं वागादीनामप्यन्ननिमित्तोपकारदृष्टेरिति चोद्यं दूषयति—भण्यत इति ॥२४१–२४२॥

कथं तद्द्वारकस्तेषामुपकार इतीर्यते ।
ननु दूरिति हि प्राण उक्तो वागादिवत्कथम् । आत्मार्थान्नाद्यसंगीतेर्विद्धो नाऽऽसुरपाप्मभिः ॥४३॥
स्थितिमात्राभिसंबन्धान्नायं दोष इहेष्यते ॥४४॥
असावन्नं स्थितं यस्माद्देहं प्राणानवत्यतः । यत्नाच्छ्रुतिरतो वक्ति त्विहान्नं प्रतितिष्ठति ॥४५॥
स्थितिमात्रं ह्यसोरन्नं यद्वाऽऽसङ्गो न शङ्क्यते ।
भर्ता श्रेष्ठः पुरो गन्ता ह्यन्नादोऽधिपतिस्तथा । इत्यादिगुणविध्यर्थं परो ग्रन्थोऽवतार्यते ॥४६॥

मू.—ते देवा अब्रुवन्नेतावद्वा इदँ सर्वं यदन्नं तदात्मन आगासीरनु नोऽस्मिन्नन्न आभजस्वेति ते वै माभिसंविशतेति तथेति तँ समन्तं परिण्यविशन्त । तस्माद्यदनेनान्नमत्ति तेनैतास्तृप्यन्त्येवँ ह वा एनँ स्वा अभिसंविशन्ति भर्ता स्वानाँ श्रेष्ठः पुर एता भवत्यन्नादोऽधिपतिर्य एवं वेद य उ हैवंविदँ स्वेषु प्रति प्रतिर्बुभूषति न हैवालं भार्येभ्यो भवत्यथ य एवैतमनु भवति यो वैतमनु भार्यान् बुभूर्षति स हैवालं भार्येभ्यो भवति ॥१८॥

प्राणेनेतरेषामन्नविभजनम्

अयं गुणविधिर्ज्ञेयः प्रत्येकं तत्फलश्रुतेः ॥४७॥
जग्धमन्नं यतो देहलिङ्गभावेन याति नः । परिणामं व्रजत्तस्मादेतावदिति भण्यते ॥४८॥
त्वयैवाऽऽत्मार्थमागीते त्वय्येवान्नमतोऽखिलम् । वयं चान्नमृते स्थातुं नालं क्षणमपीश्वर ॥४९॥

वागादीनामन्नकृतोपकारो न प्राणद्वारको नियामकाभावादिति शङ्कते—कथमिति । तत्र नियामकत्वेन अनन्तरवाक्यमादत्ते—इतीर्यत इति । तस्यैव शङ्कान्तरमाह—नन्विति । यथा वागादयः स्वार्थागानादासङ्गपाप्मविद्धास्तथा प्राणोऽपि स्वार्थमन्नाद्यागानात्कथमासुरपाप्माविद्धः । न चास्तु तस्यापि तद्वेधो, दूरित्युक्तत्वादित्यर्थः ॥२४३॥

इह प्राणे पाप्मवेधो दोषो नोद्भाव्यः सर्वसाधारणस्थित्यर्थतया तेनान्नस्वीकारात्प्राणस्थित्यधीना हि वागादिस्थितिरित्यात्मविशेषणमिति मत्वा परिहरति—स्थितीति । वागादीनामन्ननिमित्तोपकारस्य प्राणद्वारकत्वाद्युक्तमवधारणमित्याद्ये पक्षे वाक्यं योजयति—असाविति । असाविहशब्दार्थे, प्राणे स्थितं सदन्नं स्थूलं देहमितरांश्च प्राणान्पालयति तस्मादिहेत्याद्या श्रुतिरन्नं प्राणे प्रतिष्ठितमिति तात्पर्येण वक्ति तद्वागादीनां प्राणसंबन्ध्यन्नाधीनस्थितित्वादवधारणमित्यर्थः ॥२४४-२४५॥

सर्वसाधारणस्थित्यर्थान्नयोगात्प्राणस्य पाप्मवेधो नेत्यस्मिन्द्वितीये पक्षे वाक्यं विभजते—स्थितीति । इहान्ने देहाकारपरिणते प्राणस्तिष्ठति तदनुसारिणश्च वागादयः स्थितिभाजोऽतः स्थित्यर्थं प्राणस्यान्नमिति तस्मिन्न पाप्मवेध इत्यर्थः । ननु विधिप्रभेदस्य प्रागेवोक्तत्वात्किमुत्तरग्रन्थेनेत्याशङ्क्याऽऽह—भर्तेति । ध्येये प्राणे यथोक्तगुणानां श्रुतिवशादपि प्रतिपत्त्यर्थो हिशब्दः । आदिपदेन स्वसुवर्णादिग्रहः । परो ग्रन्थः—ते देवा अब्रुवन्नित्यादिरथातः पवमानानामित्यतः प्राक्तनः ॥२४६॥

तत्र "ते देवा" इत्यादेः "सोऽयास्य" इत्यतः प्राक्तनस्य तात्पर्यमाह—अयमिति । तत्र हेतुः प्रत्येकमिति । एकैकस्मिन्गुणे विध्यनुकूलस्य प्रधानफलातिरिक्तस्य फलस्य दध्यादाविव श्रवणादिति हेत्वर्थः । अक्षराणि व्याकुर्वन्नेतावदित्यादेरर्थमाह—जग्धमिति । अस्माकं हि भुक्तमन्नं कालादिना पाकं गच्छद्देहद्वयस्थापकत्वेन तिष्ठति । तस्माद्देहद्वयस्थितिकरमेवान्नं नान्यदस्तीत्यर्थः ॥२४७-२४८॥

तदात्मन आगासीरित्यस्यार्थमाह—त्वयेति । आत्मार्थमेव यथा तथाऽन्नागाने त्वया कृते त्वय्येव स्थितिकरं

**सन्तर्प्यातः स्वमात्मानमन्नेनास्मानपीश्वर । आभाजयस्व क्षुधितांश्छान्दसत्वाण्णिचोऽश्रवः ॥५०॥**
**मामृतेऽन्नं न वः शक्तं पोष्टुं क्षणमपि क्वचित् । अन्नार्थिनोऽतो मां सर्वेऽप्यभिसंविशताऽऽशु वै ॥५१॥**

प्राणभुक्तान्नेन सकलेन्द्रियतर्पणोपपत्तिः

**तेनैता देवताः सर्वास्तृप्यन्त्यन्नेन सर्वशः । इत्यर्थस्य कुतः सिद्धिरिति चेदुच्यते यतः ॥५२॥**
**त्रिधा जग्धं भवत्यन्नं परिणामविशेषतः । स्थवीयान्मध्यमोऽणीयानित्येवं कालतोऽग्नितः ॥५३॥**
**स्थवीयान्यात्यधोभागो रसादिक्रमशोऽपरः । स्थूलं ह्युपचिनोतीमं कुड्यं मृत्स्नेव सर्वदा ॥५४॥**
**यस्त्वणीयान् रसः सूक्ष्मः स ऊर्गमृतमुच्यते । नाडीः सूक्ष्माः प्रविश्यासौ देवताः प्रीणयत्यथ ॥५५॥**
**स्वाम्यर्थं एव चोत्तम्भस्तृप्तिरापूर उच्यते । ततस्तु या सुखोद्भूतिर्विज्ञानात्मन एव सा ॥५६॥**

तदखिलं स्यादतोऽस्माकं तद्धेत्वन्नासिद्धिरित्यर्थः । मा भूद्भवतामन्नमथ च स्थितिरात्मवदित्याशङ्क्याऽऽह—वयं चेति । पादप्रसारणन्यायं[1] वारयति—क्षणमपीति । स्वामिनि भृत्येनाऽऽत्मीयाऽऽपन्निवेद्येति लौकिकन्यायं सूचयति—ईश्वरेति ॥२४९॥

"अनु नोऽस्मिन्नि"त्यादेरर्थमाह—संतर्प्येति । अन्नं विनाऽवस्थातुमशक्यत्वमतः शब्दार्थः । स्वयमेव भवन्तो भागमन्नस्य भजन्तामित्याशङ्क्य स्वामितन्त्रत्वादस्माकं नैवमित्याह—ईश्वरेति । अनुग्राह्यतां द्योतयति—क्षुधितानिति । आभजस्वेति श्रूयमाणे कथमन्यथार्थकथनमिति तत्राऽऽह—छान्दसत्वादिति ॥२५०॥

"ते वै माऽभिसंविशते"त्यस्यार्थमाह—मामिति । किमुवक्तव्यत्वन्यायं वक्तुं क्षणमपीत्युक्तम् । क्वचिदिति देहोक्तिः । स्वातन्त्र्येणान्नस्य वागादिपोषकत्वासम्भवोऽतःशब्दार्थः । संवेशनस्य विचारानपेक्षत्वमाशुशब्देनोच्यते । वैशब्दोऽवधारणे । त्यक्तप्राणस्यान्नबलाद्वागादिस्थित्यनुपलब्धेरन्नार्थिनां तेषां प्राणं परिवेष्ट्यावस्थानमित्यर्थः ॥२५१॥

तथेत्यादेः स्पष्टत्वात्तेनेत्यत्र शङ्कते—तेनेति । प्राणद्वारा लोकेन यदन्नं भुक्तं तेन सर्वा देवता वागाद्याः सदा तृप्यन्तीत्ययुक्तम् । न हि चैत्रे भुक्तवति मैत्रस्तृप्यतीत्यर्थः । श्रुतिभाष्याभ्यां बहिरेव समाधत्ते—उच्यत इति । यस्मात्प्रकारादुक्तार्थसिद्धिः स प्रकार उच्यत इति योजना ॥२५२॥

"अन्नमशितं त्रेधे"त्यादिश्रुत्यन्तरमनुसरन्भुक्तिप्रकारं प्रकटयति—त्रिधेति । त्रैविध्ये हेतुमाह—परिणामेति । त्रैविध्यमुदाहरति—स्थवीयानिति । पाकहेतुमाह—कालत इति ॥२५३॥

उक्तानां भुक्तान्नभागानां विनियोगविशेषं प्रकृतोपयोगित्वेन वदन्नादौ स्थवीयसो भागस्य पुरीषत्वेनाधोगतिमाह—स्थवीयानिति । मध्यमो भागस्त्वगादिक्रमेण स्थूलदेहोपचयं करोतीत्याह—रसादीति । स्थूलदेहस्यान्नोपचितत्वे प्रसिद्धिं प्रमाणयितुं हिशब्दः । कश्च स्थूलो देह इत्यपेक्षायां प्रत्यक्षतया तस्य सुज्ञानत्वमाह—इममिति । सर्वदेति क्रियापदेन सम्बध्यते । उपचये दृष्टान्तमाह—कुड्यमिति । प्रशस्ता संस्कृता मृन्मृत्स्नोच्यते ॥२५४॥

तृतीयान्नभागरूपमाह—यस्त्विति । श्रुतिस्मृतिष्वमृतादिशब्दितस्याणीयसो भागस्य कार्यमाह—नाडीरिति । देवताशब्देन वागादयो गृह्यन्ते । न केवलं द्वासप्ततिसहस्रनाडीप्रवेशमात्रं किंत्वसौ प्रविश्य देवताप्रीतिमपि करोतीत्यपिशब्दार्थेऽथशब्दो व्याख्येयः ॥२५५॥

अणिष्ठो रसो नाडीरनुप्रविश्य करणसमुदायं प्रीणयतीत्युक्तम् । इदानीमन्नरसेनाऽऽत्मनोऽपि प्रीतिदर्शनात् तद्वत्तस्य भौतिकत्वापत्तिरित्याशङ्क्याऽऽह—स्वामीति । कार्यकरणसंघातोऽत्र स्वामी तस्यार्थस्तावदन्ननिमित्त उत्तम्भः स्थितिरपतनं तुष्ट्युपचयौ च तन्निमित्तौ तदर्थावेव नाऽऽत्मनोऽन्नरसविकारनिमित्तं किंचित्कार्यं तत्कुतोऽस्य भौतिकत्वमित्यर्थः । अन्नप्रयुक्तमुत्तम्भादि कार्यकरणसंघातस्य चेत्तत्प्रयुक्तं सुखमपि तस्यैवेति

---

१. पादप्रसारणन्यायः—भिक्षुपादप्रसरणन्यायः । यथा भिक्षुकस्य पादप्रसारणमात्रपर्याप्ते गृहप्रदेशे दत्ते सः कृत्स्नं गृहं व्याप्नोति तथा न वयं कुर्म इत्यर्थः ।

ता एता देवताः सप्तदश ज्ञानक्रियात्मिकाः । सोऽयं सप्तदशग्रामो भोक्तुः करणलक्षणः ॥५७॥
बुद्धीन्द्रियाणि पञ्चैव तथा कर्मेन्द्रियाण्यपि । वायवः पञ्च बुद्धिश्च मनः सप्तदशं विदुः ॥५८॥
अपास्ताध्यात्मरूपाणां देवतानां समाश्रयः । भूतपञ्चकमेवेदं साधारण्याद्भवेत्सदा ॥५९॥
पयोम्भोवदिदं लिङ्गं नानारूपैः समन्वितम् । आविर्भावतिरोभावैः कारणात्मनि वर्तते ॥६०॥
कूटस्थबोधतन्मोहचिदाभासैकमात्रया । जाग्रत्स्वप्नावयं पीत्वा ह्यास्ते प्राणात्मना प्रभुः ॥६१॥
अपास्ताशेषबाह्यार्थस्तज्जवासनयाऽश्रितः । अध्वस्तप्रत्यगज्ञानो विरिञ्चः पर उच्यते ॥६२॥
जाग्रत्काले विशेषेण स्थित्वा हृदयसद्मनि । द्वासप्ततिसहस्राणि नाडीर्व्याप्यावतिष्ठते ॥६३॥
स एष परमात्मैव स्वात्ममोहसहायवान् । प्राणात्मना करोत्येष पश्यत्यग्न्यात्मना तथा ॥६४॥

तच्चैतन्यापत्तिः सुखस्य चेतनधर्मत्वादित्याशङ्क्याऽऽह—ततस्त्विति । अन्नोपयोगस्तत्प्रयुक्तोत्तम्भादिर्वा तच्छब्दार्थः अन्यस्याचेतनत्वेन सुखाद्यतनत्वायोगादित्यर्थः ॥२५६॥

अणिष्ठो रसो नाडीषु प्रविश्य यासां देवतानां प्रीतिमादधाति तासां रूपमाह—ता इति । सप्तदशसंख्याककरणग्रामस्य चेतनस्येव स्वातन्त्र्यमाशङ्क्याह—सोऽयमिति ॥२५७॥

तमेव सप्तदशसंख्याकं करणग्रामं भोक्तृशेषभूतं परिगणयति—बुद्धीति । त्वक्चक्षुःश्रोत्रजिह्वाघ्राणानि पञ्च बुद्ध्यर्थानि, वाक्पाणिपादपायूपस्थानि पञ्च कर्मेन्द्रियाणि, प्राणापानव्यानोदानसमाना वायवो, मनो बुद्धिरित्यन्तःकरणद्वयमिति सप्तदशको ग्रामो लिङ्गशरीरमित्युच्यते । इदं च लिङ्गशरीरं विवेकिनामेव शक्यज्ञानमित्याह—विदुरिति ॥२५८॥

देवताशब्देन करणग्रामग्रहे तस्य स्थूलदेहस्थत्वात्तन्नाशे निराश्रयस्यानवस्थानान्मुक्तिरित्याशङ्क्याऽऽह—अपास्तेति । स्थूलदेहनाशे निरस्तदेहाश्रयाणां वागादीनामपञ्चीकृतं भूतपञ्चकमेवाऽऽधारः स्यात्तस्य सर्वकार्यसाधारणत्वेन सर्वदा सर्वाश्रयत्वादित्यर्थः ॥२५९॥

भूतपञ्चकस्यापि कार्यत्वेन नाशित्वात्कथं तदाधारत्वं करणग्रामस्येत्याशङ्क्य मूलकारणमेव तर्हि तदाश्रय इत्याह—पयोम्भोवदिति । यथा पयसोऽम्भसश्च दध्यादिना हिमादिना च नानारूपत्वमेवमिदं सप्तदशकं लिङ्गं समष्टिव्यष्ट्यात्मकं नानाविधाकारोपेतं कालभेदेन व्यक्त्यव्यक्तिभ्यां मूलकारणे तिष्ठतीत्यर्थः ॥२६०॥

लिङ्गस्य मूलकारणस्थत्वेऽपि नाऽऽत्माधारत्वं प्रधानादेस्तथात्वान्नहि कूटस्थस्यात्मनस्तद्युक्तमित्याशङ्क्याऽऽह—कूटस्थेति । निर्विकारस्य चिदात्मनस्तादृगनिर्वाच्यो यो मोहस्तेन चिदाभासो यस्यां मोहशब्दितायामविद्यायां सा तथा, सा चैका दण्डायमानत्वेनानवच्छिन्ना सा च भीयमानशब्दादिनिदानतया तदात्मिका । तया स्थानद्वयं तद्गतकार्यं चोपसंहृत्यायमीशः स्वापे कारणात्मना वर्ततेऽतः साभासाविद्यावशादस्य कूटस्थस्यापि करणाधारता । न हि प्रधानादेः सा युक्ता तस्याचेतनस्य काष्ठादिसमत्वाच्चेतनतन्त्रत्वे चाज्ञानस्यैव संज्ञान्तरेण स्वीकारादिति भावः ॥२६१॥

परस्याविद्यया कारणात्मनाऽवस्थानेऽपि सूत्रस्यार्थान्तरत्वान्नाद्वैतमित्याशङ्क्याऽऽह—अपास्तेति । उपसंहृतसर्वानात्मवर्गस्य पुनरनात्मसर्जनं कथमित्याशङ्क्याऽऽह—तज्जेति । कार्यजनितसंस्कारयुक्तत्वं मुक्तस्येव निरस्तबाह्यावस्थस्यापि न युक्तमित्याशङ्क्याऽऽह—अध्वस्तेति । उक्तरूपः परः सूत्रात्मेत्याह—विरिञ्च इति । उच्यते श्रुतिस्मृत्योरिति शेषः ॥२६२॥

सूत्ररूपेण परस्यैवावस्थानेऽपि विराजस्ततोऽन्यत्वादद्वैतासिद्धितादवस्थ्यमित्याशङ्क्याऽऽह—जाग्रदिति । यद्यपि जाग्रदभिमानी विश्वः शरीरे सर्वत्र वर्तते तथाऽपि हृदयदेशेऽभिव्यक्तेस्तत्र विशेषेण स्थित्वा देहस्थमुख्यनाडीर्द्विसहस्राधिकसप्ततिसहस्रसंख्याका व्याप्य जाग्रत्काले स्थूलानर्थान्भुञ्जानोऽवतिष्ठते ततः स्थूलाभिमानी विश्वादिव्यपदेशः सन्परमात्मैव विराडात्मना तिष्ठतीति नाद्वैतहानिरित्यर्थः ॥२६३॥

तथाऽपि कर्तुर्ज्ञातुश्च परस्मादर्थान्तरत्वात्कुतोऽद्वैतमित्याशङ्क्याऽऽह—स एष इति । कारणत्वेन सूत्रत्वेन

इन्द्राग्नी ताविमावुक्तौ प्राण इन्द्रस्तयोर्मतः । प्रकाशकत्वाद्वागग्निरेवमेकः प्रजापतिः ॥६५॥
अत्त्राद्यभेदतो द्वौ वा यदि वाऽध्यर्ध उच्यते । यदि वाऽयं त्रयस्त्रिंशद्द्वासप्ततिरथापि वा ॥६६॥
अनन्तभेदभिन्नो वा एक एवान उच्यते । सर्वोऽप्येष विकल्पश्च पुनरेकैकशस्तथा ॥६७॥
देवासुरादिभेदेन जातिरूपक्रियागुणैः । एकैकोऽनन्ततां याति पुनरेकात्मतामतः ॥६८॥
समस्तव्यस्ततैवेह प्रत्यगज्ञानभूमिका । न त्वपास्तसमस्तान्ध्ये नेति नेति परात्मनि ॥६९॥
सर्वेणैव विकल्पेन यथोक्तेनावतिष्ठते । यथाधिकारं सर्वत्र परो जगति सर्वथा ॥७०॥
न हि कृत्स्नमनादाय जगदेतन्मनागपि । क्रियायै कारकं किंचित्तस्मात्सर्वात्मनेहते ॥७१॥

च प्रकृतो विराडात्मत्वेन च संनिहितः परमात्मैव प्राणरूपेण कर्ताऽग्निरूपेण ज्ञातेत्यर्थः । एकस्यैव परस्य कथं नानारूपत्वमेकत्वनानात्वयोर्विरोधादित्याशङ्क्य विशिनष्टि—स्वात्मेति ॥२६४॥

या काचिद्बलकृतिरिन्द्रकर्मैव तदित्युपगमादिन्द्रात्मना करोतीति वाच्ये प्राणात्मनेत्ययुक्तं वागादिद्वारा दृष्टिशक्तिप्रसिद्धेरग्न्यात्मना पश्यतीति चाश्लिष्टमित्याशङ्क्याऽऽह—इन्द्रेति । यावुक्तौ प्राणाग्नी ताविमाविन्द्राग्नी मन्तव्याविति योजना । अत्राग्निर्वागादिकरणग्रामः कथं प्राणाग्निपदप्रयोगे सतीन्द्रस्य करणग्रामस्य च ग्रहणं नहि घटपदात्पटं प्रतियन्ति तत्राऽऽह—प्राण इति । प्राणाग्न्योर्मध्ये प्राणोऽत्रेन्द्रः स च क्रियाशक्तिमद्भागः प्राणस्य बलवत्त्वात्तस्येन्द्रदेवताकत्वात्स इन्द्र इति वक्ष्यमाणत्वाच्चाग्निर्वागादिकरणग्रामो ज्ञानशक्तिमद्भागोऽग्नेर्वागादेश्च प्रकाशकत्वाविशेषादित्यर्थः । उक्तनीत्या क्रियाशक्तिमद्रूपेण कर्ता ज्ञानशक्तिमद्रूपेण ज्ञातेत्येकः परमात्मैव सूत्रदेहमापन्नः सन्कर्त्राद्यात्मना तिष्ठतीति न द्वैतप्रसक्तिरित्याह—एवमिति ॥२६५॥

तथाऽप्यत्त्रादिभेदस्य सत्त्वान्नाद्वैतमित्याशङ्क्य परस्यैव प्राणदेहस्य तद्रूपेणावस्थानमाह—अत्त्राद्येति । तथाऽपि कथमद्वैतमध्यर्धादिभेदानां श्रुतिस्मृतिप्रसिद्धेरित्याशङ्क्याऽऽह—यदि वेति । अध्यर्धमग्रे[1] व्युत्पादयिष्यति त्रयस्त्रिंशदित्यष्टौ वसव एकादश रुद्रा द्वादशाऽऽदित्या इन्द्रः प्रजापतिश्चेति प्राणस्य विभूतिरित्यर्थः । त्रयस्त्रिंशतो देवानामेवावान्तरभेदेन प्रकृतनाडीसंख्यामनुरुध्य द्वासप्ततिरित्युक्तम् ॥२६६॥

किमवान्तरसंख्यानिवेशेनासंख्यभेदवान्प्राण इत्याह—अनन्तेति । वस्तुतस्तु तस्यैक्यमित्याह—एक इति । संधौ त्वनादरः । प्राणे दर्शितं न्यायं सर्वेषु तद्भेदेष्वतिदिशति—सर्वोऽपीति । एष प्राणस्योक्तो भेदः सर्वोऽपि प्रत्येकं पुनः पुनरनन्तभेदभिन्नः स्यात्प्राणवदित्यर्थः । पुनःशब्दस्याभ्यासं द्योतयितुं चशब्दः ॥२६७॥

कथमेकैकस्यानन्तभेदभिन्नता तत्राऽऽह—देवेति । आदिशब्दो जात्यन्तरसंग्रहार्थः । कथं तर्हि प्राणस्यैकत्वं तदाह—पुनरिति । एकात्मतां यातीति संबन्धः । परस्यैव तत्तद्रूपेणावस्थानात्तदद्वयत्वमविरुद्धमित्युपसंहरति—अत इति ॥२६८॥

समस्तव्यस्तात्मकं ब्रह्मेति केचित्कथं तदैकरस्यमित्याशङ्क्याऽऽह—समस्तेति । प्रत्यगज्ञानाश्रिता समस्तव्यस्तता नानारसता प्राणात्मन्येवेत्यक्षरार्थः । ननु वास्तवो समस्तव्यस्तता परस्मिन्नेव किं न स्यात्तत्राऽऽह—न त्विति । नहि परस्मिन्नात्मनि नेति नेत्यस्थूलमित्यादिशास्त्रप्रत्युदस्ताविद्यातत्कार्ये समस्तव्यस्तता । न च सा वस्तुतोऽस्ति प्रज्ञानघनत्वावधारणविरोधादित्यर्थः ॥२६९॥

तर्हि सूत्रस्य परस्य च सर्वात्मत्वादद्वौ सर्वात्मानौ स्यातामित्याशङ्क्याऽऽह—सर्वेणेति । सर्वत्र जगति तत्तदधिकारस्थानमनतिक्रम्य परात्मैवोक्तानुक्तसर्वविशेषात्मना तिष्ठतीत्यतस्तस्यैव सर्वप्रकारेण स्थितिरिति कुतः सर्वात्मद्वयमित्यर्थः ॥२७०॥

परस्य सर्वरूपेणावस्थाने हेतुमाह—न हीति । कर्त्रादीनां मध्ये किंचिदपि कारकमेतज्जगदशेषमपि सहायत्वेनानादाय स्वव्यापारसंपादनाय नेहते । न हि वस्त्वन्तरे परिपन्थिनि वस्तुनः स्वव्यापारनिर्माणसंभवोऽतः

१. अध्यर्धः वायौ सति सर्वमृध्नोति तेन वायुरूपो हिरण्यगर्भः अध्यर्ध उक्तः अधि अर्धं यत्र स अध्यर्धः प्राण एको जगदर्धमित्यर्थः ( न्या० ) ।

**कारणात्मा जगत्कृत्स्नं श्रौतदर्शनसाधनः । यतः प्रागकरोत्कर्म तत्कार्येऽपि तथा ततः ॥७२॥**
**एकापूर्वप्रयुक्तत्वात्समस्तव्यस्तरूपिणाम् । सर्वः सर्वमुपादाय सर्वत्रातः प्रवर्तते ॥७३॥**
**अध्यात्माद्यधिभूताधिदैवतं सर्वदाऽखिलम् । सर्वं सर्वक्रियाः कुर्यादेकापूर्वप्रयुक्तितः ॥७४॥**
**यतः प्रजापतिः पूर्वमेतस्मिन्दर्शने स्थितः । यज्ञेन कर्मणाऽस्राक्षीज्जगदेतच्चराचरम् ॥७५॥**

प्रजापतेः पूर्वजन्मन्युपासनप्रकारनिरूपणम्

**नाड्योऽस्य रश्मयोऽनन्ता हृदयं मण्डलं रवेः । अहोरात्राणि तावच्च शतसंवत्सरायुषः ॥७६॥**
**एतया संपदा पूर्वं यजमानेन तद्विदा । अग्नयोऽर्काश्चिता आसन्षट्त्रिंशत्सहस्रशः ॥७७॥**
**एकैकस्मिन्परिस्पन्दः एवं सर्वाऽपि देवता । एका चानेकरूपा च ह्यध्यात्मादिविभागतः ॥७८॥**
**विभ्वी सर्वगताऽनन्ता समाप्ता च प्रतिक्रियम् । प्रतिद्रव्यफलं कृत्स्ना खण्डादौ गोत्ववत्स्थिता ॥७९॥**

सर्वत्र सर्वस्य कारणत्वात्परस्य मूलकारणस्य सर्वापेक्षया सर्वस्वकीयकार्यनिर्मातृत्वमेष्टव्यं न च तस्मादुपादानादुपादेयमन्यद्युक्तमारम्भणाधिकरणविरोधात्तस्मात्परः स्वकार्यनिर्माणे सर्वात्मना चेष्टत इत्यर्थः ॥२७१॥

सर्वं सर्वस्य कार्यं कारणं चेत्यत्रैव हेत्वन्तरमाह—कारणात्मेति । श्रौतं दर्शनं ध्यानं कर्म च तेन सर्वपदार्थपाद्येन हेतुना सहितः सूत्रात्मा सर्वं कर्म क्रियमाणं जगत्सर्वं सर्गादौ यस्मात्कृतवांस्तस्मात्तस्य कार्यवर्गे प्रजावर्गेऽपि तथा सर्वापेक्षया स्वकार्यनिर्माणं युक्तं कारणानुरूपत्वात्कार्यस्येत्यर्थः ॥२७२॥

सर्वं सर्वस्य कार्यं कारणं चेत्यत्रानुमानमाह—एकेति । एकस्य सूत्रस्यापूर्वं यजमानदशायामर्जितमदृष्टं तेन कृतत्वादनुवृत्तव्यावृत्तरूपसर्वविकाराणां सर्वो हेतुः स्वातिरिक्तं सर्वं सहकारित्वेन स्वीकृत्यैव सर्वत्र कार्ये प्रवर्तत उक्तहेतुवशादित्यक्षरार्थः । विमतं मिलित्वैव स्वकार्यं करोत्येकापूर्वप्रयुक्तत्वाद्धस्तादिवदिति भावः ॥२७३॥

तदेव व्यनक्ति—अध्यात्मेति । आदिपदेनाध्यात्मावान्तरभेदग्रहः अध्यात्ममादिर्यस्याधिभूताधिदैवतस्य तत्तथेति वा । अखिलमादायेति शेषः सर्वमिति कर्तृनिर्देशः । सर्वदेत्यादाने करणं च संबध्यते ॥२७४॥

एकापूर्वप्रयुक्तत्वहेतोरसिद्धिमाशङ्क्य श्रुतिसिद्धत्वमभिप्रेत्याऽऽह—यत इति । पूर्वमिति साधकावस्थोच्यतेऽतो हेतुसिद्धिरिति शेषः ॥२७५॥

किं तद्दर्शनं तदाह—नाड्य इति । अस्य यजमानस्यानन्ता नाड्यो रश्मयश्चानन्तास्तासु रश्मिदृष्टिः कार्याऽऽनन्त्यसामान्यात्तस्यैव हृदये सवितृमण्डलदृष्टिरेकत्वसाम्याच्छतसंख्याकसंवत्सरपरिमितायूरूपे तस्य यजमानस्य यावन्ति षट्त्रिंशत्सहस्राण्यहोरात्राणि तावत्य इष्टका इत्येतया संपदा संख्यासामान्ययोगेन तत्सामान्यविदा यजमानेन पूर्वस्मिन्कल्पेऽग्न्यर्कशब्दितेष्टकाः षट्त्रिंशत्सहस्रसंख्याकास्तावत्संख्याकाहोरात्रेषु चिता दृष्टाः । अतो यजमानाहोरात्रेष्विष्टकादृष्टिः । तथा चोक्तं ध्यानमभ्यस्यन्यजमानः स्वकर्म प्राणिकर्म चानुसरन्स्वफलभूतं जगत्सृष्टवानित्यर्थः ॥२७६–२७७॥

परस्य सर्वरूपेणावस्थानमुपपाद्य तस्य प्राणात्मनः सर्वात्मत्वमुपसंहरति—एकैकस्मिन्निति । उक्तनीत्या सर्वं सर्वस्य कारणं कार्यं चेति स्थिते परा प्राणाख्या देवता सर्वात्मिका सती सर्वत्र व्यापारेष्वेकैकत्रैव संनिहितेत्यर्थः । प्राणावयवभूतदेवतानामपि तद्वदेकैकस्मिन्व्यापारे संनिधिरपेरर्थः । प्राणदेवतायाः स्वरूपेणैकत्वमाह—एका चेति । अध्यात्मादिभेदेनानेकत्वमाह—अनेकरूपेति । चकारौ मिथो यथोक्तयोः समुच्चयार्थौ । परोपाधिकमनेकत्वमाकाशादौ प्रसिद्धमिति हिशब्दार्थः ॥२७८॥

सैव विविधकार्याकारेण भवतीत्याह—विभ्वीति । स्वकार्येषु सर्वत्र संनिहितत्वमाह—सर्वगतेति । विशिष्टायास्तस्या ब्रह्मज्ञानं विना नाशाभावादुपलक्षितायाश्च ब्रह्मतया तदभावादानन्त्यमित्याह—अनन्तेति । क्रियाकारकफलेष्वेकैकत्र समाप्यवृत्तिमाह—समाप्तेति । एकस्य कथमनेकत्र युगपत्कार्त्स्न्येन वृत्तिस्तत्राऽऽह—खण्डादाविति ॥२७९॥

एष प्रजापतेरुक्तो महिमा तद्वदेव तु । यजमानोऽपि तादात्म्यात्तथैव भवति ध्रुवम् ॥८०॥

"एवं ह वे"ति फलश्रुत्यर्थः

गुणोपास्तिफलोक्त्यर्थमेवं हेति श्रुतिः परा । यथोक्तार्थमुपासीनं प्रति प्रववृतेऽधुना ॥८१॥
वागादयोऽभिसंविष्टा जीवनार्थमनं यथा । ज्ञातयोऽभिविशन्त्येवं तद्विदं जीवनार्थिनः ८२॥
भर्ता च संनिविष्टानां श्रेष्ठश्च गुणतो भवेत् । यथोक्तगुणवैफल्यं पुर एता न चेद्भवेत् ॥८३॥
सर्वमेतद्वृथैव स्यान्न चेद्दीप्ताग्निमान्भवेत् । अन्नाद इत्यतो वक्ति साफल्यप्रतिपत्तये ॥८४॥
द्विषत्सु स्वेषु च न चेदाधिपत्यं तथाऽपि च । प्रोक्तवैफल्यमाशङ्क्य ह्याहाधिपतितां फलम्॥८५॥

उपासकज्ञातीनामपि फलम्

प्राण आत्मेत्युपासीनो यथोक्तं फलमश्नुते । तज्ज्ञातयोऽपि फलिनो यथा वागादयस्तथा ॥८६॥
प्राणसंस्पर्धिनो यद्वद्विनेशुरसुरास्तथा । प्राणविद्विद्विषः सर्वे नालं भार्येभ्य एव च ॥८७॥
उद्बुभूषति यो द्वेषात्स्वेषु प्राणविदं प्रति । प्रतिस्पर्धी न सोऽलं स्याद्भरणाय कथंचन ॥८८॥

किमिति सूत्रस्यैषा विभूतिरुक्तेति चोदिते स्तुत्यर्थत्वेनेत्याह—एष इति । तथाऽपि किमुपासितुरायातमिति तदाह—तद्वदिति । उक्तमहिमोपेतत्वेनैव प्राणमुपासीनोऽपि तदात्मत्वोपासनात्प्राणवद्विभूतिमानवश्यं भवति "तं यथे"त्यादिश्रुतेरित्यर्थः ॥२८०॥

तेनैता देवतास्तृप्यन्तीत्येतद्व्याख्याय वागाद्याश्रयणमुपासीनं प्रति भर्तृत्वादिगुणोपास्तिफलं वक्तुमेवं हेत्याद्या श्रुतिः फलोक्त्यवसरे प्रवृत्तेत्युत्तरश्रुतिमवतारयति—गुणेति ॥२८१॥

तद्गताक्षराणि व्याचष्टे—वागादय इत्यादिना । वागादीनां प्राणवदर्थिनां ज्ञातीनां प्राणविदाश्रयणीयो भवतीत्यर्थः ॥२८२॥

ज्ञातयो यद्यपि प्राणविदमाश्रयन्ति तथाऽपि नासौ तान्पालयितुमलमुपायाभावादित्याशङ्क्याऽऽह—भर्ता चेति । विद्यासामर्थ्यादस्य भरणसामर्थ्यं भरणीयेषूपस्थितं भवतीत्यर्थः । भर्तृत्वश्रेष्ठत्वयोरैक्यमाशङ्क्य विशेषमाह—श्रेष्ठश्चेति । क्षत्त्रिये श्रोत्रिये च तयोर्भेददृष्टिरतिस्पष्टेत्यर्थः । सति भर्तृत्वादौ पुरोगन्तृत्वमकिंचित्करमिति पुर एता भवतीत्यनर्थकमिति चेन्नेत्याह—यथेति । अग्रगण्यत्वाभावे ज्ञातिषु भर्तृत्वादि नास्य फलवत् । न हि प्रबलेषु दुर्जनेषु दुर्बलः सज्जनो भर्ता गुणाधिकोऽपि सुखी भवतीति भावः ॥२८३॥

तथाऽपि सति पुरोगन्तृत्वादौ कृतमन्नादत्वेनेति तत्कीर्तनं वृथेति चेन्नेत्याह—सर्वमिति । दीप्ताग्नित्वाभावे भर्तृत्वादि सदपि व्यर्थं स्यान्न हि व्याधितो मन्दाग्निरुक्तगुणोऽपि निर्वृणोतीत्यर्थः ॥२८४॥

तथाऽपि किमित्याधिपत्यमुच्यते पुरोगन्तृत्वेनैव सिद्धेरित्याशङ्क्याऽऽह—द्विषत्स्विति । न हि पुरोगन्तृत्वेनाऽऽधिपत्यस्य गतार्थत्वं पुरोहितस्य पुरोगन्तृत्वेऽपि राजन्येवाऽऽधिपत्याधिगमादिति भावः । अधिष्ठाय पालयितृत्वाभावे दीप्ताग्नित्वादेर्वैयर्थ्यं प्रसिद्धमिति हिशब्दार्थः ॥२८५॥

कस्यैतत्फलमित्यपेक्षायामाह—प्राण इति । प्राणविद्यासामर्थ्यलब्धं फलान्तरमाह– तज्ज्ञातयोऽपीति । फलिनो भवेयुरिति शेषः ॥२८६॥

"य उ हैवंविदमि"त्यादिवाक्यतात्पर्यमाह—प्राणेति । सर्वे नश्यन्तीति शेषः । किं च तद्द्वेष्टा भरणीयेभ्यो भर्तुं न शक्नोति । न हि विदुषि द्वेषोपहतचेता निःश्रीको रक्ष्येषु रक्षां विधातुमलमित्याह—नालमिति । अत एवोक्तं—ब्रह्मणेभ्यो वेदविद्भ्यो दिवे दिवे नमस्कुर्यान्नाश्लीलं कीर्तयेदिति ॥२८७॥

तदेव स्पष्टयन्नक्षराणि व्याकरोति—उद्बुभूषतीति । ज्ञातिषु मध्ये प्राणोपासकं प्रति यो द्वेषादुद्भवितुमिच्छति स प्रतिस्पर्धी भवन् भरणीयानां भरणाय न कथंचिदपि शक्तः स्यान्न हि महत्सु द्वेषं कुर्वन्निर्वृतो भवतीत्यर्थः ॥२८८॥

**नासौ श्रेष्ठः पुरोगन्ता नान्नादोऽसुरवद्भवेत् । न च ज्ञातिष्वधिपतिः स्पर्धमानोऽनवेदिना ॥८९॥**

**मू.—सोऽयास्य आङ्गिरसोऽङ्गानाँ हि रसः प्राणो वा अङ्गानाँ रसः प्राणो हि वा अङ्गानाँ रसस्तस्माद्यस्मात्कस्माच्चाङ्गात्प्राण उत्क्रामति तदेव तच्छुष्यत्येष हि वा अङ्गानाँ रसः ॥१९॥**

व्यवहितेन सम्बन्धकथनम्

**सोऽयास्याङ्गिरसः प्रोक्तस्तत्रायास्यो यथा तथा । निर्णीतः प्रागथेदानीमाङ्गिरस्त्वविनिर्णयः ॥९०॥**

**पूर्वोक्तस्यानुवादोऽयं सोऽयास्येत्याद्युपक्रमः । श्रुत्याऽऽङ्गिरस्त्वसिद्ध्यर्थमुच्यते न्यायपूर्वकम् ॥९१॥**

**सिद्धोऽङ्गानां रसः प्राणः प्राणोऽङ्गानां रसः कथम् । हीति हेतावतः प्राह तद्व्याख्यानाय चोत्तरः ॥९२॥**

प्राणस्याङ्गिरसत्वनिर्वचनम्

**यस्मात्कस्माच्चिदङ्गाद्धि प्राण उत्क्रामतीह नुः । नीरसं सत्तदेवाङ्गमाशु शुष्यति तत्र च ॥९३॥**

**यत एवमिदं दृष्टमन्वयव्यतिरेकतः । तस्मादाङ्गिरसः प्राणो ज्ञेय आत्मेति पण्डितैः ॥९४॥**

**मू.—एष उ एव बृहस्पतिर्वाग्वै बृहती तस्या एष पतिस्तस्मादु बृहस्पतिः ॥२०॥**

**मू.—एष उ एव ब्रह्मणस्पतिर्वाग्वै ब्रह्म तस्या एष पतिस्तस्मादु ब्रह्मणस्पतिः ॥२१॥**

प्राणस्य बृहस्पतित्वं ब्रह्मणस्पतित्वं च

**कार्यस्य रूपभूतस्य कर्मणः करणस्य च । न केवलं प्राण आत्मा नाम्नोऽप्यात्मेति भण्यते ॥९५॥**

भर्तृत्वाभाववचनं श्रेष्ठत्वाद्यभावोपलक्षणं प्राणविदः श्रैष्ठ्यादेरुक्तत्वात्तद्द्वेष्टुस्तदभावस्य युक्तत्वादित्याह—नासाविति ॥२८९॥

"सोऽयास्य आङ्गिरस" इत्याद्यनन्तरश्रुतेरन्तरश्रुत्या संगत्यभावमाशङ्क्य व्यवहितेन संबन्धमाह—सोऽयास्येति ॥२९०॥

यन्निर्णेतव्यं तदेव वाच्यं किमित्युक्तस्य पुनरुक्तिरित्याशङ्क्याऽऽह—पूर्वोक्तस्येति । "सोऽयास्य" इत्यादिरुपक्रमोऽङ्गानां हि रस इत्यन्तो यथोक्तस्यायमनुवादः श्रुत्योच्यते न्यायपूर्वकं प्राणस्याऽऽङ्गिरसत्वसिद्ध्यर्थमिति योजना ॥२९१॥

तमेव न्यायं दर्शयितुं प्राणो वा अङ्गानां रस इत्यस्यार्थोक्तिपूर्वकं पृच्छति—सिद्ध इति । प्राणस्याऽऽङ्गिरसत्वप्रसिद्धिरसिद्धेति प्रष्टुराशयः । प्राणो हीत्यादिवाक्ये हिशब्देन परिहरति—हीति हेताविति । आङ्गिरसत्वप्रसिद्धेः साध्यत्वादित्यतःशब्दार्थः । तमेव हेतुं हिशब्दार्थं प्रसिद्धिसाधकं प्रकटीकर्तुं तस्मादित्यादिवाक्यमित्याह—तद्व्याख्यानायेति ॥२९२॥

उत्तरग्रन्थं व्याकरोति—यस्मादिति । इहेति व्यवहारदशोक्तिर्देहोक्तिर्वा । नुरिति कार्यकारणसंघातस्य पुंसो व्यवहर्तुरिति यावत् । तत्र तस्यां प्राणोत्क्रमणावस्थायामित्यर्थः । चकारोऽवधारणार्थः सन्नाशुशब्देन संबध्यते । उक्तार्थस्यानुभवानुसारित्वं हिशब्दार्थः ॥२९३॥

एष हीत्यादिवाक्यं पूर्ववाक्यस्थतस्माच्छब्दसहितमुपसंहारपरतया विभजते—यत इति । प्राणस्याऽऽङ्गिरसत्वमिदमोच्यते । सति प्राणेऽधिष्ठातरि हस्ताद्यङ्गं रसवदन्यथा नीरसमित्यन्वयव्यतिरेकौ दर्शनोपायौ दर्शयति—अन्वयव्यतिरेकत इति । तत्फलमाह—तस्मादिति । किं तस्यैतावतेत्यपेक्षायां कार्यकरणात्मत्वमित्याह—ज्ञेय इति । उक्तान्वयव्यतिरेककौशलं पाण्डित्यम् । प्राणस्य कार्यकरणस्वरूपत्वेन प्राधान्याद्वागादि हित्वा तेनोपास्यतेति भावः ॥२९४॥

"एष उ एव बृहस्पतिरि"त्यादिवाक्यतात्पर्यमाह—कार्यस्येति । शरीरं हि प्रत्यक्षतो रूप्यमाणं रूपात्मकं

एवं सर्वात्मकत्वेन स्तुवन्प्राणं प्रयत्नतः । आदरं कुरुते शास्त्रमुपास्यत्वाय देहिनाम् ।।९६।।

बृहस्पत्यादिधर्मैः प्राणोपासनविधिः

बृहस्पत्यादिभिर्धर्मैरसोरन्यदुपासनम् । विशिष्टमभिधित्स्वाह शास्त्रं पूर्ववदेव च ।।९७।।
वाग्व्यापृततमा दृष्टा यत उद्गीथकर्मणि । देवता सैव न प्राण इत्याशङ्क्येदमुच्यते ।।९८।।
कौष्ठ्याग्निप्रेरितो वायुर्नानास्थानसमाहतः । वर्णतामेति येनातः प्राण एव बृहस्पतिः ।।९९।।
यजुर्ब्रह्मेति श्रवणादन्ते साम्नो ग्रहादपि । ऋग्यजुःसामनिर्देशः क्रमेणेति प्रतीयते ।।३००।।

मू.—एष उ एव साम वाग्वै सामैष सा चामश्चेति तत्साम्नः सामत्वम् । यद्वेव समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण तस्माद्वेव सामाश्नुते साम्नः सायुज्यँ सलोकतां य एवमेतत्साम वेद ।।२२।।

प्राणस्य सामत्वनिरूपणम्

सेति वाचोऽभिधानं स्यादमः प्राणाभिधा तथा । सामोभयं समुदितं गुणप्राधान्यरूपतः ।। १ ।।

करणजातं च ज्ञानक्रियाशक्तिमत्कर्मभूतं तयोरात्मा प्राण इत्युक्त्वा नामराशेरपि तथेति वक्तुमुत्तरकण्डिकाचतुष्टयमित्यर्थः ।।२९५।।

किमिति प्राणस्याऽऽत्मत्वेन सर्वात्मत्वसंकीर्तनमित्याशङ्क्याऽऽह—एवमिति । स्तुत्यादरयोस्तुल्यगोचरयोर्विवक्षितं फलमाह—उपास्यत्वायेति ।।२९६।।

प्राणस्य रूपकर्मात्मत्वमुक्त्वा नामात्मत्वं वक्तुमुत्तरो ग्रन्थश्चेद्बृहस्पतिरित्यादिविशेषोक्तिरनर्थिकेत्याशङ्क्य तात्पर्यान्तरमाह—बृहस्पत्यादिभिरिति । यथा पूर्वमयास्यत्वादिभिर्गुणैर्विशिष्टं प्राणकर्मकमुपासनमुक्तं तथा बृहस्पत्यादिधर्मकं तद्ध्यानं विधातुमिच्छच्छास्त्रं गुणविशेषमाचष्टे । न चैष गुणविधिस्तत्फलाश्रुतेर्विशिष्टविधिस्तु स्या "दश्नुते साम्नः सायुज्यमिति" प्रधानफलोक्तेरित्यर्थः ।।२९७।।

ननु सामोपासकस्य प्रधानफलसंबन्धः श्रुतो न बृहस्पत्याद्युपासकं प्रति किंचिदुक्तं तत्र कथमसौ विशिष्टविधिरित्याशङ्क्य मध्यदीपन्यायेन तृतीयकण्डिकास्थं फलमुभयतः संबद्धं मन्वानो विधान्तरेणोत्तरग्रन्थमवतारयति—वागिति । वाचः प्राणेऽन्तर्भावात्प्राण एवोद्गीथदेवतेति वक्तुं वाक्यमित्यर्थः ।।२९८।।

कथं वाचस्तस्मिन्नन्तर्भावो न ह्यन्यस्यान्यत्रान्तर्भाव इत्याशङ्क्येन्द्रियस्य देवताया वा तदात्मत्वाक्षेपे वक्ष्यमाणं परिहारमभिप्रेत्य शब्दस्य तदात्मत्वाक्षेपं परिहरन्नेष उ एव बृहस्पतिरिति वाक्यं व्याकरोति—कौष्ठ्येति । कोष्ठनिष्ठेनाग्निना प्रेरितस्तद्गतो वायुरूर्ध्वं गच्छन्कण्ठादिभिरभिहन्यमानः ककारादिवर्णतया व्यज्यते । वर्णात्मिका च वागिष्टा देवताधिकरणे "किमात्मकं पुनःशब्दमभिप्रेत्ये"त्यादिना भाष्यकृता तथा निर्णीतत्वाद्युक्तं तस्याः प्राणेऽन्तर्भूतत्वमित्यर्थः । बृहती वाक्तस्याः प्राणो निर्वर्तयिता पालयिता चेति स बृहस्पतिर्ऋक्च वागात्मिकाऽतः स ऋक्पतिरित्याह—प्राण इति ।।२९९।।

बृहस्पतिशब्देन किमिति देवपुरोहितो नोच्यते "बृहस्पतिर्देवानां पुरोहित आसीदि"ति श्रुतेस्तत्राऽऽह—यजुरिति । ब्रह्मणस्पतिरित्युत्तरवाक्ये ब्रह्मेति यजुः श्रुतं तत्र प्राणो यजुष्पतिरित्यवगमात्पूर्वत्रापि बृहस्पतिरिति स एवर्क्पतिरुक्त इत्यर्थः । उत्तरवाक्ये ब्रह्मशब्दस्य यजुर्विषयत्वं संदिग्धमित्याशङ्क्य संदिग्धे तु वाक्यशेषादिति न्यायेनाऽऽह—अन्त इति । वाक्यशेषे प्राणस्य सामात्मत्वोक्तेरुपक्रमेऽपि तस्य यजुरादिरूपता विवक्षिता—सामान्यवचनेन विशेषापेक्षिणोपक्रमो वाक्यस्य निगमनवशेनेति न्यायादित्यर्थः । किं चर्गादिशब्दानां श्रुतिष्वेवं क्रमदृष्टेर्बृहतीब्रह्मशब्दाभ्यामृग्यजुषयोर्ग्रहणमित्याह—ऋगिति । अतो बृहस्पतिर्ऋक्पतिर्ब्रह्मणस्पतिर्यजुष्पतिरिति भातीत्याह—इति प्रतीयत इति ।।३००।।

एष उ एव सामेत्यत्र सामपदं व्याचष्टे—सेतीति । "केन मे पौस्नानी"त्यादिश्रुत्यन्तराद्वाक्प्राणवाचकौ

एकार्थवृत्तिता यस्मात्तेनैकवचनं कृतम् । शब्दयोः सामयोस्तस्मात्प्राणः सामाभिधीयते ॥ २ ॥
इतरस्यापि सामत्वं प्राणनिर्वर्त्यतो मतम् । प्राण एव ततः साम युक्तो वागुपसर्जनः ॥ ३ ॥
निःशेषभूतसाम्याद्वा साम प्राणोऽभिधीयते । प्रत्यगज्ञानहेतुत्वात्तज्जस्याऽऽनन्त्यमुच्यते ॥ ४ ॥
अतिसूक्ष्मशरीरा हि पुत्तिका प्लुषिरुच्यते । पुत्तिकादिशरीरेण समः प्राणस्तदाश्रयात् ॥ ५ ॥
मशकेभविराड्देहैः समः प्राणो यथोदितः । तथा हैरण्यगर्भेण लिङ्गात्मा सम एव तु ॥ ६ ॥

समोऽनेन सर्वेणेत्यस्य अर्थान्तरकथनम्

वाय्वात्मनि समाप्तत्वात्करणानामशेषतः । सर्वदेहसमत्वं स्यात्प्राणिकर्मानुरूपतः ॥ ७ ॥
प्रतिप्राणिपरिच्छेदो ज्ञानकर्मानुरोधतः । धर्माधर्मानपेक्षः सन्नानन्त्येनावतिष्ठते ॥ ८ ॥

प्राणसायुज्यफलप्राप्तिः

साम्न आप्नोति सायुज्यमैकात्म्यं प्राणरूपताम् । समानलोकताऽनेन सालोक्यमिति शब्द्यते ॥ ९ ॥

सामशब्दावित्यर्थः। तथाऽपि कस्य समस्तसामशब्दवाच्यत्वं तदाह—सामेति। वाक्च प्राणश्चोभयं मिलितं समस्तसामशब्दवाच्यमतो वागुपसर्जनः प्राणः सामशब्दितो न प्रसिद्धं सामेत्यर्थः। तयोः सामत्वे कथं सामेत्येकवचनमर्थभेदादित्याशङ्क्य वाक्प्राणयोर्गुणप्रधानत्वमेकवचनकरणे कारणमित्याह—गुणेति। तयोर्गुणप्रधानत्वाद्द्वयोः सामशब्दयोरेकस्मिन्प्राणे वागुपसर्जने यतो वृत्तिभावोऽतः कृतमेकवचनमविरुद्धं तेन वागुपसर्जनः प्राणः समस्तसामशब्दार्थ इत्यर्थः ॥३०१–३०२॥

ननु "गीतिषु सामाख्ये"तिन्यायाद्विशिष्टा काचिद्गीतिः सामेत्युच्यते। प्रगीते हि मन्त्रवाक्ये सामशब्दो वृद्धैरिष्यतेऽतो वागुपसर्जनस्य प्राणस्य सामत्वायोगात्प्रसिद्धस्यैव साम्नः सामत्वमित्याशङ्क्य तत्साम्नः सामत्वमित्यार्थमाह—इतरस्येति। ननु सामशब्दस्य शब्दार्थात्मकमर्थद्वयमुक्तं न चैकस्य सति संभवेऽनेकार्थत्वं न्याय्यमत आह—प्राण इति। प्रसिद्धसाम्नः सामत्वस्य प्राणाधीनत्वं ततःशब्दार्थः। सामशब्दस्य मुख्यार्थे भेदाभावादर्थान्तरस्य गौणत्वान्मञ्चादिशब्देषु गौणमुख्यार्थभेदस्य दृष्टत्वान्नात्र किंचिदवद्यमिति भावः ॥३०३॥

यद्वेवेत्यादिवाक्यतात्पर्यमाह—निःशेषेति। सर्वसमत्वेन प्राणस्याऽऽनन्त्यमयुक्तं "सत्यं ज्ञानमनन्तमि"त्यादिश्रुतेर्ब्रह्मणोऽनन्तत्वान्न हि द्वयोरानन्त्यं मुख्यमित्याशङ्क्याऽऽह—प्रत्यगिति। अज्ञानजस्य प्राणस्य आनन्त्यमापेक्षिकं धर्मिवद्धर्मस्यापि तज्जत्वात्तन्नानुपपत्तिरित्यर्थः ॥३०४॥

प्लुषिशब्दार्थोक्तिपूर्वकमुत्तरवाक्यैः सह प्लुषिवाक्यस्यार्थमाह—अतिसूक्ष्मेति। तस्य कालविशेषे लोकप्रसिद्ध्यर्थो हिशब्दः। कथं तस्य तत्तद्देहसमत्वं तदाह—तदाश्रयादिति। तत्र तत्र समाप्यवृत्तेरिति यावत् ॥३०५॥

समो मशकेनेत्यादिवाक्यत्रयार्थं दृष्टान्तत्वेनानुवदति—मशकेति। उदितः प्राणो मशकादिदेहैः समो यथेति योजना। समोऽनेन सर्वेणेत्यर्थं दार्ष्टान्तिकमाह—तथेति। प्राणो नाम सूत्रात्मा तस्य तेनैव साम्यं कथमित्याशङ्क्य विशेषमाह—लिङ्गात्मेति। क्रियाशक्तिमतो ज्ञानशक्तिमता साम्यमिति भावः ॥३०६॥

समोऽनेन सर्वेणेत्यस्यार्थान्तरमाह—वाय्वात्मनीति। प्राणिकृतकर्मानुसारेण सर्वदेहपरिच्छिन्नस्य प्राणस्य तत्तत्परिच्छेदकसमष्टिव्यष्टिसमस्तदेहसमत्वं समोऽनेन सर्वेणेत्युच्यते न च करणग्रामस्यैव प्राणिकर्मणा देहपरिच्छेदो न प्राणस्येति वाच्यं सर्वेषां करणानां प्राणे समाप्तेरितरकरणग्रामाभावादित्यर्थः ॥३०७॥

प्राणिकर्ममात्रं प्राणस्य सर्वदेहपरिच्छेदे न हेतु"र्यथाकर्म यथाश्रुतमि"तिश्रुतेर्ज्ञानस्यापि हेतुत्वादित्याशङ्क्याङ्गीकरोति—प्रतिप्राणीति। लिङ्गात्मनो द्वयवशात्प्रतिदेहं परिच्छेदवदपरिच्छेदस्यापि कर्मकार्यत्वान्नास्य किंचिदपि स्वाभाविकं रूपमस्तीत्याशङ्क्याऽऽह—धर्मेति। आपेक्षिकमानन्त्यमस्य यावद्द्रव्यभावीत्यर्थः ॥३०८॥

अश्नुत इत्यादिफलोक्तिं व्याचष्टे—साम्न इति। सायुज्यशब्दार्थमाह—ऐकात्म्यमिति। प्रसिद्धसाम-

विकल्पासंश्रवाद्विद्वानश्नुतेऽतः फलद्वयम् । वैचित्र्याद्भावनादेर्वा त्रिविधं फलमुच्यते ॥१०॥
भूयोल्पीयःफलत्वं चेत्तुल्यसाधनयोर्न तत् । योगैश्वर्यात्समा सिद्धिः कालादेरीश्वराद्यतः ॥११॥

अद्वैतेऽपि हेतुवैचित्र्यात्फलभेदोपपत्तिः

एकमेव जगद्बीजमीशाभिप्रायहेतुतः । भूरिनानाप्रभेदेन प्रत्यात्मं व्यवतिष्ठते ॥१२॥
कुर्यान्मेरावणुधियमणौ मेरुधियं तथा । सर्वत्राप्रतिघात्येव प्रत्यगज्ञो महेश्वरः ॥१३॥
अतत्त्वज्ञस्य तमसो रज्ज्वज्ञानोरगादिवत् । अष्टावस्थाप्रभेदेन मिथ्याज्ञानं प्रजायते ॥१४॥
प्रत्यगज्ञानविध्वस्तौ रज्ज्वज्ञानहताविव । तत्कल्पितनिवृत्तिः स्यादष्टावस्थस्य बोधतः ॥१५॥
अनात्मवस्तु सकलं प्रत्यगज्ञानहेतुजम् । यथा तथोत्तरत्रापि युक्तिभिश्चाभिधास्यते ॥१६॥

मू.—एष उ वा उद्गीथः प्राणो वा उत्प्राणेन हीदँ सर्वमुत्तब्धं वागेव गीथा उच्च गीथा चेति स उद्गीथः ॥२३॥

तादात्म्यं व्यावर्तयितुमैकात्म्यमाचष्टे—प्राणरूपतामिति । सलोकतामित्यस्यार्थमाह—समानेति । अनेन प्राणेन सूत्रात्मना सहेत्यर्थः । सार्ष्टिसहितं सालोक्यं सायुज्यं चेत्येतत्फलमुपासको लभते ॥३०९॥

एकरूपाऽप्युपास्तिः शास्त्रप्रामाण्यात्फलत्रयहेतुर्विकल्पस्याश्रुतत्वादिति शङ्कते—विकल्पेति । एकीकृत्य सार्ष्टिसालोक्ये यथाश्रुति फलद्वयमित्युक्तम् । त्रिविधफलं ध्यानादितारतम्यादेव न तस्मादेकरूपादिति स्वपक्षं वदन्वाशब्देन शङ्कामपनुदति—वैचित्र्यादिति ॥३१०॥

तदेव स्फुटयितुमादौ शङ्कामनुवदति—भूय इति । ज्ञानकर्मणी गृहीत्वा द्विवचनम् । तन्निराकरणं प्रतिजानीते—न तदिति । तत्र हेतुः—योगेति । योगो ज्ञानकर्मणी तदैश्वर्यमतिशय ईश्वरः कालादिः सूत्रात्मा काऽस्याऽऽदिरिति वा कालश्चासावादिश्चेति वा तदधीनात्तस्मात्तुल्यं फलं तेन सायुज्यं ज्ञानकर्मोत्कर्षात्सालोक्य-मधमज्ञानकर्मभ्यां सार्ष्टिर्मध्यमाभ्यामतो हेतुवैचित्र्यात्फलवैचित्र्यमित्यर्थः ॥३११॥

अद्वैतिमते नैतद्युक्तं वस्तुतो हेत्वादिभेदाभावादित्याशङ्क्याऽऽह—एकमिति । यद्यपि जगत्कारणमनाद्य-निर्वाच्यमव्याकृतादिशब्दितमेकं तथाऽपि तदीशस्य तस्मिन्नभिप्रायश्चिदाभासस्तदनुसारेण बहुविधहेतुभेदेन नानाविधफलभेदेन च प्रतिजीवं भात्यतो वस्तुतो वस्त्वभेदेऽपि कल्पितभेदादद्वैतवादेऽपि हेतुवैचित्र्यादिसिद्धि-रित्यर्थः ॥३१२॥

प्रत्यगज्ञानं साभासमपि कथमविद्यमानभेदमावेदयेदित्याशङ्क्याऽऽह—कुर्यादिति । अघटमानघटन-पटीयस्त्वेन प्रसिद्धं मायाशब्दितमज्ञानं तस्य साभासस्य न क्वचिदपि प्रतिहतिरित्यर्थः । अज्ञानमुपसर्जनीकृत्य चिदात्मप्रधान्येन निर्देशस्तदस्वातन्त्र्यज्ञापनार्थमित्यर्थः ॥३१३॥

केचित्तु द्वैतस्य नाज्ञानजत्वं पिण्डो जातिर्विराट्सूत्रं दैवमव्याकृतमन्तर्यामी साक्षीत्यष्टावस्थस्य तस्य वस्तुत्वादित्याहुस्तान्प्रत्याह—अतत्त्वेति । रज्ज्वज्ञानाद्भुजंगादिभ्रमवदात्माज्ञस्य स्वाज्ञानादुक्ताष्टावस्थाभेदेन भ्रान्तिर्भवति "यत्र वाअन्यदिव स्यादि"[1]त्यादिश्रुतेस्तज्जगदज्ञानजमेवेत्यर्थः ॥३१४॥

तत्र मानान्तरमाह—प्रत्यगिति । सति रज्ज्वज्ञाने सर्पादि कल्प्यते रज्जुरेवेति ज्ञानात्तदज्ञानध्वस्तौ तज्जसर्पादिध्वस्तिर्दृष्टा, तथा प्रत्यगज्ञाने सति अष्टावस्थं जगत् कल्प्यते, तत्त्वज्ञानात् तदज्ञानध्वस्तौ तदपि ध्वंसते नहि ध्वस्ताविद्यो मुक्तौ द्वैतं पश्यत्यनिर्मोक्षापातादतोऽन्वयव्यतिरेकाभ्यां जगदज्ञानजम् । विमतमज्ञानजं तदन्वयव्यतिरेकवत्त्वाद्रज्जुसर्पवदित्यनुमानादित्यर्थः ॥३१५॥

किंच सर्वमनात्मजातं प्रत्यगज्ञानजमिति संबन्धग्रन्थे श्रुतियुक्तिभ्यामुक्तं तद्वदेवमित्यादावपि ताभ्यामेव तद्वक्ष्यत इत्याह—अनात्मेति ॥३१६॥

१. यत्रेति यत्र वाअन्यदिव स्यात् तत्रान्योऽन्यत् पश्येत् ( बृ० ४.३ ) ।

### प्राणस्योद्गीथत्वम्

औद्गात्रमेव चोद्गीथो भक्तिर्वा काचिदिष्यताम् । प्रसिद्धेरिति चेन्मैवमुद्गीथो ह्यसुरेव तु ।।१७।।
उपसर्ग उदित्येष स चात्यन्तक्रियाश्रितः । संयोज्य क्रियायाऽतस्तं व्याचष्टे श्रुतिरञ्जसा ।।१८।।
उत्तब्धं विधृतं यस्मात्प्राणेन जगदित्वरम् । उत्प्राणोऽतः प्रसिद्धस्तु गुणाद्गुद्गीथ उच्यते ।।१९।।
अनया गीयते यस्माद्गीथा वाक्तेन भण्यते । उच्च गीथा च तद्योगादुद्गीथ इति शब्द्यते ।।२०।।

मू.—तद्धापि ब्रह्मदत्तश्चैकितानेयो राजानं भक्षयन्नुवाचायं त्यस्य राजा मूर्धानं विपातयताद्यदितोऽयास्य आङ्गिरसोऽन्येनोदगायदिति वाचा च ह्येव स प्राणेनचोदगायदिति ।।२४।।

उद्गाता नैमिषोयाणामयास्योपासनादभूत् । अयास्यनामा सोऽगायद्वाचा प्राणप्रधानया ।।२१।।
बृहस्पत्यादिभिर्धर्मैरुपास्यानमनो[1] भवेत् । भावनोत्कर्षतोऽतोऽयं विचारस्तं प्रतीष्यते ।।२२।।

अद्वैतमतेऽपि हेतुवैचित्र्यात्फलवैचित्र्यमुपपा"द्यैष उ वा उद्गीथ" इत्यत्र पूर्वपक्षयति—औद्गात्रमिति । "हन्तासुरानि"त्यत्रोद्गीथशब्दस्यौद्गात्रे कर्मणि प्रयुक्तत्वात्प्रस्तावादिशब्दवच्च भक्तिविशेषे रूढेरित्याह—प्रसिद्धेरिति । उद्गीथो नाम सामावयवो भक्तिविशेषो नोद्गानमित्यत्र नञ्पदस्योभयत्र संबन्धं मत्वा सिद्धान्तयति—मैवमिति । सामाधिकारादिति[2] भाष्ये सामशब्दितप्राणस्य प्रकृतत्वादिति हेतुर्विवक्षितः स च हिशब्दार्थः ।।३१७।।

कथमुद्गीथशब्दस्य प्राणे वृत्तिर्न तावद्रूढ्या तस्य तस्मिन्वृद्धप्रयोगादृष्टेर्नापि योगादवयववृत्तेरप्रतीतेरित्याशङ्क्य योगपक्षं स्वीकर्तुमुद्गीथशब्दावयवस्वरूपमाह—उपसर्ग इति । तस्योत्कृष्टक्रियावाचित्वमाह—स चेति । उच्छब्दस्य तद्वाचित्वे फलितमाह—संयोज्येति । यस्मादयं क्रियावाची तस्मात्तमुपसर्गवाच्यया क्रियया वाचकत्वेन योजयित्वा क्रियाशक्तिमन्तं प्राणमुच्छब्देन श्रुतिः साक्षादाहेत्यर्थः ।।३१८।।

कथं तस्य क्रियावाचिनोऽपि प्राणे वृत्तिरत आह—उत्तब्धमिति । जगतो धारयित्रपेक्षां सूचयति—इत्वरमिति । गत्वरं नाशशीलमित्यर्थः । प्रसिद्धेरुद्गीथो भक्तिरित्युक्तम् । तथाच रूढेर्योगात्प्राबल्यात्कथमुद्गीथशब्दस्य योगात्प्राणविषयतेत्याशङ्क्याऽऽह—प्रसिद्धस्त्विति । उद्गीथशब्दितप्राणनिर्वर्त्यतयोपचाराद्भक्तेस्तत्त्वसंभवे तत्रापि न शक्तिः कल्पनागौरवादित्यर्थः ।।३१९।।

प्राणस्योच्छब्दत्वेऽपि गीथशब्दत्वाभावात्कथमुद्गीथतेत्याशङ्क्य गीथशब्दार्थमाह—अनयेति । तथाऽपि कथं प्राणस्योद्गीथत्वं तदाह—उच्चेति । उच्च गीथा चेत्युद्गीथः प्राण उच्छब्दार्थस्योत्तम्भकत्वस्य गीथाशब्दार्थस्य च वाचस्तस्मिन्नुपसर्जनत्वेन संबन्धादित्यर्थः ।।३२०।।

उद्गीथदेवता प्राणो न वागादिरित्युक्तार्थदार्ढ्यार्थं तद्धापीत्यादि तस्य तात्पर्यमाह—उद्गातेति । पूर्वेषां नैमिषारण्यवासिनां विश्वसृजामृषीणां सत्रे बहुयजमानके कर्मण्युद्गाता योऽभूत्स चायास्यप्राणस्यात्मत्वेनोपासनात्तद्रूपस्तन्नामा संवृत्तः स वागुपसर्जनं प्राणमुद्गीथदेवतात्वेनोपेत्य प्राणोपसर्जनभूतया वाचौद्गात्रं कर्म कृतवांस्तस्मादौद्गात्रस्य प्राणो देवतेत्येषोऽर्थो विचार्य निर्धार्यतेऽनन्तरवाक्येनेत्यर्थः ।।३२१।।

या काऽपि देवतौद्गात्रस्यास्तु किं विचारपूर्वेण तन्निर्धारणेनेत्याशङ्क्याऽऽह—बृहस्पत्यादिभिरिति । यथोक्तगुणकं प्राणमुपास्योपास्त्यतिशयकृततदात्मत्वसाक्षात्कारात्स भवतीति यतः शास्त्रार्थोऽतस्तमुपास्यं प्राणं प्रति विचारः क्रियते शास्त्रार्थदार्ढ्यार्थमित्यर्थः ।।३२२।।

१. उपास्य अनं अनो भवेदिति च्छेदः ।
२. ८४.२ ।

हृदयेनाभिसंबन्धाद्देवताऽत्र प्रजापतिः । उद्गीथदेवतेहास्तु सविता वा मनःश्रितः ॥२३॥
वागीश्वरत्वादिन्द्रो वा यदि वा वर्णदेवता । पदवाक्यस्वरस्थाननादादिविषयाऽपि वा ॥२४॥
एवं विप्रतिपन्नेषु नानावादिषु निश्चितः । प्राणप्रधानया वाचा ह्ययास्योऽगायदित्यतः ।
ब्रह्मदत्तश्चकारोच्चैः शपथं वादिनः प्रति ॥२५॥

ब्रह्मदत्तकृतशपथप्रकारः

यदितोऽनप्रधानाया वाचो ह्यन्येन केनचित् । देवान्तरेण सोऽगायदयास्यः प्राणविग्रहः ॥२६॥
सर्वप्रमाणभूतोऽभूदुद्गाता सत्रिणां पुरा । विसंवादस्त्वभूत्तेषामुद्दिश्योद्गीथदेवताम् ॥२७॥
उद्गाता नैमिषीयाणां मदभ्युपगताद्यदि । प्राणवाग्द्वयतोऽन्येन देवेनासौ प्रयत्नवान् ॥२८॥

विचारस्तर्हि किंमूलः स्यादित्याशङ्क्य तन्मूलां विप्रतिपत्तिमाह—हृदयेनेति । अत्रौद्गात्रे प्रजापतिर्देवता अस्तु तस्य चन्द्रात्मनो मनोद्वारा हृदयेन संबन्धा"च्चन्द्रमा मनो भूत्वा हृदयं प्राविशदि"ति श्रुतेरौद्गात्रस्य चोक्त'स्त्वं न उद्गाये'ति मनःसंबन्धोऽतः प्रजापतिर्देवतेत्येकः पक्षः । पक्षान्तरमाह—उद्गीथेति । मनस्तदधिष्ठितं, चक्षुस्तदाश्रयः सविता "आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्" इतिश्रुतेरस्ति चौद्गात्रस्य तत्र संबन्धस्त्वं न उद्गायेत्युक्तेस्तस्मादिह यज्ञे सवितैवोद्गीथदेवतेत्यर्थः । यद्वा यथाश्रुतोऽर्थो ब्रह्मादित्ययोर्बुद्धिसंबन्धात्तत्राधिदेवता"त्वाद्धियो यो नः प्रचोदयादि"ति च श्रुतेरुद्गानस्य च हृदयसंबन्धादहृदयस्य तदनुपपत्तेरिति "मनःश्रितश्चन्द्रमाश्चन्द्रमा मनसो जात" इति श्रुतेरिति कल्पान्तरम् । यद्वा सवितुर्मनःसंबन्धस्य[1]त्राधिकारे वक्ष्यमाणत्वादेकस्यैव पक्षस्योपन्यासः ॥३२३॥

विप्रतिपत्त्यन्तरमाह—वागीश्वरत्वादिति । बलस्येन्द्रो देवता वाक्च तन्निर्वर्त्या तेनेन्द्रस्य बलद्वारा वाङ्नियन्तृत्वादुद्गानस्य च वागात्मत्वात्तत्रेन्द्रो देवतेत्यर्थः । वर्णसंबन्धादुद्गानस्य तदभिमानिनी वा देवतोद्गीथदेवतेत्याह—यदि वेति । पदाद्यभिमानिनी देवता तथोद्गानस्य पदादिसम्बन्धादिति विप्रतिपत्त्यन्तराण्याह—पदेति । उदात्तादिः स्वरः स्थानं कण्ठादि नादो ध्वनिः । आदिपदेन सूक्तप्रकरणकाण्डादिग्रहः प्रयत्नश्च तेन गृहीतः ॥३२४॥

विप्रतिपत्तीरुपसंहृत्य तन्निमित्ते विचारे निर्णयप्रकारमाह—एवमिति । ब्रह्मदत्तो नाम कश्चिदृषिःयस्मिन्कर्मण्युद्गाताऽऽसीत्तत्राऽऽगतेषु दिदृक्षया प्रतिजिघृक्षया वा बहुषु वादिषु दर्शितरीत्या विरुद्धं प्रतिपन्नेषु सत्सु प्राणोपसर्जनया वाचा पूर्वेषां सत्रिणामुद्गाता कृतवानौद्गात्रमिति यतः स निश्चितवानतो वादिनो विप्रतिपन्नान्प्रति पूर्वोद्गातारमाप्तत्वेनाऽऽदाय सभायामेव शपथं चकार शपथक्रियया च वागुपसर्जनः प्राणो देवतोद्गानस्येति समर्थितवानित्यर्थः । पूर्वोद्गातुराप्तत्वप्रसिद्ध्यर्थो हिशब्दः । उच्चैरिति शपथस्य स्पष्टतोच्यते ॥३२५॥

शपथक्रियामेव दर्शयति—यदिति । मदुपेतप्राणप्रधानवाग्देवतातोऽन्येन सवित्रादिना देवतान्तरेण प्राणोपास्त्या तत्क्रतुन्यायात्तद्भूतः पूर्वोद्गातोदगायच्चेत्तदा वागुपसर्जनः प्राण उद्गीथदेवतेति मिथ्यावादिनो मे मूर्धानमयं सोमो विपातयत्वित्यर्थः । स्वाभ्युपगमदृढताद्योतको हिशब्दः ॥३२६॥

ननु किमित्ययास्यः साक्षीक्रियते कस्यचिदन्यस्यैवात्र साक्षीकारणं किं न स्यादत आह—सर्वेति । पूर्वस्मिन्काले ये सत्रिणो नैमिषीया विश्वसृजस्तेषां सत्रे योऽभूदुद्गाता स विद्वदग्रणीः सर्वेषामाप्तत्वादत्र साक्षीकृत इत्यर्थः । तथाऽपि कथं ब्रह्मदत्तस्य शपथप्रसक्तिरित्याशङ्क्योक्तं प्रसङ्गं स्मारयति—विसंवादस्त्विति । ब्रह्मदत्तोद्गातृके यज्ञे समागतानामृषीणामुद्गीथदेवतानिश्चयाभावात्तामुद्दिश्योक्तरीत्या विप्रतिपत्तिरासीत्तत्र आप्तप्रामाण्यं मत्वा ब्रह्मदत्तः शपथद्वारेष्टदेवतां निरधारयदित्यर्थः ॥३२७॥

यदितोऽनप्रधानाया वाचो हीत्यत्रोक्तमनूद्य यदितोऽयास्य इत्यादिश्रुत्यक्षराणि योजयति—उद्गातेति पूर्वोद्गातुरपरीक्षकत्वं वारयति—प्रयत्नवानिति । साक्षादिति प्रत्यक्षं यथा भवतां तथेति यावत् । मिथ्या-

१. सवितुः मनस्सम्बन्धस्येति । अथैतस्य मनसो द्यौः शरीरं ज्योतीरूपमसावादित्यः ( १.५.१२ ) ।

उदगायत्तदा सोमो भक्ष्यमाणः शिरो मम । मिथ्याभिवादिनः साक्षाद्विपातयतु सत्वरः ॥२९॥
श्रुतिः समर्थयामास वाचेति शपथक्रियाम् । शपथस्यापि मानत्वमस्मादेव तु कारणात् ॥३०॥
वाचः प्राणस्य च यत उद्गीथे व्यापृतिः स्फुटा । प्राधान्येन तदन्येषां न तथा लक्ष्यते सदा ॥३१॥
आकृत्यर्थाभिसंबन्धादभिधानस्य न श्रुतेः । ब्रह्मदत्ताभिसंबन्धादनित्यत्वं प्रसज्यते ॥३२॥

मू.—तस्य हैतस्य साम्नो यः स्वं वेद भवति हास्य स्वं तस्य वै स्वर एव स्वं तस्मादार्त्विज्यं करिष्यन्वाचि स्वरमिच्छेत । तया वाचा स्वरसम्पन्नयार्त्विज्यं कुर्यात्तस्माद्यज्ञे स्वरवन्तं दिदृक्षन्त एव । अथो यस्य स्वं भवति । भवति हास्य स्वं य एवमेतत्साम्नः स्वं वेद ॥२५॥

भिवादिनः सापराधस्य ते कालान्तरे मूर्धा पतिष्यति तत्कथमस्माकं यथायथं गच्छतां प्रत्यक्षयोग्यमित्याशङ्क्याऽऽह—सत्वर इति ॥३२८–३२९॥

आख्यायिकार्थस्यैव वाचेत्यादिनोक्तेः पौनरुक्त्यमित्याशङ्क्याऽऽह—श्रुतिरिति । वागुपसर्जनः प्राणो देवतोद्गीथस्येत्यत्र या शपथक्रिया कृता तां वाचेत्यादिश्रुतिरर्थवादत्वाद्व्युत्थाय समर्थितवती स्वमुखेनेति न पौनरुक्त्यमित्यर्थः । ननु शपथस्य स्वयमेव मानत्वान्न श्रुतेरपेक्षा नहि मानं मानान्तरमपेक्षते तत्राऽऽह—शपथस्येति । तस्य हि स्मृत्याचारयोरन्यतरस्य वेदमूलत्वादेव मानत्वं स्थितं हि "धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात्" [ जै० सू० १ । ३ । १ ] इत्यत्र "अपि वा कर्तृसामान्यात्प्रमाणमनुमानं स्यात्" [ जै० सू० १ । ३ । २ ] इति सिद्धान्ते स्मृतीनां तन्मूलकत्वेन मानत्वं स्थितं च "अनुमानव्यवस्थानात्तत्संयुक्तं प्रमाणं स्यात्" [ जै० सू० १ । ३ १५ ] इत्यत्र "अपि वा सर्वधर्मः स्यात्तन्न्यायत्वाद्विधानस्य" [ जै० सू० १ । ३ । १६ ] इति सिद्धान्ते शिष्टाचारस्यापि तन्मूलत्वेन प्रामाण्यमतो युक्ता शपथस्यापि द्वयोरन्यतरस्य स्वार्थसमर्थनार्थं श्रुत्यपेक्षेत्यर्थः ॥ ३३० ॥

वागुपसर्जनः प्राणो देवतेत्येतन्न केवलं शपथसाध्यं यौक्तिकं चेत्याह—वाच इति । अतो वागुपसर्जनः प्राणो देवतोद्गानस्येति शेषः । सदेत्यस्य व्यापृतिरित्यनेन सम्बन्धः । ननु रसनमनसोरपि स्फुटा तत्र व्यापृतिरिति चेन्नेत्याह—प्राधान्येनेति । वागादेरन्येषां रसनादीनां वागाद्युपसर्जनत्वेन व्यापारेऽपि न वागादिवदुद्गाने स्वप्रधानत्वेन व्यापृतिरालक्ष्यते तस्माद्युक्तं वागुपसर्जनप्राणस्यैवोद्गीथदेवतात्वमित्यर्थः ॥३३१॥

ननु ब्रह्मदत्तादेः शरीरित्वेनास्मदादिवदनित्यत्वात्तद्विषयवेदवाक्यस्य लौकिकवाक्यवदनित्यतया सापेक्षत्वेनाप्रामाण्यादौत्पत्तिकसूत्रविरोधः स्यादित्याशङ्क्याऽऽकृत्यधिकरणन्यायेनाऽऽह—आकृतीति । "आकृतिस्तु क्रियार्थत्वात्" [ जै० सू० १ । ३ । ३३ ] इत्यत्र श्येनादिशब्दानामाकृतिवाचित्वं समर्थितम् । यदाहुः—"श्येनचितं चिन्वीतेति चयनमाकृतौ संभवति यद्याकृत्यर्थः श्येनशब्द इत्यर्थः" । उक्तं च तत्र टीकायां पारिशेष्याच्छ्येनमिव चितमग्निस्थलं चयनेन भावयेदिति वाक्यार्थः । ततश्च यया कयाचिच्छ्येनव्यक्त्या सदृशस्याग्नेश्चेतुमशक्यत्वात्सर्वव्यक्तिसादृश्यासंभवादतीतानागतव्यक्तिसादृश्यानुपपत्तेश्च श्येनाकृतिसादृश्यसंपत्तिसंभवादाकृतिः शब्दार्थ इति

---

१. धर्मस्य शब्दमूलत्वमुक्तं "चोदनालक्षणोऽर्थो धर्म" इति । अतः अशब्दं वेदशब्दरहितं अनुमानं स्मृतिः प्रमाणं प्रत्यनपेक्षमित्यर्थः । अपि वा कर्तृसामान्यात् इति । अपि वेति सिद्धान्तारम्भः प्रमाणं स्मृतिः कर्तृसामान्यात् स्मृतिवैदिकपदार्थयोः कर्तारः एकरूपा एव, अतो वेदसंयोगस्त्रैवर्णिकानाम् ।

२. अनुमानव्यवस्थानात्—अनुमानात् स्मृतेराचाराणां च प्रामाण्यमिष्यते तेनैव व्यवस्थितानि प्रमाणानि इति आचारप्रामाण्योक्तिः ( १.३.१५ ) ।

३. अपि वा सर्वधर्मः स्यात् तन्न्यायत्वाद्विधानस्य ( १.३.१६ ) होलाकाद्याचारः सर्वधर्मो विधानस्य शब्दस्येत्यर्थः । आचाराणां प्रामाण्योक्तेः ब्रह्मदत्तशब्दस्यापि प्रामाण्यमित्यर्थः ।

उद्गीथदेवतामेवं परीक्ष्याथाधुना श्रुतिः । स्वादिधर्माभिसंबन्धं प्रचक्राम प्रभाषितुम् ।।३३।।
याजमानमिदं ज्ञानं स्वादेः प्राग्यत्समीरितम् । पञ्चमाद्युक्तिदृष्टचाऽस्य ह्येकवाक्यत्वहेतुतः ।।३४।।
स्वसुवर्णप्रतिष्ठाधीरुद्गातुरिति गम्यते । ऋत्विङ्नामाभिसंबन्धान्न त्वसौ यजमानगा ।।३५।।
एष एवंविदुद्गातेत्यमुतो लिङ्गतो भवेत् । उद्गातुरपि विज्ञानं दृष्टार्थत्वाच्च कारणात् ।।३६।।
कर्त्राश्रितं स्वं विज्ञेयं माधुर्यादीह सामनि । यतस्तद्धनवत्तस्मात्स्वरार्थं यत्नमाचरेत् ।।३७।।
धनवन्तं यथा यत्नाद्दिदृक्षन्तीह संघशः । तथा यत्नात्समीक्षन्ते स्वरसंपत्समन्वितम् ।।३८।।
बाह्यवित्तेन संबन्धमुक्त्वाऽथान्तर्धनात्मना । संबन्धं वक्तुकामेयं प्रचक्रामोत्तरा श्रुतिः ।।३९।।

मू.—तस्य हैतस्य साम्नो यः सुवर्णं वेद भवति हास्य सुवर्णम् तस्य वै स्वर एव सुवर्णम् भवति हास्य सुवर्णं य एवमेतत्साम्नः सुवर्णं वेद ।।२६।।

तस्य हैतस्य साम्नो यः प्रतिष्ठां वेद प्रति ह तिष्ठति । तस्य वै वागेव प्रतिष्ठा । वाचि हि खल्वेष एतत्प्राणः प्रतिष्ठितो गीयतेऽन्न इत्यु हैक आहुः ।।२७।।

निश्चीयत इति तथेहापि ब्रह्मदत्तादिपदस्याऽऽकृतिवाचित्वाद्व्यक्तिवाचकत्वकृतमनित्यत्वं न वेदस्येति कथमौत्प[1]त्तिकसूत्रविरोध इत्यर्थः ।।३३२।।

व्याख्याताख्यायिकार्थमनूद्य तस्य हैतस्येत्यादिवाक्यत्रयतात्पर्यमाह—उद्गीथेति । औद्गात्रस्य कर्मणो वागुपसर्जनः प्राणो देवता तस्याः स्वसुवर्णप्रतिष्ठागुणविधानार्थमुत्तरं कण्डिकात्रयमित्यर्थः ।।३३३।।

अथास्यादिगुणज्ञानवदिदमपि स्वादिज्ञानं याजमानमित्याशङ्कां निरसितुं विभजते—याजमानमिति । स्वसुवर्णप्रतिष्ठागुणोक्तेः पूर्वं यदयास्यादिगुणकप्राणोपासनमुक्तं तद्यजमानगामिफलकमुद्गातुर्यजमानेन क्रीतत्वादतो वचनाभावे याजमानमेवोत्सर्गतो यथोक्तं ज्ञानमित्यर्थः । तत्रैव हेत्वन्तरमाह—पञ्चमेति । पञ्चमाध्यायादौ ब्राह्मणे "केन यजमानो मृत्योराप्तिमतिमुच्यत" इत्याद्युक्तयाजमानज्ञानेनास्य ज्ञानस्य "ते ह वाचमूचुरि"त्यादिवत्तत्रापि "वाग्वै यज्ञस्य होते"त्यादिना वागादिश्रुतेरेकवाक्यत्वदृष्टेः पाञ्चमिकज्ञानवत्तार्तीयमपीदं याजमानमेवेत्यर्थः । पञ्चमोक्तज्ञानस्य याजमानत्वे सम्प्रतिपत्त्यर्थो हिशब्दः ।।३३४।।

तर्हि स्वादिज्ञानमपि पाञ्चमिकयाजमानज्ञानैकवाक्यत्वात्तथैवेत्याशङ्क्याऽऽह—स्वसुवर्णेति । तत्र हेतुमाह—ऋत्विगिति । तस्मादार्त्विज्यं करिष्यन्निति गुणत्रयस्यौद्गात्रकर्मसंबन्धदृष्टेरित्यर्थः । ऋत्विग्गतमपि यथा पूर्वोक्तं ज्ञानं याजमानं तथेदमपीत्याशङ्क्याऽऽह—न त्विति । स्वादिधीर्न यजमानगामिफला मानाभावादित्यर्थः ।।३३५।।

उद्गातुरपि परकर्मणि प्रविष्टस्य स्वादिज्ञानित्वे नास्ति मानमित्याशङ्क्याऽऽह—एष इति । तस्य सदपि ज्ञानमफलमित्याशङ्क्याऽऽह—दृष्टार्थत्वादिति । परकर्मस्थस्यापि फलवज्ज्ञानं वचनादेष्टव्यम् । स्वादिज्ञानवतश्च तत्फले धनादिलाभेऽध्यक्षे तन्निरासायोगादित्यर्थः ।।३३६।।

विज्ञानं विभज्य साम्नः स्वमित्यस्यार्थमाह—कर्त्रिति । उद्गातृकण्ठनिष्ठमाधुर्यमिह प्राणे सामशब्दिते स्वं भूषणं ज्ञेयमिति योजना । माधुर्यादीत्यादिशब्दो व्यक्तिभेदाभिप्रायः । तस्मादार्त्विज्यमित्यादेरर्थमाह—यत इति । तत्साम सौस्वर्योपेतं धनवद्भूषितमृद्धिमद्यतो लक्ष्यतेऽतो वाङ्निष्ठस्वरार्थं दन्तधावनादि कार्यमित्यर्थः ।।३३७।।

अथो यस्येत्यादि दृष्टान्तत्वेन व्याचष्टे—धनवन्तमिति । यत्नस्तत्परत्वम् । इहशब्दो व्यवहारदशाविषयः । तस्मादित्यादि दार्ष्टान्तिकं व्याकरोति—तथेति । अथोशब्दो यथार्थः । तस्माच्छब्दस्तथार्थः ।।३३८।।

तस्य हैतस्य साम्नो यः सुवर्णमित्यादि वृत्तानुवादपूर्वकं तात्पर्येण बध्नाति—बाह्येति । अथशब्दोऽप्यर्थः तृतीयासंबन्धी ।।३३९।।

१. औत्पत्तिकसूत्रविरोधः—औत्पत्तिकस्तुशब्दस्यार्थेन सम्बन्धः इत्यनेन शब्दार्थसम्बन्धस्य नित्यत्वमुक्तम् । यदि ब्रह्मदत्तशब्दः व्यक्तिवाची तदा अनित्यः सम्बन्धः स्यात् अतो ब्रह्मदत्ताकृतिवाचित्वं तस्येत्यर्थः ।

कण्डिकयोरर्थसंग्रहः

बाह्योऽस्य धर्मः सौस्वर्यं सौवर्ण्यं त्वान्तरं धनम् । तदन्तरतमोऽनस्य प्रतिष्ठागुण उच्यते ॥४०॥
जिह्वामूलीयकादीनि ह्यष्टौ स्थानानि वागिह । गानप्रतिष्ठाहेतुत्वाद्धीति हेतुवचस्तथा ॥४१॥
अन्नप्रतिष्ठमागानमेक आर्हुविपश्चितः । अनिषेधाद्द्वयोरेका प्रतिष्ठेहावसीयताम् ॥४२॥
अन्नस्य परिणामेऽनः स्थितो गीतित्वमेति हि । अनप्रतिष्ठा देहोऽतः श्रुत्येह प्रतिपाद्यते ॥४३॥
उपासनं विकल्पेन वागन्नाख्यप्रतिष्ठयोः । वाक्प्रतिष्ठमुपासीत यदि वाऽन्नप्रतिष्ठितम् ॥४४॥

अथातः पवमानानामेवाभ्यारोहः स वै खलु प्रस्तोता साम प्रस्तौति स यत्र प्रस्तुयात्तदेतानि जपेत् । असतो मा सद्गमय, तमसो मा ज्योतिर्गमय, मृत्योर्माऽमृतं गमयेति । स यदाहासतो मा सद्गमयेति । मृत्युर्वा असत्सदमृतं मृत्योर्माऽमृतं गमयामृतं मा कुर्वित्येवैतदाह । तमसो मा ज्योतिर्गमयेति । मृत्युर्वै तमो ज्योतिरमृतं मृत्योर्माऽमृतं गमयामृतं मा कुर्वित्येवैतदाह । मृत्योर्मामृतं गमयेति । नात्र तिरोहितमिवास्ति । अथ यानीतराणि स्तोत्राणि तेष्वात्मनेऽन्नाद्यमागायेत्तस्मादु तेषु वरं वृणीत । यं कामं कामयेत तँ स एष एवंविदुद्गातात्मने वा यजमानाय वा यं कामं कामयते तमागायति । तद्धैतल्लोकजिदेव न हैवालोक्यताया आशास्ति य एवमेतत्साम वेद ॥२८॥

अभ्यारोहजपस्य मन्त्रार्थस्य च निरूपणम्

यदर्थमतियत्नेन महिमाऽनस्य कीर्तितः । अभ्यारोहजपः सोऽथ प्राप्तावसर उच्यते ॥४५॥
यथोक्तज्ञानवत्तायामिदं कर्म विधित्स्यते । कार्त्स्न्येन तस्य चोक्तत्वादतस्तदभिधीयते ॥४६॥

किं तद्बाह्यं धनं तदाह—बाह्योऽस्येति । किं तर्हि तदान्तरं तदाह—सौवर्ण्यमिति । कण्ठनिष्ठं माधुर्यं बाह्यं धनं लाक्षणिकं वर्णज्ञानपूर्वकं तदुच्चारणमान्तरं सौस्वर्यस्य ध्वनिगतत्वाद्बाह्यत्वं सौवर्ण्यस्य वर्णस्थत्वाद् आन्तरत्वमिति भेदः । प्रतिष्ठागुणस्य ताभ्यां विशेषमाह—तदन्तरतम इति । ताभ्यामन्तरङ्गं प्राणस्य प्रतिष्ठागुणः स चोच्यतेऽनस्येत्यादिनेत्यर्थः ॥३४०॥

तस्य वै वागेवेत्यत्र वागित्यस्यार्थमाह—जिह्वेति । तेषां वर्णस्थानत्वप्रसिद्धद्यर्थो हिशब्दः । आदिपदादुरःशिरःकण्ठदन्तोष्ठनासिकाताल़ूनि गृह्यन्ते । इहेति प्रकृतवाक्योक्तिः । तेषामादाने हेतुमाह—गानेति । उक्तहेतुसमर्थनार्थं वाचि हीत्यादिवाक्यमित्याह—हीतीति । वाक्यप्रोक्तस्थानानां प्राणप्रतिष्ठाहेतुत्वानुसारेण गीतिभावमापाद्यमानस्य तस्योक्तस्थानप्रतिष्ठत्वप्रसिद्धिरूपहेतूक्तिर्वाचीत्यादिवाक्यमतोऽस्य वाक्प्रतिष्ठेत्यर्थः ॥३४१॥

अन्न इत्याद्येकीयमतोक्तेरर्थमाह—अन्नेति । का तर्हि प्रतिष्ठाऽस्य युक्ता न हि प्रतिष्ठाद्वयमेकस्येति तत्राऽऽह—अनिषेधादिति । इहेति प्राणोक्तिः ॥३४२॥

ननु व्रीह्याद्यन्नं प्राणस्य न प्रतिष्ठा नहि तत्प्रतिष्ठः स दृश्यते तत्राऽऽह—अन्नस्येति । अन्नमशितमित्यादिश्रौतक्रमेणान्नविकारो देहस्तत्र स्थितः प्राणो गीतित्वं यतो गच्छत्यतः स प्राणप्रतिष्ठोच्यते पक्षान्तरोक्तिश्रुत्येत्यर्थः ॥३४३ ।

प्रतिष्ठोक्तिफलमाह—उपासनमिति । विकल्पमेव विशदयति—वागिति ॥३४४॥

अथातः पवमानानामित्यादिवाक्यस्य प्रसङ्गं करोति—यदर्थमिति । यस्य प्राणोपासनस्य शेषिणः शेषत्वेन जपविध्यर्थमनेकगुणतत्फलोक्तिद्वारा प्राणस्य ध्यानाख्यो महिमोक्तः सोऽभ्यारोहनामा तच्छेषो जपोऽनन्तरग्रन्थेन उच्यत इत्यर्थः । तत्राथशब्दमादाय व्याकरोति—अथेति ॥३४५॥

अतःशब्दार्थमाह—यथोक्तेति ॥३४६॥

एवं विद्वत्प्रयोज्यत्वादत एव न सूत्रितम् । नित्यकर्मैव सूत्रेषु तेन विद्वत्प्रयोज्यता ॥४७॥
उद्गीथलिङ्गसंयोगाद्गानमात्रेऽस्य शक्तितः । नियमोऽस्यैवकारेण पवमानेषु कथ्यते ॥४८॥
ततोऽपि कालसंकोचं स वा इत्यादिनाऽवदत् । प्रस्तोता प्रस्तुयाद्यत्र तदैतानि जपेदिति ॥४९॥
एतानीति च निर्देशाद्यजूंषीत्यवगम्यते । श्रुतावेव च दृष्टत्वात्स्वरः शातपथो जपे ॥५०॥
जपकर्माभिधा चेयमभ्यारोह इतीष्यते । यौगिकी चाभिधा ज्ञेया क्रियायोगस्य संभवात् ॥५१॥
हित्वाऽध्यात्मपरिच्छेदं दैवं बीजमतः परम् । अभ्यारोहत्यनेनातो ह्यभ्यारोहो जपः स्मृतः ॥५२॥
तिरोहितार्थरूपत्वान्मन्त्राणां न नृधीगतिः । मन्त्रार्थं स्वयमेवातो व्याचष्टे श्रुतिरञ्जसा ॥५३॥
पूर्वं पदार्थान्व्याख्याय पश्चाद्वाक्यार्थमब्रवीत् । फलं पश्चाद्यथोक्तस्येत्येष व्याख्याक्रमः श्रुतेः ॥५४॥
यत्स्यात्स्वाभाविकं ज्ञानं यच्च कर्म स्वभावजम् । तदधःपातहेतुत्वान्मन्त्रेऽसदिति भण्यते ॥५५॥

ननु मन्त्रजपस्य न कर्मत्वं तत्सूत्रयद्भिर्बौधायनादिभिरस्यासूत्रितत्वात्तत्राऽऽह—एवमिति । पूर्वोक्तप्रकारेण प्राणविज्ञानवता जपकर्मणोऽनुष्ठेयत्वमेवातःशब्देन परामृश्यते । जपकर्मणोऽपि नित्यत्वमाशङ्क्याऽऽह—तेनेति । येन विद्वत्प्रयोज्यता तेन तस्यानित्यतेति यावत् ॥३४७॥

पवमानानामेवेत्यस्यार्थमाह—उद्गीथेति । उद्गीथेनात्ययाम त्वं न उद्गायेति च प्रकरणादुद्गीथेन जपकर्मणः संबन्धलिङ्गादस्य गानमात्रकाले प्रसक्तेः पवमानकाले नियमोऽवध्रियत इत्यर्थः ॥३४८॥

स वै खल्वित्यादिवाक्यतात्पर्यमाह—ततोऽपीति । कालसंकोचमेव स्फोरयति—प्रस्तोतेति ॥३४९॥

यजुर्मन्त्राणामनियतपादाक्षरत्वादसतो मा सद्गमयेत्यारभ्यैको वा द्वौ वा मन्त्रावित्याशङ्क्याऽऽह—एतानीति चेति । एतेषां याजुषमन्त्रत्वे मान्त्रेण स्वरेण भाषिकग्रन्थोक्तेन[1] भाव्यमित्याशङ्क्याऽऽह—श्रुताविति । शातपथोत्पन्नत्वात्तदीयो लक्षणग्रन्थोक्तस्वरो मन्त्राणां प्रयोक्तव्यो न मान्त्रो विवक्षितत्वादुच्चैः साम्नेत्यादौ स्वरविवक्षायां तृतीयादर्शनादिह त्वेतानीति द्वितीयानिर्देशान्न मान्त्रस्वरो विवक्षितः । न च "गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः" [ जै० सू० ३।३।९ ] इति न्यायेन शातपथानामपि मन्त्राणां तदीयस्वराभावो, विनियोगस्यापि तत्रैव दृष्टत्वेन वैषम्याद्गुणमुख्यव्यतिक्रमाधिकरणे त्वन्यत्रोत्पत्तिरन्यत्र विनियोग इत्युत्पत्तिर्विनियोगेन बाध्यते विनियोगस्यानुष्ठापकत्वेन प्रधानत्वादुत्पत्तेस्तच्छेषत्वात् । यथाऽऽहुः—

गुणं स्वरूपतो धर्मः प्रधान द्वारतोऽपरः । यत्र स्यात् तत्र विज्ञेयं गुणधर्मस्य बाधनम् ॥ इति

उक्तं च—"प्रधानविधिनिबन्धनो गुणो गुणविधिनिबन्धनं गुणं बाधते" इति । तस्माद्ब्राह्मणोत्पन्ना मन्त्रास्तत्रैव विनियुज्यमानास्तदीयस्वरभाजो न मान्त्रस्वर इति भावः ॥३५०॥

अभ्यारोहमुपक्रम्य जपकर्म विधीयमानं प्रक्रमाननुगुणमित्याशङ्क्याऽऽह—जपेति । अभ्यारोहशब्दस्य न तत्र रूढिर्वृद्धप्रयोगाभावादित्याशङ्क्याऽऽह—यौगिकी चेति ॥३५१॥

क्रियायां जपकर्मणि योगस्य संभवमेव साधयति—हित्वेति । दैवरूपाप्तौ हेतुमाह—बीजमिति । अतोऽध्यात्मपरिच्छेदादिति यावत् । अतःशब्दो योगसम्भवपरामर्शी । प्रक्रमानुगुण्यं जपकर्मणो द्योतयितुं हिशब्दः । ततो न साङ्केतिकीयमभिधेति शेषः ॥३५२॥

स यदाहेत्यादिब्राह्मणतात्पर्यमाह—तिरोहितेति ॥३५४॥

ब्राह्मणे दृष्टां पुनरुक्तिं प्रत्याह—पूर्वमिति । फलं तात्पर्यं यथाश्रुतं वा । इममेव हि श्रौतं क्रममनतिक्रामन्तो व्याचक्षते ॥३५४॥

"असतो मा सद्गमये"त्यादिमन्त्रस्थासच्छब्दार्थमाह—यत्स्यादिति ॥३५५॥

---

१. भाषिकग्रन्थः वाजसनेयकशाखायां स्वरविधायको ग्रन्थः ।

सद्देवभावहेतुत्वाच्छास्त्रीये ज्ञानकर्मणी । सत्पदेनाभिधीयेते मन्त्रेऽस्मिन्प्राग्यथोदिते ॥५६॥
असन्मृत्युस्तयोर्ज्ञेयः पूर्वयोर्मृत्युहेतुतः । अमृतं मृत्युघातित्वाच्छास्त्रीये ज्ञानकर्मणी ॥५७॥
आसुरज्ञानकर्मभ्यां मां व्युत्थाप्याथ तज्जितेः । गमयाऽऽशु ततो दैवे शास्त्रीये ज्ञानकर्मणी ॥५८॥
मन्त्रार्थे यत्नमाहाथ ह्यमृतं मामिति श्रुतिः । द्वितीयमन्त्रानूक्तिः स्यात्तमसो मेत्युदीरणम् ॥५९॥
आपेक्षिकत्वान्मृत्युः[1] स्याच्छास्त्रीये ज्ञानकर्मणी । स्वार्थं फलमपेक्ष्यैते परार्थत्वात्तमो मते ॥६०॥
साधनात्तमसो मां त्वं ज्योतिः साध्यं नयामृतम् । फलाप्त्यैव तमोध्वंसादमृतं मेत्यतोऽवदत् ॥६१॥
पूर्वयोर्मन्त्रयोर्योऽर्थो विस्तरेणोदितः पुनः । मन्त्रेण स तृतीयेन संक्षेपेणाभिधीयते ॥६२॥
प्रसङ्गमुत्तरे मन्त्रे पूर्वयोरिव वीक्ष्य हि । तिरोहितार्थतामाह नात्रेत्यादिवचः श्रुतिः ॥६३॥
यथाप्रार्थितमागाय याजमानं फलं परम् । त्रिष्वेव पवमानेषु यथा वागादिभिः पुरा ॥६४॥

पवमानेभ्यः इतरस्तोत्रेषु ऋत्विजां प्रार्थितफलाय गानम्

अथ यानीतराणीति ह्युद्गाताऽऽगाद्यमात्मने । आगायेद्वचनात्कर्तुः कामयोगोऽपि गम्यते ॥६५॥

तस्मिन्नेव मन्त्रे सच्छब्दार्थमाह—सदिति । कर्मकाण्डोक्तमग्निहोत्रादि कर्म ज्ञानमुषा वा इत्यादिनोक्तं ते शास्त्रदृष्टे सतो देवत्वस्य हेतुत्वादत्र सच्छब्दिते इत्यर्थः ॥३५६॥

मृत्युर्वा असदित्यस्यार्थमाह—असदिति । तयोः शास्त्रीयाशास्त्रीययोर्मध्ये ये तावदशास्त्रीये ज्ञानकर्मणी तयोः पूर्वोक्तयोर्मृत्युहेतुत्वादसच्छब्दिताशास्त्रीयकर्मादि मृत्युरित्यर्थः । सदमृतमित्यस्यार्थमाह—अमृतमिति । ताभ्यां हि मर्त्यत्वं हित्वा देवत्वद्वारा पुमान्मुच्यतेऽतो युक्ता तयोरमृततेत्यर्थः ॥३५७॥

मृत्योर्माऽमृतं गमयेतिवाक्यार्थोक्तेरर्थमाह—आसुरेति । अथेत्यवधारणे । देवत्वप्रतिबन्धकस्वाभाविककर्मादिध्वस्तेरेवेत्यर्थः । ततःशब्दः पञ्चम्या संबध्यते ॥३५८॥

अमृतं मेत्यादितात्पर्योक्तेस्तात्पर्यमाह—मन्त्रार्थ इति । अथशब्दः पदार्थाद्युक्त्यानन्तर्यार्थः । दर्शितनीत्या प्रथममन्त्रार्थः प्रसिद्ध इति प्रकटयितुं हिशब्दः । उक्तमन्त्रस्य पुनरुक्तिरनर्थिकेत्याशङ्क्याऽऽह—द्वितीयेति । अनुवादस्य व्याख्यानार्थत्वान्न वैयर्थ्यमिति भावः ॥३५९॥

मृत्युर्वै तम इत्यत्र मृत्युशब्दार्थमाह—आपेक्षिकत्वादिति । सातिशयविनाशिफलत्वादिति यावत् । तयोस्तमस्त्वमाह—स्वार्थमिति । स्वस्य शास्त्रीयकर्मादेः शेषिफलमपेक्ष्य शेषत्वात्स्वतन्त्रप्रकाशत्वाभावात्तमस्त्वमित्यर्थः ॥३६०॥

मृत्योर्माऽमृतं गमयेतिवाक्यार्थव्याख्यां विभजते—साधनादिति । अमृतं मेत्यादितात्पर्योक्तेरर्थमाह—फलेति । देवताभावेन तद्धेतुज्ञानादिध्वंसात्फलरूपमेव मां स्थापयेति तात्पर्यमाहेत्यर्थः । अतःशब्दस्य तमोध्वंसादित्यनेन सम्बन्धः ॥३६१॥

तृतीयमन्त्रस्य पूर्वाभ्यां पुनरुक्तिं परिहरति—पूर्वयोरिति । अत एव हि संग्रहविवरणरूपं ग्रन्थमारचयन्ति शास्त्रकृतः ॥३६२॥

नात्रेत्यादिवाक्याभिप्रायमाह—प्रसङ्गमिति । पूर्वयोर्मन्त्रयोस्तिरोहितार्थतां दृष्ट्वा यथा व्याख्या कृता तथाऽत्रापि तत्प्रसङ्गमाशङ्क्य श्रुतिर्नात्रेति वाक्यमाहेत्यर्थः । मन्त्रविवरणप्रकरणस्पष्टार्थत्वं बाधकमिति वक्तुं हीत्युक्तम् । अत एव व्याख्यातारः स्पष्टार्थतां कस्यचिद्व्याख्येयस्य वदन्ति ॥३६३॥

अथेत्याद्यवतारयन्वृत्तं कीर्तयति—अथेति । यथा पुरा वागादिभिर्यजमानप्रार्थितमनतिक्रम्य तदर्थं त्रिषु स्तोत्रेष्वागानं कृत्वाऽवशिष्टेषु स्वार्थमागीतं तथोद्गात्राऽपीत्यर्थः ॥३६४॥

अथ यानीत्यादि व्याचष्टे—अथेति । पवमानेषु यजमानफलागानादनन्तरं यानीतराणि स्तोत्राणि तेष्वा-

---

१. "तमसो मा ज्योतिर्गमये"त्यस्य अज्ञानतमसो मां ज्ञानात्मकं ज्योतिः प्रापयेत्यर्थो भाष्ये । अत्र तु शास्त्रीये-ज्ञानकर्मणी तमः इमे स्वार्थं ब्रह्मभावमपेक्ष्य तम उच्येते ब्रह्मभावशेषत्वात् ।

कस्मादात्मन आगायेदिति हेतुरिहोच्यते । यस्मात्स एष एवंविदुद्गाताऽतोऽन एव सः ॥६६॥
अतोऽलमात्मने कामानागातुं स्वामिने तथा । यस्मादीश्वर उद्गाता कामावाप्तावतः शुभम् ॥६७॥
तस्मात्तेषु वरं कामं यजमानो यथारुचि । नवसूद्गीयमानेषु तं वृणीताविचारयन् ॥६८॥
प्रयोगानुगमे चैतद्दर्शनं येन चोद्यते ॥६९॥
तस्मात्स्याद्देवताप्राप्तिर्ज्ञानकर्मसमुच्चयात् । तस्मान्न काचिदाशङ्का कर्मिणं प्रति विद्यते ॥७०॥

कर्मरहितस्य उपासनामात्रादपि प्राणभावप्राप्तिः

कर्महीनेऽपि विदुषि स्यान्न वेत्यतिशङ्क्यते । तदाशङ्कापनुत्त्यर्थं तद्धैतदिति हि श्रुतिः ॥७१॥
इहैव देवभूतत्वादाशङ्का किंनिबन्धना ।
जपकर्मानबोधाभ्यां लोकप्राप्तौ हि शङ्क्यते । ज्ञानादेव भवेन्नेति तद्धैतदिति हि श्रुतिः ॥७२॥
जीवतो देवभूतस्य भावनोपचयात्कुतः । देवावाप्तौ भवेच्छङ्का मनुष्यस्य तदाप्तिवत् ॥७३॥
कर्मिणोऽपि हि देवाप्तिर्ज्ञानादेव न कर्मणः । समुच्चयात्तु तत्प्राप्तावागमादेव निश्चितिः ॥७४॥

त्मनेऽन्नाद्यमागायेदिति वाक्यात्कर्तुरपि यजमानवत्फलयोगो गम्यतेऽतो याजमानं पवमानेषूद्गानमार्त्विज्यमन्यत्रेत्यर्थः । आगानस्य द्वैविध्यप्रसिद्ध्यर्थो हिशब्दः ॥३६५॥

प्रगीतमन्त्रसाध्यगुणबुद्धिःस्तोत्रम् । "अर्थाच्चे"ति न्यायेन पाठक्रममनादृत्य कर्तुः कामसंयोगे वचनानुग्राहकं न्यायं दर्शयितुं "स एष" इत्यादिवाक्यसाकाङ्क्षाद्वारोत्थापयति—कस्मादिति । परकर्मस्थस्य स्वार्थमागानमयुक्तमिति शङ्कार्थः । उद्गातुरात्मार्थमागानं सम्भवतीत्यत्र हेतुपरमुत्तरं वाक्यमित्याह—हेतुरिति । तद्व्याचष्टे—यस्मादिति ॥३६६॥

विद्यासामर्थ्यादेवंविदः प्राणत्वेऽपि कथं स्वार्थमागानमित्याशङ्क्याऽऽत्मने वेत्यादेरर्थमाह—अत इति । प्राणात्मत्वादिति यावत् । "तस्मादु तेष्वि"त्यादेरर्थमाह—यस्मादिति । तेषु नवस्विति सम्बन्धः । अतोऽस्मादुद्गातुरित्यर्थः । शुभमित्यनिन्दितत्वेन वरस्य परलोकपथ्यता कथ्यते । उद्गातुः स्वपरार्थफलागाने शक्तेरुक्तत्वात्ततो वरप्रार्थनायां न विचारावसरोऽस्तीत्याह—अविचारयन्निति । ॥३६७–३६८॥

एवं तावदित्याद्यनुवादभाष्यतात्पर्यमाह—प्रयोगेति । ज्योतिष्टोमानुष्ठानानुसारिप्रकरणस्थमुद्गीथमादाय प्राणदर्शनविधानात्तस्य जपकर्मणश्च समुच्चयात्तादात्म्यापत्तिरुक्तेत्यर्थः । कर्मणो ज्ञानसहकारिणः सत्त्वे फलितमाह—तस्मादिति । आशङ्का देवताप्राप्ताविति शेषः ॥३६९–३७०॥

समुच्चयात्फलाप्तेरसंदेहवज्ज्ञानादपि तदाप्तौ सन्देहो नास्तीत्याशङ्क्याऽऽह—कर्मेति । विद्याबलमतिक्रम्य शङ्का क्रियत इति यावत् । दृष्टं हि बीजादेः सहकारिहीनस्याकिंचित्करत्वमिति भावः । उत्तरत्वेनोत्तरं वाक्यमादत्ते—तदाशङ्केति । ॥३७१॥

विवक्षितमाशङ्कापनोदनप्रकारं हिशब्दद्योतितं प्रकटयति—इहैवेति । जीवदवस्था सप्तम्यर्थः । किंशब्दस्य प्रश्नार्थतां मन्वानः शङ्कते—जपेति । अभ्यारोहाख्यजपरूपं कर्म प्राणोपास्तिश्च ताभ्यां समुच्चिताभ्यां लोकाप्तावुक्तायां कर्महीनेऽपि विदुषि केवलज्ञानादेव लोकाप्तिः स्यान्न वेति शङ्क्यते समुच्चयस्य फलहेतुत्वात्केवलज्ञानवति पुंसि तदभावादित्यर्थः । शङ्काकारणं निरसितुं श्रुतिमुत्थापयति—तद्धेति ॥३७२॥

हिशब्दसूचितं परिहारं स्फोरयति—जीवत इति । मनुष्यस्य देवताप्तौ शङ्का युक्ता न तथा देवस्य तदाप्तौ नहि मनुष्यस्य मनुष्याप्तिः शङ्क्यते तथा देवस्यापि तदाप्तिर्न शङ्कार्हाऽऽप्तत्वादित्यर्थः ॥३७३॥

शङ्काभागमेव विभजते—कर्मिणोऽपीति । कर्मवतोऽपि विदुषो न कर्ममात्राज्ज्ञानमात्राद्वा देवाप्तिः किंतु समुच्चयात्तथा च केवलज्ञानवति शङ्का दुर्वारेत्यर्थः । श्रुतिमेवाऽऽश्रित्य विधान्तरेण परिहरति—तत्प्राप्ताविति । नहि समुच्चयाद्देवत्वे निश्चायकमागमातिरिक्तमस्ति तथा तत्प्रामाण्यात्केवलादपि तत्प्राप्तिरेष्टव्येत्यर्थः ॥३७४॥

तद्वैतत्प्राणविज्ञानं यथाव्याख्यातरूपकम् । भवेल्लोकजिदेवेह कर्मशून्यमपि ध्रुवम् ।।७५।।
न हैवालोक्यतायै नुरस्याऽऽशाऽपीह विद्यते । इहैव लोकभूतत्वादप्राप्तेऽर्थे हि शङ्क्यते ।।७६।।
इहैवाऽऽसुरभावस्य प्राणोऽस्मीत्यभिमानतः । प्रध्वस्तत्वात्कुतः शङ्का तन्मूलासंभवाद्भवेत् ।।७७।।

ज्ञानकर्मसमुच्चयफलं कस्येति विचारः

इदमत्र विचिन्त्यं स्याज्ज्ञानकर्मसमुच्चयात् । देवभावः किमुद्गातुर्यजमानस्य वाऽथ किम् ।।७८।।
न समुच्चय उद्गातुः कर्माभावादिहेष्यते । परकर्मप्रवेशात्स्यादुद्गाता न स्वकर्मणि ।।७९।।
क्रियायोगाच्च तन्नाम्नो ज्ञानाभ्यासोऽपि दुर्लभः । साक्षात्कृतिश्च संतत्या संततिश्च न विद्यते ।।८०।।
न च धीजन्ममात्रेण परमात्मप्रबोधवत् । संभाव्यो देवभावोऽस्य देवो भूत्वेति च श्रुतेः ।।८१।।
उद्गातुर्विदुषो नापि परकीयेन कर्मणा । समुच्चयप्रसिद्धिः स्यात्तयोर्भिन्नाश्रयत्वतः ।।८२।।

उक्तेऽर्थे श्रुत्यक्षराणि योजयति—तद्वैतदिति । तदेतच्छब्दार्थौ विशेषणाभ्यामुच्येते । इहेति कर्मशून्येऽपि विदुषीति यावत् । एवकारार्थमाह—ध्रुवमिति ।।३७५।।

न हैवेत्यादेरर्थमाह—न हेति । विदुषः पुरुषस्य प्रामाणिकव्यवहारे फलराहित्याय मनोरथोऽपि नास्तीत्यर्थः । विद्वानपि सहकार्यभावादफलः स्यादित्याशङ्क्याऽऽह—इहैवेति । भावनावशाज्जीवदवस्थायामेव देवभावेऽपि शङ्का किं न स्यादित्याशङ्क्याऽऽह—अप्राप्त इति ।।३७६।।

नन्वपरिच्छिन्नदेवताभावो वर्तमाने देहे न प्राप्तुं पार्यते परिच्छेदाभिमानप्रतिबन्धात्तत्राऽऽह—इहेति । शङ्कामूलमासुरः परिच्छेदाभिमानस्तस्यासंभवादिति यावत् ।।३७७।।

कर्मसमुच्चितादुपासनात्केवलाच्च देवाप्तिरुक्ता तत्रोभयत्र फलित्वमेकस्यायुक्तमिति मत्वा फलिनं निश्चेतुं विचारयति—इदमिति । तत्राऽऽदौ समुच्चयफलिनि विचारं दर्शयति—ज्ञानेति । स्वसुवर्णादिज्ञानादुद्गातृगामिफलोपगमादयास्यादिगुणकप्राणज्ञानाद्याजमानफलाङ्गीकारा"दात्मने यजमानाय वे"त्यादिश्रुतेश्च समुच्चितात्प्राणध्यानात्कस्य फलमिति चिन्ताऽवतरतीत्यर्थः । विचारान्तरं सूचयति—अथेति । केवलोपास्तेरुद्गातुर्वा यजमानस्य वाऽन्यस्य वा कस्यचिद्देवभाव इत्येतदाह—किमिति ।।३७८।।

उद्गातुः समुच्चयाद्देवभावपक्षं दूषयति—नेत्यादिना । इहेत्युद्गीथप्रकरणस्य फलत्वस्य चोक्तिः । ननु कर्मणि प्रविष्टस्य कथं कर्माभाव उपास्तेश्चासौ कर्ता तद्युक्तमुद्गातुः समुच्चयात्फलमिति तत्र किं तस्योपास्तिस्तदीयेन कर्मणा समुच्चीयते याजमानेन वा ? नाऽऽद्य इत्याह—परेति ।।३७९।।

उद्गातुर्ज्ञानमुपेत्य कर्माभावमुक्त्वा ज्ञानमपि तस्य नास्तीत्याह—क्रियेति । उद्गानक्रियायोगादुद्गातृसंज्ञस्यर्त्विजः स्वकीयक्रियानुपपत्तेस्तत्काले कर्तव्यज्ञानाभ्यासासिद्धेस्तदधीनदेवतासाक्षात्कारो न स्यादित्यर्थः । ननु विनाऽपि ज्ञानाभ्यासेन यथाशास्त्रमुद्गानानुष्ठानाद्देवतासाक्षात्कारो भविष्यति नेत्याह—साक्षात्कृतिरिति । कर्मानुष्ठानाद्वस्तुसाक्षात्कारस्यादृष्टत्वादभ्यासाच्चाभ्यस्यमानसाक्षात्कारस्य क्वचिद्दृष्टत्वादित्यर्थः । अस्तु तर्हि ज्ञानसंतत्या देवतासाक्षात्कृतिर्मैवमुद्गातुः स्वीयकर्माभावात्तत्काले कर्तव्यज्ञानसंतत्यनुपपत्तेरुक्तत्वादित्याह—संततिश्चेति ।।३८०।।

ननु ज्ञानमात्रादेव ब्रह्मभाववद्देवभावोऽपि स्यात्किमभ्यासेनेत्याशङ्क्योक्तं स्मारयति—न चेति । ज्ञानमात्रादभ्यासं विना न देवभावो मानाभावादित्युक्त्वा मानविरोधाच्च तथेत्याह—देव इति ।।३८१।।

उद्गातुर्ज्ञानभावाभावयोः स्वीयकर्माभावान्न तेन समुच्चयस्तज्ज्ञानस्येत्युक्तम् । अथ द्वितीयमाशङ्क्याऽऽह—उद्गातुरिति । यद्यपि विद्वानुद्गाता तथाऽपि तस्य यजमानगामिना कर्मणा न स्वकीयविद्यायाः समुच्चयः सिध्यति कर्मणो याजमानत्वाद्विद्यायाश्चोद्गातृस्थत्वाद्भिन्नाधारयोस्तयोः समुच्चयस्य दुर्वचत्वादित्यर्थः ।।३८२।।

यजमानस्य कर्मास्ति ज्ञानं तूद्गातृसंश्रयम् । समुच्चयोऽतस्तस्यापि भिन्नाधिष्ठानतो न च ॥८३॥
मतं तद्याजमानं स्याज्ज्ञानं यत्प्रागुदीरितम् । स्वयमेव कृतार्थत्वात्काऽपेक्षाऽस्यर्त्विजं प्रति ॥८४॥
कर्मण्युद्गात्रपेक्षावज्ज्ञानेऽपीति मतं यदि । उद्गातुरपि तत्तुल्यं नोद्गातर्ते क्रियां यतः ॥८५॥
याजमानं यथा कर्म ह्याश्रित्य फलवद्भवेत् । अन्नाद्यागानमुद्गातुस्तज्ज्ञानं तद्वदाश्रितम् ॥८६॥
समुच्चयाच्चेदुभयोरुद्गातृयजमानयोः । देवभावः किमर्थेयं तद्धैतदिति हि श्रुतिः ॥८७॥
सर्वाश्रमाणां तर्हीदं सामान्येनाभिधीयते । तद्धैतदिति सिद्धत्वादुद्गातृयजमानयोः ॥८८॥
देवभावेन विज्ञानं संस्करोत्येव तद्धियम् । परार्थमपि सत्कस्मादनपेक्षं न सिद्धये ॥८९॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके तृतीयमुद्गीथब्राह्मणम् ॥३॥

समुच्चयादुद्गातुर्देवाप्तिरिति पक्षं निरस्य यजमानस्य ततस्तद्भावपक्षं निरस्यति—यजमानस्येति । यजमानस्यापि ज्ञानकर्मणोः समुच्चयो देवभावप्राप्तिहेतुरनुष्ठेयो नास्तीत्यत्रातःशब्दपरामृष्टं पूर्वार्धोपदिष्टं हेतुमेव स्पष्टयति—भिन्नेति ॥३८३॥

उभयोः समुच्चयाद्देवभावे पूर्ववादिना निरस्ते सिद्धान्ती यजमानस्य ततस्तद्भावं साधयति—मतमिति । यत्पूर्वं प्राणोपासनमुक्तं तद्याजमानमिष्टमुद्गातुर्यजमानेन क्रीतत्वात्कर्म च यजमानस्योभयसंमतमतः समुच्चयाद्देवत्वं तस्य युक्तमित्यर्थः । असमुच्चयवादी शङ्कते—स्वयमिति । कर्मवज्ज्ञानमपि याजमानं चेत्तर्हि तस्योभयत्र स्वयमेव शक्तेरुद्गातारं प्रति नापेक्षा स्याद्दृश्यते च तदपेक्षा तस्मादौद्गात्रमेवोपासनमिति न समुच्चयाद्देवत्वं यजमानस्येत्यर्थः ॥३८४॥

सिद्धान्ती समुच्चयं साधयति—कर्मणीति । यदि कर्मणि याजमाने निष्पत्त्यर्थमुद्गात्रपेक्षेति मतं तर्हि तद्वदेव ज्ञानेऽपि याजमाने जन्मार्थमितरापेक्षा तथा च समुच्चयाद्यजमानस्य देवत्वमित्यर्थः । संप्रत्युद्गातुरपि समुच्चयाद्देवत्वं साधयति—उद्गातुरिति । यथोद्गातारं विना ज्योतिष्टोमादिक्रिया न सिध्यति तथा तां विना नोद्गाताऽपि सिध्येत्क्रियारूढस्य तद्भावादतो यजमानवदुद्गातुरपि कर्म कल्प्यं ज्ञानं तु तुल्यं क्रीतत्वेऽप्युद्गातुस्तदाश्रयत्वात्तस्मात्तस्यापि समुच्चयाद्देवत्वं युक्तमित्यर्थः ॥३८५॥

यत्तु भिन्नाधिष्ठानत्वान्न समुच्चयो ज्ञानकर्मणोरिति तत्राऽऽह—याजमानमिति । यथा यजमानस्वामिकं कर्माऽऽश्रित्य तेन समुच्चितं सदुद्गातुरन्नाद्यागानं फलं साधयति तथा तदीयज्ञानमाश्रित्य तेन समुच्चितमितरत्कर्म फलं साधयति यजमानकर्माश्रितं तेन समुच्चितमितरज्ज्ञानमपि स्वफलं साधयेदतो भिन्नाधिकरणयोरपि ज्ञानकर्मणोः समुच्चयादुभयोर्देवभावः संभवतीत्यर्थः । उद्गातृयजमानसंबन्धवत्तदीयज्ञानकर्मणोरपि संबन्धोपपत्त्यर्थो हिशब्दः ॥३८६॥

द्वयोः समुच्चयाद्देवाप्तिं सिद्धान्तिना समर्थितां पूर्ववाद्यनुवदति—समुच्चयादिति । केवलज्ञानाद्देवाप्तिरुद्गातृयजमानयोर्वाऽन्यस्य वा ? नाऽऽद्यस्तयोः समुच्चयाधिकारित्वान्नेतरस्तस्याप्रस्तुतत्वादिति मत्वाऽऽह—किमर्थेति ॥३८७॥

कर्मशून्यानां सर्वेषां त्रैवर्णिकानां केवलज्ञानाद्देवाप्तिरित्युत्तरमाह—सर्वेति । प्रकृतवाक्यप्रामाण्यात्केवलज्ञानात्फलमिष्टं चेत्तर्हि तेन सर्वाधिकृतानां कर्मिणामविशेषेणेदं ज्ञानं फलवदुच्यत इत्यर्थः । प्रकृतयोरेव द्वयोरिदं ज्ञानं किं न स्यादित्याशङ्क्याऽऽह—सिद्धत्वादिति । तयोः समुच्चयाधिकारित्वस्य स्थितत्वान्न केवलज्ञानेऽधिकारितेत्यर्थः ॥३८८॥

केवलज्ञानस्य देवत्वाप्तिहेतुत्वमयुक्तं समुच्चितस्यैव तद्दृष्टेरित्याशङ्क्य कैमुतिकं न्यायमाह—देवेति । उद्गीथज्ञानमुद्गातृकर्तृकं यजमानस्वामिकमपि कर्तारं देवभावेन योजयति किमुतानपेक्षं कर्तृस्वामिकमेव सदुपासनं कर्तुर्देवभावमापादयतीत्यतो ज्ञानं केवलमपि कस्मान्न तद्भावलाभाय भवेदित्युपपन्नं केवलस्यापि ज्ञानस्य देवाप्तिफलत्वमित्यर्थः ॥३८९॥

इति बृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां तृतीयमुद्गीथब्राह्मणम् ॥३॥

## अथ प्रथमाध्याये चतुर्थं ब्राह्मणम्

मू.—आत्मैवेदमग्र आसीत्पुरुषविधः। सोऽनुवीक्ष्य नान्यदात्मनोऽपश्य-त्सोऽहमस्मीत्यग्रे व्याहरत्ततोऽहंनामाभवत्तस्मादप्येतर्ह्यामन्त्रितोऽहमयमित्येवाग्र उक्त्वाथान्यन्नाम प्रब्रूते यदस्य भवति। स यत्पूर्वोऽस्मात्सर्वस्मात्सर्वान्पाप्मन औषत्तस्मात्पुरुष ओषति ह वै स तं योऽस्मात्पूर्वो बुभूषति य एवं वेद ।।१।।

ज्ञानकर्मफलं चैतत्कर्मकाण्डप्रचोदितम्। आत्मैवेत्यादिशास्त्रेण सृष्ट्यादौ कर्तृतोच्यते ।। १ ।।
जगदुत्पत्तिसंहारस्थित्यादौ जगदात्मनः। क्रियाधीफलभूतस्य स्वातन्त्र्यमुपवर्ण्यते ।। २ ।।
स्तुत्याऽनया च वेदोक्तक्रियाज्ञानस्तुतिर्भवेत्। कृता विवक्षितं त्वत्र सर्वमप्येतदीरितम् ।। ३ ।।
वैदिकं साधनं ज्ञेयं ज्ञानकर्मात्मकं पुरा। महानर्थफलायैव न मोक्षायेति निश्चितिः ।। ४ ।।
वैदिकं साधनं सर्वमविद्योत्थत्वकारणात्।
तीव्रानर्थफलायेति ब्रह्मविद्याधिकारतः। विवक्षितोऽर्थो यत्नेन तद्वैराग्यविधित्सया ।। ५ ।।
यतोऽविरक्तः संसारान्नाऽऽत्मज्ञानाय कल्पते। तदेतदात्मतत्त्वं हि पदनीयमितीरणात् ।। ६ ।।
पुत्रादिभ्यस्तथा प्रेयानिति वक्ष्यति सादरम् ।। ७ ।।

पूर्वोत्तरयोर्ब्राह्मणयोः सम्बन्धं वक्तुं वृत्तमनुवदति—ज्ञानेति। ज्ञानस्य समुच्चितस्य केवलस्य च फलमेतत्सूत्राग्निरूपं ज्ञानकर्मविषये पूर्वस्मिन्ब्राह्मणे प्रकाशितमित्यर्थः। इदानी"मात्मैवेदमि"त्यादेरापाततस्तात्पर्यमाह—आत्मेति। समुच्चयादिफलभूतस्य प्रजापतेर्जगत्सृष्ट्यादौ स्वातन्त्र्य"मात्मैवे"त्यादिना "तद्धेदमि"त्यतः-प्राक्तनग्रन्थेनोच्यत इत्यर्थः ।।१।।

स्वातन्त्र्योपवर्णनफलं वक्तुमुत्तरार्धार्थमनुद्रवति—जगदिति। आदिपदेन नियमनादिग्रहः। उपवर्ण्यते प्रकृतेन शास्त्रेणेति शेषः ।।२।।

प्रजापतेः स्वातन्त्र्योक्तिफलमाह—स्तुत्येति। फलातिशयो हेत्वतिशयापेक्षोऽन्यथाऽऽकस्मिकत्वापातादतो ज्ञानकर्मफलभूतसूत्रविभूतिरुच्यमाना हेत्वोस्तयोर्महत्त्वं द्योतयतीत्यर्थः। आपातिकं तात्पर्यमुक्त्वा परमतात्पर्यमाह—विवक्षितं त्विति। यत्पूर्वसंदर्भे कर्मकाण्डे वा ज्ञानं कर्म चेति साधनं वेदप्रमाणकमुक्तं तत्सर्वमपि गर्भवासादिसंसारार्थमेव न मोक्षार्थमिति निश्चितिरिति यत्तदत्राऽऽत्मैवेत्यादौ विवक्षितं ज्ञेयमिति योजना। संसारादधिकानर्थाभावविवक्षया महत्त्वविशेषणम् ।।३–४।।

ननु ज्ञानकर्मणोर्न संसारफलत्वं नहि वैदिकं ध्यानं कर्म वाऽनर्थफलं ब्रह्मज्ञानेऽपि तत्प्रसङ्गादित्याशङ्क्य आह—वैदिकमिति। वेदोक्तमपि सर्वं ज्ञानकर्मात्मकं साधनं कर्ताऽहमित्यादिमिथ्याज्ञानजत्वात्तत्फलभोगस्य च देहाद्यपेक्षत्वादनर्थार्थमिति तात्पर्येणात्रेष्टोऽर्थस्तस्य ब्रह्मविद्याप्रकरणत्वात्प्राधान्येनोपास्त्यादेरत्राविवक्षितत्वाद्ब्रह्मविद्यायास्त्वविद्योत्थत्वेऽपि परमपुरुषार्थहेतुत्वं श्रुत्यादिसिद्धमितरस्य तदाभासहेतुतेत्यर्थः। संसारस्य सर्वानर्थापेक्षया दुश्चिकित्सत्वविवक्षया तीव्रत्वविशेषणम्। वैदिकोपास्त्यादेरनर्थफलत्वोक्तिः परमपुरुषार्थहेतुब्रह्मविद्याप्रकरणे विफलेत्याशङ्क्याऽऽह—तद्वैराग्येति। "तस्माज्जुगुप्सेते"तिश्रुतेरनर्थरूपात्कर्मादिफलात्ससाधनाद्विद्याधिकृतस्य वैराग्यविधानेच्छया विद्याप्रकरणे तदनर्थफलत्वोक्तिरित्यर्थः ।।५।।

विद्याप्रकरणे विद्यैव निगद्यतां किं वैराग्योक्त्येत्याशङ्क्याऽऽह—यत इति। अविरक्त इति च्छेदः। अतो वैराग्यमधिकारिविशेषणं वाच्यमिति शेषः। कर्मज्ञानफलाद्वैराग्ये ब्रह्मज्ञानफलादपि स्यादविशेषादित्याशङ्क्य-आह—तदेतदिति। आत्मनोऽन्यत्रापुरुषार्थे पदनीयत्वयोग्यत्वाभावो हिशब्दार्थः। आगमविरोधादनुमानानुदयान्न ब्रह्मधीफले वैराग्यमित्यर्थः ।।६।।

आत्मतत्त्वस्यापुरुषार्थस्य कथं पदनीयत्वमत आह—पुत्रादिभ्य इति। तथेत्यात्मतत्त्वस्य पदनीयत्वा-

वेदोक्तं निखिलं पुंसः सत्त्वशुद्धिफलं स्मृतम् । कर्म ध्यानादिकं यत्नाच्छ्रेयोऽर्थिभिरनुष्ठितम् ॥ ८ ॥
सम्यक्संशुद्धधिषणः संसारं वेत्ति तत्त्वतः । दृष्टसंसारतत्त्वश्च वैराग्यं संसृतेर्व्रजेत् ॥ ९ ॥
आविरिञ्चाद्विरक्तो हि संसारान्निविवृत्सति । न चोक्तज्ञानकर्मभ्यः सा निवृत्तिः प्रसिध्यति ॥१०॥
वाङ्मनःकायकर्मभ्यस्तत्साध्यकटुकत्वतः । व्युत्थायानर्थं[१] निःसारसाधनान्यनुमार्गति ॥११॥
नित्यान्यपि च कर्माणि तत्संस्कारफलाश्रयात् । परित्यजति सर्वाणि कृत्स्नसंसारदोषदृक् ॥१२॥
संसारवह्निजं दुःखं संभावयति ना परम् । भूयो दुःखं किमन्यत्स्यान्नित्यानुष्ठानहानितः ॥१३॥
मुक्ते[२][मृत्यो]र्बिभ्यत इत्यादि तथाच श्रुतिशासनम् । तन्मूला च स्मृतिः साक्षाद्वेदानित्यादिका स्फुटा
अविज्ञातं परं तत्त्वं जनिमत्कारणं श्रुतौ । आन्त्यात्कार्यात्तदेव स्यात्सर्वकार्यविशेषणम् ॥१५॥

नुसारेणेति यावत् । तथाच तस्य परमानन्दतया परमपुरुषार्थत्वात्कुतो ब्रह्मधीफले वैराग्यमित्यर्थः । ज्ञानकर्मणोरपि ब्रह्मधीवन्नानर्थफलत्वमन्यथा कर्मकाण्डस्यानर्थनिष्ठत्वेनाप्रामाण्यापातादित्याशङ्क्य प्रनाड्या तस्य मोक्षार्थत्वात् नैवमित्याह—वेदेति । आदिशब्देन तद्वासना गृह्यते । यत्नः शास्त्रानुसारित्वम् । श्रेयोर्थिभिर्विना फलविशेषाभिलाषं श्रेयोमात्रमिच्छद्भिरिति यावत् । अनुष्ठितमीश्वरार्पणबुद्ध्येति शेषः । स्मृतं श्रुतं वेत्यर्थः । "येन केनचन यजेते"त्यादिभिः श्रूयते । "यस्यैते चत्वारिंशत्संस्कारा"इत्यादि च स्मर्यते । सत्त्वमन्तःकरणं यस्य शुद्धिस्तदीयरागादिविगमः ॥७-८॥

किमर्था मुमुक्षोर्बुद्धिशुद्धिस्तत्राऽऽह—सम्यगिति । पुनः समिति विशेषणं शुद्धेरतिदृढत्वसिद्ध्यर्थम् । शुद्धिर्विवेकहेतुस्तस्य च वैराग्यं फलमित्याह—दृष्टेति ॥९॥

तत्फलं शमादिद्वारा मुमुक्षुतेत्याह—आविरिञ्चादिति । आ चाविचेरिति शेषः । कर्मादिनैव संसारध्वस्तेर्विद्यावैयर्थ्यात्सर्वमेतदफलमित्याशङ्क्याऽऽह—न चेति । "नान्यः पन्थाः" "नास्त्यकृतः कृतेन" इत्यादिश्रुतेरित्यर्थः ॥१०॥

किं तर्हि मुक्तिसाधनमित्याशङ्क्य संन्यासपूर्वकश्रवणादिजन्यं सम्यग्ज्ञानमित्याह—वागिति । त्रिविधकर्मफलस्यानित्यत्वादिदोषवत्त्वेनासारत्वात्तेभ्यो व्युत्थायानर्थे संसारे निःसारे ध्वस्तिहेतुसम्यग्ज्ञानार्थं कर्माणि संन्यस्योक्तोऽधिकारी श्रवणादीनि पुनः पुनरावर्तयत्यतः सम्यग्ज्ञानान्मुक्तिरित्यर्थः ॥११॥

काम्यनिषिद्धवर्जनेऽपि कुतो मुमुक्षोर्नित्यादित्यागो हेत्वभावादित्याशङ्क्याऽऽह—नित्यान्यपीति । नित्याद्यनुष्ठानकृतसंस्काररूपफलावष्टम्भात्संसारदोषदर्शिनो नित्यादित्यागसिद्धिरित्यर्थः ॥१२॥

"अकुर्वन्विहितं कर्मे"त्यादिस्मृतेर्नित्यादित्यागे प्रत्यवायात्तत्त्यागायोग इत्याशङ्क्याऽऽह—संसारेति । शुद्धधीर्विरक्तोऽधिकारी नेत्युच्यते । स च नित्यादिकृतदेहादिग्रहप्रयुक्तं दुःखमात्यन्तिकं कुम्भीपाकसमं मन्यते । तथा च नित्याद्यकरणात्पुनरुक्ताद्दुःखादन्यदधिकं दुःखं न किंचिद्भवत्यतस्तत्करणाकरणयोर्दुःखस्य तुल्यत्वादखिलदुःखोत्खातिसम्यग्धीसिद्धये श्रवणादि चिकीर्षुरुक्तोऽधिकारी काम्यादिवन्नित्याद्यपि त्यजति । स्मृतिरविरक्तामुमुक्षुविषयेत्यर्थः ॥१३॥

विरक्तस्य कर्मत्यागे श्रुतिस्मृती प्रमाणयति—मुक्तेरिति । प्रामाण्यार्थं तन्मूलेत्युक्तम् । प्रत्यक्षवदबाध्यार्थबोधित्वेन प्रामाण्यमाह—साक्षादिति । असंदिग्धबोधित्वेनापि तदाह—स्फुटेति ॥१४॥

वैदिकस्य कर्मादेः संसारफलत्वात्ततो विरक्तोऽधिकारी वक्ष्यमाणविद्यायामित्यश्वमेधाधिकारे दर्शितमेव अवान्तरलयानन्तरभाविसर्गोपदेशद्वारा दर्शयितुमव्याकृतवाक्यात्प्राक्तनं वाक्यमित्यात्मैवेत्यादेर्विवक्षितमर्थमुक्त्वा अवान्तरलयान्तरं प्रजापतेः सकाशादुच्यमानाऽपि सृष्टिर्ब्रह्मकर्तृकैवेति वक्तुमज्ञातं ब्रह्मैव सर्वजगत्कारणमित्याह—

१. अनर्थनिस्सारेति—अनर्थरूपात् संसारान्निस्सरणोपायान्, अनु पश्चादन्वेषते ( न्या० ) ।
२. मुक्तेर्बिभ्यत इति मृत्योर्बिभ्यत इति पाठः समीचीनः । "देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्यां प्राविशन्" ( छा०१.४.२ ) इति श्रुतेश्च "वेदानिमं च लोकं चामुं च परित्यज्ये"ति स्मृतिः ।

तेन तेनाऽऽत्मकार्येण स्वात्माभासतमोवधिः । विशिष्टः ससृजे विष्णुस्तेजोबन्नादि मायया ॥१६॥
अविद्ययाऽस्य स्रष्टृत्वं कूटस्थस्यापि सर्वदा । यथावस्तुधियः[1] सूतेः प्राङ्नित्यं तेन तन्मतम् ॥१७॥
ज्ञानकर्मादितन्त्रं सत्सूत्रं जज्ञे ततो विभोः । ज्ञानक्रियाशक्तिमद्यद्यत्रेदं जगदाहितम् ॥१८॥
विराडपि ततो जातस्त्रैलोक्यात्मकदेहवान् । यथोक्तज्ञानकर्मभ्यां मनोर्जन्म ततोऽपि च ॥१९॥
या महाप्रलयात्सृष्टिः सा विरिञ्चस्य वक्ष्यते । आन्तरप्रलयाद्या तु विराजोऽधीयमुच्यते ॥२०॥
स वै शरीरी प्रथमः स वै पुरुष उच्यते । आदिकर्ता स भूतानां ब्रह्माऽग्रे समवर्तत ॥२१॥

उद्भाष्यमात्मपदेन परमात्मानं गृहीत्वा व्याख्यानान्तरम्

प्रत्यग्भूतः परार्थेभ्यो योऽनन्यानुभवं प्रति । प्रथते स इहाऽऽत्मेति जगत्यस्मिन्निगद्यते ॥२२॥

अविज्ञातमिति । श्रुतौ यज्जनिमतो जगतः कारणं श्रुतं तदज्ञानशबलं परमेव तत्त्वमिति योजना । यद्यपि परिशुद्धं ब्रह्म जगतो मूलकारणं तथाऽपि तत्राज्ञानं द्वारीभवति । अन्यथा कूटस्थासङ्गाद्वयस्य तदयोगादिति भावः । परस्य मूलकारणत्वेऽपि सूत्राद्यवान्तरकारणमित्याशङ्क्याऽऽह—आन्त्यादिति । अन्त्यं कार्यं पृथिवी तत्पर्यन्तं सर्वस्य कार्यस्य व्यावर्तकं कारणं सूत्राद्यात्मना परमेव ब्रह्मेत्यर्थः ॥१५॥

कथं निर्विकारस्य परस्य कारणतेत्याशङ्क्याविज्ञातमिति सूचितं विशदयति—तेनेति । स्वात्मनश्चिद्धातोराभासो यत्र तेन तमसाऽवधिशब्दितोपाधिनोपहितः परः सूत्राद्यात्मना स्वकार्येण विशिष्टो भूतभौतिकं जगदुत्पादितवानित्यर्थः । ब्रह्मा स्रष्टा पालयिता विष्णुरीशः संहर्तेत्यर्थभेदं परिहर्तुं विष्णुरित्युक्तम् । उपाधिभूततमसो जगज्जनिप्रयोजकत्वं सूचयति—माययेति ॥१६॥

निर्विकारस्यापि परस्य मायाधीनकारणत्वमुक्तमथ कारणत्वान्मृदादिवन्निर्विकारत्वासिद्धिरित्याशङ्क्य हेतोरन्यथासिद्धेरागमबाधाच्च नैवमित्याह—अविद्ययेति । कौटस्थ्यवत्कारणत्वस्यापि सदा सत्त्वात्किमविद्ययेत्याशङ्क्याऽऽह—यथेति । अन्वयव्यतिरेकाभ्यां "मायां तु प्रकृतिमि"त्यागमाच्चाविद्याधीना स्रष्टृतेत्यर्थः । जगत्कारणं नित्यं चेन्नाविद्याधीनमनित्यं चेदनवस्था प्रसिद्धिविरोधश्चेत्याशङ्क्याऽऽह—नित्यमिति । अनादित्वेन कारणं नित्यमिष्टं न त्वनन्तत्वेनान्यथा विद्यावैफल्यादित्यर्थः ॥१७॥

अज्ञातं ब्रह्म कारणमित्यत्र क्रमं दर्शयति—ज्ञानेति । आदिपदं वासनार्थम् । ततो विभोरित्यव्याकृताद्ब्रह्मणः सकाशादिति यावत् । किं तत्सूत्रं तदाह—ज्ञानक्रियेति । अपञ्चीकृतपञ्चमहाभूततत्कार्यात्मकं लिङ्गं सूत्रं तच्च क्रियाशक्तिमत्प्राणाख्यं ज्ञानशक्तिमच्च हिरण्यगर्भाख्यमित्यर्थः । तत्र सूत्रे कार्यलिङ्गकमनुमानमाह—यत्रेति । न हीदमनाधारं सिध्यति । न च सूत्रादन्यदस्याऽऽधारो "वायुना वै गौतम सूत्रेणे"त्यादिश्रुतेरतो दृश्यस्थूलकार्याश्रयं सूत्रमित्यर्थः ॥१८॥

अज्ञातात्परस्मात्सूत्रोपाधेर्विराडुत्पत्तिमाह—विराडपीति । कोऽसौ विराडित्यपेक्षायां पञ्चीकृतपञ्चमहाभूततत्कार्यात्मक इत्याह—त्रैलोक्येति । तदुत्पत्तौ निमित्तमाह—यथोक्तेति । विराजा स्थितात्परस्मान्मनोरुत्पत्तिमाह—मनोरिति । ततः परस्मान्मनूपाधेः सर्वेयं मानवी सृष्टिरित्याह—ततोऽपीति । सर्वसृष्टौ ज्ञानकर्मणोर्निमित्तत्वमविशिष्टमिति वक्तुं चशब्दः ॥१९॥

कुत्र सूत्रसृष्टिर्मूलकारणादुच्यते तद्धेदमित्यादावित्याह—येति । महाप्रलयादनन्तरमिति शेषः । विरिञ्चस्य शक्तिद्वयवतः सूत्रस्येत्यर्थः । यद्यपि सूत्राद्विराजः सृष्टिरश्वमेधब्राह्मणे व्याख्याता तथाऽपि विराजो मन्वादिसृष्टिः कुत्रोच्यते तत्राऽऽह—आन्तरेति । अवान्तरप्रलयादधि परस्ताद्या विराजो मन्वादिसृष्टिः सेय"मिममेवाऽऽत्मानं द्वेधाऽपातयदि"त्यत्रोच्यत इत्यर्थः ॥२०॥

मन्वादिस्रष्टरि विराजि पौराणिकसंमतिमाह—स वा इति । स्थूला व्यष्टयो भूतशब्देन गृह्यन्ते । अग्रे व्यष्टीभूतस्थूलपिण्डसर्गात्पूर्वमिति यावत् ॥२१॥

भाष्यानुसारेणाऽऽत्मेत्यादिवाक्यतात्पर्यमुक्त्वोद्भाष्यमेव परात्मपरत्वेन वाक्यं व्याकुर्वन्नात्मशब्दार्थमाह—

१. यथावस्तुधिय इति । सूतेः सृष्टे प्राक् यथावस्तु वस्त्वनतिक्रम्य धीमतः कूटस्थस्य स्रष्टृत्वम् ।

आत्माभासैकसंसिद्धेस्तदज्ञानसमुद्भवम् । आत्मैव भण्यते मोहात्तदात्माव्यतिरेकतः ॥२३॥
एवेत्यवधृतावेतदात्मीयार्थनिषेधकृत् । मन्वादि जन्मनः पूर्वमात्मैवेदमभूज्जगत् ॥२४॥
अध्यात्मादिविभागे स्यादात्मात्मीयादिभेदधीः । तस्मिन्नसति सा न स्यादपेक्षाविरहाद्विभोः ॥२५॥
मिथोपास्तव्यपेक्षं हि नामरूपादिमज्जगत् । प्रत्यङ्मात्रप्रमाणं स्यात्पराङ्वैति चित्रताम् ॥२६॥

प्रसंगात् अद्वैतज्ञानान्मोक्षः भेदज्ञानात् संसारभयम्

अपामार्गलतेवायं विरुद्धफलदो भवः । प्रत्यग्दृशां विमोक्षाय संसाराय पराग्दृशाम् ॥२७॥
व्याकृताव्याकृतं विश्वं प्रत्यक्प्रत्ययमात्रकम् । मोहोत्थाहमितिज्ञानाद्भयारत्यादिमद्भवेत् ॥२८॥

प्रत्यगिति । अस्मिञ्जगति परार्थेभ्यः कार्यकारणेभ्यः प्रत्यग्भूतः स्वभावानुभवमपेक्ष्यैव प्रतिभूतं यः प्रथते स कार्यकारणहीनः स्वप्रकाशोऽत्राऽऽत्मशब्देनोच्यते । "आत्मा वा इदमेक एवाग्र आसीदि"तिवद् "आत्मगृहीतिरितर[1]वदुत्तरादि"ति न्यायादित्यर्थः ॥२२॥

भूतात्मा चेन्द्रियात्मा चेत्यादौ भूतादावप्यात्मशब्दात्तदेवात्र किं न ग्राह्यमित्याशङ्क्याऽऽह—आत्माभासेति । आत्माज्ञानोद्भूतं भूतादि जाड्यान्न स्वतः सिध्यत्यतश्चिदाभासेनैकेनैव तत्सिद्धेस्तदात्मन्यध्यस्तमात्मेत्युच्यते कल्पितस्याधिष्ठानमन्तरेण सत्तास्फूर्त्योरभावात्तद्भूताद्यात्माभासत्वान्नात्राऽऽत्मशब्दः । न हि संभवति मुख्ये गौणार्थो ग्राह्य इत्यर्थः । अथाऽऽत्मशब्दार्थस्य कार्यकारणवैलक्षण्ये परिच्छेदः स्यान्नेत्याह—मोहादिति । कार्यादेरात्मनः सकाशान्मोहादेवातिरेकाद्वस्तुतस्तदात्मैवेति नास्ति परिच्छेद इत्यर्थः ॥२३॥

एवशब्दार्थं वदन्नवधृतिस्वरूपमाह—एवेतीति । परिशिष्टपदत्रयार्थं वदन्वाक्यार्थमाह—मन्वादीति । इदं मन्वादि जगदिति सम्बन्धः । आदिशब्देनाऽऽकाशादिग्रहः ॥२४॥

प्रागवस्थायामज्ञातात्ममात्रत्वेऽपि ज्ञेयस्य जगतो न तज्ज्ञानाभावो ब्रह्मणः सर्वज्ञत्वादतोऽवधारणानुपपत्तिरित्याशङ्क्याऽऽह—अध्यात्मादीति । आदिपदमधिभूताधिदैवसंग्रहार्थं द्वितीयं च तदन्यान्यदीयमिति भेदधियं संग्रहीतुम् । सत्येवार्थे ज्ञानं, निरालम्बनज्ञानायोगादतो ज्ञेयवज्ज्ञानमपि प्राङ्नान्यदस्तीत्यर्थः । कथं तर्हि तदा ब्रह्म सर्वज्ञं न हि कांचिदवस्थामास्थाय तत्तथोच्यते तत्राऽऽह—अपेक्षेति । असत्यर्थे तज्ज्ञानापेक्षाभावादीश्वरस्य विद्यमानसर्वार्थाप्रतिबन्धज्ञानात्सर्वज्ञतेत्यर्थः ॥२५॥

प्रागवस्थायां ज्ञानज्ञेययोरभावे जगदभावनिष्ठं स्यादिति शून्यवादमाशङ्क्याऽऽह—मिथ इति । इदं ज्ञानमिदं ज्ञेयमित्यादिनाऽन्योन्यमपेक्षाशून्यं नामरूपकर्मात्मकं जगत्प्रत्यङ्मात्ररूपत्वेन प्रागुत्पत्तेस्तत्परिमाणं तन्निष्ठमेव स्यात्तन्नाभावनिष्ठतेत्यर्थः । सदनुवेधेनाधिगतस्य जगतो नाभावनिष्ठतेति वक्तुं हीत्युक्तम् । प्रपञ्चस्याऽऽत्ममात्रत्वे तस्यैकरूप्यात्तस्यापि तथात्वमेकस्यानेकरूपत्वायोगादित्याशङ्क्य सर्गकाले प्रतीचो भेदेन पराक्त्वमासाद्य नानात्वमित्याह—पराङिति ॥२६॥

आत्ममात्रत्वेन प्रपञ्चस्यैकरूप्ये तद्भेदेन नानात्वे च फलितमर्थं दृष्टान्तेनाऽऽह—अपामार्गेति । सा खल्वानुलोम्येनाऽऽलम्ब्यमाना मृदुस्पर्शतया दुःखाभावहेतुः प्रातिलोम्येन स्पृश्यमाना तु कर्कशत्वेन दुःखहेतुरेवमेव संसारो विरुद्धफलनिबन्धमित्यर्थः । संसारस्य विरुद्धफलत्वमेव स्फुटयति—प्रत्यगिति । ये संसारं प्रत्यङ्मात्रतया पश्यन्तस्ततो भेदेन तदभावं मन्यन्ते तेषामनर्थध्वस्तये स स्यान्नहि प्रत्यङ्मात्रतया दृष्टः संसारस्तद्भेदमलभमानोऽनर्थमाधातुमलम् । ये तु प्रतीचः सकाशात्पराञ्चं स्वातन्त्र्येण लब्धसत्ताकं प्रपञ्चं पश्यन्ति तेषां सोऽनर्थाय भवति । "द्वितीयाद्वै भयं भवती"ति वक्ष्यमाणत्वादित्यर्थः ॥२७॥

उक्तरीत्या बन्धमोक्षहेतौ तस्मिन्किं मानं ? साक्षिप्रत्यक्षमित्याह—व्याकृतेति । प्रतीचो भेदेन व्यक्तनामरूपं

१. आत्मगृहीतिः—आत्मा वा इदमित्यत्र शुद्धस्य ब्रह्मणो ग्रहणं वाच्यम् इतरवत् "तस्माद्वा एतस्मादात्मन आकाशः सम्भूत" इत्यत्र विद्यमानात्मशब्दवत्, कुतः उत्तरात् उत्तरत्र जगत्सृष्टिवचनात् ( ३-३ ) ।

अहंममेतिविज्ञानं विद्यया ध्वंसितं यदा । तदाऽद्वये दृशौ दृष्टे न भयादि तमोहृतेः ॥२९॥
इदं धीनामगम्यं यच्चित्रं सत्प्रथते हिरुक् । मन्वादि सृष्टेस्तत्पूर्वमात्मैवाभूदिदं जगत् ॥३०॥

शुद्धात्मनः पुरुषविधत्वप्राप्तिनिरूपणम्

एतावद्वास्तवं वृत्तं मोहोत्थं भण्यतेऽधुना । कोशपञ्चकतां यातः प्रत्यगज्ञानतो यतः ॥३१॥
स एष परमोऽप्यात्मा कामाविद्याद्युपप्लवात् । संवृत्तः पुरुषाकार इत्यनुक्रोशतीव नः ॥३२॥
आनन्दाद्यन्नपर्यन्तान्कारणेतररूपिणः ।
पुरुषादिप्रकारांस्तान्प्रत्यक्त्वानलक्षयत् । पुरुषविध इत्युक्त्या ह्यूर्ध्वं चैवं प्रवक्ष्यते ॥३३॥
वाङ्मनःप्राणकोशांस्त्रीन्विराडन्नमयः स्वयम् । तद्धेदमिति चाऽऽनन्दो नैवेहेति तथोच्यते ॥३४॥
अग्निर्मूर्धेति च तथा मन्त्रेणापि प्रकाशितः । सामानाधिकरण्यं च तद्धेदमिति युक्तिमत् ॥३५॥

जगदनर्थहेतुतया दृष्टं तन्मात्रत्वेनोपलब्धमव्यक्तनामरूपं तदेवानर्थनिर्बर्हि स्वसाक्षिकमित्यर्थः। पराक्त्वेन दृष्टस्य जगतोऽनर्थहेतुत्वं समर्थयते—मोहेति। तदुत्थे द्वैतेऽहमिति वा ममेति वा ज्ञानात्तदेव ज्ञानद्वयगम्यं भयादिहेतुर्भवतीत्यर्थः ॥२८॥

प्रत्यङ्मात्रतया दृष्टस्य मोक्षहेतुत्वं साधयति—अहमिति। यदा सर्वस्य प्रत्यक्त्वविद्ययाऽपरोक्षयाऽऽगमादिकृतया द्विविधा मिथ्याधीरपनीता तदा दृगात्मन्यद्वये साक्षात्कृते मूलाज्ञानध्वस्तेर्भयारत्याद्यनवकाशमित्यर्थः ॥२९॥

आत्मैवेत्यादिवाक्यव्याख्यानप्रसङ्गप्राप्तं परिसमाप्य प्रकृतवाक्यव्याख्यामुपसंहरति—इदमिति। हिरुगात्मनः सकाशात्पृथगित्यर्थः। मन्वादिशब्दस्य पूर्ववदन्वयः ॥३०॥

उक्तवक्ष्यमाणयोर्विशेषार्थमुक्तमनुवदति—एतावदिति। कथं तर्हि तस्याखण्डैकरसस्य पुरुषविधत्वं तत्राऽऽह—मोहेति। मोहवशात्परस्य पुरुषप्रकारत्वमुक्तं व्यक्तीकरोति—कोशेति। कार्यकारणनिर्मुक्तः स्वप्रकाशः परः प्रत्यगाश्रयविषयाज्ञानादविद्यास्मिताद्युपद्रवादन्नमयादिकोशपञ्चकत्वं यतो यातोऽतः स पुरुषाकारो जात इत्यस्मान्मुमुक्षून्दृष्ट्वा पुरुषविधश्रुतिरस्येयमवस्था कथमित्यनुक्रोशमिव करोति तन्नास्य वास्तवी पुरुषविधतेत्यर्थः ॥३१-३२॥

पुरुषविधशब्दात्तत्प्रकारमात्रे भाति कथं कोशपञ्चकग्रहणमित्याशङ्क्य लक्षणयेत्याह—आनन्दादीति। आनन्दमयः कारणरूपी, अन्ये चत्वारः कार्यरूपिणः कारणरूपिणश्चेति भेदः। पुरुषादीत्यादिपदं स्त्रीनपुंसकार्थम्। आनन्दमयादीनां पृथक्पृथगात्मत्वात् पुरुषत्वमेव न तद्विधतेत्याशङ्क्याऽऽह—प्रत्यगिति। प्रत्यगेव तत्त्वमेषां तत्र कल्पितानां कोशानां तानिति यावत्। कोशपञ्चकलक्षकत्वे पुरुषविधोक्तेर्योग्यतां वक्तुं हिशब्दः। नन्वत्र कोशपञ्चकं न श्रूयते न च श्रुत्यन्तरस्थमिह लक्ष्यते प्रत्यासत्त्यभावात्तत्राऽऽह—ऊर्ध्वं चेति। श्रुत्यन्तरं दृष्टांतयितुं चशब्दः। प्रवक्ष्यते कोशपञ्चकमिति शेषः ॥३३॥

कथमुत्तरत्र कोशपञ्चकोक्तिर्न हि तैत्तिरीयकवदत्र तद्वाचकशब्दोऽस्ति तत्राऽऽह—वागिति। मनोवाचं प्राणमिति कोशत्रयमन्नाधिकारे वक्ष्यते। वाक्शब्देन विज्ञानमयो गृह्यते। त्रीन्प्रवक्ष्यतीति शेषः। पुरुषविधशब्देनान्नमयकोशोक्तिरित्याह—विराडिति। यद्वा यः स्वयं मन्वादिस्रष्टृत्वेन विराडात्मा स्थितः सोऽनुवीक्ष्येत्यादौ वक्ष्यत इत्याह—विराडिति। "तद्धेदमि"त्युत्तरत्र "नैवेह किंचने"ति पूर्वत्र चाऽऽनन्दमयकोशोक्तिर्विवक्षितेत्याह—तद्धेति ॥३४॥

अन्नमयं विराजमधिकृत्य सृष्टिरनन्तरं वाच्येति विशेषतस्तत्र मन्त्रसंवादं दर्शयति—अग्निरिति। विराडात्मविषयवाक्यान्तरं समुच्चेतुं चशब्दः। यथोक्तवैराजरूपानुरोधस्तथाशब्दार्थः। पुरुषविधशब्दादिने-

पृथिव्याद्यक्षरान्तश्च प्रश्नो वाचक्नवस्तथा ॥३६॥

विराजमेवात्मशब्दार्थं यथाश्रुतं गृहीत्वा व्याख्या

प्रत्यग्दृष्ट्यनुविद्धाहंप्रत्ययैकप्रमाणकः । सोऽनुवीक्ष्याऽऽत्ममोहोत्थदृष्ट्याऽविद्योत्थरूपकम् ॥३७॥
यदभ्यस्तं पुराऽस्याभूदहमेवेदमित्यदः । दर्शनं तदपेक्ष्यायमनुशब्दः प्रयुज्यते ॥३८॥
अहमेवेदमस्मीति दर्शनं यत्सुभावितम् । तत्फलं यत्तदन्वीक्ष्य नाऽऽत्मनोऽन्यद्ददर्श सः ॥३९॥
तस्मादर्थान्तरासूतेरेकपिण्डात्ममात्रतः । नापश्यदपरं किंचित्सोऽहमित्यभ्यधादथ ॥४०॥
त्रैलोक्यात्मकदेहात्मा नापश्यदपरं पृथक् । भिन्नार्थानभिसंबन्धात्प्रतीच्येवास्य धीरभूत् ॥४१॥
सशब्दं दर्शनं यादृक्प्रागभ्यस्तं तथैव सः । व्याजहार फलावस्थो ह्यहमित्यात्मवाचकम् ॥४२॥
उपासनार्थं नामास्य तस्योपनिषदित्यतः[1] । अतोऽहमित्यनेनैव ह्यात्मनाऽऽत्मानमभ्यधात् ॥४३॥

वेत्यपेरर्थः। प्रकाशितो विराडिति शेषः परस्यैव स्वाज्ञानात्कारणेतररूपकोशपञ्चकव्याप्त्या पुरुषविधत्वमित्यत्र वाक्यशेषानुगुण्यमाह—सामानाधिकरण्यं चेति। अज्ञातपरवाचकतच्छब्दस्य कोशपञ्चकात्मकजगद्वाचकेदंशब्दस्य च सामानाधिकरण्यं परस्यैव कोशपञ्चकत्वं सूचयति। भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे प्रवृत्तिः सामानाधिकरण्यमिति स्थितेरित्यर्थः ॥३५॥

परस्यैव कोशपञ्चकत्वे पाञ्चमिकं सर्वस्य जगतोऽक्षरे पर्यवसानविषयं प्रश्नमनुकूलयति—पृथिव्यादीति। वाचक्नवी गार्गी तया कृतो वाचक्नवः। तथा परस्य कोशपञ्चकत्वानुरोधेनेति यावत्। नहि परस्याक्षरस्य कोशपञ्चकात्मकजगद्रूपत्वाभावे तस्य तस्मिन्नवसानं युक्तमिति भावः। "आत्मैवे"त्यादि "पुरुषविध" इत्यन्तं स्वमतेन व्याख्याय भाष्योक्तं विराजमेवाऽऽत्मशब्देन गृहीत्वा पूर्वं देहान्तरोत्पत्तेः सर्वं तद्वेदजातं तन्मात्रमासीत्स च पुरुषप्रकारः शिरःपाण्यादिमानित्येवं वाक्यार्थमादायोत्तरमादत्ते—प्रत्यगिति। आत्मचैतन्यव्याप्ताहंधीमात्रगम्यो विराडात्मा प्रत्यगविद्याकृतं प्रपञ्चं मोहोत्थया दृष्ट्याऽनुवीक्ष्य नाऽऽत्मनोऽन्यदपश्यदित्यर्थः ॥३६–३७॥

अथायमनुशब्दः सामीप्यं पाश्चात्यं वा ब्रूते नोभयथाऽपि युक्तः संनिहितप्रकृतान्वययोग्याद्दृष्टेस्तत्राऽऽह—यदिति। त्रैलोक्यात्मकमिदं वैराजं रूपमहमिति यद्दर्शनमस्य यजमानदशायामभ्यस्तं तदपेक्षोऽनुशब्दः प्रयुक्तोऽतो न तद्वैयर्थ्यं पाश्चात्यवाचित्वादित्यर्थः ॥३८॥

ननु यथोक्तं दर्शनं यजमानावस्थमास्थाय नानुशब्दो युक्त ईक्षणशब्देनापि तस्यैवोक्तेर्नहि तदपेक्षं तस्यैव पाश्चात्यं तत्राऽऽह—अहमेवेति। तस्य दर्शनस्य यत्फलं तदन्वीक्ष्येत्यत्रेक्षणमित्यर्थः। नान्यदित्याद्यादत्ते—नेति ॥३९॥

तद्व्याचष्टे—तस्मादिति। विराड्देहाद्देहान्तरस्यानुत्पत्तेरात्मीयं पिण्डमात्रं स दृष्टवांस्ततोऽन्यत्स्वतन्त्रं परतन्त्रं वा न किंचिदित्यर्थः। अपरमपश्यन्विराडात्मा किं कृतवानित्यपेक्षायामाह—सोऽहमिति। स्वव्यतिरिक्तादर्शनानन्तर्यमथशब्दार्थः ॥४०॥

तद्व्याख्यातुं पूर्ववाक्यार्थमनुवदति—त्रैलोक्येति। अपरं स्वतन्त्रं परतन्त्रं वेत्यर्थः। तत्र हेतुमाह—भिन्नेति। स्वदेहातिरिक्तेनासंनिकर्षात्तस्मिन्विराजो न धीश्चेत्कुत्र तर्हि तस्य धीरिति तत्राऽऽह—प्रतीचीति ॥४१॥

कथं प्रतीचि स्वदेहे तस्य धीरासीदित्याशङ्क्य सोऽहमित्यादि व्याचष्टे—सशब्दमिति। प्राग्यजमानावस्थायामिति यावत्। यजमानावस्थस्य फलावस्थस्य च प्रजापतेरेकत्वं हेतुं कर्तुं हिशब्दः ॥४२॥

प्रजापतेरहमिति नाम किमर्थं कथ्यते साधारणं हीदं सर्वेषामिति तत्राऽऽह—उपासनार्थमिति। तत्र श्रुतिं प्रमाणयति—तस्येति। तस्याऽऽध्यात्मिकस्य चाक्षुषस्य पुरुषस्याहमिति रहस्यं नामेत्यतो वाक्यादहंनामत्वं प्रजापतेर्ध्यानार्थमिष्टमित्यर्थः। नामान्तरेषु सत्सु किमित्येतेनैवाऽऽत्मानमुक्तवानित्याशङ्क्याऽऽह—अत इति।

१. तस्योपनिषदिति—पञ्चमे "तस्योपनिषदहमिति" इत्याध्यात्मिकपुरुषोपासनेऽहमित्यनुसन्धानं विहितम्।

**अहमित्यभ्यधादग्रे यस्मादात्मानमात्मना । अहंनामाभवत्तस्माद्विराडेष प्रजापतिः ॥४४॥**
**तत्कार्यगेण लिङ्गेन ज्ञापयन्कारणाभिधाम् । तस्मादपीति वक्त्येतां प्रसिद्धिं लोकसाक्षिकीम् ॥४५॥**
**यथोक्तमहिमः कस्मात्संवृत्तः पुरुषो विराट् । इतिहेतूपदेशाय स यदित्यादि भण्यते ॥४६॥**
**मिथो जिगीषतां पुंसां ज्ञानकर्मादिसाधनैः । पुरा देवात्मतां योऽगात्प्लुष्टास्तेनेतरे जिताः ॥४७॥**
**वैराजपदसंप्रेप्सोर्यजमानमहाजनात् । एनांस्यौषद्यतोऽग्रेऽतः संवृत्तः पुरुषाभिधः ॥४८॥**
**औषत्स्वान्पाप्मनः पूर्वं ज्ञानाद्यतिशयाग्निना । वैराजपदलिप्सुभ्यस्तेनासौ पुरुषाभिधः ॥४९॥**
**यथोक्तोपासनफलं वक्ष्यामीत्युत्तरं वचः । ओषतीत्यादिकं ज्ञेयं वेदोपासीत यः सदा ॥५०॥**
**योऽसावतीन्द्रियोऽग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः । सर्वभूतमयोऽचिन्त्य स एव स्वयमुद्बभौ ॥५१॥**
**पुरुषोऽस्मीत्युपास्त्यर्थं पुरुषार्थोऽयमुच्यते । ओषतीत्युक्तितः साक्षाद्गुणोपास्तिफलश्रवात् ॥५२॥**

उक्तादुपास्त्यर्थत्वादिति यावत् । आत्मनेत्यात्मवाचिनाऽहंशब्देनेत्यर्थः । तस्याऽऽत्मवाचित्वप्रसिद्ध्यर्थो हिशब्दः ॥४३॥

ततोऽहंनामाभवदित्यस्यार्थमाह—अहमिति । अहमित्यात्मनेति संबन्धः ॥४४॥

प्रजापतिरहमित्यग्रे व्याजहार ततोऽहंनामाभूदित्यत्र किं मानमित्याशङ्क्य तस्मादित्यादिवाक्यतात्पर्यमाह—तदिति । प्रजापतिकार्यभूतप्रजावर्गगतेनाहमिति व्याहरणेन प्रथमप्रवृत्तेन लिङ्गेन कारणेऽपि तस्मिन्नहमित्यभिधानं तस्मादित्यादिना ज्ञापयन्वेदस्तस्याहंनामत्वे लोकप्रसिद्धिं च प्रमाणयतीत्यर्थः ॥४५॥

विराजः सर्वात्मत्वस्य दर्शितत्वात्पुरुषत्वानियमा"त्स वै पुरुष" इतिस्मृतिविरोध इति शङ्कते—यथेति । नकारलोपं वैकल्पिकं मन्यते । विराजः पुरुषत्वे हेतूक्त्यर्थमुत्तरवाक्यमित्याह—इतिहेत्विति ॥४६॥

तस्यार्थं संक्षिपति—मिथ इति । अहमहमिकया प्राथम्येन प्रजापतित्वप्रेप्सूनां मध्ये प्रथमत एव ज्ञानादिहेत्वतिशयाद्यस्तद्भावं गतवांस्तेनेतरे दग्धवज्जिता भवन्ति तस्मात्पूर्वमौषदिति पुरुषो विराडित्यर्थः ॥४७॥

तस्मात्पुरुष इत्यस्यार्थमाह—वैराजेति ॥४८॥

एनसां प्रजापतित्वप्रतिबन्धकानां दाहे हेतुमनुवदन्विराजो यौगिकं पुरुषत्वमित्युक्तं निगमयति—औषदिति ॥४९॥

किमिति नामान्तरेषु सत्सु पुरुषनामनिरुक्तिरित्याशङ्क्य तन्नाम्नस्तस्योपास्त्यर्थमिति मत्वाऽऽह—यथोक्तेति । पुरुषगुणकविराडुपासको मन्दोपासकान्फललिप्सून्निजित्याऽऽदावेव ध्यानाद्यतिशयात्प्रजापतिर्भवतीति वाक्यार्थं विवक्षन्नाह—वेदेति ॥५०॥

येन प्रजापत्यात्मना विद्वानवतिष्ठते तत्र मानवीं स्मृतिं प्रमाणयति—योऽसाविति । ज्ञानेन्द्रियाविषयत्वमतीन्द्रियत्वम् । कर्मेन्द्रियाविषयत्वमग्राह्यत्वम् । उभयत्र हेतुः सूक्ष्म इति । परमाणुतुल्यत्वं पराकर्तुं व्याकरोति—अव्यक्त इति । तस्यासत्त्वमित्याशङ्क्याऽऽह—सनातन इति । तदेव सर्वात्मत्वेन साधयति—सर्वेति । अन्तःकरणाविषयत्वमाह—अचिन्त्य इति । उक्तरूपः परो न विराडित्याशङ्क्याऽऽह—स एवेति । पर एव स्वयमेवाव्याकृतसूत्रद्वारा विराड्भावेनोद्भूत इत्यर्थः ॥५१॥

वागादौ धेन्वादिधीवत्पुरुषगुणे विराजि धीर्नहि तेन ध्यातुस्तादात्म्यमन्यस्यान्यत्वायोगादित्याशङ्क्याऽऽह—पुरुष इति । पुरुषगुणे विराज्यहंग्रहोपास्तिरिष्टेत्यत्र पुरुषनिरुक्तिं प्रमाणयति—इत्युपास्त्यर्थमिति । फलान्तरादृष्टेर्ध्यानार्थपुरुषनामनिर्वचनेऽपि कथं तद्गुणे विराज्यहंग्रहोपास्तिरित्याशङ्क्याऽऽह—ओषतीति । साक्षात्सूत्रभावस्य पुरुषगुणविराडुपास्तिफलस्य यथोक्तवाक्यतः श्रुतेस्तत्क्रतुन्यायेन विराज्यहंग्रहोपास्तिसिद्धिरित्यर्थः ॥५२॥

विराट्पुरुषेऽहंग्रहोपास्तिविधिरिति तात्पर्यम्

अभिष्टुतं प्रयत्नेन फलं यज्ज्ञानकर्मणोः । एवंमहिममप्येतत्संसारं नात्यवर्तत ॥५३॥

मू.—सोऽबिभेत्तस्मादेकाकी बिभेति । स हायमीक्षांचक्रे यन्मदन्यन्नास्ति कस्मान्नु बिभेमीति । तत एवास्य भयं वीयाय कस्माद्ध्यभेष्यद्द्वितीयाद्वै भयं भवति ॥२॥

प्रत्यग्याथात्म्यविज्ञानविरहादन्यसाधनः । यावत्किंचित्फलं नादः सर्वानर्थनिवृत्तये ॥५४॥
निरस्तातिशयं कर्म ज्ञानं चाऽऽप्यापि बालवत् । यतोऽबिभेदविद्यावानतोऽसावस्मदादिवत् ॥५५॥
न ह्यविद्यामनादाय वस्तुयाथात्म्यसंश्रयात् । कश्चिद्धि भेत्यबिभेच्च तेनाविद्वान्प्रजापतिः ॥५६॥
प्रत्यग्याथात्म्यविद्यैव निःशेषपुरुषार्थकृत् । इत्येतत्प्रतिपत्त्यर्थं विराट्स्थानस्य कुत्सनम् ॥५७॥
यतोऽबिभेद्विराट्पूर्वमेकाक्यस्मीति मूढवत् । तस्मात्तत्कार्यभूतोऽज्ञ एकाक्यद्य बिभेति ना ॥५८॥
एवं भयाभिभूतः स ईक्षांचक्रेऽथ लोकवत् । भयाहेतु यथातत्त्वदर्शनं कृतवान्विभुः ॥५९॥
स्रजीव कल्पिताहिर्ना तत्त्रासादाकुलेन्द्रियः । आलोचयेद्यथातत्त्वं भीध्वस्तौ तद्वदीश्वरः ॥६०॥
आलोचयन्यथातत्त्वमपास्तध्वान्ततद्भवम्[1] । अनन्यानुभवं साक्षाद्ददर्शैकात्म्यमात्मनि ॥६१॥
प्रत्यग्याथात्म्यविज्ञानशिखिप्लुष्टमहत्तमाः । आप्ताऽशेषपुमर्थोऽथ सोऽमन्यत ततो विराट् ॥६२॥

ज्ञानकर्मफलं सौत्रं पदमुत्कृष्टत्वान्मुक्तिरित्युच्यते तदन्यमुक्त्यभावात्तद्धेतुसम्यग्धीसिद्धये प्रवृत्तिरनर्थिकेत्याशङ्क्य सोऽबिभेदित्यस्य तात्पर्यमाह—अभिष्टुतमिति । ज्ञानकर्मफलं त्रैलोक्यात्मकसूत्रत्वमुत्कृष्टमपि संसारान्तर्भूतमेव न कैवल्यमिति वक्तुमुत्तरवाक्यमित्यर्थः ॥५३॥

ताभ्यामाप्तसूत्रत्वादशेषानर्थध्वस्तेर्न सौत्रं फलं संसारान्तर्गतमित्याशङ्क्याऽऽह—प्रत्यगिति । तत्त्वज्ञानं विना हेत्वन्तराधीनं सौत्रं फलं नानर्थसार्थध्वंसार्थं भयारत्यादिदृष्टेरित्यर्थः ॥५४॥

ज्ञानकर्मफलस्य प्रजापतेर्न भयादि युक्तं तद्धेत्वविद्याभावादित्याशङ्क्याऽऽह—निरस्तेति । उत्कृष्टे कर्मज्ञाने लब्ध्वा तत्फलभूतोऽपि मूढवद्यतो विराड्भीतवानतो भयादिकार्यदृष्ट्या सोऽविद्यावान्कल्प्यते संमतमूढवत् । तस्य च विद्यमानाऽपि विद्याऽऽरब्धकर्मप्रतिबन्धान्न सर्वात्मनाऽविद्यां निवर्तयत्यधुनातनजीवन्मुक्तवदिति भावः ॥५५॥

विराजो भयहेतुरविद्याऽस्तीत्यन्वयमुखेनोक्त्वा व्यतिरेकमुखेनाऽऽह—न हीति । मा तर्हि तस्य भयं भूत्तत्राऽऽह—अबिभेच्चेति । अन्वयव्यतिरेकसिद्धमर्थं निगमयति—तेनेति ॥५६॥

कर्मज्ञानफलभूतो विराडुत्कृष्टत्वेन प्रागुक्तोऽधुना निन्द्यते तत्कथं पङ्कप्रक्षालनन्यायो नावतरेदित्याशङ्क्याऽऽह—प्रत्यगिति ॥५७॥

तस्मादेकाकी बिभेतीत्यस्यार्थमाह—यत इति । कार्यगतेन भयलिङ्गेन कारणे प्रजापतौ तदनुमेयमिति भावः ॥५८॥

स हायमित्यादेरर्थमाह—एवमिति । किं तदीक्षणमिति विवक्षित्वा पृच्छति—अथेति । परिहरति—भयेति । भयध्वस्तिहेतुभूतं तत्त्वज्ञानं प्रजापतिः संपादितवानित्यर्थः ॥५९॥

लोकवदिति दृष्टान्तं सदार्ष्टान्तिकं स्पष्टयति—स्रजीति ॥६०॥

आलोचनफलमाह—आलोचयन्निति । दर्शनस्यापरोक्षत्वद्योतनार्थं साक्षादित्युक्तम् ॥६१॥

ऐक्यसाक्षात्कारफलमाह—प्रत्यगिति । अथशब्दो यदार्थे । ततःशब्दस्तदार्थे । अमन्यताऽऽत्मानं कृतार्थमिति शेषः ॥६२॥

---

१. अपास्तध्वान्ततद्भवम् निरस्ताज्ञानतत्कार्यम् अनन्यानुभवं स्वप्रकाशम् ।

देहेन्द्रियमनोबुद्धिभावाभावादिसाक्षिणम् । प्रत्यञ्चं मदिति प्राह तद्दृष्ट्या नेक्षते द्वयम् ॥६३॥
प्रतीच्येव यदेहाऽऽत्मा प्रत्यगात्मानमीक्षते । अन्वयव्यतिरेकाभ्यां ब्रह्मास्मीति तदेक्षते ॥६४॥
प्रत्यग्दृष्ट्या तदज्ञानतज्जं नैवेक्षते स्वतः । ब्रह्मप्रतीचोरैकात्म्यात्तद्दूरीकृत्य गर्जति ॥६५॥
प्रत्यक्तां मदिति प्राह त्वन्यन्नास्तीति चैकताम् । कस्मादिति च हेतूक्तिर्भीत्याचिक्षिप्सया परम् ॥६६॥
प्रत्यक्ता ब्रह्मणो यस्माद्ब्रह्मता चाऽऽत्मनः स्वतः । एवं सति कुतो मे भीरिति विद्वांस्त्रपायते ॥६७॥
ब्रह्मविद्यामृते नान्यद्भयहेतुविनाशकृत् । संभाव्यमिति नः प्राह तत एवेति च श्रुतिः ॥६८॥
प्रत्यगज्ञानमेवैकं भीतिहेतुर्भवेद्यदि । तत एवेति वचनं तदेवं स्यात्समञ्जसम् ॥६९॥
कस्माद्ध्यभेष्यदिति च पूर्वोक्तार्थसमर्थनम् । श्रुत्याऽकारि कुतो भीतिर्ध्वस्ताज्ञानतदुद्भवे ॥७०॥

### प्रजापतेः एकत्वदर्शनहेतुविचारः

प्रजापतेराविरभूत्कुत एकत्वदर्शनम् । शास्त्राचार्यादितद्धेतोरसत्त्वात्तदसंभवः ॥७१॥
अन्यानपेक्षं तदभूदिति चेन्नैवमिष्यते । अस्मदादेरपि तथा प्रसङ्गः स्यान्न चेक्ष्यते ॥७२॥
मतं जन्मान्तराभ्याससंस्कारोत्थमिदं यदि । नैरर्थक्यप्रसक्तिः स्यात्सम्यग्ज्ञानस्य सर्वतः ॥७३॥

यन्मदन्यन्नास्तीत्यत्र मच्छब्दार्थमाह—देहेति । आदिपदेन तद्गुणादिग्रहः । वाक्यार्थान्वयित्वमर्थस्य मच्छब्दार्थस्य ज्ञानफलमाह—तद्दृष्ट्येति ॥६३॥

वाक्यार्थज्ञानादेव तदद्वैतदृष्टिध्वस्तेरलं पदार्थधियेत्याशङ्क्य तां विना वाक्यार्थज्ञानायोगान्मैवमित्याह—प्रतीचीति । इहेति परिशोधनावस्थोक्तिः । आत्मेत्यधिकारिणो निर्देशः ॥६४॥

मदन्यन्नास्तीतिभागस्य तात्पर्यमाह—प्रत्यग्दृष्ट्येति । तत्त्वज्ञानात्तदज्ञानतत्कार्यादृष्टौ हेतुमाह—स्वत इति । उक्तेऽर्थे वाक्यमवतारयति—तदिति । ऐक्यमङ्गीकृत्य भयहेत्वभावमनुवदन्यन्मदन्यन्नास्तीति विराडाहेत्यर्थः ॥६५॥

तत्र वाक्यं योजयति—प्रत्यक्तामिति । परमित्यस्य केवलवाचिनः प्रत्यक्तामित्यादौ प्रत्येकं संबन्धः । उत्तरवाक्येन भयाक्षेपेच्छया प्रत्यग्ब्रह्मणोरैक्याद्द्वितीयाभावं हेतुं ब्रूते यदित्यादिवाक्यमित्यर्थः । यद्वा परमुत्तरं वाक्यं भीत्याक्षेपार्थं प्रवृत्तमित्यर्थः ॥६६॥

कस्मादित्यादेस्तात्पर्यमुक्तहेत्वनुवादपूर्वकमाह—प्रत्यक्तेति । तस्माद्द्वितीयाभावादभावो भयहेतोरिति शेषः । भयहेत्वभावे फलितमाह—एवमिति । लज्जावानिव भवतीत्यर्थः ॥६७॥

तत एवेत्यादेरर्थमाह—ब्रह्मेति । अस्मिन्नर्थे विद्वदनुभवसमुच्चयार्थश्चकारः ॥६८॥

किं तद्भीतिकारणं तदाह—प्रत्यगिति । अत्र हि प्रत्यग्ज्ञानाद्धेतुध्वस्त्या भीतिध्वस्तिरुच्यते न च ज्ञानमज्ञानादन्यध्वंसि तद्भयहेतुरज्ञानमेवेत्यर्थः ॥६९॥

पूर्वेणोत्तरस्य पौनरुक्त्यमाशङ्क्य विदुषो हेत्वभावान्न भयमित्युक्तसमर्थनार्थमुत्तरमित्याह—कस्मादिति । समर्थनप्रकारं श्रौतमभिनयति—कुत इति । विदुषीति शेषः ॥७०॥

प्रजापतेर्ब्रह्मात्मैक्यज्ञानाद्भीतिध्वस्तिरुक्ता । इदानीं तस्य तज्ज्ञानं हेत्वभावादयुक्तमित्याक्षिपति—प्रजापतेरिति । यस्मादस्माकमैक्यधीस्तस्मादेव कस्यापि स्यादित्याशङ्क्याऽऽह—शास्त्रेति । अस्यार्थः—न तावत्तस्य शास्त्रश्रवणमाचार्याभावान्नापि संन्यासोऽमनुष्यत्वेन शास्त्रानधिकारान्मनुष्याधिकारं हि शास्त्रं "हृद्यपेक्षया तु मनुष्याधिकारत्वादि"ति न्यायान्नापि शमादि ऐश्वर्यासक्तत्वात्तस्मादस्मासु प्रसिद्धशास्त्रादिविद्याहेत्वभावात् प्रजापतेरैक्यधीरयुक्तेति ॥७१॥

अन्यस्मिन्नाचार्यादावनपेक्षमेव तदैक्यज्ञानं तस्य जातमिति सिद्धान्ती शङ्कते—अन्यानपेक्षमिति । कादाचित्कस्य कारणानपेक्षत्वमसिद्धमित्याह—नैवमिति । विपक्षे दोषमाह—अस्मदादेरिति । प्रसङ्गस्यानिष्टावसायितामाह—न चेति ॥७२॥

प्रजापतेर्यजमानावस्थायामाचार्यस्य सत्त्वाच्छ्रवणाद्यावृत्तेरैक्यज्ञानोदयात्तत्संस्कारोत्थं तथाविधमेव

दग्धाशेषान्तरायस्य विराजोऽपि महत्तमः । नाधाक्षीदात्मविद्या नः काऽऽशाऽविद्यापनुत्तये ॥७४॥
अन्त्य एव तमोघाती प्रत्ययश्चेन्मतं यदि । स्यादनैकान्तिको हेतुरन्यान्त्येष्वसमीक्षणात् ॥७५॥
नान्त्योऽविद्यापनुद्बोध इति सर्वत्र गम्यताम् । ऐकात्म्यवस्तुबोधित्वादुपान्त्यप्रत्ययो यथा ॥७६॥

## सिद्धान्तनिरूपणम्

स्याद्वा सत्साधनोत्पत्तेर्लोकवज्ज्ञानमात्मनः । यथेह कार्यकरणैः पुण्यकर्मोद्भवैर्नृणाम् ॥७७॥
प्रज्ञा मेधा स्मृतिः स्थैर्यं ज्ञानादाववसीयते । वैशारद्यं तथैव स्याद्विराजोऽपि महाधियः ॥७८॥
ज्ञानमप्रतिघं यस्य वैराग्यं च जगत्पतेः । ऐश्वर्यं चैव धर्मश्च सहसिद्धमिति स्मृतिः ॥७९॥
सहैव सिद्धं चेज्ज्ञानं भीतिहेतोरसंभवः । ध्वान्तापध्वंसिरविणा न तमः सह जायते ॥८०॥

तज्ज्ञानं फलावस्थायामपि निरपेक्षमस्तीति शङ्कते—मतमिति । अतिप्रसक्त्या दूषयति—नैरर्थक्येति । सर्वतः सर्वेष्वस्मदादिष्वपीति यावत् ॥७३॥

कथं तस्य नैरर्थक्यमज्ञानध्वंसित्वेनार्थवत्त्वादित्याशङ्क्याऽऽह—दग्धेति । विद्याप्रतिबन्धविधुरस्यैव विराजो जन्मान्तरे सत्यपि विद्या यद्यविद्यां संसारहेतुं नादहत्तर्हि बहुप्रतिबन्धवतामस्माकं तद्वशात्तद्दाहार्थमाशाऽपि न युक्ता तस्मान्न जन्मातरे तस्यैक्यज्ञानं जातमित्यर्थः ॥७४॥

नन्वस्मिन्नेव जन्मनि तस्यैक्यधीरनपेक्षा प्रजायते—"ज्ञानमप्रतिघं यस्ये"तिस्मृतेः । न च तदुत्पत्त्यनन्तरमेव सहेतुं बन्धं निरुणद्धि भयारत्यादिफलेनाऽऽरब्धकर्मणा प्रतिबन्धादतो मरणकालीनं ज्ञानमज्ञानध्वंसीति चोदयति—अन्त्य इति । एवकारश्चेच्छब्दार्थानुवादी । प्रवृत्तफलस्य कर्मणः स्वोपपादकाज्ञानलेशध्वंसिज्ञानशक्तिप्रतिबन्धकत्वेऽपि जन्मान्तरादिसर्वसंसारहेत्वज्ञानध्वंसिज्ञानसामर्थ्यप्रतिबन्धकत्वे मानाभावान्मध्ये जातं ज्ञानमनिवर्तकमित्यशक्यं वक्तुमन्त्यस्य च ज्ञानस्य निवर्तकत्वे किमन्त्यत्वं हेतुः किंवा ज्ञानत्वमाहोस्विदैक्यज्ञानत्वमिति विकल्प्याऽऽद्ये दोषमाह—स्यादिति । प्रजापतेरन्त्यमैक्यज्ञानमज्ञानध्वंसीत्यत्रान्त्यत्वं हेतुरज्ञानध्वंसित्वेनानियतोऽन्यस्य यजमानस्यास्मदादीनां चान्त्येषु ज्ञानेषु तद्ध्वंसादृष्टेरित्यर्थः ॥७५॥

द्वितीयं दूषयति—नान्त्य इति । अस्मासु प्रजापतौ च नान्त्यं ज्ञानं ज्ञानत्वादज्ञानध्वंसि पूर्वज्ञानेषु बन्धहेत्वज्ञानध्वंसित्वादृष्टेर्ज्ञानत्वहेतोरनैकान्त्यादित्यर्थः । तृतीयं प्रत्याह—ऐकात्म्येति । प्रजापतेरन्त्यमैक्यज्ञानं तथात्वादज्ञानध्वंसीत्ययुक्तमुपान्त्यतादृग्ज्ञानवदन्त्येऽपि तदयोगादुपान्त्यहेतोरनैकान्त्यादित्यर्थः ॥७६॥

प्रजापतेरैक्यधीरयुक्तेति पूर्वपक्षे सिद्धान्तयति—स्याद्वेति । वाशब्दः पक्षव्यावृत्त्यर्थः । प्रजापतेः सुप्तप्रबुद्धवत्प्रकृष्टादृष्टोत्थकार्यकारणवत्त्वात्पूर्वकल्पीयपदपदार्थवाक्यस्मरणवतः स्मृतिविपरिवर्तितवाक्याद्विचार्यमाणाद्वाऽदृष्टसहकृतात्तत्त्वज्ञानं स्याल्लोके विशिष्टादृष्टोत्कृष्टकार्यकरणानां प्रज्ञाद्यतिशयदर्शनात्तेन च ज्ञानेन जन्मान्तरादिहेत्वविद्याक्षयेऽप्यारब्धं कर्म तज्जं च भयारत्याद्यविद्यालेशतो भविष्यतीति भावः । लोकवदित्येतद्व्याचष्टे—यथेति । इहेति व्यवहारभूमिरुक्ता । कार्यकरणैर्युक्तानामिति शेषः । यथोक्तकार्यकरणवन्तो मनुष्या न संभवन्तीति शङ्कां निवारयति—नृणामिति । स्याद्वेत्यादिनोक्तं दार्ष्टान्तिकमाह—ज्ञानादाविति । उक्तदृष्टान्तात्प्रजापतेरपि निरतिशयज्ञानकर्मवासनावतस्तज्जकार्यकरणयुक्तस्य ज्ञानवैराग्यादौ वैशारद्यं गम्यतेऽतस्तस्य ब्रह्मास्मीति ज्ञानमप्याचार्याद्यपेक्षां विना स्मर्यमाणवाक्यादेव स्यादित्यर्थः ॥७७-७८॥

तस्य ज्ञानादिवैशारद्ये पौराणिकीं स्मृतिमुदाहरति—ज्ञानमिति । अप्रतिघमप्रतिबद्धं निरङ्कुशमित्येतत्प्रत्येकं संबध्यते । यस्यैतच्चतुष्टयं सहसिद्धं स निरवर्ततेति संबन्धः ॥७९॥

सहसिद्धत्वस्मृतेः "सोऽबिभेदि"त्यादिश्रुतिविरुद्धत्वादप्रामाण्यमिति विरोधाधिकरणन्यायेन[1] शङ्कते—सहैवेति । सत्येव सहजे ज्ञाने स्वहेतोर्भयाद्यपि स्यादिति चेन्नेत्याह—ध्वान्तेति ॥८०॥

---

१. विरोधाधिकरणम्—विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम् ( १.३.२ ) स्मृतेः श्रुतिविरोधे प्रामाण्यं प्रत्यनपेक्षेत्वमवगन्तव्यम् । असति विरोधे हि अनुमानं स्मृतिः प्रमाणमित्यर्थः ।

नैवमन्योपदेशार्थप्रतिषेधपरत्वतः । सहसिद्धगिरस्तस्मान्नैष दोषः प्रसज्यते ॥८१॥
श्रद्धातात्पर्यशुश्रूषाप्रणिपातादि साधनम् । विद्याजन्मैकहेतूनां वैफल्यं चेन्न तद्यतः ॥८२॥
गुणवद्दोषवद्रूपविकल्पितसमुच्चितम् । विद्याजन्मैकहेतुत्वाल्लोकवत्स्यात्समञ्जसम् ॥८३॥
रूपादिज्ञानसंभूतौ तद्धेतूनामनेकधा । विकल्पो दृश्यते लोके तथेहापीति निश्चितिः ॥८४॥
गुणवद्दोषवत्त्वं च तथैव च समुच्चयः । प्रबोधोत्पत्तिहेतूनां दृष्टो बोधादिकार्यकृत् ॥८५॥
वृषदंशादयो रात्रौ नेत्रगोचरसंगति- । मात्रेण रूपं वीक्षन्ते नापेक्षन्ते ततोऽपरम् ॥८६॥
अतीतानागताद्यर्थज्ञानोत्पत्तौ च हेतुताम् । योगिनां मन एव स्यादस्माकं सर्व एव तु ॥८७॥
दोषवद्गुणवत्त्वेन विकल्पोऽनेकधा पुनः । मातृमानप्रमेयाणां गुणवद्दोषवत्त्वतः ॥८८॥
नातिक्रान्तभवे त्वासीद्ब्रह्मविद्या प्रजापतेः । इत्येतद्गम्यतेऽविद्याभयारत्यादिमत्त्वतः ॥८९॥

श्रुतिस्मृत्योर्विरोधं समाधत्ते—नैवमिति । विरोधे चाप्रामाण्यं परस्परव्याघातादित्याचार्याः । न चात्र सर्ववेष्टनस्मृतेः स्पृष्ट्वोद्गानश्रुतेश्च मिथोविरोधवद्विरोधोऽस्तीत्याह—अन्येति । अन्येनाऽऽचार्येणोपदेशो यः क्रियमाणस्तस्यार्थस्य निषेधपरत्वात्सहसिद्धवाक्यस्य तज्ज्ञानात्प्राक्प्रजापतेर्भयाद्युपपत्तिरूर्ध्वं चाज्ञानलेशादतो न विरोधोऽस्तीत्यर्थः ॥८१॥

ज्ञानोत्पत्तेराचार्याद्यनपेक्षत्वे श्रद्धादिसाधनविधानानर्थक्यादनेकश्रुतिस्मृतिविरोधः स्यादिति शङ्कते—श्रद्धेति । आदिपदेन शमादिग्रहः । पुरुषभेदेनार्थवत्त्वं चाविशेषश्रुत्यादिविरुद्धमिति भावः । चोदितं विरोधं धुनीते—न तदिति । श्रद्धादिविध्यानर्थक्याभावे हेतुमाह—यत इति ॥८२॥

तमेव व्यनक्ति—गुणवदिति । गुणवत्त्वं दोषवत्त्वमित्यनेन रूपेण युक्तानां श्रद्धादीनां विकल्पितानां समुच्चितानां च विद्याजन्मन्येकस्मिन्नुपयुक्तत्वात्तात्पर्यादिविधानं स्यादर्थवल्लोके रूपादिज्ञाने निमित्तविकल्पादिदृष्टेरित्यर्थः । श्रद्धादिषु गुणवत्त्वमुत्कर्षो दोषवत्त्वं निकर्ष इति भेदः ॥८३॥

लोकवदित्युक्तं विवृणोति—रूपादीति । तद्धेतूनां रूपादिधीहेतूनामालोकादीनामिति यावत् । इहेत्यैकात्म्यज्ञानोक्तिः ॥८४॥

न केवलं विकल्प एव तद्धेतूनां दृष्टः किंतु गुणवत्त्वादयोऽपीत्याह—गुणवदिति । रूपादिधीकार्यानुरोधी च समुच्चयादिरित्याह—बोधादीति । आदिपदं व्यवहारार्थम् ॥८५॥

तत्रोदितानुदितहोमवदव्यवस्थितं विकल्पमुदाहरति—वृषदंशादय इति । आदिशब्देन मार्जारवदन्येऽपि रात्रिचरा गृह्यन्ते कथमन्यथाऽन्धकारमध्यवर्तिनस्ते मूषकादि गृह्णीयुरित्यर्थः ॥८६॥

विकल्पार्थं विधान्तरमाह—अतीतेति । हेतुतां गतमिति शेषः । ते हि योगजनितप्रकृष्टादृष्टवशाद्युक्तावस्थायां मनोमात्रेण करतलामलकवदशेषमपि पश्यन्तीत्यर्थः । कथं तर्हि समुच्चयस्तत्राऽऽह—अस्माकमिति ॥८७॥

विकल्पसमुच्चयावुक्तौ विधान्तरेण विकल्पं प्रपञ्चयति—दोषवदिति । मात्रादीनां धीहेतूनां दोषवत्त्वगुणवत्त्वाभ्यां कथमनेकधा निमित्तविकल्पस्तत्राऽऽह—मात्रिति । माता ज्ञानपरिणामी साभासान्तःकरणाख्यस्तस्य गुणवत्त्वं प्रकृष्टप्रज्ञत्वादि । वैपरीत्यं दोषवत्त्वं, मानं चक्षुरादि, तस्य दोषस्तिमिरादिःतदभावो गुणो, मेयदोषो दूरत्वादिस्तत्र गुणः संनिकर्षादिरेवं निमित्तानां विकल्पसमुच्चयसंभवात् । प्रजापतेः श्रद्धाद्यतिरेकेण ज्ञानोदयेऽपि न तद्वैयर्थ्यम्। अस्माकं ज्ञानहेतुत्वाद्वेदान्ततात्पर्यादिज्ञानं सर्वेषामेव ज्ञानसाधनम् । आचार्यादिषु विकल्पसमुच्चयौ । न चात्र नियामकाभावो "यो ब्रह्माणं विदधाती"ति श्रुतौ प्रजापतिबुद्धावीश्वरानुग्रहादाजन्मतो वेदाविर्भावोक्तेरिति भावः ॥८८॥

यत्तु तस्य यजमानावस्थायां ज्ञानं न जातमिति तदङ्गीकरोति—नेत्यादिना । अङ्गीकारे हेतुमाह—इत्येतदिति ॥८९॥

१. सर्ववेष्टनस्मृतेः "औदुम्बरी सर्वा वेष्टितव्ये"ति स्मृतेः । स्पृष्ट्वेति । "औदुम्बरीं स्पृष्ट्वोद्गायेदि"ति श्रुतेः ।

विद्यायां चेन्न मोक्षोऽभूत्कस्याऽऽशा नो वृथा भवेत् । मोक्षे भयश्रुतेर्नार्थस्तत्र को मोह इत्यतः ॥९०॥

केवलं विराडैक्यज्ञानात् भयध्वस्तिरिति पूर्वपक्षः

एकाकिनो विराजो वाऽविद्यासंवीतचेतसः । पूर्वजन्मोत्थसंस्काराद्भयमाविरभूदिह ।.९१॥

भयप्रध्वंसिनं हेतुमीक्षांचक्रेऽथ जातभीः । मत्तो यन्नान्यदस्तीति ह्यथ कस्माद्बिभेम्यहम् ॥९२॥

एक एवाहमस्मीह द्वितीयाद्धि भयोत्थितिः । द्वितीयो न मदन्योऽस्ति कस्माद्धेतोर्भयं मम ॥९३॥

तत एव विराडैक्यविज्ञानादेव तद्भयम् । वीयाय न परज्ञानादतोऽरतिरपीष्यते ॥९४॥

एकाक्यस्मीतिविज्ञानात्त्रैलोक्यात्मैकगोचरात् । अगाद्भयं यतोऽतोऽभूदरतिस्तस्य कामिनः ॥९५॥

सम्यग्विज्ञानविध्वस्तावविद्यायाः कुतोऽरतिः । ध्वस्तान्ध्यस्यापि सा चेत्स्यादनिर्मोक्षः प्रसज्यते ॥९६॥

यत्पुनरन्त्यं ज्ञानमज्ञानध्वंसीति परिचोद्य परास्तं तदनुमोदते—विद्यायामिति । "ब्रह्म वेद",त्यादिश्रुतेर्विद्याकालैव मुक्तिः । कस्य प्रजापतेश्चेद्विद्यायां सत्यामपि सा नाभूत्तदा यत्र मनोरथोऽपि वृथाऽस्माकं स्यात् "तत्र को मोह" इत्यादिवाक्याद्विद्यासामर्थ्याद्भयाद्यभावश्रुतेश्च नार्थः स्यात् । अतः "स्याद्वा सत्साधनोत्पत्तेरि"त्यत्रोक्तमुपेयमित्यर्थः । यद्वा यदि विद्यायां विद्यमानायामेव प्रजापतेर्मोक्षो नाऽऽसीत्तर्हि कस्य मोक्षविषयो मनोरथो वृथा न स्यात् । नहि प्रजापतेर्विद्या मुक्तये न पर्याप्ता सैवास्माकं तद्धेतुरिति श्रद्धातुं शक्यमिति पूर्वार्धस्यार्थः उत्तरार्धस्य पूर्ववदेवार्थः ॥९०॥

वेदान्ततात्पर्यज्ञानमनननिदिध्यासनसाधनात्प्रणिपाताद्यनपेक्षाज्जन्मान्तरीयतदपेक्षादैक्यज्ञानाद्विराजो भयध्वस्तिरुक्ता । इदानीं केवलविराडैक्यज्ञानाद्भीतिध्वस्तिरिति पूर्वपक्षयन्नादौ सोऽबिभेदित्यस्य तात्पर्यमाह—एकाकिन इति । वाशब्दः सिद्धान्तव्यावृत्त्यर्थः । नन्वेकाकित्वं भयध्वस्तिहेतुर्द्वितीयाद्धि भयोत्थितिस्तत्कथमेकाकिनो विराजो भीतिस्तत्राऽऽह—अविद्येति । साऽपि न केवला भीतिहेतुः सुप्तावदृष्टेरित्याशङ्क्याऽऽह—पूर्वेति । यजमानकालीनभयजनितवासनासहायानुसारादिति यावत् । इहेति फलावस्थोक्तिः ॥९१॥

स हायमित्यादेरर्थमाह—भयेति । ईक्षाकारणं पृच्छति—अथेति । "आर्तो जिज्ञासुरि"ति स्मृतेरार्तिरपि कदाचिदालोचने हेतुरिति मत्वाऽऽह—जातभीरिति । यन्मदन्यदित्यादेरर्थमाह—मत्तो यदिति । यन्मत्तोऽन्यन्मे भयकारणं तदन्यद्यस्मान्नास्ति तस्मादहं कस्माद्धेतोर्बिभेमीति योजना । इतिपदमीक्षासमाप्त्यर्थम् । अथशब्दस्तस्मादर्थे ॥९२॥

कस्माद्धीत्यादिवाक्यं व्याकरोति—एक इति । अहंशब्दस्त्रैलोक्यात्मा जीवाविष्टो देहः इहेति संसारमण्डलोक्तिः । तथाऽपि कथं भीतिराहित्यं तत्राऽऽह—द्वितीयादिति । चोरादिदर्शने भयजन्म प्रसिद्धमिति हिशब्दार्थः । तर्हि तद्धेतुर्द्वितीयोऽपि कल्प्यतां नेत्याह—द्वितीय इति । प्रतीतिर्हि प्रत्येतव्ये मानं न च द्वितीयो भात्यतो हेत्वभावान्न भीतिरिति निगमयति—कस्मादिति ॥९३॥

तत एवेत्यादेरर्थमाह—तत इति । सिद्धान्ते परात्मैक्यज्ञानं तत्पदेन परामृष्टं तन्निराचष्टे—नेति । तत्र हेतुः—अत इति । भयविगमेऽपि प्रजापतेररतिरिच्छेत्यादि दृश्यते परज्ञाने च तदयोगो निमित्ताभावादतो न तस्य तज्ज्ञानाद्भीतिध्वस्तिरित्यर्थः ॥९४॥

कथं पुनर्ध्वस्तभीतेस्तस्यारतिरित्याशङ्क्योक्तमनुवदति—एकाकीति । अद्वैतज्ञानं व्यावर्तयति—त्रैलोक्येति । यस्मादेकाकित्वज्ञानाद्भयमपगतं तस्मादेतस्यारतिरासीदित्याह—यत इति । ननु भीतिनिवर्तकमैक्यज्ञानमरतिमपि निवर्तयेन्नतु तामुपजनयेदत आह—कामिन इति । असहायमेकाकित्वज्ञानं भीतिध्वंसि कामसहितमरतिहेतुरिति भावः ॥९५॥

परज्ञानाद्भीतिध्वस्तावपि कामुकस्यारतिः स्यादित्याशङ्क्याऽऽह—सम्यगिति । ज्ञानिनो ध्वस्ताज्ञानस्य न कामोऽपि युक्तो हेत्वभावात्तत्कथमरतिरित्यर्थः । विपक्षे दोषमाह—ध्वस्तेति । निवृत्ताविद्यस्यापि यद्यरतिरस्ति तथा सत्यनर्थत्वात्तस्य मुक्तेरनुपपत्तिः स्यादित्यर्थः ॥९६॥

नाविद्याघातिविज्ञानाद्भयध्वस्तिरभूद्विभोः । अरत्युद्भूतिलिङ्गेन ह्ययमर्थोऽवसीयते ।।९७।।
न चेहावसरोऽस्त्यस्य सम्यग्ज्ञानस्य कश्चन । पिण्डसृष्टौ प्रवृत्तायां नाकस्माज्ज्ञानगीः शुभा ।।९८।।
प्रक्रियानुचितं वस्तु सुसाध्वपि समीरितम् । अकालकुसुमानीव नैव प्रीतिकरं सताम् ।।९९।।
मिथुनारतिमोहादेः प्रत्यग्याथात्म्यवेदिनः । आगमैस्तु निषिद्धत्वात्कुतस्तस्येह संभवः ।।१००।।
आत्मक्रीड आत्मरतिक्रियावानिति चाऽऽगमः । तथाऽऽत्ममिथुन इति यस्त्वात्मरतिरित्यपि ।। १ ।।
कार्यकारणसंबन्धः साविद्यस्यैव युक्तिमान् । अपूर्वानपराद्युक्तेर्न ध्वस्तान्ध्यस्य युज्यते ।। २ ।।

तत्त्वज्ञानमेव भ्रमनिवृत्तिकारणमिति सिद्धान्तः

अप्युत्पन्नात्मबोधानामधिकारासमाप्तितः । अरत्यादि यथा दृष्टं तथैव स्यात्प्रजापतेः ।। ३ ।।
अप्रविष्टस्वभावस्य सशब्देन परिग्रहात् । स एष इत्यत्र वाक्ये नैवाऽऽकस्मिकशब्दनम् ।। ४ ।।

मू.—स वै नैव रेमे तस्मादेकाकी न रमते स द्वितीयमैच्छत् । स हैतावानास यथा स्त्रीपुमाँसौ संपरिष्वक्तौ स इममेवात्मानं द्वेधाऽपातयत्ततः पतिश्च पत्नी चाभवतां तस्मादिदमर्धबृगलमिव स्व इति ह स्माऽऽह याज्ञवल्क्यस्तस्मादयमाकाशः स्त्रिया पूर्यत एव ताँ समभवत्ततो मनुष्या अजायन्त ।।३।।

प्रजापतेर्भीतिध्वस्तिर्न परैक्यज्ञानादिति फलितं निगमयति—नाविद्येति । उक्तेऽर्थे पूर्वोक्तमेव श्रौतं लिङ्गं स्मारयति—अरतीति । परदर्शनराहित्यमरतिमतां प्राणभृतां प्रसिद्धमिति हिशब्दार्थः ।।९७।।

इतश्च न परज्ञानाद्विराजो भीतिध्वस्तिरित्याह—न चेति । विराजो मन्वादिसर्गाधिकारे परज्ञानस्य निरवकाशत्वं स्फोरयति—पिण्डेति । पिण्डशब्देन मन्वादिदेहो गृह्यते । अकस्मात्प्रकरणविच्छेदं विनेत्यर्थः ।।९८।।

विराट्प्रकरणेऽपि परज्ञानं विशिष्टफलत्वादुपदिश्यतामित्याशङ्क्याऽऽह—प्रक्रियेति । अथात्र परैक्यज्ञानं भीतिध्वंसीति भाष्यकृतोक्तं तत्कथं भवान्नानुमन्यते ? तत्राऽऽह—समीरितमिति । भाष्यकारोक्तं विशिष्टफलमपि परैक्यज्ञानमनवसरदुस्थं विदुषां न हृदयंगममित्यत्र दृष्टान्तमाह—अकालेति ।।९९।।

अरत्युद्भूतिलिङ्गाद्विराट्प्रकारणाच्च परधियोऽनवकाशत्वमुक्तं तत्रैव लिङ्गान्तरमाह—मिथुनेति । आदिशब्देन द्वितीयेच्छादिग्रहः । इहेति प्रजापतिसृष्टिप्रकरणोक्तिः । तस्येति प्रकृतविद्वदुक्तिः ।।१००।।

परज्ञानवतो मैथुनादिदुर्व्यापारवारकश्रुतिस्मृतिरूपागमानुदाहरति—आत्मेति । आत्मन्येव क्रीडा यस्य न त्वनात्मनि पुत्रादाविति तथोच्यते रतिरेव क्रिया तद्वानिति क्रियान्तरं निरस्यते । "किमिच्छन्कस्य कामाये"त्यादिवाक्यं संग्रहीतुं चशब्दः । तथेत्युक्तागमानुसारेणेति यावत् । आत्मन्येव मिथुनं न द्वितीये वस्तुनीति यथोक्तम् । स्मृतेरर्थस्तु वक्ष्यते ।।१०१।।

विराड्ज्ञानमेवात्र भयध्वंसि न परज्ञानमित्यत्र लिङ्गान्तरमाह—कार्येति ।।१०२।।

एवं पूर्वपक्षयित्वा सिद्धान्तमाह—अप्युत्पन्नेति । वसिष्ठवामदेवादीनामुत्पन्नसम्यग्ज्ञानानामपि स्वाधिकारसमाप्तिपर्यन्तमविद्यालेशादरत्यादिदर्शना प्रजापतेरपि समुत्पन्नसम्यग्बोधस्यैव यावदधिकारमबोधलेशेनारत्यादिसंभवात्परज्ञानादेव तस्य भयनिवृत्तिः"यावदधिकारमवस्थितिराधिकारिकाणामि"[1]ति न्यायादित्यर्थः ।।१०३।।

यत्तु प्रक्रियानुचितमित्यादि तत्राऽऽह—अप्रविष्टेति । स एष इह प्रविष्ट इति वाक्ये सशब्देनाऽऽत्मैवेदमग्र

१. यावदधिकारमवस्थितिराधिकारिकाणाम् ( ब्र० ३.३.३२ ) अधिकारिकाणां जगतः परिपालने नियुक्तानां विराट्पुरुषसूर्यचन्द्रेन्द्रवसिष्ठादीनामधिकारसमाप्तिपर्यन्तमवस्थितिः अभ्युपगन्तव्या, अधिकारतन्त्रत्वात् । स्थितेः । जीवन्मुक्तानां "तस्य तावदेव चिरं" इत्यादिना प्रारब्धकर्मानुभवस्योक्तत्वात् वसिष्ठादीनां बहुजन्मप्रापकप्रारब्धकर्मसम्भवात् ।

असंतोषाक्षमाहेतोश्चेतसो याऽनवस्थितिः । सा विध्वस्तात्मोहस्याप्यरतिः संबभूव ह ।। ५ ।।
यतोऽरतिग्रहग्रस्तधिषणोऽभूत्प्रजापतिः । एकाकी तेन तत्सृष्टावेको न रमते नरः ।। ६ ।।
श्रौत्याऽनया प्रसिद्ध्या तु कार्यलिङ्गैश्च कारणम् । सदाऽनुमिन्वते सांख्यास्तथा चान्येऽपि वादिनः ।। ७ ।।
अरत्यपनुनुत्सुः सन्स द्वितीयं यथारुचि । विराडैच्छदृतेऽविद्यां नेच्छेशस्योपपद्यते ।। ८ ।।
सोऽरत्यतिग्रहाविष्टस्तदपध्वस्तये विराट् । संसक्तजायापुम्मानो यावांस्तावान्बभूव ह ।। ९ ।।
स्त्रीपुमांसौ परिष्वक्तौ यावन्मानौ बभूवतुः । स तावत्परिमाणोऽभूद्योगेन परमेश्वरः ।।१०।।
इच्छामात्रमरत्युत्थं पुंस्यलब्धस्थिति स्त्रियम् । प्रयुङ्क्ते योग्यतस्तस्यास्तदलब्ध्वाऽरतिः प्रभोः ।।११।।
उपस्थिते च मनसि तस्य योषिदभूत्क्रतोः । सत्यसंकल्पहेतोः स स्त्रीसक्त इव चाभवत् ।।१२।।

आसीद्यन्मदन्यन्नास्तीत्यत्रोक्तब्रह्मणोऽप्रविष्टस्वभावस्य परामर्शः । न ह्यप्रकृतं सर्वनाम्ना शक्यं परामष्टुम् । न चान्यत्र ब्रह्म प्रस्तुतं तद्धेदमिति च संनिहितमेषशब्देनानुकृष्यते । न चाव्याकृतवाक्येऽपि तच्छब्देन प्रकृतत्वं विना कारणतया ब्रह्मपरामर्शोऽतो यन्मदन्यदित्यादौ न प्रक्रयानुचितस्य परस्योक्तिः । न च विराजोऽपि परं परिहृत्य स्रष्टृत्वादि श्लिष्टमिति भावः ।।१०४।।

भयभाजो विराजः संसारित्वं जीवन्मुक्तस्येव दर्शयता परज्ञानादेव भयध्वस्तिरुक्ता । संप्रति तस्य संसारित्वे हेत्वन्तरं वद"न्स वै नैव रेमे" इत्यत्रारतिं व्याकरोति—असंतोषेति । अवधारणार्थो हशब्दः । अविद्यालेशवशादरतिराधुनिकजीवन्मुक्तेष्वपि प्रसिद्धेत्येतदर्थो वा । इष्टाप्राप्तिकृतो मानसो विषादोऽसंतोषस्तस्मादक्षमा कातरताऽन्तश्चित्तस्य याऽनवस्थितिररतिरनुल्लासरूपा स्वानुभवसिद्धा सा पूर्वोक्तपरज्ञानध्वस्तमोहस्यापि विराजो मोहलेशाज्जातैवेत्यर्थः ।।१०५।।

तस्मादित्यादेरर्थमाह—यत इति । नरशब्देनाविद्वान्मनुष्यत्वाद्यभिमानवानुच्यते ।।१०६।।

कार्यस्थारतिः कारणस्थारतेर्लिङ्गमित्यनुमानप्रक्रियां सूचयन्तीं श्रुतिमाश्रित्य कारणं कार्यलिङ्गकानुमानैकगम्यमिति वादिभ्रान्तिरिति तद्भ्रान्तिमूलं प्रसङ्गाज्ज्ञापयति—श्रौत्येति । परिमितत्वादिलिङ्गसमुच्चयार्थश्चकारः । सदेति नित्यानुमेयत्वद्योतनम् । न च सांख्यग्रहणं परिसंख्यार्थमिति मत्वाऽऽह—तथा चेति । स्वभाववादिव्यतिरिक्तसर्ववादिपरिग्रहार्थोऽपिशब्दः ।।१०७।।

स द्वितीयमैच्छदित्यस्यार्थमाह—अरतीति । कीदृशी द्वितीयस्येच्छाविषयतेति शङ्कित्वोक्तं यथारुचीति । परज्ञानवतो विराजोऽविद्याभावात्कथमिच्छेत्याशङ्क्याऽऽह—ऋत इति । प्राग्ज्ञानोत्पत्तेरज्ञानस्य सत्त्वादूर्ध्वं च तल्लेशादिच्छा तस्य युक्तेति भावः ।।१०८।।

स हैतावानासेत्यस्यार्थमाह—सोऽरतीति । स हि विराडरतिरूपातिविषमग्रहाविष्टस्तद्ध्वस्त्यर्थं स्त्रीपिण्डसंपिण्डितमात्मपिण्डं कल्पयन्सम्यक्संसक्तयोर्दंपत्योरेकीभूतयोर्यत्परिमाणः पिण्डस्तत्परिमाणपिण्डवानात्मीयसंकल्पमात्रादासीदित्यर्थः । मिथःसंपृक्तदंपतिपिण्डपरिमाणस्य लोकप्रसिद्धत्वार्थो हशब्दः ।।१०९।।

यथेत्यादिवाक्यं व्याचष्टे—स्त्रीपुमांसाविति । तावत्परिमाणत्वे हेतुमाह—योगेनेति । ध्यानकर्मतद्वासनासहितसंकल्पसामर्थ्यादित्यर्थः ।।११०।।

"स द्वितीयमैच्छदि"ति द्वितीयमात्रस्येष्टत्वश्रुतेस्तस्य कथं स्त्रीत्वं कथं वा दृष्टान्ते स्त्रीग्रहणमित्याशङ्क्याऽऽह—इच्छेति । एकाकित्वादरतिस्ततो द्वितीयेच्छा तन्मात्रं स्त्रीविशेषणादृते द्वितीयमात्रविषयं, तदरत्यपनोदासमर्थं पुंस्यनवस्थं द्वितीयत्वेन स्त्रियमुपस्थापयति तदलाभाद्धि प्रजापतेररतिस्तस्मादरत्यपघाते स्त्रियो योग्यत्वात्सैव तदिच्छाकर्मात एव दृष्टान्तेऽपि स्त्रीग्रहणमित्यर्थः ।।१११।।

स्त्रीसंबन्धादेवारतिध्वस्तिरिति तद्ग्रहश्चेत्तस्या जन्म किमर्थं नोच्यते तत्राऽऽह—उपस्थिते चेति । विराजः सत्यसंकल्पकत्वात्क्रतोः संकल्पान्मनसि योषिदाविरासीत्सा च बहिरुपस्थिता योषिदिवार्थक्रियासमर्थेत्यर्थः ।

मिथुनद्वारिका याऽस्य सृष्टिः सैवाधुनोच्यते । यतोऽसाविममेवाथ द्विधाऽऽत्मानमपातयत् ॥११३॥
इममेवेत्यवधृतेर्न विराजो द्विधाऽभिधा । यः स्त्रीपुंस्परिमाणोऽभूत्स एवातो द्विधाकृतः ॥११४॥
पातनादेव निर्वृत्तेः पतिपत्न्यौ जगत्यपि । योषिद्विदलवद्भाति पुंसः शुक्त्यादिभागवत् ॥११५॥
स्त्र्याकाङ्क्षो हि तु भागोऽयं पुमाकाशस्ततः स्त्रिया । सम्यगापूर्यते व्योम शुक्तिसंपुटवद्ध्रुवम् ॥११६॥
विराजमसृजद्ब्रह्मा सोऽसृजत्पुरुषं विराट् । पुरुषं तं मनुं विद्धि यस्येयं मानवी प्रजा ॥११७॥
तां स्त्रियं मैथुनेनाथ मनुः समभवत्तदा । स्वकर्मभिर्नियुक्तः संस्तथा चोत्पाद्यकर्मभिः ॥११८॥

मू.—सो हेयमीक्षांचक्रे कथं नु माऽऽत्मन एव जनयित्वा संभवति हन्त तिरोऽसानीति सा गौरभवदृषभ इतरस्ताँ समेवाभवत्ततो गावोऽजायन्त बडवेतराभवदश्ववृष इतरो गर्दभीतरा गर्दभ इतरस्ताँ समेवाभवत्तत एकशफमजायताजेतरा भवद्बस्त इतरोऽविरितरा मेष इतरस्ताँ समेवाभवत्ततोऽजावयोऽजायन्तैवमेव यदिदं किंच मिथुनमा पिपीलिकाभ्यस्तत्सर्वमसृजत ॥४॥

भूरिजात्यभिसम्बन्धो जन्यकर्मवशात्स्त्रियाः । मनोश्चैवं ससर्जेदमापिपीलिकमात्मनः ॥११९॥
द्वन्द्वयुक्तं जगत्यस्मिन्यावत्किंचित्समीक्ष्यते । तदस्राक्षीन्मनुः सर्वं स्त्रीपुंद्वंद्वप्रयोगतः ॥१२०॥

मू.—सोऽवेदहं वाव सृष्टिरस्म्यहँ हीदँ सर्वमसृक्षीति ततः सृष्टिरभवत्सृष्ट्याँ हास्यैतस्यां भवति य एवं वेद ॥५॥

स मनसा स्त्रियं सृष्ट्वा तस्यां लौकिकवदासक्तोऽभूदिति स्त्रीनिष्पत्तिफलमाह—स इति । फलपर्यन्तत्वं सक्तेर्वक्तुं चशब्दः ॥११२॥

मनसा स्त्रीसृष्टिवद्वक्ष्यमाणा मनुष्यादिसृष्टिरपि स्यादिति स्त्रीसृष्टिरुत्तरसृष्टौ नोपयुक्तेत्याशङ्क्य 'स इममि''त्यादिवाक्यतात्पर्यमाह—मिथुनेति । कायिकसृष्ट्यनन्तरं मानसवाचिकसृष्टिद्वयं स्पष्टीभविष्यतीत्यथशब्दार्थः । अतःशब्दपर्यायो वाऽथशब्दः ॥११३॥

ननु द्वेधाभावो विराजो वा संसक्तस्त्रीपुंमानस्य पिण्डस्य वा?आद्ये सशब्देन विराड्ग्रहविरोधस्तस्य कर्मत्वाद्द्वितीये त्वात्मशब्दानुपपत्तिस्तत्राऽऽह—इममिति । अतः सशब्देन कर्तृतया विराड्ग्रहणमविरुद्धमिति शेषः । कस्य तर्हि द्विधाकरणं तत्राऽऽह—य इति । पिण्डो विशेष्यते । विराजो द्विधाकरणाभावोऽतःशब्दार्थः । न च तत्राऽऽत्मशब्दायोगस्तस्यापि विराडाकारत्वादिति भावः ॥११४॥

तत इत्यादेरर्थमाह—पातनादिति । "अर्धो वा एष आत्मनो यत्पत्नी"तिश्रुत्यन्तरमपिना सूचयति । तस्मादिदमित्यादेरर्थमाह—योषिदिति । विदलं भागः आदिशब्दाद्वेण्वादिग्रहः ॥११५॥

तस्मादयमित्यादेरर्थमाह—स्त्र्याकाङ्क्षो हीति । पुंस्त्रीभागयोर्मिथःसापेक्षत्वप्रसिद्ध्यर्थो हिशब्दः । व्योमेति पुमाकाशोक्तिः । शुक्तिभागयोः संपुटीकरणात्संपूर्णतावत्पुंसः स्त्रिया नित्यमेव संपुटिततया पूर्णतेत्याह–शुक्तीति ॥११६॥

ननु मनुशतरूपाभ्यां मनुष्यादिसृष्टिर्वक्ष्यते । न च तयोः सृष्टिमशिष्ट्वा ताभ्यामन्यसृष्टिर्वक्तुं युक्तेति तत्राऽऽह—विराजमिति । स्रष्टा हि पुरुषो न सृज्यकोटिमनुविशेदित्याशङ्क्याऽऽह—पुरुषमिति । द्वेधाऽपातयदित्यत्र द्वेधापातनव्याजेन मनुशतरूपयोः सृष्टिरुक्तेति भावः ॥११७॥

तां समभवदित्यस्यार्थमाह—तामिति । यदा सशतरूपो मनुरासीदित्यथशब्दार्थः । कथं पुनर्मन्वात्मा प्रजापतिर्दुहितृगमने प्राकृतैरपि निन्दिते धर्मविदामग्रणीर्विस्रब्धं प्रववृते तत्राऽऽह—स्वकर्मभिरिति ॥११८॥

सा गौरित्यादेस्तात्पर्यमाह— भूरीति । एवमित्यादेरर्थमाह—एवमिति ॥११९॥

तदेव विवृणोति—द्वन्द्वेति । न केवलमुक्तानां गवादीनामेवात्र सृष्टिरिष्टा किंतु सर्वस्यैव स्त्रीपुंद्वंद्वस्येति वक्तुमेवमित्यादि वाक्यमित्यर्थः ॥१२०॥

मनोः सशतरूपस्य पिण्डसृष्टिरिहोदिता । सोमाग्नीन्द्रादिका याऽपि साऽप्युक्तवदपेक्ष्य सः ।।२१।।
जगत्सृष्ट्वाऽऽत्मनः साक्षाज्ज्ञानकर्मादिसाधनः । अवेत्सृष्टं जगत्स्रष्टा ह्यहं वावाखिलं जगत् ।।२२।।
अहं वाव जगत्सृष्टं यतोऽसृक्ष्यहमेव तत् । सृष्टिनामा मनुर्जात एतस्मादेव कारणात् ।।२३।।
यथा मनुरिदं सृष्टमहमस्मीत्यबुध्यत । एवमन्योऽपि यो वेद सृष्टिकृत्स्यादसावपि ।।२४।।

मू.—अथेत्यभ्यमन्थत्स मुखाच्च योनेर्हस्ताभ्यां चाग्निमसृजत तस्मादेतदुभयमलोमकमन्तरतोऽलोमका हि योनिरन्तरतः । तद्यदिदमाहुरमुं यजामुं यजेत्येकैकं देवमेतस्यैव सा विसृष्टिरेष उ ह्येव सर्वे देवाः । अथ यत्किंचेदमार्द्रं तद्रेतसोऽसृजत तदु सोम एतावद्वा इदँ सर्वमन्नं चैवान्नादश्च सोम एवान्नमग्निरन्नादः सैषा ब्रह्मणोऽतिसृष्टिः । यच्छ्रेयसो देवानसृजताथ यन्मर्त्यः सन्नमृतानसृजत तस्मादतिसृष्टिरतिसृष्ट्याँ हास्यैतस्यां भवति य एवं वेद ।।६।।

सृष्टानामथ भूतानामग्न्यादिप्रमुखा इमाः । अनुग्रहीत्रीर्वक्ष्यामीत्यतः प्रववृते श्रुतिः ।।२५।।
भेदादधिकृतेरेषामग्न्यादीनामनेकधा । भेदो वर्णेषु सर्वेषु ब्रह्मक्षत्रादिलक्षणः ।।२६।।
अनुग्राहकदेवानां सर्गोऽयं प्रस्तुतो महान् । तत्राग्नेरुदितोत्पत्तिर्न त्विन्द्रादेरिहोच्यते ।।२७।।
अविद्याधिकृतौ तेषां सृष्टिरूर्ध्वं प्रवक्ष्यते । कर्माधिकृतिसम्बन्धप्रतिपत्त्यर्थमेव तु ।।२८।।

सोऽवेदित्यादि व्याकर्तुं वृत्तं कीर्तयति—मनोरिति । इहेति पूर्वसृष्टिप्रकरणोक्तिः । मन्वादेर्यः पिण्डस्तस्य विराजः सकाशान्मनुष्यादेश्च मन्वादिपिण्डादुक्ता सृष्टिरित्यनुवादार्थः । कथं सृष्टिं पूर्णामसृष्ट्वा सृष्टिरस्मीति स्रष्टा निर्धारयतीत्याशङ्क्योत्तरवाक्यमवतारयति—सोमेति । या वक्ष्यमाणाऽनुग्राहकसृष्टिः साऽप्युक्तानुग्राह्यसृष्टिवदुक्तेति विराण्मन्यतेऽतस्तामपेक्ष्य सृष्टिरस्मीत्यवधारितवानित्यर्थः ।।१२१।।

कथं सृष्टिरस्मीत्यवधारणं कर्तृक्रिययोरैक्यायोगादित्याशङ्क्य सोऽवेदित्यादेरर्थं स्फुटयति—जगदिति । सृष्टस्य स्रष्टुरवान्तरविशेषत्वं हिशब्दार्थः ।।१२२।।

अहं हीत्यादिहेतुं व्याचष्टे—अहमिति । न हि सृष्टं स्रष्टुरर्थान्तरीभवति तस्यैव तत्तदात्मनाऽवस्थानादित्यर्थः । ततः सृष्टिरभवदित्यस्यार्थमाह—सृष्टीति । सृष्टिशब्देन स्रष्टुरुक्तेरित्येतच्छब्दार्थः ।।१२३।।

किमर्थमित्थं स्रष्टुर्विभूतिरुच्यत इत्याशङ्क्य सृष्ट्यामित्यादि व्याचष्टे—यथेति ।।१२४।।

अथेत्यभ्यमन्थदित्याद्युत्थापयति—सृष्टानामिति । अनुग्राह्यब्राह्मणादिसृष्ट्यनन्तरमनुग्राहकाग्न्यादिसृष्टिं वक्तुमुत्तरवाक्यमित्यर्थः ।।१२५।।

ननु ब्राह्मणादिवर्णात्मनाऽग्न्यादिदेवतानामेव स्थितेर्वक्ष्यमाणत्वात्कथमेकस्यैवानुग्राह्यत्वमनुग्राहकत्वं चेत्यत आह—भेदादिति । अग्न्यादीनामधिकृतेरध्यात्माधिदैवभेदेनानेकधा भेदादेकैकदेवतायाश्चानेकधाभावस्य शाकल्यब्राह्मणे[1] वक्ष्यमाणत्वाद्वर्णेष्वपि ब्राह्मणादिरूपस्तेषामेव भेदोऽतः कल्पितभेदादेकस्यैवानुग्राह्यानुग्राहकत्वसिद्धिरित्यर्थः ।।१२६।।

अनुग्राहकसर्गे प्रस्तुते तदेकदेशवादिन्याः श्रुतेरभिप्रायं ज्ञातुं पृच्छति—अनुग्राहकेति । अनवच्छिन्नदेवताविषयत्वादनुग्राह्यसृष्ट्यपेक्षयोत्कृष्टत्वाच्चास्य महत्त्वं "सोऽग्निमसृजते"त्यग्नेरेव सृष्टिरुक्ता तद्रेतसोऽसृजतेति चन्द्रस्य द्रवात्मनः सोमस्य न तु प्रक्रमानुसारेणेन्द्रादेः सोक्तेत्याह—तत्रेति ।।१२७।।

इन्द्रादीनां स्रष्टव्यत्वाभावादत्र नोक्ता सृष्टिरित्याशङ्क्य तेषामप्यविद्याप्रकरणे कर्मसंनिधौ सा वक्ष्यते । तत्र किमभिप्रेतमित्याह—अविद्येति । अत्रेन्द्रादिसृष्टेरनुक्तौ तत्रोक्तौ च श्रुतेरभिप्रायमाह—कर्मेति । अविद्याधिकारे कर्माम्नानवत्कर्मसंनिधौ देवसर्गाम्नानं तेषामाविद्यककर्मसु संप्रदानत्वेनाधिकृतानां तत्रैवाङ्गता न विद्यायामिति वक्तुमित्यर्थः ।।१२८।।

---

१. शाकल्यब्राह्मणे—"स होवाच महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवा" इत्यारभ्य "कतम एको देव इति प्राण इति" इत्यन्तेनानेकधाभाव एकतयोक्तः ।

तं सर्गमुक्तवत्सर्वमपेक्ष्येहोपसंहृतिः । अविद्वद्देवताभित्तिप्रतिषेधाय सांप्रतम् ।।२९।।
गुणोत्पत्तिक्रियारूपस्तुतिनामाद्युपाधिभिः । बिभित्सन्ति स्वतोऽभिन्नां देवतां मूढदृष्टयः ।।३०।।
यदिदं कर्मिणः प्राहुः कर्मभूमावमेधसः । अमुमग्निममुं सोमं यजेति यजिसंश्रवात् ।।३१।।
यजेति लिङ्गान्निन्दैषा कर्मिणामेव गम्यते । न तु विध्वस्तमोहानां प्रत्यङ्मात्रैकशायिनाम् ।।३२।।

इन्द्रादिसर्गो वक्ष्यते चेदेष उ ह्येव सर्वे देवा इत्युपसंहारोऽयुक्तो देवसृष्टेः साकल्येनानुक्तत्वादित्याशङ्क्याऽऽह—तमिति । वक्ष्यमाणमपि सर्गमुक्तवद्विवक्षित्वाऽत्र स्रष्टुः सर्वदेवतात्मत्वोपसंहारः कृतोऽन्यथा सर्वशब्दायोगादुक्तेन वक्ष्यमाणोपलक्षणे चाविरोधादित्यर्थः । तद्यदिदमित्याद्यवतारयति—अविद्वदिति । अविदुषां परस्यामेकस्यामेव हि देवतायां या भेदधीस्तन्निषेधायाधुना तद्यदिदमित्यादि प्रवृत्तमिति योजना ।।१२९।।

कथं पुनर्देवताभेदप्रतिपत्तिः आत्मारूपा हि देवता न भेत्तुं युक्तेत्याशङ्क्य पूर्वपक्षयति—गुणेति । अग्नीन्द्रादिषु[1] नानागुणवत्सु वैश्वदेव्यामिक्षा[2] वाजिभ्यो वाजिनमितिवद्युक्तो भेदो याजुर्वैदिकाधानस्य (सामवैदिकाधानस्य) सामवैदिकवारवन्तीयादेश्च भेदवदुत्पत्तिभेदादपि[3] तेषु भेदः, पटकलशशकटादिवदर्थक्रियाभेदाच्चात्र[4] भेदोऽग्नीषोमीयमेकादशकपालं[5] द्वादशकपालमितिवत्, वज्रहस्तत्वादिरूपभेदादपि भेदः काठकं कालापकमितिवन्नामभेदाच्च तद्भेदः स्तुतिश्च स्तुत्यान्भिनत्त्यन्यथा[6] तद्भेदवैयर्थ्यात्तथा च क्रतुषु स्तुतिभेदात्तद्भेदः । आदिशब्देन धर्मविशेषपुनरुक्त्यादयो[7] गृह्यन्ते । तस्मात्कर्मभेदवत्तदन्तर्भूतदेवताभेद इत्यर्थः । स्वतोभेदरहितपरदेवताभेदनेच्छायां हेतुमाह—मूढेति ।।१३०।।

उक्तेऽर्थे पूर्वपक्षवाक्याक्षराणि योजयति—यदिदमिति । देवतास्वरूपधीवैधुर्यममेधस्त्वम् । नन्वाहुरिति क्रियापदं कर्तृमात्रमपेक्षते तद्विद्याप्रकरणत्वाद्विदुषामेव तत्र कर्तृत्वं न कर्मिणामिति नेत्याह—यजिसंश्रवादिति ।।१३१।।

नन्वस्मिन्वाक्ये देवताभेदानुवादमात्रं गम्यते न कर्मिनिन्दा । न च ते निन्दितुं शक्यन्ते श्रेयोमार्गे प्रवृत्तत्वात् । यथाऽऽहुः[8]—"यो यागमनुतिष्ठति तं धार्मिकइति हि समाचक्षत" इति । अन्यथा विदुषामपि निन्दा स्यात्तन्नायं पूर्वपक्षस्तत्राऽऽह—यजेतीति । यद्यपि कर्मणि श्रेयोमार्गे प्रवृत्तान्यो हि पुरुषान्निःश्रेयसेन संयुनक्ति स धर्मस्तथाऽपि तेषामेषा निन्दैव भेदानुवादव्याजेन सूच्यते । "अमुमग्निं यजामुमिन्द्रं यजे"ति हि वदन्तो देवतां भिन्दानास्ते दृश्यन्ते । तथाच योऽन्यथा सन्तमात्मानमित्यादिन्यायादन्यथाज्ञानलिङ्गान्निन्दायोग्यास्ते भवन्तीत्यर्थः । यत्तु विदुषामपि निन्दा स्यादिति तत्राऽऽह—न त्विति । निन्दायोग्यतेति शेषः । मोहध्वंसे हेतुमाह—प्रत्यगिति ।।१३२।।

---

१. अग्नीन्द्रादिषु—अग्नेः अग्नये पावकाय अग्नये शुचये इत्यादौ पावकत्वादिगुण उक्तः इन्द्रस्य तु इन्द्राय राज्ञे इत्यादौ राजत्वादिः गुण उक्तः इति तयोर्भेदः । वज्रहस्तत्वादिश्च गुणः ।

२. वैश्वदेव्यामिक्षा—विश्वेदेवदेवताकामिक्षाद्रव्यको यागः वाजिभ्यो वाजिनं इति वाक्यविहितवाजिदेवताकवाजिन द्रव्यकयागाद्भिन्नः गुणभेदात् ।

३. याजुर्वैदिकमेवाधानं तस्याङ्गत्वेन वारवन्तीयसामगानं विहितं तच्च सामवेदे उत्पन्नं, तयोरङ्गाङ्गिभावेऽपि उत्पत्तिभेदाद्भेदः ।

४. पटकलशादीनां अर्थक्रियाभेदाद्भेदः ।

५. एकादशद्वादशकपालयोर्गुणयोर्भेदे कर्मभेदः, काठकं यजुर्वेदशाखाभेदः तथा कापालकम् । तद्भेदात्कर्मभेदः ।

६. स्तुतिश्च वायुर्वै क्षेपिष्ठा देवता इति वायव्यं श्वेतमालभेतेत्यत्र । वायवे नियुत्वत आलभेतेत्यत्र तु "वायुर्वा इमाः प्रजा नस्योता नेनीयते—इत्यादिः । स्तुतिभेदात् स्तुत्यभेदः ।

७. **धर्मविशेषः**—कारीरिवाक्याध्ययने तैत्तिरीयाणां भूमौ भोजनं नापरेषाम् । एकमेवाग्निहोत्रं भिन्नशाखासु विहितत्वात् भिन्नमन्यथा पुनर्वचनमनर्थकमिति ।

८. **यथाहुः**—आचार्यशबरस्वामिनः—"योन्यथासन्तमात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चोरेणात्मापहारिणा ।।" इति श्लोकशेषः ।

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः । आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ।।३३।।
उत्पन्नैकात्म्ययाथात्म्यभास्वद्विज्ञानभास्कर—। संप्लुष्टाविद्याबहुलतमसां कर्मनिह्नुतिम् ।।३४।।
सर्वकर्माधिकाराणां निषेधं प्रत्यपीपदत् । पुराणः शाश्वतो विष्णुः प्रपन्नाय[1] किरीटिने ।।३५।।
मिथो भिन्नं यदाहुस्त एकैकं देवमध्वरे । तदसत्प्रतिपत्तव्यं यतोऽभिन्नैव देवता ।।३६।।
भेदग्राहि न नो मानं घटाद्यावपि विद्यते । किमु निःशेषभिन्नार्थव्यापिन्यात्मन्यसौ मयि ।।३७।।
नाभावरादिवद्विश्वमध्यात्मादिविभागवत् । ओतप्रोतात्मना तस्थौ विराट्सूत्रादिवस्तुषु ।।३८।।
विविधाऽस्यैव सा सृष्टिरिति हेतुसमीरणम् । कारणं न विहायेह कार्यमन्यत्र वर्तते ।।३९।।
यत एवमतो देवाः सर्वेऽपि स्युः प्रजापतिः । तस्यां तस्यामधिकृतौ तत्तद्रूपं प्रपद्यते ।।४०।।
एक एव तु विश्वात्मा मायया मोहयञ्जगत् । एकतां बहुतामेति कुम्भवन्मणिसंश्रयात् ।।४१।।

"न हि कश्चित्क्षणमपी,'त्यादिस्मृतेर्ज्ञानिनामपि कर्मित्वान्निन्दा स्यादित्याशङ्क्य तेषामकर्मित्वे भगवद्वाक्यमेव प्रमाणयति—यस्त्विति । उल्लासो मानसी रतिः, तदनन्तरभावि सुखं तृप्तिः, सैव प्रकृष्टा संतुष्टिरित्यवान्तरभेदः ।।१३३।।

अथात्र मुक्तस्य कर्माभावो वर्ण्यते विदुषस्तदभावस्तु कथमित्याशङ्क्योक्तवाक्यतात्पर्यमाह—उत्पन्नेति । कर्मनिह्नुतिं प्रत्यपीपददिति संबन्धः ।।१३४।।

तामेव व्याचष्टे—सर्वेति । अधिकारपदेन प्रवृत्त्यादिग्रहः न च भगवदुक्ते वस्तुन्यविश्वासोऽधिकारलक्षणविशिष्टाय प्रतिपादितत्वादित्याह—प्रपन्नायेति । अनाद्यनन्तो व्यापनशीलश्च भगवानिति वक्तुं वैशिष्ट्यमाह—पुराण इति ।।१३५।।

तद्यदिदमित्यादिना पूर्वपक्षानुवादद्वारा कर्मिणां निन्दा न विदुषामित्युक्तमिदानीं तन्नेत्यादिभाष्यं व्याकुर्वन्निन्दाफलं निषेधं दर्शयति—मिथ इति । "विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत्सर्वो ह्येष रुद्रः" इतिश्रुतेःआत्मैव देवताः सर्वा इति स्मृतेः"एकं वा संयोगरूपचोदनाख्याविशेषादिति"[2]न्यायाच्चाऽऽत्मत्वेन देवतैक्यादितिहेतुमाह—यत इति ।।१३६।।

आत्मन्यपि प्रतिदेहं भेदात्कथं तदभेदेन देवतैक्यमित्याशङ्क्याऽऽह—भेदग्राहीति । हिरण्यगर्भेऽसौ प्राणस्यापि स्वरूपभूते सर्वप्रत्यगात्मनि भेदग्राहि मानं नेति किं वाच्यमित्यर्थः ।।१३७।।

श्रुत्यन्तरावष्टम्भेनापि देवताभेदाभावं साधयति—नाभाविति । यथा रथस्य नाभावराः समर्पितास्तेषु नेमिरर्पितस्तथाऽध्यात्माधिभूताधिदैवभिन्नमशेषमपि जगद्दीर्घतन्तुवत्तिर्यक्तन्तुवच्च विराट्सूत्राव्याकृतात्मसु स्थितम् । भौतिकं हि सर्वं भूतव्यतिरेकेण नास्ति । तान्यपि पञ्चीकृतान्यपञ्चीकृतातिरेकेण न सन्ति । तान्यपि नाव्याकृताद्भेदेन विद्यन्ते । तदपि न प्रत्यगतिरेकेणास्त्यतो न क्वचिद्भेदसिद्धिरित्यर्थः ।।१३८।।

श्रुतियुक्तिभ्यां देवताभेदं निरस्यैतस्यैव सा विसृष्टिरित्यस्यार्थमाह—विविधेति । या सृष्टिरग्न्याद्या नाना प्रस्तुता सा प्रकृतस्य स्रष्टुरेवेति योजना । एष उ ह्येवेत्युत्तरवाक्यार्थे हेतुरनेनोच्यत इति तात्पर्यमाह—इति हेत्विति । स्रष्टुः सर्वदेवताहेतुत्वमत्र दृष्टं कथमेतत्तस्य सर्वदेवतात्मकत्वे कारणमित्याशङ्क्याऽऽह—कारणमिति ।।१३९।।

हेतुवाक्यार्थमुक्त्वा प्रतिज्ञामादत्ते—यत इति । सर्वस्य जगतो देवादिरूपस्य प्रजापतिकार्यत्वात्कारणादन्यत्र च तदयोगात्तन्मात्रं सर्वं जगदित्यर्थः । प्रतिज्ञां विभजते—तस्यामिति ।।१४०।।

एकस्य नानारूपत्वं विरुद्धमित्याशङ्क्याऽऽह—एक इति । विश्वात्मा विराडुक्तो विश्वस्याऽऽत्मा

१. प्रपन्नमिति—"शाधि मा त्वां प्रपन्नमि"त्युक्त्वा उपसन्नायेत्यर्थः ।
२. १०८.९

अभिन्न एव भूतात्मा प्रतिभूतसमाश्रितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥४२॥
अत्र विप्रतिपद्यन्ते तदन्यात्मनिषेधिनः । हिरण्यगर्भ एवाऽऽत्मा यः परात्मेति गीयते ॥४३॥
संसार्येवेह स इति तथाऽन्येऽपि प्रचक्षते । पक्षयोरनयोः श्रेयान्कः पक्ष इति चिन्त्यते ॥४४॥
विरिञ्च एव तु परो मन्त्रब्राह्मणवाक्यतः । इन्द्रमित्यादिमन्त्रोक्तिरेष[1] ब्रह्मेति च श्रुतिः ॥४५॥
एतमेके वदन्त्यग्निं योऽसावितिस्मृतेरपि । संसार्येव स विज्ञेयः श्रुतिमन्त्रस्मृतीरणात् ॥४६॥
पाप्मदाहारतिभीतिमर्त्यत्वादिश्रुतेर्मितेः । हिरण्यगर्भमिति च स्मार्तान्यपि वचांसि नः ॥४७॥
ब्रह्मा[2] विश्वसृजो धर्म इति कर्मफलात्मता । स्मृत्याऽप्यभाणि बहुशः कस्य संसारिरूपता ॥४८॥

तदस्याऽऽत्मेति वा निरुक्तेः स वस्तुतोऽद्वयवस्त्वात्माऽपि मायया जगन्मोहयन्समष्टिव्यष्टितां याति । यथा कुम्भो नीललोहितादिमणिसंपर्कात्तत्तद्रूपो दृश्यते तथेत्यर्थः ॥१४१॥

उक्तमर्थं स्मृत्या समर्थयते—अभिन्न इति । भूतानामात्मा वस्तुवृत्त्यैकोऽपि सन्नेकधा सर्वेषु भूतेषु खण्डादौ गोत्ववत्समाप्य वर्तमानो बहुधा दृश्यते यथा तत्तज्जलपात्रेष्वेकधैकःप्रतिबिम्बितश्चन्द्रो बहुधा गम्यते तथेति स्मृत्यर्थः ॥१४२॥

अग्न्यादयो देवाः सर्वेऽपि प्रजापतिरेवेत्युक्तम् । संप्रति तत्स्वरूपनिर्दिधारयिषया तत्र विप्रतिपत्तिं दर्शयति—अत्रेति । सिद्धान्तेऽपि प्रजापतेः संसारित्वस्यासंसारित्वस्य च स्वीकारात्कुतो विप्रतिपत्तिरित्याशङ्क्य विप्रतिपत्तारः संसारित्वं तस्येच्छन्तोऽसंसारित्वं वारयन्ति । असंसारित्वं चेच्छन्तः संसारित्वं वारयन्तीति विशेषमाह—तदन्येति । विप्रतिपत्तिस्वरूपमाह—हिरण्यगर्भ इति ॥१४३॥

यः खल्वात्मा सूत्राख्यः श्रुतिस्मृत्योर्गीयते स परात्मैवेत्युक्त्वा पक्षान्तरमाह—संसारीति । इहेति श्रुतिस्मृत्युक्तिः । कतरस्तर्हि पक्षः स्वीकार्य इत्याशङ्क्य विचार्य निर्धार्यमित्याह—पक्षयोरिति ॥१४४॥

पूर्वपक्षं गृह्णाति—विरिञ्च इति । पर एवेति संबन्धः । तुशब्दस्तत्संसारित्वव्यावृत्त्यर्थः । सूत्रात्मा परात्मैवेत्यत्र मानमाह—मन्त्रेति ॥१४५॥

तत्रैव स्मृतिद्वयमुदाहरति—एतमित्यादिना । मन्त्रब्राह्मणस्मृतिषु परस्य सर्वदेवात्मत्वदृष्टेरत्र च सूत्रस्य तत्प्रतीतेस्तस्य परत्वमिति भावः । पूर्वपक्षान्तरमाह—संसार्येवेति । तत्र मानमाह—श्रुतीति ॥१४६॥

तामेव श्रुतिं दर्शयति—पाप्मेति । आदिपदाद्द्वितीयेच्छाद्युच्यते । उक्तश्रुत्याख्यमितेः सकाशाद्दृष्टं प्रजापतेः संसारित्वमसंसारिणि पाप्मदाहादिप्रसङ्गाभावादित्यर्थः । तस्य संसारित्वे मन्त्रमपि दर्शयति—हिरण्यगर्भमिति । न हि "पश्यत जायमानमि"त्याद्यसंसारिणि संभवतीति भावः । स्मृतिवचनान्यपि तस्य संसारित्वमस्मान्प्रति दर्शयन्तीत्याह—स्मार्तानीति ॥१४७॥

तान्येव संगृह्णाति—ब्रह्मेति । विराड्ब्रह्मेत्युच्यते । विश्वसृजो मन्वादयः । धर्मस्तदभिमानिनी देवता यमः । महान्प्रकृतेराद्यो विकारः । सूत्रमव्यक्तमविद्याकर्मसंस्कारा इत्यत्र वक्ष्यमाणप्रकृतिरिति भेदः । कर्मफलात्मतेत्यस्यार्थं स्फुटयति—संसारिरूपेति । कस्य प्रजापतेरित्यर्थः । सूत्रस्य विराड्भूतस्य मन्वादिभावं चाऽऽप्तस्य संसारित्वं स्मृत्योक्तम् । न हि कर्मविपाकप्रक्रियास्था स्मृतिरसंसारिणमाह तत्प्रजापतेः संसारित्वे स्मृतेस्तात्पर्यमस्तीत्याह—बहुश इति ॥१४८॥

१. इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् ।
एकं सद्विप्रा बहुधा वदन्ति अग्निं यमं मातरिश्वानमाहुः ॥ ऋ० सं० १.१६४.४६
एष ब्रह्मैष इन्द्रः । ऐ० उ० अन्ते
एतमेके । मनु० १२.१२३, योऽसावतीन्द्रियः । मनु० १.७

२. ब्रह्मा विश्वसृजो धर्मः महानव्यक्तमेव च ।
उत्तमां सात्विकीमेतां गतिमाहुर्मनीषिणः ॥

मिथोविरुद्धवादित्वाद्द्वयोरागमयोरपि । अप्रामाण्यप्रसक्तिश्चेन्न क्लृप्त्यन्तरसंश्रयात् ।।४९।।
प्रत्यगज्ञानजाऽनेकविविधोपाधिसंगतेः । विरुद्धार्थत्ववचसां स्यादेकत्रापि संभवः ।।५०।।
अपास्ताविद्यातज्जत्वादस्थूलाद्युक्तिगोचरः । स्वाभासाविद्योपाधिः सन्साक्ष्यन्तर्यामितां व्रजेत् ।।५१।।
तथा हिरण्यगर्भत्वं बुद्ध्युपाधिः स एव तु । तमःसत्त्वरजोयोगाद्याति क्षेत्रज्ञतामजः ।।५२।।
अभिन्नबुद्ध्याऽभिन्नत्वं भिन्नधीभिश्च भिन्नताम् । एति चित्स्वतमोहेतोर्न किंचिदपि दुःस्थितम् ।।५३।।
अशनायावदुत्पत्तेरुत्पन्नाः प्राणिनोऽखिलाः । अत्तारोऽतोऽन्नविरहान्नालं स्थानाय संहताः ।।५४।।
तस्मात्सोमान्नसृष्ट्यर्थं परो ग्रन्थोऽवतार्यते ।
यत्किंचेदं जगत्यस्मिन्नार्द्रं वस्तूपलक्ष्यते । रेतसस्तत्ससर्जेश उत्पन्नस्थितयेऽशनम् ।।५५।।
जगत्कारणरूपिण्य आपो रेतोभिधा इह । सोम एवेत्यवधृतेरग्नीषोमव्यवस्थितिः ।।५६।।
नानाक्रियाभिसंबन्धादग्निः सोमश्च गम्यताम् ।।५७।।

एवं पूर्वपक्षयित्वा सिद्धान्तयितुं प्रसङ्गमाह—मिथ इति । स्वतोऽसंसारित्वेऽपि सूत्रस्य संसारित्वमौपाधिकमिति विधान्तरसिद्धेर्द्विविधागमाविरोध इति सिद्धान्तमाह—नेति ।।१४९।।

कथं संसारित्वासंसारित्वविरुद्धार्थवाक्यानामेकत्र प्रामाण्यमित्याशङ्क्य संग्रहवाक्यं विवृणोति—प्रत्यगिति । संसारितेति शेषः । स्वतस्त्वसंसारितेत्यङ्गीकृते फलितमाह—विरुद्धेति । विरुद्धार्थत्वेन प्रतीयमानोदाहृतवाक्यानामिति यावत् ।।१५०।।

तेषामेकस्मिन्नात्मनि संभवमेव साधयन्नादावसंसारित्ववाक्यानामुपपत्तिमाह—अपास्तेति । तत्रैव सविशेषवाक्यानामपि संभवमाह—स्वाभासेति । चिदाभासविशिष्टाविद्योपाधेः साक्षित्वं तस्यैव मायातत्कार्यनियन्तृत्वेनान्तर्यामितेति भेदः ।।१५१।।

तस्यैव मायामयापञ्चीकृतभूतपञ्चकारब्धसमष्टिबुद्ध्युपाधित्वेन ज्ञानशक्तिमतो हिरण्यगर्भत्वमाह—तथेति । व्रजेदिति पूर्वेण संबन्धः । तस्यैव समष्टिप्राणोपाधेः क्रियाशक्तिमतः सूत्रत्वं तस्यैव पञ्चीकृतभूतपञ्चकारब्धसमष्ट्युपाधेर्विराट्त्वं तस्यैव प्राकृतभूतारब्धसात्त्विकराजसतामसव्यष्टिबुद्ध्युपाधिसंबन्धान्नानाजीवरूपतेत्यभिप्रेत्याऽऽह—तम इति ।।१५२।।

विरुद्धार्थवचसामेकत्र संभवमुपसंहरति—अभिन्नेति ।।१५३।।

सर्वदेवतात्मकस्य प्रजापतेः स्वतोऽसंसारित्वं कल्पनया संसारितेति प्रसाध्याथेत्यादिनाऽन्नसर्गोक्तौ हेतुमाह—अशनायावदिति । अशनायावानत्ता प्रजापतिस्तस्मादुत्पत्तेरुत्पन्नाः सर्वेऽपि प्राणिनो हेत्वनुसारादशनायावन्तोऽत्तारो यतो भान्त्यतो न ते विनाऽन्नं स्थातुं पारयन्ति तथा चात्तृसर्गानन्तरमन्नसर्गोक्तिर्युक्तेत्यर्थः ।।१५४।।

अन्नसर्गोक्तौ हेतुमुक्त्वा तत्सृष्टिवाक्यमवतारयति—तस्मादिति । तदक्षराणि योजयति—यत्किंचेति । अन्नसृष्टिमुपक्रम्य कथमर्थान्तरसृष्टिरुच्यते तत्राऽऽह—उत्पन्नेति ।।१५५।।

ता अन्नमसृजन्तेतिश्रुतेः रेतसोऽन्नसृष्टिरयुक्तेत्याशङ्क्याऽऽह—जगदिति । तद्रेतसोऽसृजतेति वाक्यमिहशब्दार्थः । सोम एवान्नमग्निरन्नाद इत्यत्रावधारणस्य विवक्षितमर्थमाह—सोम इति । यदद्यते तदन्नं सोम एव यश्चात्ता सोऽन्नादोऽग्निरेवेत्यवधारणादग्नीषोमात्मकं जगदित्येतन्निश्चितमित्यर्थः ।।१५६।।

अन्नस्य सोमत्वेन न नियमोऽग्नेरपि जलादिना संहारान्न चात्तुरग्नित्वेन नियमो वा सोमस्यापि कदाचिदिज्यमानत्वेनात्तृत्वादित्याशङ्क्याऽऽह—नानेति । अग्निरपि हवःक्रियया कर्मत्वेन संबध्यमानः सोमः । सोऽपि संहारक्रियया कर्तृत्वेन संबद्धोऽग्निरित्यवधारणसिद्धिरित्यर्थः । यथाश्रुतमवधारणमवधीर्य कुतो विधान्तरेण

सोम एवेति तं विद्याद्यग्निरपि हूयते । सोमोऽप्यग्निरिति ज्ञेयो यदि तत्रापि हूयते ॥५८॥
द्वेधा भिन्नं जगत्सर्वमन्नमन्नाद एव च । अन्नं चराचरं कृत्स्नमन्नादः प्राण उच्यते ॥५९॥
फलाभिधित्सयेदानीं देवसृष्टिविदः श्रुतिः । प्रवर्ततेऽथ सैषेति तत्स्तुतिस्तावदुच्यते ॥६०॥
अनुग्राहकदेवानां या सृष्टिरुदिता पुरा । अतिसृष्टिरनुग्राह्यसृष्टेः सा स्यात्प्रजापतेः ॥६१॥
अश्रेयोभ्योऽनुग्राह्येभ्यः ससर्ज श्रेयसः सुरान् । यतोऽतिसृष्टिस्तेनेयं यैषेहाग्न्यादिरीरिता ॥६२॥
मर्त्यो वा यजमानः सन्नस्राक्षीदमृतान्सुरान् । अतिसृष्टिरतः प्रोक्ता साऽतिसाध्वीति निश्चिता ॥६३॥
प्रजापतिरिवैतस्यां सृष्टौ स्यात्सर्गकृन्नरः । यथोक्तसृष्टिविद्यः स्यात्तस्यैतत्फलमीरितम् ॥६४॥

सप्तमकण्डिकाया अवतारिका

अविद्यापटसंवीतचक्षुषामियदेव तु । वैदिकं साधनं ज्ञेयं ज्ञानकर्मस्वभावकम् ॥६५॥
कर्त्रादिकारकापेक्षं विरिञ्चान्तफलप्रदम् । व्याकृतं तदशेषेण श्रुत्या व्याख्यायि यत्पुरा ॥६६॥

तद्व्याख्येत्याशङ्क्यार्थबलाद्धोत्यादिभाष्यं विभजते—सोम इति। अग्निरपि संहार्यश्चेत्सोम एव सोऽपि संहर्ता चेदग्निरेवेत्यवधारणं युक्तमित्यर्थः ॥१५७–१५८॥

अग्नीषोमात्मना स्थितं जगदित्युक्तमुपसंहरति—द्वेधेति। प्रजापतेः सर्वात्मत्वमुपक्रम्य कथं जगतो द्वेधाविभक्तस्योपसंहार इत्याशङ्क्य तस्य सूत्रे पर्यवसानात्तस्मिन्नात्मबुद्ध्योपासकस्य सर्वदोषराहित्यरूपं फलमत्र विवक्षितमित्याह—अन्नमिति ॥१५९॥

सैषेत्यादिवाक्यतात्पर्यमाह—फलेति। अनुग्राहकदेवसृष्ट्युपासकस्य फलोक्त्यर्थमतिसृष्ट्यमित्यादिवाक्यं तस्मात्प्राक्तनं सैषेत्यादि देवसृष्टिस्तुत्यर्थमिति भेदः। अथेदानीमिति संबन्धः। फलोक्तेरुच्चानन्तरं स्तुतेरवसरे सतीति यावत्। देवसृष्टिविदः फलाभिधित्सया तावदतिसृष्ट्यामित्याद्या श्रुतिः प्रवर्तते। अथेदानीं सैषेत्यादिश्रुत्या देवसृष्टेः स्तुतिरिष्यत इति योजना ॥१६०॥

सैषेत्यादिवाक्यस्थाक्षराणि व्याचष्टे—अनुग्राहकेति ॥१६१॥

तच्छ्रेयसो देवानित्यादिहेतुवाक्यं व्याकरोति—अश्रेयोभ्य इति। न क्रियया पञ्चम्याः संबन्धोऽपि तु द्वितीययेति विवेक्तव्यम्। इहेति पूर्वसंदर्भोक्तिः अग्न्यादिरिति तत्सृष्टिरुक्ता ॥१६२॥

अथ यन्मर्त्यः सन्नित्यादेरर्थमाह—मर्त्यो वेति। वाशब्दो देवसृष्टेरतिसृष्टित्वे हेत्वन्तरार्थः। एतेनाथशब्दो व्याख्यातः। देवसृष्टेरतिसृष्टित्वोक्तिः स्तुतिरिति निगमयति सेति ॥१६३॥

अतिसृष्ट्यामित्यादि व्याचष्टे—प्रजापतिरिति। देवादिस्रष्टा तदात्मा प्रजापतिरहमेवेत्युपासितुस्तद्भावापत्त्या तत्स्रष्टृत्वं फलमित्यर्थः ॥१६४॥

पूर्वोत्तरग्रन्थयोः संबन्धार्थं वृत्तं कीर्तयति—अविद्येत्यादिना। अज्ञानच्छन्नचित्तानां ज्ञानादि वेदोक्तं साधनं कर्त्रादिवशाज्जायमानं मनुष्यादिसूत्रान्तफलं यदिषे त्वेत्यादिश्रुत्या कर्मकाण्डे व्याख्यातमुषा वा अश्वस्येत्यादिश्रुत्या वा पूर्वत्र व्याकृतं तदशेषमियदेव ज्ञेयं यद्व्याकृतं संसारात्मकं जगदित्युक्तमित्यर्थः। अज्ञानां पुमर्थस्य साधनमित्युक्ते मुक्तिसाधनं पुरः स्फुरति तन्निरस्यति—ज्ञानेति। एकरूपस्य मोक्षस्यानेकरूपं न साधनं भवतीति भावः। तस्यानुपादेयत्वशङ्कां वारयति—वैदिकमिति ॥१६५॥

मोक्षसाधनं मानवस्तुतन्त्रं तत्त्वज्ञानमिदं तु कारकसाध्यमतो न तद्धेतुरित्याह—कर्त्रादीति। किंच विरिञ्चावसानमेवास्य फलं न च तदेव कैवल्यं भयारत्यादिश्रुतेरतोऽपि नेदं तत्साधनमित्याह—विरिञ्चेति। किंच मोक्षो व्याकृतादर्थान्तर"मन्यदेव तद्विदितादि"तिश्रुतेरिदं तु नामरूपं व्याकृतमतो व्याकृतस्यैव हेतुर्न मुक्तेरित्याह—व्याकृतमिति। वैदिकत्वं साधयति—श्रुत्येति ॥१६६॥

१. ११७.४।

मू.—तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियतासौ नामाऽयमिदँ रूप इति तदिदमप्येतर्हि नामरूपाभ्यामेव व्याक्रियतेऽसौ नामाऽयमिदँ रूप इति स एष इह प्रविष्टः । आ नखाग्रेभ्यो यथा क्षुरः क्षुरधानेऽवहितः स्याद्विश्वंभरो वा विश्वंभरकुलाये तं न पश्यन्ति । अकृत्स्नो हि स प्राणन्नेव प्राणो नाम भवति । वदन्वाक्पश्यँश्चक्षुः शृण्वञ्श्रोत्रं मन्वानो मनस्तान्यस्यैतानि कर्मनामान्येव । स योऽत एकैकमुपास्ते न स वेदाकृत्स्नो ह्येषोऽत एकैकेन भवत्यात्मेत्येवोपासीतात्र ह्येते सर्व एकं भवन्ति । तदेतत्पदनीयमस्य सर्वस्य यदयमात्मानेन ह्येतत्सर्वं वेद । यथा ह वै पदेनानुविन्देदेवं कीर्तिँ श्लोकं विन्दते य एवं वेद ॥७॥

अथैतस्य यथोक्तस्य साध्यसाधनरूपिणः ।
जगतो व्याकृतस्याभूद्बीजावस्थाऽविनश्वरी । तन्निर्दिदिक्षया यत्नात्प्रवृत्तैषा परा श्रुतिः ॥१६७॥
संसृत्यनर्थस्य यतो निदानं सैव नापरम् । यतो मूलमनर्थानामात्माज्ञानं जगत्यपि ॥१६८॥
तद्ध्वंसादेव निःशेषपुमर्थाप्तिरतो भवेत् । जिहासितस्यानर्थस्य हेतुः स्यात्सशरीरता ॥१६९॥
न वै शरीरस्येति श्रुतेरध्यवसीयते । धर्माधर्मौ च देहस्य योनिरित्यागमाश्रयात् ॥१७०॥
विहितं प्रतिषिद्धं च कर्म मूलं तयोरपि । न ह्यक्रियस्य संबन्धो धर्मेणास्तीतरेण वा ॥१७१॥

इदानीमव्याकृतकण्डिकामवतारयन्प्रवेशवाक्यात्प्राक्तनतद्धेदमित्यादेस्तात्पर्यमाह—अथेति । ज्ञानकर्मफलोक्त्यानन्तर्यमथशब्दार्थः । उक्तं फलं परामृशति—एतस्येति । संसारत्वेनोक्तं रूपमनतिक्रम्य स्थितस्येत्याह—यथेति । तस्य फलोपायरूपद्वयोपेतस्य जगतो नामादिना व्याकृतस्य व्याकरणात्पूर्वं या बीजावस्था साभासप्रत्यगविद्या विद्यां विना नाशरहिता तस्या निर्देशेच्छया व्याख्येयत्वेन प्रस्तुता तद्धेदमित्याद्योत्तरा श्रुतिस्तात्पर्येण प्रवृत्तेत्याह—साध्येत्यादिना । विनश्वरीति वा छेदः । अस्ति हि तस्या विद्यया विनष्टुं शीलमिति । बीजावस्थाया निर्देष्टुमिष्टत्वमेव न साक्षान्निर्देश्यत्वमनिर्वाच्यत्वादिति वक्तुं निर्दिदिक्षयेत्युक्तम् । साभासप्रत्यगविद्याख्यबीजावस्थोक्तिद्वारा नित्यशुद्धबुद्धमुक्तस्वभावः परमात्मैव प्रत्यग्भूतो ज्ञो ज्ञानं चेति निश्चेतुं प्रवेशवाक्यात्प्राचीनं वाक्यमिति मत्वाऽऽह—यत्नादिति ॥१६७॥

यज्ज्ञाने पुमर्थाप्तिस्तदेव वाच्यं किमिति प्रत्यगविद्योच्यते तत्राऽऽह—संसृतीति । संसाराख्यमातृत्वाद्यनर्थस्य प्रत्यगविद्यैव मूलं नाप्रमाणकं प्रधानाद्यतस्तद्ध्वस्तौ पुमर्थसिद्धेर्युक्ता तदुक्तिरित्यर्थः । आत्माज्ञानस्यानर्थमूलत्वं कथं सिद्धमिति तत्राऽऽह—यतइति । अहमेवंविधोऽस्मीत्यात्मानमज्ञात्वा मौढ्यातिरेकात्परदारादौ प्रवर्तमानोऽनर्थमाप्नुवन्दृश्यतेऽतो लोके प्रत्यगज्ञानमनर्थमूलं निश्चितमित्यर्थः । अन्वयव्यतिरेकाभ्या''मविद्यायामन्तरे वर्तमानाः स्वयंमि''त्यादिशास्त्रं समुच्चेतुमपिशब्दः ॥१६८॥

स्वाज्ञानस्यानर्थमूलत्वे फलितमाह—तद्ध्वंसादिति । तस्यानर्थमूलतया लोकवेदसिद्धत्वमतःशब्दार्थः । तच्चेदनर्थमूलं तर्हि स्वापप्रलययोरपि तद्भावान्मातृत्वादिरनर्थः स्यादित्याशङ्क्याऽऽह—जिहासितस्येति । प्रत्यङ्मोहो देहाभिमानद्वाराऽनर्थहेतुर्न साक्षादित्यर्थः ॥१६९॥

देहाभिमानस्यानर्थहेतुत्वे मानमाह—नेत्यादिना । तर्हि प्रत्यङ्मोहादेव देहाभिमानोऽपि स्वापादौ स्यान्नेत्याह—धर्मेति । योनिरित्यवसीयत इति संबन्धः । धर्मादेस्तद्योनित्वे यथाकर्म यथाश्रुतमित्यादिवाक्यं प्रमाणयति—आगमेति ॥१७०॥

ननु धर्मादेरपि स्वापादौ भावात्तत्कृतं सदेहत्वमपि तथा स्यादित्याशङ्क्याऽऽह—विहितमिति । अपूर्व-

नाकारकस्य जगति क्रियया संगतिस्तथा ॥७२॥
तद्भावभावहेतुत्वात्कारकत्वस्य कारणम् । रागद्वेषौ न तौ मुक्त्वा जगत्यन्यत्प्रवर्तकम् ॥७३॥
स यथाकाम इत्युक्त्वा क्रत्वादेः प्रसवं श्रुतिः । कामाभावे च तद्धानिं योऽकामश्चेति चावदत् ॥७४॥
साध्वसाध्विति चाध्यासौ मूलं विद्यात्तयोरपि । रागद्वेषौ यतो दृष्टौ नैवर्ते साध्वसाधुनी ॥७५॥
अन्तरेण प्रमेयार्थं नापि ते साध्वसाधुनी । साध्वसाध्विति वा ज्ञानं ज्ञातमेयस्य जायते ॥७६॥
प्रमातृत्वादिसंबन्धो नासदात्मकवस्तुनि । नञ्घटाद्यर्थविज्ञानं सत्येव जगतीष्यते ॥७७॥
प्रत्यग्याथात्म्यसंमोहमृते सत्त्वं न कुत्रचित् । प्रत्यग्याथात्म्यसंबुद्धौ न सत्तन्नासदुच्यते ॥७८॥
असाधारणमज्ञानं प्रतीच्येव यतः स्थितम् । एतत्प्रमेयमेवातः प्रमाणं नान्यदिष्यते ॥७९॥
एवं प्रमेयसिद्ध्यर्थं प्रवृत्तैषोत्तरा श्रुतिः ।
क्रियाकारकरूपेऽस्मिन्व्यवहारे तमोन्वयात् । अक्रियाकारकं वस्तु पारोक्ष्यान्नैव लभ्यते ॥८०॥

स्यानुष्ठानं हेतुरित्यत्र हेतुमाह—न हीति । निष्क्रियस्य धर्मादियोगे मुक्तस्यापि स्यात्स्वापादौ सदपि धर्माद्यकिंचित्करमहंकाराभावादव्यक्तेरन्यथा स्वापाद्यभावाच्चोद्यानवकाशादिति भावः ॥१७१॥

क्रियायास्तर्हि किं कारणं तदाह—नाकारकस्येति । तथेत्यक्रियस्य धर्माद्ययोगवदित्यर्थः । कारकत्वं क्रियाहेतुरित्यत्र हेतुमाह—तद्भावेति । तस्य भावे क्रियाभावादन्यथा चाभावात्कारकत्वस्य तद्धेतुत्वनिश्चयादित्यर्थः । तस्य हेतुमाह—कारकत्वस्येति । तत्रान्वयव्यतिरेकौ प्रमाणयति—न ताविति ॥१७२-१७३॥

रागादेः प्रवर्तकत्वे श्रुतिरपि मानमित्याह—स यथेति । "स यथाकामो भवति तत्क्रतुर्भवती"त्याद्या श्रुतिः संकल्पक्रियादे रागादिवशादुत्पत्तिमुक्त्वा "योऽकाम आप्तकाम" इत्याद्या च तदभावे संकल्पादेरसत्त्वमुक्तवती । चकाराभ्यां कामबन्धनमेवेद"मात्मक्रीड" "आत्मरतिक्रियावा" "न्यस्त्वात्मरतिरेव स्यादि"त्यादिश्रुतिस्मृतिभ्यां कामादिभावाभावाभ्यां प्रवृत्तिभावाभावौ विवक्षिताविन्यर्थः ॥१७४॥

रागद्वेषयोर्निदानमाह—साध्विति । तत्रान्वयव्यतिरेकौ सूचयति—रागद्वेषाविति ॥१७५॥

शोभनाशोभनाध्यासयोर्ज्ञातोऽर्थो हेतुरिति वदन्नादौ व्यतिरेकमाह—अन्तरेणेति । अन्वयमाह—साध्विति ॥१७६॥

ज्ञातत्वस्य हेतुमाह—प्रमातृत्वेति । ज्ञातत्वं हि मातृत्वादिसंबन्धस्तस्यासत्यसंभवो नरविषाणादावदृष्टेरतस्तत्र सत्त्वं हेतुरित्यर्थः । तदेतदनुभवेन साधयति—नञ्घटेति । भावाभावज्ञानं सत्येव लोके दृष्टं नासति तद्धीर्न हि तुच्छे ज्ञानं संगच्छतेऽतः सत्त्वं ज्ञातत्वहेतुरित्यर्थः ॥१७७॥

सत्त्वासत्त्वयोः किं कारणं तदाह—प्रत्यगिति । सत्त्वमसत्त्वं चेति च्छेदः । कुत्रचिद्देशे काले वस्तुनि वेत्यर्थः । प्रतीचोऽपि सत्त्वान्न तदज्ञानकृतमित्याशङ्क्य वस्तुतः सदपि प्रत्यग्वस्तु ज्ञानादूर्ध्वं सदसदिति च न व्यवह्रियतेऽतो व्यावहारिकं सत्त्वमाविद्यमेवेत्याह—प्रत्यग्याथात्म्येति ॥१७८॥

प्रत्यगज्ञानस्यानर्थहेतुत्वं प्रणाड्योक्तं तत्र प्रत्यगितिविशेषणं त्यक्त्वाऽज्ञानं तद्धेतुरिति वाच्यं तथाच आत्मानात्मसाधारणाज्ञानस्य तद्धेतुत्वसिद्धिरित्याशङ्क्याऽऽह—असाधारणमिति । आत्मानात्मनोर्न साधारणमज्ञानं किं त्वात्मनोऽसाधारणं प्रतीच्येवाऽऽश्रये विषये च स्थितत्वादहमज्ञो मां न जानामीत्यनुभवादनात्मनि चाज्ञानात्मके तदयोगादित्यर्थः । प्रतीचोऽन्यत्रापि प्रमाणप्रवृत्तेरज्ञातत्वमेष्टव्यमज्ञानोपलक्षिते तत्प्रवृत्तेस्तत्कथमात्मैवाज्ञात इत्याशङ्क्याऽऽह—एतदिति । न ह्यज्ञानात्मकेऽनात्मन्यज्ञातत्वमेकत्र विषयविषयित्वायोगात्तस्मादेतस्मिन्प्रतीच्यज्ञाते मेये बोधकमेव मानं नानात्मबोधकं तदस्तीत्यर्थः ॥१७९॥

आत्मैवाज्ञातो मेय इति प्रतिज्ञामात्रमित्याशङ्क्याऽऽह—एवमिति । आत्मैवाज्ञातश्चेत्तत्रैवाध्यक्षादेरपि वृत्तेस्तस्य तद्गम्यत्वात्कृतं वेदान्तश्रवणेनेत्याशङ्क्याऽऽह—क्रियेति । व्यवहारे व्यवह्रियमाणं जगत्तस्मिक्रियादि-

**तद्धयदृष्टं सदज्ञानकार्यं स्रगिव पन्नगम् । सर्वं बिभर्त्यसक्तं सदसक्तमिति च स्मृतेः ॥८१॥**
**[1]अपूर्वाद्यात्मकं वस्तु यत्र साक्षात्प्रसिध्यति । तत्कात्स्न्र्याल्लभ्यते तत्र व्यवहारो न मोहजः ॥८२॥**
**यथासिद्धानुवादेन पूर्वं नो ह्यभ्यधात्स्फुटम् ॥८३॥**
**पदानीह तदर्थांश्च प्रसिद्धानेव लोकतः । आदाय कर्मशास्त्रं तन्निषेधविधिबोधकृत् ॥८४॥**
**इतः परं वस्तुतत्त्वपरीक्षणकृतक्षणा[2] । श्रुतिः प्रवृत्ताऽतस्तावत्प्रमेयोऽर्थोऽत्र चिन्त्यते ॥८५॥**

अव्याकृतकण्डिकायाः संक्षिप्ततात्पर्यम्

**संसाराख्यमहाव्याधेः किं मूलमिति चिन्त्यते । तद्ध्वस्तये चिकित्सेयं तदा फलवती भवेत् ॥८६॥**

रूपे कारणस्य तमसोऽनुगतेस्तद्विलक्षणस्य वस्तुनस्तदावृतत्वेन पारोक्ष्यान्न तत्प्रत्यक्षादिना लक्ष्यते "पराञ्चि खानी"त्यादिश्रुतेरतो विशिष्टस्यैव तद्विषयत्वं केवलस्याऽऽगममात्रगम्यतेत्यर्थः ॥१८०॥

जगति दृष्टेऽपि प्रत्यङ्न दृश्यते चेदद्वैतहानिरित्याशङ्क्याऽऽह—तद्धीति । प्रत्यग्वस्तु प्रत्यक्षाद्यदृष्टमज्ञातं सदज्ञानं तत्कार्यं च सर्वं सर्पमिव माला धारयति । अतो द्वितीयस्य कल्पितत्वेनावस्तुत्वान्न वस्त्वद्वैतहानिरित्यर्थः । प्रतीचो द्वैतास्पदत्वे कथमसंगतत्वमित्याशङ्क्य संबन्धस्यापि संबन्धिवत्कल्पितत्वादित्याह—असक्तं सदिति । वस्तुनः सङ्गाभावे कथमाश्रयत्वमित्याशङ्क्याऽऽह—असक्तमिति चेति । "असक्तं सर्वभृच्चैव निर्गुणं भोक्तृ चे"ति वदता भगवता वास्तवं सङ्गमन्तरेण सर्वाश्रयत्वं प्रतीचो दर्शितमित्यर्थः ॥१८१॥

अज्ञातात्माश्रयं जगदित्ययुक्तं ज्ञातात्मन्यपि कर्तृत्वादिदृष्टेरित्याशङ्क्याऽऽह—अपूर्वादीति । यत्र विद्यावस्थायां कार्यकारणनिर्मुक्तमेकरसं वस्त्वसंसृष्टापरोक्षत्वेनासंभावनादितिरस्कारेण स्फुरति तत्र व्यवहारः कर्तृत्वादिरज्ञानतो न लभ्यते तदा तस्याप्रतिबन्धेन पूर्णत्वाद्दृश्यमानं तु कर्तृत्वादि बाधितानुवृत्तिमात्रं तस्मादज्ञातात्माश्रयं जगदित्यर्थः ॥१८२॥

यथोक्तं वस्तूषा वा अश्वस्येत्यादिनोक्तं तत्किमुत्तरग्रन्थेनेत्याशङ्क्याऽऽह—यथेति । लौकिकपदार्थानुवादेन पूर्वग्रन्थे ध्येयत्वेन सूत्रात्मनाऽऽत्मवस्तु श्रुतिरुक्तवती न हि तत्र तत्त्वं स्पष्टमादिष्टमतोऽनन्तरग्रन्थोऽर्थवानित्यर्थः । नन्वेवमपि कर्मकाण्डे यथोक्तात्मनः सिद्धत्वाद्गतार्थमुत्तरं वाक्यमनर्थकं नेत्याह—पदानीति । इहेति व्युत्पत्तिदशोक्तिः । लोकतो वृद्धव्यवहारवशादित्यर्थः । लोकसिद्धपदपदार्थाङ्गीकारेणेदमिष्टसाधनमितरदिष्टमित्येतावन्मात्रे कर्मकाण्डे प्रवृत्तं न वस्तुपरमित्यर्थः ॥१८३–१८४॥

तस्य वस्तुपरत्वाभावे लब्धमर्थमाह—इत इति । कर्मशास्त्रात्परस्तादुपनिषदात्मा श्रुतिर्वस्तुस्वरूपनिरूपणार्थं लब्धावसरा सती प्रवृत्ता कर्मकाण्डनिर्वर्तितकर्मजातशोधितधिषणो हि प्रत्यक्प्रवणस्तद्विविदिषामालम्बते तमधिकृत्य चोपनिषदुपावर्तते यस्मादित्थमुत्तरग्रन्थारम्भस्तस्मात्तद्धेदमित्यादौ प्रथममज्ञातार्थो निरूप्यते तदधीनत्वादुपनिषत्प्रामाण्यस्येत्यर्थः ॥१८५॥

ननु पुरुषार्थे निरूपयितव्ये किमित्यज्ञानं निरूप्यते न हि तदेव तथा सदा पुमर्थसिद्धेर्ज्ञानवैफल्यादत आह—संसारेति । कतिपयजनवर्तिज्वरादेरशेषव्यापिनः संसारस्य विशेषार्थं महत्त्वविशेषणम् । चिन्ताफलमाह—तद्ध्वस्तय इति । संसारव्याधिनिरासार्थं श्रवणादिरूपा चिकित्सा मुमुक्षुभिः क्रियमाणा निदाननिश्चये तेन सह तस्य निरसितुं शक्यत्वात्फलवती न हि निदानवेदनं विना चिकित्सितुं युक्तम्—उक्तं हि—

"स्मृतिमान्युक्तिहेतुज्ञो मतिमान्प्रतिपत्तिमान् । भिषगौषधसंयोगैश्चिकित्सां कर्तुमर्हति" । इति ।

सुश्रुतश्चाऽऽह—"संचयं च प्रकोपं च प्रसरं स्थानसंश्रयम् । व्यक्तिभेदं च यो वेत्ति दोषाणां स भवेद्भिषक्" इति ॥ तस्मान्निदानज्ञानपूर्विका चिकित्सा फलवतीत्यर्थः ॥१८६॥

---

१. अपूर्वमनपरमबाह्यमिति श्रुत्युक्तरीत्येत्यादिः ।
२. क्षणः निर्व्यापारस्थितिः ।

ऊर्ध्वमूल इति यथा मन्त्रवर्णोऽपि विद्यते । गीतास्वपि तथैवैतदूर्ध्वमूलमितीरणम् ॥१८७॥
अशेषानर्थमूलस्य प्रत्यगज्ञानरूपिणः । ध्वस्तौ ध्वस्तिरनर्थानां पुमर्थश्च समाप्यते ॥१८८॥
निरस्तातिशयानन्दरूपता प्रत्यगात्मनः । अथैष यो वै भूमेति श्रुत्यैव प्रतिपाद्यते ॥१८९॥
स्वत आनन्दयाथात्म्यात्कुतो दुःखेन संप्लुतिः । तथापि निह्नुते शास्त्रं न लिप्यत इतीरणात् ॥१९०॥

श्रुतिगतपदव्याख्या

अज्ञातात्मैकसंसिद्धबीजावस्थमिदं जगत् । तदित्यनेनाभ्यधायि परोक्षार्थाभिधायिना ॥१९१॥
अव्याकृतस्य जगतो भूतकालाभिसंगतेः । सुखावबुद्धये हेति निपातोऽत्र प्रयुज्यते ॥१९२॥
नामरूपादिविकृतं पराङ्मानैकगोचरः । सहस्रभेदवत्साक्षादिदमा जगदुच्यते ॥१९३॥

तदिदं पदयोः सामानाधिकरण्यफलम्

सामानाधिकरण्यस्य तदिदंपदयोः श्रुतेः । कार्यकारणयोर्नित्यमभेदोऽध्यवसीयते ॥१९४॥
न क्रियाकार्यविरहे कारणं सिध्यति क्वचित् । निष्क्रियं कारणं चेत्स्यात्तद्वन्नित्यं फलोत्थितिः ॥१९५॥

ननु संसारस्य मूलमेव नास्ति स्वभाववादात्प्रधानाद्येव वा तन्मूलं नाज्ञातं ब्रह्मेत्याशङ्क्य श्रुतिस्मृतिभ्यां परिहरति—ऊर्ध्वमूल इति । अस्ति हि संसारस्य मूलं "नेदममूलं भविष्यती"तिश्रुतेस्तच्च यथाऽज्ञातं ब्रह्मैव तथा काठकश्रुतिरित्यर्थः । तथैव मन्त्रवर्णानुसारेणेत्येतत् ॥१८७॥

अज्ञातं ब्रह्म न बन्धहेतुर्निवृत्तेऽप्यज्ञाने तद्दृष्टेरित्याशङ्क्य ज्ञानादूर्ध्वं बन्धधीर्बाधितानुवृत्तिरित्युक्त्वा-न्मैवमित्याह—अशेषेति । न केवलमनर्थध्वस्तिरेवाज्ञानध्वस्तिद्वारा ज्ञानफलं किं त्वानन्दाप्तिरपीत्याह—पुमर्थश्चेति ॥१८८॥

ज्ञानादज्ञानध्वस्त्याऽनर्थध्वस्तावनुपद्रुतात्मनाऽवस्थानमेवाऽऽत्मनो लभ्यते न सुखमित्याशङ्क्याऽऽह—निरस्तेति । "अथैष एव परम आनन्द" "एषोऽस्य परम आनन्द" "एष ह्येवाऽऽनन्दयाति" "यो वै भूमा तत्सुखमि"त्यादिवाक्यमत्र प्रमाणयति—अथेति ॥१८९॥

आत्मनः सुखत्वे दुःखमपि तत्र स्यात्तस्य तदविनाभावादित्याशङ्क्य वैषयिकसुखस्य दुःखाविनाभावेऽपि स्वरूपसुखस्य नैवमित्याह—स्वत इति । आत्मनि दुःखाभावेऽपि तन्निवारकवाक्यस्य का गतिर्न हि प्रसङ्गाभावे तत्र तन्निवारणं युक्तमित्याशङ्क्याऽऽह—तथाऽपीति । वस्तुतो दुःखायोगेऽपि भ्रान्तिप्राप्तं तदादाय "न लिप्यते लोकदुःखेने"त्यादि शास्त्रं निषेधति । न हि मितं निषेध्यं मितिविरोधादित्यर्थः ॥१९०॥

तद्धेत्यादिग्रन्थतात्पर्यमुक्त्वा प्रासङ्गिकीं चोद्योत्तरपरंपरां च दर्शयित्वा श्रुत्यक्षराणि व्याचिख्यासुः तत्पदार्थमाह—अज्ञातेति । तदात्मनैकेन[ब] सती या बीजावस्था साभासप्रत्यगविद्या तद्रूपं जगत्परोक्षं तदभिधायि-सर्वनाम्ना तत्पदेनोक्तमित्यर्थः ॥१९१॥

कथं जगतो यथोक्तस्य परोक्षत्वं तत्राऽऽह—अव्याकृतस्येति । परोक्षतेति शेषः । निपातार्थमाह—सुखेति । परोक्षस्य जगतः सुखधीरैतिह्याधीना तेनात्र हशब्द इत्यर्थः ॥१९२॥

इदंशब्दार्थमाह—नामेति । आदिपदं कर्मार्थम् । तस्मिन्निदंशब्दप्रवृत्तिनिमित्तमाह—परागिति । एकशब्दः शास्त्रनैरपेक्ष्यार्थः । तादृश्यप्यनुमेयादौ नेदंशब्दप्रवृत्तिरिति विशिनष्टि—साक्षादिति ॥१९३॥

पदद्वयसामानाधिकरण्यफलमाह—सामानाधिकरण्यस्येति । तदिदंशब्दयोः सामानाधिकरण्यस्य कार्यकारणश्रवणात्तयोर्भेदो निरस्त इत्यर्थः ॥१९४॥

तयोर्वस्तुत्वं केचिदाहुस्तन्न द्वयोरपि कल्पितत्वात्कारणं हि निष्क्रियं सक्रियं वा ? नाऽऽद्यः क्रियारूपकार्याभावे क्वचिदपि कार्ये कारणस्यासिद्धेरित्याह—न क्रियेति । विपक्षे दोषमाह—निष्क्रियमिति । तद्वत्कारणवदित्यर्थः ॥१९५॥

तयोश्च युगपद्भावे न स्यात्कारणनिश्चितिः । क्रियान्तरप्रसक्तेश्च तत्कार्यत्वेऽनवस्थितिः ।।१९६।।
कार्यं चाक्रियमाणं सन्न कार्यत्वं समश्नुते । अकर्तृकं चेत्कार्यं स्यात्कारणं कार्यतां व्रजेत् ।।१९७।।
कारणत्वात्सदन्यस्य[1] कार्यत्वाच्च सतस्तथा । अन्योन्याव्यतिरेकाच्च कुतो नाशादिसंभवः ।।१९८।।

निरन्वयनाशनिराकरणम्

क्रिया वा तत्फलं वा स्यात्कारकं वा न किंचन । निरन्वयोऽयं नाशः स्यादेषामन्यतमोऽपि न ।।१९९।।
क्रियायाः फलरूपेण ध्वस्तिर्नावस्थितेर्भवेत् । तेन तेन विशेषेण कारणं प्रथते सदा ।।२००।।
यथा जन्मादिकर्तृत्वाद्बीजं नैव विनश्यति । नाशेऽपि तस्य नंष्टृत्वान्न नंष्टुः स्याद्विनाशिता ।। १ ।।
एवं चेन्न सतो नाशो नोत्पत्तिरसतस्तथा । अव्याकृताभिधानाच्च कार्यस्य स्यात्कदाचन ।। २ ।।

न द्वितीयः, क्रियातद्वतोर्यौगपद्यं क्रमो वा ? आद्ये न तयोः शृङ्गयोरिव तद्भावो निश्चायकाभावादित्याह—तयोश्चेति । प्रथमं कारणं पश्चात्क्रियेति क्रमश्चेत्तत्राऽऽह—क्रियान्तरेति । कार्यस्य कारणादुत्पत्तौ क्रियापेक्षावत्तस्याश्च पूर्वसिद्धात्तस्मादुत्पत्तौ क्रियान्तरापेक्षयाऽनवस्था । न च प्रथमं क्रिया पश्चात्कारणमिति क्रमस्तस्यापि कार्यत्वे कारणान्तरापेक्षयाऽनवस्थानादकार्यत्वे क्रियाकालेऽपि तद्भावात्क्रमायोगात् । न च सा निराश्रया, गमिवत् । प्राथम्येऽपि कार्यत्वे क्रियान्तरप्रसक्तेरनवस्था न क्रिया क्रियान्तरमुत्पादयति न चाकार्या साऽस्तीति भावः ।।१९६।।

कार्यस्य क्रियापेक्षायामपि न तस्यास्तदपेक्षा स्वयंक्रियात्वादित्याशङ्क्य तस्याः कार्यत्वमकार्यत्वं वा ? कार्यत्वे क्रियाव्याप्यत्वाभावे व्याहतिरित्याह—कार्यं चेति । अकार्यत्वे सदा सा स्यादिति चार्थः । सक्रियस्य कारणत्वं निरस्याऽऽद्ये दोषान्तरमाह—अकर्तृकमिति । कार्यं कर्तृस्थक्रियाव्याप्यं न चेत्तदा कारणमेव कार्यत्वं गच्छेत्तस्यैव तत्क्रियाव्याप्यत्वराहित्यादित्यर्थः ।।१९७।।

निरूप्यमाणे कार्यकारणयोरयोगश्चेत्तयोस्तुच्छत्वेन कल्पितत्वमित्याशङ्क्याऽऽह—कारणत्वादिति । कारणं तुच्छव्यावृत्तं कारणत्वात्तुच्छस्य तदयोगात्कार्यं च तथा तद्व्यावृत्तमतुच्छस्यैव कार्यत्वात्तुच्छस्य तदनुपपत्तेरित्यर्थः । अन्यस्येति वदन्कार्यकारणयोर्वास्तवं भेदमिच्छतीत्याशङ्क्याऽऽह—अन्योन्येति । न हि तयोर्गवाश्ववद्भेदे तद्भावो नापि वास्तवस्तयोरभेद एकस्मिन्नेव तत्प्रसङ्गादतो द्वयमपि कल्पितमित्यर्थः । किंच जन्मनाशादिविकाराणां वस्तुनो भेदाभेदाभ्यां दुर्भणत्वात्कूटस्थे तस्मिन्कल्पितत्वमेव तयोरित्याह—कुत इति ।।१९८।।

कार्यस्य वैशेषिकादयो निरन्वयं नाशमिच्छन्ति तत्कथं तदसंभवस्तत्राऽऽह—क्रिया वेति । न किंचनेति तुच्छतोक्तिः । पक्षचतुष्टयेऽपि दोषं संभावयति—एषामिति ।।१९९।।

निरन्वयनाशस्य क्रियात्वपक्षे दोषं स्फुटयति—क्रियाया इति । तस्याः फलात्मना स्थितेर्नाभीष्टा ध्वस्तिः स्यादिति योजना । पक्षान्तरेष्वपि संभावितं दोषं स्फुटयति—तेनेति । मूलकारणमेव क्रियाकारकफलात्मना निर्विशेषसदाकारेण च प्रकाशते तन्न कदाचिदपि निरन्वयनाशसिद्धिरित्यर्थः ।।२००।।

तदभावं दृष्टान्तेन स्पष्टयति—यथेति । आदिशब्दः स्थित्यर्थः । बीजस्य नाशेऽपि जन्मादाविव कर्तृत्वान्न निरन्वयनाशिताऽन्यथा कर्त्रभावान्नाशासिद्धिरिति दार्ष्टान्तिकमाह—नाशेऽपीति ।।२०१।।

तदिदंपदयोः सामानाधिकरण्यश्रुतेः कार्यकारणभेदनिरासद्वारा तत्कल्पितत्वे तात्पर्यमुक्त्वा तयोः कल्पितत्वे फलमाह—एवमिति । कार्यकारणयोर्जन्मनाशयोश्च दुर्निरूपत्वं चेत्तर्हि न सतो नाशः सत्त्वे त्यक्तेऽत्यक्ते च तदयोगान्न चासौ सतो भिद्यते नैःस्वाभाव्यापत्तेर्नापि न भिद्यते सन्मात्रत्वप्रसङ्गादेतेनासतो

---

१. अन्यस्य कार्यस्य कारणत्वात् कारणं सत् तुच्छस्य तत्त्वायोगात् । कार्यत्वाच्च कार्यं सत् = असद्भिन्नं तथा च सदसद्विलक्षणम् ।

**तत्त्वबोधातिरेकेण न नाशोऽन्यो यथा तथा । महताऽतिप्रयत्नेन ह्यूर्ध्वं[?]दर्केऽपि प्रवक्ष्यते ॥ ३ ॥**

**अव्याकृतपदार्थः**

**नामरूपाद्यभिव्यक्तेः प्राक्तनः काल उच्यते । तर्हीति ह्यनभिव्यक्तमव्याकृतगिरोच्यते ॥ ४ ॥**

**अविद्याकर्मसंस्कारास्तेजोपृक्ष्मासूत्रसंश्रयाः । खे लीनास्त्वस्तितामात्रा अव्यक्ताख्याः सहाऽऽत्मना ॥५॥**

**कार्यकारणभेदेन प्रपञ्चो यः पुरोदितः । यश्चोर्ध्वं वक्ष्यते तस्मात्परस्तादेतदुच्यते[2] ॥ ६ ॥**

**प्रथते वैश्वरूपेण यतोऽविद्यैव सर्वथा । अविद्यामात्रयाथात्म्यादतस्तद्धेदमुच्यते ॥ ७ ॥**

**मा भूद्व्याकृतधीः पुंसां नामरूपात्मवस्तुनि । ऐकात्म्यव्यक्तितोऽन्यत्र तस्मादेवेति गीरियम् ॥ ८ ॥**

**सामानाधिकरण्योक्तिर्व्यक्तस्याव्यक्तसिद्धये । न हि कात्स्न्यर्मभिव्यक्तेर्व्यक्तस्याकात्स्न्यर्दर्शनात्[3] ॥ ९ ॥**

जन्मादि प्रत्युक्तमिति भावः । तत्रैव हेत्वन्तरमाह—अव्याकृतेति । इदमेव कार्यमव्याकृतमित्युक्ते न तस्य सतो नाशो लयेऽप्यव्यक्तस्य स्थितेर्नापि तस्य कदाचिदप्यसतो जनिरव्यक्तव्यक्तेरेव तत्त्वादित्यर्थः ॥२०२॥

ननु निरन्वयनाशस्त्वयाऽपीष्यते ब्रह्मविद्यया सनिदानबन्धस्य सर्वात्मना ध्वंसाश्रयणात्तत्कथं स दूष्यते तत्राऽऽह—तत्त्वेति । स्वरूपज्ञप्तिरेव समूलबन्धध्वस्तिर्न ततोऽतिरेकेण यथा तथा महता यत्नेन प्रागुक्तमुत्तरत्रापि वक्ष्यते । तस्मादस्मन्मते वस्त्वतिरेकी निरन्वयो नाशो नास्तीत्यर्थः ॥२०३॥

तद्धेदमितिपदानि व्याख्याय तर्ह्यव्याकृतमिति पदे व्याचष्टे—नामेति । यथोक्तकालस्य लोकवेदप्रसिद्धयर्थो हिशब्दः ॥२०४॥

किं तदनभिव्यक्तं न तावदभिव्यक्त्यभावस्तस्य[1] कारणत्वायोगान्नापि तदन्यत्तद्विरोधि वा तस्य कार्यत्वेनोक्तदोषादित्याशङ्क्याऽऽह—अविद्येति । अस्यार्थः—अविद्या मिथ्याज्ञानमहंग्रहश्च । कर्म धर्माधर्मौ । संस्कारा नानारूपकार्यवासनाः । सूत्रं वायुर्वायुर्वै गौतम तत्सूत्रमितिश्रुतेस्ते चाविद्यादयो भूतचतुष्टयालम्बनाः पुनराकाशमप्यालम्बन्ते ते चापञ्चीकृतपञ्चमहाभूताश्रिता मूलकारणात्मना स्थितिं लभन्ते । ते च साभासप्रत्यगविद्यारूपा भोक्त्रा सहाव्यक्तशब्दा भवन्तीति ॥२०५॥

तन्नामरूपाभ्यामित्यादिवाक्यतात्पर्यमाह—कार्येति । उक्तवक्ष्यमाणप्रपञ्चादुपरिष्टात्तमाश्रित्य तदित्याद्युच्यते । तत्र नामरूपशब्दाभ्यामाकाशादि गृह्यते न प्रसिद्धे नामरूपे न च तद्याकरणभूते मूलकारणादिति तद्ग्रहणमत्र युक्तमित्यर्थः ॥२०६॥

कार्यकारणयोर्नित्यमभेद इत्युक्त्वा कार्यकारणभेदेनेति वदतो व्याहतिरित्याशङ्क्याऽऽह—प्रथत इति । वैश्वरूपेण कार्यं कारणमित्यनेकाकारेणेत्यर्थः । सर्वदा त्रिष्वपि कालेष्विति यावत् । कार्यकारणयोराविद्यत्वादुक्तसामानाधिकरण्यात्तयोरभेदोपपत्तिर्भेदेन चानुवादस्तद्रूपेणाविद्याया भानादिन्द्रो मायाभिरित्यादिश्रुतेस्तन्न व्याहतिरित्यर्थः ॥२०७॥

तदित्यादिवाक्यस्थमेवशब्दं व्याकरोति—मा भूदिति । आत्मव्यक्तिं विना जगद्व्यक्तमिति पुंसां भ्रान्तिरूपा धीर्मा भूदिति यस्मान्मन्यते श्रुतिस्तस्मान्नामरूपाभ्यामेव जगदभिव्यक्तं न स्वरूपेण प्रत्यगात्मनेति वदन्ती नामाद्यात्मना तद्व्यक्तमप्यव्यक्तमेव रज्जुरिव सर्परूपेणेत्यभिप्रायेणैवकारं प्रयुङ्क्त इत्यर्थः ॥२०८॥

इतश्च जगद्व्यक्तमिव न व्यक्तमेवेत्याह—सामानाधिकरण्येति । इदं तदिति सामानाधिकरण्यमवधारणाभिप्रायमुपोद्बलयतीत्यर्थः । अव्यक्तेति भावप्रधानोक्तिः । आत्मव्यक्तिं विना जगतः साक्षाद्व्यक्तत्वाभावे हेत्वन्तरमाह—न हीति । व्यक्ते जगति व्यक्तेरपूर्णत्वे हेतुमाह—व्यक्तस्येति । आत्मैव वस्तु न जगदिति तदुपलब्धौ नोपलभ्यते । अतो यावद्ब्रह्म प्रत्यङ्न मीयते तावज्जगदव्यक्तमेवेत्यर्थः ॥२०९॥

---

१. तस्य—अभावस्य कारणत्वायोगः "नासतो विद्यते भावः" इति गीतासु भगवदुक्तेरित्यर्थः ।

२. तस्मात् परस्तादिति—उक्तवक्ष्यमाणप्रपञ्चसृष्टेरूर्ध्वं नामरूपव्याकरणं ज्ञेयमित्यर्थः । आकाशादि सृष्टिमाश्रित्यैव नामरूपव्याकरणसम्भवादित्यर्थः ।

३. अकात्स्न्यर्दर्शनात् स्वीयेन कृत्स्नस्वरूपेण ब्रह्मरूपेणादर्शनात् ।

अव्याकृते मानाभावशंका

प्रमात्रादिनिषेधेन श्रुत्याऽव्याकृतमुच्यते । तद्वित्तिसाधनाभावात्कथं तदवगम्यते ॥१०॥

नित्यानुभवेन तद्भानं मानात्

विधूताशेषसंबन्धमनन्यानुभवात्मकम् । कूटस्थसंविन्मात्रैकं ब्रह्मास्मीतिस्वभावकम् ॥११॥

अतिरोहितसंवित्कं सदानस्तमितोदितम् । निःसामान्यविशेषं तत्प्रत्यगात्मैकनिष्ठितम् ॥१२॥

स्वतोऽवबुद्धं तद्यस्मान्निरविद्यमतः सदा । संगतिर्निरविद्यस्य नाविद्याहेतुजैर्मलैः ॥१३॥

एवंस्वभावमप्येतदविज्ञातं स्वभावतः । तमोवृत्तमपेक्ष्यैतन्न तु यद्वास्तवं स्वतः ॥१४॥

अज्ञातत्वस्य नित्यानुभवसिद्धता

स्वानुभूत्यनुसारेण यथोक्तोऽर्थोऽवसीयताम् । मानहेत्वतिवर्तित्वान्नेह मात्रादिसंभवः ॥१५॥

तस्मिन्नपहतध्वान्तेऽप्यविद्या स्वानुभूतितः । स्वानुभूतिर्न वेद्मीति प्रागैकात्म्यप्रबोधतः ॥१६॥

ज्ञातात्मतत्त्वो जानाति त्रिकालं तदसंभवम् । अन्यतः संगतिः सेयमविचारितसिद्धिका ॥१७॥

तद्धेत्यादावव्याकृते प्रकृते मानमस्ति न वेति विकल्प्याऽऽद्यं दूषयन्नाशङ्कते—प्रमात्रादीति । न हि तत्र मानमस्तीति वक्तुं शक्यं प्रकृतश्रुतिविरोधादिति भावः । द्वितीयं निरस्यति—तद्वित्तीति । यदि तत्र नास्ति मानं तदा तदसिद्धिः साधकाभावादित्यर्थः ॥२१०॥

नित्यानुभवादव्याकृतावगतिर्न मानादिति वक्तुमनुभवं निरूपयति—विधूतेति । तस्य ज्ञानेनाप्यसंबन्धादसिद्धिमाशङ्क्याऽऽह—अनन्येति । भेदस्यानुभवे कल्पितत्वं तद्विशेषणवाचकानन्यशब्देन विवक्ष्यते तथाऽपि तस्य जन्मादिविक्रियावतो वस्तुरूपत्वे तस्यापि तथात्वमित्याशङ्क्याऽऽह—कूटस्थेति । द्रव्यबोधात्मकं वस्त्विति मतं निरस्यति—मात्रेति । संविदि भेदभानात्तस्य वस्तुत्वे वस्त्वपि भिन्नं स्यादिति नेत्याह—एकमिति अनन्यपदसूचितमत्र व्यक्तीक्रियते । औपाधिकी तत्र भेदधीर्न वास्तवीत्यर्थः । उक्तविधत्वेऽपि ब्रह्मणो जीवस्य किमायातं तदाह—अस्मीति ॥२११॥

संविद्रूपमपि प्रत्यग्ब्रह्म न स्वप्रकाशं संविदो वेद्यत्वादित्याशङ्क्याऽऽह—अतिरोहितेति । न हि सा वेद्या घटवदसंवित्त्वापत्तेरनवस्थानाच्चेति भावः । उक्तं कौटस्थ्यं व्यनक्ति—सदेति । दीपादिषूदयास्तमयदृष्टेर्वस्तुत्वादत्रापि तौ स्यातामित्याशङ्क्याऽऽह—निःसामान्येति । सामान्यविशेषयोरन्यतरत्वमप्यस्यापि वेद्यत्वादवधेयमित्याशङ्क्याऽऽह—प्रत्यगिति ॥२१२॥

नेदं स्वमहिमप्रतिष्ठं वस्तुत्वाद्घटवदित्याशङ्क्याऽऽह—स्वत इति । नित्यबुद्धत्वेन नित्यशुद्धत्वमाह—यस्मादिति । तद्धेतूकृत्य नित्यमुक्तत्वमाह—संगतिरिति ॥२१३॥

उक्तरूपवस्तुनस्तथैव प्रथा स्यादित्याशङ्क्याऽऽह—एवमिति । अज्ञातत्वं स्वभावत इत्युक्तं हेतुं व्याकरोति—तम इति । एतदविज्ञातमिति सम्बन्धः । स्वतो यद्वस्तुरूपं तदपेक्ष्य नाज्ञातत्वं नित्यत्वापत्तेरित्याह—न त्विति ॥२१४॥

यथोक्तब्रह्मणोऽज्ञातस्याव्याकृतशब्दत्वेऽपि कथं तत्प्रथेत्याशङ्क्याऽऽह—स्वानुभूतीति । अज्ञातं प्रत्यग्वस्त्वविद्याकर्मेत्यादावुक्तमव्याकृतं तच्चोक्तानुभवात्सिध्यतीत्यर्थः । अनुभवगम्यत्वे घटवन्मेयत्वमाशङ्क्य व्यक्तशब्दाद्यभावान्नैवमित्याह—मानेति । इहेत्यज्ञातप्रत्यगुक्तिः ॥२१५॥

प्रतीचि संविदेकरसे नाज्ञातत्वमज्ञत्वं वेत्याशङ्क्याऽऽह—तस्मिन्निति । कथं ध्वस्ताविद्ये तदनुभूतिस्तत्राऽऽह—स्वानुभूतिरिति । अज्ञत्वादनुभूतेर्निरङ्कुशत्वं वारयति—प्रागिति ॥२१६॥

प्रतीचि स्वप्रकाशेऽप्यविद्या चेत्कुतस्तद्ध्वस्तिर्न च वाक्यीयादैक्यबोधात् तद्वतोऽपि नित्यानुभवादज्ञत्वादिधीसंभवादित्याशङ्क्याऽऽह—ज्ञातेति । वाक्यीयज्ञानादज्ञानध्वस्तिरात्यन्तिकी तस्य तद्विरोधित्वात्स्वरूपज्ञानस्य

स्वभावव्यतिरेकाभ्यां ध्वान्तसिद्धेरसंभवात् ।
न चेत्प्रमाणतः सिद्धिरस्याव्याकृतरूपिणः । न चैकात्म्यस्वभावेन कुतस्तन्मानगोचरः ॥१८॥
तद्धेदमित्यनेनोक्तिर्व्याकृताव्याकृतात्मनोः । प्रमाणयोग्यतैवोक्ता न त्वैकात्म्यमितात्मता ॥१९॥
अव्याकृतमविज्ञातं प्रमाणाविषयं मतम् । प्रमाणानभिसंबद्धं प्रमाणाच्चेति साहसम् ॥२०॥

अविज्ञातत्वस्य स्वरूपानुभवसिद्धत्वाभावे सर्वव्यवहारासिद्धिः

अविज्ञातार्थगन्तॄणि प्रमाणानीतिवादिनाम् । सर्वेषामभ्युपेतोऽर्थः कुतोऽसाविति चिन्त्यते ॥२१॥
ज्ञातो वाऽर्थोऽथवाऽज्ञात उभयं वा न चोभयम् । प्रमाणानां प्रमेयः स्यात्सर्वमेतद्विचार्यते ॥२२॥
मेयमानत्वसंभित्तौ न पश्यामोऽत्र साधनम् । ज्ञातस्याव्यतिरेकित्वादज्ञातस्याप्यमानतः ॥२३॥
जगत्यर्थो हि यः कश्चिज्ज्ञात एव स बुद्धिवत् । मानादेव स विज्ञात इत्येतत्स्यात्कुतोऽमितेः ॥२४॥

तत्साधकत्वादित्यर्थः । आत्मनोऽज्ञानतज्जाभ्यां योगोऽस्ति न वा? अस्ति चेदसङ्गत्वश्रुतिविरोधो, नास्ति चेदज्ञत्वाद्यसिद्धिरित्याशङ्क्याऽऽह—अन्यत इति ॥२१७॥

अविचारितसिद्धिकत्वं साधयति—स्वभावेति । न हि वस्तुत्वेनाज्ञानादिसिद्धिरबाधापत्तेर्नापि तद्भेदेन सिद्धिरवस्तुनि भेदानुपपत्तेरित्यर्थः । तत्त्वान्यत्वाभ्यामज्ञानस्य सकार्यस्यामेयत्वेऽपि स्वरूपेण तन्मेयमित्याशङ्क्याऽऽह—न चेदिति । आत्मसंबन्धिनोऽज्ञानादेस्ततो भेदेनाभेदेन वा मानतः सिद्धिर्नास्ति चेत्तर्हि तस्य मेयत्वोक्तिर्नार्थवती प्रामाणिकमनिर्वाच्यं चेति व्याघातादित्यर्थः । अस्येत्यात्मसंबन्धोक्तिः । अव्याकृतरूपिणोऽज्ञानादेरात्मनः सकाशाद्भेदेनेति शेषः ॥२१८॥

तद्धेदमितिवाक्यगम्यमव्याकृतं कथं न मेयमित्याशङ्क्याऽऽह—तद्धेति । अनेन वाक्येन जगतो द्विरूपस्यास्ति तावदुक्तिस्तथा चाज्ञातता तस्यानुभवसिद्धाऽनूदिता तन्नैकात्म्यवदव्याकृतस्य मेयता वाक्यस्य तत्रातात्पर्यादित्यर्थः ॥२१९॥

तस्यामेयत्वे हेत्वन्तरमाह—अव्याकृतमिति । तस्य व्याख्यानमविज्ञातमिति । प्रमाणस्य विषयोऽवकाशो यत्र नास्ति तत्तथोक्तम् । प्रमाणाविषयत्वं साधयति—प्रमाणेति । प्रमाणाच्च मतं ज्ञातमिति सम्बन्धः । न हि तन्मीयते माननिरस्यत्वादिति भावः ॥२२०॥

परात्मैव प्रत्यग्भूतोऽज्ञानस्याऽऽश्रयो विषयश्च स्वरूपानुभवाच्चाज्ञातत्वादेः सिद्धिर्न मानादिति स्वपक्षमुक्त्वा परपक्षे सर्वव्यवहारासिद्धिरिति वक्तुमुभयसिद्धमर्थमाह—अविज्ञातेति । स च कुतः स्फुरति स्वतो वा परतो वा परतश्चेन्मानाद्वा साक्षिणो वेति विचार्य निर्धार्यमित्याह—कुत इति ॥२२१॥

न तावदाद्योऽज्ञातत्वस्याऽऽवाभ्यां स्वप्रकाशत्वानुपगमादज्ञातार्थस्यामेयत्वापत्तेश्च । यदि स साक्षिणा सिध्यति तदाऽस्मन्मतमेवेति मन्वानो मानगम्यत्वपक्षे विचारान्तरं दर्शयति—ज्ञातो वेति । अज्ञातः सन्योऽर्थो मानविषयः स स्वप्रकाशो वा सांख्यवज्जडो वा तार्किकवज्ज्ञानज्ञेयात्मको वा योगाचारवत्, यद्वा वस्तुतो नाज्ञातो नापि ज्ञातोऽज्ञानादज्ञातो ज्ञातो ज्ञानादिति संभावनोपनीतं कल्पान्तरं सर्वमेतदयुक्तमिति विचार्य निर्धार्यतेऽतो मानादज्ञातोऽर्थो न स्फुरतीत्यर्थः ॥२२२॥

वैशेषिकादिपक्षस्यायुक्तत्वमादौ दर्शयति—मेयेति । जडस्याज्ञाततया मेयत्वे मानमिदमिदं मेयमिति तयोर्भेददृष्टौ नास्ति मानमित्यर्थः । विषयविषयिभावेन भेदोऽनुभूयते तयोरित्याशङ्क्य ज्ञातरूपेणाज्ञातरूपेण वा विषयत्वं? नाऽऽद्यस्तस्य प्रकाशरूपस्य तादृङ्मानाद्भेदे मानाभावादित्याह—ज्ञातस्येति । नेतरोऽज्ञातरूपस्य प्राङ्मानप्रवृत्तेरदृष्टत्वान्मानान्तरदृष्टौ तस्य माननिरस्यत्वान्नाज्ञातं रूपमस्ति मानाभावादित्याह—अज्ञातस्येति ॥२२३॥

ज्ञातरूपस्य मानादभेदेन कथमसत्त्वं तत्राऽऽह—जगतीति । व्यवहारभूमौ व्यवह्रियमाणो योऽर्थः स

मानातिरेकासंसिद्धेर्मेय एव तथा न किम् । न हि दीपान्तराद्दीपो भारूपत्वं प्रपद्यते ॥२५॥
ज्ञातरूपातिरेकेण नान्यद्रूपं समीक्ष्यते । एवं चेन्मानतो मेयो विज्ञात इति का प्रमा ॥२६॥
न चापर उपायोऽस्ति मेयसद्भावसिद्धिकृत् । मानेभ्यस्तत्फलासूतेरन्धकारप्रनृत्तवत् ॥२७॥
स्वत एव प्रसिद्धश्चेत्प्रमेयोऽर्थस्तथाऽपि न । अनन्यायत्तसंसिद्धेर्मेयत्वं किंनिबन्धनम् ॥२८॥
निःसाधनो न साध्योऽस्ति नासाध्यं साधनं क्वचित् । तुल्यशक्तिमतां नापि[1] मिथोपेक्षाऽस्ति कुत्रचित्
नासिद्धयोः स्वतोऽपेक्षा सिद्धयोश्चापि नेष्यते । नापेक्ष्यापेक्षकत्वं हि लोकेऽप्यतिशयं विना ॥३०॥

सर्वोऽपि प्रकाशाव्यभिचारी यथा धीः स्वसत्तायां तदव्यभिचारिणी तथा सोऽपि यावद्व्यवहारं ज्ञानादव्यतिरेकी व्यवह्रियमाणत्वादित्यर्थः । व्यवहारस्य प्रकाशाविनाभावो हिशब्दार्थः । ननु धीः स्वतो ज्ञाताऽन्यथाऽनवस्थानादर्थस्य तु ज्ञातता मानादन्यथा तद्वैफल्यादत आह—मानादिति ॥२२४॥

अर्थस्य ज्ञातत्वानुपपत्तिरत्र मानमित्याशङ्क्याऽऽह—मानेति । मानादर्थस्य भेदे मानाभावादसिद्धोऽतोऽर्थः स्वयमेव मानवत्प्रकाशरूपोऽस्तु कुतस्तज्ज्ञातत्वानुपपत्तिरित्यर्थः । ननु स्वप्रकाशात्माऽपि मानादेव सिध्यति चक्षुरपेक्षया दीपसिद्धिदृष्टेस्तत्राऽऽह—न हीति । यथा प्रकाशरूपोऽर्थो न प्रकाशरूपं मानमपेक्ष्य सिध्यतीति शेषः ॥२२५॥

ज्ञातस्याव्यतिरेकित्वादित्येतत्प्रपञ्चितम् । यत्तु नाज्ञातं रूपमस्ति मानाभावादिति तन्न घटज्ञातत्वमानस्य तदज्ञातत्वेऽपि मानत्वादित्याशङ्क्याज्ञातस्याप्यमानत इत्येतद्विवृणोति—ज्ञातरूपेति । न तावद्विषयस्य ज्ञातत्वमानं स्वकाले तत्राज्ञातत्वं साधयति ज्ञातत्वसाधनोपक्षयात्कालान्तरे चासत्वान्न च ज्ञातरूपातिरेकि रूपं वस्तुनोऽस्ति योग्यानुपलम्भादित्यर्थः । वैशेषिकादिपक्षे मानमेयभेदासिद्धिमुपसंहरति—एवं चेदिति । ज्ञातरूपस्य मानादभेदाभावोऽज्ञातरूपस्य चासत्वमित्येवं स्थितं चेन्मानान्मेयधीर्न प्रतिज्ञातुं शक्या मानाभावादतो न तद्भेदधीरित्यर्थः ॥२२६॥

ननु मानाज्जडासिद्धौ विनाऽपि तदपेक्षां तत्सिद्धिस्तद्व्यवहारदर्शनादन्यथा तदयोगात्तत्राऽऽह—न चेति । मानेभ्योऽपर इति सम्बन्धः । जडस्य स्वतःसिद्ध्ययोगादित्यर्थः । स्वतो मानतो वा जडासिद्धौ फलितमाह—तत्फलेति । तस्मान्मानतः स्वतो वा जडपरिच्छित्तिफलासिद्धेस्तमसि नृत्यवत्तत्र सर्वव्यवहारानुपपत्तिरित्यर्थः ॥२२७॥

द्वितीयं दूषयित्वाऽऽद्यमनुवदति—स्वत इति । तत्रापि मानमेयविभागासिद्धिस्तुल्येति दूषयति—तथाऽपीति । त्वत्पक्षवन्मत्पक्षेऽपि स्यादित्याशङ्क्याऽऽह—अनन्येति । मत्पक्षे वस्तुनः स्वप्रकाशत्वान्न मानजस्फूर्त्याधारत्वेन मेयत्वं तदधीनाज्ञाननिवृत्तिफलवत्तया तथात्वं, मानमपि तदज्ञानध्वंसि न स्फूर्तिजनकं, न चैवं ते संभवत्यज्ञानतत्संबन्धयोर्वस्तुत्वादवस्तुत्वे पक्षाभेदात् । न च प्रधानस्यावेवाज्ञानतद्योगावात्मन्यारोपितौ तस्याज्ञानेतरस्य दुर्वचत्वादिति भावः ॥२२८॥

किंच मानमेययोर्मिथोऽनपेक्षत्वं सापेक्षत्वं वा? नाऽऽद्य इत्याह—निःसाधन इति । न मेयो मानानपेक्षो मानव्याप्यस्य मेयत्वात् मानमपि न मेयानपेक्षं निरालम्बनत्वायोगादतस्तयोर्न मिथोऽनपेक्षतेत्यर्थः । द्वितीये मेयवन्मानमपि स्वप्रकाशं न वा? न चेदनवस्था स्वप्रकाशं चेत्तत्राऽऽह—तुल्येति । न हि दीपयोर्मिथोपेक्षा दृष्टेति भावः ॥२२९॥

किंच मानमेययोरसिद्धयोरपेक्षा सिद्धयोर्वा? सिद्धासिद्धयोर्वा? नाऽऽद्य इत्याह—नेति । स्वतोऽसतोरस्फुरतोश्च न मिथोऽपेक्षा वन्ध्यासूनुखपुष्पवदित्यर्थः । न द्वितीय इत्याह—सिद्धयोश्चेति । स्वतः सतोः स्फुरतोश्च मिथो नापेक्षा तत्फलाभावादित्यर्थः । पक्षद्वयेऽपि साधारणं दोषमाह—नापेक्ष्येति । सत्यतिशये तद्भावस्य प्रसिद्धयर्थो हिशब्दः । शास्त्रसंग्रहार्थस्त्वपिशब्दः ॥२३०॥

१. अपिशब्दात् स्वतोऽसिद्धत्वे मानान्तरात् "सिद्धौ अनवस्था । अत्यन्तासिद्धौ" असत्वमित्यर्थः ( न्या० ) ।

**नापि सिद्धः स्वतोऽसिद्धं नृशृङ्गवदपेक्षते । तथाऽसिद्धः स्वतः सिद्धं नात्यन्ताभावरूपतः ॥३१॥**
**अपेक्षते चेत्सिद्धोऽसौ नासिद्धोऽपेक्षितुं क्षमः । येनातोऽज्ञानतः सिद्धिं स्वतःसिद्धोऽप्यपेक्षते ॥३२॥**
**विश्वेश्वरोऽपि प्राहैतत्प्रपन्नाय किरीटिने । भावाभावत्वमज्ञानादतद्वत्येव कल्पितम् ॥३३॥**
**नासतो विद्यते भावो नाभावो विद्यते सतः । उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥३४॥**
**ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते । तथा न जायत इति विध्वस्ताशेषकल्पनम् ॥३५॥**
**वासुदेवः सर्वमिति प्रत्यक्षश्रुतिपूर्वकम् । अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥३६॥**
**सत्यज्ञानादिरूपस्य प्रत्यगात्मन एव च । कारणत्वं सुविस्पष्टं श्रुतौ हि बहुशः श्रुतम् ॥३७॥**

तृतीये सिद्धस्यापेक्षकत्वमितरस्यापेक्ष्यत्वमिति वा विपरीतं वेत्याद्यं निरस्यति—नापीति । द्वितीयं निराह—तथेति । उभयत्र स्वतःशब्दस्योभयतः संबन्धः ॥२३१॥

असिद्धो नापेक्षतेऽसिद्धत्वान्नरविषाणवदित्यत्र विपक्षे दोषमाह—अपेक्षते चेदिति । अपेक्षाकर्तुरतुच्छत्वं साधयति—नेति । सिद्धयोरसिद्धयोः सिद्धासिद्धयोर्वा नापेक्षेति सिद्धे फलितमाह—येनेति । उक्तन्यायात्कस्यचित्कस्मिंश्चिदपि येन नापेक्षा तेनाज्ञानकृतत्वात्तस्याः स्वतःसिद्धोऽप्यात्मा स्वाज्ञानेनाज्ञातत्वाज्ज्ञानतः[1] सिद्धिमपेक्षतेऽतः स्वतोपेक्षाभावात्सापेक्षं सर्वं सर्पवत्कल्पितमिति भावः ॥२३२॥

सापेक्षस्य कल्पितत्वं भगवतोऽपि संमतमित्याह—विश्वेश्वरोऽपीति । एतच्छब्दार्थमेव कथयति—भावेति । अतद्वतीति भावाभावविभागरहिते वस्तुनीत्यर्थः ॥२३३॥

भगवद्वाक्यमुदाहरति—नासत इति । असतो जन्माभावः सतो नाशाभावश्च कथमिति तत्राऽऽह—उभयोरिति । सत्सदेव नासत् । असदप्यसदेव न सदिति सदसतोर्निर्णयो विद्वद्भिर्दृष्टस्तस्मादेकत्र भावाभावत्वमाविद्यमित्यर्थः ॥२३४॥

सदसत्त्वं वस्तुनि कल्पितमित्यत्र वाक्यान्तरमाह—ज्ञेयमिति । तत्प्रवचनफलमाह—यदिति । न सत्तन्नासदुच्यत इत्येतदुत्तरार्धगतमत्रोपजीव्यम् । सत्त्वादिवद्वस्तुनि जन्माद्यपि कल्पितमित्यत्र भगवद्वाक्यं दर्शयति—तथेति[2] । विध्वस्ताशेषकल्पनमाहेति सम्बन्धः ॥२३५॥

सर्वस्याऽऽत्मनि कल्पितत्वस्मृतिरमूला न मानमित्याशङ्क्य वाक्यान्तरमुदाहरति—वासुदेव[3] इति । ऐतदात्म्यमिदं सर्वमित्याद्या प्रत्यक्षा श्रुतिः । सर्वजगत्कारणत्वस्याऽऽत्मनि कल्पितत्वमपि भगवतो मतमित्याह—अहमिति[4] । प्रभवत्यस्मादिति प्रभवो हेतुर्न च तस्य निमित्तत्वमेव प्रलीयतेऽस्मिन्निति तस्यैव तद्धेतुत्वान्निमित्ते च तदभावादिति द्वयमत्र विवक्षितम् ॥२३६॥

आत्मनः सर्वकारणत्ववादिभगवद्वाक्यमूलभूतां श्रुतिमाह—सत्येति । ब्रह्मविदाप्नोतीति सूत्रितब्रह्मणः सत्यं ज्ञानमनन्तमिति लक्षितस्य यो वेद निहितं गुहायामिति प्रत्यक्त्वेनोक्तस्याऽऽत्मन आकाशः संभूत इदं सर्वमसृजत यतो वा इमानि भूतानीत्यादौ कारणत्वं श्रुतं न च श्रुतेः शङ्कनीयत्वं निर्दोषत्वान्न च तदपह्नोतुं

---

१. ज्ञानतः तत्त्वज्ञानेन शुद्धात्मा सिद्धिमपेक्षते । स्वतस्तु अपेक्षाभावात् सापेक्षं स्वसिद्धौ सापेक्षं अज्ञानतत्कार्यं सर्वं पराधीनसिद्धिकत्वात् मिथ्येत्यर्थः । न चात्मा स्वसिद्धौ ज्ञानमेपक्षत इति वाच्यं आत्मा स्थिरः स्वप्रकाशः अज्ञाननिवृत्तिः ज्ञानमपेक्षते ज्ञानाधीनेत्यर्थः न तु आत्मनः अपेक्षा । न्यायकल्पलतिका तु कस्यचिदपि कस्मिंश्चिदपि अपेक्षा न युक्ता येन अतः स्वतःसिद्धः जानतः सिद्धिं नापेक्षत इति दकारोऽनुसञ्जनीयः—इत्याह ।

२. तथा न जायते किञ्चिज्जायमानं समन्ततः इति गौडपादीयं वाक्यमुदाहरति तथेति ।

३. वासुदेवः सर्वमिति बाधायां सामानाधिकरण्यं तेन ब्रह्मातिरिक्तस्य मिथ्यात्वसिद्धिः ।

४. अहं कृत्स्नस्येति—प्रभवः प्रलयश्चेति अभिन्ननिमित्तोपादानत्वोक्तिः तेन मृत्तिकेत्येव सत्यमित्यादिरीत्या प्रपञ्चमिथ्यात्वसिद्धिः ।

अज्ञातात्मातिरेकेण ब्रुवतः कारणं तथा । सम्यग्ज्ञानान्न मुक्तिः स्यान्न ज्ञानं वस्तुनुत्क्वचित् ।।३८।।
कर्मभ्योऽपि न मुक्तिः स्यात्कर्मापि न हि वस्तुनुत् । तस्यानित्यफलोत्पत्तौ प्रभविष्णुत्वकारणात् ।।३९।।
कूर्मलोमादिवच्चेत्स्यादबुद्धत्वं तथाऽपि वः । स्वतः सर्वज्ञतैव स्यान्न वस्त्वज्ञातमस्ति हि ।।४०।।
न च मानात्प्रसिद्धिः स्यात्कूर्मलोमादिवस्तुनः ।।४१।।
ज्ञातार्थव्यतिरेकेण मानानां मानता यतः । मेयार्थापह्नुतिश्च स्यान्नाज्ञातमिति जल्पतः ।।४२।।
ततश्च वेदसिद्धान्तसंत्यागः कारणादृते ।

योगाचारमतनिरासः

न भिद्यते प्रमेयोऽर्थो मानाद्येषां च वादिनाम् । तेषां दुःशकमत्यन्तमबुद्धार्थावबोधनम् ।।४३।।

शक्यं तत्र संशयाद्यभावान्न चासकृदुक्तं प्रत्याख्यानमर्हतीति भावः । अन्यत्रापि श्रुतिस्मृतिषु प्रसिद्धमेतदिति वक्तुं हीत्युक्तम् ।।२३७।।

केचित्तु श्रुतिस्मृतिप्रसिद्धमपि कारणमुपेक्ष्य प्रधानादि तदाहुस्तान्प्रत्याह—अज्ञातेति । तथा श्रुतिस्मृतिविरोधवदित्यर्थः । प्रधानादिवादे सम्यग्ज्ञानादमुक्तिं साधयति—नेति । परमते कार्यकारणयोर्वस्तुत्वाज्ज्ञानादध्वस्तेर्मुक्तिर्न हि सतोस्तयोर्मुक्तिरनर्थरूपत्वात्तयोरित्यर्थः ।।२३८।।

ज्ञानान्मोक्षो मा भूत्कर्मभ्यस्तु भविष्यति प्रायश्चित्तेन सतो दुरितस्य निबर्हणादिति नेत्याह—कर्मभ्योऽपीति । तत्र हेतुः—कर्मापीति । ज्ञानं दृष्टान्तयितुमपिशब्दः । प्रायश्चित्तस्य वस्तुभूतदोषध्वंसित्वेऽपि न सर्वबन्धध्वंसि कर्मैकमस्ति मानाभावादित्यर्थः । इतोऽपि न कर्माधीना मुक्तिरित्याह—तस्येति । कर्म खल्वनित्यं फलमुत्पादयितुमलं, मोक्षश्च नित्यं फलं तथाच न कर्म तत्र कारणमित्यर्थः ।।२३९।।

प्रधानादिवदज्ञातस्य प्रतीचोऽपि न कारणत्वमज्ञातत्वे मानाङ्गीकारेऽपराद्धान्तादन्यथा तस्यासत्त्वादनुभवसिद्धेश्च प्रक्रियामात्रत्वादिति शङ्कते—कूर्मेति । प्रतीच्यज्ञातत्वस्यानुभवसिद्धेरनुभवस्य च सर्वसाधकस्य प्रागेव साधितत्वादनवकाशं चोद्यमित्यरुच्या परिहरति—तथाऽपीति । स्वतो हेत्वपेक्षामन्तरेणेत्यर्थः । तत्र हेतुर्नेति । अज्ञातत्वस्यात्यन्तासत्त्वे मदीयहार्देऽपि ते धीः स्यादित्यर्थः ।।२४०।।

यत्तु कूर्मलोमादिवदिति तत्र तदज्ञातं ज्ञातं वा? नाऽऽद्योऽदृष्टस्य दृष्टान्तत्वायोगाज्ज्ञातं चेत्प्रमाणाद्भ्रान्त्या वा? आद्यं प्रत्याह—न चेति । प्रामाणिकत्वे कूर्मक्षीरादेरतुच्छत्वापत्त्या दृष्टान्तस्य साध्यविकलतेति भावः । भ्रान्त्या चेदज्ञातत्वमुपेयमज्ञातस्य तद्धेतुतायाः शुक्त्यादौ व्यक्तत्वादिति द्रष्टव्यम् । इतश्चाज्ञातत्वमुपेयमित्याह—ज्ञातेति । यतो ज्ञातमर्थं हित्वाऽज्ञातेऽर्थे मानानां मानत्वमिष्टमन्यथाऽनवस्थानादतो नास्त्यज्ञातमिति वदतां मेयापह्नुतिश्चकारान्मातृमानफलापह्नवस्तस्मात्तदेष्टव्यमित्यर्थः ।।२४१-२४२।।

मानमेयमातृफलापह्नवे किं स्यात्तदाह—ततश्चेति । मानाद्यपलापे वेदैकगम्यं धर्मादीति वैदिको व्यवहारो विना हेतुं त्यज्येत चकारात्प्रत्यक्षादिगम्या रूपादयोऽपि त्यज्येरन्नतो मानप्रवृत्त्यर्थमज्ञातत्वं मन्तव्यमित्यर्थः । मेयस्य स्वप्रकाशत्वपक्षं निराकुर्वता प्रासङ्गिकः स्वपक्षोऽपि विश्वेश्वरोऽपीत्यादिनोक्तः (२३३) । संप्रति योगाचारमतमनुवदति—नेत्यादिना । येषां चेति चकारस्य तेषामित्यत्र सम्बन्धः । स चापिपर्यायः । तन्मतेऽपि मानमेयव्यवहारासिद्धिरित्यभिसंधाय दूषयति—तेषामिति । मेयोऽर्थो बोधैकरसान्मानान्नातिरिच्यते चेन्मानवदर्थस्याज्ञातत्वाभावान्नाज्ञातज्ञापकं मानं, न च ज्ञातस्यैव ज्ञापकं वैयर्थ्यादित्यर्थः । मानान्मेयस्य भेदे मानमेयभावः शङ्क्यते तदभेदे तदाशङ्कैव नेति वक्तुमत्यन्तमित्युक्तम् ।।२४३।।

---

१. मदीयहार्दे—हृद्गताभिप्रायविशेषे ।

२. ज्ञानस्य मानमेयत्वे तस्य ज्ञानं मानान्तरादवगन्तव्यं मानान्तरं च ज्ञानमेव गोचरयेत् तदर्थं च मानान्तरमित्यनवस्था ।

ज्ञानमेयप्रभेदेऽपि मानस्य स्वार्थरूपिणः । बौद्धराद्धान्तसक्तिः स्यात्स्वार्थस्य क्षणिकत्वतः ॥४४॥
स्वार्थं प्रत्येव संसिद्धेः परार्थस्येह वस्तुनः । स्वप्नादिवदनात्मार्थो मृषा स्यात्क्षणिकोऽपि वा ॥४५॥
न च सौगतसिद्धान्तस्तत्सिद्धौ मित्यभावतः । मेयमानैकतोऽभावादज्ञातत्वस्य तत्क्षणे ॥४६॥
अथाभ्युपेयतेऽज्ञातः प्रमेयाव्यतिरेकतः । एकत्रापि प्रमाणत्वप्रसिद्ध्यर्थं क्षणात्मनि ॥४७॥
मानात्मकेऽपि मेयेऽर्थे यद्यबुद्धत्वमिष्यते । अज्ञातत्वापनुन्मानात्किमन्यदिति कथ्यताम् ॥४८॥
स्वतो वा परतो वेदमज्ञातत्वं भवद्भवेत् । स्वतश्चेत्तत्समोवत्स्याज्ज्ञातत्वं रज्जुसर्पवत् ॥४९॥

अस्तु तर्हि मानमेयभेदस्ततो व्यवहारसिद्धिरिति केचित्तान्प्रत्याह—ज्ञानेति । तद्भेदपक्षेऽपि प्राङ्मानप्रवृत्तेरज्ञातार्थस्य ज्ञातत्वानुपगमे[1] संवेदनस्य स्वविषयाकारस्य क्षणिकत्वात्तस्य च स्वसमकालार्थसाधकत्वात्पूर्वोत्तरकालयोरर्थसत्त्वे मानाभावात्तद्वेद्यस्यापि क्षणिकत्वप्रसक्तेस्तदविषयस्य चानिष्टेस्तव स्थायिवादिनोऽपि बौद्धसिद्धान्तःस्यादित्यर्थः ॥२४४॥

ज्ञानवज्ज्ञेयस्यापि सिद्धेर्नैवमित्याशङ्क्याऽऽह—स्वार्थमिति । लोके मेयस्यार्थस्य मानमपेक्ष्यैव सिद्धेरन्यथा चासिद्धेरर्थो ज्ञाने कल्पितः स्यात्स्वप्नादावेवं दर्शनादतो यः प्रत्ययः स निरालम्बनो यथा स्वप्नादिप्रत्ययः प्रत्ययश्चायमित्यनुमानाद्विज्ञानवादापत्तिरिति भावः । उपलब्धिबलान्मानमेयभेदोपगमान्न तद्वाद इत्याशङ्क्याऽऽह—क्षणिकोऽपीति । न तावन्मेयोऽर्थः स्वतः सिध्यति जडत्वान्मानात्तत्सिद्धावुक्तन्यायात्[2]क्षणिकः स्यादतः सौत्रान्तिकवैभाषिकपक्षप्राप्तिरित्यर्थः । ज्ञानज्ञेयभेदं स्थायित्वं चेच्छतोऽपीत्यपेरर्थः । सिद्धान्तिनो विज्ञानवादे नाऽऽस्थेति वक्तुं वाशब्दः ॥२४५॥

भवतु बौद्धसिद्धान्तः का हानिस्तत्राऽऽह—न चेति । विज्ञानवादो बाह्यार्थवादश्च न युक्तौ तन्मूलमानाभावाद्भ्रान्तिमूलत्वादुक्तं च समुदाय[3] उभयहेतुकेऽपि तदप्राप्तिरिति' नाभाव उपलब्धेरिति चातस्तन्मतमसंगतमित्यर्थः । योगाचारमते न शक्यमबुद्धबोधनमित्युक्तं निगमयति—मेयेति । तयोरेकत्वान्मानकाले चाज्ञातत्वायोगादन्यथा तद्वैयर्थ्याद्विज्ञानवादे नाज्ञातज्ञापनमित्यर्थः ॥२४६॥

विज्ञानवाद्याह—अथेति । एकस्मिन्नपि ज्ञानक्षणे मानमेयभावार्थं मेयाभिन्नत्वेनाज्ञातत्वमिष्टमतोऽज्ञातज्ञापनसिद्धिरित्यर्थः ॥२४७॥

मानरूपेऽपि नीलाद्यर्थे यद्यज्ञातत्वं तदा न मानात्तद्ध्वस्तिरविरोधाद्विरोधे वा तदात्मके मेये तदनवकाशादप्रसक्तप्रतिषेधायोगान्न चान्यत्तद्ध्वंस्यनभ्युपगमादन्यथा मानवैफल्यादिति दूषयति—मानात्मकेऽपीति ॥२४८॥

ज्ञातो वाऽर्थोऽथवाऽज्ञात उभयं वेति पक्षेषु साधारणं दोषं वक्तुं विकल्पयति—स्वतो वेति । मेयेऽर्थे भवदज्ञातत्वं स्वाभाविकमौपाधिकं वेति विकल्पार्थः । तत्राऽऽद्यमनूद्य दूषयति—स्वतश्चेदिति । वस्तुनो यद्यज्ञातत्वं स्वाभाविकं तदा सदैवाज्ञानोपेतं तदायत्तज्ञातत्वं तु सर्पवदत्र कल्पितं स्यात्तथा[4]चाऽऽद्यस्य मानादनिवृत्तेरितरस्य[5] च ततो निवृत्तेस्तद्वैयर्थ्यं स्यादित्यर्थः ॥२४९॥

---

१. ज्ञातत्वानुपगमे साक्षिसिद्धत्वानुपगमे ।

२. उक्तन्यायात्—अज्ञातार्थस्य साक्षिसिद्धत्वानुपगमे संवेदनस्य स्वविषयाकारस्य क्षणिकत्वादिति पूर्वश्लोकोक्तन्यायेन ।

३. बौद्धराद्धान्तदूषणार्थं सूत्रं समुदायेति । २-२-१८ समुदायः भूतसंहतिः पञ्चस्कन्धी वा तस्मिन् उभयहेतुकेऽपि समुदायेऽभ्युपगम्यमाने तदप्राप्तिः समुदायाभावानुपपत्तिः समुदायिनामचेतनत्वात् नाभाव उपलब्धेः—२-२-२८ । बाह्यार्थस्य नाभावः अध्यवसातुं शक्यते—उपलब्धेः प्रतिप्रत्ययं घटकुट्याद्युपलब्धेरित्यर्थः ।

४. आद्यस्य अज्ञातत्वस्य ।

५. इतरस्य ज्ञातत्वस्य ।

अथान्यतस्तदज्ञातं किंरूपं वस्त्विवतीर्यताम् । मानादवगतं तच्चेन्मैवमव्यतिरेकतः ।।५०।।
अन्वयव्यतिरेकाभ्यां यथोक्तोऽर्थः प्रसिध्यति । ताभ्यां विना कुतोऽज्ञायि त्वेवं रूपमितीर्यताम् ।।५१।।
न चेह वास्तवं रूपं तदध्यासेन बाध्यते । रज्जुसर्पधिया लोके न रज्जुरितिधीह्नुतिः ।।५२।।
स्वसंवित्तित्वमात्रे च न तमःसंभवः क्वचित् । तथाऽभ्युपगमे तस्य नापनुत्तिः कुतश्चन ।।५३।।
दुर्बलानां विरुद्धानां बलवद्भिरपाक्रिया । विरुद्धैरेव दृष्टा सा तदैकात्म्ये कथं भवेत् ।।५४।।
बाध्यबाधकयोर्योगः स्वशक्त्यनपहारतः । योऽन्यथा संगतिं ब्रूते चर्मवद्वेष्टयेत्स खम् ।।५५।।
न च जाड्यातिरेकेण ह्यविद्या काचिदिष्यते । अविद्यां गमयित्वेति श्रुतितोऽप्यवसीयताम् ।।५६।।

न चोभयमिति चतुर्थेन सह द्वितीयमुत्थापयति— अथेति । अज्ञानादज्ञातं वस्तु ज्ञानाच्च ज्ञातं न स्वतो ज्ञातमज्ञातं वेत्यर्थः । अज्ञातत्वस्याज्ञानकृतत्वे कल्पितत्वमिति द्वितीये दोषं मत्वा चतुर्थं दूषयति—किंरूपमिति । उभयं परतश्चेत्तर्हि वस्तुनो द्वयातिरिक्तं रूपं वाच्यं तच्च न संभवतीत्यर्थः । पावकादौ प्रमितमौष्ण्यादि रूपमतः वस्तुनो द्वयातिरिक्तरूपाभावासिद्धिरिति शङ्कते—मानादिति । प्रमितिरसिद्धेत्याह—मैवमिति । अन्वयव्यतिरेकयोरसंभवान्मानानुपपत्तेरिति हेतुमाह—अव्यतिरेकत इति ।।२५०।।

कथं तदसंभवेन मानानुपपत्तिस्तत्राऽऽह—अन्वयेति । प्राङ्मानप्रवृत्तेर्यद्यज्ञाततया वस्तु सिद्धं तदेदानीं ज्ञातं पूर्वमज्ञातमित्यन्वयव्यतिरेकसंभवात्ताभ्यां वा तत्पूर्वकमानान्तराद्वा ज्ञातौष्ण्यादि वस्तुरूपमित्ययमर्थः सिध्यति । प्राक्चेदज्ञातं वस्तु साधकाभावादसिद्धं तदोक्तान्वयाद्ययोगान्मानान्तरज्ञातमुष्णत्वादि वस्तुरूपमिति दुर्ज्ञानं ज्ञापकाभावादतो ज्ञातत्वादेरन्यकृतत्वात्कल्पितत्वेति भावः ।।२५१।।

तर्हि तेनैव ज्ञातत्वेनाज्ञातत्वं तथाविधमेव बाध्यताम् । दृष्टं हि भवन्नये कल्पितस्यैव कल्पितबाधकत्वं तत्राऽऽह—न चेति । इहेति व्यवहारमार्गोक्तिः । ज्ञातत्ववदज्ञातत्वस्यापि कल्पितत्वे पक्षभेदासिद्धिरन्यतरस्याकल्पितत्वे चाज्ञातत्वं चेदकल्पितं तदा कल्पितेनेतरेण न तद्बाधो न हि कल्पितसर्पज्ञानमकल्पितां रज्जुधियं बाधते नापि ज्ञातत्वमकल्पितं तस्य कादाचित्कत्वेन सर्पवत्कल्पितत्वध्रौव्यादित्यर्थः । कल्पितेनाकल्पितस्याबाधे दृष्टान्तमाह—रज्ज्विति ।।२५२।।

चतुरोऽपि पक्षान्दूषयित्वा योगाचारादिपक्षे दोषान्तरमाह—स्वसंवित्तीति । स्वप्रकाशरूपे तत्त्वे न कदाचिदज्ञानं युक्तं दूरतस्त्वज्ञातत्वमित्यर्थः । तत्राप्यज्ञातत्वोपगमे दोषमाह—तथेति । न हि स्वप्रकाशेऽपि वृत्तिरूपज्ञानमज्ञानध्वंसि त्वयेष्यते । आगन्तुकज्ञानेतरज्ञानानुपगमात्तस्य च ज्ञानान्तराविषयत्वात् । किंच स्वप्रकाशस्याज्ञानसंबन्धो वास्तवश्चेन्न तस्य मानादन्यतो वा ध्वस्तिः । अवास्तवश्चेन्न तस्य स्वरूपज्ञानाद्ध्वस्तिस्तदनभ्युपगमान्नित्यनिवृत्तिप्रसङ्गाच्चेति भावः ।।२५३।।

अस्तु तर्हि कादाचित्कज्ञानादवास्तवाज्ञानसंबन्धध्वस्तिरित्याशङ्क्याऽऽह—दुर्बलानामिति । दृश्यते हि रजतभुजंगादिविभ्रमधियां शुक्तिरज्ज्वादिसम्यग्धिया बाध्यत्वमिति भावः । सामान्यन्यायस्य प्रकृतेऽनुपपत्तिमाह—सेति । कादाचित्कज्ञानाधीनाज्ञानसंबन्धापाक्रियेति यावत् । प्रकाशमात्रे वस्तुनि कादाचित्कज्ञानानुपगमान्न तत्राज्ञानसंबन्धस्तेन निरस्यते न हि ज्ञाने ज्ञानान्तरमिष्टमित्यर्थः ।।२५४।।

तर्हि मा भूदज्ञातत्वस्य ज्ञानाद्ध्वस्तिरित्याशङ्क्य ज्ञाताज्ञातत्वयोश्च स्वशक्त्या प्रकाशतमसोरिव निवर्त्यनिवर्तकत्वेन संगतिरस्तीत्याह—बाध्येति । यथोक्तसंगतिमुक्त्वा विधान्तरेण तत्संगतिमिच्छन्तं प्रत्याह—योऽन्यथेति । हठो ह्यप्रसिद्धकल्पनेति भावः ।।२५५।।

कथं विधान्तरेण संगतेरप्रसिद्धिरसंभावना चेति तत्राऽऽह—न चेति । न तावज्जाड्यादविद्याऽतिरिच्यते विद्या वाऽजाड्यादप्यतिरिक्ता तद्विद्याविद्ययोर्जडाजडत्वेन विरोधान्निवर्त्यनिवर्तकत्वे विद्ययाऽविद्याध्वस्तावज्ञातत्व-

१. तदैकात्म्ये ज्ञानाज्ञातत्वयोरभेदे ( न्या० ) । ज्ञाने अज्ञानसम्बन्धो न निरमितुं शक्यते ज्ञाने ज्ञानान्तरानुपगमात् ( टी० ) ।

अज्ञातं न यथा मानान्मिथ्याधीसंशयौ तथा । न्यायः पुरोदितः सर्वो यस्मादस्ति तयोरपि ॥५७॥
अपि सर्वप्रमाणानामज्ञातत्वादिसिद्धये । नेक्ष्यतेऽन्यतमं मानं स्वतःसिद्धं न चापि तत् ॥५८॥
न तावदिह संभाव्यं प्रत्यक्षं तदसंभवात् । विषयेन्द्रियसंबन्धविरहात्तदसंभवः ॥५९॥
न च दुःखादिधीवत्स्याज्ज्ञातस्यैवानुभूतितः । प्रत्यक्षार्थवदेवैषा मिथ्याधीरनुभूयते ॥६०॥
प्रत्यक्षादिफलं ज्ञानं कथं तस्य प्रमेयता । माफलं न च मेयस्थं क्रियाफलवदिष्यते ॥६१॥
अपि मानाभिसंबन्धो मेयार्थेनैव युक्तिमान् । माफलस्य तु मात्रैव ह्यतोऽन्यत्र वृथा श्रमः ॥६२॥

स्यापि ध्वस्तेर्न संगत्यन्तरमिति भावः । अविद्याया जाड्यातिरेकिरूपान्तराभावप्रसिद्ध्यर्थो हिशब्दः । जाड्याविद्ययोरैक्ये मानमाह—अविद्यामिति । पूर्वदेहे त्यक्ते प्राग्देहान्तरप्राप्तेर्या स्तिमितता जडता तामविद्यां प्रापय्याचेतनं कृत्वाऽऽत्मानमुपसंहरतीति वक्ष्यमाणश्रुतेर्जाड्यमेवाविद्येत्यर्थः ॥२५६॥

अज्ञातार्थस्य स्वतो मानतो वा सिद्ध्ययोगात्साक्षिवेद्यत्वानङ्गीकारात्परमते मानानां नाज्ञातज्ञापकतेत्युक्त्वा मानागम्यत्वेनोक्ताज्ञातत्वदृष्टान्तेन संशयादेरपि तदगम्यत्वं निरस्यति—अज्ञातमिति । मानादधिगतमिति शेषः । तेन संशयादेः समत्वे हेतुमाह—न्याय इति । मेयस्य माननिवर्त्यत्वायोगादिति न्यायः ॥२५७॥

अज्ञातं न यथा मानादित्ययुक्तं सर्वमानानामज्ञातत्वादिसाधकत्वात्तानि हि विषये ज्ञातत्वमुत्पादयन्ति प्रागवस्थमज्ञातत्वं ज्ञापयन्ति न हि तादृगर्थं विना मानप्रवृत्तिरित्याशङ्क्याऽऽह—अपीति । निर्धारणे षष्ठी । अन्यतममपीति संबन्धः । अस्तु तर्हि स्वप्रकाशमज्ञातत्वादि नेत्याह—स्वत इति । अनात्मत्वादित्यर्थः । तन्नासदपीति चार्थः ॥२५८॥

स्वतःसिद्धत्वासिद्धत्वयोरभावेऽपि कथं तत्साधकमानानीक्षणमित्याशङ्क्य किं तत्र प्रत्यक्षं मानमनुमानं वेति विकल्प्याऽऽद्यं दूषयति—न तावदिति । अज्ञातत्वादौ प्रत्यक्षं न शङ्कनीयमित्यर्थः । तत्किं बाह्येन्द्रियजन्यं मनोजन्यं वा? नाऽऽद्य इत्याह—तदसंभवादिति । बाह्येन्द्रियजाध्यक्षस्याज्ञातत्वादिसाधकस्यासंभवं साधयति—विषयेति । अज्ञातत्वादेश्चक्षुरादेश्चासंप्रयोगान्न तत्संप्रयोगजाध्यक्षसिद्धिरित्यर्थः ॥२५९॥

कल्पान्तरं निरस्यति—न चेति । न हि दुःखाद्यपि मानसमनुभवसिद्धत्वादित्यर्थः।[1] पक्षान्तरं प्रत्याह—ज्ञातस्येति । अनुभूतिर्हि मानफलं ततो ज्ञातस्यैवानुमेयत्वं नाज्ञातत्वादेस्तद्व्याप्तलिङ्गाभावादित्यर्थः । ज्ञातस्यानुमेयत्वमङ्गीकृत्योक्ताङ्गीकारवादं त्यजति—प्रत्यक्षेति । चक्षुरादिना रूपादिवन्मिथ्याधीः सम्यग्धीर्ज्ञातत्वमज्ञातत्वमित्यादेरापरोक्ष्यान्नानुमेयत्वं तदनुपयोगादित्यर्थः ॥२६०॥

ज्ञातत्वस्यामेयत्वे युक्त्यन्तरमाह—प्रत्यक्षादीति । ज्ञानशब्देन ज्ञातत्वं लक्ष्यते । तस्य मानफलत्वादमानत्ववदमेयत्वमपि स्यादन्यथा मानत्वमपि किं न स्यात्तस्य च मेयत्वे ज्ञातत्वान्तरमेष्टव्यमित्यनवस्थेति भावः । मानफलस्य मेयाश्रितत्वाद्रूपादिवन्मेयत्वं न चानवस्था ज्ञातत्वे ज्ञातत्वान्तरानङ्गीकारेऽपि मानकृतव्यवहारविषयतया मेयत्वोपपत्तेरित्याशङ्क्याऽऽह—माफलमिति । छिदिफलस्य द्वैधीभावस्य दारुनिष्ठत्ववन्न मानफलस्य ज्ञातत्वस्यार्थनिष्ठत्वं तस्याप्रकाशत्वेऽर्थादविशेषादकिंचित्करत्वात्प्रकाशत्वे ज्ञानवदर्थनिष्ठत्वायोगात् । न च ज्ञातत्वेऽज्ञातत्वाभावे मेयत्वं न हि मानाधीनव्यवहारविषयता मेयता सर्वस्यापि तथात्वेन त्वन्मते सांकर्यप्रसङ्गादित्यर्थः ॥२६१॥

किंच मानस्य विषयिभावो मेयेनैव न फलेन तस्य मेयताया निरस्तत्वादित्याह—अपीति । मानस्य मेयेनैव संबन्धेऽपि फलस्य तेन विषयतया स भविष्यति न च तस्यामेयत्वमसिद्धिप्रसङ्गान्न हि तस्य स्वतःसिद्धिरनात्मत्वान्न च कादाचित्कस्याऽऽत्मतेत्याशङ्क्याह—माफलस्येति ।[3] मात्रैव संबन्धो न मेयादिनेति शेषः । फलस्य

१. अनुभवसिद्धत्वात् साक्षिभास्यत्वात् ।
२. सांकर्यं ज्ञातत्वाज्ञ तत्वयोरेकत्र प्रसङ्गः ।
३. घटः स्फुरतीति व्यवहारः स्फुरणजनकज्ञानविषयत्वात् अन्यथा भूतचैतन्यवादेन मोक्षसाधनाननुष्ठानप्रसंगात् । अतोऽन्यत्रेति मेये माफलस्वीकारे देहात्मवादापत्तेः । ( न्या० )

**माफलस्य तु मेयत्वे प्राप्नोतीहानवस्थितिः । प्रमाफलाभिसम्बन्धः किंमान इति कथ्यताम् ।।६३।।**
**इहापि चानवस्थेति नानुमाऽतोऽत्र युज्यते । न च रागादिसंसिद्धौ मानव्यापार ईक्ष्यते ।।६४।।**
**रागादेर्नापि चाभावो भावात्तदनुभूतितः । न च कश्चित्फले भेदो मेयमानप्रमातृषु ।।६५।।**
**मानकार्यं फलं चेत्स्यान्न स्यात्तन्मातृमानयोः । तदभावे च माभावात्कुतस्तत्स्यात्प्रमां विना ।।६६।।**
**प्रमात्रादेरभावे च नाप्यभावः प्रमेष्यते । सुषुप्ते मातृपूर्वत्वात्सर्वमाव्यापृतेरिह ।।६७।।**

मेयेन संबन्धो निरस्तः । न च तस्य मानेन विषयतया संबन्धः मेयान्तर्भावात्फलत्वायोगादतस्तस्य मानादौ संगतिरित्युक्त्यायासो वृथैव मात्राश्रितस्य स्वाश्रयेण सहानुभवसिद्धत्वादित्यर्थः । मेयत्वादिना सह फलसंबन्धस्य निरस्तत्वद्योतनार्थो हिशब्दः ।।२६२।।

मेयसंबन्धिमानं फलेनापि संबध्यते तस्यापि वस्तुत्वेन मेयत्वशङ्कावकाशादित्याशङ्क्याऽऽह—माफलस्येति । इहेति मानभूमिग्रहः । फले[1] फले च तन्मालेत्यादिन्यायादित्यर्थः । अनवस्थाया मूलक्षयकरीत्वेन दोषत्वं विशदयितुं तुशब्दः । प्रमातत्फलयोर्हेतुहेतुमद्भावसंबन्धस्य मेयत्ववत्फलस्यापि स्यादित्याशङ्क्याऽऽह—प्रमेति । न हि संबन्धवत्फलस्य मेयत्वमनवस्थितेः न च सोऽपि मेयस्तद्ग्राहिमानाभावादित्यर्थः ।।२६३।।

फलाख्यकार्यलिङ्गात्तस्य कारणभूतमानादिसंबन्धोऽनुमीयतामित्याशङ्क्याऽऽह—इहापीति । फलस्यैव तस्यानुमेयत्वेऽपि प्राप्नोत्यनवस्था तत्रान्यफलसंबन्धापत्तेरतः संबन्धे फलवन्नानुमेयता युक्तेत्यर्थः । फलदृष्टान्तार्थमपिकारः । चकारोऽवधारणार्थः सन्क्रियापदेन संबध्यते । मा भूत्प्रमातत्फलयोः संबन्धवज्ज्ञा[2]तत्वादेर्मेयत्वं रागादिवत्तु स्यान्नेत्याह—न चेति ।।२६४।।

तस्यामेयत्वे स्वप्रकाशत्वानिष्टेरसत्त्वमिति नेत्याह—रागादेरिति । मानागम्यत्वेऽपीत्यपेरर्थः । चकारोऽवधारणार्थो नञा संबध्यते । तस्य रागादेरनुभवादेव सत्त्वोपपत्तेर्नासत्त्वमित्यर्थः । यद्वा तादृगर्थेन तच्छब्देनानुभूतेर्नित्यत्वमुच्यते । अथ यथोक्तानुभूतिर्जडा अजडा वा?नाऽऽद्यो घटवदसाधकत्वान्न हि दीपस्यापि स्वतःसाधकत्वं; नेतरो विभक्तत्वेन कार्यत्वात्तत्राऽऽह—न[3] चेति । न हि नभोवदुपाधिं विना फले स्वतो भेदो मात्रादिकृता तु तद्धीरतो न तत्र कार्यत्वं तद्युक्तमनुभूतेरजाड्यमित्यर्थः ।।२६५।।

फलस्य मानकार्यत्वप्रसिद्धेर्जडतेति शङ्कते—मानेति । तत्कार्यत्वे वेदनस्य न तन्मानमातृमेयसाधकं स्यान्मान[4]कार्यत्वात्तत्कार्यसंस्कारवत्ततः साधकाभावान्मात्रादेरसत्तेति दूषयति—न स्यादिति । अस्तु मात्रादीनामसत्त्वमिति शून्यवादी मन्यते तं प्रत्याह—तदभावे चेति । तेषां त्रयाणामभावे साधकाभावादिष्टं शून्यत्वमपि न सिध्येन्न हि तत्स्वप्रकाशमित्यर्थः । मानाभावादिति वदता तदभावः स्वीकृतः स्यादित्याशङ्क्याह—कुत इति । मानाभावाख्यमपि वस्तु त्वन्मते न सिध्यति साधकाभावान्मम तु मानाद्यभावः साक्षिसिद्ध इति भावः । यद्वा मातृमेययोरभावेऽपि साधकानपेक्षान्मानादेव व्यवहारः स्यादित्याशङ्क्याऽऽह—तदभावे चेति । तयोरभावे विषयाश्रयशून्यमानाभावान्न तत्कृतो व्यवहार इत्यर्थः । अथवा माननिमित्तव्यवहाराभावेऽपि तत्फलनिमित्तः स्यादित्याशङ्क्याऽऽह—कुत इति । मानं विना फलासिद्धेर्न तत्कृतो व्यवहार इत्यर्थः ।।२६६।।

रागादेर्नित्यानुभववेद्यत्वेनामेयत्वेऽपि मात्राद्यभाववदज्ञातत्वादेर्मेयतेत्याशङ्क्याऽऽह—प्रमात्रादेरिति ।

---

१. फले फले चेति फलस्यापि फलाङ्गीकारे तत्प्रमाफलस्वीकारापत्त्याऽनवस्था । माफलं प्रमाफलं व्यवहारः ।

२. ज्ञातत्वादेरिति—मीमांसकाः प्रत्यक्षज्ञानेन घटादौ ज्ञातता जन्यते तया ज्ञानमनुमीयत इति संगिरन्ते तस्या अपि सद्भावे मानाभावादेव न मानफलत्वं मानं चक्षुरादि मेयः घटादिः फलं तु व्यवहारादिः अन्यस्य फलत्वे ज्ञानजन्यरागादेरपि प्रमाणफलता स्यादित्यर्थः । तत्रान्यफलेति फले व्यवहारे अन्यफलेत्यर्थः ।

३. फलं प्रकाशः स्फुरणं वृत्त्यभिव्यक्तं चैतन्यं तत्र न भेदः । विभक्तत्वेन—यद्विभक्तं तत् विकारः यावद्विकारं तु विभागो लोकवदिति सूत्रोक्तन्यायादित्यर्थः । तन्निराकरोति—न फले भेद इति ।

४. मानकार्यं संवेदनं मानसाधकं स्यात् न तु मातृमेयसाधकं तदकार्यत्वात् । तत्संस्कारवत्—संवेदनसंस्कारवत् संवेदनसंस्कारो यथा संवेदनसाधकः साधकाभावे तयोस्तुच्छता ।

**न प्रत्यक्षानुमानाभ्यामतोऽर्थापत्तितोऽपि न । न हि दृष्टं श्रुतं वर्ते साऽर्थापत्तिः प्रसिध्यति ॥६८॥**
**सादृश्यासंभवाच्चेह नोपमानस्य संभवः । मिथ्याज्ञानादिसंसिद्धौ न चाभावोऽपि शङ्क्यते ॥६९॥**
**अत्यन्तापूर्वदृष्टेऽर्थे प्राङ्नाद्राक्षमिमं नगम् । प्रत्यभिज्ञायते साक्षाद्दृष्टपूर्वो यथा तथा ॥७०॥**
**न च मात्रादिसद्भावस्तस्यात्यन्तमदृष्टतः । न प्रमाणान्न चाभावात्प्रत्यभिज्ञात इष्यते ॥७१॥**
**तस्मात्प्रमाप्रमाभासाप्रमाणानामशेषतः । स्वार्थानन्यप्रमाणात्स्यात्प्रसिद्धिस्तमसस्तथा ॥७२॥**
**आन्तरं मेयमाश्रित्य स्वतःसिद्धमनन्यमम् । भावाभावादिमद्विश्वं सर्वमेतत्प्रसिध्यति ॥७३॥**

तत्राभावो मानमन्यद्वा? न तावत्स्वापे मात्राद्यभावे मात्रादिविषयमानानुदयो मानं लोके मानव्यापारस्य मात्रपेक्ष्यत्वात्तदभावेऽभावादित्यर्थः । अपिस्तावदर्थः । चकारः स्वापेनावस्थान्तरसमुच्चये ॥२६७॥

द्वितीये प्रत्यक्षमनुमानमर्थापत्तिरुपमानं वा तत्र मानमिति विकल्प्याऽऽद्यौ दूषयति—नेति । मात्राद्यभावो मीयत इति शेषः । तयोरपि मातृपूर्वत्वात्तदभावे प्रवृत्त्ययोगादित्याह—अत इति । उक्तहेतुना तृतीयं निराह—अर्थापत्तितोऽपीति । सा द्विविधा दृष्टश्रुतभेदात्तत्राऽऽद्या दृष्टमपेक्षते यथा जीवतो मैत्रस्य गृहान्तरसत्त्वं दृष्टमपेक्ष्य बहिःसत्त्वं कल्प्यते । द्वितीया श्रुतमाकाङ्क्षति यथा पीनो मैत्रो न भुङ्क्ते दिवेति श्रुतं वाक्यैकदेशमपेक्ष्य भुङ्क्ते रात्रावित्येकदेशान्तरं कल्प्यते तद्दृष्टादिसापेक्षार्थापत्तेस्तदभावे न प्रवृत्तिरित्याह—न हीति ॥२६८॥

न चतुर्थ इत्याह—सादृश्येति । उपमानासंभवस्य मानान्तरासंभवेन समुच्चयार्थश्चकारः । सादृश्यकारणकमुपमानं तदभावान्मात्राद्यभावे न प्रमाणीभवतीत्यर्थः । मात्राद्यभाववदज्ञातत्वादेर्मानतः सिद्धिं निरस्य भावमानादभावमानाद्वा तत्सिद्धिरिति विकल्प्याऽऽद्यस्य निरस्तत्वाद्द्वितीयं निरस्यति—मिथ्येति । मात्राद्यभावसिद्धिदृष्टान्तार्थश्चकारः । भावमानवदित्यपेरर्थः । न हि योग्यानुपलब्धिर्मिथ्याज्ञानादावभावातिरिक्ते संभवतीति भावः ॥२६९॥

अज्ञातत्वादेर्भावाभावमानासिद्धत्वे कथं सिद्धिस्तत्र गूढाभिसंधिः सन्नाह—अत्यन्तेति । अर्थे नगादावत्यन्तापूर्वे दृष्टे प्रागिमं न दृष्टवानिति परामृश्य दृष्टपूर्ववददृष्टपूर्वोऽपि साक्षाज्ज्ञायते तस्मादज्ञातत्वादि प्रत्यभिज्ञासिद्धमित्यर्थः ॥२७०॥

तर्हि प्रत्यभिज्ञातत्वादज्ञातत्वादेर्मानसिद्धता नेत्याह—न चेति । न तावदिदानीं दृश्यमाने नगादौ पूर्वं प्रवृत्तो मात्रादिस्तस्यात्यन्तमदृष्टत्वादतो वृत्तानुभवाभावात्तज्जसंस्काराभावादुक्तप्रत्यभिज्ञायोगान्नाज्ञातत्वादेर्मेयतेत्यर्थः । तर्हि प्रत्यभिज्ञयाऽज्ञातत्वादिसिद्धिवाचोयुक्ती रिक्तेत्याशङ्क्य स्वाभिप्रायमाह—नेति । भावमानादभावमानाद्वा नाज्ञातत्वादिप्रत्यभिज्ञा किंत्वनुभवादेवेत्यर्थः । तत्र प्रसिद्धप्रत्यभिज्ञाया योग्यत्वाभावादनुभवोऽतः शब्दार्थः ॥२७१॥

अज्ञातत्वादेरमेयत्वादनुभवादेव तद्धीरित्युपसंहरति—तस्मादिति । स्वतन्त्रप्रत्यक्प्रमाणं साक्ष्यनुभवाख्यं तस्मात्प्रमादेस्तद्धेत्वज्ञानस्य च सिद्धिरित्यर्थः ॥२७२॥

मानादिसाधकमानस्यापि मानान्तरापेक्षत्वादनवस्थेत्याशङ्क्याऽऽह—आन्तरमिति । साधकत्वादेव साक्षिणि मानत्वोक्तिर्न तत्र मुख्या मानतेत्यर्थः । तर्हि मेयत्वादेव तस्य मानापेक्षेति नेत्याह—स्वतःसिद्धमिति । तदेव कथं संविद्रूपत्वादित्याह—अनन्यमिति । उक्तलक्षणे साक्षिणि मानत्वोक्तौ हेतुं व्यनक्ति—भावेति । भावाभावौ जन्मनाशौ । आदिशब्देन परिणामादिग्रहः । विश्वं मात्रादि ॥२७३॥

---

१. स्वार्थः अनन्यप्रमाणः साक्षी तेन प्रसिद्धिः प्रमादीनाम् ।

२. आत्मनो नाज्ञातत्वादिसाधकत्वं मेयत्वात् घटवदित्यत आह—**आन्तरमिति** । स्वतःसिद्धमिति जडत्वमुपाधिरित्यर्थः ( न्या० ) ।

३. **मात्राद्यभाववदिति**—सुषुप्तौ मात्राद्यभावात् प्रमेष्यते न च मानाभावरूपं प्रमाणं प्रमात्रभावसाधकम् । मानव्यापारे प्रमात्रपेक्षणात् ।

### मिथ्याज्ञानस्यानुभवसिद्धत्वे हेतूक्तिः

**मेयार्थानभिसम्बन्धान्न यथावस्तुधीरियम्[1] । ज्ञातत्वात्तदभावोऽपि प्रात्यक्ष्यान्नेष्यते स्मृतिः ॥७४॥**
**इदं[2] रजतमित्येवंरूपं वस्तु न कुत्रचित् । न शुक्तौ रजतज्ञानं नेदंता रजतेऽस्ति नः ॥७५॥**
**तदन्यत्र द्वयाभावात्साक्ष्यादावपि नेष्यते । न चेहार्थावबोधोऽस्ति मिथ्याज्ञानत्वकारणात् ॥७६॥**
**मिथ्याज्ञानादिसंसिद्धौ क उपाय इतीर्यताम् । सम्यग्धीतोऽथ तत्सिद्धिर्न तस्या मेयसंगतेः ॥७७॥**
**मेयप्रमामृते कार्यं मानानां नान्यदिष्यते । न च सत्त्वादिमात्रेण रूप्यादिमितिसंभवः ॥७८॥**
**तस्यासाधारणात्मोत्थविज्ञानविषयत्वतः । तस्माद्रजतसंस्कारसंस्कृतात्स्वान्ततः स्मृतिः ॥७९॥**

अथ जगतः साक्षिवेद्यत्वं साधयितुं मिथ्याज्ञानस्यानुभवसिद्धत्वे हेतुमाह—मेयेति । मिथ्याधीर्नार्थानुसारिणी तदबोधित्वादतो वस्तुधियो न तत्सिद्धिरित्यर्थः । तर्हि साधकाभावान्नास्त्येव सेत्याशङ्क्यानुभवसिद्धत्वान्नैवमित्याह—ज्ञातत्वादिति । नेष्यत इति संबन्धः । मिथ्याधीर्नामाविवेकोत्था स्मृतिः सा च स्वतः सिध्यतीत्यख्यातिमतं प्रत्याचष्टे—प्रात्यक्ष्यादिति । अपरोक्षानुभवत्वान्न रजतधीः स्मृतिः पुरोवर्तिकुम्भोपलम्भवदित्यर्थः ॥२७४॥

देशान्तरादिवर्तिरूप्यात्मना पुरःस्थितशुक्तिभानमेव मिथ्याधीः सा च फललिङ्गेत्यन्यथाख्यातिमतमाशङ्क्याऽऽह—इदमिति । इदंरूपस्य पुरोदेशे देशान्तरादौ च रूप्यस्य सत्त्वेऽपि विशिष्टं रूपमिह दृष्टं न क्वचिदस्ति । न हि तदिहास्ति बाधधीविरोधात् । नान्यत्र साधाकाभावात् । न चेदमसदेवापरोक्षत्वात् तस्माद्विशिष्टदृष्टिरनिर्वचनीयख्यातिः सा च साक्षिवेद्येति भावः । कथं विशिष्टरूपस्य सर्वत्रासत्त्वं तत्किं शुक्तिदेशे रजतदेशे वा ताभ्यामन्यत्र वा ? नाऽऽद्यः शुक्ताविदमो भावेऽपि रजतस्याभावान्मानाभावाद्बाधधीविरोधाच्चेत्याह—न शुक्ताविति । नेतरो रूप्यदेशे तद्रूपस्य भावेऽपि न तत्रेदंताऽस्ति न हि रजते देशान्तरस्थेऽस्माकमिदंत्वं भातीत्याह—नेति ॥२७५॥

न तृतीयो घटादिदेशे रजतस्येदंतायाश्चाभावाद्विशिष्टरूपासिद्धेरित्याह—तदन्यत्रेति । साक्षिणि मातरि वा विशिष्टं रूपं तस्य प्रतिभामात्रदेहत्वात्तस्याश्च तदन्यतरस्थत्वादित्येके बुद्धावित्यपरे तान्प्रत्याह—साक्ष्यादाविति । मानाभावादिति शेषः । अनिर्वचनीयख्यातित्वेनोक्तमिथ्याधियो मेयार्थानभिसंबन्धादित्यत्रोक्तं स्वरूपमनुवदति—न चेति । मिथ्याज्ञानं सप्तम्यर्थः ॥२७६॥

तस्यानुभवसिद्धतां सिषाधयिषुः साधकान्तरमाक्षिपति—मिथ्येति । पृष्टं मत्वोपायमाह—सम्यगिति । न सा तत्साधिका तस्या मेयार्थसंबन्धेन तत्रैव प्रमाहेतुत्वादित्याह—नेति ॥२७७॥

मिथ्याज्ञानादेरपि मेयत्वात्तत्संबद्धा सम्यग्धीस्तत्र प्रमां करिष्यतीति चेन्नेत्याह—मेयेति । न मिथ्याज्ञानादेरपि मेयत्वमज्ञानकार्यस्य तद्वदज्ञातत्वायोगात् । न च मेये प्रमां विना मानानामन्यत्फलमतोऽज्ञानकार्यस्य तस्य न सम्यग्धीतः सिद्धिरित्यर्थः । ननु नाज्ञानं मिथ्याधीहेतुः किंतु सत्त्वादिसादृश्यं सदृशदर्शनोद्बुद्धसंस्कारकारिता हि रजतादिधीस्तत्राऽऽह—न चेति । शुक्तिज्ञानात्तदज्ञाने ध्वस्ते सत्यपि सत्त्वादिसादृश्ये रूप्यज्ञानाभावादन्वयव्यतिरेकाभ्यां शुक्त्यज्ञानमेव तद्धेतुरित्यर्थः ॥२७८॥

मिथ्याधियः सत्त्वादिविषयत्वेन याथार्थ्यान्नाज्ञानकार्यता सर्वे प्रत्यया यथार्थाः प्रत्ययत्वात्संमतवदित्य-

---

१. इयं = इदं रजतमिति भ्रान्तिरित्यर्थः सा न यथावस्तु जायमानधीः । नापि तादृशभ्रमाभावः ज्ञायमानत्वात् । अख्यातिमतं प्रभाकरस्य तन्मते इदं रजतमिति ज्ञाने रजतांशस्य स्मृतिरेव । तदपि न, रजतं पश्यामीत्यनुभवात् तमस्यपि अज्ञानेऽपि, मेयं वस्तु ज्ञानज्ञात्रतिरिक्तप्रमाणप्रमेयं वस्तु मिथ्याज्ञान इव ( ज्ञानेऽपि ) नास्ति अतः अज्ञानं प्रमात्रादिसहितं साक्षिवेद्यम् इत्यर्थः ।

२. अविविक्तम् ।

प्रथतेऽविकृतात्मैकनित्यदृष्टेः  परात्मनः ॥८०॥

प्रमात्रा सह अज्ञानस्यानुभववेद्यत्वम्

ज्ञानज्ञात्रतिरेकेण तमस्यपि न[1] विद्यते । मेयं वस्तु ततोऽज्ञानं प्रत्यक्षं सप्रमातृकम् ॥८१॥
न हि संविदनारूढः प्रमात्रादिः प्रसिध्यति । संविन्मात्रैकयाथात्म्यात्प्रमात्रादेरनात्मनः ॥८२॥
ज्ञातोऽयमर्थोऽज्ञातो वा धीरियं कर्तृ[2]संश्रया । स्मृतिः सा न यथावस्तु तेनासावप्रमोदिता ॥८३॥
न हि वस्त्वनुरोध्येतज्ज्ञाताज्ञातत्वलक्षणम् । रूपं वस्त्वपरिज्ञानसमुत्थं ज्ञातृसंश्रयम् ॥८४॥

नुमानादित्याशङ्क्याऽऽह—तस्येति । रूप्यादिज्ञानस्यासाधारणाकारेण रूप्यादिनोत्पन्नसम्यग्धीतुल्यविषयत्वान्न सत्त्वादिसादृश्यमात्रं विषयो न च सर्वप्रत्यययाथार्थ्यानुमानम् ।

"स्वीका[3]रे विभ्रमाणां स्यात्स्वीयसिद्धान्तबाधना । अनभ्युपगमे तेषामाश्रयासिद्धिरुद्धता" ॥ ( त. प्र. )

इति न्यायादित्यर्थः । रूप्यादेश्चासाधारणाकारोत्थज्ञानं प्रति विषयत्वान्न सत्त्वादेरेव तद्विषयतेति केचित्सर्वथाऽपि मिथ्याज्ञानस्यायथार्थत्वात्कारणान्तरायोगादज्ञानकार्यतेति फलितमाह—तस्मादिति । पूर्वानुभूतरजतसंस्कारसहितान्तःकरणापन्नप्रत्यगज्ञानाद्रजतभ्रान्तिः सा च संस्कारजन्यतया स्मृतिरित्युच्यते[4] । न खल्वदृष्टरजतः शुक्तिमुपलभमानो रजतभ्रम्यतः संस्कारो भ्रान्त्युपयोगीत्यर्थः ॥२७९॥

मिथ्याज्ञानस्योत्पादकमुक्त्वा ज्ञापकं निगमयति—प्रथत इति । या निर्विकाररूपा भेदहीना नित्यसिद्धा दृष्टिस्तत्स्वरूपात्परस्मान्मिथ्याधीर्भातीत्यर्थः । अज्ञानवत्तत्कार्यमिथ्याज्ञानादेरपि साधकान्तरं किं न स्यादित्याशङ्क्य तमसस्तथेत्युक्तमनुसृत्य दृष्टान्तं दूषयति—ज्ञानेति । करणव्युत्पत्तेरन्तःकरणं ज्ञानं तस्य ज्ञाता कूटस्थानुभवस्तदतिरेकेण यन्मानं तेन व्याप्यं रूपं मिथ्याज्ञानादाविवाज्ञानेऽपि नास्ति तद्दृष्टान्ताभावादज्ञानं मात्रादिसहितं कूटस्थानुभवसिद्धमित्यर्थः ॥२८०-२८१॥

अज्ञानस्याज्ञोऽस्मीत्यनुभवाद्यथोक्तानुभवसिद्धत्वेऽपि कथं मात्रादेस्तत्सिद्धतेत्याशङ्क्याऽऽह—न हीति । जडत्वान्मात्रादेः संविदमनपेक्ष्य स्वातन्त्र्येण प्रसिद्धिरयुक्तेत्यर्थः । कूटस्थानुभवेऽध्यस्तस्यैव मात्रादेः सिद्धिरित्यत्र हेतुमाह—संविदिति । मात्रपदेन नानारसत्वव्यावृत्तिः । एकरसा संविदेवैकं याथात्म्यं सत्त्वं स्फूर्तिश्च मात्रादेर्जडस्यानात्मनस्तदयोगादतस्तस्य संविदि कल्पितस्यैव स्फूर्तिरित्यर्थः ॥२८२॥

ज्ञाताज्ञातभेदस्य प्रामाणिकत्वेनाकल्पितत्ववदकल्पितत्वं मात्रादेरपीत्याशङ्क्याऽऽह—ज्ञातोऽयमिति । स्मृतिर्भ्रान्तिरिति यावत् । माता मानं प्रति कर्ता न चाक्रियेऽध्यासं विना कर्तृत्वमतोऽध्यस्तमातृविकारत्वादस्या द्विविधाया धियो भ्रान्तितेत्याह—कर्त्रिति । भ्रान्तित्वे हेत्वन्तरमाह—सा नेति । ज्ञात्रादिभेदस्याप्रामाणिकत्वेन कल्पितत्वान्न तद्वन्मात्रादेरकल्पिततेति फलितमाह—तेनेति । कल्पितमात्राश्रयत्वं वस्त्वननुसारित्वं च तच्छब्दार्थः । असाविति ज्ञात्रादिभेदधीरुक्ता ॥२८३॥

ज्ञातत्वादेर्वस्त्वनुसारित्वात्तद्धियोऽपि तदनुसारितया मानतेत्याशङ्क्याऽऽह—न हीति । तस्य वस्त्वनुरोधित्वाभावे हेतुमाह—वस्त्विति । प्रत्यगज्ञानकृतत्वादित्यर्थः । ज्ञातत्वादेरवस्त्वनुसारित्वात्तज्ज्ञानमपि ज्ञातृनिष्ठमवस्त्वनुसारि न प्रमेत्याह—ज्ञात्रिति ॥२८४॥

---

१. न विद्यते । तमसि अज्ञानेऽपि मानव्याप्यं रूपं न विद्यते तस्मादज्ञानं प्रमात्रा सह साक्षिवेद्यम् ।

२. कर्तृसंश्रयाधीः स्मृतिः भ्रान्तिरित्यर्थः । भ्रान्तेः संस्कारजत्वेन स्मृतितुल्यत्वात् ।

३. स्वीकार इति—अख्यातिखण्डने तत्त्वप्रदीपिकोक्तसिद्धान्तसंग्रहश्लोकोऽयम् ।

इदं रजतमिति ज्ञानं पक्षश्चेत् विभ्रमाभ्युपगमात् सिद्धान्तविरोधः, अनभ्युपगमे आश्रयासिद्धिः विशिष्टज्ञानस्य तन्मते अप्रसिद्धेः । रजतप्रकारकज्ञाने इदं विशेष्यकत्वाभावात् ।

४. स्मृतिरित्युच्यते—इति गौण्या वृत्त्येत्यर्थः अत एव अध्यासलक्षणभाष्यं—स्मृतिरूपः परत्र पूर्वदृष्टावभासः इति । स्मृतिरूपः स्मृतिसदृशः इति व्याख्या ।

ज्ञाताज्ञातविभागोऽतः स्वतःसिद्धात्ममातृकः । संविदा ज्ञाततासिद्धिर्मितेरपि न मात्मना ॥८५॥
वस्त्वज्ञातं समुद्दिश्य तत्प्रमित्सन्ति मानिनः । ज्ञातत्वकार्यतश्चातः सिद्धं तत्फलतोऽथवा ॥८६॥
यतोऽज्ञातत्वसंसिद्धिर्ज्ञातत्वस्यापि चाञ्जसा । तत एव च मानत्वं संविदर्ते न तत्त्रयम् ॥८७॥
षष्ठगोचरवन्नेदमज्ञातत्वं[1] समीक्ष्यते । न च प्रत्यक्षवत्सिद्धं स्वानुभूतिसमाश्रयात् ॥८८॥
प्रमात्रादिविविक्तार्थमनुभूयोत्थितस्ततः । नावेदिषमिति प्राह स्वानुभूत्यनुसारतः ॥८९॥

स्वापे अज्ञानविशिष्टानुभवः

प्रमात्राद्युत्थितेः पूर्वं चिदन्यानन्वयात्तमो—। विशेषणा चिदेवैका स्वानुभूत्यैव गम्यते ॥९०॥
आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् । अप्रतर्क्यमविज्ञेयमित्येतत्स्वानुभूतितः ॥९१॥

ज्ञाततादिभेदे मानाभावे कथं तद्धीरित्याशङ्क्याऽऽह ज्ञातेति । मानगम्यत्वायोगान्मेयगतो ज्ञातोऽज्ञातश्चेतिभेदः स्वप्रकाशात्माधीनाधिगतिरित्यर्थः । ज्ञेयगतज्ञातत्वादेरपि ज्ञानगतज्ञातत्वादिवन्मेयतामाशङ्क्याऽऽह— संविदेति । न हि मानेन ज्ञातस्य ज्ञातत्वादिधीरनवस्थानाद[2]तोऽनुभवात्तत्सिद्धिवदितरस्यापीत्यर्थः ॥२८५॥

अज्ञातत्वस्यानुभवसिद्धत्वे हेत्वन्तरं वक्तुं प्रामाणिकसंमतमर्थमाह—वस्त्विति । अज्ञातं वस्तु मेयमिति वदता साधकमज्ञातत्वस्य वाच्यमतो ज्ञानकार्याज्ज्ञातत्वात्तत्सिद्धिस्तत्फलाद्व्यवहाराद्वा? नाऽऽद्यो ज्ञातत्वकाले स्वयमभावान्नेतरस्तस्य ज्ञातत्वसाधकत्वेऽपीतरासाधकत्वात्तस्मादनुभवादेव तत्सिद्धिरिति मत्वाऽऽह—ज्ञातत्वेति । उक्तकल्पद्वयदूषणद्योतनार्थश्चकारः ॥२८६॥

ज्ञातत्वसाधकमेवाज्ञातत्वस्यापि साधकं तस्य तत्पूर्वकत्वादित्याशङ्क्याऽऽह—यत इति । यस्मादनुभवादज्ञातत्वसिद्धिस्तस्मादेव ज्ञातत्वस्यापि साक्षात्सिद्धिरतो ज्ञातत्वसाधकमेवाज्ञातत्वसाधकमित्युपगमे द्वयोरप्यनुभवसिद्धतैव स्यादित्यर्थः । एतेनाऽऽद्यश्चकारोऽपिपर्यायतया नीतः । मानत्वसाधकमेवाज्ञातत्वादिसाधकं किमनुभवेनेत्याशङ्क्याऽऽह—मानत्वमिति । प्रस्तुतानुभवादेव सिध्यतीति शेषः । अत एव द्वितीयश्चकारः । ज्ञातत्वमज्ञातत्वं मानत्वं चानुभवेन विना न सिध्यतीत्युपसंहरति—संविदर्ते ॥२८७॥

यदस्ति तन्मेयमिति नियमादज्ञातत्वस्यामेयत्वे तुच्छतेत्याशङ्क्य प्रकारान्तरेण प्रत्याह—षष्ठेति । अपरोक्षत्वमसत्त्वाभावे हेतुमाह—समीक्ष्यत इति । तर्हि प्रत्यक्षसिद्धघटवदज्ञातत्वस्य मेयत्वं नेत्याह—न चेति । कथं तर्हि समीक्ष्यत इत्युक्तं तत्राऽऽह—स्वानुभूतीति ॥२८८॥

मानं विना स्वानुभवादेव तत्सिद्धिरसिद्धेत्याशङ्क्याऽऽह—प्रमात्रादीति । मात्राद्यस्पृष्टमज्ञानं स्वापे स्वानुभवादनुभूयोत्थितस्तस्मादेवानुभवान्नावेदिषमिति सिद्धं तत्परामृशत्यतः स्वापे तदनुभवमात्रसिद्धमित्यर्थः ॥२८९॥

जागरितादाविव स्वापेऽपि मात्रादियुक्तमेवाज्ञानं कुतो न भायादित्याशङ्क्याऽऽह—प्रमात्रादीति । स्वापे मात्राद्यभावादज्ञानजेन तेन चितोऽन्वयाभावात्तत्राज्ञानमात्रविशिष्टा चित्तिष्ठत्यतश्चिदेव मात्राद्यस्पृष्टाऽज्ञानविशिष्टा स्वापे दृष्टेत्यर्थः । तद्धानहेत्वभावात्कुतः स्वापे तद्धीरित्याशङ्क्य प्रागुक्तं स्मारयन्नाह—स्वानुभूत्येति ॥२९०॥

अज्ञातत्वस्यानुभवमात्रगम्यत्वं तद्गमकमनुवचनविरुद्धमित्याशङ्क्याऽऽह—आसीदिति । प्रागवस्थस्य जगतोऽप्रत्यक्षत्वमाह—अप्रज्ञातमिति । अनुमानाविषयत्वमाह—अलक्षणमिति । साधकबाधकतर्काग्राह्यत्वमाह—अप्रतर्क्यमिति । शिष्टसर्वमानागोचरत्वमाह—अविज्ञेयमिति । एतद्वाक्यं स्वानुभवसिद्धानुवादित्वात्प्रकृताविरुद्धमित्याह—इत्येतदिति ॥२९१॥

---

१. षष्ठगोचरवत् षष्ठप्रमाणमनुपलब्धिः तेन ज्ञेयः अभावः तद्वत् नाज्ञातत्वासिद्धिः नापि घटादिवत् प्रत्यक्षं, अतः साक्षिवेद्यतेत्यर्थः ।

२. अनवस्थानात्—ज्ञानं मानाद्भवति ज्ञातस्य तु मानान्तरेण ज्ञानं चेत् तज्ज्ञानस्य मानान्तरापेक्षापत्तिः एवं तत्रापीत्यनवस्था ।

प्रथते यः स्वयं साक्षादज्ञातत्वादिभूमिषु । स प्रमेयः स्वयंज्योतिः प्राक्प्रसिद्धेः प्रमातृतः ॥९२॥
एष एवानवगतः स्वतोऽवगततत्त्वकः । एतावन्मात्रसंव्याप्तेरज्ञानादेः पुरा मितेः ॥९३॥
यथेह घटविज्ञाने घटाकारोऽनुभूयते । ज्ञातृतत्साक्षिणौ चैवं नाज्ञाने साक्षिणोऽपरम् ॥९४॥
अज्ञातत्वं न मानेभ्यो ज्ञातत्वं तत्कृतं यतः । तैरप्यज्ञातता चेत्स्यात्काऽतिशीतिर्मितेर्भवेत् ॥९५॥
स्वानुभूत्यैव संसिद्धेर्नाज्ञातः खरशृङ्गवत् । संवित्तेरप्यसंबोधात्स्यात्तन्मानव्यपेक्षिता ॥९६॥
प्रत्यक्षकुम्भवत्साक्षात्सुषुप्तेऽनन्यबोधगम् । आत्मा ह्यात्मानमैकात्म्यादात्मना वेत्त्यकारकः ॥९७॥
पराक्प्रवणया दृष्ट्या धीस्थो ज्ञो ज्ञानमात्मनि । व्योमकार्ष्ण्यादिवत्तज्जं संभावयति न स्वतः ॥९८॥

अज्ञातत्वादेरमेयत्वे मानानां विषयाभावादमानतेत्याशङ्क्याज्ञातत्वोपलक्षितप्रतीचो विषयत्वान्मैवमित्याह—प्रथत इति। स्वयंप्रथमानत्वे प्रत्यक्संविद्रूपत्वं हेतुमाह—साक्षादिति। कथमस्य मुक्त्यालम्बनस्याध्यक्षादिविषयत्वं तत्राऽऽह—अज्ञातत्वादीति। आदिशब्देन संदिग्धत्वविपर्यस्तत्वे गृह्येते। तद्विषयेष्वात्मनो मेयत्वोक्तेः पूर्वोक्तस्वप्रकाशत्वविरोधमाशङ्क्याऽऽह—स्वयमिति। अज्ञातोपाधौ मेयत्वेऽपि स्वतःप्रकाशत्वमविरुद्धमित्यर्थः। उक्तरूपे वस्तुनि ज्ञातत्वे सत्यज्ञातत्वध्वस्तेरविषयता मानानामित्याशङ्क्य तत्त्वज्ञानात्प्रागेव मातृत्वादिव्यवहारादूर्ध्वं विषयासत्त्वमदूषणमित्याह—प्रागिति। यद्वा मात्रादिविभागात्प्रागेव प्रत्यक्प्रथनात्तस्य तत्साधकत्वेन स्वतःसिद्धतेति स्वयंज्योतिष्ट्वे हेत्वन्तरमाह—प्रागिति ॥२९२॥

स्वयंप्रथमानस्यज्ञातत्वायोगान्न मानविषयता न हि ज्ञातस्यैव तद्विषयत्वमनवस्थानादित्याशङ्क्याऽऽह—एष इति। एवकारोऽनात्मनोऽप्यात्मवदज्ञातत्वादिव्यावृत्त्यर्थः। अज्ञातत्वं तस्य न स्वरूपमित्याह—अवगतेति। अनुभवविरोधं धुनीते—स्वत इति। स्वप्रकाशस्याप्यज्ञातत्वमज्ञानवशादिति साधयति—एतावदिति। सम्यग्ज्ञानात्पूर्वमज्ञानादेश्चिन्मात्रव्याप्तेस्तत्र कल्पितत्वेन सिद्धेरज्ञानादज्ञातत्वं तस्य युक्तमित्यर्थः ॥२९३॥

आत्मनोऽज्ञातत्वेन मेयत्वमुक्त्वाऽज्ञातत्वस्य विना मेयत्वमनुभवसिद्धत्वे युक्त्यन्तरमाह—यथेति। यद्वाऽज्ञातश्चेदात्मा मेयोऽज्ञानस्यापि तद्विषयत्वं स्याद्दण्डिन्यानीयमाने दण्डानयनदर्शनादित्याशङ्क्याऽऽह—यथेति। घटमहं जानामीत्यत्र यथा घटमातृसाक्षिणोऽनुभूयन्ते नैवं सुप्तावज्ञानभाने वेद्यमज्ञानं साक्षिणं च साधकं मुक्त्वा साधकान्तरं स्फुरति जागरादौ ज्ञातृस्फुरणेऽपि सज्ञातृकस्याज्ञानस्य साक्षिसिद्धता मेयत्वस्य माननिर्वर्त्यत्वादज्ञातत्वाभावाच्चासंभवादित्यर्थः ॥२९४॥

अज्ञानस्याज्ञातत्वादेश्चामेयत्वमुक्तं तत्राज्ञातत्वस्य मानाधीनस्फुरणत्वाभावेऽपि तदधीनजन्मत्वादस्ति मानापेक्षेत्याशङ्क्याऽऽह—अज्ञातत्वमिति। न मानेभ्यो भवतीति शेषः। विपक्षे दोषमाह—तैरिति। किं मानैरज्ञाततैव क्रियते किंवा ज्ञातताऽपि?आद्ये मानवैफल्यं प्रागेव तत्सिद्धेर्द्वितीये त्वज्ञातत्वस्य ज्ञातत्वादव्यतिरेकः स्यान्मानकार्यत्वात्तद्वदित्यर्थः ॥२९५॥

अज्ञातत्वस्य मानादुत्पत्तिप्रतिपत्त्योरभावे तुच्छत्वादज्ञातार्थाभावान्निर्विषयमानाप्रवृत्तेः सर्वव्यवहारहानिरित्याशङ्क्यासकृदुक्तमेव परिहारमाह—स्वानुभूत्येति। ननु सर्वस्यैव जडस्यानुभवसिद्धत्वान्न मानापेक्षा नापि साक्ष्यनुभवस्य तदपेक्षा सर्वसाधकत्वादन्यथाऽनवस्थानादतो मानवैयर्थ्यंतादवस्थ्यं तत्राऽऽह—संवित्तेरिति। अनुभवस्य सर्वसाधकत्वेऽप्यज्ञातत्वात्तन्निवृत्त्यर्थं तस्मिन्नात्मनि प्रवृत्तमाने व्यपेक्षिता स्यादिति योजना ॥२९६॥

अनुभवस्य ज्ञातत्वे जाड्यादसाधकत्वं शुक्तिवदित्याशङ्क्याऽऽह—प्रत्यक्षेति। यथा चैत्रोऽध्यक्षेण कुम्भमुपलभते तथाऽऽत्मा स्वापेऽद्वये बोधे स्वे महिम्नि स्थितमात्मानमपरोक्षतया वेत्ति तत्कुतोऽस्य जाड्यमित्यर्थः। आत्मनो वेत्तृत्वे कर्मकरणादिकारकभेदादद्वैतहानिस्तस्य च कर्तृत्वान्न कौटस्थ्यमित्याशङ्क्याऽऽह—आत्मानमिति। अनन्यबोधगमित्याधारान्तरस्य निरासः। आत्मेति कर्त्रन्तरस्याऽऽत्मानमिति कर्मान्तरस्याऽऽत्मनेति करणान्तरस्य। अकारक इति तत्त्वतः कर्तृत्वाद्यभावोक्तिरात्मनः स्वरूपं जानतः कारकभेदाभावं स्फुटयितुं सुषुप्तग्रहः। तस्य वेदितृत्वप्रसिद्ध्यर्थो हिशब्दः कारकभेदाभावे हेतुः—ऐकात्म्यादिति ॥२९७॥

अजडानुभवस्याज्ञाततया मेयस्याज्ञाततादिसाधकत्वे वस्तुत्वमज्ञातत्वादेः स्यादनुभवसिद्धत्वात्तद्वदित्या-

नैवाज्ञानं मृषाज्ञानं संशयज्ञानमीक्ष्यते । प्रत्यक्प्रवणया दृष्ट्या जाग्रत्स्वप्नसुषुप्तिषु ॥९९॥

सुप्तोत्थितस्य एतावन्तं कालं नाज्ञासिषमिति न स्मृतिः

न सुषुप्तगविज्ञानं नाज्ञासिषमिति स्मृतिः[1] । कालाद्यव्यवधानत्वान्न ह्यात्मस्थमतीतभाक् ॥३००॥
न भूतकालस्पृक्प्रत्यङ्न चाऽऽगामिस्पृगीक्ष्यते । स्वार्थदेशः परार्थोऽर्थो[2] विकल्पस्तेन स स्मृतः ॥ १ ॥
न हि प्रत्यक्षविज्ञानादतीतत्वं समीक्ष्यते । न चानागतता मेये मिथ्याज्ञानमतो भवेत् ॥ २ ॥
यत्तत्त्वकं स्याद्यद्वस्तु न तत्तदतिवर्तते । नाज्ञातरज्जुजः सर्पो रज्जुमुल्लङ्घ्य वर्तते ॥ ३ ॥
तस्मात्त्रिसृष्ववस्थासु ह्यागमापायिनीष्वजः । स्वतोऽलुप्तदृशा यस्मादात्माऽऽत्मानं सदेक्षते ॥ ४ ॥

शङ्कृचाऽऽह—परागिति । आत्मा तावदनादिसिद्धाज्ञानेनैक्याध्यासमापद्यते "देवात्मशक्तिं स्वगुणैर्निगूढा"मितिश्रुतेः ततस्तत्कार्यान्तःकरणे प्राप्तैक्याध्यासो बहिर्मुखया दृष्ट्या स्वस्मिन्नज्ञानं तत्कार्यं च संभावयति न त्वात्मस्वरूपानुसारेण तत्र तत्संभवो यथा बाला व्योम्नि कार्ष्ण्याद्यारोपयन्ति तद्वदित्यर्थः ॥२९८॥

पराग्दृष्टिवत्प्रत्यग्दृष्ट्याऽपि प्रतीच्यज्ञानादिसंभावना किं न स्यान्नेत्याह—नैवेति । आत्मानुसारिदृष्ट्या तस्मिन्न कदाचिदज्ञानादिसंभवोऽनिर्मोक्षापत्तेरित्यर्थः ॥२९९॥

ननु प्रत्यग्दृष्ट्या तत्राज्ञानाद्यसत्त्वेऽप्यज्ञानस्य विनाऽनुभवं ज्ञेयत्वमेष्टव्यमुत्थितस्य न किंचिदवेदिषमिति-सौषुप्ताज्ञानपरामर्शान्न चासौ संस्कारं विना युक्तो न चानुभवस्तमाधत्ते नित्यत्वादतः सौषुप्ताज्ञानस्यानुभवादृते ज्ञेयत्वं नेत्याह—नेत्यादिना । स्मृतिः परामर्शः । उत्थितस्य नावेदिषमिति परामर्शः स्वापकालीनाज्ञानविषयकादाचित्कानुभवोपनायको नेत्यत्र हेतुमाह—कालादीति । आत्मनो देशकालव्यवधानाभावात्तद्गताज्ञानस्यापि न तत्संबन्धस्तथा च नाज्ञासिषमित्यज्ञानं पूर्वकालश्च साक्षिण्यध्यस्तौ तेनैव दृश्येते तन्नात्र संस्कारापेक्षेत्यर्थः ॥३००॥

कथमात्मनः कालाद्यसंबन्धस्तत्राऽऽह—नेति । "अन्यत्र भूताच्च भव्याच्चे"तिश्रुतेरित्यर्थः । देशादेः सर्वस्य प्रत्यक्त्वेन स्वरूपत्वाच्च न तत्संबन्धस्तस्येत्याह—प्रत्यङ् इति । तर्हि तयोर्विना संबन्धं स्थितेरद्वैतहानिर्नेत्याह—स्वार्थेति । सर्वोऽपि जडो रज्ज्वां भुजंगवदजडे वर्ततेऽतः स शब्दज्ञानानुपाती वस्तुशून्यो वृद्धैरिष्टस्तत्र कुतोऽद्वैतहानिरित्यर्थः ॥३०१॥

कालाद्यकल्पितं प्रत्यक्षादिसिद्धत्वादित्याशङ्क्याऽऽह—न हीति । प्रत्यक्षस्य वर्तमानमात्रग्राहित्वान्नातीतत्वादिग्राहित्वं न चानुमानात्तत्सिद्धिस्तस्यापि वर्तमानस्यावर्तमानाविषयत्वात्समसमययोरेव विषयविषयित्वसंभवात्तस्मादतीतत्वादि कल्पितमिति दृष्टान्तयितरत्रापि जडे तत्सिद्धिरित्यर्थः ॥३०२॥

कल्पितमधिष्ठानाद्भिन्नमित्यद्वैतहतिमाशङ्क्याऽऽह—यत्तत्त्वकमिति । कल्पितस्याधिष्ठानमेव तत्त्वमतो न तत्ततो भिन्नमित्यत्र दृष्टान्तमाह—नाज्ञातेति ॥३०३॥

कल्पिताधिष्ठानयोरैक्ये कल्पितवदितरस्यापि कार्यत्वेन मृषात्वात्तुच्छख्यातिः स्यादित्याशङ्क्याऽऽह—तस्मादिति । आरोप्यस्याधिष्ठानाद्भेदेन सत्त्वाभावेऽप्यधिष्ठानस्य स्वातन्त्र्येण सत्त्वान्न तुच्छख्यातिरित्यर्थः । यस्मादात्मा स्वतो निर्विकारेण स्वरूपबोधेन सदैवाऽऽत्मानमनुभवति तस्मादसौ कूटस्थोऽवस्थासु तिसृष्वपीति योजना । अवस्थानामागमापायित्वमात्मनश्च निर्विकारत्वं प्रमाणप्रसिद्धमिति हिशब्दार्थः ॥३०४॥

---

१. सुप्तोत्थितस्य न किञ्चिदवेदिषमिति स्मृतिः न सुषुप्तिगस्य अज्ञानस्यात्मनो वा विज्ञानं भवितुमर्हति संस्काराभावात् आत्मनः तद्गताज्ञानस्यापि च कालव्यवधानाभावात् न तदध्वंसरूपसंस्कारसम्भवः, अतो न किञ्चिदवेदिषमिति उत्थितस्मृतिः अज्ञानं पूर्वकालश्चेत्युभयं साक्षिणि विषयीकरोतीत्यर्थ. ।

२. परार्थोऽर्थः परार्थः आत्माधीनोऽर्थ जडः पदार्थः स्वार्थं अनन्यार्थं परं ब्रह्म आश्रितः अतः अर्थः न स्वतन्त्रः तेन सः न किंचिदवेदिमिति विकल्प एव ।

देहान्तरेष्वपि तथा ह्यन्योन्यव्यभिचारतः । प्रत्यक्प्रत्यय एवैकः सर्वत्राव्यभिचारवान् ।। ५ ।।
चैतन्यमात्ररूपं सत्प्रथतेऽज्ञानमात्मनि । प्रत्यक्कूटस्थनिष्ठत्वात्तद्बाध्यं कारणेतरत् ।। ६ ।।

अज्ञानस्यान्तःकरणादिनिष्ठत्वनिरासः

नैवं तत्स्यात्स्वकार्येषु तेषां ताद्रूप्यहेतुतः[1] । जडस्वभावतो नान्यद्रूपं कार्येषु गम्यते ।। ७ ।।
एवं चेत्कोऽनयोर्भेदः कार्यकारणयोर्मितेः । अन्वयव्यतिरेकाभ्यां न जाड्यमतिवर्तते ।। ८ ।।
कार्यकारणरूपाभ्यामतद्वृत्त्त्विका[2] ततः । आत्माविद्यैव सर्वत्र प्रथते स्वात्मसाक्षिका ।। ९ ।।
नैवाऽऽत्मना स्वभावेन स्वात्मानं लभते जडः । यतोऽतः स्वार्थदेशः स स्वार्थश्चानन्यसिद्धिकः ।।१०।।
स्वतो बुद्धे कुतोऽविद्या तामृते संसृतिः कुतः । इतिबुद्धात्मतत्त्वस्य गीरियं न तमस्विनः ।।११।।
यथोच्छिन्नात्ममोहस्य निह्नोतुरपि निह्नुतिः । एवं प्रागात्मसंबोधादद्वयैकात्म्यनिह्नुतिः ।।१२।।

ननु नाऽऽत्मा कूटस्थो मनोवत्प्रतिदेहं भिन्नत्वाद्विक्रियावत्त्वप्रतीतेस्तत्राऽऽह—देहान्तरेष्विति । यथैकस्मिन्देहे वादिभ्यामात्मैकोऽभ्युपगतस्तथा सर्वदेहेष्वभ्युपेयस्तस्य सर्वत्राव्यभिचाराद्देहादेर्मिथो व्यभिचारादात्मभेदे च मानाभावात्तस्मादात्मा प्रत्यक् चिद्धातुरद्वयः सन्कूटस्थ एवेत्यर्थः । प्रतिदेहमात्मभेदे मानाभावद्योतको हिशब्दः ।।३०५।।

देहादेर्व्यभिचारोक्त्या सहेतुसर्वद्वैतस्य सर्पवन्मिथ्यात्वमुक्त्वा तत्रैव हेत्वन्तरोक्तिपूर्वकं फलमाह—चैतन्येति । आत्मन्यज्ञानं ज्ञानं च चैतन्येतररूपहीनं भाति तस्मिन्कूटस्थे रज्जौ भुजंगवत्तस्य स्थितत्वात्तस्माद्वाक्यीयात्तज्ज्ञानात्तत्कल्पितं सकार्यं कारणं बाध्यमित्यर्थः ।।३०६।।

अज्ञानं न प्रत्यक्कूटस्थनिष्ठमन्तःकरणादिनिष्ठत्वादित्याशङ्क्याऽऽह—नैवमिति । प्रतीचीवान्तःकरणादिषु न स्यादज्ञानमित्यत्र हेतुमाह—तेषामिति । अन्तःकरणादीनामज्ञानरूपत्वमनुभवेन साधयति—जडेति ।।३०७।।

अज्ञानकार्याणामज्ञानमात्रत्वे कार्यकारणभेदो मानतो नास्तीति सिद्धमित्यार्थिकमर्थमाह—एवं चेदेति । यत्तु जडस्वभावादित्यादिना कार्यकारणभेदनिराकरणकारणमुक्तं तदुपपादयति—अन्वयेति । सत्येवाज्ञाने कार्यदृष्टेरसति चादृष्टेर्बुद्ध्यादिकार्यं जाड्यमज्ञानमतिलिङ्घ्य न स्वतन्त्रं तिष्ठतीत्यर्थः ।।३०८।।

बुद्ध्यादिकारणमज्ञानमेवेति न नियमो वादिविवादादित्याशङ्क्याऽऽह—कार्येति । स्वानुभवसिद्धाऽविद्यैव लोके सर्वत्र कार्यरूपेण कारणरूपेण च प्रकाशते सा चोभयनिर्मुक्तात्माख्यपरमार्थस्वरूपोपेता तदद्वैतमेव शिष्टमित्यर्थः । ततःशब्दः कार्यकारणयो रूपान्तरासंभवपरामर्शी ।।३०९।।

अविद्यातिरेकेण तयो रूपान्तरं कुतो न संभवतीत्याशङ्क्याऽऽह—नैवेति । जडो हि स्वेनाऽऽत्मना सत्तां स्फूर्तिं च न लभते जाड्याद्रजतादिवत्तेनासावजडे प्रतीचि कल्पितो जडत्वाद्देहात्मत्ववदित्यर्थः । कथमजडस्याऽऽत्मनः स्वार्थत्वं तस्याप्यधिष्ठानारोप्ययोरन्यतरत्वादधिष्ठानान्तरसापेक्षत्वादित्याशङ्क्याऽऽह—स्वार्थश्चेति । आरोप्यवदितरस्य स्वरूपेण बाध्यत्वाभावान्नाधिष्ठानान्तरापेक्षेत्यर्थः ।।३१०।।

स्वप्रकाशे प्रतीच्यज्ञानादेर्विरोधान्न तस्याधिष्ठानत्वं न हि केवलं तथेत्याशङ्क्य विरोधोक्तिरात्मविदोऽन्यस्य वेति विकल्प्याऽऽद्यमङ्गीकरोति—स्वत इति । विद्वद्दृष्ट्याऽऽत्मन्यविद्यातत्कार्ययोरभावात्तस्याधिष्ठानत्वराहित्यमिष्टमेवेति भावः । द्वितीयं दूषयति—नेति । अविद्यादशायां स्वरूपास्फूर्तेरविदुषो नैवं विरोधोक्तिरित्यविद्वद्दृष्ट्या प्रतीच्यविद्यातत्कार्ययोर्भावात्तदधिष्ठानत्वमनपवादमिति भावः ।।३११।।

स्वप्रकाशत्वादज्ञानकालेऽप्यद्वयानन्दस्फूर्तेर्न विकल्पावकाश इत्याशङ्क्याऽऽह—यथेति । विदुषो निरस्ताविद्यस्याविद्याध्वंसिज्ञानस्य मातुर्वा निह्नवो यथा विद्यावशादिष्टस्तथा प्राग्ज्ञानोत्पत्तेरद्वयानन्दात्मनो निह्नुतिरसत्कल्पना युक्तैवाज्ञानबलादित्यर्थः ।।३१२।।

१. ताद्रूप्यहेतुतः जडानामज्ञानरूपत्वात्, तद्रूपत्वं तत्कार्यत्वात् ।
२. अतद्वृत्त्त्विका उभयरहिततत्त्वस्वरूपा ।

काकोलूकनिशेवायं संसारोऽज्ञात्मवेदिनोः । या निशा सर्वभूतानामित्यवोचत्स्वयं हरिः ।।१३।।
तस्मान्न वास्तवं रूपं तद्ध्वान्ताद्यपनोदकृत् । तस्मिन्सत्येव मोहादि व्युत्पत्तेः प्रागभूद्यतः ।।१४।।
प्रमाणारूढमेवैतद्धन्त्यविद्याद्यशेषतः । ब्रह्मविद्भिरतो यत्नात्प्रमाणमिह संश्रितम् ।।१५।।
उताविद्वानिति तथा प्रश्नपूर्वं स्वयं श्रुतिः । निर्णेनेक्ति स्फुटं वस्तु यथोक्तेनैव वर्त्मना ।।१६।।
आत्मासाधारणार्थोत्थरूपमात्रसमाश्रयात् । तन्मानमपि मानत्वं लभते न तु केवलम् ।।१७।।

विद्वद्दृष्ट्या मात्रादेरविद्वद्दृष्ट्या च तत्त्वस्यासत्त्वमित्यत्र दृष्टान्तरमाह—काकेति । या काकादीनां प्रसिद्धा निशा तस्यामुलूको जागर्तीति तद्दृष्ट्या साऽपलप्यते यदा च काकादयो जाग्रति तदा नक्तंदृशो निशेति काकादिदृष्ट्या सापह्नुयते यथेत्यर्थः । एवमज्ञस्यायं मात्रादिः संसारो यदा विवर्तते तदा तद्दृष्ट्या तत्त्वस्यासत्कल्पना यदा विदुषस्तत्त्वानुभवस्तदा तद्दृष्ट्या मात्रादेरसत्त्वमिति दार्ष्टान्तिकमाह—अयमिति । तत्र भगवद्वाक्यं प्रमाणयति—या निशेति । या सर्वेषां प्राणिनां ब्रह्मावस्था निशेव वर्तते न हि तत्र सर्वे जाग्रति तस्यामज्ञैरपह्नूयमानायां विद्वाञ्जागर्तीति तद्दृष्ट्या मात्राद्यभावो यस्यां चाविद्यावस्थायां सर्वे संसरन्तस्तत्त्वं निह्नुवते सा विदुषो निरस्ताविद्यस्य निशा तस्य संसारासंभवात्तदविद्वद्दृष्ट्या तत्त्वस्य विद्वद्दृष्ट्या च मात्रादेरसत्तेति विभागं भगवानूचिवानित्यर्थः ।।३१३।।

यद्यपि वस्तुयाथात्म्यमज्ञानदशायां तद्वशान्न स्फुरति तथाऽपि स्वप्रकाशे चेदज्ञानं तर्हि निवर्तकाभावान्न तन्निवर्तेत प्रकाशस्य स्वाश्रितानिवर्तकत्वादित्याशङ्क्य स्वरूपज्ञानस्यानिवर्तकत्वं प्रमाणज्ञानस्य वेति विकल्प्याऽऽद्यमङ्गी करोति—तस्मादिति । तच्छब्दार्थमेव स्फुटयति—तस्मिन्निति । व्युत्पत्तिः प्रमाणज्ञानम् ।।३१४।।

कल्पान्तरं निरस्यति—प्रमाणेति । प्रमाणज्ञानस्य स्वतोऽनिवर्तकत्वेऽपि दृगात्मद्वारा तत्सिद्धिरित्यर्थः । एतदेव वस्तु वाक्योत्थबुद्धिवृत्त्यारूढमज्ञानं तज्जं चाशेषं निवर्तयतीति बुद्धीद्धो बोधो बोधेद्धा वा बुद्धिरबोधादिध्वंसिनीति पक्षद्वयं तद्गमकमाह—ब्रह्मविद्भिरिति । उक्तरीत्या प्रमाणज्ञानस्याज्ञानध्वंसित्वादेव वेदान्तानां ब्रह्मणि प्रामाण्यं विद्वद्भिराश्रितम्, उक्तं हि—सिद्धं तु निवर्तकत्वादिति । पराक्रान्तं चात्र समन्वयसूत्रमारभ्याऽध्यायसमाप्तेः सूत्रभाष्यकारप्रभृतिभिरन्यथा स्वप्रकाशे तत्प्रामाण्यासिद्धेरित्यर्थः ।।३१५।।

न केवलमर्थापत्तिरेवात्र मानं किंतु श्रुतिरपि पक्षद्वयमुपोद्बलयतीत्याह—उतेति । "अथातोऽनुप्रश्ना उताविद्वानमुं लोकं प्रेत्य"इत्यादिना ब्रह्मणो विद्वदविद्वत्साधारण्यादविद्वानपि तत्प्राप्नोति किंवा विद्वानेव तत्प्राप्निश्च स्यान्न वेतिप्रश्नपूर्वकं सोऽकामयतेत्यादिना ब्रह्मास्तित्वसाधनद्वारा "यदा ह्येवैष एतस्मिन्नि"त्याद्या श्रुतिस्तज्ज्ञानादुक्तपक्षद्वयानुसारेण फलं स्फुटं निर्धारयतीत्यर्थः । तथेत्यस्य व्याख्या यथेत्यादि ।।३१६।।

कथं वाक्योत्थबुद्ध्यारूढं वस्तु स्वाज्ञानादिध्वंसीति विशेषणं ? चक्षुरादिजन्यज्ञानारूढं तथा किं न स्यात्तत्राऽऽह—आत्मेति । आत्मन्येवैकस्मिन्नुत्पन्नं वाक्याद्यज्ज्ञानं तन्मात्रावष्टम्भात्तद्गताज्ञानादिनिवर्तनेन मानत्वं भजते ज्ञानान्तरं त्वाकारान्तरं गृह्णन्नाऽऽत्मनि मानं किंतु घटादाविति विशेषणमर्थवदित्यर्थः । तन्मानमिति वाक्योत्थज्ञानोक्तिः । अपिः संभवानार्थः । तस्याऽऽत्मनि मानतायां तस्मिन्नसाधारणेऽर्थे समुत्पन्नत्वेन तदाकारमात्रोद्ग्राहित्वं हेतुः । न तु केवलमिति वृत्त्यन्तरनिरासः । पराञ्चि खानीत्यादिश्रुतेरिति विभागः । यद्वा बुद्धीद्धबोधस्याज्ञानध्वंसित्वं किमिति कल्प्यते बोधस्यैव केवलस्य किं न स्यात्सर्वसाधकस्य मानत्वेऽनपेक्षत्वादित्याशङ्क्याऽऽह—आत्मेति । यद्यपि बोधाख्यं स्वरूपचैतन्यं सर्वसाधकत्वेन मानं तथाऽप्यात्मनोऽसाधारणोऽर्थः सच्चिदानन्दाद्वयप्रत्यग्भावस्तदाकारत्वेन वाक्योत्थबुद्धिवृत्तिरूपं यज्ज्ञानं तावन्मात्रसहायादेव तत्स्वगताज्ञानतत्कार्यध्वंसित्वरूपं मानत्वमश्नुते न केवलं वाक्यीयवृत्त्यनपेक्षं चैतन्यमुक्तरूपं मानत्वमाप्नोति तत्साधकस्य

---

१. सिद्धं तु निवर्तकत्वात्—द्रविडाचार्यवाक्यम् । ब्रह्मणि पदानां व्युत्पत्त्यभावेऽपि सिद्धमेव शास्त्रस्य प्रामाण्यं अभावबोधने व्युत्पन्ननञ्संसृष्टस्थूलादिव्युत्पन्नपदैः स्वाभाविकद्वैताभावबोधनेनाध्यस्तनिवर्तकत्वादित्यर्थः ( मा० आ० ) ।

तावन्मात्रैकयाथात्म्यप्रत्यगात्मत्वकारणात् । पराक्षिवव न भेदोऽत्रमात्रादेः प्रत्यगात्मनि ॥१८॥

स्वचिदाभासवन्मोहपृष्ठेनैवैति कर्तृताम् । कूटस्थोऽपि स्वतः प्रत्यङ्नाऽऽत्मवृत्तव्यपेक्षया ॥१९॥

अनुभवस्य कार्यत्ववादिनिराकरणम्

सर्वधीविक्रियासाक्षिण्येवं सिद्धे स्वतो दृशौ । कार्यं येऽनुभवं प्राहुर्वाच्यं तैः कार्यसाधनम् ॥२०॥

न जायतेऽज इत्यादि विज्ञानघन इत्यपि । कृत्स्नपुंविक्रियोत्सारि वाक्यं कस्मादुपेक्ष्यते ॥२१॥

प्रमात्राद्युत्थितेः पूर्वं कारकं दुर्लभं मितेः । तदभावात्क्रियाभावस्तामृते कार्यता कुतः ॥२२॥

एतच्चानुभवादेव भवताऽप्यभ्युपेयते । कारकव्यापृतिस्तत्र निपुणेनापि नेक्ष्यते ॥२३॥

अकुर्वत्कारणं चेत्स्यात्तद्वत्कार्यं सदा भवेत् । कार्येतरानवसितिः संभूतौ युगपत्तयोः ॥२४॥

तन्निवर्तकत्वायोगादित्यर्थः। यद्वा किमिति बोधेद्धा बुद्धिः सकार्यमज्ञानं निरस्यति वाक्योत्था बुद्धिरेव तन्निरस्यतु मानत्वेन स्वफले स्वयमेव शक्तेरित्याशङ्क्याऽऽह—आत्मेति। यद्यपि वाक्यीयं ज्ञानं मानं तथाऽप्यात्मनोऽसाधारणोऽर्थो यो व्याख्यातस्तदात्मना व्यक्तं यद्रूपं तात्त्विकं तन्मात्रावष्टम्भादेवैतज्ज्ञानमज्ञानादिध्वंसित्वात्मकं मानत्वं लभते न तु वृत्तिज्ञानं केवलमुक्तमानत्वमश्नुवीत जडत्य तस्य वस्तुबलं विना तदयोगादित्यर्थः ॥३१७॥

ननु वाक्याज्ज्ञानोत्पत्तिकाले मात्रादिभेदोऽस्ति न वा? आद्ये वाक्योत्थमपि ज्ञानमाकारान्तरं गृह्णद्घटादिधीसदृशं स्याद्द्वितीये न तदुपत्तिर्हेत्वभावात्तत्राऽऽह—तावन्मात्रेति। शब्दादिषु मात्रादिभेदवन्न प्रतीचि तद्भेदस्तत्र हि ज्ञानोत्पत्तिकालवत्कालान्तरेऽपि सोऽस्त्यत्र तु ज्ञानोदये सन्नपि स नोर्ध्वमस्ति तज्जन्मनान्तरीयकत्वेन बाधितस्य मात्रादिजगन्मात्रस्य यदेकं याथात्म्यं प्रत्यग्वस्तु तद्रूपेणावसानादित्यर्थः ॥३१८॥

ज्ञानोत्पत्तेरूर्ध्वं मात्रादिर्बाधितः सन्प्रत्यगेव स्यादित्युक्तम्। इदानीं तज्ज्ञानस्य प्रत्यगात्माऽन्यो वा कर्ता? आद्ये कौटस्थ्यहानिर्द्वितीयेऽद्वैतहानिरित्याशङ्क्याऽऽदौ द्वितीयं दोषं निरस्यति—स्वचिदिति। आद्यं दोषं धुनीते—कूटस्थोऽपीति। स्वकीयचिदाभाससहितमोहद्वारा कर्तुर्न तात्त्विककौटस्थ्यहानिरिति भावः। आत्मा चेत्कर्ता तर्हि स्वतोऽस्तु किं मोहेन मा च कूटस्थत्वं भूदिति नेत्याह—नेति। न हि श्रुतिस्मृतिशतसमधिगतासङ्गाद्वितीयकूटस्थप्रत्यगर्थस्य मोहमपहाय कर्तृत्वं शक्यशङ्कमित्यर्थः ॥३१९॥

बुद्धीद्धो बोधो बोधेद्धा वा बुद्धिरज्ञानध्वंसिनीति वदता संवेदनं न कार्यं किंतु कूटस्थमित्युक्तम्। इदानीं वृत्तानुवादेन पक्षान्तरमनुभाष्य दूषयति—सर्वेति। अतिरोहितसंवित्कमित्यादि प्रागुक्तं परामृशति—एवमिति। समष्टिव्यष्ट्यात्मकसमस्तबुद्धितद्विकारसाधके दृगात्मनि स्वतो विकारविरहिणि विधूताशेषसंबन्धमित्यादिपूर्वोक्तन्यायेन सिद्धे सत्युपाध्यनुसंधानं विनैव कार्यमनुभवं ये प्रतिपद्यन्ते तैस्तस्य कार्यत्वे मानं वक्तव्यं न च तद्वक्तुं शक्यमित्यर्थः ॥३२०॥

अनुभवस्य कार्यत्वे न केवलं मानाभावो मानविरोधश्चेत्याह—न जायत इति। दर्शितश्रुतिस्मृतिवचसो विवक्षितमाह—कृत्स्नेति। तस्य चादोषत्वादनुपेक्षणीयत्वमाह—कस्मादिति ॥३२१॥

ननु वाक्यं कूटस्थत्वं प्रतीचो वददपि नानुभवस्य कार्यत्वे विरुध्यते मैवं तस्याऽऽत्माव्यतिरेकादिति मन्वानस्तदकार्यत्वे युक्त्यन्तरमाह—प्रमात्रादीति। न तावदनुभवस्य स्वापे कारकमस्ति तदा मात्राद्यभावात्ततस्तन्निर्वर्त्यक्रियाभावात्तद्व्याप्यकार्यत्वासिद्धिरित्यर्थः ॥३२२॥

अनुभूतिरेव स्वापे नास्ति कथमकार्यत्वं साध्यते तत्राऽऽह—एतच्चेति। सुषुप्तमनुभवादेवाऽऽवाभ्यामभ्युपेयते तत्साधकमानान्तराभावात्तन्न तत्सत्त्वे विवाद इत्यर्थः। प्रमात्रादिविभागवदिति चशब्दार्थः। तत्रोभयसंमत्यर्थोऽपिशब्दः। सौषुप्तश्चेत्तदनुभवोऽस्ति कारकमपि तत्र स्यात्कार्येण तत्कल्पनादित्याशङ्क्याऽऽह—कारकेति। न हि स्वापे मात्रादिव्यापारः सूक्ष्मदृशाऽपि दृश्यते न चानुभवानुपपत्त्या तत्सिद्धिस्तस्याकार्यत्वेनाप्युपपत्तेरित्यर्थः ॥३२३॥

तस्य कार्यत्वं कदाचिदेवोपलब्धेर्घटवन्न ह्यसौ सदोपलभ्यते कार्यान्तरानुपलब्धिप्रसङ्गादित्याशङ्क्य

**विरुद्धानेककार्याणामेकस्मादेव कारणात् । अकुर्वतः प्रसक्तिः स्यादकुर्वत्त्वाविशेषतः ॥२५॥**
**अथ कुर्वदभीष्टं तत्तत्कार्यं तर्हि भण्यताम् । अकार्यं कारकमिति सुप्तोन्मत्तप्रभाषितम् ॥२६॥**
**मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् । इति श्रीमत्सुरेशस्य वाक्यमेवं समञ्जसम् ॥२७॥**
**प्रमेये च क्रियायां च प्रमाणेऽथ प्रमातरि । तच्छक्त्युपाधिहेतुत्वाज्जायमानेव चिद्ध्रुवा ॥२८॥**
**यथा सद्व्यतिरेकेण न किंचिद्वस्तु सिध्यति । तद्वदव्यतिरेकेण घटाभावाद्यसंभवात् ॥२९॥**
**न हि सद्व्यतिरेकेण त्वसद्वस्त्वपि सिध्यति । तस्यापि सदपेक्षत्वात्किमन्यत्स्यात्सता विना ॥३०॥**
**यथैवं संविदर्तेऽसन्नैति संभावनामपि । सदप्यभावरूपं वा तद्वदव्यतिरेकतः ॥३१॥**

तत्कार्यत्वं निराकर्तुं कार्यकारणभावमेव निराचिकीर्षुरकुर्वत्कारणं कुर्वद्वेति विकल्प्याऽऽद्यमनूद्य दूषयति—अकुर्वदिति । तदपि कारणं नित्यमनित्यं वा ? आद्ये कारणवत्कार्यमपि नित्यं स्यादविशेषादित्यर्थः । द्वितीये तयोर्यौगपद्यं क्रमो वा ? आद्ये दोषमाह—कार्येति । न हि युगपदुत्पन्नयोः शृङ्गयोस्तद्धीरित्यर्थः ॥३२४॥

क्रमपक्षेऽपि कार्यमाद्यं पश्चात्कारणमिति न क्रमोऽनिष्टत्वात्कारणमाद्यं पश्चात्कार्यमित्यत्र दोषमाह—विरुद्धेति । ननु तानि विरुद्धत्वादेव नैकस्मादुत्पत्तुमुचितानीत्याशङ्क्य कारणस्याकुर्वत्त्वेन सर्वत्राविशेषादविशिष्टमुत्पादकत्वमनुत्पादकत्वं वा स्यादित्याह—अकुर्वत्त्वेति ॥३२५॥

कल्पान्तरमुत्थापयति—अथेति । कुर्वत्त्वं नित्यं कार्यं वा? आद्ये कार्यमपि सदा स्यात् । द्वितीयं निरस्यति—तत्कार्यमिति । तत्कार्यं यस्य कारणस्य तत्तथेति । कार्यं वक्तव्यमिति यावत् । कार्यत्वे तस्य हेत्वन्तरापेक्षायामनवस्थेति भावः । कुर्वत्त्वस्य कार्यत्वकृतामनवस्थामुक्त्वा तदाधारस्यापि कार्यत्वनिमित्तां तामभिप्रेत्याऽऽह—अकार्यमिति । क्रियां कुर्वत्कारणं कारकमिति न्यायात्क्रियोपरक्तस्य कारकत्वात्तस्याश्च कादाचित्कत्वात्तद्विशिष्टमपि तथेति कारकं न कार्यमित्यबुद्धिपूर्वकमतोऽनवस्थानात्कार्यकारणत्वं कल्पितमित्यर्थः । निष्क्रियं कारणं चेत्स्यादित्यत्र क्रियाद्वारा कार्यकारणभावस्य कल्पितत्वमुक्तमिह तु कारणमेव पुरस्कृत्य तदुक्तिरित्यपौनरुक्त्यम् ॥३२६॥

तत्र भगवद्वाक्यं प्रमाणयति—मयेति । एवमिति कार्यकारणत्वे कल्पिते सतीत्यर्थः ॥३२७॥

उक्तरीत्या कार्यकारणभावस्य दुर्वचत्वादनुभवस्याकार्यत्वे कथं तत्कार्यत्वप्रसिद्धिस्तत्राऽऽह—प्रमेये चेति । कूटस्थनित्याऽप्यनुभूतिर्मेयादिनिमित्तत्वाज्ञानोपाधिरूपहेतोर्जायमानेव भातीत्यर्थः । क्रियाशब्दो मानमेयसंनिकर्षविषयः । अथशब्दस्तथापर्यायः समुच्चायार्थः ॥३२८॥

तर्हि मात्रादेर्निमित्तत्वाच्चितो नैमित्तिकत्वात्तयोर्भेदादद्वैतहानिरभेदे निमित्तनैमित्तिकत्वानुपपत्तिरित्याशङ्क्याऽऽह—यथेति । तथा घटविचारे दर्शितमिति शेषः । निमित्तनैमित्तिकभावस्तु कल्पितभेदादिति मन्यते । मात्रादेश्चितो न भेदश्चेदभेदः स्यान्मिथोविरोधिविधान्तराभावादतश्चितः सप्रपञ्चतेत्याशङ्क्याऽऽह—तद्वदिति । व्यतिरेकवदव्यतिरेकेणापि न सत्त्वं कस्यचिदिति सम्बन्धः । अभेदे सन्मात्रपरिशेषाद्घटतदभावादेरसंभवादिति हेतुमाह—घटेति ॥३२९॥

मात्रादेः सतो भेदाभेदासंभवेन कल्पितत्वमुक्त्वा भेदासंभवे हेत्वन्तरमाह—न हीति । सदसतोर्विरोधादसतः सतो भेदप्राप्तिं दर्शयति—अपीति । तुशब्दोऽवधारणे । सतो भेदेनासन्न सिध्यत्येवेत्यत्र हेतुं हिशब्दोक्तमाह—तस्यापीति । अपिनोक्तं कैमुतिकन्यायमाह—किमन्यदिति । घटादि सता विना न स्यादिति किं वाच्यं तस्य सदतिरेके तुच्छत्वापत्तेरित्यर्थः ॥३३०॥

सदसतोर्मिथो भेदाभेदौ निरस्य तयोः संविदस्तौ निरस्यति—यथेति । यथा संविदा विना सदसद्वा भावोऽभावो वा न संभवति जडत्वान्न हि जडोऽर्थस्तामतिक्रम्य सिद्ध्यति । न च तत्संबन्धात्तत्सिद्धिः संबन्धस्य दुर्वचत्वात्तथा भावरूपमभावरूपं वा संविदः सकाशादव्यतिरेकेण न लभ्यतेऽन्यतरपरिशेषादेवं चिदेकरसं सन्मात्रं वस्तु सिद्धमित्यर्थः ॥३३१॥

अविद्यातत्कार्ययोः कल्पितत्वनिगमनम्

अविद्या वाऽथ तत्कार्यं नाभेदान्नातिरेकतः । सिद्धायते यतोऽतः स्यादविचारितसिद्धिकम् ॥३२॥
नीलोत्पल[1]दलाभं खं द्विरेफोदरवत्तमः । अविचारितसिद्धञ्चेवं तमस्तज्जं च वीक्ष्यताम् ॥३३॥
स्वमहिम्ना न संसिध्येत्स्वतोऽनवगतात्मकम् । भावाभावौ न वस्त्वेति प्रत्याख्यानं यदात्मना ॥३४॥

अनुभवस्य जन्मादेः कल्पितत्वनिगमनम्

तस्मादजायमानैव जायमानेव लक्ष्यते । अनुभूतिस्तदज्ञानहेतूत्थानात्मजन्मना ॥३५॥
तद्विनाशेऽपि तत्साक्ष्याद्विनश्यन्तीव लक्ष्यते । यतोऽतः कार्यतां तस्या नेश्वरोऽपि प्रसाधयेत् ॥३६॥
स्वात्मसाक्षिकतां मुक्त्वा भावाभावात्मवस्तुनः । यतोऽसिद्धिरतः प्रत्यङ्निरस्ताखिलविक्रियः ॥३७॥
कार्यं सर्वं यतो दृष्टं प्रागभावपुरःसरम् । तस्यापि संवित्साक्षित्वात्प्रागभावो न संविदः ॥३८॥
प्रमात्राद्यति[2]रेकेण ह्यसंविदितरूपकम् । मेयं सिद्धमिहैवैतन्न वेदादन्यतः क्वचित् ॥३९॥

का तर्हि भातो जगतो गतिरनिर्वाच्यतेत्याह—अविद्येति ॥३३२॥

द्वैतस्याविचारितसिद्धिकत्वे दृष्टान्तमाह—नीलेति । ये पुनराकाशमपि रूपवच्चाक्षुषमाहुस्तान्प्रत्याह—द्विरेफेति । आकाशालोकाभावयोर्नीरूपत्वात् नैल्यं कल्पितमित्याह—अविचारितेति । दार्ष्टान्तिकमाह—एवमिति ॥३३३॥

अविद्यादेरविचारितसिद्धत्वे हेत्वन्तरमाह—स्वमहिम्नेति । जडस्य स्वतोऽसिद्धेरजडे कल्पितस्य सिद्धिरित्यर्थः । इतरेतराध्यासाज्जडवदजडस्यापि कल्पितत्वेन बाधान्नैरात्म्यमित्याशङ्क्याऽऽह—भावेति । आत्मा जन्मनाशौ न स्पृशति यस्मात्तेन तदुभयं निराकृतं तत्साक्षित्वादन्योन्याध्यासेऽपि जडवच्चितः स्वरूपानध्यासान्न नैरात्म्यमिति भावः ॥३३४॥

वस्तुनि जन्मादि कल्पितमित्युपसंहरति—तस्मादिति । चिदज्ञानजन्यबुद्धिवृत्तिजन्मवशाच्चिति जन्मधीरित्यर्थः ॥३३५॥

उपाधिनाशादेव तत्र नाशधीरपीत्याह—तद्विनाशेऽपीति । स्वतस्तस्या जन्माद्यभावे फलितमाह—यत इति ॥३३६॥

जन्मनाशाभावे विकारान्तराणि सन्तीति न कूटस्थतेत्याशङ्क्याऽऽह—स्वात्मेति । सर्वविक्रियासाक्षिणो न काऽपि विक्रियेत्यर्थः ॥३३७॥

संविदो जन्माभावे हेत्वन्तरमाह—कार्यमिति । अतः संविदोऽपि कार्यत्वे प्रागभाववत्त्वं वक्तव्यमिति शेषः । अस्तु तर्हि संविदोऽपि प्रागभाववत्त्वं नेत्याह—तस्येति । संविन्न जायते प्रागभावहीनत्वात्संमतवदित्यर्थः ॥३३८॥

कूटस्थां संविदमुक्त्वा तत्रैवाज्ञातत्वमित्याह—प्रमात्रादिति । इह संविद्येव कूटस्थायां सिद्धं विद्यमानमसंविदितरूपमज्ञातत्वं मात्राद्यतिरेकेण मेयं ज्ञेयमिति योजना । अज्ञातत्वस्य मात्राद्यनपेक्षितत्वं साधितमिति हिशब्दार्थः । कथं तर्हि तज्ज्ञातव्यं तदाह—एतदिति । वेदनं वेदोऽनुभवस्तस्मादन्यतस्तं वर्जयित्वा क्वचिन्माने सत्येव तदज्ञातत्वं न सिध्यति किं त्वनुभवादेवेत्यर्थः । यद्वा संविद्येवाज्ञातत्वमित्युक्तमिदानीमेवकारार्थमाह—एतदिति । अनुभवं हित्वाऽन्यत्र कुत्रचिदाश्रये नैदतज्ञातत्वमित्यर्थः । यद्वा यत्रैतदज्ञातत्वं तस्मिन्ननुभवे किं मानं

---

१. आकाशं अरूपं अचाक्षुषं च स्पर्शरहितद्रव्यत्वात् आत्मवदिति भाट्टं प्रति साध्यं—(न्या०) तन्मते आकाशस्य रूपवत्त्वं चाक्षुषत्वं चाङ्गीकृतं न निराकरणायेत्यर्थः । तार्किकं प्रत्याह—भावरूपे तमसि नैल्यमारोपितमित्यर्थः ( न्या० ) ।

२. प्रमात्रादिरहितमैकात्म्यं न्यायेन सिद्धमपि असंविदितरूपकं अनिवृत्ताज्ञानम् । वेदवाक्यादन्यतो न क्वापि तदज्ञाननिवृत्तिः ( न्या० ) ।

वस्तुवृत्तमतेक्ष्यैतन्न स्वतः परतस्तमः । तज्जं वा तत्तमोऽपेक्ष्य ह्यव्याकृतगिरोच्यते[1] ॥४०॥
चिदाभासं तमो ज्ञेयं नाज्ञासिषमितीक्षणात् । जगज्जनिस्थितिलया एवंभूते परात्मनि ॥४१॥
तमःप्रधानः क्षेत्राणां चित्प्रधानश्चिदात्मनाम् । परः कारणतामेति भावना[2]ज्ञानकर्मभिः ॥४२॥
यावत्कार्यगतं किंचिद्भावनादि समीक्ष्यते । तमसा बीजभूतं तद्व्यज्यते संस्कृतेः पुनः ॥४३॥
तमो नियामकं यस्मात्स्वकार्याणां तदन्वयात् । ऊर्ध्वं व्यक्तेः पुरा चैव तदेवातो नियामकम् ॥४४॥

तदाह—नेति । वेदवाक्यमेव तत्र मानं तद्विहायान्यस्मिन्कस्मिंश्चिन्माने तर्के वा सति नैतदनुभवतत्त्वं सिध्यतीत्यर्थः ॥३३९॥

ननु यस्यानुभवो विषयस्तदज्ञानं वस्त्ववस्तु वा ? वस्तु चेत्तत्कृतस्यापि वस्तुत्वादद्वैतहानिरवस्तु चेदनुभवस्यातद्विषयत्वादमेयत्वं तत्राऽऽह—वस्तुवृत्तमिति । अज्ञानं तज्जं चाद्वयं स्वप्रकाशं वस्तुरूपमपेक्ष्याभेदेन भेदेन वा न सिध्यति जडाजडयोरभेदस्य विरुद्धत्वाद्भेदस्य च स्वरूपत्वधर्मत्वाभ्यां दुर्निरूपत्वात् । न चाविद्यादेः स्वतःसिद्धिरात्मातिरेके तदयोगादनतिरेकस्य निरस्तत्वात् नापि परतः, संबन्धानिरूपणादतोऽज्ञानाद्यनिर्वाच्यमिति भावः । अव्याकृतशब्दिततमसो नानिर्वाच्यता वाच्यत्वव्याघातादित्याशङ्क्याऽऽह—तत्तम इति । नावाच्यत्वमनिर्वाच्यत्वं किंतु दुर्निरूपत्वमत्र प्रस्तुतं वस्तु दुर्निरूपत्वं तमोऽपेक्ष्याव्याकृतशब्देनोच्यते न हि स्वतः परतो वा तन्निरूपयितुं शक्यमित्युक्तमित्यर्थः ॥३४०॥

अज्ञानस्य द्विधाऽप्यसिद्धावसिद्धिरेव न हि विधान्तरेण तत्सिद्धिरतस्कथं तदपेक्षया परस्या[3]व्याकृतशब्दतेत्याशङ्क्याऽऽह—चिदाभासमिति । चितो यस्मिन्नाभासस्तत्तमस्तत्प्रसादादेव ज्ञातव्यमनिर्वाच्यस्यान्यथा ज्ञानायोगादित्यर्थः । आभासवशात्तमःसिद्धिरित्यत्रानुभवं प्रमाणयति—नेति । किमिति यथोक्ततमोवैशिष्ट्येन परस्याव्याकृतशब्दत्वं तत्राऽऽह—जगदिति । परस्मिन्नज्ञानविशिष्टे तदपेक्षे वा जगज्जन्मादि न शुद्धे ब्रह्मणि अज्ञाने वेति वक्तुं तस्मिन्नव्याकृतपदमित्यर्थः ॥३४१॥

परस्य करणत्वे कार्ये जगति चेतनाचेतनविभागभानं कथमित्याशङ्क्य कारणेऽपि विभागमाह—तम इति । परस्य कारणत्वं चेत्कथमुच्चावचप्रपञ्चसृष्टिस्तस्य रागादिदोषराहित्यादित्याशङ्क्य वैषम्यनैर्घृण्ये न सापेक्षत्वादिति न्यायेनाऽऽह—भावनेति ॥३४२॥

कर्माद्यपेक्षया कारणत्वे प्रलये तदस्ति न वा?अस्ति चेद्व्यक्तमव्यक्तं वा?आद्ये सर्वलयासिद्धिर्द्वितीये तत्किं परस्य सत्तयोपकरणं व्यक्तं वा?प्रथमे प्रलयेऽपि कार्यं स्याद्द्वितीये तद्व्यक्त्यर्थं हेत्वन्वेषणायामनवस्था । नास्ति चेत्तदपेक्षस्य न कारणत्वमित्याशङ्क्याऽऽह—यावदिति । कार्यगतं तद्विषयमिति यावत् । समीक्ष्यते यथाकर्म यथाश्रुतमित्यादिशास्त्रेणेति शेषः । ईश्वरेच्छादिवशादुद्बुद्धकर्मादिसंस्कारादज्ञानात्मना प्रागव्याकृतमपि कर्मादि व्यज्यते व्यक्तं च स्रष्टुरुपकरणमित्यर्थः ॥३४३॥

यथोक्तसंस्कारात्कर्मादिव्यक्तिश्चेत्तदिच्छादि किमिति कदाचिदेव तमुद्बोधयत्यत आह—तम इति । सर्वं कर्मादि लये साभासाज्ञानात्मकं चेत्कथं प्रतिपुरुषव्यवस्थया तद्व्यक्तिस्तत्राऽऽह—यस्मादिति । प्राग्व्यक्तेर्नाशादूर्ध्वं मध्ये चाज्ञानकार्याणां तेन व्याप्तेर्यस्मान्न स्वातन्त्र्यं तस्मात्तदेवाज्ञानं स्वकार्यकर्मादिर्व्यवस्थया व्यक्तौ नियामकमित्यर्थः ॥३४४॥

---

१. अव्याकृतगिरा—"तद्धेदं तर्ह्यव्याकृतमासीदि"तिश्रुतिगतया ।

२. भावना—जन्मान्तरीयवासना, ज्ञानं विहितं निषिद्धं च, कर्म सुकृतदुष्कृते—अपेक्ष्य प्रपञ्चं सृजतः न वैषम्यनैर्घृण्ये । तथा च सूत्रम्—वैषम्यनैर्घृण्ये न सापेक्षत्वात्, तथाहि दर्शयति श्रुतिः—"एष ह्येव साधु कर्म कारयति", "यथाकर्म यथाश्रुतमि"त्यादि ।

३. अव्याकृतपदेन चिदाभासं तम उच्यते ।

नियम्यं कार्यमापेक्ष्य नियन्तैष [१]तमोऽवधिः । तेष्वेव चित्स्वभावः सन्साक्षितां प्रतिपद्यते ॥४५॥
[२]निगीर्णं सज्जलूकादि दुष्टं देशं यथाऽऽश्रयेत् । भावनाज्ञानकर्माणि तथा यान्ति तमस्विनम् ॥४६॥
उत्पत्तिस्थितिनाशेषु कारणं नातिवर्तते । कार्यं सर्वं यथा लोके तथेहाप्यवसीयताम् ॥४७॥
कार्येष्वपि च सर्वेषु कर्तृत्वं यत्समीक्ष्यते । अस्यैव तद्विजानीयादतः सर्वकृदुच्यते ॥४८॥

तेजआदिरूपेण स्थितः परमात्मैव सर्वत्र कारणम्

तत्तेज ऐक्षत इति तेजोदेहं सदेव तु । उत्तरोत्तरकार्याणां श्रुत्या स्रष्टृतयोच्यते ॥४९॥
तथा संवर्गविद्यायाम[३]प्राणः प्राणतां गतः । अध्यात्ममधिदैवं च प्राणवायुतयोदितः ॥५०॥
नाभोपक्रममाशान्तमरनाभिनिदर्शनात् । ओतप्रोतं जगत्सर्वं [४]प्राण एवोपदिश्यते ॥५१॥

तर्हि परस्य नियामकत्वाङ्गीकारविरोधः स्यादित्याशङ्क्याऽऽह—नियम्यमिति । किमिति नियन्तृत्वं परस्य तमोद्वारकमिष्टं स्वाभाविकं साक्षित्ववत्किं न स्यादित्याशङ्क्य तदप्याविद्यमित्याह—तेष्विति । तमस्तत्कार्येष्विति यावत् ॥३४५॥

तस्य नियन्तृत्वादेराविद्यत्वेऽपि लये ब्रह्मभूतं कर्मादि मुक्तं त्यक्त्वा किमित्यज्ञमेवाऽऽश्रयतीत्याशङ्क्याऽऽह—निगीर्णमिति । उक्तं हि—

'संपृक्ताद्दुष्टशुद्धास्राज्जलूका दुष्टशोणितम् । आदत्ते प्रथमं हंसः क्षीरं क्षीरोदकादिव" इति ।
आदिपदादौषधभेदोक्तिः ॥३४६॥

किं चाज्ञस्य कर्मादि कारणत्वात्तमतिक्रम्य तत्कार्यं तं मुक्तं नाऽऽश्रयतीति दृष्टान्तान्तरेणाऽऽह—उत्पत्तीति । भावनादिरिहेत्युच्यते । भुक्ताभुक्तभेदस्तु स्वप्नवत्प्रातीतिको न वास्तवो "ब्रह्म वा इदमि"त्यादि[५]शेषविरोधा"त्तद्यो यो देवानामि"त्यत्राप्याविद्यभेदस्यैवाधिकारिवैलक्षण्यार्थमनुवादादिति द्रष्टव्यम् ॥३४७॥

भावनादीनामज्ञाश्रयत्वेऽपि तेषां कारणत्वे ब्रह्मणः सर्वकर्तृत्वहानिरकारणत्वे नोपकरणतेत्याशङ्क्याऽऽह—कार्येष्विति ॥३४८॥

तत्तत्कार्यात्मना स्थित्वा ब्रह्मैव कारणमित्यत्र [६]पराभिध्यानादित्यादिन्यायेन मानमाह—तत्तेज इति । विसंधिकरणं श्रुत्यनुसारार्थम् । इतिशब्देन श्रुत्येत्यस्य संबन्धः ॥३४९॥

यथा सर्गाधिकारे सतस्तेजोबन्नता, अन्यथेक्षितृत्वायोगात्तथा संवर्गविद्याप्रकरणे प्राणत्वमप्राणस्यैव परस्येष्टं न हि तस्मादन्यस्योपास्यतया फलदत्वं फलमत उपपत्तेरिति-न्यायादित्याह—तथेति । अप्राणस्य प्राणतापत्तिमेव वदन्नवायोः वायुत्वापत्तिमपि द्योतयति—अध्यात्ममिति ॥३५०॥

भूमविद्यायामपि परस्य सर्वात्मत्वं दृष्टमिति भूमाधिकरणन्यायेनाऽऽह—नामेति । अराणां नाभावर्पणवदशेषं जगत्प्राणद्वारा परस्मिन्नर्पितमिति दर्शितमित्यर्थः ॥३५१॥

---

१ तमोऽवधिः तमोद्वारेत्यर्थः ।

२. निगीर्णम्=पदार्थान्तरमिश्रितम् ।

३. अप्राणः=ब्रह्म । "अप्राणो ह्यमनाः" इति श्रुतेः ।

४. प्राण एव=प्राणद्वारा ब्रह्मण्येव नामोपक्रमं आशान्तं ब्रह्मण्येव प्राणद्वारा समर्पितम् ।

५. शेषविरोधात्=वाक्यशेषविरोधात् ।

६. तदभिध्यानादेव तु तल्लिङ्गात्सः इत्यधिकरणेन ब्रह्मैव तेन तेनाकारेण विद्यमानं तत्तत्कार्यं करोतीति निर्णीतम्, पराभिध्यानात्तु तिरोहितं इत्यधिकरणे इदानीं जीवस्य तिरोहितं सर्वकर्तृत्वादि परस्याभिध्यानात् कस्यचिदाविर्भवतीत्युक्तम् ।

**तथैवाऽऽकाशशब्देन तत्र तत्रैष एव तु । [1]तदेतत्सत्यमिति च सबीजः पर उच्यते ॥५२॥**
**[2]प्राणो ह्येष सर्वभूतैरिति चाऽऽथर्वणे वचः । प्राणबन्धनं सोम्येति सर्वकारणमुच्यते ॥५३॥**
**एष स्वकार्यं संश्रित्य नानाभेदान्प्रपद्यते । स्वोत्सृष्टतोयधाराद्यैर्वैश्वरूप्यं रविर्यथा ॥५४॥**
**प्राणभूतादिजन्मैव जन्माऽऽत्मन इहोच्यते । वियतोऽजन्मनो जन्म यथा कुम्भादिजन्मना ॥५५॥**
**एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । नाव्याकृतं परादन्यदागमादवगम्यते ॥५६॥**

निस्सामान्यविशेषस्य ब्रह्मणः सामान्यं कल्पितम्

**स्वकार्याण्येव संश्रित्य मृदसाधारणा यथा । सामान्यरूपतामेति स्वकार्यैः कारणं तथा ॥५७॥**

परस्य प्राणादिरूपत्ववदाकाशरूपत्वमप्य''स्य लोकस्य का गतिरित्याकाश इति होवाचे''त्यादौ[3]वाकाशस्तल्लिङ्गादितिन्यायेनोक्तमित्याह—तथेति । भूतपञ्चकबीजसहितस्य परस्य सत्यशब्देन निर्देशं दर्शयति—तदेतदिति । एतस्माज्जायत इत्यानि परस्मात्सृष्टेः प्रकृतत्वादित्यर्थः ॥३५२॥

तत्रैव वाक्यान्तरमाह—प्राणो हीति । न हि प्राणस्य स्वतः सर्वात्मकत्वं कार्यत्वात् । परस्तु तद्भावमापन्नस्तथेतिभावः । परस्य प्राणरूपत्वे वाक्यान्तरमाह—प्राणेति । मनःसाभासमन्तःकरणं जीवशब्दितं प्राणे परस्मिन्बद्धमभिन्नमिति वदता वेदेन प्राणशब्देन सर्वकारणं ब्रह्मोक्तमित्यर्थः । एवं परस्य तत्तद्रूपेणावस्थानात्सर्वकारणतेति निगमयति—सर्वेति ॥३५३॥

तस्य सर्वकारणत्वे सर्वस्माद्भेदो मृद्वत्कारणत्वादित्याशङ्क्य वास्तवः स न साध्योऽप्रसिद्धविशेषणत्वादितरसाधने सिद्धसाध्यतेत्याह—एष इति । औपाधिकभेदे दृष्टान्तमाह—स्वोत्सृष्टेति । आदित्याज्जायते वृष्टिरिति स्मृतेरादित्योत्सृष्टा वृष्टिधारा । आदिपदाद्दर्पणादिग्रहः ॥३५४॥

आत्मनो भेदो वास्तवो जन्मवदित्याशङ्क्य [4]चराचरव्यपाश्रयस्तु स्यादितिन्यायेन साध्यवैकल्यमाह—प्राणेति । आदिशब्दोऽतिरिक्तभौतिकोपाधिविषयः । इहशब्दो लोकशास्त्रविषयः । औपाधिके जन्मनि दृष्टान्तमाह—वियत इति । अजन्मन इति च्छेदः ॥३५५॥

भेदजन्मनोरौपाधिकत्वेऽपि न परस्य कारणत्वमव्याकृतस्य तद्भावादित्याशङ्क्याऽऽह—एतस्मादिति । उक्तागमात्परस्य कारणत्वावगमादव्याकृतस्य कारणत्वे न तस्माद्भेदस्तत्तमोऽपेक्ष्य ह्यव्याकृतगिरोच्यत इति चोक्तमित्यर्थः ॥३५६॥

ब्रह्मणः सन्मात्रसामान्यत्वेन विशेषापेक्षायामव्याकृतस्य विशेषत्वादन्यत्वमित्याशङ्क्याऽऽह—स्वकार्याणीति । यथा स्वभावतः साधारणताहीनाऽपि मृद्घटादिकार्याण्यपेक्ष्य साधारणतां गच्छत्यतोऽस्याः साधारणता सापेक्षत्वात्कल्पिता तथा ब्रह्मापि स्वकार्यापेक्षया सामान्यत्वं गच्छतीति तस्य तत्कल्पितं तत्कुतो विशेषत्वेनाव्याकृतस्यान्यतेत्यर्थः ॥३५७॥

---

१. ''तदेतत्सत्यं यथा सुदीप्यात्'' इत्यारभ्य ''तथाक्षरात् सम्भवतीह विश्वमि''त्युक्तं सत्यं साभासाज्ञानयुक्तं परं ब्रह्मेत्यर्थः ।

२. ''प्राणो ह्येष'' इत्यत्रापि प्राणः ब्रह्मैव न मुख्यः प्राणः तस्य कार्यत्वात् सर्वात्मकत्वायोगात् । प्राणबन्धनं प्राणे ब्रह्मणि मनो जीवः बद्धः लीनः इत्यर्थः ।

३. आकाशस्तल्लिङ्गात्—''अस्य लोकस्य का गतिरिति आकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशेव समुत्पद्यन्ते''—इत्यादिना सर्वभूतोत्पत्तिलयाधिष्ठानत्वोक्तेः तल्लिङ्गात् ब्रह्मलिङ्गादित्यर्थः ।

४. चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात्—इति व्याससूत्रम् । जीवस्य जन्मप्रलयौ न स्तः ब्रह्माभेदे न नित्यत्वात् न जीवो म्रियते इति श्रुतेः । कृतहानादेः अनित्यत्वे प्रसक्तेश्च जीवो जातो मृतः इत्यादिव्यपदेशः शरीरव्यपाश्रयः अत एव भाक्तः गौणः शरीरोत्पत्तिनाशकाल एवोत्पत्तिनाशव्यपदेशात् इत्यर्थः ।

तदेतन्नित्यमज्ञानं तज्जकालाद्यनाप्लुतेः । सर्वकालानुवर्त्येव लोके नित्यमितीर्यते ॥५८॥
नित्यस्यानुच्छित्तिरिति चोद्यस्यापि न संभवः । नित्याज्ञानसमुच्छित्तौ यतः प्रामाण्यमाश्रितम् ॥५९॥
प्रमान्तरैरविज्ञातं प्रमेयं वस्तु भण्यते । तत्तत्त्वमात्रगं [1]तत्स्थध्वान्तनुन्मानमुच्यते ॥६०॥
आगन्तु चेदिहाज्ञानमनिर्मोक्षः प्रसज्यते । पुरेवानागतं भूयो नैष्यतीत्यत्र का प्रमा ॥६१॥
कार्यकारणरूपेण द्वयोरव्यतिरेकतः । गुणप्रधानरूपेण कार्यकारणगीरियम् ॥६२॥
न कारणं विना कार्यं न कार्यं कारणं विना । अन्योन्यापेक्षतः सिद्धेर्विनाऽन्योन्यं न तद्द्वयम् ॥६३॥
भावनाज्ञानकर्मादि कार्योत्पत्तेः प्रयोजकम् । तद्भूतौ तदभिव्यक्तेस्तत्स्वापेऽव्याकृतात्मता ॥६४॥
स्वकर्तुरुपभोगार्थं कर्माव्याकृतरूपकम् । व्यक्तीभूतं प्रयुङ्क्ते क्ष्माबग्न्यन्तं साधनत्रयम् ॥६५॥

यदपेक्षं ब्रह्माव्याकृतशब्दं तन्मिथ्याज्ञानमन्यद्वा?आद्ये तद्विशिष्टस्य ब्रह्मणः कारणत्वं वदता कार्यस्य [2]तदिष्टं स्याद्द्वितीये तस्याप्रसिद्धेर्ब्रह्मणोऽपि न कारणतेत्याशङ्क्याऽऽह—तदेतदिति। अज्ञानजत्वात्कालादेस्तस्य तेनापरिच्छेदादिति हेतुमाह—तज्जेति। कालापरिच्छेदेऽपि कुतो नित्यत्वं तत्राऽऽह—सर्वेति। मिथ्याज्ञानादि-हेतोरनाद्यज्ञानस्य कार्यकल्प्यत्वात्तद्विशिष्टब्रह्मणो युक्ता कारणतेति समुदायार्थः ॥३५८॥

अनादि चेदज्ञानं नोच्छिद्येताऽऽत्मवदित्याशङ्क्य प्रागभावे व्यभिचारं मत्वाऽऽह—नित्यस्येति। [3]अभावेतरानादित्वं हेतुरित्याशङ्क्य सर्वमानवैफल्यप्रसङ्गपक्षबाधकतर्कहतेरप्रयोजकतेत्याह—नित्येति ॥३५९॥

अनाद्यज्ञानध्वंसित्वेन मानानां मानत्वे किं तन्मानमेयमित्याशङ्क्य व्यावहारिकमानमेयस्य व्यवहार-सिद्धत्वात्तत्त्वावेदकमानविषयमाह—प्रमान्तरैरिति। किं तर्हि मानमित्याशङ्क्य व्यावहारिकमानानां सिद्धत्वा-त्तत्त्वावेदकं मानमाह—तत्तत्त्वेति। मेयगताज्ञानमुपलक्षणं न विशेषणत्वेन मेयान्तर्भूतमिति मात्रपदम्। मानफलमुक्तं स्मारयति—तत्स्थेति ॥३६०॥

अनाद्यज्ञाननिवृत्तिर्मानफलमित्युक्त्वाऽनादित्वासिद्धौ दोषमाह—आगन्तु चेदिति। इहेत्यात्मोक्तिः। प्रसङ्गं प्रकटयति—पुरेति। यथा मुक्तेरर्वागविद्यमानमज्ञानं प्रादुर्भवति तथा तदूर्ध्वमपि तत्प्रादुर्भविष्यतीति शङ्काया निवारकाभावाद्गनावृत्तिलक्षणमोक्षासिद्धिरतोऽज्ञानस्यानादित्वाद्ब्रह्मणस्तद्विशिष्टस्य कारणत्वमेव जगतस्तु कार्यत्वमेवेति व्यवस्थेत्यर्थः ॥३६१॥

अथैवं व्यवस्थायामद्वैतासिद्धिर्भेदं विना व्यवस्थायोगात्तत्राऽऽह—कार्येति। ब्रह्मजगतोरुपादानोपादेय-त्वादभेदो मृद्घटवदित्यर्थः। एकत्र कार्यकारणत्वायोगात्तद्भेदो घटकुलालवदित्याशङ्क्याऽऽह—गुणेति। रज्जु-सर्पवदेकत्रैव स्वातन्त्र्यपारतन्त्र्यात्मना कार्यकारणव्यवहारः कल्पित इत्यर्थः ॥३६२॥

तर्हि कारणस्य स्वतन्त्रत्वाद्ब्रह्मवद्वस्तुत्वं नेत्याह—कारणमिति। तत्र हेतुमाह—अन्योन्येति। सापेक्षत्वफलमाह—विनेति। लोकदृष्ट्या कारणस्य स्वातन्त्र्यं घटाद्यभावेऽपि मृदादिस्थितिदृष्टेर्वस्तुवृत्त्या तदपि सापेक्षत्वात्कार्यवत्कल्पितमिति भावः ॥३६३॥

कारणस्य वस्तुतोऽस्वातन्त्र्ये हेत्वन्तरमाह—भावनेति। आदिशब्देन यत्नादिग्रहः तस्य प्रयोजकत्वे हेतुमाह—तद्भूताविति। भावनादिव्यक्तौ कार्योत्पत्तेरन्यथा चानुत्पत्तेस्तत्तदुत्पत्तिप्रयोजकमतस्तदपेक्षं कारणं न स्वतन्त्रमित्यर्थः ॥३६४॥

भावनादि किमर्थं जगज्जनयति तत्राऽऽह—स्वकर्तुरिति। तर्हि केन क्रमेण तत्तज्जनयतीत्याकाङ्क्षायां क्रमं दर्शयति—कर्मेति। कर्मग्रहो भावनादेरुपलक्षणम्। तद्व्यक्तीभावे हेतुर्वक्ष्यते ॥३६५॥

---

१. तत्स्थाज्ञाननिवर्तकमित्यर्थः।

२. तदिष्टं कारणत्वमिष्टम्। कालापरिच्छिन्नमज्ञानं तद्विशिष्टं ब्रह्म कारणमित्यर्थः।

३. अभावेतरेति—अज्ञानं नित्यं अभावेतरत्वे सत्यनादित्वात् इति चेन्न—तथा सति मानवैफल्यप्रसङ्गः प्रतिकूल-तर्कः पक्षबाधकः साध्यविशिष्टपक्षबाधक इत्यर्थः।

वाय्वाकाशौ समाश्रित्य पूर्वेषां साधनात्मता । त्रयाणामप्यतस्तानि वाय्वाकाशौ प्रयुञ्जते ॥६६॥
प्रयोजकप्रयोज्यत्वं कर्मसाधनयोर्भवेत् । स्वस्वामिभोगसिद्ध्यर्थमेवं व्याकृततेष्यते ॥६७॥
व्यक्तिर्नियतकालैव जगतोऽव्यक्तरूपिणः । अन्तर्यामिकृता चैषा नान्यः संभाव्यते प्रभोः ॥६८॥
वायोरिव प्रवृत्तिः स्यात्तथा चैवोपसंहृतिः । निर्निमित्तात्तथैवेशाज्जगज्जन्मस्थितिक्षयाः ॥६९॥
न प्रयोज्यो यदा भोगः स्वाम्यर्थः कर्मणस्तदा । हित्वा कर्माखिला व्यक्तीरविशेषात्मतां व्रजेत् ॥७०॥

अज्ञानोपहितस्यैव कारणता

अस्य द्वैतेन्द्रजालस्य यदुपादानकारणम् । अज्ञानं तदुपाश्रित्य ब्रह्म कारणमुच्यते ॥७१॥
अज्ञानमात्रोपाधित्वादविद्यामुषितात्मभिः । कौटस्थ्यान्निर्द्वयोऽप्यात्मा साक्षीत्यध्यस्यते जडैः ॥७२॥
ज्योतिषामपि तज्ज्योतिरसद्धीपरिमोषणात् । तमोरूपमिवाऽऽभाति भानुर्नक्तंदृशामिव ॥७३॥

यदि कर्मादि पृथिव्यादित्रयं जनयति तर्हि वाय्वाकाशयोरुत्पत्तौ किं प्रयोजकं तदाह—वाय्वाकाशाविति । पृथिव्यादीनामनन्तरोक्तानां त्रयाणां भोगोपायतया साधनशब्दितानां वाय्वादिद्वाराऽऽत्मलाभो भोगोपायत्वं चातस्तानि कर्मादीनि प्रागेव वाय्वाद्युत्पाद्य पृथिव्यादीन्युत्पादयन्तीत्यर्थः ॥३६६॥

कर्मादेः साधनशब्दितभूतपञ्चकस्य चोक्तं संबन्धं निगमयति—प्रयोजकेति । स्वकर्तुरुपभोगार्थमित्युक्तं सृष्टेरवान्तरं फलमुपसंहरति—स्वस्वामीति ॥३६७॥

कर्मादिना जगज्जन्म चेत्तस्य सदाभावात्सदा जगज्जायेत न हि सत्यां सामग्र्यां कार्यक्षेप इत्याशङ्क्याऽऽह—व्यक्तिरिति । जगच्छब्देन कर्मादि गृह्यते । किंकृता नियता व्यक्तिरित्याशङ्क्य यावत्कार्यगतं किंचिदित्यत्र सूचितं व्यनक्ति—अन्तर्यामीति । ईश्वरोऽपि किमिति कदाचिदेव व्यनक्ति न सदेत्यत आह—नान्य इति । न हि तस्यान्यो नियन्ताऽस्त्यनीश्वरत्वप्रसङ्गादित्यर्थः ॥३६८॥

जगद्व्यक्तिरीश्वरकृता चेत्तर्हि सशरीरत्वं लौकिकेश्वरवत्तस्य स्यादित्याशङ्क्याऽऽह—वायोरिति । निमित्तं शरीरं यथा वायोरशरीरात्प्रवृत्त्यादिकार्यं भवति हि लोकस्य बलवदनिलप्रेरितस्यावशस्यापि प्रवृत्त्यादि तथेश्वरादप्यशरीराज्जगज्जन्माद्यविरुद्धं न तस्य कार्यं कारणं चेत्यादिश्रुतेरित्यर्थः ॥३६९॥

स्रष्टुरीश्वरस्य देहाद्यनपेक्षत्ववत्कर्माद्यनपेक्षता किं न स्यादित्याशङ्क्याऽऽह—नेत्यादिना । कर्माद्यनपेक्षस्येश्वरस्य न जन्मादिहेतुता रागादिमत्त्वप्रसङ्गादतो यदा कर्मादिवशात्कर्त्रर्थो भोगो नाऽऽपाद्यते तदा तत्सर्वां व्यक्तिं त्यक्त्वा जगता सह कारणतामेति तदा च लयो न सृष्टिरित्यर्थः ॥३७०॥

कर्माद्यपेक्षस्यापि देहानपेक्षस्यैव स्रष्टुः कारणत्वे देहवदज्ञानमपि नापेक्ष्यमित्याशङ्क्याऽऽह—अस्येति । प्रतिपन्नस्य द्वैतस्येन्द्रजालवदविचारितरमणीयस्याभावेतरकार्यत्वेनोपादानापेक्षस्यानुरूपमुपादानमज्ञानमिति तदुपादाय ब्रह्म "तत्कारणमि"[1]ति श्रुतिस्मृत्यनुसारिभिरभ्युपेयं न हि कूटस्थासङ्गाद्वयं ब्रह्म जगदाकारेणाज्ञानमनादाय परिणामि भवति न च तस्याकारणत्वं श्रुतिस्मृतिवादेषु तत्कारणत्वोक्तेरित्यर्थः ॥३७१॥

कारणत्ववत्साक्षित्वमपि स्वाज्ञानकृतमित्युक्तमेव प्रसङ्गात्प्रकटयति—अज्ञानेति । आत्मा कूटस्थत्वात्सर्वप्रकारद्वैतसंगतिरहितोऽप्यविद्यातिरस्कृतात्मभिरविवेकिभिः साक्षीति कल्प्यते साक्षित्वस्याज्ञानमात्रकृतत्वादित्यर्थः । मात्रशब्देन बुद्ध्युपाधिकमातृत्वव्यावृत्तिः ॥३७२॥

साक्षिणः स्वप्रकाशत्वात्तस्य ब्रह्मत्वमप्यात्मत्वात्स्वप्रकाशमतो ब्रह्मानुभवः सदा स्यादित्याशङ्क्याऽऽह—ज्योतिषामिति । तद्देवा ज्योतिषां ज्योतिरित्यादिश्रुतेरादित्यादीनामपि प्रकाशकं ब्रह्म यद्यपि स्वप्रकाशं तथाऽप्यनधिकृतानामशुद्धबुद्धीनां बुद्ध्यशुद्धेरस्वप्रकाशमसदिव भात्युलूकानामिव सवितेत्यर्थः ॥३७३॥

१. "तत्कारणं सांख्ययोगाभिपन्नं" इति श्वे० उ० ।

**मोहतत्कार्यनीडं यत्कूटस्थाभासरूपकम् । ज्ञानं तदविनाभूतः परः साक्षीति भण्यते ॥७४॥**
**इदं तत्सर्ववेदेषु यथाभूतार्थवित्तये[1] । सदेवेत्यादिभिर्वाक्यैः कारणं ब्रह्म गीयते ॥७५॥**
**सर्वज्ञः सर्वशक्तिश्च सर्वात्मा सर्वगो ध्रुवः । जगज्जनिस्थितिध्वंसहेतुरेष सदेश्वरः ॥७६॥**
**यः पृथिव्यामितीशोऽसावन्तर्यामी जगद्गुरुः । हरिर्ब्रह्मा पिनाकीति बहुधैकोऽपि गीयते ॥७७॥**

ब्रह्मणः साक्षित्वं न युक्तमिति पूर्वपक्षः

**कूटस्थस्य न साक्षित्वं द्वितीयासंगतेर्भवेत् । नाशिनोऽपि न साक्षित्वं नाशेनाव्यतिरेकतः ॥७८॥**

परस्मादन्यस्यैव तर्हि साक्षिता मोहमाहात्म्यादन्यत्रापि तद्योगादित्याशङ्क्याऽऽह—मोहेति । अज्ञाने तत्कार्ये च स्थितं यच्चिदाभासात्मकं ज्ञानं तेन तादात्म्यं गतः परः साक्षीत्युच्यतेऽन्यस्य चेतनस्याभावादतो नाज्ञानमात्रात्साक्षित्वं किंत्वाभासेनापि भाव्यमित्यर्थः ॥३७४॥

परस्यैवाज्ञानात्साक्षित्वेऽपि कथं तस्यैव तद्वशात्कारणत्वं मानाभावादित्याशङ्क्याऽऽह—इदमिति । कार्यलिङ्गकं प्रत्यग्भूतं ब्रह्म विश्वस्य कारणं सर्ववेदेषु सदेव सोम्येदमित्यादिवाक्यैर्गीयत इति योजना । किमर्थं कारणत्वं ब्रह्मणो वाक्यैरुच्यते तदाह—यथेति । उपायः सोऽवतारायेतिन्यायादकार्यकारणप्रत्यगात्मसाक्षात्कारार्थमित्यर्थः ॥३७५॥

ननु प्रेक्षावत्प्रवृत्तेर्ज्ञानपूर्वकत्वाद्ब्रह्मणः सर्वकारणत्वे सर्वत्राप्रतिबद्धं ज्ञानं वाच्यं न च तदस्ति मानाभावात्तत्राऽऽह—सर्वज्ञ इति । यः सर्वज्ञः सर्वविदितिश्रुतेः शास्त्रयोनित्वाधिकरणन्यायाच्चेति[2] शेषः । दृक्शक्तिमतोऽपि पुरुषस्य प्रवृत्तिशक्तिहीनत्वं सांख्यैरुक्तमत आह—सर्वशक्तिरिति । पराऽस्य शक्तिरितिश्रुतेः । न च सर्वशक्तित्वेनैव सर्वज्ञत्वं प्रधाने सर्वशक्तिमत्यपि तदनिष्टेरयस्कान्ते प्रवृत्तिशक्तिमत्यपि दृक्शक्तेरदृष्टत्वाच्चेत्यर्थः । एवंविधमपीश्वरं तटस्थं वदन्ति केचित्तान्प्रत्याह—सर्वात्मेति । एतेन सर्वमूर्तसंयोगित्वं सर्वगतत्वं निरस्तमिति मत्वाऽऽह—सर्वग इति । सर्वत्राधिष्ठानत्वेन संनिहित इत्यर्थः । यद्वा मध्यमपरिमाणं पुरुषमाहुरार्हतास्तान्प्रत्युक्तम्—सर्वग इति । तस्य परिणामित्वमाश्रयन्ते स्वयूथ्यास्तान्प्रत्याह—ध्रुव इति । हैरण्यगर्भास्तु हिरण्यगर्भमुक्तलक्षणमाहुस्तन्न तस्य जगन्मध्यपातित्वश्रुतेरित्याशयेनाऽऽह—जगदिति । यद्वा मीमांसका यथोक्तमीश्वरं न मृष्यन्ति तन्न कार्यलिङ्गादनेकश्रुतिस्मृतिवादैश्च तत्सिद्धेरित्याह—जगदिति । सदाशब्दो विशेषणेषु प्रत्येकं संबध्यते ॥३७६॥

कथं श्रुत्यवष्टम्भेनेश्वरस्य कारणत्वं मूर्तित्रयस्येतिहासादौ सर्गस्थितिलयेषु यथायोगं कर्तृत्वश्रुतेरत आह—य: पृथिव्यामिति । प्रकृतो हीश्वरः स्वरूपेणैकोऽपि मूर्तित्रयात्मना बहुधोच्यते पृथिव्यादौ तस्यैवान्तर्यामित्वेन स्थितिश्रुतेर्न च तद्विरोधे पुराणादिप्रामाण्यं सापेक्षत्वेन दौर्बल्यादिति भावः । स पूर्वेषां गुरुरितिन्यायेनान्तर्यामीत्यस्य व्याख्या जगद्गुरुरिति ॥३७७॥

परस्यैव तत्तद्रूपेण स्थितस्य सर्वकारणत्वेऽपि कुतस्तस्य साक्षित्वं स हि मातुरन्योऽनन्यो वेति विकल्प्याऽऽद्ये पूर्ववादी दोषमाह—कूटस्थस्येति । परिणामिनो मातुरन्यस्य कूटस्थत्वात्तस्य विकारविरहिणः साक्ष्यासंबन्धान्न साक्षिता युक्तेत्यर्थः । मातुरपि परिणामित्वान्नाशादिमतो न साक्षित्वं साक्ष्यकोटिनिवेशादिति द्वितीयं दूषयति । नाशिनोऽपीति । परिणामित्वेऽपि हेमादिवदनाशादिसंभवे कथं मातुर्नाशादिमत्त्वं तदाह—नाशेनेति । परिणामस्य नाशादिना व्याप्तेरुदाहरणस्य चासंप्रतिपत्तेरित्यर्थः ॥३७८॥

---

१. यथाभूतार्थः शुद्धं ब्रह्म तज्ज्ञानायेत्यर्थः ।

२. शास्त्रयोनित्वन्यायः यः यद्ग्रन्थकर्ता स तत्प्रतिपाद्यार्थाधिकज्ञानवान् यथा पाणिनिः इति व्यासैः वेदप्रतिपाद्यार्थाधिकार्थज्ञानं परस्मिन् वेदकर्तरि सिध्यति । अधिकं कियदिति परिच्छेदे कारणाभावात् सर्वज्ञमित्यर्थः ।

तत्र सिद्धान्तः

अज्ञानमात्रहेतौ तु सर्वमेतत्समञ्जसम् । कर्तृत्वाद्यन्यथाज्ञानहेतुत्वादात्मरूपिणः ।।७९।।
प्रत्यग्रूपस्य स्थास्नुत्वाज्ज्ञातुर्मोहेन चान्वयात् । कूटस्थस्यापि साक्षित्वमागमापायिनं प्रति ।।८०।।
आत्मात्मवस्त्वसंबन्ध आत्मात्माज्ञानयोर्मतः । परोऽविवेको भूतानामात्माविद्येति कथ्यते ।।८१।।
ईशादिविषयान्तं यत्तदविद्याविजृम्भितम् । मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।।
इति वेदशिरःसूक्तिस्तथा चोद्घुष्यते स्फुटा ।।८२।।
दैवी ह्येषा गुणमयी मम मायेति च स्मृतिः । वैष्णवी खल्वियं मायेत्यपि लोकेऽपि गीयते ।।८३।।

तन्नामरूपाभ्यामित्यादिना मिथ्याज्ञाननिरूपणम् ।

मानान्तरानधिगतं मेयं तावन्निरूपितम् । स्वानुभूत्यनुसारेण प्रत्यङ्मात्रसतत्त्वकम् ।।८४।।
एतन्निदानमधुना मिथ्याज्ञानं निरूप्यते । यतो बिभ्यति भूतानि संसारानर्थलक्षणात् ।।८५।।

आविद्ये जगति तद्वशात्परस्य साक्षित्वकारणत्वान्तर्यामित्वाद्युपपन्नमिति सिद्धान्तयति—अज्ञानेति । जगति परिणामिकारणं नाविद्यातिरिक्तमस्तीति वक्तुं मात्रपदम् । पूर्वपक्षनिवृत्त्यर्थस्तुशब्दः । परस्य साक्षित्वादावपि न कर्तृत्वादि युक्तं निष्क्रियत्वश्रुतेरित्याशङ्क्याऽऽह—कर्तृत्वादीति । ज्ञातुर्ज्ञानपरिणामिनश्चित्तस्याऽऽत्मन्यध्यासादनात्मनोऽध्यात्मरूपमापन्नस्य कर्तृत्वादि तच्च प्रतीचः कल्प्यते परिणाम्यैक्याध्यासस्यान्यथाज्ञानस्य हेतोः सत्त्वादित्यर्थः । कूटस्थस्याऽऽविद्यं साक्षित्वाद्युक्तं निगमयति—स्थास्नुत्वादिति । कूटस्थस्य स्थास्नुत्वात्स्वतः सर्वविक्रियाहीनत्वान्मोहसंबन्धद्वारा जडवर्गं प्रति साक्षित्वादिकमित्यर्थः । स्वतस्तदयोगमपिना सूचयति ।।३७९-३८०।।

कस्तर्हि संबन्धो मोहकूटस्थयोरित्याध्यासिकतादात्म्यमित्याह—आत्मेति । अविद्याया विद्याभावानतिरिक्तायाः साक्षित्वादौ कथं साधकत्वमित्याशङ्क्याज्ञानस्वरूपमाह—पर इति । कारणत्वं परशब्दार्थः । भवनयोग्यसर्वपदार्थानां हेतुर्विवेकनिवर्त्या प्रत्यगविद्या सा चाऽऽत्मन्येवेत्यर्थः ।।३८१।।

कथमवधारणमीश्वरादेरपि तत्संभवादित्याशङ्क्याऽऽह—ईशादीति । एतेन पारमार्थिकत्वमैश्वर्यस्य पराकृतं तत्र श्रुतिं प्रमाणयति—मायां त्विति । ननु दर्शिता श्रुतिरीश्वराधीना मायाख्या जगत्प्रकृतिरित्येतावन्मात्रं ब्रूते न पुनरीश्वरस्य शब्दादिवदविद्याविलसितत्वं तत्राऽऽह—तथा चेति । ईश्वरस्योक्ताविद्याविजृम्भितत्वानुरोधेन मायिनामिति स्फुटा श्रुतिरुच्यमाना तस्य मायाविशिष्टतां वदन्ती शुद्धतां वारयत्यतोऽशुद्धजगन्निवेशी सन्नसौ कल्पितः स्यादित्यर्थः ।।३८२।।

तत्रैव स्मृतिमाह—दैवी हीति । मायाया दुरत्ययत्वं प्रत्यात्मप्रसिद्धमिति हिशब्दार्थः । तत्र च मम मायेति वदता भगवता मायामीश्वरस्य दर्शयता तद्विशिष्टस्य तस्य कल्पितत्वं सूचितम् । अघटमानं विश्वं पश्यन्तो वदन्ति लौकिका एषा भगवन्मायैवेत्यतो लोकप्रसिद्धिरप्यत्र मानमेवेत्याह—वैष्णवीति । एकोऽपिरवधारणेऽपरः समुच्चये । लौकिका हि वैष्णवीति मायां विष्णुना विशिंषन्तो विष्णोरीश्वरस्य मायावैशिष्ट्यमाचक्षाणास्तस्य कल्पितत्वं मन्यन्ते स्वरूपेणाकल्पितत्वेऽपि संसृष्टाकारेण कल्पितत्वमीश्वरस्य जीववदभ्युपेयमिति भावः ।।३८३।।

प्रमाणप्रवृत्तेः प्राक्प्रतिपन्नस्यैवाज्ञातत्वस्य तत्प्रवृत्तिप्रयोजकत्वात्तत्साधकस्य च स्वप्रकाशानुभवादन्यस्याभावात्तस्य च स्वाध्यस्तसाधकत्वात्तादृगनुभवस्यैवाज्ञातत्वं मेयत्वं वस्तुता चेति साधितम् । इदानीं वृत्तं कीर्तयति—मानान्तरेति । प्रत्यङ्मात्रं वस्त्वज्ञाज्ञातं च न चाज्ञमतत्वादि मानगम्यं तन्निवर्त्यत्वात्स्वरूपानुभवानुसारात्तत्सिद्धिस्तच्च प्रत्यग्वस्त्वपूर्वत्वाद्वेदान्तमेयमित्येतत्तद्धेत्यादौ निर्धारितमित्यर्थः ।।३८४।।

तन्नामरूपाभ्यामित्यादिवाक्यस्य कार्यकारणभेदेनेत्यत्रोक्तमेव तात्पर्यमक्षरार्थोक्त्यर्थं विवृणोति—एतदिति । कर्मव्युत्पत्त्या ज्ञानशब्दो विषयमपि विषयीकरोत्येतदज्ञानं वस्तु निदानं यस्य तन्मिथ्याभूतं ज्ञानं ज्ञेयं च तदित्यादिना निरूप्यत इति योजना । कारणनिरूपणानन्तरं कार्यनिरूपणेति संगतिं सूचयति—अधुनेति ।

**यदेव नित्यमज्ञानं मिथ्याज्ञानं तदेव तु । कारणेतररूपेण तयोरव्यभिचारतः ॥८६॥**

सृष्टेः निर्निमित्तत्वकथनम्

**हेत्वन्तरानपेक्षं सत्तदव्याकृतरूपकम् । व्यक्ततां स्वयमेवैति निमित्तं नास्त्यसंहृतम् ॥८७॥**
**सुषुप्तादुत्थितो राज्ञः स्वयमेव यथा तथा । जग्धाशेषजगन्मूर्तेरव्यक्ताद्व्याकृतिर्मुहुः ॥८८॥**
**अनिश्चिता यथा रज्जुरिति न्यायोपबृंहितम् । स्फुटार्थं गौडपादीयं वचोऽर्थेऽत्रैव गीयते ॥८९॥**

तद्धेदमित्यादिवाक्यस्य विवरणम्

**तदिदं नामरूपाभ्यामनामकमरूपकम् । एवं व्याक्रियताज्ञानहेतुमात्रव्यपाश्रयात् ॥९०॥**
**अभिधानाकृतिर्नामशब्देनेहाभिधीयते । अभिधेयाकृतिस्तद्वद्रूपमित्युपदिश्यते ॥९१॥**
**एवं द्वाभ्यां प्रकाराभ्यामीशो व्याकृतजन्मनाम् । व्यवहाराय पर्याप्तो न त्वव्यक्तात्मना यतः ॥९२॥**

ननु संसाराख्यमहाव्याधेः किं मूलमिति चिन्त्यत इत्युपक्रम्य तच्चिन्तां कृत्वा संसारे निरूप्ये मिथ्याज्ञाननिरूपणं प्रक्रमाननुगुणमिति नेत्याह—यत इति । तन्मिथ्याज्ञानमिति संबन्धः । अज्ञातात्मविवर्तो जगदिति निरूपयितुमुत्तरं वाक्यमित्यर्थः ॥३८५॥

अज्ञानं कारणं मिथ्याज्ञानं कार्यमित्यत्र फलितमाह—यदिति । नित्यमित्यनादित्वमुच्यते । तत्र हेतुमाह—कारणेति । मिथ्याज्ञानस्याज्ञानेनान्वयव्यतिरेकवत्त्वात्तयोः कार्यकारणभावात्कार्यस्य चोपादानाद्भेदायोगादज्ञानात्मनो बन्धस्य सम्यग्ज्ञाननिरस्यत्वसिद्धिरित्यर्थः ॥३८६॥

अज्ञातं वस्तु बन्धहेतुश्चेत्तर्हि दोषादिना सहकारिणा भाव्यमज्ञातशुक्त्यादे रजतादिहेतुत्वे काचादिसहकारिदृष्टेरित्याशङ्क्याऽऽह—हेत्वन्तरेति । स्वव्यतिरिक्तहेतुनिरपेक्षं स्वयमेवाव्याकृतं सर्गकाले कार्यत्वमापद्यते दृष्टान्तवदत्रातिरिक्तहेत्वयोगादित्यर्थः । कर्मादेर्निमित्तस्योक्तत्वात्कुतो हेत्वन्तरानपेक्षतेत्याशङ्क्य लोकदृष्ट्या तथोक्तं वस्तुतस्तु कर्मादेरपि संहृतत्वान्नाव्याकृतातिरेकेण निमित्ततेत्याह—निमित्तमिति । अविद्याकर्मसंस्कारा इत्यत्र चोक्तं न प्रस्मर्तव्यमिति भावः ॥३८७॥

अज्ञातप्रत्यग्धातोर्बाह्यनिमित्तानपेक्षस्य स्रष्टृत्वे दृष्टान्तमाह—सुषुप्तादिति । यद्यपि सुषुप्तो राजा स्तुतिगीतादि निमित्तं प्रतिलभ्य प्रतिबुध्यते तथाऽपि कदाचिदन्तरेण बाह्यं हेतुं स्वयमेव प्रतिबुध्यमानो दृश्यते । तथा च दृष्टान्तसिद्धिः । मुहुरिति व्याकृतेरभ्यासं दर्शयन्ननादित्वं संसारस्य सूचयति ॥३८८॥

प्रत्यगज्ञानविवर्तो जगदित्यत्र संप्रदायविदां वाक्यं प्रमाणयति—अनिश्चितेति । अन्धकारे विकल्पिता ।
सर्पधारादिभिर्भावैस्तद्वदात्मा विकल्पितः" इति पादत्रयम् । न चैतदमानमुपकरणन्यायवत्त्वादित्याह—न्यायेति । सत्त्वासत्त्वादिनाऽऽत्मनो दुर्निरूपत्वं न्यायः । असंदिग्धाबाधितार्थत्वाच्चैतन्मानमित्याह—स्फुटेति । विशिष्टपुरुषदृष्टत्वाच्चेत्याह—गौडेति । अज्ञातात्मविकारो जगदित्युक्तोऽर्थः सप्तम्योरर्थः ॥३८९॥

तदित्यादिवाक्यस्य तात्पर्यमुक्त्वा तदक्षराणि व्याकरोति—तदिदमिति । प्रकृतमज्ञातं वस्तु नामरूपाभ्यां व्याक्रियतेत्ययुक्तं प्रागेव तयोः सिद्धेरित्याशङ्क्याऽऽह—अनामकमिति । अशब्दमित्यादिश्रुतेरिति शेषः । व्याकरणस्यानुभवानुसारितामाह—एवमिति । तत्र प्रधानं कारणमाह—अज्ञानेति । प्रत्यगज्ञानेतरस्वतन्त्रहेतुनिरासार्थं मात्रपदम् ॥३९०॥

समुदायार्थमुक्त्वाऽवयवार्थं विवक्षुर्नामप्रातिपदिकार्थमाह—अभिधानेति । अस्मिन्वाक्ये नामप्रातिपदिकार्थो नामसामान्यमिति यावत् । रूपप्रातिपदिकार्थमाह—अभिधेयेति । यथा वाचकसामान्यं नामशब्दार्थस्तथा रूपशब्दार्थो वाच्यसामान्यमिति यावत् ॥३९१॥

उक्तप्रातिपदिकार्थद्वयानुवादेन विभक्त्यर्थमित्थंभावं कथयति—एवमिति । किमर्थमिदं व्याकरणमित्याशङ्क्य व्यवहारार्थमित्याह—ईश इति । व्याकृतजन्मना विना स्वरूपेणापि तस्य व्यवहारयोग्यत्वमाशङ्क्याऽऽह—न त्विति । ईश्वरो हि नाव्यक्तात्मना व्यवहाराय पर्याप्तो लयाभावप्रसङ्गादतो व्याकृतिरर्थवतीत्यर्थः ॥३९२॥

नाम्नः सामान्यमात्रस्य त्वसाविति समीरणम् । विशेषनाम्ना संयोज्य देवदत्तादिनोच्यते ॥९३॥
तद्वद्रूपस्य सामान्यं रूपमित्युपदिश्यते । तदुपात्तविशेषं सच्छुक्लकृष्णादिनोच्यते ॥९४॥
एवेत्यवधृतावेतदात्मवृत्तव्यपेक्षया । आत्माविद्यासमुत्थाभ्यामेव व्याक्रियते परः ॥९५॥
न तु विध्वस्तनिःशेषप्रत्यगज्ञानतद्भव— । सामान्यभेदैकात्म्याख्यतदनन्यप्रमात्मना ॥९६॥
आदावव्याकृतं तत्त्वं नामरूपक्रियात्मना । स्वयं तद्व्याकृतिमगाद्यथैतर्हि तथैव तत् ॥९७॥
नामरूपाभ्यामेवेति न समुच्चयनिश्चितौ । समस्तव्यस्तरूपाभ्यां लोकेऽपि व्याकृतिर्यतः ॥९८॥
जातितो बधिरस्येह व्यक्तिः स्याद्रूपमात्रजा । जात्यन्धादेश्च नाम्नैव तथा चोभयथाऽप्यसौ ॥९९॥
अज्ञातात्मैकहेतूनां मिथोपेक्षात्मनां श्रुतौ । नेयत्तास्तीह तत्त्वानामानन्त्यान्न क्रमस्तथा ॥४००॥
प्रक्रियानियमो नापि पुंव्युत्पत्तिप्रधानतः । प्रतिश्रुतिविगीतिश्च प्रक्रियाणां समीक्ष्यते ॥ १ ॥

### सृष्टिक्रमादिषु विप्रतिपत्तेः फलकथनम्

यया यया भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि । सा सैव प्रक्रियेह स्यात्साध्वी सा चानवस्थिता ॥ २ ॥

असौनामाऽयमित्यत्रासावित्यस्यार्थमाह—नाम्न इति । देवदत्तो यज्ञदत्त इति वेत्यादिभाष्यं विभजते—विशेषेति। नामसामान्यं देवदत्तादिना विशेषनाम्ना संयोज्य सामान्यविशेषवानर्थः प्रकृतभाष्येणोच्यत इत्यर्थः ॥३९३॥

इदंरूप इत्यत्रेदंशब्दार्थमाह—तद्वदिति । यथाऽसौ नामेत्यत्रासाविति नामसामान्यमुक्तं तथाऽत्रापि यद्रूपमिति रूपसामान्यं तदिदमित्युच्यत इति योजना । इदं शुक्लमित्यादिभाष्यं व्याचष्टे—तदिति । रूपसामान्यं विशेषनिष्ठं शुक्लकृष्णादिना संयोज्य सामान्यविशेषात्मकरूपमुच्यते भाष्येणेत्यर्थः ॥३९४॥

मा भूद्व्याकृतधीरित्यत्रोक्तमेवकारार्थमक्षरव्याख्यावसरे प्रपञ्चयति—एवेति । किमपेक्ष्यावधारणं तदाह—आत्मेति । अवधारणमेव स्फोरयति—आत्माविद्येति ॥३९५॥

आत्मवृत्तव्यपेक्षयेत्युक्तं व्यनक्ति—न त्विति । तस्माद्भवो येषां ते येतद्भवाः सामान्यं च भेदाश्च सामान्यभेदास्तद्भवाश्च ते सामान्यभेदाश्च निःशेषं प्रत्यगज्ञानं निःशेषाश्च तज्जाः सामान्यविशेषा विध्वस्ता यस्मिस्तदैकात्म्यं श्रुतिषु प्रसिद्धं तेन तादृशेनानन्या प्रमा नित्यानुभवरूपा तद्रूपेण परो न व्याक्रियत इति योजना ॥३९६॥

तदिदमपीत्यादेरर्थमाह—आदाविति । वर्तमाने काले सुषुप्तावव्याकृतं तत्त्वं जागरादौ व्याक्रियमाणं दृष्टमतः सर्गादावपि पूर्वमव्याकृतस्य व्याकरणं दृष्टानुसारात्कल्प्यमित्यर्थः ॥३९७॥

नामरूपाभ्यां समुच्चिताभ्यामेव व्याकरणं न त्वेकैकेनेत्येतदर्थमवधारणमिति केचित्तान्प्रत्याह—नामरूपाभ्यामिति । अपिशब्दस्तृतीयया सम्बध्यते ॥३९८॥

व्यस्तेन रूपमात्रेण व्याकरणमुदाहरति—जातित इति । इहेति प्रकृतलोकोक्तिः । नाममात्रेण व्याकरणं दर्शयति—जात्यन्धेति । आदिपदेन नैमित्तिकान्धोक्तिः । समुच्चयमाह—तथेति । उभयथेति नाम्ना रूपेण चेत्यर्थः । असाविति व्यक्तिरुक्ता तत्र चोदाहरणमस्मदादयः ॥३९९॥

समस्ताभ्यां व्यस्ताभ्यां च नामरूपाभ्यां व्याकरणेऽपि व्याक्रियमाणसंख्याक्रमौ वाच्यावित्याशङ्क्याऽऽह—अज्ञातेति । सृज्यमानानां हेतुद्वारकं कल्पितत्वमुक्त्वा स्वरूपतोऽपि तदाह—मिथ इति । तेषां तत्त्वानामानन्त्यादिह श्रुतौ नेयत्ताऽस्त्यत्यत एव न क्रमश्चेति योजना ॥४००॥

किंच सर्वत्र सृष्टिप्रकरणे सृष्टेरविवक्षितत्वान्न सृज्यमानसंख्याद्यन्वेष्यमित्याह—प्रक्रियेति । किमर्थं तर्हि सृष्टिसंकीर्तनं तदाह—पुंव्युत्पत्तीति । पुंसो व्युत्पत्तिर्ज्ञानं तत्परत्वात्सृष्ट्यादिश्रुतेस्तादर्थ्येन तद्विधानमित्यर्थः । सृष्टेरविवक्षितत्वे हेत्वन्तरमाह—प्रतिश्रुतीति । क्वचिदाकाशादिका सृष्टिः क्वचिदग्न्यादिका क्वचिदक्रमैवेति विप्रतिपत्तिः ॥४०१॥

एवं सृष्टिविप्रतिपत्तौ कीदृशी सृष्टिरेष्टव्येत्याशङ्क्याऽऽह—ययेति । इहेति श्रौतमार्गोक्तिः । साध्वीति फलवत्त्वकथनम् । व्यवस्थिता तर्हि सेत्याशङ्क्याधिकारिबुद्धितारतम्यान्नैवमित्याह—सा चेति ॥४०२॥

उद्भूतिस्थितिहानीनां न क्वचित्संभवो यथा । मुख्यां वृत्तिं समाश्रित्य तथोदर्केऽपि वक्ष्यते ॥ ३ ॥
न जायते जन्यते वा नापि हन्ति न हन्यते । तमःसंवृतदृष्टीनां षड्विकारादिवीक्षणम् ॥ ४ ॥

यदर्थः[1] सर्वशास्त्रारम्भ इत्यादिभाष्यार्थवर्णनम्

यदर्थं सर्वशास्त्राणां प्रवृत्तिरतिविस्तरा । आत्मज्ञानावतारार्थः सर्वशास्त्रसमुद्यमः ॥ ५ ॥
विरोधः सर्वशास्त्राणां स्वाभिधेयव्यपेक्षया । निवृत्त्यर्थेऽविरोधित्वादत एतत्समीरितम् ॥ ६ ॥
स्वत एव यतः पुंसां प्रवृत्तिः स्वार्थसिद्धये । तत्रानुवादि शास्त्रं स्यान्निवृत्तावेव तन्मितिः ॥ ७ ॥
अपि वात्स्यामनादीनां शास्त्राणामुक्तहेतुतः । प्रामाण्यमविरुद्धं स्यादैकात्म्यज्ञानजन्मने ॥ ८ ॥

वात्स्यायनतन्त्रस्यापि निवृत्तिपरता

प्रवर्तमानः पुरुषः शास्त्रोद्दीपितवर्त्मना । प्रवृत्तिविषयं दुष्टं दृष्ट्वाऽतो विनिवर्तते ॥ ९ ॥

सृष्टयादेरवस्तुत्वे वक्ष्यमाणामपि युक्तिं स्मारयति—उद्भूतीति । क्वचिदिति समस्तवस्तूक्तिः । मुख्यां वास्तवीमिति यावत् । अस्मिन्नेवार्थे पूर्वोक्तन्यायमपिना समुच्चिनोति ॥४०३॥

सर्गादेरवस्तुत्वे फलितमाह—नेत्यादिना । कर्तृकर्मणी जन्मविनाशयोर्न चेदुपपद्येते जन्मादिधीस्तर्हि कथमिति तत्राऽऽह—तम इति । आदिपदेनानात्मवर्गः सर्वो गृह्यते ॥४०४॥

तद्धेत्यत्र मूलकारणमुक्त्वा तदित्यादिना तत्कार्यमुक्तमिति व्याख्यातम् । इदानीं प्रवेशवाक्यस्थसशब्दापेक्षितमाचक्षाणो भाष्यकारो यदर्थं सर्वशास्त्रारम्भ इति यदाह तदवतारयति—यदर्थमिति । श्रौतेन सशब्देन यच्छब्दः संबध्यते । वैदिकावैदिकदर्शनसंग्रहार्थः सर्वशब्दः । प्रवृत्तिरारम्भस्तस्याश्चातिविस्तरत्वमाक्षेपसमाधानाभ्यामुपपादनं तस्यार्थमाह—आत्मेति ॥४०५॥

सर्वशास्त्रारम्भस्याऽऽत्मज्ञानोदयार्थत्वे मिथोविरोधः शास्त्राणां न स्यादित्याशङ्क्याऽऽह—विरोध इति । वैशेषिकनैयायिकादिशास्त्राणां यद्यपि स्वशब्दशक्तिदृष्टषट्पदार्थषोडशपदार्थाद्यपेक्षया विरोधधीस्तथाऽपि रागादिध्वस्तिद्वारा तत्त्वधीसंज्ञेऽर्थे विना विरोधं तात्पर्याद्युक्तं प्रत्यग्याथात्म्यज्ञानार्थत्वं तस्मादेतद्भाष्यं युक्तमित्यर्थः ॥४०६॥

शास्त्रान्तराणामन्यार्थत्वेन प्रस्थितानां कुतो निवृत्तिद्वारा तत्त्वज्ञानार्थतेत्याशङ्क्य स्वर्गादिबोधित्वेन तदुपायबोधित्वेन वा तेषां प्रवृत्तिरिति विकल्प्याऽऽद्ये दोषमाह—स्वत इति । बुद्धिपूर्वकारिणां स्वर्गादिसिद्धये शास्त्रापेक्षामन्तरेण प्रवृत्तिरिच्छारूपा यतोऽधिगताऽतस्तत्रैव बोधकत्वेन प्रवृत्तिशास्त्रमनुवादकमप्रमाणकं स्यादिति स्वर्गादावतात्पर्यान्न तत्र शास्त्रप्रवृत्तिरित्यर्थः । द्वितीयं प्रत्याह—निवृत्ताविति । स्वर्गादेः पुमर्थाभासत्वात्तद्धेतुत्वबोधने शास्त्रस्यापर्यवसानाद्रागादिनिवृत्तिद्वारा सर्वसंसाररहिते प्रतीच्येव तन्मानतेत्यर्थः ॥४०७॥

किंच साक्षादेव सर्वशास्त्राणां प्रामाण्यं प्रतीच्येवैष्टव्यमित्याह—अपीति । यदि तेषां प्रामाण्यं तर्हि प्रत्यग्ज्ञानजन्मार्थत्वेनैव तदविरुद्धं तस्यैवाज्ञातत्वोक्त्या तादृग्विषयाभावे प्रामाण्याभासस्योक्तत्वात् । यद्यप्रामाण्यमेव तेषां तदोपेक्ष्यत्वान्न तत्समन्वयनिरूपणेत्यर्थः ॥४०८॥

वात्स्यायनादिशास्त्रेभ्यः शब्दशक्त्या दृश्यमानस्त्रीभोगादिषु प्रसक्तस्य ततो निवृत्तिहेत्वभावात्कथं प्रतीचि पर्यवसानं तेषामित्याशङ्क्याऽऽह—प्रवर्तमान इति । वात्स्यायनादिशास्त्रप्रकाशितमार्गेण स्त्रीभोगादौ प्रवर्तमानस्तद्विषयं दुःखभेदसंभेदादिना दुःखमवलोक्य प्रवृत्तिविषयादतः स्त्रीभोगादेर्निवृत्तो विरक्तः सन्नात्मज्ञानेऽवतरेदिति योजना । कामशास्त्रे नन्दकेश्वरादिभिरनेकधा कृते कामो धर्माविरुद्धोऽवान्तरफलम् । यथाऽऽह—

"किं स्यात्परत्रेत्याशङ्का[2] कार्ये यस्मिन्न जायते । न चार्थघ्नं सुखं चेति शिष्टास्तस्मिन्व्यवस्थिताः ॥
त्रिवर्गसाधकं यत्स्याद्द्वयोर्वैकस्य साधकम् । कार्यं तदपि कुर्वीत न चैकार्थं द्विबाधकम्" इति ॥

---

१. ११६–३

२. किं स्यादिति—यस्मिन् कार्ये परत्र किं स्यात्, न च सुखमर्थघ्नं तत्र शिष्टाव्यवस्थिताः पूर्वः पूर्वः धर्मः तदनन्तरमर्थः ततः कामः ।

अनित्यदुःखशून्यत्वं पदार्थानां ब्रुवन्स्फुटम् । बुद्धोऽपि रागाद्युच्छित्तौ यतते नाऽऽत्मनिह्नुतौ ।।१०।।
त्याग एव हि सर्वेषां मोक्षसाधनमुत्तमम् । त्यजतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक्परं पदम् ।।११।।

प्रकृतभाष्यस्य व्याख्यान्तरम्

एकवाक्यत्वतो यद्वा ऐकात्म्यज्ञानजन्मने । वेदशास्त्रस्य कृत्स्नस्य तथा पूर्वमवादिषम् ।।१२।।
प्रमाणानि च शास्त्राणि तत्प्रामाण्यं न चान्यतः । अज्ञातात्मावबोधित्वात्तथा पूर्वमवादिषम् ।।१३।।
यस्मिंश्चाविद्ययाऽध्यासः संसारानर्थलक्षणः । स्वाभाविक्या कृतो मिथ्या शुक्त्यादौ रजतादिवत् ।।१४।।

न कामस्तत्र परमफलम् । उक्तं हि—तेषां समवाये पूर्वः पूर्वो गरीयानिति ।
"धर्ममर्थं च कामं च प्रत्ययं लोकमेव च । पश्यन्नेतस्य तत्त्वज्ञो न च रागात्प्रवर्तते" ।। इति च
तत्तु वैराग्यद्वारा प्राप्ततत्त्वज्ञानस्य कैवल्यम् । यथाऽऽह—
"एवमर्थं च कामं च धर्मं चाप्याचरन्नरः । इहामुत्र च निःशल्यमत्यन्तं सुखमश्नुते" ।। इति
"तदेतत्कुशलो विद्वान्धर्मार्थाववलोकयन् । नातिरागात्मकः कामी प्रयुञ्जानः प्रसिध्यति" ।। इति च

न च साधारणसांप्रयोगिककन्यासंप्रयुक्तकभार्याधिकारिकपारदारिकवैशिकौपनिषदिकाद्यधिकरणेष्वर्थान्तरप्रतिपादनान्न यथोक्तार्थतेति वाच्यं तत्रार्थान्तरोपदेशस्य वैराग्यार्थत्वात् । यथाऽऽह—
"अधिकारवशादुक्ता ये चात्राऽऽचारवर्जिताः । तदनन्तरमत्रैव ते प्रयत्नान्निवारिताः" ।। इति
तदेवं शास्त्रान्तराण्यपि कामशास्त्रवत्परमसुखे ब्रह्मणि पर्यवस्यन्तीति भावः ।।४०९।।

वैशेषिकादिशास्त्राणामज्ञातात्मज्ञानार्थत्वेऽपि कथं वैनाशिकशास्त्रस्य तदर्थता तस्य नैरात्म्यपरत्वात् "नैरात्म्यमार्गमधिगम्य भवन्ति मुक्तास्तस्मादसावतिशयेन विचार्यतेऽत्र" इत्युक्तत्वादित्याशङ्क्याऽऽह—अनित्येति । स्फुटमित्यस्योभयतः संबन्धः । पदार्थानामनित्यत्वाद्युक्त्या तद्वैराग्यद्वारा प्रत्यग्ज्ञाने वैनाशिकदर्शनं पर्यवसितम् । यथाऽऽह—सर्वज्ञवचनार्थो नाम क्षणिकनैरात्म्यादिचातुरार्थ्यसत्यतत्त्वपरिज्ञानेन सकलसंसारदुःखनिवृत्त्याख्यः परमपुरुषार्थ इति । अतो न तद्दर्शनं नैरात्म्यसाधकं तत्प्रतिपादकाभावेन तदसिद्धेरित्यर्थः ।।४१०।।

सर्वेषामपि शास्त्राणां रागादिध्वस्तिद्वारा सम्यग्धीफले मुक्तौ स्थितिरित्येतदेव साधयितुं रागादित्यागो ज्ञानहेतुरित्यत्र मनमाह—त्याग इति । सर्वेषां रागादीनामिति यावत् । संबन्धग्रन्थे व्याख्यातमेतत् ।।४११।।

यथोक्तन्यायेन सर्वशास्त्राणामात्मज्ञानार्थत्वे मुमुक्षूणां क्षपणकादिपक्षेष्वपि यदृच्छया प्रवृत्तिः स्यात्तथाचाविचार्य यत्किंचित्प्रपद्यमानो निःश्रेयसात्प्रतिहन्येतानर्थं चर्च्छेदिति भाष्यासंगतिरित्याशङ्क्य प्रकृतभाष्यस्यार्थान्तरमाह—एकेति । कल्पान्तरप्रकटीकरणव्यग्रतया संधिर्न कृतः । सर्वस्य वेदरूपशास्त्रस्यैकवाक्यत्वादैक्यज्ञानजन्मार्थमारम्भ इत्यर्थः । कथमेकवाक्यत्वं तदाह—तथेति ।।४१२।।

किंच प्रमाणस्याज्ञातज्ञापकत्वात्प्रतीचोऽन्यस्याज्ञातत्वाभावाद्वेदाख्यशास्त्राणां च प्रमाणत्वात्तत्रैव तत्प्रामाण्यमित्याह—प्रमाणानीति । कथमज्ञातज्ञापकत्वं प्रामाण्यं कथं वा प्रतीचोऽन्यस्याज्ञातत्वराहित्यं तदाह—तथेति ।।४१३।।

पूर्वभाष्यावष्टम्भेन सर्वशास्त्राणां ब्रह्मात्मनि समन्वये साधिते विरोधसमाध्यर्थं यस्मिन्नित्यादिभाष्यं तस्य तात्पर्यमाह—यस्मिश्चेति । अध्यासस्य चतुर्विधख्यातीनामन्यतमत्वं वारयति—अविद्ययेति । अर्थाध्यासं संगृह्णाति—संसारेति । तस्य हेयत्वद्योतनार्थमनर्थपदम् । न चाऽऽपातिकमस्यानर्थत्वं किंतु निरूपणायां स्फुरतीति वक्तुं लक्षणविशेषणम् । अविद्याया मिथ्याज्ञानत्वेन सादित्वादनाद्यध्यासहेतुत्वासिद्धिर्न च मिथ्याज्ञानस्यैव तद्धेतुत्वमेकत्र तदभावादित्याशङ्क्याऽऽह—स्वाभाविक्येति । अविद्याया विद्याप्रागभावत्वादनादित्वेऽपि नाध्यासोपादानतेत्याशङ्क्याऽऽह—मिथ्येति । उभयविधाध्यासस्याभावेतरत्वात्तदुपादानाज्ञानस्यापि नाभावत्वमुपादानान्तराभावादिति भावः । आत्मन्यनात्माध्यासे दृष्टान्तः शुक्त्यादाविति ।।४१४।।

आत्मनि अनात्माध्यासासंभवः समाधिश्च

ननु सामान्यविज्ञानविशेषाज्ञानसंश्रयात् । जातरूप्यस्मृतेर्लोके मिथ्याज्ञानं प्रसिध्यति ।।१५।।
यत्राध्यासो यदध्यस्तं भेदसिद्धौ तयोर्मृषा । ज्ञानं जगति संसिद्धं सा चैकात्म्येऽतिदुर्लभा ।।१६।।
समस्तव्यस्तमैकात्म्यं येषां चापास्तभेदकम् । चोद्यमेतत्समानं स्यादुभयोरपि पक्षयोः ।।१७।।
न नः परिहृतेनार्थश्चोद्येनानेन कश्चन । प्रत्यङ्मोहैकहेतुत्वात्सर्वानर्थमृषामतेः ।।१८।।
अज्ञानमेव बाध्यं नो मानस्येह यतस्ततः । तच्चोद्यपरिहारोऽत्रः क्रियते नाफलत्वतः ।।१९।।
मिथ्याज्ञानातिरेकेण नान्यदज्ञानमिष्यते । येषां तान्प्रति चोद्यं स्यान्न त्वज्ञातात्मवादिनाम् ।।२०।।

अज्ञानस्य अध्यासहेतुत्वे आक्षेपः

नन्वज्ञानमवस्तुत्वात्कथं संसारकारणम् । मिथ्याज्ञानस्य वस्तुत्वात्तदेवास्त्विह कारणम् ।।२१।।
तथाच युक्तिमद्यत्नान्महद्भिरपि भाषितम् । अप्रामाण्यं पुनस्त्रेधेत्यत एतत्सुसंस्थितम् ।।२२।।

वैषम्यं शङ्कते—नन्विति । दृष्टान्ते कारणत्रयमस्ति दार्ष्टान्तिके तन्न दृष्टमात्मनो निःसामान्यविशेषत्वादनात्मनश्च साक्षिप्रत्यक्षत्वेन स्मृत्ययोगादित्यर्थः ।।४१५।।

किंच भेदाग्रहोऽध्यासव्यापकस्तदभावान्नाऽऽत्मन्यनात्माध्यास इत्याह—यत्रेति । अधिष्ठानारोप्ययोर्भेदे सति तदग्रहाद्भ्रान्तिर्दृष्टा । ऐकात्म्ये भेदसिद्धेर्दौर्लभ्यात्तदग्रहव्यापकाभावाद्व्याप्याध्यासासिद्धिरित्यर्थः ।।४१६।।

भेदाभेदवादे भेदाग्रहान्मिथ्याज्ञानोपपत्तिरित्याशङ्क्याऽऽह—समस्तेति । न हि भेदाभेदवादे सत्यपि भेदे तदग्रहसंभवो वस्तुग्रहे तन्मात्रस्याभेदवद्भेदस्यापि ग्रहप्रसङ्गात्, न च तौ वस्तुधर्मौ धर्मधर्मिभावस्य दुर्भणत्वात् तस्मादत्यन्ताभेदवादे भेदाभेदवादे च व्यापकाभावस्य तुल्यत्वाद्भ्रान्त्यनुपपत्तिश्चोद्यसाम्यमित्यर्थः ।।४१७।।

मायावादे कारणत्रयाभावान्न भ्रान्तिरिति चोद्यस्यानवकाशत्वान्न तेन तत्परिहार्यमिति सिद्धान्तयति—न न इति । कथं त्वत्पक्षे चोद्यस्यानवकाशत्वं तदाह—प्रत्यगिति । या हि सर्वानर्थरूपा मिथ्याबुद्धिस्तस्यास्तदधिष्ठाननिष्ठसाक्षिचैतन्याज्ञानस्यैव निरपेक्षकारणत्वान्न कारणत्रयाभावकृतचोद्यमस्मन्मतेऽवतरतीत्यर्थः ।।४१८।।

किंच भ्रमो माननिरस्यो न वा ? न चेद्बाधधीविरोधः । माननिरस्यश्चेत्तत्राऽऽह—अज्ञानमिति । इहेति मानभूमिरुक्ता । ततो माननिरस्यत्वाद्भ्रमस्याज्ञानत्वात्क्लृप्तकारणराहित्यात्तद्विषयचोद्यस्यानवकाशत्वात्तत्परिहारो न क्रियतेऽप्राप्तपरिहारस्याप्रयोजनत्वादित्याह—तदिति । अतःशब्दोऽप्राप्तपरामर्शी ।।४१९।।

कैस्तर्हीदं चोद्यं परिहर्तव्यं तदाह—मिथ्येति । येषां मिथ्याज्ञानातिरेकेणानाद्यनिर्वाच्यमज्ञानं नास्ति तान्प्रति कारणत्रयाभावे कुतोऽध्यास इति चोद्यावकाशात्तैस्तत्परिहार्यमित्यर्थः । अस्मत्पक्षे चोद्यस्यानवकाशादपरिहार्यतेति निगमयति—न त्विति । अज्ञातात्मविवर्तो जगदिति वदतामस्माकं मते यथोक्तचोद्यस्य निरवकाशत्वान्नैव परिहर्तव्यतेत्यर्थः ४२०।।

अज्ञानजत्वादध्यासस्य क्लृप्तकारणाभावे चोद्यस्यानवकाशादपरिहार्यत्वमुक्तमिदानीमज्ञानं नाध्यासहेतुरवस्तुत्वान्नभोनलिनवदिति शङ्कते—नन्विति । किं तर्हि संसारकारणं न हि कारणमन्तरेण कार्यं युक्तं तदाह—मिथ्याज्ञानस्येति । इहेति प्रकृतसंसारग्रहणम् ।।४२१।।

अज्ञानादन्यत् मिथ्याज्ञानं वस्तुभूतमसिद्धं यत्कारणमित्याशङ्क्याऽऽह—तथेति । अज्ञानं न कारणमवस्तुत्वान्मिथ्याज्ञानं तु वस्तुत्वात्कारणमित्येतदनुसारेणास्माभिरिव भट्टपादैरुक्तं न च तदमानं लोकसिद्धविभागविषयत्वेन युक्तिमत्त्वान्न चायमनास्थावादस्तात्पर्येणोक्तत्वान्न च महतां वचोऽप्रमाणं मन्वादिवचःस्वपि तत्प्रसङ्गादिति भावः । तदेव चोदनासूत्रस्थमाप्तवाक्यम्—

"अप्रामाण्यं त्रिधा भिन्नं मिथ्यात्वाज्ञानसंशयैः । वस्तुत्वाद्द्विविधस्यात्र संभवो दुष्टकारणात् ।।
अविज्ञाने तु दोषाणां व्यापारो नैव विद्यते । कारणाभावतस्त्वेवं तत्सिद्धं नस्त्वदुक्तिवत्[1] ।।" इति

१. त्वदुक्तिवत् = त्वन्मते यथा ।

### सिद्धान्तिनो विकल्पाः

**किं भोः सदपि मानेन वस्तु साक्षान्निरस्यते । तस्मिन्निरस्ते किं शेषं यस्मिन्मानस्य मानता ।।२३।।**

**व्यञ्जकत्वात्प्रमाणानां मेयाभिव्यक्तितोऽपरम् । कार्यान्तरं न संभाव्यं नितरां वस्त्वपाक्रिया ।।२४।।**

**मिथ्याज्ञानं कथं वस्तु न हि मिथ्येति वस्तु सत् । मिथ्या तद्वस्तु चेत्युक्तिर्महतामेव शोभते ।।२५।।**

**स्वतोऽपि यदि सा वस्तु रज्ज्वां सर्पादिका मतिः । रज्ज्वात्मना तथाऽपीयमवस्त्वेवात्र बाध्यते ।।२६।।**

### अज्ञानसाधनम्

**मिथ्याज्ञानस्य कार्यत्वात्किं तत्कारणमुच्यताम् । अकारणं सत्कार्यं चेड्डिम्भकैरपि हस्यते ।।२७।।**

**रागादिकारणं चेत्स्यात्कार्यं सत्कारणं कथम् । अवस्त्वपि च वस्त्वेव वस्तुरूपात्तदन्यतः ।।२८।।**

एवंरूपं संक्षिपति—अप्रामाण्यमिति । अज्ञानं मिथ्याधीः संशयधीरिति त्रिधा भिन्नमप्रमाणरूपमित्यज्ञानादिभेदे दर्शिते फलितमाह—अत इति । अज्ञानस्य ज्ञानानुत्पादकत्वान्न संसारहेतुता स्वापादावदृष्टत्वाद् इतरयोस्तु युक्तं तद्धेतुत्वं तयोरनर्थहेतुताया रज्जुसर्पभ्रान्त्यादौ दृष्टत्वादतो मिथ्याधीः संसारहेतुर्नाज्ञानमित्येतत्सिद्धं पूर्वं च मिथ्याज्ञानमुत्तरस्य हेतुरित्यर्थः ।।४२२।।

मिथ्याज्ञानादि माननिरस्यं न वेति सिद्धान्ती विकल्पयति—किमिति । आद्यमनुवदति—सदपीति । प्रत्यक्षादिसिद्धं सदपि वस्तु मानेन निरस्यते चेत्तेन सर्वस्यैव निरासप्रसङ्गान्निरस्ते सर्वस्मिन्नवशिष्टाभावान्निर्विषयस्य मानतैव न स्यादित्याह—तस्मिन्निति ।।४२३।।

मानस्य वस्त्वनिवर्तकत्वे हेत्वन्तरमाह—व्यञ्जकत्वादिति । अपरं निकृष्टमुत्कृष्टं वेत्यर्थः । न त्वपरशब्दोऽन्यविषयोऽन्तरशब्देन पुनरुक्तेरिति द्रष्टव्यम् । मिथ्याज्ञानादेर्मानानिवर्त्यत्वे तद्वैफल्यमग्रहनिवृत्तिमात्रस्याकिंचित्करत्वादिति द्वितीयो बहिरेव निरस्यः । मेयाभिव्यक्तिव्यतिरिक्तकार्याभावे मानस्य वस्तुनिरासित्वं दूरनिरस्तमित्याह—नितरामिति । न संभाव्येति संबन्धः ।।४२४।।

मिथ्याज्ञानस्य वस्तुत्वमुपेत्योक्तं तदेवासिद्धमित्याह—मिथ्येति । मिथ्या चेन्न वस्तु वस्तु चेन्न मिथ्येत्यत्र हेतुमाह—न हीति । यद्वस्तुसदिष्टं न तन्मिथ्यात्वं गच्छति यत्तु मिथ्या न तद्वस्तु सद्भवति तयोर्मिथो विरोधादित्यर्थः । ननु मिथ्याज्ञानस्य वस्तुत्वं वस्तुत्वात् द्विविधस्यात्र संभवो दुष्टकारणादित्युक्तं तत्राऽऽह—मिथ्येति । न हि व्याहतव्याहरणं महतामुद्भावयितुमुचितमिति भावः ।।४२५।।

रज्जुसर्पज्ञानादेः स्वरूपतो वस्तुत्वान्माननिवर्त्यत्वाच्च वस्तुतोऽपि तन्निरस्यतेत्याशङ्क्याऽऽह—स्वतोऽपीति । यद्यपि सर्पादिमतिः सर्पादिश्च रज्ज्वां दृश्यमानः स्वतो वस्तु तथाऽपि रज्ज्वात्मना सर्पादिस्तन्मतिश्चावस्त्वेवात्र रज्जौ बाधदृष्टेर्न च तदुभयमन्यत्राबाधादस्ति तत्राप्राप्तेरतो न वस्तु बाध्यमित्यर्थः ।।४२६।।

किंच मिथ्याज्ञानं कार्यमकार्यं वा ? आद्ये तद्धेतुत्वेनानाद्यज्ञानसिद्धिरिति मत्वाऽऽह—मिथ्येति । कार्यत्वेऽपि तस्य न त्वदिष्टमज्ञानं कारणमित्याशङ्क्य तर्हि तदनपेक्षं तत्सापेक्षं वेति विकल्पयति—किं तदिति । आद्यं दूषयति—अकारणमिति । डिम्भकैर्बालकैरिति यावत् । किमुत प्रामाणिकैरितिकैमुतिकन्यायार्थोऽपिशब्दः ।।४२७।।

द्वितीयमाश्रित्य शङ्कते—रागादीति । तदपि कार्यमकार्यं वेति विकल्प्याऽऽद्यं प्रत्याह—कार्यमिति । तस्य मूलकारणत्वासिद्धिरित्यर्थः । न चाकार्यं तत्प्रामाणिकं न च कारणदोषस्य निमित्तत्वेऽपि समवायित्वं, अद्रव्यत्वादनभ्युपगमाच्चातो मिथ्याज्ञानस्य कार्यत्वे तद्धेतुत्वेनानाद्यज्ञानसिद्धेः अकार्यत्वे तस्यैव तद्भावाद्भ्रमोपादानमनाद्यज्ञानं दुर्वारमिति भावः । यत्त्ववस्तुत्वात्तस्य न कारणतेति तत्राऽऽह—अवस्त्विति । तद्धि तुच्छत्वं वा वस्तुनोऽन्यत्वं वा वस्तुत्वानधिकरणत्वं वा ? नाऽऽद्योऽसिद्धेर्यदपि वस्तुरूपात्तस्याज्ञानस्यान्यत्वात्तदवस्तूपपद्यते तथाऽपि वस्त्वेवापरोक्षतया तुच्छव्यावृत्तेः द्वितीये वस्त्वन्तरे व्यभिचारः । तृतीये त्वसिद्धिर्वस्तुत्वानधिकरणत्वस्य तुच्छत्वानतिरेकात् । तस्यचाऽसिद्धेरुक्तेः । न चैवमाद्यतृतीययोः पुनरुक्तिः ब्रह्मणो वस्तुत्वानधिकरणस्यैवातुच्छत्वात् । परं प्रति च तदनतिरेकवचनान्न च तं प्रत्येव पौनरुक्त्यं संभावनोपनीतपक्षपराकरणाविरोधात् । न च ब्रह्मान्यत्वमेवाज्ञानस्यावस्तुत्वं तस्मिन्ननिर्वाच्ये तदसिद्धेरिति भावः ।।४२८।।

उपात्तमेयरूपत्वं मानानां सत्यतोच्यते । तद्बलेनैव मेयस्थं घ्नन्ति मोहादि नान्यतः ॥२९॥
तद्विपर्ययतो मिथ्या सर्वं मोहादि भण्यते । वस्त्वसाधारणं रूपं मोहादेर्न प्रमीयते ॥३०॥
न च वस्तुसतत्त्वं तद्बाधात्तस्य प्रमाणतः । मेयप्रबोधनं मुक्त्वा न मितेः सत्यताऽन्यतः ॥३१॥
कारकाणां हि सत्यत्वं स्वकार्यापेक्षयेष्यते । इतोऽन्यथा तत्सत्यत्वं निष्फलं न च लभ्यते ॥३२॥

मोहादेर्मिथ्यात्वे प्रमाणान्तरम्

यद्वस्तु स्वात्मनैवास्ति तत्परार्थं न बोधवत् । पारार्थ्येनैव सद्यच्च तत्परस्माद्धि रुङ्न सत् ॥३३॥
सर्वमन्यानपेक्षं सदीक्ष्यमाणं स्वमात्रया । स्वात्मरूपात्पृथग्रूपं न वस्तूत्प्रेक्ष्यतेऽण्वपि ॥३४॥
आत्मनैव स्वभावेन वस्त्वात्मानं बिभर्ति हि । नाऽऽत्मनो विद्यतेऽपेक्षा वस्तुनोऽन्यसमाश्रया ॥३५॥
तस्मादविद्यासंभूतं नानात्वं प्रत्यगात्मनि । ब्रह्मास्मीति हि तद्ध्वंसान्न क्वचिद्भेदधीर्यतः ॥३६॥

अथाज्ञानादि सत्यं तुच्छव्यावृत्तत्वादात्मवदित्यनुमीयते तत्र मानवन्मेयवद्वा सत्यतेति विकल्प्याऽऽद्यं दूषयितुं मानसत्यतारूपमाह—उपात्तेति । विषयीकृतमेयाकारभजनमेव न मानसत्यता किंतु मेयगताज्ञानादिनिवर्तनमपीत्याशङ्क्याऽऽह—तद्बलेनेति । स्वातन्त्र्येण मानानामलब्धात्मनां मेयस्थमोहाद्यध्वंसित्वान्मेयमनुरुध्यैव तद्ध्वंसित्वात्तदाकारभजनमेव सत्यतेत्यर्थः ॥४२९॥

मोहादेरपि तथाविधसत्यतामाशङ्क्याऽऽह—तद्विपर्ययत इति । मानविपर्ययमेव मोहादौ साधयति—वस्त्विति । न हि मोहादिना मानादिवद्वस्तुनोऽसाधारणरूपं मीयते तस्यामानत्वादतो मानवन्न तस्य सत्यतेत्यर्थः ॥४३०॥

मेयवन्मोहादेः सत्यतेति पक्षं प्रत्याह—न चेति । तन्मोहादि वस्तुवत्सतत्त्वं सत्यं न चेति योजना । अबाध्यत्वं हि तस्य सत्यत्वं तन्न मोहादावस्ति माननिरस्यत्वादित्याह—बाधादिति । मानस्य मेयबोधनं विना स्वरूपेण सत्यत्ववन्मोहादेरपि स्यादित्याशङ्क्य दृष्टान्तं दूषयति—मेयेति ॥४३१॥

मेयवन्मानवद्वा सत्यत्वाभावेऽपि कारकवदज्ञानादेः सत्यत्वमित्याशङ्क्य तदर्थक्रियाकारित्वं वा परमार्थत्वं वेति विकल्प्याऽऽद्यमङ्गीकरोति—कारकाणामिति । तथाविधं सत्यत्वमज्ञानादेरपीष्टमिति शेषः । दृष्टान्तदार्ष्टान्तिकयोरुक्तसत्यतायामुभयसंप्रतिपत्त्यर्थो हिशब्दः । द्वितीयं प्रत्याह—इतोऽन्यथेति ॥४३२॥

प्रयोजनप्रमाणयोरभावात्परमार्थसत्यत्वं मोहादेर्नेत्युक्त्वा तत्रैव हेत्वन्तरं वक्तुं भूमिकां करोति—यदिति । स्वेनैव रूपेण विद्यमानं यद्वस्तु तन्न परतन्त्रं यथा चिदात्मेत्यर्थः । तथाऽपि मोहादौ किमायातं तदाह—पारार्थ्येनेति । यन्मोहादि परतन्त्रत्वेनैवास्ति तत्परस्मात्पृथङ्न वर्तते यथा रज्जुसर्पादि । तथा च विमतं मिथ्या जडत्वात्संमतवदित्यनुमातुं शक्यमित्यर्थः ॥४३३॥

मोहादिद्वैतस्य कल्पितत्वे हेत्वन्तरमाह—सर्वमिति । घटः सन्पटः सन्घटः स्फुरति पटः स्फुरतीत्यादिना स्वरूपतावन्मात्रतया नित्यसद्रूपतया संविदा दृश्यमानं सर्वं घटादि स्वप्रकाशस्फुरणात्मकं सदेव संपद्यते तद्घटादि संविन्मात्रे कल्पितमित्यर्थः । तस्य सदनुभवात्पृथक्त्वं पृथगुपलब्धेरित्याशङ्क्याऽऽह—स्वात्मेति । स्वात्मनः सतो रूपाच्चितोऽन्यदल्पमपि न वस्तु सदस्त्यन्यस्य नभोनलिनकल्पत्वाच्चितोऽन्यच्च नेक्ष्यते जडत्वात्स्वतोऽदृष्टेश्चिता संबन्धस्य दुर्वचनत्वादतः सच्चिदात्मनि कल्पितं जगच्चकास्तीत्यर्थः ॥४३४॥

आत्मनोऽपि वस्तुत्वादितरवत्कल्पितत्वान्न तत्कल्पनाधिष्ठानतेत्याशङ्क्याऽऽह—आत्मनेति । स्वभावेनेत्यकल्पिताकारेणेत्यर्थः । आत्मनः स्वमहिमप्रतिष्ठत्वं श्रौतमिति हिशब्दार्थः । सोऽपि वस्तुत्वादनात्मवदपेक्षतेऽधिष्ठानमित्याशङ्क्याह—नेति । न हि स्वमहिमप्रतिष्ठोऽन्यापेक्षो युक्तो न च वस्तुत्वमात्मानात्मसाधारणमनात्मवस्तुताग्राहिमानाभावादात्मनि तस्य स्वरूपत्वादित्यर्थः ॥४३५॥

आत्मनोऽकल्पितत्वेनाधिष्ठानत्वसंभवे फलितमाह—तस्मादिति । अन्वयव्यतिरेकाभ्यामाविद्यमात्मनि द्वैतमित्यर्थः । बाध्यत्वाच्च तस्य कल्पितत्वमित्याह—ब्रह्मेति । इतिशब्देनैक्यज्ञानोक्तिः । तस्याज्ञाननिवर्तकत्व-

तत्त्वज्ञानेन मिथ्याज्ञानस्य बाधः

मित्युत्पत्तावनुत्पत्तिर्विरोधाद्बाध्यते यतः । तद्बाधे नाप्यपेक्षाऽस्ति मिथ्याधीबाधनं प्रति ॥३७॥
मिथ्याधियोऽपि बाध्यत्वमज्ञानैकसमन्वयात् । मूलध्वस्तौ हतं तच्चेन्मिथ्याधीः किं करोति नः ॥३८॥
मेयरूपानुरोधित्वं मिथ्यासंशययोर्यदि । सम्यग्ज्ञानात्तयोर्भेदो गम्यतां केन हेतुना ॥३९॥
अज्ञानं संशयत्वान्नो मिथ्याज्ञानात्तथैव च । तयोस्तत्त्वविवक्षायामज्ञानं तत्त्वमुच्यते ॥४०॥
अज्ञात एव यद्यत्र ज्ञाते तस्मिन्न तद्भवेत् । सर्वत्रासिद्धिरूपत्वान्मिथ्याज्ञानमिदं मतम् ॥४१॥
मिथ्याज्ञानस्य वस्तुत्वं येनैव स्यात्सदात्मना । अज्ञानस्यापि तेनैव सत्यत्वं केन वार्यते ॥४२॥
रज्जुसर्पो यथा रज्ज्वा सात्मकः प्राग्विवेकतः । अवस्तु सन्नपि ह्येष इति पूज्यैरपीरितम् ॥४३॥
स्वतस्तु सत्यता साक्षान्नोभयोरपि विद्यते । अविचारितसिद्धित्वान्न स्वतः परतोऽपि ते ॥४४॥

प्रसिद्ध्यर्थो हिशब्दः । ब्रह्मात्मैक्यज्ञानात्तदज्ञानध्वस्तौ तत्कार्यभेदतद्धियोर्ध्वंसाद्भेदस्तद्धीर्वा न क्वचिदपि स्तामतोऽद्वयं प्रत्यङ्मात्रं शिष्टमित्यर्थः ॥४३६॥

तत्त्वज्ञानादज्ञानबाधेऽपि मिथ्याज्ञानस्य न बाधस्तस्याज्ञानत्वानङ्गीकारादतो भेदज्ञानमबाध्यमित्याशङ्क्याह—मितीति । तत्त्वज्ञानोत्पत्तौ तदनुत्पत्तिरूपमज्ञानं बाध्यते तयोर्विरोधादतस्तस्याज्ञानस्य बाधे सति मिथ्याज्ञानबाधं प्रति पृथगपेक्षा नैवास्तीत्यर्थः ॥४३७॥

मिथ्याधियो बाधो नापेक्षितश्चेदबाधितैव सा स्यादित्याशङ्क्याऽऽह—मिथ्येति । अज्ञाने बाधिते मिथ्याज्ञानमप्ययत्नतो बाध्यते तत्कार्यत्वात्तत्तादात्म्यादित्यर्थः । ज्ञानादज्ञानध्वस्तौ मिथ्याधियोऽपि ध्वस्ति वदता तस्या वस्तुत्वं निरस्तम् । अथ संसारहेतुत्वं निरस्यति—मूलेति । मिथ्याज्ञानं तदित्युच्यते । न तावत्सा सती संसारहेतुस्तदा तन्मूलाज्ञानस्यैव तद्धेतुत्वसंभवाच्छिगमनभाष्ये च कर्तृभोक्तृत्वप्रवर्तक इत्यध्यासस्य मूलाज्ञानद्वारैव तद्धेतुत्वमुक्तं तदभावे तस्यैवाभावान्नाप्यसती तद्धेतुरसत्त्वादेवार्थक्रियाकारित्वाभावादिति भावः ॥४३८॥

किंच यस्य मिथ्याज्ञानादेः संसारहेतुत्वं स यथार्थोऽयथार्थो वा ? नाऽऽद्य इत्याह—मेयेति । तयोर्यथार्थत्वे सम्यग्धीसंकरः स्यादित्यर्थः ॥४३९॥

न द्वितीय इत्याह—अज्ञानमिति । मिथ्यासंशयधियोरयथार्थत्वं चेदज्ञानत्वमेव स्यात् । तथा हि—"अस्मिन्विषयेऽस्माकं संशयस्य सत्त्वादज्ञानमस्ति, तथैव विषयान्तरे मिथ्याज्ञानस्य सत्त्वादज्ञानं वर्तते" एवं लोकव्यवहारात्तयोरज्ञानमेव तत्त्वं निश्चितम् । अतस्तत्स्वरूपविवक्षायामज्ञानमेव तद्विवेकिभिरुच्यते । तथाच तयोः संसारहेतुत्वेऽप्यज्ञानस्यैव तद्धेतुतेत्यर्थः ॥४४०॥

तयोरज्ञानत्वे हेत्वन्तरमाह—अज्ञात इति । यस्मिन्नज्ञाते सत्येव यन्मिथ्याज्ञानादि जायते तस्मिन्ज्ञाते तन्न स्यात्तस्मादज्ञाते वस्तुनि मिथ्याज्ञानादेर्भावाज्ज्ञाते चाभावात्तदज्ञानशरीरमतोऽन्वयव्यतिरेकविरोधान्नेदमज्ञानादर्थान्तरं प्रकारान्तरेण सर्वत्रासत्त्वादित्यर्थः ॥४४१॥

किंच तस्याधिष्ठानरूपेण स्वरूपेण वा वस्तुतेति विकल्प्याऽऽद्ये तद्रूपेण तत्त्वमज्ञानस्यापि तुल्यमित्याह—मिथ्याज्ञानस्येति ॥४४२॥

अज्ञानादेः सर्वस्य प्रत्यग्रूपेण वस्तुत्वे भाष्यकारोक्तिं प्रमाणयति—रज्जुसर्प इति । कूटस्थेनाऽऽत्मना तथेति चतुर्थपादः । एष इति द्वैतप्रपञ्चोक्तिः । प्राग्विवेकत इत्युभयत्र संबध्यते ॥४४३॥

मिथ्याज्ञानादेरज्ञानदशायामधिष्ठानात्मना वस्तुत्वमुपेत्य स्वरूपेण वस्तुत्वपक्षं प्रत्याह—स्वत इति । उभयोर्मिथ्याधीसंशययोरिति यावत् । अज्ञानमपिना समुच्चितम् । तुशब्दोऽवधारणार्थः क्रियापदानन्तरनिवेशी । साक्षान्मानवशादिति यावत् । अज्ञानादेः स्वरूपेण वस्तुता न प्रामाणिकीत्यत्र हेतुमाह—अविचारितेति । तदेव

१. अनुत्पत्तिशब्देन अनाद्यज्ञानं विवक्षितं न तु ज्ञानप्रागभावमात्रं तन्निवृत्तेः मिथ्याज्ञानबाधप्रयोजकत्वाभावात्—(न्या०) ।
२. तदनुत्पत्तिः मिथ्याज्ञानानुत्पत्तिः ।

तदेवानुप्रविश्येति तत्त्वं यत्पारमार्थिकम् । सच्च त्यच्चादिकां भित्तिं[1] मोहात्प्रापदिति श्रुतिः ॥४५॥

सामान्यादित्रयस्य भ्रमहेतुत्वनिरासः

न चापि त्रयसद्भावे मिथ्याज्ञानं जगत्यपि । मोहमात्रप्रयुक्तत्वाच्च सामान्यात्स्मृतेश्च तत् ॥४६॥
सामान्यान्तरनिर्मुक्तं[2] तथाऽसाधारणैरपि । असामान्यत्वमेवैति शौक्ल्यमन्यानपेक्षतः ॥४७॥
न चेदं स्मरणाज्जातं नापि सामान्यहेतुजम् । शुक्लस्य गृह्यमाणत्वात्पुरोदेशावलम्बिनः ॥४८॥
एवं प्रत्यक्ष एतस्मिञ्छुक्तिकोदरवर्तिनि । तद्विरुद्धमभूज्ज्ञानं रजताभमबोधजम् ॥४९॥

परमते भ्रान्त्यसंभवनिरूपणम्

अप्रत्यक्षं[3] मतं येषां ज्ञानं तान्प्रति भण्यते । इदं रजतमित्येतज्ज्ञानं शुक्तौ कुतोऽन्वभूत् ॥५०॥

कथं तदाह—नेति । अज्ञानसहिते संशयमिथ्याज्ञाने द्वितीयया निर्दिश्येते । न हि तत्प्रत्यग्रूपेण सिध्यति विरोधादैक्यायोगान्नापि भेदेन तस्य धर्मत्वेन स्वरूपत्वेन च दुर्वचत्वान्न च तत्स्वतः स्फुरति जडत्वान्नापि परतोऽसम्बन्धादतस्तदविचारितसत्तास्फूर्तिकमित्यर्थः ॥४४४॥

अज्ञानादि प्रतीचो भिन्नं तस्य स्वरूपेण वस्तुत्वादन्यस्य तदभावात्तत्कथमविचारितसिद्धित्वमित्याशङ्क्याऽऽह—तदेवेति । "तत्सृष्ट्वा तदेवानुप्राविशत्तदनुप्रविश्य सच्च त्यच्चाभवदि"त्याद्या श्रुतिर्यत्पारमार्थिकं तत्त्वं तदेव सच्च त्यच्चेत्यादिकां भित्तिमज्ञानात्प्रापयदित्याहेति योजना । तथा च परस्यैव तेन तेनाऽऽत्मनाऽवस्थानात्पृथक्प्रथनमविचारितरमणीयमिति भावः ॥४४५॥

अनाद्यज्ञानस्य संसारहेतुत्वं साधितम् । यत्तु सामान्यज्ञानाद्विशेषाज्ञानात्तदारोप्यस्मृतेश्च लोके मिथ्याज्ञानमिति तत्राऽऽह—न चेति । लोके सर्वत्रापि मिथ्याज्ञानं त्रयसद्भावे सिध्यतीति नैव प्रतिज्ञातुं शक्यमिति योजना । संसारभ्रमस्याज्ञानजत्ववद्रजतादिभ्रमस्यापि तन्मात्रजत्वसंभवादित्याह—मोहेति । उक्तदृष्टान्तद्योती पूर्वोऽपिशब्दः । चकारस्त्ववधारणे व्याख्यातः । सामान्यग्रहादारोप्यस्मृतेश्च मिथ्याधीर्दृष्टा तत्कथमज्ञानमात्रजत्वं तत्राऽऽह—नेति । मिथ्याज्ञानं तच्छब्दार्थः ॥४४६॥

गृह्यमाणसामान्यस्य भ्रान्तिहेतुत्वाभावं साधयति—सामान्यान्तरेति । अस्यार्थः । पुरोवर्ति शुक्लं द्रव्यं शुक्तित्वाद्यपेक्षया सामान्यान्तरैः सत्त्वजडत्वादिभिः रजतभ्रान्तिहेतुत्वेन गृह्यमाणैर्निर्मुक्तं, यथेष्टं पुरोवर्तिनां ज्ञातानामपि तेषां चाकचक्यादीनां धर्माणां भ्रमाहेतुत्वात्तथा शुक्तित्वादिभिरसाधारणैरपि तन्निर्मुक्तं तेषामपि भ्रमहेतुत्वेनाग्रहात् । तच्च पुरोवर्ति शुक्लं द्रव्यं गृह्यमाणं स्वयमेव सामान्यभावमेति तस्यान्यापेक्षाभावेन असामान्यत्वात्, न च सादृश्यधीर्भ्रान्तिहेतुः पीतशङ्खादिभ्रान्तिषु व्यभिचारात् । क्वचिदारोप्यरूप्यादिसंस्कारोद्बोधने सादृश्यस्योपयुक्तत्वेऽपि तदुद्बोधनस्य दृष्टयादिकृतत्वे सादृश्योपयोगानवगमादिति ॥४४७॥

आरोप्यस्मृतेर्भ्रमाहेतुत्वमनुवादपूर्वकं साधयति—न चेति । यथा सामान्याद्गृह्यमाणाद्धेतोर्न भ्रान्तिजन्मेत्युक्तं तथा नाऽऽरोप्यस्मरणादपि तज्जातमिति योजना । तत्र हेतुमाह—शुक्लस्येति । पुरोवर्तिशुक्लद्रव्यस्य रूप्यारोपेणापरोक्षतया गृह्यमाणत्वादिति हेत्वर्थः ॥४४८॥

इदंग्रहस्य रूप्यस्मृतेश्च भ्रमाहेतुत्वे फलितमाह—एवमिति । साधारणग्रहणादेर्भ्रान्त्यहेतुत्वे सति शुक्त्यवच्छिन्ने प्रत्यक्षचैतन्ये साक्षिण्यवस्थिताज्ञानजं रजताकारं ज्ञानमेष्टव्यं तच्च ज्ञानविरुद्धत्वेन तन्निरस्यत्वात्तदज्ञानजं युक्तमित्यर्थः ॥४४९॥

स्वपक्षे भ्रान्तिमुक्त्वा परपक्षे तदसंभवमभिधातुं पृच्छति—अप्रत्यक्षमिति । येषां भ्रान्तिज्ञानं स्वानुभवसिद्धानाद्यज्ञानाजन्यमिष्टं तान्प्रति चोद्यते शुक्ताविदं रजतमिति ज्ञानं सामान्याद्वा रजताद्वा द्वाभ्यां वा कुतो जातमिति वाच्यमिति योजना ॥४५०॥

१. भित्तिः = भेदः ।
२. निर्मुक्तं प्रतीयत इत्यर्थः ।
३. अप्रत्यक्षं = प्रत्यक्षं अज्ञानं कारणं न विद्यते यस्य तत् अप्रत्यक्षं ( न्या० ) ।

**विशिष्टाकृतिदेशेहाकालधर्मं प्रतीयते । शुक्तिकाज्ञानतो नर्ते वस्त्वीदृक्साध्यतेऽन्यतः ॥५१॥**
**असाधारणधर्मोत्थो न साधारणकारणः । रजतं शुक्तिकेत्यादिव्यपदेशोऽप्रसिद्धितः ॥५२॥**
**न चेह राजता धर्माः कुतो ज्ञानं तदाकृति । न ह्याकारमनालिङ्ग्य ज्ञानमाकारवत्क्वचित् ॥५३॥**
**शुक्तिकानुविधायित्वान्नेदं स्मर्तव्यसंश्रयम् । अनालिङ्गितबाह्यार्था बुद्धावेव स्मृतिर्यतः ॥५४॥**
**धर्मादिहेतुकं येऽपि परिणामं प्रचक्षते । सम्यग्ज्ञानेऽपि तुल्यत्वादनाश्वासस्तथा सति ॥५५॥**
**भूतकालोपलब्धोऽर्थः स्मृतेश्चेद्गोचरो मतः । नासौ भूतात्मनाऽज्ञायि भूतज्ञानमनाश्रयम् ॥५६॥**
**स्वोत्पत्तिव्यतिरेकेण ज्ञानकालोऽपि नेष्यते । अगत्वरं सद्विज्ञानं भूतार्थं ढौकते कथम् ॥५७॥**

तत्राऽऽद्यं दूषयति—विशिष्टेति । आकृती रजतत्वजातिर्देशस्तु पुरोवर्तिभूप्रदेश ईहा रजतोचिता चेष्टा कालो वर्तमानो धर्मस्त्रिकोणत्वादिरेतैर्विशिष्टैरुपेतं रजतं भ्रान्तौ भातं सत्यरजतसदृशं शुक्त्यज्ञानादन्यतः सामान्यमात्रान्न सिध्यति किंतु तदेव तत्कारणं; सामान्यान्तरनिर्मुक्तमित्यत्र सामान्यग्रहस्य हेतुत्वं निरस्तमिह तु सामान्यस्यैव निरस्यत इत्यपौनरुक्त्यमिति भावः ॥४५१॥

असाधारणरूपेण रूप्यमाणेऽपि तत्कारणं सामान्यमेव किं न स्यादित्याशङ्क्य विषयत्वेन विधान्तरेण वा तस्य कारणतेति विकल्प्याऽऽद्यं प्रत्याह—असाधारणेति । प्रत्ययो विशेष्यते विशेषाकारोत्थमिथ्याज्ञानस्य सामान्यं विषयत्वेन न कारणं विशेषज्ञाने सामान्यस्य विषयत्वाप्रसिद्धेरित्याह—अप्रसिद्धित इति । न द्वितीयो, न हि रजतं शुक्तिकेति वा सर्पो रज्जुरिति वा व्यपदेशोऽस्ति । तद्वन्न प्रकारान्तरेण सामान्यस्य रूप्यधीहेतुत्वं न हि तस्य कर्तृत्वादिसंभवोऽप्रसिद्धेरिति मत्वाऽऽह—रजतमिति । अत्रापि-पूर्वार्धान्नञनुषङ्गः ॥४५२॥

कल्पान्तरं निरस्यति—न चेति । देशान्तरस्थस्य रूप्यस्य तद्धर्माणां च वलयकरणयोग्यत्वादीनां पुरोदेशेऽसत्त्वान्न भ्रान्तिज्ञानस्य तदाकारत्वमतो देशान्तरस्थरूप्यस्य न विषयत्वेन भ्रान्तिहेतुत्वं नापि प्रकारान्तरेणाप्रसिद्धेरित्यर्थः । एतेन तृतीयोऽपि प्रत्युक्तः । पुरोवर्तिसाधारणाकारस्य देशान्तरस्थरूप्याकारस्य च विशिष्टज्ञाने विषयत्वेन विधान्तरेण वा हेतुत्वायोगात् । ननु निराकारमेव भ्रान्तिज्ञानं न तत्सामान्यं विशेषं वाऽऽलिङ्गतेऽन्यथा भ्रान्तित्वायोगात्तत्राऽऽह—न हीति । आकारमनालम्ब्य क्वचिदपि भ्रान्तावभ्रान्तौ वा ज्ञानं नोपपद्यते सर्वं हि ज्ञानमाकारवद्दृश्यते तदत्रैव विशिष्टं रूप्यमज्ञानजमेष्टव्यमित्यर्थः ॥४५३॥

रूप्यधियः स्मृतित्वेनाप्रत्यक्षत्वान्न पुरोवर्त्यालम्बनं किंतु तटस्थं रूप्यमित्याशङ्क्याऽऽह—शुक्तिकेति । शुक्तीदमंशात्मना रूप्यस्य प्रतीतेस्तज्ज्ञानस्य पुरोवर्त्यनुसारित्वान्नेदं स्मर्यमाणं गोचरयत्यतो न स्मृती रूप्यधीरित्यर्थः । रूप्यधियोऽस्मृतित्वे हेत्वन्तरमाह—अनालिङ्गितेति । अतो रूप्यधीर्न स्मृतिर्बाह्यार्थवत्त्वादिति शेषः । कथं तर्हि स पितेत्यादिस्मृतावर्थवत्त्वप्रतीतिरित्याशङ्क्य बाह्यार्थाभावेऽपि प्रागनुभूतपित्रादिवासनात्मकबुद्धावेव तत्परिणामतया तदवस्थितेरित्याह—बुद्धाविति ॥४५४॥

नन्वस्मृतिरपि सा नाज्ञानजा शुक्तेरेव वस्तुतो रूप्याकारेणादृष्टादिवशात्तज्ज्ञानात्मना चाऽऽत्मनो बुद्धेर्वा तद्वशादेव परिणामादत आह—धर्मादीति । यथोक्ते परिणामे सति तन्मते सर्वत्र तस्य तुल्यत्वाद्भ्रान्ताविव सम्यग्ज्ञानेऽप्यरूप्यस्य रूप्यात्मना धीरूप्यस्य वेति संशयान्न क्वचिदर्थनिश्चयः स्यादित्यर्थः ॥४५५॥

निरस्ते परिणामवादिन्यनालिङ्गितबाह्यार्था स्मृतिरित्यत्र चोदयति—भूतेति । अतो रूप्यधियो बाह्यार्थवत्त्वेऽपि स्मृतित्वसिद्धिरिति शेषः । असावर्थो भूतात्मना पूर्वं न ज्ञातो न चानुभवमतिक्रम्य स्मृतिरतो भूतार्थस्मरणं युक्त्यवष्टम्भशून्यमिति परिहरति—नासाविति ॥४५६॥

स्मृतेर्भूतार्थत्वेऽपि भ्रान्तेस्तदभावात्तत्र वर्तमानतया रूप्यादिदृष्टेस्तस्या न स्मृतितेति मन्वानः स्मृतेर्भ्रान्तेश्च न भूतार्थतेत्यत्र हेत्वन्तरमाह—स्वोत्पत्तीति । न हि क्षणिकस्य ज्ञानस्योत्पत्तिक्षणेतरक्षणे सत्त्वं क्षणिकत्वविरोधादतोऽपि वर्तमानं ज्ञानं न भूतार्थं स्यादित्यर्थः । उत्पत्त्यवस्थायामेव ज्ञानं गत्वा कालान्तरस्थमर्थं स्पृशतीत्या-

अविलुप्तार्थविज्ञानो यद्यात्माऽभ्युपगम्यते । सर्वेषां सर्वविज्ञानात्सर्वज्ञत्वं भवेद्ध्रुवम् ।।५८।।
आश्रिताश्रयसंबन्धः कार्यकारणयोः स्मृतः । वर्तमानात्मगं ज्ञानमतीतार्थं स्पृशेत्कथम् ।।५९।।
सम्यग्ज्ञानेऽपि चास्त्येतत्त्रयं यद्भवतेरितम् । प्रत्यभिज्ञाय तदिदमज्ञातं वस्त्ववैति हि ।।६०।।
तथा सति मृषाज्ञानं सर्वत्रैव प्रसज्यते । मुक्त्वैकं प्रत्यगात्मानं न तत्रास्ति त्रयं यतः ।।६१।।

भ्रान्तेरज्ञानजत्वे मानम्

यस्मिन्सत्येव यत्कार्यं न भवेदेव चासति । तत्स्वकार्ये स्वतन्त्रत्वादुच्यते कारणं बुधैः ।।६२।।
स्वत आकारवत्किंचित्परतश्चापि दृश्यते । शुक्तिमृत्स्फटिकाद्येवं ज्ञानं किं नाभ्युपेयते ।।६३।।

शङ्क्याऽऽह—अगत्वरमिति । न च तर्कशास्त्रे शब्दवदर्थस्याऽऽगमनं कालान्तरस्थत्वविरोधात्सर्वत्र च गमनानभ्युपगमादिति भावः ।।४५७।।

न हि द्रष्टुरित्यादिश्रुत्या ज्ञानस्य क्षणिकत्वासिद्धिमाशङ्क्याऽऽह—अविलुप्तेति । स्वरूपज्ञानस्य नित्यत्वेऽपि विषयज्ञानस्य न नित्यत्वमतिप्रसङ्गादित्याह—सर्वेषामिति ।।४५८।।

अथ स्थिरमपि ज्ञानमात्मनोऽन्यत्र स्थास्यति तत्कथमात्मनः सर्वज्ञत्वं तत्राऽऽह—आश्रितेति । न तावत्ते स्वतन्त्रं नित्यं ज्ञानमस्ति । न च तस्याऽऽत्मनोऽर्थान्तरमाश्रयः कार्यकारणयोरिव ज्ञानात्मनोराश्रिताश्रयसंबन्धस्य प्रसिद्धत्वादतो ज्ञानस्य नित्यत्वायोगात्तस्य क्षणिकत्वादि दुर्वारमित्यर्थः । तस्य क्षणिकत्वमात्मनिष्ठत्वं चेति स्थिते फलितमाह—वर्तमानेति ।।४५९।।

रूप्यधियः स्मृतित्वासंभवान्न देशान्तरस्थं रूप्यं तद्धेतुरित्युक्त्वा सामान्यादित्रयजन्यं ज्ञानं भ्रान्तिरेवेति वा सामान्यादित्रयजन्यैवेति वा विवक्षितमिति विकल्प्याऽऽद्यं प्रत्याह—सम्यगिति । कथमिति चेद्यत्राज्ञातं ज्ञायते तत्र ज्ञाताज्ञातयोः सामान्यरूपं गम्यते विशेषाग्रहश्च संभाव्यते न हि केनचिदपि ज्ञानेन सर्वात्मनाऽर्थो गृह्यते स्मृतिश्च तत्रास्ति तदज्ञातं वस्तु ज्ञायते मयेति प्रत्यभिज्ञायेदं वस्तु लोको यतोऽवगच्छतीति त्रयं सम्यग्ज्ञाने संपादयति—प्रत्यभिज्ञायेति ।।४६०।।

भवतु सम्यग्ज्ञाने त्रयं किं तावतेत्यत आह—तथेति । कारणत्रयजन्यं मिथ्याज्ञानमेवेत्यभ्युपगमादित्यर्थः । ज्ञानमात्रस्य मिथ्यात्वमिष्टमेवेति शून्यवादी मन्यते तं प्रत्याह—मुक्त्वेति । प्रत्यगात्मनः सामान्यविशेषभावविनिर्मुक्तत्वान्नित्यापरोक्षत्वाच्च तस्मिन्कारणत्रयस्य निरवकाशत्वादित्याह—न तत्रेति ।।४६१।।

द्वितीयं दूषयति—यस्मिन्निति । स्वतन्त्रत्वं समर्थत्वमज्ञाने सत्येव भ्रान्तिदृष्टेरसति चादृष्टेस्तदेव तत्कारणमन्वयव्यतिरेकवतो लोके कारणत्वप्रसिद्धेः सामान्यादित्रयस्य भ्रमानुविधायित्वं पुनरग्रे निराकरिष्यति निराकृतं च पुरस्तादित्यर्थः ।।४६२।।

भवतु भ्रान्तेरज्ञानजत्वं तथाऽपि रूप्यज्ञानमाकारवन्न वा ? आद्ये स्वतो वा परतो वा ? प्रथमे विषयाकारभजनायोगो, न खल्वाकारवत्याकारान्तरमर्थ्यते अर्थेनैव[1] विशेषो हीत्यादिन्यायविरोधश्च । परतश्चेत्स्वतो निराकारता । द्वितीयेऽपि न विषयाकारभजनमाकारराहित्यस्वरूपविरोधादतो न सालम्बना भ्रान्तिरित्याशङ्क्याऽऽह—स्वत इति । चकारोऽवधारणार्थः स्वतःशब्देन संबध्यते । तत्र दृष्टान्तमाह—शुक्तीति । यथा स्वतः शुक्तिराकारवत्येव रूप्याकारं गृह्णाति मृदप्याकारवती स्वतो घटाद्याकारं भजते स्फटिकोऽपि स्वभावेनाऽऽकारवानेवालक्तकाद्याकारं धारयतीत्यर्थः । अनेकान्दृष्टान्तान्प्रतिपत्तिसौकर्यार्थं प्रदर्श्य दार्ष्टान्तिकमाह—एवमिति । उक्तदृष्टान्तानुसारेण स्वतो ज्ञानस्याऽऽकारवत्त्वेऽपि विषयाकारभजनसंभवान्न भ्रान्तेर्निरालम्बनतेत्यर्थः ।।४६३।।

---

१. अर्थेनैवेति—"अर्थेनैव विशेषो हि निराकारतयाधियामि"ति उदयनाचार्यवाक्यम् । ज्ञानवैलक्षण्यं विषयभेदप्रयुक्तं स्वतो ज्ञानस्य निराकारत्वात् साकारवादाङ्गीकारे विषयविलोपप्रसङ्गात् ।

[1]नापि व्यभिचरेज्ज्ञानं यदि स्मर्तव्यपृष्ठगम् । साक्षाद्वस्त्वेकनिष्ठत्वाद्यथेयं शुक्तिकामतिः ।।६४।।
न च प्रत्यक्षविज्ञानात्स्मृतेर्भेदं लभेमहि । [2]प्रध्वंसात्तस्य चार्थस्य नातोऽर्थस्पर्शिनी स्मृतिः ।।६५।।

मिथ्याज्ञानेतराज्ञाने प्रमाणनिरूपणम्

किं त्वेतदिति जिज्ञासोर्निषिद्धेऽप्यन्यथाग्रहे । तावतो [3]व्यवधानत्वाद्बुभुत्सा च न युज्यते ।।६६।।
शुक्तिकेयमिति ह्युक्ते यथार्थं प्रतिपद्यते । रजताद्यन्यथाज्ञानप्रतिषेधादृतेऽपि हि ।।६७।।
नीलोत्पलदलाभं खं सामान्येतरवर्जितम् । न पश्येयुस्त्रयासत्त्वान्न हि तच्चाक्षुषं यतः ।।६८।।
दिग्विभागादिवद्व्योम्न प्राग्यानं च रवौ तथा । स्वप्ने नानाप्रपञ्चाढ्यं मिथ्याज्ञानमृते त्रयात् ।।६९।।

तर्हि तस्याः सालम्बनत्वाद्घटादिधीवद्याथार्थ्यादभ्रान्ततेत्याशङ्क्याऽऽह—नापीति। स्मर्तव्यो रूप्यादिरर्थस्तं विषयीकृत्य सम्यग्रजतधीवद्भ्रान्तिज्ञानं स्थितं चेत्तर्हि प्रामाण्यं न व्यभिचरेदबाधितासंदिग्धापरोक्षवस्तुविषयत्वाच्छुक्तिज्ञानवदतो भ्रान्तेरमानत्वाद्याथार्थ्यायोगात्कल्पितविषयत्वेन सालम्बनतेत्यर्थः ।।४६४।।

भ्रान्तेरपि मानत्वाङ्गीकारादमानत्वासिद्धिमाशङ्क्याऽऽह—न चेति। स्मृतिशब्दो भ्रान्तिविषयः। तस्या मानत्वे मानभ्रान्तिभेदासिद्धिरुत्सर्गतो ज्ञानमात्रप्रामाण्येऽपि बाधादिना क्वचिदप्रामाण्यमिति विभागसिद्धिरित्यर्थः। इतश्चायथार्था भ्रान्तिरित्याह—प्रध्वंसादिति। भ्रान्त्यर्थस्य ज्ञानेन नाशान्न सा वस्तु विषयीकरोत्यतस्तस्या युक्तमयथार्थत्वमित्यर्थः ।।४६५।।

भ्रान्तेरयथार्थत्वसमर्थनेनाज्ञानकार्यत्वं निर्धार्य तदर्थमेव मिथ्याज्ञानेतराज्ञाने हेत्वन्तरमाह—किं त्विति। आप्तोक्त्यादिना रूप्यसर्पादिमिथ्याज्ञाने निषिद्धेऽप्यधिष्ठानसाक्षात्कारात्पूर्वं किमेतदिति ज्ञातुमिच्छतो या बुभुत्सा सा वस्तुव्यवधीभूताज्ञानानुपगमे नैव युज्यते मिथ्याज्ञानमात्रं हि वस्तुनो व्यवधानमिष्टं तस्य निषिद्धत्वादतो वस्तुव्यवधानमनाद्यज्ञानं बुभुत्सानिदानमुपेयमित्यर्थः ।।४६६।।

इतश्चास्ति मिथ्याज्ञानेतरदज्ञानमित्याह—शुक्तिकेति। इयं शुक्ती रज्जुरेषेत्यादौ प्रयोगे रूप्यसर्पाद्यन्यथाधीनिषेधं विनाऽपि श्रोता शुक्त्यादितत्त्वं वेत्तीति व्यवहारभूमावधिगतं तन्नान्तरीयकत्वेन तदज्ञानध्वस्त्या तद्धीर्निवर्तते तन्निवृत्तिश्च प्रतिषेधधियाऽनूद्यते। मिथ्याज्ञानेतराज्ञानाभावे तु शुक्त्यादौ मिथ्याज्ञानोदयं विना सम्यग्ज्ञानं जायमानमनर्थकं स्यात्तस्य व्यवधायकाभावे स्वसत्तायां प्रकाशाव्यभिचारादतोऽस्त्यनाद्यज्ञानमित्यर्थः ।।४६७।।

अज्ञानस्य मिथ्याधियोऽर्थान्तरत्वेऽपि न तद्धेतुत्वं सामान्यादित्रयस्यैवान्वयव्यतिरेकाभ्यां तथात्वादित्याशङ्क्य व्यतिरेकाभावमाह—नीलेति। त्रयस्य भ्रान्तिहेतुत्वे नीलोत्पलदलसदृशमाकाशं बाला नाऽऽकलयेयुराकाशस्य सामान्यविशेषशून्यत्वात्कारणत्रयाभावादिति योजना। नभो नीलमिति धीस्तर्हि न भ्रान्तिरित्याशङ्क्याऽऽह—न हीति। अचाक्षुषे नीरूपे द्रव्ये चाक्षुषधीर्भ्रान्तिरेवातस्मिंस्तद्धीत्वादित्यर्थः ।।४६८।।

त्रयं विना भ्रान्तिदृष्टेर्न तत्करणमित्यत्रैव दृष्टान्तान्तराण्याह—दिगिति। आदिपदेन तलमलिनताद्युक्तिः। दृश्यते हि नभसि सामान्यविशेषभावविरहिणि प्राची प्रतीचीत्यादिदिग्विभागो दिशो व्योम्नो वस्त्वन्तरत्वे मानाभावात् तत्रैव धूमतुषारादिधीश्च निश्चिता। सवितरि च प्रतीचीं दिशमारभ्य प्राचीदिशं प्रति गच्छतीति धीरस्ति। स्वप्ने च विविधप्रपञ्चसहिता मिथ्याधीरुपलभ्यते। न च तत्र सर्वत्र कारणत्रयं सुसंपादमतो व्यतिरेकाभावान्न तस्य भ्रमहेतुतेत्यर्थः ।।४६९।।

---

१. सिंहावलोकनन्यायेन पुनरपि स्मृतेरर्थवत्त्वं दूषयति—नापीति—( न्या० ) पूर्वमेव दूषितं स्मृतेरर्थवत्त्वं पुनर्दूषयतीत्यर्थः। नापि ज्ञानमर्थं व्यभिचरेदित्यर्थः। यदि स्मर्तव्यपृष्ठगं स्मर्तव्यविषयगं तदा प्रामाण्यं न व्यभिचरेत्। अतः तदप्रामाण्यस्य व्यवस्थितत्वात् तस्या निर्विषयत्वं कल्पितविषयत्वमेष्टव्यमित्यर्थः। अनधिगतार्थत्वाभावादप्रामाण्यम् ( न्या० )।

२. नष्टार्थे स्मृतिदर्शनाच्च न सार्थत्वं तस्या इत्याह—प्रध्वंसादिति ( न्या० )।

३. व्यवधानं वस्तुनः सकाशात् ज्ञानस्य भेदकमज्ञानमित्यर्थः।

यत एतमतो ग्राह्यं शुक्तिकाज्ञानमेव तु । रजताद्यन्यथाज्ञानकारणं युक्तिगौरवात् ॥७०॥
कर्मज्ञानादिहेतुत्वान्नियमस्य यथा तव । सामान्याद्यविशेषेऽपि नियमोऽप्येवमिष्यताम् ॥७१॥
भूरिसामान्यविज्ञानाच्छौक्ल्यमेव करोति किम् । सदप्यन्यदुदास्ते किं स्वाश्रयग्रहणं प्रति ॥७२॥
अनेकार्थाभिसंबन्धाच्छौक्ल्यस्य रजते च कः । पक्षपातो विना हेतुं बलाकाज्ञानकृन्न किम् ॥७३॥
स्वाकारमात्रनिष्पत्तेर्नालं कार्यान्तराय हि । सामान्यं वा विशेषो वा नातः स्याद्राजती स्मृतिः ॥७४॥
न ह्यसंनिहितं बोद्धुर्वस्तु बुद्धौ करोति हि । ज्ञानमाकारवल्लोके सर्वाकारप्रसक्तितः ॥७५॥

पदार्थान्तरसद्भावापेक्षस्य जगतोऽपि रज्जुसर्पवत् कल्पितत्वम्

पदार्थान्तरसद्भावमपेक्ष्यान्यस्य वस्तुनः । यस्य सिद्धिर्मृषा तत्स्याद्रज्जुसर्पद्विचन्द्रवत् ॥७६॥
प्रमात्रादीह यत्किंचित्प्रत्यगज्ञानहेतुजम् । अन्योन्यापेक्षसिद्धित्वान्मिथ्या तदपि पूर्ववत् ॥७७॥
आत्मन्यध्यासरूपोऽयं संसारः प्रतिपादितः । अध्यासश्च विना हेतुं न लोक उपपद्यते ॥७८॥

त्रयस्य कारणत्वासंभवे पूर्वोक्तमज्ञानकारणत्वं सिद्धमित्युसंहरति—यत इति । अतो युक्तिगौरवादिति संबन्धः । युक्तिस्तु न सामान्यात्स्मृतेश्चेत्यादावुक्ता ॥४७०॥

शुक्त्यज्ञानस्य भ्रान्तिहेतुत्वे किमिति तत्र रूप्यभ्रान्तिरेवार्थान्तरभ्रान्तिः[1] किं न स्यादज्ञानस्य तुल्यत्वादित्याशङ्क्याऽऽह—कर्मेति । ज्ञानशब्देन पूर्वानुभवो रजतादिविषयस्तद्वासना चाऽऽदिशब्देन गृह्यते । यथा ते त्रयस्याविशेषेऽपि शुक्तौ रूप्यधीरेव न हस्त्यादिधीरिति नियमस्तस्यादृष्टादिकृतत्वादेवं परस्य सर्वत्राज्ञानाविशेषेऽपि कर्मादिवशान्नियमो भ्रान्तेरित्यर्थः ॥४७१॥

परपक्षेऽपि कर्मादिहेतुको नियमो भ्रान्तेरित्येतत्साधयति—भूरीति । नानासामान्यं शुक्तिस्थं गृह्णाति तत्र शौक्ल्यमेव किमिति रूप्यभ्रान्तिं जनयति वस्तुत्वादि गृह्यमाणं सदपि किमिति स्वाश्रयग्रहं प्रति न प्रभवत्यतो धर्मादिरेव नियमे हेतुरित्यर्थः ॥४७२॥

वस्तुत्वादित्यागेन शौक्ल्यस्यैव स्वाश्रयग्रहे व्यापारे तस्य पुरोवर्तिरजतसादृश्यात्मनो रजतपक्षपातितया विनाऽप्यदृष्टादिना नियमसिद्धिरित्याशङ्क्याऽऽह—अनेकेति । अनेकैरर्थैं रूप्यबलाकादिभिः सदृशैः शौक्ल्यस्य संबन्धात्तस्य रूप्यपक्षपाते हेत्वभावाद्बलाकाज्ञानमेव किमिति शुक्तौ शौक्ल्यं न करोति तस्मात्परस्य कर्मादिना नियमवत्पक्षान्तरेऽपीत्यर्थः ॥४७३॥

इतश्च त्रयं न रूप्यादिभ्रान्तिहेतुरित्याह—स्वाकारेति । सामान्यादेः स्वविज्ञानमात्रहेतुत्वाद्रूप्यादिविशिष्टज्ञानार्थमसामर्थ्यात्तद्वशान्न रूप्यादिभ्रान्तिरित्यर्थः ॥४७३॥

त्रयस्य भ्रमाहेतुत्वमुक्त्वा देशान्तरस्थरूप्यस्य तदहेतुत्वे हेत्वन्तरमाह—न हीति । लोके हि बोद्धुरसंनिहितं वस्तु बुद्धौ स्वाकारवद्विज्ञानं नैव जनयति तस्यासन्निहिताकारत्वे सर्वाकारत्वप्रसङ्गादतो न देशान्तरस्थरूप्यस्यैव भ्रान्तिहेतुतेत्यर्थः ॥४७५॥

शुक्त्याद्यवच्छिन्नचिदात्मस्थाज्ञानविलसितं रूप्यादीति दृष्टान्तं प्रसाध्य दार्ष्टान्तिकमाह—पदार्थेति । उत्पादकं ज्ञापकं च पदार्थान्तरं विवक्षितं सापेक्षत्वाज्जगदपि सर्पादिवत् कल्पितमित्यर्थः ॥४७६॥

कथं तस्य सापेक्षत्वं तदाह—प्रमात्रादीति । यत्किंचिदिह व्यवहारभूमौ मात्रादि तदप्यज्ञानजं मिथ्यैवान्योन्यापेक्षया सिद्धत्वान्न हि मिथोऽपेक्षामन्तरेण मातृमानादि सिध्यति पूर्वोक्तसर्पादिवदिति योजना ॥४७७॥

लोके मिथ्याज्ञानस्याज्ञानकार्यत्वात्प्रतीचि प्रपञ्चाध्यासस्तथेति प्रसाध्य वृत्तमनुद्रवति—आत्मनीति । भाष्यान्तरमवतारयितुं भूमिकामाह—अध्यासश्चेति । कार्यत्वाद्घटवदितिहेतुदृष्टान्तौ वक्तुं चशब्दः ॥४७८॥

१. अर्थान्तरभ्रान्तिः हस्त्यादिभ्रान्तिः ।

भाष्यव्याख्यारम्भः

तस्माद्धेतूपदेशाय यः कारणमितीर्यते । यस्मिन्नविद्ययेत्येवं ननु कारणमीरितम् ॥७९॥
प्रधानवादमाशङ्क्य यस्माद्भूयोऽपि भण्यते । अज्ञात आत्मा जगतः कारणं न गुणत्रयम् ॥८०॥
श्रुतितो युक्तितश्चापि स्वयमेव प्रवक्ष्यति । उदर्क इममेवार्थं नातोऽन्यत्कारणं ततः ॥८१॥
यदात्मके नामरूपे इत्यज्ञानात्मता तयोः । भण्यतेऽतोऽप्रमाणत्वं शुक्तिकारजतादिवत् ॥८२॥
न कारणातिवर्त्यस्ति कार्यं जगति कुत्रचित् । स्वकारणाविशिष्टत्वे सलिलादितिहेतुगीः ॥८३॥
वस्तुवृत्तं न पर्याप्तं तदज्ञानापनुत्तये । अनुपात्तप्रमाणं सदित्यर्थप्रतिपत्तये ॥८४॥
स्वतो बुद्धमिदं यस्मादतः शुद्धमसद्द्वयम् । द्वितीयसंगतिर्यस्माल्लोकेऽशुद्धेः प्रयोजिका ॥८५॥
यथोक्ततत्त्वे नाविद्यामृते स्याद्द्वयसंगतिः । अतोऽशुद्धिनिषेधोक्तिस्तदविद्यानिषेधतः ॥८६॥
ईश्वराव्याकृतप्राणविराड्भूतेन्द्रियादिकम् । नाविद्योपाश्रयं मुक्त्वा संभाव्यं प्रत्यगात्मनि ॥८७॥

तात्पर्यफलोक्तिपूर्वकं तदवतारयति—तस्मादिति । कार्यस्य कारणमन्तरेणासंभवादिति यावत् । पुनरुक्तिं चोदयति—यस्मिन्निति ॥४७९॥

परिहरति—प्रधानेति । यस्मिन्नविद्ययेति कारणस्योक्तत्वेऽपि निमित्तोपादानभेदं सांख्यवादमाशङ्क्योक्तमेव कारणं तद्भेदनिरासार्थं यस्मात्पुनरुच्यते तस्मान्न पुनरुक्तिदूषणमित्यर्थः । प्रधानवादनिराकरणं कथमिति तदाह—अज्ञात इति ॥४८०॥

उत्तरपक्षस्य पूर्वपक्षनिरासस्य च कथं प्रतिज्ञामात्रात्सिद्धिस्तत्राऽऽह—श्रुतित इति । अपिनोक्तत्वमस्यार्थस्य सूचयति । स्वयमिति भाष्यकारोक्तिः । "आत्मन आकाशः संभूत" "एतस्माज्जायते प्राणो" "यः सर्वज्ञः सर्वविदि"त्यादिश्रुतेः परिच्छिन्नस्य कार्यत्वान्मूलकारणत्वायोगादज्ञातं ब्रह्मैव कारणं न प्रधानादीति तत्र तत्रोक्तं वक्ष्यते च मधुब्राह्मणादावतो न प्रधानवाद इत्यर्थः । कारणान्तरायोगादज्ञातं ब्रह्मैव तथेति निगमयति—नात इति । अज्ञातं ब्रह्म पञ्चम्यर्थः । ततोऽन्यदिति संबन्धः ॥४८१॥

यदात्मके इत्यादिभाष्यतात्पर्यमाह—यदात्मके इति । तयोर्नामरूपयोरिति यावत् । नामरूपात्मकद्वैतस्याविद्यादेहोक्तिफलमाह—अत इति । अप्रमाणत्वमप्रामाणिकत्वं बाध्यतेति यावत् ॥४८२॥

सलिलादिवदित्यादिदृष्टान्तभाष्यतात्पर्यमाह—नेत्यादिना । हेतुर्दृष्टान्तः साधकत्वाविशेषात् । न हि लोके कार्यं हेतुमतिक्रमते तन्नामरूपद्वैतस्याज्ञातब्रह्मात्ममात्रत्वे सलिलादिवेत्यादिदृष्टान्तोक्तिः । यथा फेनादि जलोत्थं तन्मात्रमेवमज्ञातब्रह्मोत्थं जगद्ब्रह्ममात्रमित्यर्थः ॥४८३॥

यश्चेत्यादिभाष्यतात्पर्यमाह—वस्त्विति । नित्यशुद्धत्वादिलक्षणमपि वस्तुरूपं वाक्योत्थबुद्धिवृत्त्यनारूढं स्वगताज्ञानध्वंसार्थं न समर्थं केवलस्य वस्तुनस्तत्साधकत्वाद्वाक्यीयबुद्ध्यारूढमेव तत्स्वाज्ञानध्वस्तये शक्तमिति वक्तुं यश्चेत्यादिभाष्यमित्यर्थः ॥४८४॥

तत्र भाष्यं योजयति—स्वत इति । बोधैकरसत्वं शुद्धत्वे हेतुरित्युक्त्वा हेत्वन्तरमाह—असदिति । अतोऽद्वयमिति पाठे तु शुद्धत्वादेवाद्वयत्वं द्वितीयसंबन्धाभावस्य शुद्धत्वसाधकत्वादित्यर्थः । द्वितीयासंबन्धस्य शुद्धत्वहेतुत्वं व्यतिरेकमुखेन साधयति—द्वितीयेति । तस्माददद्वितीयत्वादुक्तं वस्तु सिद्धमिति शेषः । तादृश्यपि प्रतीच्यज्ञानादिदृष्टेर्वाक्यीयबुद्ध्यारूढमेवाऽऽत्मतत्त्वं तन्निवर्तकं न केवलमिति भावः ॥४८५॥

ननु द्वितीयासंबन्धान्न प्रतीचः शुद्धत्वमध्यक्षादिसिद्धद्वैतद्रष्टृत्वेनाऽऽत्मनस्तत्संबन्धात्तत्राऽऽह—यथोक्तेति । अविद्यासंबन्धाधीनद्वयसंबन्धादात्मन्यशुद्धिप्रसक्तिरतःशब्दार्थः । तदविद्येत्यत्र तच्छब्दो यथोक्तवस्तुविषयः । द्वैततद्योगयोराविद्यत्वादात्मनो वास्तवी शुद्धिरित्यर्थः ॥४८६॥

ईश्वराद्यष्टावस्थं[2] जगत्पारमार्थिकमिति कैश्चिदिष्टत्वात्कथं द्वैतस्य मिथ्यात्वमित्याशङ्क्याऽऽह—ईश्वरेति ।

१. ११६-४

२. अष्टावस्थं जगत् पारमार्थिकमिति भर्तृप्रपञ्चः । अष्टावस्थाश्च अव्याकृतम् ईश्वरः प्राणः विराट् पञ्चभूतानि शरीर-इन्द्रिय-विषयाः-(न्या.), आनन्दगिरीये-अन्तर्यामी साक्षी अव्याकृतं प्राणः विराट् देवता व्यक्तिः जातिः इत्यष्टौ ।

प्रत्यग्याथात्म्यदृष्ट्या तन्निपुणोऽपि न वीक्षते । न च प्रत्यग्धियं मुक्त्वा पराग्बुद्धिर्मितिर्भवेत् ॥८८॥
पराञ्चि खानीत्येतच्च साटोपमभिधीयते । प्रत्यङ्मानैकमेयत्वं वेदान्तेष्वात्मवस्तुनः ॥८९॥
इतो विरुद्धमानत्वं स्वतोऽपास्तद्वयात्मनः । शक्यं वैश्वानरवरात्प्रवक्तुं न तु मानतः ॥९०॥
नित्यशुद्धश्च बुद्धश्च यस्मादात्मा परः स्वतः । मुक्तश्चातोऽवसेयोऽसौ सद्वेदान्तोक्तिमानिना ॥९१॥
एवंभूतोऽप्यसंबुद्धस्वात्मतत्त्वो महेश्वरः । आपेदे कारणात्मत्वं नामरूपादिसर्जने ॥९२॥

स एष इह प्रविष्ट इत्यादि-श्रुतिविवरणम्

स एष इत्यनेनापि सुविरुद्धात्मतां ब्रुवन् । विरुद्धवस्तुसंसृष्टि ब्रूतेऽज्ञानैककारणम् ॥९३॥
व्याकुर्वन्निति वाक्येन स्वतो ज्ञोऽपि तमोन्वयात् । ब्रह्मादिस्तम्बपर्यन्तं कार्यं प्राविशदुच्यते ॥९४॥
स्वानुभूत्यनुरोधेन योऽज्ञातार्थः पुरोदितः । प्रकृतार्थावलेहित्वात्सर्वनाम्ना स उच्यते ॥९५॥
परामृश्य स इत्येवमव्याकृतसतत्त्वकम् । तथारूपः स्वकार्यस्थः प्रात्यक्ष्यादेष उच्यते ॥९६॥

अन्तर्यामिसाक्षिणावीश्वरशब्दितौ । भूतशब्देन भवनयोग्या व्यक्तयो गृह्यन्ते इन्द्रियशब्देन देवतोच्यते । आदिपदेन जातिरुक्ता ॥४८७॥

प्रत्यगज्ञानजमेव द्वैतमिति प्रतिज्ञातेऽर्थे हेतुमाह—प्रत्यगिति । तथाऽपि पराग्दृष्ट्या दृष्टत्वाद्द्वैतस्य सत्यत्वमित्याशङ्क्याऽऽह—न चेति ॥४८८॥

आत्मनोऽपि तर्हि पराग्बुद्धिबोध्यत्वान्मिथ्यात्वं स हि सर्वप्रत्ययवेद्योऽभ्युपेयते । नेत्याह—पराञ्चीति । एतत्प्रत्यग्दृष्टिरूपमानमात्रगम्यत्वमात्मनो वेदान्तेषु "पराञ्चि"त्यादिश्रुत्या सतात्पर्यमुच्यते न हि तस्य सोपाधिकस्य सर्वप्रत्ययवेद्यत्वेऽपि निरुपाधिकस्य तथात्वमिति योजना ॥४८९॥

प्रत्यङ्मानं हित्वा पराङ्मानगम्यतामपि केचित्प्रतीचो वदन्ति तान्प्रत्याह—इत इति । प्रत्यङ्मानादिति यावत् । विरुद्धमानत्वं पराङ्मानगम्यत्वमिति यावत् । विषयस्वरूपोक्त्या तस्मिन्पराङ्मानप्रवृत्तेरयोग्यतामाह—स्वत इति । अनुदिनमाराधितदेवताप्रसादादीदृग्वचनं भर्तृप्रपञ्चानां न प्रमाणादित्युपहसति—शक्यमिति ॥४९०॥

आत्मनो नित्यशुद्धत्वादि प्रतिपाद्य नित्यमुक्तत्वं प्रतिपादयति—नित्येति । "न लिप्यते लोकदुःखेने"त्यादिवाक्यमत्र मानत्वेन सूचयति—सदिति । सतीं दोषरहितामपौरुषेयीं वेदान्तोक्तिं मानत्वेन स्वीकुर्वता वादिनेति यावत् ॥४९१॥

यथोक्तस्य परस्य कारणत्वानुपपत्तेः श्रुतिस्मृतिविरोधमाशङ्क्याऽऽह—एवमिति । स्रष्टुः संहर्तुश्चाभेदमभिप्रेत्य महेश्वरग्रहणम् ॥४९२॥

नामरूपादिसर्जनस्याऽऽविद्यत्वमुक्तं तत्र श्रौतं पदद्वयं गमकमिति भाष्योक्तपदद्वयतात्पर्यमाह—स एष इति । स पर एव जीवस्तयोरद्वयत्वसद्वयत्वादिनाऽत्यन्तं विरुद्धयोरपि सामानाधिकरण्यादिनैकत्वं ब्रुवन्भाष्यकारो वेदो वा प्रतिपाद्यैक्यविरुद्धसृष्ट्यादिद्वैतमज्ञानजत्वेन मिथ्याभूतं सूचयति । अन्यथा तयोरैक्यायोगात्सामानाधिकरण्यादिविरोधादतो नामरूपादिसर्जनस्याऽऽविद्यत्वं पदद्वयगम्यमित्यर्थः ॥४९३॥

अव्याकृते आत्मभूते नामरूपे व्याकुर्वन्नित्यादिभाष्यमपि नामरूपादिसर्जनस्याऽविद्यत्वं गमयतीत्याह—व्याकुर्वन्निति । आत्मा स्वतो नित्यशुद्धत्वादिरूपोऽपि स्वाविद्यावष्टम्भात्कार्यं सृष्ट्वा प्रविष्टस्तस्मिन्निति भाष्येणोच्यते तद्भाष्यमप्युक्तेऽर्थे मानमित्यर्थः ॥४९४॥

वार्तिकाभ्यां प्रवेशवाक्यतात्पर्यं भाष्योक्तमुक्त्वा सशब्दार्थमाह—स्वानुभूतीति । पुरेत्यव्याकृतवाक्योक्तिः । अज्ञातस्य प्रतीचः सशब्देनोपादाने हेतुमाह—प्रकृतेति ॥४९५॥

सशब्देन पारोक्ष्यं प्रतीचो दर्शयित्वा कथमापरोक्ष्यमेषशब्देनोच्यते तत्राऽऽह—परामृश्येति । अव्याकृतस्य

१. वैश्वानरवरात् = भर्तृप्रपञ्चः नित्याग्निहोत्रीति गम्यते ।

२ पुरोदितः—"तद्धेदं तर्ह्यव्याकृतमि"त्यनेन पूर्वमुक्तः । ३. ११६-७

विरुद्धरूपयोरेवं निर्द्वयद्वयरूपतः । स एष इति निर्देशः कथं स्यात्कृष्णसर्पवत् ॥९७॥
कारणान्नान्यतः कार्यं तथा कार्याच्च कारणम् । इत्युक्तन्यायहेतुत्वान्न विरोधोऽत्र कश्चन ॥९८॥
अज्ञातवस्तुतत्त्वस्य दुष्करं नास्ति किंचन । नीलीकृतं नभः पश्येच्चक्षुषा नीलवस्त्रवत् ॥९९॥
योग्यायोग्यव्यपेक्षेयं मानव्यवहृतौ भवेत् । कल्पनामात्रनिष्पत्तेर्नापेक्षाऽज्ञानभूमिषु ॥५००॥

स एष इत्युक्तैक्यहेतुः प्रविष्ट इति

इत्युक्तप्रतिपत्त्यर्थं हेतुरेषोऽभिधीयते । प्रविष्ट इत्यनेनात्र स्वाभासैकतमोन्वयात् ॥ १ ॥
ब्रह्मादावित्यनेनापि जनिमत्सर्वमुच्यते । कृत्स्नसंसारधर्मार्थं देहेष्विति च भण्यते ॥ २ ॥
ब्रह्मादिस्तम्बपर्यन्तं देहेष्विति तथोच्यते । क्रियाफलाभिसंबन्धो देहेष्वेवेति नाऽऽत्मनि ॥ ३ ॥
प्रत्यङ्मोहमरुद्बुद्धिचक्षुर्देहादिरूपिणाम् । प्रविष्टवचसैकात्म्यं गुणप्राधान्यमुच्यते ॥ ४ ॥

सतत्त्वकं पारमार्थिकमविकृतमात्मानमिति यावत् । तथारूप इत्यज्ञात इत्येतत् । स्वकार्यस्थो बुद्धिस्थः प्रत्यगात्मेति यावत् । तस्यैषशब्देनोक्तौ हेतुमाह—प्रात्यक्ष्यादिति ॥४९६॥

पदद्वयसामानाधिकरण्यादुक्तमैक्यमाक्षिपति—विरुद्धेति । निर्द्वयसद्वयरूपतो विरुद्धरूपयोस्तत्त्वमर्थयोः स एष इत्येवं सामानाधिकरण्यादेकत्वनिर्देशः कथं स्यादित्यन्वयः न हि चैत्रस्य कृष्णसर्पेणैक्यव्यपदेशो युक्तस्तथा परेण जीवस्याशक्यमैक्यं वक्तुं विरोधाविशेषादित्याह—कृष्णेति ॥४९७॥

कार्यकारणयोर्मिथःसापेक्षत्वेन कल्पितत्वमित्युक्तन्यायस्याविरोधे हेतुत्वात्प्रकृतैक्यविरोधो नेति परिहरति—कारणादिति । द्वैतस्याविद्यातो भानाद्वस्तुतो विरोधासिद्धेः सामानाधिकरण्यलब्धमैक्यमविरुद्धमित्यर्थः ॥४९८॥

अज्ञानादपि कथं प्रामाणिकैक्यविरुद्धकार्यकारणात्मकद्वैतधीरित्याशङ्क्य कुर्यान्मेरावणुधियमित्यत्रोक्तं[1] स्मारयति—अज्ञातेति । तत्र दृष्टान्तमाह—नीलीकृतमिति ॥४९९॥

अज्ञानाधीनेऽपि भ्रमे कथं चक्षुरयोग्यस्य नभसश्चक्षुषा दर्शनमित्याशङ्क्याह—योग्येति । अथवा नीलं वासो योग्यत्वाच्चक्षुषोपलब्धुं शक्यते नभस्तु नीलीकृतं चक्षुरयोग्यत्वान्न तेन द्रष्टुं शक्यमित्याशङ्क्याऽऽह—योग्येति । आविद्यव्यवहारेषु योग्यायोग्यविभागापेक्षा नास्तीत्यत्र हेतुमाह—कल्पनेति । अज्ञानभूमयो विभ्रमास्तेषु न योग्यायोग्यविभागापेक्षा तेषां कल्पनामात्रेण निष्पन्नानां प्रतिभासमात्रदेहत्वादित्यर्थः ॥५००॥

ऐक्यविरुद्धाकारस्याऽऽविद्यत्वादविरुद्धं तदिति पदद्वयेनोक्त्वा प्रविष्टपदस्यार्थमाह—इत्युक्तेति । इतिना पदद्वयसामानाधिकरण्योक्तिस्तेनोक्तमैक्यं तन्निश्चयार्थमपेक्षितो हेतुः प्रविष्टशब्देनोच्यत इत्यर्थः । परस्य प्रवेशश्चेत्प्रविष्टस्य जीवत्वात्तेन तदैक्यं युक्तं न तु परस्य प्रवेशस्तस्यासङ्गत्वादित्याशङ्क्याऽऽह—अत्रेति । सृष्टे कार्ये प्रत्यगाभासं यदखण्डं तमस्तत्संबन्धात्प्रवेश इत्यर्थः ॥५०१॥

इहशब्दार्थं भाष्योक्तं वदन्ब्रह्मादिस्तम्बपर्यन्तेष्वित्यस्यार्थमाह—ब्रह्मादाविति । सर्वमपीत्यपिशब्दस्य संबन्धः । इहशब्दार्थतया जनिमन्मात्रस्येष्टत्वात्तस्यैकवचनेनापि वक्तुं शक्यत्वाद्बहूक्तिरविवक्षितेति मत्वा ब्रह्मादावित्युक्तम् । जनिमन्मात्रमिहशब्दार्थश्चेद्देहेष्विति विशेषणं किमर्थमित्याशङ्क्याऽऽह—कृत्स्नेति । सर्वस्य संसाराश्रयस्योपाधेर्ग्रहार्थं देहपदमित्यर्थः ॥५०२॥

कर्मफलाश्रयेष्वशनायादिमत्स्विति भागस्यार्थमाह—ब्रह्मादीति । देहेष्वेव क्रियादिसंबन्धो नाऽऽत्मनीति यथा तथा[2] ब्रह्मादिस्तम्बपर्यन्तेष्वित्यादिभाष्ये कर्मफलेष्वित्याद्युच्यत इति योजना ॥५०३॥

प्रवेशवाक्यस्थप्रविष्टशब्दस्यैक्यहेतुमर्थमुक्त्वा तस्यैवार्थान्तरमाह—प्रत्यङ्ङिति । प्रत्यङ्मोहः परस्योपाधिः । मरुत्प्राणः सूत्रोपाधिः । बुद्धिरन्तःकरणं हिरण्यगर्भोपाधिः । चक्षुःशब्देन सर्वाणीन्द्रियाणि लक्ष्यन्ते । स्थूलो देहः स च सर्वो विराडुपाधिः । आदिशब्देनास्मदादीनामुपाधयो व्यष्टयः कर्मादि चोच्यन्ते । एतद्रूपिणाम्

१. वा० १-३-३१३ २. ११६-७

न ढौकते पराचीनं प्रत्यक्त्वासङ्गतः परः । नेहाज्ञानमनादाय ह्यात्माऽनात्मानमीक्षते ॥ ५ ॥
स्थाण्वज्ञानमनादाय न चोरादीक्षणं यथा । आत्माज्ञामनादाय तद्वन्नानात्मवीक्षणम् ॥ ६ ॥
येनान्वितोऽयं संसारी सुषुप्ते कर्मणः क्षयात् । तत्स्वाभाव्याविशेषः स्यात्तत्कार्यत्वाद्घटादिवत् ॥ ७ ॥
स्वात्माभासप्रवेशो यः प्रत्यङ्मोहनिबन्धनः । तज्जेष्वपि स एव स्यान्मरुद्बुद्ध्यादिरूपिषु ॥ ८ ॥

सूत्रादीनां स्वरूपनिरूपणम्

पयोम्भोवत्सूत्ररूपं क्रियाविज्ञानशक्तिमत् । कर्तृस्थभावकं स्थास्नु चलं कर्मस्थभावकम् ॥ ९ ॥
बुद्ध्यात्मनो[1]ऽभिनिर्वृत्तिर्व्यवसायात्मनस्ततः । हिरण्यगर्भं यं प्राहुरुपादानं जगद्धियाम् ॥१०॥

उपहितानामीशादीनां सर्वोपाधिविधुरेण ब्रह्मणैक्यं प्रविष्टशब्दार्थः। तच्चैक्यं रज्जुसर्पयोरिव गुणप्राधान्यरूपं तस्मादुपहितं सर्वमुपाधिहीने कल्पितत्वात्तन्मात्रमित्यर्थः ॥५०४॥

ननूपहितानां पराभेदश्चेत्तस्योपाधियोगादसङ्गत्वहानिस्तदयोगे च नोपहिताभेदस्तत्राऽऽह—न ढौकत इति। सर्वप्रत्यक्त्वेन भेदाभावात्तत्कल्पनेऽपि वस्तुतः सङ्गाभावस्य श्रौतत्वाद्वास्तवमसङ्गत्वमविरुद्धमित्यर्थः। परस्य पराचीनासंबन्धे साक्षित्वासिद्धिरित्याशङ्क्याऽऽह—नेति। इहेत्यज्ञं प्रत्यञ्चमाह। [2]श्रौतं वा मतम्। साक्षित्वस्याविद्याकृतत्वं विद्वत्प्रसिद्धमिति वक्तुं हिशब्दः ॥५०५॥

अज्ञानतो विश्वसाक्षित्वं दृष्टान्तेन स्पष्टयति—स्थाण्विति ॥५०६॥

ईशादिभिरुपहितैरभिन्नस्यापि परस्यासङ्गत्वं साक्षित्वं च प्रसाध्याभेदे हेत्वन्तरमाह—येनेति। स्वापे व्यक्तभोगहेतुकर्माभावाद्विक्षेपहीनः सन्नेष संसारी सति संपद्येत्यादिश्रुतेर्येनाज्ञातब्रह्मणा तादात्म्यं गतस्तस्य कारणब्रह्मणो यत्स्वाभाव्यमप्रपञ्चत्वं तदविशेषस्तन्मात्रो भवेदयमीशादिस्तस्मिन्नध्यस्तत्वाद्यथा घटो मृद्विकारस्तदात्मकस्तद्वदित्यर्थः ॥५०७॥

प्रविष्टशब्दस्य ब्रह्मात्मैक्यमर्थः समर्थितः। इदानीं तस्यार्थो नैक्यमर्थान्तरे रूढेरित्याशङ्क्याऽऽह—स्वात्मेति। यो हि प्रत्यङ्मोहकृतस्तस्मिन्मोहे प्रत्यगाभासाख्यः प्रवेशः स एव प्रत्यगज्ञानजन्येष्वपि सर्वेषूपाधिषु प्रवेशः प्रवेशान्तरस्यापरिच्छिन्ने परस्मिन्नयोगान्न चाऽऽभासस्याऽऽभासिनोऽन्यत्र सत्त्वमित्यैक्ये प्रविष्टशब्दः पर्यवस्यतीत्यर्थः ॥५०८॥

मरुद्बुद्ध्यादिरूपिष्विति प्रवेशाधिकरणान्युक्तानि तेषां स्वरूपमाह—पयोम्भोवदित्यादिना। व्यतिकीर्णक्षीरनीरवन्मायोपाधिकारणं नानारूपं तस्य सर्वकार्यात्मकत्वात्तस्मादुत्पन्नं सूत्रमपञ्चीकृतभूतात्मकं क्रियाप्रधानज्ञानोपसर्जनशक्तियुक्तमित्यर्थः। कारणस्यावान्तरविशेषमाह—कर्तृस्थेति। कर्तृरूपेण जनकत्वेन स्थितं यत्स्वरूपं सूत्रकारणं तदुद्भवनिमित्तं स्थास्न्वविचलमनादित्वादित्यर्थः। कार्यस्य सूत्रस्यावान्तरविशेषमाह—चलमिति। कर्मरूपेण जन्यत्वेन स्थितं यत्कार्यरूपं सूत्रं तच्चलमाद्यन्तवदित्यर्थः ॥५०९॥

क्रियोपसर्जनज्ञानशक्तिकहिरण्यगर्भस्य परस्मादुत्पत्तिमनुवदन्नवान्तरं स्वरूपमाह—बुद्ध्यात्मन इति। तमेव विशिनष्टि—व्यवसायात्मन इति। सूत्रं व्यवर्तयति—तत इति। अज्ञातात्परस्मादित्यर्थः। ततो बुद्ध्यात्मोत्पत्तावपि हिरण्यगर्भस्य किमायातं तदाह—हिरण्यगर्भमिति। तत्र श्रुतिस्मृती प्रमाणयति—प्राहुरिति। तस्मिन्नेव [3]कार्यलिङ्गकमनुमानं सूचयति—उपादानमिति ॥५१०॥

१. हिरण्यगर्भो न जन्मवान् स्थूलोपाधिहीनचैतन्यत्वात् ब्रह्मवत् इत्याशङ्क्य हिरण्यगर्भं पश्यत जायमानं इतिवचनविरोधमाह—बुद्ध्यात्मन इति—( न्या० )।

२. श्रौतं वा मतं आह इह पदं इत्यर्थः। श्रौतमते अज्ञानमनादाय आत्मा नेक्षतेऽन्यत्।

३. कार्यलिङ्गकमनुमानम्—व्यष्टिबुद्धयः सकारणकाः कार्यत्वाद्घटवदित्यादि।

**वैराजं स्थानमासाद्य क्ष्मादिदेशविभागवान् । देवताकरणो[1] देव एष एवोच्यते विराट् ॥११॥**
**तथा च मन्त्रवर्णोऽत्र ह्यग्निर्मूर्धेति दृश्यते । तदुपादानमात्राः स्युर्देवताः स्वाभिमानजाः ॥१२॥**
**आधिभौतिकभूतानां तथैवाध्यात्मरूपिणाम् । पूर्वोक्तानां परिच्छेदो ह्यविद्याकामकर्मभिः ॥१३॥**
**सूत्रादिस्थाणुपर्यन्तं जगत्सृष्ट्वाऽऽत्ममायया । स्वाभासैकसहायात्मा तदेव प्राविशद्धरिः ॥१४॥**

व्यक्तस्य परात्मनः प्रवेशे अव्याकृतसृष्टिविरोधशङ्कासमाधिः

**ननु व्याक्रियतेत्युक्तं स्वयमेव जगत्पुरा । कर्मकर्त्रुक्तितोऽकस्मात्कथं कर्ताऽभिधीयते ॥१५॥**
**परात्मनः प्रवेशोऽपि न्यायं संगच्छते न च । नेहासौ प्रकृतो यस्मादतो नासौ प्रवेशभाक् ॥१६॥**
**नैष दोषः परस्यापि ह्यव्यक्तजगदात्मना । विवक्षितत्वादाक्षिप्तनियन्त्राद्यभिधीयते ॥१७॥**
**इदंशब्दाभिधानेन ह्येकाधिकरणश्रवात् । अव्याकृतपदस्यातो यथोक्तोऽर्थोऽत्र युज्यते ॥१८॥**

विराजः स्वरूपमाह—वैराजमिति । परमात्मैव सूत्रादिहेतुर्मायावी सूक्ष्मः पृथिव्यादिपञ्चकाद्देशविभागवान्वैराजं स्थूलप्रपञ्चात्मकं स्थानं प्राप्य विराडुच्यते स चाग्निसूर्याद्यवयववानित्यर्थः ॥५११॥

उक्ते विराजि पूर्वोक्तमेव मानं स्मारयति—तथा चेति । "द्यांमूर्धानमस्य विप्रा वदन्ती"त्याद्या स्मृतिरपि दर्शिते विराजि यथोक्तश्रुतिमूला भवति मानमिति वक्तुं हिशब्दः । विराजः सकाशादुत्पत्तिमनुवदन्निन्द्रादिदेवतास्वरूपं संगृह्णाति—तदुपादानेति । इन्द्रोऽहमित्याद्यभिमानित्वेन साधकावस्थायां पुमानवस्थितस्तेन तद्वासनाऽपि देवतासु फलभूतासु हेतुरित्याह—स्वाभिमानजा इति ५१२॥

भवन्त्वेवंविधानि प्रवेशाधिकरणानि तेषु प्रविष्टं चैतन्यमेकमनेकं वा ? आद्ये जीवभेदव्यवहारायोगाद् द्वितीये त्वद्वैतहतिरित्याशङ्क्याऽऽह—आधिभौतिकेति । तथैवेत्याधिदैविकभूतसमुच्चयार्थः । पूर्वोक्तानां प्रत्यङ्मोहमरुद्बुद्धीत्यादावुक्तानामिति यावत् । तत्तदुपाधिषु प्रविष्टचैतन्यस्यैक्येऽपि जीवभेदव्यवहारोऽविद्यादिवशादित्यर्थः । अविद्यादेरविद्यमानपरिच्छेदपरिनिर्माणनिपुणताद्योतनार्थो हिशब्दः ॥५१३॥

प्रवेशवाक्यार्थमुपसंहरति—सूत्रादीति । एकः स्वाभासः सहायोऽस्य स स्वाभासैकसहायः स चासावात्मा च स्वसृष्टं जगत्प्राविशदिति योजना । सृष्टौ प्रवेशे च साधारणं हेतुमाह—आत्मेति । प्रविष्टस्य तत्र तत्र पालयितृत्वं सूचयति—हरिरिति ॥५१४॥

व्यक्तस्रष्टा परमात्मा सृष्टौ प्रविष्टस्तस्मिन्नित्युक्तमाक्षिपति—नन्विति । पुरा तन्नामरूपाभ्यामित्यत्रेति यावत् । तत्र स्वयमेव जगतो व्याक्रियेत्येतदवद्योती शब्दो नास्तीत्याशङ्क्याऽऽह—कर्मेति । कर्मकर्तरि लकारदर्शनाज्जगतः स्वयमेव व्याक्रियेत्येवं सति स्रष्टुरभावान्न तस्य प्रवेष्टृत्वमित्याह—अकस्मादिति ॥५१५॥

परस्याप्रवेशे हेत्वन्तरमाह—परात्मन इति । यद्यपि परमात्मा जगतः स्रष्टा वेदान्तेष्वधिगतस्तथाऽपि नैव तस्य प्रवेशो न्यायमनुसरतीत्यर्थः । कथं न्यायासंगतिस्तत्राऽऽह—नेहेति । अव्याकृतस्य कारणत्वेनास्मिन्प्रकरणे प्रकृतत्त्वात्कारणत्वेनाकारणत्वेन च परस्याप्रकृतत्वान्न तस्य प्रवेशसिद्धिरित्यर्थः ॥५१६॥

परस्य प्रकृतत्वं दर्शयन्पूर्वापरविरोधं समाधत्ते—नेत्यादिना । अव्याकृतवदित्यपेरर्थः । परस्य जगद्धेतुत्वेन तत्प्रवेष्टृत्वेन च सर्वोपनिषत्प्रसिद्धत्वार्थो हिशब्दः । व्याक्रियतेति कर्मकर्तृत्वप्रयोगाज्जगत्कर्तुरविवक्षितत्वमुक्तमित्याशङ्क्याऽऽह—आक्षिप्तेति । जगद्व्याकरणस्य नियन्त्राद्यतिरेकणायोगात्तद्युक्तं जगदव्याकृतशब्देनोच्यते मुच्यते वत्सः स्वयमेवेतिवत्कर्मकर्तरि लकारस्तु व्याकरणसौकर्यापेक्षयोक्तोऽतोऽस्ति परस्य प्रकृतत्वमिति न पूर्वापरविरोध इत्यर्थः ॥५१७॥

अव्याकृतशब्दस्य नियन्त्रादियुक्तजगद्वाचित्वे हेत्वन्तरमाह—इदंशब्देति । अतःशब्दस्य पञ्चम्या संबन्धः । यथोक्तोऽर्थो नियन्त्रादिसाहित्यम् । अत्रेत्यव्याकृतजगदुक्तिः । सामानाधिकरण्यस्याभिन्नार्थवृत्तित्व-

1. देवताधिकरण अग्निसूर्यादयः यस्य करणानि "अग्निर्मूर्द्धा चक्षुषी चन्द्रसूर्यौ" इत्यादिश्रुतेः ।

इदं जगन्नियन्त्रादिविभिन्नानेकरूपवत् । यथाऽधुना निश्चिनुमः प्रागप्येतदभूत्तथा ।।१९।।
नामरूपाद्यभिव्यक्तेः प्राग्व्यक्तापह्नवेऽप्यभूत् । अव्यक्ताध्यक्ष एकाकी व्यक्तं यत्साक्षिकं जगत् ।।२०।।
जगज्जनिस्थितिध्वंसनृत्तसाक्ष्यतिरेकतः । शिष्टस्येह प्रवेश्यत्वात्पर एवाऽऽविशेदतः ।।२१।।
विवक्षातश्च शब्दानां प्रयोगो जगतीक्ष्यते । यथा ग्रामादिशब्दानां तथेहाप्यवसीयताम् ।।२२।।
निवासश्च निवासी च तथा चोभयमुच्यते । ग्रामशब्देन लोकेऽस्मिंस्तथेहापि जगद्गिरा ।।२३।।
क्वचिदात्मैव निर्देश्योऽनात्मैव क्वचिदुच्यते । तथोभयविवक्षाऽपि व्याकृताव्याकृतोक्तितः ।।२४।।
यत्र नाशादिमद्वस्तु प्राधान्येन विवक्ष्यते । तत्रानात्मैव वाच्योऽर्थः प्रत्यगात्मोपसर्जनः ।।२५।।
अस्थूलोऽजोऽजरः शुद्धो यत्र चाप्यभिधीयते । प्रत्यगात्मविवक्षैव तत्र ज्ञेयाभिधानतः ।।२६।।
अव्यक्तं व्याकृतं विश्वं यत्र चाप्यभिधीयते । आत्मानात्मद्वयार्थैव विवक्षा तत्र गम्यते ।।२७।।

अव्याकृतशब्देन परस्यागानेऽपि न दोषः

यन्मदन्यदिति चोक्तेः परस्य प्रकृतत्वतः । सशब्देन परामर्शः परस्येह भवेदतः ।।२८।।

प्रसिद्धचर्थो हिशब्दः । इदंशब्देन व्यक्तजगदभिधानेनाव्याकृतपदस्याव्यक्तजगदभिधानस्य सामानाधिकरण्यश्रवणादस्मादस्मिञ्जगति सर्वत्रैव नियन्त्रादिसाहित्यमुचितमिति योजना ।।५१८।।

कथमुक्तसामानाधिकरण्यमात्रादव्याकृतस्य जगतो नियन्त्रादियुक्तत्वं तत्राऽऽह—इदमिति । आदिपदेन करणोपकरणादिग्रहणम् । इदमा च दृश्यमानं घटादि परामृश्यते । दृष्टानुसारिणी कल्पनेति भावः ।।५१९।।

अव्याकृते जगति नियन्त्रादियुक्ते साधकवैधुर्यमाशङ्क्याऽऽह—नामेति । नामरूपाभ्यां व्यक्तं जगद्येन साक्षिणा नियन्त्रादियुक्तमनुभूयते स एव तदुत्पत्तेः पूर्वं तदपह्नवादूर्ध्वं च तद्व्यक्ताव्यक्तसाधको न च तस्यान्यसाधकापेक्षैकाकित्वात्स्वप्रकाशत्वाच्चेत्यर्थः ।।५२०।।

परस्य प्रकृतत्वोक्त्या तस्यैव प्रवेशमुक्त्वा तत्रैव हेत्वन्तरमाह—जगदिति । साक्षिणो भेदेन श्रुतं दृष्टं वा यदवशिष्टं तस्य सर्वस्य प्रवेशविषयान्तर्भावात्परात्मैव जगति प्रवेष्टा तन्न भेदशङ्केत्यर्थः ।।५२१।।

अव्याकृतवाक्ये परस्य न प्रकृतत्वमेकस्याव्याकृतशब्दस्यानेकार्थत्वाभावादित्याशङ्क्याऽऽह—विवक्षातश्चेति । शक्त्यनुरोधं दृष्टान्तयितुं चशब्दः । ईक्षणमेव दृष्टान्तनिष्ठतया दर्शयति—यथेति । ग्रामपटादिशब्दवदव्याकृतशब्देऽप्यनेकार्थतेति दार्ष्टान्तिकमाह—तथेति ।।५२२।।

कथं ग्रामशब्दस्यानेकार्थत्वं तत्राऽऽह—निवासश्चेति । ग्रामः शून्यो ग्रामो गतो ग्रामं न प्रविशेदित्युदाहरणानि । जगदव्याकृतशब्दयोरेकार्थत्वमादायोक्तमेव दार्ष्टान्तिकमादत्ते—तथेति । इहेति शास्त्रोक्तिः । जगद्गिराऽनेकार्थविवक्षेति शेषः ।।५२३।।

दार्ष्टान्तिकं प्रपञ्चयति—क्वचिदिति । उभयविवक्षायामुदाहरणमाह—व्याकृतेति । व्याकृतमेव जगदव्याकृतमित्युक्तेरित्यर्थः ।।५२४।।

कुत्रानात्मैव जगच्छब्देनोच्यते तत्राऽऽह—यत्रेति । जगदुत्पत्तिनाशादिमदित्यादिप्रयोगे जगच्छब्देनानात्मैव प्राधान्येनोच्यते तस्मिन्प्रत्यगुपसर्जनीभवत्यन्यथा जन्माद्ययोगादित्यर्थः ।।५२५।।

कुत्र प्राधन्येनाऽऽत्मैव जगच्छब्देनोच्यते तत्राऽऽह—अस्थूल इति । यत्र निषेध्यत्वेन स्थूलादि जगत्कथ्यते तत्र प्रत्यगात्मैव निषेध्यार्पणद्वारा तच्छब्देन विवक्ष्यते निषेधमात्रे तदपर्यवसानस्य वक्ष्यमाणत्वादित्यर्थः ।।५२६।।

उभयविवक्षया जगच्छब्दप्रयोगस्तर्हि क्वेत्याशङ्क्य तद्वेदमित्यादावित्याह—अव्यक्तमिति । व्याकृताव्याकृतोक्तित इत्येतदेवात्र व्यक्तीकृतमिति न पौनरुक्त्यम् ।।५२७।।

अव्याकृतवाक्ये परस्य प्रकृतत्वात्तस्य प्रवेशवाक्ये सशब्देन परामर्श उक्तः । यदि तस्य तत्र प्रकृतत्वं नेष्टं तथाऽपि यन्मदन्यन्नास्तीत्यत्र प्रकृतत्वात्तस्यात्र सशब्देन परामर्शात्तस्यैव स्रष्टुः सृष्टे जगति प्रवेशो युक्त इत्याह—

### प्रवेशस्य बहुधा विकल्प्य खण्डनम्

**अव्यावृत्ताननुगतयाथात्म्यादात्मवस्तुनः । ननु प्रवेशस्तस्येह कथं श्रुत्योपदिश्यते ।।२९।।**
**अप्रविष्टं यतो वेश्म परिच्छिन्नेन शक्यते । प्रवेष्टुं पुरुषेणैवं न खेनैतद्विधर्मतः ।।३०।।**
**सर्वगाणामपि यथा भूतानां परिणामतः । सर्पादीनां प्रवेशः स्यादुपलादौ मतं यदि ।।३१।।**
**युतसिद्धनिवृत्त्यर्थं सहजोक्त्याऽभिधीयते । अश्मनः परिणामत्वात्सर्पादेः परिपाकतः ।।३२।।**
**दृश्यतेऽन्तस्थतोयानां बहिष्ठः परिपाकतः । परिणामः पदार्थानां क्रिमिसर्पादिलक्षणः ।।३३।।**
**नैवं यस्मादनापन्नधर्मान्तर इहोच्यते । कार्ये प्रविष्टः स्रष्टैव पुमान्वेश्मेव तत्कृतम् ।।३४।।**
**यथा भुक्त्वैति नगरं भुज्येतिक्रिययोर्नरः । अविशिष्टो भवेत्कर्ता भिन्नकालस्थयोस्तथा ।।३५।।**
**सृष्ट्वेदं सकलं विश्वं पश्चात्तत्प्राविशद्विभुः । अनुपात्तान्यधर्मः सन्न तु पाषाणसर्पवत् ।।३६।।**
**न चानवच्छिन्नतनोर्निर्विभागात्मवस्तुनः । पूर्वस्थानवियोगेन स्थानान्तरसमागमः ।।३७।।**

यदित्यादिना । इहेति प्रवेशवाक्योक्तिः । परस्य सर्वनाम्ना परामर्शे तस्यैव सृष्टे जगति प्रवेशः सिध्यतीति फलितमाह—अत इति ।।५२८।।

प्रकारान्तरेण तस्य प्रवेशमाक्षिपति—अव्यावृत्तेति । इहेति बुद्ध्यादिनिर्देशः ।।५२९।।

कथमिति सूचितानुपपत्तिमेव स्पष्टयति—अप्रविष्टमिति । पुरुषवदाकाशेन वेश्म न प्रवेष्टुं शक्यं तस्यापरिच्छिन्नत्वेन तद्वैलक्षण्यादतो न पूर्णस्य क्वचित्प्रवेशसिद्धिरित्याह—एवमिति ।।५३०।।

निदर्शनवशादाशङ्कते—सर्वगाणामिति । यथा पृथिव्यादिभूतानां सर्वकार्यव्यापिनामपि परिणामवशात् प्राप्तसर्पक्रमिकीटादिभावानां तेनैव सर्पाद्याकारेण पाषाणदार्वादौ प्रवेशस्तथा परस्य सर्वगतस्यापि जीवाख्यपरिणामद्वारा बुद्धौ प्रवेशः स्यादिति यदि मतमिति शङ्कार्थः ।।५३१।।

पृथिव्यादीनां सर्पाद्यात्मना पाषाणादौ प्रवेशो न युक्तः पाषाणे सहजोऽन्तस्थः सर्प इति भाष्यविरोधादित्याशङ्क्य सहजशब्दार्थमाह—युतेति । पाषाणाद्बाह्यः सर्पादिस्तस्मात्पृथगेव सिद्धस्तत्र प्रविष्ट इति शङ्कापोहार्थं सहजशब्देनोक्त इत्यर्थः । पाषाणादौ सर्पादेः सहजत्वे हेतुमाह—अश्मन इति । सर्पमण्डूकादेरश्मादिरूपेण स्थितभूतपञ्चकपरिणामत्वात्तत्र सहजत्वमित्यर्थः । कथमश्माद्यात्मकभूतपञ्चकस्य सर्पादिरूपेण परिणामस्तत्राऽऽह—परिपाकत इति ।।५३२।।

कालादिपाकवशात्पृथिव्यादिपञ्चकस्य सर्पादिपरिणाममनुभवेन साधयति—दृश्यत इति । अस्मदुदरेषु पाषाणादिषु चान्तःस्थानि यानि तोयोपलक्षितानि भूतानि पदार्थशब्दितानि तेषां पाकवशात्परिणामः सर्पादिलक्षणो बहिष्ठो लक्ष्यतेऽतस्तद्रूपेणाश्मादावपरिच्छिन्नभूतानुप्रवेशवदपरिच्छिन्नस्यापि परस्य जीवाकारेण बुद्ध्यादौ प्रवेशसिद्धिरित्यर्थः ।।५३३।।

पूर्ववाद्याह—नैवमिति । यथा देवदत्तोऽनेकशिल्पपर्यवदातः स्वकृतं वेश्म प्रविशति तथैव स्रष्टा सृष्टे कार्ये बुद्ध्यादावप्राप्तपरिणामविशेषः सन्प्रविष्टोऽस्तीति तत्सृष्ट्वेत्यादिश्रुत्या यस्मादुच्यते तस्मान्नोपदिष्टदृष्टान्तवशादाशङ्का सावकाशेत्यर्थः ।।५३४।।

ननु तक्ष्णा सृष्टे वेश्मनि ततोऽन्यस्यापि प्रवेशो दृश्यते तथा परेण सृष्टे जगत्यन्यस्य प्रवेशो भविष्यति नेत्याह—यथेति । चैत्रो भुक्त्वा नगरं व्रजतीत्यत्र भोजनव्रजनक्रिययोरव्यवहितपूर्वोत्तरकालवर्तिन्योरेकश्चैत्रो यथा कर्ता स्वीकृतस्तथा विश्वमशेषं तदेवानापन्नविकारः स्रष्टा प्राविशदिति श्रवणान्न स्रष्टुरन्यस्य प्रवेष्टृत्वमित्यर्थः । स्रष्टू रूपान्तरमनापन्नस्यैव कार्ये प्रवेशश्रवणात्पाषाणे सर्पाकारस्य भूतस्यानुप्रवेशवत्परस्यानुप्रवेशो नेति व्यावर्त्यमाह—न त्विति ।।५३५-५३६।।

अस्तु तर्हि परस्य मार्जारादिवत्पूर्वस्थानत्यागेन स्थानान्तरसंयोगात्मा प्रवेशो नेत्याह—न चेति । अपरिच्छिन्नत्वान्निरवयवत्वाच्चाऽऽत्मनो न प्रसिद्धप्रवेशसिद्धिरित्यर्थः ।।५३७।।

---

१. ११८-१९ ।

**मतं प्रवेशश्रवणादस्तु सावयवः परः । इति चेन्नैतदेवं स्यादागमोक्तिविरोधतः ।।३८।।**
**दिव्यो ह्यमूर्तः पुरुषो नेति नेतीति चासकृत् । गीर्मनोगम्यधर्माणां सर्वेषामात्मनि ह्नुतेः ।।३९।।**
**रविबिम्बादिवत्तर्हि प्रवेशोऽस्तु परात्मनः । नैतन्न्याय्यमसद्भावात्तत्संयोगवियोगयोः ।।४०।।**
**संयोगश्च वियोगश्च यस्य येनेह वीक्ष्यते । प्रतिबिम्बप्रवेशोऽयं तत्र न त्विह युज्यते ।।४१।।**
**गुणप्रवेशवद्द्रव्य इति चेन्नानपाश्रयात् । द्रव्यैकपरतन्त्राणां गुणानामेव युक्तिमान् ।।४२।।**
**तादृक्प्रवेशो नेशस्य स्वातन्त्र्यादुपपद्यते । एष सर्वेश्वर इति स्वातन्त्र्यं श्रूयतेऽसकृत् ।।४३।।**
**बीजवत्स्यात्प्रवेशश्चेन्नैवमप्युपपद्यते । जन्मादिविक्रियाधर्मप्रसक्तेरात्मवस्तुनः ।।४४।।**
**स्थूलादिविक्रियाषट्कप्रतिषेधश्रुतेर्न च । प्रवेशो ब्रह्मणोऽयुक्तः फले बीजादिवत्सदा ।।४५।।**
**ननु पाषाणसर्पेण पुनरुक्तमिदं कथम् । फले बीजवदित्युक्तं नैष दोषो भवेत्कुतः ।।४६।।**
**भागभाग्यभिसंबन्धः ख्यातो बीजफलात्मनोः । आधाराधेयसंबन्धस्तत्राश्मोरगयोः स्फुटः ।।४७।।**

प्रवेशश्रुतिवशान्निरवयवत्वं त्याज्यमिति शङ्कते—मतमिति । श्रुतिविरोधान्न सावयवत्वं परस्येति परिहरति—नैतदिति ।।५३८।।

आगममुदाहरति—दिव्यो हीति । द्योतनात्मकस्य चिदेकरसत्वात् । अमूर्तत्वं निरवयवत्वम् । पुरुषत्वं पूर्णत्वम् । सर्वविशेषनिषेधश्रुतिमत्रानुकूलयति—नेतीति । अस्यामुपनिषदि बहुषु देशेषु निषेधाभ्यासं सूचयति—असकृदिति । वीप्साश्रुतेरर्थमाह—गीरिति । न परस्य सावयवत्वादिसंभावनेति शेषः ।।५३९।।

प्रकारान्तरेण प्रवेशोपपत्तिं शङ्कते—रवीति । तस्य परस्य केनचित्संयोगाद्यभावान्न प्रतिबिम्बोपपत्तिरित्याह—नैतदिति ।।५४०।।

तदेव विभजते—संयोगश्चेति । प्रथममिहेति पदं लोकव्यवहारं गोचरयति । द्वितीयं त्वात्मानमधिकरोति । तत्रेति संयोगादिप्रतियोगिनो जलादेरुक्तिः । तस्याऽऽदित्यादेरिति द्रष्टव्यम् । आदित्यादौ जलादिना संयोगादिसंभवात्प्रतिबिम्बाख्यप्रवेशसिद्धेरात्मन्यसङ्गेऽनवच्छिन्ने संयोगाद्यभावान्न प्रतिबिम्बरूपः प्रवेशः इत्यर्थः ।।५४१।।

प्रकारान्तरेण प्रवेशं चोदयति—गुणेति । यथा द्रव्ये गुणस्य प्रवेश एवं परस्यापि कार्ये प्रवेश इत्यर्थः । दूषयति—नेति । गुणापेक्षया परस्य वैलक्षण्यं हेतुमाह—अनपाश्रयादिति । वैलक्षण्यं प्रकटयति—द्रव्येति । द्रव्ये प्रवेश इति शेषः ।।५४२।।

दार्ष्टान्तिकेऽनुपपत्तिमाह—तादृगिति । न हि कारणं कार्यतन्त्रं वैपरीत्यादतो द्रव्ये गुणवदीश्वरस्य प्रवेशो न कार्ये युक्तः स्वतन्त्रतया गुणवैधर्म्यादित्यर्थः । कथं स्वातन्त्र्यं तदाह—एष इति । तत्र श्रुतेस्तात्पर्यं सूचयति—असकृदिति ।।५४३।।

प्रकारान्तरेण प्रवेशमुपन्यस्य निरस्यति—बीजवदिति । फले बीजस्य प्रवेशवत्कार्ये परस्य प्रवेशो न युक्त इत्यत्र हेतुमाह—जन्मादीति ।।५४४।।

आत्मनो विक्रियावत्त्वे का क्षतिस्तत्राऽऽह—स्थूलादीति । स्थूलादेरस्त्यादिविक्रियाषट्कस्य च निषेधश्रुतेर्नाऽऽत्मनो विकारितेति योजना । आत्मनो विकारित्वाभावे फलितमाह—प्रवेश इति । अयुक्त इति च्छेदः । सदाशब्दश्चात्र योजनीयः । आदिपदं बीजातिरिक्तफलप्रविष्टसर्वसंग्रहार्थम् । अथवा स्थूलादिद्वैतजन्मादिविक्रियाषट्कस्य फले बीजवत्प्रवेशे ब्रह्मण्यपि प्रसक्तस्य श्रुतिस्मृत्योर्निषेधश्रुतेः सदादर्शनान्नैव ब्रह्मणस्तथा प्रवेशो युक्त इति हेत्वन्तरमाह—स्थूलादीति ।।५४५।।

फलबीजदृष्टान्तस्य पाषाणसर्पदृष्टान्तेन पुनरुक्तिं शङ्कते—नन्विति । पुनरुक्त्यभावं प्रतिजानीते—नेति । अर्थविशेषाभावे दुर्वारा सेत्याक्षिपति—कुत इति ।।५४६।।

अर्थविशेषं वदन्नुत्तरमाह—भागेति । बीजफलयोरवयवावयवित्वं पाषाणसर्पयोराधाराधेयतेति न पुनरुक्तिरित्यर्थः । तत्रेति निर्धारणे सप्तमी ।।५४७।।

परस्मादन्य एवेह संसारी प्राविशज्जगत् । परिच्छिन्नस्य लोकेऽपि प्रवेश उपपद्यते ।।४८।।

प्रवेशश्रुत्युपपत्तिप्रतिज्ञा

स्रष्टृप्रवेष्ट्रोरेकत्वान्नैवमप्युपपद्यते । सृष्ट्वा जगत्सृष्टिमनु तदेव प्राविशच्छ्रुतेः ।।४९।।
पर एव प्रविष्टश्चेत्प्रविष्टानामनेकतः । तदनन्यत्वतः प्रापन्महेशस्याप्यनेकता ।।५०।।
नैष दोषो यतो नेह भेदेनेशस्य संगतिः । आत्मत्वरूपतस्तस्य ह्यात्मा चाभेदसंगतेः ।।५१।।
अनन्यत्वं प्रविष्टैः स्यान्नानात्वमिति दुर्भणम् । बहूनामेकयोगित्वादेकत्वं किं न चोद्यते ।।५२।।
न च नानात्वकृल्लोके संयोगोऽभेदकारणात् । तथाऽऽगमविरोधश्च बहुत्वं चेत्परात्मनः ।।५३।।
एको देवो बहुधेतिमन्त्रब्राह्मणयुक्तितः । वियद्वदेकलस्तस्मादीश्वरोऽभ्युपगम्यताम् ।।५४।।

परस्य प्रवेशाभ्युपगमे दोषकथनम्

आस्तां तावत्प्रवेशोऽयं न्याय्योऽन्याय्यो यथा तथा । दोषान्तरमिह प्राप्तं तत्तावत्प्रविचार्यते ।।५५।।
संसारित्वात्प्रविष्टानां परस्य तदभेदतः । संसारित्वं प्रसक्तं चेन्न क्षुदाद्यत्ययश्रुतेः ।।५६।।

परस्य सर्वप्रकारप्रवेशासंभवे प्रवेशश्रुतेरालम्बनं वाच्यमित्याशङ्क्य पूर्वपक्षमुपसंहरति—परस्मादिति । इह श्रुतौ यो जगत्प्राविशदित्युक्तः स परस्मादन्यः संसार्येवेति योजना । किंच परस्मादन्यस्य प्रवेशो लोके युक्त्यनुसारीत्याह—परिच्छिन्नस्येति । न च श्रुतिविरोधः परस्यैव जीवभावमापन्नस्य प्रवेशवादित्वादिति भावः ।।५४८।।

एवं पूर्वपक्षे सिद्धान्तमाह—स्रष्ट्रिति । जगतो हि परः स्रष्टेति वेदान्तमर्यादा स्रष्टैव च प्रवेष्टा "तत्सृष्ट्वा तदेवानुप्राविशदि"त्येककर्तृकत्वश्रुतेरतः परस्मादन्यस्य प्रवेशो नैव युक्तः । अपिरवधारणार्थ इति योजना ।।५४९।।

परस्य प्रवेशे तस्य नानात्वप्रसक्तिरित्यनिष्टापत्तिं शङ्कते—पर इति । प्रविष्टानामनेकत्वेऽपि कथमीशस्यानेकत्वमित्याशङ्क्य प्रविष्टैरभेदादित्याह—तदनन्यत्वत इति ।।५५०।।

प्रविष्टेषु परस्य भेदेन न संयोगादिसंबन्ध आत्मत्वेन तत्स्वरूपत्वान्न चाऽऽत्मत्वेऽपि भेदेन संगतिरभेदेनैकात्म्यसंगतेरेवाऽऽत्मत्वसंभवादतो न परस्यानेकतेति परिहरति—नेत्यादिना । आत्मत्वं नाम निरुपचरितस्वरूपत्वं तदैकात्म्यसंगतेराक्षेपकमिति प्रसिद्धमिति वक्तुं हिशब्दः ।।५५१।।

परस्य प्रविष्टैरभेदेऽपि नानात्वमनेकाभिन्नत्वादित्याशङ्क्याऽऽह—अनन्यत्वमिति । प्रविष्टैरनन्यस्य तैरेवान्यत्वे विरुद्धेऽपि बहुभिरभेदात्तद्वन्नानात्वे कः समाधिरित्याशङ्क्याऽऽह—बहूनामिति । एकस्य बहुभिः अभेदादनेकत्वं चेद्बहूनामेकस्मादभेदादेकत्वं किं न स्यादित्यर्थः ।।५५२।।

परः स्वगतभेदवाननेकाभिन्नत्वात्तद्वदित्यत्रानेके तत्त्वतः स्वगतभेदहीना एकाभिन्नत्वादेकवदिति प्रत्यनुमानमुक्त्वाऽभिन्नत्वस्य भेदसाधकत्वे लोकविरोधमाह—न चेति । यथा संयोगोऽभेदकस्तथा नाभेदो नानात्वकारी दृष्टस्तस्याभेदकत्वादेव तद्विरोधित्वादित्यर्थः । भेदसाधनस्यानुमानेन लोकप्रसिद्ध्या च विरोधवदागमेनापि सोऽस्तीत्याह—तथेति ।।५५३।।

भाष्योक्तमन्त्रब्राह्मणाभ्यां नानात्वस्य दुर्निरूपत्वं युक्तेश्च न तत्परस्येति प्रतिज्ञातं विरोधमेव स्फुटयति—एक इति । नानात्वायोगे फलितमाह—वियद्वदिति । परः स्वगततात्त्विकभेदहीनो मेयत्वादाकाशवदित्यर्थः ।।५५४।।

परस्य प्रवेशे नानात्वप्रसङ्गं प्रत्याख्याय दोषान्तरं चोदयति—आस्तामिति । युक्तोऽयुक्तो वा येन केनापि प्रकारेण प्रवेशोऽस्तु श्रुतिवशादिति योजना । श्रुत्यवष्टम्भेन संक्षिप्तः प्रवेशः प्रपञ्चयितव्यः पश्चादिति तावच्छब्दः । अनेकत्वदोषाभावेऽपि परस्य प्रवेशपक्षे दोषान्तरं प्राप्नोति तच्च निराकर्तुं शक्यमशक्यं वेति विचार्याशक्यमिति निर्धार्योच्यत इत्याह—दोषान्तरमिति । तस्यापि निरासो भावीति तावच्छब्दः ।।५५५।।

तदेव दर्शयति—संसारित्वादिति । परः संसारी तदभिन्नत्वात्तद्वदित्यनुमानं दूषयति—नेत्यादिना । "योऽशनापिपासे शोकं मोहं जरां मृत्युमत्येती"त्यशनायादिशून्यत्वं परस्य श्रूयते तत्कुतोऽस्य संसारित्वं श्रुतिविरोधादित्यर्थः ।।५५६।।

सुखिदुःखित्वमोहादिदर्शनान्नेति चेन्मतम् । नैवं वेदान्तवाक्येषु न लिप्यत इति श्रुतेः ॥५७॥
ननु प्रत्यक्षमानेन साक्षाद्दुःखादिदर्शने । प्रत्यक्षबाधसिद्धयर्थं न न्याय्योक्तिपरंपरा ॥५८॥
नोपाध्याश्रयजनितविशेषविषयत्वतः । प्रत्यक्षाभासतासिद्धेस्तेन नोक्तिविरोधिता ॥५९॥
दुःखी यदि भवेदात्मा कः साक्षी दुःखिनो भवेत् । दुःखिनः साक्षिताऽयुक्ता साक्षिणो दुःखिता तथा ॥६०॥

साक्षिणो दुःखाद्यसंसृष्टता

नर्ते स्याद्विक्रियां दुःखी साक्षिता का विकारिणः । धीविक्रियासहस्राणां साक्ष्यतोऽहमविक्रियः ॥६१॥
सुखदुःखादिसंबद्धां यथा दण्डेन दण्डिनम् । राधको वीक्षते बुद्धिं साक्षी तद्वदसंहतः ॥६२॥
शरीरेन्द्रियसंघात आत्मत्वेन गतां धियम् । नित्यात्मज्योतिषा दीप्तां विशिंषन्ति सुखादयः ॥६३॥
पराञ्च्येव तु सर्वाणि प्रत्यक्षादीनि नाऽऽत्मनि । प्रतीच्येव प्रवृत्तं तत्सदसीति वचोऽञ्जसा ॥६४॥
विज्ञातारमरे केन न दृष्टेरिति च स्फुटम् । अन्यदेवेति वाक्याच्च प्रत्यक्षं नाऽऽत्मगोचरम् ॥६५॥
किंतु बुद्ध्याद्युपाधौ तदात्मच्छायैककर्मकम् । तथा दुःख्यहमित्यादौ प्रत्यक्षमुपचारतः ॥६६॥

अनुभवमनुसृत्य शङ्कते—सुखीति। न क्षुदादिवैधुर्यं परस्येति शेषः। उक्तमेव समाधिमाह—नैवमिति ॥५५७॥

आगमो हि परस्यासंसारित्वे त्वयोच्यते स चाध्यक्षविरुद्धो न स्वार्थे मानं न च वैपरीत्यं ज्येष्ठत्वेन बलवत्त्वादिति शङ्कते—नन्विति ॥५५८॥

उपाधिरन्तःकरणं तदाश्रयत्वेन जनितो विशेषश्चिदाभासस्तद्गतदुःखादिविषयत्वात्प्रत्यक्षस्याऽऽभासत्वसिद्धिस्तेनाऽऽत्मन्यसंसारित्वागमस्य न विरोधस्तथा चाऽऽगमात्स्वार्थे धीरिति परस्य नास्ति संसारितेति परिहरति—नोपाधीति ॥५५९॥

किमित्याभासद्वारा चैतन्ये दुःखित्वं कल्प्यते साक्षादेव किं न स्यादित्याशङ्क्याऽऽह—दुःखीति। दुःख्येव कश्चिद्दुःखिनः साक्षीत्याशङ्क्याऽऽह—दुःखिन इति। तथेत्ययुक्तेति यावत् ॥५६०॥

दुःखित्वसाक्षित्वयोरेकत्रायोगे हेतुमाह—नेति। परिणामित्वं विना न दुःखितेत्यर्थः। परिणामित्वेऽपि साक्षित्वमाशङ्क्याऽऽह—साक्षितेति। तस्य जाड्यादसाक्षितेत्यर्थः। विकारिणोऽसाक्षित्वे फलितमाह—धीविक्रियेति। प्रत्यगात्मा निर्विकारो बुद्धितद्वृत्तिसाक्षीत्युक्तम् ॥५६१॥

तदानीं तस्य साक्ष्येण योगश्चेदसङ्गत्वहानिरयोगश्चेदसाक्षितेत्याशङ्क्याह—सुखेति। राधकः साधको द्रष्टेति यावत्। यथा द्रष्टा दण्डेन युक्तं मैत्रमीक्षमाणो न स्वयं दण्डी तथा सुखादिमतीं बुद्धिमसंहतः सन्पश्यन्साक्षी न सुखादिना युज्यतेऽतो वस्तुतोऽसङ्गस्य कल्पितसंबन्धात्साक्षितेत्यर्थः ॥५६२॥

सुखादिमती बुद्धिरेव नाऽऽत्मेत्युपपादयति—शरीरेति। देहादावात्मत्वेन स्थितां साभासां बुद्धिं सुखादयो व्यावर्तयन्ति। तद्बौद्धसुखादिविषयमध्यक्षमिति न चितः संसारितेत्यर्थः। सुखादीनां चेतनधर्मत्वप्रसिद्धेर्बुद्धिस्थत्वमयुक्तमिति चेन्नेत्याह—नित्येति। आत्मचैतन्यव्याप्तबुद्धिधर्मत्वादात्मधर्मत्वप्रसिद्धिरित्यर्थः ॥५६३॥

प्रत्यक्षादीनामनात्मविषयत्वादात्माविषयत्वाच्चाऽऽगमस्य भिन्नविषयतया मिथो विरोधो नेत्यत्र श्रुतिं प्रमाणयति—पराञ्चीति। पराञ्चि खानीतिश्रुतेरनात्मविषयाणि प्रत्यक्षादीनि नाऽऽत्मविषयाणि नान्तरात्मन्निति विशेषणात्। सदसीत्यादिवचस्त्वसंसारित्वप्रतिपादकमात्मन्येव तात्पर्येण प्रवृत्तमतो न मिथो विरोध इत्यर्थः ॥५६४॥

प्रत्यक्षादेरात्माविषयत्वं भाष्योक्तश्रुत्याऽप्याह—विज्ञातारमिति। स्फुटमात्मनो दृष्टिविषयत्वनिषेधादिति शेषः। प्रत्यक्षमित्यनुमानादेरुपलक्षणम् ॥५६५॥

सुख्यहमित्याद्यध्यक्षस्य तर्हि को विषयस्तत्र नोपाध्याश्रयेत्यादावुक्तं स्मारयति—किं त्विति। देहद्वयरूपोपाधावात्माभासोदयात्तन्मात्राश्रितं सुखादि विषयीकृत्याध्यक्षं चरितार्थीभवतीत्यर्थः। भिन्नविषयत्वादविरोधे

सामानाधिकरण्यस्य तथैवेहोपचारतः । अयं दुःख्यहमस्मीति विषयेण तदीक्षणात् ॥६७॥
नासिकाग्रे महद्दुःखं पादाङ्गुष्ठाग्र एव च । देहावयवदुःखादेः प्रात्यक्ष्यान्नाऽऽत्मदुःखिता ॥६८॥
प्रतीचि चेद्भवेद्दुःखं व्यापि चैतन्यवद्भवेत् । द्रष्टृस्थत्वान्न कर्मस्थं द्रष्ट्रा दृश्येत बोधवत् ॥६९॥

सुखादेरात्माश्रयत्वशङ्कापरिहारौ

स्वात्मनस्त्वेव कामाय ह्यात्मार्थत्वश्रुतेर्भवेत् । आत्मैकविषयं सौख्यमिति चेन्मन्यसे न हि ॥७०॥
यत्र वा अन्यदित्युक्तेरविद्याविषयं तु तत् । दुःखित्वं नाऽऽत्मनि ज्ञेयं यत्र त्वस्येति निह्नुतेः ॥७१॥
मम तावदिदं बुद्धौ भवद्वचो यन्न रोचते । प्रत्यक्प्रवणया दृष्ट्या संसारो नाऽऽत्मनीक्ष्यते ॥७२॥

तार्किकमतेनात्मनः संसारित्वशंका परिहारश्च

मतं तार्किकसमयविरोधश्चेत्प्रसज्यते । इच्छाद्वेषादिमानात्मा यतस्तैरभ्युपेयते ॥७३॥
नैवं निःशेषतर्कैश्चेदविरोधोऽभ्युपेयते । सिद्धान्तो दुःस्थितोऽत्यर्थं तदा वः प्राप्नुयाद्ध्रुवम् ॥७४॥

हेत्वन्तरमाह—तथेति । तदेव स्फुटयते—दुःखीति । यथा ब्राह्मणोऽहमित्याद्यध्यक्षं कल्पिततादात्म्यविषयं तथा दुःख्यहमित्यादौ यत्प्रत्यक्षं तदपि मिथ्याज्ञानमेवोपचारशब्देन विषयस्य मिथ्यात्वोक्तेरित्यर्थः ॥५६६॥

प्रकृताध्यक्षस्य मिथ्यात्वे हेतुं साधयति—सामानाधिकरण्यस्येति । ब्राह्मणोऽहमित्यैक्यस्य मिथ्यात्वात् तद्विषयाध्यक्षस्य मिथ्याज्ञानत्ववद्दुःखिन्यात्मनि च यत्सामानाधिकरण्यमैक्यमध्यक्षविषयस्तस्योपचारतो मिथ्यात्वाद्विषयिणोऽपि तस्य मिथ्याज्ञानतेत्यर्थः । विषयस्य मिथ्यात्वमेव कथमित्याशङ्क्याऽऽह—अयमिति । विषयिणो विषयेणैक्यभानाद्रूप्यादिवदैक्यस्य मिथ्यात्वं, न चान्यस्यान्यात्मत्वममिथ्येत्यर्थः ॥५६७॥

आत्मनो दुःखित्वाभावे हेत्वन्तरमाह—नासिकेति । दुःखादावित्यादिपदेन सुखादि गृह्यते ॥५६८॥

किं दुःखमात्मनि व्याप्यवृत्ति प्रदेशवृत्ति वा ? प्रथमे देहाद्बहिरपि तद्धीः स्यात् । न च तद्धेत्वभावान्नेति वाच्यं तथा सति तद्व्याप्यवृत्तित्वस्याप्रामाणिकत्वात्तस्य स्वसत्तायां प्रतीत्यव्यभिचारित्वात् । न द्वितीयः सर्वगतस्य प्रतीचो वास्तवप्रदेशाभावात्कल्पितप्रदेशाश्रितं दुःखमपि तथेति मत्वाऽऽह—प्रतीचीति । दुःखादेरात्मधर्मत्वे दोषान्तरमाह—द्रष्टृस्थत्वादिति । द्रष्टरि स्थितत्वात्कर्मत्वेन स्थितं सद्दुःखादि तेनैव द्रष्ट्रा न दृश्येत स्वगतग्रहे स्वस्यापि ग्रहप्रसङ्गाद्यथा बोधो न कर्मत्वेन गृह्यतेऽनवस्थानात्तद्वत् । अस्ति च दुःखादेरात्मदृश्यत्वमतो न तद्धर्मतेत्यर्थः ॥५६९॥

सुखादेरात्माश्रयत्वं श्रुतेराशङ्कते—स्वात्मनस्त्विति । सुखं तावदात्माश्रय"मात्मनस्तु कामाये"ति सुखसाधनस्याऽऽत्मार्थत्वश्रुतेस्ततस्तदविनाभूतं दुःखमपि तत्रैवेत्यात्मनि संसारित्वं श्रौतमित्यर्थः । श्रुतेरनुभवानुसारित्वद्योतनार्थो हिशब्दः । आत्मन्याविद्यसंसारित्वानुवादेन परानन्दत्वप्रतिपादकमात्मनस्तु कामायेत्यादिवाक्यमिति मत्वाऽऽह— न हीति ॥५७०॥

तदाविद्यसंसारानुवादीत्यत्र गमकमाह—यत्रेति । आत्मनि संसारित्वस्याप्रतिपाद्यत्वं व्यावर्त्यमाह—दुःखित्वमिति । तत्रापि गमकमाह—यत्र त्विति ॥५७१॥

विद्वत्प्रत्यक्षविरोधाच्च नाऽऽत्मनः संसारितेत्याह—ममेति । यदनर्थात्मकं दुःखादि भवतां स्वार्थं नेष्टं तदिदं विदुषां तावत्साभासायां बुद्धावनुभूयते तन्न तदात्मस्थमनुभवविरोधादित्यर्थः । आत्मस्थत्वेनापि तस्यानुभवोऽस्तीति चेन्नेत्याह—प्रत्यगिति ॥५७२॥

आत्मनः संसारित्वं तर्कशास्त्रप्रामाण्यादिति शङ्कते—मतमिति । कथमात्मनोऽसंसारित्वे तद्विरोधस्तत्राऽऽह—इच्छेति । इच्छादयः क्वचिदाश्रिता गुणत्वाद्रूपवदित्यनुमानात्पारिशेष्यात्तेषामात्माश्रयत्वात्तेषामेव च बहुलानर्थात्मतया संसारत्वादात्मनोऽसंसारित्वे तन्मतविरोधः स्यात् । न च प्रामाणिकसमयविरोधे तत्त्वव्यवस्थेत्यर्थः ॥५७३॥

किमात्मनोऽसंसारित्वे कतिपयतर्काविरोधोऽपेक्षितः किंवा सर्वतर्काविरोधः? आद्ये श्रौततर्काविरोधस्य

न च तार्किकयुक्त्याऽपि प्रतीचीहासुखात्मता । यतोऽवगम्यते तस्मान्निर्भीतिः सुखमास्यताम् ॥७५॥
पराक्प्रत्ययगम्येन दुःखेन स्याद्विशेषणम् । न प्रत्यङ्मात्ररूपस्य विरोधादुष्णशीतवत् ॥७६॥
प्रत्यक्षाविषयत्वं च प्रतीचः प्रागवादिषम् । तच्छायापाश्रयाद्यस्मात्प्रत्यक्षस्यापि मानता ॥७७॥
यो यतो लिप्सते नासावकिंचित्को ह्यनर्थिने । भिक्षां दातुमलं तद्वज्ज्ञेयं स्वार्थपरार्थयोः ॥७८॥

शब्दाकाशयोरिव दुःखात्मनोः गुणगुणिभावशंकानिरासौ

प्रत्यक्षमन्तरेणापि भवेद्दुःखविशेषणः । वियच्छब्दगुणं यद्वत्प्रत्यक्चेन्नैवमिष्यते ॥७९॥
एकमानानधिगतेर्न सुखग्राहिणाऽऽत्मनः । नित्यानुमितरूपस्य गृहीतिः स्यान्मनागपि ॥८०॥
एकत्वादात्मनश्चैवं विषयीकरणे सति । असंभवात्तदन्यस्य द्रष्टृभावः प्रसज्यते ॥८१॥
विषयित्वमथैकस्य विषयत्वं च दीपवत् । मतं चेन्नैतदेवं स्याद्युगपद्भूत्यसंभवात् ॥८२॥

प्रस्तुतेऽपि सत्त्वात्तदसंसारितेत्याह—नैवमिति । कल्पान्तरमनूद्य दूषयति—निःशेषेति । तत्र तार्किकसिद्धान्तोऽपि न सिध्यति न हि तत्र सर्वतर्काविरोधो मिथो वैदिकतर्कैश्च विरोधादतस्तर्कशास्त्राणाममानत्वात्तद्विरोधो न समाधिमर्हतीत्यर्थः ॥५७४॥

ननु तर्कशास्त्राणामात्मनः संसारित्वे विवादाभावात्तस्मिन्नंशे मानत्वात्तदुक्ताबाधितयुक्त्या तत्संसारित्वसिद्धिस्तथाच तदसंसारित्वं युक्तिभयान्मुमुक्षुभिरुपगन्तुमशक्यं नेत्याह—न चेति । इच्छादीनां मनोधर्मतया परिशेष्यासिद्धेरुक्तत्वात्तदीययुक्त्याऽपि प्रतीचः संसारित्वानवगमात्तदसंसारित्वं मुमुक्षुभिर्निर्भयैरभ्युपगतुं शक्यमित्यर्थः ॥५७५॥

तार्किकयुक्तीनामनाभासत्वात्तद्बलात्तत्संसारित्वदृष्टेस्तमसंसारिणं निश्चित्य मुमुक्षुभिरभयैः स्थातुमशक्यमित्याशङ्क्याऽऽह—परागिति । पराक्प्रतीचोर्मिथो विरोधाद्विशेषणविशेष्यत्वायोगे दृष्टान्तमाह—उष्णेति ॥५७६॥

आत्मनोऽपि प्रत्यक्षत्वाद्दुःखेन विशेष्यत्वमित्याशङ्क्याऽऽह—प्रत्यक्षेति । "मात्रादिविषयं मानं प्रत्यगात्मनि साक्षिणि । न व्यापारयितुं शक्यम्" इत्यादावित्यर्थः । किंचाऽऽत्माभासावष्टम्भात्प्रत्यक्षस्य तत्त्वसिद्धिर्जडस्य स्वतोऽसिद्धेरतो न तेनाऽऽत्मसिद्धिरित्याह—तच्छायेति ॥५७७॥

आत्मप्रकाश्याध्यक्षेणाऽऽत्मा प्रकाश्यो नेत्येतद्दृष्टान्तेनाऽऽह—यो यत इति । लिप्सते भिक्षामिति संबन्धः । भिक्षुकस्य भिक्षां दातुमसामर्थ्ये हेतुः—अकिंचित्को हीति । तत्रैव हेत्वन्तरम्—अनर्थिन इति । न हि धनवते निराकाङ्क्षाय भिक्षुको भिक्षां क्षमो दातुमित्यर्थः । दार्ष्टान्तिकमाह—तद्वदिति । आत्मन्यजडेऽनपेक्षे च जडे सापेक्षे च स्वरूपमुक्तदृष्टान्तेन ज्ञेयम् । न हि चित्प्रकाश्यं जडं प्रत्यक्षं तत्प्रकाशकमित्यर्थः ॥५७८॥

प्रत्यक्षाविषयत्वोक्त्या प्रतीचस्तद्विषयदुःखाविशेष्यत्वमयुक्तं प्रत्यक्षाप्रत्यक्षयोः शब्दाकाशयोरिव दुःखात्मनोरपि गुणगुणित्वसंभवादिति शङ्कते—प्रत्यक्षमिति । दृष्टान्तेऽपि गुणगुणित्वं चेदेकमानग्राह्यत्वमन्यथा न तद्भावोऽतो न दृष्टान्ताद्दुःखात्मनोर्गुणगुणितेत्याह—नैवमिति । अस्तु तर्हि सुखादिमानेनाऽऽत्मनोऽपि ग्रहणमित्याशङ्क्य सांख्यानां वैशेषिकादीनां वा चोद्यमिति विकल्प्याऽऽद्यं दूषयति—न सुखेति ॥५७९–५८०॥

द्वितीयं प्रत्याह—एवत्वादिति । यथा सुखादि प्रत्यक्षं ते तथाऽऽत्मनोऽपि तेन विषयीकारे सत्येकस्मिन्देहे तदैक्यसंमतेरात्मान्तरस्य तत्रायोगादेकत्र भोक्तृद्वयानिष्टेः पुरुषान्तरस्यान्यं प्रत्यप्रत्यक्षत्वाद्द्रष्टृभावादात्मदृश्यत्वासिद्धिरित्यर्थः ॥५८१॥

कुतो द्रष्टृभावः एकस्यैवोभयभावादिति शङ्कते—विषयित्वमिति । एकत्रैव द्रष्टृदृश्यत्वमदृष्टमित्याशङ्क्याऽऽह—दीपवदिति । तस्य स्वगततमोनिरासेन विषयविषयित्ववदेकस्यैवाऽऽत्मनो द्रष्टृदृश्यत्वसिद्धिरित्यर्थः । एकस्याऽऽत्मनो विषयविषयित्वं कार्त्स्न्येनांशाभ्यां वा ? आद्येऽपि युगपत्क्रमेण वा ? नाऽऽद्य इत्याह—नैतदिति । क्रियायां गुणत्वं कर्तृत्वं तत्र प्राधान्यं कर्मत्वमतो युगपदेकक्रियां प्रत्येकस्य साकल्येन न गुणप्रधानतेत्यर्थः । न द्वितीयः एकभावेऽन्याभावादिति द्रष्टव्यम् ॥५८२॥

न व्यनक्ति प्रदीपोऽपि स्वतो भास्वररूपतः । विषयत्वाच्च पुंबुद्धेर्न दीपस्योभयात्मता ॥८३॥
प्रतीचश्च निरंशत्वान्न दीपेन सधर्मता । ग्राह्यग्राहकतैतेन विज्ञानस्याप्यपोदिता ॥८४॥
तथा गुणगुणित्वेन ह्यक्षलिङ्गाधिगम्ययोः । दुःखात्मनोर्मिथोयोगे नानुमानप्रमाणता ॥८५॥
नित्यमक्षजगम्यत्वाद्दुःखस्योत्पलनीलवत् । रूपाद्यक्षजगम्यैश्च सामानाधिकरण्यतः ॥८६॥
दुःखस्याऽऽत्मनि संयोगजत्वाभ्युपगमेऽपि च । सभागविक्रियानित्यत्वादिदोषः प्रसज्यते ॥८७॥

आत्मनः संयोगित्वे निर्विकारत्वापत्तिः

नाविकृत्य हि संयोगि गुणो[1] द्रव्यं कदाचन । उपयन्नपयन्वेह लोके दृष्टः प्रमाणतः ॥८८॥
न चानवयवं वस्तु क्वचिदप्युपलभ्यते । विक्रियामाप्नुवन्नापि नित्यं ध्वंसिगुणाश्रयम् ॥८९॥

यथादृष्टान्तं प्रतिपत्तेर्विकल्पाद्यनवकाशमित्याशङ्क्य दृष्टान्तं विघटयति—नेत्यादिना । न हि दीपो दीपं प्रकाशयति प्रकाशैकरसत्वादतो न तस्यैकरसस्यैव विषयविषयितेत्यर्थः । अस्तु तर्हि तस्य स्वप्रकाशता त्वदिष्टाऽऽत्मवन्नेत्याह—विषयत्वादिति । पुंबुद्धिः स्वरूपस्फुरणं तद्व्याप्यत्वाद्दीपस्य न स्वप्रकाशतेत्यर्थः । दृष्टान्ताभावं निगमयति—नेति ॥५८३॥

कल्पान्तरं प्रत्याह—प्रतीचश्चेति । आत्मनो द्रव्यांशेन विषयत्वं बोधांशेन विषयित्वमित्येतच्चकारनिरस्यम् । किंच दीपस्य जाड्यान्न तेनाजडप्रकाशस्याऽऽत्मनः समतेत्याह—न दीपेनेति । ननु विज्ञानवादिनो युगपदेकस्य विज्ञानस्य साकल्येन ग्राह्यग्राहकत्वमुपयन्ति तथा त्वदात्मनोऽपि स्यात्तत्राऽऽह—ग्राह्येति । एकस्योभयत्वनिरासेनेत्यर्थः ॥५८४॥

ननु मा भूत्प्रत्यक्षेण दुःखात्मनोर्गुणगुणित्वधीरनुमानात्तु स्याद्दुःखं क्वचिदाश्रितं गुणत्वाद्रूपवदित्याश्रये सिद्धे परिशेषादात्मनस्तदाश्रयत्वात्तत्राऽऽह—तथेति । दुःखात्मनोरक्षलिङ्गगम्ययोर्गुणगुणित्वेन मिथो योगे प्रत्यक्षवदनुमानस्य न मानतेत्यन्वयः । न हि मिथो विरुद्धयोर्गुणगुणित्वमनुमेयं दुःखादेश्च साभासबुद्धिस्थत्वात्पारिशेष्यासिद्धिरुद्धृतेत्यर्थः ॥५८५॥

आत्मनो दुःखवत्प्रत्यक्षत्वपक्षे दोषान्तरमाह—नित्यमिति । दुःखं नाऽऽत्मधर्मो वेद्यत्वाद्रूपवदित्यर्थः । तस्याऽऽत्माधर्मत्वे हेत्वन्तरमाह—रूपादीति । यत्र रूपादिमति देहे दाहच्छेदादि दृष्टं तत्रैव तत्कृतदुःखाद्युपलम्भान्नाऽऽत्मनस्तद्वत्त्वमित्यर्थः ॥५८६॥

यस्त्वात्ममनःसंयोगादात्मनि बुद्ध्यादयो नव वैशेषिका गुणा भवन्तीति तद्दूषयति—दुःखस्येति । संयोगित्वाद्घटवत्सावयवत्वं ततो विक्रियावत्त्वानात्मत्वादिप्रसक्तिरित्यर्थः ॥५८७॥

प्रसङ्गस्य प्रशिथिलमूलत्वमाशङ्क्याऽऽह—नेत्यादिना । यत्संयोगि तत्सावयवं सक्रियादि च घटादि दृष्टमात्मनोऽपि संयोगित्वे ते स्यातामित्यर्थः ॥५८८॥

दुःखाद्यात्मनो विक्रियेति भाट्टस्थितेस्तस्य सक्रियत्वं तेषामिष्टमित्याशङ्क्याऽऽह—न चेति । आत्मा न परिणामी निरवयवत्वान्नभोवदिति भावः । किं चाऽऽत्मा न गुणी नित्यत्वात्सामान्यवदिति वैशेषिकादिवादे दोषान्तरमाह—नापीति । तदाश्रयत्वानधिकरणमिति यावत् । न[2] चाद्रव्यत्वमुपाधिर्व्यतिरेकव्याप्तावनित्यत्वस्योपाधित्वान्न[3] च तद्व्यतिरेकेण पूर्वोक्तोपाध्यवतारस्तदा परस्परोपाधितया द्वयोरप्यतल्लक्षणत्वादिति भावः ॥५८९॥

---

१. गुणः स्वाश्रयद्रव्यमविकृत्य उपयन्नपयन् वा न दृष्टः इत्यन्वयः ।

२. न चाद्रव्यत्वमिति—सामान्यादौ साध्यव्यापकत्वात् पक्षे आत्मनि नित्यत्वसत्वात् अद्रव्यत्वाभावादित्यर्थः । व्यतिरेकव्याप्ताविति—साध्योपाध्योः व्यतिरेकव्याप्तावित्यर्थः । यत्र द्रव्यत्वं तत्र गुणित्वमिति साध्योपाध्योः व्यतिरेकव्याप्तिः । तत्र अनित्यत्वमुपाधिः । यत्र गुणित्वं तत्रानित्यत्वं घटादौ यत्र द्रव्यत्वं तत्रानित्यत्वं नास्ति आत्मनि व्यभिचारादित्यर्थः ।

३. न च तद्व्यतिरेकेण अनित्यत्वव्यतिरेकेण पूर्वोक्तोपाधिः अद्रव्यत्वं तस्यावतारः प्राप्तिः ।

आकाशस्य च नित्यत्वं नेष्टमागमवादिभिः । तत्कार्यश्रवणान्नापि दृष्टान्तोऽस्ति ततोऽपरः ।।९०।।

परिणामिनोऽपि नित्यत्वशंकापरिहारौ

विक्रियावदपि द्रव्यं तत्प्रत्ययसमन्वयात् । नित्यमेवेति चेन्नैवमन्यथात्वातिरेकतः ।।९१।।
अनित्यत्वं क्वचिन्नास्ति यथाऽन्येषां प्रवादिनाम् । सन्नेवाभावरूपोऽपि त्विष्टः शून्यत्ववादिनाम् ।।९२।।
संवित्प्रमाणसत्त्वेन विना वस्तु न लौकिकम् । प्रमाणवादिभिर्दृष्टमनन्यायत्तसिद्धिकम् ।।९३।।
भागान्यथात्वाद्द्रव्यस्य नानित्यत्वं क्वचिन्मितम् । निर्भागत्वात्प्रतीचस्तत्कया युक्त्योपपद्यते ।।९४।।
अथ सावयवत्वेऽपि नित्यं स्यात्कुलिशादिवत् । संयोगपूर्वतो नैवं तद्विभागावसानतः ।।९५।।
वज्रादेरविभागश्चेत्तस्यासंयोगपूर्वतः । नानुमेयत्वतोऽस्त्येव तस्यावयवसंयुतिः ।।९६।।
न हि सावयवं किंचिदृतेऽवयवसंयुतिम् । घटादिवद्यतो दृष्टमतोऽदुःखित्वमात्मनः ।।९७।।

शास्त्रारम्भान्यथानुपपत्यापि आत्मा संसारीति शंकानिरासः

निर्दुःखित्वे परस्येष्टे तदन्यस्याप्यभावतः । कस्य दुःखनिवृत्त्यर्थं प्रारब्धोपनिषत्त्वया ।।९८।।

आकाशे व्यभिचारमाशङ्क्याऽऽह—आकाशस्येति । अण्वादिषु व्यभिचारमाशङ्क्याऽऽह—नापीति । न तावदणवः सन्ति त्र्यणुकेतरसत्त्वे मानाभावाद्दिशश्चाऽऽकाशेऽन्तर्भवन्त्यनन्ताकाशदेशत्वादिति ह्युक्तम् । कालस्तु "सर्वे निमेषा जज्ञिर" इत्यादिश्रुतेरुत्पत्तिमानतो न क्वचिद्व्यभिचार इति भावः ।।५९०।।

यस्मिन्विक्रियमाणेऽपि तदेवेदमिति धीर्न विहन्यते तत्परिणामिनित्यमिति केचित्तत्कुतो विक्रियावत्त्वादनित्यतेति शङ्कते—विक्रियावदिति । परिहरति—नैवमिति । विक्रियां वदतो द्रव्यस्यावयवान्यथात्वं वाच्यं तदेवानित्यत्वमत्यन्ताभावस्य घटविचारे निरस्तत्वादित्यर्थः । अन्येषां शून्यवादिनामिति यावत् । तेषामनित्यत्वशब्दार्थोऽत्यन्ताभावः स किमिति त्वया नेष्यते तत्र प्रकारान्तरेण दूषणमाह—सन्नेवेति । स मानसिद्धो न वा ? आद्ये घटवत्सत्त्वापत्तिः द्वितीये च स्वप्रकाशो न वा ? न चेत्तदसत्त्वे सर्वसत्त्वापत्तिरित्यर्थः । सर्वशून्यवादिनामिष्टो योऽभावरूपोऽर्थः सोऽपि सन्नेवेति योजना । उक्तविकल्पद्योती तुशब्दः । घटादि दृष्टान्तयितुमपिशब्दः ।।५९१–५९२।।

अत्यन्ताभावस्य स्वप्रकाशत्वं प्रत्याह—संविदिति । संविदेव प्रमाणं साधकत्वात्तत्स्वरूपस्यैव स्वप्रभत्वं तद्व्यतिरेकेण लौकिकं वैदिकं वा न किंचिदपि स्वप्रकाशं प्रामाणिकैर्दृष्टमतोऽत्यन्ताभावस्य स्वप्रभत्वे संविदभेदात्तदद्वैततेति भावः ।।५९३।।

परेष्टात्यन्ताभावस्य दुर्निरूपत्वे सत्यवयवान्यथात्वमेव सावयवस्यानित्यतेत्युपसंहरति—भागेति । अन्यदित्यध्याहारः । अस्तु तर्हि तादृगनित्यत्वमात्मनोऽपीत्याशङ्क्याऽऽह—निर्भागत्वादिति । भागान्यथात्वरूपानित्यत्वस्य निरवयवे प्रतीच्ययोगान्न तस्य विक्रियावत्त्वमित्यर्थः ।।५९४।।

असिद्धं निर्भागत्वमिति बुध्यमानः स्याद्वादी शङ्कते—अथेति । अवयवसंयोगपूर्वकत्वाद्वज्रादेः संयोगस्य विभागान्तत्वात्तस्य विनाशित्वमावश्यकं तत्कुतो दृष्टान्तसिद्धिरिति परिहरति—संयोगेति ।।५९५।।

अवयवसंयोगपूर्वकत्वस्य वज्रादेरप्रमाणिकत्वात्तद्विभागाभावान्न नाशितेति दृष्टान्तसिद्धिं शङ्कते—वज्रादेरिति । विमतमवयवसंयोगपूर्वकं सावयवत्वाद्घटवदित्याह—नेत्यादिना ।।५९६।।

सावयवत्वेऽप्युक्तसंयोगपूर्वकत्वाभावे किं बाधकमिति चेत्सावयवत्वानुपपत्तिरित्याह—न हीति । यत्सावयवं तदुक्तसंयोगपूर्वकमिति व्याप्तिभूमिमाह—घटादिवदिति । यतः सावयवस्यानित्यत्वादि दुर्वारमतोऽवयवकल्पनायोगादात्मनो मनःसंयोगानुपपत्तेस्तस्मिन्दुःखाद्युत्पत्तिहेत्वभावादसंसारितेति फलितमाह—अत इति ।।५९७।।

आत्मनोऽनर्थध्वस्त्यर्थं शास्त्रारम्भान्यथानुपपत्त्या तत्संसारित्वं मन्तव्यमिति शङ्कते—निर्दुःखित्व इति । जीवात्मनो दुःखनिवृत्त्यर्थं शास्त्रमारभ्यमित्याशङ्क्य "नान्योऽतोऽस्ति द्रष्टे"त्यादिश्रुतिमनुसरन्नाह—तदन्यस्येति । बुद्धिगतदुःखनिवृत्त्यर्थं शास्त्रमित्याशङ्क्याचैतन्यात्तस्या दुःखित्वायोगान्मैवमिति मत्वाऽऽह—कस्येति ।।५९८।।

प्रत्यगज्ञानहेतूत्थदुःखित्वमतिविभ्रम— । ध्वंसमात्रस्य सिद्ध्यर्थमारब्धोपनिषन्मया ॥९९॥
नवसंख्येयमात्रेक्षी दशमो विभ्रमाद्यथा । न वेत्ति दशमोऽस्मीति स्वीक्षमाणोऽपि तान्नव ॥६००॥
निःशेषानात्मदृक्तद्वदनिर्ज्ञातात्मतत्त्वकः । न वेत्त्यैकात्म्यमस्मीति वीक्षमाणोऽप्यनात्मनः ॥ १ ॥
दशमोऽसीतिवाक्योत्थसम्यग्ज्ञानानलार्चिषा । प्लुष्ट्वाऽऽत्मदशमाज्ञानं दशमोऽस्मीति वीक्षते ॥ २ ॥
यथा तत्त्वमसीत्यादिवाक्योत्थज्ञानवह्निना । प्लुष्ट्वेहाऽऽत्मतमस्तज्जं तथैकात्म्यं प्रपद्यते ॥ ३ ॥
प्रत्यगज्ञानहेतूत्थशास्त्राचार्यादिसाधनः । तद्विरुद्धमथैकात्म्यं प्रत्यपद्यत मायया ॥ ४ ॥

शास्त्राचार्यादिकल्पनावत् प्रवेशकल्पना ज्ञानाय

शास्त्राचार्यादयो यद्वन्मोहोत्थत्वान्न वस्तुतः । प्रवेशोऽप्यस्य तादृक्स्यादैकात्म्यप्रतिपत्तये ॥ ५ ॥
व्याकृताव्याकृतावस्थे जगतोऽस्य स्वभावतः । अनूद्य लोकतो दृष्टे तद्याथात्म्यं प्रबोध्यते ॥ ६ ॥
यत एवमतोऽपास्तरागद्वेषादिधीमलः । उदारधिषणः प्राह भाष्यकृन्न्यायवद्वचः ॥ ७ ॥
अप्रविष्टस्वभावस्य दिग्देशाद्यनभिप्लुतेः । प्रवेशो व्याकृते क्लृप्तो जलपात्रार्कबिम्बवत् ॥ ८ ॥

आविद्यमात्मस्थमनर्थभ्रमं निरसितुं तदारम्भः संभवतीति समाधत्ते—प्रत्यगिति । न कश्चिदपि वास्तवं दुःखमुपेत्य तद्ध्वंसार्थं शास्त्रमिति वक्तुं मात्रपदम् ॥५९९॥

परस्यैवाविद्याकृतसंसारित्वभ्रान्तिध्वंसार्थं शास्त्रमित्येतद्दृष्टान्तेन साधयन्नादौ तस्याविद्यावत्त्वे दृष्टान्तमाह—नवेति । वस्तुतो दशमो माणवको नवसंख्याकानेव माणवकानुपलभमानस्तद्दर्शनापह्नुतदशमदृष्टिर्नष्टोऽसाविति भ्रान्त्या स्वस्य दशमत्वं न पश्यतीत्यर्थः । दशमत्वधीप्राप्तिमाह—स्वीक्षमाणोऽपीति । स्वातिरिक्तान्पश्यन् स्वज्ञानं प्राप्तमपि न लभतेऽज्ञानसामर्थ्यादित्यर्थः ॥६००॥

दार्ष्टान्तिकमाह—निःशेषेति । उक्तदृष्टान्तानुसारेणानिर्ज्ञातात्मयाथात्म्यो मुमुक्षुः सर्वानात्मद्रष्टा स्वातिरिक्तानहंकारादीन्साक्षात्कुर्वन्नपि ब्रह्मात्मकत्वमस्मीत्यनेन प्रकारेण न वेत्तीत्यन्वयः ॥६०१॥

परस्याविद्यां दृष्टान्तेनोक्त्वा विद्यया तद्ध्वंसे दृष्टान्तमाह—दशम इति । आप्तवाक्योत्थसम्यग्ज्ञानाग्निना स्वकीयदशमत्वाज्ञानं दग्ध्वा दशमोऽस्मीति दशमत्वमात्मनोऽनुभवन्माणवको यथा निर्वृणोतीत्यर्थः । दृष्टान्तस्थमर्थं दार्ष्टान्तिके योजयति—तत्त्वमिति । इहेति जीववदवस्थोक्तिः ॥६०२–६०३॥

उक्तमर्थं सोपस्कारमुपसंहरति—प्रत्यगिति । आदिपदेन ब्रह्मविद्याहेतवोऽनुक्ताः सर्वे गृह्यन्ते । अज्ञानकृतशास्त्राचार्यादिद्वारोत्पन्नया मायया ब्रह्मविद्यया तत्कार्यविरुद्धमैक्यं यदा पुमान्प्रतिपन्नवांस्तदैव तस्य सर्वानर्थध्वस्तिरित्यर्थः ॥६०४॥

परस्य प्रदेशे संसारित्वशङ्कामुक्तरीत्या परिहृत्य तत्प्रवेशं स्रष्टृप्रवेष्ट्रोरेकत्वादित्यत्र शास्त्रावष्टम्भेनोक्तं युक्त्या व्यक्तीकर्तुमारभते—शास्त्रेति । शास्त्रादिवत्प्रवेशस्यापि कल्पितत्वान्न तमाश्रित्य काचिदाशङ्केति भावः । अविद्याकृतप्रवेशकल्पनाप्रयोजनमाह—ऐकात्म्येति ॥६०५॥

ननु च प्रकृतश्रुतिषु व्याकृताव्याकृतं जगदुच्यते न त्वैक्यं प्रतिपाद्यते तत्कथं तत्प्रतिपत्त्यर्थं प्रवेशकल्पनेत्याशङ्क्याऽऽह—व्याकृतेति । स्वभावतः शास्त्रं विना दृष्टे लोकतो लौकैरिति संबन्धः । तद्याथात्म्यं तस्य जगतस्तत्त्वं प्रत्यक्चैतन्यमित्यर्थः ॥६०६॥

द्वैतानुवादेनाद्वैते प्रतिपाद्ये तद्धीशेषत्वेन प्रवेशकल्पनोचितेति मन्वानो भाष्यमवतारयति—यत इति । ज्ञानप्रतिबन्धकवैधुर्यं भाष्यकृतो दर्शयन्वैशिष्ट्यमाचष्टे—अपास्तेति । उदारमुत्कृष्टमकार्यकारणं ब्रह्म तस्मिन्नेव सदा धिषणा यस्य स तथेति विशेषान्तरोक्तिः । प्रामाण्यं वचसः सूचयति—न्यायवदिति ॥६०७॥

किं तद्वचनं यत्कर्तृद्वारोपकरणद्वारा वाऽदोषतया मानं तदाह—अप्रविष्टेति । त्रिधाऽनवच्छिन्नत्वात्परस्य वस्तुतोऽप्रविष्टरूपस्य जगति श्रौतो यः प्रवेशः स जलपात्रे सवितृबिम्बस्य प्रतिबिम्बभाववत्कल्पित इति जलसूर्यादिप्रतिबिम्बवदित्यादिनोक्तमित्यर्थः ॥६०८॥

बिम्बात्मना प्रवेशे युक्तयः

बिम्बात्मना प्रवेशस्य ननु दूषणमीरितम् । विप्रकृष्टयाद्यभावोक्त्या भूयः कस्मात्स आश्रितः ।। ९ ।।
संभवाद्विप्रकृष्टयादेरदुष्टो दूषितः पुरा । कथं तदिति चेदत्र युक्तिलेशोऽभिधीयते ।।१०।।
निर्धूताशेषनानात्वतद्धेतुरविभागवान् । अनन्यसाक्षिकः प्रत्यङ्ङासीन्नामादिजन्मतः ।।११।।
द्रष्ट्रादिरूपतस्तावद्व्यतिरेकोऽभवत्पुरा । नामादिजन्मनि द्रष्टेत्यादिरूपान्वयोऽप्यभूत् ।।१२।।
अप्पात्रोत्थापिताद्भानोर्दिवि भानुर्यथेक्ष्यते । सुषुप्तस्थस्तथा धीस्थात्कर्तृभोक्तृत्वलक्षणात् ।।१३।।
दृष्टृश्रोत्रादिरूपश्च यश्च द्रष्ट्रादिसाक्ष्यपि । बुद्धितत्कारणोपाधी क्षेत्रज्ञेश्वरसंज्ञकौ ।।१४।।
स्वप्ननिद्रायुतावाद्यौ प्राज्ञस्त्वस्वप्ननिद्रया । इत्यादिस्थानभेदोऽपि वेदान्तोक्तौ विनिश्चितः ।।१५।।
जिघ्राणीममहं गन्धमिति यो वेत्त्यविक्रियः । तद्भावाभावसाक्ष्यात्मा ह्येतच्च श्रुतिमस्तके ।।१६।।

वस्त्वन्तरेण विप्रकृष्टानुपपत्तेरित्यत्रोक्तं स्मारयति—बिम्बेति । वस्त्वन्तरेण ब्रह्मणोऽद्वितीयस्यासङ्गस्य विप्रकृष्टेः संनिकृष्टेश्चाभावोक्तेर्न तस्य प्रतिबिम्बाख्यप्रवेशसिद्धिरित्युक्तमित्यर्थः । दूषितस्याऽऽश्रयणमयुक्तमित्याह—भूय इति ।।६०९।।

प्रतिबिम्बपक्षदूषणमस्थाने संभ्रान्तिरिति परिहरति—संभवादिति । ब्रह्मणो वस्त्वन्तरेण विप्रकृष्टयादेः संभवाददुष्ट एव प्रतिबिम्बप्रवेशस्त्वया दूषितस्तेनासौ दोषाभास इति योजना । अनवच्छिन्नाद्वयचिद्धातोर्वस्त्वन्तरेण विप्रकर्षादेरयोगान्नादुष्टताऽस्य पक्षस्येति शङ्कते—कथमेति । वस्त्वन्तरकल्पनया कल्पितं विप्रकर्षाद्यादाय प्रतिबिम्बपक्षं साधयति—अत्रेति । आत्मप्रवेशश्चेत्यादिभाष्यमत्रेत्युक्तम् । प्रवेशपक्षो वा सप्तम्यर्थः ।।६१०।।

तमेव युक्तिलेशं वदन्नादौ प्रतिबिम्बस्थानीयाज्जीवाद्ब्रह्मणो बिम्बस्थानीयस्याभेदं साधयति—निर्धूतेति । तस्य नानात्वस्य हेतुर्धर्मिग्रहादिः । निर्धूतमशेषं नानात्वं तद्धेतुश्च यत्र स तथा । केवलभेदस्य सहेतोरभावेऽप्यभेदसहितस्य तस्य सत्त्वमाशङ्क्याऽऽह—अविभागवानिति । प्रकाश्यप्रकाशात्मकत्वेन भेदमाशङ्क्याऽऽह—अनन्येति । आत्मानात्मत्वेन भेदं शङ्कित्वाऽऽह—प्रत्यङ्ङिति । द्रष्टृदृश्यादिभावेन तमाशङ्क्याऽऽह—नामादीति । जगत्सर्गात्पूर्वं द्रष्ट्रादिरूपतस्तस्य व्यतिरेकोऽसत्त्वमतो निर्विशेषं प्रत्यङ्मात्रं तावत्प्रागवस्थायामासीदित्यर्थः । द्रष्ट्रादेस्तर्हि प्रतीचोऽर्थान्तरत्वा"न्नान्योऽतोऽस्ति द्रष्टे"त्यादिश्रुतिविरोधोऽन्यथा प्राक्काले द्रष्ट्रादिव्यतिरेकासिद्धिरात्मभावे तदभिन्नद्रष्ट्रादेरपि भावादित्याशङ्क्याऽऽह—नामादीति । जगत्सर्गे बुद्धिस्थप्रतिबिम्बद्वारा चक्षुरादिकरणकदर्शनादिशब्दितरूपाद्याकारधीवृत्तीरनुभवन्नात्मैव द्रष्टा श्रोतेत्यादिदशामाविशतीत्यर्थः ।।६११-६१२।।

सर्गात्पूर्वमेकरसमेव ब्रह्मोत्तरकालं जीवत्वं बुद्ध्यादिसंबन्धात्प्राप्नोतीत्युक्तम् । इदानीं तयोर्वस्तुतो भेदं निरसितुं दृष्टान्तेन स्थानभेदमाह—अप्पात्रेति । पञ्चमीभ्यामन्यशब्दो ध्वनितः । दार्ष्टान्तिकेऽपि क्रियापदमनुषज्यते यद्वा प्रतिबिम्बस्य बिम्बाविनाभूतत्वेन तल्लिङ्गत्वादुदकपात्रप्रतिबिम्बितादादित्यादाकाशस्थः सविता यथा गम्यते तथा बुद्धिप्रतिबिम्बितादवस्थाद्वयगतात्कर्त्रादिरूपात्कार्योपाधेरात्मनः सुषुप्तस्थः कारणोपाधिः परोऽधिगम्यते तस्य तदपेक्षत्वादित्यर्थः ।।६१३।।

तर्हि स्थानभेदान्नामभेदाच्च वस्तुतस्तयोर्भेदो घटपटवदित्याशङ्क्याऽऽह—दृष्टृति । प्रमातुर्बुद्ध्युपाधिकस्य क्षेत्रज्ञसंज्ञकस्य प्रमातृसाक्षिणश्च कारणोपाधिकस्येश्वरसंज्ञकस्यौपाधिकभेदादेव स्थानादिभेद इत्यर्थः ।।६१४।।

स्थानभेदे श्रुतिं प्रमाणयति—स्वप्नेति । जाग्रत्स्वप्नाभिमानिनौ विश्वतैजसावाद्यावन्यथाग्रहाग्रहग्रस्तौ केवलाग्रहगृहीतस्तु स्वापाभिमानी प्राज्ञ इत्यर्थः । दर्शितश्रुतेरर्थं संगृह्णाति—इत्यादीति । आदिपदेन हृदयादित्यमण्डलादिस्थानोक्तिः । स्थानभेदवद्वस्तुतो वस्तुभेदाभावोऽपि निश्चितो वेदान्तेष्वित्यपेरर्थः ।।६१५।।

प्रतिबिम्बस्थानीये जीवे सत्यपि बिम्बस्थानीयो नास्ति परो मानाभावादिति केचित्तान्प्रत्याह—जिघ्राणीति । इमं गन्धमहं जिघ्राणीति गन्धधीकर्तृत्वेन स्थितं मातारमक्रियः सन्यो वेत्ति स तस्य भावाभावयोः साक्षी परोऽस्ति शास्त्रप्रामाण्यादित्यर्थः । एतच्छब्देन यथोक्तं परमात्मतत्त्वं परामृश्यते । तन्निरासे श्रुतिविरोधश्चकारार्थः । जगदपि तदनवधारणे नियन्तृरहितं भिन्नमर्यादमनवस्थितमापतेदिति हिशब्दार्थः ।।६१६।।

अर्थान्तरनिरासार्थं दूषणं चोदितं पुरा । तदभावाददुष्टत्वात्प्रवेशो मुखबिम्बवत् ।।१७।।
दर्पणाभिहता दृष्टिः पर्यावृत्य स्वमाननम् । व्याप्नुवन्त्यविभागेन भ्रान्तिं नो जनयेद्यथा ।।१८।।
इहापि कारणोपाधिः केवलोऽप्यविवेकतः । बुद्ध्यादिकार्यगैर्धर्मैः प्रतिबिम्बवदीक्ष्यते ।।१९।।
यथोक्तार्थप्रसिद्ध्यर्थं वचांसि सुबहून्यपि । त्रय्यन्तेषूपपद्यन्ते तत्सृष्ट्वेत्यादिकानि च ।।२०।।
दिग्देशकालशून्यस्य प्रवेशो बिलसर्पवत् । न त्वाञ्जसः परस्यास्ति तेनाविद्याप्रकल्पितः ।।२१।।
अग्निः सूर्यो मरुद्यद्वत्प्रविष्टो भुवनं तथा । अप्रविष्टस्वभावोऽपि कार्यमात्माऽविशज्जगत् ।।२२।।

कल्पितजगज्जन्मादिप्रवेशानां प्रयोजननिर्देशः

प्रत्यग्याथात्म्यदृक्सिद्धिहेतुत्वाच्च भवेदिदम् । जगज्जनिस्थितिध्वंसप्रवेशानां प्रयोजनम् ।।२३।।
तद्दृष्टेः पुरुषार्थत्वश्रवणादसकृच्छ्रुतौ । ब्रह्म वेदेत्येवमादौ क्लृप्ताः सृष्ट्यादयस्ततः ।।२४।।

एकरसस्य परस्याविद्यया सृष्टे कार्ये प्रतिबिम्बरूपेण कल्पिते प्रवेशे निर्दुष्टे किमिति तत्र दूषणं चोदितमित्यत्राऽऽह—अर्थान्तरेति । ब्रह्मातिरिक्तप्रतिबिम्बाधारनिरासेन प्रतिबिम्बाख्यप्रवेशप्रत्याख्यानार्थं वस्त्वन्तरेण संनिकर्षाद्यभावदूषणं शङ्कितमित्यर्थः । कथं तर्हि प्रतिबिम्बपक्षसिद्धिस्तत्राऽऽह—तदभावादिति । अर्थान्तरनिरासाभावाद्ब्रह्मातिरिक्तकल्पितप्रतिबिम्बाधारसंभवात्तेन संनिकर्षादियोगात्प्रतिबिम्बपक्षस्यादुष्टत्वान्मुखस्य दर्पणादौ प्रतिबिम्बवद्ब्रह्मणः सृष्टे कार्ये प्रतिबिम्बाख्यः प्रवेशः सिध्यतीत्यर्थः ।।६१७।।

मुखबिम्बवदित्युक्तं दृष्टान्तं व्याचष्टे—दर्पणेति । बाह्यार्थग्रहार्थं प्रवृत्ता दृष्टिः संनिकृष्टेन दर्पणेन तेजस्विना प्रतिहता व्याघुट्य ग्रीवास्थमेवाऽऽननमविभागेन व्याप्नुवन्ती भ्रान्तिमस्माकं विभागेन जनयेदिति योजना ।।६१८।।

दार्ष्टान्तिकं विभजते—इहापीति । स्वपक्षः सप्तम्यर्थः । वस्तुतोऽविद्यातज्जसंबन्धवैधुर्यमाह—केवल इति । तथाऽप्यनाद्यविद्याबलादेव तद्योगं दर्शयति—कारणेति । ततो बुद्ध्यादिसृष्ट्या तदैक्याध्यासात्तत्कर्तृत्वादिधर्मैर्विशिष्टोऽकेवलो दृश्यत इत्याह—अविवेकत इति[1] । यथा मुखं स्वतः श्यामतादिहीनमुपाधियोगात्प्रतिबिम्बद्वारा श्यामतातिशयशालीव दृश्यते तथेत्याह—प्रतिबिम्बवदिति—।।६१९।।

यथोक्तप्रवेशसिद्ध्यर्थं वेदान्तेषु वाक्यान्यपि बहूनि युक्तिसहितानि सन्ति तानि च भाष्ये दर्शितानीत्याह—यथोक्तेति ।।६२०।।

स्वाभिप्रेतं प्रवेशं प्रतिपाद्य परेष्टं निराचष्टे—दिगिति । न हि परस्य परिपूर्णस्य पराकृतपरिच्छेदस्य बिले सर्पवत्कार्ये प्रवेशो वास्तवोऽस्तीत्यर्थः । स्वपक्षं निगमयति—तेनेति । पराभिमतप्रवेशासंभवेनेति यावत् । प्रवेश इति पूर्वेण संबन्धः ।।६२१।।

कल्पितप्रतिबिम्बाख्यप्रवेशे भाष्योक्तवाक्यातिरेकेण वाक्यान्तराण्यपि सन्तीत्याह—अग्निरिति । "अग्निर्यथैको भुवनं प्रविष्टः" "सूर्यो यथा सर्वलोकस्य चक्षुर्वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूवे"ति दृष्टान्तश्रुतयः । "एकस्तथा सर्वभूतान्तरात्मे"त्यादिदार्ष्टान्तिकश्रुतेरर्थमाह—तथेति ।।६२२।।

ननु वस्तुतोऽविद्यमानं प्रवेशाद्याविद्यं किमिति कल्प्यते ? तत्र पूर्वोक्तमेव स्मारयन्नाह—प्रत्यगिति । तत्त्वज्ञानोत्पत्त्यर्थत्वात्प्रवेशादीनामिदमेव ज्ञानफलमित्यर्थः ।।६२३।।

कथं प्रवेशादीनां तादर्थ्यं स्वरूपे पर्यवसानं किं न स्यादत आह—तद्दृष्टेरिति । प्रवेशादिश्रुतीनां स्वार्थे विफलत्वेनापर्यवसानात्तत्त्वदृष्टेश्च फलवत्त्वश्रवणात्फलवत्संनिधावफलं तदङ्गमिति[2]न्यायेन युक्तं तासां तादर्थ्य—

१. अविवेकेतः=प्रतिबिम्बोपाध्योरभेदाध्यासादित्यर्थः । धर्म्यध्यासस्य धर्माध्यासे हेतुत्वात् ।

२. फलवत्सन्निधौ अफलं यच्छ्रूयते तत् तदङ्गं ज्ञातव्यं यथा दर्शपूर्णमासयागप्रकरणे श्रुतं व्रीहिप्रोक्षणादि तद्वत् ब्रह्मसाक्षात्कारस्य मोक्षफलस्य सन्निधौ श्रुतं ब्रह्मणः जगदुत्पत्त्यादिहेतुत्वं सृष्टेषु प्रवेशश्च स्वयमफलं सत् तत्त्वज्ञाने साधनमित्यर्थः ।

युक्त्या नैवोपपद्यन्ते जगत्सृष्ट्यादयो यतः। प्रत्यगज्ञानमात्रोत्था जगत्सृष्ट्यादयस्ततः ॥२५॥
नासतो जन्मना योगः सतः सत्त्वान्न चेष्यते। कूटस्थे विक्रिया नास्ति तस्मादज्ञानतो जनिः ॥२६॥
तथा रूपं[1] रूपमिति मन्त्रवर्णोऽपि चाऽऽत्मनः। याथात्म्यदर्शनायैव सृष्ट्यादि प्रत्यपीपदत् ॥२७॥
व्याप्तिः प्रवेशशब्देन भण्यते कारणात्मनः। बुद्ध्यादिकार्यविषया व्यापिव्याप्यत्वमेतयोः ॥२८॥

व्यापिव्याप्यत्वं न केवलमात्मबुद्ध्योः असंभवि अपितु कुत्राप्यसंभवि

असाधारणतो न स्यात्कालदिग्देशभिन्नयोः। मिथोऽसंगतितो व्याप्तिर्हिमवद्विन्ध्ययोरिव ॥२९॥
मिथोऽविभिन्नयोर्नासौ नापि सैकात्म्य इष्यते। भिन्नसामान्ययोस्तद्वत्तदसाधारणात्मनः ॥३०॥
कार्यकारणयोरेवं भिन्नाभिन्नविकल्पतः। वस्तुवृत्तेन संव्याप्तिर्न युक्त्येहोपपद्यते ॥३१॥

मित्यर्थः। तत्त्वज्ञानस्य फलवत्त्वे श्रुतेस्तात्पर्यलिङ्गमभ्यासं सूचयति—असकृदिति। तासां स्वार्थापर्यवसाने फलितमाह—क्लृप्ता इति ॥६२४॥

तेषां कल्पितत्वे हेत्वन्तरमाह—युक्त्येति। सृष्ट्यादयो हि सक्रियस्याविक्रियस्य वा? नाऽऽद्योऽनवस्थानान्नेतरः सदा प्रसङ्गात्। न च ते स्वतो, हेत्वन्वेषणवैयर्थ्यप्रसङ्गात्। नापि परतस्तस्य तत्कारणस्वाभाव्ये च प्राचीनदोषात् तदस्वाभाव्ये कदाचिदपि तदभावापाताद्धेत्वन्तरापेक्षया तस्य तत्कर्तृत्वे चानवस्थानादित्यादिन्यायासहिष्णवोऽतः स्वाज्ञानकल्पिता एवेत्यर्थः ॥६२५॥

इतश्च कल्पिता सृष्टिरित्याह—नासत इति। न तावदसज्जायतेऽसत्त्वान्नरविषाणवन्नापि सत्सत्त्वादात्मवन्नापि जन्म नास्ति दृश्यमानत्वादतस्तत्कल्पितमित्यर्थः। नाशादीनामपि कल्पितत्वं साधयति—कूटस्थ इति। न हि निर्विकारे विक्रिया व्याघातान्न च सविकारेऽनवस्थितेरुक्तत्वादतः स्वाज्ञानादेव जनिवन्नाशाद्यपीत्यर्थः ॥६२६॥

सृष्ट्यादेरात्मज्ञानार्थत्वे दर्शितन्यायस्य प्रापकमाह—तथेति। फलवत्संनिधावित्यादिन्यायवदिति यावत्। "तदस्य रूपं प्रतिचक्षणाये"ति श्रवणादित्यर्थः ॥६२७॥

प्रवेशादेरन्यार्थत्वेन मिथ्यात्वे मिथ्याप्रवेशस्यानियमाद्ब्रह्मणोऽन्यस्यासौ किं न स्यादित्याशङ्क्याऽऽह—व्याप्तिरिति। न हि कारणादन्यस्य कार्ये व्याप्तिर्मुख्या कारणत्वं च परस्यैवेति स्थितिस्तथा च कल्पितोऽपि प्रवेशस्तस्यैवेत्यर्थः। ब्रह्मणो बुद्ध्यादौ व्याप्तिः संयोगः समवायस्तादात्म्यं वा? नाऽऽद्यौ युतसिद्धिप्रसङ्गात् नेतरः समवायानभ्युपगमाच्चेत्यादिन्यायविरोधात् नान्त्यो भिन्नयोरभिन्नयोर्वा तदयोगादित्याशङ्क्याऽत्रिद्यं तादात्म्यं गृहीत्वाऽऽह—व्यापीति ॥६२८॥

किं चान्यत्रापि व्याप्तिर्भिन्नयोरभिन्नयोर्वा भिन्नाभिन्नयोर्वा? नाऽऽद्य इत्याह—असाधारणत इति। कालादिवशाद्भिन्नयोरसाधारणतो व्यावृत्तत्वेन स्थितत्वान्न व्याप्तिर्हिमवद्विन्ध्ययोरिव मिथोऽसंगतेरिति योजना ॥६२९॥

अत्यन्तभेदे न व्याप्तिरित्युक्त्वा कल्पान्तरं निरस्यति—मिथ इति। यथा मिथोऽत्यन्तं भिन्नयोर्विन्ध्यहिमवतोर्न व्याप्तिस्तथाऽत्यन्तमभिन्नयोरपि न सा युक्ता। न चेष्टा न ह्येकस्मिन्नेव धूमेऽग्नौ वा व्याप्तिरित्यर्थः। अपिना तृतीयं प्रत्याह। न हि भिन्नाभिन्नयोर्व्याप्तिरेकत्र तदयोगादिति भावः। किंच सा जातिव्यक्त्योर्वा कार्यकारणयोर्वा तद्विलक्षणयोर्वा? नाऽऽद्य इत्याह—भिन्नेति। भिन्नशब्दो व्यक्तिविषयः। तद्वदिति हिमवद्विन्ध्ययोरिव न व्याप्तिरित्यर्थः। तत्र हेतुः—तदसाधारणेति। तयोर्जातिव्यक्त्योरत्यन्तभिन्नयोरसाधारणात्मना स्थितेर्न व्याप्तिर्यद्यत्यन्ताभिन्ने ते तदा तयोरसाधारणात्मनैकरूपेण परिशेषान्न व्याप्तिर्भेदाभेदौ चैकत्रायुक्तावित्यर्थः ॥६३०॥

द्वितीयं प्रत्याह—कार्येति। जातिव्यक्त्योरुक्तन्यायेन तयोरपि न व्याप्तिरित्यर्थः। तृतीयं निराह—

१. "रूपं रूपं प्रतिरूपो बभूव" इत्युक्त्वा "तदस्य रूपं प्रतिचक्षणाय"—इति मधुब्राह्मणान्ते उक्तम्। रूपं रूपं प्रति प्रतिरूपः रूपान्तरं बभूव ब्रह्म किमर्थमित्याह—तदस्यात्मनो रूपं प्रतिचक्षणाय प्रख्यापनाय। नामरूपव्याकरणादेवास्य प्रज्ञानघनं रूपं ज्ञायत इत्यर्थः।

**यत्र कार्त्स्न्येन वृत्तिः स्याद्रज्जुसर्पादिवद्द्वयोः । व्याप्तिर्मुख्याऽस्तु तत्रैव तथाऽऽत्मानात्मनोरपि ॥३२॥**

**तमसैव यथा सर्पं स्रक्प्रविष्टा न तु स्वतः । प्रत्यगज्ञानहेतूत्थमात्मैवं मायया जगत् ॥३३॥**

**उत्तरवाक्यं आनखाग्रेभ्यो यथाक्षुरः इति तदर्थविवरणम्**

**कया मर्यादया कार्यं मायावी माययाऽविशत् । आनखाग्रेभ्य इत्युक्त्या मर्यादाऽतोऽस्य भण्यते ॥३४॥**

**नखाग्रावधिका यस्मात्संवित्पुंसोऽभिजायते । अतः सामान्यवृत्त्याऽऽत्मा प्राविशद्देहमीश्वरः ॥३५॥**

**दृष्टान्ताभ्यामिमां वृत्तिं व्याचष्टे प्रत्यगात्मनः । कृत्स्नकारणतत्कार्यवृत्त्युपाधिसमाश्रयात् ॥३६॥**

**मिथो विभक्ता एकत्र क्षुरधाने यथा क्षुराः । क्षुरधानाद्विभज्यन्ते तथाऽऽत्मा नाडिभेदतः ॥३७॥**

**ओतप्रोतात्मना तस्थुरर्वाग्या भूमयोऽक्षरात् । तत्तद्भूमिपरिच्छेदात्क्षेत्रज्ञः पर एव सन् ॥३८॥**

**सूक्ष्मताव्यापिते ज्ञेये भूम्यादेर्यावदक्षरम् । पूर्वपूर्वप्रहाणेन तन्निष्ठा वियदात्मना ॥३९॥**

भिन्नेति । इहेति व्यवहारभूमिरुक्ता । जातिव्यक्तिभ्यां कार्यकारणाभ्यां च विलक्षणयोरपि भिन्नयोरभिन्नयोर्भिन्नाभिन्नयोश्च वस्तुतो व्याप्तिरयुक्तेत्यर्थः ॥६३१॥

भिन्नयोरभिन्नयोर्भिन्नाभिन्नयोर्वा न व्याप्तिश्चेत्कथमात्मनोऽनात्मविषयोक्ता व्याप्तिः स्यादित्याशङ्क्याऽऽह—यत्रेति । द्वयोर्मध्ये यस्मिन्नेकस्मिन्नपरस्य तादात्म्येन वृत्तिस्तस्मिन्नन्यस्य सा वृत्तिर्मुख्या व्याप्तिर्यथा रज्जुसर्पयोः सर्पस्य रज्जौ वृत्तिस्तथाऽऽत्मानात्मनोरप्यात्मनि कल्पितस्यानात्मनो वृत्तिर्मुख्याऽस्तु तस्मात्कल्पिताकल्पितयोः कल्पिततादात्म्याख्या मुख्या व्याप्तिरित्यर्थः ॥६३२॥[1]

दृष्टान्तावष्टम्भेन प्रवेशविचारमुपसंहरति—तमसेति । स्वाज्ञानादेव स्रजो भुजगे प्रवेशो न वस्तुतोऽस्तीति स्रगतिरिक्तसर्पासत्त्ववत्प्रतीचोऽपि स्वाज्ञानोत्थे जगति तद्वशादेव प्रवेशो न परमार्थत इति प्रत्यगात्मैव वस्तु न तु जगदिति स्थितमित्यर्थः ॥६३३॥

प्रवेशवाक्यं मुख्यार्थं परश्च प्रवेशयोग्यो मायावशादित्युक्तम् । इदानीमाकाङ्क्षापूर्वकमुत्तरं पदमवतार्य व्याचष्टे—कयेति । अतः काङ्क्षितत्वादिति यावत् । अस्य प्रवेशस्येत्यर्थः ॥६३४॥

किमिति प्रवेशस्येयमेव मर्यादा मर्यादान्तरं किं न स्यात्तत्राऽऽह—नखेति । चैतन्यं हि देहे पुरुषस्य नखाग्रपर्यन्तं प्रस्फुरत्यतो दृष्टानुसारित्वादुक्तमर्यादायाः सामान्यवृत्त्या विशेषवृत्त्या चाविकृतः परो मायया स्रष्टा सृष्टं देहं प्रविष्टः स चाऽऽत्मेत्यर्थः ॥६३५॥

यथेत्यादिदृष्टान्तद्वयमवतारयति—दृष्टान्ताभ्यामिति । इमामुभयीमिति यावत् । कथमसङ्गस्याऽऽत्मनो द्वयी वृत्तिस्तत्राऽऽह—कृत्स्नेति । कृत्स्नस्य द्वैतस्य मूलकारणमज्ञानं तस्य कार्यं वियदादि तत्रोभयत्र वृत्तिराभासस्तद्रूपोपाध्यवष्टम्भादसङ्गस्यापि मायामयी द्वयी वृत्तिस्तं दृष्टान्तद्वयेन दर्शयत्युत्तरं वाक्यद्वयमित्यर्थः ॥६३६॥

तत्राऽऽद्यदृष्टान्तव्याख्यानेन प्रतीचो विशेषवृत्तिं विशदयति—मिथ इति । एकस्मिन्नापितोपस्करणपात्रे क्षिप्ताः क्षुरा मूर्तानामेकदेशत्वविरोधाद्भिन्नदेशयुक्ता विशेषवृत्तिभाजोऽन्योन्यं क्षुरधानाच्च भिद्यन्ते तथाऽऽत्मा चक्षुरादिनाडीविशेषयोगाद्देहे द्रष्टा श्रोतेत्यादिविशेषव्याप्तिमान्मिथो देहाच्च भिद्यत इत्यर्थः ॥६३७॥

विशेषवृत्तेरौपाधिकत्वोक्त्या सामान्यवृत्तेरपि तुल्यत्वादौपाधिकत्वमुक्तम् । इदानीं देहे वृत्तिद्वयस्यौपाधिकत्वे क्षेत्रज्ञत्वस्याऽर्थिकमौपाधिकत्वमित्याह—ओतेति । अक्षरादज्ञाताद्ब्रह्मणोऽधस्तात्पृथिव्याद्या या विकारभूमयो दीर्घतन्तुवदोतात्मना तिर्यक्तन्तुवत्प्रोतात्मना च तस्मिन्नेवाक्षरे स्थिता "एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चे"त्यादिश्रुतेःताभिस्ताभिः समष्टिव्यष्टिभूताभिर्भूमिभिरवच्छेदादनवच्छिन्नः सन्परात्मैव जीवो भवत्यतो जीवत्वमौपाधिकमित्यर्थः ॥६३८॥

जीवत्वादेरौपाधिकत्वे सत्युपाधेर्वस्तुत्वेऽद्वैतहानिरवस्तुत्वे तस्यावस्तुत्वापत्तिरुपाधेरवस्तुत्वादौपाधिक-

१. आत्मा व्यापी बुद्ध्यादिः व्याप्यः एकोऽकल्पितः अन्यः कल्पितः तयोः सम्बन्धः कल्पितं तादात्म्यम् ।

विश्वंभरोऽग्निर्विज्ञेयो विश्वस्य भरणादिह । दारु कृत्स्नमभिव्याप्य यथाऽग्निर्दारुणि स्थितः ॥४०
संव्याप्य तद्वदखिलं देहमात्मा व्यवस्थितः । तस्थावसंव्याप्य यथा क्षुरधानं क्षुरस्तथा ॥४१
श्रोत्रादिनाडीमध्यस्थ आत्माऽव्याप्य तनुं स्थितः । वृत्ती द्वे प्राप्नुतेऽतद्वान्स्वप्नजाग्रदवस्थयोः ॥४२
सामान्यमात्रवृत्तिं स सुषुप्ते प्रतिपद्यते । प्रत्यग्याथात्म्यसंमोहान्न त्वसौ परमार्थतः ॥४३
महासत्ता वियज्ज्ञेयं कृत्स्नार्वाग्भूमिसंप्लुतेः । व्यक्तयोऽन्त्या विशेषाः स्युस्तदसाधारणत्वतः ॥४४
सामान्यानि विशेषाश्च तन्मध्यपतितानि च । सामान्यात्मविशेषत्वं तदुपाधिरगात्परः ॥४५
श्रोत्रत्वगादिनाडिस्थं शब्दाद्यालोचनादिभिः । चेष्टितं नामरूपाभ्यां देहेऽमुष्योपलभ्यते ॥४६

त्वायोग इत्याशङ्क्याऽऽह—सूक्ष्मतेति । पृथिव्यादेरक्षरान्तस्य पूर्वपूर्वत्यागेनोत्तरोत्तरस्य सूक्ष्मत्वादि ज्ञेयं कार्यपेक्षय कारणस्य तद्भावात्तस्य चाक्षरात्मनाऽवसानात् वियच्छब्देनाक्षरपरिग्रहात्तत्पर्यायस्याऽऽकाशशब्दस्य तस्मिन्प्रयं गदर्शनात् इतरस्य सर्वस्य सापेक्षकत्वेन कल्पितत्वान्निरपेक्षमक्षरमेवाकल्पितमित्यद्वैतसिद्धिः । न चोपाधेरवस्तुत जीवत्वादेरौपाधिकत्वायोगः कल्पितोपाधेरतादृग्जीवत्वाद्यविरोधादिति भावः ॥६३९॥

आद्यं दृष्टान्तं व्याकुर्वताऽऽत्मनो देहे विशेषवृत्तिं स्फुटीकृत्य तदौपाधिकत्वोक्त्या जीवत्वमपि तथेत्युक्तम् इदानीं द्वितीयदृष्टान्तस्थं विश्वंभरशब्दार्थमाह—विश्वमिति । ननु नायं शब्दोऽग्निं गोचरयति तत्र रूढ्यभावादि त्याशङ्क्य महाभूतत्वेन जाठरत्वेन वा विश्वभर्तृत्वमग्नेरित्याह—विश्वस्येति । इहेति प्रकृतवाक्योक्तिः । दृष्टान्त विवक्षितमंशमाह—दार्विति ॥६४०॥

दार्ष्टान्तिकमाह—संव्याप्येति । देहे सामान्यव्याप्तिमात्मनो दृष्टान्तेनोक्त्वा पूर्वोक्तनाडीस्फुटीकाराः विशेषव्याप्तिं दृष्टान्तेन सहानुवदति—तस्थाविति । अव्याप्येति च्छेदः । श्रोता द्रष्टेत्यादिविशेषरूपेणेति शेषः उक्तवृत्त्योरवस्थाभेदेनावान्तरभेदमाह—वृत्ती इति । अव्यावृत्ताननुगतत्वाद्वस्तुतो वृत्तिद्वयहीनोऽपि स्वाविद्यय तदद्वयमवस्थाद्वये प्राप्नोतीत्यर्थः । अतद्वानिति च्छेदः ॥६४१–६४२॥

तर्हि तथैवावस्थान्तरेऽपि वृत्तिद्वयं स्यादित्याशङ्क्य स्वापे सामान्यवृत्तिरेवेत्याह—सामान्येति असङ्गस्याऽऽत्मनोऽवस्थात्रयेण वृत्तिद्वयेन च योगे हेतुमाह—प्रत्यगिति । अवस्थात्रये यथोक्ता वृत्तिरस्य वास्तवं न संभवत्युक्तासङ्गत्वविरोधादिति व्यावर्त्यमाह—न त्विति ॥६४३॥

अध्यात्मं वृत्तिद्वयमुक्त्वा देहाद्बहिरपि विभज्य तद्दर्शयितुं पदार्थान्विभजते—महासत्तेति । वियदक्षर"ऋचो अक्षरे परमे व्योमन्नि"ति व्योमशब्दस्य वियत्पर्यायस्याक्षरे प्रयोगात्तच्चाक्षरं महासत्ता सामान्यमात्रमिति ज्ञेयमित्यर्थः । महासत्तेति ज्ञेयमक्षरमित्यत्र हेतुमाह—कृत्स्नेति । सर्वास्वक्षरादर्वाक्षु विकारभूमिष्वक्षरस्य व्याप्तेस्तस्य सामान्यमात्रतेत्यर्थः । अन्त्यविशेषाणामत्यन्तव्यावृत्तेर्व्यक्तित्वमेवेत्याह—व्यक्तय इति । यद्यपि वैशेषि कपरिभाषासिद्धा न सन्त्यन्त्या विशेषास्तथाऽपि विशेषव्यवहारपरिसमाप्तिभूमितया तेषामेषितव्यत्वात्तेषु व्यक्तित्वं नियन्तुमुचितमिति भावः ॥६४४॥

पृथिव्यादीनामुभयथात्वमाह—सामान्यानीति । सन्तु पदार्था यथोक्तविभागभाजः प्रस्तुते किं जातं तदाह—सामान्यात्मेति । अव्याकृतोपाधिः सामान्यात्मत्वमन्त्यविशेषोपाधिर्विशेषात्मत्वं पृथिव्याद्युपाधिरुभयात्मत्वं परो गतवानित्यर्थः ॥६४५॥

देहाद्बहिरपि वस्तुषु वृत्तिद्वयमुक्त्वा प्रतीचो देहे विशेषवृत्तिं प्रागुक्तामनुभवेन साधयन्नाह—श्रोत्रेति । नामरूपाभ्यां बीजभूताभ्यां शब्दस्पर्शादिज्ञानेन गत्युक्त्यादिक्रियया चाऽऽपादितं श्रोत्रादीन्द्रियोपाधिगतं द्रष्टृत्व-श्रोतृत्वादिरूपममुष्य मैत्रस्य देहे दृश्यते तस्मादात्मनो देहे विशेषवृत्तिरनुभवसिद्धेत्यर्थः ॥६४६॥

---

१. न त्वसाविति—अतद्वतः तद्वत्वं व्याहतं अत आह—न त्वसाविति ( न्या० ) ।

तं न पश्यन्तीत्यस्य तात्पर्यम्

असाधारणसामान्यरूपाभ्यामीक्ष्यमीक्षते । सर्वमानैः प्रसिद्धत्वादतो व्युत्थाप्यते ततः ।।४७।।
अयं मेयः प्रमाताऽहं मानमेतदितीक्षणे । मिथ्याज्ञाने जनस्तुष्टः स्वप्नमायेन्द्रजालवत् ।।४८।।
यतो मिथ्यावबोधोऽयमतस्तदपनुत्तये । न पश्यन्ति तमित्याह ये पश्यन्ति यथोदितम् ।।४९।।
वस्त्वज्ञानैकनिष्ठत्वान्मिथ्याधीर्न हि वस्तुनि । न पश्यन्तीत्यतो युक्तं नेक्षन्ते वस्तु तत्परम् ।।५०।।
यद्यप्यत्राभिमानोऽस्ति निष्क्रियाकारकात्मनि । पश्यामीत्ययथार्थत्वान्मिथ्याधीरेव सा मता ।।५१।।
नन्वप्राप्तनिषेधोऽयं न पश्यन्तीति भण्यते । नैवं सृष्ट्यादिवाक्यानां प्रत्यग्बोधैकहेतुतः ।।५२।।
मन्त्रोऽप्याहेममेवार्थं रूपं रूपमिति स्फुटम् । तद्दर्शनात्समस्तस्य पुरुषार्थस्य सिद्धितः ।।५३।।
पश्यन्तोऽपि न पश्यन्ति विरुद्धं कथमुच्यते । मेयासंस्पर्शिदृष्टित्वान्न पश्यन्तीति भण्यते ।।५४।।
सदेवेत्यादिवाक्येभ्यः कृत्स्नं वस्तु यतोऽद्वयम् । संभवस्तद्विरुद्धस्य कुतोऽकृत्स्नस्य वस्तुनः ।।५५।।

दृष्टान्तयोरभिप्रायमुक्त्वा तं न पश्यन्तीति वाक्यमवतारयितुं जगतो द्विरूपत्वं प्रत्यक्षादिसिद्धमिति भूमिकां करोति—असाधारणेति। दृश्यं जगदेव द्विरूपं तत्रैव तद्भावदृष्टेरित्यर्थः। उक्तमुपजीव्य वाक्यतात्पर्यमाह—सर्वेति। द्विरूपस्य जगतोऽध्यक्षादिसिद्धत्वादात्मनश्चातथात्वात्ततो द्व्यात्मकादात्मा पृथक्क्रियते तं नेत्यादिवाक्येनेत्यर्थः अतःशब्दस्येत्यर्थः ।।६४७।।

जगतस्तर्हि मेयत्वात्तज्ज्ञाने लोकस्य तुष्टिदृष्टेश्च वस्तुत्वेनाद्वैतहानिरत आह—अयमिति। मात्रादिज्ञानस्य स्वप्नादिधीवद्भ्रान्तित्वान्नाद्वैतहानिः सर्वमानप्रसिद्धता तु व्यवहारदृष्ट्येत्यर्थः। दार्ष्टान्तिकस्य बहुरूपत्वं दर्शयितुमनेकदृष्टान्तग्रहणम् ।।६४८।।

मात्रादिभेदधियो भ्रान्तित्वे फलितमाह—यत इति। सामान्यविशेषाभ्यां द्विरूपं मात्रादिभेदभाजमात्मानं ये पश्यन्ति ते तं नोपलभन्ते तस्य तद्वैलक्षण्यादिति मिथ्याधीध्वंसार्थमाह श्रुतिरित्यर्थः ।।६४९।।

सामान्यविशेषयोरप्यात्माभिन्नत्वेन वस्तुत्वान्न तद्धीर्मिथ्याधीः संमतात्मधीवदित्याशङ्क्याऽऽह—वस्त्विति। सामान्यादेरात्माज्ञानमात्रस्थत्वेनावस्तुत्वात्तद्धीर्मिथ्याधीरेव न वस्तुविषयत्वेन सम्यग्धीर्न हि वस्तुनि चिदेकताने सामान्यविशेषभावसंभवस्तेनोभयरूपमात्मानं पश्यन्तोऽपि न तं पश्यन्तीति युक्तमेवेत्यर्थः। तं न पश्यन्तीत्यात्मनश्चाक्षुषत्वमेव निषिध्यते तदिष्टमेव "न चक्षुषे"त्यादिश्रुतेः न तस्य विशेषनिषेधान्निरस्यते ज्ञेयतेत्याशङ्क्य व्याचष्टे—नेति। प्राणनादिना विशिष्टमात्मनं पश्यन्तोऽपि तमप्रपञ्चं न जानन्तीत्यर्थः ।।६५०।।

पश्यामि शृणोमीत्याद्यबाधितात्मदृष्ट्याऽभिमानात्कथं यथोक्तनिषेधसिद्धिरित्याशङ्क्याऽऽह—यद्यपीति। आत्मनि पश्यामीत्यादिरभिमानो यद्यप्यस्ति तथाऽपि सा मिथ्याधीरेवायथार्थत्वात्। न च कूटस्थे द्रष्टृत्वाद्यधिकृत्य प्रवृत्तिः। इष्यते चायथार्थाया धियो मिथ्यात्वं, न च सर्वविशेषनिषेधश्रुतौ सत्यां द्रष्टृत्वाद्यभिमानस्याबाधितत्वमित्यर्थः ।।६५१।।

मिथ्याज्ञानध्वंसार्थं निषेधवाक्यमित्युक्ते निषेधमाक्षिपति—नन्विति। तन्नामरूपाभ्यामिति प्रकृतः सर्गः, स एष इहेति प्रवेशश्च तस्याऽऽत्मज्ञानशेषत्वात्तदपि प्रकृतमेवेति परिहरति—नैवमिति ।।६५२।।

सृष्ट्यादेर्ज्ञानार्थत्वे मानमुक्तमेव स्मारयति—मन्त्रोऽपीति। इत्युपक्रम्य तदस्य रूपं प्रतिचक्षणायेति स्फुटमेवेममर्थं मन्त्रोऽप्याहेति योजना। न केवलं तद्वशादेव सृष्ट्यादेर्ज्ञानार्थत्वं किंतु फलवत्संनिधावित्यादिन्यायाच्चेत्युक्तमर्थान्तरमाह—तद्दर्शनादिति। समस्तस्य परिपूर्णस्येति यावत् ।।६५३।।

सृष्ट्यादिवाक्यैरात्मज्ञानस्य प्राप्तत्वादप्राप्तनिषेधाभावेऽपि नैव युक्तो व्याघातादिति शङ्कते—पश्यन्तोऽपीति। व्याघातं परिहरति—मेयेति। आत्मनः सामान्याद्यात्मना दर्शनस्य वस्त्वननुसारित्वेन भ्रान्तित्वात्सम्यग्दृष्ट्यभावविवक्षया निषेधो युक्त इत्यर्थः ।।६५४।।

कथमात्मनः सामान्याद्यात्मना दृष्टेरवस्त्वनुसारित्वेन भ्रान्तित्वं तत्राऽऽह—सदिति। द्वैताभावोपलक्षितत्वेन

आत्मनः श्रौतपूर्णत्वोपपादनम्

अव्यावृत्ताननुगतं प्रत्यग्वस्तु स्वतो मितेः । तद्विरुद्धेह या दृष्टिर्मिथ्यारूपा न साऽन्यथा ॥५६॥
आत्माऽनात्मानमाप्नोति यतः प्रत्यक्तयाऽखिलम् । तदन्यानवशिष्टत्वादकृत्स्नः स्यादतोऽन्यथा ॥५७॥
अनात्मा नाऽऽत्मरूपेण प्रत्यक्त्वात्सिद्धिमर्हति । प्रत्यङ्मात्रैकयाथात्म्यात्कुतस्तद्व्यतिरेकतः ॥५८॥
देशतः कालतो रूपाद्वस्त्ववस्थादितोऽपि च । व्यभिचारोऽस्य संसिद्धस्तद्विरुद्धात्मसाक्षिकः ॥५९॥

अकृत्स्नो हि स प्राणन्नेव प्राणो नाम भवति इत्यस्यार्थः

प्रतिज्ञार्थस्य सिद्ध्यर्थं न पश्यन्तीति भण्यते । अकृत्स्नो हीति हेतूक्तिः साऽपि चैवं समर्थ्यते ॥६०॥
तदकृत्स्नत्वसंसिद्ध्यै प्राणन्नेवेत्युदीरणम् । अन्योन्यव्यभिचारित्वं प्राणादेरीक्ष्यते यतः ॥६१॥
यस्मिन्दृष्टेऽप्यदृष्टोऽर्थः स तदन्यश्च शिष्यते । तथाऽदृष्टेऽपि दृष्टः स्यादकृत्स्नस्तादृगुच्यते ॥६२॥
आविष्करिष्यन्हेत्वर्थमकृत्स्नत्वप्रसिद्धये । न ह्यसौ कृत्स्नतामेति चक्षुःश्रोत्रादिसंहतः ॥६३॥

कृत्स्नत्वं साधयति—यत इति । त्रिविधपरिच्छेदहीने वस्तुन्यागमसिद्धे फलितमाह—संभव इति । परिच्छिन्नस्यावस्तुत्वे तद्दृष्टिरसम्यग्दृष्टिरेवेति भावः ॥६५५॥

आत्मनः श्रौतं पूर्णत्वं युक्त्यनुभवाभ्यां व्यनक्ति—अव्यावृत्तेति । प्रत्यग्वस्तु स्वतो निःसामान्यविशेषं विदुषामैकरस्येन स्फूर्तेः सामान्यादेश्च स्वतः परतो वाऽप्रमितेरित्यर्थः । वस्तुमितिविरुद्धत्वाच्चाऽऽत्मनि सामान्यादिधीर्मिथ्येत्याह—तद्विरुद्धेति । सामान्यादिदृष्टिरात्मन्यन्यथा सम्यग्दृष्टिर्नेति व्यावर्त्यमाह—न सेति ॥६५६॥

पूर्णत्वे प्रतीचो हेत्वन्तरमाह—आत्मेति । यतोऽखिलमनात्मानमात्मा व्याप्नोत्यात्मनस्तत्र सर्वत्र प्रत्यक्त्वादतस्तस्मादात्मनोऽन्यस्य तेनाव्याप्तस्याभावात्स पूर्णः स्याद्यद्यात्माव्याप्तमपि किंचिद्भवेद्भवेदकृत्स्नस्तदात्मा । न च तदस्त्यात्माव्याप्तस्य निःस्वरूपत्वादतो युक्ता पूर्णतेत्यर्थः ॥६५७॥

आत्मनो मानयुक्तिभ्यां पूर्णत्वमुक्त्वा परिच्छिन्नस्याऽऽविद्यत्वे युक्त्यन्तरमाह—अनात्मेति । द्वैतमात्मनोऽभेदेन भेदेन वा सिध्यति? नाऽऽद्यः, प्रत्यङ्मात्रपरिशेषप्रसङ्गान्नेतरः प्रत्यगितरस्वरूपाभावादतः प्रतीचि कल्पितत्वेनैव तत्सिद्धिरित्यर्थः ॥६५८॥

कल्पितत्वेऽनात्मनो हेत्वन्तरमाह—देशत इति । एकस्मिन्देशे काले च सदेवान्यत्र नास्ति यदेकस्य रूपं तन्नान्यस्य भवति यदैकस्य जन्मावस्था तदाऽन्यस्य नाशावस्था । एवं देशादिवशाद्गुणक्रियादिवशाच्चानाऽऽत्मनो व्यभिचारः सिद्धो न च तत्र साधकाभावोऽव्यभिचारिसाक्ष्यनुभवसिद्धत्वादित्यर्थः ॥६५९॥

तं न पश्यन्तीत्यस्यार्थमुक्त्वाऽनन्तरवाक्यं पातयति—प्रतिज्ञेति । तं न पश्यन्तीति प्रतिज्ञा तदर्थसिद्ध्यर्थमकृत्स्नो हीति हेतूक्तिर्भण्यत इति योजना । साऽपि हेतूक्तिर्वक्ष्यमाणनीत्या प्राणन्नेवेत्यादिना साध्यत इत्याह—साऽपीति । हेतुसमर्थनस्याऽऽवश्यकत्वं सूचयितुं चशब्दः ॥६६०॥

चतुर्थपादार्थं प्रपञ्चयति—तदिति । हेतुवाक्यार्थस्याकृत्स्नत्वस्य सिद्ध्यर्थं प्राणन्नेवेत्यादिवाक्यमित्यर्थः । ननु तेन प्राणनादिकर्तोच्यते न त्वकात्स्न्र्यं तदुपनायकशब्दाभावादत आह—अन्योन्येति । प्राणनदर्शनादिकर्तुर्मिथो व्यभिचारित्वं यतो दृश्यते न हि पूर्णं क्वचिद्व्यभिचरत्यतस्तस्याकृत्स्नतेत्यर्थः ॥६६१॥

अकृत्स्नो हीत्यादेस्तान्यस्येत्यस्मात्प्राक्तनस्य संदर्भस्य तात्पर्यमुक्त्वाऽकृत्स्नशब्दार्थमाह—यस्मिन्निति । यस्मिन्घटादौ दृष्टेऽप्यदृष्टः सोऽर्थोऽस्ति सावयवत्वात्ततोऽन्यश्च पटादिरदृष्टः शिष्यते तथा पटादौ स्वगतविशेषे चादृष्टेऽपि यो घटादिर्दृष्टः स्यात्स दर्शितप्रकारोऽकृत्स्नशब्दित इत्यर्थः ॥६६२॥

उक्तमकृत्स्नत्वं प्राणनादिकर्तरि कथं सिध्यति तदभावे द्रष्ट्रादिदर्शनेऽपि कथमात्मनो दर्शनमित्याशङ्क्य तदकृत्स्नत्वसिद्ध्यर्थमित्यत्रोक्तमनुवदति—आविष्करिष्यन्निति । प्राणनादिकर्तुरात्मनोऽकृत्स्नत्वसिद्ध्यर्थमकृत्स्नो हीति हेतुवाक्यार्थं प्राणन्नेवेत्यादिना प्रकटीकरिष्यन्वेदः प्रवृत्त इत्यर्थः । दर्शनादिकर्तुरपि कृत्स्नत्वमात्मत्वादन्यथा

परस्परानभिव्याप्तेर्नामरूपक्रियात्मनाम् । व्यभिचारादकृत्स्नत्वं स्यादनात्मैकरूपिणाम् ॥६४॥
असंहतः संहतः सन्प्रत्यङ्मोहैकहेतुतः । प्राणनादिक्रियाः कुर्वन्प्राण इत्यभिधीयते ॥६५॥
तस्मिंश्च[1] प्राणने वायोर्व्यापारः करणात्मना । उत्सृज्यमानः कर्मत्वं विज्ञानात्मन एति सः ॥६६॥
साक्षादात्मोत्सृजन्वायुं तस्मिन्प्राणनकर्मणि । अपेतकारकग्रामः प्रतीच्यैवानुभूयते ॥६७॥
कर्त्रादिकारकाण्यस्मिन्नसाधारणरूपतः । अतद्धर्मक आभान्ति ह्यागमापायसाक्षिणि ॥६८॥
साक्षिरूपं स्वतःसिद्धं तेनैष्वव्यभिचारतः । कर्त्रादि तु तमोन्तस्य रूपं धर्माद्यपेक्षया[2] ॥६९॥
अनित्यहेतुतोऽनित्यं तेन कर्त्रादि लक्ष्यते । निर्हेतु प्रत्यगज्ञानं लक्ष्यते तेन नित्यवत् ॥७०॥

तत्कर्तृत्वायोगादित्याशङ्क्याऽऽह—न हीति। दर्शनादिकर्ता नैव पूर्णत्वं गच्छति चक्षुरादिभिः संहतत्वादित्यर्थः ॥६६३॥

संहतस्याकात्स्न्र्यं साधयति—परस्परेति। नामाद्यात्मनामनात्ममात्राणां प्राणनादिकृतामन्योन्याप्तेर्व्यभिचारादुक्ताकृत्स्नत्वं स्यादिति योजना ॥६६४॥

प्रतीचो निर्विकारस्य प्राणनादिकर्तृत्वायोगात्तत्कर्तृत्वेन तस्य प्राणादिसंज्ञाऽलाभात्प्राणनक्रियामेव कुर्वन्प्राणो नामेत्यादिभाष्यमयुक्तमित्याशङ्क्याऽऽह—असंहत इति। प्रत्यगात्मा वस्तुतोऽसंहतोऽपि मोहवशात्प्राणादिभिः संहतः सन्प्राणनादिचेष्टाः कुर्वन्प्राणादिशब्दवाच्यो भवतीति योजना। प्राण इत्यत्राऽऽदिशब्दो द्रष्टव्यः ॥६६५॥

मोहवशात्कर्तृत्वेऽपि प्राणने करणत्वं कर्मत्वं वा कस्य स्यात्। न हि कर्तुरेव तद्भावो भेदप्रसिद्धेरित्याशङ्क्याऽऽह—तस्मिंश्चेति ॥६६६॥

यदि प्राणने वायोरेवाऽऽध्यात्मिकस्य साधकतमत्वेन करणत्वं क्रियाव्याप्यत्वेन कर्मत्वं च तर्हि कर्तृत्वमपि क्रियाश्रयत्वेन तस्यैव किं न स्यादित्याशङ्क्याऽऽह—साक्षादिति। तस्मिन्प्राणनाख्ये कर्मणि वायुमुत्सृजन्नात्मा साक्षादनुभूयते प्रतीच्यैवेति संबन्धः। तेनाऽऽत्मैव तत्र कर्तृत्वमनुभवति न वायुस्तस्य कारकान्तरत्वादित्यर्थः। तर्हि कर्तृत्वादेर्वास्तवत्वं नेत्याह—अपेतेति ॥६६७॥

अवास्तवत्वं कर्तृत्वादेः साधयति—कर्त्रादीति। सर्वाणि कारकाणि क्रियाकारकादिभेदशून्ये प्रतीचि सर्वसाक्षिणि रज्जौ भुजंगवद्भान्ति तद्भानं च भ्रान्तिर्मिथोऽव्यावृत्तत्वेन व्यभिचारित्वादित्यर्थः। कारकाणां जडत्वेन साक्षिणमनपेक्ष्य स्वतोभानासंभवो हिशब्दार्थः ॥६६८॥

साक्षिणोऽपि ततद्धर्मविशिष्टस्य व्यभिचारित्वेन कल्पितत्वान्न तत्र कर्त्रादिकल्पनेत्याशङ्क्याऽऽह—साक्षीति। साक्षिणश्चिन्मात्रस्य कौटस्थ्यान्न कर्त्रादिसादृश्यमतो व्यभिचारिष्वव्यभिचारित्वेन तन्मात्रस्याकल्पितत्वात्तस्याधिष्ठानता युक्तेत्यर्थः। कर्त्रादेः साक्षिण्यध्यासे फलितमाह—कर्त्रादीति। साक्षिरूपाद्विशेषार्थस्तुशब्दः। अज्ञानतत्कार्यबुद्ध्योपहितप्रत्यग्वस्तुनो रूपं कर्त्रादीत्यर्थः। यथोक्तप्रतीचो नित्यत्वात्तद्रूपत्वे कर्त्रादेरपि नित्यतेत्याशङ्क्याऽऽह—धर्मादीति ॥६६९॥

कर्मकृतत्वं कर्त्रादिरूपस्य कथमिति तत्राऽऽह—अनित्येति। तेन साक्षिणा कर्त्रादिरूपमनित्यं लक्ष्यते तच्चानित्यत्वमनित्यधर्मादिकृतत्वादन्यथा चाकर्तृत्वाद्यनुभवविरोधात् अनुभूयते हि विदुषा प्रतीच्यकर्तृत्वादीत्यर्थः। कर्त्रादेरनित्यत्वे तदुपादानाज्ञानमपि तदभेदादनित्यं सन्नोपादानं स्यादित्याशङ्क्याऽऽह—निर्हेत्विति। यद्यपि ज्ञाननिरस्यत्वादज्ञानं न नित्यं तथाऽपि तेनैव साक्षिणा नित्यवल्लक्ष्यते निर्हेतुत्वे सत्यभावेतरत्वादात्मवदित्यनुमानादनित्योपादानत्वाच्च तन्नित्यमनित्यस्य तदयोगादिति भावः ॥६७०॥

---

१. अज्ञानात् कर्तृत्वेऽपि किं तत्र करणं कर्म वा स्यात् तत्राह—**तस्मिन्निति**। प्राणनक्रियायां वायोः साधकतमत्वात् करणत्वं, क्रियाव्याप्यत्वात् कर्मत्व उत्सृज्यमानः व्याप्यमानः ( न्या० )।

२. धर्माद्यपेक्षया—अज्ञानतत्कार्यबुद्ध्युपहितचैतन्यस्य धर्मादिकृतं कर्तृत्वादीत्यर्थः ( न्या० )।

प्रत्यगज्ञानमात्रैकनीडत्वान्नान्यरूपता । क्रियाकारकरूपाणां नित्यानित्यमतिः कुतः ॥७१॥
अतस्तद्व्यभिचारेण नामरूपक्रियात्मनाम् । अकृत्स्नव्यपदेशेन [1]मिथ्याज्ञानत्वमुच्यते ॥७२॥
अज्ञातायां यथा रज्ज्वां तदध्यस्तैकरूपिणाम् । व्यभिचारः स्रगादीनां प्रतीच्येवमनात्मनाम् ॥७३॥

तस्य प्राणभावस्य प्राथम्ये हेतुः

प्राणाग्नयः पुरा बुद्धेः सुप्तेष्वन्येषु जाग्रति । अतस्तद्विषया तावत्कर्तृतेहोच्यते प्रभोः ॥७४॥
नामतो रूपतश्चैवं प्राणनादिषु कर्मसु । लक्ष्यतेऽविद्यया तद्वान्रज्जुः सर्पादिभिर्यथा ॥७५॥
प्राणन्नेवेत्यवधृतेस्तदर्थान्तररूपतः । प्राणाद्यकृत्स्नतासिद्ध्यै व्यभिचारः प्रदर्श्यते ॥७६॥
कर्मैतदेव कुर्वाणः काले चात्रैव भण्यते । अत्रैव च क्रियायोगे तद्रूपाह्वः स इष्यते ॥७७॥
तद्वानसमकालं तु प्राणनादिक्रियोत्थितेः ।
प्रागूर्ध्वं च तदन्येषु प्राणासंभवहेतुतः । न तन्नामा न तद्रूपस्तदन्यत्र च कर्मणि ॥७८॥

कर्त्रादेरनित्यत्वेऽपि गगनादेर्नित्यत्वान्नाज्ञानकार्यतेत्यद्वैतहानिमाशङ्क्याऽऽह—प्रत्यगिति। क्रियाकारकाद्यात्मकसर्वार्थानामात्माज्ञानमात्रेऽनपेक्षाधारे स्थितत्वादज्ञानादन्यरूपता नास्त्यतो गगनादेर्नित्यता कर्त्रादेरनित्यतेति विभागेन न प्रमेत्यर्थः ॥६७१॥

यतो विभक्तस्य नित्यत्वादि दुर्निरूपमतः प्रतीचि त्र्यात्मकस्य कर्त्रादेराकाशादेश्च व्यभिचारादकृत्स्नवाक्येन तस्य मिथ्याधीविषयत्वं कथ्यत इति फलितमाह—अत इति ॥६७२॥

प्रतीचि कर्त्रादीनामुक्तं व्यभिचारं मिथ्यात्वार्थं दृष्टान्ते स्पष्टयति—अज्ञातायामिति। या हि रज्जू रज्जुरित्यज्ञाता तस्यां तस्याज्ञानस्य तज्जस्य च तेनाध्यस्ततया तदेकस्वभावानां स्रगादीनां च यथा व्यभिचारोऽनुभूयते तथाऽऽत्मन्यज्ञाते तदज्ञानस्य तत्कृतानां च कर्त्रादीनां व्यभिचारान्मिथ्यात्वमित्यर्थः ॥६७३॥

प्राणन्नेवेत्यादिवाक्यादित्थं हेत्वर्थः समर्थितः। संप्रति किमिति प्रथमं प्राणनकर्तृत्वं प्रतीचः श्रुत्योच्यते वदनाद्यन्यतमकर्तृत्वमेवाऽऽदौ किं नोक्तमित्याशङ्क्य प्राणन्नेवेत्यादिप्रथमप्रवृत्तवाक्यतात्पर्यमाह—प्राणाग्नय इति। प्राणानामग्नित्वं श्रुत्युक्तमाहुत्याधारत्वात्तदाधारत्वं च प्राणाग्निहोत्राधिकारेऽधिगन्तव्यम्। बुद्धेः पुरा सुषुप्ताविति यावत्। इहेत्युदाहृतवाक्योक्तिः। प्रभोः करणस्वामिनो जीवस्येत्येतत्। सुषुप्त्यवस्थायां वागादिकरणग्रामोपसंहारेऽपि प्राणस्यानुपसंहृतस्य व्यापारात्तद्व्यापारस्यावस्थात्रयव्यापित्वात्तद्विषयकर्तृत्वमस्मिन्वाक्ये प्रथममात्मनो दर्शितमित्यर्थः ॥६७४॥

श्रुत्या चेत्प्राणनादिकर्तृत्वं प्रतीचो वर्ण्यते तर्हि श्रौतत्वात्तस्य वस्तुत्वं ब्रह्मवदित्याशङ्क्याऽऽह—नामत इति। यथा रज्जुरविद्यया सर्पधारादिमती लक्ष्यते तथाऽऽत्मा स्वाविद्यया प्राणाद्यध्यासात्प्राणनादिषु सत्सु नामरूपाभ्यामतद्वानपि तद्वानिव भातीत्यर्थः ॥६७५॥

प्राणन्प्राणो नामेत्यादिवाक्ये किमेवकारेणेत्याशङ्क्याऽऽह—प्राणन्निति। तस्मात्प्राणनकर्तुरर्थान्तररूपतो दर्शनादिकर्तुः सकाशादस्य व्यावृत्तिरवधृतेरुच्यते। तथाच प्राणो द्रष्टा श्रोतेत्यादेरकृत्स्नत्वसिद्ध्यर्थं मिथो व्यभिचारो दर्शितो भवतीत्यर्थः ॥६७६॥

प्राणादेर्मिथो व्यभिचारेऽपि प्रतीचि तदभावाच्चैतन्यवदकल्पितत्वमित्याशङ्क्याऽऽह—कर्मेति। प्राणनादिव्यापारं कुर्वन्नेवाऽऽत्मा तद्व्यापारोत्पत्तिदशायामेव प्राणनादिसंबन्धे च निमित्ते सत्येव तन्नामा तद्रूपश्चोच्यते तथा व्यापारान्तरं कुर्वन्कालान्तरे संबन्धान्तरे च तत्तन्नामरूपवानिष्टः। यथाऽऽहुः—स खलु प्राणन्नेवैतदेव कर्म कुर्वन्नेवास्मिन्नेव काल एतस्यैव कर्मणो योगात्प्राणो नाम भवतीति। अतो व्यभिचारो वस्तुन्यपि प्राणादेरस्तीत्यर्थः ॥६७७॥

उक्तमेव व्यतिरेकद्वारा स्फोरयति—तद्वानिति। यदुक्तं तद्वानसमकालं त्विति तदेव स्फुटयते—

१. मिथ्याज्ञानत्वं तादृशधीविषयत्वम्।

प्राणनादिव्यापारानन्तरं वदनादेः कथने तात्पर्यम्

प्राणनानन्तरं यस्मात्क्रियाशक्तेः समुद्भवः । वदन्वागित्यतः प्राह क्रमयोगानुरोधतः ।।७९।।
वक्तीति वाग्भवेदात्मा ह्युच्यते वाग्भवेद्ध्वनिः । तथोच्यतेऽनयेत्यस्मात्करणं वागुदाहृता ।।८०।।
पश्यंश्चक्षुस्तथा द्रष्टा शृण्वञ्श्रोत्रं तथैव च । त्रिधा त्रिधा व्यवच्छिन्न एवं सर्वत्र लक्षयेत् ।।८१।।
चक्षुरालोचनायैव संशयं कुरुते मनः । बुद्धिरध्यवसानाय साक्षी क्षेत्रज्ञ उच्यते ।।८२।।
यैव ज्ञानविकासेषु साक्षिता सैव नान्यथा । क्रियाशक्तिविकासेषु ह्यन्योन्यव्यभिचारिषु ।।८३।।
निरस्तावयवे व्योम्नि मिथोभिन्नप्रदेशिनाम् । न संभाव्या यथा सिद्धिः प्रतीच्येवं तमोवताम् ।।८४।।
प्राणन्वदन्नित्युक्तानि नामरूपाणि यानि तु । कर्मजान्येव तान्यस्य न तु चैतन्यवत्स्वतः ।।८५।।
अन्योन्यापेक्षसंसिद्धेरन्योन्यव्यभिचारतः । अपराधीनसंसिद्धौ भानाविव तमो भवेत् ।।८६।।

प्राणनादीति । यथोक्तप्राणनादिक्रियादिव्यक्तेः प्राक्तन्नाशादूर्ध्वं च न प्राणादिनामा प्रत्यगात्मा नापि तद्रूपस्तस्मात्प्राणनकर्तुरन्येषु दर्शनादिकर्तृषु प्राणनासंभवान्न ते प्राणनादिक्रियाव्यक्तेः प्राक्तन्नामरूपवन्तः प्राणादन्यत्र च व्यापारे तुल्यो न्यायो द्रष्टुरन्यत्र दर्शनायोगान्न द्रष्टृनामरूपत्वमेवं श्रोत्रादौ द्रष्टव्यमतो वस्तुनि प्राणादीनां व्यभिचारादकात्स्न्यात्किल्पिततेति भावः ।।६७८।।

किमिति प्राणनकर्तृत्वोक्त्यनन्तरं कर्मेन्द्रियव्यापारकर्तृत्वमुच्यते ज्ञानेन्द्रियव्यापारकर्तृत्वमेव कस्मान्नोपन्यस्यते तत्राऽऽह—प्राणनेति । समुद्भवो वदनादिव्यापारः । क्रमस्य योगः संभवः । प्राह कर्मेन्द्रियव्यापारकर्तृत्वमिति शेषः । यद्यपि प्राणनानन्तरमेव दर्शनादिव्यापारोऽपि दृश्यते तथाऽपि वदनादिक्रियायाश्चलनात्मकप्राणाश्रितत्वाद्युक्तमानन्तर्यमिति भावः ।।६७९।।

यद्यपि श्रुतौ प्राणनादिकर्तृत्वेनैवाऽऽत्मनो व्यवच्छेदः श्रुतस्तथाऽपि प्रतीन्द्रियव्यापारं कर्तृत्ववत्कर्मत्वेन करणत्वेन च व्यवच्छेदो द्रष्टव्य इत्याह—वक्तीत्यादिना । ध्वनौ वाक्शब्दस्य रूढिद्योतको हिशब्दः । अस्माद्व्युत्पादनादिति यावत् ।।६८०।।

वदन्वागित्यत्रोक्तन्यायं वाक्यान्तरेष्वतिदिशति—पश्यन्निति । तत्र हि चष्ट इति चक्षुःशब्देन द्रष्टोच्यते दृश्यत इति कर्म तथा दृश्यतेऽनेनेति करणमिति विभागः । शृण्वञ्श्रोत्रमित्यत्रापि श्रोत्रशब्देन शृणोतीति श्रोतोक्तः श्रूयत इति कर्म श्रूयतेऽनेनेति करणमिति विवेक्तव्यम् । त्वगादिष्वपि यथोक्तन्यायं योजयति—एवमिति ।।६८१।।

इन्द्रियादिसंबन्धादात्मनोऽनेकधात्वमुक्त्वेन्द्रियादेरसाधारणं व्यापारमाह—चक्षुरिति । चक्षुःशब्देन दशेन्द्रियाणि गृह्यन्ते । आलोचनशब्देन दर्शनादयो वचनादयश्च दश व्यापाराः । संशयः संकल्पस्याप्युपलक्षणम् । जीवस्यासाधारणं व्यापारमाह—साक्षीति । आत्मनो वस्तुतो न कर्तृत्वादीति भावः ।।६८२।।

प्रतीन्द्रियव्यापारं साक्षिभेदमाशङ्क्याऽऽह—यैवेति । अन्योन्यव्यभिचारिष्विति सप्तमी सप्तमीभ्यां संबध्यते । ज्ञानशब्देन तच्छक्तिरुक्ता । उभयत्र विकासशब्दो विकारविषयः । नान्यथा प्रकारभेदवती न भवतीति यावत् । भेदस्यापि साक्षिणो भेदकाभावान्न वास्तवो भेदोऽस्तीति भावः । एकेनैव साक्षिणा तत्प्रयुक्तव्यापारसिद्धौ तद्भेदकल्पने गौरवमिति दर्शयितुं हिशब्दः ।।६८३।।

प्राणन्नेवेत्यादिहेतुसमर्थनवाक्यतात्पर्यमुपसंहरति—निरस्तेति । आकाशे निष्प्रदेशे परस्परव्यावृत्तप्रदेशविशेषजुषां धूमतुषारादीनां सद्भावो न शक्यते यथा प्रतीच्यसङ्गोदासीने नाज्ञानतज्जसंभावनेत्यर्थः ।।६८४।।

तान्यस्येत्यादिवाक्यस्यार्थमाह—प्राणन्निति । अनामरूपत्वमेवास्य स्वाभाविकमिति वक्तुं तुशब्दः । एवकारार्थमाह—न त्विति ।।६८५।।

उक्तानां प्राणादिनामरूपाणां प्राणनादिनिमित्तत्वेऽपि पाचकादिवत्प्रतीचि वस्तुतेति चेन्नेत्याह—अन्योन्येति । नाम्नो रूपापेक्षस्य तस्य चान्यापेक्षस्य सिद्धे रूपस्यानामत्वान्नाम्नश्चारूपत्वान्मिथो व्यभिचारादादित्ये तमोवत्प्रतीचि चिदेकरसे नामरूपमसंभावितत्वात्कल्पितमित्यर्थः ।।६८६।।

यत एवमविद्योत्थं प्राणाद्यस्यातदात्मनः । नामरूपमतस्ताभ्यां पश्यन्नपि न पश्यति ॥८७॥
तत्रैवं सति यो द्रष्टा प्राणनादिक्रियं परम् । उपास्त इति जानाति न स्वभावादुपासनम् ॥८८॥
न यतो युगपत्कृत्स्नवस्तुज्ञानं क्रमेण वा । अस्त्येकैकमतोऽनूक्तिः प्राप्ता दृष्टिरनूद्यते ॥८९॥
नानेकदृष्टिविध्यर्थमेकैकोपास्तिकुत्सनम् । मृत्योः स मृत्युमित्येवं तद्दृष्टिरपि कुत्स्यते ॥९०॥

अत्र ऐकात्म्यदर्शनमेव विधेयम्

सर्व एकमिति ह्युक्तेरिहाप्यैकात्म्यदर्शनम् । विधीयते यतो नातः समस्तव्यस्तदर्शनम् ॥९१॥
समस्तव्यस्ततां तस्मान्मानान्तरमितत्वतः । अनूद्यापूर्वमैकात्म्यं विधेयमुपपत्तिमत् ॥९२॥

समस्तव्यस्तदर्शनमत्र विधेयमिति भर्तृप्रपञ्चमतं तन्निरासश्च

समुद्रतरुगोपिण्डदृष्टान्तैः परमात्मनः । व्याचक्षते बलात्केचित्समस्तव्यस्तदर्शनम् ॥९३॥
नानावयवसंभेदभिन्नार्थश्चेन्नगादिवत् । सिद्धः कुतश्चिन्मानात्स्यादनुवादस्तथा सति ॥९४॥

नामरूपस्य कल्पितत्वे फलितमाह—यत इति । सापेक्षत्वाद्व्यभिचाराच्चेत्येवंशब्दार्थः । अतदात्मनो नामरूपहीनस्येति यावत् । इत्थंभावे तृतीया । पश्यन्द्रष्टाऽऽत्मानमिति शेषः ॥६८७॥

"स योऽत" इत्यादेरर्थमाह—तत्रेति । तस्मिन्नात्मन्युक्तन्यायेन पूर्णे तदन्यस्य च सर्वस्य तत्रैव कल्पितत्वे सति यो याथात्म्येनाद्रष्टा सन्प्राणनाद्यन्यतमविशिष्टं केवलमात्मानमुपास्ते स न वेदेति संबन्धः । उपास्त इत्यस्यार्थमाह—इति जानातीति । उपास्त इत्यनेन स्वभावाज्जानातीत्येतदुच्यते । न हि विहितमुपासनमुत्तरत्र निन्दादृष्टेरित्यर्थः ॥६८८॥

अस्तु तर्हि स्वाभाविकज्ञानस्य विधायकमिदं वाक्यं नेत्याह—न यत इति । क्रमाक्रमाभ्यां न कस्यचिदसर्वज्ञस्य सर्ववस्तुज्ञानं किंत्वेकैकं क्रमभावि कतिपयपदार्थज्ञानमेव सर्वस्यास्ति तस्य च प्राप्तत्वादनूक्तिर्यतः संभाविताऽतः सा लोकतः प्राप्ता स्वाभाविकी दृष्टिः प्रकृतवाक्येनानूद्यते न तु विधीयतेऽप्राप्तांशाभावादित्यर्थः ॥६८९॥

न स वेदेत्येकैकोपास्तिनिन्दनादनेकदृष्टिरनुज्ञाता तथाच समस्तव्यस्तदृष्टिविधायकमिदं वाक्यमित्याशङ्क्याऽऽह—नानेकेति । अनेकदृष्टेरपि निन्दितत्वादिति हेतुमाह—मृत्योरिति ॥६९०॥

न केवलं श्रुत्यन्तरविरोधादेव समस्तव्यस्तदृष्ट्यसिद्धिः किंतु वाक्यशेषविरोधादपीत्याह—सर्व इति । ऐकात्म्यदर्शनविधायकवाक्यान्तराणां समस्तव्यस्तदर्शनपरिपन्थिनां भूयस्त्वमभिप्रेत्य हिशब्दः ॥६९१॥

"अत्र ह्येते सर्व एकं भवन्ती"ति वाक्यमपि समस्तव्यस्तदृष्टिपरमिति चेन्नेत्याह—समस्तेति । घटः सन्नित्यादिश्रुतीतरमानेन समस्तव्यस्ततायाः दृष्टत्वान्न तस्या यस्माद्वाक्यगम्यत्वमपूर्वत्वाभावात्तस्मात्तमनूद्यापूर्वं यन्निर्विशेषैकरसं वस्तु द्वैतमिथ्यात्वसाधकयुक्त्युपबृंहितं तदेवात्र प्रतिपाद्यं "प्रसिद्धमनूद्याप्रसिद्धं विधेयमि"ति न्यायादित्यर्थः ॥६९२॥

विशेषाणां ह्यविशेष एकता भवति यथा समुद्रे समुद्रोर्मीणामिति वदद्भिर्भर्तृप्रपञ्चैः समस्तव्यस्तदृष्टिपरत्वमस्य वाक्यस्योक्तं तदुत्थापयति—समुद्रेति । तरङ्गशाखाखण्डादिविशेषाणां समुद्रतरुगोष्वेकतावत्प्राणादेः सर्वस्य परस्मिन्नेकत्वात्तस्यापि समुद्रादिवन्नानारसत्वमत्र हीत्यादौ विवक्षितमित्यर्थः । बलादिति श्रुत्यक्षरबाह्यत्वोक्तिः ॥६९३॥

किं समस्तव्यस्तात्मकं वस्तु प्रतिपाद्यत्वेनात्रोच्यते किंवोपास्यत्वेनेति विकल्प्याऽऽद्यं दूषयति—नानेति । नानाविधैरवयवैः प्राणादिभिः संभेदः संबन्धस्तेन विशिष्टो नानारसः परः । विमतं समस्तव्यस्तात्मकमुपादानत्वात्तरुसमुद्रादिवदित्यनुमानाद्दृष्टश्चेत्तथा सति वाक्यं तत्रानुवादो न मानं, न चेदनुमानादेषोऽर्थो दृष्टो दृष्टान्तोक्तिस्त्वदीया वृथा स्यादित्यर्थः ॥६९४॥

निःशेषभेदसामान्यदृष्ट्यावृत्तिरुपासनम् । विधित्सितं चेत्तादृक्षं कल्पकोट्याऽपि दुःशकम् ॥९५॥
प्रत्यग्दृष्टेर्हि विषयः स्यादात्मेत्यनुभूतितः । तदबोधमृते तत्र कुतः पिण्डादिदर्शनम् ॥९६॥
तं परादादिति तथा प्रतीच्यज्ञानकल्पितम् । मिथ्याज्ञानापनुत्त्यर्थमात्मैवेत्यब्रवीच्छ्रुतिः ॥९७॥
पराञ्चीत्यपवादाच्च न पिण्डादीक्षणं श्रुतेः । प्रत्यग्दृष्ट्या विरुद्धत्वान्न परागर्थदर्शनम् ॥९८॥
अनन्यमेयतन्मानमातृ वस्त्वविभागवत् । अमेयमानमात्रेकं तदात्मेति प्रचक्षते ॥९९॥
संसारदर्शनाभ्यासात्तन्मुक्तिं ये प्रचक्षते । नाकार्यं विद्यते तेषां वैश्वानरवराश्रयात् ॥७००॥
वयं तु वरहीनत्वाच्चर्मवद्वेष्टितुं वियत् । न शक्नुमो विना युक्तीरतो न श्रद्दधामहे ॥ १ ॥
उक्तं च वक्ष्यमाणं च समस्तव्यस्ततां प्रति । श्रुत्यक्षरानुरोधेन दूषणं दूषितात्मनाम् ॥ २ ॥
नादूषितात्मभिर्यस्मात्प्रतीचोऽन्यन्मनागपि । प्रत्यग्दृष्ट्येक्षितुं शक्यं वस्तु स्वप्नदृशा यथा ॥ ३ ॥

द्वितीयमनूद्य दूषयति—निःशेषेति । भेदा विशेषाः सर्वेषां विशेषाणां सामान्यानां चैकवस्त्वात्मनामात्मतादात्म्येन दृष्टेरावृत्तिरूपमुपासनमस्मिन्वाक्ये विधातुमिष्टं चेत्तथाविधमुपासनं पुमायुषाऽपि दुष्करं तेषामानन्त्यात्कात्स्न्येनानुसंधानासिद्धेरतोऽविध्यात्मकस्य वस्तुनो द्विधोक्त्यसंभवात्तद्दृष्टिर्भ्रान्तिरित्यर्थः ॥६९५॥

तत्रैव हेत्वन्तरमाह—प्रत्यगिति । अहंप्रत्ययस्य स्वरूपचैतन्यस्य वाऽऽत्मेत्ययमर्थो विषयः स्यात्तत्र तस्यानुभवात्तस्य तथाविधानुभवे सर्वसंप्रतिपत्त्यर्थो हिशब्दः । तस्यानुभवसिद्धस्याज्ञानं विना तस्मिन्नात्मनि न देहादेर्दर्शनं मुक्तावभावादतोऽन्वयव्यतिरेकाभ्यामाविद्यमात्मनि देहादिदर्शनं भ्रान्तमित्यर्थः ॥६९६॥

इतश्च समस्तव्यस्तदर्शनं भ्रान्तमित्याह—तमिति । "ब्रह्म तं परादाद्योऽन्यत्राऽऽत्मनो ब्रह्म वेदे"त्याद्या श्रुतिर्नानात्वदृष्टिं निन्दति । तथाऽऽत्मन्याविद्यभेदधीनिषेधार्थं"मात्मैवेदमग्र आसी"दात्मैवेदं सर्वमि"त्याद्या चाऽऽत्ममात्रत्वं सर्वस्योक्तवती तत्कुतः समस्तव्यस्तदृष्टिरित्यर्थः । अथवा[1] "ब्रह्म तं परादा"दिति प्रकम्य प्रत्यगात्मनि कल्पितब्रह्मक्षत्रादिभेददर्शनापवादार्थं"मिदं सर्वं यदयमात्मे"तिश्रुतिरुक्तवती । तथाच समस्तव्यस्तदृष्टिरयुक्तैवेत्यर्थः ॥६९७॥

तस्या विवक्षितत्वाभावे हेत्वन्तरमाह—पराञ्चीति । "पराञ्चि खानी"त्यादिश्रुतेर्भेददृष्टेर्निन्दितत्वान्न विशेषदृष्टिस्तन्न समस्तव्यस्तदृष्टिरित्यर्थः । आत्मानात्मदृष्ट्योर्मिथो विरुद्धत्वेनैकत्रायोगाच्च न समस्तव्यस्तदृष्टिरित्याह—प्रत्यगिति । न हि प्रत्यक्प्रवणया दृष्ट्या पराचोऽर्थस्य दर्शनं नापि पराक्प्रवणया दृष्ट्या प्रतीचो दर्शनमुपपद्यते तयोर्मिथो विरुद्धत्वात्तथाच कथं समस्तव्यस्तदर्शनमित्यर्थः ॥६९८॥

तत्रैव हेत्वन्तरमाह—अनन्येति । अन्यन्मेयमस्य नास्तीत्यनन्यमेयं तदेव स्वरूपं मानं मातृ चेति तन्मानमातृ, अनन्यमेयं च तत्तन्मानमातृ चेति विग्रहः । तस्य कल्पनामात्राधिष्ठानत्वेन सत्यतामाह—वस्त्विति । तस्य चैकरस्यं श्रुत्यधिगतमित्याह—अविभागवदिति । उक्तानुवादेन तत्र विद्वत्प्रसिद्धिं प्रमाणयति—अमेयेति । तथाच कथं तस्य समस्तव्यस्तत्वं विद्वत्प्रसिद्धिविरोधादिति शेषः ॥६९९॥

किंच परपक्षे मोक्षानुपपत्तिरित्याह—संसारेति । नानारसार्थदृष्टिर्हि संसारदर्शनं तदभ्यासादेव ततो मोक्षमिच्छतां देवताप्रसादाच्चर्मवदाकाशमपि वेष्टितुमस्ति शक्तिरित्यर्थः ॥७००॥

किंच देवताप्रसादोऽस्तीति वाङ्मात्रान्नाशक्यार्थानुष्ठानमित्याशयेनाऽऽह—वयं त्विति । समस्तव्यस्तदृष्टिर्मानयुक्तिहीनत्वादश्रद्धेयेत्याह—विनेति ॥७०१॥

परपक्षासंभवमुपसंहरति—उक्तं चेति । दूषणोक्तेः समूलत्वेन दृढत्वं सूचयति—श्रुतीति । दूषितात्मनामशुद्धबुद्धीनामसम्यग्दृशामिति यावत् ॥७०२॥

ननु समस्तव्यस्तदर्शिनस्तत्त्वदर्शिनस्ते कथं दूषितात्मानस्तत्राऽऽह—नेत्यादिना । यथा स्वप्नद्रष्टा

१. वाक्यभेदेन उत्तरार्धं व्याख्याय एकवाक्यतया व्याचष्टे—अथवेति ।

प्राणन्नेवेत्यस्य विवरणम्

प्राणन्वदन्निति द्वाभ्यां क्रियाशक्तिसमुद्भवः । पश्यञ्शृण्वन्निति तथा ज्ञानशक्त्युद्भवः कृतः ॥ ४ ॥
नामरूपातिरेकेण न ज्ञेयं वस्तु विद्यते । उपलब्धौ तयोरुक्ते कारणे श्रोत्रचक्षुषी ॥ ५ ॥
नामरूपप्रकाश्या च क्रिया प्राणात्मिका तथा । नामाभिव्यक्तिकृद्वाक्स्यादेवं सर्वत्र योजना ॥ ६ ॥
श्रोत्रादिकरणैर्यद्यत्प्रथते तत्तदुच्यते । रूपं व्याक्रियते यत्तु तन्नामेत्युपदिश्यते ॥ ७ ॥
ज्ञानशक्तिविकासानां मनः साधारणं मतम् । क्रियाशक्त्युद्भवानां च करणं तत्त्रिकालदृक् ॥ ८ ॥
प्राणनादिकृतां मध्य एकैकं यः समीक्षते । न स जानात्यकृत्स्नत्वात्पूर्णं वस्तु यतः स्वतः ॥ ९ ॥
यावदेवमयं वेद प्राणितीत्यादिकर्तृकम् । अक्रियाकारकं वस्तु न तावद्वेद तत्त्वतः ॥१०॥

प्रत्यग्दृष्ट्या नान्यद्द्रष्टुं शक्यमेवं सम्यग्दर्शिभिरात्मनोऽन्यदीषन्मात्रमपि स्वरूपदृष्ट्या न शक्यं द्रष्टुमतः समस्तव्यस्तदृष्टिर्भ्रान्तिरित्यर्थः ॥७०३॥

परमतं प्रसङ्गागतं प्रत्याख्याय श्रुतिव्याख्यामेवानुवर्तयन्प्राणन्नेव प्राणो वदन्वागित्याभ्यामित्यादिभाष्यं विभजते—प्राणन्निति । पदद्वयोपात्तप्राणनवदनाभ्यामनुक्तकर्मेन्द्रियव्यापारोपलक्षणमित्यर्थः । समुद्भवः कृत इति संबन्धः । कृतो लक्षित इति यावत् । समुद्भवो गमनादिव्यापारः । दर्शनश्रवणाभ्यामुक्ताभ्यामनुक्तज्ञानेन्द्रियव्यापाराणामुपलक्ष्यत्वमाह—पश्यन्निति । वदन्नित्यादौ प्रकृतिभागोक्तवदनादिव्यापारेणानुक्तहस्तादिव्यापारस्य लक्ष्यत्ववदित्याह—तथेति । उद्भवः स्पर्शनादिव्यापारः ॥७०४॥

अथोक्तबुद्धीन्द्रियव्यापाराभ्यामनुक्ततद्व्यापारमुपलक्ष्याऽऽत्मनः स्प्रष्टृत्वादिपरिच्छेदो नापदेष्टुं शक्यते संबन्धं विनोपलक्षणायोगादत आह—नामरूपेति । प्रकाश्यप्रकाशकातिरेकेण न किंचिज्ज्ञेयमस्ति ते च चक्षुःश्रोत्राभ्यां त्वगादिभिश्च दृश्येते । तस्मादेकार्थत्वरूपसंबन्धादुपलक्षणसंभवादात्मनः स्प्रष्टृत्वादिपरिच्छेदसिद्धिरित्यर्थः ॥७०५॥

उक्तकर्मेन्द्रियप्राणव्यापाराभ्यामनुक्तपादादिव्यापारोपलक्षणादात्मनो न गन्तृत्वादिपरिच्छेदो विना संबन्धमुपलक्षणासिद्धेरित्याशङ्क्याऽऽह—नामेति । सर्वा क्रिया नामरूपव्यङ्ग्या प्राणाश्रया च तथा सति प्राणाश्रयनामविषयोच्चारणक्रियाव्यञ्जकत्वं वाचो हस्तादीनां तदाश्रयादानादिव्यञ्जकता तस्मादेकाश्रयक्रियाव्यञ्जकत्वयोगादुपलक्षणसंभवादात्मनो गन्तृत्वादिपरिच्छित्तिरित्यर्थः । वाचि प्राणाश्रयक्रियाव्यञ्जकत्ववत्करादावपि तदाश्रयतद्व्यञ्जकत्वयोजना कार्येत्याह—एवमिति ॥७०६॥

नामरूपशब्दाभ्यां प्रसिद्धार्थग्रहान्न प्रकाश्यप्रकाशकमात्रग्रहस्तथाच चक्षुरादेस्त्वगादेश्च नोक्तैकार्थत्वसंगतिरित्याशङ्क्याऽऽह—श्रोत्रादीति । शक्तिद्वयोद्भवोक्त्या समस्तसंसारस्य प्रतीच्यध्यासस्यात्र विवक्षितत्वान्न प्रसिद्धनामरूपग्रहोऽत्र युक्तोऽतो नामरूपविषयत्वादित्यादिभाष्ये नामरूपशब्दाभ्यां प्रकाश्यप्रकाशकमात्रोक्तेर्यथोक्तसंबधसिद्धिरित्यर्थः ॥७०७॥

"मन्वानो मन" इत्यस्य तात्पर्यमाह—ज्ञानेति । विकासोद्भवशब्दाभ्यां दृष्ट्यादयो वदनादयश्चोच्यन्ते । साधारणं करणमिति संबन्धः । मनसः साधारणत्वं साधयति—तदिति । अत्र च भाष्यानुसारेण व्युत्पत्तित्रयमाश्रित्य कर्तृत्वादित्रयमात्मनो द्रष्टव्यम् ॥७०८॥

तान्यस्येत्यादिवाक्यस्य प्रागेव व्याख्यातत्वा"त्स योऽत" इत्यादेरर्थमनुवदति—प्राणनादीति । विशिष्टस्य पूर्णताभावाद्वस्तुनश्च स्वतस्तथात्वाद्विशिष्टात्मदर्शी नाऽऽत्मविदित्यर्थः ॥७०९॥

यः समीक्ष्यते न स जानातीति व्याहतिमाशङ्क्याऽऽह—यावदिति । अयं जनो यावत्प्राणनादिकर्तारमात्मानं वेद न तावत्तत्त्वतो वेत्ति यतो वस्त्वक्रियाकारकमिति योजना । एवमिति प्रसिद्धप्रकारोक्तिः ॥७१०॥

आत्मेत्येवोपासीत इत्यस्य अवतरणम्

अव्याकृतेऽनभिव्यक्तेर्न चेत्तत्त्वमीक्ष्यते । व्यक्तौ च हेतुकार्याभ्यां कथं तर्हीक्ष्यतां परम् ।।११।।
कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ । प्राज्ञः कारणबद्धस्तु द्वौ तु तुर्ये न सिध्यतः ।।१२।।
विस्फारिताक्षो जानाति शब्दाद्येव न तत्परम् । आपीतकरणग्रामः शब्दाद्यपि न वेत्ति हि ।।१३।।
कथं पश्यंस्तमात्मानं साक्षाद्वेदेति चोदिते । आत्मेत्येवेति नो वक्ति चोद्यहेतुनिवृत्तये ।।१४।।

आत्मेत्येवोपासीत इत्यस्य विवरणम्

अतिरोहितरूपं यज्जगत्यव्याकृते तथा । तत्साक्षित्वाच्च तद्व्यक्तौ यदक्षैर्व्यज्यते न च ।।१५।।
प्रत्यक्तया यः प्रथते स्वयंज्योतिःस्वभावकः । मातृमानक्रियामेयविभागैर्न विभज्यते ।।१६।।
जिघ्राणीममहं गन्धमिति यो वेत्त्यविक्रियः । स आत्मा तत्परं ज्योतिः शिरसीदं वचः श्रुतेः ।।१७।।
अभिधाज्ञानगम्यत्वनिषेधायेतिशब्दनम् । यतो वाचो निवर्तन्त इति च श्रुतिशासनम् ।।१८।।
व्याकृताव्याकृतात्मत्वनिराकरणसिद्धये । एवेत्याहान्यदेवेति तथा चोच्चैः श्रुतीरणम् ।।१९।।

स्वतो वस्तु पूर्णमप्रपञ्चमित्युक्तं तच्चेन्न स्फुरेन्नास्त्येव तर्हि । स्फुरेच्चेत्किं स्वापे स्फुरति जागरादौ वा? नाऽऽद्य इत्याह—अव्याकृत इति । स्वापविषयोऽव्याकृतशब्दः । अनभिव्यक्तेरज्ञानेन प्रतिबन्धादित्यर्थः । द्वितीयं दूषयति—व्यक्तौ चेति । जागरस्वापयोरिति यावत् । हेतुकार्याभ्यां प्रतिबन्धादिति संबन्धः । अवस्थात्रये तत्परं तत्त्वं नेक्ष्यते चेत्कथं तर्हि तदीक्ष्यतामित्याक्षेपो न हि स्थानान्तरमस्ति यत्रैतदीक्षितुं क्षममिति भावः ।।७११।।

अज्ञानेन स्वापे जागरादावज्ञानतज्जाभ्यां प्रतिबद्धं तत्त्वमित्यत्र मानमाह—कार्येति । न च तुरीये तत्त्वधीस्तत्र कार्यकारणसंबन्धाभावादन्यतरसंबन्धं विना च धियोऽनुत्पत्तेरिति मत्वाऽऽह—द्वौ त्विति । कार्यकारणरूपावुपाधी द्विवचनविषयौ ।।७१२।।

अवस्थात्रयेऽपि तत्त्वज्ञानाभावे हेत्वन्तरमाह—विस्फारितेति । जागरादौ तत्त्वविरुद्धार्थज्ञानात्स्वापे च ज्ञानमात्रस्यैवाभावाद्दुर्लभा तत्त्वधीरिति भावः ।।७१३।।

चोद्यमुपसंहरति—कथमिति । न तावदात्मानं सविशेषमुपलभमानस्तं साक्षाद्वेद "न स वेदे"ति निन्दितत्वान्नापि निर्विशेषं पश्यन्नात्मानं यथावद्बुध्यतेऽवस्थात्रयेऽपि तद्दृष्ट्ययोगस्योक्तत्वादित्यर्थः । चोद्यानुवादपूर्वकमुत्तरमवतारयति—इति चोदित इति । अज्ञानं चोद्ये हेतुस्तन्निवृत्त्यर्थमिदं वाक्यमिति तात्पर्यमाह—चोद्येति ।।७१४।।

यदुक्तमव्याकृतेऽनभिव्यक्तेरित्यादि तन्निराकुर्वन्नात्मशब्दार्थमाह—अतिरोहितेति । जगत्यव्यक्ते यत्तथा नाव्यक्तमतिरोहितरूपत्वात् यच्चाध्यक्षादिभिस्तस्य व्यक्तौ तैर्न व्यज्यते व्यक्ताव्यक्तस्य जगतोऽध्यक्षादीनां च साक्षित्वात्स आत्मेत्युत्तरत्र संबन्धः । न चेति चकारस्तथेत्यत्र नञः संबन्धार्थः ।।७१५।।

तर्हि जगदात्मनोर्भेदादद्वैतहानिर्नेत्याह—प्रत्यक्तयेति । घटादिवज्ज्ञानकर्मत्वं वारयति—स्वयमिति । कल्पितमात्रादिप्रत्यक्त्वे फलितमाह—मात्रिति । मानमेव क्रिया यद्वा क्रियापदेन कर्तृकरणभोक्त्रादित्रयं च लक्ष्यते । यद्वा मानस्योत्पत्तौ हेतुः क्रिया । न विभज्यते वस्तुत इति शेषः । तत्रापि स आत्मेत्येव संबन्धः ।।७१६।।

यदुक्तं विस्फारिताक्षो जानातीत्यादि तन्ना अद्वयं स्वप्रभमात्मतत्त्वं यतः श्रौतमिति मत्वाऽऽह—जिघ्राणीति । भवतु मातृसाक्ष्यात्मा ब्रह्मणस्तु किमायातं तत्राऽऽह—तदिति । अथ यो वेदेदं जिघ्राणीति स आत्मेत्यादिवाक्यं मातृसाक्षिण्यात्मनि मानमुक्त्वाऽऽत्मैव ब्रह्मेत्यत्र तत्त्वमादिवाक्यं प्रमाणयति—शिरसीति ।।७१७।।

इतिशब्दार्थमाह—अभिधेति । प्रकृतं प्रकारमितिशब्दो गोचरयेत् । न च वाङ्मनसाविषयत्वमात्मनोऽस्ति प्रस्तुतमित्याशङ्क्य श्रुत्यन्तरसिद्धप्रकारपरामर्शित्वं तस्य दर्शयति—यत इति ।।७१८।।

कथमात्मादिशब्दधीभ्यां गम्यमानस्याऽऽत्मनो वाङ्मनसातीतत्वमित्याशङ्क्यावधारणार्थमाह—व्याकृ-

**उपेति सामीप्यवचस्तन्निष्ठा प्रत्यगात्मनि । कार्यकारणभूताभ्यां प्रत्यङ्नेदीय ईक्ष्यते ॥२०॥**
**व्याकृताव्याकृतात्मभ्यां यो भिन्नोऽज्ञानहेतुतः । प्रत्यक्तत्त्वधिया हत्वा तावुपैत्यात्ममात्रताम् ॥२१॥**
**व्युत्थाय कारणात्कार्यात्तत्त्वज्ञानवर्त्मना । उपेत्य कूटस्थमजमासीतापरिणामवान् ॥२२॥**
**व्यक्ताव्यक्तविभागोऽयं सिध्येदात्मन्यतद्वति । अहोरात्रविभागोऽयं भानौ तद्रहिते यथा ॥२३॥**
**आत्मानात्मविभागोऽपि नायमात्मस्पृगीक्ष्यते । अज्ञातात्मैकसाक्षित्वादज्ञानोत्थं न वस्तुगम् ॥२४॥**
**अनात्मसिद्धिवन्न स्यादात्मसिद्धिरनात्मनः । आत्मनोऽनात्मसिद्धिश्च नैव स्यादात्मसिद्धिवत् ॥२५॥**
**आत्मनो व्यतिरेकेण नैःस्वाभाव्यादनात्मनः । तथैवाव्यतिरेकेण रज्जुसर्पखपुष्पवत् ॥२६॥**
**तस्मान्नानात्मनोऽस्त्यात्मा नाप्यनात्माऽऽत्मनः स्वतः । आत्मनस्तु स्वतः सिद्धिरात्मसिद्धेरनन्यतः २७॥**

तेति । कार्यकारणान्यतरोपहितस्यैव शब्दधीगम्यत्वं न निरुपाधिकस्य चिद्धातोरिति भावः । अकार्यकारणं तत्त्वमित्यत्र श्रुत्यन्तरं संवादयति—अन्यदिति । तात्पर्यमुच्चैरित्युच्यते ॥७१९॥

उपेत्युपसर्गस्य वाच्यमर्थमाह—उपेतीति । सामीप्यस्य प्रतीचि पर्यवसानं वदन्नुपसर्गलक्ष्यमर्थमाह—तन्निष्ठेति । कार्यकारणयोरपि सामीप्यमस्ति बुद्ध्यादेरज्ञानस्य चाऽऽत्मना संनिधानात्तत्कथं सामीप्यस्य प्रतीचि निष्ठेत्याशङ्क्याऽऽह—कार्येति । प्रतीचो नेदीयस्त्वमत्यन्तसंनिकृष्टत्वं तत्र मानमाह—ईक्ष्यत इति ॥७२०॥

कार्यकारणाभ्यां पृथक्करणात्प्रतीचः सद्वयत्वमाशङ्क्योपसर्गार्थं निगमयति—व्याकृतेति । यो हि कार्यकारणाभ्यामज्ञानाद्भिन्नः स वाक्योत्थज्ञानादज्ञानध्वंसद्वारा तदात्मकौ कार्यकारणात्मानावुपाधी निरस्य सच्चिदानन्दैकरसतां प्राप्नोतीत्यर्थः ॥७२१॥

कूटस्थे प्रतीच्यासनादिव्यवहारायोगात्कथमासीतेत्युक्तं तत्राऽऽह—व्युत्थायेति । कार्यकारणस्वरूपप्रत्यग्याथात्म्यधिया ताभ्यां व्युत्थाय ते शिथिलीकृत्याकार्यकारणात्मानमुपेत्याविकारः सन्नासीत तदिदं स्वरूपावस्थानमासनं न त्वस्मिन्नात्मनि काचिद्विक्रियेत्यर्थः ॥७२२॥

अक्षरव्याख्यानद्वारा कार्यकारणविलक्षणमद्वयं तत्त्वं वाङ्मनसातीतं कूटस्थमिति स्थापितम् । इदानीं कार्यकारणविभागभानं कथमित्याशङ्क्य दृष्टान्तेनाज्ञानकृतमिति ब्रुवन्नात्मदृष्ट्यनुसारेण कूटस्थमद्वयं तत्त्वं तत्र कल्पितमनात्मजातमिति प्रतिपादयति—व्यक्तेत्यादिना । यथाऽऽदित्ये प्रकाशैकस्वभावे दर्शनादर्शनाभ्यामहोरात्रविभागस्तद्धीनेऽपि कल्प्यते तथाऽऽत्मनि चिदेकताने कार्यकारणविभागस्तद्विभागशून्येऽपि तदविद्यया कल्प्यते वस्तुतस्तु कूटस्थोऽद्वयश्चाऽऽत्मेत्यर्थः ॥७२३॥

नन्वात्मानात्मविभागोऽस्ति न वा? नाऽऽद्योऽद्वैतहानात् । नेतरो विरुद्धयोरैक्यायोगादत आह—आत्मेति । कार्यकारणविभागवदित्यपेरर्थः । आत्मस्पर्शित्वे मानाभावं हेतुमाह—नेति । अयमित्यापरोक्ष्यं तर्हि कथं विभागस्योक्तं तत्राऽऽह—अज्ञातेति । आत्मनि स्पर्शित्वाभावस्तर्हि द्वैतस्य न स्यादित्याशङ्क्याऽऽह—अज्ञानेति ॥७२४॥

आत्मापेक्षया सिध्यन्ननात्मा कल्पितश्चेदनात्मश्रुत्याद्यपेक्षया सिध्यन्नात्माऽपि कल्पितो युक्तस्तस्यापि साक्ष्यन्तरमधिष्ठानान्तरं च वाच्यमित्यनवस्थेत्याशङ्क्याऽऽह—अनात्मेति । व्यवहारदशायामनात्मनो जडस्याजडात्मप्रसादात्सिद्धिवदनात्मप्रसादान्नाऽऽत्मसिद्धिस्तस्य स्वप्रकाशत्वादतः स्वतः स्फुरतश्चिद्धातोरज्ञाननिर्तकस्वाकारधीपरिणतिभेदस्य श्रुत्यादिजन्यत्वेऽपि न तत्कल्पितत्वशङ्केत्यर्थः । अनात्माऽपि न कल्पित आत्मसिद्धत्वादात्मवदित्याशङ्क्याऽऽह—आत्मन इति । यथा स्वप्रकाशचिदात्मत्वेनाऽऽत्मनः स्फूर्तिरेवमात्मनः सकाशादनात्मनो न वस्तुतः स्फुरणं तस्यासङ्गस्यानात्मासंबन्धादतः स कल्पितः सन्नात्मनि स्फुरति रज्ज्वां सर्पवदित्यर्थः ॥७२५॥

तस्य कल्पितत्वे हेत्वन्तरमाह—आत्मन इति । आत्मनो भेदेनानात्मनः स्वरूपाभावादभेदेनापि प्रत्यङ्मात्रस्यावशेषात्स्वातन्त्र्येण स्वरूपाभावात्खपुष्पवदसन्नेव स स्यान्न चापरोक्षस्यासत्त्वमतः सर्पवत्कल्पितत्वेत्यर्थः ॥७२६॥

अथ न स कल्पित आत्मसंबन्धित्वात्तद्वदित्याशङ्क्य हेत्वसिद्धिमाह—तस्मादिति । भेदाभेदाभ्यामनात्मनो

### मोक्षकाले आत्मनो निर्विशेषत्वेऽपि अज्ञानाभावो विशेषणम्

यावानात्मनि वेदाऽऽत्मा प्रतीच्यात्मानमात्मना । निरस्ताज्ञानतत्कार्यं पश्येत्तद्वदनात्मसु ।।२८।।
बुद्ध्यादेर्विषयान्तस्य निरस्तस्याऽऽत्मनो बहिः । अनात्मवस्तुनः प्रत्यङ्ङात्मा ह्यात्मीयतो भवेत् ।।२९।।
तद्याथात्म्यात्महेतुभ्यामनात्मार्थसमागमे । अव्यावृत्ताननुगतसंगती रज्जुसर्पवत् ।।३०।।
प्रतीचोऽव्यतिरेकेण तदन्यद्वस्तु सिध्यति । प्रतीचा तस्य जग्धत्वात्क्वानात्मा सिध्यतामयम् ।।३१।।
सहतेऽनात्मतां नाऽऽत्माऽनात्मा तद्विरहे कुतः । वस्त्वात्मना न चेत्सिध्येत्कुतः सिध्येदनात्मना ।।३२।।
स्वात्मन्येव सदन्यत्र सर्ववस्तु प्रसिध्यति । तत्र चेत्तदसत्सत्स्यात्कथमन्यत्र निष्प्रमम् ।।३३।।
मातृत्वकञ्चुको यद्वदात्माऽनात्मानमीक्षते । दृष्टिमात्रैकरूपत्वान्न तथाऽऽत्मानमीक्षते ।।३४।।

नैःस्वाभाव्यं तच्छब्दार्थः । कल्पितेऽपि संबन्धे वस्तुतः स नास्तीति वक्तुं स्वत इत्युक्तम् । आत्मानात्मनोरसंबन्धे कथं तयोः सिद्धिरित्याशङ्क्योक्तं सिद्धिप्रकारं परामृशति—आत्मनस्त्विति । आत्मस्वरूपस्फूर्तेरारोपिततादात्म्यादनात्मनः सत्ता स्फूर्तिश्चेत्याह—आत्मसिद्धेरिति । यद्वाऽऽत्मनः स्वतःसिद्धत्वे हेतुरनेनोच्यते । आत्मस्फुरणस्याऽऽत्ममात्रत्वादिति हेत्वर्थः । अनात्मसिद्धिस्तु तस्मिन्कल्पिततादात्म्यादित्युक्तमेव ।।७२७।।

नन्वात्मा बन्धमोक्षयोरेकरूपो न वा ? आद्ये तयोरविशेषान्न कश्चिदपि मोक्षायोत्तिष्ठेद्द्वितीये सविशेषत्वादनात्मवदात्मनो न स्वतःसिद्धिस्तत्राऽऽह—यावानिति । यद्वदित्येतत् । यथा मोक्षे स्वमहिमस्थमात्मानमविद्यातज्जनिर्मुक्तं निर्विशेषं स्वेनैव रूपेण स्वयं वेत्ति न तत्र कर्त्रादिभेदस्तथा संसारेऽपि देहादिष्वनात्मस्वात्मानमस्थूलादिश्रुतेर्निर्विशेषं पश्येन्न चैवं बन्धमोक्षयोरविशेषो ज्ञानभावाभावाभ्यां विशेषात्, न चैवंविधं सविशेषत्वमस्वतःसिद्धत्वे हेतुरनात्मत्वोपाधेरित्यर्थः ।।७२८।।

नन्वनात्मस्वात्मानं पश्येदिति भेदोक्तेरद्वैतहानिस्तत्राऽऽह—बुद्ध्यादेरिति । दृश्यत्वजडत्वादिहेतुभ्यस्तस्याऽऽत्मनो बहिर्भावेन निरसनमुचितमिति दर्शयितुं हीत्युक्तम् । तस्य प्रत्यङ्ङात्मेत्यत्र हेतुमाह—आत्मीयत इति । आत्मीयत्वादनात्मनः प्रतीचस्तत्स्वरूपत्वं यथा रज्जोरात्मीयः सर्पस्तया सात्मकस्तथाऽनात्मा प्रत्यगात्मीयस्तेन सात्मक इत्यर्थः ।।७२९।।

नन्वात्मात्मीयत्वसंबन्धो वास्तवोऽवास्तवो वा ? नाऽऽद्योऽसङ्गागमविरोधात् । नेतरस्तत्प्रापकाभावादत आह—तद्याथात्म्येति । आत्मा तावदनात्मनः स्वरूपमारोपितस्याधिष्ठानातिरिक्तस्वरूपाभावात्स च चेतनः सन्नाधिष्ठानान्तरमन्वेषते । ताभ्यां हेतुभ्यामनात्मनोऽर्थस्याऽऽत्मानं प्रत्यागमने निःसामान्यविशेषस्याऽऽत्मनस्तेन स्वस्वामित्वादिसंगतिरारोपितैव, रज्जुसर्पयोस्तथा संगतिदृष्टेः, तथा च संबन्धत्रमेवाऽऽत्मात्मीयत्वसंबन्धस्यावास्तवत्वसाधकमित्यर्थः ।।७३०।।

तयोः संगतिरेवाऽऽरोपिता न त्वात्मानात्मानौ दूरस्थतरुवदित्याशङ्क्याऽऽह—प्रतीच इति । प्रतीचः सकाशादन्यदनात्मवस्तु तस्मादभेदेन भेदेन वा सिध्येदाद्ये तस्याऽऽत्मना ग्रस्तत्वान्न क्वचित्सिद्धिर्द्वितीयेऽपि तदसिद्धिर्निःस्वरूपत्वादतः संबन्धवत्स्वरूपेणाप्यनात्मा संसृष्टरूपेणाऽऽत्मा कल्पित इत्यर्थः ।।७३१।।

आत्मानात्मरूपसंबन्धयोः कल्पितत्वे हेत्वन्तरमाह—सहत इति । जडाजडत्वेन मिथोविरोधादित्यर्थः । तर्हि न्यायायातमन्यत्वं नेत्याह—अनात्मेति । आत्मनः सकाशादनात्मनो भेदाभेदयोरनुपपत्तिमुक्तामनूद्य तामिदानीमुपपादयति—वस्त्विति । अनात्मरूपं विरोधान्नाऽऽत्मरूपेण सिध्येच्चेन्न तदात्मरूपेणापि सिध्येदात्मनोऽन्यत्र तत्सत्त्वाभावादित्यर्थः ।।७३२।।

उक्तमर्थं दृष्टान्तेनाऽऽह—स्वात्मनीति । यथा घटादिर्मृदादिरूपे सदेवान्यत्र देशादौ सिध्यति तत्राविद्यमानं तु न क्वचित्सिध्येन्मानाभावान्नान्यत्र कारणात्कार्यमित्यादिन्यायाच्च तथा जगदपि ब्रह्मण्यन्यत्र चासत्त्वात्कल्पितमित्यर्थः ।।७३३।।

आत्माऽपि कल्पितो ज्ञेयत्वात्संमतवदित्याशङ्क्याऽऽह—मातृत्वेति । आत्मा हि मातृत्वोपहितोऽनात्मानं पश्यन्नपि नाऽऽत्मानं पश्यति तस्य नित्यदृष्टिरूपत्वेनादृश्यत्वादिति ज्ञेयत्वासिद्धिरित्यर्थः ।।७३४।।

कर्तृत्वप्रतिषेधार्थं द्रष्टुर्दृष्टेरितिश्रुतिः । दृष्टिरेव तु यो द्रष्टेत्याह दृष्टिविशेषणम् ॥३५॥

शब्दवृत्तमपेक्ष्य आत्मनोऽद्वयत्वादिनिरूपणम्

प्रतीचो वस्तुनस्तावद्वस्तुवृत्तं यथोदितम् । शब्दवृत्तमथेदानीं यथावदभिधीयते ॥३६॥
यच्चाऽऽप्नोति यदादत्ते यच्चात्ति विषयानिह । यच्चास्य संततो भावस्तस्मादात्मेति कथ्यते ॥३७॥
यस्मादर्थे तु विज्ञेया यच्छब्दाः सर्व एव तु । समुच्चये चशब्दाश्च तथा सर्वत्र योजयेत् ॥३८॥
व्याप्नोत्यनवशेषेण सर्पादीन्स्रगिवाखिलान् । प्रत्यक्तयाऽनात्मनोऽतः प्रत्यगात्मेति भण्यते ॥३९॥
सावशेषात्मनो[1]ऽकृत्स्नान्निःशेषात्मतया यतः । आत्मा[2]ऽनात्मन आप्नोति तेनाऽऽत्मेत्यभिधीयते ॥४०॥
स्वचिदाभासमोहेन तदुत्थानखिलान्यतः । आदत्तेऽनात्मनः प्राज्ञे ततश्चाऽऽत्मेति तं विदुः ॥४१॥
पर आत्मनि सर्वेऽपि संप्रतिष्ठन्त एकले । पृथिव्याद्या अनात्मान इति चाऽऽथर्वणे वचः ॥४२॥
स्वात्माभासाः पराचीना धीवृत्तीर्विषयोन्मुखाः । प्रत्यगत्ति यतोऽतोऽसावात्मेत्युक्तो मनीषिभिः ॥४३॥
विश्वो हि स्थूलभुङ्नित्यं तैजसः प्रविविक्तभुक् । आनन्दभुक्तथा प्राज्ञ इति चाऽऽगमशासनम् ॥४४॥
अव्यावृत्ताननुगतः पूर्णः स्वात्मन्यवस्थितः । यतोऽस्य संततो भावस्तस्माच्चाऽऽत्मेति शब्द्यते ॥४५॥

आत्मा न मातृत्वोपहितः किंतु स्वयमेव माता नान्योऽतोऽस्ति द्रष्टेतिश्रुतेरित्याशङ्क्याऽऽह—कर्तृत्वेति । न हि द्रष्टुर्दृष्टेरित्यादिश्रुतिर्यो द्रष्टा स दृष्टिरेव तस्या विपरिलोपो नेति समानाधिकरणया षष्ठ्या दृष्टिं द्रष्टुर्विशेषणं दर्शनकर्तृत्वं निषेद्धुमाहेति योजना । तथा च निषेधश्रुत्या चेतनान्तरनिषेधस्य विवक्षितत्वादात्मनो दृष्टिकर्तृत्वस्योक्तश्रुतिविरोधेनायोगादात्मा मातृत्वोपहितो न मातेत्यर्थः ॥७३५॥

व्यक्ताव्यक्तविभागोऽयमित्यारभ्योक्तमनुवदति—प्रतीच इति । वस्तुवृत्तपरमार्थमात्मरूपपेक्ष्य प्रत्यग्वस्तुनोऽद्वयकूटस्थचिदेकतानत्वमनात्मनः सर्पवत्कल्पितत्वमित्येतद्यथा तथा तावदुक्तमित्यर्थः । आत्मेतिशब्दवृत्तमपेक्ष्याऽऽत्मनोऽद्वयत्वादि यथा तथा यथावदुच्यतेऽनन्तरसंदर्भेणेत्याह—शब्देति ॥७३६॥

किं तदात्मशब्दवृत्तमित्यपेक्षायां तदर्थं व्यासवाक्यमुदाहरति—यच्चेति ॥७३७॥

तद्व्याकुर्वन्यच्छब्दचतुष्टयस्य चशब्दत्रयस्य चार्थमाह—यस्मादिति । प्रथमस्तुशब्दोऽवधारणार्थो द्वितीयस्तत्रार्थान्तरासंभवं हेतुं वक्तुमिति विवेक्तव्यम् ॥७३८॥

यच्चाऽऽप्नोति तस्मादात्मेत्यस्यार्थमाह—व्याप्नोतीति ॥७३९॥

आत्मवदनात्मनामपि व्यापकत्वान्नाऽऽत्मनस्तेषु व्याप्तिरित्याशङ्क्याऽऽह—सावशेषेति । सावशेषात्मत्वमेव साधयितुं विशिनष्टि—अकृत्स्नानिति । कृत्स्नत्वेऽनात्मत्वमेव न स्यादिति भावः ॥७४०॥

यदादत्ते तस्मादात्मेत्यस्यार्थमाह—स्वचिदिति । स्वकीयचिदाभासवता मोहेन तस्मादेव मोहादुत्पन्नानशेषाननात्मनो यस्मादादत्ते तस्मात्तमात्मेति विदुरिति योजना । आदत्ते स्वात्मन्येव संहरतीति यावत् । प्राज्ञे स्वापादावित्यर्थः ॥७४१॥

तत्र श्रुत्यन्तरं संवादयति—पर इति । संप्रतिष्ठन्ते लीयन्त इति यावत् ॥ ७४२ ॥

यच्चात्तीत्यादेरर्थमाह—स्वात्मेति । पराचीना इत्यस्य व्याख्या विषयोन्मुखा इति । अत्ति साक्षात्करोतीत्यर्थः ॥७४३॥

अत्रापि श्रुतिं पठति—विश्वो हीति । बाह्येन्द्रियोपनीतत्वं विषयाणां स्थौल्यं वासनामात्रोपस्थापितत्वं प्रविविक्तत्वमिति भेदः । आनन्दशब्देन कारणकोशो गृह्यते तं भुङ्क्ते पश्यतीत्यानन्दभुगुच्यते सौषुप्तः पुरुषः ॥७४४॥

यच्चास्येत्यादेरर्थमाह—अव्यावृत्तेति । अत्र पूर्वपूर्वं उत्तरोत्तरस्य हेतुः ॥७४५॥

---

१. सावशेषः आत्मा येषां ते तान् ।

२. अनात्मा गगनादि आत्मानं न व्याप्नोति परिच्छिन्नत्वात् ।

तद्विष्णोरिति मन्त्रोऽपि विष्णोस्तत्परमं पदम् । चक्षुर्वदाततं व्योम्नि व्याचष्टे प्रत्यगात्मनि ।।४६।।
नानुत्पन्नमतो ज्ञानं नानपास्तं तथा तमः । यथोक्तैकात्म्यसंदृष्टावतः कार्त्स्न्यं ममाऽऽत्मनः ।।४७।।
द्रष्टृदर्शनदृश्यानां प्रत्यक्त्त्वं यतस्ततः । तद्दृष्टावखिलं दृष्टं रज्जुसर्पादिवद्भवेत् ।।४८।।
स्रगज्ञानैकहेतूनां स्रग्धिया ज्ञातता यथा । प्रत्यङ्मोहजवस्तूनां प्रतीच्यवगते तथा ।।४९।।

अत्र ह्येते इति श्रुतिवाक्यं योजयति

अत्र ज्ञाते यतः सर्वं ऐकात्म्यं यान्त्यशेषतः । प्राणादयोऽत आत्मैव द्रष्टव्यः सर्वदर्शनात् ।।५०।।

आत्मेत्येवेतिवाक्यस्य विधिपरत्वनिराकरणम्

केचिद्व्याचक्षतेऽपूर्वं विधिमेतं महाधियः । नियमं त्वपरे धीराः परिसंख्यामथापरे ।।५१।।
नापूर्वविधिरित्येष कदाचिदपि गृह्यते । सर्वदैव तु तत्प्राप्तेस्तथा नान्योऽपि कश्चन ।।५२।।
पुंव्यापारानधीनत्वान्नेह संभाव्यते विधिः । स्वव्यापारैकविषयः सर्व एव यतो विधिः ।।५३।।
संस्थेम्नेऽस्यैव चार्थस्य पूर्वपक्षोक्तिपूर्वकः । भाष्यकृद्भिः कृतो यत्नः स आविष्क्रियतेऽधुना ।।५४।।

भाष्यार्थनिरूपणम्

यथा कार्यानपेक्षस्य प्रामाण्यं वचसः स्फुटम् । ऐकात्म्यवस्तुनिष्ठस्य तथा पूर्वमवादिषम् ।।५५।।

"तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम्" इतिमन्त्रमत्र प्रमाणयति—तद्विष्णोरितीति । परममकार्यकारणमिति यावत् । आकाशे यथा चक्षुः सर्वतो विप्रसृतं तथा परस्य रूपं प्रतीच्येव व्याप्तमप्रत्यगर्थाभावादिति मन्त्रो वदतीत्यर्थः ।।७४६।।

आत्मशब्दतदर्थवृत्तवशादद्वयं कूटस्थं प्रत्यग्वस्त्वनात्मजातं तत्रैव कल्पितमिति सिद्धे फलितमाह—नानुत्पन्नमिति । यथोक्तात्मनः सम्यग्दृष्टावनुत्पन्नं ज्ञानं नास्त्यतः सर्वस्यात्ममात्रत्वात् अस्मात्ज्ञानादनिरस्तमज्ञानमपि नास्ति अस्य ज्ञानस्य पूर्णात्मविषयत्वात्तस्मादात्मनि ज्ञाते सर्वस्य ज्ञातत्वादज्ञानस्य च दग्धत्वात्प्रतीचः पूर्णपुमर्थताऽपि सिद्धैवेत्यर्थः ।।७४७।।

उक्तमर्थं दृष्टान्तेनाऽऽह—द्रष्टृति । तद्दृष्टाविति प्रत्यक्त्वं तच्छब्दार्थः ।।७४८।।

दृष्टान्तं स्पष्टयति—स्रगिति । दार्ष्टान्तिकं स्फोरयति—प्रत्यगिति ।।७४९।।

पूर्ववाक्योक्तेऽर्थे हेतुत्वेनात्र हीत्यादिवाक्यं योजयति—अत्रेति । तस्मादात्मैव मुमुक्षुणा ज्ञातव्यो नानात्मेति सिद्धमित्याह—अत इति । आत्मदर्शनात्सर्वदर्शनसंभवाद्द्रष्टव्यस्यानवशेषादिति हेतुमाह—सर्वदर्शनादिति ।।७५०।।

आत्मेत्येवोपासीतेतिवाक्यं विधिस्पर्शं विना विवक्षितेऽर्थे व्याख्यातम् । इदानीमत्र शङ्कितं विधिं निरसितुं पक्षत्रयमाह—केचिदिति । अत्रोदाहरणानि प्रागेवोक्तानि । तथाशब्दपर्यायोऽथशब्दः ।।७५१।।

तन्निराकरोति—नेत्यादिना । अपूर्वविधिवन्नियमः परिसंख्या वा कश्चिदपि विधिर्न गृह्यत इति संबन्धः । तत्र हेतुः—सर्वदेति । आत्मधियः सदा भावात्तत्प्राप्तेर्वक्ष्यमाणत्वान्न तत्र विधित्रयं न हि सिद्धेऽर्थे विधिः साध्ये तन्नियमादित्यर्थः ।।७५२।।

किंच ब्रह्मणि तज्ज्ञाने वा त्रिविधो विधिरयुक्तो ब्रह्मणः सदाभावात्तज्ज्ञानस्य च मानवस्तुतन्त्रत्वादित्याह—पुंव्यापारेति । प्रयत्नानधीनेऽपि कादाचित्के ज्ञाने कुतो न विधिस्तत्राऽऽह—स्वव्यापारेति । यतो यत्नसाध्यधात्वर्थमात्रविषयस्त्रिविधोऽपि विधिरतो ज्ञाने मानवस्तुमात्रतन्त्रे न सोऽस्तीत्यर्थः ।।७५३।।

वस्तुनि तज्ज्ञाने वा विध्यसंभवस्योक्तन्यायेन सिद्धत्वात्किमुत्तरेण विधिविचारेणेत्याशङ्क्याऽऽह—संस्थेम्न इति । उत्तरो विचाररूपो ग्रन्थो ज्ञानविध्यसंभवं द्रढयितुमित्यर्थः ।।७५४।।

ननु ब्रह्मणि तज्ज्ञाने च सर्वप्रकारविध्यसंभवस्य संबन्धग्रन्थे सिद्धत्वादत्रापि तस्यैवोक्तौ पुनरुक्तिरित्याशङ्क्य

लिङ्प्रत्ययश्रुतेरत्र भ्रान्तिः समुपजायते । यजेतेत्यादिसामान्याद्विध्यर्थोऽतो विचार्यते ॥५६॥
सिद्धान्तोपक्रमः पूर्वं पूर्वपक्षः प्रदर्श्यते । सम्यङ्निर्ज्ञातसिद्धान्तो यतो वेत्ति बलाबलम् ॥५७॥
नापूर्वविधिरेष स्यात्पक्षेप्राप्तत्वकारणात् । पक्षे प्राप्तिर्विचारान्ते वक्ष्यते कारणाश्रयात् ॥५८॥
नित्यप्राप्तिमिहाऽऽचष्टे विध्यर्थापनुनुत्सया । अप्राप्तांशानुपात्येव सर्व एव विधिर्यतः ॥५९॥
पाक्षिक्युपासनप्राप्तिर्नित्या वेति च लिङ्गतः । विवक्षिता भाष्यकृतो नित्यप्राप्तिरितीक्ष्यते ॥६०॥
यत्साक्षादितिवाक्योत्थप्रत्यग्याथात्म्यलेहिना । ज्ञानेन तमसो दाहात्कुतो विध्यर्थसंभवः ॥६१॥

ज्ञाने विध्यनपेक्षा

कारकाण्युपमृद्नाति विद्या बुद्धिमिवोषरे । कारकत्वमविद्योत्थं स्वतश्चाकारकात्मता ॥६२॥

संबन्धोक्तमनुवदति—यथेति । कार्यासंस्पर्शिनां वेदान्तवचसां कार्यगिरामिवाकार्ये शुद्धे वस्तुनि मानत्वमतिस्फुटमस्तीत्येतावन्मात्रं संबन्धग्रन्थे समधिगतमित्यर्थः ॥७५५॥

उत्तरस्यापुनरुक्तमर्थमाह—लिङ्प्रत्ययेति । आत्मेत्येवोपासीतेत्यत्र विधायकपदश्रवणाद्यजेतेत्यादिना सादृश्यात्तत्र यागादौ विधिवदिहापि वस्तुनि तज्ज्ञाने वा विधिरिति भ्रान्तौ प्राप्तायां विधिपदस्यार्थोऽपूर्वो नियमोऽन्यो वेति विचार्य निरस्यतेऽतो भ्रान्तिनिवृत्त्या वाक्यस्य वस्तुपरत्वं निश्चेतव्यमित्यर्थः ॥७५६॥

ननु पुनरुक्त्यभावेऽपि प्राप्तिपूर्वकत्वान्निषेधस्य पूर्वं पूर्वपक्षं प्रापय्य पश्चादुत्तरपक्षो वाच्यस्तत्र यथोक्तक्रमातिक्रमे भाष्यकारस्य को हेतुरिति पृच्छति—सिद्धान्तेति । प्रदर्श्यते पश्चादिति शेषः । पूर्वोत्तरपक्षयोर्व्यत्यासे भाष्यकृतोऽभिप्रायमाह—सम्यगिति । पुरुषो हि समधिगतसिद्धान्तः सन्पूर्वोत्तरपक्षयोर्बलाबलमाकलयितुमलं तेनाऽऽदौ सिद्धान्तवचनमविरुद्धमित्यर्थः ॥७५७॥

भाष्यकाराभिप्रायमुक्त्वा भाष्योक्तमुत्तरपक्षमादत्ते—नापूर्वेति । कथमात्मज्ञानस्य पक्षे प्राप्तिर्न हि तत्प्रतिपक्षत्वेन तुल्यबलस्यानात्मज्ञानस्य प्रसक्तिस्तत्राऽऽह—पक्ष इति । प्रारब्धकर्मवशात्क्षुत्पिपासादिदोषोद्भवादात्मनो विस्मरणमनात्मनः स्मरणं च संभावितमिति वदन्भाष्यकृज्ज्ञानस्य पक्षे प्राप्तिं विचारावसाने वक्ष्यतीत्यर्थः ॥५५८॥

यत्साक्षादित्यादिप्राप्तत्वादित्यन्तस्य भाष्यस्य तात्पर्यमाह—नित्येति । ज्ञाने विधित्रयनिरासेच्छया तस्य नित्यप्राप्तिमत्र भाष्यकारो ब्रवीतीत्यर्थः । नित्यप्राप्तत्वेऽपि ज्ञानस्य कथं विधित्रयायोगस्तत्राऽऽह—अप्राप्तेति । अपिशब्दपर्यायः सर्व एवेत्येवकारः । अतो नित्यप्राप्ते ज्ञाने न कश्चिदपि विधिरिति शेषः ॥७५९॥

यत्साक्षादित्यादौ भाष्ये ज्ञानस्य नित्यप्राप्तिर्विवक्षितेति कुतो गम्यते तत्राऽऽह—पाक्षिकीति । तिष्ठतु तावदित्यादौ भाष्ये नित्या वेतिप्रयोगसामर्थ्यादेव पूर्वभाष्येण ज्ञानस्य नित्यप्राप्तिर्विवक्षितेति भातीत्यर्थः ॥७६०॥

तात्पर्यमुक्त्वा यत्साक्षादित्यादिभाष्यं[1] योजयति—यदित्यादिना । अधीतस्वाध्यायस्य समधिगतशब्दापेक्षितन्यायवतो यत्साक्षादित्यादिवाक्योत्थप्रत्यगवगाहिज्ञानेनाज्ञानबाधनान्न विध्यर्थः सिध्यति । परोक्षमपि ज्ञानमज्ञानं शिथिलयद्विध्यर्थप्रवृत्तिमपि प्रतिबध्नातीत्यर्थः ॥७६१॥

नन्वज्ञाने नष्टेऽपि कर्त्रादिकारकसद्भावाद्विधिः स्यान्न हि विद्वदविदुषोर्व्यवहारे विशेषः । पश्वादिभिश्चा[2]विशेषादितिन्यायादित्याशङ्क्य तस्यामित्यादि[3]भाष्यार्थमाह—कारकाणीति । अविद्यामेव विद्या निवर्तयति विरोधान्न कारकाणीत्याशङ्क्याऽऽह—कारकत्वमिति । विदुषि कर्तृत्वादिधीरविद्यालेशकृतेति भावः । अस्तु तादृक्कर्तृत्वादिवशाद्विधिर्नेत्याह—स्वतश्चेति । बाधितानुवृत्तिमात्रान्न बिधिरबाधिताभिमानपूर्वत्वात्तस्येति भावः ॥७६२॥

---

१. १३१-१

२. पश्वादिभिश्चविशेषात्, विवेकिनां पण्डितानामिति शेषः । हानोपादानादौ पश्वादिसादृश्यं गम्यते । तेन अज्ञानपूर्वकः एव प्रमाणप्रमेयव्यवहारः सर्वेषामित्यर्थः ( ब्र० सू० भा० १.१.१ ) । ३. १३१-५ ।

यदज्ञानात्प्रवृत्तिर्या तज्ज्ञाने सति सा कुतः । न हीहापास्तनिद्रोऽपि सुप्तवत्स्वप्नमीक्षते ।।६३।।
यद्धि यस्य स्वतो रूपं न तत्प्राप्तावपेक्षते । क्रियां मोहनिमित्तत्वादपेक्षा कर्त्रपह्नवे ।।६४।।
न च संमोहविध्वस्तौ यथावस्त्ववबोधतः । समर्थमन्यत्पश्यामः क्रियाकारकरूपकम् ।।६५।।
स्वाध्यायाधीतिविधिना ज्योतिष्टोमादिबोधवत् । सदा प्राप्ताऽऽत्मविद्याऽपि नातो विधिरिहेष्यते ।।६६।।
देहेन्द्रियमनोबुद्धिसर्वव्यापारभासिनः । लिङ्गतश्चावसेयत्वान्न संभाव्यो विधिस्ततः ।।६७।।
तथाऽहंप्रत्ययात्साक्षादात्मयाथात्म्यनिश्चितेः । असंभवादसंप्राप्तेः कुतो विधिरिहेष्यते ।।६८।।
नन्विहाऽऽत्मार्थसंदृष्टावहंप्रत्ययगम्यता । पाक्षिकीति ततोऽप्राप्तेर्भवेन्नैयमिको विधिः ।।६९।।

आत्मोपासनविधिशङ्का

पाक्षिकी तावदत्राऽऽस्तामैकात्म्यार्थावलेहिनः । ज्ञानस्य प्राप्तिर्नित्या वेत्यस्त्वपूर्वो विधिः स्फुटः ।।७०।।
एकार्थोल्लेखिवृत्तीनामातादात्म्याभिमानतः । आम्रेडनं हि शब्दार्थः सर्वत्रोपासनश्रुतेः ।।७१।।

इतश्च विदुषो न वैधी प्रवृत्तिरित्याह—यदज्ञानादिति । प्रत्यगज्ञानात्प्रवृत्तिः प्रत्यग्ज्ञाने हेत्वभावादयुक्तेत्यत्र दृष्टान्तमाह—न हीति । यथा लोके सुप्तो जनो निद्रादूषितमनाः स्वप्नानुच्चावचानुपलभते न तथा जागरिते निद्रारहितः स्वस्थचेताः स्वप्नान्यथा पश्यति तद्वदज्ञानात्प्रवृत्तिः सति ज्ञाने न युक्तेत्यर्थः ।।७६३।।

ज्ञानार्थत्वेनाज्ञस्य क्रियावज्ज्ञानिनोऽपि तत्सहायत्वेन तत्स्वीकाराज्ज्ञाने विध्यभावेऽपि तस्यामसौ स्यादित्याशङ्क्य सा किं ब्रह्मप्राप्त्यर्था मोहापोहार्था वेति विकल्प्याऽऽद्यं दूषयति—यद्धीति । आत्मस्वरूपत्वाद्ब्रह्मणस्तत्प्राप्तौ क्रियापेक्षाभावान्न तत्प्राप्तिहेतुक्रियायां विधिरित्यर्थः । आत्मनो ब्रह्म स्वाभाविकं रूपं चेत्कथं तदप्राप्तिधीस्तत्राऽऽह—मोहेति । अप्राप्तेरिति शेषः । कुत्र तर्हि त्वन्मते क्रियापेक्षा तत्राऽऽह—अपेक्षेति । कर्तृत्वादेः सोपादानस्यापह्नवो येन तस्मिञ्ज्ञाने शुद्धिद्वारोत्पत्तौ क्रियापेक्षेत्यर्थः ।।७६४।।

कल्पान्तरं निराह—न चेति । ।।७६५।।

उत्पन्ने ज्ञाने तेनाज्ञानदाहात्प्रवृत्त्ययोगान्न विधिर्न वाऽनुत्पन्ने तस्मिन्विधिविषयाभावान्न च ज्ञानसहायत्वेन क्रियायां विधिस्तत्सहायत्वासंभवादित्युक्तम् । इदानीं शाब्दे ज्ञाने ज्ञानान्तरे वा विधिरिति विकल्प्याऽऽद्यं प्रत्याह—स्वाध्यायेति । सदा स्वविषयविधिं विनेति यावत् । विधितोऽधीतस्वाध्यायस्याधिगतपदपदार्थसंबन्धस्य शब्दादेव कर्मज्ञानवद्ब्रह्मज्ञानस्य विधिमन्तरेण प्राप्तेर्न शाब्दे ज्ञाने विधिरित्यर्थः ।।७६६।।

किंच संसारिणोऽसंसारिणो वाऽऽत्मनो ज्ञानं विधेयम् ? आद्येऽपि स नित्यानुमेयः प्रत्यक्षो वेति विकल्प्याऽऽद्यं प्रत्याह—देहेति । देहादिचेष्टा प्रयत्नवत्पूर्विका विशिष्टचेष्टात्वाद्रथादिचेष्टावदित्यनुमानाद्देहादिव्यापारलिङ्गेन तदनुपपत्तेश्च संसार्यात्मनिश्चयान्न तज्ज्ञाने विधिरित्यर्थः । ततस्तत्रेति यावत् ।।७६७।।

द्वितीयं दूषयति—तथेति । प्रत्यक्षत्वे सतीत्येतत् । इहेति संसार्यात्मधीग्रहः । अहंप्रत्ययेनाऽऽत्मनः संसारिणो याथात्म्यस्य प्रमातृताप्रमुखस्य कर्तृत्वादिरूपस्य तत्प्रत्यक्षत्वपक्षे निश्चितत्वात्तज्ज्ञानस्याप्राप्त्यभावान्न तत्र विधिरित्यर्थः ।।७६८।।

असंसार्यात्मधीर्विधेयेति पक्षमुत्थापयति—नन्विति । अहमिति संसार्यात्मार्थज्ञानस्य सदाप्राप्तत्वेऽप्यहं ब्रह्मेत्यहंप्रत्ययेन प्रत्यक्षतयाऽपहतपाप्मादिगुणस्यासंसारिणोऽद्वयस्य ब्रह्मणो ग्रहणं पाक्षिकं क्षुधादिदोषोद्भवकालानियमात्तद्विस्मरणसंभवात्तस्मादुपासीतेत्यसंसार्यात्मधीविषयो नियमविधिरित्यर्थः ।।७६९।।

तादृग्ज्ञानं विधेयमित्येतदङ्गीकृत्यापूर्वविधिवाद्याह—पाक्षिकीति । ऐकात्म्यावगाहिनो ज्ञानस्य पाक्षिकी नित्या वा प्राप्तिरित्येतत्तावदास्तामत्रैकात्म्यज्ञाने यः स्फुटो विधिरसावपूर्वोऽस्त्विति संबन्धः ।।७७०।।

आत्मज्ञाने विधेरपूर्वत्वसाधनायोपासनशब्दार्थमाह—एकार्थेति । आम्रेडनमावर्तनम् । सर्वत्र सर्वेष्वाम्नायदेशेष्विति यावत् । शब्दार्थो वाक्यार्थः । मर्यादामावृत्तेरादर्शयति—आतादात्म्येति । विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययप्रवाहकरणमुपासनमुपास्यसाक्षात्कारावसानमित्युपासकसंमतमिति हिशब्दार्थः ।।७७१।।

न पश्यन्तीत्यतो लिङ्गाज्ज्ञानमेव विधित्सितम् । न तूपासनमिति चेन्मैवमैकार्थ्यकारणात् ।।७२।।

ज्ञानोपासनयोरैकार्थ्यशंका

सर्वत्रैकार्थता दृष्टा वेदोपासनशब्दयोः । यथाऽन्यत्र तथेहापि कस्मान्नाध्यवसीयते ।।७३।।
रश्मींस्त्वं पर्यावर्तयादिति चाऽऽवर्तनात्मकः । विधिः श्रुतः श्रुतौ स्पष्टस्ततश्च फलसंगतिः ।।७४।।
देवो भूत्वेति देवांश्च सदा तद्भावभावितः । देवप्राप्तिं श्रुतिः प्राह भावनाबलसंश्रयात् ।।७५।।
स योऽत इत्युपक्रम्य ह्यु पासनगिरैव तु । अन्त आत्मेत्युपासीत तथैवोपासनश्रुतेः ।।७६।।
प्रवृत्तौ चोपसंहारे तथैवोपासनश्रुतेः । वेदेत्युपासनार्थत्वमस्याप्यभ्युपगम्यते ।।७७।।
तथैतत्सर्वं वेदेति यत्र यत्र श्रुतिर्भवेत् । अभ्यासस्य तदाऽप्राप्तेरपूर्वविधिरिष्यते ।।७८।।
वस्तुस्वरूपान्वाख्याने न च कश्चित्प्रवर्तते । तज्ज्ञानजन्ममात्राच्च पुरुषार्थोऽपि नेष्यते ।।७९।।

सत्यपि विधौ ज्ञानस्य प्रकृतत्वात्तस्यैव विधेयत्वादुपासनशब्दार्थोक्तिरनुपयुक्तेति सिद्धान्ती शङ्कते— नेत्यादिना । ज्ञाननिषेधसामर्थ्यात्प्रतियोगित्वेन ज्ञानस्य प्रकृतत्वादिति यावत् । ज्ञानोपासनशब्दयोरैकार्थ्यान्नैतदित्याह—मैवमिति ।।७७२।।

ऐकार्थ्यं समर्थयते—सर्वत्रेति । दूरं ह वा अस्मान्मृत्युर्भवति य एवं वेदेत्यादौ ज्ञानवाचिवेदशब्दस्य तदावृत्तिवाचकोपासनशब्दस्य च यथैकार्थ्यं दृष्टं तथाऽत्रापि प्रकरणे तयोरेकार्थत्वं निवारकाभावादित्यर्थः ।।७७३।।

अत्रोपासने विधिदार्ढ्यार्थमन्यत्रापि तस्मिन्दृश्यते विधिरित्याह—रश्मीनिति । पर्यावर्तयादिति च्छान्दसत्वयोगात्पर्यावर्तयेति वक्तव्यम् । विधेः स्पष्टत्वं मुखतस्तच्छब्दोपात्तत्वम् । न चोपासनविधेर्वैफल्यमित्याह—ततश्चेति । बह्वो वै ते पुत्रा भविष्यन्तीति हि श्रुतमित्यर्थः ।।७७४।।

उपासनात्फलमित्यत्र श्रुतिस्मृती प्रमाणयति—देव इति । उपास्ये परस्मिन्नपि सोपाधिके तुल्यं भावनातस्तद्भावापत्तिफलमिति वक्तुं चशब्दः । सदेत्यादिना स्मृतेरन्त्यं पादमादत्ते । तयोरर्थं संगृह्णाति—देवप्राप्तिमिति । श्रुतिग्रहणं स्मृतेरुपलक्षणम् । अथवा प्राचीनचकारोऽत्र संबद्धमानः स्मृतिमनुकर्षति । भावनाबलमुपास्यसाक्षात्कारस्तदवष्टम्भादित्येतत् ।।७७५।।

उपासने सफलविधिसत्त्वमुक्त्वा ज्ञानोपासनशब्दयोरैकार्थ्ये युक्त्यन्तरमाह—स य इति । "स योऽत एकैकमुपास्त" इत्युपासनशब्देनोपक्रम्यान्ते चाऽऽत्मेत्येवोपासीतेत्युपसंहारेऽपि यथोपक्रमं तच्छब्दश्रवणात्तयोरुपास्तिविषयतेत्यर्थः । उपक्रमोपसंहारयोरैकरूप्ये सत्येकार्थतया वाक्यैक्यमुपांशुयाजमन्तरा यजतीत्यादौ प्रसिद्धमिति हिशब्दार्थः ।।७७६।।

तयोस्तद्विषयत्वेऽपि मध्ये न स वेदेति वेदशब्दादुपास्तेरर्थान्तरमेव कुतो नोच्यते तत्राऽऽह—प्रवृत्तौ चेति । तथैवेत्यैकरूप्यमुच्यते । प्रक्रमादिना वेदशब्दस्यापि मध्यस्थस्योपासनार्थत्वमन्यथा वाक्यभेदान्न च सति सम्भवे वाक्यं भेत्तुं युक्तमित्यर्थः ।।७७७।।

अनेन हीत्यादौ वेदशब्दस्यार्थान्तरविषयत्ववन्न स वेदेत्यत्रापि किं न स्यादित्याशङ्क्याऽऽह—तथेति । यत्र यत्रैतत्सर्वं वेदाऽऽत्मानमेवावेदित्यादौ वेदशब्दः श्रुतस्तत्र तत्र तथा तस्योपास्तिरेवार्थ इत्यर्थः । वेदोपास्तिशब्दयोरैक्यार्थ्येऽपि किं स्यादित्याशङ्क्याऽऽह—अभ्यासस्येति । ज्ञानोपास्त्योरैक्ये सत्यैक्यज्ञानस्य सर्वथैवाप्राप्तेस्तदभिन्नोपासनस्यापि तथात्वात्तस्मिन्नपूर्वविधिः स्यादित्यर्थः ।।७७८।।

इतश्च तस्मिन्नेष्टव्यो विधिरित्याह—वस्त्विति । सप्तद्वीपा वसुमतीत्यादिवस्तुस्वरूपमात्रकथने बुद्धिपूर्वकारिणो न प्रवृत्तिरालक्ष्यतेऽतः प्रवर्तको विधिरुपेय इति शेषः । ज्ञानफलरागस्य प्रवर्तकत्वाद्व्यर्थो विधिरित्या-

१. उपांशुयाजमन्तरायजति—इत्यत्रैव यागविधिः न तु विष्णुरूपांशु यष्टव्य इत्यादौ विधिप्रत्ययदेवतयोः सत्वेऽपि जामितादोषप्राप्तितत्परिहारयोः उपक्रमोपसंहारयोः कीर्तनादेकवाक्यताप्रतीतेरित्यर्थः ।

यादृक्कर्मविधे रूपमात्मध्यानविधेरपि । तादृगेव विशेषोऽत्र न मनागपि गम्यते ॥८०॥
कुतोऽविशेष इति चेदत आह यथा तथा । मानस्येव क्रिया यस्मादविशिष्टोभयोरपि ॥८१॥
वषट्करिष्यंस्तां ध्यायेदिति यद्वद्विधीयते । मानस्येव क्रिया तद्वदात्मार्थोपासनेष्वपि ॥८२॥
भावनांशत्रयं यस्मादुपासनविधावपि । संभाव्यतेऽतो विज्ञेयो यजेतेत्यादिवद्विधिः ॥८३॥
स्वाध्यायस्य विधिर्ब्रूते लिङाद्यात्मानमेव च । विधिप्रशस्तज्ञानाभ्यां कुरुध्वं पुंस्प्रवर्तनम् ॥८४॥
करणांशो विधिज्ञानं किमंशः पुंस्प्रवर्तनम् । इतिकर्तव्यता चात्र ह्यर्थवादप्रशंसनम् ॥८५॥
प्रवृत्तस्य ततः पुंसः करणं याग इष्यते । स्वर्गादिश्च किमंशः स्यात्प्रयाजादिस्तथा परः ॥८६॥
यथा तत्र तथेहापि शास्त्रेणैव समर्प्यते । अंशत्रयमतो युक्तमपूर्वविधिरेव तु ॥८७॥

शङ्क्याऽऽह—तज्ज्ञानेति। तच्छब्देन विध्यस्पृष्टं वस्तूच्यते। विधिनिरपेक्षत्वं मात्रशब्दार्थः। न स्वतन्त्रं ज्ञानं फलवत्तस्मिन्सत्यपि फलानुपलब्धेरिति चकारार्थः। अपिरवधारणार्थः ॥७७९॥

आत्मोपास्तिर्विधेयेत्यत्र हेत्वन्तरमाह—यादृगिति। विधिद्वयं सप्तम्यर्थः ॥७८०॥

यथेत्यादिभाष्यमाकाङ्क्षापूर्वकमवतारयति[1]—कुत इति। कर्मात्मज्ञानविध्योः शब्दानुसारेणाविशेषो यथा तथा यथेत्यादिभाष्येणाऽऽह भाष्यकृदित्यर्थः। मानसक्रियात्वाच्चेत्यादिभाष्यमनुसृत्यार्थतोऽप्यविशेषमाह—मानसीति। कर्मज्ञानविध्योरुभयोरपि मानसी क्रिया विषयभूता यस्मादविशिष्टा तस्माद्वषट्करिष्यन्नित्यादौ यथा मानसी क्रिया विधीयते तथाऽऽत्मोपास्तिवाक्येष्वपि सैव विधेयेति योजना ॥७८१–७८२॥

शब्दतश्चाऽऽत्मोपासने विधिरस्तीत्याह—भावनेति। यथा यजेतेत्यादौ भावनारूपो विधिरंशत्रयसंभवादिष्टस्तथोपासीतेत्यत्रापि भावनापेक्षितमंशत्रयं यतः संभवत्यतो विधेयमात्मोपासनमित्यर्थः ॥७८३॥

कथमत्रांशत्रयोपपत्तिरित्याशङ्क्य तदर्थं शब्दभावनास्वरूपमाह—स्वाध्यायस्येति। अस्यार्थः। स्वाध्यायोऽध्येतव्य इति विधिः स तु स्वविषयस्वाध्यायात्मकं लिङादिशब्दमाह। चकारेणाध्येतव्य इति तव्यप्रत्ययं लिङादावन्तर्भावयति प्रेरणाधर्मकलिङादिस्वरूपज्ञानादर्थवादज्ञानाच्चाधिकृतानां पुंसां प्रयत्नरूपां प्रवृत्तिं कुरुध्वमिति। तथा च व्युत्पन्नस्याधिकारिणो लिङादिश्रवणे स्वास्थ्यात्प्रच्युतिरूपा या प्रवृत्तिस्तद्धेतुः प्रेरणाख्यो लिङादिव्यापारस्तद्वाच्या शब्दभावना सा खल्वाख्यातत्वसामान्यादर्थभावनावाचिना लिङादिना विशेषेणोच्यते। उक्तं हि—"अभिधाभावनामाहुरन्यामेव लिङादयः। अर्थात्मभावना त्वन्या सर्वाख्यातेषु गम्यते ॥" इति।

लिङादिशब्द एव वा शब्दभावना—यथाऽऽहुः—

"किमाद्यपेक्षितैः पूर्णः समर्थः प्रत्ययो विधौ। तेन प्रवर्तकं वाक्यं शास्त्रेऽस्मिंश्चोदनोच्यते" इति ॥७८४॥

सा चांशत्रयवतीति संक्षिप्योक्तमंशत्रयं विवेचयति—करणेति। प्रेरणाधर्मकं लिङादिपदं विधिस्तज्ज्ञानं शब्दभावनायाः करणांशस्तदुक्तं स्वज्ञानकरणक इति। न च संबन्धबोधः करणमित्युक्तिविरोधो हस्तेन शरेण विद्ध इतिवदुभयोरपि करणत्वाविरोधात्। भाव्यांशस्तु पुरुषप्रवृत्तिरूपार्थभावना। अस्याश्चेतिकर्तव्यतांशः पूर्णाहुत्या सर्वान्कामानाप्नोतीत्याद्यर्थवादज्ञानमित्यर्थः। उक्तमंशत्रयं प्राच्यां मीमांसायां प्रसिद्धमितिवक्तुं हीत्युक्तम्। प्रागुक्ता शब्दभावना सप्तम्या परामृश्यते ॥७८५॥

अर्थभावनाया यथा[2] हीत्यादिभाष्योक्तमंशत्रयमाह—प्रवृत्तस्येति। ततः शब्दभावनायाः सकाशात्प्रवृत्तस्य स्वास्थ्यात्प्रच्युतस्य या प्रयत्नरूपा प्रवृत्तिस्तस्या अर्थभावनाया इत्यर्थः। चोदनाप्रयुक्तपुंस्प्रवृत्तेः समानपदोपात्तधात्वर्थं हित्वा भाव्यान्तरमयुक्तमेकपदोपादानश्रुतिविरोधादिति चेन्न; तस्यापुमर्थस्य भाव्यत्वानुपपत्तेरित्याह—करणमिति। ननु पदान्तरोपात्तं पुरुषविशेषणं च स्वर्गादि कथं भाव्यतामनुभवेदिति चेत्सत्यं तथाऽपि पुरुषार्थत्वात्तस्य तद्भावः संभवतीत्याह—स्वर्गादिश्चेति ॥७८६॥

भवत्वेवं कर्मविधावंशत्रयमात्मज्ञाने तु किं जातं तदाह—यथेति। यागादाविवांशत्रये सत्युपासीतेत्यत्रापूर्वरूपो विधिरिति युक्तमेवेति फलितमाह—अत इति। तुशब्दो विध्यन्तरव्यावृत्त्यर्थः ॥७८७॥

---

१. १३२–२ २. १३२–९ ।

किमंश आत्मा विज्ञेयः करणांशस्तथा मनः । इतिकर्तव्यता त्यागब्रह्मचर्यादिसाधनम् ॥८८॥
कृत्स्नप्रकरणार्थस्य ज्योतिष्टोमादिगामिनः । विध्युद्देशतया यद्वदुपयोगस्तथैव च ॥८९॥
उपासाविध्यपेक्षस्य प्रक्रियापतितस्य च । आत्मार्थोपासनविधिदेशे तद्विनियोक्ष्यते ॥९०॥
अत्रास्थूलादिवाक्यानामुपास्यार्थसमर्पणे । उपयोगः फलं मोक्षस्तमसो वस्त्वपह्नुतिः ॥९१॥

मुक्तिफलं ज्ञानान्तरं विधेयमिति पक्षः

संप्रदायविदस्त्वन्ये यथावच्छास्त्रचक्षुषा । व्याचक्षते महात्मानो यथा तदभिधीयते ॥९२॥
विधिशून्यस्य वाक्यस्य न प्रामाण्यं किलेष्यते । नियोगानुप्रवेशेन यतो वस्त्ववबोध्यते ॥९३॥
नानुवादस्वरूपस्य निरस्तविधिकस्य हि । सापेक्षस्येह वचसः प्रामाण्यमुपपद्यते ॥९४॥
क्रियैव ननु सर्वत्र तत्र तत्र विधीयते । स्वव्यापारे हि विधिना नियोक्तुं शक्यते यतः ॥९५॥

कथमंशत्रयमत्र शास्त्रेणार्पितं तद्विविच्य दर्शयति—किमंश इति । आत्मनो मुक्तिरूपेण साध्यत्वमुपेत्य किमंशत्वं द्रष्टव्यम् । तथेति यागादिवदित्येतत् । काम्यप्रतिषिद्धवर्जनं त्यागः ब्रह्मचर्यं सर्वथा मैथुनवर्जनमष्टविधम् । आदिशब्दः शमादिविषयः ॥७८८॥

विधियुक्तानां वेदान्तानां कार्यपरत्वेऽपि तद्धीनानां तेषां वस्तुपरतेत्याशङ्क्याऽऽह—कृत्स्नेत्यादिना । प्रकरणमेवार्थः । विध्युद्देशतया ज्योतिष्टोमादिविषयप्रधानविधिशेषतयेतियावत् सर्ववाक्यस्योपासनविधिशेषत्वेनोपयोग इति शेषः । ज्योतिष्टोमादिविषयस्य समस्तस्यैव प्रकरणस्य ज्योतिष्टोमादिविधिशेषतया विनियोगवदुपास्तिविध्यपेक्षितस्य तत्प्रकरणस्थस्य सर्वस्यैव वाक्यस्योपास्तिविधिशेषत्वेनैव विनियोग इत्यर्थः । विधिप्रकरणस्थं वाक्यं विधिमतिक्रम्य नार्हति वस्तु गोचरयितुमिति वक्तुं प्रथमश्चकारो द्वितीयस्तु समुच्चयार्थः । विधिहीनमपि सर्ववेदान्तवाक्यमात्मोपास्तिविधौ विनियुज्यते शेषत्वेनेति निगमयति—आत्मार्थेति ॥७८९-७९०॥

अस्थूलादिवाक्यानामारोपितद्वैतनिषेधेनाद्वयं वस्तु समर्पयतां कथमुपास्तिविधिशेषत्वेनोपयोग इत्याशङ्क्याऽऽह—अत्रेति । सप्तमीद्वयं मिथः संबध्यते प्रथमा निर्धारणे वा । मध्ये वेदान्तानामित्यर्थः—"ब्रह्म वेद ब्रह्मैव भवति" "तरति शोकमात्मविदि"त्यादीनां फलार्पकत्वेनोपास्तिविध्युपयोगं विवक्षन्नाह—फलमिति । मोक्षो ब्रह्माप्तिः ॥७९१॥

शाब्दमात्मज्ञानमुपासनाख्यं मुक्तिफलं विधीयते वेदान्तेष्विति पक्षमुक्त्वा ज्ञानान्तरं विधेयमिति पक्षमुद्भावयति—संप्रदायेति । शाब्दज्ञानविधिवादिभ्योऽन्ये यथावत्संप्रदायविदस्तस्मादेव महात्मानो विज्ञायेत्यादिशास्त्रदृष्टचनुसारेण यथा वेदान्तेषु विधिं व्याचक्षते तथा तद्व्याख्यानमुच्यत इति योजना । संप्रदायविदो महात्मान इति चोपहासार्थं न हि वेदान्तेषु विधिमिच्छन्तः संप्रदायं विदन्ति न च ते महानुभावास्तेषु तदभ्युपगमस्य तदप्रामाण्यपर्यवसानादिति द्रष्टव्यम् ॥७९२॥

तदीयं व्याख्यानमेव विभावयन्नादौ वेदान्तेषु विधेरुपेयत्वमाह—विधीति । तत्र ब्रह्मविदामसंमतिं सूचयति—किलेति । ननु विधिहीनमपि वचनमज्ञातं वस्तु ज्ञापयत्किमिति न मानं तत्राऽऽह—नियोगेति । यतो भूतं वस्तु नियोगशेषत्वेनैव बोध्यते भूतं भव्यायोपदिश्यत इति न्यायादतो नास्ति वचसो विध्यस्पृष्टे वस्तुनि मानतेत्यर्थः ॥८९३॥

ननु वेदान्ता नियोगानुप्रवेशादृते सिद्धमर्थं बोधयन्तो विधिवाक्यवत्प्रमाणं नेत्याह—नेत्यादिना । विधिहीनस्य सिद्धार्थस्य वचसो मानान्तरयोग्यविषयस्य सापेक्षत्वादनुवादसदृशस्य वस्तुनि प्रामाण्यायोगादेष्टव्यो वेदान्तेषु विधिरित्यर्थः । सुरसरित्तीरे सन्ति फलानीत्यादेः सिद्धार्थस्य वचसो दृष्टं सापेक्षत्वमित्यादेष्टुं हिशब्दः ॥७९४॥

विधेयधात्वर्थाभावान्न तेषु विधिरिति शङ्कते—क्रियेति । सर्वत्रेति विधिकाण्डोक्तिः । तत्र तत्रेति विधिवाक्यं परामृश्यते । वस्तुन्यपि क्वचिद्विधिसंभवात्कुतोऽवधारणं तत्राऽऽह—स्वव्यापारे हीति । पुंव्यापारसाध्ये

द्रव्यस्वरूपेऽसाध्यत्वाद्विधिः कथमिहेष्यते । न हि सिद्धस्य साध्यत्वं निपुणेनापि गम्यते ।।९६।।

न चाऽऽत्मविषयं ज्ञानं वेदान्तेषु विधीयते । तस्य विध्यन्तरात्सिद्धेर्वेदान्तस्यानुवादता ।।९७।।

स्वाध्यायाधीतिविधिना ज्योतिष्टोमादिबोधवत् । वेदान्तार्थावबोधोऽपि तेनैवेह समापितः ।।९८।।

स्यादेतत्फलसंबन्धो नियोगविरहाद्यदि । प्रत्यग्ज्ञानस्य लभ्येत न त्वसौ लभ्यते तथा ।।९९।।

पुमर्थकारिता बुद्धेर्नियोगादेव लभ्यते । नातस्तन्निरपेक्षस्य प्रामाण्यं वचसो भवेत् ।।८००।।

नैकात्म्यवस्तुसंव्याप्तिव्यतिरेकेण किंचन । फलं स्यादात्मबोधस्य यथा कर्मफलं तथा ।। १ ।।

ज्ञानान्तरे विधिरिति द्वितीयपूर्वपक्षः

अत्रोच्यतेऽन्यदेवेदं विज्ञानान्तरमात्मगम् । विधीयते सहोपायं वेदान्तोक्तिप्रबोधतः ।। २ ।।

न हि वाक्यसमुत्थेन ब्रह्मावाक्यार्थरूपकम् । विज्ञानेन परिच्छेत्तुं शक्यते कर्मवत् क्वचित् ।। ३ ।।

धात्वर्थे विधिना पुंसो नियोक्तुं शक्यत्वादपुंस्तन्त्रे वस्तुनि नास्ति विधिरित्यर्थः । दध्यादौ प्रसिद्धोऽपि विधिर्व्यापाराविष्टे तस्मिन्प्रविष्टो न परिशुद्धे तस्मिन्निति वक्तुं हीत्युक्तम् ।।७९५।।

कटः कर्तव्यः इतिव"दात्मा द्रष्टव्यः" इतिश्रुतेरात्मनो विधेयत्वमाशङ्क्याऽऽह—द्रव्येति । असाध्यत्वं वस्तुनः साधयति—न हीति । साध्यत्वापर्यवसानादिति भावः ।।७९६।।

आत्मनोऽविधेयत्वेऽपि तज्ज्ञानमाज्यावेक्षणवद्विधेयमिति नेत्याह—न चेति । तत्र हेतुः—तस्येति । विध्यन्तरसिद्धे चाऽऽत्मज्ञाने तेषां न तत्प्रतिपादकताऽनुवादप्रसङ्गादतोऽपूर्वत्वाभावान्न तत्र विधिरित्याह—वेदान्तस्येति ।।७९७।।

किं तद्विध्यन्तरं तदाह—स्वाध्यायेति । इहेत्यधिकृतमुमुक्षुग्रहः । समापितः समर्पित इति यावत् ।।७९८।।

वेदान्तेषु वस्तुनि तज्ज्ञाने वा न विधिरिति चोदिते पूर्ववादी गूढाभिसंधिराह—स्यादेतदिति । नियोगादृते ज्ञानस्य फलसंबन्धो लभ्येत चेत्तदा वेदान्तेषु विधिवैधुर्यमित्येतद्युक्तम् । न च तं विना ज्ञानस्य तत्संबन्धलाभोऽतो ज्ञाने स्वीकर्तव्यो विधिरित्यर्थः ।।७९९।।

नियोगं विना फलसंबन्धो ज्ञानस्य किं न स्यान्नायं सर्पो रज्जुरित्यत्र तथा दृष्टेरित्याशङ्क्याऽऽह—पुमर्थेति । राजा गच्छतीत्यादौ वस्तुधीमात्रात्पुमर्थादृष्टेर्न सर्पो रज्जुरित्यत्रापि मा भैषीरितिनियोगाङ्गीकारादित्यर्थः । नियोगसंबन्धं विना पुरुषार्थहेतुत्वे ज्ञानस्यापुमर्थत्वमेवास्तु का हानिरत आह—नात इति । ज्ञानस्य स्वतोऽपुरुषार्थत्वमतःशब्दार्थः । तन्निरपेक्षस्येति तच्छब्दो नियोगार्थः । न हि किमपि वचनं फलविकलं भवति मानमिति भावः ।।८००।।

आत्मधियो नियोगाधीनफलाभावेऽपि वस्तुज्ञातताख्यफलसंभवाद्युक्तमात्मनि वेदान्तप्रामाण्यमित्यज्ञातपराभिसंधिः शङ्कते—नैकात्म्येति । तत्र वैधर्म्यदृष्टान्तमाह—यथेति । कर्मणो हि फलमुत्पत्त्यादीनामन्यतमं ज्ञेयाभिव्याप्त्यतिरिक्तमभ्युपगतं न तथा ज्ञानस्येत्यर्थः ।।८०१।।

शाब्दे ज्ञाने ज्ञानान्तरे वा विधिरित्यत्र द्वितीयमवलम्ब्य पूर्ववादी स्वाभिप्रायमाह—अत्रेति । वेदान्तोक्तिजनितप्रबोधतोऽन्यदेवेति संबन्धः । विज्ञानान्तरमित्यन्तरशब्दात्तस्य शाब्दज्ञानवैजात्यं विवक्ष्यते । विषयस्य ज्ञातता प्रकाशोऽप्रकाशो वा? आद्ये ज्ञानाभेदः । द्वितीये ज्ञानकृतस्याप्रकाशस्याकिंचित्करत्वमतो विषयज्ञातातिरिक्तं मोक्षाख्यं फलं नियोगाधीनमस्ति तदुपेतं ज्ञानान्तरमात्मविषयं मननादिसहितं वेदान्तेषु विधेयमित्यर्थः ।।८०२।।

वाक्यीयज्ञानेनैव ब्रह्मणः सिद्धत्वात्किं वैधज्ञानान्तरेणेत्याशङ्क्याऽऽह—न हीति । तत्र वैधर्म्यदृष्टान्तमाह—कर्मवदिति । क्वचिद्देशे काले पुंसि वेत्यर्थः ।।८०३।।

---

१. वस्तुज्ञाततेति विषयगतज्ञाततेत्यर्थः । भट्टमते ज्ञानमतीन्द्रियं ज्ञानेन विषये ज्ञातताख्यः पदार्थो जन्यते । तेन ज्ञानमनुमीयते—इत्याहुः तस्यानुवादोऽयम् ।

नानापदार्थसंसृष्टरूपं शब्दात्प्रजायते । विज्ञानं तेनावाक्यार्थरूपं नैव च गम्यते ॥ ४ ॥
शब्दस्वभाव एवैष संसृष्टार्थावबोधनम् । ब्रह्मासंसृष्टरूपत्वात्तेनातो नावगम्यते ॥ ५ ॥
वाक्यं चातीन्द्रियार्थेषु प्रमाणमिति निश्चितम् । तस्याप्यविषयत्वात्तद्विज्ञानान्तरगोचरः ॥ ६ ॥
न चेद्वाक्योत्थविज्ञानपरिच्छेद्यं तदिष्यते । नाऽऽम्नायार्थो भवेत्तर्हि नैवं वेदार्थ एव हि ॥ ७ ॥
अपि चाधीयतेऽत्रार्थे वेदवाक्यान्यनेकशः । प्रज्ञां कुर्वीत विज्ञायेत्येवमादीनि यत्नतः ॥ ८ ॥

मोक्षाय शाब्दज्ञानं अन्यद्वा न विधेयमिति सिद्धान्तः

मुमुक्षुपुरुषार्थस्य मोहमात्रान्तरायतः । ज्ञानात्कार्यान्तराभावान्नैतत्साध्वभिधीयते ॥ ९ ॥
विधेर्हि तत्र साफल्यं यत्र वाक्योत्थबोधतः । व्यतिरेकादनुष्ठेयः पदार्थः कश्चिदिष्यते ॥१०॥
यथाऽग्निहोत्रयाथात्म्यविज्ञानव्यतिरेकतः । प्रयोगात्मा पृथक्त्वाद्दृङ्नेह कश्चिदपीक्ष्यते ॥११॥
उत्पत्त्यादौ हि साध्येऽर्थे पुंव्यापृतिरपेक्ष्यते । उत्पत्त्यादिविरुद्धत्वान्मुक्तेर्नान्यव्यपेक्षिता ॥१२॥
उत्पत्त्यादि स्वतो नो चेत्किं मुक्तौ कर्मणः फलम् । उत्पत्त्यादि स्वतश्चेत्स्यात्किं मुक्तौ कर्मणा वद ॥१३॥

वाक्योत्थज्ञानाद्ब्रह्मणोऽपरिच्छेदे हेतुमाह—नानेति ॥८०४॥

ननु शब्दस्य मानत्वाद्यथाविषयमसंसृष्टापरोक्षबोधित्वमेष्टव्यमन्यथाऽमानत्वापत्तेरिति तत्राऽऽह—शब्देति । बहिरङ्गार्थानुसारादन्तरङ्गस्वरूपानुसरणमुचितमिति भावः । शब्दस्य संसृष्टपरोक्षबोधित्वे फलितमाह—ब्रह्मेति । तेन शाब्देन ज्ञानेनेति यावत् ॥८०५॥

ब्रह्म शाब्दज्ञानगम्यमतीन्द्रियत्वाद्धर्मवदित्याशङ्क्याऽऽह—वाक्यं चेति । यद्यप्यतीन्द्रियेषु धर्मादिषु वाक्यं मानं ब्रह्म चातीन्द्रियं तथाऽपि तस्यासंसृष्टापरोक्षस्य वाक्याविषयत्वाज्ज्ञानान्तरगोचरता । तेन चाविद्यानिवृत्तिर्न शाब्दज्ञानेनेत्यर्थः । तदित्यसंसृष्टापरोक्षं ब्रह्मोच्यते ॥८०६॥

ब्रह्मणो वेदागम्यत्वे तदर्थत्वायोगादौपनिषदत्वविशेषणमनवकाशमिति शङ्कते—न चेदिति । वेदविहितोपायजन्यज्ञानगम्यत्वाद्वेदार्थतेत्यौपनिषदत्वमविरुद्धमित्याह—नैवमिति ॥८०७॥

ज्ञानान्तरं वेदान्तेषु विधेयमित्यत्र मानमाह—अपि चेति । तात्पर्यलिङ्गाभ्यासं दर्शयति—अनेकश इति । अध्येतॄणां विधिवाक्येष्वनास्थां व्युदस्यति—यत्नत इति ॥८०८॥

वेदान्तेषु शाब्दज्ञानं ज्ञानान्तरं वा मुक्तिफलं विधेयमिति प्राप्ते सिद्धान्तमाह—मुमुक्ष्विति । तस्येष्टं पुमर्थरूपं यत्कैवल्यं ब्रह्म तस्य तत्स्वरूपत्वादज्ञानमात्रव्यवहितत्वाज्ज्ञानादेव तन्निवृत्तेस्तस्य च वाक्यजन्यत्वेन विध्यनधीनत्वादनुष्ठेयाभावाद्विध्यसिद्धेर्वेदान्तेषु तदुक्तिरयुक्तेत्यर्थः ॥८०९॥

ज्ञानात्कार्यान्तराभावेऽपि तदेव विधेयमित्याशङ्क्याऽऽह—विधेरिति । वाक्योत्थज्ञानातिरिक्तस्यैव यागादेर्विधेयत्वं न तस्यैवेत्यर्थः । तत्र विधिवादिनां संप्रतिपत्त्यर्थो हिशब्दः ॥८१०॥

उक्तमर्थं दृष्टान्तेन साधयति—यथेति । दार्ष्टान्तिके व्यतिरेकमाह—पृथगिति । तादृगिति प्रयोगसादृश्योक्तिः । इहेत्यस्थूलादिवाक्योत्थज्ञानमुच्यते ॥८११॥

तदेव पृथक्त्वस्य प्रतियोगि कर्तव्यं तद्विनाऽभ्यासादिरूपपुरुषव्यापारादृष्टेस्तद्विषयो विधिः स्यादित्याशङ्क्याऽऽह—उत्पत्त्यादाविति । ज्ञानेतरपुरुषव्यापारे चतुर्विधक्रियाफलविलक्षणमोक्षस्यापेक्षाभावाद्वेदान्तेषु न सोऽर्थवानित्यर्थः । नित्यनिरतिशयकूटस्थात्मस्वाभाव्यान्मुक्तेश्चतुर्विधक्रियाफलविलक्षणत्वमतिव्यक्तमिति वक्तुं हिशब्दः ॥८१२॥

मुक्तेरपि स्वर्गवत्कर्मसाध्यत्वादस्ति कर्मापेक्षेत्याशङ्क्य स्वतो मुक्तेरुत्पत्त्यादि नास्त्युतास्तीति विकल्प्य क्रमेण दूषयति—उत्पत्त्यादीति ॥८१३॥

१. चतुर्विधेति—उत्पत्त्याप्तिविकृतिसंस्कृतिरूपं चतुर्विधक्रियाफलं तद्विलक्षणं च ब्रह्म ।

उत्पत्त्यादौ तु यच्छक्तं हेतुमात्रमपेक्षते । तस्य कर्मव्यपेक्षा स्यान्नान्यथा तदपेक्षते ॥१४॥
प्रवृत्त्या स्वात्मसिद्ध्यर्थं कारकं सदपेक्षते । कारकाणां क्रियापेक्षा नोभयापेक्षिताऽऽत्मनि ॥१५॥
संभावितात्मकर्तृत्वो ब्राह्मण्याद्यधिकारवान् । विधिश्रुतेः प्रवर्तेत न तु प्लुष्टतदन्वयः ॥१६॥
अपूर्वानपराबाह्यं ब्रह्मास्मीति विजानतः । कारकत्वं न संभाव्यं तन्मोहविरहात्क्वचित् ॥१७॥
आत्मनो ब्रह्मता यत्र ब्रह्मणोऽप्यात्मता स्वतः । तत्त्वमस्यादिवाक्योत्थबोधाच्चेत्किमितीहते ॥१८॥
अब्रह्मानात्मविज्ञानमोहोत्थध्वंसहेतुतः । प्रत्यग्याथात्म्यबोधस्य कुतोऽमूढः प्रवर्तते ॥१९॥
तत्र को मोह इत्येवं मन्त्रवर्णोऽपि नो जगौ । संसारासंभवं साक्षादेकत्वमनुपश्यतः ॥२०॥
बाध्यबाधकभावाच्च प्रत्यङ्मोहप्रबोधयोः । सहावस्थानताभावात्प्रवृत्तेः स्यादसंभवः ॥२१॥

वाक्यजनितेति भाष्योक्तचोद्यविवरणं

मतं[१] वाक्योत्थविज्ञानमात्राच्चेन्न निराकृतिः । अब्रह्मानात्मविषयमोहस्येति न तत्तथा ॥२२॥
तत्त्वमस्यादिवाक्यानां तावन्मात्रावबोधनात् । अर्थान्तरं न संभाव्यं वाक्यवाक्यार्थवेदिना ॥२३॥
अस्थूलाद्यर्थशंसीनि द्रष्टव्यादिविधेर्यदि[२] । समर्पयेयुर्विषयमित्येतदपि नेष्यते ॥२४॥

स्वर्गादेरपि तर्हि दर्शितरीत्या कर्मापेक्षा मोक्षवन्न स्यादिति चेन्नेत्याह—उत्पत्त्यादाविति । तत्र स्वर्गाद्युदाहरणे तत्राशक्तत्वेन कर्मापेक्षा नित्ये तदनुपलम्भादित्याह—नान्यथेति । मुक्तेरुत्पत्त्यादावशक्तत्वान्नास्ति कर्मापेक्षेति भावः ॥८१४॥

किंच क्रियाकारकयोरेवान्योन्यापेक्षाऽऽत्मनि नोभयापेक्षोभयविलक्षणत्वादित्याह—प्रवृत्त्येति ॥८१५॥

वेदान्तेषु विधेयाभावान्न विधिरित्युक्त्वाऽधिकार्यभावाच्च न तेषु विधिरित्याह—संभावितेति । अज्ञः सन्नात्मन्यारोपितकर्तृत्वादिर्ब्राह्मण्याद्यभिमानभागी विधिना प्रेर्यो भवति न पुनर्विद्वान्निरस्तकर्तृत्वादिरपाकृतसर्वाभिमानो नियोज्यतां गच्छतीत्यर्थः ॥८१६॥

विदुषोऽपि कर्तृत्वादिद्वारा भिक्षाटनादिवद्वैधी प्रवृत्तिः स्यादित्याशङ्क्याऽऽह—अपूर्वेति । कारकत्वे करणीभूतो मोहस्तन्मोहः । क्वचित्कर्मणीति यावत् । भिक्षाटनादिप्रवृत्तिस्तु यादृच्छिकी नियताऽपि सा मोहलेशादविरुद्धेति भावः ॥८१७॥

विदुषो न क्वचिदपि कारकत्वं हेत्वभावादित्युक्तम् । इतश्च विदुषो न वैधी प्रवृत्तिरित्याह—आत्मन इति । चेच्छब्दो निश्चयार्थः । यत्र यस्यां विद्यावस्थायामिति यावत् । किमितिशब्दात्पूर्वं तत्रेति वक्तव्यम् । ब्रह्मात्मनोरन्योन्यमैक्यं पश्यतो न प्रवृत्तिस्तत्फलाभावादित्यर्थः ॥८१८॥

प्रवृत्त्यभावे विदुषो हेत्वन्तरमाह—अब्रह्मेति । अमूढ इति च्छेदः । अब्रह्मेत्यात्मनो ब्रह्मणश्चानात्मेति ज्ञानमेव मोहोत्थं तद्ध्वंसे[३] हेतुत्वात्तत्त्वज्ञानस्य ज्ञानवतो हेत्वभावादित्यर्थः ॥८१९॥

ज्ञानादज्ञानादिविध्वस्तौ मानमाह—तत्रेति ॥८२०॥

ज्ञानिनः प्रवृत्त्यसंभवे हेत्वन्तरमाह—बाध्येति । न हि मोहादृते प्रवृत्तिर्न च मोहो ज्ञानेन सह स्थातुमर्हति तन्निवर्त्यत्वादतोऽपि न विदुषोऽस्ति प्रवृत्तिरित्यर्थः । भिक्षाटनादिस्तु बाधितानुवृत्तिमात्रमित्यसकृदुक्तमिति भावः ॥८२१॥

वाक्यजनितेत्यादिभाष्योक्तं चोद्यमनुद्रवति—मतमिति । अतो विधिना भाव्यमिति शेषः । परिहरति—नेति । ब्रह्मात्मैक्यधीपरत्वाद्वेदान्तानां तदुत्थधियस्तदविद्यातज्जध्वंसित्वसिद्धेर्न विध्यपेक्षेत्यर्थः ॥८२२–८२३॥

द्रष्टव्यविधेरित्यादिभाष्यस्थं चोद्यमुत्थापयति—अस्थूलेति । वचनानि विशेष्यन्ते । विधिशब्देन तद्विषयं

१. वाक्यजनितविज्ञानमात्रात् नाब्रह्मानात्मज्ञाननिवृत्तिरिति चेत्—इतिभाष्यं ( १३५ ) तदर्थमाह—मतमिति ।
२. 'द्रष्टव्यविधिर्विषयसमर्पकाण्येतानीति चेत्' इति भाष्यस्थचोद्यं ( पु १३५ ) विवृणोति—अस्थूलेति ।
३. प्रवृत्तिं प्रति मोहः कारणं प्रवर्तनालक्षणा दोषाः इत्युक्तेः । स च ध्वस्तः तत्र कुतः प्रवृत्तिः ।

मुक्त्यन्तरायसंमोहविध्वंस्यैकात्म्यबोधतः । न तदर्थान्तराभावादिति पूर्वमवादिषम् ॥२५॥

ज्ञानोत्पत्त्यर्थं विध्यपेक्षेति शंकापरिहारौ

प्रत्यग्याथात्म्यव्याख्यानमात्रेणैव विना विधिम् । न प्रवर्तेत वाक्यार्थसंबोधायेति चेन्मतम् ॥२६॥
नाऽऽत्मयाथात्म्यसंबोधिवाक्यश्रवणमात्रतः । प्रत्यक्तत्त्वधियः सूतेः किमन्यद्विधिनेष्यते ॥२८॥
अन्तरेण विधिं वाक्यश्रवणायापि नेहते । इति ब्रुवाणं प्रब्रूयादनिष्टं श्रूयते कुतः ॥२९॥
अनवस्थाप्रसक्तिश्च तत्र तत्र प्रसङ्गतः । विध्यन्तरस्येति ततो यथोक्तोऽर्थोऽवसीयताम् ॥२९॥
यथाऽऽत्मवादिवाक्यार्थश्रुतये न प्रवर्तते । विधिवाक्यमृते तद्व द्विध्यर्थश्रवणेऽपि न ॥३०॥
मतं वाक्योत्थविज्ञानस्मृतिसंतानता यदि । केवलोक्तिश्रवोद्भूतज्ञानादर्थान्तरं स्फुटम् ॥३१॥
नैवं साक्षाद्यथावस्तुबोधस्यैवेह संभवात् । नित्यं संनिहिते तस्मिंस्तत्स्मृत्या किं प्रयोजनम् ॥३२॥

ज्ञानमुच्यते । तेन न स्वातन्त्र्यं तेषामिति शेषः । वेदान्तानां विध्यपेक्षितार्थसमर्पकत्वेन तच्छेषत्वं शङ्कितं प्रत्याह—इत्येतदिति ॥८२४॥

कुतो नेष्यते तत्राऽऽह—मुक्तीति । मोक्षव्यवधिभूततमोनिवर्तकतत्त्वज्ञानादर्थान्तरस्यानुष्ठेयस्याभावाद्वेदान्तेषु न तद्विधिरिति सिद्धान्तोपक्रमे दर्शितमतस्तेषां न तत्परत्वमित्यर्थः ॥८२५॥

तेषां विधिपरत्वाभावमुपश्रुत्य विधिवादी चोदयति—प्रत्यगिति । वस्तुकथनमात्रेणैव विधिं विना प्रेक्षावतोऽप्रवृत्तेर्वाक्यार्थज्ञानोत्पत्त्यर्थं प्रवर्तको विधिरेष्टव्य इत्यर्थः ॥८२६॥

वाक्यार्थज्ञानोत्पत्त्यर्थं विधिरिष्यमाणस्तज्ज्ञाने वा वाक्यश्रवणे वा तदर्थज्ञानस्मृतिसंताने वा चित्तवृत्तिनिरोधे वेति विकल्प्याऽऽद्यं दूषयति—नाऽऽत्मेति । अनुष्ठितसाधनस्याधिकारिणो निरस्तप्रतिबन्धस्य वाक्यश्रवणमात्राज्ज्ञानोत्पत्तेर्न तत्रार्थवान्विधिरित्यर्थः । ज्ञानस्य जन्मैव विधिफलं तच्चेद्वाक्यश्रवणतः सिद्धं विध्यानर्थक्यं तर्हि व्यक्तमित्याह—किमन्यदिति ॥८२७॥

द्वितीयं शङ्कते—अन्तरेणेति । यागाद्यनुष्ठानाय विध्यतिरेकेणाप्रवृत्तिवद्वाक्यश्रवणायापि तं विना न प्रवर्तते तद्यागादाविव वाक्यश्रवणे विधिरित्यर्थः । विध्यधीनं वाक्यश्रवणमिति वदन्तं प्रत्याह—इति ब्रुवाणमिति । अनिष्टार्थवादिवाक्यस्यासत्यादिलक्षणस्य विधिं विना श्रवणवत्तत्त्वमादेरपि तस्मादृते श्रवणमविरुद्धमित्यर्थः ॥८२८॥

सर्वस्यापि वाक्यस्य विधेः श्रवणमिति पक्षे दोषान्तरमाह—अनवस्थेति । विधेश्चेद्वाक्यश्रवणं तर्हि तद्वाक्यश्रवणमपि विध्यन्तरादिति तत्र तत्प्रसङ्गादनवस्था । न च तत्त्वमादिश्रवणप्रयोजको विधिरात्मनोऽपि तत्प्रयुङ्क्ते । स खल्वध्ययनविधिरन्यो वा ? आद्ये तदपेक्षया श्रुततत्त्वमादेः स्वार्थबोधित्वं कर्मवाक्यवदिति तद्वाक्ययोः स्वार्थनिष्ठत्वाविशेषः । द्वितीये तस्याप्रमाणत्वात्तदीयस्वपरनिर्वाहकत्वं दूरोत्सारितमधिगन्तव्यविधेः श्रवणविधेश्चाध्ययनविधेरविशेषस्तन्न विध्यन्तरायत्तं श्रवणमिति भावः । यतो न विध्यन्तरायत्तं श्रवणमतोऽनपेक्षाद्वाक्यादेव श्रुतादैक्यधीरित्याह—इति तत इति ॥८२९॥

उक्तामनवस्थां विवृणोति—यथेति । उभयत्रार्थशब्दो वाक्यविषयः[1] ॥८३०॥

तृतीयमुत्थापयति—मतमिति । वाक्यजन्यज्ञानस्य स्मृतिसंततिर्विधेयेति यदि मतमिति योजना । तत्र हेतुमाह—केवलेति । वाक्यश्रवणमात्रात्तदुत्थज्ञानमात्राच्च स्मृतिसंततेरर्थान्तरत्वादुक्तदोषाभावात्तस्याः स्फुटं विधेयतेत्यर्थः ॥८३१॥

तद्दूषयति—नैवमिति । तस्मिन्निह प्रत्यग्भूते ब्रह्मणि यत्साक्षादित्यपरोक्षैकरसे प्रत्यक्तया सदा संनिहिते वाक्यीयज्ञाननाशेऽपि वस्तुवृत्तमनुसृत्य साक्षाद्बोधसंभवादात्मनि स्मृतेरफलत्वान्न तत्संततिर्विधेयेत्यर्थः ॥८३२॥

---

१. वाक्यविषय इति—वाक्यार्थश्रुतये इत्यत्र विध्यर्थश्रवणे इत्यत्र च अर्थशब्देन वाक्यं ग्राह्यं तदैव वाक्यश्रवणस्य विध्यधीनत्वेऽनवस्थोपपत्तेः ।

अपि पाशुपतास्त्रेण विद्धश्[1]चेन्न ममार यः । निष्फलेषुवितुन्नाङ्गो नङ्क्ष्यतीत्यतिदुष्करम् ।।३३।।
अपि प्रत्यक्तमो नित्यं भास्वच्चैतन्यबिम्बितम् । बुद्धितद्वृत्तयश्चैवं तप्तायोविस्फुलिङ्गवत् ।।३४।।
प्रागप्यनात्मसंपातात्प्रतीचैवाऽऽप्रमेयकम् । जन्मनैवाखिलं ज्ञानं फलवत्किमपेक्षते ।।३५।।
मात्रादिव्यवधानेन यथाऽन्यत्र मितेः फलम् । फलतोऽवगतेरेव न तथेहाऽऽत्मदर्शने ।।३६।।
खपूर्ण एव सन्कुम्भो द्रव्यैर्नानाविधैर्युतिम् । वियोगं वा यथा गच्छेच्चैतन्येद्धास्तथा धियः ।।३७।।
तस्मादावृत्तिपक्षेऽपि स्वतस्तत्सिद्धितो विधिः । नापूर्वः कश्चिदत्र स्यादत एवापरोऽपि न ।।३८।।
अशब्दाद्यात्मकं साक्षान्निचाय्याऽऽत्मानमेकलम् । मुच्यते मृत्युतो विद्वानिति नैगमिकं वचः ।।३९।।
आत्मन्यवगते साक्षात्प्रमाणार्थसमाप्तितः । किमन्यत्स्मृतिसंतानात्प्रार्थ्यते निष्प्रमाणकम् ।।४०।।

वाक्योत्थज्ञानोपसर्जनस्वरूपज्ञानाद्वा तदुपसर्जनवाक्यीयज्ञानाद्वाऽज्ञानतज्जाध्वस्तेस्तदर्थं स्मृतिसंततिविधेयेति चेन्नेत्याह—अपीति । चेच्छब्दोऽवधारणे क्रियापदादुपरि संबध्यते इषोर्निष्फलत्वं पत्रराहित्येन वेगहीनत्वं नैशित्यराहित्यं वा लोहशून्यत्वं वा । वितुन्नत्वमङ्गस्य व्यथितत्वम् । प्रवृद्धे हि युद्धे प्रवृत्तशत्रुमप्रधृष्यमालक्ष्य प्रयुक्ते पाशुपतास्त्रे तेन विद्धोऽपि यो नैव प्राणानजहात्स पुनः शराभासेन ताडितः सन्नपहास्यति प्राणानित्यसंभावितमिदं तथा न प्रमाणज्ञानादज्ञानादिध्वस्तिः किंतु तदीयस्मृतिसंतानादमानादिति दुःसंपादमिति भावः ।।८३३।।

किंचा[2]संसार्यात्मज्ञानस्मृतिसंतानो विधेयः संसार्यात्मज्ञानस्मृतिसंतानो वा?नाऽऽद्यस्तस्य विधिविरोधादिति मत्वा द्वितीयं दूषयितुं सर्वस्य चैतन्यव्याप्तिं साधयति—अपीति । अपिशब्दो दर्शितविकल्पद्योतकः । प्रत्यगाश्रयविषयमनाद्यनिर्वाच्यमज्ञानं जगन्मूलकारणं सदैवापरोक्षचैतन्यव्याप्तमित्यर्थः । कारणवत्कार्याणां बुद्धयादीनामपि तद्व्याप्तिमाह—बुद्धीति । तयोश्चैतन्यव्याप्तौ क्रमेण दृष्टान्तमाह—तप्तेति ।।८३४।।

बुद्धयादीनामुक्तचैतन्यव्याप्तौ स्मृत्यनपेक्षत्वं फलतीत्याह—प्रागपीति । सर्वमपि बुद्धिवृत्तिरूपं ज्ञानमनात्माकारभजनात्प्रागपि जन्ममात्रात्प्रत्यगात्मनैव सालम्बनमपरोक्षं सन्नाऽऽत्मस्मरणापेक्षमनात्माकारभजनादूर्ध्वमपि सविषयं प्रत्यक्चैतन्यव्याप्तमेव नान्यापेक्षमित्यर्थः ।।८३५।।

आत्मज्ञाने विशेषमाह—मात्रादीति । अन्यत्र स्तम्भादावनात्मनि मातृमेयादिव्यवधानेन मानफलं स्फुरणं सिध्यति नैवाऽऽत्मज्ञाने तद्व्यवधानेन तत्सिद्धिः स्वरूपावगतेरेव फलत्वादित्यर्थः ।।८३६।।

विषयसंबन्धात्पूर्वं बुद्धितद्वृत्तीनां चैतन्यव्याप्तावपि नोर्ध्वं तद्व्याप्तिर्विषयसंबन्धेनैवानाकाङ्क्षत्वादित्याशङ्क्याऽऽह—खेति । यथा कुम्भो नभोव्याप्त एव दध्यादिभिः संयोगविभागावनुभवति न हि नभसा कदाचिदव्याप्तः सन्कुम्भः संभवति तस्यापि तथैवाव्यापकत्वप्रसङ्गात्तथा बुद्धयस्तद्वृत्तयश्च स्वचैतन्यव्याप्ताः सदैव विषयैः सह संयोगविभागौ प्रतिपद्यन्ते । न हि क्वचिदपि चिदव्याप्तं किंचिदस्तीत्यर्थः ।।८३७।।

सर्वस्य सर्वदाऽपरोक्षचैतन्यव्याप्तत्वेऽपि प्रकृते किं जातं तदाह—तस्मादिति । उक्तन्यायेन सर्वस्यापरोक्षचिद्व्याप्तेर्वस्तुज्ञानस्मृतिसंततिर्विधेयेति पक्षेऽपि विधिं विना तस्याः सिद्धेर्न तत्रापूर्वो विधिः । प्राप्तत्वादेव न तत्र नियमादिविधिरपि सर्वस्यैव विधेरप्राप्तांशानुपातितया विचारारम्भे दर्शितत्वादित्यर्थः ।।८३८।।

इतश्च स्मृतिसंततिर्न विधेयेत्याह—अशब्देति । निर्विशेषमेकरसमात्मानमपरोक्षतया निश्चित्य तद्बलादनर्थराशेः सहेतोर्निवर्तते विद्वानिति वाक्योत्थज्ञानादेव पुमर्थसिद्धिरित्यशब्दमस्पर्शमित्यादिवाक्यादवगम्यते । तत्कुतः स्मृतिसंततिर्विधेयेत्यर्थः ।।८३९।।

आत्मन्यपरोक्षीकृते मानफलस्याज्ञानादिध्वस्तेः सिद्धत्वेऽपि फलान्तरलिप्सया स्मृतिसंततिर्विधीयतामित्याशङ्क्य दृष्टमदृष्टं वा फलान्तरमिति विकल्प्याऽऽद्यमप्रामाणिकत्वेन दूषयति—आत्मनीति ।।८४०।।

१. चेच्छब्दः वेदाश्चेत्प्रमाणमितिवत् अवधारणार्थे । नैव ममारेत्यर्थः ।
२. असंसार्यात्मज्ञानं न विधेयं अशनायाद्यतीतब्रह्मज्ञाने विध्यसंभवात् ।

भविष्यत्कालसंबन्धि फलं चेह न नाकवत् । तज्ज्ञानजन्मकालत्वादग्निजन्मोत्थकार्यवत् ॥४१॥

स्मृतिसन्ततेरविधेयतानिरूपणं

अविधिश्चार्थतः प्राप्तेस्तज्ज्ञानस्मृतिसंततेः । बोधाच्च ध्वस्तसंमोहः स्मृतिं नैव व्यपेक्षते ॥४२॥
सम्यग्ज्ञानाग्निनिर्दग्धे प्रत्यङ्मोहे सबान्धवे । यथावस्तुस्मृतिं मुक्त्वा स्मृतिर्नान्याऽवशिष्यते ॥४३॥
प्रमाननुविधानाच्च न स्मृतिर्बाधिकाऽपरा । बाध्यत्वेनैव माबुद्धेर्निष्ठिताऽभूदनात्मधीः ॥४४॥
बाध्यं तमो मितेः कृत्स्नं तज्जं चाप्यतिदुर्बलम् । मानं बाधकमेवाऽऽसीत्स्मृतिरप्यनयोस्तथा ॥४५॥
न स्मृतिर्विस्मृतिर्वेह संभाव्येतापि केनचित् । सकृद्विभातो ह्येवैष रवौ रात्र्यहनी यथा ॥४६॥
अनर्थहेतुदाहित्वाद्यथोक्तात्मस्मृतेरतः । आत्मस्मृतेः स्वतः प्राप्तिरितरस्यास्तु बाध्यता ॥४७॥

चित्ततद्वृत्तिनिरोधविधिशंका तत्परिहारश्च

निरोधस्तर्हि पूर्वोक्तान्मतमर्थान्तरं यदि । तन्त्रान्तरेषु तस्यापि कार्यत्वेन श्रुतत्वतः ॥४८॥

ज्ञानस्य यागादिवददृष्टफलत्वात्तदीयस्मृतिसंततिर्विधेयेति द्वितीयमाशङ्क्याऽऽह—भविष्यदिति । इहेति ज्ञानोक्तिः । वैधर्म्यदृष्टान्तो नाकवदिति । अग्निहोत्रादौ भविष्यत्कालसंबन्धि स्वर्गाख्यं फलमवगतं नैवमात्मज्ञाने संभवतीत्यर्थः । तस्य मोक्षाख्यफलस्य विद्वान्न बिभेतीत्यादिश्रुतेर्ज्ञानजन्मना तुल्यकालत्वादिति हेतुमाह—तज्ज्ञानेति । तत्र दृष्टान्तमाह—अग्नीति । यथाऽग्निजन्मसमकालमेधसां भस्मीभावस्तथा ज्ञानोदयसमकालं कैवल्यमित्यर्थः ॥८४१॥

संततेरविधेयत्वे हेत्वन्तरमाह—अविधिश्चेति । ब्रह्मविदो विषयान्तराभावादात्मज्ञानस्मृतिसंततेरर्थप्राप्तेर्न तत्र विधिरित्यर्थः । तत्रैव हेत्वन्तरमाह—बोधाच्चेति । तेन सा न विधेयेति शेषः ॥८४२॥

ज्ञानादज्ञानादिदाहेऽप्यनात्मस्मृत्यपोहार्थं ब्रह्मविदः स्मृतिसंतत्यपेक्षेति सा विधेयेत्याशङ्क्याऽऽह—सम्यगिति । आत्मज्ञानाग्निना निरवशेषतो दग्धे सत्यात्माज्ञाने सकार्ये वस्त्वनुसारिणीं स्मृतिमपहायानात्मस्मृतेरनवशेषान्न तन्निवृत्तये स्मृतिसंततिविधिरित्यर्थः ॥८४३॥

ब्रह्मविदोऽनात्मस्मृत्यङ्गीकारेऽपि न तया ब्रह्मस्मृतिर्बाध्येत्याह—प्रमेति । अपराऽनात्मविषयेति यावत् । पराङिति पाठान्तरम् । कथं प्रमाननुविधानमात्मस्मृतेरिति तत्राऽऽह—बाध्यत्वेनेति । द्वैतधीरद्वैतधियो बाध्यत्वेनैव स्थिता तेन तत्संस्कारजस्मृतेः प्रमाननुविधानमित्यर्थः ॥८४४॥

द्वैतज्ञानमेवाद्वैतधीबाधकं किं न स्यादित्याशङ्क्य द्वैततद्धियोराविद्यत्वादद्वैतधियश्च विषयद्वारा बलवत्त्वान्नैवमित्याह—बाध्यमिति । अज्ञानं तत्कार्यं च सर्वं प्रमित्यपेक्षया दुर्बलत्वात्तद्बाध्यं, मानं पुनर्बलवत्त्वेन बाधकमेवेति रज्ज्वादिज्ञाने निर्धारितं प्रदीपेनैव हि तमो निवर्त्यते न विपरीतं तद्वदद्वैतधियैव द्वैतं तद्धीश्च सह कारणेन निराकरणीयेत्यर्थः । तथाऽपि द्वैतस्मृतिरद्वैतस्मृतिबाधिकेत्याशङ्क्य बाध्यधीसंस्कारजत्वाद्द्वैतस्मृतिर्बाध्यैव बाधकधीसंस्कारोत्थत्वादद्वैतस्मृतिर्बाधिकैवेत्याह—स्मृतिरिति ॥८४५॥

आत्मनि स्मृतिमुपेत्य दोषमुक्त्वा न तत्र स्मृतिरेवेत्याह—न स्मृतिरिति । संभावनाभावे निश्चयो दूरादिति वक्तुमपिशब्दः । तत्र हेतुः—सकृदिति । प्रत्यगात्मा सदैवापरोक्षचिद्रूपो यस्मादित्यर्थः । आत्मनि स्मरणविस्मरणयोः संभावनाऽपि नेत्यत्र दृष्टान्तमाह—रवाविति । नोदेता नास्तमेतेत्यादिश्रुतेर्दृष्टान्तसिद्धिः ॥८४६॥

प्रतीचि स्मृतिमुपेत्यैव तत्संततेरविधेयत्वे हेत्वन्तरमाह—अनर्थेति । आत्मावगतौ वाक्यजायामन्यस्य वस्तुनोऽनर्थहेतुत्वेनावगमादात्मनश्च तद्विलक्षणत्वात्परमपुरुषार्थरूपे तत्र स्मृतेरनर्थतद्धेतुदाहित्वादनात्मधीतत्संस्कारजस्मृतीनामात्मावगत्यनन्तरमभावात्पारिशेष्यादात्मैकज्ञानस्मृतेरर्थतो विधिं विना प्राप्तिरनात्मस्मृतिश्च तया बाध्येति न स्मृतिसंततिर्विधेयेति भावः ॥८४७॥

चतुर्थमुत्थापयति—निरोध इति । यदि वाक्यार्थज्ञानादेरविधेयत्वं तर्हि चित्ततद्वृत्तिनिरोधो मुक्तिसाधनत्वेन विधीयतां तस्य पूर्वोक्तज्ञानादेरर्थान्तरत्वादित्यर्थः । निरोधस्य मुक्तिहेतुत्वेन विधेयत्वे योगशास्त्रं

**न मुक्तिसाधनत्वेन तस्यानधिगमाच्छ्रुतेः । प्रत्यग्बोधात्परं नान्यन्मुक्तेरस्तीह साधनम् ॥४९॥**
**अननुष्ठेयरूपत्वात्तत्सिद्धिश्चाऽऽत्मबोधतः । प्रत्यग्ज्ञाने निरुध्यन्ते चित्ततद्वृत्तयो यतः ॥५०॥**
**अभ्युपेत्यैतदस्माभिरुच्यते संभवादिति । सम्यग्ज्ञानातिरेकेण न त्वन्यन्मुक्तिसाधनम् ॥५१॥**
**श्रुतौ स्मृतौ वा संभाव्यं ताभ्यां नान्यस्य मानता । प्रत्यग्याथात्म्यनिर्णीतौ तार्किकोक्तात्मवस्तुवत् ॥५२॥**

वेदान्तेषु अंशत्रयवती भावना निरस्यते

**सर्वाकाङ्क्षैकहेतोश्च प्रत्यग्विज्ञानहानतः । न भावनेह संभाव्या मोहे सत्येव सा यतः ॥५३॥**
**मानान्तरानधिगतोक्त्यर्थाधिगम एव नः । विधिर्यतो नियोगोऽपि नैव स्यादनृतन्त्रतः ॥५४॥**
**नियोज्यतद्विषययोर्यत्र भेदोऽवसीयते । विषयः स नियोगस्य नाऽऽत्मज्ञाने त्वभेदतः ॥५५॥**

संवादयति—नन्वेति । तस्यापीत्यपिशब्दः सप्तम्या संबध्यते । "अथ योगानुशासनमि"ति निःश्रेयसहेतुः समाधिः सूत्रितस्तस्य लक्षणमुक्तं "योगश्चित्तवृत्तिनिरोध" इति । तन्निरोधावस्थायां चाऽऽत्मनः स्वरूपप्रतिष्ठत्वं कैवल्यमाख्यातं "तदा द्रष्टुः स्वरूपेऽवस्थानमि"ति । भाष्यकारश्च "ताः पुनर्निरोद्धव्या" इत्युक्त्वा पादान्ते व्याजहार "यस्मात्ते संस्काराश्चित्तस्याधिकारविरोधिनोऽनवस्थितिहेतवो भवन्ति तस्मादवसिताधिकारं सह कैवल्यभागीयैः संस्कारैश्चित्तं विनिवर्तते तस्मिन्विनिवृत्ते पुरुषः स्वरूपमात्रप्रतिष्ठः शुद्धः केवलो मुक्त इत्युच्यत" इति । एवं योगशास्त्रे मुक्तिहेतुत्वेनेष्टो निरोधविधिरित्यर्थः ॥८४८॥

योगशास्त्रादपि बलवतीं श्रुतिमाश्रित्योत्तरमाह—न मुक्तीति । तदेव प्रपञ्चयति—प्रत्यगिति । परमुत्कृष्टमिति यावत् । इहेति शास्त्रोक्तिः । तमेव विदित्वेत्यादिश्रुतेर्ज्ञानमेव केवलं कैवल्यसाधनं न निरोधः श्रुतिविरोधे योगशास्त्रस्यानवकाशत्वादित्यर्थः ॥८४९॥

चित्तवृत्तिनिरोधस्य मुक्तिहेतुत्वेऽपि न विधेयतेत्याह—अननुष्ठेयेति । न तावद्यथाकथंचिच्चित्ततद्वृत्तिनिरोधोऽनुष्ठेयः सर्वस्यापि तत्संभवाद्विधितोऽननुष्ठेयत्वात् । नापि सर्वात्मना तन्निरोधो विधेयो ज्ञानादेव तत्सिद्धेरतो न निरोधे विधिरित्यर्थः । ज्ञानस्याऽऽत्यन्तिकनिरोधसाधनत्वं साधयति—प्रत्यगिति । अतो मोक्षहेतुत्वे तस्योपेतेऽपि न विधेयत्वं विधिं विना तत्सिद्धेरिति शेषः ॥८५०॥

"नान्यः पन्था विद्यते" "ज्ञानादेव तु कैवल्यमि"त्यादिशास्त्रमनुसरन्नुपेत्यवादं त्यक्तुं भूमिकां करोति—अभ्युपेत्येति । निरोधस्य मुक्तिहेतुत्वमुपेत्य विधिं विना ज्ञानादेव संभवान्न विधेयतेत्युक्तमित्यर्थः । कस्मादयमभ्युपगमवादः किमित्ययमेव सिद्धान्तो न स्यादित्याशङ्क्याऽऽह—सम्यगिति । निरोधस्य मुक्तिहेतुत्वं "तदा द्रष्टुः स्वरूपेऽवस्थानमि"त्यादौ योगशास्त्रे प्रसिद्धमिति चेन्नेत्याह—ताभ्यामिति । तत्र वैधर्म्यदृष्टान्तमाह—तार्किकेति । यथा तार्किकैरीश्वरादौ स्वतन्त्रमनुमानादि मानमिष्टं नैवं वैदिकैरिष्यतेऽतो योगशास्त्रमपि श्रुत्यादिविरोधे न प्रमाणम् "एतेन योगः प्रत्युक्त" इति न्यायादिति भावः ॥८५१-८५२॥

वेदान्तेषु विधेयत्वं निरोधादेर्निरस्तम् । यत्तु तेष्वंशत्रयवती भावनाऽस्तीति तन्निरस्यति—सर्वेति । किं केन कथमित्याकाङ्क्षासु निरपेक्षहेतुरज्ञानं तस्य वाक्योत्थप्रत्यग्ज्ञानेन हानान्नांशत्रयवती भावना वेदान्तेषु संभाव्यते मोहे सत्येवाऽऽकाङ्क्षाद्वारा तादृश्या भावनायाः संभवादतो न तेषु विधिरित्यर्थः ॥८५३॥

भावनाभावेऽपि वेदान्तेषु नियोगोऽस्त्येव तदभावे वाक्योत्थज्ञाने प्रवृत्त्यनुपपत्तेरित्याशङ्क्याऽऽह—मानान्तरेति । अज्ञातवाक्यार्थज्ञापनमेवास्माकं विधिर्नाप्रवृत्तप्रवर्तनं गरलमभ्यवहरेत्यादौ व्यभिचारादतोऽबुद्धबोधिषूपनिषद्वाक्येषु भावनावन्नियोगोऽपि नास्तीत्यर्थः । किंच नाऽऽत्मज्ञाने नियोगस्तस्यापुंस्तन्त्रत्वान्नियोगस्य च तत्तन्त्रविषयत्वादित्याह—अनृतन्त्रत इति ॥८५४॥

आत्मज्ञाने नियोगासंभवे हेत्वन्तरमाह—नियोज्येति । यत्र साधयिता साधनं साध्यमिति भेदधीस्तत्र नियोगो यथा यागादावात्मज्ञाने तु नासौ युक्तस्तज्जन्ममात्रेण सर्वभेदध्वस्तेरित्यर्थः ॥८५५॥

शब्दो लिङादिशून्योऽपि ह्यविज्ञातार्थबोधकः । विधिर्भवति सामर्थ्याज्ज्ञाते ह्यर्थेऽनुवादता ॥५६॥

शास्त्रेण ब्रह्मबोधनप्रकारः

यतो वाचोऽभिधानानि प्रयुक्तान्युपलब्धये । सर्वाण्यनभिधायैव निवर्तन्तेऽवबोध्य च ॥५७॥
उदपादि च यच्छब्दैर्ज्ञानमाकारवद्धियः । स्वतोबुद्धं तदप्राप्य नाम्ना सह निवर्तते ॥५८॥
माहात्म्यमेतच्छब्दस्य यदविद्यां निरस्यति । सुषुप्त इव निद्राया दुर्बलत्वाच्च बाधते ॥५९॥
दुर्बलत्वादविद्याया आत्मत्वाद्बोधरूपिणः । शब्दशक्तेरचिन्त्यत्वाद्विद्मस्तं मोहहानतः ॥६०॥
अगृहीत्वैव संबन्धमभिधानाभिधेययोः । हित्वा निद्रां प्रबुध्यन्ते सुषुप्ते बोधिताः परैः ॥६१॥

विधायकपदसहितवाक्यस्यैवाबुद्धबोधित्वेन विधित्वादज्ञातं ब्रह्म ज्ञापयतां वेदान्तानामपि तत्पदसाहित्यापत्तेरनुप्रवेशो नियोगस्येत्याशङ्क्याऽऽह—शब्द इति । विधिविधुरोऽपि शब्दः स्वशक्तिवशादितरशब्दवदज्ञातज्ञापकः सन्विधिः स्यादित्यर्थः । अज्ञातज्ञापनमप्रवृत्तप्रवर्तनमिति विधिद्वैविध्यमभ्युपेयतामभिमतमेतदिति वदितुं हिशब्दः । ज्ञापको विधिरिति वाच्ये किमज्ञातविशेषणेनेत्याशङ्क्याऽऽह—ज्ञाते हीति । तस्मादनुवादत्वशङ्कामपवदितुं विशेषणमर्थवदित्यर्थः ॥८५६॥

अबुद्धबोधनस्य विधित्वेऽपि नासौ ब्रह्मणि युक्तस्तस्य यतो वाचो निवर्तन्त इति शब्दागोचरत्वश्रुतेस्तद्ब्रह्म नोपनिषद्गम्यमित्याशङ्क्याऽऽह—यत इति । वाच इत्यस्य व्याख्यानमभिधानानीति । यतो निवर्तन्ते तद्ब्रह्माऽऽनन्दरूपं विद्वान्न बिभेतीति संबन्धः । यदि ब्रह्मप्रतिपत्त्यर्थं प्रवृत्तानि वचनानि तत्र वचनप्रवृत्तिमकृत्वैव निवर्तेरन्कथं तर्हि तदौपनिषदमित्याशङ्क्य लक्षणया तदवबोधं संपाद्यैव ततस्तेषां निवृत्तेर्युक्तमौपनिषदत्वं तस्येत्याह—अवबोध्येति । समन्वयसूत्रे चास्योपपादितत्वादत्राबुद्धबोधनं विधिः संभवतीति भावः ॥८५७॥

शब्दोत्थधीविषयत्ववद्ब्रह्मणः शब्दविषयत्वमपि किं न स्यादित्याशङ्क्याऽऽह—उदपादीति । अन्तःकरणस्य यत्परिणामरूपं ज्ञानं ब्रह्मात्मैक्याकारं तत्त्वमादिशब्दैरुत्पादितं तद्ब्रह्माविषयीकृत्य स्वहेतुशब्देन सह ततो निवर्तते । अप्राप्य मनसा सहेति हि श्रूयते तस्य स्वतो बोधैकरसस्य विषयत्वायोग्यत्वात्तस्मादविषयत्वेनैव शब्दतदुत्थधियोः ब्रह्म स्फुरतीत्यर्थः ॥८५८॥

ननु ब्रह्मणि शब्दो गृहीतसंबन्धो न वा?नाद्योऽविषयत्वानुपपत्तेर्नेतरः शब्दप्रमाणकत्वायोगान्न च तस्मिन् मानान्तरमिष्टमतस्तज्ज्ञानासंभवात्तदज्ञानाध्वस्तिस्तत्राऽऽह—माहात्म्यमिति । यथा सुषुप्तः शब्दश्रवणे तात्कालिकसंबन्धबोधं विना निद्रायाः सकाशात्प्रबुध्यते तत्र शब्दस्तदातनसंबन्धज्ञानानपेक्षस्तस्य बोधमाधाय निद्रां निरस्यति तथा तत्त्वमादिशब्दस्य शबले ज्ञातशक्तेः प्रतिपाद्येऽर्थे शक्तिध्यनपेक्षस्यैव लक्षणया ज्ञानं जनयतो महिमैष यदनर्थहेत्वज्ञाननिरासित्वमतो युक्तमविषयस्यैव ब्रह्मणः शास्त्रप्रमाणकत्वमित्यर्थः । ब्रह्मणि वाक्याज्ज्ञातेऽपि कथं तत्तस्मिन्नज्ञानं निवर्तयति वैपरीत्यस्यापि संभवादित्याशङ्क्य बाध्यं तमो मितेरित्यत्रोक्तमेव व्यक्तीकर्तुमाह—दुर्बलत्वाच्चेति ॥८५९॥

विद्यायाः सकाशादविद्याया दौर्बल्यं कथमिति तत्राऽऽह—दुर्बलत्वादिति । अविद्यादौर्बल्यस्य शुक्त्यादौ सिद्धत्वाद्बलवती विद्या दुर्बलामविद्यां स्वविरुद्धां बाधत एवेत्यर्थः । किंचाजडस्फुरणस्याऽऽत्मत्वात्तत्राविद्या दुःस्थत्वान्निमित्तमात्रादपगच्छति किमुत विद्यायामुदितायामित्याह—आत्मत्वादिति । किंच बोध्येऽर्थे ज्ञातशक्तिरेव शब्दो बोधमादधातीति न नियमः शब्दशक्तेर्मन्त्रादिशक्तिवद्दुर्ज्ञानत्वादित्याह—शब्देति । कथं तर्हि शब्दात्प्रत्यग्ब्रह्मधीस्तत्राऽऽह—विद्म इति । तं परं प्रत्यञ्चं मोहशब्दितविरुद्धांशनिरासद्वारा लक्षणया शब्दाज्जानीमोऽतो ब्रह्म शास्त्रप्रमाणकमित्यर्थः ॥८६०॥

दृष्टान्तं प्रपञ्चयति—अगृहीत्वेति । उत्तिष्ठ मैत्रेति पार्श्वस्थैर्बोध्यमानाः सुप्ता जनाः शब्दार्थयोस्तदा संबन्धमज्ञात्वैव निद्रां हित्वा बुध्यमाना भवन्तीत्यर्थः ॥८६१॥

**जाग्रद्वन्न यतः शब्दं सुषुप्ते वेत्ति कश्चन । ध्वस्तेऽतो ज्ञानतोऽज्ञाने ब्रह्मास्मीति भवेत्फलम् ॥६२॥**
**अविद्याघातिनः शब्दाद्याऽहं ब्रह्मेति धीर्भवेत् । नश्यत्यविद्यया सार्धं हत्वा रोगमिवौषधम् ॥६३॥**
**अवशिष्टं स्वतोबुद्धं शुद्धं मुक्तमतो भवेत् । नातः स्याद्भावनापेक्षा नापि मानान्तरं प्रति ॥६४॥**
**क्रियाप्रभेदविरहाज्ज्ञानं वा निखिलं तमः । हन्त्यात्मलाभमात्रेण न तदन्या तमोन्हुतिः ॥६५॥**
**क्रियातत्फलयोर्भेदान्न भेदः क्रिययोरतः । प्रत्यग्ध्वान्तमतो ज्ञानं स्वात्मलब्ध्यैव हन्ति तत् ॥६६॥**
**निष्पन्नोऽपि कुठारादिः प्रयोगविरहाद्यथा । द्वैधीभावाय नैवालं तथा नैव प्रमाणधीः ॥६७॥**

आत्मबोधने मानान्तरानपेक्षत्वम्

**अलौकिकत्वाद्बोध्यस्य स्वतश्चावगमात्मनः । बोध्ये हि लौकिकेऽपेक्षा परतोऽवगतौ[१] तथा ॥६८॥**

अगृहीत्वेत्यत्र हेतुमाह—जाग्रद्वदिति । यथा जागरे ज्ञातशक्तिकं शब्दं व्युत्पन्नो वेत्ति नैवं स्वापे तत्त्राज्ञातशक्तिः शब्दो बोधक इत्यर्थः । दार्ष्टान्तिकं निगमयति—ध्वस्त इति । अतो दृष्टान्तवशात्प्रतिपाद्येऽर्थे संबन्धबुद्ध्यनपेक्षादेव शब्दाल्लक्षणयोत्पन्नज्ञानादज्ञाने ध्वस्ते प्रतिबन्धाभावाद्ब्रह्मात्मैक्यं फलं सिध्यतीत्यर्थः ॥८६२॥

नन्वज्ञाननिवर्तकं ज्ञानं निवर्तते न वा? आद्ये निवर्तकान्तरसत्त्वेऽनवस्था तदभावे निर्हेतुनाशापत्तिर्द्वितीये तद्धेत्वज्ञानस्थितेरमुक्तिरत आह—अविद्येति । सा खल्वविद्यां नाशयन्ती स्वयमपि नश्यति स्वपरविरोधित्वादित्यर्थः । एकत्र निवर्त्यनिवर्तकत्वे दृष्टान्तमाह—हत्वेति । अजीर्णतादिरोगविगमार्थं प्रयुक्तमौषधं कषायपानादि रोगं विगमय्य स्वयमपि विगच्छति पयः पयो जरयति स्वयमपि जीर्यत इति हि प्रसिद्धम् । तथा विद्याऽपि निवर्तयन्त्यविद्यां स्वयमपि निवृत्ता भवतीत्यर्थः ॥८६३॥

अथाविद्यातत्कार्यनिवृत्तौ किंचिदवशिष्टं न वा? आद्ये तन्मानं वाच्यम् । द्वितीये शून्यवादापत्तिरत आह—अवशिष्टमिति । अतः सनिदानसंसारध्वस्तेरेवंविधं तत्त्वमवशिष्टं भवेदिति संबन्धः । तदवशेषे फलितमाह—नात इति । भावनाशब्दो नियोगस्याप्युपलक्षणम् । स्वतोबुद्धत्वकृतं फलान्तरमाह—नापीति । यथोक्तस्य वस्तुनोऽवशिष्टत्वान्न तस्य विध्यर्थं प्रत्यपेक्षा स्वतोबुद्धत्वाच्च न तस्य मानान्तरं प्रत्यपेक्षा युक्ता विध्यर्थस्य मानान्तरस्य च तस्मिन्नकिंचित्करत्वादित्यर्थः ॥८६४॥

उक्तवस्तुनो भावनाद्यनपेक्षत्वेऽपि तज्ज्ञानं तदपेक्षमेवाज्ञानध्वंसीत्याशङ्क्याऽऽह—क्रियेति । वाशब्दोऽवधारणे । ज्ञानजन्ममात्रेण सर्वक्रियाकारकफलभेदध्वस्तेर्भावनाद्यपेक्षायोगादनपेक्षमेव ज्ञानमखिलमज्ञानं निवर्तयतीत्यर्थः । ननु तद्ध्वस्तिरात्माऽर्थान्तरं वा? आद्ये तस्याः सदातनत्वं द्वितीये सद्वितीयत्वं तत्राऽऽह—न तदन्येति । तच्छब्देन वाक्योत्थज्ञानोपलक्षित आत्मोच्यते ॥८६५॥

ज्ञानादज्ञानध्वस्तिश्चेत्क्रिययोस्तयोर्वाच्यं पौर्वापर्यं स्थितिगतिवदित्याशङ्क्य घटविचारोक्तं स्मारयति—क्रियेति । ज्ञानं क्रिया तत्फलमज्ञानध्वस्तिस्तयोश्चाऽऽदौ क्रिया पश्चात्फलमिति भेदस्य च्छिदिद्वैधीभावयोः सिद्धत्वाद्द्वयोरपि क्रियात्वानिष्टेरिदं पूर्वमिदं पश्चादिति भेदो न वाच्योऽतश्च किं पूर्वमिति चोद्यमनवकाशमित्यर्थः । चोद्याभावे फलितं निगमयति—प्रत्यगिति । तदिति ज्ञानस्य प्रत्यगाकारत्वोक्तिः । तथाच तदज्ञानध्वस्तिसामर्थ्यमस्य द्योत्यते ॥८६६॥

स्वरूपलाभमात्राज्ज्ञानमज्ञानध्वंसीति वैधर्म्यदृष्टान्तेन साधयति—निष्पन्नोऽपीति । विद्यमानोऽपि कुठारादिरनुष्ठानमन्तरेण काष्ठादौ द्वैधीभावादिसिद्धये न पर्याप्नोति न तथा प्रमाणजनितज्ञानमुत्पत्तिमात्रेणाज्ञाननिवर्तकत्वादित्यर्थः ॥८६७॥

"नातः स्याद्भावनापेक्षे"त्यत्र वाक्योत्थधियो भावनादौ मानान्तरे वाऽनपेक्षत्वमुक्त्वा भावनाद्यनपेक्षत्वं प्रसाध्य मानान्तरानपेक्षत्वं साधयति—अलौकिकत्वादिति । ब्रह्मणो मानान्तरायोग्यत्वादनपेक्ष्य प्रकाशमानत्वाच्च

१. "तर्हि धर्मादेरपि मानान्तरापेक्षा स्यात्" अत्राह—परत इति । रूपादिमतो मानान्तरयोग्यस्य तदपेक्षा, अतो जडत्वेऽपि नादृष्टादेः मानान्तरापेक्षेत्यर्थः—( न्या० )

**नद्यास्तीरे फलानीव प्रत्यक्षाद्यनपेक्षतः । किमिवेहान्यमानेषु तवापेक्षाऽभिधाश्रुतेः ॥६९॥**
**प्रमाता च प्रमाणं च प्रमेयो निश्चितिस्तथा । यत्सांनिध्यात्प्रसिध्यन्ति तत्सिद्धौ किमपेक्षते ॥७०॥**
**जाग्रत्स्वप्नसुषुप्तेषु घटोऽयमिति संविदः । व्यवधानं न चेहास्ति तद्भावाभावसाक्षितः ॥७१॥**
**इदमेवमिदं नैवमिति बुद्धिर्विभागभाक् । अनात्मिकाऽऽत्मवत्यत्र येनासौ किमपेक्षते ॥७२॥**
**कर्त्रादिव्यापृतेः पूर्वमसंकीर्णमुपाधिभिः । अविक्षिप्तमसंसुप्तं ह्यनुभवन्किमपेक्षते ॥७३॥**
**प्रमाणमप्रमाणं च प्रमाभासस्तथैव च । कुर्वन्त्येव प्रमां यत्र तदसंभावना कुतः ॥७४॥**

तदाकारा वाक्यजा धीरनपेक्षैवाविद्यां निरस्यतीत्यर्थः। ब्रह्म मानान्तरानपेक्षं चेत्कुत्र तदपेक्षेति तत्राऽऽह—बोध्ये हीति। लोकप्रसिद्धे जडेऽर्थे मानमनपेक्ष्य भावनाभावादिति हिशब्दार्थः। जडे तदपेक्षा चेदज्ञानादेरपि तदपेक्षया सिद्धान्तहानिरित्याशङ्क्याऽऽह—परत इति। रूपादिमत्त्वेन मानान्तरादवगतियोग्ये तदपेक्षा न चाविद्यादेर्जाड्येऽपि तथा तद्योग्यता तत्र तत्र तदपेक्षाव्यवहारोऽतस्तत्कार्ये तदपेक्षायामपि मुखतस्तन्निरस्यायामविद्यायां न मानापेक्षेति भावः। यद्वा यद्बोध्यं लौकिकमन्याधीनावगतित्वेनास्वप्रकाशं तस्मिन् मानान्तरापेक्षेत्यर्थः। तथाशब्दः समुच्चये॥८६८॥

आत्मनो मानान्तरायोग्यत्वं व्यतिरेकदृष्टान्तेन स्पष्टयति—नद्या इति। यथा नद्यास्तीरे फलानि सन्तीति वाक्यस्य मूलप्रमाणापेक्षा नरविरचितवचनस्य तदपेक्षया मानत्वाभ्युपगमान्न तथा तत्त्वमादिश्रुतेरिहाऽऽत्मनि प्रवृत्ताया मानान्तरापेक्षा तवापि युक्ता स्वप्रकाशस्याऽऽत्मनोऽध्यक्षाद्यपेक्षाभावात्। अतस्तत्त्वमादि मानान्तरसापेक्षं सिद्धार्थवाक्यत्वान्नदीतीरफलसत्तावाक्यवदिति नानुमेयं मानान्तरयोग्यार्थत्वोपाधेरित्यर्थः ॥८६९॥

साधनव्याप्तिमाशङ्क्य[1] सर्वसाधकस्याऽऽत्मनो मानान्तरायोग्यत्वान्मैवमित्याह—प्रमातेति। विमतं मानाद्यनपेक्षं तत्साधकत्वात् यत् यत्साधकं तत्तदनपेक्षं यथा घटसाधको दीपस्तदपेक्षो न भवतीत्यर्थः ॥८७०॥

ननु परमात्मा मानान्तरमपेक्षते व्यवहितत्वादग्न्यादिवदित्याशङ्क्यासिद्धिमाह—जाग्रदिति। तथा घटादिविशेषितायाः संविदो देशादिव्यवधानं विशेषणस्यानात्मत्वेनाऽऽगमापायित्वान्न तथेहावस्थात्रयेऽपि परस्मिन्प्रतीचि व्यवधानमस्ति तद्भावाभावयोः साक्षित्वेन सदा स्फूर्तेरित्यर्थः ॥८७१॥

किंचाऽऽत्मा नाध्यक्षादिविषयस्तत्स्वरूपत्वात्तद्वदित्याह—इदमिति। अत्र व्यवहारभूमाविति यावत्। घटादि पृथुबुध्नोदराकारत्वादियुक्तं न तथा पटादीतिविभागभागिनी व्यवहारावस्थायां या बुद्धिः सा स्वतः स्वरूपविरहिण्यपि येनाऽऽत्मना स्वरूपवती लक्ष्यते तस्याऽऽत्मनो मानादिस्वरूपत्वान्नास्ति तदपेक्षेत्यर्थः ॥८७२॥

किंचाऽऽत्मा न तद्विषयस्तस्मात्प्रागेव सिद्धत्वाद्यस्मात्प्रागेव सिद्धं न तत्तस्य विषयो यथा कुम्भदृष्टेः प्राग्दृष्टः स्तम्भो न तद्विषय इत्याह—कर्त्रादीति। मातृमेयादिव्यापृतिर्ज्ञानं ततः पूर्वं सुषुप्ताविति यावत्। आत्मनः स्वदृष्टावुपाध्यपेक्षावदध्यक्षाद्यपेक्षाऽपि स्यादित्याशङ्क्याऽऽह—असंकीर्णमिति। कथमुपाध्यसंबन्धः स्वापे निश्चितस्तत्राऽऽह—अविक्षिप्तमिति। विक्षेपादृष्ट्या तत्र तदसंबन्धधीरित्यर्थः। कार्योपाध्यसंबन्धेऽपि कारणोपाधिसंबन्धोऽस्तीति चेत्तत्राऽऽह—असंसुप्तमिति। न हि कार्यकारणाभ्यामात्मतत्त्वं तत्त्वतो युज्यतेऽन्यदेव तद्विदितादित्यादिश्रुतेर्न च तत्राज्ञानसंबन्धः सन्नपि कार्यं करोतीत्यर्थः। तादृगात्मनि मानमाह—अनुभवन्निति। उत्थितस्य परामर्शादुक्तानुभवसिद्धिरिति हिशब्दार्थः। तस्याध्यक्षाद्यनपेक्षत्वं फलितमाह—किमिति ॥८७३॥

अनुभवादात्ममात्रसिद्धावपि यथोक्तात्मनो मानहीनत्वेनासंभावितत्वमाशङ्क्याऽऽह—प्रमाणमिति। कार्यत्वदृश्यत्वाभ्यामेतानि यस्मिन्कारणे द्रष्टरि प्रमां कुर्वन्ति कार्यस्य कारणापेक्षकत्वात् दृश्यस्य च द्रष्टारमन्तरेणायोगात्तस्य स्वप्रकाशस्य नासंभावनेत्यर्थः ॥८७४॥

---

१. साधनव्याप्तिमिति—यत्र मानान्तरसापेक्षत्वं तत्र मान्तरयोग्यत्वमिति साध्यव्यापकता उपाधेः। यत्र सिद्धार्थवाक्यत्वं तत्र मान्तरयोग्यार्थत्वमिति साधनव्यापकत्वं न भवति वेदान्तवाक्ये व्यभिचारात् ब्रह्मणो मानान्तरायोग्यत्वात्।

प्रामाण्यमेतत्पृष्ठेन कस्मान्नास्त्यभिधाश्रुतेः । नियोगस्यापि मानत्वं नानपेक्ष्य प्रमामिमाम् ॥७५॥

'आत्मानं पश्येत्' इति ज्ञानविधिरिति शंकापरिहारौ

पश्येदात्मानमित्यादि वाक्यं यत्स्याद्विधायकम् । ज्ञानकर्तव्यतायां तन्नियोज्यपुरुषं प्रति ॥७६॥
स्वव्यापारेऽनपेक्ष्यैव वस्तुवृत्तं वचो यतः । नियुङ्क्ते पुरुषं तस्माद्वस्तुवृत्तं सुदुर्लभम् ॥७७॥
स्वशक्त्यननुरूपं चेत्कार्यं वाक्यशतैरपि । नियुक्तोऽपि न तत्कर्तुमलं शक्ये स हीश्वरः ॥७८॥
अभिधाश्रुतिश्चेत्तत्सिद्धौ व्यायच्छेत प्रयत्नतः । विधिवर्त्मानुगामित्वान्नार्थस्पृक्साऽस्वतन्त्रतः ॥७९॥
स्वमांसान्यपि खादन्ति नियोगानतिलङ्घिनः । जहत्यपि प्रियान्प्राणाञ्शक्यत्वादेव नान्यतः ॥८०॥
अशक्ये विनियुक्तोऽपि कृष्णलाञ्श्रपयेदिति । सर्वात्मनाऽप्यसौ कुर्वन्कुर्यात्तस्करकन्दुवत् ॥८१॥

परस्याऽऽत्मनोऽध्यक्षाद्यविषयत्वे तत्त्वमादिविषयत्वमपि न स्यादविशेषादित्याशङ्क्याऽऽह—प्रामाण्यमिति। अनुभवरूपोक्तात्मन्यविद्यातज्जध्वस्तिद्वारा तत्त्वमादेर्मानत्वं मानान्तरस्य तु तदविद्याद्यध्वंसित्वान्न तत्र मानतेति भावः। ननु नियोगवादिना नियोगस्य वाक्यार्थे मानत्वमिष्टं न चोक्तोऽनुभवस्तद्विषयोऽतस्तस्यावाक्यार्थत्वान्मानान्तरायोग्यत्वेनापदार्थत्वाच्च न सोऽस्ति तत्राऽऽह—नियोगस्येति। मानत्वेऽपि तस्य जडत्वादजडबोधमनपेक्ष्य तत्त्वायोगादुक्तोऽनुभवो नियोगाविषयोऽपि तत्साधकत्वेनोपेयस्तद्वादिनाऽपीत्यर्थः। अथवा नियोगवादिना नियोगस्य वाक्यार्थे मानत्वमिच्छता साधकत्वेन तस्य यथोक्तानुभवाभ्युपगमध्रौव्यान्न तस्मिन्विवदितव्यमित्याह—नियोगस्येति ॥८७५॥

भवत्वनुभवो मानान्तरायोग्यः संश्च तथाऽपि ज्ञाने नियोगोऽस्त्यात्मन्येवाऽऽत्मानं पश्येदितिश्रुतेस्तथा च वस्तुनस्तदपेक्षा दुर्वारेत्याशङ्क्याऽऽह—पश्येदिति। यद्येतन्नियोगपरं तर्हि ज्ञानकर्तव्यतायां पुरुषं नियोज्य निराकाङ्क्षं सन्नियोज्यं पुरुषं प्रति वा नियोगबोधनेन चरितार्थं सन्न वस्तु बोधयेदतो वस्त्वसिद्धिरित्यर्थः ॥८७६॥

नियोगपरमपि वाक्यं तद्बोधयिष्यति कुल्याप्रणयनन्यायेनैकस्य वाक्यस्योभयार्थत्वसंभवादित्याशङ्क्याऽऽह—स्वव्यापार इति। पुरुषप्रयत्नार्हे भावार्थ इति यावत्। योषिदग्न्यादिवाक्यवन्नियोगनिष्ठवाक्यस्य वस्त्वनपेक्षत्वान्न ततस्तत्सिद्धिरित्यर्थः ॥८७७॥

ज्ञाने विधिमुपेत्य वस्त्वसिद्धिरुक्ता। इदानीं तत्र विधिरेव नास्तीत्याह—स्वशक्तीति। यदि पुरुषशक्त्ययोग्यं किंचित्कार्यमुच्यते तदा तत्र भूयोभिर्विधिभिर्नियुक्तोऽपि न स तत्कर्तुं शक्नोत्ययोग्यत्वाद्योग्ये विषये पुंसः सामर्थ्यान्न च तज्ज्ञानं पुंस्तन्त्रमतो न तत्र वैधी प्रवृत्तिरित्यर्थः ॥८७८॥

ज्ञाने विधिश्चेद्वस्त्वसिद्धिर्नापि तत्र विधिरित्युक्तं तत्र वस्त्वसिद्धिं परिहरति—अभिधेति। नियोगपरत्वाज्ज्ञानविधिवाक्याद्वस्त्वसिद्धावपि तत्त्वमादिवाक्यं तत्सिद्धौ तात्पर्येण व्याप्रियेतेत्यर्थः। अभिधाश्रुतिर्न वस्तुसाधिका विध्यपेक्षितार्पकत्वेनास्वातन्त्र्यादिति दूषयति—विधीति ॥८७९॥

ज्ञाने विध्युपगमे वस्त्वसिद्धिमुपपाद्य तत्र विध्यसंभवमशक्यत्वहेतुनोक्तं व्यनक्ति—स्वमांसानीति। नियोगरागिणां नियोगवशात्प्राणत्यागादावपि प्रवृत्तिः संभवति तस्य शक्यत्वान्नाशक्येऽर्थे ततोऽपि प्रवृत्तिरस्तीत्यर्थः ॥८८०॥

अशक्ये नियोगादप्रवृत्तिरित्येतद्दृष्टान्तेनाऽऽह—अशक्य इति। कृष्णला हैमा माषाः पाषाणा वा क्षुद्राः कृष्णस्वभावास्तान्पचेदिति सर्वात्मना पाकायोग्ये कृष्णलचरौ नियुक्तो न तं कुर्यादशक्यत्वात्। उक्तं हि—कृष्णलेष्वर्थलोपादपाकः स्यादिति। प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्काम इत्यत्र कृष्णलेषु पाकः कार्यो वा नेति संशये पचतेर्विक्लित्तिफलविषयत्वेन प्रयोगदर्शनात्कृष्णलेषु तदयोगादग्निना सिञ्चेदितिवद्विध्यनुपपत्तेर्न कार्यः पाक इति प्राप्ते चैत्रः पचतीति हेतुव्यापारे प्रयोगात्तस्यैव पचत्यर्थत्वात्कृष्णलेष्वपि तद्योगात्कर्तृव्यापारद्वारा

ज्ञानस्य वस्तुतन्त्रत्वान्नोपासनसमुत्थितिः । न चाऽऽवृत्त्या प्रमोत्पत्तिं प्रमाणानि प्रकुर्वते ॥८८२॥
नार्थस्पृग्भावना चेत्स्याद्ब्रह्मधीजन्मने न सा । शुक्तिकाज्ञानसंभूतौ न स्वभ्यस्ताऽपि रूप्यधीः ॥८८३॥
द्रष्टव्यश्चेद्भवेदात्मा स्यान्नियोगस्तथाऽऽत्मनि । निषेधाद्दर्शनस्येह न नियोगोऽस्त्यतः परे ॥८८४॥
मनुते यन्न मनसा मतं येन मनः सदा । ब्रह्म विद्धि तदेव त्वं न त्विदं यदुपासते ॥८८५॥
शृङ्गग्राहिकया श्रुत्या ब्रह्मताऽपोदिता स्फुटम् । उपास्यत्वैकदोषेण नियोगोऽतोऽत्र नेष्यते ॥८८६॥
ज्ञाताज्ञातापनिह्नुत्या ज्ञातृभावादिसाक्षिणः । ब्रह्म विद्धि तदेवेति ब्रह्मता च समर्पिता ॥८८७॥
वाक्यार्थज्ञानकाले यः पदार्थो नैव विद्यते । कर्तव्यः कारकापेक्षो विधेयः स न संशयः ॥८८८॥
विपरीतस्ततो यस्तु वाक्यादेव च गम्यते । नित्योऽकर्मप्रयुक्तः स न विधेयः कथंचन ॥८८९॥
यथावस्तु हि या बुद्धिः सम्यग्ज्ञानं तदेव नः । पौरुषायासमात्रोत्थमज्ञानं रजतादिवत् ॥८९०॥

फलस्य तद्विषयत्वात्प्रथमप्रतीतव्यापारवाचितया युक्तत्वाद्वचनाददृष्टार्थतया पाकः कार्य इति 'स्याद्वा प्रत्यक्षशिष्टत्वात्प्रदानवत्' [ पू०मी० १०.२.२ ] इति दशमे राद्धान्तितम् । तत्र यद्यपि संतापमात्रं कृष्णलेष्वपि शक्यं कर्तुं तथाऽपि विक्लित्तिप्रधानः पचतेरर्थ इति न्यायेन संतापजन्यां तामेव तेषु कुर्वन्नायासमात्रभागी स्याद्यथा लोके तस्करः सन्कन्दुरपूपादिपक्तृषु स्वयमपि प्रविश्य तत्कर्म कुर्वन्नशक्यकारित्वादायासमात्रभाग्भवत्येवमशक्यत्वाज्ज्ञानेऽपि न वैधी प्रवृत्तिरित्यर्थः ॥८८१॥

ज्ञाने विध्ययोगेऽपि तदावृत्तिरूपोपास्तौ सोऽस्तु ततो विहितोपास्तेर्ज्ञानान्तरमुत्पाद्यमित्युक्तमिति चेन्नेत्याह–ज्ञानस्येति । प्रत्यक्षादिष्वदृष्टत्वान्न ज्ञानावृत्तिरूपोपास्त्या प्रमात्मकज्ञानान्तरोत्पत्तिरित्याह—न चेति ॥८८२॥

किंचोपास्तिरर्थस्पर्शिनी न वा?आद्ये ततोऽर्थसिद्धेर्व्यर्थं ज्ञानान्तरमिति मत्वा कल्पान्तरं निरस्यति—नार्थेति । यद्यपि सा नार्थस्पर्शिनी तथाऽपि ब्रह्मधियमाधास्यत्यभ्यासस्यैवंस्वाभाव्यात्स हि स्वविषयेऽतिशयमादधातीत्याशङ्क्याऽऽह—शुक्तिकेति । शुक्तौ रूप्यधीरादरेण निरन्तरं दीर्घकालमभ्यस्ता न शुक्तिकायां सम्यग्ज्ञानोत्पत्तौ हेतुर्भवति तथाऽऽत्मोपास्तिरपि न सम्यग्धियमाधातुमलमित्यर्थः ॥८८३॥

ज्ञाने तदावृत्तौ वा विध्यभावेऽपि तद्विषये स भविष्यति द्रष्टव्यश्रुतेरित्याशङ्क्य द्रव्यस्वरूपेऽसाध्यत्वादित्यत्रोक्तं हृदि कृत्वा दोषान्तरमाह—द्रष्टव्यश्चेदिति । आत्मनो दृष्टिविषयत्वे नियोगविषयत्वमेष्टुं शक्यं दृष्टस्यैव नियोगविषयत्वादिति भावः । आत्मनो द्रष्टव्यत्वं श्रौतमित्याशङ्क्याऽऽह—निषेधादिति । इहाऽऽत्मनि दृष्ट्युपास्त्योर्निषेधादुभयतः परे तस्मिन्न नियोगः द्रष्टव्यश्रुतिस्तु दर्शनार्हत्वं वदन्ती नाऽऽत्मनस्तत्कर्मतामाहेत्यर्थः ॥८८४॥

तस्य तदविषयत्वे श्रुतिं प्रमाणयति—मनुत इति ॥८८५॥

श्रुतेस्तात्पर्यमाह—शृङ्गेति । यथा गोमण्डलस्थां गां शृङ्गं गृहीत्वा विशेषतो दर्शयत्येषा बहुक्षीरेति तथा स्फुटं वस्तुप्रदर्शनपरया श्रुत्या ब्रह्मतोपास्यस्य वारितेति यावत् । उपास्यस्य ब्रह्मत्वापवादे हेतुमाह—उपास्यत्वेति । आत्मनो दृष्ट्याद्यविषयत्वे फलितमाह—नियोग इति । अत्रेत्यात्मोच्यते ॥८८६॥

ज्ञानोपास्तिविषयस्याब्रह्मत्वमुक्त्वा तद्विपरीतस्य ब्रह्मत्वार्पणाच्च न तत्र विधिरित्याह—ज्ञातेति । अन्यदेव तद्विदितादित्यादिना ज्ञाताज्ञातात्मकं कार्यकारणरूपमारोपितं जगदपाकृत्य तेनैवाप्रपञ्चस्य ज्ञातृभावाभावसाक्षिणस्त्वंपदलक्ष्यस्य तदेव त्वं ब्रह्म विद्धीति यतो ब्रह्मता दर्शिताऽतो निरवकाशो विधिरित्यर्थः ॥८८७॥

ज्ञानज्ञेययोरविधेयत्वे कस्य विधेयत्वं तदाह—वाक्यार्थेति । तुच्छव्यावृत्त्यर्थं विशिनष्टि—कर्तव्य इति । कृतियोग्यत्वं साधयति—कारकेति । तस्य विधेयत्वे प्रतिबन्धकाभावं सूचयति—न संशय इति ॥८८८॥

तर्हि यागादिवद्वाक्यगम्यत्वाद्ब्रह्मण्यपि विधिः स्यादित्याशङ्क्याऽऽह—विपरीत इति । तस्य प्रामाणिकत्वमाह—वाक्यादिति । एवकारार्थं मानान्तरागम्यत्वं स्फोरयितुं चशब्दः । वैपरीत्यं साधयति—नित्य इति । नित्यत्वे हेतुमाह—अकर्मेति । तस्य स्वरूपेण संसृष्टस्वरूपेण वा न विधेयत्वमित्याह—स नेति ॥८८९॥

ज्ञानोपास्त्योरात्मनि च विधिं निरस्य ज्ञानविधिपक्षे दोषान्तरं वक्तुं भूमिकामाह—यथेति । वस्त्वनुसारि

वस्तुमात्रानुरोधित्वात्सम्यग्ज्ञानस्य दुष्करम् । नियोगानुप्रवेशेन वस्तुतत्त्वावबोधनम् ॥९१॥
अभिधेयं न यद्वस्तुप्रत्ययश्च न ढौकते । नियुक्तोऽपि नियोगेन तादृङ्नैवेक्षितुं क्षमः ॥९२॥
अपि मानान्तरप्राप्तं वस्तुबोधं निवर्तयेत् । नियोगार्थानुरोधेन यदि वस्त्ववबोध्यते ॥९३॥
मानान्तरोत्थविज्ञानप्राप्तावेव नियुज्यते । नियोगादेव तद्बुद्धौ नियोगत्वं भवेद्यतः ॥९४॥

असंसृष्टापरोक्षब्रह्मध्यानविधिरितिपक्षः तन्निरासश्च

भाव्यतेऽसन्नपीहार्थस्तस्यान्यत्र प्रसिद्धितः । ब्रह्मणस्त्वप्रसिद्धत्वात्क्रियतेऽसूत्रकः पटः ॥९५॥
क्रियतेऽलौकिकोऽप्यर्थः पदार्थान्वयरूपतः । अवाक्यार्थात्मकं ब्रह्म तेनादो दुष्करं मतम् ॥९६॥
अवाक्यार्थात्मकं ब्रह्म कुतोऽज्ञायीति कथ्यताम् । वाक्यातिरेकि तन्मानं नान्यत्किंचित्त्वयेष्यते ॥९७॥
अथान्यदपि तन्मानं भवताऽभ्युपगम्यते । तावतैव कृतार्थत्वाद्व्यर्थं ध्यानादिचेष्टितम् ॥९८॥

ज्ञानं प्रमेत्यर्थः। ज्ञानस्य सम्यक्त्वे वस्त्वनुसारित्वं हेतुरिति वक्तुं हिशब्दः। ऋते तदनुसाराद्विधेर्ज्ञानापादने तदप्रमात्वं स्यादित्याह—पौरुषेति। पुरुषसंबन्ध्यायासो यत्नस्तन्मात्राद्विधेरुत्पन्नं ज्ञानं रजतादिधीवन्मिथ्याधीरित्यर्थः ॥८९०॥

सम्यग्धियो विधिं विना वस्त्वनुसारित्वे तद्धेतोर्वाक्यस्य नियोगद्वारा वस्तुबोधकत्वं दुष्करत्वाद्दुरुपपादमिति फलितमाह—वस्त्विति ॥८९१॥

इतश्च ब्रह्मधीर्न विधेयेत्याह—अभिधेयमिति। शब्दज्ञानागम्ये ब्रह्मणि नियोगाधीनधीविषयत्वमपि नास्तीत्यर्थः ॥८९२॥

किंच विध्यधीनाद्बोधाद्वस्तुसिद्धिपक्षे मानान्तरसमर्पितं विधत्ते विधिरिति पक्षक्षतिरित्याह—अपीति। नियोगानुसारेण वस्तुबोधश्चेद्विधीतरमानप्राप्तो यस्तद्बोधस्तं तेन प्राप्तं विधत्ते लिङादिरिति पक्षं स नियोगो निवर्तयेदित्यक्षरार्थः ॥८९३॥

नियोगाधीनज्ञानाद्वस्तुसिद्धिपक्षे दोषान्तरमाह—मानान्तरेति। विध्यन्यमानजन्यज्ञानेन धात्वर्थप्राप्तावेव तत्र विधिना पुरुषो नियुज्यते यदि नियोगादेव तस्य ब्रह्मात्मलक्षणार्थस्य सिद्धिस्तदा तस्यां सिद्धायां नियोगस्य नियोगभावे ज्ञाते तत्प्रवृत्तेस्ततश्च तद्बुद्धिर्नियोगादेव तद्बुद्धेरिष्टत्वादित्यन्योन्याश्रयोऽतो दृष्टस्य नियोगविषयतेति मतहतिरित्यर्थः। नियोगतो वस्तुसिद्धिमभ्युपेत्य पक्षासिद्धिमुक्त्वा ततो वस्तुसिद्धिरेव नेत्येतदिहोक्तमिति विवेक्तव्यम् ॥८९४॥

प्रमाणज्ञानस्याविधेयत्वेऽपि तद्विषयासंसृष्टापरोक्षब्रह्मगोचरध्यानस्य योषितोऽग्नित्वध्यानवद्विधेयत्वान्नियोगानुप्रवेशो वेदान्तेष्वित्याशङ्क्य ज्ञानस्य वस्तुतन्त्रत्वादित्यादिनोक्तं मन्वानो दोषान्तरमाह—भाव्यतेऽसन्निति। योषित्यसन्नपि वह्निरारोप्य भाव्यते तस्यान्यत्र स्वरूपेण प्रत्यक्षत्वाद्ब्रह्मणस्त्वसंसृष्टापरोक्षस्य त्वन्मते शब्दादसिद्धेर्मानान्तरस्य च तत्रायोगात्तद्ध्यानस्यासूत्रपटवदनुपपत्तेरविधेयतेत्यर्थः ॥८९५॥

उक्तलक्षणब्रह्मणः स्वर्गादिवदलौकिकत्वेऽपि शास्त्रीयत्वात्तद्ध्यानं विधेयमित्याशङ्क्याऽऽह—क्रियत इति। अलौकिकोऽपि नियोगादिः कर्तुं ज्ञातुं च शक्यते तस्य संसृष्टपदार्थरूपत्वाद्ब्रह्म तु न संसृष्टरूपमन्यासंसर्गात्तेनास्य शास्त्रादृष्टत्वेनादो ध्यानं दुरनुष्ठेयत्वादविधेयमित्यर्थः ॥७९६॥

किंचावाक्यार्थात्मकं ब्रह्म तवास्ति न वा ? नास्ति चेत्कुतस्तद्ध्यानमस्ति चेत्तज्ज्ञातमज्ञातं वा? अज्ञातं चेत्तद्ध्यानासिद्धिर्ज्ञाते तत्संभवाज्ज्ञातं चेद्वाक्यादन्यस्माद्वेति पृच्छति—अवाक्यार्थेति। अन्यस्मादिति पक्षमनङ्गीकारेण निरस्यति—वाक्येति। त्वयेत्युपलक्षणं मयेत्यपि द्रष्टव्यम्। तस्मादपि ज्ञातत्वपक्षस्तथेत्याह—अन्यदिति। वाक्यादतिरेकि किंचित्तस्मिन्नवाक्यार्थब्रह्मणि मानं त्वया नेष्यतेऽन्यद्वाक्यमपि न तन्मानमिष्टमिति योजना ॥८९७॥

अनङ्गीकारासिद्धिं चोदयति—अथेति। अपिना वाक्यमनुकृष्यते। दूषयति—तावतेति। वाक्येन मानान्तरेण वा ब्रह्मधीसिद्धेर्विधिना ध्यानमननाद्यनुष्ठानवैयर्थ्यमित्यर्थः ॥८९८॥

निदिध्यासनशब्देन सम्यग्ज्ञानं विवक्षितम् । उक्तानुवचने तस्य विज्ञानेनेतिनिर्णयात् ॥९९॥
ब्रह्म संसर्गरूपं चेद्वाक्यादध्यवसीयते । तावन्मात्रप्रमाणत्वात्तादृगेवास्तु तन्मितेः ॥९००॥
यादृक्तद्गम्यते मानात्तत्तादृङ्नेति गीः कुतः । अमानात्कल्प्यते यादृक्तत्तथैवेति साहसम् ॥ १ ॥
घटाकाशो महाकाश एवमाद्युक्तितोऽपि नः । असंसृष्टार्थबोधः स्याद्यथैवं सदसीत्यतः ॥ २ ॥
विज्ञाय प्रज्ञामित्यस्य न चार्थोऽयं विवक्षितः । यथा तथाऽतियत्नेन तत्रैवैतत्प्रवक्ष्यते ॥ ३ ॥

तत्त्वमादिवाक्यं न मानं सिद्धबोधित्वादित्याक्षेपः समाधानं च

स्वरूपानूक्तिमात्रत्वादप्रमाण्यं मतं यदि । तत्त्वमस्यादिवाक्यानां सोऽरोदीदितिवाक्यवत् ॥ ४ ॥
प्रामाण्यहेतुसद्भावान्नाप्रामाण्यमिहेष्यते । फलवन्निश्चितज्ञानजन्म प्रामाण्यकारणम् ॥ ५ ॥
तादृग्यत्रास्ति तन्मानं नास्ति यत्र न तन्मितिः । तत्त्वमस्यादिवाक्यार्थश्रवणानन्तरं न किम् ॥ ६ ॥

ननु द्रष्टव्य इति साक्षात्कारमनूद्य निदिध्यासितव्य इति तत्साधनं विधीयते तत्कथं ध्यानानुष्ठानवैयर्थ्यं तत्राऽऽह—निदिध्यासनेति । तत्र हेतुमाह—उक्तेति । द्रष्टव्यादिवाक्योक्तदर्शनाद्यनुवादवाक्ये दर्शनेनेत्यादौ विज्ञानेनेति निदिध्यासनस्य स्थानप्रमाणादनुवादात्तस्य सम्यग्ज्ञानत्वनिश्चयाच्चतुर्थे चास्यार्थस्य विस्तरशो वक्ष्यमाणत्वादित्यर्थः ॥८९९॥

किंच ब्रह्म संसृष्टरूपमसंसृष्टरूपं वा वाक्यादवगम्यत इति विकल्प्याऽऽद्यं प्रत्याह—ब्रह्मेति । वाक्यस्यैव ब्रह्मणि मानत्वात्ततः संसृष्टावगमे संसृष्टरूपमेव मानात्तदेष्टव्यमिति कुतोऽसंसृष्टब्रह्मध्यानमित्यर्थः ॥९००॥

वाक्यात्संसृष्टदृष्टावपि न ब्रह्म तथा ध्यानानुरोधादसंसृष्टमेव तद्भविष्यतीत्याशङ्क्याऽऽह—यादृगिति । संसृष्टं परोक्षं च ब्रह्म वाक्यादधिगतं तथाऽपि तत्तथा नेत्ययुक्तं प्रमाणविरोधादसंसृष्टमपरोक्षं च ब्रह्म ध्यानात्कल्प्यते तत्तथैवेति चायुक्तमप्रमाणोपनीतस्य वस्तुत्वायोगादित्यर्थः ॥९०१॥

द्वितीयं दृष्टान्तेनाङ्गीकरोति—घटेति । अपिर्दार्ष्टान्तिके योज्यः । अतो नावकाशो ध्यानविधेरिति शेषः ॥९०२॥

विज्ञाय प्रज्ञामित्यत्रासंसृष्टात्मध्यानविधानात्कथं तदनवकाशमित्याशङ्क्याऽऽह-विज्ञायेति । अयमिति ध्यानविधिरुक्तः । तत्रैव षष्ठे तद्व्याख्यानदशायामिति यावत् । विध्यसंभवेऽपेक्षितन्यायजातमेतदिति परामृश्यते ॥९०३॥

वेदान्तेषु विधिनिरासेनाऽऽत्मस्वरूपमात्रावसायित्वमुक्तम् । संप्रति न ते स्वार्थे मानं सिद्धार्थवाक्यत्वात्सोऽरोदीदित्यादिवदित्यनुमानेन शङ्कते—स्वरूपेति ॥९०४॥

फलवन्निश्चितज्ञानाजनकत्वमुपाधिरिति मन्वानः समाधत्ते—प्रामाण्येति । इहेति धर्मीकृतवाक्योक्तिः । किं तत्प्रामाण्यकारणं तदाह—फलवदिति । सोऽरोदीदित्यादेः स्वार्थे वैफल्येनाप्रामाण्यमिति वक्तुं फलवदित्युक्तम् । योषा वाव गौतमाग्निरित्यस्य योषित्यग्नित्वानिश्चायकत्वात्तत्राप्रामाण्यमिति सूचयति—निश्चितेति । हुंफडादिशब्दानां ज्ञानानुत्पादकत्वान्न स्वार्थे मानतेत्याह—ज्ञानेति ॥९०५॥

प्रामाण्यहेतुमुक्त्वा व्यवस्थामाह—तादृगिति । सामान्यन्यायं प्रकृते योजयन्पृच्छति—तत्त्वमिति ।

१. स्थानप्रमाणादिति—श्रुतिलिङ्गवाक्यप्रकरणानन्तरं क्रमाख्यं प्रमाणं मीमांसका मन्यन्ते । तथाहि—दर्शपूर्णमासयोः उपांशुयाजक्रमे "दब्धिर्नामासी"ति मन्त्रः श्रूयते । स किमुपांशुयाजाङ्गमुत नेति सन्देहे उच्यते स्थानसामान्यात् कर्मणां मन्त्राणां च क्रमेण समाम्नातानां यस्य कर्मणः क्रमे यो मन्त्रः समाम्नातः तस्मिन्नवगते स्थानसामान्यात् तत्कर्म उपतिष्ठते । कर्मोपलब्धौ मन्त्रः । एवं समानस्थानाम्नानात् तन्नूनं सम्बन्धार्थमिति निश्चयात् दब्धिमन्त्रस्य उपांशुयाजस्थानत्वात् तदङ्गत्वनिर्णयः । एवं "द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्युक्त्वा दर्शनेन श्रवणेन मननेन विज्ञानेनेदं सर्वं विदितमित्यनुवादे निदिध्यासनस्थाने विज्ञानशब्देन तदनुवादात् निदिध्यासनं न ध्यानं अपि तु ज्ञानमित्यर्थः ।

फलवन्निश्चितज्ञानजन्म साक्षात्समीक्ष्यते । तस्मिन्सत्यप्रमाणत्वं किमिवेहोच्यते त्वया ॥ ७ ॥
सोऽरोदीदिति वाक्येभ्यो निश्चितं फलवच्च किम् । जायते यदि विज्ञानं प्रामाण्यं केन वार्यते ॥ ८ ॥
अथ नैतदमानत्वं काममस्तु न वार्यते । फलवन्निश्चितज्ञानजनकस्य किमागतम् ॥ ९ ॥
अथैतस्याप्रमाणत्वं मानत्वं क्वेति भण्यताम् । यत्राप्यभीष्टं मानत्वं तत्राप्येत्यप्रमाणता ॥१०॥
नरप्रवृत्तिसद्भावान्ननु तस्य प्रमाणता । ज्योतिष्टोमादिवाक्यस्य ब्रह्मास्मीत्यत्र तन्न तु ॥११॥
प्रामाण्यहेतुसद्भावान्नैतत्सत्स्वभिधीयते । हेतुश्चाभिहितोऽस्माभिः प्रवृत्तिर्न तु कारणम् ॥१२॥
अलंकारोऽयमस्माकं यदशेषप्रवर्तन— । बीजप्रध्वंसकृज्ज्ञानफलवज्जन्मकारिता ॥१३॥

उक्तानुवादेन विध्यभावे युक्त्यन्तरोक्तिः

यथोक्तेन विचारेण विधित्रयनिषेधनम् । कृतं तन्नित्यसंप्राप्तिहेतूक्त्याऽनवशेषतः ॥१४॥
तमेवेति च वाक्यस्य विध्यसंभवमब्रुवम् । स्वरसेनैव संप्राप्तेस्तथाऽऽत्मोपासनस्य च ॥१५॥

किं समीक्ष्यते किंवा नेति प्रश्नार्थः । ईदृग्ज्ञानजन्म तत्त्वमादिषु नेक्ष्यते चेद्विद्वदनुभवफलश्रुतिविरोधः स्यादिति मत्वा पक्षान्तरं प्रत्याह—तस्मिन्निति ॥९०६-९०७॥

किमिवेत्युदाहरणं पृच्छ्यते तच्च सोऽरोदीदित्यादि दर्शितमित्याशङ्क्याऽऽह—सोऽरोदीदिति । किं जायते ज्ञानं किंवा नेति विकल्पार्थः । तत्राऽऽद्यमनूद्य दूषयति—जायत इति । तथाच दृष्टान्तस्य साध्यविकलतेति भावः ॥९०८॥

द्वितीयमनुभाष्य दूषयति—अथेति । उक्तोपाधिसत्त्वान्नानुमेति भावः । साधनव्याप्तिमाशङ्क्याऽऽह—फलवदिति । विमतं स्वार्थे मानं फलवन्निश्चितज्ञानजनकत्वाद्दर्शादिवाक्यवदिति भावः ॥९०९॥

विपक्षमनुभाष्यातिप्रसङ्गमाह—अथेति । मानत्वं न क्वापीत्युक्तं प्रकटयति—यत्रापीति । तत्त्वमादिवाक्यस्योक्तज्ञानजनकस्याप्यमानत्वे विधिवाक्यमप्यमानं स्यादित्यर्थः ॥९१०॥

न तस्योक्तहेतोर्मानत्वं किन्तु प्रवर्तकधीजनकत्वादित्युपाधिं शङ्कते—नरेति । वाक्यत्वे सति प्रमाणत्वे प्रवर्तकज्ञानजनकत्वं प्रयोजकमित्यर्थः । साधनव्याप्तिं धुनीते—ब्रह्मेति ॥९११॥

विमतममानं वाक्यत्वे सति प्रवर्तकज्ञानाजनकत्वाज्जरद्गवादिवाक्यवदित्यभीष्टं व्यतिरेकं निराचष्टे—प्रामाण्येति । विमतं मानं तत्कारणवत्त्वात्संमतवदित्यत्रासिद्धिमाशङ्क्याऽऽह—हेतुश्चेति । फलवन्निश्चितज्ञानजनकत्वं प्रामाण्यप्रयोजकं दर्शितमिति यावत् । चकारोऽवधारणे । प्रवर्तकधीजनकत्वस्य प्रामाण्ये प्रयोजकत्वं प्रत्यादिशति—प्रवृत्तिरिति । निषेधवाक्येष्वप्रामाण्यप्रसङ्गात् । न च निवर्तकधीजनकत्वमपि प्रयोजकमेकैकत्रोभयकारणत्वाभावेनाप्रामाण्यान्न च प्रयोजकप्रतिनियमस्तदनुगमाभावे प्रयोज्याननुगमादिति भावः ॥९१२॥

यदुक्तं ब्रह्मास्मीत्यत्र न प्रवर्तकधीजनकतेति तत्राऽऽह—अलंकारोऽयमिति । वेदान्तानामिति शेषः । ये वेदान्तानामुपयन्ति मानत्वमेष तेषामलंकारो यदशेषस्य प्रवर्तनस्य कारणीभूतमिथ्याज्ञानरागादिध्वंसित्वादेव ज्ञानस्य फलवत्त्वं तथाविधज्ञानजनकत्वमन्यथा विधिशेषतया वस्तुनि प्रामाण्यासिद्धिरित्यर्थः ॥९१३॥

तेषां यथोक्तधीजनकत्वाद्विध्युक्तिवन्मानतेत्युक्त्वा नापूर्वविधिरित्येष कदाचिदपीत्यादिविधिविचारेणोक्तमनुवदति—यथोक्तेनेति । तस्य ज्ञानस्य नियमेन प्राप्तिहेतुरूपवचनेनापूर्वादिविधित्रयस्य निषेधनमनवशेषतो विधिविचारेण कृतमिति संबन्धः ॥९१४॥

विज्ञाय प्रज्ञामित्यस्य न चेत्यत्रोक्तमनुवदति—तमिति । "तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत" इत्यस्य ज्ञानान्तरविषयो विधिरर्थत्वेन शङ्क्यते तस्यासंभवं तद्वाक्यव्याख्यावसरे वक्ष्यामीत्यवोचमित्यर्थः । ब्रह्मविषयशाब्दज्ञानस्य तदावृत्तिरूपोपास्तेर्वा विधिरर्थोऽस्येत्याशङ्क्याऽऽह—स्वरसेनेति । विधिं विनैवाऽऽत्मविषयशाब्दज्ञानस्य तदुपास्तेश्च प्राप्तेर्ज्ञानान्तरस्यैव विध्यसंभवं "नाऽऽत्मयाथात्म्यसंबन्धी" इत्यादिना "नैवं साक्षाद्यथावस्तुबोधस्ये" इत्यादिना चाब्रुवमतो नोपास्त्यादिविधिरपि विज्ञायेत्यादेरर्थ इत्यर्थः ॥९१५॥

आत्मानमनुपास्येह नानात्मानं जनोऽपि हि । उपास्ते तेन तत्प्राप्तिर्नित्यैवेत्यभिधीयते ।।१६।।
अहंप्रत्ययगम्यत्वे ह्यभ्युपेतेऽपि चाऽऽत्मनः । अनात्मप्रत्ययोत्पत्तिरहंप्रत्ययपूर्विका ।।१७।।
आत्माऽऽत्मानं सदोपास्ते तत्प्रत्ययसमन्वयात् । निःशेषानात्मबुद्धीनां नित्यप्राप्तमुपासनम् ।।१८।।
विज्ञानकारणत्वेऽपि ह्यभ्युपेतेऽन्तरात्मनः । नित्योपासनसंप्राप्तिस्तज्ज्ञानानां तदन्वयात् ।।१९।।
अभ्युपेतेऽपि च विधौ न प्रवृत्तिरिहेष्यते । सर्वमात्मेति संदृष्टे न प्रवृत्तिरहेतुतः ।।२०।।

विज्ञाय प्रज्ञां कुर्वीत इत्यत्र नियमविधिरिति भाष्यार्थः

नियमार्थो विधिरयमिति भाष्यकृतो वचः । अभ्युपेत्यापि वक्ष्यामीत्येवमेतत्समञ्जसम् ।।२१।।
न कश्चिदपि संभाव्यो यथोक्तन्यायगौरवात् । विधिर्यतोऽभ्युपगमान्नियमोक्तिरियं ततः ।।२२।।
दर्शनं क्रियमाणं हि कर्माऽऽश्रित्य प्रसिध्यति । आत्माऽऽनात्मा च तत्कर्म तदन्यस्याप्रसिद्धितः ।।२३।।
यथा तण्डुलनिष्पत्तिरवघाताद्यपेक्षया । सिध्येद्दर्शननिष्पत्तिस्तद्वदात्माद्यपेक्षया ।।२४।।
अवघातस्य पाक्षिक्यां प्राप्तौ यद्वन्नियम्यते । अवहन्यादिति तथा ह्यात्मोपास्तिर्नियम्यते ।।२५।।

अधिकविवक्षया वृत्तं वार्तिकाभ्यामनूद्य विवक्षितमधिकमाह—आत्मानमिति। लोकश्च तदनुसारिवादिवर्गश्चाहमित्यात्मानमननुसंधायानात्मानं न व्यवहारभूमावनुसंधत्ते। हिशब्दो यस्मादर्थस्तत्तस्मादर्थः। तस्मादात्मोपास्तिप्राप्तेर्नित्यत्वान्न तत्र विधिरित्यर्थः ।।९१६।।

किंचाऽऽत्मोपास्तेर्विधेयत्वमिच्छता किं तस्य ज्ञानकर्मत्वमिष्टं तदाश्रयत्वं वेति विकल्प्याऽऽद्ये विध्यसिद्धिमाह—अहमिति। तत्र लौकिकपरीक्षकप्रसिद्धचनुरोधार्थो हिशब्दः। आत्मनोऽहंधीग्राह्यत्वे कर्मकर्तृविरोधं समुच्चेतुमपि चेत्युक्तम्। तथा चाऽऽत्मोपास्तेर्नित्यप्राप्तेर्भाट्टादिमते न विधिरिति शेषः ।।९१७।।

अनात्मधियोऽहंधीपूर्वत्वेऽपि कथमात्मोपास्तेर्नित्यप्राप्तिस्तत्राऽऽह—आत्मेति। सर्वानात्मधियामात्मधीसंबन्धादात्मानमात्मा सदाऽनुसंधत्ते तेन सदा प्राप्तमात्मोपासनमिति योजना ।।९१८।।

कल्पान्तरं दूषयति—विज्ञानेति। विषयज्ञानाश्रयत्वेनाऽऽत्मनो दर्शनं गुरुमतानुसारिसंमतमिति वक्तुं हिशब्दः। अनात्मज्ञानानामात्मज्ञानपूर्वकत्वादित्याह—तज्ज्ञानानामिति। यद्यप्यनात्मज्ञानान्यात्मानमाश्रयत्वेन प्रकाशयन्ति तथाऽपि तत्प्रकाशपूर्वकत्वं तेषामेष्टव्यम्। अहमिति ज्ञानं सविषयं निर्विषयं वा? आद्ये तद्बलादात्मनि दृष्टे पश्चादनात्मज्ञानानीति न तैस्तत्प्रकाशः, तेषामात्मप्रकाशत्वेऽनात्मज्ञानत्वायोगात् द्वितीये जानातेः सकर्मकत्वनियमो न स्यादतो न गुरुमतेऽप्यात्मोपास्तिर्विधेयेति भावः ।।९१९।।

वाक्यार्थज्ञानविधिपक्षे दोषान्तरमाह—अभ्युपेतेऽपीति। इहेति वाक्यार्थज्ञानोक्तिः। तत्र विधाविष्टेऽपि न तत्फलं प्रवृत्तिः सिध्यतीत्यर्थः। तत्र हेतुः—सर्वमिति। ज्ञानादज्ञानध्वस्तौ तज्जरागादिध्वस्तेः सर्वमात्मैवेति ज्ञाने सति न प्रवृत्तिरित्यर्थः ।।९२०।।

आत्मोपास्तौ वाक्यार्थज्ञाने च विध्यभावे विज्ञायेत्यत्र कथं भाष्यकृतो नियमविध्यङ्गीकारस्तत्राऽऽह—नियमेति। विधिमभ्युपेत्यापि वेदान्तानां वस्तुपरत्वं वक्ष्यामीत्येवं विवक्षित्वा पक्षे प्राप्तस्य नियमविध्यर्थतेत्येतद्भाष्यं युक्तमतोऽभ्युपगमवादो नियमविध्युक्तिरित्यर्थः ।।९२१।।

साक्षादेव भाष्यकृता विवक्षितो नियमविधिरिति किं नेष्यते तत्राऽऽह—न कश्चिदिति। आत्मधियो नित्यप्राप्तत्वप्रापकन्यायस्य बलीयस्त्वादित्याह—यथोक्तेति ।।९२२।।

भाष्योपेतनियमविधिप्रकारं वक्तुं भूमिकामाह—दर्शनमिति। निरालम्बनज्ञानायोगादिति हिशब्दार्थः। किं तत्कर्म तद्विभजते—आत्मेति। कर्मद्वैविध्यनियमे हेतुमाह—तदन्यस्येति ।।९२३।।

उक्तमर्थं दृष्टान्तेनाऽऽह—यथेति ।।९२४।।

भूमिकामारचय्य प्रकृतनियमविधिप्रकारं दृष्टान्तेनाऽऽह—अवघातस्येति। नखविदलनादिनाऽपि तण्डुलनिष्पादनसंभवादवघातस्य पाक्षिकी प्राप्तिस्तत्र चावहन्यादिति नियमः। ये यत्र क्रियमाणाः प्रयोजनवन्तस्ते तत्र

**अनात्मोपासनप्राप्तौ ध्यायेदात्मानमित्यतः । अनात्मोपास्तेः सामर्थ्यान्निवृत्तिर्न तु शब्दतः ।।२६।।**

आत्मोपास्तेः नित्यप्राप्तिः अतो न नियमः

**यद्यात्मोपासनाऽप्राप्तिः क्वचित्संभाव्यतेऽञ्जसा । अवघातादिवत्कामं नियमोऽस्तु तथा सति ।।२७।।**

**प्रत्यगर्थमनालिङ्ग्य न पराग्वर्ति किंचन । विज्ञानं जायते यस्मादात्मोपास्तिः सदा ततः ।।२८।।**

**प्रागप्यनात्मसंबन्धाज्जन्मनैवाऽऽत्मकर्मकम् । विज्ञानं निखिलं यस्मान्नित्यप्राप्तिरतो भवेत् ।।२९।।**

**उपास्यार्थातिरेकेण न चोपासनकृद्धिरुक् । संभाव्यो नियमविधिरतो नाऽऽत्मन्यभेदतः ।।३०।।**

आत्मोपास्तौ न कोऽपि विधिरिति भाष्यभावः

**उक्तं च न्यायमापेक्ष्य नियमोऽत्यन्तदुर्लभः । विधेर्दौर्बल्यसिद्ध्यर्थमतो भाष्यकृदुक्तवान् ।।३१।।**

**मुक्तेष्वादिवदित्यादि यच्च किंचित्समीरितम् । तस्याप्यसंभवः स्पष्ट उपरिष्टात्प्रवक्ष्यते ।।३२।।**

कर्तव्याः अवघातादयश्चाऽऽज्यादावनुपकारकत्वान्न तत्र करणीयाः अतस्तेषामवघातादीनां फलद्वारा व्रीह्यादिष्वेव संबन्धो नियतः । उक्तं हि—तेषामर्थेन संबन्ध इति[1] । तथेहापि व्यवस्थेत्यर्थः । भूयःसु प्रदेशेषु नियमविधेरभ्युपगतत्वं द्योतयितुं हिशब्दः ।।९२५।।

नियमविधिस्वरूपमभिनयति—अनात्मेति । तत्फलमाह—अत इति । अस्मान्नियमसामर्थ्यादनात्मोपास्तेर्निवृत्तिरिति यावत् । अथाऽऽत्मोपास्तिविधिरनात्मोपास्तिनिवृत्तिश्चेत्यर्थद्वयमेकस्यैव शब्दस्य कथं युक्तं तत्राऽऽह—न त्विति । आत्मोपास्तिः श्रुत्या कार्यतयोच्यतेऽर्थाच्चानात्मोपास्तिर्व्यावर्तते । न च सा शाब्दी "यश्चार्थादर्थो न स चोदनार्थ" इति न्यायादित्यर्थः । दर्शितन्यायपरामर्शार्थस्तुशब्दः ।।९२६।।

नियमविधेरुपेत्यवादत्वं द्योतयितुमात्मोपास्तेर्नित्यप्राप्तिदर्शनेनाप्राप्तिं दूषयति—यदीति । क्वचिद्देशादाविति यावत् । अञ्जसा प्रमाणनिबन्धनेनेत्यर्थः ।।९२७।।

तथा सति युक्तो नियमविधिस्तत्प्रापकाप्राप्तांशसंभवादात्मोपास्तेरस्त्येव क्वचिदप्राप्तिर्न हि सा सदाऽनुवर्तते तत्राऽऽह—प्रत्यगिति ।।९२८।।

तस्या नित्यप्राप्तत्वे हेत्वन्तरमाह—प्रागपीति । अहंधीपूर्वैव सर्वाऽनात्मधीरित्यात्मधियो नित्यप्राप्ततेत्यर्थः । प्रागुक्तमपीदं प्रसङ्गादिह स्मारितमिति द्रष्टव्यम् ।।९२९।।

उपास्योपासकभेदाभावाच्च नाऽऽत्मोपास्तौ नियमविधिरित्याह—उपास्येति । आत्मनि ज्ञाते भेदमात्रस्यासंभवादित्युपास्यादिभेदाभावे हेतुमाह—आत्मनीति । एतेन विध्यन्तरायोगोऽपि न्यायसाम्याद्द्रष्टव्यः ।।९३०।।

न केवलमुपास्योपासकभेदाभावान्नियमविध्यसिद्धिः किंतु "अपि प्रत्यक्तमो नित्यमि"त्याद्युक्तन्यायाच्चेत्याह—उक्तं चेति । एवं नियमविध्यसंभवाद्भाष्यकृतस्तदुक्तिरुपेत्यवादमात्रमित्युपसंहरति—विधेरिति । भाष्यकारो हि नियमविधिमपूर्वविधेर्दौर्बल्यसिद्ध्यर्थमुक्तवान्नापूर्वविधिरित्युपक्रमान्नियमविधेरप्युक्तन्यायेनायोगादित्यर्थः ।।९३१।।

ननु यथा मुक्तेषुः पाषाणादिप्रतिबन्धवैधुर्ये यावद्वेगक्षयं कार्यमारभते तथा प्रवृत्तफलं कर्मावश्यं रागाद्याक्षिपति तस्य ज्ञानेनाविरोधादन्यथा सद्योमुक्तौ जीवन्मुक्तिशास्त्रविरोधादतो विदुषोऽप्यात्मविस्मरणसंभवान्नियमविधिरिति भाष्यकृता नियमविधिः समर्थितः स कथमुपेत्यवादः स्यात्तत्राऽऽह—मुक्तेति । यथा विदुषो रागादेरसंभवस्तथोत्तरत्र ब्रह्मकण्डिकाया "मागमाद्वेद चेद्ब्रह्म ब्रह्मैव भवतीति ही"त्यादिना वक्ष्यते । न च बाधितानुवृत्तिमात्रं विधिप्रयोजकं तस्य कर्तृत्वाद्यभिनिवेशपूर्वकत्वादतो नियमविध्युक्तिरङ्गीकारवादमात्रमित्याह—तस्येति ।।९३२।।

---

१. तेषामर्थेन सम्बन्धः—इति जैमिनिसूत्रं दर्शपूर्णमासप्रकरणे निर्वपणप्रोक्षणावहननादयः, औषधधर्माः तथा उत्पवनविलापनग्रहणासादनादयः आज्यधर्माः, तथा शाखाहरणं गवां प्रस्थापनं इत्यादयः सान्नाय्यधर्माः; ते च धर्माः सर्वे सर्वत्र औषधे आज्ये सान्नाय्ये च न कर्तव्याः अपि तु ये यत्र क्रियमाणा अर्थवन्तः ते तत्रैव कर्तव्याः नान्यत्रेति सिद्धान्तसूत्रार्थः ।

आत्मेत्येवोपासीतेत्यत्र अनात्मोपास्तिवर्णनमिति पूर्वपक्षः

अनात्मोपासनमिदमितिशब्दप्रयोगतः । प्रियमित्यादौ दृष्टत्वादप्रियोपासनं गुणात् ।।३३।।
आत्मैकगुणवत्त्वेन न त्वत्राऽऽत्मैव चिन्त्यते । आत्मोपास्यत्ववाक्याच्च वैलक्षण्यं श्रुतेर्भवेत् ।।३४।।
आत्मानमितिकर्मोक्तेर्वैलक्षण्यमतिस्फुटम् । आत्मोपास्तिनिषेधाच्च[1] न पश्यन्तीति वाक्यतः ।।३५।।

अत्र सिद्धान्तः

नाऽऽत्मोपास्यत्वावगमाद्वाक्यशेषे भवेदिदम् । पदनं यान्तरतरं प्रियमित्यादिशेषतः ।।३६।।
आत्मानं प्रियमित्येतद्वाक्यशेषेऽवगम्यते । तस्मादात्मैवोपास्यः स्यान्नानात्मोपास्य इष्यते ।।३७।।
अकृत्स्नत्वान्निषेधश्च न त्वात्मोपासनस्य सः । शब्दज्ञानातिवर्तित्वख्यापनायेतिशब्दनम् ।।३८।।

शब्दस्य संसृष्टपरोक्षबोधित्वानियमादसंसृष्टापरोक्षधियः शाब्दत्वोपपत्तेः शाब्दज्ञानादेव पुमर्थसिद्धेस्तस्य तदावृत्तेर्वा तृतीयज्ञानस्य वा विधेयत्वाभावाद्वेदान्ताः शुद्धे सिद्धे मानमित्युक्तम् । इदानीमात्मेत्येवोपासीतेत्यत्रेति-शब्दस्योक्तोऽर्थो विवक्षितो भाष्यकृताऽपीति वक्तुं चोदयति—अनात्मेति । "प्रियमित्येनदुपासिते"त्यादौ प्रियादिगुणादप्रियादिकस्य प्रागादेरुपास्तिरित्यस्यार्थस्य दृष्टत्वादिहाप्यात्मगुणस्यानात्मनोऽव्याकृतत्वेन प्रकृतस्य प्रधानस्योपास्तिर्विवक्षिताऽऽत्मशब्दादूर्ध्वमितिशब्दप्रयोगादात्मशब्दार्थतयोपास्यत्वेनाविवक्षितत्वादित्यर्थः । आदिशब्देन प्रज्ञेत्येनदुपासीत सत्यमित्येनदुपासीतानन्तमित्येनदुपासीताऽऽनन्दमित्येनदुपासीत स्थितिरित्येनदुपासीतेत्येतानि वाक्यानि गृह्यन्ते । तेषु हि वाक्चक्षुःश्रोत्रमनोहृदयानामप्रज्ञासत्याद्यात्मनां तत्तत्प्रज्ञादिगुणविशिष्टानामुपासनमिष्टं तथेहापि भविष्यति ।।९३३।।

आत्मगुणकमात्मवस्त्वेवोपास्यं किं न स्यादित्यत आह—आत्मेति । प्रकृतवाक्यं सप्तम्या परामृश्यते । एकत्र गुणगुणिभावासंभवादात्मगुणकमनात्मवस्त्वेवोपास्यमित्यर्थः । अनात्मोपासनमेवात्र विधित्सितमित्यत्र हेत्वन्तरमाह—आत्मेति । भवेदनात्मोपासनमेवात्र विवक्षितमिति शेषः ।।९३४।।

वैलक्षण्यं स्फुटयति—आत्मानमिति । द्वितीयाश्रवणाद्वाक्यशेषे कर्मत्वेनाऽऽत्मोच्यते । इह तु द्वितीयाश्रुत्यभावादात्मशब्दस्य चेतिपरत्वादनयोः स्पष्टमेव वैलक्षण्यम् । तथा चानात्मैवाऽऽत्मगुणकः सन्नुपास्य इत्यर्थः । इतश्चानात्मोपास्तिरेवेयमित्याह—आत्मोपास्तीति । तं न पश्यन्तीतिवाक्यादात्मोपास्तेर्निषेधात्पूर्वापराविरोधेनानात्मोपास्तिरेवात्राभिप्रेतेत्यर्थः ।।९३५।।

उपक्रमोपसंहारालोचनयाऽनात्मोपास्तिरत्र विवक्षितेति पूर्वपक्षं प्रत्याह—नाऽऽत्मेति । नेदमनात्मोपासनं भवेदात्मोपास्यत्वस्य वाक्यशेषेऽवगमादिति संबन्धः । कथं वाक्यशेषादात्मोपास्यत्वसिद्धिस्तत्राऽऽह—पदनीयेति । "तदेतत्पदनीयमस्य सर्वस्यान्तरतरं यदयमात्मा" । "आत्मानमेव प्रियमुपासीत" । "आत्मानमेवावेदि"ति च वाक्यशेषादात्मोपास्यत्वसिद्धिरित्यर्थः ।।९३६।।

"स य आत्मानं प्रियमुपास्ते न हास्ये"ति फलवाक्ये चाऽऽत्मोपास्यत्वं गम्यत इत्याह—आत्मानमिति । वाक्यशेषादात्मोपास्यत्वावगतौ फलितमाह—तस्मादिति । आर्थिकीमन्यनिवृत्तिमाश्रित्योक्तं नानात्मेति ।।९३७।।

यत्त्वात्मोपास्तिनिषेधान्न तस्योपास्यतेति तत्राऽऽह—अकृत्स्नत्वादिति । प्राणनादिविशिष्टस्य दृष्टिनिषेधस्तस्य परिच्छिन्नत्वेन नाशित्वादात्मोपास्तेर्नासौ वाक्यशेषविरोधादित्यर्थः । आत्मोपास्तिनिषेधे प्रस्तुतवाक्यविरोधसमुच्चयार्थश्चकारः । यत्त्वितिशब्दप्रयोगादात्मशब्दार्थस्योपास्यगुणत्वान्नास्य वाक्यस्याऽऽत्मोपास्तिपरतेति तत्राऽऽह—शब्देति ।।९३८।।

१. आत्मोपास्तिनिषेधात्—"नेदं यदिदमुपासते" इत्यनेनेत्यर्थः ।

२. आत्मेत्युपासीत । कं ? अनात्मानमित्यध्याहार्यं यथा प्रियमित्युपासीतेति विधौ वस्तुतः अप्रियं प्राणं प्रियमित्युपासीत इत्यर्थः । षष्ठे षडाचार्यब्राह्मणे द्वितीयखण्डे स्थितमिदम् ।

३. प्राणनादिविशिष्टस्योपास्तिनिषेधः न तु पूर्णस्य । इतिशब्दश्चात्मनः शब्दज्ञानागोचरत्वसूचनार्थः ।

यतो वाचो निवर्तन्ते नेति नेत्यादिकं तथा । एवं सत्यर्थवत्सर्वमन्यथा तदनर्थकम् ।।३९।।
अनात्मार्थापनुत्त्यर्थमात्मानमिति शब्द्यते । नातो वाक्यान्तरं तत्स्याद्यथोक्तार्थानुवादतः ।।४०।।

अत्र ह्येते इति हेतुविवरणम्

आत्मेत्येवोपासीतेति हेतुरत्रोपदिश्यते । अकार्त्स्न्यदोषहानाय प्रतीचः कृत्स्नतोच्यते ।।४१।।
आत्मनोऽनवशेषेण संबन्धोऽनात्मवस्तुना । रज्जुसर्पादिवन्नातः प्रतीचः शिष्यते पराङ् ।।४२।।
सर्वमज्ञातमेव स्याद्यस्मिन्नज्ञात आत्मनि । ज्ञाते ज्ञातं च कृत्स्नोऽसौ तावत्त्वात्सर्ववस्तुनः ।।४३।।
युक्त्या निरूप्यमाणस्य ह्यात्मा तत्त्वमनात्मनः । प्रत्याख्यातः स चेत्तेन क्वानात्मा[1] सिध्यतामयम् ।।४४।।
अनात्मतत्त्वमन्वेति ह्यात्माऽसङ्गोऽगुणोऽद्वयः । स्वतः सिद्धौ न चेत्सिध्येत्किमन्यद्[2]भेषजं ततः ।।४५।।
ज्ञातायां स्रजि तन्मोहकल्पितानां यथैकता । प्रतीच्येवं तदज्ञानक्लृप्तानामेकतेष्यते ।।४६।।

तस्योक्तार्थत्वे वाक्यान्तरानुगुण्यमाह—यत इति। यदि पुनरितिशब्दो न यथोक्तार्थस्तदा तस्य वैयर्थ्यादात्मानमुपासीतेत्येव स्यात्तत्रश्चाऽऽत्मनः शब्दधीगम्यत्वसंभवादुक्तवाक्यवैयर्थ्यमित्याह—अन्यथेति ।।९३९।।

यच्चाऽऽत्मोपास्यत्ववाक्याच्चेत्यादि तद्दूषयति—अनात्मेति। आत्मानमेवेत्यादिवाक्यस्यानात्मोपास्ति-निवृत्त्यर्थतया पूर्ववाक्येनैकवाक्यत्वमेवेत्यर्थः। अस्माद्वाक्यात्तस्यावाक्यान्तरत्वे हेतुमाह—यथोक्तेति। एतद्वाक्यार्थानुवादित्वादित्यर्थः ।।९४०।।

आत्मेत्येवोपासीतेत्यत्र शब्दप्रत्ययागम्यमात्मानमनुसंदध्यादित्येषोऽर्थः समर्थितस्तत्र हेत्वपेक्षायामत्र हीत्यादिना हेतुरुच्यत इति हेतुवाक्यमवतार्य व्याख्यातमपि प्रपञ्चयितुं पुनरवतारयति—आत्मेत्येवेति। तद्व्याकरोति—अकार्त्स्न्येति। परिच्छिन्नत्वं हि दोषो यदल्पं तन्मर्त्यमित्यल्पस्य मर्त्यत्वश्रवणात्तन्निरासार्थ-मात्मनोऽऽद्वयत्वमुच्यते हेतुवाक्येनेत्यर्थः ।।९४१।।

कथमद्वयत्वं तत्रोपपत्तिमाह—आत्मन इति। रज्जुसर्पयोरिवाऽऽत्मानात्मनोस्तादात्म्याद्रज्ज्वतिरिक्त-सर्पासत्त्ववत्प्रत्यगितरानात्माभावात्तदद्वयत्वं रज्जुर्हि सर्पतादात्म्यमनुभवन्ती न तस्य पृथगवशेषं मृष्यते तथैवाऽऽत्मनोऽनात्मना संबन्धो निरवशेषेणेष्यते। तथा चास्मात्प्रतीचः सकाशादवशिष्टस्य पराचोऽभावात्त-दद्वयतेत्यर्थः ।।९४२।।

किंच "येनाश्रुतमि"त्यादिवाक्यप्रामाण्यादात्मनोऽद्वयत्वसिद्धिरित्याह—सर्वमिति। तत्र युक्तिमाह—तावत्त्वादिति। आत्मनः सर्वोपादानत्वात्तावन्मात्रत्वं सर्वस्येत्यात्मज्ञानेन सर्वज्ञानसिद्धिरित्यर्थः ।।९४३।।

किं चाऽऽद्यन्तवत्त्वदृश्यत्वादियुक्त्या विविच्यमानस्यानात्मनः सर्पादि रज्जुवदात्मा सर्वस्य तत्त्वं सिद्धमतो युक्तं तस्याद्वयत्वमित्याह—युक्त्येति। आरोप्यस्याधिष्ठानातिरिक्तस्वरूपाभावो हिशब्देन हेतूकृतः। विपक्षे दोषमाह—प्रत्याख्यात इति। अनात्मनश्चेन्नाऽऽत्मा तत्त्वं तदा निःस्वरूपः सन्नासौ क्वचित्सिध्येदित्यर्थः ।।९४४।।

नन्वात्मा चेदनात्मनस्तत्त्वं तदाऽनात्मसंबन्धात्तस्यासङ्गत्वादिहानिरत आह—अनात्मेति। आरोपित-कृतगुणदोषाभ्यामधिष्ठानस्य वस्तुतो न स्पर्शोऽस्तीति प्रसिद्धमिति भावः। आत्मनोऽसङ्गत्वादनात्मसाधकत्वा-योगात्तद्वदनात्माऽपि स्वतः सेत्स्यतीत्याशङ्क्याऽऽह—स्वत इति। चेच्छब्दोऽवधारणे। अनात्मनः स्वतःसिद्धत्वे तस्याऽऽत्ममात्रत्वप्रसङ्गादनात्मा नाम न सिध्येदेवेत्यर्थः। आत्मनोऽसङ्गत्वादनात्मनश्च जाड्यादन्यदेव तत्साधकमित्याशङ्क्याऽऽह—किमन्यदिति। आत्मानात्मभ्यामर्थान्तराभावान्न साधकान्तरमित्यर्थः ।।९४५।।

साधकान्तराभावादनुभवात्मनि प्रतीच्यध्यस्तं समस्तं स्फुरतु तथाऽपि प्रस्तुते किमायातमित्या-शङ्क्याऽऽत्मज्ञानात्तन्मात्रता सर्वस्य फलतीति सदृष्टान्तमाह—ज्ञातायामिति। यथा स्रजि स्रगेषेत्यवगतायां

१. क्वानात्मासिद्ध्यताम्—अनात्मनः स्वप्रकाशत्वाभावात् न स्वतःसिद्धिः परतः सिद्धौ च मिथ्यात्वम्।
२. किमन्यत्—आत्मानात्मभिन्नं नास्त्येव येन तादृशं साधकं भवेत्। भेषजं = साधकम्।

अत्रहीत्यस्य भर्तृप्रपञ्चविवरणम्

आत्मशब्दाभिधेयेऽर्थे प्रत्यक्सामान्यरूपके । अन्तर्भवन्ति निखिला विशेषा इति केचन ॥४७॥
सामान्येन समस्तं तद्विशेषैर्व्यस्तमेव च । कृत्स्नमेवं परं ब्रह्म सदोपासीत यत्नतः ॥४८॥
अवस्थावदवस्थाभिः क्वचित्कात्स्न्यं प्रचक्षते । कार्यकारणरूपेण क्वचिद्व्याचक्षते तथा ॥४९॥
भागभागिविभागेन नाभिनेम्यरवत्तथा । व्याचक्षते महात्मानः संप्रदायबलात्किल ॥५०॥

भर्तृप्रपञ्चमतनिरसनम्

अक्षराणामतात्पर्याद्युक्तितश्चाप्यसंभवात् । प्रतिपत्तुं वयं तादृक्शक्नुमो नाञ्जसा परम् ॥५१॥
अज्ञातं जगदज्ञाते ज्ञाते ज्ञातं च यत्र तत् । तद्ब्रह्मैवंविधं कृत्स्नं न गोवृक्षादिवन्मतम् ॥५२॥
सामान्यानि विशेषाश्च व्यावर्तन्ते परस्परम् । प्राणादिवदतः कात्स्न्यं न तेषां युक्तिमद्भवेत् ॥५३॥

तन्मोहजनितभुजंगादीनां तदेकता न पृथगवशेषस्तथा प्रतीचि ज्ञाते तदज्ञानोत्थानां प्राणादीनां तन्मात्रत्वाङ्गीकारात्तज्ज्ञाने ज्ञानसिद्धिरित्यर्थः। यद्वा श्रुतियुक्तिभ्यामद्वयत्वमात्मनोऽभिधायात्र हीत्यादिवाक्यार्थं सदृष्टान्तमुपसंहरति—ज्ञातायामिति ॥९४६॥

हेतुवाक्यस्य स्वमतेनार्थमुक्त्वा भर्तृप्रपञ्चमतं प्रागुत्थाप्य प्रत्युक्तमपि प्रतिवचनं प्रपञ्चयितुं पुनरुत्थापयति—आत्मेति । यथोक्त एतस्मिन्नात्मशब्दाभिधेयेऽनानात्वे प्राणनादिव्यापाराः सर्व एकं भवन्तीति ॥९४७॥

कथं तर्हि ब्रह्मणः सामान्यविशेषाभावे कृत्स्नता तदभावे वा कथं प्रागुक्तोऽपवादो नावतरति तत्राऽऽह—सामान्येनेति। यथाऽऽहुर्या तस्मिन्नन्तर्णीते विशेषणे बुद्धिः साऽन्तर्णीतविशेषणैव कृत्स्नग्राहिणी भवतीति । अत्र सामान्यं प्रत्यक्त्वं प्राणो द्रष्टेत्यादयो विशेषाः। ब्रह्मणो दर्शितरीत्या कृत्स्नत्वे पूर्वोक्तापवादराहित्यं फलितमाह—कृत्स्नमिति । सदेति दीर्घकालत्वोक्तिः । यत्नत इत्यवशिष्टविशेषणयोरुदीरणम् ॥९४८॥

सामान्यविशेषात्मना कृत्स्नत्वं ब्रह्मणो दर्शयित्वा ब्रह्मावस्थावदवस्था जगदिति विधान्तरेण कात्स्न्यं परैरुक्तमित्याह—अवस्थावदिति । ब्रह्म कारणं कार्यं जगद्ब्रह्मांशि जगदंश इत्येवंप्रकारेणापि कात्स्न्यमुक्तमित्याह—कार्येति। क्वचिदित्युभयत्र तदीयग्रन्थदेशोक्तिः। जगद्ब्रह्मणोरंशांशित्वे दृष्टान्तमाह—नाभीति। यथा रथचक्रस्यावयविनो नाभिर्नेमिरराश्चेत्यवयवास्तथा जगद्ब्रह्मणोर्भागभागितेत्यर्थः। मिथोविरुद्धत्वाद्भर्तृप्रपञ्चप्रस्थानमप्रामाणिकमिति मन्वानस्तन्मतं सोपहासमुपसंहरति—व्याचक्षत इति। तदीये व्याख्याने विदुषामसंमतिं द्योतयितुं किलेत्युक्तम् ॥९४९–९५०॥

श्रुत्यक्षराणां समस्तव्यस्तात्मके वस्तुन्यानुकूल्याभावादुक्तवक्ष्यमाणयुक्तितश्च तस्यायोगान्न वस्तुतस्तादृङ्नानारसमुपाधिमन्तरेण परं ब्रह्म प्रतिपत्तुं प्रामाणिकाः प्रभवन्तीति दूषयति—अक्षराणामिति ॥९५१॥

समस्तव्यस्तत्वाभावे ब्रह्मणः कथं कृत्स्नता तत्राह—अज्ञातमिति। यस्मिन्नज्ञाते सर्वमज्ञातं यत्र च ज्ञाते तदेव ज्ञातं तद्ब्रह्माद्वितीयमेवंविधमेकरसमनवच्छिन्नं भवतीत्यर्थः। यत्तु गवादिदृष्टान्तैः सामान्यविशेषादिभावेन कृत्स्नं ब्रह्मेति तत्राऽऽह—नेति। यथा गोः सामान्यविशेषभावेन वृक्षस्यावयवावयविभावेनाब्धेरवस्थातद्वद्भावेन मृदः कार्यकारणभावेन कात्स्न्यं नैवं ब्रह्म समस्तव्यस्तभावेन कृत्स्नं शास्त्रगम्यं अतो निर्विशेषतया कृत्स्नं ब्रह्म न विधान्तरेणेत्यर्थः ॥९५२॥

कथं ब्रह्म सामान्यविशेषभावेन कृत्स्नं न भवति तत्राऽऽह—सामान्यानीति। गोत्वाश्वत्वप्रत्यक्त्वादीनि सामान्यानि खण्डमुण्डशोणदेवदत्तादयो विशेषाः। प्राणन्नित्यादिनोक्तप्राणनादिविशिष्टवदिति मिथोव्यावृत्तौ दृष्टान्तमाह—प्राणादिवदिति। मिथोव्यावृत्तिफलमाह—अत इति। न तेषां कात्स्न्यमेकब्रह्मतयेति शेषः। सामान्येन समस्तं तदित्यादि निरस्तम्। यच्चावस्थावदवस्थात्वेन कार्यकारणत्वेनांशांशित्वेन च कात्स्न्यमुक्तं तत्राप्यवस्थादिष्वन्योन्यव्यावृत्तेरेषामेकब्रह्मताऽयोगादकात्स्न्यं तुल्यमिति भावः ॥९५३॥

तदानन्त्याच्च तद्बोधो नेश्वरेणापि कात्स्र्न्यतः । क्रमशोऽक्रमशो वाऽपि शक्यः कर्तुं कदाचन ।।५४।।
तादात्म्यभावनायां तु पुंसां संभावनाऽपि न । शक्या सुनिपुणेनापि कर्तुं तद्व्याप्तिः कुतः ।।५५।।
गङ्गावतारवन्नापि बहूपासितृकर्मता । भावनोपचयाभावादेकैकस्मिंस्तथा सति ।।५६।।
देवो भूत्वैति विबुधान्भावनोपचयान्नरः । इति सर्वपदार्थेषु पुंसोऽशक्यं विधित्सितम् ।।५७।।
यज्ज्ञातमपि कात्स्र्न्येन तत्तदन्यच्च नाञ्जसा । ज्ञानेन ज्ञायते तादृक्कृत्स्नं कथमिहोच्यते ।।५८।।
पराग्वस्तु विरोधित्वात्प्रत्यग्बुद्ध्या न गम्यते । पराञ्चीत्यपि हेतूक्तेर्नातः पिण्डादिकृत्स्नधीः ।।५९।।
तथाऽऽत्मनि च विज्ञाते सर्वं ज्ञातं भवेदिति । येनाश्रुतं श्रुतमिति कस्मिन्न्विति तथाऽपरम् ।।६०।।
आत्मसाम्यग्रहेऽप्यात्मभेदमात्रगृहीतितः । नैवानात्मार्थसामान्यविशेषाणां ग्रहो भवेत् ।।६१।।
समस्तव्यस्तताद्दृष्टावेवमादि सुदुर्घटम् । अपूर्वानपरानन्तरावाह्योक्तिश्च दुःस्थिता ।।६२।।

किंच ब्रह्मणो नानात्वं दृष्टयर्थमुपास्त्यर्थं वा? नाऽऽद्य इत्याह—तदानन्त्यादिति । सामान्यादीनामसंख्यत्वात्पुरुषायुषस्य च परिमितत्वान्न सामान्याद्यात्मकब्रह्मबोधः समर्थेनापि सर्वात्मना क्रमाक्रमाभ्यां कदाचिदपि शक्यः कर्तुमित्यर्थः ।।९५४।।

द्वितीयं दूषयति—तादात्म्येति । अधिकृतानां मध्ये केनचिदतिसूक्ष्मदृशाऽपि तादृग्ब्रह्मण्यात्मतत्त्वध्याने संभावनाऽपि कर्तुं न शक्या धीपूर्वकत्वाद्ध्यानस्यासंख्यसामान्यादिधियश्चायोगादित्यर्थः । ध्यानसंभावनाभावे तदनुष्ठानं दूरनिरस्तमित्यपिना सूचितं कैमुतिकन्यायमाह—तद्व्याप्तिरिति ।।९५५।।

ननु नानारसब्रह्मोपास्तेरेकेन पुंसा कर्तुमशक्यत्वेऽपि बहुभिः सा करिष्यते सगरपुत्राणां षष्टिसहस्रसंख्याकानां निमित्तविशेषमासाद्य वासुदेवनाम्ना भगवता प्रतप्तानां भस्मीभूतानां गाङ्गेन पाथसा पावितानां परलोकसिद्धये महता प्रयत्नेन तपोबलमवलम्ब्य भगीरथाद्यनेककर्तृकत्वेन पृथिव्यां गङ्गावतारवत्तत्राऽऽह—गङ्गेति । ब्रह्मोपास्तेर्बहुकर्तृकत्वे सत्येकैकस्मिन्पुंसि भावनानुपचयान्न सर्वात्मनोपास्यसाक्षात्कारः कस्यचिदपि स्यादित्यर्थः ।।९५६।।

मा भूत्तत्साक्षात्कारो; नैवं श्रुतिस्मृतिविरोधादित्याह—देव इति । उपास्तेर्बहुकर्तृकत्वायोगादेककर्तृकत्वे वाच्ये पूर्वोक्तं निगमयति—इति सर्वेति । इतिना ध्यानोक्तिः । एकस्यैव पुंसः सर्वेषु सामान्याद्यर्थेषु तदात्मके च ब्रह्मणि कर्तुमशक्यमेव ध्यानं त्वया विधातुमिष्टमित्यर्थ ।।९५७।।

किंच यस्मिन्दृष्टे तत्स्वरूपमन्यच्च सर्वात्मना न दृश्यते तस्य कात्स्र्न्यं विरुद्धमित्याह—यज्ज्ञातमिति । यज्ज्ञातं तदपि स्वरूपेण ततोऽन्यच्च तेन ज्ञानेनाञ्जसा साकल्येन न ज्ञायते तादृङ्न कृत्स्नमित्यन्वयः । इहेति शास्त्रोक्तिः ।।९५८।।

किंच समस्तव्यस्तवादिना प्रत्यग्बुद्ध्या पराग्वस्तु गृह्यते पराग्बुद्ध्या च प्रत्यग्वस्त्विति वाच्यं तत्र न तावत्पराञ्चं प्रत्यग्धीर्गोचरयतीत्याह—पराागिति । पराक्प्रतीचोर्मिथो विरोधादिति हेत्वर्थः । नापि प्रत्यञ्चं पराग्धीर्गृह्णातीत्याह—पराञ्चीति । पराञ्चि खानीत्यनात्मबुद्धेरात्माविषयत्वे हेतूक्तेरनात्मबुद्ध्या प्रत्यगपि न गम्यत इत्यर्थः । उक्तन्यायेनैकस्मिञ्ज्ञाते सामान्यादिसर्वज्ञानं परस्य नेति न तस्य पूर्णवस्तुसिद्धिरिति फलितमाह—नात इति ।।९५९।।

किंच यथैकरस्यमात्मनस्तथा वाक्यानि वेदान्तेषु श्रूयन्ते "सर्वमिदं विज्ञातं" "येनाश्रुतमि"त्यादीनि तानि चाऽऽत्मनो नानारसत्वे विरुध्येरन्नित्याह—तथेति ।।९६०।।

ननु सामान्ये गृहीते तदन्तर्भूततया सर्वे विशेषा गृहीता भवन्ति तथा चैकविज्ञानेन सर्वविज्ञानश्रुतयः परस्यापि न विरुध्यन्ते तत्राऽऽह—आत्मेति । अनात्मसामान्यग्रहेऽपि तद्विशेषमात्रग्रहादात्मसामान्यविशेषा न गृह्येरन्निति द्रष्टव्यम् ।।९६१।।

किंच सामान्यादेर्विशेषादेश्चात्यन्तभेदे तद्भावासंभवोऽत्यन्ताभेदेऽप्यन्यतरपरिशेषात्तद्भावानुपपत्तिस्तुल्या भेदाभेदौ च विरुद्धावविरोधे सर्वत्र विरोधोच्छित्तिरिति मत्वाहऽऽह—समस्तेति । एवंशब्देन भेदाभेदादिविकल्पोक्तं दोषं परामृशति । सामान्यादेर्विशेषादेश्च प्रातिस्विकाकारस्थितौ तद्विरोधान्नैकस्मिन्नन्तर्भावः तदस्थितौ स्वयम-

**पराक्प्रमेयमानानां प्रत्यगर्थधियोदितः । बाधोऽतोऽसाध्वभिहितं समस्तव्यस्ततां प्रति ॥६३॥**
**तथोपास्यस्य ब्रह्मत्वे श्रुत्या साक्षान्निराकृते । नेदं यदिदमित्येवं समस्तव्यस्तता कुतः ॥६४॥**
**स्थूलाद्यशेषापह्नुत्या चाक्षरे प्रत्यगात्मनि । कारणान्तस्य जगत ओतप्रोतोक्तितस्तथा ॥६५॥**
**न च प्रत्यग्धिया द्रष्टुं पराग्वस्त्विह शक्यते । समस्तव्यस्ततैवं च न मानादुपपद्यते ॥६६॥**
**मानभूमेश्च व्युत्थाप्य तथाऽविदितभूमितः । प्रत्यङ्मात्रस्य ब्रह्मोक्तेः समस्तव्यस्तता कुतः ॥६७॥**
**न समस्तं न च व्यस्तं नोभयं प्रत्यगात्मनि । प्रत्यक्प्रवणया बुद्ध्या वीक्ष्यतां यदि शक्यते ॥६८॥**

तदेतत्पदनीयमस्येति वाक्यतात्पर्यम्

**कस्मात्पुनरिदं त्यक्त्वा दृष्टा-दृष्टार्थसाधनम् । आत्मेत्येवोपासीतेति महान्यत्नः श्रुतेरिह ॥६९॥**
**पदनीयमिदं यस्मादनात्मभ्यः परं पदम् । सर्व[१]ज्ञेयपुमर्थानां प्रत्यग्ज्ञाने समाप्तितः ॥७०॥**

भावात्कस्यैकस्मिन्नन्तर्भावः । न च तं विनैकविज्ञानेन सर्वविज्ञानसिद्धिरित्यादिशब्दार्थः । निर्विशेषत्वबोधकश्रुतिविरोधाच्च समस्तव्यस्ततादृष्टिरश्लिष्टेत्याह—अपूर्वेति ॥९६२॥

इतश्च सा न युक्तेत्याह—परागिति । अनात्मनां तद्धियां च प्रत्यग्धिया बाधस्योक्तत्वाद्यदात्मनः समस्तव्यस्ततां प्रति त्वयोक्तमात्मशब्दाभिधेयेऽर्थ इत्यादि तदयुक्तं तस्यैकरसत्वेन तद्भावायोगादित्यर्थः ॥९६३॥

किंच ब्रह्मणः समस्तव्यस्तत्वे तस्य वेद्यत्वमुपास्यत्वं च स्यात्तत्र श्रुतिविरोधान्न समस्तव्यस्तदृष्टिर्युक्तेत्याह—तथेति । हेत्वन्तरसमुच्चयार्थस्तथाशब्दः । उपास्यस्येत्युपलक्षणं वेद्यस्येत्यपि द्रष्टव्यम् ॥९६४॥

इतश्च न समस्तव्यस्ततेत्याह—स्थूलादीति । अशेषविशेषनिरासेनाक्षरस्य निर्विशेषत्वनिर्देशान्न समस्तादिरूपं तदित्यर्थः । किंच तत्रैव सकारणस्य जगतोऽन्तर्भाववचनान्न समस्तादिरूपमक्षरमित्याह—अक्षर इति । तथा नास्य समस्तव्यस्ततेति यावत् ॥९६५॥

मानाभावाच्च न वस्तु समस्तव्यस्तमित्याह—न चेति । इहेति व्यवहारमार्गो गृह्यते । न तावदात्मानं पराञ्चःस्पृशन्ति विरोधान्मानान्तरस्य तद्विषयत्वेऽपि नाऽऽत्मनः समस्तव्यस्तता ततः सिध्यति तस्याऽऽत्मास्पर्शित्वान्न च तदात्मानमपि स्प्रक्ष्यति पराञ्चीति च हेतूक्तेरित्यत्र निरस्तत्वात् । तथा च नानारसता वस्तुनो न मानानुसारिणीति भावः ॥९६६॥

मानविरोधाच्च नाऽऽत्मनः समस्तव्यस्ततेत्याह—मानेति । अन्यदेव तद्विदितादित्यादिश्रुत्यर्थोऽत्रोक्तः । ब्रह्मोक्तेर्ब्रह्मत्वोक्तेरिति यावत् ॥९६७॥

विद्वदनुभवविरोधाच्च नाऽऽत्मनः समस्तव्यस्ततेत्याह—नेत्यादिना । प्रतीचि न समस्तं रूपं प्रत्यग्दृष्ट्येक्ष्यते न व्यस्तं न समस्तव्यस्तं यदि तत्र नानारूपं द्रष्टुं शक्येत तदा वीक्ष्यतां न च वीक्ष्यते तस्मादेकरस्यमेवेत्यर्थः ॥९६८॥

अत्र हीत्यादिवाक्येनाऽऽत्मनो मतान्तरनिरासद्वारा निर्विशेषत्वं बोधितमित्युक्तमिदानीं तदेतत्पदनीयमित्यादिवाक्यापोद्यं चोद्यमादत्ते—कस्मादिति । अग्निहोत्रादिकं कर्मेदमा परामृश्यते । इहेत्यात्मज्ञानोक्तिः । यत्नस्य महत्त्वं नाम प्रतिज्ञातात्मज्ञानस्य हेतुना साधनम् । शक्याशक्ययोः शक्योपादानस्य न्याय्यत्वादनायासलभ्यं कर्म यावज्जीवादिश्रुत्युक्तमत्याज्यमिति भावः ॥९६९॥

उत्तरमवतारयति—पदनीयमिति । यस्मादनात्मनामज्ञातत्वज्ञातत्वयोरभावात्तेभ्यः सकाशादिदमेवाऽऽत्मतत्त्वं परं पदमज्ञातं ज्ञातव्यं तस्मात्तज्ज्ञाने यत्नः श्रुतेरित्यर्थः । यत्तु यावज्जीवादिश्रुतिसिद्धं कर्म त्यक्त्वा यत्नाधिक्यमात्मज्ञाने न युक्तमिति तत्राऽऽह—सर्वेति । आयासलभ्येऽपि प्रत्यग्ज्ञाने यत्नातिरेकः श्रुतेरिति शेषः ॥९७०॥

---

१. सर्वज्ञेयेति—सर्वे ज्ञेयपुमर्थाः स्वर्गादयः । तेषां प्रत्यग्ज्ञाने प्रत्यगात्मनः ब्रह्माभेदेन ज्ञाने ज्ञानफले ब्रह्मानन्दरूपे समाप्तेः अन्तर्भावादित्यर्थः । यद्वा सर्वज्ञेयपुमर्था इति बहुव्रीहिणा तत्साधनकर्माणि उपासनानि चोच्यन्ते । तानि प्रत्यग्ज्ञाने सति समाप्तेः । योगारूढस्य शमः कारणं "नैव तस्य कृतेनार्थः" इत्यादिस्मृतेः "विदित्वा व्युत्थाय भिक्षाचर्यं चरन्ती"ति श्रुतेश्च । कर्मणः सर्वस्य ज्ञानसाधनत्वात् ज्ञाने सति समाप्ति । "सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते" इति भगवद्वचनात् ।

न हि प्रतीचि विज्ञाते कश्चिदप्यवशिष्यते । ज्ञेयोऽर्थः पुरुषार्थो वा पदनीयमतो भवेत् ॥७१॥
अनात्मार्थे तु विज्ञाते स्वाध्यस्ताहिप्रबोधवत् । न किंचित्स्यात्परिज्ञातं नानात्माऽतः प्रमित्सितः॥७२॥

अस्य सर्वस्येत्यस्य व्याख्या

अस्येति शैषिकी षष्ठी कृत्स्नसंगत्यपेक्षया । प्रतीचा व्यतिरेकी सन्ननात्मा ह्येति संगतिम् ॥७३॥
नर्ते विभागं संबंधः प्रतीचाऽनात्मनोऽस्ति हि । प्रत्यगर्थोऽविभागात्मा नातः संगच्छते द्वयम् ॥७४॥
अतो दुःस्थितसिद्ध्येतत्पराग्वस्त्वन्तरात्मनि । तावन्मात्रैकयाथात्म्याद्बुद्ध्यादे रज्जुसर्पवत् ॥७५॥
पराक्तयैष ज्ञातोऽपि प्रत्यग्याथात्म्यहेतुतः । अनात्माऽज्ञात एव स्याच्छुक्तिकारूप्यबोधवत् ॥७६॥

भाष्योक्तनिर्धारणार्थत्वविवरणम्

निर्धारणे वा षष्ठीयं ज्ञेयार्थस्यावधारणात् । प्रतीचो ह्यनधिगतान्नान्योऽनधिगतो यतः ॥७७॥

कथमात्मज्ञाने सति सर्वेषां ज्ञेयानां पुमर्थानां च समाप्तिस्तत्राऽऽह—न हीति । निरतिशयसुखात्मकात्मेतरवस्त्वभावादिति भावः । यस्मादात्मज्ञानस्यैष महिमा तस्मादग्निहोत्रादि त्यक्त्वा तदेवाऽऽदर्तव्यमित्याह—पदनीयमिति ॥९७१॥

सूत्रादावनात्मनि विश्वात्मके ज्ञाते सर्वज्ञेयपुमर्थसमाप्तिसंभवादात्मवत्तस्यापि प्रमित्सेत्याशङ्क्याऽऽह—अनात्मेति । यथा स्वशब्दिताधिष्ठानभूतरज्ज्वामध्यस्तस्याहेर्बोधान्न रज्जुरहिर्वा ज्ञायते तथा चिदात्मन्यध्यस्तसूत्राद्यनात्मार्थे ज्ञातेऽपि न तद्रूपमन्यद्वा ज्ञातं स्यादतो नानात्मा प्रमातुमिष्टस्तज्ज्ञानस्याफलवत्त्वादित्यर्थः ॥९७२॥

तदेतत्पदनीयमिति व्याख्यायास्य सर्वस्येति समानाधिकरणषष्ठ्योरर्थमाह—अस्येति । अनात्मराशेरात्मना संबन्धापेक्षया शेषे षष्ठी प्रवृत्ता । शेषशब्देन संबन्धसामान्यमुच्यते । प्रत्यक्षादिसंनिधापितस्य जगतः संबन्ध्यात्मतत्त्वं पदनीयमित्यर्थः । संबन्धे षष्ठी चेदात्मानात्मनोर्भेदः स्यात्संबन्धस्य तदपेक्षत्वादतोऽद्वैतहानिरित्याशङ्क्याऽऽह—प्रतीचेति । ततो विभक्तः सन्ननात्मा न तेन संहन्यते विभागस्यान्योन्याश्रयादिग्रस्तत्वेनाप्रामाणिकत्वादित्यर्थः ॥९७३॥

अस्तु तर्हि विना विभागं तयोः संगतिः संबन्धे षष्ठीस्वीकारान्नेत्याह—नर्ते इति । संबन्धस्य द्विनिष्ठत्वादेकत्रायोगादित्यर्थः । अयमेवार्थो हिशब्देन ध्वनितः । कथं तर्हि शैषिकी षष्ठीत्युक्तं तत्राऽऽह—प्रत्यगिति । अविभागात्मेति च्छेदः । प्रकृतमविभागमतःशब्देन परामृशति । यद्यप्यद्वयो वस्तुतो न द्वैतं स्पृशति तथाऽपि काल्पनिकं संबन्धमाश्रित्य षष्ठीत्यर्थः ॥९७४॥

ननु द्वैतं प्रतीयते तच्च न स्वतन्त्रमाद्यन्तवत्त्वात् । नचाऽऽत्मनोऽन्यदस्याधिकरणं न च कल्पितमधिष्ठानानपेक्षं तत्कथमात्मनो द्वैतासंगतिरित्याशङ्क्य प्रागुक्तं काल्पनिकं संबन्धं साधयति—अत इति । भेदेऽभेदे वाऽऽत्मानात्मनोः संबन्धस्य दुर्वचत्वादाध्यासिकतादात्म्यादेव द्वैतस्याऽऽत्मनि प्रतीतिर्वस्तुतस्तु तदात्मनि दुर्लभमिति तदसंगतेत्यर्थः । आत्मन्यनात्मनो दुःस्थितसिद्धत्वे तस्याऽऽत्मवदेव स्वातन्त्र्यं तुच्छत्वं वेत्याशङ्क्यानिर्वाच्यत्वान्मैवमित्याह—तावन्मात्रेति । आत्ममात्रमेवानपेक्षं स्वरूपं तत्राऽऽरोपितबुद्ध्यादेरनात्मवर्गस्य न स्वातन्त्र्यं नापि तुच्छत्वमपरोक्षतया प्रतीते रज्ज्वामारोपितसर्पस्य रज्जुरूपत्वेन स्वातन्त्र्याद्यभाववदित्यर्थः ॥९७५॥

अनिर्वाच्यत्वं प्रपञ्चस्यायुक्तं प्रत्यक्षादिसिद्धत्वादित्याशङ्क्याऽऽह—पराक्तयेति । ज्ञातस्याज्ञातत्वं विरुद्धमित्याशङ्क्याऽऽह—शुक्तिकेति । न हि शुक्त्यज्ञाने रूप्यज्ञानेन तद्धीस्तस्य शुक्तिरूपत्वात्तज्ज्ञाने च रूप्यतद्धियोर्ध्वस्तेर्न ज्ञेयं रूप्यं शिष्यते तथाऽऽत्माज्ञानेऽनात्मज्ञानेनाऽऽत्मा न गम्यते तस्याऽऽत्मेतरस्वरूपाभावादात्मज्ञाने चानात्मतद्धीध्वस्तेर्ज्ञेयानात्माभाव इत्यर्थः ॥९७६॥

अस्येति षष्ठी शेषे व्याख्याता संप्रति भाष्योक्तं षष्ठ्यर्थमाह—निर्धारणे वेति । किमिति सा तत्र स्वीकृता कर्मादावर्थान्तरे किं न स्यात्तत्राऽऽह—ज्ञेयेति । सर्वस्मिञ्जगति प्रत्यङ्मात्रमेव ज्ञेयं नान्यदित्यस्यार्थस्य निर्धारणात्तस्मिन्विषये युक्ता षष्ठीत्यर्थः । प्रतीचो ज्ञेयत्वं नान्यस्येत्यत्र हेतुमाह—प्रतीचो हीति । यत इति हिशब्दद्योतितो हेतुः स्फुटीकृतः । यद्वा प्रागस्यार्थस्य साधितत्वं हीत्युच्यते ॥९७७॥

ज्ञातोऽपि तद्वदेवास्मान्नाऽऽत्मनो विद्यते परः । प्रत्यगज्ञानहेतुत्वात्तदन्यस्येह वस्तुनः ॥७८॥
अनात्मनोऽस्य सर्वस्य व्याकृताव्याकृतात्मनः । यस्मादात्मा परं तत्त्वं पदनीयमतो भवेत् ॥७९॥
खण्डादौ गोत्ववद्यस्मात्प्रत्यग्दृष्ट्याऽन्तरात्मनि । समीक्ष्यते हिरुङ्नापि तेनासावात्मतत्त्वकः ॥८०॥
ज्ञेय आत्मैव नानात्मा पदनीयत्वकारणात् । नन्वन्यज्ञाने नान्यस्य क्वचिदस्त्यवबुद्धता ॥८१॥
सत्यमेवं भवेदेतद्यद्यात्माऽप्यन्य इष्यते । आत्माऽसावन्य इति च नानुन्मत्तस्य गीरियम् ॥८२॥

सर्वस्यात्ममात्रत्वात् अनेनेति इत्थंभावे तृतीया

अनेनेति तृतीयेयमित्थंभूतार्थलक्षणा । इदंधीशब्दगम्यस्य प्रत्यङ्मात्रसतत्त्वतः ॥८३॥
घटो नास्तीति कोऽन्वस्मान्मानादर्थः प्रतीयते । संवित्तावदशेषेभ्यः प्रमाणेभ्योऽवसीयते ॥८४॥
न संविदः पृथक्त्वेन नापि संविदि तद्धिया । अनात्मवस्तूत्प्रेक्ष्यं स्याद्यथा संविदियं स्वतः ॥८५॥

अन्यस्य ज्ञातत्ववदज्ञातत्वमपि स्यादित्याशङ्क्याऽऽह—ज्ञातोऽपीति । तद्वदित्यज्ञातवदित्यर्थः । अन्यो नास्तीति शेषः । किंचाऽऽत्मनोऽन्यस्याभावान्न तस्योभयमित्याह—अस्मादिति । अनुभवविरोधमाशङ्क्याज्ञानादर्थान्तरप्रतीतिमाह—प्रत्यगिति । इह प्रतीतिर्न विरुद्धेति शेषः ॥९७८॥

शैषिकीमेव षष्ठीमाश्रित्य यदयमात्मेति वाक्यमात्मत्वस्यैव पदनीयत्वे हेतुत्वेन व्याचष्टे—अनात्मन इति ॥९७९॥

कथमात्मा सर्वस्य तत्त्वं न ह्यन्यदन्यस्य तत्त्वमित्याशङ्क्य वैधर्म्यदृष्टान्तमाश्रित्याऽऽह—खण्डादाविति । यथा व्यक्तिषु सामान्यं पृथक्प्रथते व्यावृत्तानुवृत्तयोर्भेदान्न तथाऽऽत्मनि तद्धिया पृथगनात्मा गृह्यते तस्य विरुद्धयोरैक्यायोगात्तस्मादात्मनि स कल्पितस्तन्मात्रयाथात्म्यः स्वीकर्तव्य इत्यर्थः ॥९८०॥

यस्मादात्मा सर्वस्य तत्त्वं तज्ज्ञानेन च सर्वं ज्ञायते तस्मात्स एव ज्ञातव्यो ज्ञातत्वेन प्रतिपाद्यत्वादनात्मा तु न ज्ञेयस्तदभावादिति फलितमाह—ज्ञेय इति । आत्मा ज्ञेयो नानात्मेत्युक्तेस्तयोर्भेदादनेन हीतिवाक्यशेषानुपपत्तिरिति चोदयति—नन्विति । न हि क्वचिदपि देशादौ घटादिज्ञानेन पटादि ज्ञायमानं दृष्टमित्यर्थः ॥९८१॥

अन्यज्ञानेनान्यन्नावबुद्धमित्यङ्गीकरोति—सत्यमिति । आत्मानात्मभेदश्चेत्तदाऽऽत्मज्ञानेनानात्मा न ज्ञायेत न च तद्भेदो वास्तवस्तस्मात्तज्ज्ञानेनानात्मा शक्यो ज्ञातुमित्याह—यदीति । आत्मनोऽपि वस्तुत्वाद्घटादिवद्भिन्नत्वमाशङ्क्याऽऽत्मत्वायोगान्मैवमित्याह—आत्मेति ॥८९८२॥

अनेन हीत्यादिवाक्यस्य विरुद्धार्थत्वमुद्धृत्य तदक्षराणां स्पष्टार्थतां दृष्ट्वा करणादिविषयत्वं तृतीयाया व्यावर्त्येत्थंभावार्थत्वमाह—अनेनेतीति । इत्थंभूतमर्थं लक्षयति गमयतीति तथोच्यते । तत्र हेतुमाह—इदमिति ॥९८३॥

इदमर्थस्य सर्वस्यानुभवात्मकप्रत्यङ्मात्रस्वभावत्वादित्थंभावे युक्ता तृतीयेत्युक्तहेतुसिद्ध्यर्थमादौ विमृशति—घट इति । भावाभावप्रमाणात्कोऽर्थो भातीति परामृश्य फलत्वेन सर्वमानेभ्योऽनुभवस्य मानं सर्वाविगीतं दर्शयति—संविदिति ॥९८४॥

ननु फलत्वेन संविद्भानवद्विषयत्वेन जगदपि भाति निर्विषयमानाभावान्नेत्याह—नेत्यादिना । यथा संविन्न स्वतो भेदेनाभेदेन वा लभ्यत एकस्मिन्धर्मित्वप्रतियोगित्वायोगात्सामानाधिकरण्यायोगाच्च तथाऽनात्मा संविदो भेदाभेदाभ्यामसिध्यन्नात्मनि तद्रूपे कल्पितो न हि संविदो भेदेनानात्मवस्तूत्प्रेक्षितुं क्षमं जडत्वात्तत्संबन्धस्य चासकृन्निरासान्नापि संविद्यभिन्नं संविद्रूपया धियाऽनात्मधिया वा तत्सिध्यत्यन्यतरपरिशेषादतो जगदात्ममात्रमित्यर्थः ॥९८५॥

इतश्च संविदात्ममात्रं तदित्याह—उपलब्धोऽस्तीति । निर्विकल्पकानुभवातिरेकेणार्थाभावात्तद्रूपात्ममात्रत्वं सर्वस्य संबन्धे निष्टङ्कितमित्यर्थः ॥९८६॥

ऽपलब्धोऽस्ति सन्कुम्भो [1]लम्बोष्ठो देशकालवान् । पूर्वपूर्वातिरेकेण नोत्तरार्थोऽनुभूयते ॥८६॥
कर्त्रादिव्यापृतेः पूर्वं संवित्स्वात्मन्यवस्थितेः । अविभागादनाख्येया तदुद्भूत्या फलायते ॥८७॥
[2]अक्रियेऽपि यथा व्योम्नि ह्युत्पत्तिस्थितिहानिभिः । जगन्ननर्ति मय्येवं सदसद्विश्वरूपभृत् ॥८८॥
नञ्घटार्थावपह्नुत्य संवित्सद्रूपमात्रया । अवगत्यात्मना सत्त्वं सर्वदृक्स्यादविक्रियः ॥८९॥
दिग्विभागोऽविभागेऽपि व्योम्नि यद्वत्प्रकल्पितः । प्रध्वस्ताशेषभेदेऽपि मयि-भिन्नधियस्तथा ॥९०॥

यथाहेत्यादेः व्याख्याभेदाः

कथं पुनरबोधोत्थक्लृप्तोपायेन तत्परम् । गम्यते सत्यमित्यस्य परिहृत्यै परं वचः ॥९१॥
परमार्थात्मनाऽसत्यं [3]पदं तदपि बोधकम् । स्वार्थस्यैवमुपायत्वमसत्यस्याऽऽत्मनीक्ष्यताम् ॥९२॥

सर्वस्य नानुभवमात्रत्वं तस्य फलत्वेन कार्यत्वाद्रज्जुसर्पवत्कल्पितत्वादधिष्ठानत्वायोगादित्याशङ्क्य तत्कौटस्थ्यं साधयति—कर्त्रादीति । मात्रादिव्यापारज्ञानात्पूर्वं स्वापादौ स्वरूपे स्थितत्वाद्धेतुफलविभागाभावात्फलमित्याख्याहीना संविदेष्टव्या सा च तस्य [4]मात्रादिव्यापाराख्यस्य ज्ञानस्योत्पत्त्या फलवदाचरत्यतस्तस्या वस्तुतोऽकार्यत्वादकल्पितेत्यर्थः ॥९८७॥

संविदोऽकल्पितत्वेनाधिष्ठानत्वसंभवेऽप्यक्रियत्वादनधिष्ठानत्वं सक्रियमेव हि शुक्त्यादि तथा दृष्टमित्याशङ्क्यैकरसे निर्विकारे प्रतीचि कल्पितत्वं जगतो दृष्टान्तेनाऽऽह—अक्रियेऽपीति । व्याम्नोऽक्रियत्वं वादिभिरुपगतमिति वक्तुं हिशब्दः ॥९८८॥

प्रत्यगात्मा सक्रियोऽधिष्ठानत्वाच्छुक्तिवदित्यत्राऽऽकाशे व्यभिचारमुक्त्वा [5]मूर्तत्वोपाधेश्च नैवमित्यभिप्रेत्याऽऽह—नञ्घटेति । यतो द्वैतस्यावगतिरूपेणैव सत्त्वं स्फुरति सामानाधिकरण्यादतो भावाभावौ संविद्रूपसन्मात्रत्वेन निरस्य तद्रूपः प्रत्यगात्मा सर्वं पश्यन्नविक्रियो युक्तो न हि क्रियासाक्षी सक्रियो भवितुमलं साक्ष्यस्य साक्षिकुक्षिनिक्षेपाक्षमत्वादित्यर्थः ॥९८९॥

तर्हि दृष्टिकर्तृत्वात्तदवस्थमस्य सक्रियत्वं न हि तत्कर्तृत्वं विना सर्वदृक्त्वं नापि क्रियां हित्वा कर्तृत्वं मैवं स्वरूपदृष्टिं मुक्त्वा तद्भेदस्य तत्कर्तृत्वस्य चाऽऽत्मनि कल्पितत्वादिति दृष्टान्तेनाऽऽह—दिग्विभाग इति । उभयत्रापिभ्यामक्रियत्वं समुच्चीयते ॥९९०॥

अनेन हीत्यत्रेत्थंभावार्थत्वं तृतीयायाः समर्थितमिदानीं व्यावर्त्यचोद्यमनूद्य यथा हेत्यादिवाक्यमवतारयति—कथमिति । आत्माज्ञानजनितत्वात्कल्पितस्तावदाचार्यादिरुपायस्तेनाविद्यातदुत्थासंसृष्टं सत्यं ब्रह्म न ज्ञातुं शक्यं मिथो विरोधादिति चोद्यं परिहर्तुं यथा हेत्यादिवाक्यमित्यर्थः ॥९९१॥

तद्व्याकरोति—परमार्थेति । गवाश्वादिवर्णात्मकं पदं दैवगत्या कल्पितमपि स्वार्थस्य गोत्वादेर्बोधकं न हि तदकल्पितं क्रमवतां वर्णानां तद्भावात्क्रमस्य च तेष्वारोपं विनाऽयोगान्न हि नित्या विभवश्च वर्णाः स्वारस्येन क्रमवन्तस्तथाऽऽत्मन्याविद्यश्रुत्याचार्यादेस्तद्बोधोपायत्वं द्रष्टव्यमित्यर्थः ॥९९२॥

---

१. सर्वबुद्धिषु सद्बुद्धेरनुगतत्वं सन् घटः सन् लम्बोष्ठः देशकालत्रानस्तीत्यादौ तदुपलम्भात् पूर्वस्य सत्तादेः भेदेन उत्तरस्य घटादेः अनुपलम्भात् । सन्निति सत्तासामान्यं अस्तीति स्वरूपसत्त्वं प्रतीयते ( न्या० ) ।

२. न चाक्रियत्वं गगने व्यभिचारि तस्य विकारित्वेन सपक्षत्वात् ।

३. अत्र पदमित्यस्य वर्णात्मकं पदमर्थः ।

४. मात्रादिव्यापारात् प्राक् सुषुप्ते स्वात्मन्यवस्थितत्वात् । अविभागात् कार्यकारणभेदाभावात् । अनुपाख्या कार्यकारणशब्दहीना प्रमातृव्यापारोत्पत्त्या फलवदाचरति स्वतः कूटस्था ( न्या० ) ।

५. मूर्तत्वोपाधेः—मूर्तत्वं दृष्टान्ते शुक्तौ साध्यव्यापकं प्रत्यगात्मनि पक्षे साधनाव्यापकं सच घटार्थौ भावाभावौ अपह्नुत्य सद्रूपत्वेन निरस्य तद्रूपः आत्मा साक्षात् पश्यति । स च निष्क्रियः साक्षित्वात् ।

उपायसत्यतां मुक्त्वा नान्या दृश्युपयुज्यते । सत्यताऽत्र ह्युपायानामुपेये किं तयेष्यते ॥९३॥
गवादिखुरबिम्बो वा पदमित्युपदिश्यते[1] । अनन्वितार्थसिद्ध्यर्थं दृष्टान्तोऽयं तथा सति ॥९४॥
गवादिबोधनिर्वृत्तिः पदतज्ज्ञानहेतुतः । अनन्वितपदज्ञानगोपिण्डैकावसायिनी ॥९५॥
यथैवं नामरूपादिप्रपञ्चोपायहेतुतः । अप्रपञ्चात्मके भूम्नि प्रत्यग्बोधः प्रजायते ॥९६॥
प्रमाणभूमावैकात्म्यं विरोधान्न प्रतीयते । तमोन्वयाप्रमेयत्वात्तदभावेऽपि नेक्ष्यते ॥९७॥
न हि वस्त्वात्मनैवाऽऽत्ममोहाद्युच्छित्तये क्वचित् । प्रमाणनिरपेक्षं सद्वस्त्वलं स्वप्रसिद्धये ॥९८॥
संसारानवतारः स्यान्मानवैफल्यमेव च । इत्येतस्येह चोद्यस्य परिहाराय चोत्तरम् ॥९९॥
यथा गवात्मना साक्षाद्गां विन्देद्गोपदानुगः । प्रत्यक्चैतन्यसृत्यैवं विन्देत्तत्परमं पदम् ॥१०००॥
प्रत्यक्तया यदाभाति ह्यागमापायिसाक्षितः । देहेन्द्रियमनोधीषु चैतन्याभासरूपकम् ॥ १ ॥

किं चोपायानामर्थक्रियाकारित्वं सत्यत्वं त्यक्त्वा परमार्थसत्यता नोपेयबोधनोपयोगिनी तन्न तेषां तादृशी सत्यतेत्याह—उपायेति । उपेयबोधनं सप्तम्यर्थः । सत्सूपायेष्वर्थक्रियाकारिषु तदीयपरमार्थसत्यत्वाभावापराधेनानुपायत्वानुपलम्भादिति हिशब्दार्थः । कार्योत्पत्तावनुपयोगित्वं परमार्थसत्यताया व्यनक्ति—उपेय इति ॥९९३॥

ननु गवादिपदं स्वार्थं बोधयदध्यस्तमित्यसिद्धं तस्य च तं बोधयतस्तेनास्ति संगतिस्तथा श्रुत्यादेरपि ब्रह्मबोधकत्वेन संगतिः स्यादतस्तदसङ्गत्वहानिरित्याशङ्क्य पदशब्दस्यार्थान्तरमाह—गवादीति । तदीयखुरबिम्बशब्देन तदङ्कितो देशो गृह्यते । तथाऽपि कथमुपायेन श्रुत्यादिना गम्यमानं ब्रह्मासङ्गमङ्गीकर्तुं शक्यमित्याशङ्क्याऽऽह—अनन्वितेति । गवादिखुराङ्किते देशे पदशब्दिते सति कार्यकारणासंबन्धिप्रत्यगर्थज्ञप्त्यर्थं यथा हेत्यादिदृष्टान्त इत्यर्थः ॥९९४॥

विवक्षितार्थसिद्धये दृष्टान्तं विवृणोति—गवादीति । यथा ज्ञातखुराङ्कितदेशहेतुकस्तद्धीहेतुको वा नष्टे विवक्षिते गवादौ बोधो जायते स च ताभ्यामस्पृष्टगवादिमात्रविषय इत्यर्थः । नान्विते पदतज्ज्ञाने येन गोपिण्डेन तस्मिन्पर्यवसितेति यावत् । दार्ष्टान्तिकमाह—एवमिति । आदिपदं क्रियार्थम् । प्रत्यक्प्रतीचीति यावत् । प्रत्यगाकारत्वाद्वा प्रत्यगिति बोधो विशेष्यते ॥९९५-९९६॥

कल्पितस्य ज्ञानसाधनत्वसाधनाय ब्रह्मणो द्वैतासंबन्धाय च यथा हेत्यादि व्याख्यातमिदानीमात्मेत्येवोपासीतेतिसूत्रावततारयिषया प्रसञ्जितचोद्योत्तरत्वेन व्याकर्तुं चोद्यमनुद्रवति—प्रमाणेति । अवस्थाद्वये न वस्तुधीरज्ञानतत्कार्यविरोधात्तदभावो मानाभावः स्वापस्तत्रापि न तद्धीरज्ञानप्रतिबन्धात्तन्मेयत्वासिद्धेरित्यर्थः ॥९९७॥

मा भूदात्मधीः स तु स्वयमेव स्वाज्ञानतज्जे निवर्तयिष्यति बोधात्मत्वात्तस्मादप्रतिबन्धात्तस्मिन्प्रमाऽपि सदा स्यादित्याशङ्क्य सामान्यन्यायमाह—न हीति । शुक्त्यादि वस्तुस्वरूपेणैव प्रमाणानपेक्षं सत्स्वाविद्यातज्जापनुत्तये स्वज्ञप्तये वा न क्वचिदपि देशादौ शक्तं दृष्टम् । किंतु प्रमाणमपेक्ष्यैव यथोक्तकार्याय पर्याप्तमित्यर्थः ॥९९८॥

शुक्त्यादौ जडे मानापेक्षायामप्यात्मनि स्वप्रकाशे तदपेक्षां विना स्वरूपबोधादबोधादिध्वस्तिरित्याशङ्क्याऽऽह—संसारेति । यथेत्याद्युत्तरत्वेनाऽऽदत्ते—इत्येतस्येति । पूर्वोक्तस्य सोपस्कारमनूदितस्य चोद्यस्यात्र परिहारायानन्तरवाक्यमित्यर्थः । तस्योक्तार्थेन वक्ष्यमाणार्थस्य समुच्चयार्थश्चकारः ॥९९९॥

परिहारं स्फुटयितुं वाक्यं व्याचष्टे—यथेति । गवादिखुराङ्कितं देशं दृष्ट्वा तदनुरोधेन गतो गामन्विष्यमाणस्तद्रूपेणाध्यक्षतो लभते तथा प्रत्यक्चैतन्यस्य त्वमर्थस्य सृत्या शोधनया तद्रूपेण मुमुक्षुर्ब्रह्म जानातीत्यर्थः ॥१०००॥

त्वमर्थं विविच्याऽऽह—प्रत्यक्तयेति । देहादिषु बाह्येष्वागमापायवत्सु यत्प्रत्यक्त्वेन तत्साक्षित्वेन चान्वयव्यतिरेकाभ्यां भाति तदेतत्पदमिति संबन्धः । साक्षित्वे चिदाभासस्य द्वारत्वद्योतनार्थं विशिनष्टि—चैतन्येति ॥१००१॥

१. अत्र पदशब्देन गवादिखुराङ्कितदेशः उच्यते दृष्टान्ते, दार्ष्टान्तिके पुनः पदमिति जीवस्वरूपं तस्य विचारेण ब्रह्मतां प्रतिपद्यते ।

जडेष्वेकमनेकेषु कूटस्थं क्षणभङ्गिषु । अनात्मसु तथा चाऽऽत्मा संहतेष्वप्यसंहतः ॥ २ ॥
तस्यावाक्यार्थरूपस्य पदमेतत्प्रचक्षते । पद्यतेऽनेन तद्यस्मात्तेनेदं पदमुच्यते ॥ ३ ॥
स्वमहिम्नैव चेत्सिध्येदुपायः परमार्थवत् । स्वतः सिद्धेर्न मिथ्यात्वं तस्य स्यात्परमार्थवत् ॥ ४ ॥
परमार्थादभिन्नश्चेन्नितराममृषात्मता । इत्यादि पूर्वमुक्तं यदनुसंधेयमत्र तत् ॥ ५ ॥
न सामान्यं विशेषो वा यथैकात्म्येऽवगम्यते । उक्तमप्युत्तरत्रैतदसंतोषात्प्रवक्ष्यते ॥ ६ ॥
प्रत्यगात्मनि विज्ञाते नाज्ञातमवशिष्यते । अनेन ह्येतदित्युक्त्या तत्पूर्वमुपवर्णितम् ॥ ७ ॥
निःशेषपुरुषार्थाप्तिर्दुःखहानिस्तु तत्फलम् । यथा हेत्युच्यते श्रुत्या साधनाभिन्नमात्मनः ॥ ८ ॥

वेदनलाभयोः भेदशङ्का तन्निरासश्च

ननु प्रतीचि विदिते तदन्यद्विदितं भवेत् । ज्ञानार्थे प्रकृते कस्माल्लाभार्थेनोपसंहृतिः ॥ ९ ॥
ज्ञानलाभार्थयोर्यस्मादेकार्थत्वं विवक्षितम् । अविद्याध्वंसमात्रत्वात्तेनात्रास्त्वविरुद्धता ॥१०॥

साक्ष्यावैलक्षण्ये कथं साक्षित्वं तत्राऽऽह—जडेष्विति । अजडमित्यध्याहारः । तथाऽपि भिन्नत्वे देहादिवदसाक्षित्वमित्याशङ्क्याऽऽह—एकमिति । सक्रियत्वेनासाक्षित्वमाशङ्क्याऽऽह—कूटस्थमिति । प्रत्यक्तया यदाभातीत्युक्तं प्रत्यक्त्वं व्यनक्ति—अनात्मस्विति । सावयवत्वाद्देहादिवदप्रत्यक्त्वमाशङ्क्याऽऽह—संहतेष्विति ॥१००२॥

शोधितं त्वमर्थमुक्त्वा तस्य ब्रह्मैक्यं प्रति पदत्वं प्रतिजानीते—तस्येति । ब्रह्मणस्तदर्थस्याखण्डस्य प्रत्यक्त्वेन शोधितं प्रत्यक्चैतन्यं हेतुरित्यर्थः । कथं त्वमर्थस्तदर्थस्य पदमित्याशङ्क्य करणव्युत्पत्त्येत्याह—पद्यत इति । शोधितेन हि त्वमर्थेन तदर्थः स्वरूपतया ज्ञायते पदार्थज्ञानाधीनत्वाद्वाक्यार्थज्ञानस्येत्यर्थः ॥१००३॥

प्रत्यक्चितो ब्रह्मधीहेतोर्याथार्थ्यवदाचार्यादेरपि तद्धीहेतोस्तद्भावान्न तन्मिथ्यात्वं युक्तमित्याशङ्क्याऽऽचार्यादि स्वतोऽन्यतो वा सिध्यतीति विकल्प्याऽऽद्यमनुवदति—स्वमहिम्नेति । सदा स्वतः सिद्धेः स चैतन्यवन्न जडः स्यादिति दूषयति—परमार्थवदिति । परतः सिद्धौ तस्य मिथ्यात्वं स्यादाध्यासिकसंबन्धादृते दृशा तदसिद्धेरिति द्वितीयं प्रत्याह—मिथ्यात्वमिति । किं चोपायः परमार्थादभिन्नो भिन्नो वा ? नाऽऽद्य इत्याह—परमार्थवदिति । स्वरूपेणोपायस्य त्वया सत्यत्वेष्टेस्तदभिन्नत्वोपगमाच्चेत्यतिशयस्तन्मृषार्थाभावाद्वस्त्वन्तराभावाच्च तदद्वयमिति भावः । न द्वितीयो भेदस्याप्रामाणिकत्वान्न च कुर्वतोऽकुर्वतश्चोपायत्वमतः सर्वस्योपायस्याद्वये चिदात्मनि कल्पितत्वमव्याकृतविचारादावुक्तमत्रोपायासत्यत्वे हेतुत्वेन ज्ञेयमित्याह—इत्यादीति ॥१००४–१००५॥

ब्रह्मणः सामान्यविशेषात्मकत्वादकल्पितं जगदित्याशङ्क्योक्तवक्ष्यमाणन्यायविरोधान्नैवमित्याह—नेत्यादिना । तथोक्तमपीति तथाशब्दमाहृत्य योजना । असंतोषान्मानारसेऽर्थे मानयुक्तिविरोधात्पुनर्दोषोक्तिरित्यर्थः ॥१००६॥

यथेत्यादेर्यथोक्तज्ञानानुवादित्वमर्थान्तरमुक्त्वा कीर्तिमित्यादेस्तात्पर्यं वक्तुमनेन हीत्यत्रोक्तमनुवदति—प्रत्यगिति । क्रियापदादूर्ध्वमितिपदं यत्पदं चावतार्य योजनीयम् ॥१००७॥

तस्य ज्ञानस्य फलोक्तिमवतारयति—निःशेषेति । पुरुषार्थः सुखं तस्य निःशेषत्वं पूर्णत्वं तत्फलं तस्य ज्ञानस्य फलमिति यावत् । आत्मनो विदुष इत्येतत् । साधनाभिन्नं स्वरूपज्ञानाभिन्नं तस्यैव वाक्योत्थवृत्त्युपेतस्य साधनत्वादित्यर्थः । अनेन हीत्यादावुक्तं तत्त्वज्ञानं यथेत्यादिश्रुत्याऽनूद्य तत्फलमात्मरूपा मुक्तिः कीर्तिमित्यादिनोच्यत इति भावः ॥१००८॥

अनेनेत्यत्र वेदेतिज्ञानेनोपक्रम्यानुविन्देदितिलाभमुक्त्वा पुनर्ज्ञानार्थेन विदिना कीर्तिमित्यादिश्रुतिरुपसंहरति अतोऽनुविन्देदितिश्रुतेरुपक्रमोपसंहारविरोध इति शङ्कते—नन्विति । क्रियाशब्दादुपरिष्टादितिशब्दो द्रष्टव्यः । ज्ञानार्थे शब्दे मध्ये लाभार्थेन शब्देनोक्त्वा पुनर्ज्ञानार्थेन शब्देनोपसंहरति कस्मादिति चोद्यार्थः ॥१००९॥

ज्ञानेनोपक्रम्य लाभमुक्त्वा ज्ञानफलत्वेनोपसंहारो न विरुध्यते ज्ञानलाभार्थशब्दयोरैकार्थ्यादित्याह—ज्ञानेति । यस्मादित्यस्य तेनेत्यनेन संबन्धः । ज्ञानलाभयोरैक्ये हेतुमाह—अविद्येति । हस्तगतविस्मृतसुवर्णलाभ-

नित्यलब्धैकरूपस्य नालाभोऽज्ञानतोऽन्यतः । यथैवं तस्य लाभोऽपि तज्ज्ञानान्नान्यतो भवेत् ॥११॥
आत्मता ब्रह्मणो लाभो ब्रह्मताऽप्यात्मनःफलम् । व्यावर्त्यभेदात्तद्भिन्तेरेकं वस्तु द्विरुच्यते ॥१२॥
ब्रह्मता नाऽऽत्मनोऽन्यत्र नाऽऽत्मता ब्रह्मणोऽन्यतः । यत एवमतोऽभेदो ज्ञानलाभार्थयोरिह ॥१३॥
लब्धृलब्धव्ययोर्भेदो यत्राविद्योत्थभूमिषु । फलभेदः क्रियाभेदात्तत्र भिन्नार्थता तयोः ॥१४॥
आप्ताशेषपुमर्थोऽपि प्रत्यग्याथात्म्यमोहतः । असर्वज्ञो भवेदात्मा तथाऽनाप्तार्थ एव च ॥१५॥
तत्राऽऽत्मा लब्धाऽविद्वान्स्याल्लब्धव्यं च क्रियाफलम् । उत्पत्त्याद्यन्तरायं सत्कारकोपात्तिपूर्वकम् ॥१६॥
तादृग्लब्धोऽप्यलब्धः स्यादविद्यामात्रहेतुतः । आद्यन्तयोरभावाच्च स्वप्नपुत्रादिलाभवत् ॥१७॥
विपरीतस्वभावोऽत आत्मलाभः स्वतः सदा । अज्ञानहेतोरन्यादृक्स च ज्ञानान्निवर्तते ॥१८॥

वत्प्रत्यग्ब्रह्मलाभस्याज्ञानध्वस्तिमात्रत्वात्तस्याश्च ज्ञानानतिरेकात्तयोरेकताऽत्रेत्यर्थः । तयोरैक्यं हेतूकृत्यानुविन्देदित्यत्र प्रक्रमोपसंहाराभ्यामविरुद्धत्वमाह—तेनेति ॥१०१०॥

आत्मनि लाभस्य ज्ञानमात्रत्वं दृष्टान्तेन साधयति—नित्येति । आत्मन्यलाभस्याज्ञानानतिरेकात्तत्र लाभो ज्ञानमेवेत्यर्थः ॥१०११॥

ग्रामादौ ज्ञानलाभयोर्भेदोपलम्भात्प्रकृतेऽपि कथं तदैक्यमित्याशङ्क्य तत्साधनार्थमत्र लाभशब्दार्थमाह—आत्मतेति । फलशब्दो लाभार्थः । ब्रह्मणोऽनात्मत्वे ब्रह्मत्वायोगादात्मनश्चाब्रह्मत्वे तत्त्वानुपपत्तेस्तयोरैक्ये कथं ब्रह्माऽऽत्मेति द्विर्वचनं पौनरुक्त्यात्तत्राऽऽह—व्यावर्त्येति । संसारित्वपारोक्ष्यादिनिरस्यभेदाद्विशिष्टभेदेऽपि वस्तुतो वस्त्वेकमेव द्विवारं व्यपदिश्यते तथाच व्यावर्त्यभेदेन विशिष्टवाच्यार्थभेदादपुनरुक्तिरित्यर्थः ॥१०१२॥

तदभेदमुक्तमनूद्य तं हेतूकृत्य प्रतीचि ज्ञानलाभयोरैक्यं निगमयति—ब्रह्मतेति । न हि प्रत्यग्ब्रह्मणोरभेदे ज्ञानादन्यो लाभस्तत्रास्तीत्यर्थः ॥१०१३॥

तच्छब्दयोरर्थभेदस्तर्हि कुत्रेत्याशङ्क्याऽऽह—लब्धृति । यत्र मैत्रो लब्धा ग्रामादि लभ्यं स एव ज्ञाता घटादि ज्ञेयं तत्र ज्ञानलाभार्थक्रिययोर्भेदाज्ज्ञानलाभयोः फलयोर्भेदोऽतोऽविद्योत्थानात्मसु तच्छब्दयोर्भिन्नार्थतेत्यर्थः ॥१०१४॥

अविद्यादशायां लब्धृलब्धव्ययोर्ज्ञातृज्ञेययोश्च भेदाज्ज्ञानलाभशब्दयोर्भिन्नार्थतेत्युक्तम् । इदानीमाप्ताशेषपुमर्थस्य चिद्धातोर्न लब्धृत्वादीत्याशङ्क्योक्तमेव समर्थयते—आप्तेति । वस्तुतस्तु नासर्वज्ञत्वं नाप्यनाप्तार्थत्वमिति चशब्दार्थः ॥१०१५॥

अविद्यादशां दर्शयित्वा तत्र लब्ध्रादिसंभावनामाह—तत्रेति । चशब्दादविद्वानात्मा ज्ञाता ज्ञेयं घटादीत्युक्तम् । क्रियाफलं विशिनष्टि—उत्पत्त्यादीति । अन्तरायो व्यवधिस्तदुक्तमुत्पाद्यक्रियाव्यवहित इति । कारकाणामुपात्तिरुपादानं तत्पूर्वकं क्रियाफलं कारकाभावे तदभावादित्याह—कारकेति ॥१०१६॥

अनात्मलाभस्याविद्योत्थमिथ्याज्ञानजन्यत्वेनाऽऽभासत्वमाह—तादृगिति । मात्रशब्दो वास्तवहेत्वन्तरनिरासार्थः । अनात्मलाभोऽविद्याकल्पित आगन्तुकत्वात्संमतवदित्याह—आद्यन्तयोरिति ॥१०१७॥

आत्मलाभोऽप्यविद्याकल्पितो लाभत्वादनात्मलाभवदित्याशङ्क्याऽऽह—विपरीतेति । अतोऽनात्मलाभादिति यावत् । वैपरीत्यमेवाऽऽह—स्वत इति । जडत्वं कादाचित्कत्वं चोपाधिरिति भावः । तस्यापि कादाचित्कत्वादिदृष्टेः साधनव्याप्तिमाशङ्क्याऽऽह—अज्ञानेति । कादाचित्कत्वोपाधेर्न[1] व्यतिरेकशुद्धिरज्ञाने व्यभिचारादित्याशङ्क्याऽऽह—स चेति । अज्ञानाख्यो हेतुस्तद्विरोधिनो ज्ञानादपगच्छत्यतश्चाऽऽत्मलाभः स्वाभाविको नित्यस्तदन्यथात्वप्रथाहेत्वभावात्तथा च विमतोऽकल्पितोऽनाद्यनन्तत्वादात्मवदिति व्यतिरेकशुद्धिरिति भावः ॥१०१८॥

१. न व्यतिरेकशुद्धिः—साधनाव्याप्तिः आत्मज्ञानस्यापि कादाचित्कत्वात् तत्र तदभावासिद्धिरित्यर्थः । तथा चात्मलाभस्य नित्यत्वात् तत्र कादाचित्कत्वाभावसिद्धिः साधनाव्याप्तिश्च ।

आरभ्य सर्वं वेदेति ज्ञानार्थेनोपसंहृतिम् । अतोऽनुविन्देदित्याह लाभार्थेनैव तत्फले ॥१९॥

एवं कीर्ति श्लोकं विन्दते इत्यस्य विवरणम्

अप्रख्यातो यथैवाऽऽत्मा व्याकृते ख्यातिमेयिवान् । एवं तदवबोधान्ना ख्यातिमेत्यविनश्वरीम् ॥२०॥
संहृतिश्चक्षुरादीनां श्लोकशब्देन भण्यते । यथाऽऽत्मा संहृतिं प्रापद्व्याकृतः करणादिभिः ॥२१॥
एवं विद्वानवाप्नोति पुत्रामात्यादिसंहृतिम् । उक्तज्ञानप्रवृत्त्यर्थमर्थवादोऽयमिष्यते ॥२२॥
निरेषणानां नेदृग्धि संसारं प्रजिहासताम् । फलं युक्तं प्रवृत्त्यङ्गमर्थवादो भवेदतः ॥२३॥
कीर्तिं चैकात्म्यविज्ञानं श्लोकं चैकात्म्यसंगतिम् । यथोक्तवस्तुवेद्येतत्फलमाप्नोत्यभीप्सितम् ॥२४॥

मू.—तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा । स योऽन्यमात्मनः प्रियं ब्रुवाणं ब्रूयात्प्रियँ रोत्स्यतीतीश्वरो ह तथैव स्यादात्मानमेव प्रियमुपासीत स य आत्मानमेव प्रियमुपास्ते न हास्य प्रियं प्रमायुकं भवति ॥८॥

तदेतत्प्रेय इति श्रुत्यर्थविवरणम्

चव्याकृतव्याकरणं प्रत्यग्दर्शनसिद्धये । तदन्तरायस्तत्सक्तिः स्तन्निवृत्तौ परा श्रुतिः ॥२५॥
शब्दादिवडिशाकृष्टचेतसः प्रत्यगीक्षणे । न सामर्थ्यं यतस्तेभ्यो व्यावृत्त्यर्थं परा श्रुतिः ॥२६॥

अविरोधमुपसंहरति—आरभ्येति । यतो दर्शितनीत्या ज्ञानलाभयोरैक्यमतोऽनेन हीति ज्ञानार्थेन विदिनाऽऽरभ्यानुविन्देदिति लाभार्थेन विदिना मध्ये लाभमुक्त्वा भूयो ज्ञानफले वाच्ये ज्ञानार्थेनैव विदिशब्देनोपसंहृतिमाह श्रुतिरिति योजना ॥१०१९॥

आदिमध्यावसानानामविरोधमुक्त्वा कीर्तिमित्यादिपूर्वपक्षानुगुणतया व्याचष्टे—अप्रख्यात इति । अव्याकृते नामरूपाभ्यामख्यातोऽपि व्याकृते जगति ताभ्यामाख्यातस्तथा यथोक्तात्मज्ञानादधिकृतः पुरुषो नित्यसिद्धां ख्यातिमेतीत्यर्थः ॥१०२०॥

श्लोकशब्दार्थमाह—संहृतिरिति । पदार्थमुक्त्वा वाक्यार्थमाह—यथेति । ननु नोक्तं फलमात्मज्ञानानुकूलं तस्य निरतिशयफलोपायत्वात्तत्राऽऽह—उक्तेति ॥१०२१-१०२२॥

ब्रह्म वेदेत्यादिवत् फलविवक्षयैव किं न स्यादत आह—निरेषणानामिति । एषणात्रयनिर्मुक्तानां तदन्तस्थं संसारं त्यक्तुमिच्छतां तदन्तर्भूतं ख्यात्यादिफलं नोचितमित्यर्थः । फलविवक्षाऽयोगे वाक्यस्य ज्ञानस्तुत्यर्थत्वं फलतीत्याह—प्रवृत्तीति ॥१०२३॥

चकाराभ्यां पूर्वपक्षं व्यावर्त्य सिद्धान्तमाह—कीर्तिमिति । न हि संभवन्त्यां फलोक्तौ स्तुतिकल्पना युक्ता तथा च ज्ञानलाभयोर्नात्रार्थभेदो ब्रह्मात्मनोरभेदादिति यथोक्तं वस्तु यो वेद स मुमुक्षूणामपेक्षितमैक्यज्ञानं तत्फलं च मुक्तिमाप्नोतीत्येतदर्थं कीर्त्यादिवाक्यमित्यर्थः ॥१०२४॥

तदेतदित्यादेस्तात्पर्यमाह—अव्याकृतेति । आत्मज्ञानार्थं सृष्टिरुच्यते "तदस्य रूपमित्या"दिश्रुतेस्तस्य प्रतिबन्धस्तत्र सृष्टे जगत्यासक्तिस्तन्निवृत्त्यर्थमुत्तरं वाक्यं नामरूपासक्तमेवास्य दर्शनं बाह्यविषयासङ्गि प्रीतेर्गृह्यमाणत्वात्तन्निविवर्तयिषुरतश्चाऽऽत्मनि प्रविवर्तयिषुः प्रकरोतीति भर्तृप्रपञ्चैरुक्तत्वादित्यर्थः ॥१०२५॥

तदासक्तिर्नाऽऽत्मधीप्रतिबन्धः सह संभवादित्याशङ्क्याऽऽह—शब्दादीति । ते हि दृश्यमानाश्चित्तस्या-

१. अनेन ह्येतत्सर्वं वेद—इत्युपक्रमः यथा ह वै पदेनानुविन्देत् इति मध्ये ज्ञानार्थेन परामर्शः । य एवं वेदेति ज्ञानेनोपसंहारः इत्यर्थः ।

२. तदस्य रूपं प्रतिचक्षणाय इति अत्रैव द्वितीयाध्याये—भगवतः सृष्टिकर्तृत्वादिकथनं स्वरूपज्ञानायेत्युक्तम् ।

पदनीयत्वे हेत्वन्तरमिति भाष्यभावः

हेत्वन्तरोपदेशो वा पदनीयत्व आत्मनः । तदेतदितिशास्त्रेण भण्यते तद्बुभुत्सवे ।।२७।।
सांख्यमुक्तिनिवृत्त्यर्थमथवाऽस्तूत्तरा श्रुतिः । प्रेयोगिराऽऽत्मनो यस्मान्निष्ठाऽऽनन्दस्य भण्यते ।।२८।।
पुत्रात्प्रेय इदं तत्त्वं वित्तात्प्रियतरं तथा । पुत्रो वित्तं च लोकेऽपि प्रसिद्धं प्रियरूपतः ।।२९।।

आत्मनः प्रियतमत्वोपपादनम्

ईयसुंस्तमबर्थे स्यात्पुत्रादीनां बहुत्वतः । छान्दसत्वात्प्रियतमस्तथाऽऽत्मा संभवत्यपि ।।३०।।
वित्तात्पुत्रः प्रियः पुत्रात्पिण्डः पिण्डात्तथेन्द्रियम् । इन्द्रियेभ्यः प्रियः प्राण आत्मा प्रियतमस्ततः ।।३१।।
वित्तं द्विविधमप्यत्र वित्तशब्देन गृह्यते । देवलोकः फलं यस्माद्दैवस्यापि न तत्पदम् ।।३२।।
प्रीतिसाधनहेतुत्वात्प्राणादौ प्रीतिरिष्यते । बन्धकीप्रीतिवन्मृख्या नैवानात्मसु युज्यते ।।३३।।

ऽऽकर्षकत्वाकद्दडिशवदालक्ष्यन्ते तत्प्रवणचेतसो न प्रत्यगर्थधीर्युक्ता पराक्प्रत्यग्दृष्ट्योर्विरोधात्तस्माद्विषयेभ्यो मनो व्यावर्त्य प्रतीचि प्रवेशयितुमुत्तरा श्रुतिरित्यर्थः ।।१०२६।।

आत्मनः पदनीयत्वे तस्यैवाज्ञातत्वसंभवो हेतुरुक्तोऽधुना निरतिशयप्रियत्वं हेत्वन्तरमनेनोच्यत इति भाष्योक्तं तात्पर्यमाह--हेत्वन्तरेति । तद्बुभुत्सवे हेत्वन्तरमात्मानं वा जिज्ञासमानायेत्यर्थः ।।१०२७।।

प्रकृतिपुरुषाविवेककृतबन्धध्वस्तिमात्रं मुक्तिर्नानतिशयसुखव्यक्तिरिति सांख्याः—यथाऽऽहुः—
"वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य । पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य" इति ।।
"प्राप्ते शरीरभेदे चरितार्थत्वात्प्रधानविनिवृत्तौ । ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति" इति च ।।

तन्निवृत्त्यर्थमिदमिति तात्पर्यान्तरमाह—सांख्येति । कथमनया श्रुत्या सर्वस्मात्प्रियतमत्वमात्मनो वदन्त्या सांख्यमुक्तिनिवृत्तिस्तत्राऽऽह—प्रेयोगिरेति । आत्मनः प्रियतमत्वोक्त्या तस्मिन्नानन्दस्यावसानं यतोऽनया श्रुत्योच्यतेऽतो दुःखत्रयध्वस्तिमात्रं सांख्यीयं मोक्षं न मृष्यते श्रुतिरित्यर्थः ।।१०२८।।

भाष्यद्वयानुसारेण[1] स्वाभिप्रायेण च तात्पर्यमुक्त्वाऽक्षरार्थमाह—पुत्रादिति । वीतरागाणां मुमुक्षूणां पुत्रादौ प्रेमानुपलम्भात्कथं तस्मात्प्रियतरत्वं स्वस्योच्यते तत्राऽऽह—पुत्र इति । अपिरभिव्याप्तौ । न वस्तुतोऽस्य प्रियत्वं किंतु प्रतीत्येति वक्तुं रूपशब्दः । लोकदृष्ट्याऽऽत्मनस्तस्मात्प्रियतरत्वोक्तिरित्यर्थः ।।१०२९।।

ईयसुन्प्रत्ययस्यार्थमाह—ईयसुन्निति । बहूनामेकस्य निर्धारणे तमपो विधानादात्मनश्च प्रियत्वे पुत्रादिभ्यो बहुभ्योऽतिशयस्य विवक्षितत्वादिति हेतुमाह—पुत्रादीनामिति । ननु द्विवचनविभज्योपपदे तरबीयसुनाविति स्मरणात्तमबर्थत्वं तस्यायुक्तं तत्राऽऽह—छान्दसत्वादिति । ईयसुनस्तरपा समानार्थत्वस्मृतावप्यस्य च्छन्दोगतत्वादविवक्षित्वा स्वार्थे तमबर्थत्वमेष्टव्यमित्यर्थः । छान्दसत्वेऽपि किमित्यस्यातिशयमात्रमादाय तमबर्थतेष्टा मुख्यसंभवे लक्षणायोगादित्याशङ्क्य प्रियतमत्वस्यैवाऽऽत्मनि संभवादन्यस्य तादृशोऽभावात्तस्मिन्नीयसुनस्तमबर्थत्वमेवेत्याह—प्रियतम इति । अपिरवधारणे । आत्मैव प्रियतमो न तथाऽनात्मा तस्मिन्प्रियतमत्वमेव संभवति पुत्राद्यनेकापेक्षया प्रियत्वादिति योजना ।।१०३०।।

तस्य प्रियतमत्वं पारिशेष्यानुभवाभ्यामाह—वित्तादिति ।।१०३१।।

वित्तशब्दस्य विवक्षितमाह—वित्तमिति मानुषं दैवं चेति द्वैविध्यम् । प्रकृता श्रुतिः सप्तम्यर्थः । मानुषं वित्तं धनादि बन्धफलत्वादत्र वित्तशब्देन गृह्यतां दैवं वित्तं ध्यानाख्यं मुक्तिफलत्वान्न तेन ग्राह्यमित्याशङ्क्याऽऽह—देवेति । यथा पुत्रकर्मणोर्मनुष्यलोकः पितृलोकश्च फलमेवं देवलोकोऽपरविद्याख्यदैववित्तस्यापि फलं विद्यया देवलोक इति श्रुतेर्न मुक्तिस्तत्फलं निषेधश्रुतेस्तस्मात्तदपीह ग्राह्यमित्यर्थः ।।१०३२।।

आत्मनि प्राणादौ च प्रीतेः समत्वात्कथमात्मनः प्रियतमत्वं तत्राऽऽह—प्रीतीति । उल्लासो मानसः

१. भाष्यद्वयं—भर्तृप्रपञ्चभाष्यं भगवत्पादभाष्यं च ।

व्याध्याद्युपप्लुतो यस्माद्वक्ति निर्विण्णमानसः । अद्यैव मरणं श्रेयो मम दुःखार्दितात्मनः ।।३४।।
प्रतीचि निर्निमित्तैव सर्वावस्थास्वपीष्यते । प्रीतिरग्न्युष्णवत्तस्मादात्मा प्रेयाननात्मनः ।।३५।।
त्रैगुण्यात्सर्वभावानां मोहदुःखसुखात्मता । स्वत एव त्वनध्यस्ता ह्येवं केचित्प्रचक्षते ।।३६।।
तत्तु नैवं यतः सत्त्वं मोहादित्रयकृद्धियः । भानूदयं प्रपश्यामश्चोरदृग्रोगिदिग्दृशाम् ।।३७।।
समं त्रयं त्रिषु भवेत्त्रैगुण्यं चेद्रवौ मतम् । गुणान्तराधिकारोऽपि न च भानूदये मतः ।।३८।।
प्रमाणैर्गृह्यते प्रीतिर्व्यभिचारिण्यनात्मसु । रज्ज्वां सर्पादिवन्नैवं प्रत्यगात्मनि सेक्ष्यते ।।३९।।

आत्मैव प्रिय इत्यत्र हेतूक्तिः

आत्मैव प्रिय इत्यत्र हेतुः स्पष्टोऽभिधीयते । श्रुत्याऽन्तरतरोक्त्येह तद्धेतुश्चाऽऽत्मतोच्यते ।।४०।।
यथाऽन्तरतमः प्रत्यक्तथोदर्के प्रवक्ष्यते । वाचक्नव्यक्षरान्तेन ग्रन्थेन प्रत्यगात्मनः ।।४१।।

प्रीतिस्तस्याः साधनमुत्पादनं तत्र हेतुत्वादिति यावत् । बन्धकी वारवनिता । वर्धकीप्रीतिवदिति पाठे त्वसतो वर्धकी प्रसिद्धैव ।।१०३३।।

प्राणादिषु प्रीतेरमुख्यत्वे लोकप्रसिद्धिमाह—व्याध्यादीति । आदिपदेन दरिद्रताराजपीडादि गृह्यते । तस्मात्प्राणादावमुख्या प्रीतिरिति शेषः ।।१०३४।।

तथैव प्रतीच्यपि प्रीतिरमुख्या स्यादित्याशङ्क्यानुभवविरोधमाह—प्रतीचीति । तत्र स्वाभाविकी प्रीतिरित्यत्र दृष्टान्तमाह—अग्नीति । प्राणादावात्मनि च प्रीतेरेकरूपत्वाभावे फलितमाह—तस्मादिति १०३५।।

आत्मनि मुख्या प्रीतिरनात्मन्यमुख्येत्युक्ते वैपरीत्यमिति सांख्यमतमाह—त्रैगुण्यादिति । स्वतस्त्वव्याख्यानमनध्यस्तेति । उक्तार्थस्य सांख्यशास्त्रे प्रसिद्धतां वक्तुं हिशब्दः । आत्मनः सत्त्वादिगुणहीनत्वात्स्वतः सुखाद्यभावः । यथाऽऽह—"गुणवत्यगुणस्य सतस्तस्यार्थमपार्थकं चरति" इति । तथा च प्राकृतबुद्ध्यविवेकात्तस्य सुखादीति तस्मिन्प्रीतिरमुख्या—

"तत्र जरामरणकृतं दुःखं प्राप्नोति चेतनः पुरुषः । लिङ्गस्याविनिवृत्तेस्तस्माद्दुःखं स्वभावेन ।।"

इत्युक्तेरिति भावः ।।१०३६।।

भावानां त्रैगुण्यकृतं मोहाद्यात्मत्वं दूषयति—तत्त्विति । एकमेव सत्त्वं बुद्धेर्मोहादिकरमित्यत्र दृष्टान्तमाह—भानूदयमिति । स हि केवलसत्त्वात्मकः । यदाह—सत्त्वं लघु प्रकाशकमिष्टमिति । नात्र रजस्तमसी चलनावरणयोरभावात्तथाऽपि चोराणां नेत्ररोगिणां दिग्विभागं द्रष्टुमिच्छतां च क्रमेण मोहदुःखसुखानां कारणं प्रतीमोऽतो न भावानां त्रैगुण्यान्मोहाद्यात्मतेत्यर्थः ।।१०३७।।

भानूदयस्यापि गुणत्रयात्मकत्वमनात्मत्वात्संमतवदित्याशङ्क्य तस्करादिषु भास्करोदयदर्शिषु मोहादीनां साम्यं स्यादित्याह—सममिति । न हि भानूदयस्य गुणत्रयात्मत्वे पुरुषभेदेन कार्यविशेषकरत्वे हेतुरस्तीति भावः । किंच रवेस्त्रैगुण्यं वदतः सिद्धान्तहानिस्तस्य प्रकाशैकरसस्य सत्त्वमूर्तित्वात्सत्त्वं लघु प्रकाशकमित्युक्तेरित्याह—गुणान्तरेति । अधिकारशब्दोऽत्र प्रवेशविषयः न हि तत्र रजस्तमसी तत्कार्याभावात् । उपष्टम्भकं चलं च रजो गुर्वावरकमेव तम इति हि पठन्ति । न च कार्यभेददृष्ट्या तत्र त्रैगुण्यं कल्प्यं तदव्यवस्थानस्योक्तत्वात्सत्त्वस्य तु व्यवस्थया कार्यकरत्वमबाधितानुभवाधिगतमित्यर्थः ।।१०३८।।

यत्तु सत्त्वाद्यभावादात्मनः सुखाद्यभावे तत्र प्रीतिरमुख्येति तत्राऽऽह—प्रमाणैरिति । सा व्यभिचारिणी प्रीतिरिति यावत् । सर्वावस्थास्वपि तस्मिन्ननतिशयप्रीतिप्रतीतेरित्यर्थः ।।१०३९।।

पुत्रादौ प्रीतिव्यभिचारेऽप्यात्मवत्प्राणादौ तदव्यभिचारादात्मनो न प्रियतमत्वमित्याशङ्क्य पदान्तरमादत्ते—आत्मैवेति । स्पष्टत्वमुभयसंमतत्वम् । तृतीये समानाधिकरणे व्यधिकरणे अपि वा । इहेति प्रकृतवाक्योक्तिः । अन्तरतमत्वे प्रियतमत्वसाधने हेतूक्त्यर्थं यदयमात्मेति वाक्यमित्याह—तद्धेतुश्चेति ।।१०४०।।

न केवलमत्रैव प्रतीचोऽन्तरतमत्वं किंतूत्तरत्रापीत्याह—यथेति । गार्ग्या वचक्नोर्दुहितुः प्रश्नोऽक्षरविषय-

प्रत्यक्त्वाऽन्यानपेक्षा हि तदन्यत्तदपेक्षया । यतोऽन्तरतमः प्रत्यङ्तस्मादेवावगम्यते ।।४२।।
यस्य त्वष्टास्ववस्थासु प्रत्यक्त्वं सममिष्यते । तस्यान्तरतम इति दुर्घटं वचनं भवेत् ।।४३।।
अन्यूनाधिकरूपासु त्वष्टावस्थास्विहाऽऽत्मनः । कं विशेषं समाश्रित्य ह्यात्माऽन्तरतमो मतः ।।४४।।
भाक्तैवानात्मसु प्रीतिर्यस्मात्तस्मादनात्मनः । व्युत्थाप्य निखिलां प्रीतिं प्रतीच्येव निवेशयेत् ।।४५।।

पुत्रादिप्रीतेर्गौणत्वे युक्तिकथनम्

एवं व्यवस्थितौ सत्यां युक्तिलेशोऽभिधीयते । पुत्रादिप्रियमात्मेति द्वयोर्विवदमानयोः ।।४६।।
आत्मनोऽन्यत्प्रियमिति यो ब्रूते मोहसंप्लुतः । ब्रुवाणं तं प्रति ब्रूयादिति श्रुत्यनुशासनम् ।।४७।।
यस्ते प्रियतयाऽभीष्टः सोऽचिराद्दुःखकृद्भवेत् । यतो नङ्क्ष्यति स क्षिप्रं नश्यंश्चासुखकृत्प्रियः ।।४८।।
यथोक्तस्याविसंवादं तत्तथैवेति च श्रुतिः । आत्मैव प्रिय इत्येवं प्रतिज्ञां प्रत्यभाषत ।।४९।।
यस्मादेवमतो हित्वा प्राणादीनप्रियात्मनः । सर्वान्तरतमात्मानमुपासीत प्रियं सदा ।।५०।।

स्तादृक्च मुनेरुत्तरं तदन्तग्रन्थेन तन्निर्णयपरेण प्रत्यगात्मयोगिना तस्यान्तरतमत्वमुच्यते । अक्षरं हि सर्वस्मादान्तरं तच्च प्रत्यगिति तदन्तरतमत्वं दर्शितमित्यर्थः ।।१०४१।।

किं चाऽऽत्मत्वस्याऽऽत्मनोऽन्यानपेक्षत्वादनात्मनश्चाऽऽत्मापेक्षत्वात्सोऽन्तरतम इत्यन्तरतमत्वे युक्तिमाह—प्रत्यक्त्वेति । अपेक्षणीयवस्त्वसंभवो हिशब्दार्थः । अनात्मनोऽनात्मत्वादेव स्वातन्त्र्यायोगः । प्रत्यक्त्वस्याऽऽत्मनि स्वाभाविकत्वे फलितमाह—यत इति ।।१०४२।।

अन्तरतरवचनं स्वमतेनोपपाद्य भर्तृप्रपञ्चमते न युक्तमित्याह—यस्येति । पिण्डो जातिर्विराट्सूत्रं दैवमव्याकृतमन्तर्यामी साक्षीत्यष्टावस्थानां न बाह्याभ्यन्तरभावो यथा घटशरावादीनां मृद्विकाराणां मृदेव तत्त्वं तथा सामान्यमात्मत्वमतस्तासु प्रत्यक्त्वं सममिति पक्षे नाऽऽत्मनोऽन्तरतमत्वसिद्धिरित्यर्थः ।।१०४३।।

अवस्थासु प्रतीचः साम्येऽप्यन्तरतमत्वं किं न स्यादित्याशङ्क्याऽऽह—अन्यूनेति । इहेत्यात्मनि कल्पितावस्थास्वन्तर्बहिर्विभागहीनासु सतीष्विति यावत् । तस्मादात्मातिरिक्ताव्याकृतादीनां बाह्यान्तरभावो वाच्योऽन्यथा प्रतीचोऽन्तरतमत्वासिद्धेरिति भावः । आक्षिप्तविशेषासंभवं स्फुटयितुं हिशब्दः ।।१०४४।।

परपक्षनिरासद्वाराऽऽत्मनोऽन्तरतमत्वं प्रियतमत्वे हेतुमुक्त्वा स्वपक्षमुपसंहरति—भाक्तैवेति ।।१०४५।।

आत्मैव प्रियो नानात्मेति स्थिते तत्प्रियतमत्वे युक्तिसंक्षेपार्थं स योऽन्यमित्यादिवाक्यमाह—एवमिति । तद्योजयति—पुत्रादीति । आत्मेतरप्रियवादित्वे हेतुमाह—मोहेति ।।१०४६।।१०४७।।

श्रुतिवचो व्याख्याय प्रियं रोत्स्यतीत्यादि प्रतिवादिवचो व्याचष्टे—यस्त इति । दुःखकरत्वे हेतुमाह—यत इति । विनाशित्वेऽपि कथं दुःखकरत्वं तदाह—नश्यन्निति । प्रियस्य नश्यतो दुःखकरत्वं प्रसिद्धमिति वक्तुं चशब्दः ।।१०४८।।

तथैव स्यादिति श्रुतेरर्थमाह—यथोक्तस्येति । आत्मैव प्रिय इत्येवंविधां प्रतिज्ञामादावुक्त्वा तच्छेषत्वेनानात्मनो दुःखकरत्वेनाप्रियत्वस्योक्तस्याविसंवादं च तथैव स्यादिति प्रत्यभाषत श्रुतिरिति योजना । यद्वा यत्तेनोक्तं तत्तथैवेतिश्रुतिरात्मैव प्रिय इति प्रतिज्ञां यथोक्तस्यानात्माप्रियत्वस्याविसंवादमभाषतेति संबन्धः । तदेतत्प्रेयः पुत्रादित्यादिनोक्तमनुवदति—आत्मैवेति ।।१०४९।।

पुत्रादिप्रियस्यानित्यत्वादात्मैव प्रियः सुखरूप इति प्रतिज्ञातं प्रतिपाद्याऽऽत्मानमेव प्रियमुपासीतेत्यस्यार्थमाह—यस्मादिति । सर्वस्मादन्तरताऽस्ति यस्याऽऽत्मनः स सर्वान्तरतस्तमिति यावत् । यद्वा मकारोऽत्र लुप्तो द्रष्टव्यः । सर्वान्तरतमश्चासावात्मा च तमिति वा । विजातीयप्रत्ययाव्यवधानार्थं सदेत्युक्तम् ।।१०५०।।

१. प्रतिज्ञां प्रत्यभाषतेत्यनेन निगमवचनमित्युक्तम् । तदुक्तं—प्रतिज्ञायाः पुनर्वचनं निगमनमिति ।

स य आत्मानमित्युक्त्या प्राप्तदोषनिराक्रिया । प्रमायुकत्वं मर्त्यत्वात्प्राणादेर्न तु वार्यते ॥५१॥
व्यावृत्तसर्वबाह्यार्थप्रीतेस्तन्मुक्तिकामिनः । न ह्यस्येति गिरा नातो मुमुक्षोः फलकीर्तनम् ॥५२॥
आविरिञ्चाद्विरक्तश्चेत्कुम्भीपाकादिवेह यः । आप्ताशेषक्रियाकार्यो मुक्तौ स विनियुज्यते ॥५३॥
परीक्ष्य लोकानित्यादि तथा नैगमिकं वचः । त्यज धर्ममधर्मं चेत्येवमादि स्मृतेरपि ॥५४॥

मू.—तदाहुर्यद्ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते । किमु तद्ब्रह्मावेद्यस्मात्तत्सर्वमभवदिति ॥९॥

तदाहुरित्यादेः सम्बन्धकथनम्

आत्माविद्यापनुत्त्यर्थं प्रारब्धोपनिषत्परा । आत्मेत्युपक्रमं यच्च तत्सूत्रं प्रागुदाहृतम् ॥५५॥
तद्धेदमित्यनेनास्याः प्रमेयोऽर्थो निरूपितः । अकृत्स्नवचसा तद्वत्प्रमाभासोऽप्यपोदितः ॥५६॥
आत्मैवैकोऽत्र द्रष्टव्यः कृत्स्नत्वान्नाऽऽत्मनोऽपरः । अकृत्स्न एव तावत्स्यात्तदन्यो यावदीक्ष्यते ॥५७॥
कोऽहं कस्य कुतो वेति कः कथं वा भवेदिति । प्रयोजकमतेरेष विध्यर्थोऽत्रावगम्यते ॥५८॥

स य आत्मानमित्यादिफलोक्तितात्पर्यमाह—स य इति। न ह्यस्य प्रियमित्यत्र प्रियमात्मसुखं तस्यापि लौकिकसुखवन्नाशः सुखत्वात्प्राप्तस्तस्य दोषस्य निराक्रिया फलोक्त्या क्रियत इत्यर्थः। प्रियशब्देन प्राणादि विवक्षित्वा विदुषो विद्यासामर्थ्यात्तन्न नश्यतीति फलवाक्यार्थे का हानिरित्याशङ्क्याऽऽह—प्रमायुकत्वमिति ॥१०५१॥

अतोऽन्यदार्तमितिश्रुत्या प्राणादेर्नाशित्वात्तदनाशो नोच्यते निर्गुणविद्याफलत्वेनेति फलितमाह—व्यावृत्तेति। बाह्यप्रीतिनिबन्धनो बन्धस्तच्छब्दार्थः। प्राणादेरनात्मनो नाशस्यावश्यंभावित्वमतःशब्दार्थः। विरक्तस्य संसारं जिहासतो मुमुक्षोर्ज्ञानिनो ज्ञानफलं प्राणाद्यनाशित्वं नानेनोच्यते। न हि नाशिनोऽनाशित्वोक्तिर्विद्याफलं मिथ्याज्ञानमूलत्वादित्यर्थः ॥१०५२॥

उक्ताधिकारिणः प्राणाद्यनाशापेक्षाभावाच्च तदनाशो विद्याफलत्वेन नात्रोच्यत इत्याह—आविरिञ्चादिति। ब्रह्मलोकावसानादशेषसंसारादिति यावत्। चेच्छब्दो विरक्ते दौर्लभ्यद्योतनार्थः। इहेति मध्येऽधिकृतानामिति यावत्। क्रियाकार्यं चित्तशुद्धिः ॥१०५३॥

वैराग्यादिभाजो मुक्तिभाक्त्वे श्रुतिस्मृती प्रमाणयति—परीक्ष्येति। स्मृतेरपि वच इति संबन्धः ॥१०५४॥

तदाहुरित्यादेर्गतेन संबन्धं वक्तुं वृत्तं कीर्तयति—आत्मेति। परविषयोपनिषदुषा वा इत्याद्या स्वाविद्याध्वंसिस्वविद्यार्थं प्रवृत्तेत्यर्थः। तस्यामुपनिषद्यात्मेत्येवोपासीतेत्यात्मविद्यासूत्रं तच्च वर्णितमित्याह—आत्मेत्युपक्रममिति। आत्मेत्युपक्रमो यत्रास्ति तत्तथेति यावत् ॥१०५५॥

अव्याकृतवाक्योक्तमनुवदति—तद्धेति। अस्या उपनिषदः प्रमेयोऽनधिगतः प्रत्यगात्मेति यावत्। अकृत्स्नो हीत्यादिवाक्योक्तमनुद्रवति—अकृत्स्नेति। अज्ञातप्रत्यगर्थस्याव्याकृतवाक्येन मेयोक्तिवदकृत्स्नवाक्येनानात्मनि प्रमाभासः परं न प्रमेति तन्मेयत्वं निरस्तमित्यर्थः ॥१०५६॥

अथ प्रकृतसूत्रार्थं कीर्तयति—आत्मेति। अत्रेत्यात्मानात्मनोर्द्रष्टव्यत्वप्राप्तावित्यर्थः। अन्ययोगव्यवच्छेदेनाऽऽत्मनो द्रष्टव्यत्वे हेतुः कृत्स्नत्वादिति। तस्मिन्दृष्टे द्रष्टव्यस्यानवशिष्टत्वादित्यर्थः। एवकारार्थमाह—नेति। अनात्मनोऽद्रष्टव्यत्वे हेतुः—अकृत्स्न इति। तस्मादात्मनोऽन्योऽनात्मा यावद्दृश्यते तावन्नियमेन स परिच्छिन्नोऽनुभूयते तद्यावत्सत्त्वं परिच्छिन्नत्वात्तद्धिया च स्वरूपास्फूर्तेर्न तद्द्रष्टव्यतेत्यर्थः। यद्वाऽऽत्मनोऽन्यो यावद्दृश्यते तावदात्मा परिच्छिन्न एव स्यात्प्रतियोगिनो दर्शनादतोऽनात्मत्वप्रसङ्गात्परिच्छिन्नमनात्मानं निरस्यापरिच्छिन्नमात्मानमेवानुसंदध्यादित्यर्थः ॥१०५७॥

आत्मैव द्रष्टव्यश्चेत्तव्याधीनविधिविषयो वाच्यो दर्शने च विधिस्त्रिविधोऽपि निरस्तो न चाऽऽत्मैव तथा सिद्धत्वात्तत्कृत्र विधिरित्याशङ्क्य तद्धेत्वन्वयव्यतिरेकव्यापारे तं दर्शयति—कोऽहमिति। देहादिष्वात्मत्वेन दृष्टेषु

उत्पत्तिस्थितिविध्वंसाः कार्याणां स्युः कुतो न्विति । अन्वयव्यतिरेकाख्यो व्यापारोऽत्र विधीयते ।।५९।।

तपसा तत्परं ब्रह्म विद्धीति वचनादतः । अन्वयव्यतिरेकाख्यो व्यापारोऽत्र तपो मतम् ।।६०।।

यतो वा इत्यतो वाक्यान्न तदन्यत्तपो भवेत् । लक्षणोक्तेर्य आत्मेति सोऽन्वेष्टव्य इति श्रुतेः ।।६१।।

त्यक्ताप्रियपरागर्थो ह्यमानित्वादिसाधनः । प्रियात्मानमुपासीत शक्रवद्ब्रह्मचर्यवान् ।।६२।।

विद्यासूत्रतद्विवरणयोः पक्षभेदाः

आत्मेत्यनेन वाक्येन ब्रह्मविद्योपसूत्रिता । यदर्थोपनिषत्कृत्स्ना वृत्तिस्तस्या भविष्यति ।।६३।।

आत्मेत्येकमिदं सूत्रं कण्डिकाद्वयमेव वा । अध्यायो वा समस्तोऽयमध्यायद्वयमेव वा ।।६४।।

अव्याकृतव्याकरणप्रभृतीन्यपरे विदुः । पञ्चैव किल सूत्राणि तथाऽपीष्टं न बाध्यते ।।६५।।

व्यस्तः समस्तो वाऽहमन्यो वेत्यर्थः । देहादेरेकैकस्य मिलितस्यान्यस्य वाऽहं संबन्धीत्यालोचयति—कस्येति । परस्माद्भूतपञ्चकादन्यस्माद्वा जातोऽहमित्याह—कुतो वेति । इतिशब्दः प्रयोजकमतेरित्यनेन संबध्यते । मत्तोऽन्योऽपि सन्नसन्वेत्याह—क्व इति । अहमपि सत्त्वेऽसत्त्वे भिन्नत्वेऽभिन्नत्वे च कथमुत्पद्येयेत्याह—कथमिति । पौराणिकं वचो हीदमनुक्रियते । एवं विचारप्रयोजकधीयुक्तस्य मुमुक्षोर्ज्ञानहेत्वन्वयादिव्यापाराख्यत्वमर्थशोधने नियोगः सूत्रे स्वीकृत इत्याह—इति प्रयोजकेति ।।१०५८।।

मुमुक्षुणा त्वमर्थशुद्धिवत्तदर्थशुद्धिश्च कार्या ज्ञातपदार्थद्वयस्यैव तदैक्यवाक्यार्थधीसिद्धेरित्याह—उत्पत्तीति । ब्रह्मणोऽन्यस्माद्वेति कुतःशब्दार्थः । अत्रेतिना पूर्ववार्तिकस्थं प्रयोजकमतेरिति पदमाकृष्यते । एवं वीक्षापन्नस्याज्ञातब्रह्मणो जगदुत्पत्त्यादयो नान्यथा । देहादयो दृश्यत्वादिहेतोरनात्मानः द्रष्ट्रादिरूपश्चाहमित्येवंप्रकारान्वयादिव्यापारस्तत्त्वमर्थबोधेऽभीष्टे श्रोतव्यादिवाक्ये विधीयत इत्याह—अन्वयेति ।।१०५९।।

प्रत्यग्ब्रह्मधीहेतुत्वेनान्वयादिव्यापारो विहितस्तैत्तिरीयश्रुतावपीत्याह—तपसेति । अतो वचनादुक्तो व्यापारो विहित इति शेषः । तपसा ब्रह्म विजिज्ञासस्वेत्यतो वचनाद्धीसाधनत्वेन प्रसिद्धं तपो विधीयते नान्वयादीत्याशङ्क्याऽऽह—अन्वयेति । प्रकृता श्रुतिः सप्तम्यर्थः ।।१०६०।।

प्रसिद्धं हित्वाऽप्रसिद्धग्रहे हेतुमाह—यत इति । 'यतो वा इमानी'त्यादिवाक्याज्जिज्ञास्यब्रह्मलक्षणमुक्तं तथाच लक्ष्यब्रह्मज्ञानाय विहितं तपोऽन्वयाद्येव न कृच्छ्रादि तस्य तथा प्रकृतानुपयोगादित्यर्थः । 'य आत्माऽपहतपाप्मे'त्युपक्रम्य 'सोऽन्वेष्टव्य' इति वाक्याच्चान्वयादिर्विहितो धीहेतुत्वेनेति च्छान्दोग्यश्रुतिमाश्रित्योक्तं विधिं साधयति—य इति । श्रुतेर्विहितो दर्शितो व्यापार इति शेषः ।।१०६१।।

प्रासङ्गिकं प्रजापतिवाक्यतात्पर्यं संगृह्णाति—त्यक्तेति । एकशतं ह वै वर्षाणीत्यादिश्रुतेर्ब्रह्मचर्यवानिन्द्रो यथाऽन्वयादिनाऽऽत्मानमनुसंहितवांस्तथाऽन्योऽपि त्यक्तदुःखात्मकानात्मार्थोऽ'मानित्वमदम्भित्वमि'त्यादिशास्त्रोक्तोपायोपेतः सुखात्मकमात्मानं तेन जानीयादित्यर्थः । अमानित्वादिविशेषणस्य स्मृतिप्रसिद्धिद्योतको हिशब्दः ।।१०६२।।

अनुवादव्याजेन ज्ञानोपायान्वयादिव्यापारस्य विधेयत्वमुक्त्वा यदर्थोऽनुवादस्तदाह—आत्मेत्यनेनेति । विद्यासूत्रस्य सामीप्यादुपशब्दः सूत्रितविद्याजनकत्वेनोपनिषदस्तच्छेषत्वमाह—यदर्थेति । तर्हि सूत्रव्याख्यानेनैव सर्वोपनिषदर्थसिद्धेस्तदाहुरित्यादिर्वृथेत्याशङ्क्याऽऽह—वृत्तिरिति । तदाहुरित्यादिर्यो ग्रन्थो भविष्यत्यसौ सूत्रिताया विद्याया वृत्तिरिति योजना ।।१०६३।।

आत्मेत्येवोपासीतेत्येतदेव सूत्रमुत्तरं सर्वं तद्विवरणमित्युक्तमनुवदति—आत्मेत्येकमिति । तद्धेत्येका कण्डिका तदेतदित्यपरा तदुभयं सूत्रमपरमस्य विवरणमित्याह—कण्डिकेति । तृतीयाध्यायः सर्वोऽप्येकं सूत्रमुत्तरः प्रपञ्चस्तस्येत्याह—अध्यायो वेति । तृतीयाध्यायश्चतुर्थाध्यायश्च सूत्रमुत्तरं विवरणमित्याह—अध्यायेति ।।१०६४।।

स्वाभीष्टां सूत्रवर्त्मिं विकल्पद्वारोक्त्वा भर्तृप्रपञ्चेष्टं तद्विभागमाह—अव्याकृतेति । उक्तविभागस्य तदीयसंप्रदायावगतत्वद्योतनार्थं किलेत्युक्तम् । अस्यामपि कल्पनायामैक्यज्ञानान्मोक्षस्य न क्षतिरित्यङ्गीकारं सूत्रविभागस्य सूचयति—तथाऽपीति ।।६०६५।।

अव्याकृतं स एषेह तथाऽऽत्मैवेति चापरः । पदनीयं तथा प्रेयः पदार्थाः पञ्च सूत्रिताः ॥६६॥
यथोक्तानां च सूत्राणामा शास्त्रस्य समापनात् । वृत्तिः स्यादुत्तरो ग्रन्थस्तत्र तेषां समन्वयात् ॥६७॥
व्याचिख्यासुरथेदानीं सूत्रार्थंश्रुतिरञ्जसा । प्रयोजनाभिधित्साया उपोद्घाते प्रवर्तते ॥६८॥

### तदाहुरित्यादिवाक्यविवरणम्

वक्ष्यमाणवचो वस्तु तच्छब्देनाभिधीयते । ब्रह्म जिज्ञासवो विप्रा आहुर्यद्गुरुसन्निधौ ॥६९॥
विज्ञाताशेषवेदान्तसर्वस्वं ब्रह्मणि स्थितम् । उपसद्य गुरुं न्यायादाहुः केचिन्मुमुक्षवः ॥७०॥
यज्ञाद्याहितसंस्कारा अपास्ताशेषसाधनाः । सांसारिकपुमर्थेभ्यो विरक्ताः शुद्धबुद्धयः ॥७१॥
त्यक्त्वा कर्माणि निःसङ्गाः कर्मणां चरितार्थतः । ब्रह्मविद्याप्लवेनेमं संसाराब्धिं तितीर्षवः ॥७२॥
आ विरिञ्चात्पुमर्थानामकृत्स्नत्वादिदोषतः । वितृषोऽशेषतद्दोषध्वस्तिश्रेयः परीप्सवः ॥७३॥

तान्येव परोक्तसूत्राणि दर्शयति—अव्याकृतमिति । एषेहेति च्छान्दस्या प्रक्रियया संधिरनादृतः । अज्ञातमात्मतत्त्वं जगतो निदानं तदेव सृष्टे जगति प्रविष्टं तदेव चानात्मनो हित्वा ज्ञातव्यं तस्यैव ज्ञातत्वेन पदनीयं तदेव च प्रियतममिति पदार्थपञ्चकमत्र सूत्रितमित्यर्थः ॥१०६६॥

उत्तरग्रन्थस्योक्तसूत्रवृत्तित्वेन प्रवृत्तिमाह—यथोक्तानामिति । सूत्रिताव्याकृतादीनामुत्तरग्रन्थे सम्यगनुगतेरिति हेतुमाह—तत्रेति । उक्तं च—एतेषां यथोपन्यस्तानां वृत्तिस्थानीय उत्तरो ग्रन्थ आरभ्यत आ परिसमाप्तेः शास्त्रस्येति ॥१०६७॥

स्वपरपक्षयोः सूत्रं विभज्य स्वपक्षे तदाहुरित्यादेस्तात्पर्यमाह—व्याचिख्यासुरिति । सूत्रप्रवृत्तेरनन्तरमवसरे सत्यात्मेत्यादिसूत्रार्थमात्मज्ञानं तदपेक्षितानपि विवेकादीनुपायभेदानञ्जसा व्याख्यातुमिच्छन्ती श्रुतिः सूत्रितज्ञानफलकथनायोपोद्घातम् "चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं प्रचक्षते" इत्युक्तलक्षणं करोतीत्यर्थः । अथेति सूत्रविभागोक्त्यानन्तर्योक्तिः । आदौ सूत्रं ततो वृत्तिरिति क्रमार्थमिदानीमित्युक्तम् । सूत्रभेदे तदैक्ये च तदर्थज्ञानैक्येऽपि तत्र तत्र तदुक्तिप्रक्रियाभेदं दृष्ट्वा बहूक्तिरिति द्रष्टव्यम् । इच्छार्थस्त्वविवक्षितः ॥१०६८॥

वाक्यतात्पर्यमुक्त्वा पदार्थान्व्याचक्षाणस्तत्पदार्थमाह—वक्ष्यमाणेति । यद्ब्रह्मविद्ययेत्यादिवाक्यप्रकाश्यं वस्तु तच्छब्दवाच्यमित्यर्थः । किं तत्प्रकाश्यं तच्छब्देनोच्यते तदाह—ब्रह्मेति । ब्रह्मधीः सर्वात्मत्वहेतुरित्यत्र मुमुक्षवो विविदिषवो गुरुसंनिधौ यच्चोद्यमाहुस्तदुत्तरवाक्यप्रकाश्यमत्र तच्छब्दितमित्यर्थः । ब्राह्मणानामेव ब्रह्मजिज्ञासायां विशेषतोऽधिकार इति दर्शयितुं विप्रविशेषणम् ॥१०६९॥

श्रोत्रियं ब्रह्मनिष्ठमितिश्रुतेर्गुरुं विशिनष्टि—विज्ञातेति । परोक्षज्ञानवन्तं व्यावर्तयति—ब्रह्मणीति । समित्पाणिरितिश्रुतेरुपसत्तिक्रमं सूचयति—न्यायादिति । आहुरित्यस्यापेक्षितं पूरयति—केचिदिति । तेषां तत्त्वज्ञानार्थितामाह—मुमुक्षव इति ॥१०७०॥

ननु न तेषां मुमुक्षोपादेयता वर्तते स्वर्गादीच्छया तद्धेत्वनुष्ठानपराणां मुक्तिस्पृहाराहित्यादत आह—यज्ञादीति । नित्याद्यनुष्ठानोत्पन्नादृष्टविशिष्टाः शुद्धधियो बन्धान्तर्भूतैहिकामुष्मिकफलेभ्यो विरक्ता निरस्तसमस्तसांसारिकपुमर्थहेतवो ज्ञानमेवेच्छन्तश्चोदयन्तीत्यर्थः ॥१०७१॥

ननु श्रौतं नानाकर्मानुतिष्ठन्तस्तत्त्यागेऽपि तत्फलाभिलाषोपहतमतयो न ज्ञानमेवापेक्षेरन्नत आह—त्यक्त्वेति । कर्मणां चित्तशुद्ध्या कृतफलत्वात्तदपेक्षाहेत्वभावात्तत्फलेभ्यो हेतुभ्यो विरक्तास्तानि कर्माणि सफलानि त्यक्त्वा विद्याख्यतरणहेतुना भाष्योक्तमनुभवसिद्धं च संसारसागरं तर्तुमिच्छवः स्वच्छधियश्चोदयन्तीति संबन्धः ॥१०७२॥

केवलं कर्मफले स्वर्गादावपेक्षाभावेऽपि तत्सहितोपास्तिफले ब्रह्मलोकादौ तत्संभवात्कुतो मुमुक्षेत्याशङ्क्याऽऽह—आ विरिञ्चादिति । आ मानुषादा च प्रजापतेर्ये पुमर्थास्तेषां परिच्छिन्नत्वक्षयिष्णुत्वादिदोषदर्शनात्तेभ्यो विरक्ता मुमुक्षवो भवन्तीत्यर्थः । तर्हि मोक्षेऽपि नेच्छा ब्रह्मलोकवत्फलत्वादित्याशङ्क्याऽऽह—अशेषेति । समस्तब्रह्मलोकादिषु दृष्टस्य परिच्छिन्नत्वादिदोषस्य ध्वस्तिर्यत्र श्रेयःशब्दिते मोक्षे तमाप्तुमिच्छव इति यावत् ॥१०७३॥

साक्षेपमाहुः श्रेयांसं गुरुं प्राप्य निरेषणाः । गुरुद्वारैव विद्येह श्रेयःप्राप्तौ क्षमा यतः ।।७४।।

### ब्रह्मविद्यापदार्थनिर्वचनम्

किमाहुरित्यपेक्षायामिदं तदभिधीयते । मन्यन्त इत्यनेनैव यच्छब्दो याति संगतिम् ।।७५।।
अव्यावृत्ताननुगतं वस्तु ब्रह्मगिरोच्यते । मुख्यार्थो ब्रह्मशब्दोऽयमेवं सत्युपपद्यते ।।७६।।
तद्यया वेद्यते बुद्ध्या तदसाधारणात्मना । ब्रह्मविद्येति तां साक्षाच्छेमुषीं प्रतिजानते ।।७७।।
सर्वं कृत्स्नं भविष्यामो मन्यन्ते ब्रह्मविद्यया । यन्मनुष्या वयं तत्र विरोधमनुयुञ्ज्महे ।।७८।।
कृत्स्नमेव यतः प्रोक्तं वस्तु यत्पारमार्थिकम् । तत्प्रमाणविशुद्ध्यर्थं चोदयन्ति मुमुक्षवः ।।७९।।
ब्रह्मविद्यैव कृत्स्नाप्तौ यस्मात्साधनमुच्यते । तत्प्राप्तौ तत्तमोमात्रं व्यवधानमतो भवेत् ।।८०।।
द्योतिकैव यतो विद्या न त्वसौ कारकं ततः । उत्पत्त्यादिक्रियाकार्यं तस्माच्चेह न शङ्क्यते ।।८१।।
सिद्धेऽर्थे द्योतको दीपो न तु कार्ये यतस्ततः । सर्वात्मभावः सर्वेषां सिद्धः प्रागपि बोधतः ।।८२।।

तेषां गुरुं प्रति चोद्यमाक्षेपगर्भत्वादुपेक्षानर्हमित्याह—साक्षेपमिति । तत्समाधिसामर्थ्यं गुरोर्द्योतयति—श्रेयांसमिति । गुरुत्वाच्च शिष्याणां हितोक्तौ यतितव्यमित्याह—गुरुमिति । साक्षेपं चोदयन्ति चेत्ते विजिगीषवो न शिष्या इत्याशङ्क्याऽऽह—निरेषणा इति । तेषां स्वधीवशादेव विद्योदयात्किमिति गुरूपसदनमित्याशङ्क्याऽऽचार्यवानित्यादिश्रुतिमाश्रित्याऽऽह—गुरुद्वारेति । इहेत्यात्मोक्तिः । अतो गुरूपसदनं तेषामुचितमिति शेषः ।।१०७४।।

तदाहुरिति व्याख्याय यदित्याद्यवतारयति—किमिति । तत्रान्वयोक्तिपूर्वकं ब्रह्मपदार्थमाह—मन्यन्त इति । कमलासनादि ब्रह्मशब्दितं किं न स्यादत आह—मुख्येति । सामान्यविशेषभावहीने वस्तुनि ब्रह्मशब्दप्रयोगे सत्यसौ मुख्यार्थः स्यात्कमलासनादिविषयत्वे तु नैवं न च संभवति मुख्येऽर्थेऽमुख्योऽर्थो ग्रहणमर्हतीत्यर्थः ।।१०७५–१०७६।।

विद्याशब्दार्थमाह—तदिति । यया बुद्ध्या तद्ब्रह्म स्वासाधारणसच्चिदानन्दं प्रत्यक्त्वेन साक्षाद्वेद्यते तां बुद्धिवृत्तिं वाक्योत्थां ब्रह्मविद्येति प्रतिजानत इति योजना ।।१०७७।।

ब्रह्मविद्यया कृत्स्नं भविष्याम इति यन्मनुष्या मन्यन्ते तत्र विद्याफलमधिकृत्य विरोधं चोदयाम इत्युपोद्घातवाक्यं योजयति—सर्वमिति ।।१०७८।।

मुमुक्षूणामुपशान्तदर्पाणां नाऽऽक्षेपो युक्तो जिज्ञासिते तत्त्वे ज्ञानोत्पत्तये प्रश्नमात्रस्यैव प्राप्तेरित्याशङ्क्य चोदयतामाशयमाह—कृत्स्नमिति । यद्वास्तवं वस्तु तत्पूर्णमेव पूर्वमत्र हीत्यादावुक्तमतस्तस्मिन्नद्वैते यत्प्रमाणं तत्परिशोधनार्थं चोद्यमित्यर्थः ।।१०७९।।

ज्ञानमात्रमिच्छतामद्वैतमानशोधनमपि नोपयोगीत्याशङ्क्याऽऽह—ब्रह्मविद्येति । शोधिते हि माने सोदेति सैव मुक्तौ हेतुः श्रुतिस्मृत्योरुच्यतेऽतस्तच्छोधनमर्थवदित्यर्थः । तस्या मुक्तिहेतुत्वोक्तेरार्थिकमर्थमाह—तत्प्राप्ताविति । कृत्स्नं वस्तु तच्छब्दार्थः ।।१०८०।।

विद्याया मुक्तिहेतुत्वेऽपि कथमविद्यायास्तद्व्यवधानत्वं तत्राऽऽह—द्योतिकेति । यतः सा द्योतिकैव न कारकमतो मोक्षे मोहापिधानभङ्गादृते विद्याकार्याभावात्तस्यास्तदुपायत्वानुपपत्त्या तद्व्यवधानत्वमविद्यायाः सिद्धमित्यर्थः । मुक्तेरविद्यामात्रव्यवहितत्वे तद्वानेरकर्मसाध्यत्वात्स्वरूपस्थितेश्चतुर्विधक्रियाफलवैलक्षण्यान्न कर्मसाध्या मुक्तिरिति फलितमाह—उत्पत्त्यादीति । इह मुक्ताविति यावत् । तस्याश्च कर्मसाध्यत्वे यत्कृतकं तदनित्यमितिन्यायान्मुक्तेरनित्यतया पुनर्बन्धः स्यादिति चकारार्थः ।।१०८१।।

कर्मासाध्यत्वेऽपि मुक्तेर्विद्यासाध्यत्वादुत्पाद्यतेत्याशङ्क्याऽऽह—सिद्ध इति । न विद्योत्पादिका द्योतकत्वाद्दीपवदतो मुक्तिर्विद्यातः प्रागेव सिद्धेर्नोत्पाद्येत्यर्थः ।।१०८२।।

अतोऽकृत्स्ना वयं मोहात्कृत्स्नात्मानोऽपि वस्तुतः । निहत्य विद्ययाऽविद्यां यामः कार्त्स्न्यं स्वतोगतम् ८३

मनुष्यपदप्रयोजनोक्तिः

अधिकारविनिश्चित्यै मनुष्या इति गीरियम् । मनुष्याणां हि निःशेषत्र्यर्थेऽधिकृतिर्यतः ।।८४।।
दृष्टार्थतो वा विद्याया मनुष्यग्रहणं कृतम् । तावन्मात्रोऽधिकार्यत्र नाग्निहोत्राधिकारिवत् ।।८५।।
प्रत्यबुध्यत यो यस्तदिति चोर्ध्वं प्रवक्ष्यति । नातः कर्माधिकार्यत्र दृष्टार्थत्वादपेक्ष्यते ।।८६।।
कर्मभ्य इव च ज्ञानात्फलप्राप्तिः सुनिश्चिताम् । मन्यन्त उभयत्रापि श्रुतिमानाविशेषतः ।।८७।।
यन्मन्यन्ते नरास्तत्र विरुद्धमिव लक्ष्यते । मतोऽतश्चोदयामोऽत्र यथा विप्रतिषिद्धता ।।८८।।

सर्वात्मत्वप्रापकं ब्रह्म कीदृशमिति विमर्शनम्

किमु तद्ब्रह्म यद्वेद्यं यज्ज्ञानात्सर्वताऽऽप्यते । किंचापि तदवेदन्यद्यज्ज्ञानात्कृत्स्नतामगात् ।।८९।।

सर्वभावस्य स्वतःसिद्धौ ज्ञानात्तत्प्रेप्सा कथमित्याशङ्क्याज्ञानव्यवधानादित्याह—अत इति । कथं तर्हि मुक्तिरत आह—निहत्येति । स्वतोगतं स्वभावतोलब्धमविद्यामात्रव्यवहितमित्यर्थः ।।१०८३।।

मोक्षहेतुज्ञानोत्पाद्याद्वैतमानशुद्धयर्थं चोद्यमित्युपपाद्य मनुष्यग्रहणस्य कृत्यमाह—अधिकारेति । ज्ञानकर्मणोरिति शेषः । कथमधिकारविनिश्चितिस्तत्राऽऽह—मनुष्याणां हीति । तेषामेव वेदार्थेऽधिकृतिरिति प्राच्यां मीमांसायां[1] दर्शितमिति हिशब्दार्थः । अतो मनुष्यग्रहणं युक्तमिति शेषः ।।१०८४।।

भाष्यानुसारिमनुष्योक्तितात्पर्यमुक्त्वा तात्पर्यान्तरमाह—दृष्टेति । विद्यायाः शोकादिनाशाख्यदृष्टफलत्वात्तत्कामी सर्वोऽपि साधारणाधिकारिलक्षणाक्रान्तोऽत्र विद्यायामधिकारी न त्वग्निहोत्राद्यधिकारिनियमवदत्र तन्नियमोऽस्तीति वक्तुमिह मनुष्योक्तिरित्यर्थः ।।१०८५।।

कर्माधिकारिवज्ज्ञाने नापेक्षितो विशिष्टोऽधिकारीत्यत्र मानमाह—प्रत्यबुध्यतेति । प्रवक्ष्यति विद्याधिकार्यनियममिति शेषः । मनुष्यग्रहणं विशेषतोऽधिकारज्ञापनार्थमित्यादिभाष्यं तर्हि कथमित्याशङ्क्य वाक्यशेषविरोधान्नाऽऽदेयमित्याह—नात इति । अतो दृष्टार्थत्वादिति संबन्धः । कर्माधिकारी तद्वद्विशिष्टोऽधिकारीत्यर्थः । अत्रेति विद्योक्तिः ।।१०८६।।

यथा तथा मनुष्यग्रहणेऽपि किमिति ते निश्चितवन्तो ज्ञानान्मुक्तिमित्याशङ्क्याऽऽह—कर्मभ्य इति । उभयत्र साधनत्वशक्तेरविशेषादिति चशब्दार्थः । कर्मणि ब्रह्मणि च वेदप्रामाण्याविशेषादिति हेत्वन्तरमाह—उभयत्रेति ।।१०८७।।

उक्तमनूद्य किमित्याद्यवतारयति—यदित्यादिना । यन्मनुष्या ब्रह्मविद्यया मोक्षो भवतीति मन्यन्ते तत्र मते तेषामिति यावत् । विरुद्धमिव ज्ञानात्फलमिति शेषः । अत्र ज्ञानफले यथा परस्यापि विप्रतिषिद्धता भाति तथा चोद्यमित्याह—अत्रेति । यद्वा यथा पश्चादविप्रतिषिद्धता तथाऽऽदौ चोद्यते पूर्वपक्षविशुद्धा[2] हीत्यादिन्यायादित्याह—यथेति ।।१०८८।।

किं तच्चोद्यमित्याशङ्क्य वाक्यं व्याचष्टे—किमिति । यस्य ब्रह्मणो ज्ञानान्मोक्षस्तद्यन्मुमुक्षुभिर्वेद्यं तत्किं परिच्छिन्नमुतापरिच्छिन्नमिति प्रश्नार्थः । तत्किमवेदित्यादिप्रश्नं व्याचष्टे—किंचेति । यस्य ज्ञानाद्ब्रह्म सर्वत्वं गच्छति तत्किं स्वरूपमेव विदित्वा सर्वं भवतीत्युतान्यदित्यर्थः । चकारापिकारौ किं ब्रह्म विदित्वा सर्वं भवत्युताविदित्वेति प्रश्नान्तरद्योतनार्थौ ।।१०८९।।

---

१. मीमांसायामिति—तथाहि फलार्थत्वात् कर्मणः शास्त्रं सर्वाधिकारं स्यादित्यधिकरणे ( ६.१.४ ) तिरश्चामपि कर्मण्यधिकारोवक्तव्यः । तेषापि सुखार्थित्वात् घर्मतप्तानां छायाश्रयणदर्शनात् इति पूर्वपक्षे सिद्धान्तः कर्तुर्वाश्रुतिसंयोगात् । यः कृत्स्नं कर्माभिनिर्वर्तयितुं समर्थस्तस्यैव कर्मस्वधिकारः । न चैते शक्नुवन्ति कृत्स्नं कर्म निर्वर्तयितुं अतः मनुष्याधिकारं शास्त्रमित्युक्तम् ।

२. पूर्वपक्षविशुद्धाहीति—पूर्वपक्षं दृढीकृत्य पश्चात् तन्निरासेन सिद्धान्तकरणे सिद्धान्तदार्ढ्यमित्यर्थः ।

**ब्रह्माकृत्स्नं मतं तच्चेदुक्तदोषानिराकृतेः । अनुपास्यं भवेत्तादृक्प्राणादिवदसंशयम् ॥९०॥**
**कल्पना नापि गौण्यत्र मुख्यार्थे सति युज्यते । न ह्यालभन्ते बाहीकं मुख्ये गवि सति क्वचित् ॥९१॥**
**मुख्यं ब्रह्म न चेदस्ति गौणं स्यात्तद्विना कुतः । मुख्यमग्निं विना गौणं न लोकोऽप्यवगच्छति ॥९२॥**
**अकृत्स्नज्ञानतो नापि पुरुषार्थोऽवगम्यते । ब्रह्माज्ञानसमुत्थत्वान्मिथ्याज्ञानत्वकारणात् ॥९३॥**
**मेयमानादिसंभित्तिर्यदि नामेह लभ्यते । अयथावस्तुरूपत्वात्स्वप्नमेयादिवत्तु सा ॥९४॥**
**अकृत्स्नस्य च ब्रह्मत्वं विरुद्धं भानुशैत्यवत् । तस्मादकृत्स्नं ब्रह्मेति न मानेनोपपद्यते ॥९५॥**
**ब्रह्मास्तु तर्हि तत्कृत्स्नमुक्तदोषासमन्वयात् । मुख्यार्थलाभतश्चापि तस्य च प्रकृतत्वतः ॥९६॥**

### ब्रह्मणि प्रमाणसदसद्भावविचारः

**न कृत्स्नमिति तद्ग्राह्यं तत्प्रमाणाद्यसंभवात् । तदन्यवस्तुसद्भावे तद्ब्रह्मत्वं विहन्यते ॥९७॥**
**न च मानानपेक्षस्य सिद्धिरभ्युपगम्यते । मानादियत्नानर्थक्यप्रसक्तिः स्यात्तथा सति ॥९८॥**

परिच्छिन्नत्वपक्षमनुभाषते—ब्रह्मेति । "स योऽत एकैकमुपास्ते न स वेदे"त्यत्र परिच्छिन्नत्वेन प्राणादेरनुपास्यत्वमुक्तं तथा ब्रह्मापि परिच्छिन्नं नोपास्यं प्राणादिषूक्तदोषस्य निवारकाभावादत्रापि प्राप्तेरित्याह—उक्तेति ॥१०९०॥

किंच ब्रह्मशब्दस्य मुख्यार्थोऽस्ति न वा?आद्ये परिच्छिन्नं ब्रह्म नोपेयं मुख्यगौणयोर्मुख्ये संप्रत्ययादित्याह—कल्पनेति । अत्रेति ब्रह्मशब्दोक्तिः । मुख्ये सति न गौणग्रहणमित्यत्र दृष्टान्तमाह—न हीति । गौर्बाहिक इति प्रयोगाद्भारवाहकस्य गौणं गोत्वमवगन्तव्यम् । क्वचिदिति यज्ञोक्तिः ॥१०९१॥

द्वितीयमनूद्य दूषयति—मुख्यमिति । असति मुख्ये नास्ति गौणमित्यत्र दृष्टान्तमाह—मुख्यमग्निमिति । परीक्षकसमुच्चयार्थोऽपिशब्दः ॥१०९३॥

किंच ब्रह्मज्ञानं पुमर्थसाधनं न वा ? न चेद्ब्रह्मविदाप्नोति परमित्यादिश्रुतिकोपस्तत्साधनं चेद्ब्रह्मणोऽपरिच्छिन्नत्वं ग्राह्यमित्याह—अकृत्स्नेति । अपिरवधारणार्थो यथोक्तविकल्पार्थो वा । तस्य पुमर्थहेतुत्वे हेतुमाह—ब्रह्मेति । परिच्छिन्नस्य सर्वस्य ब्रह्माज्ञानजन्यत्वात्तद्धियो मिथ्याधीत्वादिति हेत्वर्थः ॥१०९४॥

परिच्छिन्नत्वे ब्रह्मणो मात्रादिभेदलाभात्तत्तथेत्याशङ्क्याऽऽह—मेयेति । परिच्छिन्नब्रह्मपक्षे मेयादिभेदलाभेऽपि तस्यावस्त्वनुसारित्वान्मिथ्यात्वं स्वप्नभेदवन्न हि मात्रादिभेदो वस्त्वनुसरत्यन्योन्याश्रयादिदोषादित्यर्थः । परिच्छिन्नब्रह्मपक्षः सप्तम्यर्थः । मेयादिसंभित्तिः सेत्युक्ता ॥१०९४॥

किं चास्मिन्पक्षे व्याहतिरित्याह—अकृत्स्नस्येति । आद्यपक्षायोगमुपसंहरति—तस्मादिति ॥१०९५॥

कल्पान्तरमाह—ब्रह्मेति । पूर्वकल्पनिरासेनास्यानिरस्तत्वं सूचयति—उक्तेति । ब्रह्मपदस्य मुख्यार्थसिद्धेश्चापरिच्छिन्नं ब्रह्मेत्याह—मुख्येति । संभवे मुख्यस्य नामुख्योऽर्थो ग्रहणमर्हतीत्यपेरर्थः । अत्र ह्येत इत्यत्र ब्रह्मणोऽपरिच्छिन्नस्य प्रकृतत्वाच्च तत्तथेत्याह—तस्येति ॥१०९६॥

ब्रह्म चेदद्वयं तस्मिन्मानं माता फलं च न सिध्येत्ततो न तदपरिच्छिन्नमित्याह—नेत्यादिना । तच्छब्दस्तत्रेत्यर्थे । ब्रह्मणः सजातीयभेदाभावेऽपि विजातीयमानादिभेदोऽस्तीत्याशङ्क्याऽऽह—तदन्येति । सर्वतोऽनवच्छिन्नं हि ब्रह्म तत्र ब्रह्मशब्दस्य व्युत्पन्नत्वान्न च मानादिकल्पितमित्यदोषः । तद्धि वस्त्ववस्तु वा द्विधाऽपि ब्रह्मासिद्धिरिति भावः ॥१०९७॥

तेन विनाऽपि ब्रह्म सेत्स्यतीत्याशङ्क्याऽऽह—न चेति । विमतं न मानाद्यनपेक्षसिद्धिकं वस्तुत्वाद्घटवदित्यत्र विपक्षे दोषमाह—मानादीति । तन्निरपेक्षस्य वस्तुनः सिद्धत्वे मानद्वारा मितिसिद्धये पुरुषप्रयत्नो विफलः स्यादित्यर्थः ॥१०९८॥

सदानुदितालुप्तैकज्ञप्तिमात्रसतत्त्वकम् । यद्यपीष्टं तथाऽपीदं नाऽऽत्ममोहापनोदकृत् ॥९९॥
न हि मानमनाश्रित्य वस्त्वात्माज्ञानहानिकृत् । स्रक्स्थाण्वादावदृष्टत्वादुक्तदोषोऽपि चाऽऽपतेत् ११००
मानाद्यनभ्युपेतौ हि न किंचिद्वस्तु सिध्यति । तदभ्युपेतौ ब्रह्मत्वं व्यावृत्तेर्न प्रसिध्यति ॥ १ ॥
यथाकथंचिच्छब्दार्थो यदि नामाभ्युपेयते । तथाऽपि दोषवद्ब्रह्म यथा तदधुनोच्यते ॥ २ ॥
कृत्स्नं वा यदि वाऽकृत्स्नं यथेच्छसि तथाऽस्तु तत् । ब्रह्मत्वं किं स्वतस्तस्य किंवा तत्परतो मतम् ॥ ३ ॥
यदि तावत्स्वतस्तत्स्याद्ब्रह्मविद्या निरर्थिका । न ह्युष्णत्वं हुताशस्य परतः कुर्वते बुधाः ॥ ४ ॥
ज्ञानमूर्तेर्न चाज्ञानमागन्तु सहजं तथा । भानौ तमोवत्तेनेदृग्ब्रह्म नैवोपपद्यते ॥ ५ ॥

कृत्स्नत्वस्य स्वतस्त्वे दोषाः

शास्त्राद्यारम्भानर्थक्यदोषश्चापि प्रसज्यते । स्वानुभूतिविरोधोऽपि ब्रह्मत्वं चेद्भवेत्स्वतः ॥ ६ ॥
योषाग्निवच्चेच्छास्त्रं स्याद्दृष्टिमात्रविधायकम् । तथा सत्यविरोधः स्याद्भिन्नाधिकरणत्वतः ॥ ७ ॥
सदसीति क्रियानिष्ठं प्रत्यक्षाद्यर्थनिष्ठितम् । विरोधः कोऽनयोरत्र मिथोऽर्थासंस्पृशोः सतोः ॥ ८ ॥

जडत्वमुपाधिरित्याशङ्क्याऽऽह—सदेति । स्वप्रकाशस्यापि स्वाज्ञानध्वंसे मानाद्यपेक्षोपगमाद्व्यतिरेके बाधापत्तिरित्यर्थः ॥१०९९॥

स्वरूपज्ञानस्यैव तद्ध्वंसित्वात्किमपेक्षयेति व्यतिरेकबाधराहित्यमाशङ्क्याऽऽह—न हीति । विमतं स्वतो न स्वाज्ञानध्वंसस्यधिष्ठानत्वात्स्रगादिवदित्यत्र विपक्षे मानादियत्नानर्थक्यप्रसक्तिमाह—उक्तेति । न च कदाचिदपि संसारोऽवतरेदिति चकारार्थः ॥११००॥

ब्रह्मणि मानादिवैयर्थ्यापत्तिरिष्टापत्तिरिति चेन्मैवं मुमुक्षूणां श्रवणाद्यर्थवत्त्वोपगमभङ्गात् । घटादौ च मानाद्युपगम्यते न वा? द्वितीयं प्रत्याह—मानादीति । घटादेर्जडत्वादिति हिशब्दार्थः । प्रथमं प्रत्यादिशति—तदभ्युपेताविति । व्यावृत्तेर्मानादिना व्यवच्छेदादित्यर्थः ॥११०१॥

परिच्छिन्नत्वेऽपरिच्छिन्नत्वे च प्रत्येकं दोषमुक्त्वा साधारणदोषं वक्तुमुत्तरो ग्रन्थ इत्याह—यथेति । शब्दशब्देन ब्रह्मशब्दो गृह्यते ॥११०२॥

यथाकथंचिदित्येतदेव प्रकटयति—कृत्स्नं वेति । पक्षद्वयेऽपि दोषवत्त्वं वक्तुं विकल्पयति—ब्रह्मत्वमिति ॥११०३॥

आद्यमनूद्य दूषयति—यदीति । ब्रह्मणो ब्रह्मत्वे स्वतःसिद्धेऽपि कुतो विद्यावैयर्थ्यमित्याशङ्क्य सा ब्रह्मत्वमुत्पादयति वा, प्रकाशयति वा, तद्व्यवधानाज्ञानं निवर्तयति वा? नाऽऽद्यः स्वतःसिद्धिविरोधान्नेतरः प्रकाशस्यापि स्वरूपत्वादिति मत्वाऽऽह—न हीति ॥११०४॥

तृतीयं प्रत्याह—ज्ञानेति । प्रकाशरूपस्य ब्रह्मणोऽप्रकाशात्मकाज्ञानायोगे दृष्टान्तमाह—भानाविति । विद्यावैयर्थ्येन स्वतोऽपरिच्छिन्नं परिच्छिन्नं वा ब्रह्मायुक्तमितिफलितमाह—तेनेति ॥११०५॥

किंच ब्रह्मणः स्वतो ब्रह्मत्वे शास्त्रारम्भस्य श्रवणादिपुंप्रवृत्तेश्चाऽऽनर्थक्यान्न स्वतो ब्रह्मतेत्याह—शास्त्रादीति । ब्रह्मत्वस्य स्वतस्त्वे हेत्वधीनत्वशङ्कैव नेति वक्तुमपिशब्दः । किंचाद्वयं ब्रह्माहमित्यननुभवात्कर्ताऽहमित्यादिविपरीतानुभवाच्च प्रतीचोऽद्वयब्रह्मत्वस्य स्वतस्त्वे तदर्थशास्त्रस्यानुभवविरोधेनाप्रामाण्यान्न तस्य स्वतो ब्रह्मतेत्याह—स्वानुभूतीति ॥११०६॥

अनुभवाविरोधार्थमेकदेशी शङ्कते—योषेति । योषा वाव गौतमाग्निरिति वाक्यं यथा योषित्यग्निदृष्टिमात्रपरत्वान्न वस्तुनिष्ठं एवमद्वयब्रह्मशास्त्रं ब्रह्मास्मीत्यत्यात्मनि दृष्टिमात्रपरं न वस्तुपरमित्यर्थः । शास्त्रस्योपास्तिविधायकत्वे वस्तुविषयमानान्तरेणाविरोधफलमाह—तथेति ॥११०७॥

अविरोधे हेतुं भिन्नविषयत्वं स्फोरयति—सदिति । साध्यं निगमयति—विरोध इति । अत्राऽऽत्मनीति यावत् । हेतोर्निगमनं मिथ इति ॥११०८॥

नैतदेवं यतो वाक्यं वस्तुनिष्ठं पुरोदितम् । विरोध एव तेन स्यादेकाधिकरणत्वतः ॥ ९ ॥
अशक्या ब्रह्मदृष्टिश्च कर्तुं ब्रह्माप्रसिद्धितः । लोकसिद्धौ तु योषाग्नी तद्दृष्टिः सुकरेष्यते ॥१०॥
अथाग्निवच्चेत्तद्ब्रह्म सिद्धं मानान्तरान्मतम् । तावतैव कृतार्थत्वात्किमन्यत्प्रार्थ्यते श्रुतेः ॥११॥
तद्दृष्टावेव निःशेषपुरुषार्थसमाप्तितः । फलान्तराय तद्दृष्टिर्न च स्यादग्निदृष्टिवत् ॥१२॥

कृत्स्नत्वस्य पराधीनत्वे दोषः

परतोऽपि च कृत्स्नत्वे ब्रह्मत्वं दुःस्थसिद्धिकम् । क्रियातो ज्ञानतो वा तद्यदि वोभयसंश्रयात् ॥१३॥
न ब्रह्मता क्रियातः स्यादुत्पत्त्यादिसमन्वयात् । न स्यादाद्यन्तवद्ब्रह्म ह्यपूर्वाजादिशास्त्रतः ॥१४॥
अपवादश्च बहुशः कर्मकार्यस्य दृश्यते । मुमुक्षुत्वस्य तद्धेतोः कर्मकार्यं न तत्ततः ॥१५॥

ब्रह्म अन्यत् अनन्यत् अन्यानन्यद्वा ज्ञानाद् ब्रह्माभवदिति विकल्प्य निरासः

अथ ज्ञानात्तदभवत्कृत्स्नं ब्रह्मेति चेन्मतम् । अन्यानन्यप्रमेयत्वे तथाऽपीष्टं न सिध्यति ॥१६॥
क्रियाविरोधः प्राप्नोति यद्यनन्यस्य मेयता । श्रुत्यन्तरविरोधश्च प्रत्यग्दृष्टौ प्रसज्यते ॥१७॥

पूर्ववादी दूषयति—नैतदिति । सर्वोऽपीत्यत्र वस्तुपरत्वं तत्त्वमादेरुक्तमत्र क्रियापरत्वं वदतस्तद्विरोधोऽतो नोपास्तिविधायकं वाक्यमित्याह—यत इति । क्रियापरत्वाभावाद्वाक्यस्यापि मानान्तरवद्वस्तुनिष्ठत्वाद्ब्रह्मनिष्ठवाक्यस्य मानान्तरेणैकविषयतया स्वानुभवविरोधः स्यादेवेत्याह—विरोध इति ॥११०९॥

किंचाप्रसिद्धं प्रसिद्धं वा ब्रह्म?आद्ये तदुपास्तिरशक्येत्याह—अशक्येति । योषित्यग्निदृष्टिवत्प्रतीचि ब्रह्मदृष्टिः सुकरेत्युक्तमित्याशङ्क्याऽऽह—लोकेति । तद्दृष्टिस्तस्यां योषिति तस्याग्नेर्दृष्टिरिति यावत् ॥१११०॥

कल्पान्तरमनूद्य निरस्यति—अथेति । मानान्तराधीनब्रह्माधिगमादेव पुमर्थसिद्धेः श्रौतं ब्रह्मज्ञानमकिंचित्करमित्यर्थः ॥११११॥

ब्रह्मज्ञानमात्रात्पुमर्थमात्रसिद्धावपि पूर्णपुरुषार्थासिद्धेस्तदर्थं तस्य शास्त्रादुपास्तिरित्याशङ्क्याऽऽह—तद्दृष्टाविति । मानान्तरादपि ब्रह्मदृष्टौ तावतैव पूर्णपुरुषार्थलाभात्तदर्थं पुनः शास्त्रीया ब्रह्मदृष्टिर्न कर्तव्या-पिष्टपेषणादित्यर्थः । यथा मानान्तराधीनाग्निदृष्टावनिर्वृत्तफलनिर्वृत्तये योषित्यग्निदृष्टिः शास्त्रात्क्रियते तथेति वैधर्म्यदृष्टान्तोऽग्नीति ॥१११२॥

स्वतो ब्रह्मत्वपक्षं प्रतिक्षिप्य पक्षान्तरमनुभाष्य दूषयति—परतोऽपीति । ब्रह्मणो ब्रह्मत्वस्यान्याधीनत्वे तदव्यवस्थितं स्वर्गवदनित्यं स्यादित्यर्थः । उक्तदृष्टान्तार्थश्चशब्दः । कथमित्याशङ्क्य तद्दर्शयितुं विकल्पयति—क्रियात इति ॥१११३॥

आद्यं प्रत्याह—नेति । क्रियासाध्यस्योत्पत्त्यादियोगात्तत्साध्ये तद्दर्शनादनित्यत्वापत्तेरिति हेतुमाह—उत्पत्त्यादीति । स्याद्ब्रह्मणोऽपि जन्मादीत्याशङ्क्याऽऽह—न स्यादिति । आद्यन्तवत्त्वे घटवदब्रह्मत्वप्रसक्तिरिति युक्तिद्योतको हिशब्दः ॥१११४॥

"नास्त्यकृतः कृतेन" "न कर्मणा न प्रजये"त्यादिश्रुतिविरोधाच्च न क्रियासाध्या ब्रह्मतेत्याह—अपवादश्चेति । मुक्तेरक्रियासाध्यत्वे श्रुतेस्तात्पर्यलिङ्गमभ्यासं सूचयति—बहुश इति । कर्मकार्यस्येति भाव-प्रधानोक्तिः । मुमुक्षुत्वस्य तदिष्टब्रह्मत्वस्येत्यर्थः । तस्मादपवादादिहेतोर्न ब्रह्मत्वं क्रियासाध्यमित्याह—तद्धेतोरिति । ततः प्रथमपक्षानुपपत्तिः सिद्धेत्याह—तत इति ॥१११५॥

कल्पान्तरं कथयति—अथेति । तस्मादनन्यद्विदित्वा ब्रह्म पूर्णमभवदन्यानन्यद्वाऽन्यद्वा त्रिधाऽपि न ब्रह्मसिद्धिरित्याह—अन्येति ॥१११६॥

अनन्यमेयत्वे कथमिष्टासिद्धिरित्याशङ्क्याऽऽह—क्रियेति । एकस्यां क्रियायामेकस्यैव कर्मत्वकर्तृत्वविरोधः स्यादित्यर्थः । किंच ब्रह्मविषया पृथग्दृष्टिश्चेदिष्टा तदा सत्यज्ञानप्रज्ञानघनादिश्रुतिविरोधः स्यादित्याह—श्रुत्यन्तरेति ।

तथाच ज्ञानसाध्यत्वं ब्रह्मणः संप्रसज्यते । अन्यानन्यप्रमेयेऽपि दोषोऽयं दुर्निवारणः ॥१८॥
बुद्ध्वाऽथान्यत्तदभवत्तदन्यत्किमबुध्यत । तदप्यन्यत्पुराऽज्ञासीदनवस्था प्रसज्यते ॥१९॥
निर्निमित्तस्य कृत्स्नत्वेऽप्यस्मदादेस्तथा न किम् । पक्षपातः श्रुतेर्नापि प्रामाण्यादुपपद्यते ॥२०॥
समुच्चयनिषेधश्च युक्तिभिर्वक्ष्यते स्फुटम् । प्रधानगुणभावोऽपि विरोधान्न तयोर्भवेत् ॥२१॥
इत्यादिबहुदोषत्वाद्दुःसंभाव्यं प्रमाणतः । विद्ययैवाऽऽप्नुमः कात्स्न्र्यमित्यादि यदुदीरितम् ॥२२॥

अत्र सिद्धान्तकथनम्

न कश्चिदपि दोषोऽत्र यथैतदुपपत्स्यते । अन्यथा कल्प्यमानेऽस्मिन्नुक्तदोषपरंपरा ॥२३॥
एवं तावदुपोद्घातो व्याख्यातोऽत्र समासतः । भगवत्पादभाष्येऽस्मिन्नन्यदीयोऽपि वर्ण्यते ॥२४॥

तदाहुरित्यादेः भर्तृप्रपञ्चाभिप्रायः विवर्तवादाभिप्रायेण

तदेतद्ब्रह्मविद्याया आरम्भे फलमुच्यते । तत्प्रवृत्त्यङ्गतायै च तत्फलस्य प्रकीर्तनम् ॥२५॥

यद्वा ब्रह्मणोऽन्या तद्दृष्टिश्चेदन्यदेव तद्विदितादित्यादिना विरोधः स्यादित्यर्थः । अथवा प्रतीचः स्वग्राह्यदृष्ट्या दृष्टौ "न दृष्टे"रित्यादिवाक्यान्तरविरोधः स्यादित्यर्थः ॥१११७॥

ब्रह्मणोऽनन्यब्रह्मत्वस्य ज्ञानसाध्यत्वे ब्रह्मैव तत्साध्यं स्यादिति दोषान्तरमाह—तथा चेति । क्रियाविरोधः श्रुतिविरोधवदित्यर्थः । अनन्यमेयत्वपक्षोक्तदोषेण द्वितीयं निरस्यति—अन्यानन्येति । अत्राप्यनन्यत्वस्य सत्त्वादित्यर्थः । भेदांशेनाविरोधश्चेदभेदांशाद्विरोधः स्यादेवेति भावः ॥१११८॥

तृतीयमनुवदति—बुद्ध्वेति । यदन्यद्बुद्ध्वा ब्रह्म सर्वमभवत्तत्किमन्यदबुध्यतोत नेति विकल्पयति—तदन्यदिति । आद्यमनूद्य दूषयति—तदपीति ॥१११९॥

कल्पान्तरमाशङ्क्याऽऽह—निर्निमित्तस्येति । ज्ञानहीनस्येति यावत् । अस्मदादेरपीति संबन्धः । तथाच सर्वत्र विद्यावैयर्थ्यमिति भावः । अस्मदादेर्ज्ञानादेव सर्वापत्तिर्ब्रह्मणस्तद्वैद्यस्य वा स्वत इति श्रुतिरेव "तस्मात्तत्सर्वमि"त्याद्या वदतीत्याशङ्क्याऽऽह—पक्षपात इति । सर्वान्प्रति श्रुतिप्रामाण्यस्य तुल्यत्वादित्यर्थः । एतेन किंचापि तदवेदिति पक्षो निरस्तः ॥११२०॥

ब्रह्मणो ब्रह्मत्वस्य क्रियातो ज्ञानतो वा साध्यत्वं निरस्य यदि वोभयसंश्रयादिति पक्षं निरस्यति—समुच्चयेति । चकारः संबन्धोक्तसमुच्चयनिषेधसमुच्चयार्थः । वक्ष्यते भुज्युप्रक्रियायामिति शेषः । उक्तवक्ष्यमाणत्रिविधसमुच्चयासंभवं बुद्धिसौकर्यार्थं सूचयति—प्रधानेति ॥११२१॥

उपोद्घातमुपसंहरति—इत्यादीति । इतिशब्देनोक्तदोषप्रकारोक्तिः । प्रेप्सितं कात्स्न्र्यं सद्वाऽसद्वा त्रिधाऽपि विद्यावैयर्थ्यं तच्च प्राप्तुर्भिन्नमभिन्नं वा?आद्ये कात्स्न्र्यविरोधो द्वितीये प्रेप्साऽयोगः तच्च वेद्यं अवेद्यं वा? आद्ये जाड्यादब्रह्मत्वं द्वितीये तदसिद्धिः स्वप्रकाशत्वस्य मानविषयत्वाविषयत्वयोरयोगादित्यादिशब्दोक्तो दोषः । कात्स्न्र्यमित्यादीत्यादिपदेन मोहादकात्स्न्र्यं वस्तुतस्तु कात्स्न्र्यं कल्पनया मानादिभेदः सा चानिर्वाच्याविद्याविजृम्भितेत्यादि गृह्यते ॥११२२॥

मुमुक्षूणामाक्षेपगर्भं चोद्यमुक्त्वा सिद्धान्तं सूचयति—न कश्चिदिति । अत्रेति विवर्तवादोक्तिः । यथा ब्रह्मात्मज्ञानात्तत्र सर्वभावमोक्षोपपत्तिस्तथोपरिष्टाद्वक्ष्यते तन्निर्दोषत्वप्रतिज्ञोचितेत्याह—यथेति । परिणामवादे तु ज्ञानान्मोक्षासिद्ध्या दोषप्रवाहप्राप्तिरित्याह—अन्यथेति ॥११२३॥

पूर्वोत्तरसंदर्भयोरपौनरुक्त्यं वक्तुं वृत्तं कीर्तयति—एवं तावदिति । अत्रेत्यतीतग्रन्थोक्तिः । अस्मिन्भगवत्पादभाष्ये स्थित्वेति शेषः । सिद्धान्तश्च संगृहीत इति द्रष्टव्यम् । भर्तृप्रपञ्चैर्यथोपोद्घातो व्याख्यातस्तथोच्यते स्वीकर्तुमित्याह—अन्यदीयोऽपीति ॥११२४॥

तदाहुरित्यत्र तन्मतेन तच्छब्दार्थमाह—तदेतदिति । ब्रह्म वा इदमित्यादिर्ब्रह्मविद्यारम्भस्तस्मिन्कार्ये मोक्षाख्यमेतत्फलं तदित्यनेन परामृष्टमित्यर्थः । विद्याफलोक्तेरकिंचित्करत्वात्तत्कथं तच्छब्देन तदुक्तिस्तत्राऽऽह—

**वक्ष्यमाण उपोद्घातो ब्रह्मविद्या ततः परम् । ततोऽप्यूर्ध्वं फलोक्तिश्चेत्तच्छब्देनोच्यते कथम् ॥२६॥**
**अनन्तरेण सम्बन्धसामर्थ्यं सत्यमानतः । दवीयसाऽभिसंबन्धस्तच्छब्दस्योच्यते कुतः ॥२७॥**
**द्वैतैकत्वात्मकं साक्षाद्ब्रह्मविद्योदयात्पुरा । समाप्य तत्फलं कृत्स्नं जातकौतूहलाः परे ॥२८॥**
**आहुरेवं द्विजाः केचिद्विरक्ताः पूर्वभूमितः । संभाव्यते ब्रह्मविद्भिर्यत्तदर्थंबुभुत्सवः ॥२९॥**
**द्वैतैकत्वधिया नैव पूर्वया फल्गुकार्यया । संभाव्यते सर्वभूतिर्यतः सा ब्रह्मविद्यया ॥३०॥**
**द्वैतैकत्वमतिर्यद्वत्स्वानुरूपफलाप्तये । अलं सर्वमतिस्तद्वत्सर्वभावफलाप्तये ॥३१॥**
**ब्रह्मबुद्ध्या भविष्यामः कृत्स्नं ब्रह्मेति तद्विदः । यन्मन्यन्तेऽथ तद्ब्रह्म किमवेदिति पृच्छ्यते ॥३२॥**
**किमवेदिति यः प्रश्नः स किं स्यात्कर्तृकर्मणोः । विद्यायाः पृच्छ्यते कर्ता कर्म वेह विवक्षितम् ॥३३॥**
**ब्रह्मणा चेत्कृता विद्या निष्फलेयं प्रसज्यते । ब्रह्मविद्योदयाद्यस्मादभूद्ब्रह्म पुराऽपि तत् ॥३४॥**
**तस्मात्कर्मैव विद्यायाः पिपृच्छिषितमत्र तु । प्रमेयोपाश्रयादेव यतः प्रमाण्यमुच्यते ॥३५॥**

तत्प्रवृत्तीति । विद्याफलोक्तौ तदिच्छया विषयविमुखो विद्यायां प्रवर्तेतातस्तस्यां प्रवृत्त्यङ्गतयाऽऽदौ फलोक्तिर्युक्तेत्यर्थः । फलोक्तेरुपायप्रवृत्त्युपयोगित्वमन्यत्रापि प्रसिद्धमिति वक्तुं चशब्दः ॥११२५॥

तदुक्तेस्तदङ्गत्वेऽपि तच्छब्देन फलं दुर्वचमिति शङ्कते—वक्ष्यमाण इति । तच्छब्दादूर्ध्वमुपोद्घातो यद्ब्रह्मविद्ययेत्यादिना वक्ष्यते । तस्मात्परस्तात्तदात्मानमेवावेदिति ब्रह्मविद्या । ततोऽप्यूर्ध्वं तस्मादित्यादिना फलं तदेवं व्यवहितं चेन्न तच्छब्दमर्हति तस्य संनिहितावलम्बित्वादित्यर्थः ॥११२६॥

भर्तृप्रपञ्चानुसारी परिहरति—अनन्तरेणेति । न ह्यस्येत्यनन्तरोक्तविद्याफलेन तच्छब्दस्य संबन्धसामर्थ्ये सति विप्रकृष्टसर्वभावेन न संबन्धो मानाभावात्तस्मात्तस्य फलवाचिता युक्तेत्यर्थः ॥११२७॥

अथ प्रकृते विद्याफले चोद्यमुद्भावयन्नाहुरित्यस्यापेक्षितमाह—द्वैतेति । अपरोक्षत्वेनैकरसार्थज्ञानोत्पत्तेः पूर्वं नानारसं सौत्रं पदं कर्मज्ञानफलं कृत्स्नमपि वर्तमानदेहे भावनाप्रकर्षादनुभूय तस्मादुत्कृष्टे तस्मिन्विद्याफले कैवल्ये श्रद्धालवः पूर्वभूमितः सूत्रपदाद्विरक्ता वक्ष्यमाणादित्याहुरिति योजना । उत्कृष्टवाची परशब्दो विद्याफलविषयः । केचिद्द्विजा इति मनुष्याणां सहस्रेष्वितिन्यायं द्योतयति । तत्रापि द्विजग्रहणेन त्रैवर्णिकानामेव वेदद्वारा विद्याधिकारं सूचयति । विद्याफले कुतूहलिनामपि विद्येच्छाभावे कुतूहलवैफल्यमित्याशङ्क्याऽऽह—संभाव्यत इति । यदैक्यं ब्रह्मविद्भिः संभाव्यते तस्मिन्बुभुत्सवस्तत्फलेऽपि कुतूहलिनश्चोदयन्तीत्यर्थः ॥११२८-११२९॥

द्वैतैकत्वज्ञानादेव सर्वभावमोक्षलाभाद्ब्रह्मविद्यावैयर्थ्यादैक्यबुभुत्सोत्सार्यतामित्याशङ्क्याऽऽह—द्वैतेति । ब्रह्मविद्यापेक्षया प्राक्प्रवृत्तत्वं पूर्वत्वम् । फल्गुकार्यया संसारान्तस्थात्यल्पफलयेति यावत् । उपास्तिर्हि संसारफला न तदूर्ध्वमस्ति फलयति तत्क्रतुन्यायविरोधादतः सर्वभावमुक्तिर्ब्रह्मविद्ययैवेति युक्ता तद्बुभुत्सेत्याह—यत इति ॥११३०॥

तथाऽपि न तथाविधं ज्ञानमस्ति यत्सर्वभावं फलयेत्तत्राऽऽह—द्वैतैकत्वेति । सर्वमतिः पूर्णप्रत्यग्ब्रह्मबुद्धिरिति यावत् । सूत्रोपास्त्या तत्क्रतुन्यायेन सूत्राप्तिवद्ब्रह्मधिया ब्रह्मप्राप्तिर्युक्तेत्यर्थः ॥११३१॥

तदाहुरिति व्याख्याय किमाहुरित्यपेक्षायां यदित्यादि व्याचष्टे—ब्रह्मेति । तद्विदो ब्रह्मविदः । अथशब्दस्तत्रार्थे । यस्य ब्रह्मणो ज्ञानान्मनुष्याः सर्वभावमापन्नास्तद्ब्रह्म किमवेत्किंवा नेति पृच्छ्यते शिष्यैर्गुरुरित्याह—तद्ब्रह्मेति ॥११३२॥

पृच्छ्यमानं निर्णेतुं परामृशति—किमवेदिति । विद्यायाः किं कर्ता पृच्छ्यते किंवेह प्रश्ने कर्म विवक्षितमिति परामर्शमेव विशदयति—विद्याया इति ॥११३३॥

पूर्ववादी कर्तरि प्रश्ने दोषमाह—ब्रह्मणेति । विद्यानैष्फल्यप्रसङ्गे हेतुमाह—ब्रह्मेति । यस्मात्तद्ब्रह्म विद्योदयात्पुराऽपि ब्रह्माभूत्स्वरूपत्यागायोगात्तस्मान्न विद्याऽर्थवतीत्यर्थः ॥११३४॥

कर्तरि प्रश्नायोगे फलितमाह—तस्मादिति । अत्रेति प्रश्नवाक्योक्तिः । प्रश्नस्य विषयान्तराभावमेवकारोक्तं

भर्तृप्रपञ्चमते प्रश्नसमाधिः

वस्तुनिष्ठत्वतोऽदोषः कर्तर्यपि विवक्षिते ॥३६॥

सर्वं ब्रह्माभवद्यस्माद्विज्ञानात्तदिहोच्यते । ब्रह्मविद्येति सर्वाप्तावसाधारणकारणम् ॥३७॥

सर्वैकत्वावबोधोऽयं ब्रह्मविद्यागिरोच्यते । द्वैतस्याद्वैतयाथात्म्यात्क्लृप्तसर्पादितत्त्ववत् ॥३८॥

सर्वैकत्वं परं ब्रह्म परमात्मेति यं विदुः । तन्मोहजानां सर्वेषां स तत्त्वं परमार्थतः ॥३९॥

तदज्ञानैकहेतुत्वात्तेनैव परमात्मना । तदन्यान्यात्मवन्ति स्युः सर्पादीनि स्रजा यथा ॥४०॥

उक्तात्मच्युतदृष्टीनां तदबोधैकहेतुतः ।

आब्रह्मस्थाणुभेदोऽयं नामरूपक्रियात्मकः । अविद्याकृत एवायं न यथावस्तुधीकृतः ॥४१॥

तमोघ्न्यैव ततो ब्रह्म प्राप्यते ब्रह्मविद्यया ॥४२॥

यथोक्ततत्त्वकान्येव रज्ज्वां तत्क्लृप्तवस्तुवत् । सूत्रं विराड्देवता च यावत्किंचिच्च वस्त्विह ॥४३॥

ब्रह्मैवेदं यथा सर्वं विद्यया तदबोधजम् । अविद्यया यथाऽकृत्स्नं ब्रह्म सूत्रादिरूपकम् ॥४४॥

व्यक्तीकर्तुं तुशब्दः । विद्याकर्मणः प्रष्टुमिष्टत्वे हेतुमाह—प्रमेयेति । कर्म हि विद्यायामभ्यर्हितं तदन्तरेण तत्प्रमाणभावायोगादतस्तस्यैव प्रष्टुं योग्यतेत्यर्थः ॥११३५॥

सिद्धान्ती कर्तरि कर्मणि च प्रश्नमाश्रित्य परिहरति—वस्त्विति । अदोष इति च्छेदः । कर्मणि प्रश्ने कर्ताऽर्थादाक्षिप्यते तमन्तरेण विद्यानुदयात्कर्तरि प्रश्नेऽपि कर्माऽऽर्थिकं विद्याया वस्तुविषयत्वात्तेनोभयविवक्षायां प्रश्नो न च कर्तृप्रश्ने विद्यावैफल्यं स्वतः सदा ब्रह्मत्वेऽपि ब्रह्मणोऽविद्याध्वंसित्वेन तत्साफल्यादित्यर्थः । प्रष्टॄणामभिप्रायमुक्त्वा ब्रह्मविद्यां व्याचष्टे—सर्वमिति । यज्ज्ञानाद्ब्रह्म सर्वमभवत्तत्सर्वाप्तावसाधारणकारणमुपोद्घातवाक्ये ब्रह्मविद्येति शब्दितमिति योजना ॥११३६–११३७॥

प्रतिज्ञामनूद्य हेतुमाह—सर्वेति । रज्ज्वां क्लृप्तस्य सर्पादेर्यथा रज्जुस्तत्त्वं तथा द्वैतस्याद्वैतमेव स्वरूपमतः सर्वैकत्वबोधो ब्रह्मविद्येत्यर्थः ॥११३८॥

अथैतदयुक्तं यतः सर्वस्यैकत्वमेकस्य च सर्वत्वं विरुद्धमित्याशङ्क्य सर्वैकत्वं परं ब्रह्म 'परमात्मा य' इति भाष्यमनुसरन्नाह—सर्वैकत्वमिति । स आत्मेतिभाष्यार्थमाह—तदिति । परमात्मा तच्छब्दार्थः । स तत्त्वमिति पदद्वयम् ॥११३९॥

सर्वस्य ब्रह्म तत्त्वमित्येतद्दृष्टान्तेन स्पष्टयन्ननेनाऽऽत्मनाऽऽत्मवन्तीतिभाष्यार्थमाह—तदज्ञानेति । तदन्यानि परमात्मातिरिक्तानि समस्तान्यनात्मवस्तूनीति यावत् ॥११४०॥

द्वैतभानं तर्हि कथमित्याशङ्क्य ततः प्रच्युतानामविद्याकृतो हिरण्यगर्भ आत्मा सर्वसाधारणस्तेनाऽऽत्मना सर्वसत्त्वान्यात्मवन्तीत्यादिभाष्यं विभजते—उक्तेति । उक्तादात्मनो दृष्टिच्युतौ हेतुः—तदबोधेति । आत्माज्ञानात्ततो बहिर्मुखानां सर्वमपि नामादिद्वैतं मानं विनाऽविद्यया भातीति भावः ॥११४१॥

सर्वस्य ब्रह्ममात्रत्वेऽपि द्वैतधीरविद्येत्युक्त्वा फलितमाह—तमोघ्न्येति । सर्वस्य न ब्रह्ममात्रत्वं सूत्रादीनां भेदेन वस्तुत्वस्य तैरिष्टत्वादित्याशङ्क्य द्वैतस्याद्वैतयाथात्म्यादित्यत्रोक्तं स्मारयति—यथोक्तेति । रज्ज्वां तदज्ञानोत्थसर्पादि रज्जुस्तत्त्वमेवं सूत्रादीन्यात्माज्ञानजत्वादज्ञातात्ममात्राणि ब्रह्मणस्तत्तद्रूपेणावस्थानमपेक्ष्य क्वचित्तत्सत्त्वोक्तिरित्यर्थः । यावत्किंचिदिति पिण्डजात्योरुदाहरणम् । चशब्दो व्याकृतसमुच्चयार्थः । वस्तुशब्देनान्तर्यामी साक्षीत्युभयं विवक्षितम् । इहेति व्यवहारभूमिरुक्ता ॥११४२–११४३॥

कथं निष्प्रपञ्चं ब्रह्म सूत्राद्यात्मकमित्याशङ्क्याऽऽह—ब्रह्मैवेति । यथेदं सर्वं ब्रह्माज्ञानोत्थं तद्विद्यया च तदेव भवति तस्मात्तत्सर्वमभवदितिश्रुतेस्तथा तदेवाविद्यया सूत्रादिरूपमापद्य परिच्छिद्यते ब्रह्मवेदं सर्वमित्यादिश्रुतेरित्यर्थः । अकृत्स्नमिति च्छेदः ॥११४४॥

भावनाज्ञानकर्माणि साधनानीति यद्यपि । तत्सतत्त्वमविद्यैव यतोऽतः सैव कारणम् ।।४५।।
न हि साधनसापेक्षं वस्तु स्यात्पारमार्थिकम् । परमार्थं न वस्त्वस्ति यत्परायत्तसिद्धिकम् ।।४६।।
मोहोत्थाः पृथगात्मानः साधनायत्तसिद्धिकाः । सूत्रादयस्तृणान्ताः स्युरन्योन्यव्यभिचारिणः ।।४७।।
सर्वेऽप्येते यथादृष्टि ह्येकैकस्य तमस्विनः । सूत्रादयोऽनुभूयन्ते यथाकर्म यथाश्रुतम् ।।४८।।
अविद्यैव यतोऽमीषां प्रागभावो न तत्परम् । भावनाज्ञानकर्मभ्यो जन्मैषां तेन नान्यतः ।।४९।।
यथैता दर्शनावस्थाः कार्यमासां तथाविधम् । उत्पाद्यमाप्यं संस्कार्यं विकार्यं च क्रियावशात् ।।५०।।
पिण्डात्माऽहमितीक्षाणः पिण्डमेव प्रपद्यते । दैवं विराजं सूत्रं च मृतः सम्प्रतिपद्यते ।।५१।।
संस्कारोपचयाद्यद्वद्देवो भूत्वैति देवताम् । संस्कारापचयाद्ध्वंसस्तथा तासां न संशयः ।।५२।।
ब्रह्मणोऽन्यद्यतो वस्तु ब्रह्मैव परमार्थतः । तदबोधात्तदन्यत्तद्बोधाद्ब्रह्मैव तत्त्वतः ।।५३।।

अविद्यया ब्रह्म सूत्रादिरूपं परिच्छिन्नमिति वदता जगत्कारणमविद्येत्युक्तं तदयुक्तमुपासनाज्ञानकर्मणां तत्कारणत्वा"द्धिया धिया जनयते कर्मभिश्चे"तिश्रुतेरित्याशङ्क्याऽऽह—भावनेति । तेषामविद्यैव तत्त्वमित्यत्रान्वयव्यतिरेकौ प्रमाणयितव्यौ । "अथ योऽन्यां देवतामुपास्ते" "अविद्यायामन्तरे वर्तमाना" इत्याद्या श्रुतिश्च ।।११४५।।

सूत्रादि नाविद्याकार्यमबाध्यत्वादात्मवदित्याशङ्क्य हेत्वसिद्धिं मत्वा प्रत्यनुमानमाह—न हीति । विमतं कल्पितं सापेक्षत्वात्सर्पवदित्यर्थः । विमतं न वास्तवं कार्यत्वात्संमतवदित्यनुमानान्तरमाह—परमार्थमिति ।।११४६।।

विमतं कल्पितं भिन्नत्वात्संमतवदित्याह—मोहेति । कार्यत्वहेतुनोक्तमनुमानमनूद्यानुमानान्तरमाह—साधनेति । विमतं कल्पितं व्यभिचारित्वात्सर्पादिवदित्यर्थः ।।११४७।।

विमतं कल्पितं दृश्यत्वाद्रूप्यवदित्याह—सर्वेऽपीति । दृश्यत्वस्य कल्पितत्वेन व्याप्ती रज्जुसर्पादिसंसर्गे व्यक्तेति वक्तुं हीत्युक्तम् । तदुक्तम्-एते सर्वेऽप्येकैकस्याऽऽत्मनो यथादर्शनमनुभूयन्त इति । अज्ञस्यैव द्वैतधीर्विदुषस्तु नेति मत्वा तमस्विन इत्युक्तम् । यथादृष्टीत्येतद्व्याचष्टे—यथेति ।।११४८।।

केचिदविद्याविलसितत्वममृष्यन्तो विश्वस्य प्रधानादि निदानमित्याहुरपरे ब्रह्मैव परिणामि तत्कारणमिति तान्प्रत्याह—अविद्यैवेति । अमीषां सूत्रादीनां प्रागभावस्तदुपलक्षितमुपादानमित्येतत् । अतो न परिणामि कारणान्तरं शङ्कनीयमिति शेषः । न ब्रह्म तदुपादानं श्रुत्यादिप्रमितकौटस्थ्यस्यासङ्गाद्वयस्य परिणामायोगादित्याह—न तदिति । सूत्राद्युत्पत्तौ निमित्तमाह—भावनेति । न प्रधानादि तदुपादानमचेतनस्यास्वातन्त्र्यात्पारतन्त्र्ये च मायाप्रवेशात्तां विना तदयोगादित्याशयेनाऽऽह—तेनेति । नान्यतो जन्मैषामिति संबन्धः । भावनाशब्देनोपासनान्युक्तानि ।।११४९।।

तत्फलं ता एता दर्शनावस्था एतदेव चाऽऽसां कार्यमितिभाष्ययोजनया दर्शयति—यथेति । दर्शनावस्थाशब्देन भावना गृह्यते । तथाविधत्वमेव कथयति—उत्पाद्यमिति । फलविकल्पहेतुमाह—क्रियावशादिति ।।११५०।।

पिण्डात्मदर्शी पिण्डात्मानमेवाभिसंपद्यते प्रेत्येत्यादिभाष्यं व्याकुर्वन्नुक्तमेव व्यनक्ति—पिण्डात्मेति । ईक्षमाण इति वक्तव्यम् । तत्र तत्र तादात्म्यापत्तिरिति वक्तुं चशब्दः । परिच्छिन्नेऽपरिच्छिन्ने वा तादात्म्योपासनया तद्भावमापन्नो देहान्ते यथोपासनफली भवतीत्यर्थः ।।११५१।।

सूत्रादीनामुपास्त्यधीनत्वेऽपि ध्वंसाश्रवणान्नित्यत्वमाशङ्क्याऽऽह—संस्कारेति । उपासको हि भावनाप्रकर्षाज्जीवन्नेव देवताभावमनुभूयान्ते । यथोपास्ति प्रतिपद्यते स च तत्तद्देवतापदे स्थित्वा भुञ्जानो भोगहेतुवासनावसानात्ततः प्रच्यवते तदा देवतानामेवाप्रतिबन्धेन ध्वंसो व्यपदिश्यते । तस्माद्भावत्वे सति साध्यस्यानाशित्वं न्यायविरुद्धमिति भावः ।।११५२।।

तर्हि सूत्रादीनामुत्पत्त्यादिमत्त्वाद्ब्रह्मणस्तदभावान्मिथो भेदाद्यथोक्ततत्त्वकान्येव रज्ज्वां तत्क्लृप्तसर्पवदित्ययुक्तं तत्राऽऽह—ब्रह्मण इति । यद्ब्रह्मणोऽन्यद्वस्तु शङ्क्यते तद्वस्तुतो ब्रह्मैव ब्रह्माबोधाद्ब्रह्मणोऽन्यत्तद्भाति ततो ब्रह्माबोधाद्ब्रह्मैव सूत्रादीति तत्र जन्मादिधीर्भ्रान्तिर्धर्मिण्यसति धर्मायोगादित्यर्थः । यतःशब्दो यदित्यर्थे व्याख्येयः ।

सूत्रादिदर्शनानां स्यात्सूत्राद्येव यथा फलम् । परात्मदर्शनस्यापि तद्भावः स्यात्तथा फलम् ॥५४॥
ब्रह्मभावोऽत्र नित्यः स्यात्कारणाद्यनपेक्षतः । अनित्यमितरत्सर्वं यदविद्याविजृम्भितम् ॥५५॥
अनित्यं दर्शनं ज्ञेयं नित्यस्यापि परात्मनः । मोहमात्रान्तरायत्वात्कादाचित्कं हि दर्शनम् ॥५६॥
अहमेव परं ब्रह्मेत्यस्यार्थस्याप्रबुद्धता । अविद्येति वयं ब्रूमो येह नास्ति सदाऽऽत्मनि ॥५७॥
परात्मनि तु संबोधो नित्यः स्याच्छशिशीतवत् । तदन्यात्मस्वनित्योऽसौ मोहसंवीतबुद्धिषु ॥५८॥
तत्रैवं सति योऽकार्त्स्न्यमित्वा ब्रह्माप्रबोधतः । सर्वात्मविद्ययाऽविद्यां हत्वा ब्रह्माभवत्पुमान् ॥५९॥
पुराऽपि चाऽऽत्मसंबोधाद्ब्रह्मैवायं स्वतो ह्यभूत् । यतोऽतस्तत्स्वसंबोधाद्ब्रह्म ब्रह्म प्रपद्यते ॥६०॥
प्रत्यग्याथात्म्यसंबोधात्तदन्यत्रैव या मतिः । परार्था सा मतिर्ज्ञेया बाह्यकर्मव्यपाश्रया ॥६१॥

यद्वा यतो ब्रह्मणोऽन्यद्वस्तु ब्रह्मैव परमार्थतोऽस्ति ब्रह्माबोधाद्ब्रह्मान्यद्भाति ततो ब्रह्मैव ब्रह्मबोधात्तत्सर्वं संपद्यते कल्पितस्याधिष्ठानानतिरेकादित्यर्थः ॥११५३॥

सूत्रादिनिमित्तत्वेन प्रसक्तोपास्तिफलं विविच्य ब्रुवता सूत्रादेर्ब्रह्मबोधाद्ब्रह्मत्वमुक्तं । तदयुक्तं । न हि मैत्रस्य प्रतिमाबोधात्प्रतिमात्वमित्याशङ्क्यैवं परमात्मदर्शनावस्थायाः परमात्मभाव एव कार्यमिति भाष्येणाऽऽह—सूत्रादीति ॥११५४॥

ज्ञानसाध्यत्वे ब्रह्मभावस्य स्वर्गादिवदनित्यतेत्याशङ्क्य तत्र परमात्मा नित्य इति भाष्यार्थमाह—ब्रह्मेति । अत्र सूत्रादिष्विति यावत् । प्रमाणप्रकाश्यत्वमादिशब्दार्थः । ब्रह्मभाववद्विद्याफलत्वात्सूत्रादिभावस्यापि नित्यत्वमाशङ्क्याऽऽह—अनित्यमिति ॥११५५॥

परस्य ब्रह्मभाववद्दर्शनमपि नित्यमनित्यं वा ? आद्ये ततोऽज्ञानध्वस्तेर्बन्धानुदयो द्वितीये विज्ञानघनत्वादिश्रुतिविरोधः परस्यास्मदाद्यविशेषश्चेत्याशङ्क्य कदाचिद्दर्शनमनित्यमित्यस्यार्थमाह—अनित्यं दर्शनमिति । नित्यज्ञप्तिरूपस्यापि परस्य वाक्यीयमनित्यज्ञानमिष्टं न च श्रुतिविरोधस्तस्याः स्वरूपविषयत्वात् । न च परस्यास्मदाद्यविशेषो नित्यज्ञानत्वादिति भावः । परस्य नित्यज्ञानत्वे ततोऽज्ञानध्वस्तेर्बन्धध्वस्तिरित्याशङ्क्य कदाचिदविद्यातिरस्कृतं भवतीत्यस्यार्थमाह—मोहेति । नित्यदृष्टेरपि परस्याविद्यामात्रव्यवहितत्वात्तद्ध्वंसि ज्ञानमनित्यमेव शुक्त्यादौ मानोत्थज्ञानस्य तद्ध्वंसित्वदर्शनान्न हि स्वरूपज्ञानं वाक्यीयबुद्धिवृत्त्युपरागं विना तद्ध्वंसीति भावः । आगन्तुकं प्रमाणज्ञानमेवाज्ञानध्वंसि दृष्टमिति हिशब्दार्थः ॥११५६॥

अविद्या तर्हि कीदृशी यया परस्तिरस्क्रियते तत्राऽऽह—अहमेवेति । यथोक्तं साऽविद्याऽहमेवेदं सर्वमित्येतस्यार्थस्यासंबोध इति ॥११५७॥

तद्ध्वंसिस्वरूपज्ञानसहकारिज्ञानस्यानित्यत्वे तस्यापि ज्ञानत्वादनित्यतेत्याशङ्क्य स एष संबोधो नित्यः परमात्मनीत्यस्यार्थमाह—परात्मनीति । तर्हि तद्वदेव ज्ञानत्वादितरदपि नित्यमित्याशङ्क्यानित्य इतरस्मिंस्तिरस्कृतविज्ञाने सांसारिक इत्यस्यार्थमाह—तदन्येति ॥११५८॥

अहं ब्रह्मेत्यस्याज्ञानमविद्येति स्थिते फलितमाह—तत्रेति । तस्मिन्नज्ञाने दर्शितरूपे सति यस्तद्वशात्परिच्छिन्नत्वमित्वा गत्वा स्थितः स पुरुषो ब्रह्मास्मीतिविद्यया तद्विपरीतामविद्यां त्यक्त्वा पूर्णो भवतीति योजना । यथाऽऽहुः । तत्रैवं सति योऽविद्ययाऽसर्वभावमित्वा विद्यया सर्वात्मदर्शनेन सर्वभावमभिसंपन्न इति ॥११५९॥

अहं ब्रह्मेत्यस्याज्ञानस्याविद्यात्वे तत्कृतत्वादकार्त्स्न्यस्याहं ब्रह्मेति केवलज्ञानात्तद्ध्वस्तेर्मुक्तिरित्युक्तं तदयुक्तं ज्ञानात्प्रागस्य ब्रह्मत्वं सिद्धं चेज्ज्ञानवैयर्थ्यादसिद्धं चेत्तस्मादेव तत्सिद्धययोगात्तस्याकारकत्वादित्याशङ्क्याऽऽह—पुराऽपीति । आत्मनः स्वतो ब्रह्मत्वमशेषोपनिषदधिगतमिति वक्तुं हिशब्दः । स्वतःसिद्धब्रह्मत्वविरोध्यज्ञाननिरासित्ज्ञानमर्थवदित्यर्थः ॥११६०॥

विमतं न मुक्तिफलं कर्माङ्गसंस्कारत्वात्संमतवदित्याशङ्क्य हेत्वसिद्धिमाह—प्रत्यगिति । तच्छब्दस्तस्मादर्थो बोधसमानाधिकरणः । व्रीह्यादिः समभ्यर्थः । तत्र हेतुमाह—बाह्येति । बाह्यं कर्म दर्शपूर्णमासादि ॥११६१॥

अहं ब्रह्मेति यज्ज्ञानं स्वार्थमेव तदिष्यते । सर्वप्रयोगबीजात्मध्वान्तोच्छेदित्वहेतुतः ॥६२॥
निःशेषपुरुषार्थानां ज्ञेयानां चापि कृत्स्नतः । प्रत्यक्तत्त्वपरिज्ञानसमुत्पत्तौ समाप्तितः ॥६३॥

भर्तृप्रपञ्चभाष्यस्य भगवत्पादमतानुकूलत्वेन नयनं सर्वत्र कार्यम्

भर्तृप्रपञ्चप्रस्थानमेवमेतद्यथोदितम् । इतोऽन्यत्रापि तद्भाष्यं गमयेदेवमेव तु ॥६४॥
ब्रह्मभाविरवं श्रुत्वा ये तु व्याचक्षतेऽन्यथा । तानुद्दिश्य विचारोऽयं प्रारब्धो गुरुभिः स्फुटः ॥६५॥

मू.—ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेत् अहं ब्रह्मास्मीति । तस्मात्तत्सर्वमभवत्तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणां तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवँ्‌ सूर्यश्चेति । तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति स इदँ्‌ सर्वं भवति तस्य ह न देवाश्च नाभूत्या ईशते । आत्मा ह्येषाँ्‌ स भवति अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवँ्‌ स देवानाम् । यथा ह वै बहवः पशवो मनुष्यं भुञ्ज्युरेवमेकैकः पुरुषो देवान्भुनक्त्येकस्मिन्नेव पशावादीयमानेऽप्रियं भवति किमु बहुषु तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युः ॥१०॥

भाष्यद्वयेऽपि तदाहुरित्यादिमूलाक्षेपपरिहारः

यथोक्तसूत्रव्याख्यायां प्रयोजनविवक्षया । उपोद्घातोक्तदोषाणां परिहाराय यत्यते ॥६६॥
ब्रह्मविद्योपदेशस्य विषयश्चावधार्यते । साक्षाद्ब्रह्माथवाऽब्रह्म यदि वोभयरूपकम् ॥६७॥

विमतं परार्थं ज्ञानत्वात्संमतवदित्याशङ्क्याऽऽह—अहमिति । तत्र हेतुमाह—सर्वेति । अनुष्ठानमात्रे बीजमात्माज्ञानं तदुच्छेदित्वादैक्यधियस्तच्छेषत्वं धर्मिग्रहबाधितमित्यर्थः ॥११६२॥

तस्य स्वातन्त्र्येण पुमर्थहेतुत्वे हेत्वन्तरमाह—निःशेषेति । स्वतन्त्रमेव तज्ज्ञानमिति शेषः ॥११६३॥

एष विचारः किमु तद्ब्रह्मावेद्यस्मात्तत्सर्वमभवदिति भाष्येणोपोद्घातमुपसंहरति—भर्तृप्रपञ्चेति । अस्यार्थः । यस्य ज्ञानं मोक्षहेतुरिति मनुष्या मन्यन्ते तद्ब्रह्म किं सर्वमभवदुत न ? न चेद्ब्रह्मत्वायोगः । आद्ये विदित्वा तत्सर्वमभवदविदित्वा वा? प्रथमे स्वात्मानमन्यद्वा ? नाऽऽद्यो जीवानामपि स्वज्ञानात्सर्वभावापाताद्ब्रह्मधीवैयर्थ्यान्नेतरोऽनवस्थानात् । अविदित्वैव ब्रह्मणः सर्वभावे जीवानामपि तत्संभवाद्विद्यावैयर्थ्यमेव । ब्रह्मणश्च कर्तृत्वे कर्मत्वे च संसारिवद्घटवच्चाब्रह्मत्वमतो न तज्ज्ञानं सर्वभावे हेतुरित्यनेन क्रमेण भर्तृप्रपञ्चमतं स्थितमिति । कथमुपोद्घातसंबन्धि तद्भाष्यं विवर्तानुसारि व्याख्यातं तदीयभाष्यान्तरस्य परिणामानुसारित्वादित्याशङ्क्याऽऽह—इत इति । उपोद्घातादन्यत्रापि भर्तृप्रपञ्चभाष्यं विवर्तवादानुसारि नेतव्यमित्यस्मन्मतानुकूलमेव तद्भाष्यमित्यर्थः ॥११६४॥

सर्वमपि तद्भाष्यं विवर्तानुसारितया सिद्धान्ताविरुद्धं चेत्किमित्यनुभाष्य दूष्यते भाष्यकृतेत्याशङ्क्याऽऽह—ब्रह्मेति । ब्रह्म वा इदमित्यत्र ब्रह्मभावी पुरुषो ब्रह्मशब्देनोच्यत इति भर्तृप्रपञ्चवचः श्रुत्वा विवर्तवादं ते नेच्छन्तीति ये भ्राम्यन्ति तानुद्दिश्य तद्भ्रान्तिध्वस्त्यर्थं विचारो भाष्यकारैरवतारित इत्यर्थः । विचारं महीकरोति—स्फुट इति ॥११६५॥

उपोद्घातवाक्यं भाष्यद्वयेऽपि व्याख्याय भाष्यान्तरस्य सिद्धान्ताविरुद्धत्वं चोक्त्वा परिहारवाक्यस्य मतद्वयाभिमतमर्थं संगृह्णाति—यथोक्तेति । आत्मेत्येवोपासीतेत्यादेः स्वमते विभज्योक्तस्यैकस्य सूत्रस्य तद्धेत्यादिसूत्राणां वा पञ्चानां परमते व्याख्या प्रस्तुता । तत्र सूत्रितविद्याफलस्यानपवादेन वचनेच्छया तदाहुरित्यादावुक्तदोषाणां परिहारोऽनन्तरवाक्येनोच्यत इत्यर्थः ॥११६६॥

ननु ब्रह्मविद्यायाः सूत्रं विवरणं चायुक्तं तदधिकारिणोऽनुक्तत्वात्तत्राऽऽह—ब्रह्मविद्येति । तमेवाधिकारिणं विषयशब्दितं विशिनष्टि—साक्षादिति । शुद्धं ब्रह्म नित्यमुक्तं तद्विद्यामर्हतीत्येकः कल्पस्ततोऽत्यन्तभिन्नस्यैवान्तः

### "ब्रह्म वा इदं" इत्यादेः भर्तृप्रपञ्चमतेन व्याख्या

समाशङ्कितनिःशेषदोषानाघ्रातमन्धितं स्फुटम् । श्रुतिः प्रतिवचः प्राह दोषमूलनिरासकृत् ॥६८॥
ब्रह्मेति ब्रह्मशब्दोऽयं मुख्यब्रह्मार्थवाचकः । अपूर्वादिश्रुतेर्ज्ञेयो ब्रह्मत्वं न ततोऽन्यथा ॥६९॥
अविचारितसंसिद्धिप्रत्यगज्ञानकारणात् । अब्रह्मेव तदाभाति मोहसंवीतचेतसः ॥७०॥
प्रत्यक्संबोधविध्वस्तप्रत्यङ्मोहः परात्मनः । संभावयति संबोधान्नान्यद्वस्त्वन्तरं यथा ॥७१॥
एवमेव महामोहसंवीतधिषणः पुमान् । ब्रह्मैवापि स्वतो मोहान्न तत्संभावयत्यपि ॥७२॥
बुद्धतत्त्वस्य लोकोऽयं जडोन्मत्तपिशाचवत् । बुद्धतत्त्वोऽपि लोकस्य जडोन्मत्तपिशाचवत् ॥७३॥
यदि नामास्ति संभेदः साक्षात्कल्पितसर्पयोः । भीतं प्रत्यविशिष्टोऽसौ वास्तवत्वादनादृतः ॥७४॥
प्रत्यक्तत्त्वं तमोमात्रव्यवधानादिहोच्यते । ब्रह्मभावीति न पुनर्वस्तुतत्त्वव्यपेक्षया ॥७५॥

### इदंशब्दव्याख्यानम्

इदंधीशब्दगम्यं यद् ब्रह्मरूपाद्विशिष्यते । ब्रह्मैव तदुपाधीहेदंशब्देनाभिधीयते ॥७६॥

करणादेरधिकारितेत्यपरोऽविद्याविशिष्टस्य ब्रह्मणः संसारित्वेन मुमुक्षुत्वादधिकारितेति कल्पान्तरम् । वक्ष्यति हि ब्रह्मविद्याधिकारित्वं द्वैविध्यात्प्रतिपद्यत इति ॥११६७॥

उत्तरवाक्यस्य भाष्यद्वयानुसारि तात्पर्यमुक्त्वा परकीयोपोद्घातोत्तरत्वेन व्याख्यातुं ब्रह्मेत्यादिवाक्यमादत्ते—समाशङ्कितेति । उपोद्घातोक्तसर्वदोषास्पृष्टमिति यावत् । असन्दिग्धाबाधितानधिगतार्थत्वं स्फुटत्वम् । दोषमूलमज्ञानं तन्निरासित्वं वचसो ज्ञानहेतुत्वात् ॥११६८॥

ब्रह्मशब्दे विप्रतिपत्तिं निराकर्तुं विवक्षितमर्थमाह—ब्रह्मेतीति । त्रिधाऽनवच्छिन्नं वस्तु ब्रह्म बृंहतेरेवमर्थत्वादसति संकोचके संकोचायोगादित्यर्थः । उक्ते ब्रह्मशब्दार्थे "तदेतद्ब्रह्मे"त्यादिवाक्यं प्रमाणयति—अपूर्वेति । तत्रैव युक्तिमाह—ब्रह्मत्वमिति । निरतिशयमहत्त्वसंपन्नमात्मानमनादृत्य न ब्रह्मत्वं युक्तं परिच्छिन्नेषु घटादिषु तदभावादित्यर्थः ॥११६९॥

श्रुतियुक्तिधातुभ्यो ब्रह्मशब्दस्योक्तार्थत्वेऽपि कथं परिच्छेदधीरित्याशङ्क्याऽऽह—अविचारितेति ॥११७०॥

अज्ञस्यानिर्वाच्यस्वाज्ञानात्परिच्छेदधीरित्यत्र दृष्टान्तमाह—प्रत्यगिति । समानाधिकरणे पञ्चम्यौ । वस्त्वन्तरं स्वतन्त्रमकल्पितं वस्त्विति यावत् । दग्धाविद्यस्य हेत्वभावान्न द्वैतधीरित्यर्थः ॥११७१॥

अदग्धाविद्यस्य नाद्वैतधीः किं तु मोहाद्द्वैतधीरेवेति दार्ष्टान्तिकमाह—एवमिति । मोहस्य महत्त्वमशेषानर्थमूलत्वम् । स तर्हि ब्रह्मणोऽभिन्नत्वादेव तदसंभावनां भजते तत्राह—ब्रह्मैवेति । संभावयत्यपीत्यपिशब्दो निश्चयस्य दूरनिरस्ततां दर्शयति ॥११७२॥

तत्र पौराणिकीं गाथामाह—बुद्धेति । लोकस्य तत्त्वात्प्रच्युतत्वे तद्विपरीतचेष्टावत्त्वे हेयत्वे च क्रमेण दृष्टान्तत्रयं विदुषो द्वैतमसत्कल्पमित्यर्थः । अविदुषस्तद्वदद्वैतमसत्सममित्याह—बुद्धतत्त्वोऽपीति । तस्यापि लोकतो व्युत्थापितत्वे तद्विपरीतचेष्टावैशिष्ट्ये तदुपेक्षणीयत्वे चोदाहरणानि ॥११७३॥

द्वैतमकल्पितं व्यवहारहेतुत्वादात्मवदित्याशङ्क्याऽऽह—यदीति । कल्पिताकल्पितसर्पयोः स्वरूपभेदेऽपि भयादिकार्यं प्रति तुल्यत्वादकल्पितः सर्पो वास्तवत्वान्नार्थक्रियां प्रत्यादृतोऽतः कल्पितसर्पादौ व्यभिचार इत्यर्थः ॥११७४॥

ब्रह्मशब्देन मुख्यब्रह्मग्रहे द्वैतमसत्कल्पमिति युक्तं न चात्र मुख्यग्रहो भर्तृप्रपञ्चैरिष्टो ब्रह्मेति ब्रह्मभावी पुरुषो निर्दिश्यत इति तदुक्तेरित्याशङ्क्याऽऽह—प्रत्यक्तत्त्वमिति । इहेति तद्भाष्योक्तिः । वस्तुतो ब्रह्मणो भिन्नं यज्जीवरूपं तदपेक्षया न ब्रह्मभाविशब्द इत्याह—नेति ॥११७५॥

इदमिति नामरूपव्याकृतं जगन्निर्दिश्यत इति भाष्येणेदंशब्दार्थमाह—इदमिति । कार्योपाधि ब्रह्मेदंशब्दमित्यर्थः । इहेति वाक्योक्तिः ॥११७६॥

योऽसावविद्योत्सङ्गस्थः प्राक्प्रविष्ट इतीरितः । स्वाभासान्तः स संमोहान्नामरूपात्मकोऽभवत् ।।७७।।
अव्याकृतादिपिण्डान्तं पर एव त्वविद्यया । तदात्मत्वं समापेदे न त्वसौ परमार्थतः ।।७८।।
प्रागात्मबोधात्पिण्डादौ याऽऽत्मेत्यासीन्मतिर्दृढा । सा तत्तत्त्वमसंप्राप्य सिद्धा स्रगहिबोधवत् ।।७९।।
अविद्याकल्पितांस्तस्मादन्वयव्यतिरेकतः । विधूयानात्मनोऽशेषांस्तत्प्रत्यग्रूपमैक्षत ।।८०।।
प्रत्यग्याथात्म्यविद्याग्निसंप्लुष्टाशेषतत्तमः । ब्रह्मैवाऽऽत्मानमेवेति प्रत्यबुध्यत वाक्यतः ।।८१।।
न हि प्लुष्टाखिलाविद्यः प्रतीच्यन्यन्मनागपि । प्रत्यग्दृष्ट्येक्षतेऽन्यस्य तदविद्यैकहेतुतः ।।८२।।
अद्वैतविषयं चेदमेकं ब्रह्मेति भण्यते । समस्तव्यस्तता यस्मान्नेह प्रत्यग्धियेक्ष्यते ।।८३।।
मिथ्याभिमानात्संपत्तिरविद्योत्थासु भूमिषु । यत्र वा अन्यदित्येवं श्रुतिश्चापि जगौ तथा ।।८४।।
निरविद्य इहाद्वैते भेदहेतोरसंभवात् । स्वत एवाभिसंपत्तिर्यत्र त्वस्येतिशास्त्रतः ।।८५।।

कथमसङ्गोदासीनस्य कार्योपाधित्वेनेदंशब्दत्वमित्याशङ्क्य स इदं जगदात्मत्वेनाभिसंपन्नोऽभूदविद्ययेत्यादिभाष्यमनुसृत्याऽऽह—योऽसाविति । अविद्याविशिष्टः साक्षी सृष्टे कार्ये प्रविष्टो यो व्याख्यातः स मोहात्प्रपञ्चभावं प्राप्तः सन्निदंशब्दवाच्यो भवतीत्यर्थः । स्वाभासान्तशब्देन साक्षी विवक्षितः ।।११७७।।

सप्रपञ्चत्वं परस्य सर्वगन्धादिश्रुतेर्वास्तवमित्याशङ्क्यास्थूलादिश्रुतिविरोधान्नेत्याह—अव्याकृतेति । मूलकारणादारभ्यान्त्यकार्यान्तं यज्जगत्तदात्मत्वमविद्ययैव परः संसारावस्थायामापन्नस्तद्विषया च सर्वगन्धादिश्रुतिर्न वस्तुतस्तस्य जगदात्मत्वापत्तिरित्यर्थः ।।११७८।।

पिण्डादाववाधितात्मधीदृष्टेस्तदात्मत्वं परस्य कुतोऽविद्याकृतमित्याशङ्क्याऽऽसीदित्यस्यार्थमाह—प्रागिति । तत्तत्त्वं पिण्डादेस्तत्त्वमधिष्ठानभूतं प्रत्यग्याथात्म्यं तदसंप्राप्य तदज्ञात्वा सिद्धा तत्प्रसादप्रसूतेति यावत् ।।११७९।।

तदात्मानमित्यादेरर्थमाह—अविद्येति । यस्मात्प्रत्यग्ब्रह्मेतरदविद्यादेहं तस्मात्तस्य प्राणादेर्द्रष्टृदृश्याद्यन्वयव्यतिरेकतो निरासेन तद्ब्रह्मस्वरूपमेवाज्ञासीदयं पुनः सर्वमतीत्य स्वयमेवाऽऽत्मानमवेदित्युक्तेरित्यर्थः ।।११८०।।

यत्तु तद्ब्रह्म विदित्वा सर्वमभवदविदित्वा वेत्यादि तत्राऽऽह—प्रत्यगिति । फलावस्थं ब्रह्म पूर्वार्धार्थः । तत्प्रत्यबुध्यतैवेति नावेदनप्रयुक्तदोषः । तच्चाऽऽत्मानमेवाबुध्यतेति नानवस्था ब्रह्मैव बुद्ध्वा सर्वमभवत्तदात्मानमेवेत्यादिश्रुतेरतो न जीवानामविद्याकल्पितानां विशिष्टरूपज्ञानात्सर्वभाव इति भावः ।।११८१।।

यत्तु कर्तृत्वे संसारिवत्कर्मत्वे घटवद्ब्रह्मतेति तत्राऽऽह—न हीति । अविद्यादशायामेव तावत्क्रियाकारकादिव्यवहार आत्मदृष्ट्या प्लुष्टाविद्यस्त्वात्माऽऽत्मनि कर्तृत्वादिलेशमपि न पश्यति तस्याऽऽविद्यत्वादतः कल्पितं कर्तृत्वाद्याश्रित्याऽऽत्मानमेव बुध्यमानं ब्रह्म विद्यापास्ताविद्यातज्जं पूर्णं तिष्ठतीत्यर्थः ।।११८२।।

समस्तव्यस्तात्मकं ब्रह्मेत्युपगमान्न कर्तृत्वादेराविद्यत्वमित्याशङ्क्याऽऽह—अद्वैतेति । इदं हि ब्रह्माद्वयमविषयरूपं च "एकमेवाद्वितीयम्" "अन्यदेव तद्विदितादि"त्यादिषूच्यतेऽतस्तदेकरसमेवेत्यर्थः । तदैकरस्ये हेत्वन्तरमाह—समस्तेति । इह ब्रह्मणीति यावत् । न हि ब्रह्मदृष्ट्या ब्रह्मणि नानारसता द्रष्टुं शक्या ब्रह्मत्वविरोधात्तस्मादेकरसमेवेत्यर्थः ।।११८३।।

ब्रह्मैकरसं चेत्कथं तस्याऽऽकाशाद्यात्मतेत्याशङ्क्य द्वैतविषयेऽन्यस्यान्येनाऽऽत्मनाऽभिसंपत्तिरिति भाष्येणाऽऽह—मिथ्येति । आकाशादिभावस्याऽऽविद्यत्वे श्रुतिं प्रमाणयति—यत्रेति । जडत्वदृश्यत्वादिहेतोश्च तन्मिथ्यात्वं वक्तुं चशब्दः । न हि प्रतीचस्तद्भावो वास्तवो मिथो विरोधादिति दर्शयितुमपिशब्दः । उक्तार्थानुरोधस्तथाशब्दार्थः ।।११८४।।

तर्हि प्रतीचो ब्रह्मत्वसंपत्तिरप्यविद्याकृता संपत्तित्वादितरवदित्याशङ्क्येह पुनरद्वैते सर्वभावानामनन्यत्वात्सर्वमञ्जसैवाऽऽत्मत्वेनाभिसंपद्यत इति भाष्येणाऽऽह—निरविद्य इति । प्रतीचः स्वतो ब्रह्मसंपत्तिरित्यत्र श्रुतिमाह—यत्रेति ।।११८५।।

तस्मात्तत्सर्वमभवदित्यस्य व्याख्या

तस्मात्तदिति विद्यायाः पूर्णता फलमुच्यते । तदन्यस्य त्वकृत्स्नत्वाज्जिहासाविषयत्वतः ॥८६॥
यदिदंशब्दनिर्दिष्टं पूर्णाविद्यैकहेतुजम् । अहं ब्रह्मेति तद्ध्वंसात्पूर्णमेवाभवत्स्वतः ॥८७॥
भर्तृप्रपञ्चभाष्यस्य प्रचारोऽयं प्रदर्शितः । श्रुत्यक्षरानुसारेण तथाऽनुभववर्त्मना ॥८८॥

भाष्यमतेन व्याख्या तत्र परमतोपन्यासः खण्डनाय

ब्रह्मेतिब्रह्मशब्देन द्वैतैकत्वात्मकं किल । भण्यते न परं ब्रह्म तस्य विद्यानपेक्षतः ॥८९॥
परस्य ब्रह्मता यस्मादनन्यायत्तसिद्धिका । स्वत एव तु तत्सिद्धेर्नातस्तदभिधीयते ॥९०॥
तथा कालानवच्छित्तेरासीदिति न तत्प्रति । घटते कालसम्बन्धो विरिञ्चे तूपपद्यते ॥९१॥
ननु तस्यापि विज्ञानं नोपदेशव्यपेक्षया । जन्मनैवास्य तत्सिद्धेर्न युक्ता ब्रह्मगीरियम् ॥९२॥
आसीदिति च निर्देशस्तस्मिन्नपि न युज्यते । विरिञ्चस्य त्रिकालत्वादासीदस्ति भविष्यति ॥९३॥
यत एवमसंतोषात्पक्षान्तरसमाश्रयः । मनुष्याधिकृतेर्वेति क्रियते पूर्वपक्षिणा ॥९४॥

तस्मात्तत्सर्वमभवदित्यस्यार्थमाह—तस्मादिति । पूर्णतैव फलमित्यत्र हेतुः—तदन्यस्येति । परिच्छिन्नस्य मर्त्यत्वश्रवणात्पुमर्थत्वशङ्कैव नेति वक्तुं तुशब्दः ॥११८६॥

ब्रह्म पूर्वमेव पूर्णं चेन्न तस्य विद्यया पूर्णत्वमपूर्णं चेत्कथमन्यस्यान्यभावस्तथाऽपि स्यादित्याशङ्क्याऽऽह—यदिदमिति । प्रत्यगविद्याजं हि "ब्रह्म वा इदमि"त्यत्रेदंशब्दोपात्तं द्वैतमतोऽहं ब्रह्मेति विद्यया तद्ध्वस्तेः पूर्णमेव ब्रह्म पूर्णमभवदित्युपचर्यत इत्यर्थः ॥११८७॥

परपक्षमुपसंहरति—भर्तृप्रपञ्चेति । प्रचारो विवर्तवादानुसारेण प्रवृत्तिप्रकारः । किमित्येवं तदीयभाष्यस्य गतिरुच्यते तत्राऽऽह—श्रुतीति ॥११८८॥

परमतमादेयमुक्त्वा तद्भाष्ये ब्रह्मभाविशब्दं श्रुत्वा येषां भ्रान्तिस्तन्निरासार्थं विचारो भाष्यकृता कृत इति प्रस्तावितं विचारमवतारयन्पूर्वपक्षयति—ब्रह्मेनीति । द्वैतैकत्वात्मकमनेकरसमपरं ब्रह्मेत्यर्थः । किलेत्युभयोर्भाष्यकृतोरत्रानिच्छोक्तिः ॥११८९॥

न परमित्यादिप्रतिज्ञायां तस्येत्यादिहेतुं प्रपञ्चयति—परस्येति । तस्माद्विद्यानैरपेक्ष्यमिति शेषः । अनन्यायत्तसिद्धिमनूद्य विद्यानपेक्षत्वप्रसङ्गप्राप्तं फलमाह—स्वत इति । विद्यासाध्या तु सर्वभावापत्तिरत्र श्रुतेति तुशब्दार्थः ॥११९०॥

परस्य ब्रह्मशब्देनानुपादाने हेत्वन्तरमाह—तथेति । परस्य कालानवच्छित्तिः"अन्यत्र भूताच्चे"त्यादिश्रुतिसिद्धा । कुत्र तर्हि कालसंबन्धो विद्यापेक्षा चेति तत्राऽऽह—विरिञ्चे त्विति । न हि तस्य ब्रह्मता स्वतस्ततोऽर्थान्तरत्वादतो विद्यापेक्षोपपत्तिः "समवर्तते"ति श्रुतेश्च कालसंबन्धसिद्धिरिति भावः ॥११९१॥

तस्य ब्रह्मणोऽन्यत्वेऽपि नोपदेशजन्यज्ञानात्तद्भावः स्वाभाविकज्ञानवत्त्वात्"सहसिद्धं चतुष्टयमि"तिस्मृतेः "तस्मात्तत्सर्वमभवदि"ति चोपदेशाधीनधीसाध्योऽसौ श्रुतोऽतो नात्र ब्रह्मशब्देनापरग्रहणमिति शङ्कते—नन्विति ॥११९२॥

यत्तु विरिञ्चेः कालसंबन्धः समवर्ततेति तत्राऽऽह—आसीदितिचेति । "अन्यत्र भूताच्चे"त्यादिश्रुतेः परस्मिन्निवेत्येरर्थः । संवर्तनं हि जन्ममात्रं न कालात्मकस्य कालसंबन्धोऽनवस्थानादिति मत्वाऽऽह—विरिञ्चस्येति ॥११९३॥

मनुष्याधिकाराद्वेत्यादिभाष्यमुत्तरत्वेनावतारयति—यत इति । यत एवमतोऽपरब्रह्मपक्षेऽसंतोषादिति योजना ॥११९४॥

मनुष्याः प्रकृताः पूर्वं ते च निःश्रेयसार्थिनः । ब्रह्मणो न त्वनर्थित्वात्तथा चाप्रकृतत्वतः ॥९५॥
ऋष्यादिवचसा चापि ब्रह्मविद्याऽविशेषतः । सर्वार्थैव समुद्दिष्टा नाग्रजन्मैकगोचरा ॥९६॥
जन्मनैव तु तत्सिद्धेर्नोपदेशव्यपेक्षता । ज्ञानमप्रतिघं यस्य वैराग्यं चेति च स्मृतेः ॥९७॥
द्वैतैकत्वात्मकब्रह्मविद्याकर्मैकसाधनः ॥९८॥
अपरब्रह्मतापन्नो भोज्याद्व्यावृत्तमानसः । निःशेषप्राप्त्या चोच्छिन्नकामकर्मादिबन्धनः ॥९९॥
परब्रह्मपरिज्ञानभावनोपचयात्परः । ब्रह्मभावी नरोऽतोऽत्र ब्रह्मशब्देन भण्यते ॥१२००॥
भविष्यद्वृत्त्या लोकेऽपि प्रयोगो दृश्यते यथा । ओदनं पचतीत्यादि तथेहापि भविष्यति ॥ १ ॥
गृहस्थो भार्यां विन्देत शास्त्रे चापि समीक्ष्यते । एवं व्याचक्षते केचिद्गम्भीरन्यायवादिनः ॥ २ ॥

ब्रह्मभावी जीवो ग्राह्य इति मतनिरासः

सर्वापत्तेरनित्यत्वदोषासक्तेर्न तत्तथा । साधनायत्तलब्धात्मा न लोकेऽस्त्यविनश्वरः ॥ ३ ॥
अथाविद्योत्थाकृत्स्नत्वनिवृत्तिं चेदिहेच्छसि । कल्पनेयं वृथैव स्याद् ब्रह्मभावीति या कृता ॥ ४ ॥
यतः प्रागपि तद्बोधात्सर्वो जन्तुः स्वभावतः । ब्रह्मत्वादाप्ततद्भावो नित्यमेव न साधनात् ॥ ५ ॥

पक्षान्तरमेव विवृणोति—मनुष्या इति । पूर्वमित्युपोद्घातवाक्योक्तिः । तस्माद्ब्रह्मभावी पुरुषो ब्रह्मेति शेषः । ननु परापरब्रह्मणोरन्यतरग्रहणमिह कुतो न स्यात्तयोरपि मनुष्यशब्दप्रयोगसंभवादत आह—ब्रह्मण इति । परस्यापरस्य वा ज्ञानानर्थित्वादप्रकृतत्वाच्च नात्र ग्रहणमित्यर्थः ॥११९५॥

तत्रैव हेत्वन्तरमाह—ऋष्यादीति । "तद्यो यो देवानामि"त्यादिना सर्वेषामविशेषतः पुरुषार्थहेतुतया ब्रह्मविद्योक्ता, न हिरण्यगर्भादिमात्रस्य । तथा च वाक्यशेषादेष ब्रह्मशब्दो न तद्वाचीत्यर्थः । अग्रजन्मशब्दोऽपरब्रह्मवाची परब्रह्मणोऽप्युपलक्षणम् ॥११९६॥

जन्मनैवास्य तत्सिद्धेरित्यत्र हिरण्यगर्भस्य परस्येव ब्रह्मशब्दत्वं निराकर्तुमुपदेशानपेक्षज्ञानमित्युक्तं तदनूद्य मानमाह—जन्मनेति । तस्याऽऽगन्तुकज्ञानत्वे हेत्वभावस्तुशब्दार्थः । तस्य स्वाभाविकज्ञानत्वे श्रुतिसमुच्चयार्थश्चकारः ॥११९७॥

परापरब्रह्मणोरत्र ब्रह्मशब्दत्वं निराकृत्य ब्रह्मशब्दार्थं निगमयति—द्वैतेत्यादिना । समुच्चयानुष्ठानात्प्राप्तसूत्रभावस्तदधिककर्मफलाभावादशेषतत्फलाप्त्याऽपास्तकर्मादिप्रवाहः सौत्रेऽपि पदे क्षयिष्णुतादिदृष्ट्या ततो विरक्तो वाक्यात्परं ब्रह्म ज्ञात्वा तत्रैव भावनां कुर्वाणस्तदुपचयात्तद्भावी जीवोऽत्र ब्रह्मशब्देनोच्यतेऽन्यस्य तद्वाच्यत्वायोगादिति योजना ॥११९८-११९९-१२००॥

ब्रह्म भविष्यतीति भाविनीं वृत्तिमाश्रित्य जीवो ब्रह्मशब्दित इत्यत्र दृष्टान्तमाह—भविष्यदिति । आदिपदेन ग्रामं ददाति कटं करोतीत्यादि गृह्यते । दार्ष्टान्तिकमाह—तथेति ॥१२०१॥

शास्त्रे चेत्यादिभाष्यस्थमादिशब्दं व्याचष्टे—गृहस्थ इति । पूर्वपक्षमुपसंहरति—एवमिति । गम्भीरेत्यादिरुपहासः ॥१२०२॥

ब्रह्मशब्देन परस्मादर्थान्तरग्रहे तस्य साधनसाध्यत्वान्मुक्तेरनित्यत्वापत्तेर्न तन्मतमुक्तनीत्या युक्तमिति दूषयति—सर्वेति । साध्यस्यापि मोक्षस्य नित्यत्वमाशङ्क्याऽऽह—साधनेति । लोकशब्देन शास्त्रमपि संगृह्यते यत्कृतकं तदनित्यमिति न्यायादित्यर्थः ॥१२०३॥

किं चाऽऽत्मनोऽकृत्स्नत्वमाविद्यं वास्तवं वेति विकल्प्याऽऽद्ये तन्निवृत्तिरेवाऽऽत्मनि सर्वभावापत्तिरेष्टव्येति मत्वाऽऽह—अथेति । या तर्हि ब्रह्मभावी जीवो ब्रह्मेति कल्पना कृता सा व्यर्था स्यान्मुख्यस्यैव ब्रह्मणो ग्रहसंभवादित्याह—कल्पनेति ॥१२०४॥

तत्र हेतुः—यत इति । अतः कल्पना वृथेति संबन्धः । तद्बोधाद्ब्रह्मास्मीति ज्ञानादिति यावत् ॥१२०५॥

केवलं तत्तमोमात्रव्यवधानैकहेतुतः । संभावयत्यकृत्स्नत्वं प्रत्यगात्मनि मूढधीः ।। ६ ।।
यदविद्यैकहेतु स्यादब्रह्मत्वं न तु स्वतः । तद्यथावस्तुसंबोधान्मूलनाशात्प्रणश्यति ।। ७ ।।
एवं चेत्स्यादभिप्रायः किमर्थं निष्प्रयोजनम् । मुख्यार्थं संपरित्यज्य पुंसि ब्रह्मेति कल्पनम् ।। ८ ।।
श्रुतार्थहानिरेवं स्यादश्रुतस्य च कल्पना । अपन्यायो वृथा च स्यात्पुमर्थासंभवादिह ।। ९ ।।
अविद्योत्थातिरेकेण स्वत एवेति चेन्मतम् । अब्रह्मत्वं न तद्धानिरुपायासंभवात्क्वचित् ।।१०।।
अभिव्यञ्जकमेवेष्टं प्रमाणं न तु कारकम् । नापोढ्री नापि कर्त्रीयं विद्याऽतो वस्तुनः क्वचित् ।।११।।
स्वप्रमेयाखिलाज्ञानध्वंसिनीति समीक्ष्यते । विद्या लोके तथेहापि तद्ध्वंसिन्येव गृह्यताम् ।।१२।।
सदानुदितानस्तमितभास्वद्विज्ञानमात्रतः । तद्विरुद्धतनुर्मोहः कुतो ब्रह्मणि चेन्मतम् ।।१३।।
नानुभूत्यैव तत्सिद्धेर्ज्ञातकुम्भानुभूतिवत् । न वेद्मीत्यनुभूतिर्हि सर्वेषामात्मसाक्षिका ।।१४।।

### ब्रह्मणः अज्ञातत्वोपपादनम्

अव्याकृताधिकारे च यदुक्तं प्राक्समासतः । ब्रह्मण्यविद्यासंसिद्ध्यै स्मर्तव्यं तदिहाखिलम् ।।१५।।

स्वभावतः सर्वस्य ब्रह्मत्वान्नित्यमेव प्राप्ते ब्रह्मत्वे कथमकात्स्र्न्यधीरित्याशङ्क्याऽऽह—केवलमिति । प्रत्यगज्ञानमात्रव्यवधानादेकस्माद्धेतोर्मूढधीरात्मन्यकात्स्र्न्यं संभावयतीति योजना । केवलशब्देन तत्प्रामाणिकत्वे शङ्काभावो द्योतितः ।।१२०६।।

अकात्स्र्न्यस्याऽऽविद्यत्वे फलितमाह—यदिति । यदब्रह्मत्वमविद्यामात्रकृतं तन्न स्वाभाविकं तत्पुनस्तत्त्वज्ञानादज्ञाननाशान्नश्यतीत्यर्थः ।।१२०७।।

यथा त्वयोच्यते तथा मयाऽपीष्यते किंतु ब्रह्मशब्दार्थो जीवो ब्रह्मभावीत्याशङ्क्याऽऽह—एवमिति । आवयोरेकाभिप्रायत्वे ब्रह्मभाविपुरुषकल्पनमप्रयोजनं ब्रह्मशब्दस्य मुख्यार्थत्यागादयुक्तं चेत्यर्थः ।।१२०८।।

ब्रह्मभावी जीवो ब्रह्मेत्यत्र दोषान्तरमाह—श्रुतेति । ब्रह्मभाविकल्पने ब्रह्मशब्दशक्तिदृष्टनिरतिशयमहदर्थत्यागस्ततोऽदृष्टस्य च भाविपुरुषस्य कल्पना स्यादित्यर्थः भवत्वियं कल्पनेति नेत्याह—अपन्याय इति । श्रुतिलक्षणाविशये श्रुतिर्न्याय्येति स्थितेरित्यर्थः । किंच ब्रह्मभाविकल्पनायां फलाभावान्न सा युक्तेत्याह—वृथेति । अयुक्तेति यावत् ।।१२०९।।

कल्पान्तरमादत्ते—अविद्येति । दूषयति—नेत्यादिना । लोके शास्त्रे च वास्तवाब्रह्मत्वनिवर्तकायोगादित्याह—उपायेति ।।१२१०।।

ब्रह्मज्ञानस्योपायत्वात्तदसंभवासिद्धिमाशङ्क्य सामान्यन्यायमाह—अभिव्यञ्जकमिति । तस्य व्यञ्जकत्वनियमे फलितमाह—नेत्यादिना । क्वचिदित्यवस्थादेशकालोक्तिः । अब्रह्मत्वस्य वस्तुत्वे ज्ञानान्न ध्वस्तिर्यतोऽज्ञानस्यैव [ ज्ञानं ] निवर्तकमित्युक्तेरित्यर्थः ।।१२११।।

ज्ञानस्य वस्तुजनकत्वनिवर्तकत्वयोरभावे किं तत्कृत्यं तदाह—स्वप्रमेयेति । ब्रह्म सप्तम्यर्थः । लोकानुसारित्वाद्वेदस्येत्यभिप्रायः ।।१२१२।।

ब्रह्मण्यविद्याध्वस्तिर्विद्याफलमित्यत्र चोदयति—सदेति । कूटस्थस्वप्रकाशज्ञप्तिमात्रत्वाद्ब्रह्मणस्तस्मिन्नज्ञानमयुक्तं ज्ञानाज्ञानयोरेकत्र विरुद्धत्वादित्यर्थः ।।१२१३।।

अनुभवविरोधान्न युक्तिरुल्लसेदित्याह—नानुभूत्येति । ज्ञाते कुम्भे तज्ज्ञानस्याऽऽत्मन्यनुभूत्या सिद्धिवत्तस्मिन्नज्ञातेऽज्ञानस्यापि सिद्धेर्न ते युक्तिस्तद्विरुद्धा सिध्येदित्यर्थः । आत्मन्यज्ञानानुभूतिमेवाभिनयति—नेति । उक्ताज्ञातानुभूतौ विप्रतिपत्त्यभावो हिशब्दार्थः ।।१२१४।।

किंच ब्रह्मण्यज्ञातत्वमज्ञत्वं वाऽऽक्षिप्यते ? नाऽऽद्योऽज्ञातार्थाधिगन्तॄणि प्रमाणानीत्यादावुक्तन्यायविरोधादित्याह—अव्याकृतेति । चकारः संबन्धाधिकारसमुच्चयार्थः ।।१२१५।।

विद्याविधानाच्चाविद्या ब्रह्मण्यस्तीति गम्यताम् । विद्याविधानं विज्ञाते पिष्टपेषणवद्यतः ॥१६॥
अज्ञानमेव मिथ्याधीः प्रमेयानभिसंगतेः । रूप्याध्यारोपणं तस्मादुदाहारि गरीयसा ॥१७॥
अस्त्वविद्या परे भूम्नि यथोक्तन्यायगौरवात् । न तु ब्रह्मैव तां कुर्यात्सर्वज्ञं प्रत्यगात्मनि ॥१८॥
न हि धीपूर्वकारी सन्निःशेषानर्थदायिनीम् । प्रतीच्यविद्यां विसृजेद्याऽन्यत्रापि न काम्यते ॥१९॥
यद्यविद्या भवेत्कार्यमस्त्वेतद्यदिहोदितम् । अकार्यत्वात्त्वविद्यायास्त्वदुक्तं तुषकण्डनम् ॥२०॥
अथोपचारात्कार्यत्वमविद्याविषयत्वतः । तथाऽपि नापराधो नस्तदन्यासंभवादिह ॥२१॥
न हि ब्रह्मातिरेकेण ब्रह्माविद्याकृदिष्यते । न ह्यन्योऽतोऽस्ति द्रष्टेति तथा च श्रुतिशासनम् ॥२२॥

### ब्रह्मणः अज्ञत्वोपपत्तिः

क्रिया वा कारकं वेह सदसद्वेह यन्मतम् । अप्रज्ञातात्मयाथात्म्यं ब्रह्मैव तदितीक्ष्यताम् ॥२३॥
पुरुष एवेदं सर्वमात्मैवेदमिति श्रुतिः । नानुभूतेः प्रमाणाद्वा तदन्यद्वस्तु लभ्यते ॥२४॥
ननु शास्त्रोपदेशोऽयमेवं सत्यफलो भवेत् । नासौ ब्रह्मणि साफल्यं नाप्यन्यस्मिन्समश्नुते ॥२५॥

ब्रह्मणोऽज्ञातत्वे हेत्वन्तरमाह—विद्येति । तत्त्वमसीति ब्रह्मणि विद्याविधानेऽपि कथं तस्मिन्नविद्येत्याशङ्क्याऽऽह—विद्याविधानमिति । अतो विद्याविधानं ब्रह्मण्यज्ञातत्वं गमयतीति शेषः ॥१२१६॥

न हि शुक्तिकायामित्यादिभाष्येण मिथ्याज्ञानं ब्रह्मणि भाष्यकृतोक्तं त्वया तस्मिन्नज्ञानं साध्यते न च तदेवाज्ञानं हेतुफलभावात्तथा च भाष्याननुकूलतेत्याशङ्क्योक्तं स्मारयति—अज्ञानमिति । मिथ्याज्ञानस्याज्ञानाव्यतिरेकाद्ब्रह्मण्यविद्याध्यारोपणायां शुक्तौ रूप्यारोपणं यद्भाष्यकृतोदाहृतं तद्युक्तमिति फलितमाह—रूप्येति । हेतुफलभावस्तु नाऽऽत्यन्तिकं भेदमावहतीति भावः ॥१२१७॥

विद्याविधानादिति युक्तेर्बलीयस्त्वाद्ब्रह्मण्यज्ञातत्वमुक्तमङ्गीकरोति—अस्त्विति । कल्पान्तरमालम्बते—न त्विति । ब्रह्म स्वात्मन्यन्यत्र वा नाविद्यां करोति सर्वज्ञत्वादित्यर्थः ॥१२१८॥

सर्वकर्तृत्वात्तदविद्यामपि करिष्यत्यन्यथा तदयोगादित्याशङ्क्याऽऽह—न हीति ॥१२१९॥

किं यथाश्रुतमादाय चोद्यते ? किंवा ब्रह्मणः सर्वज्ञस्याज्ञत्वायोगादन्यस्याज्ञत्वं ? तत्राऽऽद्यं प्रत्याह—यदीति । यदिह ब्रह्मण्यविद्यां प्रति न स्रष्टृत्वमित्यादिष्टं तद्युक्तं यदि कार्यत्वमविद्यायाः स्यान्न च तदस्तीत्यर्थः । अविद्याया ब्रह्मातिरेकात्कार्यत्वमाशङ्क्याऽऽह—अकार्यत्वादिति । तस्या हि कार्यत्वे कारणं वाच्यं निष्कारणकार्यायोगान्न चाऽऽत्मा तथा कौटस्थ्यान्न चाविद्यैव तथैकत्र कार्यकारणत्वायोगात् तद्भेदस्य चासिद्धत्वादतोऽकार्यत्वात्तस्या ब्रह्म न तां करोत्यतिरेकस्त्वनिर्वाच्याविद्याया नास्तीति भावः ॥१२२०॥

मुख्यकार्यत्वाभावेऽपि तस्या विषयत्वान्निवृत्तिमत्त्वाच्च घटवत्कार्यत्वमौपचारिकमित्याह—अथेति । औपचारिकं कार्यत्वमङ्गीकृत्याऽऽह—तथाऽपीति । अविद्याकर्तृ ब्रह्मैवेति वदतामस्माकं नापराधोऽस्तीत्यत्र हेतुं वदन्द्वितीयं दूषयति—तदन्येति । इहेति स्वपक्षो विवक्षितः ॥१२२१॥

ब्रह्मणोऽन्यस्यासंभवं साधयति—न हीति । स हि चेतनोऽचेतनो वेति विकल्प्याऽऽद्यं प्रत्याह—न ह्यन्य इति ॥१२२२॥

द्वितीयं निराकरोति—क्रियेति । इहशब्दाभ्यां लोकशास्त्रे गृह्येते ॥१२२३॥

प्रतिपन्नस्य सर्वस्य कारणब्रह्ममात्रत्वे मानमाह—पुरुष इति । ब्रह्मणः सर्वज्ञत्वादज्ञत्वायोगादन्यदज्ञमिति पक्षं मानविरोधेन निरस्य मानाभावेनापि निरस्यति—नेत्यादिना । न हि ब्रह्मणोऽन्यद्वस्त्वनुभूतेरवगम्यते तथाऽभूतानुभूतेरप्रसिद्धत्वात् नापि मानान्तरात्तद्धीर्ब्रह्मणोऽन्यत्राज्ञातत्वाभावेन मानप्रवृत्त्ययोगादतो न तदन्यदज्ञमस्तीत्यर्थः ॥१२२४॥

ब्रह्मणोऽन्यस्याज्ञस्याभावे शास्त्रारम्भानर्थक्यमिति शङ्कते—नन्विति । कथमित्याशङ्क्य स ब्रह्मण्यन्यत्र वा फलवानिति विकल्प्य क्रमेण निरस्यति—नेत्यादिना ॥१२२५॥

उपदेशानपेक्षत्वाद्ब्रह्मत्वस्य परात्मनः । असंभवात्ततोऽन्यस्य ह्युपदेशोऽफलो भवेत् ॥२६॥

उपदेशसाफल्यम्

ब्रह्माकर्त्रपि संबोधात्प्रागभूत्तदसंसृति । अविद्यातज्जसंबन्धात्कर्तृत्वेऽपि न दोषभाक् ॥२७॥

प्रागज्ञातं तदैकात्म्यं यथैवानुभवान्मतम् । ब्रह्मास्मीत्यपि संबोधस्तथैवानुभवाश्रयात् ॥२८॥

प्रमेयाधिगमं कुर्वत्प्रमाणमफलं यदि । क्वान्यत्र फलवत्तत्स्यान्नातोऽन्यत्स्यान्मितेः फलम् ॥२९॥

सोत्प्रासमिव चाऽऽहातो बाढमित्येवमादिना । अस्त्वेषोऽवगते दोष इतोऽन्यः कीदृशो गुणः ॥३०॥

अथावगमवैयर्थ्यं भवता परिचोद्यते । तत्रापि चानवगमध्वस्तिः प्रतिवचो भवेत् ॥३१॥

ऐकात्म्ये तन्निवृत्तिश्चेदसंभाव्येति चोद्यते । लब्धैकात्म्येन नैवेयं निवृत्तिः काम्यते श्रुतेः ॥३२॥

अप्रसिद्धे त्वथैकात्म्ये निवृत्तिरिह चोद्यते । तथा दृष्टविरोधो वः प्राप्नुवन्न निवार्यते ॥३३॥

ब्रह्मण्युपदेशवैफल्ये हेतुमाह—उपदेशेति । न च तस्मिन्ननर्थध्वंसार्थमुपदेशो नित्यमुक्तत्वादिति भावः । अन्यस्मिन्नुपदेशासाफल्यमित्यत्र हेतुमाह—असंभवादिति । ब्रह्मणोऽन्यस्यासंभवः सिद्धो मानयुक्तिभ्यामिति वक्तुं हिशब्दः । अतः शास्त्रारम्भे वैयर्थ्यमिति फलितमाह—उपदेश इति ॥१२२६॥

सिद्धान्ती ब्रह्मणि तत्साफल्यं साधयति—ब्रह्मेति । तद्ब्रह्म वस्तुतः सनिदानकर्तृत्वादिसंसृतिहीनमपि ज्ञानात्पूर्वमविद्यया संसार्यासीदतस्तत्रोपदेशोऽर्थवानित्यर्थः । न च तस्मिन्नुपदेष्टुरभावात्तदनुपपत्तिरविद्याकृताचार्यपरिच्छेदस्य तद्भावात् । न च सर्पवत्कल्पितत्वात्तस्यावस्तुत्वात्तदयोगः सर्वज्ञतया तत्कल्पनादिति द्रष्टव्यम् । आविद्येऽपि संसारित्वे कथमसंसारित्वं विरोधादित्याशङ्क्याऽऽह—अविद्येति । कल्पितसंसारित्वेन वास्तवासंसारित्वमविरुद्धं न हि कल्पितसर्पादिना रशनादे रशनादित्वविहतिरित्यर्थः ॥१२२७॥

अस्तु तर्हि वस्तुरूपाविरोधित्वादध्वस्तिरध्यस्तसंसारित्वस्येत्याशङ्क्य विरोधिवाक्यीयबोधात्तद्ध्वस्तेर्मैवमिति मत्वा निवर्तकबोधं दृष्टान्तेनानुभूत्या साधयति—प्रागिति । वाक्यप्रवृत्तिरत्र प्रतियोगित्वेन विवक्षिता ॥१२२८॥

वाक्योत्थज्ञानमनुभवसिद्धमपि स्वप्रकाशेऽतिशयाहेतुत्वादफलमित्याशङ्क्याऽऽह—प्रमेयेति । प्रमेयमैकात्म्यं तस्याधिगमस्तद्गताज्ञानतज्जध्वंसस्तत्कुर्वदपि मानमफलं चेन्न क्वचित्तत्फलवत्स्यात्सकार्याज्ञानध्वंसादन्यतत्फलाभावादित्यर्थः ॥१२२९॥

शास्त्रोत्थज्ञानस्य फलवत्त्वमुक्त्वाऽऽनर्थक्यमवगते चोद्यतेऽन्यत्र वेति विकल्प्याऽऽद्यमङ्गीकुर्वन्भाष्यमवतारयति—सोत्प्रासमिति । यतो वाक्यीयज्ञानं ब्रह्मणि फलवदस्माभिरुक्तमतः सोत्प्रासं; परो हि सरोषो हसनीयो हासकनिकुञ्चितांसशीर्षत्वादिना येनोत्प्रास्यते परिभूयते तेन परिभवितृशरीरविकारेणोत्प्रासेन सहितमिव यथोक्तविकारोपेताच्छुरितकपदवेदनीयहासपूर्वकमिव बाढमित्यादिना भाष्येण भाष्यकारो ब्रवीतीत्यर्थः । यथाऽऽह—स्यादाच्छुरितकं हासः सोत्प्रासः स मनाक्स्मितम्' इति । किं तद्भाष्यकारेण यथोक्तहासपूर्वकमुक्तं तदाह—अस्त्विति । उपदेशानर्थक्याख्यं दोषमेषशब्देन परामृशति । नरके सति को दोष इतिवदानर्थक्याङ्गीकारो गतिरित्याशङ्क्याऽऽह—इत इति । वस्तुनि ज्ञाते कृतकृत्यता गुण एवै"तद्बुद्ध्वे"त्यादिस्मृतेरिति भावः ॥१२३०॥

अज्ञाते वस्तुन्युपदेशवैयर्थ्यं चोद्यते न चासौ ज्ञानार्थस्तस्यापि वैयर्थ्यादिति द्वितीयं शङ्कते—अथेति । परिहरति—तत्रेति । यथोपदेशवैयर्थ्ये चोदिते ज्ञानार्थतया तदर्थवत्त्वमुक्तं तथा ज्ञानानर्थक्ये चोदितेऽपि तदर्थोऽज्ञानध्वस्तिरिति प्रत्युक्तिर्युक्तेत्यर्थः ॥१२३१॥

सा वस्तुनो भिन्नाऽभिन्ना वा?आद्येऽद्वैतहानिर्द्वितीये न ज्ञानाधीनेति चोदयति—ऐकात्म्येति । अज्ञानध्वस्तेरयुक्तत्वमसत्त्वं वोच्यते ? आद्येऽपि वस्तुनि ज्ञातेऽज्ञाते वा तदिति विकल्प्याऽऽद्यं दूषयति—लब्धेति । श्रुतेर्वस्तुनि लब्धे सत्यज्ञाननिवृत्तिर्न तेन वस्तुज्ञानवताऽर्थ्यते ऐकात्म्यज्ञानस्यैव पुमर्थत्वात्"आत्मलाभान्न परमि"तिस्मृतेरतस्तदनुपपत्तावपि न क्षतिरित्यर्थः ॥१२३२॥

कल्पान्तरमनुवदति—अप्रसिद्ध इति । तत्रापि निवृत्तेरनुपपन्नत्वं पूर्ववदङ्गीकरोति—तथेति । पक्षान्तरं प्रत्याह—दृष्टेति । अप्रसिद्धे वस्तुन्यज्ञाननिवृत्तेरसत्त्वेऽपि प्रसिद्धे तदसत्त्वमनुभवविरुद्धमित्यर्थः ॥१२३३॥

सर्वस्यानुपपन्नत्वं सिद्धं दृष्टबलाश्रयात् । दृष्टस्यानुपपन्नत्वं किमाश्रित्याभिधीयते ।।३४।।
उक्तानि तावद्भूयांसि दूषणानि विभागशः । अब्रह्मविषये क्लृप्ते ब्रह्मभावी पुमानिति ।।३५।।

पुण्यो वै इत्यादिभाष्येण पुनः प्रकृतपूर्वपक्षोपस्थापनम्

भूयोऽप्यस्यैव दाढर्च्यार्थं पूर्वपक्षाय यत्यते । वाक्यार्थाभाससंजातभ्रान्त्युच्छित्त्यै प्रयत्नतः ।।३६।।
पुण्यः पुण्येन भवति पापः पापेन कर्मणा । संसारिणं समुद्दिश्य श्रुतिरेतदुदाहरत् ।।३७।।

जीवेशभेदे श्रौतलिङ्गानि अनुमानानि च

तथैष हीति विस्पष्टं संसार्येवाभिधीयते । तस्माद्विलक्षणस्तद्वदीश्वरोऽप्यभिधीयते ।।
स एष नेति नेतीति य आत्मेत्यादिना तथा ।।३८।।
तथाऽक्षपादकाणादतर्कशास्त्रेषु यत्नतः । उपपत्तिशतैरीशः साध्यते वादिभिः पृथक् ।।३९।।
दुःखापनयनार्थित्वप्रवृत्तेर्दर्शनादपि । अत्यन्तभेदो विज्ञेयः संसारीश्वरयोरतः ।।४०।।
तं विदित्वैतमेवेति कर्मकर्तृविभागतः । क्षेत्रज्ञेश्वरयोरुक्तेर्मृगव्याधादिभेदवत् ।।४१।।
मुमुक्षोर्गतिमार्गस्य देशभेदोपदेशतः । भेदेऽसति गतिः केयं गन्तृगन्तव्ययोर्भवेत् ।।४२।।

अज्ञाननिवृत्तेरनुपपन्नत्वमङ्गीकृत्योक्तम् । वस्तुतस्तु नैवं दृष्टिवशादनुपपत्तिनिरासादित्याह—सर्वस्येति ।।१२३४।।

ब्रह्मभाविपुरुषकल्पनां निरस्य स्वपक्षे शास्त्रस्यार्थवत्त्वमुक्त्वा वृत्तं कीर्तयति—उक्तानीति । ब्रह्मभावी जीवो ब्रह्मेत्यब्रह्मविषये ब्रह्मशब्दे कल्पिते सर्वापत्तेरनित्यत्वमित्यादिदूषणान्यसांकर्येणोक्तानीति योजना ।।१२३५।।

अथोक्तनीत्या पूर्वपक्षस्य क्षिप्तत्वात्पुण्यो वै पुण्येनेत्यादिभाष्येण तदुद्भावनमफलमित्याशङ्क्याऽऽह—भूयोऽपीति । अस्य ब्रह्मभावी जीवो ब्रह्मेतिपक्षनिरासस्येति यावत् । तन्निरासो यया युक्त्या दृढीभवति सैव वाच्या निरस्तपक्षोत्थापनं त्वकिंचित्करमित्याशङ्क्याऽऽह—वाक्यार्थेति । वक्ष्यमाणवाक्यानामर्थाभासो जीवपरयोरापाततो भेदस्तस्मिन्नुत्पन्नभ्रान्तिध्वस्त्यै निरस्तस्यापि पक्षस्योत्थापनमित्यर्थः । ननु निरस्तपक्षोक्तिद्वारा वाक्यार्थाभासभ्रान्तिरपि किमिति निरस्यते तत्राऽऽह—प्रयत्नत इति । वाक्यीयसम्यगर्थे जिज्ञासूनां बुद्धिस्थैर्ये तात्पर्यादित्यर्थः ।।१२३६।।

भाष्योक्तां श्रुतिमनुभाष्य तात्पर्यमाह—पुण्य इति । एतत्कर्मफलयोगित्वमिति यावत् ।।१२३७।।

उदाहृतवाक्यवद्वाक्यान्तरमपि संसारिविषयमस्तीत्याह—तथेति । "एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मे"त्यादिश्रुतेः "उपद्रष्टाऽनुमन्ता च भर्ता भोक्ते"त्यादिस्मृतेर्वक्ष्यमाणन्यायाच्च संसारी परस्मादन्यः स चाहंधीगम्यः स्पष्टं तद्भेदमनुभवतीत्यर्थः । जीवस्य परस्माद्वैलक्षण्येऽपि न तस्य ततो वैलक्षण्यमित्याशङ्क्याऽऽह—तस्मादिति । तद्वदीश्वरविलक्षणसंसारिवदित्यर्थः ।।१२३८।।

परस्य तद्वैलक्षण्यं श्रुतितो दर्शयित्वा तत्रैवोपपत्तिमाह—तथेति । उपपत्तिशतैरिति क्षित्याद्युपलब्धिमत्कर्तृकं कार्यत्वाद्घटवदित्यादिभिरित्यर्थः । पृथक्संसारिभ्य इति शेषः । ईश्वरवादिनामीश्वरसाधने तात्पर्यं यत्नत इत्युक्तम् । न च जीवानामेवादृष्टद्वारा क्षित्यादिकर्तृत्वं तेषां तदुपकरणोपादानादिसाक्षात्कारविरहित्वादतः संसारिभ्यो विलक्षणस्तत्कर्तेति भावः ।।१२३९।।

तयोर्मिथो भेदे हेत्वन्तरमाह—दुःखेति । जीवस्य स्वगतदुःखध्वंसे दुःखं मे मा भूदित्यर्थित्वेन प्रवृत्तिर्दृष्टा, नेशस्य साऽस्ति दुःखाभावादतस्तद्भेद इत्यर्थः । अभेदे क्वचित्प्रवृत्तिरन्यत्र नेतिवैधर्म्यायोगादित्यतःशब्दार्थः ।।१२४०।।

मिथो भेदे युक्तिमुक्त्वा तत्रैव श्रौतं लिङ्गमाह—तमिति । "तं विदित्वा न लिप्यते" "एतमेव प्रव्राजिनो लोकमिच्छन्तः" "एतं वै तमात्मानं विदित्वा" "एतमितः प्रेत्याहमभिसंभवितास्मी"ति कर्मकर्तृभेदेन जीवेश्वरयोरुक्तेस्तयोरत्यन्तभेदो मृगव्याधयोरिवैकस्मिन्कर्मकर्तृत्वायोगादित्यर्थः ।।१२४१।।

तद्भेदे श्रौतलिङ्गान्तरमाह—मुमुक्षोरिति । तस्य गतिर्मार्गो देवयानः पन्थास्तस्य देशभेदोऽर्चिरादिपर्व-

दक्षिणोत्तरमार्गोक्तिस्तथा सति विरुध्यते । गन्तव्यदेशाभावाच्च गतिर्नैवोपपद्यते ॥४३॥
तथाऽभ्युदयकैवल्यसाधनानां विधानतः । न हीश्वरस्य कैवल्यं साधनायत्तमिष्यते ॥४४॥
ब्रह्मभावी ततो नेशः किंतु तद्व्यतिरेकभाक् । संसार्येवाभिधीयेत यथोक्तन्यायगौरवात् ॥४५॥

ब्रह्मभावी जीवः न ब्रह्मपदार्थः तथासति उपदेशानर्थक्यम्

नैवं ब्रह्मोपदेशार्थशास्त्रानर्थक्यसक्तितः । संसारिविद्ययैवास्य पुरुषार्थसमाप्तितः ॥४६॥
न च ब्रह्मोपदेशस्य सर्वभावातिरेकतः । शक्यं फलान्तरं वक्तुं येनासावर्थवान्भवेत् ॥४७॥
पुमर्थसाधनेऽन्यस्मिन्न चासौ विनियुज्यते । मन्त्रवत्तेन तच्छास्त्रं स्यादनर्थकमेव तु ॥४८॥
मतं दुःखिन एवासौ संपदर्थं विधीयते । ब्रह्मास्मीत्यविनिर्ज्ञाते कथं ब्रह्मणि सा भवेत् ॥४९॥
तस्मिंस्तु शास्त्राद्विज्ञाते शक्यते कर्तुमञ्जसा । ब्रह्म संपदतः शास्त्रं तादर्थ्यादर्थवद्भवेत् ॥५०॥

विशेषस्तस्योपदेशस्तेऽर्चिषमित्यादिरतो गन्तृगन्तव्यभेदधीरित्यर्थः । तद्भेदाभावेऽपि गतिरुच्यतामित्याशङ्क्याह—भेद इति । असतीति च्छेदः ॥१२४२॥

मा भूद्गतिरित्याशङ्क्याऽऽह—दक्षिणेति । गत्यनङ्गीकारे दक्षिणमार्गस्य धूमाद्युपलक्षितस्येष्टादिकारिणं प्रत्युक्तिवज्ज्ञानिनं प्रत्युत्तरमार्गस्यार्चिराद्युपलक्षितस्योक्तिर्विरुध्येतातो गतिर्दुरपह्नवेत्यर्थः । अस्तु तर्हि गतिः सा च सकर्तृकत्वाद्गन्तारमपेक्षतां ततो विलक्षणगन्तव्यलाभस्तु कुतस्तत्राऽऽह—गन्तव्येति । तस्या हि कर्तृकर्मणोरपेक्षासाम्यात्तद्भेदाभावे नैव सा सिध्येदित्यर्थः । गन्त्रभावे गत्यभाववदितिदृष्टान्तार्थश्चकारः ॥१२४३॥

जीवेशभेदे हेत्वन्तरमाह—तथेति । विधानतस्तथेति सम्बन्धः । अथैतानि परस्यैव विधास्यन्ते तत्कथं भेदस्तत्राऽऽह—न हीति । न तावदीशस्याभ्युदयार्थं साधनं विधेयं तस्य बन्धान्तर्गतस्वर्गाद्यभ्युदयसम्बन्धायोगान्नित्यमुक्तत्वात्कैवल्यं तु तस्य नित्यसिद्धं न साधनाधीनमतो न तं प्रति साधनद्वयविधिर्जीवं प्रति च सोऽस्ति तद्भेदस्तयोरित्यर्थः ॥१२४४॥

जीवेशभेदे प्रामाणिकेऽपि ब्रह्मभाविपुरुषकल्पना कथमित्याशङ्क्योपसंहरति—ब्रह्मेति । पञ्चम्योः सामानाधिकरण्येन सम्बन्धः । "ब्रह्म वा इदमि"त्यत्र ब्रह्मशब्देन नेशो गृह्यते ब्रह्मभावी तु जीवस्ततोऽन्यस्तेनोच्यते यथोक्तन्यायस्य जीवपरभेदप्रामाणिकत्वस्य दृढत्वादित्यर्थः ॥१२४५॥

ब्रह्मभाविनो जीवस्य ब्रह्मोपदेशानर्थक्यमिति दूषयति—नैवमिति । तदुपपादयति—संसारीति । यदत्र ब्रह्मशब्दः तज्ज्ञानादेव मुक्तिरिहेष्टा तदात्मानमित्यादिश्रुतेरतो जीवोऽब्रह्म चेज्जीवज्ञानादेव तत्सिद्धेः सत्यज्ञानादिब्रह्मोपदेशो वृथा स्यादित्यर्थः ॥१२४६॥

जीवधियो मुक्तिफलत्वेऽपि ब्रह्मोपदेशस्य फलान्तरेणार्थवत्त्वमित्याशङ्क्याऽऽह—न चेति । सत्यज्ञानादिलक्षणब्रह्मोपदेशस्य "ब्रह्मविदाप्नोति परमि"त्यादिश्रुत्या तद्भावे फले गम्यमाने तदतिरेकेण फलान्तरमभ्युदयरूपं तस्याशक्यं वक्तुमुक्तश्रुतिविरोधादतो न ब्रह्मोपदेशस्य प्रकारान्तरेणार्थवत्त्वमित्यर्थः ॥१२४७॥

विधिशेषतया तदर्थवत्त्वमाशङ्क्य कर्मविधिशेषत्वेनोपास्तिविधिशेषत्वेन वेति विकल्प्याऽऽद्यं दूषयति—पुमर्थेति । अन्यस्मिन्नग्निहोत्रादिविधाविति यावत् । असाविति ब्रह्मोपदेशोक्तिः । तत्र वैधर्म्यदृष्टान्तो मन्त्रवदिति । "इषे त्वेति शाखामाच्छिनत्ती"त्यादिविनियोजकब्राह्मणवशादिषे त्वेत्यादिमन्त्रो यथा शाखाच्छेदनादौ विनियुक्तो न तथा ब्रह्मोपदेशोऽग्निहोत्रादौ विनियुज्यते विनियोजकश्रुत्याद्यभावादित्यर्थः । विनियोगाभावे फलमाह—तेनेति । तच्छास्त्रं ब्रह्मोपदेशार्थं सत्यज्ञानादिवाक्यमित्यर्थः । कर्मविधिशेषत्वेन ब्रह्मोपदेशस्यार्थवत्त्वायोगेन स्वतन्त्रतया तदर्थवत्त्वमावश्यकमिति तुशब्दार्थः ॥१२४८॥

कल्पान्तरमाह–मतमिति । ब्रह्मोपास्तिस्तज्ज्ञानानपेक्षेत्याशङ्क्य व्यतिरेकमाह–अविनिर्ज्ञात इति ॥१२४९॥

तत्रैवान्वयमन्वाचष्टे—तस्मिन्निति । अन्वयव्यतिरेकाभ्यां ब्रह्मज्ञानस्य तदुपास्त्युपयोगमुक्त्वा फलितमाह—अत इति ॥१२५०॥

ननु ब्रह्म यदि ज्ञातं तावतैव कृतार्थता । न चेत्तत्संपदा किं स्याद्येन तामनुरुध्यते ।।५१।।
नैवं ब्रह्मावबोधस्य पारार्थ्येन[1] फलत्वतः । सर्वमेव यतो ज्ञानं परार्थं फलवन्मतम् ।।५२।।

सिद्धान्तिमतम्

उक्तत्वात्परिहारस्य नैवमेतद्भवेदिह । ब्रह्मज्ञानात्तदन्यत्र परार्थं ज्ञानमिष्यते ।।५३।।
सर्वत्रैव हि विज्ञानं संस्कारत्वेन गम्यते । पराङ्गं चाऽऽत्मविज्ञानादन्यत्रेत्यवधारणात् ।।५४।।

अहं ब्रह्मास्मीति न संपदुपासनम्

सामानाधिकरण्येन तथा ब्रह्मात्मशब्दयोः । श्रुतौ श्रुतेर्न संपत्स्यात्संपद्येष न हि क्रमः ।।५५।।
आत्मा ब्रह्मेत्येवमादौ सामानाधिकरण्यगीः । अन्यस्यान्यत्र संपत्स्यादद्वये सा कथं भवेत् ।।५६।।
द्रष्टव्यस्याऽऽत्मनस्तद्वदैकात्म्यं श्रुतिरब्रवीत् । ब्रह्मादि सर्वमात्मेति संपन्नातोऽत्र युज्यते ।।५७।।
तदापत्तिश्रुतेश्चेयं संपन्नेहोपपद्यते । ब्रह्मैव भवतीत्यादितदापत्तिवचांस्यपि ।।५८।।

सिद्धान्ती संपदमाक्षिपति—नन्विति । ब्रह्मज्ञानेऽपि विनोपास्तिं नास्ति कृतार्थतेत्याशङ्क्याऽऽह—न चेदिति । ब्रह्मज्ञानान्मानान्न कृतार्थता तदुपास्तेरमानात्सेति विचित्रं पाण्डित्यमित्यर्थः ।।१२५१।।

पूर्ववाद्याह—नैवमिति । ब्रह्मधीर्न स्वतन्त्रा पुमर्थहेतुर्ज्ञानत्वादाज्यादिज्ञानवदित्यर्थः । तदेव समर्थयते—सर्वमिति । मतं वार्तिककारादिभिरिति शेषः । अतो युक्तं प्रागुक्तमनुमानमित्यर्थः ।।१२५२।।

ब्रह्मधियः स्वतन्त्रफलायाः श्रुत्यनुभवाभ्यां सम्बन्धे साधितत्वात्तस्या न पारार्थ्यमित्याह—उक्तत्वादिति । एतदिति पारार्थ्यमिहेत्यात्मज्ञानं परामृष्टम् । उक्तानुमानस्य किं बाधकमित्याशङ्क्य कालातीतत्वं शुक्त्यादिज्ञाने व्यभिचारं च मन्वानोऽप्रयोजकत्वमाह—ब्रह्मेति । तज्ज्ञानमिति संबन्धः ।।१२५३।।

शब्दसाधुताज्ञानस्य शब्दे पुंसि वा संस्कारत्वेन प्रयोगाङ्गत्वं प्रकृत्य व्याकरणाधिकरणे वार्तिककारोक्तिमत्र मानत्वेनोदाहरति—सर्वत्रेति । ननु ज्ञानस्य विनियुक्तसंस्कारत्वं विनियोक्ष्यमाणसंस्कारत्वं वा न प्रतीयते । मैवमुपांशुयाजाङ्गभूताज्यावेक्षणवदस्य विनियोक्ष्यमाणसंस्कारत्वोपपत्तेरित्याह—पराङ्गं चेति । तर्हि ज्ञानत्वादात्मज्ञानस्यापि कर्माङ्गतेति नेत्याह—आत्मेति । अपहतपाप्मादिशास्त्रेण मोक्षहेतुं तज्ज्ञानमाचक्षाणेन तद्वर्जयित्वा ज्ञानान्तरमेव परार्थमित्यवधारणात्तत्स्वतन्त्रमेव मुक्तिफलमित्यर्थः ।।१२५४।।

अहं ब्रह्मास्मीति संपदर्थमङ्गीकृत्य तच्छेषत्वं ब्रह्मोपदेशस्य निरस्य संपदमेव निरस्यति—सामानाधिकरण्येनेति । सोऽमितिदृष्टान्तार्थस्तथाशब्दः । संपत्पक्षेऽपि सामानाधिकरण्यं "मनो ब्रह्मे"तिवत् स्यादित्याशङ्क्य विधायकपदातिरेकेण ब्रह्मात्मपदयोः सामानाधिकरण्यं तत्र न युक्तमित्याह-संपदीति ।।१२५५।।

काऽसौ श्रुतिर्यत्र सामानाधिकरण्यश्रवणं ब्रह्मात्मशब्दयोरित्याशङ्क्याऽऽह—आत्मेति । संपदभावे हेत्वन्तरमाह—अन्यस्येति । अन्यत्र मनोगगनादावन्यस्य ब्रह्मणः संपद्दृष्टा न त्वद्वये ब्रह्मण्यप्रपञ्चे सा युक्तेत्यर्थः ।।१२५६।।

अथाद्वयत्वमसिद्धं सामानाधिकरणस्य वेदाः प्रमाणमितिवदन्यथासिद्धेरत आह—द्रष्टव्यस्येति । "आत्मा वा अरे द्रष्टव्य" इतिप्रकृतात्मनो ब्रह्मत्वव"दिदं सर्वं यदयमात्मे"ति श्रुतिरद्वयत्वमाहातः संपदनवकाशेत्यर्थः । ब्रह्मादीत्यादिशब्देन "क्षत्त्रं तं परादादि"त्यादिवाक्योपात्तं क्षत्त्रादि गृह्यते ।।१२५७।।

अभेदेऽपि भेदं कल्पयित्वा सा प्रवर्ततामित्याशङ्क्याऽऽह—तदापत्तीति । चकारो दर्शितशङ्कानिरासार्थः । इहेत्यद्वयात्मोक्तिः । तदापत्तिश्रुतिमुदाहरति—ब्रह्मेति । संपत्पक्षे न तदापत्तिः स्थितस्य नष्टस्य वाऽन्यस्यान्यत्वायोगादित्यपेरर्थः ।।१२५८।।

१. पारार्थ्येन—द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात्—इति सूत्रभाष्यवार्तिकोक्तन्यायात् आत्मज्ञानस्यापि कर्मकर्तृजीवसंस्कारत्वात् नान्यत् तस्य फलं तद्विषये "सर्वांश्च लोकानाप्नोति सर्वांश्च कामानि"त्यर्थवादः ।

वचनात्स्यात्तदापत्तिः संपत्तेरिति चेन्मतम् । नैवं प्रत्ययमात्रत्वात्संपत्तेर्न तदिष्यते ।।५९।।
तमोमात्रान्तरायत्वादाप्तमप्याप्यते न तत् । न च संपत्तमोहन्त्री मिथ्याज्ञानात्मकत्वतः ।।६०।।
तमोध्वंसातिरेकेण सम्यग्ज्ञानस्य नापरम् । फलमण्वपि संभाव्यं ज्ञानस्याकारकत्वतः ।।६१।।
वस्तुनः शक्तिकृन्नापि वचनं ज्ञापकत्वतः । ज्ञापकानि हि शास्त्राणि कारकाणि न कुत्रचित् ।।६२।।
अभीष्टपुरुषार्थस्य बाधश्चैवं प्रसज्यते । निःशेषपुरुषार्थाप्तिकारि ब्रह्मावबोधनम् ।।६३।।

संपदा सर्वभावापत्तिनिराकरणम्

तादृक्षं संपदो न स्यान्न च दुःख्यात्मबोधतः । निःशेषपुरुषार्थाप्तिस्तद्बुद्धेरनृतन्त्रतः ।।६४।।
अपूर्वाद्यर्थ एवैकः प्राधान्येन विवक्षितः । काण्डद्वयेऽपि नैतस्मादन्योऽर्थः कश्चिदीक्ष्यते ।।६५।।
एतावदर इत्यन्त उपसंहारदर्शनात् । न चोपक्रमसंहारविरुद्धोक्तिः प्रशस्यते ।।६६।।

तं यथेत्यादिश्रुतेः सूत्राद्युपास्तेस्तद्भाववद्ब्रह्मोपास्तेरपि तद्भावो वचनात्फलं स्यादिति शङ्कते—वचनादिति । संपत्तेरमानत्वान्न तद्बलादन्यस्यान्यत्वं मानत्वेऽप्येवंमानस्याकारकत्वात् । न च सूत्राद्युपासनादप्यन्यस्यान्यत्वं, स्थितस्य नष्टस्य वाऽनुपपत्तेरुक्तत्वात् "तं यथे"त्यादिश्रुतिश्च न पूर्वसिद्धसूत्रादिभावमुपासितुराह तत्सादृश्याप्त्या तद्भावोपचारात्तस्माद्ब्रह्मभावः स्वतःसिद्धो न सांपादिक इति समाधत्ते—नैवमिति ।।११५९।।

ब्रह्मभावस्य स्वतस्त्वे किमिति तद्भावः सर्वैर्नानुभूयते तत्राऽऽह—तमोमात्रेति । तन्मात्रस्य व्यवधानाद्वस्तुभूतव्यवधानाभावात् । वस्तुतस्तु तदाप्तमपि नाऽऽप्यते नानुभूयत इति यावत् । तमोव्यवधानादननुभवेऽपि तद्ध्वस्तिहेतुः संपदेष्टव्येत्याशङ्क्याऽऽह—न चेति । संपदोऽमानत्वान्न ततस्तमोध्वस्तिः किंतु सम्यग्ज्ञानादेवेत्यर्थः ।।१२६०।।

सम्यग्ज्ञानस्य मोक्षफलस्य कथं तमोध्वस्तिः फलमित्याशङ्क्य तद्ध्वस्तिरेव मुक्तिरित्याह—तमोध्वंसेति । नाविद्याध्वस्तिर्मुक्तिः किंत्वात्मनो ब्रह्मत्वं तदुत्पत्तिहेतुर्ज्ञानमित्याशङ्क्याऽऽह—ज्ञानस्येति । विद्याया व्यञ्जकत्वादन्यस्यान्यभावानुपपत्तेरुक्तत्वात्तमोध्वंसेतरब्रह्मभावायोगान्न फलान्तरमिति भावः ।।१२६१।।

कथमन्यस्यान्यभावायोगो "ब्रह्म वेदे"त्यादिवाक्यमेव तच्छक्तिकरमित्यङ्गीकारान्न च श्रौतेऽर्थे केवलतर्कप्रवेशः श्रुतेर्बलीयस्त्वादतः संपन्मुक्तिहेतुरत आह—वस्तुन इति । कथं ज्ञापकं तदाह—ज्ञापकानीति । शास्त्राणामादित्यवदर्थज्ञापकत्वं सर्वसंप्रतिपन्नमिति हिशब्दार्थः । कुत्रचिदिति विषयोक्तिः ।।१२६२।।

ब्रह्मोपदेशस्य संपच्छेषत्वे दोषान्तरमाह—अभीष्टेति । न केवलमिष्टहानिरेव किंत्वनिष्टापत्तिश्चेत्यपेरर्थः । संपद्वशादिष्टापत्तिमाशङ्क्याऽऽह—निःशेषेति ।।१२६३।।

संपदपि तथा किं न स्यादत आह—तादृक्षमिति । न हि तादृशं शास्त्रीयं पूर्णं फलमप्रमाणसंपन्मात्रेण सिध्यति तस्मादिष्टहानिः संपत्पक्षे दुर्वारेत्यर्थः । ननु बन्धमोक्षयोरैकाधिकरण्याज्जीवस्य बद्धत्वात्तस्यैव मुक्तिर्न चाऽन्यज्ञानादन्यमुक्तिरतः संसारिज्ञानादेव तत्सिद्धेर्ब्रह्मशब्देन संसारिग्रहे नेष्टहानिर्न च ब्रह्मोपदेशानर्थक्यं संसारिणं ब्रह्मत्वेन स्तोतुं तदुपदेशात्तत्राऽऽह—न चेति । संसारिज्ञानान्न मुक्तिरित्यत्र हेतुमाह—तद्बुद्धेरिति । जीवधियोऽपुंस्तन्त्रत्वेन निजत्वान्न ततो मुक्तिरन्यथा सर्वमुक्तेराधुनिकः संसारो न स्यान्न चोपदेशः स्तुत्यर्थो मुख्ये बाधाभावादतो ब्रह्मे ति जीवोक्तावुपदेशानर्थक्यमिष्टनष्टिश्च स्पष्टेत्यर्थः ।।१२६४।।

किंच ब्रह्मणोऽर्थान्तरस्य संसारिणो ब्रह्मशब्दत्वे बृहदारण्यकेऽभीष्टहानिः स्पष्टेत्याह—अपूर्वेति । अर्थान्तरस्यापि प्राणादेरत्र दृष्टेरवधारणायोगमाशङ्क्याऽऽह—प्राधान्येनेति । यथोक्तं वस्तु तात्पर्यगम्यमिहेत्यत्र हेतुमाह—काण्डेति । मधुकाण्डे मुनिकाण्डे चेति यावत् । अर्थान्तरमत्र दृष्टमपि न तात्पर्यगम्यमित्यर्थः ।।१२६५।।

अर्थान्तरवदपूर्वाद्यर्थस्यापि नात्र तात्पर्यविषयत्वं दृष्टेरविशेषादित्याशङ्क्याऽऽह—एतावदिति । मधुकाण्डान्ते तदेतद्ब्रह्मे त्याद्युपसंहारस्यापीदमुपलक्षणम् । अतश्चोपसंहारवशादुपक्रमेऽप्यद्वयं प्रतिपाद्यमित्यर्थः । ब्रह्म वा इदमित्युपक्रमे जीवपरयोर्भेदोऽस्तूपसंहारे त्वेतावदित्यादावभेद इति व्यवस्थामाशङ्क्याऽऽह—न चेति ।।१२६६।।

तत्रैवं सति संसारी यद्यन्यो ब्रह्मणो भवेत् । इष्टस्यार्थस्य बाधः स्यान्न च ध्वान्तनिराकृतिः ।।६७।।
आरम्भेऽवसितौ शास्त्रं परस्परविरोधतः । समञ्जसं न क्लृप्तं स्यात्संभवेऽप्यविरोधिनः ।।६८।।

ब्रह्मविद्यासमाख्यया अत्र मुख्यब्रह्मोपदेश एव

समाख्यानुपपत्तिश्च ब्रह्मणोऽन्यस्य वेदनात् । नापि रूढिस्तदन्यस्मिन्नश्वकर्णादिवद्भवेत् ।।६९।।
आत्मेति वेत्तुरन्यश्चेन्न ब्रह्माहमिति श्रुतेः । प्रतीचो ब्रह्मवत्प्रत्यग्ब्रह्मणोऽपि विशेषणम् ।।७०।।
ब्रह्मता न मदन्यत्र कौटस्थ्यान्मम नाशिषु । ब्रह्मणो नान्यतः प्रत्यक्साक्षात्त्वाद्ब्रह्मवस्तुनः ।।७१।।
अव्यावृत्ताननुगतेर्मुख्यार्थश्च तथा सति । ब्रह्मविद्येति सिद्धः स्याद्व्यपदेशो न चान्यथा ।।७२।।

जीवब्रह्मणोः भेदाभेदेन सर्वोपपत्तिशङ्का समाधानं च

भिन्नाभिन्नत्वगीर्याऽपि साऽपि दुःस्थितसिद्धिका । विरुद्धधर्मसंबन्धो न प्रतीच्यस्त्यधर्मणि ।।७३।।
धर्मधर्म्यभिसंबन्धा गृह्यन्तेऽनात्मवस्तुषु । प्रत्यक्षादिप्रमाणेन नामीषामात्मनि ग्रहः ।।७४।।

कथं तयोर्भिन्नार्थत्वमप्रशस्तमिति तत्राह—तत्रेति । तयोस्त्वदिच्छया भिन्नार्थत्वे सति ब्रह्मणोऽन्यो जीवः स्यादेवं चेदशेषोपनिषदिष्टैक्यार्थबाधस्तज्ज्ञानादज्ञानाहानिश्च स्यादित्यर्थः ।।१२६७।।

इष्टार्थबाधमुपगन्तुरनिष्टापत्तिमाह—आरम्भ इति । अविरुद्धार्थनिष्ठत्वेनैकवाक्यत्वे[1] विरुद्धार्थनिष्ठतया तद्भेदकल्पनमयुक्तं यथोपांशुयाजवाक्ये जामितादोषोपक्रमे तत्प्रतिसमाधानोपसंहारे च वाक्यैक्यमाश्रित्य विष्णुरुपांशु यष्टव्य इत्यादिरर्थवाद उपांशुयाजमन्तरा यजतीति च विधिः । यथाऽऽहुः—एकं हीदं वाक्यं नानेकं विधातुमर्हतीति । तथेहाप्येकवाक्यतावशादेकार्थतेति भावः ।।१२६८।।

ब्रह्मेत्यादिवाक्ये ब्रह्मशब्देन परस्याग्रहे तद्विद्यायां ब्रह्मविद्येतिसंज्ञानुपपत्तिरिति दोषान्तरमाह—समाख्येति । सास्नादिमति गोशब्दवज्जीवज्ञाने ब्रह्मविद्याशब्दस्य रूढिमाशङ्क्याऽऽह—नापीति । ब्रह्मज्ञानादन्यस्मिञ्जीवज्ञाने ब्रह्मविद्याशब्दस्य न रूढिस्तथाविधवृद्धव्यवहाराभावादित्यर्थः ।।१२६९।।

अत्रोक्तब्रह्मशब्दार्थाद्वेत्तुर्जीवादन्यस्तदात्मानमित्यात्मशब्देन परो गृह्यते । तद्विद्या च ब्रह्मविद्येति संज्ञासिद्धिरित्याशङ्क्ते—आत्मेतीति । वाक्यशेषविरोधान्मैवमित्याह—नेति । ब्रह्माऽऽत्मा भवत्वात्मा ततोऽन्यः सर्पस्य रज्ज्वभेदेऽपि रज्जोस्तदन्यत्वदृष्टेरित्याशङ्क्याऽऽह—प्रतीच इति ।।१२७०।।

तयोरन्योन्यविशेषणत्वेनान्योन्यात्मत्वमुक्तं व्यनक्ति—ब्रह्मतेति । ब्रह्मधर्मस्य कौटस्थ्यस्याऽऽत्मनि दृष्टेरात्मा ब्रह्म तद्धर्मस्याऽऽपरोक्ष्यस्य यत्साक्षादिति ब्रह्मणि श्रुतेर्ब्रह्माऽऽत्मेत्यर्थः ।।१२७१।।

अन्योन्याभेदे निःसामान्यविशेषं ब्रह्म सिध्यति तत्सिद्धौ तद्विद्यायां ब्रह्मविद्येत्युक्तिर्मुख्या स्यान्मिथो भेदे तु न ब्रह्मशब्दो मुख्यो नापि व्यपदेशस्तथेति फलितमाह—अव्यावृत्तेति ।।१२७२।।

जीवब्रह्मणोरत्यन्तभेदे संज्ञायोगेऽपि भेदाभेदोपगमादभेदांशे तदुपपत्तिरित्याशङ्क्याऽऽह—भिन्नेति । अत्यन्तभिन्नत्वोक्तिवदित्यपेरर्थः । तत्र हेतुः—विरुद्धेति । यत्र धर्ममात्रमेवास्थूलादिश्रुत्याऽपास्तं तत्र कुतो विरुद्धभेदाभेदधर्मवत्त्वं तथा चाभेदांशेन संज्ञासाधनमयुक्तमित्यर्थः ।।१२७३।।

धर्मित्वमनात्ममात्रवृत्ति धर्मिमात्रवृत्तित्वाद्घटत्ववदिति मत्वाऽधर्मित्वमात्मनः साधयति—धर्मेति । प्रत्यक्षादिभिरनात्मस्वेव धर्मो धर्मी विशेषणं विशेष्यमित्यादयः सम्बन्धा गृह्यन्ते न त्वात्मनि प्रत्यक्षादिभिस्तेषां ग्रहणमात्मनोऽध्यक्षाद्ययोग्यत्वादित्यर्थः ।।१२७४।।

---

१. अविरुद्धार्थेति । उपांशुयाजवाक्ये हि आरम्भे जामितादोषः कीर्तितः "जामिवा एतद्यज्ञस्य यदन्वञ्चौ पुरोडाशौ—" इति । जामिता सादृश्यं आलस्यपर्यवसायि आग्नेयाग्नीषोमयोः नैरन्तर्येण क्रियमाणयोः सादृश्यात् कृताकृतविवेको न स्यात् अतः उपांशुयाजमन्तरा यजति इत्यनेन विहितस्य आज्यसाध्यस्य उपांशुयाजयागस्य मध्ये करणे उक्तदोषपरिहारो भवति । इदं च उपांशुयाजवाक्ये यागविध्यङ्गीकार एव संगच्छते । विष्णुः उपांशु यष्टव्य इत्यादौ यागविधाने नायं दोषः परिह्रियेत अत एकवाक्यता अङ्गीकरणीयेत्यर्थः ।

**आत्मानात्मनिमित्तेऽपि व्यपदेशोऽपि दुर्घटः । विकल्पतो वा तत्सिद्धिर्ब्रह्मसंसारिणोर्भवेत् ।।७५।।**
**न चार्धवैशसं युक्तं तत्त्वज्ञाने विवक्षिते । संशयो हि तथा श्रोतुः स्यादनिश्चितवाक्यतः ।।७६।।**
**निश्चितं फलवज्ज्ञानं यस्य स्यादिति शास्त्रतः । न तु संशयितं यस्मात्संशयात्मा विनश्यति ।।७७।।**

ब्रह्मणि साधकत्वं न युक्तमिति न वाच्यम्

**परमात्मन्ययुक्ता चेत्साधकत्वादिकल्पना । शास्त्रोपालम्भतो नैवं शास्त्रीयेयं प्रकल्पना ।।७८।।**
**अक्षमा भवतः केयं साधकत्वप्रकल्पने । किं न पश्यसि संसारं तत्रैवाज्ञानकल्पितम् ।।७९।।**
**अनात्मवस्तु यत्किंचित्तद् ब्रह्मानवबोधतः । ब्रह्मण्येव समध्यस्तं शुक्तिकारजतादिवत् ।।८०।।**
**यस्मादेवमतोऽशेषसंसारानर्थकल्पना—निदानबहुलाज्ञानसमुच्छित्त्यै परा श्रुतिः ।।८१।।**
**ब्रह्मेति ब्रह्मशब्देन कृत्स्नं वस्त्वभिधीयते । प्रकृतस्याऽऽत्मकार्त्स्न्यस्य वैशब्दः स्मृतये मतः ।।८२।।**

स्यातां वा ब्रह्मात्मनोर्भेदाभेदौ तथाऽपि भिन्नाभिन्नविद्यायां ब्रह्मविद्येति नियतोक्तिर्न स्यादित्याह—आत्मेति । निमित्तं विषयः । उभयविषये ज्ञाने स्वीकृतेऽपि व्यपदेशो न घटते तयोर्भिन्नाभिन्नत्वेन द्वयोर्विद्याविषयत्वे ब्रह्मविद्येति ब्रह्मणैव विद्याया विशेष्यत्वायोगादित्यर्थः । द्वयविषया विद्या ब्रह्मविषयाऽपि भवत्येवेति व्यपदेशसिद्धिमाशङ्क्याऽऽह—विकल्पतो वेति । द्वयोर्विद्याविषयत्वाविशेषाद्ब्रह्मविद्येति कदाचित्कदाचिज्जीवविद्येति व्यपदेशो विकल्पितः स्यादित्यर्थः ।।१२७५।।

द्वयात्मत्वाद्वस्तुनस्तद्विद्याऽपि द्वयात्मिकेति समुच्चयमाशङ्क्याऽऽह—न चेति । कुक्कुटादेरेको देशः प्रसवाय कल्पते पच्यते देशान्तरमित्यर्धवैशसं तदिहायुक्तं न हि वस्तु ब्रह्म चाब्रह्म च । तत्त्वज्ञानस्य विवक्षितत्वाद्विरुद्धस्यातथात्वादित्यर्थः । अस्तु तर्हि वस्तु संसार्यसंसारि वा वैकल्पिकमिति नेत्याह—संशयो हीति । विकल्पतो वस्तुनो ह्यात्मत्वे तद्वाक्यात्संशयः श्रोतुः स्यात्संसार्यसंसार्युभयरूपं वा वस्त्विति । न च वस्तुनि संशयं प्रशंसन्तीत्यर्थः । संशयितार्थस्य वाक्यस्य संशयजनकत्वं प्रसिद्धमिति वक्तुं हिशब्दः ।।१२७६।।

किंच संशयिते ज्ञाने वाक्योत्थे तस्य फलवत्त्वासिद्धिरित्याह—निश्चितमिति । तत्र श्रुतिं प्रमाणयति—यस्येति[1] । संशयस्यापि निश्चयवत्फलवत्त्वमाशङ्क्याऽऽह—न त्विति ।।१२७७।।

जीवपरयोरत्यन्तभेदस्य भेदाभेदयोश्चायोगात्परमेव ब्रह्म ब्रह्मशब्दं न जीवस्तद्भावीत्युक्ते सत्यत्यन्ताभेदपक्षे चोदयति—परमात्मनीति । तदात्मानमेवावेदिति ज्ञातृत्वं ब्रह्मण्ययुक्तं तस्य ज्ञानमूर्तित्वादत एव न तत्कर्मत्वमपि न च स्वकर्तृकर्मकज्ञानान् मुक्तिः परस्य क्रियाकारकफलविलक्षणत्वादतस्तत्र ज्ञातृत्वादिकल्पनायोगान्न परं ब्रह्म ब्रह्मशब्दमित्यर्थः । शास्त्रं ब्रह्मणि साधकत्वादि दर्शयति तच्चापौरुषेयमदोषं नोपलम्भार्हमतस्तस्मिन्नाविद्यं साधकत्वादि स्वीकार्यमित्याह—शास्त्रेति ।।१२७८।।

किंच सर्वस्यापि संसारस्य ब्रह्मण्यविद्ययाऽध्यासात्तदन्तर्भूतसाधकत्वाद्यपि तत्राध्यस्तमित्युपगमे नानुपपत्तिरित्याह—अक्षमेति ।।१२७९।।

न संसारो ब्रह्मण्यध्यस्तस्तस्य नित्यमुक्तत्वाज्जीवे त्वारोपितस्तत्र तद्दृष्टेरित्याशङ्क्याऽऽह—अनात्मेति । न तावज्जीवशब्दवाच्यः संसारी संसारान्तर्भावात् तच्छब्दलक्ष्यार्थो ब्रह्मणो नातिरिच्यते तद्ब्रह्मण्येव स्वाज्ञानादनात्मवस्त्वध्यस्तमनात्मत्वात्संमतवदित्यर्थः ।।१२८०।।

उक्तन्यायेन ब्रह्मभावी जीवो न ब्रह्मशब्दार्थः किंतु परमेव ब्रह्म । तत्र च निःशेषदोषाभावस्तस्माद् ब्रह्मेत्याद्या श्रुतिः सर्वसंसारहेत्वनवच्छिन्नस्वाविद्याध्वंसिब्रह्मविद्यार्थत्वेनाऽऽरब्धेत्युपसंहरति—यस्मादिति ।।१२८१।।

परेष्टं ब्रह्म निरस्य स्वेष्टं तदाह—ब्रह्मेतीति । अत्र हीति प्रकृतमात्मकार्त्स्न्यं तस्य स्मारको वैशब्द इत्याह—प्रकृतस्येति ।।१२८२।।

१. यस्य स्यादद्धा न विचिकित्साऽस्तीति ह स्माह शाण्डिल्यः शाण्डिल्यः—अनेन निर्विचिकित्सज्ञानस्यैव विहितत्वात् ।

प्रकृतार्थोपरोधाच्च मुख्यब्रह्मार्थलाभतः । यथोक्तदोषाभावाच्च ब्रह्म कृत्स्नमिहास्त्वतः ॥८३॥

ब्रह्मणः कात्स्न्यं न प्रमाणतः सिद्ध्यति इत्याक्षेपः

ननु मानादिविरहादकृत्स्नमपि नेष्यते । कुतः कात्स्न्यं यतः सर्वं मानादेव प्रसिध्यति ॥८४॥
अभ्युपेतौ च मानादेस्तस्य कार्त्स्न्यं विहन्यते । न हि ब्रह्मातिरिक्तेऽर्थे सति संभाव्यतेऽजडैः ॥८५॥
भिन्नाभिन्नत्ववादेऽपि ब्रह्माभिन्नात्मना भवेत् । व्यावृत्तेर्न तु भिन्नेषु ब्रह्मता स्याद्घटादिवत् ॥८६॥

उक्ताक्षेपपरिहारः

वस्त्वन्तराभ्युपगमः प्रत्यक्कात्स्न्यंविघातकृत् । न तु मानाभ्युपगमो मितेस्तदवसानतः ॥८७॥
वस्त्वन्तरस्य सद्भावः सिद्धे कात्स्न्यें विरुध्यते । मानाद्यपेक्षा सिद्धस्य नानुन्मत्तेन चोद्यते ॥८८॥
न चापि वास्तवी सिद्धिः प्रमात्रादिविरोधिनी । सत्यामेव यतस्तस्यां संसारानर्थविभ्रमः ॥८९॥
वास्तव्या अपि संसिद्धेः स्वमहिम्नैव नेष्यते । प्रमाणविरहात्सिद्धिरेतच्च स्वानुभूतितः ॥९०॥

ब्रह्मशब्देनाद्वयग्रहे युक्तिमाह—प्रकृतेति । आत्मेत्येवोपासीतेति प्रत्यगात्माऽद्वयः प्रकृतोऽर्थस्तस्य ब्रह्मशब्देनाद्वयवस्तुग्रहेऽबाधात्तदेवात्र ब्रह्मशब्दमित्यर्थः । तत्रैव हेत्वन्तरमाह—मुख्येति । उपोद्घाते शङ्कितदोषाणामत्राभावाच्चैवमित्याह—यथोक्तेति । प्रकृतं वाक्यमिहेत्युक्तम् । परपक्षे प्रकृतहानाप्रकृतप्रक्रियाप्रसङ्गान्मुख्यार्थबाधादुपोद्घातोक्तदोषाच्च न स युक्तिमानित्याह—अत इति ॥१२८३॥

कृत्स्नं ब्रह्मेत्यत्राकृत्स्नपक्षोक्तदोषाभावेऽपि तत्पक्षोक्तदोषापरिहाराद्यथोक्तदोषाभावासिद्धिरिति शङ्कते—नन्विति । कृत्स्नपक्षे मानादि नास्त्यस्ति वेति विकल्प्याऽऽद्यं दूषयति—मानादीति । विना मानादि लौकिकं परिच्छिन्नमपि वस्तु न लभ्यते तदतिरेकेणालौकिकमद्वयं न सिध्यतीति किं वाच्यमित्यर्थः । मानादि विना किंचिदपि न सिध्यतीत्यत्र हेतुमाह—यत इति । यत्सिध्यति तन्मानादेव सिध्यतीति न्यायादित्यर्थः ॥१२८४॥

द्वितीयं निरस्यति—अभ्युपेतौ चेति । तस्येति ब्रह्मार्था षष्ठी । सति मानादौ ब्रह्मणो ब्रह्मताहानिरित्यत्र हेतुमाह—न हीति । अजडैरिति च्छेदः । सत्यन्यस्मिन्विवेकिभिर्ब्रह्म न संभाव्यते वस्तुपरिच्छेदादिति योजना ॥१२८५॥

भिन्नाभिन्नब्रह्मपक्षे भेदान्मानादिव्यवहारोऽभेदाद्ब्रह्मतेति सर्वाविरोधमाशङ्क्याऽऽह—भिन्नेति । यद्यपि तत्राभिन्नात्मना ब्रह्म भवेत्तथाऽपि भिन्नेषु सत्सु न ब्रह्मता स्याद्घटादिवद्व्यावृत्तेरतो ब्रह्मताऽब्रह्मता च दुर्घटेति योजना ॥१२८६॥

प्रतीचोऽन्यवस्तुस्वीकारोऽद्वयत्वविरोधी न मानादिस्वीकारस्तस्य कल्पितत्वादद्वये समाप्तेरित्युत्तरमाह—वस्त्वन्तरेति ॥१२८७॥

किंचाद्वये वस्तुन्यदृष्टे मानादिभावो विरुध्यते दृष्टे वा ? नाऽऽद्य इत्याह—वस्त्वन्तरस्येति । अद्वये दृष्टे हि मानादेर्भावस्तेन विरुध्यतेऽन्यथा विरोध्यदृष्टेर्न विरोधधीरित्यर्थः द्वितीयं दूषयति—मानादीति । अद्वये ज्ञाते वैफल्यादेव मानाद्यनपेक्षणान्न विरोधाशङ्केत्यर्थः ॥१२८८॥

प्रतीच्यद्वयेऽज्ञाते ज्ञाते च मानादिभावो न विरोधीत्युक्तमिदानीं मानाद्यधीनज्ञानहीनमपि वस्तु स्वमहिम्ना वस्त्वन्तरस्य मात्रादेर्बाधकमिति नाद्वये तत्सिद्धिरित्याशङ्क्याऽऽह—न चेति । प्रमाणजनितसिद्धिवदिति वैधर्म्यमपेरर्थः । अद्वयवस्तुसत्ता मानाद्यविरोधिनीत्यत्र हेतुमाह—सत्यामिति । वस्तुस्वरूपस्फूर्तिस्तद्बाधिका चेत्कदाचिदपि संसारभ्रमो न स्यादतो न वास्तवी सिद्धिस्तद्विरोधिनीत्यर्थः ॥१२८९॥

वस्तुनः स्वरूपेण मानाद्यविरोधित्वे हेत्वन्तरमाह—वास्तव्या इति । न हि वस्तुस्वरूपज्ञप्तेरपि मानं विना स्वशक्त्यैव ज्ञप्तिरिष्टाऽज्ञानावृतायास्तस्या मानादेवाऽऽवरणवारणादतो मानादिसापेक्षं वस्तु न तद्विरोधीत्यर्थः । अज्ञानध्वस्तिद्वारा मानापेक्षया वस्तुनः सिद्धिरित्येतत्कुतः सिद्धं तत्राऽऽह—एतच्चेति । यद्वा वस्तुनि कथमावरकमज्ञानं सिद्धं तत्राऽऽह—एतच्चेति ॥१२९०॥

मेयकार्त्स्न्याविरोधित्वान्न मितेः शङ्क्यते भिदा। मेयस्वरूपावसितेर्नान्या मानस्य मानता ।।९१।।
न हि मेयप्रतिस्पर्धि तन्मानं मेयबोधितः । मानप्रसादात्सिद्धं सत्स्पर्धते मितिबाधितैः ।।९२।।
न हि वस्त्वनपाश्रित्य मानत्वं लभ्यते मितेः । वास्तव्या अपि संसिद्धेर्न सिद्धिः स्यात्प्रमां विना ।।९३।।
स्वप्रमेयार्पणं मुक्त्वा मानत्वेऽन्यन्न कारणम् । अर्पितेन विरोधश्चेदस्तु कामं न दुष्यति ।।९४।।
प्राग्ज्ञानाज्ज्ञानकाले च मानं मेयोऽप्यपेक्षते । प्रमाणकार्ये निर्वृत्ते नान्यत्किंचिदपेक्षते ।।९५।।
अज्ञातोऽर्थः प्रमेयः स्याज्ज्ञाते कोऽतिशयो मितेः । अज्ञाते न विरोधोऽस्ति ज्ञाते चान्यानपेक्षतः ।।९६।।
मेया[1]साधारणात्मोत्थज्ञानस्यैव प्रमाणतः । तस्य वस्त्वनुरोधित्वादभेदादविरोधिता ।।९७।।

मानाद्यपेक्षया वस्तुसिद्धौ मानमेयभेदादद्वैतहानिरित्याशङ्क्य मितेस्तदवसानत इत्येतत्प्रपञ्चयति—मेयेति । मितेस्तत्त्वमस्यादेर्मेयमैक्यं तदनुसारित्वात्तद्भेदो न शङ्क्यते तन्नीलमानवदद्वैतमानस्य स्वार्थसाधकतैवेत्यर्थः । मानस्वरूपालोचनेऽपि स्वमेयाविरोध्यद्वैते मानमित्याह—मेयस्वरूपेति । मानस्य हि मानत्वं मेयस्वरूपावसानमेव तन्मानं तत्परिच्छेदकमित्यङ्गीकारात्तथा चाद्वैतमानमद्वैते पर्यवस्यत्तदविरोधीत्यर्थः ।।१२९१।।

अद्वैतमानमद्वैताद्भिन्नमभिन्नं वा ? भिन्नं चेत्तद्विरोधि स्यादभिन्नं चेन्न मानमेयभाव एकत्र तदयोगादित्याशङ्क्याऽऽविद्यं भेदं मत्वाऽऽह—न हीति । यद्वोक्तं व्यतिरेकेणाऽऽह—न हीति । तत्प्रतिस्पर्धित्वे तद्बोधकत्वानुपपत्तेरित्याह—मेयेति । मानस्य मेयाविरोधित्वे मेय'स्याप्यद्वयस्य तदविरोधात्वाद्द्वैततादवस्थ्यमित्याशङ्क्य बुद्धीद्धो बोधो नित्यबोधबाधितैर्मानादिभिः स्पर्धमानस्तद्ध्वंसीति न द्वैतसंभावनेत्याह—मानेति ।।१२९२।।

तर्हि मेयवन्मानस्यापि मेयविरोधितेत्याशङ्क्य मानस्य तदालम्बित्वात्तदभावे स्वरूपासिद्धेर्न तद्विरोधितेत्याह—न हीति । जडे तस्य मेयानुसारित्वेऽपि स्वप्रकाशे नैवं कृत्याभावादित्याशङ्क्य वास्तव्या अपीत्यादावुक्तं स्मारयति—वास्तव्या इति । वस्तुस्वरूपवज्ज्ञप्तेरपि सिद्धिरज्ञानध्वस्तिरूपा मानादेव सिध्यतीत्यर्थः ।।१२९३।।

मानस्य स्वरूपसत्त्वमस्ति न वा ? आद्ये द्वैतापातो द्वितीये मानत्वासिद्धिरित्याशङ्क्य स्वरूपसत्त्वं विना स्वमेयबोधनमात्रेण प्रतिबिम्बादिवन्मानत्वसिद्धेर्मैवमित्याह—स्वप्रमेयेति । अन्यत्स्वरूपसत्त्वं [ मानात् । न हि स्वरूपसत्त्वाभावे मानत्वाभावः ] केवलव्यतिरेकाभावात्[2] । न च स्वरूपसत्त्वाभावे स्वप्रमेयार्पकत्वमेव नेति युक्तं प्रतिबिम्बादेर्बोधकत्वाकारस्य स्वरूपसत्त्वराहित्यादिति भावः । प्रतिबिम्बादेरर्प्यमाणबिम्बादिना विरोधाभावाद्युक्तं मानत्वमद्वैतमाने त्वर्पिताद्वैतेन विरोधान्न तत्र मानतेति शङ्कते—अर्पितेनेति । विरोधमङ्गीकरोति—अस्त्विति । कथं तर्हि मानतेत्याशङ्क्य मेयार्पकत्वादित्याह—न दुष्यतीति ।।१२९४।।

मानस्य मेयविरोधिनो ध्वस्तेर्न तदर्पकत्वेन मानतेत्याशङ्क्यार्पणात्पूर्वं मेयाकाङ्क्षिते तस्मिन्नविरोधादूर्ध्वं चानपेक्षिते विरोधेऽपि न दोष इत्याह—प्रागिति । अर्थो हि ज्ञानोत्पत्त्यपेक्षया पूर्वकाले तत्काले च तदीयस्वरूपलाभार्थं मानमाकाङ्क्षति तदुत्पत्तेरूर्ध्वं तु कृत्याभावान्न तदपेक्षते तेन युक्तमविरोधेन मानस्य मेयार्पकत्वमित्यर्थः ।।१२९५।।

ज्ञानात्पूर्वं मेयस्य मानापेक्षा नोर्ध्वमित्युक्तं साधयति—अज्ञात इति । अद्वयमज्ञातं चेन्न मानादिविरोधी हेत्वभावात्तस्यैव मानगम्यत्वाच्च ज्ञातं चेत्तत्कृतातिशयाभावेन तदपेक्षाभावात्तथेत्युक्तमुपसंहरति—अज्ञात इति ।।१२९६।।

ज्ञातेऽनपेक्षितमपि मानं सत्त्वादद्वैतविरोधीत्याशङ्क्य विषयस्वरूपबोधिज्ञानस्यैव मानत्वादद्वैतमानस्यापि तद्बोधिनस्तदानुगुण्यात्तस्य स्वमेयाद्भेदाभावान्न विरोधितेत्याह—मेयेति ।।१२९७।।

१. मेयेति—मेयतत्त्वबोधकज्ञानस्यैव प्रमाणत्वात् अद्वैतमानस्यापि अद्वैतानुगुणत्वात् स्वमेयात् भेदाभावात् न विरोध इत्यर्थः ।

२. केवलव्यतिरेकाभावात् स्वरूपसत्वं विना बोधकत्वाभाव इति व्याप्तेरसिद्धेरित्यर्थः ।

### ब्रह्मणि वेद्यवेदितृभेदनिरासः

पश्येदात्मानमित्यत्र नियोज्यो विषयाद्विरुक् । न लभ्यते यतो नात ऐकात्म्ये स्याद्विरुद्धता ।।९८।।
ब्रह्मश्रुतेश्च मुख्योऽर्थः प्रतीचोऽन्यत्र दुर्लभः । यथाकथंचिदित्येतदतो नैवाभ्युपेयते ।।९९।।
स्वत एवाऽऽत्मनः कात्स्न्यान्न कात्स्न्यं साधनाश्रयात्।साधनायासतः प्राक्च ब्रह्मैवाऽऽसीदितीरितम् १३००
आसी दित्यपि यः शब्दः स तन्मोहाद्यपेक्षया । वस्तुवृत्तमपेक्ष्यैतन्नासीदस्ति भविष्यति ।। १ ।।
सदानुदितालुप्तैकज्ञानमूर्तिरिति त्वया । कुतोऽज्ञायि विना मानान्मानं नाज्ञाततां विना ।। २ ।।
एकं ब्रह्म सदा बुद्धं यथा मानानुभूतितः । व्युत्पत्तेः प्रागविज्ञातं तथैवानुभवाश्रयात् ।। ३ ।।
व्युत्पत्तिफलमाश्रित्य तमोऽसंभव उच्यते । व्युत्पत्तेः प्राक्तमस्त्वित्वं तत्साक्षित्वेऽपि गम्यते ।। ४ ।।
स्वसत्तयाऽऽत्मनो मोहं न यतो वस्तु हन्त्यतः । शास्त्रानारम्भदोषोऽपि नैवास्मान्प्रति ढौकते ।। ५ ।।
अनादेरपि बाधश्चेत्तमसो नाभ्युपेयते । प्रमाणानां प्रमाणत्वं न क्वचिद्वः प्रसिध्यति ।। ६ ।।

अद्वैते मानाद्यविरोधेऽपि ब्रह्मविद्ब्रह्मणो भिन्नो न वा? आद्ये द्वैततादवस्थ्यं द्वितीये वेद्यवेदितृत्वासिद्धिरित्याशङ्क्य वस्तुतो भेदाभावात्कल्पितभेदाच्च न किंचिदेतदित्याह—पश्येदिति । आत्मनो हि दर्शनमिहोपदिश्यते न चाऽऽत्मनोऽन्यो वेदिता वस्तुतोऽस्ति तस्यैकरसत्वादतो न वेदितारमादायाद्वैते विरुद्धत्वं शङ्कनीयमित्यर्थः ।।१२९८।।

कल्पितं मानादिभेदमादाय कृत्स्नं ब्रह्मेत्युक्तम् । यत्तु यथाकथंचिच्छब्दार्थो यदि नामेत्यादि तत्राऽऽह—ब्रह्मेति । अकृत्स्नस्य ब्रह्मत्वनिरासात्कृत्स्नमेव तदिति निश्चयान्नाङ्गीकारवादो युक्त इत्यर्थः । आत्मश्रुतेरिवेत्युदाहरणं चकारार्थः ।।१२९९।।

यत्तु ब्रह्मत्वं किं स्वतस्तस्येत्यादि तदाऽऽद्यमुपेत्य द्वितीयं निरस्यति—स्वत एवेति । स्वतःकात्स्न्याङ्गीकारे श्रुतिमनुग्राहिकामाह—साधनेति । तस्याऽऽयासोऽनुष्ठानं तस्मात्प्रागूर्ध्वं च प्रत्यगात्मा ब्रह्मेति ब्रह्म वा इदमित्यादिश्रुत्योक्तमतः स्वतः प्रतीचः कात्स्न्यमित्यर्थः ।।१३००।।

यत्तु ब्रह्मशब्देन परपरिग्रहे तस्य कालानवच्छिन्नत्तेरासीदितिकालसंबन्धो न युक्त इति तत्राऽऽह—आसीदित्यपीति । अज्ञानतत्कार्यापेक्षया वस्तुनि कालसंबन्धवाचो शब्दो न स्वरूपापेक्षयाऽन्यत्र भूताच्चेतिश्रुतेरित्यर्थः । एतदिति प्रत्यग्ब्रह्मोच्यते ।।१३०१।।

यत्तु ज्ञानमूर्तेर्न चाज्ञानमित्यादि तत्राऽऽह—सदेति । न हि विना मानमीदृग्वस्त्विति सिध्यति मानं चेत्तत्राज्ञानेन भाव्यमज्ञातस्य मेयत्वादतो वस्तुन्यविद्याध्वंसित्वेन विद्याऽर्थवतीत्यर्थः ।।१३०२।।

तत्र युक्तिसिद्धामविद्यामनुभवेन साधयति—एकमिति । सत्यज्ञानादिवाक्यं मानमनुभूतिर्विद्वदनुभवो व्युत्पत्तिर्वाक्यीयं ज्ञानमनुभवो न वेद्मीति धीरिति विवेकः ।।१३०३।।

ब्रह्मद्वारा त्वविद्येयं नेति संबन्धे ब्रह्मण्यज्ञानायोगोक्तेस्तद्विरुद्धं तत्राज्ञानं कथमिहेष्यते तत्राऽऽह—व्युत्पत्तीति । ज्ञानफलमज्ञानध्वंसोपलक्षितं स्फुरणमपेक्ष्य तद्रूपे ब्रह्मण्यज्ञानायोगस्तत्रोक्त इह तु ज्ञानात्पूर्वं तस्मिन्नज्ञानं तद्दशापेक्षमित्युच्यते तन्न विरोध इत्यर्थः । ज्ञानात्पूर्वमपि ब्रह्मणो नाज्ञानित्वं तत्साक्षित्वादित्याशङ्क्याऽऽह—व्युत्पत्तेरिति । अयुक्तमपि प्रत्यग्ब्रह्मणोऽज्ञानित्वमनुभवसिद्धिमित्यर्थः ।।१३०४।।

स्वतो ब्रह्म कृत्स्नमित्यत्र ब्रह्मविद्यानर्थक्यदोषो निरस्तः । यच्च शास्त्राद्यारम्भानर्थक्यदोषश्चेति तत्राऽऽह—स्वसत्तयेति । शास्त्रोत्थज्ञानादज्ञानध्वस्तेः शास्त्रारम्भोऽर्थवानिति समन्वयाधिकरणे स्थितमित्यर्थः ।।१३०५।।

अनादिनोऽज्ञानस्याऽऽत्मवदनिवृत्तिं शङ्कते—अनादेरिति । अतिप्रसङ्गेन प्रत्याह—प्रमाणानामिति । लौकिकवैदिकसर्वप्रमाणानां स्वविषयाऽज्ञाननिवर्तकत्वेनैव प्रामाण्यसिद्धिसंभवादित्यर्थः ।।१३०६।।

**अनुभूतेस्तदज्ञातं सिद्धं ब्रह्म पुरा मितेः । अपास्ताज्ञानतत्कार्यं तत्तु मानात्प्रसिध्यति ॥ ७ ॥**

किं चापि तदवेदन्यदित्यादेः परिहारः

**पूर्वोक्त्यैवोत्तरेषां च दोषाणां परिहारतः । परिहारान्तरं तस्मान्न वाच्यं तत्प्रसिद्धितः ॥ ८ ॥**
**प्रतीचो[1]ऽर्थस्य ज्ञेयत्वादनवस्था च नेष्यते । अकारकस्य कौटस्थ्याद्विरोधो नाऽऽत्मदर्शने ॥ ९ ॥**
**घटादिमेयसाधर्म्ये निषेधोऽपि श्रुतीरितः । यथोक्तावगमत्वं तु न कथंचिन्निवार्यते ॥१०॥**
**तस्मान्न कश्चिदप्यत्र कात्स्न्यात्मावगमे भवेत् । दोषोऽतः सांप्रतं भाष्यग्रन्थं व्याचक्ष्महे स्फुटम् ॥११॥**

यत्प्रविष्टं स्रष्टृ ब्रह्म इतिभाष्यविवरणं

**यत्स्रष्टृ ब्रह्म पूर्वोक्तं स्वात्ममोहैकवर्त्मना । कार्यं चैतन्यबिम्बेन प्रविष्टं जलचन्द्रवत् ॥१२॥**
**ब्रह्मेतिब्रह्मशब्देन न तदेवात्राभिधीयते ।**
**तस्य योऽतिशयः प्रोक्तो व्याकृताव्याकृतात्मकः । इदमित्युच्यते ब्रह्म तदुपाधिस्वभावकम् ॥१३॥**

**यत्तु** स्वानुभूतिविरोधोऽपीति तत्राऽऽह—अनुभूतेरिति । वाक्योत्थज्ञानात्पूर्वं यदज्ञातं ब्रह्म तत्कर्तृत्वादिरूपेणानुभूतेः सिद्धं तदेव यदा वाक्यीयज्ञानात्सिध्यति तदा ध्वस्ताज्ञानतज्जमकर्तृत्वाद्यात्मनाऽनुभूतमिति नानुभवविरोध इत्यर्थः ॥१३०७॥

**किमु** तद्ब्रह्म यद्वेद्यमित्येतत्परिहृत्य किंचापि[2] तदवेदित्येतदपि पूर्वचोद्यनिरासेनैव निरस्तमित्याह—पूर्वेति । **पूर्वचोद्यपरिहारोक्त्यैवोत्तरचोद्यस्यानवस्थादिदोषाणां** परिहारात्परिहारान्तरमत्र न वाच्यं तदतिरेकेणेह **परिहारसिद्धे**रिति योजना ॥१३०८॥

**कथं पूर्वेणोत्तरस्य** परिहृतत्वं तत्राऽऽह—प्रतीच इति । आत्मनोऽद्वयत्वात्तस्यैव वेद्यत्वान्नानवस्था न **च निर्निमित्तं तस्य** ब्रह्मत्वं स्वाभाविकत्वेऽपि विना ज्ञानमव्यक्तेरतो निर्निमित्तस्येत्याद्ययुक्तमित्यर्थः । यत्तु क्रियाविरोध इत्यादि **तत्राऽऽह**—अकारकस्येति । क्रियाकारकादिभेदशून्यस्याऽऽत्मनः स्वदृष्टौ कर्तृत्वाद्यभावाद्वस्तुतो न क्रियाविरोधो **न च** ब्रह्मणो ज्ञानसाध्यत्वं कौटस्थ्यादित्यर्थः ॥१३०९॥

**यत्तु** श्रुत्यन्तरविरोधश्चेत्यादि तत्राऽऽह—घटादीति । योऽर्थः "सत्यं ज्ञानं" "विज्ञातारमरे केने"त्यादिश्रुत्युक्तः **सोऽपि घटादेरिव** ब्रह्मणः स्फूर्तिव्याप्यत्वनिषेधो न वृत्तिव्याप्यत्वनिषेधः, अन्यथौपनिषदत्वव्याकोपात् । अतो **ब्रह्मविषयवृत्त्युपगमे** न श्रुतिविरोध इत्यर्थः तर्हि वृत्तिव्याप्यत्वाद्घटवद्ब्रह्मणः स्फूर्तिव्यापिताऽपि स्यादित्याशङ्क्य कूटस्थस्फूर्तित्वं शास्त्रानुभवसिद्धं दुर्वारमिति नास्य तद्व्याप्यतेत्याह—यथोक्तेति ॥१३१०॥

**यत्पुन**रित्यादिबहुदोषत्वादित्यादि तत्राऽऽह—तस्मादिति । अज्ञाते ब्रह्मणि प्रेप्साप्रमाणप्रवृत्त्योः संभवादज्ञानध्वस्तेश्च **मानफलत्वात्**पूर्णसदेकरसस्वप्रकाशब्रह्मणो वेदान्तावगमे न कश्चिद्दोषोऽस्तीत्यर्थः । उपोद्घातोक्तदोषान्परिहृत्य **तस्माद्यत्प्रविष्टमित्यादिभाष्यमवतारयति**—अत इति । परिशङ्कितदोषाभावादिति यावत् । परकीयचोद्यनिरासानन्तरं भाष्यव्याख्यावसरं दर्शयति—सांप्रतमिति ॥१३११॥

**तदक्षराणि** योजयति—यदित्यायिना । पूर्वोक्तमव्याकृतप्रक्रियायामिति शेषः । स्वात्ममोहैकवर्त्मना **स्रष्टृति संबन्धः** । प्रवेशवाक्योक्तं स्मारयति—कार्यमिति ॥१३१२॥

**यत्पदापेक्षितं** पूरयति—ब्रह्मेतीति । वाक्यं समन्वयार्थः इदं शरीरस्थमित्यादेस्तात्पर्यमाह—तस्येति । कूटस्थस्य **ब्रह्मणो** यः कार्यकारणाख्योऽतिशयोऽव्याकृतप्रक्रियायामुक्तस्तत्र देहद्वयात्मकोपाधावाविद्ये स्थितं **ब्रह्मेदंशब्दित**मित्यर्थः ॥१३१३॥

---

१. कथं सिद्ध इत्याह—**प्रतीच इति** । अन्यवेद्यत्वाभावान्नानवस्था, स्वप्रकाशत्वान्नात्मनि क्रियाविरोध इत्यर्थः ( न्या० ) ।

२. किञ्चापि तदवेत् ( बृ० वा० अ० १, ब्रा० ४ १०८९ ) इत्यस्यापि परिहारोऽत्र सिद्धः ।

वैशब्दोऽवधृतौ ज्ञेयो ब्रह्मैव न तदन्यथा । अनिर्ज्ञातात्मतत्त्वं सदब्रह्मैवावभाति तत् ॥१४॥
यदिदंशब्दधीगम्यं सम्यग्ज्ञानोदयात्पुरा । अपि ब्रह्मैव तत्कृत्स्नं तन्मोहादतथेक्ष्यते ॥१५॥
रज्जुवत्तदविज्ञानात्सर्पदण्डादिनेक्ष्यते । ब्रह्मेदंमात्रश्रवणात्कुतोऽग्र इति भण्यते ॥१६॥
सूत्रान्तजगतो व्यक्तेः प्राक्तनः काल उच्यते । यद्वै तदिति तच्चापि स्पष्टमूर्ध्वं प्रवक्ष्यते ॥१७॥
नाविद्यासंगतिस्तत्र तदकार्यत्वहेतुतः । तमोजस्यापि कार्यस्य न प्रतीच्यस्त्यकारणात् ॥१८॥
[1]प्रत्यक्तयाऽऽत्मसंबन्धान्मोहादेश्चिन्निभात्मता । आचिच्छेषादतो नासौ मृषा स्याद्धर्मकार्यवत् ॥१९॥

जगतोऽध्यस्तत्वे तन्निवृत्तिः ज्ञानादेव

प्रत्यग्याथात्म्यसंबोधान्नान्यो हेतुः समीक्ष्यते । निरन्वयविनाशाय योऽलं संसाररूपिणः ॥२०॥
कौटस्थ्यासंगतो नास्य मोहतत्कार्यसंगतिः । स्वतः सेद्धुमशक्तत्वान्मोहादेरात्मसंगतिः ॥२१॥

प्रकृतस्याऽऽत्मकात्स्न्र्यस्येत्यत्र प्रकृतार्थस्य वैशब्दः स्मृत्यर्थ उक्तोऽधुना भाष्यमनुसृत्यार्थान्तरमाह— वैशब्द इति । अवधृतिमेवाऽऽह—ब्रह्मेति । यदीदं सर्वं जगद्ब्रह्मैव तर्हि कथमन्यत्वधीरित्याशङ्क्याऽऽह— अनिर्ज्ञातेति ॥१३१४॥

इदंशब्दार्थमनूद्याग्रे प्रागित्यादिभाष्यं व्याचष्टे—यदिदमिति ॥१३१५॥

सम्यग्ज्ञानात्प्रागूर्ध्वं चेदं सर्वं जगद्ब्रह्मैव तथाऽपि तदज्ञानादब्रह्मैव भातीत्यत्र दृष्टान्तमाह—रज्जुवदिति । यथा रज्जुः स्वाज्ञानाद्भुजंगाद्यात्मना गृह्यते तथा ब्रह्माज्ञानादब्रह्मेव दृश्यत इत्यर्थः । अग्रशब्दमाक्षिपति—ब्रह्मेति । ब्रह्म वेदं वाऽन्यद्वाऽत्र प्रतियोगि ? आद्ये तस्मादग्रे तदेवाऽऽसीदिति व्याघातो द्वितीये चा[2]नुवाद्याभावाद्विध्ययोगो न तृतीयोऽस्मिन्वाक्ये तदश्रुतेरतः प्रतियोग्यभावादग्र इत्ययुक्तमित्यर्थः । उत्तरमाह—भण्यत इति ॥१३१६॥

कल्पितस्य जगतोऽकल्पितात्मत्वात्तद्व्यक्तिरात्मैक्यधीस्तदुदयात्पूर्वकालोऽग्रशब्दार्थ इत्याह—सूत्रेति । सूत्रं तत्कारणमव्याकृतं तदन्ते यस्येति तद्गुणसंविज्ञानेन सर्वं जगदुक्तं तस्येति यावत् । किं चोक्ते काले सर्वस्य यद्ब्रह्ममात्रत्वं तदुत्तरत्रापि स्वापाधिकारे य[3]द्वै तन्नेत्यत्र वक्ष्यत इति वाक्यशेषं संवादयति—यदिति ॥१३१७॥

अत्रोक्तस्योत्तरत्रोक्तेरेव स्पष्टमिदमर्थंस्याव्याकृतादेर्ब्रह्मत्वे ब्रह्मणोऽप्यव्याकृतादित्वं स्यादित्याशङ्क्याव्याकृताख्याविद्यातादात्म्ययोगो न ब्रह्मण्यस्ति तस्याविद्याकार्यत्वाभावात्स्वकार्येणैव तस्यास्तादात्म्यादित्याह— नेत्यादिना । व्याकृताख्यतत्कार्यस्यापि ब्रह्ममात्रत्वाङ्गीकारात्कुतो ब्रह्मणस्तत्कार्यत्वाभावस्तत्राऽऽह—तमोजस्येति । अज्ञानजस्यापि न ब्रह्मण्यभेदेन संगतिस्तस्य स्वकारणेनाभेदाद्ब्रह्मणश्चाकारणत्वात्का[4]र्यकारणान्यत्वश्रुतेरविद्यया च तत्कारणतेति स्थितेरित्यर्थः ॥१३१८॥

तर्हि कथमिदमो मोहादेर्ब्रह्ममात्रत्वं तत्राऽऽह—प्रत्यक्तयेति । कल्पितमोहादिरूपत्वेनाधिष्ठानस्याऽऽत्मनस्तेन संबन्धात्तस्य सदा चिदाभासग्रस्ततेत्यर्थः । किंच मोहादेर्ब्रह्मणश्चाभेदेऽपि ब्रह्मैव शिष्यते नान्यदित्याह— आचिच्छेषादिति । मोहादेः सर्वस्याऽऽभिमुख्येन चिन्मात्रत्वेन शेषान्नाभेदेऽपि ब्रह्मणस्तद्रूपतेत्यर्थः । मोहादेर्ब्रह्मत्वं न तस्य मोहादित्वमिति स्थिते फलितमाह—अत इति । चितोऽपि कल्पितत्वेऽधिष्ठानाभावान्निरधिष्ठानकल्पनायोगोऽतःशब्दार्थः । असाविति चिदुक्तिः । धर्मादिकार्यं द्वैतं वैधर्म्यदृष्टान्तः ॥१३१९॥

कार्यकारणात्मकं जगदध्यस्तं चेत्कुतोऽस्य निवृत्तिरित्याशङ्क्याऽऽह—प्रत्यगिति । आत्मनि सम्यग्ज्ञानादेवानर्थस्याऽऽत्यन्तिको ध्वंसो हेत्वन्तरस्याप्रामाणिकत्वादित्यर्थः ॥१३२०॥

प्रत्यक्तत्त्वविद्यया द्वैतस्य ध्वस्तियोग्यत्वं साधयति—कौटस्थ्येति । प्रतीचोऽस्य कौटस्थ्यादसङ्गत्वाच्च न

१. कार्यकारणप्रपञ्चस्य जडस्य ब्रह्मसम्बन्धाभावे कथं सिद्धिस्तत्राह—प्रत्यक्तयेति । ( न्या० )
२. अनुवाद्याभावात् इदं अग्रे इत्युक्ते कस्याग्रे इत्यनुक्तेः ।
३. यद्वैतन्न पश्यति पश्यन्वै तन्न पश्यति इति स्वापाधिकारे श्रुतिः बृहदारण्यकषष्ठे ।
४. कार्यकारणान्यत्वश्रुतिः "तदेतद्ब्रह्मापूर्वमनपरमि" त्यादिः ।

कार्ष्ण्येनेव वियद्योगः खवृत्तापेक्षया त्वसन् । आत्मनैवं तमोयोगो नाऽऽत्मवृत्तानुरोधतः ॥२२॥
अन्यतः संगतिः सेयमविचारितसिद्धिका । अविज्ञातचिदुत्सङ्गसंस्थैवेयं न वस्तुनि ॥२३॥
अविद्याद्वारिकाऽप्यस्य संगतिर्नाञ्जसेष्यते । निरात्मकपरार्थत्वहेतुभ्यां शुक्तिरूप्यवत् ॥२४॥
प्रत्यग्रूपातिरेकेण नान्यद्रूपमनात्मनः । वादिभिर्युक्तिभिः शक्यं क्वचित्साधयितुं सदा ॥२५॥
कूटस्थादितमोन्तेन नित्यमव्यतिरेकतः । बुद्ध्यादेर्विषयान्तस्य नित्यमेतदतो जगत् ॥२६॥

जगतो जन्मादि केवलं भ्रममात्रम्

अतोऽविद्यामहानिद्रासंवीतमनसामसौ । जन्मादिविक्रियाषट्कं स्वप्नदर्शनविभ्रमः ॥२७॥
यथा व्याख्यातबाह्यार्थप्रधानोऽसंहतोऽप्रमः । सर्वप्रमाणभाक्तद्वत्प्रमाणाभासभागपि ॥२८॥

मोहादिना वस्तुतो योगो, न च स्वातन्त्र्येण तत्सिद्धिर्जडस्य तदनुपपत्तेरतस्तस्याऽऽत्मनि काल्पनिकी युक्तिरित्यात्मविद्ययाऽऽत्यन्तिकी तद्ध्वस्तिरित्यर्थः ॥१३२१॥

आत्मनि कल्पिता मोहादियुक्तिरित्येतद्दृष्टान्तेनाऽऽह—कार्ष्ण्येनेति । तमःशब्देन तत्कार्यमपि लक्षितम् ॥१३२२॥

आत्मानात्मयोगस्य कल्पितत्वमुपसंहरति—अन्यत इति । अन्येनानात्मनाऽऽत्मनः संगतिश्चेत्कथमात्मवृत्तापेक्षया सा नास्तीत्याशङ्क्याज्ञातात्मस्थैवान्ययुक्तिर्न शुद्धात्मस्थेत्याह—अविज्ञातेति । उत्सङ्गपदमूरुदेशार्थम् ॥१३२३॥

अज्ञातात्मस्था चेदज्ञानादियुक्तिरंशतश्चा[२]श्रयविषयत्वयोरापत्तिरित्याशङ्क्याऽऽह—अविद्येति । यथा वस्तुवृत्तमपेक्ष्य नाऽऽत्मन्यज्ञानादिसंगतिरेवमविद्यावृत्तापेक्षयाऽपि नासाविष्यते निरात्मकत्वात्परार्थत्वादज्ञानतत्कार्ययोस्तदीयसंगतेः स्वतोऽसिद्धेरतोऽविचारसुन्दरैषा शुक्तिरूप्यसंगतिवदतः श्रोत्ररूपयोः संबन्धवदनुपपत्तिरेवेत्यर्थः ॥१३२४॥

अनात्मनो न निरात्मकत्वमात्मातिरेकेण वादिभिस्तस्य वस्तुत्वाङ्गीकारादित्याशङ्क्याऽऽह—प्रत्यगिति । विमतं न स्वातन्त्र्येण सदनात्मत्वाद्रूप्यवदित्यर्थः । प्रातीतिकं रूपान्तरं स्वीकर्तुं युक्तिभिरित्युक्तम् । क्वचिल्लोके शास्त्रे चेत्यर्थः । सदेति कालत्रयं निर्दिश्यते । विमतं स्वातन्त्र्येणासद्व्यभिचारित्वात्संमतवदित्यर्थः ॥१३२५॥

विमतं ब्रह्मणोऽन्यदनिर्वाच्यत्वात्तद्वदिति व्य[३]तिरेकिणा जगतोऽर्थान्तरत्वमाशङ्क्य हेतुप्रतिज्ञयोर्मिथो व्याहतिमभिप्रेत्याऽऽह—कूटस्थादीति । कूटस्थश्च सर्वस्य मूलत्वेनाऽऽदिश्चाज्ञानाविष्टतया तमोन्तश्च तेनाऽऽत्मना सदा सर्वस्याव्यतिरेकादसत्त्वनिरासान्नित्यं जगत्सदेव सोम्येत्यादिश्रुतेरतो बहिरवगतस्य जगतोऽनिर्वाच्यतया ब्रह्मणोऽन्यत्वव्याघातादागमविरोधाच्च नोक्तानुमेत्यर्थः ॥१३२६॥

जगतो जन्मादिदृष्टेर्ब्रह्मणोऽर्थान्तरत्वसिद्धिरित्याशङ्क्य तस्य ब्रह्माव्यतिरेकित्वेन सत्त्वस्य श्रौतत्वाज्जन्मादिधीः स्वप्नधीवद्भ्रान्तिरित्याह—अत इति । जन्मादिरूपविक्रियाषट्कमधिकृत्य स्वप्नदर्शनवद्विभ्रमो जगत्यविवेकिनामिति योजना ॥१३२७॥

सर्वस्य द्वैतस्य मायामात्रत्वे मानतदाभासानामाश्रयो विषयश्च कः स्यादित्याशङ्क्याऽऽह—यथेति । वस्तुतोऽसंहतस्यासङ्गचिदेकतानस्य प्रमाऽविषयस्य प्रतीचो व्याकृताव्याकृतजगदुपहितस्य प्रमाणतदाभासविषयत्वोपपत्तिरित्यर्थः ॥१३२८॥

---

१. आत्मवृत्तापेक्षया अनात्मसंगत्याभावेऽपि अविद्यावृत्तापेक्षया आत्मसंगतिः पारमार्थिकी स्यात् आत्मतन्त्रत्वादविद्याया इत्यत आह—**अविद्येति** ।

२. अज्ञानविशिष्टे आज्ञानाश्रयत्वे अज्ञाने अज्ञानाश्रयत्वं प्राप्तं अत आत्माश्रयः ।

३. व्यतिरेकिणा व्यतिरेकव्याप्तिमता अन्यत्वव्याघातात् भिन्नत्वे तदसत्वादिना निर्वक्तुमशक्यत्वात् न भिन्नता श्रुतिश्च "सर्वं ब्रह्मे"तिश्रुतिः ।

**अविचारितसंसिद्धि तमोवत्स्यात्तदुद्भवम् । कृत्स्नं जगदतो मोहध्वस्तौ ध्वस्तं भवेच्चितिः ॥२९॥**
**भिन्नमातृप्रमाणादौ कार्यकारणवस्तुनि । अभिन्नमातृमानादिरात्मैवैकोऽद्वयः स्वतः ॥३०॥**
**न देशकालावस्थादावपेक्षाऽस्त्यात्मनः स्वतः । अनन्यापेक्षसंसिद्धेर्देशादेस्तदपेक्षतः ॥३१॥**
**देशकालनिमित्तादिव्यपेक्षं वस्तु यद्भवेत् । तदेव तदपेक्षं स्यान्न तु देशादिसिद्धिदम् ॥३२॥**
**प्रमात्राद्युत्थितेरग्रे ब्रह्मैवाऽऽसीद्यथोदितम् । यतस्ततो न साध्यं तज्ज्ञानकर्मादिसाधनैः ॥३३॥**
**ब्रह्मापि तत्स्वतः साक्षात्तदबोधैकहेतुतः । इदंरूपं समापेदे रशनेवाहिरूपताम् ॥३४॥**
**अविद्याफलकारूढं तदेवंरूपकं परम् । ब्रह्मविद्याधिकारित्वं द्वैविध्यात्प्रतिपद्यते ॥३५॥**
**स्वतो मुक्तं यतस्तस्माद्ब्रह्म विद्यां तदर्हति । संसारित्वमविद्यातो मुमुक्षुत्वं ततो भवेत् ॥३६॥**

असंहतस्य द्वैतोपाधित्वं व्याहतमित्याशङ्क्योपाधेरवस्तुत्वान्मैवमित्याह—अविचारितेति। अज्ञानवत्तज्जन्यद्वैतस्य मिथ्यात्वे फलितमाह—अत इति । ज्ञानादज्ञानध्वस्तौ तज्जत्वाद्ध्वस्तं जगच्चितिरेव स्यादित्यर्थः ॥१३२९॥

प्रतीचोऽसंहतस्य संहतत्वमापाद्य मानतदाभासविषयत्वे मेयत्वापत्तिरित्याशङ्क्याप्रमेयत्वं प्रतिपादयन्नाह—भिन्नेति। प्रपञ्चे प्रमात्रादिभेदभाजि प्रमेये सत्यात्मैव तद्भेदरहितः सन्नद्वयत्वादनपेक्षः स्वतः स्फुरत्यतो नास्य प्रमेयतेत्यर्थः ॥१३३०॥

आत्मा[1] नाद्वयो देशाद्यपेक्षत्वाद्घटवदित्याशङ्क्याऽऽह—नेति । आदिपदेनोत्पादकज्ञापकग्रहः। आत्मनो नैरपेक्ष्ये हेतुमाह—अनन्येति । निरुपाध्यात्मनः स्वारस्येन स्वतःसत्त्वस्फूर्त्योः सत्त्वादित्यर्थः। तत्रैव हेत्वन्तरमाह—देशादेरिति । न हि जडस्याजडापेक्षां विना सिद्धिर्न च वैपरीत्यमजाड्यव्याघातादिति भावः ॥१३३१॥

देशाद्यपेक्षत्वहेतोरसिद्धिमुक्त्वा कार्यत्वोपाधिमाह—देशेति । देशकालौ निमित्ते आदिपदेन कारणान्तरोक्तिस्तदपेक्षं यद्घटादि जायते तदेव देशाद्यपेक्षं सद्वयं स्यादिति योजना । साधनव्याप्तिं शङ्कित्वाऽऽह—न त्विति । न हि देशादिसाधकस्याऽऽत्मनस्तदपेक्षया कार्यत्वं प्रागेव ततः सिद्धत्वाद्विभक्तं कार्यमित्यन्वये घटाद्युदाहरणम्। अ[2]कार्यमविभक्तमिति व्यतिरेके च प्रतिपाद्यात्मा। तथा च न तस्यापि विभक्तत्वं घटवदनात्मत्वादिप्रसङ्गादिति भावः ॥१३३२॥

इदं ब्रह्मेतिसामानाधिकरण्यलब्धमर्थमुपपाद्य वाक्यार्थमुपसंहरति—प्रमात्रादीति । उत्थितिस्तत्त्वव्यक्तिः। सप्रपञ्चचैतन्यस्य सदैवाप्रपञ्चब्रह्मत्वं परामृशति—यत इति । ततो हेतोस्तद्ब्रह्मत्वं न साधनायत्तमिति परमतनिरासं निगमयति—तत इति । आदिशब्दो भावनार्थः ॥१३३३॥

जगतो ब्रह्मत्वे कथं तद्विपरीतपरिच्छिन्नरूपतेत्याशङ्क्य मायावशादित्यसकृदुक्तमित्याह—ब्रह्मापीति । तदिति जगदुक्तिः। साक्षादिति ब्रह्मणः शुद्धतोच्यते। स्वतो मायां विनेत्येतद्वास्तवं वृत्तमनूद्याऽऽविद्यकं कथयति—तदबोधेति । कथमबोधादपि विरुद्धाकारता तत्राऽऽह—रशनेति ॥१३३४॥

जगतो ब्रह्ममात्रत्वेऽपि चेतनोऽन्योऽन्यथा तज्ज्ञानाधिकार्यभावात् तदसिद्धेरित्याशङ्क्याऽऽह—अविद्येति । एवंरूपकमन्तःकरणाद्युपाधिकमित्यर्थः । परं हि ब्रह्मानाद्यविद्याख्यं फलकमधिरोहति तदेव पुनरन्तःकरणादिभिरुपधीयते तच्च द्वैविध्यादधिकारित्वं गच्छतीत्यर्थः ॥१३३५॥

द्वैविध्यमेवाऽऽह—स्वत इति। एकमेव ब्रह्म स्वतो मुक्तत्वाद्विद्यालम्बनमविद्यया बद्धत्वाच्च तद्ध्वस्तिहेत्वधिकारीत्यर्थः। एतेनानेकजीववादिनामश्रुतशास्त्रत्वमादर्शितम् ॥१३३६॥

१. आत्मा नाद्वयः देशाद्यपेक्षत्वात् इत्यनुमाने कार्यत्वमुपाधिः तस्य घटादौ साध्यव्यापकत्वात् देशाद्यपेक्षत्वं कार्यत्वप्रयुक्तं तदभावान्नात्मनि देशाद्यपेक्षत्वमित्यर्थः ।

२. यद्विभक्तं तत् कार्यं यथा घटः इत्यन्वयः यत् न कार्यं तन्न विभक्तं यथा आत्मा इति व्यतिरेकः। तेनात्मा अविभक्त इत्यर्थः ।

### तदात्मानमेवावेदित्यस्य विवरणम्

अध्यात्ममधिभूतं च तथा चैवाधिदैवतम् । परं तदभिमानेद्धं तच्छब्देनाभिधीयते ॥३७॥
हिरण्यगर्भतां नीत्वा कृत्स्नमध्यात्मरूपकम् । तस्मै हिरण्यगर्भाय ब्रूयाद्विद्यां तमस्विने ॥३८॥
एवं निःशेषसंसारप्रत्याख्यानेन निर्वृतिम् । सर्वाविद्यापनिह्नुत्या विद्यया प्रतिपद्यते ॥३९॥
आत्मानात्मात्मकं विश्वं प्रत्यक्षादिप्रमाणकम् । आत्मानमेव तदवेन्निष्ठां कार्त्स्न्यात्मनः पराम् ॥४०॥
अविचारितसंसिद्धि सर्वानर्थैककारणम् । प्रत्यङ्मात्रैकसाक्षित्वात्तमस्तत्प्रत्यगात्मनि ॥४१॥
प्रतीच्येव यतोऽज्ञानमतस्तत्तत्त्वविद्यया । सकार्ये तमसि ध्वस्त आत्मैवैकोऽवशिष्यते ॥४२॥

### ब्रह्मविद्याधिकारिनिर्णयः

विरक्तः सर्वसंसारान्निविवृत्सुः स्वतस्ततः । संसारानलसंतप्तस्तद्विरुद्धं परीप्सति ॥४३॥
तस्याकृत्स्नापवादेन कृत्स्नैकात्म्यावबुद्धये ॥४४॥
अन्वयव्यतिरेकाख्यो व्यापारो विहितः पुरा । आत्मेत्येवेति विधिना पराक्प्रत्यग्विवेककृत् ॥४५॥

ब्रह्मेत्यादिवाक्यं व्याख्यायोत्तरवाक्यस्थतच्छब्दार्थमाह—अध्यात्ममिति । तत्परं स्रष्टृ ब्रह्माध्यात्मादौ सृष्टे प्रविष्टं तत्र तत्राहंममाभिमानेनाऽऽविद्येन ग्रस्तं तदात्मानमित्यत्र तच्छब्दितत्वंपदवाच्यमित्यर्थः ॥१३३७॥

किमर्था त्वमर्थोक्तिरित्याशङ्क्य वाक्यार्थज्ञानार्थेत्याह—हिरण्यगर्भतामिति । कृत्स्नं ब्रह्माध्यात्माद्यभिमानेद्धं प्राप्तपरिच्छेदं त्वंपदवाच्यमपरिच्छिन्नतया परिशोध्य तस्मै विविदिषवे दयालुराचार्यो विद्यामुपदिशेत्स च पदार्थज्ञस्तदुपदेशाद्वाक्यार्थं जानातीत्यर्थः ॥१३३८॥

किमर्थं वाक्यार्थज्ञानमित्याशङ्क्य तत्फलं वक्ष्यमाणं संक्षिप्याऽऽह—एवमिति । सर्वानर्थमूलाविद्याया निह्नुतिर्यया विद्यया पूर्वोक्तरीत्या निर्वृत्तयाऽशेषबन्धध्वंसेन मुक्तिमाप्नोति विद्वानित्यर्थः ॥१३३९॥

तदवेदितिपदद्वयस्यार्थमुक्त्वा तदनुवादेनाऽऽत्मशब्दार्थं वदन्वाक्यं योजयति—आत्मेति । चेतनाचेतनं विभक्तमध्यक्षादिसिद्धं जगदन्वयव्यतिरेकाभावपरिहारेण[1] पूर्णवस्तुनः "सा काष्ठा सा परा गति" रिति प्रकृष्टप्रतिष्ठारूपात्ममात्रत्वेन तद्ब्रह्म विदितवदित्यर्थः ॥१३४०॥

ब्रह्मणः स्वात्मनि स्वरूपज्ञानस्य सदा भावात्किमौपदेशिकज्ञानेनेत्याशङ्क्य तदर्थवत्त्वार्थमात्मन्यज्ञानं साधयति—अविचारितेति । तत्तमोऽनिर्वाच्यं प्रत्यगात्मनीति संबन्धः । तदनिर्वाच्यत्वसिद्ध्यर्थमाद्यं विशेषणम् । प्रतीचि तमःसत्त्वे कार्यलिङ्गकमनुमानमाह—सर्वेति । तत्रैव हेत्वन्तरमाह—प्रत्यङ्मात्रेति । तस्यैकस्याविद्यातज्जसाक्षित्वात्तस्य चाज्ञानसंबन्धं विना सिद्धिरित्यर्थः ॥१३४१॥

आत्मन्येवाज्ञानमित्युक्तिफलमाह—प्रतीचीति । अज्ञाने प्रतीचि सिद्धे तन्निवर्तकत्वेन तत्रोपदेशजनितं ज्ञानमर्थवदिति भावः ॥१३४२॥

ब्रह्मलोकादिपुमर्थं त्यक्त्वा मोक्षार्थित्वायोगादधिकार्यभावात्तत्त्वविद्यानुपपत्तेः सकार्याज्ञानध्वस्त्या कथमात्ममात्रावशेषसिद्धिरत आह—विरक्त इति । संसारेत्यादिना विशेषणेन नित्यानित्यवस्तुविवेकोक्तिः । ततः संसारादिति यावत् । स्वतः संसारस्वरूपवशादित्यर्थः । यद्वा स्वतः प्रकृतवैराग्यस्वभावात्प्राप्तशमादिरित्यर्थः । साधनचतुष्टयवान्बन्धविरुद्धं मुक्तिहेतुज्ञानमाप्तुमिच्छन्नधिकारीत्याह—तद्विरुद्धमिति ॥१३४३॥

तस्य किं ज्ञानसाधनमित्यपेक्षायां पूर्वोक्तं स्मारयति—तस्येति । अधिकारिणो हि प्रकृतस्य परिच्छिन्नार्थदर्शननिरासेनापरिच्छिन्नार्थदर्शनार्थमन्वयादिव्यापारो विद्यासूत्रेण प्रागुक्त इत्यर्थः । अन्वयादिव्यापारस्य फलमाह—परागिति ॥१३४४–१३४५॥

---

१. अन्वयव्यतिरेकाभावपरिहारेण अन्वयव्यतिरेकसत्वेनेत्यर्थः ।

ऐकात्म्यं वीक्ष्यते तेन त्यक्त्वा सर्वाननात्मनः । कृत्स्नमेव यतो वस्तु तदन्यत्तदबोधजम् ॥४६॥

आत्मेत्येवोपासीतेत्यस्य विधित्वनिरासः

कृत्स्नं पश्येदिति ततो वाक्यं वस्तुनि वर्तते ॥

प्रविष्टोऽकृत्स्नरूपत्वात्संसारानर्थचोदितः । आत्मेत्यनेन कृत्स्नात्मदर्शनाय नियुज्यते ॥४७॥

कृत्स्न आत्मेत्यतो वाक्यात्तथारूपं दिदृक्षति । अन्योन्यार्थसमाप्तित्वान्न भेदोऽत्र पदार्थयोः ॥४८॥

अकृत्स्नानात्मनः सर्वान्[1]कृत्स्नांश्चानात्मनस्तथा । अन्वयव्यतिरेकाभ्यां तथा कृ[2]त्स्नाननात्मनः ॥४९॥

निर्माल्यवत्परित्यज्य चैतन्याभासवर्त्मना । अनुनीयाऽऽत्मनाऽऽत्मानं कृत्स्नात्मानं प्रपश्यति ॥५०॥

उक्तदोषापनुत्त्यर्थं प्रत्युक्तिर्गौरवी त्वियम् । ब्रह्म वा इदमित्यादिर्नातो दोषोऽत्र कश्चन ॥५१॥

तदात्मानमेवावेदित्यस्यार्थप्रपञ्चनम्

प्रमेयं यत्पुरा पृष्टं तद्ब्रह्म किमवेदिति । सर्वं चाप्यभवद्यस्माज्ज्ञानं ज्ञेयं च भण्यते ॥५२॥

तद्ब्रह्माऽऽत्मानमेवावेन्मेयं मानं च भण्यते । आत्मा मेयस्तथा मानमात्मप्रत्यय एव तु ॥५३॥

विवेकफलमाह—ऐकात्म्यमिति । देहादीनव्याकृतान्तानात्मत्वेन प्राप्तान्परित्यज्य किमित्यप्रसिद्धमैकात्म्यमेव ज्ञेयमिति तत्राऽऽह—कृत्स्नमिति । अतः कृत्स्नमेव वस्तु ज्ञेयमिति शेषः ॥१३४६॥

आत्मेत्येवेति विधिना विहितोऽन्वयादिव्यापार इति ब्रुवता वाक्यस्य विधिनिष्ठत्वमिष्टमित्याशङ्क्याऽऽह—कृत्स्नमिति । विहितान्वयादिव्यापारस्यैक्यज्ञानावसानत्वाद्वाक्यं साधनविधिद्वारा वस्तुनिष्ठमित्यर्थः । वाक्यस्याद्वयवस्तुपरत्वे तज्ज्ञाने कोऽधिक्रियते न तावत्तदेवाद्वयं घटादिज्ञानेष्वधिकारिणो विषयादन्यत्वान्नापि वस्त्वन्तरं तदभावान्न च निरधिकारं ज्ञानं युक्तमत आह—प्रविष्ट इति । परात्मा स्वाविद्यया बुद्ध्यादि सृष्ट्वा तत्प्रविष्टः परिच्छेदाभिमानित्वात्संसरन्कदाचिद्विवेकादियुक्तस्तत्त्वज्ञानेऽधिकारीति विधिनाऽधिगतमित्यर्थः ॥१३४७॥

तस्य तर्हि पूर्वोक्तान्वयादेरेवाहं ब्रह्मेति धीसिद्धेर्वाक्यवैयर्थ्यमित्याशङ्क्याऽऽह—कृत्स्न इति । परिच्छिन्नस्य घटवदनात्मत्वादपरिच्छिन्नस्तावदात्मा तं पूर्णमात्मानं वाक्यादेवाधिकारी जिज्ञासापूर्वकमनुभवत्यन्वयादेरमानत्वादित्यर्थः । अहं ब्रह्मेति नाभेदधीर्ब्रह्माहमर्थयोर्भेदप्रसिद्धेरित्याशङ्क्याऽऽह—अन्योन्येति । अत्र प्रतीचि वाक्ये वेत्यर्थः । अहमर्थस्य ब्रह्मार्थे ब्रह्मार्थस्य चाहमर्थे पर्यवसानादन्यथाऽनात्मत्वाब्रह्मत्वप्रसङ्गादिति भावार्थः ॥१३४८॥

अस्तु तर्हि वाक्यादेवाहं ब्रह्मेतिधीः कृतमन्वयादिनेत्याशङ्क्याऽऽह—अकृत्स्नानिति । अन्तःकरणविभक्तचैतन्याभासान्व्यष्टिरूपानकृत्स्नानात्मनोऽव्याकृतादिसमष्ट्युपाधीन्कृत्स्नांश्चानात्मनस्तद्व्यष्टिप्राकृतदेहादीनशेषानन्वयादिनोपेक्ष्य चैतन्याभासवर्त्मना समुत्पन्नविवेकज्ञानेन त्वमर्थं निष्कृष्टात्मना दृष्ट्वा कृत्स्नमात्मानमहं ब्रह्मेति वाक्यादनुभवत्यतोऽन्वयादेः शुद्धिहेतुत्वात्तद्वतश्च वाक्यात्तदर्थज्ञानादुभयमर्थवदित्यर्थः ॥१३४९–१३५०॥

तदात्मानमित्यादेरर्थं संक्षिप्य तमेव प्रपञ्चयितुं प्रतिवचनं प्रस्तौति—उक्तेति । उपोद्घातोक्तदोषनिरासार्थं दृढतरन्यायवती ब्रह्मेत्याद्या प्रत्युक्तिरतो ज्ञानान्मुक्तिरित्यत्रादोषतेति योजना ॥१३५१॥

तदात्मानमित्यादेस्तात्पर्यमाह—प्रमेयमिति । उपोद्घाते तद्ब्रह्म किमवेदिति यन्मेयं पृष्टं यस्माद्ब्रह्मज्ञानाद्ब्रह्म सर्वमभवदिति च यन्मानमन्विष्टं तद्द्वयमनन्तरवाक्येनोच्यते । ब्रह्मेत्यत्र तु प्रधान्येनोक्तोऽधिकारीत्यर्थः ॥१३५२॥

कथमत्र मानमेययोरुक्तिरित्याशङ्क्य विभजते—तद्ब्रह्मेति । तत्र तद्ब्रह्मेत्युक्ताधिकारिपरामर्शः । आत्मानमिति मेयोक्तिः । अवेदिति मानवचनमिति भेदः । चकारो मातृसमुच्चयार्थः । एवकारार्थमाह—आत्मेति । एवकारस्याऽऽत्मेत्यत्रापि संबन्धं सूचयितुं तुशब्दः ॥१३५३॥

---

१. कृत्स्नान् अनात्मनः समष्ट्युपाधीन् ।
२. कृत्स्नान् अनात्मनः देहादीनशेषान् ।

नाऽऽत्मज्ञानाद्यतोऽज्ञानं विद्यतेऽनात्मनस्ततः । नाऽऽत्मयाथात्म्यविज्ञानाज्ज्ञानमन्यदनात्मनः ॥५४॥
प्रमात्रादिविभागेन यज्ज्ञानं प्रथते क्वचित् । तज्जन्मनः पुरेवार्थो न[1] तेन ज्ञायतेऽञ्जसा ॥५५॥

अज्ञानस्य विचित्रकार्यजनकता

तमो[2]मात्रावसायित्वान्न यथावस्तु तत्ततः । प्रत्यग्वस्त्वात्मकत्वेऽपि चित्रमज्ञानचेष्टितम् ॥५६॥
यत्प्रसादात्तमः सिद्धिस्तत्स्वसाक्ष्यप्यपह्नुते । तमोऽप्यनुभवादेव प्राक्तद्व्युत्पत्तिजन्मनः ॥५७॥
प्राक्प्रवृत्तेः प्रमाणानामज्ञातं यदिहोदितम् । अक्षादि तत्तमोबाधान्न मानं रज्जुसर्पवत् ॥५८॥
न पश्यन्तीत्यतः प्राह बोद्धृत्वादिसमन्वयम् । न हि मोहैकनिष्ठेन तद्धीनं वस्तु मीयते ॥५९॥
आत्मानं विरहय्यान्यो नालमात्मावबुद्धये । असाधारणतन्मातृमानमेयात्मकत्वतः ॥६०॥
असाधारणमात्रादि प्रत्यग्वस्तु यतस्ततः । नियोगोऽपीह नाऽऽयाति भिन्नकर्त्रादिगो ह्यसौ ॥६१॥

आत्मैव मेयस्तज्ज्ञानमेव मानमिति कुतो नियमोऽनात्मतज्ज्ञानयोरपि तादृशोर्भावादित्याशङ्क्याऽऽह—नाऽऽत्मेति । आत्माज्ञानमेवानात्माज्ञानमात्मज्ञानमेव तज्ज्ञानमतोऽनात्मा नाऽऽत्मातिरेकेणास्तीत्यर्थः ॥१३५४॥

आत्मज्ञानमेवानात्मज्ञानमिति न युक्तमनात्मनो घटाद्यात्मना पृथग्दृष्टेरित्याशङ्क्याऽऽह—प्रमात्रादीति । क्वचिदिति घटादिविषयोक्तिः ॥१३५५॥

प्रागिव घटादिज्ञानोत्पत्तेरुत्पन्नेनापि तेनानात्मा न ज्ञायते याथात्म्येनेत्यत्र हेतुमाह—तमोमात्रेति । वस्तुयाथात्म्याप्रकाशित्वाद्घटादिज्ञानं न मानमतो घटादिरनात्मा नाऽऽत्मातिरेकेणास्तीति फलितमाह—तत इति । ऐकरस्यात्प्रतीचो घटादेरनात्मनोऽपि तद्रूपत्वे वैचित्र्यासिद्धिरित्याशङ्क्याऽऽह—प्रत्यगिति । अथवा सर्वस्य प्रत्यङ्मात्रत्वे कथं द्वैतप्रथेत्याशङ्क्याऽऽह—प्रत्यगिति । सर्वस्य तन्मात्रत्वेऽपि विचित्रमेतदज्ञानचरितं यत्तद्वशादेकमेवानेकधा भातीत्यर्थः ॥१३५६॥

ऐकरस्ये प्रत्यङ्मात्रे जगति कथमज्ञानस्यापि वैचित्र्यहेतुत्वमित्याशङ्क्यासंभावितसाधकं तदिति कैमुतिकन्यायेनाऽऽह—यत्प्रसादादिति । न तमः साक्षिसिद्धं मानसिद्धत्वादित्याशङ्क्य प्रागेव मानाधीनज्ञानोत्पत्तेस्तमोभानादनुभवादेव तद्धीरित्याह—तमोऽपीति । रागादि दृष्टान्तयितुमपिशब्दः ॥१३५७॥

प्रत्यक्षादेर्मानत्वमुपेत्योक्तं तदेवासिद्धमित्याह—प्रागिति । इहेत्यव्याकृतप्रक्रियोक्तिः । तत्तमोऽबाधादज्ञातप्रत्यगज्ञानानिवर्तकत्वादिति यावत् ॥१३५८॥

अव्याकृतवाक्यानुसारेणाक्षादेरमानत्वमुक्त्वा तं न पश्यन्तीति वाक्यादपि तथेत्याह—नेत्यादिना । ये द्रष्टृत्वादिविशिष्टमात्मानमध्यक्षादिभिरीक्षन्ते ते तं न पश्यन्तीत्याह श्रुतिरतस्तेषां वस्तुन्यमानतेत्यर्थः । प्रत्यक्षादिभिर्विशिष्टमात्मानं पश्यन्तो न पश्यन्तीति व्याहतमिति चेन्नेत्याह—न हीति । विशिष्टविषयाध्यक्षादिभिर्निर्विशेषं वस्तु मातुमशक्यमित्यर्थः ॥१३५९॥

किं चाऽऽत्मनोऽध्यक्षादिगम्यत्वे माताऽन्योऽनन्यो वेति विकल्प्याऽऽद्यं दूषयति—आत्मानमिति । न तावदनात्माऽऽत्मानं वेद जडत्वान्न चान्यश्चेतनोऽस्ति "नान्योऽतोऽस्ति द्रष्टे"तिश्रुतेरित्यर्थः । द्वितीयं प्रत्याह—असाधारणेति । प्रतीचोऽनन्योऽसाधारणस्तस्याध्यक्षादेराश्रयो माता तद्वदक्षादिमानं मेयं चेत्यस्य सर्वस्याऽऽत्ममात्रत्वात्तस्मिन्नेकरसे विभागाभावान्नाक्षादिगम्यतेत्यर्थः ॥१३६०॥

तर्हि तदगम्यत्ववदागमागम्यत्वमपि स्यात्तस्य नियोगनिष्ठत्वादित्याशङ्क्याऽऽह—असाधारणेति । यदसाधारणं व्याकृतमात्रादि तस्य सर्पादि रज्जुत्ववत्प्रत्यक्त्वादस्मिन्प्रतीचि तज्ज्ञाने वा न नियोगस्तस्य व्यावृत्त-

१. न तेन ज्ञायतेऽञ्जसा याथात्म्येनेत्यर्थः यद्यपि प्रमात्रादि विभागेन ज्ञायते तथापि यत् पारमार्थिकमुपादानं तेन रूपेण न ज्ञायत इत्यर्थः ।

२. तमोमात्रावसायित्वात् अज्ञानपर्यवसानात् वस्तुतत्त्वाज्ञानात् ।

**सर्वमज्ञातमेव स्याद्यस्मिन्नज्ञात आत्मनि । ज्ञाते ज्ञातं च तत्कात्स्न्‍र्यात्तावत्त्वात्सर्ववस्तुनः ॥६२॥**

**युक्त्या निरूप्यमाणस्य ह्यात्मा तत्त्वमनात्मनः । प्रत्याख्यातः स चेत्तेन क्वाऽनात्मा सिध्यतां ततः॥६३॥**

**अनात्मतत्त्वमन्वेति ह्यात्माऽसङ्गोऽगुणोऽद्वयः । असिध्यन्स स्वतःसिद्धौ सिद्धिं क्वान्यत्र लप्स्यते॥६४॥**

**अज्ञानस्य सर्ववादिसिद्धता**

**सर्ववादिविरोधेऽपि संवादोऽनुभवे यथा । वादिनामविसंवादस्तथाऽज्ञानेऽप्यसंशयः ॥६५॥**

**तद्वद्वाधोऽप्यबोधस्य बोधेनाभ्युपगम्यते । एतावतैव पर्याप्तमस्मद्राद्धान्तसिद्धये ॥६६॥**

**अस्मद्राद्धान्तसंसिद्धौ नान्यराद्धान्तसिद्धता । तत्सिद्धावस्य संसिद्धिर्न कथंचिन्निवार्यते ॥६७॥**

**अज्ञानं संशयज्ञानं मिथ्याज्ञानमिति त्रिकम् । अज्ञानं कारणं तत्र कार्यत्वं परिशिष्टयोः ॥६८॥**

**कूटस्थज्ञानमात्रत्वान्न तमोऽस्य स्वभावतः । नाप्यागन्तु तथाऽज्ञानं हिरुक्सिद्धेरसंभवात् ॥६९॥**

कर्तृकरणाद्यपेक्षत्वादतो न नियोगपरत्वेनाऽऽगमो मानं किंतु कल्पितमात्राद्यपेक्ष्याऽऽत्मनि सकार्याविद्याध्वंसिसम्यग्धीहेतुत्वेन तन्मानता नैवमध्यक्षादेरित्यर्थः ॥१३६१॥

कथं मात्रादेः सर्वस्य प्रत्यङ्मात्रत्वं तत्रैकविज्ञानेन सर्वविज्ञानश्रुतिं प्रमाणयति—सर्वमिति । आत्मन्यज्ञाते सर्वमज्ञातं ज्ञाते ज्ञातमित्यत्र हेतुमाह—तावत्त्वादिति । तस्मादात्मनोऽद्वयत्वान्न तत्र मात्रादिभेद इत्याह—तत्कात्स्न्‍र्यादिति ॥१३६२॥

मात्रादेरात्ममात्रत्वं श्रुत्योक्त्वा दृश्यत्वादियुक्त्याऽप्याह—युक्त्येति । रूप्यादेरारोप्यस्य दृश्यत्वादिशालिनः शुक्त्यधिष्ठानात्मत्वदर्शनादिति हिशब्दार्थः । विपक्षे तुच्छत्वापत्तिमाह—प्रत्याख्यात इति ॥१३६३॥

आत्मा चेदनात्मनस्तत्त्वं तद्वत्तदभिन्नत्वादात्मनोऽसङ्गत्वादिहानिरित्याशङ्क्य मायिकत्वादनात्मसंगतेर्मैवमित्याह—अनात्मेति । मायाकृतोदकादिसंगतिर्मरुभूमिप्रमुखस्याधिष्ठानस्य वास्तवकठिनत्वादेरव्याघातकरीतिदृष्टान्तार्थो हिशब्दः । किंच प्रकाशे सदात्मनि सत्तां स्फूर्तिं चानाप्नुवन्ननात्मा नाऽन्यत्र सेत्स्यति । अस्वातन्त्र्यादन्यस्य च साधकस्याभावादतस्तत्रैव कल्पितः सिध्येदित्याह—असिध्यन्निति ॥१३६४॥

मात्रादेरात्मनि कल्पितत्वादक्षादेरमानत्वादज्ञानस्यातद्ग्राह्यत्वात्साक्षिसिद्धतैवेत्युक्तम् । इदानीमद्वयस्वप्रकाशकूटस्थसाक्ष्यनुभवे विवादान्न ततोऽज्ञानसिद्धिरित्याशङ्क्याऽऽह—सर्वेति । सर्वपक्षाणां मिथोविरोधेऽपि सर्वैरनुभवस्तावदिष्टोऽन्यथा व्यवहारलोपात् स च स्वप्रकाशो वेद्यत्वेऽनवस्थानात्स कूटस्थोऽद्वयश्च, तत्र जन्मादिसाधकाभावात्तस्मिन्वादिनामङ्गीकारो यथेत्यर्थः । यथोक्तेऽनुभवे सत्यपि तत्साध्यमज्ञानं विप्रतिपन्नमित्याशङ्क्याऽऽह—अविसंवाद इति । अज्ञानानुपगमे व्यवहारायोगात्तस्य च सादित्वे वस्तुनस्तद्धेतुत्वाभावादवस्तुनस्तद्धेतुत्वे तस्यापि सादित्वेऽनवस्थानादनादित्वे तस्यैवास्मदिष्टाज्ञानत्वादवस्तुत्वे सत्यापरोक्ष्यादेवानिर्वाच्यत्वादनुभववदत्रापि वादिनामस्त्येव संमतिरित्यर्थः ॥१३६५॥

अनुभवेऽपरिपन्थिनि विप्रतिपत्तिरयुक्तेति वक्तुमसंशय इत्युक्तं तथाऽपि तस्य साक्षिसिद्धस्य साक्षिवज्ज्ञानानिवर्त्यत्वमित्याशङ्क्याज्ञानवत्तद्ध्वस्तिरपि संमतेत्याह—तद्वदिति । तदभावे सर्वव्यवहारविहतिरिति भावः । तथाऽपि किं ते सिद्धं तदाह—एतावतेति । अनुभवोऽज्ञानं तद्धानिरितित्रयसिद्धिमात्रेणेति यावत् ॥१३६६॥

त्वत्सिद्धान्तवदितरसिद्धान्तानामपि तद्बुद्ध्या सिद्धिरित्याशङ्क्याऽऽह—अस्मदिति । अद्वैतमते प्रामाणिके सतीतरराद्धान्तानामज्ञानमूलत्वेन भ्रान्तत्वमेवेति भावः । भवतु तावत्तद्बुद्ध्या परसिद्धान्तसिद्धिस्तथाऽपि न क्षतिस्तैरप्यनुभवादित्रयस्वीकारादस्मदिष्टसिद्धिरित्याह—तत्सिद्धाविति । अस्येति स्वसिद्धान्तस्येति यावत् ॥१३६७॥

परसिद्धान्तसिद्धावपि स्वसिद्धान्तसिद्धिश्चेन्मिथोविरोधाद्वस्तुनि विकल्पः स्यादित्याशङ्क्य परसिद्धान्तानां भ्रान्तत्वसिद्ध्यर्थं स्वसिद्धान्तमाह—अज्ञानमिति । प्रत्यगज्ञानविजृम्भिताः सर्वे परसिद्धान्ता अप्रामाणिकभेदाश्रयत्वादतस्तेषां भ्रान्तत्वमिति भावः ॥१३६८॥

प्रत्यगज्ञानस्य कल्पितत्वं साधयति—कूटस्थेति । तदस्य नैजमागन्तु वा ? नाऽऽद्यो नित्यदृष्टिस्वाभाव्यान्नेतरस्तस्याऽऽत्मनोऽन्यत्रानुत्पत्तेस्तत्रापि हेत्वन्तराभावादुत्पत्त्यनुपपत्तेरित्यर्थः ॥१३६९॥

अ[1]विद्यातज्जकार्याणामात्मना संगतिस्ततः । आत्मात्मवत्स्वरूपा स्यान्न तु सोभयकर्मजा ॥७०॥
एकमेव हि सद्वस्तु यद्वेदान्तप्रमाणकम् । तावन्मात्रैकनिष्ठत्वादात्मज्ञानं सदास्पदम् ॥७१॥

अनुभवप्रमाणकत्वात् वेदान्तसिद्धान्तस्यानिराससिद्धिः

सर्ववादिविरोधेऽपि यत्सिद्धान्तबलाश्रयम् । साधनं दूषणं सर्वं न तन्निह्नुतिरिष्यते ॥७२॥
साधनं दूषणं सर्वं यस्य पादव्यपाश्रयात् । सिद्धायते तीर्थदृशां कुतः स्यात्तस्य निह्नुतिः ॥७३॥
अभावो येन भावेन भाव्यतेऽस्ति न नास्ति सः । तस्य भावस्य सद्भावो वद केन निवार्यते ॥७४॥
व्य[2]भिचारि न यत्रास्ति प्रमाणं सर्ववादिनाम् । स्वमहिम्ना च यत्सिद्धं तदपह्नूयते कथम् ॥७५॥
त[3]स्यैवाव्यभिचारित्वात्सर्वेषु व्यभिचारिषु । तदेवैकं प्रमाणं नः सर्ववाद्यविरोधि यत् ॥७६॥
देहादावात्मबुद्धिर्नो न कदाचिद्विहन्यते । जाग्रत्स्वप्नसुषुप्तेषु शुक्तिकारजतादिवत् ॥७७॥

अविद्याद्वारा तज्जन्यसंशयादीनामात्मना काल्पनिकी संगतिस्तद्रूपत्वात्तेषामित्यविद्याकार्यस्य कल्पितत्वं साधयति—अविद्येति । संशयादीनामविद्यातिरेकेणासत्त्वं पञ्चम्या परामृश्यते । कीदृशी संगतिरविद्यायास्तज्जानां चाऽऽत्मनेति तामाह—आत्मेति । संयोगादि व्यावर्तयति—न त्विति ॥१३७०॥

सकार्याज्ञानस्य कल्पितत्वे हेत्वन्तरमाह—एकमिति । सदेव सोम्येदमेकमेवेत्यादिवाक्यगम्यं सदात्मकं यद्वस्तु तदेकमेव ततोऽन्यत्कल्पितमित्यर्थः । तत्र ब्रह्मविदामपि संप्रतिपत्त्यर्थो हिशब्दः । वाक्यगम्यत्वे तदुत्थज्ञानस्य ज्योतिष्टोमादिवाक्योत्थज्ञानस्येव संसृष्टविषयत्वाद्ब्रह्म संसृष्टमेव नैकरसमित्याशङ्क्याऽऽह—तावन्मात्रेति । कार्यकारणात्मप्रपञ्चस्य सन्मात्रत्वादात्मज्ञानमेकरसं सदालम्बनमित्यर्थः ॥१३७१॥

स्वसिद्धान्तोक्त्या परसिद्धान्तानां भ्रान्तिमूलत्वमापाद्य स्वसिद्धान्तस्यानिरस्यत्वमुपसंहरति—सर्वेति । यत्र सिद्धान्ते स्थितं बलमनुभवलक्षणं तदाश्रयं साधनादि तस्य सिद्धान्तस्य न निराससिद्धिरित्यर्थः ॥१३७२॥

अनुभवान्न सर्वसिद्धिः शून्यवादिना तस्याप्यपलापादित्याशङ्क्याऽऽह—साधनमिति । अनुभवापलापे साधनाद्यसिद्धिः साधकाभावादित्यर्थः ॥१३७३॥

अभावसाधकत्वाच्च सोऽशक्योऽपह्नोतुमित्याह—अभाव इति । अ[4]नुभवाभावसाधकाभावाच्च न तन्निह्नुतिरित्याह—तस्येति ॥१३७४॥

सर्वपक्षेषु सर्वमानस्यानुभवाव्यभिचाराच्च न ह्नुतिरित्याह—व्यभिचारीति । तर्हि मेयतया घटादितुल्यतेत्याशङ्क्य मानमेयादिसत्तास्फूर्तिप्रदत्वान्मैवमित्याह—स्वमहिम्नेति । अनुभवतत्त्वस्य निरासासंभवं निगमयति—तदिति ॥१३७५॥

तस्य स्वमहिमसिद्धिं साधयति—तस्येति । यत्सर्ववादिसंमतं तस्यैव सर्वेषु देहादिषु व्यभिचारिषु साधकत्वेनाव्यभिचारित्वात्तदेकरसमस्माकं मानमेव न मेयमिति स्वमहिमसिद्धतेति योजना ॥१३७६॥

देहादेर्व्यभिचारादनुभवात्मनोऽव्यभिचारात्तयोर्भेदभानाद्देहादावात्मबुद्ध्यसिद्धेर्व्यवहारोच्छित्तिरित्याशङ्क्याऽऽह—देहादाविति । तिसृष्ववस्थासु मध्ये जाग्रत्स्वप्नयोर्देहादावात्मधीरविवेकिनामिव विवेकिनामपि न

---

१. आत्मात्मवत्स्वरूपा संगतिः आत्मनः अविद्या तत्कार्ययोश्च । स चाध्यासिकं तादात्म्यमेव नोभयकर्मजसंयोगादि तयोः कर्माभावात् ।

२. स्वापेऽनुभवव्यभिचारात् अनुभवस्य शून्यत्वं तत्राह—**व्यभिचारीति** । अवस्थात्रयसाधकत्वेनानुभवः सदा स्फुरतीत्यर्थः । साधकान्तरस्वीकारेऽनवस्था । तदस्वीकारे साधकाभावादसिद्धिः तत्राह—**स्वमहिम्नेति** (न्या०)

३. अनुभव एवं स्वात्मन्यन्यत्र च मानम् । जडस्य मातृवायौगात् लोष्टवत् । ( न्या० )

४. अनुभवाभाव उच्यते चेत् तस्यापि साधकः अनुभवः एव वक्तव्यः अतः तस्य निह्नवोऽशक्यः अनुभवाभावसाधकं तु नास्तीत्यर्थः ।

देहान्तात्कर्तुरन्यो यो बुद्ध्यन्ताद्बोद्धुरेव च । प्राणान्तात्करणाच्चान्यः प्रत्यग्दृष्ट्या य ईक्ष्यते ॥७८॥
अदेहतोऽजरोऽमृत्युरस्वान्तोऽमोहशोकवान् । अबुभुक्षोऽपिपासश्च [1]प्राणकारणवर्जनात् ॥७९॥

आत्मानात्मलक्षणकथनं विवेचनाय

[2]अहीनो हीयते योऽसौ तथाऽनागत एति यः । जानीयात्तमनात्मानं जाग्रत्स्वप्नसुषुप्तिषु ॥८०॥
[3]न हीयते हीयमान आगच्छति न चैति यः । आगमापायसाक्षित्वादात्मा सोऽनुभवाश्रयात् ॥८१॥
नाविद्यामनुपादाय प्रत्यक्कारकतां व्रजेत् । नाकारकः क्रियां कर्तुमलं जगति वीक्ष्यते ॥८२॥
द्रष्टुर्दृष्ट्या न चानाप्तोऽनात्मा कश्चित्प्रसिध्यति । [4]मिथ्याज्ञानमतोऽनात्मा ह्यात्माज्ञानसमुत्थितेः ॥८३॥
नाविद्यामनुपादाय जाग्रत्स्वप्नसुषुप्तिषु । अनात्मानं विजानाति तज्जज्ञात्राद्यनन्वयात् ॥८४॥
न च ज्ञात्रनुरोधिन्या दृष्ट्याऽज्ञानासमन्वितम् । आत्माऽऽत्मानमलं द्रष्टुं रूपं श्रोत्रधिया यथा ॥८५॥

कदाचिद्धीयते यथा शुक्तौ भ्रान्तिकाले रजतधीरतः सर्वव्यवहारसिद्धिरित्यर्थः । उदाहरणान्तरद्योतनार्थमादिपदम् ॥१३७७॥

अस्तु तर्हि यथाप्रतिभासं देहाद्येवाऽऽत्मेत्याशङ्क्य लोकायतं प्रत्याह—देहान्तादिति । शरीरमिन्द्रियं मनश्चेति त्रयं पञ्चम्यर्थः । यो हि प्रत्यग्दृष्ट्या स्वरूपज्ञप्त्याऽहंबुद्ध्या वीक्ष्यते स क्रियाश्रयाद्देहादित्रयादन्यस्तस्य भौतिकत्वात्प्रतीचश्चातथात्वादित्यर्थः । मीमांसकं प्रत्याह—बुद्ध्यन्तादिति । अहंकर्तुश्च सोऽन्यस्तस्य व्यभिचारित्वेनानात्मत्वादित्यर्थः । हैरण्यगर्भादीन्प्रत्याह—प्राणान्तादिति । अत्रैको य इति शब्दः सशब्दपर्यायः ॥१३७८॥

देहाद्यतिरेकादात्मनस्तद्धर्मा न तं स्पृशन्तीति षडूर्मिवर्जितत्वेनाऽऽत्मनः शुद्धतामाह—अदेहत इति ॥१३७९॥

अनात्मधर्मा नाऽऽत्मानं स्पृशन्तीत्युक्तेरात्मानात्मानौ विभज्य वाच्याविति मन्वानोऽनात्मलक्षणमाह—अहीन इति । अवस्थात्रयेऽपि यो वस्तुतो हानिहीनोऽपि प्रतीचि तामनुभवति यश्चाऽऽगमाभावेऽपि तस्मादेवाऽऽगच्छति सोऽनात्मेत्यर्थः ॥१३८०॥

आत्मलक्षणमाह—नेत्यादिना । देहादेरागमापाययोर्यो नाऽऽगमापायी तदागमापायसाक्षित्वादसावात्मेत्यर्थः । कथं तयोर्यथोक्तयोः सिद्धिरत आह—अनुभवेति ॥१३८१॥

तयोस्तद्धर्माणां चासांकर्ये कथमद्वैतसिद्धिरित्याशङ्क्य कारकस्य कल्पितत्वमाह—नेति । कूटस्थत्वादित्यर्थः । कल्पितकारकनिर्वर्त्यतया क्रियायाः कल्पितत्वमाह—नाकारक इति ॥१३८२॥

कारकाद्यनात्मनोऽविद्यामयत्वमन्वयादिनोक्त्वा तत्रैव हेत्वन्तरमाह—द्रष्टुरिति । अनात्मसिद्धेरन्याधीनत्वात्कल्पितत्वं सर्पवदित्याह—मिथ्येति । तस्य मिथ्याधीविषयत्वे पूर्वोक्तं हेतुं स्मारयति—आत्मेति । अज्ञानोत्थस्य मिथ्याज्ञानविषयत्वं रूप्यादौ व्यक्तमिति वक्तुं हिशब्दः ॥१३८३॥

अज्ञानोत्थत्वं समर्थयते—नाविद्यामिति । अविद्यां विनाऽवस्थात्रयेऽप्यनात्मानं न कश्चिद्वेत्तीत्यत्र हेतुमाह—तज्जेति । अविद्याजन्यज्ञातृज्ञानादेस्तां विनाऽऽत्मासंबन्धादविद्याजमेव दर्शनमित्यर्थः ॥१३८४॥

अनात्मवदात्मनोऽपि मात्रधीनत्वान्मिथ्यात्वमित्याशङ्क्याऽऽह—न चेति । मातृपरिणामरूपया दृश्यया दृष्ट्या केवलस्याविद्यातदुत्थसंस्पर्शशून्यस्याऽऽत्मनो दृष्ट्ययोग्यत्वे दृष्टान्तमाह—रूपमिति ॥१३८५॥

१. प्राणरूपं यत्कारणं तदभावात् ।
२. अहीने इतिपाठश्चेत् स्पष्टः । टीकायां च वस्तुतो हानिहीनेऽपि प्रतीचि हानिमनुभवति । यश्च प्रतीच्यागमाभावेऽपि स्वयमागच्छति स अनात्मा ।
३. हीयमानेऽनात्मनि यो न हीयते तथाऽऽगच्छति अनात्मनि स्वयं न गच्छति । अनात्मगतागमापायसाक्षित्वात् स आत्मा ।
४. मिथ्याभूतमज्ञानमित्यर्थः ।
५. सुषुप्तावपि देहादिसंस्कारसत्वात् देहात्मबुद्धिसंस्कारसद्भाव एवेत्यर्थः ।

उत्सार्यानात्मनः सर्वानन्वयव्यतिरेकतः । प्रत्यक्प्रधानया दृष्ट्या पश्येदात्मानमद्वयम् ॥८६॥
त्वं ब्रह्मेति गुरोर्वाक्यात्तन्निविष्टपदार्थयोः । उक्तान्वयादिनोत्पन्नविवेकः सन्नबुध्यत ॥८७॥
तद्ब्रह्माऽऽत्मानमेवावेद्यदनात्मेत्यभूत्पुरा । अविद्यया विद्यया तु ब्रह्माऽऽत्मैवाभवत्स्वतः ॥८८॥

आत्मानमेवावेदित्यत्र एवकारवाच्यार्थः

एवेत्यवधृतौ ज्ञेयं ब्रह्मात्मार्थविशेषणम् । आत्मैव ब्रह्म विज्ञेयं ब्रह्मैवाऽऽत्मेति संभवात् ॥८९॥
ब्रह्मता नाऽऽत्मनोऽन्यत्र नाऽऽत्मता ब्रह्मणोऽन्यतः । तद्याथात्म्याप्रबोधात्तु तयोरेष विपर्ययः ॥९०॥
आत्माऽपि साक्षात्तद्ब्रह्म परोक्षं तदबोधतः । ब्रह्मैव तद्वदात्माऽपि सद्वितीयवदीक्ष्यते ॥९१॥
वाक्योत्थसम्यग्विज्ञानप्रध्वस्ततमसो यतेः । विभागहेतोरुच्छित्तेः सर्वमात्मैव शिष्यते ॥९२॥
विज्ञातारमरे केन विजानीयादिति श्रुतेः । ननु विप्रतिषिद्धार्थं तदात्मानमितीर्यते ॥९३॥
दृष्टेर्द्रष्टेति विज्ञानान्नात्र विप्रतिषिद्धता । प्रत्यग्बुद्धिः प्रमात्रादौ सर्वत्रैवोपजायते ॥९४॥

आत्मदृष्टिस्तर्हि कथमित्याशङ्क्याऽऽह—उत्सार्येति । प्रत्यक्प्रधानया तन्मात्राकारया वाक्योत्थयेति यावत् ॥१३८६॥

आत्मैव मेयस्तज्ज्ञानमेव मानमित्येवकारार्थः समर्थितः । संप्रत्यात्मज्ञानं गुरूपदेशादेवोत्पद्यते नोत्प्रेक्षयेत्याह—त्वमिति । वाक्यादबुध्यतेति सम्बन्धः । तर्हि गुरूपदिष्टवाक्यात्किमिति सर्वो न बुध्यते तत्राऽऽह—तन्निविष्टेति । श्रुतवाक्योऽपि वाक्यस्थपदार्थपरिशोधनवैधुर्यादनधिकारितया वाक्यार्थं नानुभवतीत्यर्थः ॥१३८७॥

तद्ब्रह्म शिष्यभूतं गुरुवाक्यात्किमबुध्यत न तावदात्मानमेव कर्मकर्तृविरोधात् । नाप्यनात्मानं तदभावादित्याशङ्क्याऽऽह—तद्ब्रह्मेति । अविषयत्वेनाऽऽत्मनो ज्ञानात्कर्मकर्तृविरोधो नास्तीत्यर्थः । आत्मनो नित्यज्ञप्तिरूपस्य किमागन्तुकज्ञानेनेत्याशङ्क्याऽऽह—यदिति । ब्रह्मात्मत्वस्य स्वभावत्वादविद्याध्वस्तौ विद्याऽर्थवतीति फलितमाह—विद्ययेति । यद्विद्योदयात्पूर्वमनात्मेत्यविद्यया स्थितं तद्ब्रह्म स्वरूपमेव गुरूपदिष्टवाक्याद्दृष्टवत् । दृष्टिफलं चाविद्यानिवृत्त्या परिपूर्णतया स्थितिरेवेति समुदायार्थः ॥१३८८॥

आत्मा मेयस्तथा मानमित्यादिना विवक्षितमर्थमेवकारस्योक्त्वाऽधुना वाच्यमर्थमाह—एवेतीति । तच्च ब्रह्मार्थस्याऽऽत्मार्थस्य च प्रत्येकं विशेषणमित्याह—ब्रह्मेति । अवधारणप्रकारं प्रकटयति—आत्मैवेति । विज्ञेयमित्यन्वयार्थमितिपदं तत्र हेतुः संभवादिति ॥१३८९॥

संभवं साधयति—ब्रह्मतेति । आत्मन्यब्रह्मताया ब्रह्मणि चानात्मतायास्तर्हि कथं प्रथेति तत्राऽऽह—तद्याथात्म्येति ॥१३९०॥

ब्रह्मणि विपर्ययं दर्शयति—आत्माऽपीति । आत्मनि तमुदाहरति—ब्रह्मैवेति ॥१३९१॥

अविद्यान्वयव्यतिरेकाभ्यामाविद्यत्वं विपर्ययस्योक्त्वा विद्यापोद्यत्वादपि तथेत्याह—वाक्येति । संन्यासस्यापि शमादिवद्धीहेतुत्वं यतेरित्युक्तम् । विभागहेतोर्विपर्यासस्येति यावत् । सर्वं पूर्णं ब्रह्माऽऽत्मैवैकं सच्चिदानन्दैकतानमवशिष्टमित्याह—सर्वमिति ॥१३९२॥

तदात्मानमेवावेदित्यत्र चोदयति—विज्ञातारमिति । आत्मनो वेद्यत्वस्य श्रुतावाक्षिप्तत्वात्तद्वेद्यत्वोक्तिर्वाक्यान्तरविरुद्धेत्यर्थः ॥१३९३॥

आत्मनः कर्मत्वेन वा साक्षित्वेन वा ज्ञानाद्विप्रतिषेधो नाऽऽद्य इत्याह—दृष्टेरिति । न द्वितीय इत्याह—नात्रेति । सर्वसाक्षित्वेनाऽऽत्मा ज्ञायते न कर्मतयेति कुतोऽस्मिन्वाक्ये विप्रतिषेध इत्यर्थः । सर्वसाक्षित्वं साधयति—प्रत्यगिति । प्रत्यगेव बुद्धिश्चैतन्यं सा सर्वत्र साक्षित्वेन भात्येवान्यथा जडस्यादृष्टेरित्यर्थः । उपजायमानत्वमुपचारतो भासमानत्वम् ॥१३९४॥

### साक्षिणः सर्वत्र सर्वविशेषेण भासमानता

युष्मदस्मद्विभागाभ्यां यावद्वस्त्विह मीयते । तेन तेन विशेषेण प्रत्यगर्थः प्रतीयते ।।९५।।
प्रत्यगर्थमनालिङ्ग्य न पराग्वर्ति[1] जायते । विज्ञानं तेन तत्पूर्वं सर्वमन्यत्प्रतीयते ।।९६।।
आब्रह्मास्थाणु चान्वक्षं सर्वेषु व्यभिचारिषु । प्रत्ययोऽव्यभिचार्येकश्चैतन्यप्रतिबिम्बितः ।।९७।।
न च विप्रतिपद्यन्ते वादिनोऽनुभवात्मनि । तत्र चेत्स्याद्विसंवादः केनान्येन चिकित्स्यते ।।९८।।
अन्योऽपि योऽत्र कल्प्यः स्यात्सोऽप्यस्मान्नैव भिद्यते । सर्वभेदात्मरूपत्वात्कः सन्स्यादात्मना विना ।।९९।।
प्रत्यगात्मनि विश्वस्य[2] ततोऽनात्मनि तद्वशात् । आविद्वदङ्गनाबालं विश्वसित्यनपेक्षतः ।।१४००।।
आत्मनैवाऽऽत्मविज्ञानं ज्ञेयज्ञात्रादिवर्जितम् । स्वयमेव फलात्मत्वात्फलं चास्मान्न भिद्यते ।। १ ।।
प्रमाणव्यवहारोऽयं सर्वेषामपि वादिनाम् । स्वतोऽनुभवनिष्ठः स्यान्न चेत्षष्ठेन्द्रियार्थवत् ।। २ ।।
चैतन्यमात्ररूपोऽयं सदानस्तमितोदितः । अविद्यामस्पृशन्नास्ते निष्क्रियोऽकारकोऽफलः ।। ३ ।।

तर्हि साक्षिसाक्ष्यभेदः स्यादित्याशङ्क्याऽऽह—युष्मदिति । इहेति मानभूमिरुक्ता ।।१३९५।।

न तर्हि साक्षित्वं भेदाभावादित्याशङ्क्य कल्पितभेदात्तदुपपत्तिरित्याह—प्रत्यगर्थमिति । नासाक्षिका सत्त्ववृत्तिरर्थो जानातेरिति न्यायादित्यर्थः । उक्तन्यायमुपजीव्य फलितमाह—तेनेति ।।१३९६।।

प्रत्यक्चैतन्यपूर्वा सर्वस्य धीरित्ययुक्तं चैतन्यस्य प्रतिक्षणध्वंसित्वादिति केचित्तान्प्रत्याह—आब्रह्मेति । ब्रह्माणमारभ्य स्थाणुपर्यन्तं सर्वेष्वनात्मसु प्रत्यक्षं व्यभिचारिषु सत्सु चैतन्यरूपेण सर्वत्र प्रतिबिम्बितोऽनुभवोऽव्यभिचारीति यावत् । सर्वत्र साक्षित्वेनाऽऽत्मनो भानान्नानुभवो व्यभिचारीत्यर्थः ।।१३९७।।

तस्य क्षणिकत्वं निरस्य शून्यत्वं निरस्यति—न चेति । तस्मिन्नपि विवादः शून्यवादिनोऽस्तीति चेत्तत्राऽऽह—तत्रेति । अनुभवेऽपि विप्रतिपत्तौ साधकाभावेन सर्वासिद्धिः स्यादित्यर्थः ।।१३९८।।

अनुभवं विनैव मात्रादिसिद्धेस्तदभावेऽपि न सर्वासिद्धिरित्याशङ्क्याऽऽह—अन्योऽपीति । अत्रेति सर्वसिद्धिं निमित्तीकृत्येत्यर्थः । स जडोऽजडो वा ? जडश्चेदनुभवे कल्पितः सर्पवदिति मत्वा द्वितीयं दूषयति—सोऽपीति । अनुभवदृष्टान्तार्थोऽपिशब्दः । किंच जडस्याजडस्य वा सर्वस्याऽऽत्मरूपत्वात्तेन विना न कश्चित्सिध्येत्ततो निष्कर्षे सत्त्वायोगात् । स च न स्वाश्रयवृत्तिव्याप्यो विरोधादतः स्वप्रकाश इत्याशयेनाऽऽह—सर्वेति ।।१३९९।।

विषयज्ञानाधारत्वेन तत्सिद्धेर्न स्वप्रकाशतेति कश्चित्तं प्रत्याह—प्रत्यगिति । आत्मन्यादौ विश्वासं कृत्वा तद्वशादनात्मनि सर्वो लोको विश्वासं करोत्यतो विषयसंविदनपेक्षः प्रत्यग्विश्वासस्तत्पूर्वभावितया पराचीनविषयधीसापेक्षत्वायोगादित्यर्थः ।।१४००।।

प्रतीचि विश्वासे मात्रादिविभागापेक्षणात्कुतः स्वप्रकाशता तत्राऽऽह—आत्मनैवेति । एवकारार्थमाह—ज्ञेयेति । आदिपदं करणादिविषयम् । मानफलवन्मानादेरप्यात्मनो भेदः स्यादित्याशङ्क्याऽऽह—स्वयमिति । स्वप्रकाशत्वादात्मनो न तादृक्फलं ततो भेत्तुं युक्तमित्यर्थः ।।१४०१।।

आत्मनि मात्रादिविभागाभावेऽपि शब्दाद्यनात्मनि तद्भावादद्वैतहानिरित्याशङ्क्याऽऽह—प्रमाणेति । विषयवज्ज्ञानादेः स्वप्रकाशानुभवनिष्ठत्वेन तन्मात्रत्वाभावे तुच्छतैवेत्याह—न चेदिति ।।१४०२।।

जगतो व्याकृताव्याकृतात्मकस्याऽऽत्ममात्रत्वे तद्गतगुणदोषाभ्यां संस्पृश्येतेत्याशङ्क्याऽऽह—चैतन्येति । तर्हि तद्वदुदयास्तमयौ स्यातामित्याशङ्क्य तस्मिन्नपि न तावित्याह—सदेति । अविद्यास्पर्शाभाववत्तत्कार्येणापि स्पर्शो नास्तीत्याह—निष्क्रिय इति ।।१४०३।।

---

१. परागवृत्तिवृत्तिज्ञानं प्रत्यगर्थं ब्रह्म अनालिङ्ग्य प्रतिविम्बतया अगृहीत्वेत्यर्थः ।
२. विश्वस्य तद्भानं मूलीकृत्य ।

### आत्मनोऽसङ्गत्वात् अविद्या तज्जं च तं न स्पृशति

**स्वतोऽसङ्गस्वभावत्वात्खचारादि वियद्यथा । नाविद्या नापि तत्कार्यं प्रत्यक्स्थमपि ढौकते ॥ ४ ॥**
**स्वतः सेद्धुमशक्तत्वात्खमृते वायुवत्सदा । प्रत्याख्यातस्वभावोऽपि सिध्यतीवाग्रहो दृशौ ॥ ५ ॥**
**युतिं साधारणात्मा हि यात्यसाधारणात्मभिः । अनन्यवृत्तितो नाऽऽत्मा संसर्गं प्रैत्यनात्मभिः ॥ ६ ॥**
**विभज्यमानोऽन्येभ्यो हि विशेषोऽपि प्रसिध्यति । एकत्वादात्मनो भेदो द्वयाभावान्न चेष्यते ॥ ७ ॥**
**भेदसंसर्गहीनत्वात्पदवाक्यार्थताऽऽत्मनः । दुःसंभाव्याऽत आत्माऽयमात्मनैवानुभूयते ॥ ८ ॥**
**यादृगस्य द्वये तत्त्वमात्मनैवानुभूयते । निषिद्धाशेषभेदस्य तावदेवाऽऽत्मसाक्षिकम् ॥ ९ ॥**
**अपास्ताशेषतमसो यत्तत्त्वं प्रत्यगात्मनः । तदवच्छित्तये[1] नालं प्रत्यग्बोधादृतेऽन्यधीः ॥१०॥**
**प्रत्यङ्मात्रेक्षणादात्ममोहतज्जनिराकृतेः । असंभवाद्द्वितीयस्य स्यामपूर्वादिमानहम्[2] ॥११॥**
**व्यपेततमसस्तत्त्वमागमापायसाक्षिणः । ज्ञानेन गम्यते साक्षात्तावन्मात्रानुरोधिना ॥१२॥**

आत्मनोऽविद्यातज्जास्पर्शेऽपि तद्गतत्वात्तेन संस्पृश्यत इत्याशङ्क्याऽऽह—स्वत इति । यथा वियतोऽसङ्गत्वात्तद्गतमपि विहगादि न तत्स्प्रष्टुमीष्टे तथाऽविद्यादि प्रत्यगात्मगतमपि तस्यासङ्गस्वाभाव्यान्न तं स्पृशतीत्यर्थः ॥ १४०४॥

आत्मनोऽविद्यादेश्च मिथोऽसंबन्धे साविद्यजगदसिद्धेर्बन्धासिद्धिरित्याशङ्क्याऽऽह—स्वतः सेद्धुमिति । प्रत्याख्यातस्वभावोऽपि दृशेति शेषः । अग्रहः सकार्यमज्ञानम् । दृगात्मन्यविद्यादिसंगतिरविद्यानिमित्तेतीवशब्दार्थः । न हि वायुराकाशमन्तरेण कदाचित्स्वातन्त्र्येण सिध्यति तथा जगदपि सनिदानं स्वतो जडतया कालत्रयेऽपि सेद्धुमशक्यं प्रत्यगात्मस्वभावालोचनया तत्रासंभाव्यमानमेवाविद्यया तस्मिन्नेव सिद्ध्याभासभाग्भवतीत्यर्थः ॥१४०५॥

दृशो वस्तुतो द्वैतासंबन्धे हेत्वन्तरमाह—युतिमिति । सामान्यस्य विशेषैः संबन्धो दृष्टः प्रतीचस्त्वसामान्यान्न केनापि संगतिरित्यर्थः । सामान्यविशेषसंबन्धस्य गवाश्वादौ प्रसिद्धिप्रदर्शनार्थो हिशब्दः ॥१४०६॥

तर्हि विशेषत्वप्राप्तेः सामान्येन संगतिरिति चेन्नेत्याह—विभज्यमान इति । अन्यतो व्यावृत्तस्य विशेषत्वं खण्डादौ सिद्धमिति हिशब्दार्थः । सामान्यन्यायमुक्त्वाऽऽत्मनि विभागाभावमाह—एकत्वादिति । भेदस्य दुर्निरूपत्वादिति यावत् । तदेव साधयति—द्वयाभावादिति । चकारोऽवधारणे । धर्मिप्रतियोगिनोर्भेदापेक्षत्वात्तस्य चेतरापेक्षया सिद्धेरन्योन्याश्रयाद्भेदो दुर्निरूप इत्यर्थः । यद्वा तत्र तत्र प्रत्यक्त्वेनाऽऽत्मनः स्वरूपत्वान्न कुतश्चिदपि भेदोऽस्तीत्याह—एकत्वादिति । तस्मिन्धर्मिप्रतियोगिविभागायोगाच्च भेदासिद्धिरित्याह—द्वयेति ॥१४०७॥

शब्दार्थत्वादात्मनो गवादिवत्सामान्यत्वं विशेषत्वं चेत्याशङ्क्याऽऽह—भेदेति । न हि क्रियाकारकयोरिवाऽऽत्मनि भेदो वा नीलोत्पलादाविव संसर्गो वा संभवति तस्मिन्नसङ्गाद्वितीये द्वयोरपि दुःसंपादत्वात्तथाच नास्य शब्दार्थतया सामान्यादिभावाशङ्का युक्तेत्यर्थः । आत्मनस्तर्हि मानादसिद्धिरेवेति तत्राऽऽह—अत इति ॥१४०८॥

निःसामान्यविशेषस्य भेदसंसर्गरहितस्य पदवाक्यार्थहीनस्य स्वप्रकाशस्यापि नैकरस्यमात्मनः संभवति बन्धमोक्षयोस्तद्रूपभेदादित्याशङ्क्याऽऽह—यादृगिति । कूटस्थचैतन्यमेकरसमेवाऽऽत्मरूपं सदनुभवसिद्धमित्यर्थः ॥१४०९॥

चैतन्यं चेदुभयत्राऽऽत्मरूपं तदविद्यावस्थायामपि प्रत्यक्षादिसिद्धं किं वाक्येनेत्याशङ्क्याऽऽह—अपास्तेति । प्रत्यक्षादि विशिष्टविषयं न शुद्धविषयमित्यावेदितमिति भावः ॥१४१०॥

वाक्योत्थप्रत्यग्बोधस्य फलमाह—प्रत्यगिति । अनात्मदर्शनं परिहृत्येति मात्रचोऽर्थः ॥१४११॥

---

१. तदवच्छित्तये तदीयनिर्विशेषस्वरूपपरिज्ञानाय ।

२. अपूर्वादिमानहं कार्यकारणविनिर्मुक्तोऽहं स्यामित्यर्थः ।

कालादिप्रविभक्तं सद्यद्ब्रह्माभूदविद्यया ।
तत्प्रत्यक्तत्त्वसंबोधाद्ध्वस्ते ध्वान्तेऽन्तरात्मनि । आत्मानमेव तद्ब्रह्म ब्रह्मैवाऽऽत्मेत्यवेच्छ्रुतेः ॥१३॥
अब्रह्मानात्मताहेतौ प्रत्यग्ध्वान्ते निवर्तिते । व्यावृत्त्यनुगमाभावात्सर्वं तदभवत्ततः ॥१४॥
व्यावृत्त्यनुगमौ यस्माद्द्वितीये सति वस्तुनि । दृष्टिमात्रात्मवस्तुत्वात्कार्यकारणवस्तुनः ॥१५॥

### अहं ब्रह्मास्मीति महावाक्यव्याख्यानम्

नाज्ञातं किंचिदप्यस्ति नानपास्तं तमोऽप्यतः । सामानाधिकरण्यार्थमस्मीत्येतत्पदं भवेत् ॥१६॥
ब्रह्माहंपदयोरर्थौ यौ तयोः संगतिर्मिथः । अहमर्थो विशेष्योऽत्र तत्प्राधान्यप्रसिद्धितः ॥१७॥
तद्याथात्म्यप्रसिद्ध्यर्थं ब्रह्मार्थस्तु विशेषणम् ॥१८॥
विशेषणानां संबन्धो विशेष्येण विशेषणैः । विशेष्यस्यापि संबन्धः स्वातन्त्र्यपारतन्त्र्यतः ॥१९॥
विशेषणविशेष्याणां साकल्येनैव संगतिः । उपात्तान्योन्यरूपाणां[1] विशेषणविशेष्यता ॥२०॥

अकार्यकारणे प्रतीच्यद्वये किं मानमित्याशङ्क्य पूर्वोक्तमनुभवं स्मारयति—व्यपेतेति । साक्षाज्ज्ञानेनेति संबन्धः । साक्षादगम्यत इति वा । चक्षुरादिजन्यज्ञानस्य तत्त्वविषयत्वं व्यावर्तयति—तावदिति । निर्विशेषात्ममात्रानुसारिणेति यावत् ॥१४१२॥

तदात्मानमेवावेदित्यस्यार्थमुपसंहरति—कालादीति । श्रुतेर्गुरूपदिष्टवाक्यादिति यावत् । यद्ब्रह्म गुरूपदेशात्प्रागविद्यया देशकालादिप्रविभक्तं परिच्छिन्नमिवाऽऽसीत्तत्प्रतीचस्त्वमर्थस्य तत्त्वं परिशुद्धं रूपं तद्बोधादात्मन्यन्तरवस्थिते ध्वान्ते ध्वस्ते पदार्थधियो वाक्यार्थधीहेतोर्भावादाचार्यादिष्टवाक्यादैक्यं मिथो ब्रह्मात्मनोः साक्षात्कृतवदित्यर्थः ॥१४१३॥

तस्मादित्यादेरर्थमाह—अब्रह्मेति । ततःशब्दस्तत्त्वज्ञानवाची वार्तिकादौ योज्यः ॥१४१४॥

व्यावृत्त्यनुगमयोरभावे हेतुमाह—व्यावृत्तीति । तस्माद्द्वितीयाभावान्न ताविति शेषः । द्वितीयाभावं साधयति—दृष्टीति ॥१४१५॥

आत्मनोऽद्वयत्वे फलितमाह—नेत्यादिना । तस्याखण्डैकरसस्य ज्ञानादित्यर्थः । इदमेवातःशब्दार्थः । अहमित्यादि व्याचिख्यासुरस्मीत्यस्यार्थमाह—सामानाधिकरण्येति । अस्मीति वर्तमानापदेशादैक्यस्य सदा सत्त्वमुच्यते नाभूतभवनमतो भिन्नप्रवृत्तिनिमित्तानां शब्दानामैक्यार्थं सामानाधिकरण्यमितिन्यायेनाहंब्रह्मपदयोरैक्यवृत्तितया तत्सिद्ध्यर्थमिदं पदमित्यर्थः ॥१४१६॥

पदयोः सामानाधिकरण्यमुक्त्वा तदर्थयोर्विशेषणविशेष्यत्वेन मिथः संगतिरित्याह—ब्रह्मेति । कस्य विशेष्यत्वं विशेषणत्वं चेति तत्राऽऽह—अहमर्थ इति । द्वयोर्मध्ये तस्यैव विशेष्यत्वे हेतुमाह—तदिति । अहंशब्दवाच्यस्याऽऽत्मार्थस्य सर्वशेषिणः प्रधानतया प्रसिद्धत्वेनोद्देश्यत्वसंभवादित्यर्थः ॥४११७॥

अहमर्थस्वरूपनिश्चायकत्वाद्ब्रह्मार्थस्तस्य विशेषणमित्याह—तद्याथात्म्येति । भवत्वहमर्थस्य सर्वशेषित्वेन प्राधान्यं ब्रह्मार्थस्य तन्निश्चायकत्वेन तादर्थ्यं तथाऽपि विपरीतं विशेषणविशेष्यत्वं किं न स्यादित्याशङ्क्य तत्स्वरूपमाह—विशेषणानामिति । तयोर्मिथः संबन्धस्तद्भावः स च स्वातन्त्र्यपारतन्त्र्यात्मकोऽतः स्वातन्त्र्यस्य विशेष्यत्वमितरस्य विशेषणतेति प्रसिद्धं स्वातन्त्र्येऽपि ब्रह्मणोऽस्मिन्प्रयोगेऽहमर्थपरतन्त्रतया प्रतीतेस्तद्विशेषणत्वमविरुद्धमित्यर्थः ॥१४१८-१४१९॥

मूलसंबन्धादृते तस्यातिप्रसङ्गित्वमाशङ्क्य तादात्म्यमाह—विशेषणेति । साकल्यमन्योन्यतादात्म्यम् । तदेव साधयति—उपात्तेति । मिथस्तादात्म्यवतामेव वस्तूनां विशेषणविशेष्यत्वमित्यर्थः ॥१४२०॥

---

१. उपात्तेति—प्राप्तान्योन्यतादात्म्यवताम् ।

उपात्तद्रव्यकाण्येव विशिंषन्त्युत्पलादिकम् । द्रव्यं विशेषणान्येति तथोपात्तविशेषणम् ।।२१।।
नायःशलाकाकल्पानां विशेषणविशेष्यता । परस्परानपेक्षत्वाद्धिमवद्विन्ध्ययोरिव ।।२२।।
एकदा निर्विभागेन कार्त्स्न्यसंगतिकारणात् । सामर्थ्यात्[1]स्वविरुद्धानां न विशेष्येऽस्ति संभवः ।।२३।।
परस्पराविरोधेन विशिंषन्त्यात्मसंश्रयम् । विशेषणानि येनातस्तद्विरुद्धं न ढौकते ।।२४।।
विशेषणयुतिः शाब्दी तद्विरुद्धनिराकृतिः । मोहमात्रेण तत्प्राप्तेः सामर्थ्यात्स्यान्न शब्दतः ।।२५।।
एकैकरूपासंसर्गबोधमात्रस्वभावतः । विशेषणानां संप्राप्तिर्नाऽऽञ्जसी प्रत्यगात्मनि ।।२६।।
विशेषणानां संबन्धो यतो न प्रत्यगात्मनि । लक्ष्यलक्षणता[2] तस्मात्प्रतीच्यध्यवसीयते ।।२७।।
अनन्यापेक्षि प्रत्यक्त्वमहंरूपेण लक्ष्यते । तथैव ब्रह्मरूपेण प्रतीचोऽप्यद्वयात्मता ।।२८।।

तेषां विशेषणविशेष्यत्वमुदाहरति—उपात्तद्रव्यकाणीति । नीलं सुगन्धि महदित्यादीनि विशेषणानि द्रव्येणोत्पलादिना तादात्म्यभाञ्जि सन्ति तद्व्यावर्तयन्ति । तदपि द्रव्यं विशेषणैस्तादात्म्यमुपेत्यैव तैः संगतिमनुभवतीत्यर्थः ।।१४२१।।

ब्रह्माहमर्थयोस्तादात्म्ये न विशेषणविशेष्यत्वं दण्डादिवत्[3]तद्भावस्य भेदापेक्षत्वादित्याशङ्क्याऽऽह—नेत्यादिना । दण्डादावपि नात्यन्तभिन्ने तद्भावस्तस्य तत्र कल्पितत्वात्तादात्म्यानपायाद्विशेषणविशेष्यत्वस्य दण्डदेवदत्ताभ्यामभेदे तद्द्वारा तयोरपि मिथोऽभेदसंभवादिति भावः ।।१४२२।।

ब्रह्माहमर्थौ नाभिन्नौ मिथो विरुद्धत्वादुष्णशीतवदित्यनुमानात्तयोरभेदायोगात्कुतो विशेषणविशेष्यतेत्याशङ्क्याऽऽह—एकदेति । तयोरंशांशित्वाद्यभावादैक्यात्तद्बलाद्ब्रह्मविरुद्धानां बद्धत्वादीनामहमर्थे तद्विरुद्धपारोक्ष्यदीनां चान्यतरत्र संभवो न कदाचिदस्त्यतो हेत्वसिद्धिरित्यर्थः ।।१४२३।।

विशेषणविरुद्धानां विशेष्ये संभावना नेत्युक्तं समर्थयते—परस्परेति । मैत्रो दीर्घो गौरश्चेत्युक्ते दीर्घत्वविशेषणं विशेष्ये ह्रस्वत्वमेव निवर्तयति न गौरत्वं तदपि रक्तत्वाद्येव न दीर्घत्वमेवं सर्वत्र विशेषणानि विशेष्ये स्वविरुद्धं व्यावर्तयन्त्यतो ब्रह्मविरुद्धं संसारित्वादि नाऽऽत्मानं तद्विरुद्धं च पारोक्ष्यादि न ब्रह्म स्पृशतीत्यर्थः ।।१४२४।।

ब्रह्माहमर्थयोरभेदः संसारित्वादिध्वस्तिश्च वाक्यादेव सिध्यति चेदर्थभेदाद्वाक्यभेदः स्यादित्याशङ्क्याभेदस्य शाब्दत्वादन्यनिवृत्तेरार्थत्वान्नैवमित्याह—विशेषणेति । शाब्दाभेदज्ञानशक्त्या संसारित्वादिध्वंसे हेतुमाह—मोहेति । अभेदविरुद्धं बद्धत्वादि तच्छब्दार्थः ।।१४२५।।

ब्रह्माहमर्थयोर्विशेषणविशेष्यत्वे वाक्यार्थो नीलोत्पलवन्नानारसः स्यादित्याशङ्क्य परिच्छिन्नाकारसंसर्गहीनचिदेकरसत्वादात्मनस्तत्र विशेषणविशेष्यत्वस्याविवक्षितत्वान्नैवमित्याह—एकेति । सजातीयभेदव्युदासार्थमेकपदम् । विजातीयभेदापवादार्थमेकरूपेत्युक्तम् । स्वगतभेदनिरासार्थमसंसर्गपदम् । आश्रयाद्यपेक्षां क्षेप्तुं मात्रेति । कथं तर्हि ब्रह्मणो विशेषणत्वं प्रतीचश्च विशेष्यत्वं प्रागुक्तमित्याशङ्क्य कल्पनयेत्यभिप्रेत्याऽऽह—विशेषणानामिति ।।१४२६।।

प्रतीचि वस्तुतो विशेषणविशेष्यत्वासंभवे कथं वाक्यगम्यतेत्याशङ्क्याऽऽह—विशेषणानामिति । शुद्धे तस्मिन्न विशेषणविशेष्यता वाच्ये त्वस्त्यतः शुद्धस्य लक्ष्यत्वाद्वाच्यस्य लक्षणत्वाद्विशिष्टार्थद्वयेनाद्वयं प्रत्यग्वस्तु लक्ष्यमित्यतो युक्तं तस्य वाक्यार्थत्वमित्यर्थः ।।१४२७।।

अहमर्थस्य लक्षकत्वं स्फुटयति—अनन्येति । ब्रह्मसंसृष्टाहमर्थेन तस्यानतिशयप्रत्यक्त्वं लक्ष्यमित्यर्थः । ब्रह्मार्थस्य लक्षकत्वं स्फोरयति—तथेति । प्रतीचा[4] संसृष्टब्रह्मार्थेन तस्य पूर्णता लक्ष्येत्यर्थः ।।१४२८।।

---

१. सामर्थ्यात् = प्रपञ्चमिथ्यात्वश्रुतिसामर्थ्यात् ।

२. लक्ष्यलक्षणता विशिष्टार्थशक्तेन पदद्वयेनाद्वयं वस्तु लक्ष्यत इत्यर्थः ।

३. दण्डे देवदत्ताभेदाभावात् न विशेषणविशेष्यता दण्डिनो देवदत्तसमानाधिकृतत्वात् तादात्म्यं न दण्डेन देवदत्तस्य । तस्य = दण्डस्य । मिथोऽभेदसंभवात् = मिथोऽभेदप्रसंगात् । तच्च नास्तीत्यर्थः ।

४. प्रतीचा = अहमर्थेन संसृष्टब्रह्मरूपेणार्थेन पूर्णं ब्रह्म लक्ष्यत इत्यर्थः ।

निवर्त्यभेदाद्भिन्नोऽर्थोऽमानित्वादेर्यथा तथा । ब्रह्माहमर्थयोर्ज्ञेयस्तयोरैकार्थ्यहेतुतः ॥२९॥
अनात्माब्रह्मताहेतौ प्रत्यग्ध्वान्ते निवर्तिते । पदार्थ एक एव स्याद्ब्रह्माहंपदयोः परः ॥३०॥
भेदसंसर्गनाशार्थो नात उक्तेरिहेष्यते । अहंब्रह्मश्रुतेः साक्षात्तादात्म्यमिह गम्यते ॥३१॥
कर्तुर्ज्ञातुर्हि या दृष्टिः साऽविद्योत्थार्थलेहिनी । तत्प्रत्यगात्मदृष्ट्या तां प्रत्याख्यायाश्नुतेऽद्वयम् ॥३२॥
अस्मीतीहत्यनिर्देशाद्विद्याकालैव मुक्तता । सिद्धाऽतोऽसौ न साध्या स्यादग्निहोत्रादिकार्यवत् ॥३३॥
प्रत्यग्याथात्म्यविज्ञानमात्रव्युत्पत्तिसिद्धये । तस्मादिति श्रुतिर्वक्ति ह्युत्पत्त्यादिनिवृत्तये ॥३४॥

ब्रह्मभावसर्वभावयोरविशेषः

अविद्यातज्जनिर्मुक्तौ ब्रह्म ब्रह्माभवत्स्वतः । सर्वः कृत्स्नस्तथा पूर्णः शब्दाः पर्यायवाचकाः ॥३५॥

शुद्धाशुद्धयोरध्याससंबन्धाल्लक्ष्यलक्षणत्वेन प्रत्यग्ब्रह्मणोरैक्यमुक्तमिदानीमेकेनैव पदेनैकरस्यार्थसिद्धेरलं पदान्तरेणेत्याशङ्क्याऽऽह—निवर्त्येति । यथाऽमानित्वमदम्भित्वमहिंसेत्यादिपदस्य निवृत्त्युपलक्षितस्वरूपमात्रनिष्ठत्वेऽपि निवर्त्यमानदम्भादिभेदाद्भिन्नार्थता तथा ब्रह्मार्थे पारोक्ष्यमहमर्थे सद्वयत्वमिति निवर्त्यभेदात्तत्त्वंशब्दपर्याययोर्ब्रह्माहंशब्दयोरर्थभेदान्न पदान्तरानर्थक्यमित्यर्थः । ब्रह्माहमर्थयोस्तद्वाचकयोः शब्दयोरिति यावत् । अस्तु तर्हि भिन्नार्थतैव तयोरित्याशङ्क्याऽऽह—तयोरिति । लक्ष्ययोस्तत्त्वमर्थयोरैक्याद्वाच्यभेदेऽपि न वस्तुतो भिन्नार्थतेत्यर्थः ॥१४२९॥

निवर्त्यभेदस्तर्हि किंकृत इत्याशङ्क्य तस्याज्ञानकृतत्वोक्त्या लक्ष्यैक्यं साधयति—अनात्मेति । ब्रह्मण्यनात्मत्वस्याऽऽत्मनि चाब्रह्मत्वस्य प्रतिभानहेतावनाद्यज्ञाने वाक्योत्थज्ञानादपनीते परमात्मैव प्रत्यग्भूतो ब्रह्माहंशब्दयोर्लक्ष्योऽर्थो भेदसंसर्गहीनः सन्नखण्डैकरसो भवतीत्यर्थः ॥१४३०॥

विमतं संसृष्टार्थं वाक्यत्वाद्गवानयनवाक्यवदित्याशङ्क्याऽऽह—भेदेति । इहेत्यात्मोक्तिः । न हि तत्र वाक्यस्य भेदः संसर्गोऽन्यनिवृत्तिर्वाऽर्थस्तस्य सर्वस्याऽऽविद्यस्य विद्यापोह्यत्वादतो वाक्यत्वेऽप्यखण्डार्थत्वं प्रकृष्टप्रकाशादिवाक्यवदित्यनैकान्तो हेतुरिति भावः । अहं ब्रह्मेतिसामानाधिकरण्यसिद्धमर्थमुपसंहरति—अहमिति । साक्षादित्यैक्यावगतेरापरोक्ष्यं विवक्ष्यते । इहेति ब्रह्मात्मनोरुक्तिः ॥१४३१॥

श्रौतं ज्ञानं जडमजडं वा ? आद्ये तद्गम्यत्ववदध्यक्षादिगम्यत्वमपि ब्रह्मात्मनः स्याद् द्वितीये तस्य तदभेदान्न विषयविषयितेत्याशङ्क्याऽऽद्यमङ्गीकृत्य परिणामिसाभासा बुद्धिरिष्टा चक्षुरादिजन्या वृत्तिरविद्योत्थशब्दादिविषया न ब्रह्म विषयीकरोतीत्याह—कर्तुरिति । प्रमातृपरिणामस्याऽऽत्मग्राह्यतया तद्ग्राहकत्वमयुक्तं न हि सवितृप्रकाश्यं रूपं सवितारं प्रकाशयतीति वक्तुं हिशब्दः । तर्हि श्रौती दृष्टिरपि दृष्टित्वादितरवन्न ब्रह्म स्पृशेदित्याशङ्क्य श्रौताद्वयप्रत्यङ्मात्रदृष्ट्येतरदृष्टिं तद्विषयं चाविद्यातत्कार्यं निरस्य तद्ब्रह्माऽऽत्मानमद्वयं प्रत्यङ्मात्रं व्याप्नोतीत्याह—तदिति । वाक्योत्थदृष्टिर्हि ब्रह्म स्पृशति तदौपनिषदत्वश्रुतेर्दृष्ट्यन्तरं तु नैवं "पराञ्चि खानि"तिश्रुतेरिति भावः ॥१४३२॥

ज्ञानफलमज्ञानध्वस्त्या पूर्णात्मनाऽवस्थानं कैवल्यं न ज्ञानकालभावि श्रौतफलत्वात्कर्मफलवदित्याशङ्क्य श्रुतिविरोधमाह—अस्मीतीति । मुक्तेर्ज्ञानेन तुल्यकालत्वे फलितमाह—अत इति । तत्र वैधर्म्यदृष्टान्तमाह—अग्निहोत्रादीति ॥१४३३॥

न केवलं पदविरोधादनुमानानुदयः किंतु तस्मादित्याद्यनन्तरवाक्यविरोधादपीत्याह—प्रत्यगिति । प्रतीचो याथात्म्यस्य विशिष्टं वाक्योत्थज्ञानमात्रमेव व्युत्पत्तिस्ततः सिद्धिर्मुक्तिरुत्पत्तिनाशादिबन्धध्वस्तिरूपा तस्या ज्ञानकाले प्राप्तिद्योतनार्थं तस्मादित्यादिवाक्यमाह श्रुतिरतो न कालान्तरभावि कैवल्यमित्यर्थः ॥१४३४॥

फलवचनार्थमुपसंहरति—अविद्येति । स्वतो ब्रह्मैवाविद्यातत्कार्याभ्यामब्रह्मवदधिगतं विद्यया तन्निवृत्तौ स्वाभाविकं ब्रह्मैवाभवदित्यर्थः । सर्वभावो ज्ञानफलं श्रूयते न ब्रह्मभावस्तत्कथं ब्रह्माभवदित्युक्तमत आह—सर्व इति । सर्वशब्दस्य ब्रह्मपर्यायित्वात्तद्भाव एव ज्ञानफलमुच्यत इत्यर्थः ॥१४३५॥

१. प्रमातृपरिणामस्य प्रमातृस्वरूपप्रविष्टान्तःकरणपरिणामस्य ।

आत्माविद्यासमुत्थानामात्मयाथात्म्यमात्रतः । कर्मवत्काङ्क्षते ज्ञानं विशिष्टं नाधिकारिणम् ॥३६॥

ज्ञानस्य कर्मवत् विशिष्टाधिकार्यनपेक्षा

देवादीनामतो यो यो यथोक्तेनैव वर्त्मना । प्रत्यबुध्यत तद्ब्रह्म स स तदभवत्परम् ॥३७॥

प्रत्यग्बोधातिरेकेण साधनान्तरनिह्नुतौ । एवेत्यवधृतिर्ज्ञेया ज्ञानादेव ततो भवेत् ॥३८॥

आत्मयाथात्म्यविज्ञानाद्यदन्यत्साधनान्तरम् । ज्ञानाभावोऽथवा सर्वमविद्यैवेति निश्चितिः ॥३९॥

मनुष्या यदमन्यन्त साध्वेवातस्तदीरितम् । न कश्चिदपि दोषोऽत्र पूर्वोक्तोऽतः प्रसज्यते ॥४०॥

प्रत्यक्तयैव संबन्धादात्मनोऽनात्मवस्तुना । विशिष्टेनाविशिष्टस्य क्लृप्तेनाकल्पितात्मनः ॥४१॥

यतोऽतो लोकबुद्ध्यैव देवादीनामितीर्यते । तुल्यो देवादिसंबन्धो ब्रह्मणो मशकादिभिः ॥४२॥

तद्धैतत्पश्यन् इत्यादेरवतरणम्

अन्तरेणाधिकारं चेन्नाऽऽत्मबोधस्य संभवः । न जन्मान्तरसंस्काराद्वामदेवस्य तद्भवेत् ॥४३॥

सर्वशब्दस्य ब्रह्मपर्यायत्वे युक्तिमाह—आत्मेति । यथा रज्ज्वविद्याजनितभुजंगादीनां रज्जुरेव तत्त्वं तथा ब्रह्माविद्याप्रसूतप्रपञ्चस्य ब्रह्ममात्रतया प्रपञ्चविषयः सर्वशब्दो ब्रह्मशब्दस्य पर्यायो युक्त इत्यर्थः । "तद्यो यो देवानामि"त्यादिवाक्यतात्पर्यमाह—कर्मवदिति । यथाऽग्निहोत्रादि मनुष्यत्वजातिमन्त्वमर्थित्वादिविशेषणमधिकारिणमपेक्षते न तथा ज्ञानमर्थित्वादिविशेषणस्य साधारणत्वेऽपि मनुष्यत्वादिविशेषणमनियतमिति वक्तुमुत्तरं वाक्यमित्यर्थः ॥१४३६॥

तदक्षराणि योजयति—देवादीनामिति । अधिकार्यनियमोऽतःशब्दार्थः । यथोक्तेनान्वयादिकृतपदार्थशोधनादिनेति यावत् ॥१४३७॥

एवकारं व्याकरोति—प्रत्यगिति । अवधृतिफलमाह—ज्ञानादिति । साधनान्तराभावाज्ज्ञानादेव मुक्तिरित्यर्थः ॥१४३८॥

मुक्तेर्हेत्वन्तराभावं साधयति—आत्मेति । अन्यदित्यस्याथवेत्यत्र संबन्धः । ज्ञानस्याभावो यस्मिन्निति ज्ञानाभावः कर्म तद्वाऽन्यद्वाऽभ्यासादि सर्वमविद्या न मोक्षहेतुरित्येवकारसामर्थ्यान्निश्चितम् । यद्यपि ब्रह्मज्ञानमविद्याकार्यत्वादुक्तकर्मादिवदविद्यात्मकमेव तथाऽपि स्वविषयभूतप्रत्यगर्थसामर्थ्यात्तस्याविद्यानिवर्तकत्वेन मोक्षहेतुत्वं निर्धारितमित्यर्थः ॥१४३९॥

एवकारार्थमुपजीव्य फलितमाह—मनुष्या इति । यतो ज्ञानमेव मोचकं नान्यदतो ब्रह्मविद्यया सर्वं भविष्याम इति यदमन्यन्त मनुष्यास्तत्तेषामीरितं वचो युक्तमेवेत्यर्थः । कथं पुनरुपोद्घातोक्तेषु दोषेषु विद्यमानेषु तदीयमतमुचितमित्याशङ्क्याऽऽह—न कश्चिदपीति । यतो ज्ञानाद्ब्रह्मभावसंभवो निर्णीतोऽत उपोद्घातोक्तदोषः कश्चिदप्यस्मत्पक्षे नास्तीत्यर्थः ॥१४४०॥

ब्रह्मैवाविद्यया संसरति विद्यया विमुच्यत इत्युक्तत्वाद्देवादीनां विद्याविद्याभ्यां बन्धमोक्षोक्तिस्तद्विरुद्धेत्याशङ्क्य देवादीनामित्यादि लोकदृष्ट्यपेक्षयेत्यादिभाष्यतात्पर्यमाह—प्रत्यक्तयेति । यतः सर्वस्यानात्मनस्तत्त्वमात्मैवातस्तत्र तत्र प्रत्यक्त्वेन तस्य संबन्धादौपाधिकलोकनिष्ठभेदबुद्ध्या देवादीनामित्यात्मभेदमाविद्यमनूद्य तत्तद्रूपेण स्थितब्रह्मचैतन्यस्यैव विद्याविद्याभ्यां बन्धमोक्षौ श्रुत्योच्येते न परिच्छिन्ने जीवशब्दिते प्रतिबिम्बादौ । देवादौ कल्पिते बन्धमोक्षौ कल्पेते कल्पनाया वस्तुनिष्ठत्वात्तन्न पूर्वापरविरोध इत्यर्थः । आत्मनोऽनात्मना प्रत्यक्त्वेन संबन्धे प्रतीचोऽकल्पितत्वमितरस्य तस्मिन्क्लृप्तत्वं च हेतुरनात्मनः कल्पितत्वेऽन्यस्याकल्पितत्वे च वैशिष्ट्यमवैशिष्ट्यं च हेतुरिति द्रष्टव्यम् । देवादीनामुत्तमत्वात्तत्र प्रत्यक्त्वेन ब्रह्मणः संबन्धेऽपि नाधमेषु मशकादिषु सोऽस्तीति तदीयसर्वात्मत्वविरोधमाशङ्क्याह—तुल्य इति । यो ब्रह्मणो देवादिभिः संबन्धः स मशकादिभिरपि तुल्यः सर्वत्र स्वरूपत्वाविशेषादौपाधिकावेवोत्कर्षनिष्कर्षौ न वास्तवाविति भावः ॥१४४१-१४४२॥

तद्धैतदित्याद्यवतारयितुं शङ्कयति—अन्तरेणेति । विमतं विशिष्टाधिकार्यपेक्षं विशिष्टपुमर्थहेतुत्वात्कर्म-

**श्रुत्युक्तार्थस्य वा स्थेम्ने मन्त्रोदाहृतिरिष्यते । प्रमाणान्तरसंवादात्पुंसां विश्वासधीर्यतः ॥४४॥**
**अव्यावृत्ताननुगतं तद्वैतत्प्रत्यगात्मनि । तद्दर्शनादृषिः साक्षात्पश्यन्सर्वं प्रपन्नवान् ॥४५॥**
**सूक्तादिज्ञापनार्थाय ह्यहं मनुरितीरणम् । ऐकात्म्यं सर्वभूतेषु प्रतीचोऽसौ ददर्श ह ॥४६॥**
**तत्पश्यन्नित्यनेनात्र ब्रह्मविद्या प्रदर्श्यते । अहमासं मनुरिति विद्यायाः फलमुच्यते ॥४७॥**
**पश्यन्प्रतिपेद इति प्रयोगादवसीयते । विद्याकालैव कृत्स्नाप्तिरिति तन्मोहहानतः ॥४८॥**
**ब्रह्मप्राप्त्यन्तरायस्य प्रत्यक्संमोहमात्रतः । प्रत्यग्विज्ञानतो ध्वस्तेस्तत्प्राप्तिर्नान्यसाधना ॥४९॥**
**अविद्याध्वंसमात्रेण पुमर्थस्य समाप्तितः । तावताऽवसितेर्विद्या स्वार्थैवेति विनिश्चयः ॥५०॥**
**सकृदात्मप्रसूत्यैव निरुणद्ध्यखिलं भवम् । ध्वान्तमात्रनिरासेन न ततोऽन्याऽन्यथा मतिः ॥५१॥**
**देशकालाद्यसंबन्धाद्देशादेर्मोहकार्यतः । नानुत्पन्नमदग्धं वा ज्ञानमज्ञानमस्त्यतः ॥५२॥**

वदन्यथा तस्यैवानुपपत्तिरित्यर्थः । तदुत्तरत्वेन मन्त्रमवतारयति—नेत्यादिना । जन्मान्तरानुष्ठितान्तरङ्गबहिरङ्गसाधनसंस्कृतबुद्धेर्वामदेवस्य तत्सदृशस्य च पुंसो यथोक्तसंस्कारात्तद्ब्रह्मज्ञानं भवत्यतो न तस्य मनुष्याधिकार्यपेक्षेत्यर्थः ॥१४४३॥

विमतं देवादीन्नाधिकरोति विहितसाधनत्वात्संमतवदित्याशङ्क्य मन्त्रब्राह्मणविरोधान्मैवमित्याह—श्रुतीति । ब्रह्मविद्या सर्वभावफलेति श्रुत्यर्थे श्रुतेरेव निश्चायकत्वात्किं मन्त्रेणेत्याशङ्क्याऽऽह—प्रमाणान्तरेति । अतो मन्त्रोदाहृतिरर्थवतीति शेषः ॥१४४४॥

मन्त्रस्थपदयोरर्थमाह—अव्यावृत्तेति । तदव्यावृत्तमेतदननुगतं ब्रह्म प्रसिद्धमित्यर्थः । पश्यन्नित्यादेरर्थमाह—प्रत्यगिति । तस्य ब्रह्मणो दर्शनादृषिः सन्वामदेवनामा कश्चित्प्रत्यगात्मनि तद्ब्रह्म साक्षात्पश्यन्पूर्णं ब्रह्मैवाऽऽप्नवानिति योजना ॥१४४५॥

अहं मनुरित्यादिवाक्यं वामदेवसूक्तस्याऽऽदिं ज्ञापयितुमित्याह—सूक्तेति । तस्य सूक्तादित्वमृग्वेदिनां प्रसिद्धमिति वक्तुं हिशब्दः । अवतारितस्य सूक्तस्यार्थमाह—ऐकात्म्यमिति । ऋषिर्वामदेवः सर्वनामार्थः । ज्ञानान्मुक्तिरित्यस्यात्राऽऽदेयत्वमिति द्योतयितुं हेति निपातः ॥१४४६॥

अथ मन्त्रं त्रेधा विभज्य व्याचष्टे—तदित्यादिना । प्रकृतं वाक्यं सप्तम्यर्थः ॥१४४७॥

विद्याफलयोर्व्यवधानाभावे गमकमाह—पश्यन्निति । अन्यथा शतुरयोगादिति भावः । ननु ज्ञानादज्ञाननिवृत्तिरेव तत्काले भवति न कृत्स्नाप्तिरिति चेन्न तद्व्यवधिभूतमोहनिवृत्त्या कृत्स्नाप्तिरूपब्रह्मप्राप्तेर्विद्याकालत्वादित्याह—तन्मोहेति ॥१४४८॥

मोहनिवृत्त्या ब्रह्मप्राप्तिश्चेज्ज्ञानादेवासहायात्तद्भावात्तत्कालैव सा युक्ता न चाज्ञानमात्रं तत्प्राप्तिव्यवधानं देशादिनाऽपि तद्योगादतो न केवलज्ञानान्मुक्तिरित्याशङ्क्याऽऽह—ब्रह्मेति । देशादेरपि स्वरूपत्वाद्ब्रह्मणो न तेन व्यवधिरिति भावः । तत्प्राप्तिरित्यत्र तच्छब्दो ब्रह्मविषयः ॥१४४९॥

आत्मज्ञानस्याऽऽज्यादिज्ञानवत्पारार्थ्यान्न स्वतन्त्रस्य पुमर्थहेतुता तत्कथमव्यवहितफलतेत्याशङ्क्याऽऽह—अविद्येति । तावता यथोक्ताविद्याध्वस्तिहेतुत्वमात्रेण विद्यायाश्चरितार्थत्वादित्यर्थः ॥१४५०॥

ज्ञानादज्ञानध्वस्तावपि न पुमर्थसिद्धी रागादिसंभवादतोऽभ्यासापेक्षेत्याशङ्क्याऽऽह—सकृदिति । स्वरूपलाभादेव क्षणमात्रेण सकार्यमज्ञानं निरस्यति ज्ञानमित्यत्र हेतुमाह—नेति । अज्ञानेतररागाद्यभावात्तद्ध्वंसि ज्ञानं तस्यापि ध्वंसकमित्यर्थः ॥१४५१॥

घटज्ञानात्तदज्ञानवद्ब्रह्माज्ञानमपि सर्वात्मना न निवर्तते अतोऽऽवशिष्टाज्ञानध्वंसार्थमन्यापेक्षेत्याशङ्क्य ब्रह्मणो घटादिवैषम्यमाह—देशेति । घटादि देशादिना परिच्छिद्यते नैवं ब्रह्म देशादेर्मोहकार्यत्वेन तन्निष्ठस्य परिशुद्धे ब्रह्मण्यसंबन्धादित्यर्थः । ब्रह्मणो घटादिवैषम्ये तज्ज्ञानस्यापि तज्ज्ञानाद्वैषम्यसिद्धिरित्याह—नानुत्पन्नमिति । अतो ज्ञानादिति यावत् ॥१४५२॥

नाबाधित्वेह बाध्यार्थं बाधको बाधकात्मताम् । लभते मेययाथात्म्यहेतुमात्रव्यपेक्षतः ॥५३॥
यतोऽतोऽविद्यातज्जानां बाधितत्वात्प्रबोधतः । सकृदेव च मायोगान्नोर्ध्वं तच्चोदनेष्यते ॥५४॥
सम्यग्ज्ञानशिखिप्लुष्टमोहतत्कार्यरूपिणः । सकृन्निवृत्तेर्बाध्यस्य किं कार्यमवशिष्यते ॥५५॥
ध्वान्तादिघस्मरे प्रत्यक्चैतन्यात्मैकनिष्ठिते । प्रत्यर्थिनि स्थितेऽनात्मधियां स्यात्सत्यता कुतः ॥५६॥
अज्ञातमिथ्याविज्ञाततत्त्वमात्रावलम्बिना । ज्ञानेन किं न विज्ञातं वद किं वा न बाधितम् ॥५७॥

तदिदमप्येतर्हि—इत्यादेर्विवरणम्

सर्वापत्तिरियं युक्ता देवादीनां महात्मनाम् । अस्मदादेस्तमस्वित्वान्न संभाव्येति चेन्न तत् ॥५८॥
एतर्ह्यपि तु तद्ब्रह्म यो यः साक्षादबुध्यत । स एव तदभूद्यस्मान्नातोऽभिजनकारणम् ॥५९॥
अप्येतर्हि यथान्यायं यो वेदाऽऽत्मानमद्वयम् । स इदं सर्वमात्मैव भवत्यज्ञानहानतः ॥६०॥
न हीहोत्कृष्टसत्त्वेषु देवादिषु परात्मनः । नापि चात्यन्तमूढेषु विशेषः कश्चिदीक्ष्यते ॥६१॥
प्रत्यक्तत्त्वधियो वाऽस्ति स्वतो[1]बुद्धैकताऽऽत्मनः । श्रेयांसि बहुविघ्नानीत्याशङ्क्यैतदथोच्यते ॥६२॥

ब्रह्मज्ञानस्वरूपालोचनायामपि सर्वात्मना तदात्माज्ञानध्वंसीत्याह—नेत्यादिना । इहेत्यात्मोक्तिः । बाध्योऽर्थोऽज्ञानं तत्कार्यं च । ज्ञानस्य बाधकत्वे सहायसापेक्षत्वमाशङ्क्याऽऽह—मेयेति । आत्मस्वरूपहेतुमात्रापेक्षत्वात्तज्ज्ञानस्य नान्यापेक्षया फलवत्त्वमित्यर्थः ॥१४५३॥

यस्मादात्मज्ञानं तद्गताशेषाज्ञानतत्कार्यध्वंसि तस्मात्तत्र मानसंबन्धादुत्पन्नज्ञानाद्बाध्यमात्रस्य सकृदेव ध्वंसात्पुमर्थसमाप्तेर्नोर्ध्वं मानाद्यपेक्षेति फलितमाह—यत इति । ज्ञानादूर्ध्वं मानाद्यपेक्षाभावेऽपि मोक्षार्थं कर्तव्यान्तरमस्तीत्याशङ्क्याऽऽह—सम्यगिति । अथवा ज्ञानादज्ञानतत्कार्यनिवृत्तावपि न पुरुषार्थपरिसमाप्तिर्विहितादेव ज्ञानात्तद्भावादित्याशङ्क्याऽऽह—नोर्ध्वमिति । तत्र हेतुमाह—सम्यगिति ॥१४५४-५५॥

बाध्यस्य सम्यग्ज्ञानान्निवृत्तावप्यबाध्यानामनात्मबुद्धीनां ध्वंसार्थं कार्यापेक्षेत्याशङ्क्याऽऽह—ध्वान्तादीति । ज्ञानस्याज्ञानतज्जध्वंसशीलत्वे हेतुमाह—प्रत्यगिति । प्रत्यक्त्वमजडत्वमात्मत्वमद्वयत्वं च ज्ञेये वस्तुन्यस्ति तस्मिन्नेवावस्थिते सम्यग्ज्ञाने परिपन्थिनि सति पराचीनजडानात्मद्वैतबुद्धीनां नाबाध्यत्वाशङ्केत्यर्थः ॥१४५६॥

सम्यग्ज्ञानस्य न प्रत्यर्थित्वं बोधकत्वेनाबाधकत्वादित्याशङ्क्योभयमपि तत्रास्तीत्याह—अज्ञातेति । अकारकमपि ज्ञानं बोधकं बाधकं चेष्टं न चाऽऽत्मनि बोधैकरसे तद्भेदोऽस्तीत्यर्थः ॥१४५७॥

तद्धैतदित्यादि व्याख्याय तदिदमित्याद्यवतारयितुं शङ्कयति—सर्वापत्तिरिति । अस्तु तेषां माहात्म्यं साधनाधीना सर्वापत्तिरस्मदादेरपि स्यादित्याशङ्क्याऽऽह—अस्मदिति । तमस्वित्वात्तद्धेत्वसत्त्वात् । तदुत्तरत्वेन वाक्यमादत्ते—न तदिति ॥१४५८॥

तदक्षराणि व्याकरोति—एतर्हीति । तत्त्वसाक्षात्कारस्यैव मोक्षहेतुत्वं न परोक्षधीमात्रस्येति विवक्षित्वा साक्षादित्युक्तम् । नाऽऽभिजात्यकृता मुक्तिः किंतु ज्ञानाधीनेत्यर्थः । अयमेव तुशब्दार्थः ॥१४५९॥

प्राप्तप्राप्तव्यभावेनाऽऽत्मब्रह्मणोर्भेदमाशङ्क्योक्तं व्यनक्ति—अप्येतर्हीति । पूर्वकालवदित्यपेरर्थः । यथान्यायमुक्तान्वयादिक्रमेणेत्यर्थः । सर्वभावस्याऽऽत्मत्वे सदाभावात्कुतो ज्ञानाधीनतेत्याशङ्क्याऽऽह—अज्ञानेति ॥१४६०॥

आभिजात्यं मुक्तिं प्रत्यहेतुरिति व्यक्तीकुर्वन्न हीत्यादिभाष्यं विभजते—न हीति । इहेति शास्त्रग्रहणम् । वस्तुनस्तज्ज्ञानस्य वा सर्वत्राविशेषे हेतुमाह—स्वत इति । स्वभावतो बोधैकरसत्वाद्वस्तुनस्तत्र तज्ज्ञाने वा वस्तुतो न विशेषोऽस्तीत्यर्थः । वाक्यान्तरं शङ्कोत्तरत्वेनाऽऽदत्ते—श्रेयांसीति । ब्रह्मविद्याफले विघ्नमाशङ्क्य तन्निरासार्थं तस्य हेत्यादिवाक्यमित्यर्थः । तस्य तन्निरसनसमर्थताद्योतनार्थमथेत्युक्तम् ॥१४६१-६२॥

---

१. स्वतो बुद्धैकतात्मनः—अत्र स्वतोबाधैकरसात्मनः इति टीकापाठो दृश्यते ।

"तस्य ह न देवाश्च" इत्यादेः भाष्यद्वयेन विवरणम्

तस्य ज्ञातात्मतत्त्वस्य प्रध्वस्ततमसो यतेः । इन्द्रादयोऽपि नैवालं कैवल्याप्तिनिवारणे ॥६३॥
देवाद्यैश्वर्यविषयव्यतिक्रान्तत्वहेतुतः । कैवल्याभूत्या उद्युक्ता ईश्वरा अपि नेशते ॥६४॥
ईशेशितव्यसंबन्धः प्रत्यगज्ञानहेतुजः । सम्यग्ज्ञानात्तमोध्वस्तावीश्वराणामपीश्वरः ॥६५॥
ईश्वराणामनैश्वर्यं कस्माद्ब्रह्मविदीति चेत् । आत्मा ह्येषामितीत्याह तद्धेतुप्रतिपत्तये ॥६६॥
भोज्यत्वेन जगत्कृत्स्नं कर्मविद्यादिसाधनैः । उपात्तं तदभुक्त्वा तु कैवल्यं लभते न चेत् ॥६७॥
इत्याशङ्कापनुत्त्यर्थं परो ग्रन्थोऽवतार्यते । कैवल्यावाप्तिविघ्नाय नालं देवा अपीश्वराः ॥६८॥
अविद्याविषये यस्मात्तेषामधिकृतिः स्मृता । न तु प्लुष्टात्मयाथात्म्यविज्ञानतमसामसौ ॥६९॥

देवा न विघ्नं कुर्युरित्यप्राप्तप्रतिषेध इति शङ्का

ब्रह्मविद्याफलप्राप्तौ विघ्नं कुर्वन्ति देवताः । इत्यत्र किंनिमित्तेयमाशङ्केत्यभिधीयते ॥७०॥
युक्ताऽऽशङ्का यतो मर्त्या देवान्प्रत्यृणिनः श्रुतेः । पशुलोकत्ववाक्याच्च पारतन्त्र्याच्च कर्मिणः ॥७१॥

तद्व्याचष्टे—तस्येति । ज्ञानयोग्यमधिकारिणमाह—यतेरिति । अन्येषां मुक्तौ विघ्नाचरणे शक्तिर्दूरापास्तेत्यपेरर्थः ॥१४६३॥

विदुषो विद्याफलाप्तौ विघ्नकरणे देवादीनां न शक्ति रित्यत्र हेतुमाह—देवादीति । विदुष इत्यध्याहारः । उद्युक्ता इत्यत्रापिर्योज्यः ॥१४६४॥

देवादीनामीश्वरत्वमाश्रित्योक्तं तदेतद्विद्वद्विषये नास्तीत्याह—ईशेति । ईश्वराणां देवादीनामिति यावत् । विद्वानिति शेषः ॥१४६५॥

वाक्यान्तरमुत्थापयितुं पृच्छति—ईश्वराणामिति । तद्विषये तेषां नानैश्वर्यं युक्तमीश्वरत्वविरोधादित्यर्थः । देवादीनां ब्रह्मविद्विषये स्वातन्त्र्याभावे हेतुसिद्ध्यर्थमात्मा हीत्याद्याह श्रुतिरतो युक्तं तद्विषये तेषामनैश्वर्यमित्याह—आत्मेति । न चैतावता तदैश्वर्यं विरुध्यते तस्यान्यत्र सावकाशत्वादिति हिशब्देन द्योत्यते ॥१४६६॥

उत्कृष्टं श्रेयो मोक्षस्तत्प्राप्तौ प्रत्यूहः संभाव्यते "श्रेयांसि बहुविघ्नानि भवन्ति महतामपी"तिन्यायादित्याशङ्क्य तत्परिहर्तुं तस्य हेत्याद्यवतार्य भाष्यार्थानुसारेण व्याख्यातम् । इदानीं भर्तृप्रपञ्चव्याख्यानुसारेणापि व्याख्यातुं भोज्यतया कृत्स्नं जगदुपात्तमित्यादितद्भाष्योक्तां शङ्कामाह—भोज्यत्वेनेति । उपासनादिसाधनसंपदा भोज्यत्वेन आर्जितस्य भोगादृते मुक्तिरयुक्ता तदार्जनसाधनविरोधान्न च सर्वमपि जगद्भुक्त्वा पुंसो मुक्तिरिति युक्तं तद्भोगस्य पुरुषायुषेणापि दुष्करत्वादित्यर्थः ॥१४६७॥

तत्रोत्तरत्वेन वाक्यं पातयति—इत्याशङ्केति । तद्योजयति—कैवल्येति ॥१४६८॥

द्वैतविषये हि तेषामधिकार इति हेतुभाष्यार्थमाह—अविद्येति । अयं पुनरद्वैतावस्थितो भवतीति भाष्यार्थमाह—न त्विति । तद्विषये नाधिकारो देवादीनां तस्य तैरविभागान्न हि विदुषो जगदशेषमपि भुक्त्वा मुक्तिरिति युक्तं सहेतुकस्य तस्य तत्त्वज्ञानान्निवृत्त्या तस्यासंभवादित्यर्थः ॥१४६९॥

भाष्यद्वयानुरोधेन तस्य हेत्यादि व्याख्याय शङ्कयति—ब्रह्मेति । तत्र विद्याफलाप्तौ देवता विघ्नं कुर्वन्तीत्ययुक्ताऽऽशङ्का निमित्ताभावादतोऽप्राप्तनिषेधः श्रुत्या क्रियत इत्यर्थः । परिहरति—अभिधीयत इति । 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायत' इतिश्रुतेर्मनुष्या देवान्प्रत्यृणिनो गम्यन्ते तथा चाधमर्णानिवोत्तमर्णास्ते तान्प्रति विघ्नं कुर्युरित्यर्थः । यथा पशुरेवं स देवानामिति मनुष्याणां पशुत्वश्रवणात् । "अथो अयं वा आत्मा सर्वेषां भूतानां लोक" इति च तेषां सर्वप्राणिभोग्यत्वश्रुतेः कर्मिणां पारतन्त्र्याद्देवादयस्तद्विघ्नकरा भवन्तीत्याह—पश्विति । विद्याफलप्राप्तौ देवादीनां विघ्नाचरणे हेत्वन्तरं समुच्चेतुमेकश्चकारः । पशुत्वं लोकत्वं च देवादीन्प्रति मनुष्याणां विवक्षितमेव तत्कार्यस्य देवादिषु दर्शनादिति दर्शयितुं द्वितीयश्चकारः ॥१४७०-१४७१॥

ब्रह्मवित्त्वे च पारार्थ्यं देवादीन्प्रति हीयते । तस्य ब्रह्मतमोहेतोस्तन्निवृत्तौ निवर्तते ।।७२।।
अप्रियारिष्टिवाक्याभ्यामयमर्थोऽवसीयते । तस्माद्विद्याफलावाप्तौ विघ्नं कुर्वन्ति देवताः ।।७३।।

कर्मफलप्राप्तौ देवानां विघ्नकरणशङ्का

नन्वेवं तर्ह्यविश्रम्भो ह्यदृष्टफलसंपदि । प्राप्तोऽभ्युदयमोक्षार्थसाधनव्यापृताविह ।।७४।।
तथेश्वरोऽपि नो विघ्नं कुर्वन्केन निषिध्यते । कालमन्त्रौषधादीनामचिन्त्या शक्तिरिष्यते ।।७५।।
कर्ममन्त्रौषधितपःकालादीनां च विद्यते । महती शक्तिरित्यत्र युक्तमाशङ्कितुं फले ।।७६।।
देवादयः स्वतन्त्रत्वात्फलप्राप्तिविघातयोः । सर्वं कुर्युरनाश्वासस्तस्मात्प्राप्नोति कर्मसु ।।७७।।

उक्तशङ्कानिरासः

नैवं सर्वपदार्थानां नियतादानकारणात् । जगद्वैचित्र्यदृष्टेश्च स्वभावे तदसंभवात् ।।७८।।
सुखादिफलदं कर्मेत्यस्मिन्पक्षे व्यवस्थिते । श्रुतिन्यायादिसंसिद्धेर्नातो विघ्नकृतः सुराः ।।७९।।
कर्मणैव स्वसिद्धयर्थं तेषां क्रोडीकृतत्वतः । नाऽऽत्मानं लभते कर्म देवेशाद्यनपेक्षि सत् ।।८०।।

मनुष्याणां देवादीन्प्रति पश्वादिभावश्चेद्ब्रह्मवित्त्वे सत्यपि तेषां तद्भावात्पारतन्त्र्यानिवृत्तेर्देवादयस्तान्प्रत्यपि विघ्नकराः स्युरित्याशङ्क्याऽऽह—ब्रह्मवित्त्वे चेति । पारार्थ्यस्याविद्यात्वाद्विद्यया ध्वस्तेरिति हेतुमाह—तस्येति । अथ वा मनुष्याणां देवादीन्प्रति पारतन्त्र्ये ब्रह्मवित्त्वेऽपि तदनिवृत्तेर्न ते ब्रह्मविद्यायां विघ्नमाचरेयुरित्याशङ्क्याऽऽह—ब्रह्मवित्त्वे चेति । पारतन्त्र्यस्याज्ञानकृतत्वाज्ज्ञानादज्ञाननिवृत्तौ निवृत्तेरित्याह—तस्येति ।।१४७२।।

ब्रह्मज्ञाने पारतन्त्र्यहानिरित्यत्र मानमाह—अप्रियेति । "तस्मादेषां तन्न प्रियं" "सर्वाणिभूतान्यरिष्टिमिच्छन्ती"तिवाक्याभ्यां ज्ञानात्पारतन्त्र्यध्वस्तिः सूचितेत्यर्थः । यद्वा देवादयो मनुष्याणां ब्रह्मविद्याप्रवृत्तिं प्रतिबध्नन्तीत्यत्र हेत्वन्तरमाह—अप्रियेति । फलितमाह—तस्मादिति । उक्तहेतुबलात्सामर्थ्याच्चेत्यर्थः ।।१४७३।।

सामर्थ्याच्चेद्विद्याफलाप्तौ तेषां विघ्नकरत्वं तर्हि कर्मफलाप्तावपि स्यादित्यतिप्रसङ्गं शङ्कते—नन्विति । सप्तमीत्रयं समानाधिकरणम् । अविश्रम्भो विश्वासाभावो देवादीनां तत्र विघ्नोत्पादे सामर्थ्यादित्यर्थः । अयमेव हिशब्दार्थः ।।१४७४।।

सामर्थ्याद्विघ्नकर्तृत्वेऽतिप्रसक्त्यन्तरमाह—तथेति । देवादिवदिति यावत् । अपिशब्दः समुच्चयार्थः । नोऽभ्युदयहेतुषु कर्मसु प्रवृत्तानामित्यर्थः । विघ्नं तत्फलप्राप्ताविति शेषः । अतिप्रसङ्गान्तरमाह—कालेति ।।१४७५।।

उक्तानुवादेन फलमाह—कर्मेति । अत्रेति कर्मनिमित्तफलोक्तिः । सप्तमीद्वयं समानाधिकरणम् ।।१४७६।।

चोद्यमुपसंहरति—देवादय इति । सर्वं निग्रहमनुग्रहं वा स्वेच्छाधीनमिति यावत् । तेष्वनाश्वासे कर्मकाण्डप्रामाण्यासिद्धिरिति भावः ।।१४७७।।

कस्येदं चोद्यं स्वभाववादिनामस्वभाववादिनां वेति विकल्प्याऽऽद्यं दूषयति—नैवमिति । दध्याद्युत्पिपादयिषया दुग्धाद्यादानदर्शनात्प्राणिनां सुखदुःखादितारतम्यदृष्टेश्च न स्वभाववादो युक्तस्तत्र नियतहेत्वादानादेरयोगादतो जगत्कर्मफलमित्यर्थः ।।१४७८।।

द्वितीयं प्रत्याह—सुखादीति । "पुण्यो वै पुण्येन कर्मणा" "कर्म हैवे"त्यादिः श्रुतिः । जगद्वैचित्र्यानुपपत्तिर्न्यायः । आदिपदेन "कर्मणा बध्यते जन्तुरि"त्याद्या स्मृतिर्गृह्यते । उक्तश्रुत्यादिप्रमिते यथोक्ते पक्षे स्थिते न कर्मकृतां फलप्राप्तौ देवादयो विघ्नं कुर्वन्तीत्यर्थः । उक्तं च कामसूत्रे—पुरुषकारपूर्वकत्वात्सर्वप्रवृत्तीनामवश्यंभाविनोऽप्यर्थस्योपायपूर्वकत्वादेव न निष्कर्मिणो भद्रमस्तीति ।।१४७९।।

अनुगुणत्वात्कर्मफले देवादयो न विघ्नमाचरन्तीत्यत्र हेतुमाह—कर्मणेति । तमेव हेतुं व्यतिरेकद्वारा साधयति—नेत्यादिना ।।१४८०।।

**फलदानेऽनुलोमत्वान्नामी स्युर्विघ्नकारिणः । यथा कर्म तथेशादि कर्मापेक्ष्यैव सिध्यति ।।८१।।**
**सर्वं सर्वमपेक्ष्यैव संहतत्वात्प्रसिध्यति । प्रधानगुणभावश्च क्वचित्कस्यचिदिष्यते ।।८२।।**
**विघ्नकार्येऽपि चाप्येते नानपेक्ष्य प्रकुर्वते । तत्सामर्थ्याप्रणोद्यत्वात्सर्वेषां सर्वकर्मसु ।।८३।।**

देवकालकर्मादीनां गुणप्राधान्यानियमः

**गुणप्रधानभावश्च देवकालेश्वरादिषु । कर्मस्वनियतो दृष्टो नान्यथा चोपपद्यते ।।८४।।**
**यदैकस्य प्रधानत्वं तदाऽन्यस्याप्रधानता । एवं नृत्यज्जगन्नित्यमतद्वृत्याऽऽत्मनि स्थितम् ।।८५।।**
**गुणप्रधानभावश्च पदार्थानामनन्ततः । क्षेपीयस्त्वाच्च कालस्य दुर्ज्ञेयो मतिविभ्रमात् ।।८६।।**
**कर्मैव कारणं केचित्फलप्राप्तौ प्रचक्षते । दैवमेकेऽपरे कालं स्वभाव इति चापरे ।।८७।।**
**श्रुतयः स्मृतिवादाश्च कर्मप्राधान्यमेव तु । अङ्गीकृत्य प्रदृश्यन्ते प्रवृत्ताः सर्व एव हि ।।८८।।**

देवादीनां कर्मानुगुणत्वान्न ते तत्फले विघ्नं कुर्वन्तीत्येतमर्थं तस्मादित्यादिभाष्यस्याऽऽह—फलेति । **कर्म**स्वरूपसिद्धिहेतुत्वात्तत्फलप्राप्तावनुकूलत्वान्न तत्र देवादीनां विघ्नकरत्वमित्यर्थः । यथा कर्म **देवाद्यपेक्षमेवं तदपि कर्मापेक्षमतो न तत्फले तस्य विघ्नकर्तृतेति हेत्वन्तरमाह—यथेति ।।१४८१।।**

कर्मणो देवादेश्चान्योन्यापेक्षा तेनास्वातन्त्र्यान्न कर्मफले देवादेर्विघ्नकर्तृतेत्युक्त्वा तयोरन्योन्यापेक्षत्वे हेतुमाह—सर्वमिति । एतच्चाग्रे स्फुटीकरिष्यति । कथं तर्हि क्वचित्कस्यचित्प्राधान्यमित्याशङ्क्याऽऽह—प्रधानेति । क्वचित्कार्ये कस्यचित्कर्मादेरिति यावत् । सर्ववादिभिरिष्टेऽर्थे न चोद्यमवतरतीत्यर्थः ।।१४८२।।

देवादेः कर्मापेक्षत्वे हेत्वन्तरमाह—विघ्नेति । विघ्नरूपं यत्कार्यं तत्रापि **कर्मानपेक्ष्य देवादयो न कर्तारः** सर्वेषु कर्मसु क्रियमाणेषु कार्येषु सर्वेषां हेतूनां तत्सामर्थ्यस्यानपोद्यत्वादतो विघ्नकार्येऽपि **कर्मफले कर्मसामर्थ्यस्य** दुर्वारत्वात्तत्र देवादीनां कर्मापेक्षावदन्यत्रापि सर्वत्र तेषां तदपेक्षा वाच्येत्यर्थः ।।१४८३।।

कर्मापेक्षत्वेऽपि तेषां प्राधान्यात्तत्फलप्रतिबन्धकत्वं स्यादित्याशङ्क्य प्रधानगुणभावश्चेत्यत्रोक्तं **प्रपञ्चयति**—गुणेति । कर्मविषये देवादिषु यो गुणप्रधानभावः सोऽनियतो न नियत इति योजना । अथवा **देवादिषु कर्मसु च** यो गुणप्रधानभावः सोऽनियतो दृष्टो नान्यथेति योजनीयम् । अथवा कर्मसु कार्येषु विषयभूतेषु **देवादिषु गुणप्रधान**भाव इति योज्यम् ।।१४८४।।

नियमाभावमुपपादयति—यदेति । न हि बहूनां द्वयोर्वैकस्मिन्कार्ये प्राधान्यं भिन्नमतित्वेन कार्यानुदयप्रसङ्गात् न च गुणप्रधानभावं विनैकमत्यं न चैकस्मिन्कार्ये प्रधानस्यान्यत्रापि तथात्वं दाहावौ प्रधानस्याग्नेः सेचनादावपि तत्प्रसङ्गादिति भावः । अनात्मसु मिथो गुणप्रधानत्वस्यानियमेऽपि चिदात्मनि प्राधान्यमितरत्र गुणतेति नियममाशङ्क्याऽऽह—एवमिति । न हि वस्तुतोऽद्वये गुणप्रधानत्वमस्ति कल्पितं त्वविरुद्धमिति भावः । अथवा यथोक्तस्य गुणप्रधानभूतस्य जगतः स्वातन्त्र्यमात्मनि गुणप्रधानभावहीने तदयोगादित्याशङ्क्याऽऽह—एवमिति ।।१४८५।।

तस्यानियमेऽपि यस्य यस्मिन्प्रधानत्वं गुणत्वं वा स तथैव सर्वैः किमिति न गृह्येतेत्याशङ्क्याऽऽह—गुणेति । असंख्यानामपि भावानां पर्यायेण गुणप्रधानत्वं शक्यं ज्ञातुमित्याशङ्क्याऽऽह—क्षेपीयस्त्वादिति । पुरुषायुषोऽल्पत्वादित्यर्थः । गुणप्रधानत्वस्य दुर्ज्ञानत्वे हेत्वन्तरमाह—मतीति ।।१४८६।।

भ्रान्तिहेतुविप्रतिपत्तिमाह—कर्मेति । एवकारो हेत्वन्तरनिरासार्थः । केचिदिति **मीमांसकग्रहणम्** । "दैवमेव परं मन्ये पौरुषं तु निरर्थकमि"तिन्यायेन देवताकाण्डीयमतमुक्तं दैवमिति । **ज्योतिःशास्त्रविदामङ्गीकारं** दर्शयति—अपर इति । स्वभाववादस्तु लोकायतादिभिरङ्गीकृतः ।।१४८७।।

कथं तर्हि निश्चयस्तत्राऽऽह—श्रुतय इति । हेत्वन्तराणामपि फलप्राप्तौ गुणत्वेनाङ्गीकारं दर्शयितुं **तुशब्दः** । कर्मप्राधान्यस्य प्रमाणसिद्धत्वेनोपादेयत्वं वक्तुं हिशब्दः ।।१४८८।।

पुण्यः पुण्येन भवति पापः पापेन कर्मणा । वचांस्येवं सुबहुशो लक्ष्यन्ते शास्त्रभूमिषु ।।८९।।
यद्यप्येषां स्वविषये प्राधान्यं कस्यचित्क्वचित् ।
अप्राधान्यं तदन्येषां तथाऽपि तु न कर्मणाम् । फलप्राप्तावहेतुत्वं शास्त्रन्यायावधारणात् ।।९०।।

विद्याफले देवानां विघ्नकरणासामर्थ्यम्

कर्मणः फलसंप्राप्तिरप्राप्तिश्चेह येक्ष्यते । साद्गुण्यविगुणत्वाभ्यां सा स्यात्कर्मण एव च ।।९१।।
विघ्नं कुर्वन्ति नो देवा विद्योत्थफलसंगतौ । उक्तं यदपनुत्त्यर्थं तत्र प्रतिविधीयते ।।९२।।
अविद्याहानमात्रत्वात्कैवल्याप्तिफलात्मनः । तत्प्राप्तेर्ज्ञानकालत्वान्नालं विघ्नाय देवताः ।।९३।।
चक्षूरूपाभिसंबन्धसमकाला यथेष्यते । रूपाभिव्यक्तिरेवं स्यादविद्याध्वस्तिरात्मनः ।।९४।।
यथास्थितात्मयाथात्म्यज्ञानजन्मातिरेकतः । न तत्तमोनिवृत्तिः स्यात्तदुत्थस्य च वस्तुनः ।।९५।।
सर्पात्मना गृहीतायां न दण्डादीक्ष्यते स्रजि । प्रतीच्येकतनुग्राह्ये तदन्यन्न तथेक्ष्यते ।।९६।।
अन्योन्यव्यभिचारित्वमज्ञानेऽपि ह्यनात्मनाम् । किमु विध्वस्तनिःशेषघनाज्ञानेऽन्तरात्मनि ।।९७।।

श्रुतीरुदाहरति—पुण्य इति । "धर्मरज्ज्वा व्रजेदूर्ध्वमि"त्यादिस्मृतिवचनानि श्रुत्यनुसारीणि विवक्षन्नाह—वचांसीति । दर्शितवचनसदृशानि वचनान्तराण्यपि श्रौतस्मार्तानि द्रष्टुं योग्यानि सन्तीत्याह—एवमिति ।।१४८९।।

सूर्योदयदाहसेचनादौ कालज्वलनजलादेः प्रधानत्वप्रसिद्धेर्न कर्मैव प्रधानमित्याशङ्क्याऽऽह—यद्यपीति । एषां हेतूनां मध्ये कस्यचित्कालादेः स्वविषये क्वचिदुदयादौ प्राधान्यमन्येषां च तत्राप्राधान्यं यद्यपि दृष्टं तथाऽपि कर्मणां फलप्राप्तौ नाप्राधान्यमिति योजना । अहेतुत्वमप्राधान्यम् । कर्मणः फलप्राप्तिं प्रति प्राधान्ये पूर्वोक्तं हेतुं स्मारयति—शास्त्रेति ।।१४९०

कारीर्यादिषु व्यभिचारान्न कर्मणोऽस्ति फलहेतुत्वं कुतस्तत्प्राधान्यमित्याशङ्क्याऽऽह—कर्मण इति । या हि कर्मभूमौ कुतश्चित्कारीर्यादिकर्मणो वृष्ट्यादिप्राप्तिर्दृष्टा सा तस्य गुणसाकल्यादिष्टा । या तु कुतश्चित्कर्मणस्तदप्राप्तिर्दृश्यते सा तस्य वैगुण्याद्भवत्यतः समग्रं फलाव्यभिचारीति तत्प्राधान्यमिति भावः ।।१४९१।।

कर्मफले देवादीनां विघ्नकर्तृत्वं प्रसङ्गागतं निरस्य विद्याफले तेषां तदाशङ्कितं निरसितुमनुवदति—विघ्नमिति । तेषां विद्याफले विघ्नकरणे न शक्तिरिति परिहरति—अपनुत्त्यर्थमिति ।।१४९२।।

तदेव प्रकटयति—अविद्येति । आत्मनो ब्रह्मप्राप्तिरूपमुक्तेरज्ञानध्वस्तिमात्रत्वात्तस्याश्च ज्ञानेन तुल्यकालत्वात्तस्मिन्सति तत्फलस्याऽऽवश्यकत्वाद्देवादीनां विद्याफले विघ्नाचरणे निरवकाशत्वमित्यर्थः ।।१४९३।।

आत्मनो विद्यासमकालाऽविद्याध्वस्तिरित्येतद्दृष्टान्ते समर्थयते—चक्षुरिति । आत्मनोऽविद्याध्वस्तिर्विद्यासमकालेति शेषः ।।१४९४।।

इतश्च ज्ञानफले प्रतिबन्धासिद्धिरित्याह—यथास्थितेति । आत्मतत्त्वधीर्जायते चेन्न तत्फलमज्ञानादिहानं प्रतिबन्धार्हं तस्य तज्जन्ममात्रत्वादित्यर्थः । चकारेण तस्य निवृत्तिर्ज्ञानजन्मातिरिक्ता नास्तीत्यनुकृष्यते ।।१४९५।।

तदुत्थस्येत्यज्ञानजत्वेन द्वैतस्य कल्पितत्वमुक्तं तदयुक्तं तदप्रसिद्धेरित्याशङ्क्य तत्कल्पितत्वं साधयति—सर्पात्मनेति । यथा स्रजि सर्पोऽयमिति तद्रूपेण गृहीतायां न दण्डादिभ्रमस्तत्कालेऽस्ति न च तस्यां दण्डात्मना गृहीतायां तदा सर्पभ्रमस्तथा प्रतीच्येकाकारेण जाग्रत्प्रपञ्चरूपेण ग्राह्ये तदैव न स्वप्नादिभ्रमो; न च तद्रूपेण तद्ग्रहे जाग्रद्भ्रमोऽतो विमतं कल्पितं व्यभिचारित्वात्सर्पादिवदित्यर्थः । सर्वात्मनेति पाठे त्वयमर्थः—यथा स्रजि यथावद्गृहीतायां न दण्डादिभ्रमस्तथा प्रतीचि चिदेकरूपेण ग्राह्ये ततोऽन्यद्द्वैतं न गृह्यतेऽतो विमतं कल्पितं तत्त्वज्ञाने सत्यग्राह्यत्वात्संमतवदिति ।।१४९६।।

व्यभिचारित्वं कैमुतिकन्यायेन साधयति—अन्योन्येति । देहादीनामनात्मनामज्ञाने कारणे सत्यपि मिथो व्यभिचारित्वं दृष्टं निरस्तसमस्ताज्ञाने तु प्रतीचि तेषां व्यभिचारित्वं किमु वक्तव्यं तदा स्वरूपस्यैव तेषां दुर्वचत्वादित्यर्थः । तेषां स्वरूपतो मिथो व्यभिचारित्वस्यावस्थाद्वयेऽपि प्रत्यक्षत्वं हिशब्दार्थः ।।१४९७।।

रूप्याभज्ञानवेलायां शुक्तिकाधीर्न बाधते । तदसूतेरिह त्वात्मन्यादिमध्यान्तबाधधीः ॥९८॥
निर्निमित्तं प्रमात्रादेः प्रत्यग्रूपमनात्मनः । सनिमित्तं पराग्रूपमात्मनो मोहहेतुतः ॥९९॥
एक आत्मेति विज्ञाने दोषोऽप्यप्रतिबन्धकः । मूढात्मनामपि ह्येतन्न विसंवादमृच्छति ॥१५००॥
मिथ्यासंशयविज्ञानमनात्मानं प्रतीष्यते । प्रत्यगात्मनि तद्यस्मात्सम्यग्ज्ञानान्न भिद्यते ॥ १ ॥
अज्ञानं चेच्चिदाकारं संशयादिषु का कथा । प्रमितित्सिते प्रतीच्यस्मान्न दोषो नापि बाधकम् ॥ २ ॥
महिमानो यदाऽमी स्युरविद्याया न वस्तुनः ॥ ३ ॥
काला देवादयस्तस्यां ध्वस्तायां तद्विनाशतः । देवेश्वरादयः के स्युर्विघ्नं वा कस्य कुर्वते ॥ ४ ॥
यत्र त्वस्येति श्रुत्यैव सर्वमेतत्स्फुटीकृतम् । इहापि हेतुसंसिद्धचै तत्स्पष्टमभिधीयते ॥ ५ ॥
यतो विघ्नकृतामात्मा प्रत्यग्याथात्म्यविद्भवेत् । तद्गोचरातिवर्तित्वं विद्याकाले तमोहतेः ॥ ६ ॥

द्वैतस्य कल्पितत्वे हेत्वन्तरमाह—रूप्येति । रूप्याकारं ज्ञानं यदा जायते तदाऽधिष्ठानशुक्तीदमंशज्ञानं रूप्यतज्ज्ञाने न बाधते तयोरिदमंशाज्ञानानुत्थत्वात्प्रत्यग्ब्रह्मणि तु वाक्योत्थज्ञानात्प्रागूर्ध्वं तत्काले च स्वरूपज्ञानाख्या बाधधीर्द्वैततद्धियोरस्त्यतो यत्र रूप्यादौ कल्पितत्वसंमतिस्तत्र कदाचिदेव बाधधीर्द्वैते सदेत्यावश्यकं कल्पितत्वम् । यद्वा रूप्यभ्रान्तिकाले शुक्तिधीर्न तद्बाधिका तस्यास्तदाऽनुत्पत्तेरात्मनि तु दृष्टद्वैतस्य तद्दृष्टिकाले प्रागूर्ध्वं च नित्यबोधादेव बाधधीरिति युक्तं तस्य कल्पितत्वं विमतं कल्पितं बाध्यत्वात्संमतवदिति भावः ॥१४९८॥

स्वरूपज्ञानस्यैवासिद्धेस्तस्य कथं बाधकत्वमित्याशङ्क्य तत्साधयति—निर्निमित्तमिति । प्रमात्रादेरनात्मनश्चैतन्याकारभजनस्य स्वाभाविकत्वात्तत्साक्षित्वेन नित्यानुभवसिद्धेः स्वरूपज्ञानं दुरपह्नवमित्यर्थः । अनात्मनश्चैतन्याकारभजनवदात्मनोऽपि शब्दाद्याकारभजनस्य स्वाभाविकत्वात्तदकल्पितमित्याशङ्क्याऽऽह—सनिमित्तमिति । तदेव स्फुटयति—मोहेति ॥१४९९॥

अविद्यादोषप्रतिबन्धान्न स्वरूपज्ञानसिद्धिरित्याशङ्क्याऽऽह—एक इति । अहमेकोऽहमेक इति प्रतिदेहमहंधीसाक्षित्वेनाऽऽत्मनो ज्ञाने नाविद्यादोषो दोषान्तरं वा विरोध्यस्ति तस्यापि स्वसिद्धौ तदपेक्षत्वादतो न स्वरूपज्ञानासत्त्वमित्यर्थः । किं चाविवेकिनामपि न स्वरूपज्ञानं विसंवादास्पदं तस्याहंधीसाधकत्वेनानुभवादतो न तदभाव इत्याह—मूढेति । विदुषामिवेत्यपेरर्थः । सर्वोपनिषत्प्रसिद्धं स्वरूपज्ञानमपह्नवानर्हमिति हिशब्दार्थः ॥१५००॥

स्वरूपज्ञानास्तित्वे हेत्वन्तरमाह—मिथ्येति । संशयाद्यनात्मानं प्रत्येवासम्यग्ज्ञानं तदसाधकत्वात्प्रतीचि सम्यग्ज्ञानमेव तस्य सदा चैतन्याकारभजनात्तद्द्योतकत्वादतो न स्वरूपज्ञानासत्त्वमित्यर्थः ॥१५०१॥

संशयादेः सदा चैतन्याकारभजनं कैमुतिकन्यायेनाऽऽह—अज्ञानमिति । तद्धि नित्यजडरूपं तदपि चैतन्यव्याप्तमेव लक्ष्यते तथा चेदज्ञानभेदेषु संशयादिषु तद्व्याप्तेरतिव्यक्तत्वान्न सा वक्तव्येत्यर्थः । यथोक्तस्वरूपज्ञानेन कुतो द्वैतबाधो न हि तस्य बाधकत्वे कदाचिदपि द्वैतं स्यात्तथा च व्यवहारादिविरोध इत्याशङ्क्याऽऽह—प्रमितित्सित इति । अस्मात्तत्त्वमादिवाक्यात्प्रतीचि प्रमातुमिष्टे न कारणदोषो नापि बाधकमध्यक्षादेः कल्पितविषयत्वादतोऽदुष्टकारणत्वादबाध्यत्वाच्च वाक्योत्थं ज्ञानं सम्यग्ज्ञानं तदिद्धं च स्वरूपज्ञानमज्ञानादिबाधकं न केवलमिति कुतो यथोक्तानुपपत्तिप्रसक्तिरित्यर्थः ॥१५०२॥

साविद्यं द्वैतं बाधते विद्येत्युक्त्वा फलितमाह—महिमान इति । विद्ययाऽविद्याध्वस्तौ तद्विकारदेवादिनाशात्सर्वस्याऽऽत्ममात्रत्वाद्विदुषो न ते विघ्नं कुर्वन्तीत्यर्थः ॥१५०३–१५०४॥

विदुषः सर्वमात्ममात्रमित्यत्र मानमाह—यत्रेति । अविद्वद्दृष्ट्युपनीतदेवादेस्तदीयविघ्नकर्तृत्वस्य च विद्वद्दृष्ट्या प्रत्याख्यानपुरःसरं तस्य हेत्यादिवाक्यं व्याख्याय वक्ष्यमाणं सर्वस्याऽऽत्मत्वमात्मा हीत्युत्तरवाक्येऽपि देवादीनां विद्याफले विघ्नाकर्तृत्वे हेतुत्वसिद्ध्यर्थं कथ्यत इत्याह—इहेति । आत्मत्वहेतोर्निर्दोषत्वमाह—स्पष्टमिति ॥१५०५॥

हेतुवाक्यं व्याचष्टे—यत इति । अतो नाऽऽत्मनः प्रतिकूलत्वे यत्नो देवादीनामिति शेषः । विद्याफले न ते विघ्नं कुर्वन्तीत्यत्र हेत्वन्तरं देवाद्यैश्वर्यविषयेत्यादिनोक्तमुपपादयति—तद्गोचरेति । विद्यानान्तरीयकत्वेनाभिनिवेशहेतोस्तमसो ध्वस्तेर्देवाद्यैश्वर्यविषयमतिक्रम्य स्थितत्वाद्विदुषो विरोधाभावान्न ते तद्विघ्नकर्तार इत्यर्थः ॥१५०६॥

आत्माऽमीषां तदा ब्रह्म देवादीनां भवेद्वशी । कालाद्यन्तरितं यत्स्यात्प्राप्त्युत्पत्त्यादिलक्षणम् ॥ ७ ॥

अन्त्यज्ञानस्य तत्सन्ततेर्वा अज्ञाननिवर्तकत्वमिति शङ्कानिरासः

अनात्मैव फलं तत्र देवानामीशता भवेत् । अपि ज्ञातात्मतत्त्वानामभावाज्ज्ञानसंततेः ॥ ८ ॥
अन्त्योऽविद्यापनुद्बोधो रागादिप्रत्ययोत्थितेः । इति चेन्नैतदेवं स्यादाद्येऽनैकान्तिकत्वतः ॥ ९ ॥
नान्त्याऽविद्यापनुद्बुद्धिरात्मैकविषयत्वतः । आद्यात्मबुद्धिवद्धेतोरनैकान्तिकतेक्ष्यते ॥१०॥
अनैकान्तिकता हेतोस्तद्वत्संततिवादिनः । न चाभ्यासात्प्रमाणानि कुर्वन्त्यर्थावबोधनम् ॥११॥
संबन्धमात्राभिव्यक्तेर्व्यञ्जकत्वात्प्रदीपवत् । भोजनादौ न च सति ज्ञानसंततिरिष्यते ॥१२॥
तदन्तरायबाहुल्यात्सुषुप्तादौ च नेष्यते ।
प्रत्यक्प्रमेयपूर्वैव सर्वासां नो यतो धियाम्[1] । सूतिराम्रेडनं तस्मात्सिद्धमात्मधियः सदा ॥१३॥

न विदुषो देवाद्यात्मत्वमन्यस्यान्यत्वायोगादित्याशङ्क्याऽऽह—आत्मेति । यदाऽविद्या विद्यया नष्टा तदा विद्वान्ब्रह्मभूतः स्वतन्त्रः सन्नेषामात्मा भवति ब्रह्मणोऽन्यवस्त्वभावादतो न ते विदुषो विघ्नकर्तार इत्यर्थः । विद्वत्फले कैवल्ये तेषामस्वातन्त्र्ये कुत्र स्वतन्त्रतेत्याशङ्क्याऽऽह—कालादीति । ईशता निग्रहानुग्रहयोः स्वतन्त्रतेति यावत् । ज्ञानस्यानन्तरफलत्वात्तत्फले तेषां न विघ्नकर्तृतेत्युक्तमुपेत्य स्वयूथ्यमतमाह—अपीति । अज्ञानामिव तत्त्वज्ञानामपि न ब्रह्मास्मीति ज्ञानसंततिर्ज्ञानस्यानन्तरफलतोपगमादतो न साऽविद्यानिवर्तिकेत्यर्थः ॥१५०७–१५०८॥

आद्यमेव ज्ञानमज्ञानध्वंसि किमन्त्येनेत्याशङ्क्य प्रागिवोर्ध्वमपि रागादेस्तत्कार्यस्य च दृष्टेर्देहपातकालीनं ज्ञानमज्ञानध्वंसीत्याह—अन्त्य इति । अतो जीवन्मुक्त्यनुपपत्तिरित्याह—इति चेदिति । अन्त्यज्ञानस्य वा तत्संततेर्वाऽज्ञानध्वंसित्वम् ? आद्ये तस्यान्त्यत्वाद्वाऽऽत्मविषयत्वाद्वा तद्ध्वंसित्वमिति विकल्प्योभयत्र दृष्टान्ताभावं मत्वा द्वितीये दोषान्तरमाह—नैतदिति । न चान्त्यज्ञानत्वानुमाने रजतभ्रमवतो निधनकालीनं शुक्तिज्ञानमुदाहरणं, तस्य संसारहेत्वज्ञानानिवर्तकत्वात् । न चैवं ब्रह्मज्ञानादज्ञाननिवृत्तौ दृष्टान्तासिद्धिरागमात्तत्सिद्धौ क्वचिदुपन्यासस्य लोकदृष्ट्यनुसारित्वादिति द्रष्टव्यम् ॥१५०९॥

अनुमानविरोधं दोषान्तरं स्फोरयति—नान्त्येति । अन्त्याया बुद्धेरविद्यानिवर्तकत्वमाद्यायास्तु नेति व्यवस्थामाशङ्क्याऽऽत्मविषयत्वहेतोराद्यबुद्धावनैकान्तिकता पूर्वोक्ता स्यादित्याह—हेतोरिति ॥१५१०॥

त्वदनुमानं[2] सिद्धसाधनमन्त्यज्ञानसंततेरविद्याध्वंसित्वस्वीकारादिति कल्पान्तरमाशङ्क्य साऽपि किमन्त्यत्वात्तां निवर्तयत्यात्मविषयत्वाद्वेति विकल्प्योभयत्र दृष्टान्तासत्त्वं मत्वा द्वितीये दोषान्तरमाह—अनैकान्तिकतेति । अन्त्यज्ञानमज्ञानध्वंसीत्यत्राऽऽत्मविषयत्वहेतोराद्यज्ञानेऽनैकान्तिकतावदन्त्यसंततिस्तद्ध्वंसिनीत्यत्राप्यात्मविषयत्वहेतोराद्यज्ञानसंततावनैकान्तिकता तत्र साध्यसिद्धावन्त्यज्ञानतत्संततिवैयर्थ्यादित्यर्थः । किंच सा किं स्वरूपेण तन्निवर्तिका सम्यग्धीद्वारा वा ? नाऽऽद्यः उक्तन्यायादेव तदयोगान्न द्वितीयोऽभ्यासानपेक्षमाणोत्थसम्यग्बोधादबोधध्वस्तेरिति मत्वाऽऽह—न चेति ॥१५११॥

मानानामभ्यासं विनाऽर्थावबोधित्वे हेतुमाह—संबन्धेति । दीपवन्मानस्य व्यञ्जकत्वात्तत्संबन्धमात्रान्मेयव्यक्तेर्न तत्राभ्यासापेक्षेत्यर्थः । किंच ज्ञानसंततिरविच्छिन्ना विच्छिन्ना वा सम्यग्धीहेतुरिति विकल्प्याऽऽद्यं दूषयति—भोजनादाविति ॥१५१२॥

तत्र हेतुमाह—तदन्तरायेति । ज्ञानसंततिप्रतिबन्धकस्याशनपानादिव्यवहारस्य बहुलत्वादित्यर्थः । अविच्छिन्नज्ञानसंतत्ययोगे हेत्वन्तरमाह—सुषुप्तेति । आदिपदेन मूर्छाप्रलयासंप्रज्ञातसमाधयो गृह्यन्ते । द्वितीये लौकिकात्मज्ञानस्यालौकिकात्मज्ञानस्य वा संततिरिति विकल्प्याऽऽद्यं प्रत्याह—प्रत्यगिति । अहमितिलोकसिद्धात्म-

१. धियां सूतिः इत्यन्वयः ।
२. त्वदनुमानं अन्त्यज्ञानस्याज्ञाननिवर्तकत्वाभावानुमानम् । अन्त्यज्ञानसन्ततेरविद्यानिवर्तकत्वे आद्यसन्ततौ व्यभिचारः । तदभ्युपगमे अन्त्यवैयर्थ्यम् ।

ज्ञानस्य वस्तुतन्त्रत्वान्न कर्त्रनुविधायिता । शीतोष्णज्ञानवत्तस्मान्नेष्यते ज्ञानसंततिः ॥१४॥
भोजनादिनिरोधेन संततिश्चेत्समर्थ्यते । उक्ता परिहृतिस्तत्र न भूयोऽपि व्यपेक्षते ॥१५॥
क्षुत्पिपासापरिम्लानचेतस्त्वान्नितरां न सा । भोजनादिनिरोधेन न च तस्याः प्रमेक्ष्यते ॥१६॥

ज्ञानसन्ततेः अज्ञाननिवर्तकत्वनिरासः

संतत्यारम्भकधियामियत्तानवधारणात् । शास्त्रार्थानिश्चयो दोषः स चानिष्टः प्रसज्यते ॥१७॥
मतं संततिमात्रत्वे निश्चितिः स्यात्तथाऽपि च । अनैकान्तिकता हेतोराद्यसंततिवद्भवेत् ॥१८॥
समानविषयत्वेऽपि नाऽऽद्याऽविद्यां निहन्ति चेत् । ज्ञानसंततिरन्त्या नः सेत्स्यतीत्यत्र का प्रमा ॥१९॥
मरणेऽपि न विश्वासो हिक्किकावशवर्तिनः । ज्ञानसंततिनिष्पत्तौ तमोमात्रसमाप्तितः ॥२०॥

कर्मच्छिद्रेषु ज्ञानाभ्यासनिरासः

कर्मच्छिद्रेषु कुर्वन्ति येऽपि सम्यग्धियं बलात् । नूनं ते नासिकाग्रेण[१] वीक्षन्ते सूर्यमण्डलम् ॥२१॥
वस्तुतन्त्रं न हि ज्ञानं नृतन्त्रं लोकवह्निवत् । अनन्यज्ञातृकत्वाच्च प्रत्यग्ज्ञानस्य सर्वदा ॥२२॥

धीपूर्विका सर्वेषामस्माकं सर्वप्रत्ययोत्पत्तिरतो लौकिकात्मज्ञानस्य संततिः सदा सिद्धाऽपि सम्यग्बोधादृष्टेर्न तद्धेतुरित्यर्थः ॥१५१३॥

द्वितीये दोषमाह—ज्ञानस्येति । अलौकिकाखण्डाद्वयप्रत्यग्ब्रह्मधीसंततिर्विध्यधीनपुरुषयत्नादिना कर्तुं न शक्यते ज्ञानस्य मानवस्तुतन्त्रत्वात्तज्जन्ममात्रेण निःशेषकारकोपमर्दाच्चातो यथोक्तधीसंतत्यभावान्नासौ सम्यग्धीद्वाराऽविद्याध्वंसिनीत्यर्थः ॥१५१४॥

विच्छिन्नाऽविच्छिन्ना लौकिक्यलौकिकी वाऽनात्मधीसंततिर्विद्याद्वाराऽविद्याध्वंसिनीत्युक्तं तत्राविच्छिन्नपक्षोक्तं दोषं परिहरन्नाशङ्कते—भोजनादीति । ज्ञानस्य वस्तुतन्त्रत्वादित्यत्र परिहृतमेतदित्याह—उक्तेति ॥१५१५॥

भोजनादिनिरोधमङ्गीकृत्योक्तं समाधिं स्मारयित्वा तन्निरोधस्यैवायोगमाह—क्षुदिति । सति भोजनादौ स्वस्थचित्ततया कथंचन ज्ञानसंततिः सिध्यत्यसति पुनर्भोजनादौ चित्तस्वास्थ्याभावान्न ज्ञानसंततिशङ्काऽपीत्यतिशयं दर्शयितुं नितरामित्युक्तम् । उपेत्यवादेनैव मानाभावेन धीसंततिं धुनीते—भोजनेति ॥१५१६॥

ज्ञानसंततिर्ज्ञानद्वाराऽज्ञानध्वंसिनीत्यत्र दोषान्तरमाह—संततीति । ईदृशी संततिर्ज्ञानद्वाराऽज्ञानध्वंसिनीति शास्त्रार्थानिश्चये किं बाधकमित्याशङ्क्य शास्त्राप्रामाण्यप्रसक्तिरित्याह—स चेति ॥१५१७॥

आत्मेत्येवोपासीतेतिश्रुतेस्तद्धीसंततिमात्रसद्भावे ततो विद्याद्वाराऽविद्याध्वस्तिरिति शङ्कते—मतमिति । आत्मधीसंततेः सत्त्वेऽपि न साऽऽत्मविषयत्वाद्विद्याद्वाराऽविद्यां निवर्तयत्याद्यद्वित्रिक्षणस्थात्मधीसंततौ व्यभिचारात् न चान्त्यात्मधीसंततित्वं प्रयोजकं दृष्टान्ताभावस्योक्तत्वादिति परिहरति—तथाऽपीति ॥१५१८॥

व्यभिचारं स्फोरयति—समानेति ॥१५१९॥

द्वितीये दोषमाह—न च दृष्टान्ताभावेऽपि व्यतिरेकव्याप्त्या यथोक्तहेतूनामन्यतमेन विवक्षितं साध्यमनुमेयमिति युक्तमात्मविषयज्ञानत्वस्य तथाविधज्ञानसन्ततित्वस्य च पूर्ववद्विपक्षवृत्तित्वादन्त्यज्ञानत्वस्य तथाविधसंततित्वस्य चासिद्धत्वादित्याह—मरणेऽपीति । हिक्किकादिमरणाव्यभिचारिचिन्हवतोऽतिनिबिडे तमोमात्रे मग्नत्वादवश्यंभाविनि मरणेऽपि न निश्चय आत्मधीतत्संतत्युत्पत्तौ तु का वार्तेत्यर्थः ॥१५२०॥

अन्त्यधीतत्संतत्योरज्ञानध्वंसित्वं निरस्य प्रत्यहमनुष्ठानं समाप्यान्तरालक्षणेषु कर्तृत्वादिज्ञानेऽपि बलादेव सम्यग्धीरावर्त्यते ततश्च सहेत्वनर्थध्वस्तिरिति मतान्तरमाशङ्क्याशक्यमिच्छया ज्ञानं कर्तुमित्याह—कर्मेति ॥१५२१॥

ज्ञानस्येच्छया कर्तुमशक्यत्वं साधयति—वस्त्विति । ज्ञानं हि वस्तुतन्त्रं न पुरुषतन्त्रं द्युलोकेऽग्निदृष्टिर्यथा पुंस्तन्त्रा न तथाऽऽत्मधीरित्यर्थः । आत्मधियो व्यवहारदशायां सदा स्वसाक्षिकत्वाच्च न कर्तव्यतेत्याह—अनन्येति ॥१५२२॥

१. नासिकाग्रेण सूर्यमण्डलवीक्षणमशक्यं तस्य चक्षुषैव साध्यत्वात्—तद्वदित्यर्थः ।

**न चानिवर्तकं ज्ञानं प्रत्यङ्मोहस्य युज्यते । स्वानुभूति[1]विरुद्धत्वादग्निदाहादिबोधवत् ।।२३।।**
**सर्ववेदान्तवाक्यानामेतावन्मात्रनिष्ठतः । न चार्थवादता तेषामन्याशेषत्वकारणात् ।।२४।।**
**अहंधीविषयत्वाच्चेत्तेषां स्यादर्थवादता । नोक्तत्वात्परिहारस्य न चाहंगम्यताऽऽत्मनः ।।२५।।**
**अहंबुद्ध्येक्ष्यते प्रत्यक्प्रतीचा चाप्यहंमतिः । अन्योन्याश्रयता दोषः स्यादहंवृत्तिवीक्षणे ।।२६।।**
**यत एवमतो यो नः प्रत्यक्संमोहहानिकृत् । आद्योऽन्त्यः संततो वाऽसौ बोधो मुक्तिफलः स्मृतः ।।२७।।**

तत्त्वविदां रागदर्शनात् न ज्ञानं अज्ञानध्वंसि इत्यस्य निरासः

**यत्तूक्तं ज्ञाततत्त्वानामपि रागादिदर्शनात् । नाविद्याहानिकृज्ज्ञानमत्र प्रतिविधीयते ।।२८।।**
**आरब्धफलशेषैकहेतुत्वाद्देहसंस्थितेः । रागादिप्रत्ययोद्भूतिरिषुचक्रादिवेगवत् ।।२९।।**
**तस्य वृत्तफलत्वान्नो ज्ञानं स्यात्तन्निवृत्तिकृत् । अतीतत्वाच्च तद्धान्यै नालमात्मावबोधनम् ।।३०।।**
**यत्तु स्वात्माश्रयं कर्म ह्यनारब्धफलं भवेत् । उत्पित्स्वनागतं कृत्स्नं ज्ञानं हन्ति तदेव नः ।।३१।।**

तथाऽपि सा नाज्ञानध्वंसिनी संसारानुदयप्रसङ्गादतो ज्ञानमनिवर्तकमेवेत्याशङ्क्याऽऽह—न चेति । अग्निर्न दाहको जलं न शीतमित्यादिप्रयोगे सत्यग्नेर्दाहकत्वमम्भसः शैत्यमित्यादिस्वानुभवादेव बाधवदात्मधीस्तदज्ञानाध्वंसिनीति गीर्विद्वदनुभवविरुद्धेत्यर्थः ।।१५२३।।

"तस्मात्तत्सर्वमभवत्" "भिद्यते हृदयग्रन्थिरि"त्यादीनामात्मज्ञानात्तदज्ञानध्वस्तिमात्रे निश्चयेन स्थितत्वात्तद्विरोधाच्च नानिवर्तकत्वमित्याह—सर्वेति । तेषामर्थवादत्वेनाविवक्षितत्वमाशङ्क्याऽऽह—न चेति ।।१५२४।।

अहंधीगम्ये प्रतीचि तेषां प्रवृत्तेः संवादविसंवादाभ्यां मानत्वायोगादर्थवादतेति चोदयति—अहमिति । मातुरहंधीगम्यता नाऽऽत्मनस्तत्साक्षिणस्तस्य वेदान्ता ब्रह्मत्वं बोधयन्तीति न संवादादिशङ्केत्याह—नोक्तत्वादिति । तमेव स्मारयति—न चेति ।।१५२५।।

तस्याहंधीगम्यत्वाभावे युक्तिमाह—अहंबुद्ध्येति ।।१५२६।।

विचारफलमुपसंहरति—यत इति । प्रत्यग्ज्ञानस्य तदज्ञानध्वंसित्वमुक्तन्यायाद्यतो युक्तमतः सम्यग्ज्ञानं विशेषजिज्ञासामन्तरेण प्रतीच्यज्ञानतज्जध्वंसि मोचकमित्यर्थः । वाशब्दोऽसंततो वेति विकल्पान्तरार्थः ।।१५२७।।

धीसंततेरन्त्यधियश्चाज्ञानध्वंसित्वायोगादाद्यमेव ज्ञानं तथेत्युक्तम् । संप्रति परोक्तमनूद्योत्तरं प्रतिजानीते—यत्त्विति । अज्ञानामिवेत्यपेरर्थः ।।१५२८।।

प्रतिविधानं प्रकटयति—आरब्धेति । येन कर्मणा शरीरमारब्धं तदारब्धफलं तच्छेषमात्रहेतुकत्वाद्विद्वद्देहस्थितेस्तस्य रागाद्याभासो यावदारब्धक्षयं न विरुध्यते तत्क्षये च देहाभासजगदाभासयोरभावान्मुक्तिरित्यर्थः । विद्वद्देहस्थितावविद्यालेशाधीनप्रारब्धकर्मशेषातिरिक्तवस्तुभूतहेत्वभावं वक्तुमेकविशेषणम् । प्रारब्धकर्मणोऽप्यज्ञानजत्वेन निरस्यत्वान्न ज्ञानिनस्ततो देहस्थितिरित्याशङ्क्याऽऽह—इषुचक्रेति । यथा प्रवृत्तवेगस्येष्वादेर्वेगक्षयादेव क्षयस्तथाऽऽरब्धक्षयो भोगादेव "भोगेन[2]त्वितरे क्षपयित्वा संपद्यत" इति न्यायान्न ज्ञानादित्यर्थः ।।१५२९।।

ज्ञानमनारब्धकर्मवदारब्धमपि कर्मत्वाविशेषात्कुतो न निवर्तयेदित्याशङ्क्याऽऽह—तस्येति । न ज्ञानादारब्धमपि कर्म क्षीयते तस्य फलदानार्थप्रवृत्ततया ज्ञानस्य तदविरोधित्वादविद्यालेशाच्च तदवस्थितेः । यथाऽऽहुः[3]—"तिष्ठति संस्कारवशाच्चक्रभ्रमणवद्धृतशरीर" इति । अन्यथा जीवन्मुक्तिशास्त्रविरोधादित्यर्थः । फलरूपेणाऽऽरब्धकर्मणो जातत्वात्पृथक्तस्य रूपाभावाच्च न तद्ध्वंसिनीधीरित्याह—अतीतत्वाच्चेति ।।१५३०।।

आरब्धकर्मणो ज्ञानानिवर्त्यत्वे ज्ञानं कर्मनिवर्तकमिति कथं प्रसिद्धिरित्याशङ्क्य तद्विषयमाह—यत्त्विति ।

---

१. स्वानुभूतीति—अनेन वार्तिककारस्य जीवन्मुक्तत्वं व्यज्यते ।
२. भोगेन त्वितरे क्षपयित्वा सम्पद्यते ( ब्र० सू० ४-१-१९ ) इतरे=आरब्धकार्ये पुण्यपापे उपभोगेन क्षपयित्वा विनाश्य ब्रह्म सम्पद्यते । "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्यते—इतिश्रुतेः ।
३. यथाहुः—ईश्वरकृष्णाः ६७–सांख्यकारिकायाम् ।

अनारब्धफलकर्मणः ज्ञानानिवर्त्यत्वे अनिष्टप्रसंगः तन्निरासश्च

**अनारब्धफलं कर्म न त्वारब्धफलं यदि । निरुणद्धयात्मविज्ञानं तदाऽनिष्टं प्रसज्यते ॥३२॥**
**प्रारब्धात्मफलं नो चेत्कर्म ज्ञानं निवर्तयेत् । अनारब्धफलं हन्तीत्यत्रापि स्यान्न निश्चितिः ॥३३॥**
**न चेदारब्धकार्येषु ज्ञानस्वातन्त्र्यमिष्यते । अनारब्धेषु नितरां पुंसोऽपि स्याद्यथेष्टता ॥३४॥**
**न च तेषु निरुद्धेषु किञ्चिन्नः स्यात्प्रयोजनम् । प्राङ्मृतेर्मुक्त्यसंसिद्धेरबीजत्वाच्च संसृतेः ॥३५॥**
**सर्वसंहारकाले च निरोधोऽभूदशेषतः । तावानपि न पर्याप्तो निरोधो मुक्तये कथम् ॥३६॥**
**अल्पीयोहःसमभ्यस्तो निरोधोऽलं विमुक्तये । भावनोपचयान्नापि मुक्तिः स्याद्भङ्गुरत्वतः ॥३७॥**
**दुःख्यस्मीत्यपि चेद्ध्वस्ता कोटिकल्पोपबृंहिता । अल्पीयोभ्यासजा साध्वी भावनेत्यत्र का प्रमा ॥३८॥**
**शास्त्रार्थस्य समाप्तेश्च मुक्तिः स्यात्तावता मितेः । रागादयः सन्तु कामं न तद्भावोऽपराध्यति ॥३९॥**

स्वात्माश्रयं तत्त्वज्ञानाश्रयाश्रितमिति यावत् । प्रमातृगतं ज्ञानं कर्मापि तन्निष्ठं तस्य परिणामित्वेन तदाश्रयत्वसंभवादिति हिशब्दार्थः । आरब्धमपि कर्म तादृगिति विशिनष्टि—अनारब्धेति । तस्याफलस्य निवृत्तप्रायत्वं निरस्यति—उत्पित्स्विति । फलात्मना जन्माभिमुखमिति यावत् । तस्य ज्ञानकाले पश्चाच्च संभावनामाह—अनागतमिति । तत्सर्वं ज्ञाननिरस्यमित्यागमप्रसिद्धिस्तद्विषयेत्याह—कृत्स्नमिति ॥१५३१॥

सिद्धान्तिनोक्तमनूद्य पूर्ववाद्यनिष्टप्रसङ्गं प्रतिजानीते—अनारब्धेति ॥१५३२॥

किं तदनिष्टं तदाह—प्रारब्धेति । विमतं न ज्ञाननिरस्यं कर्मत्वादारब्धकर्मवदित्यनुमानादितरदपि न तन्निरस्यमित्यागमविरोधस्ते स्यादित्यर्थः ॥१५३३॥

कर्मत्वेऽप्यनारब्धस्य तन्निरस्यत्वं किं न स्यादित्याशङ्क्येतरस्यापि तदापत्तिरन्यथेतरत्रापि न तन्निरस्यत्वमप्राप्तेरित्याह—न चेदिति । नितरामित्यतिशयोक्तिः । किंच त्वत्पक्षे विदुषो यथेष्टचेष्टा स्यात्तस्य वर्तमानदेहपाते देहान्तरारम्भानभ्युपगमादनारब्धस्य ज्ञानादारब्धस्य भोगाद्ध्वस्तेरित्यनिष्टान्तरमाह—पुंसोऽपीति ॥१५३४॥

आरब्धकर्मणोऽपि ज्ञाननिरस्यत्वं वेष्टमितरस्य तद्राहित्यं वेति विकल्प्याऽऽद्यं सिद्धान्ती प्रत्याह—न चेति । आरब्धकर्मसु ज्ञानदग्धेषु नास्माकं किंचित्फलमित्ययुक्तं कैवल्यलब्धेरेव फलत्वादित्याशङ्क्याऽऽह—प्रागिति । न हि ज्ञानोदये सद्यः शरीरं पतति जीवन्मुक्तिशास्त्राद्विद्यासंप्रदायाच्च । न च सति देहे विदेहमुक्तिरतो नाऽऽरब्धदाहो ज्ञानादित्यर्थः । तर्हि तस्य देहान्तरारम्भकत्वादमुक्तिरेवेति नेत्याह—अबीजत्वादिति । तस्य भोगाद्ध्वस्तेर्देहान्तरारम्भाख्यबन्धाहेतुत्वान्मुक्तिरित्यर्थः । नेतरः ज्ञानात्तद्दाहस्याऽऽगमसिद्धत्वात् । न च विदुषो यथेष्टचेष्टा तत्प्रापककर्मारब्धे देहे मुक्तिफलज्ञानानुत्पत्तेर्न च नियामकाभावो यथेष्टचेष्टोपनायकाधर्मारब्धे देहे तथाविधचेष्टासंस्कारविशिष्टस्याशुद्धबुद्धेस्तद्विरुद्धज्ञानहेतुशमादिप्रवृत्त्यनुपपत्त्या तदुत्पत्त्ययोगस्यैव नियामकत्वाच्छ्रुतिस्मृत्युपदर्शितविद्वल्लक्षणस्य च यथेष्टचेष्टाप्रतिस्पर्धित्वाज्ज्ञानादूर्ध्वं तत्प्रापकस्य दुर्वचत्वात्तथा तद्धेत्वारब्धकर्मकल्पने तद्वतो ज्ञानित्वस्यासंमतत्वान्न हि तस्य विहितमपि त्यजतो निषिद्धचेष्टेति चकारार्थः ॥१५३५॥

ज्ञानस्य मुक्तिहेतुत्वमुपेत्यानारब्धकर्मध्वंसित्वमुक्तम् । अन्ये तु चित्ततद्वृत्तिनिरोधो मुक्तिहेतुर्न ज्ञानमित्याहुस्तत्राऽऽह—सर्वेति । चकारो यथोक्तमतनिरासार्थस्त्वर्थे पठितः । विमतो निरोधो न मुक्तिहेतुर्निरोधत्वात्प्रलयस्थनिरोधवदित्यर्थः । अपरे तु ज्ञाननिरोधौ हित्वा ब्रह्मास्मीतिनिरन्तरधीप्रसूतवासनोपचयान्मुक्तिरित्याचक्षते तान्प्रत्याह—भावनेति । स हि मुक्तेर्निमित्तमुपादानं वोभयत्रापि मानाभावं मत्वा द्वितीये दोषान्तरमाह—भंगुरत्वत इति । तत्साध्या मुक्तिरपि तादृशी स्यादिति शेषः ॥१५३६–१५३७॥

ब्रह्मास्मीति भावनाया भङ्गुरत्वमसिद्धमित्याशङ्क्याऽऽह—दुःखीति । दीर्घकालीनाभ्यासजनिताऽपि दुःखित्वभावना निवृत्ता चेदल्पकालीना तद्दर्शिताभ्यासप्रसूतब्रह्मत्वभावना नित्येत्यत्र नास्ति नियामकमित्यर्थः ॥१५३८॥

कथं तर्हि मुक्तिस्तत्राऽऽह—शास्त्रार्थस्येति । तत्त्वमस्यादिवाक्यजा धीर्मितिस्ततो मुक्तिः स्याद्ब्रह्म वेदेत्यादिश्रुतेरैक्यज्ञानान्मुक्तिरित्येव । तावतोपनिषत्फलावसानादतः शास्त्रप्रामाण्याज्ज्ञानादेव मुक्तिरित्यर्थः । ज्ञानि-

आगमाद्वेद चेद्ब्रह्म ब्रह्मैव भवतीति हि । फलावस्थस्य च सतः कुतो रागादिसंप्लुतिः ॥४०॥
न च ब्रह्मपरिज्ञानहुताशाप्लुष्टमण्वपि । संभाव्यते ब्रह्मधियः स[1]र्वान्त्यत्वैकहेतुतः ॥४१॥

जीवन्मुक्तस्य रागादेः असंभावितत्वम्

सम्यग्ज्ञानविरुद्धा धीर्न चैकात्म्यं विजानतः । उत्पद्यते निर्विषया विषयाशयहानतः ॥४१॥
लोकेऽनिर्ज्ञाततत्त्वस्य मिथ्याधीरुपजायते । प्रध्वस्ततत्त्वतमसः कुतः स्यात्कारणादृते ॥४३॥
सम्यग्ज्ञानेऽपि चेत्सा स्यादविश्रम्भः प्रसज्यते । एवं सत्यप्रमाणत्वं मितेश्चापि प्रसज्यते ॥४४॥
सम्यङ्मिथ्याधियोर्यस्माद्विशेषो नोपलभ्यते । व्यवहारस्य लोपोऽतः सर्वस्य स्यादसंशयः ॥४५॥
सम्यग्ज्ञानसमुत्पत्तिसमनन्तरमेव च । शरीरपातः कस्मान्नेत्येतच्चाप्यपहस्तितम् ॥४६॥
पूर्वोक्तेनैव न्यायेन वक्तव्यं नावशिष्यते । ज्ञानोत्पत्तावतो ध्वस्तिः सर्वेषामपि कर्मणाम् ॥४७॥
यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन । ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥४८॥
सर्वदृष्टान्तसारूप्यप्रसक्तौ तन्निषेधकृत् । तावदेव चिरं तस्येत्यपवादः श्रुतीरितः ॥४९॥

नोऽपि रागादिदृष्टेर्न ज्ञानं तद्धेतुरित्याशङ्क्य न तद्दर्शनं तद्विरोधि ज्ञानदग्धबीजत्वेनाऽऽभासत्वादित्याह—रागादय इति ॥१५३९॥

नन्वस्मदादेरिवानाभासो रागादिर्विदुषोऽनुवर्तते तत्कार्यदीर्घदृष्टेस्तत्राऽऽह—आगमादिति । ब्रह्मास्मीति श्रुतेर्ज्ञानतो ब्रह्मभावस्याऽऽवश्यकत्वाद्ब्रह्मभूतस्य रागाद्यसंस्पर्शान्न तस्य यथापूर्वं रागादिः सिध्यति । सर्वो हि रागादिर्बाधितस्तस्यानुवर्तमानोऽन्यथा विद्यावैयर्थ्यान्न च तस्य यथापूर्वं तत्कार्यमस्ति 'यस्य तु यथापूर्वं संसारित्वमि'त्यादिन्यायादित्यर्थः ॥१५४०॥

इतश्च विदुषो न[2]नाभासो रागादिरित्याह—न चेति ॥१५४१॥

नान्त्या ब्रह्मधीः परस्तादपि ततो भूयसीनामनात्मधियामादेहपाताद्भावादित्याशङ्क्याऽऽह—सम्यगिति । तत्र हेतुः—निर्विषयेति । हेतुं साधयति—विषयेति । विषयाणामाशयः समुदायस्तस्यासत्त्वादिति यावत् । यद्वा विषया यस्मिन्बाह्यकरणद्वारकवृत्तिद्वारेणाऽऽशेरते तस्यान्तःकरणस्याभावादित्यर्थः ॥१५४२॥

विदुषो न मिथ्याधीर्विषयसमुदायान्तःकरणयोरभावादित्युक्त्वा हेत्वभावाच्चेति सामान्यन्यायोक्तिपूर्वकमाह—लोक इति । व्यवहारभूमौ शुक्त्यादितत्त्वमजानतो रजतमेतदित्याद्या मिथ्याबुद्धिरुत्पद्यते विज्ञातशुक्त्यादितत्त्वस्य तु पुंसो नासावस्ति हेत्वभावात्तथैव ब्रह्मविदो न युक्ता मिथ्याधीरित्यर्थः ॥१५४३॥

विदुषो मिथ्याज्ञानाभावमुक्त्वा विपक्षे दोषमाह—सम्यगिति । शास्त्रोत्थज्ञानादूर्ध्वमपि मिथ्याधियः सत्त्वे शास्त्रे विश्वासाभावात्तदर्थं प्रवृत्तेरसामञ्जस्ये दोषान्तरमाह—एवं सतीति ॥१५४४॥

मानस्यामानत्वे सर्वव्यवहारहानिरिति फलितमाह—सम्यगिति ॥१५४५॥

ज्ञानेनाज्ञानध्वस्तेस्तत्कार्यमिथ्याज्ञानस्य सविषयस्य बाधितत्वान्न विदुषो रागादिरित्युपपाद्य ज्ञानान्मोक्षे तज्जन्ममात्रेण शरीरं पतेत्तत्स्थितिहेत्वभावादिति सद्योमुक्तिमतं दूषयति—सम्यग्ज्ञानेति ॥१५४६॥

तस्यापहस्तितत्वे हेतोर्वाच्यत्वमाशङ्क्याह—पूर्वेति । प्रारब्धकर्मणा देहस्थितेः सद्यस्तत्पातो विदुषो नाऽऽप्नोतीत्यर्थः । आरब्धकर्मणा देहस्थितिमुपजीव्येतरेषां ज्ञानध्वस्तिमुपसंहरति—ज्ञानेति ॥१५४७॥

तत्र भगवद्वाक्यं प्रमाणयति—यथेति ॥१५४८॥

ज्ञानाग्निः सर्वकर्माणीति ज्ञानात्कर्मक्षयं ब्रुवता तस्मादेव मुक्तिरुक्ता तत्र च्छान्दोग्यश्रुतिं मानत्वेनावतारयति—सर्वेति ॥१५४९॥

---

१. सर्वज्ञानानामन्त्यं एकोऽसाधारणो हेतुः तस्मात् प्रारब्धेऽवशिष्टं न स्यादित्यर्थः ।
२. नानाभासः द्वैतप्रतिभासः ।

नेत्रबन्धविनिर्मोकादुपदेशः स्मृतिं प्रति ।।५०।।
ततस्तदर्थग्रहणमनुष्ठानं ततः परम् । स भूरिगत्युपचयाद्ग्रामाद्ग्रामान्तरं व्रजेत् ।।५१।।
सम्यग्ज्ञातोपदेशार्थः स्वयं च प्रतिभानवान् । द्राघीयसा स कालेन गन्धारान्प्रतिपद्यते ।।५२।।
यथैवमेवेहापि स्याद्य इहाऽऽचार्यवान्नरः ।
निःशेषदृष्टान्तोक्त्यर्थप्रसक्तिविनिवृत्तये । अपवादं श्रुतिरियं तस्य त्विति जगाद नः ।।५३।।

जीवन्मुक्तिप्रसाधनम्

तस्य त्वेवंविदः पुंसस्तावदेव चिरं भवेत् । यावदैकात्म्यसंमोहपट्टको नापनीयते ।।५४।।
प्रत्यग्याथात्म्यविज्ञानजन्मनो नातिरेकभाक् । प्रत्यङ्मोहाभिनहनध्वंसश्चाप्यन्यथामतेः ।।५५।।
तस्माद्याथात्म्यविज्ञानसमुत्पत्तेः पुरैव तु । आत्माज्ञानं सकार्यं स्यात्तस्य बाध्यत्वकारणात् ।।५६।।
यस्मिन्प्राप्ते यद्भवति तत्तस्मात्स्यात्कथं पुरा । अन्त्यं तस्मात्परिज्ञानं सर्वबाध्यस्य बाधकम् ।।५७।।
ऋणिनोऽप्यस्य देवाद्या नेशते ब्रह्मवेदिनः । इत्युक्तं किंनिमित्तं चेत्तत्र प्रतिविधीयते ।।५८।।

कोऽसौ दृष्टान्तः कथं वा तद्गतसर्वसादृश्यं वार्ष्टान्तिके प्राप्तं कथं च तन्निषेधकोऽपवादः श्रुत्युक्त इति तत्र दृष्टान्तस्वरूपमाह—नेत्रेति । गान्धारो हि प्राप्तदेशान्तरस्ततो गृहीतबहुधनः स्वीयानेव गन्धारानागच्छन्नध्वनि बद्धाक्षस्तस्करैरपहृतधनो वने निसृष्टस्तस्याऽऽर्तध्वनिं श्रुत्वा कश्चित्पथिकस्तदभ्याशमेत्य नेत्रबन्धननिर्मोकपूर्वकमीप्सितदेशप्रापकमार्गस्मृतिमुद्दिश्योपदिदेश ततस्तदर्थे श्रोतुर्ज्ञानं ततो गतिरिति क्रमेणेष्टदेशं श्रोता प्रतिपद्यते । स च यथोपदेशं बहुगत्या ग्रामाद्ग्रामान्तरं गच्छन्दीर्घतरेण कालेन गन्धारान्प्राप्नोतीत्यर्थः ।।१५५०-१५५१।।

पण्डितो मेधावीति विशेषणे दृष्टान्तनिविष्टे तत्र पण्डितपदार्थमाह—सम्यगिति । मेधावीत्यस्यार्थमाह—स्वयं चेति ।।१५५२।।

दृष्टान्तमनूद्य तद्गतसर्वार्थस्य वार्ष्टान्तिके प्रसङ्गमाह—यथेति । इहेत्येका सप्तमी तावदधिकृतान्[2] परा तु मुक्तिमधिकरोतीति विवेक्तव्यम् । गान्धारवन्मोक्षे विदुषोऽप्यनुष्ठानविशेषप्रसङ्गो दृष्टान्तवार्ष्टान्तिकयोस्तुल्यत्वादतो न केवला धीर्मुक्तिहेतुरित्यर्थः । संप्रत्यपवादमुदाहरति—निःशेषेति । सर्वस्य दृष्टान्तवाक्यार्थस्य वार्ष्टान्तिके प्रसक्तौ तन्निवृत्तये "तस्य तावदेव चिरमि"तिश्रुतिरस्मान्प्रति प्रसङ्गस्यापवादमवादीदित्यर्थः ।।१५५३।।

तदेव स्फुटयन्वाक्यं व्याचष्टे—तस्येति । भवेन्मुक्तिरिति शेषः ।।१५५४।।

प्रकृतां जीवन्मुक्तिमेव प्रकारान्तरेण साधयति—प्रत्यगिति । अभिनहनं बन्धनमावरणमिति यावत् । अन्यथामतेश्च मोहकार्यतया निवृत्तिस्तथैवेति योजना ।।१५५५।।

बुद्धीद्धो बोधो बोधेद्धा वा बुद्धिरज्ञानादिध्वस्तिरित्यत्र फलितमाह—तस्मादिति । प्रागेव तद्विषयव्यवहारदृष्टिरुक्तेत्येतदनुग्राहिकां श्रुतिं वक्तुं तुशब्दः । ज्ञानादूर्ध्वमज्ञानाद्यभावे हेत्वन्तरमाह—तस्येति । सति बाधकोपनिपाते बाध्यस्य नावस्थानसिद्धिरित्यर्थः ।।१५५६।।

"अविद्या सह कार्येण नाऽऽसीदस्ति भविष्यती"ति वदता प्रागप्यज्ञानादिहानेरिष्टत्वात्पूर्वं तत्सत्त्वमूर्ध्वं तदसत्त्वमित्येतत्पूर्वोत्तरविरुद्धमित्याशङ्क्याऽऽह—यस्मिन्निति । न हि रजतादिनिवृत्तिः शुक्त्यादिज्ञाने भवन्ती प्रागिष्यते तथैव वाक्योत्थज्ञाने सत्यज्ञानादिहानं न तत्तस्मात्पूर्वं स्यात्पूर्वमज्ञानादिव्यवहारः । पश्चात्तदभावव्यवहार एवंदृष्ट्यनुसारी भावाभावव्यवहारो, वास्तवस्तु नाऽऽसीदस्ति भविष्यतीति व्यवहारस्तन्न पूर्वापरविरोध इत्यर्थः । ज्ञानोत्पत्तावज्ञानादिदाहाद्देहाद्याभासस्य च भोगादारब्धक्षये हेत्वभावादेवास्थितेरद्वैतधियः सिद्धमन्त्यत्वमित्युपसंहरति—अन्त्यमिति । अन्त्यत्वं व्यक्तीकर्तुं विशिनष्टि—सर्वेति ।।१५५७।।

स्वयूथ्यप्रत्युक्तां जीवन्मुक्तिं व्यवस्थापयता ज्ञानफले प्रतिबन्धाभावः साधित इदानीं देवादीनामुत्तमर्णत्वेऽपि

१. तस्य च कर्तृत्वाभावात् (न्या०) ।
२. अधिकृतान्—अधिकरोतीत्यन्वयः ।

ऋणिनोऽपि देवाः ज्ञानिनः फलप्रतिबन्धे नेशते

**न विज्ञातात्मयाथात्म्यं प्रत्यृणित्वं भवेद्यतः । अविद्याविषयं तत्स्यात्तस्य कर्तृत्वकारणात् ॥५९॥**
**यत्र वा अन्यदित्यादि तथाच श्रुतिशासनम् । ध्वस्ताविद्यस्य तन्न स्यात्तस्यैकात्म्यस्वभावतः ॥६०॥**
**न चेहाविदुषोऽपि स्यादृणित्वं हेत्वसंभवात् । न किंचिन्नः सुरैः प्रत्तमृणित्वं येन नो भवेत् ॥६१॥**
**वचनादिति चेन्नैवं तदुक्तेरर्थवादतः । अवदानविधेः[1] शेषो ह्यर्थवादो हि तद्वचः ॥६२॥**

देवानामैश्वर्यस्य विषयप्रदर्शनम् अभयोऽन्यां इत्यस्यावतरणम्

**विद्वांसं प्रति नेशाना यदि देवादयो मताः । कस्मिन्विषय ऐश्वर्यं तेषां स्यात्सोऽधुनोच्यते ॥६३॥**
**प्रामाण्यं कर्मकाण्डस्य यस्मिन्विषय इष्यते । अविद्याविषयः साक्षादथ योऽन्यामितीर्यते ॥६४॥**

विद्याफलप्रतिबन्धे न सामर्थ्यमिति सिद्धान्तिनोक्तमनूद्य हेतुं पृच्छति—ऋणिनोऽपीति । निमित्तं प्रतिजानीते—तत्रेति ॥१५५८॥

तेषामुत्तमर्णत्वं विद्वद्विषयं अविद्वद्विषयं वा ? नाद्य इत्याह—नेति । तस्य कर्तृत्वाद्यभावं हेतुमाह—यत इति । अतस्तद्विषये तेषामनैश्वर्यमुचितमिति शेषः । द्वितीयमङ्गीकरोति—अविद्येति ॥१५५९॥

अविदुषोऽस्ति कर्तृत्वादीत्यत्र मानमाह— यत्रेति । विदुषो न कर्तृत्वादीत्यत्रापि मानमाह—ध्वस्तेति । "यत्र त्वस्य सर्वमात्मैवाभूदि"तिश्रुतेरित्यर्थः ॥१५६०॥

अधमर्णत्वमविदुषोऽङ्गीकृत्य तद्विषये देवादीनामुत्तमर्णत्वमुक्त्वा तदपि नास्तीत्याह—न चेति । इह देवादिष्विति यावत् । हेत्वसंभवं साधयति—नेत्यादिना । पवनवर्षादिप्रदानं तु स्वाधिकारकृतमीश्वराज्ञाधीनं नास्माकमृणित्वमापादयितुमलमन्यथा स्वाधिकारप्रच्युतिप्रसङ्गा"द्भीषाऽस्मादि"त्यादिश्रुतेरिति भावः ॥१५६१॥

"त्रिभिर्ऋणवा जायत" इत्यादिश्रुतेरविदुषोऽधमर्णतेति शङ्कते—वचनादिति । तन्न स्वातन्त्र्येण मानमर्थवादत्वा"त्सोऽरोदीदि"त्यादिवदतो न तद्विवक्षितार्थसाधकमित्याह—नैवमिति । अर्थवादत्वं समर्थयते—अवदानेति ।

यथा "निवीतं मनुष्याणामि"त्युपवीतस्तुत्यर्थोऽर्थवादो न विधिरुपपद्यते "देवलक्ष्ममेव तत्कुरुत" इति विधिनाऽस्यैकवाक्यत्वात्तथा "तदवदानैरेवावदयत" इत्यवदानशेषोऽयमर्थवादो यन्मनुष्याणामृणित्ववचनमित्यर्थः । अर्थवादस्य विधिशेषत्वं "देवा वै देवयजनमध्यवसाये"त्यादौ प्रसिद्धमिति वक्तुमेको हिशब्दः । द्वितीयस्तु यथोक्तदृष्टान्तप्रदर्शनार्थः ॥१५६२॥

मनुष्याणां पशुलोकत्वश्रवणेऽपि देवादिभिस्तद्विद्याफले मुक्तौ प्रतिबन्धो न शक्यते कर्तुं विद्या चाऽऽद्यैवाविद्याध्वंसिनी अन्त्यायास्तत्संततेश्च तदयोगाद्विदुषो रागादिदृष्टेश्चाऽऽभासत्वात्तत्फलमावश्यकमित्युक्तम् । इदानीं देवादीनां विदुष्यस्वातन्त्र्ये कुत्र स्वातन्त्र्यमिति पृच्छति—विद्वांसमिति । अथ योऽन्यामित्याद्यवतारयति—सोऽधुनेति । अब्रह्मविदि निग्रहानुग्रहस्वातन्त्र्यं देवादीनां प्रपञ्च्यतेऽनन्तरवाक्येनेत्यर्थः ॥१५६३॥

आविद्ये साध्यसाधनत्वादौ कर्मश्रुतेर्मानत्वं चोच्यते तेनैवेत्यर्थान्तरमाह—प्रामाण्यमिति । प्रत्यक्षादेरागमेतरप्रमाणस्याविद्याविषये प्रामाण्यवदितिदृष्टान्तद्योतनार्थं साक्षादित्युक्तम् ॥१५६४॥

---

१. अवदानविधेरिति—निवीतं मनुष्याणां प्राचीनावीतं पितृणामुपवीतं देवानामुपव्ययते इति श्रूयते । तत्र निवीतप्राचीनावीतयोः न विधिः किन्तु उपवीतविधेः स्तुत्यर्थोऽर्थवादः उपवीतविधिना एकवाक्यत्वात् । तथा "जायमानो वै ब्राह्मणः त्रिभिर्ऋणवा जायते" इत्यादिः "तदवदानैरेवावदयते" इति उत्तरत्र विधीयमानावदानविधेः शेषोऽर्थवादः । अन्यथा अवदानेन ऋणत्रयनिवृत्त्यसंभवात् इत्यर्थः । "देवा वै देवयजनमध्यवसाय दिशो न प्राजानन्—" इति "आदित्यः प्राणनीयश्चरुः" इति विहितेष्टेरर्थवादः सर्वव्यामोहानां निवर्तकोऽयं यागः दिङ्मोहस्यापि निवर्तकः इति स्तुतिः । ( जै० सू० १.२.११ )

सम्यग्ज्ञानसमुत्पत्तौ कर्मकार्यसमाप्तितः । नापेक्षा कर्मकाण्डे स्यात्तत्प्रामाण्यकृतार्थतः ॥६५॥

अथ योऽन्यामित्यत्राथशब्दविवरणम्

प्रकृतैकात्म्यविद्याया व्युत्थानायाथगीरियम् । न हि संगच्छते विद्याऽविद्यायोगं विरोधतः ॥६६॥
प्रतीच्यनन्य एकस्मिन्नविद्यापिहितेक्षणः । अनन्योऽप्यात्मनो भिन्नामुपास्ते देवतां नरः ॥६७॥
अन्योऽसाविति वाक्येन व्याख्योपासापदस्य तु । भेददर्शनमेवात्र उपास्त इति भण्यते ॥६८॥
किं मूलं भिन्नदृष्टेः स्यादिति श्रुत्या तदुच्यते । न स वेदेत्यविद्येयं नामरूपप्रपञ्चकृत् ॥६९॥
आत्माविद्याग्रहग्रस्तः संहतस्तज्जवस्तुभिः । स एष पशुतामेति देवादीनां स्वकर्मभिः ॥७०॥
बहूपकारकृद्यद्वद्गवादिर्लौकिकः पशुः । देवादीनां तथाऽविद्वान्पशुः स्यादुपकारकृत् ॥७१॥

यथा ह्वै बहवः इत्यस्य विवरणम्

एकैकस्वामिको लोके गवादिः पशुरिष्यते । ततोऽप्यतिशयः पुंसां सर्वलोकोपकारिता ॥७२॥
एकैकक्रियया लोक एकैकस्वामिकः पशुः । अनेकैः संहतश्चैवं कदाचिदुपकारकः ॥७३॥

नन्वाविद्ये कर्मादौ न तत्प्रामाण्यं विदुषोऽपि कर्मापेक्षत्वात् "न हि कश्चित्क्षणमपी"त्यादिस्मृतेः श्रुतयोऽपि समुच्चितं ज्ञानं मुक्तिहेतुमाहुस्तत्राऽऽह—सम्यगिति । ऐक्यज्ञाने स्वर्गादेर्बाधितत्वात्कर्मकाण्डे तदर्थे वा विदुषो नापेक्षा कृत्याभावाज्ज्ञानात्प्रागेव तत्प्रामाण्यस्य व्यावहारिकस्य सिद्धत्वात् । अथवा सति ज्ञाने कर्मकार्यस्य बुद्धिशुद्धेस्तद्धेतोरादावेव लब्धत्वात्तत्कर्मकाण्डप्रामाण्यस्य चरितार्थत्वान्न पुनस्तस्मिन्नपेक्षा युक्ता फलाभावाज्जनकादेर्बाधितं कर्म दर्शितं "न मे किंचन दह्यते"त्यादिदर्शनात् । स्मृतिश्चाज्ञविषया "तस्य कार्यं न विद्यते" इति च वक्ष्यति । "कुर्याद्विद्वानि"ति चाज्ञं प्रवर्तयितुमेवोक्तं "यद्यदाचरति श्रेष्ठ" इत्यादिदर्शनात् । समुच्चयवचनानि च क्रमसमुच्चयार्थान्यन्यथा "नान्यः पन्था" "न कर्मणे"त्यादिनिषेधविरोधस्तस्मादाविद्ये कर्मादौ कर्मश्रुतेर्मानतेति भावः । आविद्यविषयत्वे तस्या रूप्यादिधीवदमानतेत्याशङ्क्य व्यावहारिकमानत्वस्याध्यक्षादिवदुपपत्तेर्मैवमित्याह—तदिति । रूप्यादिधीस्तु न ज्ञान"मविद्या वेद्यैः सह भ्रम" इत्युपगमादिति द्रष्टव्यम् ॥१५६५॥

अब्रह्मविदि देवादिस्वातन्त्र्यमाविद्ये च कर्मादौ कर्मकाण्डमानतेत्यर्थद्वयं वक्तुमुत्तरं वाक्यमिति तात्पर्यमुक्त्वाऽथशब्दार्थमाह—प्रकृतेति । प्रकृतादुत्तरस्य विच्छेदकरणे हेतुमाह—न हीति । विरोधतो निवर्त्यनिवर्तकभावादित्यर्थः ॥१५६६॥

योऽन्यामित्यामित्यादेरर्थमाह—प्रतीचीति । त्रिविधभेदाभावो विशेषणयोरर्थः । स्वाविद्याच्छन्नदृष्टित्वं हेतूकृत्य भेददृष्टिमाह—अविद्येति । उपासितुर्वस्तुतो देवताया भिन्नत्वं निरसितुमनन्योऽपीत्युक्तम् ॥१५६७॥

कीदृशमुपासनं न तावच्छास्त्रीयं न स वेदेतिवाक्यशेषान्नापि लौकिकं भेददर्शनं तत्रोपास्त्यप्रसिद्धेस्तत्राऽऽह—अन्योऽसावितीति । शास्त्रीयोपास्तिव्यावृत्त्यर्थस्तुशब्दः । न चोपासनाशब्दो लौकिके भेददर्शने न प्रयुज्यते उपास्ते राजानमित्यादौ दर्शनादिति भावः ॥१५६८॥

आकाङ्क्षापूर्वकं वाक्यान्तरमादत्ते—किं मूलमिति । "न स वेद"ति श्रुत्येति संबन्धः । तदर्थमाह—अविद्येति । तस्यामनुभवं प्रमाणयति—इयमिति । तत्रैव कार्यलिङ्गकमनुमानमाह—नामेति ॥१५६९॥

वाक्यान्तरमवतारयितुं भूमिकामाह—आत्मेति । अविद्वानाविद्यब्राह्मण्याद्यभिमानवान्यागादिभिरुपकुर्वन् देवादीनां पशुत्वमेति न तु विद्वानित्यर्थः ॥१५७०॥

यथा पशुरिति दृष्टान्तं व्याचष्टे—बहूपकारेति । एवमित्यादिदार्ष्टान्तिकं विभजते—देवादीनामिति । अविद्वानिति च्छेदः ॥१५७१॥

वाक्यान्तरमवतारयितुं भूमिकां कुर्वन्गवादिवैसादृश्यं नरपशोर्दर्शयति—एकैकेति ॥१५७२॥

यथा हेत्यादिदृष्टान्ततात्पर्यमाह—एकैकेति । लोके गवादिरेकैकाधिष्ठितो दोहनाद्येकैकक्रियया कदाचिदेकैकस्याधिष्ठातुरुपकरोति कदाचिदनेकैः संभूय वहनादिक्रिययोपकारकस्तं पालयतीत्यर्थः । एकैकस्य पशोरसंहतस्योपकारकत्ववदिति वक्तुमेवमित्युक्तम् ॥१५७३॥

भूरिक्रियावांस्तु नरस्तथाऽनेकेश्वरोऽवशः । एकैको निखिलं विश्वं बिभर्त्यज्ञो दिवानिशम् ॥७४॥
अस्यैवार्थस्य दृष्टान्तो यथा हेत्यभिधीयते । यत एवमतो युक्तं देवादेर्भृशमप्रियम् ॥७५॥
अपि भूरिपशोः पुंस एकस्मिन्नपि तस्करैः । ह्रियमाणे पशौ तीव्रं दुःखं समुपजायते
किमु सर्वस्वहरणे वक्तव्यं दुःखकारणम् ॥७६॥
सर्वस्वतुल्ये नृपशौ ब्रह्मधीपरिमोषिणा ॥७७॥
ह्रियमाणे महद्दुःखं तस्मादेषां तदप्रियम् । यद्यथोक्तं परं ब्रह्म मनुष्या विद्युरञ्जसा ॥७८॥
सर्वाधिकारहेत्वग्निब्रह्मज्ञानस्य जन्मनि । अव्यावृत्ताननुगतात्प्रतीचोऽन्यन्न शिष्यते ॥७९॥
नावशिष्यत एतस्मात्तदविद्योत्थमण्वपि । प्रध्वस्तत्वादविद्याया ब्रह्मात्मज्ञानवह्निना ॥८०॥
क्रियावद्भिर्हि कौन्तेय देवलोकः समावृतः । न चैतदिष्टं देवानां मर्त्यैरुपरि वर्तनम् ॥८१॥

देवताराधनं मुमुक्षुभिः अवश्यं कर्तव्यम्

तस्मान्मुमुक्षुर्देवादीन्सम्यगाराध्य कर्मभिः । उन्मुक्तबन्धनस्तैः सन्नापित्सेज्ज्ञानमात्मनः ॥८२॥
तद्विपक्षस्तु यो बालो बलादेव मुमुक्षति । स्वर्गादेरपि विभ्रष्टो नरकं स निगच्छति ॥८३॥
प्रमादिनो बहिश्चित्ताः पिशुनाः कलहोत्सुकाः । संन्यासिनोऽपि दृश्यन्ते देवसंदूषिताशयाः ॥८४॥

एवमित्यादिदार्ष्टान्तिकतात्पर्यमाह—भूरीति । उक्तदृष्टान्तादविद्वानेकैकोऽनेकदेवाद्यधिष्ठितः संस्तदधीनः सन्दानयागादिक्रियावानशेषं देवादिकं पालयतीत्यर्थः ॥१५७४॥

यथा पशुरित्यनेनैवेष्टसिद्धौ किं यथा हेत्यादिनेत्याशङ्क्य लोकपशोर्मनुष्यपशोर्यथोक्तं विशेषं वक्तुमित्याह—अस्येति । एकस्मिन्नेवेत्यादिवाक्यमवतारयितुं पातनिकामाह—यत इति । इज्यादिभिर्नरस्य देवाद्युपकारकत्वाद्ब्रह्मज्ञानेन पशुत्वाद्व्युत्थाने देवादेर्महद्दुःखं युक्तमित्यर्थः ॥१५७५॥

वाक्यं व्याकरोति—अपीति ॥१५७६॥

तस्मादेषामित्यादेरर्थमाह—सर्वस्वेति ॥१५७७–१५७८॥

परिमोषित्वं ब्रह्मधियः साधयति—सर्वेति । सर्वस्मिन्कर्मण्यधिकारः स्वामित्वेन संबन्धस्तत्र हेतुरभिमानस्तस्य सहेतोरग्निरिव यद्ब्रह्मज्ञानं तस्य जन्मनि सति सर्वस्य प्रत्यङ्मात्रत्वेनावसानात्परिमोषित्वं ब्रह्मधियः स्फुटमित्यर्थः ॥१५७९॥

ज्ञाने सत्यज्ञानाभावेऽप्यर्थान्तरं स्यादित्याशङ्क्याऽऽह—नेत्यादिना । एतस्मात्प्रतीचोऽन्यदिति संबन्धः । कारणमन्तरेण कार्यं स्थातुमसमर्थमित्यर्थः ॥१५८०॥

ब्रह्मज्ञानात्पशुत्वध्वस्त्या मनुष्याणामुत्कर्षो देवाद्यप्रियहेतुरित्युक्त्वा मनुष्योत्कर्षं देवा न मृष्यन्तीत्यत्र व्यासवाक्यं प्रमाणयति—क्रियावद्भिरिति । सुकृतिभिरावृतत्वाभावे तस्य कदाचिद्ह्रासप्रसङ्गादिति हिशब्दार्थः । ते हि मनुष्याणां देवलोकस्थितिमपि न मृष्यन्ते तेषां विद्यया निर्वाणाप्तिं सुतरामेवेति भावः ॥१५८१॥

देवादीनां मनुष्येषु ब्रह्मज्ञानस्याप्रियत्वे तन्मुमुक्षा विफलेत्याशङ्क्य देवाद्यप्रियवाक्येन ध्वनितं दर्शयति—तस्मादिति । मनुष्याणां विद्याप्तौ देवादीनां विघ्नकर्तृत्वसंभवादित्यर्थः । आराधनस्य सम्यक्त्वं शास्त्रानुसारित्वम् । आपित्सेदाप्तुमिच्छेदिति यावत् ॥१५८२॥

मुमुक्षुरद्वैतदर्शनमाकाङ्क्षन्द्वैतदर्शनानुकूलदेवाद्याराधनाय न स्पृहयतीत्याशङ्क्याऽऽह—तद्विपक्षस्त्विति । देवाद्याराधनपराङ्मुखस्य विवेकवैराग्यादिशून्यस्य तत्प्रसादं विना ज्ञानायोग्यस्याकस्मादेव मुक्तिमिच्छतस्तद्धेत्वभावान्न मुक्तिर्न वाऽभ्युदयो मुमुक्षुत्वादेव तद्धेत्वभावादतः स नरकमात्रपात्रं स्यादित्यर्थः ॥१५८३॥

ननु तदाराधनाभावेऽपि कुतो मुमुक्षोर्नारकित्वं न हि मुमुक्षाऽनर्थफला मोक्षशास्त्रविरोधान्न चानर्थध्वंसेच्छया प्रवृत्तोऽनर्थमृच्छतीत्याशङ्क्य बहिर्मुखस्य निषिद्धाचरणध्रौव्यादफला मुमुक्षेति मत्वाऽऽह—प्रमादिन इति ।

न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते । न च संन्यसनादेव सिद्धिं समधिगच्छति ॥८५॥
कषायं पाचयित्वा तु श्रेणीस्थानेषु च त्रिषु । प्रव्रजेच्च परं स्थानं पारिव्राज्यमनुत्तमम् ॥८६॥
भावितैः करणैश्चायं बहुसंसारयोनिषु । आसादयति शुद्धात्मा मोक्षं वै प्रथमाश्रमे ॥८७॥
तमासाद्य तु मुक्तस्य दृष्टार्थस्य विपश्चितः । त्रिष्वाश्रमेषु कोऽन्वर्थो भवेत्परमभीप्सतः ॥८८॥
इत्येवं भगवद्व्यासवचांस्यत्र सहस्रशः । श्रूयन्ते न्यायदृब्धानि तस्मात्तान्यादराच्छ्रयेत् ॥८९॥

मू.—ब्रह्म वा इदमग्र आसीदेकमेव तदेकँ सन्न व्यभवत् । तच्छ्रेयोरूपमत्यसृजत क्षत्रं यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति । तस्मात्क्षत्रात्परं नास्ति तस्माद्ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये । क्षत्र एव तद्यशो दधाति सैषा क्षत्रस्य योनिर्यद्ब्रह्म तस्माद्यद्यपि राजा परमतां गच्छति ब्रह्मैवान्तत उपनिश्रयति स्वां योनिं य उ एनँ हिनस्ति स्वाँ स योनिमृच्छति स पापीयान्भवति यथा श्रेयाँसँ हिँसित्वा ॥११॥

संगतिप्रदर्शनपूर्वकमुत्तरकण्डिकातात्पर्योक्तिः

शास्त्रार्थः सूत्रितस्तावदात्मेत्येवेति यत्नतः । उक्तश्च तस्य सूत्रस्य संबन्धः सप्रयोजनः ॥९०॥

श्रवणादिषु मनःसमाधनवैधुर्यं प्रमादः । स च चेतसो बाह्यार्थप्रावण्ये हेतुस्तच्च परोत्कर्षासहिष्णुत्वे कारणं तच्च कलहकुतूहलित्वे निदानं प्रमादे हेतुर्देवादिभिरनाराधितैर्दूषितधीत्वमिति विभागः । अपिस्तु कैमुतिकन्यायार्थः ॥१५८४॥

संन्यासिनो निषिद्धचेष्टाद्वाराऽनिष्टापत्तिश्चेदागमिकसंन्यासस्य सम्यग्धीहेतुत्वं न स्यात्तथा चाऽऽगमव्याहतिरित्याशङ्क्य तन्मात्रं वा तद्विशेषो वा धीहेतुरिति विकल्प्याऽऽद्यं भगवद्वाक्येन निराचष्टे—न कर्मणामिति । कर्मत्यागमात्रान्नैष्कर्म्याभावेऽपि तन्मात्राज्ज्ञानं स्यादित्याशङ्क्याऽऽह—न चेति ॥१५८५॥

अस्तु तर्हि कर्मभिः शुद्धबुद्धेः संन्यासो धीहेतुरिति द्वितीयमाशङ्क्याङ्गीकुर्वन्क्रमसंन्यासविषयं व्यासवाक्यं पठति—कषायमिति । शुद्धबुद्धेरेव पारिव्राज्येऽधिकारो नान्यस्येति तुशब्दार्थः । श्रेणीस्थानेषु सोपानस्थानीयेष्वाश्रमेष्विति यावत् । तेष्ववस्थित्वेति चकारार्थः । द्वितीयश्चकारो वैराग्यं पारिव्राज्यहेतुरिति समुच्चयार्थः । अनुत्तममनतिशयपुमर्थसाधनं पारिव्राज्यं प्रव्रजेद्गच्छेदिति संबन्धः । परं स्थानं कैवल्यमुद्दिश्येति शेषः ॥१५८६॥

कथं तर्हि ब्रह्मचर्यादेव प्रव्रजेदित्यक्रमसंन्यासश्रुतिस्तत्राऽऽह—भावितैरिति । वैराग्यद्वारेति दर्शयितुं चशब्दः । वैशब्दोऽवधारणार्थः । मोक्षं तद्धेतुज्ञानार्थमाश्रममिति यावत् ॥१५८७॥

सोपानारूढस्यावरोहवत्पारिव्राज्यमाप्तस्यापि पूर्वाश्रमेष्वनुष्ठानेच्छया प्रवृत्तिमाशङ्क्याऽऽह—तमासाद्येति । तुशब्दो दर्शितशङ्काव्यावृत्त्यर्थः । विपश्चितो विवेकवैराग्यादिमतोऽनतिशयं पुमर्थमिच्छतो मोक्षाश्रमं प्राप्तस्य श्रवणादिना दृष्टतत्त्वस्य जीवन्मुक्तस्याऽऽरब्धशेषेण देहाद्याभासमनुभवतो न पूर्वाश्रमेष्वर्थो येनाऽऽरूढपातीत्याशङ्केत्यर्थः ॥१५८८॥

शुद्धबुद्धेः संन्यासो धीहेतुरित्यत्रोक्तं मानमुपसंहरति—इत्येवमिति । तेषामुपकरणन्यायसाहित्येन मानत्वं सूचयति—न्यायेति । कर्मणामीश्वरार्पणबुद्ध्याऽनुष्ठितानां फलं धीशुद्धिः शुद्धधीश्च विवेकादियुक्तस्त्यक्तकर्मा मुक्तिहेतुं ज्ञानमात्रमिच्छन् गुरुपादावनुसृत्य श्रवणादि करोति नान्यदिति न्यायः । अतो देवताराधनादिपरः शुद्धधीर्व्यासादिवाक्यप्रामाण्यात्तत्त्वज्ञानमुद्दिश्य कर्माणि संन्यस्य श्रवणादीन्यावर्तयेदित्याह—तस्मादिति । उक्तं च भाष्ये—तस्मान्मुमुक्षुर्देवताराधनतत्पर इत्यादि ॥१५८९॥

ब्रह्म वा इदमित्यादिवाक्यस्यातीतेन संबन्धं वक्तुं वृत्तं कीर्तयति—शास्त्रार्थ इति । ब्रह्मविद्येति यावत् । यत्नतो विधित्रयनिराकरणेनेत्यर्थः । ननु ब्रह्मविद्यायाः संबन्धः कः किंच फलमित्याशङ्क्य तदाहुरित्यादिनोक्त-

**संसारानर्थहेतुत्वमविद्यायाश्च वर्णितम् । योऽन्यामित्यादिवाक्येन तत्कार्यमपि सूत्रितम् ॥९१॥**
**विद्यावत्सह कार्येण ह्यविद्याऽपीह सूत्रिता । सामर्थ्याद्विस्तरस्तस्या आऽध्यायान्तादिहोच्यते ॥९२॥**
**यथोक्तात्मानभिज्ञो योऽविद्याकार्याभिमानवान् । पशुवद्देवताः पाति स जुहोत्यादिकर्मभिः ॥९३॥**
**आऽध्यायावसितेस्तस्मादविद्याया विभूतयः । वक्ष्यन्ते विस्तरेणातः परो ग्रन्थोऽवतार्यते ॥९४॥**
**अस्यैवार्थस्य सिद्ध्यर्थमग्निसर्गादनन्तरम् । इन्द्रादिसर्गः प्राङ्नोक्तो मोहकार्यविवक्षया ॥९५॥**
**परि[प्र]पूरणाय सृष्टेस्तु ह्यग्निसर्गः पुरोदितः । यत एवमतोऽविद्याकार्योऽनर्थोऽखिलो भवेत् ॥९६॥**
**इन्द्रादिसर्गस्तत्रैव तच्छेषत्वात्समीक्ष्यताम् । अविद्याकार्यसिद्ध्यर्थमिह त्वस्य प्रपञ्चनम् ॥९७॥**
**स्रष्टृ यज्जगतः पूर्वमात्मैवेत्यभिशब्दितम् । तदग्न्याद्यभिमान्यत्र ब्रह्मेति व्यपदिश्यते ॥९८॥**

मनुवदति—उक्तश्चेति । सूत्रस्य सूत्रितज्ञानस्येति यावत् । तस्य फलेन साध्यसाधनत्वं संबन्धोऽधिकारिणाऽऽश्रयाश्रयित्वमैक्येन विषयविषयित्वमिति विभागः । सर्वभावश्च तत्फलमिति विभागः ॥१५९०॥

अविद्यासूत्रे वृत्तं कीर्तयति—संसारेति । तादृगनर्थो भेददर्शनं चशब्दादविद्याऽपि कार्यद्वारा दर्शितेत्यर्थः । यथा पशुरित्यादिनोक्तं दर्शयति—तत्कार्यमिति । तच्छब्दो भेददर्शनविषयः ॥१५९१॥

संबन्धप्रयोजनाभ्यां सह विद्या सकार्या चाविद्या सूत्रितेति योऽर्थो विस्तरेणोक्तस्तमेव संक्षिपति—विद्यावदिति । इहेति पूर्वग्रन्थोक्तिः । सूत्रद्वयस्य प्रागेव व्यक्तत्वमस्तीति वक्तुं हिशब्दः । वृत्तमनूद्योत्तरस्य तेन संगतिमाह—सामर्थ्यादिति । उत्तरग्रन्थस्य तदुक्तिशक्तिदृष्टेरिति यावत् । तस्याः सूत्रितसकार्याविद्याया इत्यर्थः । इहेत्यध्यायशेषोक्तिः ॥१५९२॥

कथमुत्तरस्य सकार्याविद्यायां स्वशक्त्याऽन्विताक्यवत्वं तत्राऽऽह—यथेति । तदात्मानमेवावेदित्युक्तात्मनोऽज्ञानादज्ञानकार्ये देहादावहंममाभिमानभागी यागहोमादिभिरज्ञो देवादीनां मनुष्याणां पशुवदुपकरोतीत्ययमर्थोऽनन्तरग्रन्थेन भातीत्यर्थः ॥१५९३॥

यस्मादुक्तार्थस्यानन्तरग्रन्थे दर्शनात्तस्य सकार्याविद्यायामन्विताक्यवत्वं तस्मात्तदारम्भस्तां प्रपञ्चयितुमित्युपसंहरति—आऽध्यायेति । अध्यायशेषतात्पर्यमुक्त्वाऽनन्तरवाक्यमवतारयति—अत इति । यतः सकार्याविद्याप्रपञ्चार्थः शेषोऽतोऽविद्याविवर्तचातुर्वर्ण्यसृष्टिप्रकटनायानन्तरग्रन्थ इत्यर्थः ॥१५९४॥

"अथेत्यभ्यमन्थदि"त्यत्रानुग्राहकदेवतासर्गं प्रक्रम्याग्नेरेव सृष्टिरुक्ता नेन्द्रादीनामत्र त्वविद्यां प्रस्तुत्य तेषां सोच्यते तत्र कः श्रुतेरभिप्रायस्तत्राऽऽह—अस्येति । पूर्वमग्निसर्गानन्तरमिन्द्रादिसर्गो वाच्योऽपि नोक्तः फलाभावादिह त्वविदुषस्तत्कार्यवर्णाद्यभिमानिनः कर्माधिकृतिरित्यस्यार्थस्य प्रतिपत्त्यर्थं तस्याऽऽविद्यत्वविवक्षया स व्युत्पाद्यत इत्यर्थः ॥१५९५॥

अग्निसर्गोऽपि तर्हि तद्वदत्रैव वाच्योऽविद्याकार्यत्वाविशेषादित्याशङ्क्याऽऽह—परिपूरणायेति । तस्येतरवदाविद्यत्वे तुल्येऽपि फलवशात्प्रागुक्तिरित्यर्थः । अग्निसृष्टिवाक्यव्याख्यानकालेऽपि दर्शितमेतदिति वक्तुं हिशब्दः । अग्निसृष्टेर्वाच्यताद्योती तुशब्दः । इन्द्रादिसृष्टेराविद्यत्वे फलितमाह—यत इति । यतः सर्वः सर्गो रज्जुसर्पवदविद्याविलासोऽतः सोऽनर्थः स्यादिति योजना ॥१५९६॥

प्रजापतेः सृष्टिपूर्तये चेदग्निसृष्टिस्तत्रोक्ता हन्तेन्द्रादिसर्गोऽपि तत्रैव वाच्योऽन्यथा तदपूर्तेरित्याशङ्क्याऽऽह—इन्द्रादीति । प्रजापतिसृष्टिप्रक्रियायामिन्द्रादिसृष्टेर्द्रष्टव्यत्वे हेतुस्तच्छेषत्वादिति । तर्हि तत्रोक्तस्य कस्मादत्रोक्तिः पुनरुक्तेरित्याशङ्क्यास्यैवार्थस्येत्यत्रोक्तं स्मारयति—अविद्येति । न चाविद्याकार्यत्वसिद्ध्यर्थमिन्द्रादिसर्गवदग्निसर्गमपीहैवोक्त्वा तत्र सृष्टिपूर्त्यर्थमुपसंहृत्योच्यतामिति वाच्यं अग्निसृष्टेरपि तत्रानुक्तौ संग्राहकाभावादुपसंग्रहासिद्धौ प्रजापतिसृष्टेरपूर्तिप्रसङ्गात् । न चैवमिन्द्रादिसृष्टिं तत्र शिष्ट्वा तत्राग्निसृष्टिरुपलक्ष्यतामिति युक्तमग्निप्राधान्यस्य वक्ष्यमाणतया तेनेतरोपलक्षणस्य युक्तत्वादिति द्रष्टव्यम् ॥१५९७॥

पूर्वोत्तरग्रन्थयोः संगतिमुक्त्वा ब्रह्मेत्यादेरर्थमाह—स्रष्टृति । "आत्मैवेदमग्र आसीदि"त्यत्र यदात्मशब्देनोक्तं

ब्रह्मैकजात्यवच्छिन्नं यस्मादग्रे व्यवर्तत । नानेकजातिमद्धेतुकर्मणेऽलं ततो भवेत् ॥९९॥
चातुर्वर्ण्यप्रसाध्यं सन्नैकजातिप्रसाधनम् । कर्मालं सिद्धये लोके शिबिकोद्वहनं यथा ॥१६००॥
गृहीतिरभिषिक्तानामिन्द्रादीनां श्रुतौ श्रुता । श्रेयोरूपप्रसिद्धयर्थं क्षत्त्रस्येत्यवगम्यते ॥ १ ॥
धर्मान्तैः सहितैर्यस्मात्कर्म सिध्यति नान्यथा । तेन तेन विनाऽशक्तमतस्तत्तदचीक्लृपत् ॥ २ ॥
ब्रह्मासृजद्यतः क्षत्त्रमात्मनोऽप्यतिवीर्यवत् । बलवत्क्षत्त्रतस्तस्मान्नान्यद्भूतमिहेष्यते ॥ ३ ॥
तस्माच्च ब्राह्मणोऽधस्ताद्राजसूये महाक्रतौ । आसन्दीस्थमुपास्ते त्वं राजन्ब्रह्मेति संभ्रमात् ॥ ४ ॥
ब्रह्मेति श्रावितो राज्ञा ब्रह्मा प्रत्याह तं नृपम् । त्वमेव राजन्ब्रह्मेति क्षत्त्रे तद्यश आत्मनः ॥ ५ ॥
दधाति भास्वद्ब्रह्माख्यं यस्मिन्सर्वं प्रतिष्ठितम् । क्षत्त्रस्य योनिर्ब्रह्मेदं क्षत्त्रं ह्याविरभूत्ततः ॥ ६ ॥
। यतोऽतो यद्यपि क्षत्त्रं ब्राह्मण्यं प्रतिपद्यते ॥ ७ ॥
परमत्वं तथाऽप्यन्ते राजसूयक्रतोः पुनः । उपनिश्रयति ब्रह्म गुणभावेन पूर्ववत् ॥ ८ ॥

स्रष्टृ ब्रह्म तदग्निं सृष्ट्वा तद्रूपं ब्राह्मणत्वजात्यभिमानवदस्मिन्वाक्ये ब्रह्मशब्देनोच्यते तावन्मात्रं क्षत्त्रादिसर्गात्पूर्वं संवृत्तमित्यर्थः ॥१५९८॥

एकमेवेत्यस्यार्थमाह—ब्रह्मेति । स्रष्टृत्वेनाऽऽदिष्टं ब्रह्म ब्राह्मणत्वजातिमात्रविशिष्टमिति यावत् । अग्रे क्षत्त्रादिसर्गात्पूर्वमित्यर्थः । तदेकमित्यादेरर्थमाह—नानेकेति । ब्रह्मक्षत्त्राद्यनेकजातिमद्व्यक्तिकार्यस्य कर्मणः सिद्धये क्षत्त्रादिरहितं तद्ब्रह्म यस्मान्न शक्तं तस्मात्सहायत्वेन क्षत्त्रादि सृष्टमिति योजना ॥१५९९॥

कथं कर्माऽनेकजातिमद्धेतु ब्राह्मणत्वजातिमन्मात्रसाध्यं किं न स्याद्बृहस्पतिसववत्तत्राऽऽह—चातुर्वर्ण्येति । बृहस्पतिसवोऽपि पालयित्राद्यभावे न शक्यो निर्वर्तयितुमिति क्षत्त्रादिसृष्टिरिति भावः । चतुर्भिः साध्यं नैकेन सिध्यतीत्यत्र दृष्टान्तमाह—लोक इति ॥१६००॥

यान्येतानीत्यादिवाक्याभिप्रायमाह—गृहीतिरिति । क्षत्त्रस्योत्तमत्वख्यापनार्थं श्रुतावभिषिक्तेन्द्रादिग्रहणमित्यर्थः ॥१६०१॥

ननु ब्रह्मणा कर्त्रा क्षत्त्रेण पालयित्रा सर्वकर्मनिर्माणसंभवात्किमिति वैश्यादिसृष्टिरुच्यते तत्राऽऽह—धर्मान्तैरिति । यथा ब्रह्म पालयित्रभावे कर्म कर्तुं नेष्टे तथा द्रव्यार्जकाद्यभावेऽपि; तेनापेक्षितं सर्वं ससर्जेत्यर्थः ॥१६०२॥

श्रेयोरूपमत्यसृजतेति क्षत्त्रस्योत्कृष्टत्वमादिष्टं तस्यैव स्पष्टीकरणार्थमभिषिक्तग्रहणमित्युक्तम् । कथं तस्योत्तमत्वं ततोऽपि ब्राह्मणस्योत्कर्षादित्याशङ्क्य तस्मादित्यादि व्याचष्टे—ब्रह्मेति । व्यवहारभूमौ क्षत्त्रस्य बलवत्तरत्वमनुभवसिद्धमित्यर्थः ॥१६०३॥

तस्य बलवत्त्वेऽपि कथमुत्तमत्वं क्षत्त्रं हि ब्रह्म पुरोधाय सर्वत्राधिक्रियत इत्याशङ्क्य तस्माद्ब्राह्मण इत्यादेरर्थमाह—तस्माच्चेति । चकारोऽवधारणे । क्षत्त्रस्य बलित्वेनोत्तमत्वं तच्छब्दार्थः । अधस्ताद्भूमौ स्थितः सन्निति यावत् । आसन्दीशब्देन विशिष्टो मञ्चो गृह्यते । संभ्रमस्तात्पर्यम् ॥१६०४॥

उपास्तिप्रकारं प्रकटयन्राजसूयाभिषिक्तेनेत्यादिभाष्यं विभजते—ब्रह्मेतीति । उक्तेऽर्थे क्षत्त्र एवेत्यादिवाक्यं पातयति—क्षत्त्र इति । आत्मनो ब्राह्मणस्य पुरोहितस्येति यावत् । यशःशब्दार्थमाह—भास्वदिति । क्षत्त्राख्यं यशस्ततोऽपि भास्वदित्याशङ्क्याऽऽह—यस्मिन्निति । ब्राह्मणस्य क्षत्त्रं प्रति नीचत्वोपगमात्कुतो ब्रह्माख्ये यशसि क्षत्त्रादि प्रतिष्ठितमित्याशङ्क्य सैषेत्यादि व्याकरोति—क्षत्त्रस्येति । योनित्वं साधयति—क्षत्त्रं हीति । न हि पुरोहितं विना क्षत्त्रं संभवतीत्यर्थः ॥१६०५-१६०६॥

तयोर्ब्राह्मण्यस्य तुल्यत्वात्कुतोऽवान्तरभेदः क्षत्त्रमपि क्रतुकाले ब्राह्मण्यं प्राप्नोतीत्याशङ्क्य तस्माद्यद्यपीत्यादेरर्थमाह—यत इति । क्षत्त्रस्य ब्राह्मणाधीनत्वं प्रागुक्तं पञ्चम्यर्थः ॥१६०७-१६०८॥

ब्रह्मैव चान्ततः क्षत्त्रमुपनिश्रयतीत्यतः । क्रतुकालैव ब्रह्माप्तिः क्षत्त्रस्येत्यवसीयते ॥ ९ ॥
स्वां योनिमिति हेतूक्तिः कार्यं कारणसंश्रयम् ।
न हि कारणतोऽन्यत्र वृत्तिः कार्यात्मनः क्वचित् । ब्रह्मैककारणो राजा तस्माद्ब्रह्मैव संश्रितः ॥१०॥
यस्तु बाहुबलोन्मत्तः स्वां योनिं ब्राह्मणं नृपः । वाङ्मात्रेणापि सक्रोधो हिनस्तीह प्रमादतः ॥११॥
ब्रह्मोपमर्दनात्पापः प्रागपि क्रूरकर्मकृत् । ततोऽपि पापात्पापीयान्स स्याद्ब्रह्मापवादतः ॥१२॥
उत्तमाभिजनोपेतं भूर्युदारगुणं द्विजम् । यथा श्रेयांसं हिंसित्वा पापीयान्स्यात्तथैव सः ॥१३॥

मू.—स नैव व्यभवत्स विशमसृजत यान्येतानि देवजातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या विश्वेदेवा मरुत इति ॥१२॥

मू.—स नैव व्यभवत्स शौद्रं वर्णमसृजत पूषणमियं वै पूषेयँ हीदँ सर्वं पुष्यति यदिदं किंच ॥१३॥

मू.—स नैव व्यभवत्तच्छ्रेयोरूपमत्यसृजत धर्मं तदेतत्क्षत्रस्य क्षत्रं यद्धर्मस्तस्माद्धर्मात्परं नास्त्यथो अबलीयान्बलीयाँसमाशँसते धर्मेण यथा राज्ञैवं यो वै स धर्मः सत्यं वै तत्तस्मात्सत्यं वदन्तमाहुर्धर्मं वदतीति धर्मं वा वदन्तँ सत्यं वदतीत्येतद्ध्येवैतदुभयं भवति ॥१४॥

धर्मसृष्टिः

सृष्ट्वाऽपि चतुरो वर्णान्व्यवस्थाकारणं विना । कर्मणे नैव पर्याप्तं ब्रह्माभूत्पूर्ववत्ततः ॥१४॥
ब्रह्मक्षत्त्रादिरूपाणि यतोऽतीत्यासृजत्प्रभुः । श्रेयोरूपस्ततो धर्मः सर्वानप्यनुशास्त्यसौ ॥१५॥
तदेतत्सृष्टं धर्माख्यं क्षत्त्रस्याधिपतेरपि । प्रशास्तृ तद्भयाद्यस्मात्क्षत्त्रं भीतं प्रवर्तते ॥१६॥

राजसूयक्रत्वनुष्ठानात्पूर्वं क्षत्त्रस्य न ब्रह्मत्वमुत्तरकालं त्वस्ति तत्काले प्राप्तस्यापायहेत्वभावादित्याशङ्क्याऽऽह—ब्रह्मेति १६०९॥

भवतु क्रतुकालैव तस्य ब्रह्मत्वाप्तिस्तथाऽपि तदभिषिक्तं क्षत्त्रं न ब्रह्मगुणत्वं गच्छति हेत्वभावादित्याशङ्क्य स्वां योनिमित्यस्यार्थमाह—स्वामिति । अनेन वाक्येन क्रत्वनुष्ठानोत्तरकालमपि क्षत्त्रियस्य ब्राह्मणगुणत्वे हेतुरुच्यत इत्यर्थः । तस्य ब्रह्मकार्यत्वेऽपि कुतस्तद्गुणत्वं तत्राऽऽह—कार्यमिति । तस्य कार्यविशेषत्वेन स्वातन्त्र्यमाशङ्क्य व्याप्तिविरोधमाह—न हीति । सामान्यन्यायं प्रकृते योजयति—ब्रह्मेति ॥१६१०॥

क्षत्त्रस्य ब्रह्माभिभवे दोषश्रवणाच्च तस्य तद्गुणत्वमिति वदन्"य उ एनं हिनस्ती"त्यस्यार्थमाह—यस्त्विति । शस्त्रादिकृतब्रह्महिंसाया दुश्चिकित्सत्वं सूचयति—वाङ्मात्रेणेति । प्रामादिकपरिहासपर्युदासार्थमाह—सक्रोध इति । इहेत्यपराधवैधुर्यावस्थोक्तिः । बुद्धिपूर्वकाधिक्षेपे पापाधिक्यं द्योतयति—प्रमादत इति ॥१६११॥

स्वां योनिमृच्छतीत्यस्यार्थमनुवदन्नीयसुन्प्रत्ययार्थमाह—ब्रह्मेति । पूर्वमपि पापहेतुमाह—क्रूरेति ॥१६१२॥

यथेत्यादि व्याचष्टे—उत्तमेति । आभिजात्योपेतमपि दोषवन्तं शिक्षयन्नैव दोषभागीत्याशयेनाऽऽह—भूरीति । सर्वथाऽपि ब्रह्म क्षत्त्रेण पुरस्कर्तव्यमन्यथा प्रत्यवायादिति भावः ॥१६१३॥

ननु चातुर्वर्ण्ये सृष्टे तावतैव कर्मानुष्ठानसिद्धेरलं धर्मसृष्ट्येत्याशङ्क्य स नैवेत्यादेरर्थमाह—सृष्ट्वेति । क्षत्त्रस्य व्यवस्थापकत्वेऽपि क्रूरतया व्यवस्थापकान्तरमपेक्षितमिति विवक्षित्वोक्तं व्यवस्थाकारणं विनेति । पूर्ववत्क्षत्त्रादिसर्गात्प्रागिवेत्यर्थः । तच्छ्रेयोरूपमित्यादेरर्थमाह—तत इति । सर्वव्यवस्थापकव्यतिरेकेण कर्मानुष्ठानायोगादिति यावत् । श्रुतौ तच्छब्दो ब्रह्मविषयः । धर्मप्राशस्त्यफलमाह—सर्वानिति ॥१६१४–१६१५॥

क्षत्त्रस्य सर्वप्रशास्तृत्वप्रसिद्धेर्मैवमित्याशङ्क्य तदेतदित्यादेरर्थमाह—तदिति । धर्मस्य क्षत्त्रप्रशास्तृत्वे हेतुमाह—तद्भयादिति । न हि बलवदपि क्षत्त्रं मर्यादामतिक्रामति धर्मेण नियमितत्वादिति भावः ॥१६१६॥

क्षत्त्रस्यापि यतो धर्मः साक्षादधिपतिस्ततः । धर्मादन्यन्महद्भूतं न भूतं न भविष्यति ।।१७।।
श्रेयोरूपप्रसिद्धचर्थं प्रसिद्धिरुपवर्ण्यते । अथो इत्यादिना धर्मविशिष्टत्वावबुद्धये ।।१८।।
आशंसते बलीयांसमबलीयानपि स्वयं । धर्मं बलं समाश्रित्य जेतुं लोके तथा यथा ।।१९।।
राज्ञा बलेनाल्पबलो बलीयांसं कुटुम्बिनम् । जेतुमाशंसते तस्माद्धर्मः स्याद्बलवत्तमः ।।२०।।
बलीयसाऽपि राज्ञेह स्पर्धमानोऽबलोऽपि सन् । जेतुमुत्सहते भूपं धर्मात्मकबलाश्रयात् ।।२१।।
एतदेव यतो ज्यायो रूपं धर्मेत्युदाहृतम् । रूपान्तरेभ्यः सर्वेभ्यस्तद्धि सत्यात्मकं यतः ।।२२।।
तस्यास्य धर्मरूपस्य कार्यकारणतां मिथः । यो वै स धर्म इत्युक्त्या वक्तुं प्रववृते श्रुतिः ।।२३।।
प्रयोगलक्षणो योऽयं श्रुतिस्मृत्युदितो मतः । स धर्म इति विज्ञेयः सत्यं शास्त्रार्थलक्षणम् ।।२४।।
अक्षरानुगतोऽप्यर्थो यदि संशय्यते तदा । नित्यप्रयोगरूपोत्थविज्ञानात्तद्विनिश्चितिः ।।२५।।
प्रयोगेऽपि च संशीतौ वाक्यार्थज्ञानसंश्रयात् । निर्णुदेत्संशयं प्राज्ञ एवमन्योन्यहेतुता ।।२६।।
यथा प्रयोगमुल्लङ्घ्य व्याख्यातुं शक्नुयात्सुधीः । यथाशास्त्रं तथोल्लङ्घ्य कर्तुं शक्नोत्यथापरः ।।२७।।

तस्माद्धर्मादित्यादि व्याचष्टे—क्षत्त्रस्येति । साक्षान्नियामकान्तरं विनेति यावत् । न हि तस्य सर्वनियामकस्य नियामकान्तरापेक्षा पूर्वपूर्वापेक्षया नियन्तृत्वादिति भावः ।।१६१७।।

अथो इत्यादेस्तात्पर्यमाह—श्रेयोरूपेति । आद्यपादार्थमेव स्फुटयति—धर्मेति ।।१६१८।।

धर्मवैशिष्ट्यसिद्धचर्थं लोकप्रसिद्धिवाद्यनन्तरवाक्यमिति तात्पर्यमुक्त्वा तद्योजयति—आशंसत इति । यथा राज्ञैवमित्यस्यार्थमाह—तथेति । धर्ममाश्रित्याल्पबलस्यापि बलवन्तं प्रति जेतुं प्रवृत्तिरस्तीति लोकप्रसिद्धिमुक्त्वा फलितमाह—तस्मादिति ।।१६१९-१६२०।।

यथेत्यादेरर्थान्तरमाह—बलीयसेति । इह विवादविषये सतीति यावत् । तथाऽन्यत्रापि धर्मस्योत्कर्षसिद्धिरिति शेषः ।।१६२१।।

तत्रैव हेत्वन्तरमाह—एतदिति । यतो धर्मसंज्ञितं रूपं सत्यात्मकमेवातस्तत्क्षत्त्रादिभ्यः श्रेष्ठमेवेति योजना । हिशब्दोऽवधारणे । एको यतःशब्दोऽतःशब्दपर्यायः ।।१६२२।।

कथं धर्मस्य सत्यत्वं धर्मो हि पुरुषधर्मो वचनधर्मः सत्यत्वमित्यवान्तरभेदादित्याशङ्कच वाक्यान्तरमादत्ते—तस्येति । अतो मृद्घटवत्तयोरेकतेति शेषः ।।१६२३।।

एकत्वमनेकत्वं वा नाज्ञातयोरित्युभयविवेकपरं यथेत्यादिभाष्यं विभजते—प्रयोगेति ।।१६२४।।

अग्निहोत्राद्यनुष्ठीयमानं कर्म धर्मः "यो यागमनुतिष्ठति तं धार्मिकमाचक्षते" स च श्रुतिस्मृतिशिष्टाचारदृष्टत्वान्न प्रत्याख्यानमर्हति तदेव शास्त्रेण गम्यमानं सत्यमिति रूपविवेकेऽपि कथं तयोर्मिथो हेतुहेतुमद्भावेनैकतेत्याशङ्कच धर्मस्य सत्यं प्रति हेतुत्वमाह—अक्षरेति । शास्त्रार्थसंशये शिष्टव्यवहारान्निश्चयो यथा यववराहादिशब्देषु[1] तथाच धर्मस्य सत्यहेतुत्वसिद्धिरित्यर्थः ।।१६२५।।

सत्यस्य धर्मं प्रति हेतुत्वमाह—प्रयोगेऽपीति । धर्मविषये संशये शास्त्रार्थवशान्निर्णयो यथा चैत्यवन्दनादिव्युदासेनाग्निहोत्रादावतः सत्यस्य धर्महेतुतेत्यर्थः । वार्तिकाभ्यामुक्तं निगमयति—एवमिति ।।१६२६।।

अन्योन्यहेतुत्वोक्तिर्धर्मसत्ययोरैकार्थ्यमित्युक्तं तत्रैव फलान्तरं वक्तुं पातनिकां करोति—यथेति ।

---

१. यववराहादिशब्देष्विति—"यवमयश्चरुः वाराही उपानहौ वैतसे कटे प्राजापत्यान् संचिनोति" इति विधिषु श्रुतानां यववराहवेतसशब्दानां अर्थप्रयोगरूपे व्यापारे विप्रतिपत्तिः यवशब्दस्य बहुभिः दीर्घशूकधान्ये वराहशब्दस्य वायसे वेतसशब्दस्य जम्बूवृक्षे प्रयोगः । केषांचित् दीर्घशूकसूकरवञ्जुलेषु प्रयोगात् विप्रतिपत्तावुभयत्र शक्तिः । विकल्पनोभयं ग्राह्यमिति प्राप्ते अनेकत्र शक्तिकल्पनागौरवादेकत्रैव सा कल्पनीया । यत्र च एकतरार्थे वाक्यशेषो वर्तते तत्रैव शक्तिः । उक्तपदानां वाक्यशेषो दीर्घशूकसूकरवञ्जुलेषु दृश्यत इति त एव ग्राह्या इति सिद्धान्तितम् ।

अतथ्यान्यपि तथ्यानि दर्शयन्तीह वादिनः । समे निम्नोन्नतानीव चित्रकर्मविदो जनाः ॥२८॥
शास्त्रार्थस्तत्प्रयोगश्च यदा त्वन्योन्यसंश्रयात् । प्रवर्तते तदा कर्तुर्न प्रमादो मनागपि ॥२९॥

धर्मशब्दस्य देवतापरत्वनिर्णयः

नायं धर्म इति ज्ञेयो योऽयं सृष्टाविहेरितः । क्षत्रादिनियमाशक्तेस्तस्याचैतन्यरूपतः ॥३०॥
देवता तु ह्यधिष्ठात्री धर्मोऽस्मीत्यभिमानिनी । सैवेह सृज्यते धात्रा नियमार्थप्रसिद्धये ॥३१॥
धर्मस्यैव तु रूपेण देवता रूपिणी मता । तन्नाम्ना नामवत्येवं देवतान्तरयोजना ॥३२॥
एकैव देवता तस्मान्नामरूपाद्युपाधिभिः । आभाति बहुरूपेव तत्पराधीनचेतसाम् ॥३३॥
यथोक्तार्थोपसंहार उत्तरार्थविवक्षया । ब्राह्मणस्य पुराऽनुक्तेस्तदुक्त्यर्था परा श्रुतिः ॥३४॥

मू.—तदेतद्ब्रह्म क्षत्रं विट्शूद्रस्तदग्निनैव देवेषु ब्रह्माभवद्ब्राह्मणो मनुष्येषु क्षत्रियेण क्षत्रियो वैश्येन वैश्यः शूद्रेण शूद्रस्तस्मादग्नावेव देवेषु लोकमिच्छन्ते ब्राह्मणे मनुष्येष्वेताभ्याँ हि रूपाभ्यां ब्रह्माभवत् । अथ यो ह वा अस्माल्लोकात्स्वं लोकमदृष्ट्वा प्रैति स एनमविदितो न भुनक्ति यथा वेदो वाननूक्तोऽन्यद्वा कर्माकृतम् । यदिह वा अप्यनेवंविन्महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एवात्मानमेव लोकमुपासीत स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते । अस्माद्ध्येवात्मनो यद्यत्कामयते तत्तत्सृजते ॥१५॥

शिष्टाचारमतिक्रम्य शास्त्रार्थोक्तिसामर्थ्ये बुद्धिबाहुल्यं हेतुमाह—सुधीरिति । अनुष्ठानमतिक्रम्य शास्त्रार्थोक्तिवदित्याह—तथेति । शास्त्रमनादृत्याऽऽचारे धाष्टर्यं हेतुरित्याह—अथेति ॥१६२७॥

ननु शिष्टाचारमुल्लङ्घ्य शास्त्रार्थोक्तिर्वा शास्त्रमुपेक्ष्यानुष्ठानं वा न युक्तं तयोर्मिथो विरुद्धत्वात्तत्राऽऽह—अतथ्यानीति । इहेत्यन्योन्यविवादावस्थोच्यते । तत्र प्रतिपादनकुशलत्वं हेतुमाह—वादिन इति । अन्यथाभूतस्यान्यथाख्यापनमन्यत्रापि दृष्टमित्याह—सम इति ॥१६२८॥

कथं तर्हि ज्ञानानुष्ठानयोर्नियमस्तदभावे पुमर्थासिद्धेस्तत्राऽऽह—शास्त्रार्थ इति । यदा धर्मसत्ये मिथो नियामके तदा कर्तुर्ज्ञातुश्च न दोषसंभावनेत्यर्थः ॥१६२९॥

तच्छ्रेयोरूपमित्यादौ धर्मशब्देन प्रसिद्धोऽपूर्वाख्योऽचेतनोऽर्थो गृहीतः संप्रति न तस्य तच्छब्देन विवक्षा किंतु सृष्टौ नियामको धर्मो न चाचेतनस्य तत्सामर्थ्यमतो न पूर्वोक्तो धर्म इत्याह—नायमिति । तत्र हेतुमाह—क्षत्रादीति ॥१६३०॥

कस्तर्हीह धर्मशब्देनोच्यते तत्राऽऽह—देवतेति । तुशब्दो यथोक्ताद्धर्माद्देवतायां विशेषद्योतनार्थः । तस्याः श्रुतिस्मृतीतिहासपुराणलोकेषु प्रसिद्ध्यर्थो हिशब्दः । इह सृष्टौ नियमाख्यार्थस्य सिद्ध्यर्थमिति यावत् ॥१६३१॥

ननु देवताया नामरूपहीनाया न धर्मशब्दता न हि सा शब्दातिरिक्ता चेतनाऽस्ति मानाभावान्मन्त्रादीनां च स्वार्थातात्पर्यादत आह—धर्मस्येति । साधितं हि देवतारूपं देवताधिकरणे । त्वदिष्टस्य च धर्मस्य नामरूपे स्तो न वा ? स्तश्चेत्तदभिमानिदेवतायामपि ते स्तां, न चेन्नामादिहीनस्य तस्य धर्मशब्दवाच्यतावद्देवतायामपि स्यादिति भावः । यथा धर्मशब्दो देवतामाह तथाऽग्न्यादिशब्दोऽपि देवतान्तरे युज्यतेऽनुग्राहकसृष्टेरत्र प्रस्तुतत्वादित्याह—एवमिति ॥१६३२॥

सृष्टानां देवतानामैक्यं नानात्वं वा ? नाद्ये सृष्टिभेदो द्वितीयेऽद्वैतहानिरित्याशङ्क्याऽऽह—एकैवेति । तस्मात्सदेव सोम्येत्यादेरागमादिति यावत् । भेदधियो गतिमाह—नामेति । किं चातत्त्वविदामेव तद्भेदधीर्नेतरेषामित्याह—तदिति । सद्रूपमद्वितीयं ब्रह्म तच्छब्दार्थः ॥१६३३॥

धर्मशब्दस्य विवक्षितमर्थमुक्त्वा तदेतद्ब्रह्मेत्यादेस्तात्पर्यमाह—यथोक्तेति । उत्तरस्यार्थस्य विवक्षया

**दैववर्णविभागस्य मनुष्येष्वपि भण्यते । विनियोगो यथोक्तोऽयं वर्णानां प्रविभागशः ॥३५॥**

**क्षत्त्रादीनां पुरोक्तत्वादनुक्तेर्ब्राह्मणस्य च । को न्वेषु ब्राह्मण इति चोदिते स्यात्परा श्रुतिः ॥३६॥**

**देवतायाः समाख्यातो विभागो वर्णसंश्रयः । तत्पूर्वको मनुष्येषु विभागस्त्वधुनोच्यते ॥३७॥**

**यदग्निनाऽभवद्ब्रह्म देवेष्वविकृतं नृषु । ब्राह्मणेन तदेवाभूद्ब्रह्मैवाविकृतात्मना ॥३८॥**

ब्रह्म स्वयमेव ब्राह्मणोऽभूत् इत्यस्य विवरणम्

**या जातिर्ब्राह्मणत्वाख्या साऽग्निरेवेति निश्चितिः । जातिरूपेण सा स्थित्वा जातिमेव नियच्छति ॥३९॥**

**आग्नेयो ब्राह्मणश्चातस्तत्संबन्धाच्छ्रुतौ श्रुतः । अनुग्रहनियन्तृत्वे ब्राह्मणस्याग्नितो यतः ॥४०॥**

**नियम्यमानो दैवेन क्षत्त्रियेण मनुष्यगः । इक्ष्वाक्वादिरभूत्पूर्वः क्षत्त्रियस्तद्वदुत्तरः ॥४१॥**

**ब्रह्मैवाविकृतं यस्मात्पूर्वयोर्विकृतिं पुनः । क्षत्त्रियादौ समापेदे तेनाग्निब्राह्मणाश्रयात् ॥४२॥**

**कामितार्थस्य संसिद्धिः कर्मिणां कामिनामिह । स्थित्वाऽग्नौ ब्राह्मणे चेह लोकमीप्सन्ति कर्मिणः ॥४३॥**

चातुर्वर्ण्यस्योपसंहारश्चेदनेन क्रियते तर्हि कोऽसावुत्तरोऽर्थो विवक्षितस्तत्राऽऽह—ब्राह्मणस्येति । देवेषु क्षत्त्रादीनामेवोक्तत्वादथेत्यस्यमन्थदित्यत्राग्नेरुक्तत्वेऽपि तस्य तेषु ब्राह्मणत्वस्यानुक्तत्वात्तत्कथनार्था तदग्निनैवेत्याद्या श्रुतिरित्यर्थः ॥१६३४॥

तस्याः श्रुतेरर्थान्तरमाह—दैवेति । अग्निजन्मोक्त्यैव देवेषु ब्राह्मणो निर्दिष्टस्तेषु क्षत्त्रादिश्चेन्द्रादिरुक्तस्तथाच यथा देवेषु ब्रह्मक्षत्त्रादीनां विभागशो विनियोगः संबन्धो वर्णितस्तथा तस्य देवसंबन्धिवर्णविभागस्य मनुष्येष्वपि विभागशः संबन्धस्तदग्निनेत्यादिनोच्यत इत्यर्थः ॥१६३५॥

ब्राह्मणस्य पुराऽनुक्तेरित्याद्यं पक्षं प्रपञ्चयति—क्षत्त्रादीनामिति । एषु देवेष्वित्युभयतः संबध्यते ॥१६३६॥

द्वितीयं पक्षं विवृणोति—देवताया इति । तत्पूर्वको दैववर्णविभागान्वित इति यावत् । विभागो वर्णानामिति शेषः ॥१६३७॥

पक्षद्वयानुसारेण वाक्यं व्याचष्टे—यदग्निनेति । यत्क्षत्त्रादिरूपेणाविकृतं स्रष्टृ ब्रह्म देवेष्वग्निं सृष्ट्वा तदात्मनाऽभवत्तदेव मनुष्येषु ब्राह्मणात्मनाऽऽसीद्यद्ब्रह्माऽऽकाशाद्यात्मना विकृतमपि क्षत्त्रादिरूपेणाविकृतत्वादविकृतरूपेणैवाग्निब्रह्मभावं देवेषु मनुष्येषु चाऽऽपेदे तदेवोभयरूपेण विकृतात्मना देवेष्विव मनुष्येष्वपि क्षत्त्रादिरूपेणाभूदित्यर्थः ॥१६३८॥

अग्निब्राह्मणयोर्भेदोऽस्ति न वा? आद्येऽग्निरूपं ब्रह्मैव ब्राह्मणात्मनाऽभवदित्ययुक्तम् । द्वितीये नियन्तृनियन्तव्यत्वासिद्धिरित्याशङ्क्याऽऽह—या जातिरिति । अभेदे कथं नियन्तृनियन्तव्यत्वमित्याशङ्क्याधिदैवतरूपेण नियन्तृत्वमध्यात्मरूपेण च नियम्यत्वमिति मत्वाऽऽह—जातीति ॥१६३९॥

अग्निब्राह्मणयोर्नियन्तृनियन्तव्यत्वे मानमाह—आग्नेय इति । न केवलमग्निब्राह्मणयोर्नियन्तृनियम्यत्वं किं त्वनुग्राहकानुग्राह्यत्वं चेति वक्तुं चशब्दः । यस्मादग्नेः सकाशाद्ब्राह्मणस्यानुग्रहनियन्तृत्वे तस्मात्तेन नियन्तृनियम्यत्वेनानुग्राहकानुग्राह्यत्वेन च तस्य संबन्धा"दाग्नेयो वै ब्राह्मण" इति श्रुतौ स तथा श्रुत इति योजना ॥१६४०॥

अग्निब्राह्मणवदिन्द्रराजन्ययोरपि नियन्तृनियम्यत्वमैन्द्रो राजन्य इति श्रुत्या दर्शयति—नियम्यमान इति । आदिशब्देन तथैवान्येषामपि वंशद्वयप्रवर्तकानां ग्रहणम् । देवक्षत्त्रनियमितमनुष्यक्षत्त्रवद्देवविट्शूद्रनियमितमनुष्यविट्शूद्रयोर्जन्म सूचयति—तद्वदिति ॥१६४१॥

अग्न्यादिनाऽविकृतस्य ब्रह्मणो विकृतस्य चेन्द्रादिनाऽवस्थानमुक्तमिदानीमविकृतब्रह्मणोऽग्न्यादिरूपेणावस्थानफलं तस्मादग्नावित्यादिवाक्यार्थोक्त्या कथयति—ब्रह्मैवेति । यस्मादाकाशात्मना विकृतमपि ब्रह्म क्षत्त्रादिरूपेणाविकृतमेवाग्न्यादौ स्थितमितरत्र त्वग्न्याद्यात्मना विकृतमेव तस्मादिहाधिकृतदेहे स्थित्वाऽग्नौ ब्राह्मणे च

लोकशब्दस्य परात्मग्रहणनिरासः

**कर्मकार्यश्च लोकोऽत्र ज्ञेयोऽग्न्यादिसमाश्रयात् । प्रत्यग्याथात्म्यधीमात्रात्परलोकाप्तिरिष्यते ॥४४॥**

**अजातशत्रुजनकसुलभादिनिदर्शनात् । अविद्योत्थाधिकाराच्च लोकोक्तिर्न परात्मनि ॥४५॥**

**अव्याकृतव्याकरणात्स्वाभिप्रायाच्च नेष्यते । अव्याकृतव्याकरणरूपाभ्यां छाद्यते परः ॥४६॥**

**। आविष्कृतिस्तन्निषेधादन्यदेवेति च श्रुतेः ॥४७॥**

**उत्तरत्र स्वशब्देन लोकस्य च विशेषणात् । कर्मणां फलमेवात्र लोकशब्देन भण्यते ॥४८॥**

**लोकशब्देन संप्राप्तं कर्मकार्यमपेक्ष्य हि । स्वगिराऽनात्मनो लोकाद्विशिनष्ट्यात्मरूपकम् ॥४९॥**

**स्वत्वेनाव्यभिचारित्वाद्व्यभिचारादनात्मनः । कर्मकार्यनिवृत्त्यर्थमर्थवत्स्याद्विशेषणम् ॥५०॥**

संन्यासस्य वर्णत्रयाधिकारनिरूपणम्

**त्रयाणामपि वर्णानां श्रुतौ संन्यासदर्शनात् । ब्राह्मणस्यैव संन्यास इति श्रुत्या विरुध्यते ॥५१॥**

निमित्ते तत्संबन्धिकर्मवशादिह फलविषये कामिनां तत्प्रेरितकर्मभाजामिष्टाप्तिः स्यादित्यर्थः । लोकेऽपि कृष्यादिकर्म कृत्वा तत्फलं प्रेप्स्यते तद्युक्तमग्न्यादिसंबन्धिकर्मद्वारेष्टाप्तिरित्याह—इहेति ॥१६४२–१६४३॥

लोक इति परात्मनोऽभिधानं मुख्यवृत्त्येति भर्तृप्रपञ्चास्तान्प्रत्याह—कर्मेति । प्रकृतं वाक्यमत्रेत्युक्तम् । तत्र हेतुमाह—अग्न्यादीति । अग्निब्राह्मणसंबन्धिकर्मसाध्यत्वश्रुतेरित्यर्थः । लोकशब्देन परस्य ग्रहेऽपि तत्साध्यत्वं किं न स्यादत आह—प्रत्यगिति । कर्मादिव्यावृत्त्यर्थं मात्रपदम् ॥१६४४॥

ज्ञानस्यैव परप्राप्तिहेतुत्वे श्रौतं लिङ्गमाह—अजातेति । अकर्मिणां सुलभादीनां ज्ञानान्मोक्षश्रुतेस्तदेव तद्धेतुरित्यर्थः । यद्वा ब्राह्मणादिसंबन्धं कर्म कृत्वैव मुक्तिरित्यनियमः । अब्राह्मणेष्वकर्मिषु च जनकादिषु ज्ञानिषु तद्दृष्टेरित्याह—अजातेति । लोकशब्दो नात्र परवाचीत्यत्र हेत्वन्तरमाह—अविद्येति । अविद्याकारणस्येदं प्रकरणं तत्र लोकशब्दस्तद्विशेषमेव विषयीकरोति न परस्मिन्नात्मनि वर्तितुमर्हत्यन्यथा प्रकरणविरोधः स्यादिति भावः ॥१६४५॥

त्वदभिप्रायेणायं लोकशब्दोऽविद्याकार्याधिकारस्थो न पराभिप्रायेणेत्याशङ्क्याऽऽह—अव्याकृतेति । तद्धेत्याद्यविद्यासूत्रं तद्व्याख्यानमथ योऽन्यामित्यादीति भर्तृप्रपञ्चास्तेन तदभिप्रायेणाप्यविद्याकार्याधिकारस्थोऽयं लोकशब्दो न केवलमस्मदभिप्रायेणैवेत्थमुपगतिरित्यर्थः । अव्याकृततत्कार्ययोः परं प्रति व्यञ्जकत्वात्तस्य लोकशब्देन ग्रहेऽप्यविद्याकार्यप्रकरणमविरुद्धमित्याशङ्क्याऽऽह—अव्याकृतेति ॥१६४६॥

कथं तर्हि तद्व्यक्तिस्तत्राऽऽह—आविष्कृतिरिति । कार्यकारणनिषेधेन परस्य व्यक्तौ मानमाह—अन्यदिति । लोकशब्दस्यात्र कर्मफलविषयत्वे हेत्वन्तरमाह—उत्तरत्रेति । स्वं लोकमदृष्ट्वा प्रैतीत्यत्रेति यावत् । लोकस्य परमात्माख्यस्येत्येतत् । अत्र तस्मादग्नावित्यादाविल्यर्थः ॥१६४७–१६४८॥

पक्षान्तरेऽपि विशेषणं किं न स्यादित्याशङ्क्याऽऽह—लोकशब्देनेति । स्वपक्षवत्परपक्षे प्रकृतव्यावर्त्याभावादनर्थकं विशेषणमिति हिशब्दार्थः ॥१६४९॥

कथमिदं कर्मफलव्यावर्तकत्वेनार्थवदित्याशङ्क्याऽऽह—स्वत्वेनेति । स्वत्वं प्रत्यक्त्वं तेनाव्यभिचारित्वमात्मनोऽस्ति तस्य सर्वप्रत्यक्तमत्वात् अनात्मनस्तु कर्मकार्यपराचस्तद्व्यभिचारित्वमतिस्फुटमतस्तद्व्यावर्तकं विशेषणं युक्तमित्यर्थः ॥१६५०॥

प्रकृतवाक्यस्थस्य लोकशब्दस्य कर्मफलवाचित्वं वदता भाष्यकृता ब्राह्मणस्य जातिमात्रप्राप्त्या पुरुषार्थसिद्धिरुक्ता । ननु "जप्येनैव तु संसिध्येदि"त्यादिस्मृतेस्तन्मात्रादभ्युदयलाभेऽपि कुतस्ततो निःश्रेयससिद्धिःतत्र

१. इत ऊर्ध्वं "जप्येनैव तु संसिध्येदि"त्यादिमनुवाक्यं वार्तिकत्वेन पठितमिति कृत्वा न्यायकल्पलतायां "अत्र मानमाह—जप्येनेति"—इति तद्वाक्यमवतारितम् । आनन्दगिरौ तु उक्तं मनुवचनं स्वयमेवोदाहृत्य जपस्य संसिद्धिसाधनत्वमुक्तम् ।

**लिङ्गं च न्यायरहितं प्रामाण्याय न कल्पते । ब्राह्मणोक्तिबलात्तस्मात्कामितोऽर्थो न सिध्यति ।।५२।।**
**उपलक्षणं वा तद्ग्राह्यं ब्राह्मणग्रहणं श्रुतौ । ब्राह्मणस्य [1]प्रधानत्वाद्युक्तं तदुपलक्षणम् ।।५३।।**
**ब्राह्मणत्वात्मलाभोऽपि यः स्यात्क्षत्त्रियवैश्ययोः । स्वमहिम्ना तयोर्नासावग्निब्राह्मणसंश्रयात् ।।५४।।**

[2]पारिव्राज्यदर्शनाच्चेति भाष्यं तत्र ब्राह्मणग्रहणमविवक्षितं विवक्षितं वा? आद्ये तन्मात्रात्पुमर्थसिद्धौ नायं हेतुर्द्वितीयश्चेत्तत्राऽऽह—त्रयाणामिति । श्रुतौ ब्रह्मचर्यं समाप्येत्यादाविति यावत् ।।१६५१।।

ननु ब्राह्मणाः प्रव्रजन्तीति ब्राह्मणग्रहणसामर्थ्यात्तद्विषये सामान्यश्रुतिर्नियम्यते नेत्याह—लिङ्गं चेति । अस्यार्थः—यद्यपि सामान्यश्रुतेर्बलीयो लिङ्गं तथाऽप्यन्यपरवाक्यस्थपदसामर्थ्यं तन्न्यायाभावे न मानं ब्रह्मचर्यादेव प्रव्रजेदितिसाधारणविधिविरोधात् । न च प्रकृतेरन्यथाभावायोगो न्यायः, यद्यपि क्षत्त्रियो राजसत्वात्प्रवृत्तिस्वभावः उपशमात्मकश्च संन्यासस्तथाऽपि न क्षत्त्रियत्वादेव राजसत्वं जनकादावभावाद्ब्राह्मणेष्वपि केषुचित्तद्भावात् । न चैवमाचाराः शिष्टा न दृष्टास्त्वद्दर्शनस्यातिप्रसङ्गत्वात्सर्वादर्शनस्य चासर्वज्ञेन दुर्ज्ञानत्वात् । दृश्यते च महाभारते क्षत्त्रियस्यापि संन्यासाध्यवसायः—

"तस्मादेकाहमेकाहमेकैकस्मिन्वनस्पतौ । चरन्भिक्षां मुनिर्मुण्डश्चरिष्यामि महीमिमाम् ।।
पांसुना च प्रतिच्छन्नः शून्यागारप्रतिश्रयः । वृक्षमूलनिकेतो वा त्यक्तसर्वप्रियाप्रियः ।।
पौरवृद्धाश्च ये तत्र निवसन्त्यस्मदाश्रयाः । प्रसाद्य सर्वे वक्तव्याः पाण्डुः प्रव्रजितो वने" ।। इति

तस्मात्त्रैवर्णिकस्य सर्वस्यैव विरक्तस्य संन्यासाधिकारात्पारिव्राज्यदर्शनाच्चेति भाष्यमनर्थकमिति[3] ।।१६५२।।

सामान्यश्रुत्या न्यायशून्यलिङ्गस्य बाधमुक्त्वा ब्राह्मणा विविदिषन्तीतिवद्ब्राह्मणा भिक्षाचर्यं चरन्तीत्यत्रापि ब्राह्मणग्रहणमुपलक्षणमित्याह—उपलक्षणमिति । तत्र युक्तिमाह—ब्राह्मणस्येति । न च तर्हि शूद्रस्यापि ब्राह्मणग्रहणेनोपलक्षणात्क्षत्त्रियादेरिव शूद्रस्य पारिव्राज्यं स्यादिति युक्तं, तस्य सशिखं वपनं कृत्वा बहिः सूत्रं त्यजेदिति शिखात्यागपूर्वकोपवीतत्यागानधिकारित्वादादावेवासतः शिखादेस्त्यागायोगात् । अपशूद्राधिकरणे च वेदद्वारा विद्याधिकारं तस्य निरस्यद्भिर्वैदिकसंन्यासेऽपि तदधिकारनिरासदर्शनादिति द्रष्टव्यम् । संन्यासविषयं भाष्यं दूषयता ब्राह्मणप्राधान्यमुक्तं तन्मात्रमाश्रित्य "मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम् । बाहुजातोरुजातानां नैष धर्मः सनातनः" इत्युच्यते । ब्राह्मणस्य सनातनविशेषणाच्चानित्यं तदीयं पारिव्राज्यमनुज्ञातमिति गम्यते ।।१६५३।।

ननु ब्राह्मणस्य न प्राधान्यमितरयोरपि क्रतौ ब्राह्मण्यलाभश्रुत्या [4]प्राधान्यावगमादत आह—ब्राह्मणत्वेति । यस्तयोस्तल्लाभः सोऽपि न स्वमहिम्ना स्यादिति संबन्धः । तर्हि कथं तयोस्तत्प्राप्तिस्तत्राऽऽह—अग्नीति ।।१६५४।।

---

१. प्रधानत्वात्—मनुष्येषु प्रधानत्वात् तद्ग्रहणे इतरयोरपि ग्रहणं भवेत् । "उपलक्षणे च" इति न्या० क० पाठः ।

२. पारिव्राज्यविधानाच्चेति भाष्यं ब्राह्मणस्यैव पारिव्राज्येऽधिकार इत्यभिप्रायकं स्पष्टम् । वार्तिककारास्तु स्वग्रन्थस्य वार्तिकत्वसिद्ध्यर्थं सन्यासे वर्णत्रयाधिकारं व्यवस्थापयन्, पृच्छति—ब्राह्मणः प्रव्रजेदित्यादौ ब्राह्मणग्रहणं विवक्षितं वा न वा ? विवक्षितं चेत् तन्मात्रात् मोक्षसिद्धौ संन्यासो न हेतुः, न चेत् त्रयाणामपि स्यात् ब्रह्मचर्यं समाप्येत्यस्य त्रयाणां संभवादित्यर्थः ।

३. अनर्थकमिति अविवक्षितार्थमित्यर्थः ।

४. क्षत्त्रियस्य ब्राह्मणत्वलाभः राजसूये आसन्दीस्थो राजा अध्वर्युमाह—ब्रह्माहम् इति । अध्वर्युश्च राजानमाह—त्वं राजन् ब्रह्मासि इति । एवं वैश्यस्य वैश्यस्तोमे संवादः उदाहार्यः । तेन क्षत्त्रियवैश्ययोः ब्राह्मणत्वलाभः अग्निब्राह्मणायत्तः न जन्मतः अतो ब्राह्मणस्यैव जन्मतो ब्राह्मणत्वलाभात् प्राधान्यमित्यर्थः ।

ब्राह्मणं न ह्यनाश्रित्य राजसूयादिहेतुकः । ब्राह्मणत्वाभिसंबन्धः प्राधान्यं तेन पूर्वयोः ॥५५॥
वर्णान्तरगतापेक्षा नाग्निब्राह्मणयोस्तथा । ब्राह्मणः स्वमहिम्नैव पुरुषार्थं समश्नुते ॥५६॥
अग्निब्राह्मणयोर्हेतुः प्राधान्ये भण्यते स्फुटः । एताभ्यामेव रूपाभ्यां यतो ब्रह्माभवत्स्वयम् ॥५७॥
अग्निब्राह्मणयोर्यस्माद्ब्रह्मसाक्षादभूत्पुरा । विट्क्षत्त्रयोर्व्यवहितं प्राधान्यं तेन पूर्वयोः ॥५८॥

एताभ्यां रूपाभ्यां ब्रह्माभवत् इत्यत्र ब्रह्मेति पर इति भर्तृप्रपञ्चमतनिरासः

ब्रह्मेति जातिरेवात्र ग्राह्या न तु पराक्षरम् । तत्कारणत्वात्सर्वस्य हेतूक्तिस्तत्र दुर्घटा ॥५९॥
सर्वेषां प्रत्यगात्मत्वात्पक्षपातोऽपि नेष्यते । अग्निब्राह्मणयोर्विष्णोस्तावन्मात्रसमाप्तितः ॥६०॥
ब्रह्मैवेदं विश्वमिति साक्षादाम्नायशासनम् । विद्याविनयसंपन्न इति च स्मृतिशासनम् ॥६१॥
क्षत्त्रादाविव तुल्याग्निविप्रयोर्विकृतिर्दृशेः । तेजोबन्नादिभूतानां तुल्या सत्कारणात्मता ॥६२॥

ब्राह्मणाद्यपेक्षां विना राजसूयादिसामर्थ्यादेव राजादेस्तल्लाभः स्यादिति चेन्नेत्याह—ब्राह्मणमिति । तद्ग्रहणमग्नेरुपक्षणम् । पूर्वयोरग्निब्राह्मणयोरित्येतत् ॥१६५५॥

तत्सापेक्षत्वात्क्षत्त्रियादेरप्राधान्ये ब्राह्मणादेरपि तदपेक्षणादप्राधान्यं तुल्यमिति चेन्नेत्याह—वर्णान्तरेति । क्षत्त्रियादेर्ब्राह्मण्यलाभायान्यापेक्षावन्न ब्राह्मणादेस्तदर्थमन्यापेक्षेत्यर्थः । तत्प्राधान्योक्तिफलमाह—ब्राह्मण इति ॥१६५६॥

एताभ्यां हीत्यादत्ते—अग्नीति । हेतोरदोषत्वमभिधातुं स्फुट इति विशेषणम् । हेतुं व्याकरोति—एताभ्यामिति । ब्रह्म स्वयमेवाविकृतमग्निब्राह्मणरूपाभ्यां यतोऽभूदतस्तयोः प्राधान्यमित्यर्थः ॥१६५७॥

अविकृतब्रह्मणो द्वयोः स्थितत्वेऽपि कथं क्षत्त्रादेस्तत्प्राधान्यमित्याशङ्क्याऽऽह—अग्नीति । साक्षाद्विकारापत्तिं विनेत्यर्थः । उक्तं हि—विकारापत्तिरहितस्य ब्रह्मणस्तत्रावस्थानम् । पुरा पूर्वं क्षत्त्रादिसृष्टेरिति यावत् । व्यवहितमग्निब्राह्मणाभ्यामिति शेषः । पूर्वयोरग्निब्राह्मणयोरित्यर्थः ॥१६५८॥

एताभ्यां हीत्यत्र ब्रह्म हि परमिति भर्तृप्रपञ्चास्तान्निरस्यति—ब्रह्मेतीति । अग्निं सृष्ट्वा तदापन्नं ब्राह्मणाभिमानिसूत्राख्यं ब्रह्मास्मिन्वाक्ये ब्रह्मशब्दं न परमित्यत्र हेतुमाह—तत्कारणत्वादिति । ब्रह्मशब्देनात्र परपरिग्रहे ब्राह्मणादिप्राधान्ये हेतूक्तिरेताभ्यामित्याद्या नोपपद्येत परस्य सर्वकारणत्वात्सर्वात्मत्वेऽग्निब्राह्मणात्मनैव स्थितौ विशेषहेत्वभावादित्यर्थः ॥१६५९॥

तथाऽपि तस्य तत्पक्षपातात्प्राधान्यमित्याशङ्क्याऽऽह—सर्वेषामिति । पक्षपातासंभवे सर्वत्राधिष्ठानत्वेन संनिधानं हेत्वन्तरमाह—विष्णोरिति । आद्यपादार्थं स्फुटयति—तावन्मात्रेति । यद्वा परस्मिन्नात्मन्येव सर्वस्य समाप्तिकाले समाप्तत्वान्न तस्य क्वचिदपि पक्षपातसिद्धिरित्याह—तावन्मात्रेति ॥१६६०॥

सर्वस्य ब्रह्ममात्रत्वे मानमाह—ब्रह्मेति । प्रत्यक्षवदनपेक्षं प्रामाण्यमागमस्येति वक्तुं साक्षादित्युक्तम् । सर्वस्य ब्रह्मत्वे सर्वस्मिन्निव ब्रह्मणि वैषम्यानुषक्तिरित्याशङ्क्याऽऽह—विद्येति । उत्तमाधममध्यमेषु सर्वोपाधिषु समं निर्विशेषमेवाऽऽत्मतत्त्वं विवेकिनः पश्यन्तीत्यर्थः ॥१६६१॥

नन्वग्निब्राह्मणयोरविकृतमितरत्र विकृतमिति विशेषस्त्वयेष्टस्तत्कथं पक्षपाताभावस्तत्राऽऽह—क्षत्त्रादाविति । आकाशादिविकारद्वारैव परस्याग्निब्राह्मणापत्तिरिष्टा तथा च क्षत्त्रादाविव तत्रापि तुल्या विकृतिस्तद्रूपेण विकृतस्य क्षत्त्रादौ स्थितिवन्न तदात्मना विकृतस्याग्न्यादावित्येतावता विकृतत्वाविकृतत्वविशेषोक्तिरित्यर्थः । सर्वस्य ब्रह्मत्वे श्रुतिस्मृती प्रागुक्ते संप्रत्युपपत्तिमाह—तेज इति । भूतभौतिकानां सत्कार्यत्वात्तदात्मता तुल्या सन्मूलाः सोम्येमाः सर्वाः प्रजा इत्यादिश्रुतेर्न च कारणादन्यत्र कार्यमारम्भणाधिकरणविरोधादतः सर्वं सद्ब्रह्ममात्रमित्यर्थः ॥१६६२॥

---

१. तावन्मात्रसमत्वत इति पाठमवलम्ब्य पूर्वव्याख्या । यथाश्रुतपाठे त्वाह—यद्वेति ।
२. ब्राह्मणस्य सनातनोऽयं धर्मः इतरयोर्न प्रशस्यते इत्युक्त्याक्वाचित्कः संन्यास इत्यर्थः ।

अग्निब्राह्मणरूपेण ब्रह्म साक्षाद्व्यवस्थितम् । तत्प्राप्तौ हेतुताऽग्न्यादेरिति निर्ह्रीकवागियम् ॥६३॥

अथ यो ह् वा इत्यादेः स्वाभिप्रायेण भर्तृप्रपञ्चाभिप्रायेण च संबन्धोक्तिः

वर्णाश्रमादिसर्गोऽयं कर्मार्थो ब्रह्मणः स्मृतः । धर्माख्यं कर्म च ज्ञेयं स्वाधिकारनियन्तृतः ॥६४॥
तेनैव कर्मणा मुक्तिं प्राप्स्यस्यामः शाश्वतीं वयम् । अज्ञात्वैव परं तत्त्वमेवं प्राप्ते परा श्रुतिः ॥६५॥
नियन्ता चाभिमन्ता च ब्राह्मणत्वस्य हव्यवाट् । कर्मैवाग्नेर्नियन्तृ स्यात्कर्मणो देवता तथा ॥६६॥
स्यादेतदग्निरेवैनं ब्रह्मभावाय वक्ष्यति । अदृष्टात्मतत्त्वमपि तच्च नैवोपपद्यते ॥६७॥
व्याचक्षते परं ग्रन्थमेवंसंबन्धपूर्वकम् । न कश्चित्फलभेदोऽत्र तस्मादुभयथाऽपि सन् ॥६८॥
न कर्मणा भवेन्मुक्तिर्नापि चाग्निसमाश्रयात् । ज्ञानादेव तु कैवल्यमज्ञानादेव नास्ति तत् ॥६९॥

अथेत्यादेः अभिप्रायोक्तिः

आशङ्कितनिवृत्त्यर्थमथेत्यत्र प्रयुज्यते । ह् वा इति प्रसिद्ध्यर्थं मुक्तिर्न ज्ञानतोऽन्यतः ॥७०॥

हेतुवाक्यालोचनया ब्रह्म न परमित्युक्तं किं चात्रैव ब्रह्मेति परग्रहे तदेव ब्राह्मणादिरूपेणाव्यवधानेन स्थितं तत्प्राप्तावग्न्यादिसंबद्धं कर्म न हेतुस्तस्याग्निब्राह्मणात्मना प्राप्तत्वाद्व्यवधेर्वस्तुत्वे ध्वस्त्ययोगात् । अवस्तुत्वे ज्ञानादेव तद्ध्वस्तेरिति मत्वाऽऽह—अग्नीति । निर्ह्रीको मिथो विरुद्धं वदन्नपि निर्लज्जो वादी ॥१६६३॥

अथेत्याद्युत्तरवाक्यनिरस्यं पूर्वपक्षमाह—वर्णेति । आदिशब्देन तद्धर्मो भूतभौतिकात्मकमन्यच्च कार्यमुच्यते । ब्रह्मणः सकाशादित्यपादानं सर्गस्य ब्रह्मणो ब्राह्मणस्येति कर्ता वा कर्मणो निर्दिश्यते । स्मृतः शास्त्रज्ञैरनुसंहितो हेत्वभावे कर्मानुष्ठानायोगादित्यर्थः । तत्पुनरचेतनमकिंचित्करमित्याशङ्क्याऽऽह—धर्मेति । स्वाधिकार[1]नियन्तृतः स्वस्मिन्कर्मण्यधिकारः स्वामित्वेन संबन्धो येषां पुरुषाणां नियन्तृत्वाच्चेतना देवतैव धर्माख्या कर्मशब्दितेत्यर्थः ॥१६६४॥

उक्तकर्मणः पुमर्थोपायत्वप्रसिद्धिमादाय फलितमाह—तेनेति । गौणीं मुक्तिं व्यावर्तयति—शाश्वतीमिति । ननु कुतोऽवध्रियते ज्ञानस्यापि तत्र हेतुत्वसंभवादित्याशङ्क्य समुच्चयं निरसितुं विशिनष्टि—अज्ञात्वेति । कर्मणैव हि संसिद्धिमित्यादिस्मृतौ निरपेक्षस्यैव कर्मणः संसिद्धिशब्दिते मोक्षे साधकत्वाधिगमादित्यर्थः । देवतागुणवत्कर्म मुक्तिहेतुरितिपक्षनिरासित्वेनोत्तरवाक्यमुत्थापयति—एवमिति ॥१६६५॥

अथेत्यादिवाक्यनिरस्यं भर्तृप्रपञ्चोक्तपक्षमाह—नियन्तेति । अभिमन्तेत्यनुग्राहकतोक्तिः । तयोर्मिथःसमुच्चयार्थौ चकारौ । तस्यापि नियामकं देवताधिष्ठितं कर्मेत्याह—कर्मेति । एवकारः सजातीयनियन्तृनिरासार्थः । किं तर्हि कर्मणो नियामकमिति तदाह—कर्मण इति ॥१६६६॥

भवतु तयोर्मिथो नियम्यनियामकत्वं तथाऽपि किं सिद्धमित्याह—स्यादेतदिति । अग्निनैव देवतया ब्रह्मप्राप्तिः स एवैनं ब्रह्म वक्ष्यतीति भाष्येण फलितमाह—अग्निरिति । एनं कर्मिणं वक्ष्यति प्रापयिष्यतीति यावत् । देवतावज्ज्ञानमपि ब्रह्मप्राप्तिहेतुरित्याशङ्क्य कर्मिणं विशिनष्टि—अदृष्टेति । कर्मगुणवत्या देवताया मोक्षहेतुत्वसंभवे किं ज्ञानेनेत्यर्थः । परसिद्धान्तं सूचयति—तच्चेति । कर्मगुणा देवता मोक्षहेतुरिति पक्षं प्रतिक्षेप्तुमुत्तरवाक्यमित्यर्थः । देवतागुणकं कर्म मुक्तिहेतुरिति मतं दृष्टान्तयितुं चशब्दः ॥१६६७॥

परोक्तं संबन्धमुपसंहरति—व्याचक्षत इति । कतरस्तर्हि श्रेयानित्याशङ्क्याऽऽह—न कश्चिदिति । पक्षद्वयेऽपि ज्ञानफले मुक्तावाक्षेपसमाधानयोर्न भेदस्तस्माद्द्विधाऽपि पक्षो युक्तिमानित्यर्थः ॥१६६८॥

मतद्वयानुसारेणावतारितवाक्यतात्पर्यमुभयानुसारं दर्शयति—नेत्यादिना । न चेत्कर्मणा देवतया वा मुक्तिः कुतस्तर्हि सा सिध्यति तत्राऽऽह—ज्ञानादिति । नियमे हेतुं तुशब्दसूचितमाह—अज्ञानादिति । स्वरूपस्थितिर्मुक्तिः सा चाज्ञानादसत्कल्पा भाति ज्ञानादेव तन्निरस्यतेऽतो ज्ञानमात्राधीना सेत्यर्थः ॥१६६९॥

आनन्तर्याधिकारादीनामशब्दार्थानामत्र निरवकाशत्वात्किमथशब्देनेत्याशङ्क्य निपातानामनेकार्थत्वमा-

---

१. स्वाधिकारनियन्तृतः स्वाधिकारः स्वस्मिन् कर्मणि अधिकारवन्तः पुरुषाः तान्नियमयति धर्मो देवतारूपः ।

कर्म कृत्स्नं समाप्यापि तत्त्वज्ञानाद्बहिष्कृतः । लभते निर्वृतिं नैव ज्ञानादेव हि सा यतः ॥७१॥
अस्वैः पिण्डादिभिर्योग आ विरिञ्चादविद्यया । प्रतीचस्तद्व्युदासार्थं स्वं लोकमिति शब्द्यते ॥७२॥
अज्ञानिनः स्यान्मरणं संसर्गः कारणात्मनि । ज्ञानाद्ध्वान्तनिवृत्तिस्तु मरणं स्याद्विपश्चिताम् ॥७३॥
मृत्योर्मृत्यवपरिज्ञानादज्ञस्य मरणं तमः । अविद्वन्मृतिसिद्ध्यर्थमस्माल्लोकादितीर्यते ॥७४॥
अज्ञात्वैव परं देवमागमापायरूपिणः । अस्वभूताद्देहलोकान्म्रियते योऽवशो नरः ॥७५॥
अज्ञाततत्त्वः स परो न भुनक्ति ह्यतद्विदम् । कैवल्यफलदानेन प्रत्यगात्माऽपि सन्परः ॥७६॥
तद्दृष्टिमात्रतः सिद्धेर्नान्यतस्तदवाप्यते । मोहमात्रान्तरायत्वात्तत्कर्मालं न मुक्तये ॥७७॥
वेदस्य ग्रहणं यद्वन्न स्यादध्ययनादृते । कृष्यादि वाऽन्यदकृतं कर्म नालं फलाय च ॥७८॥

यदिह वा इत्यादेरभिप्रायवर्णनम्

भूरि कर्म करिष्यामि तत्फलानन्त्यसिद्धये । कर्मणोऽचिन्त्यशक्तित्वान्नैवमप्युपपद्यते ॥७९॥

श्रित्याथशब्दार्थमाह—आशङ्क्येति । निपातयोरर्थं प्रसिद्धमुक्त्वा स्फोरयति—ह वा इतीति । ज्ञानादेव मुक्तिर्न कर्मणेत्यागमप्रसिद्धमित्यर्थः ॥१६७०॥

एकैकस्य कर्मणो मोक्षाहेतुत्वेऽपि सर्वं कर्म तथेत्याशङ्क्य तदेकस्य दुरनुष्ठानमित्याशयेनाऽऽह—कर्मेति । तत्र हेतुः—ज्ञानादिति । आगमप्रसिद्ध्यर्थो हिशब्दः ॥१६७१॥

स्वं लोकमित्यत्र स्वशब्दकृत्यमाह—अस्वैरिति । प्रत्यगात्मनो हिरण्यगर्भादारभ्यानात्मभिर्देहेन्द्रियादिभिः स्तम्बपर्यन्तैः सहाहंममतालक्षणो यः संबन्धस्तस्य व्यावृत्तियोग्यत्वार्थं प्रापकमाह—अविद्ययेति । कर्मफललोकव्युदासार्थं विशेषणमित्याह—तदिति ॥१६७२॥

अस्मादित्याद्यवतारयितुं विद्वदविद्वन्मृतिविभागमाह—अज्ञानिन इति । विद्वन्मृतावविद्वन्मृतेर्विशेषार्थस्तुशब्दः ॥१६७३॥

अविद्वन्मृतिं विवृणोति—मृत्योरिति । मृत्योरज्ञानस्य मृत्युर्वृत्त्यारूढो दृगात्मा तदज्ञानात्तमः संसर्गो मृतिरज्ञस्येत्यर्थः । उक्ताज्ञमृतिद्योतकमस्माल्लोकात्प्रैतीति वाक्यमित्याह—अविद्वदिति ॥१६७४॥

पदानि व्याख्याय वाक्यं व्याख्याति—अज्ञात्वेति । यो हि परमात्मानं पारमार्थिकमात्मत्वेनाविदित्वैवोत्पत्तिविनाशभाक्त्वादेव वस्तुतोऽनात्मनो लोकादात्मत्वेन गृहीताद्देहतो म्रियते स नराभिमानं त्य..न्नविद्यापरवशः स्यादित्यर्थः ॥१६७५॥

ननु परमात्मैव मुक्तिदानेन पुरुषं पालयिष्यति तत्कुतोऽस्य त्यक्तदेहस्याविद्यापारवश्यमित्याशङ्क्य स एनमित्यादेरर्थमाह—अज्ञातेति । ज्ञातस्यैव परस्य मुक्तिहेतुतायां श्रुतिस्मृतिप्रसिद्धत्वं हीत्युक्तम् । परो न तं पालयत्यनात्मत्वान्नाज्ञातत्वादित्याशङ्क्याऽऽह—प्रत्यगिति ॥१७७६॥

कथमविदितः सन्नरं न रक्षति तज्ज्ञानस्य मोक्षोपायत्वानियमादत आह—तद्दृष्टीति । विद्यातः कैवल्यार्थो द्वितीयस्तच्छब्दः । परात्मधीमात्रान्मुक्तिसिद्धौ हेतुमाह—मोहेति । तद्ध्वंसोऽपि कर्मणा स्यात्तत्कथं नान्यतस्तदाप्यते तत्राऽऽह—तदिति । न हि कर्म मोहमपहन्ति ज्ञानवत्तद्विरोधित्वाभावादित्यर्थः ॥१६७७॥

यथेत्यादिवाक्यस्यार्थमाह—वेदस्येति । निरूपितं हि धर्मजिज्ञासासूत्रे विनाऽध्ययनं न स्वाध्यायग्रहणमर्थवदिति । अन्यद्वेत्यादि व्याचष्टे—कृष्यादीति । अकृतं फलाय न स्यादिति संबन्धः । दार्ष्टान्तिकमाह—कर्मेति । अज्ञातो न पालयतीत्यत्राऽऽद्यो दृष्टान्तो द्वितीयो न कर्म मुक्तिहेतुरित्यत्रेति विभागश्चार्थः ॥१६७८॥

यदिहेत्यादिवाक्यापोद्यं चोद्यमाह—भूरीति । अश्वमेधादिमहत्तरकर्मफलस्याक्षयत्वे हेतुमाह—कर्मण इति । यदिहेत्यादिवाक्यमुत्तरत्वेनावतारयति—नैवमिति ॥१६७९॥

अप्रज्ञातात्मतत्त्वः सन्यदि नाम दिवानिशम् । कल्पकोटिसहस्राणि कुर्यात्कर्म महच्छुभम् ॥८०॥
तदप्यस्य तथाभूतमन्तवत्त्वात्प्रतिक्षणम् । विध्वंसमेत्यपचयात्कोष्ठागारादिवद्ध्रुवम् ॥८१॥
कृतस्य हि क्षयोऽवश्यमकृतस्याक्षयात्मता । प्रसिद्धाऽतीव जगति श्रुत्यैवं तेन भण्यते ॥८२॥
उक्तदोषापनुत्तिः स्यात्कथमस्येति चोदिते । आत्मानमिति निर्वक्ति श्रुतिः परिहृतिं पराम् ॥८३॥
निःशेषानात्मसंदृष्टिनिराकरणसिद्धये । एवेत्यवधृतिर्ज्ञेया प्रत्यङ्मात्रेक्षणाय तु ॥८४॥
प्रत्यङ्मात्रदृशः पुंसो न न्याय्यः स्यात्समुच्चयः । ब्रह्मात्मनि समाप्तस्य न तदन्यार्थशेषता[1] ॥८५॥
क्षयः कर्मफलस्योक्तः कृतकत्वसमन्वयात् । न क्षयो ज्ञानकार्यस्य कृतकत्वाद्यसंभवात् ॥८६॥

आत्मतत्त्वज्ञानात् सर्वज्ञत्वादिप्राप्तिः

प्रत्यङ्मात्रैकयाथात्म्यात्क्षेत्रक्षेत्रज्ञवस्तुनः । तस्मिन्ज्ञातेऽखिलं ज्ञातं सर्वाज्ञाननिराकृतेः ॥८७॥
सर्वसाधनसाध्यं च सुखं यच्चाप्यभीप्सितम् । सर्वानन्दैकहेतुत्वाद्ब्रह्माप्तौ प्राप्तमेव तत् ॥८८॥

तद्व्याकरोति—अप्रज्ञातेति । अज्ञः सन्ननन्ते काले यद्यहोरात्रं महदपि शुभमश्वमेधादि करोति स को ह्यज्ञं विनिवारयेदिति न्यायात्करोतु नाम तस्य तत्कर्म महत्त्वादिविशेषणमपि प्रतिक्षणं फलस्य भोगेन क्षयादन्तवत्त्वात्क्षयमेत्यतः कर्मसाध्यत्वे मुक्तेरन्तवत्त्वं स्यात्तत्साध्यस्य गृहादेस्तन्नियमा"त्तद्यथेह कर्मजित" इत्यादिश्रुतेरित्यर्थः ॥१६८०–१६८१॥

साध्यस्यानित्यत्वमितरस्य नित्यतेत्यत्र लोकप्रसिद्धिमाह—कृतस्येति । व्याप्तिसिद्ध्यर्थो हिशब्दः । प्रसिद्धेरविगीतत्वं दर्शयितुमतीवेत्युक्तम् । तथाऽपि किमायातमित्याशङ्क्य प्रसिद्ध्यनुसारेण "तद्धास्ये"त्यादिश्रुत्या कर्मफलस्यानित्यत्वोक्तेर्नित्यस्य मोक्षस्यासाध्यत्वसिद्धिरित्याह—श्रुत्येति ॥१६८२॥

आत्मानमेवेत्यादिवाक्यनिरस्यां शङ्कामाह—उक्तेति । अस्य मोक्षस्यानित्यत्वरूपोक्तदोषपरिहृतिः केन प्रकारेण स्यादिति शङ्किते सतीत्यर्थः । त्वत्पक्षेऽपि मोक्षस्य साध्यत्वादनित्यतेति चोद्योत्तरत्वेन वाक्यमवतारयति—आत्मानमिति । ज्ञानान्मोक्षे तन्नित्यतासिद्धिर्मोहापिधानहानमात्रस्य ज्ञानाधीनत्वादिति भावः ॥१६८३॥

एवकारार्थमाह—निःशेषेति । सर्वस्य कार्यकारणात्मनोऽनर्थस्य तदृष्टेश्च निवृत्त्यर्थं प्रत्यङ्मात्रदृष्टिरेष्टव्या तदर्थमेवपदमित्यर्थः । पराग्दृष्ट्यपेक्षया प्रत्यग्दृष्टौ पुरुषार्थकृतं विशेषं दर्शयितुं तुशब्दः ॥१६८४॥

तस्यान्ययोगव्यवच्छेदं श्रौतमर्थमुक्त्वाऽऽर्थिकमर्थमाह—प्रत्यङ्मात्रेति । तन्मात्रं पश्यतः समुच्चयो नास्ति कर्माभावादित्यर्थः । तस्य कर्माभावे विवक्षितं हेतुमाह—ब्रह्मेति । तत्र समाप्तस्तन्मात्रत्वेन स्थितो विद्वान्न तस्य तस्माद्ब्रह्मणोऽन्यस्मिंस्तत्त्वे कर्माख्ये कर्तृत्वेन शेषतोचिता तथा च समुच्चयासिद्धिरित्यर्थः ॥१६८५॥

तस्य कर्माभावे विवक्षितसमुच्चयाभावेऽपि ज्ञानान्मुक्तिः साध्या न वा ? आद्ये कर्मफलवदनित्यत्वं द्वितीये ज्ञानवैयर्थ्यमित्याशङ्क्याऽऽह—क्षय इति । उक्तस्तद्धास्येत्यादिवाक्याद्व्याप्त्यनुगृहीतादिति शेषः । कृतकत्वं[2] परिच्छिन्नत्वादेरुपलक्षणम् । कृतकत्वाद्युपाधेः साधनव्याप्तिमाशङ्क्याऽऽह—नेति । ज्ञानकार्यस्य तत्फलस्येति यावत् । नित्या निरतिशया च मुक्तिर्मोहहानमात्रं ज्ञानाधीनमित्युक्तमित्यर्थः ॥१६८६॥

स य आत्मानमित्यादिवाक्यस्थकर्मशब्दस्य ज्ञानकार्यमर्थं गृहीत्वा वाक्यार्थः संक्षिप्तः । अधुना मुक्तेर्ज्ञानमात्रसाध्यत्ववत्समुच्चिततत्साध्यत्वमपि स्यादित्याशङ्क्य समुच्चयायोगे हेत्वन्तरमाह—प्रत्यगिति । तस्याऽऽत्ममात्रत्वादात्मनि ज्ञाते सर्वज्ञस्य कृतकृत्यस्येप्सितजिहासितयोरभावादनुष्ठानानवकाशान्न समुच्चय इत्यर्थः ॥१६८७॥

विदुषो विविधसुखप्रेप्सया प्रवृत्तेः समुच्चयसिद्धिरित्याशङ्क्याऽऽह—सर्वेति । चकारौ चोद्यनिरासार्थौ ।

---

१. तदन्यार्थशेषता—ब्रह्मणि लीनस्य कर्मणि कर्तृत्वेन शेषता नोचिता ।
२. मोक्षः अनित्यः साध्यत्वादित्यनुमाने कृतकत्वमुपाधिः यत्रानित्यत्वं तत्र कृतकत्वं घटादौ यत्र साध्यत्वं मोक्षे तत्र कृतकत्वं नास्ति ।

यद्यत्कामयते कामी कर्मभूमाववस्थितः । अस्मादेवाऽऽत्मविज्ञानात्तत्तत्सुखमुपाश्नुते ॥८९॥
सहस्रदशभागद्ध्यर्धा सुखानन्त्यं परात्मनः । वक्ष्यते सर्वसौख्याप्तिस्तस्मिन्दृष्टे परात्मनि ॥९०॥
अन्तर्भावः परानन्दे सुखानामाविरिञ्चतः । अस्माद्ध्येवेति वाक्येन सर्वेषां नः प्रबोध्यते ॥९१॥

आत्मानमेव लोकमुपासीत इत्यस्य भर्तृप्रपञ्चविवरणम्

स्थितेऽप्येवं प्रमाणार्थे केचिद्व्याचक्षतेऽन्यथा । प्रमान्तरविरुद्धार्थमिमं ग्रन्थं यथोदितम् ॥९२॥
न कर्म कारणं मुक्तेः क्षयिष्णुत्वसमन्वयात् । कर्मस्वेव नियच्छन्ति देवताश्च न मुक्तिदाः ॥९३॥
कर्माधिकृतिहेतुत्वादग्न्यादेर्देवतात्मनः । नाप्युत्थायेह कर्मभ्यो ब्रह्म ज्ञातुं क्षमो नरः ॥९४॥
प्रत्यगात्माऽप्यसंदृष्टो मुक्त्यै नैवोपतिष्ठते । देवताज्ञाकरत्वेन ब्रह्मविद्या विरुध्यते ॥९५॥
कर्मिणः कर्मशेषत्वं स्वाराज्यं ब्रह्मवेदने । नातः समुच्चयान्मुक्तिर्नापि स्यात्सा विकल्पतः ॥९६॥

यन्नानाहेत्वधीनं सुखं तद्यद्यपीप्सितं तथाऽपि ज्ञानाद्ब्रह्मप्राप्तावज्ञानध्वस्त्या एतदाप्तमेव "तस्यैवाऽऽनन्दस्ये"त्यादि श्रुतेर्ब्रह्मणः सर्वानन्दत्वाल्लौकिकानन्देष्वनपेक्षहेतुत्वादतो ब्रह्मविदः सुखेप्सयाऽप्यप्रवृत्तेर्न समुच्चय इत्यर्थः ॥१६८८॥

कथं ब्रह्मणः सर्वानन्दैकहेतुतेत्याशङ्क्यास्माद्ध्येवेत्यादि व्याचष्टे—यद्यदिति[1] ॥१६८९॥

आत्मज्ञानादात्मसुखाप्तावपि कथं सर्वसुखाप्तिरित्याशङ्क्यानतिशयमनन्तमात्मसुखं, तत्रान्तर्भूतमितरदिति मत्वाऽऽत्मसुखस्याऽऽनन्त्ये मानमाह—सहस्रेति । आ मनुष्यादा च सूत्रात्पूर्वस्मात्पूर्वस्मादुत्तरोत्तरं शतगुणवृद्ध्या परस्यानतिशयमनन्तं सुखं वक्ष्यते ततस्तत्प्राप्तौ सर्वमपि सुखं प्राप्तमेवेत्यर्थः । परस्याऽऽत्मनो दृष्टिरेव प्राप्तिरित्यभिप्रेत्य दृष्टग्रहणम् ॥१६९०॥

ब्रह्मानन्दे सर्वानन्दान्तर्भावस्य वक्ष्यमाणत्वेऽपि नात्र तद्धीस्तत्कथं ब्रह्मानन्दाप्तावपि तदाप्तिरित्याशङ्क्य कामितसर्वसुखस्याऽऽत्मनो जन्मश्रुतेस्तत्रैवान्तर्भावो भातीत्याह—अन्तर्भाव इति । आविरिञ्चतो हिरण्यगर्भावसानानां संसारनिविष्टानां सर्वेषां सुखानामिति संबन्धः । न शास्त्राधिकृतान्प्रतीति यावत् ॥१६९१॥

आत्मानमेवेत्यादि केवलज्ञानान्मुक्तिरित्येवंपरतया व्याख्याय तत्र भर्तृप्रपञ्चव्याख्यामुत्थापयति—स्थितेऽपीति । प्रमाणं प्रकृतं वाक्यं तस्यार्थो ज्ञानादेव मुक्तिरिति तस्मिन्नुक्तरीत्या स्थितेऽपि तदेव वाक्यमन्यथाऽन्ये व्याकुर्वन्ति तच्च निर्विशेषैकरसप्रत्यग्ब्रह्मावेदकतत्त्वमादिविरुद्धार्थत्वात्त्याज्यमित्यर्थः ॥१६९२॥

तदीयमन्यथाव्याख्यानमेव व्याख्यातुं पूर्वपक्षयति—नेत्यादिना । किं कर्म मुक्तेर्हेतुर्देवता वा ज्ञानं वा ? नाऽऽद्यो मुक्तेरनित्यत्वापत्तेस्तद्यथेहेत्यादिश्रुतेरित्यर्थः । देवतास्तावत्कर्माधिकृताः कर्मस्वेवैनं नियच्छन्तीति भाष्येण द्वितीयं दूषयति—कर्मस्विति । कर्मदृष्टान्तार्थश्चकारः ॥१६९३॥

तासां तेष्वेव प्रेरकत्वे हेतुमाह—कर्मेति । तत्राधिकृतिः संप्रदानत्वयोगः स एव हेतुस्तद्भावादिति यावत् । ताभ्यो व्युत्थायाऽऽत्मदर्शनं नोपपद्यत इति भाष्येण तृतीयं दूषयति—नापीति । देवतानामुत्थानप्रतियोगित्वं समुच्चेतुमपिशब्दः । अधिकृतेष्विवतिनिर्धारणार्थमिहेत्युक्तम् । यावज्जीवादिश्रुतिविरोधान्न कर्म त्यक्तुं शक्यं न चात्यक्तकर्मणो ज्ञानं नापि देवतापरतन्त्रस्य तत्पशुत्वमत्यजतस्तदुपपन्नमतो ज्ञानाभावान्न ततो मुक्तिरित्यर्थः ॥१६९४॥

"आत्माऽपि त्वसंदृश्यमान आत्मत्वेन नोपतिष्ठत" इति भाष्याच्चतुर्थं प्रत्याह—प्रत्यगिति । इत्थंभावे तृतीया । आत्मा तर्हि ज्ञातो मुक्त्यात्मना स्थास्यतीत्याशङ्क्य तज्ज्ञानं कर्मिणस्तत्त्यजो वेति विकल्प्याऽऽद्यं दूषयति—देवतेति । तदाज्ञाकरत्वं कर्मानुष्ठायित्वम् ॥१६९५॥

विरोधमेव साधयति—कर्मिण इति । तस्य हि सति कर्मिणि कारकभावात्तच्छेषत्वं तस्यैव ब्रह्मज्ञाने स्वाराज्यभावात्तन्निवृत्तिरिति विरोधः स्यादित्यर्थः । किंच कर्मिणो ज्ञानपक्षे समुच्चयो विकल्पो वा मुक्तिहेतुरिति विकल्प्य क्रमेण निराह—नात इति ॥१६९६॥

१. यद्यदीति—यद्यत्फलं लोके कामी इच्छति तत्सर्वं ब्रह्मानन्दे ज्ञानफलेऽन्तर्भावात् सः प्राप्नोत्येवेत्यर्थः न तु ज्ञानी यद्यत्कामयते—इति तस्य कामनाभावात्—अथवा भक्तानां यद्यत्फलं भवतु इतीच्छति तत्सर्वं स्वयं स्वतपसा सृजतीत्यर्थः ।

**सति ज्ञाने तदुभयं ततु नैवोपपद्यते । ऋणानि चानपाकृत्य कर्म त्यक्तुं न लभ्यते ।।९७।।
ऋणानि त्रीण्यपाकृत्येत्येवं च स्मृतिशासनम् ।।९८।।
एवं न कर्मतो मोक्षः कर्मणः क्षयवत्त्वतः । ज्ञानाभावान्न विज्ञानान्नोभाभ्यां तदसंभवात् ।।९९।।**

भर्तृप्रपञ्चोक्तसिद्धान्तः

**वीक्ष्यापन्नस्य तस्यैवं सामर्थ्यं ज्ञानकर्मणोः । उद्भिभावयिषुः साक्षात्प्रवृत्तैषा परा श्रुतिः ।।१७००।।
लोकमात्मानमेवेममुपासीताऽऽत्मविद्यया । इति स्यादर्थवत्त्वाय समाधिर्ज्ञानकर्मणोः ।। १ ।।
द्वैतैकत्वात्मिकावस्था विरिञ्चाख्या परात्मनः । विज्ञानकर्माभिव्यङ्ग्या द्वैतत्वात्सा क्षयात्मिका ।। २ ।।
अवस्था याऽनभिव्यक्ता तस्यैव परमात्मनः । अविशेषात्मिका साऽस्य कारणत्वात्त्वनश्वरी ।। ३ ।।
तत्रैवं सति लोकेऽस्मिन्द्वैताद्वैतात्मसंस्थितौ ।
द्वैतावस्थामुपास्ते यस्तस्यासौ क्षीयते ध्रुवम् । द्वैतत्वाद्यः पुनर्धीमान्कर्मावस्थां यथोदिताम् ।। ४ ।।
अव्यक्तावस्थामापाद्य सदोपास्ते परात्मना । न क्षीयते कर्म तस्याद्वैतत्वादेव कारणात् ।। ५ ।।**

अतःशब्दोक्तं हेतुमाह—सतीति । ज्ञाने सत्येव समुच्चयो विकल्पो वेत्युभयं संभवति न च ज्ञानं संभवतीत्युक्तमतो नोभयथाऽपि मुक्तिरित्यर्थः । कर्मिणो ज्ञानं न चेत्तत्त्यजः स्यादिति द्वितीयमाशङ्क्याऽऽह—ऋणानीति । चकारोऽवधारणार्थः ।।१६९७।।

तत्र श्रुतिस्मृतिविरोधं हेतुमाह—ऋणानीति[1] । जायमानो वै ब्राह्मणस्त्रिभिरित्यादिश्रुतिशासनं चकारार्थः । पूर्वपक्षमुपसंहरति—एवमिति । क्षयवत्त्वं तथाविधफलवत्त्वान्मुक्तेश्चातथात्वादित्यर्थः । नोभाभ्यां समुच्चिताभ्यां विकल्पिताभ्यां वा ज्ञानकर्मभ्यामिति यावत् । तदसंभवाज्ज्ञानासंभवस्योक्तत्वादित्यर्थः ।।१६९८–१६९९।।

भर्तृप्रपञ्चसिद्धान्तमुपक्रमते—वीक्ष्येति । समुच्चयाद्विकल्पाच्च मोक्षे निरस्ते स कथमित्यालोचयतो मुमुक्षोःसमुच्चितज्ञानकर्मणोर्मोक्षं प्रति सामर्थ्यं साक्षादुद्भावयितुमिच्छन्ती परा श्रुतिः प्रवृत्तेति योजना ।।१७००।।

श्रुतिं प्रकटयति—लोकमिति । इतिशब्दः श्रुतिशब्देन संबध्यते । तस्यास्तात्पर्यमाह—स्यादिति ।।१७०१।।

कथमात्मोपासकस्य द्वयोरर्थवत्तेत्याशङ्क्य तदर्थं परस्य व्याकृताव्याकृतविभागेनावस्थाद्वयं वदन्व्याकृतावस्थामाह—द्वैतेति । तत्प्राप्त्युपायमुपदिशति—विज्ञानेति । सूत्रोपास्त्या नित्यादिकर्मसहितया साध्येत्यर्थः । सा च द्वैतत्वादेवाल्पस्य मर्त्यत्वश्रवणान्नश्यतीत्याह—द्वैतत्वादिति । उक्तं हि[2]—कर्मणः क्रियमाणस्य यो लोकः फलमित्यादि ।।१७०२।।

"या त्वविशेषावस्थाऽनभिव्यक्ता परमात्मावस्थैव से"ति भाष्येणावस्थान्तरमाह[3]—अवस्थेति । अवस्थात्वादुक्तावस्थावदेषाऽपि नङ्क्ष्यतीत्याशङ्क्य कार्यत्वोपाधिना दूषयति—साऽस्येति ।।१७०३।।

अस्त्ववस्थाद्वयं किं तेनेत्याशङ्क्य केवलद्वैतावस्थोपासकस्य दोषमाह—तत्रेति । द्वैतस्य क्षयत्वमद्वैतस्याक्षयत्वं च तच्छब्दार्थः । एवमुक्तरीत्या तस्मिन्नर्थे स्थिते सतीति यावत् । अस्मिँल्लोके परमात्माख्ये द्वैतरूपेणाद्वैतरूपेण च स्थितिसहिते सतीत्यर्थः । द्वैतावस्था सूत्राख्या द्वैतत्वात्परिमितत्वादित्येतत् । यः पुनरद्वैतावस्थामुपास्ते तस्याऽऽत्मैव कर्म भवतीत्यादि व्याचष्टे—यः पुनरिति ।।१७०४–१७०५।।

---

१. **ऋणानीति**—ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः इति श्रुतेः ब्रह्मचर्यं गुरुकुले उषित्वा वेदमधीत्य ऋषिऋणप्रतीकारः यज्ञान् कृत्वा देवऋणप्रतिक्रिया, प्रजोत्पादनेन तेषां वैदिकमार्गे स्थापनेन च पितृणां ऋणापाकरणं कार्यमित्यर्थः । ब्रह्मचारी चेत् ऋषिऋणं निवर्तनीयम् गृहस्थो भवति चेत् इतरऋणद्वयं इति जायमानपदार्थः ।

२. उक्तं हीति—भर्तृप्रपञ्चभाष्ये इत्यादिः ।

३. भाष्येण = भर्तृप्रपञ्चभाष्येण ।

यदा वै पुरुषः शेते प्राणमप्येति वाक्तदा । चक्षुः श्रोत्रं मनस्तद्वज्जायते तत एव च ।।७८।।
अधिदैवतमप्येवं वायोरग्न्यादिसंभवः । अप्ययश्च यथाऽध्यात्मं श्रेयान्प्राणस्ततोऽन्यतः ।।७९।।
आत्मैव प्राणशब्दः स्यात्प्राणबन्धनवाक्यतः । असदेवेदमित्युक्तेरात्मनो भानुसंभवः ।।८०।।
यत एव समुत्पत्तिस्तत्रैव प्रलयोऽपि च । मृदो जातस्य कुम्भस्य न लयो वीरणादिषु ।।८१।।
वागादिगणधारित्वाद्धर्मं वायुव्रतं विदुः । चक्रिरे दध्रिरे धर्मं धारणं प्रकृतं यतः ।।८२।।
आद्यपि क्रियते तैस्तत्कर्तारश्चापि तत्सुराः । अध्रियन्त यममुर्हि तस्मिन्काले पराजिताः ।।
धर्मव्रतं तदेवाद्य बिभ्रत्यग्न्यादयः शुभम् ।।८३।।
अभग्नं मृत्युना यस्मात्प्राणस्यैव व्रतं ततः । एकमेव व्रतं प्राणं चरेदा मरणात्सदा ।।८४।।

प्राणादादित्योत्पत्तौ तत्र लये च मानं वक्तुमादौ वागादीनां तदुत्पत्तौ तल्लये च मानमाह—यदेति । शयनशब्दितस्वापस्य प्रत्यात्मानं प्रसिद्धत्वार्थो वैशब्दः ।।३७८।।

अग्न्यादित्यादेः प्राणादुत्पत्तौ तत्र लये च यदा वा अग्निरनुगच्छति वायुं तर्ह्यनूद्वातीत्यादिवाक्यं प्रमाणयति । अधिदैवतमिति । वागादीनामग्न्यादीनां च तदुत्पत्तिलयहेतुत्वे प्राणस्य फलितमाह—श्रेयानिति ।।३७९।।

आदित्याद्युत्पत्तिलयहेतुत्वं प्रसिद्धप्राणस्य कथमुपगम्यते तस्याल्पशक्तित्वादित्याशङ्क्याऽऽह—आत्मैवेति । अज्ञातस्याऽऽत्मनोऽत्र प्राणशब्दत्वे नियामकमाह—प्राणेति । तत्र मनःशब्देन तदुपाधिर्जीवो गृह्यते न च स प्राणानां धारयिता मुख्ये प्राणे तिष्ठत्यतो जीवायतनं प्राणशब्दं परमेव ब्रह्म तथाऽत्रापीत्यर्थः । प्राणशब्देनाज्ञातात्मपरिग्रहे मानान्तरमाह—असदेवेति । "असदेवेदमग्र आसीत्तत्सदासीत्तत्समभवत्तदाण्डं निरवर्तत तन्निरभिद्यते"त्यादिवाक्यादसच्छब्देनाव्यक्तनामरूपं परमशेषहेतुं प्रक्रम्य तस्मात्पृथिव्याद्युत्पत्तिमुपदिश्य तस्मादेवाऽऽदित्योत्पत्ति"रथ यत्तदजायत सोऽसावादित्य" इत्युक्ता । अग्निरहस्ये च "यदाऽऽदित्योऽस्तमेति वायुं तर्हि प्रविशति वायुं चन्द्रमा वायौ दिशः प्रतिष्ठिता वायोरेवाधि पुनर्जायन्त" इति प्राणादादित्योत्पत्तिरुच्यते । प्रकृतेऽपि"प्राणाद्वा एष उदेती"ति प्राणात्तज्जन्मोक्तम् । न च तस्मिन्विकल्पो वस्तुत्वात्तस्माच्छन्दोगश्रुत्यनुसारेणाऽऽदित्योत्पत्तिहेतुरन्यत्रापि श्रूयमाणोऽज्ञातात्मैवेति प्रत्युक्तौ प्राणशब्देन तदादानमित्यर्थः ।।३८०।।

प्राणादित्यादि व्याख्याय प्राणेऽस्तमेतीति व्याचष्टे—यत इति । कुलालादुत्पन्नघटस्य मृदि लयवत्परस्मादुत्पन्नस्यापि सूर्यस्य ततोऽन्यत्र लयोपपत्तेरवधारणासिद्धिरित्याशङ्क्योपादानविषयत्वं नियमस्य मत्वा दृष्टान्तमाह—मृद इति ।।३८१।।

मन्त्रस्य पूर्वार्धं सब्राह्मणं व्याख्याय तमित्यादि व्याख्याति—वागादीति । अध्यात्मं प्राणस्य वागादिजातधारित्ववदधिदैवं वायोरग्न्यादिगणधारित्वात्प्राणस्य वायोश्च व्रतं धर्ममागमिका विदुरिति योजना । करणार्थस्य करोतेर्धारणार्थत्वे प्रकरणं नियामकमाह—धारणमिति ।।३८२।।

स एवेत्यादेरर्थमाह—अद्यापीति । तैर्वागादिभिस्तत्प्राणव्रतं वर्तमाने काले क्रियते भविष्यत्यपि ते तत्कर्तारो देवताश्चाग्न्याद्या वायुव्रतमिदानीमिव कालान्तरेऽपि करिष्यन्तीति योजना । "यद्वा एत" इत्यादि ब्राह्मणं व्याकरोति—अध्रियन्तेति । अमुर्हीत्यस्य व्याख्यानं तस्मिन्नित्यादि स च कालो मीमांसयाऽवच्छिन्नत्वात्परोक्षतया निर्दिश्यते । शुभमित्यभग्नत्वोक्तिः ।।३८३।।

तस्मादित्यादेरर्थमाह—अभग्नमिति । प्राणं तत्संबन्धीति यावत् । व्रतानुष्ठानस्य मर्यादां दर्शयति—आ मरणादिति । तत्रापि नैरन्तर्यार्थं सदेत्युक्तम् ।।३८४।।

---

१. "प्राणाद्वा एष उदेति" इत्यत्र प्राणशब्दः ब्रह्मपरः छान्दोग्यषष्ठे 'प्राणबन्धनं हि सोम्य मन" इत्यत्र मनःशब्दितजीवस्य प्राणधारकत्वोक्तेः प्रकृते आदित्यस्य ब्रह्मणः उदयश्च छान्दोग्यतृतीये "असदेवेदमग्रआसीदि"त्यत्र ब्रह्मणः प्राणोत्पत्त्युक्तेः ।

प्राण्यादपान्यात्प्राणात्मा ह्यु क्त्यादिष्वपि कर्मसु। अन्तर्भावो यतोऽमीषां श्रोत्रादीन्द्रियकर्मणाम्॥८५॥
प्राणकर्मणि तेनैतदेकमेव व्रतं चरेत् ॥८६॥
प्राणापानात्मकं यस्माद्व्रतं प्राणैककर्तृकम्। प्राण्यादपान्याच्च ततो नित्यमामरणाद्बुधः ॥८७॥
प्राणात्मनैव वागादिव्रतान्यपि चरेत्सदा। वागाद्यासङ्गवत्तन्मां पाप्मा मा प्रापदासुरः ॥८८॥
इत्येवमभिसंधिः सन्विद्वान्प्राणव्रतं चरेत्। प्राणव्रतं चेदारब्धं चिकीर्षेत्तत्समापनम् ॥८९॥
अभ्यस्तेनाऽऽमृतेर्यस्मात्सायुज्यादि समश्नुते। ह्यन्नात्मदेवतायास्तु तस्मादेवं विधीयते ॥९०॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके
प्रथमाध्यायस्य पञ्चमं सप्तान्नब्राह्मणम् ॥५॥

प्राण्याच्चेत्यादिवाक्यं व्रतस्वरूपं दर्शयितुमादत्ते—प्राण्यादिति। विदुषस्तथाविधव्यापारकर्तृत्वे प्राणात्मत्वं हेतुमाह—प्राणेति। सर्वप्राणिनां प्राणनादिव्यापारस्य स्वारसिकत्वादिच्छयाऽनुष्ठातुमशक्यत्वात्कथं तत्र विधिरित्याशङ्क्य प्राङ्मुखभुक्तिवाक्यवद्व्यापारान्तरनिवृत्तिपरत्वाद्वाक्यस्य मैवमित्याह—उक्त्यादिष्विति। कथं हित्वा वागादिव्यापारं प्राणव्यापारस्यैवानुष्ठेयत्वं तत्राऽऽह—अन्तर्भाव इति ॥३८५॥

प्राणोपासितुरुपास्यप्राणात्मनस्तद्व्रतमेव कार्यमित्यत्र हेत्वन्तरमाह—प्राणेति। नित्यमिति निरन्तरत्वोक्तिरामरणादिति मर्यादावचनमिति विभागः। बुधः सर्वेषु वागादिव्यापारेषु प्राणव्यापारदृष्टिस्तदुपासितेति यावत् ॥३८६–३८७॥

एकमेवेत्यवधृतेर्वागादिव्रतस्य त्यक्तत्वात्तदुक्तिरनर्थिकेत्याशङ्क्यान्तर्भाव इत्यत्रोक्तं स्मारयति—प्राणात्मनेति। वागादीनामुपसर्जनत्वात्प्राणस्य प्रधानत्वादवधारणमित्यर्थः। नेदित्यादेरर्थमाह—वागादीति। वैधर्म्यदृष्टान्तः। मा मामुपासितारमित्यर्थः। यावज्जीवं प्राणव्रतधारणं किमर्थमित्याशङ्क्य यदीत्यादेरर्थमाह—प्राणेति ॥३८८–३८९॥

तेनेत्यादेरर्थमाह—अभ्यस्तेनेति। सायुज्यादीत्यादिपदं सालोक्यादिसंग्रहार्थम्। अभ्यासतारतम्याच्च फलं विकल्पते। फलवत्त्वात्प्राणोपासकं प्रति तद्व्रते नियमविधिरित्युपसंहरति—तस्मादिति ॥३९०॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां शास्त्रप्रकाशिकाख्यायां
प्रथमाध्यायस्य पञ्चमं सप्तान्नब्राह्मणम् ॥५॥

## अथ प्रथमाध्याये षष्ठं ब्राह्मणम्

### षष्ठब्राह्मणस्योपोद्घातः

तद्धेदमित्यविद्याया उक्तं कार्यमशेषतः। उक्तार्थस्यैव संक्षेपस्त्रयं वा इत्यथोच्यते ॥ १ ॥
अज्ञातैकात्म्यकार्यं तद्यदेतदभिशब्दितम्। न तु विध्वस्तसंमोहप्रत्यङ्मात्रसतत्त्वगम् ॥ २ ॥

ननु सूत्रिताया अविद्यायाः सकार्याया विवृतत्वादविद्याप्रकरणे वक्तव्याभावादध्यायसमाप्तिरेव युक्तेत्याशङ्क्य वृत्तमनूद्य ब्राह्मणान्तरमवतारयति—तद्धेति। अव्याकृतवाक्ये साभासा प्रत्यगविद्या सकार्या सूत्रिता तस्या "अथ योऽन्यामि"त्यत्राऽऽकृष्टाया गतेन संदर्भेण कार्यं प्रपञ्चितं तस्य सहेतोरुपसंहारायोत्तरं ब्राह्मणमित्यर्थः। विस्तरानन्तरं संक्षेपस्यावकाशं दर्शयितुमथेत्युक्तम्। संक्षेपविस्तरौ च सुखप्रतिपत्त्यर्थमिष्टौ ॥१॥

किमर्थं पुनरयमुपसंहारो गतत्वादित्याशङ्क्य विज्ञातादिवाक्ये सफलोपसंहारस्येतोऽनुकृष्योक्तेरिदानीमुपसंहारावसरे तत्फलं वक्तुं भूमिकां करोति—अज्ञातेति। यदज्ञातमैकात्म्यं तस्य तत्कार्यं यज्जगदधस्तादुक्तं तत्त्वज्ञानासंस्पर्शिवस्तुकार्यत्वेन तन्निर्देष्टुं शक्यं तस्य कूटस्थस्य स्वतस्तद्धेतुत्वासिद्धेरित्यर्थः ॥२॥

१. तत्त अज्ञानेति छेदः।

एवमुक्ते विरक्तोऽस्मान्मुमुक्षुः श्रद्धयाऽन्वितः । ब्रह्मज्ञानेऽधिकारी स्यात्कथं नामेति भण्यते ॥ ३ ॥
अविद्योत्थपुमर्थेभ्यो विमुखीभूतमानसः । आत्मतत्त्वविजिज्ञासुस्तद्व्यावृत्तो भवेन्नरः ॥ ४ ॥
बाह्यार्थबद्धधिषणः प्रत्यग्याथात्म्यवित्तये । नालं विरोधात्पुरुषः पराञ्चीत्यागमोक्तितः ॥ ५ ॥
अविद्यामात्रहेतुत्वं न त्वैकात्म्यानुसारिता । यथोक्तवस्तुनः कस्मादित्येतत्प्रतिपाद्यते ॥ ६ ॥
अज्ञातादात्मनः साक्षादभिव्यक्तिः पुरोदिता । अहेतुफलरूपस्य नामरूपक्रियात्मभिः ॥ ७ ॥

**मू.—त्रयं वा इदं नाम रूपं कर्म तेषां नाम्नां वागित्येतदेषामुक्थमतो हि सर्वाणि नामान्युत्तिष्ठन्ति । एतदेषाँ सामैतद्धि सर्वैर्नामभिः सममेतदेषां ब्रह्मैतद्धि सर्वाणि नामानि बिभर्ति ॥१॥**

### प्रपञ्चस्य नामात्मकत्वनिरूपणम्

नामाद्यात्मकतैवास्य ब्रह्मादेः स्थावरावधेः । न तु वस्त्वन्तरं तत्स्याद्यथा तदिह वर्ण्यते ॥ ८ ॥
कारणत्वसमानत्वस्वात्मलाभत्वहेतुभिः । नामाद्यात्मकतैतस्य प्रपञ्चस्य प्रसाध्यते ॥ ९ ॥
अनेकभेदसंभिन्नं यदेतद्व्याकृतं जगत् । नामरूपक्रियातत्त्वमेतत्सर्वं प्रतीयताम् ॥१०॥
त्रयं वा इदमित्येवं प्रतिज्ञार्थमिदं वचः । हेतूक्तिरुत्तरो ग्रन्थस्तेषामित्यादिनोच्यते ॥११॥
वागित्यनेन शब्देन नादमात्रं विवक्ष्यते । अपजुह्नूषितत्वात्तु[1] नादोत्थस्य विकारतः ॥१२॥

उपसंहारफलं स्फोरयति—एवमिति । त्र्यात्मकं जगदाविद्यमित्येवं सिद्धे सत्यस्माद्विरक्तो मुमुक्षुस्तद्धेतुं श्रद्धयाऽनुसंदधानो ब्रह्मधीहेतौ श्रवणादौ संन्यासपूर्वके कथमधिकुर्यादिति यतः श्रुतिरालोचयतेऽतोऽयमुपसंहारः क्रियते तयेत्यर्थः ॥३॥

अविरक्तोऽपि कुतूहलधिया तत्राधिकारी स्यात्कृतं विरक्त्येत्याशङ्क्याऽऽह—अविद्येति । अज्ञानकृतस्वर्गादिभ्यः साध्येभ्यो व्यावृत्तधीस्तद्धेतुभ्यश्च निवृत्तमनाः सन्नात्मविविदिषुर्भवति तत्कथमविरक्तस्य विद्याधिकारितेत्यर्थः ॥४॥

तस्य विद्यायामसामर्थ्ये हेतुमाह—बाह्येति । विरोधादित्यनात्मासङ्गस्याऽऽत्मवेदनस्य चान्योन्यप्रत्यनीकत्वादित्यर्थः । अनात्मप्रमाणमप्यात्मानमाश्रयत्वेन प्रत्याययिष्यत्यतो न तद्धियोर्विरोधितेत्याशङ्क्याऽऽह—पराञ्चीति । न हि विषयधीराश्रयत्वेनाऽऽत्मानमावेदयितुमलं तस्या विषयमात्रावसायित्वादतो विरोधस्तद्धियोरित्यर्थः ॥५॥

सर्वस्य जगतोऽविद्यात्मकत्रयमात्रत्वे वैराग्यादिसिद्धिर्न च तदद्यापि सिद्धमिति चोदयति—अविद्येति । षष्ठी सप्तान्नात्मकजगद्विषया । तत्रोत्तरत्वेन त्रयमित्याद्यवतारयति—एतदिति ॥६॥

तद्व्याख्यातुमुत्तरं स्मारयति—अज्ञातादिति । हेतुफलभावरहितः प्रत्यगात्मैव रूपं यस्य तस्य जगतो वा तद्भावशून्यस्याऽऽत्मनो वा नामाद्यात्मना स्पष्टा व्यक्तिरात्मनोऽज्ञातादुक्ता तद्धेत्यादावित्यर्थः ॥७॥

त्रयमित्यादेस्तात्पर्यं संगृह्णाति—नामादीति । कथं प्रतिज्ञामात्राद्यथोक्तवस्तुसिद्धिरित्याशङ्क्याऽऽह—यथेति । इहेति प्रकृतब्राह्मणग्रहणम् ॥८॥

केन हेतुना जगतो नामाद्यात्मत्वमुच्यते तत्राऽऽह—कारणत्वेति ॥९॥

तात्पर्यमुक्त्वा त्रयमित्याद्यक्षराणि व्याकरोति—अनेकेति ॥१०॥

अस्यैवार्थस्य तेषां नाम्नामित्यादिनाऽपि वक्ष्यमाणत्वात्पुनरुक्तिरित्याशङ्क्याऽऽह—त्रयमिति । इदं वचस्त्रयमित्यादि सर्वं जगन्नामाद्यात्मकमित्येतस्य प्रतिज्ञार्थं यस्तूत्तरो ग्रन्थस्तेषामित्यादिस्तेन प्रतिज्ञातेऽर्थे हेतूक्तिरिति योजना । अथवा तेषामित्यादिना रूपेण योऽसावुत्तरो ग्रन्थः स प्रतिज्ञातेऽर्थे हेतूक्तिरिति योजना ॥११॥

तेषां नाम्नामित्यादौ वाक्पदार्थमाह—वागित्यनेनेति । तेन शब्दविशेषाग्रहे हेतुमाह—अपजुह्नूषितत्वादिति ॥१२॥

---

१. अपेति अपह्नोतुमिष्टं अपजुह्नूषितं ।

एषां नामविकाराणामुक्थं नादस्तदुत्थितेः । सर्वनाम्नामतो नाद उक्थमित्यभिधीयते ॥१३॥
तथा सामान्यतो वाचो विशेषाणां तदात्मता । न हि निष्कृष्य सामान्याद्विशेषः कश्चिदीक्ष्यते ॥१४॥
आत्मत्वाच्च तथा वाचो नाऽऽत्मीयोऽन्योऽवशिष्यते । कात्स्न्र्येनैवाभिसंबन्धादात्मीयस्येह वस्तुनः ॥१५॥
कार्यकारणगो भेदः प्राप्तो लोके य ईक्ष्यते । अविचारितसंसिद्धः सोऽयं श्रुत्या निषिध्यते ॥१६॥
एवं सति प्रमाणत्वमपूर्वार्थविबोधनात् । अन्यथाऽतोऽनुवादः स्याच्छ्रुतेर्ज्ञातार्थबोधनात् ॥१७॥

म.—अथ रूपाणां चक्षुरित्येतदेषामुक्थमतो हि सर्वाणि रूपाण्युत्तिष्ठन्त्ये-तदेषाँ सामैतद्धि सर्वैः रूपैः सममेतदेषां ब्रह्मैतद्धि सर्वाणि रूपाणि बिभर्ति ॥२॥

रूपविशेषाणां सामान्यात्मकता

चक्षुषो विषयश्चक्षुःशब्देनेहाभिधीयते । रूपाणामिति संबन्धाद्रूपात्मत्वात्तथैव च ॥१८॥
यद्यद्धि रूप्यते किंचिच्छब्दस्पर्शादिकं धिया । तत्तद्रूपमिति ज्ञेयं तैजसत्वाविशेषतः ॥१९॥
त्वाष्ट्रमेव हि सर्वत्र तेजो रूपादिलक्षणम् । तस्माद्विषयसामान्यं चक्षुःशब्देन भण्यते ॥२०॥

एतदेषामुक्थमित्यस्यार्थमाह—एषामिति । सर्वे नामविशेषास्तन्मात्रात्तत्त्वतो न भिद्यन्ते तत्कार्यत्वाद्य-द्यत्कार्यं तत्ततो न तत्त्वतो भिद्यते यथा मृदो घट इत्यनुमानं निगमयति—अत इति ॥१३॥

एतदेषां सामेत्यादेरर्थमाह—तथेति । कारणत्वाद्वाचस्तद्विशेषाणां कार्याणां तादात्म्यवदित्यर्थः । वाचः सामान्यत्वेऽपि कुतो विशेषाणां तदात्मतेत्याशङ्क्य व्याप्तिमाह—न हीति । सर्वे नामविशेषास्तत्सामान्ये कल्पिताः प्रत्येकं तदनुविद्धत्वाद्रज्जिवदंशानुविद्धसर्पादिवदित्यर्थः ॥१४॥

एतदेषां ब्रह्मेत्यादेरर्थमाह—आत्मत्वाच्चेति । तथेति कारणत्वात्सामान्यत्वाच्च वाचस्तद्विशेषाणां तादात्म्य-वदित्यर्थः । तस्यास्तद्विशेषेषु स्वरूपलाभहेतुत्वात्तदन्यो वाग्विशेषो नेत्येतदेव साधयति—कात्स्न्र्येनेति । इहेति घटाद्यात्मभूतमृदादिग्रहणम् । सर्वं नाम तत्सामान्यात्पृथङ्न वस्तुतोऽस्ति तेनाऽऽत्मवत्त्वात् । यद्येनाऽऽत्मवन्न तत्ततोऽन्यद्वस्तुतोऽस्ति यथा मृदाऽऽत्मवान्घटो न वस्तुतो ततोऽन्योऽस्तीति भावः ॥१५॥

उक्तानुमानेष्वध्यक्षविरोधमाशङ्क्याऽऽह—कार्येति । सामान्यविशेषयोरात्मात्मीययोश्चेति द्रष्टव्यम् । एतदेषामुक्थमित्यादिश्रुत्या भेदस्य निषेधे हेतुमाह—अविचारितेति । अन्योन्याश्रयादिदोषात्कल्पितो भेदः श्रौत-निषेधयोग्योऽध्यक्षविषयोऽतस्तात्त्विकभेदनिषेधकानुमानेषु न तद्विरोधोऽस्तीत्यर्थः ॥१६॥

अथेयं श्रुतिरभेदं बोधयति न भेदं निषेधयत्युभयार्थत्वे वाक्यभेदादतो भेदाभेदपरतेत्याशङ्क्याऽऽह—एवमिति । निषेधपरत्वे श्रुतेरज्ञातभेदाभावावबोधित्वात्प्रामाण्यसिद्धिरित्यर्थः । भेदाभेदबोधित्वे दोषमाह—अन्य-थेति । भेदस्य लोकवादिसिद्धत्वादभेदस्य च सुवर्णं कुण्डलमित्यादिसामानाधिकरण्यधीदृष्टत्वाद्भेदाभेदवादिश्रुते-र्ज्ञातार्थत्वेनानुवादित्वादप्रामाण्यमित्यर्थः ॥१७॥

अथ रूपाणामित्यत्र चक्षुःशब्दार्थमाह—चक्षुष इति । तत्र हेतू रूपाणामिति । रूपाणां चक्षुरुक्थमित्यत्र रूपविशेषाणां कार्यत्वं चक्षुषः कारणत्वमिति संबन्धदृष्टे रूपसामान्यं चक्षुरुक्तं प्रसिद्धाच्चक्षुषो रूपविशेषानुत्पत्ते रूपसामान्याच्च तद्विशेषोत्पत्तेरिष्टत्वादित्यर्थः । तत्रैव हेत्वन्तरमाह—रूपेति । चक्षुषो रूपमात्रतेजोविकारत्वेन रूपात्मत्वाच्च चक्षुःशब्देन रूपसामान्यग्रहणमित्यर्थः ॥१८॥

तस्य रूपात्मत्वं साधयति—यद्यद्धीति । बुद्धया रूप्यमाणेऽर्थे रूपशब्दप्रवृत्तेरौचित्यद्योतनार्थो हिशब्दः । रूप्यमाणकार्यमात्रस्य रूपत्वे हेतुमाह—तैजसत्वेति । कार्यमात्रस्य तैजसत्वाविशेषात्तस्य च रूपात्मत्वस्वीकारादि-त्यर्थः ॥१९॥

कथं तन्मात्रस्य तैजसत्वं तदाह—त्वाष्ट्रमिति । सर्वं हि कार्यं सावित्रेण तेजसा पच्यमानमात्मानं लभते तथा च तदेव तदित्यर्थः । चक्षुषस्तैजसत्वेन रूपात्मत्वमुक्त्वा फलितमाह—तस्मादिति ॥२०॥

हेतुतज्जाविभागेन कार्यकारणहेतुतः । वाचारम्भणशास्त्राच्च विकारानृततोच्यते ॥२१॥
अन्तर्भावश्च सामान्ये विशेषाणामथोच्यते । सामान्यमेतत्सर्वेषां विशेषाणां समं हि तैः ॥२२॥
न विशेषो न सामान्यं भेदतोऽभेदतोऽस्ति नः । तथा रूपविशेषाणां रूपमात्रात्मकत्वतः ॥
स्रग्वत्सर्पादिकान्यद्वद्रूपं सर्वं बिभर्ति हि ॥२३॥

मू.—अथ कर्मणामात्मेत्येतदेषामुक्थमतो हि सर्वाणि कर्माण्युत्तिष्ठन्त्येतदेषाँ सामैतद्धि सर्वैः कर्मभिः सममेतदेषां ब्रह्मैतद्धि सर्वाणि कर्माणि बिभर्ति तदेतत्त्रयँ सदेकमयमात्मात्मो एकः सन्नेतत्त्रयं तदेतदमृतँ सत्येन च्छन्नं प्राणो वा अमृतं नामरूपे सत्यं ताभ्यामयं प्राणश्छन्नः ॥३॥

इति प्रथमाध्याये षष्ठं ब्राह्मणम ॥६॥
इति बृहदारण्यकोपनिषदि प्रथमोऽध्यायः ॥१॥
इति बृहदारण्यकक्रमेण तृतीयोऽध्यायः ॥३॥

कर्मविशेषाणां कर्मात्मिकत्वम्

उक्तं समासतस्तावदेकत्वं नामरूपयोः । कर्मणोऽपि तथैकत्वमधुना प्रतिपाद्यते ॥२४॥
वाक्चक्षुःशब्दतो यद्वद्गृह्यते विषयस्तयोः । आत्मनो विषयस्तद्वदात्मशब्देन गृह्यते ॥२५॥
सर्वेन्द्रियपरिस्पन्दो व्यज्यते नः शरीरके । शरीरविषयस्तस्मादात्मेत्यत्राभिधीयते ॥२६॥
आत्मैव त्वस्य कर्मेति तथैवाभिहितं पुरा । अतोऽत्र कर्मसामान्यं गृह्यते देहसंश्रितम् ॥२७॥

रूपविशेषाणां तत्सामान्यस्य च कार्यकारणत्ववादिश्रुतेस्तात्पर्यमाह—हेत्विति । कार्यकारणयोरविभागस्य मृद्घटादौ दृष्टत्वात्प्रकृते च तद्भावहेतोस्तादात्म्यदृष्टेर्वाचारम्भणं विकार इति च कार्यानृतत्वोक्ते रूपसामान्यं विना न तद्विशेषा वस्तुतः सन्तीत्यर्थः ॥२१॥

उक्थवाक्यमित्थं व्याख्यायैतदेषां सामेत्यस्यार्थमाह—अन्तर्भावश्चेति । हेत्वन्तरार्थोऽथशब्दः । एतद्धीत्यादेरर्थमाह—सामान्यमिति । रूपमात्रस्य तद्विशेषेषु सामान्यत्वं साधयति—समं हीति ॥२२॥

रूपसामान्ये तद्विशेषाणामन्तर्भावं वदता सामान्यविशेषभावस्य वास्तवत्वमिष्टमन्यथा तद्भावस्यैवायोगात्तथा चापराद्धान्तः स्यादित्याशङ्क्याऽऽह—नेत्यादिना । निःसामान्यविशेषं वस्तु वदतामस्माकं न सामान्याद्भेदाभेदाभ्यां विशेषोऽस्ति नापि सामान्यं विशेषात्ताभ्यां संभवति भेदसंबन्धयोर्दुर्वचत्वादभेदे वाऽन्यतरपरिशेषादतः सामान्यविशेषत्वं कल्पितं तच्चाकल्पितवद्व्यवहाराङ्गमित्यर्थः । एतदेषां ब्रह्मेत्यस्यार्थमाह—तथेति । यथा सर्पादीनां स्रङ्मात्रत्वं तथा रूपविशेषाणां रूपमात्रस्वभावत्वान्न ततो भेदेन ते वस्तुतः सन्तीत्यर्थः । एतद्धीत्यादेरर्थमाह—सर्पादिकानीति । यथा स्रगधिष्ठानं सर्पादीन्बिभर्ति तथा रूपसामान्यं स्वविशेषमात्मत्वेन धारयत्यतो न तद्विशेषस्तन्मात्रात्पृथगस्तीत्यर्थः ॥२३॥

अथ कर्मणामित्यादि वृत्तमनूद्यावतारयति—उक्तमिति । नामविशेषाणां नाममात्रेण रूपविशेषाणां च तन्मात्रेणैक्यं संक्षिप्योक्तं तथैव कर्मविशेषाणां तन्मात्रेणैक्यमुच्यतेऽनन्तरेणेत्यर्थः ॥२४॥

कथमात्मा कर्मणामुक्थमिति विशेषतो व्यपदिश्यते तस्य सर्वोपादानत्वादित्याशङ्क्याऽऽत्मशब्दार्थमाह—वागिति ॥२५॥

कथमात्मशब्दितदेहनिर्वर्त्यकर्ममात्रमत्राऽऽत्मेत्याशङ्क्याऽऽह—सर्वेन्द्रियेति । शरीरविषयस्तज्जन्यपरिस्पन्द इति यावत् । सप्तम्या प्रकृतमुक्थवाक्यमुक्तम् ॥२६॥

आत्मशब्देन तद्ग्रहे हेत्वन्तरमाह—आत्मैवेति । अज्ञस्य बाह्यजायाद्यापादयितुमशक्तस्य शरीरमेव कर्मेत्युक्तं पूर्वब्राह्मणे । कथमेतावताऽत्राऽऽत्मशब्देन कर्मसामान्यग्रह इत्याशङ्क्याऽऽह—अतोऽत्रेति । देहस्याऽऽत्मशब्दत्वमतःशब्दार्थः । अत्राऽऽत्मशब्देन कर्मसामान्यग्रहे तात्स्थ्यादित्यादिभाष्यस्थं हेतुमाह—देहेति ॥२७॥

नाम रूपं तथा कर्म यदेतत्त्रयमीरितम् । एकमेव भवत्येतत्त्रयं सद्देहमात्रकम् ॥२८॥
विकर्तृत्वेन कर्मात्र नामरूपात्मनोर्भवेत् । कर्मणः साधनत्वेन नामरूपे व्यवस्थिते ॥२९॥
रूपमेव प्रतिष्ठा स्यात्सर्वदा नामकर्मणोः । न हि रूपमनाश्रित्य विद्येते नामकर्मणी ॥३०॥
प्राण एव प्रतिष्ठैवं सदा स्यान्नामरूपयोः । प्राणैकात्म्याश्रयाद्यस्मादात्मलाभः सदा तयोः ॥३१॥
तद्वद्वागाश्रयत्वं च तयोः स्याद्रूपकर्मणोः । वाचा प्रकाश्यमाने ते प्रयुज्येते यतः सदा ॥३२॥

नामरूपक्रियाणां शरीरात्मता

आश्रयाश्रयिभावेन नामरूपक्रियात्मनाम् । एकार्थानां सतां तेषां संहतिः स्याच्छरीरके ॥३३॥
एकः सन्नेष आत्माऽपि त्रयमेतत्प्रपद्यते । नामरूपक्रियाभिन्नो देहोऽयं गृह्यते यतः ॥३४॥
एतन्मयोऽयमात्मेति तथा पूर्वं प्रपञ्चितम् । एतावद्व्याकृतं सर्वं यदेतत्संहतं त्रिभिः ॥३५॥
तदेतत्खलु वैराजं नामरूपक्रियात्मकम् । नामरूपात्मसत्त्येन च्छन्नं प्राणामृतं तु तत् ॥३६॥
प्राणशब्देन लिङ्गात्मा भण्यते करणात्मकः । पिण्डस्य मरणे नैतन्म्रियतेऽमृतं मतम् ॥३७॥
पृथिव्यबग्निभूतानि सत्संज्ञान्यत्र लक्षयेत् । त्यत्संज्ञके तु विज्ञेये वाय्वाकाशे महात्मभिः ॥३८॥

तदेतत्त्रयमित्यादेरर्थमाह—नामेति ॥२८॥

तच्चेद्देहमात्रं केन रूपेण देहे नामादीनां स्थितिरित्याशङ्क्याऽऽह—विकर्तृत्वेनेति । अत्रेति देहोक्तिः । नामादीनां मिथोहेतुफलत्वेनात्र स्थितिरित्यर्थः ॥२९॥

इतरेतराश्रयमितिविशेषणतात्पर्यं वदन्नामकर्माश्रयत्वं रूपस्योपन्यस्यति—रूपमिति । सर्वदेति दैहिकयोर्द्वयोः सत्त्वावच्छिन्नकालोक्तिः । तत्र युक्तिमाह—न हीति । तयोरस्वातन्त्र्यादित्यर्थः ॥३०॥

प्राणस्य नामरूपाश्रयत्वमाह—प्राण इति । एवं रूपस्य नामकर्माश्रयत्ववदित्यर्थः । सदाशब्दस्तु पूर्ववत् । तस्य क्रियासामान्यात्मनेतरेतराश्रयत्वे हेतुमाह—प्राणेति । नामरूपयोर्देहस्थयोः सत्त्वं सदा प्राणाधीनमिति प्राणस्य तदाश्रयत्वोक्तिरित्यर्थः ॥३१॥

नाम्नो रूपाद्याश्रयत्वमाह—तद्वदिति । रूपस्य कर्मणश्च प्रत्येकमितरेतराश्रयत्ववदित्यर्थः । वाक्शब्दस्य नाममात्रस्य रूपाद्याश्रयत्वे हेतुमाह—वाचेति । न हि रूपस्य कर्मणश्चाप्रकाशितस्य क्वचिद्विनियोगस्तेन प्रकाश्ययोस्तयोर्युक्तं प्रकाशकाश्रयत्वमित्यर्थः ॥३२॥

अन्योन्याश्रयत्वेन नामादीनां देहे स्थितिमुक्त्वा संहतमित्यादिभाष्यार्थमाह—आश्रयेति । एकार्थानामेकस्य भोक्तुः सुखदुःखप्रदत्वेनैकशरीरारम्भकत्वेनावस्थितानामित्यर्थः । सर्वत्र शरीरसामान्याधिकृतस्य कप्रत्ययस्य कुत्सितत्वमित्यर्थः ॥३३॥

नामादित्रयस्य देहमात्रत्वे कथं व्यवहारासांकर्यमित्याशङ्क्याऽऽत्मो एकः सन्नित्यादेरर्थमाह—एकः सन्निति । एकस्यैव देहस्य कुतस्त्रिरूपत्वमत आह—नामेति ॥३४॥

देहस्य त्र्यात्मत्वं न परं प्रत्यक्षं वाक्यीयमपीत्याह—एतन्मय इति । तथेति देहस्य यथोक्तनामरूपकर्मसंभिन्नत्वानुरोधेनेति यावत् । कार्याणां कारणानां च भूयस्त्वात्त्रयोक्तिमात्रेण सर्वानुक्तेरुपसंहारस्य सर्वसंग्राहकत्वासिद्धिरित्याशङ्क्याऽऽह—एतावदिति ॥३५॥

तदेतदिति व्याकुर्वन्संहतिरूपं श्रुतिस्मृतिप्रसिद्धमित्याह—तदिति । अमृतमित्यादेरर्थमाह—नामेति । वैराजेन शरीरेण सत्यशब्दितेन सौत्रं शरीरममृतमावृतमित्यर्थः ॥३६॥

प्राणो वा अमृतमित्यस्यार्थमाह—प्राणेति । तस्य कथममृतत्वं तदाह—पिण्डस्येति ॥३७॥

नामरूपे सत्यमित्यत्र सत्यशब्दस्यावयवार्थमाह—पृथिवीति । अत्र पञ्चसु स्थूलभूतेष्विति यावत् । महात्मभिर्महत्यात्मन्यनवच्छिन्ने चेतो धारयितुमिच्छद्भिरुपायत्वेनेति शेषः ॥३८॥

**सच्च त्यच्चेति तत्सत्यं पञ्चभूतात्मकं विदुः । कारणायतनं स्थूलं वैराजं यत्प्रचक्षते ।।३९।।**
**अस्याप्यन्तर्गतः प्राणो विज्ञानात्मेति यं विदुः । आ संसारात्स्थितः स्थास्नुः परिणामात्मकः सदा ।।४०।।**
**यथाकर्म यथाज्ञानमुपादत्ते शरीरकम् । प्लुष्यादिना समोऽतोऽयं श्रुतावप्यभिधीयते ।।४१।।**
**उपात्ताशेषभूतोऽयं यथोक्तोपात्तदेवतः । कृत्स्नाविद्योत्थमानी च प्रत्यगज्ञानकारणात् ।।४२।।**
**हैरण्यगर्भे तत्त्वज्ञो वैराजे च शरीरके । आबद्धात्माभिमानोऽयं गार्ग्योऽविद्यासमन्वितः ।।४३।।**
**कृत्स्नसंसारमान्येष सर्वोऽस्मीति व्यवस्थितः । ब्रह्मोपदेशविषयः श्रुत्यैवोत्थाप्यते जडः ।।४४।।**
**नामरूपाभिमानाभ्यां मर्त्याभ्याममृतः स्वयम् । प्राणः करणसंघातश्छन्नः संवेष्टितः सदा ।।४५।।**

तदेतत्त्रयमित्यादेः भर्तृप्रपञ्चव्याख्या

**संप्रदायविदस्त्वत्र नानात्वैकत्ववादिनः । भिन्नाभिन्नात्मकं ब्रह्म नामरूपादिवज्जगुः ।।४६।।**
**त्रयं सदेकमेव स्यादेकं सत्तद्यथा त्रयम् । अनेनैवानुमानेन विद्याद्ब्रह्मापि तादृशम् ।।४७।।**
**दृगादिशक्त्यनेकत्वेऽप्येकमेव परं विदुः । शक्तिशक्तिमतोरैक्याद‌द्वैतमिति भण्यते ।।४८।।**

तस्य समुदायार्थमाह—सच्चेति । पञ्चीकृतपञ्चभूतात्मकं तत्कार्यं च सर्वं सच्च त्यच्चेति व्युत्पत्तेः सत्यं वैराजं शरीरं कार्यमपञ्चीकृतपञ्चभूततत्कार्यात्मककरणरूपसप्तदशकलिङ्गस्य सूत्राख्यस्याऽऽयतनं विदुर्ब्रह्मविदस्तदेतदागमज्ञानामेवाभिज्ञास्पदमित्यर्थः ।।३९।।

क्रियात्मकस्तु प्राण इत्यादिभाष्येण करणयाथात्म्यं कथयति—अस्यापीति । तर्ह ज्ञानरूपः परात्मैव प्राण इति नेत्याह—आ संसारादिति । उपाधितद्वतोरेकत्वं गृहीत्वा विज्ञानात्मेत्युक्तम् । तर्हि क्रियात्मनस्तस्य कथं यावद्बन्धभावित्वेनामृतत्वं तत्राऽऽह—स्थास्नुरिति । क्रियाशक्तिप्रधानस्य तस्य सापेक्षममृतत्वमित्यर्थः । निरपेक्षं तद्वारयति—परिणामेति ।।४०।।

स्थूलदेहे गच्छत्यपि स्वयं नापगच्छति चेत्कथमस्य पुनः स्थूलदेहग्रहस्तत्राऽऽह—यथेति । तत्र "समः प्लुषिणे"त्यादिश्रुतिं प्रमाणयति—प्लुष्यादिनेति । स्थूलशरीरवत्प्राणस्य विनाशाभावोऽतःशब्दार्थः । न केवलमत्रैव प्राणस्यामृतत्वमुच्यते किंतु पूर्वत्रापीत्यपेरर्थः ।।४१।।

सर्वं जगद्देहद्वयात्मनोपसंहरन्त्याः श्रुतेरभिप्रायमत्रापि प्रकटयति—उपात्तेति । देहद्वयगताभिमानद्वयवत्त्वे हेतुमाह—कृत्स्नेति ।।४२।।

तदेव स्फुटयति—हैरण्यगर्भ इति । अज्ञानाद्देहद्वयाभिमानी दोषदृष्ट्या ततो विरक्तो विद्याधिकारीति वक्तुमुपसंहारश्रुतिरिति भावः । तत्राजातशत्रुब्राह्मणं गमकमाह—गार्ग्य इत्यादिना । वैराग्यहेतुना विवेकेन सहितस्य बालाकेरविद्यावत्त्वं कथमित्याशङ्क्याऽऽह—जड इति । तत्रापरोक्षराहित्यादित्यर्थः ।।४३–४४।।

उपसंहारश्रुतेस्तात्पर्यमुपसंहृत्य ताभ्यामित्यादि व्याचष्टे—नामेति । सूक्ष्मं शरीरमनात्माऽपि स्थूदेहच्छन्नत्वाद्दुर्ज्ञानं तेनापि च्छन्नं प्रत्यग्वस्तु सुतरामिति तज्ज्ञानेऽवहितैर्भाव्यमिति भावः ।।४५।।

तदेतत्त्रयमित्यादौ स्वव्याख्यानमुक्त्वा भर्तृप्रपञ्चव्याख्यानमुत्थापयति—संप्रदायेति । विशेषणमुपहासार्थम् । पूर्वोक्तव्याख्यानव्यावृत्त्यर्थस्तुशब्दः । नामादित्रयमत्रेत्युक्तम् । वदन्तु ते नामादित्रयस्य भिन्नाभिन्नत्वं ब्रह्मणस्तु किं जातं तदाह—भिन्नेति । नामरूपकर्मणां भिन्नाभिन्नत्वं ब्रह्मणो भिन्नाभिन्नत्वसिद्धये दृष्टान्तत्वेनोच्यते तथाच कुतो ब्रह्मैकरस्यमित्यर्थः ।।४६।।

तत्र दृष्टान्तं स्पष्टयति—त्रयमिति । दार्ष्टान्तिकं स्फुटयति—अनेनेति । दृष्टान्तेनेति यावत् । विमतं भिन्नाभिन्नं वस्तुत्वान्नामादिवदित्याह—अनुमानेनेति । उक्तं चानेन चैकत्वनानात्वदर्शनेन परमेकत्वनानात्वमनुमातव्यमिति ।।४७।।

ब्रह्मणो भिन्नाभिन्नत्वानुमानस्य तदैक्यागमविरोधमाशङ्क्याऽऽह—दृगादीति । तच्छक्तीनामवान्तर-

**सास्नादिषु यथा गोत्वमभेदेन व्यवस्थितम् । मिथः सास्नादयो भिन्ना गोत्वाभिन्नास्तथाऽपि ते ॥४९॥**
**भिन्नाभिन्नात्मता यद्वत्स्थूलेष्वर्थेषु दृश्यते । सूक्ष्मेष्वपि तथा विद्यादनुमानबलाद्बुधः ॥५०॥**
**परपक्षे न दृष्टान्तः कश्चिदप्युपलभ्यते । भिन्नाभिन्नात्मकं तस्मात्सर्वं वस्त्विति निश्चयः ॥५१॥**

भर्तृप्रपञ्चमतनिराकरणम्

**अनुमानैकसिद्धत्वाद्भिन्नाभिन्नात्मवस्तुनः । आगमेनात्र किं कार्यं लिङ्गसिद्धानुवादिना ॥५२॥**
**न चाऽऽगमस्य तात्पर्यमेवंभूतेऽस्ति वस्तुनि । अस्थूलं नेति नेतीति ज्ञाताज्ञातह्नुतेस्तथा ॥५३॥**
**विशेषात्मनिषेधाय तथा सामान्यरूपिणः । क्षुरविश्वंभरौ श्रुत्या दृष्टान्तौ प्रतिपादितौ ॥५४॥**

निस्सामान्यविशेषवस्तुनि परदृष्टान्तः

**अन्त्या विशेषा दृष्टान्तः परपक्षेऽपि विद्यते । त्वत्पक्ष एव दृष्टान्तो यथा नास्ति तथोच्यते ॥५५॥**

भेदेऽप्येकत्वाद्भिन्नाभिन्नस्य ब्रह्मणस्तदैक्यश्रुतिरविरुद्धेत्यर्थः। तथाऽप्यनुमाने द्वैताभावश्रुतिविरोध इत्याशङ्क्याऽऽह—शक्तीति । केवलद्वैतनिषेधार्था सेति भावः ॥४८॥

तथाऽपि भिन्नमभिन्नमिति मिथो व्याघाताख्यतर्कविरुद्धमनुमानमित्याशङ्क्याऽऽह—सास्नादिष्विति । यथा खण्डादिषु गोत्वमनुवृत्तं ते च मिथो व्यावृत्ताः । न च तत एव तेषां गोत्वादपि व्यावृत्तिः खण्डो गौरित्याद्यभेदबुद्धेः सर्वे भावा ह्येकत्वानेकत्वव्यवस्थयाऽवस्थिता गृह्यन्त इत्युक्तेरित्यर्थः ॥४९॥

दृष्टान्तमनूद्य दार्ष्टान्तिकमाह—भिन्नेति । स्थूलेषु गवादिष्वित्येतत् । सूक्ष्मेषु दृगादिष्वित्यर्थः । बुधोऽनुमानप्रक्रियाकुशलो विवक्षितः ॥५०॥

विमतं भिन्नाभिन्नं वस्तुत्वाद्गवादिवदित्ययुक्तं विमतं न भिन्नाभिन्नं निःसामान्यत्वादन्त्यविशेषवदित्यनुमानादित्याशङ्क्याऽऽह—परेति । सामान्यादन्यत्वं हेतुश्चेत्खण्डादौ व्यभिचारोऽसामान्यवत्त्वं चेद्गोत्वादौ व्यभिचारो न चात्र दृष्टान्तोऽस्त्यन्त्यविशेषाणामप्रमाणत्वादिति[1] भावः । अनुमानस्य निर्दोषत्वे तत्फलमुपसंहरति—भिन्नेति । सर्वं वस्तु दृष्टान्तदार्ष्टान्तिकभूतमित्यर्थः ॥५१॥

अनुमानाद्वा यथोक्तब्रह्मधीरागमाद्वेति विकल्प्याऽऽद्ये ब्रह्मणि वेदप्रामाण्यासिद्धिरिति दूषयति—अनुमानेति ॥५२॥

द्वितीयं निरस्यति—न चेति । न हि नानारसे ब्रह्मणि वेदस्य तात्पर्यं तद्धेतुषड्विधलिङ्गानामन्यतमस्य[2] तत्रानवगमादित्यर्थः । न केवलमागमस्यानेकरसे न तात्पर्यं प्रत्युतैकरसेऽर्थे तदस्तीत्याह—अस्थूलमिति । तथेत्यनेकरसे वस्तुनि नास्ति तात्पर्यमागमस्येत्यनुकृष्यते ॥५३॥

प्रवेशवाक्यवशादपि ब्रह्मैकरस्यमित्याह—विशेषेति । तथाशब्दो निषेधानुकर्षणार्थः । सामान्यविशेषाभ्यां ब्रह्मणो देहे प्रवेशं वक्तुं दृष्टान्तावुक्तौ । न चैवं ब्रह्मणो द्विरूपत्वं मिथोविरोधात्तदतिरिक्तस्वरूपाभावे पर्यवसानादतो निःसामान्यविशेषमेकरसं ब्रह्मेत्यर्थः ॥५४॥

यत्तु परपक्षे दृष्टान्तो नेति तत्राऽऽह—अन्त्या इति । वादिनां प्रामाणिकत्वेन सिद्धतया तेषां दृष्टान्तत्वं सिद्धं; न निःसामान्यत्वानिरुक्तिः सामान्यवदन्योन्याभाववतः सामान्यानधिकरणत्वस्य तत्त्वादिति भावः । निर्विशेषं ब्रह्मेति स्वपक्षे दृष्टान्तमुक्त्वा परपक्षे तदभावादात्मीयो बाणः स्वात्मानमेव प्रहरतीति न्यायप्राप्तिमाह—त्वत्पक्ष इति ॥५५॥

---

१. अन्त्यविशेषाणामिति—वैशेषिकैः परमाणूनां आकाशादीनां च मिथोभेदसिद्ध्यर्थाः अन्त्यविशेषाः अभ्युपगताः । अन्त्याः व्यावर्तकेषु मध्ये अन्त्याः घटादीनां कपालादिभिः इतरभेदसिद्धिः परमाणूनां तु निरवयवत्वात् नावयवविशेषसमवेतत्वादिना भेदसिद्धिः अतः तत्र विशेषा अभ्युपेयन्ते । ते च स्वत एव व्यावृत्ता इति तदभिप्रायः । तत्तु न युक्तं येनैव प्रमाणेन स्वतो व्यावृत्तत्वेन विशेषाणां परस्परभेदसिद्धिः तेनैव परमाणूनामपि स्वतो व्यावृत्तत्वाभ्युपगमसंभवेन तद्भेदसिद्धौ विशेषे मानाभाव इत्यर्थः ।

२. तद्धेत्विति । तात्पर्यज्ञापकोपक्रमोपसंहारैक्यादीत्यर्थः ।

निःसामान्या विशेषाः स्युर्गोता तेभ्यो न चेद्विरुक् । अथ व्यावर्तते तेभ्यो गोत्वं ते खण्डवद्भवेत् ।।५६।।
व्यावृत्तं यदि भिन्नेभ्यस्त्वयाऽभिन्नगिरोच्यते । व्यावृत्तं न विशेषश्चेत्यहो विद्याविचेष्टितम् ।।५७।।
अव्यावृत्तं विशेषेभ्यस्त्वथ सामान्यमुच्यते । सामान्यस्य विशेषत्वाद्विशेषा एव केवलाः ।।५८।।
न ह्यभिन्नधिया गोत्वं विशेषेषु प्रतीयते । विशेषमात्रनिष्ठत्वाद्भिन्नाभिन्नं किमुच्यते ।।५९।।

सामान्यविशेषयोः भेदाभेदविचारः

अभेदः किं तयोर्योगः किं वैकात्म्यमभिन्नता । नाभेदो मेषयोर्योगे यथा भिन्नौ तथा युतौ ।।६०।।
व्यामिश्रं[1] यदि वा शुद्धं गोत्वं भेदेषु गम्यते । नोभयत्राप्यभिन्नत्वमसाधारण्यसंस्थितेः ।।६१।।
भेदेषु[2] चोपयुक्तं तत्गोत्वं यद्वा पृथक्स्थितम् । सामान्यं वा विशेषो वा कोऽनयोरभिधीयताम् ।।६२।।
उपयुक्तं विशेषत्वादितरस्याप्यनन्वयात् । भिन्नाभिन्नात्मतां नैति द्वैरूप्यासंभवात्तयोः ।।६३।।

सास्नादिषु यथा गोत्वमित्यत्र मत्पक्षे दृष्टान्तो दर्शित इत्याशङ्क्य विशेषेभ्यो गोत्वमभिन्नं भिन्नं भिन्नाभिन्नं वेति विकल्प्याऽऽद्ये दोषमाह—निःसामान्या इति । गोत्वस्य विशेषमात्रत्वे निःसामान्यास्ते स्युस्तथा च विशेषा एव ते न भवेयुरुत्तर[3]त्रिकान्यनिःसामान्यभावानिष्टेरित्यर्थः । द्वितीयमनूद्य दूषयति—अथेति । तस्य तेभ्यो भेदे विशेषत्वापत्तेर्न सामान्यं न विशेषाः सिध्येयुरित्यर्थः ।।५६।।

तृतीये किमभिन्नशब्देन तेभ्यो व्यावृत्तमव्यावृत्तं वोक्तमिति विकल्प्याऽऽद्यमनुवदति—व्यावृत्तमिति । तदा सामान्यस्यापि विशेषत्वात्तद्भावहानिरिति सोपहासमाह—व्यावृत्तमिति । विद्याविचेष्टितं पाण्डित्यमिति यावत् ।।५७।।

कल्पान्तरमाह—अव्यावृत्तमिति । तदाऽपि सामान्यविशेषभावासिद्धिरित्याह—सामान्यस्येति ।।५८।।

विशेषाणां न कैवल्यमनुगतबुद्धचा गोत्वस्यापि तेषु दृष्टेरित्याशङ्क्याऽऽह—न हीति । अनुवृत्तधियस्तर्हि निर्विषयत्वं नेत्याह—विशेषेति । अन्त्यविशेषेष्वनुवृत्तधीवत्खण्डादिष्वपि सा तन्मात्रविषयेति कुतोऽनालम्बनेत्यर्थः । सामान्यविशेषभावदूषणफलमाह—भिन्नेति ।।५९।।

सामान्यविशेषत्वनिरासेन भिन्नाभिन्नत्वं निरस्य तद्भावेऽपि तौ भिन्नाभिन्नावित्यत्राभिन्नशब्दार्थस्य दुर्ज्ञानत्वार्थं विकल्पयति—अभेद इति । तयोः सामान्यविषयोरिति यावत् । संबन्धो नाभेदव्यवहारविषयः संबन्धत्वात्संयोगवदित्याद्यं दूषयति—नेति । साध्यवैकल्यं दृष्टान्तस्य निराचष्टे—यथेति ।।६०।।

द्वितीयं दूषयितुं तस्य तेषु प्रतीतिं विकल्पयति—व्यामिश्रमिति । गोत्वस्य विशेषेषु मिश्रस्य केवलस्य वा प्रतीतौ न तयोरैक्यं द्वयोरप्यनुवृत्तव्यावृत्तासाधारणात्मना स्थितेस्तद्विरोधादित्याह—नेति ।।६१।।

सामान्यविशेषयोस्तादात्म्ये दोषान्तरं वक्तुं विकल्पयति—भेदेष्विति । उपयुक्तं तेष्वेव निमग्नं पृथग्विद्यमानमित्यर्थः । गोत्वं विशेषेषूपयुक्तमनुपयुक्तं चेति विकल्पद्वयेऽपि सामान्यविशेषभावासिद्धेर्न तादात्म्यमिति दूषयति—सामान्यं वेति ।।६२।।

कथमुपयुक्तपक्षे तद्भावासिद्धिस्तत्राऽऽह—उपयुक्तमिति । विशेषेषूपयुक्तं न सामान्यं विशेषान्तर्भावान्न विशेषस्तस्य सामान्यापेक्षस्य तदभावेऽभावादित्यर्थः । अनुपयुक्तपक्षे तयोरसत्त्वं साधयति—इतरस्यापीति । अनुपयुक्तस्यापि विशेषेष्वयोगान्न सामान्यादित्यर्थः । उपयुक्तानुपयुक्तयोः सामान्यविशेषत्वायोगात्तादात्म्यासंभवान्न किंचिदपि भिन्नाभिन्नतां प्राप्नोतीति फलितमाह—भिन्नेति ।।६३।।

---

१. व्यामिश्रमभेदसहितम् ।

२. भेदेषु खण्डादिषु । उपयुक्तं अभेदेन स्थितं । उपयोगेऽनुपयोगे च सामान्यविशेषत्वं न सुज्ञानं उपयुक्तत्वानुपयुक्तत्वयोः साधारण्यादित्यर्थः ।

३. उत्तरत्रिकं सामान्यविशेषसमवायाः ते च निस्सामान्याः ।

वस्तुवृत्तं न सामान्यं न विशेषस्तथैव च । अपेक्षामात्रतः सिद्धेर्व्योम्नि कार्ष्ण्यादिवृत्तिवत् ॥६४॥

भेदाभेदवादिनः शङ्का परिहारश्च

प्रत्यभिज्ञानतोऽभेदः खण्डमुण्डस्थगोत्वयोः । एकाधिकरणज्ञानात्खण्डाद्यैस्तद्विभिन्नता ॥६५॥

भिन्नाधिकरणज्ञानान्नैवमप्यभिदा तयोः । सामान्येऽभिन्नधीर्यस्माद्भिन्नेष्वेव तु भिन्नधीः ॥६६॥

प्रत्यक्षेणानुपात्तत्वान्न स्मृतिस्तदितीक्षणम् । न हि प्रत्यक्षतोऽप्राप्तं स्मर्यते वस्तु किंचन ॥६७॥

सामानाधिकरण्यस्य विभिन्नार्थव्यपाश्रयात् । अभेदधीः कथं तत्र विशेषणविशेष्ययोः ॥६८॥

अभिन्नवचसा भिन्नप्रतिषेधोऽभिधीयते । प्राप्तस्य भिन्नरूपस्य शून्यताऽतः प्रसज्यते ॥६९॥

वचो भेदनिषेधं चेन्न कुर्याद्भेदवाक्यवत् । भिन्नाभिन्नात्मतापक्षहानिरेवं प्रसज्यते ॥७०॥

भेदाभेदनिरासः

तक्रकौण्डिन्यवन्न्यायो न चेहाप्यवसीयते । उत्सर्गानवकाशत्वाच्छून्यतैवात आपतेत् ॥७१॥

किंच न तौ वस्तुतो भिन्नाभिन्नौ कल्पितत्वान्नभोनीलवदित्यनुमातुं हेतुं साधयति—वस्त्विति । न हि सामान्यविशेषौ परस्परापेक्षामन्तरेण सेद्धुं पारयतस्तथाच स्वतोऽभावाद्भुजंगादिवत्कल्पितत्वसिद्धिरित्यर्थः । अनुमानं सूचयति—व्योम्नीति ॥६४॥

भेदाभेदवाद्याह—प्रत्यभिज्ञानत इति । खण्डमुण्डस्थगोत्वस्य तदेवेदमिति प्रत्यभिज्ञानादभेदो गम्यते खण्डो गौर्मुण्डो गौरिति सामानाधिकरण्याच्च व्यक्तिभिरभेदधीस्तस्मात्तद्भिन्नत्वात्तस्य भिन्नतेति तयोर्भिन्नाभिन्नतेत्यर्थः ॥६५॥

सामानाधिकरण्येऽपि तयोर्न भिन्नाभिन्नताऽनुवृत्तव्यावृत्तधियोः सामान्यविशेषविषयत्वेन व्यवस्थितत्वादिति दूषयति—भिन्नेति । भिन्नाधिकरणज्ञानादित्येतत्प्रपञ्चयति—सामान्य इति । सामानाधिकरण्यं नभोनीलवदिति भावः ॥६६॥

यत्तु प्रत्यभिज्ञानतोऽभेद इति तत्राऽऽह—प्रत्यक्षेणेति । खण्डादिविषयपूर्वानुभवेन न गोत्वग्रहस्तस्यानेकव्यक्तिनिष्ठस्यैकव्यक्तिग्रहकाले व्यक्त्यन्तराणामग्रहाद्ग्रहासिद्धेरतस्तदिति न गोत्वस्मृतिरननुभूते स्मृत्ययोगात्तस्यास्मृतौ च पूर्वानुभूतं स्मृत्वा तस्योत्तरत्रानुसंधानाख्यप्रत्यभिज्ञालक्षणमीक्षणं न सिध्यतीति कुतो भेदाभेदधीरित्यर्थः ॥६७॥

यत्तु सामानाधिकरण्याद्विशेषैः सामान्यस्याभेदधीरिति[1] तत्राऽऽह—सामानाधिकरण्यस्येति । भवतु वा गोत्वस्य प्रागुक्तप्रत्यभिज्ञानादेकत्वं तथाऽपि न तस्य विशेषैः सामानाधिकरण्यादभेदो नीलं पीतमितिवन्नीलं नीलमित्यदृष्टेस्तस्या भिन्नार्थत्वात्तस्मिन्प्रमाणेऽसति नानयोरभेदधीरतो न तद्वशादभेदसिद्धिरिति कुतो भिन्नाभिन्नतेत्यर्थः ॥६८॥

भिन्नेऽभिन्ने वाऽसामाधिकरण्यात्तद्वलाद्भिन्नाभिन्नता बलादापतेदित्याशङ्क्याभिन्नशब्दो भेदं निषेधति न वेति विकल्प्याऽऽद्यमनूद्य दूषयति—अभिन्नेति । प्रतिपन्नोपाधौ निषेधोऽतःशब्दार्थः । तथाच न भिन्नाभिन्नत्वमेकस्य सेद्धुमलमिति शेषः ॥६९॥

पक्षान्तरमनूद्य निरस्यति—वच इति । एकत्र भेदतदभावयोरनुक्तेर्भावयोर्द्वयोरेकत्रोक्तावपि प्रसिद्धाभेदार्थत्यागादिति भावः ॥७०॥

अभिन्नशब्दस्य भेदनिषेधित्वेऽपि न भेदस्य शून्यता सर्वत्र प्राप्तस्य कारणे निषेधादार्येभ्यो दधि दीयतामित्यार्योपाधौ प्राप्तस्य दध्नस्तक्रं कौण्डिन्यायेति कौण्डिन्ये निषेधेऽप्यशून्यतावदित्याशङ्क्याऽऽह—तक्रेति । तत्संबन्ध्युत्सर्गापवादन्यायो नेह प्रमाणवानित्यत्र हेतुं ब्रुवन्फलितमाह—उत्सर्गेति । सर्वं भिन्नाभिन्नमित्यत्रोत्सर्गापवादयोरनवकाशात्तदर्थस्याभिन्नशब्देन तत्तन्निष्ठभेदनिषेधात्तस्य शून्यतैव स्यादिति भिन्नाभिन्नत्वासिद्धिरित्यर्थः ॥७१॥

१. अभेदधीः सामान्यविषया भेदधीः विशेषविषयेति व्यवस्थितत्वात् न तयोरैक्यम् ।

भिन्नौ जातिगुणौ द्रव्यात्स्वानुभूत्यनुरोधतः । तद्विरोधादभिन्नत्वं कथं मानात्प्रतीयते ॥७२॥
अभिन्नं सद्विभिन्नत्वं न कथंचित्प्रपद्यते । स्वाश्रयत्वादभिन्नस्य कुतोऽस्य स्यात्पराश्रयः ॥७३॥
अन्यानपेक्षं यद्यस्य वृत्तं तत्पारमार्थिकम् । अन्यापेक्षं यतोऽन्यत्वं तेन तद्व्योमकार्ष्ण्यवत् ॥७४॥
गोत्वसत्त्वप्रमेयत्ववस्तुत्वादीनि भिन्नवत् । सामान्यानीह खण्डादौ तेनान्योन्यविरुद्धता ॥७५॥
यदेकं तन्न नानेति नाना नैकमिति प्रमा । योऽनुभूतिविरोध्यर्थः स कथं स्थाप्यते बलात् ॥७६॥
भेदाः सामान्यतां यान्ति सामान्यं भेदतां यदि । लोकप्रसिद्धिबाधः स्यात्स[1] चापि स्यादनर्थकः ॥७७॥

सामान्यविशेषभावनिरासः

सामान्यं च विशेषश्च द्रव्यतन्त्रौ मतौ यदि । असामान्यविशेषात्मद्रव्यवत्प्राप्नुतश्च तौ ॥७८॥
गुणतन्त्रं यदा द्रव्यं प्रसिद्धेर्बाधनं तदा । एकस्यानेकतापत्तिर्द्रव्यस्यापि प्रसज्यते ॥७९॥
द्रव्येणैवाभिसंबन्धाद्[3] गुणानां[2] न परस्परम् । अन्योन्यानभिसंबन्धान्न विशेषस्तथेतरत् ॥८०॥

जात्यादौ क्वचिदेव भिन्नाभिन्नत्वाभ्युपगमात्तस्य सर्वत्रानिष्टेरुत्सर्गापवादसिद्धिरित्याशङ्क्य जात्यादेर्धर्मिणश्च भेदमुपेत्याभेदं प्रत्याह—भिन्नाविति ॥७२॥

संप्रत्यभेदमुपेत्य भेदं निरस्यति—अभिन्नमिति । तदुपपादयति—स्वाश्रयत्वादिति । अभेदस्य स्वरूपत्वेनान्तरङ्गस्य बलवत्त्वाद्भेदः सापेक्षस्तद्विरोधान्न वस्तुतः स्यादित्यर्थः ॥७३॥

अन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलवदिति न्यायादभिन्ने भेदानवकाशमुक्त्वा कल्पिताकल्पितयोरकल्पितं बलवदिति वक्तुमभेदस्याकल्पितत्वमाह—अन्येति । भेदस्य कल्पितत्वेन दौर्बल्यमाह—अन्यापेक्षमिति । अतो भेदस्याभेदेन बाध्यतेति भावः ॥७४॥

किं गोत्वादीनि मिथो भिन्नान्येवाभिन्नान्येव वा भिन्नाभिन्नानि वा?आद्ये गोत्वाभिन्नस्य खण्डादेः सत्त्वादिना तदयोगादसत्त्वामेयत्वादिप्रसक्तिरन्यथा तेषां मिथोभिन्नत्वानुपपत्तिरिति मत्वा द्वितीये दोषमाह—गोत्वेति । तानि खण्डादिनिष्ठानि तद्वन्मिथो भिन्नान्येव दृश्यन्ते । तथाच न तान्यभिन्नान्येवानुभवविरोधादित्यर्थः । तृतीयं निराह—तेनेति । तानि मिथो भिन्नाभिन्नानि चेज्जात्यादेरेव धर्मिणो भिन्नाभिन्नतेतीष्टासिद्धिस्तेन त्वदुक्त्योर्मिथोविरोधतेत्यर्थः ॥७५॥

तृतीये दोषान्तरमाह—यदिति । न तावद्यदेकं तन्नानेति प्रमाऽस्ति नापि यदनेकं तदेकमिति प्रमितिरविरोधापेक्षिणो मानस्य विरुद्धार्थत्वायोगादतो नैकत्र भिन्नाभिन्नतेत्यर्थः । तत्रैव स्वानुभवविरोधमाह—योऽनुभूतीति । अनुभवविरोधिनोऽर्थस्य मानं विनाऽभ्युपगतावतिप्रसक्तिरिति भावः ॥७६॥

गोत्वादिजातीनां मिथोभेदादीन्निरस्य तासां व्यक्तीनां चान्योन्याभेदे लोकप्रसिद्धिविरोधमाह—भेदा इति । साऽपि चन्द्रभेदप्रसिद्धिवद्बाध्येत्याशङ्क्यातिप्रसक्तेर्मैवमित्याह—स चेति ॥७७॥

किंच तयोर्द्रव्याँदभिन्नत्वं भिन्नत्वं भिन्नाभिन्नत्वं वेति विकल्प्याऽऽद्यमनूद्य दूषयति—सामान्यं चेति । द्रव्यतन्त्रौ द्रव्यादभिन्नाविति यावत् । तौ हि तद्भावहीनद्रव्यमात्रत्वात्तदेवासामान्यविशेषौ स्यातां ततश्च स्वरूपाभावाद्द्रव्यादभिन्नतैवेत्यर्थः ॥७८॥

किंच सामान्यविशेषयोर्द्रव्यस्य चाभेदे तस्य तयोरन्तर्भावो वैपरीत्यं वेति विकल्प्याऽऽद्यं दूषयति—गुणेति । परतन्त्रतया सामान्यविशेषयोर्गुणशब्दस्तत्तन्त्रं तदभिन्नमिति यावत् । स्वतन्त्रस्य परतन्त्रान्तर्भावे प्रसिद्धिविरोधवद्दोषान्तरमाह—एकस्येति । द्रव्यस्य ताभ्यामभेदे तद्वदनेकता न च सा युक्ता विरोधादित्यर्थः ॥७९॥

द्रव्ये तयोरन्तर्भावं निरस्यति—द्रव्येणेति । तयोस्तेनैवाभेदात्तन्मात्रत्वान्नान्योन्यं भेदाभेदौ चेत्ततस्तयोर्मिथस्तद्भावेनासंबन्धात्तत्त्वच्युतिरित्यर्थः ॥८०॥

१. स चापि स्यादनर्थकः अनर्थहेतुः स चानर्थः अतिप्रसक्तिरूप इत्यर्थः घटपटादीनामभेदापत्तिरतिप्रसक्तिः ।

२. गुणानां परस्परं भेदाभेदसम्बन्धाभावे तेषां तत्त्वस्य भेदाभेदस्य च्युतिरित्यर्थः ।

३. द्रव्याभिन्नत्वे द्रव्यवत् सामान्यविशेषभावहीनौ स्याताम् ।

सामान्येतरतो भिन्नं द्रव्यं चेद्भवतो मतम् । तन्निषेधेन तत्सिद्धेः कथं स्यात्तदभिन्नता ॥८१॥
अथाभिन्नं मतं ताभ्यां द्रव्यस्यापह्नवस्ततः । न विशेषो न सामान्यमन्योन्यासंगतेर्भवेत् ॥८२॥

सामान्यविशेषयोरभेदनिरासः

भिन्नाभेदादभिन्नस्य भेदः स्यात्पिण्डवद्ध्रुवम् । पिण्डश्च सर्वगस्तद्वद्गोत्वाभेदात्प्रसज्यते ॥८३॥
अन्योन्याव्यतिरेकित्वादैकात्म्यं प्राप्नुयात्तयोः । ततः प्रत्यक्षबाधः स्यात्तद्भेदो हि तदाश्रयः ॥८४॥
व्यस्ताभेदात्समस्तोऽर्थो व्यस्तवन्न मनागपि । समस्ताकारवज्ज्ञानं कुर्यात्प्रत्यक्षबाधतः ॥८५॥
व्यस्ताभेदेऽपि चेत्कुर्यात्समस्तधिषणां बलात् । व्यस्तात्मनाऽसमस्तोऽपि[1] कुर्यात्प्लुषिधियं गिरिः ॥८६॥
असाधारणरूपेण भेदो जगति निश्चितः । साधारण्यं तयोर्मानात्समस्तव्यस्तयोः कुतः ॥८७॥
सर्वाभेदाच्च सर्वस्य रज्ज्वां सर्पादिबुद्धयः । रज्जुबुद्धिवदेव स्युस्तद्धीश्चाप्यहिबुद्धिवत् ॥८८॥
निषेधविधिहेतूनां सर्वेषां सर्ववस्तुषु । समाप्तेरधिकाराणामप्रवृत्तिः प्रसज्यते ॥८९॥

कल्पान्तरमनुवदति—सामान्येति । द्रव्यं सामान्यादेस्तच्च द्रव्याद्भिन्नमिति ते मतं चेदिति योजना । तदा तत्परिहारेणैव द्रव्यस्य द्रव्यपरिहारेणैव सामान्यादेः सिद्धेस्ताभ्यां तस्य नाभिन्नता तयोश्च तस्मादभिन्नत्वायोगान्निःसामान्यविशेषं तत्स्यादित्याह—तन्निषेधेनेति ॥८१॥

तृतीयेऽप्यभेदांशमनूद्य दूषयति—अथेति । द्रव्यं सामान्यविशेषाभ्यामभिन्नं सामान्यविशेषौ च द्रव्यादभिन्नावित्यथ मतमित्यनुवादार्थः । न तावदेकत्रैव भेदाभेदौ विरोधाद्द्रव्यस्य च ताभ्यामभेदे तयोस्तदधीनत्वात्तदभावेऽभावादाश्रयाश्रयिभावेनासंबन्धादभावस्तयोश्च द्रव्यादभेदे तदतिरिक्तयोरभावाद्द्रव्यं निःसामान्यविशेषमेषितव्यं स्यादित्यर्थः ॥८२॥

तयोर्द्रव्यस्य च भेदादि दूषयित्वा सामान्यस्य विशेषाभेदे विशेषत्वं प्रागुक्तं दोषमाह—भिन्नेति । विशेषस्य सामान्याभेदे दोषमाह—पिण्डश्चेति ॥८३॥

परस्पराभेदे दोषमाह—अन्योन्येति । तयोरैक्यमिष्टमिति चेत्तत्राऽऽह—तत इति । तत्र हेतुमाह—तद्भेदो हीति । आश्रयो विषयः ॥८४॥

सामान्यस्य विशेषाभेदे दोषान्तरमाह—व्यस्तेति । विमतं नानुवृत्तधीकारणं व्यावृत्ताभिन्नत्वात्तद्वत्तथाच सामान्यानुवृत्तधीहेतुत्वानुभवविरोधः स्यादित्यर्थः ॥८५॥

विपक्षे दोषमाह—व्यस्ताभेदेऽपीति । बलाद्वस्तुवृत्तमननुसृत्येत्यर्थः । व्यस्तस्य समस्तधीहेतुत्वे तस्यापि व्यस्तहेतुत्वं स्यादविशेषादित्यर्थः । असमस्तोऽपीति च्छेदः ॥८६॥

किंच सामान्यं सर्वानुगतं व्यक्तिस्तु नैवं तत्स्वरूपवैलक्षण्यान्न तयोरैक्यं प्रामाणिकमित्याह—असाधारणेति ॥८७॥

किंच सर्वत्र वा भिन्नाभिन्नत्वं सामान्यादावेव वा ? नाऽऽद्यो, भ्रान्त्यभ्रान्तिव्यवस्थाऽसिद्धेरित्याह—सर्वेति । सर्वसंकरवादे सर्वस्य सर्वाभेदादहिबुद्धिरपि रज्जुबुद्धिवदभ्रान्ती रज्जुबुद्धिश्चाहिबुद्धिवद्भ्रान्तिरिति भ्रान्त्यभ्रान्तिविपर्ययो रज्जुसर्पयोरभेदादित्यर्थः ॥८८॥

तत्रैवातिप्रसङ्गान्तरमाह—निषेधेति । समाप्तेः सम्यगाप्तेरिति यावत् । अधिकाराणां प्रवृत्त्यादिहेतुमतामधिकारिणामित्यर्थः । अप्रवृत्तिरनिवृत्तिश्चेति द्रष्टव्यम् । उक्तं हि—अप्रवृत्तिनिवृत्तीदं प्राप्तं सर्वत्र हि जगदिति । सर्वेषां ब्रह्मक्षत्रादीनामधिकृतानां सर्वेषु बृहस्पतिसवराजसूयादिषु विध्यादिशब्दितप्रवृत्त्यादिहेतूनामधिकारपदवेदनीयाभिमानविशेषाणां सर्वसांकर्येण प्रवृत्तेरविशेषादप्रवृत्तिनिवृत्ति जगदापद्येतेत्यर्थः ॥८९॥

---

१. असमस्तोऽपि सामान्यस्य विशेषाभेदेनासमस्तत्वात् । गिरिः समस्तः स च व्यस्ता भवेच्चेत् प्लुषि धिय पर्वतस्थकीटधियं कुर्यात् व्यस्ताभेदात् ।

**अभावमानक्लृप्त्यर्थो यश्चाऽऽयासः कृतो महान्। निष्फलः सोऽभिसंवृत्तो भिन्नाभिन्नाव्यवस्थितौ॥९०॥**
**स्वविशेषानुरोधित्वं सामान्यानां मतं यदि। समस्तव्यस्ततापक्षस्तदा कुप्यति कल्पितः॥९१॥**
**न चापि सर्वसामान्यविशेषार्थविबुद्धये। कश्चिदप्यधिकार्यस्ति कृत्स्नेऽपि जगतीदृशः॥९२॥**
**न वेदार्थो न चापीदृक्तर्केणाप्युपपद्यते। भिन्नाभिन्नेक्षणं सर्वं यथोक्तन्यायवर्त्मना॥९३॥**

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके प्रथमाध्यायस्य षष्ठं ब्राह्मणम् ॥६॥

**चत्वार्येव सहस्राणि श्लोकानां द्वे शते तथा। श्लोकाः पञ्चदशान्ये च तृतीयस्यैष संग्रहः॥**

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशंकरभगवत्पादशिष्यश्रीसुरेश्वराचार्यविरचिते
बृहदारण्यकोपनिषद्भाष्यवार्तिके प्रथमोऽध्यायः ॥१॥
उपनिषत्क्रमेण तृतीयोऽध्यायः ॥३॥

किंच निरङ्कुशं भेदाभेदं वदतः सिद्धान्तविरोधः स्यादित्याह—अभावेति। सर्वस्य भिन्नाभिन्नस्य प्रत्यक्षादिना सिद्धत्वे भेदाभावस्याभिन्नशब्दार्थस्य योग्यानुपलब्धिं विना मानान्तरात् सिद्धेः अभावमानस्य योग्यानुपलब्धेरुपन्यासो व्यर्थः स्यान्मेयाभावाच्च यस्याभावो जिघृक्षितस्तस्य धर्म्यभेदेन सत्त्वाद्भेदस्यापि भावादसत्त्वपक्षे योग्यानुपलब्धेरकिंचित्करत्वात्तथा च—

"प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते। वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता" ॥

इत्यारभ्याभावस्य चातुर्विध्यमापाद्य।

"गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम्। मानसं नास्तिताज्ञानं जायतेऽन्यानपेक्षया" ॥

इत्यादिना तन्मानमुपपाद्य

"अ[1]भावो वा प्रमाणेन स्वान्यरूपेण मीयते। प्रमेयत्वाद्यथा भावास्तस्मात्पृथगिति स्थितिः" ॥

इति कथा वृथा स्यादित्यर्थः ॥९०॥

द्वितीय[2]मनुभाष्य दूषयति—स्वविशेषेति। सामान्यविशेषग्रहणमंशांशिगुणगुणिकार्यकारणादेरुपलक्षणम्—क्वचिद्भिन्नाभिन्नतात्यागे सर्वत्र तत्त्यागोऽर्धजरतीयस्याप्रामाणिकत्वादिति भावः ॥९१॥

किंच तयोर्भिन्नाभिन्नत्वं ज्ञानार्थं ध्यानार्थं वा? नाऽऽद्यःतज्ज्ञानस्याफलत्वान्न द्वितीयस्तत्रापि फलाभावस्य तुल्यत्वादित्यभिप्रेत्योभयत्र साधारणं दूषणमाह—न चेति। ईदृशः सर्वज्ञ इति यावत्। सर्वसामान्यादिबुद्धेरर्वाग्दृशामशक्यत्वान्न तद्भिन्नाभिन्नत्वमस्मदादिज्ञानध्यानोपयोगीति भावः ॥९२॥

भिन्नाभिन्नपक्षदूषणमुपसंहरति—नेत्यादिना। अनुमानैकसिद्धत्वादित्यादिनोक्तं स्मारयति—यथोक्तेति। सर्वं जगद्ब्रह्म च भिन्नाभिन्नमिति ज्ञेयमित्येतन्न प्रामाणिकं नापि यौक्तिकमुक्तन्यायादित्यर्थः। तदेवं तदेतत्त्रयमित्यादौ परकीयव्याख्यायोगात्त्र्यात्मकस्य जगतो देहद्वयात्मनोपसंहारात्तदभिमानिनो विवेकवशात्ततो विरक्तस्य मुमुक्षोस्तद्धेतुज्ञानोपाये संन्यासपूर्वके श्रवणादावधिकारितेति सिद्धम् ॥९३॥

वार्तिकामृतसर्वस्वमास्वादयितुमिच्छवः। आनन्दगिरिसंभूतां समुपाध्वं सरस्वतीम् ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां प्रथमाध्यायस्य षष्ठंब्राह्मणम् ॥६॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्येण भगवदानन्दज्ञानेन कृतायां
श्रीसुरेश्वरवार्तिकटीकायां शास्त्रप्रकाशिकाख्यायां प्रथमोऽध्यायः ॥१॥

श्लोकानामादितः समष्ट्यङ्काः–४०९७

१. अभावो वेति—अभावः स्वानुरूपेण अभावात्मकेनानुपलब्धिप्रमाणेन प्रमीयते भाववत् तस्मात् भावात्मकाद्वस्तुनः पृथगभावः।

२. द्वितीयं = सामान्यादावेव भिन्नाभिन्नत्वं चेदित्यर्थः। कुप्यति—क्वचिदस्ति क्वचिन्नेति अर्धजरतीयम्।

## अथ द्वितीयध्याये प्रथमं ब्राह्मणम्

मू.—ॐ दृप्तबालाकिर्हानूचानो गार्ग्य आस स होवाचाजातशत्रुं काश्यं ब्रह्म ते ब्रवाणीति । स होवाचाजातशत्रुः सहस्रमेतस्यां वाचि दद्मो जनको जनक इति वै जना धावन्तीति ॥१॥

तद्धेदमित्यविज्ञातप्रत्यक्त्वादिदं जगत् । रज्ज्वां सर्पादिवज्जातं नामरूपक्रियात्मकम् ॥ १ ॥
अनिश्चिता यथा रज्जुरन्धकारे विकल्पिता । सर्पधारादिभिर्भावैस्तद्वदात्मा विकल्पितः ॥ २ ॥
अनर्थहेतुरज्ञानं तदुत्थं चाखिलं जगत् । प्रतीचोऽनर्थ इत्यस्माद्भीतोऽत्यर्थं मुमुक्षति ॥ ३ ॥
पुरुषार्थोऽखिलानर्थप्रध्वतिः प्रत्यगात्मनः । सम्यक्तत्त्वपरिज्ञानं पुरुषार्थस्य कारणम् ॥ ४ ॥
निरस्ताशेषानर्थाप्तिकृत्स्नाह्लादसतत्त्वकः । स्वतो यतोऽयं संसारी तेनाज्ञो विपरीतदृक् ॥ ५ ॥
मोहमात्रान्तरायत्वात्पुरुषार्थस्य नापरम् । अविद्याध्वंसिनो बोधात्किंचित्साधनमिष्यते ॥ ६ ॥
आत्मेत्येवेति विद्यायाः सूत्रमित्युदितं पुरा । उपोद्घातस्तथा तस्य प्रागुक्तः सप्रयोजनः ॥ ७ ॥
प्रतीचि साक्षाद्विज्ञाते ज्ञेयं सर्वं समाप्यते । निःशेषतस्तमोध्वस्तेः पुमर्थश्च समाप्यते ॥ ८ ॥
यत एवमतः पश्येदात्मन्यात्मानमद्वयम् । आत्मैको ब्रह्मविद्याया विषयः श्रुतितो मतः ॥ ९ ॥
अथ योऽन्यामिति तथाऽविद्यां चानूद्य नश्वरीम् । आऽध्यायावसितेः कार्यं तस्या व्याख्यातमञ्जसा॥ १०॥

सत्यं सत्यस्य यद्ब्रह्म मूर्तामूर्तविलक्षणम् । चिदेकतानं तदहमपूर्वानपरात्मकम् ॥१॥

तृतीयेऽध्याये सूत्रितविद्याविद्ययोरविद्या प्रपञ्चिता संप्रति विद्यां प्रपञ्चयितुं चतुर्थमध्यायमारभमाणो वृत्तं कीर्तयति—तद्धेति । अज्ञातात्प्रतीचो नामाद्यात्मकं जगद्रज्जुसर्पवज्जातमित्यव्याकृतप्रक्रियायामुक्तमित्यर्थः । उदाहरणं तु विवर्तवादद्योतनार्थम् ॥१॥

तत्र पूर्वोक्तमेवाऽऽप्तवाक्यं स्मारयति—अनिश्चितेति ॥२॥

अज्ञातात्मविवर्तत्वे विश्वस्योक्ते किं फलमित्यपेक्षायामाह—अनर्थेति ॥३॥

अनर्थतद्धेतू पूर्वोक्तावनूद्य तदधिगतिफलं च दर्शयित्वा पुमर्थतद्धेतू प्रागुक्तावनुवदति—पुरुषार्थ इति ॥४॥

सम्यग्ज्ञानस्य पुमर्थहेतुत्वे हेतुमाह—निरस्तेति । अयं प्रत्यग्धातुः स्वाज्ञानप्रसूतमिथ्याधीः संसरन्वस्तुतो निरस्तसर्वानर्थस्तथैव प्राप्तपरानन्दश्च यतः श्रुतिषु निश्चितस्तेन स्वज्ञानात्स्वाज्ञानध्वस्तौ तज्जध्वस्तेर्युक्तं प्रत्यग्ज्ञानस्य पुमर्थहेतुत्वमित्यर्थः ॥५॥

सम्यग्धीस्तद्धेतुरित्युक्त्वा हेत्वन्तरनिरासं स्मारयति—मोहेति । अपरं साधनं प्रसंख्यानं कर्म वेति निषेध्यविवेकः ॥६॥

पुमर्थस्तद्धेतुश्च कुत्रोक्ताविल्याशङ्क्याऽऽह—आत्मेतीति । तथा विद्यासूत्रानुसारेणेति यावत् । तस्य सूत्रितात्मज्ञानस्येत्यर्थः । आक्षेपपूर्वकं प्रयोजनं तदाहुरित्यादावुक्तमित्याह—प्रागिति ॥७॥

किं तत्प्रयोजनं तदाह—प्रतीचीति । साक्षादित्यपरोक्षत्वोक्तिः । तथाविधज्ञानस्य संशयविपर्यासानास्कन्दितत्वमुपसर्गार्थः । तदन्यार्थाभावादिति शेषः । तज्ज्ञाने यथोक्तसर्वज्ञानहेतौ सति किं स्यात्तदाह—निःशेषेति ॥८॥

आत्मज्ञानस्यैव परमपुरुषार्थहेतुत्वे विद्यासूत्रं प्रमाणयति—यत इति । मोहमात्रान्तरायत्वादित्युक्तनीत्या प्रत्यग्धियः पुमर्थहेतुत्वसिद्धेरात्मेत्येवेत्यत्र स्वमहिमस्थमात्मानमेवाऽऽत्मन्यनुसंदध्यान्मुमुक्षुरिति विवक्ष्यतेऽन्यथा सूत्रवैयर्थ्यादित्यर्थः । स्वमहिमप्रतिष्ठत्वार्थं विशिनष्टि—अद्वयमिति । पुमर्थतद्धेत्वनुवादं निगमयति—आत्मेति ॥९॥

अनर्थतद्धेतू कुत्रोक्ताविल्याशङ्क्याऽऽह—अथेति । तद्धेदमित्यत्र सूत्रितामविद्या"मथ योऽन्यामि"त्यत्र "न स वेदे"त्यनूद्याध्यायसमाप्त्यन्तसंदर्भेण तत्कार्यं विवृतमित्यर्थः । तथा सूत्रितानूदिताविद्यानुसारेणेति यावत् । नश्वरीमिति विद्यापोद्यत्वयोग्यतोक्ता । अञ्जसेति व्याख्यानसामीचीन्यमुक्तम् ॥१०॥

सप्तान्नब्राह्मणार्थः अविद्याकार्यनिरूपणम्

अध्यात्ममधिभूतं च तथा चैवाधिदैवतम् । भूतं भवद्भविष्यं च साध्यं साधनमेव च ॥
जनिमत्सर्वमेवेदमविद्यायाः समुत्थितम् ॥११॥
संक्षिप्य चाप्युपन्यस्तमध्यायान्ते च तत्पुनः ॥१२॥
त्रयं वा इदमित्येवं रूपं नाम च कर्म च । त्रयस्यापि च संक्षेपो लिङ्गदेहात्मसंहतिः ॥१३॥
त्रैलोक्यात्मशरीर्येष विश्वरूपः प्रजापतिः । अन्तर्णीताखिलानन्तदेवतः प्राणविग्रहः ॥१४॥
अविज्ञातात्मतत्त्वः संस्तदध्यस्ताभिमानवान् । परावप्रवृत्तेर्विरतो विद्याया विषयस्त्वयम् ॥१५॥
साक्षात्कृतात्मभावोऽयमेवंलक्षणवस्तुनि । श्रुत्योपस्थाप्यते गार्ग्यो ब्रह्मविद्याभिधित्सया ॥१६॥
अकृत्स्नब्रह्मवेदित्वाद्दृप्तोऽसावल्पकस्ततः । न हि पूर्णपरिज्ञानः कश्चिद्दृप्यति निर्द्वयः ॥१७॥
समाप्ताशेषविज्ञेयपुरुषार्थस्तथा परः । अजातशत्रुरैकात्म्याद्गार्ग्याचार्यः प्रकल्पते ॥१८॥
व्याख्यातायामविद्यायां तदुच्छित्तावथाधुना । आत्मेत्येवेति सूत्रस्य व्याख्या प्रस्तूयते स्फुटा ॥१९॥

आख्यायिकातात्पर्यम्

श्रुत्या गार्ग्याद्युपन्यासशिष्याचार्यस्वरूपया । सुखावबोधसिद्ध्यर्थमियमाख्यायिकोदिता ॥२०॥

सप्तान्नब्राह्मणोक्तमनुवदन्नविद्याकार्यं विशिनष्टि—अध्यात्ममिति ॥११॥

उपसंहारब्राह्मणोक्तमनुभाषते—संक्षिप्येति । चकाराववधारणार्थावविद्याकार्यवाचितत्पदादूर्ध्वं संबध्येते । उत्तरौ समुच्चयार्थौ । तदेतत्त्रयमित्यादावुक्तं संक्षेपस्यापि संक्षेपमनुकीर्तयति—त्रयस्यापीति । तमेवाभिनयति—लिङ्गेति । सूक्ष्मस्थूलदेहात्मना संहतिः कार्यकरणसंघात इति यावत् ॥१२–१३॥

तत्र कार्यस्वरूपमाह—त्रैलोक्येति । करणस्वरूपमाह—अन्तरिति । अन्तर्णीतमन्तर्भावितमखिलं जगदनन्ताश्चान्तर्णीता देवता येन स तथेति विग्रहः । तत्र हेतुः—प्राणेति । तत्र हि सर्वान्तर्भावो वक्ष्यते ॥१४॥

वृत्तमनूद्यानन्तरब्राह्मणतात्पर्यमाह—अविज्ञातेति । तच्छब्दोऽनन्तरप्रकृतदेहद्वयपरामर्शी । यथोक्तात्माज्ञानात्प्रजापतावारोपिताहंभावस्तद्वशाद्विषयविमुखो वीतरागो विद्याधिकारी स्वयमेव श्रुत्योपस्थाप्यते तस्मै विद्यां वक्तुमजातशत्रुब्राह्मणमित्यर्थः ॥१५॥

उक्तं प्रपञ्चयति—साक्षादिति । एवंलक्षणेति । त्रैलोक्यात्मशरीरीत्यादावुक्तविधे प्रजापतावित्यर्थः ॥१६॥

गार्ग्यो ब्रह्मवित्त्वादाचार्यः सन्कथमधिकारित्वेनोत्थाप्यते तत्राऽऽह—अकृत्स्नेति । अल्पको मुख्यब्रह्मज्ञानहीनत्वादाचार्यत्वेऽनधिकृत इति यावत् । तस्य मुख्यब्रह्मविद्याभावे दर्पो लिङ्गम् । अतस्तस्याऽऽचार्यत्वानुपपत्तेः शिष्यत्वमेवेत्यर्थः । मुख्यब्रह्मविदोऽपि दर्पः संप्रतितनब्रह्मविदामिव स्यादिति चेत्तत्राऽऽह—न हीति । न खल्वाधुनिकोऽपि ब्रह्मविद्दृप्तो युक्तो विरोधादित्यर्थः । तस्य दर्पाभावे हेतुः—निर्द्वय इति ॥१७॥

अजातशत्रोरपि गार्ग्यसमत्वादाचार्यान्तरेण भाव्यमित्याशङ्क्याऽऽह—समाप्तेति । गार्ग्यस्यामुख्यब्रह्मविदः शिष्यत्ववदित्याह—तथेति । अजातशत्रुत्वे हेतुः—ऐकात्म्यादिति ॥१८॥

उक्ताविद्याकार्ये प्रजापतावात्मत्वोपास्त्या तद्देहस्य ध्वस्तरागस्य मुमुक्षोर्ब्रह्मविद्यार्थिनस्तद्व्याख्यानार्थं ब्राह्मणमिति ब्राह्मणसंबन्धमुक्त्वाऽध्यायसंबन्धमाह—व्याख्यातायामिति । सकार्यायामविद्यायां विवृतायां सत्यां बन्धनिवृत्तावपेक्षितायां तद्धेतावाक्षिप्यमाणे व्याख्यायते विद्यासूत्रमित्यर्थः । निषेध्योक्तेरनन्तरं निषेधकोक्तेरवसरं दर्शयति—अथेति । स्फुटेत्यसंदिग्धाबाधितफलवज्ज्ञानोदयायेत्यर्थः ॥१९॥

विद्यासूत्रं चेद्व्याचिख्यासितमाख्यायिका किमर्थेत्याशङ्क्याऽऽह—श्रुत्येति । परमसूक्ष्मे परवस्तुनीति शेषः ॥२०॥

भर्तृप्रपञ्चोक्तः संबन्धः तन्निरासश्च

अन्ये त्वत्राभिसंबन्धमेवं व्याचक्षते बुधाः । स एष इत्युपन्यस्तो विज्ञानात्मा हि यः पुरा ॥२१॥
गार्ग्यकाश्येतिहासेन वक्ष्यते तस्य निर्णयः । कर्त्र्यो भोक्त्र्यश्च देहेऽस्मिन्देवता एव नापरः ॥
श्रुतिर्गार्ग्यात्मना सेयं पूर्वपक्षमभाषत ॥२२॥
आत्मनोऽस्तित्वकर्तृत्वभोक्तृत्वप्रतिपत्तये ॥२३॥

परोक्तसंबन्धनिरासः

श्रुत्या सिद्धान्तसिद्ध्यर्थं काश्यरूपं प्रकल्पितम् । निष्फलत्वात्स चायुक्तः प्रकृतानभिसंगतेः ॥२४॥
देवतास्तित्वपक्षेऽपि किमस्तित्वादि नेष्यते । देहाद्भिन्नस्य[1] विज्ञातुरिष्टं चेन्निष्फलः श्रमः ॥२५॥
अज्ञातैकात्म्ययाथात्म्यो यदा त्विह विवक्ष्यते । अविद्याकार्यनिष्ठः सञ्श्रुत्या गार्ग्यशरीरया ॥२६॥
पूर्वपक्षितयाऽशेषदुःखहेतूपशान्तये । पूर्वपक्षनिदानच्छित्काश्यः सिद्धान्तवाद्यपि ॥२७॥
श्रुत्येहोत्थाप्यतेऽशेषवेदान्तार्थविबुद्धये । सर्वोऽप्येष तदा यत्नः फलवान्स्यान्न चान्यथा ॥२८॥

अध्यायसंबन्धं स्वाभीष्टमुक्त्वा भर्तृप्रपञ्चाभीष्टमाह—अन्ये त्विति । अत्र पूर्वोत्तराध्याययोरिति यावत् । एवंशब्दार्थमेवाऽऽह—स इति । प्रवेशवाक्ये जीवः सूत्रित इत्यर्थः । सूत्रितस्य जीवस्य लोकवेदप्रसिद्ध्यर्थो हिशब्दः ॥२१॥

अजातशत्रुब्राह्मणमुत्थापयति—गार्ग्येति । अनिश्चयप्रसङ्गे निश्चयार्थमारम्भो युक्तस्तत्प्रसङ्गस्तु कथमित्याशङ्क्याऽऽह—कर्त्र्य इति । अपरशब्दादूर्ध्वमितिपदमध्याहृत्य पूर्वपक्षपदेन योजनीयम् । यथाऽऽहुः—भोक्त्र्यश्च देवताः करणाधिष्ठात्र्यश्च किमन्यद्विज्ञानात्मना कार्यमस्त्येतस्मिन्दर्शने स्थितो गार्ग्यः पूर्वपक्षपरिग्रहायोत्थाप्यत इति ॥२२॥

काश्यात्मना श्रुतिः सिद्धान्तमुक्तवतीतिभाष्याभिप्रायमाह—आत्मन इति । तस्यास्तित्वादिसिद्धये श्रुत्या प्रकल्पितं काश्यरूपमिति संबन्धः । तदेव संगृह्णाति—सिद्धान्तेति । परोक्तं संबन्धः निराकरोति—निष्फलत्वादिति । प्राणदेवताया[2] भोक्तृत्वादिनिरासेनाऽऽत्मनस्तदुक्त्यर्थमुत्तरो ग्रन्थ इति यः संबन्धः सोऽयुक्त आत्मनस्तत्साधनस्याफलत्वा"त्तदात्मानमेवावेदि"त्यैक्यज्ञानान्मुक्तिरितिप्रकृतार्थासंयोगाच्च, न हि जीवस्य वास्तवे कर्तृत्वादौ तत्सिद्धिरित्यर्थः ॥२३–२४॥

निष्फलत्वादिति हेतुं साधयति—देवतेति । गार्ग्येष्टप्राणस्यास्तित्वादिपक्षेऽपि देहद्वयातिरिक्तस्य जीवस्य तद्द्वाराऽस्तित्वादि किमिति नेष्यते तथा चेदिष्टं तर्हि देवतायास्तन्निरासेन ज्ञातुर्वस्तुतस्तत्साधने प्रयत्नो वृथेत्यर्थः ॥२५॥

परत्रोक्तं दोषद्वयं स्वपक्षे नास्तीत्याह—अज्ञातेत्यादिना । यदाऽस्यामाख्यायिकायामज्ञो गार्ग्यो विराज्यहंभावोऽशेषदुःखहेतोः स्वाज्ञानस्योपशान्त्यर्थं पूर्वपक्षितया श्रुत्या विवक्ष्यते यदा च तत्कारणमज्ञानं छेत्तुं प्रवृत्तोऽजातशत्रुरैक्यसिद्ध्यर्थं सिद्धान्तवादी तथैवानूद्यते तदा प्राणादेरात्मत्वनिरासोऽतिरिक्तात्मोक्तिरित्यादिः सर्वोऽपि यत्नः सफलः स्यात् । न चात्र मोक्षानुपपत्तिर्ज्ञानादज्ञानतज्जध्वंसे तत्सिद्धेः । परत्र तु यत्नो विफलो न च प्रकृतसंगतिर्न हि कर्तृत्वादेर्वस्तुत्वे ज्ञानान्मुक्तिर्युक्ता वस्तुनस्तस्य तदनिवर्त्यत्वात्तदवस्थाने चानर्थध्वस्तिरूपाया मुक्तेरनवकाशत्वात्कल्पितत्वे च कर्तृत्वादेर्मतभेदासिद्धिरित्यर्थः ॥२६–२७–२८॥

---

१. स्थूलदेहातिरिक्तात्मनोऽस्तित्वादि विवक्षितं चेत् देहातिरिक्तप्राणदेवताऽस्तित्वपक्षेऽपि लोकायतमतनिरासेन तस्या एवात्मत्वेन कर्तृत्वाद्युपपत्तेः तदतिरिक्तात्मास्तित्वादिसाधनं वृथेत्यर्थः । ( न्या० क० )

२. **प्राणदेवताया इति ।** गार्ग्यः देवतानां प्राणाद्यधिष्ठात्रीणां भोक्तृत्वं निरस्य आत्मनो भोक्तृत्वं काश्येन व्यवस्थाप्यते इति मतं भर्तृप्रपञ्चस्य । तच्च व्यर्थं तदात्मानमेवावेदिति पूर्वोक्तश्रुत्या जीवब्रह्मैक्यमत्र प्रतिपिपादयिषितं तत्र चात्मनो भोक्तृत्वव्यवस्थापनमफलमित्यर्थः ।

श्रद्धाचारादिविध्यर्था यदि वाऽऽख्यायिका त्वियम्। यथोक्तदर्शनाप्तार्थो नान्यदस्तीति भावितः ॥
अतोऽतिदृप्तोऽविज्ञातदर्पकारणघस्मरः ॥२९॥
श्रद्धालुं वित्तसंपन्नं श्रेयोर्थिनमुपेत्य तु। ब्रह्म तेऽहं ब्रवाणीति गार्ग्यः काश्यमभाषत ॥३०॥
न जातो न भविष्योऽस्ति शत्रुरैकात्म्यदर्शनात्। अजातशत्रुः काश्योऽतो गार्ग्यबुद्धिविरुद्धधीः ॥३१॥
ब्रह्म यस्मात्परं नास्ति न च वस्त्वन्तरं यतः। ब्रवाण्युपास्यं तत्तेऽहं सर्वापध्वस्तिकारणम् ॥३२॥
नापृष्ट इति नन्वेतद्विरुद्धमकरोदृषिः। यद्ब्रह्म ते ब्रवाणीति ह्यपृष्टः काश्यमब्रवीत् ॥३३॥

ब्रह्म पृच्छानि इति गार्ग्याभिप्राय इति मतं तन्निरासश्च

दर्पादिदर्शनान्नूनं वेत्त्यकृत्स्नात्मदर्शनम्। कृत्स्नत्वार्थमतोऽप्राक्षीत्काश्यं प्रज्ञासमन्वितम् ॥३४॥
श्रद्धालुरधिकारी यो जिज्ञासुर्विनयान्वितः। अपृष्टेनापि वक्तव्या तस्मै विद्या विपश्चिता ॥३५॥
धर्मार्थौ यत्र न स्यातां शुश्रूषा वाऽपि तद्विधा। तत्र विद्या न वप्तव्या शुभं बीजमिवोषरे ॥३६॥

परोक्तं संबन्धं निरस्य स्वोक्तः संबन्धः साधितस्तत्र सुखावबोधायाऽऽख्यायिकेत्युक्तम्। इदानीं फलान्तरमाह—श्रद्धेति। गार्ग्यकाश्ययोः श्रद्धालुतादृष्टेर्विद्यायां श्रद्धा परं साधनं उत्तमस्याधमादनुज्ञामात्रेण तत्प्राप्तिर्नोपसत्त्येत्याचारः। शुष्कतर्कवशान्न सा लभ्येत्यादिशब्दार्थः। यदि वेति फलविकल्पार्थः। एवं संबन्धमुक्त्वा दृप्तेत्यादेरर्थमाह—यथोक्तेति। त्वन्नात्मदृष्ट्याऽऽप्तत्त्वाद्भावस्ततोऽन्यन्नास्ति ब्रह्मेति मन्वानोऽप्राप्तदर्पहेत्वज्ञानध्वंसितत्त्वज्ञानो यतो गार्ग्योऽतोऽत्यन्तदृप्तः स कदाचिदासीदित्यर्थः ॥२९॥

स हेत्याद्यवतारयति—श्रद्धालुमिति। विद्यासंप्रदाने पात्रस्य योग्यत्वार्थं विशेषणानि। योग्यमधिकारिणं प्रति प्रश्नमन्तरेणापि प्रतिवचनमुचितमिति वक्ष्यमाणार्थसूचनार्थस्तुशब्दः ॥३०॥

काश्यस्याजातशत्रुत्वं साधयति—नेत्यादिना। अतःशब्दस्य पञ्चम्या संबन्धः। प्रागुक्तहेतुं विशेषणोक्त्या व्यक्तीकरोति—गार्ग्येति ॥३१॥

यस्मात्परं नापरमस्ति किंचिदित्यादिश्रुतिमाश्रित्य ब्रह्मेत्यादि व्याचष्टे—ब्रह्मेति। तदुपास्तिफलं कथयति—सर्वेति ॥३२॥

"नापृष्टः कस्यचिद्ब्रूयान्न चान्यायेन पृच्छतः।
जानन्नपि हि मेधावी जडवल्लोक आचरेत् ॥"

इति स्मृतिविरुद्धमृषिचेष्टितमिति शङ्कते—नेत्यादिना। काश्यस्य गार्ग्यं प्रति प्रथमतो न प्रश्नोऽस्तीति-प्रसिद्ध्यर्थो हिशब्दः। यच्छब्दो यस्मादर्थे तदभिव्यक्त्यर्थं हीत्युक्तम् ॥३३॥

ब्रवाणीत्येत्पृच्छानीत्यर्थे धातूनामनेकार्थत्वात्तन्न स्मृतिविरोध इत्येकदेश्याह—दर्पादीति। अर्थित्वादिग्रहार्थमादिपदम्। अकृत्स्नात्मदर्शिनं स्वात्मानं गार्ग्यो वेत्तीति शेषः। कृत्स्नत्वार्थं पूर्णवस्तुविज्ञानार्थमित्यर्थः। तं प्रति सम्यग्ज्ञानार्थं प्रश्नस्य प्रवृत्तिरुचितेति सूचयितुं प्रज्ञेत्यादिविशेषणम् ॥३४॥

अत्र श्रुतेरनाञ्जस्याद्यथाश्रुतमादाय स्वपक्षमाह—श्रद्धालुरिति। अधिकारित्वसिद्ध्यर्थानि विशेषणानि। विपश्चितेति वक्तुस्तदधिगतियोग्यतोक्ता।

"अधर्मेण तु यः प्राह यश्चाधर्मेण पृच्छति।
तयोरन्यतरः प्रैति विद्वेषं वा निगच्छति ॥
विद्या ब्राह्मणमेत्याह शेवधिस्तेऽस्मि रक्ष माम्।
असूयकाय मां मा दास्तथा स्यां वीर्यवत्तमा ॥

इत्यादिशेषादुक्तस्मृतेरनधिकारिणे विद्या न वाच्येत्येवंपरत्वान्न तद्विरुद्धमृषिचेष्टितमिति भावः ॥३५॥

अनधिकारिणि प्रष्टर्यपि विद्या न देयेत्यत्र स्मृतिमुदाहरति—धर्मेति। सप्तमीद्वयं शिष्यविषयम्। तद्विधा विद्या देशकालसामर्थ्यानुरोधिनीति यावत्। तत्र विद्या दत्ताऽपि न फलवतीति दर्शयितुमुदाहरणम् ॥३६॥

धर्मार्थौ यत्र च स्यातां शुश्रूषा वाऽपि तद्विधा । वक्तव्या तत्र विद्येति निषेधादेव लिङ्ग्यते ॥३७॥
नष्टाश्वदग्धरथवन्न्यायं चाऽऽश्रित्य भूमिपम् । प्राह मानुषवित्ताढ्यं दैववित्तसमन्वितम् ॥३८॥
वित्तद्वयेन संपन्नो यतोऽधिक्रियते नरः । सर्वकर्मस्वतोऽवादीद्बालाकिः काश्यमन्तिकात् ॥३९॥
ब्रह्म तुभ्यं ब्रवाणीतिवाङ्मात्रव्यापृतावहम् । गोसहस्रं ददाम्यद्य विनाऽप्यैकात्म्यनिर्णयात् ॥४०॥
गोसहस्रप्रदानस्य निमित्तं श्रुतिरभ्यधात् । जनको जनक इति नामाभ्यासोक्तितः स्फुटम् ॥४१॥
शुश्रूषुं जनकं सर्वे जना दित्सन्तमेव च । विवक्षवोऽभिधावन्ति तमुद्दिश्य जिघृक्षवः ॥४२॥
मौग्धीं प्रसिद्धिमुल्लङ्घ्य गार्ग्योऽयं मामुपागतः । नूनं दित्सुं च शुश्रूषुं संभावयति मामपि ॥४३॥

मू.—स होवाच गार्ग्यो य एवासावादित्ये पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा अतिष्ठाः सर्वेषां भूतानां मूर्धा राजेति वा अहमेतमुपास इति स य एतमेवमुपास्तेऽतिष्ठाः सर्वेषां भूतानां मूर्धा राजा भवति ॥२॥

गार्ग्योपदेशे प्रथमकण्डिकाविवरणम्

आदित्यचक्षुर्बुद्धिस्थश्चेतनः सर्वगो ध्रुवः । एतमेव सदोपासे ब्रह्मेति रविमध्यगम् ॥४४॥
तथा ब्रुवाणं तं गार्ग्यं काश्यो मा मेत्यथोचिवान् । केवलो मतिसंवादो भवदुक्तेर्ममाभवत् ॥४५॥
न त्वपूर्वार्थविज्ञानं प्रतिज्ञातं यथा त्वया । मा वोचोऽतो यतो वेद्मि विनाऽपि वचनात्तव ॥४६॥
निषेधाभ्यासो मा मेति ज्ञातब्रह्मप्रवादिनः । आबाधितधियाऽभ्यस्तो गार्ग्यस्यानुक्तिकारणात् ॥४७॥

अधिकारिण्यपृष्टेनापि सोपदेष्टव्येत्यत्र मानमाह—धर्मार्थाविति । ननु निषेधवचनं विना नैवंविधमस्ति स्मृतिवचनं तत्राऽऽह—इति निषेधादिति । अयोग्ये पात्रे विद्यादाननिषेधाद्योग्ये प्रश्नं विनाऽपि सा देयेति गम्यत इत्यर्थः ॥३७॥

अधिकारिणे विद्यां वक्तुं गार्ग्यश्चेदुपचक्रमे तर्हि योग्यं ब्राह्मणं हित्वा किमिति राजानमुपेत्य ब्रवीति तत्राऽऽह—नष्टेति । यथाऽऽहुः—युक्तः संयोगोऽधिकारार्थेन हेतुना नष्टाश्वदग्धरथवदिति ॥३८॥

उक्तनीत्या गार्ग्यकाश्यसंबन्धस्य फलं प्रकटयति—वित्तेति । यथाऽऽहुः—उभयवित्तवतोऽस्य ह्यधिकारस्तस्मादधिकारार्थेन हेतुना युक्तमुपेत्य वचनमिति ॥३९॥

सहस्रमित्यादेरर्थमाह—ब्रह्मेति ॥४०॥

जनक इत्याद्यवतारयति—गोसहस्रेति ॥४१॥

तद्व्याचष्टे—शुश्रूषुमिति ॥४२॥

विवक्षूणां जिघृक्षूणां च जनकं प्रत्यभिगमनेऽपि कथं ब्रह्म ब्रवाणीति गार्गीयवाङ्मात्रमेव राज्ञो गोसहस्रदाने निमित्तमुक्तमित्याशङ्क्याऽऽह—मौग्धीमिति । उपागन्तुराशयमनुवदति—नूनमिति । तथाच तदीयं वाङ्मात्रमेव निमित्तीकृत्य गोसहस्रप्रदानमुचितमिति भावः ॥४३॥

श्रोतुकामं राजानं प्रति ब्राह्मणो ब्रह्म कीदृगुक्तवानित्याशङ्क्य "य एवासावि"त्यादेरर्थमाह—आदित्येति । तत्प्राधान्यार्थं रविमध्यगमित्युक्तम् । त्वमपि यथोक्तं ब्रह्मोपास्स्वेति शेषः ॥४४॥

मा मैतस्मिन्नित्याद्यादत्ते—तथेति । गार्ग्योक्तेरज्ञातार्थज्ञापकत्वाभावज्ञापनार्थमथेत्युक्तम् । तदेव स्फुटयन्निषेधवादिनो राज्ञोऽभिप्रायमाह—केवल इति । संवादं कर्तुमेवोपक्रान्तमित्याशङ्क्याऽऽह—प्रतिज्ञातमिति । अपूर्वार्थविज्ञानं हि प्रतिज्ञातं न च तथा तदुत्पादितं तथाच प्रतिज्ञाहानिस्तवेत्यर्थः । राजाशयमुक्त्वा निषेधं व्याचष्टे—मा वोच इति ॥४५–४६॥

द्विर्वचनमनूद्य तत्फलमाह—निषेधेति । गार्ग्यो हि विना स्वोपदेशं राज्ञा ज्ञातस्य ब्रह्मणः प्रकर्षेण वदनशीलस्तस्येषद्बाधितत्वबुद्ध्या निषेधो राज्ञाऽभ्यस्तस्तेन मुख्यस्य ब्रह्मणोऽनुक्तेरित्यर्थः ॥४७॥

**सुप्रसिद्धं यदस्माकं त्वच्छासनमृतेऽपि तत् । नापेक्षते भवद्वाक्यं सिद्ध्यर्थं प्राक्प्रसिद्धितः ॥४८॥**
**तदुपासां न वेद्मीति मा च शङ्कां कृथा यतः । उपासनं च वेद्म्यस्य गुणं तत्फलमेव च ॥४९॥**
**अतीत्य सर्वभूतानि प्राधान्येन स्थितो यतः ॥५०॥**
**अतिष्ठा इति नामास्य तेनाऽऽदित्यात्मनोऽभवत् । चक्षुरुद्दीप्तिसत्त्वाच्च राजेत्येषोऽभिधीयते ॥५१॥**
**स य एतं यथोद्दिष्टमुपास्तेऽहर्निशं नरः । यथोपासनमेवास्य फलं भवति नान्यथा ॥५२॥**

**मू.—स होवाच गार्ग्यो य एवासौ चन्द्रे पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा बृहन्पाण्डरवासाः सोमो राजेति वा अहमेतमुपास इति स य एतमेवमुपास्तेऽहरहर्ह सुतः प्रसुतो भवति नास्यान्नं क्षीयते ॥३॥**

**मतिसंवाददोषेण काश्येनोत्सारिते रवौ । गार्ग्यो ब्रह्मान्तरं राज्ञे प्रवक्तुमुपचक्रमे ॥५३॥**

चन्द्रादिस्थस्य ब्रह्मोपासनविधिः

**चन्द्रे मनसि बुद्धौ च ब्रह्मोपासेऽहमद्वयम् । भानुमण्डलतो यस्माद्द्विगुणं चन्द्रमण्डलम् ॥**
**बृहन्निति ततश्चन्द्रः प्रमाणेनाभिधीयते ॥५४॥**
**अम्भोऽतिपाण्डरं वासो यस्माच्चन्द्राभिमानिनः। तस्मात्पाण्डरवासाः स्यात्सोमः सौम्यत्वकारणात्॥५५**
**ज्योत्स्नया राजतेऽत्यर्थं सोमो ब्राह्मणराजतः । सोमो राजेत्यतो वक्ति तदुपासाविधित्सया ॥५६॥**
**तुल्याभिधानधर्मत्वाल्लतासोमोऽपि गृह्यते । उभयोर्देवतैकत्वादुपास्यं तेन तद्द्वयम् ॥५७॥**
**एषैका देवता विभ्वी प्रत्येकार्थावसायिनी । भोक्त्री कर्त्री च सर्वत्र तस्या भोज्यमतोऽपरम् ॥५८॥**
**ब्रह्मैषा सर्वसंव्याप्तेरात्मेत्येतामुपास्महे । व्याख्या तुल्यैव विज्ञेया सर्ववाक्येषु पूर्ववत् ॥५९॥**

**कथं तदुक्तिं विना राज्ञा ज्ञातं ब्रह्म तत्राऽऽह**—सुप्रसिद्धमिति ॥४८॥

**अतिष्ठाः सर्वेषामित्याद्यवतारयति**—तदुपासामिति । तद्गुणं तत्फलं चेति शेषः ॥४९॥

**गुणद्वयं विभजते**—अतीत्येति ॥५०-५१॥

**स य एतमित्यादि व्याचष्टे**—स य इति । नान्यथेत्युपास्त्यनुसारिफलमिति शास्त्रस्थितेरित्यर्थः ॥५२॥

**पर्यायान्तरमादत्ते**—मतीति ॥५३॥

**तद्व्याचष्टे**—चन्द्र इति । त्वं च तथोपास्स्वेति पूर्ववत् । **बृहन्नित्यस्यार्थमाह**—भान्विति । **प्रमाणेन परिमाणेनेति यावत् । तथाच पौराणिकाः**—

"नवयोजनसाहस्रो विष्कम्भः सवितुः स्मृतः ।
द्विगुणस्तस्य विस्तारो मण्डलस्य प्रमाणतः ॥
द्विगुणः सूर्यविस्ताराद्विस्तारः शशिनः स्मृतः" । इति ॥५४॥

**पाण्डरेत्यादिपदानि व्याचष्टे**—अम्भ इत्यादिना । सोमो **ब्राह्मणानां** राजेतिश्रुतिमाश्रित्य **ब्राह्मणराजत इत्युक्तम् । गुणचतुष्टयोक्तिफलमाह**—तदुपासेति । ५५-५६॥

**सोमशब्दस्यार्थान्तरमाह**—तुल्येति । न केवलं चन्द्रमाः सोमः किंतु लताऽपि सोम इत्यभिधानस्य **वृद्धिह्रासाख्यधर्मस्य चोभयत्र समत्वाच्चन्द्रदेवतायाश्च द्वयोरैक्यादित्यर्थः । लताग्रहोपयोगमाह**—उपास्यमिति । **प्राणात्मनैकीकृत्येति शेषः ॥५७॥**

**उक्तां देवतां विशिनष्टि**—एषेति ॥५८॥

**अन्नदृष्ट्या भोज्यमित्ययुक्तं ब्रह्मणोऽतथात्वादित्याशङ्क्याऽऽह**—ब्रह्मेति । **तथाऽप्यात्मनो भोक्तृत्वादि न प्राणस्येत्याशङ्क्याऽऽह**—आत्मेति । **अतस्त्वदुक्तेर्नास्माकमधिका धीरिति राज्ञोऽभिप्रायः । यथोक्तन्यायं विद्युत्पर्यादिष्वतिदिशति**—व्याख्येति । **आदित्यचन्द्रवाक्ययोर्व्याख्या तुल्योक्ता तथोत्तरेष्वित्यर्थः ॥५९॥**

गुणो यत्र हि यः पुंसो नाम्ना संभाव्यतेऽत्र तु । फलं तदेव तस्य स्यात्सर्ववाक्येषु निर्णयः ॥६०॥

मू.—स होवाच गार्ग्यो य एवासौ विद्युति पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठास्तेजस्वीति वा अहमेतमुपास इति स य एतमेवमुपास्ते तेजस्वी ह भवति तेजस्विनी हास्य प्रजा भवति ॥४॥

भानुचन्द्रमसोस्तेजो जलदैरभिभूयते । विद्युत्तत्राप्यतितरां तेजस्वी तेन विद्युति ॥६१॥

मू.—स होवाच गार्ग्यो य एवायमाकाशे पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठाः पूर्णमप्रवर्तीति वा अहमेतमुपास इति स य एतमेवमुपास्ते पूर्यते प्रजया पशुभिर्नास्यास्माल्लोकात्प्रजोद्वर्तते ॥५॥

खण्डशो न यथा मूर्तं खं पूर्णं चाप्रवर्तनात् । अप्रवर्त्यक्रियावत्स्युर्व्योम्नि सर्वाः प्रवृत्तयः ॥६२॥

मू.—स होवाच गार्ग्यो य एवायं वायौ पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा इन्द्रो वैकुण्ठोऽपराजिता सेनेति वा अहमेतमुपास इति स य एतमेवमुपास्ते जिष्णुर्हापराजिष्णुर्भवत्यन्यतस्त्यजायी ॥६॥

जिष्णुः स्याज्जयशीलत्वाज्जीयते न परैर्यतः । अपराजिष्णुरित्येवं तस्मादेवाभिधीयते ॥६३॥

अन्यतो मातृतो जाता अन्यतस्त्या उदाहृताः । अप्यन्यतस्त्यजायी स्यात्सापत्नभ्रातृमर्दनः ॥६४॥

जिष्णुरिन्द्रगुणोपास्तेर्वैकुण्ठगुणतः परः । सेनाऽपराजितेत्यस्मात्सपत्नानां पराजयः ॥६५॥

मू.—स होवाच गार्ग्यो य एवायमग्नौ पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा विषासहिरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते विषासहिर्हं भवति विषासहिर्हास्य प्रजा भवति ॥७॥

अभ्याहितमपि जगत्सहतेऽग्निर्यतस्ततः । भस्मसात्करणादुक्तो विषासहिरितीश्वरैः ॥६६॥

प्रतिपर्यायं गुणफलयोरपि तुल्यत्वमाशङ्क्याह—गुण इति । अत्रोक्तवक्ष्यमाणपर्यायेषु यस्मिन्पर्याये ध्येयस्य पुंसो यो गुणोऽतिष्ठा राजा तेजस्वीत्यादिशब्दार्पितस्तत्र तदुपासकस्य तदेव गुणोपास्त्यनुरूपमतिष्ठाः सर्वभूतानामित्यादिफलं स्यादेवं सर्ववाक्येषु गुणभेदः फलभेदश्चेत्यर्थः । गुणादिभेदस्य वाचनिकत्वात्तद्भेदाशङ्का नेति हिशब्दार्थः ॥६०॥

प्रतिपर्यायं तद्भेदेऽपि विद्युति निर्देशादादित्यचन्द्राग्निषु च संभवात्तेजस्विगुणश्चतुर्ष्वपि सम इत्याशङ्क्याऽऽह—भान्विति । अग्नेरपि कदाचिदुद्भूतमभिभूतं च तेजो लक्ष्यते तत्रापि जलदेषु सत्स्वपीति यावत् । अतितरां तेजस्विनीति शेषः । तेजस्वी ध्येयः पुरुषः ॥६१॥

पूर्णमप्रवर्तीत्याकाशब्रह्मणो गुणद्वयमुक्तं तद्व्याचष्टे—खण्डश इति । यथा घटादि खण्डशो विभक्तं न तथाऽऽकाशमतस्तत्पूर्णमप्रवर्ति चाप्रवर्तकत्वादित्यर्थः । अप्रवर्तिशब्दस्यार्थान्तरमाह—अक्रियावदिति । व्योम्नि हि सर्वाः प्रवृत्तयः सन्ति न स्वयं क्रिया तद्वद्वा तस्मादप्रवर्तीत्यर्थः ॥६२॥

वायुब्रह्मोपासकस्य जिष्णुरित्यादिफलत्रयमुक्तं तद्व्याचष्टे—जिष्णुरित्यादिना ॥६३–६४॥

कथमेकोपास्तिर्बहुफलेत्याशङ्क्योपास्यगुणभेदादित्याह—जिष्णुरिति ॥६५॥

अग्निपुरुषस्य विषासहिरिति विशेषणं तस्यार्थमाह—अभ्याहितमिति । अपिरभिव्याप्तौ । यद्धविः स्वस्मिन्विष्यते क्षिप्यते तत्सोढुं शीलमस्तीति व्युत्पत्तिः । ईश्वरैर्वेदार्थनिर्धारणसमर्थैरित्यर्थः ॥६६॥

मू.—स होवाच गार्ग्यो य एवायमप्सु पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठाः प्रतिरूप इति वा अहमेतमुपास इति स य एतमेवमुपास्ते प्रतिरूपँ् हैवैनमुपगच्छति नाप्रतिरूपमथो प्रतिरूपोऽस्माज्जायते ॥८॥

अप्सु रेतसि बुद्धौ च पुरुषं ब्रह्म चेतनम् । उपास एतमित्युक्तः काश्यः प्रत्याह पूर्ववत् ॥६७॥
प्रतिबिम्बोदयः कार्यं प्रतिरूपं यतस्ततः । प्रतिरूप उपास्योऽप्सु फलमप्यस्य तादृशम् ॥६८॥
अन्वर्थे प्रतिशब्दोऽयं फलस्य पुरुषार्थतः । प्रातिलोम्येन तु ज्ञेयो ह्यनर्थः स्यात्तथा सति ॥६९॥
श्रुतिस्मृतिसदाचारान्प्रति यः सततोद्यतः । प्रतिश्रुत्यादिरूपत्वात्प्रतिरूपस्ततोऽस्तु सः ॥७०॥

मू.—स होवाच गार्ग्यो य एवायमादर्शे पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा रोचिष्णुरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते रोचिष्णुर्ह भवति रोचिष्णुर्हास्य प्रजा भवत्यथो यैः सन्निगच्छति सर्वाँ् स्तानतिरोचते ॥९॥

रोचिष्णूपनिषत्कान्तमादर्शाक्षादिबुद्धिषु । उपास इत्यभिहिते काश्यः प्रत्याह पूर्ववत् ॥७१॥
यत्रोपास्यबहुत्वं स्यात्फलं तत्र प्रजास्वपि । शतह्लदादर्शाद्यर्था बहवस्ते प्रसिद्धितः ॥७२॥
फलं यद्गुणकं यत्र तद्गुणं स्यादुपासनम् । फलानुमानतस्तत्र न फलं ह्यनुपासितम् ॥७३॥

मू.—स होवाच गार्ग्यो य एवायं यन्तं पश्चाच्छब्दोऽनूदेत्येतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा असुरिति वा अहमेतमुपास

य एवाप्स्वित्यादेरर्थमाह—अप्स्विति ॥६७॥

प्रतिरूपादिवाक्यस्थप्रतिरूपशब्दार्थमाह—प्रतिबिम्बेति । कार्यमपामिति शेषः । यस्मात्प्रतिबिम्बमपां गुणस्तस्मादबादौ तद्गुणः पुरुषो ध्येय इत्याह—यत इति । फलवाक्यार्थमाह—फलमिति ॥६८॥

प्रतिरूपगुणोपासकं प्रति प्रतिरूपं फलमुपगच्छति चेत्तर्हि प्रतिशब्दादनर्थप्राप्तिः फलमिति प्रतीतेस्त्याज्योपासनेत्याशङ्क्याऽऽह—अन्वर्थ इति । प्रतिशब्दस्य निपातत्वेनानेकार्थत्वसंभवात्प्रकृतोपास्त्यनुसारेणान्वर्थत्वमुचितमिति वक्तुं हीत्युक्तम् । तथा सति प्रातिकूल्यार्थत्वाभ्युपगमे सतीति यावत् ॥६९॥

प्रतिरूपशब्दस्यानुरूपार्थत्वमुक्त्वा तदेव प्रकटयन्नथो इत्यादेरर्थमाह—श्रुतीति । अप्सु हि पुरुषः श्रुत्यादीन्प्रति सदाऽनुरूपस्ताभिरेव श्रौतस्मार्तकर्मनिर्वृत्तेरतस्तदुपासकस्यापि तदात्मकस्य श्रुत्याद्यनुरूपत्वात्ततो जायमानः पुत्रस्तदनुरूपो भवतीत्यर्थः ॥७०॥

य एवायमित्यादेरर्थमाह—रोचिष्ण्विति । देदीप्यमानगोप्यकान्तिसहितं पुरुषमादर्शे चक्षुरादिषु स्वच्छभावेषु बुद्धौ चाहमुपासे त्वं चेत्थमुपास्वेत्युक्ते राजा पूर्ववन्निषेधतीत्यर्थः ॥७१॥

रोचिष्णुर्हेत्यादिना स्वगतं प्रजागतं च फलमत्र श्रूयते विद्युदात्मवाक्ययोरपि तेजस्वी हेत्यादिनोभयत्र फलमुक्तं स्वामिगामि च तन्न्याय्यमित्याशङ्क्याऽऽह—यत्रेति । स्वामिनोऽन्यत्रापि वाचनिकमविरुद्धमिति भावः । क्वाचित्कमुपास्यबहुत्वमेव स्फोरयति—शतह्लदेति ॥७२॥

उपास्यैक्येऽपि फलबाहुल्योपपत्तेः सर्वपर्यायेषूभयत्र फलं किं न स्यादित्याशङ्क्याऽऽह—फलमिति । यस्मिन्पर्याये यद्गुणकं फलं दृष्टं तत्र तद्गुणकमुपासनं फलेन तत्साधनस्यानुमानात्, तद्वैचित्र्ये सत्युपासनवैचित्र्यस्याऽऽवश्यकत्वादित्यर्थः । अनुमानमेव व्यतिरेकद्वारा स्फोरयति—नेति । तं यथा यथेत्यादिशास्त्रादिति शेषः । स एव हिशब्दार्थः ॥७३॥

इति स य एतमेवमुपास्ते सर्वँ् हैवास्मिँल्लोक आयुरेति नैनं पुरा कालात्प्राणो जहाति ॥१०॥

गच्छन्तमनु यः शब्दो बहिर्वच्छ्रूयतेऽध्वनि । अध्यात्मं दैहिके शब्दे बुद्धौ चेति विनिर्दिशेत् ॥७४॥
पुंसोऽभिधावतस्तूर्णं देहदेशैः समाहृतः । प्राणो वृत्तिविशेषेण बहिर्वत्कुरुते ध्वनिम् ॥७५॥
वृत्तिक्षेपादसुरयमायुषश्च तदाश्रितेः । शतायुरेव भवति म्रियते नापमृत्युना ॥७६॥

मू.— स होवाच गार्ग्यो य एवायं दिक्षु पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा द्वितीयोऽनपग इति वा अहमेतमुपास इति स य एतमेवमुपास्ते द्वितीयवान्ह भवति नास्माद्गणश्छिद्यते ॥११॥

दिक्षु द्वितीयोऽनपगः सद्वितीयः सदैव सः । दुःसंभाव्या हि पूर्वा दिङ्मुक्त्वाऽऽशां पश्चिमां जनैः ॥७७॥
साधुभृत्यपरीवारः सर्वदोपासको भवेत् । पुत्रादिगणसंतानस्थैर्यमेव सदा भवेत् ॥७८॥

मू.—स होवाच गार्ग्यो य एवायं छायामयः पुरुषः एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा मृत्युरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते सर्वँ् हैवास्मिँल्लोक आयुरेति नैनं पुरा कालान्मृत्युरागच्छति ॥१२॥

छायामये तथाऽज्ञाने बुद्धौ चैकैव देवता । मृत्युकालात्पुरा नास्य व्याधिरप्युपसर्पति ॥७९॥

मू.—स होवाच गार्ग्यो य एवायमात्मनि पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा आत्मन्वीति वा अहमेतमुपास इति स य एतमेवमुपास्त आत्मन्वी ह भवत्यात्मन्विनी हास्य प्रजा भवति स ह तूष्णीमास गार्ग्यः ॥१३॥

विराडात्मनि देहे च बुद्धावित्यादि पूर्ववत् । आत्मन्वीति च वश्यात्मा प्रजा चापि शमान्विता ॥८०॥
व्यस्तानां पूर्वमुद्देशः समस्तानां त्विहोदितः । विवक्षावसितिर्गार्गी[1] तथा सत्युपपद्यते ॥८१॥

य एवायं यन्तमित्यादि व्याचष्टे—गच्छन्तमिति । अध्वनि गच्छन्तमिति संबन्धः । तस्मिन्बाह्ये शब्दे देहस्थे चाऽऽध्यात्मिके बुद्धौ च यः पुरुषस्तमेवाहमुपासे ब्रह्मबुद्ध्येति वाक्यार्थं ब्रूयादित्यर्थः ॥७४॥

गच्छतः पृष्ठतः शब्दोत्पत्तौ किं कारणं तदाह—पुंस इति । वृत्तिविशेषेण गतिभेदेनेति यावत् । यद्वा प्राणनादिवृत्तीस्त्यक्त्वा वृत्त्यन्तरेणेत्यर्थः ॥७५॥

शब्दपुरुषस्यासुरिति विशेषणं तस्यार्थमाह—वृत्तीति । गतीनामुपात्तानां प्राणनादिवृत्तीनामेव बाह्यांशेन त्यागात्प्राणात्मा सोऽसुगुणक इत्यर्थः । "स य एतमि"त्यादि व्याकरोति—आयुषश्चेति ॥७६॥

दिक्पुरुषस्य द्वितीयोऽनपग इति विशेषणद्वयं तदनूद्य व्याचष्टे—दिक्ष्विति । सद्वितीयत्वं साधयति—दुःसंभाव्येति । दिशां सद्वितीयत्वं लोकप्रसिद्धमिति हिशब्दः ।७७॥

स य एतमित्यादि व्याख्याति—साध्विति । उपासकबुद्ध्यनुसारित्वं साधुत्वम् । उत्तरार्धे सदेत्येतस्मात्पूर्वं त येत्यध्याहार्यम् ॥७८॥

पर्यायान्तरं व्याचष्टे—छायेति । बाह्ये तमसीति यावत् । छायापुरुषस्य मृत्युरिति गुणस्तदुपासनाद्दीर्घायुष्यं फलं रोगाद्यभावो विशेष इति मत्वा नैनमित्यादेरर्थमाह—मृत्युकालादिति । मृत्योस्तु न प्रसङ्गोऽस्तीत्यपेरर्थः ॥७९॥

अन्तिमं पर्यायं व्याकरोति—विराडिति । आदिपदेन गार्ग्योक्तिशेषस्य काश्योक्तेश्च ग्रहणम् । आत्मन्वीति च गुणो विराट्पुरुषस्येति शेषः । आत्मन्वीत्यादेरर्थमाह—वश्येति ॥८०॥

पूर्वोत्तरपर्यायेऽवान्तरभेदं दर्शयति—व्यस्तानामिति । उद्देशो ध्येयत्वेनोक्तिरित्यर्थः । अन्त्ये पर्याये समस्तोपदेशे नियामकमाह—विवक्षेति । तथा सति समस्तव्यस्तोपदेशे सतीति यावत् ॥८१॥

१. गार्गी = गार्ग्यस्य ब्रह्मविवक्षायाः समाप्तिः ।

प्रत्याख्यातोपदेशः सन्संवादेन पुनः पुनः । ब्रह्मान्यदन्यदवददात्मन्वीत्यन्तमादरात् ॥८२॥

विशेषाणामनन्तत्वात्समस्तं ब्रह्म सोऽवदत् । तस्मिन्नपि निषिद्धेऽथ तूष्णीं गार्ग्यो बभूव ह ॥८३॥

यत्कृत्स्नं ब्रह्म पूर्वोक्तं तदेवेदमविद्यया । एकधाऽनेकधा मूढैः कल्प्यते रज्जुसर्पवत् ॥८४॥

मू.—स होवाचाजातशत्रुरेतावन्नू ३ इत्येतावद्धीति नैतावता विदितं भवतीति स होवाच गार्ग्य उप त्वा यानीति ॥१४॥

अवाक्शिरस्कमालोक्य नृपो गार्ग्यमनुत्तरम् । एतावदिति तं प्राह शेषाशङ्कानिवृत्तये ॥८५॥

निगृह्यमाणयोगे च प्लुतिमत्र विनिर्दिशेत् । ब्रह्म ब्रवाणीत्यात्थ त्वमेतावद्ब्रह्म तच्च ते ॥८६॥

अज्ञाते जगदज्ञातं ज्ञाते ज्ञातं च यत्र तत् । तदेव ब्रह्म पूर्णत्वान्न त्वदुक्तमकृत्स्नतः ॥८७॥

अव्यावृत्ताननुगतस्वतःसिद्धात्मवस्तुनि । मुख्यार्थो ब्रह्मशब्दः स्यान्न त्वदुक्तेऽतथात्वतः ॥८८॥

यस्मादेवमतो गार्ग्यमेतावद्धीतिवादिनम् । नृपो नैतावतेत्याह ब्रह्मत्वासंभवं स्फुटम् ॥८९॥

अज्ञातब्रह्मतत्त्वस्य दुःसंभाव्यमिदं वचः । नैतावतेति ब्रह्मातः काश्यो वेत्तीति लिङ्ग्यते ॥९०॥

मू.—स होवाचाजातशत्रुः प्रतिलोमं चैतद्यद्ब्राह्मणः क्षत्रियमुपेयाद्ब्रह्म मे वक्ष्यतीति व्येव त्वा ज्ञपयिष्यामीति तं पाणावादायोत्तस्थौ तौ ह पुरुषँ सुप्तमाजग्मतुस्तमेतैर्नामभिरामन्त्रयांचक्रे बृहन्पाण्डरवासः सोम राजन्निति स नोत्तस्थौ तं पाणिनाऽऽपेषं बोधयांचकार स होत्तस्थौ ॥१५॥

गार्ग्योऽनुमाय राज्ञोऽथ प्रावीण्यं ब्रह्मवेदने । उपायानीत्युवाचेमं परब्रह्मावबुद्धये ॥९१॥

तत्समाप्तिं प्रकटयति—प्रत्याख्यातेति । तदनन्तरमज्ञानादेव गार्ग्यो विवक्षारहितोऽभूदिति शेषः ॥८२॥

कतिपयविशेषानुक्त्वा सर्वोपसंहारं विना किमित्यन्ते समस्तब्रह्मोक्तिरित्याशङ्क्याऽऽह—विशेषाणामिति । अनन्तत्वात्प्रत्येकं वक्तुमशक्यत्वादिति शेषः । तत्र सर्वान्तर्भावाच्चेति भावः । स ह तूष्णीमित्यादेरर्थमाह—तस्मिन्निति । समस्तव्यस्तातिरिक्ते वस्तुनि गार्ग्यस्य प्रतिभानहीनत्वद्योतनार्थमथेत्युक्तम् । तस्य मौनमास्थायावाक्शिरस्त्वेनावस्थानं पार्श्वस्थानां प्रत्यक्षमिति हेतिनिपातेन द्योत्यते ॥८३॥

ननु राज्ञा यथोक्तं ब्रह्म निषेधता तदब्रह्मत्वमेव साध्यते ततोऽन्यत्तदस्तीति वा ? नाऽऽद्यो व्येव त्वा ज्ञपयिष्यामीत्यादिशेषविरोधात् । नेतरोऽन्यत्वात्तस्यापि घटवदब्रह्मत्वापत्तेरत आह—यदिति । यद्वाऽऽत्मेत्येव सूत्रिते मुख्ये ब्रह्मणि किमित्यादित्यादिब्रह्मान्तरं गार्ग्येणोक्तमित्याशङ्क्य पूर्वपक्षश्रुत्यभिप्रायमाह—यत्कृत्स्नमिति । एकधाऽनेकधा समस्तत्वेन व्यस्तत्वेन चेत्यर्थः ॥८४॥

स हेत्यादेस्तात्पर्यमाह—अवागिति । प्रतिज्ञाहानिरत्र सूच्यते । उत्तरावसरे तदप्रतिपत्तिमप्रतिभामाह—अनुत्तरमिति । अवशिष्टस्य मुख्यब्रह्मणो गार्ग्येण ज्ञातत्वाशङ्कानिवृत्त्यर्थं राजवाक्यमित्यर्थः ॥८५॥

प्रतिज्ञाहान्यादिना निगृह्यमाणगार्ग्येण प्रश्नस्य संबन्धे प्लुतिरस्मिन्वाक्ये वाच्येति प्लुतेरर्थमाह—निगृह्यमाणेति । उक्तं हि—निगृह्यानुयोगे चेति । निगृह्यमाणत्वमेव स्फुटयति—ब्रह्मेति ॥८६॥

ननु प्रतिज्ञातं ब्रह्माऽऽदित्यादिरूपमुपदिष्टं न च तन्न ब्रह्म ब्रह्मान्तराभावात्तत्राऽऽह—अज्ञात इति ॥८७॥

पूर्णमेव ब्रह्मेत्यत्र निमित्तमाह—अव्यावृत्तेति । आदित्यादौ तस्य मुख्यार्थत्वाभावे हेतुः—अतथात्वत इति । त्वदुक्तादित्यादेर्व्यावृत्तादिरूपत्वादित्यर्थः ॥८८॥

एतावद्धीत्यादेरर्थमाह—यस्मादिति । आदित्यादेरुक्तन्यायेनाब्रह्मत्वं हेत्वर्थः ॥८९॥

उप त्वाऽयानीति वदतोऽभिप्रायमाह—अज्ञातेति ॥९०॥

उपसदनोक्तिमवतारयति—गार्ग्य इति । अनुमाय नैतावतेत्युक्त्या कल्पयित्वेत्यर्थः । ब्रह्मविदं प्रत्युपसत्तिरब्रह्मविदो युक्तेत्यथशब्दार्थः । इमं ब्रह्मविदं राजानमिति यावत् । उपसत्तिफलमाह—परब्रह्मेति ।

परं ब्रह्म विजिज्ञासुरुपेतोऽस्म्यहमादरात् । अनुशाधि यथातत्त्वमित्येवंवादिनं नृपः ॥९२॥
क्षत्रियं ब्राह्मणो जात्या यदुपेयादनापदि । प्रतिलोममिदं वृत्तं धर्मशास्त्रैर्निषिद्धतः ॥९३॥
योगक्षेमफलार्थाय गमनं न निषिध्यते । ब्रह्म मे वक्ष्यतीत्यर्थं निषिद्धं नृपसर्पणम् ॥९४॥
अतोऽनुपेतमेव त्वां करविन्यस्तबिल्ववत् । ब्रह्म विज्ञापयिष्यामि यज्ज्ञाने सर्वविद्भवेत् ॥९५॥
इत्युक्त्वा तमथो पाणौ गृहीत्वोत्थितवान्नृपः । आजग्मतुश्च तौ सुप्तं नरं कार्यविवक्षया ॥९६॥
गार्ग्योक्तब्रह्माभोक्तृत्वं तथाऽमीषामनात्मताम् । बालाकेर्बोधयिष्यामीत्यतः सुप्तमगान्नृपः ॥९७॥
देवतानामभिः काश्यो गत्वा सुप्तं यथोदितैः । आमन्त्रयां तदा चक्रे बृहन्नित्येवमादिभिः ॥९८॥
संबोध्यमानोऽपि तथा सुप्तो नैवोदबुध्यत । यतोऽतो गार्ग्याभिमतो न भोक्तेत्यवगम्यते ॥९९॥

सुप्तपुरुषगमने अभिप्रायवर्णनम्

जाग्रत्कालं परित्यज्य सुप्तं किमिति जग्मतुः । स्पष्टता सर्वभावानां जाग्रत्काले हि लक्ष्यते ॥१००॥
प्राणानां देवतानां च पुरुषस्य च संकरात् । बोधे न शक्यते कर्तुं विवेको भोक्तृभोज्ययोः ॥ १ ॥

उपसत्तिवाक्यं व्याचष्टे—उपेत इति। कुतूहलधिया नास्तिकधिया चोपसत्तिं व्यावर्तयति—आदरादिति। प्रतिलोममित्यादेरर्थमाह—इत्येवमिति। नृपः प्राहेति शेषः। कृतकं ब्राह्मणं व्यावर्तयति—जात्येति। धर्मशास्त्रैरिति। आपत्काले ब्राह्मणस्याब्राह्मणाद्विद्योपयोगोऽनुगमनं शुश्रूषाऽऽसमाप्तेरिति गौतमः।

"अब्राह्मणादध्ययनमापत्काले विधीयते। अनुव्रज्या च शुश्रूषा यावदध्ययनं गुरोः॥
नाब्राह्मणे गुरौ शिष्यो वासमात्यन्तिकं वसेत्। ब्राह्मणे चाननूचाने काङ्क्षन्गतिमनुत्तमाम्"॥

इति मनुः। एवमादिभिर्निषेधाद्ब्राह्मणस्य क्षत्रियं प्रत्युपगतिरयुक्तेत्यर्थः ॥९१-९२-९३॥

तर्हि तस्य जीवनमेव दुर्लभमित्याशङ्क्यानापदीत्यत्र सूचितमर्थमाह—योगेति। अप्राप्तप्रापणं योगः प्राप्तरक्षणं क्षेमस्तदर्थं पार्थिवं प्रति ब्राह्मणस्योपसर्पणमविरुद्धम्।

"वेदार्थानधिगच्छेच्च शास्त्राणि विविधानि च। उपेयादीश्वरं चैव योगक्षेमार्थसिद्धये"॥

इति स्मृतेरित्यर्थः। तर्हि निषेधवाक्यानां का गतिस्तत्राऽऽह—ब्रह्मेति ॥९४॥

ब्राह्मणस्य क्षत्रियादुत्तमत्वात्तं प्रति विद्यार्थमुपगत्यभावश्चेद्गार्ग्यस्य राज्ञो विद्या श्रोतुमशक्येत्याशङ्क्यैव त्वेत्यादेरर्थमाह—अत इति। आदित्यादिब्रह्मभ्यो वक्ष्यमाणे ब्रह्मणि विशेषमाह—यज्ज्ञान इति। वर्णतो गार्ग्यस्याऽऽधिक्यादुपसत्त्यभावेऽपि विद्यातो राज्ञो वैशिष्ट्यात्ततस्तद्ग्रहो युक्तः।

"न हायनैर्न पलितैर्न वित्तैर्न च बन्धुभिः। ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान्॥

इति स्मृतेरित्यर्थः ॥९५॥

तं पाणावित्यादेरर्थमाह—इत्युक्त्वेति। तौ हेत्यादि व्याकरोति—आजग्मतुरिति ॥९६॥

कार्यविवक्षयेत्येतदेव स्फुटयति—गार्ग्येति। अमीषामादित्यादीनामिति यावत् ॥९७॥

तमेतैरित्यादेरर्थमाह—देवतेति। तदा स्वापावस्थायामित्यर्थः ॥९८॥

स नोत्तस्थावित्यस्यार्थमाह—संबोध्यमानोऽपीति। बोधनार्थप्रयुक्तनामाश्रवणादापेषणाच्चोत्थानात्प्राणस्य व्याप्रियमाणस्यैवाभोक्तृत्वं सिध्यतीति फलितमाह—यत इति ॥९९॥

सुप्तपुरुषगतिमाक्षिपति—जाग्रदिति। संनिहितं हित्वा व्यवहितगतिरयुक्तेत्यर्थः। गार्ग्येष्टात्मनो विविच्य काश्येष्टमात्मानमुपदेष्टुं तद्गतिरित्याशङ्क्याऽऽह—स्पष्टतेति। तत्र सर्वस्याप्यादिष्टोऽर्थो विविच्य वक्तुं शक्यते न स्वापे सर्वव्यवहारलोपादतस्तद्गतिरनर्थिकेत्यर्थः ॥१००॥

जाग्रति सर्वपदार्थोपलम्भेऽपि क्षीरनीरवत्तेषां सांकर्यान्नेष्टात्मविवेकदृष्टिरित्युत्तरमाह—प्राणानामिति ॥१०१॥

भोक्तृत्वमेव पुंसोऽस्ति भोज्यत्वं न मनागपि । काश्याभिप्रायतोऽनस्य भोज्यतैव न भोक्तृता ।। २ ।।
संकीर्णत्वादशक्यः स्यात्प्रबोधे भोक्तृभोज्ययोः । कर्तुं विवेकोऽतो यातः सुप्तं पुरुषमादरात् ।। ३ ।।
तस्माद्यद्यपि सांनिध्यं प्राणादीनां प्रजागरे । संकीर्णत्वान्मिथस्तेषां दुःशकं तद्विवेचनम् ।। ४ ।।
आत्मनः प्रोषितत्वात्तु भोगोऽस्मै न प्रयुज्यते । उदासतेऽखिलाः सुप्ते देवताः करणैः सह ।। ५ ।।
जाग्रद्भोगप्रयुक्तस्य कर्मणः प्रक्षयात्तदा । शेरते करणान्यस्य सह भोक्त्राऽऽत्मनाऽऽत्मनि ।। ६ ।।
प्राण एकस्तु जागर्ति भोक्ता यो गार्ग्यसंमतः । प्राणेन रक्षन्निति च तथोदर्के प्रवक्ष्यते ।। ७ ।।
प्राणाग्नय इति स्पष्टं तथाऽनस्तमितश्रुतेः । अश्रान्तः प्राण एवातो जागर्त्यत्र दिवानिशम् ।। ८ ।।

प्राणस्याबोद्धृत्वनिरूपणम्

यथा जाग्रदवस्थायां भोक्ता प्राणः पुराऽभवत् । स्वप्नेऽप्येष तथैवाऽऽस्ते बोद्धा चेद्बुध्यतामयम् ।। ९ ।।
प्राणस्येन्दोस्तथा चापां त्र्यन्नात्माविष्कृतौ यतः । ऐक्यमुक्तमतः प्राणो बोध्यते चन्द्रनामभिः ।।१०।।
बृहन्नित्येवमादीनि सन्तु चेहोपलक्षणम् । अनुक्तदेवतानाम्नां सामर्थ्यात्तद्ग्रहोऽथवा ।।११।।
यदि भोक्ता भवेत्प्राणो जाग्रद्वच्छब्दमागतम् । अश्रोष्यत्स न चेद्भोक्ता नाश्रोष्यदुपलादिवत् ।।१२।।

कोऽसौ विवक्षितो विवेकस्तमाह—भोक्तृत्वमिति । साक्षित्वमिति यावत् । भोज्यत्वं साक्ष्यत्वम् । अनस्य प्राणस्येत्यर्थः ।।१०२।।

अस्त्वीदृग्विवेको जाग्रत्येव किमिति सुप्तपुरुषगतिर्नेत्याह—संकीर्णत्वादिति । विवक्षितकार्यगौरवद्योतनार्थमादरादित्युक्तम् ।।१०३।।

यत्तु स्पष्टेत्यादि तत्राऽऽह—तस्मादिति । यद्यपीत्यादि तच्छब्दार्थविवरणम् । तस्माद्युक्तं सुप्तपुरुषगमनमिति शेषः ।।१०४।।

स्वापेऽपि सांकर्यसाम्यात्कुतो विवेकधीस्तत्राऽऽह—आत्मन इति । भोक्तृकरणसहिताधिष्ठातृदेवतानां सुप्तावुपसंहारादसांकर्यात्तत्र विवेकसौकर्यमित्यर्थः ।।१०५।।

सुप्तावुक्तोपसंहारे हेतुमाह—जाग्रदिति । तदा सुप्तावित्येतत् । आत्मन्यज्ञाते परस्मिन्नित्यर्थः ।।१०६।।

गार्ग्येष्टात्मनोऽपि तत्रोपसंहारान्न भोगप्रसक्तिरित्याशङ्क्याऽऽह—प्राण इति । तत्र मानमाह—प्राणेनेति । प्राणेन रक्षन्नवरं कुलायमित्युत्तरत्र तस्य स्वापेऽनुपसंहारो वक्ष्यत इत्यर्थः ।।१०७।।

तत्र श्रुत्यन्तरमाह—प्राणेति । "प्राणाग्नय एवैतस्मिन्पुरे जाग्रती"ति श्रुतिरिममेवार्थमाहेत्यर्थः । "न व्यथते न रिष्यति सैषाऽनस्तमिता देवते"त्यादिवाक्यादपि स्वापे तस्य नोपसंहृतिरित्याह—तथेति । उक्तमानफलमुपसंहरति—अश्रान्त इति । अत्रेति देहोक्तिः ।।१०८

प्राणस्य सदा जागरे लब्धमर्थमाह—यथेति । स्वप्नेऽपीत्यपिना स्वापः समुच्चीयते ।।१०९।।

प्राणस्यासुप्तस्यैव स्वापे संबोधनशब्दाश्रवणान्न भोक्तृतेत्ययुक्तं प्राणचन्द्रमसोर्भेदात्तस्य चन्द्रनामभिः संबोधनादप्रतिबोधो नाचेतनत्वादित्याशङ्क्याऽऽह—प्राणस्येति । त्र्यन्नात्माविष्कृता"वथैतस्य प्राणस्याऽऽपः शरीरं ज्योतीरूपमसौ चन्द्र" इत्यादावित्यर्थः ।।११०।।

अथापि कुतश्चन्द्रनामभिरेव संबोधनं प्राणस्य सर्वात्मत्वादादित्यादिनामभिरपि तत्संभवादित्याशङ्क्याऽऽह—बृहन्नितीति । इहेति संबोधनवाक्योक्तिः । अतस्तैरपि संबोधितवानिति शेषः । यद्वा संबोध्यमानप्राणस्य सूत्रैक्यात्तत्सामर्थ्यादनुक्तसूत्रावयवादित्यादिनाम्नां चन्द्रनामवद्ग्रहात्तैरपि संबोधितवानित्याह—सामर्थ्यादिति ।।१११।।

चन्द्रनामभिः संबोधनं प्रसाध्य तच्छब्दाश्रवणात्तदभोक्तृत्वं यथा जाग्रदवस्थायामित्यत्रोक्तमुपसंहरति—यदीति । स चेन्नाश्रोष्यन्न भोक्ता स्यादिति योजना ।।११२।।

ननु सुप्तेऽपि पुंस्यस्मिन्बोधितः सन्स्वनामभिः । भोक्तैव भोत्स्यते शब्दं न त्वभोक्ता परो जडः ॥११३॥
नैवातोऽपि विवेकः स्यादुत्थितः कोऽनयोर्द्वयोः ॥११४॥
नैवं गार्ग्यपक्षस्य विशेषावधृतेः सदा । अजातशत्र्वभिप्रेतब्रह्मणः प्राक्प्रमाणतः ॥११५॥
योऽनस्तमित एकोऽत्र वागाद्यस्तमयेऽमृतः । इन्द्रोऽसपत्नोऽब्देहश्च नामरूपसमावृतः ॥११६॥
अध्यात्माद्यखिलं विश्वं संव्याप्य समवस्थितः । ओतं प्रोतं जगद्यस्मिन्नरनाभिनिदर्शनात् ॥११७॥
कुर्वाणस्तुमुलं शब्दं स्वव्यापारमशेषतः । कुर्वाण एव स्वप्नेऽपि प्राण आस्ते प्रबोधवत् ॥११८॥
न च भोक्त्रन्तरं प्राणाद्गार्ग्येणेहाभ्युपेयते । तत्काले भिन्नकाले वा प्राणादन्यस्य भोज्यतः ॥११९॥
तस्मादवश्यं बोद्धव्यं बोध्यं साक्षादुपस्थितम् । प्राणेन बोद्धृरूपत्वाद्दाह्यं दग्धा यथा दहेत् ॥१२०॥
न चासौ बोध्यमानोऽपि प्रत्यबुध्यत नाम तत् । प्राणोऽभोक्ता ततः सिद्धः स्वनामाप्रतिबोधनात् ॥१२१॥

प्राणस्य स्वनामाग्रहणे कारणविकल्पाः

स्वाख्याविशेषसंबन्धाग्रहणाच्चेन्न बुद्धवान् । अग्रहासंभवान्नैवं सर्वज्ञा देवता यतः ॥१२२॥

संबोधनशब्दाश्रुतेरभोक्तृतेत्यत्र शङ्कते—नन्विति । यद्यपि जागरं हित्वा सुप्ते पुंसि विवेकार्थं तयोरुपगतिरुचिता तत्र च भोक्तैव संबोधितः स्वनामभिस्तच्छब्दं श्रोष्यति नाभोक्ता तस्याचेतनत्वात्तथाऽपि नेष्टविवेकधीरित्यर्थः ॥११३॥

कथमिति तत्राऽऽह—नैवेति । दृष्टादपि विशेषान्न भोक्तृभोग्यविवेकः काश्यगार्ग्येष्टात्मनोरुत्थितिसंशयादित्यर्थः । संशयं निरस्यन्परिहरति—नैवमिति । गार्ग्येष्टप्राणस्य काश्येष्टात्मनः सकाशाद्यो विशेषः सदा व्यापृतत्वं तस्य प्रबोधात्प्रागपि प्रमितत्वात्प्राणोत्थाने शब्दाश्रवणायोगात्पाणिपेषानुपपत्तेः स न भोक्तेत्यर्थः ॥११४–११५॥

विशेषानवधारणमेव दर्शयति—योऽनस्तमित इति । अत्र सुप्ताविति यावत् । तत्र हेतुः—अमृत इति । विशेषान्तरमाह—इन्द्र इति । प्रतिपक्षाभावादैश्वर्यं काश्येष्टेऽपि स्यादित्याशङ्क्य विशेषान्तरमाह—अब्देहश्चेति । प्राणस्याऽऽपः शरीरमित्युक्तेस्तस्य तद्देहत्ववत्काश्याभीष्टात्मनो न तद्देहत्वं प्रमाणाभावादित्यर्थः । नामरूपाभ्यां सत्याभ्यां प्राणश्छन्नो नैवमात्मा सत्यस्य सत्यमितिश्रुतेरित्यपरं विशेषमाह—नामेति ॥११६॥

त्रिविधं जगद्व्यापित्वं प्राणस्योक्तं स्मारयति—अध्यात्मादीति । तत्र मानं सूचयति—ओतमिति । स विश्वं संव्याप्य स्थित इति संबन्धः ॥११७॥

यथोक्तं रूपमात्मन्यपि सुसंपादमिति ततो न विशेषाधिगतिरित्याशङ्क्य स स्वव्यापारारूढ इत्यादिभाष्यार्थमाह—कुर्वाण इति । जागरादपि स्वापे प्राणप्रयुक्तशब्दस्याऽऽधिक्यदर्शनात्तुमुलमिति विशेषणम् । न केवलं शब्दमेव कुरुते किंतु सर्वमेव व्यापारमित्याह—स्वव्यापारमिति । योऽनस्तमित इति यच्छब्देनोपक्रमादत्र तच्छब्दो द्रष्टव्यः । स्वप्नेऽपीत्यपिः स्वापसंग्रहार्थः ॥११८॥

प्राणस्योक्तविशेषणवतः स्वापेऽवस्थानेऽपि तस्य तदा भोगाभावस्तत्र भोक्त्रन्तरोपगमादित्याशङ्क्याऽऽह—न चेति । इहेति प्रकृतं स्वापग्रहणम् । तत्र हेतुः—तत्काल इति ॥११९॥

तस्यैव भोक्तृत्वे फलितमाह—तस्मादिति । उपस्थितः संनिकर्षस्तस्याप्रतिबन्धः साक्षादित्युक्तम् । प्राप्ते विषये शक्तस्य कार्यकरत्वे दृष्टान्तमाह—दाह्यमिति ॥१२०॥

अस्तु तस्य प्राप्तशब्दश्रुतिस्तत्राऽऽह—न चेति । परिशेषसिद्धमर्थमाह—प्राण इति । अभोक्तेति छेदः ॥१२१॥

तस्य स्वनामाग्रहणं संबन्धाग्रहकृतं नानात्मत्वकृतमित्याशङ्कते—स्वाख्येति । देवताया न संबन्धाग्रहः सर्वज्ञत्वादित्याह—अग्रहेति ॥१२२॥

त्वत्पक्षेऽप्यग्रहो दोषस्तुल्यश्चेदिति चोद्यते । नैवं कृत्स्नाभिमानित्वादेकदेशानहंकृतेः ।।१२३।।
अङ्गुल्याद्यभिधानोक्तौ न हि तद्वान्प्रबुध्यते । कृत्स्नदेहाभिमान्येवं नैकदेहाभिमानभुक् ।।१२४।।
प्राणस्य तु समाप्तत्वात्समस्तव्यस्तवस्तुषु । नाऽऽत्मवत्स्यादसंबोधस्तस्य सर्वाभिमानतः ।।१२५।।
बोधाबोधौ चितेर्न स्तः कूटस्थज्ञप्तिमात्रतः । परायत्तबोधो ना ह्यप्पात्रोत्थाद्रवेरिव ।।१२६।।

प्राणस्याभोक्तृत्वनिर्धारणम्

स्वसंज्ञयाऽप्यसंबोधो यथा दृष्टस्तदात्मनः । भोक्तृत्वे सत्यपि तथा प्राणेऽप्यप्रतिबोधनम् ।।१२७।।
सुप्तासुप्तत्वसंभेदविशेषन्यायसंभवात् । नैव सुप्तग्रहो युक्तो न त्वसुप्तस्य युज्यते ।।१२८।।
श्रोत्रादेर्गुणभूतत्वात्प्रधानं प्रति सर्वदा । तस्मिञ्जाग्रति जागर्ति सुप्ते स्वपिति तद्वशात् ।।१२९।।
नेन्द्रियाणां भवेत्स्वापो यदि प्राणप्रधानता । नामात्याः शेरते यस्माद्राज्ञि स्वामिनि जाग्रति ।।१३०।।
अप्रसिद्धार्थसंज्ञाभिरुक्तेश्चेदप्रबोधनम् । देवतात्मनिषेधार्थपरत्वात्तद्ग्रहोऽर्थवान् ।।१३१।।
प्राणस्याभोक्तृतासिद्धिः स्वनामाग्रहणादपि । देवताप्रतिषेधार्थं बोध्यते चन्द्रनामभिः ।।१३२।।

इन्द्रियाणामनात्मत्वम्

स्मृतिज्ञानेषणादीनां संधानानुपपत्तितः । करणानामभोक्तृत्वं देहांशानामिवेष्यते ।।१३३।।

संबोधननामाग्रहस्तत्कृतानात्मत्वदोषश्च तुल्यस्त्वदिष्टात्मनोऽपीति शङ्कते—त्वत्पक्षेऽपीति । काश्येष्टात्मनः सर्वस्मिन्कार्यकरणसमुदायेऽभिमानित्वात्तदेकदेशे प्राणमात्रे तदभावात्तन्नामाग्रहणं न त्वभोक्तृत्वादिति परिहरति—नैवमिति ।।१२३।।

एतदेव दृष्टान्तेन साधयति—अङ्गुल्यादीति । यथा हस्तः पादोऽङ्गुलिरित्यादिनामोक्तौ मैत्रो नोत्तिष्ठति सर्वदेहाभिमानित्वेन तन्मात्रानभिमानित्वादेवं काश्येष्टात्मनः सर्वकार्यकरणाभिमानित्वादङ्गुलिस्थानीयप्राणमात्रे तदभावात्तन्नामाग्रहणं न त्वनात्मत्वादित्यर्थः ।।१२४।।

चन्द्रस्यापि प्राणैकदेशत्वात्तन्नामभिः संबोधने कृत्स्नाभिमानी स नोत्तिष्ठत्यत्राप्यङ्गुल्यादिदृष्टान्तोपपत्तेरित्याशङ्क्याऽऽह—प्राणस्येति । गोत्ववत्तस्य सर्ववस्तुषु प्रत्येकं समाप्तेरहमिति सर्वत्राभिमानसंभवादात्मनो वैषम्याच्चन्द्रनामोक्तावप्यग्रहणमयुक्तमित्यर्थः ।।१२५।।

प्राणवच्चिदात्मनोऽपि पूर्णतया सर्वाभिमानसिद्धेर्बोधाबोधौ तुल्यावित्याशङ्क्याऽऽह—बोधेति । कूटस्थज्ञप्तिमात्रत्वे कथं ज्ञातृत्वं तत्राऽऽह—परेति । नेत्यमुख्यात्मोक्तिः । स चक्षुराद्यधीनबोधवत्त्वान्न मुख्यचिदात्मेत्यर्थः । तस्य ज्ञातृत्वप्रसिद्ध्यर्थो हिशब्दस्तुशब्दो वा । स एवाऽऽत्मा मुख्यो नान्योऽस्तीत्याशङ्क्याऽऽह—अप्पात्रेति । जलस्थादित्यान्मुख्यादित्यवच्चैतन्याभासात्कूटस्थबोधोऽन्योऽस्तीत्यर्थः ।।१२६।।

प्रासङ्गिकं त्यक्त्वा प्रकृते चोदयति—स्वसंज्ञयेति ।।१२७।।

काश्येष्टात्मनः सुप्तत्वादितरस्य चासुप्तत्वात्सम्यग्भेदरूपविशेषात्मकन्यायसंभवान्न सुप्तस्य संबोधननामग्रह इतरस्य तु तदग्रहो न युक्त इत्याह—सुप्तेति ।।१२८।।

प्राणस्यापि संहृतकरणत्वात्स्वनामाग्रहो नाभोक्तृत्वादित्याशङ्क्याऽऽह—श्रोत्रादेरिति । तद्वशाद्गुणस्य प्रधानानुवर्तित्वादित्यर्थः ।।१२९।।

प्राणस्य भोक्तृत्वे करणोपसंहारासंभवं दृष्टान्तेन स्फोरयति—नेत्यादिना ।।१३०।।

प्राणनामत्वेनाप्रसिद्धनामभिः संबोधनात्तदनुत्थानं नानात्मत्वादिति चोदयति—अप्रसिद्धेति । चन्द्रदेवताऽस्मिन्देहे भोक्त्री कर्त्री चाऽऽत्मेति गार्ग्याशयनिषेधाख्येऽर्थे देवतानामग्रहस्य तात्पर्यात्तद्ग्रहोऽर्थवानित्याह—देवतेति ।।१३१।।

केवलेत्यादिभाष्यं व्याचक्षाणो यथोक्तं विवृणोति—प्राणस्येति ।।१३२।।

तथाऽपीन्द्रियाणामात्मतेति केचित्तेषां प्रत्येकं वाऽऽत्मत्वं तत्समुदायस्य वेति विकल्प्याऽऽद्यं दूषयति—

अचैतन्यात्तथोक्तस्य कुतो भोक्तृत्वसंभवः । चिदन्यस्य च भोज्यत्वान्नान्यस्यातोऽस्ति भोक्तृता ।।३४।।
दण्डापूपिकनीत्यैव करणानामभोक्तृता । न च प्राणातिरेकेण देवताऽन्योपपद्यते ।।३५।।
ननु तद्व्यतिरेकेण प्रागादित्यादिरीरितः । देवताविषयो भेदः स कथं निनिवार्यते ।।३६।।
नैवं तस्य समस्तस्य प्राण एकत्वहेतुतः । अरनाभ्यादिदृष्टान्ताद्वायुप्राधान्यतस्तथा ।।३७।।

संघातस्य भोक्तृत्वशङ्का तन्निरासश्च

संघात एव भोक्ताऽस्तु तस्य प्रत्यक्षसंगतेः । न तु तद्व्यतिरिक्तस्य भोक्तृता मित्यसंभवात् ।।३८।।
नाचेतनस्य भोक्तृत्वं कथंचिदवकल्पते । चिदन्यस्य च भोग्यत्वात्कम्बलौदनतोयवत् ।।३९।।
न चापि चिद्विशिष्टत्वं प्रत्यक्षेणोपलभ्यते । चित्संबन्धोपलब्ध्यर्थं तज्ज्ञाता कः प्रकल्प्यते ।।४०।।
नेह चिद्व्यतिरेकेण स्वार्थं किंचिदपीष्यते । नापि स्वार्थातिरेकेण प्रमाणफलभाग्भवेत् ।।४१।।
न ह्यचित्कं प्रमेयं सच्चिन्मित्किंचिदपीक्ष्यते । न चानुभूतिः प्रात्यक्ष्यमन्यतोऽपेक्षते जडात् ।।४२।।

स्मृतीति । न तावदिन्द्रियाणां प्रत्येकं हस्तादिवद्भोक्तृत्वं स्मृत्यादीनां यो रूपमद्राक्षं स शब्दं शृणोमीत्यादिप्रतिसंधानस्य चानुपपत्तेरन्यस्यान्यदृष्टे तदयोगादित्यर्थः ।।१३३।।

द्वितीयं प्रत्याह—अचैतन्यादिति । यथा समुदायः समुदायिभ्यो भेदाभेदाभ्यामयुक्तस्तथा चैतन्याभिन्नत्वेनोक्तस्याचेतनस्य करणवर्गस्य न भोक्तृता जडत्वाद्घटवदित्यर्थः । पक्षद्वयनिरासे साधारणीमुपपत्तिमाह—चिदन्यस्येति । अतश्चितः सकाशादिति यावत् ।।१३४।।

करणानामभोक्तृत्वे हेत्वन्तरमाह—दण्डेति । दण्डेऽपूपलग्ने गृह्यमाणे बलादपूपोऽपि गृह्यते तया नीत्या प्राणस्याऽऽत्मत्वनिरासे तद्ग्रस्तानां करणानामप्यनात्मताऽर्थिकीत्यर्थः । प्राणकरणचन्द्रदेवतानामप्यभोक्तृत्वेऽपि देवतान्तरमत्र भोक्तृ स्यादित्याशङ्क्याऽऽह—न चेति । प्राणे सर्वदेवतान्तर्भावस्याभिधानस्य मानत्वादित्यर्थः ।।१३५।।

तत्रोपक्रमविरोधं शङ्कते—नन्विति ।।१३६।।

समाधत्ते—नैवमिति । प्राणे देवताभेदस्यैक्ये हेतुमाह—अरेति । आदिपदे "नैष उ ह्येव सर्वे देवाः" "कतम एको देव" इत्यादि गृह्यते । अग्न्याद्यपेक्षया वायुप्राधान्याच्च तदात्मप्राणातिरेकेण नास्ति देवतेत्याह—वाय्विति । तच्च संवर्गविद्यायां द्रष्टव्यम् ।।१३७।।

प्राणादीनामनात्मत्वमुक्त्वा स्थूलदेहस्य तद्वक्तुं पूर्वपक्षयति—संघात इति । भूतचतुष्टयसमाहारः स्थूलो देह इति यावत् । गौरोऽहं पश्यामीत्याद्यध्यक्षेण रूपादौ तस्य ज्ञातृत्वेन संबन्धदृष्टेरिति हेत्वर्थः । मित्यसंभवादित्यतिरिक्तात्मनोऽप्रत्यक्षत्वान्मान्तरस्य चानिष्टेरित्यर्थः ।।१३८।।

दूषयति—नेत्यादिना । अचेतनत्वं साधयति—चिदिति ।।१३९।।

किंच चिद्विशिष्टो देहो भोक्तेति ते स्थितिस्तद्वैशिष्ट्ये चाध्यक्षमन्यद्वा मानं ? नाऽऽद्यश्चितेस्तदयोग्यत्वात् । नेतरोऽनुपगमादित्याह—न चेति । चिद्विशिष्टस्य मेयत्वेऽपि ज्ञाता देहोऽन्यो वा ? नाऽऽद्यः एकस्य ज्ञातृज्ञेयत्वायोगान्नेतरो ज्ञात्रन्तरस्य तेऽनिष्टेरित्याह—चिदिति ।।१४०।।

तस्य न ज्ञात्रपेक्षा स्वतःसिद्धेरित्याशङ्क्याऽऽह—नेहेति । लोकशास्त्रयोरिहेति ग्रहणम् । किंच चितोऽन्यस्यास्वप्रकाशत्वाद्घटवन्नाऽऽत्मतेत्याह—नापीति । प्रमाणं प्रमितिकरणं तत्फलं ज्ञानं तदाश्रयो ज्ञाता स्वप्रकाशचितो भेदेन नास्तीत्यर्थः ।।१४१।।

किंच चित्संबन्धे ज्ञेये चितोऽपि ज्ञेयत्वात्तज्ज्ञात्रपेक्षायां चिदन्तरमचिदेव वा तत्स्यात् ? नाऽऽद्यश्चिद्भेदासिद्धेः यदि द्वितीयस्तत्राऽऽह—न हीति । चितं मिनोतीति चिन्मित्यज्जडं तन्मेयं यथा घटोऽतो न तच्चितोऽचितो वा ज्ञातृ स्यादित्यर्थः । किंच चित्संबन्धधीकाले चिद्ग्राहकमपि मानं वाच्यं तच्च जडमजडं वेति विकल्प्य दोषमाह—न चेति । जडादजडादिति वा छेदः स्वयमजडप्रकाशत्वादित्यर्थः ।।१४२।।

देहात्प्रत्यक्षनिष्पत्तौ न च प्रत्यक्षमिष्यते । लिङ्गस्य चाप्रमाणत्वात्कुतः प्रत्यक्षमानिता ॥४३॥
तथाऽर्थान्तरसंबन्धे प्रत्यक्षे देहनिश्रिते । अनुसंधानसंसिद्धौ न किंचिन्मानमिष्यते ॥४४॥
वागभिव्याहृतिश्चेयं लिङ्गाप्रामाण्यवादिनः । अप्रात्यक्ष्यात्परज्ञप्तिसंगतेः स्यादनर्थिका ॥४५॥
स्वात्मदृष्ट्यनुरोधेऽपि मौढ्यमेव प्रसज्यते । व्युत्पत्तेः साधुलोकस्य न कश्चिदपि दित्सति ॥४६॥
अधर्मादिभयाभावाद्धन्युरेनमशङ्किताः । आदद्युश्च बलाद्वित्तमेतद्व्युत्पत्तितः फलम् ॥४७॥

देहस्यानात्मत्वे हेत्वन्तरम्

आपेषणे विशेषस्य दृष्टत्वाद्देहसंहतिः । न भोक्त्री सुखदुःखादिफलानां स्यात्कदाचन ॥४८॥
यदि संघातमात्रस्य भोक्तृत्वमिह कल्प्यते । संघातस्याविशिष्टत्वान्नातिशीतिर्भवेत्सदा ॥४९॥
ईषत्संस्पृष्टमात्रस्य बलाच्चाऽऽपेषणात्तथा । देहादिभिन्नजातीयो भोक्ता यस्य च वादिनः ॥५०॥

किंच चिद्विशिष्टदेहकर्तृकमध्यक्षमेकमेव मानमिति ते मतं तत्राध्यक्षमन्यद्वा मानं ? नाऽऽद्यस्तस्य रूपादेस्तदाधाराच्चेतराविषयत्वादित्याह—देहादिति । द्वितीयं दूषयति—लिङ्गस्येति ॥१४३॥

किंच ते मयेदं विदितमित्यनुसंधानासिद्धिः साधकाभावादित्याह—तथेति । यथा देहस्य चिद्वैशिष्ट्ये प्रत्यक्षस्य तत्कर्तृकत्वे तस्यैव मानत्वे च मानाभावस्तथाऽर्थान्तरेण शब्दादिना विषयविषयिभावसंबन्धवति प्रत्यक्षे देहाश्रिते सति मयैवं विदितमित्यादि यदनुसंधानं तत्सिद्धौ नाध्यक्षं मानं तस्य शब्दादिविषयत्वान्नान्यदनङ्गीकारादतो मानाभावादनुसंधानासिद्धेस्तन्निबन्धनस्थायिवस्त्वसिद्धिरित्यर्थः ॥१४४॥

यत्त्वध्यक्षमेकमेव मानं तन्न,अनुमानप्रामाण्यस्याऽऽवश्यकत्वादित्याह—वागिति । गामानयेत्यादिवाक्योक्तेस्ते वैयर्थ्यं; सा हि स्वार्था परार्था वा ? नाऽऽद्यः स्वोक्त्या स्वस्यापूर्वानधिगतेर्नेतरः, स्ववाक्यात्परस्य तदर्थज्ञानाश्रयताया अप्रत्यक्षत्वादन्योक्त्या मम ज्ञानवत्मदुक्त्या तस्यापि तद्भविष्यतीत्यनुमानस्याऽऽवश्यकत्वादन्यथोक्तिवैयर्थ्यं स्यादित्यर्थः ॥१४५॥

किंच ते स्वशास्त्रप्रणयनमेवायुक्तमनर्थकरत्वादित्याह—स्वात्मेति । स्वात्मनो दृष्टिर्दर्शनं शास्त्रं तस्यानुसारेऽपि मौढ्यमेव स्यात् तदर्थो हि न स्वर्गापवर्गौ नास्त्यात्मा परलोकीत्यादिस्तज्ज्ञानान्न कश्चित्किंचिदपि साधवे दातुमिच्छति । किंतु तस्य स्वमादातुमतस्त्वच्छास्त्रज्ञो यागादिबहिर्मुखो नास्तिको नारकी स्यादित्यर्थः ॥१४६॥

किंच त्वच्छास्त्रज्ञानादधर्मादिनिमित्तभयाभावात्परहिंसाद्यर्थं शास्त्रं प्रणयन्नुन्मत्तः स्यादित्याह—अधर्मादीति । एनं साधुलोकमिति यावत् । आदद्युरादद्दीरन्नित्यर्थः । न च धर्माधर्मयोः स्वर्गनरकयोश्चासत्त्वपरं शास्त्रं स्वभावप्रयुक्तं प्रतिनियतात्मविषयं नोन्मत्तोक्तितुल्यमिति युक्तं, परिदृश्यमानफलवैचित्र्यस्य हेतुवैचित्र्यापेक्षत्वात्स्वभावतस्तदुपपत्तेर्दुर्वचत्वात् नहि सुखादिवैचित्र्यादेव तद्वैचित्र्यं कर्मकर्तृत्वस्य भेदापेक्षत्वात् निर्निमित्तं तद्भावश्चेदनुभवो विरुध्येत्तथाच यथोक्तं शास्त्रं प्रणयन्नुन्मत्तपक्षे निक्षिप्तः सन्नुपेक्ष्यः स्यादिति भावः ॥१४७॥

देहस्यानात्मत्वे हेत्वन्तरमाह—आपेषण इति । आदिपदं तदवान्तरभेदसंग्रहार्थम् । स्थूलदेहाख्या भूतचतुष्टयसंहतिरिति यावत् ॥१४८॥

उक्तं व्यतिरेकद्वारा व्यनक्ति—यदीति । इहेति भोज्योक्तिः । संघातस्य भोक्तृत्वे तस्य पेषणापेषणयोरविशेषान्नोत्थाने विशेषः स्यान्न च तस्मिन्नपि ताभ्यां विशेषस्तदभावेऽपि प्रागुत्थाने हेत्वदृष्टेर्न च पेषणजन्यविशेषस्यैवोत्थापकत्वं नियमेन प्रागुत्थानप्राप्तेरिति भावः ॥१४९॥

सदा संघातस्याविशिष्टत्वं स्पष्टयति—ईषदिति । यथा मृदुस्पर्शस्पृष्टमात्रस्य संघातस्याविशेषस्तथा बलादापेषणेऽपि तस्याविशेषात्प्रबोधे नातिशयः स्यादित्यर्थः । त्वत्पक्षेऽपि कथं पेषणापेषणयोरुत्थाने विशेष इत्या-

---

१. कर्मकर्तृत्वस्य कर्मत्वकर्तृत्वयोः भेदापेक्षत्वात् यत् कर्म तत् न तद्विषये कर्तृ स्वभावतत्वे स्वयमेव स्वहेतुरित्यापन्नं तन्न युक्तमित्यर्थः ।

धर्मादिहेतुसंबन्धबहुत्वात्स्यात्समञ्जसम् । पेषणापेषणकृतवेदनायां भवेद्भिदा ॥५१॥
सुखदुःखादिहेतूनामुत्तमाधममध्यतः । तत्प्रबोधविशेषोऽयं युक्त एव भवेत्तदा ॥५२॥
अस्ति चायं विशेषोऽत्र यत्संस्पर्शनमात्रतः । अबुध्यमानः संसुप्त आपिष्याऽऽपिष्य बोधितः ॥५३॥
अत आपेषणाद्योऽसावुत्थितः करणैः सह । राजेव सचिवैः सार्धं स भोक्तेहेति गम्यताम् ॥५४॥
मृतकल्पमिमं देहं स्व[1]चित्ताऽऽवेशयन्निव । ज्वलन्निव समुत्तस्थौ यः स भोक्तेति गम्यताम् ॥५५॥
क्रोधहर्षभयोद्वेगज्ञानधर्मैर्विशेषयन् । शरीरं यः समुत्तस्थौ स भोक्तेत्यवसीयताम् ॥५६॥

प्राणस्यानात्मत्वे हेत्वन्तरम्

अपि प्राणस्य पारार्थ्यं संहतत्वाद्गृहादिवत् । ततश्च भोग्यरूपस्य भोक्तृत्वं नोपपद्यते ॥५७॥
देहस्यान्तर्गतः प्राणः स्थूणावद्देहभृत्सदा । संहन्यते शरीरेण यथा वायुस्तथैव सः ॥५८॥
यत एवमतः प्राणो गृहादिवदिहेष्यते । देहाच्च देहधर्मेभ्यो विधर्मात्माऽव[2]भुक्ततः ॥५९॥
स्वात्मांशांशिसजातीयविविक्तफलसद्मवत् । संहतत्वात्तथा प्राणोऽसंहतात्मोपभोगकृत् ॥६०॥

आत्मनःशेषित्वेन संहतत्वशंकापरिहारः

स्वजन्मोपचयग्लानिनाशाख्याकृतिजन्मदि— । ग्धर्मानपेक्षसंलब्धसत्त्वादिस्वार्थरूपकः ॥६१॥

शङ्क्याऽऽह—देहादीति । आदिपदं तदवान्तरभेदसंग्रहार्थम् । धर्मादिहेतूनामात्मसंबन्धस्य तत्कृतदेहसंबन्धस्य च बहुत्वात्तद्धेतुकमुत्थानादि मत्पक्षे युक्तमित्यर्थः । उत्थानादेः सामञ्जस्यमेव साधयति—पेषणेति ॥१५०–१५१॥

यथोक्तवेदनायाः समुत्थानहेतोर्विशेषे हेतुमाह—सुखेति । सुखं दुःखं संबुद्धिरित्यादीनां समुत्थानहेतूनां हेतवो दृष्टादृष्टरूपा धर्मादयस्तत्तारतम्याद्वेदनाभिदेत्यर्थः । तद्भेदे फलितमाह—तत्प्रबोधेति । संघातातिरिक्तमात्मानं तच्छब्दोऽधिकरोति । तदा प्रागुक्तनीत्या प्रबोधहेतुविशेषे सतीति यावत् ॥१५२॥

स्वपक्षे प्रबोधे विशेषसंभावनामुक्त्वा निश्चयं दर्शयति—अस्ति चेति । सुप्तोत्थानमत्रेत्युक्तम् ॥१५३॥

विशेषफलमाह—अत इति । इहेति देहोक्तिः ॥१५४॥

ज्वलन्निवेत्यादिभाष्यार्थमाह—मृतेति । न हि देहे चिद्व्याप्तिमन्तरेण वस्तुतश्चिदावेशोऽस्तीति वक्तुमिवेत्युक्तम् । न हि ज्वलनमग्नेरिव चिदात्मनोऽस्ति किंतु तथा स्फुरणं गृहीत्वा ज्वलन्निवेत्युक्तम् ॥१५५॥

पिण्डं चेत्यादि व्याचष्टे—क्रोधेति ॥१५६॥

देहादेरनात्मत्वमुक्त्वा प्राणस्यानात्मत्वे हेत्वन्तरमाह—अपीति । पारार्थ्यफलमाह—ततश्चेति ॥१५७॥

कथं संहतत्वं तदाह—देहस्येति । वायुर्घ्राणप्राणो वा मुख्यो वा ॥१५८॥

संहतत्वं परामृश्य पारार्थ्यं फलितमाह—यत इति । इहेति देहोक्तिः । इष्यते परार्थ इति शेषः । तत्पारार्थ्ये किमायातं तदाह—देहाच्चेति । देहादेर्भोज्यत्वादात्मनश्च भोक्तृत्वाद्विवेक इत्यर्थः । वैधर्म्ये हेतुः—अवभुगिति । ततःशब्दः संहतत्वफलपरामर्शी ॥१५९॥

प्राणस्य गृहादिवत्पारार्थ्येऽपि संहतशेषित्वं गृहादेस्तद्दृष्टेरित्याशङ्क्याऽऽह—स्वात्मेति । स्वात्मनो गृहादेरंशः स्तम्भादिरंशी स्वयमेव गृहादिः सजातीयमन्यद्गृहादि तेभ्यो विविक्तस्यासंहतस्य भोग्यं गृहादि तथा प्राणोऽपि संहतत्वात्स्वासंहतस्य भोग्य इत्यर्थः ॥१६०॥

तथाऽपि चैत्रवदात्मनोऽपि शेषित्वेन संहतत्वमाशङ्क्याऽऽह—स्वजन्मेति । स्वस्य गृहस्य जन्म चोपचयश्च ग्लानिश्च नाशश्चाऽऽख्या चाऽऽकृतिश्च तस्या जन्म च दिक्चेत्येते धर्मास्ताननपेक्ष्यैव लब्धं सत्त्वं स्फुरणं च येन स

१. स्वचितावेशयन् = स्वात्मकचैतन्येनावेशयन् । स्वचित्तावेशयन्-इति मूलपाठः तत्पक्षे स्वगता या चित्ता चैतन्यं तेनावेशयन् इत्यर्थः ।
२. अवभुक् ततः शरीरेण संहतत्वात्-अवभुक् अवमतं भुङ्क्ते ।

तद्गोचरैकसंद्रष्टृविज्ञात्रर्थं समीक्ष्य हि । प्राणस्य तद्गुणानां च तथार्थत्वं प्रतीयताम् ॥६२॥

अद्वितीये अन्वयव्यतिरेकाभावशंका

ननु वेदान्तसिद्धान्ते न वस्त्वन्तरमिष्यते । सांख्यराद्धान्तवत्किंचित्प्रत्यगात्मैकवस्तुनः ॥६३॥

ऐकात्म्याविद्यया सर्वं प्रतीचि परिकल्पितम् । प्राणाद्यनात्मजातं यद्रूपं नाम च कर्म च ॥६४॥

कल्पिताकल्पितं सर्वं यदाऽऽत्मैवाभ्युपेयते । अन्वयव्यतिरेकोक्तिस्तदैक्यान्नेह युज्यते ॥६५॥

नान्वयो व्यतिरेको वा कल्पितस्यानृतत्वतः । अकल्पितस्य चैकत्वान्नितरां न प्रसिध्यति ॥६६॥

पुंव्युत्पत्तिप्रधानत्वादन्वयादेरदोषता । न त्वन्वयादिनैवेह वस्तुतत्त्वस्य संस्थितिः ॥६७॥

अविद्याकल्पितेऽप्यस्मिन्नात्मप्रत्ययमानभाक् । भोक्तेह गम्यते लोके न त्वनात्ममितिप्रमः[1] ॥६८॥

मिथ्याभूतमन्वयादि त्वमर्थशोधनाय अपेक्ष्यते

अतोऽनूद्य यथासिद्धमन्वयव्यतिरेकतः । भोक्तृभोग्यविवेकेन श्रुत्यैकात्म्यं प्रबोध्यते ॥६९॥

स्वतन्त्रस्वभावः स च तेषु गृहतद्धर्मेषु गोचरेष्वेको निरपेक्षो द्रष्टा च विज्ञाता च तदर्थं वेश्म दृष्ट्वा प्राणतद्धर्मानपेक्षलब्धसत्तास्फुरणो यस्तस्यैव द्रष्टृविज्ञात्रादिलक्षणस्तदर्थत्वं प्राणादेर्ज्ञेयमित्यर्थः। हिशब्दो हेतोरिव दृष्टान्तस्यापि साधकत्वद्योतनार्थः। विमतं स्वस्वधर्मापरामृष्टार्थशेषं संहतत्वात्संमतवदित्यनुमानादात्मनोऽर्थान्तरं प्राणादि सिध्यतीति भावः ॥१६१–१६२॥

तस्याऽऽत्मनो भेदकावन्वयव्यतिरेकावाक्षेप्तुमाक्षेप्ता सिद्धान्तस्वरूपमाह—नन्विति। वैधर्म्यदृष्टान्तमाह—सांख्येति ॥१६३॥

न वस्त्वन्तराभावः सत्त्वात्प्राणादेरित्याशङ्क्याऽऽह—ऐकात्म्येति ॥१६४॥

कल्पिताकल्पितभावेन वस्तुभेदशङ्कां निराकुर्वन्फलितमाह—कल्पितेति। कल्पितत्वेन लोकसिद्धं स्वाप्नाद्यकल्पितत्वेनेष्टमाकाशादि तत्सर्वं जाड्यादिना स्वतोऽसत्त्वादात्मैव यदेष्टं तदा प्रतीच्यैकरस्याद्भेदापेक्षयाऽन्वयाद्यसिद्धिरित्यर्थः ॥१६५॥

अकल्पितवस्त्वन्तराभावेऽपि कल्पितं तदस्तीत्याशङ्क्यान्वयादि कल्पितमकल्पितं वा कल्पिताकल्पितं वाऽऽश्रयतीति विकल्प्याऽऽद्यं दूषयति—नेत्यादिना। द्वितीयं प्रत्याह—अकल्पितस्येति। अन्वयादेर्द्वयापेक्षत्वात्तस्य चाद्वयत्वादविषयत्वाच्च तत्र तदसिद्धिरित्यर्थः। चकारस्तृतीयनिरासार्थः। कल्पिताकल्पितविषयत्वे द्वैतापातान्न तत्रान्वयादिरित्यर्थः ॥१६६॥

अन्वयाद्यङ्गीकारे वास्तवो भेदोऽङ्गीकर्तव्य इति प्राप्ते प्रत्याह—पुमिति। आत्मेत्युपक्रम्य कतम आत्मेत्यादिनोक्तवक्ष्यमाणान्वयादेरवास्तवं भेदमादायाऽऽत्मज्ञानार्थत्वान्नाद्वैतहानिरित्यर्थः। अन्वयादेर्ज्ञानार्थत्वे तेनैव तत्सिद्धेर्व्यर्थं वाक्यमित्याशङ्क्याऽऽह—न त्विति। इहेति स्वपक्षोक्तिः। संस्थितिर्निश्चितिरिति यावत्। अन्वयादेरपरमार्थत्वादिति भावः ॥१६७॥

वाक्यादात्मधीश्चेत्तच्छ्रवणात्प्रागात्मादृष्टेर्नान्वयादि सुकरं दृष्टविषयत्वात्तस्येत्याशङ्क्याऽऽह—अविद्येति। अस्मिन्ननात्मवर्गे स्वाविद्याकल्पिते सतीति यावत्। इह वाक्यश्रवणात्प्रागित्यर्थः। प्रागप्यात्मा दृष्टः स्वप्रकाशत्वादित्ययुक्तमर्थसिद्ध्यधीनत्वात्तत्सिद्धेरित्याशङ्क्याऽऽह—न त्विति। अनात्मत्वप्रसङ्गादित्यर्थः ॥१६८॥

स्वतःसिद्धश्चेदात्मा किमन्वयादिना वाक्येन वेत्याशङ्क्याऽऽह—अत इति। यस्मादात्मनि स्वतःसिद्धेऽन्वयादिस्तस्मात्तद्वशाद्भोक्त्रादिविभागाख्यत्वमर्थशोधनेन ज्ञातं तमनतिक्रम्यानूद्य तस्य ब्रह्मैक्यं वाक्येन बोध्यते तथाच त्वमर्थशोधनार्थमन्वयादि। वाक्यं चैक्यज्ञानार्थमित्युभयार्थवत्तेत्यर्थः ॥१६९॥

---

१. अनात्ममितिप्रमः। अनात्ममितिः घटादिज्ञानं प्रमा यस्य विषये इति विग्रहः तेनानात्मविषयकज्ञानान्नात्मसिद्धिः अपि तु स्वप्रकाशत्वादेव।

चिदन्वयो हि सर्वत्र तत्कार्येषु समीक्ष्यते । व्यतिरेकोऽप्यपह्नुत्या कार्यस्येह प्रसिध्यति ॥७०॥
ऐकात्म्यसिद्धौ दोषः स्यात्तत्सिद्धिश्च न वास्तवी । प्रामाणिकी हि तत्सिद्धिरतो नासौ विरुध्यते ॥७१॥
न चापि मानव्यापारव्यपेक्षैकात्म्यनिश्चितौ । तत्फलस्य समाप्तत्वादपेक्षा निष्फला यतः ॥७२॥
यावत्त्वागमतः साक्षान्न वेत्त्यात्मानमद्वयम् । अन्वयाद्यात्मबोधार्थं तावत्तत्केन वार्यते ॥७३॥
अज्ञानं च तदुत्थं च ह्यात्मैवाज्ञाततत्त्वकः । तत्तत्त्वबोधात्तद्बाधः सर्परज्ज्वादिबाधवत् ॥७४॥
क्लृप्तानाम्[1]अपि रज्ज्वादौ कल्पितान्तरसंश्रयात् । क्लृप्तान्तरापनुत्तिः स्याद्यथा तद्वदिहाऽऽत्मनि ॥७५॥
प्रत्यङ्मानैकमेयोऽतो भोक्ता भोग्यं ततःपरम् । भोग्यानां व्यभिचारेऽपि भोक्तैकोऽव्यभिचारवान् ॥७६॥

तं पाणिनापेषं इत्यादेः विवरणम्

बृहन्नित्यादिभिः प्राणो बोध्यमानोऽपि यत्नतः । नैवान्वबुध्यत यदा चक्रे यत्नान्तरं तदा ॥७७॥
पाणिनाऽऽपिष्य वहुशः सुप्तं काश्योऽप्यबोधयत् । आपेषोद्भूतसंक्षोभस्ततोऽसौ प्रत्यबुध्यत ॥७८॥
कारणानामिदं वृत्तं यन्निमित्तान्तराश्रयात् । स्वात्मकार्यसमुद्भूतिरम्बरादभ्रभूतिवत् ॥७९॥

तर्हि कीदृशावन्वयव्यतिरेकौ याभ्यां त्वमर्थः शोध्यते तत्राऽऽह—चिदिति । साभासात्माविद्याकार्येषु सर्वेषु चितोऽनुगमो लक्ष्यते तस्य चाविद्यातज्जस्य प्रतीच्यपन्हुत्या व्यतिरेकोऽपि सिध्यत्यतोऽव्यभिचार्यात्मा सर्वसाक्ष्यनात्मा तु व्यभिचारी साक्ष्यश्चेत्येवंरूपौ तावित्यर्थः । लोके वेदे चोक्तान्वयव्यतिरेकयोरस्ति प्रसिद्धिरिति हिशब्दार्थः । इहेत्यविद्यातत्कार्यापह्नवाधिकरणस्य प्रतीचो वचनम् ॥१७०॥

यत्त्वन्वयव्यतिरेकोक्तिस्तदैक्यादित्यादि तत्रैक्ये ज्ञातेऽज्ञाते वा तदसंभव इति विकल्प्याऽऽद्यमङ्गीकरोति—ऐकात्म्येति । दोषोऽन्वयाद्यसंभवः । तर्हि स्वप्रकाशतया सदाज्ञातत्वादैक्यस्य न जात्वन्वयादिः स्यादित्याशङ्क्याऽऽह—तत्सिद्धिश्चेति । वस्तुनः स्वरूपभूता सिद्धिर्नान्वयादिविरोधिनी चेद्विरोध्यभावात्सदा तत्स्यादित्याशङ्क्याऽऽह—प्रामाणिकीति । अन्वयादिविरोधिनीति शेषः । प्रमाणज्ञानस्य तद्विरोधित्वप्रसिद्ध्यर्थो हिशब्दः । तस्य तद्विरोधित्वान्न स्वरूपसिद्धिस्तेन विरुध्यते साधकत्वादिति फलितमाह—अत इति ॥१७१॥

प्रामाणिको तत्सिद्धिरपि न तद्विरोधिनी प्रमिते घटादौ पुनर्मानापेक्षावदैक्येपि मितेऽन्वयाद्यपेक्षासंभवादित्याशङ्क्याऽऽह—न चेति । तस्य वाक्यान्निश्चितौ तत्फलस्य सहेतुबन्धध्वस्तेः सिद्धत्वादैक्यज्ञानादनन्तरमन्वयाद्यपेक्षाया वैफल्यान्मानसहकारिणि तस्मिन्नापेक्षा तस्मात्तद्विरोधिन्येव प्रामाणिकी धीरित्यर्थः ॥१७२॥

ऐक्ये ज्ञातेऽन्वयाद्ययोगमङ्गीकृत्य द्वितीयं प्रत्याह—यावत्त्विति ॥१७३॥

आत्मधीहेतुमानसहायत्वेनान्वयाद्युपगमश्चेत्तदपेक्षितद्वैतमपि स्यादित्याशङ्क्याऽऽह—अज्ञानं चेति । तस्य यथोक्तात्मतायाः श्रुतिप्रसिद्ध्यर्थो हिशब्दः । किंच सर्पादि रज्ज्वादिबोधाद्बाधवदात्मज्ञानात्सर्वद्वैतबाधोपगमान्न वास्तवद्वैतप्रसक्तिरित्याह—तत्तत्त्वेति ॥१७४॥

प्रत्यग्ज्ञानमपि बाध्यमबाध्यं वा ? आद्ये बाधकत्वायोगो द्वितीये सर्वद्वैतबाधासिद्धिरित्याशङ्क्याऽऽह—क्लृप्तानामिति । निर्धारणार्था षष्ठी ॥१७५॥

प्राक्प्रमाणप्रवृत्तेः कल्पितं भेदमादायोक्तान्वयादिफलमुपसंहरति—प्रत्यगिति । स्वप्रकाशचिद्धातुरेवाऽऽत्मा प्राणादिर्दृश्यत्वादनात्मेति फलमुपसंहृत्यान्वयाद्युपसंहरति—भोग्यानामिति ॥१७६॥

अन्वयादिना देहद्वयातिरिक्तमात्मानमुपपाद्य तमित्यादिश्रुतिव्याख्यानमनुवदति—बृहन्नित्यादिभिरिति । पुन पुनः संबोधनं यत्नः । तं पाणिनेत्याद्यवतार्य व्याचष्टे—चक्र इति । स हेत्यादेरर्थमनुवदति—आपेषेति ॥१७७–१७८॥

उत्थानकर्तृत्वादात्मनः स्वातन्त्र्यात्कर्तुस्तल्लक्षणत्वात्किं[2] पेषणादिनेत्याशङ्क्याऽऽह—कारणानामिति ।

१. क्लृप्तानां=अध्यस्तानां कल्पितान्तरं पूर्वाध्यस्तसर्पापेक्षयाऽन्यत् दण्डादिकं तेन बाधवदित्यर्थः ।
२. कर्तुः तल्लक्षणत्वात् "स्वतन्त्रः कर्ते"ति सूत्रात् स्वातन्त्र्यं कर्तृत्वलक्षणम् ।

इत्यादिशतशो वाक्यैः श्रुतिस्मृत्युदितैरमी । सर्वे पक्षा विरुध्यन्ते त्याज्यास्तेऽतः प्रयत्नतः ॥८५॥
संसा[1]रानुपपत्तिश्च कूटस्थात्मैकदेशतः । स्वकर्मफलदेशेषु क्षेत्रज्ञस्य प्रसज्यते ॥८६॥
वियुक्तस्याऽऽत्मनश्चेत्स्याद्विस्फुलिङ्गादिवद्गतिः । तथाऽपि क्षतसंप्राप्तिरव्रणस्य प्रसज्यते ॥८७॥
वारिणो मत्स्यसंचारे छिद्र[2]संग्रथने यथा । भ्रमत्सु तद्वज्जीवेषु प्राप्नुतः परमात्मनः ॥८८॥
तथाचाव्रणवाक्येन विरोधोऽपि प्रसज्यते । स्वकारणातिरेकेण वृत्तिः कार्यस्य नान्यतः ॥८९॥

संसारो जीवे भ्रमसिद्ध इति स्वाभिप्रायः

प[3]रमात्मैकवृत्तित्वात्कुतो जीवस्य संसृतिः । स्वप्नसंचारवत्तस्माज्जीवसंसार इष्यते ॥९०॥
स्थास्नु[4]ष्वपि महद्दुःखं कण्टकादिषु देहिनाम् । परात्मनो महद्दुःखं जीवसंचरणेऽप्यतः ॥९१॥
अदोषो विस्फुलिङ्गादिदृष्टान्तादिति चेन्मतम् । नैवं यथास्थितार्थानां शास्त्रस्य ज्ञापकत्वतः ॥९२॥
अज्ञातज्ञापकं शास्त्रमेवंस्वाभाव्यतो मितेः । पदार्थान्नान्यथा कर्तुं प्रवृत्तं माननिश्चितान् ॥९३॥
मूर्तामूर्तादयो यद्वत्पदार्था माननिश्चिताः । यथादृष्टानुरोध्येव दृष्टान्तैर्वस्तु बोध्यते ॥९४॥

उक्तवाक्यलब्धमर्थमाह—इत्यादीति । आदिशब्दे"नाऽऽकाशवत्सर्वगतश्च नित्यः" "स वा एष महानज आत्मे"त्यादि गृह्यते "कूटस्थमचलं ध्रुव""मविकार्योऽयमुच्यत" इत्यादिस्मृतिवाक्यं च । विरोधफलमाह—त्याज्या इति ॥३८५॥

जीवस्य परैकदेशत्वे दोषान्तरमाह—संसारेति । तस्य स्वर्गादिषु गत्यभावापाते हेतुमाह—कूटस्थेति । अन्यथा परस्यापि गतिः स्यान्न हि पटावयवेषु चलत्सु पटो न चलतीति भावः ॥४८६॥

दृष्टान्तेन शङ्कते—वियुक्तस्येति । परस्मादात्मनोऽग्नेरिव विस्फुलिङ्गः स्फुटितोंऽशो जीवस्तस्य गतिरित्ये-तद्दूषयति—तथाऽपीति ॥४८७॥

तत्रैव दोषान्तरं सदृष्टान्तमाह—वारिण इति ॥४८८॥

परस्य छिद्रग्रथनयोः स्वीकारे फलितं दोषमाह—तथा चेति । न च स्फुटनमपि परस्मिन्युक्तं प्रागुक्त-श्रुतिस्मृतिविरोधादित्यपेरर्थः जीवस्य संसरणमङ्गीकृत्योक्तं वस्तुतस्तु नास्तीत्याह—स्वकारणेति ॥४८९॥

उक्तं सामान्यन्यायं प्रकृते योजयति—परमेति । कथं तर्हि तस्य संसारधीर्भ्रान्त्येत्याह—स्वप्नेति ॥४९०॥

तत्संसारो वस्तुतस्त्वया नेष्टश्चेन्मयाऽपि भ्रान्त्या नोपेतस्तेन स्थास्नवस्ते ब्रह्मवदित्याशङ्क्याऽऽह—स्थास्नुष्विति ॥४९१॥

विस्फुलिङ्गादिदृष्टान्तश्रुत्या परस्य परिणामित्वादिकल्पना जीवस्य परिणामत्वादिकल्पना तच्छास्त्र-सिद्धेर्नावद्यं तन्नित्यत्वादेरपि तत्सिद्धेरिति शङ्कते—अदोष इति । न शास्त्रात्तयोरंशांशित्वादिकल्पनेत्याह—नैवमिति । तत्र हेतुमाह—यथास्थितेति ॥४९२॥

तस्य स्मृत्यादेर्विशेषमाह—अज्ञातेति । प्रत्यक्षादेरज्ञातज्ञापकत्वदृष्टेरिति हेतुमाह—एवमिति । तस्य चक्षुरादिवत्कारकत्वमाशङ्क्याऽऽह—पदार्थानिति ॥४९३॥

तर्हि ज्ञापकत्वस्याप्यसंभवात्किमर्थं शास्त्रमित्याशङ्क्याऽऽह—मूर्तेति ॥४९४॥

---

१. संसारानुपपत्तिः संसरणानुपपत्तिः संसरणं गमनम् ।

२. छिद्रं मत्स्यगमनकाले जले दृश्यमानं ग्रथनं मत्स्यगमनोत्तरं जलभागयोरेकीभावः ।

३. परमात्मेति—संसरणस्येत्यादिः पूरणीयः । जीवसंचार इतिपाठः ।

४. स्थास्नवस्ते जीवाः । कण्टकादिवेधे सतीत्यर्थः । तर्हि जीवानां ब्रह्मवदविक्रियत्वं किं न स्यात् इत्यत आह स्थास्नुष्विति—( न्या० ) परमात्मन इति तस्य जीवाभेदात् जीवसंचरणे परात्मनः महद्दुःखमित्यर्थः । अतः दुःखिजीवाभेदात् ।

### शास्त्रस्य मानान्तरासिद्धार्थत्वनिरूपणम्

एवं प्रवृत्तं सर्वस्य शास्त्रं दृष्टान्तपूर्वकम् । न प्रमान्तरसंसिद्धविपरीतात्मबोधनम् ॥९५॥
अतिशीतोऽग्निरित्यत्र दृष्टान्तानां शतैरपि । प्रमान्तरविरुद्धत्वान्नेन्द्रेणाप्यधिगम्यते ॥९६॥
[1]मानान्तरविरुद्धं च न च मानं सदिष्यते । मानान्तरेणासंव्याप्ते मेये स्यान्मानता यतः ॥९७॥
तथा पदतदर्थांश्च लिङ्गप्रत्यक्षगोचरान् । [2]नानादृत्याऽऽगमेनार्थमज्ञातं वेत्ति कश्चन ॥९८॥
लोकप्रसिद्धन्यायार्थैरंशांशित्वादिकल्पना । परात्मनः कल्पयितुं नातो युक्ता कथंचन ॥९९॥
विस्फुलिङ्गाद्युपन्यासः क्षेत्रज्ञपरमात्मनोः । ऐकात्म्यप्रतिपत्त्यर्थस्तस्मादत्र विवक्षितः ॥५००॥
उपक्रमोपसंहाराद्यथोक्तोर्थो विवक्षितः । ब्रह्मादि सर्वमात्मेति प्रतिज्ञाय श्रुतिर्यथा ॥ १ ॥
दुन्दुभ्याद्यैश्च दृष्टान्तैर्हेतुभिश्च समर्थ्यते । अपूर्वाद्यादिभिर्वाक्यैः प्रतिज्ञार्थोपसंहृतिः ॥ २ ॥
सर्ववेदान्तवाक्येषु ब्रह्मैकत्वं विधीयते । इत्यविप्रतिपत्तिर्हि व्याख्यातॄणामशेषतः ॥ ३ ॥
तद्विध्येकोक्तियोगस्य ह्यक्लेशात्संभवे सति । सृष्ट्यादिवचसां नैव युक्ताऽर्थान्तरकल्पना ॥ ४ ॥

यथा मूर्तादयो भावा दृष्टास्तथा तेषामनुगुणमेवादृष्टं वस्तु दृष्टान्तैर्बोध्यत इति दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाह—एवमिति । व्यावर्त्यमाह—नेत्यादिना ॥४९५॥

दृष्टान्तवशान्मानविरुद्धस्यापि शास्त्रं बोधकमित्याशङ्क्याऽऽह—अतिशीत इति । अधिगम्यते वाक्यार्थ इति शेषः । एवं शास्त्रं मानविरुद्धं दृष्टान्तादपि न बोधयतीत्यर्थः ॥४९६॥

तत्त्वमादिवाक्यमध्यक्षादिविरुद्धार्थबोधि दृष्टमित्याशङ्क्याऽऽह—मानान्तरेति । तत्र हेतुर्मानान्तरेणेति ॥४९७॥

कल्पितद्वैतविषयाध्यक्षाद्यगोचरे वस्तुनि वस्तुतोऽद्वये शास्त्रप्रामाण्याद्भिन्नविषयतया विरोधसमाधिमुक्त्वा तत्रैव हेत्वन्तरमाह—तथेति । तेन न विरोधो मानान्तरेण शास्त्रस्येति शेषः उपजीव्यत्वादित्यर्थः ॥४९८॥

शास्त्रं मानान्तराविरुद्धबोधीति स्थिते फलितमुपसंहरति—लोकेति । लोकसिद्धा न्याया दृष्टान्ता विस्फुलिङ्गादयस्तैरर्थैरग्न्यादिवत्परस्यांशित्वादिकल्पना न स्वीकर्तुं युक्ता तन्निष्कलत्वाद्वयत्वादिशास्त्रविरोधादतो दृष्टान्तश्रुतेर्न विरुद्धार्थबोधितेत्यर्थः ॥४९९॥

दृष्टान्तश्रुत्या तयोरंशांशित्वाद्यविवक्षितं चेत्किं तर्हि विवक्षितं तदाह—विस्फुलिङ्गेति । यस्मादेवं तस्मादत्र दृष्टान्तश्रुतौ तयोरैक्यरूपोऽर्थो विवक्षित इत्याह—तस्मादिति ॥५००॥

सृष्ट्यादिवाक्यानामैक्यपरतेत्यत्र हेत्वन्तरमाह—उपक्रमेति । तावेव दर्शयति—ब्रह्मादीति । यथा प्रतिज्ञानुसारेणेति यावत् । तज्जन्यत्वादयो हेतवः । श्रुतिरादिमध्यावसानेष्वेकरूपा लक्ष्यतेऽतः सर्वे वेदान्ताः साक्षात्पारंपर्याभ्यामैक्ये पर्यवस्यन्तीत्यर्थः ॥५०१–५०२॥

आगमतात्पर्यविदामुक्तेऽर्थे संमतिं सूचयति—सर्वेति । तथाचैक्यमेवाऽऽगमार्थो वृद्धसंमतत्वादिति हिशब्दार्थः ॥५०३॥

सर्वेषां वेदान्तवाक्यानामैक्ये महातात्पर्येऽप्यवान्तरतात्पर्येण सृष्ट्यादिरपि विवक्षितस्तद्वाक्यैरित्याशङ्क्याऽऽह—तद्विधीति । ऐक्यविधिस्तत्त्वमादिवाक्यं तेनैकवाक्यत्वेन योगः शेषशेषित्वं तस्यानायासेन संभवे सृष्ट्यादिवाक्यानां सृष्ट्याद्यर्थत्वकल्पना न युक्ता संभवत्येकवाक्यत्वे तद्भेदस्यान्याय्यत्वादित्यर्थः । उक्तो न्याय एव हिशब्देन ध्वनितः ॥५०४॥

---

१. मानं चेत् तन्न मानान्तरविरुद्धबोधकं यतः मानान्तराप्राप्तार्थबोधकमेव प्रत्यक्षम् ।

२. नानादृत्येति = नानुपजीव्येत्यर्थः ।

न च प्रमाणं तत्रास्ति कल्प्यं च स्यात्फलान्तरम् । ऐकात्म्यपरतैवातः सृष्टयादिवचसां भवेत् ॥ ५ ॥

सृष्ट्यादिवाक्यं द्रविडाचार्यवाक्येन महावाक्यशेषः इति निर्धारणम्

आचक्षते तथा चात्र केचिदाख्यायिकां शुभाम् । यथाभिलषितार्थोऽयं तथा संभाव्यते स्फुटः ॥ ६ ॥
यथा हि कश्चित्प्रागासीच्चक्रवर्तिसुतो युवा । व्याधियोगोपघातादेरुन्मत्तः समपद्यत ॥ ७ ॥
ध्वस्तराजाभिमानः सन्मुग्धो वनमुपेयिवान् । व्याधैः परिगृहीतश्च व्याधोऽस्मीत्यभिमन्यते ॥ ८ ॥
तत्कर्मा तदहंकारः कालेन महताऽभवत् । ध्वस्तराजत्वसंस्कारो वसञ्शबरसद्मनि ॥ ९ ॥
शुभौषध्युपयोगाच्च स्वस्थधीः समजायत । स्वस्वभावानुरोधाच्च व्याधेभ्यो व्युत्थितात्मधीः ॥१०॥
तच्छीलरूपकर्मभ्यो व्यावृत्तधिषणः स्वतः । केवलस्मृत्यभावाच्च न व्याधत्वं जहात्यसौ ॥११॥
कुतश्चिदागमाज्ज्ञात्वा तमुपेत्याप्रतारकः । तज्जातिकर्मसंबन्धतत्त्ववित्तत्पितुः सखा ॥१२॥
प्रवृत्या कर्मणा जात्या चक्रवर्त्युचितैस्तथा । लक्षणै राजपुत्रस्त्वं यथा कश्चित्प्रबोधयेत् ॥१३॥
लब्धमात्रस्मृतिः सोऽथ राजाऽस्मीत्यवबोधतः । बाधित्वा स्वमसंबोधं हित्वा व्याधत्वमात्मनः ॥१४॥

महातात्पर्यस्यैक्यान्न्यायाविरोधश्चेत्तथाऽपि सृष्ट्यादिवाक्यानां तत्परत्वे मानं फलं वा कल्पकं ? नाऽऽद्य इत्याह—न चेति । न द्वितीय इत्याह—कल्प्यं चेति । न च तत्कल्पयितुं शक्यं फलवत्संनिधावफलं तदङ्गमिति-न्यायविरोधादिति भावः । सृष्ट्यादिवाक्यानामतत्परत्वे फलितमाह—ऐकात्म्येति ॥५०५॥

तत्त्वमादिवाक्यमैक्यपरं तच्छेषः सृष्ट्यादिवाक्यमित्यत्र द्रविडाचार्यप्रणीतामाख्यायिकामवतारयति—आचक्षत इति । उक्तार्थानुसारितां तस्या दर्शयति—तथा चेति । फलपर्यन्ततया दृष्टान्तदार्ष्टान्तिकरूपायास्तस्याः शुभत्वं व्यनक्ति—यथेति । ऐक्ये सर्ववेदान्तावसानमिष्टोऽर्थः । स यया निःसंदिग्धोऽबाधितः संभवति तामाचक्षत इति संबन्धः ॥५०६॥

तत्र दृष्टान्तरूपामाख्यायिकां प्रणयति—यथा हीति । तस्य यूनो राजसूनोः पितृभ्यां प्रकृत्या च वियोगे हेतुमाह—व्याधीति । आदिपदेनाऽऽगन्तुकोपघातोक्तिः ॥५०७॥

उन्मादफलमाह—ध्वस्तेति । तस्य शबरगृहप्रवेशमाह—व्याधैरिति । तत्प्रवेशकार्यमाह—व्याध इति ॥५०८॥

उक्तमभिमानमनूद्य तत्कार्यमाह—तत्कर्मेति । राजाभिमानध्वंसेऽपि तत्संस्कारप्रतिबन्धान्न शबरजात्यनु-रूपकर्मानुवृत्तिरित्याशङ्क्याऽऽह—ध्वस्तेति । तत्र हेतुः—वसन्निति ॥५०९॥

उन्मत्तस्य कथं शबराभिमानादिसंभवस्तत्राऽऽह—शुभेति । स्वस्थधीरपि राजसूनुर्व्याधभावं मन्यते चेन्न कदाचिदपि तद्भावोऽपनेतुं शक्य इत्याशङ्क्याऽऽह—स्वस्वभावेति । राजजात्यनुसारेण व्याधाभिमानादेर्व्युत्थितश्चे-द्व्याधत्वं जह्यादित्याशङ्क्याऽऽह—केवलेति ॥५१०-५११॥

हेत्वभावादेव तर्हि राजत्वस्मृत्यभावान्न तस्य कदाचिदपि व्याधत्वत्यागस्तत्राऽऽह—कुतश्चिदिति । आगमादुपदेशादिति यावत् । राजसूनुमुपगतस्य तद्बोधकस्याविप्रलम्भकत्वेनाऽऽप्तत्वमाह—अप्रतारक इति । तस्य राजत्वबोधनशक्तिं दर्शयति—तज्जातीति । तस्य जातौ राजत्वं कर्म शिष्टपरिपालनादि तयोरनेन संबन्धरूपं जानन्निति यावत् । यद्वा राजसूनोर्व्याधजात्या तदनुगुणकर्मणा च संगतिं विद्वानित्यर्थः । राजपुत्रं प्रति राजत्वबोधनं पान्थस्य कथं कार्यमासीत्तत्राऽऽह—तत्पितुरिति ॥५१२॥

शबरमन्दिरस्थराजसूनुज्ञाने न केवलमागमो हेतुः किंतु हेत्वन्तराण्यपि सन्तीत्याह—प्रवृत्त्येति । दृश्य-मानव्यापारानुमितसुकृतराजत्वाभ्यां सार्वभौमप्रापकैश्च शास्त्रोक्तलक्षणैरस्य राजपुत्रत्वं ज्ञात्वेति संबन्धः । यथा ज्ञातं तथा नासि त्वं व्याधो मुख्यराज्ञः सूनुः सन्कथंचिद्व्याधगृहं प्रविष्ट इति बोधयतीत्याह—यथेति ॥५१३॥

उपदेशफलमाह—लब्धेति । उपदेशे लब्धमात्रे तत्प्रभावात्प्राप्तराजस्मृतिरिति यावत् । तत्फलमाह—अथेत्यादिना । आप्तोपदेशस्यान्वयव्यतिरेकसिद्धे सम्यग्बोधे हेतुत्वद्योतनार्थोऽथशब्दः । ननु सुचिरं शबरसदने

राज्याभिषेकमाप्नोति प्राप्य सिंहासनं पितुः । अवाप्तराजसूनुत्वात्तत्प्राप्तौ नापि चेष्टते ॥१५॥
मोहाध्यस्तात्मव्याधत्वान्मोहध्वंसातिरेकतः । राजपुत्रत्वसंप्राप्तौ नान्यत्किंचिदपेक्षते ॥१६॥

राजपुत्राख्यायाः प्रकृते योजनम्

यथा तथाऽयं ब्रह्मैव ब्रह्मासंबोधमात्रतः । बुद्धीन्द्रियशरीरादावात्मत्वं प्रतिपेदिवान् ॥१७॥
सोऽयं सांसारिकैरर्थैः प्रत्यक्तत्त्वाप्रबोधतः । विशिनष्टि स्वमात्मानं प्रतीचीनमनात्मभिः ॥१८॥
संसारभूमावासीनं संसार्यस्मीत्यवस्थितम् । मुमुक्षुं तत्त्ववित्साक्षात्संसारव्युत्थितैषणम् ॥१९॥
य आत्मेत्यादिभिर्वाक्यैरन्वयव्यतिरेकतः । तत्त्वमस्यादिवाक्येन गुरुः संबोधयेन्नरम् ॥२०॥
सम्यग्ज्ञानाग्निसंप्लुष्टप्रत्यक्तत्त्वमहातमाः । हित्वा मोहोत्थमखिलं ब्रह्मैव ब्रह्म यात्यथ ॥२१॥
प्रत्यक्तत्त्वतमोध्वंसव्यतिरेकेण मुक्तये । अपेक्षते यतो नान्यत्किंचित्साधनमण्वपि ॥२२॥
जन्माद्यसंभवात्तस्माद्ब्रह्मबोधातिरेकतः । कार्यान्तरं न संभाव्यं व्यर्थं चापि भवेद्वचः ॥२३॥

अंशांशित्वविवक्षानिरासः

अंशांशित्वादि[1] चेत्साक्षाद्ब्रह्मज्ञाने विवक्षितम् । समुद्रादेरिव तदा नावक्ष्यच्छ्रुतिरादरात् ॥२४॥

निवसतो राजसुतस्य पुना राजपुत्रत्वाप्तौ ज्ञानात्प्रतिबन्धध्वंसादृते व्यापारान्तरमपेक्षितं नेत्याह—अवाप्तेति ॥५१४-५१५॥

स्वतश्चेदाप्तं राजपुत्रत्वं कुतस्तर्हि व्याधत्वधीस्तत्राऽऽह—मोहेति । आरोपितव्याधत्वबाधेन राजत्वाप्त्यर्थं तज्ज्ञानमावर्तनीयमित्याशङ्क्याऽऽह—मोहध्वंसेति । तद्ध्वंसश्च ज्ञानादेवेति नाऽऽवृत्तिरर्थवतीत्यर्थः ॥५१६॥

दृष्टान्तमनूद्य दार्ष्टान्तिकमाह—यथेति । जीवश्चेद्ब्रह्मैव कथं तस्य बुद्ध्यादावात्मधीस्तत्राऽऽह—ब्रह्मेति ॥५१७॥

अनात्मन्यात्मत्वधीफलमाह—सोऽयमिति । स्वशब्दस्य स्वीयविषयत्वं निरसितुं विशिनष्टि—आत्मानमिति । आत्मशब्दस्य देहादिविषयत्वं व्यावर्तयति—प्रतीचीनमिति ॥५१८॥

जीवो देहद्वयाभिमानी कर्ता भोक्ताऽहमिति स्थितश्चेत्तर्हि तं प्रति किमाचार्यकृत्यं तदाह—संसारेति । नानाविधासु योनिषु निरन्तरं संसरन्तं बहुजन्मकृतसुकृतवशात्कथमपि गुरुचरणावनुसरन्तं साधनचतुष्टयवन्तं दूरीकृतसर्वकर्माणं पुरुषधौरेयं साक्षात्तत्त्वं बोधयति तत्त्वविद्गुरुरित्यर्थः ॥५१९॥

वाक्यार्थज्ञानाङ्गं बहिरन्तर्विभागेनाऽऽह—य इति । अन्वयव्यतिरेकतः पदार्थशोधनद्वारेति शेषः ॥५२०॥

औपदेशिकज्ञानफलमाह—सम्यगिति । अन्यस्यान्यत्वायोगमाशङ्क्याऽऽह—ब्रह्मैवेति । तर्हि ब्रह्म यातीत्ययुक्तं स्वात्मनो गन्तव्यत्वायोगात्तत्राऽऽह—हित्वेति । ज्ञानतत्फलयोर्मध्ये कार्यान्तरवारणमथशब्दार्थः ॥५२१॥

तत्र हेतुमाह—प्रत्यगिति ॥५२२॥

विविदिषावाक्यस्य मुक्तिहेतुत्वेन यज्ञादिविधायित्वादस्ति तस्याः साधनान्तरमित्याशङ्क्य चतुर्विधक्रियाफलस्य तत्रायोगाद्वाक्यस्य च धीहेतुविधायित्वान्न ज्ञानं विना मुक्त्युपयोगि हेत्वन्तरमस्तीत्याह—जन्मादीति । यदि विविदिषावाक्यं न धीहेतुविधायकं किंतु मुक्तिसाधनमेव विधत्ते तत्राऽऽह—व्यर्थं चेति । तत्र विधेयक्रियाफलायोगस्योक्तत्वादिति भावः ॥५२३॥

तत्त्वमादीनामैक्यपरत्वात्तच्छेषत्वाच्च सृष्ट्यादिवाक्यानां न तद्वशाज्जीवेशयोरंशांशित्वादिकल्पनेत्युक्तम् । इदानीं विपक्षे श्रुत्यन्तरविरोधमाह—अंशेति । समुद्रतरङ्गादेरिव ब्रह्मज्ञापके सृष्ट्यादिवाक्ये ब्रह्मणो वस्तुतोंऽशांशित्वादीष्टं चेत्तदा वाङ्मनसातीतत्वं तस्य तात्पर्येण श्रुतिर्न ब्रूयात्सविशेषस्य तद्विषयत्वादित्यर्थः । ब्रह्मात्मनि

१. अंशांशित्वादीति—यदि समुद्रतरङ्गादेरिव जीवब्रह्मणोः अंशांशित्वं विवक्षितं तदा यद्वाचानभ्युदितमित्यादि नाऽवक्ष्यदित्यर्थः ।

यदनभ्युदितं वाचा मनुते मनसा न यत् । अपूर्वादि तथा वाक्यमपि सैन्धवखिल्यवत् ।।२५।।
नानात्त्वदृष्टिनिन्दां च मृत्योरिति तथा वचः । अंशांशित्वविवक्षायां न प्रायोक्ष्यत्तदेदृशम् ।।२६।।
एकैकरूपैकात्म्यार्थधियो दार्ढ्यप्रसिद्धये । सृष्ट्यादिश्रुतयस्तस्मान्न तु तत्प्रत्ययाय ताः ।।२७।।
न चाऽऽत्मनो निरंशस्य तथाऽसंसारिणः स्वतः । अंशिसंसारिभावत्वं न्यायेनाप्युपपद्यते ।।२८।।
कल्पितोपाधिहेतुश्चेदंशिसंसारिकल्पना । काममस्तु न तादृक्षु धीराणां सत्यधीर्भवेत् ।।२९।।
विवक्षितं चेदैकाम्यं सर्वोपनिषदां भवेत् । विज्ञानात्मादिसंभेदस्तद्विरुद्धः किमुच्यते ।।३०।।

कर्मकाण्डप्रामाण्याय जीवभेद इति शंकानिरासः

कर्मकाण्डप्रमाणत्वविरोधध्वस्तये किल । विज्ञानात्मादिसंभेद इति केचित्प्रचक्षते ।।३१।।
ऐकात्म्यमात्रे जगति समाप्तपुरुषार्थके । चोदनाप्रतिषेधौ वः स्यातां निर्विषयौ तदा ।।३२।।
स्वत एव विमुक्तत्वाद्बन्धाभावात्स्वतस्तथा । वेदान्तानां तथाऽऽरम्भो निष्फलः संप्रसज्यते ।।३३।।
इत्येवमादिचोद्यानि परिहाराश्च वर्णिताः । संबन्ध एव बहुशो विचारेषु च कीर्तिताः ।।३४।।

वस्तुतोंऽशांशित्वादिकल्पने सैन्धवघनवत्प्रज्ञानैकरसमपूर्वमनपरमित्यादिवाक्यमपि विरुध्येतेत्याह—अपूर्वादीति । नावक्ष्यदित्येतदनुकर्षणार्थं तथाशब्दः ।।५२४–५२५।।

भेददृष्ट्यपवादविरोधं चैकदेशिनो दर्शयति—नानात्वेति । मृत्योः स मृत्युमाप्नोतीत्यादिवचोरूपां नानात्वधीनिन्दां च त्वत्पक्षे न प्रायोक्ष्यदिति योजना । एकधैवानुद्रष्टव्यमितिवाक्यसमुच्चयार्थस्तथाशब्दः । ब्रह्मणि वस्तुतोंऽशांशित्वादिविवक्षायामुक्तवाक्यसदृशमेकमेवाद्वितीयमित्यादि न प्रयोक्तव्यं त्वत्पक्षे तस्य विवक्षितार्थाभावादित्याह—अंशांशित्वेति ।।५२६।।

सृष्ट्यादिवाक्यानामनेकवाक्यविरोधान्न स्वार्थे तात्पर्यमिति स्थिते फलितमुपसंहरति—एकेति । भिन्नाभिन्नत्वनुत्त्यर्थमेकरूपपदम् ।।५२७।।

शास्त्रस्यांशांशित्वादावतात्पर्यात्तद्वशात्तत्कल्पना मा भूदुपादानस्य मृदादेः सावयवत्वदृष्टेर्ब्रह्मणोऽपि जगदुपादानतया तथात्वमित्यादिन्यायास्तु भविष्यन्तीत्याशङ्क्य स्वतः परतो वा तस्यांशादिकल्पनेति विकल्प्याऽऽद्यं दूषयति—न चेति । विरुद्धार्थबोधिन्यायाभावादुपादानत्वस्य विवर्तवादेऽपि संभवादित्यर्थः ।।५२८।।

परतश्चेत्तत्कल्पितमकल्पितं वेति विकल्प्याऽऽद्यमङ्गीकरोति—कल्पितेति । द्वितीयं निरस्यति—नेत्यादिना । अंशांशिकल्पकेष्वनात्मसु नाकल्पितत्वं विवेकिनां भाति न्यायागमविरोधादित्यर्थः ।।४२९।।

ताभ्यां[1] जीवेशयोरंशांशित्वादिकल्पना निरस्य वेदान्तानामैक्यपरत्वमुक्त्वा तदुपगमे द्वैतासिद्धिः फलतीत्याह—विवक्षितं चेदिति ।।५३०।।

किंशब्दस्य प्रश्नार्थतां मत्वा द्वैतिमतमाह—कर्मेति । नास्योत्थानं परिहृतत्वादिति मत्वा किलेत्युक्तम् ।।५३१।।

वेदान्तानां परमपुरुषार्थैक्यपरत्वेऽपि तत्प्रामाण्याविरोधात्किं द्वैतेनेत्याशङ्क्याऽऽह—ऐकात्म्येति ।।५३२।।

केवलाद्वैतपक्षे कर्मकाण्डविरोधमुक्त्वा ज्ञानकाण्डविरोधमाह—स्वत इति । परस्य नित्यमुक्तत्वादन्यस्य स्वतः परतो वा बद्धस्याभावाच्छिष्याभावस्तथा चाधिकार्यभावादुपनिषदनारम्भ इत्यर्थः ।।५३३।।

पुनरुक्तिमाशङ्क्य परिहरति—इत्येवमादीति । इतिशब्देनोक्तचोद्यपरामर्शः । एवंशब्देन वक्ष्यमाणमिथोविरोधादिसंग्रहः आदिशब्देनोपनिषदां नियोगादिपरतया गतार्थतोक्तिः । एतानि चोद्यानि तत्परिहाराश्च संबन्धग्रन्थेष्वेवोक्ताः । अव्याकृतादिविचारेषु चासकृद्यद्यपि वर्णितास्तथाऽपि प्रकारान्तरेण परिहर्तुं चोद्योत्थापनमित्यर्थः ।।५३४।।

---

१. ताभ्यां न्यायागमाभ्याम् ।

परस्परविरोधाच्च प्रकाशतमसोरिव । कर्मकाण्डोपनिषदोर्निष्प्रामाण्यं द्वयोरपि ॥३५॥
सति यस्य प्रमाणत्वे प्रामाण्यं स्याद्द्वयोरपि । तस्यैव कर्मकाण्डस्य प्रामाण्यमवसीयताम् ॥३६॥
कर्मकाण्डप्रमाणत्वे प्रामाण्यं चेद्द्वयोरपि । सर्वग्रासि तदैकात्म्यमागादिह पुनर्बलात् ॥३७॥
यद्येवमप्रमाणत्वमस्तूपनिषदां तदा । मानान्तरविरोधाच्च नैतासां मानतेष्यते ॥३८॥
अपि स्वार्थविघातं च करोत्युपनिषद्यतः । अप्रामाण्यमतस्तस्याः कर्मकाण्डस्य मानता ॥३९॥

सिद्धान्तिना वेदान्तप्रामाण्यप्रतिष्ठापनम्

नोक्तोत्तरत्वात्साध्वेतद्भवता परिचोद्यते । व्यर्थतान्यार्थते नेह यथा तत्प्राक्प्रपञ्चितम् ॥४०॥
ब्रह्मास्मीति धियो जन्मसमकाला विमुक्तता । यतोऽनुभूयते साक्षान्नानर्थक्यं भवेत्ततः ॥४१॥
वस्तुमात्रावसायित्वं संबन्धे प्राक्प्रपञ्चितम् । यतोऽतो नोपनिषदामन्यार्थत्वं कथंचन ॥४२॥
स्वप्रमेयप्रमोत्पत्त्यनुत्पत्त्येकहेतुके । प्रमाणत्वाप्रमाणत्वे नान्यथा ते प्रसिध्यतः ॥४३॥
किंचातो यदि नामैवं प्रकृतार्थोपयोगि यत् । शृण्वेकाग्रमनाः सर्वं यदेवं सति वस्तु तत् ॥४४॥
स्वप्रमेये प्रमां साक्षात्करोत्युपनिषद्यदि । अप्रामाण्यं कथं तस्याः कुतोऽतो मानताऽन्यथा॥४५॥

किंच किं त्वया द्वयोरपि काण्डयोर्मानत्वमिष्टं किंवाऽन्यतरस्य ? नाऽऽद्यस्तमःप्रकाशवन्मिथो विरोधात् नेतरोऽन्यतरप्रामाण्यमुपेत्येतराप्रामाण्यं वदतोऽध्ययनविधिविरोधादित्याह—परस्परेति ॥५३५॥

द्वयोरन्यतरस्य वा प्रामाण्यासंभवे कथं त्वत्पक्षेऽपि प्रामाण्यव्यवस्थेत्याशङ्क्याऽऽह—सतीति । कर्मकाण्डप्रामाण्ये शिष्यशासित्रादिभेदाबाधात्तदपेक्षस्य काण्डान्तरस्यापि मानता द्वयोरपि द्वैतविषयत्वादविरुद्धा सेत्यर्थः ॥५३६॥

तर्हि कर्मकाण्डवज्ज्ञानकाण्डस्यापि स्वार्थे मानत्वं वाच्यं न च तदर्थो द्वैतं काण्डभेदाभावप्रसङ्गादुपक्रमोपसंहारादिविरोधाच्चातो ज्ञानकाण्डमानत्वबलात्काण्डान्तरविषयद्वैतबाधकमद्वैतमेव पुनरागतमिति शङ्कते—कर्मेति ॥५३७॥

एवं तर्हीत्यादिभाष्येण परिहरति—यद्येवमिति । न चैवमध्ययनविधिविरोधो जपार्थं तदध्ययनसिद्धेरिति मत्वा तासाममानत्वे हेत्वन्तरमाह—मानान्तरेति । कर्मकाण्डविरोधसमुच्चयार्थश्चकारः ॥५३८॥

तत्रैव हेत्वन्तरमाह—अपीति । शिष्यशासित्रादिभेदमपेक्ष्य साऽद्वैतं बोधयत्यतस्तद्भावाभावाभ्यामद्वैतविहतेस्तदप्रामाण्यमिति भावः ॥५३९॥

सिद्धान्ती पूर्वपक्षस्यासाधुतां प्रतिजानीते—नोक्तेति । ज्ञानकाण्डं नाफलं नान्यशेष इत्युक्तमेव स्मारयति—व्यर्थतेति ॥५४०॥

तस्य फलवत्त्वमुक्तं व्यनक्ति—ब्रह्मेति ॥५४१॥

अनन्यशेषत्वं संबन्धग्रन्थादिषूक्तं व्यनक्ति—वस्त्विति ॥५४२॥

उक्तं स्मारयित्वोपनिषत्प्रामाण्यार्थं प्रमाणाप्रमाणलक्षणं करोति—स्वप्रमेयेति । स्वार्थे प्रमोत्पादकत्वं विना न प्रमाणत्वं घटादेरपि तत्प्रसङ्गान्नापि तदनुत्पादकत्वादृतेऽप्रमाणत्वं चक्षुरादेरपि रूपादौ तत्प्रसङ्गादित्युक्तं व्यतिरेकद्वारा साधयति—नान्यथेति ॥५४३॥

यद्येवं तल्लक्षणमस्तु नाम तथाऽपि यत्प्रस्तुतोपनिषन्मानत्वोपयुक्तं तदेतावता किं सिद्धमिति पृच्छति—किंचेति । उक्ते तल्लक्षणे सति यन्मानत्वोपयोगि तच्छ्रुतौ समाहितेन भाव्यमित्याह—शृण्विति ॥५४४॥

श्रोतव्यं किमित्याशङ्क्य स्वार्थे प्रमामुपनिषत्करोति न वेति विकल्प्याऽऽद्यमनूद्य दूषयति—स्वप्रमेय इति ॥५४५॥

न चेत्करोत्युपनिषत्प्रमामित्यभिधीयते । प्रत्यक्षेण विरुद्धार्थं त्वदीयं वचनं भवेत् ॥४६॥
नाग्निर्दहति काष्ठानि न तापयति भास्करः । इति यद्वत्तथोक्तिस्ते प्रत्यक्षेण विरुध्यते ॥४७॥
अग्निदाहादिवत्साक्षाद्वेदान्तज्ञानजं फलम् । संसारानर्थहानाख्यं प्रत्यक्षमनुभूयते ॥४८॥
विघ्नन्ति स्वार्थमित्युक्तं यच्च तच्चापि पेलवम् । यथा तदुच्यमानं त्वं यथावच्छ्रोतुमर्हसि ॥४९॥
स्वप्रमेयावबोधो हि मानानां स्वार्थ उच्यते । तं चेत्कुर्वन्ति वेदान्ताः कुतस्तेषाममानता ॥५०॥
न च वेदान्तवाक्योत्थज्ञानस्येहास्ति बाधकम् । बाधकानामपि सतां प्रत्यग्याथात्म्यरूपतः ॥५१॥
प्रमाणमप्रमाणं च प्रमाभासस्तथैव च । कुर्वन्त्येव प्रमां यत्र तदसंभावना कुतः ॥५२॥

मानेषु बाध्यबाधकभावनिरासः

किमेकविषयत्वेन किंवा विषयभेदतः । विरोधः स्यात्प्रमाणानामित्येतदभिधीयताम् ॥५३॥
मानान्तरेण संवादो यदि चेदनुवादिता । विरोधो न तु मानानां सदैकार्थसमागमे ॥५४॥
भिन्नप्रमेयतायां च श्रोत्रादीनां यथा तथा । परस्परानपेक्षत्वान्नितरामविरुद्धता ॥५५॥
न चैकमेव सद्वाक्यं करोति न करोति च । प्रमां तत्प्रतिषेधं च कुर्वत्क्वचिदिहेष्यते ॥५६॥

द्वितीयमनूद्य निरस्यति—न चेदिति ॥५४६॥

सा न स्वार्थे प्रमां करोतीति परोक्तिरध्यक्षविरुद्धेत्येतद्दृष्टान्तेन स्पष्टयति—नाग्निरिति ॥५४७॥

उपनिषदामनुत्पत्तिरूपाप्रामाण्याभावेऽपि फलाभावात्तत्तदवस्थमित्याशङ्क्याऽऽह—अग्नीति । यथाऽग्निदाहात्प्रत्यक्षं स्फोटाख्यं फलं यथा चोदकपानादजीर्णे तद्ध्वस्तिरध्यक्षा यथा मन्त्रौषधादिप्रयुक्त्या विषादिनिरासस्तथा वाक्योत्थधीफलं बन्धध्वंसलक्षणं प्रत्यक्षमित्यर्थः ॥५४८॥

हेत्वभावादप्रामाण्यमुपनिषदां निरस्य स्वार्थविघातकत्वेन तासां तदुक्तमनूद्य तदसम्यक्त्वं प्रतिज्ञाय तदुपपादयितुमुपक्रमते—विघ्नन्तीति ॥५४९॥

वेदान्तानां स्वार्थाविघातकत्वं वक्तुं सामान्यतो मानानां स्वार्थमाह—स्वप्रमेयेति । तत्र लौकिकपरीक्षकसंप्रतिपत्त्यर्थो हिशब्दः । उक्तस्वार्थकारिणो वेदान्ता न तद्विघातकास्तन्नामानता तेषामित्याह—तं चेदिति ॥५५०॥

बाधितबोधजनकत्वात्तेषाममानतेत्याशङ्क्याऽऽह—न चेति । इहेति लोकशास्त्रयोरुक्तिः । बाधकाभावे तस्याऽऽत्मातिरेकादद्वैतहानिर्न हि जन्यो बोधस्तत्त्वव्यतिरिक्तोऽस्तीत्याशङ्क्याऽऽह—बाधकानामिति । प्रत्यक्षादीनि बाधकत्वेनेष्टानि तेषां प्रत्यग्रूपत्वान्न स्वज्ञानबाधकता वाक्योत्थवृत्त्यवच्छिन्नस्य बोधस्य स्वरूपत्वात् । न च बाध्याऽपि वृत्तिरध्यक्षादिना बाध्यते तस्यैव बोधेद्धबुद्धिबाध्यत्वाद्वृत्तेरपि तेनैव बाधात्स्वपरविरोध्यनेकभावोपलम्भादिति भावः ॥५५१॥

सर्वस्य सत्तास्फूर्ती प्रयच्छन्नात्मैव नास्तीत्याशङ्क्य तार्तीयं परिहारं स्मारयति—प्रमाणमिति ॥५५२॥

बाधकत्वेनेष्टाध्यक्षादीनां प्रतीचो भेदाभावान्न तन्मानबाधकतेत्युक्त्वा विरोधस्य दुर्वचत्वाच्च न मानेषु बाध्यबाधकतेति वक्तुं विकल्पयति—किमिति ॥५५३॥

तत्राऽऽद्यमनूद्य दूषयति—मानान्तरेणेति । यदि मानस्य मानान्तरेण संवादस्तुल्यविषयत्वं तदाऽनुवादतैव न विरोधश्चेच्छब्दस्यावधारणार्थत्वादेकार्थोपनिपाते मानानां विरोधायोगात् । अन्यथा नैकार्थत्वं रूप्यतदभावादिधीष्वदृष्टत्वादित्यर्थः ॥५५४॥

कल्पान्तरं निराह—भिन्नेति । अर्थभेदे विरोधवार्ताऽपि नेत्याह—नितरामिति ॥५५५॥

तत्त्वमादेरध्यक्षाद्यविरोधेऽपि स्वयमेव तद्गुरुशिष्याद्यपेक्षं स्वार्थं विरुद्धं वदतीत्याशङ्क्याऽऽह—न चेति । व्यावहारभूमौ हि लौकिकं वैदिकं वा वाक्यं प्रमां करोति न करोतीत्येवं प्रमां तन्निषेधं च कुर्वदेकमेव क्वचिन्न दृश्यते तन्न वाक्यस्य स्वार्थघातितेत्यर्थः ॥५५६॥

---

१. स्वपरविरोधीति तदुक्तं ब्रह्मसिद्धौ—"यथा पयः पयोऽन्तरं जरयति स्वयं च जीर्यति (ब्र० सि० पु० १२–(७) ।

### वेदान्तानां स्वार्थे विरोधशंका तत्परिहारश्च

अग्निः शीतस्तथोष्णश्चेत्येवमाद्युक्तितो ननु । विरुद्धार्थावभासोऽयं जायमानः समीक्ष्यते ॥५७॥
नैकस्मान्नापि च द्वाभ्यां विरुद्धार्थोऽवसीयते । अनूद्योक्त्येकदेशेन शीतोऽग्निरिति बोध्यते ॥५८॥
संभवत्येव शीतोऽग्निः प्रमाणान्तरगोचरः । मानान्तरविरोधोऽपि तथाच सति नेष्यते ॥५९॥
शीतवद्वा भवेच्छीतः शैत्यस्यानपहारतः । एवमप्यविरोधः स्यादस्य मानान्तरैरपि ॥६०॥
शैशिरोऽग्निर्भवेच्छीतस्तथोष्णः पार्थिवो भवेत् । भिन्नाग्न्यर्थावबोधित्वाद्वाक्ययोर्न विरुद्धता ॥६१॥

### तत्त्वमस्यादीनामेकार्थता

ऐकार्थ्ये न विरोधोऽस्ति द्व्यर्थत्वेऽपि न माश्रयात् । मानान्तराच्च नैवास्ति मान्तराविषयत्वतः ॥६२॥
अभ्युपेत्यैतदुदितं न तु वाक्यविदां नयः । यदनेकार्थबोधित्वमेकस्य वचसः सतः ॥६३॥
अर्थैकत्वादिति तथा वाक्यलक्षणमुच्यते । अनेकार्थावबोधित्वे न स्याल्लक्षणवद्वचः ॥६४॥

अनुभवमनुसृत्य शङ्कते—अग्निरिति ॥५५७॥

किमग्निरुष्णः शीतश्चेत्येकं वाक्यं वाक्यद्वयं वेति विकल्प्य दूषयति—नेत्यादिना । एकवाक्यत्वे विरुद्धार्थदृष्ट्यभावं साधयति—अनूद्येति । अग्निरुष्णः शीतश्चेत्येकोक्तिस्तदेकदेशोऽग्निरुष्ण इति तेनाध्यक्षसिद्धोष्णाग्न्यनुवादेन शीतोऽग्निरित्येकदेशान्तरेणापूर्वः शीतोऽग्निर्बोध्यते । न चानुवादकबोधकभागयोर्विरोधोऽतुल्यबलत्वादित्यर्थः ॥५५८॥

शीताग्नेरसंभावितत्वात्कथमनूद्य विधिस्तत्राऽऽह—संभवतीति । प्रमाणान्तरं शैशिराग्निगोचरमध्यक्षम् । शीतेऽग्नौ संभाविते तद्बोधिवाक्यस्य नाध्यक्षविरोधोऽस्तीत्याह—मानान्तरेति । वाक्यस्य विद्यमानार्थतावदित्यपेरर्थः ॥५५९॥

उष्णाग्निवदग्न्यन्तरमपि प्रत्यक्षं चेद्वाक्यांशयोरनुवादित्वेन तुल्यत्वात्कुतः शीतोऽग्निर्वाक्यीयः स्यादत आह—शीतवदिति । कालविशेषमाश्रित्य हेतुमाह—शैत्यस्येति । उपमायामपि शीतोऽग्निरित्यस्योष्णोऽग्निरित्येकदेशेनाध्यक्षादिभिश्चाविरोधः सिध्यतीत्याह—एवमिति ॥५६०॥

शीतोऽग्निः संभवत्येवेत्युक्तं तमेव संभवमुदाहरति—शैशिर इति । विद्युन्मेघादिप्रभवोऽपि दिव्योऽबिन्धनः शैशिरो विवक्षितः । उष्णाग्निस्वरूपं प्रसङ्गादाह—तथेति । एकवाक्यत्वे विरोधाभावमापाद्य भिन्नवाक्यत्वेऽपि तदभावमापादयति—भिन्नेति ॥५६१॥

वाक्यैक्ये तन्नानात्वे चाविरुद्धतेत्युक्त्वा दृष्टान्तस्थमर्थं दार्ष्टान्तिकेऽर्पयति—ऐकार्थ्य इति । अस्यार्थः । तत्त्वमसिवाक्यस्यैक्यमनैक्यं वा ? आद्येऽप्यैकार्थ्यमनैकार्थ्यं वा ? नोभयथाऽपि विरोधो मानमाश्रित्यैकस्यानेकस्य वाऽर्थस्य दृष्टेर्मानसिद्धस्य चाविरुद्धत्वादिति । वाक्यानेकत्वपक्षं दूषयति—मानान्तरादिति । न वाक्याद्वाक्यान्तरस्य विरोधोऽन्यविषयत्वादन्यथा संवादेनाविरोधादित्यर्थः ॥५६२॥

वाक्यैक्ये द्व्यर्थत्वेऽपीत्येतदुपेत्य वाङ्मात्रमित्याह—अभ्युपेत्येति । तत्र हेतुः—न त्विति ॥५६३॥

कस्तर्हि तेषां नयस्तमाह—अर्थैकत्वादिति । यथैकस्य वाक्यस्यानेकार्थत्वाभावस्तथाऽर्थैकत्वादेकं वाक्यमित्येकवाक्यलक्षणं तज्ज्ञैरुच्यतेऽर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यादित्युक्तेरित्यर्थः । एकस्यैव लौकिकस्य वैदिकस्य वा वाक्यस्य द्व्यर्थबोधित्वे न तदुक्तलक्षणाक्रान्तमिति न तदेकं वाक्यं स्यादित्याह—अनेकेति ॥५६४॥

---

१. अर्थैकत्वादेकं वाक्यं साकांक्षं चेद्विभागे स्यात् । ( जै० १-४-१५ ) भिन्नप्रतीतिविषयानेकमुख्यविशेष्यताराहित्ये सति विभज्यमाने साकांक्षत्वमेकवाक्यत्वम् । व्रीहियववाक्ययोरेकत्ववारणाय द्वितीयदलं तत्र भावनाया एकत्वात् । स्योनं ते सदनं करोमि-तस्मिन् सीद-इत्यत्र एकवाक्यता वारणाय प्रथमदलम् ।

एकमेव यदा वाक्यं कृत्स्नो वेदोऽभ्युपेयते । वाक्यान्तरासम्भवतस्तदा केन विरुद्धता ॥६५॥
वाक्यद्वयं चेदथवा सिद्ध[1]साध्यार्थभेदतः । तदाऽपि न विरोधोऽत्र विभिन्नार्थावबोधिनोः ॥६६॥

उपनिषदां स्वार्थपरार्थाविघातकता

नापि स्वार्थं परार्थं वा विहन्त्युपनिषत्क्वचित् । कथं चेदुच्यमानं तच्छृण्वेकाग्रमना यथा ॥६७॥
सर्वमात्मेति चेत्कुर्यात्प्रमेयविषयां प्रमाम् । विहन्त्युपनिषत्स्वार्थमिति निर्लज्जगीरियम् ॥६८॥
निःशेषपुरुषार्थाप्तिः सर्वानर्थात्ययः सदा । वेदान्तज्ञानतश्चेत्स्यात्स्वार्थोऽतोऽन्यः क इष्यते॥६९॥
निषेधति विधत्ते वा न चाप्युपनिषत्क्रियाम् । प्रत्यक्तत्त्वैकसंबोधे तद्वाक्योपक्षयत्वतः ॥७०॥
न चापि कर्मकाण्डोक्तिः स्वार्थे न कुरुते प्रमाम् । स्वार्थे च सा प्रमां कुर्वत्यमानं कथमुच्यते ॥७१॥
प्रात्यक्ष्याच्च प्रमोत्पत्तेर्ज्योतिष्टोमादिवाक्यतः । प्रमैवोत्पद्यते नेति वक्तुमेतन्न शक्यते ॥७२॥
विषयापहृतेर्नो चेद्वेदान्तोक्त्या प्रमोत्थितिः । न प्रत्यक्षबलीयस्त्वादनुमानप्रबोधतः ॥७३॥

कर्मवाक्यानां साधने फले वा सत्यत्वे न व्यापारः

यथासिद्धान्युपादाय कामद्वेषवशानुगः । इष्टमेव सदा मे स्यान्मा भूच्चानिष्टमण्वपि ॥७४॥
साधनानीष्टलाभार्थमनिष्टार्थापनुत्तये । आचक्षाणा श्रुतिः पुंसो नान्यार्थं वक्ति कञ्चन ॥७५॥

तत्त्वमादिवाक्यस्यैकार्थ्येनैकवाक्यत्वेऽपि वाक्यान्तरेण विरोधः स्यादित्याशङ्क्यैकमेव वाक्यं सर्वो वेदो वाक्यद्वयं वेति विकल्प्याऽऽद्यं प्रत्याह—एकमिति ॥५६५॥

द्वितीयमनूद्याविरोधमाह—वाक्येति । अत्रेति काण्डद्वयोक्तिः ॥५६६॥

अबाधितस्वार्थबोधिनां वेदान्तानां न तद्विघातित्वं नापि मानान्तरविरुद्धतेत्युक्तमिदानीं तदेव विधान्तरेण साधयितुमारभते—नापीति । वाक्यभेदं पुरुषभेदं वा विवक्षित्वा क्वचिदित्युक्तम् । अद्वैतं बोधयन्ती कथमुपनिषन्न स्वार्थपरार्थौ विहन्तीति पृच्छति—कथमिति । तत्र समाधिं वक्तुं भूमिकामाह—उच्यमानमिति ॥५६७॥

तस्याः स्वार्थघातकत्वं नाम स्वविषयघातकत्वं वा स्वफलघातकत्वं वा? नाऽऽद्य इत्याह—सर्वमिति ॥५६८॥

न द्वितीय इत्याह—निःशेषेति । एतत्फलाघातित्वेऽपि स्वफलान्तरघातित्वमाशङ्क्य तदभावान्नेत्याह—स्वार्थ इति ॥५६९॥

तथाऽपि कर्मकाण्डप्रामाण्यघातित्वात्तस्याः परार्थघातितेत्याशङ्क्याऽऽह—निषेधतीति ॥५७०॥

तस्या निर्द्वयप्रत्यगात्मोक्त्युपक्षये तद्विरोधान्न कर्मवाक्यं स्वार्थे प्रमां कुर्यादित्याशङ्क्याऽऽह—न चेति । स्वार्थप्रमापकत्वेऽपि तस्या विरोधादप्रामाण्यमित्याशङ्क्याऽऽह—स्वार्थे चेति ॥५७१॥

कर्मवाक्येभ्यः स्वार्थे प्रमैव नोत्पद्यते मानाभावादित्याशङ्क्याऽऽह—प्रात्यक्ष्यादिति । चकारोऽङ्गीकारस्य समुच्चयार्थः ॥५७२॥

ब्रह्मवाक्येन तदैक्यं बोधयता कर्मवाक्यार्थस्यापहृतत्वान्न तद्वाक्यात्प्रमोत्पत्तिरिति शङ्कते—विषयेति । विमतं न प्रमोत्पादकं प्रमाणापहृतविषयत्वादनुष्णाग्निवाक्यवदित्यनुमानाधीनधियोऽध्यक्षस्य प्राबल्यात्तद्विरोधेऽनुमानाप्रवृत्तिरिति परिहरति—नेत्यादिना ॥५७३॥

स्वार्थप्रमापकत्वेन कर्मकाण्डप्रामाण्ये तदर्थस्य प्रामाणिकत्वेन वस्तुत्वादुपनिषदो नाद्वयमानतेत्याशङ्क्य पूर्वोक्तहेत्वसिद्धिं मत्वाऽऽह—यथेति । दृष्टानि वस्तूनि तथैवाऽऽदाय तेषु शोभनाशोभनाध्यासद्वारा रागद्वेषौ कृत्वा तदधीनः सन्निष्टं मे स्यान्नानिष्टमित्यर्थयमानस्तत्साधनान्येवान्वेषते तस्य तदुक्त्यैव कर्मश्रुतिरवस्यति न तु साधनादेर्वास्तवत्वादौ व्याप्रियत इत्यर्थः ॥५७४-५७५॥

१. सिद्धार्थबोधकं वेदान्तवाक्यं साध्यार्थबोधकं कर्मोपासनवाक्यं तेन साध्यायाः भावनायाः बोधनात्

यथा काम्याग्निहोत्रादौ साध्यसाधनसंगतिम् । विदधन्नानृतत्वादि कामानां वक्ति कुत्रचित् ॥७६॥
न चापि न प्रवर्तन्ते पुरुषाः काम्यकर्मसु । यतोऽतत्त्वविदां कामो न कदाचिन्निवर्तते ॥७७॥
अकामतः क्रिया काचिद्दृश्यते नेह कुत्रचित् । यद्यद्धि कुरुते किंचित्तत्तत्कामस्य चेष्टितम् ॥७८॥
स यथाकाम इत्यादिरेषोऽर्थश्च सविस्तरः । वक्ष्यतेऽकामयमानश्च तथाऽकुर्वन्विमुच्यते ॥७९॥
सर्वाधिकारप्रध्वंसान्न कृत्स्नात्मावबोधिनः । प्रवृत्तौ वा निवृत्तौ वा गुणभावः सदेष्यते ॥८०॥
अतो निर्विषयत्वादि ब्रह्मैकत्वाद्यदीरितम् । तत्सर्वं परिहृतं ज्ञेयं यथोक्तेनैव वर्त्मना ॥८१॥
न निवर्तयितुं शक्तं रागाद्याकृष्टचेतसः । शास्त्रं विरक्तचित्तान्वा न प्रवर्तयितुं क्षमम् ॥८२॥

शास्त्रस्य कुत्र व्यापारः ? तदुच्यते

इष्टानिष्टफलानीति साधनानि प्रकाशयेत् । न निवृत्तिं प्रवृत्तिं वा पुंसः शास्त्रं करोति तत् ॥८३॥
अपि शास्त्रं समुल्लङ्घ्य रागादिबलवत्तया । प्रवर्तमानाः पुरुषा दृश्यन्तेऽद्यापि कामिनः ॥८४॥
साध्यसाधनसंबन्धानिष्टानिष्टफलोदयात् । शास्त्रं त्वादित्यवत्साक्षात्प्रकाशयति तान्सदा ॥८५॥
तेषु शास्त्रैकदीपेषु साध्यसाधनवर्त्मसु । यथारुचि प्रवर्तन्ते पुरुषा न तु शास्त्रतः ॥८६॥
विधिशास्त्रस्य नैवातो वेदान्ता बाधकाः सदा । न च निर्विषयं तत्स्यान्मेयभेदात्त्वगादिवत्[1] ॥८७॥

उक्तमर्थं दृष्टान्तेन समर्थयते—यथेति । काम्येषु कर्मसु प्रवृत्तं शास्त्रमज्ञातं संबन्धं ज्ञापयत्कामानां तत्फलतदुपायानां मध्ये क्वचिदपि सत्यत्वादि न ब्रूते तथा नित्याग्निहोत्रादावपि शास्त्रं तद्विशेषं बोधयन्न तत्सत्यत्वादि वक्तीत्यर्थः ॥५७६॥

साधनादिसत्यत्वाद्यनुक्तौ कथमधिकारिणां कर्मसु प्रवृत्तिरित्याशङ्क्याऽऽह—न चेति । अपिशब्दान्नित्यकर्मसु चेति यावत् । अज्ञानां प्रवर्तककामसद्भावादित्यर्थः ॥५७७॥

काम्येषु फलेच्छया प्रवृत्तावपि नित्येषु तदभावादप्रवृत्तिमाशङ्क्य तत्रापि कामनिमित्ता प्रवृत्तिरित्यत्र मानमाह—अकामत इति ॥५७८॥

तत्रैव श्रुतिं प्रमाणयति—स यथेति । कामवशात्प्रवृत्तिर्बन्धश्चेत्येतत्प्रसङ्गेन कामाभावान्निवृत्तिः मुक्तिश्चेत्यथाकामयमान इत्यादिशास्त्रमाश्रित्याऽऽह—अकामयमानश्चेति । अकुर्वन्निति च्छेदः ॥५७९॥

ज्ञानिनोऽकामस्यापि प्रवृत्तिदृष्टेः कथमकामस्याकुर्वतो मुक्तिरित्याशङ्क्याऽऽह—सर्वेति । अधिकारो विधिपुरुषसंबन्धादिः । गुणभावः कर्तृत्वम् ॥५८०॥

कर्मकाण्डस्य सत्यत्वादावुदासीनतया संबन्धबोधित्वे सिद्धे प्रकृतमनुमानदूषणमुपसंहरति—अत इति । तस्य स्वार्थत्वे काण्डान्तरस्य नैरर्थक्येनामानत्वमेकत्वे निर्विषयत्ववदुपदेशतद्ग्रहफलाभावश्चाऽऽदिशब्दार्थः । अतःशब्दार्थमाह—यथेति । अज्ञस्याविरक्तस्य कर्मणि प्रवृत्तेः संबन्धे च तद्वाक्यात्प्रमितेर्युक्तं तत्काण्डप्रामाण्यं तस्य च तत्सत्यत्वादौ ताटस्थ्यादविरुद्धोपनिषदोऽपि मानतेत्यर्थः ॥५८१॥

कर्मशास्त्रं संबन्धं बोधयत्प्रवृत्त्यादिपरमतो रागादिवशात्तदयोगाच्छास्त्रीयप्रवृत्त्यादिविषयस्य सत्यत्वापत्तिरित्याशङ्क्याऽऽह—नेत्यादिना । अकारकत्वादित्यर्थः ॥५८२॥

किं तर्हि शास्त्रं करोति तदाह—इष्टेति । व्यावर्त्यमाह—नेति ॥५८३॥

शास्त्रान्न प्रवृत्तिरित्यत्र युक्त्यन्तरमाह—अपीति ॥५८४॥

कर्मशास्त्रकृत्यं निगमयति—साध्येति ॥५८५॥

कामस्य प्रवर्तकत्वं न शास्त्रस्येत्युपसंहरति—तेष्विति ॥५८६॥

तस्य प्रवर्तकत्वे किं जातं तदाह—विधीति । काण्डद्वयं तच्छब्दार्थः । कल्पितकर्मादिविषयत्वात्कर्मवाक्यस्याकल्पिताद्वयार्थत्वाच्च ब्रह्मवाक्यस्य न विरोधस्तयोरित्यर्थः ॥५८७॥

---

१. त्वगादिवत्—यथा त्वगादीनां चक्षुर्विषयातिरिक्तविषयज्ञापकत्वं तद्वत् ।

अद्वैतशास्त्रस्य प्रत्यक्षादिविरोध इति तार्किकपक्षः

केचित्तु पण्डितंमन्या विरोधीनि परस्परम् । संभावयन्ति मानानि सर्वाण्यैकात्म्यवस्तुनि ॥८८॥
श्रोत्रादिभिर्यतो भिन्ना मिथः शब्दादयस्त्वमी । मीयन्ते सर्वमात्मेति प्रत्यक्षेण विरुध्यते ॥८९॥
शब्दाद्यर्थोपलब्धारः कर्तारश्च पृथक्पृथक् । यस्मादिहानुमीयन्ते तस्माल्लिङ्गविरोधिता ॥९०॥
तथाऽऽगमविरोधं च ग्रामकामादिभेदतः । उद्भावयन्ति संहृष्टा ब्रह्मैकत्वप्रदूषकाः ॥९१॥

प्रत्यक्षादिविरोधपरिहारः

ब्रह्मैकत्वविरोधो वः कथं भिन्नार्थबुद्धिभिः । इतिब्रह्मविदोपेत्य प्रष्टव्या भेदवादिनः ॥९२॥
किं भोः शब्दादिभेदेन खस्यैकत्वं विरुध्यते । न चेद्विरुध्यतेऽथोच्चैर्विरोधः किमितीर्यते ॥९३॥

प्रत्यक्षादीनां सन्मात्रग्राहित्वनिरूपणम्

सत्परिच्छेदकैर्नापि प्रत्यक्षाद्यैर्ग्रहो भवेत् । व्यावृत्तेरन्यतोभावमात्रायाः केनचित्क्वचित् ॥९४॥
द्वैतग्राहि यथा मानं न किंचिदपि विद्यते । तथोदर्के[1] प्रवक्ष्यामि नातो मानविरोधिता ॥९५॥
यच्चोक्तमनुमीयन्ते प्रतिदेहं पृथग्विधाः । शब्दाद्यर्थोपलब्धारः कर्तारश्चापि कर्मणाम् ॥९६॥
भिन्नः कैरनुमीयन्त इति पृष्टो वदेद्यदि । अस्माभिर्लिङ्गकुशलैरित्येतच्च न युक्तिमत् ॥९७॥
अनन्यमानमेयेऽर्थे न भेदः प्रत्यगात्मनि । पराङ्मानप्रमेयाश्च नाऽऽत्मानः स्तम्भकुम्भवत्॥९८॥

स्वपक्षे सर्वविरोधनिरासद्वारा वेदान्तानां स्वार्थे प्रामाण्यमुक्त्वा तार्किकपक्षमाह—केचित्त्विति । ऐक्यवस्तुनि शास्त्रगम्ये गृहीते सतीति यावत् ॥५८८॥

तत्राध्यक्षविरोधं ब्रह्मशास्त्रस्य ब्रूते—श्रोत्रादिभिरिति ॥५८९॥

तस्यानुमानविरोधमाह—शब्दादीति । इह देहेषु पृथक्पृथगनुमीयन्त इति संबन्धः । स्वदेहसमवेतचेष्टातुल्यचेष्टा देहान्तरेषु दृष्टा सा यत्नवत्पूर्वा विशिष्टचेष्टात्वात्संमतवदित्यनुमानविरुद्धमैक्यशास्त्रमिति भावः ॥५९०॥

तत्रैवाऽऽगमविरोधमाह—तथेति । तेषां हर्षे हेतुमाह—ब्रह्मेति ॥५९१॥

मानत्रयविरोधान्न ब्रह्मैक्यमिति प्राप्ते पृच्छति—ब्रह्मैकत्वेति ॥५९२॥

किं तदैक्यमध्यक्षादिविरुद्धं किंवा तदद्वयत्वमिति विकल्प्याऽऽद्यं दृष्टान्तेन निराचष्टे—किमिति । अथ न विरुध्यते चेदिति संबन्धः । यथा सर्वभूतस्थमेकमाकाशमित्युक्तेर्न शब्दादिभेदग्राहिप्रत्यक्षादिविरोधो भिन्नविषयत्वात्तथा सर्वभूतस्थमेकं ब्रह्मेत्युक्तेरपि न तत्प्रत्यक्षेण विरोध इत्यर्थः ॥५९३॥

ब्रह्माद्वयत्वं तद्विरुद्धमिति पक्षं प्रत्याह—सदिति । सन्मात्रग्राहित्वादध्यक्षादीनां न तैरन्योन्याभावमात्ररूपव्यावृत्तेः कुतश्चित्क्वचित्केनचिद्ग्रहः स्यादितरेतराश्रयादिदोषादतो न तैस्तद्विरुद्धमित्यर्थः ॥५९४॥

किंच तेषां द्वैतग्राहित्वं संबन्धादौ निरस्तमित्याह—द्वैतेति । उत्तरत्रापि तद्वक्ष्यते सृष्टिविचारादावित्याह—तथेति । ब्रह्माद्वयस्याविरुद्धत्वं निगमयति—नात इति ॥५९५॥

अनुमानविरोधमनुवदति—यच्चेति ॥५९६॥

या चेष्टा सा यत्नवत्पूर्वेत्येतावता नाऽऽत्मभेदः स्वप्रयत्नपूर्वत्वस्यापि संभवात्स्वदेहचेष्टायाः स्वयत्नपूर्वत्ववत्परदेहचेष्टायास्तद्यत्नपूर्वत्वे चाऽऽदावेव स्वपरभेदः सिध्येत्स च नाध्यक्षात्परस्यानध्यक्षत्वान्नानुमानादन्योन्याश्रयदिति मत्वाऽऽह—भिन्ना इति । दोषान्तराभिधित्सया शङ्कयति—इति पृष्ट इति । तत्र दूषणमाह—एतच्चेति ॥५९७॥

अयुक्तिमत्त्वं प्रकटयति—अनन्येति । यस्याऽऽत्मनो भेदः साध्यः स स्वप्रकाशो दृश्यो वा ? आद्ये तस्यागोचरत्वात्तद्भेदो न मानतः सिध्येद्द्वितीये दृश्यस्य स्तम्भादिवदनात्मत्वाद्धर्म्यसिद्धेस्तद्भेदासिद्धिरित्यर्थः ॥५९८॥

---

१. उदर्के—पूर्णमदः—इत्यारभ्याधीतायां कण्डिकायां ( ५–९–७ ) ।

अनुमाकुशला यूयं क इत्येतद्विभाष्यताम् ॥९९॥
देहेन्द्रियमनोबुद्धिक्षेत्रज्ञेषु पृथक्पृथक् । नानुमाकौशलं तावत्प्रत्येकं तेषु विद्यते ॥६००॥
देहादिसाधनास्तस्माद्वयमात्मान एव हि । भूरिसाधनसाध्यत्वात्क्रियाणां नो विभिन्नता ॥ १ ॥
भूरिसाधनसाध्यत्वात्क्रियाणामिति चेद्भवेत् । हेतुस्तवाप्यनेकत्वमेकस्यापि प्रसज्यते ॥ २ ॥
आत्मादीनां क्रियास्तित्वात्प्रत्येकं कारकत्वतः । अग्न्यादीनामिव तत आत्मानेकत्वमापतेत् ॥ ३ ॥
अनुमाऽपि क्रिया साक्षाद्भवतैवाभ्युपेयते । शरीरेन्द्रियबुद्ध्यादेः प्रत्येकं स्यादनेकता ॥ ४ ॥
बहुसाधनसाध्यत्वात्क्रियाणामितिहेतुतः । एवंलक्षणहेतूक्तिमौर्ख्यलिङ्गं भवेदतः ॥ ५ ॥
गुणक्रियाणां सर्वासां कर्तृमात्रव्यपाश्रयात् । अनैकान्तिकता हेतोस्तथा वः संप्रसज्यते ॥ ६ ॥
अपक्षधर्मता हेतोर्नामरूपाश्रयत्वतः । धर्माभावात्प्रतीचश्च तद्भेदे हेतुता कुतः ॥ ७ ॥

अस्माभिर्लिङ्गकुशलैरित्यत्रास्मदर्थं पृच्छति—अनुमेति । स स्थूलदेहो वा करणजातं वा देहद्वयान्यो वा ? नाऽऽद्यौ तयोरचेतनत्वादनुमातृत्वायोगान्नान्त्यस्तस्याविकारित्वादिति भावः । किंशब्दस्य प्रश्नार्थतां मत्वा पूर्ववाद्याह—देहेति । तेष्वेकैकत्रानुमातृत्वं त्वयैव निरस्तं यतस्तेषु प्रत्येकं नानुमाकौशलमतो देहादिबहुसाधनविशिष्टोऽनुमाता क्रियाणामनेककारकसाध्यत्वादेवंविशिष्टात्मकर्तृकानुमानात्प्रतिदेहमात्मभेदधीरित्यर्थः ॥५९९–६००–६०१॥

परस्यास्मदर्थोक्तिं निरस्यति—भूरीति ॥६०२॥

विशिष्टस्याऽऽत्मनोऽनुमाकर्तृत्वे क्रियाणामनेककारकसाध्यत्वादिति चेद्धेतुस्तदा तव देहादेश्चैकैकस्याप्यनेकत्वं स्यादित्युक्तं विवृणोति—आत्मादीनामिति । आत्मनो देहादीनां चानुमाकारकाणां प्रत्येकमवान्तरक्रियाऽस्ति सर्वैरेवाग्न्यादिकारकाणां तथाव्यापाराङ्गीकारात्ततश्चाऽऽत्मनोऽवान्तरक्रिया किमनेककारकसाध्या किंवा न ? आद्येऽप्यात्मातिरिक्तानेककारकसाध्या वा तदनतिरिक्ततत्साध्या वा ? नाऽऽद्योऽनवस्थानाद्द्वितीये त्वात्मनोऽनेकत्वापत्तिस्तथा च पाकहेत्वग्न्यादीनामिवानुमातर्यनेकताप्राप्तेर्नैरात्म्यं स्यादित्यर्थः ॥६०३॥

अनुमातुरवान्तरक्रियैव नास्ति तद्धेतुष्वेव तदुपगमादनुमायाश्च ज्ञानत्वेनाक्रियात्वादित्याशङ्क्याऽऽह—अनुमाऽपीति । धात्वर्थत्वादित्यर्थः । भाट्टमते वा ज्ञानस्य क्रियात्वाङ्गीकारादित्यर्थः । आत्मन्युक्तन्यायं देहादावतिदिशति—शरीरेति । तस्यावान्तरक्रियाऽस्ति न वा ? न चेदकारकत्वमस्ति चेत्प्रत्येकमनेकत्वं त्वदुक्तहेतोस्तत्रावान्तरक्रियाया बहुकारकसाध्यत्वात्तस्यास्तदतिरिक्तानेककारकसाध्यत्वेऽनवस्थानादिति[1] भावः । विशिष्टस्याऽऽत्मनोऽनुमातृत्वे क्रियाणामनेककारकसाध्यत्वादिति हेतुं वदन्नुक्तन्यायाद्विद्वदुपहासः स्यादित्याह—एवमिति ॥६०४–६०५॥

कारकावान्तरव्यापारस्यानेककारकसाध्यत्वं निरस्य पक्षान्तरं निरस्यति—गुणेति । कारकावान्तरव्यापाराणामनेककारकसाध्यत्वे तेषां स्वकर्तृमात्रनिष्ठत्वादनेककारकसाध्यत्वसाध्याभावेऽपि क्रियात्वहेतोः सत्त्वाद्व्यभिचारः स्यादित्यर्थः ॥६०६॥

अनुमातुरयोगेनानुमानानुत्थानमुक्त्वा तल्लिङ्गमपि दुर्वचमिति मन्वानः सांख्येष्टजन्मादीनां प्रतिनियमादि लिङ्गं दूषयति—अपक्षेति । न हि पुरुषबहुत्वसाधकं[2] जन्मादि युक्तं नामरूपात्मकदेहनिष्ठत्वेनाऽऽत्मन्यप्रवृत्तेरित्यर्थः । आत्मा[3] द्रव्यत्वातिरिक्तापरजातीयोऽश्रावणविशेषगुणवत्त्वाद्घटवदिति तार्किकानुमानमाशङ्क्याऽऽह—धर्मेति ।

१. अनवस्थानात्—अवान्तरव्यापारकारकाणामपि अन्यादृशावान्तरव्यापारावश्यकतया तस्यापि आत्मातिरिक्तानेककारकसाध्यत्वे तादृशकारकव्यापाराया अपि कारकान्तरापेक्षया अनवस्था ।

२. जननमरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च पुरुषबहुत्वं सिद्धम्—इति सांख्यकारिकायां जन्मादीनां पुरुषबहुत्वानुमायकत्वमुक्तं, तद्दूषयति—जन्मादीनां देहनिष्ठत्वेन पक्षीभूतात्मनिष्ठत्वाभावात् ।

३. आत्मेति—द्रव्यत्वातिरिक्तापरजातीयः द्रव्यत्वभिन्नद्रव्यत्वव्याप्यात्मत्वजातिमानित्यर्थः । अपरजातीय इत्युक्ते द्रव्यत्वमादाय सिद्धसाधनं अतः तदतिरिक्तेति । अपरेत्यनुक्तौ सत्तामादाय सिद्धसाधनमतः अपरेति । विशेषगुणजत्वादित्युक्तौ गगने व्यभिचारः अतः अश्रावणेति । गगने शब्दविशेषगुणः श्रावणः अतो न व्यभिचारः ।

ऐकात्म्यवन्तो देहाः स्युर्विवादो येषु वर्तते । शरीरत्वाविशेषत्वात्प्रतिवादिशरीरवत् ॥ ८ ॥
तथेन्द्रियमनोबुद्धिविषयेष्वपि योजयेत् । ऐकात्म्यं सर्वभूतेषु प्रात्यक्ष्याच्चाऽऽत्मनस्तथा॥ ९ ॥
आत्मप्रत्यय एकात्मा सर्वदेहेषु सर्वदा । नानात्मवदनेकत्वं कश्चिदात्मनि वीक्षते ॥१०॥
अनुमानादनेकत्वमात्मनो ये प्रचक्षते । तेषां प्रत्यक्षमानेन बाधो लिङ्गधियो भवेत् ॥११॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके द्वितीयाध्यायस्य
प्रथममजातशत्रुब्राह्मणम् ॥१॥

श्लोकानामादितः समष्टयङ्काः–४७०८

# अथ द्वितीयाध्याये द्वितायं ब्राह्मणम्

## पूर्वाध्यायेन सम्बन्धकथनम्

जगज्जनिस्थितिध्वंसा यस्मात्सिध्यन्ति तत्परम् । ब्रह्मेति प्राक्प्रतिज्ञाय यथावदुपदर्शितम् ॥ १ ॥
तस्योपनिषदित्युक्तं तद्व्याख्याऽत्राधुनोच्यते । आ मैत्रेय्याः परब्रह्मसत्यस्य प्रतिपत्तये ॥ २ ॥
सृष्टिप्रस्ताव एतस्मिन्प्राणादेर्जन्म सूत्रितम् । यतोऽतः प्राणसम्बन्धात्पूर्वं व्याख्या प्रपञ्च्यते ॥ ३ ॥

न हि प्रतीचो गुणवत्ता "केवलो निर्गुणश्चे"ति श्रुतेः । सुखादीनां च मनोधर्मत्वा"देतत्सर्वं मन एवे"ति श्रुतेस्तस्मादात्मभेदे नोक्तगुण त्वस्य हेतुताऽन्यतरासिद्धेरिति भावः ॥६०७॥

भेदानुमाने लिङ्गाभावमुक्त्वा प्रत्यनुमानमाह—ऐकात्म्येति । प्रतिवादिदेहान्यदेहास्तदात्मना तादात्म्यवन्तो जीवद्देहत्वात्संमतवदित्यर्थः ॥६०८॥

देहेषूक्तन्यायमिन्द्रियादिष्वतिदिशति—तथेति । विमतानि प्रतिवादिभोगसाधनानीन्द्रियत्वात्प्रतिवादीन्द्रियवदेवं मनोबुद्धिविषयान्पक्षीकृत्यानुमातव्यं तद्देहवदिन्द्रियादिष्वप्यैकात्म्यमनुमानेन योजयेदित्यर्थः । भेदानुमानस्यानुमाविरोधवदध्यक्षविरोधमाह—सर्वेति ॥६०९॥

किं तत्प्रत्यक्षं तदाह—आत्मेति । सर्वेषु चराचरशरीरेष्वात्मा स्वप्रकाशश्चिदेकरसः सदा विदुषाऽनुभूयते तद्विद्वदध्यक्षविरुद्धानुमेत्यर्थः । अविद्वद्दृष्टेरनुमानुगुणत्वात्तयैव बलवत्त्वादध्यक्षं बाध्यमित्याशङ्क्याऽऽह—नेत्यादिना । आत्मनः स्वप्रकाशत्वे दृश्यत्वे च तद्भेदो मानतो न सिध्यतीत्युक्तमिति भावः ॥६१०॥

अनुमानुग्राहकाध्यक्षाभावान्न तेनाध्यक्षं बाध्यं किंतु तेनैवानुमेत्युपसंहरति—अनुमानादिति । एवं प्रत्यगसंसारिब्रह्मणो वेदान्तप्रमाणकस्य "सत्यस्य सत्यमि"त्युपनिषदिति स्थितम् ॥६११॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां द्वितीयाध्याये
प्रथममजातशत्रुब्राह्मणम् ॥१॥

वृत्तवर्तिष्यमाणयोः संगतिं वक्तुं वृत्तं कीर्तयति—जगदिति । ब्रह्म ते ब्रवाणीति प्रक्रम्य व्येव त्वेति प्रतिज्ञाय जगतो जन्मादयो यतस्तद्ब्रह्मेति यथावदुक्तमित्यर्थः ॥१॥

उक्तमर्थान्तरं स्मारयित्वोत्तरब्राह्मणद्वयतात्पर्यमाह—तस्येति । प्रत्यग्ब्रह्म तच्छब्दार्थः । उपनिषद्व्याख्याह—परेति ॥२॥

तत्र शिशुब्राह्मणप्राथम्ये हेतुमाह—सृष्टीति । सृष्टेर्यस्मिन्वाक्ये प्रस्तावस्तस्मिन् अस्मादित्यादौ प्राणानां सृष्टिं शिष्ट्वा लोकादेरुपरिष्टात्तदुक्तेः प्रथमं प्राणसंबन्धोपनिषद्व्याख्या क्रियत इत्यर्थः ॥३॥

---

मैत्रेय्याः—मैत्रेयीब्राह्मणपर्यन्तग्रन्थेन ।

'दात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वाणि च भूतानीत्यत्र प्राणसृष्टेः प्रथमोक्तत्वात् प्राणोपनिषदः प्रथमं ानम् ।

ततः परेण लोकादेरपि याथात्म्यमुच्यते । अध्यात्ममधिदैवं च देवताकरणाश्रयम् ॥ ४ ॥
प्राणादि सर्वमेवेदं पञ्चभूतसतत्त्वकम् । न हि भूतातिरेकेण प्रतीचः किंचिदिष्यते ॥ ५ ॥
प्राणा वै सत्यमित्युक्तं के प्राणा इति यत्नतः । व्याख्यायन्तेऽथ ते प्राणास्तथोपनिषदश्च याः ॥ ६ ॥
प्राणेन मध्यमेनान्नं जग्धं वागादितर्पणम् । यथा करोति तद्वाच्यं प्राणोपनिषदश्च याः ॥ ७ ॥

मू.—यो ह वै शिशुँ साधानँ सप्रत्याधानँ सस्थूणँ सदामं वेद सप्त ह द्विषतो भ्रातृव्यानवरुणद्धि । अयं वाव शिशुर्योऽयं मध्यमः प्राणस्तस्येदमेवाधानमिदं प्रत्याधानं प्राणः स्थूणान्नं दाम ॥१॥

प्रथमखण्डस्य तात्पर्योक्तिः

यो ह वा इतिप्रश्नोक्तिस्तस्यायमिति निर्णयः । शरीरेऽभ्याहितः प्राणो मूर्ध्नि प्रत्याहितस्तथा॥ ८ ॥
विषयेष्वनभिष्वङ्गाच्छिशुः प्राणोऽभिधीयते । वागादेरिव नाऽऽसङ्गो यतः प्राणस्य विद्यते ॥ ९ ॥
शीर्षण्यप्राणसंस्था ये शब्दाद्यासङ्गलक्षणाः । भ्रातृव्यास्ते सहोत्पत्तेः प्रत्यग्दृष्ट्यपहारतः ॥१०॥
शरीरमस्याऽऽधानं स्याच्छरीरेऽवस्थितो यतः । सामान्यवृत्त्या प्राणोऽयं तस्मादाधानमुच्यते ॥११॥
शरीराश्रयिणं प्राणं यतो वागादयः श्रिताः । अलं स्वकार्यनिष्पत्तौ न तु प्राणैकसंश्रिताः ॥१२॥
प्रति प्रत्याहितत्वाच्च प्रत्याधानं शिरो विदुः । शिरोदेशविशेषेषु प्रति प्रति स आहितः ॥१३॥
अन्नपानसमुत्था हि शक्तिः प्राणो बलं तथा । बलावष्टम्भ एतस्मिन्प्राणो देहेऽवतिष्ठते ॥१४॥

मूर्तामूर्तब्राह्मणस्य तात्पर्यविशेषं वदन्पाश्चात्ये निमित्तमाह—तत इति । प्राणयाथात्म्योक्तेरनन्तरमिति यावत् । सृष्टिवाक्ये प्राणापेक्षया लोकादेरूर्ध्वमुक्तेरित्यानन्तर्ये हेतुमाह—परेणेति । किं तत्प्राणलोकादियाथात्म्यं तदाह—अध्यात्ममिति । आश्रयशब्दः स्वार्थः । एतस्मादित्यात्मकार्यत्वदृष्टेस्तस्य कथं पञ्चभूतात्मकत्वं तत्राऽऽह—न हीति । प्रतीचोऽज्ञानद्वारा क्रमेणाऽऽकाशादिभूतानि जायन्ते तेभ्यो द्वैतप्रपञ्चो न तु साक्षात्प्राणाद्यात्मनः संभवति न हि कूटस्थस्य कारणत्वं स्वतोऽस्तीत्यर्थः ॥४-५॥

पूर्वेणोत्तरयोः संगतिस्तत्पौर्वापर्यं चोक्तमिदानीं प्राणसंबन्धात्पूर्वं व्याख्येत्यत्र सूत्रितं संबन्धमनूद्यानन्तरब्राह्मणमवतारयति—प्राणा इति । आकाङ्क्षानन्तर्यमथशब्दार्थः । संक्षेपविस्तरात्मको व्याख्याने यत्नः ॥६॥

व्याख्यानमेव संक्षिप्याऽऽह—प्राणेनेति । मध्यमेन मुखनासिकासंचारिणा मुख्येनेति यावत् ॥७॥

ब्राह्मणमवतार्य तमित्यतः प्राक्तनस्य विभागमाह—यो हेति । यो हेत्यादि वेदेत्यन्तं तस्य किमिति साध्याहारं प्रश्नवाक्यं तस्य सप्तेत्यादि फलवचनमयमित्यादि दामेत्यन्तेन सह निर्णयवाक्यमिति भेदः । साधानमित्यादि व्याचष्टे—शरीर इति । तथाशब्देन वक्ष्यमाणस्थूणादामसाहित्यं प्राणस्योक्तम् ॥८॥

तस्य श्रौतं शिशुत्वं साधयति—विषयेष्विति । हेतोरसिद्धिमाशङ्क्याऽऽह—वागादेरिति ॥९॥

यो यथोक्तविशेषणं प्राणं वेद स सप्त द्विषतो भ्रातृव्यान्नाशयतीतिफलोक्तिस्थभ्रातृव्यशब्दार्थमाह—शीर्षण्येति । तेषां भ्रातृव्यत्वे हेतुः सहेति । द्वेष्टृत्वे हेतुः प्रत्यगिति ॥१०॥

तस्येदमेवाऽऽधानमित्यस्यार्थमाह—शरीरमिति । सामान्यवृत्त्या साधारण्या स्पन्दरूपव्याप्त्येति यावत् ॥११॥

तत्र हेत्वन्तरमाह—शरीरेति । पञ्चधा व्युह्य देहस्थितप्राणाश्रितानि करणानि कार्यकराणि न तु मूर्छादौ तद्ग्रस्तान्यतः शरीरं तस्याऽऽधानमित्यर्थः ॥१२॥

इदं प्रत्याधानमित्यस्यार्थमाह—प्रतीति । तदेव स्फोरयति—शिर इति ॥१३॥

प्राणः स्थूणेत्यत्र प्राणशब्दार्थमाह—अन्नेति । बलस्य शक्तेरन्नपानसमुत्थत्वमन्वयव्यतिरेकसिद्धमिति हिशब्दार्थः । कथं तस्य स्थूणात्वं तदाह—बलेति ॥१४॥

स्थूणावाक्यस्य भर्तृप्रपञ्चव्याख्या

अबल्यं नीत्वेति तथा प्राणोत्क्रान्तिः प्रवक्ष्यते । उच्छ्वासादिक्रियं केचिद्वायुं स्थूणां प्रचक्षते ॥१५॥

अन्नं दामेत्यस्यार्थः

जाठराग्न्यभिसंबन्धाज्जग्धमन्नं त्रिधा क्रमात् । परिणामं व्रजत्येतत्स्थूलमध्यमसूक्ष्मतः ॥१६॥

स्थूलांशः पृथिवीमेति पुरीषं मूत्रमेव च । स्थूलदेहोपचित्यर्थो मध्यमोंऽशः प्रकीर्तितः ॥१७॥

यस्तु सूक्ष्मो रसोऽन्नस्य भागोऽमृतमितीर्यते । स हृद्देशं समागम्य नाडीमध्यसमाश्रयः ॥१८॥

हृदयाद्विप्रकीर्णाभिर्नाडीभिर्लिङ्गदेवताः । प्रीणयन्नुपचिन्वंश्च दामान्नमिति भण्यते ॥१९॥

देहं रसादिना बद्ध्वा सूक्ष्मांशेन शिशुं तथा । पाशद्वयाभिसम्बन्धादन्नं दामेति शब्द्यते ॥२०॥

दाम प्रतनुतां याति यदा कर्मक्षयात्तदा । यथास्वं यान्त्यथ प्राणा देहादुच्छिन्नबन्धनाः ॥२१॥

मू.—तमेताः सप्ताक्षितय उपतिष्ठन्ते तद्या इमा अक्षन्लोहिन्यो राजयस्ताभिरेनँ रुद्रोऽन्वायत्तोऽथ या अक्षन्नापस्ताभिः पर्जन्यो या कनीनका तयाऽऽदित्यो यत्कृष्णं तेनाग्निर्यच्छुक्लं तेनेन्द्रोऽधरयैनं वर्तन्या पृथिव्यन्वायत्ता द्यौरुत्तरया नास्यान्नं क्षीयते य एवं वेद ॥२॥

तमेता इति खण्डस्य भावः

प्रत्याधानसमूढस्य शिशोस्तस्यैव कात्स्न्र्यन । अक्षण्युपनिषदो वाच्यास्तमेता इत्यतः श्रुतिः ॥२२॥

उपासतेऽक्षणि प्राणं रुद्राद्याः सप्त देवताः । अक्षीणा इति ता ज्ञात्वा नान्नक्षयमुपाश्नुते ॥२३॥

मूर्ध्नि प्रत्याहितं प्राणमृषयः प्राणसंज्ञकाः । रुद्राद्या मध्यमं यत्नात्सततं पर्युपासते ॥२४॥

मू.—तदेष श्लोको भवति । अर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन्यशो निहितं विश्वरूपम् । तस्यासत ऋषयः सप्त तीरे वागष्टमी ब्रह्मणा संविदानेति । अर्वाग्बिलश्चमस ऊर्ध्वबुध्न इतीदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन्यशो निहितं विश्वरूपमिति प्राणा वै यशो विश्वरूपं प्राणानेतदाह तस्यासत ऋषयः सप्त तीर इति प्राणा वा ऋषयः प्राणानेतदाह वागष्टमी ब्रह्मणा संविदानेति वाग्घ्यष्टमी ब्रह्मणा संवित्ते ॥३॥

तत्र मानमाह—अबल्यमिति । यदा देहमबलभावं नीत्वा संमोहमिवाऽऽत्माऽऽप्नोति तदा प्राण उत्क्रामतीति तदुत्क्रान्तिमुक्तार्थानुसारेण षष्ठे वक्ष्यतीत्यर्थः । स्थूणावाक्यस्य भर्तृप्रपञ्चव्याख्यामङ्गीकारार्थमाह—उच्छ्वासादीति । उक्तं हि—प्राण उच्छ्वासनिःश्वासकर्मा वायुः शारीरः शरीरपक्षपाती गृह्यते । एतस्यां स्थूणायां शिशुः प्राणः करणदेवता लिङ्गपक्षपाती गृह्यते । स देवः प्राण एतस्मिन्बाह्ये प्राणे संबद्ध इति ॥१५॥

अन्नं दामेत्यस्यार्थं वक्तुमन्नं हीत्यादिपातनिकाभाष्यं व्याचष्टे—जाठरेत्यादिना ॥१६-१७-१८-१९॥

कथमणिष्ठपरिणामद्वारा तस्य दामत्वमित्याशङ्क्याऽऽह—देहमिति । आदिपदेन त्वङ्मांसादिग्रहः । बद्ध्वा स्थितमिति शेषः ॥२०॥

तस्य दामत्वेऽन्वयव्यतिरेकावाह—दामेति । यदा कर्मवशादन्नस्वरूपं दाम देहे दृढतामेति तदा प्राणास्तत्र बद्धास्तिष्ठन्ति यदा तु कर्मक्षयाद्दाम क्षीयते तदा ते बन्धनहीना देहान्निष्क्रम्य स्वमाधिदैविकं रूपमनतिक्रम्य तद्यान्त्यतो युक्तमस्य प्राणदामत्वमित्यर्थः । यथोक्तान्वयद्योतकोऽथशब्दः ॥२१॥

तमित्यादेस्तात्पर्यमाह—प्रत्याधानेति ॥२२॥

तदित्यादेर्वेदेत्यन्तस्य तात्पर्यमाह—उपासत इति ॥२३॥

रुद्रादिशब्दानां प्रसिद्धदेवताविषयत्वमुक्त्वा प्राणविषयत्वमाह—मूर्ध्नीति । प्राणपदव्याख्यानं मध्यमं प्राणमिति ॥२४॥

मू.—इमावेव गोतमभरद्वाजावयमेव गोतमोऽयं भरद्वाज इमावेव विश्वामित्रजमदग्नी अयमेव विश्वामित्रोऽयं जमदग्निरिमावेव वसिष्ठकश्यपावयमेव वसिष्ठोऽयं कश्यपो वागेवात्रिर्वाचा ह्यन्नमद्यतेऽत्तिर्ह वै नामैतद्यदत्रिरिति सर्वस्यात्ता भवति सर्वमस्यान्नं भवति य एवं वेद ॥४॥

तदेष इत्यादेः व्याख्या

अक्षण्येव यतः पूर्वं व्याख्यातो देवतागणः । श्रोत्रादिकरणार्थोऽयं श्लोकस्तस्मादुदाहृतः ॥२५॥
विश्वरूपं यशो ज्ञेयं [1]शब्दाद्यर्थविभासकम् । तेजस्तच्चाप्यनेकात्म विभिन्नार्थावभासनात् ॥२६॥
तीरे तस्याऽऽसते सप्त वायवः करणाश्रयाः । ऋषयश्च यशश्चेति प्राणा उक्तेन हेतुना ॥२७॥
वक्तृत्वात्तृत्वभेदेन वाग्द्विधैकैव भिद्यते । सप्तमी चाष्टमी चेति सैवैका प्रोच्यते ततः ॥२८॥
वर्णनिष्पादनं वाचा त[2]थाऽऽद्यरसवेदनम् । भवेद्द्विकर्मसंयोगात्सप्तमी चाष्टमी च वाक् ॥२९॥
[3]विशिष्टाह्वानसिद्ध्यर्थमृषीणामुत्तरा श्रुतिः । इमावेवेति च तथा फलवत्स्यादुपासनम् ॥३०॥
सर्वस्येति फलोक्तिः स्यादुक्तोपासनकर्मणः । अ[4]न्नात्तृत्वनिषेधार्थं सर्वमस्येति भण्यते ॥३१॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके द्वितीयाध्यायस्य
द्वितीयं शिशुब्राह्मणम् ॥२॥

श्लोकानामादितः समष्टयङ्काः-४७३९

श्लोकस्य देवताविषयत्वात्तद्विषयत्वमेव रुद्रादिशब्दानां मन्त्रब्राह्मणयोरैकार्थ्यादित्याशङ्क्य तदेष इत्यादेस्तात्पर्यमाह—अक्षणीति । चक्षुषि रुद्रादिगणस्योक्तत्वादिन्द्रियसम्बन्धात्तस्य करणग्रामत्वप्रतीतेस्तद्विषयश्लोको न प्रसिद्धदेवताविषय इत्यर्थः ॥२५॥

तस्मिन्नित्यादेरर्थमाह—विश्वरूपमिति । शब्दादिप्रकाशकं तेजःशब्दितं श्रोत्रादिकरणजातं यशस्तदेव विश्वरूपं तद्धि नानार्थबोधित्वादनेकात्मकं तद्द्विधोक्तं करणजातमित्यर्थः ॥२६॥

तस्येत्यादेरर्थमाह—तीर इति । प्राणा वै यशो विश्वरूपं प्राणा वा ऋषय इति ब्राह्मणयोरर्थं संक्षिपति—ऋषयश्चेति । तेषां स्पन्दात्मकत्वादृषित्वं शब्दादिव्याख्यानहेतुत्वाच्च यशस्त्वमिति भाष्योक्तं हेतुमाह—उक्तेनेति ॥२७॥

वागष्टमीत्ययुक्तं तस्याः सप्तमीत्वेनोक्तत्वान्न चैकस्या द्वित्वमित्याशङ्क्याऽऽह—वक्तृत्वेति । द्विधाभेदे वक्तृत्वेनाष्टम्यत्तृत्वेन च सा सप्तमीत्याह—सप्तमी चेति ॥२८॥

वचनस्य वागिन्द्रियकार्यत्वेऽपि रसास्वादनस्य रसनकार्यत्वात्कथं वाचो द्वैविध्यमित्याशङ्क्याह—वर्णेति । रसवेदनं चर्वणक्रिया ॥२९॥

इमावेवेत्यादेस्तात्पर्यमाह—विशिष्टेति । तेषां भरद्वाजादिनामभिरभिधानं किमर्थमिति तत्राऽऽह—तथेति ॥३०॥

सर्वस्येत्यादेरर्थमाह—सर्वस्येति । सर्वमस्येत्यादि गतार्थमित्याशङ्क्य तत्तात्पर्यमाह—अन्नेति । उपासितुर्यद्भोज्यं तस्य तं प्रति न भोक्तृत्वं किंतु भोग्यत्वमेवेत्यर्थः ॥३१॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां द्वितीयाध्यायस्य
द्वितीयं शिशुब्राह्मणम् ॥२॥

---

१. शब्दावभासकं श्रोत्रं अर्थविभासकं चक्षुरादि उभयं तेजः प्रकाशकत्वसामान्यात् ।
२. आद्यरसवेदनं—अद्यमानानां भक्ष्याणां रसस्य वेदनं वाक् रसस्य चर्वणकार्यं करोति ज्ञानं तु जिह्वयैव ।
३. विशिष्टाह्वानं = विशेषनामधेयं भरद्वाज इत्यादिकम् ।
४. अन्नस्यात्तृत्वनिषेधार्थमिति विग्रहः "सर्वस्यात्ता भवति" इत्यनेनात्तृत्वोक्तेः सर्वमन्नमस्य भोज्यमित्यर्थः ।

मतं मूर्तेतरे रूपे ब्रह्मणोऽभिमते सदा । क्षेत्रज्ञस्य तु नैवैते वासनामात्ररूपितः ॥४३॥
तदाऽपि जीवद्वारेण विक्रियां व्रजतो विभोः । वासनाद्यभिसम्बन्ध इतीयं गीरनर्थिका ॥४४॥
वासनानामपि यतो न विशेषो मनागपि । क्षेत्रज्ञद्वारतायाः स्यादसत्तस्माद्विकल्पितम् ॥४५॥
वस्तु वस्त्वन्तरत्वेन न च विक्रियतेऽञ्जसा । वृत्त्येह मुख्ययेत्येवं शक्यो वक्तुं जगत्यपि ॥४६॥
वस्त्वन्तरं न च मतः क्षेत्रज्ञः परमात्मनः । सिद्धान्तहानिरेवं च कल्पनायां ध्रुवं भवेत् ॥४७॥
आविश्चिकीर्षुभिस्तस्माद्वेदान्तार्थं महात्मभिः । ईदृशी कल्पनाऽयुक्ता कर्तुं परहितार्थिभिः ॥४८॥

"तस्य हैतस्ये"त्यस्य स्वमतेन विवरणम्

दक्षिणेऽक्षन्पुमानिति लिङ्गात्मा परिगृह्यते । अध्यात्मेऽथाधिदैवे च तस्यैव प्रकृतत्वतः ॥४९॥
जीवग्रहोऽत्र नन्वस्तु प्रकृतत्वाविशेषतः । तस्यैवैतानि रूपाणि कस्मान्नेत्यभिधीयताम् ॥५०॥
नैवंरूपितया यस्मादिह श्रुत्या विवक्षितः । क्षेत्रज्ञः करणात्मैव तस्मादिह विवक्षितः ॥५१॥
वासनानुगतं लिङ्गं मृद्वन्मृद्विक्रियात्मसु । चेत्यते साक्षिणा यस्मान्नातः क्षेत्रज्ञरूपिता ॥५२॥

जीवो रूपिराशावन्तर्भूतस्तथा सति द्वे इति द्विवचनं वावेत्यवधारणमेवकारश्चायुक्ता रूपमध्ये त्रैविध्यसंभवादित्यर्थः । त्रैरूप्यं स्फोरयति—मूर्तेति ॥१४२॥

विषयभेदेन द्विवचनाद्यविरोधं शङ्कते—मतमिति ॥१४३॥

इत्थं व्यवस्थायां जीवद्वारा विक्रियमाणस्य परस्य रूपे मूर्तामूर्ते इत्युक्तिरयुक्ता वासनाकर्मादेरपि तद्द्वारा तत्र संबन्धादित्याह—तदाऽपीति ॥१४४॥

कुतो जीवद्वारा वासनानां परस्मिन्प्रसक्तिस्तत्राऽऽह—वासनानामिति । विशेषो मूर्तामूर्तरूपाभ्यामिति शेषः । जीवद्वारा विक्रियमाणस्य परस्य ते रूपे जीवस्य तु वासना रूपमितिव्यवस्थाकरणमस्थाने संभ्रममात्रमिति फलितमाह—असदिति । न च जीवद्वारतां विना परस्य ते द्वे रूपे स्तामिति वाच्यं वासनारूपस्यापि तद्वदेव तस्मिन्प्रसङ्गादिति भावः ॥१४५॥

अस्तु तर्हि जीवात्मना परिणतस्य परस्य वासनामयमपि रूपमित्याशङ्क्याऽऽह—वस्त्विति । इह जगति सर्वत्रापि वस्तुतो वस्तु वस्त्वन्तरत्वेन विक्रियत इत्येवंविधोऽर्थो वक्तुं न शक्य इत्यन्वयः । अञ्जसेत्यस्य व्याख्या मुख्यया वृत्त्येति । न हि तथाभूतं परिणमते विरोधान्नान्यथाभूतमनवस्थितेरिति भावः ॥१४६॥

किंच जीवस्य ब्रह्मणो वस्त्वन्तरत्वमात्यन्तिकमनात्यन्तिकं वा? नाऽऽद्योऽपराद्धान्तादित्याह—वस्त्वन्तरमिति । द्वितीयो भेदाभेदनिरासान्निरस्त इति चार्थः ॥१४७॥

भर्तृप्रपञ्चदूषणमुपसंहरति—आविश्चिकीर्षुभिरिति । ईदृशी राशित्रयं जीवस्य कामाद्याश्रयत्वमित्याद्येत्यर्थः । अयुक्तेति च्छेदः ॥१४८॥

परोक्तं तस्येत्यादेः संबन्धं तदीयप्रक्रियां च प्रत्याख्याय स्वमते तच्छब्दार्थमाह—दक्षिणेऽक्षन्निति । तस्य हेत्यत्र तच्छदेन लिङ्गं गृह्यते । योऽयं दक्षिणेऽक्षन्नित्यध्यात्मे य एष इत्यधिदैवे च तस्यैव प्रकृतत्वात्तच्छब्दस्य प्रकृतावलम्बित्वादित्यर्थः । तथाशब्दपर्यायोऽथशब्दः ॥१४९॥

प्रकृतत्वाल्लिङ्गग्रहे जीवस्यापि पाणिपेषवाक्ये तथात्वात्तस्यैवात्र तच्छब्देन ग्रहोऽस्त्विति शङ्कते—जीवेति । प्रकृतत्वेऽपि तस्य वासनारूपित्वाभावान्न तच्छब्दार्थतेत्याशङ्क्याऽऽह—तस्येति ॥१५०॥

निर्विशेषब्रह्मत्वेन जीवस्य ज्ञापयितुमिष्टत्वान्न वासनामयं संसाररूपं तस्य तत्त्वतो युक्तमित्याह—नैवमिति । इहेति प्रकरणोक्तिः । जीवस्य वासनारूपित्वायोगे फलितमाह—करणेति । तस्य हेत्यादिवाक्यमिहेत्यर्थः ॥१५१॥

इतश्च जीवस्य न वासनारूपिता किंतु चित्तस्येत्याह—वासनेति ॥१५२॥

**माहारजनमित्यादि रूपं चेत्साक्षिणो भवेत् । नेति नेतीत्यथाऽऽदेशं नाकरिष्यत्तदाऽऽत्मनः ।।५३।।**
**अन्यस्यासौ न चाऽऽदेशः शक्यो वक्तुं प्रमाणतः । नेति नेतीति तस्यैव षष्ठान्त उपसंहृतेः ।।५४।।**
**व्येव त्वेति प्रतिज्ञाया अर्थवत्त्वं तथा भवेत् । पाणिपेषोत्थितस्यैव यद्यादेशो भवेदयम् ।।५५।।**
**पाणिपेषोत्थितोऽन्यश्चेन्नेतीति च ततोऽपरः । अन्योऽसाविति मिथ्या धीस्तदा स्यान्मोहकारणात्[२] ।।५६।।**
**न स्यादात्मानमेवावेदहं ब्रह्मेतिमानजा । सम्यग्धीर्निखिलध्वान्तघातिनी मुक्तिदायिनी ।।५७।।**
**करणात्मन एवातस्तस्य हेतिग्रहो भवेत् । न तु तत्साक्षिणो युक्तस्तस्य रूपनिषेधतः ।।५८।।**
**वासना भूरिरूपास्ता लिङ्गस्था लिङ्गसाक्षिणः । कुर्वन्ति बहुरूपत्वं मणेरास्तरणं यथा ।।५९।।**

"यथा माहारजनं वास"इत्यादेः विवरणम्

**माहारजनमित्यत्र हारिद्रं रूपमुच्यते । इन्द्रगोपोपमानेन कौसुम्भस्य गतत्वतः ।।६०।।**
**पीतं वस्त्रं यथा तद्वल्लिङ्गमाभाति साक्षिणः । आस्त्र्यादिविषयोद्भूतवासनावासितं दृशेः ।।६१।।**
**ईषत्पाण्डु यथोर्णादि तद्वल्लिङ्गं प्रकाशते । इन्द्रगोपोऽतिरक्तश्च भृशं रक्तं मनस्तथा ।।६२।।**
**रजसः क्वचिदुद्रेकस्तमसः क्वचिदिष्यते । सत्त्वस्यापि तथोत्कर्षः कुतश्चिदुपजायते ।।६३।।**

कर्तृत्वादिवासनानामात्मरूपत्वाभावे हेत्वन्तरमाह—माहारजनमित्यादीति । अथशब्दोऽवधारणार्थो नकारगामी ।।१५३।।

नायं जीवस्याऽऽदेशः किंतु ब्रह्मणस्तटस्थस्येत्याशङ्क्याऽऽह—अन्यस्येति । षष्ठावसाने "विज्ञातारमरे केने"त्यात्मानमुपक्रम्य "स एष नेति नेत्यात्मे"त्यात्मशब्दात्तस्यैदाऽऽदेशोपसंहारादिहापि तस्यैवासौ न तटस्थस्येत्यर्थः ।।१५४।।

इतश्च प्रत्यगर्थस्यैवायमादेश इत्याह—व्येवेति ।।१५५।।

उक्तमेव व्यतिरेकद्वारा साधयति—पाणीति । धीरित्यहं ब्रह्मेति ज्ञानं तस्मात्प्रत्यगर्थस्यैवायमादेशस्ततश्चाहं ब्रह्मेतिशास्त्रीयसम्यग्धीसिद्धेः प्रतिज्ञार्थवत्त्वेत्यर्थः ।।१५६।।

अन्यो जीवोऽन्यच्चाऽऽदिश्यमानं ब्रह्मेत्यत्र "तदाऽऽत्मानमेवावेदि"त्यादिश्रुतिविरोधं दोषान्तरमाह—न स्यादिति ।।१५७।।

जीवस्य ब्रह्माभिन्नत्वाद्वासनारूपित्वायोगाच्चित्तमेव तद्रूपि तच्छब्दमिति फलितमाह—करणेति ।।१५८।।

लिङ्गस्य कर्तृत्वादिवासनारूपित्वे कथमात्मनि तद्भानमित्याशङ्क्य स्वाभासभ्रमदोषेणेत्यत्रोक्तं स्मारयति—वासना इति । आस्तरणमिति नीलपीताद्युपाध्युपलक्षणम् ।।१५९।।

तस्येत्यादि व्याख्याय यथेत्यादौ माहारजनशब्दार्थमाह—माहारजनमितीति । ननु कौसुम्भे तच्छब्दस्य प्रसिद्धत्वात्तस्यात्र ग्रहणं किं न स्यादुक्तं हि—स्यात्कुसुम्भं वह्निशिखं महारजनमित्यपीति तत्राऽऽह—इन्द्रेति ।।१६०।।

पदार्थमुक्त्वा वाक्यार्थमाह—पीतमिति । साक्षिणो दृशेरिति संबन्धः । लिङ्गं चित्तं तस्य तथाभाने निमित्तमाह—आस्त्र्यादीति ।।१६१।।

यथा पाण्ड्वाविकमित्यस्यार्थमाह—ईषदिति । आदिपदेन कम्बलग्रहः । यथेन्द्रगोप इत्यस्यार्थमाह—इन्द्रेति ।।१६२।।

वासनावैचित्र्ये मनसि किं कारणमित्युक्ते गुणवैचित्र्यमित्याह—रजस इति । क्वचिदिति गुणोत्कटचनिमित्तविषयोक्तिः ।।१६३।।

---

२. मोहकारणात् मोहोऽज्ञानं तद्धेतोः ।

क्वचिदेकप्रधानत्वं[1] कस्मिंश्चिद्विषये द्वयोः । त्रयाणामपि[2] चान्यत्र ज्ञानकर्मादिचित्रतः ॥१६४॥
अग्नेरर्चिर्यथा भास्वत्सत्त्वोत्कर्षात्तथा मनः । पुण्डरीकं यथा शुक्लं सौम्यमाह्लादकृत्तथा ॥१६५॥
सकृद्विद्युद्यथाऽत्यन्तं घनध्वान्तापनोदकृत् । अतीव भास्वराऽस्माकं चक्षुर्मुट्सकृदुद्गता ॥१६६॥
हिरण्यगर्भतत्त्वस्य जायमानस्य केशवात् । विद्युद्वत्प्रथते रूपं किल तस्य महात्मनः ॥१६७॥
अतोऽनेनैव रूपेण य उपास्ते दिवानिशम् । सर्वान्धकारहन्त्रीव विद्युत्तं श्रीः सदाऽऽश्रयेत् ॥१६८॥
नाऽऽदिर्न मध्यं नैवान्तो नेयत्ता विद्यते यतः । अनन्तकल्पोपचयाद्वासनानामुदाहृतिः ॥१६९॥
माहारजनमित्यादिर्न त्वियत्ता विवक्षिता । प्रकारदर्शनायैव तेनोदाहृतिरिष्यते ॥१७०॥

परमार्थसत्यप्रतिपादनारम्भः

निःशेषमेवं सत्यस्य रूपं व्याख्याय सांप्रतम् । परमार्थसत्ययाथात्म्यनिर्देशाय प्रयत्यते ॥१७१॥
यतो व्याख्यातमखिलं मूर्तामूर्तादि वस्त्वतः । आदेशोऽनन्तरं तस्य क्रियतेऽनन्यमानिनः[3] ॥१७२॥

प्रतिविषयं गुणानामुत्कर्षनिकर्षत्वे वा किं निमित्तमित्याशङ्क्य तद्वैचित्र्यमनूद्य तन्निमित्तमाह—क्वचिदिति । आदिपदेन रागादिग्रहः ॥१६४॥

वासनावैचित्र्यमुक्त्वा यथाऽग्न्यर्चिरित्यस्यार्थमाह—अग्नेरिति । यथा पुण्डरीकमित्यस्यार्थमाह—पुण्डरीकमिति । तथा मन इति शेषः ॥१६५॥

यथा सकृदित्यादि विभजते—सकृदिति । चक्षुर्मुट्चक्षुषोऽस्मदीयस्य तद्विषये प्रवृत्तिं मुष्णाति प्रतिबध्नातीत्यर्थः । तथा ज्ञानप्रकाशातिशयापेक्षया कस्यचिद्वासना सकृदेव सर्वतः प्रद्योतमानोद्गच्छतीति दार्ष्टान्तिकमाह—सकृदुद्गतेति । ॥१६६॥

अन्त्यवासनाविशिष्टसूत्रोपास्तिविध्यर्थं[4] तस्याः स्तुतिं चिकीर्षुराह—हिरण्यगर्भेति । तस्य परस्माज्जायमानत्वं भास्वरत्वं च श्रुतिस्मृतिप्रसिद्धमिति वक्तुं किलेत्युक्तम् ॥१६७॥

उक्तवासनाविशिष्टसूत्रोपास्तिं वदन्सकृदित्यादिफलोक्तिं व्याकरोति—अत इति । उक्तहैरण्यगर्भरूपस्योपास्त्यर्हत्वमतःशब्दार्थः । उपास्तौ विशेषणत्रयविवक्षया[5] दिवानिशमित्युक्तम् । दृष्टमुपास्तिफलमुक्तमदृष्टं तु "तं यथे"त्यादिशास्त्रीयमिति भावः ॥१६८॥

परिमितदृष्टान्तोक्त्या वासनानामपि परिमितत्वं दृष्टान्तदार्ष्टान्तिकयोः साम्यादित्याशङ्क्याऽऽह—नाऽऽदिरिति । निषेधचतुष्टये हेतुः—यत इति । तस्यैव व्याख्यानम्—अनन्तेति । किमिति तर्हि दृष्टान्तोपादानमित्याशङ्क्योपलक्षणत्वेनेत्याह—उदाहृतिरिति । वासनानामियत्ताप्रदर्शनं नोदाहरणफलं चेत्किं तर्हि तत्फलमित्याशङ्क्योक्तमेव स्पष्टयति—प्रकारेति । इयत्तासंभवस्तच्छब्दार्थः ॥१६९–१७०॥

आ शिशुब्राह्मणादा चाऽऽदेशाद्वृत्तं संकीर्त्य प्रथमान्तसत्यशब्दव्याख्यानायोत्तरं वाक्यमित्याह—निःशेषमिति ॥१७१॥

पदद्वयमाकाङ्क्षां पूरयन्व्याकरोति—यत इति । प्रत्यक्षादिनाऽपि तत्सिद्धेः सुकरत्वात्किमादेशेनेत्याशङ्क्याऽऽह—अनन्येति ॥१७२॥

---

१. एकस्य गुणस्य प्रधानत्वमितरयोः अप्राधान्यमित्यर्थः ।
२. त्रयाणां सत्त्वरजस्तमसाम् ।
३. अनन्यमानिनः उपदेशातिरिक्तप्रमाणागोचरस्य ।
४. अन्त्यवासना यथा सकृद्विद्युदित्यनेनोक्ता भास्वररूपा ।
५. विशेषणत्रयं दीर्घकालः आदरः नैरन्तर्यं च ।

मूर्तामूर्तस्वभावस्य सत्यस्याऽऽविष्कृतेरथ । ब्रह्मातिरेकतो नान्यद्यतो वस्त्ववशिष्यते ॥७३॥
आदेशो ब्रह्मणोऽतोऽयं निरादेशस्य भण्यते । अतिमानाभिधानस्य[1] प्रत्यङ्मात्राद्वयात्मनः ॥७४॥
कर्मण्यादेशशब्दोऽयं यदि वा करणे भवेत् । आदिष्टिरथवाऽऽदेशो नेति नेत्यद्वयात्मनः ॥७५॥
नेति नेतीतिशब्दाभ्यां सत्यस्य ब्रह्मणः कथम् । प्रमाणगोचरातीतं तत्त्वं स्यान्निर्दिदिक्षितम् ॥७६॥

नेतिनेतिपदाभ्यां ब्रह्मबोधनप्रकारः

शृणु सर्वं तदज्ञानसमुत्थस्य निषेधतः । प्रत्यङ्मात्रैकरूपेण तदबोधनिराकृतेः ॥७७॥
अमूर्तस्य परा निष्ठा कारणात्मा पुरोदितः । मूर्तस्य च तथा पृथ्वी मध्ये संकीर्णता तयोः ॥७८॥
मानाभिधानयोर्यावान्कश्चिद्विषय इष्यते । उक्तयोर्मध्यवर्त्येव कार्यकारणयोरसौ ॥७९॥
नामरूपे तथा कर्म प्राणा लोकादयस्तथा । कारकं वा क्रियाऽन्यद्वा कारणं कार्यमेव च ॥८०॥
जातिर्गुणः क्रिया द्रव्यं सम्बन्धो भाव एव च । सदसत्सदसच्चेति समस्तव्यस्तमेव च ॥८१॥
प्रमाता च प्रमाणं च प्रमेयोऽथ क्रियाफले । इत्यादेः प्रतिषेधेन प्रत्यङ्मात्रावलम्बिना ॥८२॥

किमपेक्षयाऽऽदेशस्याऽऽनन्तर्यं तदाह—मूर्तेति । उक्तसत्यव्याख्यानन्तरं ब्रह्मैव कुतो निर्दिदिक्ष्यते तत्राऽऽह—ब्रह्मेति । आदेशापेक्षां तस्य दर्शयति—निरादेशस्येति । आदेशान्तरशून्यं ब्रह्मेत्यत्र हेतुमाह—अतिमानेति । तस्य वाङ्मनसातीतत्वे हेतुः—प्रत्यगिति ॥१७३-१७४॥

अथातःशब्दौ व्याख्यायाऽऽदेशशब्दार्थमाह—कर्मणीति । आदिश्यत इति व्युत्पत्त्या ब्रह्माऽऽदिश्यतेऽनेनेति व्युत्पत्त्या शब्दो वाऽऽदिष्टिरिति व्युपत्त्या ज्ञानं वाऽऽदेश इत्यर्थः ॥१७५॥

ननु कर्मभावव्युत्पत्ती न युक्ते आदेशमारभ्य नेति नेतीतिशब्दद्वयोपादानात्करणपक्षे तु शब्दद्वयमादेशो न च तेन ब्रह्म शक्यमादेष्टुं तस्य तदवाचकत्वादिति शङ्कते—नेतीति ॥१७६॥

शब्दद्वयमवाचकमपि ब्रह्मधीनिमित्तमित्युच्यमानमतिसूक्ष्मत्वादवहितेन श्रोतव्यमित्याह—शृण्विति । तदेव संक्षिप्याऽऽह—तदज्ञानेति । प्रतीच्यध्यस्ताविद्यातज्जनिरासद्वारा धीहेतुः शब्दद्वयमित्यर्थः । ननु प्रतीचो मूर्तादिनिषेधोऽन्यश्चेदद्वयहानिरन्यथा तस्याप्यभावरूपतेति नेत्याह—प्रत्यगिति । स्वाज्ञानतत्कार्यध्वस्तेः स्वमात्रत्वेनावसानात्कुतः सद्वयत्वं कुतो वा प्रतीचोऽभावता निषेधस्यैव तत्प्रवेशादित्यर्थः ॥१७७॥

निषेधेनाऽऽत्मनः सद्वयत्वाभावेऽपि तस्य सप्रतियोगित्वात्किं तदित्याशङ्क्य भर्तृप्रपञ्चमतमदुष्टतया पूर्वोक्तं स्मारयति—अमूर्तस्येति । यद्वा निषेधेन सद्वयत्वाभावेऽपि मूलकारणादिना तत्तादवस्थ्यमाशङ्क्य तस्य निषेध्यत्वान्मैवमित्याह—अमूर्तस्येति । मूलकारणमन्त्यकार्यं तदन्तर्वर्ति सर्वं निषेध्यमित्यर्थः ॥१७८॥

तथाऽपि कार्यकारणातिरिक्तेनानिषेध्येन केनचिदात्मनः सद्वितीयत्वमाशङ्क्य तत्किं वाङ्मनसातीतं न वेति विकल्प्याऽऽद्ये तस्याऽऽत्मानतिरेकं मन्वानो द्वितीयं दूषयति—मानेति ॥१७९॥

नामादिना सद्वयत्वमाशङ्क्य तस्यापि कार्यकारणान्तस्थत्वेन निषेध्यत्वमाह—नामेति । प्राणानामनिषेध्यत्वात्तैः सद्वयत्वमिति केचित्तान्प्रत्याह—प्राणा इति । लोकानां तदधिष्ठातृदेवतानां चानिषेधात्तदवस्थं सद्वयत्वं नेत्याह—लोकादय इति । कारकादीनामनिषेध्यतया सद्वयत्वमाशङ्क्याऽऽह—कारकं चेति । अन्यत्फलमिति यावत् । अवान्तरकारणादिना सद्वयत्वं निरस्यति—कारणमिति ॥१८०॥

जात्यादिभिस्तदाशङ्क्याऽऽह—जातिरिति । सम्बन्धः समवायः । भावो विशेषः । सदादिकल्पनाभिः सद्वयत्वं शिथिलयति—सदिति ॥१८१॥

मात्रादिभिस्तदाशङ्क्याऽऽह—प्रमातेति । समुच्चयार्थोऽथशब्दस्तथापर्यायः । क्रिया प्रमोत्पत्त्यनुकूलो व्यापारः । फलं प्रमा । ननु ब्रह्म ज्ञापयितुमुपक्रम्य यथोक्तनिषेधेन तज्ज्ञापितं न भवति । न हि निषेधमात्रं

---

१. अतिमानाभिधानस्य मानेनाभिधानागोचरस्य ।

इतिशब्दनञोरर्थः

उपप्रदर्शकोऽशेषनामादेरितिरिष्यते । तस्योपदर्शितस्याथ निषेधः क्रियते नञा ॥१८३॥
आकृष्टं रूपिणो रूपं न पृथग्व्यवतिष्ठते । जगत्यकल्पितमपि किमु मोहादिकल्पितम् ॥१८४॥
घटे पटो निषिद्धोऽपि घटादन्यत्र तिष्ठति । तदन्यत्रापि सद्भावादनिषिद्धस्य धर्मिणः ॥१८५॥
परमार्थान्निषिद्धस्य तन्मोहोत्थस्य वस्तुनः । हिरुक्[1]स्थितिः कथं तस्य परमार्थात्मनाऽथवा ॥१८६॥
निषेध्यानामशेषाणामन्योन्यव्यभिचारतः । प्रतीचोऽव्यभिचारोऽतस्तत्राध्यस्तं निषिध्यते ॥१८७॥
इतिशब्दोपदिष्टानां निषेधोऽनुभवात्मनि । अनन्तेऽन्तवतां यत्र तद्ब्रह्मेत्यवसीयताम् ॥१८८॥
सद्भावश्चोपलब्धिश्च स्वार्थप्रत्यक्चिदाश्रयात् । मूर्तादीनाम[2]निर्देश्यादितिर्मत्तो निवर्तते ॥१८९॥
निषेधति निषेध्यार्थं यद्बलान्नञ्चिदात्मनः । विज्ञानेनैव हत्वाऽन्यत्पूर्णत्वेनैति चित्स्वतः ॥१९०॥
प्रत्यङ्मात्रदृशि ह्यस्मिञ्जाग्रत्स्वप्नसुषुप्तिषु । तदन्यद्यत्तदाभासं तन्नञा प्रतिषिध्यते ॥१९१॥

तज्ज्ञापनम् तथाच प्रतिज्ञाहानिस्तत्राऽऽह—इत्यादेरिति । इत्थमुक्तस्यानुक्तस्य च निषेधो नकारस्तेन सर्वं निषिध्य प्रत्यङ्मात्रमनिषिद्धमवलम्ब्य स्थितेन ब्रह्मयाथात्म्यमवगम्यते तस्य तदेव तत्त्वं तन्न प्रतिज्ञाहानिरित्यर्थः ॥१८२॥

निषेध्यार्पकाभावे न निषेधः प्राप्तिं विना तदयोगादित्याशङ्क्याऽऽह—उपेति । नञर्थं निगमयति—तस्येति । निषेधस्य प्राप्तिपूर्वकत्वेन सम्भावितत्वमथशब्दार्थः ॥१८३॥

ब्रह्मणि निषिद्धं मोहाद्यन्यत्र स्थास्यत्यत्र निषिद्धघटवदित्याशङ्क्य कैमुतिकन्यायमाह—आकृष्टमिति ॥१८४॥

दृष्टान्तं विघटयति—घट इति । घटादौ निषिद्धस्तत्रासन्नपि पटादिस्ततोऽन्यत्र स्थातुं युक्तस्तस्य तत्राकल्पितत्वाद्घटादि विर्जयित्वाऽपि तन्त्वादेरनिषिद्धस्य धर्मिणो भावादित्यर्थः ॥१८५॥

दार्ष्टान्तिके वैषम्यमाह—परमार्थादिति । आत्मनो निषिद्धस्यानात्मनोऽन्यत्र भेदेनाभेदेन वा न स्थिती रजतादिवत्कल्पितत्वादित्यर्थः ॥१८६॥

कल्पितत्वासिद्धिमाशङ्क्याऽऽह—निषेध्यानामिति । विमतं कल्पितं व्यभिचारित्वात्सर्पवदित्यत्र प्रतीचि व्यभिचारमाशङ्क्याऽऽह—प्रतीच इति । तत्र कल्पितमनात्मजातं तत्र निषिद्धं नान्यत्रास्ति रजतवदिति फलितमाह—अत इति ॥१८७॥

प्रतीचि कल्पितमाकाशादि प्रकृतमितिशब्दोक्तं नञा निषिध्यते चेन्न ब्रह्मसिद्धिस्तद्वाचकाभावादतो निषेधवैयर्थ्यमित्याशङ्क्याऽऽह—इतिशब्देति । ब्रह्मवाचिपदाभावेऽपि विषेधस्तत्र पर्यवस्यति निरङ्कुशत्वायोगात्सर्वं हि विनश्यद्विकारजातं पुरुषान्तं विनश्यति पुरुषो विनाशहेत्वभावादविनाशीति न्यायादित्यर्थः ॥१८८॥

प्रकृतमितिशब्दोक्तं निषिध्यते चेद्ब्रह्मणोऽपि प्रकृतत्वेन तदुपात्ततया तदापत्तौ शून्यतेत्याशङ्क्याऽऽह—सदिति । भावाभावयोः सत्तास्फूर्तिप्रदं स्वप्रकाशं वाङ्मनसातीतं प्रत्यञ्चमितिशब्दो न वदत्यतस्तस्यानिषेधान्न शून्यतेत्यर्थः ॥१८९॥

किंच प्रत्यग्बलात्प्राप्तसत्तास्फूर्ति नञ्पदं मूर्तादिद्वैतं चिदात्मावसायित्वेन निषेधत्यतो न तन्निषेधकमित्याह—निषेधतीति । आत्मबलान्नञो द्वैतनिषेधित्वे नञात्मनोः सदाभावान्न कदाचिदपि द्वैतं भायादित्याशङ्क्य वाक्योत्थज्ञानेनैव चिदात्मा सर्वमुपमृद्य स्वाभाविकेनानविच्छिन्नत्वेन तिष्ठत्यतो ज्ञानात्प्राग्द्वैतधीसिद्धिरित्याह—विज्ञानेनेति ॥१९०॥

आत्मनोऽनिषेध्यत्वमुक्त्वा द्वैतस्य निषेध्यत्वमुपसंहरति—प्रत्यगिति । अवस्थात्रयेऽपि साक्षिणि सति कार्यं कारणं वा यच्चिदाभासवत्तन्निषेध्यमित्यर्थः । तस्य कल्पितत्वेन निषेधयोग्यत्वं हिशब्दार्थः ॥१९१॥

---

१. हिरुक्=पृथक् स्थितिः, अथवा ब्रह्मरूपेण स्थितिर्नेत्यर्थः ।

२. मूर्तादीनां सद्भावः । उपलब्धिः उभयं प्रत्यचिदाश्रिते प्रत्यगात्मा न परार्थः । अनिर्देश्यश्च अतः श्रुतिः तं परामृशति । मत्तः स्वरूपान्निवर्तते । मत्त इति शास्त्रदृष्ट्या उपदेशः ।

**[1]अविचारितसंसिद्धिप्रत्यङ्मोहहतौ सदा । विस्फारिताक्षः प्रत्यग्धीर्मानान्निर्वर्त्यथाऽऽत्मनि॥९२॥**
**अपेक्षाज्ञानहेतूत्थं कार्यकारणवस्त्वतः । विचार्यमाणं तन्नास्ति व्योम्नि कार्ष्ण्यमिवाऽऽत्मनि॥९३॥**
**शब्दप्रवृत्तिहेतूनां प्रत्यगात्मन्यसम्भवात् । प्रमाणगोचराणां च स्वतः सिद्धेर्न निह्नुतिः ॥९४॥**

निषेधस्यापि निवृत्तिः

**मानाभिधानविषयो यावन्नाऽऽत्मानमात्मनि । लभते प्रत्यगात्मानं न नञ्तावन्निवर्तते ॥९५॥**
**निरस्ताज्ञानतत्कार्ये लब्ध आत्मन्यथाऽऽत्मना । निषेध्यहेतौ प्रध्वस्ते निषेधोऽपि निवर्तते ॥९६॥**
**प्रमातृत्वादिना यावत्किंचिदत्र विवक्षितम् । तदभावश्च तत्सर्वं नेतीति प्रतिषिध्यते ॥९७॥**
**[2]निषेध्यं सर्वमेवैतदनिषेध्यात्मवस्तुगम् । अतो नाभावनिष्ठः स्यादभावस्यापि निह्नवात्॥९८॥**

निषेधफलमाह—अविचारितेति । ईश्वरार्पणबुद्ध्या नित्याद्यनुष्ठानाद्विकसितचेताः श्रुताद्वाक्यात्प्रतीचि लब्धबुद्धिस्तद्बलादविद्यातज्जध्वस्तौ सदा निर्व्यापारः सन्नात्मन्येव स्वे महिम्नि तिष्ठतीत्यर्थः । अविद्यानिवृत्त्या तत्कार्यनिवृत्तौ स्वमहिमप्रतिष्ठत्वे प्रतिबन्धवैधुर्यमथेत्युच्यते ॥१९२॥

प्रत्यग्धिया तन्मोहहतावपि कुतो जगतो ध्वस्तिर्न च तदध्वस्तौ पुमर्थसमाप्तिरित्याशङ्क्याऽऽह—अपेक्षेति । कारणापेक्षावत्कार्यापेक्षावच्च यज्ज्ञानं तेन हेतुना व्यक्तं कार्यादि न तदात्मनि वस्तुतोऽस्त्यतो नभसि नीलवन्मिथ्या जगदपि निरूप्यमाणं विद्यापोह्यमित्यर्थः ॥१९३॥

जगतो व्योमकार्ष्ण्यवन्मोहोत्थत्वान्निषेध्यत्वेऽपि न तन्निषेधेनाऽऽत्मा प्रतिपादयितुं पार्यते न हि कार्ष्ण्यनिषेधेन प्रतिपाद्यते व्योमेत्याशङ्क्याऽऽह—शब्देति । असङ्गे प्रतीचि कूटस्थेऽद्वये षष्ठ्याद्ययोगान्न विधिमुखप्रतिपादनं तन्निषेधद्वारं तदित्यर्थः । यत्तु व्योमवदस्य निषेधद्वारा न प्रतिपादनमिति तत्राऽऽह—प्रमाणेति । तत्खल्वनुमानादिगोचरत्वान्न निषेधद्वारा प्रतिपाद्यते प्रत्यगात्मा तु शब्दादिहीनो मानान्तराविषयो न चाऽऽगमोऽपि तस्मिन्विधिद्वारा क्रमते तन्निषेधद्वारं तत्प्रतिपादनमित्यर्थः । यन्न विधिमुखेनोच्यते तन्नास्ति यथा वन्ध्यासुतादि तदात्माऽपि विधिमुखेनानुक्तेरसन्नित्याशङ्क्याऽऽह—स्वत इति ॥१९४॥

अन्यानपेक्षसत्तास्फूर्तित्वात्प्रतीचो न नास्तितेत्येतदेव स्फुटयति—मानेति । अयं हि व्यवहारे सोपाधिः शब्देतरमानविषयः । स पुनः सर्वविशेषापोहेन परमार्थस्वरूपेण यावदवस्थानं न लभते तावदुपाधिविषयो निषेधो न निर्वृणोतीत्यर्थः ॥१९५॥

कथं तर्हि नञो निवृत्तिरत आह—निरस्तेति । प्रथमपादार्थं स्फोरयति—निषेध्येति । अज्ञानं तत्कार्यं च निषेध्यं तदेव प्रतियोगित्वेन निषेधस्य हेतुस्तस्मिन्ध्वस्ते सतीति यावत् । निषेध्यनिवृत्तौ निषेधावस्थानहेत्वभावोऽथशब्दार्थः ॥१९६॥

प्रतीचोऽनिषेधेऽपि द्वैतनिषेधस्य निषेधकान्तरमस्ति चेदनवस्था; तदभावे निषेधस्थितेरात्मनः सविशेषतेत्याशङ्क्याऽऽह—प्रमातृत्वादिनेति ॥१९७॥

निषेधस्यापि निषेधे कथं नानवस्थेत्याशङ्क्याऽऽह—निषेध्यमिति । एतेनाभावनिष्ठताऽपि निषेधस्यापास्तेत्याह—अत इति । स्यान्निषेध इति शेषः ॥१९८॥

---

१. प्रत्यगात्मनि भासमानो मोहोऽनिर्वचनीयो विचार्यमाणे न सिद्ध्येत् । सद्वा असद्वा आत्मनो भिन्नोऽभिन्नो वेत्यादि विचारासहः स च प्रत्यगात्मन वाक्यजन्यज्ञानान्निवर्तते ततः विस्फारिताक्षः साधकः प्रसन्नेन्द्रियः आत्मनि ब्रह्मणि लीयते ।

२. निषेध्यं सर्वं द्वैतं तदभावश्चेत्यर्थः । पूर्वश्लोके उभयोः निषेधकथनात् । उभयनिषेधेऽधिष्ठानमात्रे पर्यवसानमित्यर्थः । अयमेवार्थः अद्वैतसिद्धौ द्वितीयमिथ्यात्वनिरूपणे व्यक्तः, तत्र हि "न च निषेधस्य निषेधे प्रतियोगिसत्त्वापत्तिः, तत्र हि निषेधस्य निषेधे प्रतियोगिसत्त्वमायाति यत्र निषेधस्य निषेधबुद्ध्या प्रतियोगिसत्त्वं व्यवस्थाप्यते निषेधमात्रं निषिध्यते । यत्र तु प्रतियोगिनिषेधयोरुभयोरपि निषेधः तत्र न प्रतियोगिसत्त्वं यथा ध्वंससमये प्रागभावप्रतियोगिनोरुभयोरपि निषेधे"इत्यादिना ।

**नेति[1] नेतीत्यतो वीप्सा जिघृक्षितनिषेधतः । बुभुत्सितस्य कृत्स्नस्य वीप्सैवातो निषेधनी ॥१९९॥**

**ज्ञानक्रियाभ्यां[2] व्याप्योऽयमित्याकाङ्क्षा निवर्तते । अप्रमित्सित एकस्मिन्निष्ठां यात्यचिकीर्षिते ॥२००॥**

वीप्सया प्रपञ्चस्य तन्निवृत्तेश्च निषेधः

**रज्जुयाथात्म्यविज्ञानात्सर्पवत्करणात्मनः । निषेधो नान्यतः शक्यः कर्तुं वर्षशतैरपि ॥ १ ॥**

**यद्यत्प्राप्तं जगत्यस्मिंस्तत्तत्सर्वं निषिध्यते । एवं च सत्यनिर्दिष्टाशङ्काऽपि विनिवर्तते ॥ २ ॥**

**न चेद्वीप्सा तदा वाक्यद्वयमेतद्विवक्षितम् । उक्तद्वयनिषेधेन तस्य चोपक्षयाद्भवेत् ॥ ३ ॥**

**अनुक्तविषयाशङ्का सर्वस्याप्रतिषेधतः । यदि[3] वाऽभावविषया न ह्यभावो निषिध्यते ॥ ४ ॥**

**साक्षान्मानप्रसिद्धेषु प्रतिषिद्धेतरग्रहः । अप्रसिद्धे प्रसिद्धानां निषेधाच्छून्यताग्रहः ॥ ५ ॥**

आदेशस्य शून्यनिष्ठतानिरासः

**आदेश इत्युपक्रम्य प्रतिषेधोऽयमुच्यते । साक्षादादिश्यते येन तादृगादेश उच्यते ॥ ६ ॥**

**इतिनोपात्तद्वैतस्य प्रत्यङ्मात्रत्वेन निषेधात्प्रतीचि वाक्यार्थेऽपि किमर्थं नकारद्वयमितिद्वयंचेत्या शङ्क्याऽऽह–** नेतीति । **यतो यद्यत्प्राप्तं तन्निषिध्यतेऽतो वीप्सेयमित्यर्थः । आकाङ्क्षादिनिवृत्तेश्चैवमित्याह**—जिघृक्षितेति । **तदेव स्फुटयति**—बुभुत्सितस्येति । **यतः सर्वस्याऽऽकाङ्क्षितस्य वीप्सा निषेधन्यतः सैव युक्तेत्यर्थः ॥१९९॥**

**तत्पक्षेऽपि कथं सर्वाकाङ्क्षाशान्तिरित्याशङ्क्याऽऽह**—ज्ञानेति । **अयमर्थो ज्ञेयः कार्यश्चायमित्याकाङ्क्षा वीप्सायां निवर्तते प्राप्तस्य सर्वस्य निषेधाज्ज्ञानक्रिययोरविषये च तादात्म्यरूपां निष्ठां विद्वानातिष्ठते तद्युक्ता वीप्सेत्यर्थः ॥२००॥**

**स्थूलाद्यभावधियैव द्वैततद्धेतुध्वस्तेर्ब्रह्म[4]निष्ठानर्थक्यादभावपक्षाद्वीप्सापक्षे न विशेष इत्याशङ्क्य ब्रह्मतत्त्वधीरेव बाधिकेत्यत्र दृष्टान्तमाह**—रज्ज्वति ॥२०१॥

**वीप्साफलमाह**—यद्यदिति । **निर्देश्यस्य सर्वस्य निषेधे किं जातं तदाह**—एवं चेति । **वाङ्मनसविषयस्याशेषस्य नञ्भ्यां निषेधे तदतीतं प्रत्यङ्मात्रं ब्रह्मेत्यर्थादादिष्टं निरवधिनिषेधायोगात्तथाच तदनिर्दिष्टत्वशङ्काध्वस्तिरित्यर्थः ॥२०२॥**

**वीप्सापक्षे गुणमुक्त्वा पक्षान्तरे दोषमाह**—न चेदिति । **वाक्यद्वयपक्षे को दोषस्तत्राऽऽह**—उक्तेति । **मूर्तामूर्तनिषेधेन वाक्यद्वयोपरतेरशेषव्यपदेश्यानिषेधात्किंचिदनुक्तं व्यपदेश्यमेव ब्रह्मेत्याशङ्का स्यादित्यर्थः । शङ्कान्तरमाह**—यदि वेति । **इतिभ्यामुपनीतमूर्तामूर्तयोरेव नञ्भ्यां निषेधादभावानिषेधात्तन्निष्ठं वाक्यमिति शङ्कोन्मिषेदित्यर्थः ॥२०३-२०४॥**

**तदेव साधयति**—साक्षादिति । **प्रमितेषु भूतलादिषु प्रमितानामेव घटादीनां धर्मित्वप्रतियोगित्वग्रहात्तदुभयं साक्षादशून्यं तिष्ठति । अप्रमिते ब्रह्मणि प्रमितं जगन्निषिध्यते चेद्वचः शून्यावसायि स्याद्ब्रह्मणि मानाभावान्मितस्य जगतो निषिद्धत्वादित्यर्थः ॥२०५॥**

**भवतु वाक्यस्य शून्यनिष्ठतेत्याशङ्क्याऽऽह**—आदेश इति । **ब्रह्मण आदेश इत्युक्त्वा निषेधोक्तेरयमादेशो निषेधाख्यो ब्रह्मप्रतिपादनपर एवेत्यर्थः ॥२०६॥**

---

१. अस्थूलमनणु इत्यादिनिषेधेनैवोपपत्तौ अधिष्ठाननिष्ठा नेति नेतीति वीप्सा किमर्थेति चेन्न, केवलाभावबोधने अधिष्ठानज्ञानाभावात् द्वैतबाधो न स्यात् । वीप्सया अधिष्ठाने द्वैतशून्यत्वेन बोधिते सति प्रपञ्चबाधः सेत्स्यति अधिष्ठानज्ञानस्यैवारोप्यबाधकत्वात् ।

२. ज्ञानक्रियाभ्यां ज्ञानव्याप्यः ज्ञानविषयः, क्रियाव्याप्यः क्रियाविषयः एतदुभयं वीप्सया निवर्तते सर्वेषां ज्ञानानां क्रियाणां चाविषयः तेन शुद्धे आत्मनि निष्ठामाप्नोति ।

३. यदि वा अभावविषया अनिषिद्धाभावनिष्ठं वाक्यमित्यर्थः ।

४. ब्रह्मनिष्ठानर्थक्यं = ब्रह्मणि द्वैतावबोधनानर्थक्यम् ।

निषेधवर्त्मना तस्मादनिषेध्यात्मसाक्षिणा । ज्ञाताज्ञातं निषिध्याथ सदा दृष्टौ प्रतिष्ठति ॥ ७ ॥
यथा[1] श्रोत्रधिया रूपं रूपहेत्वसमन्वयात् । नाग्रहीन्न च गृह्णाति न ग्रहीष्यति शब्दवत् ॥ ८ ॥
प्रत्यक्तत्त्वे विनिर्ज्ञाते नेति नेतीतिवाक्यतः । तद्वत्सकारणोऽनात्मा नाभूदस्ति भविष्यति ॥ ९ ॥
नान्यदज्ञानतोऽस्तित्वं द्वितीयस्या[2]ऽऽत्मनो यथा । निवृत्तिस्तद्वदेवास्य नावगत्यात्मनोऽपरा ॥१०॥
अनन्यायत्तमैकात्म्यं यदा साक्षाद्व्यवस्थितम् । व्येव त्वेति प्रतिज्ञेयं तदा स्यात्सफलोदिता ॥११॥
नेति नेतीत्यतो वीप्सासम्भवादुक्तवस्तुनः । कृतार्थता तथाच स्यादन्यथा नोपपद्यते ॥१२॥
परागर्थेषु सक्ता धीः प्रत्यगर्थानुरञ्जनात् । निषिद्धाऽतः परागर्थात्प्रतीचि लभते स्थितिम् ॥१३॥

नेति नेतीत्यस्य स्वयं विधिमुखेन अर्थान्तरवर्णनम्

व्यतिरेकस्य सिद्धत्वादादेशोक्तेः पुरैव हि । साक्षाद्ब्रह्मत्वसिद्ध्यर्थमादेशोऽयमथोच्यते ॥१४॥
न निषेधो निषेध्यार्थो लक्षणार्थपरत्वतः । ब्रह्मणो मान्तरासिद्धेः शून्यतैव प्रसज्यते ॥१५॥

वाक्यस्य शून्यनिष्ठत्वायोगे फलितमाह—निषेवेति । निषेधादेशेन कार्यकारणं जगन्निषेधायोग्यसाक्षिब्रह्मरूपेण निषिध्य स्वरूपेण तिष्ठति विद्वानित्यर्थः । उपाधिनिवृत्तावनुपहितरूपेण विदुषोऽवस्थितिरुचितेत्यथशब्दार्थः ॥२०७॥

जगदेकदा निषिद्धमपि पुनः पुनरुद्भविष्यति सर्पादौ तथा दृष्टेरित्याशङ्क्य दृष्टान्तेन निराचष्टे—यथेत्यादिना । रूपेण हेतुना श्रोत्रस्य संबन्धाभावादिति यावत् ॥२०८-२०९॥

सकारणद्वैतनिवृत्तिरात्मनोऽन्येत्याशङ्क्य पूर्वोक्तं स्मारयति—अनन्येति ॥२१०॥

वाक्यस्याभावनिष्ठत्वायोगाद्वीप्सया सर्वमारोपितं साक्षिरूपेण निरस्य तदात्मना तिष्ठति विद्वानित्युक्त्वा वीप्सापक्षे हेत्वन्तरमाह—अनन्येति ॥२११॥

तत्पक्षमुपसंहरति—नेतीति । वीप्साश्रयणे विवक्षितस्य प्रतिज्ञार्थवत्त्वादेर्वस्तुनः संभवादिति हेत्वर्थः । उक्तार्थसिद्धिरेव मा भूदित्याशङ्क्याऽऽह—कृतार्थतेति । अनन्यायत्तमैकात्म्यमित्यादेरुक्तार्थसिद्धावेव पुरुषस्य कृतार्थता नान्यथा "इह चेदवेदीदथ सत्यमस्ती"त्यादिश्रुतेरित्यर्थः ॥२१२॥

निषेधफलमुपसंहरति—परागिति । मनः स्वभावतो बाह्यविषयं कथंचिद्दैववशात्प्रत्यगनुषक्तं विषयेभ्यो निषिद्धं सत्परिशेषात्प्रतीचि स्थास्यतीत्यर्थः ॥२१३॥

भाष्यमाश्रित्य युक्तितो निषेधवाक्यं व्याख्यातम्—इदानीमिदमेव विधिमुखेन बोधकमित्यर्थान्तरं विवक्षुरस्यातिरेकार्थतेति पक्षं प्रत्याह—व्यतिरेकस्येति । षष्ठीनिर्देशे व्यतिरेकसिद्धिरिति द्योतयितुं हिशब्दः । पूर्वमेव ब्रह्मणो मूर्तादेर्व्यतिरेकलाभान्नाऽऽदेशोक्तिस्तदर्था चेत्तर्हि किमर्थेत्यत आह—साक्षादिति । पदार्थशोधनानन्तरं मुमुक्षोः साक्षादेव ब्रह्मभावं बोधयितुमादेशोक्तिरित्यर्थः ॥२१४॥

केचिदुक्तौ पक्षावविमृशन्तो मूर्तादिनिषेधार्थतामादेशोक्तेराहुस्तान् प्रत्याह—नेत्यादिना । न हि निषेधादेशो निषेध्यमूर्तादिनिषेधार्थो लक्षणया त्वमर्थपरत्वादित्यर्थः । विपक्षे दोषमाह—ब्रह्मण इति । प्रमितस्य मूर्तादेर्निषिद्धत्वाद्ब्रह्मणश्चाप्रमितत्वात्तात्त्विकी शून्यतैव विश्वस्य स्यादित्यर्थः ॥२१५॥

---

१. यथा श्रोत्रजन्यबुद्ध्या रूपं न ग्रहीष्यति रूपस्य श्रोत्रेण हेतुना योग्यसम्बन्धाभावात् = रूपप्रत्यक्षे तस्याहेतुत्वात् । यथा शब्देन सम्बन्धः तथा न रूपेणेत्यर्थः ।

२. नात्मनो द्वितीयस्यास्तित्वं अज्ञानतोऽन्यत्र, तथा निवृत्तिरपि अवगतिरूपब्रह्मभिन्ना नेत्यन्वयः । नञर्थेन त्वमर्थो लभ्यत इति । पदार्थवृत्तिः लक्षणेति मीमांसकमतेनोक्तम् । "अभिधेयाविनाभूतप्रतीतिलक्षणोच्यते" इति भट्टोक्तेः । नञर्थेन साक्षिसम्बन्धश्च साक्षिसाक्ष्यत्वमेव ।

षष्ठ्युक्तेरेव संसिद्धा मूर्तादेर्ब्रह्मणोऽन्यता । ततश्च जामितासक्तिर्नातः स्यात्पारिशेष्यगीः ॥१६॥
शक्यते न निषेद्धुं च प्रत्यक्षाद्याश्रितत्वतः । निषेधान्न पुमर्थोऽपि कश्चित्सिध्येत्समीहितः ॥१७॥
निषेधमात्रनिष्ठत्वे न चाऽऽदेशो भवेत्प्रभोः । ब्रह्म मूर्तादि नेत्युक्तौ मूर्तादेर्न निषेधगीः ॥१८॥
ततश्च ब्रह्मतासिद्धिर्द्वितीये सति वस्तुनि । व्येव त्वेति प्रतिज्ञार्थो नापि चाऽऽविष्कृतो भवेत्॥१९॥
पारिशेष्यादतोऽसिद्धिः स्याद्विवक्षितवस्तुनः । यथा सिद्धिस्तथा व्याख्या कार्येहोक्तेरतोऽञ्जसा ॥२०॥

वाक्यस्य साक्षाद्ब्रह्मपरत्वेन विवरणम्

सिद्धो निषेधः प्रागेव सर्वस्यानात्मवस्तुनः । प्रत्यग्याथात्म्यविज्ञानादन्योन्यव्यभिचारतः ॥२१॥
अन्योन्यव्यभिचारोऽस्य वीक्ष्यतेऽनात्मवस्तुनः । स्वरूपव्यभिचारोऽपि सुषुप्तादौ स्वसाक्षिगः ॥२२॥
यथा मात्रादिसत्त्वेयं प्रत्यक्संवित्तिसिद्धिका । प्रमात्रादेरभावोऽपि प्रत्यग्बोधाश्रयात्तथा ॥२३॥
अविचारितसंसिद्धिरात्माविद्यैकरूपतः । सिद्धायतेऽखिलोऽनात्मा स्वतःसिद्धात्मसंश्रयात्॥२४॥
अतिरोहितसंवित्को व्यपास्ताशेषविक्रियः । अनन्यमातृमानादिर्दृष्टिमात्रात्मकत्वतः ॥२५॥

निषेधपक्षायोगे ब्रह्मणो मूर्तादित्वासंभवात्पारिशेष्याद्व्यतिरेकपक्षः स्यान्न च पुरैव तत्सिद्धिः साधकाभावादित्याशङ्क्याऽऽह—षष्ठीति । द्वे वावेत्यत्रैव षष्ठ्या मूर्तादेर्ब्रह्मणोऽन्यता सिद्धा तदादेशवाक्येऽपि व्यतिरेकोक्तिश्चेत्पुनरुक्तिरित्यर्थः । यत्तु पारिशेष्याद्व्यतिरेकार्थतेति तत्राऽऽह—नेति । निषेधोक्त्या मूर्तादेर्ब्रह्माभेदे निषिद्धे पारिशेष्याद्व्यतिरेकसिद्धिरित्युक्तिरयुक्ता षष्ठ्यैव तत्सिद्धौ पारिशेष्यानवकाशादित्यर्थः ॥२१६॥

व्यतिरेकपक्षं निरस्य निषेधपक्षे दोषान्तरमाह—शक्यत इति । तदाश्रित्य तद्विषयत्वेन स्थितं मूर्ताद्यशक्यं निषेद्धुं तद्विरोधादित्यर्थः । यदि रूप्यादिधीवदध्यक्षादेराभासत्वात्तदर्थनिषेधो युक्तस्तदाऽपि नाऽऽदेशोक्तेर्निषेधार्थता तन्मात्रस्याफलत्वादित्याह—निषेधादिति ॥२१७॥

किंच निषेधमात्रनिष्ठं वा वाक्यं तद्द्वारा ब्रह्मनिष्ठं वा ? नाऽऽद्यः प्रक्रमविरोधादित्याह—निषेधेति । द्वितीयेऽस्मत्पक्षप्राप्तिरिति चकारार्थः । व्यतिरेकपक्षेऽपि न तन्मात्रपरं वाक्यमुपक्रमविरोधात्तद्द्वारा ब्रह्मपरं चेत्तत्राऽऽह—ब्रह्मेति ॥२१८॥

मूर्तादेरनिषेधेऽपि व्यतिरेकोक्त्या वाक्यपर्यवसाने का हानिरित्याशङ्क्याऽऽह—ततश्चेति । पक्षद्वयसाधारणं दोषमाह—व्येवेति । यदि मूर्तादिनिषेधस्तस्य वा ब्रह्माभेदे निषिद्धे पारिशेष्यात्ततोऽर्थान्तरत्वविधिस्तदादेशोक्त्या प्रतिज्ञार्थो न प्रकटितः स्यादनिषिद्धवस्त्वन्तरस्य वा निषेधस्य वा मूर्तादेर्वा द्वितीयस्य सत्त्वादद्वयार्थासिद्धेरित्यर्थः । कथं तर्हि निषेधोक्तिर्निर्वहत्यत आह—यथेति । पक्षद्वयेऽपि यतोऽभीष्टब्रह्मासिद्धिरतो यथा तत्सिद्धिस्तथा तस्मिन्नेव ब्रह्मणि विषये निषेधोक्तेः साक्षाद्व्याख्या कार्येति योजना ॥२१९–२२०॥

तामेव व्याख्यातुमादेशोक्तेरर्वागेव निषेधव्यतिरेकौ सिद्धावित्यनुवदति—सिद्ध इति । अनात्मनिषेधे हेतुमाह—अन्योन्येति ॥२२१॥

तमनुभवेन साधयति—अन्योन्येति । न केवलं मिथो व्यभिचारादनात्मा कल्पितो ज्ञाननिषेध्यः किंत्वात्मव्यभिचारस्य स्वापादौ स्वानुभवसिद्धेश्चेत्याह—स्वरूपेति ॥२२२॥

अनुवादव्याजेन निषेधोक्तेरर्थान्तरं निरस्य स्वानुगुणव्याख्यामाचक्षाणो नञर्थेन प्रत्यगर्थस्य लक्ष्यत्वं विवक्षुस्तयोः साक्षिसाक्ष्यसंबन्धं दृष्टान्तेनाऽऽह—यथेति ॥२२३॥

भावाभावरूपोऽनात्माऽनुभवसिद्धश्चेत्तद्वत्तस्य सत्यतेत्याशङ्क्याऽऽह—अविचारितेति । सर्वोऽनात्मा स्वप्रकाशात्मप्रसादाद्भासमानवद्भवति, स च दुर्निरूपत्वात्प्रत्यगविद्यैकस्वभावस्तत्कुतोऽस्य सत्यतेत्यर्थः ॥२२४॥

कथमात्मनः स्वप्रकाशतेत्याशङ्क्य चिद्रूपत्वादित्याह—अतिरोहितेति । तथाऽप्यात्माऽनात्मानं साधयति चेद्दीपवद्विकारी स्यादित्याशङ्क्याऽऽह—व्यपास्तेति । संविद्रूपत्वं साधयति—अनन्येति । मात्रादिरूपत्वेन नानारसत्वं शङ्कित्वाऽऽह—दृष्टीति । न नानारसतेति शेषः ॥२२५॥

भावाभावात्मिका सिद्धिर्येयं सर्वाऽप्यनात्मनः । तद्विरुद्धात्मकान्मत्तो मय्येवासौ प्रसिध्यति ॥२६॥
अनन्यानुभवेनैव भावाभावात्मभूमिषु । प्रत्यक्कूटस्थ आत्मानं पश्यन्नास्ते फलात्मना ॥२७॥
अतो मात्रादिसम्भेदो यत्र यत्र निवर्तते । तत्र तत्रैकलः प्रत्यक्स्वहिम्नैव सिध्यति ॥२८॥
प्रमात्रादेरभावोऽतो यः सिद्धः स्वात्मबोधतः । नञ्वृत्तिस्तं सदाबुद्धं लक्षयत्यपृथक्प्रमम् ॥२९॥
वैविक्त्यान्न[1] च मानादेरनन्यानुभवात्मनि । सहेतुकस्य वृत्तिः स्यान्नित्यबोधावबोधिनि ॥३०॥
अविद्याद्यतिरेकेण कारणादिविधर्मकम् । लब्धमात्मात्मकं वस्तु प्रतीचोऽनन्यमानतः ॥३१॥
एतद्वस्तु स्वतःसिद्धं प्रमात्राद्यनपेक्षतः । सर्वस्यैव ततः सिद्धेः कथं सिध्येत्तदन्यतः ॥३२॥

"नेति"इत्यनेन जीवब्रह्मैक्यबोधनरीतिः

उक्ता प्रमेयसंसिद्धिः स्वमहिम्नैव नञ्श्रुतेः । तस्य ब्रह्मत्वबोधाय नेति ब्रह्मेतिनोच्यते ॥३३॥
आत्मप्रत्ययमामेयो[2] लक्षितो यो नञाऽञ्जसा । अविद्यादेस्तदात्मत्वादिति ब्रह्मेति बोध्यते ॥३४॥

रूपादिमतो दीपादेस्तादृग्घटादिसाधकत्वदृष्टेरात्मनोऽपि द्वैतसाधकत्वे तद्गतजाड्यादिप्रसङ्गस्तस्मादन्यत्रैव तत्साधकत्वं स्यादित्याशङ्क्याऽऽह—भावेति । न हि दीपवदात्मा साधकोऽनात्मत्वापत्तेरिति भावः ॥२२६॥

स साधकान्तरापेक्षः साधकत्वाद्दीपवदित्यनवस्थामाशङ्क्याऽऽह—अनन्येति । पश्यन्नित्युक्त्या दर्शनकर्तृत्वप्राप्त्या कौटस्थ्यदौस्थ्यमित्याशङ्क्याऽऽह—फलेति ॥२२७॥

प्रत्यगर्थस्य कूटस्थाद्वयचिदेकरसस्य नञर्थस्य च साक्षिसाक्ष्यसंबन्धमुक्तमुपसंहरति—अत इति । प्रकृतं फलात्मकत्वमतःशब्दार्थः । अवस्थाभेदो वीप्सया गृह्यते ॥२२८॥

उक्तं संबन्धमनूद्य नञर्थस्य प्रत्यगर्थलक्षकत्वमाह—प्रमात्रादेरिति । नञो वृत्तिर्वाचकत्वेन यस्मिन्निति नञ्वृत्तिर्मात्राद्यभावः स स्वसाधकं बोधैकरसं प्रत्यञ्चं लक्षयत्यतो निषेधवाक्ये नञस्त्वमर्थ इत्यर्थः । सदाबुद्धमित्येतद्विवृणोति —अपृथक्प्रममिति ॥२२९॥

कस्मान्नञर्थेन स लक्ष्यते प्रत्यक्षादिबलादेव तत्सिद्धेरत आह—वैविक्त्यादिति । मात्रादेः स्वहेत्वविद्यासहितस्य न प्रतीच्यनुभवैकरसे संभवो जडाजडयोरत्यन्तविविक्तत्वादतो नाध्यक्षादिना प्रत्यग्धीरित्यर्थः । किंच मानादेरपि साधके साधकत्वेन न तद्वृत्तिरित्याह—नित्येति ॥२३०॥

वैविक्त्यादितिहेत्वसिद्धिमाशङ्क्याऽऽह—अविद्यादीति । तस्यास्तज्जाड्याच्चातिरेकेण हेतुना द्वयविलक्षणं प्रतीचः स्वभावभूतं वस्तु स्वानुभवादेव लब्धमतो विविक्तताऽऽत्मानात्मनोरित्यर्थः ॥२३१॥

अनन्यमानत्वासिद्धिमाशङ्क्याऽऽह—एतदिति । तत्र युक्तिमाह—सर्वस्येति ॥२३२॥

नञर्थमनुवदति—उक्तेति । स्वमहिम्नैव सिद्धः प्रत्यगात्मा त्वमर्थो नञर्थोऽतो नञ्पदस्य विषयसिद्धिरुक्तेत्यनुवादार्थः । इतिशब्दार्थं वदन्वाक्यार्थमाह—तस्येति । साक्षिणो नञर्थस्य ब्रह्मत्वज्ञापनाय नेतीति वाक्यं प्रमाणमुच्यते । इतिशब्देन[3] मूर्तादिविशिष्टं गृहीत्वा विशेषणत्यागेन केवलं ब्रह्म लक्ष्यते । तस्मादितिशब्दोपात्तं ब्रह्म नञर्थः साक्षीति वाक्यार्थः ॥२३३॥

जीवब्रह्मणोरैक्ये नेतीति वाक्यं मानमित्ययुक्तं परिच्छिन्नस्यापरिच्छिन्नत्वायोगादित्याशङ्क्याऽऽह—

---

१. वैविक्त्यात्—जडाजडयोरत्यन्तविविक्तत्वात् न मानादेरात्मनि बोधकत्वेनानुवृत्तिः (न्या०) नित्यबोधेति मानादेरपि साधके साक्षिणि न साधकत्वेन मानानां वृत्तिः ।

२. आत्मप्रत्यय एव प्रमाणं तेन मेयः=स्वप्रकाश इत्यर्थः । तत्र चाविद्यादेस्ततो भेदेन दुर्निरूपत्वेन तन्मात्रत्वादित्यर्थः ।

३. इतिशब्दः तत्पदार्थपरः नञर्थः साक्षी त्वंपदार्थः । तस्य साक्षिणः ब्रह्मत्वं सामानाधिकरण्येन बोध्यते । न=जीवः इति=ब्रह्म इत्यन्वयः ।

प्रत्यङ्मोहतदुत्थस्य[1] प्रत्यग्याथात्म्यबोधतः । बाधितत्वाददतोऽवोचदिति ब्रह्मेति मोहनुत् ।।३५।।

अथात इति संरम्भोऽयुक्त इति शङ्का समाधिश्च

आदेशं प्रत्यतिमहानथात इति सम्भ्रमः । तेनासदृश आदेशो नन्वयुक्तोऽयमीर्यते ।।३६।।

न ह्येतस्मादित्यस्य विवरणम्

युक्त एवायमादेशो न यतो विद्यते परः । आदेशोऽतोऽयमेवात्र ब्रह्मण्यादेश इष्यते ।।३७।।
आदिदिक्षितमेतस्य तत्त्वं यद्ब्रह्मणः परम् । यावन्तस्तत्र निर्देश्यास्तेऽर्थाः सर्वे निवर्तिताः ।।३८।।
निवृत्तिश्च यथोक्तैव तेषामैकात्म्यलक्षणा । भिन्नदेशस्थितिस्त्वत्र वास्तवी नोपपद्यते ।।३९।।
अव्यावृत्ताननुगतो ब्रह्मशब्दार्थ इष्यते । मुख्योऽन्यस्मिन्सति यतो ब्रह्मार्थो नावसीयते ।।४०।।
शब्दप्रवृत्तिहेतूनामैकात्म्येन समाप्तितः । तथा तदभिधेयानामादेशोऽयं मतः परः ।।४१।।
अभिधाभिधेयसम्बन्धमङ्गीकृत्य यतोऽक्षरे । न कश्चिदपि शब्दोऽत्र साक्षाद्ब्रह्मणि वर्तते ।।४२।।
आदेशो नेति नेत्येव तेनेह घटतेऽञ्जसा । तदबोधप्रसूतानामाकाङ्क्षाणां निषेधतः ।।४३।।

अथ नामधेयमित्यस्यार्थः

मूर्तामूर्तं हि सत्याह्वं प्राणाः सत्यास्तदात्मतः । क्षेत्रज्ञस्तदुपाधित्वात्सत्य इत्यभिधीयते ।।४४।।

आत्मेति । वाच्यस्य परिच्छिन्नत्वेऽपि लक्ष्यस्य तदभावात्तदन्यवस्त्वभावादितिशब्दलक्षितब्रह्म नञर्थप्रत्यङ्मात्रमिति बोध्यते वाक्येनेत्यर्थः ।।२३४।।

आत्ममात्रत्वमविद्यादेरयुक्तं मिथो विरोधात्तन्न प्रतीचो ब्रह्मत्वबोधि वाक्यमित्याशङ्क्याऽऽह—प्रत्यगिति । परिच्छेदहेत्वभावादितिशब्दलक्ष्यं ब्रह्म नञर्थः प्रत्यगात्मेत्येतमर्थं नेतिवाक्यमवदत्तच्च धीद्वारा मोहध्वंसीत्यर्थः ।।२३५।।

आदेशवाक्यं व्याख्याय न हीत्याद्यवतारयितुं शङ्कयति—आदेशमिति । संभ्रमः संरम्भस्तस्य महत्त्वं तात्पर्यपूर्वकत्वमस्य च प्रकरणान्तरेणातिशयं विवक्षित्वाऽतिशब्दः ।।२३६।।

प्रक्रमासादृश्येनाऽऽदेशस्यायुक्तत्वं प्रत्याह—युक्त इति । तत्र हेतुः—नेति । तस्य युक्ततां निगमयति—अत इति ।।२३७।।

कथं तस्मिन्नादेशान्तराभावो विधिरूपस्यापि संभवादित्याशङ्क्याऽऽह—आदिदिक्षितमिति । यत्परं तत्त्वं ब्रह्मणो निर्देष्टुमिष्टं तत्र यावन्तो मूर्तादयो निर्देशयोग्यास्तेषां नेतीति निरासान्न विधिमुखं तद्बोधनमित्यर्थः ।।२३८।।

निषेधमुखेनापि नाद्वयबोधनं मूर्तादिनिवृत्त्या द्वैतापत्तेरित्याशङ्क्य नान्यदज्ञानतोऽस्तित्वमित्यादावुक्तं स्मारयति—निवृत्तिश्चेति । किंच ब्रह्मणोऽन्यत्र भावाभावस्थितिरापाततो वस्तुतो वा ? प्रथममङ्गीकृत्य द्वितीयं प्रत्याह—भिन्नेति ।।२३९।।

भावाभावयोर्ब्रह्मणोऽन्यत्र वस्तुतो न स्थितिरित्यत्र ब्रह्मशब्दार्थोक्तिपूर्वकं हेतुमाह—अव्यावृत्तेति ।।२४०।।

इतश्च निषेधद्वारैव ब्रह्मण्यादेशो युक्तिमानित्याह—शब्देति ।।२४१।।

विधिरूपादेशस्यात्रासंभवमुपसंहरति—अभिधेति । कूटस्थासङ्गाद्वये निमित्ताभावान्न मुख्या शब्दवृत्तिरित्यर्थः ।।२४२।।

निषेधादेशस्य तत्र घटमानत्वमुपसंहरति—आदेश इति । विधिमुखादेशायोगे हेतुं तेनेत्युक्त्वा हेत्वन्तरमाह—तदबोधेति ।।२४३।।

न हीत्यादि व्याख्यायाथेत्यादौ षष्ठ्यन्तसत्यशब्दार्थमाह—मूर्तेति । सच्च त्यच्चाभवदितिश्रुत्यन्तरप्रसिद्धिमुक्तेऽर्थे द्योतयति हिशब्दः । भूतपञ्चकं तत्कार्यं तदुपाधिकं च चैतन्यं सत्यमित्यर्थः ।।२४४।।

---

१. प्रत्यङ्मोहः अज्ञानं तदुत्थं तज्जन्यं च ।

अनिर्देश्यस्य निर्देश्या ये भेदाः कार्यलक्षणाः । तेषु लब्धास्पदं नाम परस्मिन्नुपचर्यते ।।४५।।
मूर्तामूर्तात्मकं सत्यं प्राणादेः कार्यरूपिणः । तस्याप्येतत्परं सत्यं यन्नेतीत्यवधारितम् ।।४६।।
उक्तवस्त्वतिरेकेण नामीषां सत्यता यतः । न चाप्यसत्यता तस्मात्तेषां सत्यं परं पदम् ।।४७।।
आत्मवन्तो यथा रज्ज्वा रज्जुसर्पादयस्तथा । आत्मवन्तो निरात्मानः प्राणाद्याः प्रत्यगात्मना ।।४८।।
यत एवमतोऽन्वीक्ष्य मूर्तामूर्तादिवर्त्मना । सत्यशब्दाभिधेयार्थं तया द्वारा परं पदम् ।।४९।।
व्यपदिश्यमानमैकात्म्यं सत्यस्याऽऽत्मानमद्वयम् । द्रष्टव्यमात्मनैवैनं सत्यं पश्येद्यथोदितम् ।।५०।।
अतो[1]ऽव्याकृतयाथात्म्यं व्याकृतेनोपदिश्यते । सत्यस्य सत्यमिति तन्नान्यथा व्यपदेशभाक् ।।५१।।
व्यपदेशाय नामैतन्न स्वं नामास्य विद्यते । ननु ब्रह्माक्षरमिति व्यपदेशोऽत्र नामभिः ।।५२।।
कार्यकारणगे तत्त्वे नाम लब्धास्पदं यतः । रूपाभिधेयसम्बन्धमरूपाशब्दमक्षरम् ।।५३।।
लक्षयेन्नाञ्जसा वक्ति परं ब्रह्म कथंचन । शब्दप्रवृत्तिहेतूनां साक्षाद्ब्रह्मण्यसम्भवात् ।।५४।।

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके द्वितीयाध्यायस्य
तृतीयं ब्राह्मणम् ।।३।।

श्लोकानामादितः समष्ट्यङ्काः–४९९३

सेश्वरं सजीवं सर्वं जगदस्तु षष्ठ्यर्थ[2]स्तथाऽपि न प्रथमार्थो निरुपाधिकं ब्रह्म तत्र शब्दप्रवृत्तेर्निरस्तत्वादित्याशङ्क्य लक्षणया तत्र सत्यशब्दोत्पत्तिं प्रतिजानीते—अनिर्देश्यस्येति ।।२४५।।

षष्ठ्यर्थानुवादेन विवक्षितं प्रथमार्थमाह—मूर्तेति ।।२४६।।

परस्य स्वरूपेण सत्यत्ववन्मूर्तादीनामपि तद्योगात्कथमिदं सत्यस्य सत्यमित्याशङ्क्याऽऽह—उक्तेति ।।२४७।।

ब्रह्मणा तेषां लब्धात्मता न स्वातन्त्र्येणेत्येतद्दृष्टान्तेनाऽऽह—आत्मवन्त इति ।।२४८।।

तेनैव तेषामात्मवत्त्वे फलितमाह—यत इति । रज्जुसर्पादेरिव सर्वस्य ब्रह्मणैवाऽऽत्मवत्त्वान्मूर्तादिरूपेण षष्ठ्यर्थं सर्वमालोच्य तद्द्वारा प्रथमार्थमुच्यमानमकार्यकारणमैकात्म्यमादाय तदेवाद्वयं षष्ठ्यर्थस्यापि सत्तास्फूर्तिदं दृष्टियोग्यं ज्ञात्वा दर्शितरूपमनतिक्रम्य स्थितमेनं परात्मानं प्रथमालक्ष्यं स्वरूपत्वेनैव मुमुक्षुरनुसंदध्यादित्यक्षरार्थः ।।२४९–२५०।।

रज्ज्वा सर्पादेरात्मवत्त्वमन्वयादिसिद्धं ब्रह्मणा सर्वस्याऽऽत्मवत्त्वे किं मानमित्याशङ्क्य तत्र सत्यशब्दप्रवृत्तिरित्याह—अत इति । व्याकृताव्याकृतयोर्यथोक्तं ब्रह्मयाथात्म्यमत एव तद्द्वारा सत्यस्य सत्यमिति ब्रह्मोच्यते यदि तयोर्न याथात्म्यं ब्रह्म तदा न तत्र शब्दप्रवृत्तिः स्याद्द्वारं विना साक्षादेव तस्याव्यपदेश्यत्वादित्यर्थः ।।२५१।।

मा तर्हि ब्रह्मणि व्यपदेशो भूदित्याशङ्क्याऽऽह—व्यपदेशायेति । स्वनामभिरेव ब्रह्मणो व्यपदेशमाशङ्क्याऽऽह—न स्वमिति । स्वीयनामासत्त्वमसिद्धमिति शङ्कते—नन्विति । अत्रेति ब्रह्मोक्तिः ।।२५२।।

कार्यकारणोपाधिके ब्रह्मणि यतो नाम सावकाशमतो नोभयविलक्षणे तत्र शब्दप्रवृत्तिरिति परिहरति—कार्येति । द्वयविलक्षणेऽपि सत्यज्ञानादिशब्दप्रयोगोऽस्तीत्याशङ्क्याऽऽह—रूपेति । सोपाधिके ब्रह्मणि वाच्ये गृहीतसम्बन्धं पदं विरुद्धांशत्यागेन शुद्धं लक्षयति न तु विना लक्षणां ब्रह्मणि शब्दप्रवृत्तिरित्यर्थः । तत्र मुख्यवृत्त्या शब्दाप्रवृत्तौ हेतुमाह—शब्देति । अतो लक्षणयैव निष्प्रपञ्चं प्रत्यग्ब्रह्म वेदान्तप्रमाणकमिति भावः ।।२५३–२५४।।

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां द्वितीयाध्यायस्य
तृतीयं मूर्तामूर्तब्राह्मणम् ।।३।।

---

१. अतो व्याकृतेत्यपि पदच्छेदेन व्याकृताव्याकृतयोः याथात्म्यं ब्रह्मोच्यते । तच्च व्याकृतवाचिसत्यशब्देन लक्ष्यते ।
२. षष्ठ्यर्थः षष्ठ्यन्तस्य 'सत्यस्य' इति पदस्यार्थः ।

## अथ द्वितीयाध्याये चतुर्थं ब्राह्मणम्

ज्ञानाङ्गत्वेन संन्यासविधये मैत्रैयी ब्राह्मणम् । उपयुक्तकथनम्

आत्मेत्येवेति सूत्रस्य व्याख्येयं प्रस्तुता स्फुटा । ब्रह्म तेऽहं ब्रवाणीति प्रारभ्याऽऽपूर्णवाक्यतः ।। १ ।।
नित्यकर्माद्यनुष्ठानसंशुद्धधिषणः पुमान् । निःशेषकर्महेतूत्थफलसावद्यधीस्ततः ।। २ ।।
विरक्त[1] आग्रजात्सोऽयं तत्सावद्यसमीक्षणात् । संसारदुःखसंस्कारस्मृतिभिः प्रेर्यमाणधीः ।। ३ ।।
उद्भूततज्जिहासः संस्तद्धाने साधनस्पृहः । त्यक्ताशेषैषणः सोऽथ प्रत्यग्याथात्म्यनिश्चयः ।। ४ ।।
वस्तुवृत्तात्मसम्बोधध्वस्तसंसारकारणः । व्याविद्धाशेषसंसारो विमुक्तो ना विमुच्यते[2] ।। ५ ।।
यावत्किंचिदविद्यायाः कार्यं वैराग्यकारणम् । तत्संन्यासो विरक्तत्वात्स्वत एव न शास्त्रतः ।। ६ ।।
ब्रह्मयाथात्म्यविज्ञानसाधनत्वं विनाऽऽगमात् । संन्यासस्य न विज्ञातं तच्छास्त्रेणेह बोध्यते ।। ७ ।।

मैत्रेयीब्राह्मणस्य अर्थान्तरेऽपि तात्पर्यम्

ब्रह्माविद्यासमुत्थानात्कार्यकारणलक्षणात् । व्युत्थाप्य नेति नेतीति परं ब्रह्म प्रदर्शितम् ।। ८ ।।
तत्रैतच्छङ्क्यते चोद्यं ब्रह्मत्वासिद्धिदोषकृत् । निषिद्धं नेति नेतीति मूर्तामूर्तादि वस्तु यत् ।। ९ ।।
किं तद्ब्रह्मानुगं सर्वं किं वा तस्माद्विविच्यते । यदि ब्रह्मानुगं ब्रह्म स्यादनर्थात्मकं तदा ।।१०।।

सम्बन्धं वक्तुमुपयुक्तं वृत्तं कीर्तयति—आत्मेत्येवेति । ब्रह्म ते ब्रवाणीति व्येव त्वा ज्ञपयिष्यामीति चोपक्रम्य पूर्णवाक्यान्तो[3] यो ग्रन्थस्तेन तार्तीयविद्यासूत्रस्य स्फुटा व्याख्या कार्येति चतुर्थादौ प्रस्तुतमित्यर्थः ।।१।।

मुक्तिहेतुत्वेन प्रस्तुतविद्याङ्गतया संन्यासविधानायेदं ब्राह्मणमिति सम्बन्धं विवक्षुर्ज्ञानान्मुक्तिसिद्धौ क्रमं वदन्निहामुत्र वाऽनुष्ठितनित्यादिकर्मफलं चित्तशुद्धिरित्याह—नित्येति । शुद्धिफलं संसारासारतादृष्टिरित्याह—निःशेषेति । ततः शुद्धेरिति यावत् ।।२।।

संसारदोषदृष्टिफलमाह—विरक्त इति । वैराग्यफलं संसारजिहासां तज्जन्महेतूक्तिपूर्वकमाह—संसारेति । उत्पन्नसंसारजिहासाकार्यमाह—तद्धान इति । आत्यन्तिकबन्धध्वस्तौ हेतुं जिज्ञासमानः स्वाध्यायादापातेनाऽऽत्मज्ञानं तदुपायं श्रुत्वा तच्छेषत्वेन पुत्राद्येषणात्रयं त्यजतीत्याह—त्यक्तेति । विविदिषासंन्यासानन्तरमसकृदनुष्ठितश्रवणादिफलमाह—अथेति ।।३–४।।

तत्त्वज्ञानफलमाह—वस्त्विति । कारणध्वस्त्या कार्यध्वस्तिमाह—व्याविद्धेति । आत्मनः स्वतो मुक्तस्य कुतः सा हेत्वधीनेत्याशङ्क्याज्ञानाद्बन्धवज्ज्ञानाद्बुद्धस्य सकार्याज्ञानध्वस्तौ सोपचर्यते ब्रह्मविदाप्नोतीत्यादावित्याह—विमुक्त इति ।।५।।

ज्ञानाङ्गत्वेनोक्तसंन्यासस्य वैराग्यादेव प्राप्तेर्न तद्विध्यर्थं ब्राह्मणमारभ्यमित्याशङ्क्य संन्यासस्वरूपे विध्यानर्थक्यं तस्य ज्ञानाङ्गत्वे वेति विकल्प्याऽऽद्यमङ्गीकरोति—यावदिति । तस्य तत्कारणत्वं दुःखबहुलत्वादवधेयम् ।।६।।

द्वितीयं दूषयति—ब्रह्मेति । इहेति वैदिकपक्षोक्तिः ।।७।।

संन्यासस्य ज्ञानसाधनत्वोक्त्यर्थं ब्राह्मणमिति भाष्योक्तमर्थमुक्त्वाऽर्थान्तरं वक्तुमनन्तरब्राह्मणोक्तमनुवदति—ब्रह्माविद्येति ।।८।।

उत्तरब्राह्मणापोद्यं चोद्यमाह—तत्रेति । तस्य निरस्यतामाह—ब्रह्मेति । चोद्यमेव विशदयितुं विकल्पविषयमाह—निषिद्धमिति ।।९।।

तत्किं ब्रह्मणोऽभिन्नं किंवाऽभावनिष्ठमथ भिन्नमिति विकल्पयति—किं तदिति । अभेदपक्षमनुभाष्य दूषयति—यदीति ।।१०

---

१. आ अग्रजात् ब्रह्मपर्यन्ते संसारे विरक्तः । अग्रजो ब्रह्मा ।
२. विमुक्तः स्वयं विमुच्यते—अज्ञाननिवृत्या । ना=नरः ।
३. पूर्णवाक्यं—पूर्णमद इति पञ्चमाध्यायगतं वाक्यम् ।

अभावनिष्ठं तच्चेत्स्यान्मुख्यं ब्रह्म न सिध्यति । अभावस्य ततोऽन्यत्वादन्वयव्यतिरेकतः ॥११॥
नेतीत्यपि निषेधोक्तिस्तथा सति विरुध्यते । वैदिकश्च प्रयासोऽयं सर्वः स्यात्तुषकण्डनम् ॥१२॥
विविच्यते ब्रह्मणश्चेन्मैवं दोषस्तथाऽपि हि । ब्रह्मत्वं ब्रह्मणो न स्याद्द्वितीये सति वस्तुनि ॥१३॥
अव्यावृत्ताननुगतं वस्तु ब्रह्मत्वमश्नुते । एतच्च दुर्लभं तस्य द्वितीये सति लक्षणम् ॥१४॥
अथाब्रह्मात्मकं वस्तु जग्ध्वा चेद्ब्रह्म तद्भवेत् । प्रतीचो ब्रह्मणाऽत्तत्वान्न मोक्षो नापि संसृतिः॥१५॥
संसारिणो न चेदत्ति संसार्येव प्रसज्यते । नाऽऽप्नोति ब्रह्मतां साक्षात्सत्सु संसारिवस्तुषु ॥१६॥
संसारे चापि जग्धेऽस्मिन्ब्रह्मणा निखिले सति । ऋतेऽपि ब्रह्मविज्ञानात्सर्वे स्युर्मुक्तबन्धनाः ॥१७॥
अन्वयादिनिषेधाय सर्वमात्मेति वाक्यतः । मैत्रेयीत्यादिको ग्रन्थस्तस्मादारभ्यते परः ॥१८॥

### ब्राह्मणस्य तात्पर्यान्तरम्

सर्वाब्रह्मनिषेधेन तदर्थो वेह निश्चितः । तस्य संसिद्धिविषयमैकात्म्यमधुनोच्यते ॥१९॥
नेतीति ब्रह्मणोऽन्यत्र मूर्तामूर्तव्यवस्थितौ । प्रसक्ते सांख्यसिद्धान्ते सर्वमात्मेति वोच्यते ॥२०॥

### ज्ञानसंन्याससमुच्चयः मोक्षसाधनम्

सत्यपि ब्रह्मवेदित्वे नासंत्यक्तैषणो यतिः । मुक्तिभागिति चेहोक्तः संन्यासेन समुच्चयः ॥२१॥

अभावनिष्ठत्वपक्षमनूद्य निरस्यति—अभावेति । कुतो मुख्यब्रह्मासिद्धिस्तत्राऽऽह—अभावस्येति । मूर्तादेरभावनिष्ठत्वे तस्य ब्रह्मणोऽन्यत्वमनन्यत्वं वा ? आद्ये तस्य तेन संयोगविभागयोगादद्वैतासिद्धेर्मुख्यब्रह्मासिद्धिरित्यर्थः ॥११॥

द्वितीये निषेधोक्तिरफला बोध्यब्रह्माभावादित्याह—नेतीत्यपीति । वक्ष्यमाणदोषसमुच्चयार्थोऽपिशब्दः । ब्रह्माभावे सर्वोपनिषदारम्भवैयर्थ्यं दोषान्तरमाह—वैदिकश्चेति ॥१२॥

भेदपक्षमनूद्य प्रत्याह—विविच्यत इति । तमेव प्रकटयति—ब्रह्मत्वमिति ॥१३॥

सत्यपि द्वितीये तत्किं न स्यादित्याशङ्क्य ब्रह्मलक्षणमाह—अव्यावृत्तेति । द्वितीये सत्यपीदं लक्षणं ब्रह्मणि किं न स्यात्तत्राऽऽह—एतच्चेति ॥१४॥

सदपि द्वितीयमुपसंहृत्य ब्रह्मोक्तलक्षणं स्यादित्याह—अथेति । ब्रह्म द्वितीयमुपसंहरत्तद्वज्जीवमुपसंहरति न वा ? नाऽऽद्य इत्याह—प्रतीच इति ॥१५॥

कल्पान्तरमनुवदति—संसारिण इति । ते ब्रह्मणोऽभिन्ना भिन्ना वेति विकल्प्याऽऽद्यं निराह—संसारीति । ब्रह्मेति शेषः । भेदपक्षं निरस्यति—नाऽऽप्नोतीति ॥१६॥

संसारिब्रह्मणोरभेदेऽपि न ब्रह्मणः संसारस्तस्य तेन ग्रस्तत्वादित्याशङ्क्यातिप्रसङ्गमाह—संसारे चेति ॥१७॥

एतदुत्तरत्वेन ब्राह्मणमवतारयति—अन्वयादीति । अन्वयव्यतिरेकाभावपरिहाण्या सर्वमात्मेति वाक्यात् प्रत्यङ्मात्रं जगदिति वक्तुमुत्तरो ग्रन्थो यस्मादारभ्यते तस्मान्नोक्तदोषप्रसक्तिरित्यर्थः ॥१८॥

चोद्योत्तरत्वेन ब्राह्मणमवतार्यार्थान्तरमाह—सर्वेति । इहेत्यनन्तरब्राह्मणमुक्तम् । मूर्ताद्यनात्मनिरासेन तदर्थो निर्धारितस्तस्य त्वमर्थेनैक्यं मुक्त्यालम्बनमत्र निर्धार्यत इत्यर्थः ॥१९॥

प्रकारान्तरेण ब्राह्मणमुत्थापयति—नेत्यादिना । निषेधोक्तेर्ब्रह्मणोऽन्यत्र द्वैतसम्भावनायां द्वैतिमतमाशङ्क्य कल्पितस्य सर्वस्याऽऽत्ममात्रत्वं वक्तुमनन्तरब्राह्मणमित्यर्थः ॥२०॥

तस्यार्थान्तरमाह—सत्यपीति । संन्यासस्य सम्यग्ज्ञानाङ्गत्वख्यापनायाऽऽरम्भः प्रागुक्तोऽधुना ज्ञानस्य तेन समुच्चयविधानायेति भेदः ॥२१॥

निरस्तातिशयज्ञानो याज्ञवल्क्यो यतो गृही । कैवल्याश्रममास्थाय प्राप तद्वैष्णवं पदम् ॥२२॥
त्याग एव हि सर्वेषां मोक्षसाधनमुत्तमम् । त्यजतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक्परं पदम् ॥२३॥
मुक्तेश्च बिभ्यतो देवा मोहेनापिदधुर्नरान् । ततस्ते कर्मसूद्युक्ताः प्रावर्तन्ताविपश्चितः ॥२४॥
मोहमात्रैकहेतूनि तस्मात्कर्माण्यशेषतः । संन्यस्यैकात्म्यसम्बोधाद्धित्वा मोहं विशुद्धधीः ॥
ज्ञानमेवाऽऽत्मनाऽऽत्मानमुपासीनोऽमृतो भवेत् ॥२५॥
इति प्रमाणमत्रार्थे वचनं भाल्लविश्रुतौ । सर्वः संन्यस्तकर्मैव ज्ञानात्कैवल्यमश्नुते ॥२६॥
ब्रह्मचर्याद्गृहाच्चैव वनाच्चापि विधीयते । निःशेषकर्मसंन्यासो यतोऽतो नर्णबद्धता ॥२७॥
श्रुत्या जाबालशाखायां तथाचानधिकारिणाम् । संन्यासस्य विधानाच्च कार्योऽतोऽसौ मुमुक्षुभिः॥२८॥

आत्मकामिभिः संन्यास एव कार्य इति निरूपणम्

नरलोकादिकामानां सुतोत्पत्त्यादि साधनम् । तेभ्यो व्युत्थितचित्तानां संन्यासस्त्वात्मकामिनाम्॥२९॥
इममर्थं श्रुतिर्वक्ति सर्वकर्मानपेक्षिणी । प्रजादिना करिष्यामः किं तत्फलवितृष्णतः ॥३०॥
उत्पत्त्यादिविरुद्धोऽयं[1] लोको येषामकर्मजः । मोहमात्रान्तरायत्वाज्ज्ञानमात्रमपेक्षते ॥३१॥
प्रवृत्तिलक्षणो योगो ज्ञानं संन्यासलक्षणम् । तस्माज्ज्ञानं पुरस्कृत्य संन्यसेदिह बुद्धिमान् ॥३२॥

ज्ञाने सत्यपि संन्यासाभावादमुक्तेरदृष्टेर्न मुक्तौ समुच्चयस्तत्राऽऽह—निरस्तेति । अतः संन्यासज्ञानयोर्युक्तो मुक्तौ समुच्चय इति शेषः ॥२२॥

तत्समुच्चितधियो मुक्तिहेतुत्वे न केवलं लिङ्गमेव मानं किन्तु स्मृतिरपीत्याह—त्याग इति । तर्हि त्यागस्यैव मुक्तिहेतुता न तत्समुच्चितज्ञानस्येत्याशङ्क्याऽऽह—त्यजतेति ॥२३॥

तत्रैव श्रुतिं दर्शयितुं कर्मणां मोहमात्रोत्थत्वं साधयति—मुक्तेश्चेति ॥२४॥

तेषां तन्मात्रजत्वेऽपि विवेकपूर्वाद्वैराग्यात्तत्त्यागेन समुच्चितात्तत्त्वबोधादबोधध्वस्तौ सकार्यं तं हित्वा शुद्धब्रह्मणि स्थिरधीस्तदेव स्वरूपत्वेन सदाऽनुसंदधानो जीवन्मुक्तो विदेहकैवल्यं गच्छतीति फलितमाह—मोहेति ॥२५॥

प्रमाणमुपसंहरति—इति प्रमाणमिति । प्रमेयमुपसंहरति—सर्व इति ॥२६॥

ऋणापाकरणश्रुतिस्मृतिविरोधात्संन्यासायोगे कुतस्तत्समुच्चयसिद्धिरित्याशङ्क्याऽऽह—ब्रह्मचर्यादिति । न विधिविरोधेऽर्थवादश्रुतिस्मृत्योः स्वार्थे मानतेति सम्बन्धग्रन्थे साधितमिति भावः । अथ जाबालश्रुतौ कर्मानधिकृतान्धादिविषयः संन्यासविधिः । यथाऽऽहुः—तवैवं शक्यते वक्तुं येऽन्धपङ्ग्वादयो नराः । गृहस्थत्वं न शक्ष्यन्ति कर्तुं तेषामयं विधिः । नैष्ठिकब्रह्मचर्यं वा परिव्राजकतापि वा । तैरवश्यं ग्रहीतव्या तेनादावे दुच्यते । इति ॥ तत्राऽऽह—तथाचेति । अथ पुनरव्रती वेत्यादिना पृथगनधिकृतानां संन्यासविधानात्पूर्वमधिकृतविषयमेवेति भावः । ऋणश्रुत्याद्यविरोधे फलितमाह—कार्य इति ॥२७-२८॥

ऋणप्रमाणाविरोधेऽपि मोचकज्ञानाङ्गत्वेन संन्यासो न कार्यः सुतादिसाधनात्तत्समुच्चितज्ञानाद्वा तत्सिद्धेरित्याशङ्क्याऽऽह—नरेति ॥२९॥

पुत्रादेः स्वतन्त्रस्य परतन्त्रस्य वा न मुक्तिहेतुतेत्यत्र श्रुतिमाह—इममिति । पुत्रादिना मनुष्यलोकादिसिद्धेरिष्टत्वादाक्षेपानुपपत्तिरित्याशङ्क्याऽऽह—तत्फलेति ॥३०॥

तद्वैतृष्ण्ये हेतुमाह—उत्पत्त्यादीति । ते वयं तत्फलवितृष्णत इति सम्बन्धः । मोक्षः सुताद्यनपेक्षश्चेत्किमपेक्ष्य भवति तत्राऽऽह—मोहेति ॥३१॥

पुत्रादेरन्यत्र विनियुक्तत्वात्केवलस्य समुच्चितस्य वा मुक्तिहेतुत्वायोगाज्ज्ञानस्यैव तद्धेतुत्वात्तदङ्गत्वेन संन्यासविधिरित्युक्तं संप्रति तस्य ज्ञानहेतुत्वे स्मृतिमाह—प्रवृत्तीति ॥३२॥

---

१. उत्पत्त्याप्तिसंस्कृतिविकृतिरूपकर्मफलविलक्षणोऽयमात्मलोकः अकर्मजः ।

भावितैः[1] करणैश्चायं बहुसंसारयोनिषु । आसादयति शुद्धात्मा मोक्षं वै प्रथमाश्रमे[2] ॥३३॥
तमासाद्य तु मुक्तस्य दृष्टार्थस्य विपश्चितः । त्रिष्वाश्रमेषु को न्वर्थो भवेत्परमभीप्सतः ॥३४॥
श्रुतयः स्मृतयश्चैवमस्मिन्नर्थे सहस्रशः । प्रत्यक्षा एव विद्यन्ते संन्यासप्रतिपादिकाः ॥३५॥

तदर्थस्य त्वमर्थपर्यन्तताउक्ता अत्र त्वमर्थस्य तदर्थतानिरूपणम्

मुख्यार्थता वा प्रागुक्ता ब्रह्मेत्यस्य सदादृशि । प्रतीच्यथाऽऽत्मशब्दस्य मुख्यार्थो ब्रह्मणीर्यते ॥३६॥
ततस्तदेतदिति च ब्रह्मात्मपदवाच्ययोः । मधुकाण्डार्थसर्वस्वं वाक्येन प्रतिपाद्यते ॥३७॥
प्रत्यग्याथात्म्यविज्ञानजन्मनेऽतः श्रुतिः स्वयम् । विधित्सन्तीह संन्यासं मैत्रेयीति प्रवर्तते ॥३८॥
भार्याद्यनुज्ञापूर्वो हि संन्यासो विहितः श्रुतौ । अतोऽनुज्ञार्थमेवाऽऽह मैत्रेयीमृषिरात्मनः ॥३९॥

मू.—मैत्रेयीति होवाच याज्ञवल्क्य उद्यास्यन्वा अरेऽहमस्मात्स्थानादस्मि हन्त तेऽनया कात्यायन्याऽन्तं करवाणीति ॥१॥

उद्यास्यन्वा अरे स्थानादस्माद्गार्हस्थ्यलक्षणात् । चिकीर्षवे मे संन्याससमनुज्ञां दातुमर्हसि ॥४०॥
युक्तमाह भवानस्माननुरूपं चिकीर्षति । यदेवं सति कर्तव्यं तत्क्षिप्रमनुशाधि माम् ॥४१॥
अनुज्ञातोऽथ तामाह हन्तेत्यादि परं वचः । कात्यायन्या सपत्न्या ते विभागं करवाण्यहम् ॥४२॥

क्रमसंन्यासविषयमिदं वाक्यमित्याशङ्क्याऽऽह—भावितैरिति ॥३३॥

ब्रह्मचर्यादेव प्रव्रजितस्यापि पुनरिच्छया गार्हस्थ्यादौ प्रवृत्तिः स्यादित्याशङ्क्याऽऽह—तमिति ॥३४॥

संन्यासस्य ज्ञानाङ्गत्वे मानभूतस्मृतिमूलभूताः श्रुतयो भूयस्यः सन्तीति प्रमाणमुपसंहरति—श्रुतय इति ॥३५॥

ज्ञानस्य स्वरूपे फले वोपकारित्वेन संन्यासं विधातुं ब्राह्मणमित्युक्त्वाऽर्थान्तरविवक्षया पूर्वब्राह्मणार्थमनुवदिति—मुख्येति । तदर्थस्य त्वमर्थपर्यन्तता विहितेत्यर्थः । वक्ष्यमाणं ब्राह्मणार्थं संक्षिपति—अथेति । त्वमर्थस्य तदर्थपर्यन्तताऽनन्तरमुच्यत इत्यर्थः ॥३६॥

ब्राह्मणद्वयं पदार्थोपक्षीणं चेद्वाक्यार्थस्तर्हि केनोच्यत इत्याशङ्क्य मधुब्राह्मणेनेत्याह—तत इति । तदेतद्ब्रह्मापूर्वमित्यादिना वाक्येनेति सम्बन्धः । ब्रह्मादिपदवाच्ययोस्तद्द्वारा लक्ष्ययोरिति यावत् । मधुकाण्डार्थसर्वस्वमैक्यमित्यर्थः ॥३७॥

ब्राह्मणार्थमनेकधोक्त्वा संन्यासस्य ज्ञानाङ्गत्वपक्षे ब्राह्मणमवतारयन्सुखप्रतिपत्त्यर्थामाख्यायिकामुत्थापयति—प्रत्यगिति । संन्यासस्य ज्ञानाङ्गत्वपरामर्शार्थोऽतःशब्दः । इहेति विरक्ताधिकार्युक्तिः ॥३८॥

विरक्तः सन्नुपेक्षाकाले किमिति भार्यां मुनिः संबोधितवानित्याशङ्क्य संबोधनतात्पर्यमाह—भार्यादीति । संन्यासशब्देन क्रमसंन्यासो गृह्यते । "मातरं पितरं भार्यां पुत्रान्सुहृदो बन्धूनेताननुमोदयित्वा ये चास्यर्त्विजस्तान्सर्वान्पूर्ववद्वृणीत्वा वैश्वानरीमिष्टिं कृत्वा सर्वस्वं दद्यादि"ति कौषीतकिश्रुतिमाह—श्रुताविति । हिशब्दापेक्षितं पूरयति—अत इति ॥३९॥

ऋषिवाक्यं व्याकरोति—उद्यास्यन्निति । भवतु किं ततो मया कार्यमिति भार्याशङ्कां प्रत्याह—चिकीर्षव इति ॥४०॥

हन्तेत्यादेर्भूमिकां करोति—युक्तमिति । अनुरूपं भवतो ज्ञानस्य वयसो देशकालयोश्चेति वाक्यशेषः । कर्तव्यं मयेति शेषः ॥४१॥

हन्तेत्याद्यवतार्य व्याकरोति—अनुज्ञात इति । अनुज्ञायाः समनन्तरवाक्यप्रवृत्तिहेतुत्वद्योतकोऽथशब्दः ॥४२॥

१. भावितैः=संस्कृतैः ।
२. प्रथमाश्रमे=ब्रह्मचर्ये ।

निःस्वा स्त्री स्ववता पुंसा नियुक्ता कर्मसंपदि । मयि प्रव्रजिते तस्माद्युवयोर्नार्थसंगतिः ॥४३॥

स्ववानेव पुरा न्यासाद्युवयोः स्वेन सांप्रतम् । विभागं करवाणीति भार्या तेनाभ्यचोदयत् ॥४४॥

वृत्तिभिः संविभज्य स्वान्संन्यसेदिति चोद्यते । यतः शास्त्रेण तेनायं विभागः क्रियते मया ॥४५॥

मू.—सा होवाच मैत्रेयी । यन्नु म इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात्कथं तेनामृता स्यामिति नेति होवाच याज्ञवल्क्यो यथैवोपकरणवतां जीवितं तथैव ते जीवितँ स्यादमृतत्वस्य तु नाशास्ति वित्तेनेति ॥२॥

मू.—सा होवाच मैत्रेयी येनाहं नाऽमृता स्यां किमहं तेन कुर्यां यदेव भगवान्वेद तदेव मे ब्रूहीति ॥३॥

मैत्रेयीवचनम्

युक्तमेतद्व्यवसितं यद्वित्तं न प्रदित्सति । भवत्संन्यासवन्नूनमस्मद्धितकरं धनम् ॥४६॥

महानुभावसंपर्कः कस्य नोन्नतिकारणम् । अशुच्यपि पयः प्राप्य गङ्गां याति पवित्रताम् ॥४७॥

भगवत्संगतेर्नान्यः पुरुषार्थोऽमृतत्वतः । पृच्छाम्यतोऽमृतत्वस्य साधनं स्यात्कथं धनम् ॥४८॥

सारेण यदि नामेयं पूर्णा स्याद्वसुना मही । तावताऽप्यमृताऽहं स्यां किंवा नेत्युच्यतां यथा ॥४९॥

सत्तामात्रोपकारीणि धनानि धनिनां न हि । क्रियाद्वारोपकारीणि यतोऽतः पृच्छ्यते क्रिया ॥५०॥

प्रत्याह पृष्टः स्वां जायां नामृतत्वं धनादिति ॥५१॥

वित्तं चेन्नामृतत्वाय कस्माद्दित्सति तद्भवान् । इति पृष्टोऽब्रवीद्वित्तसाधनस्य प्रयोजनम् ॥५२॥

ननु त्वया संन्यासश्चिकीर्षितश्चेत्क्रियतां किमित्यावयोर्द्रव्यविभागेन विच्छेदश्चिकीर्ष्यत आवामेव त्वत्संन्यासोत्तरकालं द्रव्यं विभज्य विच्छेदं करिष्यावस्तत्राऽऽह—निःस्वेति ।

"भार्या पुत्रश्च दासश्च त्रयस्ते निर्धनाः स्मृताः । यत् ते समधिगच्छन्ति यस्य ते तस्य तद्धनम् ॥"

इति स्मृतेरित्यर्थः । कथं तर्हि सा कर्मण्यधिक्रियते तत्राऽऽह—स्ववतेति ॥४३॥

तवापि विरक्तस्य संन्यस्यतः समानं निःस्वत्वमित्याशङ्क्याऽऽह—स्ववानिति ॥४४॥

संन्यासात्पूर्वं स्वस्वामित्वेऽपि तं चिकीर्षुणा द्रव्येणाऽऽवयोर्विभागो न कार्यो नियामकाभावादित्याशङ्क्य तेनेत्युक्तं व्यनक्ति—वृत्तिभिरिति ।ताननुरूपाभिर्वृत्तिभिः संविभज्य संन्यसेदिति शास्त्रमत्र नियामकमित्यर्थः ॥४५॥

तत्र मैत्रेयी ब्रूते—युक्तमिति । तत्र हेतुः—भवदिति ॥४६॥

ननु जीवनार्थं धनं विना हितसाधने धने न ते अधिकारः स्त्रीणां पापयोनित्वेनाशुचिराशित्वात्'येऽपि स्युः पापयोनयः । स्त्रियो वैश्यास्तथा शूद्रा" इति स्मृतेरतो न ते हितकरं[1] धनं देयमिति तत्राऽऽह—महानुभावेति । महापुरुषसंपर्कस्योत्कर्षहेतुत्वे दृष्टान्तमाह—अशुचीति ॥४७॥

यन्न्वित्याद्यवतारयति—भगवदिति । त्वत्संबन्धादेव मोक्षादन्यो न पुमर्थोऽस्तीति यतो मे भात्यतो मोक्षस्य साधनं धनं कथं स्यादिति त्वां पृच्छामीति योजना ॥४८॥

पृच्छामेव स्फुटयन्वाक्यं योजयति—सारेणेति ॥४९॥

धनं मोक्षसाधनं न वेति प्रश्नप्रतीतेः पृथिवीपूर्णवित्तसाध्येन कर्मणेत्यादिभाष्यं कथमित्याशङ्क्याऽऽह—सत्तेति ॥५०॥

नेतीत्यादेरर्थमाह—प्रत्याहेति । यथेत्याद्याकाङ्क्षापूर्वकमुत्थापयति—वित्तं चेदिति ॥५१–५२॥

---

१. हितकरं धनं = जीवनातिरिक्तभोगसाधनं धनं न प्रयच्छसीत्यर्थः । जीवनसाधनं तु देयमेवेत्यर्थः ।

क्षयिष्णुसाधनाधीनं जीवितं स्याद्यथा नृणाम् । तथैव तव वित्तेन जीवितं नामृतात्मता ॥५३॥
अविद्यामात्रविध्वंसाज्ज्ञानादेवामृतं यतः । अमृतत्वस्य नाऽऽशाऽपि वित्तसाध्येन कर्मणा ॥५४॥
कुतोऽमृतत्वसंप्राप्तिर्ज्ञानमात्रैकहेतुका । न कर्म कारणं मुक्तेर्नाग्निस्तापस्य भेषजम् ॥
कर्मभ्यो जन्म नियतं जन्म चेन्निर्वृतिः कुतः ॥५५॥
स्वभावादेव साधूनां प्रवृत्तिरुपकारिणी । अपकारिण्यपि जने किमु भक्तजनं प्रति ॥५६॥
नूनं ममापराधोऽयं यद्भवन्तोऽपि मां प्रति । प्रतिलोमं चिकीर्षन्ति कोऽन्यः स्याद्धितकृन्मम ॥५७॥
अनुरक्तां प्रियां साध्वीं बद्ध्वा वित्तेन मां कथम् । कामोच्छित्तिमकृत्वा च संन्यस्यन्ति भवद्विधाः ॥५८॥
वित्ताच्चेदमृतत्वं स्यात्तत्त्यक्षा न युज्यते । वित्ताच्चेन्नामृतत्वं स्याद्वद तेन ममापि किम् ॥५९॥
यद्यस्त्यनुजिघृक्षैवं करुणा वा मयीष्यते । यदेव भगवान्वेद तेन संविभजस्व माम् ॥६०॥
यद्विज्ञानात्परित्यज्य निःशेषं वित्तसाधनम् । स्वाराज्यमीप्सति भवांस्तदेव वसु देहि मे ॥६१॥
नाऽऽदिर्नान्तो न मध्यं वा यस्य वित्तस्य विद्यते । भोगे न च क्षयं याति तदेव वसु दीयताम् ॥६२॥
अनन्तवित्तो हि भवानन्तवद्दीयते कुतः । असतः कीदृशं दानं सदेवातः प्रदीयताम् ॥६३॥

मू.—स होवाच याज्ञवल्क्यः प्रिया बतारे नः सती प्रियं भाषस एह्यास्स्व व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्वेति ॥४॥

याज्ञवल्क्यस्य प्रतिवचनम्

संसारपुरुषार्थेभ्यो यतो नाव्युत्थितात्मने । मुक्त्येकसाधनं ज्ञानं दातुं शक्यमिदं मया ॥६४॥
अमुमुक्षुत्वमाशङ्क्य भवत्यै तत्प्रदित्सितम् । संसाराच्चेद्विरक्ताऽसि गृहाणानुत्तमामृतम् ॥६५॥

तद्याचष्टे—क्षयिष्ण्विति ॥५३॥

अमृतत्वस्येत्यादि व्याकरोति—अविद्येति ॥५४॥

उक्तमर्थं प्रश्नपूर्वकं समर्थयते—कुत इति । कर्मणां मुक्तिप्रतिकूलत्वं स्फुटयति—कर्मभ्य इति ॥५५॥

उपालम्भं तस्या दर्शयन्सामान्यन्यायमाह—स्वभावादिति ॥५६॥

तस्य स्वविषयेऽपराधशङ्कां सूचयति—नूनमिति । सर्वभूतेष्वनुग्रहकर्ता रोऽपीत्यपेरर्थः । यदि वयं ते प्रतिकूलं चिकीर्षवस्तर्हि योऽन्यस्तेऽनुकूलकर्ता तमनुगच्छेत्याशङ्क्याऽऽह—क इति ॥५७॥

अस्माकं संन्यासकाल उपस्थितस्ते हितकरणे नावसरोऽस्तीत्याशङ्क्याऽऽह—अनुरक्तामिति ॥५८॥

इदमेव दीयमानं वित्तं तवामृतत्वसाधनं किं साधनान्तरेणेत्याशङ्क्य येनेत्यादेस्तात्पर्यमाह—वित्तादिति । तेन मे नामृतत्वमिति तत्त्यागेच्छेत्याशङ्क्याऽऽह—वित्ताच्चेदिति ॥५९॥

उपालम्भेन तर्केण च भर्तारं वशीकृत्य विनयं दर्शयति—यदीति । संविभजस्व कात्यायन्याः सपत्न्याः सकाशादिति शेषः ॥६०॥

ममापि नास्ति मुक्तिसाधनं ज्ञानं तत्कथं तद्देयमित्याशङ्क्याऽऽह—यदिति ॥६१॥

मदीयं ज्ञानसाधनं तुभ्यं दातुमशक्यमपचयप्रसङ्गादित्याशङ्क्याऽऽह—नाऽऽदिरिति ॥६२॥

किंचान्तवद्वित्तं न त्वया मह्यं दातुं शक्यं तव तदभावान्न चासतो दानमाकाशपुष्पवदित्याह—अनन्तेति । अतो ज्ञानमेव मह्यमुपदिश्यतामिति फलितमाह—सदेवेति ॥६३॥

स होवाचेत्यस्य तात्पर्यमाह—संसारेति । यतो नाविरक्तस्य मुक्तिहेतुज्ञानेऽधिकारोऽतस्ते वैराग्याभावान्न मुमुक्षुतेत्यनधिकारमाशङ्क्य जीवनार्थमेव धनं त्वदर्थं दातुमिष्टमित्यर्थः । ततोऽहं विरक्तेति मुमुक्षुत्वाद्विद्याधिकारिणी स्यामित्याशङ्क्याऽऽह—संसारादिति ॥६४-६५॥

स्त्रीणां यदुचितं वाक्यं प्रतिलोमं न भाषसे । पूर्ववत्त्वनुकूलं त्वमिदानीमपि भाषसे ॥६६॥
मोक्षं यान्तं नरं सर्वे मुञ्चन्ति सहजा अपि । अतिभक्तितया मां त्वं मोक्षेऽपि न जिहाससि ॥६७॥
विभागमसहन्तीव मदतिस्नेहकारणात् । मुक्तावनुयियासि त्वं मदैकात्म्यपरीप्सया ॥६८॥
अतिस्नेहाऽपकृष्टोमा देहार्धं शूलिनः श्रिता । त्वं तु सर्वात्मनाऽऽत्मानं कृत्स्नं मामाप्तुमिच्छसि ॥६९॥
यत एवमतस्तुभ्यं वक्ष्याम्यमृतसाधनम् । निदिध्यासस्व चेतोऽतो व्याचक्षाणस्य तन्मम ॥७०॥

मू.—स होवाच न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति न वा अरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवति । न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्रिया भवन्ति । न वा अरे वित्तस्य कामाय वित्तं प्रियं भवत्यात्मनस्तु कामाय वित्तं प्रियं भवति । न वा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवत्यात्मनस्तु कामाय ब्रह्म प्रियं भवति । न वा अरे क्षत्रस्य कामाय क्षत्रं प्रियं भवत्यात्मनस्तु कामाय क्षत्रं प्रियं भवति । न वा अरे लोकानां कामाय लोकाः प्रिया भवन्त्यात्मनस्तु कामाय लोकाः प्रिया भवन्ति । न वा अरे देवानां कामाय देवाः प्रिया भवन्त्यात्मनस्तु कामाय देवाः प्रिया भवन्ति । न वा अरे भूतानां कामाय भूतानि प्रियाणि भवन्त्यात्मनस्तु कामाय भूतानि प्रियाणि भवन्ति । न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति । आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदँ सर्वं विदितम् ॥५॥

आ ब्रह्मणोऽस्मात्संसाराच्छुद्धधीर्न विरज्यते । यावत्तावन्न विद्याया अधिकारी भवेन्नरः ॥७१॥

प्रियेत्यादेस्तात्पर्यमाह—स्त्रीणामिति । इदं हि स्त्रीणामुचितं वाक्यं यद्भर्तारं प्रत्यनुकूलवचनम् । यथाऽऽहुः—

"कुशीलः कामवृत्तो वा गुणैर्वा परिवर्जितः । पूजनीयः स्त्रिया साध्व्या सततं देववत्पतिः ।
पाणिग्राहस्य साध्वी स्त्री जीवतो वा मृतस्य वा । पतिलोकमभीप्सन्ती नाऽऽचरेत्किंचिदप्रियम्" । इति

तदेवं त्वं संसारदशायामिव मोक्षावस्थायामपि भाषसे न तु समयमतिक्रम्य प्रतिकूलमभिसंदधासीत्यर्थः ॥६६॥

"अर्धो वा एष आत्मनो यत्पत्नी"तिश्रुतेरहं सहजा सदैव तेऽनुकूला तन्न मे त्वत्प्रतिकूलोक्तिप्रसक्तिरित्याशङ्क्याऽऽह—मोक्षमिति ॥६७॥

न केवलं मां हातुं नेच्छसि किंतु मदाप्तीच्छया मुक्तावपि मामनुगच्छसीत्याह—विभागमिति । असहन्त्यसहमानेति यावत् । क्रियापदे छान्दसः सकारलोपः ॥६८॥

न केवलं प्राकृतसर्वस्त्रीपुंसेभ्यस्तवोत्कर्षः किंतु पार्वत्याः सकाशादपीत्याह—अतिस्नेहेति ॥६९॥

प्रियेत्यादि व्याकुर्वता तस्या वैराग्यं दृष्ट्वा तुष्टस्य पत्युस्तद्विषया स्तुतिरिष्टेत्युक्तम् । इदानीमेहीत्यादेस्तात्पर्यमाह—यत इति । यतो ममेव तवापि वैराग्यं मुमुक्षुत्वं चेक्ष्यतेऽतो वैराग्योक्तिपूर्वकं मोक्षोपायं ज्ञानं वक्ष्यामि तच्च व्याचक्षाणस्य मे तद्विषयं वाक्यमेकाग्रं चेतः स्वीकृत्यार्थतो निश्चयेन ध्यातुमिच्छ गम्भीरार्थत्वादित्यर्थः ॥७०॥

न वा अरे पत्युरित्यादेस्तात्पर्यं दर्शयन्नविरक्तस्य विद्यानधिकारमाह—आ ब्रह्मण इति ॥७१॥

वैराग्यहेतावप्यस्मिन्रक्तो धर्मादिहेतुतः । यतोऽतः कर्मशुद्धात्मा भवादस्माद्विरज्यते ॥७२॥
वैराग्यहेतून्संसारे तस्माद्यत्नादियं श्रुतिः । न वा अर इति ह्युक्त्या वक्तुं समुपचक्रमे ॥७३॥
यस्मिन्नेव परा सक्तिस्तस्मिन्नेव निरादरम् । कर्म कृत्वा परं यत्नादन्यस्य[1]ार्थयते फलम् ॥७४॥
किमिक्षो रसमाप्नोति यत्नान्निष्पीडयन्न ना ॥७५॥
तीव्रदुःखोद्भवो बुद्धौ संस्कारो यावदेव तु । तद्विपक्षः सुखं तावदल्पं तत्संक्षये क्षयः ॥७६॥
शीतमल्पं सुखं ग्रीष्मे तापोऽल्पः शिशिरे सुखम् । तदेव दुःखकृद्भूरि तद्धेत्वोरनवस्थितेः ॥७७॥

प्रियाप्रियविवेचनम्

शब्दोऽस्ति न प्रियः कश्चिदप्रियो वा स्वतस्तथा । रक्तद्विष्टमनो हेतुः शब्दाद्यर्थे प्रियाप्रिये ॥७८॥
स्वतोऽखिलोऽप्रियोऽनात्मा प्रत्यङ्मोहैकहेतुतः । प्रत्यगाह्लादकारित्वादप्रियोऽपि प्रियो मतः ॥७९॥
जायादिरप्रियः सर्वः स्वत आद्यन्तदुःखकृत् । तद्धेतोरात्मनः प्रीतेर्जायादिः प्रिय उच्यते ॥८०॥

दृष्टनष्टस्वभावत्वाद्बन्धस्य तस्मिन्नासङ्गहेत्वभावात्स्वतस्ततो वैराग्यसिद्धेरलं तत्प्रतिपादकश्रुत्येत्याशङ्क्याऽऽह—वैराग्येति ॥७२॥

कर्मभोगवासनावशात्पुरुषः संसारे यस्माद्रक्तस्तस्मात्कर्मभिः शुद्धधियस्तस्मिन्वैराग्यसिद्धये तद्धेतून्क्षयिष्णुत्वादीन्न वा अर इत्यादिना वक्तुमेषा श्रुतिस्तात्पर्येण प्रवृत्तेति श्रुतिमवतारयति—वैराग्यहेतूनिति । तद्धेतुप्रतिपत्तौ तदावश्यकत्वद्योतको हिशब्दः ॥७३॥

शुद्धबुद्धेर्वैराग्यसिद्धये संसारासारत्वमुच्यते चेत्केन प्रकारेणानुष्ठितानि कर्माणि शुद्धिं भावयन्तीत्याशङ्क्याऽऽह—यस्मिन्निति । यत्र स्वर्गादौ संसारिणः सक्तिरनतिशया तस्मिन्काम्यानुष्ठानादानुषङ्गिकशुद्धेरादरराहित्यं यथा स्यात्तथेश्वरार्पणबुद्ध्या नित्यादि कृत्वा शुद्धधीर्भूत्वा विरक्तो ज्ञानस्य निरतिशयं फलमर्थयमानो ब्रह्म जिज्ञासुर्भवतीत्यर्थः ॥७४॥

नित्याद्यनुष्ठानेऽपि शुद्धिद्वारा ब्रह्मविविदिषा न भवत्यस्मदादिष्वदर्शनादित्याशङ्क्याऽऽह—किमिति । यथा यन्त्रादिषु निष्पीडयन्पुरुष इक्षूंस्तद्रसमाप्नोति तथेश्वरार्पणबुद्ध्या नित्यादि कुर्वन्निहामुत्र वा तत्फलं विविदिषां लभते येन[2] केनचनेत्यादिश्रुतेरित्यर्थः । नित्याद्यनुष्ठानान्न शुद्धिद्वारा जिज्ञासा संसारेऽपि सुखदृष्टेर्वैराग्यायोगादित्याशङ्क्याऽऽह—तीव्रेति । सुखहेत्वनुष्ठानायासस्तीव्रं दुःखं तज्जा वासना यावद्बुद्धौ वर्तते तावदेव तद्दुःखविरोधिवैषयिकं सुखमनुवर्तते तच्चाल्पं दुःखक्षये च क्षीयते तदविनाभावादतस्तस्यासारत्वाद्युक्तं तत्र वैराग्यमित्यर्थः ॥७५-७६॥

सुखदुःखहेत्वोरनवस्थितत्वाच्च सहेतुकं सुखं दुःखवदनादेयमिति वैराग्ये हेत्वन्तरमाह—शीतमिति । सुखदुःखहेत्वोरनवस्थितत्वे हेतुमाह—तद्धेत्वोरिति । तयोर्हेतू धर्माधर्मौ तयोरुद्भवानुद्भवकालानियमादित्यर्थः ॥७७॥

शब्दाद्यर्थस्य कस्यचित्प्रियत्वमेव कस्यचिद्वैपरीत्यमितिनियमदृष्टेस्तद्धेत्वोर्व्यवस्थेत्याशङ्क्याऽऽह—शब्दोऽस्तीति । कथं तर्हि व्यवस्थाप्रतीतिरत आह—रक्तेति । शब्दादौ शोभनाशोभनाध्यासपूर्वकं रागादिकलुषितं मनस्तत्र प्रियादिदृष्टिहेतुरित्यर्थः ॥७८॥

प्रियत्वमप्रियत्वं वाऽनात्मसु न स्वतोऽस्तीत्युक्तमिदानीं प्रत्यगविद्याजत्वात्तेषु स्वतोऽप्रियत्वमित्याह—स्वत इति । प्रियत्वं शोभनाध्यासादित्युक्त्वा हेत्वन्तरमाह—प्रत्यगिति । प्रागुक्तन्यायादप्रियोऽपि स्वतोऽनात्मा प्रत्यक्चित्स्वरूपभूतानन्दाभिव्यञ्जकधीवृत्तिविषयत्वात्प्रियो व्यवह्रियत इत्यर्थः ॥७९॥

स्वभावतोऽनात्मनोऽप्रियत्वे हेत्वन्तरमाह—जायादिरिति । तर्हि कथं तत्र प्रियत्वधीरित्याशङ्क्य प्रत्यगाह्लादकारित्वादित्युक्तं व्यनक्ति—तद्धेतोरिति ॥८०॥

१. अन्यस्य = ज्ञानस्य फलं मोक्षम् ।
२. येन केनचन इति केनभाष्यम् ।

न कस्यांचिदवस्थायामात्मा लोकेऽप्रियो मतः । प्रियोऽप्रियश्च जायादिर्यथाऽनात्मा मुहुर्मुहुः ॥८१॥
स्वत एवाप्रियोऽनात्मा ह्यात्मप्रीत्यर्थसाधनात् । जायादिः स्यात्प्रियो भक्त्या बन्धक्याः कामुको यथा८२
निर्हैतुकी स्वतः प्रीतिरात्मन्येव यतस्ततः । भाक्तं प्रियं परित्यज्य मुख्यं प्रियमुपाश्रयेत् ॥८३॥
क्षयान्ता निचयाः सर्वे पतनान्ताः समुच्छ्रयाः । संयोगा विप्रयोगान्ता मरणान्तं च जीवितम् ॥८४॥
न तदस्ति सुखं लोके यन्न दुःखकरं भवेत् । तदसंप्राप्तिविच्छेदक्षयेष्वसुखकृद्यतः ॥८५॥
एवं चेत्साधनोद्भूतं यावत्किंचित्सुखं मतम् । तन्निःशेषं परित्यज्य सुखमात्यन्तिकं श्रयेत् ॥८६॥
सांसारिकसुखस्यास्य दुःखत्वादुक्तहेतुतः । निष्कृष्यातस्ततः प्रीतिं प्रतीच्येव निवेशयेत् ॥८७॥
स्रजि दण्डादयो यद्वत्स्रगज्ञानैकहेतुकाः । पतिजायासुताद्येवं प्रत्यगज्ञानहेतुजम् ॥८८॥
सर्वानर्थनिवृत्तिश्च सर्वाह्लादाप्तिरेव च । प्रतीचि ज्ञानमात्राच्चेत्तदन्यत्प्रार्थ्यते कथम् ॥८९॥
यस्य सम्बन्धमाश्रित्य ह्यप्रियोऽपि प्रियायते । प्रियोऽप्यप्रियतां याति यस्य संगतिकारणात् ॥९०॥
दृष्ट्वाऽनुभवतस्तत्त्वमात्मानात्मपदार्थयोः । उपादित्सा जिहासा च तत्कृतैवानुपाल्यताम् ॥९१॥
नानाप्रकार आसङ्गो विषक्तो योऽस्य बाह्यतः । यथोक्तकारणात्सर्वं प्रतीच्येव निवेशयेत् ॥९२॥

आत्मनोऽपि प्रियत्वमनवस्थितं कदाचित्तदुच्छेदेच्छाया दृष्टेरित्याशङ्क्याऽऽह—नेत्यादिना। व्याध्याद्युपद्रुतस्य देहोच्छेदेच्छायामपि स्वरूपप्रीतेरव्यभिचारादात्मनः सुखत्वमित्यर्थः। अप्रिय इति च्छेदः। तत्र प्रीतिनियमे वैधर्म्यदृष्टान्तमाह—प्रिय इति ॥८१॥

तस्य स्वतोऽप्रियत्यं चेदात्मार्थत्वेनापि न प्रियत्वमन्यस्यान्यभावायोगादित्याशङ्क्याऽऽह—स्वत इति। माणवकस्य स्वतोऽनग्नेरपि तद्गुणयोगादग्नित्वव्यवहारस्य भाक्तस्य दर्शनादिति हितशब्दार्थः। बन्धकी बन्धहेतुः पुंश्चलीति यावत्। उक्तं हि—पुंश्चली धर्षणी बन्धक्यसती कुलटेत्वरीति। वर्धकीपाठेऽप्ययमेवार्थः ॥८२॥

आत्मनः स्वतः प्रियत्वमनात्मनः स्वतोऽप्रियत्वमिति स्थिते फलितमाह—निर्हैतुकीति ॥८३॥

वैषयिकसुखतद्धेत्वोरनवस्थितत्वस्य वेदव्यासोक्तत्वाच्च तत्र वैराग्यं कार्यमित्याह—क्षयेति ॥८४॥

शीतमल्पं सुखमित्यत्र सुखहेतोर्दुःखकरत्वमुक्तमिदानीं तस्यापि तदस्तीत्याह—नेत्यादिना ॥८५॥

भवतु किं तावतेति तत्राऽऽह—एवं चेदिति। सुखं यावत्किंचिद्धैतुकं तदेव दुःखकृन्मतं चेदिति योजना ॥८६॥

विषयसुखे प्रीतिरनपायिनी "या प्रीतिरविवेकानां विषयेष्वनपायिनी"तिस्मृतेस्तद्विषयप्रीतिरप्रत्याख्येयेत्याशङ्क्याऽऽह—सांसारिकेति। उक्तहेतुतोऽनात्मप्रपञ्चस्य प्रत्यङ्मोहप्रसूतत्वादेरित्यर्थः। अतःशब्दस्य प्राच्या पञ्चम्या संबन्धः। ततः सांसारिकसुखपरामर्शी निष्कर्षापादानमाचष्टे ॥८७॥

तस्य स्वाज्ञानकार्यत्वमेव दृष्टान्तेन स्पष्टयति—स्रजीति ॥८८॥

न केवलमज्ञानजत्वादेवानात्मनि प्रीत्यभावः किंत्वात्मधीमात्रादुभयविधपुमर्थसिद्धेश्चानात्मानं त्यक्त्वाऽऽत्मन्येव प्रीतिं कुर्यादित्याह—सर्वेति ॥८९॥

आत्मनोऽनात्मप्रीतिहेतुत्वेन पुमर्थत्वाच्च तस्मिन्नेव सा युक्तेत्याह—यस्येति। अग्निव्याप्तस्य लोहपिण्डस्य तदाकारत्वदर्शनादिति हिशब्दार्थः। अनात्मनस्त्वात्माप्रीतिहेतुत्वेनापुमर्थत्वात्तस्मिन्नप्रीतिरेवोचितेत्याह—प्रियोऽपीति ॥९०॥

उक्तेऽर्थेऽनुभवं प्रमाणयन्फलितमाह—दृष्ट्वेति। उक्तरीत्याऽऽत्मानात्मनोः स्वरूपमनुभूयाऽऽत्मनि पुमर्थत्वधीकृतोपादित्साऽन्यत्र चापुमर्थत्वधीकृता जिहासा कार्येत्यर्थः ॥९१॥

अवान्तरप्रकृतं निगमयति—नानेति। यथोक्तकारणादात्मन्येव पुमर्थत्वं नान्यत्रेत्यादेरित्यर्थः ॥९२॥

**नरकादिव निर्विण्णो यावन्नाऽऽब्रह्मणो नरः । न तावदधिकारोऽस्ति कैवल्यज्ञानवर्त्मनि ॥९३॥**
**सर्वासङ्गविनिर्मुक्तो मोक्षमात्रप्रयोजनः । अतोऽधिक्रियते प्रत्यग्ज्ञानोत्पत्तौ न रागवान् ॥९४॥**

आत्मा द्रष्टव्य इत्यत्र विधिविचारः

**आत्मा प्रत्यक्प्रसिद्धेः स्यात्तत्रैवाऽऽत्मानुभूतितः । इति प्रमेयनिर्देशो द्रष्टव्य इति तत्प्रमा ॥९५॥**
**आत्मबुद्धिरियं तावत्सर्वेषां जायते स्वतः । अप्राप्ता सर्वमात्मेति सैवातो धीर्विधीयते ॥९६॥**
**द्रष्टृद्रष्टव्ययोर्भेदे सत्येवं धीर्विधीयते । नियोज्यविषयाभेदे घटते न विधिर्यतः ॥९७॥**
**उत्तरोत्तरभूयांसि नामादीनि यथाक्रमम् । उपन्यस्याऽऽत्मयाथात्म्यं तत्तत्वं प्राब्रवीच्छ्रुतिः ॥९८॥**
**भूम्नश्च लक्षणं चक्रे यत्र नान्यदिति स्वयम् । अथ यत्रेति चाल्पस्य प्राणान्तस्य च लक्षणम् ॥९९॥**

भूम्नि नियोज्यविषयभेदाभावान्न विधिः

**अथात इति वाक्येन ह्यहमेवेति निश्चितेः । निषिध्यानात्मरूपं यत्ततोऽहंकारनिह्नुतिः ॥१००॥**

आत्मनो ज्ञातत्वे विध्यानर्थक्यम्

**आत्मैवेत्यादिवाक्येन पूर्णब्रह्मावबोधिना । नाविध्वस्तंतमोऽतोऽस्ति न च ज्ञानमनुत्थितम् ॥ १ ॥**
**नानिवृत्तस्तथाऽनर्थो नानवाप्तं सुखं तथा । कार्यज्ञेयसमाप्तिः स्यात्प्रत्यग्याथात्म्यबोधतः ॥ २ ॥**

अनात्मसु कार्या विरक्तिरित्युक्त्वा तद्धीनस्य विद्यानधिकारमुपसंहरति—नरकादिति। आ ब्रह्मणः सर्वस्मात्संसाराद्यावन्नरो नरकादिव न निर्विण्णस्तावदस्य मुक्त्युपाये ज्ञाने नाधिकारोऽस्तीति योजना ॥९३॥

विरक्तस्य विद्याधिकारमुपसंहरति—सर्वेति। वैराग्यस्य ज्ञानोत्पत्त्यनुगुणत्वं रागस्य तत्प्रतिकूलत्वं चातःशब्दार्थः ॥९४॥

"न वा अरे पत्युरि"त्यारभ्य द्रष्टव्यवाक्यात्प्राक्तनसंदर्भो व्याख्यातः। संप्रति तद्वाक्यस्थात्मशब्दार्थमाह—आत्मेति। प्रतीच्यात्मशब्दस्य प्रसिद्धिं साधयति—तत्रेति। वाच्यमर्थमुक्त्वा विवक्षितमाह—इतीति। द्रष्टव्यशब्दार्थमाह—द्रष्टव्य इतीति। प्रतीच्यात्मनि प्रमेये वैदिकं दर्शनं मानमित्येतदत्र विवक्षितमित्यर्थः ॥९५॥

तव्यप्रत्ययो विधायकोऽधिगतः स च लोकप्रसिद्धात्मदर्शनं विधत्ते ब्रह्माऽऽत्मेति ज्ञानं वेति विकल्प्याऽऽद्यं विधिवादी दूषयति—आत्मेति। द्वितीयमङ्गीकरोति—अप्राप्तेति ॥९६॥

सिद्धान्तवाद्याह—द्रष्टृति। अज्ञाते ब्रह्मात्मत्वे तज्ज्ञाने विधिर्ज्ञाते वा ? नाऽऽद्यो विषयाभावान्नेतरो नियोज्यादिभेदाभावादित्यर्थः ॥९७॥

ब्रह्मात्मत्वे ज्ञाते भेदाभावं श्रुत्या साधयति—उत्तरेति। नामादीनि प्राणान्तानि तत्त्वान्यादाय पाठक्रममनतिक्रम्य पूर्वस्मात्पूर्वस्मादुत्तरमुत्तरं महत्त्वेनोक्त्वा तेषां स्वरूपं भूमशब्दितमात्ममात्रमुक्तवती भूमा त्वेव विजिज्ञासितव्य इत्याद्या श्रुतिरित्यर्थः ॥९८॥

कोऽसौ भूमा तमाह—भूम्नश्चेति। प्राणादावतिव्याप्तिमाशङ्क्याऽऽह—अथेति। एकश्चकारः समुच्चये द्वितीयः शङ्कानिरासे ॥९९॥

नामादिप्राणान्तं जगद्भूममात्रं स चाद्वयोऽतस्तज्ज्ञाने नियोज्यादिभेदाभावान्न विधिरित्युक्त्वा विध्यभावे हेत्वन्तरमाह—अथेति। अथातोऽहंकारादेश इत्यादिना ब्रह्माहमेवेत्यहङ्कारमात्रत्वनिश्चयाद्यदनात्मरूपं तत्सर्वं निषिध्या"थात आत्मादेश आत्मैवाधस्तादि"त्यादिनाऽद्वयात्मधीद्वाराऽहंकारस्यापि बाध उक्तोऽतो ब्रह्मज्ञानादध्वस्ताहंकारो न विधियोग्य इत्यर्थः। अहमेवाधस्तादित्यादिनाऽहंकारस्य सर्वात्मत्वेन ब्रह्मत्वायोग्यत्वं हिशब्दार्थः। न केवलमैक्यधियाऽहंकारध्वस्तिरेव किंत्वशेषपुमर्थाप्तिरित्याह—नेत्यादिना। अतो ज्ञानादिति यावत्। तत्फलं संक्षिप्याऽऽह—कार्येति ॥१००-१०१-१०२॥

सर्वासूपनिषत्स्वेवं प्रमात्रादेरनात्मनः । प्रत्यङ्मात्रैकयाथात्म्यं श्रूयते सोपपत्तिकम् ॥ ३ ॥
इहापि नेति वाक्येन प्रतीचोऽतत्स्वभावकम् । व्युत्थापितमनूद्याऽऽह सर्वमात्मेति नः श्रुतिः ॥ ४ ॥
भावाभावात्मना स्थानं न निषेध्यस्य वस्तुनः । यतोऽतः सर्वमात्मैव प्राब्रवीच्छ्रुतिरञ्जसा ॥ ५ ॥

लौकिकात्मज्ञानमपि न विधेयं प्राप्तत्वात् । आत्मानात्मविवेको विधेयः

नाव्युत्थितमनाः कश्चित्प्रतीचोऽन्यत्प्रपश्यति । व्युत्थितात्माऽपि चाऽऽत्मानं पश्यन्नेवान्यदीक्षते॥ ६ ॥
स्वातन्त्र्यं यत्र कर्तुः स्यात्तत्र कर्ता नियुज्यते । अन्वयव्यतिरेकाभ्यामात्मानात्मविवेचने ॥ ७ ॥
वचोऽर्थप्रतिबोधस्य पदार्थाज्ञानमेव तु । यतोऽन्तरायस्तद्धानौ तेन तत्र नियुज्यते ॥ ८ ॥
एवं ज्ञातपदार्थः सन्यथा पूर्वमवादिषम् । ब्रह्म वा इदमित्यत्र न्यायेनैकात्म्ययायिना ॥ ९ ॥
निरन्तरायो वाक्यार्थं वाक्यादेवावगच्छति । अव्यावृत्ताननुगतप्रत्यक्तत्त्वसमीक्षणात् ॥१०॥
नित्यमुक्तत्वविज्ञानं वाक्यादेवाञ्जसा भवेत् । वाक्यार्थस्य च विज्ञानं पदार्थस्मृतिपूर्वकम् ॥११॥
अन्वयव्यतिरेकाभ्यां पदार्थः स्मर्यते ध्रुवम् । एवं निर्दुःखमात्मानमक्रियं प्रतिपद्यते ॥१२॥
प्रत्यङ्मोहोद्भवानात्मप्राधान्येन तमोन्वयात् । आत्माऽऽत्मानं पुराऽज्ञासीद्वाक्यार्थज्ञानजन्मतः ॥१३॥
अनात्मनोऽत आत्मानमन्वयव्यतिरेकतः । निष्कृष्याऽऽत्मन्यथाऽऽत्मानं सर्वमात्मेति पश्यति ॥१४॥

छान्दोग्यश्रुत्युक्तेऽर्थे सर्वोपनिषत्संमतिमाह—सर्वास्विति । "ब्रह्मैवेदममृतमि"त्याद्यास्विति यावत् । एवं छान्दोग्यश्रुतिवदित्यर्थः । श्रुतेरुपकरणोपबृंहितत्वेन प्रामाण्याविसंवादं सूचयति—सोपपत्तिकमिति ॥१०३॥

तत्रैव बृहदारण्यकसंवादमाह—इहेति ॥१०४॥

तस्यास्तात्पर्यमाह—भावेति ॥१०५॥

ब्रह्मणि ज्ञातेऽज्ञाते च तद्धीर्न विधेयेत्यापाद्य लौकिकात्मज्ञानस्याविधेयत्वे हेत्वन्तरमाह—नेत्यादिना । अव्युत्थितमनाः स्वविषयत्वेनाप्रवृत्ताहंप्रत्ययः सुप्त इति यावत् । तं प्रति न विधिस्तस्य स्वेतरज्ञानाभावादिति शेषः । व्युत्थितात्माऽवस्थाद्वयसम्बन्धी स्वविषयाहंप्रत्ययवानिति यावत् । तं प्रत्यपि न विधिर्विधिं विनैव तस्य स्वधीसिद्धेरिति शेषः ॥१०६॥

द्वयोरात्मधियोरविधेयत्वे तव्यप्रत्ययविधेयत्वं कस्येत्याशङ्क्य सामान्यन्यायमाह—स्वातन्त्र्यमिति । प्रकृते विधिविषयमाह—अन्वयेति । विधिरिति शेषः ॥१०७॥

वाक्यादेव तदर्थज्ञानादन्वयादिना पदार्थशोधने किं विधिनेत्याशङ्क्याऽऽह—वचोर्थेति । तद्धानौ पदार्थाज्ञानस्य वाक्यार्थधीप्रतिबन्धकस्य ध्वस्ताविष्टायामिति यावत् । तत्र पदार्थशोधने तेन विधिनेत्यर्थः ॥१०८॥

तर्हि ज्ञातपदार्थस्यान्वयादिनैव वाक्यार्थधीरपि सेत्स्यति किं वाक्येनेत्याशङ्क्याऽऽह—एवमिति । ऐक्यानुसारिन्यायेन ब्रह्मकण्डिकायां पदार्थशोधनं यथोक्तं तथा ज्ञातपदार्थोऽधिकारी सामान्यविशेषशून्यत्वमर्थनिश्चयात् तदज्ञानाख्यप्रतिबन्धहीनो वाक्यादेव वाक्यार्थं वेत्ति सम्यग्धियोऽमानादन्वयादेरनुदयादित्यर्थः ॥१०९-११०॥

उक्तेऽर्थे भाष्यकारसंमतिमाह—नित्येति । तर्हि किमित्यन्वयादिना पदार्थशोधनमित्याशङ्क्याऽऽह—वाक्यार्थस्येति । तज्ज्ञानफलं सूचयति—एवमिति । तत्त्वमर्थधीद्वारा वाक्यार्थज्ञाने कूटस्थं वस्त्ववशिष्टमित्यर्थः ॥१११-११२॥

पदार्थधियो वाक्यार्थधीहेतुत्वेऽपि तद्धियो नान्वयाद्यपेक्षाऽहमित्यात्मधियः सदा सिद्धेरित्याशङ्क्याऽऽह—प्रत्यगिति । वाक्यार्थज्ञानात्पूर्वमज्ञानसम्बन्धात्तज्जदेहादिवैशिष्ट्येनाऽऽत्मानमात्मा ज्ञातवान्न वाक्यार्थान्वययोग्यत्वेनेत्यर्थः ॥११३॥

यस्मादन्वयादिना विना शुद्धमात्मानं न स बुध्यते तस्मात्तेन देहादेस्तं निष्कृष्य स्वमहिमस्थं ज्ञात्वा

१. अमानादन्वयादेः । अन्वयव्यतिरेकौ न मानं वाक्यार्थज्ञाने अपि तु वाक्यमेव मानम् ।

पदार्थशोधने विधिः तच्च अज्ञातज्ञापनं न तु प्रवर्तनम्

अज्ञातज्ञापनं चातो विधिरत्राभिधीयते । अप्रवृत्तप्रवृत्तिस्तु न्यायाभावान्न युज्यते ॥१५॥
नित्यं न भवनं यस्य यस्य वा नित्यभूतता । न तस्य क्रियमाणत्वं खपुष्पाकाशयोरिव ॥१६॥
उत्पत्त्यादि स्वतो यस्य यस्य चात्यन्तमेव न । क्रियानपेक्षसिद्धत्वात्स्वतःसिद्धं तदुच्यते ॥१७॥
उत्पत्त्यादौ तु यच्छक्तं हेतुमात्रमपेक्षते । साफल्यं कर्मणस्तत्र तदभिव्यक्तिकृद्धि तत् ॥१८॥
कार्यं कारणतन्त्रं स्यात्ततस्तस्याऽऽत्मलाभतः । अन्यकार्यमकार्यं च नान्यत्कारणमीक्ष्यते ॥१९॥
सर्वमात्मेति या बुद्धिः सा प्रमेयबलाद्भवेत् । प्रमातृतन्त्रा सा चेत्स्यात्प्राप्ता लोकाग्निबुद्धिवत्॥२०॥

आत्मज्ञाने विधिनिरासः

अतोऽपुरुषतन्त्रत्वान्नाऽऽत्मज्ञाने विधिर्भवेत् । अन्वयादिक्रिया त्वस्य तत्तन्त्रत्वाद्विधीयते ॥२१॥
श्रवणं मननं तद्वत्तथा शमदमादि यत् । पुमाञ्शक्नोति तत्कर्तुं तस्मादेतद्विधीयते ॥२२॥
विशिष्टेहानुभूतिश्च सर्वमानफलं यतः । फलं च न विधेयं स्यादतो नेदं विधीयते ॥२३॥
प्रमाणमप्रमाणं च प्रमाभासं च यद्भवेत् । चैतन्याकारमेवैतत्प्रथते सर्वमेव तत् ॥२४॥

सोऽहं ब्रह्मेति वाक्यादनुभवतीति फलितमाह—अनात्मन इति । अथशब्दो ज्ञानानन्तरं सकार्याविद्याध्वस्तिपरामर्शार्थः ॥११४॥

अन्वयादिकृते पदार्थशोधने विधिरुक्तः सम्प्रति वाक्यार्थज्ञानेऽप्यज्ञातज्ञापनविध्युपगमे न दोष इत्याह—अज्ञातेति । चकारोऽन्वयादिकृतपदार्थशुद्धिदृष्टान्तार्थः । अतः शब्दोक्तं हेतुमाह—अप्रवृत्तेति ॥११५॥

कथं न्यायाभावः ? तत्राप्रवृत्तप्रवर्तनविधौ ज्ञानस्य वा ज्ञेयस्य वा द्वयोर्वा विधेयत्वं ? नाऽऽद्योऽज्ञाते ज्ञाते वा तज्ज्ञाने विध्ययोगस्योक्तत्वादिति मत्वा द्वितीयं निरसितुं सामान्यन्यायं सदृष्टान्तमाह—नित्यमिति ॥११६॥

तद्दार्ष्टान्तिके योजयति—उत्पत्त्यादीति । यस्य घटादिवदुत्पत्त्यादि स्वतो नास्ति यस्य चाऽऽकाशादिवदुपाधितोऽपि न तद्विद्यते तदात्मवस्तु क्रियानपेक्षसत्ताकं स्वतो विद्यमानमतो न तत्रावकाशो विधेरित्यर्थः । यद्वोत्पत्तिरादिर्यस्य सत्त्वस्य तद्यस्य स्वतोऽस्ति यस्य च सर्वथैव न सत्त्वं तदाकाशं तत्पुष्पं च स्वतो विद्यमानमविद्यमानं चेति क्रियानपेक्षत्वाद्विध्ययोग्यमिति पूर्वस्यैव प्रपञ्चः ॥११७॥

कुत्र तर्हि विधिरित्याशङ्क्य क्रियायामित्यभिप्रेत्य तदुपयुक्तं स्थलमाह—उत्पत्त्यादाविति । यत्तच्छब्दौ फलार्थौ । कर्म पुरुषव्यापारः । तत्र हेतुः—तदभिव्यक्तिकृदिति । कर्मविषयो द्वितीयस्तच्छब्दः ॥११८॥

आत्मतद्धियोर्विधिं दूषयितुं संमतमर्थमाह—कार्यमिति । उक्तेऽर्थे व्यतिरेकमाह—अन्येति ॥११९॥

तथाऽप्यात्मतज्ज्ञानयोर्विध्यभावे किं जातं तदाह—सर्वमिति । ब्रह्मात्मनोऽकार्यत्वान्न विध्यपेक्षा तद्बुद्धिरपि मानादिवशाद्भवन्ती न पुरुषतन्त्रा तन्न विध्यधीनपुरुषेच्छा यत्नसाध्येत्यर्थः । तद्बुद्धेरपुरुषतन्त्रत्वमसिद्धमित्याशङ्क्याऽऽह—प्रमात्रिति ॥१२०॥

द्युलोकादावग्निधीवदात्मधियो न मानत्वं परिच्छेदकत्वादिति मत्वाऽऽह—अत इति । आत्मनि तज्ज्ञाने चेत्यर्थः । ज्ञानादौ विध्यसंभवं प्रसाध्य स्वातन्त्र्यं यत्रेत्युक्तं विधिविषयमुपसंहरति—अन्वयादीति । अस्यान्वयादिव्यापारस्येत्यर्थः ॥१२१॥

तमेव विशिनष्टि—श्रवणमिति । अन्वयादिक्रिया नृतन्त्रत्वाद्विधीयत इत्येतदेव स्फुटयति—पुमानिति ॥१२२॥

आत्मनो विधेयत्वाभावे हेत्वन्तरमाह—विशिष्टेति । सर्वेषां मानानां फलभूताऽनुभूतिः सत्यानन्दादिलक्षणा ब्रह्मात्मनि स्वरूपं न च फलं स्वर्गवद्विधिमर्हत्यतो नाऽऽत्मा विधेय इत्यर्थः ॥१२३॥

तत्रैव युक्त्यन्तरमाह—प्रमाणमिति । यत्प्रमाणादि तदेतत्सर्वं स्फुरतीति चैतन्ये कल्पितं भात्यतः सर्वत्राधिष्ठानत्वेन संनिहितं चिद्वस्तु न विधियोग्यमित्यर्थः ॥१२४॥

चैतन्यं अव्यभिचारि रूपं आत्मनः अतो न तत्र विधिः

नानाकारानुपादत्ते चैतन्याकारमेव सत् । प्रतीच्यव्यभिचार्येकं तदन्ये व्यभिचारिणः ॥२५॥
मात्रादिव्यभिचारेऽपि संविदव्यभिचारिणी । मिथः कृत्स्नेऽपि जगति तदन्यद्व्यभिचारि तु ॥२६॥
उत्पन्नमपि सज्ज्ञानं प्रमातृत्वाद्युपग्रहात् । तदनुत्पन्नवद्भाति तद्व्युत्पत्तेः पुरा नृणाम् ॥२७॥
व्युत्पाद्यते यदा साक्षाद्यथोक्तन्यायवर्त्मना । उत्पन्नमेव विज्ञानं तदा प्रागपि मन्यते ॥२८॥
स्वसाक्षिकैव सर्वस्य न वेद्मीत्यपि या मतिः । किमु वेद्मीति बुद्धिः स्याच्चिदतोऽव्यभिचारिणी ॥२९॥

द्रष्टव्यवाक्यस्य यथाश्रुतार्थनिरासः

आत्मेति मेयनिर्देशो वैशब्दस्तत्स्मृताविह । प्रमातृक्रियया व्याप्तिर्द्रष्टव्य इति भण्यते ॥३०॥
शब्दानुरोधतस्तावदीदृगत्रोपजायते । श्रुतेरनुभवः साक्षाद्यथावस्तु[1] न वेति वा ॥३१॥
विचार्यमाणोऽनुभवो रूप्यशुक्त्यनुभूतिवत् । प्रमाणमप्रमाणं वा मेयसङ्गत्यसङ्गतेः[2] ॥३२॥
प्रमातृमेयभेदोऽत्र न तावद्गम्यते मितेः । प्रत्यग्धीमात्रगम्योऽर्थो यस्मादात्मेति निश्चितः ॥३३॥

तत्रैव हेत्वन्तरमाह—नानेति । सद्वस्त्वखण्डं चिद्रूपमेवमनेकविशेषालम्बनमतस्तस्य स्वतो निर्विशेषस्य न विध्यर्हतेत्यर्थः । तत्रैवोपपत्त्यन्तरमाह—प्रतीचीति । आत्मनि स्वरूपचैतन्यमेकरसं न व्यभिचारि स्वरूपतो मिथश्चानात्मानो व्यभिचारिणोऽतः सदैकरूपे न विधिरित्यर्थः ॥१२५॥

आत्मचैतन्यमपि स्वापादौ व्यभिचारीत्याशङ्क्याऽऽह—मात्रादीति । तत्साधकत्वादित्यर्थः । तदव्यभिचारे हेत्वन्तरमाह—मिथ इति । सर्वस्मिञ्जगत्यनात्मवस्तु मिथः स्वरूपतश्च व्यभिचार्येव दृश्यतेऽतस्तत्साधिका चिदव्यभिचारिणीत्यर्थः ॥१२६॥

आत्मा चिद्रूपश्चेत्तज्ज्ञानं सदा सिद्धमिति तदर्थश्रवणादिविध्यानर्थक्यमित्याशङ्क्याऽऽह—उत्पन्नमिति । प्रतीचि सदा सिद्धमपि ज्ञानं मातृत्वादियोगात्परिच्छेदाभिमानाद्विहितश्रवणादिना ज्ञानोत्पत्तेः पूर्वं सर्वेषामप्यप्राप्तवद्भात्यतो वैधं श्रवणाद्यनुष्ठेयमित्यर्थः ॥१२७॥

तदनुष्ठानफलमाह—व्युत्पाद्यत इति । श्रवणादिना मातृत्वादियोगजमभिमानं त्यक्त्वाऽद्वयात्मना यदा त्वमर्थो बोध्यते तदा पूर्वमपीदं ज्ञानमात्मतयाऽऽप्तमेव मायावृतं तच्चाऽऽवरणमधुनाऽपनीतमिति निश्चिनोतीत्यर्थः ॥१२८॥

व्युत्पादनात्पूर्वं विशिष्टज्ञानादृष्टेरूर्ध्वं च तद्दृष्टेरागन्तुकमेव स्वरूपज्ञानं नाव्यभिचारीत्याशङ्क्याऽऽह—स्वसाक्षिकेति[3] । ज्ञानत्वाज्ञानत्वसाधकत्वमतः शब्दार्थः ॥१२९॥

द्रष्टव्यवाक्यस्य विधिपरत्वं पराकृत्य शब्दताडितमर्थं निराकर्तुमनुवदति—आत्मेतीति । इहेति वाक्योक्तिः । अत्रेत्युक्तमेयोक्तिः । आपातिकमर्थं निरस्यति—यथेति । ब्रह्मात्मनि मात्रादिभेदधीः शब्दशक्त्या दृश्यमाना रूप्यस्य शुक्तौ धीवन्मिथ्येत्यर्थः । शुक्तिरूप्यधियो बाधान्मिथ्यात्वेऽपि तदभावान्मात्रादिभेदधियो न मिथ्यतेत्याशङ्क्य वादिसंमतमर्थमाह—प्रमाणमिति । अबाधिताबुद्धार्थबोधि मानमन्यथाबोधि चामानमित्यर्थः ॥१३०–१३१–१३२॥

अस्तु प्रस्तुते किं जातं तत्राऽऽह—प्रमात्रिति । अत्र ब्रह्मात्मनीत्येतत् । तस्याद्वयत्वादिति शेषः । विमता मिथ्याऽप्रामाणिकत्वात्संमतवदिति भावः । आत्मनि भेदधियो मिथ्यात्वे हेत्वन्तरमाह—प्रत्यगिति । प्रत्यगेव धीश्चैतन्यं तन्मात्रेण गम्यः स्वप्रकाशो यस्मादात्मेति निश्चयस्तस्मात्तस्मिन्मात्रादिधियो मिथ्यात्वमित्यर्थः ॥१३३॥

---

१. उत्पन्नं ज्ञानं यथावस्तु = यथार्थं न वेति विचार्यमाणोऽनुभवः शुक्तिरूप्यानुभववत् मिथ्येत्यर्थः ।
२. मेयबुद्धिसङ्गतेः प्रमाणं तदसङ्गतेरप्रमाणमित्यन्वयः ।
३. ज्ञाताज्ञातसाक्षित्वादव्यभिचारीत्यर्थः ।—न्या०

प्रत्यग्धीगोचरो नो चेदनात्माऽसौ घटादिवत् । ब्रह्मादिमध्यपातित्वं ततश्चास्य प्रसज्यते ॥३४॥
विभिन्नद्रष्टृदृष्ट्याप्तिर्घटादेरिव नाऽऽत्मनः । न चाभेदेऽस्ति संव्याप्तिरैकात्म्यादेव कारणात् ॥३५॥
न च द्रष्टाऽऽत्मनोऽन्योऽस्ति द्रष्ट्रन्तरनिषेधनात् । न च द्रष्ट्रोर्द्वयोर्लोके द्रष्टृदृश्यत्वसङ्गतिः ॥३६॥
क्रियाविरोधः प्राप्नोति द्रष्टुः स्वात्मसमीक्षणे । तद्दृष्टेर्नित्यसम्प्राप्तेर्विध्यानर्थक्यसङ्गतिः ॥३७॥

संसार्यात्मनो द्रष्टव्यत्वनिरासः

संसार्यात्मनि दृष्टेऽपि न च किंचित्प्रयोजनम् । अयमेव च नोऽनर्थो यत्संसार्यात्मदर्शनम् ॥३८॥
तदन्यस्याप्रसिद्धेश्च कथं स्यात्तत्समीक्षणम् । अथ प्रसिद्धोऽसावात्मा तद्दृष्टिः किं विधीयते ॥३९॥
द्रष्टृदर्शनदृश्यानां प्रात्यक्ष्यान्नाऽऽगमेक्षणम् । द्रष्टुरात्मा पृथक्चेत्स्यात्पृथगात्मेति दुर्वचः[1] ॥४०॥
न चाऽऽत्मन्यप्रसिद्धे स्यात्संसारस्य प्रसिद्धता । न ह्यप्रसिद्धसम्बन्धी सम्बन्धः क्वचिदिष्यते ॥४१॥
न चेदात्माभिसम्बन्धः संसारोऽयं समीक्ष्यते । तन्मुमुक्षुत्वमायातं कुतो हेतोरितीर्यताम् । ४२॥
अनृतन्त्रे विधिर्नेष्टो वन्ध्यापुत्रोद्भवे यथा । मातृतन्त्रे तथैवायं न विधिः प्रत्यगीक्षणे ॥४३॥

स्वप्रकाशत्वमात्मनोऽसिद्धमित्याशङ्क्याऽऽह—प्रत्यग्धीति । अनात्मत्वे कल्पितत्वापत्तिरित्याह—ब्रह्मादीति ॥१३४॥

यत्तु प्रमातृक्रियया व्याप्तिरित्यादि तदपि स्वप्रकाशत्वेन प्रत्युक्तमित्याह—विभिन्नेति । किंचाऽऽत्मनो दृष्टिक्रियाव्याप्तौ स्वयमेव द्रष्टाऽन्यो वा ? नाऽऽद्य इत्याह—न चेति । विषयत्वेन विषयित्वेन वा समाप्तिरिति हेत्वर्थः ॥१३५॥

द्वितीयं दूषयति—न चेति । नान्योऽतोऽस्तीत्यादिश्रुतेरिति शेषः । द्रष्टृभेदमङ्गीकृत्याऽऽह—न चेति । तयोः समत्वमसमत्वं वा ? नाऽऽद्यो दीपयोरिव विषयविषयित्वायोगान्नेतरश्चेतनगतगुणप्रधानत्वसाधकाभावादिति भावः ॥१३६॥

स्वयमेव द्रष्टेत्यत्र दोषान्तरमाह—क्रियेति । एकस्यामेव क्रियायां कर्तृत्वेन गुणत्वं कर्मत्वेन प्राधान्यमिति विरोध इति यावत् । तत्रैव दोषान्तरमाह—तद्दृष्टेरिति । स्वकर्तृकस्वदृष्टेः स्वाधीनतया विधिं विना सदा सिद्धेस्तत्राकिंचित्करो विधिरित्यर्थः ॥१३७॥

स्वकर्तृकाऽपि स्वदृष्टिः स्वोत्पत्त्यर्थं विधिमपेक्षतामित्याशङ्क्य संसारिणोऽसंसारिणो वा सा विधेयेति विकल्प्याऽऽद्यं दूषयति—संसारीति । न केवलं तद्दृष्टिविधिवैफल्यं प्रत्युतानर्थाप्तिरित्याह—अयमेवेति ॥१३८॥

कल्पान्तरं प्रत्याह—तदन्यस्येति । लोकतोऽप्रसिद्धावपि शास्त्रात्प्रसिद्धिमाशङ्क्याऽऽह—तथेति ॥१३९॥

संसार्यात्मदृष्टेरविधेयत्वे हेत्वन्तरमाह—द्रष्टृति । न हि लोकसिद्धेऽर्थे तद्दृष्टिः शास्त्रीयविध्यपेक्षेत्यर्थः । द्रष्टुर्लोकसिद्धत्वेऽप्यात्मनस्तदभावात्तद्दृष्टिविधिमाशङ्क्याऽऽह—द्रष्टुरिति । विभक्तस्य घटवदनात्मतेति भावः ॥१४०॥

तस्यैवाऽऽत्मत्वेऽप्यशनायाद्यतीतस्यालौकिकत्वात् तद्दृष्टौ शास्त्रीयो विधिरित्याशङ्क्याऽऽह—न चेति । संसारस्य परतन्त्रतया प्रसिद्धेस्तत्संबन्धित्वेनाऽऽत्मनोऽपि प्रसिद्धिरित्यर्थः । संबन्धशब्दः संसारविषयः ॥१४१॥

परतन्त्रोऽपि सोऽन्तःकरणगतो नाऽऽत्मगामीति सांख्यास्तान्प्रत्याह—न चेदिति । आत्मनोऽसंसारित्वे मुमुक्षुत्वासिद्धिः संसारमोक्षयोरेकाधिकरणत्वान्न बुद्धिद्वाराऽऽत्मन्यपि तत्संभवोऽऽसङ्गस्य तदयोगात्कल्पिते तु संबन्धे मायावादापत्तिरिति भावः ॥१४२॥

संसार्यसंसार्यात्मधियोरविधेयतेत्यापाद्याऽऽत्मधियोऽपुंस्तन्त्रत्वान्न विधेयतेत्येतद्दृष्टान्तेन साधयति—अनृतन्त्र इति । विपक्षेऽपि विधिवैधुर्यतादवस्थ्यमाह—मात्रिति । नित्यप्राप्तेरित्यर्थः ॥१४३॥

---

१. जडात्मा पृथक् इति दुर्वचमात्मभिन्नस्य जडत्वनियमादित्यर्थः ।

नानाद्रव्यसमायोगे वियोगे च घटात्मनः । वियत्सम्पूर्णता नित्या वियत्सक्तेरवर्जनात् ॥४४॥
शब्दादिबाह्यसम्बन्धे विभागे च तथा धियः । प्रत्यक्चैतन्यसम्बन्धो नित्यो नित्यात्मसाक्षिकः ॥४५॥
यतोऽतः पाक्षिकी प्राप्तिर्नेहास्त्यैकात्म्यदर्शने । नियमः परिसंख्या वा न तेनेहोपपद्यते ॥४६॥

वेदान्तेऽपि प्रामाण्यसिध्यर्थो विधिरित्याक्षिप्य समाधानम्

कर्मकाण्डे यथा मानं तथैवोपनिषत्स्वपि । विधिरेवानपेक्षत्वात्सापेक्ष्यान्नाभिधाश्रुतिः ॥४७॥
मैवं मानान्तराप्राप्तसम्यगैकात्म्यबोधतः । अभिधाश्रुतेः प्रमाणत्वं सुप्तोत्थापकवाक्यवत् ॥४८॥
अकारकैकात्म्यमात्रं मेयं वस्त्विष्यते यतः । तदन्यस्य यतो मानाद्व्यतिरेको न लभ्यते ॥४९॥
मुक्त्वैकात्म्यस्य चाज्ञानं नान्तरायान्तरं यतः । विधितन्त्रस्य[1] कार्यत्वान्नाज्ञाने प्रभविष्णुता ॥५०॥
यथास्थितात्मवस्तूत्थज्ञानं मुक्त्वा तमोहुतौ । नान्यो हेतुर्यतस्तस्मान्न त्रय्यन्ते विधिः प्रमा ॥५१॥
नियोज्यस्य च नैश्वर्यं धीसम्यक्त्वं प्रतीष्यते । तस्य मेयैकहेतुत्वान्नैव स्यान्मातृतन्त्रता ॥५२॥

वेदान्तानां अपौरुषेयत्वादेव सिद्धे प्रामाण्यम्

विधेरिवानपेक्षत्वं वेदान्तेष्वभिधाश्रुतेः । अनृतन्त्रत्वसामान्यात्तथाऽतीन्द्रियबोधतः ॥५३॥

अपूर्वविध्यभावेऽपि नियमपरिसंख्ययोरन्यतरः स्यादित्याशङ्क्याऽऽत्मधियो नित्यप्राप्तिं दृष्टान्तेनाऽऽह—नानेत्यादिना । तन्नित्यत्वे मानमाह—नित्यात्मेति ॥१४४–१४५॥

तन्नित्यप्राप्तिफलमाह—यत इति । यथोक्तनीत्याऽऽत्मज्ञाने नित्याप्ते यतो न पाक्षिकी प्राप्तिरतो नात्र नियमो "नियमः पाक्षिके सती"ति स्थितेः सति तस्मिन्नान्यत्र प्रसङ्गस्तेन तन्निवृत्तिस्तन्नात्र परिसंख्याऽपि "तत्र चान्यत्र च प्राप्तौ से"ति न्यायादित्यर्थः ॥१४६॥

शब्दादेव ज्ञानोत्पत्तेस्तज्जन्मार्थं विध्यभावेऽपि प्रामाण्यार्थो विधिरित्याशङ्कते—कर्मेति । यथा विधिकाण्डे विधिवाक्यमेव मानमन्यत्तच्छेषतयोपयुक्तं तथा ज्ञानकाण्डेऽपि विध्यर्थस्य मानान्तरायोग्यत्वात्तन्निष्ठवाक्यस्यानपेक्षप्रामाण्यसिद्धेरयमात्मेत्यादि[2] तु विधिहीनं न सिद्धेऽर्थे मानं तस्य मानान्तरयोग्यत्वात्तन्निष्ठस्य सापेक्षत्वात्तद्वेदान्तेषु प्रामाण्यार्थमेव विधिरित्यर्थः ॥१४७॥

अभिधाश्रुतेरमानतेत्येतत्प्रत्याह—मैवमिति । ऐक्यस्य सिद्धत्वेऽपि रूपाद्यभावेन मानान्तरायोग्यत्वात्तद्बोधिवाक्यस्य प्रामाण्यं सुप्तबोधिलौकिकवाक्यवद्युक्तमित्यर्थः ॥१४८॥

ऐक्यस्य नाभिधाश्रुतिमेयत्वं मात्रादिभावाभावयोस्तदयोगादित्याशङ्क्याऽऽह—अकारकेति । मात्रादेर्भावेऽप्यप्रामाणिकत्वात्कूटस्थमेकरसं तत्त्वमभिधावाक्यीयमित्यर्थः । एको यतःशब्दोऽतःशब्दपर्यायः ॥१४९॥

वेदान्तेषु प्रामाण्याय विध्यभावेऽपि ब्रह्मात्मनोर्व्यवधानभङ्गार्थं विहितज्ञानापेक्षणात्तत्र विधिरित्याशङ्क्याज्ञानादन्यत्तदेव वा व्यवधानमिति विकल्प्याऽऽद्यं दूषयति—मुक्त्वेति । अतस्तद्भङ्गाय न ज्ञाने विधिरिति शेषः । द्वितीयं प्रत्याह—विधीति । अज्ञानं चेद्व्यवधिस्तदा विध्यधीनधियोऽप्रमात्वान्न तन्निरासमर्थतेत्यर्थः ॥१५०॥

अज्ञानाख्यव्यवधेस्तर्हि किं निवर्तकं तदाह—यथेति । व्यवधिध्वंसार्थत्वेनापि विध्यसंभवे फलितमाह—यत इति ॥१५१॥

विधितन्त्रस्याप्रमात्वान्नाज्ञानध्वंसितेत्ययुक्तं विहिते ज्ञाने प्रामाण्यस्य बुद्धिमता क्रियमाणत्वादित्याशङ्क्याऽऽह—नियोज्यस्येति । तर्हि किंप्रयुक्तं धीसम्यक्त्वं तदाह—तस्येति ॥१५२॥

यत्तु सिद्धार्थत्वादभिधाश्रुतिः सापेक्षत्वादमानमिति तत्राऽऽह—विधेरिति । कर्मज्ञानवाक्ययोरनपेक्षत्वस्य तुल्यत्वे हेतुमाह—अनृततन्त्रत्वेति । अपौरुषेयत्ववन्मानान्तरायोग्यार्थबोधित्वं हेत्वन्तरमाह—तथेति ॥१५३॥

१. विधितन्त्रस्य कार्यत्वात् कृतिसाध्यत्वात् प्रमात्वाभावादित्यर्थः ।
२. अयमात्मेत्यादि—"अयमात्मा ब्रह्मे"ति वाक्यम् ।

अक्षाद्यविषयं प्रत्यक्स्वतः सिद्धेरसाधनम् । अभिधा बोधयन्तीयं नान्यत्किंचिदपेक्षते ॥५४॥
तस्माद्विधेः प्रमाणत्वं साध्यसाधनबोधने । अतीन्द्रिये तदन्येन ज्ञातुं शक्यं न तद्यतः ॥५५॥
साध्यसाधनसम्बन्धो न शक्योऽभिधया यथा । प्रतिपत्तुं स्वतः सिद्धोऽशक्यो विधिगिरा तथा ॥५६॥
ऐकात्म्यस्य स्वतः सिद्धेर्न क्रियाऽपेक्ष्यते यतः । ततश्च भावनाभावो भावनायाः क्रियाश्रयात् ॥५७॥
विरहे भावनायाश्च न विधेस्तत्र मानता । स्वतःसिद्धार्थबोधित्वादभिधायास्तु मानता ॥५८॥

तत्त्वमस्यादिपदानां सापेक्षत्वादमानत्वशंका

सापेक्षत्वादमानं चेदभिधा लोकवर्त्मना । अभिधा तत्त्वमस्यादि[1] सरित्तीरफलोक्तिवत् ॥५९॥
संहत्यनुपपत्तिश्च पदानामभिधाश्रुतौ । आख्यातपदहेतुत्वात्सर्वत्र पदसंहतेः ॥६०॥

विध्यभावेऽपि अस्यादिपदसद्भावात् महावाक्यप्रामाण्यम्

नाऽऽख्यातपदसद्भावात्स्यादेव पदसंहतिः । अस्यस्म्याद्याख्यातपदमस्त्येवेहाभिधाश्रुतौ ॥६१॥
सरित्तीरे फलानीति युक्ताऽपेक्षाऽभिधाश्रुतेः । प्रत्यक्षमानग्राह्यत्वात्फलतीरार्थसंगतेः ॥६२॥
प्रत्यक्षग्राह्य एषोऽर्थो न तदन्यप्रमाणकः । यतोऽतो नाऽऽगमादेव तादृशेऽर्थे विनिश्चितिः ॥६३॥
अपूर्वादिवचोऽर्थे तु न प्रत्यक्षाद्यपेक्षते । प्रत्यक्षाद्यप्रमेयत्वादैकात्म्याख्यस्य वस्तुनः ॥६४॥

पृथिव्यादिवद्ब्रह्मात्मनोऽपि मानान्तरयोग्यत्वात्कथमतीन्द्रियतेत्याशङ्क्याऽऽह—अक्षादीति । रूपादिहीनं स्वप्रकाशं साधकानपेक्षं प्रत्यक्षाद्ययोग्यं ब्रह्म तद्विषयाऽभिधाश्रुतिर्विध्यनपेक्षेत्यर्थः ॥१५४॥

सिद्धेऽर्थे विधिप्रामाण्यस्यानिष्टेर्नियोगे तत्प्रामाण्यस्य संबन्धे निराशादिष्टसाधनवत एव तन्मानतेति प्रासङ्गिकमर्थमाह—तस्मादिति । इष्टोपायस्य विधिं विनाऽपि प्राप्तेर्न तत्र तत्प्रामाण्यमित्याशङ्क्याऽऽह—तदन्येनेति । अतो विधेरेव समीहितसाधने प्रामाण्यमिति शेषः ॥१५५॥

विमतं विधिमानकं शास्त्रार्थत्वादग्निहोत्रवदित्याशङ्क्याऽऽह—साध्येति । अभिधाश्रुतेर्ब्रह्मण्यबाध्याबुद्धासंदिग्धबोधधीविरुद्धाऽनुमेति भावः ॥१५६॥

सिद्धेऽर्थे विध्यमानत्वे हेत्वन्तरमाह—ऐकात्म्यस्येति । यत्र क्रिया तत्र भावना तस्याः साध्यक्रियाविषयत्वाद्यत्र च सा तत्र विधिर्न च सिद्धे क्रियाद्यस्ति तन्न तत्र विधिमानतेत्यर्थः । अभिधाऽपि तत्र न मानं वेदवाक्यत्वात्संमतवदित्याशङ्क्याऽऽह—स्वत इति ॥१५७–१५८

प्रत्युक्तमपि चोद्यं दृष्टान्तवशादुत्थापयति—सापेक्षत्वादिति । तदेव व्यनक्ति—अभिधेति । तत्त्वमस्याद्यभिधा सापेक्षत्वादमानमिति सम्बन्धः ॥१५९॥

न केवलं वेदान्तेषु प्रामाण्यार्थमेव विधिः किन्तु पदानां मिथोऽन्वयार्थं चेत्याह—संहतीति ॥१६०॥

पदान्वयार्थं विधिरित्येद्दूषयति—नेति । तर्हि विधिपदोपगतेरस्मत्पक्षाप्तिरित्याशङ्क्याऽऽह—असीति । आदिपदं वेद भवतीत्यादि ग्रहीतुम् ॥१६१॥

यत्तु सरित्तीरफलोक्तिवदिति तत्र मानान्तरगम्यार्थत्वं[2]मुपाधिरित्याह—सरिदिति ॥१६२॥

उपाधेरसंभवं निरस्यति—प्रत्यक्षेति । फलतीरसंबन्धाख्यार्थस्य वक्तृप्रत्यक्षत्वात्तदपेक्षवाक्यस्यानुवादितया तत्रामानतेत्यर्थः ॥१६३॥

[3]साधनव्याप्तिं प्रत्याह—अपूर्वादीति । यदपूर्वमनपरमित्यादिवचस्तन्न स्वार्थे प्रत्यक्षाद्यपेक्षं स्वार्थस्य तदयोग्यत्वान्न साधनव्याप्तिरित्यर्थः ॥१६४॥

---

१. तत्त्वमस्यादिवाक्यं न प्रमाणं सापेक्षत्वात् नदीतटफलवाक्यवत् इत्यनुमानमत्र सूचितम् ।

२. उक्तानुमाने मानान्तरगम्यार्थत्वमुपाधिः तस्य दृष्टान्ते नदीतीरवाक्ये साध्यव्यापकता पक्षे तत्त्वमस्यादौ साधनाव्यापकता ।

३. साधनव्याप्तिमिति "अपूर्वमनपरं तत्त्वमसी"त्यादेरपि सापेक्षत्वे साधनव्याप्तिः स्यात् । न चैवं तेषां प्रत्यक्षाद्यगोचरार्थत्वात् ॥

अपौरुषेयवाक्यत्वं समानमभिधाश्रुतेः । अतीन्द्रियार्थबोधित्वं समानं चोदनोक्तिभिः ॥१६५॥
सिद्धसाध्यप्रमेयत्वभेदो यदि परं तयोः । प्रामाण्ये त्वतिशीतिस्तु न काचिदपि दृश्यते ॥१६६॥
प्रमोपजायते तावदहं ब्रह्मेत्यलौकिकी । तत्त्वमस्यादिवाक्येभ्यः श्रवणात्समनन्तरम् ॥१६७॥
एवं चेदप्रमाणत्वं किमिवेहाभिधाश्रुतेः । विधेरपीह मानत्वं नोक्तन्यायातिरेकतः ॥१६८॥
स्वशक्तिः सर्वमानानां यथा वस्त्ववबोधने । अभिधायाश्च साऽस्त्येव किमिति स्यादमानता ॥१६९॥

प्रत्यक्षायोग्येऽपि विषये वेदान्ता अनपेक्षाः

नाप्यर्थेऽतीन्द्रिये सिद्धे मानं लिङ्गाद्यपेक्षते । योगिप्रत्यक्षमानं वा तयोरविषयत्वतः ॥१७०॥
नेतीत्यस्थूलमित्यादिवाक्यग्राह्योऽर्थोऽवगम्यते । योगिप्रत्यक्षगम्योऽयं न तत्प्रत्यक्त्वहेतुतः ॥१७१॥
प्रत्यक्षानवताराच्च नानुमानेन मीयते । धर्मधर्म्यभिसम्बन्धे नागृहीतेऽनुमायतः ॥१७२॥
यज्जातीयैः प्रमाणैस्तु यज्जातीयार्थदर्शनम् । भवेदिदानीं लोकस्य तथा कालान्तरेऽप्यभूत् ॥१७३॥
यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात् । दूरसूक्ष्मादिदृष्टौ स्यान्न रूपे श्रोत्रवृत्तिता ॥१७४॥
योगिप्रत्यक्षमानादेर्न चेदैकात्म्यमेयता । तत्प्राप्तमपि किं कुर्यात्स्वात्माऽयोग्यासु भूमिषु ॥१७५॥

किंच वेदान्ताः स्वार्थे मानमपौरुषेयत्वाद्विधिवाक्यवदिति प्रत्यनुमानमाह—अपौरुषेयेति । अग्निर्हिमस्येत्यादौ व्यभिचारमाशङ्क्य वेदान्ताः स्वार्थे मानं संवादादिहीनार्थबोधित्वात्संमतवदित्याह—अतीन्द्रियेति ॥१६५॥

सापेक्षत्वानुमादोषमुपसंहरति—सिद्धेति । तयोरिति कर्मज्ञानकाण्डयोरुक्तिः ॥१६६॥

वेदान्तानां प्रमाजनकत्वमेवासिद्धमिति कथं प्रामाण्यमित्याशङ्क्याऽऽह—प्रमेति । अधिकारिणो वाक्यीया प्रमितिर्न प्रत्याख्यानमर्हतीति भावः ॥१६७॥

तथाऽपि तेषां मात्रादिवदप्रामाण्यमित्याशङ्क्याऽऽह—एवं चेदिति । स्वार्थे प्रमितिकरणत्वे तस्या नाप्रमाणत्वं हेत्वभावादित्यर्थः विपक्षे विधेरप्यप्रामाण्यं स्यादित्याह—विधेरिति । प्रमाजनकत्वमुक्तन्यायः इहेति स्वार्थोक्तिः ॥१६८॥

किंच वेदान्ताः स्वार्थे मानं तद्धीसमर्थत्वादध्यक्षवदित्याह—स्वशक्तिरिति ॥१६९॥

प्रत्यक्षायोग्येऽपि ब्रह्मण्यनुमादिसंभवात्तदपेक्षा वेदान्ता न स्वार्थे मानमित्याशङ्क्याऽऽह—नापीति । सोपाधिकेऽर्थे लिङ्गादिप्रवृत्तावपि निरुपाधिके न तत्प्रवृत्तिरित्यर्थः । ब्रह्मास्मदध्यक्षाद्यगोचरोऽप्यस्मद्विशिष्टानां योगिनां प्रत्यक्षं स्यादित्याशङ्क्याऽऽह—योगीति । वाशब्दो नञ्क्रियापदयोरनुकर्षणार्थः । तत्र हेतुः—तयोरिति ॥१७०॥

हेतुं साधयति—नेत्यादिना । योगिप्रत्यक्षपदं लिङ्गाद्युपलक्षणार्थम् । तत्प्रत्यक्त्वहेतुतः प्रत्यक्षानुमानादेः सत्तास्फूर्तिप्रदत्वेनाऽऽत्मनस्तत्स्वरूपत्वादिति यावत् ॥१७१॥

तस्यानुमानागम्यत्वे हेत्वन्तरमाह—प्रत्यक्षेति । प्रत्यक्षद्वयाविषयत्वेऽप्यनुमानविषयत्वं किं न स्यान्न हि मानं मनान्तरमपेक्षते तत्राऽऽह—धर्मेति । अतोऽप्रत्यक्षादग्रहान्नानुमानमङ्गाभावादिति शेषः ॥१७२॥

वर्तमानकल्पवर्तिनामप्रत्यक्षमपि ब्रह्म कल्पान्तरस्थानां तद्योग्यं स्यात्तत्प्रत्यक्षस्यातिशयादित्याशङ्क्याऽऽह—यदिति । विमतं न ब्रह्मग्राहीन्द्रियत्वात्संमतवदित्यर्थः ॥१७३॥

अस्मदिन्द्रियेष्वतिशयाभावाद्ब्रह्माविषयत्वमाशङ्क्येतरत्राप्ययोग्यविषये तुल्यमतिशयशून्यत्वमिति मत्वा वार्तिकमुदाहरति—यत्रेति । धर्मब्रह्मादिविषयेऽपि केषांचिदिन्द्रियं प्रवर्तते चेत्तेषां रूपेऽपि श्रोत्रस्य प्रवृत्तिः स्यादित्यतिप्रसक्तिमाह—नेति ॥१७४॥

उक्तन्यायाद्ब्रह्मात्मनो योगिप्रत्यक्षाद्यविषयत्वेऽपि तत्र तस्यातिशयवत्त्वेन प्रसङ्गमाशङ्क्य तस्याकिंचित्करत्वमाह—योगीति ॥१७५॥

अक्षादिमेयासारूप्यादैकात्म्यं स्यान्न तत्प्रमम्[1] । यथा विधेया[2]सारूप्यान्नैकात्म्यं स्याद्विधेस्तथा ॥७६॥
संभाव्यते चेदक्षादि ह्यैकात्म्यार्थे फलादिवत् । न तद्वारयितुं शक्यं लोके विधिशतैरपि ॥७७॥
नासमीक्ष्य स्वसामर्थ्यं पुमान्विधिशतैरपि । प्रवर्ततेऽनपेक्षत्वं कुतो विधिवचःस्वतः ॥७८॥

विधेः पुरुषशक्तिसापेक्षतायां दृष्टान्तः

अपाक्येषु नियुक्तोऽपि कृष्णलाञ्श्रपयेदिति ! न तच्छक्तिं विना कश्चित्पुमांस्तत्र चिकीर्षति ॥७९॥
एवं चेदनपेक्षत्वं विधेः किमिति भण्यते । न भावनानपेक्षोऽसौ विधिर्यस्मात्प्रवर्तते ॥८०॥
न भावनान्तरमियं न च मानान्तरं तथा । अपेक्ष्याभिधयैकात्म्यमवबोधयति श्रुतिः ॥८१॥
अतोऽनपेक्षता युक्ता सर्वदैवाभिधाश्रुतेः । अभिधानाभिधेयार्थज्ञानमेव व्यपेक्षते ॥८२॥

उपासनाख्यज्ञानविधेः विषयासाधकता

ज्ञानक्रिया प्रमातृस्था न यथावस्तु बोधकृत् । प्रमेयकर्तृकैवासौ यथावस्त्ववबोधिनी ॥८३॥

ब्रह्मात्मन्युक्तन्यायात्प्रत्यक्षाद्यनवतारेऽपि तस्मिन्विधिवाक्यगम्ये कुतो वेदान्ता निरपेक्षतया मानमित्याशङ्क्याऽऽह—अक्षादीति ॥१७६॥

किंच ब्रह्मात्मनि वेदान्तानामनपेक्षं मानत्वं वक्तुं तज्ज्ञाने विधिमिच्छता वाच्यमैक्ये नदीतीरफलादाविव मानान्तरं संभावितं न वेति । आद्ये न तद्विधिनाऽपि शक्यं निरसितुमिति तत्पक्षेऽप्यनपेक्षप्रामाण्यसिद्धिः । द्वितीये विनाऽपि तं तादृक्प्रामाण्यसिद्धेर्व्यर्थो विधिरित्याह—संभाव्यत इति । प्रमाणोपनीतस्य निवारणे प्रमाणविरोधः स्यादिति हिशब्दार्थः । वेदान्तानामनपेक्षप्रामाण्यमुक्त्वा विधिष्वेव सापेक्षतेत्याह—नेत्यादिना ॥१७७–१७८॥

विधेरधिकारिगतप्रवृत्तिशक्तिसापेक्षत्वं दृष्टान्तेन स्पष्टयति—अपाक्येष्विति । यथा कृष्णलाञ्श्रपयेदिति विक्लित्त्ययोग्येषु कृष्णलेषु नियुक्तः स्वशक्तिमनपेक्ष्य न पिपक्षति किंतु स्वसामर्थ्यमनुसृत्य तेषां विक्लित्त्ययोग्येऽपि तत्पाके संतापनमात्रे घृते श्रपयतीत्युक्तिसामर्थ्याददृष्टार्थी प्रवर्त्तते तथा सर्वत्र विधिविषये पुरुषशक्तिरपेक्षितेत्यर्थः ॥१७९॥

इष्टमेव पुरुषशक्तिसापेक्षत्वं विधेरित्याशङ्क्याऽऽह—एवं चेदिति । विधेरधिकारिशक्त्यपेक्षतया प्रवर्तकत्वान्नानपेक्षं प्रामाण्यमित्युक्त्वा तत्रैव हेत्वन्तरमाह—नेति । तस्मादपि निरपेक्षप्रामाण्यासिद्धिरिति शेषः ॥१८०॥

तत्त्वमादावपि तुल्यमुक्तशक्त्यपेक्षत्वमधिकारिणः प्रमितिजनको वेद इति स्थितेरित्याशङ्क्याऽऽह—नेत्यादिना । पुरुषशक्तिसापेक्षत्वमुभयत्र तुल्यं करणशक्तौ भावनायां च विधिष्वेव सापेक्षतेत्यतिशयस्तथापि मानान्तरापेक्षाभावाद्विधीनामनपेक्षप्रमाणतेत्याशङ्क्याऽऽह—न चेति । नियोगस्य जाड्यात्तत्र मानान्तरं संभवत्यन्यथा शक्तिग्रहायोगादात्मा तु स्वप्रकाशत्वादमेयः शक्तिग्रहस्तत्रोपपादितोऽतः श्रुतिर्विधिरहितवाक्येनैक्यं बोधयन्ती ब्रह्मनिष्ठतां विनाऽनुष्ठानान्तरं मानान्तरं प्रवृत्तिशक्तिं वा नापेक्षते किंतु स्वमहिम्नैवाधिकारिणं प्रति तद्बोधयतीत्यर्थः ॥१८१॥

विधिभ्यो वेदान्तेषु भेदमुपसंहरति—अत इति । सर्वदैवानपेक्षतेति ब्रुवता शक्तिग्रहेऽप्यपेक्षाभावेष्टेरव्युत्पन्नस्यापि तत्त्वमादिनैक्यधीरिष्टा स्यादित्याशङ्क्याऽऽह—अभिधानेति । शक्तितात्पर्यवतः शब्दस्य मानत्वात्तस्य चानपेक्षत्वादनपेक्षत्ववाचोयुक्तिरिति भावः ॥१८२॥

विधीनामनपेक्षत्वायोगात्तदुपगमेन सापेक्षत्वापरिहारात्तं विनैव वेदान्तानामनपेक्षं प्रामाण्यमित्युपपाद्य विहितज्ञानस्याप्रामाण्येनार्थासाधकत्वाच्च न ज्ञाने विधिरित्याह—ज्ञानेति । प्रमातृस्था तत्तन्त्रेति यावत् । योषिदग्न्यादिधीवदित्यर्थः । प्रमेयकर्तृका मानमेयाधीनेति यावत् । असाविति ज्ञानक्रियोक्ता ॥१८३॥

१. न तत्प्रमं न तत्प्रमाणकम् ।
२. विधेयं यागादि तत्सारूप्यमैकात्म्ये नास्ति तन्न विधिविषयः इत्यर्थः ।

न[1] चान्यदीयव्यापारे ह्यन्योऽशक्तेर्नियुज्यते । न ह्यग्निसाध्ये शोषादौ नियोगो घटतेऽम्भसः ॥८४॥
ब्रह्मणोऽविद्यया योऽपि स्यादवच्छेद आत्मनः । तदवच्छेदविध्वस्तौ न साधनमपेक्षते ॥८५॥
अनवच्छिन्नयाथात्म्यब्रह्मैकात्म्यादविद्यया । अवच्छिन्नवदाभाति क्षेत्रज्ञो रज्जुसर्पवत् ॥८६॥
न चाविद्यानिरास्यत्र प्रत्यग्याथात्म्यबोधतः । साधनं किंचिदापेक्ष्यं स्वर्गे यागादिवत्क्वचित् ॥८७॥
न चापि मुख्यया वृत्त्या साध्येऽसति जगत्यपि । किंचित्साधनमित्येवं भण्यते लोकवेदयोः ॥८८॥
साध्यं च लोकतः सिद्धमुत्पत्त्यादिचतुष्टयम् । प्रमाणस्य न तन्न्याय्यं सिद्धार्थव्यञ्जकत्वतः ॥८९॥
नाऽऽत्मलाभातिरेकेण व्यञ्जकस्य मनागपि । संभाव्यतेऽपरं रूपमज्ञातत्वापनोदकृत् ॥९०॥
आत्मासामान्यरूपोत्थं न चाभूत्वोपजायते । घटादिज्ञानवज्ज्ञानं भिन्नहेत्वनपेक्षतः[2] ॥९१॥
स्थास्न्वनुभवमात्रत्वात्कार्यकारणवस्तुनः । अभूतभूतिर्नैवातो युज्यतेऽनुभवात्मनि ॥९२॥
प्रत्यगज्ञानहेतूत्था भावनेयं न तु स्वतः । प्रत्यग्याथात्म्यजिज्ञासोः कथं सा विषयो भवेत् ॥९३॥
क्रियाकारकभेदोऽयमज्ञातैकात्म्यवस्तुनः । तज्ज्ञानेऽसावसंभाव्यस्तद्धेतूच्छित्तिकारणात्[3] ॥९४॥

तादृश्यपि ज्ञाने पुंसो नियोगः किं न स्यादित्याशङ्क्याऽऽह—न चेति । पितृव्यापारे पुत्रस्य नियोगेऽपि पुंसो यत्र न स्वातन्त्र्यं तत्र नियोगो नेति हिशब्दार्थः । मानादिव्यापारे पुंसो न नियोगोऽशक्तेरित्यत्र दृष्टान्तमाह—न चेति ॥१८४॥

वैधं ज्ञानं फलवदिति ज्ञाने विधिमाशङ्क्य तत्फलं भेदध्वस्तिर्वाऽविद्यानिवृत्तिर्वा जीवस्य ब्रह्मप्राप्तिर्वाऽन्यद्वा किंचिदिति विकल्प्य जीवब्रह्मभेदस्य विहितज्ञानाद्ध्वस्तेर्ज्ञाने विधिरित्याद्यः स किमाविद्यो वा वास्तवो वा?आद्ये विधिवैयर्थ्यमित्याह—ब्रह्मण इति । साधनं विधिर्ज्ञानादेव तत्सिद्धेरित्यर्थः ॥१८५॥

द्वितीयं दूषयति—अनवच्छिन्नेति ॥१८६॥

अविद्याध्वस्त्या तज्जदेहध्वस्तावप्यविद्याध्वंसार्थं विहितज्ञानापेक्षणात्तत्र विधिरिति द्वितीयमाशङ्क्याऽऽह—न चेति । अत्र प्रतीचीति यावत् । क्वचिद्देशे काले वेत्यर्थः । बोधतोऽन्यदिति शेषः ॥१८७॥

जीवस्य ब्रह्मत्वसिद्धिर्विहितज्ञानादिति ज्ञाने विधिरिति तृतीयमाशङ्क्याऽऽह—न चेति । ब्रह्मत्वं विद्यया साध्यमपि न मुख्यया वृत्त्या साध्यं न चासति मुख्ये साध्ये सर्वत्रापि व्यवहारे साधनमिति किंचिदुच्यते तस्मात्साध्याभावान्न विधिरित्यर्थः ॥१८८॥

उक्तसाध्येभ्योऽन्यदेव तद्विधेः साध्यमिति चतुर्थमाशङ्क्य तदभावं वक्तुं साध्यस्वरूपमाह—साध्यं चेति । उत्पत्त्यादीनामेकं विहितज्ञानस्यापि साध्यमित्याशङ्क्याऽऽह—प्रमाणस्येति ॥१८९॥

शाब्दे ज्ञाने विधिं निरस्याभ्यस्यमानस्य तस्याविद्याध्वंसित्वात्तदभ्यासे विधिरित्याशङ्क्याऽऽह—नाऽऽत्मेति । अपरमभ्यासादिष्टमिति यावत् । उत्पन्नमात्रादेव ज्ञानादज्ञानध्वस्तिसंभवादित्यर्थः ॥१९०॥

माने तदभ्यासे वा विधिर्मा भूत्स्वरूपज्ञाने तु स्यादित्याशङ्क्य दोषान्तरमाह—आत्मेति । यदस्यासाधारणं रूपं तेनाभिव्यक्तं ज्ञानं हेत्वनपेक्षत्वादकार्यं न विधेयमित्यर्थः ॥१९१॥

कथं स्वातिरिक्तहेत्वनपेक्षत्वं तत्राऽऽह—स्थास्न्विति । अतःशब्दस्य पञ्चम्या संबन्धः ॥१९२॥

किंच ब्रह्म जिज्ञासोस्तद्विदो वा विधिराद्येऽपि तस्य ज्ञानोपायेऽन्यत्र वा असाविति विकल्प्याऽऽद्यमङ्गीकृत्य द्वितीयं दूषयति—प्रत्यगिति । ज्ञानार्थिनस्तदुपायादन्यत्र न यत्नस्तदनर्थित्वादित्यर्थः ॥१९३॥

कल्पान्तरं प्रत्याह—क्रियेति ॥१९४॥

१. न चान्यदीयेति प्रमाणसाध्ये वस्तुनि न नियोगो व्याप्रियेत ।
२. भिन्नहेत्विति—स्वोत्पादकहेत्वतिरिक्तहेत्वनपेक्षत्वात् ।
३. तद्धेतूच्छित्तिः भेदहेत्वज्ञाननाशः ।

**न चाविद्यासमुच्छित्तिर्ज्ञानोत्पत्त्यतिरेकतः । संसारनाशोऽविद्याया नाशान्न व्यतिरिच्यते ।।१९५।।**
**न चाप्यविद्यानाशोऽत्र संसर्गः कारणात्मनि । तद्ध्वस्तेर्वस्तुवृत्तत्वान्मृदि लोष्टादिनाशवत् ।।१९६।।**
**आदाय वास्तवं वृत्तं ज्ञानमज्ञाननाशकृत् । वस्तुयाथात्म्यवृत्तेन तमोऽपह्नूयते सदा ।।१९७।।**
**अज्ञातज्ञापनं तस्माद्विधिरत्रोपपद्यते । अकृतस्य क्रिया त्वत्र विधिर्नैवोपपद्यते ।।१९८।।**

अविद्या द्विविधा तत्र द्वितीया विहितज्ञानान्निवर्तते

**द्वैविध्यं चाप्यविद्याया न च युक्त्याऽवसीयते । ऐकात्म्यमात्रवस्तुत्वादविद्यैकैव युज्यते ।।१९९।।**
**प्रमेयभेदभिन्नत्वं ज्ञानानामिव भेदकम् । नाविद्याया यतोऽस्तीह द्वैविध्यं तेन दुर्घटम् ।।२००।।**
**प्रत्यगज्ञानमेवेह तदन्यद्वस्तुकारणम् । तदन्यकारणासत्त्वाद्द्वैविध्यं तमसः कुतः ।। १ ।।**

ज्ञानाभ्यासान्मुक्तिरिति पक्षनिरासः

**न चाभ्यासाद्यपेक्षाऽपि स्वतो मुक्तत्वकारणात् । न घटादेर्घटत्वादि घटाद्यभ्याससंश्रयम् ।। २ ।।**
**न चाविषयविज्ञानमनाकारं च भाव्यते । भावकप्रत्यगात्मत्वादाकृतेश्च निषेधतः ।। ३ ।।**
**नेन्द्रियेण ग्रहोऽस्यास्ति शब्दाद्यर्थानुपातिना । दुःखादिवच्च नैवाऽऽत्मा चितेः स्वार्थैकरूपतः ।। ४ ।।**

भेदहेतोरविद्याया नोच्छेदोऽनुत्पन्नायाः[1] प्राप्त्यभावेनानिवर्तकत्वादुत्पन्नायाश्चाविरोधेनोत्पन्नत्वादित्याशङ्क्य दीपात्तमोध्वस्तिवत्तदुपपत्तेर्मैवमित्याह—न चेति । ज्ञानोदयनान्तरीयकत्वेनाज्ञानध्वंसेऽपि तत्कार्यध्वस्त्यर्थं ज्ञानाभ्यासे विधिरित्याशङ्क्याऽऽह—संसारेति ।।१९५।।

यथा लोष्टादिनाशो मृदि संसर्गस्तथा सकार्याविद्यानाशोऽप्यात्मन्यन्वयस्तत्तस्या निरन्वयनाशार्थमभ्यासे विधिरित्याशङ्क्याऽऽह—न चापीति । सकार्याविद्याध्वस्तेरकार्यकारणात्ममात्रत्वादित्यर्थः ।।१९६।।

कथं तस्या यथोक्तात्ममात्रतेत्याशङ्क्याऽऽह—आदायेति । वस्तुस्वरूपानुसारेण ज्ञानस्याज्ञानध्वंसित्वान्न वस्त्वतिरेकेण शिष्टमस्तीत्यर्थः । तत्र विद्वदनुभवं प्रमाणयति—वस्त्विति ।।१९७।।

वेदान्तेष्वप्रवृत्तप्रवर्तनात्मकं विधिं निरस्याज्ञातज्ञापनं चातो विधिरित्यत्रोक्तमुपसंहरति—अज्ञातेति । अत्रेति वेदान्तोक्तिः । तच्छब्दार्थं हेतुमाह—अकृतस्येति ।।१९८।।

अग्रहान्यथाग्रहाभ्यां द्विविधाऽविद्या तत्राद्याया जन्मात्रान्निवृत्तिर्द्वितीयस्या विहितज्ञानादित्येके । तान्प्रत्याह—द्वैविध्यं चेति । तत्स्वरूपवदित्यपेरर्थः । युक्त्या मानं समुच्चेतुं चकारः । एकत्वमपि न तस्या मानयुक्त्यभावादित्याशङ्क्याऽऽह—ऐकात्म्येति । आश्रयविषयभेदाभावाद्भेदकाभावे तदैक्यमित्यर्थः ।।१९९।।

तदेव दृष्टान्तेन साधयति—प्रमेयेति । इह प्रतीचीत्येतत् ।।२००।।

आत्माज्ञानं तमाच्छादयन्न जगद्धेतुरेकस्य द्विकरत्वायोगादतो जगत्कारणमज्ञानान्तरं तद्ध्वस्तिर्विहितज्ञानादित्याशङ्क्याऽऽह—प्रत्यगिति । "इन्द्रो मायाभिरि"त्यादिश्रुतेर्यदनात्मवस्तु तस्मिन्कारणं प्रत्यगज्ञानमेवैकस्य द्विकरत्वविरोधस्तु कुल्यादिदृष्टान्तेन निरस्य इत्यर्थः । इहेति व्यवहारभेदोक्तिः । प्रत्यगज्ञानातिरिक्तकारणाभावे फलितमाह—तदन्येति ।।२०१।।

मा भूदविद्याद्वैविध्यं तथाऽपि मुक्तत्वमात्मनो ज्ञानाभ्यासादिति तद्विधिमाशङ्क्याऽऽह—न चेति । आदिपदेन योगाद्युक्तिः । नित्यमुक्तस्य मुक्तत्वं नाभ्यासापेक्षमित्यत्र दृष्टान्तमाह—नेत्यादिना ।।२०२।।

किंच सविषयं साकारं च गरुडादिज्ञानमभ्यस्यतेऽन्यथा त्वात्मज्ञानं तेन तदभ्यासायोगान्न तत्र विधिरित्याह—न चेति । अविषयत्वमात्मनः साधयति—भावकेति । भावकोऽभ्यासकर्ता । आत्मधियोऽनाकारत्वे हेतुमाह—आकृतेश्चेति । अशब्दमित्यादिश्रुतेरित्यर्थः ।।२०३।।

किंचाध्यक्षस्यैव गरुडादेर्ज्ञानमभ्यस्यत आत्मज्ञानमप्यभ्यस्यते चेदात्मनोऽध्यक्षत्वे वाच्ये तस्य बाह्येन्द्रियेण

१. अनुत्पन्नाया विद्याया इति शेषः ।

तत्तद्वस्तु समुद्दिश्य दुःखित्वं तत्र मानिनः । अज्ञानादभिमानोऽयं बुद्ध्यादौ विषयावधौ ।।५३।।

उक्तविषयेषु सिद्धान्तविरोद्ध्यंशनिराकरणम्

न तु निःसङ्गकूटस्थप्रतीचः स्यादहंमतिः । न कार्यप्रलयो दृष्टो यस्मादन्यत्र कारणात् ।।५४।।
त्वगारम्भकसामान्यं त्वग्गिराऽतोऽत्र गृह्यते । कार्यत्वान्नेन्द्रियेष्वेव विषयप्रलयो भवेत् ।।५५।।
न मृदोऽन्यत्र कुंभादेः शरावे प्रलयो यतः । तस्मात्त्वगादयः शब्दास्त्वगाद्यारम्भकाभिधाः ।।५६।।
सर्वत्र प्रतिपत्तव्या नान्यत्र प्रलयो यतः । गन्धशब्देन कृत्स्नाऽपि पृथिवी परिगृह्यते ।।५७।।
यदि वा परभागोऽस्या गन्धस्यानेकभेदतः । गन्धो गुरुः क्षितिप्रायो ह्लादी शीतोऽप्प्रधानतः ।।५८।।
तेजोभूयस्तया तीक्ष्णो लघुर्वायुप्रधानतः । शान्तोऽथ विशदो व्यापी स्याद्व्योम्नोऽथ प्रधानतः।।५९।।
पार्थिवाप्यांशयोस्तेजःपरिक्लेदात्तथाऽधमः । दुर्गन्धो जायते गन्धः पापकर्मप्रबोधतः ।।६०।।
समांशपरिणामे तु सुरभिर्जायते शुभः । पुण्यकर्मप्रयुक्तः सञ्जन्तोरासङ्गकृत्तथा ।।६१।।
रसरूपरवेष्वेवं यथोक्तं प्रतिपादयेत् । प्रधानगुणभावेन गुणानां भूरिरूपता ।।६२।।
असाधारणगन्धादिग्राहकत्वानुमानतः । ग्राह्यभूतप्रधानत्वं घ्राणादिष्वपि निर्दिशेत् ।।६३।।

तर्हि कुत्र पुत्राभिमानजं दुःखं तत्राऽऽह—तत्तदिति । तत्र तत्राभिमानवतस्तत्तत्पुत्रादि विषयीकृत्य बुद्धौ जातं दुःखं प्रणाड्या साक्षिण्यारोपितमित्यर्थः । ममाभिमानस्य वस्तुत्वात्तज्जं दुःखमपि तथेत्याशङ्क्याऽऽह—अज्ञानादिति ।।३५३।।

अहमभिमानवन्ममाभिमानस्यापि वस्तुत्वमाशङ्क्याऽऽह—न त्विति । स्पर्शादिज्ञानभेदानामित्यादिना भर्तृप्रपञ्चपक्षमुक्त्वा तत्र विरुद्धांशं दूषयन्विषयाणां धियां चेन्द्रियेषु लयं दूषयति—न कार्येति । अत्रेति दार्ष्टान्तिकवाक्योक्तिः । त्वगादीनामपि स्पर्शादिषु कारणत्वायोगाद्यथाश्रुतं गृहीत्वा विषयाणामिन्द्रियेष्वेव लयो गृह्यतामित्याशङ्क्याऽऽह—कार्यत्वादिति । तेषां विषयकार्यत्वात्तान्प्रत्यप्रकृतित्वादित्यर्थः ।।३५४–३५५।।

तथाऽपि तेषु विषयलये को दोषस्तत्राऽऽह—न मृद इति । कारणादन्यत्रापि कार्यलयश्चेत्कुम्भादेः शरावादावपि स स्यादतो विषयाणामिन्द्रियेषु लयासिद्धिरित्यर्थः । कार्यस्याकारणे लयायोगे श्रुते यथाश्रुतार्थस्वीकारो नेति फलितमाह—तस्मादिति । सर्वत्रेति तत्तद्वाक्योक्तिः । तच्छब्दार्थमेव स्फुटयति—नान्यत्रेति । सर्वेषां स्पर्शानामित्यादि व्याख्याय सर्वेषां गन्धानामित्यत्र गन्धशब्दार्थं प्रकटयति—गन्धेति । शब्दादिपञ्चकसंहतिरूपा स्थूला पृथिवी गन्धशब्दितेत्यर्थः ।।३५६–३५७।।

तस्याः सूक्ष्मो वा भागस्तच्छब्दार्थस्तस्यानेकरूपत्वादित्याह—यदि वेति । कथं गन्धस्यानेकभेदवत्त्वं तदाह—गन्ध इति । प्रथमोऽथशब्दश्चशब्दपर्यायः समुच्चयार्थो द्वितीयस्तु तथाशब्दपर्यायो दृष्टान्तार्थः ।।३५८–३५९।।

एवं भूतानुरोधाद्गन्धभेदेऽपि कथं तस्य सौरभ्यासौरभ्यभेदधीरित्याशङ्क्यासुरभिगन्धजन्मप्रकारमाह—पार्थिवेति । तथेत्यनुभवानुसारोक्तिः । दृष्टनिमित्तमुक्त्वाऽदृष्टमाह—पापेति । अधर्मो दुःखहेतुः ।।३६०।।

सुरभिगन्धजन्म दृष्टादृष्टाभ्यां ब्रुवाणस्तत्कार्यमाह—समेति । समानां पृथिव्याद्यंशानां तेजसा समे पाके सतीत्यर्थः । शुभत्वं सुखकरत्वम् ।।३६१।।

स्पर्शगन्धयोरुक्तं नानात्वं सर्वेषां रसानामित्यादिवाक्यस्थरसादिष्वतिदिशति—रसेति । प्रतिपादनप्रकारमाह—प्रधानेति । गुणानां भूतानामुपचयापचयवशादनेकरूपता रसादीनामपीत्यर्थः ।।३६२।।

गन्धादिषु यथोक्तभेदे श्रौतप्रक्रियासिद्धेऽपि त्वगारम्भकसामान्यमित्यादिना तेषां घ्राणाद्यारम्भकत्वं कथमुक्तमित्याशङ्क्याऽऽह—असाधारणेति । अनुमानतो लिङ्गादिति यावत् । प्रधानत्वं सारत्वं कार्यमित्यर्थः । अपिर्दृष्टान्तार्थः । विमतं पार्थिवं गन्धादिषु गन्धस्यैव व्यञ्जकत्वात्कुङ्कुमगन्धाभिव्यञ्जकघृतवद्विमतमाप्यं रसादिषु

स्वग्राह्यार्थसजातीयमिन्द्रियं स्यात्प्रदीपवत् । रूपस्यैवावभासित्वान्न चेत्स्याच्छ्रोत्ररूपवत् ॥६४॥
न चेदर्थसजातीयं सर्वार्थग्रहणं भवेत् । एकैकस्येन्द्रियस्येह मनोबुद्ध्योर्यथा तथा ॥६५॥
सर्वभूतात्मकत्वात्तु सर्वार्थग्रहणं तयोः । मनोबुद्ध्योरिति ज्ञेयमन्यथा तदसंभवात् ॥६६॥

त्वगादीनां प्रकाशः कर्मेन्द्रियाणां प्राणः सामान्यरूपम्

त्वगादिज्ञानशक्तीनां बुद्धिः सामान्यमुच्यते । प्राण एव क्रियाशक्तिसामान्यं तद्वदुच्यते ॥६७॥
शब्दादिभोगसिद्ध्यर्थं श्रोत्राद्या ज्ञानशक्तयः । तद्वत्कर्मोपभोगार्थं वागाद्याः कर्मशक्तयः ॥६८॥
यथोक्तशक्तिविक्षेपो मनोबुद्धिपुरःसरः । संकल्पाध्यवसायाभ्यां तयोर्भेदोऽपि च द्विधा ॥६९॥
योग्येन्द्रियस्य या यस्य ततोऽन्यत्रापि लक्षिता । वृत्तिस्तस्यैव सा ज्ञेया न स्वभावविपर्ययः ॥७०॥

रसस्यैव व्यञ्जकत्वादास्योदकवद्विमतं वायवीयं स्पर्शादिषु स्पर्शस्यैव व्यञ्जकत्वाद्व्यजनवायुवत् । विमतं नाभसं शब्दादिषु शब्दस्यैव व्यञ्जकत्वाद्वेणुविवरवदित्यर्थः ॥३६३॥

चक्षुषस्तैजसत्वमाह—स्वग्राह्येति । विमतं तैजसं रूपादिषु रूपस्यैव व्यञ्जकत्वाद्दीपवदित्यर्थः । चक्षुषो ग्राह्यरूपासाजात्ये श्रोत्रेण रूपाग्रहवत्तेनापि तन्न गृह्येतेति बाधकमाह—न चेदिति ॥३६४॥

उक्तानुमानेषु विपक्षे बाधकमाह—नेत्यादिना । इहेति व्यवहारभूमिरुक्ता ॥३६५॥

तयोरपि सर्वार्थग्रहणं कथमित्याशङ्क्य भूतपञ्चकारब्धत्वादित्याह—सर्वेति । विमतं भूतपञ्चकजातीयं तद्ग्राहकत्वाद्यद्यद्ग्राहकं तत्तथा यथा रूपग्राहको दीपस्तज्जातीयो न च हेत्वसिद्धिर्मनोबुद्ध्योरगोचरस्यानात्मनोऽसत्त्वात्साजात्यं च द्रव्यत्वावान्तरजात्येष्टमिति न सिद्धसाध्यता तद्ग्राहकत्वं च तत्कारणतेति नादृष्टादौ व्यभिचार इति भावः । अनुभवसिद्धहेत्वनुपपत्तिं विपक्षे बाधकत्वेनाऽऽह—अन्यथेति ॥३६६॥

त्वगादीनां भौतिकत्वमुक्त्वा प्रकाशाख्यं साधारणं रूपमाह—त्वगादीति । ज्ञानेन्द्रियाणां तच्छक्तियुक्तानां प्रकाशः साधारणं रूपमित्यर्थः । कर्मेन्द्रियाणामितरवद्भौतिकत्वं मत्वा साधारणं रूपमाह—प्राण इति । अस्यार्थः—वाङ्नभोविकारो विवरप्राधान्ये सति शब्दव्यञ्जकत्वाच्छ्रोत्रवद्धस्तौ वायवीयौ नियमेनाऽऽलोकानपेक्षस्पर्शवद्ग्राहकासाधारणकरणत्वात्त्वग्वद्वायुरूपस्य बलस्य तत्र दृष्टेश्च प्राणो वै बलमिति हि श्रुतिः । पादौ तैजसौ प्रायेणोष्णस्पर्शत्वाद्दीपवत् । पायुराप्यं स्निग्धत्वात्संमतवदुपस्थः पार्थिवो गन्धवत्त्वात्संमतवत् । एवं भौतिकानामेषां क्रियाशक्तिमतां साधारणं रूपं त्वगादीनां प्रकाशवत्क्रियेति । तेजोमयी वागित्यादिश्रुतेर्वाक्तैजसी हस्तौ पूर्ववद्वायवीयावेव पायुः पार्थिवो गन्धवत्त्वाद्धस्तिरेव रयिरित्यादिश्रुतेः प्रजननमाप्यं परिशेषात्पादौ नाभसाविति वाऽर्थः ॥३६७॥

किमर्थानि ज्ञानेन्द्रियाणि तत्राऽऽह—शब्दादीति । उक्तं हि—रूपादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिरिति । किमर्थानि कर्मेन्द्रियाणि तत्राऽऽह—तद्वदिति । उक्तं च—वचनादानविहरणोत्सर्गानन्दाश्च शेषाणामिति ॥३६८॥

सर्वाणि तानि केन प्रयुक्तानि व्याप्रियन्ते तत्राऽऽह—यथोक्तेति । शक्तिशब्देन शक्तिमन्ति द्रव्याणि गृहीतानि । कथं मनोबुद्ध्योर्भेदोऽन्तःकरणमेव हि द्विधोच्यते तत्राऽऽह—संकल्पेति ॥३६९॥

यत्तु शब्दव्यञ्जकत्वेन श्रोत्रादेराकाशविकारत्वं तदयुक्तं तैजसे चक्षुष्यपि तद्व्यञ्जकत्वदृष्टेश्चक्षुःश्रवाः सर्प इति हि प्रसिद्धिः । यच्च हस्तत्वचोः स्पर्शवदादानसाधनत्वाद्वायवीयत्वं तदसत्पादादौ व्यभिचारान्न चासति प्रतिबन्धे विशिष्टस्पर्शित्वात्पादादेस्तैजसत्वं हस्तादावपि तद्भावान्न च स्निग्धत्वात्पाय्वादेराप्यत्वं घृतादौ व्यभिचारान्न च गन्धवत्त्वादुपस्थादि पार्थिवं पाय्वादावपि तद्भावादतो नेन्द्रियाणां कार्यव्यवस्थया भौतिकत्वमित्यत आह—योग्येति । यस्य श्रोत्रादेर्या योग्या श्रवणाद्या वृत्तिः सा चक्षुरादौ दृष्टाऽपि तस्यैव श्रोत्रादेर्ज्ञेया स्वभाववैपरीत्यायोगात्स्थानभेदाभावेऽपीन्द्रियभेदस्य कार्यभेदगम्यस्य दुरपह्नवत्वादित्यर्थः ॥३७०॥

एवं ज्ञानक्रियाशक्तिविक्षेपाज्जगदात्मनः । करणायतनत्वाय देहाविर्भूतिरात्मनः ।।७१।।

एवं च सति यद्यस्मात्कार्यमाविरभूत्पुरा । तत्तु तत्रैव विलयं कार्यमेति स्वकारणे ।।७२।।

मूलकारण एवैषां सर्वेषां विलयो भवेत् । तत्कारणत्वात्कार्याणां न तु कार्यान्तरे लयः ।।७३।।

पिण्डादिष्वेव प्रात्यक्ष्याद्घटादीनां लयादियम् । भ्रान्तिः पूर्वेषु कार्येषु लयोऽयमिति मोहतः ।।७४।।

विषयाणां लयप्रकारप्रदर्शनम्

एवं त्वगादिवाच्यासु स्पर्शादीनां यथायथम् । स्पर्शादिमात्रासु लयस्तासामपि लयस्तथा ।।७५।।

मनोविषयसामान्ये तस्यापि प्रलयो धियः । स्वगोचरैकसामान्ये सरितां सागरे यथा ।।७६।।

बुद्धेर्विषयविज्ञानसामान्यमपि चाऽऽत्मनि । परस्मिल्लँयविक्षेपरहितेऽपरिणामिनि ।।७७।।

वदनादिस्वसामान्यविषयेषु तथा लयः । कर्मेन्द्रियाणां सर्वेषां तत्सामान्येषु पञ्चसु ।।७८।।

परिस्पन्दः प्रकाशश्च ज्ञानशक्तिषु विद्यते । केवलस्तु परिस्पन्दः कर्मशक्तिषु निष्प्रभः ।।७९।।

इन्द्रियाणां रूपस्थानयोः निरूपणम्

सर्वोऽप्येष परिस्पन्दो बुद्धीन्द्रियसमाश्रयः । प्राणात्मक इति ज्ञेयो हन्तास्यैवेति च श्रुतेः ।।८०।।

पड्वीशशङ्कुदृष्टान्तात्प्राणस्यैव तु शक्तयः । कर्मेन्द्रियाणि सर्वाणि तथा बुद्धीन्द्रियाण्यपि ।।८१।।

इत्थं करणव्यवस्थायामपि देहसृष्टिरश्लिष्टा तदभावेऽपीन्द्रियव्यापारादात्मनो बन्धसिद्धेरित्याशङ्क्याऽऽह—एवमिति । उक्तनीत्या द्विविधेन्द्रियव्यापाराद्यो जगदात्मा संसारी तस्य करणाश्रयत्वाय देहसृष्टिर्न चाधिष्ठानमन्तरेणेन्द्रियव्यापारः सम्भवतीति हि वृद्धाः । देहश्च पाञ्चभौतिकः शब्दादिपञ्चकस्य तत्रोपलम्भादिति भावः ।।३७१।।

कार्यकरणयोर्भौतिकत्वे भूतेषु लयभावात्फलं लम्भयति—एवं चेति ।।३७२।।

भूतेषु कार्यकरणलयेऽपि तेषां ब्रह्मणोऽन्यत्र स स्यादिति चेत्तत्राऽऽह—मूलेति । तत्कारणत्वान्मूलकारणकार्यत्वाद्भूतानामित्यर्थः । तथाऽपि ततोऽन्यत्र तल्लयः स्यादित्याशङ्क्य तस्य कार्यानतिरेकात्कार्ये च कार्यान्तरलयायोगान्नैवमित्याह—कार्याणामिति ।।३७३।।

न ब्रह्मण्येव सर्वकार्यलयो मृदादौ कुम्भलयोपलब्धेः कार्यकरणानां च भूतेषु लयस्य त्वयैवेष्टत्वात्तथा च कार्यान्तरेऽपि कार्याणां लयः स्यादित्याशङ्क्याऽऽह—पिण्डादिष्विति । मृदादिभावमापन्ने मूलकारणे घटादिलयाङ्गीकारान्न कार्ये कार्यान्तरलयस्तथाऽपि पिण्डादिकार्येषु घटादिलयस्य प्रात्यक्ष्यादब्रह्मणोऽर्वाक्षु मृदादिष्वेव कार्यान्तरलय इति भ्रान्तिरविवेकाद्भवतीत्यर्थः ।।३७४।।

मूलकारणे ब्रह्मणि भूतभौतिकलयं प्रतिपाद्यैवं सर्वेषां स्पर्शानामित्यादिभाष्यमुक्तेऽर्थे योजयति—एवमिति । यथायथमिति त्वग्वाच्यस्पर्शमात्रायां स्पर्शविशेषाणां चक्षुर्वाच्यरूपमात्रायां रूपविशेषाणां लय इत्यादि ज्ञेयमित्यर्थः । आत्मन्यपरिणामिनि लीयत इति शेषः । तदपरिणामित्वसिद्धये लयेत्यादिविशेषणम् ।।३७५–३७६–३७७।।

स यथा सर्वासामित्यारभ्यैवं सर्वेषां कर्मणामित्यस्मात्प्राक्तनसंदर्भः संक्षेपविस्तराभ्यां व्याख्यातः इदानीमेवं सर्वेषां कर्मणामित्यादेस्तात्पर्यमाह—वदनादीति । कर्मेन्द्रियाणां तद्विषयाणां च वदनत्वादिसामान्येषु लयस्तेषां च प्राणे तस्यापि कारणात्मनीत्यर्थः । यथा बुद्धीन्द्रियाणां तदर्थानां च तत्सामान्येषु स्पर्शत्वादिषु पञ्चसु लयस्तथा कर्मेन्द्रियाणां तदर्थानां च वदनादिषु वागादिगोचरीभूतसामान्यात्मसु विषयेषु लय इति योजना ।।३७८।।

प्राणश्चेत्यादिभाष्यतात्पर्यं वक्तुं भूमिकामाह—परिस्पन्द इति । केवलशब्दार्थमाह—निष्प्रभ इति ।।३७९।।

प्राणश्च ज्ञानमात्रमेवेतिभाष्यतात्पर्यमाह—सर्वोऽपीति । परिस्पन्दस्य प्राणात्मकत्वाद्द्विविधेन्द्रियाणां च परिस्पन्दात्मकत्वा"द्यो वै प्राणः सा प्रज्ञे"ति श्रुतेश्च प्राणबुद्ध्योरैक्यादुभयविधेन्द्रियाणां सिद्धं प्राणत्वमित्यर्थः । तेषां प्राणत्वे मानमाह—हन्तेति ।।३८०।।

द्विविधेन्द्रियाणां तदात्मत्वे श्रुत्यन्तरं प्रमाणयति—पड्वीशेति । यथा पादबन्धनकीलभूतशङ्कूनपर्यायेण

आपीतकरणग्रामे पुंसि स्वात्मन्यवस्थिते । तथा प्राणाग्नयः शुद्धा जाग्रतीति श्रुतेर्वचः ।।८२।।
सहैव कर्मशक्त्याऽतो ज्ञानशक्तिर्विलीयते । प्राणात्मनि श्रुतिश्चाऽऽह कस्मिन्निति च सादरा ।।८३।।
साधारणोऽयं विलयः समानान्तोऽभिधीयते । स्वहेतुमात्रसंसर्गान्नायमात्यन्तिको लयः ।।८४।।
ज्ञानशक्तिक्रियाशक्तिविभुत्वात्परमक्षरम् । व्युह्याऽऽत्मानं जगत्त्वेन स्वात्मन्येव समूहति ।।८५।।
निरुह्येति तथा श्रुत्या कारणात्माऽभिधीयते । अत्यक्रामदिति त्वस्य निर्बीजावस्थतोच्यते ।।८६।।
यत एवमतोऽशेषज्ञानशक्तिलयात्परम् । सर्वकार्योपसंहारी प्राण एकोऽवतिष्ठते ।।८७।।
प्राणोऽपाने तथाऽपानो व्यानात्मनि विलीयते । व्यानोऽप्युदानमभ्येति ह्युदानोऽपि समानगः ।।८८।।
कारणात्मैव जगतः समानोक्त्याऽभिधीयते । सर्वसाधारणः सोऽयं प्राकृतः प्रलयो मतः ।।८९।।
प्रज्ञानघनताऽप्यस्य न बुद्धिप्रज्ञयोच्यते । प्रत्यक्प्रज्ञोत्थिताभाससंबन्धात्प्राज्ञ उच्यते ।।९०।।
यन्निमित्तं प्रमाणानि प्रामाण्यमिह बिभ्रति । तदविज्ञातयाथात्म्यमेतत्कारणमुच्यते ।।९१।।

चतुरोऽपि जात्योऽश्वः समुत्पाटयत्येवं प्राणो वागादीनुत्खिदतीति श्रुत्युक्तेरिन्द्रियाणि प्राणाधीनतया तद्रूपाणीत्यर्थः ।।३८१।।

तेषां प्राणाधीनतया तदात्मत्वेन लये वाक्यान्तरमाह—आपीतेति । यथोक्तेन्द्रियलयानुरोधेनेति यावत् ।।३८२।।

तेषां प्राणतादात्म्ये फलितमाह—सहैवेति । प्राणस्य परस्मिन्प्रलयमभिप्रेत्य तस्य तत्कारणत्वे कस्मिन्न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामीत्यादि मानमाह—श्रुतिश्चेति । प्राणविषयानुभवसमुच्चयार्थश्चकारः । द्वितीयस्तु स प्राणमसृजतेत्यादिवाक्यान्तरार्थः ।।३८३।।

किञ्च सर्वप्राणिसाधारणो योऽत्र प्राकृतो लयः स समानशब्दितकारणान्तः सन्पञ्चमान्तेऽपि वक्ष्यते तदत्र वाक्यशेषानुगुण्यमस्तीत्याह—साधारण इति । चातुर्थिकस्य पाञ्चमिकस्य चास्य लयस्य साधारणत्वे हेतुमाह—स्वहेत्विति ।।३८४।।

कथं पञ्चमान्ते कारणान्तो लय उक्तस्तत्राऽऽह—ज्ञानेति । ब्रह्म सर्वशक्तित्वादात्मानमेव प्रपञ्चतया विस्तार्य स्वात्मनि तमुपसंहृत्य स्वयमेव तिष्ठतीति पञ्चमशेषे भविष्यतीत्यर्थः ।।३८५।।

तत्र प्राणादिकार्यवाचिशब्दसत्त्वेऽपि कारणवाची शब्दो नास्तीत्याशङ्क्याऽऽह—निरुह्येतीति । प्राणादीन्प्रसार्याऽऽत्मानं च तत्र प्रवेश्य स्थित इत्युक्तार्थानुसारेण कारणमुक्तमित्यर्थः । तर्हि तदेवास्तु तत्त्वं नेत्याह—अत्यक्रामदितीति ।।३८६।।

यस्मादत्र निरुह्येत्येवं मूलकारणमुक्तं तस्मादेव पञ्चमस्थया कस्मिन्नु त्वं चाऽऽत्मा च प्रतिष्ठितावित्यादिश्रुत्या संहारक्रमः कथ्यते तथाच तत्र कारणोक्तावपि कुतस्तदन्तलयोक्तिरिति नाऽऽशङ्क्येत्याह—यत इति ।।३८७।।

प्राणो वृत्तिविशेषोऽपाने लयश्रुतेर्मुख्यस्य तदयोगात् । न च तस्य सर्वकार्यसंहर्तृत्वायोगः सर्वव्यवहारान्वयव्यतिरेकवत्त्वादित्याह—प्राण इति । प्राणस्यापाने लयवदपानस्य व्याने व्यानस्योदाने तस्यापि समाने लयो भवतीत्याह—तथेति । अस्यार्थस्य पञ्चमे सिद्धत्वार्थो हिशब्दः ।।३८८।।

समानशब्दस्यापि प्राणादिशब्दवद्वृत्तिविशेषार्थत्वमाशङ्क्याऽऽह—कारणात्मेति । प्रकृतानुगुणवाक्यशेषार्थं संक्षेपतो व्युत्पाद्य स्वाभाविकं लयमुपसंहरति—सर्वेति ।।३८९।।

ननु प्राकृतलये सर्वकार्यलयोऽस्ति न वा ? न चेन्न सुषुप्तेः स्वप्नाद्विशेषः कतिपयकार्यलयस्य स्वप्नेऽपि भावादस्ति चेत् "प्राज्ञः कारणबद्धस्तु" "आनन्दभुक्तथा प्राज्ञ" इत्यादि विरुध्येत तत्तद्बुद्धेर्लीनत्वात्तत्तद्वृत्तिप्रज्ञाभावे प्राज्ञतायोगादत आह—प्रज्ञानेति । प्राकृतलयस्य बुद्ध्यधीनत्वाभावं दृष्टान्तयितुमपिशब्दः । कथं तर्हि श्रौतं प्राज्ञत्वं तदाह—प्रत्यगिति ।।३९०।।

आत्माभासयोगात्कारणस्य प्राज्ञत्वे कारणात्मनोर्भेदात्ते सिद्धान्तहानिरित्याशङ्क्याऽऽह—यन्निमित्तमिति ।

यस्मिञ्ज्ञाते भवेज्ज्ञातं जगदेतच्चराचरम् । अज्ञाते च तथाऽज्ञातमेतदेव तदुच्यते ॥९२॥

बुध्यादिलयोक्तावपि करणलयः कुतो नोक्त इति शङ्का

नन्विह प्रलयः श्रुत्या विषयस्यैव भण्यते । करणस्य तु नैवोक्तस्तत्कस्मादिति भण्यते ॥९३॥

स्वगोचरसजातीयं करणं मन्यते श्रुतिः । विषयस्य लयोक्त्याऽन्तःकरणप्रलयोक्तता ॥९४॥

मननप्रकारमुक्त्वा आत्मनि लय समर्थनम्

एवं मन्तव्य आत्माऽयं तर्कतः प्राग्यथोदितः । दुन्दुभ्याद्युक्तदृष्टान्तन्यायमार्गेण यत्नतः ॥९५॥

आत्मसामान्यसंभूतिलयहेतुसमाश्रयात् । आत्मैव सर्वमित्येष प्रतिज्ञार्थः समर्थितः ॥९६॥

स्वाभाविकोऽयं प्रलय इति पौराणिका जगुः । बुद्धिपूर्वस्तु विलयः सम्यग्ज्ञानैकपूर्वकः ॥९७॥

शक्तिमात्रात्मना स्थानं कार्याणां यत्स्वकारणे । इत्यनात्यन्तिकलयो भूयोजन्मकृतक्षणः ॥९८॥

मू.—स यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयेत न हास्योद्ग्रहणायेव स्यात् । यतो यतस्त्वाददीत लवणमेवैवं वा अर इदं महद्भूतमनन्तमपारं विज्ञानघन एव । एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञास्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्यः ॥१२॥

तत्त्वज्ञाननिमित्तस्य सर्वेषां कार्यकरणानामात्यन्तिकप्रलयस्य वर्णनम्

अतीतानागतेहत्यजन्मनाशादिहेतुनुत् । यस्तु धीपूर्वको ध्वंसस्तदर्थेयं परा श्रुतिः ॥९९॥

यदज्ञातमात्मतत्त्वं विषयीकृत्य व्यहारभूमौ प्रत्यक्षादीनि प्रामाण्यं लभन्ते तज्जगत्कारणमिति श्रुतिस्मृतिवादेषूच्यते तत्कुतो द्वैतमित्यर्थः ॥३९१॥

आत्मैवाज्ञानद्वारा कारणमित्यत्रैकविज्ञानेन सर्वविज्ञानश्रुतिं प्रमाणयति—यस्मिन्निति । यज्ज्ञाने ज्ञातं सर्वं यदज्ञाने चाज्ञातं तदेवैतत्कारणमुपनिषदधिगतमुपादानातिरिक्तोपादेयाभावादिति भावः ॥३९२॥

यद्यपि प्राकृते लये बुद्ध्यादिलयस्त्वया साध्यते तथाऽपि नासौ श्रौतस्तत्र को हेतुरिति पृच्छति—नन्विति । करणलयस्येष्टस्यापि श्रुत्या मुखतोऽनुक्तौ हेतुं प्रतिजानीते—भण्यत इति ॥३९३॥

तदेव प्रकटयति—स्वगोचरेति । तत्साजात्यं करणस्य प्रागेव व्यक्तीकृतम् । साजात्यफलं दर्शयति—विषयस्येति ॥३९४॥

मननविधिप्रपञ्चमुपसंहरति—एवमिति । यथाऽयमात्मा तर्कतो मन्तव्य एवं प्रागुक्त इति योजना । उक्तं तं प्रकारमेव दर्शयति—दुन्दुभ्यादीति । अनेकदृष्टान्तद्वारेणानेकहेतूपन्यासो यथोक्तार्थसमर्थने यत्नः ॥३९५–३९६॥

स यथेत्यादेर्वाक्यार्थधीप्रकटनार्थस्य विषयपरिशेषार्थमुक्ते लये पौराणिकसंमतिमाह—स्वाभाविक इति । नैमित्तिकस्वाभाविकात्यन्तिकभेदात्त्रिविधो लयः । उक्तं हि—

"सर्वेषामेव भूतानां त्रिविधः प्रतिसंचरः । नैमित्तिकः प्राकृतिकस्तथैवाऽऽत्यन्तिको लयः" ॥ इति

तत्राऽऽद्यो ब्रह्मकर्तृकोऽवान्तरलयः । यथाऽऽह—ब्राह्मो नैमित्तिकस्तेषां कल्पान्ते प्रतिसंचर इति । द्वितीयस्तु कार्याणां प्रकृताववसानम् । आत्यन्तिको ज्ञानाधीनो मोक्ष इत्याह—बुद्धिपूर्वस्त्विति । उक्तं च-आत्यन्तिकश्च मोक्षाख्यः प्राकृतो द्विपरार्धिक इति ॥३९७॥

स्वाभाविकलयस्य धीपूर्वलयाद्विशेषमाह—शक्तीति । स्वाभाविके लये कार्याणां कारणे शक्त्यात्मनाऽवस्थानमिति यस्मादास्थितं तस्मादसावनात्यन्तिक इति योजना । अनात्यन्तिकत्वं विशदयति—भूय इति । पुनरपि जन्मार्थं कृतावकाशत्वात्प्राकृतोऽयमित्यर्थः ॥३९८॥

ततो धीपूर्वलये विशेषं ब्रुवाणस्तदर्थमुत्तरवाक्यमवतारयति—अतीतेति । त्रैकाल्यजन्मादिहेत्वज्ञानध्वस्तिर्हि बुद्धिपूर्वो ध्वंसस्तदुपायधीप्रदर्शनायोत्तरा श्रुतिरित्यर्थः ॥३९९॥

यथोक्तवस्तुसिद्ध्यर्थं दृष्टान्तोऽयमिहोच्यते । यथा सैन्धवखिल्योऽस्तः स्वयोनावुदधाविह ।।४००।।
कठिनोदकविलयमनु खिल्यो विलीयते । विलीनस्याद्भ्य उद्धृत्य ग्रहणाय न कश्चन ।। १ ।।
निपुणोऽपि नरः शक्तः खिल्यरूपेण पूर्ववत् । सामुद्ररूपान्नान्येन ग्रहीतुं कश्चन क्षमः ।। २ ।।
आददीत समुद्राम्भस्तं जिघृक्षुर्यतो यतः । ततस्ततस्तल्लवणं वेत्ति खिल्यं न कुत्रचित् ।। ३ ।।
सामुद्रमम्भः खिल्यत्वं याति भानुविपाकतः । सिन्धोरायातः स यतस्तस्मात्सैन्धव उच्यते ।। ४ ।।

खिल्यपदार्थविवरणम्

असंभिन्नस्वावयवः खिल्यः सोऽथ निगद्यते । सोऽयं सैन्धवखिल्योऽस्तो यथैवेह महोदधौ ।। ५ ।।
[१]तेजोविरोधिनीं प्राप्य प्रकृतिं विजहात्यथ । तेजोवियोगात्काठिन्यं ध्वस्तीभवति तद्घनम् ।। ६ ।।
काठिन्यकारणध्वस्तौ खिल्यस्येह महोदधौ । कठिनोदकविध्वंसमनु खिल्यो विलीयते ।। ७ ।।
यदेवाकृत्रिमं रूपं तदेवास्यावशिष्यते । तेजोवयवसंबन्धसमुत्थं विनिवर्तते ।। ८ ।।
तेजआद्यभिसंबन्धः कारणं खिल्यरूपिणः । तद्भावभावतस्तस्य तद्ध्वस्तौ ध्वंसतस्तथा ।। ९ ।।
एवं वा अर इत्यस्य कार्यकारणरूपतः । प्रतीचो वास्तवं वृत्तं विरुद्धमभिधीयते ।।१०।।

तामविशेषेणावतार्य विशेषतो दृष्टान्तश्रुतिमवतारयति—यथोक्तेति । कार्यकारणप्रपञ्चस्य तद्विलक्षणे ब्रह्मणि ज्ञानाद्विलयो यथोक्तं वस्तु तत्प्रतिपादनाय श्रुतो दृष्टान्तोक्तिरित्यर्थः । तदक्षराणि व्याचष्टे—यथेति । दार्ष्टान्तिकस्थैवंशब्देन यथाशब्दस्यान्वयो यः सैन्धवखिल्यः स्वयोनावुदके क्षिप्तः कठिनोदकलयानन्तरं लीयत इति योजना । न हास्येत्यादेरर्थमाह—विलीनस्येति । पूर्ववत्खिल्यस्योदके प्रक्षेपात्प्रागवस्थायामिवेत्यर्थः तत्र हेतुं वक्तुं प्रतिज्ञामनुवदति—सामुद्रेति । तद्रूपं सलिलमात्रम् ।।४००–४०१–४०२।।

यतो यतस्त्वित्यादिहेतुवाक्यार्थमाह—आददीतेति । तं जिघृक्षुः खिल्यग्रहेच्छावानित्यर्थः ।।४०३।।

दृष्टान्तवाक्यार्थं संक्षिप्य प्रपञ्चयन् खिल्यत्वे निमित्तमाह—सामुद्रमिति । सैन्धवशब्दार्थमाह—सिन्धोरिति ।।४०४।।

खिल्यपदार्थमाह—असंभिन्नेति । स्वावयवानामसंभिन्नत्वं मिथः संसृष्टतया दार्ढ्यम् । अथेति स्वयोनावुदके प्रक्षेपात्प्रागवस्थायामित्यर्थः । पदयोरर्थमुक्त्वा वाक्यार्थमाह—सोऽयमिति । यन्निमित्तमुदकं खिल्यरूपेण परिणतं तद्विरोधिनीं प्रकृतिं प्राप्य तदेव खिल्यरूपं तेजो जहातीत्यर्थः । अथशब्दो विरोधिप्राप्तेस्तेजसस्त्यागहेतुत्वद्योतनार्थः ।।४०५।।

पाचके तेजसि त्यक्तेऽपि खिल्यरूपस्थितिमाशङ्क्याऽऽह—तेज इति ।।४०६।।

एतदेव स्फुटयति—काठिन्येति । खिल्यस्य महोदधौ क्षिप्तस्य काठिन्यहेतुतेजःसंपर्कध्वस्तौ कठिनोदकध्वंसद्वारा खिल्यस्यापि ध्वस्तिरित्यर्थः ।।४०७।।

अवशिष्टमर्थमाह—यदेवेति । अस्य खिल्यस्येति यावत् । तच्चोदकमात्रम् । अकृत्रिमत्वं काठिन्येऽपि तुल्यमित्याशङ्क्याऽऽह—तेज इति ।।४०८।।

तर्हि तद्योगमात्रं खिल्यताहेतुरिति व्यर्थं पृथिव्यादीत्याशङ्क्याऽऽह—तेजआदीति । तेजोवत्पृथिव्यादेरपि तद्धेतुत्वे हेतुमाह—तद्भावेति । अन्वयव्यतिरेकाभ्यां हि कारणं कल्प्यते तौ च तेजसीव पृथिव्यादावपि तुल्यौ तेनाविशिष्टं कारणत्वमित्यर्थः ।।४०९।।

दृष्टान्तं संक्षेपविस्तराभ्यामुक्त्वा दार्ष्टान्तिकं व्याख्यास्यन्नेवमित्यादेरर्थमाह—एवमिति । एतद्वाक्यस्येदमाऽस्य प्रतीचः कारणादिविरुद्धं वास्तवं रूपमुच्यत इत्यक्षरार्थः ।।४१०।।

---

१. तेजः संपर्कात् यदुदकं खिल्यरूपेण परिणतं ततः उदकान्तरं तेजोविरोधिनी प्रकृतिः । तां प्राप्य । किं विजहाति ? तत्राह—तेज इति । काठिन्यं निवर्तत इत्यर्थः । ( न्या० )

इदं महद्भूतमित्यादेः विवरणम्

अव्यावृत्ताननुगतब्रह्मत्वप्रतिपत्तये । महदित्यभिधानं स्यात्कौटस्थ्यार्थं च भूतगीः ॥११॥
वास्तवं वृत्तमाश्रित्य प्रतीचः प्राक्प्रबोधतः । स्वतःसिद्धस्य विज्ञप्त्यै महदित्यादि भण्यते ॥१२॥
कारणस्य निषेधोक्तिरनन्तमिति[1] यद्वचः । अपारमिति कार्यस्य पारः कार्यस्य कारणम् ॥१३॥
कारणस्य तथा कार्यमन्तोऽनादेः प्रसिद्धितः । जात्यन्तरनिषेधाय विज्ञानघनगीरपि ॥१४॥
क्षेत्रज्ञाकाशयोरेवं कार्यकारणसंगतिः । अब्धिस्थानीयमैकात्म्यं प्राप्योक्तेर्विनिवर्तते ॥१५॥
कार्यकारणविध्वस्तौ ब्रह्मैकात्म्यप्रबोधतः । न विशेषात्मलाभोऽस्ति खिल्यस्येव महोदधौ ॥१६॥
तेजःसंबन्धमासाद्य यथाऽम्भः खिल्यतामगात् । तथैवाज्ञानभूतेभ्यः परः क्षेत्रज्ञतां ययौ ॥१७॥

एतेभ्यो भूतेभ्यः समुत्थायेत्यस्य निवृतिः

कार्यात्माऽपचयं गच्छन्यत्र निष्ठां निगच्छति । तानि भूतान्यविद्येति प्राहुस्त्रय्यन्तनिष्ठिताः ॥१८॥
परः कारणकार्येभ्य आत्मा पूर्णत्वकारणात् । एतेभ्योऽविद्याभूतेभ्यः कार्यकारणतामगात् ॥१९॥
यतोऽविद्यैव तद्धेतुस्तदुच्छित्तावतो न सन् । कार्यकारणभेदोऽयं[2] ब्रह्मास्मीतिप्रबोधतः ॥२०॥

महद्भूतमितिपदद्वयस्यार्थमाह—अव्यावृत्तेति ॥४११॥

प्रतीचो महत्त्वादि मोक्षदशायामेवेत्याशङ्क्याऽऽह—वास्तवमिति । प्रागपीत्यपिशब्दोऽध्याहर्तव्यः । स्वतःसिद्धस्य महदित्यादिरूपस्येति शेषः ॥४१२॥

अनन्तमपारमित्यनयोरर्थमाह—कारणस्येति । कथमपारपदेन परस्य कार्यत्वं निरस्यते तत्राऽऽह—पार इति । अपूर्वमिति कारणे निषिद्धे कार्यत्वमस्य निरसितुं सुशकमित्यर्थः ॥४१३॥

तथाऽपि कथमनन्तपदेन कारणत्वमस्य निषिध्यते तत्राऽऽह—कारणस्येति । अनादि हि कारणमन्यथाऽनन्वयादनवस्थानाच्च तस्य कार्यमन्तस्तत्रान्तत्वप्रसिद्धेर्न हि मृदादि घटाद्यापन्नं शरावादि करोति ततोऽनपरमिति कार्यनिरासात्कारणत्वं परस्य निषेद्धुं शक्यमित्यर्थः । विज्ञानघनपदार्थमाह—जात्यन्तरेति । ज्ञप्तेरर्थान्तरं जात्यन्तरम् ॥४१४॥

एवकारार्थमाह—क्षेत्रज्ञेति । तत्त्वमादिवाक्याज्जीवेश्वरयोरैक्यं ज्ञात्वा तद्बलात्कार्यकारणाख्यं जगन्निवर्तत एवं सत्यैकरस्यमेव पर्यवस्यतीत्यर्थः ॥४१५॥

ज्ञानात्कार्यकारणध्वस्तौ ध्वस्तमपि जीवत्वं पुनरुदेष्यतीत्यनिर्मोक्षप्रसक्तिमाशङ्क्याऽऽह—कार्येति । न हि भूयो जीवभावो हेत्वभावान्न खलु खिल्यस्य महोदधौ क्षिप्तस्य ध्वस्तस्य तस्यैव पुनरुद्भवोऽस्तीत्यर्थः ॥४१६॥

ज्ञानादज्ञानस्यैव ध्वस्तिर्न कार्यकारणत्वस्य जीवत्वस्य चेत्याशङ्क्य सर्वस्यानात्मनोऽज्ञानजत्वाज्ज्ञानात्तद्ध्वस्तौ ध्वस्तिः फलतीति ब्रुवन्नेतेभ्य इत्याद्यवतारयति—तेज इति ॥४१७॥

भूतशब्दस्य महाभूतेषु रूढत्वात्कथं परस्य क्षेत्रज्ञत्वमज्ञानरूपभूतेभ्योऽभिधीयते तत्राऽऽह—कार्यात्मेति । यत्र सर्वं कार्यं लीयते तन्मूलकारणमविद्या भूतशब्देनोच्यते । यदाहाऽऽचार्यवाचस्पतिः"नामरूपबीजशक्तिभूतमव्याकृतं भूतसूक्ष्ममि"ति । प्रसिद्धभूतानां क्षेत्रज्ञोत्थापकत्वानुपपत्तेरित्यर्थः ॥४१८॥

तर्हि तदुत्थापकानि कार्यकारणान्येवात्र भूतानीत्याशङ्क्याऽऽह—पर इति । आत्मा पूर्णत्वात्परिच्छिन्नकारणादिविलक्षणः सोऽविद्यात्मकभूतवशात्तद्भावं गतः मूलाविद्याऽत्र कार्यादिभूता भूतशब्देत्यर्थः ॥४१९॥

सर्वस्यानात्मनोऽविद्याजत्वे फलितमाह—यत इति ॥४२०॥

---

१. अनन्तम् = अन्तः कार्यं न विद्यते यस्य इति—अकारण्यमित्युक्तं भवति । अपारं पारं कार्यस्य कारणं पारं तद्रहितं कारणरहितं = अकार्यमित्यर्थः ।

२. कार्यकारणभेदः कार्यकारणत्वनिवृत्तिः ।

तस्मिन्ध्वस्तेऽथ संबोधात्केवलैकात्म्यशेषतः । विशेषसंज्ञा नास्त्यस्य पूर्णप्रज्ञप्तिमात्रतः ॥२१॥
अविचारितसिद्धीनि यान्यविद्येत्यवादिषम् । एतेभ्यो हेतुभूतेभ्यो भूतेभ्योऽकार्यकारणः ॥२२॥
कार्यकारणवद्रूपं समुत्थायेति शब्द्यते । अविद्यासंगतेरस्य जायतेऽनेकरूपवान् ॥२३॥
चेतनाचेतनाभास आत्मानात्मत्वलक्षणः । कार्यकारणरूपेण मिथोपेक्षाश्रयं तमः ॥२४॥
कार्यकारणतां यात आत्माऽप्येवं तमोवशात् । स्वाभासैर्बहुतामेति मनोबुद्ध्याद्युपाधिभिः ॥२५॥

समुत्थानस्य बहुधा विवरणम्

तमोहेतु समुत्थानं न वेद्मीत्यग्रहात्मकम् । मिथ्याज्ञानं तमः कुर्वदीदृगेव करोति तत् ॥२६॥
अविद्याकार्यबुद्धिस्थप्रत्यगाभासरूपवत् । बोद्धेत्यादिसमुत्थानं भण्यते परमात्मनः ॥२७॥
श्रोता स्प्रष्टेतिरूपः स्यात्तथैवेन्द्रियवृत्तिभिः । दुःखी गौरो द्विजश्चेति शरीरोत्थानतः परः ॥२८॥
धनी गोमान्दरिद्रो वा धनाद्यर्थात्मसंगतेः । अतद्वानपि संमोहाद्यथोक्तात्मकतामगात् ॥२९॥

तान्येवानुविनश्यतीत्यस्य विवरणम्

प्रत्यग्याथात्म्यमोहोत्था विरिञ्चोपक्रमा मृषा । क्षेत्रक्षेत्रज्ञभेदेन ह्यास्थाणोरुत्थितिर्दृशेः ॥३०॥
यथावस्तु यदा बोधो वेदान्तोक्तिश्रुतेर्भवेत् । तदा नश्यन्ति भूतानि येभ्यः क्षेत्रज्ञतां गतः ॥३१॥

केचित्तु कार्यनिवृत्तिं शून्यतावसायिनीमाहुस्तान्निवर्तयन्भेदनिवृत्तिफलमाह—तस्मिन्निति । ऐक्यसंबोधस्याऽऽविद्यबन्धध्वंसे हेतुत्वसमर्थनार्थोऽथशब्दः । संज्ञाभावे कैवल्यस्यापुमर्थत्वमाशङ्क्योक्तम्—अस्येति ॥४२१॥

भूतशब्दार्थमनूद्य समुत्थायेत्यस्यार्थमाह—अविचारितेति । योऽकार्यकारणः परस्तस्य यथोक्तभूतेभ्यो भवत्तत्तद्विशिष्टरूपमुत्थायेत्यत्र समुत्थानमित्यर्थः । तत्प्रपञ्चयन्नात्मनोऽविद्ययाऽनेकाकारावाप्तिमाह—अविद्येति ॥४२२–४२३॥

अनेकरूपवन्तं स्वभावं विशदीकुर्वाणश्चिदाभासवैशिष्ट्यं तस्याऽऽचष्टे—चेतनेति ॥४२४॥

अविद्यायामेवमनेकरूपत्वेऽपि प्रतीचि किमायातमित्याशङ्क्याऽऽह—कार्येति । न केवलमात्माऽज्ञानवशात्कार्यकारणतां गतः किंतु स्वाभासविशिष्टाविद्याकृतबुद्ध्याद्युपाधिवशान्मातृत्वादिभावं चाऽऽप्तवानित्याह—स्वाभासैरिति ॥४२५॥

समुत्थानमित्थमुक्त्वा तत्र क्रममाह—तम इति । सर्वमात्मनः समुत्थानमज्ञानजमिति न विवादस्तच्च तमोऽज्ञानमादौ न वेद्मि मूढोऽस्मीत्यग्रहात्मकं मिथ्याज्ञानं कुर्वदेव तत्सदृशमिथ्याज्ञानान्तरं करोतीत्यर्थः ॥४२६॥

अविद्यामात्रनिमित्तमुत्थानमुक्त्वा तत्कार्यबुद्ध्यादिकृतं तदाह—अविद्येति । आदिशब्देन भोक्तृत्वाद्युक्तिः ॥४२७॥

इन्द्रियनिमित्तमुत्थानमाह—श्रोतेति । इन्द्रियाण्येव वा तद्द्वारिका या वृत्तयस्ताभिरिति यावत् । स्थूलदेहकृतं तदाह—दुःखीति ॥४२८॥

देहवतो धनादिसंबन्धकृतं तदाह—धनीति । आत्मशब्दो देहविषयः । आत्मनो मिथ्याभूतमुत्थानमुपसंहरति—अतद्वानिति ॥४२९॥

तान्येवेत्यादि व्याख्यातुं वृत्तं कीर्तयति—प्रत्यगिति । आ विरिञ्चादा च स्थाणोर्द्विविधोत्थानस्य मोहोत्थत्वमेव मृषात्वे हेतुरिति द्योतयितुं हिशब्दः ॥४३०॥

तद्व्याचष्टे—यथेति । वेदान्तवाक्यश्रवणाद्वस्त्वनुसारी बोधो यदा भवति तदा भूतान्यविद्याशब्दितानि नश्यन्ति ततो हेत्वभावात्क्षेत्रज्ञत्वाद्युत्थानमपि नश्यतीत्यर्थः ॥४३१॥

**स्वरूपलाभमात्रेण सम्यग्बोधोऽखिलं तमः । यतो हन्ति ततो नासावभ्यासं प्रति वीक्षते ॥३२॥**
**व्यङ्ग्येष्वर्थेषु नाऽऽवृत्त्या व्यञ्जको हन्ति तत्तमः । व्यञ्जकस्य स्वभावोऽयं न प्रयोगमपेक्षते ॥३३॥**
**मोहतत्कार्यनीडो यस्तस्याज्ञानसमन्वयात् । प्रत्यगात्माऽपि तद्ब्रह्म परोक्षमभवन्मृषा ॥३४॥**
**तद्वदद्वयतत्त्वोऽपि तदसंबोधहेतुतः । आत्मा संसारितां यातो यथा कार्ष्ण्यं वियत्तथा ॥३५॥**
**आत्मनो ब्रह्मता यस्माद्ब्रह्मणोऽप्यात्मता स्वतः । तमोमात्रान्तरायत्वात्तद्ध्वस्तावेव साऽऽप्यते ॥३६॥**

**न प्रेत्य संज्ञास्तीत्यस्य विवरणम्**

**सर्वमात्मेतिसम्यग्धीजन्मनैवाखिलं तमः । ध्वंसमेति ततः संज्ञा नाविद्योत्थाऽवशिष्यते ॥३७॥**
**सदोत्पन्नाऽऽत्मनि मितिरुत्पाद्याऽकारणादिधीः । कारणादिधियः पूर्वं प्रतीचि ब्रह्मधीस्ततः ॥३८॥**
**अपास्ताशेषभेदस्य यद्रूपं भेदवद्गतम् । तज्ज्ञानेनैव तज्ज्ञातं तदन्यानवशेषतः ॥३९॥**
**अहेतुफलरूपेण प्रतीचा तद्विलक्षणम् । कार्यकारणवज्जग्ध्वा द्रष्टैवैकोऽवशिष्यते ॥४०॥**
**प्रत्यङ्मात्रेक्षणादात्ममोहतज्जनिराकृतेः । असंभवाद्द्वितीयस्य स्यामपूर्वादिमानहम् ॥४१॥**

अभ्यासमपेक्ष्य बोधोऽविद्यातज्जध्वंसीत्येकदेशिमतं प्रसङ्गात्प्रत्याह—स्वरूपेति ॥४३२॥

ज्ञानमावृत्त्यनपेक्षमज्ञानादिध्वंसीत्येतद्दृष्टान्तेनाऽऽह—व्यङ्ग्येष्विति । विमतमावृत्त्यनपेक्षं तमोनिवर्तकं व्यञ्जकत्वाद्दीपवदित्यर्थः । उक्तस्य हेतोर्व्याप्तिं विवक्षित्वा ब्रूते—व्यञ्जकस्येति ॥४३३॥

ऐक्यज्ञानादज्ञानहानिश्चेदैक्यस्य सदाभावाद्ब्रह्मणि प्रत्यगभिन्ने पारोक्ष्यं ब्रह्माभिन्ने चाऽऽत्मनि संसारित्वं कथमित्याशङ्क्य ब्रह्मणि पारोक्ष्यमज्ञानकृतमित्याह—मोहेति । तद्ब्रह्मापरोक्षं प्रत्यक्चिदेकतानमपि मोहात्परोक्षं भवति मोहतत्कार्याश्रितार्थस्य मोहेनान्वयव्यतिरेकवत्त्वाद्वस्तुतो वस्तुन्यसंभवात्तस्माद्यत्साक्षादित्युक्तलक्षणे ब्रह्मणि पारोक्ष्यं मृषेत्यर्थः ॥४३४॥

तस्मिन्पारोक्ष्यवदात्मनि ब्रह्माभिन्नेऽपि संसारित्वस्याऽऽविद्यत्वं दृष्टान्तेनाऽऽह—तद्वदिति ॥४३५॥

तान्येवेत्यादेस्तात्पर्यमुपसंहरति—आत्मन इति । तस्मान्नार्थभेदोऽस्तीति शेषः । कथं तर्हि मिथो भेदधीरित्याशङ्क्याऽऽह—तमोमात्रेति । ज्ञानादज्ञानध्वस्तौ सविशेषत्वं हित्वा ब्रह्मात्मना तिष्ठतीत्यर्थः ॥४३६॥

न प्रेत्येत्यादेरर्थमाह—सर्वमिति ॥४३७॥

कथं सा नावशिष्यते प्रतीचि ब्रह्मधियस्तदुत्थायाः शेषादित्याशङ्क्याऽऽह—सदेति । अकारणादिधीरिति च्छेदः । आत्मनि कर्तृत्वादिधीरौत्सर्गिकी वाक्यादकर्तृत्वादिधीराधेया । तथाच वाक्योत्थादैक्यज्ञानात्कर्तृत्वादिधियः पूर्वं ध्वंसस्ततो निरिन्धनाग्निवत्प्रतीचि ब्रह्मधीरपि ध्वंसमेतीत्यर्थः ॥४३८॥

तथाऽप्याकाशादिभेददृष्टौ सत्यां कथमविद्योत्थसंज्ञानवशेषस्तत्राऽऽह—अपास्तेति । एकरसस्य प्रतीचो यदाकाशादिभेदवद्रूपमधिगतं तत्प्रत्यग्ज्ञानेनैव ज्ञातं तदविद्याविलसितस्य तन्मात्रत्वादतः प्रत्यग्ज्ञानात्कर्तृत्वादिध्वस्तिकाले भेदधीरपि ध्वस्तेत्यर्थः ॥४३९॥

विशेषसंज्ञाध्वस्तौ शिष्टमर्थमाह—अहेत्विति । नानारूपं जगदेकरूपप्रत्यङ्मात्रत्वेनोपसंहृत्य चिदात्मैवैकः शिष्टो भवतीत्यर्थः ॥४४०॥

एकत्वसंख्यावत्त्वात्प्रतीचि कार्यकारणवत्त्वसंभवादहेतुफलरूपेणेत्ययुक्तमित्याशङ्क्याऽऽह—प्रत्यगिति ॥४४१॥

---

१. सदोत्पन्नेति—आत्मनि धीः अहमाकारा—सदाऽस्ति अकारणादिधीः "अपूर्वमनपरमि"ति शास्त्रोक्ता तु शास्त्रेणाधेया । अकारणादिधियः पूर्वं नाशः ततः ब्रह्मधियोऽपि नाशः ।

२. तदन्येति—गतमित्यनुवर्तते ।

व्यपेततमसस्तत्त्वमागमापायसाक्षिणः । ज्ञानेन गम्यते साक्षात्तावन्मात्रानुरोधिना ॥४२॥
दृष्टिमात्रात्मयाथात्म्यात्कार्यकारणवस्तुनः । नाज्ञातं किंचिदप्यस्ति नानपास्तं तमोऽप्यतः ॥४३॥
क्षेत्रज्ञेश्वरभेदेन संज्ञा नैवेह विद्यते । तद्धेतौ तमसि ध्वस्ते कुतः संज्ञाऽनिमित्ततः ॥४४॥

मू.—सा होवाच मैत्रेय्यत्रैव मा भगवानमूमुहन्न प्रेत्य संज्ञास्तीति स होवाच न वा अरेऽहं मोहं ब्रवीम्यलं वा अर इदं विज्ञानाय ॥१३॥

संज्ञा प्रेत्याऽऽत्मनो नास्तीत्येतच्छ्रुत्वा त्वचूचुदत् । शङ्कमानाऽऽत्मनो नाशं मैत्रेयी पतिमादरात् ॥४५॥

विज्ञानघनत्वनिस्संज्ञत्वयोः विरोधेन प्रश्नः

विज्ञानैकघनोक्त्या च निःसंज्ञवचसा तथा । उक्त्योर्मिथोविरुद्धत्वादात्मा मोमुह्यते मम ॥४६॥
अविरुद्धं सुविस्पष्टं मया तुभ्यं प्रभाषितम् । स्वापराधात्तु मद्वाक्यं विरुद्धार्थं त्वमीक्षसे ॥४७॥
विज्ञानैकघनोक्त्याऽहं कृत्स्नैकात्म्यं तवाब्रुवम् । संज्ञानाशेन चाविद्याहेतूत्थापह्नुतिं तथा ॥४८॥

विशेषसंज्ञानाशेन समाधानम्

विशेषसंज्ञा याऽस्याभूद्विज्ञानात्मादिलक्षणा । सम्यग्धोध्वस्तमोहस्य सा कृत्स्ना विनिवर्तते ॥४९॥
यत्त्वपारमनन्तं च वास्तवं ज्ञानमात्मनः । कूटस्थं तत्स्वतःसिद्धेस्तत्कस्माद्विनिवर्तते ॥५०॥
इतीममर्थं भार्यायै याज्ञवल्क्योऽभ्यभाषत ॥५१॥

अलं वा अरे इत्यादेः विवृतिः

कार्यकारणनाशेऽपि स्वतःसिद्धमनन्यमम् । यद्वस्तु तदलं स्वात्मसंवित्त्यै निरपेक्षतः ॥५२॥

मू.—यत्र हि द्वैतमिव भवति तदितर इतरं जिघ्रति तदितर इतरं पश्यति तदितर इतरँ शृणोति तदितर इतरमभिवदति तदितर इतरं मनुते तदितर इतरं विजानाति यत्र वा अस्य सर्वमात्मैवाभूत्तत्केन कं जिघ्रेत्तत्केन

संज्ञामात्रस्याज्ञानात्मतया निरस्यत्वाविशेषे किमिति प्रत्यगीक्षणान्मोहादिनिराकृतिर्घटादिज्ञानात्कि न स्यादित्याशङ्क्य विशेषमाह—व्यपेतेति ॥४४२॥

घटादिज्ञानात्प्रत्यग्ज्ञाने दर्शितविशेषकृतं फलमाह—दृष्टीति । अतःशब्देन प्रत्यग्ज्ञानोक्तिः ॥४४३॥

नेत्यादेरर्थमुपसंहरति—क्षेत्रज्ञेति । इहेति विद्यावस्थोक्तिः । तदेव स्फुटयति—तद्धेताविति । अनिमित्तत इति च्छेदः । कुतो वा निमित्ततः संज्ञेति संबन्धः ॥४४४॥

निवर्त्यसंज्ञागतमविद्योत्थत्वविशेषणमप्रतीत्य सा हेत्यादेरर्थमाह—संज्ञेति ॥४४५॥

अत्रेत्यादेस्तात्पर्यमाह—विज्ञानेति । उक्तिभ्यामात्मनो मोहे हेतुमाह—उक्त्योरिति ॥४४६॥

विशेषणं प्रकटीचिकीर्षुः स हेत्यादेस्तात्पर्यमाह—अविरुद्धमिति । कथं तर्हि विरोधधीस्तत्राऽऽह—स्वापराधादिति ॥४४७॥

विज्ञानघन एवेत्युक्त्वा संज्ञा नास्तीति वदता कथमविरुद्धमुक्तमित्याशङ्क्याऽऽह—विज्ञानेति ॥४४८॥

उत्तरार्धार्थं प्रपञ्चयति—विशेषेति ॥४४९॥

पूर्वार्धोक्तं व्यक्तीकरोति—यत्त्विति । कौटस्थ्ये हेतुमाह—स्वतःसिद्धेरिति । तत्फलमाह—तत्कस्मादिति ॥४५०॥

स हेत्यादेरर्थमुपसंहरति—इतीममिति । विज्ञानात्मादिसंज्ञा ध्वस्ता चेत्कथं वस्तुज्ञानं हेत्वभावादित्याशङ्क्यालमित्यादेरर्थमाह—कार्येति । स्वतःसिद्धत्वसिद्ध्यर्थमनन्यममित्युक्तम् ॥४५१–४५२॥

१. निवर्त्यायां संज्ञायामविद्योत्थत्वं विशेषणमस्ति तदज्ञात्वा पृच्छतीत्यर्थः ।

कं पश्येत्तत्केन कँ् शृणुयात्तत्केन कमभिवदेत्तत्केन कं मन्वीत तत्केन कं विजानीयात् । येनेदँ् सर्वं विजानाति तं केन विजानीयाद्विज्ञातारमरे केन विजानीयादिति ॥१४॥

यत्राज्ञातात्मतत्त्वात्माऽविद्यासंवीतशेमुषिः । तत्र मिथ्याग्रहग्रस्तो द्रष्टृदृश्यादिभेदधीः ॥५३॥
यत्राज्ञातात्मयाथात्म्यस्तत्तमोपिहितेक्षणः । तत्राविद्योत्थबुद्ध्यादिगुणभूतात्मविन्नरः ॥५४॥
अविद्यामात्रशेषत्वं जगतः प्रागवादिषम् । नर्तेऽविद्यां कार्यमिदं हीति हेतावतः पदम् ॥५५॥
सतोऽभिव्यञ्जकं मानं स्वभावोऽयं मितेर्भवेत् । अविद्यायाः स्वभावोऽयं यदसत्करणं मृषा ॥५६॥
उक्तहेत्वर्थदीप्येतद्धीति तस्य निपाततः । द्वीतं द्विधेतमेकं सत्तद्भावो द्वैतमुच्यते ॥५७॥
उपमार्थ इवेत्येतद्भवतीति क्रियापदम् । तत्रैवाविद्यावस्थायां संज्ञेयं युज्यते मृषा ॥५८॥
ननु द्वैतमिवेत्येतदुपमानं कथं भवेत् । द्वैतं वस्तु न चेदस्ति सर्वस्यैकात्म्यमात्रतः ॥५९॥

द्वैतमिवेत्यत्र इवशब्दार्थः

नैष दोषो यतो दृष्ट एकस्मिन्नपि वस्तुनि । उपमेयोपमाभावो दिग्धीरिव विहायसि ॥६०॥
रामरावणयोर्युद्धं रामरावणयोरिव । यथा प्रसिद्धो जगति तथैवेहापि गम्यताम् ॥६१॥
अद्वैतात्परमार्थाद्वा मायाद्वैतमपीष्यते । तेनोपमार्थसंसिद्धेर्यथा स्वप्नेन्द्रजालयोः ॥६२॥
मिथ्येव भाति सत्योऽपीत्यपि लोकेऽभिधीयते । मिथ्याभावो न नास्तीति वक्तुं कश्चिदपि क्षमः ॥६३॥

यत्र हीत्यादेस्तात्पर्यमाह—यत्रेति । अज्ञातात्मकं तत्त्वमेवाऽऽत्मा यस्य स तथा ॥४५३॥

यदा स्वरूपमविद्योपहतधीरात्मा न वेद तदा स द्वैतदर्शीत्युक्तं प्रपञ्चयति—यत्रेत्यादिना ॥४५४॥

तात्पर्यमुक्त्वाऽक्षराणि व्याचक्षाणो हिशब्दार्थमाह—अविद्येति । अव्याकृतविचारादौ । उक्तेऽर्थे हेतुमन्वयव्यतिरेकाख्यमाख्याति—नेति । अविद्यामात्रं द्वैतमिति पूर्वोक्तस्यैव प्रतिपादके हेतौ हीति पदमतस्तद्युक्तमित्याह—हीतीति ॥४५५॥

ननु प्रपञ्चोऽस्ति न वा? आद्ये नाविद्योपयोगो द्वितीयेऽपि कथमसन्तमविद्याऽपि दर्शयितुमलमित्याशङ्क्य दृष्टान्तेनाऽऽह—सत इति ॥४५६॥

द्वैतस्याऽऽविद्यत्वेऽपि तद्धेतुद्योतित्वं हिशब्दस्य कथमित्याशङ्क्याऽऽह—उक्तेति । दृश्यत्वादिहेतुतो जगतो रजतादिवदविद्यामात्रत्वात्तद्धेतुद्योतकं हीत्येतत्पदमित्यर्थः । हिशब्दस्य यथोक्तहेतुवाचित्वमेव किं न स्यादत आह—तस्येति । निपातानां द्योतकत्वमेवेति हि वैयाकरणसमयः । द्वैतमित्यादि व्याकरोति—द्वीतमिति । इवशब्दार्थसमर्थनार्थं यत्र हीत्यादिवाक्यस्य पर्यवसितमर्थमाह—तत्रेति ॥४५७–४५८॥

द्वैतमस्ति न वा? नाऽऽद्यः ऐकात्म्यविरोधान्न द्वितीयः, एकत्रोपमानोपमेयत्वायोगादिवशब्दासिद्धेरिति शङ्कते—नन्विति ॥४५९॥

आत्मेतरद्वैताभावेऽपीवशब्दस्य नोपमार्थत्वासिद्धिरुपमानोपमेयभावस्यैकत्रापि दृष्टेरित्याह—नेत्यादिना । दृष्टिमेव व्याचष्टे—दिग्धीरिति । नाऽऽकाशादर्थान्तरं दिगस्ति मानाभावात्तथाऽपि दिगिव तद्भातीति सादृश्यधीराकाशे दृश्यते तथाऽऽत्मान्यद्वैताभावेऽपि द्वैतमिव स भवतीत्युक्तिसिद्धिरित्यर्थः ॥४६०॥

एकस्मिन्नुपमानोपमेयत्वसंभवमुदाहरणान्तरेणाऽऽह—रामेति ॥४६१॥

नात्रोपमानोपमेयविवक्षा युद्धमनयोरनुपममित्यस्मिन्नर्थे तात्पर्यादित्याशङ्क्य विधान्तरेणोपमानं समर्थयते—अद्वैतादिति । इवशब्दः संभवतीति शेषः । कल्पितद्वैतेनोपमासिद्धिं स्फुटयति–यथेति । स्वप्ने महेन्द्रजाले च स्वप्नदशा मायाविना च कृतद्वैतवदात्मा स्वाविद्योत्थकर्त्रादिद्वैतरूपो भातीत्यर्थः ॥४६२॥

मिथ्यास्वप्नादिद्वैतस्य कथं सत्यात्मदृष्टान्ततेत्याशङ्क्याऽऽह—मिथ्येति । यथा मिथ्यार्थः सत्यवद्भाति

समस्तव्यस्ततारूपं यो वक्तीहाऽऽत्मनः श्रुतेः । तत्पक्षस्य निषेधोऽयं यत्र हीत्यादिनोच्यते ।।६४।।
तस्यामविद्यावस्थायां स्वप्नावस्थां गतो यथा । घ्रातेतरः सन्नितरं गन्धं घ्राणेन जिघ्रति ।।६५।।
घ्रातृघ्रेयाभिसंबन्धाद्घ्राणाद्याहृतिरिष्यते । जिघ्रतीत्यपि निर्देशः क्रियातत्फलयोर्भवेत् ।।६६।।
उत्तरेष्वपि वाक्येषु योजनेयं यथोदिता । प्रत्यगज्ञानमात्रोत्थं ग्राहकाद्यत्र भण्यते ।।६७।।
क्रियाकारकसंज्ञाया विषयोऽयं समीरितः । अतोऽविद्यासमुच्छित्तावियं संज्ञा निवर्तते ।।६८।।

"यत्र वा अस्य" इत्यादेः विवरणम्

विज्ञानघन इत्युक्तेर्विषयोऽयमथोच्यते । यत्र वा इति वाक्येन ध्वस्ताविद्ये विपश्चिति ।।६९।।
यत्र त्वस्याऽऽत्मनोऽज्ञस्य शास्त्राचार्यप्रसादतः ।।७०।।
प्रत्यग्याथात्म्यविज्ञानभास्वद्भास्करदीधिति—
संप्लुष्टनिखिलाविद्ये तत्र कः केन किं वद । जिघ्रेदैकात्म्यमात्रेण सर्वस्यास्याऽऽत्ममात्रतः ।।७१।।
षष्ठगोचरवत्सर्वं कार्यकारणवज्जगत् । ध्वस्तात्मान्ध्यस्य विदुषः[1] सम्यग्ज्ञानोदये भवेत् ।।७२।।
अव्यावृत्ताननुगतमतिहेतु सदैकलम् । विज्ञानघनमानन्दमैकात्म्यं व्यवतिष्ठते ।।७३।।

तथा वक्तुं प्रथमोऽपिशब्दः । द्वितीयस्तु शास्त्रसमुच्चयार्थः । यद्दृश्यं तत्सत्यमिति व्याप्तेर्मिथ्यापदार्थस्यैवासत्त्वे कुतस्तस्य दृष्टान्ततेत्याशङ्क्याऽऽह—मिथ्याभाव इति । भ्रान्तिबाधप्रसिद्धिविरोधादिति भावः ।।४६३।।

यत्र हीत्यादेस्तात्पर्यमविद्यादशायामेव द्वैतदर्शनं नान्यदेत्युक्त्वा तत्फलमाह—समस्तेति । एष हि द्रष्टेत्यादिवाक्यमिदं सर्वं यदयमात्मेत्यादि च श्रुतिरित्युच्यते । परीक्षकनिर्धारणार्थमिहेत्युक्तम् । आत्मनस्तथाविधं रूपमवास्तवं चेदविरुद्धं वास्तवं चेदविद्यावस्थायामेव द्वैतदर्शनवादिनी श्रुतिर्विरुध्येतेति भावः ।।४६४।।

तदित्यादि व्याचष्टे—तस्यामिति ।।४६५।।

कर्तृकर्मक्रियार्पकपदानामेव श्रवणाद्घ्राणेनेत्ययुक्तमित्याशङ्क्येतर इतरमिति कारकप्रदर्शनार्थमिति भाष्यतात्पर्यमाह—घ्रात्रिति । आदिशब्देन घ्राणस्यार्थयोगप्रयोजकं सर्वं गृह्यते । तथाऽपि फलमिह नाभिलप्यते तद्वाचकाभावादित्याशङ्क्याऽऽह—जिघ्रतीत्यपीति । यथा कारकाणामितर इतरमिति निर्देशस्तथेत्यपेरर्थः ।।४६६।।

तदितर इतरं पश्यतीत्यादिषु पूर्वोक्तन्यायमतिदिशति—उत्तरेष्विति । यत्र हीत्यादिवाक्यार्थमुपसंहरति—प्रत्यगिति ।।४६७।।

तदनुवादेन फलितमाह—क्रियेति । अत इत्यविद्याकृतत्वोक्तिः ।।४६८।।

यत्र वा अस्येत्याद्यवतारयति—विज्ञानेति । एतेभ्य इत्यादिवाक्यस्य यत्र हीत्यादिना व्याख्यानानन्तरमित्यर्थः । अक्षराणि व्याकरोति—ध्वस्तेत्यादिना । विदुषि निवृत्ताविद्ये सति यत्र सर्वमात्मैवाभूत्तत्र कः कर्ता केन करणेन किं कर्म जिघ्रेत्तत्कर्त्रादिकं वदेति संबन्धः ।।४६९।।

तदेव स्फुटयति—यत्रेति । अज्ञस्याऽऽत्मनः शास्त्रादिवशादुत्पन्नतत्त्वज्ञानाद्ध्वस्ताविद्ये स्वरूपे सति यस्यां विद्यादशायां सर्वमात्मैव भवति तत्रेति पूर्ववदन्वयः । सर्वमात्मैवाभूदित्यस्य हेतुरूपमर्थमाह—ऐकात्म्येति ।।४७०–४७१।।

सर्वस्य कर्त्रादेरात्ममात्रत्वे तद्वदेव सत्त्वमाशङ्क्य सर्वमित्यादेस्तात्पर्यमुपसंहरति—षष्ठेति ।।४७२।।

द्वैतस्य तुच्छत्वे तदभेदादद्वैतस्यापि तथात्वमित्याशङ्क्याऽऽह—अव्यावृत्तेति । निःसामान्यविशेषं स्वप्रकाशमेकस्वभावं विज्ञप्तिमात्रं परमपुरुषार्थात्मकमैकात्म्यमवशिष्यते तन्न शून्यतावसानं द्वैतमित्यर्थः ।।४७३।।

---

१. विदुषः तत्त्वज्ञानोदये सर्वं जगत् षष्ठगोचरवत् भवेत् । षष्ठेन्द्रियं नास्त्येव तद्गोचरमपि तथा । मनसः इन्द्रियत्वे तदेव षष्ठं तस्य गोचरः पृथक् नास्त्येव रूपादीनामेव मनोविषयत्वात् सुखादिकं तु साक्षिभास्यत्वात् न मनोगोचरः ।

ग्राहकादिविभागोऽत्र नास्ति तद्धेत्वसंभवात् । चिन्मात्रस्य स्वतः सिद्धेर्विज्ञानघनगीरतः ॥७४॥
आत्माविद्यामनाश्रित्य कारकत्वं न लभ्यते । कारकं चानपाश्रित्य न क्रियेह प्रसिध्यति ॥७५॥
अन्तरेण क्रियां तद्वत्फलं नैव प्रसिध्यति । कारकाद्यात्मना सेयमविद्यैव प्रकाशते ॥७६॥
यत एवमतोऽविद्यासमुच्छित्ताविदं जगत् । व्याकृताव्याकृतं कृत्स्नमात्मतामेति बोधतः ॥७७॥
भूयोऽपि लभते संज्ञां लीनं सत्कारणात्मनि । जगदेतद्यथा तद्वन्नाविद्याविलये भवेत् ॥७८॥

येनेदं सर्वं विजानाति इत्यस्य विवरणम्

ज्ञानोत्पत्तौ[1] न संज्ञाऽस्तीत्यास्तां तावदिहाऽऽत्मनः । अपि सत्यामविद्यायां न संज्ञाऽस्त्यात्मनीदृशी ॥७९॥
ग्राहकादि जगत्सर्वं येन कूटस्थसाक्षिणा । लोकः सर्वो विजानाति जानीयात्केन तं वद ॥८०॥
अचेतने जगत्यस्मिन्साक्ष्येवैकोऽत्र चेतनः । ग्राहकादिर्न तत्रापि साक्षिसिद्धावपेक्ष्यते ॥८१॥
संज्ञेयं किमु विध्वस्तसंसारानर्थकारणे । उदितैकात्म्ययाथात्म्यसम्यग्ज्ञानदिवाकरे ॥८२॥

विज्ञातारमरे इत्यस्य विवरणम्

बोद्धारमपि चापेक्ष्य न संज्ञा प्रत्यगात्मनि । बोद्धृतज्ज्ञानविषयैर्न बोद्धा गृह्यते यतः ॥८३॥
अविचारितसंसिद्धिः प्रमात्रादिस्वलक्षणा । संज्ञेयं प्रथते मोहान्नत्वसौ वस्तुनिश्चितौ ॥८४॥

यत्सिध्यति तन्मात्रादिविभागादेवेति नियमात्कुतः स्वप्रकाशत्वादीत्याशङ्क्याऽऽह—ग्राहकादीति । अत्रेति विद्यावस्थोक्ता ॥४७४॥

को ग्राहकादिविभागहेतुस्तदसंभवो वा कथमित्याशङ्क्य प्रथमं कारकहेतुत्वमविद्याया दर्शयति—आत्मेति । कारकस्य क्रियाहेतुत्वमाह—कारकं चेति । क्रियाकारकव्यवहारः सप्तम्यर्थः ॥४७५॥

फलहेतुत्वं तस्या निर्दिशति—अन्तरेणेति । तर्हि बहूनां हेतूनामुपगमादात्माविद्यैव हेतुरितिपक्षक्षतिरित्याशङ्क्याऽऽह—कारकादीति ॥४७६॥

ग्राहकादिविभागहेतुमुक्त्वा ज्ञानात्तद्ध्वस्तावात्ममात्रत्वेन विभागध्वस्तिमाह—यत इति ॥४७७॥

विमतं पुनः समुत्थास्यत्यात्ममात्रेण समाप्तत्वात्स्वापादौ तथा समाप्तग्राहकादिवदित्याशङ्क्य कारणवत्त्वमुपाधिमाह—भूयोऽपीति ॥४७८॥

येनेत्यादेस्तात्पर्यमाह—ज्ञानेति । ईदृशी ग्राहकादिविभागोद्ग्राहिणीत्यर्थः ॥४७९॥

कैमुतिकन्यायपरं वाक्यमित्युक्त्वा तस्मिन्नर्थे तद्योजयति—ग्राहकादीति । अविद्यावस्थायामपि सर्वसाक्षी नान्यापेक्षः किमु विद्यावस्थायामित्यर्थः ॥४८०॥

जगदपि साक्षिवदनपेक्षं सेत्स्यत्यविशेषात्तत्कथं कूटस्थसाक्षिणा लोको जगज्जानातीत्युक्तमित्याशङ्क्याऽऽह—अचेतन इति । अत्रेति व्यवहारदशोक्तिः । साक्षिणोऽपि तर्हि साधकान्तरापेक्षा किं न स्याच्चिद्रूपस्यापि पुरुषान्तरज्ञानस्य पुरुषान्तरापेक्षया सिद्धिदृष्टेरित्याशङ्क्याऽऽह—ग्राहकादिरिति । न हि निरुपाधिके चिदात्मन्यन्यापेक्षा सिद्धिरनवस्थितेरिति भावः ॥४८१॥

तत्रापीत्यपिना सूचितं येनेत्यादिवाक्यीयन्यायमुपसंहरति—संज्ञेति । साक्षिणोऽन्यस्य चेतनस्याभावादविद्यावस्थायामपि नाऽऽत्मनि ग्राहकादिभेदधीः किं पुनर्विद्यावस्थायामित्यर्थः ॥४८२॥

विज्ञातारमित्यादेस्तात्पर्यमाह—बोद्धारमिति । मातारमपेक्ष्य तत्रापि न ग्राहकादिभेदधीः किमुत साक्षिणीत्यर्थः । मातरि ग्राहकादिभेदज्ञानाभावे हेतुमाह—बोद्धृति ॥४८३॥

कुत्र तर्हि ग्राहकादिभेदधीरिष्टेत्याशङ्क्यानात्मनिश्चितावित्याह—अविचारितेति ॥४८४॥

---

1. स्वापादौ कारणाविद्या वर्तते मुक्तौ सा न विद्यत इति वैलक्षण्यम् ।

यत एवमतः सिद्धं दर्शनं प्रत्यगात्मनः । श्रुत्यादिसाधनं साक्षात्सर्वमात्मेत्युदीरितम् ॥८५॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके द्वितीयाध्यायस्य
चतुर्थं ब्राह्मणम् ॥४॥
श्लोकानामादितः समष्टयङ्काः-५४७८

## अथ द्वितीयाध्याये पञ्चमं ब्राह्मणम्

नमोऽसाधारणज्ञातृज्ञानज्ञेयात्मबोधिने । जग्धाशेषमहाविद्यातज्जानर्थाय विष्णवे ॥ १ ॥
प्रत्यग्ध्वान्तसमुच्छेदि ज्ञानमैकात्म्यनिष्ठितम् । संन्याससाधनं प्रोक्तममृतत्वैकसाधनम् ॥ २ ॥
हेतवोऽपि च तत्सिद्धौ श्रवणादिपुरःसराः । उक्ता यथावत्तत्रैव श्रोतव्यः श्रुतिवाक्यतः ॥ ३ ॥
मन्तव्यो हेतुभिः सूक्ष्मैरुक्तदृष्टान्तबोधितैः । चित्सामान्यचिदुत्पत्तिचिदेकप्रलयात्मभिः ॥ ४ ॥

ऐकात्म्यसिद्धिहेतोरसिद्धिवारणाय मधुब्राह्मणम्

आशङ्क्य हेत्वसिद्धत्वं मधुब्राह्मणमुच्यते । कुतोऽसिद्धत्वमिति चेच्छृणु तद्गदतो मम ॥ ५ ॥
निःसामान्यविशेषत्वाच्चित्सामान्यं कथं भवेत् । चिदुत्पत्तिलयासिद्धिः सांख्यादीन्प्रति वादिनः ॥ ६ ॥
ऐकात्म्यवस्तुतात्पर्यं हेत्वादिच्छद्मनोच्यते । वेदे यतो न हेत्वादि लोकवत्स्याद्विवक्षितम् ॥ ७ ॥
चित्तत्त्वं सदविद्यावत्कारणत्वं निगच्छति । चित्सामान्याद्यतः सिद्धं प्रागप्येतत्प्रसाधितम् ॥ ८ ॥

ब्राह्मणार्थमुपसंहरति—यत इति । अविद्यावस्थायामेव भेदव्यवहारो नान्यत्रेत्येवं यतो निश्चितमतः सर्वमात्मेति यत्प्रतीचः साक्षाद्दर्शनं श्रवणादिसापेक्षमुक्तं तन्मोक्षसाधनं संन्याससहितं सिद्धमित्यर्थः ॥४८५॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां द्वितीयाध्यायस्य चतुर्थं
मैत्रेयीब्राह्मणम् ॥४॥

शास्त्रस्याऽऽद्यन्तयोर्मङ्गलाचरणं कर्तव्यमिति शिष्टाचारं प्रमाणयन्मधुकाण्डसमाप्तौ देवतां प्रणमति—नम इति । यद्वा ब्राह्मणद्वयेन पदार्थौ व्याख्याय वाक्यार्थं व्याख्यातुकामो वाक्यार्थे श्रद्धातिशयकार्यतार्थं देवतां प्रणमति—नम इति । यद्वा मङ्गलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषाण्यायुष्मत्पुरुषाणि चेति न्यायादादिमध्यावसानेषु कृतमङ्गला ग्रन्थाः प्रचारिण इति मत्वा मध्येऽपि मङ्गलमाचरति—नम इति । साधारणा ज्ञातृज्ञानज्ञेया यस्य न सन्ति यस्य चाऽऽत्मनैवाऽऽत्मानं बोधयितुं शीलं यश्च वाक्योत्थधीव्यक्तो ग्रस्तसमस्ताविद्यातत्कार्यस्तस्मै परस्मै व्यापिने प्रतीचे त्रिविधोऽपि प्रह्वीभावोऽस्त्विति योजना ॥१॥

देवतानतिरूपं मङ्गलं कृत्वा वृत्तं कीर्तयति—प्रत्यगिति । यथोक्तं ज्ञानमज्ञानमुच्छिददभ्यासापेक्षमित्याशङ्क्याऽऽह—अमृतत्वेति ॥२॥

कथमिदमुदेति न हि संन्यासादेव केवलात्तदुदयोऽत आह—हेतवोऽपीति । तत्रैवेति पूर्वब्राह्मणोक्तिः । के ते श्रवणादयोऽत आह—श्रोतव्य इति ॥३-४॥

वृत्तमनूद्य ब्राह्मणयोः संगतिमाह—आशङ्क्येति । श्रौतहेतोरसिद्धयाशङ्का न युक्तेत्याक्षिप्य समाधत्ते—कुत इति ॥५॥

जगतः स्थितिकाले चित्सामान्यत्वं यदुक्तं तस्यासिद्धिं साधयति—निःसामान्येति । चिदुत्पत्तिलयाख्यहेत्वंशस्यासिद्धिं विशदयति—चिदिति । ते हि प्रधानादेस्तज्जन्मलयाविच्छन्ति न च त्वयाऽपि चितो जगज्जन्मलयावेष्टुं शक्यौ कूटस्थासङ्गाद्वयत्वोपगमादित्यर्थः ॥६॥

किं चित्सामान्यादिरूपो हेतुर्वस्तुतो नास्ति यथाकथंचिद्वेति विकल्प्याऽऽद्यमङ्गीकरोति—ऐकात्म्येति । लोकशब्दस्तर्कशास्त्रस्याप्युपलक्षणम् ॥७॥

न द्वितीयोऽज्ञाते ब्रह्मणि चित्सामान्यादिसंभवा"त्तद्वेदमि"त्यादौ चोक्तत्वादित्याह—चित्तत्त्वमिति ॥८॥

अभ्युपेत्याप्यसिद्धत्वं तत्सिद्धत्वाभिधित्सया । मधुब्राह्मणमारब्धमियमित्याद्यथोत्तरम् ।। ९ ।।

प्रकारान्तरेण मधुब्राह्मणावतरणम्

प्रतिदेहं लयोत्पत्तिश्रुतेर्ह्यात्मनि शङ्क्यते । भेदोऽतस्तन्निवृत्त्यर्थं मधुत्वेनैकतोच्यते ।।१०।।
उपकार्योपकारित्वभिन्नं यज्जगदीक्ष्यते । उपकार्योपकारित्वात्तस्यादेकात्मतत्त्वकम् ।।११।।
प्रतिज्ञायाथवैकात्म्यं हेतूनुक्त्वोक्तसिद्धये । निगमायोत्तरो ग्रन्थः प्रतिज्ञाया विवक्षितः ।।१२।।
प्रतिज्ञातार्थसिद्ध्यर्थं हेतूनुक्त्वा पृथग्विधान् । हेतोर्निगमनं पश्चात्क्रियतेऽथोत्तरोक्तिभिः ।।०३।।

भर्तृप्रपञ्चमतेन मधुब्राह्मणावतरणं तन्निरासश्च

निदिध्यासनसिद्ध्यर्थं केचिद्व्याचक्षते परम् । मधुब्राह्मणमेतत्तु न युक्तं प्रतिभाति नः ।।१४।।
श्रुत आगमतो योऽर्थस्तर्केणापि समर्थितः । स एवार्थस्तु निष्णातो[1] निदिध्यासनमुच्यते ।।१५।।
शास्त्राचार्यानुभवनैर्हेतुभिश्च समर्थितः । ईदृगैकात्म्यसंबोधो निदिध्यासनमुच्यते ।।१६।।
निदिध्यासनसिद्ध्यर्थो यत्नोऽतोऽयमनर्थकः । प्रत्यग्याथात्म्यसंबोधमात्रत्वादेव हेतुतः ।।१७।।

मू.—इयं पृथिवी सर्वेषां भूतानां मध्वस्यै पृथिव्यै सर्वाणि भूतानि मधु यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मँ शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ।।१।।

मू.—इमा आपः सर्वेषां भूतानां मध्वासामपाँ सर्वाणि भूतानि मधु यश्चायमास्वप्सु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मँ रैतसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ।।२।।

चित्सामान्यादि साधितं चेदसिद्धिशङ्काभावात्किमनेन ब्राह्मणेनेत्याशङ्क्याऽऽह—अभ्युपेत्येति । अनन्तरब्राह्मणस्याऽऽशङ्कितहेत्वसिद्धिनिरासे सामर्थ्यद्योतनार्थमथेत्युक्तम् ।।९।।

हेत्वसिद्धिशङ्कां परिहर्तुं ब्राह्मणमिति संगतिमुक्त्वा प्रकारान्तरेण तामाह—प्रतिदेहमिति । "स वा अयं पुरुषो जायमान" इत्यादिना प्रतिदेहमात्मनो जन्मलयश्रुतेस्तस्मिन्भेदः शङ्कितोऽतस्तन्निवृत्त्यर्थमनेन ब्राह्मणेन सर्वस्य मधुत्वेनाऽऽत्मनैक्यं कथ्यत इत्यर्थः ।।१०।।

कथमिह सर्वस्य मधुत्वोक्त्याऽऽत्ममात्रत्वगीरित्याशङ्क्याऽऽह—उपकार्येति । विमतमेकात्मकमुपकार्योपकारित्वात्स्वप्नद्वैतवदित्यर्थः । प्रथमार्धेन हेतुः साधितः ।।११।।

ब्राह्मणस्य संबन्धान्तरमाह—प्रतिज्ञातेति । उक्तसिद्धये प्रतिज्ञातैकात्म्यसिद्ध्यर्थमिति यावत् । प्रतिज्ञाया हेतुसहिताया इत्यर्थः ।।१२।।

तथाहीत्यादिभाष्यतात्पर्यमाह—प्रतिज्ञातेति । हेतोस्तत्सहितप्रतिज्ञातार्थस्येति यावत् । निगमनस्यापि साधनाङ्गताया वादिभिरिष्टत्वादित्यथशब्दार्थः ।।१३।।

भर्तृप्रपञ्चानां ब्राह्मणारम्भप्रकारमनूद्य निरस्यति—निदिध्यासनेति । श्रवणादित्रयं प्रकृत्य श्रवणमनने व्याख्याय निदिध्यासनं व्याख्यातुमेतद्ब्राह्मणमिति मतमयुक्तमित्यर्थः ।।१४।।

अयुक्ततां स्फोरयति—श्रुत इति । श्रवणादिफलं वाक्यार्थज्ञानं निदिध्यासनमत्रेष्टमित्यर्थः ।।१५।।

कथं ध्यानवाची शब्दोऽन्यथा व्याख्यायते तत्राऽऽह—शास्त्रेति । निदिध्यासनस्य वाक्यार्थज्ञानत्वं पूर्वब्राह्मणे साधितमिति भावः ।।१६।।

अस्तु निदिध्यासनं वाक्यार्थज्ञानं किं तावतेत्याशङ्क्याऽऽह—निदिध्यासनेति । अतःशब्दार्थं व्याकरोति—प्रत्यगिति । तस्य च श्रवणादिनैव सिद्धेरिति शेषः ।।१७।।

१. निष्णातः निश्चितः ।

मू.—अयमग्निः सर्वेषां भूतानां मध्वस्याग्नेः सर्वाणि भूतानि मधु यश्चायमस्मिन्नग्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं वाङ्मयस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥३॥

मू.—अयं वायुः सर्वेषां भूतानां मध्वस्य वायोः सर्वाणि भूतानि मधु यश्चायमस्मिन्वायौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं प्राणस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥४॥

मू.—अयमादित्यः सर्वेषां भूतानां मध्वस्यादित्यस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्नादित्ये तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं चाक्षुषस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥५॥

मू.—इमा दिशः सर्वेषां भूतानां मध्वासां दिशाँ सर्वाणि भूतानि मधु यश्चायमासु दिक्षु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मँ श्रौत्रः प्रातिश्रुत्कस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥६॥

मू.—अयं चन्द्रः सर्वेषां भूतानां मध्वस्य चन्द्रस्य सर्वाणि भूतानि मधु यश्चायमस्मिँश्चन्द्रे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं मानसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥७॥

मू.—इयं विद्युत्सर्वेषां भूतानां मध्वस्यै विद्युतः सर्वाणि भूतानि मधु यश्चायमस्यां विद्युति तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं तैजसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥८॥

मू.—अयँ स्तनयित्नुः सर्वेषां भूतानां मध्वस्य स्तनयित्नोः सर्वाणि भूतानि मधु यश्चायमस्मिन्स्तनयित्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मँ शाब्दः सौवरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥९॥

मू.—अयमाकाशः सर्वेषां भूतानां मध्वस्याकाशस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्नाकाशे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मँ हृद्याकाशस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥१०॥

इयं पृथिवीत्यादेः व्याख्या

क्रियाफलोपभोगार्थं सर्वैरेव स्वकर्मभिः । जन्तुभिः पृथिवी सृष्टा मधु तेषां ततो मही ॥१८॥
पृथिव्याऽप्यात्मभोगार्थं सृष्टाः सर्वेऽपि जन्तवः । पृथिव्या अपि कार्यत्वान्मधु तेऽपि भवन्त्यतः ॥१९॥
पार्थिवानि शरीराणि सर्वेषां देहिनां यतः । पृथिव्या तानि सृष्टानि पृथिव्यन्वयदर्शनात् ॥२०॥

परोक्तं संबन्धं निरस्येयमित्यादि व्याचष्टे—क्रियेति ॥१८॥

अस्या इत्यादि व्याकरोति—पृथिव्येति । सर्वैर्जन्तुभिर्यथा पृथिवी सृष्टा तथेति प्रथमोऽपिशब्दः । द्वितीयोऽपिरभिव्याप्त्यर्थः । तृतीयो जन्तूनां पृथिवीवदिति दृष्टान्तार्थः । चतुर्थस्तु पृथिवीं दृष्टान्तयितुमेव ॥१९॥

तया सर्वेषां सृष्टत्वे युक्तिमाह—पार्थिवानीति । पार्थिवत्वे हेतुः—पृथिवीति ॥२०॥

भूतानां च पृथिव्याश्च मिथःकार्यत्वहेतुतः । भोग्यभोक्तृत्वसंबन्धस्तस्मात्सिद्धः परस्परम् ॥२१॥
भोग्यता प्रथमान्तेन[1] पृथिव्यादेरिहोच्यते । कर्तृता भोक्तृता चैषां षष्ठ्यन्तेनाभिधीयते ॥२२॥
अचेतनांश[2]प्राधान्यात्कार्यकारणतोच्यते । [3]भोक्तृभोग्याभिसंबन्धश्चेतनाचेतनात्मनोः ॥२३॥
सर्वेषामपि भूतानां कार्यकारणसंगतेः । सर्वभूतात्मकत्वं स्याद्यथा सर्वात्मनस्तथा ॥२४॥
संहृत्य[4] स्थूलमाधारं भूतानां च क्षितेस्तथा । तदाधेयोपसंहृत्यै यश्चायमिति शब्द्यते ॥२५॥
अस्यां पृथिव्यां यश्चासौ भास्वद्विज्ञानविग्रहः । अमूर्तो नित्य एवातो न नाशी स्थूलदेहवत् ॥२६॥
स चापि मधु सर्वेषां भूतानां तानि तस्य च । मधु सर्वाणि भूतानि यथा पूर्वमवादिषम् ॥२७॥
सहाध्यात्माधिदैवं हि साधिभूतमिदं जगत् । एकैकस्याऽऽत्मनः कृत्स्नं भोग्यत्वेनावतिष्ठते ॥२८॥
सर्वः सर्वस्य कार्यं स्यात्सर्वः सर्वस्य भोजकः । एवं सति भवेत्सिद्धं यथा पूर्वं प्रपञ्चितम् ॥२९॥

यश्चायमध्यात्मं इत्यादेः विवरणम्

अध्यात्मं यश्च शारीरः पार्थिवांशसमाश्रयः । स चापि मधु सर्वेषां सर्वभूतानि तस्य च ॥३०॥
कार्यकारणरूपेण भोज्यभोक्तृतयोदितम् । चतुष्टयं पृथिव्यादि तस्य तत्त्वमथोच्यते ॥३१॥

भूतानां पृथिव्याश्च कार्यकारणत्वे श्रुतियुक्तिसिद्धे फलितमाह—भूतानामिति ॥२१॥

कर्तृकार्यत्वयोर्भोक्तृभोग्यत्वयोश्च किमत्र द्योतकमित्याशङ्क्याऽऽह—भोग्यतेति । कार्यतेत्यपि वाच्यम् ॥२२॥

कथं मिथोविरुद्धमेकस्मिन्पृथिव्यादौ चतुष्टयमित्याशङ्क्यावान्तरभेदमाह—अचेतनेति । पृथिव्यादेरचेतनांशप्राधान्यात्कार्यत्वादित्रयं चेतनांशप्राधान्याच्च भोक्तृतेत्यविरोध इत्यर्थः ॥२३॥

वाक्याभ्यां सिद्धमुपसंहरति—सर्वेषामिति । यथा मूलकारणं सर्वात्मकं तथा सर्वं सर्वात्मकं सर्वकारणत्वादतो भेदाभावादात्ममात्रं सर्वमितिनिगमनौचित्यमित्यर्थः ॥२४॥

वृत्तमनूद्य वाक्यान्तरमादत्ते—संहृत्येति । पृथिव्या भूतानां च स्थूलदेहभागं चतुर्धा संक्षिप्य तस्मिन्नेव स्थूले यदाधेयं लिङ्गं तस्य चतुर्धासंक्षेपार्थमुत्तरं वाक्यमित्यर्थः ॥२५॥

तदक्षराणि व्याकरोति—अस्यामिति । आत्मवन्नित्यत्वं व्यावर्तयति—अतो नेति । स्थूलोपाधिवैलक्षण्यमतः शब्दार्थः ॥२६॥

चकारसूचितमर्थमाह— स चेति । आद्यवाक्यद्वयोक्तं दृष्टान्तयति—यथेति ॥२७॥

कथं चकारस्योक्तार्थसूचकत्वमित्याशङ्क्यानुभवमनुसृत्याऽऽह—सहेति । उक्तार्थेऽनुभवं प्रमाणयितुं हिशब्दः ॥२८॥

मानान्तरं वक्तुमनुवदति—सर्व इति । सर्वस्य कार्यकारणभावे मिथो भोक्तृभोज्यत्वे चाऽऽत्ममात्रत्वं यथा पूर्वब्राह्मणे प्रपञ्चितं तथा तत्सिद्धं भवेत्तस्मादिदं सर्वमित्यादिवाक्यं चकारस्यार्थानुग्राहकमित्याह—एवं सतीति ॥२९॥

यश्चेत्यादि व्याख्याय यश्चायमध्यात्ममित्यादेरर्थमाह—अध्यात्ममिति । शारीरस्य जीवत्वं व्यावर्तयति—पार्थिवेति । चार्थमाह— स चेति ॥३०॥

अध्यात्मादिविभागोक्तचतुष्टयमनूद्यायमित्यादिवाक्यतात्पर्यमाह—कार्येति ॥३१॥

---

१. प्रथमान्तेन इयं पृथिवी इत्यनेन भोग्यता कार्यता चोक्ते । सर्वेषां भूतानां इति षष्ठ्या भोक्तृत्वं कर्तृत्वं चोक्तम् ।
२. अचतेनांशः पृथिव्यादौ कार्यं सर्वाणि भूतानीत्यत्र अचेनांशस्य भोक्तृत्वम् ।
३. कार्यत्वादित्रयं कार्यत्वं कर्तृत्वं भोग्यत्वं च ।
४. संहृत्य = संक्षिप्य ।

चतुष्टयविभागेन स्वार्थोऽप्यात्मा विभज्यते । अविभागोऽपि तादर्थ्याद्भोक्ताऽतः सोऽत्र गृह्यते ॥३२॥
प्रत्यक्तया यः प्रथते चतुष्टयविलक्षणः । प्रात्यक्ष्यात्सोऽयमित्येवं प्रत्यक्साक्ष्यभिधीयते ॥३३॥
अयमेव स इत्युक्त्वा सामानाधिकरण्यतः । प्रत्यङ्मात्रैक्ययाथात्म्यं चतुर्धोक्तस्य बोध्यते ॥३४॥
पृथिव्यादिषु यः पूर्वं व्याख्यातोऽन्तरबाह्यतः । आत्मैव स इति ज्ञेयस्तदबोधप्रसूतितः ॥३५॥

योऽयमात्मेत्यस्य स्वीयं विवरणम्

अयमित्यस्य शेषः स्याद्योऽयमित्यादिकः परः । एवेत्यवधृतावेतत्संसर्गप्रतिषेधकृत् ॥३६॥
तत्त्वं चतुष्टयस्यास्य प्रत्यगात्मैव केवलः । अव्यावृत्ताननुगतध्वस्ताविद्यातदुद्भवः ॥३७॥

अयमित्यस्य भाष्यानुसारि विवरणम्

प्रकृतात्माभिधानं वा स इत्येतत्पदं भवेत् । अयमित्युच्यते साक्षात्संनिकर्षाच्चतुष्टयम् ॥३८॥
स एवायमिति ज्ञेयो यो द्रष्टव्यतयोदितः । यच्चामृतं स्वभार्यायै याज्ञवल्क्येन भाषितम् ॥३९॥
ब्रह्मेति ध्वस्तसंभेदं यन्नेतीति पुरोदितम् । सर्वं समभवत्कृस्नं यद्याथात्म्यावबोधतः ॥४०॥
पृथिवीं पार्थिवं चांशं शरीरं साधिदैवतम् । जानीयात्सर्वमात्मेति नेति नेत्युपलक्षणम् ॥४१॥

कथमात्मा चतुष्टयस्य स्वरूपमात्मनः स्वार्थत्वादविभागत्वाच्च तद्वैलक्षण्यादित्याशङ्क्याऽऽह— चतुष्टयेति । आत्मनः स्वाविद्यया चतुष्टयात्मनाऽवस्थानाद्विभागसिद्धिरित्यर्थः । आत्माविद्याविवर्तत्वेनाऽऽत्मार्थत्वाच्चतुष्टयस्यात्र चतुष्टये स भोक्ताऽऽत्मा तत्त्वं गृह्यत इति फलितमाह— तादर्थ्यादिति ॥३२॥

अयंशब्दार्थमाह—प्रत्यक्तयेति । यः सशब्दार्थाच्चतुष्टयाद्विलक्षणः सन्प्रत्यग्भावेन भाति स साक्षी प्रत्यगात्मा प्रात्यक्ष्यादयमित्येवमुच्यत इति संबन्धः ॥३३॥

सामानाधिकरण्यार्थमाह—अयमेवेति । चतुर्धेति भोक्तृभोग्यकर्तृकार्यत्वेनाध्यात्माधिदैवयोः प्रत्येकमाधाराधेयत्वेन वेत्यर्थः ॥३४॥

सशब्दार्थं वदन्वाक्यार्थं प्रपञ्चयति—पृथिव्यादिष्विति । अन्तरमाधेयादि बाह्यमाधारादि । चतुष्टयस्याऽऽत्ममात्रत्वे हेतुः—तदबोधेति ॥३५॥

योऽयमात्मेतिशेषस्यायंशब्देन पुनरुक्तिमाशङ्क्याऽऽह—अयमित्यस्येति । अयमित्युक्त आकाङ्क्षा स्यात्तन्निवृत्त्यर्थं विशेषणं योऽयमित्यादि । सामानाधिकरण्यस्य नीलोत्पलवदखण्डार्थत्वं विना संसर्गमात्रविषयत्वेनोपपत्तेर्न चतुष्टयस्य प्रत्यङ्मात्रतेत्याशङ्क्याऽऽह—एवेतीति ॥३६॥

कथमवधारणं चतुष्टयस्याऽऽत्मनि संसर्गनिषेधकं संसर्गपक्षेऽप्ययोगव्यवच्छेदित्वेनोपपत्तेस्तत्राऽऽह— तत्त्वमिति । केवलशब्दार्थं स्फुटयति—अव्यावृत्तेति । अयोगव्यवच्छेदे तु चतुष्टयस्याऽऽत्मनो व्यावृत्ततया निःस्वरूपस्य संसर्गानुपपत्तिरिति भावः ॥३७॥

अयमेवेत्यादेरुद्भाष्यार्थमुक्त्वा भाष्यानुसारेणार्थमाह—प्रकृतेति । मैत्रेयीब्राह्मणे प्रकृतत्वमात्मनो द्रष्टव्यम् ॥३८॥

पदार्थभेदवद्वाक्यार्थभेदोऽपि स्यादित्याशङ्क्याऽऽह—स एवेति । आत्मा वा अरे द्रष्टव्य इत्युक्तो यः स एवायं चतुष्टयात्माऽभेद इत्यक्षरार्थः । इदममृतमित्यस्यार्थमाह—यच्चेति । तदेवेदं चतुष्टयमिति शेषः ॥३९॥

इदं ब्रह्मेत्यस्यार्थमाह—ब्रह्मेतीति । ब्रह्म ते ब्रवाणि व्येव त्वा ज्ञपयिष्यामीत्यध्यायादौ प्रस्तुत्य मूर्तामूर्तब्राह्मणे नेति नेतीति निर्विशेषं यद्ब्रह्मोक्तं तदेवेदं चतुष्टयमित्यर्थः । इदं सर्वमित्यस्यार्थमाह—सर्वमिति । यत्स्वरूपज्ञानात्सर्वं जगत्पूर्णं ब्रह्माभवदित्युक्तं तृतीये तदेवेदमित्यर्थः ॥४०॥

वाक्यत्रयार्थमुपसंहरति—पृथिवीमिति । आधिदैवाध्यात्मयोः स्थूलद्वयं सूक्ष्मद्वयं चेति चतुष्टयं सर्वविशेषाभावोपलक्षितात्ममात्रमिति द्रष्टव्यमित्यर्थः ॥४१॥

मू.—अयं धर्मः सर्वेषां भूतानां मध्वस्य धर्मस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्धर्मे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं धार्मस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ् सर्वम् ॥११॥

प्रथमपर्यायोक्तार्थस्योत्तरेष्वतिदेशः

उत्तरेष्वपि वाक्येषु यथोक्तेनैव वर्त्मना । इममेव तु वाक्यार्थं व्याचक्षीताविचारयन् ॥४२॥
पृथिव्यादीनि भूतानि तदंशाश्च समीरिताः । हिरण्यगर्भलिङ्गांशास्तथा पूर्वोक्तमूर्तयः ॥४३॥
यथोक्ता येन सर्वेऽपि प्रयुक्ताः स्वात्मकर्मभिः । उपकुर्वन्ति नः सर्वान्स धर्म इति सञ्ज्ञितः ॥४४॥
तस्य कार्यं द्विधेहोक्तं सामान्यात्मविशेषतः । पृथिव्यादीह सामान्यं विशेषः पिण्डमात्रकम् ॥४५॥
तत्कार्यस्येह प्रात्यक्ष्यात्तदभेदोपचारतः । प्रत्यक्षवदयं धर्मस्तस्मादेवाभिधीयते ॥४६॥
साधारणः पृथिव्यादिकारी धर्मोऽभिधीयते । यश्चायमिति वाक्येन तथाऽसाधारणाभिधा ॥४७॥
यश्चायमध्यात्ममिति योऽयं मद्देहकृन्मतः । साधारणविशेषात्मा यदपूर्वं तदुच्यते ॥४८॥
प्राजापत्यमपूर्वं यत्सर्वभूतप्रयोजकम् । अध्यात्मं पिण्डकृच्चच्च सोऽयं धर्माभिधोदितः ॥४९॥

मू.—इदँ् सत्यँ् सर्वेषां भूतानां मध्वस्य सत्यस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्सत्ये तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मँ् सात्यस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ् सर्वम् ॥१२॥

तथैवाऽऽचाररूपेण प्रत्यक्षेण यदीक्ष्यते । स एव धर्मः सत्यं स्याद्यद्व्यवस्थाप्रयोजकम् ॥५०॥

इयं पृथिवीत्यादावुक्तमर्थमिमा आपः सर्वेषामित्यादिपर्यायान्तरेष्वतिदिशति—उत्तरेष्विति । निराकार्यस्याऽऽदेयस्य चार्थभेदस्याभावादुक्तव्याख्याने संशयो नास्तीति सूचयति—अविचारयन्निति ॥४२॥

अयं धर्म इत्यस्यार्थं वक्तुं वृत्तमनुवदति—पृथिव्यादीनीति । भूतानि पञ्चोक्तानि तेषामंशाश्च शरीरादयः सूत्रांशाश्च भूतशरीराधारा भूतानां शरीरादीनां च मूर्तयः स्वरूपभूताः पुरेव सूत्रांशा इत्यर्थः ॥४३॥

धर्मशब्दार्थमाह—यथोक्ता इति । प्रयुक्ता भूतादय इति यावत् । स्वात्मकर्मभिः स्वानुरूपाचरणादिभिरित्यर्थः ॥४४॥

तस्य शास्त्रैकगम्यत्वेन पारोक्ष्यादयमितिनिर्देशानर्हत्वशङ्कां परिहर्तुं पातनिकामाह—तस्येति । शास्त्रे सप्तम्यर्थः । सामान्यविशेषभावेन कार्यद्वैविध्यं स्फोरयति—पृथिव्यादीति । इहेति धर्मादि निर्दिश्यते ॥४५॥

तथाऽपि प्रस्तुते किमिति तत्राऽऽह—तत्कार्यस्येति । धर्मकार्यस्य पृथिव्यादेर्व्यवहारभूमौ प्रात्यक्ष्यं तेन कारणस्याभेदमौपचारिकमादाय प्रत्यक्षघटादिवद्धर्मोऽयमित्युच्यते तस्मादयमित्युक्तिरविरुद्धेत्यर्थः ॥४६॥

अस्मिन्पर्याये बहवो धर्मशब्दास्तेषामर्थभेदं वक्तुं यश्चायमस्मिन्धर्म इत्यत्र धर्मशब्दार्थमाह—साधारण इति । वाक्येन तद्गतधर्मशब्देनेत्यर्थः । यश्चायमध्यात्मं धार्म इत्यत्राऽऽत्मनो देहाद्यारम्भकः प्रत्यात्ममसाधारणो धर्म इत्याह—तथेति । "यो वै स धर्मः सत्यं वैतदि"ति सत्यधर्मयोरभेदोक्तेरिदं सत्यमिति पुनरुक्तिशङ्कां परिहर्तुमयं धर्म प्रत्यत्र विवक्षितधर्मशब्दार्थमाह—साधारणेति । उच्यते प्रथमधर्मशब्देनेति शेषः ॥४७–४८॥

किं तदुभयात्मकमपूर्वं तदाह—प्राजापत्यमिति । तस्य साधारणाकारं दर्शयति—यदिति । असाधारणं रूपमाह—अध्यात्ममिति । प्राथमिकधर्मशब्दार्थं निगमयति—सोऽयमिति ॥४९॥

इदं सत्यमित्यत्र सत्यशब्दस्यार्थमाह—तथेति । यथा हैरण्यगर्भमपूर्वं जगदारम्भकं तथा तदेव प्रत्यक्षदृष्टेनानुष्ठीयमानाचारेण यत्प्रतीयते स एवापूर्वशब्दार्थो धर्मः सत्यमित्युच्यते लोके हि वर्णाश्रमव्यवस्थापकं सत्यमिति प्रसिद्धमित्यर्थः ॥५०॥

साधारणविशेषाभ्यां धर्मवत्तदपि द्विधा । साधारणविशेषार्थव्यवस्थाकारणत्वतः ॥५१॥

मू.—इदं मानुषँ सर्वेषां भूतानां मध्वस्य मानुषस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्मानुषे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं मानुषस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥१३॥

धर्मसत्यप्रयुक्तोऽयं लिङ्गपिण्डस्वलक्षणः । विराड्ढिरण्यगर्भश्च सर्वजातिसमन्वितः ॥५२॥

मनुष्यजातेर्ग्रहणं सर्वजात्युपलक्षणम् । इदं मानुषमित्येवं व्याख्या तस्यास्तु पूर्ववत् ॥५३॥

मू.—अयमात्मा सर्वेषां भूतानां मध्वस्यात्मनः सर्वाणि भूतानि मधु यश्चायमस्मिन्नात्मनि तेजोमयोऽमृतमयः पुरुषो यश्चायमात्मा तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥१४॥

पृथिवी शारीर इत्येवं खण्डशो यः पुरादितः । विराड्ढिरण्यगर्भश्चेत्ययमात्मेति तद्वचः ॥५४॥

हिरण्यगर्भभेदानां भूतानां च पृथक्पृथक् । उक्तं मधुत्वं येनातस्तत्सामस्त्यमथोच्यते ॥५५॥

अयमात्मेति निर्देशो विराजः प्रथमो मतः । सप्तम्यन्तेन तत्प्रत्यङ्लिङ्गात्माऽतोऽभिधीयते ॥५६॥

कार्यात्मा कारणात्मा च यदर्थौ भवतः सदा । यश्चायमात्मेत्यत्रोक्तो विज्ञानात्मेति यं विदुः ॥५७॥

मू.—स वा अयमात्मा सर्वेषां भूतानामधिपतिः सर्वेषां भूतानाँ राजा तद्यथा रथनाभौ च रथनेमौ चाराः सर्वे समर्पिता एवमेवास्मिन्नात्मनि सर्वाणि भूतानि सर्वे देवाः सर्वे लोकाः सर्वे प्राणाः सर्व एत आत्मानः समर्पिताः ॥१५॥

यस्मिन्नात्मनि विध्वस्तव्याकृताव्याकृतात्मके । खिल्यदृष्टान्तवचसा विज्ञानात्मा प्रवेशितः ॥५८॥

अत्रापि बहवः सत्यशब्दास्तेषामर्थं भेत्तुं तद्द्वैविध्यमाह—साधारणेति । द्वैविध्ये हेतुमाह—साधारणविशेषेति । यश्चायमस्मिन्सत्य इत्यत्र सामान्यरूपं यश्चायमध्यात्मं सात्य इत्यत्र विशेषरूपमिदं सत्यमित्यत्र मिलितं ग्राह्यमिति भेदः ॥५१॥

इदं मानुषमित्यस्यार्थमाह—धर्मेति । शरीरद्वयं धर्मादिप्रयुक्तं सूत्रादिशब्दितं यज्जातिविशिष्टं सर्वव्यवहारक्षमं सा जातिः सर्वा मानुषशब्दितेत्यर्थः ॥५२॥

इदं मानुषमिति विशेषणान्न सर्वजात्यन्वितत्वमिति चेत्तत्राऽऽह—मनुष्येति । इदं मानुषमित्येवं मनुष्यजातेर्ग्रहणमिति संबन्धः । साऽपि बाह्याध्यात्मिकभेदेन धर्मादिवद्द्विधा निर्दिश्यते तेनेदं मानुषमिति मिलितसर्वजातेर्यश्चायमस्मिन्निति बाह्यभेदस्य यश्चायमध्यात्ममित्याध्यात्मिकभेदस्योक्तिरित्याह—व्याख्येति ॥५३॥

अयमात्मेति पर्यायस्य तात्पर्यमाह—पृथिवीति । इयं पृथिवीत्यारभ्य मानुषपर्यायपर्यन्तेन संदर्भेण विराट्सूत्रमित्युच्यमानावयविनः पृथिवी शारीर इत्यनेन क्रमेणावयवशो विभाग उक्तस्तद्वतोऽवयविनो निर्देशोऽयमात्मेत्यादिना क्रियत इत्यर्थः ॥५४॥

आद्ये पर्याये शारीरशब्देनैवास्य गतत्वात्पौनरुक्त्यमित्याशङ्क्याऽऽह—हिरण्यगर्भेति ॥५५॥

अयमात्मेत्यत्राऽऽत्मशब्दार्थमाह—अयमिति । विराजः सूत्रस्य च यन्मिलितं रूपं तस्यायमात्मेत्यत्राऽऽत्मशब्दः प्रथमान्तो वाचक इत्यर्थः । यश्चायमस्मिन्नात्मनीत्यत्र सप्तम्यन्तात्मशब्देन विराज एवोक्तिरित्याह—सप्तम्यन्तेनेति । निर्देशो विराज इति पूर्वेण संबन्धः । विराजोऽभ्यन्तरो लिङ्गात्मा तेजोमयादिशब्देनोच्यत इत्याह—तत्प्रत्यङ्ङिति । अतस्तेजोमयादिशब्दादिति यावत् ॥५६॥

यश्चायमात्मेत्यत्राऽऽत्मशब्दस्य चैतन्याभासजीववाचित्वमाह—कार्येति । सोऽत्राऽऽत्मशब्देनोक्तः शेषोति शेषः । शेषिणोऽप्रसिद्धिं निरस्यति—विज्ञानेति ॥५७॥

स वा अयमात्मेत्यत्राऽऽत्मशब्दस्यार्थमाह—यस्मिन्निति । अन्त्ये पर्याये यश्चायमात्मेति श्रुतो जीवो

ब्रह्मविद्याहतध्वान्ते तस्मिन्ब्रह्मणि निष्ठिते । तमस्तदुत्थकार्याणामत्यन्तासम्भवादतः ॥५९॥

"स वा अयमात्मा" इत्यस्यार्थः

योऽसावविद्यया देही संसारीवाप्यभूत्पुरा । सोऽयं साक्षात्परं ब्रह्म विद्यया वर्ततेऽधुना ॥६०॥

ध्वस्ताज्ञानतदुत्थोऽयं संविन्मात्रसतत्त्वकः । अनन्तापार आत्मैव स्वमहिम्नि व्यवस्थितः ॥६१॥

अपूर्वानपरामध्यप्रत्यग्याथात्म्यवित्तये । स वा इत्यादिको ग्रन्थः सदृष्टान्तोऽभिधीयते ॥६२॥

ब्रह्मास्मीतिपरिज्ञानध्वस्तध्वान्तत्वकारणात् । राजेति राजनाद्भास्वदविलुप्तात्मदर्शनात् ॥६३॥

तथाऽधिपतिशब्देन स्वातन्त्र्यमभिधीयते । स्वार्थः प्रत्यक्तदर्थत्वात्सहेतोर्जगदात्मनः ॥६४॥

प्रत्यग्विज्ञप्तिमात्रेण समाप्तिं जगदात्मनः । आविश्चिकीर्षुः साक्षान्नस्तद्यथेति परा श्रुतिः ॥६५॥

चक्रनाभौ यथा प्रोताश्चक्रनेमौ च बाह्यतः । अराः प्राणादयस्तद्वदोताः प्रोताः परात्मनि ॥६६॥

रथनाभौ इत्यादेः भर्तृप्रपञ्चटीका

व्याचक्षतेऽन्यथैवेमं दृष्टान्तं केचिदात्मनः । समस्तादिप्रतिज्ञार्थसिद्धये ब्रह्मवादिनः ॥६७॥

एकीकृत्य स्वमात्मानमक्षरे परमात्मनि । चक्रनाभिवदात्मानं कल्पयित्वा विचक्षणः ॥६८॥

शरीरं नेमिवच्चैतद्देवताद्यरवज्जगत् । कल्पयित्वा निदिध्यासेत्तद्भावाविष्टधीः सदा ॥६९॥

अनेन ध्यानमार्गेण ध्यायमानस्य सर्वदा । तप्तलोहवदेकत्वं भवत्यावृत्तिदुर्लभम् ॥७०॥

यस्मिन्परस्मिन्नविद्यातज्जहीने यथा सैन्धवखिल्य इत्यादिदृष्टान्तपूर्वादिवं वा अर इत्यादिवाक्यादैक्येन बोधितः सोऽत्राऽऽत्मेत्यर्थः ॥५८॥

अविद्यातज्जहीनं ब्रह्म जीवो विपरीतस्तत्कथमैक्यमित्याशङ्‌क्याऽऽह—ब्रह्मेति । तस्मिञ्जीवे ब्रह्मणि निश्चयेन स्थिते तद्विद्यया निरस्ताज्ञाने सति सर्वात्मना कार्यकारणास्पर्शात्प्रतिबन्धाभावाद्युक्तं तस्य स्वाभाविकं ब्रह्मैक्यमित्यर्थः ॥५९॥

आत्मार्थमुक्त्वा स वा अयमितिपदत्रयार्थमाह—योऽसाविति । अधुना विद्यादशायामित्यर्थः ॥६०॥

विद्याफलभूतमात्मानमनन्तरोक्तं प्रपञ्चयति—ध्वस्तेति ॥६१॥

उक्तेऽर्थे वाक्यमवतारयति—अपूर्वेति ॥६२॥

तद्गतराजशब्दार्थमाह—ब्रह्मेति । ज्ञानादज्ञाननिरासादप्रतिबन्धस्वरूपस्फुरणेन भानाद्ब्रह्मविद्राजेत्युक्तिमर्हतीत्यर्थः ॥६३॥

अधिपतिशब्दस्य राजशब्देन पौनरुक्त्यमाशङ्‌क्याऽऽह—तथेति । राजशब्देन राजनवदित्यर्थः । स्वातन्त्र्यं साधयति—स्वार्थ इति ॥६४॥

तद्यथेत्यादेस्तात्पर्यमाह । प्रत्यगिति । कार्यकारणप्रपञ्चस्य ब्रह्ममात्रेणावसानमाविष्कर्तुमिच्छन्ती परा श्रुतिर्दृष्टान्तद्वारा प्रवृत्तेत्यर्थः ॥६५॥

तत्पदानि व्याचष्टे—चक्रेति ॥६६॥

तद्यथेत्यादिवाक्यस्य भर्तृप्रपञ्चव्याख्यामुत्थापयति—व्याचक्षत इति । दृष्टान्तग्रहणं दार्ष्टान्तिकोपलक्षणम् । अन्यथाव्याख्यानफलं सूचयति—आत्मन इति । सप्रपञ्चोऽयमात्मेति प्रतिज्ञेदं सर्वं यदयमात्मेत्यत्र स्थिता तदर्थसिद्ध्यर्थमन्यथा व्याख्यानमित्यर्थः ॥६७॥

तदेव स्फुटयति—एकीकृत्येति । न तावदात्मा परस्माद्भिद्यत ऐक्यश्रुतेः स च चक्रनाभिस्थानीयो देहं पञ्चभूतात्मकं चक्रनेमिस्थानीयं देवतादि जगदरवदात्मनि भूतेषु चार्पितं कल्पयित्वा तत्रैव कल्पितेऽर्थे स्थिरबुद्धिः सदा ध्यानं कुर्यादित्यर्थः ॥६८-६९॥

किमनेन ध्यानेनेत्याशङ्‌क्याऽऽह—अनेनेति । सदातनमेकत्वं न ध्यानफलमित्याशङ्‌क्य बन्धध्वस्तिस्तस्येति मत्वा विशिनष्टि—आवृत्तीति ॥७०॥

एतामवस्थामापन्नो ध्यातृत्वाद्विनिवर्तते । अविद्यातिमिरान्धानां ध्येयत्वमधिगच्छति ॥७१॥
निश्चित्याचिन्त्यमेतद्यो योगिनां निलयं परम् । यं प्राप्य न निवर्तन्ते निर्वाणं परमं गताः ॥७२॥
प्रत्येकं प्राणिनां ह्येतद्ब्रह्मचक्रमवस्थितम् । असंबोधात्तु तैः सर्वैः प्राणिभिर्नानुभूयते ॥७३॥

भर्तृप्रपञ्चमतखण्डनारम्भः

वैश्वानरवरात्केचिदेवं व्याचक्षते स्फुटम् । अक्षरानन्वयात्त्याज्या व्याख्येयं साध्वपीदृशी ॥७४॥
सामर्थ्यादपि संप्राप्तो न चेदक्षरपूर्वकः । तादृङ्नोपास्य एवेति प्राहुरागमवेदिनः ॥७५॥
[१]प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि । अदृष्टशतभागोऽपि न कल्प्यो निष्प्रमाणकः ॥७६॥
यथोक्तचक्रविन्यासो न श्रुतोऽक्षरपूर्वकः । न चाप्युपासनपदं कृत्स्नेऽपि ब्राह्मणे श्रुतम् ॥७७॥
नाभिनेमिद्वयस्थाने दृष्टान्तत्वेन संमते । दार्ष्टान्तिकोक्तावात्मैव यतः साक्षादिह श्रुतः ॥७८॥
समर्पितत्वं प्राणादेः श्रूयते प्रत्यगात्मनि । भूतेषु देवतादेस्तदश्रुतं गृह्यते कथम् ॥७९॥
बहिरन्तर्विभागोऽस्य कार्यकारणता तथा । तदेतदिति वाक्येन प्रतीचोऽत्रैव वार्यते ॥८०॥
अथ योऽन्यामिति तथा भेददृष्टिनिराकृतेः । उपास्योपासनविधिर्न सम्यगिति मे मतिः ॥८१॥

एकत्वमापन्नोऽपि ध्यानमातनुयादिति चेन्नेत्याह—एतामिति । न केवलमैक्यफलं ध्यातृत्वनिवृत्तिः किंतु ध्येयत्वाप्तिरपीत्याह—अविद्येति ॥७१॥

ध्येयस्वरूपं निरूपयति—निश्चित्येति । यं ज्ञात्वा मुक्ताः सन्तो न पुनः संसरन्ति तं प्रकृताचिन्त्यं परमात्मानं ज्ञानिनामयनं प्रत्यक्तया निश्चित्य यः स्थितः स ध्येयत्वमज्ञान्प्रत्याप्नोतीत्यर्थः ॥७२॥

चक्रक्लृप्तिध्यानं तत्फलं चेति परेषां प्रक्रियां प्रदर्श्य तेषामेव प्रक्रियान्तरमाह—प्रत्येकमिति । ब्रह्मणः सर्वप्राणिहृदयसंनिधानमशेषश्रुतिस्मृतिप्रसिद्धमिति हिशब्दार्थः । यदि ब्रह्माख्यं चक्रं सर्वप्राणिनां हृदि सर्वदा स्थितं किमिति तर्हि सर्वैर्नानुभूयते तत्राऽऽह—असंबोधादिति ॥७३॥

पूर्वपक्षमुपसंहरति—वैश्वानरेति । आपातरमणीयाऽपीयं व्याख्या न स्वीकार्या श्रुत्यक्षरबाह्यत्वादित्याह—अक्षरेति । ईदृशी यथोक्तप्रक्रियाविशिष्टेति यावत् ॥७४॥

दृष्टान्तसामर्थ्यादात्मनो नानारसत्वदृष्टेरस्मदिष्टोऽर्थो न श्रुतिबाह्य इत्याशङ्क्याऽऽह—सामर्थ्यादिति । यद्यपि दृष्टान्तसामर्थ्यात्त्वदिष्टोऽर्थो भाति तथाऽपि नासौ श्रौतोऽस्मिन्प्रकरणे तद्वाचकपदाभावादपूर्वादिवाक्यविरोधाच्च । अतो नाऽऽत्मनोऽनेकरूपत्वाय दृष्टान्तः तथाचाऽऽर्थिकोऽप्यर्थो नाऽऽदेयो "यश्चार्थादर्थो न स चोदनार्थः" इति स्थितेरन्यथा चातिप्रसक्तिरित्यर्थः ॥७५॥

किंच ब्रह्मणोऽन्यदपि न नानारसं कल्पकाभावादन्यथाऽतिप्रसङ्गादित्याह—प्रमाणवन्तीति ॥७६॥

ननु न ब्रह्म समस्तादिरूपं कल्प्यते किंतु चक्रविन्यासः श्रुत्यैव श्राव्यते नेत्याह—यथोक्तेति । यत्तु निदिध्यासेदिति तत्राऽऽह—न चेति ॥७७॥

किंच दृष्टान्तस्थस्य न सर्वस्य दार्ष्टान्तिकेऽन्वयस्तद्भावविरोधादतो न ब्रह्म समस्तादिरूपमित्याह—नाभीति ॥७८॥

यत्तु चक्रनाभिस्थानीये प्रतीचि चक्रनेमिस्थानीयदेहात्मकभूतेषु च देवतादिजगदरवदर्पितमिति तत्राऽऽह—समर्पितत्वमिति ॥७९॥

प्रधानवाक्यविरोधाच्च न समस्तादिरूपं ब्रह्मेत्याह—बहिरिति ॥८०॥

इतश्च ब्रह्म न समस्तादिरूपमित्याह—अथेति । ननु देवतान्तरे दृष्टिर्निन्दितत्वान्नेष्टा ब्रह्मदृष्टिस्त्वनिन्दितोपपद्यते तत्तस्मिन्नुपास्तिविधिप्रवृत्तेः सप्रपञ्चत्वं न हि निष्प्रपञ्चमुपास्यते तत्राऽऽह—उपास्येति । न हि भेदं विनोपास्यादिप्रकारसंभवः । प्रकृते च भेददृष्टिरपोद्यते तन्नात्रोपास्तिविधिरित्यर्थः ॥८१॥

---

१. अत्र मीमांसावार्तिककारसम्मतिमाह—प्रमाणेति । तन्त्रवा० २-१-५ ।

शुद्धब्रह्मणः उपास्यत्वनिषेधः

अज्ञानमात्रव्यवधेर्ब्रह्मैकात्म्यफलस्य च । ब्रह्मविद्यातिरेकेण तत्प्राप्तौ नापरा क्रिया ॥८२॥
यद्वाचाऽनभ्युदितं मनुते मनसा न यत् । तदेव ब्रह्म विद्धि त्वं न त्विदं यदुपासते ॥८३॥
उपासिक्रियया व्याप्तिरब्रह्मत्वस्य लक्षणम् । श्रुत्याऽकारि यतस्तादृक्कथं ब्रह्मेत्युपास्यते ॥८४॥
दृश्यते त्वग्र्यया बुद्ध्या मनसैवेति यद्वचः । तदात्मविद्याविध्यर्थं नोपासनविधायकम् ॥८५॥
रजस्तमोनुविद्धेन यतो न ब्रह्म गम्यते । शुद्धचेतस्तया तस्माद्विद्याद्ब्रह्मान्तरात्मनि ॥८६॥
यद्वाऽनात्माभिसम्बन्धात्पूर्वमैकात्म्यनिष्ठिता । सर्वप्राणभृतां बुद्धिरित्यर्थो वचसो भवेत् ॥८७॥
एषोऽर्थो वचसस्तस्य न तूपासाविधिर्भवेत् । प्रध्वस्तभेद ऐकात्म्ये नोपासनविधिर्यतः ॥८८॥
चक्रक्लृप्तिरतोऽसाध्वी श्रुत्यादिमितिबाह्यतः । तदेतदितिवाक्यार्थो ग्राह्योऽतः सम्भवान्मितेः ॥८९॥

तस्मात्तत्सर्वमभवदिति विद्याफलोपसंहरोऽत्रेति भावान्तरम्

तदाहुरिति वाक्येन ब्रह्मविद्याप्रयोजनम् । साक्षेपं प्रागुपन्यस्तं तस्यायं निर्णयः कृतः ॥९०॥

मू.—इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच । तदेतदृषिः पश्यन्नवोचत् । तद्वां नरा सनये दँस उग्रमाविष्कृणोमि तन्यतुर्न वृष्टिम् । दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्र यदीमुवाचेति ॥१६॥

आत्मेत्येवेति सूत्रस्य व्याख्येयं सम्यगात्मनः । पञ्चभिर्ब्राह्मणैः श्रुत्याऽकारि कृत्स्नात्मबुद्धये ॥९१॥

ब्रह्म सप्रपञ्चं उपास्यत्वात्प्राणवदित्यत्रासिद्धिमुक्त्वा तदुपास्तिरात्मनो ब्रह्मत्वाय फलान्तराय वेति विकल्प्याऽऽद्यं दूषयति—अज्ञानेति । न द्वितीयः फलान्तराभावान्न हि जीवस्याविद्याध्वस्तौ ब्रह्माप्तिं विनाऽन्यदिष्टं ज्ञानादेव च तत्सिद्धेर्व्यर्था तदुपासेति चार्थः ॥८२॥

उपास्यत्वहेतोरुपास्तिप्रयुक्तफलवत्त्वोपाधिना व्याप्यत्वासिद्धिमुक्त्वा श्रुतिविरोधमाह—यदिति ॥८३॥

नन्वसंस्कृतवागाद्यगोचरत्वेनोपास्यत्वनिषेधेऽपि ब्रह्मणः संस्कृततद्गम्यत्वेनोपास्यत्वमविरुद्धमित्याशङ्क्य श्रुत्यर्थमाह—उपासीति । तादृगित्युपासिक्रियाव्याप्तमिति यावत् । उपास्यतेऽनुष्ठीयतेऽङ्गीक्रियत इत्यर्थः ॥८४॥

ननु ब्रह्मोपास्तिविधिरपि क्वचिदस्ति तथाच श्रुत्यैव श्रुतेरपसारितत्वादुपास्यं ब्रह्मेति तत्राऽऽह—दृश्यते त्विति ॥८५॥

विद्याविधानस्य प्रागपहस्तितत्वात्कथमस्य तदर्थतेत्याशङ्क्याऽऽह—रज इति । ब्रह्मविद्यार्थं बुद्धिशुद्धिविध्यर्थं यथोक्तं वाक्यमित्यर्थः ॥८६॥

यथोक्ते वाक्ये शुद्धिविधिवाचकाभावात्कथं तदर्थतेत्याह—यद्वेति । विषयानुषङ्गात्प्रागेव सर्वेषां धीर्जन्ममात्रेण चिदाकारेत्येषोऽर्थो वाक्यस्येष्यतेऽग्र्ययेतिविशेषणानुगुण्यादित्यर्थः ॥८७॥

ब्रह्मोपास्तिविधायकत्वेन शङ्कितश्रुतेर्गत्यन्तरमुपसंहरति—एष इति ॥८८॥

ब्रह्मणः समस्तादिरूपत्वे मानाभावात्तद्विरोधाच्चायुक्ता भर्तृप्रपञ्चव्याख्येति निगमयति—चक्रेति । परपक्षस्योपेक्ष्यत्वमुक्त्वा स्वपक्षस्याऽऽदेयत्वमाह—तदिति । तदेतद्ब्रह्मापूर्वमित्यादिवाक्यस्यार्थस्तद्यथेत्यादिवाक्ये विवक्षितो ग्राह्यः पक्षान्तरायोगोक्तेरैकरस्यावेदकागमभावाच्चेत्यर्थः ॥८९॥

तस्मात्तत्सर्वमभवदिति विद्याफलमुक्तं तृतीये तदत्रोपसंह्रियत इति पक्षान्तरमाह—तदिति ॥९०॥

तद्यथेत्यादि व्याख्यायेदं वैतदित्याद्यवतारयितुं वृत्तमनुद्रवति—आत्मेतीति । विद्यासूत्रं तृतीये प्रस्तुतं तस्येयं व्याख्या पञ्चभिरतीतब्राह्मणैः श्रुत्या सम्यगेव कृता सा च त्वमर्थस्याऽऽत्मनो यत्कृत्स्नं पूर्वं तदर्थो ब्रह्म तदात्मत्वसाक्षात्कारहेतुरिति योजना ॥९१॥

**समाप्ता ब्रह्मविद्येयं कैवल्यावाप्तयेऽखिला । यामवोचत्स्वभार्यायै याज्ञवल्क्योऽतिविस्तरात् ॥९२॥**

ब्रह्मविद्यास्तुतये आख्यायिका आरभ्यते

**यथोक्तब्रह्मविद्याया इत आरभ्य भण्यते । आख्यायिकेयं स्तुत्यर्था प्रवृत्त्यङ्गतया परा ॥९३॥**
**आख्यायिकार्थं मन्त्राभ्यां व्याचष्टे श्रुतिरादरात् । श्रुतिमन्त्रस्तुतो ह्यर्थ आदेयत्वं निगच्छति ॥९४॥**
**अवाप्तपुरुषार्थोऽपि यामरक्षच्छचीपतिः । प्रत्यग्विद्यैव तेन स्यादुदारफलसाधनम् ॥९५॥**
**महता च यतोऽश्विभ्यामायासेनार्जिता पुरा । ब्रह्मविद्या ततो नास्या मुक्तौ स्यात्साधनं परम् ॥९६॥**
**निःशेषपुरुषार्थानां कैवल्योत्तमता यथा । साधनानामपि तथा तद्विद्योत्तमसाधनम् ॥९७॥**

अश्व्याथर्वणयोः यद्वृत्तं तस्य स्पष्टं विवरणम्

**अश्व्याथर्वणयोर्वृत्तं ब्रह्मविद्याप्तिकारणात् । यत्प्रागाविष्कृतिस्तस्य मन्त्राभ्यां क्रियतेऽञ्जसा ॥९८॥**
**अश्विभ्यां प्रार्थितोऽथर्वा मधुविद्यामिमां किल । तावथर्वाऽब्रवीदिन्द्रश्छिन्द्यान्मे ब्रुवतः शिरः ॥९९॥**
**अतो भयादिमां विद्यां युवाभ्यां न ब्रवीम्यहम् । तमूचतुः पुरैवाऽऽवामिन्द्रच्छेदनतः शिरः ॥१००॥**
**छित्वा तवाश्व्यं संधाय शिरः श्रोष्यावहे ततः । ब्रूह्यतोऽश्व्येन शिरसा मधुविद्यां विमुक्तये ॥ १ ॥**
**एवमस्त्वित्यनुज्ञाते छित्वा तस्याथ तच्छिरः । समधत्तां शिरोऽश्वस्य तेन विद्यामुवाच सः ॥ २ ॥**
**पुनश्छिन्नेऽथ शिरसि तेनेन्द्रेणाश्विनावपि । समधत्तां शिरस्तस्य विद्यां स्वशिरसाऽथ सः ॥ ३ ॥**
**शेषामवोचदश्विभ्यामृतायन्नात्मनो वचः । यत एवमतस्तस्मात्सत्यं रक्ष्यं प्रयत्नतः ॥ ४ ॥**
**इदं वै तन्मधु प्रोक्तं यत्तत्प्रकरणान्तरे । दध्यङ् ह वा आभ्यामिति श्रूयते ब्राह्मणोक्तितः ॥ ५ ॥**

व्याख्यातेऽपि सूत्रे ब्रह्मविद्या नाद्यापि स्पष्टीकृतेत्याशङ्क्याऽऽह—समाप्तेति ॥९२॥

सा सफला समाप्ता चेदुत्तरग्रन्थवैयर्थ्यमित्याशङ्क्याऽऽह—यथोक्तेति । स्तुतेर्वैफल्यमाशङ्क्याऽऽह—प्रवृत्तीति ॥९३॥

ब्रह्मविद्यां स्तोतुमानीता याऽऽख्यायिका तदर्थे वक्तव्ये तस्या इत्यादि भाष्यं व्याचष्टे—आख्यायिकार्थमिति । मन्त्रौ वक्ष्यमाणौ । श्रुत्युक्तार्थस्य मन्त्राभ्यामुक्तिरनर्थिकेत्याशङ्क्याऽऽह—श्रुतीति । आदेयत्वे स्तुत्यतिरेको हेतुरितिद्योतको हिशब्दः ॥९४॥

स्तुतिस्तर्हि कीदृशीत्याशङ्क्याऽऽह—अवाप्तेति । सैव प्रत्यग्विद्येति योज्यम् । तेन कृतकृत्यस्यापि तत्पालनेनेत्यर्थः ॥९५॥

विद्यायाः स्तुत्यन्तरमाह—महता चेति ॥९६॥

स्तुत्यन्तरमाह—निःशेषेति ॥९७॥

विद्यास्तुतिप्रकारं प्रदर्श्याऽऽख्यायिकार्थं मन्त्राभ्यामित्यत्रोक्तमनुवदति—अश्वीति ॥९८॥

मन्त्राभ्यामाविष्क्रियमाणमाख्यायिकार्थं संक्षिपन्प्रवर्ग्यप्रथमाध्यायस्थाख्यायिकाश्रुतेरर्थमाह—अश्विभ्यामित्यादिना । किलेति श्रुतिमात्रसिद्धतया स्वार्थस्य परोक्षत्वोक्तिः । ततोऽश्वीयशिरोवशादिति यावत् । इन्द्रप्रयुक्तभयाभावोऽतःशब्दार्थः । ब्राह्मणानुज्ञानन्तरं तदीयशिरश्छेदस्यानुज्ञाधीनतया निर्दोषत्वार्थोऽथशब्दः । विद्याप्रवचनोपक्रमानन्तर्यं पुनःशब्दार्थः । शिरश्छेदानन्तर्यमथशब्दार्थः । स्वशिरःसंधानानन्तरमतिहृष्टिर्विद्याशेषदानहेतुरथेत्युच्यते । किमर्थं ब्राह्मणो जीवितसंदेहे प्रवृत्तस्तत्राऽऽह—ऋतायन्निति । तस्य तात्पर्यमाह—यत इति । प्राणसंशयमापन्नोऽपि यस्मादृषिः सत्यं रक्षितवांस्तस्माज्जीवितादपि सत्यं रक्ष्यं श्रेयोर्थिभिरित्यर्थः । असत्यप्रसङ्गेऽपि तदकरणं प्रयत्नः ॥९९–१००–१०१–१०२–१०३–१०४॥

आख्यायिकार्थं व्याख्यायेदमित्यादि व्याचष्टे—इदमिति । यत्प्रवर्ग्यप्रकरणे मधु (१२.१) सूचितं न व्यक्तीकृतं तदिदमेव य"दियं पृथिवी"त्यादिनोक्तमित्यर्थः । कथं प्रकरणान्तरेण मधु सूचितमत आह—दध्यङ्ङिति ।

मधुब्राह्मणमेतत्तद्यत्प्रागुक्तमभूत्स्फुटम् । दध्यङ्ङाथर्वणोऽश्विभ्यां यदुवाचाऽऽत्मबोधनम् ॥ ६ ॥
अश्व्याथर्वणयोरेतत्कर्म पश्यन्नृचाऽब्रवीत् । ऋषिरार्षेयदृष्ट्यैव तदेतदभिधीयते ॥ ७ ॥

तद्वां नरा सनये इत्यादेर्विवरणं सत्यपरिपालनं मरणादपि श्रेयः

आविष्करोमि तत्कर्म युवयोरद्य हे नरौ । लाभाय सनये क्रूरं चक्रथुर्यद्रहस्यगौ ॥ ८ ॥
वृष्टेरागमनं यद्वत्स्तनयित्नुः प्रबोधयेत् । रहस्यं युवयोः कर्म तद्वदाविष्करोम्यहम् ॥ ९ ॥

मू.—इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच । तदेतदृषिः पश्यन्नवोचत् । आथर्वणायाश्विना दधीचेऽश्व्यँ् शिरः प्रत्यैरयतम् । स वां मधु प्रवोचदृतायन्त्वाष्ट्रं यद्दस्रावपि कक्ष्यं वामिति ॥१७॥

अश्वस्य शिरसा वां यदवोचन्मध्वसावृषिः । दधीचोऽश्व्यं शिरश्छित्वा निकृत्यास्य शिरोऽश्विनौ ॥१०॥
संधत्तां सोऽश्वशिरसा युवाभ्यां मध्वथाब्रवीत् । ऋतायन्सत्यमात्मानं कर्तुमिच्छन्नसावृषिः ॥११॥
प्राणसंशयमापन्नस्तस्माच्चैवावसीयते । आत्मनो मरणेनापि सत्यं रक्ष्यं प्रयत्नतः ॥१२॥
आदित्यविषयं त्वाष्ट्रं मध्ववोचदथर्वणः । हे दस्रावपि कक्ष्यं यत्प्रत्यग्याथात्म्यदर्शनम् ॥१३॥
उपक्षयकरौ व्याधेर्दस्रौ स्यातामतोऽश्विनौ । न केवलं त्वाष्ट्रमेव कक्ष्यमप्यब्रवीन्मधु ॥१४॥
प्रवर्ग्याध्याययोरेवं त्वाष्ट्रज्ञानोपसंहृतिम् । मन्त्रद्वयेन कृत्वाऽथ कक्ष्यज्ञानोपसंहृतिः ॥१५॥
क्रियतेऽध्याययोरेवं मधुकाण्डं समाप्यते । श्रुतिमन्त्रोपदिष्टोऽर्थो यस्मादाद्रियते ततः ॥१६॥

मू.—इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच । तदेतदृषिः पश्यन्नवोचत् । पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः । पुरः स पक्षी भूत्वा पुरः पुरुष आविशदिति । स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयो नैनेन किञ्चनानावृतं नैनेन किञ्चनासंवृतम् ॥१८॥

पुरश्चक्रे शरीराणि द्विपदः पक्षिमानुषान् । चतुष्पदोऽथ पशवः पुरश्चक्रे स्वमायया ॥१७॥

आभ्यामित्यादि ब्राह्मणोक्तितः श्रूयते प्रथमेऽध्याये मधुब्राह्मणमिति सम्बन्धः । तर्हि तेन गतार्थत्वात्किमनेन मधुब्राह्मणेनेत्याशङ्क्याऽऽह—एतदिति । यदात्मज्ञानसाधनं मधुब्राह्मणं ब्राह्मणोऽश्विभ्यां प्रवर्ग्यसंनिधावव्यक्तमुक्तवांस्तदेतदेव यदियमित्यादिना स्फुटमुक्तमित्यर्थः । तदेतदृषिरित्यादेरर्थमाह—अश्वीति । आर्षदृष्टिः सूक्ष्मार्था प्रकृष्टधर्मजा प्रतिभा तया मन्त्रद्रष्टा प्रकृतं कर्म शिष्याचार्यसम्बन्धं पश्यन्मन्त्रेणावोचदित्यर्थः । तत्र तद्वामित्यादिकामृचमवतारयति—तदेतदिति । तत्कर्म वृत्तमेतदृषिदृष्टं मन्त्रेणोच्यत इत्यर्थः ॥१०५–१०६–१०७॥

तद्वामित्यादिमन्त्रपदानि व्याकरोति—आविष्करोमीत्यादिना । यदवोचत्तदप्याविष्करोमीति सम्बन्धः । अथर्वणायेत्यादिमन्त्रान्तरं व्याचष्टे—दधीच इत्यादिना । प्रतिज्ञापालनं प्रज्ञावतामावश्यकमितिद्योतनार्थोऽथशब्दः । प्राणसंशयमापन्नोऽप्यात्मानं सत्यं कर्तुमिच्छन्मध्वब्रवीदिति सम्बन्धः । ऋतायन्नित्यस्य तात्पर्यं यत एवमित्यत्रोक्तमवसरप्राप्तावनुवदति—तस्माच्चेति ॥१०८–१०९–११०–१११–११२॥

त्वाष्ट्रमित्यादि व्याचष्टे—आदित्येति । यत्तदप्यवोचदिति सम्बन्धः ॥११३॥

दस्रशब्दार्थमाह—उपक्षयेति । अपिशब्दार्थमाह—नेति ॥११४॥

पुर इत्याद्यवतारयितुं वृत्तमनुवदति—प्रवर्ग्येति । अनन्तरमन्त्रयोस्तात्पर्यमाह—अथेति । त्वाष्ट्रज्ञानस्य कक्ष्यज्ञानं प्रति हेतुत्वं द्योतयितुमथेत्युक्तम् । अध्यायैर्ज्ञानद्वये निर्दिष्टे फलितमाह—एवमिति । अध्यायाभ्यामुक्तार्थस्य किमिति मन्त्राभ्यामुपसंहृतिस्तत्राऽऽह—श्रुतीति । तस्मादुपसंहारो मान्त्रो युक्त इति शेषः ॥११५–११६॥

पुर इति । अथशब्दस्तथाशब्दपर्यायः । कूटस्थस्य शरीरनिर्माणे हेतुमाह—स्वमाययेति । पक्षी सूक्ष्म-

पुरो भुक्तशरीरात्स पक्षी लिङ्गमिहोच्यते । पुरो नवशरीराणि प्राविशज्जलचन्द्रवत् ॥११८॥
कस्मात्पुरुष इति चेत्पुरुषार्थं श्रुतिः स्वयम् । स वा इत्यादिनाऽऽचष्टे सर्वैकात्म्यावबुद्धये ॥११९॥
पुरुषोऽयं भवेदात्मा यतः शेते स पूर्षु । सर्वासु तेन लोकेऽस्मिन्पुरुषोऽयमितीर्यते ॥१२०॥
परिच्छेदप्रसङ्गश्चेन्मैवं यस्मादिदं जगत् । नैनेनानावृतं किंचिन्नाव्याप्तं ह्योततन्तुवत् ॥१२१॥
नासंवृतं तथा किंचित्प्रोततन्तुवदात्मना । पूर्णत्वात्पुरुषः सोऽयं ब्रह्मैकं पुरुषस्ततः ॥१२२॥
यस्मात्परं नापरमस्ति किंचिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् ।
वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥१२३॥
आवृतं ज्ञप्तिमात्रेण सर्वमात्मीकृतं जगत् । संवृतं प्रतिषिद्धं तद्यदनात्मेव लक्ष्यते ॥१२४॥
तन्नास्ति कारणं कार्यं यन्नानेनाऽऽत्मसात्कृतम् । तन्नास्ति कारणं कार्यं यन्नानेनाऽऽत्मना ह्वुतम् ॥१२५॥

मू.—इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच । तदेतदृषिः पश्यन्नवोचत् । रूपँ रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय । इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दशेति । अयं वै हरयोऽयं वै दश च सहस्राणि बहूनि चानन्तानि च तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूरित्यनुशासनम् ॥१९॥

इति बृहदारण्यकोपनिषदि द्वितीयाध्याये पञ्चमं ब्राह्मणम् ॥५॥

रूपं रूपं प्रति ह्येष प्रतिरूपो बभूव ह । देहं देहं प्रविष्टः संस्तद्देहाकारतामगात् ॥१२६॥
मायाभिः प्रत्यगज्ञानैर्यदि वाऽनृतबुद्धिभिः । गम्यते पुरुरूपोऽज्ञैरेकोऽपि जलसूर्यवत् ॥१२७॥

भोगवानित्यर्थः । अज्ञस्य स्थूलदेहत्यागानन्तरं सूक्ष्मदेहप्राप्तिस्ततश्चाभिनवस्थूलशरीरप्राप्तिरिति पारंपर्यं यावदज्ञानमवश्यंभावीत्यथशब्दार्थः । वास्तवं देहयोगं व्यासेद्धुमुदाहरणम् ॥११७–११८॥

स वा अयमित्यादिवाक्यस्याऽऽकाङ्क्षापूर्वकं तात्पर्यमाह—कस्मादिति । पुरुषशब्दार्थोक्तिफलमाह—सर्वेति ॥११९॥

तात्पर्यमुक्त्वा पदानि व्याकरोति—पुरुषोऽयमिति । तदर्थं निगमयति—तेनेति ॥१२०॥

आधाराधेयनिर्देशाद्भेदं शङ्कते—परिच्छेदेति । नेत्यादिवाक्येनोत्तरमाह—मैवमिति । तद्व्याचष्टे—नाव्याप्तमिति ॥१२१॥

वाक्यान्तरस्य पुनरुक्तिं परिहरन्नर्थमाह—नेत्यादिना । दृष्टान्ताभ्यां वाक्ययोरर्थकथने पुनरुक्तिसमाधेर्व्यक्ततेति वक्तुं हिशब्दः । ओतप्रोतत्वेन सर्वं जगदात्मव्याप्तमित्यक्षराधिकरणन्यायेन स्थिते फलितमाह—पूर्णत्वादिति । ब्रह्म पूर्णं कथं पुरुषस्य तद्भावस्तत्राऽऽह—ब्रह्मेति ॥१२२॥

पूर्णमेकरसं ब्रह्मेत्यत्र मन्त्रान्तरमाह—यस्मादिति । कार्यं कारणमन्तर्बहिरिति विशेषो यत्र नास्तीत्यर्थः । कश्चिदिति च्छान्दसम् । तस्य कौटस्थ्यमाह—वृक्ष इति । स्वमहिमप्रतिष्ठिततामाह—दिवीति । फलितमाह—तेनेति ॥१२३॥

नैनेनेत्यादिवाक्यस्यार्थान्तरमाह—आवृतमिति । द्वितीयवाक्यस्य व्याख्यान्तरमाह—संवृतमिति ॥१२४॥

आवृतमित्यादि व्यतिरेकद्वारा विवृणोति–तन्नेति । संवृतमित्याद्यपि तयैव द्वारा विशदयति–तदिति ॥१२५॥

मन्त्रान्तरमादाय व्याकरोति—रूपमित्यादिना । अनेकरूपत्वं लोकवाद्यनुभवानुसारीति वक्तुं निपातद्वयम् ॥१२६॥

परस्यानेकरूपत्वे किं कारणमित्याशङ्क्योपादानं निमित्तं वा पृष्टमिति विकल्प्याऽऽद्यं प्रत्याह—मायाभिरिति । एकस्मिन्बहुवचनायोगमाशङ्क्य प्रकारभेदात्तदुपपत्तिं मत्वा पक्षान्तरं वदन्द्वितीयं निराह—यदि वेति ॥१२७॥

प्रत्यग्याथात्म्यबोधार्थं रूपं मायामयं विभोः । शास्त्राचार्यादिना नर्ते ज्ञातुं वस्त्विह शक्यते ।।२८।।
कुतोऽस्य बहुरूपत्वमिति हेतुरिहोच्यते । युक्ता ह्यस्येति वचसा मिथ्याज्ञानैकहेतुतः ।।२९।।
स्रजस्तत्त्वापरिज्ञानाद्युक्ता दण्डादयो यथा । प्रत्यक्तत्त्वापरिज्ञानादात्मनो हरयस्तथा ।।३०।।
इन्द्रियाण्येव हरयो हरणाद्विषयान्प्रति । दश तानि सहस्राणि शतानि प्राणिभेदतः ।।३१।।
नान्यो हेतुरविज्ञानादिन्द्रियादेरिहाऽऽत्मनि । यतोऽयमेव हरयो यावत्संख्या तदाश्रया ।।३२।।
अयमेवेन्द्रियत्वेन देहत्वेन च कल्पितः । तथा शतसहस्रादिसंख्याभेदेन चाप्ययम् ।।३३।।
नामरूपक्रियाभेदैर्यथा पूर्वमवादिषम् । अयमेव तथाऽऽरूपः कल्पितोऽविद्ययाऽद्वयः ।।३४।।
तदेतत्कल्पितं सर्वं सहेतु फलवज्जगत् । प्रत्यगात्मात्मकं भास्वत्प्रज्ञानघनतत्त्वकम् ।।३५।।

सकलोपनिषत्सारभूतं तदेतदित्यादि व्याचष्टे

निःशेषोपनिषत्सारस्तदेतदिति सांप्रतम् । उक्त्याऽऽविष्क्रियते साक्षात्करविन्यस्तबिल्ववत् ।।३६।।
अज्ञातं संशयज्ञातं मिथ्याज्ञातमिदं जगत् । तदेतदित्यनूद्यैतत्तत्त्वमवबोध्यते ।।३७।।
ब्रह्मेति वास्तवं वृत्तं तावदस्यावबोध्यते । ज्ञानात्पुराऽपि ब्रह्मैव नातो ज्ञानफलं भवेत् ।।३८।।

किमर्थमिदं बहुरूपत्वमित्याशङ्क्य पाठक्रमादर्थक्रमस्य बलवत्त्वात्तदस्येत्यादेरर्थमाह—प्रत्यगिति । मायाकृतं रूपं विनाऽपीदं स्वतो ज्ञातुं शक्यमित्याशङ्क्याऽऽह—शास्त्रेति ।।१२८।।

यदि वेत्यत्र परस्य बहुरूपत्वे निमित्तमुक्तं तदेव साधयितुमाकाङ्क्षापूर्वकं युक्ता हीत्याद्यादत्ते—कुतोऽस्येति । अस्य प्रतीचो हरिशब्दितानीन्द्रियाणि ज्ञानात्प्रागज्ञानतः सम्बद्धानि स च सम्बन्धः सम्बन्धीन्द्रियोत्थमिथ्याज्ञानादेकस्माद्धेतोरात्मनो बहुरूपभाक्त्वे भवति निमित्तमिति हेतुवचो व्याचष्टे—मिथ्येति ।।१२९।।

अज्ञानादिन्द्रियसम्बन्धं प्रतीचो दृष्टान्तेनाऽऽह—स्रज इति ।।१३०।।

हरीणामात्मसम्बन्धेऽज्ञाननिबन्धनेऽपीन्द्रियसम्बन्धे किमायातमित्याशङ्क्याऽऽह—इन्द्रियाणीति । शता दशेत्यस्यार्थमाह—दशेति । तान्येकादशेत्यङ्गीकारविरोधमाशङ्क्याऽऽह—प्राणीति ।।१३१।।

युक्ता हीति सम्बन्ध उक्तस्तत्कथमयमित्यादिना तद्विरुद्धं तादात्म्यमुच्यते तत्राऽऽह—नान्य इति । अज्ञानविलासत्वादिन्द्रियाद्यात्ममात्रं न हि सम्बन्धोऽपि तत्र वास्तवोऽस्तीत्यर्थः । तथा संख्यासंख्येययोरात्मगतत्वेन तन्मात्रत्वाद्युक्तं तादात्म्यवचनमित्यर्थः ।।१३२।।

इन्द्रियादेरज्ञानजत्वे कारणाज्ञानमात्रत्वं युक्तं नाऽऽत्मत्वमित्याशङ्क्य तत्तदिन्द्रियादिरूपेणाऽऽत्मन एवाविद्यया कल्पितत्वाद्युक्तमिन्द्रियादेस्तन्मात्रत्वमित्याह—अयमेवेति ।।१३३।।

अद्वयोऽप्यात्मा देहाद्यात्मना कल्पितोऽविद्ययेत्युक्तं दृष्टान्तेन स्पष्टयति—नामेति । यथाऽव्याकृतप्रक्रियादौ नामाद्यनात्मप्रपञ्चात्मना प्रत्यगात्मैव कल्पित इत्यवादिष्म तथैवासावरूपोऽद्वयोऽप्यविद्यया देहाद्यात्मना कल्पित इत्यर्थः ।।१३४।।

प्रतीचः स्वाविद्यया जगदात्मना कल्पितत्वे सर्वस्य तन्मात्रत्वं फलतीत्युपसंहरति—तदेतदिति ।।१३५।।

वाक्यार्थव्याख्यार्थमित्थं भूमिकां गतेन सन्दर्भेणाऽऽरचय्य तत्परस्य तदेतदित्यादिवाक्यस्य तात्पर्यमाह—निःशेषेति ।।१३६।।

पदद्वयस्यार्थमाह—अज्ञातमिति । कार्यकारणात्मकं त्रिविधं जगत्तच्छब्देनानूद्य तस्य वास्तवं रूपमेतच्छब्देनोक्त्वा सामानाधिकरण्यादैकरस्यं द्योत्यत इत्यर्थः ।।१३७।।

तदेव तत्त्वं दर्शयन्ब्रह्मशब्दार्थमाह—ब्रह्मेतीति । ब्रह्मत्वस्य ज्ञानफलत्वेन तत्साध्यत्वात्कथं सर्वस्य तत्त्वं ब्रह्मेति तत्राऽऽह—ज्ञानादिति । पूर्वमपि ज्ञानोत्पत्तेः सर्वं ब्रह्मैव सामानाधिकरण्यश्रुतेरतो न तस्य ब्रह्मत्वं ज्ञानकार्यमित्यर्थः ।।१३८।।

अपूर्वमिति कार्यत्वनिषेधायाभिधीयते । कारणत्वनिषेधाय तथाऽनपरगीरियम् ॥३९॥
अनन्तरमिति तयो रन्ध्रस्य प्रतिषेधनम् । कार्यकारणयोर्बाह्यमबाह्यमिति वार्यते ॥४०॥
सत्ता वाऽनन्तरगिरा ब्रह्मणः प्रतिषिध्यते । विशेषोऽबाह्यशब्देन ततो वाक्यार्थरूपकम् ॥४१॥
नाऽऽत्मनोऽन्यत्र संभाव्यमपूर्वादि यदीरितम् । ब्रह्माऽऽत्मैवेत्यतो वक्ति श्रुतिरैकात्म्यसिद्धये ॥४२॥
पारोक्ष्यप्रतिषेधार्थं ब्रह्माऽऽत्मैवेति भण्यते । ब्रह्मैवाऽऽत्मेति च तथा संसारित्वनिवृत्तये ॥४३॥
भिन्नं ब्रह्मापरिज्ञानात्संसारित्वं तथाऽऽत्मनः । तत्त्वज्ञानात्तमोध्वस्तौ नेतीत्यात्माऽवशिष्यते ॥४४॥
सर्वोऽनुभव एवायमतः सर्वानुभूः परः । कार्त्स्न्यात्सर्वो भवेदेष चिन्मात्रत्वात्तथाऽनुभूः ॥४५॥
इतीत्युक्तपरामर्शो वेदाज्ञा चानुशासनम् । कर्तव्यमेतद्विज्ञानमिति वेदानुशासनम् ॥४६॥
अस्यातिलङ्घने दोषः संसारानर्थसङ्गतिः । कुर्वतश्च महाल्लाँभ आत्मनः कृतकृत्यता ॥४७॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके द्वितीयाध्यायस्य
पञ्चमं ब्राह्मणम् ॥५॥
श्लोकानामादितः समष्टचङ्काः–५६२५

## अथ द्वितीयाध्याये षष्ठं ब्राह्मणम्

स्तुत्यर्थं ब्रह्मविद्याया ब्रह्मविद्वंश उच्यते । जपोऽयं ब्रह्मविज्ञानजन्मने चोद्यते श्रुतौ ॥ १ ॥
पुंमत्यूहोत्थिताशङ्कानिवृत्त्यर्थं यथोदितम् । ब्रह्मज्ञानस्य वा वंशो यत्नाच्छ्रुत्याऽयमुच्यते ॥ २ ॥

अपूर्वमित्यादि व्याचष्टे—अपूर्वमिति ॥१३९॥

कार्यकारणयोर्ब्रह्मणो भेदेन स्थितिशङ्कां निरस्यति—अनन्तरमिति । तयोरन्वयव्यतिरेकभावश्चेदभावस्तर्हीत्याशङ्क्याऽऽह—कार्येति । बाह्यपदेनाभावो विवक्षितः ॥१४०॥

ब्रह्मणो निःसामान्यत्वं निश्चेतुमनन्तरपदमित्यर्थान्तरमाह—सत्तेति । सामान्यं हि भेदापरपर्यायमन्तरमपेक्षते ब्रह्म त्वनन्तरमतो न सामान्यमित्यर्थः । निर्विशेषत्वं वक्तुमबाह्यपदमित्याह—विशेष इति । कार्यकारणयोरन्वयव्यतिरेकभावपरिहाराय निःसामान्यविशेषब्रह्ममात्रत्वे तदैकरस्यं फलतीत्याह—तत इति ॥१४१॥

अस्तु यथोक्तलक्षणं ब्रह्म प्रतीचस्तु किमायातमित्याशङ्क्योत्तरवाक्यमवतारयति—नेत्यादिना ॥१४२॥

पाठक्रममतिक्रम्यानुवदन्नात्मब्रह्मणोरन्योन्यैक्यमत्रेष्टमिति मन्यते किमर्थमन्योन्यैक्यबोधनमित्यपेक्षायामाह—पारोक्ष्येति ॥१४३॥

कथं तर्हि तयोर्ब्रह्मात्मस्थयोश्चैतन्यवन्निवृत्तिरित्याशङ्क्याज्ञानजत्वं तावदाह—भिन्नमिति । तथेत्यपरिज्ञानमनुकर्षति पारोक्ष्यादेरज्ञानजत्वफलमाह—तत्त्वेति ॥१४४॥

सर्वानुभूरित्यस्यार्थमाह—सर्व इति । कथं परस्य सर्वत्वमनुभवत्वं च तदाह—कार्त्स्न्यादिति ॥१४५॥

इत्यनुशासनमित्यस्यार्थमाह—इतीत्युक्तेति । वाक्यार्थमाह—कर्तव्यमिति ॥१४६॥

ऐक्यज्ञानं संन्यासपूर्वकश्रवणादिद्वारा कार्यमितिवेदाज्ञातिलङ्घनपालनयोर्दोषगुणौ प्रवृत्त्यर्थत्वेनाऽऽह—अस्येति ॥॥१४७॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां द्वितीयाध्यायस्य पञ्चमं मधुब्राह्मणम् ॥५॥

ब्रह्मविद्यां संक्षेपविस्तराभ्यां प्रतिपाद्य वंशब्राह्मणतात्पर्यमाह—स्तुत्यर्थमिति । परमर्षिपरिगृहीता हि ब्रह्मविद्या तेन सा महाभागधेयेति स्तुतिरत्र विवक्षितेत्यर्थः । मन्त्रश्चेत्यादिभाष्योक्तमर्थान्तरमाह—जपोऽयमिति ॥१॥

प्रकृतब्रह्मज्ञानस्य पुरुषबुद्ध्युत्प्रेक्षितत्वशङ्कानिवृत्त्यर्थं ब्राह्मणमित्यर्थान्तरमाह—पुंमतीति । वंशोपन्यासस्य यत्नो बहुशो वचनम् ॥२॥

यस्यानुशासनं तस्य स्वयम्भोः प्रतिपत्तये । पौतिमाष्यादिको ग्रन्थः श्रुत्याऽथ प्रतिपाद्यते ॥ ३ ॥
अग्रात्प्रभृति वंशोऽयमावेदब्रह्ममूलतः । भिन्नहेतुनिषेधार्थं स्वयम्भु ब्रह्म शब्द्यते ॥ ४ ॥

मू.—अथ वँ्शः पौतिमाष्यो गौपवनाद्गौपवनः पौतिमाष्यात्पौतिमाष्यो गौपवनाद्गौपवनः कौशिकात्कौशिकः कौण्डिन्यात्कौण्डिन्यः शाण्डिल्याच्छाण्डिल्यः कौशिकाच्च गौतमाच्च गौतमः—॥१॥

मू.—आग्निवेश्यादाग्निवेश्यः शाण्डिल्याच्चानभिम्लाताच्चानभिम्लात आनभिम्लातादानभिम्लात आनभिम्लातादानभिम्लातो गौतमाद्गौतमः सैतवप्राचीनयोग्याभ्याँ्सैतवप्राचीनयोग्यौ पाराशर्यात्पाराशर्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्च गौतमाच्च गौतमो भारद्वाजाद्भारद्वाजः पाराशर्यात्पाराशर्यो वैजवापायनाद्वैजवापायनः कौशिकायनेः कौशिकायनिः—॥२॥

मू.—घृतकौशिकाद्घृतकौशिकः पाराशर्यायणात्पाराशर्यायणः पाराशर्यात्पाराशर्यो जातूकर्ण्याज्जातूकर्ण्य आसुरायणाच्च यास्काच्चासुरायणस्त्रैवणेस्त्रैवणिरौपजन्धनेरौपजन्धनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाज आत्रेयादात्रेयो माण्टेर्माण्टिर्गौतमाद्गौतमो गौतमाद्गौतमो वात्स्याद्वात्स्यः शाण्डिल्याच्छाण्डिल्यः कैशोर्यात्काप्यात् कैशोर्यः काप्यः कुमारहारितात्कुमारहारितो गालवाद्गालवो विदर्भीकौण्डिन्याद्विदर्भीकौण्डिन्यो वत्सनपातो बाभ्रवाद्वत्सनपाद्बाभ्रवः पथः सौभरात्पन्थाः सौभरोऽयास्यादाङ्गिरसादयास्य आङ्गिरस आभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीच आथर्वणाद्दध्यङ्ङाथर्वणोऽथर्वणो दैवादथर्वा दैवो मृत्योः प्राध्वँ्सनान्मृत्युः प्राध्वँ्सनः प्रध्वँ्सनात्प्रध्वँ्सन एकर्षेरेकर्षिर्विप्रचित्तेर्विप्रचित्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातनात्सनातनः सनगात्सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयंभु ब्रह्मणे नमः—॥३॥

इति बृहदारण्यकोपनिषदि द्वितीयाध्याये षष्ठं ब्राह्मणम् ॥६॥
इति बृहदारण्यकोपनिषदि द्वितीयोऽध्यायः ॥२॥
इति बृहदारण्यकक्रमेण चतुर्थोऽध्यायः ॥४॥

यस्मादपरतन्त्रोऽयं वेदात्मा ब्रह्म भण्यते । मनोवाक्कर्मभिस्तस्माद्भक्त्या तस्मै नमः सदा ॥ ५ ॥

अनन्तरब्राह्मणेनावान्तरसम्बन्धं दर्शयन्नर्थान्तरमाह—यस्येति । परस्य वेदात्मनो यस्यैक्यज्ञानात्मकमनुशासनं तत्प्रतिपत्त्यर्थमुत्तरं ब्राह्मणमित्यर्थः ॥३॥

कथं तत्प्रतिपत्त्यर्थत्वमस्येति तत्राऽऽह—अग्रादिति । शिष्यावसानोपलक्षणभूतात्पौतिमाष्यादारभ्य तदादिर्वेदाख्यब्रह्ममूलपर्यन्तोऽयमाचार्यपरंपराक्रमो वंश इत्युच्यते तेन ब्रह्मपर्यन्तत्वादस्य तत्प्रतिपत्तिरत्र विवक्षितेत्यर्थः । प्रथमान्तः शिष्यः पञ्चम्यन्तो गुरुरिति मत्वा ब्रह्मणः स्वयंभुविशेषणस्य कृत्यमाह—भिन्नेति । परस्य वेदद्वारा सूत्रभावमापन्नस्यास्मदादीनामिव भिन्नाचार्यादिप्रयुक्तं विज्ञानमिन्येतन्निषेद्धुं विशेषणमित्यर्थः ॥४॥

कारणोक्तिपूर्वकं त्रिविधं प्रह्वीभावं नमःशब्दार्थं दर्शयन्ब्रह्मणे नम इत्यस्यार्थमाह—यस्मादिति । अयं हि वेदस्वभावश्चिद्धातुः सत्तास्फूर्त्योः स्वतन्त्रो यतोऽनुभूयतेऽतोऽसौ ब्रह्मैवोच्यते स्वतन्त्रवस्त्वन्तराभावादेतेन

**शतानि दश पञ्चैव श्लोकाः सप्तदशापरे । श्लोकसंख्याऽत्र विज्ञेया चतुर्थाध्यायवार्तिके ।।**

**इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके द्वितीयाध्यायस्य षष्ठं ब्राह्मणम् ।।६।।**

**इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीसुरेश्वराचार्यविरचिते बृहदारण्यकोपनिषद्भाष्यवार्तिके द्वितीयोऽध्यायः ।।२।।**

**उपनिषत्क्रमेण चतुर्थोऽध्यायः ।।४।।**

**वेदानामनित्यत्वमपि प्रत्युक्तं तस्मात्तस्मै ब्रह्मणे वेदात्मने श्रेयोर्थिभिस्त्रिधाऽपि नमो भक्तिश्रद्धाभ्यां सदा कार्यमित्यर्थः । तदनेनाध्यायेन ब्रह्मविद्यासूत्रं ब्राह्मणपञ्चकेन प्रपञ्चितं विद्याविषयस्य मधुकाण्डस्योत्प्रेक्षितत्वशङ्काऽपि पराकृता भवति ।।५।।**

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां द्वितीयाध्यायस्य षष्ठं वंशब्राह्मणम् ।।६।।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दभगवत्पूज्यपादशिष्यश्रीमद्भगवदानन्दज्ञानकृतायां श्रीमत्सुरेश्वरवार्तिकटीकायां शास्त्रप्रकाशिकाख्यायां द्वितीयोऽध्यायः ।।२।।

श्लोकानामादितः समष्टयङ्काः–५६३०

## प्रकाशिताः ग्रन्थाः

### Published Books

१. **वैदिकसम्प्रदायान्तर्गता औपनिषद दश शान्ति** ( *SH )
आचार्य श्री महेशानन्द गिरि
आकार—२० × ३०/१६ पृष्ठ—६+७५
मूल्य : २.५०

२. **मानसोल्लास-माधुरी** (SH) आचार्य श्री महेशानन्द गिरि
( श्रीदक्षिणामूर्तिस्तोत्रवार्तिक )
आकार—२० × ३०/१६ पृष्ठ—५८+४१९
मूल्य : २०.००

३. **साधनसंग्राम-१** ( H ) आचार्य श्री महेशानन्द गिरि
आकार—२० × ३०/१६ पृष्ठ—८+४८०
मूल्य २०.००

४. **साधनसंग्राम—२** ( H ) आचार्य श्री महेशानन्द गिरि
आकार—२० × ३०/१६ पृष्ठ—८+९३
मूल्य : ५.००

५. **श्वेताश्वतरोपनिषद्** (SH) आचार्य श्री महेशानन्द गिरि
आकार—२० × ३०/१६ पृष्ठ—२०+५१२
मूल्य : २०.००

६. **ईशावास्योपनिषद्** ( SH ) आचार्य श्री महेशानन्द गिरि
आकार—२० × ३०/१६ पृष्ठ—२४
मूल्य : १.००

७. **कठोपनिषद्–१** ( SH ) आचार्य श्री महेशानन्द गिरि
( प्रथमाध्याय पर्यन्त )
आकार—२३ × ३६/१६ पृष्ठ—२४+३२०
मूल्य : २०.००

८. **स्तुतिकदम्बः** ( S ) सं० आचार्य श्री महेशानन्द गिरि
( स्तोत्रसंग्रहः )
आकार—२० × ३०/१६ पृष्ठ—४+११५
मूल्य : ३.००

९. **मानवता की ओर** ( H ) आचार्य श्री महेशानन्द गिरि
आकार—२० × ३०/१६ पृष्ठ—१०+२३५
मूल्य : १५.००

१०. **व्यक्तित्व का विकास** (H) आचार्य श्री महेशानन्द गिरि
आकार—२३ × ३६/१६ पृष्ठ—६+९५
मूल्य : ५.००

११. **गीता प्रवेश–१** ( H ) आचार्य श्री महेशानन्द गिरि
आकार—२२ × ३२/१६ पृष्ठ—१२+२३०
मूल्य : १५.००

१२. **रुद्राध्याय** ( SH ) आचार्य श्री महेशानन्द गिरि
आकार—२० × ३०/१६ मूल्य : पृष्ठ—

13. **Our Dharma** ( *E )
Shri Maheshananda Giri
Size—23 × 36/16 Pages—96
Price : 2.50

14. **Jivana Yajna** ( E )
Shri Maheshananda Giri
Size—20 × 30/16 Pages—13+115
Price : 10.00

१५. **उपदेशसाहस्री** ( S ) सं० श्री एस. सुब्रह्मण्यशास्त्री
आकारः—२० × ३०/८ पृष्ठाः—३६+१८४
मूल्यम् : ३०.००

१६. **सिद्धान्तबिन्दुः** ( S ) सं० श्री एस. सुब्रह्मण्यशास्त्री
आकारः—२० × ३०/८ पृष्ठाः—२२+१७८
मूल्यम् : ३०.००

१७. **शतश्लोकी** ( S ) सं० श्री एस. सुब्रह्मण्यशास्त्री
आकारः—२० × ३०/८ पृष्ठाः—१२+६०
मूल्यम् : १०.००

१८. **पञ्चीकरणम्** ( S ) सं० श्री एस. सुब्रह्मण्यशास्त्री
आकारः—२० × ३०/८ पृष्ठाः—१२+४८
मूल्यम् : १०.००

१९. **प्रकरणाष्टकम्** ( S ) सं० श्री एस. सुब्रह्मण्यशास्त्री
आकारः—२० × ३०/८ पृष्ठाः—१८८
मूल्यम् : ३०.००

२०. **प्रकरणद्वादशी** ( S ) सं० श्री एस. सुब्रह्मण्यशास्त्री
आकारः—२० × ३०/८ पृष्ठाः—७००
मूल्यम् : ८५.००

२१ **उपनिषद्भाष्यम्-१** ( S ) सं० श्री एस. सुब्रह्मण्यशास्त्री
( आदितः ८ सटीकोपनिषदाम् )
आकारः—२२ × ३६/८ पृष्ठाः—३४+७४६
मूल्यम् : १५०.००

२२. **बृहदारण्यकोपनिषत्सम्बन्धभाष्यवार्तिकम्** ( S )
सं० श्री एस. सुब्रह्मण्यशास्त्री
आकारः—२३ × ३६/८ पृष्ठाः—२२४
मूल्यम् : ३०.००

२३. **बृहदारण्यकोपनिषद्भाष्यवार्तिकम्–१** ( S )
( प्रथमद्वितीयाध्यायसन्दृब्धम् )
सं० श्री एस. सुब्रह्मण्यशास्त्री
आकारः—२३ × ३६/८ पृष्ठाः ८००
मूल्यम् : १५०-००

२४. **उपनिषद्भाष्यम्–२** सं० श्री एस. सुब्रह्मण्यशास्त्री
( **छान्दोग्योपनिषदः** )
आकारः २२ × ३६/८ पृष्ठाः ६६०
मूल्यम् : ११५.००

---

* S = Sanskrit, H = Hindi, E = English

## प्रकाश्यमानाः ग्रन्थाः

**Forthcoming Publications**

१. **बृहदारण्यकोपनिषद्भाष्यवार्तिकम्–२** ( S )
सं० श्री एस. सुब्रह्मण्यशास्त्री
श्रीमत्सुरेश्वराचार्यकृतवार्तिकमिदं श्रीमदानन्दगिरिविरचित**शास्त्रप्रकाशिका**व्याख्योपेतं खण्डद्वये समाप्तिमेति ।

२. **उपनिषद्भाष्यम्–३** ( S ) : सं० श्री एस. सुब्रह्मण्यशास्त्री
( बृहदारण्यकोपनिषदः )
**बृहदारण्यकोपनिषत्** — शाङ्करभाष्यतदीयआनन्दगिरिटीकोपेता ।

३. **ब्रह्मसूत्रभाष्यम्-१** ( S ) : सं० श्री एस. सुब्रह्मण्यशास्त्री
( भामतीप्रस्थानस्य )
वाचस्पतिमिश्रविरचित**भामती**–तदीयटीका**कल्पतरु**-तदीयटीका**परिमल**ोपेतम् ।

४. **ब्रह्मसूत्रभाष्यम्-२** ( S ) : सं० श्री एस. सुब्रह्मण्यशास्त्री
पद्मपादाचार्यविरचित**पञ्चपादिका**–तट्टीका**पञ्चपादिकाविवरण**–तट्टीका-**ऋजुविवरण**संवृत्तम् ।

५. **ब्रह्मसूत्रभाष्यम्-३** ( S ) : सं० श्री एस. सुब्रह्मण्यशास्त्री
( उभयप्रस्थानटीकानाम् )
अनुभूतिस्वरूपाचार्यविरचित**प्रकटार्थविवरण** — आनन्दगिरिविरचित**न्यायनिर्णय**—रामानन्दयतिविरचित**रत्नप्रभा**—चित्सुखाचार्यविरचित**भाष्यभावप्रकाशिके**तिटीकाचतुष्टयालङ्कृतम् ।

६. **श्रीमद्भगवद्गीता–१** २ ( S )
सं० श्री एस. सुब्रह्मण्यशास्त्री
श्रीशाङ्करभाष्यं, तदीयटीकाभिस्सह, **अथ चान्य**प्राचीनाचार्यविरचिताभिष्टीकाभिस्साकं खण्डद्वये ।

७. **उपदेशसाहस्री** ( H ) : श्री गजानन्द शास्त्री "मूसलगाँवकर" कृत मूलग्रन्थ व आनन्दगिरि टीका का विस्तृत अनुवाद प्रस्तुत किया जायेगा ।

अन्येऽपि बृहल्लघुकायाः शाङ्करसम्प्रदायस्य ग्रन्थाः
व्याख्योपव्याख्याभिस्सह प्रकटीक्रियन्ते

